श्रीमुखोभावोयुवाधातेश्वरस्तथाचित्रभानुःसुभानुश्चतारण पार्थिवोव्यय विंशतिर्ब्रह्मविंशत्यांवत्सराःपरिकीर्तिताः २० सर्वजित्सर्वधारीचविरोधीविकृतिःखरःनंदनोविजयश्चैवजयमन्मथदुर्मुखाः हेमलंबोविलंबश्वविकारीशर्वरीप्लवःसुभकृच्छोभनःक्रोधीविश्वावसुपराभवौवत्सराविष्णुविंशत्यामुनिभिःपरिकीर्तिताः २० प्लवंगःकीलक सौम्यस्तथासाधारणोमतः विरोधकृत्तमः प्रोक्तःपरिधाविप्रमाथिनौ आनंदोराक्षसश्चैवनलोपिंगलसंज्ञकाःकालयुक्तश्चसिद्धार्थोरौद्रोदुर्मतिदुंदुभी रुधिरोद्गारिरक्ताक्षौक्रोधनःक्षयकृत्स्मृतः वत्सरारुद्रविंशत्यानामतल्यफलप्रदाः २० तदानयनं रत्नमालायांश्रीपतिराह शकेंद्रकालःपृथगाकृतिघ्नःशशांकनंदाश्वियुगैःसमेतःशराद्रिवसुहतःसलब्धःषष्ठ्यात्मशेषेप्रभवादयोऽब्दाः एषांफलानि ज्योतिःशास्त्रेज्ञेयानि एतत्प्रारंभक्रममाह श्रीपतिः तपसिखलुयदासावुद्गमंयातिमासि प्रथमलवगताःसन्वासवेवासवेज्यः निखिलजनहितार्थंवर्षवृंदेवरिष्ठःप्रभवइतितदानींजायतेऽब्दस्तदानीं यद्यपि ज्योतिषेगुरोर्मध्यमराशिभोगेन प्रभवादीनांमाघादौ प्रवृत्तिरुक्तातथापिप्रभवादीनांचांद्रत्वमप्यस्ति चांद्राणांप्रभवादीनां पंचक युगमितिमाधवोक्तेः तानिच युगंभवेद्वत्सरपंचकेनयुगानिचतेद्वादशवर्षषष्ट्या भवंतितेषामधिदेवताश्चक्रमेणवक्ष्यामिमुनिप्रणीताः विष्णुर्जीवःशक्रोदहनः त्वष्टाहिर्बुध्न्यःपितरःविश्वेसोमश्चेंद्रज्वलनौनासत्यावंतकश्चभगः इति द्वादशयुगदेवतानि युगस्यपंचवर्षाणांनामान्याहयथाक्रमं सएवसंवत्सरश्चप्रथमोद्वितीयः परिवत्सरःतस्मादिडावत्सरश्चचतुर्थश्चानुवत्सरः इद्वत्सरः पंचमश्चफलमेषांयथाक्रममिति तेनचांद्रोऽब्दादिश्चैत्रसितेप्रवर्तते बार्हस्पत्यस्तुमाघादौ तयोर्नियोगोज्योतिर्निबंधे ब्रह्मसिद्धांते व्यावहारिकसंज्ञोयंकालः स्मृत्यादिकर्मसुयोज्य सर्वत्र तत्रापिजैवोवानर्मदोत्तरे आर्यपेणः स्मरेत्सर्वत्रकर्मादौ चांद्रंसंवत्सरंसदा नान्यंयस्माद्वत्सरादौप्रवृत्तिस्तस्यकीर्तितेति इति संवत्सरनिर्णयः ॥ अथायनम् ॥ तच्च

सौरमृतुत्रयं सौरर्तुत्रितयंप्रदिष्टमयनमितिदीपिकोक्तेः सौरमानमधिकृत्यविष्णुधर्मोत्तरेपि ऋतुत्रयंचायनंस्यादि
ति अयननिरुक्तिस्तुमाधवीये अयनेयात्यनेनऋतुत्रयेणसूर्योदक्षिणाशामुत्तराशांचेत्यृतुत्रयमयनं तथाच वाजसने
यिनःपंचाग्निविद्यायांदक्षिणोत्तरमार्गयोःसमामनंतियान्षएमासान्ददक्षिणादित्यएतियान्षएमासानुत्तरादित्यएतीति
केचित्तु चांद्रमानेनायनद्वयमभ्युपगच्छंति मार्गशिरमासादिकैस्त्रिभिर्ऋतुभिःकल्पितःकालः षएमासात्मकमुत्तराय
नं ज्येष्ठमासादिकैर्दक्षिणायनमिति तत्रप्रमाणंज्योतिःशास्त्रादौमृग्यं तच्चाद्विविधं दक्षिणमुत्तरंचेति कर्कसंक्रांति
मारभ्यदक्षिणं मकरसंक्रांतिमारभ्योत्तरं अनयोर्विनियोगोमदनरत्ने सत्यव्रतेनोक्तः देवतारामवाप्यादिप्रतिष्ठोद्
द्रुमखरवौ दक्षिणाशामुखेकुर्वन्नतत्फलमवाप्नुयादिति वैखानसःमातृभैरववाराहनारसिंहात्रिविक्रमाःमहिषासुरह
न्त्र्यश्चस्थाप्यावैदक्षिणायने अत्रवैशब्दोऽप्यर्थे निषेधप्रतिप्रसवोयं देवविशेषेरत्नमालायां गृहप्रवेशत्रिदशप्रति
ष्ठाविवाहचौलव्रतबंधपूर्वं सौम्यायनेकर्मशुभंविधेयंयद्गर्हितंतत्खलुदक्षिणेचेति इत्ययननिर्णीतम् अथऋतुःहेमाद्रौ
ऋतवश्चषट् हेमंतशिशिरयोःसमासेनपंचपङ्क्तिऋतव पंचर्तवःहेमंतशिशिरयोःसमासेनेतिश्रुतेः प्रयाजानुमंत्रणोप
योगितयाचहेमंतशिशिरयोरेकीकरणं वसंतऋतूनां ग्रीष्मऋतूनां वर्षाऋतूनांशरदृऋतूनामितिचतुर्णामनुमंत्रणम
भिधाय हेमंतशिशिरावृतूनामितिपंचमस्यानुमंत्रणेद्वयोर्द्वंद्वोपादानात् ऋतुशब्दार्थोमाधवीये ऋतुशब्दऋगतावि
त्यस्माद्धातोर्निष्पन्नइति अशोकपुष्पविकासादि असाधारणलिंगमितिवसंतादिकालविशेषऋतुःतेचवसंतोपक्रमाः
मुखंवाएतदृतूनांयद्वसंतइतिश्रुतेः निरूपिताश्चतेक्रमेणश्रुतौ मधुश्चमाधवश्चवासंतिकावृतू शुक्रश्चशुचि
श्चग्रैष्मावृतू नभश्चनभस्यश्चवार्षिकावृतू इषश्चोर्जश्चशारदावृतू सहश्चसहस्यश्चहैमंतिकावृतू तपश्चतपस्य
श्चशैशिरावृतू अत्रऋतुइतिद्विवचनं ऋत्ववयवमासद्वित्वाभिप्रायेण मध्वादिशब्दाश्चैत्रादिवचनाः तथाचाहुः

चैत्रोमासोमधुः प्रोक्तोवैशाखोमाधवोभवेत् ज्यैष्ठमासस्तुशुक्रः स्या दाषाढः शुचिरुच्यते नभोमासः श्रावणः
स्यान्नभस्योभाद्र उच्यते इषश्चाश्वयुजोमासः कार्त्तिकश्चोर्जसंज्ञकः सहोमासोमार्गशिरःसहस्यः पौषनामकः
माघमासस्तपः प्रोक्तस्तपस्यः फाल्गुणःस्मृतइति सौरवसंतादयस्तु मीनादिसौरद्वयात्मकावा बौधायनेन मी
नमेषयोर्मेषवृषयोर्वावसंतइत्यभिधानात् तदनुसारेणेतरेषामपिद्वैविध्यकल्पना एतेषांचतुर्णांवसंतेब्राह्मणोग्नीनाद
धीतेत्यादिवाक्येभ्योवगंतव्यः श्रौतस्मार्त्तक्रियाःसर्वाः कुर्याच्चांद्रमसर्त्तुषु तदभावेतुसौरर्तुष्विति ज्योतिर्विदांमत
मिति त्रिकांडमंडनः हेमाद्रौ यदात्वधिकमासोभवति तदाचांद्रमानेनमासत्रयात्मकोपि कश्चिदृतुःसंपद्यतेतथा
चत्रिकांडमंडनेनोक्तं - चांद्रमानेयदाचैत्रभासादिमलिनस्तदा शुद्धेपिमलिनेचैत्रेवैशाखेपिवसंतता ननुसैवेयमा
पातामासत्रयवसंतता सत्यं गत्यंतराभावात्सैवात्राभ्युपगम्यते मास स्त्रयोवसंतः स्यात्त्यक्त्वाद्यमथवांतिमं अत्रो
च्यतेविकल्पोहिसौरमासेषुयुज्यते नतुचांद्रेषुयुक्तोसौमलमासानुवर्त्तिष्वित्याद्युक्त्वा षड्वाऋतवइत्येषाश्रुतिः सप्तमचा
रिका-तस्मादधिकमासः स्यात्तेष्वेवर्त्तुषुकुत्रचित् यत्रैषोथभवेन्मासः सऋतुः सत्रिमासिकः यद्वाषष्टिदिनैर्मासए
कएवोभयात्मकः अतोत्रापिवसतत्वंस्यात्तयोरेवमासयोः ॥ इतिवसंतादिषड्ऋतुनिर्णयः ॥ अथमलमासनिर्णयो
मदनरत्ने सचमासोमस्यतेपरिमीयतेचंद्रवृद्धिक्षयादिनेतिव्युत्पन्नेन मासशब्देन योगरूढ्याभिधेयःम.धवीयेतु त
त्रसकारांतंमासितिप्रातिपदिकंचंद्रवाचितस्यायंकालइतिमासः मासश्चतुर्धा सावनः सौरश्चांद्रोनाक्षत्रश्चेति त्रिंश
द्दिनःसावनः अर्कसंक्रांत्यवधिः सौरः पक्षद्वययुक् चांद्र.चंद्रस्यसर्वनक्षत्रभोगेन नाक्षत्रः विष्णुधर्मोत्तरे सर्वर्क्षप
रिवर्त्तैस्तुनाक्षत्रोमासउच्यते एतदुपयोगोनाक्षत्रसत्रेद्रष्टव्यः चांद्रस्तुचित्राद्यन्वितपौर्णमासीयोगाच्चैत्रादिसंज्ञां
लभतेपंकजादिशब्दवत् चैत्रादिशब्दायोगरूढाः नक्षत्रेणयुक्तःकालः सास्मिन्पौर्णमासीतिसूत्राभ्यांपाणिनारूढि

बोधकसंज्ञायामित्यभिधानपूर्वकंकात्यायनेन चास्मिन्नेवार्थेचैत्रादिशब्दानांव्युत्पादनात् ननुचैत्र्यादीनांचित्रादि
योगव्यभिचारित्वात्कथंचित्रादियुक्तचांद्रमासवचनत्वंचैत्रादिशब्दानामितिचेन्न चित्रादिपदेनयथायथंचित्रास्वा
त्यादिनक्षत्रद्विकात्रिकोपलक्षणात्तद्योगस्यच सकलचैत्राद्यनुगतत्वेन चैत्रादीनांतदव्यभिचारात् चांद्रोमासोद्वेधा
शुक्लादिरमांतःकृष्णादिः पूर्णिमांतश्च अनयोश्च चांद्रोपि शुक्लपक्षादि कृष्णादिश्चेतिसद्विधेत्युक्त्वादेशभेदेनव्यव
स्थामाहात्रिकांडमंडनःकृष्णपक्षादिकंमासंनांगीकुर्वंतिकेचन येपीच्छंतिनतेषामपीष्टोविंध्यस्यदक्षिणइतिविंध्यस्य
दक्षिणेकृष्णादिनिषेधादुत्तरतोद्वयोरप्यनुगमः तत्रापिशुक्लादिर्मुख्यः कृष्णादिर्गौणःज्योतिर्निबंधेगर्गःपौर्णमास्यव
सानःस्यान्मासोदेवकृतुस्तथा दर्शांतौमानुषोह्येतौ विंध्यादुत्तरयाम्ययोः आर्ष्टिषेणःदर्शांतोवैदिकोमासोराकांतः
स्मार्तउच्यते शास्त्रेचैत्रशुक्लप्रतिपद्येवचांद्रसंवत्सरारंभोक्तेःतथाचदीपिकायां चंद्रोब्दोमधुशुक्लगप्रतिपदारंभइति
नहियेकृष्णादिंमन्यंतेतेषांसंवत्सरारंभोभिद्यतेअत शुक्लादिर्मुख्यःकृष्णादिनामलमाससंभवाच्चचांद्रादीनांव्यवस्थो
क्ता हेमाद्रौ ब्रह्मसिद्धांते अमावास्यापरिच्छिन्नोमासःस्याद्ब्राह्मणस्यतु संक्रांतिपौर्णमासीभ्यांतथैवनृपवैश्ययोःअ
त्रब्राह्मणादीनांयत्रकर्मविशेषवचनांतरेण वसंतेब्राह्मणोग्नीनादधीतेत्यादिवन्मासउक्तस्तत्र दर्शांतत्वमात्रंनिय
म्यते नतु सर्वकर्मसुदर्शांतएवेति दृष्ट्यायथसौभरेण महिपादिनिधननियमवद्विधिलाघवाञ्चवर्णिकानांसर्वकर्मसु
मासविशेषविधेः सावनादीनांशूद्रानुलोमादिपरत्वापत्तेश्च ज्योतिर्गर्गः सौरोमासोविवाहादौयज्ञादौसावनः स्मृ
तः आब्दिकेपितृकार्य्यादौचांद्रोमासः प्रशस्यते ऋष्यशृंगः विवाहव्रतयज्ञेषुसौरंमानंप्रशस्यते पार्वणत्वष्टकाश्रा
द्धेचांद्रमिष्टंतथाब्दिके स्मृत्यंतरे एकोद्दिष्टविवाहादावृणादौसौरसावनौ ज्योतिर्गर्गः आयुर्दायविभागश्चप्रायश्चि
त्तक्रियातथा सावनेनैवकर्त्तव्याशूद्राणांचाप्युपासना विष्णुधर्मे नक्षत्रसत्राण्ययनानिचंद्रोमासेनकुर्य्याद्भग

णात्मकेनेति ब्राह्मे - तिथिकृत्येचकृष्णादिंव्रतेशुक्लादिमेवच विवाहादौतुसौरादिंमासकृत्येविनिर्दिशेदिति ॥ इतिशुद्धमासनिर्णयः ॥ अथमलमासनिर्णयः ॥ तत्रैके संक्रांतिरहितश्चांद्रोमासोमलमासः संक्रांतिद्वयवतः क्षयमासस्यसंग्रहार्थेकइति सचद्विविधः अधिमासः क्षयमासश्च तदुक्तमदनरत्ने काठकगृह्ये यस्मिन्मासेनसंक्रांतिः संक्रांतिद्वयमेववा मलमासः सविज्ञेयोमासः स्यात्तुत्रयोदशइति नसंक्रांतिरित्यनेन अधिमासग्रहण संक्रांतिद्वयमेवेति क्षयमासस्य सत्यव्रतोपि राशिद्वयंयत्रमासिसंक्रमेतादिवाकर नाधिमासोभवेदेषोमलमासस्तुकेवलमिति अयचमासश्चांद्रएव अतश्चयत्रामावास्याद्वयमध्येसंक्रांतिर्नस्यात्संक्रांतिद्वयंवाभवेत्समलमासइत्यर्थः तदाहगार्ग्यः अमावास्याद्वयंयत्ररविसंक्रांतिवर्जितं मलमासः सविज्ञेयोमासः शुद्धाख्यउत्तरइति अस्यैव मलिम्लुचइत्यपिसंज्ञा तदुक्तं ज्योतिः शास्त्रे रविणालंघितोमासश्चांद्रः ख्यातोमलिम्लुचइति चांद्रोपिशुक्लादिरेवविवक्षितः तदुक्तं लघुहारीतेन - इंद्वाग्नीयत्रहूयेतेमासादि सप्रकीर्तित अग्नीषोमौस्मृतौमध्येसमाप्तौपितृसोमकौ तमतिक्रम्यतुयदारविर्गच्छेत्कदाचन आद्योमलिम्लुचोज्ञेयोद्वितीयः प्राकृतः स्मृतः अधिमासस्यमलत्वं अधिकमासत्वात् तदुक्तंगृह्यपरिशिष्टे मलंवदंति कालस्यमासंकालविदोधिकमिति कालाधिक्यंच विष्णुधर्मोत्तरेदर्शितं सौरेणाब्दस्तुमानेनयदाभवतिभार्गव सावनं हितदामानंदिनषट्केनपूर्यतेदिनरात्र्यश्चतारामप्रोक्ताःसंवत्सरेणषट् सौरसंवत्सरस्यांतेमानेनशशिजेनतुएकादशातिरिच्यंतेदिनानिभृगुनंदन समाद्वयेसाष्टमासेतस्मान्मासोतिरिच्यते सचाधिमासकः प्रोक्त प्रोक्तकर्मसुगृह्यतइति अत्राधिकमासस्य ज्योतिः शास्त्रेः संभवकालउक्तः दिवसस्यहरत्यर्कः षष्टिभागमृतौगत करोत्यकमहश्छेदंतथैवेकंचचंद्रमाः एवमर्द्धतृतीयानामब्दानामधिमासकं अस्यार्थ दिवसस्याहोरात्रस्यतिथेर्वा षष्टिभागदंडात्मकं अर्कः प्रतिदिनंहरतिनलंघयति अतऋतौ ६ष्वहोरात्रैःषष्ठिनाड्याकर्षणात्तिथिरेकासूर्येणाकृष्टाभवति एवमिंदुनापि चंद्राकाभ्यामृतुंप्रतिदिनद्वयापकर्षणाद्वर्षेण द्वादश दिनानिलभ्यंते - एवंसाधमब्दद्वयपर्यंतेनाधिमासो

लभ्यते अयंनपुंसकइत्यप्युक्तंज्योतिः शास्त्रेअसंक्रांतोहियोमासः कदाचित्तिथिवृद्धितः कालांतरात्समायातिस नपुंसकउच्यतेनपुंसकत्वंचमासपुंस्त्वप्रयोजकसूर्यस्याभावात् तदपितत्रैवोक्तंवरुणःसूर्योभानुस्तपनश्चंद्रोरविर्गभ स्तिश्चअर्य्यमहिरण्यरेतोदिवाकरामित्रविष्णूच एतेद्वादशसूर्य्यामाघाद्येषूदयंतिमासेषुनिः सूर्योधिकमासोमालि म्लुचाख्यस्ततः पापः मासेषुद्वादशादित्यास्तपंतोहियथाक्रमंनपुंसकोधिकेमासिमंडलंतपतेरवेरिति मालिम्लुचत्वंत स्यकर्मफलचौरैराक्षसादिभिराक्रांतत्वात् तदुक्तंशातातपेनवत्सरांतर्गतःपापोयज्ञानांफलनाशकृत् नैर्ऋतैर्यातुधाना द्यैःसमाक्रांतोविनाशकैःमालिम्लुचैःसमाक्रांतसूर्यसंक्रांतिवर्जित मालिम्लुचंविजानीयाद्गर्हितंसूर्यकर्मसुइतिअत्रस्फु टमानागतासंक्रांतिरेवाधिमासत्वेनग्राह्यानतुमध्यमाअनेनशुक्लप्रतिपदादिदर्शांतादसंक्रांतमासस्यविधानिषेधोप योग्यधिमासत्वलधिगम्यतेनचमध्यमानागतसंक्रांतिनियमेनशुक्लप्रतिपदादिदर्शांतःअस्यहिनियताभवनकालोव सिष्ठसिद्धांतेदर्शितःद्वात्रिंशद्भिर्गतैर्मासैर्दिनैःषोडशभिस्तथा घटिकानांचतुष्केणपतत्येकोधिमासकइतिएततुसंभवा र्थंनतुनियमार्थं अन्यथाषोडशादिनाधिकद्वात्रिंशन्मासानंतरंकृष्णपक्षानियमेन शुक्लादित्वभंगापत्तेःतेनन्यूनाधिक कालेमलमासपातेपिनैवदोषःयान्यपिमासेत्रिंशत्तमेभवेदित्यादीनिवचनानितान्यपिसंभवाभिप्रायेणैव नतुनियमा भिप्रायेणव्यभिचारस्यस्फुटत्वात् निर्णयामृतेद्विसंक्रांतिमासस्तुमलमासएवनत्वधिमासः तदाहसत्यव्रतःराशिद्वयं यत्रमासेसंक्रमेतदिवाकरःनाधिमासोभवेदेषमलमासस्तुकेवलं अयंद्विसंक्रांतिमासःक्षयाख्योपितदुक्तंज्योतिःशा स्त्रे असंक्रांतिमासोधिमासःस्फुटःस्याद्द्विसंक्रांतिमासःक्षयाख्यःकदाचित्क्षयःकार्त्तिकादित्रयेनान्यतःस्यात्तदावर्ष मध्येधिमासद्वयंचेतिस्फुटःस्फुटमानलभ्यःद्विसंक्रांतिमासोयदाभवति तत्रवर्षमध्येमासत्रयमधिकंभवतितत्रपरोदु ष्टःआद्यःशुद्धःतदुक्तंतत्रैव एकत्रमासद्वितयंयदिस्याद्वर्षाधिकंतत्रपरोधिमासः त्रयोदशंतुश्रुतिराहवेदेचतुर्दशःक्का

पिनचास्तिदद्दष्टइति जाबालिरपिमासद्वयेब्दमध्येतुसंक्रांतिर्नयदाभवेत् प्राकृतस्तत्रपूर्वःस्यादधिमासस्तथोत्तरःप्राकृतःशुद्धकर्मार्हइत्यर्थःउत्तरइतिउत्तरएवाधिमासःकर्मार्हइत्यर्थःतथासएव एकस्मिन्नपिवर्षेचद्वौमासावधिमासकौ पूर्वोमासःप्रशस्तःस्यादपरस्तुमलिम्लुचइति अयंचत्रयोदशोमासश्चांद्रएव नसौरःतदुक्तं अस्तित्रयोदशोमासएवं श्रुत्यानिगद्यतेअसौचांद्रोनसौरःस्यान्नास्त्यसौहिचतुर्दशइति यत्तुब्रह्मसिद्धांते चैत्रादर्वाङ्नाधिमासःपरतस्त्वधिकोभवेत् यत्तुज्योतिःसिद्धांते घटकन्यागतेसूर्येवृश्चिकेवाथधन्विनि मकरेवाथकुंभेवानाधिमासोविधीयतइति तद्वृश्चिकादिचतुष्टयेमलमासेसति पूर्वंतुलाकन्यागतेसूर्येक्षयात्पूर्वभाव्यधिमासस्यकालाधिक्यमात्रनिषेधार्थंनत्वधिकमावस्य दशानांफाल्गुणादीनांप्रायोमाघस्यचक्वचित् नपुंसकत्वंभवतीत्येषशास्त्रस्यनिश्चयइति हेमाद्रौ विष्णुधर्मविरोधात् मलमासेष्टकादिनिषेधानुपपत्तेश्च मकरेथवाकुंभेचेतिइष्टार्थप्राप्त्यभावात्अस्यागमनकालउक्तःसिद्धांतशिरोमणौगतोब्ध्यद्रिनंदैर्मितशाककालेतिथीशैर्भविष्यत्यथांगाक्षसूर्यैः गजाद्र्यग्निभूभिस्तथाप्रायशोयंकुवेदेंदुवर्षैःक्वचिद्गोकुभिश्च १ अस्यार्थः चतुःसप्तत्यधिकनवशत ९७४ वर्षशाककालेक्षयमासोगतःतथा पंचदशाधिकैकादशशत ११११५ वर्षमितेशाकेक्षयमासोभविष्यति तथाषट्पंचाशदधिकद्वादशशतवर्षमिते १२५६ शाकेभविष्यति अष्टसप्तत्यधिकत्रयोदशशतवर्षमिते १३७८ शककालेभविष्यति अस्यसंभवएकचत्वारिंशदधिकशतवर्षमितकाले १४१ नियतःक्वचिद्गोकुभिश्च एकोनविंशतिवर्षैरपिसचाप्यानियतएवेतिबोध्यम् एतावद्भिर्वर्षैः क्वचित् पूर्वोत्तरक्षयमासयोर्व्यवधानंभवतीति नतुनियमेन सोयंक्षयमासोमाससंज्ञाप्रयोजकक्रांतिद्वययुक्तत्वान्मासद्वयात्मकः सएवायंचांहस्पतिसंज्ञकः अस्मात्पूर्वभाव्यसंक्रांतिमासः संसर्पः उत्तरभाव्यसंक्रांतिमासोधिमासः एतदेवाभिप्रेत्योक्तंबार्हस्पत्ये ज्योतिर्षे यस्मिन्मासेन

संक्रांतिःसंक्रांतिद्वयमेववा संसर्पांहस्पतीमासावधिमासश्चनिंदितइति अत्रपूर्वासंक्रांतद्विसंक्रांतयोः संसर्पांहस्पतिमाससंज्ञकत्वमुत्तरासंक्रांतमासस्याधिमासत्वंक्रमेणाभिधानादवगम्यते संसर्पोऽसंक्रांतोपि नमलमासःकिंतुशुद्धतुल्यःउत्तरएवासंक्रांतोमलमासइत्युक्तंप्राक्॥इतिमलमासस्वरूपनिर्णयः॥अथ ससंक्रांतमासे कश्चिद्विशेषनिर्णयःप्रस्तूयतेतत्रादौतदुपयोगिचैत्रादिलक्षणंतच्च कमलाकरोक्तमेषादिसंक्रांतिपरिसमाप्तामावास्याकत्वमित्यादितथाचमाधवमतेज्योतिषवचनं मेषादिस्थेसवितरियोयोमासः प्रपूर्य्यते चांद्रः चैत्राद्यःसज्ञेयःपूर्त्तिद्वित्वेधिमासोंत्यइति नचैतत्तत्पूर्वासंक्रांतेर्व्याप्तमितिवाच्यं षष्टिभिर्दिवसैरित्याद्युक्त्या पृथगेवलक्षत्वात् अतएवमेषादीनांशुद्धमाससंज्ञांप्रत्येवप्रयोजकत्वंमलमासस्योत्तरमासशेषत्वश्रवणादितिमाधववचःसंगच्छतेयदाभाद्रपदोत्तरमधिकंततत्राश्विनःततःकार्त्तिकःततोमार्गशीर्षोद्विसंक्रांतःततःपौषःततोमाघः ततःफाल्गुणोऽसंक्रांतस्ततश्चैत्रइतिक्रमःतदामेषसंक्रांतिपरिसमाप्तामावास्याकत्वंचैत्रत्वमित्येवरीत्या धनुःसंक्रांतिपरिसमाप्तामावास्याकत्वं मार्गशीर्षकत्वमन्यत्र मार्गशीर्षप्रसिद्धं तस्यात्रद्विसंक्रांतेरभावात् मार्गशीर्षोलुप्तःअतएवक्षयइतिव्यवह्रियते एवंसतिमासपक्षतिथिरुष्टइत्यादिनातत्तन्मासविशेषणपुरस्कारेणाविहितप्रत्याब्दिकादीनांसद्यरुकालायात्र्योग्रज्ञापरमतामित्यादेरिवलोपप्रसंगः तत्रमृतानामागामिवर्षसाधितत्तन्मासेलोपप्रसंगश्च यदिचमकरसंक्रांतिपरिसमाप्तावास्यकत्वरूपपौषत्वसद्भावेपि रविसंक्रमहानेयोवर्ज्यावर्ज्यविधिःस्मृतः सएवतुद्विसंक्रांतेमलमासेप्युदीरितइति काठकगृह्येण पौषप्रयुक्तानामपिलोपप्रसंगः यदिचपूर्वोक्तंतत्तन्मलमासलक्षणं तदुत्तरसंक्रांतेऽतिव्याप्तमित्युच्यते तदानीं तस्याद्यतिथिकत्वं चैत्रत्वं आद्यातिथिःशुक्लाप्रतिपत् तस्वंचप्रतिपदाद्यक्षणावच्छेदेनैवेत्येवंपरिपाट्याद्वश्चिकस्याद्यतिथिकत्वंमार्गशीर्षकत्वंधनुःस्याद्यतिथिकत्वमितिविभाव्यते तदापौषोलुप्त

इतितत्पुरस्कृतपूर्वोक्तकार्य्यविलोपः अतिदेशेतु मांशीर्षपुरस्कृतकार्य्याप्रसंगः नचेष्टापत्तिः प्रत्यवायश्रवणादि
ति. अत्रोच्यतेतिथ्यर्द्धेप्रथमेपूर्वोद्वितीयेर्द्धेतदुत्तरः मासाविति बुधैश्चित्यौक्षयमासस्यमध्यगाविति ज्योतिषवचनात्
क्षयमासेद्वयत्वोक्त्यातत्तन्मासप्रयुक्तदोषस्यपरिहृतत्वात् तत्र लक्षणभेदेनान्यतरोमासाविशेषोगौणः मुख्यासंभ
वे गौणपरिग्रहस्यावश्यकेपु अन्यत्रप्रसिद्धेः अतिदेशप्रयुक्तलोपोद्धारस्तुइत्थं तत्राद्याब्दिकस्यमलेपिविहितत्वादे
वनलोपः द्वितीयादेस्तु मलेनान्यगतिः कुर्य्यान्नित्यांमित्तिकींक्रियामितिकाठकगृह्ये पौषविधानात् मलत्वं
चास्य अंहस्पतित्वात् एवंवार्द्धापनाष्टकादावपियोज्यं तत्रतत्तत्तिथिपूर्वोत्तराधयोस्तत्तत्कर्मकालव्यापौ
व्याप्तौच एकदेशव्याप्तौवाकर्मकालव्याप्तिशासनमनुसर्त्तव्यं तत्राब्दिकविषये दर्शंचपौर्णमासंचपितु सांव
त्सरंदिनं पूर्वविद्धमकुर्वाणोनरकंप्रतिपद्यते इतिनारदीयवचनं तद्ध्यहव्यापिनीचेत्स्यान्मृताहस्यचसातिथिः पूर्व
विद्धैवकर्त्तव्यात्रिमुहूर्त्तेवयाभवेदिति वृद्धमानवीयं ह्यपरान्हव्यापिनीचेदाब्दिकस्ययदातिथिः महतीयत्रतांविद्धां
प्रशंसंतिमनीषिणइति मारीचवचः ह्येहेपिव्यापिनीचेत्स्यान्मृताहस्ययदातिथिः पूर्वविद्धाप्रकर्त्तव्यात्रिमुहूर्त्ता
चयाभवेदिति सुमंतुवचः कमलाकरैरप्युक्तं अत्र मृताहस्येत्यनेन कांक्षितमासपक्षइति मृताहत्वलक्ष्यावो
धकवाक्यैकवाक्यतया तत्तन्मासविशिष्टत्वविधिविशेषाभावस्य अपराह्णद्वयेनवाधनात्विशेष्याभावप्रयुक्तविशि
ष्टाभावमादाय तिथ्यंतरकर्त्तव्यतावोधनवत् विशेषणाभावप्रयुक्तविशिष्टाभावमादायमासांतरेपितद्वाधनात्इदंचा
वश्यकंअन्यथायदाअमाचतुर्विंशतिघटिका प्रतिपत् अष्टादशघटिकातदाप्रतिपत्श्राद्धंमासांतरतिथ्यंतरसंबंध्यप
राह्णेनस्यात्नचेष्टापत्तिःशिष्टैरनुष्ठीयमानत्वात् अस्यचप्रकृतेरुदाहरणं यदाप्रतिपच्चतुर्विंशतिघटिकाद्वितीयाष्टादशे
तदामार्गद्वितीयाश्राद्धंपौषप्रतिपदिकर्त्तव्यंयदातुद्वितीयाऽरुनमानेप्रवृत्तातदात्रिमुहूर्त्ताभावात्पूर्ववाक्याभावात्मार्ग
द्वितीयाश्राद्धंपौषद्वितीयायांत्रिमुहूर्त्तानचग्राह्या परत्रकुतपेहिसेतिवचनात्कर्त्तव्यमित्येवंसर्वत्रसंयोज्यंवार्द्धापनेश्र

दित्योदयकालिकी तदभावेयुग्मादिनानिर्णयइति नचेदंव्यर्थं त्रिंशत्तिथिसमूहात्मकमासस्यावयवभूतयाग्र
त्तिथीनांमार्गशीर्षत्वपौषत्वस्यचसर्वंनिर्वहति तत्रोक्तप्रकारेणान्यतरस्यारोपितत्वात् आरोपितानारोपितप्रो
र्विरोधाभावात् विभागस्वीकारंविनैव सर्वतिथीनां प्रत्येकंतदुभयात्मकत्वोपपादनाद्यकर्त्तुशक्यत्वादि
तिवाच्यं अत्रमृतस्यजातस्यचाग्रिमवर्षीयतन्मासद्वयेपि आब्दिकश्राद्धवार्द्धापनानुष्ठापनापत्तेः तच्चानि
ष्टं अतएवतिथ्यर्द्धेप्रथमेपूर्वोह्रित्तीयेर्धेतदुत्तरइत्युक्तं अयभावः मासावित्येकविशेषेणमासद्वय विधिर्य-
द्यप्यविशेषणप्रतीयते तथापि यदग्नयेचप्रजापतयेचसायंजुहोतीत्यनेनमंत्रवर्णप्राप्त विध्यनुवादेनप्रजाप-
तिदेवताविधानवन्मुख्यमासानुवादेनपूर्वार्धाद्यवच्छेदकपुरस्कारेण मासांतरतादात्म्यातिदेशोविधीयते मुख्य-
मासत्वानुवादावच्छेदकविधानार्थोसमानांतरस्यावच्छेदकत्वंतूत्पात्तिविशिष्टमिति अवयवांतरेतन्मासत्वाभावः
मुख्यमासत्वंयद्यप्यवयवांतरेसंभवति तथापितदकिंचित्करं अतिदिश्यमानधर्मविरुद्धस्याश्रयप्रयुक्तकार्याभावा
स्यातिदेशस्वभावसिद्धत्वात् यद्यपि अवच्छेदकभेदेनमासद्वयकल्पकवचनजातस्यकमलाकरेण क्षयंजातपुरस्का
रेणाभिधानंकृतं तथापिमाधवेनापिविशेषणंतदुपन्यस्यद्वादशमासःसंवत्सरइत्यादिश्रुतिविरोधपरिहारस्यकृतत्वा
दुपलक्षणं अन्यथातिथिपूर्वार्द्धेप्रसूतायाः पौषप्रयुक्तशांत्याद्यापत्तेः मलेसतिप्रसूतकर्णवेधस्य तिथिपूर्वार्द्धे अनुष्ठा
नेपिपौषप्रयुक्तप्राशस्त्यापत्तेश्च किंचएकएवयदामासइत्यादिना तिरस्कृतमासद्वयात्मकत्वस्य तिथ्यर्द्धेप्रथमेपूर्वमि
त्यादिवचनमंतरेण मासद्वयात्मकाविधायकवचनानुपलंभात् अनेनतु अवच्छेदकभेदेनैवतद्विधास्यते उपलंभेवापूर्वो
क्तवैचित्र्यसिद्ध्यर्थंएतदेकवाक्यतयाअन्यायत्वाच्च एतच्चाग्रेविस्तरेणवक्ष्यते अतः सर्वत्रावच्छेदकभेदेनैवमासद्वया
त्मकस्यगृहीतुमुचितत्वात्संकोचोयुक्तः एतेनमार्गशीर्षगतंचाब्दिकमेकस्मिन्नेवमासेतीथिपूर्वार्द्धाद्विभागंविनैव

कार्यमित्याचार्योक्तं यथाश्रुतकमलाकराशयवर्णनमात्रंवोध्यं विभागविभागाभावपक्षयोः क्वचित्फलैक्येपिक्वचित्फलभेदात् तथाहि यदापूर्वदिनेप्रतिपद्घट्योष्टादश ॥ १८ ॥द्वितीयाउत्तरादिने त्रयोविंशतिदंडा ॥ २३ ॥तदा विभागाभावपक्षे मार्गशीर्षद्वितीयाश्राद्धंपौषद्वितीयाश्राद्धंचपूर्वादिने कृत्स्नापराह्णव्याप्तेः विभागपक्षेतु गतैष्ययोगेन सर्वास्तिथिघट्यः ॥६५॥ तत्रसार्धद्वात्रिंशद्घटिकापर्यंतमार्गशीर्षःतदुत्तरंपौषः मार्गशीर्षद्वितीयाश्राद्धंपूर्वदिने पौषद्वितीयाश्राद्धंतूत्तरादिने एवंवहुशः स्थलेषुवोध्यं अत्रजातानांमृतानांचतत्तत्तिथिपूर्वापरार्धभेदेनाग्रिमवर्षसंवाधितन्मासनिर्णयःवर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि मासद्वयेपितत्कुर्य्याद्व्याघ्रस्यवचनंयथेतिगालवीयवचनं एक एवयदामासःसंक्रांतिद्वयसंयुतःमासद्वयगतंश्राद्धंमलमासेपिशस्यते इतिशातातपीयं तत्राक्संज्ञय'धिमासकोयदि भवेत्तत्रत्यसांवत्सरं तस्मिन्शुद्धतयाक्षयेपिवचनात्कुर्य्याद्द्वयोः कोविद इतिदीपिकावचनं चैकमूलकत्वकल्पनानुरोधात् क्षयव्यवहितपरं परंनुवक्ष्यमाणप्राकृतत्वविषयं तस्मिन्शुद्धतयेत्युक्तेः वटेश्वरीयचालनप्रकारोपिनात्र तथाहि मासः संक्रांतिहीनोधिक इतिकथितः शीघ्रवक्रप्रचारैः संसर्पोहस्पतिःस्यात्समविषमतयाचालनंतत्क्षयस्यपूर्वैश्चद्रार्कयोगैर्विरहितरविसंक्रांति तश्चालनंस्याद्वक्रश्चार्कोधिमासेयदिनचलतितदामासयुग्मात्रिचिंत्यमितितद्वचनं माधवाचार्य्यैर्लिखितं अस्यार्थः संक्रांतिशून्यः अधिकः अध्यारूढशब्दात्स्यन्नुत्तरपदलोपश्चेति अधिकमितिसूत्रेणनिपातः शीघ्रवक्रप्रचारैः शीघ्रप्रचारैर्वक्रप्रचारैरित्यर्थः शीघ्रप्रचाराधिकदिनोल्लंघनं वक्रप्राचारान्न्यूनादिनोल्लंघनं तत्रपूर्वेणसंसर्पःद्वितीयेनअंहस्पतिःतद्विभक्तिप्रतिरूपकमव्ययं तयोर्मध्यइत्यर्थः क्षयस्यैवचालनंकर्तव्यमितिशेषःतच्चसमविषमतारूपंविशेषणतृतीया तत्रसमत्वंकृतेपिचालनेपूर्वमासापरित्यागःविषमत्वं तत्त्यागःकैःकर्तव्यमित्याशंकायां पूर्वैरित्यादिक्षयात्पूर्वभाविभिरित्यर्थःचांद्रदिवसैरर्कदिवसैरस्य अध्याहृतंकर्तव्यमित्यनेनान्वयःक्वकर्तव्यमित्याशंकायामाहाविरहितेतिविरहितारविसंक्रांतिर्यत्रास्मिन्नर्थे सप्तम्यंतारासिःयच्चालनमुक्तंतत्त्र

तत्पर्यंतवास्यादित्यनेनान्वयः सन्नकचिदव्यवहितः कचिदेकेनव्यवहितः काचिद्द्वाभ्यां तच्चसाक्षात्परंपरयावा यदि वक्रश्चर्कः पूर्वोक्तविषमचालनेवैषम्यसिध्यर्थमाह अर्कमासेइतिससंक्रांतेइत्यर्थः तच्चद्विसंक्रांते एकसंक्रांतेवान चलातितत्रैवास्थिरांभवतीत्यर्थः मासयुग्मंतदाअस्यतदेत्यादिशेषः तिथिपूर्वार्धेएकः अपरार्धे एकइतिमासद्वयंवोध्यं प्रकृते अनयारित्याधनुः स्थोऽर्को यद्यपिपूर्वत्रचलति तथापि वृश्चिकस्थोर्कोनचलतीतिसाक्षात्परंपरयावा असंक्रांत पर्यंतचालनंनसंभवतीति क्षयादव्यवहितसंक्रांतोपिम धुवाद्वेमाद्रेश्वसंभाव्यते क्षयादेकेनद्वाभ्यांवाव्यवहितस्तुधर्म शास्त्रेचोदाहृतएव तत्रक्षयसामान्यलक्षणंतु द्विसंक्रांतित्वमात्रं तदुक्तंज्योतिःसिद्धांते असंक्रांतिमासोधिमासः स्फुटःस्याद्द्विसंक्रांतिमासःक्षयास्यःकदाचित् क्षयःकार्त्तिकादित्रयेनान्यतः स्यात्तदावर्षमध्येधिमासद्वयंचेति तान्नियत सहचारि रूपंतु तत्पूर्वमासत्रयान्यतमासंक्रांतित्वेसतिउत्तरमासत्रयान्यतमासंक्रांतित्वं अत्रवर्षमध्येधिमासद्वयंचेति तुवैश्वानराधिकरणन्यायेनावयुत्यानुवादः अन्यथा द्यंगेंद्रशाकेक्षयमासआसीत्ततास्त्रिखाष्टी १६०३ प्रमितेतुभा वी वेदार्णवात्यष्टि १७४४ युतेअगोन्योभविष्यतिखाष्टधृतिप्रमेऽप्यइति ज्योतिःशास्त्रप्रसिद्धप्राकृतक्षयेअव्याप्त्यापत्तेः मासद्वयेब्दमध्येतुसंक्रांतिर्नयदाभवेत् प्राकृतस्तत्रपूर्वस्स्यादधिमासस्तथोत्तरइतिजावाल्याद्युक्तप्राकृतत्वमपि प्रकृते नास्ति अब्दमध्येइत्युक्तेः नचेदमपिपूर्ववदवयुत्यनुवादः यस्मिन्मासेनसंक्रांतिः संक्रांतिद्वयमेववा संसर्पाहस्प तौमासावधिमासश्चनिंदित इतिवचनविहितस्य त्रयाणांनिंदितत्वस्यवैयर्थ्यापत्तेः नचैवं संसर्पइतिसमाख्यावलादत्र निंदितत्वानन्वयइतिवाच्यं तस्याः सर्वतोदुर्बलत्वाद्वाक्यादिप्रमाणप्राप्ततदन्वयस्यबाधायोगात् नच साचरितार्था पूर्वोक्तप्राकृतत्वेनबाधितानन्वयस्थलेचारितार्थ्यादितिप्रकृतमलप्रयुक्तदानादितुत्रिष्वपिमासेषुअनुष्ठेयं-अत्राश्विनपूर्वा संक्रांतस्यमलत्वं यद्यपि न कालाधिक्यप्रयुक्तं अन्यासंक्रांतवत्तथापि-वत्सरांतर्गतः पापोयज्ञानांफलनाशकृत

काम्यतुलादानादेस्तु सकृदनुष्ठानेनकामनासिद्धेः उक्तन्यायसंचारे उत्तरत्रैवानुष्ठानंयुक्तं प्राकृतत्वंतु ज्ञापकसिद्धाश्वि
नत्वपुरस्कारेणविहितकार्य्यसंपादनेनकृतार्थमितिभाति यदातु द्विसंक्रांतादव्यवहितपूर्वोऽसंक्रांतः संभाव्यते उत्त
रत्वसंक्रांतः एतदुभयमानवत्सरांतर्गतस्तदातस्यप्राकृतत्वंनिर्विवादं उत्तरशेषत्वंच तथा तत्रोत्तरस्यातिथ्यर्द्धेप्रथमेइ
त्यनेनविभागेन मासद्वयात्मकत्वंवाक्यांतरेणविभागेनोभयात्मकत्वंवा तत्रान्यतरोमासोगौणः अन्यतरे मुख्यः त
त्रमुख्यशेषत्वेमुख्यप्रयुक्तकार्य्याकार्य्यैस्तः उभयशेषत्वे उभयप्रयुक्तकार्य्याकार्य्यैस्तः प्राकृतत्वंच स्वोत्तरवृत्तिधर्मव
त्त्वमुपदिश्यते अथवा स्वोत्तरवृत्तिशुद्धत्वं अथवाक्षयानधिकरणवत्सरांतर्गतस्वस्थानापन्नमासवृत्तिशुद्धत्वंवा आद्ये
स्वस्वोत्तरयोरुभयोरपिमलेनन्यगतिः कुर्यादिति उभयत्रश्राद्धादिप्राप्तौनदीपिकावचनमवकाशमर्हति द्वितीयेपि स्वो
त्तरत्रशुद्धत्वाभावात्पूर्ववदेवनावकाशमासादयेत् तृतीयेतु शुद्धत्वात् तत्रैवोभयशेषत्वपक्षे मासद्वयप्रयुक्तंश्राद्धादि
नतु क्षयेऽनन्यगतेरभावात् क्षयवचनादित्यस्यानवसरः एकएवेत्यत्रहेमाद्रिव्याख्यानंतु मलेनन्यगतिमित्येतन्मूलक
मितिनात्रसंचरति यदिस्वोत्तरासंक्रांतोभिन्नवत्सरांतर्गतस्तदा प्राकृतत्वमेवनास्तीति मलेनन्यगतिःकुर्य्यादित्येतन्मा
त्रविषयः एवंचमुख्यशेषत्वपक्षे तृतीयंप्राकृतत्वं गृहीत्वाऽव्यवहितदीपिकावचनस्यावकाशोवाच्यः तथाचात्यल्प
विषयतातदपेक्षयाव्यवहिताव्यवहितसाधारण्यंयुक्तं किंचयत्रोत्तरोमुख्यःतत्रतच्छेषत्वात् अस्य तत्प्रयुक्तमत्रस्यात्
पूर्वप्रयुक्तंक्षयेस्यादितिव्यत्ययरूपंविरुद्धमापद्येत ततोदीपिकावचनं व्यवहितविषयमितियुक्तं किंच तत्प्रागित्य
स्ययद्यव्यवहितएवप्रवृत्तिः स्यात्तर्हि संगत्यस्यवैयर्थ्यंस्यात् कृतेतुतस्मिंस्तत्प्राप्तिः संगीतिपर्य्यालोचनपुरुषेण एकंव्य
वहितमेवगृह्णीयादितिव्यवहितमेव प्राक्संगिग्रहणंतु स्पष्टार्थं अत्रशुद्धतयेतिप्राकृतत्वमूलकं नत्वनन्यगतिमूलं
तथासति तस्मिन्क्षयेवचनादित्येववदेत् नतुशुद्धतयेति एतेनप्राकृतत्वमपि अनन्यगतिमूलकमित्यपास्तं किंच

तस्यतन्मूलकत्वे तत्रत्वब्दमध्येइत्यादेर्वैयर्थ्याच्च माधवप्रभृतिभिरनन्यगतिकं क्षयेऽव्यवहितमेव उदाहरणद्वयमुक्त्वा
प्राकृतत्वोक्तेश्च क्षयादप्यव्यवहितस्तुसंभावितःप्रकृते प्राकृतत्वाभावस्तु द्वितीयासंक्रांतस्यभिन्नाब्दप्रवृत्तित्वात्सहजत
एवसिद्धइति तदर्थमेवायं प्रयासोऽपहतोदेशस्तंभादितिन्यायमनुसरतीतिदिक् उभयात्मकत्वंतुतिथिपूर्वार्द्धादिविभा
गेनैवसर्वत्रबोध्यं नत्वविभागेन तथाहि नतावत्प्रकृतेमुख्ये मार्गशीर्षपौषातिदेशः आरोपितानारोपितयोर्विरोधामा
वेनोभयसमावेशेपि अतिदिश्यमानधर्मविरुद्ध इतिन्यायेन मार्गशीर्षकार्यासिद्धेः नचोभयत्वेनातिदेशः उभयता
वच्छिन्नोद्देश्यकहेमंतशिशिरयोरित्यादिविहितमासद्वयात्मकं ऋतूद्देश्यकादिकमेवातिदिश्यते नतु मार्गशीर्षाद्यव
च्छिन्नोद्देश्यकप्रत्याब्दिकं नचमार्गशीर्षत्वपौषत्वएतदुभयवदतिदेशः तथासत्यपि उभयत्वावच्छिन्नावच्छेदकताकोद्दे
श्यताकार्यादेरेवातिदेशेनसिद्धिःस्यात् नतुनिरवच्छिन्नपौषत्वादिनिष्ठावच्छेदकताकोद्देश्यताकप्रत्याब्दिकादेरिति ति
थ्यर्द्धप्रथमेइत्यनेनयोयत्रनास्तिसचेत्पूर्वः तस्य तिथिपूर्वार्द्धे अतिदेशः योयत्रनास्तिसचेदुत्तरःतस्य तिथ्युत्तरार्द्धेतिदे
शः मासाविवितु लक्ष्यभेदाभिप्रायकं अतिप्रसंगस्तु अतिदिश्यमानेतिन्यायेन वारणीयः रात्रौश्राद्धप्रसंगस्तु पूर्वं
वारितएव कार्त्तिकादिषुमासेषुयदिस्यातांमलिम्लुचौ सर्वकर्महरःप्रोक्तःपूर्वस्तत्रमलिम्लुच इतिवचनंतु यथाश्रुतमेव
प्रकृतानुपयोगि यदिच कार्त्तिकादिमासेषुक्षयेसतिमलिम्लुचौस्यातामित्यर्थः तदा प्रकृतोपयोगेपिकार्त्तिकादिःवि
स्यव्यावर्त्तकं किंच पूर्वएवसर्वकर्महरइत्येवंनियमाकारे उत्तरस्य सर्वकर्महरत्वाभावःसिद्ध्यति पूर्वःसर्वकर्महरएवेत्येत
स्यापिनियमस्यसंभवात् एतत्फलंतु पूर्वस्मिन्दिनाधिक्यप्रयुक्तमलत्वस्योत्तरत्र यथासद्भावस्तद्वदभावेनाऽस्यकर्महे
त्वेप्राप्तेऽनेनपूर्वोक्तमलिम्लुचाधिष्ठितत्वरूपमलत्वव्यवस्थापनं तस्यापि यत्रप्राकृतत्वंतत्रतेनापहारइतिवचनांतरावि
रोधइत्यलं अथास्यकालदोषवत्त्वान्मलमासमात्रे वर्ज्यावर्ज्यनिर्णयः तत्र सत्यव्रतः मलिम्लुचस्तुयोमासःसमासः

पापसंज्ञित वर्जित पितृदेवाभ्यांसर्वकर्मसुवर्जयेदितिवापाठ साधुः मनु-एकराशिस्थितेसूर्येयदादर्शद्वयंभवेत् हव्य कव्यक्रियाहंतानदाज्ञेयोधिमासक शातातपः वत्सरांतर्गत.पापोयज्ञानांफलनाशकृत् नैर्ऋतैर्यातुधानाद्यैःसमाक्रांतोधिमासक मलिम्लुचे.समाक्रांतसूर्यसंक्रांतिवर्जितं मलिम्लुचंविजानीयाद्गर्हितसर्वकर्मसु गृह्यपरिशिष्टे मलिम्लुचस्तुमासोवैमलिन- पापसंभव. गर्हितःपितृदेवेभ्यःसर्वकर्मसुतंत्यजेत् ब्रह्मसिद्धांते यदाशशीयातिगभस्तिमंडलंदिवाकर संक्रमणंकरोत्यनु तदाधिमास कथितोविरंचिनाविवाहयात्रोत्सवयज्ञदोषकृत् सिनीवालीमतिक्रम्ययदासंक्रमतेरविः भानुनालंघितोमासोह्यनर्हःसर्वकर्मसु ज्योतिःशास्त्रांतरे सवितृमंडलमेतियदाशशीतदनुसंक्रमणंकुरुतेरवि. मखमहोत्सवनाशकरस्तदामुनिवरै.कथितोधिकमासकः पैठीनसिः श्रौतस्मार्तक्रियाःसर्वाद्वादशस्वेवकीर्तिताः त्रयोदशेतुता.सर्वानिष्फलाइतिकीर्तिता तस्मात्त्रयोदशेमासिनकुर्यात्ताःकथंचन कुर्वन्ननर्थमेवाशुकुर्य्यादात्मविनाशनमिति त्रयोदशत्वंच संक्रांतियुक्तद्वादशमासापेक्षया अत्रनिष्फलाइत्यभिधानात्फलकामनयाप्रवृत्तकर्मनिषिध्यत इतिगम्यते तथाचस्मृत्यंतरम् इष्ट्यादिसर्वकाम्यंतुमलमासेविवर्जयेदिति यद्यपि पूर्ववचनेषुसर्वकर्मकर्तव्यतानिषेधो मलमासेप्रतीयते तथापि नकुर्यादधिकेमासिकाम्यंकर्मकदाचन मलंवदंतिकालस्यमासंकालविदोधिकं नकुर्यादधिकेमासिकर्माकर्मकथंचन मुकुंदानैमित्तिककर्मतद्धितत्रैवकीर्तितमित्यादिशंखसुमंतुवचनेभ्योनित्यनैमित्तिककुर्य्यात्प्रयत सन्मलिम्लुचइत्यादिप्रतिप्रसववचनेभ्यश्च काम्यानामेवस. तत्रशंखवचने कर्माकर्मशब्देन काम्यकर्मोच्यतेतद्धिफलकामै क्रियमाणत्वात्कर्मतदकामैरक्रियमाणत्वादकर्म कर्मचतदकर्मचेतिकर्मधारय. नित्यनैमित्तिकानां तुकरणमेव नित्यनैमित्तिकेकुर्याच्छ्राद्धंकुर्यान्मलिम्लुचे तिथिनक्षत्रवारोक्तकाम्यंनैवकदाचनेति जाबालिवचनात् तदप्यगतिकानामेव अनन्यगतिकंनित्यंकुर्य्यान्नैमित्तिकंतथेतिस्मरणात् मलेऽनन्यगतिनित्यंकुर्य्यान्नैमित्तिकींक्रिया

मितिकाठकवचनात् अनन्यगतिकचयस्यानित्यस्यमुख्यकालातिक्रमजघन्यस्यकालांतरस्याननुज्ञातत्वादत्यंतलोपे प्रायश्चित्तेप्रसज्येत तत् मलमासेकाम्यनिषेधोप्यारंभसमाप्तिविषयएव असूर्यानामयेमासानैतेषुममसंमतः व्रता नांचैवयज्ञानामारंभश्चसमापनमिति ब्रह्मसिद्धांतवचनात् प्रारब्धासमाप्तंतुकाम्यकर्म मलमासेपि भवत्येव प्रारब्धं कर्मयत्किंचित्तत्तुकार्य्यंमलिम्लुचे इतितत्रैवोक्तत्वात् चातुर्मास्यव्रतारंभानंतरंतत्समाप्तिकालादर्वाङ्मध्यपतितेऽधि मासे अधिमासनिपातेपिह्येषएवविधिक्रम इतिवचनेन तद्व्रतस्याभ्यनुज्ञादर्शनेन काम्यकर्मांतरेष्वित्यापितथाकल्प यितुमुचितत्वात् आवश्यकंतु काम्यकर्ममलमासेप्यारभ्यकर्त्तव्यं यथातीव्रज्वराद्यभिभवे तद्व्याहत्यर्थं श्रीरुद्रजपाद्य नुष्ठानंमलमासमाप्तिवीक्षायामनर्थप्रसंगात् तदाहमरीचिः रोगेचालभ्ययोगेचसीमंतपुंसवेपिच यद्दानादिसमुद्दिष्टं पूर्वत्रापिनदुष्यतीति पूर्वत्रापि मलमासेपीत्यर्थः तथाभिचरतःप्रतिचरतश्चेष्ट्यादिकमप्यग्नावैष्णवमेकादशकपालंनि र्वपेदभिचरन्निति; प्रतिवैपरस्तादभिचरतिइत्यादिवाक्यविहितंतदप्यावश्यकत्वात्तत्रकार्य्यमेव तथाराजद्रोहादिना पमृत्योःप्रसक्तस्तत्रयोमृत्योर्बिभियात्तस्माएतांप्राजापत्यांशतकृष्णलांनिर्वपेदित्यादिना विहितेष्टिरपिकर्त्तव्यैव कृष्ण ला.सुवर्णशकलानि यवत्रयपरिमितानियस्यां निर्वपणीयानिसेष्टिः शतकृष्णला तथा यदावृष्ट्यभावात्सस्यानि शुष्यं ति मलमासश्चागतस्तदा कारीर्या वृष्टिकामोयजेतेतिविहितेष्टिरपि न कालविलंबंसहते एवस्मात्तान्यप्यावश्यकान्यु दाहरणीयानि अनन्यगतिकानितुनित्यानि गृह्यपरिशिष्टउदाहृतानि अवषट्कारहोमाश्चपर्वचाग्रयणंतथा मलमासे पिकर्त्तव्यंकाम्याइष्टीर्विवर्जयेदिति अवषट्कारहोमा अग्निहोत्रवैश्वदेवादयः पर्वदर्शपौर्णमासौपार्वणस्थालीपाकश्च आग्रयणकर्त्तव्यताचपुराणालाभे तल्लाभेत्वकर्त्तव्यतैव अनेनैवाभिप्रायेण पैठीनसिनापि संक्रांतिरहितेमासिकुर्य्या दाग्रयणंनवेतिविकल्प उक्तः नैमित्तिकान्यपि कानिचिदावश्यकानि नियमेनदर्शितानि चंद्रसूर्यग्रहेस्नानश्राद्धदान

जपादिकं कार्य्याणिमलमासेपिनित्यंनैमित्तिकंतथेतिस्मृत्यंतरे चंद्रसूर्यग्रहेचैवमरणेपुत्रजन्मनि मलमासेपिदेयंस्या दत्तमक्षयतांव्रजेदिति चंद्रसूर्यग्रहणंचकपिलषष्ठ्याद्यलभ्ययोगानामप्युपलक्षणं गत्यंतरयुतानितुनित्यनैमित्तिकान्य पितत्रनकार्य्याणि तान्यपिकानिचित्काठकगृह्यपरिशिष्टेदर्शितानि सोमयागादिकर्माणिनित्यान्यपिमलिम्लुचे पशौ ज्याग्रयणाधानचातुर्मास्यादिकान्यपि महालयाष्टकाश्राद्धोपाकर्माद्यपिकर्मयत् स्पष्टमासविशेषाख्याविहितंवर्जयेन्म लइतिसोमयागोवसंतेविहितस्तस्यमलमासेवर्जनेपिशुद्धमासेऽनुष्ठानेवसंतेऽननुष्ठितिसंभवात्सगतिकत्वंपशौष्टिःकाठ कशाखादौप्रसिद्धा पुत्रेष्टिरित्यन्यत्रपाठःतत्रपुत्रगतपूतत्वादिफलार्थइष्टिरेवतस्यानैमित्तिकत्वात् निमित्तानंतरंकरणे प्रसक्तेपिशेषविरोधान्निमित्तानंतर्यंबाधनशौचकालरूपांगोपसंग्रहव्यवस्थापनेनाशौचापगमेनानुष्ठानमिवमलमासे प्यतीतिसत्यनुष्ठानंतस्यन्याय्यत्वादुपपद्यतइतिसगतिकाजातेष्टिर्मलमासे न क्रियते हेमाद्रौपुष्टीतिपाठः तत्रापि पुत्रपु ष्ट्यर्थत्वात्पुत्रेष्टिरेव अन्यस्या इदृश्या इष्टेरदर्शनात् महालयोभाद्रपदस्यापरपक्षः अतएवानावश्यकनिषेधोगृह्यपरि शिष्टे मलंवदंतिकालस्यमासंकालविदोधिकं नेहेतात्रविशेषेज्यामन्यत्रावश्यकाद्विधेरिति यच्च प्रवृत्तमलमासात्प्राग्यत् काम्यमसमापितं आगतेमलमासेपितत्समाप्यमसंशयमिति मलमासेपिकाम्यकर्मणःसमाप्तिप्रतिपादकंकाठकगृह्यं तत्सावनमानोपजीविकृच्छ्रचांद्रायणादिविषयमितिकेचित् हेमाद्रिस्तु प्रवृत्तंमलमासात्प्रागिति समाप्त्यभ्यनुज्ञानंम लमासात्प्रागारब्धस्यानियतकालस्यापि असूर्याइति समाप्तिनिषेधस्तु मोहात्तत्रैवप्रक्रांतस्यकाम्यस्यमलमाससमा पत्तेदोषातिशयद्योतनार्थइत्याह तदयुक्तं प्राक्प्रवृत्तस्याप्यानियतकालस्यसमाप्तेःसुगतित्वेनमलमासेनुचितत्वात्प्राति प्रसवस्याप्यगतिकविषयत्वात् मलमासेप्यनुवर्त्तनेनच प्रयोगप्राशस्त्याभावभंगाभावात् प्रवृत्तेतिवचतस्यनियतका लकर्मरूपविषयांतरसत्त्वादिति तदेतद्दानरमणीयं प्रवृत्तवचने नियतकालानियतकालसाधारणशब्देनाभिधानात्

असूर्य्याइतिवचनव्यवस्थार्थंमलमासप्रारब्धस्यैव समाप्तिस्तत्रनिषिध्यत इत्यत्राप्येवकारस्याप्यनर्थकत्वेन तुश
ब्दस्यचानुवृत्तिद्योतकत्वेनसर्वसंमतार्थकतेनैवव्याख्यातुशक्यत्वाच्चेति तस्मादावश्यकमेवकाम्यं अनन्यगतिकानिनि
त्यनैमित्तिकानिचकर्माणिमलमासआरंभणीयानिसमापनीयानिच सावनमाससाध्यानिचकाम्यान्यपिप्रारब्धव्यानि
समापनीयानि तदितरेषांत्वारंभःसमाप्तिश्चनकर्त्तव्यौ अनुवर्त्तनमात्रंतुकर्त्तव्यमिति एवंसामान्यतोवर्ज्यावर्ज्यविवेकसि
द्धे विशेषतोवर्ज्यावर्ज्याणि संगृह्यप्रदर्श्यंते तत्रपुंसवनसीमंतोन्नयनजातकर्मान्नप्राशनांतानिकर्माण्येतत्सर्वंनिमित्तिका
भ्युदयिकश्राद्धंचंद्रसूर्यग्रहप्रयुक्तस्नानश्राद्धदानजपादिकं रोगशांत्यर्थंकर्माधोदयाद्यलभ्ययोगनिमित्तश्राद्धदानव्रतादि
कर्म्मत्येष्टिदहनोदकदानपिंडदानास्थिसंचयननवश्राद्धैकादशाहिकवृषोत्सर्गषोडशश्राद्धसापिंडीकरणानि मघात्रयो
दशीश्राद्धसंध्यावंदनाग्निहोत्रातिपातगोवधादिनिमित्तप्रायश्चित्तमग्निनाशादिनिमित्तकं पुनराधानमृतिमासादिसंस्कार
नाशहेतुकाःपुनःप्रतिष्ठापूर्वदृष्टतीर्थश्राद्धगजच्छायाश्राद्धादीनिनिमित्तवशान्मलमासेपिकर्त्तव्यानि तथाचस्मृतिसंग्रहे
जातकर्मचप्रसूतिः सीमंतोन्नयनंव्रतं मलिम्लुचेपिकुर्वीतनिमित्तंयदिजायते पुंसूतिःपुंसवनं व्रतशब्देन अलभ्ययोगादि
निमित्तकव्रतानामावश्यकप्रायश्चित्तरूपकृच्छ्रचांद्रायणादीनांचग्रहणं यमः गर्भवार्धुषिकेभृत्येश्राद्धकर्माणिमासिके स
पिंडीकरणेनित्येनाधिमासंविवर्जयेत् तीर्थस्नानंजपोहोमोयवव्रीहितिलादिभिः जातकर्मांत्यकर्माणिनवश्राद्धंतथैवच
मघात्रयोदशीश्राद्धंश्राद्धान्यपिचषोडश चंद्रसूर्यग्रहेस्नानंश्राद्धदानजपादिकं कार्य्याणिमलमासेपिनित्यंनैमित्तिकंत
थेति गर्भगर्भसंस्कारे पुंसवनादौ वार्धुषिकेतत्कृत्येवृद्धिग्रहणे भृत्येन तत्कृत्येभृतिग्रहणे मासिकं श्राद्धकर्मामावास्या
श्राद्धं षोडशश्राद्धानांपृथगुपादानात् नित्यंनित्यदानं होमोग्न्युपासनहोमः यवव्रीहितिलादिभिरित्यग्निहोत्रहोमोवि
हितकरणद्रव्योपादानता अंत्यकर्माणिदहनोदकपिंडदानास्थिसंचयनादीनि कालादर्शकारेपि द्वादशाहःसपिंडांतं

कर्मग्रहणंजन्मनोः सीमंतपुंसवेश्राद्धंह्यवेतैजातकर्मच रोगेशांतिरलभ्येत्र्ययोगेश्राद्धंव्रतानिच प्रायश्चित्तंनिमित्त
स्यवशात्पूर्वंपरत्रवाश्रब्दोदकुंभमन्वादिमहालययुगादिषु श्राद्धदर्शेप्यहरहःश्राद्धमूनाब्दमासिकं मलिम्लुचेन्यमासे
पुमृतानांश्राद्धमाब्दिकंश्राद्धंतुपूर्वदृष्टेपुतार्थेष्वेवयुगादिषु मन्वादिषुतुयद्दानंदानंदेनोदिनेचयत् तिलगोभूहिरण्यानांसं
ध्योपासनयोःक्रियाःपर्वहोमश्चाग्रयणंसाग्नेरिष्टिश्चपर्वणोः नित्याश्चहोमाश्चबलिर्दैवतातिथिपूजनं स्नानंचस्नानवि
धिनाश्रभक्ष्यापेयवर्जनं तर्पणंचानिमित्तस्यनित्यत्वादुभयत्रच अनित्यमनिमित्तंचदानंचमहदादिकं अग्न्याधाना
ध्वरापूर्वतीर्थयात्रामरेक्षणं देवारामतडागादिप्रतिष्ठामौंजिबंधनं आश्रमस्वीकृतिःकाम्यवृषोत्सर्गश्चनिष्क्रमः राजा
भिषेकःप्रथमश्चूडाकर्मव्रतानिच अन्नप्राशनमारंभोगृहाणांचनिवेशनं स्नानंविवाहोनामातिपन्नंदेवमहोत्सवं व्रतारं
भसमाप्तीचकर्मकाम्यंचपाप्मनः प्रायश्चित्तंतुसर्वस्यमलमासेविवर्जयेत् उपाकर्मोत्सर्जनंचपवित्रंदमनार्पणं श्रवर्णा
हरेचहेमंतःसर्पाणांबलिरष्टकाः ईशानस्यबलिर्विष्णोःशयनंपरिवर्तनं दुर्गेंद्रस्थापनोत्थानेध्वजोत्थानंचवज्रिणः पू
र्वत्रप्रतिपिद्धानिपरत्रान्यच्चदैविकमिति अत्रद्वादशाहइत्यारभ्यनित्यत्वादुभयत्रचेत्यंतेनग्रंथेनकर्तव्यसंग्रहः अनि
त्यमनिमित्तंचेत्यारभ्यवर्जयेदित्यंतेनवर्ज्यसंग्रहः उपाकर्मेत्यारभ्यान्यच्चदैविकमित्यंतेनमलमासेवर्जितानांशुद्धमासे
वश्यकर्तव्यत्वेनसंग्रहः अत्रगर्भेत्यादीनिसाक्षिवचनान्युदाहृतानिह्यवेतौजातकर्मचेत्यत्रएतौपुंसवनसीमंतौ एतच्चग
र्भाधानाद्यन्नप्राशनांतसंस्कारोपलक्षणं तदुक्तंदीपिकायां गर्भाधानमुखंचचौलविधितःप्राग्जातयोगंविना कृच्छ्रेष्वा
ग्रयणंगजेंद्रपुरतश्छायामवानगयोःतीर्थेदक्षययोश्चपित्र्यमधिकेमास्येवमाद्याचरेदिति स्मृतिसंग्रहेपि योगादिकं
मासिकंचश्राद्धंचापरपाक्षिकं मन्वादिकंतैर्थिकंचकुर्यान्मासद्वयेपिचेति अपरपाक्षिकंप्रतिकृष्णपक्षविहितंश्राद्धं न
तु महालयापरपक्षश्राद्धंतन्निषेधस्याग्रेवक्ष्यमाणत्वात् मत्स्यपुराणे दर्शेचाहरहः श्राद्धंदानंचप्रतिवासरं गोभूतिल

हिरण्यानांमासेपिस्यान्मलिम्लुचइति व्यासः जातकर्मणियच्छ्राद्धंदशश्राद्धंतथैवच मलमासेपितत्कार्यंव्यासस्य-
वचनंयथेति यत्तु संवत्सरातिरेकेणमासोयःस्यान्मलिम्लुचः तस्मिंस्त्रयोदशेश्राद्धंनकुर्यादिंदुसंक्षये इत्यृष्यशृंगवच-
नंगौडग्रंथेषुलिखितं तत्कार्त्तिकादिमासविशेषसंबद्धमावास्याविहितफलविशेषार्थश्राद्धपरं स्पष्टमासविशेषास्वि-
विहितंवर्जयेन्मले इत्येतदेकवाक्यत्वात्सर्वकामार्थंविहितकाम्यश्राद्धविषयंच नकुर्यादधिकेमासिकाम्यंकर्मकदा-
चनेति स.मान्यवचनेन तस्यापिनिषेधात् केचित्तुनकुर्यादिंदुसंक्षयइतिप्रमादपाठः नकुर्यात्त्रोपतिष्ठतइतिबहु-
ग्रंथदृष्टपाठोज्यायानित्याहुः स्मृत्यंतरे श्राद्धजातकनामानिसंस्काराश्चैवसव्रताः मलिम्लुचेपिकर्त्तव्याइष्टीः
काम्याश्चवर्जयेदिति संस्कारा अन्नप्राशननिष्क्रमणादयः जनार्दनशयनादारभ्योत्थापनं यावद्दूर्वाग्निधारणपार
णादिकं करिष्यामीतिसंकल्पसहिताःसव्रताःकाम्याअपि इष्टिग्रहणं काम्यपशुबंधादिकर्मोपलक्षणं सर्वेषामपि
काम्यानामावश्यकत्वेनवर्जनीयत्वात् हारीतोपि अधिमासेनकर्त्तव्यंश्राद्धमाभ्युदयंतथा तथैवकाम्यंयत्कर्मेतियत्का-
म्यंकर्मेष्ट्यादिकंतत् मलमासे न कर्त्तव्यमित्यर्थः गभस्तिः एकोद्दिष्टंतुयच्छ्राद्धंतन्नैमित्तिकमुच्यते तत्कार्यंपूर्वमासे-
चकालाधिवर्षेपिधर्मतइति गौतमोपि जातकर्मणियच्छ्राद्धंनवश्राद्धंतथैवच ग्रहणेपुंसवादौचतत्पूर्वत्रपरत्रचेति निमि
त्तवशादितिवाक्यशेषः आदिशब्दात्सीमंतादिसंस्काराणामलभ्ययोगादीनांचोपसंग्रहः मरीचिः रोगेचालभ्ययोगेचसी
मंतेपुंसवेपिच यद्दानादिसमुद्दिष्टंपूर्वत्रापिनदुष्यतीति ज्योतिःशास्त्रे तत्रदत्तमदत्तंचहुतंचाहुतमेवच सुजप्तमप्यजप्तंस्या
न्नोपवासःकृतोभवेत् नयात्रांनविवाहंतुनच्चवास्तुनिवेशनं नप्रतिष्ठांचदेवानांप्रासादग्रामभूरुहामिति प्रजापतिरपि
उपाकर्मचहव्यंचकव्यंपर्वोत्सवंतथा उत्तरेनियतंकुर्यात्पूर्वेतन्निष्फलंभवेत् अन्यत्रापि अवरोहश्चहेमंतःसर्पाणांबलि-
रष्टकाः ईशानस्यबलिर्विष्णोःशयनंपरिवर्त्तनं प्रायश्चित्ततुसर्वस्यमलमासेविवर्जयेत् गार्ग्यःअपूर्वदेवतादृष्ट्वाशुभः

स्युर्नष्टभार्गवे मलमासेत्वनावृत्तस्तीर्थयात्रांविवर्जयेत् शातातपोपि अस्तंगतेगुरौशुक्रेवृद्धेबालेमलिम्लुचे व्रतारंभा पवर्गंचनकुर्य्यान्मौंजिबंधनमिति गार्ग्योपि नामान्नप्राशनंचौलंविवाहंमौंजिबंधनं निष्क्रमंजातकर्मादिकाम्यंवृषावि सर्जनं अस्तंगतेगुरौशुक्रेबालेवृद्धेमलिम्लुचे उद्यापनमुपारंभंव्रतानांनैवकारयेदितिनामेतिस्वकालेऽकृतनामविषयं तदाहगार्ग्यः नामकर्मचजातेष्टिंयथाकालंसमाचरेत् अतिपातेनकर्त्तव्यंप्रशस्तेमासिपुण्यभइति वासिष्ठोपि वापीकूपतडागादिप्रतिष्ठांयज्ञकर्मच नकुर्य्यान्मलमासेपिमहादानव्रतानिचेति मरीचिरपि गृहप्रवेशगोदानस्थानाश्रममहोत्सवान् नकुर्य्यान्मलमासेपिशुक्रगुर्वोरुपप्लवइति पराशरः अग्न्याधेयप्रतिष्ठांचयज्ञदानव्रतानिच वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः मांगल्यमभिषेकंचमलमासेविवर्जयेत् अस्यापवादःचंद्रसूर्यग्रहेचैवमरणेपुत्रजन्मनि मलमासेपिदेयस्याद्दत्तमक्षय्यकारकमिति। अग्न्याधेयप्रतिष्ठांचेत्यत्रानावश्यकत्वेसतीतिशेषोद्रष्टव्यः तेनमलमासेपिप्रायश्चित्तभूतमग्न्याधेयमग्न्यनुगत्यनंतरकर्त्तव्यंनप्रतिषिध्यते एवं प्रतिमासंस्कारनाशे पुनःप्रतिष्ठानप्रतिषिध्यते कौथुमिः अब्दमंबुघटंदद्यादन्नंचापिसुसंस्कृतं संवत्सरेविवृद्धेपिप्रतिमासंचमासिकमिति तथाच त्रिंशत्सोदकुंभाअन्नदानानि एकंमासिकंचतदधिकंभवतीत्यर्थः अतएववसिष्ठः संवत्सरमध्येयद्यधिमासोभवेन्मासिकार्थंदिनमेकंवर्द्धयेदिति यत्तु ज्योतिःपराशरेणोक्तं उपाकर्मतथोत्सर्गप्रसवाहोत्सवाष्टकाः मासवृद्धौपराःकार्य्यावर्जयित्वातुपैतृकं पराःकार्य्याउत्तरेमासिकार्य्याइत्यर्थःतत्रप्रसवाहोत्सवशब्देनजातेष्टिरेवगृह्यते नपुनराभ्युदयिकंजातकर्मचतयोरपिग्रहणे श्राद्धजातकनामानीत्यादिस्मृतिविरोधापत्तेः पैतृकग्रहणमावश्यकविषयंनतुकेवलसांवत्सरिकाविषयं अमावास्यादिश्राद्धस्यापि मलमासेविधानात् काठकगृह्येपि प्रेतमाल्यादिमारभ्यश्राद्धंनैमित्तिकादृते मघात्रयोदशीश्राद्धंप्रत्युपस्थितिहेतुकं अनन्यगतिकत्वेनकर्त्तव्यंस्यान्मलिम्लुच इति प्रत्युपस्थितिहेतुकमित्यनेन संध्यावंदनाद्यतिपात

निमित्तप्रायश्चित्ताग्निनाशादिनिमित्तपुनराधानादेरुपसंग्रहः वृहस्पतिः नित्यनैमित्तिकेकुर्य्यात्प्रयतः संम्मलिम्लुचे
तीर्थश्राद्धंगजच्छायाप्रेतश्राद्धंतथैवच अत्रगजस्ययापूर्वस्यांदिशिछाया सा गजच्छाया परमान्नंतुयोदद्यात्पितॄणांमधु
नासह छायायांतुगजेंद्रस्यपूर्वस्यांदक्षिणामुख इति विश्वामित्रोक्ता मुख्याग्राह्या नतुयदेंदुःपितृदैवत्येहंसश्चैवकरेस्थि
तः याम्यातिथिर्भवेत्सापिगजच्छायाप्रकीर्त्तितेतितेनैवोक्ता पारिभाषिकी मलमासे तदसंभवात् मघायुक्तत्रयोदश्यां
करेहस्तेचसूर्यस्यावस्थानेसतिभाद्रमासेकन्यासंक्रांतिरवश्यंभावेन तस्यमलमासेत्यागसंभवात् नागरखंडे नभोवा
थनभस्योवामलमासोयदाभवेत् सप्तमःपितृपक्षःस्यादन्यत्रैवतुपंचमइति तत्रआषाढीमवधिंकृत्वासप्तमपंचमौद्रष्ट
व्यौ आषाढ्याः पंचमे पक्षइतिवचनात् आषाढमासांतर्गतभागे कर्कसंक्रांतौ नभसोऽधिकमासत्वं श्रावणमास
स्यांतभागे सिंहसंक्रांतौनभस्यस्याधिकमासत्वं तयोरुभयोरपि पक्षयोः कन्यायां वर्त्तमानेसवितरि यःकृष्णपक्षः
ससप्तमोभवति असतिद्विविधेअधिमासेतुपंचमः देवलः अर्केनभस्येकन्यास्थेश्राद्धपक्षःप्रकीर्त्तितः सिनीवाली
मतिक्रम्ययदाकन्यांव्रजेद्रविः तदाकालस्यवृद्धत्वादतीतेचापितृक्रियेति अतीतेपंचमपक्षमतिक्रांते एवंच यत्कैश्चि
दुक्तं कन्यासंक्रांतिनिमित्तानां श्राद्धानां षोडशदिवसेपुनैमित्तिकस्यचश्राद्धस्यमलमासेनिषेधाभावात्तानिकार्य्याणि
तदुक्तं प्रजापतिना मुक्त्वानैमित्तिकंश्राद्धमिति ब्रह्मसिद्धांते सूर्येणलंघितोमासोनकर्मण्यःस्मृतोबुधैः तस्मात्तत्रन
कुर्वीतश्राद्धंनैमित्तिकादृते निमित्तत्वं श्राद्धंप्रति कन्यासंक्रांतेः पुराणोक्तं कन्यांगतेसवितरियान्यहानितुषोडश क्रतु
भिस्तानितुल्यानिपितॄणांदत्तमक्षयमिति तन्निरस्तं कार्ष्णाजिनिः नभस्यस्यापरेपक्षेतिथिषोडशकस्तुयः कन्याग
तान्वितश्चेत्स्यात्सकालःश्राद्धकर्मणि प्रशस्तइतिशेषः यत्तु जातूकर्ण्यवचनम् आषाढीमवधिंकृत्वायः स्यात्पक्ष
स्तुपंचमः श्राद्धंतत्रप्रकुर्वीतकन्यांगच्छतुवानवा तत्पूर्वदर्शितवाक्यनिचयपर्य्यालोचनयापक्षोपक्रमाभिप्रायं तथाच

कार्ष्णाजिनिः अतंवायदिवामध्येयत्रकन्यांरविर्व्रजेत् पक्षस्तुपंचमः पूज्यःश्राद्धषोडशकंप्रति तेन कन्यांगतेस वितरिइत्यादिपुराणवचनंपक्षमध्येयस्मिन्नहनि कन्यासंक्रमणेसति प्रतिपदादिषोडशाप्यहानि उपादेयानि इत्ये वंव्याख्येयं नतुसंक्रमणात्पूर्वाणि हेयानीत्येवंशुद्धमासमृतस्यप्रथमाब्दिकं मलमासमृतानां प्रत्याब्दिकश्राद्धंच तत्संबंधिमासेमृतस्यप्रथमाब्दिकश्राद्धंचतत्संबंधिमासस्य मलमासत्वे मलमासएव कार्य्यं तदाह वृद्धवसिष्ठः असं क्रांतेपिकर्त्तव्यमाब्दिकंप्रथमंसुतैः तथैवमासिकंश्राद्धंसपिंडीकरणंतथेति यमः आब्दिकंप्रथमंयत्स्यात्तत्कुर्वीतमलि म्लुचे त्रयोदशेतुसंप्राप्तेकुर्वीतपुनराब्दिकं द्वितीयादिवार्षिकंत्रयोदशेमासेसमाप्तेसतिचतुर्दशप्रवेशादिनेकुर्वीतेत्यर्थः लघुहारीतोपि प्रत्यब्दंद्वादशेमासिकार्य्यापिंडक्रियासुतैः क्वचित्त्रयोदशेपिस्यादाद्यंमुक्त्वा तुवत्सरमिति द्वादशेमा स्यतीतेऽनंतरादिने क्वचिन्मृतिमासे मलिनेत्रयोदशेतीतेऽनंतरदिनेपि स्यात् किंत्वाद्यवत्सरंमुक्त्वाआद्यवत्सरानंतर मृतिमासएव मलिनेतुद्वादशेतीतेऽनंतरदिन एवेत्यर्थः अत्रयमः संवत्सरस्यमध्येतुयदिस्यादधिमासकः तदात्रयोद शेमासिक्रियाप्रेतस्यवार्षिकी इतिविष्णुधर्मोत्तरात् त्रयोदशेऽतीतेवार्षिक्यूनाब्दिकसपिंडीकरणरूपा मासपक्षति थिस्पृष्टेयोयस्मिन्म्रियतेहनि प्रत्यब्दंतुतथाभूतंक्षयाहंतस्यतंविदुरितिव्यासवचनाच्च अन्यथाकार्त्तिकमृतस्याश्विनेप्र थमाब्दिकप्रसंगः प्रथमवर्षेऽधिमासपातेऽधिकमासिकाविधानाच्च यद्वा षष्ट्यातुदिवसैर्मास इतिवचनाच्छुद्धा शुद्धमासयोरेकमासत्वमभिप्रेत्यतत्रापिद्वादशेऽतीतेएवाब्दिकं एतादृशव्यवहारोपपादनार्थमेकमासत्वाभिधानात् तेनमलमासमृतानांकालक्रमेणयदाकदाचिन्मृतिमासएवमलमासस्तदानींतनमाब्दिकं यदाच मृतिमासात्त्रयोदश एवमलमासस्तदा प्रथमाब्दिकंच मलमासएव मलमासेमृतानांतुयच्छ्राद्धंप्रतिवत्सरं मलमासेतुकर्त्तव्यंनान्येषांतुक दाचनेति भृगुवचनेन आब्दिकंप्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुचइतिस्मरणेनच मलमासएवकर्त्तव्यं शुद्धमासमृतानां

द्वितीयाद्याब्दिकंतु तन्मासेधिकेसतिशुद्धमास एवकर्त्तव्यमिति पैठीनसिरपि मलमासेपिकर्त्तव्यंश्राद्धंयत्प्रातिवत्सरं सांवत्सरनवर्द्धंतश्राद्धंतत्रमृतेहनि अत्रपूर्वार्द्धं मलमासमृतविषयं मलमासेशुद्धमासेमृतप्रत्याब्दिकश्राद्धनिषेधात् मलमासेपीत्यभिरवधारणे उत्तरार्द्धंशुद्धमासमृतप्रथमाब्दिकविषयं सांवत्सरंप्रथमाब्दिकं नवर्द्धतेनोभयत्रकरणीयं किंतु तत्रमलमासेकर्त्तव्यमित्यनुपज्यते यत्तुसत्यव्रतः वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि मलमासेनतत्कार्य्यं व्याघ्रस्यवचनंयथेति तद्द्वितीयाब्दादिवार्षिकविषयं आब्दिकंप्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुचइतिपूर्वोक्तवचनात् तेनद्वितीयादिशुद्धमासएव पृथ्वीचंद्रोदये दिवोदासीये मदनपारिजातेचैवं अत्रकेचित् मलमासेसांवत्सरिकंश्राद्धंकृत्वापुनस्तदुत्तरमासेतदेवावर्त्तनीयं आब्दिकंप्रथमंयत्स्यादितिपूर्वोक्तयमवचनात् अत्रच त्रयोदशेतुसतिचतुर्दशमासप्रवेशादिनेपुनराब्दिककुर्वीतेत्यर्थः सांवत्सरंनवर्द्धेतेत्यस्यायमर्थः नवर्धेतनविच्छिद्येतेति तेनैतदेवमासद्वयेपिश्राद्धमनुष्ठेयमितिप्रतिपादयतीतितदसत् उभयत्रश्राद्धानुष्ठानेप्रमाणाभावात् यमवचनस्यतु प्रथमाब्दिकद्वितीयाद्याब्दिकाविषयत्वेनव्यवस्थापितत्वात् नवर्द्धेतेत्यस्यनविच्छिद्येतेत्यर्थकत्वेक्लिष्टत्वापत्तेश्च यत्तु वृद्धवसिष्ठः श्राद्धीयाहनिसंप्राप्तेह्यधिमासोभवेद्यदि मासद्वयेपिकुर्वीतश्राद्धमेवंनमुह्यति यच्चव्यासः उत्तरेदेवकार्य्याणिपितृकार्य्याणिचोभयोरिति तन्मासिकादिविषयं योगादिकंमासिकंचश्राद्धंचापरपाक्षिकं मन्वादिकंतैर्थिकंचकुर्य्यान्मासद्वयेपिचेतिचंद्रिकोक्तेः तैर्थिकंतीर्थश्राद्धंयच्चमासद्वयेपितत्कार्य्यमितित्रिस्थलीसेतौभट्टाः केचित्तु प्रतिमासंमृताहेचश्राद्धंयत्प्रातिवत्सरं मन्वादौचयुगादौचतन्मासोरुभयोरपि इतिमरीचिवचनात् वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि मासद्वयेपितत्कुर्य्याद्व्याघ्रस्यवचनंयथेति गालवोक्तेश्च प्रत्याब्दिकंमासद्वयेपिकार्यमित्याहुः तत्तुच्छंप्रतिमासंमृताहेक्रियमाणं मासिकंप्रतिसंवत्सराक्रियमाणं कल्पादिश्राद्धमितिमरीचिवचसोमदनरत्नेव्याख्यानात् गालवीयस्यच मासद्वयात्मके

क्षयमासइतिमाधवेनव्याख्यानात् अतएवकौथुमिः अधिमासेनकर्त्तव्यंश्राद्धंसांवत्सरादिकं वर्षवृद्ध्यभिषेकादिकर्त्त
व्यमधिकेनत्विति यदपिनिर्णयामृते पूर्वोक्तकालादर्शवचनान्मलमासेश्राद्धदिनस्यवंध्यत्वनिरासार्थंपित्र्युद्देशेनब्राह्म
णान्भोजयित्वा शुद्धमासेसपिंडकंश्राद्धंकुर्यात् पिंडवर्जमसंक्रांतेसंक्रांतेपिंडसंयुतं प्रतिसंवत्सरंश्राद्धमेवंमासद्वयेपिचे
तिवृद्धपराशरोक्तेरिति तदपिचिंत्यं पूर्वोक्तवचनस्य क्षयपूर्वभाव्यधिकमासविषयत्वात् तत्रहिमासद्वयेश्राद्धमुक्तम् तथा
चसत्यतपाः एकएवयदामासः संक्रांतिद्वयसंयुतः मासद्वयगतंश्राद्धंमलमासेऽपिशस्यते मासद्वयगतं पूर्वापरसंक्रां
तिगतंक्षयमासगतंच मलमासेक्षयमासे अपिशब्दात्पूर्वाधिमासेचेति हेमाद्रिर्दीपिकायामपि तत्प्राक्संज्ञ्यधिक
मासोयदिभवेत्तत्रत्यसंवत्सरं तस्मिन्शुद्धतयाक्षयेचवचनात्कुर्य्याद्द्वयोः कोविदइति कालादर्शेऽपि कथंचिदेतद्विष
यतयैवव्याख्येयइत्याह एवमलमासेवर्ज्यावर्ज्यनिर्णयेकृते क्षयमासेऽपि मलमासत्वान्मलमासनिषेधप्राप्तौ रविसंक्रम
हीनोयोवर्ज्यावर्ज्यविधिः स्मृतः सएवतुद्विसंक्रांतौमलमासेप्युदीरितइतिकाठकगृह्यवचनादधिमासप्रयुक्तनिषेधप्राप्तौ
चविशेषोऽभिधीयते अत्रकाम्यव्रतादिकर्मणांप्रथमारंभमेवनकुर्य्याद्द्वितीयाद्यारंभंसमाप्तिंचकुर्य्यादेव अन्यथापौषमा
र्गशीर्षयोः क्षयमासांतःपाते चातुर्मास्यव्रतानामसमाप्तिः प्रसज्येत प्रारब्धकर्मणामसमाप्तौपुनरनारंभेचसंकल्पवि
रोधः आरंभानियमेदोषश्चासमाप्तौस्यादितिकात्यायनवचनविरोधश्च अधिमासेशुद्धमासांतरसद्भावादारंभसमाप्त्यो
स्तत्रोपपत्तेरधिमासे तयोः प्रतिषेधे न कश्चिद्विरोधः प्रथमारंभोपिक्षयशुद्धमासांतराभावात्कस्मान्नस्यादितिचेन्न न
कुर्य्यान्मलमासेतुमहादानव्रतादिकंचेतिवचनविरोधात् अस्यच प्रथमारंभव्यतिरिक्तारंभसमाप्त्यादिनिषेधपरत्वे
संकल्पविरोधस्योक्तत्वात् काम्यव्रतादीनां क्षयमासे प्रथमारंभनिषेधपरत्वेऽविरोधाच्चेति नन्वेवंसति यदिकार्त्तिकेऽ
धिमासोभवतितदाकार्त्तिकव्रतानांशुद्धाश्विनएवारंभः शुद्धकार्त्तिकेचसमाप्तिर्मासोपवासव्रतस्यापि मासद्वयएवानुष्ठानं

प्राप्नोति तच्चाऽशक्यं उच्यते यदाह मासोपवासव्रतस्याश्विने प्रारंभविधानं शुद्धकार्त्तिके च समाप्तिविधानं स्यात्स्यादेवं नत्वेवमस्ति किंत्वस्याश्विनशुक्लद्वादश्यामारंभमभिधायोपरितनशुक्लद्वादश्यां समाप्तिर्विष्णुरहस्येऽभिहिता आश्विनस्यामलेपक्षेएकादश्यामुपोषितः व्रतमेतत्तुगृह्णीयाद्यावत्त्रिंशद्दिनानितु अन्यूनाधिकमेवंतुव्रतंत्रिंशद्दिनैःकृतं कृत्वा मासोपवासंतुसंयतात्माजितेंद्रियः ततोर्चयेतवैपुण्यंद्वादश्यांगरुडध्वजं पूजयेत्पुष्पमालाभिर्गंधपुष्पविलेपनैः वस्त्रदानादिभिश्चैवभोजयेच्चद्विजोत्तमान् दद्याच्चदक्षिणांतेभ्यःप्रणिपत्यविसर्जयेत् अतःशुद्धाश्विनशुक्लद्वादश्यामेवतद्व्रतमारभ्योपरितनकार्त्तिकशुद्धद्वादश्यां समापनीयं मासद्वयमनुष्ठेयं मासोपवासव्रतस्यचकाम्यत्वात्काम्यस्यच मलमासात्प्रागारब्धस्यमलमासेऽपिसमाप्तिविधानान्नकश्चिद्दोषः मासद्वयसंबंधीनि क्षयाहादिश्राद्धान्यपि क्षयमासएवकर्त्तव्यानि तदाह सत्यव्रतः एकएवयदामासः संक्रांतिद्वयसंयुतः मासद्वयगतंश्राद्धंमलमासेऽपिशस्यतइति एवंमासद्वयसंबंधीन्यन्यान्यपिकर्माणितत्रैवानुष्ठेयान्यगतिकत्वात् मासद्वयगतंकर्मतत्रकुर्य्याद्विनिर्णयः एकस्मिन्मासिमासौद्वौयदास्यातांतदाद्वयोः तावेवपक्षौताएवतिथयस्त्रिंशदेवहीतिस्मृत्यंतरवचनाच्च क्षयमासस्यमासद्वयात्मकेनक्षयमासेयावतीयातिथिस्तस्याःपूर्वार्धं मृतस्य जातस्यच क्रमेणवर्षांतरेक्षयाहश्राद्धंवार्द्धापनोत्सवंच क्षयमासांतर्गतपूर्वमाससंज्ञिकेकुर्य्यात् तदुक्तम् तिथ्यर्द्धेप्रथमेपूर्वोद्वितीयेऽर्धेतथोत्तरःमासावितिवुधैश्चिंत्यौक्षयमासस्यमध्यगाविति इदंचक्षयमासतिथिपूर्वोत्तरार्द्धयोः क्रमेण पूर्वोत्तरमाससंबंधीत्यस्य व्यवस्थापकंवचनं क्षयमासकर्त्तव्यमासद्वयसंबंधिश्राद्धव्रतादिविषयं अपराह्णादिकालविधायकानेकवचनबाधप्रसंगात् तस्मात्कार्त्तिकमार्गशीर्षयोःक्षयमासांतःपाते कार्त्तिकसंबंधीनिमार्गशीर्षसंबंधीनियानिश्राद्धव्रतादीनियस्मिन्पक्षे यस्यां तिथौ यस्मिन्नपराह्णादिकालेविहितानि तानि क्षयमासे तत्रैव कर्त्तव्यानि एवं क्षयमासांतरेऽपिद्रष्टव्यं ततश्चकार्त्तिकशुक्लप्रतिपत्प्रयुक्तं पितृक्षयाहैकोद्दिष्टंमार्गशुक्ल

प्रतिपत्प्रयुक्तमातृक्षयाहेकोद्दिष्टंचक्षयमासशुक्लप्रतिपदिमध्यान्हएवकर्त्तव्यं एवमन्यान्यपीतिदिक् अत्रसौरमानेन तु लावृश्चिकधनुषांमध्येएकतरराशिसंक्रांतिवशेन तत्पूर्वोत्तरसौरमासयोःशुक्लकृष्णपक्षौद्वावेवशिष्येते द्वौचक्षीयेते एवं क्षयमासव्यवस्था पूर्वाचार्य्यैः कृतादृश्यते अथात्र यानिमलमासेवर्ज्यानितानिसर्वाण्यपिशुक्रास्तादावपिप्रसंगाद्वर्ज्या न्युच्यंते तथाचोक्तं 'बालेवायदिवावृद्धेशुक्रेचास्तमुपागते मलमासइवैतानिवर्जयेद्देवदर्शनमिति अत्रकेचित् मलमा सइवेति सिद्धवद्दृष्टांतीकरणान्यथानुपपत्त्यामलमासेप्रथमदेवदर्शननिषेधः सिद्धः अपरेतु मलमासइवेत्युत्तरवचनो पात्ताग्न्याधेयादिष्वेवयोजयंति यथामलमासेचंद्रसूर्यग्रहणादिकालव्यतिरेकेणतेषांनिषेधस्तथैवशुक्रबाल्यादिष्वपि यथास्यादिति तस्मिन्पक्षे मलमासेदेवतादर्शनस्य न प्रतिषेधः वस्तुतस्तु अपूर्वदेवतांदृष्ट्वाशुचः स्युर्नष्टभार्गव इत्य त्रोत्तरार्धगतमलमासेपीन्यन्वयेनमलमासेऽपूर्वदेवतादर्शननिषेधोयुक्तएवेति लल्लोपि नीचस्थेवक्रसंस्थेऽप्यतिचर णगतेबालवृद्धास्तगेवा संन्यासोदेवयात्राव्रतनियमविधिःकर्णवेधस्तुदीक्षा मौंजीबंधोथचूडापरिणयनविधिर्वा स्तुदेवप्रतिष्ठा वर्ज्याःसद्भिःप्रयत्नात्त्रिदशपतिगुरौसिंहराशिस्थितेचेति नीचस्थोमकरस्थः दीक्षा यागदीक्षा आगम दीक्षाच तथा उद्यानचूडाव्रतबधदीक्षाविवाहयात्राचवधूप्रवेशः तडागकूपत्रिदशप्रतिष्ठावृहस्पतौसिंहगतेनकुर्य्या त् दिवोदासीये गुर्वादित्येगुरौसिंहेनष्टशुक्रेमलिम्लुचे गृहकर्मव्रतंयात्रांमनसापिनचिंतयेत् अस्यापवादस्तत्रै वब्राह्मे 'मुंडनंचोपवासंचगौत्तम्यांसिंहगेगुरौ कन्यागतेतुकृष्णायांनतुतत्तीरवासिनां तथा आद्यासागौत्तमीगंगाद्विती याजाह्नवीस्मृता सर्वतीर्थफलंस्नानाद्गौत्तम्यांसिंहगेगुरौ शुक्रादीनामस्तउक्तोब्रह्मसिद्धांते रविसंयुतिरन्येषांग्रहा णामस्तउच्यते ततोर्वाग्वार्द्धकंमौढ्यादूर्ध्वंबाल्यंप्रकीर्तितमिति वार्धकबाल्ययोर्मानमपि तत्रैव पक्षंप्राग्दिशिवृद्ध त्वंपश्चात्पंचदिनंकवेः शैशवंप्राक्तुपंचाहंपश्चाद्दशदिनंस्मृतं शैशवंवार्द्धकंपक्षंप्राक्पश्चाच्चवृहस्पतेरिति कविः शुक्रः

संहिताप्रदीपे स्यात्सप्तरात्रंगुरुशुक्रयोश्चबालत्वमन्हादशकंचवार्धे । वृद्धौसितेज्यावशुभौशिशुत्वेशरतौयतरतावुप
चौयसातौ वृत्तशते बालः शुक्रोदिवसदशकंपंचकंचैववृद्धः पश्चादन्हांत्रितयमुदित पक्षभेद्यांक्रमेण जीवोवृद्धः
शिशुरपितथापक्षमन्यैः शिशूतौ वृद्धौप्रोक्तौदिवसदशकंप्राग्दिनान्यष्टबालः पश्चादस्तेपंचदिनानिवृद्ध पूर्वो
दये दिनत्रयंबालःपरोदये दिनत्रयंबालः पूर्वास्ते दशादिनानिवृद्धइत्यर्थः जीवोगुरुस्तुपंचदशदिनान्युभयत्रैवेति अ
न्यत्रान्यथोक्तं प्राक्पश्चादुदितःशुक्रः पंचसप्तदिनंशिशुः विपरीतंतुवृद्धस्वतद्वदेवगुरोरपीति रत्नमालायामपि
प्रागुद्यतःशिशुरहस्त्रितयंसित स्यात्पश्चाद्दशाहमथपंचदिनानिवृद्धः प्राच्यांतुपक्षममरेंद्रगुरोस्तुपक्षप्रागप्यवाग
पिवदंतिवसिष्ठमुख्याः अत्रविशेषः पक्षवृद्धोमहास्तेतुबालश्चात्रदशाह्निकः पादास्तेतुदशाहानिवृद्धोबालोदि
नत्रयं महास्तपादास्तलक्षणं तु द्वात्रिंशद्दिवसाद्यास्तेसमहान्परिकीर्तितः न्यूनाःपादास्ते अत्रव्यवस्थामाह
मिहिरः वहवोदर्शिताःपक्षायेबाल्येवार्धकेपिवा ग्राह्यास्तत्राधिकाः शेषादेशभेदाद्दुतपदीति देशभेदश्चगार्ग्येणद
र्शितः शुक्रोगुरुःप्राक्परावबालोविंध्येदशाविंतिपुसप्तरात्रं वंगेषुहूणेषुचपंचपट्चशेषेतुदेशेत्रिदिनंवदंतीति वृद्ध
त्वमप्येतत्प्रमाणंद्रष्टव्यं सिंहस्थेगुरौविशेषमाहमांडव्यः अतिव्रतजातकान्नप्राशनचूडादिकंसर्वं रविभवनस्थेजीवे
कार्यंवर्ज्योविवाहस्त्विति तथा रविक्षेत्रगतेजीवेजीवक्षेत्रगतेरवौ वर्जयेत्सर्वकर्माणिव्रतस्वस्त्ययनानिच तथा
गुर्वादित्येगुरौसिते शुक्रेचास्तमुपागते त्यजेद्यानंमहादानंव्रतंदेवविलोकनं लल्लः गुरुक्षेत्रगतोभानुर्भानुक्षेत्रगतोगुरुः
गुर्वादित्यःसविज्ञेयः सर्वकर्मसुगर्हितः शौनकः एकराशिगतौभानुजीवौस्यातांयदापुनः व्रतबंधविवाहादिशुभं
कर्माखिलंत्यजेत् राजमार्तंडे यात्रांचूडाविवाहंश्रुतिविवरविधिंशंखप्रद्मप्रवेशं प्रासादोद्यानहर्म्यंसुरनरभवनारंभवि
द्याविधानं मौंजीबंधप्रतिष्ठामणिकनकरटाधारणंकर्वतेये मत्यासिंहस्थितेज्येगुरुदिनकरयोरेकराशिस्थितौच तथा

गुर्वादित्यंगुरोःसहेनष्टेशुक्रेमलिम्लुचे याम्यायनेहरौसुप्तेसर्वकर्माणिवर्जयेत् .सिंहस्थेगुरौविशेषमाह शा.तातप

माध्यांयदिमघानास्तिसिंहेगुरुरकारणं अन्यत्रापि मघाऋक्षंपरित्यज्ययदासिंहेगुरुर्भवेत् तदाचेत्कन्यकाऊढासुभ

गासुप्रियाभवेत् तथा. माघीमघर्क्षसंयुक्तामघायांचगुरुर्भवेत् महामाघस्तदाप्रोक्तोव्रतोद्वाहौपरित्यजेत् वृद्धगार्ग्यः

मीनेधनुषिसिंहेचस्थितेसप्ततुरंगमे क्षौरकर्मनकुर्वीतविवाहंगृहकर्मच तथा वापीकूपतडागयागगमनंक्षौरप्रतिष्ठाव्र

तं विद्यामंदिरकर्णवेधनमहादानंवनासेचनं तीर्थस्नानविवाहदेवभवनमंत्रादिदेवेक्षणं दूरेणैवजिजीविषुःपरिहरेद

स्तंगतेभार्गवइति लल्लोत्रपुनर्विशेषमाह उपप्लवेशीतलभानुभान्वोरर्धोदयेवाकपिलाख्यषष्ठ्यां सुरासुरेज्यास्तमयेचती

र्थयात्राविधिःसंक्रमणेचशस्तः गुरुशुक्रास्तमयादिनिषिद्धकालेग्रहणादौनदोषइत्यर्थ.वसिष्ठः अतिचारगतोजीवस्तं

राशिंनैतिचेत्पुनः लुप्तसंवत्सरोज्ञेयःसर्वधर्मबहिष्कृतः अस्यापवादः वृषेमेषेक्षधेकुंभेयद्यतीचारगोगुरुःनतत्रकालल्लो

पःस्यादित्याहगालवोमुनिरिति राजमार्त्तंडेत्वन्यपांबाधकांतभूतत्वेनाभिमतः संध्याकालोऽपि पृथगुक्तः भवेत्संध्या

गतःपश्चादंतमेष्यन्दिनत्रयं दिनानिपंचपूर्वेणतत्कृतेकर्मवर्जयेत् बालवृद्धेचसंध्यांशेचतुःपंचत्रिवासरान् जीवेचभा

र्गवेचैवविवाहादिषुवर्जयेत् बालेवृद्धेचसंध्यायांनष्टेचभृगुनंदने दुर्गताचासतीवंध्यामृत्युयुक्ताफलक्रमात् बालेच

दुर्भगानारीवृद्धेनष्टप्रजाभवेत् नष्टेचमृत्युमाप्नोतिसर्वमेतद्गुरावपीति अत्र चतु.पंचाद्यल्पकालकथनमापद्विषयं यस्तु

दक्षिणायने चातुर्मास्येच कर्मनिषेधः समयेषूदगयननियमस्तद्विषयः काम्ययज्ञादिविषयश्च यथा विष्णुधर्मोत्तरे

शेतेचचतुरोमासान्यावद्भवतिकार्त्तिकः विशिष्टानप्रवर्त्ततेतदायज्ञादिकाःक्रियाः नाभिषेक्योनृपश्चैत्रेयावद्भवतिकार्त्ति

कःभविष्योत्तरेपि सुप्तेवापिजगन्नाथेकेशवेगरुडध्वजे निवर्त्ततेक्रियाःसर्वाश्चातुर्वर्ण्यस्यभारत ताश्च विवाहव्रतबंधा

दिचूडासंस्कारदीक्षणं. गृहयज्ञप्रवेशादिदानार्चनप्रतिष्ठितिः पुण्यानियानिकर्माणिवर्जयेद्दक्षिणायनइतिसर्वास्तत्र

परिगणिताः भोजराजीये सुप्तेहरौप्रकटशेषफणोपधानेलक्ष्मीकराब्जपरिभाजितपादपद्मे मीनेरवौधनुषिचास्त मितेचशुक्रेवास्तुक्रियाविधिरसौमुनिभिर्निषिद्ध इति एवंगुर्वतिचारसिंहस्थमकरस्थगुरुकेत्व.यद्भुतेतरसप्ताहादिसर्वे षां शुभानामावश्यकर्मणां अकालवृष्ट्याद्युत्तरैकाहादिषुच परिगणितानामेवयात्रादीनांनिषेधस्तत्रज्योतिःशास्त्रवचने भ्योज्ञेयइत्यलमन्यथाप्रसक्तानुप्रसक्तचिंतया प्रकृतमनुसरामः यदुक्तमनावृत्ततीर्थस्नानमनादिदेवतादर्शनंमलमासा दौनकर्त्तव्यमिति तस्यगयायाप्रतिप्रसवोवायुपुराणे गयायांसर्वकालेषुपिंडंदद्याद्विचक्षणः अधिमासेजन्मदिनेअस्ते चगुरुशुक्रयोःनत्यक्तव्यंगयाश्राद्धंसिंहस्थेपिवृहस्पतौइति अत्र श्राद्धस्ययात्रापूर्वकत्वाद्गयांप्रतियात्रापिनानिषिद्धेत्य र्थं तथा गोदावर्य्यांगयायाचश्रीशैलेग्रहणद्वये सुरासुरगुरूणांचमौढ्यदोषोनविद्यते ग्रहणद्वये तन्निमित्तिककुरुक्षेत्रक यात्रादावित्यर्थ.अस्तादेरपवादःकाशीखंडे नग्रहास्तोदयकृतोदोषोविश्वेश्वरालये सदासौम्यायनंतत्रसदातत्रमहोद यइतिएतानिकाशीस्तुतिपराणीतिमयूखे तत्रएतेषांकाशीस्तुतिपरत्वेपिउपरिहिदेवेभ्योधारयतीतियावत् बलवत्तरबा धकासत्त्वेविधिकल्पकत्वस्ययुक्तत्वादित्यलंवहुपल्लवितेन इतिश्रीमन्महाराजाधिराजरघुवंशतिलकश्रीरणवीरसिंह महाराजकारिते कृत्यरत्नाकराभिधेये धर्मोदयानिबंधेऽधिमासक्षयमासभेदद्वयात्मकमलमासनिर्णयः

॥ अथासंक्रांतिमासानिर्णयप्रसंगात् संक्रांतिनिर्णयश्चोच्यते ॥

तत्रमेषादिद्वादशराशिप्रक्रमेणसंचरत.सूर्यस्य पूर्वस्माद्राशेरुत्तरराशौसंक्रमणंप्रवेशःसंक्रांतिशब्देनोच्यते तास्तुरा शिसंख्यानुक्रमेण द्वादशप्रसिद्धाः तासांसंज्ञाअपि द्वादशैव तदाहवसिष्ठ· अयनेद्वेविषुवतीचतस्त्रःषडशीतयः चतस्त्रो विष्णुपद्यश्चसंक्रांत्योद्वादशस्मृताः झषकर्कटसंक्रांतीद्वेतूदग्दक्षिणायने तुलामेषौविषुवतीतयोर्मध्येततोपराःवृष वृश्चिककुंभेपुसिंहेचैवयदारविः एतद्विष्णुपदंनामविषुवादधिकंफलमिति कन्यायांमिथुनेमीनेधनुष्याणौरवेर्गतिः

षडशीतिमुखाःप्रोक्ताःषडशीतिगुणाःफलैःदीपिकायामपि इथ्याग्रहपोसहवृश्चिकघटेष्वर्कस्ययःसंक्रमः कन्यामीन धनुर्नृयुक्षुषडशीत्याख्यस्तुलामेषयोः प्रोक्तंतद्विषुवंहयेयनमुदक्कर्कटकेदक्षिणमिति इथ्याग्रेविष्णुपदं नृयुक्मिथुनं आसामेव संक्रांतीनां वारभेदेननामभेदोरत्नमालायां घोरारवौध्वांक्ष्यमृतद्युतौचसंक्रांतिरारेचमहोदरीस्यात् मंदा किनीज्ञेचगुरौचमंदामिश्राभृगौराक्षसिकार्कपुत्रे इति तत्फलान्यपि तत्रैव आसुच पुण्यकालउक्तः त्रिचतुःपंचसप्ताष्ट नवद्वादशएवच क्रमेणघटिकाह्येतास्तत्पुण्यंपारमार्थिकामिति आसुचस्नानादिकमुक्तं नागरखंडे रवेःसंक्रमणंराशौ संक्रांतिरितिकथ्यते स्नानदानजपश्राद्धहोमादिषुमहाफला हेमाद्रौविष्णुधर्मे श्राद्धंसंक्रमणेभानोःप्रशस्तंपृथिवीपते संवर्त्तः अमावास्याद्वादशीचसंक्रांतिश्चविशेषतः एताःप्रशस्तास्तिथयोभानुवारस्तथैवच अत्रस्नानंजपोहोमोदेवता नांचपूजनं उपवासस्तथादानमेकैकंपावनंस्मृतमिति देवीपुराणे विषुवेषुचयज्जप्तंदत्तंभवतिचाक्षयं एवंविष्णुपदेचै वषडशीतिमुखेषुच भरद्वाजः षडशीत्यांतुयद्दत्तंयद्दत्तंविषुवद्द्वये दृश्यतेसागरस्यांतस्तस्यांतोनैवदृश्यते वसिष्ठःअयने कोटिपुण्यंचलक्षंविष्णुपदेफलं षडशीतिसहस्रंतुषडशीत्यांस्मृतंबुधैःशतमिंदुक्षयेदानंसहस्रंतुदिनक्षये विषुवेशतसा हस्रंव्यतीपातेत्वनंतकमिति स्कांदेनागरखंडे यएतेतेमयाप्रोक्ताःकालाःसंक्रांतिपूर्वकाःनैतेपुविद्यतेविज्ञायतश्चाक्षयसं ज्ञिताःअश्रद्धयापियद्दत्तंकुपात्रेभ्योपिमानवैः अकालेऽपिचतत्सर्वंसत्यमक्षयतांव्रजेत् अत्र स्नानाकरणेदोषमप्याहहे माद्रौशातातपः रविसंक्रमणेप्राप्तेनस्नायाद्यस्तुमानवःसप्तजन्मानिरोगीस्यान्निर्धनश्चप्रजायते संक्रांतौयानिदत्तानि हव्यकव्यानिदातृभिः तानिनित्यंददात्यर्कःपुनर्जन्मनिजन्मनीति पापक्षयकामस्य संक्रांतिनिमित्ताहोरात्रोपवासो ऽयनविषुवयोस्त्रिरात्रोपवासश्च विहितोवासिष्ठेन उपोष्यैवंतुसंक्रांतौस्नातोयोभ्यर्चयेद्धरिं प्रातःपंचोपचारेणसकाम्यंफ लमश्नुते इति हरिं सूर्यं वृद्धवसिष्ठः अयनेविषुवेचैवत्रिरात्रोपोषितोनरः स्नात्वायस्त्वर्चयेद्भानुंसर्वकामफलंलभेत्

अशक्तावाहापस्तंवः अयनेविषुवेचैवग्रहणेचंद्रसूर्ययोः अहोरात्रोषितःस्नातःसर्वपापैःप्रमुच्यतइतिएतच्चपुत्रवद्गृहस्थ
व्यतिरिक्तविषयं पुत्रवतागृहस्थेनसकामेनापिसंक्रांतिनिमित्तोपवासोनकार्य्यः आदित्येहनिसंक्रांतौग्रहणेचंद्रसूर्ययोः
उपवासोनकर्त्तव्योगृहिणापुत्रिणातथेतिवचनात् संक्रांत्यामुपवासंचकृष्णैकादशिवासरे चंद्रसूर्यग्रहेचैवनकुर्य्यात्पुत्र
वानगृहीतिनारदवचनाच्च अत्र विहितस्य श्राद्धस्यनित्यत्वमाहाऽपरार्केविष्णुः आदित्यसंक्रमणंविशेषेणविषुवदयनद्व
यंव्यतीपातोजन्मर्क्षमभ्युदयश्च एतांस्तुश्राद्धकालान्नित्यानाहप्रजापतिरिति तच्चपिंडरहितंकार्य्यं अयनद्वितयेश्राद्धं
विषुवद्वितयेतथा संक्रांतिषुचसर्वासुपिंडनिर्वपणादृते इत्यपरार्केमात्स्योक्तेः अत्रचद्वादशदिनैरर्वागयनांशप्रवृत्तावपिषु
एयवत्कुमयनग्रहणं अन्यथासंक्रमणेनतात्सिद्धेरयनग्रहणंव्यर्थंस्यादित्यपरार्कः वस्तुतस्तु अयनांशाःषष्टिघ्नाःस्फुटरवि
गत्याभाजिताः लब्धेनदिनादिनातद्राशिसंक्रमात्पूर्वंचलसंक्रांतिः एवंधनायनांशकाले ऋणायनांशकालेतु लब्धदिना
दिनोर्ध्वंचलसंक्रांतिर्भवति ऋणायनांशास्तुपूर्वंस्थिताः तदुक्तंवेदांगज्योतिषे प्रपद्येतेश्रविष्ठादौसूर्याचंद्रमसावुदक् सा
र्पार्द्धेदक्षिणोर्कस्तुमाघश्रावणयोःसदा एतादृशसंक्रमणत्रयोविंशतिऋणायनांशकालेमहायुगादावयनांशाभावः तत्र
रेवतीयोगतारामेषादेर्ज्ञापिका अन्यदासर्वाश्चतारारणां स्वस्वस्थानात् सौरवर्षेण चतुःपंचाशद्विकलाभिः पश्चिमतः
पूर्वतश्चलनंभवति तत्र विषुवत्संक्रांतिवृत्तसंपातात् पश्चिमतःक्रांतिवृत्तेऽष्टादशशतसौरवर्षैश्चलनमृणसंज्ञंभवति त
स्यसप्तविंशत्यंशपर्यंतमुपचयः पुनस्तथैवधनसञ्ज्ञानामुपचयापचयौ एवंद्विशताधिकसप्तसहस्रैरेकोभगणोभवतिस
एवपुनरयनांशाभावकालः पुनस्तथैवायनांशप्रवृत्तिः एवंतेभगणाः युगेखखारिमिताः ६०० भवंति तदुक्तं सूर्य
सिद्धांते त्रिंशत्कृत्योयुगेभानांचक्रंप्राक्परिलंबते तद्गुणाद्भूदिनैर्भक्ताद्द्युगणाद्यदवाप्यते तद्दोस्त्रिघ्नादशाप्तांशाविज्ञेया
अयनाभिधाः त्रिंशत्कृत्वोविंशतिभिस्तद्गुणितैस्त्रिंशद्भिरित्यर्थः स्फुटदृक्तुल्यतांगच्छेदयनेविषुवद्द्वये प्राक्चक्रंचलितं

हीने छायार्कोत्करणागते अंतरांशैरथावृत्यपश्चाच्छेपेतथाधिके यत्तुपूर्वैरुक्तम् संक्रांतेरर्वाक्द्वादशदिनैरयनसंक्रां
तिस्तद्धनद्वादशांशायनकाले इदानींतुशाके ॥ १७८९ ॥सूर्यसिद्धांतानुसारिकरणमतेन मकरंदाख्येनसाधनंयथा-
भूलेचनाब्धिरहितः ॥ ४२१ ॥ स्वादिगंशहीनःशाकः खतर्कै॥६०॥ विहृतोयनभागकाःस्युरित्यनेन साधितेन विंश
त्यंशाद्द्वात्रिंशत्कलामिताअयनभागकाइति मेषार्कात्पूर्वंदशकलोनैकविंशतिभिर्दिनैर्विषुवद्दिनमितिसर्वसिद्धांतरहस्य
करणेमुंजालाद्यपिमतेनोक्तं तद्यथासिद्धांतशिरोमणौ अयनचलनंयदुक्तं मुंजालाद्यैः सएवायं तत्पक्षेतद्भगणाः कल्पे
गोंगर्तुनंदगोचंद्राः ॥१९९६६९॥ इति तत्साधनंग्रहलाघवे वेदाब्ध्यब्धयूनःखरसहृतःशकोयनांशाइति तेनद्वाविंशत्यं
शाः पंचविंशतिकलाअयनभागाःसंति गालवः अयनांशकतुल्येनकालेनैवस्फुटंभवेत् तत्तत्संक्रांतिकालेस्युरुक्तविष्णु
पदादयः अयनांशच्युतिरूपसंक्रांतिकाले विष्णुपदादयःप्रवर्तंते तेनतत्प्रयुक्तंपुण्यकालादितत्रापिज्ञेयमित्यपरार्कः
अस्याश्चसंक्रांतेः सूर्यमंडलनेमिरेखैकदेशस्य तन्मध्यकेंद्रस्यवापूर्वराशिसंबंधस्याग्रिमोत्तरराशिप्रवेशरूपायाःकाल
स्यातिसूक्ष्मतयादुर्ज्ञानतयाचतत्रैकस्यापिस्नानादिकर्मणोऽनुष्ठातुमशक्यत्वाद्बहूनांसुतरां तथात्वात्सन्निहितकाले ता
न्यनुष्ठातव्यानि संधिसन्निहितकालइवदर्शपूर्णमासौ सचकालः किमुभयतः किंवान्यतरतः कियांश्चेत्याकांक्षायां हे
तुपूर्वकं ग्राह्यकालोदेवलेनदर्शितः संक्रांतिसमयः सूक्ष्मोदुर्ज्ञेयःपिशितेक्षणैः तद्योगाच्चाप्यधश्चोर्ध्वंत्रिंशन्नाड्यः प
वित्रिताइति अधश्चत्रिंशन्नाड्य ऊर्ध्वंच त्रिंशन्नाड्यः संक्रांतिनिमित्तस्नानदानादियोग्याइत्यर्थइतिमाधवः हेमाद्रि
स्तु अधःपंचदश ऊर्ध्वंपंचदशेत्येवंमिलित्वात्रिंशदित्यपिव्याचख्यौ यत्तुकैश्चिदुक्तं अतीतानागतोभोगोनाड्यःपंच
दशस्मृताइतिदेवीपुराणविरुद्धं भुज्यतेपाल्यतेविधिनिषेधावस्मिन्नितिभोगः भुजपालनाभ्यवहारयोरितिस्मरणात्
तत्प्रागल्भ्यविजृंभितं सामान्यकालस्योक्तत्वात् विशेषकालस्यतु त्रिंशत्कर्कटकेनाड्योयायाः सन्निहिताइत्यादिवक्ष्य

माणत्वात् तथाच सामान्येनानध्यायप्रकरणे हेमाद्रौ अह्निचेद्रात्रियुग्मंस्याद्रात्रौचेद्द्वासरद्वयं संक्रांतिःपक्षिणीज्ञेया दानाध्ययनकर्मस्वित्यादिवाक्यएव सामान्येन कालविधानात् माधवोक्तावपिनदूषणोद्भावनंयुक्तं इदंच सामान्यतः सर्वसंक्रांतिविषयं विशेषस्तूच्यते कर्कटेपूर्वास्त्रिंशन्नाड्यःपुण्याः मकरेतु माधवमते पराविंशतिनाड्यःपुण्याः तदाह वृद्धवसिष्ठः अतीतानागतेपुण्येद्वेउदग्दक्षिणायने त्रिंशत्कर्कटकेनाड्योमकरेविंशतिःस्मृताइति हेमाद्रिमतेतु मकरसंक्रांतौचत्वारिंशद् घटिकाः पुण्यकालः तदुक्तंब्रह्मवैवर्त्ते त्रिंशत्कर्कटकेनाड्योमकरेतुदशाधिकाः भविष्यत्ययनेपुण्याअतीतेचोत्तरायणे दशाधिकाश्चत्वारिंशादित्यर्थः वृहस्पतिः अयनेविंशतिःपूर्वामकरेविंशति परा: वसिष्ठः मध्ये तुविषुवेपुण्यंप्राग्विष्णौदक्षिणायने षडशीतिमुखेपुण्यमतीतेचोत्तरायणइति मध्ये उभयतइत्यर्थः विष्णौ विष्णुपदे पुण्यमितिचतुर्ष्वप्यनुषंगः प्रागित्यस्य दक्षिणायनइत्यनंतरमपि यत्तुनव्यैरुक्तं अत्रचशब्दादुत्तरायणेनागतेपुण्यमिति हेमाद्रिः तत्रमानंमृग्यमिति तन्न हेमाद्रौ संक्रांतिसामान्यकालाभिप्रायेण तथाभिधानात् अतीतानागतेपुण्ये द्वेउदग्दक्षिणायने उत्तरेत्वयनेपुण्यमतीतेचोत्तरायणइतिवसिष्ठवचनं पूर्वार्द्धेनोदग्दक्षिणायनयोरतीतानागतकालस्य पुण्यत्वमभिधायोपात्तस्योत्तरार्द्धशेषस्यातीतेचोत्तरायणइत्यस्यानागतपुण्यत्वबोधकेनैवसार्थक्यात् हेमाद्रौतथैवव्याख्यानाच्च विषुवयोस्तु प्राक्पश्चाद्दशनाड्यः पुण्यायथासएवाह वर्तमानेतुलामेषेनाड्यस्तूभयथादशेति विष्णुपदीषुतुप्राक्षोडशपश्चाच्चषोडशनाड्यःपुण्याः तदाहवृद्धवसिष्ठः पुण्यायांविष्णुपद्यांतुप्राक्पश्चादपिषोडशेति षडशीतिषु पश्चात् षष्टिनाड्यःपुण्याः तदाह वृद्धवसिष्ठः षडशीत्यांव्यतीतायांषष्टिरुक्तास्तुनाडिकाः पुण्याख्याविष्णुपद्याश्चप्राक्पश्चादपिषोडश स्मृत्यर्थसारेतु षडशीतिमुखेपश्चात्षोडशघटिकाःपुण्याइत्युक्तं अत्र हेमाद्रिःषडशीतिमुखानांचतसृणामेकैकस्याः पंचदशपंचदशपंचदशपंचदशेतिमिलित्वाषष्टिनाड्यःपुण्याइत्यर्थः तथाचस्कांदे

षडशीतिमुखेऽतीतेनाड्यःपंचदशस्मृताइति कालतत्त्वविवेचनेतुपरमाथतस्त्वष्टिरितिपाठः अष्टिःषोडश तच्छंदसः षो
डशाक्षरत्वात् विष्णुपद्याःपराःषोडशघटिकाःपुण्यतमाइतिव्यवस्थाद्रष्टव्या याम्यायनेविष्णुपदेतथादौ दानाद्य
नंतविषुवेतुमध्ये वदत्यतीतेषडशीतिवक्त्रमहर्षयःस्वल्वयनेचसौम्ये षडशीतिमुखेऽतीतेव्रत्तेचविषुवद्वय इत्यादिलौ
गाक्षाद्यनेकवचनेपूर्वकालस्यपुण्यत्वप्रतिपादनात् क्वचिदतीतेविषुवद्वयइतिपाठः कन्यायांमिथुनेचैवमीनेधनुषिच
द्विजाः घटिकाःषोडशज्ञेयाःपरतःपुण्यदायिकाः वृषभेवृश्चिकेचैवसिंहेकुंभेतथैवच पूर्वमष्टमुहूर्त्ततुग्राह्यंस्नानजपादिषु
इतिवृहन्नारदीयवचनात् यमः विष्णुपद्यांधनुर्मीनन्नृयुक्कन्यासुवैयदा पूर्वोत्तरगतंरात्रौभानोःसंक्रमणंभवेत् पूर्वाह्णे
पंचनाड्यस्तुपुण्याःप्रोक्तामहर्षिभिः अपराह्णेचपंचैवश्रौतेस्मार्तेचकर्मणीति नृयुक् मिथुनं स्कांदे धनुर्मीनावतिक्रम्य
कन्यांचमिथुनंतथा पूर्वापराविभागेनरात्रौसंक्रमतेरविः दिनांतेपंचनाड्यस्तुतदापुण्यतमाःस्मृताः उदयेचतथापंचदैवे
पित्र्येचकर्मणीति ननुसंक्रांतिसामान्यविषयत्वेनपश्चादधश्चत्रिंशन्नाड्यः पवित्राइत्युक्तं वाक्यांतरेतु षोडशादीनां
पुण्यत्वमुक्तमिति परस्परविरोधइतिचेन्न त्रिंशन्नाडीनांपुण्यत्वंषोडशादीनां तदपेक्षया सन्निहितत्वात्पुण्यतरत्वं त
तोपिसन्निहितानांपुण्यतमत्वमितिविरोधपरिहारात् तदाहवसिष्ठः यायाःसन्निहितानाड्यस्तास्ताःपुण्यतमाःस्मृताः
इतिसंक्रांतीनांपूर्वोत्तरकालौपुण्यतयानिर्णीतौ ताश्चसंक्रांतयः कदाचिदन्हिभवंति कदाचिद्रात्रौभवंति तद्भेदादनुष्ठा
नभेदमाह वृद्धवसिष्ठः अन्हिसंक्रमणेपुण्यमहःकृत्स्नंप्रकीर्त्तितं रात्रौसंक्रमणेपुण्यंदिनार्द्धंस्नानदानयोः अर्द्धरात्रादध
स्तस्मिन्मध्यान्हस्योपरिक्रियाः ऊर्द्धंसंक्रमणेचोर्द्धमुदयात्प्रहरद्वयमिति अर्द्धरात्रात्पूर्वरात्रौसंक्रमेपूर्वदिनार्द्धोत्तरं
पुण्यंअर्द्धरात्राद्दूर्ध्वंसंक्रमेउत्तरदिनपूर्वार्द्धंपुण्यंस्नानदानादियोग्यमित्यर्थः तथाच आसन्नसंक्रमंपुण्यंदिनार्द्धंस्नानदान
योरिति यदासंपूर्णे अर्द्धरात्रे संक्रांतिःस्यात्तदादिनद्वयंपुण्यं तदाह वृद्धवसिष्ठः संक्रमस्तुनिशीथेस्यात्षड्यामाः

पूर्वपश्चिमाः संक्रांतिकालेविज्ञेयास्ततः स्नानादिकंचरेदिति ज्योतिर्वसिष्ठोपि. पुण्यंचैवार्द्धरात्रेतुयदासंक्रमतेरविः. त
दादिनद्वयंपुण्यंमुक्त्वामकरकर्कटाविति मकरकर्कटयोस्तु विशेषोवक्ष्यते गार्ग्यः कालेन्यूनेर्द्धरात्रेतुयदासंक्रमणंभवे
त् तदहः पुण्यमिच्छंतिगर्गगालवगौत्तमाः देवीपुराणे संपूर्णेचार्द्धरात्रेचेदुदयास्तमयेऽपिच मानार्द्धंभास्करेपुण्यम
पूर्णेशर्वरीदले संपूर्णेऽर्द्धरात्रे निशीथइत्यर्थः उदयः प्रातःसंध्या अस्तमयः सायंसंध्या मानार्द्धं प्रहरद्वयं अस्त
मयेपूर्वदिनप्रहरद्वयउदयेतूत्तरदिनप्रहरद्वयं प्रत्यासत्तेः संपूर्णअर्द्धरात्रदलद्वयसंधौसंक्रमणे उभयोः पूर्वोत्तरदिनयो
रुत्तरपूर्वार्द्धे पुण्ये अपूर्णेशर्वरीदले सायंप्रातः संध्योरुत्तरपूर्वभागयोरित्यर्थः योगेनलक्षणयावा भास्करोदिवसः दे
वीपुराणे अर्द्धरात्रेतुसंपूर्णेदिवापुण्यमनागते संपूर्णेचोभयोर्ज्ञेयमतिरेकेपरेहनि अत्रसंपूर्णार्द्धरात्रशब्देनसायंस
ध्या निशीथपूर्वभागश्चगृह्यते तत्रसंक्रमणेनविद्यते आगतंआगमनंयस्यतत् अतीतमित्यर्थः नपुंसकेभावेक्तः एव
मर्द्धरात्रसंक्रमणेदिनद्वयस्यार्द्धस्यविकल्पेनग्राह्यत्वेप्राप्तेव्यवस्थाकृता देवीपुराणे आदौपुण्यंविजानीयाद्यद्यभिन्ना
तिथिर्भवेत् अर्द्धरात्रेव्यतीतेतुविज्ञेयमपरेहनीति अर्धरात्रसंक्रमणे यदि संक्रमकालीनायास्तिथेः पूर्वदिवसोत्तरा
र्द्धवर्तिनीतिथ्यभिन्नाभवतितदापूर्वदिनोत्तरार्द्धंग्राह्यं यदिभिन्नाभवतितदापूर्वदिनार्धंनग्राह्यं किंतु परदिनपूर्वार्द्धमित्य
र्थःसिद्धम् अर्द्धरात्रेव्यतीतेतुसंक्रमणेतत्कालीनातिथिभिन्नत्वेऽपि परदिनपूर्वार्द्धमेवपुण्यमित्यर्थः यदात्वर्धरात्रसंक्र
मणेतत्कालीनातिथिर्दिनद्वयेपिभवेत्तदाविष्णुपद्यां पूर्वदिनोत्तरार्द्धंग्राह्यं षडशीतिमुखेतूत्तरदिनपूर्वार्द्धंग्राह्यं विषुवे
तुपूर्वदिनार्धमुत्तरदिनार्द्धंचग्राह्यं कौस्तुभेतु दिनद्वयटीचितिथ्यभेदेऽपि अयनव्यतिरिक्तसर्वसंक्रांतिषु पूर्वदिनार्धमेवपु
ण्यमित्युक्तं मकरस्यतुरात्रौसंक्रमेपरदिनंपुण्यं कर्कटस्यतुरात्रौसंक्रमेपूर्वदिनंपुण्यं अतएवगार्ग्यः यदास्तमनवे
लायांमकरंयातिभास्करः प्रदोषेवार्द्धरात्रेवास्नानंदानंपरेहनि. अस्तमयवेलायांअस्तमयसन्निहिते तदुत्तरकाले

प्रदोषेपूर्वरात्रे भविष्योत्तरेऽपि कार्मुकंतुपरित्यज्यमृगंसंक्रमतेरविः पुनस्तत्रैव मिथुनात्कर्कसंक्रांतियादस्यादशुभा॥७
नः प्रभातेवानिशीथेवा कुर्यादहनिपूर्वतः एवंमकरकर्कटयोरात्रौसंक्रमेपूर्वोक्तवचनान्नियमेन दिवैवस्नानदानादिकर्त्तव्य
ताप्रतिपादिता इदानींरात्रावपितत्रस्नानदानादिकर्त्तव्यताप्रतिपादकानिवचनानिलिख्यंते भविष्यपुराणेरात्रौस्नानंन
कुर्वीतदानंचैवविशेषतः नैमित्तिकंतुकुर्वीतस्नानंदानंचरात्रिषु वृद्धवसिष्ठः पुत्रजन्मनियज्ञेचतथासंक्रमणेरवेः राहोश्चदर्श
नेस्नानंप्रशस्तंनान्यथानिशि अयनेविषुवेतुअनध्यायेविशेषः स्मृत्यंतरे अह्निचेद्रात्रियुग्मंस्याद्रात्रौचेद्वासरद्वयं संक्रां
तिःपक्षिणीज्ञेयादानाध्ययनकर्मसुदानंवेददानंअध्यापनमितियावत् अन्यत्रापि निशाद्वयंदिवारात्रौसंक्रमेवासरद्वयंअ
नध्यायंप्रकुर्वीतअयनेविषुवेतथेति संक्रांतिवत्तदयनेपुण्यकालमाहजाबालिः संक्रांतिषुयथाकालस्तदीयेष्वयनेतथा
अयनेविंशतिःपूर्वामकरेविंशतिःपराइतिअयनेमकरायनेपूर्वाःपुण्यतमाःमकरेमकरसंक्रांतौतुपराःपुण्यतमाइत्यर्थः माध
वोपि मकरव्यतिरिक्तैकादशसंक्रांतिसंबंधिनित्वयनेसंक्रांतिवत्पुण्यमिति आदित्यस्यराशिसंक्रमवत् नक्षत्रसंक्रमेऽपि
स्नानदानादिकंकार्यं तदाहजैमिनिः नक्षत्रराश्योरविसंक्रमेस्युरर्वाक्परत्रापिरसेंदु ॥ १६ ॥ नाड्यः पुण्यास्तथें
दोस्त्रिधराभलैर्युगे एकैवनाडी ॥ १३ मुनिभिःशुभोदिता नाड्यश्चतस्रःसपलाः ॥४।४ ॥ कुजस्यबुधस्यतिस्रोमनवः
पला ॥ ३।१४ ॥ नि सार्द्धाश्चतस्रःपलसप्तयुक्ता ॥ ४।३७ ॥ गुरोश्चशुक्रस्यपला ॥ ४।४ ॥ ॥ श्चतस्रः द्विनागना
ड्यःपल ॥ ८२।०७ ॥ सप्तयुक्ताः शनैश्चरस्याभिहिताःसुपुण्याः आद्यंतमध्येजपदानहोमंकुर्वन्नवाप्नोतिसुरेंद्रधाम
ग्रहांतरस्ययदासंक्रमस्तदैवपुण्यकालः नतुदिवैव तत्रापवादाभावात् गार्ग्यःयस्यजन्मर्क्षमासाद्यरविसंक्रमणंभवेत्
तन्मासाभ्यंतरेतस्यवैरक्लेशधनक्षयाः तगरसरोरुहपत्रैरजनीसिद्धार्थलोध्रसंयुक्तैः स्नानंजन्मर्क्षगतेरविसंक्रमणेनृणां
शुभदं अथसंक्रांतिकृत्यं हेमाद्रौ अयनादौसदादेयंद्रव्यमिष्टंगृहेषुयत् षडशीतिमुखेचैवविमोक्षेचंद्रसूर्ययोः ब्रह्म

पुराणे शुक्लपक्षेतुसप्तम्यांयदासंक्रमतेरविः महाजयातदासावैसप्तमीभास्करप्रिया स्नानंदानंजपोहोमःपितृदेवादि पूजनं सर्वकोटिगुणंप्रोक्तंतपनेनमहौजसा अस्यांघृतपयोभ्यांरविंस्नात्वा अश्वमेधफलंप्राप्य सूर्यलोकंतांयातीत्यादि तत्रैवोक्तं अथसंक्रांतिविशेषदानानितिथितत्त्वे ददातियोहिमेषादौसक्तूनंबुघटान्वितान् पितॄनुद्दिश्यविप्रेभ्यःसर्व पापैः प्रमुच्यते मेषादौ मेषसंक्रमणे हेमाद्रौ विश्वामित्रः मेषसंक्रमणेभानोर्मेषदानंमहाफलं वृषसंक्रमणेदानंग वांप्रोक्तंतथैवच वस्त्रान्नदानपानानिमिथुनेविहितानितु घृतधेनुप्रदानंतुकर्कटेपरिशस्यते ससुवर्णछत्रदानंसिंहे चविहितंसदा कन्याप्रवेशेवस्त्राणांसुरभीणांतथैवच तुलाप्रवेशेधान्यानांबीजानामेवचोत्तमं कीटप्रवेशेवस्त्राणांवेश्म नांदानमेवच कीटोवृश्चिकः धनुःप्रवेशेवस्त्राणांधानानांचमहाफलं झषप्रवेशेदारूणांदानमग्नेस्तथैवच कुंभप्रवे शेदानंतुगवामंबुतृणस्यच मीनप्रवेशेस्थानानांमाल्यानामपिचोत्तमं दानान्यथैतानिमयाद्विजेंद्राः प्रोक्तानिकालेतुनरः प्रदत्त्वा प्राप्नोतिकाममनसेप्सितंचतस्मात्प्रशंसंतिहिकालदानं धेनुंतिलमयींराजन्दद्याच्चैवोत्तरायणे सर्वान्कामा नवाप्नोतिविंदतेपरमंसुखं विष्णुधर्मोत्तरे उत्तरेत्वयनेविप्र वस्त्रदानंमहाफलं तिलपूर्णमनड्वाहंदत्त्वारोगैर्विमुच्यते मं गलकृत्येज्योतिर्निबंधेनारदः त्याज्याः सूर्यस्यसंक्रांतेः पूर्वतः परतस्तथा विवाहादिषुकार्येषुनाड्यः षोडशषोडशे ति एतत्पुण्यकालोपलक्षणं भानोःसंक्रांतिभोगश्चकुलिकश्चार्द्धयामकइति ज्योतिःप्रकाशे वर्ज्येषुसंक्रांतिभोगस्य परिगणनात् अथसंक्रांतीनांफलविशेषकथनायपुनरपिताएवसंज्ञाज्योतिषकल्पतरौ विषुवन्मेषतुलयोरयनंमकरे रवौकुलीरेच षडशीतिर्द्विशरीरेविष्णुपदीसुस्थिरेराशौ अथ मेषविषुवत्पुरुषचक्रं शीर्षेसप्तमुखेत्रीणिहृदयेपंचचैव हि हस्तयोःपादयोस्त्रिस्त्रिरेतद्विषुवलक्षणं रविसंक्रांतिनक्षत्रं मुखे दत्त्वा स्वजन्मनक्षत्रं यत्र पतति तदंगजं फलं ब्रूयात् तद्यथा कपालेभूपालस्तदनुवदनेपंडितवरोधनाध्यक्षोवक्षस्यथभ्रमरवधूर्दक्षिणकरे करेवामेभिक्षाप्यट विगमनंदक्षिणपदेपदेवामेमृत्युर्भवतिनिजनक्षत्रपतनात् अथ तुलापुरुषः रससारब्रह्मानन



















दशनेत्रंशिरमुखंहृदयकरचरणेपुमानेवैरंवहुसुखलाभंभोगंत्रासंतुलविषुवेच अथोत्तरायणपुरुषः। कपालेहरनेत्राणिव दलेचत्रयंतथा हस्तयोश्चद्वयंदद्यात्स्कंधयोश्चद्वयंद्वयंहृदयेशरसंयुक्तंनाभावेकंतथागुदे पादयुग्मेचसूंदद्यादुत्तरायणपू रुषे अर्थलाभोमिष्टपानमैश्वर्य्यंस्थानमानता अनुपद्रवसौख्यंचकिंचिल्लाभश्चनाभितः ईहितंचतथागुह्यप्रवासश्चपदद्व ये। दक्षिणायनपुरुषः। शीर्षेत्रीणिमुखेत्रीणिहृदयेपंचकंतथा हस्तेपादेकलामाहुर्दक्षिणायनमीरितं फलमेतस्योत्तरा यणपुरुषवत्। अथषडशीतिपुरुषः मुखेचैकंकरेपंचपदयुग्मेद्वयंद्वयं क्रोडेवाणास्तथावेदाःकरेसव्येपिपंचच द्वयंद्वयं तथानेत्रेमस्तकेशिवलोचनं एकंभचतथागुह्येषडशीतिमुखेश्रुतिः मुखेदुःखंकरेलाभःपादयोर्भ्रमणंभवेत् कांतासौ

स्यंहृदिज्ञेयंवामहस्तेचवंधनं सन्माननेत्रयोश्चैवशीर्षेचाधिक्यमायुषः गुह्येचैवतथामृत्युःषडशीतिफलश्रुतिः । अथ विष्णुपदीपुरुषः ऋक्षेसंक्रमणंयत्रतद्दक्षेविनियोजयेत् चत्वारिदक्षिणेबाहौत्रीणित्रीणिपदद्वयेचत्वारिवामहस्तेचहृदयेपंचनिर्दिशेत् अक्ष्णोर्द्वयंद्वयंप्रोक्तंनाभौद्वेचैकंभगुदे रोगोभोगस्तथाध्वाचबंधनंभ्रममेवच ऐश्वर्यंराजपूजाचश्रमपमृत्युरितिक्रमात् । इतिद्वादशराशीनांसंक्रांतिफलानि । यस्मिनृक्षेरविसंक्रमणंस्यात्तन्नक्षत्रंएकांकादियथास्थानेदत्वायस्यजन्मनक्षत्रंयदंगेपतिततदंगफलंगोचरेजातकेचतस्मैब्रूयात् । अत्रचक्रसारःसंक्रांतिमात्रेप्रोक्तः चक्रंसारंविलिख्यग्रहप्रतिरयनंसंक्रमेचेत्करोतियस्मिनृक्षेतदक्षंमरणभयकरंशूलपार्श्वेर्थलाभः सौख्यंस्याच्चक्रगर्भेजयधनविभुता







राजसन्मानलाभः यस्मिन्नृक्षेरविसंक्रमणांउत्तरेवादक्षिणायेनवाभवेत् तन्नक्षत्रंप्रथमंशूलेदत्वाततोवचनानुसारेणफलंब्रूयादिति इतिपट्सज्ञोक्तिद्वादशसंक्रांतिपुरुषफलज्ञानम् ॥ अथचंद्रपुरुषः जन्मराशेश्चनक्षत्रान्नक्षत्रंवर्तमानकं गणयेद्गणकः प्राज्ञश्चंद्रस्यैवशुभाशुभं षडास्येपृष्ठकेषट्चत्रयंबाहौत्रयंगुदे त्रयंपादेत्रयंकंठेदद्यादृज्ञेयंशुभाशुभंमुखेहानिश्चविज्ञेयाधनलाभोहिपृष्ठके हस्तेराजभयंराजसन्मानंगुह्यकेभवेत् स्थानभ्रंशोभवेत्पादेकंठेसर्वसुखंभवेत् अथत्रिकोणचक्रसंक्रमणेज्ञेयं कोणेत्रयंपट्चमध्येत्रिरावृत्यायथाक्रमं संक्रमर्क्षंपरंज्ञात्वागणयेज्जन्मभावधि प्रथमेकोणेसंक्रमनक्षत्रंदत्वाक्रमेणत्रिरावृत्यायत्रजन्मनक्षत्रंपतिततत्फलंब्रूयात् प्रवासोभोगलाभश्चज्वरोग्निस्तापसंपदौविजयोमृत्युरर्थाप्तिः फलमेतद्यथाक्रमं अथसूर्यादीनांगोचरफलानिज्योतिःशास्त्रे सूर्यःशत्रुभयंशशीसदशनंभौमोविवादंऋणं सौम्योवंचनमंगिरामतिधनभ्रंशंभयवैरितः हर्षंदैत्यपुरोहितोधनहतिंदन्यंचसूर्यात्मजो राहुर्वित्तहतिंकरोतिनिधनंचेज्जन्मराशिंगतः १ सूर्योमित्रजनैःकलिंहिमरुचिःक्लेशक्षयंभूमिजो धर्मार्थक्षयमिंदुजोवहुसुखंलाभंसदासर्वतः जीवोज्ञानसुखंतपश्चवहुधाभोगंभृगोरात्मजो राहुःसूर्यसुतश्चवित्तहरणंयातोविधत्तेधने ॥ २ ॥ भानुर्भूरिधनंशशीरिपुकुलभ्रंशंकुजोर्थागमं स्थानप्राप्तिधनंस्थिरंशशिसुतःसंतापमंतर्गतं जीवोबंधुविदेशयानविभवध्वंसंसितोरिक्षयंसौरिर्भूरिधनंतमश्चकुरुतेनित्यंतृतीयेस्थितः ३ सूर्योदुःखपरंपरांहिमरुचिःसूक्ष्मामयंक्ष्मासुतःशत्रोर्वैभववर्धनंशशिसुतोलाभंप्रसादंयशः जीवोवुद्धिक्षतिंभृगुर्वहुविधाःपूजादिकाःसंपदः सौरिर्वित्तहतिंतमोरिपुभयंकुर्याच्चतुर्थंगतः ४ सूर्यःशोकवियोगरोगममृताधारश्चकार्यक्षयं भौमश्चंचलताशुवंधनहतिंरोगंवुधोवैशसं जीवोज्ञानधनात्मजान्भृगुसुतः पुष्टिंतथास्त्रीरतिं शौरिर्बंधुशुचिंतमोरिपुभयंकुर्याद्गतःपंचमे ५ भास्वान्वैभवमुत्तमंहिमरुचिश्चित्तप्रसादंपरंभौमोवैरिविमर्दनंशशिसुतोमानंयशःसन्मतिंजीवः शत्रुसमृद्धिमर्थमतुलंशुक्रोविपादंशनिर्वित्तंशत्रुहतिंतमोबहु

धंनपंचकरोतिस्थितः ॥ ६ ॥ उद्योगंदिननायकोहिमकरःस्त्रीरत्नवित्तोदयंभौमोदुःखहर्तिशुचःशशिसुतोरोगंभयंभूपतेः जीवःकांचनमानवाप्तिविभवंशुक्रोरुजंसूर्यजो राहुश्चापिविदेशयानमरणंकुर्याद्गतःसप्तमे ७ भानुःशोकवियोगरोगम सृताधारोभृशंचैभवंभौमः पारकवैरिभीतिमतुलांसौम्यः सुखंसर्वतः स्थानत्यागमथोगुरुर्भृगुसुतः पुत्रार्थलाभं शनिः पातश्चापिधनक्षयंनृपभयंयातोविधत्तेष्टमे ॥ ८ ॥ सूर्योवित्तविनाशनंहिमकरोरोगंभयंभूमिजो भीतिंवै रिन्नृपाद्भयंशशिसुतस्तापंसदासर्वतः जीवोमानधनाभिवृद्धिविभवंशुक्रोर्थलाभंशनि र्विद्वेषंस्वजनैस्तमश्चिररुजं कुर्याद्गतोधर्मभे ॥ ९ ॥ सूर्योर्थोपचयंगणाधिपतितांचंद्रःसमृद्धिंपरां भौमःख्यातिमनुत्तमांशशिसुतःशांतिंपरांसं पदं जीवोबांधवविग्रहंनृपभयंशुक्रःसुमित्रक्षयं सौरिर्व्याधिविनाशनंविधुरिपुर्वित्तंविधत्तेखगः ॥ १० ॥ भानुर्वै भवमुत्तमंहिमरुचिर्मिष्टान्नपानंकुजः ख्यातिंचंद्रसुतोर्थलाभमतुलंजीवःपरांनिर्वृतिं शुक्रोगीतकवित्वधर्मकुतुकंसौ रिःपरांसंपदं । राहुर्वैरिविमर्दनंवहुविधंकुर्यात्सदैकादशे ॥ ११ ॥ भानुर्बंधुवियोगशोकममृताधारोभयंभूमिजो बंधं चंद्रसुतोधनात्मजयशोधर्मान्गुरुःक्लिष्टतां शुक्रः सौख्यमहर्निशंवहुधनंसौरिर्विदेशस्थितिं राहुर्ज्ञानविलोपनंवहुशु चःकुर्याद्गतोद्वादशे ॥ १२ ॥ अस्यापवादः पशुपतिसंज्ञायां सुहृद्गतःस्वोच्चगतोपिवास्यान्मित्रेक्षितोवास्वगृहे गतोवा अनिष्टसंस्थोपिध्रुवंनराणांसर्वोग्रहः श्रेष्ठफलंददाति ॥ १३ ॥ इतिगोचरफलम् अथगोचरफलप्र संगादेतेषांग्रहाणामनिष्टफलपरिहारार्थमुपचारोज्योतिःशास्त्रे येचांवरस्थाः खलगोचराद्यैर्दशाक्रमाद्यैरशुभाभवं ति दानादिनातेचयथाप्रसन्नाभवंतिदानादिविधिंप्रवक्ष्ये ॥ १ ॥ कौशेयंत्वथहेमताम्रकलशंचोर्णांवरंकुंकुमं मा णिक्यंचगुडप्रवालममलंमध्येलयावः क्षितिं प्रावारासनरक्तचंदनघृतंगोधूमनानाफलं सूर्यायव्यजनंचरक्तवसनं धेनुंसवत्सांगृहम् ॥ २ ॥ इतिसूर्यस्य शंखस्फाटिकमौक्तिकंगजमदंवज्रंधनुस्तंडुला दुग्धंदुग्धविकारपट्टवसनं क्षौद्राज्यरौप्यंफलं कर्पूरंसितवस्त्रपांडुरपभंकस्तूरिकाचंदनंप्रावारंलवणेक्षुगांचतुरगंचंद्रायदद्यात्सुधीः इतिचंद्रस्य

॥ २ ॥ ताम्रंचामरमायुधंक्षितिगुडंकौशेयरक्तांबरं तिक्तंरक्तमहोक्षरक्तकुसुमंगोधूमकंकुंकुमं प्रावारंचमसूरिकां
मृगमदंस्वर्णफलंविद्रुमं वक्रायप्रवदंतिचासनमथोगोरक्तकंकंबलं इतिभौमस्य ॥ ३ ॥ दासीदासमहीफलानि
तुरगंगारुत्मकंगोघृतं मुद्राचामरतंडुलायुधगजंकांस्यंगृहंहाटकं कर्पूरंहरिचंदनंमरकतंचेन्नागदंतासनंदूर्वाभास्व
रपदसंमृगमदंसौम्यायदेयंमुदा इति बुधस्य ॥ ४ ॥ नागोनागमदंनृयानकनकंकौशेयपीतांबरं छत्रंचामर
पुष्परागतुरगंक्षोणीगृहंशर्करा पीतान्नरजनीचमौक्तिकफलंरौप्यंचकस्तूरिका क्षौद्रंगोयुगलोर्णवस्त्रलवणंसंदीयतेवै
गुरोः इतिजीवस्य ॥ ५ ॥ वज्रंगोक्षितितंडुलाश्वरजतंशुभ्रांवरंमौक्तिकं कस्तूरीसितचंदनंसितहयः प्रावारमू
र्णाविकं कौशेयाम्लकगंधपुष्पकमथोगंत्रीरथंकंबलं शालिग्रामशिलांचगांचरजतंशुक्रायदद्यान्मुदे इतिशुक्रस्य
॥ ६ ॥ माषान्नंक्षितिमिंद्रनीलमहिषींदासःपतत्रीशिला स्तैलंलोहधराश्वसीसकरभोदासः कुलत्थास्त्रपुः
स्यान्माषान्नमुपानहौमृगमदंगांकृष्णवर्णांतथा मंदायप्रवदंतिषोडशमहादानानिसत्कंबलं इतिशनेः ॥ ७ ॥ गोमे
दंतिलकांस्यपात्रमहिषींतैलंतथाकंबलं राजावर्त्तगजोष्ट्रदासमहिषीकौशेयनीलांबरं दासीहिंगुफलास्त्रकार्मुकशराः
शय्यासनंगोमही दानंदेयमुपानहौसतुरगंदैत्यस्यतुष्ट्यैसदा इतिराहोः ॥ ८॥ केतोर्दानमुदीरितंहिलवणंकौशेय
नीलांबरं वैदूर्यंतिलकंबलोर्णवसनंसद्गंधतैलासनं कस्तूरीहरिचंदनंदशविधंगांदंतिदंतंहयं खट्वांगायुधमम्लकं
चमहिषींदासींचदासंफलं इतिकेतोः ॥ ९ ॥ इतिनवग्रहदानानि । सौरमासस्वरूपेणाखिलसंक्रांतिनिर्णयः । सां
गोपांगंचतत्कृत्यंसप्रसंगनिरूपितं अथपक्षोनिर्णीयते तत्रपक्षशब्दः पक्षपरिग्रहे इत्यस्माद्धातोर्निष्पन्नोदेवकार्या
र्थंपितृकार्यार्थंपरिगृह्यते यः कालविशेषस्तंवदंति अथवाचंद्रस्यपंचदशकलामापूरणंक्षयोवापरिगृह्यते यत्रसप.
क्षः सचाद्विविधः शुक्लः कृष्णश्चचंद्रकला वृध्युपलक्षितः शुक्लः चंद्रकलाक्षयोपलक्षितः कृष्णः एतौशुक्लकृष्णप

क्षौपूर्वापरपक्षावित्युच्यंते पक्षौपूर्वापरौशुक्लकृष्णौमासस्तुतावुभावित्यमरसिंहेनाभिधानात् शुक्लपक्षश्चापूर्यमाण. इत्युच्यते अनयोश्चविनियोगोज्योतिःशास्त्रादौदर्शितः उभौनियुक्तौखलुशुक्लकृष्णौशुभाशुभेकर्मणितौप्रशस्ता वित्यादिभिः इतिपक्षनिर्णयः॥ अथदिवसनिर्णयः सचतुर्विधः चांद्रसौरसावननाक्षत्रभेदात् एतेषांस्वरूपमुक्तं विष्णुधर्मोत्तरे तिथिनैकेनदिवसश्चांद्रेमानेप्रकीर्तितः अहोरात्रेणचैकेनसावनोदिवसः स्मृतः आदित्यभागभोगे नसौरोदिवसउच्यते चंद्रनक्षत्रभोगेननाक्षत्रोदिवसःस्मृतइति तिथिभागयोर्लक्षणंतत्रैवदर्शितं त्रिंशांशश्चतथारा शेर्भागइत्यभिधीयते आदित्याद्विप्रकृष्टस्तुभागद्वादशकंयदा चंद्रमाः स्यात्तदारामतिथिरित्यभिधीयतइतिदिवसनि र्णयः। अथतिथिनिर्णयः। तत्रतिथिशब्दस्तनोतेर्धातोर्निष्पन्नः तनोतिविस्तारयति वर्द्धमानांक्षीयमाणांचंद्रकलामे कांयः कालविशेषः यद्वायथोक्तकालपात इतितिथिः तदुक्तंसिद्धांतशिरोमणौ तन्यंतेकलयायस्मात्तास्तस्मात्ति थयः स्मृताइति एतदभिप्रेत्यस्कांदेपठ्यते अमाषोडशभागेनदेविप्रोक्तामहाकला संस्थितापरमामायादेहिनांदे हधारिणी अमादिपौर्णमास्यंतायाएवशशिनःकलाःतिथयस्ताः समाख्याताः षोडशैववरानने इति अयमर्थः यामहामायाधारशक्तिरूपादेहिनांदेहधारिणी संस्थितासाचंद्रमंडलस्यषोडशभागेनपरिमिताचंद्रदेहधारिणी अ मानाममहाकलेति प्रोक्ताक्षयोदयरहितानित्यानित्यसंज्ञकैव इतराश्चापिपंचदशकलादिवसव्यवहारोपयोगिन्यः क्षयोदयवत्यः पंचदशतिथयोभवंति तेनतिथयः षोडशेतिविरुद्धवचनं श्रुतिरपि तस्यरात्रयएवपंचदशकलाध्रु वैवास्यषोडशकलेति एवंसत्यत्रसामान्यविशेषरूपेणतिथिद्वैविध्यमुक्तंभवति तत्रेयममेत्युक्ताक्षयोदयवर्जिताध्रुवा षोडशीकलातद्युक्तः कालस्तिथिसामान्यरूपस्त्ववशिष्टावृद्धिक्षयोपेताः पंचदशकलास्ताभिर्निर्दिष्टाः कालवि भागास्तिथिविशेषास्तासांपंचदशानामेकैकांकलांवन्ह्यादयः प्रजापत्यंताः पंचदशदेवताः क्रमेणापिबंति त

अवह्निरेकांपिवतिप्रथमेत्युच्यते तयामुक्तः कालः प्राथम्यवाचिनाप्रतिपच्छब्देनाभिधीयते एवंचाद्वितीयादिपंचदश्यंतानांनामान्यवगंतव्यानिताएताः कृष्णपक्षतिथयोभवंति पुनश्चताः पीताः कलाअनेनैवक्रमेणवह्न्यादिदेवताभ्योनिर्गत्यचंद्रमंडलंपूरयंति ताभिर्युक्ताः कलाविशेषाः शुक्लपक्षगताः प्रतिपदाद्यास्तिथयोभवंति वह्न्यादिदेवतानांकलापानंसोमात्तृप्तिविषये प्रथमांपिवतेवह्निर्द्वितीयांपिवतेरविः विश्वेदेवास्तृतीयांतुचतुर्थींसलिलाधिपः पंचमींचवषट्कारः षष्ठींपिबतिवासवः सप्तमींस्तपयोदिव्यामष्टमीमजएकपात् नवमींकृष्णपक्षस्य यमः प्राश्नातिवैकलां दशमींपिवतेवायुः पिवत्येकादशींपुमान् हेमाद्रौतु रुद्राएकादशींकलामितिपाठः द्वादशींपितरः सर्वेसमंप्राश्नतिभागशः त्रयोदशींधनाध्यक्षः कुवेरः पिवतेकलां चतुर्दशींपशुपतिः पंचदशींप्रजापतिः सनिष्पीतः कलाशेषश्चंद्रमानप्रकाशते कलाषोडशिकायातुअपः प्रविशतेतदा अमायांतुसदासोमओषधीः प्रतिपद्यते तमौषधिगतंगावः पिवंत्यंबुगतंचयत् तत्क्षीरममृतंभूत्वामंत्रपूतंद्विजातिभिः हुतमग्निषुयज्ञेषुपुनराप्याययतेशशी दिनेदिनेकलावृद्धिः पौर्णमास्यांतुपूर्णतेति ॥ इतितिथिशब्दार्थनिर्णयः ॥ स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचाररसाररसवित्सद्वृंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेःपादांबुजार्चारतोजीव्यात्पुत्रकलत्रमित्रसहितः संपालयन्क्ष्मांचिरम् ॥ १ ॥ रणवीरसिंहभूपेनकारितेकृत्यसागरे द्वितीयः परिपूर्णोयंकालरत्नसमुद्गकः ॥ २ ॥

इति श्रीमहाराजाधिराजश्रीरणवीरसिंहकारितेकृत्यरत्नाकरेसंवत्सरादिकालनिर्णयः समाप्तः ॥ २ ॥ ॐ ॥

अथसामान्यतः सर्वासांतिथीनांनिर्णयः तिथिर्द्वेधासंपूर्णाखंडाच तत्रसंपूर्णाः स्कंदपुराणेदर्शिताः प्रतिपत्प्रभृतयः सर्वाउदयादुदयंरवेः संपूर्णाइतिविख्याताइतिज्योतिः सिद्धांते सर्वाह्येताश्चसंपूर्णाश्चोदयादुदयंस्थिताः षष्टिघटिकात्मिकासंपूर्णातिथिरितिनारदीये अथघटिकासाधनं निर्णयामृतेमहाभारतेनिरूपितं कर्षेणाप्यधिकैः प

द्भिः पलैस्ताम्रस्यभाजनं त्रिंशदंगुलविस्तारमुच्छ्रितंचतुरंगुलं स्वर्णमाषेणकृत्वाष्टचतुरंगुलकाघिका मध्यभागेतथा विद्धेनाडिकाघटिकास्मृता तद्रंध्रेणांभसापात्रंयावत्कालेनपूर्यते सकालोनाडिकातस्याः षष्ठिभागोविनाडिका नाडिद्वयंमुहूर्तस्तुतेपंचदशवासरः एवंरात्रिस्तथापक्षमासत्वयनवत्सराः ॥ इति ॥ स्वर्णमाषादिमानं चागस्त्येनोक्तं यवःस्यात्सर्षपैः षड्भिर्गुंजाचस्यात्त्रिभिर्यवैः गुंजाभिः पंचभिश्चैकोमाषकः परिकीर्तितः भवेत्षोडशभिर्माषैः सुवर्णस्तैः पुनः स्मृतं ॥ पलंसुवर्णाश्चत्वारः पंचवापिप्रकीर्तितमिति कर्षस्तुपलस्यचतुर्थोभागः तदुक्तं त्रिकांड्यां मानंतुलांगुलप्रस्थैर्गुंजापंचाद्यमाषकाः तेषोडशाक्षः कर्षोस्त्रीपलंकर्षचतुष्टयमिति असंपूर्णातिथिर्दिनद्वयसंबंधिनीखंडा तस्यांदिनद्वयसंबंधिन्यांसत्यां व्रताद्यनुष्ठानेपूर्वापरावोपादेयेत्यादिसंदेहे निर्णयःक्रियते तत्रप्रतिपदाद्याः सर्वाःखंडास्तिथयोमध्याह्नादिकालविशेषे विहितेष्वेकभक्तादिषुयस्मिन्यस्मिन्दिनेतत्तत्तत्कालव्यापिन्योलभ्यंते तत्तद्दिनगताएवग्राह्याः कर्मणोयस्ययःकालस्तत्कालव्यापिनीतिथिः तयाकर्माणिकुर्वीतह्रासवृद्धीनकारणमिति वृद्धगार्ग्यवचनात् गार्ग्यः निमित्तकालमादायवृत्तिर्विधिनिषेधयोः विधिःपूज्यतिथौतत्रनिषेधःकालमात्रके तिथीनांपूज्यतानामकर्मानुष्ठानयोग्यता निषेधस्तुनिवृत्त्यात्माकालमात्रमपेक्षते इति नचकेवलंवाचनिकएवायमर्थः किंतुन्यायोपीतिनिषेधस्त्वित्यनेनसूचयति तथाहि विधिषुविधेयानुष्ठानस्याभ्युदयहेतुत्वंप्रमेयं सकृदनुष्ठानादेवत्वभ्युदयसिद्धेस्तिथिद्वयेकुत्रानुष्ठेयमितिविधेयेजायतेसंदेहः निषेधेषुतुकालविशेषेकर्मविशेषस्याननुष्ठानस्यानर्थहेतुत्वंप्रमेयं यदाकदाचिदपितत्कालेतत्कर्मानुष्ठानेऽनर्थप्रसंगात्सदैवतत्कालेतद्वर्ज्यंभवतीतिनास्तिसंदेहः नन्वेवंवचनात्तत्रागतश्चकालविशेषः प्रागुक्तसर्वनिषेधानांतावत्कालिकत्वसिद्धौ अभ्यंगमैथुनदंतधावननिषेधेषु पुनस्तात्कालिकत्ववचनंकिमर्थमभ्यंगेचोदधिस्नानेदंतधावनमैथुने जातेचमरणेचैवतत्कालव्या

पिनीतिथिरिति सत्यं विधेयकर्मविशेषएवसाकल्पापवादार्थतस्मिन्वचनेनिषेध्यानांकेषांचिदुपादानं दृष्टांतत्वेनजन्ममरणयोरनुष्ठेययोः साकल्यवचनंप्रवर्ततेयेनतदपवादः साकल्यवचनेस्नानदानजपादिष्वित्यादिवचनेनतदर्थेकेन दानाध्ययनकर्मस्विति बहुवचनेनचानुष्ठेयानामेवकर्मणांग्रहणात् अतएवनिषेध्यानामप्यल्पसादृश्यात्तत्रानुपादानं न चजननमरणाभ्यांतन्निमित्तकस्यानुष्ठेयकर्मणएवोपादानं तन्निमित्तकश्राद्धादौसाकल्यस्येष्टत्वादेवतदपवादसंभवात् तस्माज्जननमरणयोस्तद्वन्निषेध्यानामपिदृष्टांततयैवतत्रोपादानं अतएवतिथिविशेषाधिकरणकोपात्तादिनिमित्तानांसकलनिषेध्यानांचोपलक्षणमेवनग्रहणमिति नतुयुग्मादिवाक्यविरोधात् कथमयंनिर्णयः तथाहि युग्माग्नियुगभूतानांषण्मुन्योर्वसुरंध्रयोः रुद्रेणद्वादशीयुक्ताचतुर्दश्याचपूर्णिमा प्रतिपद्यप्यमावास्यातिथ्योर्युग्मंमहाफलं एतद्व्यस्तंमहादोषंहंतिपुण्यंपुराकृतमितिनिगमवचन युग्मंद्वितीया अग्निस्तृतीया ॥ १ ॥ युगंचतुर्थी भूतंपंचमी ॥ २ ॥ षट्षष्ठी मुनिः सप्तमी ॥ ३ ॥ वसुरष्टमी रंध्रंनवमी ॥ ४ ॥ रुद्रएकादशी द्वादशी ॥ ५ ॥ अत्रद्वितीयातृतीयेत्येकंयुग्मं अत्रद्वितीयादिप्रतिपदांतासुक्रमेणद्वयोर्द्वयोस्तिथ्योः परस्परमेवयुग्मं अक्षय्यफलं नपुनर्व्यस्तंतिथ्यंतरयुग्ममित्यर्थः अस्मिन्युग्मसप्तके पूर्वातिथिरुत्तरतिथिविद्धाग्राह्या उत्तरातुपूर्वविद्धेत्यर्थः ततश्चानेनवचनेन अमावास्याविद्धाप्रतिपत्सर्वदाग्राह्येतिविधीयते कर्मणोयस्ययः कालइत्यनेनतु द्वितीयायुतायाः प्रातिपदः कर्मकालव्यापित्वेसाग्राह्येत्युच्यतेइत्यनयोर्विरोधः तथा खर्वोदर्पस्तथाहिंसा त्रिविधंतिथिलक्षणं खर्वदर्पौपरौपूज्यौहिंसास्यात्पूर्वकालिकीतिव्याघ्रोशनसोर्वाक्यं खर्वस्तिथेःसाम्यं दर्पोवृद्धिः हिंसाक्षयः एतेवृद्धिसाम्यक्षयाः पूर्वतिथ्यपेक्षया यथा एकापूर्वाह्निमध्याह्नादधिकावर्तते अन्याप्यन्यस्मिन् तथैवपूर्वतिथेरधिका खर्वः समातिथिः पूर्वदिनमध्यान्हव्यापिनी अन्याप्यन्यास्मिन्तावत्येवेति हिंसातिथेर्ह्रासः तद्योगात्तिथिरपिहिंसेत्युच्यते यथाएकापूर्वदि

नेमध्याह्नान्न्यूनाअन्याप्यन्यस्मिन्तथैवपूर्वतिथेर्न्यूनेति ततश्चवृद्धिसाम्ययोरुत्तराग्राह्याद्वयोस्तुपूर्वेत्यर्थः प्रतिपादके
नानेनकर्मकालव्यापिन्येवतद्विपरीतातिथिर्ग्राह्येतिप्रतिपादकस्यकर्मणोयस्येत्येवमादेर्विरोधइति तथा शुक्लपक्षेतिथि
र्ज्ञेयायस्यामभ्युदितोरविः कृष्णपक्षेतिथिर्ग्राह्यायस्यामस्तमितोरविरितिमार्कंडेयवचनेनापिविरोधः तस्मात्परस्पर
वचनविरोधात् कथंपूर्वोक्तनिर्णयइतिचेत् उच्यते तत्रखंड।तिथिः पंचधाभवति अन्यतरस्मिन्नेवदिनेसकलकर्मका
लव्यापिनी १ अन्यतरस्मिन्नेवदिनेकर्मकालैकदेशव्यापिनी २ दिनद्वयेपिसकलकर्मकालव्यापिनी ३ दिनद्वयेपि
कर्मकालैकदेशव्यापिनी ४ तत्रव्याप्तौप्रक.रद्वयंसाम्यंचेतिदिनद्वयेपिकर्मकालसंबंधरहिताचेति ५ तत्राद्यपक्षद्वयेव्र
तदानादावेकोद्दिष्टादिश्राद्धेचकर्मणोयस्ययः कालइत्यनेनैवनिर्णयः नतुयुग्मवाक्यादिभिः १ तत्रहियुग्मवाक्येन
निर्णयेकदाचिदमावास्यादिविद्धाः कर्मकालव्यापिन्यः प्रतिपदादितिथयोग्राह्याः स्युःतथाखर्वदर्पवाक्येनात्र.निर्ण
येकदाचित्तिथिवृद्धौकर्मकालव्यापिन्युत्तरविद्धाग्राह्यास्यात् ॥ तथाच तत्कर्मविशेषप्रतिपदादितिथिविधायकानेकवा
क्यबाधः स्यात् संभवतिचबाधेबाधकल्पनमयुक्तं तृतीयपंचमपक्षयोस्तुयुग्मवाक्येनखर्वदर्पवाक्येननिर्णयः पूर्वोक्त
दोषाभावात् तत्राप्येवंव्यवस्थायुग्मादिवाक्यंव्रतदानादिविषयमेव द्वितीयादिकयुग्मानांपूज्यतानियमादिषुएकोद्दिष्टा
दिवृद्ध्यादौह्रासवृद्ध्यादिचोदनेतिव्यासोक्तेः नियमादिषुव्रतदानादिदैवकर्मसु एकोद्दिष्टादीत्यादिशब्देनाभ्युदयि
कव्यतिरिक्तश्राद्धग्रहणंवृद्ध्यादिशब्देनाभ्युदयिकश्राद्धग्रहणं चतुर्थपक्षे यदादिनद्वयेपिकर्मपर्याप्तकालव्यापिनीत
दायुग्मादिवाक्येननिर्णयः एकस्मिन्नेवदिनेकर्मपर्याप्तकालव्यापिनीतदासैवग्राह्याविहिततिथिलाभात् यदोभयत्रा
पिनकर्मपर्याप्तकालसंबद्धाकिंतूभयत्रापिकर्मकालैकदेशसंबाधिनी तत्रन्यूनाधिक्येऽधिककालव्यापिनीग्राह्यानान्या
योयस्यविहितः कालः कर्मणस्तदुपक्रमे तिथिर्याभिमतासातुकार्य्यानोपक्रमोज्झितेतिबौधायनवचनात् स्कांदेपि

योयस्यविहितः कालः कर्मणस्तदुपक्रमे विद्यमानेभवेदंगनोज्झितोपक्रमेणतु सर्वथाकर्मकालव्याप्त्यभावेतुकर्मो
पक्रमकालगैवग्राह्या कर्मोपक्रमकालगातुक्तिभिर्ग्राह्यानयुग्मादर इतिदीपिकोक्तेरितिनिर्णयसिंधौ अतएवयांति
थिंसमनुप्राप्यउदयंयातिभास्करः सातिथिः सकलाज्ञेयास्नानदानजपादिषु यांतिथिंसमनुप्राप्यअस्तंयातिदिवाक
रः सातिथिः सकलाज्ञेयास्नानदानादिकर्मस्वित्यादीनिदेवलवचनानि दिनद्वयेपिकर्मकालव्यापितिथ्यभावेयुग्मा
दिवाक्यविहिततिथेः संपूर्णत्वंप्रतिपादयंति इदंच उदयास्तमयकालिकतिथेः संपूर्णत्वाभिधानं यदोदयादूर्ध्वं
मुहूर्तत्रयं मुहूर्तद्वयंवाविहितातिथिर्भवति अस्तमयात्प्राक् मुहूर्तत्रयं तदावगंतव्यं तदुक्तं विष्णुधर्मोत्तरे उदि
तेदैवतंभानोःपित्र्यंचास्तमितेरवौ त्रिमुहूर्तात्रिरह्नश्चसातिथिर्हव्यकव्ययोरिति भानावुदितेसत्यह्नोमुहूर्तद्वयंदैवतं अ
स्तमितेतत्पूर्वकालीनमह्नोमुहूर्तत्रयंपित्र्यंअतस्तत्कालव्यापिनीतिथिर्हव्यकव्ययोर्ग्राह्या सातिथिस्तदहोरात्रंयस्या
मभ्युदितोरविः वर्धमानस्यपक्षस्यह्रासस्त्वस्तमयेस्थितः त्रिमुहूर्तानकर्तव्यायातिथिः क्षयगामिनी द्विमुहूर्तापिक
र्तव्यायातिथिर्वृद्धिगामिनीति दक्षवचने द्विमुहूर्ताग्रहणं उदयसंबंधिन्यामेव अस्तगायाश्चत्रिमुहूर्तायाएवग्राह्य
त्वात् तदुक्तंस्कंदपुराणे यांतिथिंसमनुप्राप्ययात्यस्तंपद्मिनीपतिः सातिथिस्तद्दिनेप्रोक्तात्रिमुहूर्तानसाभवेदिति अ
त्रत्रिमुहूर्तानेतिदक्षवचनात् ह्रासवृद्धिवशेनतिथिनिर्णयः श्रामश्राद्धविषयः तस्यास्तुत्रिमुहूर्तायाः क्षयवृद्धिरकार
णमिति स्कांदवचनं व्रतादिविषयं द्वितीयादिकेव्यासनिगमवचनात् यानितु व्रतोपवासस्नानादौघटिकैकापिया
भवेत् उदयेसातिथिर्ग्राह्याविपरीतातुपैतृके आदित्योदयवेलायांयास्तोकापितिथिर्भवेत् पूर्णाइत्यवगंतव्याप्रभूतानो
दयंविनेत्यादीनिस्कंदपुराणेबौधायनवचनानि मुहूर्तत्रयादल्पकालव्यापिन्यामपितिथौसंपूर्णत्वप्रतिपादकानि
तानिवैश्वानराधिकरणन्यायेनावयुत्यानुवादरूपतयात्रिमुहूर्तव्यापतिथिप्रशंसापराणि युग्मवाक्यादिनिर्णयस्तु

नक्षत्रवारादियोगप्रशस्ततिथिव्यतिरिक्तविषयः अतएवगोभिलः यातिथीऋक्षसंयुक्तायायोगेननारदमुहूर्त्तत्र
यमात्रापिसापिसर्वाप्रशस्यते द्वितीयोऽपिशब्दः भिन्नक्रमः सर्वापीत्यन्वयः उदये त्रिमुहूर्त्तगायाअस्तमये
चत्रिमुहूर्त्तगागाः संपूर्णत्वाभिधानं वक्ष्यमाणाभ्यंगादिव्यतिरिक्तविषयं तदुक्तंस्कंदपुराणे ॥ अभ्यंगेचोद
धिस्नानेइत्यादिमन्वादौचयुगादौचग्रहणेचंद्रसूर्ययोः व्यतीपातेवैधृतौचतत्कालव्यापिनीक्रियेति मन्वादिषुस्ना
नदानश्राद्धादिक्रियामन्वादिकालएवकर्त्तव्या नकालांतरइतिमन्वादावित्यस्यार्थः नारदीये पारणेमरणेनृणां
तिथिस्तात्कालिकीस्मृता यदात्वेकैवतिथिः पूर्वाग्राह्येत्येकवचनेनोच्यते उत्तराग्राह्येत्यनेनतदाशुक्लपक्षेतिथिर्ग्रा
ह्येतिमार्कंडेयवचनंव्यवस्थापकंसर्वंसमंजसम् इतिसामान्यतः सर्वतिथिनिर्णयः ॥ अथैकभक्तकालनिर्णयः ॥
ब्रह्मपुराणे वैश्वानरव्रतेपठ्यते प्रतिपद्येकभक्ताशीसमाप्तेकपिलाप्रदइति तत्रादावेकभक्तंत्रिविधं स्वतंत्रंअन्यांगमु
पवासप्रतिनिधिरूपंचेति तत्रस्वतंत्रैकभक्तस्वरूपं तन्निर्णयश्चस्कांदे दिनार्द्धसमयेतीतेभुज्यतेनियमेनयत् एक
भक्तमितिप्रोक्तमतस्तस्माद्दिवैवहीति देवलोपि दिनार्द्धसमयेतीतेभुज्यतेनियमेनयत् एकभक्तंतुतत्प्रोक्तंन्यूनंग्रासत्रये
णत्विति तच्चैकभक्तंमध्याह्नव्यापिन्यांकार्यं तदुक्तंब्रह्मपुराणे मध्याह्नव्यापिनीग्राह्याएकभक्तव्रतेतिथिरिति बौधा
यनोपि उदयेतूपवासस्यनक्तस्यास्तमयेतिथिः मध्याह्नव्यापिनीग्राह्याएकभक्तव्रतेतिथिः अत्रमध्याह्नोनामपंचधा
विभक्तस्याह्नस्तृतीयोभागः तत्रअहोरात्रयोस्त्रिंशन्मुहूर्त्ताः अह्निपंचदशरात्रौपंचदश एतेषांमुहूर्त्तानांनामानिज्यो
तिःशास्त्रेकाश्यपेनोक्तानि गौरीवल्लभसर्पमित्रपितरोवस्वंबुविश्वाह्वया ब्रह्मांभोरुहशंभुवह्निनिऋतिर्भूतेशनक्तंचरा
तोयेशार्यमयोनयोदशतथापंचक्षणावासरे इत्यादि रुद्राजाहिर्बुध्न्यपूषाश्विनाःस्युःकीनाशयोग्निर्धातृचंद्राश्विनीज्याःवि
ष्णुर्भानुस्त्वाष्ट्रवाताःमुहूर्त्ता रात्रौक्रूरास्त्वंतकालाग्निरुद्राइति स्मार्त्तानिनामानिपुराणेदर्शितानि रौद्रः श्वेतश्चमैत्रश्च

तथासारभटः स्मृतः सावित्रोवैश्वदैवश्चगांधर्वः कुतपस्तथा रौहिणस्तिलकश्चैवविभवोनिर्ऋतिस्तथा शावरोवि
जयश्चैवभेदाः पंचदशस्मृताइति एतेपंचदशसूर्योदयादारभ्यक्रमेणदिवामुहूर्त्ताः तथारात्रिमुहूर्त्ताः शंकरश्चाजपा
च्चैवतथाहिर्बुध्न्यपूषकौ आश्विनोयाम्यवाह्नेयौवैधात्रश्चांद्रएवच आदितेयोथजैवश्चवैष्णवः सौरएवच ब्राह्मयोतो
मरुतश्चैवमुहूर्त्ताः क्रमशोनिशीति अत्रघटिकाद्वयात्मकोमुहूर्त्तः तदुक्तंनिर्णयामृतेमहाभारते नाडीद्वयंमुहूर्त्त
स्त्विति यदुक्तंरत्नमालायां दिनस्ययःपंचदशोविभागोरात्रेस्तथातद्धिमुहूर्त्तमानमिति तल्लक्षणाभिप्रायेणज्ञेयं
यद्यपिअह्नोविभागः त्रेधाचतुर्धापंचधादृश्यते तथापि बहुसंमतत्वात्पंचधाविभागएवगृह्यते पूर्वाह्णोअपराह्णइति
द्वेधाविभागः सचोक्तः स्कांदे आवर्त्तनात्तुपूर्वाह्णोह्यपराह्णस्ततः परइति तस्यचपर्वनिर्णयादावुपयोगः त्रेधाविभा
गमाह शातातपः यस्मादह्नस्तुपूर्वाह्णेदेवाअशनमभ्यवहरंति मध्यंदिनेमनुष्याः अपराह्णेपितरइति श्रुताव
पि पूर्वाह्णोदेवानांमध्याह्नोमनुष्याणामपराह्णःपितृणामिति एतस्यश्राद्धादावुपयोगः चतुर्धाविभागमाह गोभि
लः पूर्वाह्णः प्रथमंसार्द्धमध्याह्नःप्रहरेतथा आतृतीयादपराह्णः सायाह्नश्चततःपरमिति एतस्यचयत्रकर्म
विशेषगमकसद्भावस्तत्रोपयोगः पंचधाविभागस्तुव्यासेनोक्तः उदयादिमुहूर्त्तत्रयंप्रातः कालः तदनंतरंमुहूर्त्तत्र
यंसंगवः ततः परंमुहूर्त्तत्रयंमध्याह्नः ततः परंमुहूर्त्तत्रयमपराह्णः ततः परंमुहूर्त्तत्रयंसायाह्नः ननुत्रिंशद्घ
टिकात्मकेदिवसेपंचधाविभागेसतिएकैकस्यकालस्यमुहूर्त्तत्रयात्मकत्वंसंभवति षडशीत्यादिषुदिनमानह्रासेकथं
त्रिमुहूर्त्तात्मकत्वेनायंविभागइतिचेत् उच्यते त्रिमुहूर्त्तात्मकमित्यह्नः पंचमभागोपलक्षणं अतश्चअह्नांह्रासवृद्धौच
नदोषः एवंचषट्घटिकात्मकमध्याह्नेन्तरस्मिन्घटिकात्रये एकभक्तंकर्त्तव्यम् ॥ अन्यथादिनार्धसमयेतीतइति
वचनस्यानर्थक्यंप्रसज्येत इत्थमेवनिर्णीतं निर्णयामृते हेमाद्रौमदनरत्नेच अत्रमध्याह्नशब्दोदिनार्धसमयेतीतइ

तिवचनान्मध्याह्नोत्तरदले पटो दग्धइतिवत् तत्रस्वतंत्रमेकभक्तं यस्यांतिथौविहिततस्यांमध्याह्नोत्तरदलव्यापिन्यां कर्त्तव्यंदिनद्वयेपितद्व्यापिन्यांयुग्मवाक्यान्निर्णयः दिनद्वयेपिमुख्यकालास्पर्शेपूर्वैवग्राह्या गौणकालव्यापित्वात् तस्यामप्येकभक्तं मुख्यकालएवकर्त्तव्यं तिथ्यादिषुभवेद्यावान्ह्रासोवृद्धिः परेहनि तावान्ग्राह्यस्तुपूर्वेद्युरदृष्टोपि स्वकर्मणीतिवचनेन पूर्वतिथेरपि तावतोह्रासस्यकल्पनेनमुख्यकालेपिएकभक्तादितिथिसंभवात् केचित्तु तिथ्यां परस्थाघटिकाश्चयाःस्युर्न्यूनास्तथैवाभ्यधिकाश्चतासां अर्द्धंवियोज्यंचतथाप्रयोज्यंह्रासेचवृद्धौप्रथमेदिनेस्यात् इति लौगाक्षिवचनेनोत्तरतिथिह्रासार्द्धस्यपूर्वतिथौ योजनान्मुख्यकालेतत्संभवमाहुः दिनद्वयेमुख्यकालैकदेशस्य तुल्यकालव्याप्तौपूर्वैवग्राह्या गौणकालस्यापिव्यापनात् यदाचैकामुख्यकालैकदेशमधिकंव्याप्नोति तदाधिक मुख्यकालव्यापित्वेनसैवग्राह्या अयंनिर्णयः स्वतंत्रैकभक्तविषयः अन्यगतत्वैकभक्तप्रधानव्रतेनमध्याह्नेपूजये न्नृपेत्यादिवचनान्मुख्यकालानुरोधेगुणविरोधेचतादर्थ्यादितिन्यायेनमुख्यकालात्प्रच्युतमपिगौणकालेकर्त्तव्यं यथाद क्षिणायनेष्टिः प्रधानसोमयागानुरोधेनेष्टिकालात्पर्वणः प्रच्युताकालांतरेक्रियते उपवासप्रतिनिधिरूपंत्वेकभ क्तमुपवासदिनेमध्याह्ने उपवासतिथेःसद्भावेऽसद्भावेपिवातत्रैवकर्त्तव्यं तिथिर्यथोपवासेस्यादेकभक्तेपिसातथेतिसुमंतु वचनात् ॥ इतिश्रीरघुवंशतिलकश्रीमहाराजरणवीरसिंहकारितेकृत्यरत्नाकरेएकभक्तकालनिर्णयः ॥

अथनक्तकालनिर्णयः ॥

नक्तंनामाहरशनंवर्जयित्वारात्रौभोक्तव्यमितिनियमाद्दिवारात्रिव्रतं तस्मादेतद्दिवारात्रिव्यापिन्यामेवतिथौकर्त्तव्यं तदुक्तंस्कंदपुराणे दिवारात्रिव्रतयच्चएकमेवतिथौस्मृतं तस्यामुभयव्यापिन्यांकुर्यादेवव्रतंव्रती अत्रोभयव्यापिन्या

अलाभेप्रदोषव्यापिन्यांकार्य्यं तदाहवत्सः प्रदोषव्यापिनीग्राह्यातिथिर्नक्तव्रतेसदा एकादशींविनासर्वा. शुक्ले कृष्णसमाःस्मृताः एकादश्युपवासप्रतिनिधिरूपंनक्तमेकादश्युपवासदिनएवकार्य्यं । नतत्रैकादश्याः प्रदोषव्या पित्वापेक्षेत्यर्थः प्रदोषपरिमाणंस्कंदपुराणेप्रोक्तम् उदयात्प्राक्तनीसंध्याघटिकात्रयमिष्यते सायंसंध्यात्रिघटिका अस्तादुपरिभास्वतः प्रदोषस्त्रिमुहूर्तःस्याद्रवावस्तंगतेसतीति व्यासोपि . त्रिमुहूर्त्त प्रदोषः स्याद्भानावस्तगते सति नक्तंतत्रप्रकर्तव्यमितिशास्त्रस्यनिश्चयइति विश्वादर्शे प्रदोषोस्तमयादूर्ध्वंघटिकात्रयमिष्यते ॥ अस्य चनक्तस्यकालद्वयंभविष्यपुराणेदर्शितं मुहूर्त्तोनदिनंनक्तंप्रवदंतिमनीषिणः नक्षत्रदर्शनान्नक्तमहंमन्येगुणाधिकमि ति अत्राधिकारिभेदेनव्यवस्थामाहदेवलः नक्षत्रदर्शनान्नक्तंगृहस्थस्यबुधैःस्मृतं यतेर्दिनाष्टमेभागेतस्यरात्रौनि षिध्यतइति स्मृत्यंतरेपि नक्तंनिशायांकुर्वीतगृहस्थोविधिसंयुतः यतिश्चविधवाचैवकुर्यात्तत्सदिवाकरं. सदिवाकरं तुतत्प्रोक्तमंतिमेघटिकाद्वये निशानक्तंतुविज्ञेयंयामार्धंप्रथमेसदेति इत्थंव्यवस्थानक्तकालद्वयस्यमाधवेनोक्ता मदनर त्नेतुप्रकारांतरेणव्यवस्थोक्ता अयंचप्रदोषेनक्तव्रतस्यमुख्यकालः अस्तमयात्प्राचीनोमुहूर्त्तोनकल्पः मुहूर्त्तोनदिनं नक्तमितिभविष्यपुराणे शिवेननक्षत्रदर्शनोत्तरप्रदोषकालस्याहंमन्यइतिस्वाभिमतत्वेनाभिधानात् इतरस्यतुपरा भिमतत्वेनाभिधानाद्गौणत्वस्याभिप्रेतत्वात् अत्रवचनेननक्षत्रदर्शनादितिल्यप् लोपेपंचमी अतश्चनक्षत्रदर्शनंप्रा प्यनक्तंविहितभोजनंविधेयमित्यर्थः अतथात्वेपरत्रस्यादर्वागस्तगतेहिसेतिजाबालिवाक्येदिनद्वयेपि प्रदोषव्याप्त्य भावेसायाह्नव्याप्तेराश्रयणाच्च यदानक्ततिथिःपूर्वदिनेप्रदोषंव्याप्नोति अपरदिनेअस्तमयादर्वाचीनंत्रिमुहूर्त्तंव्याप्नोति किंचिद्वास्पृशति तदापूर्वत्रैवनक्तंकार्य्यं तदुक्तंजाबालिना अहःसुतिथयःपुण्याःकर्मानुष्ठानतोदिवा नक्तंव्रतेषुसर्वेषुरा त्रियोगःप्रशस्यतइति यदानक्ततिथिःपूर्वापरयोर्रह्नोःप्रदोषंव्याप्नोति तदापरैवग्राह्यादिवारात्रिव्यापित्वात् तदाहजा

चालिः यदिस्यादुभयोरह्नोःप्रदोषव्यापिनीतिथिः तदोत्तरत्रनक्तंस्यादुभयत्रापिसायत इतिदिवारात्रावपीत्यर्थः यत्तु
कूर्मपुराणे प्रदोषकालस्यअस्तमयात्प्राचीनमुहूर्त्तत्रयस्यनक्तकालत्वाभिधानं प्रदोषव्यापिनीयत्रत्रिमुहूर्त्तादिवायदि
तदानक्तव्रतकुर्यात्स्वाध्यायस्यानिषेधवत् तन्मुख्यगौणसाधारण्येनावगंतव्यं यत्तुभविष्यपुराणादावदितोप्यल्पकाल
ग्रहणम् तदऽमुख्यकालेपितत्प्राशस्त्यायेति तेनास्यनविरोधःननुउदयात्प्राक्तनीसंध्याघटिकात्रयमुच्यतेसायंसंध्या
त्रिघटिकाअस्तादुपरिभास्वत इतिस्कंदपुराणे संध्याया घटिकात्रयात्मकत्वाभिधानात्तस्यांच चत्वारिमानिकर्माणि
संध्यायांपरिवर्जयेत् आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थकमितिवचनेनभोजनप्रतिषेधात्कथंनक्षत्रदर्शनानंतरंनक्त
भोजनविधानमितिचेन्न भोजननिषेधस्यमुख्यसंध्याकालसंबंधेनैववक्तुंशक्यत्वात् गौणत्रिघटिकात्मकसंध्यात्रयेका
रणाभावात् संध्यानामदिनरात्र्योःसधौविहितासंध्योपासनादिक्रियासंधिश्चखंडमार्त्तंडमंडलोपलब्धिसमयः तस्या
ल्पत्वात् क्रियायाश्चविस्तृतत्वेनतावतिकालेकर्त्तुमशक्यत्वान्मुख्यार्थबोधेसतिसंध्यासंबंधेनसंधिसंबंधः पूर्वापर क्रि
यापर्याप्तःकालोलक्ष्यते यायाःसन्निहितानाडयस्तास्ताःपुण्यतमामता इतिसंक्रांतिकालवत् अतश्चसर्वलोकप्रसिद्धः
खंडमार्त्तण्डमंडलोपलब्ध्यादितारकोदयांतोमुख्यः सायंसंध्याकालः तथाच याज्ञवल्क्यः प्रातःसंध्यांसनक्षत्रांसायंसं
ध्यांसभास्करांजपन्नासीतसावित्रींप्रत्यंगातारकोदयात् पूर्वांसंध्यांसनक्षत्रांतिष्ठेदासूर्यदर्शनात् स्मृत्यंतरेच नक्षत्रदर्श
नात्संध्यासायंतत्परतःस्थितं तत्परारजनीज्ञेयारात्रिधर्मान्विवर्जयेदितित्रिघटिकात्मकसंध्याकालस्तु दैवादकृतानांसं
ध्योपासनादीनांघटिकात्रयपर्यंतंकर्त्तव्यताभ्यनुज्ञानार्थः संध्यागर्जितादिनाविहितानध्यापनादिपरश्चहेमाद्रौमदनर
त्नेच अस्तुवाघटिकाद्वयंसंध्याशब्दार्थः तथापिनतत्रनिषेधः तस्यरागप्राप्तभोजनविषयत्वात् यत्तुनिर्णयसिंधौ गौ
डास्तु प्रदोषोस्तमयादूर्ध्वंघटिकाद्वयमिष्यते इतिवत्सोक्तःप्रदोषःसंध्याच दिनरात्र्योःसंधौमुहूर्त्तः अर्द्धार्कास्तम

त्र्यस्तसंध्याव्यक्तीभूताननतारकेतियावत् तेजोपरिहानिवशाद्भानोरर्द्धोदयंयावदितिवराहोक्तेरित्याहुः तन्न अस्तसंध्यावं दनात्तध्यायादिपरत्वादिति तत्प्रागल्भ्यविजृंभितं शिवपूजनेननक्तभोजनेचतस्यैवप्रदोषकालस्यसर्वत्रविहितत्वात् य दप्युक्तंमदनरत्ने नक्तरूपवेधत्वाद्रागप्राप्तभोजनगोचरोनिषेधइति तन्न विधेर्निषेधाविरोधात् अन्यथाकपिंजलानि त्यत्रत्रिभ्योऽधिकानांहिंसनेस्यादितितत्संर्वविधिस्पृष्टेनिषेधानवकाशादितिमीमांसाविरोधात् घटिकाद्वयत्रयप्रदोषप्र तिपादकमाधवग्रंथविरोधाच्चोपेक्ष्यं कालतत्त्वविवेचनेपि घटिकात्रयसंध्याग्रहणेपिवेधनक्तभोजनेनक्षत्रदर्शनानं तरं घटिकात्रयमध्येपिक्रियमाणेनदोषःतद्विषयत्वेतु विधिप्राप्तेनिषेधप्रवृत्तौविहितनिषिद्धत्वेनादृष्टदोषदुष्टविकल्पा पत्तेरिति अनेनैवन्यायेनादित्यवारसंक्रांत्यादिपुरात्रिभोजनानिषेधस्यरागप्राप्तविषयादष्टम्यादिनक्तव्रतंरविवारादि योगेपिरात्रावेवकर्त्तव्यं यदादिनद्वयेपिनप्रदोषसंबंधःतदोत्तरदिनेसायाह्नेकर्तव्यं तदुक्तंस्कांदे प्रदोषव्यापिनीनस्या द्दिवानक्तंविधीयते आत्मनोद्विगुणच्छायामतिक्रामतिभास्करे तन्नक्तंनक्तमित्याहुर्ननक्तंनिशिभोजनं एवंज्ञात्वाततो विद्वान्सायाह्नेतुभुजिक्रियां कुर्यान्नक्तव्रतीनक्तफलंभवतिनिश्चितमिति अतथात्वेपरत्रस्यादित्याद्युक्तमेवअवशिष्टेषु पक्षेष्वेकभक्तवन्निर्णयोद्रष्टव्यः सौरनक्तमपियत्सप्तमीरविवारादौविहितंतत्सायाह्नएवकर्त्तव्यं तदुक्तंसुमंतुना त्रिमुहू र्त्तस्पृगेवाह्निनिशिचैतावतीतिथिः तस्यांसौरंचरेन्नक्तमहन्येवतुभोजनमिति कूर्मपुराणेपि नरस्यद्विगुणच्छायामति क्रामतिभास्करः तदासौरंचरेन्नक्तंननक्तंनिशिभोजनमिति भविष्यपुराणेपि येत्वादित्यदिनेब्रह्मन्नक्तंकुर्वंतिमानवाः दिनांतेतेतुभुंजीरन्निषेधोरात्रिभोजनइति हरिनक्तेविशेषःस्कांदे उदयस्थासदापूज्याहरेर्नक्तव्रतेतिथिरिति अन्यनक्ते तु संक्रांत्यादावपिरात्रावेवनिषेधस्यरागप्राप्तभोजनगोचरत्वेनवैधबाधकत्वात् यानितु यदातुद्विगुणांछायांकुर्वंस्तपति भास्करःतत्रनक्तंविजानीयान्ननक्तंनिशिभोजनमित्यादीनिसौरधर्मादिवचनानिदिवानक्तविषयाणि तानियथायथंदिन

द्वयेपिप्रदोषव्याप्त्यभावविषयाणियतिनक्तविषयाणिवाद्रष्टव्यानि अत्रमाधवः येत्वादित्यदिनेव्रह्मान्नितिभविष्यपुराण मधिकृत्य अस्मिंश्चदिवानक्तभोजनेउत्तमोंतिममुहूर्त्तोमध्यमउपांत्यः ततःप्राचीनोजघन्यः एवंचसत्यंतिमभागात्रिभा गमुहूर्त्तवचनान्युपपद्यंतेरात्रिभोजनेपि घटिकात्रयमुत्तमःकालः घटिकाषट्कंमध्यमःकालः एतदेवाभिप्रेत्यवचनंस्म र्य्यते प्रदोषोस्तमयादूर्ध्वंघटिकात्रयमिष्यते त्रिमुहूर्त्तःप्रदोषःस्याद्रवावस्तंगतेसतीतिच निशीथपर्यंतोजघन्यःकालः नक्तंप्रकुर्वीतइतिसामान्येनाभिधानादिति कालतत्त्वविवेचनकारास्तु मुख्यकालेपि त्रिमुहूर्त्तात्मकेआद्यंमुहूर्त्तद्वयंमु ख्यतरं निशानक्तंतुविज्ञेयंयामार्धेप्रथमेसतीतिस्मृत्यंतरादित्युक्तवंतः अनेनैवन्यायेनसौरनक्तेतुसाम्येनवैषम्येणवा दिनद्वयेप्रदोषैकदेशव्याप्तौपरेद्युरेवनक्तकार्य्यंसायंकालस्यमुख्यतिथिव्याप्तत्वात् सायंकालदेशव्याप्तौपूर्वातिथिश्रे ष्ठा प्रदोषकालस्यगौणस्यतुतिथिव्याप्तत्वात् एकभक्तनक्तयोरेकस्मिन्दिनेप्रसक्तौएकभक्तप्राथम्यात् एकभक्तमुख्य कालएवानुष्ठेयं नक्तंतुद्वितीयदिने नातिथिः सायंकालेगौणत्वेद्वितीयदिनेअनुष्ठेयम् द्वितीयदिनेगौणकालेपितिथे रसत्वेतुभार्य्यापुत्रादिना तद्दिनेकार्य्यमितिनक्तकर्तुर्नियमोव्यासेनदर्शितः मदनरत्ने हविष्यभोजनंस्नानंसत्यमाहार लाघवम् अग्निकार्य्यमधःशय्यांनक्तभोजीषडाचरेदिति ॥

इतिश्रीमन्महाराजरणवीरसिंहकारितकृत्यरत्नाकरेनक्तकालनिर्णयः ॥

॥ अथायाचितनिर्णयः मदनरत्ने निर्णयामृतेच ॥

नविद्यतेयाचितंयस्मिन्नभ्यवहरणेतदयाचितं अहोरात्रेयाचितमन्नंनभोक्ष्येइत्येवंरूपोऽयाचितोऽन्नभोजनाभावविषयः संकल्पइतियावत् अतएवप्राजापत्यकृच्छ्रप्रकरणेगौतमेनोक्तम अथापरंत्र्यहंनकंचनयाचेतेति अभ्यवहरणंचभक्ष्य

भोज्यलेह्यपेयचोष्यभेदेनपंचविधं तत्रदंतैरेवावखंडयावखंडययन्निगीर्यतेतद्भक्ष्यंदंतावखंडनमंतरेणमुख व्यापारेणै
वयन्निगीर्य्यतेतद्भोज्यम् जिह्वयागृहीत्वायदंतर्गिल्यतेतल्लेह्यं पेयंपयोजलादिप्रसिद्धं चोष्यंनामयद्द्रव्यांतर्गतसारंरसं
मुख व्यापारेणैवगृहीत्वांतर्गिल्पते असारमन्यत्त्यज्यतेतत् यथाम्रफलेक्षुदंडादितत् अस्यचोपवासवदहोरात्रसाध्य
त्वादयाचितंतत्रतिथेर्दिवारात्रियोगित्वे तस्यामेवानुष्ठानम् दिवारात्रिव्रतंयच्चेतिस्कंदपुराणवचनात् यदातुतिथिरे-
कस्मिन्दिनेदिवैव अन्यस्मिन्रात्रावेवतदहव्यापिन्येवग्राह्या अहस्सुतिथयःपुण्याइतिजाबालिवचनात् अया
चितान्नलाभेतु दिवारात्रौवा अनिषिद्धकालेसकृद्भोजनंकर्त्तव्यंतथैवशिष्टाचारात् अलाभेतूपवासएव तत्रापि या
चितान्नभोजनपरित्यागनिर्वाहान्नलोपःअत्रमाधवः अयाचितशब्दस्यअर्थद्वयंप्रतिषेधः पर्य्युदासश्च प्रतिषेधपर्य्यु
दासयोः प्रतिषेधपक्षंप्राजापत्यकृच्छ्रव्याख्यानेगौतमोव्याजहार अथापरंत्र्यहंनकंचनयाचेतेति पर्य्युदासंत्वहरूप
तिर्व्याजहार त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितं त्र्यहंपरंचनाश्नीयात्प्राजापत्यंचरन्द्विजइति स्मृत्यंतरेपि
अयाचिताशीमितभुक् परांसिद्धिमवाप्नुयादिति मितभोजित्वं दशग्रासमात्रं तदुक्तंचतुर्विंशतिमते प्रात
स्तुद्वादशग्रासान्नक्तेपंचदशैवतु अयाचितेतुद्वौचाष्टौप्राजापत्योविधिःस्मृतइति तच्चभोजनद्रव्यंपरकीयप्रयत्नो
पनीतं अयाचिताहृतंग्राह्यमपिदुष्कृतकर्मणां अन्यत्रकुलटाषंडपतितेभ्यस्तथाद्विषइति ॥ याज्ञवल्क्यवचनात् ॥
तथायतिधर्मेषूशनाः भिक्षाशनमनुद्योगात्प्राकेनाप्यनिमंत्रितंअयाचितं तुतद्भैक्ष्यंभोक्तव्यंमनुरब्रवीत् यदिप्र
तिषेधः यदिवापर्य्युदासः उभयथाप्येकभक्तादिवन्नकालोविशेषणीयः प्रतिषेधकालविशेषानपेक्षणात् पर्य्यु
दासेपराधीनत्वात् असतितुकालविशेषविधौकर्मकालव्याप्तिवचनमत्रप्रवर्त्तते किंतु युग्मवाक्यैनैवनिर्णयइति
यत्तुमयूखे अयाचितेविशेषवचनाभावादुपवासानिर्णयइति केचित् तन्न एकभक्तायाचितयोर्द्वयोर्विंशद्घटिका

त्र्यधि सातिथिः सर्वदाज्ञेयानक्तेसायाह्नसंगतेतिशार्ङ्गधरीयेनारदोक्तेरिति तच्चिंत्यं एतद्वचनस्यहेमाद्यादिनिबं धादावदर्शनात्निर्मूलत्वं इत्ययाचितकालनिर्णयः ॥ एकभक्तादिव्रतानांखंडतिथौप्रारंभसमाप्त्योःप्रतिपिद्धत्वात्खंडा स्वरूपमभिधीयते निर्णयामृते यातिथिरुदयादारभ्यादिनार्द्धव्यापित्तीनस्यात्साखंडा तस्यांव्रतानांप्रारंभंसमाप्तिं चनकुर्य्यात् तदाहसत्यव्रतः उदयस्थातिथिर्याहिनभवेद्दिनमध्यगा साखंडानव्रतानांस्यादारंभोनसमापनमिति अ खंडायांतुप्रारंभसमाप्तीआह वसिष्ठः अखंडर्व्यक्तमार्त्तंडाद्याह्यखंडाभवेत्तिथिःव्रतप्रारंभणंतस्यामनष्टेगुरुशुक्रयोरिति नन्वत्रवचने समाप्तिपदाश्रवणात् तत्रसमाप्तिःकर्त्तव्येतिकुतोवगम्यते इतिचेत्सत्यं खंडतिथौनिपेधवलादेवाखंडतिथौ विधानंप्राप्तं भावाभावौविहायतृतीयावस्थायाःक्वचिददर्शनादिति। इतिखंडतिथिस्वरूपनिर्णयः। अत्रैवप्रसंगात् नक्ष त्रगामिनाक्षत्रं दिनद्वयेप्यस्तमयकालव्यापिभवति तदार्धरात्रादर्वाक्चंद्रणयुक्तेनक्षत्रेकार्य्यं तदुक्तंविष्णुधर्मोत्तरे उपो पितव्यंनक्षत्रेयस्मिन्नस्तमियाद्रवि.युज्यतेयत्रैवताराानिशीथेशशिनासेहेति अत्रनिशीथशब्देनार्धरात्रादर्वाचीन.कालो लक्ष्यते अन्यथासुमंतुवचनविरोधःस्यात् यदुक्तं यदार्द्धरात्रादर्वाक्नक्षत्रंप्राप्यतेतिथौतन्नक्षत्रव्रतंकुर्य्यादतीतपारणंत थेति नक्षत्रोपवासेयातिथिः सैवनक्षत्रविहितनक्तैकभक्तयोरपिग्राह्या तदुक्तंस्कंदपुराणे नत्रैवोपवसेद्दक्षेयन्निशीथा दधोभवेत् उपवासेयदृक्षंस्यात्तथानक्तैकभक्तयोरिति इतिनक्षत्रव्रततिथिनिर्णयः अथतस्याएवतिथेर्दानहोमव्रता दिपुफलस्यतारतम्यविज्ञानार्थंदैवमानुपराक्षसकालात्मकविभागनिर्णयःप्रोच्यते एतेपांचपूर्वाह्णः कालोदैविकःपू र्वाह्णोवैदेवानामितिश्रुतेः तथाच पूर्वाह्णोदैविकःकालोमध्याह्नश्चापिमानुषः अपराह्णः पितॄणांचसायाह्नोरा क्षसःस्मृतइतिव्यासवचनाच्च तेनैतानिहोमदानार्चनादीनिपूर्वाह्णव्यापिन्यांतिथौकार्य्याणि अतएवयाज्ञवल्क्यः ॥ पौर्वाह्णिकास्तुतिथयोदेवकार्य्येफलप्रदाइति नन्वेकस्मिन्दिनेतिथिद्वयविहितस्यैकभक्तादेःकथमनुष्ठानं यस्यदान

होमैकभक्तादेर्मिथोनविरोधस्तत्क्रमेणतत्रानुष्ठेयं तत्रैकंस्वयंकृत्वाऽन्यद्ब्राह्मण्यादिनाप्रतिनिधिनाकारयेदितिमाधवमद नरत्नादयः यत्रतुचतुर्दश्यादौ एकभक्तादिनाह्निभोजनंप्राप्तं भूताष्टम्यांदिवाभुक्त्वारात्रौभुक्त्वातुपर्वणि एकादश्याम होरात्रंभुक्त्वाचांद्रायणंचरेदिति तन्निरोधश्चतत्रैकभक्तादेर्विधत्वाह्निवैवभोजनं निषेधस्तुरागप्राप्तभोजनविषयःतच्चभो जनमुपवासनिषेधेष्विवतिवचनादनुकल्पेनकार्य्यं एवंचतुर्दश्यांशिवरात्रिव्रतपारणायापिविधत्वाह्निवैवभोजनं एवमष्ट म्यादौनक्तव्रतेसंक्रांत्यादौरवौसंकटचतुर्थ्यांरात्रौभोजनं यत्रत्वष्टम्यांदिवाभुजिनिषेधः संक्रमेचरात्राविति निषेधद्वयं तत्रोपवासःकार्य्यः यद्यपिपुत्रिणउपवासोपिनिषिद्धः तथाप्युपवासनिषेधेतुकिंचिद्भक्ष्यंप्रकल्पयेदितिवचनात् किंचि द्भक्षयित्वोपवासःकार्य्यः यत्तुनिर्णयसिंधौचांद्रायणमध्येएकादश्यादौतुभोजनं कार्य्यमेवचांद्रायणस्यकाम्यत्वेननित्य बाधकत्वादित्युक्तं तन्मृग्यं फलाद्यशनेनापिचांद्रायणव्रतसंपत्तौएकादश्यांभोजननिषेधवाक्यानामानंत्यत्वेन बाधानौ चित्यात् ॥ इतिश्रीरघुवंशतिलकश्रीमहाराजरणवीरसिंहकारितेकृत्यनिबंधेसखंडखंडाविद्धाविद्धतिथिनिर्णयेहोमादि

कालनिर्णयः ॥ १ ॥ स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसा रसविरसद्वंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेःपादांबुजाचारतो जीयात्पुत्रकलत्रमित्रसहितःसंपालयन्क्ष्मां

भृशम् ॥ १ ॥

रणवीरसिंहभूपेनकारितेकृत्यवारिधौ तिथिरूपलसत्कांतिस्तुरीयोरत्नसंग्रहः ॥ २ ॥

॥ ४ ॥

अथप्रतिपदादिसामान्यनिर्णयः प्रस्तूयते

अत्रनिर्णयोनामविप्रतिपन्नानांवाक्यानांपरस्परविरोधपरिहारः तदेवतत्त्वदर्शनमुच्यते तदुक्तम् तत्त्वोविप्रतिपन्नानां

वाक्यानामितरेतरं विरोधपरिहारोत्रनिर्णयस्तत्त्वदर्शनामिति तत्रादौशुक्लप्रतिपदःसंवत्सरादित्वप्रसिद्धेस्तावदादौ तस्याएवनिर्णयःप्रतिपाद्यते अथसामान्यतःशुक्लाकृष्णा शुक्लायाप्रतिपत्तस्याध्यानं हेमाद्रौ तिथयोह्यधुनोच्यंतेप्र तिपद्द्विभुजारुणा मेषगाशक्तिपात्रासासितपक्षादिमामतेति अथकृष्णप्रतिपद्ध्यानं धूसराकृष्णपक्षाद्याभासर्स स्थाचतुर्मुखा अक्षसूत्रंध्रुवंपुस्तंपात्रंधत्तेचतुर्भुजेति । अथात्रप्रतिपत्सामान्यतोनिर्णीयते अस्याश्चनामनिरुक्तिर्भ विष्योत्तरे तिथीनांप्रवरायस्माद्ब्रह्मणासमुदाहृता । प्रतिपद्यापदेपूर्वेप्रतिपत्तेनसोच्यतइति तत्रशुक्लप्रतिपदमा वास्यायुतैवकार्य्या युग्माग्नीत्यादिवचनात् पैठीनसिनाप्युक्तं पंचमीसप्तमीचैवदशमीचत्रयोदशी प्रतिपन्नवमीचैव कर्त्तव्यासंमुखीतिथिरिति संमुखीसायाह्नव्यापिनीतिनिर्णयामृतोक्तोर्थःप्रामादिकः उत्तरवचनविरोधात् हेमाद्रि विरोधाच्च संमुखीपूर्वविद्धेतियुक्तं सापियदापंचधाविभक्तस्याह्नश्चतुर्थभागव्यापिनीतदैवपूर्वविद्धाग्राह्या । तदभावे सायाह्नव्यापिनीग्राह्येतिमाधवमतं तदभावेतुसायान्हव्यापिनीपरिगृह्यतामित्युक्तेः अपराह्णोत्तरकालप्रवृत्तावुत्तरवि द्धैवग्राह्येति मदनरत्ने प्रतिपत्संमुखीकार्यायाभवेदपराह्णिकीतिस्कंदपुराणवचनात् नन्वेतद्वचनंप्रतिपन्मात्रविषय मस्तु विशेषाश्रवणात् नचप्रतिपत्सद्वितीयास्यादितिवचनविरोधः तेषामपराह्णिकान्यप्रतिपद्विषयत्वेनोपपत्तेरि तिचेन्न अस्यकृष्णप्रतिपद्विषयत्वेन वचनांतराप्राप्तस्यपूर्वविद्धत्वस्यापराह्णिकत्वस्यचाविधेयत्वेगौरवापत्तेः शुक्लप्र तिपन्मात्रविषयत्वेतु तस्य वचनांतरेणपूर्वविद्धत्वस्यान्यताभावादपराह्णिकमात्रस्यविषयत्वेनगौरवम् यत्तु प्रति पत्सद्वितीयास्याद्द्वितीयाप्रतिपद्युतेत्यापस्तंबवचनं । तत्कृष्णप्रतिपद्विषयं अपराह्णोत्तरकालप्रवृत्तशुक्लप्रतिपद्वि षयंच पूर्वोदाहृतवचनविरोधात् तस्मादापराह्णिकीशुक्लप्रतिपत्पूर्वैवग्राह्या अन्याशुक्लप्रतिपदुत्तरैवेति मदनरत्ना दिसिद्धांतः कृष्णानुत्तराकृष्णानुत्तरतोखिलेतिदीपिकोक्तेः कृष्णापिपूर्वैत्यनंतभट्टइतिनिर्णयसिंधौ उभययातु शुक्ल

कृष्णप्रतिपत्पूर्वैवग्राह्या प्रतिपत्पंचमीचैवउपोष्यापूर्वसंयुतेतिजाबालिवचनात् प्रतिपत्पंचमीभूतसावित्रीवटपूर्णिमा
नवमीदशमीचैवनोपोष्याःपरसंयुताइतिब्रह्मवैवर्त्तवचनेनच, द्वितीयापंचमीचैवदशमीचत्रयोदशी॰ चतुर्दशीचोप
वासेहन्युःपूर्वोत्तरेतिथी उपवासेसप्तमीतुवेधाद्धंत्युत्तरदिनमितिवसिष्ठवचनेनच द्वितीयाविद्धायाअनुपोष्यत्वाभि
धानाच्च वेधश्चपैठीनसिनासर्वासुतिथिषुसामान्यतोदर्शितः पक्षद्वयेपितिथयस्तिथिंपूर्वांतथोत्तरां त्रिभिर्मुहूर्त्तैर्विध्यं
तिसामान्योयंविधिःस्मृतइति उदयानंतरंस्थितात्रिमुहूर्त्तापूर्वातिथिंविध्यति अस्तमयात्प्राक्स्थिता त्रिमुहूर्त्तोत्तरा
तिथिःपूर्वतिथिंविध्यतीत्यादिपूर्वमुक्तमेव निषिद्धपूर्वतिथिवेधस्तूपवासविषये स्वल्पोऽपि त्याज्यः तथाच स्मृत्यंतरे
घटिकामात्रेवधोपिदूषयत्युत्तरांतिथिंषट्त्रिंशन्मतेपि घटिकाद्वित्रिभागोवास्वल्पोवादूषयेत्तिथिंपंचगव्यघटंपूर्णंसुराया
बिंदुकोयथेति इदंचवाक्यमुपवासस्यदूषकमितिनिषेधेभिधानात् अतएवबौधायनेनाप्युपवासतिथेरुदयकाली
नत्वनियमउक्तःउदयेतूपवासस्यनक्तस्यास्तमयेतिथिरिति भविष्योत्तरपुराणे व्रतोपवासनियमेघटिकैकायदाभवेत्
सातिथिःसकलाज्ञेयापित्रर्थेचापराह्णिकीति पाद्मस्कांदयोरप्येवं यदातूत्तरदिने उपवासतिथिःस्वल्पापिनलभ्यते
तदानिषिद्धापूर्वतिथिविद्धाप्युपोष्या तथाचऋष्यशृंगः अविद्धानिनिषिद्धेश्चेन्नलभ्यंतेदिनानितु मुहूर्त्तैःपंचभिर्विद्धाग्रा
ह्यैवैकादशीतिथिः तदार्धविद्धान्यन्यानिदिनान्युपवसेन्नरइति अरुणोदयमारभ्यपंचमुहूर्त्तकोवेधः सूर्योदयमारभ्य
सार्द्धमुहूर्त्तद्वयवेधोपिज्ञातव्य अविद्धानामलाभेतुपयोदधिफलानिवा सकृदेवाल्पमश्नीयात्तूपवासस्ततोभवेदिति अ
थसिद्धविरुद्धादिकंलिख्यते इयंशुक्रवारेणसिद्धोच्यते तदुक्तम् शुक्रेणप्रतिपत्षष्ठ्येकादशीचत्रयोदशी सिद्धाभ
गोत्तराषाढाहस्तश्रवणरेवती अत्रसर्वाणिशुभकर्माणिसिद्ध्यंतीति भौमवारेणेयंविरुद्धा तदुक्तम् कुजेतुवैश्वदेवार्द्राप्र
तिपत्पूर्वभादिस्यादि बुधवारयुक्ताचेत्संवर्त्तकयोगोभवति बुधेधनिष्ठाभरणीप्रतिपच्चविवर्जयेत् अत्र तिथिपत्वेन

यक्तिःपूर्व्यश्चस्यांयोगिनीसांमुख्यात्पूर्वस्यांयात्रात्याज्या इतिप्रतिपत्सामान्यनिर्णयः अथद्वितीयानिर्णीयते तत्रादौ
शुक्लकृष्णद्वितीयाध्यानं हेमाद्रौ द्वितीयाहंसगाशुद्धापात्रपुस्तकधारिणी कृष्णाचकुमुदाभासावृक्षस्थासाक्षकुंडिकेति
अथद्वितीयासामान्यनिर्णयः तत्रकृष्णापूर्वाशुक्लोत्तरेतिहेमाद्रिः कृष्णांद्वितीयादिमा पूर्वाह्णव्यापिनीसितातुपरेतःस
र्वेतिदीपिकोक्तेः साद्वितीयापरोपोष्या पूर्वविद्धाततोन्यथेतिस्मृत्यंतरं एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी त्रयोदशी
अमावास्याउपोष्याःस्युःपरान्विता इतिविष्णुधर्मोत्तराच्च मदनरत्नेपि शुक्लद्वितीयापराग्राह्यायुग्माग्नीतिवचनात् कृ
ष्णद्वितीयातुपूर्वविद्धैवग्राह्या द्वितीयाप्रतिपद्युतेत्यापस्तंबवचनात् प्रतिपत्संमुखीकार्याद्वितीयाद्विजसत्तमेति ब्रह्मवै
वर्तवचनाच्च प्रतिपत्संमुखीप्रतिपत्संगतातद्विद्धेत्यर्थः इत्युक्तं ननुवैतेषुवचनेषुद्वितीयामात्रश्रवणात्कथंद्वितीयाविशेष
विषयत्वमेषामितिचेदुच्यते युग्मवाक्येप्रतिपदोऽमावास्यायुक्तत्वासंभवाच्छुक्लप्रतिपदोऽमावास्यायुक्तायायुग्मवाक्ये
आशस्यमुक्तंतथाच शुक्लप्रतिपद्द्वितीयायुग्ममेतच्छस्तमितिदोषानभिधानेननिषिद्धत्वाभावान्निगमवाक्यस्यविषयः
एवंचप्रतिपत्सद्वितीयेत्यादिवाक्यस्यशुक्लप्रतिपद्द्वितीयात्वतीयायुग्मविषयत्वेनिगमवाक्यविरोधः निगमवाक्यस्य
चद्वितीयाविषयत्वानिरवकाशादापस्तंबवचनविरोधइतियथोक्तविषयत्वमेवांगीकर्त्तव्यं इतिद्वितीयासामान्यनिर्णयः
बृहस्पतिवारयुक्तद्वितीयासुविधिपूजनमुक्तं ब्रह्मपुराणे बृहस्पतौद्वितीयायांविधिवद्विधिपूजनं कृत्वानक्तंसमश्नीयाल्ल
भतेभूतिमुत्तमामिति विधिर्ब्रह्मातत्पूजनंचगायत्र्यापौराणमंत्रेणवा अस्यानक्तव्रतविशेषेतुतत्कालव्यापिन्येवद्वितीया
ग्राह्येतिसिद्धांतः अत्रसिद्धविरुद्धादिकं द्वितीयाबुधवारेणसिद्धा ज्योतिषे बुधवारेद्वितीयाचद्वादशीसप्तमीपुनः मृगोनु
राधाहस्तश्चकृत्तिकासिद्धिदायिकेति अत्रकार्यारंभःसिद्धोभवति इयंशुक्रवारेणविरुद्धा अत्रशुभकार्यंनकार्यम् भा
र्गवेरोहिणीज्येष्ठाद्वितीयासप्तमीपुनः पुष्योमघातथाश्लेषासर्वकार्येषुवर्जिताइति अथात्रद्वितीयायांवैवाहिकंकर्मभूषण

कर्मरथादीनांकर्ममार्गगमनंव्रतारंभंपौष्टिकंकर्मचकुर्वीततदुक्तंभास्करेण व्रतपौष्टिकेद्वितीयाद्वादश्योःसप्तमीषुकुर्वीत
पत्न्युद्वहनगृहासनशयनशकटयानाश्वकर्माणीति द्वितीयायांविट्क्षत्रियशूद्रैर्मलापहंस्नानंनकर्त्तव्यंतदुक्तंभास्करेण
त्रयोदश्यांद्वितीयायांदशम्यांचविशेषतःशूद्राविट्क्षत्रियाः स्नानंनाचरेयुः कथंचनेतिस्नातुस्तनूजान्दशमीत्रयोदशीति
द्वितीयाद्वितयंतिहं- अत्रमलापहस्नाननिषेधएव ननित्यनैमित्तिककाम्यबाधःअत्रोत्तरस्यांदिशियात्रानकार्य्या धनु
र्मीनस्थेरवौद्वितीयादग्धाभवति इतिद्वितीयानिर्णयः॥ अथतृतीयानिर्णयःतत्रादौ शुक्लाकृष्णाभेदेन तृतीयाध्यानम्
तृतीयाद्वपगागौरीशूलपात्रधरासिता तृतीयाताक्ष्यगानीलाशंखपात्रधराद्विदोः द्विभुजाइत्यर्थःतृतीयारंभाव्यति
रिक्ताचतुर्थीयुतैवोपोष्या एकादश्यऽष्टमीषष्ठीपौर्णमासीचतुर्दशी अमावस्यातृतीयाव्रताउपोष्याःपरान्विता इतिवि
ष्णुधर्मोत्तरवचनं युग्मवाक्यंरंभाव्रतविषयंरंभाख्यांवर्जयित्वातुतृतीयांद्विजसत्तम अन्येषुसर्वकार्य्येषुगणयुक्ताप्रश
स्यत- इतिब्रह्मवैवर्त्तात् गणयुक्ताचतुर्थीयुक्ता आपस्तंबोपि चतुर्थीसंयुतायाचसातृतीयाफलप्रदा अवैधव्यकरीस्त्री
णांपुत्रसौभाग्यदायिनीतिअस्यांद्वितीयावेधनिषेधाब्रह्मवैवर्त्तेद्वितीयाशेषसंयुक्तांयाकरोतिविमोहिता सावैधव्यमवा
प्नोतिप्रवदंतिमनीषिणः दीपिकायामपिरंभांविहायोत्तरतस्तृतीयामित्यादि अयंचद्वितीयावेधःस्वल्पोपिगौरीव्रते
ष्वयाज्योनमुहूर्त्तत्रयपरिमितएवअतएवमदनरत्नेस्कंदपुराणेकलाकाष्ठापिवाचैवद्वितीयासंप्रदृश्यतेसातृतीयानकर्त
व्यकर्त्तव्यागणयंयुतेतितेनैतेषुगौरीव्रतेषुत्तरादिनेस्वल्पापितृतीयाग्राह्यानत्रिमुहूर्तत्वकर्मकालव्याप्त्वाद्यादरःमुहूर्त
मात्रसत्वेऽपिदिनेगौरीव्रतांतरेशुद्धाधिकायामप्येवंगणयोगप्रसंसनादितिमाधववचनात्यदातूत्तरदिनेस्वल्पापिनल
भ्यतेतदाद्वितीयाविद्धापिग्राह्यातदाचवद्धवसिष्ठःएकादशीतृतीयाचषष्ठीचैवत्रयोदशीपूर्वविद्धापिकर्तव्यायदिनस्या
त्परेहनीतिरंभाव्रतविषयेतुपूर्वैवग्राह्या कृष्णाष्टमीवृहत्तपासावित्रीवटपैत्रिकी अनंगत्रयोदशीरंभाउपोष्याःपूर्वसंयु

ता इतिनिगमवचनात् एवंचसर्वाणितृतीयाव्रतानिचतुर्थीयुतायामेवकार्य्याणीतिसिद्धांतः पक्षद्वयगतास्वपितृतीयासु
तिथित्वेनगौरीपूज्या तदुक्तं चतुर्थीगणनाथस्यगौर्य्यास्तत्पूर्ववासरइति अत्रसिद्धविरुद्धादिकंलिख्यते तृतीया
भौमवारेणसिद्धा तदुक्तं भौमेषष्ठीतृतीयास्यादष्टमीचत्रयोदशी मूलाश्विनिमृगोऽश्लेषासिद्धाउत्तरभाद्रपात्तृतीयाबु
धवारेणविरुद्धा बुधेधनिष्ठाभरणीदास्त्रमूलसमन्विता तृतीयानवमीप्रातिपद्रेवतीभिर्विवर्जितेति विरुद्धयोगेषुशुभं
मेनकार्य्यं अत्रकल्यानि जयासुसंग्रामबलोपयोगिकार्य्याणिसिद्ध्यंतिविनिर्मितानीति तृतीयायामाग्नेय्यांसोग्निर्भव
संत्यतस्तत्संमुखीयात्रानकार्य्याइतितृतीयाप्रकरणं अथचतुर्थीनिर्णीयते तत्रादौशुक्लाकृष्णाभेदेनचतुर्थीध्यानं नीलो
त्पलदलश्यामांचतुर्थींमूषकस्थिता परशुंबिभ्रतीपात्रंपीतवस्त्राहिसंयुता १ चतुर्थीकज्जलाभासामाहिपरुषाचतुर्भुजा ध
त्तेक्षमालिकांदंडचतुर्थीयाचदंष्ट्रिणीति २ साचतुर्थीतिथिर्गणेशकुंडचतुर्थीवहुलाव्रतव्यतिरिक्तेषुपंचमीयुतेवग्राह्या
तथाच-गणेशकुंडवहुलाव्यतिरिक्ताःप्रकीर्तिताः चतुर्थीपंचमीविद्धादेवतांतरयोगत इतिमदनरत्ने ब्रह्मवैवर्त्तवचना
त् -युग्मभूतानीतियुग्मवाक्यात् एकादशीतथाषष्ठीअमावास्याचतुर्थीकाउपोष्याःपरसंयुक्ताःपराःपूर्वेणसंयुताइति
वृद्धवसिष्ठोक्तेश्च गणेशव्रतेचतुर्थीतृतीयायुतैवोपोष्या चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यत इतिवृहस्पत्युक्तेःहेमा
द्रौब्रह्मवैवर्त्तेपि चतुर्थीसहितायातुसातृतीयाफलप्रदाचतुर्थीचतृतीयायांमहापुण्यफलप्रदा कर्तव्याव्रतिभिर्वत्सगण
नाथसुतोषिणीति गणनाथंसुतरांतोषयतीत्यर्थः तथाचस्कंदपुराणे कृष्णाष्टमीचतुर्थीचसावित्रीवटपैतृकी शुक्लत्रयोद
शीरंभानोपोष्याःपरसंयुताः अत्रापिचतुर्थीगणेशचतुर्थ्येवेवेदितव्या अन्यथायुग्मभूतानामिति निगमवाक्यविरोधः
स्यात् -नाथचतुर्थीतुमध्याह्नव्यापिनीग्राह्येतिनिर्णयामृतेमाधवीये चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यतेमध्याह्न
व्यापिनीचेत्स्यात्परतश्चेपरेहनीतिवृहस्पतिवचनात् प्रातःशुक्लातिलैःस्नात्वामध्याह्नेपूजयेन्नृपेतितत्कथाभिधानाच्च

तत्परदिने तथात्वेपरा अन्यथापूर्वैवेत्युक्तं जयाचयदिसंपूर्णाचतुर्थीसंयुतायदि । सजयाचैवकर्त्तव्यानागवि
द्धांनकारयेदितिवचनात् एवंभाद्रशुक्लचतुर्थ्यपिमध्यान्हव्यापिनीग्राह्या दिनद्वयेतथात्वेमातृयोगस्यसत्वात्पूर्वैवेति
केचित् अन्येतुपूर्वदिने मुहूर्त्तत्रयादिरूपस्य तृतीयायोगस्याभावात् परदिने माधवोक्तमध्यान्हव्यापित्वासत्वात्सं
पूर्णत्वाच्चपरेत्याचक्षते दिनद्वयेतदभावेतुगौरीव्रतेपूर्वैवेतिनिर्णयसिंधौ अयमेव पक्षोज्यायान् योयस्यविहितःकालः
कर्मणस्तदुपक्रमे तिथिर्याभिमतासातुकार्य्यानोपक्रमान्वितेति वौधायनवचनात् कर्मोपक्रमकालगातुक्रातिसंग्रा
ह्यातयुग्मादर इतिनिर्णयदीपेलक्षः उपक्रमस्तु तैलाभ्यंगप्रकुर्वीतरात्रौपूजांसमाचरोदित्यत्रोक्तः । विशेषस्तत्र
त्यकृत्यनिर्णयेवक्ष्यते अथसिद्धविरुद्धादिकं चतुर्थीशनिवारेणासिद्धा जीवेनाविरुद्धा शनौचतुर्थीनवमीचतुर्दश्यश्च
हिणीशततारास्वातिमघाभाग्यंचैवतुसिद्धयइति जीवेष्टमीचतुर्थीचआर्द्राचोत्तरफाल्गुनी रोहिणीवारुणंचैवविरुद्धं
मृगशीर्षकामिति अत्रकृत्यमुच्यते शत्रुवधाग्निविषप्रयोगाद्यनिष्टं कर्मचतुर्थ्यादिरिक्तातिथिषुकार्यं तदुक्तंभास्वरेण
चतुर्थ्यांचचतुर्दश्यांनवम्यांमुष्कमर्दनं दमनंवंधनंभेदमभियोगाभिचारकं विषाग्निसंप्रयोगचकुर्वीतकपटानिचेतिच
तुर्थ्यांनैर्ऋतेयोगिन्यःप्रतिवसंति अतस्तत्संमुखीयात्रातत्रनकर्त्तव्या क्रमात्पूर्वोत्तराज्ञेयानैर्ऋत्यइत्युक्तत्वात् रवि
भौमशनीनामन्यतमेक्रूरग्रहेकर्कटस्थेसतिचतुर्थीशुभकार्येषुवर्जिता आद्याश्चतस्त्रइत्युक्तत्वात् सूर्येवृषकुंभस्थितेस
तिचतुर्थीदग्धाभवतीति ॥ इतिश्रीरणवीरसिंहमहाराजकारितेकृत्यरत्नाकरेचतुर्थीनिर्णयप्रकरणम् ॥ ॥
॥ अथपंचमीनिर्णीयते ॥
तत्रादौशुक्लकृष्णपंचमीध्यानम् ग्राहस्थाचंद्रगौरासापंचमीसाक्षकुंडिकेति १ पंकजस्थाप्रवालाभाफणामस्तकभूष

णा। शंखमुद्रांतथापाशंविभ्राणापंचमीमता पंचम्योमाधवमतेसर्वाश्चतुर्थीयुताःकार्याःचतुर्थीसंयुताकार्य्यापंचमीपर
यानतु दैवेकर्मणिपित्र्येचशुक्लपक्षेतथासितइतिहारीतोक्तेः स्कंदपुराणेपि पंचमीचतुर्थीसहिताविभोइति तथापद्म
पुराणभविष्योत्तरपुराणयोः पूर्वोत्तराविद्धाविषयौविधिनिषेधौस्मर्यैतेपंचमींचचतुर्थ्यातुपष्ठ्यायुक्तांनकारयेदितिमदन
रत्ने-पूर्वविद्धाग्राह्येत्युक्तं युगभूतानामितियुग्मवचनात् पंचमीसप्तमीचैवदशमीचत्रयोदशी प्रतिपन्नवमीचैवकर्तव्या
संमुखीतिथिरितिपैठीनसिवचनाच्च स्कंदोपवासव्रतेतु माधवमतेप्युत्तराकार्य्या स्कंदोपवासेस्वीकार्य्यापंच
मीपरसंयुतेतिजाबालिवचनात् ब्रह्मवैवर्त्तात् मदनरत्नेनिर्णयामृतेच स्कंदोपवासपंचमीव्यतिरिक्तासर्वापिपंच
म्युपवासेपूर्वविद्धैवग्राह्या प्रतिपत्पंचमीचैवउपोष्यापूर्वसंयुतेतिजाबालिवचनात् नागव्रतेतुपंचमीपरविद्धाग्राह्या
तदुक्तंस्मृत्यंतरे श्रावणेपंचमीशुक्लासाप्रोक्तानागपंचमी तांपरित्यज्यपंचम्यश्चतुर्थीसहिताहिता इतिहेमाद्रिमतेतुकृ
ष्णापूर्वापरासिताइति दीपिकायामपिकृष्णापूर्वयुतासितापरयुतास्यात्पंचमीति यत्तु पंचमीतुप्रकर्तव्यापष्ठ्यायुक्तातु
नारदेत्यापस्तंबीये तन्नागपूजाविषयमित्यनंतभट्टनिर्णयामृतादयः चमत्कारचिंतामणौच पंचमीनागपूजायांका
र्य्यापष्ठीसमन्विता तस्यांतुतुषितानागाइतरासचतुर्थिकेतिनागपूजायांपरैवेति अथपंचम्यासिद्धविरुद्धादिकं पंचमी
गुरुवारेणसिद्धा गुरौदशमिपंचम्यौपौर्णमासीविशाखिका भाग्यानुराधासिद्धाःस्युस्तथापुष्यपुनर्वसूइति भाग्यं
पूर्वाफाल्गुनी पंचमीशनिवारेणनिषिद्धा सौरेहस्तोत्तराषाढारेवतीचित्रयासह पंचमीचैवषष्ठीचत्र्यर्यम्णासहवर्जिते
तिपंचम्यादिपूर्णातिथिषुमांगल्यविवाहयात्रापौष्टिकादिशांतिककर्माणिकार्याणि तथाचश्रीपतिःपूर्णासुमांगल्यवि
वाहयात्रासपौष्टिकंशांतिककर्मकार्य्यं सदैवदर्शेपितृकर्ममुक्त्वानान्यद्विदध्याच्छुभमंगलादि पौष्टिकंनामायुर्वृद्ध्यर्थं
क्रियमाणंहोमादिकंकर्म- शांतिकंग्रहोत्पातादिशांतयेक्रियमाणं शुभंशांतिकादिमंगलंविवाहादिइयंपंचमीरवि

भौमशनीनामन्यतमेक्रूरग्रहे मेषादिराशिचतुष्टयस्थितेदुष्टाभवति अत्रचदक्षिणस्यांयोगिनीसांमुख्यात्यात्रानका र्यापक्षद्वयगतासुसर्वासुपंचमीषुतिथिपत्वेननागाःशेषादयःपूज्याःउक्तंच शेषादीनांफणीनांचपंचम्यांपूजनंभवेदिति

श्रीमन्महाराजरणवीरसिंहकारितेकृत्यरत्नाकरेपंचमीसामान्यनिर्णयप्रकरणम् ॥

अथषष्ठीसामान्यनिर्णयः तत्रादौशुक्लकृष्णभेदेनषष्ठीध्यानम् हेमाद्रौ मयूरगारुणाषष्ठीपात्रकुक्कुटधारिणी १ कृष्णप क्षे अक्षामयूरगारक्ताशशिकुक्कुटधारिणी एकास्याद्द्विभुजाषष्ठीरक्तवस्त्रासुभूषणा नीलकुंडलकंठासाजटाखड्गेंदु भूषिताइति शुक्लपक्षषष्ठीतिथिरुपवासव्रतादिपुस्कंदव्रतातिरिक्तेपुसप्तमीयुतैवग्राह्या षण्मुन्योरितियुग्मवाक्यात् वृहस्पतिनाप्युक्तं एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी अमावास्यातृतीयाचताउपोष्याःपराश्रिताइति स्मृतिसमु च्चयविष्णुधर्मोत्तरयोरप्येवमेव स्कांदेपि नागविद्धानकर्त्तव्याषष्ठीचैवकदाचन सप्तमीसंयुताकार्य्याषष्ठीधर्मार्थचिंत केरिति नागविद्धातुयाषष्ठीशिवविद्धातुसप्तमी दशम्येकादशीविद्धानोपोष्याःस्युःकथंचनेति शिवरहस्यसौरपुराण वचनेनपूर्वविद्धायानिषेधाच्च अत्रपंचमीवेधःषण्मुहूर्त्तात्मकोज्ञेयःतथाचमाधवीयेस्कंदपुराणे नागोद्वादशनाडीभिर्दि क्पंचदशभिस्तथा भूतोष्टादशनाडीभिर्दूषयत्युत्तरांतिथिमितितेनषण्मुहूर्त्तन्यूनपंचमीयोगे पूर्वेवोपोष्या तदुक्तंस्कंद पुराणे कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी एताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेदिति अस्यांसप्तमीभानुयोगे पद्मकाख्योयोगउक्तोनिर्णयामृते षष्ठीचसप्तमीयोगोवारेचेदंशुमालिनः योगोऽयंपद्मकोनामसूर्यकोटिग्रहैःसमइ ति अत्रस्नानदानादिकृतमक्षयफलदंभवतीति सर्वेष्वपिमासेषुविशेषादयंयोगोबोद्धव्यइतिनिर्णयसिंधौ अचलास प्तम्यामित्यन्ये अस्यामेवरविवासरयोगेलोलार्कयात्रोक्ताकाशीखंडे कृतानियानिपापानिनरैःसंवत्सरादपि नश्यं तिक्षणतस्तानिषष्ठ्यांलोलदर्शनादितिवार्षिकयात्राप्युक्ता तत्रैव मार्गशीर्षस्यसप्तम्यांषष्ठ्यांवारविवासरे विधाय

वार्षिकीयात्रांनरःपापात्प्रमुच्यतइति षष्ठीव्रतानां विशेषकृत्यंचैत्रादितोवक्ष्यते अथात्रषष्ठ्यांसिद्धाविरुद्धादिकमुच्य
ते शक्रेणप्रातिपत्षष्ठीतिप्रतिपन्निर्णयेप्रोक्तप्राक्भौमेनापिसिद्धा भौमेषष्ठीतृतीयास्यादितिचोक्तमेव षष्ठीशनिवारे
णविरुद्धा तदुक्तं सौरेहस्तोत्तराषाढेरेवतीचित्रयासह पचमींचैवषष्ठींचअर्यम्णासहवर्जितेति षष्ठ्यांशनिवारेणक्रक
चाभिधोयोगः तदुक्तंरत्नमालायां तिथेश्चवारस्यचयत्रसंख्ययात्रयोदशस्युर्मिलनेकृतेसाति स्मृतःसयोगःक्रकचा
भिधानकोविवर्जनीयःशुभकर्मसुध्रुवमिति अत्रदंतकाष्ठतैलाभ्यंगस्नानंचानिषिद्धं यथा दंतकाष्ठकुलद्रव्यज्ञातिनाशो
यथाक्रमं जायतेषष्ठ्यमावास्याप्रतिपत्सुकृतेसति तथाचरत्नमालाया षष्ठीषुतैलंपलमष्टमीषुक्षौरंक्रियांचैवचतुर्दशीषु
स्त्रीसेवनंनष्ठकलासुपुंसामायुःक्षयार्थमुनयोवदंतीति अत्रदंतकाष्ठादिनिषेधस्तात्कालिकातिथ्यामेव तदुक्तंस्नानेत्वा
भ्यंजनेचैवदंतधावनमैथुने तिथिस्तात्कालिकीग्राह्यातथामरणजन्मनोरिति अत्रषष्ठीषुतैलंतिलतैलमेवनिषिद्धं नतु
सर्वतैलं तदुक्तंस्मृतिसमुच्चये यत्रतैलंनिषिद्धंस्यात्तिलतैलंनिषिध्यते अभ्यंगायानिषेधेतुसार्षपादेरपीष्यतइति पुष्प
युक्तेषुसर्वथाप्यऽनिषेधः सार्षपंगंधतैलंचयत्तैलंपुष्पवासितं अन्यद्रव्ययुतंतैलंनदुष्यतिकदाचनेतिप्रचेतोवचनात्
रविभौमशनीनामेकतमेक्रूरग्रहेसिंहास्थितेषष्ठीदुष्टाभवति पराःपरेषामित्युक्तत्वात् तथाकर्कमेषस्थेसूर्येषष्ठीदग्धा
भवति तत्रशुभकर्मनकार्य्यं षष्ठ्यां पश्चिमेयोगिनीसांमुख्याद्यात्रा न कार्या इतिसर्वषष्ठीनिर्णयः इतिश्रीरघुवंशति
लकश्रीमहाराजरणवीरसिंहकारितकृत्यरत्नाकरेषष्ठीसामान्यनिर्णयः ॥

अथसप्तमीसामान्यनिर्णयः ॥ तत्रादौशुक्लकृष्णभेदेनसप्तमीध्यानम्
साध्यवर्णाजपाभासाहयस्थासप्तमीमतेति कृष्णपक्षे नीलकुंतलकंठासाजटाखड्गेंदुभूषिता इभस्थासप्तमीगौ
रीद्विभुजावज्रपात्रिणी हेमाद्रौ शुक्लपक्षेसप्तमीतिथिरुपवासादिषुषष्ठीयुतैवग्राह्या युग्मवाक्यात्षष्ठीयुतासप्तमी

चेत्कर्त्तव्यासाचसर्वदा षष्ठीचसप्तमीयत्रतत्रसन्निहितोहरिरितिमदनरत्नादयः स्कंदवचनात् षष्ठ्येकादश्यमावा स्यापूर्वविद्धातथाष्टमी सप्तमीपरविद्धाचनोपोष्यांतिथिपंचकमितिस्कंदपुराणवचने परविद्धायाःसप्तम्याउपवासे- निषेधाच्च अत्रमाधवःयदापूर्वेद्युरस्तमयपर्यंतापष्ठी परेद्युस्तिथिक्षयेणास्तमयादर्वागष्टमी त्रिमुहूर्त्ता तदापूर्वविद्धा थाश्चलाभादुत्तरविद्धायाश्चप्रतिषिद्धत्वात्कुत्रानुष्ठानमितिचेत् निषधमुल्लंघ्याप्युत्तरविद्धायामितिब्रूमः यद्यप्युक्ति श्र्थेवचनंनोपलभ्यते तथापिशेषिलोपस्यान्याय्यत्वादुत्तरविद्धागौणकालत्वेनस्वीकार्य्येति इतिसप्तमीसामान्यनि र्णयः अथसप्तम्यांसिद्धविरुद्धादिकमुच्यते सप्तमीबुधवारेणसिद्धा तदुक्तम् बुधवारेद्वितीयाचद्वादशीसप्तमीपुनरि ति सप्तम्यांरविवारेणसंवर्त्ताख्योयोगोविरुद्धोभवति सप्तम्यांदिनकरवासरोयादिस्याद्वारश्चेत्प्रतिपदिचेंदुनंदनस्य संवर्त्तोमुनिभिरुदीरितःसयोगःसंत्याज्यःशुभसुखकांक्षिभिः प्रयत्नादिति सप्तमीरवियोगादिविरुद्धयोगेषु कश्चि च्चाविरुद्धयोगास्तिथिवारजातानक्षत्रवारप्रभवाश्चयेच हूणेषुवंगेषुखशेषुवर्ज्याअन्येषुदेशेपुनतेविहिशेषालिख्यते रुद्धाइति सप्तम्यांचद्वितीयायांव्रतपौष्टिकादिकर्मकार्य्यं व्रतपौष्टिकेद्वितीयासप्तमीद्वादशीसप्तमीषु कुर्वीतेत्यु क्तत्वात् सप्तम्यामामलकस्नानंलक्ष्मीनाशनकरम् तदुक्तंसप्तम्यनिदुनवमीषुचसंपदिच्छु स्नायात्कदाचिदपिनाम लकैर्मनुष्यः रविभौमशनीनामन्यतमेक्रूरग्रहेकन्याराशिस्थितेसप्तमीशुभकर्मसुनिषिद्धा तदुक्तं परा.परेषामित्या दि सप्तम्यांवायव्यांयोगिनीसांमुख्याद्यात्रानकार्य्या वायव्येशानयोरित्युक्तत्वात् इतिश्रीमन्महाराजरघुवंशति लकश्रीरणवीरसिंहकारितकृत्यरत्नाकरेसप्तमीसामान्यनिर्णयप्रकरणम्

## अथाष्टमीनिर्णीयते

तत्रशुक्लाष्टमीध्यानम् घंटापात्रधरागोस्थागोक्षीरधवलाष्टमी अथकृष्णाष्टमीध्यनं प्रेतगाचाष्टमीरक्ताकृष्णाग्रीवासि

तांशुका अक्षंखेटतथाखड्गंपात्रंधत्तेचतुर्भुजेति अष्टमीतिथि सर्वमतेपूर्वा सितापरा व्रतमात्रेऽष्टमीकृष्णापूर्वाशुक्ला
ष्टमीपरेतिमाधवोक्तिःपरयुक्शुक्लाष्टमी पूर्वंयुक्कृष्णेतिदीपिकोक्तेश्चशुक्लपक्षेऽष्टमीचैवशुक्लपक्षेचतुर्दशीपूर्वविद्धानक
र्त्तव्याकर्त्तव्यापरसंयुतेतिकृष्णपक्षेऽष्टमीचैवकृष्णपक्षेचतुर्दशीपूर्वविद्धैवकर्त्तव्यापराविद्धानकुत्रचित् उपवासेपुराजेंद्र
एपधर्मस्सनातनइतिनैगमाच्च हेमाद्रिमाधवनिर्णयसिंधुकालविवेचनप्रवृतिसर्वमतेकृष्णाष्टम्युपवासादिषु पूर्वविद्धैवे
तिसिद्धांतःमदनरत्नेतूपवासेपुपक्षद्वयेऽप्यष्टमीपरयुतैव ग्राह्या उपवासेसप्तमीनुवेधाद्धत्युत्तरंदितं पक्षयोरुभयोरेष
उपवासविधिःस्मृतइतिनारदीयवचनेनपक्षद्वयेऽपिसप्तमीविद्धायानिषेधात् एकादश्यष्टमीषष्ठीतिपूर्वोदाहृतभृगुव
चनाच्चेतिनिगमवचनमुपवासग्रहणेरुद्रोपवासविषयं रुद्रव्रतेषुसर्वेषुकर्त्तव्यासंमुखीतिथिःअन्येषुव्रतकल्पेषुयथोद्दि
ष्टमुपावसेदितिस्मृत्यंतरवचनान्नतेनास्यविरोधःशक्तिपूजायांत्वष्टमीरात्रिव्यापिनीग्राह्या तदुक्तंदेवीपुराणेनिशायां
पूजितादेवीवैष्णवीपापनाशिनी तस्मात्सर्वप्रयत्नेनअष्टम्यांनिशिपूजयेदिति अतएवदुर्गाभक्तितरंगिण्यामपि रा
त्रिपूजायामष्टमीरात्रिव्यापिनीग्राह्येत्युक्तं कालव्यापिशास्त्रात् शुक्लपक्षेपूर्वविद्धादरेण कृष्णपक्षेविचाराभावाच्च
दिनद्वयेरात्रिव्याप्तावधिकरात्रिव्यापिनीग्राह्या तुल्यव्याप्तावुत्तरैव प्रातरारभ्यकालपर्यंतसद्भावात् शिवार्चनचं
द्रिकायांकुलार्णवे नित्यार्चनंदिवाकुर्य्याद्रात्रौनैमित्तिकार्चनमित्यभिधानाच्चेति इत्यष्टमीसामान्यनिर्णयःअथाष्टमीकृ
त्यानि तत्रसर्वास्वष्टमीषुभैरवयात्रोक्ताकाशीखंडे अष्टम्यांचचतुर्दश्यांरविभूमिजवासरेयात्रांचभैरवींकृत्वानरःपापा
त्प्रमुच्यते इतितत्रैव अष्टम्यांचचतुर्दश्यांभौमवारेविशेषतःसंपूज्यसततंकाश्यांदुर्गामार्तिविनाशिनीमिति इत्यष्टमी
मात्रसामान्यकृत्यम् अथसिद्धाविद्धादिकमुच्यते अष्टमीभौमेनासिद्धा भौमेषष्ठीतृतीयास्यादष्टमीचत्रयोदशीतिइयंगु
रुवारेणविरुद्धा-यथाजीवेष्टमीचतुर्थीचेति अत्रसंग्रामबलोपयोगीनिकार्य्याणिकुर्य्यात् यथा जयासुविदधतांशुबल-

कार्य्याणिनिर्द्दिष्टइति अत्रतैलस्नानंमांसभक्षणंनारिकेलभक्षणंचनिषिद्धं यथा नार्कांरवारेनचसंक्रमेचनवैधृतौनव्यति पातयोगे नपक्षमध्येपिजनिष्टिषष्ठ्योरभ्यंगइष्टोनचपर्वसूक्तः पक्षमध्येऽष्टम्यांपलमष्टमीषुच अष्टम्यादिषुनाद्यादिष्टग तीच्छुःकदाचिदपिविद्वान् शीर्षंकपालांत्राणिनखचर्मतिलानिचक्रमशइति अयमर्थः अष्टम्यांशीर्षंनारिकेलंनाद्यात् नवम्यांकपालंअलाबुफलं दशम्यांआंत्रंनालीशाकमितिनिर्णयामृते पटोलमितिहेमाद्रिः एकादश्यांनखान्शणपुष्पा णीतिनिर्णयामृते निष्पावानितिहेमाद्रिः निष्पावशब्देनवल्लाःभाषायांवालाइतिप्रसिद्धाः शिंबीफलानिवा द्वादश्यांच र्मविल्वफलं पोतीत्यपिपत्रशाकविशेषसंज्ञा त्रयोदश्यांतिलंवृंताकमित्यर्थः एतेषांभक्षणंप्राण्यंगशीर्षादिभक्षणतुल्य मितिभावः तथाष्टम्यांदिवानभोक्तव्यं तदुक्तं भूताष्टम्योर्दिवाभुक्त्वारात्रौभुक्त्वातुपर्वणि एकादश्यांदिवारात्रौभुक्त्वाचांद्रा यणंचरेत् तत्रपर्वाणि चतुर्दश्यष्टमीचैवअमावास्याचपूर्णिमा पर्वाण्येतानिराजेंद्र रविसंक्रांतिरेवच अत्रअष्टमीद्वयम ष्टमीत्वेनचतुर्दशीद्वयंचतुर्दशीत्वेनैकीकृत्य अमावास्यापूर्णिमासंक्रांतिश्चेति एवंपंचपर्वाणि अत्रसर्वेषांपर्वत्वेनोक्त्वा भूताष्टम्योरपि पर्वत्वेतयोः पूर्ववाक्येपृथगुपादानं गोबलीवर्दन्यायेन यद्वा शुक्लाष्टमीकृष्णचतुर्दशीचदर्शोथराका रविसंक्रमश्चेतिग्रंथांतरे शुक्लकृष्णचतुर्दश्योरेवपर्वत्वाभिधानात् कृष्णाष्टमीशुक्लचतुर्दश्योरपिदिवाभोजननिषेधप्रा प्त्यर्थं पर्वण्युक्त्वाभूताष्टम्योःपुनर्वचनं अथपर्वसुनिषिद्धानि स्त्रीसंभोगतैलाभ्यंगमांसभक्षणक्षौरदंतकाष्ठवीरुत्तरु च्छेदनकुशच्छेदनानिवर्ज्याणीतिहेमाद्रिः पक्षद्वयगतासुसर्वास्वष्टमीषुतिथिपत्वाच्छिवःपूज्यः अष्टम्यांत्रिचतुर्दश्यामि त्याद्युक्तमेव अष्टमीदशमीक्रूरग्रहेतुलास्थितेसतिशुभकार्येषुवर्ज्या मिथुनकन्यागतेरवावष्टमीदग्धाभवति अष्टम्यामै शान्यांयात्राविशेषतोनकार्या इत्यष्टमीसामान्यनिर्णयः ॥ इतिश्रीरघुवंशतिलकश्रीमहाराजरणवीरसिंह कारितेकृत्यरत्नाकरेअष्टमीसामान्यनिर्णयप्रकरणम् ॥ (*) (*) ॥

अथनवमीनिर्णयः तत्रादौशुक्लकृष्णानवमीध्यानम् नवमीसिंहगाशुभ्रापाशपात्रधराशुभा इति कृष्णा अक्षंखड्गं तथाखेटंपात्रंधत्तेचतुर्भुजा सर्पगानवमीनीलादंष्ट्रिणीपात्रतर्जनी इयंसर्वमतेउपवासादिष्वष्टमीयुतैवग्राह्या वसुरंध्रयोरितियुग्मवाक्यात् अष्टम्यानवमीविद्धाकर्त्तव्याफलकांक्षिभिः नकुर्य्यान्नवमींतातदशम्यांतुकदाचनेति ब्रह्मवैवर्त्तवचनाच्च नवम्येकादशीचैवदशविद्धायदाभवेत् तदावर्ज्याविशेषेणगंगांभः सुरयायथेतियमपुराणाच्च इतिनवमीसामान्यनिर्णयः ॥ अथात्रसिद्धविरुद्धादिकं नवमीशनिवारेणसोमवारेणचसिद्धा तदुक्तं शनौचतुर्दशीनवमीति सोमेतुनवमीपुष्यःश्रवणारोहिणीमृगःएतानिसर्वदावत्सासिद्धिदानिस्वकर्मस्विति बुधवारेणचाविरुद्धा तृतीयानवमीत्याद्युक्तमेवनवम्यांशस्त्रवधवधूनाद्युग्रकर्मकार्य्यं चतुर्थ्यांचचतुर्दश्यांनवम्यांचारिमर्दनमित्यादि अत्रामलकस्नानंनकार्य्यमित्याद्युक्तमेव सप्तम्यानिंदुनवमीषुचेत्यादि अत्रदंतकाष्ठमपिवर्ज्यमुक्तंव्यासेन प्रतिपत्पर्वषष्ठीपुनवम्यांहरिवासरे दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमिति अत्रयोगिनीनांसांमुख्यात्पूर्वदिशियात्रानकार्य्या वृश्चिकस्थेक्रूरग्रहेनवमीदशमीचाशुभाभवतिपरतःपरेषामित्यादि नवम्यांतुंबीफलमपिनभक्ष्यमिति इतिश्रीमन्महाराजरणवीरसिंहकारितेकृत्य

॥ रत्नाकरेनवमीसामान्यनिर्णयप्रकरणम् ॥

॥ अथदशमीनिर्णीयते ॥

तत्रक्रमेणशुक्लकृष्णदशमीध्यानं हेमाद्रौ वीरमित्रोदयेच सिंहासनस्थिताशुभ्रादशमीपीतकुंतला ज्ञानमुद्राभयाचेयंपीतवस्त्राब्जमालिनी ॥ १ ॥ कृष्णवर्णालुलायस्थादशमीदंडपात्रिणीतिसापूर्वविद्धैवग्राह्या ॥ तथा च स्कंदपुराणे ॥ दशमीचप्रकर्त्तव्यासदुर्गाद्विजसत्तमेति यदा दिनद्वये कर्मकालव्यापिनी तदा पूर्वा परावेति हेमाद्रिः संपूर्णादशमीकार्य्यापूर्वयापरयाथवा युक्तानदूषितायस्मादतः सासर्वतोमुखीत्यंगिरोवचनात्

कृष्णापूर्वोत्तराशुक्लादशम्येवंव्यवस्थितेतिमाधवः मदनरत्ननिर्णयामृतनिर्णयसिंधुषूपवासादिषुनवमीविद्धैवग्राह्या तदुक्तंपैठीनसिना पंचमीसप्तमीचैवदशमीचत्रयोदशी प्रतिपन्नवमीचैवकर्तव्यासंमुखीतिथिरिति आपस्तंबोपिदशमी तुप्रकर्तव्यासदुर्गाद्विजसत्तमेति यत्तुसंपूर्णादशमीकार्य्येत्यंगिरोवचनं तत्नवमीयुक्तायाअलाभे उदयकालव्यापिनी ग्राह्येत्येवपरं अथवा एकादशीव्रतांगत्वेनक्रियमाणंदशम्यामेकभक्तादिपरं यत्तुनंदाविद्धेतिकूर्मपुराणवचनमुत्तरविद्धानिषेधकं तत्कृष्णपक्षविषयमितिकालतत्त्वविवेचने अत्रकेचित् यत्तुहेमाद्रिः दिनद्वयंकर्मकालव्यापित्वाभावेऐच्छिकोविकल्पइत्याह तत्राशास्त्रतोव्यवस्थासंभवे ऐच्छिकत्वायोगादित्यूचु तन्मृग्यं दिनद्वयेहेमाद्रिणाकर्मकालव्याप्त्यभावे ऐच्छिकविकल्पाभिधानेनानुक्तोपलंभप्रसंगात् इतिदशमीसामान्यनिर्णयः ॥ अथदशमीकृत्यानि तानिचैत्रशुक्लादितोवक्ष्यंते अथात्रसिद्धविरुद्धादिकंलिख्यते दशमीगुरुवारेणसिद्धा यथा गुरौदशमीपंचम्याविति दशम्यांभौमवारेणक्रकचयोगः दशम्यांपंचम्यांयन्मंगल्यंविवाहयात्रादिकार्य्यमेव वृश्चिकस्थेसूर्येदशमीदग्धाभवति दशम्यांक्षत्रियादित्रयोवर्णा अभ्यंगस्नानं न कुर्य्युः उक्तंच त्रयोदश्यांद्वितीयायांदशम्यामित्यादिप्रागुक्तं अत्रनालीशाकंनाद्यात् उक्तंच शीर्षकपालांत्राणि इति दशम्यामुत्तरदिशिगमनं योगिनीसांमुख्यान्नकुर्यादितिदशमीसामान्यनिर्णयः इतिश्रीमहाराजरणवीरसिंहकारितकृत्यरत्नाकरेदशमीसामान्यनिर्णयः ॥

अथैकादशीनिर्णीयते ॥

तत्रशुक्लकृष्णैकादशीध्यानं एकादशीवृषस्थातुनीलशुभ्रात्रिशूलिनी ताम्रवर्णावृषारूढापत्रखेटासिपंकजा १ एकादशीमहागंस्थातुलाकर्तरिकायुता सिंहाननारुणगलातुंदिनीलासिनीपरेति अथैकादशीमहिमाहेमाद्रौ तत्त्वसागरे मातेवसर्वबालानामौषधंरोगिणामिव रक्षार्थंसर्वलोकानांनिर्मितैकादशीतिथिः तथा . एकादश्युपवासीयःसधन्यःसच

बुद्धिमान् तथा एकादशींपरित्यज्ययोन्यद्व्रतमुपासते सकरस्थंमहारत्नंत्यक्त्वालोष्टंहियाचते तथा एकामेकादशीं चापिसमुपोष्यजनार्दनं कामेनापिसमभ्यर्च्यसंसारान्मोक्षमाप्नुयात् तोयेनापिसमभ्यर्च्येतिवापाठः प्रसंगादथवादं भाल्लोभाद्वात्रिदशाधिपं एकादश्यांनमस्कृत्वासंसाराद्विप्रमुच्यते संसाराख्यान्महाव्याधेर्दुःखिनांसर्वदेहिनां एकादश्युपवासोयंनिर्मितःपरमौषधं संसारोरगदष्टानांनराणांपापकर्मणां एकादश्युपवासेनसद्यएवसुखंभवेत् नारदीय पुराणेवसिष्ठः एकादश्याःसमुत्थेनवह्निनापातकेंधनं भस्मतांयातिराजेंद्रअपिजन्मशतोद्भवं तावत्पापानिदेहेस्मिंस्तिष्ठंतिमनुजाधिप यावन्नोपवसेज्जंतुःपद्मनाभदिनंशुभं अश्वमेधसहस्राणिवाजपेयशतानिच एकादश्युपवासस्य कलांनार्हंतिषोडशीं एकादशेंद्रियैःपापंकृतंयद्भवताप्रभो एकादश्युपवासेनतत्सर्वंविलयंव्रजेदित्यादि हेमाद्रौद्रष्टव्यं ब्रह्मवैवर्ते सर्वप्रायश्चित्तमिदंसंसारोत्तारकारकं एकादशीव्रतंविप्रकुर्वन्मुक्तिमवाप्नुयात् नरोदिनैर्यद्दशभिश्चतुर्भिश्चकरोत्यघं उपोष्यपंचदशमंदिनंविष्णोर्हिमुच्यते कलावस्मिन्निमग्नानामहिंसापावितात्मनां एकादशींविनाविप्र नसंसाराद्विमोक्षणं पद्मपुराणे एकतःपृथिवीदानमेकतोहरिवासरः नसमःकविभिःप्रोक्तोवासरोह्यधिकोमतः भविष्यत्पुराणे एकाविष्णुमयीशक्तिरनंताह्यक्षयास्थिता सत्येनान्याप्रद्रष्टव्यामुख्याचैकादशीसतीतिसनत्कुमारप्रोक्तम् कृत्वापापसहस्राणिब्रह्महत्याशतानिवै एकादशींनरोभक्त्यासमुपोष्यशुचिर्भवेत् देवीरहस्यस्कंदपुराणयोः पापंच त्रिविधंप्रोक्तंपातकंचोपपातकं लघुपातकसंज्ञंचमहापातकमेवच प्रकीर्णंकंचतत्सर्वमेकादश्याःमुपोषणात्विलयंयाति तोयस्थंयथास्पृणमयभाजनं सौरधर्मेषु एकतश्चाग्निहोत्रादिद्वादशीमेकतःप्रभुः तुलयातोलयत्तत्रद्वादशीचावशिष्यते देवीरहस्ये गायत्रीहयथासर्वपापपंजरभेदिनी एकादशीतथासर्वपापपंजरभेदिनी स्कंदपुराणेपि अभोज्यभोजना ज्जातमगम्यागमनाच्चयत् अयाज्ययाजनाद्यच्चअभक्ष्याणांचभक्षणात् अस्पृश्यस्पर्शनाद्यच्चपरवित्तापहारतःज्ञाता

ज्ञातकृतंयच्चपातकंचोपपातकं तत्सर्वंविलयंयातिएकादश्यामुपोपणात् वैष्णवतंत्रे एकादशीमहापुण्याविष्णोरीशस्य वल्लभा तस्यामुपोपितोयस्तुद्वादश्यांपूजयेद्धरिं तस्यपापानिनश्यंतीत्यादि स्कंदभविष्यत्पुराणयोःयेद्वादशीमुपवसं त्यनिलांबुभक्ष्यायेवाङ्मयैस्सुकुसुमैर्हरिमर्चयंति तेवैतपांडुरपयोनिधिराजहंसाःसंसारसागरजलस्यतरंतिपारं रुद्र पुराणे यःकरोतिनरोभक्त्याएकादश्यामुपोपणं सयातिविष्णुसालोक्यंयातिविष्णोःसरूपतांविष्णुपुराणे ओंकारःसर्व देवानांयथैवाद्यःप्रपूजितः तथासर्वव्रतानांतुद्वादशीव्रतमुत्तमम् इत्येकादशीमहिमा तत्रैकादश्युपवासोद्वेधा निपेधप रिपालनात्मकोव्रतरूपश्च तत्राद्यः नशंखेनापिबेत्तोयंनखादेत्कूर्मसूकरौ एकादश्यांनभुंजीतपक्षयोरुभयोरपीति क्रमो देवलाद्युक्तः अग्निपुराणेऽपि गृहस्थोब्रह्मचारीचह्याहिताग्निस्तथैवच एकादश्यांनभुंजीतपक्षयोरुभयोरपीत्यादि व्रत रूपस्तुब्रह्मवैवर्ते प्राप्तेहरिदिनेसम्यग्विधायनियमंनिशि दशम्यामुपवासश्चप्रकुर्याद्वैष्णवंव्रतमिति शिवधर्मेपि वै ष्णवोवाथशैवोवाकुर्यादेकादशीव्रतं इदंशिवभक्तादिभिरपिकार्यमित्युक्तं सौरपुराणेऽपि वैष्णवोवाथशैवोवासौरोप्ये तत्समाचरेदिति सोपिद्वेधा नित्यःकाम्यश्च उपोष्यैकादशींनित्यंपक्षयोरुभयोरपीति पक्षेपक्षेप्रकर्तव्यमेकादश्या मुपोपणमिति नारदोक्तेश्चनित्यता यदीच्छेद्विष्णुसायुज्यंश्रियंसंततिमात्मनः एकादश्यांतुभुंजीतपक्षयोरुभयो रपीतिकौर्मादिषुफलश्रुतेश्चकाम्यता उपोष्यमेकादशीव्रतंच गृहस्थातिरिक्तानामेवनित्यं गृहस्थस्यतुशुक्लाया मेवव्रतंनित्यं नकृष्णायां एकादश्यांनभोक्तव्यंपक्षयोरुभयोरपि वनस्थयतिधर्मोयंशुक्लामेवसदागृहीति देवलोक्तेः नचानेननिपेधकलनमेव वनस्थयतिविपयेउपसंह्रियते नतुव्रतमितिवाच्यं अस्यपर्युदसितविधिपरत्वात् अन्यथा पूर्वोक्तपुराणवचनेननिपेधपालने गृहस्थाधिकारोक्तिविरोधःस्यात् निपेधानिष्टसमात्रफलकत्वेननाविशेपानपेक्षणात् उपसंहारायोगात् अभावस्यधर्मत्वाभावाच्च तस्मादेननसर्वेपामेवैकादशीव्रतविधायिनांसामान्यवाक्यानांवनस्थ

यतिविषये उपसंहारान्न गृहस्थस्य कृष्णायांनित्यव्रतसमाप्तिः कथंतर्हिसंक्रांत्यामुपवासंचकृष्णैकादशवासरे चंद्रसूर्यग्रहेचैवनकुर्यात्पुत्रवान्गृहीतिनारदादिवचनेपुकृष्णानिषेधः प्राप्तभावादितिचेच्छ्रूयतां शयनीबोधिनीमध्येया कृष्णैकादशीभवेत् सैवोपोष्यागृहस्थेननान्याकृष्णाकदाचनेति पाद्मे गृहस्थस्याषाढीकार्त्तिकीमध्यस्थायाकृष्णाविहितापुत्रवतोननिषिध्यते अन्यकृष्णायांतुनविधिःसर्वविधीनांवनस्थयतिषूपसंहारात् शयन्यादिवाक्यंतुपुत्रिगृहस्थगोचरमित्यनंतभट्टहेमाद्र्यादिग्रंथाःदीपिकायामपि असितास्वंशयनीबोधांतरस्थाप्यर्थोनस्यात्तन्मज्जिनोतोतिमदनरत्ने भविष्येपि यथाशुक्लातथाकृष्णाद्वादशीमेसदाप्रियाशुक्लागृहस्थैःकर्तव्याभोगसंतानवर्द्धिनीमुमुक्षुभिस्तथाकृष्णासाकाम्यागृहिणांभवेत् पुत्रवांश्चसभार्यश्चबंधुयुक्तस्तथैवच उभयोःपक्षयोःकाम्यंव्रतंकुर्यात्तुवैष्णवमितिनारदोक्तेःएतत्सर्वकालादर्शेउक्तं विधवायावनस्थस्ययतेश्चैकादशीद्वयेउपवासोगृहस्थस्यशुक्लायामेवपुत्रिणः भुजेनिषेधःकृष्णायांसिद्धस्तस्यततोव्रतइति प्राच्यास्तुवैष्णवगृहस्थानांकृष्णापिनित्या नित्यंभक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः पक्षेपक्षेचकर्त्तव्यमेकादश्यामुपोषणं सपुत्रश्चसभार्यश्चसजनोभक्तिसंयुतः एकादश्यामुपवसेत्पक्षयोरुभयोरपीतिनारदोक्तेरित्याहुः अत्रपुत्रशब्दश्चापत्यमात्रवचनः नारायणवृत्तौ पुमांसएवमपुत्राजायेरन्नित्यत्रापत्यमात्रत्ववाचित्वोक्तेः जनयेद्बहुपुत्रानितिलिंगात् पौत्रोमातामहस्तेनेतिमनूक्तेःपुत्र्याअपत्यमित्यर्थेतुस्त्रीभ्योढकिपौत्रेयइत्यापत्तेःपुमान्पुत्रोजायतइतिचउपवासनिषेधविशेषोवायवीयेउक्तः उपवासनिषेधेतुभक्ष्यंकिंचित्प्रकल्पयेत् नदुष्यत्युपवासश्चउपवासफलंभवेत् भक्ष्यंचतत्रैवोक्तं नक्तंहविष्यान्नमनोदनंवाफलंतिलाःक्षीरमथांबुचाज्यं यत्पंचगव्यंयदिवापिवेयुः प्रशस्तमत्रोत्तरमुत्तरंचेत्युक्तं अत्रोपवासेनिषेधव्यवस्थांपुनराहमत्स्यपुराणे एकादश्यांतुकृष्णायामुपोष्यविधिवन्नरःपुत्रानायुःसमृद्धिंचसायुज्यंचैवगच्छतिदिनद्वयेपिपुत्रवतोगृहस्थस्योपवासोनिषिद्धः मदनरत्नेव्यासःएकादशीषुनष्टासुरवौसंक्रमणेतथा पारणंचो

पवासंचनकुर्य्यात्पुत्रवान्गृही दिनक्षयेतुसंप्राप्तेनोपोष्यादशमीयुता यदीच्छेत्पुत्रपौत्राणामृद्धिंसंपदमात्मनः मत्स्यपुरा
णेपि दिनद्वयेकसंक्रांतौग्रहणेचंद्रसूर्ययोः उपवासंनकुर्वीतपुत्रपौत्रसमान्वित इति दिनक्षयलक्षण पद्मपुराणे द्वौतिथ्यं
तावेकवारेयस्मिन्स्यात्तद्दिनक्षयइति वसिष्ठोपि एकस्मिन्सावनेत्वह्नितिथीनांत्रितयंभवेत् तदादिनक्षयःप्रोक्तस्तत्रसाह
स्रिकंफलमिति फलमत्रपुत्रवतउपवासव्यतिरिक्तविषयमितिद्रष्टव्यं अत्रत्रिस्पृग्वर्णनंविष्णुधर्मोत्तरे प्रथमकांडेशं
करगीतासुशंकरवाक्यम् दिवागतातुदशमीव्यतीतास्यात्तिथिर्द्विज रात्रिशेषेतथान्याचभविष्यांस्पृशतेतिथिं तिथित्र
तयसंस्पर्शादहोरात्रेभृगूत्तम त्र्यहस्पृक्सातुविनिर्दिष्टापुण्यास्तास्तितयःस्मृताः तत्रोपोष्यशिरःस्नातैःकर्तव्यंदेवतार्चनं
जपंहोमंतथादानंकामयद्भिर्महत्फलं कर्मणांपरिशेषाणामकर्मण्यचताद्दिनं श्रीविष्णुप्रीतयेरामब्राह्मणांस्तत्रभोजयेदि
तिवाक्यात्तुवैष्णवैर्गृहस्थैर्विष्णुप्रीतयेपूर्ववकार्येति तस्योपवासनिषेधः उपवासनिषेधेपिभक्ष्यंकिंचित्प्रागुक्तमेव भक्ष्यं
चविद्वाविपर्ययेवश्यमुक्तं अविद्वानामलाभेतुपयोदधिघृतानिच सकृदेवाल्पमश्नीयादुपवासफलंभवेत् भक्ष्यच नक्तंहवि
ष्यान्नमित्यादि अथैकादशीनिर्णीयतेसाषड्विधाशुद्धाविद्धाचयासंपूर्णासाशुद्धा अथोपवासानुष्ठानसिद्ध्यर्थंशुद्धविद्धादि
भेदेनैकादश्याअष्टादशभेदाउच्यंते षष्टिघटयः ६०॥ समता ॥१॥ षष्टितोन्यूनाश्चेद्घटयस्तदान्यूनता ॥२॥ षष्टितो
ऽधिकाश्चेत्तदाऽधिकताज्ञेया ॥ ३ ॥ अत्रशुद्धैकादशी समन्यूनताऽधिक्ययोगात्त्रिविधाभवति सात्रिधापि द्वादशीसा
म्यन्यूनताधिक्ययोगात्प्रत्येकंत्रिधाभवति एवंनवभेदाभवंति तेयथा शुद्धसमैकादशी ॥ ६० ॥ द्वादशी ॥ ६० ॥
समा १ ॥ शुद्धसमैकादशी ६० द्वादशी ५९ । ५८ । ५७ न्यूना २ शुद्धसमैकादशी ६० द्वादश्य ६१ । ६२ । ६३
धिका ३ ॥ शुद्धन्यूनैकादशी ५९ । ५८ । ५७ द्वादशी ६० समा ४ ॥ शुद्धन्यूनैकादशी ५९ । ५८ । ५७ द्वादशी
५९ । ५८ । ५७ । न्यूना ५ ॥ शुद्धन्यूनैकादशी ५९ ५८ । ५७ द्वादश्य ६१ । ६२ । ६३ धिका ६ ॥ शुद्धाधिकैकादशी

६१ । ६२ । ६३ द्वादशी ५९ । ५८ ।
६१ । ६२ । ६३ द्वादशी ६० समा ७ ॥ शुद्धाधिकैकादशी ६१ । ६२ । ६३ द्वादशी ५९ । ५८ ।
६१ । ६२ । ६३ द्वादश्य । ६१ । ६२ । ६३ धिका
५७ न्यूना ८ ॥ शुद्धाधिकैकादशी । ६१ । ६२ । ६३ द्वादश्य । ६१ । ६२ । ६३ धिका
१ ॥ एवंदशम्याविद्धापिसाम्यन्यूनताधिक्ययोगात्त्रिधाभवति साविद्धापिद्वादश्याःसमन्यूनाधिक्ययोगात्प्रत्येकंत्रिधा
भवति एवंनवभेदाः तेपियथा दशम्याविद्धैकादशीसमा ६० द्वादशी ६० समा १ दशम्याविद्धैकादशीसमा ६० द्वा
दशी ५९ । ५८ । ५७ न्यूना २ ॥ दशम्याविद्धैकादशीसमा ६० द्वादश्य ६१ । ६२ । ६३ धिका ३ ॥ दशम्यावि
द्धैकादशीन्यूना ५९ । ५८ । ५७ द्वादशी ६० समा ४ ॥ दशम्याविद्धैकादशीन्यूना ५९ । ५८ । ५७ द्वादशी
५९ । ५८ । ५७ न्यूना ५ ॥ दशम्याविद्धैकादशीन्यूना ५९ । ५८ । ५७ द्वादश्य ६१ । ६२ । ६३ धिका ६ ॥
दशम्याविद्धैकादश्यधिका ६१ । ६२ । ६३ द्वादशी ६० समा ७ ॥ दशम्याविद्धैकादश्यधिका ६१ ६२ । ६३
द्वादशी ५९ । ५८ । ५७ न्यूना ८ ॥ दशम्याविद्धैकादश्यधिका ६१ । ६२ । ६३ द्वादश्य ६१ । ६२ । ६३
धिकाचेति ९ ॥ एवंमिलित्वाऽष्टादशभेदाभवंति तत्रतावद्दशमीविद्धाथावैष्णवैस्त्याज्या सदशमीवेधः प्रपंच्यते
दशमीवेधस्त्रिविधः ॥ अरुणोदयवेधः सूर्योदयवेधः पंचदशनाडीवेधश्चेति तत्रारुणोदयवेधोभविष्यपुराणे ॥
अरुणोदयवेलायांदशागंधोभवेद्यदि दुष्टंतत्तुप्रयत्नेनवर्जनीयंनराधिपेति दिशागंधःदशमीसंबंधः गारुडेऽपि
दशमीशेषसंयुक्तोयदिस्यादरुणोदयः नैवोपोष्यंवैष्णवेनतद्दिनैकादशीव्रतमिति वैष्णवलक्षणंच स्कांदे पर
मापदमापन्नोहर्षेवासमुपस्थिते नैकादशींत्यजेद्यस्तुयस्यदीक्षास्तिवैष्णवी समात्मासर्वभूतेपुनिजाचारादविप्लुतः वि
ष्ण्वर्पिताखिलाचारःसहिवैष्णवउच्यतइतिवचनोक्तएववैष्णवइतिसिद्धंस्मृत्यंतरेपि वैखानसाद्यागमोक्तदीक्षायुक्तोपि
वैष्णवइतितन्न यद्यपिपित्रादेरागमदीक्षायांतन्मात्रस्यैव वैष्णवत्वं नतत्पुत्रादेस्तथाऽपि पारंपर्यप्रसिद्धमेवत्रैष्णवत्वं

स्मार्त्तत्वंचमन्यंतेवुधाःतत्त्वसागरेभविष्येयथाशुक्लातथाकृष्णायथाकृष्णातथेतरा तुल्येतेमन्यतेयस्तुसवैवैष्णवउच्यत
इति अरुणोदयप्रमाणंतुस्कंदनारदाभ्यामुक्तं उदयात्प्राक्चतस्रस्तुघटिकाअरुणोदयइति हेमाद्रौ चतस्रोघटिकाः
प्रातररुणोदयउच्यते यतीनांस्नानकालस्तुगंगांभःसदृशःस्मृतइति तथा निशिप्रांतेतुयामार्द्धेदेववादित्रवादने सार
स्वतानध्ययनेचारुणोदयउच्यते तथा अरुणोदयवेधस्तुसार्धंतुघटिकात्रयमिति एतेषांसर्वेषांवचनानांरात्रिमानह्रा
सवृद्धिभ्यां मुहूर्तद्वयपरतैव उदयात्प्राक्यदाविप्रमुहूर्त्तद्वयसंयुतेति आदित्योदयवेलायाःप्राक्मुहूर्तद्वयान्विता संपूर्णै
कादशीनाम तत्रैवोपवसेद्व्रतीति गारुडे सौरधर्मादिवचनम् यच्चभविष्ये आदित्योदयवेलायाःप्राङ्मुहूर्त्तद्वयान्विता
एकादशीतुसंपूर्णाविद्धान्यापरिकीर्त्तितेति तदप्युपसंहारन्यायेन दंडचतुष्टयपरमेव हेमाद्रावप्येवं यत्तुब्रह्मवैवर्त्ते च
तस्रोघटिकाप्रातररुणोदयनिश्चयः चतुष्टयविभागोत्रवेधादीनांकिलोदितः अरुणोदयवेधःस्यात्सार्द्धंतुघटिकात्रयं अ
तिवेधोद्विघटिकःप्रभातदर्शनाद्रवेः महावेधोपितत्रैवदृश्यतेर्कोनदृश्यते तुरीयस्तत्रविहितोयोगःसूर्योदयेवुधैरिति
तदप्यवयवद्वारारुणोदयवेधविशेषपरमेवेतिमाधवीये मदनरत्नेच अन्यस्तूदयवेधः तथान्येपिवेधाहेमाद्रौ माधवी
येगारुडेच उदयात्प्राक्त्रिघटिकाव्यापिन्येकादशीयदा संदिग्धै कादशीनामवर्ज्येयंधर्मकांक्षिभिः उदयात्प्राङ्मुहूर्त्त
नव्यापिन्येकादशीतुया संयुक्तैकादशीनामवर्ज्यैयंधर्मकांक्षिभिः हेमाद्रौ रात्रेरंत्याष्टमभागेप्यरुणोदयउक्तः निशा
प्रांतेतुयामार्द्धइत्यादि अत्रैके एतेषांसर्वपक्षाणां मुहूर्त्तद्वयेनक्रोडीकारान्निशःप्रांतइतिवचनाच्च रात्रिमानवशात्सार्द्ध
त्रिदंडादयोऽनेकेऽरुणोदयाः हेमाद्रिः सार्द्धत्रिघटिकारूपोक्तिरष्टाविंशतिघटीमानरात्रिविषया महत्तरायास्तुरात्रेरं
तेचतस्रोघटिकाइत्युक्तमाहुः अतोऽरुणोदयशब्दस्यानेकार्थत्वापत्तेः नचमुहूर्त्तद्वयमर्थः दंडद्वयैकमुहूर्तादिवेधानांतथा
प्यनुपपत्तेः नहितेषांयामार्द्धत्वमरुणोदयत्वंवास्ति मुहूर्त्तद्वयस्ययामार्द्धस्यचचतस्रोघटिका इत्यनेनैवोपसंहाराच्च न

तदर्थः नचसार्द्धचघटिकात्रयमित्यनेनापितदापत्तिः शक्या तेनचतुर्दंडवेधस्यैवचतुर्थदंडेघटिकादशमीसत्वेहिवेधस्त दर्थः द्विघटिकादौतदयोगाच्च यच्चमतं कियताऽरुणोदयइत्यपेक्षायांसार्द्धघटिकातोन्यूनदशमीसत्वेनदोषइतियत्त त्तुच्छं द्विदंडादावपितदापत्तेः दशमीशेषसंयुक्तोयदिस्यादरुणोदयःनैवोपोष्यंवैष्णवेनतद्दिनैकादशीव्रतमिति गारुडभ विष्येचयोगमात्रनिषेधात् नारदीयेपि लववेधपिराजेंद्रदशम्येकादशींत्यजेत् सुरायाबिंदुनास्पृष्टंगंगाभइवनिर्मलं स्कां देपि कलाकाष्ठादिगत्यैवदृश्यतेदशमीविभो एकादश्यांनकर्तव्यंव्रतंराजन्कथंचनेति माधवोप्याहसोयंकलादिवेधोऽरु णोदयवेधेसूर्योदयवेधेचसमानइतिनिगमोपि सर्वप्रकारवेधोयमुपवासस्यदूषकइति अतएवमाधवेनारुणोदयार्द्धदंडेऽ ल्पदशमीस्पर्शेसंपृक्ता कृत्स्नघटिकायोगेसंदिग्धामुहूर्तव्याप्तौसंयुक्ता उदयेसंकीर्णाप्युक्ता अरुणोदयवेलायांदशमीय दिसंयुता संपृक्तैकादशींतांतुमोहिन्यैदत्तवान्प्रभुरितिगोभिलाद्युक्तेः पूर्वोक्तगारुडादेश्चसामान्यतोविशेषतश्चारुणोदय वेधोनिषिद्धःयत्त्वष्टमभागोरुणोदयइति हेमाद्रिणोक्तं यच्चमहत्तरारात्रिरितितत्परंस्वयमेवदूषितं अतेप्युक्तंवेधतारतम्यं चदेशतारतम्यादुपपद्यतइति दोषतारतम्यंचप्रायश्चित्ततारतम्यादवगम्यतेतच्चोक्तंहेमाद्रौस्मृत्यंतरेअज्ञानाद्यदिवामो. हात्कुर्वन्नेकादशींनरःदशमीशेषसंयुक्तांप्रायश्चित्तमिदंचरेत् कृच्छ्रपादंनरश्चीर्त्वागांचदद्यात्सवत्सकांसुवर्णस्याढकंदद्यं तिलद्रोणसमन्वितं विधानांतरं तत्रैव ब्राह्मणान्भोज्यत्रिंशच्चगांचदद्यात्सवत्सकां धरणस्यार्द्धकंदद्यंतिलहोममथापिवेति अत्रवेधतारतम्याद्व्यवस्थेतिहेमाद्रिः वैष्णवैःशंकरस्वामिनार्जितैस्तार्जितैस्तत्कालेपुराणवाक्यालाभादेवस्वप्नमतप्रवृत्ते रंकितैः पश्चात्पुराणेषुतत्तत्स्थलेपुस्वत्वोपयोगीनिवाक्यानिप्रकल्प्यस्वेच्छाचारीयमतंक्षिप्तं तत्रत्यान्येववाक्यानीति ज्ञायते सुवर्णाढकदानस्यैकादश्यर्थंराज्ञोप्यसमर्थत्वात् एतत्करणेभीत्युत्पादकत्वाच्चाऽसत्निशाप्रांतेसत्यपिदोषाधि क्यार्थमेव तस्माच्चचतुर्घटिकात्मकएवारुणोदयइतिसिद्धंतेनपट्पंचाशद्दंडानंतरंदशमीप्रवेशेअरुणोदयवेधउक्तोभवति

अंत्योपितत्रैवकण्वेनोक्तः उदये।परिविद्धातुदशम्येकादशी।यदि दानवेभ्यःप्रीणनार्थंदत्तवान्पाकशासनइति स्मृत्यंतरे
पि दशम्याःप्रांतमादाययदोदेतिदिवाकरः तेनस्पृष्टंहरिदिनंदत्तंजंभासुरायत्विति तत्रारुणोदयवेधोवैष्णवविषयः
तद्वाक्येषुवैष्णवग्रहणात् तत्स्वरूपंतुमाधवीयेस्कांदे वैष्णवलक्षणमुक्तंप्राक् केचित्तुदशम्यानवमीवेधमपित्यजंतितत्र
मूलंमृग्यं उदयवेधस्तुपरिशेषाद्वैष्णवगोचरः अरुणोदयवेधस्तुवेधः सूर्योदयेतथा उक्तोद्वैदशमीवेधौवैष्णवस्मार्त्त
योःक्रमात्इत्यादिवाक्यैः स्मार्त्तस्यविधेरेवस्मृत्यंतरवाक्यानांपूर्वोक्तानांपूर्वानुमितिसिद्धिरिति हेमाद्रिस्तु केषांचिद
र्धरात्रेपिदशमीवेधमाह अर्धरात्रेतुकेषांचिद्दशम्यावेधइष्यते कपालवेधइत्याहुराचार्य्यायेहरिप्रियाः नतन्ममम‍ते
यस्मात्त्रियामारात्रिरिष्यते इतिब्रह्मवैवर्त्तात् अस्यार्थः अनद्यतनेऽतीतेलङित्यत्रातीतायारात्रेःपश्चिमयामद्वयभागा
मिन्यारात्रेः पूर्वयामद्वयंदिवसश्चसकलः एषोऽद्यतनः इत्युक्तंमहाभाष्ये वर्तमानःकालः एकादश्यहोरात्रेउपोष्यः
तन्मध्येदशमीप्रवेशविद्धासात्याज्या अतएवहेमाद्रौ दशम्याःसंगदोषेणअर्धरात्रात्परेणतु वर्जयेच्चतुरोयामान्दिव
सस्यउपोषणइति स्वमतेतुरात्रेस्त्रियामत्वात् प्रहरत्रयपूर्वशेषः तेनचतुर्थप्रहरएववेधोयुक्तः सोप्यरुणोदयएव
सूर्योदयंविनानैवस्नानदानादिकक्रमइति मार्कंडेयपुराणवचनात् प्रत्यूषोहर्मुखंकल्यं इतिकोशादरुणोदयमारभ्य
सूर्यांशुप्रवृत्तेस्तत्रैवनिषेधः तेनमतभेदाद्व्यवस्थेतिकेचित् कैमुत्यन्यायेनारुणोदयवेधस्यैवस्तुतिरितितुमाधवःयत्तुदि
कूपंचदशभिस्तथेतिवेधः सउपवासातिरिक्तविषयइतिमाधवः सर्वप्रकारवेधोयमुपवासस्यदूषकः सार्द्धसप्तमुहू
र्तस्तुयोगोयंबाधतेव्रतमितिनिगमादित्यलं माधवमतेवैष्णवैररुणोदयविद्धात्याज्यायदात्वेकादश्येवशुद्धाद्वादशीवो
भयंवातदापरोपोष्या एकादशीद्वादशीवाधिकाचेत्त्यज्यतादिनं पूर्वंग्राह्यंतूत्तरंस्यादितिवैष्णवनिर्णयइतिमाधवो
क्तेः स्मार्त्तैस्तुसूर्योदयविद्धात्याज्या यदात्वेकादशीशुद्धासतीवर्धतेद्वादशीचसमान्यूनावातदागृहस्थैः पूर्वायतिभि

रुत्तराकार्य्या प्रथमेहनिसंपूर्णाव्याप्याहोरात्रसंयुता द्वादश्याचतथातातदृश्यतेपुनरेवच पूर्वाकार्य्यागृहस्थैश्चयति भिश्चोत्तराविभो इतिस्कांदोक्तेः वर्द्धमानोप्याह उभयवृद्धौतुशुद्धायांवासर्वेषांपरैव संपूर्णैकादशीयत्रप्रभातेपुनरेव सा सर्वैरेवोत्तराकार्य्यापरतोद्वादशीयदीति नारदोक्तेः द्वादशीमात्रवृद्धौशुद्धायांपरैव नचेदेकादशीविष्णोर्द्वादशीपर तःस्थिता उपोष्यैकादशीतत्रयदीच्छेत्परमंपदमिति नारदोक्तेः द्वादशीमात्रवृद्धौतुशुद्धाविद्देव्यवस्थिते शुद्धापूर्वो त्तराविद्धास्मार्त्तनिर्णयइद्दशइति माधवोक्तेः मदनरत्नेप्येवं यत्तु विद्धाप्यविद्धाविज्ञेयापरतोद्वादशीनचेत् अविद्धापि चविद्धास्यात्परतोद्वादशीयदीति हेमाद्रौपाद्मवचनं तदेकादश्यावृद्धौज्ञेयं तदुक्तंमाधवेन एकादशीद्वादशीचेत्युभेय वर्द्धतेयदा तदापूर्वदिनंत्याज्यंस्मार्त्तैर्ग्राह्यंपरंदिनमिति विद्धैकादश्यांद्वादशीमात्रवृद्धौच सर्वेषांपरैव तत्रचैकाद शीमात्रवृद्धौगृहिणः पूर्वायतेरुत्तरेतिपूर्वोक्तपाद्मोक्तेः एकादशीविवृद्धाचेच्छुक्लेकृष्णेविशेषतः उत्तरांतुयतिःकुर्य्यात्पू र्वामुपावसेद्गृहीतिप्रचेतसोक्तेः एतच्छुद्धाविशुद्धातुल्यमितिमाधवः त्रयोदश्यांनोपलभ्येद्द्वादशीयदिकिंचन उपोष्यै कादशीतत्रदशमीमिश्रितापिचेतिस्कांदात् अविद्धानिनिषिद्धेश्चेन्नलभंतेदिनानितु मुहूर्तैःपंचभिर्विद्धाग्राह्याचैका दशीतिथिरिति ऋष्यशृंगोक्तेः मुहूर्तपंचकमरुणोदयमारभ्येज्ञेयं अन्यथोत्तरोह्निएकादश्यभावासंभवात् तथाचस एव सर्वत्रैकादशीकार्य्याद्वादशीमिश्रितानरैः प्रातर्भवतुवामाभूद्यस्मान्नित्यमुपोषणमिति यद्यपिहेमाद्रिणाशुद्धसमा शुद्धन्यूनाधिकद्वादशिकाचेत् सर्वेषांपरैवेत्युक्तं तदपिवैष्णवविषयं स्मार्त्तानांपूर्वेवेत्यविरोधः हेमाद्रिमतेत्युच्यते तत्र शुद्धाविद्धाद्वयानंदात्रिधान्यूनसमाधिकैः षट्प्रकारापुनस्त्रेधाद्वादश्यूनसमाधिकैरित्यष्टादशैकादशीभेदाः तत्रशुद्धाधिका न्यूनद्वादशिकाशुद्धाधिकासमद्वादशिकाचसकामैः पूर्वानिष्कामैरुत्तराकार्य्या प्रथमेहनिसंपूर्णेतिपूर्वोक्तस्कांदात् ऊ नद्वादशिकायांतु विष्णुप्रीतिकामैरुपवासद्वयंकार्य्यं संपूर्णैकादशीयत्रप्रभातेपुनरेचसा लुप्यतेद्वादशीयस्मिन्नुपवासः

कथंभवेत् उपोष्येद्वेतिथीतत्रविष्णुप्रीणनतत्परैरिति वृद्धवसिष्ठोक्तेः शुद्धन्यूनाशुद्धसमाविद्धसमावाधिकद्वादशीकाचेत् सर्वेषांपरैवेति हेमाद्रिः मदनरत्नेतु शुद्धाधिकापरासंपूर्णैकादशीयत्रेतिपूर्वोक्तेः अन्यापूर्वा शुद्धायदासमाहीनाए कादशीमुपवसेन्नशुद्धांवैष्णवीमपीतिस्कांदात् . शुद्धाएकादशीउत्तराद्वादशीनचैवैकादशीविष्णाविति नारदोक्तेश्च यत्तुअविद्धापिचविद्धास्यादितिपाद्मे तच्छुद्धाधिकपरं यत्तु संपूर्णैकादशीत्याज्यापरतोद्वादशीयदि उपोष्याद्वादशी शुद्धाद्वादश्यामेवपारणमित्यादि तद्वैष्णवपरं स्मार्त्तानांतुपूर्वैवेत्युक्तं विद्धन्यूनासमद्वादशिकातुमुमुक्षूणांपरा अन्येषांपूर्वा पुत्रवतोपिपूर्वैतिमदनरत्ने विद्धसमासमद्वादशिकोनद्वादशीकातु मुमुक्षुभिःपराऽन्यैःपूर्वाकार्या दशमीमिश्रितापूर्वाद्वादशीयदिलुप्यते शुद्धैवद्वादशीराजन्नुपोष्यामोक्षकांक्षिभिरितिव्यासोक्तेः मोक्षकांक्षिग्रहणादन्येषांपूर्वैव तत्रैकादशीकार्य्याद्वादशीमिश्रितानरैः प्रातर्भवतुवामावायतोनित्यमुपोषणमितिपद्मोक्तेः विद्धाधिकासमद्वादशिकासर्वेषांपरैव पारणाहेनलभ्येतद्वादशीकलयापिचेत् तदार्नीदशमीविद्धाप्युपोष्यैकादशीतिथिरिति ऋष्यशृंगोक्तेश्च माधवमतेतु अत्रगृहिणांपूर्वायतेरुत्तरा विद्धाधिकान्यूनद्वादशिका मोक्षपापक्षयविष्णुप्रीतिकामैः पराकार्य्या गृहस्थेनतुनक्तंकार्य्यं एकादशीद्वादशीचरात्रिशेषेत्रयोदशी उपवासंनकुर्वीतपुत्रपौत्रसमन्वितइति कौर्म्ये दिनक्षयेउपवासनिषेधात् दशम्येकादशीविद्धाद्वादशीचक्षयंगता क्षीणासाद्वादशीज्ञेयानक्तंतुगृहिणःस्मृतामितिवृद्धशातातपोक्तेश्च गृहिणःपूर्वत्रोपवासःएकादश्याःशुद्धन्यूनत्वेशुद्धसमत्वेवाद्वादश्यान्यूनसमत्वयोरेकादश्यामुपवासःयानितु दशम्यनुगताहंतिद्वादशद्वादशीफलं धर्मापत्यधनायूंषित्रयोदश्यांतुपारणमिति कौर्म्यादीनांदशमीवेधत्रयोदशीपारणयोर्निषेधकानिविहिताभिन्नपराणि अत्रमूलवचनानि तद्व्यवस्थाचाकरेज्ञेयायत्तुकालेहेमाद्रौ वहुवाक्यविरोधेनसंदेहोजायतेयदा द्वादशीतुतदाग्राह्यात्रयोदश्यांचपारणमितिमार्कंडेयोक्तेः संदिग्धेषुचवाक्येषुद्वादशींसमुपोषयेत् तथा

विवादेपुचसर्वेपुद्वादश्यांसमुपोषणं पारणंतुत्रयोदश्यामाज्ञेयंमामकीमुनेरितिपाद्मोक्तेश्च वेधसंदेहेज्योतिर्विदांविप्रति
पत्तौचापराकार्य्येत्युक्तं तद्वैष्णवविषयमित्यलंवहुप्रपंचितेन अत्रोपयुक्तंकिंचिदुच्यते तत्रदशम्येकादशीयोगेदशमी
मध्यएवभोजनंकार्य्यमेकादश्यांनभुंजीतेतितस्याएवनिषिद्धत्वात् निषेधस्तुनिवृत्त्यात्मककालमात्रमपेक्षत इति देव
लोक्तेश्च केचित्तु एकादशीव्रतांगत्वेनपूर्वेद्युरेकभक्तविधानाद्विधिस्पृष्टेचनिषेधानवकाशान्नकाम्यव्रतांगेभोजननिषेधः
प्रवर्त्तते तेनैकादशीमध्येपूर्वदिनमित्याहुः अत्राधिकारी माधवीयेकात्यायनेनोक्तः अष्टवर्षाधिकोमर्त्योह्यशीतिन्यूनव
त्सरः एकादश्यामुपवसेत्पक्षयोरुभयोरपीतिभविष्ये ब्रह्मचारीचनारीचशुक्लामेवसदागृहीति यत्तुविष्णुः पत्यौजीवतियां
नारीउपोष्यव्रतमाचरेत् आयुष्यंहरतेभर्त्तुर्नरकंचैवगच्छति इतिभर्त्रननुज्ञाविषयमितिप्रागुक्तं उपवाससामर्थ्येतु मा
र्कंडेयकौर्म्मयोः एकभक्तेननक्तेनतथैवायाचितेनच उपवासेनदानेननर्निर्द्वादशिकोभवेत् अत्रैकभक्तयोर्मध्यउपवा
सव्रतंचरेदिति एकभक्तादिषु उपवासशब्दस्तद्धर्मातिदेशार्थः तेनतत्प्रयुक्ताः सर्वेधर्माः तत्स्थानापन्नेनक्तादावपिभ
वंति संकल्पनेत्रचैकभक्तादिपदेनोहः कार्य्यइतिमदनरत्ने तथाऽसामर्थ्येप्रतिनिधिनाकारयेदितिप्रागुक्तं व्रताकरणे
प्रायश्चित्तमाह माधवीयेकात्यायनः अर्कपर्वद्वयेरात्रौचतुर्दश्यष्टमीषुवा एकादश्यामहोरात्रेभुक्त्वाचांद्रायणंचरेदिति अथ
काम्यव्रतविधिः लघुनारदीये दशम्यादिदिनेयस्तुत्रिदिनंपरिवर्जयेत् गंधतांवूलपुष्पादिस्त्रीसंभोगंनहायशाः तत्र दश
म्याविधिः कौर्म्मे कांस्यमांसमसूरांश्चचणकान्कोरदूषकान् शाकंमधुपरान्नंचत्यजेदुपवसन्स्त्रियम् तथा शाकंमांसं
मसूरांश्चपुनर्भोजनमैथुनं द्यूतमत्यंवुपानंचदशम्यांवैष्णवस्त्यजेत् मदनरत्ननारदीये अक्षारलवणाः सर्वेहविष्यान्न
निषेविणः अवनीतलपशयना स्त्रियाः संगमवर्जिताः अथव्रतघ्नान्याह हेमाद्रौदेवलः असकृज्जलपानाच्चसकृत्तांवूल
भक्षणात् उपवासः प्रणश्येतदिवास्वापाच्चमैथुनात् अत्राशक्तौमदनरत्नेदेवलः अत्ययेचांवुपानेननोपवासः प्रणश्यति

अत्यये प्राणात्ययकष्टे वर्ज्याण्याहविष्णुः गात्राभ्यंगंशिरोभ्यंगंतांबूलंचानुलेपनं व्रतस्थोवर्जयेत्सर्वंयच्चान्यत्र
निराकृतं प्रायश्चित्तमुक्तंनिर्णयामृतसंग्रहे स्तेनहिंसकयोःसख्यंकृत्वास्तैन्यंचाहिंसनं प्रायश्चित्तंव्रतेकुर्याज्जपेन्नाम
शतत्रयं मिथ्यावादेदिवास्वापेबहुशोंबुनिषेवणे अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिः ओंनमोनारायणायेतिमंत्रोष्टाक्ष
रईरितः तत्रैवपैठीनसिः तांबूलचर्वणेस्त्रीसंभोगेमांसानिषेवणे व्रतभंगोनचेत्कुर्यात्कृष्णावह्नतवर्जनमिति संभोगेऋतु
कालादन्यत्र रेतःसेकात्मसंभोगंमतेनान्नक्षयःस्मृतइति दंतकाष्ठवर्जनंहेमाद्रौवासिष्ठः उपवासेतथाश्राद्धेनकुर्याद्दं
तधावनं दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमिति काष्ठग्रहणान्मृल्लोष्ठकाद्यनिषेधइतिहेमाद्रिः विष्णुरहस्ये श्रा
द्धोपवासदिवसेखादित्वादंतधावनं गायत्र्याशतसंपूतमंबुप्राश्यविशुध्यतीति निर्णयामृतेव्यासः वर्जयेत्पारणेमांसं
व्रताहेप्यौषधंसदेति एकादश्यांश्राद्धप्राप्तौकात्यायनः उपवासोयदानित्यःश्राद्धंनैमित्तिकंभवेत् उपवासंतदाकुर्यादा
घ्रायपितृसेवितं मातापित्रोःक्षयेप्राप्तेभवेदेकादशीयदि अभ्यर्च्यपितृदेवांश्चआजिघ्रेत्पितृसेवितामिति हेमाद्या
दिसर्वनिबंधेष्वप्येवम् एतेनैकादशीनिमित्तकंश्राद्धंद्वादश्यांकार्यमितिवदंतःपरास्ताः किंचमहालये सपक्षःसकलः
पूज्यः श्राद्धषोडशकंप्रतीति श्रुतं षोडशकत्वंचैकादश्यांचमन्वादिश्राद्धंच क्षयाहापरिज्ञानेचतत्पक्षैकादश्यां
विहितंश्राद्धंबाधितमेवस्यात् यदपिस्मृतिचंद्रिकायांपठंति अन्नाश्रितानिपापानितद्भोक्तुर्दातुरेववा मज्जंतिपित
रस्तस्यनरकेशाश्वतीःसमाः इतितस्यापिरागप्राप्तभुजिगोचरस्य वैधेश्राद्धंकृतवतांमहत्साहसमित्यलं एकादश्यांतु
यःपित्र्येदिनेचश्राद्धनिश्चयात् जलपिंडंविनादानंकृत्वानरकमाव्रजेदिति . लघुनारदीयेएकादश्यांश्राद्धनिषेधः समा
तापितृभिन्नविषयः पूर्ववाक्येतदग्रहणात् यद्वाश्राद्धनिश्चयः श्राद्धेप्रतिग्रहः अथव्रतघ्नान्याह मदनरत्नेदेवलः स
र्वभूतभयंव्याधिःप्रमादोगुरुशासनं हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधं नारदीये अनुकल्पोनृणांप्रोक्तःक्षीणानांव

स्वाणिनि फलंमूलंपयस्तोयमुपभोज्यंभवेच्छुभे नत्वेवभोजनंकैश्चिदेकादश्यांबुधैःस्मृतं अस्यापवादः शयनेचमदु
त्थानेमत्पार्श्वपरिवर्त्तने. नरोमूलफलाहारीहृदिशल्यंममार्पयेत् इदंचातिसंकष्टविषयं व्रतत्वविरोधिनोनिर्णयामृते
सर्वव्रतेषुज्ञेयाः तत्रैकादश्यांसंकल्पः गृहीत्वोदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृह्णीयाद्यद्वावाचाभिधारयेत्
इति माधवीयेवराहोक्तेःमंत्रस्तुविष्णूक्तः एकादश्यांनिराहारःस्थित्वाहमपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्यु
तेति शैवादीनांतुसौरागमे सावित्र्याप्यथवानाम्नासंकल्पंतुसमाचरेत् शिवादीनांगायत्र्योयजुर्वेदेप्रसिद्धाःवाराहे इ
त्युच्चार्य्यंततोविद्वान्पुष्पांजलिमथार्पयेत् ततस्तुजलंपिबेत् अष्टाक्षरेणमंत्रेणत्रिर्जपेदभिमंत्रितं उपवासफलप्रेप्सुः
पिबेत्पात्रगतंजलमिति कात्यायनेनोक्तेः मध्यरात्रेउदयेवादशमीवेधेरात्रौसंकल्पइतिमाधवः दशम्याःसंगदोषेण
अर्धरात्रपरेणतु वर्जयेच्चतुरोयामान्संकल्पार्चनयोःसदा विद्वोपवासेनत्वंतद्दिनंत्यक्त्वासमाहितः रात्रौसंपूजयेद्विष्णुं
संकल्पंचतदाभवेत् इतिनारदीयोक्तेः तत्रैवपूजामभिधाय देवस्यपुरतःकुर्य्याज्जागरंनियतोव्रती द्वादश्यांनिवेदनसं
कल्पउक्तः कात्यायनेन अज्ञानतिमिरांधस्यव्रतेनानेनकेशव प्रसादसंमुखोदेवज्ञानदृष्टिप्रदोभवेतिनारदीये ब्राह्म
णान्भोजयेच्छक्त्यादद्याद्वैदक्षिणांततः स्कांदे कृत्वाचैवोपवासंतुयोश्नातिद्वादशीदिने नैवेद्यंतुलसीमिश्रंहत्याकोटि
विनाशनं द्वादश्यांचवर्ज्यान्याहबृहस्पतिः दिवास्वापंपरान्नंचपुनर्भोजनमैथुनं क्षौद्रंकांस्यामिषंतैलंद्वादश्यामष्टवर्जये
त् हेमाद्रौब्रह्मांडपुराणे पुनर्भोजनमध्यायोभारआयासमैथुने उपवासफलंहन्युर्दिवानिद्राचपंचमी स्कांदे परान्नं
कांस्यतांबूलंलोभंवितथभाषणंवर्जयेदितिशेषः विष्णुधर्मेषु असंभाष्यान्हिसंभाष्यतुलस्यतसिकादलं आमलक्याः
फलंवापिपारणेप्राश्यशुध्यति बृहन्नारदीये रजस्वलांचचंडालंमहापातकिनंतथा सूतिकांपतितंचैवउच्छिष्टंरजका
दिकं व्रतादिमध्येशृणुयाद्यद्येषांध्वनिमुत्तमः अष्टोत्तरसहस्रंतुजपेद्वावेदमातरं एतद्व्रतंसूतकेपि कार्य्यम् सूतकेमृतके

केवापिनत्याज्यंद्वादशीव्रतमिति तत्रत्यक्तंदानादिसूतकांतेकार्य्यं सूतकांतेनरःस्नात्वापूजयित्वाजनार्दनं दानंदत्त्वा विधानेनव्रतस्यफलमश्नुत इतिमात्स्योक्तेः एतद्रजोदर्शनेपिकार्य्यं एकादश्यांनभुंजीतनारीदृष्टेरजस्यपीतिपुलस्त्योक्तेः अथयदाद्वादश्यांश्रवणर्क्षंतदाशुद्धामप्येकादशींत्यक्त्वातत्रैवोपवासःकार्य्यः शुक्लावायदिवाकृष्णाद्वादशीश्रवणान्विता तयोरेवोपवासश्चत्रयोदश्यांचपारणमितिनारदीयोक्तेः एतेचनियमाःकाम्यव्रतेनियताःनित्यव्रतेसतिसंभवेकार्य्याः शक्तिमांस्तुपुनःकुर्य्यान्नियमंसविशेषणमितिकात्यायनोक्तेः अशक्तौतुमाधवीयेब्रह्मवैवर्त्ते इतिविज्ञायकुर्वीतावश्यमेकादशीव्रतं विशेषनियमाशक्तोहोरात्रोपोषितोभवेत् अथप्रसंगादष्टौमहाद्वादश्यः तत्रशुद्धाधिकैकादशीयुताद्वादशीउन्मीलनीसंज्ञा ॥ १ ॥ द्वादश्येवशुद्धाधिकावर्द्धतेचेत् सावंजुली ॥ २ ॥ वासरत्रयस्पर्शिनीत्रिस्पृशा ॥ ३ ॥ अग्रेपर्वणःसंपूर्णाधिकत्वेपक्षवर्द्धिनी ॥ ४ ॥ पुष्यर्क्षयुताजया ॥ ५ ॥ श्रवणयुताविजया ॥ ६ ॥ पुनर्वसुयुतापापनाशिनी ॥ ७ ॥ फाल्गुनशुक्लाआमलकी ॥ ८ ॥ सैवआमर्दकी अथद्वादशद्वादश्योजयंतीसंज्ञकाः ॥ १२ ॥ ताश्चसर्वाद्वादशमासेपुक्रमशोवक्ष्यंते तासामनुष्ठानविशेषोपितत्रैवोच्यते एताभ्यश्चान्येपिद्वादशीभेदाविशेषास्तेपिकृत्यविस्तारएववक्ष्यंते एताःसर्वाअपिपापक्षयमुक्तिकामोयथासंभवमुपवसेत् अत्रमूलंहेमाद्रौज्ञेयं एकादशीद्वादश्योरेकत्वेचोपवासः पार्थक्येतुशक्तस्योपवासद्वयं तथा एकादशीमुपोष्यैवद्वादशींसमुपोषयेत् इतिविष्णुरहस्यात् अशक्तौतुद्वादश्यामेव एकामेकादशींस्तुत्वाविष्णुंचसमुपोषयेत् पूर्ववासरजंपुण्यंसर्वंप्राप्नोत्यसंशयमिति तत्रैवोक्तेः यदात्वल्पाद्वादशीतदोक्तंमात्स्ये यदाभवतिस्वल्पापिद्वादशीपारणादिने उषःकालद्वयंकुर्य्यात्प्रातर्मध्याह्निकंतदा नारदीये अल्पायामपिराजेंद्रद्वादश्यामरुणोदये स्नानार्चनक्रियाकार्य्यादानहोमादिसंयुताइति संकटेतुमाधवीयेदेवलः संकटेविषमेप्राप्तेद्वादश्यांपारयेत्कथं अद्भिस्तुपारणंकुर्य्यात्पुनर्भुक्तेनदोषकृदिति संकटे त्रयोदशीश्राद्धप्रयोगादौ स्व

केचिदाहुः अपकर्षवाक्यानिन्यूनाधिकाहिताग्निविषयाणि अग्निहोत्रादीनां श्रौतत्वेनापकर्षायोगादिति द्वादश्यांचप्र
थमपादमतिक्रम्यपारणंकार्य्यं द्वादश्याःप्रथमःपादोहरिवासरसंज्ञितः तमतिक्रम्यकुर्वीतपारणंविष्णुतत्परइति नि
र्णयामृते मदनरत्नेच विष्णुधर्मोक्तेः अत्रकेचित्संगदंते यदाभूयसीद्वादशीतदापिमुहूर्त्तत्रयेपारणंकार्य्यम् सर्वेषामुप
वासानांप्रातरेवाहिपारणमितिवचनादितिनिर्णयसिंधौ तत्रैवोक्तं वस्तुतस्तुवहूनांकर्मकालानामपिनाकारणंवाधापन्ने
प्रागुक्तवचनैश्चाल्पद्वादश्यामेवापकर्षविधानादपराह्णएवकार्यमिति प्रातःश्रंदस्तुसायंप्रातर्द्विजातीनामशनंश्रुतिचो
दितमितिवचनादपराह्णवाच्यप्युपपन्नः नचवाक्यवैयर्थ्यंपुनर्भोजनात्सायंपारणनिवृत्त्यर्थत्वात्तस्येत्याहुः ऽमादेन
एकादश्युपवासातिक्रमेऽपराह्णे वाराहे एकादशीविस्तुताचेत्परतोद्वादशीस्थिता उपोष्याद्वादशीतत्रयदीच्छेत्परमं
पदमिति अत्राविरोधिनोनियमाः सर्वव्रतेषुबोद्धव्याः अन्येचनवरात्रेवक्ष्यते इतिदिक् अथैकादश्यांसिद्धविरुद्धा
दिकंलिख्यते एकादशीशुक्रवारेणसिद्धा यदुक्तं शुक्रेणप्रतिपत्षष्ठीएकादश्यपिसिद्धिदाइति चंद्रचित्रोत्तराषाढापू
र्वापाढाविशाखिका एकादशीत्रयोदश्योर्नष्टयोगाः प्रकीर्त्तिताइति एकादश्यांनर्त्तनादिकार्य्यं नंदासुनर्त्तनंक्षेममि
त्युक्तमेव एकादश्यांशणपुष्पाणिनखादेत् तत्रोक्तमेव नखचर्मातिलानिति सर्वास्वेकादशीषुतिथिपत्वेनशिवःपूज्यः
तदुक्तं एकादश्यांशिवस्यचेति स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सहृंद
संरक्षक· धर्माधर्मविभागकृद्रघुपतेःपादांवुजाचीरतोज्जीव्यात्पुत्रकलत्रमित्रसहितःसंपालयन्क्ष्मांचिरम् १ रण
वीरसिंहभूपशकारितकृत्यसागरे एकादश्यामभूदत्रपंचमोरत्नसंग्रहः २ अथद्वादशीसामान्यनिर्णयः तत्रादौकृ
ष्णशुक्लद्वादशीध्यानम् द्वादशीगरुडारूढामेघवर्णाचपात्रिणी द्वादशीशुक्लवस्त्रेयंनीलकुंतलभूषितेति द्वादशीतूपवा
सादिषुपक्षद्वयेप्येकादशीयुतैवग्राह्या रुद्रेणद्वादशीयुक्तेतियुग्मप्राधान्यात् द्वादशीतुप्रकर्त्तव्याएकादश्यायुताप्रभो

सदाकार्य्यातुविद्वद्भिर्विष्णुभक्तैश्चमानवैरितिस्कांदवचनाच्च दानार्चनादिविशेषकृत्येपूर्वेति इतिद्वादशीसामान्य
निर्णयः अथसिद्धविरुद्धादिकंलिख्यते द्वादशीबुधवारेणयुक्तासिद्धा तच्चोक्तं बुधवारेद्वितीयाचसप्तमीद्वादशीतिच
रविवारेणक्रकचाख्योयोगोविरुद्धोभवति तदुक्तम् सूर्य्येविशाखाभरणीद्वादशीचचतुर्दशी मघानुराधाज्येष्ठाचवर्ज
नीयाप्रयत्नतइति द्वादश्यांव्रतपौष्टिकादिकार्य्यं तच्चोक्तं व्रतपौष्टिकेद्वितीयाद्वादश्योरिति अत्रविल्वफलंनभक्षयेत्
नखचर्मतिलानिचेत्यादि पूर्वमेवोक्तत्वात् तुलामकरस्थेसूर्य्येद्वादशीदग्धाभवति द्वादश्यांयोगिनीसांमुख्यान्नैर्ऋत्यां
दिशियात्रानकार्य्या सर्वास्वपिद्वादशीषुतिथिपत्वेनविष्णुरर्चनीयः इतिद्वादशीसामान्यनिर्णयप्रकरणम् अथत्र
योदशीसामान्यनिर्णयः तत्रकृष्णशुक्लत्रयोदशीध्यानं चापबाणधरागौरीमकरस्थात्रयोदशीति अशोककलिका
बाणचापपात्रात्रयोदशी मंचासनस्थिताश्यामाहरिद्रस्त्रामदालसा गदापात्रधरागौरीनिधिस्थास्यात्त्रयोदशीति शु
क्लात्रयोदशी सर्वमतेपूर्वाग्राह्या त्रयोदशीप्रकर्तव्याद्वादशीसहितामुने भूतविद्धानकर्तव्यादर्शःपूर्णाकथंचन वर्ज
नीयामुनिश्रेष्ठसावित्रीव्रतउच्यतइति ब्रह्मवैवर्त्ते पूर्वविद्धाविधानादुत्तरविद्धानिषेधाच्च त्रयोदशीकर्तव्यायाभवेदाप
राह्णिकीति स्कांदाच्च आपराह्णिकीपूर्वविद्धेत्यर्थः पंचमीसप्तमीचैवदशमीचत्रयोदशी ; प्रतिपन्नवमीचैवकर्तव्यासंमु
खीतिथिरितिपैठीनसिवचनाच्च एतानिशुक्लत्रयोदशीविषयाणि यद्यप्यत्रशुक्लपक्षबोधोनास्ति तथापिकृष्णत्रयोद
श्याःपरविद्धतायावाचनिकत्वात् विद्धतायाःशुक्लपक्षविषयत्वंपरिशिष्यते कृष्णत्रयोदश्याः परविद्धत्वमुक्तं निगमे
षष्ठ्यष्टमीअमावास्याकृष्णपक्षेत्रयोदशी एताःपरयुताःपूज्याःपराःपूर्वयुतास्तथेति तस्मात्तुशुक्लात्रयोदशीपूर्वयुताकृ
ष्णात्रयोदशीपरयुतेतिसिद्धं शुक्लत्रयोदशीपूर्वापराकृष्णात्रयोदशीतिमाधवोक्तेश्च त्रयोदशीतिथिःपूर्वासितपश्चादि
तिदीपिकोक्तेश्च यदातुकृष्णपक्षेपरविद्धानलभ्यते तदापूर्वविद्धाग्राह्या तदाहवसिष्ठः एकादशीतृतीयाचषष्ठीचैव

त्रयोदशी पूर्वविद्धातुकर्त्तव्यायदिनस्यात्परेहनीति उपवासेप्ययमेवानिर्णयः एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी त्रयोदशीअमावास्याउपोष्याःस्युःपरान्विताः द्वितीयापंचमीवेधाद्दशमीचत्रयोदशी चतुर्दशीचोपवासेहन्युःपूर्वोत्तरे तिथी इतिवृद्धवसिष्ठवचनयोर्मिथोविरोधेपूर्वोक्तनिगमवचनेनक्रमेणकृष्णशुक्लत्रयोदशीविपयत्वेनव्यवस्थापनात् इतिसामान्यत्रयोदशीनिर्णयः अथसिद्धविरुद्धादिकंलिख्यते त्रयोदशीभौमवारेणसिद्धा तदुक्तं भौमेपष्ठीतृतीयास्याद्दशमीचत्रयोदशीति सोमेनतुविरुद्धा त्रयोदश्यांक्षत्रियादिभिर्मलापहस्नानंनकार्य्यम् तदुक्तं स्नातुर्जनस्य दशमीतनयांस्त्रयोदशीत्यादिमलापहस्नानंनिषिध्यतइत्याद्युक्तमेव त्रयोदश्यांदक्षिणदिशि योगिनीसांमुख्याद्यात्रा नकार्या क्रूरग्रहेकुंभस्थितेत्रयोदशीशुभकार्य्येषुवर्ज्या त्रयोदश्यांवृंताकानिनभक्षयेत् ॥

इतिश्रीमहाराजरणवीरसिंहरत्नाकरेत्रयोदशीतिथिसामान्यनिर्णयप्रकरणम् ॥

अथचतुर्दशीनिर्णीयते तत्रकृष्णचतुर्दशीध्यानम् अब्जस्थापाटलाभासाफलपात्रसुधामृता नीलकंठींद्रगोपाभलोचनेयंचतुर्दशी अथशुक्ला खड्गभल्लधरानीलकुन्तलाशुभ्रभूषणा द्विभुजातुरगारूढाकृष्णवर्णाचतुर्दशी चतुर्दशीतुशुक्लापराग्राह्या चतुर्दश्याचपूर्णिमेति युग्मवाक्यात् एकादश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी अमावास्यातृतीयाचउपोष्याःस्युःपरान्विता इतिबृहस्पतिवाक्याच्च शुक्लाचतुर्दशीग्राह्यापरविद्धासदाव्रत इतिव्यासवाक्याच्च कृष्णचतुर्दशी पूर्वविद्धैवकर्त्तव्या पूर्वविद्धैवकर्त्तव्यापरविद्धानकुत्रचित् उपवासादिकार्येषुएषधर्मःसनातन इत्यापस्तंबवचनात् मदनरत्नादिषुतु उपवासेतुशुक्लकृष्णेपरएवग्राह्ये तदाहवसिष्ठः एकादश्यष्टमीषष्ठीउभेपक्षेचतुर्दशी अमावास्यातृतीयाचउपोष्याःस्युःपरान्विताइत्युक्तं हेमाद्रौतु यदातुशुक्लकृष्णचतुर्दश्यौपूर्वदिनापराह्णव्यापिन्यौ तदात्रयोदशीयुतेएवग्राह्ये तथाचस्कंदपुराणे चतुर्दशीतुकर्त्तव्यात्रयोदश्यायुताविभो ममभक्तैर्महाबाहोभवेद्याचापराह्णिकी

दर्शविद्धानकर्त्तव्याराकाविद्धाकदाचनेति मदनरत्नकालतत्त्वविवेचनयोस्तु शैवव्रतेपक्षद्वयगतायाअपिचतुर्दश्याअ पराह्णव्याप्तिः पूर्वविद्धानभिधायकमिदंवाक्यमुपन्यस्तं ममभक्तैरितीश्वरोक्तिलिंगात् यदाचापराह्णेनव्याप्नुत स्तदापरयुतेग्राह्ये अष्टम्येकादशीपष्ठीकृष्णपक्षेचतुर्दशी अमावास्यातृतीयाचकर्त्तव्यापरसंयुतेतिब्रह्मवैवर्त्तवचनात् यत्तूपवासादिकार्येष्वित्यापस्तंबवचने उपवासेकृष्णचतुर्दश्याःपूर्वविद्धत्वाभिधानं तद्रुद्रोपवासविषयमिति तत्रैव प्रपंच्यते इतिचतुर्दशीसामान्यनिर्णयः अथसिद्धविरुद्धादिकालिख्यते चतुर्दशीशनिवारेणसिद्धा रविवारेणविरु द्धा सूर्येविशाखाभरणीत्युक्तमेव अत्रशत्रुवधादिकंकार्य्यं तदुक्तं चतुर्दश्यांचतुर्थ्यांचनवम्यांचारिमर्दनमिति अत्रक्षौ रंयात्रांचवर्जयेदिति अत्रविशेषतोयोगिनीसांमुख्यात् वायव्येयात्रानकार्य्या अत्रपर्वत्वाद्दंतधावनंवर्ज्यं अत्रसर्वं चतुर्दशीपुतिथीशत्वाच्छिवःपूज्यः इतिश्रीमन्महाराजरणवीरसिंहरत्नाकरेचतुर्दशीसामान्यनिर्णयप्रकरणम् ॥

अथपौर्णमासीनिर्णीयते तत्रादौपौर्णमासीध्यानम् शशिगापूर्णिमाशुभ्रामौक्तिकाभरणान्विता सुधापूर्णघटाधारावा मदक्षिणबाहुकेति पौर्णमासीतु वटसावित्रीव्यतिरिक्तसर्वव्रतेषुपराग्राह्या भूतविद्धेनकर्त्तव्येदर्शपूर्णेकदाचन वर्जयि त्वामुनिश्रेष्ठसावित्रीव्रतमुत्तममिति ब्रह्मवैवर्त्तात् पूर्वविद्धात्वकर्त्तव्यासावित्रीव्रतिभिर्नरैः पौर्णमासीमहीपालपरैव निगमेमतेतिमाधवीयेपद्मपुराणवचनाच्च सावित्रीव्रतमंतरेपौर्णमास्यःपराइतिदीपिकोक्तेश्च उपवासेपरैव एकादश्य ष्टमीपष्ठीपौर्णमासीचतुर्दशी अमावास्यातृतीयाचताउपोष्याःपरान्विता इतिनिर्णयामृतधृतवचनात् यत्तु पष्ठ्येकाद श्यमावास्यापूर्वविद्धातथाष्टमी पूर्णिमापरविद्धाचनोपोष्यांतिथिपंचकमिति ब्रह्मवैवर्त्तपुराणवचनं चतुर्दश्याचपू र्णिमेतियुग्मवाक्यं तत्सावित्रीव्रतविषयं पूर्वोदाहृतैकादश्यष्टमीति वचनविरोधात् सावित्रीव्रतेतुपूर्वैवग्राह्या प्रतिपत्पंचमीभूतःसावित्रीवटपूर्णिमा नवमीदशमीचैवनोपोष्याः परसंयुताइति ब्रह्मवैवर्त्तेपरविद्धायानिषेधात्

यदा चतुर्दश्यष्टादशनाडिकाभवति तदासावित्रीव्रतमपितत्रपरित्याज्यं भूतोष्टादशनाडीभिर्दूषयत्युत्तरांतिथिमि
तिस्मृतेरिति माधवः अन्यास्मिन्विषयेऽष्टादशनाडीवचनस्यवर्जयित्वेति विशेषवचनेनबाधाद्भूतविद्धैवग्राह्येति
निर्णयसिंधौ सावित्रीव्रतंज्यैष्ठपूर्णिमायांवक्ष्यते सर्वास्वपिपूर्णिमासुअमावास्यावच्छ्राद्धंनित्यं अमावास्याव्यती
पातपौर्णमास्यष्टकासुच विद्वांछ्राद्धमकुर्वाणोनरकंप्रतिपद्यत इतिपितामहेन अकरणेप्रत्यवायोक्तेः तच्चापिंडकं
कार्य्यं तदुक्तं निर्णयप्रदीपेगर्गेण पौर्णमासीषुसर्वासुनिषिद्धंपिंडपातनं वर्जयित्वाप्रौष्ठपदींयथादर्शस्तथैवसेति
इतिसामान्यपौर्णमासीनिर्णयः अथसिद्धविरुद्धादिकंलिख्यते पूर्णिमागुरुवारेणसिद्धा गुरौदशमीपंचम्यौपू
र्णमासीति पंचमीवद्विवाहयात्रोत्सवंकार्य्यं अत्रापितिथिपत्वाच्चंद्रःपूज्यः तदुक्तं पर्वणींदोर्भवेत्पूजेति क्रूरग्रहधन
राशिस्थचतुष्केपूर्णिमाऽशुभाभवतिपूर्णिमायांयोगिनीसांमुख्यादैशान्यांयात्रानकार्य्या ॥ ॥ स्वस्ति श्रीरणवीरसिंह
धरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेःपादांबुजाचारतोजी
यात्पुत्रकलत्रमित्रसहितःसंपालयन्क्ष्मांसदा १ रणवीरसिंहभूपनकार्त्तिकृत्यवारिधौ सामान्यनिर्णयोजातःपौर्ण
मासीतिथेरयम् २ इतिश्रीरणवीरसिंहरत्नाकरेपौर्णमासीसामान्यनिर्णयः अथव्रताद्युपयुक्तोऽमावास्यासामान्यनि
र्णयः प्रपंच्यते तत्रादावमावास्याध्यानम् खड्गभल्लधरानीलकुंतलांशुकभूषणा अमावास्याचध्यातव्याद्विदोर्मरक
तप्रभा द्विदोर्द्विभुजा दर्भासनस्थिताचेयंदर्भपिंडधराकृशेति उपवासादिष्वमावास्याप्रतिपद्युतैवग्राह्या प्रतिपदमा
वास्येतियुग्मवाक्यात् अमावास्यातृतीयाचताउपोष्याःपरान्विताइतिस्मृतेश्च पद्मपुराणेपि षष्ठ्यष्टमीतथादर्शःकृष्ण
पक्षेत्रयोदशी भूतविद्धाप्यमावास्यानग्राह्यामुनिपुंगव उत्तरोत्तरविद्धास्ताःकर्त्तव्याःकाठकश्रुतेरिति सावित्रीव्रतेतु
पूर्वविद्धैवग्राह्या तथाचस्कंदपुराणे भूतविद्धासिनीवालीनतुतत्रव्रतंचरेत् वर्जयित्वातुसावित्रीव्रतंतुशिखिवाहनेति

भूतविद्धेनकर्त्तव्येदर्शपूर्णेकदाचन वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तममितिनिर्णयसिंधौ ब्रह्मवैवर्त्तोक्तेश्च इत्थमेव मदनरत्नहेमाद्रिप्रभृतयःमाधवीयेतुविशेषःयदाचतुर्दश्यष्टादशनाडिकाभवति तदासावित्रीव्रतमपितत्रपरित्याज्यंभूतोष्टादशनाडीभिरितिवाक्यात् अमायांयोगविशेषाणिअपरार्केव्यासःअमावास्याभवेद्वारेयदाभूमिसुतस्यवै जाह्नवीस्नानमात्रेणगोसहस्रफलंलभेत् तथा अमातुसोमवारेणरविवारेणसप्तमी चतुर्थीभौमवारेणविषुवत्सदृशंफलं तत्रैवव्यासः सिनीवालीकुहूर्वापियदिसोमदिनेभवेत् गोसहस्रफलंतेनदत्तंचेन्मौनिनाकृतं हेमाद्रौबृहन्मनुः श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके यद्यमारविवारेणव्यतीपातःसउच्यते नागदैवतमश्लेषा शिरोमृगशिरा अत्रश्राद्धंनित्यं अमावास्यांव्यतीपातपौर्णमास्यष्टकासुच विद्वाञ्छ्राद्धमकुर्वाणोनरकंप्रतिपद्यत इतिपितामहोक्तेः श्राद्धीयाऽमावास्यानिर्णयस्त्वग्रेवक्ष्यते अस्याश्चपर्वत्वात्प्रसंगेनान्यान्यपिपर्वाण्यत्रैवप्रदर्श्यंते तथाचाविष्णुपुराणे चतुर्दश्यष्टमीचैवअमावास्याचपूर्णिमा पर्वाण्येतानिराजेंद्ररविसंक्रांतिरेवचेति अमाश्राद्धप्रसंगतः षण्णवतिश्राद्धकालानाह तेषामयंसंग्रहः अमा १२ मनु १४ युग ४ संक्रांति ॥ १२ ॥ वैधृति ॥ १३ ॥ पात ॥ १३ ॥ महालयाः ॥ १६ ॥ अन्वष्टक्यंच ॥ ४ ॥ पूर्वेद्युः ॥ ४ ॥ दृष्टिः ॥ १ ॥ क्षयाहः ॥ १ ॥ त्रिस्पृक् ॥ १ ॥ षण्णवत्यष्टकास्तथेति अत्रपिंडदानविधिनिषेधादिःप्रागुक्तः अत्रकृत्यविशेषोहेमाद्रौ सावित्राञ्छालिहोमांश्चकुर्यात्पर्वसुनित्यशइति सावित्रान्सावित्रीदैवतान् अस्मिंश्चहोमेगायत्रीमंत्रः अथसिद्धविरुद्धादिकंलिख्यते अमावास्यागुरुवारेणसिद्धा शनिवारेणविरुद्धा अत्रैशान्यांयोगिनीसांमुख्याद्यात्राविशेषतोन्यत्रापिनकार्य्या अस्यांस्त्रीसेवनंनकार्य्यं अथप्रतिपदादिदर्शांतासुपर्वतिथिषुवह्न्यादयोदेवताःप्रत्येकंपूज्यत्वेनाभिहितास्तेच रत्नमालायामुक्ताः वह्निर्विरंचिर्गिरिजागणेशो नागोविशाखोदिनकृन्महेशः दुर्गांतकोविष्णुहरीस्मरश्चशर्वः शशीचेतिपुराणदृष्टाः कालादर्शेपि अग्निर्विरंचिरि

स्याद्युक्ताःरत्नमालायामेकादशीद्वादश्योर्विष्णुरेवदेवतोक्तःकालादर्शेएकादश्याःशिवोद्वादश्याविष्णुरितीयान् विशेषः
आसांप्रतिपदादिपंचदश्यंतानांतिथीनांत्रिरावृत्त्या नंदाचभद्राचजयाचरिक्तापूर्णेतिसर्वास्तिथयःक्रमात्स्युः कनिष्ठम
ध्यादिफलास्तुशुक्लेकृष्णेभवंत्युत्तममध्यहीनाः अथप्रतिपदादिसर्वतिथिषुसामान्यतःप्रत्येकंवर्ज्यवर्गमुक्तं मुहूर्तदीपि
कायां कूष्मांडंबृहतीफलानिलवणंवर्ज्यंतिलाम्लंतथा तैलंचामलकंदिनप्रसवनंशीर्षकपालांत्रकं निष्पावाश्चमसूरि
काफलमथोवृंताकसंज्ञंमधुद्यूतंस्त्रीगमनंक्रमात्प्रतिपदादिष्वेवमाषोडशेति अथतिथिसामान्यनिर्णयप्रसंगात्कल्पा
दितिथयोप्युच्यंते मत्स्यपुराणे कल्पानुकीर्त्तनंवक्ष्येसर्वपापप्रणाशनं यस्यानुकीर्त्तनादेववेदपुण्येनयुज्यते प्रथमः
श्वेतकल्पस्तु ॥ १ ॥ द्वितीयोनीललोहितः ॥ २ ॥ वामदेवस्तृतीयस्तु ॥ ३ ॥ तुरीयस्तुरथंतरः ॥ ४ ॥ रौरवःपंच
मःप्रोक्तः ॥ ५ ॥ षष्ठःप्राणइतिस्मृतः ॥ ६ ॥ सप्तमोथबृहत्कल्पः ॥ ७ ॥ कंदर्पश्चाष्टमः स्मृतः ॥ ८ ॥ साध्योथन
वमःप्रोक्तः ॥ ९ ॥ ईशानोदशमःस्मृतः ॥ १० ॥ ध्यानएकादशःप्रोक्त ॥ ११ ॥ स्तथासारस्वतःपरः ॥ १२ ॥ त्र
योदशउदानस्तु ॥ १३ ॥ गारुडोथचतुर्दशः ॥ १४ ॥ कौर्मःपंचदशःप्रोक्तः ॥ १५ ॥ पौर्णमास्यःप्रजापतेः ब्राह्मणः
कौर्मकल्पस्यैवपौर्णमास्यइतिसंज्ञांतरं षोडशोनारसिंहस्तु ॥ १६ ॥ समानस्तुततोपरः ॥ १७ ॥ आग्नेयोऽष्टादशः
प्रोक्तः १८ सोमकल्पस्ततोपरः १९ वैकुंठाख्यस्ततःप्रोक्तः २० लक्ष्मीकल्पस्ततःपरः २१ मीनकल्पस्ततःप्रोक्त
२२ स्तत्पुमानितिचापरः २३ चतुर्विंशस्ततःप्रोक्तःसावित्रीकल्पसंज्ञकः २४ पंचविंशत्तमोघोरो २५ वाराहश्चततः
परः २६ सप्तविंशस्तुवैराजो २७ गौरीकल्पस्ततःपरं २८ माहेश्वरस्ततःप्रोक्तस्त्रिपुरंयत्रघातितं २९ पितृकल्पस्त
तःप्रोक्तोयाकुहूर्ब्रह्मणःस्मृता ३० इत्ययंब्रह्मणोमासःसर्वपापप्रणाशनः आदावेवहिमाहात्म्यंयस्ययस्मिन्विधीयते
तस्यकल्पस्यतन्नामविहितंब्रह्मणापुरा यस्तुदद्यादिमान्कृत्वाहैमान्पर्वणिपर्वणि ब्रह्मविष्णुपुरेकल्पंपूजितोमुनिभि

वंसेत् अत्रश्राद्धादिमहाफलमित्युक्तं हेमाद्रौनागरखंडे अथकल्पादयः पुण्याः कथ्यंतेतिथयःशुभाः यासुश्राद्धेकृते
तृप्तिःपितृणामक्षयाभवेत् चैत्रशुक्लप्रतिपदिश्वेतकल्पःपुराभवत् १ तस्यशुक्लत्रयोदश्यामुद्गानःसमजायत २ कल्प
स्तुनारसिंहाख्यःकृष्णायांप्रतिपद्यभूत् ३ अथकृष्णत्रयोदश्यांगौरीकल्पोऽपिकल्पितः ४ वैशाखस्यद्वितीयायांशुक्ला
यांनीललोहितः ५ चतुर्दश्यांतुशुक्लायांप्रवृत्तोगारुडाभिधः ६ समानस्तुद्वितीयायांकृष्णायामुदपद्यत ७ महेश्वर
श्चतुर्दश्यांकृष्णपक्षेसमागमत् ८ ज्येष्ठशुक्लद्वितीयायांवामदेवस्यसंभवः ९ पौर्णमास्यांतुतस्यैवकौर्मःप्रवृत्तेनृप १०
कृष्णपक्षेद्वितीयायामाग्नेयःसमपद्यत ११ पंचदश्यांतुकृष्णायांपितृकल्पःसमागमत् १२ शुक्लांचतुर्थींचाषाढेप्राप्यरा
थंतरोभवत् १३ चतुर्थ्यांतस्यकृष्णायांसोमकल्पःसमापतत् १४ श्रावणेशुक्लपंचम्यांरावणःसमवर्तत १५ तस्यैवशु
क्लेपंचम्यांसमानःप्रत्यपद्यत १६ पर्षोऽौष्ठपदींशुक्लांप्राप्यप्राणाभिधोभवत् १७ सितेतरायांषष्ठ्यांतुतस्यतत्पुरुषाह्व
यः १८ वृहत्कल्पस्तु नवम्यांशुक्लायामाश्विनस्यतु १९ कृष्णायामपिवैकुंठःप्रविवेशविशांपते २० कार्तिकस्यासि
ताष्टम्यांकल्पःकंदर्पसंज्ञकः २१ असितायांपुनर्जज्ञेलक्ष्मीकल्पस्यकल्पना २२ मार्गशुक्लनवम्यांतुकल्पःसद्योभ्यप
द्यत २३ असितायांचसावित्रीकल्पःप्रारंभमभ्ययात् २४ पौषदशम्यांशुक्लायामीशानःप्रादुरासह २५ असितायाम
घोरस्यकल्पस्योद्गमोभवत् २६ एकादश्यांतुशुक्लायांमाघेध्यानःप्रजज्ञिवान् २७ तस्यामेवतमिस्रायां
वाराहःसमपद्यत २८ सरास्वतरतुद्वादश्यांशुक्लायांफाल्गुनस्यच २९ कृष्णायामपिवैराजो विरराजमहामनाः
३० एताअमांतमासाभिप्रायेण ज्ञेया इतित्रिंशदमीकल्पास्तिथयः परमेष्ठिनः तासुश्राद्धेकृतेपुण्यमाकल्प
स्थायिकल्प्यतइति एतत्कर्तुमसमर्थंप्रतिमात्स्ये ब्रह्मणोयद्दिनादर्वाक्कल्पस्यादिःप्रकीर्तितः वैशाखस्यतृतीया
याकृष्णायाफाल्गुनस्यच पंचमीचैत्रमासस्यतस्यैवान्यातथापरा तस्यचैत्रस्यैवपराकल्पादिरित्यर्थः शुक्लात्रयो

दशीमाघेकार्त्तिकस्यतुसप्तमी मार्गशीर्षस्यचतथासप्तैताः संस्मराम्यहं कल्पानामादयोह्येतादत्तस्याक्षयकारिका इतिकल्पादिषु ब्रह्मणः पूजां विधाय दानश्राद्धादिकरणेऽक्षयफलमितिसंप्रदायः अथमन्वादितिथयः मत्स्यपुराणे अश्वयुक्शुक्लनवमी १ द्वादशीकार्त्तिकेतथा २ तृतीयाचैत्रमासस्य ३ तथाभाद्रपदस्यच ४ फाल्गुनस्यत्वमावास्या ५ पौषस्यैकादशीतथा ६ आषाढस्यापिदशमी ७ माघमासस्यसप्तमी ८ श्रावणस्याष्टमीकृष्णा ९ तथाषाढेतुपूर्णिमा १० कार्त्तिकी ११ फाल्गुनी १२ चैत्री १३ ज्यैष्ठपंचदशीतथा १४ मन्वंतरादयश्चैतादत्तस्याक्षयकारिकाः अथयुगादितिथयोप्युच्यंते ताश्चनारदेनोक्ताः कार्त्तिकेशुक्लनवमीचादिःकृतयुगस्यसा त्रेतादिर्माधवेशुक्ल तृतीयापुण्यसंमिता कृष्णापंचदशीमाघेद्वापरादिरुदीरिता कल्पादिःस्यात्तथाकृष्णानभस्येचत्रयोदशी मन्वादियुगादितिथिषुश्राद्धमारतादिषुप्रोक्तं यामन्वाद्यायुगाद्याश्चतिथयस्तासुमानवः स्नात्वाहुत्वाचजप्त्वाचदत्त्वानंतफलंलभेत् तथाचमनुः सहस्रगुणितंदानंभवेद्दत्तंयुगादिषु कर्मश्राद्धादिकंचैवतथामन्वंतरादिषु अत्रयुगादिप्रसंगात्युगांततिथयोपिहेमाद्रौब्रह्मपुराणे सूर्यस्यासिहसंक्रांत्यामंतःकृतयुगस्यतु अथवृश्चिकसंक्रांत्यामंतस्त्रेतायुगस्यतु ज्ञेयस्तुवृषसंक्रांत्यांद्वापरांतस्तुसंख्यया तथाकुंभस्यसंक्रांत्यामंतःकलियुगस्यतु अत्रापिश्राद्धमुक्तं युगादिषुयुगांतेषुश्राद्धमक्षयमुच्यते तत्रैव युगाद्येषुयुगांतेषुस्नानदानजपादिकं यत्किंचित्क्रियतेतस्ययुगांतफलमीरितं अत्रसमुद्रस्नानप्रशस्तं पृथ्वीचंद्रोदये सौरपुराणे युगादौतुनरःस्नात्वाविधिवल्लवणांबुधौ गोसहस्रप्रदानस्यकुरुक्षेत्रेहियत्फलं तत्फलंलभतेमर्त्योभूमिदातस्यचध्रुवमिति आश्वलायनः समुद्रेपर्वसुस्नायादमायांचविशेषतः पापैर्विमुच्यतेसर्वैरमायांस्नानमाचरेत् भृगुभौमदिनेस्नानानित्यमेवविवर्जयेत् महाभारते अश्वत्थसागरौसेव्यौनस्प्रष्टव्यौकदाचन अश्वत्थंमंदवारेतुसागरंपर्वसुस्पृशेत् पृथ्वीचंद्रोदये स्कांदे पुनातिपर्वणिस्नानात्तर्पणैःसरितांपतिः कदाचिदपिनैवात्रस्नानं

कुर्य्यादपर्वाणि अस्यापवादस्तत्रैवप्रभासखंडे पर्वकालेचसंप्राप्तेनदीनांसंगमेतथा सेतुबंधेतथासिंधौतीर्थेष्वन्येषु संयतः एवमादिषुसर्वेषुमेध्योन्यत्रतुपर्वाणि तथा विनामंत्रंविनापर्वक्षुरकर्मविनानरैः कुशाग्रेणापिदेवेशिनस्प्रष्टव्योमहोदधिः तथाच नकालनियमः सेतौसमुद्रस्नानकर्मणि तद्विधिश्चतत्रैव पिप्पलादसमुत्पन्नेकृत्येलोकभयंकारि पापाणंतेमयादत्तमाहारार्थंप्रकल्प्यतामिति पापाणंप्रक्षिप्य विश्वाचीतुघृताचीचविश्वयोनेविशांपते सान्निध्यंकुरुमेदेवसमुद्रेलवणांभसि नमस्तेविश्वगुप्तायनमोविष्णोंभसांपते नमोजलधिरूपायनदीनांपतयेनमःनमस्तेजगदाधारशंखचक्रगदाधर, देहिदेवममानुज्ञांतवतीर्थनिषेवणे त्रितत्वाधिकमीशानंनमोविश्वमपांपतिं सान्निध्यंकुरुदेवेशसागरेलवणांभसि अग्निश्चयोनिरनिलश्चदेहोरेतोधाविश्वममृतस्यनाभिः एवंस्तुवन्पांडवसत्यवाक्यंततोवगाहेतपतिंनदीनामिति भारतोक्तमंत्रान्पठित्वा विधिवत्स्नात्वा सर्वरत्नोभवान्श्रीमान्सर्वरत्नाकरोमतः सर्वरत्नप्रधानश्चगृहाणार्घ्यंमहोदधे इत्यर्घंदत्वातर्पयेत् तथोक्तं पृथ्वीचंद्रोदये स्कांदे पिप्पलादंविकंठंचकृतांतंजीवकेश्वरं वासिष्ठंवामदेवंचपराशरमुमापतिं वाल्मीकिंनारदंचैववालखिल्यांस्तथैवचनलंनीलंगवाक्षंचगवयंगंधमादनं जांववंतंहनूमंतंसुग्रीवंचांगदंतथा मैंदंचद्विविदंचैवऋषभंशरभंतथा रामंचलक्ष्मणंचैवसीतांचैवयशस्विनीं एतांस्तुतर्पयेद्विद्वान्जलमध्येविशेषतः आब्रह्मस्तंबपर्यंतंयत्किंचित्सचराचरं मयादत्तेनतोयेनतृप्तिमेवाभिगच्छतु इतिसमुद्रस्नानम् स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंदसंरक्षकःधर्माधर्मविभागकृद्रघुपतेःपादांबुजार्चारतोजीयात्पुत्रकलत्रमित्रसहितः संपालयन्क्ष्मांसदा १ रणवीरसिंहभूपेनकारितेरत्नवारिधौ सामान्यपर्वविज्ञानःपष्ठोयं रत्नसंग्रहः ॥ २ ॥ इतिश्रीरणवीरसिंहरत्नाकरेधर्मकृत्यनिबंधेऽमावास्यादिसामान्यपर्वनिर्णयप्रकरणम् ॥

ॐश्रीपरमात्मनेनमः श्रीदंगणेशशिवयोस्तनूजंसुरासुरैरर्चितपादपीठं स्वर्गापवर्गादिफलप्रभू
स्यैवंदामहेनित्यमुदारसत्त्वम् १ श्रीरामचंद्रायनमः

अथश्राद्धीयामावास्यानिर्णीयते

साचश्राद्धेअपराह्णंपितॄणामितिश्रुतेः शातातपोपि दर्शश्राद्धंतुयत्प्रोक्तंपार्वणंतत्प्रकीर्त्तितम् अपराह्णेपितॄणांतुतत्र दानंप्रशस्यते यमोऽप्याह पक्षांतेनिर्वपेत्तेभ्योह्यपराह्णेतुपैतृकमिति एवंचापराह्णस्यमुख्यकालत्वात्पूर्वे गुरेवाप रेद्युरेववापराह्णव्यापिन्यमावास्याग्रहीतव्या पूर्वतिथेरपराह्णव्यापिन्याग्राह्यतामाहहारीतः यस्यांसंध्यागतःसो मोमृणालमिवदृश्यते अपराह्णेतुयातस्यांपिंडानांकरणंध्रुवमिति यत्तु कार्ष्णाजिनिवचो भूतविद्धाममावास्यांमोहा दज्ञानतोपिवा श्राद्धेकर्मणियेकुर्युस्तेषामायुःप्रहीयतइति तत्पूर्वदिनेपराह्णव्याप्त्यभावविषयं तथाभूतायाउत्तर तिथेर्ग्राह्यतामाहहारीतः अपराह्णेपितॄणांतुयापराह्णानुयायिनी साग्राह्यापितृकार्येतुनपूर्वास्तानुयायिनीति उभयत्रसाम्येनैकदेशव्याप्तौखर्वदर्पादिवाक्यान्निर्णयः स्मृत्यंतरेपि तिथिक्षयेसिनीवालीतिथिवृद्धौकुहूर्मतासाम्ये चैवकुहूर्ज्ञेयावेदवेदांगवेदिभिरिति पूर्वासिनीवाली उत्तराकुहूः तदुक्तं व्यासेन दृष्टचंद्रासिनीवालीनष्टचंद्राकुहू र्मतेति शिवराघवसंवादेपि अमावास्यातुयाहिस्यादपराह्णद्वयेपिसा क्षयेपूर्वापरावृद्धौसाम्येपिचपरास्मृतेति वै षम्येणैकदेशव्याप्तौस्मृत्यंतरे अपराह्णद्वयव्यापिन्यमावास्यायदाभवेत् तत्राल्पत्वमहत्त्वाभ्यांनिर्णयःपितृकर्म णीति याधिकव्यापिनी साग्राह्येत्यर्थः यदादिनद्वयेप्यपराह्णंनस्पृशति तदा साग्निकनिरग्निकभेदेनव्यवस्थाद्रष्ट व्या यदुक्तंजाबालिना अपराह्णद्वयव्यापीयदिदर्शस्तिथिक्षये आहिताग्नेःसिनीवालीनिरग्न्यादेः कुहूर्मतेति आ दिपदेन स्त्रीशूद्रयोरपिसंग्रहः तदुक्तंलौगाक्षिणा सिनीवालीद्विजैः कार्यासाग्निकैःपितृकर्मणि स्त्रीभिःशूद्रैः

कुहूर्ज्ञेयातथावानाग्निकैर्द्विजैरिति हेमाद्रौतु यदामादिनद्वयेप्यपराह्णव्यापिनीनभवति तदातिथिक्षये पूर्वदिनसं वांधेनीसिनीवाल्येवग्राह्या तथाचकात्यायनः यदाचतुर्दशीयामंतुरीयमनुपूरयेत् अमावास्याक्षीयमाणातदैवश्राद्ध मिष्यते क्षीयमाणपरदिनेपराह्णव्यापिनीनेत्यर्थः दिनद्वयेप्यपराह्णव्यापिनीनेतिफलितार्थइतिस्थितं अत्र यद्य पिपूर्वाह्नोवैदेवानांमध्यंदिनोमनुष्याणांअपराह्णः पितृणामितिश्रुत्यालोचनयात्रेधाविभक्तदिनांत्यभागएवापराह्ण प्रतीयते पिंडान्वाहार्यकंश्राद्धंक्षीणेराजनिशस्यते वासरस्यतृतीयेंशेनातिसंध्यासमीपतइति छंदोगपरिशिष्टादपि तथा पिंडःपिंडपितृयज्ञःतमनुआह्रियते क्रियतेइतिपिंडान्वाहार्यकंपिंडपितृयज्ञानंतरभावीतियावत् राजनिचंद्रेतस्मि न्क्षीणेऽमावास्यायामित्यर्थइतिचंद्रक्षयकालश्चतुर्दश्यष्टमप्रहरादिकोमावास्यासप्तमप्रहरपर्यंतः तदाहसएव अष्टमें शेचतुर्दश्याःक्षीणोभवतिचंद्रमाः अमावास्याष्टमेंशेचपुनः किलभवेदणुरिति तथापि सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धंत न्नकारयेत् राक्षसीनामसाप्रोक्तागर्हितासर्वकर्मस्विति यमेनसायाह्नस्यश्राद्धकालत्वेप्रतिषिद्धेर्थादेकादशद्वादशमुहू र्तयोस्तत्कालत्वंसिद्ध्यति यत्तु दीपिकायांहेमाद्रिसिद्धांतउक्तः त्रिधासितदिनस्यांतेपराह्णेचरेदितिसोप्येतत्परतयैवक थंचिद्व्याख्येयः माधवीयेपि सायाह्नस्यप्रतिषेधेसत्यपराह्णकर्मकालेनपरिशिष्यतइति मदनरत्नेतु सानाग्निकैः स्व स्वान्वाधानदिनेअमावास्याश्राद्धंकर्त्तव्यं तथाचश्रुतिः तस्मात्पितृभ्यःपूर्वेद्युः क्रियतेउत्तरमहर्देवान्यजंतेपितृभ्यएव त द्यज्ञंनिष्कामजपमानः प्रतनुतइति अतएवबौधायनः चतुर्दश्यांचतुर्यामेअमायत्रनदृश्यते श्वोभूतेप्रतिपद्यत्रभूतेक व्यादिकीक्रियेति नदृश्यतइत्यत्र नञ्अल्पार्थत्वादल्पादृश्यतइत्यर्थः निरग्निकैस्तुयापराह्णव्यापिनीसैवग्राह्या त दाहशातातपः दर्शश्राद्धंतुयत्प्रोक्तंपार्वणंतत्प्रकीर्त्तितं अपराह्णेपितृणांतुतत्रदानंप्रशस्यतइतिहेमाद्रौतु सकलापराह् णव्यापिन्यांसिनीवाल्याममावास्यायांश्राद्धविधानमग्निमद्विषयं अनग्निकानांतुकुतुपकालव्यापिन्यांकुहूनामावास्या

यांश्राद्धविधानं तथाचहारीतः भूतविद्धाप्यमावास्याप्रतिपन्मिश्रितापिवा पित्र्येकर्मणिविद्वद्भिः कार्य्याकुतपकालिकी
ति कुतपलक्षणंतुमत्स्यपुराणे अह्नोमुहूर्त्ताविख्यातादशपंचचसर्वदा अत्राष्टमोमुहूर्त्तोयःसकालःकुतपःस्मृतः अन्यत्रापि
मुहूर्त्तात्सप्तमादूर्ध्वमुहूर्त्तान्नवमादधःसकालःकुतपोज्ञेयःपितृणांदत्तमक्षयमिति एवंसतिदिनद्वयसंबंधिन्याममावास्या
यांसत्यांयाकुतपकालव्यापिनीसैवानाग्निकैर्ग्राह्येत्युक्तंभवतीति निर्णयामृतेतु नोभयत्रापराह्णव्यापिनीतुपरैवकुत
पादिकालव्यापिनीग्राह्या तदुक्तंहारीतेन भूताविद्धाप्यमावास्येति अत्रकुतपशब्देननाष्टममुहूर्त्तमात्रमुच्यते किं
तुकुतपरौहिणविरंच्यामुहूर्त्ताउच्यंते तदुक्तमापस्तंबेन कुतपाद्यान्मुहूर्त्तांस्त्रीन्यदाचरतिभास्करः सकालःकुतपस्तत्र
पितृणांदत्तमक्षयमिति कालतत्त्वविवेचनेपि उभयत्रापराह्णव्यापित्वाभावेस्वातंत्र्येणकुतपकालव्यापिनीविधीय
तइति माधवीयेतु एतदेकोद्दिष्टविषयं तस्यैकोद्दिष्टंतुमध्यान्हइत्यादिवचनेनकुतपकालत्वाभिधानात् यद्वाप्रतिपन्मि
श्रितायाअपराह्णव्यापित्वाभावेनिरग्निकैरपिहेयत्वाशंकायांग्राह्यत्वेकुतपव्याप्तिरनुकल्पस्तेनाभिधीयते अपराह्
णव्याप्तिःपार्वणेमुख्यःकल्पः कुतपव्याप्तिरनुकल्पः तथाचमुख्यासंभवेनुकल्पस्योपादेयत्वान्निरग्निकैः प्रतिपन्मि
श्रितागृहीतुंशक्यत इति निर्णयसिंधावप्येवं मयूखेतुनारदवचनम् मध्याह्नेत्रिमुहूर्त्तंतुयदाचरतिभास्करः सका
लः कुतपोनामपितृणांदत्तमक्षयमिति यदपिकुतपाद्यानिति पूर्वोक्तमापस्तंबवचनंतत्कुतपरौहिणयोरष्टमनवममुहूर्त्त
योरारभ्यकुतपेश्राद्धंरौहिणंतुनलंघयेदित्यनेनैकोद्दिष्टारंभसमानाधिकरणतयाविनियोगेविशिष्टदशमंमुहूर्त्तं पार्वणारं
भपरइतिकेचित् युक्तंतु एकोद्दिष्टंतुमध्याह्नइत्यादिनामुहूर्त्तत्रयात्मकमध्याह्नस्यैकोद्दिष्टकालतयाविधानेष्टमनवममुहू
र्त्तयोस्तत्कालतयाविनियोगेवशिष्टस्यदशमस्योपयोगाकांक्षायांउत्तरभावितयागौणकालतापरत्वमिति यत्तुमात्स्ये अ
ष्टमेभास्करोयस्मान्मंदीभवतिसर्वदा तस्मादनंतफलदमत्रारंभोविशिष्यते ऊर्ध्वंमुहूर्त्तात्कुतपाद्यन्मुहूर्त्तचतुष्टयं

मुहूर्त्तपंचकंह्येतत्स्वधाभवनमिष्यतइति तदेतदेकोद्दिष्टपार्वणकालकोडीकाराभिप्रायं पार्वणेत्वेकादशद्वादशमुहूर्त्तयो रेवमुख्यकालत्वंनमुहूर्त्तत्रयस्यतदेवंनिर्णीतायांश्राद्धोपयोगिन्याममावास्यायांयान्युच्चावचानिबहूनिवाक्यानितानिस र्वाणिनिरूपितेष्वमाभेदेष्वन्यतमविषयत्वेनयथायोगंयोजनीयानि तथाहि मध्याह्नात्परतोयत्रचतुर्दश्यनुवर्त्तते भू तविद्धातुसाज्ञेयानसापंचदशीभवेदितिबौधायनवृहस्पतिवचसा मध्याह्नात्परतोपराह्णेव्याप्यचतुर्दश्यनुवर्त्तते म ध्याह्नादूर्ध्वंअपराह्णमतिक्रम्यपुरस्तादमावास्याप्रवर्त्तत इति व्याख्येये परेद्युरेवापराह्णव्याप्तौ योजनीयेच यत्तु कात्यायनवचः पिंडान्वाहार्यकमित्यादिपूर्वमलिखितनापिपिंडान्वाहार्यकंपिंडपितृयज्ञोत्तरंक्रियमाणंदर्शश्राद्धंतत् क्षीणेराजनिइंदौकर्त्तव्यंवासरस्यतृतीयांशइतिअनेन किंच अह्नोपराह्णः सायाह्नसहितोभिधीयते तत्रनातिसं ध्यासमीपत इतिसायाह्नस्यप्रतिषेधेसत्यपराह्णः कर्मकालत्वेन परिशिष्यते तथाच कर्मकालव्यापिनीग्राह्येति भंग्यंतरेणोक्तंभवति यदपि प्रतिपत्स्वप्यमावास्यापूर्वाह्णव्यापिनीयदि भूतविद्धैवसाकार्यापित्र्येकर्मणिसर्वदेति जाबालिवचनं तत्रापिपूर्वाह्णव्यापिनीतिविशेषकथनाद्विशेषविधानिषेधोशेषानिषेधाभ्यनुज्ञाफलकाविति न्यायेनापरा ह्णव्यापित्वंनास्तीत्यवगम्यते तादृशीचद्विधापूर्वेद्युरपराह्णव्यापिनीतत्साहिताचेति आद्यपक्षेसर्वैरपिभूतविद्धाका र्या द्वितीयपक्षेसाग्निकैरेवभूतविद्धाकार्येतियच्च पूर्वाह्णेचेदमावास्याअपराह्णेनचेत्तुसा प्रतिपद्यपिकर्त्तव्यंश्राद्धंश्रा द्धविदोविदुरितिजाबालिवचनं तद्दिवसद्वयेप्यपराह्णव्यापित्वाभावेसति निरग्निकविषयंद्रष्टव्यं यदपि बौधायनेनो क्तं घटिकैकाप्यमावास्याप्रतिपत्सुनचेत्तदा भूतविद्धैवसाग्राह्यादैवेपित्र्येचकर्मणीति तदपि प्रतिपत्सुघटिकैकाक र्मकालसंबंधिनीयदिनस्यात्तदाभूतविद्धैवग्राह्येत्येवंबोध्यं ऽतिपत्स्वप्यमावास्येतिजाबालिवचनसमानार्थत्वलाभात् हेमाद्रौ यत्तुवृद्धवसिष्ठवचनम् अरुणोदयवेलायाममावास्यायदाभवेत सकालः परमोज्ञेयः पितृणांदत्तमक्षयमिति

तत्पितृतर्पणादिविषयं अतएवपद्मपुराणे अमायाप्रतिपद्युक्तासर्वपापहरातिथिः चंद्रसूर्यग्रहैस्तुल्यास्नानदानजपादि
पु यदपिप्रचेतोवचनम् घटिकैकाप्यमावास्याभवेद्यदिचतुर्दशी तदाप्यमातद्दैवेपित्र्येकर्मणिचोदितमिति तदपिदेवपि
तृप्रधानोपवासविषयं यत्तुहारीतवचनं कन्यामकरमीनेषुतुलायांमिथुनेतथा भूतविद्धैवसर्वेषांपूज्याभवतियत्नत
इति तद्व्रतविषयं तथाचजाबालिः तुलायांमिथुनेमीनेकन्यायांमकरेतथा भूतविद्धाव्रतेग्राह्याशेषेतुप्रतिपद्युतेति एवम
न्यान्यपिवचनानियथायोगंव्यवस्थयाव्याख्येयानीत्यलं अमाश्राद्धातिक्रमेप्रायश्चित्तमुक्तमृग्विधाने न्यूपवाचंज
पेन्मंत्रंशतवारंतुतद्दिने अमाश्राद्धंयदानास्तितदासंपूर्णमेतितदिति ॥ इत्यमावास्याश्राद्धकालनिर्णयः ॥ अथात्रप्र
संगात्क्षयाहश्राद्धकालनिर्णयोलिख्यते तत्क्षयाहस्वरूपंस्मृतावुक्तम् मासपक्षतिथिस्पृष्टेयोयस्मिन्म्रियतेहनि प्रत्य
ब्दंतुयथाभूतंक्षयाहंतस्यतंविदुरितिमासश्चांद्रएवग्राह्यः आब्दिकेपितृकार्येचमासश्चांद्रमसः स्मृत इति व्यासव
चनात् यत्तु यस्मिन्राशौगतेसूर्येविपत्तिंयातिमानवः तद्राशावेवकर्तव्यंपितृकार्यंमृतेहनीतिवचनं तदधिमासमृतवि
विषयं अधिमासेमृतानांतुसौरमासंसमाश्रयेत् सएवदिवसस्तस्यश्राद्धपिंडोदकादिक इतिस्मृत्यंतरवचनात् ए
तच्चद्विविधं एकोद्दिष्टंपार्वणंच आद्यमाहयमः सपिंडीकरणादूर्ध्वंप्रतिसंवत्सरंसुतैः मातापित्रोःपृथक्कार्यमेकोद्दिष्टंमृ
तेहनीति अन्यमाहशातातपः सपिंडीकरणंकृत्वाकुर्यात्पार्वणवत्सदा प्रतिसंवत्सरंश्राद्धंछागलेयोदितोविधिः यः
सपिंडीकृतंप्रेतंपृथक्पिंडेनियोजयेत् विधिघ्नस्तेनभवतिपितृहाचोपजायतइति अनयोःपक्षयोर्देशाचाराद्व्यवस्थे
तिसर्वनिबंधसिद्धांतः तच्चक्षयाहश्राद्धमेकोद्दिष्टंचेत् क्रियतेतदातन्मध्याह्नेकार्यंपार्वणंचेत्तदापराह्णेकार्यं मध्याह्न
व्यापिनीयास्यात्सैकोद्दिष्टेतिथिर्भवेत् अपराह्णव्यापिनीयापार्वणेसातिथिर्भवेदितिगौतमवचनात् एकोद्दिष्टस्यम
ध्याह्नकालत्वं शिवराघवसंवादादपि मध्याह्नव्यापिनीयास्यात् सैकोद्दिष्टेतिथिर्भवेदिति अस्यचस्वरूपमुक्तंव्यासेन

एकमुद्दिश्ययच्छ्राद्धंदैवहीनंविधीयते· एकोद्दिष्टंतुतत्प्रोक्तंमध्याह्नेतत्प्रकीर्त्तितमिति मध्याह्नश्चसप्तमाष्टमनवममुहूर्त्तात्मकः तेचमुहूर्त्तागांधर्वकुतपरौहिणसंज्ञकाः अस्यचपूर्वोत्तरभागावेकोद्दिष्टोपक्रमेइच्छयाविकल्पितौव्यासेन कुतपप्रथमेभागएकोद्दिष्टमुपक्रमेत् आवर्त्तनसमीपेवातत्रैवानियतात्मवान् इतिसमाप्तिकालश्चगौतमेनोक्तः आरभ्यकुतपेच्छ्राद्धंकुर्यादारौहिणंबुधः विधिज्ञोविधिमास्थायरौहिणंतुनलंघयेदिति कुतपशब्दनिरुक्तिश्चस्कंदवायुपुराणयोः कुंयत्रगोपतिर्गोभिःकात्स्न्येनतप्रतिक्षणे सकालःकुतपोज्ञेयस्तत्रदत्तंमहाफलमिति तदेवंकुतपस्यैकोद्दिष्टश्राद्धकालत्वेनिर्णीतेतत्कालव्यापिनीतत्रतिथिर्ग्राह्या तत्रान्यतरदिनएवतद्व्याप्तौनकोपिसंदेहः उभयत्रसाम्येनतद्व्याप्तौतदव्याप्तौवापूर्वेद्युरेवतदनुष्ठेयं अमावास्याप्रकरणेउदाहृतानांपार्वणश्राद्धप्रकरणेउदाहरिष्यमाणानांचापराह्णसायाह्नास्तमयव्याप्तिविषयाणांवचनानामनुग्रहात् उभयत्रसाम्येनैकदेशव्याप्तौखर्वादिवाक्यान्निर्णयः तच्चसामान्यतिथिनिर्णयप्रस्तावेदर्शितंवैषम्येणैकदेशव्याप्तावधिकव्याप्त्यानिर्णयइति तदेवंसंक्षेपेणैकोद्दिष्टकालोनिर्णीतः अथपार्वणश्राद्धकालोनिर्णीयतेतत्रयद्यपिपर्वणिभवंपार्वणमितिव्युत्पत्त्यादर्शश्राद्धंतुयत्प्रोक्तंपार्वणंतत्प्रकीर्त्तितमितिशातातपवचनेनचात्रिपुरुषोद्देशेनामावांक्रियमाणंश्राद्धमेवपार्वणशब्देनाभिधातुंशक्यमथापितद्विकृतरूपतयात्रीनुद्दिश्यतुयत्तद्धिपार्वणंमुनयोविदुरितिकएववचनेनत्रिपुरुषोद्देशेनकर्त्तव्याब्दिकादेरपिपार्वणत्वंव्यवहर्त्तुंशक्यं तच्च पार्वणश्राद्धमपराह्णव्यापिन्यांकर्त्तव्यं अपराह्णव्यापिनीयायापार्वणेसातिथिःस्मृता पूर्वस्यांनिर्वपेत्पिंडामित्यादिऋषिभाषितमितिवचनात् दर्शंचपौर्णमासंचापितुःसांवत्सरंदिनं पूर्वविद्धमकुर्वाणोनरकंप्रतिपद्यतइतिनारदीयपुराणाच्च अन्यत्रापि अपराह्णःपितॄणांतुयापराह्णानुयायिनी साकार्यापितृकृत्येपुनपूर्वाह्णानुयायिनीति ननु उदितेदैवतंभानौपित्र्यंचास्तमितेरवौ द्विमुहूर्त्तंत्रिमुहूर्त्तेश्चेत् सकालःपुण्यदायकः दिनांतेपंचनाड्यस्तुपुण्याःप्रोक्तामनीषिभिः उदयेचतथापित्र्येदैवेचैवचकर्मणीत्यादिवचनैःसाया

ह्रस्यापिपितृकालत्वमुक्तं तत्कथमपराह्णस्यैवपार्वणश्राद्धकालत्वमुच्यतइतिचेन्मैवंतस्यप्रतिषिद्धत्वात् तथाहिस्कंद पुराणे उपसंध्यंनकुर्वीतपितृपूजांकथंचन सकालश्चासुरःप्रोक्तःश्राद्धंतत्रविवर्जयेदिति मत्स्यपुराणे सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धंतत्रनकारयेत् राक्षसीनामसावेलागर्हितासर्वकर्मास्विति बौधयनहारीतावप्येवं तर्हिसायाह्नविधायकपूर्वो क्तवचनानांकोविषयइतिचेत्शृणु श्राद्धांगत्वेन निषिद्धस्य सायाह्नगौणकालतयाभ्यनुज्ञानं अतएवव्यासःस्वकालातिक्र मेकुर्याद्रात्रेः पूर्वतयाविधिरिति व्याघ्रपादोपि विधिज्ञःश्रद्धयोपेतःसम्यक्पात्रनियोजकः रात्रेरन्यत्रकुर्वाणःश्रेयःप्रा प्नोत्यनुत्तमं पृथ्वीचंद्रोदयेतु पूर्वोक्तवचनेषुयत्रसायाह्नसमययोगिनीतिथिरुक्तात्रापराह्णव्यापिनीज्ञेया सायाह्नस्त्रिमुहू र्त्तःस्यादितिमत्स्यादौ सायाह्ननिषेधात् यत्रत्रिमुहूर्त्तादिग्रहणंतच्छ्राद्धार्हापराह्णरूपत्रिमुहूर्त्तपरमिति कालतत्त्व विवेचने यच्च वायुपुराणवचनं शुक्लपक्षस्यपूर्वाह्णेश्राद्धंकुर्याद्विचक्षणः कृष्णपक्षेपराह्णेतुरौहिणंतुनलंघयेत् इति तद्द्वेधाविभक्तपूर्वाह्णांतर्गतस्यकुतपपूर्वभागस्य तादृशापराह्णांतर्गतस्यच तदुत्तरभागस्य पक्षभेदेनोपक्रमका लत्वंव्यवस्थापनपरं एवं व्यवस्थायां न कस्यचिद्बाधोपेक्षितविधानंच लभ्यते विष्णुनाऽपि पूर्वाह्णापराह्ण योः पक्षभेदेनोपक्रमोदर्शितः शुक्लपक्षस्यपूर्वाह्णेकृष्णपक्षापराह्णके विप्रानुस्नातांस्तुविधिवन्नत्वातानुपवेशये दिति हेमाद्रौतुवायुपुराणवचनस्यैकोद्दिष्टविषयत्वमप्युक्तं एकोद्दिष्टमपिपक्षभेदेनकुतपपूर्वोत्तरभागयोरुपक्रमणीय मिति ननुसायाह्नेपियदाकथंचित्प्रत्यूहस्तदाश्राद्धस्यकिंलोपएवाकिंवारात्रावपिकर्त्तुंशक्यते अत्रमाधवः नतावद्रात्रौ सर्वात्मनाश्राद्धस्यनिषेधोवक्तुंशक्यतेआपस्तंबेनरात्रौश्राद्धसमाप्त्यभ्युपगमात् नचनक्तंश्राद्धंकुर्वीतारब्धेचभोजनस मापनमिति अन्नभोजनग्रहणांपिंडदानोपलक्षणं नन्वेवमापिरात्रौसमाप्तिरेवाभ्यनुज्ञायते नत्वारंभइतिचेत् मैवं आरंभस्यापिसमाप्त्या उपलक्षणीयत्वात् आब्दिकश्राद्धपरित्यागप्रत्यवायबाहुल्यस्मरणात् तानिचप्रत्यवायबोध

कानिवचनान्यग्रेवक्ष्यंते कालतत्त्वविवेचनेतुप्रारब्धेश्राद्धेदैवमानुषप्रतिबंधादसमाप्तेयदिरात्रिवरस्तमियात्तदा प्रारब्धत्वा द्रात्रावपितत्समाप्तेःप्रसक्तिः नचनक्तंश्राद्धंकुर्वीतेतिनिषेधः तथाचअसमाप्तिकृतमेवस्थापयित्वा परेद्युः कृत्वा तत्स मापनीयं यजमानेनापितदुत्तरमेवभोक्तव्यं नतुपूर्वादिन इतिश्रुतमेवोत्तरसूत्रं प्रारब्धेचाभोजनमसमापनादितिहरद त्तः प्रारंभश्चपूर्वेद्युर्निवेदनमिति नन्वेवंसतिरात्रेरन्यत्रकुर्वाणःश्रेयः प्राप्नोत्यनुत्तममितिस्मरणात् अपराह्णवन्मु ख्यत्वेनसायाह्नवद्गौणत्वेनवाप्रातः संगवावपि कालौप्रसज्ज्येयातांनायंदोषः शिवराघवसंवादेप्रातःकालस्य नि षिद्धत्वात् प्रातःकालेषुचश्राद्धंनकुर्वीतद्विजोत्तमः नैमित्तिकेषुश्राद्धेषुनकालनियमः स्मृतइति यद्यपिसंगवोनसा क्षान्निषिद्धस्तथापिकुतपमुहूर्तेमुख्योपक्रमस्यगांधर्वमुहूर्तेगौणोपक्रमस्याभिधानेसतिअर्थान्निषेधः परिशिष्यते उप क्रमद्वयं शिवराघवसंवादेदर्शितं ग्रहादिव्यतिरिक्तस्यप्रक्रमेकुतपःस्मृतःकुतपादथगांधर्वादासनंकुतपेभवेदिति ग्र. हग्रहणं आदिशब्देनसंक्रांत्यादिनिमित्तमुच्यते तस्यनिमित्ताधीनत्वात्कुतपोनियंतुनशक्यते इतरस्यचसांवत्सरिका देरस्ति कुतपनियमः कदाचित्कार्यवशात् श्राद्धस्य सहसाकरणीयत्वेसतिकुतपादर्वाचीनोगांधर्वोप्युपक्रमः काल तयाभ्यनुज्ञायते कुतपस्यमुख्यत्वमनेकवचनविहितत्वादवगंतव्यम् तदेवंपार्वणश्राद्धस्यापराह्णःकुतपः प्रारंभ कालइतितदुभयव्यापिनीतिथिर्ग्राह्या यदातुकुतपापराह्णोभयव्यापिनीनसंभवति तदा केवलापराह्णव्यापिन्ये वतिथिर्ग्रहीतव्या पित्र्यंचापराह्णिकीतिभविष्यत्पुराणाभिधानात् यत्तु मध्यान्हव्यापिनीयास्यात्तिथिःपूर्वापरापि वा . तत्रकर्माणिकुर्वीतह्रासवृद्धीनकारणमितिवचनं तदेकोद्दिष्टंतुमध्यान्हइति वचनांतरसंवादेनैकोद्दिष्टविषयं का लतत्त्वविवेचनेऽपि मुहूर्तपंचकंसार्द्धमुहूर्तचतुष्टयंवापार्वणप्रयोगकालः यदिच तावत्कालव्यापिनीलभ्यतेतदाउदारः कल्पः यदाच तादृशीनलभ्यतेतदाप्रधानप्रयोगकालत्रिमुहूर्तात्मकापराह्णव्यापिनीग्राह्येति तत्रयदैकस्मिन्नेव

दिनेकात्स्न्र्येनैकदेशेनवोक्तकालव्यापिनी सैव दिनद्वयेवैषम्येण तदेकदेशव्याप्तैतदाधिक्यवतीग्राह्या तदाहमरीचिः
द्यपराह्णव्यापिनीचेदाव्दिकस्ययदातिथिः महतीयत्रतांवृद्धांप्रशंसंतिमहर्षयइतिमदनरत्ने यदिदिनद्वयेऽपितुल्या
पराह्णैकदेशव्याप्तिस्तदातिथिक्षयेपूर्वाकर्त्तव्यावृद्धौतूत्तरा तथाचक्षयाहप्रसंगेबौधायनः अपराह्णद्वयव्यापिन्य
तीतस्ययदातिथिः क्षयेपूर्वानुकर्त्तव्यावृद्धौकार्यातथोत्तरेति तिथिसाम्येतुपूर्वैवग्राह्या दर्शचपौर्णमासंचेति पूर्वो
दाहृतनारदीयपुराणवचनात् यच्चखर्वोदर्पइतिवचनं तत्क्षयाहव्यतिरिक्तश्राद्धविषयं द्विरन्हव्यापिनीचेत्स्यादा
व्दिकस्य यदातिथिः पूर्वविद्धाप्रकर्त्तव्यात्रिमुहूर्त्ताभवेद्यदीति स्मृत्यंतरवचनविरोधात् कालतत्त्वविवेचनेतु दिनद्वये
साम्येनतदेकदेशव्याप्तिस्तस्याएवतिथेः क्षयेनसाम्येनवृद्ध्याचभवतितत्रखर्वोदर्पस्तथाहिंसेतिवचनात् निर्णयःख
र्वःसाम्यवांस्तिथिः दर्पोवृद्धिमान् हिंसाक्षयस्तद्वानित्यादिमुख्यवचनस्यापिसांप्रतिकलक्षणयाप्रयोगः अतएवलिंग
त्यागेगंगाशव्दवत् तिथिलक्षणंतिथिस्वरूपंभावपरत्वेनखर्वादिशव्दानांव्याख्यानपरंपूर्वकालिकीत्यनेनानन्वया
दुपेक्षितं अत्रखर्वादीनांपरपूर्वविभागेनग्राह्यत्वाभिधानात्स्पष्टमेवखर्वत्वादीनांग्राह्यातिथिगतत्वं अपराह्णद्वयव्या
पिन्यतीतस्ययदातिथिरितिपूर्वोक्तबौधायनवचनंतु दिनद्वयेसंपूर्णकर्मकालव्याप्तिविषयमेव द्यहेतुव्यापिनीचेत्स्या
न्मृताहस्यतुयातिथिःपूर्वस्यांनिर्वपेत्पिंडमित्यांगिरसभाषितामिति मनुवचनमपिकात्स्न्र्येन दिनद्वयेकर्मकालव्याप्तिवि
षयं अत्रचबौधायनवचनेक्षयवृद्धिसाम्यानिदिनद्वयसंपूर्णकर्मकालव्याप्तेर्द्व्येकानियतत्वात्तत्रातिथौचसंभवेनग्राह्याति
थ्युत्तरतिथिगतानिग्राह्याणि दर्शचपौर्णमासंचपितुःसांवत्सरंदिनं पूर्वविद्धमकुर्वाणोनरकंप्रतिपद्यतइति नारदीय
पुराणमपिपूर्ववचनसंवादि अतएवतत्रतन्नोक्तम् यत्कालव्याप्त्यानिर्णयं तत्रपूर्वोत्तराविद्धाग्राह्यत्ववचनानिप्रवर्त्ततइति
यत्रमूलंतिथिःप्रोक्ताशास्त्रज्ञैः कालकोविदैः यस्यामस्तंरविर्यातिपितरस्तामुपासते पराह्णव्यापिनीयातुपार्वणेसा

उदाहृतेत्यादीनिवचनान्यप्यत्रोपोहनीयानि यदातुदिनद्वयेप्यपराह्णसंबंधाभावस्तदापूर्वैवग्राह्या तदाहमनुः नद्वय
हव्यापिनीचेत्स्यान्मृताहस्यचयातिथिः पूर्वविद्धैवकर्त्तव्यात्रिमुहूर्त्तापियाभवेदिति यद्यपिव्याप्त्यभावएकदेशसत्त्वेपिसं
भवतितथापित्रिमुहूर्त्तापियाभवेदिति वाक्यशेषात्स्पर्शाभावएवात्रह्रासः श्राद्धंत्वेकभक्तादिवत्स्वकालएव तत्र तत्तिथ्य
भावेपिकर्त्तव्यं तिथ्यादौचभवेद्यावान्ह्रासोवृद्धिःपरेहनि तावान्ग्राह्यःसपूर्वेद्युरदृष्टोपिस्वकर्मणीतिवचनात्तत्तिथिक्षय
स्यपूर्वतिथौप्रक्षेपेणयांतिथिंसमनुप्राप्यअस्तंयातीतिसाकल्यवचनेनच तत्र तत्तिथेः सत्त्वात् तिथ्यादावित्यादिपदेन
नक्षत्रयोगोगद्यते तदेतत्क्षयाहश्राद्धमवश्यंकर्त्तव्यमित्युक्तं ब्रह्मपुराणे श्राद्धप्रकरणे प्रतिसंवत्सरंकार्यंमातापित्रो
र्मृतेहनि पितृव्यस्याप्यपुत्रस्यभ्रातुर्ज्येष्ठस्यचैवहि पितृव्यादिग्रहणं मातामहादीनामप्युपलक्षणं भविष्यत्पुरा
णे सर्वेषामेवश्राद्धानांश्रेष्ठंसांवत्सरंमतं क्रियतेतत्खगश्रेष्ठमृतेहनिबुधैःसदा मृतेऽहनिपितुर्यस्तुनकुर्याच्छ्राद्धमा
दरात् मातुश्चखगशार्दूलवत्सरांतेमृतेऽहनि नाहंतस्यखगश्रेष्ठपूजांगृह्णामिनोहरिः नब्रह्मानचवैरुद्रोनचा
न्येदेवतागणाः तस्माद्यत्नेनकर्त्तव्यंवर्षेवर्षेमृतेहनि प्रतिवर्षंखगश्रेष्ठभोजकेनविशेषतः भोजकोयस्तुवैश्राद्धं
नकरोतिखगाधिप मातापितृभ्यांसततंवर्षेवर्षेमृतेऽहनि सयातिनरकंघोरंतामिस्रंनामनामतः ततोभवतिदुष्टा
त्मानगरेशूकरःखगेति भोजकोभोजयितासंप्रयुक्तइत्यर्थः एतत्क्षयाहश्राद्धं सूर्यग्रहणादिनेभोक्तुर्वाब्राह्मणस्यालाभे
तद्दिन एवामान्नादिनाकर्त्तव्यं तदुक्तंगोभिलेन दर्शेरविग्रहेपित्रोः प्रत्याब्दिकमुपस्थितं अन्नेनासंभवेहेम्ना
कुर्याद्वामेनवासुत इति दर्शेपित्रोःसुतरवीतिचसर्वमविवक्षितमुपलक्षणं आमपदेनच वितुषतंडुलादिगृह्यतेनतुसतुषं
सतुषंक्षेत्रगतंप्राहुः सतुषधान्यमुच्यते आमंवितुषंप्रोक्तंस्विन्नमन्नमुदाहृतमितिवसिष्ठवचनात् प्रत्याब्दिकग्र
हणंच अन्नेनैवाब्दिकंकुर्यात् हेम्नावामेननक्वचिदिति वार्षिकेसर्वथासाधनत्वं . ननिषिद्धस्यामादेः प्रतिप्रसवार्थं

एतच्चमासिकस्याप्युपलक्षणं यानितु ग्रहणात्तुद्वितीयेह्निरजोदोषात्तुपंचमे तथाग्रस्तोदयेचंद्रेप्रत्यब्दंसमुपस्थितं तद्दि
नेचोपवासःस्यात्प्रत्यब्दतुपरेहनि तथा ग्रस्तावेवास्तमानंतुरवींदूप्राप्नुतोयदि प्रत्यब्दंतुतदाकार्यंपरेहन्येवसर्वदा चं
द्रसूर्योपरागेतुतथाश्राद्धंपरेहनि इत्यादीनि वचनानि तानिमहानिबंधेषुक्वाप्यनुपलंभात् पूर्वोक्तवचनजातविरोधाच्च
निर्मूलानि अमावास्यादिश्राद्धंतुतत्रामेनैवमवति श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्त्तितं अमावास्यादिनियतं
मासंसंवत्सरादृतइतिहारीतवचनात् श्राद्धस्यपाकश्राद्धस्यविघ्नेअसंभवेवामाससंवत्सरशब्दाभ्यांमासिकसांवत्सरि
कोपादानं सूतकेनाब्दिके श्राद्धेतरिते सूतकानंतरदिनेतत्कुर्यात् तदाहऋष्यशृंगः आब्दिकेचैवसंप्राप्तेअशौचंजायते
यदि अशौचेचव्यतिक्रांतेतत्रश्राद्धंविधीयतइति अशौचानंतरदिनेपिकरणासंभवे अमावास्यायांकुर्यात् तदाह
गोभिलः दैवात्प्रत्याब्दिकेश्राद्धेस्वंतरामृतसूतके अशौचानंतरंकुर्यात्तन्मासेंदुक्षयेऽपिचेति मरीचिनैकादश्यप्युक्ता
श्राद्धविघ्नेसमुत्पन्नेप्यविज्ञातेमृतेहनि एकादश्यांतुकर्त्तव्यंकृष्णपक्षेविशेषतइति तत्रविघ्नपदंसूतकात्तदितरविघ्नसामा
न्यपरं अशौचेतरविघ्नएतदिति माधवीये पृथ्वीचंद्रोदयेच केचित्त्वशौचानंतरंपुनः क्षयाहतिथावेवकार्य्यमित्याहुः
यथा तदहश्चेत्प्रमुच्येतकेनचित्सूतकादिना सूतकानंतरंकुर्य्यात्पुनस्तदहरेवचेति अत्रसूतकानंतरमितिसूतकपदंवि
घ्ननिमित्तस्योपलक्षणं तदहइत्युत्तरमासगतेतस्मिन्नेवदिनइत्यर्थः अत्राशौचांत्यआद्यःपक्षः मुख्यकालप्रत्यासत्तेः
ततोदर्शः ततःकृष्णैकादशी ततःशुक्लाततउत्तरमासे तदहरितिहेमाद्रिरितिमयूखे एतन्मासिकविषयमित्यन्ये यच्च
देवलवचनं एकोद्दिष्टंतुसंप्राप्तेयदिविघ्नःप्रजायते मासेन्यस्मिंस्तिथौतस्मिञ्छ्राद्धंकुर्यात्प्रयत्नतइति तदपिमासिकपर
मितिमदनरत्नेहेमाद्रौचेति निर्णयसिंधौ पत्न्यांरजस्वलायांतुक्षयाहश्राद्धंपक्वान्नेनेवकर्त्तव्यं पुष्पवत्स्वपिदारेषुविदे
शस्थोप्यनग्निकः अन्नेनैवाब्दिकंकुर्याद्धेम्नावामेननक्वचिदितिलौगाक्षिवचनात् अत्रआमस्यपृथगुपादानादन्नेनैवे

त्यत्रान्नशब्दःसिद्धांतपरः तेनपत्न्यांरजस्वलायामपि तदहरेवपक्केनैवसर्वस्यापिसांवत्सरिकश्राद्धानुष्ठानमुचितं मरी
चिरपि अनाग्निकःप्रवासीचयस्यभार्यारजस्वला आमश्राद्धंद्विजःकुर्यान्नतत्कुर्यान्मृतेहनीति कार्ष्णाजिनिः आपन्नो
प्याब्दिकंनैवकुर्यादामेनकुत्रचित् अन्नेनतदभावेतुकृष्णेवाहरिवासरे रजस्वलायांभार्यायांक्षयाहंयःपरित्यजेत् सवै
नरकमाप्नोतियावदाभूतसंप्लवं देवयाज्ञिकनिबंधेपि भर्तुःश्राद्धंपंचमेह्निकुर्य्याद्भार्यारजस्वला पुत्रःपित्रोःप्रकुर्वीत
मृताहन्यशुचिर्यतः कालादर्शेऽपि विदेशकोवाविगताग्निकोवारजस्वलायामपिधर्मपत्न्यां श्राद्धमृताहेविदधीतपा
केनामेनहेम्नानतुपंचमेह्निएवंमासिकेपि यत्तु मृताहनितुसंप्राप्तेयस्यभार्यारजस्वला श्राद्धंतदानकर्तव्यंकर्तव्यंपं
चमेहनीतिहेमाद्रिमाधवादिलिखितवचनं तद्यस्यमृतस्यश्राद्धकर्त्रीभार्यारजस्वलेतिव्याख्येयं नतुयस्यश्राद्धकर्तुर्भा
र्यारजस्वलेति पूर्वोक्तवचनजातविरोधात् अतएवश्लोकगौतमः अपुत्रातुयदाभार्यासंप्राप्तेभर्तुराब्दिके रजस्व
लाभवेत्सातुकुर्य्यात्तत्पंचमेऽहनीति नन्वशुचित्वादेवाधिकारप्रतिबंधवचनंव्यर्थमितिचेत्सत्यं गर्भिणीसूतिकादिश्चकु
मारीवाथरोहिणी यदाशुद्धातदान्येनकारयेत्प्रयतास्वयमिति हेमाद्रिधृतभविष्यवचनेनाधिकारप्रसक्तेःसत्वात् य
त्तु आपद्यनग्नौतीर्थेचप्रवासेपुत्रजन्मनि आमश्राद्धंप्रकुर्वीतभार्यारजसिसंक्रमे इतिकात्यायनवचनं तन्मासिका
ब्दिकव्यतिरिक्तविषयं श्राद्धविघ्नेद्विजातीनामिति पूर्वोक्तहारीतवचनात् हेमाद्रिस्तु पाणिग्रहणाद्धिसहत्वंकर्म
स्वितिवचनेनगृहस्थस्यश्राद्धेपिभार्ययासहैवाधिकारात्तस्याश्चरजस्वलादशायामशुचित्वेननाधिकारेव्यासज्यवृत्तेर्भ
र्तृगतस्याप्यधिकारस्यविघातात्तस्यास्तद्दशापगमएवाधिकारः एवमेवैकभार्यस्यश्राद्धमुचितमिति यस्यश्राद्धकर्तु
रित्यादिरेवमृताहनीतिवचनार्थः पुष्पवत्यपीतिवचनंतु सहाधिकृतभार्यांतरसद्भावविषयमित्याह दीपिकायाम
पि भार्यर्त्तौसतिपचमेचादिवसेस्याद्वार्षिकंमासिकं पक्कान्नैर्बहुभार्यकस्त्वधिकृतेपत्न्यंतरेतिष्ठति कुर्यात्तद्दिक्षयेस्वमु

स्यदिवसइति पाणिग्रहणाद्यतिवचनस्यापि शब्दस्वरसादनुवादरूपत्वेनन्यायमूलकत्वादुभयस्यापि तत्परत्वसा
ध्यश्रौतस्मार्त्तकर्मविषयत्वेनानुभयसाध्यश्राद्धविषयत्वे प्रमाणाभावान्नित्यमेतादिति कालतत्त्वविवेचने निर्णयसिंधु
मयूखादावप्येवं परमार्थतस्तु मीमांसकधुरीणस्यहेमाद्रेर्मतंयुक्तमेव यद्देवेभ्योयच्चपित्रादिकेभ्यःकुर्य्याद्भर्त्ताभ्यर्च
नंसत्क्रियांच तस्यार्द्धंवैसाफलंनान्यचित्तानारीभुंक्तेभर्तृशुश्रूषयैवेति स्कांदवचने अनग्निसाध्यदेवपित्राभ्यर्चन
सत्क्रियादिसकलकर्मजन्यफलार्धभागित्वस्यप्रतीतेस्तदंतर्गतश्राद्धेपिसहाधिकाराविघातात् श्राद्धेपिपितृप्रसाद
वायपरिवारातिरिक्तायुरादिफलानांश्रवणाच्च प्रजासहत्वकर्मभ्यइतिश्रुतेः पूर्वोक्तस्कांदवचनानुरोधेनाग्निसाध्यक
र्मविषयत्वेनसंकोचेप्रमाणाभावाच्च आपस्तंबीयधर्मसूत्रमपि ब्राह्मे विवाहेबंधुशीलश्रुतारोग्याणिबध्वाप्रजासह
त्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्येति व्याख्यातंचैतद्धरदत्तेन प्रजार्थंसहत्वकर्मार्थंचेति किंच मृतेहनी
तिवचनस्यापुत्रातुयद्याभार्येतिगौतमीयवचनसमानार्थतयाव्याख्याने अधिकारिण्याः स्त्रियाःशुद्धौ तदंतेश्राद्धानुष्ठा
नस्यजननमरणाशौचवन्न्यायादेवसिद्धेरेतद्वचनवैयर्थ्यापत्तेः नचगर्भिणीति पूर्वोक्तवचनेनाधिकारप्रसक्तिः एतद्वच
नस्यारब्धव्रतादिविषयत्वेनमृताहश्राद्धविषयत्वाभावात् तस्मान्मृतेहनीतिवचनस्यरजोदर्शनकालेश्राद्धाननुष्ठानबोध
कस्यपुष्पवत्स्वपीतिवचनस्यचतदनुष्ठानबोधकस्यपरस्परंविरोधेएकभार्येणतस्यांरजस्वलायांश्राद्धंनकर्त्तव्यं अने
कभार्येणतुज्येष्ठायांरजस्वलायांतस्यांशुद्धायांतुकनिष्ठयातादृश्यामपिकर्त्तव्यंज्येष्ठयानाविनेतरेतिवचनेनज्येष्ठयाएवस
हाधिकारप्रतिपादनादितिसर्वंसुस्थं माधवस्तुमतद्वयमिदंलिखितवान् नतुकिंचिन्निर्णीतवान् इतिदर्शेश्राद्धंतुभार्यार
जसि आमेनकार्यं श्राद्धविघ्नेद्विजातीनामितिहेमाद्रौहारीतोक्तेःअन्यत्रापि आर्त्तवेदेशकालानांविप्लवेसमुपस्थिते
आमश्राद्धंद्विजैःकार्यंशूद्रःकुर्यात्सदैवहीति दीपिकायामपि दर्शेतुभार्यार्त्तवेप्यामश्राद्धविधिरित्यादिमयूखे श्राद्ध

विप्रोऽत्रपत्नीरजोदर्शनं अपत्नीकःप्रवासीचयस्यभार्यारजस्वला सिद्धान्नेननकुर्वीतआमंतस्यविधीयतइत्युशनोवा क्यात् आमाभावेतुव्यासः द्रव्याभावेद्विजाभावेप्रवासेपुत्रजन्मनि हेमश्राद्धंप्रकुर्वीतयस्यभार्यारजस्वलेति निर्णयासिं धोतुइदंचामहेमविधानंपाकासंभवे पाकाभावेद्विजातीनामामश्राद्धंविधीयतइतिसुमंतूक्तेः मासिकानिसपिंडंचआभावा स्यातथाब्दिकं आमान्नेनतुकर्तव्यंयस्यभार्यारजस्वलेति कालिकावचनाच्च कालादर्शेतु स्त्रियारजोदर्शनेदर्शश्रा द्धंपंचमेहनीतिपक्षांतरमुक्तं पारिजातेप्येवं एवंमहालययुगादावपीति यस्यतु क्षयाहोनज्ञायते मासस्तु ज्ञाय तेतस्यतन्मासस्यामावास्यायामेकादश्यांवा क्षयाहश्राद्धंकर्तव्यं तदाहबृहस्पतिः नज्ञायतेमृताहश्चेत्प्रोपितेसंस्थि तेसति मासश्चेत्प्रतिविज्ञातस्तद्दर्शेस्यात्तथाब्दिकमिति मदनरत्नेतु मृताहनीतिपाठः मृताहेयत्कर्तव्यंतद्दर्शेक र्तव्यमित्यर्थः प्रोपितइति मृततिथ्यज्ञानकारणोपलक्षणं अतएवसामान्यतोभविष्यत्पुराणे मृताहंयोनजानाति मानवोविनतात्मज तेनकार्यममावास्याश्राद्धंसांवत्सरंनृपेति श्राद्धविघ्नेसमुत्पन्नइति पूर्वोक्तमरीचिवचनमपि यद्य पि चात्रकृष्णपक्षेविशेषतइत्युक्त्याशुक्लैकादश्यनुकल्पस्तथापि शुक्लपक्षमृतइतिज्ञानेसैवग्राह्या पक्षस्याप्यज्ञाने तुसानुकल्पइति द्रष्टव्यं मरणादिनज्ञाने मासाज्ञाने मार्गशीर्षभाद्रमाघानामन्यतमेमासे तद्दिने कर्तव्यं तथाचभ विष्यपुराणे ॥ दिनमेवविजानातिमासंनैवतुयोनरः मार्गशीर्षेथवाभाद्रेमाघेवाथसमाचरेदिति अत्रापिशुक्लपक्षज्ञा नेतद्गतातिथिः नोचेत्कृष्णपक्षगतैवतस्याः पित्र्येप्रशस्तत्वात निर्णयामृतेतु आषाढोप्युक्तःयदामासोनविज्ञातो विज्ञातंदिनमेवतु तदात्वाषाढकेमासिमाघेवातद्दिनंभवेदिति बृहस्पत्युक्तेः कालादर्शेपि मासाज्ञाने कार्यमाषा ढमाघयोरित्युक्तं यदोभयमपि न ज्ञायते तदा प्रवासमासदिवसोग्राह्यः तदाह बृहस्पतिः दिनमासावविज्ञा तौमरणस्ययदापुनः प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशेत्यस्यायमर्थः प्रस्थानस्यापिमासाज्ञानेचमार्ग

शीर्षादिषु तस्यां तिथौ तिथ्यज्ञानेतु मार्गीमायांश्राद्धंकार्यंतदभावेप्रस्थानदिनावेति शुक्लपक्षेतदज्ञानयोः पूर्ववत् यदामरणप्रस्थानमासादिनज्ञातंतदामरणवार्ताश्रवणदिने तत्राप्यसंभवेवार्ताश्रवणमामावास्यायांकुर्यात् तदुक्तंप्र चेतसा अपरिज्ञातेमावास्यायांश्रवणदिनेवेति भविष्यपुराणेपि मृतवार्ताश्रुतेर्श्राद्धौतौपूर्वोक्तक्रमेणत्विति पूर्वोक्तक्र मेणत्वित्यस्यायमर्थः मरणवार्ताश्रवणसंबंधिमासमात्रस्मरणे तदमावास्यादिषु तद्दिनमात्रस्मरणे मार्गशीर्षादिसं बंधिनितद्दिनेशुक्लपक्षादि तदज्ञानयोः पूर्ववत् यस्यतुमरणंतत् श्रवणप्रस्थानानां सर्वेषामपि दिनमासयोरज्ञाने त दाब्दिकविषयेप्रभासखंडे मृतस्याहानिजानातिमासंवापिकथंचन तेनकार्यममावास्यांश्राद्धंमाघेथमार्गकइति कथं चनेति मरणादिरूपेणकेनापिचिह्नेनेत्यर्थः यस्यत्वज्ञातदेशगतस्यजीवनमरणाद्यन्यतरानिर्धारणात् पंचदशवर्षाणि प्रतीक्ष्यपश्चात्प्रतिकृतिदाहाद्यौर्ध्वदैहिकंक्रियते तस्यदाहकालतिथावेवाब्दिकंकार्यं तथाचजातूकर्ण्यः पितरिप्रोषि तेयस्यनवार्तानैवचागतिः ऊर्ध्वंपंचदशाद्वर्षात्कृत्वातत्प्रतिरूपकं कुर्यात्तस्यचसंस्कारंयथोक्तविधिनाततः तदानीमे वसर्वाणिप्रेतकर्माणिसंचरेदिति पितरीत्येतत्प्रोषितमात्रस्योपलक्षणमितिमदनरत्ने तदानीमिवतदानिमृतस्येवत्रने नसर्वत्रदाहदिनस्यावधित्वं भविष्योत्तरेतु तदादोष्येवेतिपाठः कालतत्त्वविवेचनेतु पंचदशवर्षप्रतीक्षापितृविष यापितरीतिवचनात् यत्तु यस्यनश्रूयतेवार्तायावद्द्वादशवत्सरं कुशपुत्रकदाहेनतस्यस्यादवधारणमिति वृहस्प तिवचनं प्रोषितस्ययदाकालोगतश्चेत्तु्द्वादशाब्दिकः प्राप्तेत्रयोदशेवर्षेप्रेतकार्याणिकारयेत् जीवन्यदिसआगच्छेत् घृतकुंभेनियोजयेत् उद्धृत्यस्नापयित्वास्यजातकर्मादिकारयेत् द्वादशाहंव्रतंकुर्यात्त्रिरात्रमथचास्यतु स्नात्वोद्वहेत्त तांभार्यामन्यांवातदभावतः अग्नीनाधायविधिवद्व्रात्यस्तोमेनवायजेत् अथैंद्राग्नेनपशुनागिरिंगत्वाचतत्रतु इष्टिमायु ष्मतींकुर्यादीप्सितांश्चक्रतूंस्ततइति वृद्धमनुवचने तत्पित्रातिरिक्तविषयं जीवान्नित्यादितुपितर्यपिभवत्येवव्रतचर्याद्य

ह्मचर्यरूपापंचाशद्वर्पन्यूनवयस्कस्यपंचदशवर्षप्रतीक्षातदधिकवयस्कस्यद्वादशवर्षाणीतिकेचित् दर्शेचवार्षिकादि
श्राद्धप्राप्तौकालादर्शेविशेषउक्तः दर्शस्यचोदकुंभस्यदर्शमासिकयोरपि नित्यस्यचाब्दिकस्यापिदर्शाब्दिकयोरपि
इत्युक्त्वा संपातेदेवताभेदात् श्राद्धयुग्मंसमाचरेत् निमित्तनियतिश्चात्रपूर्वानुष्ठानकारणमिति अत्रक्रमोनिर्णयदीपउ
क्तः नष्टचंद्रेयदाकालेक्षयाहदिवसोभवेत् वैश्वदेवंक्षयश्राद्धंकुर्यात्प्राक्दर्शकर्मणः वैश्वदेवमतिक्षयाहश्राद्धविशे
षणंतेनपार्वणमितिलभ्यते एतच्चोपरंजकंनतुव्यावर्त्तकं अमावास्यायांक्रियमाणस्याब्दिकश्राद्धस्यनियतपार्वणरूपा
त्वात् तदुक्तंशंखेन अमावास्याक्षयोयस्यप्रेतपक्षोथवापुनः पार्वणंतस्यकर्तव्यंनैकोद्दिष्टंकदाचनेति आमश्राद्धंचा
नुपनीतोपिकुर्यात् तदुक्तंश्राद्धशूलपाणौमात्स्ये अमावास्याष्टकाकृष्णपक्षपंचदशीपुचेत्युपक्रम्य एतच्चानुपनीतोपि
कुर्यात्सर्वेषुपर्वसु श्राद्धंसाधारणंनामसर्वकामफलप्रदं भार्याविरहितोप्येतत्प्रवासस्थोपिनित्यशः शूद्रोप्यमंत्रव
त्कुर्यादनेनविधिनाबुधइति स्मृत्यर्थसारेतु अनुपनीतस्त्रीशूद्राश्चश्राद्धंऋत्विजाकारयेयुः स्वयंवामंत्रवर्जंकुर्युरिति
आब्दिकादिदिनेद्रव्याद्यभावात् श्राद्धकरणासंभवेपिंडदानमात्रंकुर्यात् तस्याप्यसंभवेप्युपवासंकुर्यात् तदुक्तंपिंड
मात्रंप्रदातव्यमभावेद्रव्यविप्रयोः श्राद्धाहनितुसंप्राप्तेभवेन्निरशनोपिवेति पात्राभावेतुविशेषःस्मृत्यंतरेप्रोक्तः पा
त्राभावेपरंकृत्वापितृयज्ञविधिंनरः निर्दिश्याप्यन्नमुद्धृत्ययत्रपात्रंनभोजयेदिति पितृयज्ञविधिः श्राद्धविधिःअन्यत्रा
पि सर्वाभावेक्षिपेदग्नौगवेदद्यात्तथाप्सुवा नतुप्राप्तस्यलोपोस्तिपैतृकस्यविशेषत इति सर्वस्योक्तस्यानिषिद्धस्य च
पात्रस्याभावइत्यर्थः अतिदरिद्रस्यतर्पणमात्रेऽपि तिलाद्यभावेवृद्धवसिष्ठेनविशेषउक्तः अग्निनावादहेत्कक्षंश्राद्धकाले
समागते तस्मिन्नुपवसेदह्निजपेद्वाश्राद्धसंहितामिति कक्षंतृणसमूहं विष्णुपुराणेतु सर्वाभावेवनंगत्वाकक्षमूलप्र
दर्शकः सूर्यादिलोकपालानामिदमुच्चैः पठेत्ततः नमेस्तिवित्तंनधनंनचान्यच्छ्राद्धोपयोग्यस्वपितृन्नतोस्मि तृप्यंतुभ

क्याःपितरोमभेतोभुजोकृतोवर्त्मनिमारुतस्य इत्येतत्पितृभिर्गीतंभावाभावप्रयोजकं यःकरोतिकृतंतेन श्राद्धंभवतिपा
र्थिवेति इत्याब्दिकश्राद्धतिथिनिर्णयः अथेष्टिकालोनिरूप्यते यद्यपीष्टिप्रातिपदिकर्त्तव्यतयाप्रतिपत्प्रकरणएव अ
यमभिधातुमुचितः तथापि पर्वचतुर्थांशस्यापिप्रातिपदइष्टिकालत्वेनसंधौयजेतेतिश्रुत्यासंधिकालसापेक्षत्वेनचपर्वनि
र्णयानंतरमस्यनिर्णयस्यावसर इति पर्वनिर्णयानंतरंनिर्णीयते यद्यपि संधौयजेतेतिश्रुतौसंधिकालमात्रस्ययागांग
त्वंप्रतिभाति तथापितस्यातिसूक्ष्मत्वेनतत्रसांगप्रयोगानुष्ठानानुपपत्तेः संधिशब्दोलक्षणयाकर्मानुष्ठानयोग्यंसंधिं
पार्श्वद्वयवर्त्तिकालविशेषंलक्षयति अतएवश्रुतिः संधिमभितोयजेतेति बौधायनोपि सूक्ष्मत्वात्संधिकालस्यसंधेर्वि
षयउच्यते सामीप्यंविषयंप्राहुः पूर्वेणाह्नापरेणवा वाशब्दश्चार्थे तच्चपर्वद्विविधं पौर्णमास्यमावास्याचेति तत्रशु
क्लापंचदशीचंद्रमंडलकलाभिः सर्वात्मनापूर्यते सोममंडलेपरिपूर्णेपूर्णिमेत्यनेननाम्नाज्ञायते तदुक्तं ब्रह्मांडमत्स्यपु
राणयोः कलाक्षयेव्यतिक्रांतेदिवापूर्णेपरस्परं चंद्रादित्यौपराह्णेतुपूर्णत्वात्पूर्णिमास्मृतेति अह्नःपरोभागःपराह्णः
सूर्यास्तमयकालइत्यर्थः तत्रयथाऽऽदित्यः संपूर्णमंडलः सन्नस्तमेति तथोत्तरेक्षणेचंद्रः संपूर्णमंडलः सन्नुदेतीतिदृष्टां
तदार्ष्टांतिकभावस्यविवक्षितत्वात् द्वयोरादित्यचंद्रयोरुपन्यासः यथामंडलपूर्णत्वविवक्षया पूर्णिमाशब्दःप्रयुज्यते
तथापूर्णत्वविवक्षयापौर्णमासीशब्दःप्रयुज्यते तदुक्तंभविष्योत्तरे पूर्णमासोमहाराजसोमस्यदयितातिथिः पूर्णोमा
सोभवेद्यस्मात्पौर्णमासीततःस्मृतेति पूर्णिमामावास्ययोर्विकल्पोमासप्रस्तावेदर्शितः अमावास्याइत्यनेननाम्ना
वहवोर्थाःकथ्यंते तत्राऽमाशब्दस्यचत्वारोर्थाः सूर्यरश्मिश्चंद्रकलाकन्यासहभावश्चेति वसुशब्दस्यापिचत्वारोर्थाः
पितृविशेषःनिवासश्चंद्रइंद्रश्चेति तत्रामाशब्दस्यसूर्यरश्मिवाचित्वेवसुशब्दस्यनिवासवाचित्वेअमायांरविरश्मौवसु
र्वासोयस्यांइतिनिर्वचनं तथाचस्कांदे नागरखंडे अमानामरवेर्धोरश्मिःसहस्रप्रमुखःस्मृता यस्यास्तेजसासूर्यः

प्रोक्तस्त्रैलोक्यदीपकः तस्मिन्वसतियेनेंदुरमावास्याततःस्मृतेति अमाशब्दस्यसहभाववाचित्वेवसुशब्दस्यानिवास
वाचित्वे अमासहवसुर्निवासोयस्यामितिनिर्वचनं तदुक्तंमत्स्यवायुब्रह्मांडपुराणेषु अमावसेतामृक्षेतुयदाचंद्रदिवा
करौ एपापंचदशीरात्रिरमावास्याततःस्मृतेति अमाशब्दस्यचंद्रकलावाचित्वंस्कांदेदर्शितं अमाषोडशभागेनदे
विप्रोक्तामहाकलेति तांकलामुपजीवतीतिनिर्वचनं भगवतीपुराणेदर्शितं कलावशिष्टोनिष्क्रांतः प्रविष्टःसूर्यमंडलं
अमायांविशतेयस्मादमावास्याततःस्मृतेति अमाशब्दस्यकन्यावाचित्वे वसुशब्दस्यपितृवाचित्वेअमावसुंऐच्छत् अ
स्यांराज्ञावित्यमावास्येतिनिर्वचनं तथाचब्रह्मपुराणे अग्निष्वात्ताइतिख्यातायज्वानोयज्ञसंस्थिताः अच्छोदानाम
तेषांतुमानसीकन्यकानदी तमथामावसुंनामापितरंवीक्ष्यसंगतेत्यादि वसुशब्दस्यचंद्रवाचित्वे अमाशब्दस्यसह
भाववाचित्वमंगीकृत्य अमाभिः ओषधीभिःसहचंद्रोवसत्यस्यांरात्राविव्यमावास्येतिनिर्वचनं अयमर्थः शतपथ
ब्राह्मणात् तद्यदेष एतांरात्रिमिहावसति तस्मादमावास्यानामेति बृहदारण्यकेप्येवम् अमाशब्दस्यसहभाव
वाचित्वे वसुशब्दस्य इंद्रवाचित्वे अमासहवसुरिंद्रोयास्तीत्यमावास्येतिनिर्वचनं अयमर्थः शतपथब्राह्मणेदर्शपूर्ण
मासप्रकरणेश्रूयते तेदेवाअब्रुवन् अमावैनोद्यवसुर्वसतियोनःप्रावात्सीदिति तैत्तिरीयब्राह्मणेपिस्पष्टमयमेवार्थः श्रू
यते इंद्रोहिदेवानांवसुस्तदमावास्यायाअमावास्यात्वमिति अमावास्याशब्दपर्यायेदर्शशब्दोपिदृश्यते सचाद्विवि
धःसूर्याचंद्रमसौपरस्परंपश्यतोत्रेतिदर्शः आश्रित्यताममावास्यांपश्यतः सुसमागतौ अन्योन्यंचंद्रसूर्यौतौयदासौ
दर्शउच्यत इतिमत्स्यवायुपुराणयोरभिधानात् तेचपौर्णमास्यमावास्येद्विविधे राकाचानुमतिश्चैवपौर्णमासीद्विधा
स्मृता सिनीवालीकुहूश्चैवअमावास्याद्विधैवत्विति पुराणवाक्यात् अत्रानुमतिः सिनीवालीच चतुर्दशीमिश्रे राका
कुहूश्चप्रतिपन्मिश्रे तथाचकाठकः श्रुतिः यापूर्वापौर्णमासीसानुमतिर्योत्तरासाराका यापूर्वामावास्यासासिनीवाली

योत्तरासाकुहूरिति वृद्धवसिष्ठः राकाचानुमतिश्चैवपौर्णमासीद्वयंविदुः एकासंपूर्णचद्रास्यात् कलोनानुमतिःस्मृता पौर्णमासीदिवादृष्टेशशिन्यनुमतिःस्मृता रात्रिदृष्टेपुनस्तस्मिन्सैवराकेतिकीर्त्तिता भगवतीपुराणे यदास्तमस्तमियात्सूर्य्यःपूर्णश्चेंदुरुपागमेत् युगपत्सोत्तराराकातदाभवतिपूर्णिमा मत्स्यब्रह्मांडपुराणयोः यस्मात्तामनुमन्यंते पितरोदेवतैःसह तस्मादनुमतिर्नामपूर्णिमाप्रथमास्मृता अत्यर्थंराजतेयस्मात्पौर्णमास्यांनिशाकरः राजनाच्चैवचंद्रस्यराकेतिकवयोविदुः मत्स्यब्रह्मांडपुराणयोः सिनीवालीप्रमाणस्तुक्षीणशेषोनिशाकरः अमावास्यांविशत्यर्कं सिनीवालीततःस्मृता अवासेनेतियावत् अल्पोवलोस्यास्तीतिवालीसिनीचासौवालीचेतिसिनीवालीसिनीवालीप्रमाणः वालाग्रमात्रइत्यर्थः कुहूरितिकोकिलेनोक्तेयावत्कालःसमाप्यते तत्कालसंज्ञिताह्येषाअमावास्याकुहूःस्मृता तथा अनुमतिश्चराकाचासिनीवालीकुहूस्तथा एतासांद्विलवः कालःकुहुमात्राकुहूःस्मृता इत्येषपर्वसंधीनांकालोयेद्विलवःस्मृतः ननुपौर्णमास्यांपौर्णमास्यांयजेत अमावास्यायाममावास्यायांयजेतेतिवचनात् कृत्स्नेष्टिप्रयोगस्तुपर्वकालत्वेप्राप्ते तत्कथं संधिकालापेक्षत्वमितिचेन् उच्यते पूर्वेद्युरग्निंगृह्णाति उत्तरमहर्यजतीत्यादिश्रुत्यंतरादन्वाधानाद्यनुष्ठानेनोपक्रमोत्रपर्वाणि इतरसकलमपितप्रधानानुष्ठानंतुप्रतिपदीति द्व्यहकालसाध्यत्वात्तत्सापेक्षत्वं अतएवगोभिलेनोक्तं पक्षांताउपवस्तव्याः पक्षादयोभियष्टव्याइति अत्रोपवासशब्देनाग्न्यान्वाधानादिविवक्षितंतस्मिन्क्रियमाणे यजमानसमीपेदेवतानांनिवासात् तथाचतैत्तिरीयब्राह्मणंउपास्मिञ्श्वोयक्ष्यमाणेदेवतावसंतियएवंविद्वानग्निमुपस्तृणातीति एवंपौर्णमास्योर्द्वयोः प्रयोगैकदेशान्वयेनसंकोचः पौर्णमास्यांपौर्णमास्यामित्यादिश्रुतेः पौर्णमास्यमावास्याशब्दयोस्तिथिविशेषेरूढत्वात् एवंसंधौयजेतेतिश्रुतिरपिसंधिमभितोयजेतेति श्रुत्यंतरैकवाक्यत्वात्पर्वप्रतिपत्समुदायलक्षणयाकृत्स्नप्रयोगकालविधायिकैव एवंचसतिपौर्णमास्यमावास्याश्रुतिरप्यमावास्यायाम

पराह्णे पिंडपितृयज्ञेनचरंतीत्यादौवृत्तिकारादिभिःसंधिवाचित्वेनव्याख्यानात् पौर्णमास्यमावास्याशब्दनिर्वचनार्थवादोपदर्शितप्रयोगाच्च पौर्णमास्यमावास्याशब्दयोरपिसंधिवाचित्वादपराह्णादिशब्दसमभिव्याहारस्यचाहोरात्रलक्षणाबीजस्याभावात्पूर्वोक्तरीत्या पार्श्वद्वयवर्तितिथिद्वयलक्षणयासंधौयजेतेतिवत्कृत्स्नप्रयोगेकालविधायिकेत्यपिवक्तुंशक्यं तत्रपूर्वस्मिन्पर्वदिनेयागप्रारंभःसचान्वाधानमिध्माबर्हिः संपादनमध्वर्युणागार्हपत्यादिपुसमान्नायतइत्यादिभिःसमिदाधानेक्रियमाणेयजमानेनाग्निंगृह्णामीतिमंत्रपठनरूपोग्निपरिग्रहउपस्तरणंचत्येवमादिः तथाचतैत्तिरीयब्राह्मणेश्रूयते पूर्वेद्युरिध्माबर्हिः करोति यज्ञमेवारभ्यगृहीत्वोपवसतीतिशतपथब्राह्मणेपि पूर्वेद्युरग्निंगृह्णातिउत्तरमहर्यजतीतिप्रतिपद्दिनेतुकर्मणेवदेवेभ्य इत्यादिभिरध्वर्युहस्तप्रक्षालनतंडुलनिर्वापपुरोडाशप्रदानादिलक्षणंप्रयोगंकरोतितदिदंयजनं तत्रापिनसंपूर्णपर्वान्वाधानकालः नापिसंपूर्णः प्रतियागकालः किंतुपर्वणोशत्रयमन्वाधानस्यकालः पर्वचतुर्थांशसहितप्रतिपदः आद्यमंशत्रयंचयागस्य तथाचलौगाक्षिः त्रीनंशानौपवस्तस्ययागस्यचतुरोविदुः द्वावंशावुत्सृजेदंत्यौयागेचव्रतकर्मणि औपवस्तस्योपवासस्याग्न्यन्वाधानादेस्त्रीनंशान्विदुः यागस्यचतुरंशान्विदुः अंत्यावंशौपंचदशीप्रतिपत्संबंधिनावुत्सृजेत् अंत्यमंशंपंचदश्याः व्रतकर्मणियागेच प्रतिपदश्चतुर्थमंशं अयंचप्रतिपत्पर्वांत्यचतुर्थांशभिन्नांस्त्रींश्चतुरश्चेतिपर्युदासविधयापूर्वशेषएवनतुस्वतंत्रस्त्यागविधिः पर्वणोयश्चतुर्थांशइत्यादिवाक्यांतरवशाद्वाक्यभेदापत्तेश्च अन्वाधानेपर्वचतुर्थांशवर्जनंचसद्यस्कालव्यतिरिक्तविषयंसद्यस्कालतायांतत्रैवतदनुष्ठानात् कथंतर्हियागेचतुरइत्यपेक्षणेयज्ञपार्श्वे पंचदश्याःपरःपदःपक्षादेःप्रथमास्त्रयः कालःपर्वणियागेस्यादन्यथातुनविद्यते कात्यायनःनयष्टव्यंचतुर्थांशेयागेः प्रतिपदःक्वचित् रक्षांसितद्विलुप्यंतिश्रुतिरेपासनातनी तत्राप्यहनियागः कर्तव्यः पूर्वेद्युरग्निं गृह्णातिउत्तरमहर्देवतायजेतत्यहर्विधानात् तत्रापिपूर्वाह्णएवपूर्वाह्णोवैदे

वानामितिश्रुतेः तत्रापिप्रातरेव पर्वणोयश्चतुर्थांशः आद्याःप्रतिपदास्त्रयः यागकालःसविज्ञेयःप्रातरुक्तोमनीषिभिरिति
वृद्धशातातपवचनात् प्रातर्यजध्वमश्विनेतिमंत्रलिंगाच्च प्रातःकालश्चपंचविधविभक्तदिनस्याद्यस्त्रिमुहूर्त्तोभागः ले
खाप्रभृत्यथादित्येत्रिमुहूर्त्तोस्थितेतुवै जातकालइतिप्रोक्तोभागश्चाह्नः सपंचमः समुहूर्त्तत्रितयंप्रातरित्यादिवचनाच्च
यस्तुचतुर्द्धाविभागपक्षेसार्धप्रहरात्मके आद्यभागे संगवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयत इतीदानींतनानां प्रातः श
ब्दप्रयोगः सलक्षणयाअनेकार्थत्वस्यान्याय्यत्वात् पूर्वाह्नप्रहरंसार्द्धमितिगोभिलेन तस्यपूर्वाह्णत्वोक्तेश्च ऋग्भिः
प्रातर्दिविदेवइयतइतित्रेधाविभक्तदिनस्यविभागविषयोपिप्रयोगस्तथा एवंचगोभिलीयादौपूर्वाह्नग्रहणेयोगेनेदशप्रा
तःपरमेव पर्वण्यन्वाधानादिकंप्रतिपदीष्टिरितिसंधिपार्श्वयोः आरंभसमाप्तीव्यवस्थितेएवंयागान्वाधानकालेस्थिते
यदापौर्णमास्यमावास्ययोस्तदुत्तरप्रतिपदोश्चसूर्योदयास्तमयस्पार्शित्वं तदा न कोपिसंदेहः तयोःखंडत्वेतुनिर्णयोभि
धीयते तत्रगोभिलः आवर्त्तनेयदासंधिः पर्वप्रतिपदोर्भवेत् तदहर्यागइष्येतपरतश्चेत्परेहनि पर्वप्रतिपदोःसंधिरर्वागा
वर्तनाद्यदि तस्मिन्नहानियष्टव्यंपूर्वेद्युस्तदुपक्रमः आवर्त्तनात्परःसंधिर्यदितस्मिन्नुपक्रम. परेद्युरिष्टिरित्येषपर्वद्वयवि
निश्चयइति मदनरत्नेपि यदारात्रौअपराह्णेवासंधिदिनेन्वाधायपरेद्युर्यष्टव्यं तदाहलौगाक्षिः अपराह्णेथवारात्रौय
दिपर्वसमाप्यते उपोष्यतस्मिन्नहनिश्वोभूतेयागइष्यतइति यदातुपूर्वाह्णमध्याह्णेवासंधिस्तदासंधिदिनेयागः पूर्वदि
नेन्वाधानम् तदाहसएव पूर्वाह्णेवाथमध्याह्णेयदिपर्वसमाप्यते उपोष्यतत्रपूर्वेद्युस्तदहर्यागइष्यते इतिमाधवीयेषु
वचनेषु मध्याह्नादिशब्दायौगिकाः नतु पंचधाविभागमाश्रित्यवृत्तास्तथासत्यह्नोमध्योमध्याह्नइतिव्युत्पत्तेः संवर्त्त
नंमध्याह्नशब्देनाभिधीयते अतएवगोभिलेनावर्त्तनशब्दःप्रयुक्तः शातातपेनमध्यमशब्दःप्रयुक्तः पूर्वाह्णेमध्यमेवापि
यदिपर्वसमाप्यते तदोपवासः पूर्वेद्युस्तदहर्यागइष्यतइति अह्नःपूर्वभागः पूर्वाह्नः अह्नोऽपरोभागोऽपराह्णः

अतस्ताभ्यांशब्दाभ्यामावर्त्तनात्पूर्वोत्तरभागवाचकौ आवर्त्तनात्तुपूर्वाह्णोह्यपराह्णस्ततःपरः मध्याह्नस्तुतयोःसं
धिर्यदावर्त्तनमुच्यते इत्येतत्प्रकरणपठितवचनात् आवर्त्तनादिति आवर्त्तनात् आङ्मर्य्यादायांतेनसूर्योदयमारभ्या
वर्त्तनंमर्य्यादीकृत्यपूर्वाह्णइत्यर्थः अस्मादेववचनादेतत्प्रकरणेमध्याह्नशब्द आवर्त्तनरूपदिनमध्यभागमात्रवचन
इति निर्णयसिंधावपि अत्रद्वेधाविभागः आवर्त्तनात्तुपूर्वोक्तवचनादितिमाधवीये वाजसनेयिनांतुविशेषमाहभाष्या
र्थसंग्रहकारः मध्यंदिनात्स्यादहनीहयस्मिन्प्राक्पर्वणःसंधिरियंतृतीया साखार्विकावाजसनेयिसत्यातस्यामुपो
ष्याथपरेद्युरिष्टिरिति आवर्त्तनादूर्ध्वमस्तमयादर्वाग्यदासंधिर्भवति तदहःसंधिमतीतिथिःप्रथमारात्रौसंधिश्चेत्साति
थिर्द्वितीया उभेअपेक्ष्यपूर्वाह्णेसंधिमतीपर्वतिथिस्तृतीयाभवतितस्यांतिथौ पर्वकालस्याल्पत्वात्सार्वविकेत्युच्यत्यु
च्यतेशाखांतराध्यायिनामिहशोविपर्ययेपूर्वेद्युरन्वाधानादिकंसंधितिथाविष्टिः वाजसनेयिनांतुसंधितिथावन्वाधानंउत्तर
तिथाविष्टिः एवंसतिवाजसनेयिनां नक्वापिसंधिदिनात् पूर्वेद्युरन्वाधानादिकमस्तिसोयंविशेषइति एतद्वचनपौर्णमासी
परमितिमदनरत्नेअपराह्णे पूर्णिमासंधावुत्तरेद्युःप्रातःप्रतिपच्चतुर्थांशसंभवेतत्रयागकरणेपिनदोषः यदाहवृद्धशाता
तपःसंधिर्यद्यपराह्णेस्याद्यागंप्रातःपरेहनि कुर्वाणःप्रतिपद्भागेचतुर्थेपिनदुष्यतीति नयष्टव्यंचतुर्थंशइतिकात्यायनव
चनंतुपूर्वाह्णेपर्वसंधौवेदितव्यं यदाह संगवादूर्ध्वमध्याह्नात्प्राक्चेदावर्त्तनाद्रवेः सापौर्णमासीविज्ञेयासद्यस्कालविधौ
तिथिरितिआपस्तंबोपि पौर्णमास्यामन्वाधानपरिस्तरणोपवासावासद्यस्कालायांसर्वंक्रियत इति संगवावर्त्तनयो
र्मध्येपौर्णमासीप्रतिपदोःसंधौसतिपूर्वोदाहृतैर्वचनैःसंधिदिनात्पूर्वेद्युरन्वाधानादिकंप्राप्तंतत्रसद्यस्कालवाक्यैःसंधिदि
नउत्कृष्यते ननुतथापिपर्वप्रतिपदोःसंधिरर्वागावर्त्तनाद्यदितस्मिन्नहनियष्टव्यंपूर्वेद्युःस्यादुपक्रमइति गोभिलवच
नेनविरोधोभविष्यतीतिचेत्नसंगवात्पर्वण्यपिसंधेरर्वाचीनत्वात्तद्विषयत्वंगोभिलवाक्यस्य कात्यायनवाक्यंतु संगवा

द्वंभाविमध्याह्नादर्वाचीनसंधिविषयत्वं यद्वा गोभिलवचनंपर्वद्वयसामान्यविषयंकात्यायनमितिविशेषवचनेनसामा न्यवचनवाधइत्यविरोधः यदाचावर्त्तनतत्पूर्वसंध्योःपर्वचतुर्थांशेयागानुष्ठानं तदा नयागप्रयोगः पर्वमध्येसमापनी यः किंतुप्रतिपदिप्रविष्टायांसमापनीयः प्रतिपद्यप्रविष्टायांयदिचेष्टिःसमाप्यते पुनःप्रागीयकृत्स्नेष्टिःकर्त्तव्याया गवित्तमेरितिगार्ग्यवचनेनान्यथादोषस्मरणात् प्रणीयाग्निमितिशेषः अत्रचप्रातरारभ्यसर्वकर्मनिर्वर्त्यविष्णुक्रमादि कःसमाप्तिपदार्थः प्रतिपदंशेकर्त्तव्यइतिमदनरत्ने प्रतिपदिप्रविष्टायांब्राह्मणभोजनमंत्यपदार्थःसमाप्तिःकर्त्तव्ये तिहेमाद्रौ परिशिष्टेतुपक्षादिचरोरुपक्रमोपिपक्षेप्रतिपदंप्रतीक्ष्यैवकर्त्तव्यइत्युक्तं पक्षादावेवकुर्वीतसदापक्षादिकंचरु पूर्वाह्णएवकुर्वीतविद्धेप्यन्येमनीपिणइति विद्धपूर्वविद्धे अमावास्यायांविशेषमाह वृद्धशातातपः द्वितीयात्रिमुहूर्त्ता चेत्प्रतिपद्यापराह्णिकी अन्वाधानंचतुर्दश्यांपरतःसोमदर्शनादिति वौधायनोप्येवं वृद्धवसिष्ठोपि इंद्राग्निरुप्तेप यसिपुरस्तादुदितेविधौ यद्वैगुण्यंहुतेतास्मिन्पश्चादापिहितद्भवेदिति अयमर्थः संपूर्णचतुर्दश्याममावास्याभ्रांत्यान्वा धानंकृत्वाहविषिनिरुप्ते उपासि पूर्वस्यां दिशिचंद्रोदयेसतियद्दर्शयागस्यवैगुण्यंतद्यागदिनेपश्चिमायांदिशिचंद्रोदये सतियद्दर्शयागस्यवैगुण्यंतद्यागदिनेपिभवतीति श्रुतिरप्यमुमेवार्थंबोधयति यस्मिन्नहनिपुरस्तात् पश्चाच्चसोमो नदृश्येततदहर्यजेतेति अयमर्थः सिनीवाल्यांपुरस्ताच्चंद्रोदृश्यतेद्वितीयायुक्तायांप्रतिपदिपश्चाच्चंद्रोदृश्यते अनयोरु भयोरपियागोनकर्त्तव्यः किंतु चंद्रदर्शनरहितायाममावास्यायांप्रतिपदिच यागः कर्त्तव्यः चंद्रदर्शनोपेतायांशुक्लप्र तिपदियागानुष्ठानेप्रायश्चित्तमाहकात्यायनः यजनीयेह्निसोमश्चेद्वारुण्यांदिशिदृश्यते तत्रव्याहृतिभिर्हुत्वादंडंदद्याद् द्विजातयइति दंडंदक्षिणांब्रह्मदंडमितिमदनरत्ने अत्रचेच्छब्दोयजतिनिमित्तत्वप्रतीतेर्विशेषणेसंक्रमादेवंनिमित्तवा क्याभिव्यक्तिः वारुणींसोमदर्शनवदहोयजनीययागसंबंधित्वान्मोहाच्चोभत्रयजेततदाव्याहृतिभिर्हुत्वादंडंदद्यादिति

हाविरार्त्तिमादित्यस्यहविश्चेदार्त्तिप्राप्तिविशिष्टस्यस्यादितिवचनेनयजनीयत्वोक्तिरप्यनुपपन्नास्मृत्यंतरे अर्वागस्त
मयाद्यत्रद्वितीयातुप्रदृश्यते तत्रयागंनकुर्वीतविश्वेदेवाःपराङ्मुखाः यंतइत्यर्थः अत्रद्वितीयात्रिमुहूर्त्तेतिद्रष्टव्यं त्रिमुहू
र्त्ताद्वितीयाचेदितिवाक्यांतरात् अत्रायंच पर्य्युदासःचंद्रदर्शनार्हः प्रतिपद्भिन्नायांप्रतिपदीतिसामान्यप्राप्त्युपजी
वानिषेधोवानयष्टव्यमितिवत् ननु यथाचंद्रदर्शनवतोदिनस्ययागे पर्य्युदासः अतस्तथान्वाधानेऽपि तस्माद्य
दैवैनंपुरस्तात्परस्तात्पश्येत्तर्ह्येवोपरमेदित्यादिसत्यंद्वयोरपि चंद्रदर्शनरहितकालः ससंपूर्णायाममावास्यायां प्रतिप
दिचदिनद्वयेऽपि चंद्रदर्शनाभावादुभयत्राप्यनुगम्यते यदात्वेकस्मिन्नेवदिने चंद्रदर्शनंतदोत्तरयोः स्वकालत्वासंभ
वेऽंगगुणविरोधेभवतीतिन्यायेन चंद्रादर्शनदिनेयागस्यपूर्वस्मिंश्चंद्रदर्शनवत्यप्यन्वाधानस्यानुष्ठानंयुक्तं अतएव
श्रुतिरपि तदेकेदृष्ट्वोपवसंतीति गोभिलोप्याह दृश्यमानेप्येकदेति तैत्तिरीयब्राह्मणेतु चंद्रदर्शनदिनेपि याग
उक्तः एषावैसुमनानामेष्टिर्यजद्येजानंपश्चाच्चंद्रमाअभ्युदेत्यस्मिन्नेवास्मैलोकेर्द्धंभवति अयमर्थः ययेष्ट्याचं
द्रदर्शनदिनेपश्चाच्चंद्रमासिउदितेतस्मैयजमानायास्मिल्लोकेसमृद्धिर्भवतीति श्रुत्यंतरेऽपि यदहःपश्चाच्चंद्रमाअभ्युदेति
तदहर्यजन्निमांलोकानभ्युदेति आपस्तंबसूत्रभाष्यार्थसंग्रहकारेणापि तत्रैवयागइत्युक्तम् अपराह्णेथवारात्रौयदिपर्व
समाप्यते उपोष्यातत्रराकास्यात्सापूर्णात्सार्पिर्लक्षणं पूर्वाह्णेवाथमध्याह्नेयदिपर्वसमाप्यते उपोष्यानुमति
स्तत्रसाश्वपूरितलक्षणा अपराह्णेक्षयायांवायदिपर्वसमाप्यते उपोष्यातुकुहूस्तत्रयदहर्नेतिलक्षणा पूर्वाह्णे
वाथमध्याह्णेपर्वसंधिर्यदाभवेत् तत्रोपोष्यासिनीवालीश्वोनद्रष्टारक्षणेति अत्रपदद्वये स्वस्वसूत्रानुसारेण व्यव
स्था ज्ञातव्येतिमदनरत्ने माधवीयेपि सोयंविशेषोनाश्वलायनापस्तंबविषयइति हेमाद्रिस्त्वपराह्णसंधावपि
परदिनेपि यद्यतुर्थांशे चंद्रोदयेच सतिद्वितीयादियष्टव्यं नक्षयेसतिपूर्वेद्युर्यागःकर्त्तव्यः नचंद्रदर्शनइत्याह

पर्वणांशेतुतुर्येतुयष्टव्यंतुद्विजातिभिः द्वितीयासहितंयस्मात्दूषयत्याश्वलायन इतिवचनात् कितीयेत्विति पाठोमदन
रत्नेसोपकैमुतिन्यायेनचतुर्थांशपरएव भूतेपंचदशीपूर्ण्णाद्वितीयाक्षयगामिनी चरुरिष्टिरमायांस्याद्भूतेकव्यादकीक्रि
येत्युक्तेश्च इत्थमेवनिर्णयामृतकालतत्त्वविवेचनयोः सिद्धांतितं बौधायनमतानुसारिणामन्वाधानवद्दर्शश्राद्धमपिस्व
ल्पामावास्योपेतायांचतुर्दश्यांकर्तव्यं यदाचतुर्दशीयाममित्यादिबौधायनवचनात् एवंतेषांपितृयज्ञस्यापितत्रैवानुष्ठा
नं चंद्रक्षयवत्यपराह्णे तस्यापिविधानात् अपराह्णेददातीतितस्मिन्क्षीणेददातीति कर्मप्रदीपेतु पक्षांतकर्मनिर्व
र्त्यवैश्वदेवंचसाग्निकः पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधइत्यादिवचनैरन्वाधानपिंडपितृयज्ञश्राद्धानामेकदिनसा
ध्यत्वात्पितृयज्ञश्राद्धयोश्चाहत्यचंद्रक्षयेविधानादन्वाधानकालवाक्यगतमपिचंद्रादर्शनंचंद्रक्षयोपलक्षणमित्युक्तं य
दुक्तेयदहस्त्वेवदर्शनंनैतिचंद्रमाः तत्क्षयापेक्षयाज्ञेयंक्षीणेराजनिचेत्यपीति एतच्चयस्त्वशाखायामेकदिनेनुष्ठेय
त्वमुक्तंतद्विषयंद्रष्टव्यं संधिनिर्णयश्चातिथिसाम्येयथास्थितएववृद्धिक्षययोस्तुतत्रविशेषमाहलौगाक्षिः तिथेःपरस्या
घटिकास्तुयाःस्युर्न्यूनास्तथैवाभ्यधिकाश्चतासां अर्द्धंवियोज्यंचतथाप्रयोज्यंह्रासेचवृद्धौप्रथमेदिनेतादिति ततश्चयदा
चतुस्त्रिंशन्नाडीरूपपरमदिनसमयेपौर्णमासीषोडशघटिकासप्तदशघटिकारूपपरमक्षीणदिनसमयेचद्वादशघटिका त्र
योदशघटिका एवं विषुवदादावप्यूह्यम् परमादिनेचप्रतिपत्त्रिमुहूर्त्तवृद्धातदायथास्थितसंध्यालोचने आवर्त्तनतःपूर्वसं
धेःपर्वचतुर्थांशरूपयागकालालाभाच्चसंधिदिनेयागःप्राप्नोति अर्धवृद्धिप्रक्षेपेणतुसंधिनिर्णयेपरदिने एवमन्यदप्यूह्य
म्परादिनेप्रतिपत्त्रिमुहूर्त्तन्यूना दापराह्णसंयौ संधिर्यदपराह्णेस्यादितिवचनात्प्रतिपच्चतुर्थांशस्यापिकेषांचिन्मते
यागकालत्वात्परदिनेयागःप्राप्नोतियथास्थितसंध्यालोचने अर्धक्षयप्रक्षेपेणतुसंधिदिनएवेतिविशेषः अत्रकेचित् यदि
चतुर्दशीदशदंडापर्वचपंचदशदंडमितं प्रतिपत्तु एकोनविंशतिदंडाप्रतिपद्वृद्धेरर्द्धदंडद्वयंपर्वांतेप्रक्षिपंति एवंचतुर्दशी

यदिपंचविंशतिदंडा पर्वैकोनविंशतिदंडं प्रतिपच्चतुर्दशदंडातदाप्रतिपद्भ्रासार्द्धघटिकाद्वयंपर्वेतिप्रक्षिपंति तदुक्तं ईदृश
विषयेपर्वापेक्षयाप्रतिपदोह्रासस्यवृद्धेर्वाभावात् प्रत्युतवृद्ध्युदाहरणेह्रासएवास्ति ह्रासोदाहरणेचवृद्धिरिति घटिकान्यू
नाधिक्यभावेह्रासवृद्धीभवतः किंतुचतुर्दश्युत्तरममावस्याःपर्वघटिकास्त्यक्त्वा आधिक्येन्यूनत्वेप्रतिपदोह्रासवृद्धीइति
एवमालोच्यसंधिनिर्णयः मयूखेयदाप्रतिपद्दिनेपंचधाविभक्तदिनचतुर्थभागरूपापराह्णव्यापिद्वितीयाप्रवेशेनचंद्रद
र्शनं तदाचतुर्दश्यामन्वाधानं संधिदिनेचयागः तथाचवृद्धवसिष्ठः आदित्येस्तमितेचंद्रइत्यादिकात्यायनः पूजनी
येह्निसोमश्चेदिति वृद्धशातातपः त्रिमुहूर्ताद्वितीयाचेदिति यच्चतत्रोक्तं एतानिवचनान्यपराह्णेऽमाप्रतिपत्संधि
पराणीतिहेमाद्रिः तन्न रात्रिसंधावपिनथापत्तेरितिताचेत्स्यं तदाकैमुतिकन्यायेनतत्रसंधौतथापत्तिविरहात् नवापरा
ह्णशब्देनयोगवृत्त्यावर्त्यावर्तनोत्तरभागाभिधानेरात्रिसंधौकैमुतिकन्यायाप्रवृत्तिरितिवाच्यम् दिनचतुर्थभागरूपा
पराह्णे काले संधौ यदि उत्तरदिनेयागस्तर्हिरात्रौपर्वप्रतिपदोः संधौ उत्तरदिनेयागइतिकिमुवक्तव्यमित्येवंरूपकै
मुतिकन्यायः प्रवृत्तोबाधकाभावात् तस्माद्दिनिगमनाविरहादेतानिवचनान्यावर्त्तेततः पूर्वमुत्तरं वाऽमाप्रतिपत्संधौ
प्रवर्त्तनापराह्णसंधावेवेति युक्तमिति यदुक्तं तदेवायुक्तं यदपिमयूखे यत्तुकेचिच्चंद्रदर्शनमेवयागनिषेधकंनत्रि
मुहूर्तद्वितीयाप्रवेशइति तन्न त्रिमुहूर्ताद्वितीयाचेदित्यादिवाक्यपाक्षिकानुवादतापत्तेरिति तदप्युपेक्ष्यं परतः सोमद
र्शनादितिहतृतीयैवत्रिमुहूर्तेत्यस्योपलक्षणप्रतीतेः ननुप्रकृतेयथोक्तकालात्कालांतरंकाचित्स्मर्यते षोडशेहन्यभीष्टिर्म
ध्यापंचदशेहनि चतुर्दशेजघन्येष्टिः पापासप्तदशेहनीति अयमर्थः पूर्वप्रतिपद्दिनमारभ्यगणनायामागामिप्रतिपद्दिन
षोडशंभवति तत्रेष्टिरभीष्टोत्तमा ततःपूर्वस्मिन्नेवदिनेमध्यमा ततःपूर्वस्मिंश्चतुर्दशेऽहनिजघन्यातदेवकालत्रयेविहिता
उत्तमकालात्षोडशदिनादूर्ध्ववर्त्तिनिसप्तादशदिनेप्रतिपद्वा वादंतत्रोत्तममध्यमपक्षौशास्त्रीयौतिथीनांवृद्धिक्षयाभावे

स्याद् नमः पक्षं प्राप्नोतिएकादिमन्नदिनेक्षीणेसातिमध्यमःप्राप्नोति जघन्यपक्षस्तुनशास्त्रीयः दिनद्वयक्षयाभावात् अतो जघन्यशब्दोनिषेधविवक्षयाप्रयुक्तः नतुपक्षांतरविवक्षया यदापोडशदिनेमावास्यादशघटिकासप्तदशदिनेप्रतिपद्वृद्धेनतदाप्यांत्याप्रतिचतुर्थांशेनुष्ठानप्रसक्तं पापासप्तदशेचेतिवचनेननिवार्य्यते तच्चन्याय्यं पूर्वाह्णसंध्युपेतदिनेइष्टेः कर्त्तव्यत्वेननिर्णीतत्वात् यदातुमहत्याष्टद्यापोडशदिने प्रतिपद्वृद्धेतेतदा न प्रतिषिध्यते पवसथंकर्मपजनोपात्रयोदशभेत्सप्तदशेपितत्प्रयत्नेनवर्जयेदिति तत्रत्रयोदशीसप्तदशीनिषेधौनित्यानुवादाविव दिनद्वयवृद्धेर्दिनद्वयक्षयस्यवाभावात् हेमाद्रिकालतत्त्वविवेचनयोस्तु षोडशेहन्यभीष्टिरितिवचनंप्रधानयागविषयतयावभासमानमपिइष्ट्युपक्रमान्याधानपरतयाव्याख्यातं अस्यवचनस्यपूर्वार्द्धममावास्याविषयमुत्तरार्द्धंपौर्णमासीविषयमित्यपिपक्षांतरहेमाद्रौस्थितं यत्तुवचनांतरं ऊनेपंचदशीयाज्यासमेयाज्यातुषोडशी ऊनेवाप्यधिकेवापिनेज्यासप्तदशीक्वचिदितिसप्तमीनिषेधपरमन्वाधानयागविषयतयाकथंविद्व्याख्येयमितिदिक् निर्णयसिंधौ यत्तुमाधवः यस्तुवाजसनेयीस्यात्तस्यसंधिदिनात्पुरा नकाप्यन्वाहुतिः किंतुसदासंधिदिनेहिसेत्याह यच्चकालादर्शेप्युक्तं आवर्त्तनादधःसंधिर्यत्रान्वाधायताद्दिने परेद्युरिष्टिरित्याहुर्विप्रा.वाजसनेयिनइति यच्चमदनरत्ने मध्यंदिनात्स्यादहर्नाहयस्मिन्नित्यादितत्कर्कभाष्यदेवजानी श्रीमंतभाष्यादिसकलतच्छास्त्रीयग्रंथविरोधाद्वृद्धानादराच्चोपेक्ष्यमित्युक्तं तदेतत्तद्ग्रंथपर्यालोचनयावधातव्यं योयमिष्टिकालनिर्णयः सस्यात्तस्थालीपाकेप्यवगंतव्यः तत्रे स्थालीपाकान्वाधानगृहप्रवेशनीयहोमानंतरभाविन्यांपौर्णमास्यामारंभणीयो नतुदर्शे यद्यारभकालेमलमासपौषशुक्रास्तादिभवतितदेष्ट्यारंभःकार्य्यः यानितु उपरागोधिमासश्चयदिप्रथमपर्वणि तथामलिम्लुचंपौषेनान्वारंभणमिष्यते गुरुभार्गवमौढ्येचचंद्रसूर्यग्रहेतथेत्यादिसंग्रहवचनानितान्यादृस्यादिनातिक्रांतशुद्धकालप्रारंभविषयाणि नामकर्मचदर्शेष्टिंयथाकालंसमाचरेत् अतियातेसतितयोः प्रशस्ते

मासिपुण्यभे इत्यपरार्कगर्गवचनादितिप्रयोगपारिजाते मयूखेतु आधानानंतरपौर्णमासीचेन्मलमासजा तस्यामारंभ
णीयान्नानकुर्वीतकदाचिनेति मडनवचनादन्वारंभणीयामलमासोत्तरं शुद्धकालेकार्या तत्रकालातिक्रमनिमित्ताभ्रेष्टि
रप्यादौकार्येतिकेचित् तत्रपुरुषापराधकालातिक्रमरूपाविभ्राष्टेष्टिनिमित्ताभावादिति याज्ञिकास्तुपूर्वोक्तत्रिकांडमंडन
वचनाच्छुद्धकालएवविभ्राष्टेष्टिंकृत्वान्वारंभणीयांकुर्वंति कालादर्शसंग्रहेपिआरंभदर्शपूर्णेष्टेरग्निहोत्रस्यचादिमं प्रतिष्ठाः
पंचकूर्माद्यामलमासेविवर्जयेदिति एवंप्रकृतिकालोनिर्णीतः अथ विकृतिकालोनिर्णीयते सचश्रुतौअभिहितः यदीष्ट्वा
यदिपशुनायदिसोमेनयजेत सोऽमावास्यायांपौर्णमास्यांवेतिपौर्णमासीकालीनोपांशुयाजाग्नीषोमीयादिविकाराणांपौ
र्णमास्यामेवामावास्याकालीनसान्नाय्यादिविकाराणांचामावास्यायामेवेतिव्यवस्थाप्रमादव्यवस्थार्थमिदंवचनं पौर्ण.
मास्याममावास्याय.ामिति विधेयकालगतैकवचनस्यविवक्षितत्वेनैकस्यांपौर्णमास्याममावास्यायांसांगप्रयोगोपादा
नात्सद्यस्कालीनत्वार्थंचेतिनिर्णीतंतंत्ररत्ने नचेष्टिपशुसोमानामनेकेषामुद्देश्यत्वात्निमित्तामावास्यापौर्णमास्योर्द्वयो
र्निमित्तत्वाच्चवाक्यभेदः स्यादितिवाच्यंइष्टिपशुसोमेष्वनुगतस्ययागत्वस्यैकस्योद्देश्यतामावच्छेदकस्यामावास्यापौ
र्णमास्यनुगतस्यचपर्वत्वस्याविधेयतावच्छेदकस्यसद्भावात्तस्यपरिहर्तुंशक्यत्वात् अत्रपौर्णमास्यामावास्याशब्दाभ्यांत
दंत्यक्षणोगृह्यतेतेनतद्वत्यहोरात्रइत्यर्थमाहारामांडारइतिनिर्णयसिंधौ सोमस्यवैराज्ञोर्द्धमासस्यरात्रयः पत्नियआस
न्नासाममावास्यांचपौर्णमासीचनोपेदित्याद्यर्थवादगतवैदिकप्रसिद्धेश्च तयोस्तिथिवाचित्वमेवेति कालतत्त्वविवेचने त
त्रसंपूर्णपर्वण्यपराह्णसंधौतदाप्रकृतिप्रधानानुष्ठानाभावाद्विकृतिंकृत्वाप्रकृतिरुपक्रमितव्यायदाष्टौवाक्यविहितकालला
भादितिमीमांसकानांयाज्ञिकानांचविप्रतिपन्नमेव पूर्वाह्णसंधौत्वौदयिकपर्वणः प्रकृत्यावरुद्धत्वात्पर्वण्येवोपदिष्टपर्वका
लत्वानुरोधनातिदेशप्राप्तं प्रातः कालंद्व्याहकालंवद्बाधित्वाविकृत्यनुष्ठानंयुक्तमितिमीमांसकाः तदुक्तंतंत्ररत्ने एवंचपद्ध

त्संस्वाम्यादिभिरुच्यते आगावर्त्तनात्प्रतिपत्पंचदशीसंधौसतिकृत्वाप्रकृतिःप्रतिपदिविकृतिःकर्त्तव्येति तदन्याय्यमन
भिमतंभगवतोभाष्यकारस्येति नचपूर्वाह्णसंधिदिनएवविकृतिमनुष्ठायप्रकृतिरनुष्ठीयतां तस्याः प्रतिपद्यप्यविरोधादिति
वाच्यंप्रकृतावुपदिष्टस्यप्रातःकालस्यबाधितुमशक्यत्वात्पूर्वेद्युरनुष्ठानेतूपदिष्टपर्वकालस्यानुरोधनविकृतावतिदिष्टतद्बा
धस्यन्याय्यत्वात् निशीथ्यादिवदनन्यगतिकवचनाभावं, पूर्वेद्युरन्वाधानेनोपक्रांतस्यप्रकृतिप्रयोगस्यमध्येकर्मांतरा
नुष्ठानस्यानुचितत्वाच्च अतएवसंपूर्णपर्वएवपराह्णेसंधौचविकृत्यनुष्ठानानंतरमेवप्रकृत्यन्वाधानंयुक्तं अतिदिष्टविकृति
प्रधानांगप्रातःकालानुरोधाच्च प्रकृत्यन्वाधानस्यतूपदिष्टोपि प्रातःकालोयागकालत्वाद्बाध्यएवेति याज्ञिकमतानुसा
रेणतुअतेयदासंपूर्णपर्वतदापर्वणिविकृतियागंकृत्वातत्रैवपश्चादन्वाधायप्रतिपदिप्रकृतीष्टिः कर्त्तव्या खंडपर्वणितुआव
र्त्तनतत्पूर्वसंध्योःप्रकृत्यनुष्ठानंकर्त्तव्यं तदुक्तंकात्यायनत्रिकांडमंडनाभ्यां आवर्तनात्प्राग्यदिपर्वसंधिः कृत्वातुतस्मि
न्प्रकृतिंविकृत्याः तदैवयागःपरतोयदिस्यात्तस्मिन्विकृत्याः प्रकृतेः परेद्युरिति आवर्त्तनात्प्राक्पर्वसंधौप्रकृतिंकृत्वाप
श्चाद्विकृतिःकर्त्तव्येति आपस्तंबेनाप्युक्तं प्रकृतेःपूर्वोक्तत्वादपूर्वमतेस्यादिति अपूर्वविकृतिप्रकृत्योरेतेप्रकृतेः समाप्तौ
सत्यां तस्स्यात् प्रकृतेःपूर्वोक्तत्वाद्वेदेप्रथमतः सकलांगोपेतत्वेनोपदिष्टत्वादित्यर्थइति एतच्चहेतुवादेन श्रुतिमूलत्वा
भावादंगवासमभिव्यवहारादितिवदप्रमाणमितिनिर्णयसिंधौकालतत्वविवेचनेतु श्रुतिमूलकंवचनमेवैतदित्यंगीकृ
त्ययाज्ञिकमतेश्रद्धातव्यमित्युक्तं मयूखेतुअत्रपड्ध्येत्यादिश्रुत्यासांगायाविकृतेः पर्वणि विधानादावर्त्तनपूर्वसंधावपि
पर्वणोधिकरणत्वश्रुतेः कर्मणोयस्ययः कालस्तत्कालव्यापिनीतिथिरितिस्मृतेश्चप्रकृतिविकृतिपर्यामपवासत्वेतद्दिन
एवोभयोः कर्त्तव्यत्वेप्राप्तेक्रमः पूर्वार्द्धविधीयतेप्रकृतेः पूर्वोक्तत्वादपूर्वमतेस्यादितिवचनमप्येतत्परमेवनचसंधिमभि
तोयजेतेतिवचनात्प्रकृतिसमाप्तेः प्रतिपदिकर्त्तव्यत्वेननकर्मणिकर्मारंभइतिनिषेधेनचतन्मध्येविकृत्यनुष्ठानमनुचित

मितिवाच्यं नकर्मणिकर्मारंभइत्यस्यप्रयोगप्राशुभावभंगप्रसंगमूलकत्वेनश्रुतिमूलकत्वात्तावान् प्रयोगप्राशुभावभं
गस्यवात्रप्रतिपत्त्रतीक्षय।विकृत्यनुष्ठानेप्यावश्यकत्वादित्युक्तं अन्वारंभणीयातुचतुर्दश्यांकार्येतिहिरण्यकेशिवृत्तौमा
तृदत्तीयेअन्येपांपर्वण्येवकालांतरमप्याहबौधायनःआमावास्येनवान्नहविषेष्ट्वा।नक्षत्रेवेतिशुक्लपक्षेकृत्तिकादिविशाखां
तेषुदेवनक्षत्रेष्वितिकेशवस्वामीव्याचख्यौचतुर्मास्येष्वपिद्वादशाहपथाप्रयोगपक्षयोर्नक्षत्रेष्वप्यारंभः यावज्जीवसाव
त्सरप्रयोगयोस्तुफाल्गुण्यांचैत्र्यांवारभः आग्रयणकालानाहापस्तंबः वर्षासुश्यामाकैर्यजेतशरदिव्रीहिभिर्वसंतेयवैर्य
थर्तुवेणुयवैरिति श्रुतिरपिगृहमेधीव्रीहियवाभ्यांशरद्वसंतयोर्यजेतश्यामाकैर्नीवारैर्वर्षास्वापत्काले चान्येनपुराणैर्वेतिवा
र्त्तिककारोपि यजेत्पूर्वंपूर्णमाहर्ध्वंदर्शेनेवेज्याआग्रयणेष्टिः दीपिकायांदर्शेष्ट्याः परमुक्तमाग्रणयकं प्राक्पौर्णमासाच्च
तादिति श्रुतिरपिसायातास्मिन्कालेमावास्यायंसंपद्येत तयेष्ट्याप्येतयायजेतइतिपौर्णमासेनयजेतेति आमावास्या
दर्शेष्टिः तयाअमावास्ययाएतयाग्रयणेष्ट्याअनयावाचोत्तरयाचेदंपर्यवसन्नंपौर्णमास्यमावास्येष्ट्योरंतराग्रयणानुष्ठान
एतच्चव्रीहिभिरिष्ट्वाव्रीहिभिरेवयजेतायवैर्भायवैरिष्ट्वायवैरेवयजेताव्रीहिभ्य इतिश्रुतिबलाद्व्रीहियवाग्रयणरूपपूर्वो
त्तरावधिव्यवस्थितं प्रकृतेयेपांव्रीहियवानुष्ठानंताद्विपयंपौर्णमासेकहविष्कत्वानियमादर्शस्यतथावाथयदहश्चंद्रमानद
श्येत तामामावास्यामितिगोभिलगम्यंतद्भाष्यम् अथशब्दःपूर्वप्रकृतापेक्षः तत्पौर्णिमास्यांयागार्थहविरुपक्लृप्तंतदमा
वास्यायामप्युपलक्षणीयामित्यर्थः दर्शांतंपौर्णमासाद्येककर्मेतिवचनात् येनहविषाप्रक्रांतंतेनैवसमापनीयमितिन्या
याच्च हेमाद्रिस्तु पौर्णमास्यांपूर्वमाग्रयणानुष्ठानंसद्यस्कालप्रकृत्यनुष्ठानाविपरमिति पशोःकालनिर्णयमाह गोविंदा
र्णवेकात्यायनः अर्द्धोदद्रोभवतिनियतःपर्वसंधिःपरस्मात्कृत्वातस्मिन्प्रकृतमथतुस्यात्पशुःसद्यएव आधिकार
पशुस्त्वग्नीपोमीयेणसवनीयेन वा समानतंत्रः कार्यइतित्रिकांडमंडनः सोमेत्वाहापस्तंबः अमावास्यायांदीक्षाजनीये

वासुत्यमहः पौर्णमास्यांदीक्षाजनीयेवापौर्णमास्यांजनीयेवासुत्यमारिति लापापभसूत्रेपि पूर्वपक्षस्यप्रथमेहनिदी
क्षेतनक्षत्रयोगेवेति पूर्वपक्षः शुक्लपक्षयोगेवेत्ययमर्थः चैत्र्यादिपूर्णिमायाश्चित्रादिनक्षत्रयोगेदीक्षेतेतिकालतत्त्व
विवेचनेखंडपर्वणितुपशौसोमेपिमीमांसकमतेतिथेरेवांगत्वेनोपदेशात्तस्याश्चनिष्कटयोरावर्तनंतत्पूर्वसंध्योः पूर्वे
द्युर्भूयः प्रयोगैकदेशव्याप्तिलाभात् विकृतीष्ट्यादिवत् तयोस्तत्रैवानुष्ठानंयाज्ञिकमतेतुपौर्णमास्यमावास्याशब्दयोस्ति
थिवचनत्वादेवेष्ट्यादिवदेवपशुसोमयोरपिपरेद्युरनुष्ठानं तयोःसंध्योःतद्विपयमपिकाचित्प्रामाणिकयाज्ञिकग्रंथे खंडप
र्वणिसोमश्चेत्प्रातिपन्मिश्रपर्वणि सोमसुत्याप्रयोक्तव्येत्याहकौषीतकीश्रुतिरितित्रिकांडवचन एतेन सोमकालःप्रास्त्य
तइतिदर्शपूर्णमासविकृतिकालनिर्णयप्रकारातिदेशकंसंकर्षकाण्डसूत्रवचनंलिखितं संधिवचनत्ववादिनांतुयाज्ञिकानां
तद्वदहोरात्रलक्षणायाश्चावश्यकत्वान्न्यायोप्येतद्वचनानुग्रहकोलभ्यतइति सुतरांतथानुष्ठानंयुक्तंयाज्ञिकाचारोप्येवमे
वेति आधानंतुपर्वणिनक्षत्रेपुचोक्त तत्रपर्वनक्तगार्हपत्यमादधाति इत्यादिकर्मकालव्यापिग्राह्यं दिनद्वयेत्वतत्परंग्रा
ह्यसंकल्पपर्वणिलाभात् पूर्वनक्षत्रयोगेतदेवग्राह्यं यत्रत्रीणिसन्निपातितान्यर्जुनंक्षत्रंपर्वतत्समर्द्धविप्रतिपेधेनक्षत्रव
लीयइतिहिरिण्यकेशिसूत्रात्ततस्तुवसंतेब्राह्मणोग्नीनादधातेत्यादिः रेणुकारिकायांतु माघादिपंचमासेपुश्रावणेचाश्वि
नेतथा मार्गशीर्षेशुक्लपक्षेआधानमथकारयेदित्युक्तं अत्रमूलंमृग्यं आधाननक्षत्राण्यापस्तंबसूत्रे कृत्तिकारोहि
णीमृगशीर्षपुनर्वसुपूर्वोत्तराहस्तचित्राविशाखानुराधाश्रवणोत्तराभाद्रपदाइति ज्योतिःशास्त्रेतु पुष्यरेवत्यावप्युक्तेसो
मपूर्वाधानेविशेषमाहापस्तंबः सोमेनयक्ष्यमाणोनर्तुन्मूर्खेनक्षत्रमितिनर्तुपृच्छेदित्याश्वलायनसूत्रे अत्रप्रकरणादा
धानकालबाधःतेनसोमस्यवसंतकालतानबाध्यतइतिरुद्रदत्तवृत्तौनारायणवृत्तौचोक्तं धूर्तस्वामीतुसोमस्यापिनर्तुन्मू
र्खेइतिलिखनादुभयकालबाधमन्यते श्रीरामांडारस्तुकालांतरविधानंवासर्वकालानादरोवेतिपक्षद्वयमुक्तवान् तत्रा

येकृत्तिकादिकालांतरस्ययथानेवंसताद्यवाधेनविधानंतथासोमेप्युदगयनपूर्वपक्षपुण्याहसान्निपातेयज्ञकालोनादेशइ
तिछंदोगसूक्तोदगयनावाधेनसोमाभिसंधिरूपकालांतरविधानादुदगयनंत्वपेक्ष्यतइत्युक्तं द्वितीयपक्षेतुयदैवैनंश्रद्धाय
नमेदितिसर्वकालानादरउक्तइतिभारद्वाजसूत्रात् सर्वशब्दस्यचविश्वजित्सर्वकालवाधइति तेनदक्षिणायनेपिभवती
त्युक्तम् षड्गुरुभाष्येदेवत्रातभाष्ये तत्रश्लोकेचषट्स्वपिऋतुषुभवतीत्युक्तमितिदिक् पिंडपितृयज्ञस्तुकात्यायनैर्योग
दिनात्पूर्वेद्युः कार्यः पूर्वोवांगत्वात् पिंडपितृयज्ञइति सूत्रात्तमास्यातंचैतत्कर्काचार्यैः पूर्वएवदर्शात्पिंडपितृयज्ञोन
पश्चात कुतः अंगत्वात् तथाचस्मृतिः तस्मात्पूर्वेद्युः पितृभ्यः क्रियत उत्तरमहर्देवान्यजतइतितेनकर्कमतेचतुर्दशीयु
क्तदर्शेपिंडपितृयज्ञ इति श्री अनंतभाष्येतुपरेद्युरित्युक्तं तत्रद्वेधाप्याचारोदृश्यते इत्थंकात्यायनानांपिंडपितृयज्ञका
लोनिर्णीयतः आपस्तंबादिभिस्त्वमावास्यायामपराह्णे पिंडपितृयज्ञेनचरंतीतिश्रुतेः संधिमदहोरात्रापराह्णेपिंडपितृय
ज्ञोनुष्ठेयः अत्रयः परमोविप्रकर्षः सूर्याचंद्रमसोः सपौर्णमासीयः परमः सन्निकर्षः सामावास्येतिगोभिलोक्तेरमावा
स्यापदंयद्यपिसूर्याचंद्रमसोःपरमसंन्निकर्षवत्यंत्यक्षणेशक्तंतथापि तत्रकर्मानुष्ठानाशक्तेस्तद्वदहोरात्रंलक्षयति अतएव
यदहश्चंद्रमसंनपश्यंति तदहः पिंडपितृयज्ञंकुरुतइत्यापस्तंबसूत्रंअस्यचैवंरुद्रदत्तीयाव्याख्या पिंडैर्युक्तः पितृयज्ञःपिं
डपितृयज्ञः सचकर्मांतरंनतुदर्शशेषः यथावक्ष्यति पितृयज्ञःस्वकालविधानादमांगस्यादिति तंचयदहश्चंद्रमसंनपश्यं
तिपंचदश्यांप्रतिपदिवातदहः कुरुते यदहस्तयोः संधिस्तदहरित्यर्थइति श्रीरामांडारोप्याहपिंडपितृयज्ञस्तुपर्वसंधि
मदहोरात्रापराह्ण इति अतएवयदैवैवनपुनस्तादृशेनपश्चादथापितृभ्योनिर्वपतीतिशतपथश्रुतिरपि पर्वसंधिदिनेहि
पूर्वतःपश्चाच्चंद्रोनदृश्यतएवअतोमावास्यातिथेरपराह्णव्याप्त्यभावेपिअंत्यक्षणावच्छिन्नाहोरात्रएवापितृयज्ञः पूर्वदिना
पराह्णव्याप्तेरस्यनादरइत्याश्वलायनापस्तंबसूत्रवृत्तिभाष्यकाराः अतएवमुहूर्तस्पृगमावास्याप्रतिपद्यपिचेद्भवेत् तद्द

त्तमक्षयंज्ञेयंपर्वशेषंतुपर्ववदिति हेमाद्रौवचनंपिंडापितृयज्ञपरमुक्तंप्रयोगपारिजाते मयूखेतु अमावास्याशब्दस्यप्रयोगस्तावत्तिथिविशेषेसार्वजानीनोनिर्विवादः तत्रचैकदेशवर्त्तिनोपिपरमसन्निकर्षस्यसंभवति प्रवृत्तिनिमित्तत्वंचाक्रियत इवाविश्वेपांदेवानां यद्यपितिथिविशेषेलक्षणा तथापिनिकटत्वात्सैवयुक्तानाहोरात्रे आधुनिकी चंद्रदर्शनंतुअमायुक्तापराह्णवत्यहोरात्रेप्यवशिष्टंइदगहोरात्रेप्यवशिष्टंइदगहोरात्रपूर्वाभाव्युषः कालीनंतुचंद्रदर्शनंपूर्वाहोरात्रिवर्त्तित्वान्नविरुद्धंअथपुरस्तात्पदसार्थक्याचतदेवविरुद्धंतदापरस्तात्पदसार्थक्यायसंध्युत्तराहोरात्रगतमपितत्तथास्यात् अतोपराह्णयुक्तैवामाग्राह्यानतुसंधेराग्रहइत्यपराह्णस्त्वत्रपंचधाविभक्तदिनोपांत्योभागइति वृत्तिकारोक्तएवादिनद्वयेपराह्णस्पर्शभावेतुपूर्वदिनएव तत्रस्मृत्याद्यापादितचंद्रक्षयस्योत्तरदिनेचतादृश्याश्चंद्रवृद्धेःसत्त्वात् यथाहहारीतः चतुर्दश्यष्टमेभागेक्षीणोभवतिचंद्रमाः अमावास्याष्टमेभागेपुनःकिलभवेदणुपूर्वाह्णोवैदेवानांमध्यंदिनोमनुष्याणामपराह्णःपितॄणामित्यस्यपितृयज्ञप्रकरणपाठात्त्रेधाविभक्तादिनांत्यभागस्तुयुक्तः हारीतवचनस्तूपवासपरंयदहरेवैषनपुरस्तात्पश्चाद्दृशेतदहरुपवसेदितिश्रुतेः यायजूकास्तुवृत्तिभाष्याद्युक्तंसंधिमदहोरात्रंप्रायःपंचधाविभागंचारुध्याचरंतीत्युक्तं अयंचस्यात्ताग्निमतासंपूर्णेदर्शश्राद्धव्यतिषंगेणकार्यःव्यतिषंगोनामोभयोःसहानुष्ठानंएतच्चस्थालीपाकेनसहापिंडार्थमुद्धृतेतिसूत्रेवृत्तिकृतोक्तं खंडपर्वणितुपूर्वदिनेकेवलंश्राद्धं परदिनेतुकेवलपितृयज्ञःकालभेदेनतंत्रन्यायाप्रवृत्तेः अतएवोक्तंवृत्तिकृतानात्रापूर्वस्थालीपाकश्चोद्यते सर्वश्राद्धेषुप्रसंगादिति।पिंडापितृयज्ञाकरणे प्रायश्चित्तमाहपराशरमाधवीयेकात्यायन पितृयज्ञात्ययेचैववैश्वदेवात्ययेपिच भोजनेपतितान्नस्यचरुर्वैश्वानरोभवेदित्यलम्॥

॥ इतिश्रीमन्महाराजाधिराजश्रीरणवीरसिंहकारितेकृत्यरत्नाकरेपर्वसंधिनिर्णयः ॥

॥ अथेष्टिनिर्णयफलार्थितमग्निचर्य्याफलम्

हलायुधीयब्राह्मणसर्वस्वे तत्रपद्मपुराणम् त्रीनग्नीनथवाचैकंचायोंहन्यहनिसेवते सर्वभूतदयापन्नोनाप्रजोजाय तेनरः तथाच दर्शंचपौर्णमासंचयेयजंतिद्विजातयः नतेषांपुनरावृत्तिर्ब्रह्मलोकात्कदाचन यमः नाग्निहोत्रात्परोध र्मोनाग्निहोत्रात्परंतपः नाग्निहोत्रात्परंदानंनाग्निहोत्रात्परंदमः तथा स्वर्गतान्यग्निहोत्राणिनयंतिपरमांगतिं अत्र स्वर्गश्चमोक्षश्चयेयथागंतुमिच्छति जाबालिः संतोपामृतमासाद्यतन्मनाधर्मवित्तुयः अकामेनाग्निहोत्रस्यहोतास्व र्गतिमाप्नुयात् देवलः नाग्निहोत्रंसमादायजीविकार्थंपरित्यजेत् सर्वेवेदास्तदर्थाहिलोकाब्राह्मणजन्मच अस्या करणेदोषःकूर्मपुराणे त्रयाणामिहवर्णानांगृहस्थाश्रमवासिनां नास्तिक्यादथवालस्याद्योग्निंनाधातुमिच्छति यजे तवानयज्ञेनसयातिनरकान्बहून् तामिस्रमंधतामिस्रंमहारौरवरौरवौ कुंभीपाकंवैतरणीमसिपत्रवनंतथा अन्यांश्चनर कान्घोरान्संप्राप्यंतेसुदुर्गतिं अंत्यजानांकुलेविप्रशूद्रयोनौचजायते तस्मात्सर्वप्रयत्नेनब्राह्मणोवैविशेषतः स्वा ध्यायाग्निविशुद्धात्मायजेतपरमेश्वरम् भविष्ये वेदैरुक्तैर्यथावीरस्वराज्यंसमुपेत्यवै अस्मान्येब्राह्मणाभूमावभ्यस्यं तिह्यनग्निकाः क्लिश्यंतितेसदासर्वेमूढावैफलकांक्षया अनुष्ठानविहीनानामस्मानभ्यस्यतांभुवि क्लेशोहिकेवलोदेव नास्मदभ्यसनेफलम् तथा अनुष्ठानपदंदेवमस्मात्स्वभ्यसनात्सदा इत्येवराजशार्दूलवेदाऊचुर्हिवेधसं व्यासशा तातपौ योगृहीत्वाविवाहाग्निगृहस्थइतिमन्यते अन्नंतस्यनभोक्तव्यंवृथापाकोह्यसौभवेत् अथपक्षादिकालः छं दोगपरिशिष्टेकात्यायनः पक्षादावेवकुर्वीतसदापक्षादिकंचरुं पूर्वाह्णएवकुर्वंतिविद्धेप्यन्येमनीषिणः लघुहारीतः प र्वणोंशेतुरीयेतुकार्य्याइष्टिर्द्विजातिभिः द्वितीयासहितंयस्माद्रूपयत्याश्वलायनः अथपक्षादिकर्म तत्र पारस्करः प क्षादिषुस्थालीपाकंश्रपयित्वा दर्शपौर्णमासदेवताभ्योहुत्वाजुहोति ब्रह्मणेप्रजापतये विश्वेभ्योदेवेभ्यो द्यावाप

थिवीभ्यामिति विश्वेभ्योदेवेभ्योवलिहरणं भूतगृह्येभ्यःस्वाहा आकाशायवैश्वदेवस्याग्नौजुहोति अग्नयेस्वाहा प्रजापतयेस्वाहा विश्वेभ्योदेवेभ्यःस्वाहा अग्नयेस्विष्टकृतेस्वाहा इतिवाह्यतःस्त्रीवलिंहरतिपुंसवेधसेनमः शुक्लायकृष्णायदंतायपापिनांपतयेनमो येमेप्रजामुपलोभयंतिग्रामेवसंत उतआरण्येतेभ्योनमस्तुत्वमेभ्योहराम्यस्तिमेस्तु प्रजाम्मेददाचेतिशंखमद्भिःप्रप्लाव्य ततोब्राह्मणभोजनम् अत्रदर्शानंतरंप्रतिपदिदर्शदेवताभ्यःस्थालीपाकंहुत्वा पौर्णमास्यनंतरंप्रतिपदिपूर्णमासादेवताभ्यःस्थालीपाकंहुत्वा ब्राह्मणादीनांस्थालीपाकेनहोमोविधेयः तत्रदर्शदेवता अग्निविष्णुरिंद्राग्नीचपौर्णमासेचदेवताः अग्नीषोमौचछंदोगपरिशिष्टे कात्यायनः यामताहोमनिर्वृत्तिर्भवेद्वायत्रकीर्तिता शेषंचैवभवेत्किंचित्तावत्तुनिर्वपेत्चरुं अथस्रुवादिपत्रनिर्माणानंतरं सामान्यधर्मेकात्यायनः तेषांप्राक्शःकुशैः कार्यसंमार्ग्याग्नौजुहुयात्प्रतापंचालिप्तानांप्रक्षाल्योष्णेनवारिणा पात्रासादनेकात्यायनः अपएस्यपश्चाद्दुत्तरतोवेत्यत्रचप्रांच्युदंचिकर्मणीतिसामान्यपरिभाषावचनात्प्रागग्राण्येवयजुर्वेदिनापात्राण्यासादानि यज्ञपार्श्वः कंडनंसिंचनंचैवतथैवोल्लेखनक्रिया सकृदेवापिदृष्टाऽस्याद्देवेत्रित्वंविधीयते गोभिलः दक्षिणोत्तराभ्यांपाणिभ्यांत्रिवलीकृतांस्तंडुलांस्त्रिर्देवेभ्यःप्रक्षालयेदित्याहुः द्विर्मनुष्येभ्यः सकृत्पितृभ्यः इतिपवित्राहितांस्तंडुलानावपेत् कुशलीश्रुतामिवस्थालीपाकंश्रपयेत् प्रदक्षिणमुदायुवन्प्रदक्षिणमुदन्नरन्निति दक्षिणावर्त्तेनस्थालीपाकेनसमंत्रविलोडयन्नित्यर्थः श्रितमभिघार्योद्वास्यप्रत्यभिघारयेत् इतिपक्षादिकर्म्मप्रयोगः ॥

॥ इतिश्रीमहाराजकारितेकृत्यरत्नाकरेपर्वसंधिनिर्णयानंतरंपक्षादिकर्मविधिः ॥ ॐ

अथामापितृपक्षमृतानांक्षयाहेस्मृतिसुधाकरोक्ताव्यवस्था तत्रपूर्वंसामान्यैकोद्दिष्टस्वरूपं एकोद्दिष्टश्राद्धंतु एकपिंडकमेकार्घकमेकपवित्रकमेकपात्रकमेकब्राह्मणकमग्नौकरणावाहनविश्वेदेवरहितं कर्त्तव्यमिति तत्रैकोद्दिष्टपदं योगशक्त्या

वेकोद्दिष्टवाचकमित्याह एकमुद्दिश्ययच्छ्राद्धंतदेकोद्दिष्टमुच्यते त्रीन्समुद्दिश्ययच्छ्राद्धंपार्वणंमुनयोविदुः इतिवचनाद्दे ति पिंडादीनामेकत्वंआवाहनादिराहित्येचकात्यायनसूत्रप्रमाणयति अथैकोद्दिष्टमेकोब्राह्मणएकोर्घएकंपवित्रं एक पिंडोनाग्नौकरणंनावाहनंनविश्वेदेवाइतिकात्यायनसूत्रादिति सूत्रबलादेव कतिप यदेशीयात्रिपुरुषक्षयाहश्राद्धसंप्र दायदूषयति एतेनैकोद्दिष्टक्षयाहेत्रिपिंडाचरणंसर्वथानिर्मूलमितिस्मर्त्तव्यंत्रिपिंडीनिषेधेत्वंतरमाह क्षयाहेपार्वणंकु र्वन्नधोधोयातिमानवइतिवचनात् वस्तुतस्त्विदमसंगतमेव तथाहिकात्यायनसूत्रंहि यत्रएवोद्दिश्यते तत्रेतिकर्त्तव्य तामाह नतुत्रिपिंडीनकर्त्तव्येतिनिषेधः अतएव पतिव्रताधर्मपत्नीपितृपूजनतत्परा मध्यमंचततःपिंडमद्यात्स म्यक्सुतार्थिनीतिमनुस्मरणात् मत्प्रमादादसंदिग्धंशृणुचेदंभुजंगम श्राद्धावसानेभुंजीरन्मध्यमंपिंडमात्मजाः तथा चकृतवान्श्राद्धसनाग‧कंबलानुजः पिंडचमध्यमंतद्वद्यथावदुपभुक्तवानिति मार्कंडेयपुराणेऽश्वतरंप्रतिशिववचश्चसं गच्छते नह्येकोद्दिष्टादौमध्यमत्वमेकस्यपिंडस्यसंभवति लेपभाजश्चतुर्थाद्याःपित्राद्याःपिंडभागिन इति श्राद्धविवे कनिबंधमपिवचनंत्रयाणामेवपिंडाधिकारमाह किंचनैकमुद्दिश्यत्रिपिंडीमाचरति कश्चिद्येनसूत्रविरोधःस्यात् किंतु त्रिपुरुषीमुद्दिश्येतिनदोषः अपिच सर्वथात्रिपिंडाचरणनिषेधे सपिंडीकरणादूर्ध्वंयत्रयत्रप्रदीयते तत्रतत्रत्रयंकु र्यादितिशातातपवचनंव्याकुप्येत यच्चत्रिपिंडीनिषेधक्षयाहेपार्वणंकुर्वन्नितिवचनंहेतुत्वेनोपन्यस्तंतदस्यसंगतं य तस्तद्विश्वेदेवपूर्वकषट्पुरुषकश्राद्धंनिषेधयति तत्रैवपार्वणपदवृत्तेःसर्वसंमतत्वात् तस्यक्षयाहस्थानीयंषट्पिंडकपार्व णमेव पार्वणेनविधानेनदेयमग्निमतासदेत्यादिवदता स्वयमपितथैवस्वीकारात् अन्यथापूर्वापरविरोधात् तस्माद मावास्यातिरिक्तक्षयाहेत्रिपिंडीनिषिद्धा वर्जयित्वामृताहनीतिवचनस्यपर्वातिरिक्तक्षयाहपरत्वात् अमायांचक्षयोय स्येत्यादि प्रतिप्रसवविषयातिरिक्तस्थलएव निषेधप्रवृत्तेः उत्सर्गस्यानिषेधविषयमिवानिषेधस्यप्रतिप्रसवविषयंपरि

स्यन्त्यैव प्रवृत्तेरितिध्येयं प्रसंगात्साग्निक्षयाहंनिर्णेतुमाह साग्नेस्तुइत्यादि इदानींप्रेतपक्षादिक्षयाहे विश्वेदेवपूर्वं कमेकोद्दिष्टसंप्रदायं दूषयति अमावास्यामाश्विनापरपक्षेवेत्यादिनातदुन्नेयं तेनहेतुमाह निर्मूलत्वादिति तत्रापि हेतुः शक्तिलक्षणयोरभावादितिशंकते तत्त्वेति तत्त्वाल्पनंशक्तिकल्पनंसमाधत्ते कृष्णपक्षेइत्यादि अयमर्थः प्रेतानांपक्षःप्रेतपक्षइतिव्युत्पत्त्यादिकल्पनात् साचकृष्णपक्षेऽपिसमाना शुक्लोदेवानांकृष्णःपितृणामितिप्रसिद्धेः दूषणांतरमाह अशेपेति तत्प्रकृतिकत्वात्पार्वणप्रकृतिकत्वादित्यर्थः वृत्त्यभावादेवमहालयपदमपिनाश्विनापरपक्षवाचकमित्याह महालयइत्यादि येयंदीपान्वितेत्यादौतीर्थवाचकत्वेनाप्युपपत्तेरितिभावः तदेतदपिविचारपदवींनारोहति तत्रानेकनिबंधग्रंथाप्रसिद्धस्यशातातपवचनस्य निर्मूलत्वोक्तिरेवनिर्मूला अथवाक्यस्यपार्वणविधानांशेनिर्मूलता एकोद्दिष्टस्ययोग्यत्वादितिचेन्न दर्शादिक्षयाहेपार्वणस्यैवसर्वसम्मतत्वात् औरसक्षेत्रजौपुत्रौविधिनापार्वणेनतु प्रत्यब्दमितरेकुर्युरेकोद्दिष्टंसुतादशेतिशंखलिखितौ क्षयाहमात्रेपार्वणंस्मरतः किंतुदर्शापितृपक्षयोःक्षयाहेपार्वणमितिवाक्यं दर्शाद्यतिरिक्तपरंपर्वाणिपार्वणस्यवाक्यांतरेणासिद्धौवचनद्वयस्यानियमपरत्वेन त्रिपिंडीपरत्वेनैवाप्युपपत्तेयच्चोक्तं शक्तिलक्षणयोरभावादिति तदेवोदाहृतं पंकजादिपदवत्प्रेतपपक्षस्ययोगरूढित्वात् कन्यागते सवितारियान्यहानितुषोडश क्रतुभिस्तानितुल्यानिपितॄणांदत्तमक्षयमित्यादि वचनबलादाश्विनापरपक्षस्यैवाभ्यर्हितत्वेसामान्यकल्पनायाअसंगतत्वात् किंचवाक्येऽमावास्यापृथङ्निर्देशानाहिसामान्यकृष्णपक्षपरत्वेपृथङ्निर्देशार्हतेति सैवाश्विनापरपक्षत्वेसाक्षिणी यच्चाह महालयपदस्यतीर्थवाचकत्वेनापरपक्षवाचकतानुपपत्तिरिति तदप्यसवद्धं नह्येकवाचकत्वेपरवाचकताक्षीयते अनेकार्थशब्दबाधापत्तेः प्रत्युतकालप्रकरणे तीर्थवाचकतैवासगताप्रकरणविरोधात् तस्मादमावास्यांक्षयेयस्येतिशातातपवचनादौरसक्षेत्रजौपुत्रौविधिनापार्वणेनतु

इतिशंखवचनात्पर्वणिपार्वणन्यायप्राप्तत्वाच्च क्षयाहेपार्वणमितिवचनस्यपर्वणीतास्तुक्षयाहपरत्वपार्वणैकत्वे पतिश्च धर्मपत्नीतिमनुस्मरणात् मत्प्रसादादसंदिग्धामित्यादिमार्कंडेयपुराणवचनाच्च उद्धृतास्तिवराहेणपृथिवीभयाविह्व ला तत्रस्थित्वाप्रकुर्वीतश्राद्धंपिंडत्रयंतथेति वराहपुराणात् पर्वणिपार्वणस्यान्यवाक्यैरेवासिद्धौपुनर्विधानस्यत्रिपिंड परत्वात्क्षयाहेपार्वणस्यहिनिषेधानुरोधाच्च त्रिपुरुषकंवाकर्त्तव्यमितिनिष्कंटकःपंथाः अथस्मृतिसुधाकरोमूलपाठो लिख्यते एकोद्दिष्टश्राद्धत्वेकमेवार्घ्यमेकपात्रमेकब्राह्मणमग्नौकरणावाहनविश्वेदेवरहितंकर्त्तव्यम् एकमुद्दिश्ययच्छ्राद्धं तदेकोद्दिष्टमुच्यते इतिवचनात् अथैकोद्दिष्टमेकोब्राह्मणएकोर्घपात्रमेकंपवित्रमेकः पिंडोनाग्नौकरणं नावाहनंनात्रवि श्वेदेवा इतिकात्यायनसूत्रात् एतेनैकोद्दिष्टेक्षयाहेत्रिपिंडाचरणंसर्वथानिर्मूलमितिस्मर्त्तव्यम् क्षयाहेपार्वणंकुर्वन्नधोधो यातिमानव इतिवचनात् साग्निस्तुक्षयाहेनिश्राद्धनास्त्येव.नदर्शनविनाश्राद्धमाहिताग्नेर्द्विजन्मन इतिवचनात् अतएव तस्यक्षयाहस्थानीयं षट्पिंडकंपार्वणमेव पार्वणेनविधानेनदेयमग्निमतासदेति अमावास्यायामाश्विनापरपक्षेच मृ तस्यैकोद्दिष्टमपिसदैवकर्त्तव्यं अमायांचक्षयोयस्यप्रेतपक्षेथवापुनः सपिंडीकरणादूर्ध्वंतस्योक्तःपार्वणोविधिरितिवा क्यात् विश्वेदेवातिदेशात् विध्यंतरस्यप्रकृतित्वेनैवप्राप्तेरितिप्राचोनिर्वंधतत्कल्पनंकृष्णपक्षेएव कल्पनापत्तेः अशेष पार्वणधर्मप्राप्त्यापत्तेश्च तत्प्रकृतिकत्वादिति महालयपदस्यापितिथिविशेषवाचकत्वेनाश्विनापरपक्षवाचकत्वाभावादि तिवक्ष्यमाणवचनाच्च पार्वणश्राद्धेचनित्येत्रापराह्णोमुख्यः कालः तथाश्राद्धस्यपूर्वाह्णादपराह्णोविशिष्यते इतिमनुवच नात्एतत्समस्तंसविस्तरंप्रागेवप्रपंचितमित्यलंबहुपल्लवितेन ॥ इतिक्षयाहश्राद्धेपार्वणैकोद्दिष्टत्वादिकर्त्तव्यतानिर्णयः

॥ अथग्रहणकालनिर्णयःकल्पद्रुमे ॥ ॥

तत्रग्रहणंनामप्रतिपत्संधौराहुणासूर्याचंद्रमसोर्ग्रसनं तदाहवृद्धगार्ग्यः पूर्णिमाप्रतिपत्संधौराहुःसंपूर्णमंडलं ग्रसतेचं

द्रमर्कंचदर्शंप्रतिपदंतरइति तत्रपर्वणोंतभागः स्पर्शकालः प्रतिपदश्राद्यभागोमोक्षकालः तदुक्तंब्रह्मसिद्धांते यावान्का
लःप्रवंणोतितावत्प्रतिपदादिमः रवींदुग्रहणानेहाः राहुग्रहणकालः तत्रकर्तव्यमुक्तंहेमाद्रौ माधवाद्युदाहृतायांस्मृतौ
ग्रस्यमानेभवेत्स्नानंग्रस्तेहोमोविधीयते मुच्यमानेभवेद्दानंमुक्तेस्नानंविधीयतइति तथाचब्रह्मवैवर्तेस्नानंस्यादुपरागा
दौमध्येहोमः सुरार्चनं अन्यदपिकृत्यंमहाभारते गंगास्नानंतुकुर्वीतग्रहणेचंद्रसूर्ययोः महानदीषुचान्यासुस्नानंकुर्या
द्यथाविधीति अत्रचग्रहणेपयश्रपि वापीकूपतडागेषुगिरिप्रस्रवणेषुच नद्यांनदेदेवखातेसरसीषूद्धृतांबुना इति उष्णोद
केनवास्नायाद्ग्रहणेचंद्रसूर्ययोरितिशंखवचनेन सर्वत्रोक्तंसाम्यंच सर्वंजलानां सर्वंभूमिसमंदानंसर्वंब्रह्मसमाद्विजाः
सर्वंगंगासमंतोयंराहुग्रस्तेदिवाकरे स्वधुन्यंतः समानिस्युः सर्वाण्यंभांसिभूतले कूपस्थान्यपिसोमार्कग्रहणेना
त्रसंशयइतिव्यासेनोक्तं तथापितत्प्रशंसामात्रं तारतम्यत्वावश्यकं अतएवमार्कंडेयेनोक्तं भूमिष्ठमुद्धृतात्पुण्यंततः प्र
स्रवणोदकं ततोपिसारसंपुण्यंततःपुण्यंनदीजलं तीर्थतोयंततःपुण्यंमहानद्यंबुपावनं ततस्ततोपिगंगांबुपुण्यंस्यात्
ततोंबुधिः शीतमुष्णोदकात्पुण्यमपारक्यंपरोदकादिति तत्रापिगंगाकुरुक्षेत्रंचसर्वदाग्रहणस्नानादौश्रेष्ठं तदाहवृद्धव
सिष्ठः इंदोर्लक्षगुणंपुण्यंरवेर्दशगुणंततः गंगातोयेतुसंप्राप्तेइंदोःकोटीरवेर्दश गवांकोटिसहस्रस्यसम्यग्दत्तस्ययत्फ
लंतत्फलंजाह्नवीस्नानेराहुग्रस्तेदिवाकरे पुनस्तत्रकुरुक्षेत्रेदशसंख्यमुदाहृतं तथाच चंद्रसूर्यग्रहेचैवयोवगाहेतजाह्नवीं
सस्नातःसर्वतीर्थेषुकिमर्थमटतेमहीमिति अन्यकालेनितत्तत्तीर्थस्नानेयत्पुण्यं तदिंदोर्ग्रहणेतत्रस्नानेलक्षगुणंरवेः ग्रह
णेदशलक्षंएवंकोटिदशकोटयः स्कंदपुराणे उपरागेकुरुक्षेत्रंपवित्रंमुनयोविदुरिति मत्स्यपुराणे दशजन्मकृतंपापं
गंगासागरसंगमे जन्मांतरसहस्रेषुयत्पापंसमुपार्जितं तन्नश्येत्सन्निहत्यांराहुग्रस्तेदिवाकरे सन्निहत्यांकुरुक्षेत्रे अत्र
गंगाशब्देनकृष्णावेणीगोदावरीजाह्नव्यउच्यंते तदुक्तं ब्रह्मपुराणे तिस्रोनद्योमहापुण्यागोदावेणीचजाह्नवी गांहरी

शांघ्रिकप्राप्तागंगाइतिहकीर्त्तिता हरिश्चेशश्चहरीशौतयोरंघ्रिः पादः कंशिरः अंघ्रिश्चकंचअंघ्रिकं हरेःपादादीश्वर
स्यशिरसोगांभूमिंप्राप्ताःगंगायद्यपिजाह्नव्येवतादृशी ननुवेणीगोदे तथापिछत्रिन्यायेन जाह्नव्यासहानिर्दिष्टयोरपिगं
गात्वमविरुद्धं गंगायाअसंनिधाने अन्यनदीषुस्नानंकुर्य्यात् ताश्चब्रह्मपुराणेदर्शिताः गोदावरीभीमरथीतुंगभद्राच
वेणिका तापीपयोष्णीविंध्यस्यदक्षिणेतुप्रकीर्त्तिताः भागीरथीनर्मदाचयमुनाचसरस्वती विशोकाचवितस्ताचविंध्य
स्योत्तरतस्तथेति उष्णोदकस्यातुरविषयत्वं व्याघ्रआह आदित्यकिरणैःपूतंपुनःपूतंचवह्निना अतोव्याध्यातुरःस्नाया
द्ग्रहणेप्युष्णवारिणेति अतएवपूर्वंगंगातोयमारभ्योष्णोदकांतपूत्तरोत्तरानुकल्पत्वमुक्तं अतएवानातुराभिप्रायेणैव त
न्निषेधोभिहितः सूतेजन्मनिसंक्रांतौग्रहणेचंद्रसूर्य्ययोः अस्पृश्यस्पर्शनेचैवनस्नायादुष्णवारिणेत्यादियमादिवचने
षु पृथ्वीचंद्रोदयेप्रभासखंडे गावोनागास्तिलाधान्यंरत्नानिकनकंमही संप्रदायकुरुक्षेत्रेयत्फललभतेनरः तदिंदुग्र
हणेंभोधौस्नानाद्भवतिषड्गुणं तत्रैवसौरपुराणे अंबुधिस्नानमुपक्रम्य दानानीमानिलोकेषुविख्यातानिमनीषिभिः ते
षांफलमवाप्नोतिग्रहणेचंद्रसूर्ययोः ग्रहणविशेषेनदीविशेषस्तत्रैवाभिहितः गोदावरीमहापुण्याचंद्रेराहुसमन्विते सू
र्य्येचराहुणाग्रस्तेतमोभूतेमहामुने नर्मदातोयसंस्पर्शात्कृतकृत्याभवंतिते येसूर्यैसैंहिकेयेनग्रस्तेरेवाजलंनराः स्पृशं
तिचावगाहंतिनसाप्रकृतिमानवीतिदेवीपुराणे गंगाकनखलेपुण्यंप्रयागेपुष्करंतथा कुरुक्षेत्रंमहापुण्यं राहुग्रस्तेदिवा
करेइति मासविशेषग्रहणे तन्निमित्तस्नानादेस्तीर्थविशेषसंबंधेफलातिशयउक्तस्तत्रैव कार्त्तिकेग्रहणंश्रेष्ठंगंगायमुनसं
गमे मार्गेतुग्रहणंपुण्यंदेविकायांमहामुने पौषेतुनर्मदापुण्यामाघेसन्निहिताशुभा फाल्गुनेवरणापुण्याचैत्रेपुण्यासरस्व
ती वैशाखेतुमहापुण्याचंद्रभागासरिद्वरा ज्यैष्ठेतुकौशिकीपुण्या आषाढेतापिकानदी श्रावणेसिंधुनामातुतथाभाद्रेच
गंडिका आश्विनेसरयूःश्रेष्ठाभूयः पुण्यातुनर्मदेति ब्रह्मवैवर्त्ते मकरेवर्त्तमानेतुग्रहणेचंद्रसूर्ययोः दुर्लभंत्रिपुलोकेषुगंगा

दां पिंडपातनमिति स्नानवत्स्मरणादिष्वपिपुण्यमाह मार्कंडेयः स्मृत्वाशतक्रतुफलंदृष्ट्वासर्वाघनाशनं स्पृष्ट्वागोमेधजंपुण्यंपीत्वासौत्रामणिंलभेत् स्नात्वावाजिमखपुण्यंप्राप्नुयादविचारतः रविचंद्रोपरागेचअयनेचोत्तरेतथा एवंगगापिद्रष्टव्यातद्वदेवसरस्वतीति वारविशेषयोगेनचग्रहणेफलविशेषोव्यासेनोक्तः सूर्यवारेरवेर्ग्रासः सोमेसोमग्रहस्तथा चूडामणिरितिस्यातस्तत्रानतफलंलभेत् वारेष्वन्येषुयत्पुण्यंग्रहणेचंद्रसूर्ययोःतत्पुण्यंकोटिगुणितंग्रासेचूडामणौस्मृतमिति अत्रस्नानमावश्यकमेव ग्रहणेसंक्रमेचैवनस्नायाद्यदिमानवः तस्याशौचंभवेत्तावन्मद्यावदपरोग्रहइति संक्रांतिप्रकरणोदाहतवृद्धवसिष्ठवचनेनअकरणेप्रत्यवायस्मरणात् काम्यमपिफलश्रवणात् तथाचदक्षःउपस्युपासियत्स्नानंसंध्यायामुदितेरवौ चद्रसूर्योपरागेतुप्राजापत्येनतत्सममिति तत्रस्नानमाद्यंतयोः कार्यंग्रस्यमानइतिवचनात् विमुक्तेयदिनस्नायाच्चद्रसूर्यग्रहेतथा तस्यस्यात्तावदाशौचंयावदन्यः परोग्रहइति तत्रैवमुक्तस्नानेदोषश्रवणाच्च उभयत्रापिसचैलं ग्रहणेशावमाशौचंविमुक्तोसौतिकंस्मृतं तयोःसंपत्तिमात्रेणउपस्पृश्यक्रियाक्रमइति ब्रह्मांडपुराणे शावाशौचनिमित्तत्वोक्तयाविमुक्तेश्चप्रसववत्त्वोक्तया तथाजननमरणयोः सचैलस्नानादेवनिवृत्तिस्तदुत्तरमेवच कर्माधिकारस्तथात्रापीत्यर्थस्यप्रतिपादनात् सर्वेषामेववर्णानांसूतकंराहुदर्शने सचैलंतुभवेत्स्नानसूतकान्नंचवर्जयेदिति वृद्धवसिष्ठोक्तेश्च सचैलमितिमुक्तिस्नानांतपरमितिमदनरत्नउक्तं इदंचस्नानममंत्रकंकार्यमितिस्मृतिरत्नावल्यां अत्रचवृद्धवसिष्ठवचनेसूतकमाशौचंवहुसूतके इतिपाठे पूर्वसूतकशब्देनास्पृश्यत्वसुच्यते सूतकान्नंग्रहणाशौचांतरित पूर्वपक्कंअतएवषट्त्रिंशन्मते सर्वस्यैवपूर्वाह्नस्योत्तरार्द्धस्य-स्नात्वाकर्माणिकुर्वीतमृतमन्नंविवर्जयेदिति मृतंतदंतरितस्योपलक्षणम् नवश्राद्धेपयच्छिष्टंग्रहपर्य्युषितंचयदितिमिताक्षरावचनात्-केषुचित्प्रतिप्रसवः आरनालंतथाक्षीरंकिलाटंघृतसक्तवः स्नेहपक्कचतैलचनकदाचित्प्रदुष्यतीति तत्रविशेषोवचनांतरे आरनालचतक्रंचस्यादेवंघृतपाचितं उदकंच

कुशच्छन्नंनदुष्येद्राहुदर्शनइति मणिकरण्मोदकंचैवेतिपाठांतरं मंत्रमुक्तावल्यां अन्नपक्कमिहत्याज्यंस्नानंसवसनंग्रहे वारितक्रारनालादितिलदर्भैर्नदुष्यतीति जलेत्वदोषोगंगाविषयः ग्रहोपितजलंपीत्वापादकृच्छ्रसमाचरेदिति तत्रैवचतुर्विंशतिमतेजलस्यापिदोषोक्तेः अन्नपानवत् श्राद्धमपिनित्यंकार्यं सर्वस्वेनापिकुर्वीतश्राद्धंवैराहुदर्शने अकुर्वाणस्तुनास्तिकयाल्पंकेगौरिवमज्जतीतिमहाभारते नैमित्तिकंतुकर्तव्यंग्रहणेचंद्रसूर्ययोः बांधवानांचमरणेनारकोस्यादतोन्यथेति कूर्मपुराणोक्तप्रत्यवायश्रवणात् यत्तुमार्कंडेयवचनं विशिष्टब्राह्मणेप्राप्तेसूर्येन्दुग्रहणायने जन्मर्क्षग्रहपीडासुश्राद्धंकुर्वीतचेच्छयेतितदपिइच्छयाचेत्यन्वयेनश्राद्धं प्रतिरुचिश्चैवेत्येतत्समानार्थतयाव्याख्यातंकाम्यमपीहश्राद्धं तथाहविष्णुः राहुदर्शनदत्तंहिश्राद्धमाचंद्रतारकं गुणवत्सर्वकामीयंपितॄणामुपतिष्ठतीति ऋष्यशृंगोपि चंद्रसूर्यग्रहेयस्तुश्राद्धंविधिवदाचरेत् तेनैवसकलापृथ्वीदत्ताविप्रस्यवैकरेइति शातातपोप्याहसैंहिकेयोयदासूर्यंग्रसतेपर्वसंधिषु गजच्छायातुसाज्ञेयापितॄणांदत्तमक्षयमिति तथालिंगपुराणेव्यतीपातक्षणंयावद्यावच्चंद्रग्रहेक्षणः गजच्छायातुसाप्रोक्तापितॄणांदत्तमक्षयमिति चंद्रग्रहणनिमित्तस्नानश्राद्धादिरात्रावपिभवेदितितदाहशातातपः स्नानंदानंततःश्राद्धमनंतंराहुदर्शने आसुरीरात्रिरन्यत्रतस्मात्तांपरिवर्जयेदिति देवलोपि यथा स्नानंदानंचसूर्यस्यग्रहणेचयथादिवा सोमस्यापितथारात्रौ स्नानंदानंविधीयतइति विष्णुरपि संध्यांनरात्रौकुर्वीतश्राद्धंचैवविशेषतः द्वयोरपिचकर्तव्यंयदिस्याद्राहुदर्शनमिति अपरार्केव्यासोपि ग्रहणोद्वाहसंक्रांतियात्रार्त्तिप्रसवेषुच दानंनैमित्तिकंज्ञेयंरात्रावपितदिष्यतइति इदंचश्राद्धमामेनहेम्नावाकार्यं तदुक्तंशातातपेन आपद्यनग्नौतीर्थेचचंद्रसूर्यग्रहेतथा आमश्राद्धंप्रकुर्वीतहेमश्राद्धमथापिवेति बौधायनोपि अन्नाभावेद्विजाभावेप्रवासेपुत्रजन्मनि हेमश्राद्धंसंग्रहेचकुर्यात्शूद्रःसदैवहीति इत्थमेवनिर्णीतवंतोहेमाद्रिमाधवमदनरत्नादयोनिखिलनिबंधकाराः निर्णयसिंधौतु अपरार्कसंमतंप्रकारांतरमपिलिखितं ग्रहणेद्विजातीनामामश्राद्धं

पाकासंभवेद्रष्टव्यंतीर्थेश्राद्धवत् पाकाभावेद्विजातीनामामश्राद्धंविधीयतइतिसुमंतूक्तेः सैंहिकेयोयदासूर्यंग्रसेत्युपक्र
म्य घृतेनभोजयेद्विप्रान् घृतंभूमौसमुत्सृजेत् इतिवायवीयोक्तेश्च विज्ञानेश्वरोप्याह ग्रहणेश्राद्धभोक्तुर्दोषोदातुश्चाभ्यु
दयइतिसूतकेमृतकेभुंक्तेगृहीतिशशिभास्करे छायायांहास्तिनश्चैवनभूयःपुरुषोभवेदित्यापस्तंबेनभोजननिषेधाच्च अयं
चभोजननिषेधः श्राद्धभोक्तुर्हस्तिच्छायासाहचर्यात् ननुग्रहणेश्राद्धंसपिंडकमपिंडकंवाकर्तव्यमितिसंशयःनिर्णयसिं
धौस्मृतिरत्नावल्यां पुत्रेजातेव्यतीपातेग्रहणेचंद्रसूर्ययोः श्राद्धंकुर्यात्प्रयत्नेनपिंडनिर्वपणादृतइति श्राद्धकाशिकायां
तुमत्स्यपुराणं ततःप्रभृतिसंक्रांतावुपरागादिपर्वसु त्रिपिंडमाचरेच्छ्राद्धमेकोद्दिष्टंमृताहनीति प्रजापतिरपि संक्रांता
वुपरागेचपर्वोत्सवमहालये निर्वपेत्त्रीन्पिंडांस्त्रीनितिप्राहप्रजापतिरिति अत्रग्रहणनिमित्तकश्राद्धेनैवामासंक्रांत्यादिनि
मित्तकतासिद्धिः दर्शकालात्ययोरपातिकालादर्शोक्तिरिति किंचिद्दानंचात्रेतिअयनादौसदादद्यमितिशातातपीये स
दाशब्दश्रवणात् नित्यत्वादेवचमलमासेपितद्भवतीत्युक्तंमात्स्ये चंद्रसूर्यग्रहेचैवमरणेपुत्रजन्मनि मलमासेपिदेयंस्याद
त्तमक्षयकारकामितिकाम्यमप्येदं भूमिर्गावःसुवर्णंवाधान्यंवायद्यदीप्सितं तत्सर्वंग्रहणेदेयमात्मनः श्रेयइच्छतेतिभार
तवचनात्ग्रहणेयद्दानंतत्पात्रेकर्तव्य तदुक्तंतत्रैव अयनेविषुवेचैवग्रहणेचंद्रसूर्ययोः पात्रभूतायविप्रायभूमिंदद्या
त्सदक्षिणां पात्रलक्षणंतूक्तंयाज्ञवल्क्येन नविद्ययाकेवलयातपसावापिपात्रता यत्रस्यातामिमेचोभेतद्धिपात्रंप्रकीर्ति
तमिति अत्रानुकल्पमाहबौधायनः अश्रोत्रियःश्रोत्रियोवा पात्रंवापात्रमेववा विप्रब्रुवोपिवाविप्रोग्रहणेदानमर्हतीति
यद्यपिपूर्वंसर्वव्याससमाद्विजाइत्युक्तं तथापितद्ब्राह्मणस्तुल्यर्थंदानस्यावश्यकत्वार्थंच नतुपात्रत्यागेनयस्मैकस्मैचिद्दा
नप्रतिपादनार्थं अतएवपात्रतारतम्येन फलतारतम्यमुक्तं दक्षस्मृतौ सममब्राह्मणेदानंद्विगुणंब्राह्मणब्रुवे श्रोत्रिये
शतसाहस्रंपात्रेत्वानंत्यमश्नुते इति अब्राह्मणोजातिमात्रब्राह्मणःसंस्कारादिरहितः ब्राह्मणब्रुवस्तु उक्तश्चतुर्विंश

तिमते गर्भाधानादिसंस्कारैर्वेदोपनयनैर्युतः नाध्यापयतिनाधीतेसभवेद्ब्राह्मणब्रुवइति श्रोत्रियःसर्वसंस्कारपूर्वक वेदाध्ययनवान् तुलापुरुषदानादिकालप्रक्रमे यच्चंद्रसूर्यग्रहणे तन्न नतेषांतन्निमित्तकत्वाय किंतु तत्कालकत्वाय कालसंदर्शनात् आदिसध्यावसानेपुयद्यद्विहितंतस्यतस्यफलातिशयउक्तोब्रह्मपुराणे उपमर्देलक्षगुणंग्रहणेचंद्रसूर्ययोः पुण्यंकोटिगुणंमध्येमुक्तिकालेत्वनंतकमिति ग्रहणकालेजननमरणाशौचसत्त्वेपिस्नानादिभवत्येव तदुक्तंलिंगपुराणे चंद्रसूर्यग्रहेस्नायात्सूतकेमृतकेपिच अस्नायीमृत्युमाप्नोतिस्नायीपापंनविंदति वृद्धवसिष्ठेनापि सूतकेमृतकेचैवनदोषोराहुदर्शने तावदेवभवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यते इति राहुलक्षितचंद्रसूर्योपरागनिमित्तस्नानादौहेमाद्रौदानंश्राद्धादिविषयमेतत् नतु स्नानमात्रविषयं ग्रहणेशावमाशौचंविमुक्तेसूतकंस्मृतं तयोःसंपातमात्रेयउपस्पृश्यक्रियाक्षमइति ब्रह्मांडपुराणवचनविरोधात् स्नानहोमदेवपूजादानक्रियानुष्ठानेहिक्रमउपपद्यते स्नानमात्रानुष्ठाने स्नानस्यपूर्ववाक्येनैवसिद्धौ द्वितीयवाक्यवैयर्थ्यप्रसंगाच्च भवत्पक्षेद्वितीयवाक्येनैवस्नानासिद्धेः पूर्ववाक्यवैयर्थ्यप्रसंगइतिचेन्न अस्नातस्यानिष्टविशेषसंबंधप्रतिपादनार्थत्वात् यावत्तावच्छब्दानुपपत्तिप्रसंगाच्च तावत्कालव्यापिकर्मसुश्रद्धायामवभिधातव्यायांहितौसार्थकौ स्नानमात्रंतु नतादृशं अतएवाविशेषेणैवजननमरणनिमित्ताशौचप्रयुक्तानधिकाराभावोग्रहणनिमित्तकर्मसु स्मर्यते सूतकेमृतकेचैवयदिस्याद्राहुसूतकं तावत्तुसूतकंनास्तियावद्राहुर्नमुंचतीति स्कंदपुराणे सूतकेसूतकंनैवसूतकंराहुदर्शने तावदेवभवेत्शुद्धिर्यावन्मुक्तिर्नदृश्यते कालादर्शे अंगिराः सर्वेवर्णाविशुद्धाःस्युःसूतकेराहुदर्शने स्नात्वाश्राद्धंप्रकुर्वीरन्वित्तशाठ्यविवर्जितामिति षट्त्रिंशन्मतेपि स्मार्त्तकर्मपरित्यागोराहोरन्यत्रसूतके श्रौतकर्माणितत्कालंस्नातःशुद्धिमवाप्नुयादिति सूतकेश्राशौचे राहोस्तदुपलक्षितोपरागादन्यनिमित्तकानांस्मार्त्तकर्मणांपरित्यागोनतुतन्निमित्तकानामित्यर्थइति हेमाद्रिः सूतकेयः स्मार्त्तकर्म

परिग्रहः सराहुसूतकान्नतुकालप्राप्तानांतेषांत्यागइत्यंतेन तेनश्राद्धंकिंचिद्दानंचोपरागनिमित्तकमाशौचेवश्यंभवतिन
स्नानमात्रं संवत्सरप्रदीपादिपुचेदंस्मृतिवचनंलिखितं सूतकेमृतकेचैवनदोषोराहुदर्शने स्नानमात्रंतुकर्त्तव्यंदानंश्रा
द्धविवर्जितंएतच्चपूर्वोदाहृतवहुश्रुतिविरोधान्निर्मूलम् मदनरत्नपारिजातेप्येवंनिर्णयसिंधावपि इयंचशुद्धिरविशेषा
त्तंत्रदीक्षापुरश्चरणादिसर्वस्मार्त्तकर्म्मविपयेति मदनरत्नेप्येवं रजस्वलायास्तुविशेषोभार्गवार्चनदीपिकायां सूर्यो
दयानिबंधे सूतकादिपुदोषोस्तिग्रहेहोमजपादिषु ग्रस्तेस्नायादुदक्याहितीर्थादुद्धृत्यवारिणेति अत्रच स्नानेनैमि
त्तिकेप्राप्तेनारीयदिरजस्वला पात्रांतरिततोयेनस्नानंकृत्वाव्रतंचरेदितिमिताक्षरोक्तोविधिर्द्रष्टव्यः यत्तु ग्रहणनिमि
त्तमाशौच तत्स्नानेन निवर्त्यं तदुक्तंब्रह्मांडपुराणे आशौचंजायतेन्टणांग्रहणेचंद्रसूर्य्ययोः राहुस्पर्शेतयोःस्नात्वा
दानादौकल्पतेनरइति निर्णयामृते ग्रहणकालस्यसर्वस्यापिपुण्यत्वेस्पर्शकालः स्नानादिकर्मसुश्रेष्ठः मध्यकालो
मध्यमः मोक्षकालस्त्वधमःतदाहव्यासः त्रिदशाः स्पर्शसमयेतृप्यंतिपितरस्तथा मनुष्यामध्यमेकालेमोक्षकाले
तुराक्षसाइति एतच्चवचनमविशेषात्सर्वदेवपितृदैवत्यकर्मपरमिति केचित् स्नानंस्यादुपरागादौमध्येहोमसुरार्चन
मित्यादिभिर्वचनैर्होमदेवार्चनयोर्मध्येविधानात् ग्रस्यमानेभवेत्स्नानमितिपूर्वोदाहृतवचनाच्चनैतद्युक्तं किंतुहोमदे
वपूजाव्यतिरिक्तविपयमेतदितिहेमाद्रौ एतानिचग्रहणनिमित्तकानिकर्माणिसंक्रांतिष्विवततःपूर्वमुत्तरंवा भवति उ
तग्रहणकाल इत्यपेक्षायां जाबालिः संक्रांतौपुण्यकालस्तु षोडशोभयतःकलाः चंद्रसूर्योपरागेतुयावद्दर्शनगोच
राइति अत्रकल्पतरुकारप्रभृतयः दर्शनशब्दश्चाक्षुषज्ञानपरः नशास्त्रार्थज्ञानवचनः निमित्तस्यज्ञातस्यैवनैमित्त
कप्रयोजकत्वेननिमित्तत्वबोधकश्रुत्यैवतल्लाभेनदर्शनशब्दप्रयोगस्यवैयर्थ्यप्रसंगः तच्चदर्शनंस्वकीयमेवनिमित्तं प
रकीयदर्शनस्यपरकीयस्नानादिप्रयोजकत्वाभावात् एवंचस्वयंग्रहणेदृष्टेस्नानादिकर्त्तव्यं नमेघाद्यावृतेइतिपर्य्यव

सन्नं अत्रकेचित् गोचरशब्दोत्रव्रतफलोपधानपरः तत्काले एकस्यापिकर्मणःकर्तुमशक्यत्वात् किमुतबहूनांकिंतु योग्यतापरः साचप्रयत्नापनेयचाक्षुषज्ञानप्रतिबंधराहित्ये तथाचयोग्यत्वाभावादपिनमेघाच्छन्नेस्नानादीत्याहुः निर्ण याम्रतेप्येवं तदेतत्तुच्छंचाक्षुषज्ञानाविषयत्वविवक्षायां नेक्षेतोद्यंतमादित्यंनास्तंयांतंकदाचन नोपरक्तंनवारिस्थंनम ध्यंनभसोगतामिति स्नानप्रकरणपठितमनुवाक्येन स्नातकानांग्रस्तादित्यदर्शननिषेधात् स्नानाद्यभावप्रसंगात् श्रा धादीनांतदभावप्रसंगाच्च नचेष्टापत्तिः सूर्यग्रहोयदारात्रौदिवाचंद्रग्रहस्तथा तत्रस्नानंनकुर्वीतदद्याद्दानंतुनक्वचिदिति निगमवचनस्य स्नानादिनिषेधस्यवैयर्थ्यप्रसंगात् चाक्षुषज्ञानाभावेनतत्प्राप्त्यभावात् निषेधस्यप्राप्तिपूर्वकत्वात् य दप्येतद्वचनस्यग्रस्तास्तपरत्वेनव्याख्याने रविचंद्रयोरस्तानांतरंरात्रिदिवाग्रहत्वादिति तदपितुच्छं यावद्दर्शनगोचर इत्यनेनैवास्तोत्तरभागयोर्निमित्तत्वपर्युदासेनवैयर्थ्यपरिहारात् .राहुदर्शनदत्तंहिश्राद्धमाचंद्रतारकं स्नानंदानंजपः श्राद्धमनंतंराहुदर्शनइत्यादिषुकर्मविशेषवचनेष्वपिदर्शनपदापादानेग्रस्तास्तोत्तरभागस्य ..दर्शनागोचरत्वेननिमित्त त्वाप्रसक्तेश्च किंचदर्शननिमित्तानंतर्भावेतदावृत्तौस्नानाद्यावृत्तिप्रसंगः प्रतिनिमित्तंनैमित्तिकावृत्तिरितिन्यायात् द्व शिरहितेषुवहुवचनेषुतत्पदाध्याहारप्रसंगश्च किंचनिमित्तेषुनिमित्तवतएवाधिकारादधिकारिणश्चतदकरणेप्रत्यवायद र्शनेसति स्नानाद्यकरणे प्रत्यवायप्रसंगात्तदभावेतुतदभावात् प्रत्यवायकश्चकर्मानुष्ठानान्यतरप्रयोजकंदर्शनबुद्धि पूर्वकारीकोपिनकुर्य्या देवेतितन्नियोज्यकःस्नानादिविधिर्दुस्थितत्वात् नन्वेवमाधानाध्ययनाभ्यामग्निविसर्जनमपि कोपिनकुर्यात् तस्मिन्सत्यग्निहोत्रादिकर्मकरणे प्रत्यवायस्यतत्परिहार्य्यकष्टाकर्मकरणस्यापत्तेः आधानाध्यय नयोः कर्मविधिप्रसज्यत्वेनसिद्धाग्निविद्यावत्यस्यकर्माधिकाराभ्युपगमात् सत्यंव्रात्यतानाहिताग्नितयोरुपपातक गणनेयाद्योतकंकिंचिदस्ति अथैतद्दोषपरिहारायदर्शनस्यस्नानाद्यंगत्वेनविधेयत्वैवमंगीक्रियते निमित्तत्व ...

वत्सरप्रदीपोदाहृतमार्कंडेयवचन उपवाससाहचर्यात्स्पष्टंप्रतीयते एकरात्रमुपोष्यैवराहुंदृष्ट्वाक्षणंनरः पुण्यमाप्नो
तिकृत्वाचस्नानंश्राद्धविधानतइतिनिमित्तज्ञानत्वेनतस्याधिकारसंपादनेनोपयोगिना · अध्ययनाधानवत्स्नानाभावा
तु तयोर्नांगत्वंकिंतूपकारकतामात्रं दर्शनस्यतुप्रमाणवशागतापातेनैवोपकारेण अत्रच यद्यप्युपवासदर्शनयोःस्ना
नश्राद्धयोश्चाक्षयंपुण्यमाप्नोतीत्यनेनसर्वेषांतुल्यत्वंभासते तथापि वहुपुवचनेषु स्नानश्राद्धयोरेवफलसंवंधश्रवणा
दत्राप्युपवासदर्शनपूर्वकस्नानश्राद्धेविधायाक्षयंपुण्यमाप्नोतीतियोजनयोपवासदर्शनयोरंगत्वंद्रष्टव्यं विशेषविधि
नांचाग्नीषोमीयादिहिंसाविधिनैवनाहिंस्यादितिनिषेधस्युनोपरक्तामित्यादिनिषेधस्यवाधेन रागप्राप्तेक्षणविषयत्वकर
णात्सर्वंनैमित्तिकार्थंतंत्रेणसकृद्दर्शनंकृत्वासर्वंकर्तव्यं एवंजन्मादिराशिस्थोपितद्विषयत्वस्यापिदर्शननिषेधस्य राग
प्राप्तविषयत्वात् तस्माद्दर्शनाविधिविषयत्वेनजन्मादिराशिस्थोपरागवतामितरवत्सकृद्दर्शनस्नानादिभवत्येव अंधा
दीनामेवतदशक्तेरनधिकारात्तन्नभवतीतिचेत् अत्रवदामः अस्तुदर्शनाविधिः तद्वलादेवच पूर्वोक्तप्रकारेणत्वस्यां
गत्वमपि तथापिसोपूर्वविधिस्तावन्नसंभवति निमित्तज्ञानतयादर्शनसापेक्षप्राप्तत्वात् किंतर्हिनिमित्तज्ञानस्याधिका
रसंपादकत्वानेकरूपस्यसंभवात् पक्षेप्राप्तस्यदर्शनस्यनियमविधिरयं अवघातादिवत् ततश्चनैमित्तिकेष्वप्यशक्यां
गहानेनाप्यधिकारस्यन्यायसिद्धत्वादंधादीनांमेघाद्यावरणवाक्यदर्शननियमरूपासंभवेपिस्नानादियुक्तमेवेति नेष्ट
सिद्धिः अधिकारसंपादकत्वेनास्यांगस्यत्र्यग्निविद्यादिवत् नयथाशक्तिन्यायविषयत्वमितिचेत्रैवंस्यात् अग्निवि
द्यादिपुहिकर्मप्रयोगविध्यप्रयोज्यत्वान्नयथाशक्तिन्यायवत्त्वंनाधिकारसंपादकत्वात् उपरागदर्शनानियमस्तुप्रयोग
विधिप्रयोज्यएवेतिभवति यथाशक्त्यायंवधस्यविषयः अस्तुतर्हिनिमित्तत्वमेवेतिचेन्न दत्तोत्तरत्वात्किंचयदिदृष्ट
ग्रहणंस्नानादेर्निमित्तं तयासत्युद्देश्यस्यग्रहणस्यविशेषणंदर्शनमविवक्षितंस्यात् यस्योभयंहविरार्तिमार्च्छेदित्यत्रे

रस्यान्प्रतितयोरपिदर्शनयोग्यत्वस्यचानिषेधबलादेवलाभात् अतिसूक्ष्मतरकालतयाअनादेश्यानांतुकस्यापिदर्शन
योग्यानाम् तद्योग्यताविशेषणादेवानिमित्तत्वपर्य्युदासः यदपि मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानंकृत्वाततःपर मित्यादिषु
दृष्ट्वेतिपदं तदपिशास्त्रीयज्ञानपरं अत्रगौडनिबंधेस्मृतिवचनम् मेघमालादिदोषेणयदिमुक्तिर्नदृश्यते आकल
य्यततःकालंस्नात्वाभुंजीतवाग्यतइति नचग्रस्तास्तमयेचंद्रसूर्योदयात्प्रागपिशास्त्रतोमुक्तिंविज्ञायस्नानभोजनादिप्र
संगः ग्रस्तावेवास्तमनंस्वितिवक्ष्यमाणभृगुवचनेनदिनांतरेस्नानभोजनविधानात् अहोरात्रंनभोक्तव्यमितिवक्ष्य
माणविष्णुधर्मोत्तरवचनेनग्रस्तास्तमयेचंद्रसूर्योदयात्प्राग्भोजननिषेधाच्च तस्माच्छास्त्रावगतंदेशविशेषावच्छेदेन
चाक्षुषज्ञानयोग्यमेववाग्रस्तास्तग्रहणंस्नानादिनैमित्तिकानुष्ठानप्रयोजकमित्याहुः योग्यताचस्वरूपेण,वतत्कालएव
स्नानादिनतुसंक्रांतिवत्पूर्वापरयोःभोजनंतुतत्कालेतत्पूर्वकालेचनिषिद्धम् तथाचब्रह्मपुराणे नाश्नीयाद्यतत्काले ग्र
स्तयोश्चंद्रसूर्ययोः मुक्तयोश्चकृतस्नानः पश्चाद्भुंज्य,तत्स्ववेश्मनीति अत्रस्ववेश्मनीतिवाक्यभेदेन तद्दिनेपरान्नभो
जननिषेधः विष्णुधर्मोत्तरे चंद्रस्ययदिवाभानोर्यस्मिन्नहनिभार्गव ग्रहणंतुभवेत्तत्रनपूर्वंभोजनक्रिया शंखलिखितौ
तस्मिन्नहनिनाश्नीयाच्चंद्रसूर्यग्रहोयदि मुक्तिंदृष्ट्वातुभुंजीतस्नात्वाचैवयथाविधीति पूर्वकालभोजननिषेधविशेषमा
ह वसिष्ठः ग्रहणंतुभवेदिंदोः प्रथमादधियामतः भुंजीतावर्त्तनात्पूर्वंपश्चिमेप्रथमादधः रवेस्त्वावर्त्तनादूर्ध्वमर्वागेवानि
शीथतः चतुर्थेप्रहरेचेत्स्याच्चतुर्थप्रहरादध इति रात्रौप्रथमयामोत्तरंचंद्रग्रहणं चेन्मध्याह्नात्पूर्वंभुंजीत रात्र्यंतयामे
चेद्रात्रिप्रथमयामात्पूर्वंभुंजीत दिनस्यतृतीयप्रहरेचेद्रविग्रहस्तदापूर्वदिनस्यार्द्धरात्रात्प्राक्भुंजीत अह्नश्चतुर्थप्रहरेचे
द्रविग्रहणंतदारात्रेश्चतुर्थप्रहरादधोभुंजीत इदंचनरात्रिभोजनपरं किंतुसूर्यग्रहेपूर्वंयामचतुष्टयंत्याज्यम् चंद्रग्रहेया
मत्रयमित्येवपरमितिमाधवः तदुक्तंवृद्धगौतमेन सूर्यग्रहेतुनाश्नीयात्पूर्वंयामचतुष्टयं चंद्रग्रहेतुयामांस्त्रीन्बालवृद्धा

वहविषउभयत्वं अतःकेवलंग्रहणमेवनिमित्तमितिवक्तव्यम् तच्चज्ञातमेवनिमित्तंसर्वनिमित्तानां ज्ञातानामेवनैमित्ति
कप्रयोजकत्वमिति विज्ञानेश्वरादिभिस्तत्रतत्रनिरूपितत्वात् तच्चज्ञानं शास्त्रीयमेवनलौकिकं नचशास्त्रीयज्ञान
विवक्षयादेशांतरग्रहणेपिस्नानादिप्रसंगइतिवाच्यं सूर्यग्रहोयदारात्राविति पूर्वोक्तनिगमवचनेनतत्रस्नानादिनिषेधात्
ननुतर्हिबहुवाक्येषुप्रयुक्तस्यदर्शनपदस्यकागतिरितिचेत् अत्रदाक्षिणात्याः दृशेरुद्देशविषयत्वेनग्रहैकत्ववद
विवक्षयाअक्षिप्तज्ञानानुपादकत्वमेवप्रयुक्तश्चदृशिर्ज्ञानसामान्ये अष्टमीरोहिणीयुक्तानिश्यर्द्धेदृश्यतेयदेत्यादिषुम
नसापश्यतीत्यादौ लौकिकप्रयोगेच पश्यार्थैश्चानालोचनइति व्याकरणस्मृत्या दृशेर्ज्ञानसामान्यवाचित्वम
नुमन्यते भवतुवाचाक्षुषज्ञानमेवतस्यवाच्यमितरत्रलाक्षणिकत्व तथाप्यत्रतदाश्रयणेपिनदोषः चंद्रसूर्यग्रहेना
द्यात्तस्मिन्नहनिपूर्वतः राहोर्विमुक्तिविज्ञायस्नात्वाकुर्वीतभोजनमिति गौतमवचसस्तात्पर्य्यग्राहकस्यसत्त्वात् वि
धिलाघवार्थमनुवादत्वापेक्षणात् तस्याअदोषत्वाच्च श्रुत्वापुत्रस्यजन्मचेत्यादिवत् अन्यथा रजसोदर्शनेनारीत्रि
रात्रमशुचिर्भवेदित्यादावप्यंधस्त्रीणामशौचाभावप्रसंगः यद्वा यावद्दर्शनगोचर इत्यादौ गोचरशब्दोयोग्यताप
रएव तेनयश्चंद्रसूर्य्योपरागोयस्मिन्देशेयावत् कर्मपर्य्याप्तश्चाक्षुषज्ञानयोग्यः सतत्रदेशेतावत्सुकर्मसुनिमित्तमि
त्यर्थः पर्यवस्यति तादृशस्यचशास्त्रतोज्ञानंतदनुष्ठानंप्रयोजकं तच्चतत्कालएवनतुसंक्रांताविवतत्पूर्वोत्तरकालयोः
अतश्चाक्षुषज्ञानयोग्येप्यकालीयेग्रहणेस्नानपूर्वकंदानादिस्नानमात्रंवायावदेवतुप्रकर्त्तुंशक्यम् तावदेवकर्त्तव्यंवर्त्तमा
नमेव ग्रहणंतादृशमाशौचवत्निमित्तम् नत्वतीतंनचभाविचेतिपर्य्यवसितोर्थःदेशविशेषणंच सूर्यग्रहेयदारात्रा
वितिवचनेन द्वीपांतरस्थनिमित्तत्वपर्य्युदासोवगम्यते अतएवचाक्षुषज्ञानयोग्यतायानिमित्तांतर्गतत्वे रात्रिरविग्रह
स्य दिवाचंद्रग्रहस्यातथात्वेतन्निमित्तत्वादप्रसक्तस्यस्नानादेस्तत्रनिषेधः पर्य्युदासोवानतथैकइत्यपास्तं द्वीपांत

तुरैर्विना अर्धरात्रादधश्चोर्ध्वयदिचंद्रग्रहोभवेत् पूर्वपूर्वत्रभोक्तव्यमुत्तरेचोत्तरेपिचेति अधोद्वितीयप्रहरे ऊर्ध्वंतृतीये पूर्वत्रपूर्वाह्णे दिनप्रथमद्वितीयप्रहरयोः उत्तरेपि एवंसति सूर्यग्रहनिमित्तभोजननिषेधविषययामचतुष्टयस्याप्यवध्य पेक्षस्यग्रहणयामएवावधिः चंद्रस्यग्रस्तोदयेविशेषमाहवृद्धवसिष्ठः ग्रस्तोदयेविधोःपूर्वंनाहर्भोजनमाहरेत् ग्रस्ता स्तमयेविशेषमाहभृगुः अस्तावेवास्तमानंतुरवींदूप्राप्नुतोयदि परेतुरुदयेस्नात्वाशुद्धोभ्यवहरेन्नरइति वृद्धगार्ग्यो पि संध्याकालेयदाराहुर्ग्रसतेचंद्रभास्करौ तदहर्नैवभुंजीतरात्रावपिकदाचनेति यदासूर्यस्यग्रहणंसायंसंध्यायां चं द्रग्रहणंप्रातःसंध्यायां तदासूर्यस्यग्रस्तास्तमयेपूर्वस्मिन्नहनितस्यांरात्रौनचभोक्तव्यं चंद्रग्रस्तास्तमयेपूर्वरात्रौतूत रस्मिंश्चाह्निनभोक्तव्यमित्यर्थः विष्णुधर्मोत्तरेपि अहोरात्रंनभोक्तव्यंचंद्रसूर्यग्रहोयदा मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानंकृ त्वाततःपरमिति तदपिग्रस्तास्तमयपरं पूर्ववचनैकवाक्यत्वात् तत्र सूर्यग्रस्तास्तमयेसम्यगेव चंद्रग्रस्तास्तेतु सायाह्नदर्शनोत्तरमित्याहारस्त्यहोरात्रंद्रष्टव्यं अमुक्तयोरस्तगयोर्दृष्ट्वास्नात्वापरेहनीतिवचनात् शातातपः नाद्या त्सूर्यग्रहात्पूर्वमह्निसायंशशिग्रहात् ग्रहकालेचनाश्नीयात्स्नात्वाश्नीयात्तुमुक्तयोः मुक्तेशशिनिभुंजीतयदिनस्यान्म हानिशा स्नात्वादृष्ट्वापरेह्नय्याद्ग्रस्तास्तमितयोरिति महानिशाचमार्कंडेयेनोक्ता महानिशाद्वेघटिकेरात्रिमध्यम यामयोः नैमित्तिकंतदाकार्यंकाम्यंतुनमनागपीति प्रतियामंघटिकाद्वयमेकैकावाघटिका तेनमुहूर्तद्वयमेकोवामु हूर्तः सार्द्धप्रहरानंतरंमुहूर्तचतुष्टयंमहानिशेतिकल्पतरुः शिवरहस्येपि नाचरेत्सग्रहेचैवतथैवास्तमुपागते यावत्स्या न्नोदयस्तस्यनाश्नीयात्तावदेवतु मुक्तिंदृष्ट्वातुभुंजीतस्नानंकृत्वायथाविधीति सग्रहेग्रहणसहितेतद्वर्त्तमानकालेतथैव स्मृत्यंतरेपि संध्याकालेयदाराहुर्ग्रसतेचंद्रभास्करौ तदादिवानभोक्तव्यमातुरस्त्रीशिशून्विनेतिदिवेत्यहोरात्रोपलक्षण बालादीनामसमर्थानांतुमुहूर्तत्रयात्मकसायाह्नादिग्रहणकालांत् प्राचीनेएकैकस्मिन्नेवतादृशपराह्णादौभोजननिषेध

तथाचमात्स्यमार्कंडेययोः सायाह्ने ग्रहणंचेत्स्यादपराह्नेनभोजनं अपराह्नेनमध्याह्नेमध्याह्नेनतुसंगवे भुंजतिसंगवेचे त्स्यान्नपूर्वभोजनक्रियेति सायाह्नादौग्रहणेक्रमेणापराह्नादौबालवृद्धातुरैर्नभोक्तव्यं अपराह्नादिपूर्वकालेतुभोजनेते षांनदोषइत्यर्थः विशेषनिषेधस्यशेषांशेनदोषइत्यर्थः विशेषनिषेधस्यशेषांशेभ्यनुज्ञाफलकत्वात् कालतत्वविवे चनेतु सूर्योपरागविषयमेवेदं बालादीनांभोजननिषेधप्रतिपादकंचंद्रग्रहणं रात्रितृतीयचतुर्थप्रहरगते बालादि भिर्यामत्रयमपिनिषेधपरिपालनसंभवात् तेषामपिउत्सर्गतः सर्वस्यामपिरात्रौभोजनंविनैवावस्थानात् यदातुते षां रात्रिप्रथमद्वितीययामगतेचंद्रग्रहेयामद्वयव्यापिनिषेधपरिपालनासंभवस्तदारात्रेरपिपंचभागान्कृत्वाग्रहणका लभूतभागावधिकात्रिमुहूर्त्तात्मकैकभागात्मकएवरविग्रहवद्भोजननिषेधकालोद्रष्टव्यः यत्तुग्रहणंकालावधिकभागद्वये भोजननिषेधप्रतिपादकंस्मृत्यंतरवचनं सायाह्नेसंगवेश्नीयात्पराह्नेसंगवादधः मध्याह्नेपरतोश्नीयान्नोपवासोरविग्रह इतिशारदेअपराह्नेइत्यर्थःयदपराह्णेथशरदितिश्रुतेः रविग्रहःशशिग्रहस्याप्युपलक्षणं एतच्चपुत्रवद्गृहस्थविषयं आ दित्येहनिसंक्रांतौग्रहणेचंद्रसूर्ययोःउपवासोनकर्त्तव्योगृहिणापुत्रिणातथेति स्मृत्यंतरवचनाच्च कालतत्वविवेचनेतुवच नमिदंबालादिविषमेवग्रस्तास्तसूर्यास्तमयविषयंनोपवासोरविग्रहइतिवाक्यशेषात् तत्रैवचाहोरात्रव्यापिनिषेधात्म कोपवासप्रसक्तेःअपराह्नप्रांतोपरागेग्रस्तास्तमयःसंभवत्येव मध्याह्नेपरतोश्नीयादित्युक्तंतत्रापरागेग्रस्तास्तमयसंभ वात् यद्यपिचतत्रपूर्ववाक्यादुपरागात्पूर्वसंभवमात्रंवर्जयित्वाप्रातर्भोजनंसंभवतितथापि भागद्वयवर्जनस्यात्रवाक्येनप्र तिपादनादन्यत्रापिभागद्वयवर्जनं मुख्यःकल्पः पाकभागवर्जनंत्वनुकल्पइतिसूच्यते इत्युक्तं ग्रहणवेधकालोहेमाद्रौ त्रयोदश्यादितोवर्ज्यंदिनानांनवकंध्रुवंमांगल्येषुचसर्वेषुग्रहणेचंद्रसूर्ययोरिति अन्यत्रापि द्वादश्यादितृतीयांतोवेधइं दुग्रहेस्मृतः एकादश्यादिकःसौरेचतुर्थ्यंतः प्रकीर्त्तितः इदंसंपूर्णग्रहेखंडग्रहेतुनियतादिनत्रयं त्र्यहंखंडग्रहेतयोरिति

वचनात् इदंचग्रस्तास्तेऽग्रदिनपूर्वमितिनारदवचनेनग्रस्तास्तभिन्नग्रहणपरंज्ञेयेतिनिबंधे च्यवनःग्रहणोत्पातभंत्याज्यं मांगल्येपुक्रतुत्रयं यावच्चरविणामुक्तामुक्तंभदंतकाश्ववत् अन्यद्वर्णविकारादितत्फलंचदैवज्ञेभ्योज्ञेयं अत्रकाम्योपवास माहदक्षः अयनेविषुवेचैवग्रहणेचंद्रसूर्ययोः अहोरात्रोपितःस्नात्वासर्वपापैःप्रमुच्यतइति आदिकर्मणिक्तः केचित्तु भूते क्तमभिप्रेत्यग्रहणपूर्वदिनेप्युपवासमाहुःअतएवग्रहणादौ आदित्येहनिसंक्रांतावितिवचनेनपारणानिषेधउपयुज्यते ब्रह्मपुराणे नित्यंद्वयोरयनयोस्तथाविषुवतोर्द्वयोः चंद्रार्कयोर्ग्रहणयोर्व्यतीपातेपुकर्मसु अहोरात्रोषितःस्नानंश्राद्धंदानंतथाजपं यःकरोतिप्रसन्नात्मातस्यस्यादक्षयंहितत् इतिकालतत्त्वविवेचने अयंचोपवासः सत्यामपिनिशायामयनग्रहणादिमत्यहोरात्रएवनतुपूर्वस्मिन् अयनादिसमभिव्याहारात् तद्वदहोरात्रस्यैवप्रतीतेस्तुग्रहणस्यैवयुक्तत्वात् तथैवशिष्टसमाचाराच्चक्तःपूर्ववत् एकरात्रमुपोष्यैवस्नात्वादद्याच्चशक्तितः कंचुकादिवसर्पस्यनिवृत्तिःपापकोशत इतिलिंगपुराणगतल्यप्प्रत्ययोपिसमानकर्तृत्वमात्रे मुखंव्यादायस्वपितीतिवत् तत्रैवत्रिरात्रोपवासोयुक्तः त्रिरात्रंसमुपोष्यैवग्रहणे चंद्रसूर्ययोःस्नात्वादत्वाचविधिवन्मोदतेब्रह्मणासहेति अत्रापित्रितयमुपवाससहितमेवतद्घटितस्यैवत्रिरात्रस्योपरागाह्निोपलक्षणात् पुत्रवद्गृहस्थस्तुपापक्षयकामोपि ग्रहणनिमित्तोपवासंनकुर्यात् तदुक्तंनारदेन संक्रांत्यामुपवासंचकृष्णैकादशिवासरे चंद्रसूर्यग्रहेचैवनकुर्यात्पुत्रवान्गृही यदातुरविर्ग्रस्तस्तदापुत्रिणाप्रहरद्वयंहित्वाबालादिवद्भोजनंकार्यंनतूपवासः सायाह्नेग्रहणंचेत्स्यादिति मार्कंडेयवचनात्सायाह्नेसंगवेश्नीयादितिस्मृतेश्चेतिहेमाद्रिः माधवमतेतुपुत्रिणोपितत्रोपवासएव अहोरात्रंनभोक्तव्यमिति पूर्वोक्तनिषेधस्य तेनापि पालनीयत्वात् उपवासनिषेधस्तुव्रतरूपोपवासपरः कृष्णैकादशीवदितिमदनरत्नेप्येव युक्तंचैतत् यतःतत्प्रयुक्तोपवासस्यानिषेधोयमुदाहृतइति वाक्यशेषेणविहितकाम्योपवासनिषेधोनानुषंगप्राप्तस्यनानुषंगप्राप्तौयतोनित्यमपोषणमिति[illegible]

न्दः संकल्पात्मकव्रतरूपोपवासपरएवशक्तौनतभोजननिवृत्तौतस्यलाक्षणिकत्वात् अन्यथोपवासव्रतंचरेदितिव्रतश
ब्दसमभिव्याहारात्संकल्पसिद्धावपिकेवलोपवासशब्दघटितवाक्येषुसंकल्पासिद्ध्यप्रसंगात् तथाचोपवासनिषेधेषु
गौणमुख्ययोर्मुख्येकार्यसंप्रत्ययइतिन्यायेन मुख्यस्यैवग्रहणौचित्यमिति यदाचैवंकारणांतरप्रयुक्तभोजनाभावमा
त्रेणव्रतरूपोपवासप्रसक्तिस्तदाग्रहणनिमित्तश्राद्धाधिकारिणा प्रारब्धेचाभोजनमासमाप्तेरितिविहितश्राद्धांगभो
जननिषेधपरिपालनेपिनक्षतिः ग्रहणनिमित्तेपिच श्राद्धपूर्वेद्युरपरेद्युर्वाप्राथमिकेब्राह्मणनिवेदने श्राद्धप्रारंभत्वेन न्या
य्यातसंभवत्येव नभुंजीतचग्राच्याः श्राद्धाधिकारिणाग्रहणादेतत् पूर्वं तस्माद्वसूर्यग्रस्तास्तेपत्रवद्ग्रहणेप्यहो
रात्रंभोजननिषेधः परिपालनीयएव व्रतरूपःकाम्यउपवासःपरंनकार्यः चंद्रग्रस्तास्तेतूत्तरदिनेसंध्याहोमादौनदो
षः तदाहाशनाः ग्रस्तेचास्तंगतेत्विंदौज्ञात्वामुक्त्यवधारणं स्नानहोमादिकंकार्यंभुंजीतोदयेपुनः एतदनाहिताग्निवि
षय अपराह्लेव्रतीपनीयमश्नात इतिकात्यायनोक्तेर्व्रतस्यश्रौतत्वेविहितत्वेनचप्राबल्यात् आहिताग्निंतंकुर्यादितितन्नि
र्णयदीपः रागप्राप्तभोजनेकालनियमोयं तेनज्वरादौविवभोजनमितिकर्कानुसारिणः ग्रहणांतरितस्यपूर्वसंकल्पित
स्यद्रव्यस्यादत्तस्यद्वैगुण्यंभवतीतिशिष्टाः पठंति तच्चब्रह्मवैवर्ते दातव्यमितिनोक्तंस्यांवक्तव्यंकुत्रचित्क्वचित् दशो
त्तरंपर्वसुस्याच्छतंचंद्रग्रहेभवेत् सूर्यग्रहेसहस्रंतुनमरणेनंतकंस्मृतमिति अत्रमूलंचिंत्यमितिनिर्णयसिंधौ ग्रहणात्पूर्व
कालभोजनेप्रायश्चित्तं षट्त्रिंशन्मतेभिहितं चंद्रसूर्यग्रहेभुक्त्वाप्राजापत्यंसमाचरेत् तस्मिन्नेवदिनेभुक्त्वात्रिरात्रेणैवशु
ध्यतीति त्रिरात्रेणत्रिरात्रोपवासेनतेनप्राजापत्यार्द्धमुक्तंभवति प्राजापत्यस्यषडुपवासतुल्यत्वात् ग्रस्तास्तोत्तरंनिषिद्ध
कालभोजनेपित्रिरात्रमेवतस्मिन्दिनइत्यविशेषाभिधानात् स्त्रीबालवृद्धादीनांतदर्धं ग्रहणप्रसंगात्कुरुक्षेत्रप्रतिग्रहेप्रा
यश्चित्तमुच्यते अरुणस्मृतौ प्रतिग्राहीकुरुक्षेत्रेनभूयःपुरुषोभवेत् तथापिमनसःशुद्ध्यैप्रायश्चित्तंसमाचरेत् तप्तकृच्छ्रेत्र

यंकुर्य्याद्दैवेनसमान्वित सत्रणवायजेताथजपेद्वालक्षसप्तकं वापीकूपतडागादिखननेनविसृजेद्धनमितिएतच्चयद्राहि
तेनार्जयंतिब्राह्मणाःकर्मणाधनं तस्योत्सर्गेणशुद्ध्यंतिदानेनतपसापिचेति मनूक्तेरुत्सर्गोत्तरं ज्ञेयमितिदिक् ॥ अथग्रह
णेसामान्यतोवर्ज्याणि नस्वपेन्नचभुंजीतनकुर्य्यान्मूत्रमेहने नमैथुनंनचाभ्यंगंभोजनंनचबंधनं पत्रपुष्पतृणैर्नां
गंछिंद्यात्केशान्नशोधयेत् नानिथ्याभाषणंकुर्य्यान्नकेशांबरधारणम् एतेषांफलानिस्मृतिसंग्रहे विष्ठायांजायतेऽथाधि
मूत्रेदुःखमवाप्नुयात् पुरीषेकृमियोनिःस्यान्मैथुनेग्रामशूकरः अभ्यंगेनभवेत्कुष्ठीभोजनेस्यादधोगतिः ॥ बंधनेचभवे
त्सर्पोवधेचनरकंव्रजेदिति कालमाधवे ग्रहणदिनेनिषिद्धमाहगार्ग्यः ॥ नमंगलंनप्रतिष्ठानप्रारामसत्क्रियाः ॥ ना
ग्निहोत्रंप्रगृह्णीतनयज्ञारंभमाचरेत् नजातकादिसंस्कारंनक्रयंनचाविक्रयं ॥ ग्रहणादानरूपंतुव्यवहारंतुलौकिकं
दिवाकरेनिशानाथेराहुणासंधितेसति कुर्य्यात्तत्रदिनेकिंचिन्नक्षौराभ्यंगमज्जनं ग्रहणंजन्मराश्यादौनिषिद्धं तदुक्तं
ज्योतिषे त्रिषड्दशायोपगतंनराणांशुभप्रदंस्याद्ग्रहणंरवींद्वोः ॥ द्विसप्तनंदेषुचमध्यमंस्याच्छेषेष्वनिष्टंकथितंमुनी
न्द्रैरिति आयएकादश नंद नव इषुपंचमं मदनरत्नेगर्गः ॥ जन्मसप्ताष्टरिफांकदशमस्थेनिशाकरे दृष्टोरिष्टप्रदो
राहुर्जन्मर्क्षेनिधनेपिच रिःफोद्वादश अंकोनवात्तुधृतसप्तमतारा पृथ्वीचंद्रोदये विष्णुधर्मोत्तरे यन्नक्षत्रगतोराहुर्ग्रस
तेचंद्रभास्करौ तज्जातानांभवेत्पीडायेनराःशांतिवर्जिताः अभिभवतिसैंहिकेयश्चंद्रार्कौयस्यजन्मनक्षत्रे ॥ तस्यांत
कादिवभयंविंद्याद्दुःखंमनस्तापम् हेमाद्रौ येषांतुभास्करस्थानेराहुश्चंद्रमुपक्रमेत कर्मक्षयपरिक्लेशान्प्राप्नुवंतिचतेज
नाः पितृपक्षविनाशायसूर्यस्थानेभवेद्ग्रहः मातृपक्षविनाशायचंद्रस्थानेभवेद्ग्रहः होरायांग्रसतेयस्यनक्षत्रेवानि
शाकरं प्राणसंदेहमाप्नोतिसवामरणमृच्छति पृथ्वीचंद्रोदये पुराणांतरे सूर्यस्यसंक्रमोवापिग्रहणंचंद्रसूर्ययोःयस्य
त्रिजन्मनक्षत्रेतस्यरोगोथवामृतिः तस्यदानंचहोमंचदेवार्चनजपोथवा ॥ उपरागाभिषेकंचकुर्याच्छांतिर्भविष्यति

यंकुर्य्याद्दैवेनसमन्वितं सत्रेणवायजेताथजपेद्वालक्षसप्तकं वापीकूपतडागादिखननैर्विसृजेद्धनमितिएतच्चयद्गर्हि
तेनार्जयंतिब्राह्मणाःकर्मणाधनं तस्योत्सर्गेणशुद्ध्यंतिदानेनतपसापिचेति मनूक्तैरुत्सर्गोत्तरं ज्ञेयमितिदिक् अथग्रह
णेसामान्यतोवर्ज्यानि नस्वपेन्नचभुंजीतनकुर्य्यान्मूत्रमेहने नमैथुनंनचाभ्यंगंभोजनंनचबंधनं पत्रपुष्पतृणैर्ना
गंछिंद्यात्केशान्नशोधयेत् नमिथ्याभाषणंकुर्य्यान्नकेशांवरधारणम् एतेषांफलानिस्मृतिसंग्रहे विण्मयांजायतेव्याधि
मूत्रेदुःखमवाप्नुयात् पुरीषेकृमियोनिःस्यान्मैथुनेग्रामशूकरः अभ्यंगेनभवेत्कुष्ठीभोजनेस्यादधोगतिः बंधनेचभवे
त्सर्पोवधेचनरकंव्रजेदिति कालमाधवे ग्रहणदिनेनिषिद्धमाहगार्ग्यः नमंगलंनप्रतिष्ठानप्रारामसत्क्रियाः ना
ग्निहोत्रंप्रगृह्णीतनयज्ञारंभमाचरेत् नजातकादिसंस्कारंनक्रयंनचाविक्रयं ग्रहणादानरूपंतुव्यवहारंतुलौकिकं
दिवाकरेनिशानाथेराहुणासंधितेसति कुर्य्यात्तत्रदिनेकिंचिन्नक्षौराभ्यंगमज्जनं ग्रहणंजन्मराश्यादौनिषिद्धं तदुक्तं
ज्योतिषे त्रिषड्दशायोपगतंनराणांशुभप्रदंस्याद्ग्रहणंरवींद्वोः द्विसप्तनंदेषुचमध्यमंस्याच्छेषेष्वनिष्टंकथितंमुनी
द्रैरिति आयएकादश नंद नव इषुपंचमं मदनस्त्वेशर्गः जन्मसप्ताष्टरिष्फांकदशमस्थेनिशाकरे दृष्टोरिष्टप्रदो
राहुर्जन्मर्क्षेनिधनेपिच रिष्फोद्वादश अंकोनवतिधन्तसप्तमतारा पृथ्वीचंद्रोदयेविष्णुधर्मोत्तरे यन्नक्षत्रगतोराहुर्ग्रस
तेचंद्रभास्करौ तज्जातानांभवेत्पीडायेनराःशांतिवर्जिताः अभिभवतिसैंहिकेयश्चंद्रार्कौयस्यजन्मनक्षत्रे तस्यांत
कादिवभयंविंद्याद्दुःखंमनस्तापम् हेमाद्रौ येषांतुभास्करस्थानेराहुश्चंद्रमुपक्रमेत कर्मक्षयपरिक्लेशान्प्राप्नुवंतिचतेज
नाः पितृपक्षविनाशायसूर्यस्थानेभवेद्ग्रहः मातृपक्षविनाशायचंद्रस्थानेभवेद्ग्रहः होरायांग्रसतेयस्यनक्षत्रेवानि
शाकरं प्राणसंदेहमाप्नोतिसवामरणमृच्छति पृथ्वीचंद्रोदयेपुराणांतरे सूर्यस्यसंक्रमोवापिग्रहणंचंद्रसूर्ययोःयस्य
त्रिजन्मनक्षत्रेतस्यरोगोथवामृतिः तस्यदानंचहोमंचदेवार्चनजपोथवा उपरागेभिषेकंचकुर्याच्छांतिर्भविष्यति

ब्दः संकल्पात्मकव्रतरूपोपवासपर एव शक्तौ नतभोजननिवृत्तौ तस्य लाक्षणिकत्वात् अन्यथोपवासव्रतं चरेदिति व्रतश
ब्दसमभिव्याहारात्संकल्पसिद्धावपि केवलोपवासशब्दघटितवाक्येषु संकल्पसिद्ध्यप्रसंगात् तथा चोपवासनिषेधषु
गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायेन मुख्यस्यैव ग्रहणौचित्यमिति यदा चैवं कारणांतरप्रयुक्तभोजनाभावमा
त्रेण व्रतरूपोपवासप्रसक्तिस्तदा ग्रहणनिमित्तश्राद्धाधिकारिणा प्रारब्धे चाभोजनमासमापनादिति विहितश्राद्धांगभो
जननिषेधपरिपालनेपि न क्षतिः ग्रहणनिमित्तेपि च श्राद्धे पर्वद्युरपरद्युर्वा प्राथमिकं ब्राह्मणनिवेदनं श्राद्धप्रारंभत्वेन न्याय
स्यातं संभवत्येव नभुंजीत चग्रस्त्ये श्राद्धाधिकारिणा ग्रहणादिने ततः पूर्वं तस्मादस्तसूर्यग्रस्तास्तपुत्रवद्गृहिणोप्यहो
रात्रभोजननिषेधः परिपालनीय एव व्रतरूपः काम्य उपवासः परं न कार्यः चंद्रग्रस्तास्ते तूत्तरदिने संध्याहोमादौ नदो
षः तदाहाशनाः ग्रस्ते चास्तंगते त्विंदौ ज्ञात्वा मुक्त्यवधारणं स्नानहोमादिकं कार्यं भुंजीत दृदयेपुनः एतदनाहिताग्निवि
षयं अपराह्णे व्रतीपनीयमश्नात इति कात्यायनोक्तव्रतस्य श्रौतत्वे विहितत्वेन च प्राबल्यात् आद्यिव्रतं कुर्यादिति नि
र्णयदीपः रागप्राप्तभोजने कालनियमोयं तेन ज्वरादिविवभोजनमिति कर्कानुसारिणः ग्रहणांतरितस्य पूर्वसंकल्पित
स्य द्रव्यस्य दत्तस्य द्वैगुण्यं भवतीति शिष्टाः पठंति तत्र ब्रह्मवैवर्ते दातव्यमिति नोकास्यां वक्तव्यं कुत्रचित्क्वचित् दृशो
त्तरपर्वसु स्याच्छतं चंद्रग्रहे भवेत् सूर्यग्रहे सहस्रं तन्मरणेनं तकं स्मृतमिति अत्र मूलं चिंत्यमिति निर्णयसिंधौ ग्रहणात्पूर्वं
कालभोजने प्रायश्चित्तं षट्त्रिंशन्मतेभिहितं चंद्रसूर्यग्रहे भुक्त्वा प्राजापत्यं समाचरेत् तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शु
ध्यतीति त्रिरात्रेण त्रिरात्रोपवासेन तेन प्राजापत्यार्द्धमुक्तं भवति प्राजापत्यस्य षडुपवासतुल्यत्वात् ग्रस्तास्तोत्तरं निषिद्धं
कालभोजनेपि त्रिरात्रमेव तस्मिन्दिन इत्यविशेषाभिधानात् स्त्रीबालवृद्धादीनां तदर्धं ग्रहणप्रसंगात्कुरुक्षेत्र प्रतिग्रहे प्रा
यश्चित्तमुच्यते ग्रहणस्मतौ प्रतिग्राहीकर्मैर्वेतगग.[illegible]

यंकुर्य्यादैवेनसमन्वित सत्रणवायजताथजपद्मालक्षसप्तक वापीकूपतडागादिखननेविसृजेद्धनमितिएतत्त्रयद्वाहि तेनार्जयंतिब्राह्मणाःकर्मणाधनं तस्योत्सर्गेणशुध्यंतिदानेनतपसापिचेति मनूक्तेरुत्सर्गोत्तरं ज्ञेयमितिदिक् अथग्रह णेसामान्यतोवर्ज्याणि नस्वपेन्नचभुंजीतनकुर्य्यान्मूत्रमेहने नमैथुनंनचाभ्यंगंभोजनंनचबंधनं पत्रपुष्पतृणैर्ना गंछिंद्यात्केशान्नशोधयेत् नमिथ्याभाषणंकुर्य्यान्नकेशांवरधारणम् एतेषांफलानिस्मृतिसंग्रहे विष्ठायांजायतेऽन्याधि मूत्रेदुःखमवाप्नुयात् पुरीषेकृमियोनिःस्यान्मैथुनेग्रामशूकरः अभ्यंगेनभवेत्कुष्ठीभोजनेस्यादधोगतिः बंधनेचभवे त्सर्पोवधेचनरकंव्रजेदिति कालमाधवे ग्रहणदिनेनिषिद्धमाहगार्ग्यः नमंगलंनप्रतिष्ठानप्रारामसत्क्रियाः ना ग्निहोत्रंप्रगृह्णीतनयज्ञारंभमाचरेत् नजातकादिसंस्कारंनक्रयंनचविक्रयं ग्रहणादानरूपंतुव्यवहारंतुलौकिकं दिवाकरेनिशानाथेराहुणासंधितेसति कुर्य्यात्तत्रदिनेकिंचिन्नक्षौराभ्यंगमज्जनं ग्रहणंजन्मराश्यादौनिषिद्धं तदुक्तं ज्योतिषे त्रिषड्दशायोपगतंनराणांशुभप्रदंस्याद्ग्रहणंरवींद्वोः द्विसप्तनंदेषुचमध्यमंस्याच्छेषेष्वनिष्टंकथितंमुनीं द्रैरिति आयएकादश नंद नव इषुपंचमं मदनरत्नेगर्गः जन्मसप्ताष्टरिफांकदशमस्थेनिशाकरे दृष्टोरिष्टप्रदो राहुर्जन्मर्क्षेनिधनेपिच रिफोद्वादश अंकोतवातुथनेसप्तमतारा पृथ्वीचंद्रोदये विष्णुधर्मोत्तरे यन्नक्षत्रगतोराहुर्ग्रस तेचंद्रभास्करौ तज्जातानांभवेत्पीडायेनराःशांतिवर्जिताः अभिभवतिसैंहिकेयश्चंद्रार्कौयस्यजन्मनक्षत्रे तस्यांत कादिवभयंविंद्याद्दुःखमनस्तापम् हेमाद्रौ येषांतुभास्करस्थानेराहुश्चंद्रसुपक्रमेत कर्मक्षयपरिक्लेशान्प्राप्नुवंतिचतेज नाः पितृपक्षविनाशायसूर्यस्थानेभवेद्ग्रहः मातृपक्षविनाशायचंद्रस्थानेभवेद्ग्रहः होरायांग्रसतेयस्यनक्षत्रेवानि शाकरं प्राणसंदेहमाप्नोतिसवामरणमृच्छति पृथ्वीचंद्रोदये पुराणांतरे सूर्यस्यसंक्रमोवापिग्रहणंचंद्रसूर्ययोःयस्य त्रिजन्मनक्षत्रेतस्यरोगोथवामृतिः तस्यदानंचहोमंचदेवार्चनजपोथवा उपरागेभिषेकंचकुर्याच्छांतिर्भविष्यति

सद्दक्षिणंसवस्त्रंचब्राह्मणायनिवेदयेत् सौवर्णंराजतंवापिबिंबंकृत्वास्वशक्तितः ॥ उपरागभवक्लेशच्छिदेविप्रायकल्पयेत्
मंत्रस्तु तमोमयमहाभीमसोमसूर्यविमर्दन हेमनागप्रदानेनममशांतिप्रदोभव विधुंतुदनमस्तुभ्यंसिंहिकानंदनाच्युत
दानेनानेननागस्यरक्षमांवेधजाद्भयादिति अत्रशांतिरप्युक्तामात्स्येयस्यराशिंसमासाद्यभवेद्ग्रहणसंभवः स्नानंतस्यच
वक्ष्यामिसर्वौपधिसमन्वितं चंद्रोपरागंसंप्राप्यकृत्वाब्राह्मणवाचनं संप्राप्यचतुरोविप्रान्रक्तमाल्यानुलेपनैः पूर्वमेवो
परागस्यसमानीयौषधादिकं स्थापयेच्चतुरः कुंभानग्रतः सागरान्निर्धान्गजाश्वरथवल्मीकसंगमाद्व्रजगोकुलात् रा
जद्वारप्रवेशाच्चमृदमानीयनिक्षिपेत् पंचगव्यंपंचरत्नंपंचत्वक्पात्रपल्लवान् रोचनंपद्मकंशंखंकुंकुमंरक्तचंदनं शुक्तिस्फ
टिकतीर्थांबुसितसर्षपगुग्गुलून् मधुकंदेवदारुंचविष्णुक्रांतांशतावरीं बलांचसहदेवींचनिशाद्वितयमेवच एतत्सर्वंवि
निक्षिप्यकुंभेष्वावाहयेत्सुरान् सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः योसौ
वज्रधरोदेवआदित्यानांप्रभुर्मतः सहस्रनयनश्चंद्रग्रहपीडांव्यपोहतु मुखंयःसर्वदेवानांसप्तार्चिरमितद्युतिः चंद्रो-
परागसंभूतांग्रहपीडांव्यपोहतु यःकर्मसाक्षीलोकानांधर्मोमहिषवाहनः यमश्चंद्रोपरागोत्थांग्रहपीडांव्यपोहतु र
क्षोगणाधिपःसाक्षान्नीलांजनसमप्रभः खड्गहस्तोतिभीमश्चग्रहपीडांव्यपोहतु नागपाशधरोदेवःसदामकरवाह
नः सजलाधिपतिर्देवोग्रहपीडांव्यपोहतु प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः वायुश्चंद्रोपरागोत्थांग्रहपीडां
व्यपोहतु योसौनिधिपतिर्देवःखड्गशूलगदाधरः चंद्रोपरागकलुषंधनदोत्रव्यपोहतु योसाविंदुधरोदेवःपिनाकीवृ
षवाहनः चंद्रोपरागपापानिसनाशयतुशंकरः त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ब्रह्मविष्ण्वर्करुद्राश्चदहं
तुममपातकं एवमावाहयेद्देवान्मंत्रैरेभिश्चवारुणैः एतानेवतथामंत्रान्स्वर्णपट्टेविलेखयेत् ताम्रपट्टेथवालिख्यनववस्त्रे
तथैवच मस्तकेयजमानस्यनिदध्युस्तेद्विजोत्तमाः कलशान्द्रव्यसंयुक्तान्जातरूपसमन्वितान् गृहीत्वास्नापये

स्वर्णेनवाथपिष्टेनकृत्वासर्पस्यचाकृतिं ब्राह्मणायददेत्तस्यनरोगादिश्चतत्कृतः जन्मनक्षत्रंतत्पूर्वोत्तरंच त्रिजन्मनक्ष
त्रमित्युच्यते जन्मदशमैकोनविंशताराइतिकेचित् सर्पस्यतदाकारस्यराहोरित्यर्थः अद्भुतसागरेभार्गवः यस्यरा
ज्ञस्यनक्षत्रेस्वर्भानुरुपरज्यते राज्यभंगसुहृन्नाशंमरणंवाविनिर्दिशेत् राज्यस्यनक्षत्रमभिषेकनक्षत्रमिति तत्रैवव्या
स्यातं मडलाधिपदैवत्यैर्मंत्रमृत्युंजयादिभिः होमंकुर्यात्प्रयत्नेनतत्तन्मंत्रान्जपेत्सुधीरिति मंडलाधिपानि तत्तन्न
क्षत्रगणात्मकान्याग्नेयवारुणवायव्यैशानाख्यानि तदधिपाअग्न्यादयस्तदैवत्यैरित्यर्थः नक्षत्रविशेषेग्रहणेगणदोषा
ज्योतिःशास्त्रतोवगंतव्या राजभिस्तुप्रजाहितार्थंतत्तन्मंडलेषु तत्तच्छांतयोऽथर्ववेदोक्ताःकरणीयाः आग्नेयींकार
येच्छांतिंशांतिकुर्याच्चवारुणीं वायव्यांकारयेच्छांतिमैशानींकारयेत्तथा त्रिंशत्पलैस्तदर्धाभ्यांकृत्वानागपतिंनरः
त्रिंशन्माषमितंनागंहैमंतत्रचकारयेत् वस्त्रयुग्मेनसंवेष्ट्यकांस्यपात्रेनिधापयेत् तत्पात्रंताम्रपात्रेचत्रिंशत्पलमितं
न्यसेत् घृतकुंभोपरिन्यस्यदद्याद्वद्रसमौक्तिकं रूप्यंचवस्त्रसहितंब्राह्मणायकुटुंबिने सुवर्णंदक्षिणांदद्यात्ततः शांति
मवाप्नुयादिति सारसंग्रहेच तथाकुर्यान्माहेंद्रींतत्रकारयेदितिकात्यायनवचनात् अथांतरप्रकारांतरमुक्तं ग्रहणे
ग्रहपीडितनाडीनक्षत्रदोषशमनाय ॥ सहस्रशतपुष्पैः स्नायात्कालिनीफलचंदनोशीरैः ताम्रपात्रंतिलैः पूर्णं
पूर्णंवागव्यसर्पिषा भास्करग्रहणेदद्यान्नाडीदोषोपपीडितः घृतकुंभोपरिनिहितशंखनवनीतपूरितंदद्यात् नाड्या
दिदोषशांत्यैद्विजायदोषाकरग्रहणे नाडीनक्षत्राण्याह दशमषोडशाष्टादशत्रयोविंशपंचविंशति भार्गवार्चनदी
पिकायां ज्योतिःसागरे सौवर्णंकारयेन्नागंपलेनार्धपलार्धतः तदर्धेनतदर्धेनफणायामौक्तिकंन्यसेत् ताम्रपात्रेनिधा
याथघृतपूर्णेविशेषतः कांस्येवाकौंतिलोहेवान्यस्यदद्यात्सदक्षिणं चंद्रग्रहेतुरूप्यस्यार्धंदद्यात्सदक्षिणं नागरुक्ममं
येसूर्यग्रहेविवचेहेमजं तुरगरथगोभूमितिलसर्पिश्चकांचनं कालतत्वविवेकेपि सुवर्णनिर्मितंनागंसतिलंकांस्यभाजनं

सदक्षिणंसवस्त्रंचब्राह्मणायनिवेदयेत् सौवर्णंराजतंवापिबिंबंकृत्वास्वशक्तितः॥ उपरागभवक्लेशच्छिदेविप्रायकल्पयेत्
मंत्रस्तु तमोमयमहाभीमसोमसूर्यविमर्दन हेमनागप्रदानेनममशांतिप्रदोभव॥ विधुंतुदनमस्तुभ्यंसिंहिकानंदनाच्युत
दानेनानेननागस्यरक्षमांवेधजाद्भयादिति अत्रशांतिरप्युक्तामात्स्येयस्यराशिंसमासाद्यभवेद्ग्रहणसंभवः स्नानंतस्यप्र
वक्ष्यामिसर्वौषधिसमन्वितं चंद्रोपरागंसंप्राप्यकृत्वाब्राह्मणवाचनं संप्रार्थ्यचतुरोविप्रान्रक्तमाल्यानुलेपनैः पूर्वमेवो
परागस्यसमानीयौषधादिकं स्थापयेच्चतुरः कुंभानग्रतः सागरान्विधान् गजाश्वरथवल्मीकसंगमाद्ध्रदगोकुलात् रा
जद्वारप्रवेशाच्चमृदमानीयनिक्षिपेत् पंचगव्यंपंचरत्नंपंचत्वक्पात्रपल्लवान् रोचनंपद्मकंशंखंकुंकुमंरक्तचंदनं शुक्तिस्फ
टिकतीर्थांबुसितसर्षपगुग्गुलून् मधुकंदेवदारुचविष्णुक्रांतांशतावरीं बलांचसहदेवींचनिशाद्वितयमेवच एतत्सर्वंवि
निक्षिप्यकुंभेष्वावाहयेत्सुरान् सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः योसौ
वज्रधरोदेवआदित्यानांप्रभुर्मतः सहस्रनयनश्चेंद्रोग्रहपीडांव्यपोहतु मुखंयःसर्वदेवानांसप्तार्चिरमितद्युतिः चंद्रो-
परागसंभूतांग्रहपीडांव्यपोहतु यःकर्मसाक्षीलोकानांधर्मोमहिषवाहनः यमश्चंद्रोपरागोत्थांग्रहपीडांव्यपोहतु र
क्षोगणाधिपःसाक्षान्नीलांजनसमप्रभः खड्गहस्तोतिभीमश्चग्रहपीडांव्यपोहतु नागपाशधरोदेवःसदामकरवाह
नः सजलाधिपतिर्देवोग्रहपीडांव्यपोहतु प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः वायुश्चंद्रोपरागोत्थांग्रहपीडां
व्यपोहतु योसौनिधिपतिर्देवःखड्गशूलगदाधरः चंद्रोपरागकलुषंधनदोत्रव्यपोहतु योसाविंदुधरोदेवःपिनाकीवृ
षवाहनः चंद्रोपरागपापानिसनाशयतुशंकरः त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ब्रह्मविष्ण्वर्करुद्राश्चदहं
तुममपातकं एवमावाहयेद्देवान्मंत्रैरेभिश्चवारुणैः एतानेवतथामंत्रान्स्वर्णपट्टेविलेखयेत् ताम्रपट्टेथवालिख्यनववस्त्रे
तथैवच मस्तकेयजमानस्यनिदध्युस्तेद्विजोत्तमाः कलशान्द्रव्यसंयुक्तान्जातरूपसमन्वितान् गृहीत्वास्नापये

द्रूपंभद्रपीठोपरिस्थितं पूर्वैरेवतुमंत्रैश्चयजमानंद्विजोत्तमाः अभिषेकंततःकुर्युर्मंत्रैर्वारुणसूक्तकैः आचार्य्यवरयत्प श्चात्स्वर्णपट्टंनिवेदयेत् आचार्यदक्षिणांदद्याद्गोदानंचस्वशक्तितः होमंचापिप्रकुर्वीतसप्तव्याहृतिभिस्तथा दानंचश क्तितोदद्याद्यदीच्छेदात्मनोहितं सूर्यग्रहेसूर्यनामयुक्तान्मंत्रान्प्रकीर्त्तयेत् अनेनविधिनायस्तुग्रहणेस्नानमाचरेत् नत स्यग्रहजोदोषःकदाचिदपिजायते ग्रहणदर्शनंतुगूढकार्य्यमितिशिष्टाः प्रत्यक्षंदर्शनंयथानभवति तथावस्त्रादिनाकृ तव्यवधानमित्यर्थः इतिमात्स्योक्ताग्रहशांतिः ग्रंथांतरेतु दूर्वाकुशोशीरशमीशिलाजित्सर्वौषधिसर्वौषधिपंचमृद्भिः स्नानंविदध्याद्ग्रहणेरवींद्वोःपीडाहरंशांतिवहंहितस्य भार्गवार्चनचंद्रिकायां ब्रह्मसिद्धांते सर्वैःपट्टस्थितंवीक्ष्यंस्व च्छतैलांबुदर्पणैः ग्रहणंगुर्विणीयातुनपश्येत्तुपटंविना अत्रग्रहणादिसप्तदिनपर्य्यंतंरामगोपालाद्यागमदीक्षोक्ताशि वार्चनचंद्रिकायाम् ज्ञानार्णवे मंत्राद्यारंभणंकुर्य्याद्ग्रहणेचंद्रसूर्य्ययोः ग्रहणाद्यापिदेवेशिकालःसप्तदिनावधीति र त्नसागरेसतीर्थेकाविधुग्रासेतथादमनपर्वणि मंत्रदीक्षांप्रकुर्वाणोमासक्षादीन्नशोधयेत् तत्र सूर्यग्रहणकालेतुनान्यद न्वेषितंभवेत् सूर्यग्रहणकालेनसमोनान्यःकदाचन मासातिथिवारादिशोधनम् सूर्य्यपर्वणीतितत्रैवकालोत्तरवचना त् चंद्रग्रहेतुयादीक्षायादीक्षाव्रतचारिणां व्रतस्थस्यचयादीक्षादारिद्र्यंसप्तजन्मस्विति तत्रैवयोगिनीतंत्रे निषेधाच्च अथपुरश्चरणचंद्रिकायुक्तोरहस्यपुरश्चरणविधिः अथवान्यप्रकारेणपुरश्चरणमिष्यते ग्रहणेकस्यचेंदोर्वाशुचिःपूर्व मुपोषितः नद्यांसमुद्रगामिन्यांनाभिमात्रोदकेस्थितः ग्रहात्पुण्योदकेस्नात्वाशुचिःपूर्वमुपोषितः ग्रहणादिविमोक्ष। तंजपेन्मंत्रंसमाहितः अनंतरंदशांशेनक्रमाद्धोमादिकंचरेत् तदंतेमहतींपूजांकुर्य्याद्ब्राह्मणतर्पणम् ततोमंत्रप्रसि द्ध्यर्थंगुरुंसंपूज्यतोषयेत् एवंचमंत्रसिद्धिःस्याद्देवताचप्रसीदति । अथवान्यःप्रकारोयंपौरश्चरणिकोविधिः चंद्रसूर्यो परागेचस्नात्वाप्रयतमानसः स्पर्शादिमोक्षपर्य्यंतंजपेन्मंत्रंसमाहितः जपाद्दशांशतोहोमंतथाहोमाच्चतर्पणं एवं

कृत्वातुमंत्रस्यजायतेसिद्धिरुत्तमा होमाशक्तोजपंकुर्याद्धोमसंख्याचतुर्गुणं पड्गुणंचाष्टगुणितंयथासंख्यंद्विजातयः
तेषांस्त्रीणांतुविज्ञेयस्तेषामेवसमोजयः पंचार्णमाश्रितःशूद्रस्तजयस्तस्यकीर्त्तितः मूलमंत्रंसमुच्चार्यतदंतेदेवताभि
धां द्वितीयांतामहंपश्चात्तर्पयामिनमोंतकः तर्पणस्यदशांशेनमार्जनंपरिकीर्त्तितं तद्वैवंदेवतारूपंध्यात्वात्मानंप्रपू
ज्यच नमोंतमंत्रमुच्चार्यतदंतेदेवताभिधां तोयैरंजलिनाशुद्धैरभिषिंचेतमूर्द्धनि मार्जनस्यदशांशेनब्राह्मणानपिभो
जयेत् विप्राराधनमात्रेणसर्वंसांगंभवेद्यतःजपोर्चापूर्वकोहोमस्तर्पणंचाभिषेचनं भूदेवपूजनंपंचप्रकारैश्चपुरस्क्रियै
रित्यादितच्चरहस्यपुरश्चरणंग्रस्तास्तेग्रस्तोदयेचभवति स्पर्शादिमुक्तिपर्यंतमित्याभिधानात् तयोश्चयावद्दर्शन
गोचरइत्युक्त्यादर्शनयोग्यत्वापेक्षणादित्यलम् इतिग्रहणकालिकार्य्याकार्य्यनिर्णयः स्वस्तिश्रीरणवीरसिंह
धरणीपालो०१॥ रणवीरसिंहभूपेशकारितेकृत्यसागरेपितृयज्ञोपरागादेर्द्योतकोरत्नसंग्रहः२इतिश्रीरघुवंशतिल
कश्रीमन्महाराजाधिराजश्रीरणवीरसिंहकारिते कृत्यरत्नाकरेसमस्तपर्वणिनिर्णयकःसमाप्तोरत्नसंग्रहः ॥

ॐश्रीगणेशायनमः श्रीदंगणेशंशिवयोस्तनूजं सुरासुरैरर्चितपादपीठं स्वर्गापवर्गादिफलप्रभूत्यै वंदामहेनित्य
मुदारसत्त्वम् १ एतावताप्रबंधेन व्रतानुष्ठानोपयोगभूतंकालसामान्यतोनिरूप्येदानींप्राधान्येन प्रतिज्ञाविषयीभू
तंव्रतस्वरूपं तदुपयोगिचान्यदपिनिरूप्यते तत्र व्रतनामाभियुक्तप्रसिद्धिविषयः संकल्पविषयः अभियुक्तप्रसि
द्धिविषयमंत्रवत्स्यकर्त्तव्यविषयोनियतःसंकल्पोव्रतमितिश्रीदत्तादयः तत्त्वग्निहोत्रसंध्यावंदनादिविषयेसंकल्पेति
प्रसक्तं नचसंकल्पस्यव्रतत्वेव्रतंसंकल्पयेदित्यन्वयःपाकंपचति दानंदद्यादितिवत्प्रत्ययानुग्रहार्थप्रयोगापत्तेःअत्र
कर्त्तव्यतयायत्संकल्पितंतद्व्रतं संकल्पश्चात्रांगं अन्येतुतादृशार्थविषयःसंकल्पएव व्रतं नागृहीतविशेषेणन्यायात्
उभयथापि संकल्पंविनाकर्मानुष्ठानदर्शितफलानन्वये विशिष्टकर्मासिद्धेःसचसंकल्पःकाम्याद्यभिलापपूर्वःसंकल्पः
कर्ममानसमितिनिरुक्तेश्च सचसंकल्पः मानसकायिकोभयनियमरूपतयाकुशतिलजलत्यागादिरूपः संकल्प
शास्त्रार्थः एतेन भानसकामाद्यभिलापपूर्वोजपहोमार्चनदानोपवासादिशास्त्रविहितदेशकालनियमोधर्मोव्रतस
मान्यलक्षणम् उभयविधेःसंकल्पएवास्यमुख्यमंगमिति अभुक्त्वाप्रातराहारंव्रतंसंकल्पयेद्बुधइति वक्ष्यमाणविधाना
च्च व्रतजिज्ञासा नागरखंडे कलिकालकृतंकिंचिद्व्रतंशंसमहामुने स्वल्पायासंमहापुण्यंसर्वपापप्रणाशनं वह्न्यायु
पः सदामर्त्याब्रह्मन्कृतयुगेयथा त्रेतायांद्वापरेचैवनतेकलियुगेतथा तस्माद्वर्षव्रतंत्यक्त्वा किंचिदेकाहिकंवद श्वःकार्य
मद्यकुर्वीतपूर्वाह्णेचापराह्णिके नहिमृत्युःप्रतीक्षेतकृतमस्यनवाकृतम् भर्तृयज्ञउवाच अस्तिराजन्व्रतंपुण्यंशिवरात्री
तिसंज्ञितं एकाहिकंमहाराजसर्वपापप्रणाशनं तत्रयद्दीयतेदानंहुतंजप्तंतथैवच सर्वमक्षयतांयातिशिवव्रतप्रभाव
तः शिवरात्रीत्युपलक्षणं एवंसर्वव्रतेषुज्ञेयं अथव्रतप्रशंसा विष्णुधर्मोत्तरे व्रतोपवासैर्यैर्विष्णुर्नान्यजन्मनितोषितः
तेनरामुनिशार्दूलग्रहरोगादिबाधिताःतथाचस्कंदपुराणे नपूजितोभूतपतिः पुरायैर्व्रतंनचीर्णंनचसत्यमुक्तं दारिद्र्य

शोकामयदुःखदग्धाः अयोत्रशोचंतितएवमर्त्याः राज्यंश्रियंजगतिसाधुजनोपभोगंप्राप्नोतिचापिशिवलोकमथामृत
त्वम् नानाप्यमस्तिभुवनेषुदृढव्रतानांतस्मात्सदाव्रतपरेणनरेणभाव्यम् पद्मपुराणे नाग्निचिन्नरकंयातिनसत्पत्नी
नसद्व्रती नाश्वमेधादियाजीचगोसहस्रप्रदोनच तथागौरींप्रतिशिववाक्यं देवत्वंदेवताःप्राप्तानियमैर्नियमान्विते
तारारूपाज्वलंत्येतेनियमाद्दैतपोधने स्कांदे नियमानांचदृश्यंतेसमृद्धाःफलसिद्धयः यथाविनियमानांचघोराव्याघ्रा
दियोनयः तथावायुपुराणे किंचिद्व्रतंवाक्रियतेपूज्यतेवात्रिलोचनः विप्रेभ्योदीयतेसर्वमेतज्जन्मतरोःफलम् नक्तंह
विष्यान्नमनोदनंवाहविस्तिलाक्षीरमथांबुचाज्यं यत्पंचगव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंच एतत्सर्वं शक्त्यनु
सारेण किंचिद्व्रतविपर्यं अथव्रताधिकारिणः स्कंदपुराणे निजवर्णाश्रमाचारनिरतःशुद्धमानसः अलुब्धः सत्यवा
दीचसर्वभूतहितेरतः व्रतेष्वधिकृतोराजन्नन्यथाविफलश्रमः श्रद्धावान्पापभीरुश्चमददंभविवर्जितः पूर्वंनियममाश्रि
त्ययथावत्कर्मकारकः अवेदनिंदकोधीमानधिकारीव्रतादिषु निश्चयोनिर्णयस्यनिजवर्णाश्रमाचेरत्यनेनचतुर्णाम
पिवर्णानांव्रतेष्वाधिकारः संकोचेमानाभावात् व्रतोपवासनियमैःशरीरोत्तापनंतप इतिदेवलेन व्रतादेस्तपोहेतुत्वा
भिधानात् तपश्च श्राद्धकर्मतपश्चैवसत्यमक्रोधएवच स्वेषुदारेषुसंतोषः शौचंनित्यानसूयता आत्मज्ञानंतितिक्षाच
धर्मः साधारणोनृपेति महाभारते साधारणधर्मत्वश्रवणात् शूद्रोवर्णश्चतुर्थोपिवर्णत्वाद्धर्ममर्हति वेदमंत्रस्वधा
स्वाहावषट्कारादिभिर्विनेतिव्यासोक्तेः शूद्रस्तूष्णींजपेन्मौनमास्तेभोगविवर्जितइतिविशेषविधानाच्च ब्राह्मणाक्ष
त्रियावैश्याःशूद्राश्चैवद्विजोत्तम अर्चयंतिमहादेवंयज्ञदानजपादिभिः व्रतोपवासनियमैर्होमस्वाध्यायतर्पणैः तेषांवै
रुद्रसायुज्यंसामीप्यंचातिदुर्लभं सालोक्यताचसारूप्यंजायतेतत्प्रसादतइतिकूर्मपुराणाच्च वैश्याः शूद्राश्चयेमोहा
दुपवासंप्रकुर्वतेत्रिरात्रंपंचरात्रंवातेषांपुष्टिर्नविद्यते इतिमहाभारतेविशेषनिषेधाच्च कश्चिन्म्लेच्छादीनामप्यधिकारः

॥ वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैरिति नवरात्रप्रकरणेभिधानात् स्वर्गकामादाविवाधिकारिविशेषणस्य लिंगस्याविवक्षितत्वात् स्त्रीणामप्यधिकारः अतएव नरोवायदिवानारीत्यादि तत्राभिधानम् यत्तु अनश्नय स्तुयेविप्रास्तेषांश्रेयोभिजायते व्रतोपवासनियमैर्नानादानैस्तथानृपेतिभविष्यवचनं तदनग्नीनामिष्टाद्यनधिकाराद्व्रतादिभिरेव तेषामेव श्रेय इतिप्रतिपादनार्थं नतु सामान्याधिकारार्थं दानेप्यनधिकारापत्तेः निर्णयसिंधौ अत्रानग्निग्रहणमुपवासविषयं अतएवदेवलः आहिताग्निरनड्वांश्चब्रह्मचारीचतेत्रयः अश्नंतएवसिध्यंतिनैषांसिद्धिरनश्नतामिति एकादश्यांतुविशेषवचनेन तेषामपि उपवासेधिकारोवक्ष्यते सभर्तृकस्त्रीणां भर्त्रनुज्ञां विना व्रतेष्वनधिकारः नास्तिस्त्रीणांपृथग्यज्ञोनव्रतंनाप्युपोषणमितिमनुवचनात् भर्तृ समानव्रतचारित्वमिति विष्णुवचनात् पत्यनुज्ञयातु पृथगप्यधिकारःयथाहव्यासः पत्नीपत्यनुज्ञाताव्रतादिष्वधिकारिणीति शंखलिखितावपि कामंभर्त्रनुज्ञातायांव्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्म इति अभ्यासः पुनःपुनरनुष्ठानं तथाआदित्यपुराणे पत्युरभ्यधिकंनारीनोपवासव्रतंचरेत् अनायुष्यद्विजश्रेष्ठपत्युस्तस्यास्तदुच्यते देवताराधनंकुर्यात्कामंवा ब्राह्मणोत्तम नारीयद्यननुज्ञाताभर्त्रापित्रासुतेनवा विफलंतद्भवेत्तस्यायत्करोत्यौर्ध्वदैहिकमिति और्ध्वदैहिकंलोकांतरोपयोगिव्रतादिकं कात्यायनोऽपि भार्याभर्तृमतेनैवव्रतादीनाचरेदिति यत्तु स्कांदे नास्तिस्त्रीणांपृथग्यज्ञोनव्रतंनाप्युपोषणं भर्तृशुश्रूषयैवतालोकानिष्टान्व्रजंतिहि धर्मार्थकामसंसिद्धौनारीभर्तुःसहायिनी यद्देवेभ्यो यच्चपित्रादिकेभ्यः कुर्याद्भर्ताभ्यर्चनंसत्क्रियांच तस्यार्धंवैसाफलंनान्यचित्तानारीभुंक्तेभर्तृशुश्रूषयैवेति तदननुज्ञाविषयं एवंच पत्यौजीवतियानारीउपोष्यव्रतमाचरेत् आयुश्चहरतेभर्तुर्नरकंचैवगच्छतीति विष्णूक्तेः सामान्यत उपवासनिषेधोप्यननुज्ञातायाःपृथगुपवासविषयः अथव्रतभेदाः अहिंसासत्यमस्तेयंब्रह्मचर्यमकल्मषं

एतानिमानसान्याहुर्व्रतानिव्रतचारिणां एकभक्तंतथानक्तमुपवासादिकंचयत् तत्सर्वंकायिकंपुंसांव्रतंभवतिनान्य
था क्वचित्त्रैविध्यमप्युक्त कायिकंवाचिकंचैवमानसंत्रिविधंस्मृतम् यज्ञोदानंतपश्चैववदतस्तच्छ्रुणुष्वमे अहिं
साब्रह्मचर्यंचतपःकायिकमुच्यते वाचिकंसत्यवचनंभूतद्रोहविवर्जितं मानसंमनसःशांतिःसर्ववैराग्य लक्षणमिति
अथ व्रताधिकारिधर्माभविष्यत्पुराणे क्षमासत्यंदयादानंशौचमिंद्रियनिग्रहः देवपूजाग्निहवनंसंतोषःस्ते
यवर्जनं सर्वव्रतेष्वयंधर्मस्सामान्योदशधास्थितः शौचंपापंडादिसंसर्गविसर्जनं शुद्धादि...
च इंद्रियनिग्रहोऽवलोकनादिवर्जनं देवलः ब्रह्मचर्यमहिंसाचसत्यमामिषवर्जनं व्रतेष्वेतानिचत्वारिचरित
व्यानिनित्यशः ब्रह्मचर्यं स्मरणंकीर्तनंकेलिःप्रेक्षणंगुह्यभाषणं संकल्पोध्यवसायश्चक्रियानिर्वृतिरेवच एत
न्मैथुनमष्टांगंप्रवदंतिमनीषिणइतिदक्षोक्ताष्टविधमैथुनत्यागः देवलः स्त्रीणांतुप्रेक्षणात्स्पर्शात्ताभिःसंकथनाद
पि विपद्यतेब्रह्मचर्यंनदारेष्वृतुसंगमादिति परदारेष्विवितिपाठोनिर्णयामृते ऋतुशब्देनात्रषोडशषोडशनिशा
या अर्वाचीनः सावनःसावकाशःकालोविवक्षितइति तत्रव्याख्याने परस्त्रीणामपि मात्रादितुल्यदर्शनेनदोषः
निषेधस्तुसरागविषयःषोडशदिवसात्मक ऋतुकालः तत्र सर्वथाअसंभवे व्रतादिनेऽपिऋतुर्देयः निर्णयामृते
कात्यायनः रेकःसेकात्मकंभोगमृतेन्यत्रक्षयःस्मृतइति अतःस्वदाराणांस्पर्शनादिभिरपि ब्रह्मचर्यभंगोनास्तीा
तितत्सिद्धांतः आमिषंमांसं तथा आमिषंदतिपानीयंगोवर्ज्जंक्षीरमामिषं मसूरमामिषंसस्येफलेजंबीरमामिषं
आमिषंशुक्तिकाचूर्णमारनालंतथामिषमिति पृथ्वीचंद्रोदये अग्निपुराणे नित्यस्नायीनिराहारोगुरुदेवद्विजार्च
कः क्षारंक्षौद्रंचलवणंमांसानिपरिवर्जयेदिति क्षाराणितुतत्रैवोक्तानि तिलमुद्गादृतेसिव्यंसस्यगोधूमकोद्रवौ धान्य
कंदेवधान्यचशमीधान्यंतथैक्षवं स्विन्नधान्यंतथापण्यमूलंक्षारगणः स्मृतः गो तत्रैवप्रतिप्रसवः मदन

अष्टैतान्यव्रतघ्नानिआपोमूलंपयोदधि हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधं पय.प नादीनामव्रतघ्नत्वं स्त्रीबाला
द्यत्यंतपीडितविषयं अन्येपिधर्माहरिवंशेप्रदर्शिताः अशल्यविद्धंशयनमासनंचतथाविधं स्वयंप्रक्षालितंचापि
पादयोरनुशब्दितं अनुशब्दितंव्रतोपयोगितयाकथितं अश्रुप्रपातोरोषश्चकलहस्यकृतिस्तथा उपवासाद्व्रताद्वापि
सद्योध्वंशयतिस्त्रियम् स्त्रियमित्युपलक्षणं शुक्लमेवसदावासःप्रशस्तंचंद्रसंभवे अंतर्वासोऽपरंचैवउपवासेव्रतेतथा ॥
वसिष्ठः जपहोमोपवासेषुधौतवस्त्रधरोभवेत् अलंकृतःशुचिर्मौनीश्रद्धावान्विजितेंद्रियः बौधायनः काषायवासाः
कुरुतेजपहोमपरिग्रहं सर्वंतद्राक्षसांविद्धिदैवेपित्र्येचवर्जयेत् याज्ञवल्क्यः परिधानाद्बहिःकक्षानिबद्धाआसुरीभ
वेत् धर्मकर्मणिविद्वद्भिर्वर्जनीयाप्रयत्नतः बहिःकक्षाबहिर्विगतेत्यर्थः गोयानमुष्ट्रयानंचकथंचिदापिनारुहेत् ख
रयानंचसततंव्रतेचाप्युपसंकरमिति उपसंकरोऽस्पृश्यस्पर्शः विष्णुधर्मोत्तरे व्रतेषूपवासेषुशुक्लान्वाथसुवासि
नी धारयेद्रक्तवस्त्राणिकुसुमानिसितानिच एतच्च मंगलादिव्रतविषयम् पादुकार्थस्तृणैःकार्यस्सर्वदाव्रतकेसति
उपवासेपिचाविधिरेषएवप्रकीर्तितः अंजनंरोचनंचापिगंधान्सुमनसस्तथा व्रतकेचोपवासेचनित्यमेवविवर्जयेत्
रोचनंकुंकुमादिनामुखोज्वलीकरणं दंतकाष्ठंशिरःस्नानमुद्वर्तनमथापिवा विवर्जितंमृदासर्वंशौचार्थंतुविधीयते
तिलामलफलैर्नित्यंश्रीफलैश्चविधीयते प्रक्षालनंतुशिरसःसदामृन्मिश्रितैर्जलैः शिरसोभ्यंजनंसौम्येनैवमत्र
प्रशस्यते नपादयोर्नगात्रस्यस्नेहेनेतिस्थितिःस्मृतेति अत्रगंधादिवर्जनाभिधानं पुण्यकव्रतविषयं व्रतांतरेतु
सभर्तृकायानदोषः दंतधावनपुष्पादिव्रतेष्वस्यानदुष्यतीतिव्यासवचनात् अंजनंचसतांबूलंसिंदूरंरक्तवाससी
विभृयात्सोपवासापिअवैधव्यकरंपरमिति भविष्यपुराणाच्च गंधालंकारवासांसिपुष्पमाल्यानुलेपनं उपवासेन
दुष्यंतिदंतधावनवर्जनमिति वृद्धशातातपवचनात् गंधःसौरभं अनुलेपनस्य पृथगुपादानात् उपवासेतथा

रत्नेऽग्निपुराणे व्रीहिषष्टिकमुद्गाश्चकलायाःसतिलंपयः श्यामाकाश्चैवनीवारागोधूमाद्याव्रतेहिताः कूष्मांडालाबुवा
र्तांकपालिकांज्योत्स्निकास्त्यजेत् चरुभैक्ष्यंशक्तुकणाःशाकंदधिघृतंपयः श्यामाकाःशालिनीवारायावकंमूलतंडुलं
हविष्यंव्रतनक्तादावग्निकार्यादिकेहितं मधुमांसंविहायान्यद्व्रतेवाहितमीरितमिति शमीधान्यंमाषादिवार्ताकःशाक
बिल्वकइतिरभसः पालिकामध्यदेशे योद्र इतिप्रसिद्धा ज्योत्स्निका कोशातकीमिताक्षरायांगौतमः चरुभैक्ष्यसक्तुक
णायावकशाकपयोदधिघृतमूलफलोदानि हवींष्युत्तरोत्तरंप्रशस्तानि पयोदधिघृतंगव्यमिति मदनरत्नेछांदोग्यप
रिशिष्टे हविष्येषुयवामुख्यास्तदनुव्रीहयःस्मृताः माषकोद्रवगौरादाःसर्वाभावेपिवर्जयेत् भविष्योत्तरे हैमंतिकाःसिता
स्विन्नंधान्यंमुद्गायवास्तिलाः कलायकंगुनीवारावास्तुकंहिलमोचिका: षष्टिकाःकालशाकंचमूलकंकेमुकेतरत् कंदःसैं
धवसामुद्रेगव्येचदधिसर्पिषी पयोनुद्धृतसारंचपनसाम्रहरीतकी पिप्पलीजीरकंचैवनागरंचैवतिंतिणी कदलीलव
लीधात्रीफलानिगुडमैक्षवम् अतैलपक्वंमुनयोहविष्याणिप्रचक्षते इत्यगस्त्यसंहितायां हेमंतिकाद्युक्त्वा नारिकेलफ
लंचैवकदलीलवलीतथा आम्रमामलकंचैवपनसंचहरीतकी व्रतांतरप्रशस्तंचहविष्यंमन्वतेबुधाःसितंचअसितंचेति
विग्रहःकलायोद्विविधःव्यस्त्रोवर्तुलश्च लोकेवाटाणाइतिमहाराष्ट्रभाषायांप्रसिद्धःकुलत्थइति स्मृतिकौस्तुभेअभिहितं
गौडपुहिलासेतिप्रसिद्धः केमुकंगौडपुकेवुप्रसिद्धः मूलकंलवलीराजामलकीतिकेचित् लवलीस्थानेदाडिमीतिक्वचि
त्पाठः अतैलपक्वमित्युक्तं हविष्याणांविशेषणं सर्वभूतभयंव्याघ्रादिसत्त्वेभ्योभूतेभ्योभयंव्याधिःप्रतिबंधक्षमःप्रमा
दोविस्मरणंगुरुशासनंगुरोराज्ञासत्याभिधानेष्वपिनिमित्तेषु पुनःपुनस्त्यागेदोषएवब्रह्मपुराणेव्रतस्थःप्राणरक्षार्थं
कदाचिदुदकंपिबेत् फलमूलेपयःक्षीरंयज्ञशिष्टंतथाहविः व्रतमध्येचरोगार्तोवैद्यप्रोक्तमहौषधं करोतिचगुरोर्वाक्यंव्र
तस्थस्तत्क्षणादपि ब्राह्मणस्याभिलषितंसाधयेदविचारयन् एतान्यष्टौव्रतस्थानांनव्रतघ्नानिकुत्रचित् पद्मपुराणेपि

अष्टैतान्यव्रतघ्नानिआपोमूलंपयोदधि हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधं पय.पानादीनामव्रतघ्नत्वं स्त्रीबाला
द्यस्वस्थपीडितविषयं अन्येपिधर्माहरिवंशेप्रदर्शिताः अशल्यविद्धशयनमासनंचतथाविधं स्वयंप्रक्षालितंचापि
पादयोरनुशब्दितं अनुशब्दितंव्रतोपयोगितयाकथितं अश्रुप्रपातोरोपश्चकलहस्यकृतिस्तथा उपवासाद्व्रताद्वापि
सद्योध्वंशयतिस्त्रियम् स्त्रियमित्युपलक्षणं शुक्लमेवसदावासःप्रशस्तंचंद्रसंभवे अंतर्वासोऽपरंचैवउपवासव्रतेतथा॥
वसिष्ठः जपहोमोपवासेषुधौतवस्त्रधरोभवेत् अलंकृतःशुचिर्मौनीश्रद्धावान्विजितेंद्रियः बौधायनः काषायवासाः
कुर्तेजपहोमपरिग्रहं सर्वंतद्राक्षसंविद्धिदैवेपित्र्येचवर्जयेत् .याज्ञवल्क्यः परिधानाद्बहिःकक्षानिबद्धाआसुरीभ
वेत् धर्मकर्मणिविद्वद्भिर्वर्जनीयाप्रयत्नतः बहिःकक्षाबहिर्विगतेत्यर्थः गोयानमुष्ट्रयानंचकथंचिदपिनारुहेत् स्व
श्यानंचसततंव्रतेचाप्युपसंकरमिति उपसंकरोऽस्पृश्यस्पर्शः विष्णुधर्मोत्तरे व्रतेषूपवासेषुपुमान्वाथसुवासि
नी धारयेद्रक्तवस्त्राणिकुसुमानिसितानिच एतच्च मंगलादिव्रतविषयम् पादुकाधिरूढैःकार्यस्सर्वदाव्रतकेसति
उपवासेपिचाविधिरेषएवप्रकीर्तितः अंजनंरोचनंचापिगंधान्सुमनसस्तथा व्रतकेचोपवासेचनित्यमेवविवर्जयेत्
रोचनंकुंकुमादिनामुखोज्वलीकरणं · दंतकाष्ठंशिरःस्नानमुद्वर्तनमथापिवा विवर्जितंसदासर्वं शौचार्थंतुविधीयते
तिलामलफलैर्नित्यंश्रीफलैश्चविधीयते प्रक्षालनंतुशिरसःसदामृन्मिश्रितैर्जलैः शिरसोभ्यंजनंसौम्येनैवमत्र
प्रशस्यते नपादयोर्नगात्रस्यस्नेहेनेतिस्थितिःस्मृतेति अत्रगंधादिवर्जनाभिधानं पुण्यकव्रतविषयं व्रतांतरेतु
सभर्तृकायानदोषः दंतधावनपुष्पादिव्रतेष्वस्यानदुष्यतीतिव्यासवचनात् अंजनंचसतांबूलंसिंदूरंरक्तवाससी
विभूयात्सोपवासापिअवैधव्यकरंपरमिति भविष्यपुराणाच्च गंधालंकारवासांसिपुष्पमाल्यानुलेपनं उपवासेन
दुष्यंतिदंतधावनवर्जनमिति वृद्धशातातपवचनात् गंधःसौरभं अनुलेपनस्य पृथगुपादानात् उपवासेतथा

श्राद्धेनखादेद्दंतधावनं दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलम् अनेनकाष्ठेनदंतधावनंनिषिद्धं नतु मृल्लोष्टपत्रादिना पैठीनसिः अलाभेवानिषिद्धेवाकाष्ठानांदंतधावने पर्णादिनाविशुध्येताजिव्होल्लेखःसदैवचेति अलाभेदंतकाष्ठानां निषिद्धायांतिथावपि अपांद्वादशगंडूषैर्विभूयाद्दंतधावनम् स्मृत्यर्थसारेपि पर्णोदकेनांगुल्यावादंतान्धावयेत् प्रदेशिनीवर्जमध्यमानामिकांगुष्ठैर्दंतधावनेभवत्यपिप्रायश्चित्तमुक्तम् विष्णुधर्मोत्तरे श्राद्धोपवासदिवसेखादित्वा दंतधावनं गायत्र्याशतशः पूतमंबुप्राश्यविशुध्यतीति कौर्मे वहिर्ग्रामांत्यजान्सूतिपतितंचरजस्वलांनस्पृशेन्नाभि भाषेतनेक्षेतव्रतवासरे उपवासस्वरूपंविष्णुधर्मोत्तरे उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह उपवासःसविज्ञेयः सर्वभोगविवर्जितः निषिद्धानिसुमंतुराह विहितस्याननुष्ठानमिंद्रियाणामसंयमः निषिद्धसेवनंजेह्मवर्जनीयंप्रय त्नतः हारीतः पतितपाखंडिनास्तिकादिसंभाषणमश्लीलादिकमुपवासदिनेवर्जयेदिति विष्णुपुराणेपि तस्मात्पा षंडिभिः पापैरालापस्पर्शनंत्यजेत् विशेषतःक्रियाकालेयज्ञादौचापिदीक्षितइति ... दिषयेप्राय श्चित्तं विष्णुपुराणएवोक्तं स्पर्शनेचनरः स्नात्वाशुचिरादित्यदर्शनात् संभाष्यत... च्युतवृत्तेः पामालोकनात्सूर्यंपश्येतमतिमान्नृप इतिशौचपदंशुद्धिप्रदं विष्णुधर्मोत्तरे असंभाष्यसमाभाष्यतुलस्यतासिकादलं आमलक्याः फलंचापिपारणेप्राश्यशुध्यतीति गुणैःसहवासइत्युक्तं तत्रगुणाविष्णुधर्मोत्तरेउक्ताः यथा तज्जप्यंजप नंध्यानंतत्कथाश्रवणादिकं तदर्चनंचतन्नामकीर्तनश्रवणादयः उपवासकृतामेतेगुणाः प्रोक्तामहर्षिभिरितितच्छन्दे नात्राव्यवहितपूर्वोक्तत्वाद्विष्णुरेवोच्यते उपवासकृतांनियमाउच्यन्ते उपवासव्रतीदंतधावनंहिंसामनृतंचौर्य्य मसकृज्जलपानंसकृत्ताम्बूलभक्षणंस्त्रीसंयोगंदिवास्वापंमांसंचपरिवर्जयेत् विष्णुधर्मोत्तरे असकृज्जलपानंचदि वास्वापंचमैथुनं तांबूलचर्वणंमांसंवर्जयेद्व्रतवासर इति यत्तुकैश्चिदुक्तंमांसनिषेधः पारणांते पारणांतंव्रतंज्ञेय

मित्युक्तेः नतुप्रधानदिने प्रसक्त्यभावादिति तन्न तांबूलचर्वणमांसभक्षणनिषेधस्यैकवाक्योपात्तत्वाद्व्रतदिन एव न्याय्यत्वात् रागप्रसक्तेःसत्त्वात् वर्जयेत्पारणेमांसामितिपारणादिने पृथङ्निषेधस्यवैयर्थ्यापत्तेश्च तांबूलभक्षणे स्त्रीसंभोगेमांसनिषेवणे व्रतलोपोभवेत् क्रव्यवद्धाजिवर्जनामिति निर्णयामृतधृतव्रतलोपप्रायश्चित्तप्रकरणपठितपैठीनसिवाक्ये तांबूलभक्षणादावेकप्रायश्चित्ताम्नायाच्च अशक्तौतु अत्ययेचांबुपानेचनोपवासः प्रणश्यतीति अत्ययेप्राणात्यये हेमाद्रौ प्रवृत्तमन्यथाकुर्याद्यदिमोहात्कथंचन यतस्तदन्यथाभूतंततएवसमापयेदिति भवंतिहिवृथातस्यक्रियाःसर्वाह्यसंशय इत्थंधर्मरत्नसमुच्चयेभिहितमत्राप्यूह्यम् आचमननिमित्तान्याहयमः उत्तीर्योदकमाचामेदवतीर्यतथैवचेति बृहस्पतिः अधोवायुसमुत्सर्गेआक्रंदेक्रोधसंभवे मार्जारमूषकस्पर्शेप्रवासेनृतभाषणे निमित्तेष्वेपुसर्वेषुकर्मकुर्वन्नपःस्पृशेदिति अथद्विराचमननिमित्तानियाज्ञवल्क्यः स्नात्वापीत्वाक्षुतेसुप्तेभुक्त्वारथ्योपसर्पणे आचांतः पुनराचामेद्वासोविपरिधायचेति आचमनासंभवेतु कुर्वीतालंभनंवापिदक्षिणश्रवणस्यत्विति मार्कंडेयोक्तदक्षिणकर्णालंभनंवोध्यं अथहस्ततीर्थानिहेमाद्रौहारीतः अंगुष्ठस्यान्तरतोरेखाब्राह्मंतीर्थकनिष्ठायाःपश्चात्प्राजापत्यमग्रसर्वांगुलीनां दैवमंगुष्ठप्रदेशिन्योरन्तरापित्र्यंमध्यआग्नेयं प्रतिग्रहमाग्नेयेनगृह्णीयादित्यभिहितप्राक् छागलेयः हस्तमध्येवह्नितीर्थंदक्षिणाग्रहणेतुतत् ब्रह्मपुराणे मूलेरेखामुखांगुष्ठमणिबंधेपुमध्यमं प्राजापत्यंमहातीर्थंविप्रस्तेनाचमेत्सदा धनायुर्दाररेखातुसोमतीर्थंतुमध्यमं लाजादिहवनंतेनकर्तव्यंवपनंतथा वपनमत्रव्रीह्यादिनिर्वापः दधिप्राशनंसोमतीर्थेनकर्तव्यं स्नातोऽधिकारीभवतिदैवेपित्र्येचकर्मणि पवित्राणांतथाजप्येदानेचविधिनोदिते शाकटायनः दानमाचमनंहोमंभोजनंदेवतार्चनं प्रौढपादोनकुर्वीतस्वाध्यायंपितृतर्पणम् आसनेरूढपादस्तुजान्वोर्वाजंघयोस्तथा कृतावसक्थिकोयश्चप्रौढपादःसउच्यते

आपस्तंबः तस्मादोमित्युदाहृत्ययज्ञदानतपःक्रियाःप्रवर्त्ततेविधानोक्ताःसततंब्रह्मवादिनां त्रिमात्रास्तुप्रयोक्तव्याः कर्मारंभेपसर्वशः त्रिस्रःसार्द्धास्तुकर्त्तव्यामात्रास्तत्त्वार्थचिंतकैः यमः पुण्याहवाहनंदैवेब्राह्मणस्यविधीयते एतदेवानिरोंकारंकुर्यात्क्षात्रियवैश्ययोः मार्कंडेयपुराणे सूर्योदयंविनानैवस्नानदानादिकाःक्रियाः अग्नेर्विहरणे चैवक्तत्वभावश्चलक्ष्यते सूर्योदयशब्देन उपःकालोलक्ष्यते तेनरात्रौनकुर्यादितितात्पर्यं दक्षः दैवकार्याणिपूर्वाह्णेमनुष्याणांसुमध्यमे पितॄणामपराह्णेतुकार्याणीतिविनिश्चयः अंगिराः संध्ययोरुभयोर्जप्येभोजनेदंतधावने पितृकार्येचदैवेचतथामूत्रपुरीषयोः गुरूणांसन्निधौदानेयागेचैवविशेषतः एषुमौनमुपातिष्ठन्स्वर्गंप्राप्नोतिमानवः व्रतांगलोपप्रायश्चित्तानि त्वेकादशीप्रकरणेवक्ष्यंते गृहीतव्रतत्यागे दोषउक्तोमदनरत्ने छागलेन पूर्वंव्रतंगृहीत्वातुनाचरेत्काममोहितः जीवन्भवतिचांडालोमृतःश्वाचाभिजायतेइति व्रतत्यागे प्रायश्चित्तमप्युक्तंपृथ्वीचंद्रोदये गारुडे क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवेद्यदि दिनत्रयंनभुंजीतमुंडनंशिरसोथवेति प्रायश्चित्तानंतरमुपक्रांतानुष्ठानंकार्य्यम् प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभवेदितिवायुपुराणोक्तेःअन्योपिविशेषस्तत्रैव दानंप्रतिग्रहोहोमोभोजनंबलिरेवच सांगुष्ठेनसदाकार्य्यमसुरेभ्योन्यथाभवेत्एतान्येवतुकर्माणिदानानीतिविशेषतःअतजानुविधेयानिततदाचमनंनृप याज्ञवल्क्यः शैवपित्र्यान्सुरान्मंत्रांस्तथाह्येवाभिचारकान् व्याहृत्यालभ्यचात्मानमुपस्पृश्यान्यदाचरेत् स्त्रीव्रतेविशेषोहारिवंशे स्नात्वास्त्रीप्रातरुत्थायपतिंविज्ञापयेत्सती तथा गृहीत्वौदुंबरंपात्रंसकुशंसाक्षतंतथा गोःशृंगंदक्षिणंसिच्यप्रगृह्णीयाच्चतज्जलं औदुंबरंताम्रमयंसकुशंसाक्षतंचयत् ततोभर्त्तुःसतीदद्यात्स्नातस्यप्रयतस्यच आत्मनश्चाभिषेक्तव्यंभर्त्तुःशिरसितज्जलं त्रैलोक्येसर्वतीर्थेषुस्नानमेतदुदाहृतं उपवासेषुकर्त्तव्यमेतद्धिव्रतकस्यचेति अथसर्वव्रतानामारंभे संकल्पविधिश्चोक्तोमहाभारते गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उप

वासंनुग्रहणीयाद्यथासंकल्पयेद्बुधः देवलः अभुक्काप्रातराहारंस्नात्वाचम्यसमाहितः सूर्य्यायदेवताभ्यश्चनिवे द्यव्रतमाचरेत् अत्रप्रातर्व्रतमाचरेदितिसंबंधः प्रधानाक्रियान्वयस्याभ्यवहितत्वादितिवीरमित्रोदयः व्रतंनिशा मुखेग्राह्यंवहिस्तारकदर्शनादितिविष्णुनोक्तं प्रकरणात्प्रायश्चित्तविषयम् अन्यव्रतेष्वपि यच्च पूर्वदिनेव्रतग्रहणं श्रूयते तत्रपूर्वदिनएवव्रतग्रहणं अथव्रतारंभकालःमदनरत्नेगार्ग्यः अस्तगेचगुरौशुक्रेवालेवृद्धेमलिम्लुचे उद्याप नमुपारंभंव्रतानांनैवकारयेत् रत्नमालायां सोमसौम्यगुरुशुक्रवासराःसर्वकर्मसुभवंतिसिद्धिदाः॥ भानुभौमशनि वासरेषुच प्रोक्तमेवखलुकर्मसिध्यति तथा विरुद्धसंज्ञाइहयेचयोगास्तेषामनिष्टःखलुत्र्प्राद्यपादः सवैधृतिस्तुव्य तिपातनामासर्वोप्यनिष्टःपरिघस्यचार्धं तिस्रस्तुयोगेप्रथमेसवज्रेव्याघातसंज्ञेनवपंचशूले गंडेतिगंडेचषडेवना ड्यःशुभेषुकार्य्येषुविवर्जनीयाः संग्रहे कृष्णेत्रिदशयोरूर्ध्वंसप्तमीभूतयोरधः शुक्लेवेदेशयोरूर्ध्वंभद्राप्राग्वसुपूर्ण योः श्रीपतिः नसिद्धिमायातिकृतंचविष्ट्यांविषारिघातादिकमत्रसिद्धं व्यवहारसमुच्चये दशम्यामष्टम्यांप्रथमघटि कापंचकपरं हरिद्युःसप्तम्यांद्विदशघटिकांतेत्रिघटिकं तृतीयाराकायांस्वयमघटिकाभ्यःपरभवंशुभंविष्टेःपुच्छंशि वतिथिचतुर्थ्योस्तुविरमे तत्रैव सर्पिणीतुसितपक्षेकृष्णेचैवतुवृश्चिकी सर्पिण्यास्तुमुखंत्याज्यंवृश्चिक्याःपुच्छमेवच माधवीये विष्टिर्यदाहनितिथेरपरार्धजातापूर्वार्धजानिशितथाशुभदाचपुच्छे ब्रह्मयामले दिनभद्रायदारात्रौ रात्रिभद्रायदादिवा नत्याज्याशुभकार्येषुप्राहुरेवंपुरातनाः टोडरानंदे देवीपुराणे व्रतेचतीर्थेध्ययनेश्राद्धेपिच विशेषतः परान्नभोजनाद्देवियस्यान्नंतस्यतत्फलम् प्रतिमास्वरूपं मदनरत्ने भविष्ये अनुक्तद्रव्यतत्संख्यादेवताप्र तिमान्नृप सौवर्णीराजतीताम्रीदृश्जामार्त्तिकीतथा चित्रजापिष्टलेखोत्थानिजचित्तानुसारतः आमाषात्पलपर्यंतंक र्तव्याशाठ्यवर्जिता निजवित्तानुसारतइत्यपिपाठः अथकुशपवित्रंकात्यायनः अनंतर्गर्भंकंसाग्रंकौशंद्विदलमेवच

प्रादेशमात्रेविज्ञेयंपवित्रंयत्रकुत्रचित् अथसमिधः पालाशाश्वत्थखादिररोहितोदुंबरोद्भवाः तदभावे कंटकवर्जं सर्ववनस्पतीनांतानिधोग्राह्याः तस्यामानंकर्मप्रदीपे नांगुलादधिका कार्यासमित्स्थूलतयाकचित् नवियुक्तात्वचाचैवनसंकोचनपाटिता प्रादेशान्नाधिकन्यूनानतथास्याद्विशाखिका नसपर्णासमित्कार्याहोमकर्मणिजानता इति कात्यायनः योनार्चिषिजुहोत्यग्नौव्यंगारिणिचपावके मंदाग्निरामयावीचदरिद्रश्चोपजायते तस्मात्समिद्धेहोतव्यं नासमिद्धेकथंचन नकुर्यादग्निधमनंकदाचिद्व्यजनादिना मुखेनैवधमेदग्निंमुखादग्निरजायत तत्रैवब्राह्मे ॥ आज्यंद्रव्यमनादेशेजुहोतिपुविधीयते मंत्रस्यदेवतायाश्चप्रजापतिरितिस्थितिः होमाहुतिसंख्यामानंम[त्स्ये] अनुक्तसंख्यायत्रस्याच्छतमष्टोत्तरंस्मृतं अष्टाविंशतिरष्टौवायथाशक्तिविधीयतेइति मदनरत्ने ब्राह्मे यथोक्तवस्त्वसंपत्तौग्राह्यंतदनुकारियत् यवानामिवगोधूमाव्रीहीणामिवशालय इति हेमाद्रौ दध्यभावेपयः कार्यंमध्वभावेतथागुडः घृतंहोमेगव्यंमुख्यं तदभावेमाहिषमाजंवा तैलेसार्षपंकौसुंभंवा मंत्रस्यदेवतायाश्चविधानेप्रजापतिर्देवतासमस्तव्याहृतिमंत्रः स्मृत्यंतरेपि नव्याहृत्यासमंहुतमितिगरुडे प्रणवादिनमोंतंचचतुर्थ्यंतंचसत्तम देवतायाःस्वकंनाममूलमंत्रः प्रकीर्तितः व्रतोद्यापनानुक्तौतु पृथ्वीचंद्रोदये नंदिपुराणे कुर्यादुद्यापनंतस्यसमाप्तौयदुदीरितं उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत यदिचोद्यापनंनोक्तंव्रतानुगुणतश्चरेत् वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते गाश्चैवकांचनंदद्याद्व्रतस्यपरिपूर्तये अशक्तौतुनारदीये सर्वेषामप्यलाभेतुयथोक्तकरणंविना विप्रवाक्यंस्मृतंशुद्धंव्रतस्यपरिपूर्तये पृथाविप्रवचोयस्तुगृह्णातिमनुजःशुभं अदत्त्वादक्षिणांपापःसयातिकरकंध्रुवम् अथदानविभागनिर्णयः हेमाद्रौअंगिराः वहुभ्योनप्रदेयानिगोगृहंशयनांस्त्रियः विभक्तदक्षिणाह्येतादातारंपातयंतिहि एकाएकस्यदातव्यानवहुभ्यःकथंचन सातुविक्रयमापन्नादहत्यासप्तमंकुलम् विक्रेतुरेवैतद्दोषप्रदर्शनं नदातुरितिकात्यायनोपि

कन्याशय्यागृहंचैकंदेयंयच्चास्त्रियादिकं तदेकस्मैप्रदातव्यंनवहुभ्यःकथंचनेति वैजवापः शिवनेत्रोद्भवं यस्माद्रजतंशिववल्लभं अमंगलंतद्यत्नेनदेवकार्येपुवर्जयेत् कलशलक्षणं तदेवताश्चोक्तादेवीपुराणे पंचाशांगुलवैपुल्यमुत्सेधःषोडशांगुलः कलशानांप्रमाणंतुमुखमष्टांगुलंभवेदिति विष्णुधर्मोत्तरेच हेमरजतताम्राश्चमृण्मयालक्षणान्विताः याग्रोद्वाहप्रतिष्ठादौकुंभाःस्युरभिषेचने तथाच पूर्णाःपूतेनतोयेनसितास्त्वेकांततोज्वलाः सरित्सरःखातजेनतडागेनजलेनवा वापीकूपोत्थदिव्येनसामुद्रेणसुखावहाः कलशाःसर्वमांगल्याःसर्वकिल्विषनाशनाः अभिषेकेसदाग्राह्याःकलशाःसुदृढाःशुभाः यात्राविवाहादिकालेप्रतिष्ठायज्ञकर्माणि योजनीयाविशेषेणसर्वकामप्रसाधकाः तथा कलशस्यमुखेब्रह्माग्रीवायांचमहेश्वरः मूलेचसंस्थितोविष्णुर्मध्येमातृगणाःस्मृताः शेषास्तुदेवतास्सर्वावेष्टयंतिचतुर्दिशं पृथिव्यांयानितीर्थानिकलशेनिवसंतिहि ग्रहादेयाश्चशांतिश्चपुष्टिश्चमतिरेवच ऋग्वेदश्चयजुर्वेदःसामवेदस्तथैवच अथर्ववेदसहितास्सर्वेकलशमास्थिताइति अथपंचपल्लवाः ब्रह्मांडपुराणे अश्वत्थोदुंवरप्लक्षचूतन्यग्रोधपल्लवाः अथपंचरत्नानि कालिपुराणे कनकंकुलिशंनीलंपद्मरागंचमौक्तिकं एतानिपंचरत्नानिशास्त्रदृष्टानिसूरिभिः कुलिशं हीरः आदित्यपुराणे सुवर्णरजतंमुक्ताराजावर्त्तःप्रवालकं रत्नपंचकमाख्यातमिति ॥ अभावेसर्वरत्नानांहेमंसर्वत्रयोजयेत् तथामुक्ताफलंहिरण्यंचवैदूर्यंपद्मरागकं पुष्परागंचगोमेदंनीलंगारुत्मतंतथा प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव मदनरत्नेतु हिरण्यस्थानेहीरकमितिपाठांतरम् अथ सौभाग्याष्टकं मत्स्यपुराणे इक्षवस्तरुराजंचनिष्पावाजीवधान्यकं विकारवच्चगोक्षीरंकुसुंभकुसुमंतथा लवणंचाष्टमंतत्रसौभाग्याष्टकमुच्यते मिताक्षरायांपराशरः गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकं पंचगव्यमितिप्रोक्तंपवित्रंकायशोधनं गोमूत्रंताम्रवर्णायाःश्वेतायास्त्वथगोमयं पयःकांचनवर्णायानीलायास्त्वथवेदधि घृतंवैकृष्णवर्णायाः सर्वंकापिलमेववा

अलाभेसर्ववर्णाया:पंचगव्येष्वयंविधिः गोमूत्रंमाषकास्त्वष्टौगोमयस्यतु षोडश क्षीरस्यद्वादशप्रोक्तादध्नस्तुदशकी
र्त्तिताः गोमूत्रवद्घृतस्यापितदर्धंतुकुशोदकमिति नृसिंहपुराणे गोशकृद्द्विगुणंमूत्रंसर्पिर्दद्याच्चतुर्गुणं क्षीरमष्टगुणं
प्रोक्तंपंचगव्येतथादधि वीरमित्रोदये स्कांदे ताम्रारुणश्वेतकृष्णानीलानामाहरेद्गवां गोमूत्रंगोमयंक्षीरंदधिसर्पिंपि
चक्रमात् विष्णुवह्नींदुवाय्वर्कदेवतानियथाक्रमं विद्येतानिकुशोदंचपितृराजाधिदैवतान् प्रोक्ताभावेह्यथैतानिकपि
लायाःप्रकल्पयेत् गोमूत्रभागस्तस्यार्धंशकृत्क्षीरस्यचत्रयम् द्वयंदध्नोघृतस्यैकमेकश्चकुशवारिणः गायत्र्याचैवगो
मूत्रंगंधद्वारेतिगोमयं आप्यायस्वेतिचक्षीरंदधिक्राव्णेतिवैदधि तेजोसिशुक्रमित्याज्यं देवस्यत्वाकुशोदकम्
एभिस्तुपंचभिर्मंत्रैः पंचगव्यंप्रचक्षते एतदेवमहापुण्यंब्रह्मकूर्चमितिस्मृतम् इतिपंचगव्यविधिः पंचामृतंशिवधर्मे
पंचामृतंदधिक्षीरसितामधुघृतंतथेति अथ सप्तधान्यानि ग्रंथांतरे व्रीहयोयवगोधूमामुद्गामाषाःप्रियंगवः ति
लाश्चसप्तमाःप्रोक्ताधान्यसप्तकमुच्यते तथाच यवगोधूमधान्यानितिलाः कंगुस्तथैवच श्यामाकंदेवधान्यंचसप्त
धान्यमुदाहृतम् अष्टादशधान्यानिमार्कंडेयपुराणे वीरमित्रोदये व्रीहियवगोधूमकंगुसर्षपप्रियंगूदारकोरदूपस
तीनकमाषमुद्गमसूरनिष्पावकुलत्थाढकीचणकचणहैमंतिकानि व्रीहयः षष्टिकाः उदारोदेवधान्यं कोरदूपः
कोद्रवः सतीनकोवर्त्तुलकलायः निष्पावोवल्लः मदनरत्ने स्कंदपुराणेतु यवगोधूमधान्यानितिलकंगुकुलत्थ
काः माषमुद्गमसूराश्चनिष्पावाःश्यामसर्षपाः गवेधुकाश्चनीवाराआढक्योथसतीनकाः चणकाश्चीणकाश्चै
वधान्यान्यष्टादशैवतु श्यामःश्यामाकः सप्तधातवःभविष्यत्पुराणे सुवर्णरजतंताम्रमारकूटंतथैवच लोहंत्रपु
स्तथासीसंधातवःसप्तकीर्त्तिताः अथ सुवर्णादिमानं पंचगुंजात्मकोमाषस्तेसुवर्णस्तुषोडश पलंसुवर्णाश्चत्वारः
पंचचापिप्रकीर्त्तितम् धान्यमानंच पलंचकुडवःप्रस्थआढकोद्रोणएवच धान्यमानेषुवोद्धव्याःक्रमशोमीचतुर्गुणाः

पेःडशद्रोणाःखारीभवतीतिदिक् सर्वधातुगणोमत्स्यपुराणे तालकंचशिलावज्रमंजनंश्याममेवच काक्षीकांसी
समाक्षीकंगैरिकंचादितःक्रमात् तालकंहरितालं शिला मनश्शिला वज्रंवज्राभ्रकं अप्रस्तरंकठोरांगंगुरुकज्जलस
न्निभं यन्नशब्दायतेवन्हौनैवोच्छूनंभवेदपि सदाकरसमुद्भूतंवज्रेतिप्रथितंचतत् श्याममंजनं काक्षीसौराष्ट्रमृ
त्तिका कांसीकांस्यं माक्षिकं माक्षीकंतत्रैव आपःक्षीरंकुशाग्राणिदध्यक्षततिलास्तथा यवाश्सिद्धार्थकाश्चेतिह्य
र्घोष्टांगःप्रकीर्त्तितः पंचरात्रे रजांसिपंचवर्णानिमंडलार्थंतुकारयेत् शालितंडुलजंशुक्लंरक्तंकौसुंभसौंदुरम् हरिता
लोद्भवंपीतंकृष्णंदग्धयवोद्भवं रजांसिपंचवर्णानिहरितंपीतकृष्णयुगिति कौतुकाख्यानिभविष्ये दूर्वायवांकुरा
श्चैवनूतनाश्चूतपल्लवाः हरिद्राद्वयसिद्धार्थाःशिखिपत्रोरगत्वचः कंकणौषधयश्चैवकौतुकाख्योद्भवाःस्मृताइति
मत्स्यपुराणे अथ सप्तमृत्तिकाः गजाश्वरथवल्मीकसंगमाह्रदगोकुलात् राजद्वारप्रवेशाच्चमृदमानीयनिक्षिपेत्
चत्वरेतिवापाठः इतिसप्तमृत्तिकाः सर्वौषध्यः छांदोग्यपरिशिष्टे कुष्ठमांसीहारिद्रेद्वेमुराशैलेयचंदनं वचाचंपकमु
स्ताचसर्वौषध्योदशस्मृताः अथसर्ववीजानिदेवीपुराणे यवगोधूममुद्गाश्चशालीषाष्टिकमाढकं तिलामाषाः प्रसा
तीचश्यामाकाश्चवालकाः आढकंआढकीफलं दाक्षिणात्यभाषायांतूरीतिप्रसिद्धम् प्रसातीनीवारः आशवंआशुधा
न्यफलं वालकाःकंगुःमधुरत्रयंकात्यायनःआज्यंक्षीरंमधुतथामधुरत्रयमुच्यते अथयक्षकर्दमोःगरुडपुराणे कर्पूरमगु
श्चैवकस्तूरीचंदनंतथा कंकोलंचभवेदेभिः पंचभिर्यक्षकर्दमः सर्वगंधंयथा गृह्यपरिशिष्टे कर्पूरंचंदनंदर्पः कुंकुमंच
चतुःसमं सर्वगंधमितिख्यातंसमस्तसुरवल्लभम् अथगंधाष्टकं शक्तेर्यथा चंदनागुरुकर्पूरचोरकुंकुमरोचनाः जटामां
सीकपियुताःशक्तेर्गंधाष्टकंविदुः चोरः कृशटी कपि कठियाना गौतमीये चंदनागुरुह्रीवेरकुष्ठकुंकुमरोचनाः जटामां
सीमुरमितिविष्णोर्गंधाष्टकंविदुः इतिविष्णोर्गंधाष्टकं ह्रीवेरंवाला शैवंगंधाष्टकंशारदायां चंदनागुरुकर्पूरतमालजल

कुंकुमं कुसीतकुष्ठसंयुक्तंशैवंगंधाष्टकंविदुः तमालंतमालपत्रं जलंवाला कुसीतंरक्तचंदनं गणेशगंधाष्टकं संहि
तायां स्वरूपंचंदनंचौरंरोचनागुरुमेवच मदंमृगद्वयोद्भूतंकस्तूरींचंद्रसंयुतं गंधाष्टकंविनिर्दिष्टंगणेशस्यमहात्म
नः भविष्यपुराणे अगुरुशिल्हकंमुस्ताचंदनंकृष्णंतथा समभागंचकर्तव्यंधूपोयममृताव्हयः यथा कर्पूरंचंदनं
मांसीत्वक्पत्रैलालवंगकं अगुरुशिल्हकंधूपंप्राजापत्यंप्रचक्षते शिल्हकंशिलारसमितिनिर्घंटः दशांगधूपः ष
ड्भागकुष्ठंद्विगुणोगुडश्चलाक्षात्रयंपंचनखस्यभागाः हरीतकीसर्जरसः समांसीभागैकमेकंत्रिलवंशिलाजं घन
स्यचत्वारिमुरस्यचैकोधूपोदशांगोगदितोमुनींद्रैः अथव्रतेसूतकादिनिर्णयः तत्रशावसूत्याशौचयोःसर्वकर्मनिवृ
त्तिः सूनकेचसमुत्पन्नेज्वरकर्माणिमैथुने धूमोद्गारेतथाजातौनित्यकर्माणिसंत्यजेत् द्रव्येभुक्तेत्वजीर्णेचनैवभुक्त्वा
पिकिंचन कर्मकुर्यान्नरोनित्यंसूतकेमृतकेतथेति कालिकापुराणात् गौडास्तुक्षताशौचादावपितामाहुः पठंति
च जानूर्ध्वंक्षतजेजातेनित्यकर्मनचाचरेत् नैमित्तिकंचतदध स्त्रवद्रक्तोनवाचरेत् हेमाद्रौपाद्मे गर्भिणीसूतिकादि
श्चकुमारीवाप्यरोगिणी यदाशुद्धातदान्येनकारयेत्प्रयतास्वयमिति पुंसोप्येवंविधिः लिंगस्याविवक्षितत्वात्
तेनयस्मिन्व्रतेयत्पूजाद्युक्तंतदन्येनकारयेत् शारीरनियमान्स्वयंकुर्यादितिशुद्धितत्त्वे विष्णुः बहुकालिकसंक
ल्पोगृहीतश्चपुरायदि सूतकेमृतकेचैवव्रतंतन्नैवदुष्यतीति एतत्काम्यपरम् नित्यंत्वनारब्धमपिकार्यमितिगौडाः
मदनरत्ने पूर्वसंकल्पितयच्चव्रतंसुनियतव्रतैः तत्कर्तव्यंनरैःश्राद्धदानार्चनविवर्जितम् माधवीयेकौर्म्ये काम्यो
पवासेप्रक्रांतेत्वन्तरामृतसूतके तत्रकाम्यव्रतकुर्य्याद्दानार्चनविवर्जितमिति ॥ सत्यव्रतः रजस्वलायाव्रत
विधिमाह ॥ प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् नतत्रापिव्रतस्यस्यादुपरोधः कदाचनैतत्प्रतिनिधिनाका
रयेदित्येतदपरं तदुक्तंमदनरत्नेमात्स्ये अंतरातुरजोयोगेपूजामन्योनकारयेदिति प्रतिनिधयश्चनिर्णयामृते

पैठीनसिनोक्ताः भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतं असामर्थ्येपरस्ताभ्यांव्रतभंगोनजायते कालतत्वविवेचने ब्रह्मवैवर्त्ते उपवासासमर्थश्चेदेकंविप्रंतुभोजयेत् तावद्धनादिकंदद्याद्यद्भुक्ताद्द्विगुणंभवेत् सहस्रसम्मितांदेवींजपेद्वा प्राणसंयमान् कुर्याद्द्वादशसंख्याकान्यथाशक्तिव्रतेनर इति राज्यस्थक्षात्रियाद्यर्थंएकादश्यामुपोषितः पुरोधाःक्ष त्रियस्यार्धफलंप्राप्नोतिनिश्चितं पितामहादीनुद्दिश्यएकादश्यामुपोषिते सुतेनतत्फलंविप्राः समग्रंसमवाप्नुयुः कर्त्तादशगुणंपुण्यंप्राप्नोत्यत्रनसंशयः यमुद्दिश्यकृतंसोपिसंपूर्णफलभाग्भवेत् स्कांदेऽपि पुत्रंवाविनयोपेतंभगि नींभ्रातरंतथा एषामभावएवान्यंब्राह्मणंविनियोजयेत् तथा भ्रातरंभगिनींशिष्यंकारयेद्ब्राह्मणादिभिरिति हे माद्रौवाराहपुराणे असामर्थ्येशरीरस्यव्रतेतुसमुपस्थिते कारयेद्धर्मपत्नींवापुत्रंवाविनयान्वितं भगिनींभ्रातरं वापिव्रतमस्यनलुप्यते माधवीयेस्मृत्यंतरेपि पितृमातृभ्रातृशिष्यश्वश्रूगुर्वादिभूभुजां अदृष्टार्थमुपोषित्वास्व यंतत्फलभाग्भवेत् नारीचपतिमुद्दिश्यएकादश्यामुपोषिता पुण्यंक्रतुशतंप्राहुर्मुनयः पारदर्शिनः कात्यायनः पितृमातृभ्रातृपतिगुर्वर्थंचाविशेषतः उपवासंप्रकुर्वाणः पुण्यंशतगुणंलभेत् दक्षिणात्रदातव्याशुश्रूषाविहि ताहिसा मदनरत्नेप्रभासखंडे भर्त्तापुत्रःपुरोधाश्चभ्रातापत्नीसखापिच यात्रायांधर्मकार्येचकर्तव्याः प्रतिह स्तकाः एभिः कृतंमहादेविस्वयमेवकृतंभवेत स्वयंकर्त्तुमशक्तश्चेत्कारयेतपुरोधसा दक्षस्मृतौ स्वयंहोमेफलं यत्स्यान्नतदन्येनजायते ॥ ऋत्विक्पुत्रोगुरुर्भ्राताभागिनेयोथविट्पतिः एभिरेवकृतंयत्तुतद्व्रतंस्वयमेवतु शूद्रस्य ब्राह्मणः प्रतिनिधिर्युक्तः जपस्तपस्तीर्थसेवाप्रव्रज्यामंत्रसाधनं ॥ विप्रैःसंपादितंयस्यसम्प न्नंतस्यतत्फलमितिमरीचिवचनात् यत्तुनिर्णयसिंधावुक्तं प्रव्रज्यादीनांशूद्रेऽसंभवान्नेदंवचनंब्राह्मणस्यशूद्रप्रतिनि धित्वपरं किंतुसंपूर्णतावाचनपरमितितन्न प्रव्रज्यामात्रस्यशूद्रेऽसंभवेपि जपादीनांसंभवेनताद्विषयेसंकोचायोगात्

एतद्वचनस्यप्रतिनिधिप्रकरणे पाठेनसंपूर्णतावाचनपरत्वायोगाच्च हेमाद्रौ कात्यायनः पुरोधास्तुक्षत्रि
योवाद्वयोःसममितीरितं उपवासफलंताभ्यांसमग्रंसमवाप्यते वायुपुराणे उपवासेत्वशक्तस्तुआहिताग्निरथापिवा
पुत्राद्वाकारयेदाद्यंब्राह्मणादपिकारयेत् अथवाविप्रमुख्येभ्योदानंदद्यात्स्वशक्तितः उपवासफलंतेनसमग्रंसमवा
प्यते तत्रभोजनदोपोपितत्क्षणादेवनश्यति द्रव्यदातोपवासस्यफलंप्राप्नोत्यसंशयं कर्त्तातुनतदाप्नोतिनात्रका
र्याविचारणा घृणयावान्यमुद्दिश्यएकादश्यामुपोषितः यमुद्दिश्यकृतंविप्रास्तस्यपूर्णकृतंभवेत् अत्रविशेषमाह
त्रिकांडमंडनः काम्येप्रतिनिधिर्नास्तिनित्येनैमित्तिकेचसः काम्येप्युपक्रमादूर्ध्वंकेचित्प्रतिनिधिंविदुः तस्मा
त्प्रतिनिधिर्मंत्रस्वामिदेवाग्निकर्मसु स्वदेशकालयोर्नास्तिनारणेरग्निरेवसा नापिप्रतिनिधातव्यंनिषिद्धंवस्तुकुत्र
चित् हरिकेशसूत्रेऽपि नस्वामिनोऽस्यभार्यायाःपुत्रस्यदेशस्यकालस्याग्नेर्देवतायाःकर्मणःशब्दस्यचप्रतिनिधि
र्विद्यतइति स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणी र्नानाशास्त्रविचारसाररसविल्सद्वृंदस्यर
क्षकः धर्माधर्मविचारकृद्रघुपतेःपादांबुजार्चारतो जीव्यात्पुत्रकलत्रपौत्रसहितःसंपालयन्क्ष्मांचिरम् १ ॥ र
णवीरसिंहभूपेशकारितेकृत्यसागरे परिभाषाभिधोजातश्चाष्टमोरत्नसंग्रहः २ ॥ इतिश्रीरघुवंशतिलकश्री
महाराजरणवीरसिंहकारिते कृत्यरत्नाकरे धर्मनिबंधे परिभाषाप्रकरणंनामाष्टमम् ८ अथसर्वव्रतेपुत्रेताधिषात्
देवतापूजोपयोगीसर्वदेवतासामान्यपूजाक्रमोलिख्यते तत्रादौपूजोपचाराःपदार्थादर्शेज्ञानमालायां अष्टात्रिंश
त् षोडशवादशपंचोपचारकाः तान्विभज्यप्रवक्ष्यामिकेतेतैश्चकृतैश्चकिम् अर्घ्यंचपाद्याचमनेमधुपर्कमुपस्प
र्शं स्नानंनीराजनंवस्त्रमाचमनंचोपवीतकम् पुनराचमनंचैवदर्पणालोकनंतथा गंधपुष्पेधूपदीपौनैवेद्यंचततः क्र
मात् पानीयंतोयमाचामंहस्तवासस्ततःपरं करोद्वर्त्तनमित्यर्थंताम्बूलमनुलेपंचपुष्पदानंपुनःपुनः पुष्पांजलिदानं

लक्षपुष्पव्रतादिविधिनेतियावत् ॥ गीतंवाद्यंतथानृत्यंस्तुतिश्चैवप्रदक्षिणम् ॥ पुष्पांजलिर्नमस्काराश्चाष्टा
त्रिंशत्समीरिताः इत्यष्टात्रिंशत् ३८ ॥ आसनंस्वागतंचार्घ्यंपाद्यमाचमनीयकम् मधुपर्कांचमस्नानवसनाभ
रणानिच सुगंधःसुमनोधूपदीपमन्नेनतर्पणम् माल्यानुलेपनंचैवनमस्कारोविसर्जनम् इतिषोडशोपचाराः १६ ॥
अर्घ्यंपाद्याचमान्येवमधुपर्कांचमान्यपि गंधादयोनिवेद्यांताउपचारादशक्रमात् इतिदशोपचाराः १० ॥ गंध
पुष्पेधूपदीपौनैवेद्यंपंचमंस्मृतं इतिपंचोपचाराः ५ ॥ महानिबंधेषुचतुःषष्ट्युपचाराअप्युक्तास्तेविस्तरभयादत्र
नोक्ताः शारदातिलके षोडशोक्ताः तेयथाआसनस्नानवस्त्रभूषणानिपरित्यज्यद्वादशाप्युक्ताः कपि
लपंचरात्रे गंधतैलमथोदद्याद्देवस्यप्रतिमांततः दूर्वांचविष्णुक्रांताचश्यामाकंपद्ममेवच पाद्यांगानिचचत्वारि
कथितानिसमासतः इतिपाद्यं कर्पूरमगुरुपुष्पद्रव्याण्याचमनीयकं सिद्धार्थमक्षतंचैवदूर्वाग्रंस्तिलमेवच यवा
गंधफलंपुष्पमष्टांगंत्वर्घ्यमुच्यते इत्यर्घः स्नानेवस्त्रेतथाभोज्येदद्यादाचमनीयकं उद्वर्तनमपितत्रैव रजनीस
हदेवीचशिरीषंलक्ष्मणापिच सहाभद्राकुशाग्राणिउद्वर्त्तनमिहोच्यते मंत्रतंत्रप्रकाशिकायां अक्षतागंधपुष्पाणि
स्नानपात्रेतथात्रयं तत्रैव द्रव्याभावेप्रदातव्याःक्षालितास्तंडुलाःशुभाः अगस्त्यसंहितायां तथाचमनपात्रेश्चद
द्याज्जातीफलंमुने लवंगमपिकंकोलंशस्तमाचमनीयके तंत्रांतरे तंडुलान्प्रक्षिपेत्तेषुद्रव्याभावेपुतत्स्मरन् प्र
योगपारिजाते व्यासः प्रतिमांपटयंत्राणांनित्यंस्नानंनकारयेत् कारयेत्पर्वदिवसेयदाचामलधारणम्
ज्ञानमालायां नाक्षतैरर्चयेद्विष्णुंनतुलस्यागणाधिपं नदूर्वयायजेद्देवींविल्वपत्रैर्दिवाकरं उन्मत्तमर्कपुष्पंचवि
ष्णोर्वर्ज्यंसदाबुधैः अक्षतास्तुयवाःप्रोक्ता इतिपदार्थादर्शे उक्तत्वाद्यवानामेवायंनिषेधोनतंडुलादीनां तंत्रांतरे
महाभिषेकंसर्वत्रशंखेनैवप्रकल्पयेत् सर्वत्रैवप्रशस्तोब्जःशिवसूर्यार्चनंविनेति अन्यत्रापि कुंदंशिरीषंतुलसी

गणेशेधत्तूरबिल्वंतगरंतथार्के धत्तूरमर्कांक्षतमब्जपाणौवर्ज्यैशिवेकेतकशंखवारिइति अथावाहनादिमुद्राः देव
तानेनसंतुष्टासर्वदासुमुखीभवेत् अंगुष्ठौनिक्षिपेत्पाणौमुद्राचावाहनीस्मृता संक्षिप्यनिक्षिपेत्सेयंमुद्रात्वास
नसंज्ञिता अधोमुखीत्वियंचैवस्थापितामुद्रिकामता अंगुष्ठावुच्छ्रितौकुर्यात्संमुखीकरणीभवेत् प्रसृतांगुलिकौ
हस्तौमिथःश्लिष्टौतुसंमुखौ कुर्यात्स्वहृदयेचेयंमुद्राप्रार्थनसंज्ञिका इत्येवंसर्वदेवानांपूजनेषट्प्रदर्शयेत् शिव
पूजायांलिंगमुद्रा उच्छ्रितंदक्षिणांगुष्ठंवामांगुष्ठेनबंधयेत् वामांगुलीर्दक्षिणाभिरंगुलीभिश्चवेष्टयेत् लिंगमुद्रे
यमाख्याताशिवसान्निध्यकारिणीति श्रीकामःशीर्ष्णिकुर्वीतराज्यकामस्तुनेत्रयोः मुखेत्वन्नाद्यकामस्तुपादयोः
सुखकामकृत् हृदयेसर्वकामीचज्ञानार्थीनाभिमंडले राज्यकामस्तुगुह्येवैश्रीवायांरोगशांतिकृत् हेमाद्रौ सम्मु
खीकृत्यहस्तौद्वौकिंचित्संकुचिताङ्गुलीति समाख्यातापंकजीचपंकजप्रसृतैवसा पूर्वोक्तामुकुलीयाचप्रदेशानिःसृतां
गुलिः व्याकोशमुद्रामुकुलापद्ममुद्राप्रदर्शिता अंगुष्ठौवावितानौतुस्वकीयांगुलिवेष्टितौ उच्चौचाभिमुखौहस्तौ
योजयित्वातुनिष्कुरा तर्जन्याकुंचितंकृत्वातथैवचकनीयसी अधोमुखीदृष्टनखास्थितामध्येकरस्यतु चतस्रश्चो
स्थिताःपृष्ठेअंगुलीरेकतः करे नालव्यावस्थितौद्वौतुव्योममुद्राप्रकीर्तिता रामपूजने सप्तदशमुद्रा रामार्चनचंद्रिका
यामगस्त्यः आवाहनीस्थापनीचसान्निधीकरणीतथा सुसन्निरोधिनीमुद्रासंमुखीकरणीतथा सकलीकरणीचैवम
हामुद्रातथैवच आसांलक्षणानि प्रागेवाभिहितानि शंखचक्रगदापद्मधेनुकौस्तुभगारुडाः श्रीवत्सवनमालेच
योनिमुद्रांप्रदर्शयेत् एताभिः सप्तदशभिर्मुद्राभिस्तुविचक्षणः योराममर्चयेन्नित्यंमोहयेत्ससुरेश्वरं द्रावयेदपि
देवेंद्रततः प्रार्थितमाप्नुयात् मूलाधाराद्द्वादशांतमानीतकुसुमांजलिः त्रिस्थानगततेजोभिर्विनीताप्रतिमादिषु
आवाहनीयंमुद्रास्याद्देवार्चनविधौमुने एषैवाधोमुखीमुद्रास्नपनेशस्यतेबुधैः उन्नतांगुष्ठयोगेनमुष्टीकृतकरद्वयं

सन्निधीकरणीमुद्रादेवार्चनविधौमुने अंगुष्ठगर्भिणीसैवमुद्रास्यात्सन्निरोधिनी उत्तानमुष्टियुगलासंमुखीकरणीमता
अंगैरेवांगविन्यासः सकलीकरणीभवेत् अन्योन्यकरसलग्नाविस्तारितकरद्वयी महामुद्रेयमाख्यातान्यूनाधिकस
मापनी कनिष्ठानामिकामध्यान्तस्थांगुष्ठातदग्रतः गोपितांगुष्ठमूलेनसन्नद्धामुकुलीकृता करद्वयेनमुद्रास्याच्छंखाख्ये
यंसुरार्चने अन्योन्याभिमुखस्पर्शव्यत्ययेनतुवेष्टयेत् अंगुलीभिःप्रयत्नेनमंडलीकरणंमुने चक्रमुद्रेयमाख्याताग
दामुद्राततः परम् अन्योन्याभिमुखाश्लिष्टाततः कौस्तुभसंज्ञिता कनिष्ठेन्योन्यसंश्लिष्टे ऽभिमुखेहिपरस्परं वाम
स्यतर्जनीमध्येमध्यानामिकयोरपि वामानामिकसंस्पृष्टातर्जनीमध्यशोभिता पर्यायेणनतांगुष्ठद्वयीकौस्तुभलक्षणा
कनिष्ठान्योन्यसंलग्नाविपरीतातुयोजिता अधस्तात्प्रापितांगुष्ठामुद्रागारुडसंज्ञिका तर्जन्यंगुष्ठमध्यस्थामध्यमाना
मिकाद्वयी कनिष्ठानामिकामध्यतर्जन्यग्रकरद्वयी श्रीवत्ससंज्ञामुद्रेयंवनमालाभवेत्ततः कनिष्ठानामिकामध्यामुष्टिरु
न्नततर्जनी परिभ्रांताशिरस्युच्चैस्तर्जनीभ्यांदिवौकसः योनिमुद्रासमाख्याताद्योतत्करद्वयाश्रिता तर्जन्याकृष्टमध्यां
तास्थितानामिकयुग्मिका मध्यस्थलस्थितांगुष्ठयेयंशस्तामुनेर्चने इतिमुद्रालक्षणं अथसर्वव्रतेषु सामान्यतः पूजा
विधिस्तत्रादौविष्णुव्रतेषु सामान्यतोविष्णुपूजाक्रमोलिख्यते व्रतदिवसे व्रतकर्ताकृतनित्यक्रियःसंभृतपूजोपचारः
धृतशुद्धद्विवासा यागमंडलमागत्य स्वेष्टदेवंनमस्कृत्य व्रतपूजासंकल्पंकुर्यात् ॐमद्येत्यादिपंचांगस्मरणपूर्वकं स्व
गोत्रनामस्मरणंकृत्वात्मनः सर्वपापक्षयादिकामोविष्णुप्रीत्यर्थमेकादश्यादिव्रतांगभूताविष्णुपूजनमहंकरिष्यइति
संकल्पः ततःकलशपूजनंकुर्यात् कलशजले गंगेचयमुनेचैवगोदावरिसरस्वति नर्मदेसिंधुकावेरिजलेस्मिन्सन्निधिं
कुरु ब्रह्मांडोदरतीर्थानिकरैःस्पृष्टानितेरवे तेनसत्येनमेदेवतीर्थंदेहिदिवाकर गायत्र्यामूलमंत्रेणचदेवंवुध्यातजलं
संपूज्यस्ववामेषट्कोणमंडले शंखस्थापनंकुर्यात् त्रिपादिकायांवह्निमंडलायनम इतिसंपूज्य तत्रशंखंस्थापयित्वा

अर्कमंडलायनम इतिसंपूज्य त्वंपुरासागरोत्पन्नो विष्णुनाविधृतःकरे नामितःसर्वदेवैश्चपांचजन्यनमोस्तुते इतिसंप्रार्थ्य तत्रकलशजलंदत्त्वा चंद्रमंडलायनम इतिसंपूज्य ततोघंटापूजनंकुर्यात् आगमार्थंतुदेवानांगमनार्थंतुरक्षसां कुर्वेघंटारवंतस्माद्देवताहूलादलक्षणं सर्ववाद्यमयीघंटाविष्णोश्चात्यन्तवल्लभा यस्यावाद्यप्रभावेणजायतेभुविमंगलम् इतिघंटापूजनम् ततःस्वदेहेपुरुषसूक्तन्यासान्कुर्यात् तत्रादौविनियोगः सहस्रशीर्षेत्यादीनांषोडशर्चांनारायणऋषिः आद्यानां पंचदशानां अनुष्टुप्छंदः अन्त्यायाश्चत्रिष्टुप्छंदः सर्वासांषोडशर्चां महापुरुषोदेवता जगद्बीजं न्यासे पूजायांच विनियोगः ॥ ॐसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् सभूमिꣳसर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् वामकरायनमः १ ॥ पुरुषएवेदꣳ सर्वंयद्भूतंयच्चभाव्यम् उतामृतत्वस्येशानोयदन्नेनातिरोहति दक्षिणकरायनमः २ ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि वामपादायनमः ३ त्रिपादूर्ध्वंउदैत्पुरुषः पादोस्येहाभवत्पुनः ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि दक्षिणपादायनमः ४ ॥ ततोविराडजायतविराजोऽअधिपुरुषः सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः वामजानुनेनमः ५ ॥ तस्माद्यज्ञात्सर्वहुतःसम्भृतम्पृषदाज्यम् पशूंस्तांश्चक्रेवायव्यानारण्याग्राम्याश्चये दक्षिणजानुनेनमः ६ ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानियज्ञिरे छंदाꣳसियज्ञिरेतस्माद्यजुस्तस्मादजायत वामोरवेनमः ७ ॥तस्मादश्वाऽअजायंतयेकेचोभयादतः गावोहयज्ञिरे तस्मात्तस्माज्जाताऽअजावयः दक्षिणोरवेनमः ८ ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः तेनदेवाऽअयजंतसाध्याऽऋषयश्चये नाभ्यैनमः ९ ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् मुखंकिमस्यासीत्किंबाहूकिमूरूपादाऽउच्येते हृदयायनमः १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ऊरूतदस्ययद्वैश्यःपद्भ्याꣳ शूद्रोऽअजायत कंठायनमः

चंद्रमामनसोजातश्चक्षोः सूर्य्योऽअजायत श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत मुखायनमः ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौःसमवर्त्तत पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकांऽअकल्पयन् शिरसेनमः १३ यत्पुरुषेणहविषादेवायज्ञमतन्वत वसन्तोस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः शिखायैनमः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिस्सप्तसमिधःकृताः देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषम्पशुम् कवचायनमः १५ ॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः अस्त्रायनमः १६ ॥ अथध्यानं शांताकारंभुजगशयनंपद्मनाभंसुरेशंविश्वाधारंगगनसदृशंमेघवर्णंशुभांगं लक्ष्मीकांतंकमलनयनंयोगिभिर्ध्यानगम्यं वंदेविष्णुंभवभयहरंसर्वलोकैकनाथम् १ ॥ ध्येयःसदासवितृमंडलमध्यवर्त्तीनारायणःसरसिजासनसन्निविष्टः केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः २ ॥ इति ध्यात्वा पूजामारभेत् आगच्छदेवदेवेशतेजोराशेजगत्पते क्रियमाणांमयापूजांगृहाणसुरसत्तम सहस्रशीर्षेत्यावाहनं १ ॥ नानारत्नसमायुक्तंकार्त्तस्वरविभूषितं आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां पुरुषएवेत्यासनं ३ ॥ पाद्यंगृहाणदेवेशसर्वक्षेमकरंविभो भक्त्यामयार्पितंदेवलोकनाथजगत्पते एतावानस्येतिपाद्यम् ३ ॥ नमस्तेदेवदेवेशनमस्तेधरणीधर नमस्तेजगदाधारअर्घ्यंनः प्रतिगृह्यताम् त्रिपादूर्ध्वेत्यर्घ्यम् ४ ॥ कर्पूरवासितं तोयंमंदाकिन्याः समाहृतं आचम्यतांजगन्नाथमयादत्तंहिभक्तितः ततोविराडित्याचमनम् ५ ॥ अथपंचामृतस्नानं ॐपयः पृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः पयस्वतीःप्रदिशः सन्तुमह्यम् १ इतिपयःस्नानं देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् इतिशुद्धस्नानं २ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् इतिदधिस्नानं देवस्यत्वेतिशुद्धस्नानम्

भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् नाभ्याआसीदितिनैवेद्यम् १३ सर्वपापहरंदिव्यंगांगेयंनिर्मलंजलं पानार्थंचमयादत्तंगृहाणपुरुषोत्तम पुनराचमनीयं १४ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि यत्पुरुषेणेतिफलम् १५ पूगीफलंमहादिव्यंनागवल्लीदलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यताम् इतितांबूलं १६ अथदक्षिणा हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतः शांतिंप्रयच्छमे सप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुम् इतिदक्षिणाद्रव्यम् १७ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवज्योतिषांज्योतिरार्तिक्यंप्रतिगृह्यताम् ॥ १८ ॥ इतिनीराजनम् ॥ नमस्तेपुंडरीकाक्षनमस्तेस्त्वमरप्रिय नमस्तेजगदाधारदेवदेवनमोस्तुते यज्ञेनयज्ञमितिपुष्पांजलिः ॥ १९ ॥ अथान्यानि देवसूक्तानि पठित्वा सहस्रनामस्तवादिभिरपिपुष्पांजलीसमर्पणंकुर्यात् ततःप्रदक्षिणा यानिकानिचपापानिजन्मांतरकृतानिच तानितानिप्रणश्यंतिप्रदक्षिणायाः पदेपदेइति प्रदक्षिणा नमः सर्वहितार्थायजगदाधारहेतवे साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृत इतिनमस्कारः यन्मयाभक्तियोगेनपत्रंपुष्पंफलंजलं निवेदितंचनैवेद्यंतद्गृहाणानुकंपया इतिसर्वपदार्थसमर्पणम् आवाहनंनजानामिनैवजानामिपूजनं विसर्जनंनजानामित्वंगतिः परमेश्वर एवंपूर्वंपूजांसमाप्य व्रतांतेदक्षिणान्नदानादिभिर्ब्राह्मणान्परितोष्य तैरनुज्ञातोव्रतपारणंकुर्यात् इतिविष्णुव्रतेषुसामान्यपूजाविधिः अथशिवव्रतेषुसामान्याशिवपूजाविधिः तत्रापिव्रतकर्ता कृतनित्यक्रियः पूजोपचारसंचयंकृत्वासंकल्पंकुर्यात् ॐमद्येत्यादिसर्वपापक्षयोत्तरधर्मार्थकाममोक्षार्थंसांबसदाशिवप्रसादसिद्ध्यर्थं शिवपूजाव्रतमहंकरिष्ये यथाविधिनाकलशस्थापनंकृत्वा अर्घ्यपात्रस्थापनं विधाय पंचब्रह्ममंत्रन्यासंकुर्यात् स्त्रीशूद्राभ्यांपंचाक्षरन्यासोविधेयः ॐअस्यश्रीशिवपंचाक्षरमंत्रस्य वामदे

अथघृतस्नानं घृतंघृतपावानः पिवतवसांवसापावानः पिवतांतरिक्षस्यहाविरसिस्वाहा दिशः प्रदिशआदिशो विदिशऽउद्दिशोदिग्भ्यः स्वाहा इतिघृतस्नानं देवस्यत्वेतिशुद्धस्नानं अथमधुस्नानं मधुवाताऽ ऋतायतेमधुक्षरंतिसिंधवः माध्वीर्न्नः सन्त्वोषधीः मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनः पिितामधुमान्नोवनस्पतिर्मधुमां अस्तुसूर्यः माध्वीर्गावोभवन्तुनः इतिमधुस्नानं देवस्यत्वेति शुद्धस्नानम् स्वादुपवस्वदिव्यायजन्मनेस्वादुरिंद्रायसुहवीतनाम्ने स्वादुर्मित्राय वरुणाय वायवे वृहस्पतयेमधुमांअदाभ्यः इतिशर्करास्नानं देवस्यत्वेतिशुद्धस्नानम् ५ ततः पंचामृतद्रव्यमेकीकृत्य शर्करारससंयुक्तंपयोदधिघृतंमधु पंचामृतंसमानीतंस्नानार्थंपरमेश्वर इतिपंचामृतस्नानं पुनः शुद्धोदकस्नानं तत आपोहिष्ठेत्यादिऋच-कल्पेनपुन.पंचोपचारै-संपूज्य महाभिषेकं कुर्यात् गंगाचयमुनाचैवनर्मदाचसरस्वती तापीपयोष्णीकृष्णाचताभ्यः स्नानार्थमाहृतम् तोयमेतत्सुखस्पर्शंस्नानीयंप्रतिगृह्यताम् तस्माद्यज्ञात्सर्वहुतः सम्भृतपृषदाज्यम् पशूंस्तांश्चक्रेवायव्यानारण्याग्राम्याश्चये इतिस्नानम् ६ सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् तस्माद्यज्ञात्सर्वहुतऋचेतिवस्त्रं ७ सर्वदेवनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रं सोत्तरीयंगृहाणपरमेश्वर वा्दश्वाऽअजायतेतियज्ञोपवीतम् ८ श्रीखंडचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यताम् तंयज्ञवर्हिषिप्रौक्षन्नितिगंधम् ९ माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यताम् यत्पुरुषंव्यदधुरितिपुष्पम् १० वनस्पतिरसोत्पन्नोगंधाढ्योगंध उत्तमः आघ्रेय सर्वदेवानांधूपोयंप्रतिगृह्यताम् ब्राह्मणोस्येतिधूपम् ११ आज्यंचवर्त्तिसयुक्तंवन्हिनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहम् चंद्रमामनसोजातइतिदीपम् १२ अन्नंचतुर्विधंस्वादुरसै.पड्भिः समन्वितं

भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् · नाभ्याआसीदितिनैवेद्यम् १३ सर्वपापहरंदिव्यंगांगेयंनिर्मलंजलं पा
नार्थंचमयादत्तगृहाणपुरुषोत्तम पुनराचमनीयं १४ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्म
निजन्मनि यत्पुरुषेणेतिफलम् १५ पूगीफलंमहादिव्यंनागवल्लीदलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यताम्
इतितांबूलं १६ अथदक्षिणा हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतः शांतिंप्रयच्छमे सप्तास्या
सन्परिधयस्त्रिःसप्त समिधः कृताः देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुम् इतिदक्षिणाद्रव्यम् १७ चंद्रादित्यौच
धरणीविद्युदग्निस्तथैवच त्वमेवज्योतिषांज्योतिरार्त्तिक्यंप्रतिगृह्यताम् ॥ १८ ॥ इतिनीराजनम् ॥
नमस्तेपुंडरीकाक्षनमस्तेस्त्वमरप्रिय नमस्तेजगदाधारदेवदेवनमोस्तुते यज्ञेनयज्ञमितिपुष्पांजलिः ॥ १९ ॥
अथान्यानि देवसूक्तानि पठित्वा सहस्रनामस्तवादिभिरपिपुष्पांजलीसमर्पणंकुर्यात् ततःप्रदक्षिणा
यानिकानिचपापानिजन्मांतरकृतानिच तानितानिप्रणश्यंतिप्रदक्षिणायाः पदेपदेइति प्रदक्षिणा नमः
सर्वहितार्थायजगदाधारहेतवे साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृत इतिनमस्कारः यन्मयाभक्तियोगे
नपत्रंपुष्पंफलंजलं निवेदितंचनैवेद्यंतद्गृहाणानुकंपया इतिसर्वपदार्थसमर्पणम् आवाहनंनजानामिनैवजाना
मिपूजनं विसर्जनंनजानामित्वंगतिः परमेश्वर एवंपूर्वपूजांसमाप्य व्रतांतेदक्षिणान्नदानादिभिर्ब्राह्मणान्परितो
ष्य तैरनुज्ञातोव्रतपारणंकुर्यात् इतिविष्णुव्रतेषुसामान्यपूजाविधिः अथशिवव्रतेषुसामान्याशिवपूजाविधिः तत्रा
पिव्रतकर्त्ता कृतनित्यक्रियः पूजोपचारसंचयंकृत्वासंकल्पंकुर्यात् ॐमद्येत्यादिसर्वपापक्षयोत्तरधर्मार्थकाममोक्षा
र्थंसांबसदाशिवप्रसादसिद्ध्यर्थं शिवपूजाव्रतमहंकरिष्ये यथाविधिनाकलशस्थापनंकृत्वा अर्घ्यपात्रस्थापनं
विधाय पंचब्रह्ममंत्रन्यासंकुर्यात् स्त्रीशूद्राभ्यांपंचाक्षरन्यासोविधेयः ॐअस्यश्रीशिवपंचाक्षरमंत्रस्य वामदे

भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् नाभ्याआसीदितिनैवेद्यम् १३ सर्वपापहरंदिव्यंगांगेयंनिर्मलंजलं पा
नार्थंचमयादत्तंगृहाणपुरुषोत्तम पुनराचमनीयं १४ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्म
निजन्मनि यत्पुरुषेणेतिफलम् १५ पूगीफलंमहादिव्यंनागवल्लीदलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यताम्
इतितांबूलं १६ अथदक्षिणा हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतः शांतिंप्रयच्छमे सप्तास्या
सन्परिधयस्त्रिःसप्त समिधः कृताः देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुम् इतिदक्षिणाद्रव्यम् १७ चंद्रादित्यौच
धरणीविद्युदग्निस्तथैवच त्वमेवज्योतिषांज्योतिरार्तिक्यंप्रतिगृह्यताम् ॥ १८ ॥ इतिनीराजनम् ॥
नमस्तेपुंडरीकाक्षनमस्तेस्त्वमरप्रिय नमस्तेजगदाधारदेवदेवनमोस्तुते यज्ञेनयज्ञमितिपुष्पांजलिः ॥ १९ ॥
अथान्यानि देवसूक्तानि पठित्वा सहस्रनामस्तवादिभिरपिपुष्पांजलीसमर्पणंकुर्यात् ततःप्रदक्षिणा
यानिकानिचपापानिजन्मांतरकृतानिच तानितानिप्रणश्यंतिप्रदक्षिणपदेपदे इति प्रदक्षिणा नमः
[illegible] जगदाधारदेवाय [illegible] इतिनमस्कारः यन्मयाभक्तियोगे
[illegible] इतिसर्वपदार्थसमर्पणम् आवाहनंनजानामिनैवजाना
[illegible] परमेश्वर [illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]

वक्रापिरनुष्टुप्छंदः श्रीसदाशिवोदेवतान्यासपूजादौविनियोगः वामदेवऋषयेनमः शिरसि अनुष्टुप्छंदसेनमोमुखे
श्रीसदाशिवोदेवतायैनमोः हृदि सदाशिवप्रीतयेन्यासपूजादौविनियोगः सर्वांगेषु १ उँनंतत्पुरुषायनमो हृदि
मअघोरायनमः पादयोः शिंसद्योजातायनमोगुह्ये वांवामदेवायनमोमूर्द्धनि यंईशानायनमोमुखे उँअंगुष्ठाभ्यांन
मः मंतर्जनीभ्यांनमः मेमध्यमाभ्यांनमः शिंअनामिकाभ्यांनमः वांकनिष्ठिकाभ्यांनमः यंकरतलकरपृष्ठाभ्यांनमः
एवंहृदयादिन्यासंकुर्यात् अथध्यानं सूर्यकोटिप्रतीकाशंत्रिनेत्रंचंद्रशेखरं त्रिशूलवज्रसच्चक्रंपाशां
कुशधरंविभुम् वरदाभयपाणिंचसर्वाभरणभूषितं उमालिंगितवामांगंशांतंध्यायेत्सदाशिवम् इतिध्यानम् अथा
वाहनम् आगच्छत्वंमहादेवउमयासहशंकर ममपूजांगृहाणेमांप्रसन्नोभवसर्वदा सद्योजातंप्रपद्यामीत्यावाहनम्
१ भद्रपीठमिदंदेवनानाभरणभूषितं मयानिवेदितभक्त्या आसनंप्रतिगृह्यताम् सद्योजातायवैनम इत्यासनम् ॥
२ ॥ पाद्यंगृहाणदेवेशगंधपुष्पाक्षतैर्युतं कुशोदकसमायुक्तंप्रीत्यर्थंप्रतिगृह्यताम् भवेभवेनातिभवेभवस्वमांपाद्यंस
मर्पयामि ॥ ३ ॥ सदाशिवनमस्तेस्तुभक्तानामभयंकर गंधपुष्पाक्षतैर्युक्तंगृहाणार्घ्यंनमोस्तुते भवोद्भवायनमः
अर्घ्यंसमर्पयामि ॥ ४ ॥ गंगाजलंसमानीतंसुवर्णकलशेस्थितं गृहाणाचमनंदेवपार्वत्यासहितप्रभो नमःशि
वायआचमनंसमर्पयामि ॥ ५ ॥ मधुपर्कंगृहाणेमंदधिमध्वाज्यसंयुतं गृह्योक्तेनविधानेनजगदानंदकारक वाम
देवायनमःमधुपर्कंसमर्पयामि ॥ ६ ॥ आप्यायस्वेतिक्षीरस्नानं १ देवस्यत्वेतिशुद्धस्नानम् ॥ २ ॥ घृतंघृतपावान
इतिघृतस्नानं ३ मधुवातेतिमधुस्नानं ४ स्वादुपवस्वेति शर्करास्नानं ॥ ५ ॥ असौयस्ताम्रोअरुणउतबभ्रुःसुमंग
लःयेचैनꣳरुद्राअभितोदिक्षुश्रिताः सहस्रशोवैषाꣳहेडईमहे शुद्धस्नानं ॥ ६ ॥ पट्टकार्पाससंभूतेनानारागसम
न्विते मयोपपादितेतुभ्यंवाससीप्रातिगृह्यताम् ज्येष्ठायनमःवस्त्रं ॥ ७ ॥ कार्पासनिर्मितंसूत्रंब्रह्मग्रंथिसमन्वितं

भक्त्यादत्तंमयाशंभोगृहाणशशिशेखर श्रेष्ठायनमः यज्ञोपवीतम् ॥ ८ ॥ सुगंधचंदनंदिव्यंकस्तूरीकुंकुमान्वितं मयानिवेदितंस्वामिन्गृहाणजगतीपते कालायनमःगंधम् ॥ ९ ॥ अक्षताःपरमाःशुभ्रारजनीचूर्णमिश्रिताः मयार्पितागृहाणेशसृष्टिस्थित्यंतकारक कलविकरणायनमःअक्षतान्समर्पयामि १० मल्लिकामालतीजातीचंपकःपाटली तथा मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां सर्वभूतदमनायपुष्पाणिसमर्पयामि ॥ ११ ॥ अथांगपूजा सद्योजातायनमः पादौपूजयामि वामदेवायनमः गुल्फौपूजयामि अघोरायनमः जंघेपूजयामि तत्पुरुषायनमः जानुनीपूजयामि ईशानायनमः गुह्यंपूजयामि महादेवायनमः नाभिंपूजयामि विश्वकर्त्रेनमः उदरंपूजयामि सर्वतोमुखायनमः पार्श्वेपूजयामि स्थाणवेनमः स्तनौपूजयामि नीलकंठायनमः कंठंपूजयामि शंभवेनमः नेत्रत्रयंपूजयामि शूलपाणयेनमः श्रोत्रेपूजयामि पिनाकिनेनमः ललाटंपूजयामि शिवायनमः शिरःपूजयामि पशुपतयेनमः शिखांपूजयामि महादेवायनमः सर्वांगंपूजयामि ततश्चाष्टोत्तरशतनामभिर्विल्वपत्राणिसमर्पयेत् ततोरुद्रसूक्तादिभिर्महाभिषेकंकुर्यात् वनस्पतिरसोत्पन्नोगंधाढ्यःसुमनोहरः आघ्रेयःसर्वदेवानां धूपोयंप्रतिगृह्यताम् वलायनमःधूपंसमर्पयामि ॥ १२ ॥ पंचवर्त्तिसमायुक्तंवह्निनाज्वालितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहम् वलप्रमथनायदीपंसमर्पयामिनमः ॥ १३ ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्त्यानिवेदितंचारुनैवेद्यंप्रतिगृह्यताम् सर्वभूतदमनायनमःनैवेद्यंसमर्पयामि १४ उत्तरापोशनंहस्तप्रक्षालनंउदकुंभंप्रदास्यामिशीतलोदकपूरितं कर्पूरचंदनाढ्यंचउशीरामृतसंयुतं मनोन्मनायनम आचमनीयंसमर्पयामि ॥ १५ ॥ नानाविधफलश्रेष्ठंपुत्रपौत्रफलप्रदम् सर्वैश्वर्यप्रदंनित्यंगृहाणेष्टफलप्रदमितिफलम् ॥ १६ ॥ हिरण्यगर्भगर्भस्थंहेमवीजंविभावसोःअनंतपुण्यफलदमतःशांतिंप्रयच्छमे इतिदक्षिणा चक्षुष्प्रदंचलोकानांतिमिरस्यनिवारणं

म्रार्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वर शशिशेखरायनमःनीराजनंसमर्पयामि १७ विश्वेश्वरविरूपाक्ष
विश्वरूपसदाशिव शरणंभवभूतेशकरुणाकरशंकर इति पुष्पांजलिंसमर्पयामिनमः १८ हरशंभोमहादेव
समस्तसुरवल्लभ शिवशंकरसर्वात्मन्नीलकंठनमोस्तुते २० इतिनमस्कारः ॥ यानिकानिचपापानिजन्मां
तरकृतानिच तानितानिप्रणश्यंतिप्रदक्षिणपदेपदे ॥ इतिप्रदक्षिणा २१ नमस्तेपार्वतीनाथनमस्तेभ
क्तवत्सल ईप्सितंमेफलंदेहिभवान्यानंदवर्धन २२ ॥ इतिप्रार्थना एकादशफलैर्युक्तंवेणुपात्रसमन्वितं वा
यनंदेवदेवस्यददामिगिरिजापतेः पार्वत्यानिर्मितंश्रेष्ठंस्त्रीणांसौभाग्यदायकं वायनंद्विजवर्याग्रश्रतःशांतिंप्रय
च्छमे इतिवायनदानम् यस्यस्मृत्याचनामोक्त्यातयोयज्ञक्रियादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेमहेश्वरम् अ
नेनषोडशोपचारपूजनेन भवानीशंकरः प्रीयतामित्युक्त्वापूजनंसमर्पयेत् गच्छगच्छसुरश्रेष्ठभवानीसहितप्रभो कै
लासवासिन्देवेशपुनरागमनायच इतिविसर्जनं इतिश्रीशिवव्रतेषु पूजापद्धतिःसमाप्ता अथाष्टोत्तरशतनामा
नि एभिरेवशिवपूजनमप्युक्तं ओंशिवायनमः १ ओंमहेश्वरायनमः २ ओंशंभवेनमः ३ ओंपिनाकिनेन
मः ४ ओंशशिशेखरायनमः ५ ओंवामदेवायनमः ॥ ६ ॥ ओंविरूपाक्षायनमः ॥ ७ ॥ ओंकपर्दिनेनमः ८
ओंनीललोहितायनमः ॥ ९ ॥ ओंशंकरायनमः ॥ १० ॥ ओंशूलपाणयेनमः ॥ ११ ॥ ओंखट्वांगिनेनमः १२
विष्णुवल्लभायनमः १३ शिपिविष्टायनमः १४ अम्बिकानाथायनमः १५ श्रीकंठायनमः १६
भक्तवत्सलायनमः १७ भवायनमः १८ शर्वायनमः १९ त्रिलोकेशायनमः २० शितिकंठायनमः २१
शिवाप्रियायनमः २२ उग्रायनमः २३ कपालिनेनमः २४ कामारयेनमः २५ अंधकासुरसूदनायनमः २६
गंगाधरायनमः २७ ललाटाक्षायनमः २८ कालकालायनमः २९ कृपानिधयेनमः ३० भीमायनमः ३१

परशुहस्तायनमः ३२ मृगपाणयेनमः ३३ जटाधरायनमः ३४ कलासवासिनेनमः ३५ कवाचेनेनमः ३६ कठोरायनमः ॥ ३७ ॥ त्रिपुरांतकायनमः ३८ वृषांकायनमः ३९ वृषभारूढायनमः ४० भस्मोद्धूलितविग्रहायनमः ४१ सामप्रियायनमः ४२ स्वरमयायनमः ४३ त्रिमूर्त्तयेनमः ४४ अवनीश्वरायनमः ४५ सर्वज्ञायनमः ४६ परमात्मनेनमः ४७ सोमसूर्याग्निलोचनायनमः ४८ हविषेनमः ४९ यज्ञमयायनमः ५० सोमायनमः ५१ पंचवक्त्रायनमः ५२ सदाशिवायनमः ५३ विश्वेश्वरायनमः ५४ वीरभद्रायनमः ५५ गणनाथायनमः ५६ प्रजापतयेनमः ५७ हिरण्यरेतसेनमः ५८ दुर्धर्षायनमः ५९ गिरिशायनमः .६० गिरिशायनमः ६१ अनघायनमः ६२ भुजंगभूषणायनमः ६३ भर्गायनमः ६४ गिरिधन्वनेनमः ६५ गिरिप्रियायनमः ६६ अष्टमूर्त्तयेनमः ६७ अनेकात्मनेनमः ६८ सात्त्विकायनमः ६९ शुद्धविग्रहायनमः ७० शाश्वतायनमः ७१ खंडपरशवेनमः ७२ अजायनमः ७३ पाशविमोचनायनमः ७४ कृत्तिवाससेनमः ७५ पुरारातयेनमः ७६ भगवतेनमः ७७ प्रमथाधिपायनमः ७८ मृत्युंजयायनमः ७९ सूक्ष्मतनवेनमः ८० जगद्व्यापिनेनमः ८१ जगद्गुरवेनमः ८२ व्योमकेशायनमः ८३ महासेनजनकायनमः ८४ चारुविक्रमायनमः ८५ रुद्रायनमः ८६ भूतपतयेनमः ८७ स्थाणवेनमः ८८ अहिर्बुध्न्यायनमः ८९ दिगंबरायनमः ९० मृडायनमः ९१ पशुपतयेनमः ९२ देवायनमः ९३ महादेवायनमः ९४ अव्ययायनमः ९५ हरयेनमः ९६ पुष्पदंतभिदेनमः ९७ अव्यग्रायनमः ९८ दक्षाध्वरहरायनमः ९९ हरायनमः १०० भगनेत्रभिदेनमः १ अव्यग्रायनमः २ सहस्राक्षायनमः ३ सहस्रपदेनमः ४ अपवर्गप्रदायनमः ५ अनंतायनमः ६ तारकायनम. ७ परमेश्वरायनमः ८ इत्यष्टोत्तरशतनामपूजनम् विल्वपत्रैःप्रशस्तैर्वापुष्पैश्चतुलसीदलैः तिलाक्षतैर्यजेद्देवंजीवन्मुक्तोनसंशय इतिफलस्तुतावुक्तत्वात् अथ

र्घ्यातिक्यंकलिपतंभक्त्यागृहाणपरमेश्वर शशिशेखरायनमःनीराजनंसमर्पयामि १७ विश्वेश्वरविरूपाक्ष
विश्वरूपसदाशिव शरणंभवभूतेशकरुणाकरशंकर इति पुष्पांजलिंसमर्पयामिनमः १८ हरशंभोमहादेव
समस्तसुरवल्लभ शिवशंकरसर्वात्मन्नीलकंठनमोस्तुते २० इतिनमस्कारः ॥ यानिकानिचपापानिजन्मां
तरकृतानिच तानितानिप्रणश्यंतिप्रदक्षिणपदेपदे ॥ इतिप्रदक्षिणा २१ नमस्तेपार्वतीनाथनमस्तेभ
क्तवत्सल ईप्सितंमेफलंदेहिभवान्यानंदवर्धन २२ ॥ इतिप्रार्थना एकादशफलैर्युक्तंवेणुपात्रसमन्वितं वा
यनंदेवदेवस्यददामिगिरिजापतेः पार्वत्यानिर्मितंश्रेष्ठंस्त्रीणांसौभाग्यदायकं वायनंद्विजवर्यायश्रतःशांतिंप्रय
च्छमे इतिवायनदानम् यस्यस्मृत्याचनामोक्त्यातयोयज्ञक्रियादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेमहेश्वरम् अ
नेनषोडशोपचारपूजनेन भवानीशंकरः प्रीयतामित्युक्त्वापूजनंसमर्पयेत् गच्छगच्छसुरश्रेष्ठभवानीसहितप्रभो कै
लासवासिन्देवेशपुनरागमनायच इतिविसर्जनं इतिश्रीशिवव्रतेषु पूजापद्धतिःसमाप्ता अथाष्टोत्तरशतनामा
नि एभिरेवशिवपूजनमप्युक्तं ओंशिवायनमः १ ओंमहेश्वरायनमः २ ओंशंभवेनमः ३ ओंपिनाकिनेन
मः ४ ओंशशिशेखरायनमः ५ ओंवामदेवायनमः ॥ ६ ॥ ओंविरूपाक्षायनमः ॥ ७ ॥ ओंकपर्दिनेनमः ८
ओंनीललोहितायनमः ॥ ९ ॥ ओंशंकरायनमः ॥ १० ॥ ओंशूलपाणयेनमः ॥ ११ ॥ ओंखट्वांगिनेनमः १२
विष्णुवल्लभायनमः १३ शिपिविष्टायनमः १४ अम्बिकानाथायनमः १५ श्रीकंठायनमः १६
भक्तवत्सलायनमः १७ भवायनमः १८ शर्वायनमः १९ त्रिलोकेशायनमः २० शितिकंठायनमः २१
कपालभृतेनमः २२ उग्रायनमः २३ कपालिनेनमः २४ कामारयेनमः २५ अंधकासुरसूदनायनमः २६
गंगाधरायनमः २७ ललाटाक्षायनमः २८ कालकालायनमः २९ कृपानिधयेनमः ३० भीमायनमः ३१

परशुहस्तायनमः ३२ मृगपाणयेनमः ३३ जटाधरायनमः ३४ कैलासवासननमः ३५ कवाचनेनमः ३६
कठोरायनमः ॥ ३७ ॥ त्रिपुरांतकायनमः ३८ वृषांकायनमः ३९ वृषभारूढायनमः ४० भस्मोद्धूलितविग्रहा
यनमः ४१ सामप्रियायनमः ४२ स्वरमयायनमः ४३ त्रिमूर्त्तयेनमः ४४ अवनीश्वरायनमः ४५ सर्वज्ञाय
नमः४६ परमात्मनेनमः ४७ सोमसूर्याग्निलोचनायनमः ४८ हविपेनमः ४९ यज्ञमयायनमः ५०सोमायनमः५१
पंचवक्त्रायनमः ५२ सदाशिवायनमः ५३ विश्वेश्वरायनमः ५४ वीरभद्रायनमः ५५ गणनाथायनमः ५६ प्र
जापतयेनमः ५७ हिरण्यरेतसेनमः ५८ दुर्धर्षायनमः ५९ गिरिशायनमः ६० गिरिशायनमः ६१
अनघायनमः ६२ भुजंगभूषणायनमः ६३ भर्गायनमः ६४ गिरिधन्वनेनमः ६५ गि
रिप्रियायनमः ६६ अष्टमूर्त्तयेनमः ६७ अनेकात्मनेनमः ६८ सात्त्विकायनमः ६९ शुद्धविग्रहायनमः ७०
शाश्वतायनमः ७१ खंडपरशवेनमः ७२ अजायनमः ७३ पाशविमोचनायनमः ७४ कृत्तिवाससेनमः ७५
पुरारातयेनमः ७६ भगवतेनमः ७७ प्रमथाधिपायनमः ७८ मृत्युंजयायनमः ७९ सूक्ष्मतनवेनमः ८०जगद्व्या
पिनेनमः ८१ जगद्गुरवेनमः ८२ व्योमकेशायनमः ८३ महासेनजनकायनमः ८४ चारुविक्रमायनमः ८५
रुद्रायनमः ८६ भूतपतयेनमः ८७ स्थाणवेनमः ८८ अहिर्बुध्न्यायनमः ८९ दिगंबरायनमः ९० मृडायनमः ९१
पशुपतयेनमः ९२देवायनमः९३महादेवायनमः९४अव्ययायनमः ९५ हरयेनमः ९६ पुष्पदंतभिदेनमः ९७ अव्य
ग्रायनमः ९८ दक्षाध्वरहरायनमः ९९हरायनमः १००भगनेत्रभिदेनमः १ अत्युग्रायनमः२सहस्राक्षायनमः३ सह
स्रपदेनमः४अपवर्गप्रदायनमः५ अनंतायनमः ६ तारकायनमः ७ परमेश्वरायनमः८ इत्यष्टोत्तरशतनामपूजनम्
विल्वपत्रैःप्रशस्तैर्वापुष्पैश्चतुलसीदलैः तिलाक्षतैर्यजेद्देवंजीवन्मुक्तोनसंशय इतिफलस्तुतावुक्तत्वात् अथ

व्रतभंगेसंपूर्णताविधिःहेमाद्रौभविष्ये युधिष्ठिरउवाच संपूर्णतामनुष्ठानंव्रतानांवदकेशव कुरुप्रसादंगुह्यार्थमेतन्मेव
क्तुमर्हसि श्रीकृष्णउवाच साधुसाधुमहाभागशृणुराजन्युधिष्ठिर रहस्यानांरहस्यंतेकथयामिव्रतेनघ संपूर्णताकृ
तायव्रतंस्यात्सम्यक्फलप्रदं यच्चीर्णंनरनारीभिर्भवेत्संपूर्णकारकं अवश्यंतत्प्रकर्तव्यंसंपूर्णफलकांक्षिभिः किं
चिद्व्रतंप्रमादेनयद्भग्नंव्रतिनांस्थितं तत्संपूर्णंभवेत्सर्वंव्रतेनानेनपांडव उपद्रवेबहुविधेमहामोहादिसंभवे यद्व्र
तंकिंचिदेवस्याद्भग्नंविघ्नविनाशकं तत्संपूर्णंभवेत्पार्थसत्यंसत्यंनसंशयः कांचनंरूप्यकंरूपंशिल्पिनातुघटापयेत् भ
ग्नव्रतस्ययोदेवस्तस्यरूपंविनिर्मितं व्रतंस्त्रीपुंसयोश्चैवप्रारब्धंयद्धृतंकिल नचनिष्पादितंकिंचिद्दैवात्सर्वंतथास्थितं
द्विभुजंपंकजारूढंसौम्यंप्रहसिताननं निष्पादितंशिल्पिनाचतस्मिन्नेवदिनेपुनः व्रतदिनेइत्यर्थः तन्मानेतुपु
नःप्रातर्ब्राह्मणोविधिनागृहे स्नापयेत्पयसादध्नाघृतक्षौररसांबुभिः गंधचंदनपुष्पैश्चपूजांकुर्यात्समाहितः तोय
पूर्णस्यकुंभस्यमुखेविन्यस्यदेवता धूपदीपाक्षतैःपुष्पैर्वस्त्रैर्बहुप्रकारकैः अर्घ्यंप्रदद्यात्तन्नाम्नामंत्रेणानेनपांडव उ
पासनस्यदानस्यप्रायश्चित्तंकृतंजले शरणंवैप्रपन्नाःस्मःकुरुष्वाद्यदयांपुनः प्रसन्नोभवभीतस्यभिन्नाचार्यंव्रतस्यच
कुरुप्रसादंसंपूर्णंव्रतंसंजायतांमम यच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्मणि तत्सर्वंत्वत्प्रसादेनसंपूर्णंजायतांपुनः
पूर्वदक्षिणपश्चाच्चउत्तरेपुबलिंहरेत् उपर्यधस्तात्सर्वेभ्योदिक्पालेभ्योनमोनमः इदमर्घ्यमिदंपाद्यंतेभ्यस्तेभ्यो
नमोनमः पादौचजानुनीचैवकटिंशीर्षकवक्षसी कुक्षिंतुहृदयंपृष्ठंबाहूचक्षुःसशिरोरुहान् पूजयित्वास्यदेवस्यत
तःपश्चात्क्षमापयेत् पूजितस्त्वंयथाशक्त्यानमस्तेस्तुसुरोत्तम ऐहिकामुष्मिकांचैवकार्यसिद्धिंचदस्वमे एवंक्षमा
पयित्वातंदेवरूपंविधानतः ॥ तन्मूर्तिंचद्विजातिभ्योविधिवत्प्रतिपादयेत् ॥ स्थित्वापूर्वमुखोविप्रोगृह्णी
याद्दर्भपाणिना ॥ विप्रहस्तेप्रयच्छेत्तुदाताचैवोत्तरामुखः ॥ मंत्रेणानेनकौंतेयसोपवासःप्रयत्नतः

इदंव्रतंमयाखंडंकृतमासीत्पुरा॥द्विज तत्सर्वंपूर्णमेवास्तुतवमूर्त्तिप्रदानतः ब्राह्मणोपिप्रयच्छेतमंत्रेणानेनतद्व्रतं वाक्यं पूर्णमतःपूजाव्रतेनानेनतेपुरा संपूर्णंस्यात्प्रसादेनतवपूर्णमनोरथाः ब्राह्मणायत्प्रभाषंतेतन्ममंतेदिवौकसः सर्वं देवमयाविप्रानतद्वचनमन्यथा जलधिःक्षारतांनीतःपावकःसर्वभक्ष्यतां सहस्रनेत्रःशक्रोपिकृतोविप्रैर्महात्माभिः ब्राह्मणानांतुवचसाब्रह्महत्याविनश्यति अश्वमेधफलसाग्रंलभ्यतेनात्रसंशयः व्यासवाल्मीकिवचनात्पराशरव शिष्ययोः नारदस्यभृगोरुक्त्यापूर्णंभवतुतेव्रतं यद्ब्राह्मणास्तुष्टतमावदंतितद्देवताःकर्मभिराचरंति तुष्टेषुतुष्टान्मुनयो वदंतिप्रत्यक्षदेवेषुपरोक्षदेवान् एवंविधविधानेनगृहीत्वाब्राह्मणोव्रजेत् दातातत्प्रेषयेत्सर्वंब्राह्मणस्यगृहेस्वयम् ततःपंचमहायज्ञान्निर्वपेद्भोजनादिकं एवंयःकुरुतेभक्त्याव्रतमेतन्नृपोत्तम तस्यसंपूर्णतांयातितद्व्रतंयत्पुराकृतं खंडंसंपूर्णतांयातिप्रसन्नेव्रतदैवते भग्नानियानिमदमोहवशाद्गृहीत्वाजन्मांतरेष्वपिनरेणगतस्मरेण संपूर्णपू जनपरस्यपुरोभवतिसर्वव्रतानिपरिपूर्णफलप्रदानि इतिश्रीभविष्योत्तरपुराणेखंडव्रतसंपूर्णताविधानम् स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंदसंरक्षकः धर्माधर्मविभागकृ द्रघुपतेःपादांबुजार्चारतो जीव्यात्पुत्रकलत्रमित्रसहितःसंपालयन्क्ष्मांसदा १ रणवीरसिंहभूपेशकारितेकृ त्यसागरे व्रतसामान्यपूजाख्योनवमोरत्नसग्रहः २ इतिश्रीरणवीरसिंहकृत्यरत्नाकरेनवमोरत्नसंग्रहः ॥ ९ ॥

अथसर्वव्रतेपुसामान्यउद्यापनविधिः पृथ्वीचंद्रोदये नंदिपुराणे कुर्यादुद्यापनंतस्यसमाप्तौयदुदीरितं उद्यापनंवि
नायत्तुतद्व्रतंनिष्फलंभवेत् यत्रचोद्यापनंनोक्तंव्रतानुगुणतश्चरेत् वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते गांचैवकां
चनंदद्याद्व्रतस्यपरिपूर्तये समाप्तावुद्यापनमनुक्तोद्यापनविषयं उक्तोद्यापनेतु आदौमध्येथवाचांतेव्रतस्योद्या
पनंभवेदितिवचनात् त्रितयत्रापि व्रतानामुद्यापनंयथासंभवंकार्यम् उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेदितिव
चनादुद्यापनस्याऽवश्यकता विहिता तत्रादौमंडपप्रमाणंपंचरात्रे कनीयान्दशहस्तः स्यान्मध्यमोद्वादशोम
तः ततः षोडशभिर्हस्तैर्मंडपः स्यादिहोत्तमः प्रतिष्ठासारसंग्रहेतु मंडपः स्यात्कलाहस्तः सर्वलक्षणसं
युतः दशद्वादशहस्तोवाद्विद्विवृद्ध्यातत:क्रमादिति मंडपनिर्माणप्रकारः पंचरात्रे कुर्याद्वैष्णवयागेषुचतुर्द्वा
रांश्चमंडपान् सारदारुमयान्स्तंभान्दृढान्कुर्याद्दृजून्समान् मंडपार्धोच्छ्रितान्वेदसंख्यांश्चूडान्वितांस्तथा पंचमां
शान्न्यसेद्भूमावेषसाधारणोविधिः वलिकास्तूर्ध्वतस्तेषांस्तंभद्वादशकंपुनः बाह्यपीठप्रमाणेनतत्रसूत्रविधानतः क
ल्पयेद्द्विकरंदारुंचतुरंगुलवृद्धितः मध्यमोत्तमयोर्वेदी मंडपस्यत्रिभागतः चतुर्थांशोधितिस्तस्यास्त्रिसप्तपंचमो
पिवा नवैकादशहीनांवाङ्गष्टिकाभिः प्रकल्पयेत् इति द्वारदेहल्याबहिर्हस्तमात्रेणद्वारशाखानिखेयाः द्वारेषुका
र्याणिचतोरणानिचत्वार्यपिक्षीरवनस्पतीनां हस्तंविहायेत्यादिमात्स्ये व्रतखंडे तद्द्विहस्तंवहिस्त्यक्त्वातोरणानि
निवेशयेदित्युक्तम् मात्स्ये पताकाश्चोक्ताः लोकेशवर्णाः परितः पताकामध्येध्वजः किंकिणिकायुतः
स्यादिति लोकपालवर्णास्तु इंद्रः पीतो यमः श्यामोवरुणः स्फटिकप्रभः कुबेरस्तुसुवर्णाभोह्यग्निश्चापि
सुवर्णभः तथैवनिर्ऋतिः श्यामोवायुर्धूम्रः प्रशस्यते ईशानस्तुभवेद्रक्तएवंध्यायेदिमान्क्रमात् सप्तहस्ताः
पताकाः स्युः सप्तमांशेनविस्तृताः लोकपालानुवर्णेननवमीतुहिनप्रभा पीतरक्तादिवर्णाश्चपंचहस्ताध्वजाः

स्मृताः द्विपंचहस्तैर्दंडैश्चवंशजैःसंयुतास्तथा ध्वजेषुपूर्वादिक्रमेणाष्टदिक्षु लोकेशवाहनानि लिखेत् ॥ तदुक्तंक्रियासागरे मातंगवस्तमहिषसिंहमत्स्येणवाजिनः वृषभंचयथान्यायंध्वजमध्येक्रमाल्लिखेत् इति अथवादिग्गजानष्टावैरावणपुरस्सरान् ध्वजेषुविलिखेदुक्तधातुभिश्चसलक्षणमिति पताकासुचलोकेशानामस्त्राणिलिखेत् तानिच वज्रशक्तिदंडखड्गपाशांकुशगदात्रिशूलाद्यैरायुधैरुपेताः पताकाः क्रमेणकार्य्याः अथकुंडानिभविष्ये वेदिपादांतरेत्यक्त्वाकुंडानिनवपंचवा वेदास्त्राण्येवतानिस्युर्वर्तुलान्यथवाक्वचित् कुंडकरणाशक्तौस्थंडिलमेवकार्यं तदुक्तंविश्वकर्मशास्त्रे खाताधिकेभवेद्रोगीहीनेधेनुधनक्षयः भार्य्याविनाशनंकुंडंप्रोक्तंयोन्याविवर्जितं अपत्यध्वंसनंप्रोक्तंकुंडयत्कंठवर्जितं सिद्धांतशेखरे मानहीनेभवेद्व्याधिरधिकेशत्रुवर्धनं योनिहीनेत्वपस्मारोवाग्घानिःकंठवर्जिते तत्रैवस्थंडिलंवापिकुर्वीतसुसिद्धैःसिकतैःशुभैः हस्तमात्रप्रविस्तारंसुसमंत्र्यंगुलोच्छ्रितं शारदातिलके नित्यंनैमित्तिकंहोमंस्थंडिलेवासमाचरेत् हस्तमात्रेणतत्कार्य्यंवालुकाभिःसुशोभनम् अथसमिधःब्राह्मेशमीपलाशन्यग्रोधप्लक्षवैकंकतोद्भवाः अश्वत्थोदुंबरोबिल्वचंदनस्सरलस्तथा शालश्चदेवदारुश्चखदिरश्चेतियज्ञियाः तदभावेकंटकिवर्जंसर्ववनस्पतीनांसमिधःकार्य्याः कर्मप्रदीपे नांगुलादधिकाकार्य्यासमित्स्थूलतयाक्वचित् नवियुक्तात्वचाचैवनसंकोचनपाटिता प्रादेशान्नाधिकानोनानतथास्याद्विशाखिका नसपर्णासमित्कार्याहोमकर्मविजानता भविष्यपुराणे भूमौस्थितेनपात्रेणविस्तृतेनचपाणिना वामेनकुरुशार्दूलनांतरिक्षेतुहूयते धनापुर्दारेखासुसोमतीर्थंतुमध्यमं हवनंतेनकर्तव्यंकर्त्तव्यंपावनंतथा कात्यायनः यवाहुतिर्द्वादशपर्वपूरिकारसादिनाचेस्त्रुकपर्वपूरिता दैवेनतीर्थेनचहूयतेहविःस्वांगारिणिस्वार्चिषिसिद्धपावके योनर्चिषिजुहोत्यग्नौव्यंगारिणिचपावके मंदाग्निरामयावीचदरिद्रश्चोपजायते तस्मात्समिद्धहोतव्यंनासमिद्धेकदाचन आरोग्यमिच्छतायुश्च

श्निचमात्यंतिकींपरां जुहुयाच्चहविर्द्रव्यंपाणिसूर्पस्रुवादिभिः नकुर्य्यादग्निधमनंकदाचिद्व्यजनादिना मुखेनै वधमेदग्निंमुखादग्निरजायत वव्हृचपरिशिष्टे अथोवुधःसधूमेतुजुहुयाच्चहुताशने यजमानोभवेदंधःसपुत्रइतिशुश्रु मइति ग्रंथांतरे होमेमुद्रात्रयंप्रोक्तंमृगीहंसीचशूकरी शूकरीकरसंकोचीहंसीमुक्तकनिष्ठिका मृगीकनिष्ठतर्जन्यौ मुद्रास्तिस्त्रइतीरिताः शांतिपौष्टिककर्माख्यौमृगीहंस्यौप्रकीर्तितेइति अथादित्यादिग्रहस्थापनं वर्णरूपगुणै र्युक्तान्ग्रहानावाहयेत्तुतान् मात्स्ये देवानांतत्रसंस्थाप्याविंशतिर्द्वादशाधिका आदित्याभिमुखाःसर्वेसाधिप्रत्य धिदेवताः ग्रहाणांदक्षिणेपार्श्वेस्थापयेदधिदेवताः तेषामेवोत्तरेभागेन्यसेत्प्रत्यधिदेवताः विनायकादिस्थापनं ग्रहांतरे इतिसंप्रदायः दक्षिणपश्चिमवायव्योत्तरपूर्वेषुयथाक्रममित्यन्ये राहुमंदादिनेशानामुत्तरस्यांयथाक्रम म् गणेशदुर्गेवायुंचराहुकेत्वोश्चदक्षिणे आकाशमश्विनौचेतिपंचैतान्स्थापयेद्बुधइति स्कंदपुराणे जन्मभू गोत्रमेतेषांजन्मस्थानमुखादिच योऽज्ञात्वाकुरुतेशांतिंग्रहास्तेनावमानिताः तत्रैव उत्पन्नो र्कःकलिंगेषुयमुनायां चचंद्रमाः अंगारकस्तुरेवत्यांमगधायांहिमांशुजः सैंधवेषुगुरुर्जातःशुक्रोभोजकटेतथा शनैश्चरस्तुसौराष्ट्रे राहुर्वैराटिकापुरे अंतर्वेद्यांतथाकेतुरित्येताग्रहभूमयः अथगोत्राणि आदित्यःकाश्यपोगोत्रःआत्रेयश्चंद्रमाभवेत् भारद्वाजोभवेद्भौमस्तथात्रेयश्चसोमजः शक्रपूज्योंगिरोगोत्रःशुक्रोवैभार्गवस्तथा शनिःकाश्यपगोत्रीयोराहुःपैठी नसिस्तथा केतवोजैमिनीयाश्चग्रहालोकाहितावहाः अथवर्णानि भानुरंगारकोरक्तौश्वेतौशुक्रनिशाकरौ सोम पुत्रोगुरुश्चैवताबुभौपीतवर्णकौ कृष्णंशनैश्चरंविंद्यात्तथाचित्राश्चकेतवः वर्णरूपगुणैर्युक्तान्ग्रहानावाहयेत्तुतान् भास्करंमंडलाकारमर्धचंद्राकृतिंविधुं अंगारकंत्रिकोणंतुवुधंबाणाकृतिंतथा पद्माकारंगुरुंविंद्याच्चतुष्कोणंतुभार्गवं दंडाकृतिंशनिंराहुंमकराकारमेवच खड्गाकारंतथाकेतुंस्थापयेदनुपूर्वशः अथस्थानानि मध्येतुभास्करंविं

द्यात्सोमंपूर्वोत्तरेणतु   दक्षिणेतुधरापुत्रंबुधंपूर्वोत्तरेणतु   उत्तरेणगुरुंविद्यात्पूर्वेणैवतुभास्करं
शनैश्चरंपश्चिमायांराहुंदक्षिणपश्चिमे   पश्चिमोत्तरतःकेतुंस्थापयेदनुपूर्वशः   आदित्याभिमुखाः
सर्वेसाधिप्रत्यधिदेवताः   शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ   प्रत्यङ्मुखः   शनिःप्रो
क्तः शेषादक्षिणतोमुखा इति अथाधिदेवताः प्रत्यधिदेवताश्चमात्स्ये   भास्करस्येश्वरंविंद्यादुमांचशशिनस्तथा
स्कंदमंगारकस्यापिबुधस्यापिहरिंतथा   ब्रह्माणंचगुरोर्विंद्याच्छुक्रस्यापिशचीपतिं   शनैश्चरस्यापियमंराहोःका
लंतथैवच   केतूनांचित्रगुप्तंचसर्वेषामधिदेवताः प्रत्यधिदेवताश्चतत्रैव अग्निरापः क्षितिर्विष्णुरिंद्रश्चैंद्रीश्चदेवताः
प्रजापतिःसर्पब्रह्माप्रोक्ताःप्रत्यधिदेवताः अथैषांसमिधः अर्कःपलाशःखदिरोह्यपामार्गोथपिप्पलः   उदुंबरःश
मीदूर्वाग्रहाणांसमिधः क्रमात् अथहोमद्रव्यपरिमाणं सिद्धांतशेखरे होमद्रव्यप्रमाणानिकथ्यंतेचयथाक्रमम् क
र्षप्रमाणमाज्यंचमधुक्षीरंचतत्समं तंडुलान्नंशुक्तिमात्रंपायसंप्रसृतेःसमं कर्षप्रमाणंभक्ष्याणिलाजामुष्टिमितामता
प्रादेशमात्राःसमिधोव्रीहीणामंजलीसमाः तिलसक्तुकणादीनां मृगीमुद्राप्रमाणतः पत्रपुष्पफलादीनांप्रमाणा
हुतिरिष्यते   चंद्रश्रीखंडकस्तूरीकुंकुमागुरुकर्दमाः हरिमंथसमाःप्रोक्तागुग्गुलुर्बदरोपमः हरिमंथश्चणकः आ
हुतीनामिदंमानंकथितंवेदवादिभिः   स्यात्रिमूर्धामृगीमुद्राहोमेसर्वफलप्रदेति   मानांतरमत्रशारदातिलकटीका
यांपदार्थादर्शे कर्षमात्रमितंहोमेशुक्तिमात्रंपयःस्मृतं   उक्तानिपंचगव्यानिशुक्तिमात्राणिसाधुभिः   तत्समंदधि
दुग्धेत्रग्रासमात्रमुदाहृतं   दधिप्रसृतिमात्रंस्याल्लाजाःस्युर्मुष्टिसंमिताः   पृथुकास्तत्प्रमाणाःस्युः सक्तवोपितथावि
धाः पलार्धंगुडमानंचशर्करापितथाविधा   ग्रासार्धमात्रमन्नानामिक्षुःपर्वप्रमाणकः   एवंस्यात्पत्रपुष्पंचतथाधू
पादिकल्पयेत्   मातुलुंगंचतुः खंडंपनसंदशधाकृतं अष्टधानारिकेलंचचतुर्धाकदलीदलं   द्विधाकृतंफलंबैल्व

कपित्थंखंडितंद्विधा व्रीहयोमुष्टिमात्राःस्युर्मुद्गमाषायवास्तथा तंडुलाःस्युस्तदर्धांशाःकोद्रवामुष्टिसम्मितः लव
णंशुक्तिमात्रंस्यान्मरिचान्येकविंशतिः घृतस्यकार्षिकोहोमःक्षीरस्यमधुनस्तथा शुक्तिमात्राहुतिर्दध्नः प्रसृतिः
पादसस्यतु खंडत्रयंतुमूलानांफलानांस्वप्रमाणतः ग्रासमात्रंतुहोतव्या इतरेपांचतंडुलाः
अक्षतास्तुयवाःप्रोक्ताअभावेव्रीहयःस्मृताः तदभावेतुगोधूमानतुखंडिततंडुलाः येषांकेषांचिदन्येषांद्रव्याणाम
प्यसंभवे सर्वत्राज्यमुपादेयंभारद्वाजमुनेर्मतात् सर्वप्रमाणमाहुत्यापंचांगुलगृहीतयेति तथा इक्षूणांपर्वकंमा
नंलतानामंगुलिद्वयं चंद्रचंदनकाश्मीरकस्तूरीयज्ञकर्दमान् कलापसंमितानेतान्गुग्गुलुंबदरास्थिवत् द्रव्यंस्रु
वेणहोतव्यंपाणिनाकठिनंहविः॰ स्रुवपूर्णाद्रवाःप्रोक्ताःकठिनाग्रासमात्रकाः व्रीहयोयवगोधूमप्रियंगुतिलशाल
यः स्वरूपेणैवहोतव्याइतरेपांचतंडुलाः ॥ अथऋत्विग्वरणं हेमाद्रौमात्स्ये वाताग्निहोत्रिणंविप्रंसुरूपंचगुणा
न्वितं सपत्नीकंचसंपूज्यभूषयित्वाचभूषणैः पुरोहितंमुख्यकर्मकृत्वान्यांश्चतथर्त्विजः चतुर्विंशद्गुणोपेतान्सप
त्नीकान्निमंत्रितान् वृहतांवरसंछन्नान्स्त्राग्विणःशुचिभूषितान् अंगुलीयकभूषांश्चकर्णवेष्टान्प्रदापयेत् तत्रैवलिं
गे वस्त्रयुग्मंतथोष्णीषंकुंडलेकंठभूषणम् अंगुलीभूषणंचैवमणिबंधस्यभूषणं एतानिचैवसर्वाणिप्रारंभेसर्व
कर्मणां पुरोहितायदत्त्वाथऋत्विग्भ्यः संप्रदापयेत् पूर्वोक्तभूषणंसर्वंसोष्णीषवस्त्रसंयुतं दद्यादेतत्त्रयो
कुंभ्यश्चाच्छादनपटंतथा मतानांमधुपर्कमाह तत्रैव विश्वामित्रः संपूज्यमधुपर्केणऋत्विग्भ्यः कर्मकारयेत्
अपूज्यकारयन्कर्मकिल्विषेणैवयुज्यते ऋत्विक्संख्यामाहमात्स्ये हेमालंकारिणःकार्याःपंचविंशतिऋत्विजः
दीक्षयेच्चसमंसर्वानाचार्यंद्विगुणंभवेदिति द्विगुणयादक्षिणयाचार्यंतोषयेदित्यर्थः अत्रकार्यानुसारेणपंचविंश
तिः षोडशाष्टौचत्वारोवाऋत्विजोभवंति नवग्रहमखेतुचत्वारऋत्विजः स्कांदे नवग्रहमखेकुर्यादृत्विजश्चतुर

श्शुभान् अथवाचैकमभ्यर्च्यविधिनाब्रह्मणासह अत्राचार्यब्रह्मणोर्वरणादिकमावश्यकमितिनिष्कृष्टोर्थः अथस र्वतोभद्रंहेमाद्रौस्कांदे प्रागुदीच्यांगतारेखाःकुर्यादेकोनविंशतिः खंडेंदुस्त्रिपदःकोणेश्रृंखलाःपंचभिःपदैः एका दशपदावल्लीभद्रंतुनवभिःपदैः चतुर्विंशत्पदावापिपरिधिर्विंशतिःपदा मध्येषोडशभिःकोष्ठैःपद्ममष्टदलंस्मृतं श्वेतेंदुःशृंखलाकृष्णवल्लींनीलेनपूरयेत् भद्रारुणासितावापिपरिधिः पीतवर्णका परिध्यावेष्टितपद्मंवाह्येस त्वंरजस्तमः तन्मध्येस्थापयेद्देवान्ब्राह्मणांश्चसुरासुरान् इतिसर्वतोभद्रम् अथचतुर्लिंगतोभद्रम् रेखास्त्वष्टाद शप्रोक्ताश्चतुर्लिंगसमुद्भवे कोणेंदुस्त्रिपदः श्वेतास्त्रिपदैःकृष्णशृंखलाः वल्लीसप्तपदानीलाभद्रंरक्तंचतुष्पदं भद्र पार्श्वेमहारुद्रंकृष्णमेकादशैःपदैः शिवस्यपार्श्वतोवापिकुर्यात्पंचपदान्शुभान् पदमेकंतथापीतंभद्रवाप्यास्तुमध्य तः शिरसिशृंखलायाश्चकुर्यात्पीतंपदत्रयम् लिंगानांस्कंधतः कोष्ठाविंशतीरक्तवर्णकाः परिधिःपीतवर्णैस्तु पदैःषोडशभिःस्मृता पदैस्तुनवभिः पश्चाद्रक्तंपद्मंसकर्णिकं इतिचतुर्लिंगतोभद्रम् अथाष्टलिंगतोभद्रम् आग्ने ये चतुर्विंशतिरालेख्या रेखाःप्राग्दक्षिणायताः ॥ कोणेषुश्रृंखलाः पंचपदवल्ल्यस्तुपार्श्वतः पदैर्नव भिरालेख्या श्चतुर्भिर्लघुशृंखलाः लघुवल्ल्यःपदैःषड्भिस्ततोष्टादशभिःपदैः कृत्वालिंगानिवाप्यःस्युस्त्र योदशभिरंतरा ततोवीथिद्वयेनैवपीठंकुर्याद्विचक्षणः तस्याःपदाःपंचपदद्वाराण्यपितथैवच एकाशीतिपदंम ध्येपद्मंस्वस्तिकमुच्यते कोणेषुशृंखलाः कार्याःपदैस्त्रिभिरितःपरम् पदैश्चतुर्भिर्दिक्षुस्युर्भद्राण्येषांसमंततः ए कादशपदावल्ल्योमध्येष्टदलमालिखेत् पद्मंनवपदंह्येवंलिंगतोभद्रमुच्यते शृंखलाःकृष्णवर्णेनवल्लींनीलेनपूरयेत् रक्तेनशृंखलांलघ्वींवल्लींनीलेनपूरयेत् लिंगानिकृष्णवर्णानिश्वेतेनाप्यथवापिकाः पीठंसंपाद्यश्वेतेनपीतेनद्वा रपूरणं मध्येनशृंखलारक्ता वल्लींनीलेनपूरयेत् भद्राणिपीतवर्णानिपीतापंकजकर्णिका दलानिश्वेतवर्णानि

यद्वा चित्राणिकारयेत् तिस्रोरेखावहिःकार्याः सितरक्ताःसिताःक्रमात् इत्यष्टलिंगतोभद्रम् अथद्वादशलिंगतो भद्रनिर्माणम् तत्रैव प्रागुदीच्यायतारेखाः षड्विंशत्परिकल्पयेत् पदानिद्वादशशतंपंचविंशतिरेवच खंडेन्दु स्त्रिपदःकोणेशृंखलाःषट्पदैःस्मृताः त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः त्रयोदशपदावापिलिंगमष्टादशैःस्मृतम् लिंगत्रयस्यपंक्तौतुशुभाःकोष्ठश्चतुर्दश तेपामुपरिपंक्तौतुकोष्ठाःसप्तदशैवतु पूजापांक्तिस्तुविज्ञेयापरितःपरिकल्पिता पूजापंक्त्यंतरापंक्तौकोष्ठश्चाशीतिसंख्यया परिधिःसतुविज्ञेयोमध्येमंडलयोर्द्वयोः परिध्यंतरकोष्ठेपुसर्वतोभद्र मालिखेत् विशेषश्चात्रविज्ञेयःशृंखलाषट्पदाभवेत् त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः पंचविंशत्पदावापि परिधिःषोडशात्मकः भद्रवाप्यंतरालेतुत्रिपदंचित्रवर्णकं मध्येनवपदंपद्मंकर्णिकाकेसरान्वितं सत्वंरजस्तमोव र्णैःपरितोमंडलस्यतु त्रयःपरिधयःकार्य्यास्तत्रद्वाराणिकारयेत् सितेंदुःशृंखलाःकृष्णावल्लीनीलाप्रकीर्त्तिता भद्रंचैवारुणंज्ञेयंवापीस्याच्छ्वेतवर्णका लिंगानिकृष्णवर्णानिपार्श्वतोद्वादशैवतु परिधिःपीतवर्णःस्यात्कमलंपंच वर्णकं इतिद्वादशलिंगतोभद्रम् ॥ अथैकलिंगतोभद्रंगौरीतिलके तिर्यगूर्ध्वगतारेखाःकार्य्याः स्निग्धास्त्रयो दश कोणंदुस्त्रिपदःकार्यःशृंखलास्त्रिपदाःस्मृताः वल्लीतुषट्पदानीलाभद्रंरक्तंप्रकल्पयेत् पदैर्द्वादशभिःस्पष्टमु त्तरेपूर्वदक्षिणे पश्चिमायांमहारुद्रअष्टविंशतिकोष्ठकैः लिंगपार्श्वेतथामूर्ध्निअष्टौकोष्ठाःसपीतकाः लिंगमेकंतथा गौर्य्याःस्निग्धतुरक्तमंडलं पूजयेत्तंडुलैःश्वेतैस्तस्यगौरीप्रसीदति इदंचगौरीव्रतेपुपूजनीयं अथसर्वतोभद्रमं डले देवतापूजाक्रमः तत्रायंसंग्रहः कल्पद्रुमे आसनोपविश्यन्यासजालंविधायच शंखं प्रपूजयेदग्रेगंधपुष्पाक्षतादिभिः कलशंवामभागस्थपूजाद्रव्याणिचादरात् विलिखेत्सर्वतोभद्रंवेदिकोपरि सुंदरं सर्वव्रतेसमुदितंसर्वतोभद्रमंडलं तत्रदेवताः मध्येब्रह्माष्टासदिक्षसोमाद्याश्चाष्टदेवताः वायुसोमद्वयो

मध्येवसूनष्टौसमर्चयेत् सोमईशानयोर्मध्येरुद्रानेकादशैवतु इंद्रईशानयोर्मध्येआदित्यान्द्वादशैवतु इंद्राग्नि
मध्येचतथा आश्विनौद्वौप्रपूजयेत् आग्नेययमयोर्मध्येविश्वेदेवान्सपैतृकान् याम्यनैर्ऋतयोर्मध्येसप्तयक्षांश्चपू
जयेत् नैर्ऋत्यजलयोर्मध्येनागान्भूतांश्चपूजयेत् आप्यवायव्ययोर्मध्येगंधर्वाप्सरसोयजेत् ॥ ब्रह्मसोमद्वयोर्म
ध्येमहादेवगणान्यजेत् ॥ स्कंदनंदीवृषंशूलंमहादेवंतथांबिकां ब्रह्मेशानयोर्मध्येदक्षादीन्सप्तपूजयेत् ॥ ब्रह्मेंद्रयो
स्तथामध्येदुर्गांविष्णुंतथैवच ॥ ब्रह्माग्निमध्येचतथास्वधांतत्रप्रपूजयेत् ॥ ब्रह्मणोनिर्ऋतेर्मध्येगणेशंतुप्रप
जयेत वरुणब्रह्मणोर्मध्येआपःसंपूजयेत्ततः मध्येवायोर्ब्रह्मणश्चमरुतःसंप्रपूजयेत् ब्रह्मणःपादमूलेतुमेदिनींपरि
पूजयेत् कावेरीनर्मदाचैवयमुनाचसरस्वती गंगाकृष्णातथागोदापूज्याःसप्तचसागराः क्षारक्षीरमधुसर्पिर्मैरे
क्षुदधिसंभवाः ब्रह्मयज्ञानमित्याद्यैर्मंत्रैःस्थाप्यास्तुदेवताः गंधपुष्पादिभिःपूज्यादीपान्दद्याच्चसर्वतः सर्वत्रभद्रं
यस्मात्तत्सर्वतोभद्रमुच्यते मंडलाद्बहिरस्त्राणिदेवैरिंद्रादिभिःसह वज्रंशूलंगदांशक्तिंदंडंखड्गंतथैवच पाशं
ध्वजंचांकुशंचगदांचपरिपूजयेत् गौतमंचभरद्वाजंविश्वामित्रंचकश्यपं यमदग्निवशिष्ठात्रीनरुंधतियुतान्यजेत्
सूर्यादिकान्ग्रहान्सर्वान्मेषादिराशिसंयुतान् माहेंद्रीमथकौमारींब्राह्मींवाराहरूपिणीं चामुंडांवैष्णवींदेवींमाहे
शींचविनायिकीं वेदमंत्रैःप्रतिष्ठाप्यप्रत्येकंसहपूजयेत् स्थापनंप्रत्येकंकुर्यात् पूजनंसहमिलितोपचारैः का
र्यमितिसुकरःपंथाः अथाग्निकार्येकुशंडिकाक्रमोनारदीये कुशाःपरिसमूहायसप्तशाखाःप्रकीर्तिताः गोमयेनो
पलिप्येयंतदर्थमितिनारद वंध्यादुष्टाचहीनांगीमृतवत्साचयाभवेत् यज्ञार्थंगोमयंतस्यानाहरेदितिभाषितम् ये
भ्रमंतिसदाकाशेपतंगाघाभयंकराः तेषांप्रहरणार्थायमतंप्रोद्धरणंद्विज स्रुवेणचकुशेनापिकुर्यादुल्लेखनंभुवः अ
स्थिकंटकशुद्ध्यर्थंब्रह्मणापरिभाषितं आपोदेवगणाःसर्वेतथापितृगणाद्विज तेनाद्भिःप्रोक्षणंप्रोक्तंमुनिभिर्विधि

कोविदैः अग्नेरानयनंप्रोक्तंसौभाग्यस्त्रीभिरेवच शुभदंमृण्मयेपात्रेप्रोक्ष्याद्भिस्तंनिधापयेत् अमृतस्यक्षयंदृष्ट्
वाब्रह्माद्यैःसर्वदैवतैः वेद्यांनिधापितस्तस्मात्सामिद्धर्भोहुताशनः दक्षिणस्यांदानवाद्याःस्थितायज्ञस्यनारद
तेभ्यःसंरक्षणार्थायब्रह्माणंतद्दिशिन्यसेत् उत्तरेसर्वपात्राणिप्रणीतायानिपश्चिमे यजमानात्पूर्वतःस्युर्द्विजाःस
र्वेपिनारद द्यूतेचव्यवहारेचयज्ञकर्मणिचेद्भवेत् कर्त्तोदासीनचित्तस्तत्कर्मनस्यादितिस्थितिः ब्रह्माचार्यौ
स्वशाखोहिकर्त्तव्योयज्ञकर्मणि ऋत्विजांनियमोनास्तियथालाभंसमर्चयेत् द्वेपवित्रेद्व्यंगुलेस्तःप्रोक्ष
णीचतुरंगुला आज्यस्थालीत्र्यंगुलाच चरुस्थालीषडंगुला द्व्यंगुलंतूपयमनमेकंसमार्जनाकुशं स्रुवंषडंगु
लंप्रोक्तंस्रुचंसाधत्रयांगुलं प्रादेशमात्राःसमिधःपूर्णपात्रंषडंगुलं अत्रप्रोक्षण्यादिपात्राणां चतुरंगुलादिमानं
मुखविस्तारदैर्घ्यांतःस्थूलत्वादिमानेयथासंभववाच्यं पूर्णपात्रंषडंगुलमितिमुखविस्तारेज्ञेयं तत्रतंडुलमानंय
था अष्टमुष्टिभवेत्कुंचःकुंचाष्टकमथाढकं चतुराढकंभवेद्द्रोणःखारींद्रोणचतुष्टयम् अन्यप्रकारोयथा अष्टमुष्टिभवे
त्कुंचः कुंचाअष्टौतुपुष्कलं पुष्कलानिचचत्वारिपूर्णपात्रंविदुर्बुधाः प्रोक्षण्याउत्तरेभागेप्रणीतापात्रमष्टभिः या
निकानिचतीर्थानिसमुद्राःसरितस्तथा प्रणीतायां समासीनास्तस्मात्तांपूरयेज्जलैः वेदिकावस्त्रहीनाचनग्रासंप्रोच्य
तेद्विज परिस्तीर्यततोदर्भैःपरिदध्यादिमांबुधः इंद्रवज्रंविष्णुचक्रंयमतूदंडंत्रिशूलकं दर्भरूपतयात्रीणिपवित्र
च्छेदनानिच प्रोक्षणीचप्रकर्त्तव्याप्रणीतोदकसंयुता नेनातिपुण्यदंकर्मपवित्रमितिकीर्त्तितम् आज्यस्थालीप्रकर्त्त
व्यापत्रमात्रप्रमाणिका कुलालचक्रघटितमासुरंमृण्मयंस्मृतं तदेवहस्तघटितंस्थाल्यादिदैविकंभवेत् स्रुवेच
सर्वकर्माणिशुभान्यप्यशुभानिच तस्यैवपावनार्थंतुवह्नौतापनमीरितं अग्रेहुतेनवैधव्यं मध्येचैवप्रजाक्षयः मू
लेचम्रियतेहोतातेनतापनमीरितम् अग्नौतस्माद्विशुद्ध्यर्थंतद्विचार्यप्रयत्नतः अग्निस्सूर्यश्चसोमश्चविरंचिरनिलो

यमः स्रुवेपङ्केतेदेवाःस्युःप्रत्यंगुलमुपाश्रिताः अग्निर्भोगार्थनाशायसूर्योऽव्याधिकरोभवेत् निष्फलस्तुस्मृत ःसो
मोविरिंचिः सर्वकामदः अनिलोवृद्धिदः प्रोक्तोयमोमृत्युप्रदोमतः संमार्जनोपयमनंकर्त्तव्यंचकुशद्वयं सर्वतः स
र्वशाखंस्यात्पंचशाखंतथापरं श्रीपर्णीचशमीतद्वत्खदिरश्चाविकंकतः पलाशश्चैवविज्ञेयाःस्रुवेचैवतथास्रुचे हस्ता
न्मितंस्रुवंशस्तंत्रिदशांगलकंस्रुचं विप्राणांचैतदाख्यात मन्येषामंगुलोनकं शूद्राणांपतितानांचखरादीनांचना
रद दृष्टिदोषविनाशार्थंपात्राणांप्रोक्षणंस्मृतं अकृतंपूर्णपात्रंतुयज्ञाच्छिद्रंसमुद्भवेत् तस्मिन्पूर्णेकृतेविप्रयज्ञसंपू
र्णताभवेत् अष्टमुष्टिभवेत्किंचित्पुष्कलंतच्चतुष्टयं पुष्कलानिचचत्वारिपूर्णपात्रंविदुर्बुधाः होमकालेचसंप्राप्तेनदद्या
द्यानंकचित् दत्तेऽत्रतोभवेद्वन्हिः शापंदद्याच्चदारुणं आघारौनासिकेप्रोक्तेआज्यभागौचचक्षुषी प्राजापत्यंमुखं
प्रोक्तंकटिर्व्याहृतिभिः स्मृता शीर्षहस्तौचपादौचपंचवारुणमीरितं तथास्विष्टकृतंविप्रश्रोत्रेपूर्णाहुतिः स्मृता
द्विमुखंचैकहृदयंचतुः श्रोत्रंद्विनासिकं द्विशीर्षकंचषट्नेत्रंपिंगलंसप्तजिह्वकं सव्यभागेत्रिहस्तंचचतुर्हस्तंचद
क्षिणे स्रुक्स्रुवौचाक्षमालाचशक्तिर्दक्षिणकेकरे त्रिमेखलंत्रिपादंचघृतपात्रंद्विचामरं मेषारूढंचतुः शृंगंबाला
दित्यसमप्रभं उपवीतसमायुक्तंजटाकुंडलमंडितम् ज्ञात्वैवमग्निदेहंतुहोमकर्मसमाचरेत् पयोदधिघृतंचैवस्नेहप
क्वंतथैवच जुहुयाद्यस्तुहस्तेनसविप्रोब्रह्महाभवेत् यदन्नंपुरुषोश्नातितदन्नंतस्यदेवताः सर्वकामसमृद्ध्यर्थंतिला
धिक्यंहविर्मतम् होममुद्रात्रयंप्रोक्तंमृगीहंसीचसूकरी अभिचारेशूकरीस्यान्मृगीहंसीशुभात्मिके सर्वांगुलीभिः
क्रोडीस्याद्धंसीमुक्तकनिष्ठिका मध्यमानामिकांगुष्ठैर्मृगीमुद्राप्रकीर्त्तिता एवंप्रमाणयाहुत्यापंचांगुलिगृहीतया द
धिमध्वाज्यसंयुक्तैर्व्रीह्यादिभिर्जुहुयात्तिलैः कुशास्त्वनामिका सक्ताःकार्य्याःस्युःपुण्यकर्मणि ॥ विनायकः कर्मवि
घ्नशांत्यर्थंविनियोजितः गणानामाधिपत्येचशिवेनब्रह्मणातथा इत्यादिनाग्रे विनायकशांत्यादिक्रमोऽभिहितः

अप्रकृतत्वान्नेहलिखितः अथानंतरकृत्यंभविष्योत्तरे रामनामोद्यापने ततोग्निंसंप्रतिष्ठाप्यस्वशाखोक्तविधानतः विष्णुसूक्तेनहोतव्यंमूलमंत्रेणवापुनः नवग्रहान्सदिक्पालान्मंत्रानुक्त्वातुहोमयेत् पुरुषसूक्तेनहोतव्यंसमिदाज्य चरुस्तिलाः पूजयित्वाततोवन्हिंवलिंपूर्णाहुतिंतथा श्रेयःसंपादनंचअभिषेकसमाचरेत् आचार्यंपूजयेत्पश्चात्सु वर्णा युतधेनुभिः प्रतिमां दानमंत्रेण आचार्याय निवेदयेत् प्रतिमादानसिध्यर्थंशक्त्यास्वर्णंतुदापयेत् दानंयदक्षिणाहीनंतत्सर्वंनिष्फलंभवेत् ब्राह्मणान्शतसाहस्रंभोजयेन्मधुसर्पिषा पक्वान्नैःपायसैः खाद्यैःकदली शर्करान्वितैः ऋत्विग्भ्योदक्षिणांदत्वाभूयसींदक्षिणांददेत् तदंतेघृतपात्रंचतिलपात्रंचकांचनं शय्यांचवस्त्रदानादि दशदानंचशक्तितः अशक्तश्चेत्स्वर्णमेवदत्वाविप्रान्क्षमेत्पुनः तिलकंधारयेत्पश्चादभिषिंचेत्सपल्लवैः पूर्वमाचा र्यकृतोऽभिषेकः अत्रचविप्रकृतइतिविवेकः द्विजैस्तथाशिषोदेयानत्वास्तुत्वाविसर्जयेत् इतिश्रीमन्महाराजा धिराज श्रीरणवीर कारिते व्रतरत्नाकरे धर्मकर्मनिबंधे व्रतोपयुक्ता सामान्योद्यापनकृत्यपरिभाषा समाप्ता अथोद्यापनसामान्यप्रयोगः तत्रादौस्वस्तिवाचनंपुण्याहवाचनंचकृत्वा वृद्धिश्राद्धं गणपतिपूजनं मातृकापूज नंचकुर्यात् त्रिकांडमंडनः गर्भाधानादिसंस्कारेष्विष्टापूर्तादिकर्मसु वृद्धिश्राद्धंपुराकार्यंकर्मादौस्वस्तिवाचनं उ पनयनादिमहत्सुकर्मसु एकविंशत्यहोयज्ञेविवाहेदशवासरान् त्रिषट्चौलोपनयनेनांदीश्राद्धंविधीयत इति वचनात्पूर्वंप्रकार्यं स्वल्पकार्येपुतदहरेवस्वल्पविधिनाकार्यम् अत्रव्रतकर्ताएकादश्यादिव्रतोद्यापनंचिकीर्षुःपूर्वे द्युः कृतहविष्यादिनियमो व्रतदिने प्रातः समुत्थायकृतनित्यक्रियःसन् अहतशुक्लांबरधरःसप्रक्षालितपाणि पादोमंडपपश्चिमद्वारसमीपे प्राङ्मुखोवाउदङ्मुखोमहतां ब्राह्मणानामाज्ञामादाय तेभ्योनमस्कृत्यदेवेभ्यश्चति लकंविधायाचाम्य तूर्यमृदंगादिमंगलवाद्यस्वस्तिवाचनध्वनौ प्रवृत्ते धर्मपत्न्यासह ग्रंथिबंधनंकृत्वा कुश

अथतिलयवजलान्यादाय प्रतिज्ञासंकल्पंकुर्यात् ॐतत्सदद्यामुकमासेऽमुकपक्षेऽमुकतिथावमुकवासर युक्तायाममुकगोत्रोहममुकशर्माहं सकलपापक्षयपूर्वकं श्रीयज्ञपुरुषलक्ष्मीनारायणप्रीतये चैकादश्याद्यमुकव्रतोद्यापनमहंकरिष्येति प्रतिज्ञांविधाय ततःकंकणबंधनंकुर्यात् भद्रंकर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः इत्यनेनग्रंथिबंधनम् ततोब्राह्मणान्संपूज्यस्वस्तिवाचनंकुर्यात् व्यासः संपूज्यगंधमाल्याभिर्ब्राह्मणान्स्वस्तिवाचयेत् आश्वलायनः वैदिकेतांत्रिकेचादौततःपुण्याहइष्यते त्रीनधिकान्ब्राह्मणांस्ताम्बूलादिभिःपरितोष्योदङ्मुखानुपवेश्य पुण्याहंभवंतोब्रुवन्त्विति ब्राह्मणान्यजमानस्त्रिःश्रावयेत् ततोब्राह्मणाः पुण्याहं पुण्याहं पुण्याहं तत्रवाक्यं ब्राह्म्यंपुण्यमहोयच्चसृष्ट्युत्पादनकारकं वेदवृक्षोद्भवंपुण्यंतत्पुण्याहंभवत्विति पुनंतुमादेवजनाःपुनंतुमनसाधियः पुनंतुविश्वाभूतानिजातवेदःपुनीहिमां १ भोभोब्राह्मणाअस्ययजमानस्यगृहेकल्याणंभवंतोब्रुवंत्वितित्रिःश्रावयेत् कल्याणं कल्याणं कल्याणं वाक्यंच पृथिव्यामुद्धृतायांतुयत्कल्याणंपुराकृतं ऋषिभिःसिद्धगंधर्वैस्तत्कल्याणंब्रुवंतुनः यथेमांवाचंकल्याणीमावदानिजनेभ्यः ब्रह्मराजन्याभ्याꣳशूद्रायचार्यायचस्वायचारणायच प्रियोदेवानांदक्षिणायैदातुरिहभूयासमयंमेकामःसमृध्यतामुपमादोनमतु २ भोभोब्राह्मणाअस्ययजमानस्यगृहेऋद्धिंभवंतोब्रुवंतुऋद्धिःऋद्धिःऋद्धिः सागरस्यचयाऋद्धिर्महालक्ष्म्यादिभिःकृता संपूर्णासप्रभावाचतामृद्धिंसंब्रुवंतुनः मंत्रः सत्रस्यऋद्धिरस्यगन्मज्योतिरमृताअभूम दिवंपृथिव्याअध्यारुहामाविदामदेवान्स्वर्ज्योतिः क्षत्रियऋद्धिः ३ भोभोब्राह्मणाअस्ययजमानस्यगृहेस्वस्तिभवंतोब्रुवंतु ॐस्वस्ति स्वस्ति स्वस्ति ३ मंत्रः स्वस्तिर्याअविनाशाख्यापुण्यकल्याणवृद्धिदा विनायकप्रियानित्यंतांस्वस्तिंसंब्रुवंतुनः स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषा

विश्ववेदाः स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु पयःपृथिव्यांपयऽओषधीषुपयोदिव्यंतरिक्षेपयो
धाःपयस्वतीःप्रदिशःसंतुमह्यम् एतच्चब्राह्मणानन्नेन परितोष्य पुण्याहं स्वस्तिऋद्धिरित्योंकारपूर्वकं त्रिस्त्रिरे
केकमाशिषोवाचयित्वेत्यादिनाबौधायनेनोक्तम् यमः पुण्याहवाचनंवेदंब्राह्मणस्यविधीयते एतदेवनिरोंकारंकु
र्यात्क्षत्रियवैश्ययोरि ति बह्वृचपरिशिष्टेतु अवनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिंशिरस्याधाय द
क्षिणेन पाणिना सुवर्णपूर्णकलशंधारयित्वा दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिचतेनायुः प्रमाणेन पुं
ण्याहंदीर्घमायुरस्तु शिवाआपःसंतुसौमनस्यमायुष्यमस्तु अक्षतंचारिष्टमस्तु गंधाः पांतु सुमंगल्यंचास्तु अ
क्षताःपांतु आयुष्यमस्तु पुष्पाणि पांतु सौश्रियमस्तु तांबूलाःपांतु ऐश्वर्यमस्तु दक्षिणाःपांतु आरोग्यमस्तु
दीर्घमायुःशांतिःपुष्टिस्तुष्टिःश्रीर्यशोविद्याविनयोवित्तं बहुपुत्रंचायुष्यंतेस्तु यंकृत्वा सर्ववेदयज्ञक्रियारंभा
शुभाःप्रवर्तंते तमहमोंकारमादितःकृत्वा ऋग्यजुःसामाथर्वाशीर्वचनंबह्वृषिमतंसमनुज्ञातंभवद्भिरनुज्ञातः
पुण्याहंवाचयिष्ये वाच्यताम् भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्त
नूभिर्व्यशेमदेवहितंयदायुः १ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाः सनरस्यप्रयंसत् द्रविणोदावीरवतीमि
षंनोद्रविणोदारासतेदीर्घमायुः २ सवितापश्चात्तात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् सवितानःसुवतु
सर्वतातिंसवितानोरासतांदीर्घमायुः ३ नवोनवोभवतिजायमानोन्हांकेतुरुषसामेत्यग्रं भागंदेवेभ्योविदधात्यायन्न
श्चंद्रमास्तिरतेदीर्घमायुः ४ उच्चादिविदक्षिणावंतोअस्थुर्येअश्वदाःसहतेसूर्येण हिरण्यदाअमृतत्वंभजंतेवासोदाः
प्रतिरंतआयुः ५ पुण्याहंब्रूयात् व्रतनियमतपः स्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषांब्राह्मणानां मनः समा
धीयतां समाहितमनसःस्मःप्रसीदंतुभवंतःप्रसन्नाःस्मःशांतिरस्तु पुष्टिरस्तुतुष्टिरस्तुवृद्धिरस्तुअविघ्नमस्तु आरोग्य

मस्तु आयुष्यमस्तु शिवंकर्मास्तु कर्मसमृद्धिरस्तु पुत्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसमृद्धिरस्तुअरिष्टानिर
सनमस्तुयत्पापंतत्प्रतिहतमस्तु यच्छ्रेयस्तदस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु उत्तरोत्तराः क्रियाः शुभाःशोभनाः
प्रवर्त्तंते तिथिकरणमुहूर्त्तनक्षत्रसंपदस्तु तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् तिथिकरणमुहूर्त्तं
नक्षत्रेसग्रहेसदैवतेप्रीयेताम् अग्निपुरोगाविश्वेदेवाः प्रीयंताम् इंद्रपुरोगामरुद्गणाः प्रीयंताम् वशिष्ठपुरोगाऋ
षिगणाः प्रीयंताम् माहेश्वरीपुरोगामातरः प्रीयंताम् अरुंधतीपुरोगाएकपत्न्यः पतिव्रताः प्रीयंताम्
विष्णुपुरोगाः सर्वे देवाः प्रीयंताम् ब्रह्मपुरोःगासर्वेवेदाः प्रीयंताम् ब्रह्माचब्राह्मणाश्चप्रीयंताम् श्रीसरस्वत्यौप्रीये
ताम् भगवतीकात्यायनीप्रीयताम् भगवतीमाहेश्वरीप्रीयताम् भगवतीऋद्धिकरीप्रीयताम् श्रद्धामेधेप्रीयेताम् भगव
तीवृद्धिकरीप्रीयताम् भगवंतौविघ्नविनायकौप्रीयेतां सर्वाः कुलदेवताः प्रीयंताम् हताविष्णुद्विषः हताः परिपं
थिनः हताश्चाविघ्नकर्तारः शत्रवः पराभवंतु शाम्यंतुघोराणि शाम्यंतु पापानि शाम्यंत्वीतयः शुभानिवर्धंताम्
शिवाआपः संतु शिवाअग्नयः संतु शिवाआहुतयःसंतु शिवावनस्पतयःसंतु शिवाअतिथयःसंतु अहोरात्रे
शिवेस्याताम् निष्कामेनिष्कामेनः पर्जन्योवर्षंतु फलवत्योनओषधयः पच्यंताम् योगक्षेमोनः कल्पताम् शुक्रां
गारकबुधबृहस्पतिशनिराहुकेतुसोमसहिताआदित्यपुरोगमाः सर्वे ग्रहाः प्रीयंताम् भगवान्नारायणःप्रीयताम्
भगवान्पर्जन्यः प्रीयताम् भगवान्स्वामीमहासेनः प्रीयताम् पुण्याहंवाचयिष्ये वाच्यतां उद्गातेवशकु
नेसाम गायसिब्रह्मपुत्रइवसवनेषुशंससि वृषेववाजीशिशुमतीरपीत्यासर्वतोनः शकुनेभद्रमावह विश्वतोनः श
कुनेभद्रमावह याज्ययायजातिप्रातवैयाज्यापुण्यैवलक्ष्मीः पुण्यामेवतल्लक्ष्मींसंभावयाति पुण्यांलक्ष्मींसंस्कुरुते
यत्पुण्यंनक्षत्रंतद्वत्कुर्वीतोपव्युर्षयदावै सूर्यउदेति अथनक्षत्रेउदेति यावतितत्रसूर्योगच्छेत् यत्रजघन्यं

पश्येत तावत्कुर्वीतयत्कारीस्यात् पुण्याहएवकुरुते पुण्याहंभवंतोब्रुवंतु ॐपुण्याहं स्वस्तयेवायुमुपब्रुवामहे
सोमंस्वस्तिभुवनस्ययस्पतिः बृहस्पतिंसर्वगणंस्वस्तये स्वस्तयआदित्यासोभवंतुनः आदित्यउदयनीयः
यथायेयेताःस्वस्त्या प्रयंति यथास्वस्तिमभ्युद्यंतिस्वस्त्ययेनः प्रयंतिस्वस्त्युद्यंति स्वस्तिनइन्द्रोवृद्धश्रवाः स्व
स्तिनःपूषाविश्ववेदाः स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु अष्टौदेवाःवसवःसोम्यासःचतस्रो
देवारजराश्रविष्ठाः तेयज्ञंपांतुरजसःपरस्तात् संवत्सरीणममृतंस्वस्तिस्वस्तिभवंतोब्रुवंतु आयुष्मतेस्वस्ति ऋ
ध्यामस्तोमंसनुमामवाजमानोमंत्रंसरथेहोपयातम् यइगेनपक्वंमधुगोपांतराभूतां अश्विनौकाममप्राः सर्वामृद्धि
मृध्नुयामिति तंवेतजसेवपुरस्तात्पर्यच्छंदोभिर्मध्यतोक्षरैरुपरिष्टाद्गायत्र्यासर्वतोद्वादशाहं परिभूय सर्वामृद्धिमाध्नो
त्सर्वामृद्धिमृध्नोतियएवंवेद ऋध्यास्महव्यैर्नमसोपसद्यमित्रंदेवंमित्रधेयंनोअस्तु अनूराधान्हविषावर्धयंतःशतंजी
वेमशरदः सवीराःत्रीणित्रीणिवैदेवानामृध्यानित्रीणिछंदांसित्रीणिसवनानि त्रयइमेलोकाऋध्यामेवतद्वीर्यएपुलोके
षुप्रतितिष्ठति ऋद्धिंभवंतोब्रुवंतु ऋध्यतां श्रियेजातःश्रियआनिरियायश्रियेवयो जरितृभ्योदधातिश्रियं वसान अ
मृतत्वमायन्भवंति सत्यासमियामितद्रौ श्रियएवैनंतच्छ्रियामादधाति संततमृचापट्कृत्यंसंतत्यैसंधीयते प्रजयाप
शुभिर्यएवंवेद यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् अमुंचलोकमिदमुतसर्वं तन्नो तन्नक्षत्रमभिजिद्विजित्यश्रियंदधात्व
हृणीयमानअहेबुध्नियमंत्रंमेगोपाय यमृपयस्त्रयीविदोविदुःऋचःसामानियजूंषिसाहिश्रीरमृतासतांश्रीरास्त्विति
भवंतोब्रुवंतु अस्तुश्रीःपुण्याहवाचनसमृद्धिरस्तुभगवान्प्रजापतिः प्रीयताम्ततोनीराजनमभिषेकंचयथाशास्त्रंकारये
दितिपुण्याहवाचनम् आदावंतेचमध्येचकुर्याद्ब्राह्मणवाचनम् अथपुनःसंकल्पकुर्यात् ॐतत्सद्ब्रह्मेत्यादिदेशकालौसं
कीर्त्य ममकर्त्तव्यैकादश्यादिव्रतोद्यापनकर्मणेनिर्विघ्नतासिद्ध्यर्थंगणपतिदुर्गाश्रीसहितगौर्यादिषोडशमातृकापू

जनाभ्युदयिककलशस्थापनसूर्यादिनवग्रहेंद्रादिलोकपालानहंपूजयिष्ये तत्रादौगणपत्यादीनांस्थापनक्रमःॐग
णानांत्वागणपतिंहवामहे प्रियाणांत्वाप्रियपतिंहवामहे निधीनांत्वानिधिपतिंहवामहेवसोममआहमजानिग
र्भधमात्वमजासिगर्भधम्ॐगणपतिरसिगणपतेइहागच्छ ॐगजास्यगणनाथत्वंसर्वविघ्नविनाशन लंबोदरसुनेत्रा
त्रसमागच्छगणाधिप १ गौरिदेविसमागच्छवरदाभयशूलधृक् कुलांविकेवृषारूढेशांतिंकुरुममाध्वरे हिमाद्रितन
यांदेवींवरदांभैरवप्रियां लंबोदरस्यजननींगौरीमावाहयाम्यहं एह्येहिनीलोत्पलतुल्यवर्णेश्वेतांबरेप्रोज्वलशूल
हस्ते नगेंद्रकन्येभुवनेश्वरित्वंपूजांगृहीतुंमखमस्मदीयं ॐभूर्भुवः स्वर्गौरिभगवति इहागच्छइत्यक्षतैरावाह्यपूज
येत् ॐपद्मेत्वंपद्महस्तासिपद्मनाभसमोपमे पद्मनाभस्यदायितेएहिसौम्येशुभंकुरु पद्मांभांपद्महस्तांचपद्मना
भोरसिस्थितां जगत्प्रियांपद्मवासांपद्मामावाहयाम्यहं एह्येहिपद्मेशशितुल्यवक्रेपंकेरुहस्थेशुभचक्रहस्ते सुरा
सुरेंद्रैरभिवंदितांघ्रेपूजांगृहीतुंममयज्ञभूमिम् ३ ॐभूर्भुवः पद्मेइहागच्छइत्यावाह्यपूजयेत् ॐपराशरस्यदुहिते
वज्रहस्तेभगामिनि शचिदेविहिनोयागेदुष्टारिमथनिःकले दिव्यरूपांविशालाक्षींशचींकुंडलधारिणीं रक्तमुक्ताद्यलं
कारांशचीमावाहयाम्यहम् १ प्रतप्तकार्त्तस्वरतुल्यवर्णेगजाधिरूढेनलिनाभनेत्रे सत्राप्रियेप्रोज्वलवज्रहस्तेपूजांगृ
हीतुंशचिदेविशीघ्रम् ३ ॐभूर्भुवः शचिदेविइहागच्छइत्यावाह्यपूजयेत् ३ मेधेहंसगतासित्वंचित्स्वरूपाहृदि
स्थिता आचारादौनमस्तुभ्यमेहिदेविजगत्प्रिये १ विश्वेश्वरींविशालाक्षींमहाबलप्रदायिनीं बुद्धिप्रबोधिनींसौ
म्यांमेधामावाहयाम्यहं एह्येहिमेधेशुभभूरिवक्रेपीतांबरेपुस्तकपाशहस्ते बुद्धिप्रदेहंससमाधिरूढेपूजांगृहीतुंम
खमस्मदीयम् ३ ॐभूर्भुवः मेधेदेवि इहागच्छइत्यावाह्यपूजयेत् ४ सावित्रिसर्वदेवानांब्रह्मादीनांविशेषतः पू
जनीयासिदेवित्वमेहियज्ञेशुभंकुरु १ जगत्सृष्टिकरींधात्रींदेवींप्रणवमातृकां वेदगर्भांज्ञानमयींसावित्रींपूजया

म्यहं एह्येहिसावित्रिजगद्विधात्रिब्रह्मप्रियेस्त्रुक्स्त्रुवपाशहस्ते प्रतप्तजांबूनदतुल्यवर्णेपूजांगृहीतुंमखमस्मदीयं ॐभूर्भूवः स्वः सावित्रिदेविइहागच्छइत्यावाह्यपूजयेत् ५ विजयेविश्वरूपात्वंविश्वात्माविश्वतोमुखी महादंष्ट्रेमहाकायेसमागच्छमहेक्षणे १ सर्वास्त्रधारिणींदेवींसर्वाभरणभूषितां सर्वदेवैः स्तुतांरम्यांतांविजयांस्थापयाम्यहम् २ एह्येहिसर्वास्त्रधरेकुमारिसुरासुराणांविजयप्रदात्रि त्रैलोक्यवंद्येशुभरत्नभूषे गृहाणपूजांविजयेनमस्ते ३ ॐभूर्भुवः स्वर्विजयेइहागच्छइत्यावाह्यपूजयेत् ६ जयेदेविसमागच्छजयदेसिंहवाहिनि वज्रासिचक्रैर्गदयारिपुंनाशयमेध्वरे सुरारिमथनांदेवींदेवानामभयप्रदां त्रैलोक्यवंदितदेवींजयामावाहयाम्यहम् २ एह्येहिपंकेरुहलोचनेत्वंजयप्रदेचंचलशक्तिहस्ते ब्रह्मादिदेवैरभिवंद्यमानेजयेत्रसिद्धिकुरुसर्वदामे ३ ॐभूर्भुवः स्वर्जयेदेविइहागच्छइत्यावाह्यपूजयेत् ७ देवसेनेसमागच्छदेवतानांपुरोगमे देवाधिदेवीत्वंप्रोक्तानिहंसिरिपुमध्वरे १ मयूरवाहिनींदेवींखड्गशक्तिधनुर्धराम् आवाहयेदेवसेनातारकासुरमर्दिनीम् २ एह्येहिचापासिधरेनघेत्वमयूरवाहेकमलायताक्षि इंद्रादिदेवस्थितिहेतुभूतेगृहाणपूजांममदेवसेने ३ ॐभूर्भुवः स्वर्देवसेनेदेविइहागच्छइत्यावाह्यपूजयेत् ८ स्वधेपितृमनुष्याणामेकात्वंत्रिगुणात्मिके कारणंहिसर्वेषामेहिदेविममाध्वरम् १ अग्निकांतापितृभ्योहिकव्यार्थंयाप्रयच्छति पितॄणांतृप्तिदादेवीस्वधामावाहयाम्यहम् २ एह्येहिवैश्वानरवल्लभेत्वंकव्यंपितृभ्यः सततंददासि स्वर्गाधिवासेशुभशक्तिहस्तेस्वधेत्रनः पाहिमखंनमस्ते ३ ॐभूर्भुवः स्वः स्वधेदेविइहागच्छइत्यावाह्यपूजयेत् ९ स्वाहेत्वंलक्षणैर्युक्तादेहियज्ञाभिवांछितं त्वमागच्छाध्वरेदेशंसमस्ताविहिताक्रिये १ हविर्गृहीत्वासततंदेवभ्योयाप्रयच्छति तांदिव्यरूपांपरमांस्वाहामावाहयाम्यहम् २ एह्येहिवैश्वानरपत्निदेवितडित्प्रभेशक्तिधरेकुमारि हस्तेगृहीत्वासुरतृप्तिहेतोस्वाहेप्रसीदमखमस्मदीयम् ३ ॐभूर्भुवःस्वः स्वाहेदेविइहागच्छइत्य

वाह्यपूजयेत् १० ॐभूर्भुवः स्वर्मातरोत्रसमागच्छतलोकमातरोत्रसमागच्छत आवाहयाम्यहंमातॄः सर्वदालो
कपूजिताः सर्वकल्याणरूपिण्योवरदानैकभूषणा १ आगच्छतागच्छतमातरोत्रब्राह्मीमुखाः सर्वजनैः प्रपूजिताःव
रप्रदादिव्यविभूषणाढ्याः पूजांगृहीतुंममयज्ञभूमिं ॐभूर्भुवः स्वर्मातरोत्रसमागच्छत ११ ॐभूर्भुवः स्वर्लो
कमातरइहागच्छतइत्यावाह्यपूजयेत् हृष्टसंतोषयुक्तासिसौम्याचंद्रमसोदिताः संसेव्याफलदासित्वविपरीताभ
यावहा १२ सर्वहर्षकरींदेवींभक्तानामभयकरीं हर्षोत्फुल्लास्यकमलाहृष्टिमावाहयाम्यहम् १ एह्येहिसर्वाभय
देकुमारिसमस्तलोकप्रियहेतुभूते प्रोत्फुल्लपंकेरुहतुल्यनेत्रेहृष्टेमखंपाहिशिवस्वरूपे ॐभूर्भुवः स्वः हृष्टिदेविइहा
गच्छ इत्यावाह्यपूजयेत् पुष्टेगर्भविशुद्ध्यर्थंपुष्टिंपोषयसेनृणां रक्षदेविसमागच्छममांगकमलेक्षणे १ पोषयतीजग
त्सर्वंस्वदेहप्रभवैर्नवैः शाखामूलैः फलैः रत्नैः पुष्टिमावाहयाम्यहम् २ एह्येहिपुष्टेशुभरत्नभूषेरक्तांबरेरक्तविशा
लनेत्रे भक्तिप्रियेपुष्टिकरीत्रिलोक्याः पूजांगृहीतुंमखमस्मदीयम् ३ ॐभूर्भुवः स्वःपुष्टिदेविइहागच्छइत्यावाह्य
पूजयेत् १६ आनंदगुणसंयुक्तेरूपभाग्यसमन्विते तुष्टिदेविसमागच्छमगलंकुरुमेसदा भावैराराधितांदेवींसदा
संतोषशालिनीं प्रसादसुमुखींदेवींतुष्टिमावाहयाम्यहम् २ एह्येहितुष्टेखिललोकवंद्येत्रैलोक्यसंतानविधानदक्षे
पीतांबरेशक्तिगदाब्जहस्तेशिवायनः पाहिमखंनमस्ते ॐभूर्भुवः स्वः तुष्टिदेविइहागच्छइत्यावाह्यपूजयेत् १४
आत्मदेविसमागच्छचित्स्वरूपेमयिस्थिते वरादिगुणसंयुक्ताशांतिंकुरुममाध्वरे १ पत्तनेनगरेग्रामेविपिनेवर्त्मनिगृ
हे नानाजातिकुलेशानींदेवीमावाहयाम्यहम् २ एह्येहिचास्मत्कुलदेवतेत्वंशोभाप्रदेशोभितपादपद्मे कल्याणदे
सर्वकुलस्यमातः पूजांगृहीतुंमखमस्मदीयम् ३ ॐभूर्भुवः स्वरात्मकुलदेवतेइहागच्छइत्यावाह्यपूजयेत् १५ इ
त्यंवंगणपतिसहिताः षोडशमातॄः प्रत्येकमंत्रैः प्रतिष्ठाप्यादौगणपतिंषोडशोपचारैः पूजयेत् तद्यथा गणेशं

प्रथमंपूज्यततोमातृ:प्रपूजयेत् नश्यंतिसर्वदुःखानिकल्याणानिभवंतिहि कृष्णेनभाषितंसर्वंदेवानांब्रह्मणोंतिके मं
गलेषुचयज्ञेषुभक्तियेप्रविनायके भूमिर्हलोद्धृताशून्यावीजहीनायथाभवेत् गणयागविहीनश्चतथायज्ञोभविष्य
ति अथ प्रतिमासगणपतिपूजाक्रमः मार्गमासेगणपतिः पौषेपूज्योविनायकः गजवक्रस्तथामाघेभालचंद्र
श्चफाल्गुने उपेंद्रश्चैत्रमासेतुवैशाखेविघ्ननाशनः ज्येष्ठेशिवसुतःपूज्यआषाढेहरनंदनः हेरंबःश्रावणेपूज्योभा
द्रेलंबोदरस्तथा आश्विनेचैकदंतश्चमहावीरश्चकार्तिके विघ्नहाचाधिकमासिएवंपूज्योगणेश्वरः अथपूजा
आवाहयाम्यहंदेवंगणेशंशिवनंदनं व्याघ्रचर्मांबरधरंव्यालयज्ञोपवीतिनं गजवक्रगणाध्यक्षसर्वविघ्नविनाशन
अस्मिन्यज्ञेसमागच्छलंबोदरनमोस्तुते गणानांत्वागणपतिंहवामहे इतिमंत्रेण अत्रागच्छजगद्वंद्यसुरराजा
र्चितेश्वर अनाथनाथसर्वज्ञलोकेशगणनायक इत्यावाहनं मौक्तिकैःपद्मरागैश्चनानारत्नैर्विराजितं रत्नसिंहा
सनंतस्यौपतांसुरसत्तम इत्यासनं अथध्यानं ध्यायेद्गजाननंदेवंतप्तकांचनसन्निभं चतुर्भुजंमहाकायंसर्वाभ
रणभूषितं दंतमाद्यकरेदद्याद्द्वितीयेकुलिशंतथा पाशंतृतीयकेदद्याच्चतुर्थेमोदकंन्यसेत् कनकसदृशवर्णंसर्वल
क्ष्मीप्रदंतं गजमुखमरुणाक्षंचंचलत्कर्णयुग्मं दशनकुलिशपाशमोदकंधारयंतं सुभगचतुरहस्तंनौमिसर्वार्थ
सिद्ध्यै इतिध्यानम् देवदेवस्यपूजार्थंपात्रंगंधाक्षतैर्युतं गृहाणार्घ्यंमयादत्तंसर्वासिद्धिंप्रदोहिमे इत्यर्घ्यं गौरी
सुतनमस्तुभ्यंगंधपुष्पाक्षतैर्युतं तवपाद्यंमयादत्तंगृहाणप्रणतप्रिय इतिपाद्यं गंगाजलंसमानीतंसुवर्णकलश
स्थितं सुगंधेनसमायुक्तंसम्यगाचमनंकुरु इत्याचमनम् विश्वेश्वरविशालाक्षसर्वागमविशारद मधुपर्कंगृहा
णत्वंमयासंपादितंविभो इतिमधुपर्कं स्नानंपंचामृतंदिव्यंपयोदधिघृतंमधु शर्करांचगृहाणत्वंसिद्ध्यर्थं:सुरपू
जित इतिपंचामृतम् गंगाजलसमानीतंसुवर्णकलशस्थितं तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यतां इतिशुद्धो

दकस्नानं रक्तवस्त्रयुगंदेव देवांगसदृशंनवं मयादत्तंगृहाणेदंसर्वंप्रसन्नमोस्तुते इतिवस्त्रं सुजातंब्रह्मसूत्रं
चकांचनंचोत्तरीयकं उपवीतंगृहाणेदंभक्तानामार्तिनाशन इतियज्ञोपवीतं अनेकरत्नखचितंसर्वाभरणसंयुतं
गृहाणभूषणंदेवइष्टांसिद्धिंप्रयच्छमे इत्याभरणं गंधकर्पूरकस्तूरीनानागंधैश्चसंयुतं विलेपनंगृहाणेदंगणाध्य
क्षायवैनमः इतिगंधं अक्षतानरुणान्देवसिद्धगंधर्वपूजित मयाहृतानिमान्देवगृहाणसुरसत्तम इत्यक्षताः सु
गंधीनिचपुष्पाणिरक्तपत्राणियानिच एकविंशतिपत्राणिगृहाणत्वंविनायक इतिपुष्पाणि पत्राणिच दशांगंगु
ग्गुलुंधूपंसुगंधंचमनोहरं उमासुतनमस्तुभ्यंगृहाणवरदोभव इतिधूपम् सर्वज्ञसर्ववरदसर्वेषांविदुषांवर गृ
हाणदीपकंदेवरुद्रप्रियनमोस्तुते इतिदीपम् सघृतंसफलंदेवमोदकंघृतपाचितं नैवेद्यंगृहाणमेदेवनमस्तेविघ्न
नाशन इतिनैवेद्यम् सपूगचूर्णकर्पूरनागवल्लीदलैर्युतं भोगप्रदंश्रीकरंचतांबूलंप्रतिगृह्यतां इतितांबूलम्
नीराजनंगृहाणेदंबहुदीपप्रकाशितं अज्ञानतिमिरार्तिघ्ननमस्तेविघ्नवारक इतिनीराजनं इदंफलंमयादेवस्थापि
तंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि इतिफलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंत
पुण्यफलदमतःशांतिंप्रयच्छमे इतिदक्षिणा आखुवाहनदेवेशविश्वंवद्यगजानन प्रदक्षिणीकरोमित्वांममत्वंस
न्निधौभव इतिप्रदक्षिणा नमस्तेदेवदेवेशनमस्तेविघ्ननाशन साष्टांगोयंप्रणामस्तेमयासम्यक्प्रयोजित इति
नमस्कारः न्यूनातिरिक्तानिपरिस्फुटानियानीहकर्माणिमयाकृतानि क्षम्याणिसर्वाणित्वयागणेशप्रयाहितुष्टःपु
नरागमाय इतिविसर्जनम् एवंगणेशंसंपूज्य ॐगौर्यैनमः पद्मायैनमः शच्यैनमः मेधायैनमः सावि
त्र्यैनमः विजयायैनमः जयायैनमः देवसेनायैनमः स्वधायैनमः स्वाहायैनमः मातृभ्योनमःलोकमातृभ्यो
नमः हृष्टैयैनमः पुष्ट्यैनमः आत्मकुलदेवतायैनमः इतिदेवमातृकाः सर्वोपचारैःसंपूज्य ॐभूर्भुवःस्वःगण

पतिसहिताःषोडशमातृकाःपूजिताःस्थक्षम्यतां श्रीमेयिरमतां ओंरूपंदेहिजयंदेहिभाग्यंभगवतिदेहिमे पुत्रा न्देहिधनंदेहिसर्वान्कामान्प्रदेहिमे इति ततोभित्तौउत्तरोत्तरक्रमेणपंचसप्तवारेखाःकुर्यात् अनेनक्रमेण ओं वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारंदेवस्त्वासवितापुनातु वसोःपवित्रेणशतधारेणसुप्वाकाम धुक्षइतिप्रतिपंक्त्वा रक्तसूत्रवस्त्रसहितपंचोपचारैःसंपूज्यप्रार्थयेत् ओंलक्ष्मीःश्रीश्चधृतिर्मेधाप्रजास्वाहासर स्वती सर्वपुष्टिकार्येपुसप्तैताघृतमातरइति अथवा ललिताचउमागौरीअंबिकासलिलाश्रया भगाहीचभ गाक्षीचसप्तैताघृतमातरः यद्वा ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा वाराहीचतथेंद्राणीचामुंडाःसप्त मातरः इति मातृपूजाभ्युदयिकप्रयोगः अथाभ्युदयिकश्राद्धं तच्च सपिंडकमपिंडकंवाकार्य्यं तत्रसौकार्य्यायाऽ पिंडकमेवकार्य्यं तत्स्वरूपनारायणीयेविशेषः अग्नौकरणमर्घ्यंचावाहनंचावनेजनं पिंडश्राद्धेप्रकुर्वीतपिंडहीने निवर्तते यथाच पिंडनिर्वापरहितंयत्रश्राद्धंविधीयते स्वधावाचनलोपोस्तिविकरस्तुनलुप्यते अक्षय्यंदक्षि णास्वास्तिसौमनस्यंयथास्थितीति अथास्यसंक्षिप्तप्रयोगः ओमद्यैकादश्यादिव्रतोद्यापनपूर्वांगत्वसांगतासिद्ध र्थंआभ्युदयिकश्राद्धमहंकरिष्ये ओंसत्यवसुसंज्ञकाविश्वेदेवा ओंभूर्भुवःस्वःइदंवःपाद्यं मातृपितामहीप्रपिता मह्योनांदीमुख्यः ओंभूर्भुवःस्वःइदंवःपाद्यं ओंपितृपितामहप्रपितामहानांदीमुखाः ओंभूर्भुवःस्वइदंवःपाद्यं मातामहप्रमातामहवृद्धप्रमातामहानांदीमुखाः ओंभूर्भुवःस्वःइदंवःपाद्यं इदंसर्वसव्येनैवकार्य्यं अत्रतिलार्थ स्तुयवैरेवकार्य्यइतिशास्त्रसंप्रदायः सत्यवसुसंज्ञकानांविश्वेषांदेवानांओंभूर्भुवःस्वइदमासनंमुखासनं नांदी श्राद्धेक्षणौक्रियेतां तथाप्राप्नुतांभवंतौप्राप्नुवावः मातृपितामहीप्रपितामहीनांनांदीमुखीनां ओंभूर्भुवःस्वःइदमा सनंसुखासनं नांदीश्राद्धेक्षणौक्रियेतां पितृपितामहप्रपितामहानां नांदीमुखानांओंभूर्भुवःस्वइदमासनंसुखासनं

नांदीश्राद्धे क्षणौक्रियेतां तथा प्राप्नुतांभवंतौप्राप्नुवावः ॐमातामहप्रमातामहवृद्धप्रमातामहानां नांदीमुखानां ॐभूर्भुवःस्वइदमासनंसुखासनंनांदीश्राद्धेक्षणौक्रियेतां तथाप्राप्नुतांभवंतौ प्राप्नुवावः ततोगंधादिदानं अत्रसर्वत्र युग्मब्राह्मणपूजनमतोद्विवचनोल्लेखः कार्यः सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्यॐभूर्भुवःस्वइदंगंधाद्यर्चनं स्वाहासंपद्यतांवृद्धिः मातृपितामहीप्रपितामहीभ्यः ॐभूर्भुवःस्वइदंगंधाद्यर्चनंस्वाहासंपद्यतांवृद्धिः ॐपितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यः ॐभूर्भुवःस्वइदंगंधाद्यर्चनंस्वाहासंपद्यतांवृद्धिः मातामहप्रमातामहवृद्धप्रमातामहेभ्यःसपत्नीकेभ्योनांदीमुखेभ्यः ॐभूर्भुवःस्वइदंगंधाद्यर्चनंस्वाहा संपद्यतांवृद्धिः ततःपरिवेषणंकृत्वा गायत्र्याप्रोक्ष्य ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेऽमृतंजुहोमिस्वाहा इतिपात्रमालभ्य इदंविष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरे सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्यइदंयुग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेण स्वाहा संपद्यतांवृद्धिः मातृपितामहीप्रपितामहीभ्योनांदीमुखीभ्यइदंयुग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेणस्वाहा संपद्यतांवृद्धिः पितृपितामहप्रपितामहेभ्योनांदीमुखेभ्य इदंयुग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेणस्वाहा संपद्यतां वृद्धिः मातामहप्रमातामहवृद्धप्रमातामहेभ्योनांदीमुखेभ्यइदंयुग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेणस्वाहासंपद्यतांवृद्धिः ॐस्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनः पूषाविश्ववेदाःस्वस्तिनस्तार्क्ष्योअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु अनेन नांदीश्राद्धेन कर्मांगदेवताः प्रीयंतां अत्र पुरुषसूक्तादिजपःकार्यः नांदीश्राद्धंसुप्रोक्षितमस्तु शिवाआपःसंतु सौमनस्यमस्तु अक्षतंचारिष्टमस्तु नांदीमुख्योमातरःप्रीयंतां नांदीमुखाःपितरःपितामहाःप्रपितामहाःप्रीयंतां नांदीमुखामातामहाःप्रमातामहावृद्धप्रमातामहाःसपत्नीकानांदीमुखाःप्रीयंतां ततआशीःप्रार्थनम् गोत्रंनोवर्धतां दातारोनोभिवर्धंतां वेदाःसंतति

रेवच श्रद्धाधनोमाव्यगमत् वहुदेयंचनोऽस्तु अन्नंचनोवहुभवेदतिथींश्चलभेमहि याचितारश्च न सतु माचया
चिष्मकंचनेति . सम्प्रार्थ्य ततोविप्रैः गोत्रंनोवर्द्धतांदातारोनोभिवर्धंतां वेदाःसंततिरेवच श्रद्धाचवोमाव्यगमत् वहु
देयंचवोऽस्तु अन्नचवोवहुभवेदतिथींश्चलभध्वंयाचितारश्चव सतुमाचयाचध्वंकचनेति प्रत्युक्ते द्राक्षामलकादित
न्निष्क्रयत्वेनदक्षिणांदद्यात् ॐमद्यैकादश्यादिव्रतोद्यापनांगभूतविश्वेषांदेवानामाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमेफ
लमूले वनस्पतिदैवते ॥ तन्निष्क्रयभूतामिमां ॥ दक्षिणा यथानामगोत्राय ॥ ब्राह्मणाय ॥ दातुमहमुत्सृजे
ॐमद्यकरिष्यमाणैकादश्यादिव्रतोद्यापनांगभूतकृतैतन्मातृपितामही प्रपितामहीनां ॥ नांदीमुखानां ॥ पितृ
पितामह प्रपितामहानां नांदीमुखानां मातामह ॥ प्रमातामह ॥ वृद्धप्रमातामहानां ॥ नांदीमुखानां ॥
सपत्नीकानामाभ्युदयिकश्राद्धप्रतिष्ठार्थ मिद द्राक्षामलकादिनिष्क्रयरूपं द्रव्यं यथानामगोत्रेभ्यो ब्राह्म
णेभ्योदातुमहमुत्सृजे वाजेवाजेवतवाजिनोधनेषु विप्राअमृताऋतज्ञाः अस्य पिवतमादयध्व यूयंयातस्वस्ति
न सदामेविश्वेदेवाःप्रीयतामितिविसर्जयेत् ॥ इतिनांदीश्राद्धप्रयोगः ॥ अथोद्यापनप्रयोगः तत्रादावाचा
र्यादिवरणकुर्यात् ॐमद्येत्यादिदेशकालौसंकीर्त्यामुकगोत्रोमुकशर्माहंसर्वपापक्षयार्थंचतुर्वर्गफलसिद्ध्यर्थं यथा
कालसमाचरितैकादश्यादिव्रतोद्यापनकर्मणि अमुकगोत्रममुकशर्माणंब्राह्मणमाचार्यत्वेनत्वामहंवृणे वृतोस्मीति
प्रतिवचन यथाविहितंकर्मकुरुकरवाणीतिआचार्येणोक्ते ततःप्रार्थना आचार्य्यस्तुयथास्वर्गेशक्रादीनःवृहस्प
तिः तथात्वंममयज्ञेस्मिन्भवाचार्य्योद्विजोत्तम मंत्रमूर्तिर्भवान्नाथसंसारोच्छेदकारक देवपूजाविधानार्हंकुरुध
र्मांगतिंचमे संसारभयभीतेनमयायज्ञःप्रवर्त्तित प्रारब्धस्त्वत्प्रसादान्मेनिर्विघ्नोयंभवेदिह अथापरंवेदवेत्तारंब्राह्म
णगंधादिभिरभ्यर्च्य ब्रह्मत्वेनवृणुयात् ॐमद्यैकादश्यादिव्रतोद्यापनयागकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तु

ममुकगोत्रममुकशर्माणंत्वांब्रह्मत्वेनाहंवृणे यथाचतुर्मुखोब्रह्मासर्वलोकपितामहः तथात्वंममयज्ञेस्मिन्ब्रह्माभव
द्विजोत्तम त्वंनोगुरुःपितामाताल्वंप्रभुस्त्वंपरायणं त्वत्प्रसादाच्चदेवात्रसर्वंमेस्यात्सुशोभनं आपद्विमोक्षणार्थायकु
रुयज्ञमतंद्रितः ऋत्विग्भिःसहितःसर्वैःसंयतैः सुसमाहितैः आचार्य्येणचसंयुक्तःकुरुकर्मयथोदितमितिप्रार्थ्य पू
र्वादिदिग्द्वारजापकान्वृणुयात् तत्रमंडपस्यपूर्वद्वारे भूमिदेवायनमः इत्यर्घ्यंदत्त्वा गंधादिभिःसंपूज्यवस्त्रालंका
रादिकंहस्तेनगृहीत्वा ॐमद्यास्मिन्नुद्यापनकर्मणिपूर्वद्वारेशांतिपाठार्थंद्वारपालत्वेनत्वामहंवृणे वृतोस्मीतिप्रति
वचनांतेप्रार्थयेत् यजमानः ऋग्वेदःपद्मपत्राक्षोगायत्र सोमदैवत अत्रिगोत्रश्चविप्रेंद्रऋत्विक्त्वंमेमखेभव शां
तिपाठमखेकुरु एवमन्यंविप्रपूर्वद्वारेजापकत्वेनत्वामहंवृणेप्रार्थनंपूर्ववत् २ ततोमंडपदक्षिणद्वारेशांतिपाठार्थ
मेकं जापकत्वेनापरं विप्रं वृत्वाप्रार्थयेत् २ कातराक्षोयजुर्वेदस्त्रैष्टुभोविष्णुदैवतःवैशंपायनविप्रेंद्रःशांतिपा
ठंमखेकुरु ततोमंडपस्यपश्चिमद्वारे सामवेदिनौद्वौविप्रौगंधादिभिःसंपूज्यवृणुयात् शांतिपाठार्थमेकं जापक
त्वेनचापरं २ वृत्वा प्रार्थयेत् सामवेदस्तुपिंगाक्षोजागतःशक्रदैवतः भारद्वाजस्तुविप्रेंद्रःशांतिपाठंमखेकुरु २
ऋत्विक्त्वंमेमखेभव २ ततोमंडपस्योत्तरद्वारेद्वावथर्ववेदिनौविप्रौगंधादिभिःसंपूज्य एकंद्वारपालत्वेन १ अ
परंशांतिकाध्यायपाठार्थंवृत्वा प्रार्थयेत् बृहन्नेत्रोथर्ववेदोनुष्टुभोरुद्रदैवतः सुमंतुश्चापिविप्रेंद्रःशांतिपाठंमखेकुरु
१ ऋत्विक्त्वंमेमखेभव २ एवंसर्वत्रद्वौद्वौब्राह्मणौवृत्वासंप्रार्थ्य ततश्चान्यंविद्वांसंविप्रंपूज्योपदेष्टृत्वेनवृत्वा स
दस्यत्वेनैकमपरमपि वृत्वा ज्ञाननिष्ठान्कुलीनानन्यानपिवृत्वा सर्वानिवकृतांजलिःप्रार्थयेत् अस्ययागस्य
निष्पत्त्यैभवंतोभ्यार्थितामया सुप्रसन्नैस्तुकर्त्तव्यमेतत्कर्मयथोदितं १ अस्मिन्कर्मणियेयेतुवृतागुरुमुखाद्विजाः सा
वधानाःप्रकुर्वंतुस्वंस्वंकर्मयथोदितं १ ततोवरणक्रमेणमधुपर्केणसर्वेषांविप्राणांयथाशक्तिपूजनंकुर्यात् आचार्य

ब्राह्मणौस्वगृह्योक्तविधानेनाऽवश्यमेवमधुपर्केणपूजनीयौ मधुपर्कविधानंचतुर्वेदविधानेनपृथक्लिखितं यथासंभव मन्त्रयोजनीयं ततोयजमानः सप्तधान्योपरिकलशं आजिघ्रकलशंमह्यात्वेतिवक्ष्यमाणमंत्रैः कलशस्थापनविधिनासंस्थाप्य तदुपरिपूर्णादर्वीतिवक्ष्यमाणमंत्रेणधान्यपूर्णपात्रंन्यस्य तत्रग्रहान्सव्याहृतिप्रणवपूर्वकैर्नाममंत्रैरावाह्य ॐभूर्भुवःस्वःसूर्य्यादिनवग्रहान् ब्रह्मवरुणसहितान्सदैवतकान्सपरिवारानहमत्रसंस्थापयामीतिसंस्थाप्यसंपूज्य पुष्पांजलिंदद्यात् ततआचार्य्यो.रक्तवस्त्रखंडेदूर्वाक्षतसर्वपदाधिसुवर्णान्वितांपोटलिकांरक्षाविधिमंत्रेण यजमानहस्ते अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् अहींश्चसर्वाञ्जंभयंत सर्वाश्चयातुधान्योधराचीःपरासुव इतिमंत्रेणवध्नीयात् ततोयजमानोयथाविहितंकर्मकुरुध्वमितिसर्वान्साचार्य्यान्ब्राह्मणान्ब्रूयात् तेच स्वंस्वंकर्म करवामइतिब्रूयुः पुनर्यजमानः संसारभयभीतेनह्ययंयज्ञःसुभक्तितः प्रारब्धस्त्वत्प्रसादेननिर्विघ्नोमेभवत्विहेति आचार्य्यंसंप्रार्थ्य आचारादचलग्रंथिपत्न्यासहविप्राय शंखरवेजायमानेसपरिच्छदोजलपूर्णकलशपुरःसरःसाचार्य्यर्त्विग्महामंडपंप्रदक्षिणीकृत्वातंप्रविशेत् ॐभद्रंकर्णेभिःशृणुयामदेवाःभद्रंपश्येमाक्षिभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुरितिमंत्रेण तत्रयजमानाचार्य्यर्त्विजांपश्चिमद्वारेणप्रवेशः यजमानपत्न्यादक्षिणद्वारेणपूर्वद्वारेणमंडपमध्येद्रव्यानयनं दानीयद्रव्यस्यदक्षिणद्वारेण पूजासंभाराणामुत्तरद्वारेण एवंयजमानोमंडपंप्रविश्य महावेद्याःप्राङ्मुखोभद्रासनेसपत्नीकउपविशेत् ततआचार्य्यःपूर्वसंपादितपंचगव्येनापोहिष्ठामयोभुवइत्यृचाकुशेनचमंडपंप्रोक्ष्य अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं सर्वेषामविरोधेनब्रह्मकर्मसमारभे १ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वतः स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु इतिमंत्रेणश्वेतसर्षपविकरणेनभूतोत्सारणंविधाय देवाआयांतुयातुधानाअपयांतु विष्णोदेवयजनंरक्षस्वेतिरक्षांकृत्वा पंचपल्लवा

घुपेतात्रिसूत्र्या कृणुष्वपाजइत्यादिरक्षोघ्नसूक्तमंत्रेणमंडपंसंवेष्ट्य ब्राह्मणैर्गंधादिकंग्राहयित्वा मंडपमनुमंत्रयेत् वितानेफलपुष्पाक्षतद्रव्याणिक्षिप्त्वा पूर्वादारभ्य मध्यगताश्चतस्रः स्थूणाः पूजयेत् ॐवसुदायैनमः १ ॐ भद्रायैनमः२अदित्यैनमः३ नंदायैनमः ४ ॐभूर्भुवःवसुदामावाहयामीत्यावाह्य ॐवसुदायैनमः ५इतिपंचोपचारैः सर्वाएवपूजयेत् ततोमंडपाग्नेयकोणादारभ्य ॐभूमिमावाहयामि भूम्यैनमः ६ पूर्वसंध्यायैनमः ७ मध्यसंध्यायैनमः ८ पश्चिमसंध्यायैनमः ९ गायत्र्यैनमः १० बृहत्यैनमः११ अदित्यैनमः १२ विलग्नायैनमः १३ पौर्णमास्यैनमः १४ सिनीवाल्यैनमः १५ नंदायैनमः १६ मंडपस्यईशानकोणे प्रमथनायैनमः १ देवहूत्यैनमः२ शिवायैनमः ३ लक्ष्म्यैनमः ४ इतिमध्यस्तंभसहिताःकोणस्थूणाःपूजयेत् ततःसर्वेभ्योबंधनेभ्योनम इतिशाखोद्बंधनान्यभिमंत्र्य संपूज्य पश्चिमद्वारेण निर्गत्य पूर्वादितोरणपूजामारभेत् इतिमंडपानुमंत्रणं अथपूर्वे आयाहिवज्रसंकाशपूर्वद्वारेकृताधिप ऋग्वेदाधिपतेनाम्नासुशोभननमोस्तुते इतिद्वारदेवतामालभ्य अश्वत्थतोरणाय नमः ॐअग्निमीडेपुरोहित यज्ञस्यदेवमृत्विजंहोतारंरत्नधातममित्यालभ्य ऋग्वेदंपूजयेत् प्राचींदिशंसमारभ्यसुदृढंनामतोरणं महावीर्यंमहाकायमिंद्रायुधसमप्रभं अस्मिन्महोत्सवेयज्ञेकृतनांप्रवरेशुभे १ एह्येहिअश्वत्थतोरण माल्यवत्पर्वतसहित ऋग्वेदाधिष्ठित इंद्रदैवत्य एनंयज्ञंरक्षसर्वविघ्नान्निवारय ऋग्वेदाधिष्ठिताय अश्वत्थतोरणायनमइतिगंधादिभिःसंपूज्य तस्यत्रिशूलशृंगेषु प्रादक्षिण्येन त्रीनादित्यान्पूजयेत् इंद्रायनमः १ धात्रेनमः २ भगायनमः३इत्यादित्रयंनाममंत्रैःसंपूज्य द्वारशाखयोर्वसुद्वयंपूजयेत् ध्रुवायवसवेनमः अध्वरायवसवेनमः तत्रशृंगेषुशाखयोश्चवस्त्राणिबद्ध्वा शाखामूलयोर्धान्यपुंजोपरि वारिपूर्णौरत्नगर्भौवस्त्रयुगाच्छन्नौ प्रशांतशिशिरनामानौकलशौ जातबीजांकुरशरावपिहिताननौ आजिघ्रकलशमितिप्रतिष्ठाप्य प्रशांतकलशायनमः

शिशिरकलशायनमः २ इतिगधादिनासंपूज्य स्त्रकूचंदनादिनाऽलंकृत्य तत्रराहुबृहस्पती आवाह्य राहवेनमः बृहस्पतयेनमः २ एवगधादिनासंपूज्य दक्षिणतोरणपूजामारभेत् इतिपूर्वतोरणपूजा अथदक्षिणतोरणपूजा नमस्तेधर्मराजायत्रेतायुगाधिपायच यजुर्वेदाधिदेवायसुभद्रद्वारदक्षिणे इतिद्वारदेवतामावाह्य औदुंबरविकट नामतोरणंपूजयेत् ॐइषेत्वोर्जेत्वावायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठतमायकर्मणे आप्यायध्वमघ्न्यादेवभा गमूर्जस्वतीप्रजापतिरनमीवा अयक्ष्मामावस्थेनईशतमाघशंसोरुद्रस्यहेतिः परिवोवृणक्तुध्रुवाअस्मिन्गोपतौ स्यातवह्वीर्यजमानस्यपशून्पाहि इत्यालभ्य यजुर्वेदंसंपूज्य दक्षिणांदिशमाश्रित्यविकटंनामतोरणं महावीर्यं महाकायंभिन्नांजनसमप्रभ अस्मिन्महोत्सवेयज्ञेक्रतूनांप्रवरेशुभे एह्येहिऔदुंबरमहातोरण गधमादनपर्वतस हितयजुर्वेदाधिष्ठितयमदैवत्य एनं यज्ञं रक्ष सर्वविघ्नान्निवारय यजुर्वेदाधिष्ठितायविकटनाम्ने औदुंबरतोरणायन मइतिगंधादिनापूजयित्वा शूलशृंगपुत्रीन् आदित्यान् आदित्यायनमः १ मित्रायनमः २ वरुणायनमः ३ द्वारा शाखयोः सोमायवसवेनम आप्यायवसवेनमः २ इतिनाममंत्रैर्गधादिनासपूज्य शृंगपुशाखयोश्चवस्त्राणिबद्ध्वा शाखामूलयोर्धान्यपुंजोपरिवारिपूर्णौपर्जन्याशोकनामानौकलशौ जातवीजांकुरशरावपिहिताननौ आजिघ्रकल शमित्यादिनाप्रतिष्ठाप्य पर्जन्यायनम अशोकायनमः एवंगंधादिनाभ्यर्च्य स्त्रकूचदनादिभिरलंकृत्य तोरणसूर्य यनमः १ अंगारकायनमइतिगधादिभिरर्चयेत् इतिदक्षिणतोरणपूजा अथपश्चिमतोरणपूजा ॐनमस्तेकामदेवाय पश्चिमद्वाराधिपाय सामवेदाधिपत्यंहिनाम्नाकल्याणकारक इतिद्वारदेवतामावाह्य प्लाक्षंसुभीमनामतोरणं ॐअग्न आयाहिवीतयेगृणानोहव्यदातयेनिहोतासत्सिबर्हिषीत्यालभ्यसामवेदंपूजयेत् प्रतीचींदिशमाश्रित्यसुभीमंनाम तोरणं महाकायमहाकायसुवर्णसदृशप्रभ अस्मिन्महोत्सवेयज्ञेक्रतूनांप्रवरेशुभे ॐएह्येहिप्लाक्षतोरणविंध्यपर्वत

सहितसामवेदाधिष्ठितवरुणदैवतएनंयज्ञंरक्ष सर्वविघ्नान्निवारयसामवेदाधिष्ठितायप्लक्षतोरणायनमः इतिगंधादि भिःसंपूज्य त्रिशूलशृंगेषुत्रीन् आदित्यान्संपूजयेत् अर्यम्णेआदित्यायनमः १ अंशवेनमः २ विवस्वतेनमः ३ गंधादिभिरभ्यर्च्य द्वारशाखयोः वसुद्वयंपूजयेत् अनिलायनमः अनलायनमः २ गधादिभिःसंपूज्य शृंगेषुशा खयोश्चवस्त्राणिवद्ध्वा शाखमूलयोर्धान्यपुंजोपरि भूतसंजीवनअमृतनामानौकलशौ जातवीजांकुरशरावपिहिताननौ आजिघ्रकलशमित्यादिनाप्रतिष्ठाप्य भूतसंजीवनायकलशायनमः अमृतनाम्नेकलशायनमः २ इत्येवं गंधादिभिरभ्यर्च्यस्त्रक्चंदनाऽलंकृततोरणे बुधायनमः १ शुक्रायनमः इत्यावाह्यपूजयेत् इतिपश्चिमतोरण पूजा अथोत्तरतोरणपूजा नमस्तेदिव्यरूपायअथर्वाधिपतेप्रभो कलेरधिपतेनाम्नामंगलंचोत्तरासन इतिद्वा रदेवतामावाह्य उत्तरांदिशमाश्रित्यसुप्रभंनामतोरणं महावीर्यंमहाकायंशुद्धस्फटिकसन्निभं अस्मिन्महोत्स वेयज्ञेकतूनांप्रवरेशुभे वटवृक्षोद्भवंवाटंतोरणं ॐशन्नोदेवीरभिष्टये आपोभवंतुपीतये शंय्योरभिस्त्रवंतुन इत्या लभ्य अथर्ववेदंसंपूज्य ॐएह्येहिअथर्वाधिपतेन्यग्रोधतोरण हिमवत्पर्वतसाहितसोमदैवत्यैएनंयज्ञंरक्षसर्वविघ्ना न्निवारय अथर्वाधिष्ठितायन्यग्रोधतोरणायनमः इतिगंधादिभिःसंपूज्यशृंगेषुत्रीन् आदित्यान् त्वष्ट्रेआदित्या यनमः १ सवित्रेनमः २ विष्णवेनमः इतिगंधादिभिरभ्यर्च्य द्वारशाखयोः प्रत्यूषायवसवेनमः १ प्रभासायव सवेनमः २ इतिवसुद्वयंगंधादिनाभ्यर्च्य शृंगेषुशाखयोश्चवस्त्राणिवद्ध्वा शाखामूलयोर्धान्यपुंजोपरिवा रिपूर्णौरत्नगर्भौवस्त्रयुगाच्छन्नौ जातवीजांकुरशरावद्वयापिहितमुखौ धनप्रदश्रीप्रदनामानौकलशौ आजिघ्रक लशमित्यादिनासंस्थाप्य धनप्रदायकलशायनमः १ श्रीप्रदायकलशायनमः इतिगंधादिनाभ्यर्च्य स्त्रक्चंदनादिनाऽलंकृत्य सोमंशनिकेतुंचावाह्यपूजयेत् सोमायनमः शनयेनमः केतवेनमः ३ एवंगंधा दिभिःपूजयेत् इत्युत्तरतोरणपूजा सर्वतोरणेषुस्वसजातीयकाष्ठनिर्मितशूलानितानं सर्वद्वारकलशानामुपरिघृत

पूरितदीपस्थापनंपूजनंच इतितोरणपूजा अथद्वारपूजा तत्रप्रथमं पूर्वद्वारमागत्य आजिघ्रेतिस्थापितेकलशद्वये इंद्रमावाहयेत् एह्येहिसर्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरामरेश संवीज्यमानोप्सरसांगणेनरक्षाध्वरंनोभगव न्नमस्ते इत्यावाह्य ॐत्रातारमिंद्रमवितारमिंद्रꣳ हवेहवेसुहवꣳशूरमिंद्रमाह्वयामिशक्रंपुरुहूतमिंद्रꣳ स्वस्ति नोमघवाधात्विंद्र इतिमंत्रेण गंधादिभिःसंपूज्य इंद्रःसुरपतिश्चैव वज्रहस्तोमहाबलः शतयागाधिपोदेवस्तस्मै नित्यंनमोनम इतिनमस्कृत्य इंद्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः देवसेनानामभिभंजतीनांजयंती नांमरुतोयंत्वग्रमितिपताकामालभ्य योमेदंडःपरापतद्वैहायसोधिभूम्यां तमहंपुनराददआयुषेब्रह्मवर्चसायेति दंडमालभ्य ॐत्रातारमिंद्रमितिपुनःपठेत् ॐआशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनां संक्रंद नोनिमिषएकवीरः शतꣳसेनाअजयत्साकमिंद्र इतिमंत्राभ्यां पीतौ पताकाध्वजावुच्छ्रयेत् ॐइंद्राय सां गाय सपरिवारायेप सघृतोदनबलिर्नमः ॐभोभो इंद्र इमं सदीपं घृतोदनबलिंगृहाण ममसपरिवारस्य यजमानस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता वरदोभव लोकेशेमांपताकांचगंधपुष्पादिकंबलिं मया दत्तंगृहीत्वाचपाहियज्ञमिहस्थितः इतिबलिंसमर्पयेत् अनयैवरीत्यातत्तद्देवानुवाकेनसर्वत्रबलिर्देयः ततःशचीपतेग जारूढवज्रहस्तामराधिप पूर्वाविकाशंयुष्माभिरक्षणीयंप्रयत्नतः इतिसंप्रार्थ्य तत्रैवकलशद्वये ऐरावतंदिग्गजम प्यावाह्यपूजयेत् ऐरावतायदिग्गजायनमः द्वारशाखयोः भूर्लोकायनमः भुवोलोकायनमः २ पुनःआदित्याय नमः सोमायनमः २ ऊर्ध्वोदुंबरेऋग्वेदायनमः १ अधोवास्तुपुरुषायनमः २ इतिसंपूज्य ध्वजेकुमुदायनमः योमेदंडःपरापतद्वैहायसोधिभूम्यां तमहंपुराददेआयुषेब्रह्मणेब्रह्मवर्चसायेति ध्वजदंडमालभ्य दंडेहेतुकभैरवाय नमः क्षेत्रपालायनमः ३ एवंनाममंत्रैर्गंधादिभिरभ्यर्च्य ऋग्वेदःपद्मपत्राक्षोगायत्रःसोमदैवतः अत्रिगोत्रश्चविप्रेंद्र

ऋत्विक्त्वंमेमखेभवेति ऋग्वेदंध्यात्वा सांगंसपरिवारंगंधाद्युपचारैःपूजयेत् शैवव्रतोद्यापनेतुपूर्वद्वारे वामभागेनंदिनेनमः दक्षिणभागेमहाकालायनमः इतिद्वारपालावपिसंपूज्य तत्रजपः श्रीसूक्तं १ पावमानंच २ सोमसूक्तं ३ सुमंगलं ४ पौरुषं ५ रुद्रसूक्तंच ६ वामदेव्यंतथैवच ८ अग्निमीलेइत्यादीनेकविंशत्यनुवाकान् ९ तथा ऋग्वेदोक्तंशांतिकाध्यायमिति पूर्वस्तौब्राह्मणौजपेतां इतिपूर्वद्वारपूजा २ अथाऽऽग्नेयकोणेगत्वा आचम्यएकंकलशंतत्रप्राग्वत्स्थापयित्वा तत्राग्निमावाहयेत् ओंएह्येहिसर्वामरहव्यवाहमुनिप्रवीरैरभितोभिजुष्टः तेजोवतालोकगणेनसार्धंममाध्वरंरक्षकवेनमस्ते १ इत्यग्निमावाह्य ओंअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे देवांआसादयादिह १ इतिगंधाद्यैरुपचारैःसंपूज्य सर्वदेवमयोदेवोरक्तोवन्हिर्महाबलः सप्तजिव्होमहावीर्योनमोवैश्वानरायते इतिनमस्कृत्य अग्नआयाहिवीतयेगृणानोहव्यदातये निहोतासत्सिबर्हिषि इति रक्तध्वजपताकेआलभ्य ओंत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्टाः यजिष्ठोवन्हितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् ओंअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे देवांआसादयादिह इतीमंमंत्रद्वयमुच्चार्य अग्नयेसांगायसपरिवारायएषदीपोघृतोदनबलिर्नमः भोभोअग्नेएनंसदीपंघृतोदनबलिंगृहाण यजमानस्यशांतिकर्त्ता क्षेमकर्ता तुष्टिकर्त्तावरदोभव इतिबलिंदत्वाप्रार्थयेत् नमस्तेअग्निरूपायनमोवैश्वानरायते चंडायचंडरूपायनमस्तेहव्यवाहनइति अत्राग्नेयकोणे पुंडरीकंदिग्गजंपूजयेत् ओंपुंडरीकायनमः १ इतिगंधादिनापूजयेत् इत्याग्नेयकोणपूजा ततोदक्षिणद्वारपूजा अथातोदक्षिणेगत्वाचम्यप्रतिद्वारकलशंपूर्ववत्स्थापितकलशद्वये धर्मराजमावाहयेत् एह्येहिवैवस्वतधर्मराजसर्वामरैरर्चितधर्ममूर्त्ते शुभाशुभानंदशुचामधीशशिवायनःपाहिमखंमदीयम् १ दंडहस्तोयमोदेवोधर्माध्यक्षोमहाबलः आवाहयेधर्मराजंतस्मैप्रेतपतेनमः इत्यावाह्य ओंअसियमोअस्यादित्योअर्वन्नासि

ततोगृह्यैनवतेन आसिसोमिनसनयाविष्टकआहुस्तेत्रीणिदिविवंधनानीतिगंधाद्युपचारैःसंपूज्य यमायत्वासूर्य स्यत्वातपसेदेवस्यसविताम्ध्वानक्पृथिव्यासस्पृशस्पाहि इतिपताकालंभः योमेदंडइतिदंडालंभनम् आयंगौः पृश्निरक्रमीदसदन्मातरंपुरःपितरंचप्रयंत्स्वइतिमंत्रेणश्यामिध्वजपताके उच्छ्रयेत् सुगन्नुपंथाप्रदिशन्नएधिज्योति ष्मध्येह्यजरन्नआयुः अपैतुमृत्युरमृतमन्आगाद्वैवस्वतोनोअभयंकृणोतु इतिमंत्रंपठित्वा यमायसांगाय एपस दीपमाषभक्तबलिर्नमः भोयमएनंसदीपमाषभक्तबलिंगृहाण यजमानस्यशांत्यादिकर्त्ताभव एवंमाषभक्तबलिं दत्वाप्रार्थयेत् वैवस्वतमहाबाहोनमस्तेधर्मसाक्षिणे शिवाज्ञापिहितोदेवदिशंरक्षभवानिति तस्मिन्नेवकलशद्व ये वामनंदिग्गजंसंपूज्य वामनायनमः १ द्वारशाखयोःस्वर्लोकायनमः १ महर्लोकायनमः २ भौमायनमः १ बुधायनमः २ ऊर्ध्वोदुंबरेयजुर्वेदायनमः १ द्वारशाखयोःगोदावर्य्यैनमः १ कृष्णायैनमः २ उत्तरांगे गणेशा यनमः १ श्रियैनमः २ अधोवास्तुपुरुषायनमः ध्वजेपुंडरीकाक्षायनमः योमेदंडइतिदंडमालभ्य तत्राअग्न्या स्यवेतालायनम इतिनाममंत्रैर्गंधादिनासंपूज्य बलिदानांतंविधाय कातराक्षायजुर्वेदस्त्रैष्टु भोविष्णुदैवतः वैशं पायनविप्रेन्द्रऋत्विक्त्वंमेमखेभवेति यजुर्वेदंध्यात्वा इषेत्वोर्जेत्वेतिमंत्रंपठित्वा गंधादिनार्चयेत् ३ शैवोद्यापने दक्षिणद्वारवामे गणेशायनमः दक्षिणभागेवृषभायनम इतिद्वारपालावपिसंपूज्य तत्रजपः आनोभद्रानुवाकश्च १ आशुःशिशानकस्तथा २ यद्देवात्रीणिचपठेत् ३ ततोष्टौचपुनंतुमां ४ अभिधाअसिसत्तैव ५ दीर्घायुस्तेऋ चंपठेत् ६ द्यौःशांति ७ रेकाप्यायस्व ८ पट्पयःपृथिव्यामेकया ९ नमोऽस्तुसर्पेभ्यः १० आकृष्णेन ११ देवस्यत्वापृथक्पृथक् १२ नमःशंभव १३ इत्येकोग्निर्देवताक्रमात् १४ त्रातारमिंद्रमित्येका १५ सोमंरा जानमेकया १६ अन्नपते १७ महइंद्रः ऋचंवार्चसमग्रकं १८ इतिदक्षिणद्वारपूजा अथनैर्ऋतेगत्वा आचम्य

अर्घंसंस्थाप्य पूर्ववत्स्थापितकलशेनिर्ऋतिमावाहयेत् ॐएह्येहिरक्षोगणनायकस्त्वंविशालवैतालपिशाचसंघैः म
माध्वरंपाहिशुभाधिनाथलोकेश्वरस्त्वंभगवन्नमस्ते १ सर्वप्रेताधिपोदेवोनिर्ऋतिर्नीलविग्रहः खड्गचर्मधरोनित्यंनै
र्ऋतायनमोनम इत्यावाह्य ॐमोपुण इंद्रात्रपृत्सुदेवैरस्तिहिष्मातेशुष्मिन्नवयः महश्चियस्यमीढुषोयव्याहवि
ष्मतोवंदतेगी इतिकृष्णपताकालंभः ॐएपतेनिर्ऋतेभागस्त्वंजुषस्वस्वाहेति कृष्णेध्वजपताकेउच्छ्रयेत्. ॐअ
सुन्वंतयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु इतिगंधा
दिनानिर्ऋतिपूजनं ॐमोपुणइतिमंत्रंपठित्वा सांगायसपरिवारायानिर्ऋतये इमंकृष्णव्रीह्यन्नंपुराणघृतसहितं
बलिंगृहाण यजमानस्य शांत्यादिकर्त्ताभव इतिबलिंदत्वा ध्वजेवामनायदिग्गजायनमः १ योमेदं
डइतिध्वजदंडमालभ्य तत्राग्निजिव्हायक्षेत्रपालायनम इतिगंधादिनाबल्यंतपूजनंकृत्वा निर्ऋतिंखड्गहस्तं
चसर्वलोकैकनायकं आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां राक्षसेभ्योहिरक्षार्थंभवानत्रप्रतिष्ठितः निर्वि
घ्नंयज्ञभूमिंत्वंकुरुष्वशवशासन इति निर्ऋतिं संप्रार्थ्य इति नैर्ऋत्यकलशपूजा अथपश्चिमद्वारपूजा
पश्चिमद्वारदेशेपूर्ववत्स्थापिकलशद्वयेवरुणमावाहयेत् एह्येहियादोगणवारिधीनांगणेनपर्जन्यगणेनसार्धंवि
द्याधरेंद्रामरगीयमानपाहित्वमस्मिन्भगवन्नमस्ते पाशहस्तात्मकोदेवोजलराश्यधिपोमहान् निम्नगा
मीतिविख्यातोवरुणायनमोनम इत्यावाह्य ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः
अहेडमानोवरुणेहवोध्युरुशंससमानआयुःप्रमोषीरिति गंधादिना संपूज्य पाशहस्तंचवरुणमंभसांप
तिमीश्वरं आवाहयामियज्ञेस्मिन्वरुणायनमोनम इति नमस्कृत्य ॐइमंमेवरुणश्रुधीहवमद्याचमृड
यत्वामवस्युराचके इति श्वेतपताकामालभ्य ॐउदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमंश्रथाय

अथावयमादित्यव्रतेतवानागसोअदितयेस्यामइतिश्वेतौपताकाध्वजावुच्छ्रयेत् ॐत्वंनोअग्नेवरुणस्यविद्वान् देव
स्यहेडोअवयासिसीष्ठाः यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् इतिपठित्वा सांगायसपरि
वारायवरुणायनवनीतयुतौदनवलिर्नमः भोवरुणइमंवलिंगृहाण यजमानस्यशांत्यादिकर्ताभवेति पूर्ववत्सदी
पवलिदानं अपांपतिरितिआपोवैदेवदेवनिगद्यसेशमनयाशुविघ्नानिनमोमकरवाहन इतिसंप्रार्थ्य तस्मिन्नेव
कलशद्वये अंजनंदिग्गजंसंपूज्य अंजनायनमः द्वारशाखयोः जनलोकायनमः १ तपोलोकायनमः २ पुनः
वृहस्पतयेनमः १ शुक्रायनमः २ ऊर्ध्वोदुंबरेसामवेदायनमः द्वारशाखयोः नर्मदायैनमः १ ताप्यैनमः २ उत्तरां
गे गणेशायनमः १ श्रियैनमः २ अधोवास्तुपुरुषायनमः ध्वजेशंकुकर्णायनमः योमेदंडइतिध्वजदंडमारुभ्य
तस्मिन् कालायनमः क्षेत्रपालायनम इतिगंधादिवल्यंतंसंपूज्य सामवेदस्तुपिंगाक्षोजागतः शक्रदैवतः भा
रद्वाजस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभव अत्रशैवोद्यापने प्रत्यग्द्वारेवामभागे भृंगीरिटयेनमः दक्षिणेस्कंदायनमः
इतिद्वारपालावपिसंपूज्य तत्रजपः इंद्रायसामगायत १ अहस्मिप्रथमजा २ सेतूत्तरा ३ स्वादिष्ठया गायं
तित्वांगायत्रिणः ५ कस्यनूनंकतमस्यामृतानां ६ सशुक्रिर्वृहत्साम ७ ज्येष्ठसाम ८ रथंतरं ९ तथाचसाम
वेदोक्तंशांतिपाठंपठेद्बुधः १० इतिपश्चिमद्वारपूजा अथवायव्यकलशपूजा ततोवायव्येगत्वा आचम्य पूर्वव
त्स्थापितकलशेवायुमावाहयेत् एह्येहियज्ञेश्वररक्षणायमृगाधिरूढः सहसिद्धसंघैः प्राणाधिपः कालगतेः सहा
यगृहाणपूजांभगवन्नमस्ते वायुमाकाशगंदेवंपवनंमेघवाहनं आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां इत्यावाह्य
तववायव्रतस्पतेत्वष्टुर्जामातरद्भुत अवांस्यावृणीमहे इतिमंत्रेण गंधाद्युपचारैःसंपूज्य तस्मिन्नेवकलशेपुष्प
दंतंदिग्गजमावाह्य पुष्पदंतायनम इतिसंपूज्य आनोनियुद्भिः शतिनीभिरध्वरंसहस्रिणीभिरुपयाहियज्ञं

वायोऽस्मिन्सदनेमादयस्वयूयंस्वास्तिभिः सदान इति पताकालंभःवायोयेतेसहस्रिणोरथासस्तेभिरागहिनियुत्वा न्सोमपीतयेइति तववादयवृहतरूपतइतिवा धूम्रौपताकाध्वजावुच्छ्रयेत् आनोनियुद्भिरितिपठित्वा सांगा यसपरिवाराय वायवे यवोदनवलिर्नमः भोवायोसदीपंयवोदनवलिंगृहाण यजमानस्यशांत्यादिकर्त्ताभवेतिपूर्व वद्वलिदानं ततोध्वजे सार्वभौमायनम इतिगधादिभिः संपूज्य येमेदंडइतिध्वजदंडमालभ्य तस्मिन्सर्व नेत्रायक्षेत्रपालायनम इतिगंधादिनासंपूज्य प्राणिनांप्राणरूपोयोमहावलपराक्रमः महावेगमृगारूढादिशं रक्षप्रभंजन इतिप्रार्थयेत् इतिवायव्यस्तभपूजा अथोत्तरद्वारपूजा ततउत्तरदेशेगत्वा आचम्य अर्घ्यंसं स्थाप्य पूजासकल्पंविधाय पूर्ववत्प्रतिहारशाखस्थापितकलशद्वये सोममावाहयेत् एह्येहियज्ञेश्वरयज्ञरक्षां विधत्स्वनक्षत्रगणेनसार्द्धं सर्वौषधीभिः पितृभिः सहैवगृहाणपूजांभगवन्नमस्ते नक्षत्राणांचसर्वेषांसोमोरा जाप्रकीर्तितः रत्नांगीचमहाहस्तसोमराजायतेनम इत्यावाह्य ॐआप्यायस्वसमेतुतेविश्वतःसोम वृष्ण्यंभवा वाजस्यसगथे इतिगंधादिनासंपूज्य सर्वनक्षत्रमध्येतुसोमोराजाप्रतिष्ठितः तस्मैदेवायसोमायनक्षत्रपतयेन मः ॐसोमोधेनुꣳसोमोअर्वंतमाशुꣳसोमोवीरंकर्मण्यंददाति सादन्यंविदथ्यꣳसभेयंपितृश्रवणंयोददाशदस्मै इतिपताकालभः ॐवयꣳसोमव्रतेतवमनस्तनूषुविभ्रतः प्रजावंतः सचेमहि ॥ इतिसुवर्णवर्णेध्वजपताके उच्छ्रयेत् वयꣳसोमेतिमन्त्रेणगंधादिनासंपूज्य प्रियंगववलिंसांगायसपरिवारायसोमायएषप्रैयंगववलिर्नमः भोसोमइमंसदीपंप्रैयंगववलिंगृहाण यजमानस्यशांत्यादिकर्त्ताभव इतिवलिंदत्वाप्रार्थयेत् प्रालेयांशोमहारूपनक्ष त्राणामधीश्वर ओषधीनांप्रभोरक्षउदीचींत्वसमाहितइति तस्मिन्नेवकलशेसार्वभौमंदिग्गजमावाह्य सार्वभौमाय नम इति नाममंत्रेणसंपूजयेत् ततोद्वारशाखयोः सत्यलोकायनमः ध्रुवलोकायनमः २ पुनःशनैश्चरायनमः

राहुकेतुभ्यांनमः ऊर्ध्वोदुंबरे अथर्ववेदायनमः द्वारशाखयोः वेण्यैनमः पयोष्ण्यैनमः उत्तरांगेगणेशायनमःश्रियै
नमः २ अधोवास्तुपुरुषायनमः ध्वजेसुमुखायनमः योमेदंडइतिमंत्रेणध्वजदंडालंभः तस्मिन्नेकपादायक्षेत्रपाला
यनम इतिनाममंत्रेणगंधादिनापूजयित्वा सुवर्णनयनोथर्वानुष्टुपछंदस्तथाऋषिः वेदोवैतानगोत्रस्तुऋत्विक्त्वंमे
मखेभवेत्यथर्ववेदंध्यात्वा ॐशन्नोदेवीरभीष्टयआपोभवंतुपीतयेशंय्योरभिस्रवंतुनइतिगंधाद्युपचारैः पूजयेत् शैव
व्रतोद्यापनेतु उत्तरद्वारे वामभागे उमायैनमः दक्षिणेचंडेश्वरायनमः इतिद्वारपालावपिपूजयेत् तत्रजपः अथ
र्वांगिरसंचैव १ अथर्वशिरसंतथा २ तथैवशांतिकाध्यायं ३ पठेदुत्तरतः स्थितइत्युत्तरद्वारपूजा अथैशा
नकलशपूजा ततईशानस्तंभसमीपमागत्य आचम्य पूर्ववत्स्थापितकलशेईशानमावाहयेत् ॐएह्येहिविश्वे
श्वरनस्त्रिशूलकपालखट्वांगवरेणसार्धं लोकेशयज्ञेश्वरयज्ञसिद्ध्यैगृहाणपूजांभगवन्नमस्ते सर्वविद्याधिपोदेवईशा
नोनामनामतः शूलपाणिर्महादेवस्त्रैलोक्यपतयेनम इत्यावाह्य ॐकद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे वो
चेमशंतमंहृदे इतिगंधादिनासंपूज्य ॐनमः शंभवायचमयोभवायचनमः शंकरायचमयस्करायच नमःशि
वायचशिवतरायचेति पताकामालभ्य ॐतमीशानंजगतस्तस्थुषस्पतिं धियंजिन्वमवसेहूमहेवयं पूषानो
यथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये इतिश्वेतांपताकाध्वजावुच्छ्रयेत् कद्रुद्रायेतिमंत्रंपठित्वा सांगायसप
रिवारायेशानायसदीपंगवेधुकबलिंसमर्पयामि भोईशानइमंसदीपंगवेधुकबलिंगृहाण यजमानस्यशांत्यादिक
र्त्ताभव इतिबलिंदत्वाप्रार्थयेत् रक्षणंकुरुमेदेवत्रिनेत्रायत्रिशूलिने वृषध्वजाययज्ञायनक्षत्रपतयेनमइति तस्मि
न्नेवकलशेसुप्रतीकदिग्गजमावाह्य सुप्रतीकायनम इतिसंपूज्य ध्वजेसुप्रातिष्ठितायनमः योमेदंडइतिध्वज
दंडमालभ्य तस्मिन्भीमायक्षेत्रपालायनमः इतिगंधादिना बल्यंतपूजनंविधायप्रार्थयेत् वृषस्कंधसमारूढ

शूलहस्तंत्रिलोचनं आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतामिती।शानकलशपूजा ततोनैर्ऋत्यपश्चिमयोर्मध्ये कल्पिताध प्रदेशे अनंतमावाहयेत् ॐएह्येहिपातालधरामरेंद्रनागांगनाकिन्नरगीयमान यक्षोरगेंद्रामरलो कसंघैरनंतरक्षाध्वरमस्मदीयम् १ पन्नगाधिपतिर्देवोयोनंतोनीलविग्रहः पातालेवसतेनित्यमनंतायनमोनम इ त्यावाह्य ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु येतरिक्षेयेदिवितेभ्य.सर्पेभ्योनम इतिपताकालंभः ॐतद्विष्णो परमंपदꣳसदापश्यतिसूरय. दिवीवचक्षुराततं इतिमेघवर्णांपताक।ध्वजावुच्छ्रयेत् आयंगौरितिमंत्रेणवा ॐ विष्णोर्नुकवीर्य्याणिप्रवोचंय· पार्थिवानिविममेरजाꣳसियोअस्कभायदुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायोवि ष्णवेत्वा इतिपठित्वा सांगायसपरिवारायअनंतायएषमाषभक्तबलिर्नमः ॐभोअनंतइमंमाषभक्तबलिसदीप गृहाण यजमानस्यसपरिवारस्यशान्त्यादिकर्त्ताभव इतिबलिदत्वाप्रार्थयेत् योसावनंतरूपेणब्रह्मांडंसचराचर पुष्पवद्धारयेद्दंतस्मैनित्यंनमोनम इतिनमस्कृत्य अनंतत्वादनंतस्त्वंफणेशाधिपतेहरे त्वयात्ररक्षणंकार्य्यंकृ ष्णनेत्रायतेनम इतिध्वजे योमेदंडइतिदंडमालभ्य तस्मिन्भैरवायक्षेत्रपालायनम इतिनाममंत्रेण गंधादिब ल्यंतंपूजयेदिति इत्यनंतकलशपूजा तत पूर्वैशानयोर्मध्येकल्पितोर्ध्वप्रदेशेप्राग्वत्स्थापितकलशेब्राह्मणमापाद येत् ॐएह्येहिसर्वाधिपतेसुरेंद्रलोकेनसार्धंपितृदेवताभिः सर्वस्यधातास्यमितप्रभावोरक्षाध्वरंनोभगवन्नमस्ते १ पद्मयोनिश्चतुर्मूर्त्तिर्वेदावास पितामह आयाहिब्रह्मलोकात्त्वंतस्मैब्रह्मात्मनेनम इत्यावाह्य ॐब्रह्मयज्ञानंप्रथमं पुरस्ताद्विसीमत·सुरुचोवेनआवः सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः इतिमंत्रेणसपूज्य यद्देवा देवहेडनंदेवासश्चकृमावयं अग्निर्मातस्मादेनसोविश्वान्मुंचत्वंहसः इतिपताकालंभः ब्रह्मयज्ञानमंत्रेणैवरक्तांपता काध्वजावुच्छ्रयेत् तत·सागायसपरिवारायब्रह्मणेपायसबलिंदद्यात् भोब्रह्मन्इमंपायसबलिंगृहाण यजमानस्य

सपरिवारस्य शांत्यादिकर्त्ताभव इतिबलिंदत्त्वाप्रार्थयेत् ब्रह्मयोनिश्चतुर्मूर्तिर्वेदावासःपितामहः यज्ञाध्यक्षचतु र्वक्रतस्मैनित्यनमोनम इतिपाठेत्वा पितामहजगत्श्रेष्ठकृष्णेशाव्येमरूपिणे व्योमस्थायनमस्तुभ्यंरक्षस्वेमंम खंप्रभो इतिप्रार्थ्य ध्वजेसुप्रभायनमः योमेदंडइतिध्वजालंभुः ध्वजदंडभूतनाथायक्षेत्रपालायनम इतिगंधा दिनाबल्यंतंपूजयेत् इतिब्रह्मपूजा ततआचम्यमंडपस्यमध्ये ब्रह्मसमीपेवा किंकिणीचामरमयूरपिच्छयुतोऽत्यु च्चोषोडशहस्तदंडोदशहस्तदंडोवाविचित्रवर्णोमहाध्वजःस्थाप्यः मंत्राः इंद्रस्यवृष्णोवरुणस्यराज्ञ आदित्यानांम रुताꣳशर्धउग्रम् महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थादितिसंस्थाप्य ततः गणानांत्वागणपतिꣳ हवामहे इत्यादिमंत्रेणगणपतिंसंपूज्य ॐनमोस्तुरुद्रेभ्योयेदिवियेषांवर्षमिषवःतेभ्योदशप्राचीर्दशदक्षिणादश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः तेभ्योनमोऽस्तुतेनोवंतुतेनोमृडयंतुतेनायंद्विष्मोयश्चनोद्वेष्टितमेषांजंभेदध्म इत्यादि मंत्रत्रयेणदिक्षुविदिक्षुरुद्रान्संस्थाप्य तेभ्योबलिंदत्त्वा ईशानभागेसार्वभौतिकबलिंदद्यात् भूमौत्रिकोणवृत्तंचतुर स्रंमंडलंविधाय तत्रफलपुष्पाद्युपेतकृष्णशरादिबलिंनिधायहस्तेजलंगृहीत्वा अथश्चैवतयेलोकासुराश्चैवप न्नगाः सपत्नीपरिवाराश्चप्रतिगृह्णंत्विमंबलिं २ येकेचित्विहलोकेषुआगताबलिकांक्षिणः तेभ्योबलिंप्रयच्छा मिनमस्कृत्यपुनःपुनः ३ बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा मरुतोथाश्विनौदेवाःसुपर्णाःपन्नगाग्रहाः असुरायातुधानाश्चपिशाचामातरोनगाः शाकिन्योयक्षवेतालायोगिन्यःपूतना शिवाः जंभकाःसिद्धगंधर्वामाला विद्याधराःखगाः दिक्पालालोकपालाश्चयेचाविघ्नविनायकाः जगतांशांतिकर्त्तारोब्रह्माद्याश्चसहर्षयः माविघ्नं माचमेपापंमासंतुपरिपंथिनः सौम्याभवंतुमेतृप्तादेवाभूतगणास्तथा ७ इतिबलिंसमर्पयन्पठेत् अथैवंपूर्वभा गेवबलिंदद्यात् त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ब्रह्माविष्णुशिवैःसार्द्धंरक्षांकुर्वंतुतानिमे देवदानवगंधर्वाः

यक्षराक्षसपन्नगाः ऋषयोमनवोगावोदेवमातरएवच सर्वेममाध्वरेरक्ष.प्रकुर्वंतुमुदान्विताः ब्रह्माविष्णुश्चरुद्र
श्चक्षेत्रपालगणैःसह रक्षतुमंडपंसर्वंघ्नतुरक्षांसिसर्वत इतिरक्षोघ्नमंत्रान्पठित्वा संक्षेपेणबलिदानंकुर्य्यात् यथा
पूर्वदिग्वासिदिक्पतिदिग्भूताधिपदिग्रुद्रदिग्मातृदिक्क्षेत्रपालेभ्योनमः इतिबलिंदत्त्वा तथैवमंडपदक्षिणे दक्षि
णदिग्वासिदिक्पत्यादिभ्योबलिदानम् २ तथैवपश्चिमदिग्वासिभ्योबलिदानं एवंचोत्तरदिग्वासिसर्वभूतेभ्योब
लिदानं एवंसर्वतोबलिदानंविधाय. आचम्य मंडपस्यषोडशस्तंभेषुदेवेभ्योनमः . वंशेषुकिन्नरेभ्योनमः पृष्ठप
न्नगेभ्योनमः इतिनमस्कृत्य अथवितानारोपणंपंचरात्रागमे नवेनचित्रवस्त्रेणवितानंकारयेच्छुभं अथवाशुक्लव
स्त्रेणवितानंकारयेदपिउत्तमाधममध्यंतुप्रमाणंतस्यकीर्तितं मंडपस्यप्रमाणेनश्रेष्ठतस्याद्वितानक मध्यमंवेदिमा
त्रतुकनिष्ठंमंडलस्यतु ततोयजमानःसाचार्य्योहस्तौपादौप्रक्षाल्याचम्य प्राग्द्वारेणमंडपंप्रविश्य दक्षिणद्वारस्य
पश्चिमत उपविश्य यथाविहितंकर्मकुरु इत्याचार्य्यंप्रेषयेत् इतिमंडपप्रतिष्ठा ततआचार्य्योमहावेद्युपरिफलपु
ष्पसेवितवितानंदत्त्वा पश्चिमतउपविश्य आचम्य अर्घ्यंसंस्थाप्य. प्राणानायम्य.महावेद्युपरिसर्वतोभद्रंवाषोड
शारंतुमंडलं पंचवर्णैःपूर्वोदितक्रमेणसंपाद्य शैवशाक्तादिव्रतोद्यापनेतुलिंगतोभद्रंसंपादयेत् . तत्रसर्वसाधारणं
चतुर्लिंगतोभद्रं सर्वतोभद्रेदेवस्थापनंकुर्य्यात् ओमद्येहएकादश्यादिव्रतोद्यापनकर्मणिपूर्वांगत्वेनमंडलदेवताना
मावाहनं स्थापनंपूजनंचाहकरिष्ये इतिसंकल्प्य ओंप्रणवस्यब्रह्माऋषिर्दैवीगायत्रीछंदः. परमात्मादेवतात्रि
व्याहृतीनांविश्वामित्रजमदग्निभरद्वाजाऋषयः गायत्र्युष्णिगनुष्टुप्छंदांस्यग्निवायुसूर्यादेवतामंडलदेवतानामावाह
नेविनियोगः तत्रमध्येब्रह्माणंस्थापयेत् ओंब्रह्मयज्ञानमितिगौतमोवामदेवऋषिर्ब्रह्मादेवतात्रिष्टुप्छंदः ब्रह्मस्था
पनेविनियोगः ओंब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः सुबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसत

श्वविवः ॐब्रह्मणेनमः ब्रह्माणंस्थापयामि ततोमंडलाद्बहिः प्रागादिक्रमेणलोकेशान्स्थापयेत् तत्रप्रथमंपूर्वे
वाप्यां ॐत्रातारमिंद्रमितिगौत्तमऋषिः त्रिष्टुपछंदः इंद्रोदेवता इंद्रावाहनेविनियोगः त्रातारमिंद्रमवितारमिंद्रꣳ
हवेहवेसुहवꣳशूरमिंद्रमाव्हयामशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवाधात्विंद्रः इंद्रायनमः इंद्रमावाहयेत् २ ततः
आग्नेय्यांत्रिपदेखंडेह्रौ त्वन्नोअग्नेइत्यस्यहिरण्यस्तूपऋषि त्रिष्टुपछंदःअग्निर्देवताअग्न्यावाहनेविनियोगः ॐत्वन्नो
ऽअग्नेवरुणस्यविद्वान् देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवन्हितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् अग्न
येनमः अग्निमावाह्य ततोदक्षिणरयांवाप्यां यमायत्वेतिविवस्वतऋषिः त्रिष्टुप्छंदः यमोदेवता यमावाहनेवि
नियोगः ॐयमायत्वामखायत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याःसꣳस्पृशस्पाहि अर्चिरसि
शोचिरसितपोसि यमायनमः यममावाहयामि ४ ततोनैर्ऋत्ये त्रिपदे असुन्वंतमयजमानमिच्छस्तेनस्येत्याम
न्विहितस्करस्य अन्यमस्मदिच्छसातइत्यानमोदेवीनिर्ऋतेतुभ्यमस्तुनिर्ऋतयेनमः निर्ऋतिमावाहयेत् ५ तत्वाया
मीतिशुनःशेफऋषिःत्रिष्टुपछंदः वरुणोदेवता वरुणावाहनेविनियोगः ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्ते
यजमानोहविर्भिः अहेडमानोवरुणेहवोध्युरुशꣳसमानआयुःप्रमोषीः वरुणायनमः वरुणमावाहयेत् इतिपश्चिमे
वाप्यां ततोवायव्येत्रिपदेखंडेह्रौ ॐआनोनियुद्भिरितिप्रजापतिऋषिःत्रिष्टुप्छंदः वायुर्देवता वाय्वावाहनेविनियोगः
ॐआनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञं वायोअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःस
दानः वायवेनमः वायुमावा० ७ ततउत्तरे वाप्यांवयꣳसोमेत्यस्यसुबंधुऋषिर्गायत्रीछंदः सोमोदेवता सोमावाह
नेविनियोगः ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावंतः सचेमहि सोमायनमः सोममावा०८ ततऐशान्यां त्रि
पदेखंडेह्रौ तमीशानमित्यस्यगौत्तमऋषिः जगतीछंदः ईशानोदेवता ईशानावाहनेविनियोगः ॐतमीशानंजग

तस्तस्थुपरुपर्तिधियंजिन्वमवशेन्हमहेवयं पूपानोयथावेदसामसद्दृधे रक्षितापायुरदब्ध·स्वस्तये ईशानाय
नमः ९ ततईशानमध्ये भद्रे ॐसुगावोदेवाइत्यस्यप्रजापतिऋषिः त्रिष्टुपूछंदः वसवोदेवता वसूनामावाहने
विनियोगः ॐसुगावोदेवाः सदना अकर्म्मजआजग्मेदᳪसवनंजुषाणाः भरमाणाहवमानाहवीᳪष्यस्मेधतवस
वोवसूनिस्वाहा वसुभ्योनमः१०इंद्राग्निमध्येभद्रेरुद्रासᳪसृज्येतिप्रजापतिऋषिः त्रिष्टुपछंदः रुद्रादेवतारुद्राणामा
वाहनेविनियोगः ॐरुद्राःसᳪसृज्यपृथिवींबृहज्ज्योतिः समिधीरेतेषांभानुरजस्रइच्छुक्रोदेवेपुरोचते रुद्रेभ्योनमः
रुद्रान्. ११ अग्नियममध्येभद्रे द्वादशादित्यान् यज्ञोदेवानामिति कुत्सऋषिः त्रिष्टुपछदः आदित्यादेवता
आदित्यानामावाहनेविनियोगः यज्ञोदेवानांप्रत्येतिसुम्नमादित्यासोभवतामृडयंतः आवोर्वाचीसुमतीर्ववृत्याद
ᳪहोश्चिद्यावावरिवोवितरासदादित्येभ्यस्त्वाद्वादशादित्येभ्योनमः द्वादशादित्यान्. १२ यमनिर्ऋतिभद्रेमरुतः
मरुतेयस्येति गोत्तमऋषिर्गायत्रीछंदः मरुतोदेवताः मरुताम्. विनियोगः ॐमरुतोयस्याहिक्षये पाथादि
वोविमहसःसमुगोपातमोजनः मरुद्भ्योनमः मरुतआवा. १३ निर्ऋतिवरुणयोर्मध्ये भद्रे विश्वान् देवान्
ॐमासश्चर्पणीत्यस्यमधुच्छंदऋषिः गायत्रीछंदः विश्वेदेवादेवता विश्वेदेवानामावाहनेविनियोगः ॐमासश्चर्प
णीधृतोविश्वेदेवासआगतदाश्वाᳪसोदाशुपःसुतं विश्वेभ्योदेवेभ्योनमः विश्वान्देवान्. १४ वरुणवायुमध्ये
भद्रेसाध्यान्देवान् यज्ञेनयज्ञमितिनारायणऋषिः त्रिष्टुपूछंदः पुरुषोदेवता साध्यानामावाहनेविनियोगः यज्ञेन
यज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः इतिसाध्येभ्योन
मः साध्यान्. १५ वायुसोममध्येभद्रेअश्विनौ यावांकशेत्यस्य मेधातिथिऋषिः यजुर्गायत्रीछंदः अश्विनौ
देवता अश्विनोरावाहनेविनियोगः अश्विनौयावांकशामधुमत्याश्विनासूनृतावाततयायज्ञंतिग्मीक्षताम् अश्विना

तेजसाचक्षुःप्राणेनसरस्वतीवीर्य्यंवाचेंद्रोबलेनेंद्रायदधुरिंद्रियं अश्विभ्यांनमः अश्विनाआवाहयामि १६ सोमे
शानमध्येभद्रेस्कंदम् यदक्रंदः प्रथमंजायमानउद्यन्तसमुद्रादुतवापुरीषात् श्येनस्यपक्षाहरिणस्यबाहू उपस्तुत्यं
महिजाततेअर्वन् स्कंदायनमः वृषभायनमः स्कंदमावाहयामि वृषभमावाहयामि १७ब्रह्मेंद्रमध्येवल्ल्यांविष्णुं
इदंविष्णुरितिमेधातिथिऋषिः गायत्रीछंदः विष्णुर्देवता विष्णोरावाहनेविनियोगः इदंविष्णुर्विचक्रमेत्रेधानि
दधेपदंसमूढमस्यपांसुरे विष्णवेनमः विष्णुमावाहयामि १८ ब्रह्माग्निमध्येवल्ल्यां गणपतिं गणानांत्वेति
प्रजापतिऋषिः त्रीणियजूंषिछंदांसि गणपतिर्देवता गणपत्यावाहनेविनियोगः गणानांत्वागणपतिंहवामहे
प्रियाणांत्वाप्रियपतिंहवामहे निधीनांत्वानिधिपतिंहवामहे वसोममआहमजानिगर्भधमात्वमजासिगर्भधं
गणपतयेनमः गणपतिमा. १९ ब्रह्मयममध्येवल्ल्यां पितृन् आयांतुनइत्यस्यप्रजापतिऋषिः त्रिष्टुप्छंदः पित
रोदेवता पितृणामावाहनेविनियोगः ॐआयांतुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः अस्मिन्यज्ञेस्वध
यामदंतोधिब्रुवंतुतेवंत्वस्मान् पितृभ्योनमः पितृनावाहयामि २० ब्रह्मनिर्ऋतिमध्येवल्ल्यां गंधर्वाप्सरसः
ऋताषाडित्यस्यवामदेवऋषिःगायत्रीछंदः गंधर्वाप्सरसोदेवता गंधर्वाप्सरसामावाहनेविनियोगः ॐऋताषाडृ
तधामाग्निर्गंधर्वस्तस्यौषधयोऽप्सरसोमुदोनामताभ्यः गंधर्वाप्सरोभ्योनमः गंधर्वाप्सरसआवाहयामि २१
ब्रह्मवरुणमध्येवल्ल्यां सप्तमातृः अंबेअंबिकेइत्यस्यप्रजापतिऋषिः अनुष्टुप्छंदः सप्तमातरोदेवताः सप्तमातृ
णामावाहनेविनियोगः ॐअंबेअंबिकेअंबालिकेनमानयतिकश्चनससस्त्यश्वकःसुभद्रिकांकांपीलवासिनीं सप्त
मातृभ्योनमः सप्तमातृरावाहयामि २२ ब्रह्मवायुमध्येवल्ल्यांसर्पान् नमोस्तुसर्पेभ्यइत्यस्यप्रजापतिऋषिः
अनुष्टुप्छंदः सर्पादेवताः सर्पाणामावाहनेविनियोगः ॐनमोस्तुसर्पेभ्यायेकेचपृथिवीमनु येंतरिक्षेयेदिवितेभ्यः

सर्पेभ्योनमः सर्पानामावा. २३ ब्रह्मसोममध्येवल्ल्यांदुर्गां जातवेदसइत्यस्यकश्यपऋपिः त्रिष्टुप्छंदः जातवेदोग्निर्देवतादुर्गावाहनेविनियोगः ॐजातवेदसेसुनवामसोममरातियतोनिदहातिवेदः सनः पर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः दुर्गायैनमः ॐदुर्गा मावाहयामि. २४ ब्रह्मेशानमध्येवल्ल्यांपंचनदीः पंचनद्य इत्यस्यगृत्समदऋपिः अनुष्टुप्छंदः गंगादिनद्योदेवताः गंगाद्यावाहनेविनियोगः ॐपंचनद्यः सरस्वतीमपियंतिदेवस्त्रोतसःसरस्वतीतुपंचधासोदेशेभवत्सारित पंचनदीरावाहयामि. २५ ततोमंडलांतः ब्रह्मेशानदलादारभ्यदलाग्राष्टकेपु ऐशान्यांदलाग्रे अदितिर्द्यौरित्यस्य गौत्तमऋपिः त्रिष्टुप्छंदः दक्षाद्यादेवता दक्षाद्यावाहने विनियोगः अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः विश्वेदेवाअदितिः पंचजनाऽअदितिर्जातमादितिर्जनित्वं दक्षादिभ्योनमः दक्षादीनामा. २६ पूर्वदलाग्रेपुरुषं सहस्रशीर्षेतिनारायणऋपिः अनुष्टुप्छंदःपुरुषोदेवता पुरुषावाहनेविनियोगः ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् सभूमिंसर्वतःस्पृत्वात्यतिष्ठद्दशांगुलम् पुरुषायनमः पुरुषमावाहयामि २७ आग्नेय्याजातवेदसइत्यादिना दुर्गायैनमः दुर्गामावाहयामिनमः २८ दक्षिणस्यांदलाग्रेस्वधा उदीरितामित्यस्यशंखऋपिः अनुष्टुप्छंदः स्वधादेवता स्वधावाहनेविनियोगः ॐउदीरितामवरउत्परासउन्मध्यमाः पितरःसौम्यासः असुर्यईयुरवृकाऋतज्ञास्तेनोवतुपितरोहवेपु स्वधायैनमः स्वधामावा. २९ नैर्ऋत्यांदलाग्रेमृत्युं परंमृत्योइत्यस्यकौशिकोऋपिः त्रिष्टुप्छंदः मृत्युर्देवता मृत्योरावाहनेविनियोगः ॐपरंमृत्योअनुपरेहिपंथांयस्तेअन्यइतरोदेवयानात् चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजांरीरिषोमोतवीरान् मृत्यवेनमः मृत्युमावाहयामि इतिपश्चिमेदलाग्रे शेषं आयंगौरित्यस्य विश्वेदेवाऋपयः अनुष्टुप्छंदः शेषोदेवता शेषावाहनेविनियोगः ॐआयंगौःपृश्निरक्रमीदसदन्मातरंपुरः पितरंचप्रयंत्स्वः शेषायनमः

शेषमावाह. वायव्यांदलाग्रे इमंमेइत्यस्यशुनःशेफऋषिः गायत्रीछंदः वरुणोदेवता सप्तसागरावाहनेविनि योगः इमंमेवरुण श्रुधीहवमद्याचमृडयत्वामवस्युराचके सप्तसागरेभ्योनमः सप्तसागरानावाहयामि ॥ ३२ ॥ उत्तरेदलाग्रे मरुतः ॥ मरुतोयस्येति गोतमऋषिर्गायत्रीछंदः मरुतोदेवता मरुतामावाहनेविनि योगः ॥ मरुतोयस्येतिमंत्रः पूर्ववत् मरुतश्च. ॥ ३३ ॥ ब्रह्मणःपादमूलेगणपतिं ॥ गणानांत्वेति प्रजापतिऋषिर्यजुःछंदः गणपतिर्देवता गणपत्यावाहने विनियोगः गणानांत्वेति मंत्रः पूर्ववत्पठनीयः गणपतये. गणपतिमा. ॥ ३४ ॥ कर्णिकायांभूमिमावाहयेत् स्योनापृथिवीत्यस्यमेधातिथिऋषिःगाय त्रीछंदः पृथिवीदेवता पृथिव्यावाहनेविनियोगः स्योनापृथिवीनोभवानृक्षरानिवेशनीयच्छानःशर्मसप्रथाः पृथिव्यैनमः पृथिवीमावाहयामि ३५ तदुपरिमेरवेनमः मेरुमावाहयामि तत्परितःपूर्वादिक्रमेण पूर्वेऋ ग्वेदं अग्निमीलेपुरोहितंयज्ञस्यदेवमृत्विजंहोतारंरत्नधातमं ऋग्वेदायनमः ऋग्वेदमावाहयामि ३६ दक्षि णस्यांयजुर्वेदं ॐइषेत्वोर्जेत्वावायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मण आप्यायध्वमघ्न्याइंद्रायभा गंप्रजावतीरनमीवाऽअयक्ष्मामावस्तेनईशतमाघशꣳ सोध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि यजुर्वेदायनमः यजुर्वेदमावाहयामि ३८ ततःपश्चिमेसामवेदम् ॐअग्नआयाहिवीतयेगृणानोहव्यदातये निहोतासत्सुबर्हिषीति सामवेदायनम सामवेदमावाहयामि उत्तरेअथर्ववेदं ॐशन्नोदेवीरभिष्टयआपोभवं तुपीतयेशंय्योरभिस्रवंतुनः अथर्ववेदायनमः अथर्ववेदमावाहयामि ४० मंडलाद्बाह्ये प्रागादिक्रमेणलो कपालायुधानि ८ पूर्वेवज्रायनमः शक्तयेनमः दंडायनमः खड्गायनमः पाशायनमः अंकुशायनमः गदायैनमः त्रिशूलायनमः ४८ इत्यष्टदिक्षुक्रमेणपूज्यानि पुनःपूर्वादितः लोकपालानांवाहनानिअष्टौ ८

ऐरावतायनमः मेषायनमः महिषायनमः श्वेतायनमः मकरायनमः हरिणायनमः शिबिकायैनमः वृ
षभायनमः ५७ पुनःपूर्वादिक्रमेणतद्वाह्ये गौत्तमायनमः भरद्वाजायनमः विश्वामित्रायनमः कश्यपा
यनमः अत्रयेनमः जमदग्नयेनमः वसिष्ठायनमः अरुधत्यैनमः तद्वाह्ये पूर्वादिक्रमेण आदित्यायनमः सोमा
यनमः बुधायनमः बृहस्पतयेनमः शुक्रायनमः शनैश्चरायनमः राहवेनमः पूर्वेशानयोः केतुभ्योनमः
तद्वाह्येपूर्वादिक्रमेण ऐंद्र्यैनमः कौमार्यैनमः ब्रह्माण्यैनमः वाराह्यैनमः चामुंडायैनमः माहेश्वर्यैनमः
वैनायक्यैनमः लिंगतोभद्रेऽपि एतादेवता अनेनैवक्रमेणावाह्यप्रतिष्ठाप्यपूजनीयाः इयानत्रविशेषः पूर्वे
असितांगभैरवायनमः १ आग्नेय्यांरुरुभैरवायनमः २ दक्षिणेचंडभैरवायनमः ३ नैर्ऋत्येक्रोधभैरवायनमः
४ पश्चिमेउन्मत्तभैरवायनमः ५ वायव्येकपालिभैरवायनमः ६ उत्तरेभीषणभैरवायनमः ७ ईशानेसंहा
रभैरवायनमः ८ पुनःपूर्वादिदिक्षु पूर्वेभवायनमः १ आग्नेय्यांशर्वायनमः २ दक्षिणेपशुपतयेनमः ३
नैर्ऋत्येईशानायनमः ४ पश्चिमेरुद्रायनमः ५ वायव्येउग्रायनमः ६ उत्तरेभीमायनमः ७ ईशानेमहते
नमः ८ पुनःपूर्वादिदिक्षु अनंतायनमः १ वासुकयेनमः २ तक्षायनमः ३ कुलिकायनमः ४ कर्कोट
कायनमः ५ शंखपालायनमः ६ कंबलायनमः ७ अश्वतरायनमः ८ ईशानेंद्रयोर्मध्ये ॐशूलायनमः
१ इंद्राग्न्योर्मध्येचंद्रमौलयेनमः २ अग्नियमयोर्मध्येचंद्रमसेनमः ३ ॐयमनैर्ऋतयोर्मध्येवृषभध्वजायनमः ४
निर्ऋतिवरुणयोर्मध्येत्रिलोचनायनमः ५ वरुणवाय्वोर्मध्येशक्तिधरायनमः ६ वायुसोमयोर्मध्ये महेश्वराय
नमः ७ सोमेशानयोर्मध्ये शूलपाणयेनमः ततोबहिः ऐरावतादिवाहनानि ८ तद्वाह्येगौत्तमादिऋषीन् ८
तद्बहिःसूर्यादीन्ग्रहान् ९ पूर्वादिदिक्षु गणेशं दुर्गां २ क्षेत्रपालं महाकालंच ४ पूजयेदिति लिंगतोभ

द्रमंडलेदेवतापूजाविशेषः अथाग्निस्थापनं तद्यथा तत्रादावग्निकार्यार्थे यथोक्तलक्षणंस्थंडिलंविधाय ॐमद्ये
हकर्तव्येस्मिन्नेकादश्यादिव्रतोद्यापनेकर्मांगत्वेनकुंडेस्थंडिलेवा अग्निस्थापनंपूजनंचकरिष्ये इतिसंकल्प्य पंच
भूसंस्कारान्. कुर्यात् 'त्रिभिर्दर्भैःस्थंडिलस्यपरिसमूहनंकृत्वा दर्भानैशान्यांत्यक्त्वा गोमयोदकेनोपलेपनम्
स्रुवमूलेनत्रिरुल्लेखनं अनामिकांगुष्ठाभ्यां रेखाभ्य.पांशूद्धरणं प्रतिरेखंजलेनाभ्युक्षणम् तत्रकांस्यपात्रेण ·अ
ग्निस्थापनम् एवंसंक्षिप्तसंस्कारान् विधाय संक्षेपेनैवाग्निपूजांकुर्यात् ॐभूर्भुव.स्वरग्नेइहागच्छइहातिष्ठ अत्र
शतमंगलनामावरदोवाग्निःसंपूज्यः अग्नयेनम इतिगधादिदक्षिणांतपूजांविधाय अग्निप्रज्वलितंवदेजातवेदंहु
ताशनं सुवर्णवर्णममलंसमिद्धसर्वतोमुख. मितिप्रणम्य . अथग्रहस्थापनंकुर्यात् ' ॐमद्यैकादश्यादिव्रतोद्याप
नकर्मणिकर्मांगत्वेनास्यांवेद्यांसूर्यादिग्रहाणामधिदेवताप्रत्यधिदेवताविनायकादिपंचलोकपालसहितानां स्थाप
नपूजनंचकरिष्ये ॐप्रणवस्यपरब्रह्मऋषिः परमात्माग्निर्देवता व्याहृतीनांक्रमेणविश्वामित्रजमदग्निभरद्वाजा
ऋषयः अग्निवायुसूर्यादेवता गायत्र्युष्णिगनुष्टुप्छंदांसि सूर्यादिग्रहदेवतानांस्थापनेपूजनंचकरिष्ये आकृष्णे
तिसूर्यमंत्रस्य हिरण्यस्तूपऋषिः सवितादेवता त्रिष्टुप्छंदः सूर्यावाहनेविनियोगः।ॐआकृष्णेनरजसावर्त्तमानो
निवेशयन्नमृतमर्त्यंचहिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॐभूर्भुवःस्वःकलिंगदेशोद्भवकाश्यपगोत्र
सूर्यइहागच्छ इहतिष्ठेतिस्थापयेत् इतिमध्ये आग्नेये आप्यायस्वेतिगौतमऋषिः गायत्रीछंदः सोमोदेवता सो
मावाहनेविनियोग. आप्यायस्वसमेतुतेविश्वत.सोमवृष्ण्यंभवावाजस्यसंगथे ॐभूर्भुवःयमुनातीरोद्भव · आत्रेय
गोत्र अधिदेवताप्रत्यधिदेवतासहितसोम इहागच्छेत्यावाह्य ; इहतिष्ठेतिस्थापयेत्- ॐभूर्भुवः अग्निर्मूर्धेतिभौ
ममंत्रस्य विरूपांगिरसऋषिरंगारकोदेवता गायत्रीछंद. भौमावाहनेविनियोगः- ॐअग्निर्मूर्धादिव.ककुत्पतिः

पृथिव्याअयंअपाꣳरेताꣳसिजिन्वति ॐभूर्भुवःस्वअवंतीसमुद्भवभारद्वाजगोत्र अधिदेवताप्रत्यधिदेवतासहित भौमइहागच्छ ॐउद्बुध्यस्वेतिबुधऋषिःसौम्योबुधोदेवता त्रिष्टुप्छंदः बुधावाहनेविनियोगः उद्बुध्यस्वाग्नेप्रति जागृहीत्वमिष्टापूर्तेसꣳसृजेथामयंच अस्मिन्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॐभूर्भुवःस्वःमगधदेशोद्भवआत्रेयगोत्रअधिदेवताप्रत्यधिदेवतासहितबुधइहागच्छ ॐबृहस्पते इतिमंत्रस्य गृत्समदऋषिः बृहस्पतिर्देवता त्रिष्टुप्छंदः बृहस्पत्यावाहनेविनियोगः ॐबृहस्पतेअतिअर्द्यो अर्हाद्युमद्विभातिक्रतुमज्जनेषु यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रं ॐभूर्भुवःस्वःसिंधुदेशोद्भव आंगिरसगोत्रअधिदेवताप्रत्याधिदेवतासहितबृहस्पतेइहागच्छ ॐअन्नात्परिस्रुतइतिभरद्वाजऋषिः शुक्रोदेवता द्विपदाविराट्छंदःशुक्रावाहने विनियोगः ॐअन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयःसोमंप्रजापति ऋतेनसत्यमिंद्रियंविपानꣳशुक्रमंधसः इंद्रस्यैंद्रियमिदम्पयोमृतमधु ॐभूर्भुवःस्वःभोजकटदेशोद्भवभार्गवगोत्रअधिदेवताप्रत्याधिदेवतासहितशुक्र इहागच्छ ॐशन्नोदेवीतिशनिमंत्रस्यासिंधुद्वीपऋषिः शनिर्देवतागायत्रीछंदः शन्यावाहने विनियोगः ॐशन्नोदेवीरभीष्टयआपोभवंतुपीतयेशंय्योरभिस्रवतुनः ॐभूर्भुवःस्वःसौराष्ट्रदेशोद्भवकाश्यपगोत्रअधिदेवताप्रत्यधिदेवतासहितशनेइहागच्छ ॐकयान इतिमंत्रस्य वामदेवऋषिःराहुर्देवतागायत्रीछंदः राहोरावाहनेविनियोग। ॐकयानश्चित्रआभुवदूतीसदावृधः सखाकयाशचिष्टयावृतः ॐभूर्भुवः स्वःराटिकापुरोद्भव पैठीनसिगोत्र अधिदेवताप्रत्यधिदेवतासहितराहोइहागच्छइहतिष्ठ केतुंकृण्वन्नितिकेतुमंत्रस्य मधुछंदऋषिः केतवोदेवता केतूनामावाहनेविनियोगः केतुंकृण्वन्नकेतवेपेशोमर्य्याअपेशसेसमुषद्भिरजाथाः ॐभूर्भुवः स्वः अंतर्वेदीसमुद्भवजैमिनिगोत्रअधिदेवताप्रत्यधिदेवतासहितकेतोइहागच्छइहतिष्ठ इतिग्रहा

णांस्थापनंविधाय गंधपुष्पाक्षतैर्यजेत् उँसूर्यायनमः १ उँचंद्रमसेनमः २ उँभौमायनमः ३ उँवुधायनमः ४ वृहस्पतयेनमः ५ उँशुक्रायनमः ६ उँशनैश्चरायनमः ७ उँराहवेनमः ८ उँकेतवेनमः ९ इतिनाममंत्रैर्गंधपुष्पाक्षतधूपदीपनैवेद्यदक्षिणावासोभिर्यथासंभवंपूजयेत् अथाधिदेवताः श्वेतपुष्पाक्षतैः क्रमात्सूर्यादीनांदक्षिणतः स्थापयेत् त्र्यंवकमित्यस्यवसिष्ठऋषिः रुद्रोदेवता अनुष्टुप्छंदः रुद्रावाहने विनियोगः उँत्र्यंवकंयजामहे सुगंधिंपुष्टिवर्धनं उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् उँभूर्भुवःस्व ईश्वरइहागच्छ श्रीश्चतेइत्युत्तरनारायणऋषिः उमादेवता त्रिष्टुप्छंदः उमावाहनेविनियोगः उँश्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तं इष्णन्निषाणामुम्मइषाणसर्वलोकम्मइषाण उँभूर्भुवः स्वउमेइहागच्छ उँयदक्रंदइतिभार्गवजमदग्निर्दीर्घतमसऋषयः स्कंदोदेवता त्रिष्टुप्छंदः स्कंदावाहनेविनियोगः उँयदक्रंदः प्रथमंजायमानउद्यत्समुद्रादुतवापुरीषात् श्येनस्यपक्षाहरिणस्यवाहू उपस्तुत्यंमहीजाततेअर्वन् उँभूर्भुवः स्वः स्कंदइहागच्छ उँविष्णोरराटमितिप्रजापतिऋषिः विष्णुर्देवता यजुः छंदः विष्णोरावाहनेविनियोगः विष्णोरराटमसिविष्णोः स्नप्त्रेस्थोविष्णो स्यूरसि विष्णोर्ध्रुवोसिवैष्णवमसिविष्णवेत्वा उँभूर्भुवः स्वः विष्णोइहागच्छ. ४ उँब्रह्मयज्ञानमितिब्रह्माऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता ब्रह्मावाहनेविनियोगः ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनआवः सुवुध्न्या उपमाअस्यविष्ठाः सतश्चयोनिमसतश्चविव उँभूर्भुवःस्वः ब्रह्मन् इहागच्छ. ७ त्रातारमित्यस्यगर्गऋषिरिंद्रोदेवता जगतीछंदः इंद्रावाहनेविनियोगः उँत्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रमाव्हयामिशक्रं पुरुहूतमिंद्रꣳ स्वस्तिनोमघवाधात्विंद्रः उँभूर्भुवः स्वः इंद्र इहागच्छ. ६ यमायत्वाइतिभार्गवजमदग्निर्दीर्घतमसऋषयःत्रिष्टुप्छंदः यमोदेवता यमावाहनेविनियोगः उँयमाय

त्वांगिरसेस्वाहा स्वाहा घर्मायस्वाहाघर्मापित्रे ओंभूर्भुवः स्वः यमइहागच्छ. ७ ओंकार्षीरसिइतिदध्यंगाथर्वण ऋषिः अनुष्टुप्छंदः कालोदेवता कालावाहनेविनियोगः ओंकार्षीरसिसमुद्रस्यत्वाक्षित्याउन्नयामि समापो अद्भिरग्मतसमोपधीभिरोपधीः ओंभूर्भुवःस्वः कालमावाहयामि कालइहागच्छ- चित्रावसोइतिप्रजापतिर्ऋषिः जगतीछंदः चित्रगुप्तोदेवता चित्रगुप्तावाहनेविनियोगः ओंचित्रावसोस्वस्तितेपारसशीय संत्वमग्नेसूर्यस्यव र्चसागथाः समृपीणास्तुतेन ओंभूर्भुवः स्वः चित्रगुप्तइहागच्छ- ८ अथप्रत्यधिदेवतानांस्थापनं ओंअग्निंदूत मितिविरूपाक्षऋषिः अग्निर्देवता अनुष्टुप्छंदः अग्न्यावाहनेविनियोगः ओंअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे देवांआसादयादिह ओंभूर्भुवः स्वः अग्नेइहागच्छ.१ ओंअप्सुमेतिमेधातिथिर्ऋषिः आपोदेवता अनुष्टुप्छंदः अपामावाहनेविनियोगः ओंअप्सुमेसोमोअब्रवीदंतविश्वानिभेषजा अग्निंचविश्वसंभवमापश्चविश्वभेषजीः ओं ओंभूर्भुवः स्वआपइहागच्छत २ ओंस्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः भूमिर्देवता गायत्रीछंदः भूमेरा वाहनेविनियोगः ओंस्योनापृथिविनोभवानृक्षरानिवेशनीयच्छानः शर्मसप्रथा ओंभूभुर्भुवः स्वः भूमेइहाग च्छ. ३ इदंविष्णुरितिमेधातिथिर्ऋषिः विष्णुर्देवता गायत्रीछंदः विष्णोरावाहनेविनियोगः ओंइदंविष्णुर्विच क्रमे त्रेधानिदधेपद समूढमस्यपांसुरे ओंभूर्भुवः स्वः विष्णोइहागच्छ. ४ इंद्रश्रेष्ठाणीतिगृत्समदऋषिः इं द्रोदेवता त्रिष्टुप्छंदः इंद्रावाहनेविनियोगः ओंइंद्रश्रेष्ठाणिद्रविणानिधेहिचित्तंदक्षस्यसुभगत्वमस्मे ओंभूर्भुवः स्वः इंद्रइहागच्छ.५ ओंइंद्राणीतिवृषाकपिर्ऋषिः इंद्राणीदेवता पंक्तिश्छंदः इंद्राण्यावाहनेविनियोगः ओंइंद्रा णीमासुनारिषुसुभगामहश्रवं नह्यस्याअपरंनजसामरतेपतिविश्वस्मादिंद्रउत्तरः ओंभूर्भुवः स्वइंद्राणिइहागच्छ ६ ओंप्रजापतेरितिहिरण्यगर्भऋषिः प्रजापतिर्देवता त्रिष्टुप्छंदः प्रजापत्यावाहनेविनियोगः ओंप्रजापतेनत्वदेता

न्यन्योविश्वारूपाणिपरिताबभूव यत्कामास्तेजुहुमस्तन्नोअस्त्वयमभुष्यपितावयꣳस्यामपतयोरयीणां ऊँभूर्भुवः स्वः प्रजापते इहागच्छ ७ ऊँनमोस्तुसर्पेभ्यइतिदेवाऋषयः सर्पादेवता अनुष्टुपछंदः सर्पाणामावाहनेविनियोगः ऊँनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु येअंतरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ऊँभूर्भुवः स्वः सर्पाइहागच्छत ८ ऊँब्रह्मयज्ञानमिति प्रजापतिर्ऋषिः ब्रह्मादेवता त्रिष्टुप्छंदः ब्रह्मावाहनेविनियोगः ऊँब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनआवः सुवुघ्न्याउपमाअस्यविष्ठा सतश्चयोनिमसतश्चविवः ऊँभूर्भुव स्वः ब्रह्मन्इहागच्छ इहतिष्ठ. ९ इतिप्रत्यधिदेवतानामावाहनंस्थापनंच नाममंत्रैःसर्वेषांपूजाकार्या ईश्वरायनमः ऊँउमायैनमः ऊँस्कंदायनमः ऊँविष्णवेनमः ऊँब्रह्मणेनमः ऊँइंद्रायनमः ऊँयमायनमः ऊँकालायनमः ऊँचित्रगुप्तायनमः ९ इत्यधिदेवतापूजनम् अथप्रत्यधिदेवताना ऊँअग्नयेनमः ऊँअद्भ्योनमः ऊँभूम्यैनमः ऊँविष्णवेनमः ऊँइंद्रायनमः ऊँप्रजापतयेनमः ऊँसर्पेभ्योनमः ऊँब्रह्मणेनमः इतिप्रत्यधिदेवतापूजनं गंधपुष्पाक्षतधूपदीपनैवेद्यदक्षिणांतकार्यं अथविनायकादिपंचलोकपालानांस्थापनं ऊँगणानांत्वेतिप्रजापतिःऋषिः गणपतिर्देवता यजुः छंदः गणपत्यावाहनेविनियोगः ऊँगणानांत्वागणपतिꣳहवामहे प्रियाणांत्वाप्रियपतिꣳहवामहे निधीनांत्वानिधिपतिꣳहवामहे वसोममआहमजानिगर्भधमात्वमजासिगर्भधम् ऊँभूर्भुवः स्वः गणपतेइहागच्छ. ऊँअंबेअंबिकेइतिप्रजापतिर्ऋषिः दुर्गादेवता अनुष्टुप्छंदः दुर्गावाहनेविनियोगः ऊँअंबेअंबिकेअंबालिके नमानयतिकश्चनससस्त्यश्वकः सुभद्रिकांकांपीलवासिनीम् ऊँभूर्भुवः स्वः दुर्गेइहागच्छ. २ ऊँवातोवामनोवेतिगंधर्वाऋषयः उष्णिक्छंदः वातोदेवता वाय्वावाहनेविनि० ऊँवातोवामनोवागंधर्वाः सप्तविꣳशतिः तेअग्रेश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः ऊँभूर्भुवः स्वः वायोइहागच्छ ३ ऊर्ध्वऊषणइतिप्रजापति

ऋषिः अनुष्टुप्छंदः आकाशोदेवता आकाशावाहने विनियोगः ऊर्ध्वऊषुणऊतयेतिष्ठादेवोन.सविता ऊर्ध्वोवा
जस्यसनितापदंजिभिर्वाघद्भिर्विह्वयामहे ॐभूर्भुवस्व-आकाशइहागच्छ. ४ यावांकशामधुमत्यश्विनीसूनृतावती
श्विनौदेवते यजुर्गायत्री.छंदः आश्विनोरावाहनेविनियोग. ॐयावांकशामधुमत्यश्विनीसूनृतासोतयायज्ञंमिमि
क्षितम् ॐभूर्भुवःस्व-अश्विनौइहागच्छतं ५ इत्यावाह्यस्थापनंविधाय ॐविनायकायनमः १ ॐदुर्गायैन
मः २ ॐवायवेनमः ३ ॐआकाशायनमः ४ ॐअश्विभ्यांनमः ५ इतिगंधादिदक्षिणांत-पूजयेत् अथसदा
चारप्राप्तमंत्रापीठिकूप.स्थापनंलिख्यते पूर्वेत्रातारमिंद्रमितिगर्गऋषिरिंद्रोदेवता त्रिष्टुप्छंदःइंद्रावाहनेविनि
योग ॐत्रातारमिंद्रमवितारमिंद्रं हवेहवेसुहवंशूरमिंद्रमाह्वयामिशक्रंपुरुहूतमिंद्रं स्वस्तिनोमघवाधात्विंद्रः ॐ
भूर्भुवःस्वःइंद्रइहागच्छ. १ ॐअग्निंदूतमितिविरूपाक्षऋषिरनुष्टुप्छंदः अग्निर्देवता अग्न्यावाहनेविनियोगः
ॐअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे देवाँआसादयादिह ॐभूर्भुवःस्वःअग्नेइहागच्छ २ ॐयमायत्वेतिभार्गववज
मदग्निदीर्घतमसऋषयस्त्रिष्टुप्छंदः यमोदेवता यमावाहनेविनियोगः ॐयमायत्वांगिरस्वतेपितृमतेस्वाहास्वा
हाघर्मायस्वाहाघर्मःपित्रे ॐभूर्भुवःस्वःयमइहागच्छ ३ ॐएषतेनिर्ऋतइतिवरुणऋषिर्यजुःछंदः निर्ऋतिर्देवता
निर्ऋत्यावाहनेविनियोगः ॐएषतेनिर्ऋतेभागस्तंजुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यः पुरःसद्भ्यः स्वाहा यमनेत्रेभ्यो
देवेभ्योदक्षिणासद्भ्यः स्वाहा विश्वेदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यःस्वाहा मित्रावरुणनेत्रेभ्योदेवेभ्योवामरुन्नेत्रेभ्यो
वादेवेभ्यउत्तरासद्भ्य स्वाहा सोमनेत्रेभ्योदेवेभ्यउपरिसद्भ्योदेवेभ्यःस्वाहा ॐभूर्भुवःस्वःनिर्ऋतेइहागच्छ. ॐइमंमे
इति शुनःशफऋषिर्गायत्रीत्रिष्टुप्छंदः वरुणोदेवता वरुणावाहनेविनियोगः ॐइमंमेवरुणश्रुधीहवमद्याचमृडय
त्वामवस्युराचके ॐभूर्भुवःस्वःवरुणइहागच्छ. ५ ॐवातोवामनोवेतिगंधर्वऋषयः उष्णिक्छंदः वातोदेवता

वाय्वावाहनेविनियोगः ॐवातोवामनोवागंधर्वाःसप्तविंशतिःतेऽग्रेश्वमयुंजंस्तेअस्मिन्जवमादधुः ॐभूर्भुवःस्वः वायोइहागच्छ. ६ ॐवयंसोमव्रतेतवेतिबंधुऋषि गायत्रीछंदः कुवेरोदेवता कुवेरावाहनेविनियोगः ॐवयंसोमव्रतेतवमनस्तनूपुबिभ्रतःप्रजावंतःसचेमहि ॐभूर्भुवःस्वः कुवेरइहागच्छ. ७ ॐतमीशानमितिगौतमऋषिर्जगतीछंदः ईशानोदेवता ईशानावाहनेविनियोगः ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॐभूर्भुवःस्वःईशानइहागच्छ. ८ ॐब्रह्मयज्ञानमिति ब्रह्माऋषिःत्रिष्टुपछंदः ब्रह्मादेवता ब्रह्मावाहनेविनियोगः ॐब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः सुबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॐभूर्भुवःस्वःब्रह्मन्इहागच्छ. ९ ॐनमोस्तुसर्पेभ्यइति देवाऋषयः अनुष्टुप्छंदः सर्पावाहनेविनियोगः ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॐभूर्भुवःस्वःअनंतइहागच्छ. १० इतिप्रत्येकमावाह्य प्रतिष्ठाप्य प्रणवादिनमोंतैर्नाममंत्रैः पृथक्पृथक्पूजयेत् ॐइंद्रायनमः १ ॐअग्नयेनमः २ ॐयमायनमः ३ ॐनिर्ऋतयेनमः ४ ॐवरुणायनमः ५ ॐवायवेनमः ६ ॐकुवेरायनमः ७ ॐईशानायनमः ८ ॐब्रह्मणेनमः ॐअनंतायनमः १० इतिगंधादिदक्षिणादानांतंपूजयेत् प्रार्थना ॐब्रह्मामुरारिस्त्रिपुरांतकारीभानुःशशीभूमिसुतोबुधश्च गुरुश्चशुक्रःशनिराहुकेतवःसलोकपालाःशुभदाभवंतु इतिप्रार्थनानमस्कारः अथकलशस्थापनम् ततोवेदिकाया ईशानदिग्भागे दध्यक्षतविभूषितं चूताश्वत्थवटोदुंबरप्लक्षपल्लवसंयुक्तं फलवस्त्रयुगान्वितं अंतःप्रक्षिप्तपंचरत्नंशुभंनिर्मलतीर्थवारिपरिपूर्णं सप्तमृत्तिकासर्वौषधिसमेतं दृढं कलशमक्षतानामुपरिस्थापयेत् तत्रक्रमः आपोहिष्ठेतिऋक्त्रयस्यसिंधुद्वीपऋषिर्गायत्रीछंदः आपोदेवता कलशार्चनार्थेभूमिप्रोक्षणेविनियोगः ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन महेरणायचक्षसे योवःशिवतमोरसस्तस्यभाजय

तेहनः उशतीरिवमातरः तस्माअरंगमामवो यस्यक्षयायजिन्विथ आपोजनयथाचनः ३ इतिभूमिप्रोक्षणं ओं महीद्यौःपृथिवीतिमेधातिथिऋषिर्गायत्रीछंदः द्यावापृथिव्योदेवतेभूमिस्पर्शनेविनियोगः ओंमहीद्यौःपृथिवीचन इमंयज्ञमिमक्षताम् पिपृतान्नोभरीमभिः २ इतिभूमिस्पर्शनम् ओषधयःसमइतिअथर्वपुत्रभिषगृषिः अनुष्टुप्छंदः ओषधिर्देवता यवप्रक्षेपणेविनियोगः ओंओषधयःसमवदंतसोमेनसहराज्ञायस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि इतियवप्रक्षेपः ओंधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वादीर्घायत्वामनुप्रसितिमायुषधान्देवोवःसविताहिरण्यपाणिः प्रतिगृह्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनांपयोसि इतिधान्यप्रक्षेपः ओंआजिघ्रकलशेतिकुसुरुबिंदुऋषिर्महापंक्तिःछंदः गौर्देवता कलशस्थापने विनियोगः ओंआजिघ्रकलशंमह्यात्वाविशंत्विंदवः पुनरूर्जानिवर्तस्वसानःसहस्रंधुक्ष्वोरुधारापयस्वतीः पुनर्माविशताद्रयिः इतिकलशं निधाय ओंइमंमे गंगे यमुने सरस्वतिशतुद्रिस्तोमंसचतापरुष्ण्या असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया इतितीर्थोदकेनपरिपूर्य ओंवरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्यऋतसदन्यसिवरुणस्यऋतसदनमसि वरुणस्यऋतसदनमासीद इतिजलेनापूर्य ओंगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं इतिगंधं याओषधीतिमंत्रस्य अथर्वभिषगृषिरनुष्टुप्छंदः ओषधीर्देवता सर्वौषधिप्रक्षेपेविनियोगः याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा मनैनुबभ्रूणामहंशतंधामानिसप्तच इति सर्वौषधिप्रक्षेपः ओषधयःसमवदंतइतिमंत्रेणसर्वबीजानिप्रक्षिपेत् तत्सवितुर्विश्वामित्रऋषिर्गायत्रीछंदः सावित्रीदेवता पंचगव्यनिक्षेपविनियोगः ओंतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् इतिपंचगम् ओंआप्यायस्वेतिगौतमऋषिः सोमोदेवता गायत्रीछंदः क्षीरप्रक्षेपविनियोगः ओंआप्यायस्वसमेतुते

विश्वतःसोमवृष्ण्यंभवावाजस्यसंगथे इतिक्षीरप्रक्षेपः ॐदधिक्राव्णइत्यस्य दधिक्राव्ण ऋषिः अश्वोदेवता
अनुष्टुप्छंदः दधिप्रक्षेपेवि० ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः सुरभिनोमुखाकरत्प्रणआयूंषितारिषत्
रिषत् इतिदधिप्र० ॐघृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा द्यावापृथिवीवरुणस्यधर्मणा
विष्कभितेअजरेभूरिरेतसा इतिघृतप्रक्षेपः ॐमधुवाताइत्यस्यगोतमऋषिः विश्वेदेवादेवता गायत्रीछंदः
मधुप्रक्षेपे वि० ॐमधुवाताऋतायतेमधुक्षरंतिसिंधवः माध्वीर्नःसंत्वोषधीः मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः
मधुद्यौरस्तुनःपिता मधुमान्नोवनस्पतिर्मधुमां २॥ अस्तुसूर्यः माध्वीर्गावोभवंतुनः इतिमधुप्रक्षेपः
ॐअपांरसमुद्वयसं सूर्येसंतंसमाहितं अपांरसस्ययोरसस्तंवोगृह्णाम्युत्तमं उपयामगृहीतोसीन्द्रायत्वा
जुष्टंगृह्णाम्येषतेयोनिरिंद्रायत्वाजुष्टतमम् इतिशर्कराप्र० ॐकांडात्कांडादित्यग्निऋषिरनुष्टुप्छंदः दूर्वादेवता
दूर्वाप्रक्षेपेविनियोगः ॐकांडात्कांडात्प्ररोहंतिपरुषःपरुषस्परि एवानोदूर्वेप्रतनुसहस्रेणशतेनच इतिदूर्वाप्रक्षेपः
ॐशरासःकुशरासोदर्भासःसैर्याउतमोजा अदृष्टावेरिणासर्वेसाकंतिजस्यच इतिकुशप्र० ॐअश्वत्थेवोनिषदनंपर्णेवोवसतिःकृता
गोभाजइत्किलासथयत्सनवथपूरुषं इतिपंचपल्लवप्रः स्योनापृथिवीतिमेधातिथिऋषिः
पृथिवीदेवता गायत्रीछंदः सप्तमृत्तिकाप्रक्षेप वि० स्योनापृथिवीनोभवानृक्षरानिवेशनीयच्छानःशर्मसप्रथाः
इतिमृत्तिकाप्रक्षेपः ॐयाःफलिनीर्याअफलायाअपुष्पायाश्चपुष्पिणीः बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः
इतिपूगीफलप्रदानं ॐपरिवाजपतीत्यस्यसोमऋषिः अग्निर्देवता गायत्रीछंदः पंचरत्नप्र० वि० ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत्दधद्रत्नानिदाशुषे
इतिपंचरत्नानि ॐहिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातः
पतिरेक आसीत् सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम इति हिरण्यम् ॐसजातो

न्येतिपासहशर्म्मवरूथमासदस्व॥ वासो अग्नेविश्वरूपꣳसंवयस्वविभावसो इतिकलशस्यकंठेवासोवध्नीयात्
ॐपूर्णादर्विपरापतसुपूर्णापुनरापतवस्नेवविक्रीणावहाइषमूर्जꣳशतक्रतो इतिधान्यपूर्णपात्रंकलशोपरिनिदध्या
त् ॐतत्वायामीतिमंत्रस्यशुनःशेफऋषिः त्रिष्टुप्छंदः वरुणोदेवता कलशेवरुणावा॰ वि॰ ॐतत्वायामिब्रह्मणा
वंदमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोवरुणेह बोध्युरुशꣳसमानआयुःप्रमोषीः इतिकलशेवरुणमा
वाह्यपूजयेत् तत्रादौगंगादितीर्थानामावाहनं गंगेचयमुनेचैवगोदावरिसरस्वति नर्मदेसिंधुकावेरिजलेस्मिन्स
न्निधिंकुरु ॐसर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः इतिगंगाद्यावाहनम्
ततःकलशाभिमंत्रणम् कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः
कुक्षौतुसागराःसप्तसप्तद्वीपावसुंधरा ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः अंगैस्तुसहिताःसर्वेकलशंतुसमाश्रिताः
अस्मिन्कलशे ॐवरुणदेवतायैनमः इतिगंधादिभिःसंपूज्य गंगादितीर्थेभ्योनमः एवंतीर्थानिचसंपूज्य ततःकल
शंप्रार्थयेत् ॐदेवदानवसंवादेमथ्यमानेमहोदधौ उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं त्वत्तोयेसर्वतीर्थानि
देवाःसर्वेत्वयिस्थिताः त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः
आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदः त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलो
द्भव सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा इतीशानकलशपूजा अथैवमेवसर्वतोभद्रादिमंडलेपिकलशस्थापनंपूज
नंचविधाय तदुपरिदुग्धपूर्णं सौवर्णंराजतंताम्रमृण्मयंान्यतमंलघुकलशंस्थापयेत् तदुपरिव्रतोद्यापनदेवता
मूर्तिंस्थापयेत् तस्यामानंच आमापात्यलपर्यंताकर्तव्याशाठ्यवर्जितैः अंगुष्ठपर्वादारभ्यवितस्त्यवधिकाकृतेति
प्रथमंतस्याअग्न्युत्तारणंकुर्यात् तत्रमंत्रः अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःक्षरंतुच अस्यैसुरत्वमर्चायैमामहेति

मकश्चनेतिप्राणप्रतिष्ठांकुर्यात् ॐअस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्माविष्णुमहेश्वराऋषयः ऋग्यजुःसामानिछंदां
सि प्राणशक्तिर्देवता आंबीजं ह्रीं शक्तिः क्रौंकीलकं अस्यावतदेवतायाः प्राणप्रतिष्ठायांविनियोगः इतिस्मृत्वान्या
संकुर्यात् ॐब्रह्मविष्णुमहेश्वरऋषिभ्योनमः शिरसि ऋग्यजुःसामछंदेभ्योनमोमुखे प्राणशक्तिदेवतायैनमोहृद
ये आंबीजायनमोगुह्ये ह्रींशक्तयेनमः पादयोः क्रौंकीलकायनमोनाभौ प्राणप्रतिष्ठापनेविनियोगइतिसर्वांगे
व्यापकंकुर्यात् ॐआंह्रींक्रौंअंकंखंगंघंङं पृथिव्यप्तेजोवाय्वाकाशात्मने आंअंगुष्ठाभ्यांनमः ॐआंह्रींक्रौंइंचंछं
जंझंञं शब्दस्पर्शरूपरसगंधात्मने ईंतर्जनीभ्यांनमः ॐआंह्रींक्रौंटंठंडंढंणंउंश्रोत्रत्वकुचक्षुजिह्वाघ्राणात्मनेऊंमध्य
माभ्यांवषट् ॐआंह्रींक्रौंतंथंदंधंनंएंवाक्पाणिपादपायूपस्थात्मनेऐंअनामिकाभ्यांहुं ॐआंह्रींक्रौंपंफंबंभंमं ओंवचना
दानगमनविसर्गानन्दात्मने औंकनिष्ठिकाभ्यांवौषट् ॐआंह्रींक्रौंयंरंलंवंशंषंसंहंळंक्षंअंमनोबुद्ध्यहंकारचित्तविज्ञाना
त्मनेअःकरतलकरपृष्ठाभ्यांफट् एवंनेत्रहृदयायनमः शिरसेस्वाहा शिखायैवषट् कवचायहुं नेत्रत्रयायवौषट् अस्त्रा
यफट् इतिपूर्वोक्तन्यासमंत्रैःसहषडंगन्यासमंत्रप्रयोगःकार्यः ध्यानम् रक्ताम्भोधिस्थपीतोल्लसदरुणसरोजाधिरूढा
कराब्जैः पाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचबाणान् बिभ्राणासृक्कपालंत्रिनयनविलसत्पीनवक्षोरुहाढ्या
देवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः इतिध्यात्वा प्राणप्रतिष्ठामंत्राणिपठेत् ॐआंह्रींक्रौंयंरंलंवंशंषं
संहंळंक्षःहंसःअमुकदेवस्यप्राणाइहतिष्ठंतु ॐआंह्रींक्रौंयंरंलंवंशंषंसंहंळंक्षःहंसःअमुकदेवस्यजीवइहतिष्ठतु ॐआं
ह्रींक्रौंयंरंलंवंशंषंसंहंळंक्षःहंसः अमुकदेवस्य सर्वेन्द्रियाणि इहतिष्ठन्तु ॐआंह्रींक्रौं यंरंलंवंशंषंसंहंळंक्षः हंसः
अमुकदेवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणपाणिपायूपस्थाइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा चत्वा[illegible]वामि
तिऋचंपठेत् अथवा प्राणदाअपानदाइतिपठेत् ततोगर्भाधानादिपंचसंस्कारसिद्ध्यर्थंपंचदश १५

प्रणवाद्यर्तिंकरिष्ये प्रणवस्यपंचदशावृत्तिंगणनयाकुर्यात् ततोरक्तांभोधिस्थपोत इतिध्यानं
पूर्वोक्तंपठेत् ततःसर्वतोभद्रस्थपूर्णपात्रोपरिसौवर्णदेवंतत्प्रकाशकमूलमंत्रेण वेदमंत्रेणतद्गायत्र्यावासंस्थाप्यपू
जयेत् तत्रपूजाविधिर्व्रतोद्यापनांगत्वेन पुनर्लिख्यते ॐमद्यैकादशीव्रतोद्यापनांगत्वेन श्रीपरमेश्वरदेवतापू
जामहंकरिष्ये ॐसहस्रशीर्षेत्यावाहनं आगच्छदेवदेवेशतेजोराशेजगत्पते गृहाणार्चांमयादत्तांकृपयापरमेश्वर
१ पुरुषएवेत्यासनम् नानारत्नसमायुक्तंकार्तस्वरविभूषितं आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां २ एतावान
स्येतिपाद्यम् गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां नमस्तेदेवदेवेशनम
स्तेधरणीधर नमस्तेकमलाकांतअर्घ्यंनःप्रतिगृह्यतां त्रिपादूर्ध्वेत्यर्घ्यं ४ ततोविराडित्याचमनीयं कर्पूरवा
सिततोयंमंदाकिन्याःसमाहृतं आचम्यतांजगन्नाथमयादत्तंसुभक्तितः ५ यत्पुरुषमित्याचमनम् गंगाचयमुनाचैव
नर्मदाचसरस्वती तापीपयोष्णीरेवाचताभ्यःस्नानार्थमाहृतम् तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यताम् इतिस्ना
नम् पंचामृतंसमानीतंपयोदधिघृतंमधु शर्कराजलसंमिश्रंस्नानार्थंप्रतिगृह्यताम् पंचामृतस्नानम् तंयज्ञमिति
वस्त्रं सर्वभूषाधिकेदेवलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां इतिवस्त्रम् तस्माद्यज्ञात्सर्वहुतः
संभृतंपृषदाज्यमिति यज्ञोपवीतं देवदेवनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणसुरसत्तम
तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे इतिगंधम् श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठप्रीत्य
र्थंप्रतिगृह्यतां ९ तस्मादश्वाइतिपुष्पं मल्लिकामालतीजातीकेतकीचंपकानिच मयाहृतानिपुष्पाणिपूजार्थंप्रति
गृह्यताम्१० यत्पुरुषमितिधूपम् वनस्पतिरसोदिव्योगंधाढ्यःसुमनोहरः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां
११ ब्राह्मणोस्येतिदीपम् आज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहं १२ चंद्र

नामनसइतिनैवेद्यम् अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् १३ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि इतिफलम् १४ नाभ्याआसीदितितांबूलम् पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यताम् १५ सप्तास्यासन्नितिदक्षिणा हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोःअनंतपुण्यफलदमतःशांतिंप्रयच्छमे१६ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच सर्वेषांज्योतिषांज्योतिरार्तिक्यंप्रतिगृह्यतां१७ इतिनीराजनंयज्ञेनयज्ञमिति पुष्पांजलिः नमस्तेपुंडरीकाक्षनमस्तेस्तुसुरप्रिय नमस्तेकमलाकांतवासुदेवनमोस्तुते यानिकानिचपापानिब्रह्महत्यासमानिचतानिसर्वाणिनश्यंतु प्रदक्षिणपदेपदे इतिप्रदक्षिणा अर्घ्योमेगृह्यतांदेवभक्तिंमेह्यचलांकुरु व्रतंसंपूर्णतांयातु सफलाःस्युर्मनोरथाः इति फलपुष्पाक्षतदक्षिणायुतमर्घ्यप्रदानंकुर्यात् नमःसर्वहितार्थायजगदाधारहेतवे साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः इतिसाष्टांगप्रणामंकृत्वा आवाहनंनजानामिनैवजानामिपूजनं विसर्जनंनजानामिक्षम्यतांपरमेश्वर इतिप्रार्थना अथहोमःप्रणीतापात्रंपुरतःकृत्वा जलेनापूर्य्य कुशैराछाद्य ब्रह्मणोमुखमवलोक्य अग्नेरुत्तरतः कुशोपरिनिदध्यात् ततःपरिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं ब्रह्मणोऽग्निपर्यंतं नैर्ऋत्याद्वायव्यांतं अग्नितःप्रणीतापर्यंतं ततोऽग्नेरुत्तरतः पश्चिमदिशिपवित्रछेदनार्थंकुशत्रयम् पवित्रकरणार्थंसाग्रमनंतरगर्भंकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली स्रुवसंमार्जनार्थंकुशत्रयं उपयमनार्थंवेणीरूपकुशत्रयं समिधस्तिस्रःपालाश्यः आज्यंस्रुवः षट्पंचाशदुत्तरयजमानमुष्टिशतद्वयावच्छिन्नतंडुलपूर्णपात्रंसंपूज्य पवित्रछेदनकुशान्पूर्वपूर्वदिशिक्रमेणासादनीयानि ततःपवित्रछेदनकुशैःप्रादेशमितेतिपवित्रकरणं ततःसपवित्रकरेण प्रणीतोदकं त्रिःप्रोक्षणीपात्रेनिधाय अनामिकांगुष्ठाभ्यांद्वेपवित्रेउत्तराग्रेगृहीत्वात्रिरुत्पवनं प्रोक्षणीपात्रस्यस

व्यहस्तकरणं अनामिकांगुष्ठाभ्यांपवित्रेगृहीत्वा त्रिरुदिङ्गनं प्रणीतोदकेनप्रोक्षणीप्रोक्षणं प्रोक्षणीजलेन यथासादितवस्तुसेचनं अग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिधाय आज्यस्थाल्यामाज्यनिर्वापः ततोधिश्रयणं ततोऽग्न्यलंकरणादिनाहविर्वेष्टयित्वा प्रदक्षिणक्रमेणअग्नौतत्प्रक्षेपः इदंपर्य्यग्निकरणं ततःस्रुवप्रतपनंकृत्वा सं मार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतः इतिस्रुवसंमार्जनं प्रणीतोदकेनाभ्युक्ष्य पुनःप्रतप्य स्रुवंदक्षिणतोनिद ध्यात् ततआज्येप्रोक्षणीवदुत्पवनं अवेक्ष्यसत्यपद्रव्ये तन्निरसनं पुनःप्रोक्षिण्युत्पवनं ततआज्यमग्नेरुत्त तार्ध्वं उपयमनकुशान्वामहस्तेनादाय उत्तिष्ठन् प्रजापतिंमनसाध्यात्वा तूष्णीमग्नौघृताक्ताःसमिधस्तिस्रः प्रक्षिपेत् ततउपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निपर्य्युक्षणं प्रणीतापात्रेपवित्रेनिधाय पा तितदक्षिणजानुः कुशेनब्रह्मणान्वारब्धःसमिद्धतमेऽग्नौस्रुवेणाज्याहुतीर्जुहुयात् तत्राघारादारभ्य द्वादशाहुतिपुरस्त दाहुत्यनंतरंस्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपः ततोहोमः तत्रान्वाधानप्रयोगः देवताः विनायका द्यावृतराअप्यंगदेवता इंद्रादिदिक्पातिदेवताश्चव्रतोद्यापनकर्मणः प्रधानदेवताःसांगसपरिवाराःसमिदाज्यति लादिहविर्निर्मितंतंत्रंसांगकर्मणासद्योहंयक्ष्ये इतिद्वेसमिधेअग्नौनिःक्षिपेत् तत्रायंप्रयोगः सूर्य्यादिद्वात्रिंशद्देवता भ्यो गृह्योक्ताआघारादिदेवताभ्यःपरिस्तरणादि आज्यसंस्कारानंतरंयजमानोयद्रव्यदेवताहोमीयद्रव्यत्या गंकुर्यात् ओंमधसूर्य्यादिदेवताभ्यःप्रायश्चित्ताहुतिदेवताभ्यःस्विष्टकृदग्नयेइदंसंपादितंसमिदाज्यादिद्रव्यंमया त्यक्त मित्यभिलपेत् तत्तदिध्ममादाय ॐप्रजापतयेस्वाहा इदंप्रजापतये इतिमनसा इंद्रायस्वाहा इदमिं द्राय इत्याघारौ ॐअग्नयेस्वाहा इदमग्नये सोमायस्वाहा इदंसोमाय इत्याज्यभागौततोग्रहहोमः ॐ

आकृष्णेनेतिसूर्यमंत्रस्यहिरण्यस्तूपऋषिःसवितादेवता त्रिष्टप्छंदः अर्कसमिदाज्यचरुसंपादितद्रव्येणसूर्यप्री तयेहोमेविनियोगः ॐआकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंचाहिरण्ययेनसवितारथेनादेवोयातिभुवनानिप श्यन्स्वाहा १०८ इदंसूर्याय अनेनहोमेनश्रीसूर्योदेवताप्रीतोस्तु ततःप्रार्थना सहस्रकिरणःश्रीमान्सप्ता श्वोलोकबांधवः भक्तानांवरदोभानुःप्रीतोभवतुभास्करः१ ॐइमंदेवेतिसोममंत्रस्य गौतमऋषिःद्विपदाविराट् छंदः सोमोदेवतापलाशसमिदादिसंपादितद्रव्येण सोमप्रीतयेहोमेविनियोगः इमंदेवाअसपत्नꣳसुवध्वंमह तेक्षत्रायमहतेज्येष्ठाय महतेजानराज्यायेंद्रस्येंद्रियाय इदममुष्यपुत्रममुष्यैपुत्रमस्यैविश एषवोमीराजा सोमोस्माकंब्राह्मणानाꣳराजा इदंसोमाय १०८ अनेनहोमेनसोमोदेवताप्रीतोस्तु ॐदधिशंखतुषाराभंक्षीरोदार्णवसंभवम्... णामृततंतुयः संपूर्णमंडलोबालःससोमःप्रीयतांमम २ ॐअग्निर्मूर्धेतिभौममंत्रस्यविरूपाक्षऋषिः भौमोदेव ता गायत्रीछंदः भौमप्रीतयेखदिरसमिदादिसंपादितद्रव्येणभौमप्रीतयेहोमेविनियोगः ॐअग्निर्मूर्धादिवःककु त्पतिःपृथिव्याअयंअपाꣳरेताꣳसिजिन्वतिस्वाहा इदंभौमाय १०८ अनेनहोमेनभौमोदेवताप्रीतोस्तु ॐभूमि पुत्रोमहातेजावहिरूपीमहाबलः ग्रहाणामधिपःश्रेष्ठःसभौमःप्रीयतांमम ३ ॐउद्बुध्यस्वेतिबुधमंत्रस्यबुधऋषिः त्रिष्टुप्छंदःबुधोदेवताबुधप्रीतये उदुंबरसमिदादिसंपादितद्रव्येणहोमेविनियोगः ॐउद्बुध्यस्वाग्नेप्रतिजागृही त्व मिष्टापूर्तेसꣳसृजेथामयंच अस्मिन्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदतस्वाहा इदंबुधाय अनेन होमेनबुधोदेवताप्रीतोस्तु सिंहासनस्थोवरदःकर्णिकारसमद्युतिः खड्गचर्मगदापाणिःसबुधोवरदोस्तुनः ४ बृ हस्पतेइतिमंत्रस्यगृत्समदऋषिः बृहस्पतिर्देवता त्रिष्टुप्छंदः बृहस्पतिप्रीतयेअश्वत्थसमिदादिसंपादितद्रव्यहो मेविनियोगः ॐबृहस्पतेअतिअदर्यो अर्हाद्युमद्विभातिक्रतुमज्जनेषुयद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधे हिचित्रंस्वाहा १०८ इदंबृहस्पतये अनेनहोमेनबृहस्पतिर्देवता प्रीतोस्तु दंडाक्षसूत्रधारीचकमंडलुधरः

सदा पीतवर्णश्चतुर्बाहुःपातुनोवाक्पतिर्भृशं ५ अन्नात्परिस्रुतेतिशुक्रमंत्रस्यभरद्वाजऋषिर्जगतीछंदः शुक्रोदेवता शुक्रप्रीत्यैउदुंबरसमिदादिसंपादितद्रव्यहोमेविनियोगः अन्नात्परिस्रुतोरसोब्रह्मणाव्यपिवत्क्षत्रंपयःसोमंप्रजापतिःऋतेनसत्यमिंद्रियंविपानꣳशुक्रमंधसः इंद्रस्येंद्रियमिदंपयोमृतंमधुस्वाहा १०८ इदंशुक्राय अनेनहोमेनशुक्रोदेवताप्रीतोस्तु श्वेतवर्णश्चतुर्बाहु साक्षसूत्रकमंडलुः सरस्वत्याःपरंधामशुक्रोभूयाद्वरप्रदः ६ ॐशन्नोदेवीतिशनिमंत्रस्यसिंधुद्वीपऋषिः शनिर्देवता गायत्रीछंदः शनिप्रीतयेशमीसमिदादिसंपादितद्रव्यहोमेविनियोगः शन्नोदेवीरभिष्टय आपोभवंतुपीतयेशंय्योरभिस्रवंतुनः इदंशनैश्चराय १०८ अनेनहोमेनशनिर्देवताप्रीतोस्तु भिन्ननीलांजनप्रख्योवरदोगृध्रवाहनः धनुःशूलशरैर्भीमःसदाशत्रुप्रमर्दनः ७ मुनींद्रैऋषिभिःसाध्यैर्देवैश्चनमस्कृतः पातुनोर्कसुतःश्रीमान्ग्रहैःसर्वैःप्रपूजितः ७कयानइतिमंत्रस्यवामदेवऋषिः राहुर्देवता गायत्रीछंदः राहुप्रीतये दूर्वासमिदादिसंपादितद्रव्यहोमेविनियोगः ॐकयानश्चित्रआभुवदूतीसदावृधःसखा कयाशचिष्ठयावृत स्वाहा इदंराहवे १०८ अनेनहोमेनराहुर्देवताप्रीतोस्तु चंद्रार्कौग्रसतेयस्तुभीमःपर्वणिपर्वणि राहुःसदानवश्रेष्ठःसर्वदाप्रीयतांमम ८ केतुंकृण्वन्निति केतुमंत्रस्य मधुछंदऋषिः केतवोदेवता गायत्रीछंदःकेतुप्रीतयेकुशासमिदादिसंपादितद्रव्यहोमेविनियोगः केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे समुषद्भिरजायथा स्वाहा इदंकेतवे १०८ अनेनहोमेनकेतुर्देवताप्रीतोस्तु पीडयंतेपीडयायस्पदेवगंधर्वकिन्नराः सकेतुर्धूम्रवर्णाभःप्रीतोभवतुसर्वदा ९ अथाधिदेवतानांनाममंत्रैर्होमःकार्यस्तेषांश्रौतमंत्राः स्थापनक्रमेप्राक्लिखितास्तेयथासंभवमत्रापिपठनीयाः ॐरुद्रायस्वाहा १ उमायैस्वाहा २ स्कंदायस्वाहा ३ विष्णवेस्वाहा ४ ब्रह्मणेस्वाहा ५ इंद्रायस्वाहा ६ यमायस्वाहा ७ कालायस्वाहा ८ चित्रगुप्तायस्वाहा ९ अथप्र

स्यधिदेवतानांहोमः ॐअग्नयेस्वाहा १ अद्भ्यःस्वाहा २ पृथिव्यैस्वाहा ३ ॐनारायणायस्वाहः ४ इंद्रायस्वाहा ५ इंद्राण्यैस्वाहा ६ प्रजापतयेस्वाहा ७ सर्पेभ्यःस्वाहा ८ ॐब्रह्मणेस्वाहा ९ श्रौतमंत्राश्च स्थाएनक्रमेज्ञेयाः अथविनायकादिपंचलोकपालनाममंत्रैर्होमः ॐविनायकायस्वाहा १ दुर्गायै स्वाहा २ वायवेस्वाहा ३ आकाशायस्वाहा ४ अश्विभ्यांस्वाहा ५ ततोदिक्पालानांनाममंत्रैर्होमः ॐ इंद्रायस्वाहाः १ अग्नयेस्वाहा २ यमायस्वाहा ३ निर्ऋतयेस्वाहा ४ वरुणायस्वाहा ५ वायवेस्वाहा ६ सोमायस्वाहा ७ ईशानायस्वाहा ८ ब्रह्मणेस्वाहा ९ अनंतायस्वाहा १० इतिसर्वसाधारणोहोमक्रमः वैष्णवव्रतोद्यापनेषु सहस्रशीर्षापुरुषइत्यादिसूक्तानांप्रतिमंत्रंहोमोविधेयः अष्टाक्षरादिमंत्रेण अंगदेवतापरिवारदेवतानामपिनाममंत्रैर्होमःकार्यः शैवव्रतोद्यापनेषु त्र्यंबकमंत्रेणरुद्रसूक्तादिमंत्रैःशिवपंचाक्षरादिमंत्रैःपरिवारदेवताना अंगदेवतानांचनाममंत्रैर्यथासंभवंहोमकार्यंकुर्यात् एवमन्येष्वप्यनुक्तानामपिइष्टदेवतानांमंत्रैस्तदंगदेवतानांनाममंत्रैर्व्रतोद्यापनेषुहोमंकृत्वा सर्वतोभद्रालिंगतोभद्रमंडलदेवतानांनाममंत्रैःश्रौतमंत्रैर्वायथासंभवं होमकुर्यात् तत्रायंक्रमः ब्रह्मणेनमःस्वाहा १ इंद्रायस्वाहा २ अग्नयेस्वाहा ३ यमायस्वाहा ४ निर्ऋतये स्वाहा ५ वरुणायस्वाहा ६ वायवेस्वाहा ७ ॐसोमायस्वाहा ८ ईशानायस्वाहा ९ अष्टवसुभ्यःस्वाहा १० एकादशरुद्रेभ्यःस्वहा ११ दुर्गायैस्वाहा १२ गंगादिनदीभ्यःस्वाहा १३ दक्षायस्वाहा १४ नारायणायस्वाहा १५ दुर्गायैस्वाहा १६ स्वधायैस्वाहा १७ मृत्यवेस्वाहा १८ शेषायस्वाहा १९ समुद्रेभ्यःस्वाहा २० मरुद्भ्यःस्वाहा २१ गणपतयेस्वाहा २२ पृथिव्यैस्वाहा२३ मेरवेस्वाहा २४ ऋग्वेदायस्वाहा २५ यजुर्वेदायस्वाहा २६ सामवेदायस्वाहा २७ अथर्ववेदायस्वाहा २८ वज्रायस्वाहा २९

शक्तयेस्वाहा ३० दंडायस्वाहा ३१ खड्गायस्वाहा ३२ पाशायस्वाहा ३३ अंकुशायस्वाहा ३४ गदा
यैस्वाहा ३५ त्रिशूलायस्वाहा ३६ ऐरावतायस्वाहा ३७ मेषायस्वाहा ३८ महिषायस्वाहा ३९ प्रेता
यस्वाहा ४० मकरायस्वाहा ४१ एणायस्वाहा ४२ शिविकायैस्वाहा ४३ वृषभायस्वाहा ४४ गौत
मायस्वाहा ४५ भारद्वाजायस्वाहा ४६ विश्वामित्रायस्वाहा ४७ जमदग्नयेस्वाहा ४८ अत्रयेस्वाहा ४९
वसिष्ठायस्वाहा ५० अरुंधत्यैस्वाहा ५१ सूर्यायस्वाहा ५२ सोमायस्वाहा ५३ भौमायस्वाहा ५४ बु
धायस्वाहा ५५ गुरवेस्वाहा५६ असुरगुरवेस्वाहा ५८ शनैश्चरायस्वाहा ५८ राहवेस्वाहा ५९ केतवेस्वाहा
६० ऐंद्र्यैस्वाहा ६१ कौमार्य्यैस्वाहा ६२ ब्राह्म्यैस्वाहा ६३ वाराह्यैस्वाहा ६४ चामुंडायैस्वाहा ६५
वैष्णव्यैस्वाहा ६६ माहेश्वर्य्यैस्वाहा ६७ वैनायक्यैस्वाहा ६८ ॐपश्चतुर्भिश्चतुर्भिश्चद्वाभ्यांपंचभिरेवच
हूयतेचपुनर्द्वाभ्यांतस्मैयज्ञात्मनेनमःस्वाहा ॐभूःस्वाहा ॐभुवःस्वाहा ॐस्वःस्वाहा ॐभूर्भुवःस्वःस्वाहा यँ
ज्ञपुरुषायस्वाहा ततॐअग्नयेस्विष्टकृतेस्वाहा ततोयजमानः देवायवायर्णानिवेदयेत् अनेनमंत्रेणत्वामेकमाद्यं
पुरुषंपुराणंनारायणंविश्वसृजंयजामहे मयैषसांगोविहितोविधेयो गृहाणहव्यंजगतामधीश शैवोद्यापने सदा
शिवंविश्वसृजंयजामहे एवमन्यत्रतोद्यापनेपि देवतानांहोमःकार्य्यः इतिनिवेद्यातिष्ठेत् ततअग्निंत्रिवारंचतुर्वा
रंवाप्रदक्षिणीकृत्यजानुभ्यांधरणींगत्वाप्रार्थयेत् देवदेवायवेधायपरायपरमेष्ठिने कर्त्रेविश्वस्यगोप्त्रेचतत्संहर्त्रेन
मोनम इतिनत्वा देवायनिवेदितंवायणं मूर्धनास्पृष्ट्वाकेशैर्वाइत्युच्चैर्वदेत् वयंवैष्णवावयंशैवाइतिप्रतिवचःश्रु
त्वाहविःशेषमपिदत्वा ॐनमोभगवतेवासुदेवाय ॐनमोभगवतेरुद्राय इतिमंत्रेण स्वयंहविः प्राश्याचम्य प्रा
णायामंकृत्वा ततोयजमान आचार्य्योवा ॐसिद्धयेस्वाहेति अग्नौआज्यंजुहुयात् ततोयजमानः यतद्वंद्र

भयामहेततोनोअभयकृधिमघवञ्छग्धित तवन्नऊतिभिर्विद्विषोविमृधोजहीति अश्मानमभिमन्त्रयेत् ततश्चा
र्धेःप्रायश्चित्तादिहोमशेषंसमापयेत् ॐत्वन्नोअग्नेइतिवामदेवऋषिः अग्निवरुणौदेवते त्रिष्टुप्छंदः प्रायश्चित्त
होमेविनियोगः सत्वन्नोइतिवामदेवऋषिः अग्निवरुणौदेवते त्रिष्टुप्छंदः प्रायश्चित्तहोमेविनियोगः ॐअया
श्चाग्नेवामदेवऋषिः अग्निर्देवता त्रिष्टुप्छंदः सर्वप्रायश्चित्तहोमेविनियोगः येतेशतमितिवामदेवऋषिःवरुणः
सविताविश्वेमरुतः स्वर्कादेवताः त्रिष्टुप्छंदः सर्वप्रायश्चित्तहोमेविनियोगः उदुत्तममितिशुनःशेफऋषिः वरु
णोदेवता त्रिष्टुप्छंदः सर्वप्रायश्चित्तहोमेविनियोगः १ ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः
यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॐसत्वन्नोअग्नेवमोभवोती
नेदिष्ठोअस्याउषसोव्युष्टौ अवयक्ष्वणोवरुणंरराणोवीहिमृडीकंसुहवोनएधिस्वाहा २ ॐअयाश्चाग्नेस्यन
भिशस्तिपाश्चसत्यमित्त्वमयाअसि अयानोयज्ञंवहास्ययानोधेहिभेषजंस्वाहा ३ ॐयेतेशतंवरुणयेसहस्रंयज्ञि
याःपाशाविततामहांतः तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा इदंवरुणायसवित्रे विष्णवेवि
श्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः ४ ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय अथा वयमादित्यव्रतेतवा
नागसोअदितयेस्यामस्वाहा ५ इदंवरुणाय ततआचम्य ॐमद्यास्मिन्नेकादश्यादिव्रतोद्यापनहोमकर्मणिकृ
ताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रंसदक्षिणंप्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणे
दक्षिणांदातुमहमुत्सृजे इतिपूर्णपात्रदानसंकल्पः ततःपवित्रंगृहीत्वा ॐसुमित्रियानआपओषधयःसंतु इति
प्रणीताजलेनशिरःसमृज्य ॐदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मइतिप्रणीतामैशान्यांन्युब्जीकुर्यात्
ततःपरिस्तरणक्रमेणबर्हिरुत्थाप्यघृताक्तंकृत्वा तस्यहोमः तत्रमंत्रः देवागातुविदोगातुंवित्त्वागातुमितमनसस्पत

इमंदेवयज्ञंॐस्वाहा।वातेधाःस्वाहा इत्यग्नौव.हिहोमंकुर्यात् ततोयजमा.नआचार्योवामंडपस्यमंडलेवाप्रागादिदिक्षु
लोकेशानांबलिदानंक्रमेणकुर्यात् पूर्वेत्रातारमिंद्रमितिगर्गऋषिः इंद्रोदेवना।त्रिष्टुप्छंदः इंद्रप्रीत्यर्थे बलिदानेवि
नियोगः त्रातारमिंद्रमितिइंद्रसंपूज्य इंद्रायसांगायसपरिवारायसायुधायसशक्तिकाया।ऽमुंसदीपंमाषभक्तबलिं
समर्पयामिनमः इतिबलिंदत्वाभोइंद्रादिशंरक्ष बलिंभक्ष ममसकुटुंबस्यायुःकर्त्ताक्षेमकर्त्ता शुभकर्त्ताशांतिकर्त्तापु
ष्टिकर्त्तावरदोभव १ आग्नेये अग्निंदूतमिति विरूपऋषिः अग्निर्देवता गायत्रीछंदः अग्निप्रीतये बलिदानेवि
नियोगः अग्निंदूतमित्यग्निंसंपूज्य अग्नयेसांगायसपरिवाराय०स.०सश०अमुंसदीपंमाषभक्तबलिंस० भोअग्ने
दिशंरक्ष बलिंभक्ष ममसपरिवारस्येत्यादिवरदोभव २ याम्येयमायत्वेतिमंत्रस्यार्षादिकंस्मृत्वायमंसंपूज्ययमाय
सांगायसपरिवारायेत्यादि अमुंसदीपंमाषभक्तबलिंस०भोयमदिशंरक्ष बलिंभक्ष ममसपरिवारस्येत्यादि०वरदो
भव ३ एषतेनिर्ऋत्यस्यार्षादिकंस्मृत्वा निर्ऋतिंसपूज्य निर्ऋतयेसांगायसपरिवारायेत्यादि अमुंसदीपंमाषभक्तब
लिसमर्पयामि भोनिर्ऋतेइमंसदीपंमाषभक्तबलिंभक्ष दिशंरक्ष ममयजमानस्यसपरिवारस्यसकुटुंबस्यायुःकर्त्ता
क्षेमकर्त्ताशांतिकर्त्तापुष्टिकर्त्तावरदोभव इमंमेवरुणइतिशुनःशेफऋषिर्वरुणोदेवता यजुःछंदःवरुणप्रीतयेबलिदा
नेविनि० इमंमेवरुण इतिसंपूज्य वरुणायसांगायसपरिवाराय इमंसदीपंमाषभक्तबलिंस०भोवरुणदिशंरक्ष०
ममयजमानस्यायुःकर्त्ता. वरदोभव वायव्ये वातोवामनोवाइत्यस्यार्षादिकंस्मृत्वा वायुंसंपूज्य वायवेसांगायस
परिवाराय सशक्तिकायसायुधाय इमंसदीपंमाषभक्तबलिंसमर्पयामि भोवायोदिशंरक्षबलिंभक्ष ममयजमान
स्यसपरिवारस्य आयु.कर्त्ता. वरदोभव- उत्तरेवयंॐसोमइतिसुबंधुऋषिःसोमोदेवता अनुष्टुप्छंदः सोमप्री. बलि
दानेवि. वयंॐसोमेतिसंपूज्य सोमायसांगाय. इमंसदीपं माषभक्तबलिंस. भोसोमदिशंरक्ष बलिंभक्ष मम

यजमानस्यसपरिवारस्यायुः कर्त्ता. वरदोभव. तमीशानमिति गौतमऋषिः ईशानोदे. जगतीछंदः ईशानप्रीतये बलिदानेवि. तमीशानमितीशानंसंपूज्य ईशानायसांगाय. इमंसदीपंमापभक्तबलिंस- भोईशानदिशंरक्ष बलिं भक्ष ममयजमानस्यसपरिवारस्य. आयुःकर्त्ता. वरदोभव ८ नमोस्तुसर्पेभ्यइतिदेवाऋषयः अनंतोदेवता अनुष्टुप्छंदःअनंतप्रीतयेबलिदानेवि. अनंतायसांगायस. इमंसदीपंमापभक्तबलिंस. भोअनंतदिशंरक्ष बलिंभक्ष ममयजमानस्यायुःकर्त्ता. वरदोभव.९ ब्रह्मयज्ञानमितिप्रजापतिऋषिर्ब्रह्मादेवता यजुश्छंदःब्रह्मप्रीतये बलिदाने वि०ब्रह्मयज्ञानमितिसंपूज्य ब्रह्मणेसांगायइमंसदीपंमापभक्तबलिंसम-भोब्रह्मन्दिशंरक्षबलिंभक्ष ममयजमानस्य सपरिवारस्यायुःकर्त्ता. वरदोभव- ततोग्रहान् अधिदेवताप्रत्यधिदेवतासहितान् पूर्वोक्तवेदमंत्रैर्गंसप्रणवव्याहृतित्रयपूर्वकनाममंत्रैर्वासंपूज्य ग्रहेभ्यःसांगेभ्यःसपरिवारेभ्यःसशक्तिकेभ्यःसायुधेभ्योऽधिदेवताप्रत्यधिदेवतासहितेभ्य इमंसदीपंमापभक्तबलिनैवेद्यंसमर्पयामि भोभोग्रहा अधिदेवताप्रत्यधिदेवतासहिताः सर्वतोसर्वादिशो रक्षत बलिनैवेद्यंभक्षत ममयजमानस्यसपरिवारस्य सकुटुंबस्यायुःकर्त्तारःक्षेमकर्त्तारःशांतिकर्त्तारःपुष्टिकर्त्तारो भवत एवंविनायकदुर्गावाय्वाकाशाश्विसंज्ञेभ्यः पंचलोकपालेभ्य इमंसदीपंमापभक्तबलिंसमर्पयामि ममयजमानस्यायुकर्त्तारःशांतिकर्त्तारोभवत १ क्षेत्रस्यपतिनावयमितिक्षेत्रपालंसंपूज्य सिंदूरकज्जलान्वितबलिद्रव्यं सदीपमादाय क्षेत्रपालाय डाकिनीशाकिनीभूतप्रेतपिशाचादिसहिताय इमंसदीपंमापभक्तबलिंसमर्पयामि भोक्षेत्रपालइमंसदीपंमापभक्तबलिंभक्ष ममयजमानस्यसपरिवारस्यायुःकर्त्ताक्षेमकर्त्ताशांतिकर्त्तापुष्टिकर्त्तावरदो भव इतिबलिदानं ततोयजमानस्यसाचार्यऋत्विक्कर्तृकोभिषेकः सचस्वशाखोक्तवैदिकमंत्रैःपौराणिकमंत्रैश्च कार्यः अत्रपौराणिकमंत्रायथा सुरास्त्वामभिषिंचंतुब्रह्माविष्णुमहेश्वराः वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः

अद्यप्रभ्यानिरुद्धश्चभवंतुनिर्नायते आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा वरुणःपवनश्चैवधनाध्यक्षस्तथैवच ब्रह्मणासहितःशेषोदिक्पालाःपांतुमेसदा कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियारतिः बुद्धिर्लज्जावपुःशांतिस्तुष्टिः कांतिश्चमातरः एतास्त्वामभिषिंचंतुदेवपत्न्यःसमातरः आदित्यश्चंद्रमाभौमोबुधोजीवःसितोर्कजः ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः देवदानवगंधर्वायक्षराक्षसपन्नगाः ऋषयोमनवोगावोदेवमातरएवच देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः अस्त्राणिचैवशस्त्राणिराजानोवाहनानिच औषधानिचरत्नानिकालस्यावयवाश्चये सरितःसागराःशैलास्तीर्थानिजलदानदाः एतेत्वामभिषिंचंतुधर्मकामार्थसिद्धये रक्षंतुतेदेवगणाःसमग्रधर्मंमतिं चापिसदादिशंतु कुर्वंतुनाशंसकलारिभीतेर्दिशंतुभोगानखिलांश्चलक्ष्मीम् इतिसर्वकलशानामीशानकलशस्यचवारिणा पंचपल्लवदूर्वांकुशादिभिर्यजमानस्याभिषेकःकार्यः ततःशय्यादानं अष्टदलोपरितिलप्रस्थंनिधाय तस्मिन्स्वास्तीर्णांशय्यांपरिकल्प्य तच्छीर्षदेशेघृतपूर्णंताम्रमयंनिद्राकलशंनिधाय उपरिचसुपूजितहैमंपुरुषंपुरुषसूक्तेनषोडशोपचारैः पूजितांलक्ष्मीनारायणप्रतिमांनिधाय प्रतिज्ञासंकल्पंकुर्यात् ॐतत्सदद्येत्यादिदेशकालादिसंकीर्त्यशास्त्रोक्तविधिनाविहितैकादश्यादिव्रतोद्यापनकर्मणः सांगफलप्राप्त्यर्थंसोपकरणशय्यादानमहंकरिष्ये ततोयथोक्तविधिनालक्ष्मीनारायणपूजांविधाय ततोविप्रंवरेण ॐभूमिदेवायनमः इतिविप्रंपादप्रक्षालनपूर्वकंसंपूज्य ॐमद्यैकादश्यादिव्रतोद्यापनसांगफलावाप्तयेशय्यादानप्रतिग्रहार्थंत्वामहंवृणे इतिब्राह्मणंवृणुयात् पात्राभावेतु कुशकल्पितविप्रपूजा ॐमद्येत्यादिदेशकालादिसंकीर्त्य ममैकादश्यादिव्रतोद्यापनयज्ञकर्मणि सर्वपापक्षयपूर्वकाप्सरोगणसंसेव्यमानवरुणेंद्रपुरगमनोत्तरं षट्षष्टिसहस्रवर्षावधिकरणकक्रीडनस्त्रीसहस्रसंवरणसहितस्वर्गलोक[illegible]षियोजनमंडलेराज्यानंतर परमशिवैकत्वप्राप्तिकामइमांशय्यामीशा

नादिकोणचतुष्टयस्थापितघृतकुंकुमगोधूमसजलपूर्णकुंभां स्वोच्छीर्षक प्रदेशस्थापितघृतपूर्णनिद्राकलशां हंसा
लीप्रच्छन्नांशुभगंडोपधानकां प्रच्छादनपटीसप्तधान्यतांबूलादर्शकुंकुमाक्षोटकर्पूरागुरुचंदनदीपिकोपानच्छत्रचाम
रदंडासनरीतिपात्रकांस्यपात्रताम्रपात्रलोहपात्ररजतमयभाजनजलपात्रादियुतां दंपतीपरिधेयसुवर्णरजतम
यमणिगणखचितभूषणसमस्तवस्त्रोपस्करादिसहितां राजोपयोगिराज्यचिन्हैरलंकृतां लक्ष्मीनारायणयज्ञपुरुष
प्रीतिकामनयामुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे पात्राप्रामाण्येतु यज्ञपुरुषप्रीत्यर्थंदातुमहमुत्सृजे
शय्योपरिस्थितलक्ष्मीनारायणमुद्दिश्यभूमिस्थितकुशाकल्पितविष्टरोपरि संकल्पजलमुत्सृजेत् लक्ष्मीनारायण
प्रार्थना लक्ष्म्यायथात्वदीयाहिनशून्याक्षीरसागरे शय्याममाप्यशून्यास्तुतथाजन्मनिजन्मनि अशून्यंकृष्णशय
नंयथासागरजातया प्रभोममतथाभूयादशून्यंभवसागरे लक्ष्मीनारायणौदेवौयथागौरीगिरीश्वरौ शचीपुरंद
रौयुक्तौतथैतौद्विजदंपती ततःशय्यां प्रदक्षिणीकृत्य हिरण्यंदक्षिणां ॐमद्यकृतैतदेकादश्यादिव्रतोद्यापनहोमादि
कर्मणःसांगफलार्थंशय्यादानप्रतिष्ठार्थमिदंसुवर्णमग्निदैवतं तन्मौल्यभूतंरजतताम्रमुद्रादिद्रव्यं व्रतोपदेष्ट्रेविप्राय
तुभ्यमहंसंप्रददे इतिदानप्रतिष्ठांदद्यात् अथगोदानं ततोयजमानास्तिथ्यादिसंकीर्त्य ॐमद्यकृतस्यैकादश्यादि
व्रतोद्यापनहोमादिकर्मणःसांगफलावाप्तये साचार्यऋत्विजोन्यांश्चसद्विप्रान्गोदानतांबूलवस्त्रान्नदानदक्षिणादिभि
रहंपूजयिष्ये तत्रप्रधानगोदानमहंकरिष्ये तत्र आचार्यं दक्षिणावस्त्रादिभिर्गोदानप्रतिग्रहार्थं त्वामहंवृणे इति
संपूज्य ॐमद्यैकादश्यादिव्रतोद्यापनपूर्त्तिकामः श्रीलक्ष्मीनारायणप्रीतयेआचार्यायेमांगामहंप्रदास्ये इतिसंक
ल्प विधाय गोपूजांकुर्यात् नंदिनी सुनंदा सुमंगलां भद्रकरींगामावाहयामि इत्यावाह्यांगन्यासंकुर्यात् शृंगमूल
योर्ब्रह्मविष्णुभ्यांनमः ललाटेमहादेवायनमः नासावंशेषण्मुखायनमः कर्णयोरश्विभ्यांनमः चक्षुषोश्शशि

भास्कराभ्यांनमः ॥ दंतेषुमरुद्गणेभ्योनमः॥नासिकायांवरुणायनमः॥हुंकारेसरस्वत्यैनमः॥ गंडयोर्यमलाभ्यांनमः
ओष्ठयोःसंध्याद्वयायनमः ॥ ग्रीवायांइंद्रायनमः ॥ कुक्षिदेशेछंदेभ्योनमः ॥ उरसिसाध्येभ्योनमः
चतुर्षुपादेषुचतुष्पादधर्मायनमः ॥ खुरमध्येषुगंधर्वेभ्योनमः ॥ खुरपार्श्वेषु अप्सरोभ्योनमः
पृष्ठेएकादशरुद्रेभ्योनमः ॥ सर्वसंधिषुवसुभ्योनमः ॥ श्रोणितटेपितृभ्योनमः ॥ लांगूलेसोमायनमः
वालेषुआदित्यरश्मिभ्योनमः ॥ गोमूत्रेगंगायैनमः ॥ क्षीरेसरस्वत्यैनमः ॥ दध्निनर्मदायैनमः ॥ सर्पि
षिहुताशनायनमः॥ गोमयेलक्ष्म्यैनमः॥ रोमसुदेवानामष्टाविंशतिकोटिभ्योनमः॥ उदरेपृथिव्यैनमः॥ पयोधरेषु
चतुःसागरेभ्योनमः ततःपूजाक्रमः सौरभेयिसर्वहितेपवित्रेपापनाशिनि गृहाणेदंमयादत्तंपाद्यंत्रैलोक्यवंदिते
इतिपाद्यं ॐभूर्भुवःस्वःरुद्ररूपिण्यैपाद्यंनमः सर्वदेवमयेदेविसर्वतीर्थमयेशुभे गृहाणार्घ्यंमयादत्तंसौरभेयिन
मोस्तुते इत्यर्घ्यं देहास्थितासिरुद्राणांशंकरस्यसदाप्रिये धेनुरूपेणसादेविममपापंव्यपोहतु इतिस्नानम् आच्छा
दनंमयादत्तंगवेसम्यक्सुशोभनं सुरभ्यैसर्वदानिनप्रीयतांपरमेश्वरः इतिवस्त्रं श्रीखंडंचंदनंदिव्यंसर्वगंधैःस
मन्वितं विलेपनंसुरश्रेष्ठेगृहाणपरमेश्वरि ततोऽलंकारान्दद्यात् शृंगयोःसुवर्णं नेत्रयोरत्नद्वयं कंठेघंटांपु
ष्पमालांच सर्वांगेषुपट्टदुकूलम् पृष्ठेताम्रं पुच्छेमुक्ताफलस्रजं कुंकुमकस्तूरिकादिसुगंधितद्रव्याणि सप्तधान्यानि
माल्यानिचसुगंधीनिमालत्यादीनियानिच सुरभित्वंजगन्मातःपुष्पाणिप्रतिगृह्यतां इतिपुष्पाणि वनस्पतिर
सोदिव्योगंधाढ्योगंधउत्तमः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतामितिधूपं आज्यंत्रिवर्तिसंयुक्तंवन्हिनायोजि
तंमया दीपंगृहाणसुरभितुभ्यंभक्त्यासमर्पितम् इतिदीपम् सुरभित्वंजगन्मातादेविविष्णुपदेस्थिता सर्वदेवस
येग्रासमयादत्तमिमंग्रस सौरभेय्यःसर्वहिताःपवित्राःपापनाशनाः प्रतिगृह्णत्विमंग्रासंगावस्त्रैलोक्यमातरः

ततोगोग्रासंनैवेद्यं पंचगावःसमुत्पन्नामथ्यमानान्महोदधेः. तासांमध्येतुयानंदातस्यैधेन्वैनमोनम इति. नमस्कारः हिरण्यगर्भगर्भस्त्वंहेमबीजंविभावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमे इतिदक्षिणा. गावोममाग्रतःसंतुगावो मेसंतुपृष्ठतः सव्यदक्षिणयोर्गावोगवांमध्येवसाम्यहं इतिप्रार्थना ततोविप्रपूजा, रुद्ररूपिणेब्राह्मणायनमः एवंसंपूज्य गोदानप्रतिग्रहार्थंत्वामहंवृणे इतिवरणसामग्रींतस्मैदत्वासजलतिलकुशाक्षतंगोपुच्छंहस्तेगृहीत्वा ॐमद्यामुकगोत्रोऽमुकशर्माहं सर्वपापक्षयार्थं. धर्मार्थकाममोक्षरूपचतुर्विधपुरुषार्थसिद्धये कृतैतदेकादश्यादिव्रतोद्यापनफलप्राप्त्यर्थमिमांगांशृंगादिस्थानेषुसुवर्णाद्यलंकृतांसवत्सांरुद्रदैवतां यथानामगोत्रायब्रह्मणेब्राह्मणाय यातुभ्यमहंसंप्रददे इति.विप्रहस्तेदद्यात् ॐयज्ञसाधनभूतायाविश्वस्याघौघनाशिनी विश्वरूपधरोदेवःप्रीयता मनयागवेति मंत्रः घृतक्षीरप्रदागावोघृतयोन्यघृतोद्भवाः घृतनद्योघृतावर्त्तास्तामेसंतुसदागृहे. घृतंमेहृदयेनित्यंघृतंनाभ्यांप्रतिष्ठितं घृतमेसर्वतश्चैवघृतमेववहिःस्मृतं, ततोदानप्रतिष्ठांदद्यात् ॐमद्यकृतैतद्गोदानस्य सिद्ध्यर्थमिदंदक्षिणाद्रव्यं तुभ्यमहंसंप्रददे इतिदानप्रतिष्ठांदत्वा ब्राह्मणं धेनुच नमस्कृत्वा गोमतींविद्यांपठेत् गावःसुरभयोनित्यंगावोगुग्गुलगंधिकाः गावःप्रतिष्ठाभूतानांगावः स्वस्त्ययनंमहत् अन्नमेवपरंगावोदेवानांहविरुत्तम पावनंसर्वभूतानांरक्षंतिचवहंतिच हविषामंत्रपूतेनतर्पयंत्यमरान्दिवि ऋषीणामग्निहोत्रेषुगावोहोमे प्रतिष्ठिताः सर्वेषामेवभूतानांगावःशरणमुत्तमं. गावःपवित्रंपरमंगावोमंगलमुत्तमं गावःसर्वस्यलोकस्यगावोधन्याःसुवाहनाः नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति इतियमोक्तांगोमतींविद्यांजपेत् महाभारतेपि सुरभ्यःसौरभेय्यश्चसरितःसागरंयथा गावःपश्यांम्यहंनित्यंगावःपश्यंतमांसदा गावोस्माकं...

स्ततोवयं गावोममाग्रत.संतुगावोमेसंतुष्टश्तः ततोयजमानएकादशीव्रतोद्यापने शुक्लैकादश्याःकृष्णैकादश्या
उद्यापनेकृते द्वादशकुमान् यथाविभवपकान्नदक्षिणासहितान् प्रतिमावस्त्रपादुकादिसहितान् उभयैकादशीव्र
तोद्यापनेतुचतुर्विंशतिंषड्विंशतिंवाब्राह्मणान्केशवादिदेवस्वरूपान् केशवादिनामभिरेव संपूज्नदद्यात् तत्रमंत्रः
पक्वान्नपूरितान्कुंभान्दक्षिणावस्त्रसयुतान् ददामिद्विजवर्येभ्योदेवोमेप्रीयतामिति प्रत्येकंपूजनेतु पक्वान्नपूरितं
कुंभंदक्षिणावस्त्रसंयुतं ददामिद्विजपर्याथकेशव प्रीयतामिति शिवरात्र्यादिशैवव्रतोद्यापनेचतुर्दशब्राह्मणान् अ
जैकपादहिर्बुध्न्योभव श्शर्वउमापतिः रुद्रः पशुपतिः शंभुर्वरदःशिवईश्वरः महादेवोहरोभीमोनामान्येवचतुर्दश
इतिप्रत्येकनामाभिः संपूज्यकुंभान्दद्यात् तत्रमंत्र पक्वान्नपूरितान्कुंभान्दक्षिणावस्त्रसंयुतान् ददामिद्विजवर्येभ्य
शिवोमेप्रीयतामिति प्रधानकुंभदानेमंत्रविशेषः शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो तवरूपप्रदानेनमम
संतुमनोरथाः ततः पीठं सर्वोपस्करसंयुक्तं सर्वतोभद्रोपरिस्थप्रधानदेवताप्रतिमासहितं पूर्वोक्तमंत्रेणाचा
र्यायदद्यात् ऊँतत्सतूअद्यकृततदेकादश्यादिव्रतोद्यापनस्य सांगफलावाप्तये इमां प्रधानदेवताप्रतिमां
सर्वोपस्करसहितपीठसमान्वितां श्रीपरमेश्वरलक्ष्मीनारायणप्रीत्यर्थं मुमामहेश्वरप्रीतये वा अमुकगोत्राया
मुकशर्मणे आचार्यायतुभ्यमहंसंप्रददे ततऋत्विग्भ्योदक्षिणां द्यात् ऊँमद्यकृतस्योद्यापनकर्मणः द्वारपालत्वजा
पकत्वविधेः सांगफलावाप्तये इमांदक्षिणांनानानामगोत्रेभ्योयथासंख्यमृत्विग्भ्योदातुमहमुत्सृजे ततस्तिलपात्र
दानं ऊँमद्यास्मिन्नुद्यापनकर्माणिज्ञाताज्ञातन्यूनातिरिक्तदोषपरिहारार्थमिदंतिलपात्रप्रजापतिदैवतं सुवर्णादिदक्षि
णाद्रव्यसहितममुकगोत्रायामुकशर्मणेब्राह्म ायतुभ्यमहंप्रददे मंत्रः तिलाः स्वर्णयुतास्तुभ्यंप्रदत्ताह्यघनाशनाः
विष्णुप्रीतिकरानित्यमतः शांतिंप्रयच्छमे ततःपूर्णाहुतिंकुर्यात् ऊँमूर्धानमित्यस्य भरद्वाजऋषिस्त्रिष्टुप्छंदः

वैश्वानरोदेवता पूर्णाहुतिहोमेविनियोगः रक्तवस्त्रावृतंपुष्पाक्षतसहितं श्रीफलमादाय ओंमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निं कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः स्वाहा इदमग्नये ततो वसोःपवित्रमिति वसोर्धारां स्रुवोपरिदद्यात् ओंआयुर्दाअग्नेहविषोजुषाणोघृतप्रतीकोघृतयोनिरेधि घृतंपीत्वामभिचारुगव्यं पितेवपुत्ररक्षतादिवमातस्वाहा ततः स्रुवेणभस्मानीय त्र्यायुषकरणमिति स्रुवेणहोमीयवान्हिमंडलात् भस्म गृहीत्वा त्र्यायुषंजमदग्नेः इतिललाटे ॥ १ ॥ कश्यपस्यत्र्यायुषमितिग्रीवायां ॥ २ ॥ यद्देवानांत्र्यायुषमितिदक्षिणांसे ॥ २ ॥ तन्नोअस्तुत्र्यायुषं तत्तेअस्तुत्र्यायुषमिति हृदये ततोद्यौःशांतिरंतरिक्षंशांतिः आपोहिष्ठामयोभुव इत्यादिमंत्रैरत्राप्यभिषेकः ततोयज्ञातदक्षिणामाचार्य्यायदद्यात् हवनदक्षिणांचब्रह्मणेदद्यात् ततोयजमानोऽग्निंप्रदक्षिणीकृत्य धर्मंदेहिधनंदेहिपुत्रपौत्रांश्चदेहिमे आयुरारोग्यमैश्वर्यंदेहिमेहव्यवाहन ॥ १ ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धियशोबलं आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन यांतुदेवगणाः सर्वेपूजामादाययाज्ञिकीं इष्टकार्य्यप्रसिद्ध्यर्थंपुनरागमनायच प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुच स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ १ ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियासुच न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतम् ॥ २ ॥ ततोयजमानः कृतस्योद्यापनकर्मणःसांगतासिध्यर्थंब्राह्मणान्यथाशक्तिपक्वान्नपायसादिभिरहंभोजयिष्ये तथाच यथाशक्तिभूयसींदक्षिणांदातुमहमुत्सृजे कृतेनानेनकर्मणा कर्मांगरूपीश्रीभगवान्परमेश्वरःप्रीयतां ततःसदन्नदक्षिणादानादिभिरन्यानपिशिष्टान्ब्राह्मणान्संतोष्य आशिषोगृहीत्वा व्रतसंपूर्णतांवाचयेत् जपच्छिद्रंतपःछिद्रंयच्छिद्रंव्रतकर्मणि सर्वंभवतुचाच्छिद्रंब्राह्मणानांप्रसादतः १ ब्राह्मणायानिभाषंतेमन्यंतेतानिदेवताःसर्वदेवमयाविप्रानतद्वचनमन्यथा २ ब्राह्मणाजंगमंतीर्थंनिर्मलंपापशोधनं येषांवाक्योदकेनैवशुद्ध्यतिमलिना

जनाः ३ ब्राह्मणानांतुवचसाब्रह्महत्याविनश्यति सर्वतीर्थाभिषेकश्चतेषांवाक्योदकेनहि ४ उदधिःक्षारतांनीतः पावकःसर्वभक्ष्यतां सहस्रनेत्रः शक्रोपिकृतोविप्रैर्महात्मभिः ५ व्यासवाल्मीकवचनात्पराशरवशिष्ठयोःनारदस्य भृगोरुक्त्यासंपूर्णंचास्तुतेव्रतम् ६ उपवासो व्रतंतीर्थंजपहोमादिकंचयत् विप्रैःसंपादितंयस्यसंपन्नंतस्यतत्फलम् ॥ ७ ॥ यद्ब्राह्मणास्तुष्टतमावदंतितद्देवताःकर्मभिराचरंति तुष्टेषुतुष्टान्कवयोवदंतिप्रत्यक्षदेवेषुपरोक्षदेवान् ८ ॥ समस्तसंपत्समवाप्तिहेतवःसमुत्थितापत्कुलधूमकेतवः अपारसंसारसमुद्रसेतवोरक्षंतुमांब्रह्मणपादरेणवः ॥ ९ ॥ आपद्घनध्वांतसहस्रभानवःसमीहितार्थार्पणकामधेनवः समस्ततीर्थांबुपवित्रमूर्त्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥ १० ॥ आधिव्याधिहरंन्दृणांदुःखदारिद्र्यनाशनं श्रीकीर्त्तिपुष्टिदंवंदेविप्राणांपादपंकजम्॥ ११ ॥ अथनियमविशेषोद्यापनं एकमासंद्विमासंवात्रिमासंचार्धमेवच दिनानिदशपंचत्रिंदिनमेकंदिनार्धकं यत्किंचित्स्वीकृतंकृत्यंशाकपत्रादिभोजनं मूलिकामत्स्यमांसादिवृंताकादिफलानिच तत्सर्वंभक्षयिष्यामिनिवृत्तेव्रतकर्मणि ततोब्राह्मणैराशिषोदेयाः मंत्रार्थाःसफलाःसंतुपूर्णाःसंतुमनोरथाः शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयोस्तुवः ततोयजमानः सर्वान्सदन्नदक्षिणादिभिः परितोष्य तैराज्ञप्तः समहोत्सवंइष्टजनैःसहभुंजीत ॥ इतिश्रीरघुवंशतिलकश्रीरणवीरसिंहकारिते कृत्यरत्नाकरे त्रैवर्णिकानां सर्वव्रतानांसामान्योद्यापनम् ॥

अथशूद्रस्यवर्णत्वाद्वर्णसामान्यधर्माउच्यंते महाभरतेश्राद्धकर्मतपश्चैवसत्यमक्रोधएवच स्वेषुदारेषुसंतोषःशौचंनित्यानसूयता आत्मज्ञानंतितिक्षाचधर्मःसाधारणोनृपेति नाधारणधर्मत्वश्रवणात् तत्रादौनिषिद्धधर्माःवेदाक्षरविचारेणब्राह्मणीगमनेनच कपिलाक्षीरपानेनशूद्रश्चंडालतांव्रजेदितिपराशरोक्तेः जपस्तपस्तीर्थसेवाप्रव्रज्यामंत्रसा

धनंदेयनाराधनं चैवस्त्रीशूद्रपतनानि षडिति ननु किंश्च अथशूद्रास्यविहितधर्माश्च शूद्रोवर्णश्चतुर्थोपिवर्णत्वाद्धर्मम र्हति वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेतिव्यासोक्तेः शूद्रस्तूष्णींजपन्मौनमास्तेभोगविवर्जित इतिविशे षविधानाच्च तथाचास्य देवपूजाव्रतोपवासयज्ञदानशमादिनियमैर्होमतर्पणादिभिश्च रुद्रसायुज्यादिफलाभिधा नमुक्तं कूर्मपुराणे ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवद्विजोत्तम अर्चयंतिमहादेवंयज्ञदानशमादिभिः व्रतोपवास नियमैर्होमस्वाध्यायतर्पणैः तेषांवैरुद्रसायुज्यंसामीप्यं वातिदुर्लभं सालोक्यताचसारूप्यंजायतेतत्प्रसादतइति वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेति तदुक्तंनिर्णयामृते तथाचतिथितत्त्वेस्कांदे स्वाहाप्रणवसंयुक्तं शूद्रेमं त्रंददद्द्विजः शूद्रोनिरयमाप्नोति ब्राह्मणः शूद्रतामियात् एवंच पौराणविष्णुसहस्रनामचंडीस्तोत्रादिपाठेप्य नधिकारः श्रवणमात्राधिकारेण पाठाप्रसक्तेः तथा यइदंशृणुयान्नित्यंयश्चापिपरिकीर्तयेत् नाशुभंप्राप्नुयात्किं चित्सोमुत्रेहचमानवः वेदांतगोब्राह्मणः स्यात्क्षत्रियोविजयीभवेत् वैश्योधनसमृद्धःस्यात्शूद्रःसुखमवाप्नुयात् इत्यत्रश्रवणस्यपूर्वोपादानप्राधान्यात् शूद्रःश्रवणेनैवेतिशंकराचार्य्यैर्व्याख्यातं किंबहुना शूद्रकर्तृकस्नानश्रा द्धादौविप्रस्यैवपौराणमंत्रपाठःशूद्रस्यतुश्रवणमात्रं श्रावयेच्चतुरोवर्णान्निपादस्थपतिंयाजयेदितिवत् शृणुयुरित्य र्थेनशूद्रंप्रतिश्रवणजन्यज्ञानस्यैवकर्माभिधेयंइष्यता पुराणपठनपाठाभावे तत्तन्मंत्रेषुपाठाप्रसंगाच्च वाराहेपि अयमे वविधिःप्रोक्तःशूद्राणांमंत्रवर्जितः अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यते अतः शूद्रकर्तृकदानश्राद्धादौ अर्थ प्रकाशनार्थंसर्वत्रविप्रेणमंत्रपाठःकार्य्यइतिशूलपाणिः वैदिकोपि विप्रेणपठनीयइत्याचार्य्यचूडामणिः श्राद्धे परस्यांशाखायांविप्रस्यमंत्रपाठउक्तः सशूद्रस्यापिश्राव्यःस्यादितिकौमुद्यांमदनपालः अमंत्रस्येतिविशेषणात् शूद्राणांस्त्रीणांतत्तुल्यानांचेतिशूलपाणिःयत्तुतेनोक्तं मंत्रजन्यनियमादृष्टसिद्धिर्नमस्कारेणैवस्यतेनुज्ञातोनमस्कार

मंत्रइति गौतमोपि कल्पतरुस्तुपौराणकर्मणांस्त्रीशूद्रान्प्रतिविशिष्यविधानात्तेषांचमंत्रविशिष्टानामुत्पत्त्यातथैव विनियोगात्पौराणमंत्रपाठेभवेदेवेत्याह तन्न नमस्कारेणबाधात् अन्येतु देवानादेवनःस्नातुपितॄणांनामगोत्रतः आवाहनादिकर्तव्यंयथाशूद्रेणतच्छृणु इतिभविष्योक्तेः सर्वत्रदेवेभ्योनमः पितृभ्योनमः इतिनाममंत्रमाहुः न नमस्कारेणमंत्रेणपंचयज्ञान्नहापयेत् तेनशूद्रकर्तृकतुलादानादिष्वपिशूद्रस्यनमस्कारोमंत्रः पौराणस्तुविप्रपठनीयइत्यविरोधः अतोनुमतोस्यनमस्कारमंत्रइति गौतमीयेपि अत्रकेचिदाहुः विप्रोमंत्रेणगृह्यते इत्यत्रवैदिको मंत्रोविप्रस्य पौराणस्तुशूद्रपठनीयः नवेदेष्वधिकारोहिकश्चिच्छूद्रस्यविद्यते पुराणेष्वधिकारोमेदर्शितोब्राह्मणै रिति शूलपाणौपाद्मोक्तेः तिथितत्त्वे वैदिकेतरमंत्रपाठेशूद्रस्याधिकारः श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन इतितत्पुराणमंत्रपरा नमस्कारेणमंत्रेणेति ब्रह्मक्षत्रविशांचैवमंत्रवत्स्नानमिष्यते तूष्णीमेवतुशूद्रस्यसनमस्कारकमतइति याज्ञवल्क्येनापि अयमेवविधिःप्रोक्तःशूद्राणांमंत्रवर्जित इत्यनुमतोनमस्कारमंत्रोवैदिकपुराणयोर्निषेधाच्च कूर्मपुराणे नाध्येतव्यमिदंशास्त्रंवृषलस्यचसन्निधावितिपौराणनिषेधनेवेदस्यदूरास्नातत्वात् अध्येतव्यं ब्राह्मणेनवैश्येनक्षत्रियेणच श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन श्रौतंस्मार्तंचवैधर्मंप्रोक्तमस्मिन्नृपोत्तम तस्मात्शूद्रैर्विनाविप्रंनश्रोतव्यंकदाचनेतिशूलपाणौ पुराणाधिकारे भविष्योक्तेः अतएवविप्रोमंत्रेणगृह्यते इति सर्वार्थपरंनश्राद्धमात्रमितिशूलपाणिः नन्वेवं श्रवणविधौ सति श्रावयेच्चतुरोवर्णानित्युक्तेर्द्विजानामपितुलादानादौ श्रवणमेवस्यान्नपाठ इतिचेदत्रब्रूमः अध्येतव्यंब्राह्मणेनवैश्येनक्षत्रियेणच श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचनेति एवंव्रतोपवासादावपिशूद्रस्याधिकारः श्रवणविधिसिद्धविषयत्वाद्वैदिकमंत्राभावाच्च प्राच्यास्तु वैश्यशूद्रयोर्द्विरात्राधिकोपवासनिषेधमाहुः वैश्याःशूद्राश्चयेमोहादुपवासंप्रकुर्वते त्रिरात्रंपंचरात्रंवातेषांव्युष्टिर्नविद्यते

सु सर्वकर्मागत्वेन पुण्याहवाचनमाचारानुसारेणोच्यते व्यासः संपूज्यगंधमाल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत्
काम्यकर्मणिमांगल्येसंग्रामाद्भुतदर्शने यमः सोंकारैर्नुद्विजः कुर्यान्निरोंकारमहीपतिः उपांशुचत्तथावैश्य
स्वस्तिशब्दंप्रकीर्त्तयेत् तत्र कर्त्तादावाचम्य सुमुखश्चैकदंतश्चेत्यादिविप्रैः पठ्यमानं श्रुत्वा ॐमद्येत्यादि
देशकालौ संकीर्त्य अमुकगोत्रोमुकदासोहममात्मनःसर्वपापक्षयसकलाभीष्टप्राप्तिद्वारा श्रीपरमेश्वरप्री
त्यर्थं यथाकालसमाचरितैकादश्यादिव्रतस्य सांगफलाप्तये तदुद्यापनकर्मकरिष्ये तदंगतया गणेशपूजनं
पुण्याहवाचनंचकरिष्ये इति संकल्प्य गणेशं पूजयेद्यथा हेहेरंबत्वमभ्येहि ह्यंबिकात्र्यंबकात्मज सिद्धिबुद्धि
युतत्र्यक्षसर्वलोकपितःपितः नागास्यनागहारस्त्वंगणनाथचतुर्भुज भूषितःस्वायुधैर्दिव्यैः पाशांकुशपरश्व
धैःआवाहयामिपूजार्थंरक्षार्थंचममक्रतोःइहागच्छगृहाणत्वंपूजांरक्षचमत्क्रतुमित्यावाह्य षोडशोपचारैःसंपूज्यपात्रे
सफलमर्घ्यमादाय रक्षरक्षगणाध्यक्षत्र्यक्षत्रैलोक्यरक्षक भक्तानामभयंकर्त्तात्राताभवभवार्णवात् द्वैमातुरकृपा
सिंधोषाण्मातुराग्रजप्रभो वरदस्त्वंवरंदेहिवांछितंवांछितार्थद अनेनफलदानेनफलदोभवमेप्रभो इत्यर्घ्यंदत्त्वाव
क्रतुंडमहाकायेतिप्रार्थयेत् यद्वा विश्वेश्वरायवरदायसुरप्रियायलंबोदरायसकलायजगद्धिताय नागाननाय
सततसर्पविभूषणायगौरीसुतायगणनाथनमोनमस्ते १ भक्तार्त्तिनाशनपरायगणेश्वरायसर्वेश्वरायशुभदायसुरेश्व
राय विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते २ नमस्तेब्रह्मरूपायविष्णुरूपायतेनमःनमस्ते
रुद्ररूपायकरिरूपायतेनमइतिसंप्रार्थ्यततःस्वाग्रेधान्यराशिद्वयेकलशसंस्थाप्यतत्रदूर्वापंचपल्लवफलैर्हेमपंचरत्ना
निदत्त्वाधान्यपूर्णपात्रद्वयं न्यस्य तत्र पाशहस्तंचवरुणमंभसांपतिमीश्वरं आवाहयामियज्ञेस्मिन्पूजेयंप्रति गृह्य
तामिति वरुणमावाह्यसंपूज्यकलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः मूलेतस्यस्थितोब्रह्मामध्येमातृगणास्थिताः

मंत्रइति गौतमोपि   कल्पतरुस्तुपौराणकर्मणांस्त्रीशूद्रान्प्रतिविशिष्यविधानात्तेषांचमंत्रविशिष्टानामुत्पत्त्यातथैव
विनियोगात्पौराणमंत्रपाठोभवेदेवेत्याह   तन्न नमस्कारेणबाधात् अन्येतु देवानादेवनःस्नातु पितृणांनामगोत्रतः
आवाहनादिकर्त्तव्यंयथाशूद्रेणतच्छृणु   इतिभविष्योक्तेः सर्वत्रदेवेभ्योनमः पितृभ्योनमः   इतिनाममंत्रमाहुःन
मस्कारेणमंत्रेणपंचयज्ञान्नहापयेत्   तेनशूद्रकर्तृकतुलादानादिष्वपिशूद्रस्यनमस्कारोमंत्रः पौराणस्तुविप्रपठनी
यइत्यविरोधः  अतोनुमतोस्यनमस्कारमंत्रइति  गौतमीयेपि अत्रकेचिदाहुः विप्रोमंत्रेणगृह्यते  इत्यत्रवैदिको
मंत्रोविप्रस्य पौराणस्तुशूद्रपठनीयः नवेदेष्वधिकारोहिकश्चिच्छूद्रस्यविद्यते  पुराणेष्वधिकारोमेदर्शितोब्राह्मणै
रिति शूलपाणौपाद्मोक्तिः   तिथितत्त्वे वैदिकेतरमंत्रपाठेशूद्रस्याधिकारः  श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन
इतितत्पुराणमंत्रपरा  नमस्कारेणमंत्रेणेति  ब्रह्मक्षत्रविशांचैवमंत्रवत्स्नानमिष्यते  तूष्णीमेवतुशूद्रस्यसनमस्का
रकमतइति  याज्ञवल्क्येनापि अयमेवविधिःप्रोक्तःशूद्राणांमंत्रवर्जित  इत्यनुमतोनमस्कारमंत्रोवैदिकपुराणयोर्नि
षेधाच्च कूर्मपुराणे  नाध्येतव्यमिदंशास्त्रंवृषलस्यचसन्निधावितिपौराणनिषेधनेवेदस्यदूरास्तत्वात्  अध्येतव्यं
ब्राह्मणेनवैश्येनक्षत्रियेणच  श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन  श्रौतस्मार्त्तंचवैधर्मंप्रोक्तमस्मिन्नृपोत्तम  तस्मा
त्शूद्रैर्विनाविप्रंनश्रोतव्यंकदाचनेतिशूलपाणौ  पुराणाधिकारे भविष्योक्तेः अतएवविप्रोमंत्रेणगृह्यते इति सर्वा
र्थपरंनश्राद्धमात्रमितिशूलपाणिः नन्वेवं  श्रवणविधौ सति श्रावयेच्चतुरोवर्णानित्युक्तेर्द्विजानामपितुलादानादौ
श्रवणमेवस्यान्नपाठ  इतिचेदत्रब्रूमः अध्येतव्यंब्राह्मणेनवैश्येनक्षत्रियेणच  श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाच
नेति एवंव्रतोपवासादावपिशूद्रस्याधिकारः  श्रवणविधिसिद्धविषयत्वाद्वैदिकमंत्राभावाच्च प्राच्यास्तु वैश्यशूद्र
योर्द्विरात्राधिकोपवासनिषेधमाहुः  वैश्याःशूद्राश्चयेमोहादुपवासंप्रकुर्वते  त्रिरात्रंपंचरात्रंवातेषांव्युष्टिर्नविद्यते

धनंदेवनाराधनंचैवस्त्रीशूद्रपतनानिषडितिमनूक्तेश्च अथशूद्रास्यविहितधर्मांश्च शूद्रोवर्णश्चतुर्थोपिवर्णत्वाद्धर्मम
र्हति वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेतिव्यासोक्तेः शूद्रस्तूष्णींजपेन्मौनमास्तेभोगविवर्जित इतिविशे
षविधानाच्च तथाचास्य देवपूजाव्रतोपवासयज्ञदानशमादिनियमैर्होमतर्पणादिभिश्च रुद्रसायुज्यादिफलाभिधा
नमुक्तं कूर्मपुराणे ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवद्विजोत्तम अर्चयंतिमहादेवंयज्ञदानशमादिभिः व्रतोपवास
नियमैर्होमस्वाध्यायतर्पणैः तेषांवैरुद्रसायुज्यंसामीप्यंवातिदुर्लभं सालोक्यताचसारूप्यंजायतेतत्प्रसादतइति
वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेति तदुक्तंनिर्णयामृते तथाचातिथितत्त्वेस्कांदे स्वाहाप्रणवसंयुक्तंशूद्रेमं
त्रंददद्द्विजः शूद्रोनिरयमाप्नोति ब्राह्मणःशूद्रतामियात् एवंच पौराणविष्णुसहस्रनामचंडीस्तोत्रादिपाठेप्य
नधिकारः श्रवणमात्राधिकारेण पाठाप्रसक्तेः तथा यइदंशृणुयान्नित्यंयश्चापिपरिकीर्त्तयेत् नाशुभंप्राप्नुयात्किं
चित्सोमुत्रेहचमानवः वेदांतगोब्राह्मणः स्यात्क्षत्रियोविजयीभवेत् वैश्योधनसमृद्धःस्यात्शूद्रःसुखमवाप्नुयात्
इत्यत्रश्रवणस्यपूर्वोपादानप्राधान्यात् शूद्रःश्रवणेनैवेतिशंकराचार्य्यैर्व्याख्यातं किंबहुना शूद्रकर्तृकस्नानश्रा
द्धादौविप्रस्यैवपौराणमंत्रपाठःशूद्रस्यतुश्रवणमात्रं श्रावयेच्चतुरोवर्णान्निपादस्थपतिंयाजयेदितिवत् शृणुयुरित्य
र्थेनशूद्रंप्रतिश्रवणजन्यज्ञानस्यैवकर्मभिर्ग्रहणता पुराणपठनपाठाभावे तत्तन्मंत्रेपुपाठाप्रसंगाच्च वाराहेपि अयमे
वविधिःप्रोक्तःशूद्राणांमंत्रवर्जितः अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यते अतः शूद्रकर्तृकदानश्राद्धादौ अर्थ
प्रकाशनार्थंसर्वत्रविप्रेणमंत्रपाठःकार्य्यइतिशूलपाणिः वैदिकोपि विप्रेणपठनीयइत्याचार्य्यचूडामणिः श्राद्धे
यस्यांशाखायांविप्रस्यमंत्रपाठउक्तः सशूद्रस्यापिश्राव्यःस्यादितिकौमुद्यांमदनपालः अमंत्रस्येतिविशेषणात्
शूद्राणांस्त्रीणांतत्तुल्यानांचेतिशूलपाणिःयत्तुतेनोक्तं मंत्रजन्यानियमादृष्टासिद्धेर्नमस्कारेणैवत्यतेनुज्ञातोनमस्कार

मंत्रइति गौतमोपि  कल्पतरुस्तुपौराणकर्मणांस्त्रीशूद्रान्प्रतिविशिष्यविधानात्तेषांचमंत्रविशिष्टानामुत्पत्त्यातथैव विनियोगात्पौराणमंत्रपाठोभवेदेवेत्याह  तन्न नमस्कारेणबाधात् अन्येतु देवानादेवनाम्नातु पितृणांनामगोत्रतः आवाहनादिकर्त्तव्यंयथाशूद्रेणतच्छृणु  इतिभविष्योक्तेः सर्वत्रदेवेभ्योनमः पितृभ्योनमः  इतिनाममंत्रमाहुःन मस्कारेणमंत्रेणपंचयज्ञान्नहापयेत्  तेनशूद्रकर्तृकतुलादानादिष्वपिशूद्रस्यनमस्कारोमंत्रः पौराणस्तुविप्रपठनी यइत्यविरोधः अतोनुमतोस्यनमस्कारमंत्रइति  गौतमीयेपि अत्रकेचिदाहुः विप्रोमंत्रेणगृह्यते  इत्यत्रवैदिको मंत्रोविप्रस्य पौराणस्तुशूद्रपठनीयः नवेदेष्वधिकारोहिकश्चिच्छूद्रस्यविद्यते  पुराणेष्वधिकारोमेदर्शितोब्राह्मणै रिति शूलपाणौपाद्मोक्तिः  तिथितत्त्वे वैदिकेतरमंत्रपाठेशूद्रस्याधिकारः  श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन इतितत्पुराणमंत्रपरा  नमस्कारेणमंत्रेणेति  ब्रह्मक्षत्रविशांचैवमंत्रवत्स्नानमिष्यते  तूष्णीमेवतुशूद्रस्यसनमस्का रकंमतमिति  याज्ञवल्क्येनापि अयमेवविधिःप्रोक्तःशूद्राणांमंत्रवर्जित  इत्यनुमतोनमस्कारमंत्रोवैदिकपुराणयोर्नि षेधाच्च कूर्मपुराणे  नाध्येतव्यमिदंशास्त्रंवृषलस्यचसन्निधावितिपौराणनिषेधनेवेदस्यदूराम्नातत्वात्  अध्येतव्यं ब्राह्मणेनवैश्येनक्षत्रियेणच  श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन  श्रोतंस्मार्तंचवैधर्मंप्रोक्तमस्मिन्नृपोत्तम  तस्मा त्तुशूद्रोविनाविप्रंनश्रोतव्यंकदाचनेतिशूलपाणौ  पुराणाधिकारे भविष्योक्तेः अतएवविप्रोमंत्रेणगृह्यते इति सर्वा र्थपरंनश्राद्धमात्रमितिशूलपाणिः नन्वेवं  श्रवणविधौ सति श्रावयेच्चतुरोवर्णानित्युक्तेर्द्विजानामपितुलादानादौ श्रवणमेवस्यान्नपाठ  इतिचेदत्रब्रूमः  अध्येतव्यंब्राह्मणेनवैश्येनक्षत्रियेणच  श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाच नेति एवंव्रतोपवासादावपिशूद्रस्याधिकारः  श्रवणविधिसिद्धविषयत्वाद्वैदिकमंत्राभावाच्च प्राच्यास्तु वैश्यशूद्र योर्द्विरात्राधिकोपवासनिषेधमाहुः  वैश्याःशूद्राश्चयेमोहादुपवासंप्रकुर्वते  त्रिरात्रंपंचरात्रंवातेषांव्युष्टिर्नविद्यते

यत्तु पंचगव्यंपिबेच्छूद्रोब्राह्मणस्तुसुरांपिबेत् उभौतौतुल्यकर्माणौपूयाख्येनरकेस्थितौ तत्प्रायश्चित्तविनाते
नायंविशेषःप्रायश्चित्तरत्नेज्ञेयः एवंपूर्तेपि जलाशयोत्सर्गप्रासादप्रतिष्ठामहादानादिषुशूद्रस्याधिकारः अधि
कारीभवेच्छूद्रःपूर्तेधर्मेनवैदिके पूर्तंचाहहेमाद्रौ मदनरत्ने जातूकर्ण्यः वापीकूपतडागादिदेवतायतनानिच
अन्नदानप्रपादानमारामःपूर्तमुच्यते नारदः गृहोपरागेयद्दानंसूर्यसंक्रमणादिषु द्वादश्यादिषुयद्दानं
तत्पूर्तत्वमुदाहृतं शंखादिभिरप्येवमुक्तं यत्र महादानादौ शूद्रस्य होमादावधिकारस्तत्रद्वेधागतिः वैदिक
मंत्ररहितंविप्रैः कार्यमित्येकः पक्षः मंत्रवर्जंनदुष्यंतिकुर्वाणाःपौष्टिकींक्रियामिति गन्धादिभिरप्येवमु
दाहृतं अन्येत्वाहुः विप्रैर्वैदिकमंत्रेणैवहोमादिकार्यंवक्ष्यमाणपाराशरोक्तेः माधवोप्येवं पौराणमंत्रेष्वाचार्य
कर्तृकेषुपाठएव याजमानेषुतेषांश्रवणमात्रमुक्तम् श्रवणविधिजन्यज्ञानस्यैवांगत्वात् वैदिकेतुयाजमानेनमस्कारएव
अनुमतोस्यनमस्कारोमंत्रइतिगौतमोक्तेः व्यासमन्वादिवाक्यान्यप्येतद्विषयाण्येव अस्यैतिपष्ठीश्रुत्यातत्संबंधि
त्वात्पौराणोपिविप्रस्यैव अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यते इतिपूर्वोक्तवराहोक्तेः एवंशूद्रस्याद्भुतरोगशांति
कर्मविपाकतुलादानादावपिस्त्रीशूद्राश्चसधर्माणइतिस्मृतेः अतएवशूद्रकर्तृकहोमोविप्रद्वारेणपराशरेणोक्तः त
था दक्षिणार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः ब्राह्मणस्तुभवेच्छूद्रः शूद्रस्तुब्राह्मणोभवेदिति अत्रमाधवाचार्यः यो
विप्रः शूद्राद्दक्षिणामादायतदीयंहविः शांतिपुष्ट्यादिसिद्ध्यै वैदिकमंत्रैर्जुहोति तत्रविप्रस्यैवदोषः शूद्रस्तु होम
फलंलभतेइतिव्याचख्ये एतच्च निर्णयसिंधुशूद्रकमलाकरशूद्रधर्मस्मृतिकौमुद्यादिनिबंधेषुसविस्तरमुक्तमत्रदि
ङ्मात्रमपि तेनसर्वत्रशूद्राणांवैदिकमंत्रहोमेद्वौपक्षौ विप्रद्वारामंत्रकः अमंत्रकोनाम्नाचेति पौराणिकोपिविप्रद्वारा
श्रवणमात्रमित्यर्थस्यप्रागुक्तमेवअथशूद्रस्येष्टापूर्तादिकर्मसुगर्भाधानादिसंस्कारेषु -महादानव्रतोद्यापनादिकर्म

इतिहेमाद्रौभविष्योक्तेः नवरात्रेतुगवन्येव ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैरन्यैश्चमानवैः स्त्रीभिश्चकुरुशार्दूलतद्विधान निदंशृणु इतिभविष्येशूद्रस्याप्युक्तं एवंप्रायश्चित्तंशूद्रेजपहोमादिरहितंदेयं तस्माच्छूद्रंसमासाद्यसदाधर्मपथे स्थितं प्रायश्चित्तंप्रदातव्यंजपहोमविवर्जितमितिमिताक्षरायामांगिरसोक्तं अत्र जपहोमवर्ज्यप्रायश्चित्तदानेती धेयात्रादौनशूद्रसंबंधविधेरुपसंहारः हविरुभयत्वगद्विशिरोद्देशेवाक्यभेदाद्द्विजानांतदभावापत्तेश्च किंतु शूद्रसं बंधिप्रायश्चित्तोद्देशेनजपहोमवर्जत्वविधिर्नोभयतःअत्रकेचित् प्रधानभूतयोर्जपहोमयोर्निषेधोनत्वंगभूतयोः अत एव महार्णवे लौकिकाग्नौस्त्रीशूद्रयोः प्रायश्चित्तांगभूतव्याहृतिहोमोविप्रद्वारोक्तइत्याहुः तत्र आरंभेसर्वकृच्छ्राणां समाप्तौचविशेषतः आज्येनैवतुशालाग्नौजुहुयाद्व्याहृतीःपृथक् श्राद्धंकुर्याद्व्रतांतेतु गोहिरण्यादिद क्षिणा। स्त्रीणांहोमोनकर्तव्यःपंचगव्यंतथैवचेति जाबालिना - गृह्याग्निनियमात् नचाग्नेःप्रतिनिधिर स्त्वित्युक्तम् अथशूद्रस्यदेवपूजाधिकारः शिवसर्वस्वेभविष्येच यस्तुपूजयतेलिंगंदेवादिंमांजगत्पतिं ब्राह्मणःक्ष त्रियोवैश्यःशूद्रोवामत्परायणःतस्यप्रीतःप्रदास्यामि शुभांलोकाननुत्तमान् पूजात्रस्पर्शरहितात्रिस्थलीसेतौस्त्रीणा मनुपनीतानांशूद्राणांचनरेश्वर-स्थापनेनाधिकारोस्तिविष्णोर्वाशंकरस्यच यःशूद्रःसंस्कृतंलिंगंविष्णुंवापिनमेन्न रः इहैवात्यंतदुःखानिपरत्रामुष्मिकेकिमु शूद्रोवानुपनीतोवानारीवापतितोपिवा -केशवंवाशिवंवापिस्पृष्ट्वानर कमश्नुते अथशूद्रस्यमहादानाद्यप्यधिकारः मात्स्येहिरण्यगर्भदाने नरोवायदिवानारीएतंब्रह्मात्मसंभवं यःकरो तिमहापुण्यंशृणुतस्यापियत्फलं कामधेनुदानेपि आग्नेये ब्रह्मविट्क्षत्रशूद्राणांकर्तव्यायत्नतोनृपेतितथावान्यत्राप्यु क्तंअधिकारीभवेच्छूद्रःपूर्तधर्मेनवैदिके मोक्षधर्मेपिमंत्रवर्जनदुष्यंतिकुर्वाणाःपौष्टिकींक्रियामितिपंचगव्यविधानेस्त्री शूद्राणांविकल्पःस्त्रीशूद्रस्यविशुद्ध्यर्थंप्राजापत्यंसमादिशेत्पंचगव्यंतुकुर्वीतस्नात्वापीत्वाशुचिर्भवेत् इतिपराशरोक्तेः

यत्तु पंचगव्यपिबेच्छूद्रोब्राह्मणस्तुसुरांपिबेत् उभौतौतुल्यकर्माणौपूयाख्येनरकेस्थितौ तत्प्रायश्चित्तंविनाते नायंविशेषःप्रायश्चित्तरत्नेज्ञेयः एवंपूर्तेपि जलाशयोत्सर्गप्रासादप्रतिष्ठामहादानादिषुशूद्रस्याधिकारः अधि कारीभवेच्छूद्रःपूर्तंधर्मेनवैदिके पूर्तंचाहहेमाद्रौ मदनरत्ने जातूकर्ण्यः वापीकूपतडागादिदेवतायतनानिच अन्नदानप्रपादानमारामःपूर्तमुच्यते नारदः गृहोपरागेयद्दानंसूर्यसंक्रमणादिषु द्वादश्यादिषुयद्दानं तत्पूर्तत्वमुदाहृतं शंखादिभिरप्येवमुक्तं यत्र महादानादौ शूद्रस्य होमादावधिकारस्तत्रद्वेधागतिः वैदिक मंत्ररहितंविप्रैः कार्यमित्येकः पक्षः मंत्रवर्जंनदुष्यंतिकुर्वाणाःपौष्टिकींक्रियामिति मन्वादिभिरप्येवमु दाहृतं अन्येत्वाहुः विप्रैर्वैदिकमंत्रेणैवहोमादिकार्यंवक्ष्यमाणपाराशरोक्तेः माधवीयेप्येवं पौराणमंत्रेष्वाचार्य कर्तृकेषुपाठएव याजमानेषुतेषांश्रवणमात्रमुक्तम् श्रवणविधिजन्यज्ञानस्यैवांगत्वात् वैदिकेतुयाजमानेनमस्कारएव अनुमतोस्यनमस्कारोमंत्रइतिगौतमोक्तिः व्यासमन्वादिवाक्यान्यप्येतद्विषयाण्येव अस्येतिषष्ठीश्रुत्यातत्संबंधि त्वात्पौराणोपिविप्रस्यैव अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यते इतिपूर्वोक्तवराहोक्तेः एवंशूद्रस्याद्भुतरोगशांति कर्मविपाकतुलादानादावपिस्त्रीशूद्राश्चसधर्माणइतिस्मृतेः अतएवशूद्रकर्तृकहोमोविप्रद्वारैवपराशरेणोक्तः त था दक्षिणार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः ब्राह्मणस्तुभवेच्छूद्रः शूद्रस्तुब्राह्मणोभवेदिति अत्रमाधवाचार्यः यो विप्रः शूद्राद्दक्षिणामादायतदीयंहविः शांतिपुष्ट्यादिसिद्धये वैदकमंत्रैर्जुहोति तत्रविप्रस्यैवदोषः शूद्रस्तु होम फलंलभतेइतिव्याचक्षे एतच्च निर्णयसिंधुशूद्रकमलाकरशूद्रधर्मस्मृतिकौमुद्यादिनिबंधेषुसविस्तरमुक्तमत्रदि ङ्मात्रमपि तेनसर्वत्रशूद्राणांवैदिकमंत्रहोमेद्वौपक्षौ विप्रद्वारामंत्रकः अमंत्रकोनाम्नाचेति पौराणिकोपिविप्रद्वारा श्रवणमात्रमित्यर्थस्यप्रागुक्तमेवअथशूद्रस्येष्टापूर्तादिकर्मसुगर्भाधानादिसंस्कारेषु- -महादानव्रतोद्यापनादिकर्म

सु सर्वकर्मागत्वेन पुण्याहवाचनमाचारानुसारेणोच्यते व्यासः संपूज्यगंधमाल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत् काम्यकर्मणिमांगल्येसंग्रामाद्भुतदर्शने यमः सोंकारैनुद्विजः कुर्यान्निरोंकारेमहीपतिः उपांशुचत्तथावैश्य स्वस्तिशब्दंप्रकीर्त्तयेत् तत्र कर्त्तादावाचम्य सुमुखश्चैकदंतश्चेत्यादिविप्रैः पठ्यमान श्रुत्वा ॐमद्येत्यादि देशकालौ संकीर्त्य अमुकगोत्रोमुकदासोहममात्मनःसर्वपापक्षयसकलाभीष्टप्राप्तिद्वारा श्रीपरमेश्वरप्री त्यर्थं यथाकालसमाचरितैकादश्यादिव्रतस्य सांगफलाप्तये तदुद्यापनकर्मकरिष्ये तदंगतया गणेशपूजनं पुण्याहवाचनंचकरिष्ये इति संकल्प्य गणेशं पूजयेद्यथा हेहेरंबत्वमभ्येहि ह्यंबिकात्र्यंबकात्मज सिद्धिवुद्धि युतत्र्यक्षसर्वलोकपितःपितः नागास्यनागहारत्वंगणनाथचतुर्भुज भूपितःस्वायुधैर्दिव्यैः पाशांकुशपरश्व धैःआवाहयामिपूजार्थंरक्षार्थंचममक्रतोःइहागच्छगृहाणत्वंपूजांरक्षचमत्क्रतुमित्यावाह्य षोडशोपचारैःसंपूज्यपात्रे सफलमर्घ्यमादाय रक्षरक्षगणाध्यक्षत्र्यक्षत्रैलोक्यरक्षक भक्तानामभयंकर्त्तात्राताभवभवार्णवात् द्वैमातुरकृपा सिंधोपाण्मातुराग्रजप्रभो वरदस्त्ववरंदेहिवांछितंवांछितार्थद अनेनफलदानेनफलदोभवमेप्रभो इत्यर्घ्यंदत्वाव क्रतुंडमहाकायेतिप्रार्थयेत् यद्वा विश्वेश्वरायवरदायसुरप्रियायलंबोदरायसकलायजगद्धिताय नागाननाय सितसर्पविभूषणायगौरीसुतायगणनाथनमोनमस्ते १ भक्तार्त्तिनाशनपरायगणेश्वरायसर्वेश्वरायशुभदायसुरेश्व राय विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते २ नमस्तेब्रह्मरूपायविष्णुरूपायतेनमःनमस्ते रुद्ररूपायकरिरूपायतेनमइतिसंप्रार्थ्यततःस्वाग्रेधान्यराशिद्वयेकलशंसंस्थाप्यतत्रदूर्वांपंचपल्लवफलंहेमपंचरत्ना निदत्त्वाधान्यपूर्णपात्रद्वयं न्यस्य तत्र पाशहस्तंचवरुणमंभसांपतिमीश्वरं आवाहयामियज्ञेस्मिन्पूजेयंप्रति गृह्य तामितिवरुणमावाह्यसंपूज्यकलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः मूलेतस्यस्थितोब्रह्मामध्येमातृगणास्थिताः

इत्याद्यःसमाप्य मातृदेवोभव पितृदेवोभव आचार्यदेवोभव अतिथिदेवोभव आशिषःप्रार्थयतेएताःसत्याशिषःसंतु
अवनिकृतजानुमंडलःकमलमुकुलसदृशमंजलिंशिरस्याधाय दक्षिणेनपाणिनासुवर्णपूर्णकलशधारानिर्वादिर्घानां
गानद्योगिरस्त्रीणिविष्णुरदानिच तेनायुःप्रमाणेन पुण्याहंदीर्घमायुरस्तु शिवाआपःसंतु सौमनस्यमस्तुअक्षतंचारि
ष्टमस्तुगंधाःपांतुमंगल्यंचास्तुअक्षताःपांत्वायुष्यमस्तु पुष्पाणिपांतुसौश्रियमस्तुतांबूलानिपांत्वैश्वर्यमस्तु दक्षि
णाःपांतुबहुदेयंचास्तु इतिविप्रहस्तेदत्वा यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाःशोभनाःप्रवर्तंते तमहंम
स्वामवद्भिरनुज्ञातः पुण्याहंवाचयिष्ये वाच्यतामितितैरुक्ते माविघ्नमाचमेपापंमासंतुपरिपंथिनः सौम्याभवंतुसु
खिनःसर्वेलोकाःसुखावहाइतिकर्तावदेत् ॥ विप्रास्तथास्त्वित्युक्त्वा करोतुस्वस्तितेब्रह्मास्वस्तिचापिद्विजातयः
सरीसृपाश्चयेदुष्टास्तेभ्यस्तेस्वस्तिसर्वदा ययातिर्नहुषश्चैवधुंधुमारोभगीरथः तुभ्यंराजर्षयःसर्वेस्वस्तिकुर्वंतु
नित्यशः स्वस्तितेस्तुद्विपादेभ्यश्चतुष्पादेभ्यएवच स्वस्त्यस्त्वपादकेभ्यश्चसर्वेभ्यः स्वस्तितेसदा स्वाहास्व
धाशचीचैवस्वस्तिकुर्वंतुतेसदा लक्ष्मीरुंधतीचैवस्वस्तितेकुरुतांसदा असितोदेवलश्चैवविश्वामित्रस्तथांगिराः
वसिष्ठः काश्यपश्चैवस्वस्तिकुर्वंतुतेसदा धाताविधातालोकेशोदिशश्चसदिगीश्वराः स्वस्तितेयप्रयच्छं
तुकार्त्तिकेयश्चषण्मुखः विवस्वान्भगवान्स्वस्तिकरोतुतवसर्वदा दिग्गजाश्चैवचत्वारःक्षितिश्चगगनंग्रहाः अध
स्ताद्धरणींयोसौनागोधारयतेसदा शेषश्चपन्नगश्रेष्ठःस्वस्तितुभ्यंप्रयच्छतुइतिब्राह्मणावदेयुः ततःकर्ताब्राह्मणा
मनःसमाधीयताम् समाहितमनसःस्मइतितेब्रूयुः प्रसीदंतुभवंतःप्रसन्नाःस्मइत्युक्ते कुंभाज्जलंपातयन्वदेत् शां
तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु शिवंकर्मास्तु कर्मसमृद्धिरस्तु
पुत्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसंपदस्तु अनिष्टनिरसनमस्तु यत्पापंतत्प्रतिहतमस्तु यच्छ्रेयस्तदस्तु

उत्तरेकर्मण्यविघ्नमस्तु उत्तरोत्तरःक्रियाःशुभाःशोभनाःसंपद्यंताम् तिथिकरणमुहूर्त्तनक्षत्रसंपदस्तु तिथिकरण
मुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंतां दुर्गापांचाल्यौप्रीयेतां अग्निपुरोगाविश्वेदेवाःप्रीयंताम् इंद्रपुरोगामरुद्गणाः
प्रीयंतांब्रह्मपुरोगाःसर्वेदेवाःप्रीयंतां वसिष्ठपुरोगाऋषिगणाःप्रीयंताम् अरुंधतीपुरोगाएकपत्न्यःप्रीयंतां ब्रह्मपु
रोगाःसर्वब्राह्मणाःप्री. श्रीसरस्वत्यौप्रीयेतां श्रद्धामेधेप्रीयेतां भगवतीकात्यायनीप्रीयतां भगवतीमाहेश्वरीप्री-
भगवतीपुष्टिःप्री- भगवतीतुष्टिःप्री- भगवंतौविघ्नविनायकौप्री- भगवान्स्वामीमहासेनःसपत्नीकःससुतःसपार्षद्
सर्वस्थानगतःप्रीयतां सर्वेश्चग्रामदेवताःप्रीयं-. सर्वाःकुलदेवताःप्री- सर्वाइष्टदेवताःप्रीयंतांहताब्रह्मद्विषःहताः
परिपंथिनः हताअस्यकर्मणोविघ्नकर्त्तारः शत्रवःपराभवंयांतु शाम्यंतुघोराणि शाम्यंत्वीतयः शुभानिवर्धंतां
शिवाआपःसंतु शिवाऋतवःसंतु शिवाओषधयःसंतु शिवाऋतवःसंतु शिवावनस्पतयःसंतु अहोरात्रेशिवस्या
त् शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाःसर्वेग्रहाःप्री- भगवान्नारायणःप्री-भगवा
न्पर्जन्य.प्री.पुण्याहकालान्वाचयिष्ये वाच्यतामत्र ब्रह्मपुण्यमहर्यच्चसृष्ट्युत्पादनकारकं वेदवृक्षोद्भवनित्यंतत्पुण्याहं
ब्रुवंतुनः दीर्यंतेयत्र दानं निपूज्यंतेचद्विजातयः दृश्यतेयत्रमांगल्यंतत्पुण्याहंसदास्तुने भोब्राह्मणाममगृहेस्यकर्मणः
पुण्याहंभवंतोब्रुवंतु त्रिःस्वस्तिपुण्याहमितिविप्राब्रूयुः ततःस्वस्त्ययनायाविनाश रूपापुण्यकल्याणवृद्धिदा विनाय
कप्रियानित्यंतांस्वस्तिंब्रुवंतुनः ममगृहेस्वस्तिभवंतोब्रुवंतु आयुष्मतेस्वस्तीतिविप्रः ३ सागरस्यतुयावृद्धि
र्महालक्ष्म्यादिभिःकृता सपूर्णाचैवचंद्रेयातामृद्धिंब्रुवंतुनः ऋध्यतामितित्रिः पृथिव्यामुद्धृतायांतु यत्कल्याणंपुरा
कृतं ऋषिभिःसर्वगंधर्वैस्तत्कल्याणंब्रुवंतुनः ममगृहेकल्याणंभवंतोब्रुवंतु कल्याणंत्रिरितिविप्र; ३ ततः क्षीरोद
धिसमुद्भूतामथ्यमानेमहोदधौ विष्णोश्चैवप्रियानित्यंतांश्रियंभोब्रुवंतुनः श्रीरस्त्वितित्रिर्ब्राह्मणाः३ अस्तुश्रीरिति

तैरुक्ते वर्षशतंपूर्णमस्तु शिवमस्तु वंशाभिवृद्धिरस्तु प्रजापतिःप्रीयतां ततोविप्राःसुरास्त्वामभिषिंचंत्वित्या
द्यैः पौराणमंत्रैरभिषिंचेयुः तत्रपत्नीवामे अथानंतरंकरोतु स्वस्तितेन्नमोतिपूर्वोक्तैर्यजमानस्यनीराजनम् तिलक
मशीर्वादांश्चदद्युरितिसर्वत्र इतिशूद्रकमलाकरे.कंशूद्रस्यपुण्याहवाचनं अथशूद्रस्यमातृकापूजनंतत्रकृतांतंडुलपुंजे
षुगौरीपद्माशचीमेधासावित्रीविजयाजया देवसेनास्वधास्वाहामातरोलोकमातरःधृतिःपुष्टिस्तथातुष्टिरात्मनः.कुल
देवता गणेशेनाधिकाह्येताःवृद्धौपूज्यास्तुषोडश ब्राह्मी माहेश्वरीचैवकौमारीवैष्णवीतथा वाराही.चतथेंद्राणीच.मुंडा
सप्तमातरइतिच गणेशयुतागौर्य्यादिषोडशमातरोब्राह्म्यादिसप्तमातरश्चसर्वाइहागच्छंतु सुप्रतिष्ठितावरदा
भवंतु इत्येवंनामभि.पृथक्पृथगावाह्य षोडशोपचारैःसंपूज्याः ततःकुड्ये घृतेनसप्तधाराःकृत्वा वसुधाराधैन
मः इत्यावाह्यसपूज्य ललिताचउमागौरीअंबिकासलिलाशया भगाहीचभगाक्षीचसप्तैताघृतमातर इति षोड
शोपचारैःसंपूज्य ततोनांदीश्राद्धंकुर्यात् अत्रसंकल्पादौ विशेषःसंग्रहे शुभायप्रथमांतेनवृद्धौसकल्पमाचरेत्तत्प्र
ष्ठायदिवाकुर्य्यान्महान्दोषोभिजायते अनुसंबंधशब्दानामरूपानामरोगिणां अनाम्नाचातिलाद्यैश्चनांदीश्रा
द्धंचसव्यवत् कारिकाच संबंधनामरूपाणिवर्जयेदत्रकर्मणीति अत्रसत्यवसुमंज्ञकौविश्वेदेवौ तत्स्थानेद्वौविप्रौ
मात्रादीनांचप्रत्येकंद्वौद्वौएवंविंशतिर्ब्राह्मणाः यद्वा मात्रादीनांत्रयाणांद्वौद्वौ एवमष्टौ मात्रादीनामिति मातृपिताम
हीप्रपितामहीनां पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानांस्थानत्रयेप्र
त्येकंद्वौद्वौ विश्वेदेवानांद्वौ एवमष्टावेव अत्रनापसव्यंनतिलकार्य्यैषुयवाएव स्वधास्थानेस्वाहाशब्दः विप्रादीनां
नशूद्रस्यसव्यजानुनिपातनाभावः आमान्नादिदानं प्राङ्मुखएवकुर्य्यात ऋजदर्भैःक्रियादर्वाभिर्वा क्रियातयो

वृद्धिश्राद्धमहावांहोकुलेयमोनवेक्ष्यतु पिंडदानेविशेषोवसिष्ठेनोक्त दधिकर्कंधुबदरीफलंतच्चूर्णंतंतथा एकैकस्मैपिंडद्वयंदेयं एकनाम्न.परंतूष्णींदद्यात्पिंडद्वयंबुधःपिंडद्वयदानद्वयार्थं यदा विवाहव्रतचूडासुवर्पमध्येतदर्धकं पिंडदानं मदोन्मानंनकुर्यात्तिलतर्पणमितिपित्रादिक्षयाहश्र.द्धातिक्रमदोषपरिहारार्थंदेयंतत्र एकनाम्नापरंतूष्णीनितिपिंडदानपक्षेअत्रापरोविशेषोरूपनार यणीये अग्नौकरणमर्घंचावाहनंचावनेजनं पिंडश्राद्धे प्रकुर्वीतपिंडहीनेनिवर्तते यथापिंडनिर्वापरहित यत्रश्राद्धविधीयंते स्वधाव.चनलोपोस्तिविकरस्तुनालिख्यते अक्षय्यदक्षिणास्वस्तिसौमनस्यंपयथास्थितिरितिकल्पमेव अथशूद्रस्यापिंडकवृद्धिश्राद्धे संक्षिप्तप्रयोगः सत्यवसुसंज्ञकाविश्वेदेव इदंवःपाद्यं मातृपितामहीप्रपितामह्योनांदीमुखाइदंवः प.द्यं २ पितृपितामहप्रपितामहानांदीमुखाइदंवः पाद्यं ३ मातामहप्रमातामहवृद्धप्रमातामहानांदीमुखाः सपत्नीकाइदंवः पाद्यं इदमासनम् ततोगंधादिदानं एषगंधः इमानि पुष्पाणि एषधूपःइदमाच्छादन सत्यवसुसंज्ञकेभ्योविश्वेदेवेभ्यः १ मातृपितामहीप्रपितामहीभ्योनांदीमुखीभ्यः २ पितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यःमातामहप्रमातामहवृद्धप्रमातामहेभ्यो नांदीमुखेभ्यःसपत्नीकेभ्यः४ इदंगंधाद्यर्चनंसंपद्यतांवृद्धिः इतिस्थानचतुष्टयेयथाक्रमंदत्वा ततः परिवेषणार्थं मंडलमभ्युक्ष्य तत्रपरिवेषणंविधायसत्यवसुसंज्ञकविश्वेदेवेभ्यः १ मातृपितामहीप्रपितामहीभ्यो नांदीमुखीभ्यः२ पितृपितामहप्रपितामहेभ्यो नांदीमुखेभ्यः मातामहप्रमातामहवृद्धप्रमातामहेभ्यो नांदीमुखेभ्यः ४ युग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेणसंपद्यताम् वृद्धिरितिस्थानचतुष्टये यथाक्रमंदेयं अत्रान्नंसदक्षिणनैवेद्यम् अत्रापिस्वस्तिवाचनमितिसप्रदायः अनेननांदीश्राद्धेनकर्मांगदेवताः प्रीयंतांवृद्धिः नांदीश्राद्धसुप्रोक्षितमस्तु शिवाआपः संतु सौमनस्यमस्तु अक्षतंचारिष्टमस्तुनांदीमुख्योमातरःप्रीयंतां नांदीमुखाःपितरःप्रीयंतां नांदीमुखामातामहाःप्रीयंताम् गोत्रंनोवर्धताम्

दातारोनोभिवर्धंतांवेदःसंततिरेवच श्रद्धाचनोमाव्यगमत् बहुदेयंचनोऽस्तु अन्नंचनोबहुभवेदतिथींश्चलभेम
हि याचितारश्चनःसंतुमाचयाचिष्मकंचनेति संप्रार्थ्य विप्रैस्तथास्त्विति वाच्यं गोत्रंनोवर्धताम् वेदःसंततिरेव
च श्रद्धाचवोमाव्यगमत्बहुदेयंचवोऽस्तु अन्नंचवोबहुभवेत् अतिथींश्चलभध्वं याचितारश्चवःसंतु मायाचिध्वंमकं
चनेतिप्रत्युक्ते ततोदक्षिणादानं तद्यथा कृतैतन्नांदीश्राद्धकर्मणःसांगतासिद्ध्यर्थं द्राक्षामलकारस्तन्निष्क्रयंवादक्षि
णांप्रत्येकंददामि विश्वेदेवाःप्रीयंताम् नांदीमुखादेवताःप्रीयंताम् मातापितामहीचैवतथैवप्रपितामही पिता
पितामहश्चैवतथैवप्रपितामहः मातामहस्तत्पिताचप्रमातामहकादयः एतेभवंतुमेप्रीताःप्रयच्छंतुचमंगलमिति
नत्वाविसर्जयेत् इतिशूद्रस्यवृद्धिश्राद्धम् ॥ अथोद्यापनप्रयोगः सचस्त्रीशूद्रयोःसमानधर्मत्वादवैदिकएवोक्त
श्चातः पौराणमंत्रपुरस्कृतोभिधीयते तत्रादौ स्वावाच्यांपर्णछटीत्यासतोरणांवेदिमंडपंवायथाशक्तिसंपाद्योद्या
पनसंभारंचादाय आसनेउपविश्याचम्यप्रतिज्ञासंकल्पंकुर्यात् देशकालौसंकीर्त्यामुकगोत्रोमुकदासोहंस्त्रीचे
दमुकगोत्रामुकदासीचाहं सर्वपापक्षयपूर्वकसकलाभीष्टप्राप्त्युत्तर विष्णुप्रभृतिस्वाभीष्टदेवताप्रीत्यर्थंयथाविद्या
चरितैकादश्यादिव्रतसांगफलावाप्तये तदुद्यापनंकरिष्ये तत्पूर्वांगत्वेनगणेशादिपूजार्थमाचार्यादिवरणंचकरि
ष्ये अथाचार्यवरणं अस्मिन्नेकादश्यादिव्रतोद्यापनकर्मण्याचार्यत्वेनत्वामहंवृणे आचार्यस्तुयथास्वर्गे
शक्रादीनांबृहस्पतिः तथात्वंममयज्ञेस्मिन्भवाचार्योद्विजोत्तमेत्याचार्यंवृणुयात् सतिविभवेचतुर्द्वारेषुजापकान्
द्वारपालांश्चैवंवृणुयात् ऋग्वेदः पद्मपत्राक्षोगायत्रः सोमदैवतः अत्रिगोत्रस्तुविप्रेंद्रऋत्विक्त्वंसममखेभव १
काचराक्षोयजुर्वेदस्त्रैष्टुभोविष्णुदैवतः काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंममेमखेभव २ सामवेदस्तुपिंगाक्षोजागतः
शक्रदैवतः भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभव ३ ह्रस्वनेत्रोथर्ववेदोनुष्टुभोरुद्रदैवतःवैशायनोविप्रेंद्रऋत्विक्

त्वंनिमखेभव ४ यदात्वाचार्यएवैकस्तदाऋत्विगादिवरणंनकुर्यात् अथाचार्योयजमानस्यवस्त्रफलाघातादिकं बद्ध्वा अभिषेकंकृत्वा रक्षासूत्रंकरेबद्ध्वा स्वस्तिवाचनंकृत्वा तिलकंकारयित्वा दूर्वाक्षतादिकंदद्यात् तत्रमंत्रःकरोतुस्वस्तितेब्रह्मास्वस्तिचापिद्विजातयःसरीसृपाश्चयेश्रेष्ठास्तेभ्यस्तेस्वस्तिसर्वदा १ ययातिर्नहुषश्चैवधुंधुमारोभगीरथः तुभ्यंराजर्षयःसर्वेस्वस्तिकुर्वंतुनित्यशः २ स्वस्तितेस्तुद्विपादेभ्यश्चतुष्पादेभ्यएवचस्वस्त्यस्त्वपादकेभ्यश्चतवनित्यंमहामखे ३ स्वाहास्वधाशचीचैवस्वस्तिकुर्वंतुनित्यशःलक्ष्मीररुंधतीचैवकुरुतांस्वस्तितेसदा ४ असितोदेवलश्चैवविश्वामित्रस्तथांगिराः वसिष्ठः कश्यपश्चैवस्वस्तिकुर्वंतुतेसदा ५ धाताविधातालोकेशोदिशश्चसदिगीश्वराः दिग्गजाश्चैवचत्वारः क्षितिश्चसनवग्रहाः ६ स्वस्तितेसंप्रयच्छंतुकार्तिकेयश्चषण्मुखः विवस्वान्भगवांश्चैवकरोतुस्वस्तिसर्वदा ७ अधस्ताद्धरणीयोसौनागोधारयतेसदा शेषश्चपन्नगश्रेष्ठ स्वस्तितुभ्यंप्रयच्छतु ८ इतिस्वस्तिवाचनम् पठित्वापुष्पाक्षतादिकंसर्वेदद्युः अथाचार्योभूतोत्सारणंकुर्यात् अपसर्पंतुतेभूतायेभूताभुविसंस्थिताः येभूताविघ्नकर्त्तारस्तेनश्यंतुशिवाज्ञया १ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वतः स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु अथतोरणपूजनम् पूर्वे सुदंष्ट्रतोरणएनंयज्ञंरक्ष सर्वविघ्नान्निवारयेत्यावाह्य ऋग्वेदाधिष्ठितायसुदंष्ट्रतोरणायनमइतिसंपूज्य दक्षिणेविकटतोरणएनंयज्ञंरक्ष सर्वविघ्नान्निवारयेत्यावाह्य यजुर्वेदाधिष्ठितायविकटतोरणायनम इतिसंपूज्य पश्चिमेसुकर्मतोरण एनंयज्ञंरक्षसर्वविघ्नान्निवारय सामवेदाधिष्ठितायसुकर्मतोरणायनम इतिसंपूज्य उत्तरे सुहोत्रतोरण एनंयज्ञंरक्षसर्वविघ्नान्निवारय द्वारेषुकलशान्संस्थाप्यसंपूज्य सर्वत्रकलशेषुदीपादेयाः ततोद्वारपूजनम् पूर्वद्वारेधात्रेनमः विधात्रेनमः द्वारश्रियैनमः गणपतयेनमः वास्तुपुरुषायनमः दक्षिणेबलायनमः सुबलायनमः द्वारश्रियैनमः गणपतयेनमः वास्तुपुरुषायनमः पश्चिमेजयायनमः विजयायनमः

द्वारश्रियैनमः गणपतयेनमः वास्तुपुरुषायनमःउतर चंडायनमः प्रचंडायनमः द्वारश्रियैनमः गण
पतयेनमः वास्तुपुरुषायनमः मंडपपूजायाव्रतोद्यापननिबंधेषु प्रायशोनुक्तत्वाद्वेदमंत्रैरेवानुष्ठेयत्वाच्च स्त्रीशू
द्राश्चसधर्माणइत्युक्तिमाश्रित्यात्रपरित्यागउचितः अथसर्वतोभद्रपूजाप्रारभ्यते तद्यथा कारयेत्सर्वतोभद्रंवे
दिकोपरिसुंदरं तिर्यगूर्ध्वगतारेखाः कुर्यादेकोनविंशतिः खंडेंदुस्त्रिपदः कोणशृंखलाः पंचकोष्ठकाः ए
कादशपदावल्लीभद्रंचनवभिः पदैः चतुर्विंशत्पदावापिपरिधिः विंशभिः पदैः मध्येषोडशभिः कोष्ठैः पद्ममष्टदलं
स्मृतं सितेंदुः शृंखलाकृष्णावल्लीनीलेनपूरयेत् भद्रारुणासितावापिपरिधिः पीतवर्णका शुक्लंवायदिवारक्तंपद्म
कार्यंसुशोभनं वाह्यांतरादलाःश्वेताः कर्णिका पीतवर्णका खंडेंदुः शृंखलावल्लीवापीभद्रंतुपंचमं परिध्यावेष्टितं
पद्मंवाह्येसत्वंरजस्तमः सर्वव्रतंसमुद्दिष्टंसर्वतोभद्रमंडलं कारयेत्सर्वधान्यैर्वाविवर्णैरुपशोभितं पीतंहारिद्राचूर्णं
स्यात्सितंतंडुलसंभवं कौसुंभचूर्णमरुणंकृष्णंदग्धपुलाकजं विल्वादिपत्रैर्हरितमेवंस्यात्पंचवर्णकं तन्मध्येस्था
पयेद्देवान्ब्रह्माद्यांश्चसुरासुरान् अथस्थानप्रकारः मध्येब्रह्मातथाष्टासुदिक्षुसोमादिदेवताः वायुसोमद्वयोर्मध्ये
वसूनष्टौतुपूजयेत् सोमईशानयोर्मध्येरुद्रानेकादशैवतु इंद्रईशानयोर्मध्येआदित्यान्द्वादशैवतु इंद्राग्निमध्येचतथा
अश्विनौपूजजेत्तथा आग्नेययमयोर्मध्येविश्वेदेवान्सपैतृकान् याम्यनैरृतयोर्मध्येसप्तयक्षांश्चपूजयेत् नैरृत्यां
वुपयोर्मध्येनागान्भूतांश्चपूजयेत् अप्यवायव्ययोर्मध्येगंधर्वाप्सरसोयजेत् ब्रह्मसोमद्वयोर्मध्येरुद्रानेकादशार्चयेत्
स्कंदंनंदीवृषंशूलंमहादेवंचपूजयेत् ब्रह्मेशानद्वयोर्मध्येदक्षादीन्सप्तपूजयेत् ब्रह्मांतकादेशोर्मध्येस्वधांचैवप्रपूजयेत्
ब्रह्मणोनैरृतेमध्येगणपंतुप्रपूजयेत् वरुणब्रह्मणोर्मध्ये अपःसंपूजयेत्तथा मध्येवायोर्ब्रह्मणश्चमरुतः संप्रपूजयेत्
ब्रह्मणःपादमूलेतुमेदिनींतत्रपूजयेत् कावेरींनर्मदांचैवयमुनांचसरस्वतीं गंगाकृष्णातथागोदापूज्याः सप्तचसागराः
क्षारक्षीरमधुस्सर्पिर्मैरेक्षुदधिसंभवाः तद्वाह्येचाब्जपत्राणिदिगीशानामनुक्रमात् पत्राणिवाहनानि सप्तपर्योग्रहा

ष्येवमाहेंद्रीप्रमुखान्नपि अथ स्थापनपूजाक्रमः सर्वतोभद्रमध्ये कर्णिकायां ब्रह्मणेनमः ब्रह्माणमावा
हयामि १ पूर्ववाप्यांइद्रायनमः इंद्रमावाहयामि २ आग्नेय्यांखंडेंदौशृंखलोपरि अग्नयेनमः अग्निमावा
हयामि २ दक्षिणेवाप्यांयमायनमः यममावाहयामि ३ नैर्ऋत्यांखंडेंदौशृंखलोपरि निर्ऋतयेनमः निर्ऋ
तिमा०४ पश्चिमेवाप्यां वरुणायनमः वरुणमा०५वायव्येखंडेंदौ शृंखलोपरि वायवेनमः वायुमावाहयामि६ उत्तरेवा
प्यां सोमायनमः सोममा० ७ ईशानेखंडेंदौशृंखलोपरि ईशानायनमः ईशानमा० ८ ईशानेंद्रमध्ये भद्रेवसुभ्योनमः
वसूनावा०९इंद्राग्निमध्येभद्रे रुद्रेभ्योनमः रुद्रानावाहयामि१०आग्नेययममध्येभद्रे आदित्येभ्योनमः आदित्या०११
यमनिर्ऋतिमध्येभद्रे मरुद्भ्योनमः मरुतआवा०१२वायुसोममध्ये अश्विभ्यांनमः अश्विनावा१३सोमेशानमध्येस्कंदष्ट
पभ१४ततोब्रह्मेंद्रमध्ये वल्यांविष्णवेनमः विष्णुमावाहयामि १५ ब्रह्माग्निमध्ये वल्यांगणपतयेनमः गणपतिं१६
ब्रह्मयममध्येवल्यां पितृभ्योनमः पितॄना० १७ ब्रह्मनिर्ऋतिमध्येवल्ल्यांगंधर्वाप्सरोभ्योनमः गंधर्वाप्सरसः१८
ब्रह्मवरुणमध्येवल्यां सत्यमातृभ्योनमः सत्यमातॄरावाहया० १९ ब्रह्मवायुमध्येवल्यांसर्पेभ्योनमः सर्पानावाहयामि
२०ब्रह्मसोममध्येवल्ल्यांदुर्गायैनमः दुर्गामा२१ब्रह्मेशानमध्येवल्ल्यां गंगादिपंचनदीभ्योनमः पंचनद्यआवा०२२
ततोमंडलांतः पद्मस्याष्टदलेषु ईशानदलेदक्षायनमः दक्षमा०२३पूर्वदले० पुरुषाय० पुरुषमावा० २४ आग्नेयदले
दुर्गामावाह० २५ दक्षिणदलेस्वधायैन० स्वधामा० २६ नैर्ऋतदलेमृत्यवेनमः मृत्युमा० २७ पश्चिमदले
शेषायनमः शेषमा० २८ वायव्यदलेसप्तसागरेभ्योनमः सप्तसागरानावा० २९ उत्तरेमरुद्भ्योनमः मरुतआ०
३० ब्रह्मणःपादमूले गणपतयेनमः गणपतिमा० ३१ कर्णिकायांमध्येपृथिव्यैनमः पृथिवीमा० ३२ मेरवे
नमः मेरुमा ३३ पूर्वेऋग्वेदायनमः ऋग्वेदमा०३४ दक्षिणेयजुर्वेदायनमः यजुर्वेदमा०३५पश्चिमेसामवेदायनमः

सामवेदमा. ३६ उत्तरेअथर्ववेदायनमः अथर्ववेदमा-३७ पूर्वादित : वज्रायनः ३८शक्तयेनमः३९ दंडायनमः ४० खड्गायनमः ४१पाशायनमः अंकुशायनमः ४२ गदायैनम; ४३ शूलायनमः ४४ पुनःपूर्वादितः ऐराव तायनमः ४५ मेषायनमः ४६ महिषायनमः ४७ प्रेतायनमः ४८ मकरायनमः ४९ एणायनमः ५० शिवि कायैनमः ५१ वृषभायनमः ५२पुनःपूर्वादितः गौतमायनमः ५३ भरद्वाजायनमः ५४ विश्वामित्रायनमः ५५ कश्यपायनमः ५६ जमदग्नयेनमः ५७ अत्रयेनमः ५८ वशिष्ठायनमः ५९ अरुंधत्यैनमः ६० पुनःपू र्वादितः आदित्यायनमः ६१ सोमायनमः ६२ भौमायनमः बुधायनमः ६३ गुरवेनमः ६४ शुक्रायनमः ६५ शनयेनमः ६६ राहवेनमः पूर्वेशानयोर्मध्येकेतुभ्योनमः ६७ तद्बाह्येपूर्वादितः ऐंद्रीशक्तयेनमः ६८ कौमार्यैन मः६९ब्रह्माण्यैनमः७० वाराह्यैनमः७१चामुंडायैनमः७२वैष्णव्यैनमः७३ माहेश्वर्यैनमः७४वैनायक्यैनमः इति सर्वदेवतासाधारणंसर्वतोभद्रपूजनं गंधपुष्पाक्षतैर्विधेयम् शिवशक्तिव्रतेषुलिंगतोभद्रमंडलंविशेषेणोक्तम् तस्यो द्धारक्रमोलिंगपुराणे रेखास्त्वष्टादशाःकार्य्यालिंगतोभद्रमंडले कोणेद्वुत्रिपदःश्वेतास्त्रिपदैःकृष्णशृंखला वल्लीस प्तपदानीलाभद्रंरक्तचतुष्पदं भद्रपार्श्वेमहारुद्रंकृष्णमेकादशैःपदैः शिवस्यपार्श्वतोवापीकुर्यात्पंचपदासिता पदगे कंतथापीतंभद्रवाप्योस्तुमध्यत. शिरसिशृंखलायाश्चकुर्यात्पीतंपदत्रयं लिंगानांस्कंदतःकोणाविंशतीरक्तवर्णक : परिधिःपीतवर्णैस्तुपदैःषोडशभिःस्मृता पदैस्तुनवभिर्मध्येरक्तंपद्मंसकर्णिकं अत्रापिसर्वतोभद्रमंडलदेवतापूज नं शक्तिपूजांतकृत्वा अष्टभैरवानांकार्य्यं पूर्वेअसितांगभैरवायनमः ॥ १ ॥ आग्नेय्यांरुरुभैरवायनमः ॥ २ ॥ द क्षिणेचंडभैरवायनमः३नैर्ऋत्येक्रोधभैरवायनमः४पश्चिमेउन्मत्तभैरवायनमः॥ ५ ॥ वायव्येकपालिभैरवायनम. ॥ ६ ॥ उत्तरेभीषणभैरवायनमः ॥ ७ ॥ ईशानेसंहारभैरवायनमः ॥ ८ ॥ पुनःपूर्वादितः भवायदेवायनमः

॥ १ ॥ शर्वायदेवायनमः२ पशुपतयेदेवायनमः ॥ ३ ॥ ईशानायदेवायनमः ॥ ४ ॥ रुद्रायदेवायनमः ॥ ५ ॥ उग्रायदेवायनमः ॥ ६ ॥ भीमायदेवायनमः ॥ ७ ॥ महतेदेवायनमः ॥ ८ ॥ इतिमंडलदेवतापूजनंकृत्वाव्रतोद्यापनदेवतापूजार्थंकलशस्थापनंकार्य्यं तत्रग्रहवेद्यांग्रहपूजापूर्वंकंकार्य्यं अद्यकरिष्यमाणैकादश्याद्व्रतोद्यापनकर्मणोयथोक्तफलप्राप्त्यर्थंसूर्य्यादिनवग्रहाणामधिदेवताप्रत्यधिदेवतासहितानांस्थापनमहंकरिष्ये कलिंगदेशोद्भवकाश्यपगोत्रईश्वराधिदेवताअग्निप्रत्यधिदेवतासहित सूर्यइहागच्छ १ यमुनातीरोद्भवआत्रेयसगोत्रउमाधिदेवता आप.प्रत्यधिदेवतासहित चंद्रइहागच्छ ॥ २ ॥ अवंतीसमुद्भवभारद्वाजगोत्रस्कंदाधिदेवताभूमिप्रत्यधिदेवतासहितभौमइहागच्छ ॥ ३ ॥ मगधदेशोद्भवआत्रेयगोत्रविष्णवधिदेवताप्रत्यधिदेवतासहितबुधइहागच्छ ४ सिंधुदेशोद्भवआंगिरसगोत्रब्रह्माधिदेवताइंद्रप्रत्यधिदेवतासहितबृहस्पतेइहागच्छ ॥ ५ ॥ भोजकटदेशोद्भवभार्गवगोत्रइंद्राधिदेवताइंद्राणीप्रत्यधिदेवतासहितशुक्रइहागच्छ ॥६॥ सौराष्ट्रदेशोद्भवकाश्यपगोत्रयमअधिदेवताप्रजापतिप्रत्यधिदेवतासहितशनेइहागच्छ ॥ ७ ॥ राढिकापुरोद्भवपैठीनासिगोत्रकालाधिदेवतासर्पप्रत्यधिदेवतासहितराहोइहागच्छ ॥ ८ ॥अंतर्वेदीसमुद्भवजैमिनिगोत्रचित्रगुप्तअधिदेवताब्रह्माप्रत्यधिदेवतासहि तकेतो इहागच्छ ॥ ९ ॥ आदित्यादिग्रहेभ्यअधिदेवताप्रत्यधिदेवतासहितेभ्योनमः इतिसर्वोपचारैःपूजयेत् अथप्रार्थनां आदित्यश्चंद्रमाभौमोबुधोजीवःसितोर्कजः ग्रहाःसर्वेप्रसीदंतुराहुःकेतुश्चपूजिताः १ ततोगणेशादिपंचलोकपालपूजन शनेरुत्तरभागेगणपतेइहागच्छ१ शनेरुत्तरभागेदुर्गेइहागच्छ ॥ २ ॥ रवेरुत्तरभागेवायोइहागच्छ ३ राहोर्दक्षिणभागेआकाशइहागच्छ ॥ ४ ॥ केतोर्दक्षिणभागेअश्विनौदेवौइहागच्छतां ॥ ५ ॥ गणपतयेनमः १ दुर्गायैनमः ॥ २ ॥ वायवेनमः ॥ ३ ॥ आकाशायनमः ॥ ४ ॥ अश्विभ्यांनमः ॥ ५ ॥ एवंसर्वोपचारैःसंपूज्य

॥ ६ ॥ ततोग्रहमंडलात्पूर्वोदितःइंद्रइहागच्छइंद्रायनमः ॥ १ ॥ अग्नेइहागच्छ अग्नयेनमः ॥ २ ॥ यमइहागच्छयमायनमः ३ निर्ऋतेइहागच्छनिर्ऋतयेनमः ४ वरुणइहागच्छवरुणायनमः ५ वायोइहागच्छवायवेनमः ६ सोमइहागच्छसोमायनमः ७ ईशानइहागच्छईशानायनमः ८ ब्रह्मन्इहागच्छब्रह्मणेनमः ९ अनंतइहागच्छ अनंतायनमः १० इत्यावाह्यसर्वोपचारैःसंपूज्यप्रार्थयेत् आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा वरुणःपवनश्चैवधनाध्यक्षःसदाशिवः ब्रह्मणासहितःशेषोदिक्पालाःपांतुसर्वदा इतिसमस्तमंडलदेवतापूजनम् सर्वतोभद्रादिमंडले व्रताधिपतिदेवतापूजार्थंकलशंस्थापयेत् भूम्यैनमइतिभूमिस्पर्शः यवगोधूमधान्यानितिलाः कंगुस्तथैवच श्यामाकाश्चणकाश्चैवसप्तधान्यानितिस्मृतं सप्तधान्येभ्योनमः इतिसप्तधान्य कलशायनमः इतिकलशस्थापनम् गंगेचयमुनेचैवगोदावरिसरस्वति नर्मदेसिंधु कावेरिजलेस्मिन्सन्निधिंकुरु इतितीर्थजलेनापूर्य कर्पूरंचंदनंदर्पःकुंकुमंचचतुःसमं सर्वगंधमितिख्यातंसमस्तसुरवल्लभं इतिगंधद्रव्यानिक्षेपः कुष्ठंमांसीहरिद्रेद्वेमुराशैलेयचंदनं वचाचंपकमुस्ताचसर्वौषधिगणःस्मृतः सर्वौषधीभ्योनमः इतिसर्वौषधिनिक्षेपः अश्वत्थोदुंबरः प्लक्षश्चूतन्यग्रोधपल्लवाः पंचपल्लवेभ्योनम इति पंचपल्लवप्रक्षेपः गजाश्वरथ्यवल्मीकसंगमाद्ध्रदगोकुलात् राजद्वारप्रवेशाच्चमृदःसप्तविनिक्षिपेत् उद्धृतासि वराहेणकृष्णेनशतबाहुना मृत्तिकेहरमेपापंयन्मयादुष्कृतकृतामिति सप्तमृत्तिकाभ्योनमः इदंफलंमहादिव्यंसमस्तफलदमतामितिफलं हिरण्यगर्भगर्भस्त्वंहेमबीजंविभावसोः अनंतपुण्यफलदमतः शांतिंप्रयच्छतु इतिहिरण्यं कनकंकुलिशंनीलंपद्मरागंचमौक्तिकं पंचरत्नमितिख्यातंकलशेपुनियोजयेत् पंचरत्नेभ्योनमः दूर्वासिशतपत्रासिशतमूलाशतांकुरा शतंहरासिपापानिशतमायुःप्रवृद्धये दूर्वायैनमः इतिदूर्वाक्षेपः शरण्यंसर्वलोकानांलज्जायाः

परिरक्षतां यस्मात्सुवस्त्रधारित्वंवासःशांतिंप्रयच्छतु इतिरक्तवस्त्रेणावेष्ट्य पूर्णाशाःपूर्णसंकाशाःपूर्णाःसंतुमनोरथाः पूर्णकुंभस्यपूर्त्यर्थंपूर्णपात्रंप्रदीयते पूर्णपात्रायनमः इतिपूर्णपात्रं कलशोपरिदध्यात् ततः सर्वेसमुद्राः सरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः वरुणकलशायनमः इतिसर्वोपचारैःसंपूज्यप्रार्थयेत् कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः मूलेतस्यास्थितोब्रह्मामध्येमातृगणाःस्मृताः कुक्षौचसागराःसप्तसप्तद्वीपावसुंधरा देवदानवसंबाधेमथ्यमानेमहोदधौ उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः त्वयितिष्ठतिभूतानित्वयिप्राणाःप्रतिष्ठिताः शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः आदित्यावसवोरुद्राविश्वेदेवाः सपैतृकाः त्वयितिष्ठंतिसर्वेपियतः कामफलप्रदः त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा इतिकलशस्थापनंविधाय शांताकारंभुजंगशयनंपद्मनाभंसुरेशमित्यादिविष्णुव्रतेषुध्यानम् कर्पूरगौरंकरुणावतारंसंसारसारंभुजगेंद्रहारं सदावसंतंहृदयारविंदेभवंभवानीसहितंनमामि इतिशिवरात्र्यादिव्रतेषुध्यानम् आगच्छदेवदेवेशतेजोराशेजगत्पते क्रियमाणांमयापूजांगृहाणसुरसत्तम इत्यावाहनं नानारत्नसमायुक्तंकार्तस्वरविभूषित आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां इत्यासनं पाद्यंगृहाणदेवेशसर्वक्षेमकरंप्रभो भक्त्यासमर्पितंदेवलोकनाथनमोस्तुते इतिपाद्यम् नमस्तेदेवदेवेशनमस्तेधरणीधर नमस्तेजगदाधार अर्घ्यंनः प्रतिगृह्यतां इत्यर्घ्यम् कर्पूरवासितंतोयंमंदाकिन्याः समाहृतं आचम्यतांजगन्नाथमयादत्तंहिभक्तितः इत्याचमनम् शर्करारससंयुक्तंपयोदधिघृतंमधु पंचामृतंसमानीतंस्नानार्थंप्रतिगृह्यतां इतिपंचामृतस्नानम् गंगाचयमुनाचैवनर्मदाचसरस्वती तापीपयोष्णीरेवाचताभ्यः स्नानार्थमाहृतं तोयमेतत्सुखस्पर्शंस्नानीयंप्रतिगृह्यत इतिशुद्धस्नानं सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां इतिवस्त्रं ॥ ८ ॥

सर्वदेवनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपरमेश्वर इतियज्ञोपवीतस्थाने पीतसूत्रादिकदेयम्
९ श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठगृहाणपरमेश्वर इतिगंधः१०माल्यादीनिसुगंधीनिमालि
त्यादीनिवैप्रभो मयानीतानिपूजार्थंपुष्पाणिप्रतिगृह्यताम् इतिपुष्पाणि ११ वनस्पतिरसोदिव्योगंधाढ्योगंधउत्त
मः आघ्रेयः सर्वदेवानांधूपोयंप्रतिगृह्यतां इतिधूपं १२साज्यंत्रिवर्त्तिसंयुक्तंवन्हिनायोजितंमया दीपंगृणदेवेशत्रै
लोक्यतिमिरापहं भक्त्यादीपंप्रयच्छामिदेवायपरमात्मने त्राहिमांनरकाद्घोराद्दीपज्योतिर्नमोस्तुते इतिदीपम्१३
अन्नंचतुर्विधंस्वादुरसैः षड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां इतिनैवेद्यम् १४ समस्तदेवदेवे
शसर्वतृप्तिकरंपरं अखंडानंदसंपूर्णंपानीयंप्रतिगृह्यतां इतिजलम् १५ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेस
फलावाप्तिर्भवेजन्मनिजन्मनि इतिफलं१६पूगीफलंमहादिव्यं नागवल्लीदलैर्युतं कर्पूरैलासमायुक्तंताम्बूलंप्रति
गृह्यतांइतितांबूलम्१७हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतः शांतिंप्रयच्छमे इतिदक्षिणा
द्रव्यम् १८ इंद्रादित्यौचधरणीविद्युदग्निस्त्वमेवच त्वमेवसर्वज्योतींषिआर्त्तिक्यंप्रतिगृह्यताम् इतिनीराजनम् १९
नमस्तेपुंडरीकाक्षनमस्तेस्त्वमरप्रिय नमस्तेजगदाधारदेवदेवनमोस्तुते इतिपुष्पांजलिः २० यानिकानिचपापा
नि जन्मांतरकृतानिचतानिसर्वाणिनश्यंतुप्रदक्षिणपदेपदे इतिप्रदक्षिणा २१ नमःसर्वहितार्थायजगदाधारहेतवे
साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः इतिनमस्कारः २२ यन्मयाभक्तिसंयुक्तंपत्रंपुष्पंफलंजलं समर्पितंचनैवे
द्यंतद्गृहाणजगत्पते इतिप्रार्थना २३ आवाहनंनजानामिनजानामिविसर्जनम् पूजामहंनजानामिक्षमस्वपर
मेश्वर यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं इतिसर्वसाधारणपूजा
विधानं अथैकादशीव्रतोद्यापनेकश्चिद्विशेषोभिधीयते अत्रद्वादशमासस्थैश्चतुर्विंशत्येकादशीव्रतदेवतानांमूर्त्तयः

कलशेषुपूज्याः सर्वतोभद्रस्यपरितःप्रागादिक्रमेण अथवा द्वादशकमलादौपूज्याः श्रियासहितायआदिकेशवाय नमः १ रुक्मिणीसहितायकेशवायनमः २ कांत्यासहितायमाधवायनमः ३ मोहिनीसहितायचक्रिणेनमः४ शक्त्यासहितायविष्णवेनमः ५ प्रियासहितायवैकुंठायनमः ६ विभूतिसहितायमधुसूदनायनमः ७ मोहिनी सहितायजनार्दनायनमः ८ इच्छासहितायत्रिविक्रमायनमः ९ लक्ष्मीसहितायउपेंद्रायनमः १० प्रीत्यास हितायवामनायनमः ११ कीर्त्यासहिताययज्ञपुरुषायनः १२ रत्यासहितायश्रीधरायनमः १३ पद्मासहिता यवासुदेवायनमः १४ मायासहितायहृषीकेशायनमः १५ प्राप्तिसहितायहरयेनमः १६ राधासहितायपद्म नाभायनमः १७ सुशक्तिसहिताययोगीश्वरायनमः १८ महिमासहितायदामोदरायनमः १९ प्राकाम्यस हितायपुंडरीकाक्षायनमः २० अजनीसहितायकूर्मायनमः २१ मंगलासहितायपृथ्वीधरायनमः २२ वरदा सहितायनृसिंहायनमः २३ शुभासहितायउपेंद्रायनमः २४ सर्वोपचारैर्यथाशक्तिसंपूज्य अथात्रैवचतुर्विंशत्ये कादशीनांपूजापिकार्या तत्रादौशुक्लाःकृष्णाश्चैकादश्योनाममंत्रैःसंपूजयेत् एकादशीरूपस्थातुनीलशुभ्रात्रिशूलि नी ताम्रवर्णारथारूढापात्रखेटासिपंकजा १एकादशीमृगाब्जस्थातुलाकर्त्तरिकायुता सिंहाननारुणगलातुंदिनीला सिनीपरा २ मातेवसर्वबालानामौषधंरोगिणामिव रक्षार्थंसर्वलोकानांनिर्मितैकादशीतिथिरितिध्यात्वा तासांनाम मंत्राणि चैत्रकृष्णापापमोचिनी १ चैत्रशुक्लाकामिका २ वैशाखकृष्णावरूथिनी ३ वैशाखशुक्लामोहिनी ४ ज्यै ष्ठकृष्णापरा ५ ज्येष्ठशुक्ला-निर्जला ६ आषाढकृष्णायोगिनी ७ आषाढशुक्लाशायिनी ८ श्रावणकृष्णाका मदा ९ श्रावणशुक्लापुत्रदा १० भाद्रकृष्णाअजा ११ भाद्रशुक्लापद्मा १२ आश्विनकृष्णाइंदिरा १३ आ श्विनशुक्लापापांकुशा१४ कार्त्तिककृष्णारमा १५कार्त्तिकशुक्लाहरिबोधिनी१६मार्गकृष्णाउत्पन्ना १७मार्गशुक्लामो

क्षदा १८ पौषकृष्णासफला १९ पौषशुक्लापुत्रदायिनी २०माघकृष्णाषट्तिला २१ माघशुक्लाजया २ फाल्गुण कृष्णाविजया२३फाल्गुनशुक्लाआमलकी२४एताअपिचतुर्विंशतिकलशेषुनाममंत्रैस्तत्रैवसंपूज्याःततःकृतांजलिर्वक्ष्यमाणमंत्रैःप्रार्थयेत् धृतोसिभगवान्भक्त्याप्रत्यब्दंयावदत्रतुप्रसीददेवदेवेशसर्वान्कामान्प्रदेहिमे अज्ञानाद्वाज्ञानतोवापिजातंन्यूनाधिकंचयत् दीनस्यममनाथस्त्वंक्षमस्वपुरुषोत्तम एतत्कालंव्रतंचीर्णंभगवन्यन्मयाहरे व्रतंतत्पूर्णतांयातुत्वत्प्रसादाज्जनार्दन मार्गशीर्षेमयादेवयत्कृतंव्रतमुत्तमं भवेत तेनमेप्रीतौसजायौकृष्णकेशवौ १ पौषेमास्यपिदेवेशयद्व्रतंकृतमच्युत तेनानंतःसपत्नीकः प्रीतोनारायणोस्तुमे २ माघेर्चितःसपत्नीकोमाधवश्चाच्युतोमया व्रतेनतोषितावद्यप्रीतौस्यातांजनार्दनौ ३ फाल्गुणेयद्व्रतभक्त्याविहितंतेनमेहरे विश्वेशचक्रिणौदेवौप्रीयेतांपापमोक्षदौ ४ चैत्रेवैकुंठविष्णूतौसजायौपूजितौमया येनव्रतेनतेनाद्यसुप्रीतौशर्मयच्छतां ५ जनार्दनश्चवैशाखेतथैवमधुसूदनः अर्चितौयौमयापूर्वंप्रीतौस्यातांममाद्यतौ ॥ ६ ॥ ज्यैष्ठेर्चितौसपत्नीकौमयोपेंद्रत्रिविक्रमौ तुष्येतांमेकृतेनाद्यदेवेशौसपरिच्छदौ ॥ ७ ॥ आषाढेपूजितौयौतुयज्ञपूरुषवामनौ अद्यमेतौसपत्नीकौसुप्रीतौशर्मयच्छतां ॥ ८ ॥ वासुदेवःश्रीधरश्चश्रावणेयन्मयार्चितौ व्रतेनदेवदेवेशौप्रीतौतौमेद्यकेशवौ ॥ ९ ॥ अर्चितौदेवदेवेशौनभस्येमासियौमया तौमेहरिहृषीकेशौप्रीयेतांसपरिच्छदौ ॥ १० ॥ योगीश्वरःसपत्नीक.पद्मनाभस्तथैवच यौमयाश्वयुजेमासिप्रीयेतामद्यतौमम ११ कार्त्तिकेपुंडरीकाक्षस्तदादामोदरोविभुः अद्यमेतौसपत्नीकौसुप्रीतौपापशांतिदौ १२ एवंदेवोजगद्योनिश्चतुर्विंशतिरूपधृक् चतुर्विंशत्सपत्नीकःप्रीयतांमेजगत्प्रभुः मामेस्त्रीत्वंमाचमेदासभावोमामूर्खत्वंमाकुदेशेषुजन्म मिथ्यादृष्टिर्माचमेस्यात्कदाचिज्जातोजातोविष्णुभक्तोभवेयम् इतिपूजाविधानम् अथहोमविधानम् अत्रशूद्रकर्तृकहोमकार्य्यं शूद्रकमलाकरादिनिबंधोक्तविवाहसंस्का

रालिख्यते तत्राचार्य्योहस्तमात्रंस्थंडिलंविधाय स्थंडिलाद्दक्षिणे ब्रह्मासनं दत्त्वा ब्रह्मणोवरणपूजादिकं वि
धाय यथाचतुर्मुखोब्रह्माइत्यादिसंप्रार्थ्य तमुपवेश्यमृण्मयेपात्रेजलपूर्णेकुशान्विधायोत्तरतः कुशेषु निधायाग्नि
दर्भैःपूर्वादितःपरिस्तीर्य्यासादनंकुर्य्यात् त्रीणितृणानिद्वेपवित्रे प्रोक्षणी आज्यस्थालीचरुस्थालीसाग्राः कुशाः
उपयमनकुशास्तिस्त्रःसमिधः स्रुव आज्यंपूर्णपात्रं ततःप्रादेशमात्रेपवित्रेकृत्वा प्रोक्षणींसंस्कृत्य पवित्राभ्यामु
त्पूय तत्रतेपवित्रेनिधाय दक्षिणेनसव्यं कृत्वोदिंगनंकृत्वा पात्राणिप्रोक्ष्यनिधायाज्यस्थाल्यांनिरूप्याग्नौदक्षिणे
धिश्रित्य पर्य्यग्निं कृत्वा स्रुवंप्रतप्य कुशैःसंसृज्य प्रोक्षणीभिःप्रोक्ष्य पुनःप्रतप्य दक्षिणेनिधायाज्यमुद्वास्यो
त्पूयावेक्ष्य स्रुवंनिरस्य पुनःप्रोक्षणीवदुत्पूयावेक्ष्योपयमनकुशानादायाग्नौतिस्त्रःसमिधोभ्याधायप्रोक्षणीभिःप
र्युक्ष्ययजमानोन्वारब्धोदक्षिणंजान्वाच्यब्रह्मदक्षिणहस्तेन्वारब्धः स्रुवेणाज्यंजुहुयात् प्रजापतयेनमः इंद्रायन
मः इत्याघारौ इदंप्रजापतये इंद्रायनममेति अग्नयेनमः सोमायनम इत्याज्यभागौ अग्नयेनमः वायवेनमः
सूर्य्यायनमः अग्निवरुणाभ्यांनमः द्विःअग्नयेवरुणाय सवित्रेविष्णवे विश्वेदेवमरुत्स्वर्केभ्यो वरुणायादित्या
य अदितये प्रजापतयेनमः इत्याज्याहुतीर्हुत्वाततोघृताक्तयवतंडुलतिलानांहोमः गणपतयेनमः सूर्य्यायनमः
चंद्रमसेनमः भौमायनमः बुधायनमः बृहस्पतयेनमः शुक्रायनमः शनयेनमः राहवेनमः केतुभ्योनमः इ
त्यादि अत्रब्राह्मणकर्तृकःस्वाहाकर्मप्रयोगः नमोनमइतिशूद्रकर्तृकप्रयोगः शूद्रोवर्णश्चतुर्थोपिवर्णत्वाद्धर्ममर्ह
ति वेदमंत्रस्वधास्वाहावषट्कारादिकंविनेति नृसिंहतापिनीयोक्तवचनात् अधिदेवताहोमः ईश्वरायनमः ॥ १
उमायै स्कंदाय- विष्णवे- ब्रह्मणे. इंद्राय. यमाय. कालाय. चित्रगुप्तायनमः अथप्रत्यधिदेवतायैनमः अग्नये
नमः ॥ १ ॥ अद्भ्योनमः पृथिव्यै विष्णवेनमः इंद्रायनमः इंद्राण्यै प्रजापतये सर्पेभ्योनमःब्रह्मणे. पंचलोक

पालनाममंत्रेहोमः गणपतये दुर्गायै वायवे आकाशाय अश्विभ्यां अथशुक्लैकादशीदेवताहोमः केशवाय नमः माधवाय गोविंदाय विष्णवे मधुसूदनाय त्रिविक्रमाय वामनाय श्रीधराय हृषीकेशाय पद्मनाभाय दामोदराय गरुडध्वजाय अथकृष्णैकादशीदेवताहोमः संकर्षणाय वासुदेवाय प्रद्युम्नाय अनिरुद्धाय पुरुषोत्तमाय अधोक्षजाय नरसिंहाय अच्युताय जनार्दनाय उपेंद्राय हरये कृष्णायनमः एताश्चैकादशीदेवताः घृताक्तपायसेनहोतव्याः केवलाज्येनहोमः स्त्रीचतुःसहस्रसहितायै रुक्मिण्यैनमः स्त्रीचतुःसहस्रसहितायैसत्यभामायैजांबवत्यै स्त्रीचतुःसहस्रसहितायैकालिंद्यैनमः शंखायनमः चक्रायनमः गदायै पद्माय गरुडाय इंद्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानायनमः ततोब्रह्माद्याः सर्वतोभद्रमंडलदेवताः केवलाज्येनहोतव्याः ब्रह्मणेनमः इंद्राय इत्यादिदशलोकपालाः पुनरपिहोतव्याः अष्टवसुभ्योनमः एकादशरुद्रेभ्यः दुर्गायै गंगादिनदीभ्यः दक्षाय नारायणाय दुर्गायै स्वधायै मृत्यवे शेषाय समुद्रेभ्यः मरुद्भ्यः गणपतये ॥ १ पृथिव्यै मेरवे ऋग्वेदाय यजुर्वेदाय सामवेदाय अथर्ववेदाय वज्राय शक्तये दंडाय खड्गाय पाशाय अंकुशाय गदायै त्रिशूलाय ऐरावताय मेघाय महिषाय प्रेताय मकराय मृगाय शिविकायै वृषाय गौतमाय भरद्वाजाय विश्वामित्राय जमदग्नये अत्रये वसिष्ठाय अरुंधत्यै सूर्यादिभ्योग्रहेभ्यः ॥ ९ ॥ ऐंद्र्यै कौमार्यै ब्राह्म्यै वाराह्यै चामुंडायै वैष्णव्यै माहेश्वर्यै वैनायिक्यैनमः अग्नयेस्विष्टकृतेनमः संस्रवप्राशनंप्रणीतापवित्राभ्यांमार्जनं तयोरग्नौप्रक्षेपः प्रणीताविमोकः पूर्णपात्रदानं अमंत्रकंपूर्णाहुतिदानं अग्नयेजातवेदसेनमोनमः ततोयजमानोऽग्निमुपतिष्ठेत तत्रमंत्रः त्वामेकमाद्यंपुरुषंपुराणंनारायणंविश्वसृजंयजामहे मयैषसांगोविहितोविधिर्योगृहाणहव्यंजगतामधीश ततोग्निंत्रिःप्रदक्षिणीकृत्य देवमुपतिष्ठेत कृष्णायवासुदे

वायहरयेपरमात्मने शरण्यायाप्रमेयायगोविंदायनमोनमः नमःस्थूलायसूक्ष्मायव्यापकाव्यापकायच अनंता
यजगद्धात्रेब्रह्मणेनंतमूर्त्तये अव्यक्तमायालेशायचिद्रूपायगुणात्मने नमोमूर्त्तायसिद्धायपरायपरमात्मने शरण्या
याप्रमेयायगोविंदायनमोनमः देवदेवायवेद्यायपरायपरमेष्ठिने कर्त्रेविश्वस्यगोप्त्रेचतत्संहर्त्रेनमोनमः इतिस्तु
त्वादेवायवायनंविनिवेदयेत् ततोयजमानस्तिथ्यादिसंकीर्त्य कृतस्यास्यैकादशीव्रतोद्यापनस्यसांगतासिद्ध्यर्थं य
थाविधिनावृतानाचार्य्यादीन् वस्त्रतांबूलदक्षिणादिभिः पूजयिष्ये इतिसंकल्पं विधाय सोपकरणश
य्यादिदानंकुर्य्यात् आचार्य्यायगोदानंदद्यात् तद्यथा अद्यकृतस्यैकादशीव्रतस्यसंपूर्त्तिकामोनारायणप्री
तयेआचार्य्यायगोदानमहंकरिष्ये गवामंगेषुदेवतान्यासंकुर्य्यात् शृंगमूलयोर्ब्रह्मविष्णुभ्यांनमः ललाटेमहा
देवायनमः नासावंशेषण्मुखायनमः कर्णयोरश्विभ्यांनमः चक्षुषोः शशिभास्कराभ्यांनमः दंतेषुवायुभ्यः
नासिकायांवरुणाय हुंकारे सरस्वत्यै गंडयोर्यमलाभ्यां ओष्ठयोः संध्याद्वयाय ग्रीवायां इंद्राय कक्षि
देशेछंदोभ्योनमः उरसिसाध्येभ्यो चतुष्पादेषुचतुर्युगधर्मेभ्यो खुरमध्ये गंधर्वेभ्यो खुरपार्श्वेषुअप्सरो
भ्यो पृष्ठेएकादशरुद्रेभ्यो सर्वसंधिषु वसुभ्यो श्रोणितटे पितृभ्यो लांगूलेसोमायवाले प्वादित्यर
श्मिभ्योनमः गोमूत्रे गंगायै क्षीरे सरस्वत्यै दध्नि नर्मदायै सर्पिषिहुताशनाय रोमकूपेषुदेवाना
मष्टाविंशतिकोटिभ्यो उदरेपृथिव्यै पयोधरेषुचतुःसागरेभ्योनः सौरभेयिसर्वहितेपवित्रेपापनाशिनि गृह
णीष्वेमंमयादत्तग्रासंत्रैलोक्यवंदिते सर्वदेवस्वरूपिण्यैनमस्तेरुद्ररूपिणि तवपाद्यंमयादत्तंगृहाणसुरवंदिते सर्व
देवमयेदेविसर्वतीर्थमयेशुभे गृहाणार्घ्यंमयादत्तंसौरभेयिनमोस्तुते देहेस्थितासिरुद्राणीशंकरस्यसदाप्रिये धेनु
रूपेणसादेवीममपापंव्यपोहतु आच्छादनंमयादत्तंसम्यक्शुद्धंसुशोभनं सुरभ्यैवस्त्रदानेनप्रीयतांपरमेश्वरः श्री

खंडचंदनंदिव्यंसर्वगंधसमन्वितं गृहाणपरयाभक्त्यामयादत्तंसुरेश्वरि ततोऽलंकारान्दद्यात् माल्यानिचसुगं
धीनिगतिपुष्पं. वनस्पतिरसोदिव्योधूपम् आज्यंसद्वर्तिसंयुक्तंदीपं सुरभित्वंजगन्मातर्नित्यंरुद्रपदेस्थिता सर्वदे
वमयेग्रासंमयादत्तमिदंग्रस इतिगोग्रासं. पूगीफलंमहादिव्यमितितांबूलं. हिरण्यगर्भेतिदक्षिणा. पंचगावः समु
त्पन्नामथ्यमान्महोदधेः तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः इतिनमस्कारः गावोममाग्रतःसंतुगावोमेसंतुपृष्ठ
तः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं इतिप्रदक्षिणा इतिगोपूजांकृत्वा स्वगोत्रादिकमुच्चार्यविप्रस्यापिगोत्रादिक
समुच्चार्य इमांगांसवत्सां यथाशक्तिभूषितां एकादशीव्रतोद्यापनपूर्णतासिद्धये श्रीविष्णुप्रीत्यर्थं तुभ्यमहंसंप्रददे
इतिसतिलजलकुशयुतंपुच्छंविप्रहस्तेतिनिः क्षिपेत् नममेतित्यागंकुर्यात् यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी
विश्वरूपधरोदेवः प्रीयतामनयागवा अनेनगोदानेनश्रीविष्णुः प्रीयतां ततोगोदानसांगतासिद्ध्यर्थं हिरण्यग
र्भेतिमंत्रेणसुवर्णदक्षिणांदद्यात् गावोममाग्रतः संतु इतिमंत्रेणप्रदक्षिणीकृत्याविसर्जयेत् ततोयजमानः शुक्लैका
दशीकृष्णैकादश्योरुद्यापनसंपूर्तिकामो द्वादशसंख्याकान् ब्राह्मणान् केशवादिद्वादशनामभिः. संकर्षणादिद्वा
दशनामभिश्चयथाविभवं पक्वान्नादिभिः संपूज्य पक्वान्नपूरितान्वस्त्रतांबूलप्रतिमावस्त्रसहितान्द्वादशकलशान् प्र
त्येकंविप्रेभ्योदद्यात् तत्रमंत्रः पक्वान्नपूरितंकुंभदक्षिणावस्त्रसंयुतं दद्यामिद्विजवर्यायविष्णुर्मेप्रीयतामिति के
शवःप्रीयतामित्यादिमंत्रपाठः प्रत्येकंकलशदानेकार्यः ततइदंसोपस्करंपीठंसोपस्करांशय्यांच श्रीलक्ष्मीनारा
यणप्रतिमांचश्रीमहाविष्णुप्रीतयेतुभ्यमाचार्यायसंप्रददे ततआचार्यःपीठदेवतामुत्थाप्य ततउद्धृतकलशोदकेन
यजमानमभिषिंचेत् अथाभिषेकमंत्राः सुरास्त्वामभिषिंचतुब्रह्माविष्णुमहेश्वराः वासुदेवोजगन्नाथस्तथासंकर्ष
णोविभुः प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा वरुणः पवनश्चैवधना

ध्यक्षस्तथाशिवः ब्रह्मणासहितः शेषोदिक्पाला; पांतुनेसदा कीर्त्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिः श्रद्धाक्रियारतिः बु
द्धिर्लज्जावपुः शांतिः पुष्टिः कांतिश्चमातरः एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः आदित्यश्चंद्रमाभौमो
बुधोजीव-सितोर्कजः ग्रहास्त्वामभिषिंचतुराहुःकेतुश्चतर्पिताः देवदानवगंधर्वयक्षराक्षसपन्नगाः ऋषयोमनवो
गावोदेवमातरएवच देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणा;अस्त्राणिचैवशस्त्राणिशतशोवाहनानिच औषधानि
चरत्नानिकालस्यावयवाश्चये सरितःसागराःशैलास्तीर्थानिजलदानदाःएतेत्वामभिषिंचतुधर्मकामार्थसिद्धये मंत्रा
र्थाः सफलाःसंतुपूर्णाःसंतुमनोरथाः शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयोस्तुवः इत्याभिषेकातेस्नातोयजमानःमंत्रही
नंक्रियाहीनविधिहीनचयत्कृतं तत्सर्वंक्षम्यतांदेवप्रसीदपरमेश्वर यांतुदेवगणाःसर्वेपूजामादायमामकीं इष्टकाम
प्रसिद्ध्यर्थपुनरागमनायच इतिविसर्जनम् ततःकृतस्यकर्मणःसांगतासिद्ध्यर्थंब्राह्मणान्यथासंख्यापरिमितान्यथाश
क्तिभोजयिष्ये यथाशक्तिभूयसींदक्षिणांदातुमहमुत्सृजे अनेनकर्मागस्वरूपी श्रीपरमेश्वरः प्रीयतां ततः सदक्षि
णेनसदन्नेनब्राह्मणान्संतोष्य आशिषोगृहीत्वा व्रतसंपूर्णतांवाचयेत् जपाच्छिद्रतपश्छिद्रंयच्छिद्रंयज्ञकर्मणि सर्वं
भवतुवाच्छिद्रंब्राह्मणानांप्रसादत इतिप्रार्थ्य सर्वंभवतुतेच्छिद्रयज्ञविष्णुप्रसादत इतिवदेयुः ततस्तान्नमस्कृत्यवि
सर्जयित्वा इष्टजनैःसह समहोत्सवोयजमानोभुंजीत ११ इतिशूद्रकर्तृकएकादश्यादिव्रतोद्यापनप्रयोगः स्वस्ति
श्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेः
पादाब्जपूजारतो जीयात्पुत्रकलत्रमित्रसहितः संपालयन्क्ष्मांचिरम् रणवीरसिंहभूपेशकारितेकृत्यसागरे शू
द्रादेर्व्रतनिष्ठयाश्रभूद्रत्नसमुच्चयः २- इतिश्रीमत्सूर्य्यवंशावतंसरघुकुलभूषणश्रीमहाराजरणवीरसिंहकारितेकृ
त्यरत्नाकरेशूद्रकर्तृकव्रतोद्यापनरत्नसंग्रहः दशमोरत्नसमुच्चयः ॥ १० ॥

॥ श्रीरघुनाथमुद्रायंत्रालये ॥

लालाशिब्बामल्लाधिकारेदशमरत्नसमुच्चयस्समाप्तः

सम्वत् १९४१ चैत्र प्र. ११

# चैत्रमासप्रारम्भः

उंश्रीगणेशायनमः श्रीगुरुंगणपंदुर्गांवटुकंशिवमच्युतं ब्रह्माणंगिरिजांलक्ष्मींवाणींवंदेविभूतये अथवर्षमासदिना
दिविशेषकृत्यंनिरुप्यते तत्रादौसंवत्सरारंभस्यप्रथमोपस्थितत्वात्संवत्सरारंभप्रतिपदानिर्णीयतेसाचचैत्रशुक्लप्रति
पदा तस्यामेवसंवत्सरारंभःकार्यः अत्रप्रतिसूर्योदयव्यापिनीग्राह्या तदुक्तंब्राह्मे श्रीभगवानुवाच चैत्रमासिजग
द्ब्रह्मासमर्जप्रथमेहनि शुक्लपक्षेसमग्रंतुतदासूर्योदयेसतीति भविष्योत्तरेपि प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवौ ब्र
ह्माप्रवर्त्तयामासकालस्यकलनामपीत्यादि दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वैवतदुक्तंज्योतिर्निबंधे चैत्रेसितप्रतिपदि
योवारोर्कोदयेसवर्षेशःउदयद्वितयेपूर्वोनोदययुगलेपिपूर्वःस्यात् यस्माच्चैत्रसितादेरुदयाद्भानोःप्रवृत्तिरब्दादेरपि व
सिष्ठेनाप्युक्तं वत्सरादौवसंतादौबलिराज्येतथैवच पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदाबुधैरितिपूर्वदिनेसूर्योदयाविद्धाप्र
तिपदित्यर्थःयदाचैत्रेमासिमलमासोभवतितदादैवकार्यस्यतत्रप्रतिषिद्धत्वाच्छुद्धेमासिसंवत्सरारंभःकार्यःचैत्रशुक्ला
दितोवत्सरारंभःसर्वसंमतःमलमासस्तुकृष्णप्रतिपदादितोभवति तस्यपूर्ववर्षएवांतर्भावःउदयसंबंधाभावोसंवत्सरा
रंभप्रयुक्तकार्यलोपप्रसक्तौपूर्वतिथिविद्धाग्राह्यत्ववचनं नतुसर्वथामायुक्तग्राह्यत्वं अत्रतैलाभ्यंगोनित्यःवत्सरादौव
संतादौबलिराज्येतथैवचतैलाभ्यंगमकुर्वाणोनरकंप्रतिपद्यतेइतिवृद्धवसिष्ठवचनात् कौस्तुभेऽस्यामेवप्रतिपदिवत्स
राधिपपूजोक्ताज्योतिर्निबंधेयश्चैत्रशुक्लप्रतिपद्दिनवारोनृपोहिसः तस्यपूजाविधातव्यापताकातोरणादिभिःप्रतिगेहं
ध्वजःकार्यःशक्त्याब्राह्मणतर्पणंनिरीक्षणंचकर्त्तव्यंशकुनानांशुभेप्सुभिरिति भविष्येचैत्रेमासिमहाबाहोपुण्यायाप्र
तिपत्पराअस्यांवैनिंबपत्राणिप्राश्यसंश्रृणुयात्तिथिमितिशकादिश्रवणमप्यत्रोक्तंज्योतिःशास्त्रेशकवत्सरभूपमंत्रिणांर
सधान्येश्वरमेघपादिनांश्रवणात्पठनाच्चदैन्नृणांशुभतांयात्यशुभंसहश्रियेतिअस्यामेवनवरात्रव्रतारंभः तत्रप्रतिपत्प
रसुतैवग्राह्या अमायुक्तानकर्तव्याप्रतिपच्चंडिकार्चने मुहूर्तमात्राकर्तव्याद्वितीयादिगुणान्वितेतिदेवीपुराणात् तिस्रो

ह्येताःपराःकार्य्यास्तिथयःकुरुनंदन कार्त्तिकाश्वयुजेोमासोश्चैत्रेमासिचभारतेतिहेमाद्रौब्राह्मोक्तेः परापरयुताःका र्य्याअत्रविशेषस्तु शारदनवरात्रेवक्ष्यते अत्रप्रपादानमप्युक्तं भविष्ये अतीतेफाल्गुनेमासिप्राप्तेचैत्रमहोत्सवे पु ण्येह्निविप्रकथितेप्रपादानंसमारभेत् तत्रमंत्रः प्रपेयंसर्वसामान्यभूतेभ्यःप्रतिपादिता अस्याःप्रदानात्पितरस्तृ प्यंतुप्रपितामहाःअनिवार्य्यंततोदेयंजलंमासचतुष्टयमिति प्रपादातुमशक्तेनविशेषाद्धर्ममीप्सता प्रत्यहंधर्मघट कोवस्त्रसंवेष्टिताननः ब्राह्मणस्यगृहेदेयः शीतामलजलःशुभः तत्र मंत्रः एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्म कः अस्यप्रदानात्सकलाममसंतुमनोरथाइति अनेनविधिनायस्तुधर्म्मकुंभंप्रयच्छति प्रपादानफलंसोपिप्रा प्नोतीहनसंशयइति इयंप्रतिपत्श्वेतकल्पादिः अत्रश्राद्धदानादिमहाफलं तदुक्तंहेमाद्रौ नागरखंडे अथकल्पाद यःपुण्याःकथ्यंतेतिथयःशुभाः यासुश्राद्धेकृतेतृप्तिःपितृणामक्षयाभवेत् चैत्रशुक्लप्रतिपदिश्वेतकल्पःपुराभवदिति अत्रब्रह्मपूजोक्ताहेमाद्रौविष्णुधर्मोत्तरे चैत्रमासस्ययापुण्याशुक्लाप्रतिपदाभवेत् तदह्निब्रह्मणःकृत्वासोपवास स्तुपूजनं संवत्सरमवाप्नोतिसौख्यानिभृगुनंदनेतिस्मृतिकौस्तुभेत्वियं मत्स्यजयंतीत्युक्तं॥ कृतेचप्रभवेचैत्रेप्रतिप च्छुक्लपक्षगा रेवत्यांयोगविष्कुंभेदिवाद्वादशनाडिकाःमत्स्यरूपीकुमार्य्यांतुअवतीर्णोहरिःस्वयमितिमात्स्यादित्युक्तं कल्पभेदादत्रव्यवस्थाज्ञेया अथात्रव्रतान्युच्यंते संवत्सरारंभविधिश्चनिरूप्यते श्रीभगवानुवाच चैत्रेमासिज गद्ब्रह्माससर्जप्रथमेहनि शुक्लपक्षेसमग्रंतुतदासूर्य्योदयेसति प्रवर्तयामासतथाकालस्यकलनामपि ग्रहान् वृदान्तून्मासान्पक्षान्संवत्सराधिपान् ददौसभगवान्ब्रह्मासर्वदेवसमागमे ब्राह्म्यांसभायांब्रह्माणमनिर्देश्यत नुंततः यथोक्तैस्तेनमस्यंतःस्तुवंतश्चाप्युपासते ततस्तेकृतशुश्रूषागत्वाचैवस्वमालयं स्वानिस्वान्यथकार्य्याणि नित्ययुक्तास्तुचक्रिरे ब्राह्मीसभाकामरूपाविशेषणतदाज्ञया धारयत्यमलंरूपमनिर्देश्यंमनोहरा ततःप्रभृतियो

धर्मः पूर्वैःपूर्वतरैःकृतः अद्यापिरूढःसुतरांकर्तव्योसौप्रयत्नतः तत्रकार्य्यामहाशांतिःसर्वकल्मषनाशिनी सर्वो
त्पातप्रशमनीकालिदुःखविनाशिनी। आयुःप्रदापुष्टिकरीधनसौभाग्यवर्द्धिनी मंगल्याचपवित्राचलोकद्वयसुखाव
हा तस्यामादौचसंपूज्योब्रह्माकमलसंभवः पाद्यार्घ्यपुष्पधूपैश्चवस्त्रालंकारभोजनैः होमैर्वल्युपहारैश्चतथाब्राह्म
णतर्पणैः ततःक्रमेणदेवेभ्यः पूजाकार्य्यापृथक्पृथक् कृत्वोंकारनमस्कारौकुशोदकतिलाक्षतैः पुष्पधूपप्रदीपा
द्यैर्भोजनैश्चयथाक्रमं मंत्रसंपूजनार्थंतुवहुरूपंपरिस्पृशेत् मंत्रमितिजातावेकवचनं नानारूपान्मंत्रान्परिगृह्णी
यादित्यर्थः तेतु ॐनमोब्रह्मणे ॐविष्णवेनमः ॐपरमात्मनेनमइत्येवमंत्रत्वंदोपात्तादेवताशब्दाश्चतुर्थ्यंताःप्रण
वादयोनमोंताःमंत्रत्वेनग्राह्याः ॐनमोब्रह्मणेतुभ्यंकालायचमहात्मने नमस्तेस्तुनिमेषायत्रुटयेचनमोस्तुते लवा
यचनमस्तुभ्यंनमस्तेस्तुक्षणायच नमोनमस्तेकाष्ठायैकलायैतेनमोनमः नाडिकायैसुसूक्ष्मायैमुहूर्तायनमोनमः
नमोनिशाभ्यःपुण्याभ्योदिवसेभ्योनमोनमः पक्षाभ्यांचाथमासेभ्यऋतुभ्यष्षड्भ्यएवच अयनाभ्यांचपंचभ्योवत्स
रेभ्यश्चसर्वदा नमस्कृत्ययुगादिभ्योग्रहेभ्यश्चनमोनमः अष्टाविंशतिसंख्येभ्योनक्षत्रेभ्योनमोनमः राशिभ्यः
करणेभ्यश्चव्यतीपातेभ्यएवच अतिवर्षाधिपेभ्यश्चविज्ञातेभ्योनमोनमः नमोस्तुकुलनागेभ्यःसानुयात्रेभ्यएवच
सानुयात्रेभ्यः सानुचरेभ्यः नमश्चतुर्दशभ्यश्चमनुभ्योस्तुनमोनमः नमःपुरंदरेभ्यश्चतत्संख्येभ्योनमोनमः
पंचाशद्भ्योमरुद्भ्यश्चदक्षकन्याभ्यएवच नमोदेव्यैसुभद्रायैजयायैचाथसर्वदा भृशाश्वायनमस्तुभ्यंसर्वास्त्रजनका
यच नमस्तेवहुपुत्रायपत्नीभिः सहितायच नमोवुध्न्येतथावृद्ध्यैनिद्रायैधनदायच नलकूवरयक्षायगुह्यकस्वामिने
नमः नमोस्तुशंखपद्माभ्यांनिधिभ्यामथनित्यशः भद्रकाल्यैनमोनित्यंसुरभ्यैचनमोनमः वेदवेदांगवेदांतविद्या
संस्थेभ्यएवच नागयज्ञसुवर्णेभ्योनमोस्तुगरुडायच सप्तभ्यश्चसमुद्रेभ्यःसागरेभ्यश्चसर्वदा उत्तरेभ्यःकुरुभ्यश्च

नमोहैरण्मयायच भद्राश्वकेतुमालाभ्यांनमःसर्वत्रसर्वदा इलावृतायचनमोहरिवर्षायचैवहि नमःकिंपुरुषेभ्य
श्चभारतायनमोनमः नमोभारतभेदेभ्योनवभ्यश्चाथसर्वदा पातालेभ्यश्चसप्तभ्योनरकेभ्योनमोनमः काला
निरुद्धशेषाभ्यांहरयेक्रोडरूपिणे सप्तभ्यश्चाथलोकेभ्योमहाभूतेभ्यएवच मनसेबुद्धयेचैवनमःप्रकृतयेतथा पुरुषा
याभिमानायनमोस्तुव्यक्तमूर्तये हिमवत्प्रमुखेभ्यश्चपर्वतेभ्योनमोस्त्वथ पौराणीभ्यश्चगंगाभ्यःसप्तभ्यश्चन
मोनमः नमोस्त्वाद्यमुनिभ्यश्चसप्तभ्यश्चाथसर्वदा नमोस्तुपुष्करादिभ्यस्तीर्थेभ्यश्चपुनःपुनः निम्नगाभ्यो
नमोनित्यं वितस्तादिभ्यएवच चतुर्दशभ्यस्तीर्थेभ्योधरणीभ्योनमोनमः नमोधात्रेविधात्रेवछंदोभ्यश्च
नमोनमः सुरभ्यैरावणाभ्यांचनमोभूयोनमोनमः नमोस्त्वथोच्चैःश्रवसेध्रुवायचनमोनमः नमोस्तुधन्वंतरये
शस्त्रास्त्राभ्यांनमःसदा विनायककुमाराभ्यांविघ्नेभ्यश्चनमः सदा शाखायचविशाखायनैगमेयायवैनमः नमः
स्कंदग्रहेभ्यश्चस्कंदमातृभ्यएवच ज्वरायरोगपतयेभस्मप्रहरणायच अप्सरोभ्यः सोमपेभ्योदेवेभ्यश्चनमो
नमः असोमपेभ्यश्चनमरतुषितेभ्योनमःसदा आदित्येभ्योनमोनित्यंद्वादशभ्यश्चसर्वदा एकादशभ्योरुद्रे
भ्यस्तपस्विभ्योनमः सदा सदैकोनपंचाशद्भ्योमरुद्भ्यश्चनमोनमः शिल्पाचार्यायदेवायनमस्ते विश्वकर्मणे
अष्टभ्योलोकपालेभ्यस्सानुगेभ्यश्चसर्वदा आयुधेभ्योवाहनेभ्योवर्मभ्यश्चनमः सदा आसनेभ्योदुंदुभिभ्योदेवेभ्य
श्चनमःसदादैत्यराक्षसगंधर्वपिशाचेभ्यश्चानित्यशः पितृभ्यस्सप्तभेदेभ्योमातृभ्यश्चनमोनमःसुसूक्ष्मेभ्यश्चदेवेभ्यो
भावगम्येभ्यएवच नमस्तेवहुरूपायविष्णवेपरमात्मने अथकिंवहुनोक्तेनमंत्रेणानेनचार्चयेत् प्राङ्मुखोदङ्
मुखोविप्रान्देवानुद्दिश्यपूर्ववत् ब्राह्मणान्देवतोद्देशेनपूर्ववत् मंत्रोक्तक्रमेणार्चयेदित्यर्थःअत्रालंविस्तरेण अर्घ्यैःपु
ष्पैश्चधूपैश्चवस्त्रैर्माल्यैःसुहृद्धकं सरोमांचंपूजयेदित्यर्थःधनधान्यानुविभवैर्दक्षिणाभिश्चसर्वदा इतिहासपुराणानां

अवकृत्ट्ठं श्चद्विजेत्तिमान् कालज्ञान्वेदवेदज्ञानूभृत्यान्संबंधिबांधवान् अनेनैवतुमंत्रेणस्वाहातेनपृथकपृथक् प्रविष्टयो
अयेहोमःकर्तव्यःसर्वत्रतये वेदविच्चक्षुप्रदस्त्वास्थानेप्राधानिकेसति प्रविष्टायश्रेष्ठायवेदवेदज्ञायवेदोक्तविधिज्ञायेत्या
र्थः मदनरत्नेतुवेदवतेइतिपठित्वावेदोक्तविधिनेतिव्याख्यातं चक्षुषीआज्यभागौप्राधानिकेस्थानेप्रधानहोमारंभेहो
मारंभेततःकुर्यान्मंगलालंभनंनरः मदनरत्ने शालाहोमस्ततः कार्योमंगलालंभनंततः भोजयित्वाद्विजान्सर्वान्सु
हृत्संबंधिबांधवान् विशेषेणतुभोक्तव्यकार्यश्चापिमहोत्सवः नवसंवत्सरारंभःसर्वसिद्धिप्रदायकः इतिब्रह्मपुराणो
क्तःसंवत्सरारंभविधिः ॥ इयंचपूजादमनकेनकार्येतिस्मृतिकौस्तुभे यथोक्तंदेवीपुराणे ब्रह्मोवाच ॥चैत्रादौकारये
त्पूजांममवत्सयथाविधि गंधधूपार्चनादानैर्माल्यैश्चदमनोद्भवैरिति दमनाभावे दूर्वयाकुशाक्षतैर्वा अत्रकार्यामहा
शांतिरित्युक्तत्वादत्रमहाशांतिर्लिख्यते भविष्योत्तरे श्रीकृष्णउवाच महाशांतिंप्रवक्ष्यामिमहादेवेनभाषितांनृप अभि
षेकेसाकार्यायात्राकालेनृपस्यतु दुःस्वप्नेदुर्निमित्तेचग्रहवैगुण्यसंभवे विद्युदुल्कानिपातेचजन्मर्क्षग्रहभेदने केतुद
येचनिर्घातेचतुर्थेचाष्टमेतथा यदास्युर्गुरुमंदाराःसूर्यश्चैवविशेषतःयुद्धेग्रहाणांसर्वेषांसूर्यशीतांशुकीलके वस्त्रायुध
गवाश्वेषुभास्मितेशयनासने यदाग्निःपरिदृश्येतरात्राविंद्रधनुस्तथा वेश्मनश्चतुलाभंगेगर्भश्चाश्वतरीषुच रविविंबद्व
येदृष्टेमहाशांतिःप्रशस्यतेरवींद्वोरुपरागेचमहोल्कापतनेषुच उत्पातेषुतथान्येषुनिमित्तेषुचसर्वतः सर्वारिष्टोपशमनी
महाशांतिर्निगद्यते सर्वाणिदुर्निमित्तानिप्रशमंयांतिसर्वथा तांकुर्युर्ब्राह्मणाःपंचकुलशीलसमन्विताः चतुर्वेदास्त्रि
वेदाश्चद्विवेदाश्चापिपांडव आथर्वणविशेषज्ञावह्वृचश्चसुसंयुताःशुचयःश्रुतसंपन्नाजपहोमपरायणाःकृच्छ्रप्रवास
नक्ताद्यैःकृतकायविशोधनाः पूर्वमारभ्यमंत्रांस्तुआरभेयुस्ततःक्रियाः मंत्रान्प्रयोगेवक्ष्यमाणान् दशद्वादशहस्तंवा
मडपंकारयेच्छुभंतन्मध्येवेदिकांकुर्याञ्चतुर्हस्तप्रमाणतःआग्नेय्यांकारयेत्कुंडंहस्तमात्रंसुशोभनं मेखलात्रयसंयुक्तं

योन्यात्वापिसमन्वितं चारुचंदनमाल्यैश्चतोरणालंकृतेतथा गोमयेनोपलिप्तेचमंडपेतेद्विजातयः शुक्लांबरधराः स्नाता
शुक्लमाल्यानुलेपनाः कर्मकुर्युरितिशेषः ततश्चपंचकलशांस्तस्यां वेद्यांनिधापयेत् आग्नेयादिषुकोणेषुपंचमंमध्यमंत
था अष्टपत्रकृतपद्मचतुःपल्लवधारिणं ब्रह्मकूर्चविधानेनपंचगव्यंतुकारयेत् ब्रह्मकूर्चविधानंयथा गोमूत्रंताम्रवर्णाया
इत्यादिपरिभाषोक्तकार्यं औषधीःपंचरत्नानिरोचनाचंदनंतथा सिद्धार्थकांस्तथादूर्वाःकुशान्व्रीहियवांस्तथा अपा
मार्गफलवतीन्यग्रोधोदुंबरौतथाप्लक्षाश्वत्थकपित्थश्चाप्रियंगुश्चूतपल्लवान् हस्तिदंतमदंचैवकोणकुंभेषुनिक्षिपेत्फ
लवतीगंधप्रियंगुः पुण्यतीर्थोदकोपेतंपंचगव्यंतुमध्यमे ऋचंवाचामितीदंहिवाह्निकुंभाभिमंत्रणं आशुः शिशानोनै
ऋत्यांयद्देवावायुगोचरे ईशावास्यमितीशान्यांकुंभस्यत्वभिमंत्रणं मध्यमेत्वथजप्तव्यारुद्राः कुंभयजुर्भवाः गंधपुष्पा
क्षतैर्वस्त्रैर्नैवेद्यैर्घृतपाचितैः फलैश्चनारिकेलाद्यैर्दीपकैः कुंभपूजनं स्वस्तिवाचनिकंचैवकारयेत्तदनंतरं क्रमेणा
नेनशनकैराग्निकार्यंप्रयोजयेत् अनेनवक्ष्यमाणेन अग्निदूतमिहाग्निंचपूर्वमेवनिधापयेत् पूर्वंकलशस्थापनात्
अग्निस्थापनात्ततरंकलशस्थापनं कुर्यादित्यर्थः हिरण्यगर्भः समितिब्रह्मासननियोजनं कथानयाप्रणीताश्च
मंत्रेणविनियोजयेत् कृत्वाचास्तरणंचैवह्याज्यसंस्कारमेवच अथवासादयेद्द्रव्यंयस्यप्रयोजनं ततःपुरुषसूक्तेन
पायसंश्रपणंभवेत् अभिघार्याथसंसिद्धंपायसंस्थापयेद्भुवि अष्टादशप्रमाणेनदद्यादथशमीमयान् पालाशींस्स
मिधःसप्तसप्ततेइतिदापयेत् आघारावाज्यभागौतुजुहुयात्क्रमेणतु जुहुयादाहुतीःसप्तजातवेदसइत्यृचा स्थाली
पाकस्यजुहुयात्पूर्वंवैजातवेदसे तरत्समंदीसूक्तेनचतत्रजुहुयात्ततः अग्नायेतिचसप्तान्याःस्वाहांतजुहुयात्ततः इदं
विष्णुस्ततःसप्तजुहुयादाहुतीर्नृप नक्षत्रेभ्यस्ततःस्वाहासप्तविंशतिराहुतीःनक्षत्राहुतयःस्वाहेत्यादिभिर्मंत्रैःकार्याः
तत्ररोहिणीद्वयपुष्पहस्तादित्रयानुराधाभिजिदद्वयशताभिषक्स्वेकैकवचनं पुनर्वसुफल्गुनीद्वयविशाखाश्विनीषु

द्विवचनंशेषेपुवहुवचनंयत्कर्मणेजुहुयात्ततःस्विष्टकृतेपुनः ग्रहहोमस्ततः कार्यास्तिलैराज्यप्र रिप्लुतैः अत्रतिलविधा
तंवैकल्पिकंयवादिनिवृत्त्यर्थमित्यर्थः अथशिवंततोहुत्वाहोमकर्मस मापयेत् ततस्तुतूर्यनिर्घोषैःशंखकाहलनिः
स्वनैः यजमानस्यकर्तव्योह्यभिषेकोद्विजोत्तमैः काश्मर्यवृक्षसंभूतेसमेभद्रासनेस्थिते काश्मर्यवृक्षःश्रीपर्णीभद्रा
सनं वेदिमध्यगतंकृत्वादुर्निमित्तप्रशांतये पंचभिःकलशैःपूर्णैर्मंत्रैरेतैर्यथाक्रमं सहस्राक्षंतुप्रथमंततश्चैवशता
युषा. सजोषसारंद्रइतिविश्वाग्निवरुणेतिच द्रुपदादिवेतिचततः स्नापयेयुःसमाहिताः ततोदिशांवलीन्दद्याद्दिचि
त्रान्नसमाश्रितान् नमोस्तुसर्वदृक्षेभ्यइमंमंत्रमुदीरयेत् स्नातस्यब्राह्मणाः सर्वेपठेयुः शांतिमुत्तमां शांतितोयेन
धारांचपातयित्वासमंततः पुण्याहवाचतंकृत्वाशांतिकर्मसमापयेत् तीर्थेदेवालयेचैवगोदोहंकारयेद्बुधः क्षितिं
हिरण्यंवासांसिशयनान्यासनानिच विप्रेभ्योदक्षिणांदद्यात्यथाशक्त्याविमत्सरः दीनानाथविशिष्टेभ्योदद्याच्चै
वयुधिष्ठिर भोजनंचान्नशंदत्वाततःसर्वंप्रसिध्यति आयुश्चलभतेदीर्घंशत्रूंश्चजयतेक्षणात् दुर्गाणिचास्यसिध्य
तिपुत्रांश्चलभतेशुभान् यथाशस्त्रप्रहाराणांकवचंभवतिवारणं तद्वद्दैवोपघातानांशांतिर्भवतिवारणं अहिंसकस्य
दांतस्यधर्मार्जितधनस्यच दयादाक्षिण्ययुक्तस्यसर्वेसानुग्रहाग्रहाः॥ अर्थान्समर्धयति वर्द्धयतेधर्मकामंसमर्द्धय
तितस्यापिनष्टिपापं यःकारयेत्सकलदोषहरांमहार्थांशांतिंप्रशांतहृदयःपुरुषस्सएव अथमहाशांतिप्रयोगःतत्रादौ
वेदिसंस्कारादिमंडपाभावपक्षेकार्य्यं तत्रवेद्यां अग्निकोणेअग्निस्थापनार्थंहस्तमात्रंकुंडं स्थंडिलंवाकार्य्यं वेद्याश्च
त्वारिद्वाराणिसतोरणानिपरिकल्प्यचारुचंदनपुष्पमालावस्त्रादिभिरलंकृत्ययथोक्तंपंचगव्येनआपपल्लवेनगायत्र्या
मंडपंवेदिंवाप्रोक्ष्यासनेउपविश्यअपवित्रःपवित्रोवासर्वावस्थांगतोपिवायःस्मरेत्पुंडरीकाक्षंसवाह्याभ्यंतरः
शुचिः ततोदेशाचारात् सूर्यादिपूजनंविधाय संक्षिप्तसंकल्पंकुर्य्यात् ॐअद्यामुकगोत्रोअमुकशर्मा अमुकवर्माह

सर्वपापक्षयसकलग्रहपीडासर्वोत्पातजनितसर्वारिष्टनिवृत्तिपूर्वक आत्मनोदेशकुटुंबपरिवारशरीरादौ धनधान्य
संपत्त्यारोग्यादिसर्वाभीष्टसिद्ध्यर्थंकर्तव्यमहाशांतियागस्यपूर्वांगत्वेन गणेशपूजापुण्याहवाचनस्वस्तिवाचनमा
तृकापूजनाभ्युदयिकश्राद्धआचार्यब्रह्मर्त्विगादिवरणंकरिष्ये मत्स्यपुराणे प्रतिज्ञावरणंचैवस्वस्तिपुण्याहवाचनमिति
आदौप्रतिज्ञा ततआचार्यवरणं गणपत्यादिपूजायांमंत्रपाठार्थम् ॐअद्येत्यादि महाशांतियागकर्मणः पूर्वांगत्वेन
गणपतिमातृकापूजनवसोर्धारालक्ष्म्यादिशांतिपाठनांदीश्राद्धपुण्याहवाचनग्रहस्थापनप्रतिष्ठादिकर्मकारयितुमाचार्यं
त्वेनत्वामहंवृणे आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः तथात्वंममयज्ञेस्मिन्भवाचार्योद्विजोत्तम इत्याचार्यवर
णंविधाय भद्रंकर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुरि
तिमंत्रेणयजमानहस्तेकंकणबंधनं गणपतिसहितमातृकापूजनंकुर्यात् ॐगणानांत्वागणपतिꣳहवामहेप्रिया
णांत्वाप्रियपतिꣳहवामहे निधीनांत्वानिधिपतिꣳहवामहे वसोममआहमजानिगर्भधमात्वमजासिगर्भधं ॥ १ ॥
ॐनमोगणेभ्योगणपतिभ्यश्चवोनमो नमोव्रातेभ्योव्रातपतिभ्यश्चवोनमो नमोविश्वरूपेभ्यश्चवोनमो नमो
गृत्सेभ्योगृत्सपतिभ्यश्चवोनमः ॐभगवन्गणपतेइहागच्छइहतिष्ठममपूजांगृहाण ॐनमोभगवतेगणाधि
पायनमः इतिसर्वोपचारैःसंपूज्य सुमुखश्चैकदंतश्चकपिलोगजकर्णकः लंबोदरश्चविकटोविघ्ननाशोविनायकः धूम्रके
तुर्गणाध्यक्षोभालचंद्रोगजाननः द्वादशैतानिनामानियःपठेच्छृणुयादपि विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा संग्रामे
संकटेचैवविघ्नस्तस्यनजायते ततोमातृकास्थापनं गौरीपद्माशचीमेधासावित्रीविजयाजया देवसेनास्वधास्वाहामा
तरोलोकमातरः हृष्टिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता गणेशेनाधिकापूज्यावृद्धौषोडशमातृकाः षोडशमातृकाइ
हागच्छतइहतिष्ठतश्रीसहितषोडशमातृभ्योनमः एवंगंधादिनैवेद्यांतपूजनं षोडशमातृकाःपूजिताःस्थक्षमध्वं ततःक

डयादिलभाःसतसगुडाःसप्तघृतधारावसोर्धाराः कर्तव्याःॐलक्ष्मीः श्रीश्चधृतिर्मेधाप्रज्ञास्वाहासरस्वतीसर्वेषुवृद्धि कार्येषुसप्तैताघृतमातरःलक्ष्म्यादिसप्त मातृकाइहागच्छतेत्यादिआवाह्यपूजा लक्ष्म्यादिसप्तमातृभ्योनमइतिगंधा दिनैवेद्यदक्षिणांतंपूजनंरक्तवस्त्रमंगलसूत्रादिद नंअथाभ्युदयिकश्राद्धं ॐअपवित्रःपवित्रोवा देवताभ्यःपितृभ्यश्च ॐसत्यवसुसंज्ञकाविश्वेदेवाःॐभूर्भुवःस्वइदंवःपाद्यं१मातृपितामहीप्रपितामह्योनांदीमुख्यःॐभूर्भुवःस्वइदंवःपाद्यं संपद्यतांवृद्धिः२ॐपितृपितामहप्रपित.महानांदीमुखा ॐभूर्भुवः स्वइदंवःपाद्यंसंपद्यतांवृद्धिः ॐमातामह प्रमाता मह वृद्धप्रमातामहा नांदीमुखाॐ भूर्भुवःस्वइदंवःपाद्यंसंपद्यतांवृद्धिः४इदमासनंवःसंपद्यतांवृद्धिः५इदंगंधाद्यर्चनंवः संपद्यतांवृद्धिः४मंडलं१ २परिवेषण१२विधायपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेअमृतंजुहोमिस्वाहाइदं विष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरेविष्णोहव्यंरक्षनदीयं ॐसत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योयुग्म ब्राह्मणभोजनपर्याप्तमिदमन्नंसोपकरणंसदक्षिणंवःसंपद्यतांवृद्धिः४एवंस्थानचतुष्टयेद्वादशधादत्त्वा ॐअन्नहीनांक्रि याहीनंमंत्रहीनंविधिहीनंचयद्भवेत् तत्सर्वमच्छिद्रमस्तु इतिजप्त्वा सत्यवसुसंज्ञकाविश्वेदेवादत्तैतदन्नपानादिभिः प्रीयंतां१मातृपितामहीप्रपितामह्यो दत्तैतदन्नपानादिभिःप्रीयंतां ३ मातामहप्रमातामह वृद्धप्रमातामहा दत्तैतदन्न पाना दिभिःप्रीयंतां ४ महामहप्रमातामहवृद्धप्रमातामहादत्तैतदन्नपानादिभिःप्रीयंतां ततः गोत्रंनोवर्द्धतां दा तारोनोभिवर्द्धतांवेदाःसंततिरेवच श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्तु अन्नंचनोवहुभवेदतिथींश्चलभेमहि याचि तारश्चनःसंतुमाचयाचिष्मकंचन इतिसंप्रार्थ्यएताःसत्याशिषोवःसंतुइतिविप्राणांप्रतिवचनं ॐमद्येत्यादि महाशां तियागकर्मणःपूर्वांगत्वेनकृतस्य विश्वेषांदेवानांनांदीमुखश्राद्धस्यप्रतिष्ठार्थमिदंद्राक्षामलकफलमूलादिद्रव्यनिष्क्र यभूतंदक्षिणाद्रव्यं यथानामगोत्रायब्राह्मणायदातुमहमुत्सृजे एवंमातृपितामही प्रपितामहीनां पितृपितामह

प्रपितामहानां मातामह प्रमातामहवृद्धप्रमातामहानां नांदीमुखानां कृतैतदाभ्युदयिकश्राद्धस्यप्रतिष्ठार्थमिफल मूलवनस्पतिदैवतेदक्षिणाद्रव्यसहितेयथानामगोत्रायब्राह्मणायदातुमहमुत्सृजेइतिवृद्धिश्राद्धंविधाय ततोयदाआ चार्यद्वारामहाशांतियागादिकार्यं तदात्रैवपुनर्ऋत्विगादिवरणसहितमाचार्यवरणंकार्य्यंतत्रक्रम :पुष्पचंदनतांबूल फलवस्त्रदक्षिणाद्रव्यमादाय कुलशीलवेदविधिसंपन्नंब्राह्मणमाहूय प्राङ्मुखमुपदिष्टस्वयंबद्धांजलिःएतस्मिन्मत्क र्तृकेमहाशांतियागकर्मणित्वंमेगुरुर्भवभवानितितेनोक्ते ततोवरणसंभृतिमादाय ॐमद्यास्मिन्महाशांतियागकर्म णिमत्प्रतिनिधित्वेनसमग्रविधिंकारयितुममुकगोत्रममुकशर्माणंत्वामेभिः पुष्पचंदनतांबूलवस्त्राभरणकमंडलुदाक्षि णादिभिराचार्यत्वेनत्वामहंवृणे वृतोस्मीतिप्रतिवचने यथाविहितंकर्मकुरु करवाणीतिप्रतिवचने ततःप्रार्थनाआचा र्यस्तुयथास्वर्गे. मन्त्रमूर्तिर्भवान्नाथसंसारोच्छेदकारक देवपूजाविधानार्हांकुरुधर्म्यांगतिंचन इतिसंप्रार्थ्य ततःस्व स्तिवाचनपुण्याहवाचनऋद्धिवाचनशांतिपाठार्थं चाग्नेयनैर्ऋत्यवायव्येशानमध्यस्थकुंभेषुऋचवाचमाशुः शिशान यद्देवादेवहेडनरुद्रपाठादिमन्त्रैः कुंभाभिमंत्रणार्थमन्यान् ब्राह्मणान्वृणुयात् ततोवरणसंभृतिमादाय ॐमद्यास्मि न्महाशांतियागकर्मणिनानानामगोत्रान् ब्राह्मणान्स्वस्तिवाचनऋद्धिवाचनशांतिवाचनार्थमाग्नेयनैर्ऋत्यवायव्यै शानमध्यस्थकुंभेषुऋचंवाचमाशुःशिशानयद्देवादेवहेडनमृचवाचंप्रपद्येतत्र शांतिपाठं कारयितुयुष्मानहंवृणेवृताः स्मइतिप्रतिवचनेयथाविहितंकर्मकुरुतकरवामइतितैरुक्ते ततः स्वस्तिवाचनं ॐस्वस्तिनः इंद्रोवृद्धश्रवाः स्वस्ति नःपूषाविश्ववेदाः स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु १इत्यादिस्वस्तिवाचनेक्रियमाणेआचा र्यादिसहितोयजमानःसपत्नीक.ॐभद्रंकर्णेभिःशृणुयामदेवाः भद्रंपश्येमाक्षभिर्यजत्राःस्थिरैरंगैः तुष्टुवांसस्त नूभिर्व्यशेमदेवाहितंयदायुरितिमंत्रेणमंडपंप्रविशेत् ततोयजमानाज्ञयासऋत्विक्आचार्यः मंडपाकरणेवेदिंप्रविशेत्

तत्रवेदिसंस्कारंकुर्य्यात् तत्रादौसर्षपविकरणेनभूतानुत्सारयेत तत्रमंत्राः यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वतःस्था
नंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु १ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं सर्वेषामविरोधेनमहाशांतिंसमारभे
२ भूताःप्रेताःपिशाचाद्याह्यपक्रामंतुराक्षसाः स्थानादस्माद्व्रजंत्वन्यदिहशांतिंकरोम्यहं ३ ततोगोमूत्रंगोमयं
क्षीरंदधिः सर्पिःकुशोदकं समंत्रकंकुर्यात् तत्रमंत्राः तत्सवितुर्वरेण्यमित्यादिगायत्र्या गोमूत्रं गंधद्वारांदुराधर्षां
नित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं इतिगोमय आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यंभ
वावाजस्यसंगथे इति क्षीरं दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः सुरभिनोमुखाकरत्प्रणआयूंषितारि
षत् इतिदधि घृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतमस्य धाम अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभव
क्षिहव्यंइतिघृतं ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन महेरणाय चक्षसे योवः शिवतमोरसस्तस्यभा
जयतेहनः उशतीरिवमातरः तस्माअरंगमामवोयस्यक्षयायजिन्वथ आपोजनयथाचनः इतिकुशोदकं गृहीत्वा
गायत्र्यासर्वाण्येकीकृत्य प्रणवेनालोड्य पंचगव्येनपरिकल्पितां भूमिं प्रोक्षयेत् ततोवेदिंस्पृशेत् तत्रमंत्रः
ॐवेद्यांवेदिसमाप्यतेवर्हिषावर्हिरिंद्रियं यूपेनयूपआप्यतेप्रणीतोअग्निरग्निना इति संस्कारः अथाचार्यः
वेदिकायाद्वारचतुष्टये तोरणचतुष्टयपूजामारभेत् ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजंहोतारंरत्नधातम
मितिपूर्वतोरणंगत्वा प्राङ्मुखउपविश्य आचम्य वामतोरणमूले पुष्पाक्षतान्यादाय ॐभूर्भुवःस्वः मेरोइहा
गच्छ इति मेरुमावाह्यस्थापयित्वा मेरवेनमः इतिपाद्यासनगंधार्घपुष्पधूपनैवेद्यवस्त्रदक्षिणादिभिःसंपूज्य
ततस्तोरणदक्षमूले मंदरमावाह्य पूजयेत् मंदरायनमः तोरणवामाग्रे विष्णुमावाह्यपूजयेत् ॐविष्णवे
नमः तोरणोपरिमध्यभागे ॐशिवायनमः शिवमावाह्यपूजयेत् तोरणदक्षाग्रे ॐब्रह्मणेनमः ब्रह्माण

मावाह्यपूजयेत् तोरणाधःप्रदेशे ॐभूनायत्वानारातयेस्वराभिविख्येषइच्छंहंत्वाभ्याम्पृथिव्यामुर्वंतरिक्षेमन्वे मिपृथिव्यास्त्व।नाभौसादयामादि॑ा।घे उनस्थेगेह॒ंरिक्ष इत्यनेनपंचभूतानिइहागच्छतेहतिष्ठतेत्या।वाह्यप्रतिष्ठाप्य गंधादिभिरभ्यर्च्य सुभद्रं विकटवा चक्रांकितपंचभूतानि पूजयेत् द्वारमध्येअक्षतादिभिः कुमुदाक्षमावाह्यपूजयेत् इतिपूर्वद्वारपूजा १ ततोदक्षिणद्वारे पूर्वाभिमुखउपाविश्य ॐइषेत्वोर्जेत्वावायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मण आप्यायध्वमघ्न्याइंद्रायभागप्रजावतीरनमीवाअयक्ष्मामावस्तेनईशतमाघशꣳसोध्रुवा अस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि इतिमन्त्रेणदक्षिणद्वारतोरणंकृत्वा ततःपूर्ववत् क्रमेणमेरुं १ मंदरं २ विष्णुं ३ शिवं ४ ब्रह्माणं ५ तोरणस्यवाममूलेवामाग्रमध्यदक्षिणाग्राधःस्थानेषु पंचभूतपर्यंतान्पूजयेत् द्वारमध्ये पुंडरीकं वामनंच पूजयेत् ततः पश्चिमद्वारेॐअग्नआयाहि वीतये गृणानोहव्यदातये निहोतासत्सिबर्हिषिइतिमन्त्रेण पश्चिमद्वारतोरणं कृत्वा तोरणदक्षमूले मेरुं उत्तरमूले मंदरं दक्षाग्रेविष्णुं मध्येशिवम् उत्तराग्रे ब्रह्माणं अधः पंचभूतानि द्वारमध्ये शकुकर्णं सर्वनेत्रंचपूजयेत् ३ तत उत्तरद्वारे शन्नोदेवीरभिष्टये आपोभवंतुपीतये शंय्योरभिस्रवंतुनः इत्यनेनोत्तरद्वारतोरणंकृत्वा पश्चिमतोरणमूले मेरुं पूर्वमूले मंदरं पश्चिमाग्रे विष्णुं उपरिशिवं पूर्वाग्रेब्रह्माण अधः पंचभूतानि द्वारमध्येसुमुखं सुप्रतिष्ठंच पूजयेत् ततोयजमान आचार्योवा पश्चिमद्वारेप्रविश्य आसनेचोपाविश्य शुचिराचम्य महाशांतियागस्य प्रधानसंकल्पं कुर्यात् ॐतत्सत् अद्यास्मिन्वर्षे दुःस्वप्नदुर्निमित्तविद्युदुल्कानिपातकेतूदयनिर्घातसूर्याचंद्रमसोर्विवर्तांतर्गतकालिकदर्शनानिर्शीद्रधनुर्दशनभूकंपमूलगंडांतप्रभृतिदुष्टजन्मयमप्रसवयुग्मप्रसवविकृतप्रसवकाकोलूकादिवेश्म प्रवेशाकस्मिकध्वजच्छत्रवेश्मतुलाभगाश्वतरीगर्भसंभव शय्यासनगवाश्वादिष्वाग्निदर्शनभस्मितादिदर्शनादिसर्वोत्पात

जन्यसर्वारिष्टशांतिसहित आत्मनोजन्मराशिनामराशिजन्मलग्नवर्षलग्नादिषु जन्मस्थानचतुर्थाष्टमद्वादशस्थाने
षु गुरुमंदारादित्यशनिराह्वादिदुष्टग्रहादिजन्योत्पातभयपीडादिनिवृत्त्यनंतरनिजदेशदेहपरिवारादौधनधान्यसंप
त्त्यारोग्यादिसदभीष्टसिद्ध्यर्थं महाशांतियागमहंकरिष्ये केचित्तु आचार्यादीनांवरणमत्रैवेच्छंति तत्रआचार्यत्वेन
त्वामहं वृणइतिवृत्वा आचार्यस्तुयथास्वर्गेइत्यादि प्रार्थना ततोब्रह्मवरणं ॐब्रह्मत्वेनत्वामहंवृणे एवंवृत्वा यथा
चतुर्मुखोब्रह्मासर्वलोकपितामहः तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम इतिप्रार्थना यथाग्नेयनैर्ऋत्यवायव्यै
शानकोणस्थकलशेषुमध्यकलशेच ऋचंवाच आशुःशिशान ईशावास्ययद्देवादेवहेडनरुद्रपाठकर्तॄन् ब्राह्मणान्
पूर्वमेववृतान् प्रार्थयेत् ऋग्वेदः पद्मपत्राक्षोगायत्रः सोमदैवतः आत्रिगोत्रस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभव १
काचराक्षोयजुर्वेदस्त्रैष्टुभोरुद्रदैवतः भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वमेमखेभव २ सामवेदस्तुपिंगाक्षोजागतःशक्रदै
वतः कश्यपःसतुविप्रेंद्रऋत्विक्त्वंमेमखेभव ३ वृहन्नेत्रोथर्ववेदोनुष्टुभोरुद्रदैवतः वैतानगोत्रविप्रेंद्रऋत्विक्त्वंमेम
खेभव ४ ऋत्विजस्तुयथापूर्वंशक्रादीनांमखेभवन् यूयंतथामेभवितुमृत्विजोर्हथसोमपाः यूयंमेऋत्विजः स्वस्थाः
स्वस्थाःस्मइत्युक्ते पूर्वमाराध्यमंत्रांस्तुकर्मकुर्युर्द्विजातयइतिपूर्वमुक्तत्वात् तेच स्वस्वस्थाने स्थिता मंत्रानावर्तये
युः आग्नेयकोणस्थितोब्राह्मणः ऋचंवाचप्रपद्येमनोयजुः प्रपद्ये सामप्राणंप्रपद्येचक्षुः श्रोत्रंप्रपद्येवागोजः सौहजो
मयिप्राणापानौ १ यन्मेछिद्रंचक्षुषोहृदयस्यमनसोवातितृण्णंवृहस्पतिर्मेतद्दधातु शन्नोभवतिभुवनस्ययस्पतिः
२ गायत्रीच ३ इत्यादिमध्यायंवाजपेत् १ अथनैर्ऋत्ये आशुः शिशानोवृषभोनभीमो घनाघनःक्षोभणश्चर्षणीनां
संक्रंदनोनिमिषएकवीरःशतꣳसेनाऽअजयत्साकमिंद्रइतिमंत्रवासमग्रमध्यायंजपेत् अथवायव्ये यद्देवादेवहेडनंदे
वास्श्चकृमावयं अग्निर्मातस्तस्मादेनसोविश्वान्मुंचत्वंहसः१यदिदिवायदिनक्तमेनांसिचकृमावय वायुर्मातस्मा

देनसोविश्वान्मुंचत्वंहसः२यदिजाग्रद्यदिस्वप्नजोनाᳬंसिचमेमावयं सूर्योमातस्मादेनसोविश्वान्मुंचत्वंहसः३यद्ग्रा
मेयदरण्येयत्सभायां यदिंद्रियेणवर्ष्मणा यदेनश्चकृमावयंयदेकस्याधिधर्मणितस्यावयजनमासि४यदपाअघ्न्याइ
तिवरुणेतिशपामहेततोनोवरुणनोमुंचअवभृथनिचुंपणानिचेरुरसि निचुंपणःअवदेवैर्देवकृतमेनोयक्ष्यवमर्त्यैर्मर्त्यकृतं
पुरुराव्णोदेवरिषस्पाहि ३अथैशानेईशावास्यमिदᳬंसर्वंयत्किंचिजगत्यांजगत्तेनत्यक्तेनभुंजीथामागृधःकस्यस्विद्
धनंइतिमंत्रसमग्रमध्यायंवाजपेत्४अथमध्यकलशे ॐनमस्तेरुद्रमन्यवउतोतइषवेनमःबाहुभ्यामुततेनमःइतिमंत्रं
षोडशऋचोवासमग्रमध्यायंजपेत् अथात्रवेदिकायामपि गणपतिपूजनमादौकर्त्तव्यंतथा ॐगणानांत्वागणपतिᳬं
हवामहे प्रियाणांत्वाप्रियपतिᳬंहवामहे निधीनांत्वानिधिपतिᳬंहवामहे वसोममआहमजानिगर्भधमात्वमजासि
गर्भधम् नमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवो
नमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमः २ ॐभूर्भुवःस्वर्गणपतेइहागच्छइहतिष्ठेत्यावाह्यप्रतिष्ठाप्यॐगंगणप
तयेनमइति मंत्रेण पाद्यासनार्घ्यस्नानवस्त्रगंधपुष्पधूपदीपनैवेद्यतांबूलफलदक्षिणाभिःसंपूजयेत्ततःस्वस्तिवाचनं
पुण्याहवाचनंच कुर्यात् तदाह आश्वलायनः वैदिकेतांत्रिकेचादौततःपुण्याहवाचनं तच्चरूपनारायणीये इत्थंत्री
नधिकान्ब्राह्मणान्दक्षिणावासोन्नदानादिभिः परितोष्य पुण्याहंभवंतोब्रुवंतुइतिप्राङ्मुखः श्रावयेत् ॐपुण्याहं
पुण्याहं पुण्याहं ब्राह्मंपुण्यमहोयच्चसृष्ट्युत्पादनकारकंवेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवंतुनः ब्राह्मणाः पुण्याहं इति
त्रिर्ब्रूयुः ततोयजमानस्यस्वयंवा पुनंतुमादेवजनाः पुनंतुमनसाधियः पुनंतुविश्वाभूतानिजातवेदःपुनीहिमां भो
ब्राह्मणा अस्ययजमानस्यगृहे ऋद्धिंभवंतोब्रुवंतु सागरस्यचयाऋद्धिर्महालक्ष्म्यादिभिःकृता संपूर्णासुप्रभा
वाचताम्रृद्धिंसब्रुवंतुनः ऋध्यतां ऋध्यतांऋध्यतां इतित्रिर्ब्रूयुः मंत्रः सत्रस्यऋद्धिरस्यगन्मज्योतिरमृता अभूमदिवं

पृथिव्याअंतरिक्षमारुहामाविदामदेवान्स्वर्ज्योतिः क्षत्रियऋद्धिः ३ भोब्राह्मणाअस्ययजमानस्य गृहे स्वस्तिभवंतो
ब्रुवंतु स्वस्तियोअविनाशाख्यापुण्यकल्याणवृद्धिदा विनायकप्रियानित्यंतांस्वस्तिंसंब्रुवंतुनः ॐस्वस्तिस्वस्तिस्व
स्ति इतित्रिर्ब्रूयुःस्वस्तिनइंद्रोवृद्धश्रवाः स्वस्तिनःपूषाविश्ववेदाःस्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पति
र्दधातु ॥ १ ॥ पयः पृथिव्यांपयओषधीषु ॥ २ ॥ विष्णोरराटमसि ॥ ३ ॥ अग्निर्देवता ॥ ४ ॥ द्यौःशांतिरंत
रिक्षःशांतिः ॥ ५ ॥ आनोभद्राइतिदशर्चंसूक्तस्यरहूगणपुत्रोगौतमऋषिः विश्वेदेवादेवता त्रिपंचायाःसप्तमीज
गत्यः षष्ठीविराट्स्थानाशिष्टास्त्रिष्टुभःपाठेविनियोगः ॐआनोभद्राःक्रतवोयंतु विश्वतोदब्धासो अपरीतासउद्भि
दः देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ इतिदशर्चंसूक्तपाठः ततःकनिक्रदइतिदशर्चं-
शाकुनसूक्तपाठः तस्यायमाद्यमंत्रः ॐकनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावं सुमंगलश्चशकुनेभवासिमा-
त्वाकाचिदभिभाविश्व्यविदत् ॥ १ ॥ इत्यादि ततःस्वस्तिनोमिमीतामश्विनाभगः स्वस्तिदेव्यदितिरनर्वणः स्वस्तिपू
षाअसुरोदधातनः स्वस्तिद्यावापृथिवी सचेतनाम् ॥ १ ॥ इत्यादिपंचर्चंस्वस्त्ययनपाठः ततःॐहिरण्यवर्णांहरिणीं-
सुवर्णरजतस्रजं चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह इतिपंचदशर्चंश्रीसूक्तपाठः ॐस्वस्तिन इंद्रोवृद्धश्रवाः
स्वस्तिनः पूषाविश्ववेदाः स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु व्रतनियमतपः स्वाध्याय-
क्रतुदमदानविशिष्टानांसर्वेषां ब्राह्मणानां मनःसमाधीयतां समाहितमनसःस्मःप्रसीदंतुभवंतःप्रसन्नाःस्मयजमा-
नस्यगृहेपुत्रकलत्रमित्रगुरुस्वसृभागिनेयसंबंधिबांधवानांदीर्घमायुरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तुअविघ्नमस्तु
आरोग्यमस्तुशिवकर्मास्तुकर्मसमृद्धिरस्तु पुत्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसमृद्धिरस्तु अरिष्टनिरस
नमस्तु यत्पापंतत्प्रतिहतमस्तु यच्छ्रेयस्तदस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु उत्तरोत्तराःक्रियाःशुभाःशोभनाःप्र

वर्तंते तिथिकरणमुहूर्तनक्षत्रसंपदस्तु तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः तिथिकरणेमुहूर्तनक्षत्रेसग्रहे-सदैवतेप्रीयेतांअग्निपुरोगाविश्वेदेवाःप्रीयंतांइंद्रपुरोगामरुद्गणाः प्रीयंतांवासिष्ठपुरोगाऋषिगणाः प्रीयतां माहेश्वरीपुरोगाउमामातरःप्रीयंतां अरुंधतीपुरोगा एकपत्न्यःप्रीयंतां विष्णुपुरोगाःसर्वेदेवाःप्रीयतां ब्रह्मपुरोगाः सर्वेवेदाःप्रीयतां श्रीसरस्वत्यौप्रीयेतां श्रद्धामेधेप्रीयेतां भगवतीकात्यायनीप्रीयतां भगवतीमाहेश्वरीप्रीयतां भगवतीऋद्धिकरीप्रीयतां भगवतीवृद्धिकरीप्रीयता भगवंतौविघ्नविनायकौ प्रीयेतां सर्वाःकुलदेवताः प्रीयंतां हता ब्रह्मद्विषः हताः परिपंथिनः हताश्चविघ्नकर्तारःशत्रवःपराभवयांतु शाम्यंतुघोराणि शाम्यंतुपापानि शाम्यत्वीतयः शुभानिवर्द्धंतां शिवा आपः संतु शिवा अग्नयः संतु शिवा आहुतयः संतु शिवा वनस्पतयः संतु शिवा अतिथयःसंतु अहोरात्रेशिवेस्यातांआब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्योतिव्याधीमहारथोजायंतान्दोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिः पुरंधिर्योषाजिष्णुरथेष्ठाः सभेयायुवास्ययजमानस्यवीरोजायतान्निकामे निकामेनः पर्जन्योवर्षतु फलवत्योनओषधयः पच्यंतां योगक्षेमोनः कल्पतां शुक्रांगारकबुधबृहस्पतिशनिराहुकेतुभौमसहिता आदित्यपुरोगाः सर्वेग्रहाःप्रीयंतां भगवान्नारायणः प्रीयतांभगवान्पर्जन्यः प्रीयतां भगवान्स्वामीमहासेनःप्रीयतां पुण्याहकालंवाचयिष्येवाच्यतां पुण्याहंभवंतोब्रुवंतुपुण्याह ॥ ३ ॥ स्वस्तिभवंतोब्रुवतु आयुष्मतेस्वस्ति ॥ ३ ॥ ऋचः सामानियजूंषिसाहिश्रीरमतांसतां श्रीरस्त्वितिभवंतोब्रुवंतु अस्तुश्रीः पुण्याहवाचनसमृद्धिरस्तु भगवान्प्रजापतिःप्रीयतां इतिपुण्याहवाचनं आनोभद्रा स्वस्तिनोमिमीता कनिक्रंद श्रीसूक्त इत्येषांचतुर्णांसूक्तानांचात्रपाठःकार्यः प्राक्प्रमादेनालिखिताः ततोयजमान आचार्योवा अस्ययागस्यानिष्पत्त्यैभवंतोभ्यार्थितामया सुप्रसन्नैस्तुकर्तव्यशांतिकंविधिपूर्वकं गणपतिपूजा

मातृकापूजा वसोर्द्धारात्मिकासप्तमातृपूजा अत्रंपद्धतौप्रागेवालिखिता अथग्रहस्थापनं वेदिकाया मीशानको
ऐ ग्रहस्थापनार्थंमंडलंविरच्य ग्रहस्थापनंकुर्यात् ऊँप्रणवस्यब्रह्माऋषिः देवीगायत्रीछंदः परमात्माअग्निर्देवता
व्याहृतीनांक्रमेणजमदग्निभरद्वाजभृगवऋषयः अग्निवायुसूर्यादेवताः सूर्याद्यावाहनेविनियोगः ऊँभूर्भुवःस्वःक
लिंगदेशोद्भवकश्यपगोत्र ईश्वराधिदेवताग्निप्रत्यधिदेवतासहित वायुविनायकदुर्गाकाशशिवपंचदेवतामध्ये वायु
देवतासहितसूर्य इहागच्छ इहतिष्ठ उदयंतमहातेजंतेजसाचाभयंकरं सर्वदुःखहरंदेवंसूर्यमावाहयाम्यहं श्रीसू
र्यायईश्वराधिदेवताग्न्यधिदेवतासहिताय नमः इमामासनपाद्यार्घ्याचमनस्नानगंधपुष्पधूपदीपनैवेद्यतांबूलवा
सोदक्षिणात्मकां सर्वोपचारपूजांसमर्पयामिनमः प्रार्थना भोभोसूर्यग्रहाध्यक्षकालिंगविषयोद्भवः रक्तःकाश्यपगो
त्रस्त्वंद्विभुजःपद्मलोचनः सप्ताश्ववाहनगच्छपद्ममध्येवरप्रद ॥ १ ॥ उदयस्त्वंमहाभानोतेजसाचाभयंकर स
हस्ररश्मिदीप्तश्चह्यादित्यःप्रीयतांमम ॥ १ ॥ अथचंद्रपूजा ऊँभूर्भुवःस्वः यमुनातीरोद्भव आत्रेयसुगोत्र उमा
धिदेवताअप्प्रत्यधिदेवतासहित सोमइहागच्छ इहतिष्ठ द्विजराजसमुत्पन्नस्तारागणसमन्वितः ओषधीनांचयो
राजासोममावाहयाम्यहं ऊँचंद्रमसे उमाधिदेवताजलप्रत्यधिदेवतासहिताय नमः आसनंपाद्यादिदक्षिणांतंसं
पूज्य प्रार्थयेत् अहोचंद्रजगत्प्राणयमुनाविषयोद्भव सुश्वेतात्रेयगोत्रेयगदाभयवरप्रद द्विजराजोमहापुण्यस्ता
रापतिर्विशेषतः ओषधीनांमहाराजःससोमःप्रीयतांमम ॥ २ ॥ अथभौमपूजा ऊँभूर्भुवःस्वः अवंतीसमुद्भवभार
द्वाजसगोत्र स्कंदाधिदेवताभूमिप्रत्यधिदेवतासहित भौमइहागच्छ इहतिष्ठ भूमिपुत्रोमहाकायस्तेजस्वीचाभ
यंकरः ऋषिभिःस्तूयमानस्तुभौममावाहयाम्यहं ऊँभौमायाधिदेवताप्रत्यधिदेवतासहितायनमः आसनपाद्या
दिदक्षिणांतांसर्वोपचारपूजांसमर्पयामि प्रार्थना उज्जयिन्यांसमुत्पन्नभोभोभौमचतुर्भुज भारद्वाजकुलेजातः शूलश

क्तिगदाधरः वरदोमेषमारूढःस्कंदप्रियतडित्प्रभः स्योनापृथिवीतिमंत्रेणदलेयाम्येप्रतिष्ठितः येनाजिताजगत्कां तिभूमिपुत्रेणशाश्वती शत्रवश्चहतायेन भौमेनमहतात्मना सप्रीतयेमेभौमोद्यतुष्टोभूयाद्वरप्रदः ॥ ३ ॥ अथबुध पूजा ॐभूर्भुवःस्वः मगधदेशोद्भवआत्रेयसगोत्रविष्णुनारायणाधिदेवताप्रत्यधिदेवतासहितबुधइहागच्छ इहतिष्ठ मेरुमूर्ध्निसदातिष्ठन्देवतानांपुरोहितः ब्राह्मणानांहितार्थायगुरुमावाहयाम्यहं ॐबृहस्पतयेब्रह्मेंद्राधिदेवताप्र त्यधिदेवतासहितायनमः आसनपाद्यादिदक्षिणांतपूजांसमर्पयामिनमः दंडाक्षसूत्रवरदकमंडलुधरप्रभो महो इंद्रेतिसंपूज्योवीधिवच्चेतरेदले मेरुमूर्ध्निसमाक्रांतोदेवराजपुरोहितः ज्ञातायःसर्वशास्त्राणांसगुरुः प्रीयतांमम ५ अथशुक्रपूजा ॐभुर्भुवः स्वः भोजकटदेशोद्भव इंद्राधिदेवतेंद्राणीप्रत्यधिदेवतासहितशुक्रइहागच्छ इहतिष्ठप्रादी तेजाः प्रभाशूरोदानवानांपुरोहितः तेजोहासर्वशत्रूणांशुक्रमावाहयाम्यहं ॐशुक्रायेंद्रेंद्राण्यधिदेवताप्रत्यधिदेव तासहितायनमः परिघाक्षावलीहस्तकमंडलुधरप्रभो शुक्रवत्पूर्वपत्रेतुशुक्रोज्योतिःस्वरूपकः सोमतुल्याप्रभा यस्यचासुराणांगुरुस्तथा जेतायः सर्वशत्रूणांसकाव्यःप्रीयतांमम ॥ ६ ॥ अथशनिपूजा ॐभूर्भुवःस्वः सौराष्ट्रदे देशोद्भवकाश्यपसुगोत्रयमाधिदेवताप्रजापत्यधिदेवतादुर्गादेवतासहित शने इहागच्छ इहतिष्ठ कृष्णाक्षःकृष्णा वर्णश्चकृष्णगंधानुलेपनः शनैश्चरनृनिरीक्षश्चशनिमावाहयाम्यहं ॐशनैश्चरायनमः आसनादिदक्षिणांतपूजा प्रार्थना कृष्णवर्णःकृशांगश्चनीलजीमूतसन्निभः शनैश्चरःसूर्यपुत्रःसशौरिःप्रीयतांमम त्रिशूलिन्समगच्छवरदो गृध्रवाहनः प्रजापतेतिसंपूज्योयमवद्वारुणेदले १ इतिशनिपूजा ७ अथराहुपूजा ॐभूर्भुवःस्वःस्वराढिकापुरो द्भवपैठीनसीगोत्रकालाधिदेवतासर्पप्रत्यधिदेवतासहितविनायकाकाशदेवतासहितराहोइहागच्छ रक्तवर्णमहाक्रूरं रक्ताजिनधरंतथा सिंहिकागर्भसंभूतंराहुमावाहयाम्यहं आसनादिदक्षिणांतंपूजनं प्रार्थना रक्षार्थं धूम्रवर्णाभो

विजितारिर्महाबलः अयाहुश्चांतरिक्षस्थः सराहुःप्रीयतांमम २ अथकेतुपूजा ओंभूर्भुवः स्वः अंतर्वेदीसमुद्भवजैमिनिसुगोत्र चित्रगुप्ताधिदेवताब्रह्मप्रत्याधिदेवता अश्विनैदेवतासहित केतोइहागच्छ क्रूरान्वैगमिनोइष्टाशुभाशुभफलप्रदान् एकाधिकसहस्रतुर्केतूनावाहयाम्यहं आसनादिदक्षिणांतपूजा प्रार्थना अग्निपुत्रोमहातेजाःकेतुः सर्वग्रहांतकः क्षोभयेद्यः प्रजाः सर्वाः सकेतुः प्रीयतांमम अथइंद्रादिदिक्पालपूजन ओं भूर्भुवः स्वःइंद्रइहागच्छ अग्नेइहागच्छ यमइहागच्छ निर्ऋतेइहागच्छ वरुणइहागच्छ वायोइहागच्छ कुबेरइहागच्छईश्वरइहागच्छ इहतिष्ठेत्यावाह्य पूजयेत् एषामंत्राणिबलिदानपूजायामग्रेलिख्यंते ततोग्निस्थापनंत्रिभिर्दर्भैःकुंडंस्थंडिलवापरिसमूह्यगोमयेनोदकेनोपलिप्य स्रुवमूलेनत्रिरुल्लिख्यअनामिकांगुष्ठाभ्यांरेखाभ्यः पांशुमुद्धृत्य तत्राग्निं समाधायअग्निस्थापनमंत्रः अग्निदूतमित्यस्यमेधातिथिर्ऋषिः गायत्री छंदोग्निर्देवता अग्निस्थापनेविनियोगः अग्निंदूतंवृणीमहे होतारंविश्ववेदसम्अस्ययज्ञस्यसुक्रतु अत्रापरोमंत्रश्चअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवेदेवानासादयादिह अथाग्नेरावाहनंआयाहिदेवपुरुषंमहांतंसुरासुरैर्ब्रह्महरीश्वराद्यैः ब्रह्मादयोयस्यमुखेवसंतिप्रविष्टकुंडसुरलोकनाथअथध्यानंप्राङ्मुखोवसतेवन्हिःप्राङ्मुखस्याद्द्विजस्यच प्राक्प्रणीताश्चयेमंत्रास्तेश्चप्रत्यङ्मुखोभवेत् हृदयैकाद्विवक्त्रकंद्विनासिकचषडाक्षिकंत्रिमेखलंत्रिपादंचसप्तजिह्वाभिरन्वितंमेषारूढंचतुःशृंगंजटामुकुटमंडितदक्षिणेतुचतुर्हस्तंवामभागेत्रिहस्तकंशक्तिरग्निस्तथाचैवस्रुक्स्रुवंदक्षिणेकरे तोमरंव्यजनंचैवघृतपात्रंचवामतः तवरूपमिदंवक्ष्येध्यानंसर्वार्थसाधक ततअग्निपूजा अग्नयेस्वाहासहितायपाद्यादिनमःततोब्रह्मस्थापन हिरण्यगर्भइतिमंत्रस्यब्रह्माऋषिःगायत्रीछंदः ब्रह्मादेवताब्रह्मस्थापनेविनियोगः ओंहिरण्यगर्भः समवर्तताग्रेभूतस्यजातः पतिरेकआसीत्सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम इत्येवब्रह्माणमासनोपरिनिधाय आसनादिदक्षिणांतंसंपूज्य ततोब्रह्मणोवरण

ॐतत्सत्अद्यास्मिन्वर्षेजनिष्यमाणदिव्यांतरिक्षभौमोत्पातवर्गदुःस्वप्नदुर्निमित्तादिसकलग्रहवैगुण्यकृतसर्वारिष्ट
निवृत्तिपूर्वकस्वदेशदेहकुटुंबपरिवारवर्गादौधनधान्यसंपत्त्यारोग्यादिसदभीष्टसिद्ध्यर्थंकर्तव्येस्मिन्महाशांति याग
होमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकप्रवरममुकवेदशाखाध्यायिनममुकशर्माणमेभिःपुष्पचंद
नतांबूलोपवीतपवित्रवासोदक्षिणादिभिरभ्यर्च्यब्रह्मत्त्वेनत्वामहंवृणे वृतोस्मीतिप्रतिवचनं यथाविहितंकर्मकुरुक
रवाणीतिब्राह्मणोवदेत् अथकलशस्थापनम् तेचषट्कलशाःएकोत्तरशांतिकलशाः १ एकोवह्निकोणे २ एको
नैरृत्ये ३ एकोवायव्ये ४ एकऐशाने ५ एकश्चमध्ये ६ तत्रऔषधीपंचरत्नानिरोचनं चदनंसिद्धार्थकान्श
मीदूर्वा कुशान्यवव्रीहिअपामार्गफलवतीप्रियंगुन्यग्रोधोदुंबरप्लक्ष अश्वत्थपल्लवान् सकषायान् कपित्थप्रियं
गुचूतपल्लवान् हस्तिदंतगजमदं सप्तमृत्तिकाश्च कोणचतुष्टयकुंभेषुनिक्षिपेत् मध्यकलशेमंत्रवत्पंचगव्यंविशेष
तोनिक्षिपेत् अथैतेषांस्थापनक्रमः : ॐमहीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतांपिपृतान्नोभरीमभिः इतिभूमिंस्पृशेत्
धान्यमसिधिनुहिदेवान् प्राणायत्वोदानायत्वाव्यानायत्वा दीर्घामनु प्रसितिं मायुषेधां देवोवःसविताहिरण्यपा
णिःप्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनांपयोसि इतिसप्तधान्यप्रक्षेपः तस्योपरिकलशंस्थापयेत् आजि
घ्रकलशंमह्यात्वाविशंत्विंदवः पुनरूर्जानिवर्तस्व सानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः इतिकल
शसंस्थाप्य कलशोत्पत्तिंपठेत् उत्तरेहिमवत्पृष्ठेक्षीरोदोनामसागरः उत्पन्नःकलशस्तत्रसर्वतीर्थसमन्वितः कलं
कलोहिदेवानांदानवानांतथैवच कलाभिः सकलादेवाःसौम्यमांगल्यकर्माणि निर्मितोयंतदातत्रकलशस्तेनउच्यते
धारितोविश्वरूपेणकलशःकामरूपिणा कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः मूलेतस्यस्थितोब्रह्मामध्येमातृग
णाःस्मृताःकुक्षौतुसागराःसप्तसप्तद्वीपावसुधरा अर्जुनीगोमतीचैवचंद्रभागासरस्वती कावेरीकृष्णवेणीचगंगाचैव

महानदी सिप्रावेत्रवतीपूर्णाचमेण्वतीचदेविका तापीगोदावरीचैवनर्मदाचमहानदी पराशरीपयोष्णीचसरयूर्गेड
कीतथा ज्वालाक्षिप्रामहातीर्थेशोणमामरकंटकं केदारंचप्रयागंचयमुनावाराणसीतथा विंध्यपादेषुतीर्थानि
श्रीपादेयानिसंतिवै प्रभासंपुष्करंचैवगंगासागरसंगमं पृथिव्यांयानितीर्थानिपातालेसंस्थितानिच तानिसर्वा
णितीर्थानिकलशेनिवसंतिवै सहिरण्यं सवस्त्रंच पुष्पमालासमन्वितं ऋग्वेदोथयजुर्वेदः सामवेदस्तथैवच
अथर्ववेदश्चतथाकलशेसुप्रतिष्ठिताः ईशानकोणेसंस्थाप्यरुद्रकुंभंसुशोभनं चूताश्वत्थवटप्लक्षन्यग्रोदुंबरपल्लवान्
पंचपल्लवसंयुक्तंदधिचंदनचर्चितं तंडुलोपरिसंस्थाप्यसर्वतोधूपदीपनं तथैवनारिकेलंचकलशोपरिविन्यसेत्
आजिघ्रेकतिमंत्रेणकलशेतान्प्रतिष्ठयेत् इतिकलशोत्पत्तिप्रभावंचस्मृत्वा ओंवरुणस्योत्तंभनमसिवरुणस्यस्कं
भसर्जनीस्थो वरुणस्यऋतसदन्यसि वरुणस्यऋतसदनमसिवरुणस्यऋतसदनमासीद इति जलेनापूर्य
पंचपल्लवमंत्रः अश्वत्थेवोनिषदनं पर्णेवोवसतिःकृता गोभाजइत्किलासथयत्सनवथपूरुषं अथदूर्वाप्रक्षेपः कांडा
त्कांडात्प्ररोहंतीपरुषःपरुषस्परि एवानोदूर्वेप्रतनुसहस्रेणशतेनच अथपूगीफलमंत्रःयाःफलिनीर्याअफलाअपुष्पा
याश्चपुष्पिणीःबृहस्पतिप्रसूतास्तानोमुंचत्वंहसः अथपंचरत्नमंत्रः कनकं १ कुलिशं २ नीलं ३ पद्मरागंच ४ मौ
क्तिकं प्रोक्तानिपंचरत्नानिनारदेनमहर्षिणा ओंपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीतदधद्रत्नानिदाशुषेअथहिरण्य
मंत्रः हिरण्यगर्भःसमवर्त्तताग्रे भूतस्यजातः पतिरेकआसीत् सदाधारःपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम
अथगंधद्रव्यमंत्रःगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् अथसर्वौषधिमंत्रः
याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा मनैनुबभ्रूणांसहस्रंशतंधामानिसप्तच अथसप्तमृत्तिकामंत्रःअश्वस्थानाद्गज
स्थानाद्वल्मीकात्संगमाद्ध्रदात् राजद्वाराद्गोकुलाच्चमृदमानीयानिक्षिपेत् स्योनापृथिवीनोभवानृक्षरानिवेशनीय

च्छानःशर्म्मसप्रथाःअथकुशपवित्रमंत्रःपवित्रेस्थोवैष्णव्यौसंवितुर्वः प्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मि
भिःतस्यतेपवित्रपतेपवित्रपूतस्ययत्काम.पुनेतच्छकेयं कलशोपरि तंडुलपूर्णपात्रं पूर्णादर्विपरापतसुपूर्णापुनरापतव
स्नेवविक्रीणावहा इपमूर्जंॅ शतक्रतो कलशोपरिश्रीफलंनिधाय श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणि
रूपमाश्विनौव्यात्त इष्णंनिषाणामुम्मइषाणसर्वलोकमइषाण ॐमनोजूतिर्जुपतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनो
त्वरिष्टंयज्ञंॅसमिमंदधातुविश्वेदेवासइहमादयतामोंप्रतिष्ठॐभूर्भुवःस्वः गणेशवरुणइहागच्छ इहतिष्ठ गणानांत्वा
गणपतिंॅहवामहे इतिगणपतिमावाह्य ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोव
रुणेहबोध्युरुशंॅसमानआयुः प्रमोषी इतिषोडशोपचारैः संपूज्य कलशेषुगंगाद्यावाहनं सर्वेसमुद्राः सरि
तस्तीर्थानिजलदानदा.आयांतुयजमानस्यदुरितक्षयकारकाः ततः कलशानामाभिमंत्रणकलशस्यमुखेविष्णुरित्या
दिपूर्वोक्तामंत्राः कलशंतुसमाश्रिता इत्यंतंपठनीयाः ततः पुनरेवंप्रार्थयेत् देवदानवसंवादेमथ्यमानेमहोदधौ
उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वय त्वयिसर्वाणितीर्थानिदेवाःसर्वेत्वयिस्थिता.त्वयितिष्ठतिभूतानित्वयिप्राणाः
प्रतिष्ठिताः शिवःस्वयत्वमेवासिविष्णुस्त्वंचप्रजापतिः आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः त्वयितिष्ठतिसर्वे
पियतः कामफलप्रदः त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा इतिकलशानांप्रार्थ
नांतंसर्वंसर्वैर्ब्राह्मणैराग्निकोणादिवेदिकामध्यस्थैश्चकार्यं कलशानामुपरिसूक्तदेवानांमूर्त्तिस्थापनंपूजनचकार्यंयत्क्र
चंवाचंप्रपद्येइतिपठित्वावह्निकोणकुंभाभिमंत्रणं १ आशुःशिशानइतिनैर्ऋत्यकुंभाभिमंत्रण २ यद्देवादेवहेडन
वायव्यकुंभाभिमंत्रणं ३ ईशावास्यमितीशानकुंभाभिमंत्रण ४ ॐनमस्तेरुद्रमन्यवइति मध्यकुंभाभिमंत्रणं का
र्य्यं ततःसर्वेषांकलशानांगंधपुष्पाक्षतैर्घृतपाचितनैवेद्यैः नारिकेलादिफलैः वस्त्रैर्दीपकैः पुष्पमालादिभिः पृथक्

पृथक् पूजनंकार्य्यं कुंभपूजानंतरं स्वस्त्ययनपाठ सर्वैरेवकार्य्यः अथाचार्य्य कुशंडिकाक्रमकुर्य्यात् ब्रह्मवरणं पूर्वं
नकृतंचेदत्रकार्य्यं तत्रादौ यजमानोयष्टव्यदेवपूजानतरं होमद्रव्यत्यागंकुर्यात्‌ ॐमद्यास्मिन्महाशांतिहोमकर्म
णिमयासंपादितमिदंहोमद्रव्यंयष्टव्यसमस्तदेवताहोमार्थंमयात्यक्तमित्यभिलपेत् ततआचार्य्य। अग्नेर्दक्षिणतः
शुद्धमासनंदत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अत्रत्वंमेब्रह्माभवेति कल्पि
तासने उपवेशयेत् तत प्रणीतापात्रंपुरतःकृत्वाजलेनापूर्य्यकुशैराच्छाद्यब्रह्मणोमुखमवलोक्य अग्नेरुत्तरत कुशो
परिनिदध्यात् ततः परिस्तरणं वर्हिपश्चतुर्थभागमादाय आग्नेयादीशानांतंब्रह्मणोऽग्निपर्यंतनैर्ऋत्याद्वायव्यांतं
अग्नित प्रणीतापर्यंतंकुशानांपरिस्तरणं ततोग्नेरुत्तरत पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं सा
ग्रमनंतरगर्भंकुशपत्रद्वयंप्रोक्षणीपात्रं आज्यस्थालीस्रुवसंमार्जनार्थंकुशत्रयं उपयमनार्थवेणीरूपकुशत्रयं प्रादे
शमात्रास्तिस्र समिध स्रुवआज्यं षट्पंचाशदुत्तरमुष्टिशतद्वयावच्छिन्नामतंडुलपूर्णं पूर्णपात्रंपवित्रच्छेदनकुशानांपू
र्वपूर्वदिशिक्रमेणासादनीयानि तस्यामेवदिशि असाधारणवस्तून्युपकल्पनीयानितत पवित्रच्छेदनकुशैः पवित्र
करणकुशद्वयंछित्त्वा प्रादेशमितपवित्रद्वयकरणं सपवित्रहस्तेनप्रणीतोदकात्रिःप्रोक्षणीपात्रेनिधाय अनामिकांगु
ष्ठाभ्यां पवित्रेगृहीत्वात्रिरुत्पवनं प्रोक्षणीपात्रस्यसव्यहस्तकरणंतथैवप्रणीतोदकेनत्रिःप्रोक्षणीप्रोक्षणंप्रोक्षणीज
लेनयथासादितवस्तुसेचनं अग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिधाय आज्यस्थाल्यामाज्यनिर्वापः ततोधिश्रयणं
ॐकयानश्चित्रआभुवदूतीसदावृधःसखाकयाशचिष्ठयावृताततोज्वलत्तृणादिनाहविर्वेष्टयित्वाअग्निप्रदक्षिणीकृत्य
अग्नौतत्प्रक्षिपेत् इत्याज्यसंस्कारंकृत्वा तत स्रुवप्रतपनंकृत्वा संमार्जनकुशानामग्रैः स्रुवस्यांतरतोग्रांतंमूलैर्बाह्य
तो मूलं तं मध्येनमध्यं पुन स्रुवप्रतपनंकृत्वा प्रणीतोदकेनाभ्युक्ष्यस्रुवंदक्षिणतोनिदध्यात् ततआज्यस्याग्नेरव

तारणं ततःपुरुपसूक्तेनपायसश्रयणंकुर्य्यात् ॐसहस्रशीर्षापुरुपः सहस्राक्षःसहस्रपात् सभूमिं सर्वतःस्पृत्वा स्यतिष्ठद्दशांगुलम् १६ इतिषोडशऋचांपाठः पायसंभुविस्थापयित्वा ततःपायसेआज्येचप्रोक्षणीवदुत्पवनंसत्य पद्रव्येतान्निरसनं पुनःप्रोक्षण्युत्युत्पवनं ततउपयमनकुशान्वामहस्तेकृत्वा उत्तिष्ठन् प्रजापतिं मनसाध्यात्वातूष्णीं घृताक्ताः समिधस्तिस्रःक्षिपेत् ततउपविश्यसपवित्रप्रोक्षण्युदकेनप्रदक्षिणक्रमेणाग्निपर्य्युक्षणंकृत्वा ॐसूर्यस्यापं एश्नयाःपयोसितस्यतेक्षीयमानस्यापिएवमाननिर्वपामि पंचानांत्वादेवाभ्यागृह्णामि गृहीत्वायजूनांभृगूणांसोम रश्मिरिति ऊर्जत्यग्नावधिश्रयतिततउत्तार्य्यदर्भपवित्रेण उत्तानद्वयस्यांगुष्ठनामिकाभ्यांगृहीतेन ॐअग्नेजिह्वासि पूदेवेभ्योधाम्नेधाम्नेत्वायजुपेयज्वनंइतिसकृन्मंत्रेणाद्विस्तूष्णींप्रणीतापात्रपवित्रेनिधायपातितदक्षिणजानुः कुशाग्नेब्रह्मणान्वारब्धःसमिद्धतमेग्नौ स्रुवेणाज्याहुतीर्जुहुयात् तत्राघारादारभ्यद्वादशाहुतिषुतत्तदाहुत्यनंतरंहुतशेषघृतस्य प्रोक्षणीपात्रेनिक्षेपःकार्य्यः अथहोमः प्रथमंकेवलाज्येन प्रजापतयेस्वाहा इदंप्रजापतये इतिमनसा १ इंद्रायस्वाहा इदमिंद्राय इत्याघारौ २ ॐअग्नयेस्वाहा इदमग्नये ३ सोमायस्वाहा इदंसोमाय ४ इत्याज्यभागौ ॐभूःस्वाहा इदंभूः ॐभुवःस्वाहा इदंभुवः ६ ॐस्वःस्वाहा इदंस्वः ७ एतामहाव्याहृतयः ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषांसि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्निवरुणाभ्यां ८ ॐसत्वंनोअग्नेवमोभवोतीनेदिष्ठो अस्याउषसोव्युष्टौ अवयक्ष्वनोवरुणंरराणोवीहिमृडीकंसुहवोनएधिस्वाहा इदमग्निवरुणाभ्यां९ ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यामित्वमयाअसि अयानोयज्ञंवहास्ययानोधेहिभेषजंस्वाहा इदमग्नये १०ॐयेतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितत्तामहांतः तेभिर्नो अद्यसवितोतविष्णुर्विश्वेमुंचतुमरुतःस्वर्काःस्वाहा इदंसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः१२ ॐउदुत्तमं

वरुणपाशमस्मदवाधमंविमध्यमंश्रथायअथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदंवरुणाय १२
अथप्रोक्षणमंत्र-ॐआप.शिवा.शिवतमाः शांताःशांततमास्तास्तेकृण्वंतुभेषजम् इत्याघाराज्यभागौप्रायश्चित्ताहुती
र्वारुणसंज्ञकाश्चहुत्वा ततः पुरुषसूक्तसिद्धेनचरुणासप्ततेअग्नइतिमंत्रेणसप्तपालाशीः समिधोजुहुयात् ॐसप्तते
अग्नेइतिमंत्रस्याग्निऋषिः जगतीत्रिष्टुप्छंदःसप्तवान् अग्निर्देवता होमेविनियोगः ॐसप्तते अग्नेसमिधः सप्त
जिव्हाः सप्तऋषयः सप्तधामप्रियाणिसप्तहोतासप्तधात्वायजंति सप्तयोनीरापृणस्वघृतेनस्वाहा इतिसप्ताहु
तीर्हुत्वा ७ जातवेदसेइतिमंत्रेणच सप्ताहुतीर्जुहुयात् जातवेदसे इतिदुर्गामंत्रस्य कश्यपऋषिः त्रिष्टुप्छंदोऽग्निर्दु
र्गादेवताहोमेविनियोगः ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः सनःपर्षदतिदुर्गाणिविश्वानावेवासिं.
धुंदुरितात्यग्निःस्वाहा इतिसप्ताहुतीःपालाशीःसमिधोहुत्वा ७ पुनरपिजातवेदसे इतिमंत्रेण अष्टादशप्रमाणाः
शमीसमिधोजुहुयात् १८ स्थालीपाकचरुणैवायंसर्वोहोमःकार्य्यः ततस्तरत्समंदीसूक्तेनचतस्रआहुतीर्जुहुयात्
ॐतरत्समंदीधावतिधारासुतस्यांधसः तरत्समंदीधावति उस्रोदेववसूनामर्त्यस्यदेव्यवसः स्वाहा १ तरत्सम
दीधावतिसुतस्यांधसः तरत्समंदीधावतिध्वस्रयोः पुरुषन्त्योरासहस्राणिदद्महेस्वाहा २ तरत्समंदीधावतिधारा
सुतस्यांधसः तरत्समंदीधावति आययोस्त्रिंशततनासहस्राणिचदद्महेस्वाहा ३ तरत्समंदीधावतिधारासुतस्यां
धसः तरत्समंदीधावतित्रिविष्टंदेवसवितर्वर्षिष्ठैःसौमधामभिः अग्नेदक्ष्यैः पुनीहिनःस्वाहा ४ इत्यपिशमीसमित्पौ
रुषसूक्तचरुणाहोमः यमायेतिचसप्तान्याःस्वाहांताजुहुयात्ततः ॐयमायसोमइतिमंत्रस्य यमऋषिःयमोदेवता.
त्रिष्टुप्छंदः होमेविनियोगः ॐयमायसोमंस्वधतयमायजुहुताहविः यमेहयज्ञागच्छत्यग्निदूतोअरंकृतःस्वाहा
७ इदंविष्णुस्ततःसप्तजुहुयादाहुतीर्नृप इतिसप्ताहुतीर्जुहुयात् ॐइदंविष्णुरितिसोमऋषिर्गायत्रीछंदः विष्णु

दैवताहोमेविनियोगः ॐइदंविष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्यपाꣳसुरेस्वाहा ८ नक्षत्रेभ्यस्त
तःस्वाहा सप्तविंशतिराहुतीः २७ जुहुयात् ॐकृत्तिकाभ्यःस्वाहा १ रोहिण्यैस्वाहा २ मृगशि
रसेस्वाहा ३ आर्द्रायैस्वाहा ४ पुनर्वसूभ्यांस्वाहा ५ तिष्यायस्वाहा ६ अश्लेषायस्वाहा ७ मघाभ्यःस्वा
हा ८ पूर्वाफाल्गुनीभ्यांस्वाहा ९ उत्तराफाल्गुनीभ्यांनमः १० हस्तायस्वाहा ११ चित्रायैस्वाहा १२ स्वा
त्यैस्वाहा १३ विशाखाभ्यांस्वाहा १४ अनुराधायैस्वाहा १५ ज्येष्ठायैस्वाहा १६ मूलायस्वाहा १७ पू
र्वापाढाभ्यःस्वाहा १८ उत्तरापाढाभ्यःस्वाहा १९ श्रवणायस्वाहा २० धनिष्ठाभ्यःस्वाहा २१ शतभिषस्वा
हा २२ पूर्वाभाद्रपदाभ्यःस्वाहा २३ उत्तराभाद्रपदाभ्यंःस्वाहा २४ रेवत्यैस्वाहा २५ अश्विनीभ्यःस्वाहा
२६ भरणीभ्यःस्वाहा २७ यत्कर्मणाहुतं तत्कर्मणास्वाहा ॐअग्नयेस्विष्टकृतेस्वाहा ग्रहहोमस्ततः कार्यस्ति
लैराज्यपरिप्लुतैः अथग्रहहोमः तेषांसमिधः अर्कःपलाशः खदिरश्चापामार्गश्चपिप्पलः। उदुंबरः शमीदूर्वाकुशा
श्वसमिधःक्रमात् १ आर्कीनाशयतेव्याधिंपालाशीसर्वकामदा खादिरीचार्थलाभायआपामार्गीवहुप्रजा आश्व
त्थीचशुभंदद्यात्तद्यादुदंवरी शमीशमयतेपापंदूर्वामंगलवर्द्धिनी कुशाश्वपितृतृप्त्यर्थमेवताःसमिधनव ३ अ
र्कसमिधःआकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यंच हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्स्वा
हा पालाशीसमिधः इमन्देवाअसपत्नꣳसुवध्वंमहते क्षत्रायमहते ज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रियायइ
ममुष्यपुत्रमस्यै विशऽएषवोमीराजासोमोस्माकं ब्राह्मणानाꣳराजास्वाहा इदंचंद्रमसे २ खदिरस
मिधः अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्या अयं अपाꣳरेताꣳसिजिन्वतिस्वाहा इदंभौमाय ३
अपामार्गसमिधः उद्बुध्यस्वाग्नेप्रतिजागृहीत्वामिष्टापूर्तेसꣳ सृजेथामयंच अस्मिन्सधस्थे अध्युत्तरस्मिन्

विश्वेदेवायजमानश्वसीदतस्वाहा इदंबुधाय ४ अश्वत्थसमिधः ॐबृहस्पते अतियदर्य्योअर्हाद्युमद्वि
भातिक्रतुमज्जनेषु यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रᳪस्वाहा इदंबृहस्पतये उदुंबरसमिधः
ॐअन्नात्परिस्रुतोरसंब्रह्मणाव्यपिवत्क्षत्रपयः सोमंप्रजापतिः ऋतेनसत्यमिन्द्रियंविपानᳪशुक्रमंधस इंद्रस्ये
न्द्रियमिदंपयोमृतंमधुस्वाहा इदंशुक्राय ६ शमीसमिधः शन्नोदेवीरभिष्टयआपोभवंतुपीतयेशंय्योरभिस्रवंतुनः
इदंशनैश्वराय ७ दूर्वाःॐकयानश्चित्रआभुवदूतीसदावृधःसखाकयाशचिष्ठयावृतास्वाहा इदंराहवे ८ कुशस
मिधः ॐकेतुंकृण्वन्नकेतवेपेशोमर्य्याअपेशसे समुषद्भिरजायथास्वाहा इदंकेतवे ९ अनेनहोमेन सूर्य्यादयो
नवग्रहाःप्रीयंतां अथप्रार्थना सहस्रकिरणःश्रीमान्सप्ताश्वोलोकबांधवः भक्तानांवरदोभानुःप्रीतोभवतुभास्करः१
वृद्धिर्यस्यासितेपक्षेसुराणाममृतंतुयः संपूर्णमंडलोबालःससोमःप्रीयतांमम २ भूमिपुत्रोमहातेजावह्निरूपीमहा
बलः ग्रहाणामधिपःश्रेष्ठःसभौमःप्रीयतांमम ३ सिंहासनस्थोवरदःकर्णिकारसमद्युतिः खड्गचर्मगदापाणिः
सबुधोवरदोस्तुनः ४ दंडाक्षसूत्रधारीचकमंडलुधरःसदा पीतवर्णश्चतुर्बाहुःपातुनोवाक्पतिर्ध्रुवम् ५ श्वेतवर्ण
श्चतुर्बाहुःसाक्षसूत्रकमंडलुःसरस्वत्यापरंधामशुक्रोभूयाद्वरप्रदः ६ कृष्णवर्णःकृशांगश्चनीलजीमूतसन्निभःसशः
निःसूर्यपुत्रश्चसर्वदाप्रीयतांमम ७ चन्द्रार्कौग्रसतेयस्तुभीमःपर्वणिपर्वणि राहुःसदानवश्रेष्ठःसर्वदाप्रीयतांमम
८ पीडयंतेपीडयायस्यदेवगंधर्वकिन्नराः सकेतुर्धूम्रवर्णश्चसर्वदाप्रीयतांमम ९ ॐरुद्रायस्वाहा १ उमायैस्वाहा
२ स्कंदायस्वाहा ३ विष्णवेस्वाहा ४ ब्रह्मणेस्वाहा ५ यमायस्वाहा ६ कालायस्वाहा ७ चित्रगुप्तायस्वाहा
८ इत्यधिदेवताहोमः ॐअग्नयेस्वाहा १ अद्भ्यःस्वाहा २ पृथिव्यैस्वाहा ३ ॐनारायणायस्वाहा ४ इंद्राय
स्वाहा ५ इंद्राण्यैस्वाहा ६ प्रजापतयेस्वाहा ७ सर्पेभ्यःस्वाहा ८ ब्रह्मणेस्वाहा ९ इतिप्रत्यधिदेवता

होमः ॐविनायकायस्वाहा १ दुर्गायैस्वाहा वायवेस्वाहा ३ आकाशायस्वाहा ४ अश्विभ्यांस्वाहा ५ इति विनायकादिपंचदेवताहोमः ॐइंद्रायस्वाहा १ अग्नयेस्वाहा २ यमायस्वाहा ३ निर्ऋतयेस्वाहा ४ वरुणायस्वाहा ५ वायवेस्वाहा ६ कुबेरायस्वाहा ७ ईशानायस्वाहा ८ अनंतायस्वाहा ९ ॐब्रह्मणेस्वाहा १० इतिदिक्पालहोमःप्रायश्चित्ताहुतयोमहाव्याहृतीनामाहुतयश्च अत्रापिदेयाइतिपद्धतिकारःततःसंस्रवंप्राश्य पुनराचम्य पूर्णपात्रदानं ॐमद्यकृतेस्मिन्महाशांतियागकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रंसदक्षिणंप्रजापतिदैवतंयथानामगोत्रायआचार्यायतुभ्यमहंसंप्रददे ततःप्रणीताविमोकः ततोभिषेकः काश्मीर्यवृक्षसंभवभद्रासनस्थस्ययजमानस्यपंचकलशोदकैः साचार्यैर्ब्राह्मणैःकर्तव्यःतत्रमंत्राः सहस्राक्षमितिमंत्रस्यप्रजापतिऋषिइंद्रोदेवता त्रिष्टुपछंदः यजमानाभिषेकेविनियोगः ॐसहस्राक्षंशतधारमृषिभिःपावनं कृतंतेनत्वामभिषिंचामि पावमान्यः पुनंतुते १ भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः २ यत्तेकेशेपुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि ललाटेकर्णयोरक्ष्णोरापस्तद्धंतुसर्वदा ३ सजोषा इंद्रसगणोमरुद्भिः सोमंपिबवृत्रहाशूरविद्वान्जाहिशत्रूनपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ४ सजोषाइंद्रसगणोविश्वानिवरुणेनतुशूरविद्वान्जाहिशत्रूनपमृधोनुदस्वामयंकृणुहिविश्वतोनः ५ द्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव पूतंपवित्रेणेवाज्यमापःशुंधंतुमैनसः ६ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन २ महेरणायचक्षसे ३ योवःशिवतमोरसः ४ तस्यभाजयतेहनः ५ उशतीरिवमातरः ६ तस्माअरंगमामवः ७ यस्यक्षयायाजिन्वथ इतिभूमौ ८ आपोजनयथाचनः ९ ॥ अन्यैरपिवेदमंत्रैरभिषेकः अथपौराणिकमंत्राः सुरास्त्वामभिषिंचतुब्रह्माविष्णुमहेश्वराः वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा

वरुणःपवनश्चैव धनाध्यक्षस्तथाशिवः ब्रह्मणासहिताः शेषोदिक्पालाःपांतुतसदा कीर्तिर्लक्ष्मीर्धृतिर्मेधातु
ष्टिः श्रद्धाक्रियारतिः बुद्धिर्लज्जावपुःशांतिःपुष्टिःकांतिश्चमातरः एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः आदि
त्यश्चंद्रमाभौमोबुधोजीवःसितोर्कजःग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताःदेवदानवगंधर्वायक्षराक्षसपन्नगाः ऋष
योमनवोगावोदेवमातरएवच देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः अस्त्राणिचैवशस्त्राणिराजानोवाहनानिच
औषधानिचरत्नानिकालस्यावयवाश्चये सरितःसागराःशैलास्तीर्थानिजलदानदाः एतेत्वामभिषिंचंतुधर्मकामा
र्थसिद्धये इत्यभिषेकः होमावसानेकृततूर्यनादोगुरुर्गृहीत्वाबलिपुष्पधूपं आवाहयेल्लोकपतीन्क्रमेणमंत्रैरमी
भिर्यजमानयुक्तः ॐएह्येहिसर्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरामरेश संवीज्यमानाप्सरसांगणेनरक्षाध्वरं
नोभगवन्नमस्ते ॐत्रातारमिन्द्र मवतारमिन्द्रꣳहवेहवेसुहवꣳ शूरमिन्द्रम् ह्वयामिशक्रंपुरुहूतमिन्द्रꣳ स्वस्ति
नोमघवाधात्विंद्रः भोइंद्रइहागच्छ इहतिष्ठ इंद्रायनमः इत्यासनादीनि दत्त्वा पूजयेत् एवमिंद्रंसांगसप
रिवारंसायुधंसशक्तिकंपूजयेत् इहागच्छइहतिष्ठेत्यावाह्य इंद्रऐरावतारूढोवज्रपाणिर्महाबलः देवतानांचयो
राजाइंद्रमावाहयाम्यहं गंधाद्युपचारैःसंपूज्य इंद्रःसुरपतिर्ज्येष्ठोवज्रपाणिर्महाबलः शतयज्ञाधिपोदेवस्तस्मै
नित्यंनमोनमः इतिनत्वा इंद्राय सांगाय सपरिवाराय सायुधाय सशक्तिकायामुंसदीपंमाषभक्तबलिंसम
र्पयामिनमः भोइंद्रेमं सदीपं माषभक्तबलिं भक्ष ममयजमानस्य आयुःकर्ता क्षेमकर्ता शुभकर्ता पु
ष्टिकर्तातुष्टिकर्तावरदोभव ततःप्रार्थना इंद्रस्तुमहसादीप्तःसर्वदेवाधिपोमहान् वज्रहस्तोमहासत्त्वस्तस्मै
नित्यंनमोनमः १ अथाग्नेरावाहनं ॐएह्येहिसर्वामरहव्यवाहमुनिप्रवारैरभितोभिजुष्ट तेजोवतालोकग
णेनसार्द्धममाध्वरंरक्षकवेनमस्ते ॐअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे देवाँआसादयादिहभोअग्नेइहागच्छह

तिष्ठत्यावाह्य अग्नये सपरिवाराय नमइतिपाद्यादिभिःसंपूज्य ततोबलिंदद्यात् अग्नयेसायुधायसश
कायसपरिवारायामुसदीपंमापभक्तबलिंसमर्पयामिनमः भोअग्नेइमसदीपंमाषभक्तबलिंभक्षममयजमानस्यसप
वारस्यआयु.कर्ताक्षेमकर्ताशुभकर्ता पुष्टिकर्तातुष्टिकर्तावरदोभव बलिदानात्पूर्वंपठनीयोमंत्रः सर्वतेजोधिपोदेवो
रक्तवर्णोमहाबलःशक्तिहस्तोमहावीर्योवैश्वानरनमोस्तुते बलिंदत्वाप्रार्थयेत् अग्निस्तुपुरुषोरक्त.सर्वदेवमय.अ
धूम्रकेतुरनाधृष्यस्तस्मैनित्यनमोनम. २यमपूजा यमश्चमहिषारूढोदंडपाणिर्महाबलः सूर्यपुत्रमहाकायधर्मराज
हयाम्यहं ॐएह्येहिवैवस्वतधर्मराजसर्वामरैरर्चितदिव्यमूर्तेशुभाशुभाचारविचारसाक्षिन्शिवायनःपाहिमखनमस्ते
भोयमसपरिवारइहागच्छ ॐयमायसपरिवारायनम इतिसपूज्य ॐयमायसपरिवाराय.इमंसदीपंमापभक्तबलिं
स.भोयमइमसदीपनापभक्तबलिंभक्ष ममयजमानस्यायु.कर्ताक्षे. वरदोभव दंडहस्त.कृष्णवर्णोधर्माध्यक्षोमहाब
लः प्रेताधिपतयेतुभ्यधर्मराजनमोस्तुते १ ॐयमश्चोत्पलपत्राक्ष.किरीटीदंडभृत्सदा धर्मसाक्षीविशुद्धात्मातस्मै
नित्यंनमोनम.२ अथनिर्ऋतिपूजा त्वमागच्छमहाभागखड्गपाणेमहाबल दितिपुत्रमहावेगनिर्ऋतिंपूजयाम्यहं
१ एह्येहिरक्षोगणनायकत्वपिशाचवेतालविशालसंघैः ममाध्वरंपाहिशुभाधिनाथलोकेश्वरत्वंभगवन्नमस्ते १ भो
निर्ऋतेसपरिवारइहागच्छ इत्यावाह्यसपूज्य योवैरक्षोधिपोदेवोनिर्ऋतिर्नीलविग्रहः महाखड्गधरोनित्यंतस्मै
नित्यनमोनमः १ ॐनिर्ऋतयेसा. इमंस. मापभक्तबलिंस. भोनिर्ऋतेइमंसदीपंमापभक्तबलिंभ. . ममयज
मानस्यस. आयुःकर्ता.वरदोभव.ॐनिर्ऋतिस्तुपुमान्कृष्णःसर्वरक्षोधिपोमहान् खड्गहस्तोमहासत्वस्तस्मैनित्यं
नमोनमः ४ अथवरुणपूजनं आवाहयाम्यहंदेववरुणंलोकपूजितं प्रतीचींकमलेपत्रेदेवमावाहयाम्यहं १ ॐएह्ये
हियादोगणवारिधीनागणेनपर्जन्यगणाप्सरोभि. विद्याधरेंद्रामरगीयमानपाहित्वमस्मान्भगवन्नमस्ते १ भोवरुण

इहागच्छइत्यावाह्यवरुणायनम.इतिसपूज्यशक्तिपाशधरोनित्यजलराजोमहाबलः निम्नगःशुक्लवर्णस्तुनमोस्तुवरुणायते ओंवरुणाय- इमंस- वालिस. भोवरुण वलिभक्ष. ममयजमानस्यआयुः कर्ता; वरदोभव वरुणः सजलो विष्णुः पुरुषोनिम्नगाधिपः पाशहस्तोमहाबाहुस्तस्मैनित्यंनमोनमः ५ अथवायोरावाहनं पवनंसर्वगंदेवंसर्वदेवनमस्कृत पवित्रसर्वकार्येषुवायुमावाहयाम्यहं ओंएह्येहियज्ञेममरक्षणायमृगाधिरूढ सहासिद्धसंघैः समिरणप्राणगतेः सहायलोकेशपूजांभगवन्गृहाण १ भोवायोइहागच्छ आवाह्यपूजयेत् सर्वप्राणाधिपोदेवः सर्वजंतुष्ववस्थितः ध्वजहस्तोमघवर्णस्तस्मैवातात्मनेनमः वायवे- सदीपमाषभक्तवलिनमः भोवायो. सदीपमाषभक्तवलिभक्ष. ममयजमानस्य-वरदोभव वायुस्तुसर्ववर्णायसर्वगंधवहःशुचिः पुरुषोध्वजहस्तश्चतस्मैनित्यंनमोनम: ६ अथकुबेरपूजा दिश्युत्तरेसदास्थायीपरमात्मपदंपरं धनादिसंग्रहान्नित्यंकुबेरपूजयाम्यहं. १ ओंएह्येहियक्षेश्वरयज्ञरक्षांकुरुष्वयक्षादिगणेनसार्द्धं सर्वौषधीशैः सहभूतसंघैर्गृहाणपूजांभगवन्नमस्ते १ भोकुबेरइहागच्छ इत्यादिपूजा सर्वनक्षत्रमध्येयः सोमोराजाव्यवस्थितः शुक्लवर्णोगदाहस्तस्तस्मैनित्यंनमोनमः ओंसोमायकुबेराय इमंसदीप. वलिंस. भोसोमकुबेर. वलिंभक्ष. यजमानस्य वरदोभव गौरीयस्तपुमान्सोमः. सर्वौषधिसमन्वित. नक्षत्राधिपति.सोमस्तस्मैनित्यंनमोनम. ७ अथशिवपूजा शिवंशंकरमीशानद्वादशार्द्धत्रिलोचन उमयासहितंदेवंशिवमावाहयाम्यहं १ ओंएह्येहिविश्वेश्वरनस्त्रिशूलिन्कपालिखट्वांगिगणेनसार्द्धं . भूतेशलोकेश्वरयज्ञसिद्ध्यैगृहाणपूजांभगवन्नमस्ते १ भोशिवइहागच्छ इत्यावाह्यपूजयेत् सर्वदेवाधिपोदेवईशान.शुक्लविग्रह. शूलपाणिर्वृषारूढोरुद्राधिपतयेनमः १ ईशानाय. वलिस- भोईशान. सदीपंमाषभक्तवलिंभक्ष- ममयजमानस्य.वरदोभव ईशानःपुरुष.शुक्ल.सर्वविद्याधिपोमहान् शूलहस्तोविरूपाक्षस्तस्मैनित्यं नमोनम. ८अथानतपूजा

एह्येहिपातालधरामेरद्रनागांगनाकिन्नरगीयमान रक्षोगणेंद्रामरलोकयुक्तोह्यनंतरक्षाध्वरमस्मदीयं भोअनंत इ
हागच्छअनंतायनमइतिपूजा पन्नगाधिपतिर्देवोयोनंतोनीलविग्रहः पातालवसतिर्नित्यंतस्मैनित्यंनमोनमः अनं
तायसां-सदीपंमापंवालिंस-भोअनंत इमंसदीपंमापभक्तवालिंभक्ष यजमानस्यायुःकर्तावरदोभव योसावनंतरूपेणब्र
ह्मांडेसचराचरे पुष्पवद्धारयन्मूर्ध्नितस्मैनित्यंनमोनमः १ अथब्रह्मणःपूजा प्रणम्यशिरसादेवमष्टनेत्रचतुर्भुजंगायत्रीस
हितंदेवंनित्यमावाहयाम्यहं १ एह्येहिविश्वाधिपतेमुनींद्रलोकेनसार्द्धंपितृदेवताभिः चतुर्मुखस्त्वंभवनःशिवायपिता
महस्त्वंभगवन्नमस्ते भोब्रह्मन् इहागच्छ इतिसंपूज्य पलाशकुसुमाकारोब्रह्माचैवाक्षसूत्रधृक् सर्वयज्ञपतिश्रेष्ठब्रह्मणे
तेनमोनमः ब्रह्मणेसां इदंसदीपंमापभक्तवालिंस. भोब्रह्मन् इमंसदीपंमापभक्तवालिंभक्ष ममयजमानस्यायुष्क
र्ताक्षेमकर्ताशुभकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पितामहः यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै
नित्यंनमोनमः अथनवग्रहवलिः ग्रहेभ्यःसांगेभ्यःसपरिवारेभ्यः सायुधेभ्यः सशक्तिभ्यः इमंसदीपं मापभक्तवालिं
समर्पयामि भोग्रहा इमंमापभक्तवलिंभक्षत ममयजमानस्यायुःकर्तारः क्षेमादिकर्तारः वरदाभवत ॐदुर्गायै एषभ
क्तवलिर्नमः भोदुर्गे इमं सदीपं मापभक्तवालिं भक्ष- ममयजमानस्यायुःकर्त्रीक्षेमादिकर्त्रीवरदाभव अथक्षेत्रपालव
लिः दधिमाषसिंदूरकज्जलंसदीपंवलिमादाय ॐक्षेत्रपालायसपरिवारायडाकिनीशाकिनीभूतप्रेतपिशाचवेता
लसहिताय इमंसदीपंमापभक्तवलिंसमर्पयामि भोक्षेत्रपालइमंसदीपंमाषभक्तवलिंभक्ष ममयजमानस्यायुः
कर्ताक्षेमादिकर्तावरदोभव पुनरपि शांतिपाठः शांतितोयेनसमंततः क्षीरनीरधारांपातयेत् ततःपुण्याहवाचन
भूमिसुवर्णवस्त्रशय्यासनादिदानं यथारुचिकृत्वा पूर्णाहुतिं कुर्यात् तत्रादौ प्रणीतापात्रात्पवित्रेगृहीत्वा
सुमित्रियानआपओपधयःसंतु इतिप्रणीताजलेनशिरःसंमार्ज्य दुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः

इतिप्रणीतापात्रमैशान्यांन्युब्जीकुर्यात्ततः परिस्तरणक्रमेणबर्हिरुत्थाप्यघृताक्तंकृत्वा तस्यहोम. ॐदेवागातवि दोगातुवित्त्वागातुमितमनसस्पतइमंदेवयज्ञंस्वाहा वातेधाःस्वाहा अथपूर्णाहुतिमंत्रःॐमूर्द्धानमित्यस्य भरद्वाजऋ पिर्वैश्वानरोदेवता त्रिष्टुप्छंदः अपूर्णपूर्णाहुतिहोमेविनियोगः ॐमूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजात मग्निंकविंसम्राजमतिथिजनानामासन्नापात्रंजनयंतदेवाःस्वाहा पूर्णाहुत्यनंतरंवसोर्द्धारांजुहुयात् ततः स्रुवेण भस्मानीयत्र्यायुपंजमदग्नेइतिललाटे कश्यपस्यत्र्यायुपं इतिग्रीवायांयद्देवानांत्र्यायुप इतिदक्षिणांसे तन्नेअस्तुत्र्या युपमितियजमानस्यत्र्यायुपकरणं आत्मनश्चतन्नोअस्तुत्र्यायुपमितिपाठः ततोवारुणकलशादभिपेकः कार्यः पंचपल्लवै दूर्वांकुशैः तत्र आपोहिष्ठामयोभुवः ९ द्यौःशांतिरित्यादिकाअपि सुरास्त्वामभिपिंचंतु इत्यादिपौरा णिकाश्च ततोऋत्विग्भ्योदक्षिणादानं ॐतत्सत् अद्यकृतैतन्महाशांतियागकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्र तिष्ठासहितस्वास्तिवाचनपुण्याहवाचनऋद्धिवाचनाग्नेय्यादिकुंभेषु यथाविहितशांतिसूक्तपाठादिसकलकर्मणः सां गफलप्राप्त्यर्थमिमांदक्षिण नानाविधवस्त्रभूपणादिद्रव्यसहितांनानागोत्रेभ्यो ब्राह्मणेभ्योऽमुकामुकशर्मभ्यो यथा विधिविभज्यदातुमहमुत्सृजेस्वास्तिरितितेप्रत्येकंसर्वेब्रूयुःततोगोदानकुर्य्यात् अथभूरिदक्षिणासंकल्पः ॐमद्यकृत स्यास्यमहाशांतियागहोमयागस्यन्यूनातिरिक्तदोषपरिहारपूर्वकसमग्रफलप्राप्त्यर्थमिमांभूयसींदक्षिणांविष्णुदेव तांनानानामगोत्रेभ्योबालवृद्धातुरदीनानाथेभ्यो यथाविभज्यदातुमहमुत्सृजे ततोयज्ञांतदक्षिणादानं ॐमद्यकृ तैतद्दुस्स्वप्नदुर्निमित्तसर्वोत्पातजन्यसर्वारिष्टफलनिवृत्तिपूर्वकस्वदेहदेशपरिवारादौ धनधान्यसंपत्त्यारोग्यादिसम ग्रशुभफलप्राप्त्यर्थंमहाशांतियागांगसमस्तदेवताप्रीत्यर्थमिमामृत्विग्दक्षिणातोद्विगुणद्रव्यकल्पितां विष्णुदे वतादक्षिणांयथानामगोत्रायाचार्य्यायपुरोधसेचदातुमहमुत्सृजे ततोब्राह्मणेभ्योदक्षिणासहितभोजनदानसंकल्प

कृत्वा आज्येमुखावलोकनांतेछायापात्रदानंविधायाग्निंप्रदक्षिणीकृत्यप्रार्थयेत् धर्मंदेहिधनंदेहिपुत्रपौत्रांश्चदेहिमे आयुरारोग्यमैश्वर्यंदेहिमेहव्यवाहन १ श्रद्धांमेधांयशः प्रज्ञांविद्यांबुद्धिमथोधनं देहिमेपुत्रपौत्रांश्चप्रीतस्त्वंहव्यवाहन २ इत्यग्निमंडलदेवताश्चनमस्कृत्य प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोः संपूर्णस्यादितिश्रुतिः १ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतामेतिसद्योवंदेतमच्युतम् ॥ १ ॥

इतिश्रीमहाशांतिप्रयोगः ॥ इतिश्रीसूर्यवंशावतंसरघुवंशतिलकश्रीरणवीरसिंह

महाराजकारितेकृत्यरत्नाकरेमहाशांतिविधानंसंपूर्णम् ॥

अथास्यामेवचैत्रशुक्लप्रतिपदि भविष्योत्तरोक्तं तिलकव्रतमारंभणीयम् युधिष्ठिरउवाच ब्रह्मेशकेशवादीनांगौर्यागणपतेस्तथा दुर्गासोमाग्निसूर्याणांव्रतानिमधुसूदन शास्त्रांतरेणदृष्टानिभवद्वाद्विगतानिच तानिसर्वाणिमे देवयेनदेवकिनंदन प्रतिपत्क्रमयोगेनविहितायस्ययातिथिःदेवस्ययस्ययत्कार्यंतदशेषेणमेवद श्रीकृष्णउवाच वसंतेकिंशुकाशोकशोभितेप्रातिपत्तिथिः शुक्लातस्यांप्रकुर्वीतस्नानंनियममास्थितः नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताःनद्यास्तीरेतडागेवागृहेवातदलाभतः पिष्टातकेनविधिवद्वत्सरंपुरुषाकृतिम् पिष्टातकोगंधद्रव्यचूर्णविशेषःपिष्टातकपदवाच्यः ततश्चंदनचूर्णेनपुष्पधूपादिनार्चयेत्मासर्तुनामभिश्चैवनमस्कारांतयोजितैः मासर्तुनामभिश्चैत्रवसंतादिकनामभिः पूजयेद्ब्राह्मणोविद्वान्मंत्रैर्वेदोदितैःशुभैः सवत्सरोसीतिपठन्मंत्रंवेदोदितंबुधःनमस्कारेणमंत्रेणशूद्रोपित्थंप्रपूजयेत् अपिशब्दात्स्त्रीणामप्यत्रपरिग्रहः तासांविशेषविध्यभावे वैदिकमंत्रानधिकारात् तत्रवैदिकमत्र; संवत्सरोसि परिवत्सरोसि इडावत्सरोसीद्वत्सरोसिवत्सरोसित्वमाधिकवत्सरोसि नमस्कारेणमंत्रेण सवत्सरायनमइत्यादिना मासर्तुनामभिर्वेदोदितैरित्युक्त मासर्तूनांवेदोदितैरित्यर्थःतेषामपिमंत्राः मधुश्चमाधवश्च

वासंतिकावृतू अग्नेरंतःश्लेपोसिकल्पतां द्यावापृथिवीकल्पतामापओषधयःकल्पंतामग्नय.पृथङ्ममज्यैष्ठायसुव्रताः अग्नयःसुमनसोंतराद्यावापृथिवी इमेवासंतिकावृतू अभिसंविशंतुतयादेवतयांगिरस्वध्रुवेसीदतं १ शुक्रश्चशुचिश्चग्रैष्मावृतू अग्नेरंतःश्लेपोसि इमेग्रैष्मावृतू- अभिकल्पमानातयादेवतयांगिरस्वध्रुवेसीदत २ नभश्चनभस्यश्चवार्षिकावृतू- अग्नेरंतःश्लेपोसिक. इमेवार्षिकावृतू. अग्नेरंतःश्लेपोसिक- इमेवार्षिकावृतू अभिकल्पमाना. देवतयांगिरस्वध्रुवेसीदत ३ इषश्चोर्जश्चशारदावृतू अग्नेरंतःश्लेपोसि ३ इमेशारदावृतू. अभिकल्पमाना. देवतयांगिरस्वध्रुवेसीदतं ४ सहश्चसहस्यश्चहैमंतिकावृतू अग्नेरंतःश्लेपोसि. इमेहैमंतिकावृतू अभिकल्पमाना. देवतयांगिरस्वध्रुवेसीदतं ५ तपश्चतपस्यश्चशैशिरावृतू. अग्नेरंतःश्लेपोसि. इमेशैशिरावृतू- अभिकल्पमाना देवतयांगिरस्वध्रुवेसीदत ६ वसंतायनमः १ ग्रीष्मायनमः २ वर्षायैनमः ३ शरदेनमः ४ हेमंतायनमः ५ शिशिरायनमः ६ इतिनामभि.पूजा. चैत्रायनमः १ वैशाखायनमः २ ज्यैष्ठायनमः ३ आषाढायनमः ४ श्रावणायनमः ५ प्रौष्ठपदायनमः ६ आश्विनायनमः ७ कार्तिकायनमः ८ मार्गशीर्षायनमः ९ पौषायनमः १० माघायनमः ११ फाल्गुणायनमः १२ एवमभ्यर्च्य विधिवत्पश्चात्तमभिवेष्टयेत् कालोद्भवैर्मूलफलनैवेद्यमोदकादिभिः ततश्चपूजयेत्पार्थपुरःस्थित्वाकृतांजलिः प्रार्थनामंत्रः भगवंस्त्वत्प्रसादेनवर्षंक्षेमामिहास्तुमे संवत्सरोपसर्गोमेविलयंयात्वशेषतः एवमुक्त्वायथाशक्त्यादत्त्वाविप्रायदक्षिणां ललाटपट्टेतिलककुर्याच्चंदनपंकजं ततःप्रभृत्यनुदिनंतिलकालकृतंमुखं धार्यंसंवत्सरंयावच्छशिनेवनभस्तलं एवनरोवानारीवाव्रतमेतत्समाचरेत् सदैवपुरुषव्याघ्रभोगानभुविभुनक्त्यसौ भूतप्रेतपिशाचाद्यादुर्वारावैरिणोग्रहाः निरर्थकाभवंत्येतेतिलकंवीक्ष्यतत्क्षणात् निरर्थकाः प्रयोजनशून्याअनिष्टकरणेऽसमर्थाइत्यर्थः इतिव्रतविधिः अथकथा श्रीकृष्णउवाच

कृत्वा आज्येमुखावलोकनंतिछायापात्रदानंविधायाग्निप्रदक्षिणीकृत्यप्रार्थयेत् धर्मंदेहिधनंदेहिपुत्रपौत्रांश्चदेहिमे आयुरारोग्यमैश्वर्यंदेहिमेहव्यवाहन १ श्रद्धांमेधांयशः प्रज्ञांविद्यांबुद्धिमथोधनं देहिमेपुत्रपौत्रांश्चप्रीतस्त्वंहव्यवाहन २ इत्यग्निमंडलदेवताश्चनमस्कृत्य प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोः संपूर्णस्यादितिश्रुतिः १ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतामेतिसद्योवंदेतमच्युतम् ॥ १ ॥

इतिश्रीमहाशांतिप्रयोगः ॥ इतिश्रीसूर्यवंशावतंसरघुवंशतिलकश्रीरणवीरसिंह
महाराजकारितकृत्यरत्नाकरेमहाशांतिविधानंसंपूर्णम् ॥

अथास्यामेवचैत्रशुक्लप्रतिपदि भविष्योत्तरोक्तं तिलकव्रतमारंभणीयम् युधिष्ठिरउवाच ब्रह्मेशकेशवादीनांगौर्यागणपतेस्तथा दुर्गासोमाग्निसूर्याणांव्रतानिमधुसूदन शास्त्रांतरेणदृष्टानिभवद्बाह्यगतानिच तानिसर्वाणिमेदेयेनदेवकिनंदन प्रतिपत्क्रमयोगेनविहितायस्ययातिथिःदेवस्ययस्ययत्कार्यंतदशेषेणमेवद श्रीकृष्णउवाच वसंतेकिंशुकाशोकशोभितेप्रतिपत्तिथिः शुक्लातस्यांप्रकुर्वीतस्नानंनियममास्थितः नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताःनद्यास्तीरेतडागेवागृहेवातदलाभतः पिष्टातकेनविधिवद्वत्सरंपुरुषाकृतिम् पिष्टातकोगंधद्रव्यचूर्णविशेषःपिष्टातकपदवाच्यः ततश्चंदनचूर्णेनपुष्पधूपादिनार्चयेत्मासर्तुनामभिश्चैवनमस्कारांतयोजितैः मासर्तुनामभिश्चैवत्रवसंतादिकनामभिः पूजयेद्ब्राह्मणोविद्वान्मंत्रैर्वेदोदितैःशुभैः संवत्सरोसीतिपठन्मंत्रंवेदोदितंबुधःमनस्कारेणमंत्रेणशूद्रोपीत्थंप्रपूजयेत् अपिशब्दात्स्त्रीणामप्यत्रपरिग्रहः तासांविशेषविध्यभावे वैदिकमंत्रानाधिकारात् तत्रवैदिकमंत्रः संवत्सरोसि परिवत्सरोसि इडावत्सरोसीद्वत्सरोसिवत्सरोसित्वमधिकवत्सरोसि नमस्कारेणमंत्रेण संवत्सरायनमइत्यादिना मासर्तुनामभिर्वेदोदितैरित्यक्त मासर्तूनांवेदोदितैरित्यर्थःतेषामपिमंत्राः मधश्चमाधवश्च

वासंतिकावृतू अग्नेरंतःश्लेषोसिकल्पतां द्यावापृथिवीकल्पतामापओषधयःकल्पंतामग्नयःपृथङ्ममज्यैष्ठायसुव्रताः अग्नयःसुमनसोंतराद्यावापृथिवी इमेवासंतिकावृतू अभिसंविशंतुतयादेवतयांगिरस्वध्रुवेसीदतं १ शुक्रश्चशुचिश्चग्रैष्मावृतू अग्नेरंतःश्लेषोसि इमेग्रैष्मावृतू अभिकल्पमानातयादेवतयांगिरस्वध्रुवेसीदतं २ नभश्चनभस्यश्चवार्षिकावृतू अग्नेरंतःश्लेषोसिक. इमेवार्षिकावृतू. अग्नेरंतःश्लेषोसिक इमेवार्षिकावृतू अभिकल्पमाना. देवतयांगिरस्वध्रुवेसीदत ३ इषश्चोर्जश्चशारदावृतू अग्नेरंतःश्लेषोसि ३ इमेशारदावृतू. अभिकल्पमाना. देवतयांगिरस्वध्रुवेसीदतं ४ सहश्चसहस्यश्चहैमंतिकावृतू अग्नेरंतःश्लेषोसि. इमेहैमंतिकावृतू अभिकल्पमाना. देवतयांगिरस्वध्रुवेसीदतं ५ तपश्चतपस्यश्चशैशिरावृतू. अग्नेरंतःश्लेषोसि. इमेशैशिरावृतू अभिकल्पमाना देवतयांगिरस्वध्रुवेसीदत ६ वसंतायनमः १ ग्रीष्मायनमः २ वर्षायैनमः ३ शरदेनमः ४ हेमंतायनमः ५ शिशिरायनमः ६ इतिनामभिःपूजा. चैत्रायनमः १ वैशाखायनमः २ ज्येष्ठायनमः ३ आषाढायनमः ४ श्रावणायनमः ५ प्रौष्ठपदायनमः ६ आश्विनायनमः ७ कार्तिकायनमः ८ मार्गशीर्षायनमः ९ पौषायनमः १० माघायनमः ११ फाल्गुणायनमः १२ एवमभ्यर्च्य विधिवत्पश्चात्तमाभिवेष्टयेत् कालोद्भवैर्मूलफलनैवेद्यमोदकादिभिः ततश्चपूजयेत्पार्थपुरःस्थित्वाकृतांजलिः प्रार्थनामंत्रः भगवंस्त्वत्प्रसादेनवर्षंक्षेमामिहास्तुमे सवत्सरोपसर्गामेविलयंयात्वशेषतः एवमुक्त्वायथाशक्त्यादत्वाविप्रायदक्षिणांललाटपट्टेतिलककुर्याच्चंदनपंकजं ततःप्रभृत्यनुदिनंतिलकालकृतंमुखं धार्यंसंवत्सरंयावच्छशिनेवनभस्तलं एवनरोवानारीवाव्रतमेतत्समाचरेत् सदैवपुरुषव्याघ्रभोगान्भुविभुनक्तयसौ भूतप्रेतपिशाचाद्यादुर्वारावैरिणोग्रहाः निरर्थकाभवत्येतेतिलकंवीक्ष्यतत्क्षणात् निरर्थकाः प्रयोजनशून्याअनिष्टकरणेऽसमर्थाइत्यर्थः इतिव्रतविधिः अथकथा श्रीकृष्णउवाच

पूर्वमासीन्महीपालोनाम्नाशत्रुंजयोजयी चित्रलेखेतितस्याभूद्भार्य्याचारित्रभूषणा॥ तयाव्रतमिदंचक्रेगृहीतंद्विजस त्तियौ वत्सरंपूजयित्वाचध्यात्वाहादिजनार्दनं हृतमाक्षेतुकामोवासमागच्छतियःपुरा प्रयातिप्रियकृत्तस्यादृष्टातुति लकनरः सपत्नीनांदर्पहरावशीकृतमहीतला भर्तुर्हृष्टाप्रहृष्टासासुखमास्तेनिराकुला . यावज्ज्वरेणाभिभूतोभर्ता पुत्रःसवेदनः शिरोर्तिनासंप्रयातःसुहृदांसुखदायकः धर्मराजपुरत्प्राप्ताःप्रविष्टागृहमंतरा शत्रुंजयंसमानेतुंकाल मृत्युपुरःसराःपार्श्वस्थितांचित्रलेखांतिलकालंकृताननां दृष्ट्वाप्रणष्टसंकल्पाःपरावृत्यगताःपुनःगतेषुतेषुसनृपःपुत्र णसहभारत सानुजोवुभुजेभोगान्पूर्वकर्मार्जितान्शुभान् अक्रूरेणममाख्यातंव्रतमेतद्युधिष्ठिर एतत्त्रिलोकतिल कास्यविभूषणंचपुण्यव्रतंसकलदुष्टहरपरंच इत्थंसमाचरतियःससुखंविहृत्यमर्त्यः प्रयातिपदमह्यमिंदुमौलेः इ तिभविष्योत्तरोक्ततिलकव्रतम् अथास्यामेवप्रतिपदिसमारभ्यं विष्णुधर्मोत्तरोक्तमारोग्यप्रतिपद्व्रतम्

मार्कंडेयउवाच संवत्सरावसानेतुपंचदश्यामुपोषितः प्रातःप्रतिपदिस्नात्वाकुर्य्याद्व्रतमनन्यधीः पूजयेद्भास्करं देवंवर्णकैः कमलेकृते वर्णकैरक्तश्वेतपीतनीलादिभिः शुक्लेनगंधमाल्येनचंदनेनसितेनच तथाकुंदरुधूपेनघृतधू पेनभार्गव कुंदुरुःसल्लकीनिर्यासःअपूपैःसैकतैर्दध्नापरमान्नेनभूरिणा सैकतैःशर्करविकारैः ओदनेनचशुक्लेनसता लवणसर्पिषा क्षीरेणचफलैःशुक्लैर्वान्हिब्राह्मणतर्पणैःपूजयित्वाजगद्धामादिनभागेचतुर्थके आहारंप्रथमंकुर्य्यात्सघृतं पुरुषोत्तम सर्वंचमनुजश्रेष्ठघृतहीनंविवर्जयेत् भुक्त्वाचसकृदेवान्नमाहारंनसमाचरेत् पानीयपानंकुर्वीतब्राह्मणानु मतेपुनः प्रथमनाहारएकग्रासमात्रंप्रथमंभक्षयेत् शेषमन्नंपरित्यजेत् ब्राह्मणानुमत्याशेषमन्नंभुंजीतपानीयपानं चकुर्यादित्यर्थः ब्राह्मणानुमत्याभुंजानोपिघृतहीनंनभुंजीत घृतहीनंविवर्जयेदितिनिषेधात् संवत्सरमिदंकृत्वा

ततःसाक्षात्त्रयोदशे पूजनंदेवदेवस्यतस्मिन्नहनिभार्गव संवत्सरंयावत्सुर्वासुशुक्लप्रतिपदासुव्रतंकार्य्यं त्रयोदशंउद्यापनीयं त्रयोदशेभिरिति सवस्त्रंसहिरण्यंचततोदद्याद्द्विजातये पूजोपकरणंसर्वंभास्करप्रतिमान्वितं व्रतेनानेनधर्मज्ञरोगमेवंव्यपोहति आरोग्यमाप्नोतिगातितथाग्र्यांयशस्तथाग्र्यांविपुलांश्चभोगान् व्रतेनसम्यक्पुरुषोथनारीसंपूजयेद्यस्तुजगत्प्रधानं जगत्प्रधानंसूर्यं अथास्योद्यापनं तत्रादौव्रतविधानं संवत्सरांतेपंचदश्यामुपोषितः प्रातःप्रतिपदिस्नात्वाकृताह्निकः पूजासामग्रीमादाय पंचवर्णैरजोभिरष्टदलंकमलं विरच्य तत्रआकृष्णेनेतिमंत्रेण सूर्यपूजांकुर्य्यात् तत्रादौ ओंमद्येत्यादिदेशकालौसंकीर्त्य आत्मनआरोग्यादिसर्वकामाप्त्यैसूर्य्यप्रीत्यर्थमारोग्यप्रतिपद्व्रतंकरिष्ये ततः सर्वोपचारैः सूर्यंसंपूज्यपायसादिनैवेद्यंदत्त्वा ब्राह्मणान् सदन्नेनसंतर्प्य दिवसस्यचतुर्थभागेसघृतमेकमेवग्रासंभक्षयेत् अवशिष्टचान्नंपरित्यजेत्ब्राह्मणानुमत्यासघृतमेवावशिष्टमन्नंभुंजीत एवंप्रतिमासेशुक्लप्रतिपदिव्रतंकुर्य्यात् वर्षांतेत्रयोदशेचेतच्छुक्लप्रतिपद्दिने उद्यापनंकुर्य्यात् तत्रादौओंमद्यमयाआरोग्यादिसदभीष्टसिद्ध्यर्थमाचरितस्यारोग्यप्रतिपद्व्रतस्यसांगफलाप्तयेतदुद्यापनंकरिष्ये आचार्यंब्राह्मणंचवृत्वा ततः आचार्योगणपतिपूजास्वस्त्ययनादिविधाय सर्वतोभद्रसहितान्सर्वान्मंडलदेवतान्संपूज्य अग्निस्थापनंविधाय आज्याधानांतमग्निकार्य्यंविधायसर्वतोभद्रेसौवर्णांसूर्यप्रतिमांसंपूज्य शक्त्याद्वादशकुंभेषुप्रतिमापूजांविधाय ओंनमःसहस्रकिरण सर्वव्याधिविनाशन गृहाणार्घ्यंमयादत्तंसंज्ञयासहितप्रभो इत्यर्घ्यंदत्त्वासूर्यमंत्रेणद्वादशमालाधिपनामभिः होमंविधाय सूर्यायनमः धात्रेनमःवरुणायनमःमाधवायनमः हरयेनमः रवयेनमःरुद्रायनमः भर्गायनमः हिरण्यरेतसेनमः अर्य्यम्णेनमः भानवेभास्करायनमः स्वाहा संज्ञाहितायसहस्रकिरणायनमःस्वाहा एवंपायसेनहुत्वा सर्वतोभद्रमंडलदेवताश्चैकैकयाहुत्याहुत्वाद्वादशब्राह्मणान्द्वादशनामभिःपू

ज्यद्वादशप्रतिमाश्ववस्त्रान्नकुंभदक्षिणायुतादद्यात् आचार्यायपीठंगांशय्यादिकंदत्त्वा पूर्णाहुतिमाभपकच कारा‍्य
त्वाब्राह्मणान्पायसाद्यन्नेनतर्प्पयेत् इतिसोद्यापनमारोग्यप्रतिपद्व्रतम्

अथास्यामेवविष्णुधर्मोत्तरोक्तंविद्याप्राप्तिव्रतम्

मार्कंडेयउवाच अष्टपत्रंतुकमलंविन्यसेद्वर्णकैःशुभैः ब्रह्माणंकर्णिकायांतुन्यस्यसंपूजयेद्विभुं ऋग्वेदंपूर्वपत्रेतुयजुर्वेदंतुदक्षिणे पश्चिमेसामवेदंतुउदक्चाथर्वणंन्यसेत् आग्नेयेचतथांगानिधर्मशास्त्राणिनैरृते पुराणंचैववायव्येऐशान्यांन्यायविस्तरं एवंविन्यस्यधर्मज्ञःसोपवासस्तुपूजयेत् चैत्रशुक्लमथारभ्यसोपवासोजितेंद्रियः सदाप्रतिपदंप्राप्यशुक्लपक्षस्ययादव संवत्सरंमहाराजशुक्लगंधानुलेपनैः भूरिणापरमान्नेनधूपदीपैरतंद्रियः संवत्सरांतेगांदद्यात्व्रतेचीर्णेनरोत्तम इदंव्रतंयस्तुकरोतिराजन्सवेदविस्याद्बुविधर्मनिष्ठः कृत्वासदाद्वादशवत्सराणिविरंचिलोकंपुरुषःप्रयाति इतिमदनरत्नेविष्णुधर्मोत्तरेविद्याप्राप्तिव्रतम्

अथगरुडपुराणोक्तमस्यामेवविद्याप्राप्तिव्रतम्

सनत्कुमारउवाच अथत्वंप्रतिपत्कल्पंशृणुसंवत्सरव्रतं यत्कुर्वाणःश्रियंविंदेद्दुर्लभांमानुषैरिह शालितंडुलसंसिद्धमंडलंचतुरस्रकं श्रींशांश्रियमथोब्रह्मन्पूजयेत्सपुरःसरं अप्रच्छिन्नदलैःपाद्मैर्युतैस्तंप्रपूजयेत् सहस्रैर्वायथायोग्यं पयसापायसेनच ततश्चविधिनाभ्यर्च्यपार्श्वेदेवींसरस्वतीं अग्रतःपूजयेदिन्दुंगुरुंपश्चादनन्यधीःपरिवारानियोगेनतांस्तुसंस्कारयेदथ अत्रमंत्रः ममविद्यांप्रदिशतुदेवीवागीश्वरोहरिः विद्याधिदैवतंदेवीविद्यादिशतुमेदश सरस्वतीप्रदिशतुवाग्व्याद्धिमतिशालिनी सितांशुरपिमेपुष्टिंसर्वभोगप्रपूरिणीं पूजातुप्रणवादिनमोंतैर्नाममंत्रैरेवकार्य्या इत्येवंकारयेत्साध्यंप्रसन्नःपूजितोगुरुः साध्यंशिष्यं विधिनाचोपवासंतुकारयेद्विधिनान्वितं समभ्यर्च्यद्वितीयायां

देवदेवंश्रियःपतिं भुंजीयात्पायसान्नंतुशुचिराचम्यसन्निधौ साध्यइतिशेषः आचार्यायवरंदत्त्वाकुर्यात्सुप्रीणनंपुनःवरंहिरण्यमित्यर्थः अनधीतमनारब्धंतदानीमारभेद्गुरुः विद्याव्रतमिदंप्रोक्तंगुरुदैवतमित्यपि तन्मुखाद्धितदातस्य निःश्रेयससमागमः सदातदुक्तकारीस्यान्नस्यात्तच्छासनातिगः तिष्ठंतिष्ठत्सुगुरुषुनचासीततदग्रतः नशयीततदासीनकुर्वीतवचनान्यपि नलंघयीतवचनंगुरोःकृत्येयतेतच निवेद्यगुरवेसर्वंकुर्य्यादादौतदाहितं एवमाचार्य्यनिष्ठस्तुमतिमान्प्राज्ञसम्मतःउत्पन्नज्ञानवैराग्योदीर्घमायुरवाप्यच यशश्चविपुलंलब्ध्वातदाचारप्रवर्तनं पुत्रपौत्रश्रियाजुष्टःपुण्यांगतिमवाप्नुयात् एवंसमापयेद्विद्वान्विद्याव्रतमुदारधीः दद्यात्फलानिविप्रेभ्योह्युत्कृष्टानिबहून्यपि कदलीचूतपनससंघानिशुचीन्यपि यस्त्वेवंकुरुतेविद्वान्विद्याव्रतमनन्यधीः समस्तविद्यानिपुणोवैष्णवंपदमृच्छति ॥

॥ इतिचैत्रशुक्लप्रतिपदाकृत्यम् ॥

अथचैत्रशुक्लद्वितीयाकृत्यानि नारदीये चैत्रशुक्लद्वितीयायांब्रह्माणंचसशक्तिकं हविष्यान्नेनगंधाद्यैःसंतोष्यसर्वक्रतोद्भवं फलंलब्ध्वाखिलान्कामानंतेब्रह्मपदंव्रजेत् अस्मिन्नेवदिनेविप्रबालेंदुमुदितंपरं समभ्यर्च्यनिशारंभेभुक्तिमुक्तिफलीभवेत् अथवास्मिन्दिनेभक्त्यादस्रावभ्यर्च्यभक्तितः सुवर्णरजतेतेद्वेप्रदद्यात्तुद्विजातये प्राणयात्राव्रतंह्य.त्रदध्नाचापिघृतेनच नेत्रव्रतंद्वादशवत्सरांतेकृत्वाभवेद्भूमिपतिर्द्विजेंद्र सुरूपरूपीरिगणप्रतापीधर्माभिरामोनृपवर्गमुख्यःनिर्णयामृतेप्युक्तं चैत्रशुक्लद्वितीयायामुमापूजाचकार्य्यातदुक्तंभविष्यपुराणे चैत्रशुक्लद्वितीयायामुमापूज्याफलार्थिभिःशिवपूजाग्निपूजाचकर्तव्यामुनिसत्तम देवीपुराणे उमांशिवंहुताशंचद्वितीयायांप्रपूजयेत् हविष्यमन्ननैवेद्यदेयंगंधार्चनान्वितं फलमाप्नोति विप्रेंद्र सर्वक्रतुसमुद्भवं अस्यामेवारभ्यंबालेंदुव्रतंविष्णुधर्मोत्तरे मार्कंडेयउवाच इमातथान्यांवक्ष्यामिद्वितीयांसर्वकामदां यामुपोष्यनरःकामान्सर्वानाप्नोत्यभीप्सितान् चैत्रशुक्लद्वितीयायां

संप्राप्यनृपमानवः दिनावसानेकुर्वीतसम्यक्स्नानंनदीजले दिनावसाने संध्यासन्निहितकालेवालेंदुमंड
लंकृत्वापूजयेच्छुतवर्णकैः चंद्रदर्शनकालेतुचंद्रमावाह्यपूजयेत् श्वेतपुष्पैःफलैश्चैवपरमान्नेनभूरिणा इक्षुणेक्षुवि
कारैश्चशुद्धेनलवणेनच दिनावसानेदेवेशंपूजयेद्वानिशाकरं अत्रचंद्रदर्शनंविनापि गगनस्थंचंद्रमंडलंमनसि
कृत्वापूजयेदित्यर्थः घृतेनहवनंकृत्वानक्तंभुंजीतवाग्यतः प्रणवादिनमोंतेनस्वाहांतेनक्रमेणतु नाममंत्रेण पूजा
होमौ तत्तैलैः पाचितंतुभक्षयेत्सर्वदैवतु अतैलपाचितंयावद्व्रताचरणंतावत्तैलपाचितंनभुंजीतेत्यर्थः एतद्व्रतं
नरःकृत्वासम्यक्संवत्सरंशुचिः सौभाग्यंमहदाप्नोतिस्वर्गलोकंचगच्छति संवत्सरंवर्षपर्यंतंप्रतिमासंशुक्लद्वि
तीयायांपूजाहोमनक्तभोजनानिकार्याणि एतत्पवित्रंरिपुनाशकारिसौभाग्यदंरोगहरंचराजन् प्रोक्तंव्र
तंयादवंवंशमुख्यकार्यंप्रयत्नेनकुलस्त्रियापिइतिविष्णुधर्मोत्तरोक्तंवालेंदुद्वितीयाव्रतं
अथसर्वासुशुक्लद्वितीयासु अभिनवचंद्रार्घ्यदानविधिः भविष्योत्तरे श्रीकृष्णउवाच पार्थपार्थिवराजश्री
मुखपंकजसद्मवे शृणुष्वाभिनवस्येंदोस्तदर्घ्यविधिंपरं रवेर्द्वादशभिर्भागैर्वारुण्यांदृश्यतेशशी प्रदोषसमये
राजन्नर्घ्यंदद्यात्तदाविधौ द्वितीयायांसितपक्षेसंध्याकालेह्युपस्थिते संस्थाप्याभिनवंचंद्रंभूमौगोमयमंडलेरोहि
णीसहितंचंद्रंचंदनेनसुशोभनं राजतेवाथकांस्येवाभाजनेश्वेततंडुलैः पुष्पचंदनधूपैश्चदीपाक्षतजलैः शुभैः
दूर्वांकुरैरत्नवरैः दध्नावस्त्रेणपांडुरैः मंत्रेणानेनराजेंद्रक्षत्रियःसपुरोहितः नवोनवोमासिमासिजायमानःपुनः
पुनः आप्यायस्वसमेत्येवंसोमराजनमोस्तुते अनेनविधिनाचार्घ्यंसर्वकामफलप्रदं यःप्रयच्छतिकौंतेयमासिमा
सिसमाहितं संकीर्त्यायशसाकांत्याधृत्याचभुविमानवः पुत्रैः पौत्रैः परिवृतोगोधान्यधनसंकुलःस्थित्वावर्षश
तमर्त्येततः सोमपुरंव्रजेत् तत्रास्तेदिव्यवपुषाभुंजन्भोगान्मनोरमान् वरस्त्रीभिःसहास्त्यर्थंयावदाभूतसंप्लवं

धर्म्यांसमृद्धिमतुलांयदिवांछसित्वंमासानुमासमिहमद्वचनंकुरुष्वसोमस्यसोमकुलनंदनपुष्पधूपैरर्घ्यं प्रयच्छविधि
नाभिनवोदितस्य इतिभविष्योत्तरेभिनवचंद्रार्घ्यदानविधिः अस्यामेवविष्णुधर्मोत्तरोक्तंनेत्रव्रतम् ॥
मार्कंडेयउवाच नासत्यौदेवभिषजावश्विनौपरिकीर्तितौ तावेवप्रथितौलोकेसूर्यताराभिधौनृप सूर्यचंद्ररूपावि
त्यर्थः अश्वयानरतौयस्मादाश्विनापरिकीर्तितौ चैत्रशुक्लद्वितीयायांसोपवासोजितेन्द्रियः नासत्यौदेवभिषजौपूज
येत्प्रयतःशुचिः गंधमाल्यनमस्कारैर्धूपदीपान्नसंपदा कृत्वाचमूर्त्तिनिर्माणंनासत्यौपूजयेन्नृप नासत्यमूर्त्तिस्तु
विश्वकर्मोक्ता द्विभुजौदेवभिषजौगौरांगौचारुलोचनौ तयोरोषधीःकार्य्यादिव्यादक्षिणहस्तगाः सपुस्तककरौका
र्य्यौदर्शनीयौतथाद्विज दीपमालांतथादद्यात्तयोर्निशिविशेषतः कनकंरजतंचापिदद्याद्विप्रेषुदक्षिणां संपूज्यनेत्रयु
गलंविष्णोः संवत्सरंनृप प्रदीप्ततेजाभवतिचक्षुष्मांश्चैवजायते प्राणयात्रांप्रकुर्वीतदध्नाघृतयुतेनच नेत्रव्रतंद्वा
दशवत्सराणिकृत्वाभवेद्भूमिपतिःप्रदीपः सरूपरूपोरिगणप्रमाथीधर्माभिरामोनृपवर्गमुख्यः ॥
इतिविष्णुधर्मोत्तरोक्तंनेत्रव्रतम् इतिचैत्रशुक्लद्वितीयाकृत्यम् :
अथचैत्रशुक्लतृतीयाकृत्यं नारदीये चैत्रशुक्लतृतीयायांगौरींकृत्वासभर्तृकां सौवर्णींराजतींवापिताम्रजांमृण्म
यींद्विज अभ्यर्च्यगंधपुष्पाद्यैर्वस्त्रैराभरणैःशुभैःदूर्वाकांडैश्चविधिवत्सोपवासातुकन्यका वरार्थिनीतुसौभाग्यपुत्रभ
र्त्रर्थिनीतथा द्विजभार्याभर्तृमतीः कन्यकावासुलक्षणा सिंदूरांजनवस्त्राद्यैः प्रतोष्यप्रीतमानसा रात्रौजागरणंकु
र्य्याद्व्रतसंपूर्तिकाम्यया ततस्तांप्रतिमांविप्रगुरवेप्रतिपादयेत् धातुजांमृण्मयींवापिनिक्षिपेच्चजलाशये एवंद्वादश
वर्षाणिकृत्वागौरीव्रतंशुभं धेनूर्द्वादशसंकल्प्यदद्यादुत्सर्गसिद्धये किमत्रबहुनोक्तेनगौरीसौभाग्यदायिनी स्त्रीणां
यथातथानान्याविद्यतेभुवनत्रये धनंपुत्रान्पतिंविद्यामाज्ञासिद्धिंयशःसुखं लभतेसर्वमेवेष्टंगौरीमभ्यर्च्यभक्तित इ

तिसौभाग्यगौरीव्रतं अथास्यामेवसौभाग्यशयनव्रतं मात्स्ये वसंतमाससमासाद्यतृतीयायांजनाप्रिये सौभाग्यायस दास्त्रीभिः कार्य्यंपुत्रसुखेप्सुभिः शुक्लपक्षस्यपूर्वाह्णेतिलैः स्नानसमाचरेत् तस्मिन्नहनिसादेवीकिलविश्वात्म नासती पाणिग्राहणिकैर्मंत्रैरूढायावरवर्णिनी तयासहैवदेवेशंतृतीयायांसमर्चयेत् फलैर्नानाविधैर्धूपैर्दीपैर्नैवेद्य संयुतैः प्रतिमांपंचगव्येनतथागंधोदकेनच स्नापयित्वार्चयेद्गौरीमिंदुशेखरसंयुतां नमोस्तुपाटलायास्तुपादौदे व्याः शिवस्यतु शिवायेतिचसंकीर्त्य १ जयायैगुल्फयोस्तथा १ त्रिगुणायेतिरुद्रस्य २ भवान्यैजंघयोर्यु गंशिवेरुद्रेश्वरायेति ३ जयायैइतिजानुनी संकीर्त्यहारिकेशाय ४ तथोरुवरदेनमः ईशायैशंकरं ५ रत्यै शकरा येतिशंकरं कुक्षिद्वये ६ चकोटय्यै शूलिनः शूलपाणये ७ मंगलायैनमस्तुभ्यमुदरंचापिपूजयेत् ८ सर्वात्मनेनमो रुद्रमीशान्यैचकुचद्वयंशिवंवेदात्मनेतद्वद्रुद्राण्यैकंठमर्चयेत् १० त्रिपुरघ्नायविश्वेशमनंतायैकरद्वय ११ त्रिलोच नायेतिहरेवाहूकालानलप्रिये १२ सौभाग्यभवनायेतिभूषणादिसमर्चयेत् ततोर्धनारीशहरमासितांगीतिनासि कां १३ नमउग्रायलोकेशंललितेतिपुनर्भ्रुवोः शिवायपुरहंतारंवसुदेव्यैतथालिकं १४ नमःश्रीकंठनाथायाशि वंकेशांस्तथार्चयेत् १५ भीमोग्रसौम्यरूपिण्यैशिर सर्वात्मनेनमः १६ शिवमभ्यर्च्यविधिवत्सौभाग्याष्टकामि त्यत. स्थापयेतव्रतानिशांचकुसुंभाजीजजीरकतालराजेक्षुलवणकुस्तुंवुरुमथासुमं दत्तंसौभाग्यकृद्यस्मात्सौभाग्याष्ट कमित्यतः एवंनिवेदयेत्सर्वमग्रतः शिवयोःपुनः चैत्रेशृंगोदकंप्राश्यस्वपेद्भूमावरिंदम पुनःप्रभातेतुतथाकृतःस्नान जप शुचिः संपूज्यद्विजदांपत्यंमाल्यवस्त्रविभूषणैःसौभाग्याष्टकसंयुक्तसुवर्णप्रतिमाद्वयप्रीयतायत्रललिताब्राह्मणा यनिवेदयेत् एवसंवत्सरंयावत्तृतीयायांसदामुने प्राशनेदानमंत्रेचाविशेषोयंनिबोधमे गोशृंगोदकमाद्येस्याद्वैशाखे

गोमयंपुनः ज्येष्ठेमंदारकुसुमंविल्वपत्रंशुचौस्मृतं श्रावणेदधिसंप्राश्यंनभस्येचकुशोदकं क्षीरमाश्वयुजेमासि कार्त्तिकेपृषदाज्यकं मार्गशीर्षेतुगोमूत्रंपौषेसंप्राशयेद्घृतंमाघेकृष्णतिलांस्तद्वत्पंचगव्यंचफाल्गुने ललिताविजया भद्राभवानीकुमुदाशिवा वासुदेवीतथागौरीमंगलाकमलासती उमाचदानकालेतुप्रीयतामितिकीर्त्तयेत् मल्लिका शोककमलंकफोलानीतिमालती कुब्जकंकरवीरंचवाणमम्लातकुंकुमं सिंदुवारंचसर्वेषुमासेषुक्रमशःस्मृतं वाणंनीलकंठः जपाकुसुमकुस्तुंभमालतीशतपत्रिका यथालाभंप्रशस्तानिकरवीरंचसर्वदा एवंसंवत्सरंयावदुपोष्यविधिवन्नरः स्त्रीवाभक्ताकुमारीवाशिवावभ्यर्च्यभक्तितः व्रतांतेशयनंदद्यात्सर्वोपस्करसंयुतं उमामहेश्वरंहैमंवृषभंचगवासह स्थापयित्वाचशयनेब्राह्मणायनिवेदयेत् गोयुगंहैमं अन्यान्यपियथाशक्त्यामिथुनान्यवरादिभिःधान्यालंकारगोदानै रभ्यर्च्यधनसंचयैः वित्तशाठ्येनरहितःपूजयेद्गतविस्मयः एवंकरोतियःसम्यक्सौभाग्यशयनंव्रतं करोतिसप्तचाष्टौवाश्रीकंठभुवनेमरैः पूज्यमानोवसेत्सम्यग्यावत्कल्पायुतत्रयं नारीवाकुरुतेवापिकुमारीवानरेश्वर सापितत्फलमाप्नोतिदेव्यनुग्रहलालिता इत्युद्यापनाविधिः इतिमत्स्यपुराणेसोद्यापनंसौभाग्यशयनंगौरीव्रतं

अत्रैवगौरीदोलोत्सवउक्तः

हेमाद्रौदेवीपुराणे तृतीयायांयजेद्देवींशंकरेणसमन्वितां कुंकुमागुरुकस्तूरीमणिवस्त्रसुगंधितां सुगंधीपुष्पधूपैश्चदमनेनसमालिना आंदोलदोलयेद्वत्साशिवोमातुष्टयेसदा रात्रौजागरणंकार्य्यंप्रातर्देयातुदक्षिणा सौभाग्याक्षयदास्त्रीभिःकार्य्यापुत्रसुखार्थिभिः हेमवस्त्रान्नपानानितांबूलानिस्रजस्तथा सौवर्णातुह्युमाकार्य्याराजतःशंकरस्तथा चतुर्भुजस्तुदेवेशोद्विभुजोमाप्रकीर्तिता इयमुहूर्तमात्रापिपराग्राह्यागौरीदैवतत्वात् मुहूर्तमात्रसत्त्वेपिदिनेगौरीव्रतंपरे इयमन्वादिरपि श्राद्धेअपराह्णव्यापिनीग्राह्यास्नानादौपरग्राह्या ॥

इतिदेवीपुराणोक्तगौरीदोलोत्सवतृतीयायांमन्वादौश्राद्धमुक्तं मात्स्ये

कृत्वाश्राद्धंविधानेनमन्वादिषुयुगादिषुहायनानांद्विसाहस्रंपितॄणांतृप्तिदंभवेत् चैत्रशुक्लतृतीयायां श्रीरामचन्द्रदोलो त्सवः श्रीरामार्चनचंद्रिकायां गारुडे मधौशुक्लतृतीयायांजानकीरमणंप्रभुं राजोपचारैःसपूज्यमासमादोलयेत्क लौ दक्षिणाभिमुखंदेवंदोलमानंसुरेश्वरं सुपूजितंसकृद्दृष्ट्वासर्वपापैःप्रमुच्यते चैत्रमासिसितेपक्षेतृतीयायांरमा पतिं दोलारूढंसमभ्यर्च्यमासमादोलितंभुवि दोलारूढंप्रपश्यंतियेकृष्णंमधुमाधवे अपराधान्प्रहित्वा शुमुक्तास्तेनात्रसंशयः दोलारूढस्यतस्यैवयेप्रकुर्वंतिजागरं सर्वपुण्यफलावाप्तिर्निमिषेनिमिषेभवेत् नित्यं

चैतद्व्रतमूर्जेमधौदोलेतिवचनात्

दोलानिर्माणं चैत्रमासकृत्येबोध्यम् इयमेवगौरीतृतीयोच्यते तत्रमुहू

र्तमात्रापिपरयुताग्राह्येत्युक्तं अथास्यामारभ्यंगौरीव्रतं शिवउवाच गौरीव्रतमथोवक्ष्येस्त्रीणांसौभाग्यवर्द्धनम् चैत्रशुक्लतृतीयायांव्रतंगौर्य्यासमाचरेत् उपोष्यतुप्रयत्नेनविधानमिदमाचरेत् रक्तांवरधरोभूत्वाक्रोधलोभवि वर्जितः स्थंडिलेहस्तमात्रंतुकर्तव्यंगंधमंडलं कुंकुमेंदुसुशांतेनवर्तुलंपरिवर्तयेत् इंदुःकर्पूरःसुशीतंचंदनं तत्र मध्येपूजितव्याप्रतिमाहेमसंभवा मधुजातदभावेतुपुराकेनापिनिर्मिता रक्तचंदनजावाथकर्तव्यासाप्रमाणतः पं चवृत्ताथवापूज्यातत्रमासांविधानतः पंचवृत्तापंचपिंडमयीत्यर्थः रक्तपुष्पैस्तुसंपूज्याजातीचंपकसंयुतैः पाटलाक रवीरैश्चरक्तपद्मैर्यथातथा कुंडलाभरणान्यत्ररसनादीनिदापयेत् रसनाक्षुद्रघंटिका भक्ष्याणितृक्षुसा- निघृतखंडयुतानिच शीतलंचघनंदुग्धंमुग्धंचदधिपिच्छिलं मुग्धंमनोहरंपिच्छिलंचिक्कणं करंभंनवनीतंचतथाशिख रिणींपुनः करंभोदधिसक्तवःशिखरिणीरसाला मध्यदेशप्रसिद्धा पानकंचैवपानीयंसचंद्रंदापयेत्ततः पानकं

हितस्त्वयीमार्गातिगोथवा सुप्रसिद्धंजगत्येतद्व।पतकनहतुना श्रीकृष्णउवाच भवान्धर्मार्थकुशलःसर्वज्ञइतिमेम तिः व्रतंचैतज्जगद्व्याप्तंनाख्यातंतेनतेमया यद्यास्तिश्रवणेबुद्धिःश्रूयतांपांडुनंदन कोन्यःश्रोताजगत्यस्मिन्भवता सदृशोमम जयाचविजयाचैवपार्वत्याःपरिचारिके आगत्यमुनिकन्याभिःपृष्टेभीष्टफलेच्छया भवत्यौसर्वदादेव्या श्चित्तवृत्तिविदेकिल केनव्रतोपचारेणकस्मिन्नहनिपार्वती पूजितातोषमायातिमंत्रैःकैश्चवरानने तासांतद्वचनंश्रु त्वाजयाप्रोवाचसादरं श्रूयतामभिधास्यामिसर्वकामफलप्रदं व्रतमुत्सवसंयुक्तंनरनारीमनोरमं चैत्रेमासितृतीया यांदंतधावनपूर्वकं उपवासस्यनियमंगृह्णीयाद्भक्तिभावतः अंजनंचसतांबूलंसिंदूरंरक्तवाससी विसर्जयेत्सोपवा साप्यवैधव्यकरंपरं विधवापतिमार्गेणकुमारीवायदृच्छया कुर्य्यादार्चनविधिंश्रूयतामत्रचक्रमः विचित्रपटवस्त्रै स्तुकुर्य्यान्मंडपिकांशुभां कारयेत्कुसुमामोदवासितांभूपितांशुभां प्रवालालंबितप्रांतामंतर्दिव्यवितानकां विन्य स्तपूर्णकलशांपीठास्थितलसद्द्विजां पुरतःकारयेत्कुंडंहस्तमात्रसमेखलं ततःस्नात्वाशुचिर्भूत्वापरिधायसुवास सी देवान्पितॄन्समभ्यर्च्यततोदेवीगृहंव्रजेत् नामाष्टकेनसंपूज्यगौरींशंकरवल्लभां नामाष्टकेनवक्ष्यमाणेनशोभ नवल्लभामितिपाठेवृषभध्वजवल्लभामित्यर्थः तत्कालप्रभवैः पुष्पैर्गंधादालिकुलाकुलैः कुंकुमेनसमालभ्यकर्पूरा गुरुचंदनैः एवंसंपूज्यविधिवत्सुधूपेनाधिवासयेत् पार्वतीललितागौरीगायत्रीशांकरीशिवा उमासतीसमुद्दिष्टं नामाष्टकमिदंशुभ लड्डुकैःखंडवेष्टैश्चगुणकैः सिंहकेसरैः सोहालकैश्चेक्षुरसैर्दधिभक्तैःसपूपकैः घृतपक्वैर्बहुवि धैःशुचिभिःपरिकल्पितैः दृष्टिप्राणप्रियैर्हृद्यैर्नैवेद्यैःपूजयेदुमां सिंहकेसरैःसिंहकेसरवद्बलीकृतैः धान्यकंजीरकंभ व्यंकुंकुमंलवणंगुडं विकारवच्चयत्क्षीरंहारिद्रांचपुरान्न्यसेत् भव्यमुत्कृष्टंनारिकेलंसनारंगंबीजपूरंसदाडिमं कूष्मा ण्डंत्रपुसंवृन्तंदधित्थपनसंतथा घनंवन्तनातिपक्वमित्यर्थः त्रपुसंवालुकं दधित्थंकपित्थं कालोद्भवान्निजान्यपि

शर्कराद्यादिफलरसैःसचंद्रंसकर्पूरं रक्तवस्त्राणिदेयानिसंभारार्थानिचाग्रतः आचार्य्यश्चैवपूज्योतिपूजनीयःप्रयत्नतः
हेमवस्त्रान्नपानैश्चवित्तशाठ्यंविनासुत रात्रौजागरणंकार्य्यंकुमारींभोजयेत्तथा देवीनामानिवक्ष्यामिमासिमासि
यथाक्रमं प्राशनंतुविशेषेणयथावदनुपूर्वशः गौरीउमाचललितासुभगाभगमालिनी मनोन्मनीभवानीचकामदा
भोगवर्द्धनी अंबिकाचतथाकृष्णारुद्राणीपूजयेत्क्रमात् इत्येताःसितपक्षेतुकृष्णपक्षेतथाशृणु रतिःप्रीतिर्धृतिर्बुद्धिः
भीतिःपुष्टिश्चकीर्तिता प्रज्ञामेधातथाचार्य्याश्रीरक्ताकीर्तिरेवच सितासिताभ्यांपक्षाभ्यांव्रतंयत्नात्समाचरेत् अशक्त
त्वादभावाच्चद्रव्याणांतुस्थितंहितं प्राशनंतत्रकर्त्तव्यंशास्त्रोक्तेनचवर्त्मना तत्तन्मासोक्तद्रव्यालाभेरोगादिजनक
त्वेनचप्राशनाशक्तौचक्रमेणद्वादशमासेषुयत्स्थितं यल्लब्धंयच्चहितंतत्प्राशनीयमित्यशक्तादेरित्यर्थः प्रतिमासंप्रव
क्ष्यामिशृणुवक्ष्येक्रमेणतु क्षीरंदधिघृतंचैवगोमूत्रंचकुशोदकं विल्वपत्रोदकंचैवतथान्यच्चंदनोदकं जातीपत्रोदकं
चैवपद्मकेसरमेवच नागकेसरसंज्ञंचलवंगंचंद्रमेवच शुक्लपक्षेतुकथितंचैत्रात्प्रभृतिपण्मुख प्राशनंकृष्णपक्षेतुक
थ्यमानंशृणुष्वतत् वलांकंकोलकंचैवप्राशयेत्तुशतावरीं घनतामुरंदारुसारिपांशंखपुष्पिकां शैरीषंसुरभीयुक्तं
रक्तंचमौक्तिकंतथा तथोदकंद्वादशकंप्राशनेकथितंतव इदंगौरीव्रतंख्यातंसौभाग्यस्त्रीपुत्रदं आयुरारोग्यदंस्त्री
णामिहलोकेपरत्रच इदंव्रतवरंत्यक्त्वास्त्रीणांनान्यव्रतंहितं तस्मात्सर्वप्रयत्नेनगौरीव्रतमुपाचरेत् अंजनंरक्तवस्त्रं
चतांबूलंकुंकुमंतथा दर्पणंव्यजनंछत्रमासनंयानमुत्तमं गृहोपकरणंसर्वंहेमजंवाथताम्रजं व्रतांतेचैवदातव्यमा
चार्य्यायप्रयत्नतः स्त्रीणांचैवकुमारीणांवस्त्राण्याभरणानिच दातव्यानिप्रयत्नेनयदीच्छेद्भूतिमात्मनः इत्येतत्स
रहस्यंतुगौरीव्रतमुदाहृतं ॥ इतिकालांतरोक्तंगौरीव्रतं ॥ अथचैत्रभाद्रपदमाघशुक्लतृतीयासुभविष्योक्तंगौरीव्रतं
युधिष्ठिरउवाच चैत्रेभाद्रपदेमाघेरूपसौभाग्यसौख्यदं तृतीयात्रयमेतन्मेकृष्णकस्मान्नकीर्तितं किमहंभक्तिर

फलानिपुरतोन्यसेत् पत्रकौलूखलशिलाशूर्पाणांततिभिःसह नेत्रांजनंशलाकांचनखसाधनकानिच दर्पणंनिर्मलंघं टांभवान्यैविनिवेदयेत् शंखतूर्यनिनादैश्वगीतमंगलनिःस्वनैः भक्त्याशक्त्याचसंपूज्यदेवींशंकरवल्लभां ततोस्तस- मयेभानोकुमार्य्यःकरकैर्नवैः स्नानंकुर्य्युर्मुदायुक्ताःसौभाग्यारोग्यसिद्धये कुमार्य्यइतिव्रतचारिणीनामुपलक्षणं या मेयामेगतेस्नानंदेवीपूजनमेवच तेरेवनामभिर्होमास्तिलाज्येनप्रशस्यते पद्मासनस्थितासाध्वीतेनैवार्द्रेणवाससा गौरीवक्षेक्षणगतारात्रिंतामतिवाहयेत् काश्चिद्गायंतिसंहृष्टाःकाश्चिन्नृत्यंतिहार्पिताःकथयंतिकथाःकाश्चिद्धर्मकामार्थ संश्रयाः गीततालानुसंवद्धमनुद्धतसमाकुलं नृत्यंतिचपुरोदेव्याःकाश्चिद्विलासितभ्रुवःनृत्येनतुष्यतिहरोगौरीगीते नतुष्यति सद्भाविनाथवासर्वेगृह्यंतेत्रिदिवौकसः सुवासिनीभ्यस्तांबूलंकुंकुमंकुसुमानिच प्रदेयंजागरवतामन्येपा मप्यवारितं नटैर्विटैर्भटैर्भद्रैःपूरणैःप्रोक्षणोत्सवैः सखीभिःसहितारात्रिंगीतनृत्यहसैर्नयेत् एवंप्रभातसमयेस्ना त्वासंपूज्यपार्वतीं शक्त्यातुलांसमारोहेद्दस्त्रालंकारभूषिता तोलयेत्सितयात्मानंगुडेनलवणेनच सितयाशर्क रया कुंकुमेनाथवाशक्त्याकर्पूरागुरुचंदनैः पर्वतानामपीच्छंतिदानंकेचिद्बसूरयः कुंडमंडपसंभारमंत्रैराधिव सेद्यतत् लवणेनतथात्मानंतोलयंत्यागुडेनच कयापिशक्तिरतयासौभाग्यमतुलीकृतं शक्तिरतया देवीरतया एवं देवींप्रणम्याचैसमाप्यगृहमाविशेत् आमंत्र्याद्द्विजदांपत्यंवासोभिर्भूषणैस्तथा संपूज्यभोजयित्वाथदद्यात्ते भ्योथदक्षिणांचयदात्माभीप्सितमंशयनंयानमेवच वस्त्रमाभरणंगावः सर्वंतेभ्योनिवेदयेत् हेमपत्रंरत्नफलं मुक्ताचूर्णविचूर्णितं तांबूलंकेचिदिच्छंतिदीयमानं सखीजने पत्रस्थाने सुवर्णस्यपत्राणिपूगस्थानेरत्नानि चूर्णस्थाने मुक्ताफलानि एवंविधंतांबूलंसखीजनेदेयं अन्नंचमधुरप्रायंभोजयित्वासुवासिनीः स्वयंभुंजी तसहिताज्ञातिबंधुजनैः स्वकैः यच्चदेव्याः पुरोदत्तंनैवेद्यादिसुशोभनं प्रतिगेहंनयेत्सर्वं विभज्याभ्रांतमानसा

दत्तवाचनकाहृष्टाकृतकृत्याभवेत्ततः विधिर्भाद्रपदेह्येषःसौख्यसंपत्प्रदायकः सप्तधान्यविरूढैश्चशूर्पस्थांपू
जयेदुमां पूर्णकलशस्थानेशूर्पइतिविशेषः गोमूत्रप्राशनंयस्मात्तस्माद्गोमूत्रसंज्ञिता माघमासेतृतीयायांविशेषः
श्रूयतामयं पूर्वोक्तंसकलंकृत्वाप्रभातेयत्रसंस्तरे स्थापयित्वाकुंदपुष्पैः पूजयेत्ससुतामुमां एतेनकारणेनोक्ताचतु
र्थीकुंदसंज्ञिता पूर्वोक्तसकलतृतीयायांकृत्वाप्रभाते चतुर्थीदिवसेससुतांविनायकसहितामुमापूजयेदित्यर्थः उ
मारूपंतुकर्त्तव्यंगोधासनगतंशुभ सौवर्णंचमहाराजसाक्षसूत्रकमंडलुं विनायकश्चकर्तव्योगजवक्त्रश्चतुर्भुजः तृ
तीयात्रयमेतत्तेकथितंसर्वकामदं जययामुनिकन्यानांयत्पुरासमुदाहृतं एवयाकापिकुरुतेनारीव्रतमिदंशुभं सारू
पसौभाग्ययुतामृतास्वर्गेमहीयते नदुर्भगाकुलेतस्याःकुलेभवतिभारत नदुर्विनीतश्चसुतोनभृत्योविघ्नकृद्भवेत्
नदारिद्र्यगृहेतस्मिन्नव्याधिरुपजायते यत्रसारमतेनारीधौतचामीकरप्रभा अन्याश्चया.करिष्यंतिब्राह्मणानुम
तेव्रतं संपूज्यवाचकंभक्त्याभूषणाच्छादनाशनैः तास्ताःस्यु·सुखसपन्नाअविपन्नमनोरथाः भविष्यंतिकुरुश्रेष्ठ
कुलज्येष्ठनमोस्तुते माघेमहार्हमणिमंडितपादपीठांचैत्रेविचित्रकुसुमोत्करचर्चितांगीं शूर्पप्ररूढनवशष्पमयीं
नभस्येसंपूज्यशंभुदयितांप्रभवंतिनार्यः

इतिभविष्योत्तरोक्तंगौरीतृतीयाव्रतत्रयम् अथचैत्रशुक्लतृतीयायामरुंधतीव्रतम्

तत्रस्त्रीणामेवाधिकारः अवैधव्यादिफलश्रवणात् अत्रादौपूजा अष्टपत्रेकर्णिकायांमंडलेपूजयेद्ध्रुवं अरुंधतींम
हादेवींवसिष्ठसहितांसतीं ॐमद्यचैत्रशुक्लतृतीयायांसर्वपापक्षयपूर्वकावैधव्यादिसदभीष्टसिद्धये अरुंधतीव्रतांग
त्वेनवसिष्ठसहितारुंधत्याःपूजनमहंकरिष्ये आगच्छवरदेदेविमंडलेस्मिन्स्थिराभव वसिष्ठेनसमायुक्तापूजांस्वी
कुरुसत्कृता इत्यावाहन अरुंधतिमहादेविसर्वसौभाग्यदायिनिदिव्यंसुचारुवेपंत्वमासनंप्रतिगृह्यतां इत्यासनं

सुचारुशीतलंदिव्यंनानागंधसुवासितं पाद्यंगृहाणदेवेशिअरुंधतिनमोस्तुते इतिपाद्यं अरुंधतिमहाभागेवसिष्ठ
प्रियवादिनि अर्घ्यंगृहाणकल्याणिभर्त्रासहपतिव्रतेइत्यर्घ्यं गंगातोयंसमानीतंसुवर्णकलशेस्थितं आचम्यतां
महाभागेवसिष्ठसहितेनघे इत्याचमनं गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः स्नापितासिमयादेविसदाशांतिंकुरु
ष्वमेइतिस्नानं नानारागसमायुक्तं दिव्यंचारुमनोहरं वस्त्रंगृहाणदेवेशिअरुंधतिनमोस्तुतेइतिवस्त्रं कर्पूरकुंकुमैर्युक्तंह
रिद्रादिसमन्वितं कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यतां इतिगंधं अक्षताश्चसुरश्रेष्ठकुंकमाक्ताःसुशोभनाःमालालंकार
सिद्ध्यर्थंप्रीत्यार्घ्यंप्रतिगृह्यतां इत्यक्षताः माल्यानिचैसुगंधीनिमालत्यादीनिवैपुनः मयाहृतानिपुष्पाणिपूजार्थंप्रति
गृह्यतां इतिपुष्पाणि गुग्गुलागुरुकस्तूरीचंदनादिविमिश्रितः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां इतिधूपःआज्यं
त्रिवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशित्रैलोक्यतिमिरापहं इतिदीपः अन्नंचतुर्विधंस्वादुरसैः
षड्भिःसमन्वितं नैवेद्यंगृह्यतांदेविप्रसादंकुरुसर्वदाइतिनैवेद्यं पूगीफलमिदंदिव्यंनागवल्लीदलैर्युतं कर्पूरैलासमा
युक्तंतांबूलंप्रतिगृह्यतां इतितांबूलं इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि
इतिफलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमे इतिदक्षिणा पुत्रान्दे
हि धनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते इतिप्रार्थना अरुंधतिमहाभागेवसिष्ठप्रि
यवादिनि सौभाग्यंदेहिमेदेविधनपुत्रांश्चदेहिमे इत्यर्घ्यं द्विभुजांचारुसर्वांगींसाक्षसूत्रकमंडलुं प्रतिमांकांचनींकृ
त्वानामभिःपरिपूजयेत् देववंद्यायैनमःपादौपूजयामि लोकवंद्यायैनमःजानुनीपू- संपत्तिदायिन्यैनमःकटिंपू- गं
भीरनाभ्यैनमःनाभिंपू. लोकधात्र्यैनमःस्तनौपू-जगद्धात्र्यैनमःकंठंपूज.शांत्यैनमःबाहूपू.वरदायैनमःहस्तौपू. धृत्यै
नमःमुखंपू. अरुंधत्यैनमः शिरःपू. सकलप्रियायैनमःशिखांपू.वसिष्ठप्रियायैनमःसर्वांगंपूजयामि ततोनीराजनं

कुर्य्यात् पुष्पांजलिंचदद्यात् वंशपात्रस्थितंपूर्णवायनंद्रव्यसंयुतं 'अरुंधत्याःप्रीणनार्थंब्राह्मणायददाम्यहं' इतिवा यनं सुवर्णप्रतिमायुक्तांवसिष्ठेनसुशोभितां अरुंधतींवासिष्ठंचब्राह्मणायददाम्यहं' इतिमूर्त्तिदानमंत्रः गच्छदेविय थास्थानसर्वालंकारभूषिते अरुंधतिनमस्तुभ्यंदेहिसौभाग्यमुत्तमं इतिविसर्जनं अथकथा हेमाद्रौ स्कांदे ईश्वरउ वाच अरुंधतीव्रतंवक्ष्येसदासौभाग्यदायकं येनचीर्णेनवैसम्यङ्नारीसौभाग्यभाजनम् जायतेरूपसंपन्नापुत्रपौ त्रसमन्विता वसंतेतुसमासाद्यतृतीयांपुरुषर्षभ स्नानंकृत्वातुवैसम्यकूत्रिरात्रोपोषितासती मिथुनानितुचत्वा रि समाहूयपतिव्रता पूजयेत्पुष्पतांबूलैश्चंदनैश्चतथाक्षतैः कुंकुमागुरुकर्पूरैःसिंदूरैर्मृगनाभिभिः शिलापट्टेनसंप्रा प्यजीरकंलवणान्वितं लोष्टकेनसमायुक्तंवस्त्रयुग्मेनवेष्टितं आवाहयेन्महादेवींवसिष्ठेनसमन्वितां पतिव्रतानांस र्वासांमुख्यात्वंदेवभामिनि द्विभुजांचारुसर्वांगींसाक्षसूत्रकमंडलुं प्रतिमांकांचनींकृत्वानामभिस्तांप्रपूजयेत् देव वंद्यैनमःपादौजानुभ्यांलोकवंदिते कटिंसंपूजयेत्तस्याममसंपत्तिदायिनी नाभिंगंभीरनाभिंतुलोकाधात्र्यैतथास्त नौ जगद्धात्र्यैतथास्कंधौवाहूशांत्यैनमस्तथा हस्तौतुवरदायैतुमुखधृत्यैनमोनमः अरुंधतिमहापूजाशिरस्तुसकल प्रिया एवंसंपूज्यतांदेवींगंधपुष्पोपचारकैः पूजयित्वासतींदेवींतत्रश्चार्घ्यंप्रदापयेत् अरुंधतिमहाभागेवसिष्ठ प्रियवादिनि सौभाग्यंदेहिमेदेविधनंपुत्रांश्चसर्वदा उत्तरार्घ्यमंत्रः पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यां श्चसर्वकामांश्चदेहिदेविनमोस्तुते इतिप्रार्थना सुवासिन्योथसंपूज्यासमाप्तिदिवसेतथा शुभंगंधाक्षतैः पुष्पैर्द द्यात्सूर्पान्समोदकान् होमंचैवतथाकुर्य्यात्समिद्भिश्चातिलैःपृथक् अष्टोत्तरशतसंख्याप्रार्थनामंत्रतःसुधीः मिथुना निचसंपूज्यभूषणाच्छादनादिभिः नानाविधोपचारैश्चचतुर्विंशतिसंख्ययाआचार्य्यायसभार्य्यायसुवस्त्राभरणानिच शय्यांसोपस्करांदद्यात्कांस्यपात्रंसदीपकं आदर्शंचामरंचैवधेनुंदद्यात्पयस्विनीं शक्त्याचभोजयित्वाथस्त्रियः सू.

र्पान्समोदकान् मोदकान्कांचनंचैवतथावस्त्रंयथाविधि पोलिकाघृतपूपांश्चपूरिकाश्चविशेषतः सोहालिकाश्चदात
व्याएकैकंद्विगुणंतथा भोजनद्वयपर्य्याप्तंदीनानाथांश्चतर्पयेत् एवव्रतंसमाप्याथपश्चान्नक्तंसमाचरेत् अनेनैवविधानेनमानिनीकुरुतेव्रतं अवैधव्यमवाप्नोतितथाजन्मसहस्रकं पुत्रपौत्रसमायुक्ताधनधान्यसमन्विता जीवेद्वर्षशतंसाग्रंसहभर्त्रापतिव्रता एवमभ्यर्चयित्वातुपदंगच्छत्यनामयं देवभार्य्यायथास्वर्गेऽप्सराप्भार्य्यातथैवच राजभार्य्यामहाभागासर्वकामफलप्रदा पुरावृत्तमिदंविप्राःशृणुध्वंव्रतमुत्तमं आसीद्विप्रःपुराविप्राःसर्वशास्त्रविशारदः तस्यैकाकन्यकाजातारूपेणाप्रतिमाभुवि ततोविवाहसम्यग्वैपितातस्याकरोद्द्विजाः बालरंडातुसांजातानिर्वेदादगमद्गृहात् यमुनातीरमासाद्यचकारविपुलंतपः एकभक्ताशनैश्चैवकृच्छ्रचांद्रायणैस्तथा मासोपवासनियमैरात्मानंपावयन्सती कदाचिदागतस्तत्रभ्रमन्गौर्यासदाशिवः यमुनातीरमासाद्यपार्वतीतांददर्शह कृपयाचशिवागौरीमहादेवमुवाचसा पार्वत्युवाच देवकेनेदृशींप्राप्तावालवैधव्यतोदशां वदेश्वरमहादेवकृपांकृत्वाममोपरि महादेवउवाच अयंविप्रःपुरागौरिकुलशीलयुतोभुवि तेनकन्यापरिवृतासुरूपायुवतीसती एतांविवाह्यतरुणींविदेशमगमद्द्विजःसाप्यस्यवहुतिथंकालमपश्यत्पुनरागमंनागतस्तुमहाविप्रायावज्जीवंतुसाद्विजःतस्याजन्मागमत्सर्वंविनापत्यातुनिष्फलं तेनपापेनविप्रोसौनारीत्वंप्राप्तवान्शिवे स्वनारींयःपरित्यज्यानिर्दोषांकुलसंभवां यातिदेशांतरंचाथअगाधमदनार्णवे परदाररतोवास्यादन्यांवाकुरुतेस्त्रियं सोन्यजन्मनिदेवेशिस्त्रीभूत्वाविधवाभवेत् यानारीतुपतिंत्यक्त्वामनोवाक्कायकर्मभि रहःकरोतिवैजारंगत्वाचपुरुषांतरं भोगान्भुक्त्वाथसावेपित्सादीनाप्रमदासती तेनकर्मविपाकेनसानारीविधवाभवेत् स्वपत्नींकुलसंभूतांपतिव्रतरतांसतीं अनुकूलांपरित्यज्यपरांयोयातिस्वेच्छया सपापीजायतेन्यस्मिन्स्त्रीहीनोविप्रजन्मनि अनेनसदृशंलोकेसदृशेनास्तिपातकं नवैयव्याल्परोव्याधिर्नवैधव्या

स्परोज्वरः नवैधव्यात्परःशोकोनवैधव्यात्परोंकुशः नरकोनचवैधव्यात्कष्टंवैधव्यंतान्नृपु तेनपापेनघोरेणजाते
र्यबालरंडिका सूतउवाच इतिदेववचःश्रुत्वासागौरीविस्मिताभवत् पप्रच्छमहादेवंगौरीसाकरुणान्विता केनेद
शंमहापापंवाल्यवैधव्यदायकं नश्यतेकर्मणायेनतन्मांवदकृपांकुरु श्रीमहादेवउवाच शृणुदेविप्रवक्ष्यामिबालवैध
व्यनाशनं अरुंधतीव्रतंपुण्यंनारीसौभाग्यदायकं यत्कृत्वाबालवैधव्यान्मुच्यतेनात्रसंशयः श्रुतमेतत्तदाविप्रागौर्या
शंकरतोद्विजाः यमुनातीरमासाद्यउपादिष्टंतदाद्विजाः तस्यैनार्यैमहादेवेनाकृतमेवव्रतंतया तेनपुण्येनमहताव्रतजे
नमुनीश्वराः अरुंधतीव्रतमिदंतस्मात्कार्यंसदास्त्रिया नारीवैधव्यतोमुच्येत्सौभाग्यंप्राप्नुयात्परं इतिहेमाद्रौस्कांद
बालवैधव्यनाशनं सोद्यापन अरुंधतीतृतीयाव्रतं अस्याविधानं ॐ मद्याहंसर्वपापक्षयेत्तरजन्मजन्मांतरेष्ववै
धव्यस्थिरसौभाग्यरूपसंपत्तिपुत्रपौत्रसंततिसंप्राप्तिधनधान्यसंपत्त्यादिसमस्ताभीष्टकामनासिद्ध्यर्थमरुंधतीसमा
नपातिव्रत्यमहिमप्राप्तिकामनयाअरुंधतीतृतीयाव्रतंकरिष्येइतिसंकल्प्यचत्वारिद्विजदांपत्यमिथुनानिसमाहूयते
भ्योयथाशक्तिसौभाग्याष्टकादिद्रव्यंदत्त्वा अनंतरं सौवर्णां वसिष्ठारुंधतीमूर्तिंषोडशोपचारैः संपूज्य वायनंदत्त्वा
तृतीयामुपवासमाचरेत् चतुर्थ्यांद्विजदांपत्यानियथाशक्तिसौभाग्यद्रव्यैःपरितोष्यभोजयित्वा तांमूर्तिमाचार्यायद
द्यात्तत्रमंत्रःसद्वर्णप्रतिमायुक्तांवसिष्ठेनसुशोभितांअरुंधतींवसिष्ठंचब्राह्मणायददाम्यहं एवमाचार्यायमूर्तिंदत्त्वा
स्वयंभुंजीत एवंयथाशक्ति त्रिचतुःपंचवर्षाणिव्रतंकृत्वा अंतेउद्यापनंकुर्यात् पूर्वोदितसंकल्पांते अरुंधतीव्रतो
द्यापनंकरिष्ये सर्वतोभद्रोपरिमूर्तिंप्रतिष्ठाप्य मंडलदेवतापूजनांते अग्निस्थापनंविधाय अन्वाधानांतेवसिष्ठारुंध
त्योर्नाममंत्रैर्गायत्र्याचाष्टोत्तरशताहुतीर्हुत्वा मंडलदेवताश्चैकैकयाहुत्या हुत्वा चतुर्विंशतिमिथुनानिभोजयित्वा
इत्यरुंधतीव्रतोद्यापनं॥ चैत्रशुक्लचतुर्थीकृत्यंनारदीये चैत्रशुक्लचतुर्थ्यांतुवासुदेवस्वरूपिणं गणपंसम्यगभ्यर्च्य

दत्वाकांचनदक्षिणां तिथिकृत्यप्रकरणे गणेशेकारयेत्पूजांलड्डुकादिभिरादरात् चतुर्थ्यांविघ्ननाशायसर्वकामस मृद्धये अत्रैवविष्णुधर्मोक्तमाश्रमव्रतंचतुर्मूर्त्तिव्रतंच चैत्रस्यामलपक्षेतुसोपवासोजितेंद्रियः चतुर्थ्यांवासुदेवस्यकृ त्वासंपूजनंशुभं कांचनंदक्षिणांदद्याद्द्विजायब्रह्मचारिणे इत्याश्रमव्रतं अथचैत्रशुक्लपंचम्यांतृतीयादिपंचम्यंतंत्रि रात्रसाध्यंहेमाद्रौ विष्णुधर्मोत्तरोक्तंश्रीव्रतं मार्कंडेयउवाच अथातः संप्रवक्ष्यामिश्रीव्रतंनामतेःव्रतम् चैत्रशुक्लतृती यायांस्नानमभ्यंगपूर्वकं कृत्वाशुक्लांवरोराजन्शुक्लमाल्यानुलेपनः तिष्ठेद्घृतोदनाहारोभूमौस्वप्यान्निशांचताम् चतु र्थ्यांचतथास्नानंवाहिरेवसमाचरेत् पंचम्यांचविशेषेणशुक्लांवरधरःशुचिःलक्ष्मींसंपूजयेत्पद्मेकृतकेकृतकेपिवा अकृत केपद्मत्वजात्याक्रांते शुक्लेनगंधमाल्येनघृतदीपेनचाप्यथ हरिद्रयाचधान्येनआर्द्रकेनगुडेनच इक्षुणाक्षुविकारैश्चल वणेनचभूरिणा स्वशक्त्याचमहाराजभूरिणाबलिकल्पनम् श्रीसूक्तेनततोवह्निंजुहुयात्कमलानितु तदलाभेचवि ल्वानितदलाभेतथाघृतम् ब्राह्मणान्पारसप्रायंघृतभूयिष्ठमाशयेत् आशयेद्वाजयेत् सुवर्णमाषकंदद्याद्ब्राह्मणायच दक्षिणाम् अनाहारस्ततःस्वप्यात्शुचौदेशेयथाविधि ततस्तुपंचमींप्राप्यपूर्वाह्णेपद्मिनीजले स्नात्वासंपूजनंकु र्यात्प्राग्वद्देवतथाश्रियः भूयएवद्विजेदद्यात्पूर्वं कनकमाषकम् पूर्वंदक्षिणात्वेन पूर्वोक्तं पद्माक्षमथवाविल्वंप्राश्नी यात्तदनंतरम् ततोहविष्यमश्नीयाद्वाग्यतोमानवोत्तमः संवत्सरमिदंकृत्वाव्रतंपार्थिवसत्तम फलमाप्नोतिविपुलं राजसूयाश्वमेधयोः विनाकनकदानेनव्रतमेतत्समाचरन् व्रतांतेमाषकस्वर्णमग्निष्टोमफलंलभेत् संपूज्यसोपवास स्तुशुक्लपक्षस्यपंचमीम् नित्यमेवाश्रियंदेवींश्रियमाप्नोत्यनुत्तमाम् धनमुत्तममाप्नोतिरूपमारोग्यमेवच जगत्प्रधा नांवरदांचपुण्यांविभावरींसर्वगतांनरेंद्र श्रद्धान्वितःपूजयतीहयस्तुकामानवाप्नोतिससर्वकालम् ॥

अत्रैवप्रसंगात्संवत्सरपर्यंतं पद्मोक्तशुक्लपंचम्यांलक्ष्मीव्रतं लक्ष्मीमभ्यर्च्यपंचम्यामुपवासीभवेत्तुयः समांतेहेमकमलंदद्याद्धेमसमन्वितम् सवैष्णवपदंयातिमानवःकुलनंदनि एतल्लक्ष्मीव्रतंनामदुःखशोकविनाशनमितिपद्मपुराणोक्तंलक्ष्मीव्रत अथास्यामेवपंचम्यांचंद्रपूजनपृथ्वीपूजनंचोक्तंवीरमित्रोदयेविष्णुधर्मोत्तरे, पंचम्यांपूजनकृत्वातथाचंद्रमसोनरःआयुश्चविपुलांलक्ष्मींसवैश्वर्य्यंचविन्दति ॥ इतिविष्णुधर्मोत्तरोक्तसौभाग्यव्रतं पंचम्यांपृथिवींचैवतथासपूजयेन्नरः तामेवाप्नोत्ययत्नेननात्रकार्याविचारणेतिविष्णुधर्मोक्तंपृथिवीव्रतम् अस्यामेव चैत्रशुक्लपंचम्यांपद्मपुराणीयपातालखंडोक्तहयपंचमीव्रतम् अश्वराडमृतोजातोवातरंहोमनोजवः उच्चैः श्रवा,पूजनीयःपंचम्यांचैत्रशुक्लके तत्रैवपूज्यागंधर्वास्तुरंगाणांतुबांधवाइत्यादि इयमेवमत्स्यपंचमीचोक्तानारदीये॥प्रोक्तामत्स्यजयंतीतुपंचमीमधुशुक्लगा अस्यांमत्स्यावतारभक्तैः कार्य्योमहोत्सवः श्रीपंचमीतिचैवोक्तातत्रकार्य्याश्रियोर्चनं गंधाद्यैरुपचारैस्तुनैवेद्यैःपायसादिभिः यस्तांसंपूजयेत्तत्रतंवैलक्ष्मीर्नमुंचति पृथ्वीव्रतंतथाचांद्रहयश्रीवव्रतंतथा कार्य्यंतत्तद्विधानेनतत्तत्फलमभीप्सुभिः तथाचब्रह्मपुराणे शुक्लायामथपंचम्यांचैत्रेमासिशुभानना श्रीब्रह्मलोकान्मानुष्यंसंप्राप्ताकेशवाज्ञया तस्मात्तांपूजयेत्तत्रयस्तंलक्ष्मीर्नमुचति एषाश्रीपंचमीकार्याविष्णुलोकगतिप्रदा चैत्रस्यशुक्लपंचम्यांपूजयित्वातथाश्रियं सकृदेवाप्नुयादेतत्फलंसंवत्सरोद्भवमितिहेमाद्रौविष्णुधर्मोत्तरे इयंचैत्रशुक्लपंचमीकल्पादिःहेमाद्रौ मात्स्ये ब्रह्मणोयादिनस्यादिःकल्पादिस्साप्रकीर्तिता वैशाखस्यतृतीयायांकृष्णायांफाल्गुणस्यच पंचमीचैत्रमासस्यतथावान्यातथापरा शुक्लत्रयोदशीमाघकार्तिकस्यतुसप्तमी नवमीमार्गशीर्षस्यसप्तैताः संस्मराम्यहं कल्पानामादयोह्येतादत्तस्याक्षयकारकाः , अत्रसर्वोपिश्राद्धादिनिर्णयोमन्वादिवद्ज्ञेयः ॥ अथचैत्रशुक्लषष्ठ्यांस्कंदपूजाब्रह्मपुराणे अमावास्यांसमुद्भूतः स्कंदः पूर्वंहुताशनात् जात पर्वणिषष्ठ्यांतशक्ला

यांचैत्रनामनि सेनापत्येभिपिक्तस्तुदेवानांब्रह्मणापुरा जितवांस्त रंकदैत्यंक्रौंचंशत्तया विभेदच तस्मात्सतत्रविधिना स्कंदमाल्यैः सुगंधिभिः दीपालंकारवस्त्रान्नकुंकुमैः पूज्यएवहि अक्षक्रीडनकैरम्यैर्घंटाचामरदर्पणैः सर्वासुशुक्ल षष्ठीपुपूज्योवाश्रद्धयानरैः आरोग्यकामैर्बालानांपुत्रवृद्धिर्विशेषतः नारदीयेपि चैत्रमासिशुक्लषष्ठ्यांकुमारव्र तमुत्तमं तत्रेष्ट्वाषण्मुखंदेवनानापूजाविधानतः पुत्रंसर्वगुणोपेतंप्राप्नुयाच्चिरजीविन मदनरत्ने चैत्रशुक्लषष्ठीमार भ्यप्रारभ्यंकुमारव्रतं ईश्वरउवाच चैत्रशुक्लात्समारभ्यव्रतार्थमधुनोच्यते उपोष्यविधिनाषष्ठ्यां विशेषात्षण्मुखंयजे त् मृण्मयींप्रतिमांरम्यांतदाकुर्याद्विशेषतः षण्मुखंद्वादशभुजंद्योतत्कांचनसुप्रभं मयूरवाहनंदेवंसौम्यंलावण्यपूरि त शक्तिघंटापताकांचपाशंकुक्कुटभूषित दंडाभयसवरदंखड्गेषुधिशरासनं सपूज्यपरयाभक्त्या शुक्लपुष्पोपचार कैः नैवेद्यगंधवस्त्राणिशुक्लान्येवप्रदापयेत् ब्राह्मीरससमाधायकापित्थाज्यफलंतथा सरस्वत्यणुनामंत्र्यसहस्राष्टोत्त रेणतु सरस्वतीमंत्रेणानुमंत्रणंकृत्वेत्यर्थः आचार्यंपूजयेद्भक्त्या वस्त्रहेमान्नवाहनैः ब्राह्मीरसंघृतंचातिप्राशयेत्प्राशनेहि तं मासिमासिप्रकर्तव्यंयावत्संवत्सरावधि ब्रह्मचर्येणशुचिनाअब्दमेकसमाचरेत महाकविर्भवेत्सोपिभुविवाचस्प तिर्यथा सकृद्ग्रहणातिशास्त्राणिवादिनांमूर्ध्नितिष्ठति रक्षोविनायकास्तस्यनहिंसंतिकदाचन स्कंदग्रहामहाघोरा स्तथापस्मारदुर्ग्रहाः नहिंसंतिमहासेनव्रतस्यास्यप्रभावतः इदंव्रतोत्तमश्रेष्ठंकर्तव्यंभूमिवर्द्धन षण्मुखपार्वतीपुत्रस्कं दग्रहकुमारकं कार्तिकेयंतथाबालंतथान्यक्रौंचसूदनं तारकारातिसंज्ञंचतथान्यकृत्तिकासुत वैशाखंचविशाखंच मासिमासिप्रपूजयेत् सूर्यसूर्यकलायुक्तशशिनामूर्ध्निभूषित क्रमेणमंत्रावोद्धव्याद्वादशानां शिखिध्वज इतिचैत्रा दिद्वादश शुक्लषष्ठीपुकुमारपूजाव्रतम् ॥

अथचैत्रशुक्लसप्तम्यांसूर्यपूजाव्रत तत्रैवनारदीयेपि चैत्रेतुशुक्लसप्तम्यांस्नानंबहिःसमाचरेत् स्थंडिलेगोमयालिप्ते

गौरमृत्तिकयासिते लिखित्वाष्टदलंपद्मंकर्णिकायांविभावसुं विन्यसेत्पूर्वपत्रेतुद्वौदेवौकृतघातकौ आग्नेयेचन्यसे त्पत्रेद्वौदेवौकृतकारकौ दक्षिणेचन्यसेत्तत्रतथैवाप्सुरसद्वयं अकृतौद्वौन्यसेत्पत्रेनैर्ऋत्येमुनिसत्तम काद्रवेयौमहा नागौपश्चिमेकृतकारकौ वायव्येयातुधानौवानुत्तरेचन्यसेद्द्वयं ऐशान्येचन्यसेत्तत्रग्रहमेकंद्विजोत्तमते षांसंपूजनं कार्य्यंगंधमाल्यानुलेपनैः धूपदीपैःसनैवेद्यैस्तांबूलक्रमुकादिभिः एवंसपूज्यहोमंतुघृतेनाष्टशतंचरेत् सूर्य्यस्या ष्टौचचान्येषांप्रदद्यादाहुतीःक्रमात् नाममंत्रेणमेधावीततःपूर्णाहुतिंददेत् दक्षिणाचततोदेयाद्विजेभ्यःशक्तितोद्विज एवंकृत्वाविधानंतुसर्वसौख्यमवाप्नुयात् देहांतेमंडलंभानोर्भित्त्वागच्छेत्परपदं अस्याविधिःसप्तम्यांबहिःस्नानं गौर मृदागोमयलिप्तेस्थलेऽष्टदलंपद्मंकृत्वा मध्येविभावसुंसंपूज्य दलेषुक्रमेणकृतघातकादीन्संपूज्यअग्निस्थापनंविधा य अन्वाधानांते सर्वेषांनाममंत्रैरष्टोत्तरशताहुतीर्घृतेनदद्यात्सर्वतोभद्रमंडलादिपूजापरिभाषोक्तक्रमेणकुर्य्यात् व्र तांतेपूर्णाहुत्यादिविधाय द्वादशब्राह्मणान्सहिरण्यमूर्तिकुंभदानादिभिःपरितोष्य आचार्य्यायमूर्त्तिशय्यागोदानादि कंदद्यात् इत्युद्यापनविधानं ॥ अत्रैवशुक्लसप्तम्यांदमनकादिभिःसूर्यपूजाकर्तव्या तदुक्तंनिर्णयामृते देवीपुराणे भास्करस्यतुसप्तम्यांपूजादमनकादिभिः कृत्वाप्राप्नोतिभोगादीन्विगतारिर्महायशाइति अस्यामेवभविष्योत्तरोक्त मनोदनसप्तमीव्रतं हेमाद्रौचैत्रशुक्लसप्तम्यांबहिःस्नानंसमाचरेत् अथैवंमंडलेष्टदलंविधायतस्मिन्नेवसूर्यपूजांविधाय दध्नापायसेनद्वादशब्राह्मणान्संतर्प्यस्वयमनोदनंद्विजभुक्तशेषंप्राश्नीयात् आचार्यपूजाहोमादिकंप्राग्वत्चरेत् इत्य नोदनसप्तमीव्रतं अस्यामेवभविष्योत्तरोक्त नामसप्तमीव्रतं तदुक्तंहेमाद्रौ चैत्रात्प्रभृतिकर्तव्यासर्वदानामसप्तमी त्यादि ॥ अत्रचैत्रादारभ्यशुक्लसप्तमीषु द्वादशादित्यान् क्रमेणपूजयेत् धाता १ अर्यमा २ मित्रः ३ वरुण ४ इंद्रो ५ विवस्वान् ६ पर्जन्यः ७ पूषा ८ अंशः ९ भगः १० त्वष्टा ११ जिष्णु १२ एतान् प्रतिमासमेकैकनाम्ना

पूजयेत् वत्सरांते सर्वतोभद्रमंडले देवतापूजनमाज्यकायचकृत्वा अन्वाधानात नाममंत्रराकृष्णत्या।दमंत्रहोम संपाद्यपूर्णाहुत्याचार्यादिपूजांयथाविधिसमाचरेदिति त्रामसप्तमीव्रतं॥ अथास्यामेवविष्णुधर्मोत्तरोक्तं सूर्यव्रतम् चैत्रस्यशुक्लपक्षेतुसम्यक्पष्ठ्यामुपोषितःसप्तम्यामर्चनंकुर्याद्देवदेवस्यगोपतेः वहिस्स्नानसदाकृत्वापूजनंसर्वदाचरे दिति सर्वदेतिसर्वासुशुक्लपक्षीषूपोषण सप्तमीषुसूर्यस्यपूजनंकुर्यादितिसूर्यसप्तमीव्रतं यावज्जीवनंतावत्कार्यं नास्योद्यापनादिविधानं नित्यपूजावादित्यर्थः ॥ अत्रचैत्रशुक्लाष्टम्यांभवान्याउत्पत्तिः तत्रनवमीयुताष्टमीग्राह्या अष्टमीनवमीयुक्तानवमीचाष्टमीयुतेति ब्रह्मवैवर्तात्॥अत्रभवानीयात्रोक्ताकाशीखंडे भवानींयस्तुपश्येतशुक्लाष्टम्यां मधौनरः नजातुलभतेशोकंसदानंदमयोभवेदिति तथाचनारदीये शुक्लाष्टम्यांचैत्रमासेभवान्याःप्रोच्यतेजनिः प्र दक्षिणशतंकृत्वाकार्य्योयात्रामहोत्सवः दर्शनंजगदंबायाः सर्वानंदप्रदंनृणामिति अत्रैवाशोककलिकाप्राशनमु क्तं हेमाद्रौलैंगे अशोककलिकाश्चाष्टौयेपिबंतिपुनर्वसौ चैत्रेमासिसिताष्टम्यांनतेशोकमवाप्नुयुः नारदीयेपि अत्रै वाशोककलिकाप्राशनंसमुदाहृत अशोककलिकाश्चाष्टौनतेशोकमवाप्नुयुरितिपूर्वपाठएवमहाष्टमीतिसाप्रोक्तादेव्याः पूजाविधानतः अशोककलिकाप्राशनमंत्रस्तु त्वमशोकहराभीष्टमधुमाससमुद्भव पिबामिशोकसंतप्तोमामशोकंस दाकुरु इत्यत्रपुनर्वसुयोगोऽनावश्यकः किंतु प्राशस्त्यातिशयार्थः तिथिःशरीरंदेवस्यतिथौनक्षत्रमाश्रितं तस्मा त्तिथिंप्रशंसंतिननक्षत्रंतिथिंविनेति ज्योतिःशास्त्रात् तथाचातिथितत्त्वेस्कांदे मीनेमधोःशुक्लपक्षेअशोकाख्यांतथा ष्टमीं पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि अत्रमधुश्चांद्रः पृथक्मीनग्रहणात् अत्रविशेषः पृथ्वीच द्रोदये विष्णुः पुनर्वसुबुधोपेताचैत्रेमासिसिताष्टमी लौहित्येविरजेस्नायात्सर्वपापैःप्रमुच्यते पृथिव्यांयानितीर्था निसरितः सागरादयः सर्वेलौहित्यमायांतिचैत्रेमासिसिताष्टमी अत्रस्नानमंत्रः ब्रह्मपुत्रमहाभागशांतनोःकुलव

र्द्दन अमोघागर्भसंभूतपापंलोहितमेहरेति कालिकापुराणेपि चैत्रेमासिसिताष्टम्यांयोनरोनियतेंद्रियः स्नायाल्लौ
हित्यतोयेपुसयातिब्रह्मण·पदं लोहिताख्सरसोजातोलौहिताख्यस्ततोभवत् चैत्रंतुसकलंमासंशुचि·प्रयतमानसः
लौहित्यतोयेयः स्नायात्सकैवल्यमवाप्नुयात् ॥ इति अस्यामेवाष्टम्यांदेव्यामहापूजाकार्य्या तदुक्तं मार्कंडेय
पुराणे देवीमाहात्म्ये शरत्कालेमहापूजाक्रियतेयाचवार्षिकी तस्यांममैतन्माहात्म्यंश्रुत्वाभक्तिसमन्वितः सर्वाबा
धाविनिर्मुक्तोधनधान्यसमन्वितः मनुष्योमत्प्रसादेनभविष्यतिनसंशयः अत्रयाचवार्षिकीत्यनेननसैववत्सरस्यादौ
चैत्रशुक्लप्रतिपदमारभ्याष्टमीपर्यंतांक्रियमाणापूजाविधीयते ततश्चशरद्वसतयोस्तुल्यएवदुर्गोत्सवइतिसंप्रदायविदः
प्राहुः ॥ अथचैत्रशुक्लनवम्यांश्रीरामजयंतीव्रततत्रादौ ॥ रामनाममहिमास्कांदेमोक्षखंडे रुद्रगीतायांश्रीराम
प्रति रुद्रवाक्यं मुमुक्षोर्मणिकर्णांतेअर्धोदकनिवासिनः अहंदिशामितेमंत्रतारकस्योपदेशतः श्रीरामरामरामेतिए
तत्तारकमुच्यते अतस्त्वंजानकीनाथपरंब्रह्माभिधीयतेति भविष्योत्तरे श्रीपार्वत्युवाच धन्यास्म्यनुगृहीतास्मिकृता
र्थास्मिजगत्प्रभो विच्छिन्नोमेतिसंदेहग्रंथिर्भवदनुग्रहात् त्वन्मुखाद्गलितंरामतत्त्वामृतरसायनं पिबंत्यामेमनोदेव
नतृप्यतिभवापह श्रीरामस्यामृतनामश्रुतंसंक्षेपतोमयाइदानींश्रोतुमिच्छामिविस्तरेणस्फुटाक्षरं श्रीमहादेवउवाच
शृणुदेविप्रवक्ष्यामिगुह्याद्गुह्यतरंमहत्प्राप्नोतिपरमामृद्धिंदीर्घायुःपुत्रसंपदं रामनामलिखेद्यस्तुलक्षकोटिशतावधिए
कैकमक्षरंपुंसांमहापातकनाशनं सकामोपिलिखेद्यस्तुनिष्कामोवापियोलिखेत् इहैवसुखमाप्नोतिमोक्षचांतेसमाप्नु
यात्रामरामेतिरामेतिसर्वस्वंममवल्लभे अथातःसंप्रवक्ष्यामिपौरश्चरणिकंविधिं विनायेननसिद्धः स्यान्मंत्रोवर्षशतै
रपिप्रणवंपूर्वमुच्चार्य्यलिखेन्मंत्रसदाप्रिये अंतेप्रणवमुच्चार्य्यलिखेन्मंत्रसदाप्रिये अंतेप्रणवमुच्चार्य्यनमेत्सीतापातिप्रि
ये आदावंतेचमध्येचव्रतस्योद्यापनचरेत् उद्यापनंविनानैवफलसिद्धिमवाप्नुयात् तस्मात्सर्वप्रयत्नेनसम्यगुद्या

पतंचरेत् श्रीपार्वत्युवाच नतास्म्यहंमहादेवभक्तानुग्रहकारक उद्यापनविधिंब्रूहिविस्तरेणममप्रभो श्रीमहादेव
उवाच शृणुदेविप्रवक्ष्यामिविस्तरेणयथाविधि नाम्नामुद्यापनंचात्रभक्त्याभवदनुग्रहात् सुवर्णप्रतिमांकुर्य्यात्तसी
तारामसलक्ष्मणां हनुमत्प्रतिमातत्रचतुर्थांशेनहाटकीं सुवर्णस्यप्रमाणंतुपलाष्टकमुदीरितं अशक्तश्चेत्पलेनैवतद
र्द्धार्द्धेनवापुनः श्रीरामस्यप्रतिकृतिंवित्तशाठ्यंनकारयेत् रजतेनासनकुर्य्यात्मापैःषोडशभिस्ततः पीतवस्त्रेणस
वेष्ट्यस्थापयेत्तंडुलोपरि तंडुलानांप्रमाणंतुभवेद्द्रोणचतुष्टयं शुचौदेशेगृहेतीर्थेमंडपंकारयेद्बुधः तोरणानिचद्वारेषु
बंधयेदाम्रपल्लवैः भूमौगोमयलिप्तायांसर्वतोभद्रमंडपं रचयेत्सप्तधान्यैर्वानानारंगैःसुशोभन कुंभानष्टौचपूर्वादौ
स्थापयेदव्रणानपि कुंभमेकंमध्यदेशेस्थापयेत्तंडुलोपरि शुद्धोदकेनसंपूर्य्यपंचरत्नैःसपल्लवैः नारिकेलफलान्य
ष्टौएकंरामायदापयेत् आचार्य्यंवरयेत्तत्रवेदशास्त्रविशारदं ब्रह्मादिऋत्विग्विप्राणांवरणंकारयेत्ततः मधुपर्केणसंपू
ज्यवस्त्रालंकारभूषणैःऋत्विजःषोडशाष्टौवावरयेद्वेदपारगान् स्नात्वानित्यंविधायादौपूजयेद्गणनायकं पुण्याहवा
चयित्वादौपूजयेद्रामभद्रकं ततोग्निंचप्रतिष्ठाप्यस्वशाखोक्तविधानतः विष्णुसूक्तेनहोतव्यंमूलमंत्रेणवापुनः नव
ग्रहांश्चदिक्पालान्मंत्रानुकृत्वाचहोमयेत् पुरुषसूक्तेनहोतव्यंसमिदाज्यंचरूंस्तिलान् अष्टोत्तरसहस्रंतुराममंत्रेणहो
मयेत् होमांतेपूजयेत्सर्वांरामंचब्रह्मादिदेवताः पूजयित्वाततोहुत्वादत्त्वापूर्णाहुतिंतथा श्रेयःसंपाद्यदानचअभिषेकंस
माचरेत् रामंनत्वार्चयित्वाचप्रार्थयित्वापुनःपुनः आचार्य्यंपूजयेत्पश्चात्सुवर्णांबरधेनुभिः प्रतिमांदानमंत्रेणआचा
र्य्यायनिवेदयेत् दानमंत्रः नतोस्मिदेवदेवेशबहुबुद्धिमहात्मभिः यश्चित्यसेकर्मपाशाद्धृदिनित्यंमुमुक्षुभिः माय
यागुणमय्यात्वंसृजस्यवसिलुंपसि अतस्त्वत्पादभक्तेषुत्वद्भक्तिस्तुश्रेयोधिका भक्तिमेवाभिवांछंतित्वद्भक्ताःसारवे
दिनः अतस्त्वत्पादभक्तेषुभक्तिरेवसदास्तुमे संसारभयभीतानांभेषजंभक्तिरेवते रामसीतासौमित्रिहनुमद्भक्तित

त्पर:दानेनानेनरामत्वंभुक्तिमुक्तिप्रदोभव प्रतिमादानसिद्ध्यर्थंशक्त्यास्वर्णंतुदापयेत् दानंयद्दक्षिणाहीनंतत्सर्वंनिष्फ
लंभवेत् ब्राह्मणान्शतसाहस्त्रंभोजयेन्मधुसर्पिषा पक्वान्नैःपायसैःखाद्यैःकदलीशर्करान्वितैः ऋत्विग्भ्योदक्षि
णांदत्वाभूयसींदक्षिणांयजेत् तदतेघृतपात्रंचतिलपात्रंचदापयेत् शय्याश्वरथदानानिदशदानानिशक्तितः अश
क्तश्चेत्स्वर्णमेकंदत्त्वारामंनमेत्पुनः तिलककारयेत्पश्चादभिषिंचेत्सपल्लवैः द्विजैस्तुचाशिषोदेयानत्वास्तुत्वाविस
र्जयेत् उमामहेश्वरौपूज्यौपूजयेद्वटुकंतथा कुमारीणांत्रयंभोज्यंयोगिराजंचपूजयेत् क्षेत्रपालबलिंदत्वाध्यात्वारा
मंसदाजपेत् ब्रह्मादिभिस्तुतत्पुण्यंवक्तुंशक्यनकिंचन अश्वमेधसहस्त्राणिवाजपेयशतानिच एकेनरामनाम्नातुत
त्फललभतेनरः नारीवापुरुषोवापिशूद्रोवाप्यधमोनरः रामनाम्नैवमुक्तास्तेसत्यंसत्यंवरानने अथध्यान मूलेक
ल्पद्रुमस्याखिलमणिविलसद्रत्नसिंहासनस्थ कोदंडद्वंद्वपाणिंललितकरयुगेनार्पितलक्ष्मणेन वामांकेन्यस्तसी
ताधृतभरतमहामौक्तिकच्छत्रकांतिं शत्रुघ्नंचामराभ्यांविलसितमनिशंरामचंद्रंभजेहम् ॥

इति श्रीभविष्योत्तरपुराणे उमामहेश्वरसंवादेरामलेखनोद्यापनंसंपूर्णं

अथास्यप्रयोगः ओमद्येत्यादितिथ्यादिसंकीर्त्यात्मनोनेकपापक्षयपूर्वकसकलमनोरथावाप्तिवासनया श्रीराम
प्रीत्यर्थं मयालिखितंयत्कोटिलक्षामुकावधिरामनामतत्संपूर्णतासिद्ध्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये इतिसंकल्प्यवृ
ताचार्यः सर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रेषोडशमाषात्मकराजतसिंहासनेसुवर्णस्यपलेनतदर्धार्धेनवानिर्मितरा
मंवामतः सीतांदक्षिणतोलक्ष्मणंपुरतोहनुमंतंचसुवर्णप्रतिमास्तुसंपूज्य नाममंत्रैःपुरुषसूक्तेनच परितोष्टकलशे
षु लोकेशान्संपूज्य प्रात रग्निंप्रतिष्ठाप्य अन्वाहुतिंविदध्यात् अत्रलेखनदशांशेनहोमः तत्रप्रधानरामंसाज्यद्र
व्येणलेखनदशांशेनमूलमंत्रेण परिवारदेवताब्रह्मादिदेवताश्च एकैककयाज्याहुत्यायक्ष्ये एवंपूर्वोक्तविधिनाहोमं

संपाद्य आचार्य्यं वस्त्रादिभिः संपूज्य सदक्षिणंपीठंप्रतिमांचआचार्य्यायदद्यात् तत्रमंत्रः सीतासौमित्रिहनुमद्यु तंरामंसदक्षिणं ददामिद्विजवर्य्येभ्योरामोमेप्रीयतामिति ततोव्रतपूर्त्येसालंकारांगांगोदानविधिनादत्त्वा घृतपूरित कांस्यपात्रंससुवर्णंतिलपात्रंचदत्त्वा यथाशक्ति दशदानानिदत्त्वा योगिराजंवटुकत्रयंकुमारीश्चभोजयित्वासदन्ने नान्यानपिब्राह्मणान् दक्षिणादिभिःपरितोष्यआशिषोगृहीत्वा इष्टजनैःसहभुंजीत इतिरामनवम्यांरामनवमी

व्रतसहितं रामनामलेखनोद्यापनम् ॥ अथरामनवमीव्रतमाहिमा

तदुक्तमगस्त्यसंहितायां अगस्त्यउवाच सर्वानुष्ठानसारंतेसर्वदानोत्तमोत्तमं रहस्यंकथयिष्यामिसुतीक्ष्णशृणु सत्तम चैत्रेनवम्यांप्राक्पक्षेदिवापुण्येपुनर्वसौ उदयेगुरुगौरांश्वोःस्वोच्चस्थग्रहपंचके मेषेपूषणिसंप्राप्तेलग्नेकर्क टकाव्हये आविरासीत्स्वकलयाकौसल्यायांपरःपुमान् तथाचोक्तंरामार्चनचंद्रिकायां उच्चस्थेग्रहपंचकेसुरगुरौ सेंदौनवम्यांतिथौ लग्नेकर्कटकेपुनर्वसुयुतेमेषंगतेपूषणि निर्दग्धुंनिखिलाःपलाशसमिधोमध्यादयोध्यारणे राविर्भूतमभूतपूर्वविभवंयत्किंचिदेकंमहःपलाशसमिधइति पलंमांसंतदश्नंतियेतेराक्षसास्तएवसमिधस्तानिर्दग्धुंअयो ध्येवारणिरग्निमथनकाष्ठंतन्मध्यादाविर्भूतं यत्किंचित् अनिर्वचनीयंमहस्तेजोविशेषःश्रीरामआविर्बभूवेत्यर्थः तथा च चैत्रेमासिनवम्यांतुशुक्लपक्षेरघूत्तमः प्रादुरासीत्पुराब्रह्मन्परंब्रह्मैवकेवलं तस्मिन्दिनेतुकर्त्तव्यमुपवासव्रतंसदा तत्रजागरणंकुर्याद्रघुनाथपरोभुवीति अन्यत्रापि तस्मिन्दिनेमहापुण्येराममुद्दिश्यभक्तितः यत्किंचित्क्रियतेकर्मभव त्यक्षयकारकंउपोषणंजागरणंपितृनुद्दिश्यतर्पणं तस्मिन्दिनेतुकर्त्तव्यंब्रह्मप्राप्तिरभीप्सुभिः रामएवपरंब्रह्मतद्दिनं रामतोषकमित्यादि अथैतस्यव्रतस्यनित्यत्वंप्रतिपाद्यते रामार्चनचंद्रिकायां नित्यंनैमित्तिकंकाम्यंव्रतंचातिविचा र्यते निःकामानां विधानात्तत् नकाम्यंतावदिष्यते मुमुक्षवोपिहिसदाश्रीरामनवमीव्रतं नत्यजंतिसुरश्रेष्ठादेवे

शेोपिविशेषतः अत्रसदापदश्रवणात् यावज्जीवंरामनवमीव्रतंकर्त्तव्यमितितात्पर्य्यम् नहिनैमित्तिकंचैवसदेति श्रूयतेततः नित्यमेवभवेत्तस्मात्श्रीरामनवमीव्रतमिति नत्वस्यनचनित्यत्वंप्रत्यक्षत्वात्फलश्रुतेः सूर्यग्रहेकुरु क्षेत्रमहादानैःकृतैर्मुहुः यत्फलंसमवाप्नोतिश्रीरामनवमीव्रतादिति नारदीयेऽपि चैत्रस्यशुक्लपक्षेतुश्रीरामनवमी व्रतं सविधूयेहपापानिव्रजेद्विष्णुपदंपरं मेवंफलश्रुतेर्नित्यंलक्षणाभावतोऽथवा ननित्यतातत्रनाद्योनिग्रहोत्रा विरोधतः नान्त्योप्यकरणेतस्यमहादोषश्रुतेः स्फुटं प्राप्तेश्रीरामनवमीदिनेमर्त्योविरूढधीः उपोषणंनकुरुतेकुं भीपाकेपुपच्यते अकृत्वारामनवमीव्रतंसर्वव्रतोत्तमं योव्रतान्यानिकुरुतेनतेषांफलभाग्भवेत् यस्तुरामनवम्यांतु भुंक्तेमोहाद्विमूढधीः कुंभीपाकेषुघोरेषुपच्यतेनात्रसंशयइति अतश्चाकरणेदोषविधानान्नित्यतास्थिता कुर्याद्रा मनवम्यांयउपोषणमतंद्रितः नमातृगर्भंप्राप्नोतिसवैरामोभवेत्स्वयं तस्मात्सर्वात्मनासर्वैःकृत्वैवनवमीव्रतं मुच्यंते सर्वपापेभ्योयांतिब्रह्मसनातनमित्यादिवचनैः पापक्षयद्वारा मोक्षार्थत्वमवगम्यते संयोगपृथक्त्वाच्चनफलानित्य त्वयोर्विरोधः अत्रकेचित्तदुपासकानामेवेदंनत्वन्येषामित्याहुः अन्येत्वकरणेदोषश्रवणात् तस्मात्सर्वात्मना सर्वैःकार्यंवैनवमीव्रतमिति पूर्वोक्तवचनाच्चजन्माष्टम्यादिवदिदमपिसर्वेषांनित्यमन्यथाजन्माष्टम्यादावपि तदु पासकानामेवनित्यतांवक्तुःकोवारयेतेत्याहुः इतिनित्यत्वकथनं शुद्धाविद्धेतिभेदेननवमीसाद्विधामता समान्यूना धिकाचेतिशुद्धापिनवमीत्रिधा पुनर्नक्षत्रसंयोगावियोगाभ्यांतुषड्विधा समापिऋक्षभेदादिभेदैर्विद्धापिषड्विधा एवंद्वादशधाभिन्नानवमीतत्रनिर्णयः महाफलप्रदाशुद्धापुनर्वस्वृक्षयोगतः चैत्रमासिनवम्यांतुजातोरामःस्वयंहरिः पुनर्वस्वृक्षसंयुक्तासातिथिःसर्वकामदा श्रीरामनवमीप्रोक्ताकोटिसूर्यग्रहाधिकाचैत्रशुद्धातुनवमीपुनर्वसुयुतायदिसै वमध्याह्नयोगेनमहापुण्यतमाभवेत् केवलापिसदोपोष्यानवमीशब्दसंग्रहात् तस्मात्सर्वात्मनासर्वैःकर्त्तव्यंनवमी

व्रतम् सर्वैरितिसर्वेषामधिकारःप्रकाश्यते विद्धेवचेदृक्षयुताव्रतंतत्रकथंभवेत् । विद्धानिषेधश्रवणान्नवमीचेतिवा क्यतः नवमीवाष्टमीविद्धात्याज्याविष्णुपरायणैःउपोषणंनवम्यांतुदशम्यामेवपारणमिति वैष्णवानांविशेषात्तुतत्र विष्णुपरैरिति दशम्यादिपुवृद्धित्वाद्विद्धात्याज्यैववैष्णवैः तदन्येषांतुसर्वेषांव्रतंतत्रैवनिश्चितं दशम्यामेवशब्देन दशमींनैवलंघयेत् निश्चित्यैवंविचारेणनवमीव्रतमाचरेदिति अत्रविष्णुपरायणैरितिवदताप्रातस्त्रिमुहूर्त्तानवमी चेत्तस्मिन्नेवदिनेसमाप्यते तदास्मार्त्तानामुत्तरदिवसएकादशीनिमित्तोपवासेन नवमीव्रतांगपारणालोपोमाभूदिति तन्नस्मार्त्तैरष्टमीविद्धैवग्राह्यावैष्णवानांत्वरुणोदयप्रसंग इति द्वितीयैवतैःकार्येतिसूचितं दशमीवृद्ध्यभावेष्टमीविद्धा याःक्षयेचवैष्णवैरपि विद्धैवोपोष्येत्यर्थसिद्धं तदेवं द्वितीयदिवसेनवम्यामध्याह्नव्याप्तिन्यभावेप्यष्टमीविद्धायाः सर्वथात्याज्यत्वाद्वैष्णवैर्द्वितीयैवोपोष्येतिरामार्चनचंद्रिकामतं हरिभक्तिविलासे दशम्यांपारणायाश्चनिश्चयान्नव मीक्षये विद्धापिनवमीग्राह्यावैष्णवैरप्यसंशयामिति मदनरत्नादौतु इयंतिथिर्विधयामध्याह्नव्यापिनीसैवग्राह्यालग्ने कर्कटकाह्वयइत्यगस्त्यसंहितायांनमध्यान्हस्यजन्मकालत्वाभिधानात् सर्वेमध्यान्हयोगेनमहापुण्यतमाभवेदिति वचनाच्च उभयत्रमध्यान्हव्याप्तित्वेमध्यान्हव्याप्तिन्यभावेवापुनर्वसुयुतासैवग्राह्या पुनर्वस्वृक्षसंयोगः स्वल्पोपि यादिदृश्यतेचेत्रशुद्धनवम्यांतुसापुण्यासर्वकामदेत्यगस्त्यसंहितावचनात् यद्वा दिनद्वयेपिपुनर्वसुयोगएवात्रमध्या न्हे उत्तरत्रमध्यान्हंविहायतदामध्याह्नपुनर्वसुयुक्ताग्राह्या मुख्ये श्रीरामजन्मकालयोगस्यलाभात् यदातुपरादिने पिमध्यान्हेनवमीपुनर्वसुयोगः यदावादिनद्वयेपिमध्यान्हंविहायमध्यान्हात्पूर्वंपुनर्वसुयोगः यदावादिनद्वयेपिपुन र्वसुभावस्तदोत्तरैवग्राह्या नवमीचाष्टमीविद्धेतिवचनादित्युक्तं निर्णयासिंधौतु दिनद्वयेपिमध्यान्हव्याप्तौतदभावेवा पूर्वदिने पुनर्वस्वृक्षयुक्तामपित्यक्त्वापरैवकार्येत्युक्तं यत्तुनव्यैः पुनर्वसुयुतामपिनवमींत्यक्त्वानवमीचाष्टमीतिवाक्य

चलात् परेवकार्यंतिसिंधुकारमतमसमंजसं नवमीचाष्टमीविद्धेति वाक्येऋक्षपदाभावात् अत्रऋक्षपदाभावेपिनवमी चाष्टमीविद्धानिषेधस्यसंकोचेमानाभावात् पुनर्वस्वृक्षसंयोगइत्यगस्त्यसंहितावचनस्यपुनर्वसुयोगेप्राशस्त्यबोधक त्वेनसंकोचकत्वमितिदिक्॥इतिकल्पद्रुमोक्तोरामनवमीनिर्णयः॥अत्रप्रसंगाद्वैष्णवलक्षणमुच्यते सांगसमुद्रंसन्यासंसऋषिच्छंददेवतं सदीक्षाविधिसध्यानंसंपन्नंद्वादशाक्षरं अष्टाक्षरमथान्यंचयेमंत्रंसमुपासते ज्ञेयास्तेवैष्णवा लोकेविष्ण्वर्चनरताःसदा सदीक्षाविधिसांगंवामंत्रराजंसयंत्रकं सहस्राक्षरसंयुक्तंमूलव्यूहादिभेदतः पंचायतन रूपंचयेविप्राःसमुपासते महावैष्णवसंज्ञास्तेमहाविष्णोरतिप्रिया इति विष्णुपुराणे नचलतिनिजवर्णधर्मतोयः सममतिरात्मसुहृद्विपक्षपक्षे नहरतिनचहंतिकिंचिदुच्चैः सितमनसंतमवेहिविष्णुभक्तं श्रीभागवतेपि त्रिभुवनविभवहेतवेप्यकुंठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् नचलतिभगवत्पदारविंदाल्लवनिमिषार्द्धमपीहवैष्णवाग्र्यः इत्यादि इतिवैष्णवलक्षणं अशक्तविषयेप्रतिनिध्यादिकंतुपरिभाषायांद्रष्टव्यं रामार्चनचंद्रिकायां सुतीक्ष्णमाहचागस्त्यः प्रकारःसोभिधीयतेक्रमेणयोजयेत्सर्वैसौकर्यार्थंव्रतार्थिनां षडक्षरादिकैरामंत्रैःस्यात्पूजनंयथा सर्वेषांरानमंत्राणां मंत्रराजःषडक्षरः तारकंब्रह्मचेत्युक्तंतेनपूजाप्रशस्यते यद्वापुरुषसूक्तेनदीक्षाविधिमजानतःवैदिकस्याप्यभावेतुनाममंत्रैर्भवेद्ध्रुवं अष्टम्यांचैत्रमासस्यशुक्लपक्षेजितेंद्रियःदंतधावनपूर्वंतुप्रातःस्नायाद्यथाविधि नद्यांतडागेकूपेवाह्रदे स्रवणेतथा ततःसंध्यादिकंकुर्यात्संस्मरन्राघवंहृदि गृहमागत्यविप्रोसौकुर्यादौपासनादिकं दान्तंकुटुंबिनं विप्रं वेदशास्त्ररतंसदा श्रीरामपूजानिरतंसुशीलंदंभवर्जितं विधिज्ञंराममंत्राणांराममंत्रैकसाधनम् आहूयभक्त्यासंपूज्यवृणुयात्प्रार्थयन्निति श्रीरामप्रतिमादानंकरिष्येहंद्विजोत्तम तत्राचार्योभवप्रीतःश्रीरामोपित्वमेवच इत्युक्त्वा त्वर्चयेद्विप्रंस्नापयित्वाततःस्वयं तैलेनाभ्यंग्यसुस्नायाच्चिंतयन्राघवंहृदि श्वेतांबरधरःश्वेतगंधमाल्यानिधारयेत्

अर्चितोभूषितश्चैवकृतमाध्याह्निकक्रियः आचार्यंभोजयेत्पश्चात्सात्विकान्नैःसुविस्तरं भुंजीतस्वयमप्येवंहृदिराम
मनुस्मरन् नवम्यामेकभक्तेनश्रंगभूतेनराघव इक्ष्वाकुवंशतिलकप्रीतोभवरघूत्तम इत्येकभक्तनिवेदनमंत्रः ए
कभक्ततुनवममुहूर्तात्मकमध्याह्नोत्तरं सार्धमुहूर्त्तमध्येकर्त्तव्यं एकभक्तव्रतीतत्रसहाचार्योजितेंद्रियःशृण्वन्रामकथां
दिव्यामहःशेषंनयेन्मुने सायंसंध्यादिकाःकुर्यात्क्रियाराममनुस्मरन् आचार्यसहितोरात्रावधःशायीजितेंद्रियः
स्वपेत्स्वयंतथैकांतेश्रीरामार्पितमानसः आचार्यकरणेशक्तःस्वयंभुक्त्वास्वपेत्सुखं इत्यष्टमीकृत्यं अथनवमीकृत्यंम्
तत्रैव ततःप्रातःसमुत्थायस्नात्वासंध्यांविधायचप्रातःसर्वाणिकर्माणिशीघ्रमेवसमापयेत् उपोष्यानवमीत्वद्ययामेष्व
ष्टसुराघव तेनप्रीतोभवत्वंवैसंसारात्त्राहिमांहरे इत्युपवासनिवेदनमंत्रःततःस्वस्थमनाभूत्वाविद्वद्भिःसाहितोनिघ
स्वगृहेचोत्तरेभागेयागमंडपमारभेत् चतुर्द्वारंपताकाढ्यंसुवितानंसुशोभनं मनोरमंमहोत्सेधंपुष्पाद्यैः समलंकृतं
शंखचक्रहनूमद्भिःप्राग्द्वारेसमलंकृतं गुरुत्मच्छार्ङ्गबाणैश्चदक्षिणेसमलंकृतं गदाखट्वांगकैश्चैवपश्चिमेसमलंकृतं
पद्मस्वस्तिकमानैश्चकौबेरसमलंकृतं मध्येहस्तचतुष्काढ्यंवेदिकायुक्तमायतं विचित्रनृत्यगीतैश्चवाद्यैश्चैवसुसंयु
तं पुण्याहंवाचयेत्तत्रविद्वद्भिःप्रीतमानसैः तत्रसंकल्पयेच्चैवराममेवस्मरन्हृदि अस्यांरामनवम्यांतुरामाराधनतत्प
रः उपोष्याष्टसुयामेषुपूजयित्वायथाविधि इमांस्वर्णमयींरामप्रतिमांसुप्रयत्नतः श्रीरामप्रीतयेदास्येरामभक्ता
यधीमते प्रीतोरामोहरत्वाशुपापानिसुबहूनिमे अनेकजन्मसंसिद्धान्यभ्यस्तानिमहांतिच इतित्रिभिःप्रतिमा
दानसंकल्पः शक्ताशक्तात्यशक्तस्यमूर्त्तिनिर्माणमुच्यते ततःस्वर्णमयींरामप्रतिमांपलमानितः निर्मितां
द्विभुजांदिव्यांवामांकस्थितजानकीं . बिभ्रतींदक्षिणकरेज्ञानमुद्रांमहामते वामेनात्मकरेणाराद्देवीमालिंग्यसं
स्थितां सिंहासनेराजतेत्रपलद्वयविनिर्मिते अशक्तोयोमहाभागतस्यवित्तानुसारतः पलेनार्द्धेतदर्द्धेनतदर्द्धं

र्देनवामुने ततोप्यशक्तोरौप्येणकारयेद्रघुनंदनं लोहेनानिर्मितंकुर्यात् शिलयादारुणापिच पद्मालेख्यंविले
ष्यंवामातुरंकगतंहरिं कोमलांगंविशालाक्षमिंद्रनीलमणिप्रभं दाक्षिणांगेदशरथपुत्रान्विषणतत्परम् ॥ पृष्ठतो
लक्ष्मणंदेवसहच्छत्रंसचामरं पार्श्वेभरतशत्रुघ्नौतालवृंतकरावुभौ अग्रेव्यग्रहनूमंतंरामानुग्रहकांक्षिणं ॥
वित्तशाठ्यमकृत्वैवमूर्तिंकुर्यात्प्रयत्नतः प्रतिमाविशेषःकौस्तुभेलिंगे सर्वःप्रमूतांकौशल्यांपितरंभ्रातृभिःसह
सुवर्णेनपृथक्कृत्वाश्रीरामंसीतयासह लक्ष्मणाकाः सरूपास्ताःपूजयित्वायथाविधि सहैवनेनश्रीरामंवामांकस्थ
तत्वंज्ञायते अतएवचंद्रिकायां ततःस्वर्णमयीमित्यादिनाप्रतिमानिर्माणमित्थमुक्तमिति भविष्ये विभवेसतियो
मोहात्नकुर्याद्विधिविस्तरं नतत्फलमवाप्नोतिदेवद्रोहीसउच्यते इतिमूर्त्तिलक्षण आसनोपरिसंविश्यन्यासजा
लंविधायच शंखप्रपूजयेदग्रेगंधपुष्पाक्षतादिभिः कलशंवामभागस्थं पूजाद्रव्याणिचादरात् पात्रंचप्रोक्षयेद्व
त्तयाचात्मानमंत्रमुच्चरन् विलिखेत्सर्वतोभद्रंवेदिकोपरिसुंदरं तिर्यगूर्ध्वगतारेखाःकुर्यादेकोनविंशतीः खंडेंदुःत्रि
पदःकोणेशृंखलाःपंचकोष्ठकैः एकादशपदावल्लीभद्रंतुनवभिःपदैः चतुर्विंशत्पदावापिःपरिधिर्विंशतिःपदैः मध्ये
षोडशभिःकोष्ठैःपद्मवाष्टदलंस्मृतं सितेंदुःशृंखलाकृष्णवर्णनीलेनपूरिता भद्रारुणासितावाप्यःपरिधिःपीतवर्ण
कः वाह्यांतरदलश्वेताकर्णिकापीतवर्णिका खंडेंदुःशृंखलावापीवल्लीभद्रंतुपंचम परिध्यावेष्टितंपद्मंवाह्येसत्वरज
स्तमः सर्वव्रतेसमुद्दिष्टंसर्वतोभद्रमंडलं मध्येब्रह्माणमष्टासुदिक्षुसोमादिदेवताः वायुसोमद्वयोर्मध्येवसूनष्टचका
रयेत् सोमईशानयोर्मध्येरुद्रानेकादशैवतु इंद्रईशानयोर्मध्येआदित्यान्द्वादशैवतु इंद्राग्निमध्येचतथाश्विनौपू
जयेत्तथा आग्नेययमयोर्मध्येविश्वान्देवान्सपैतृकान् याम्यनैर्ऋत्ययोर्मध्येसप्तयक्षांश्चकारयेत् नैर्ऋत्यजलयोर्मध्ये
नागभूतांश्चकारयेत् आप्यवायव्ययोर्मध्येगंधर्वाप्सरसःकुरु ब्रह्मसोमद्वयोर्मध्येरुद्रानेवचकारयेत् स्कंदनंदी

त्रूपंशूलंमहादेवंचकारयेत् ब्रह्मेशानद्वयोर्मध्येदक्षादीन्संप्रपूजयेत् ब्रह्मेंद्रयोस्तथामध्येदुर्गाविष्णुंतथैवच ब्रह्माग्नि
मध्येचतथास्वधांचैवप्रपूजयेत् ब्रह्मणोनिर्ऋतेर्मध्येगणपंतुप्रपूजयेत्, वरुणब्रह्मणोर्मध्येअपःसपूजयेत्तथा मध्येवा
योर्ब्रह्मणश्चमरुतःसंप्रपूजयेत् ब्रह्मणःपादमूलेतुमेदिनींतत्रकारयेत् कावेरीनर्मदाचैवयमुनाचसरस्वती गंगाकृ
ष्णातथागोदापूज्याःसप्तचसागराः क्षारक्षीरमधुस्सर्पिर्मैरेक्षुदधिसंभवाः ब्रह्मयज्ञानमित्याद्यैर्मंत्रैःस्थाप्यास्तुदेव
ताःगंधपुष्पादिभिःपूज्यादीपान्दद्याद्वसर्वतः सर्वत्रभद्रंयस्मात्तत्सर्वतोभद्रमुच्यते ॥ इतिसर्वतोभद्रं ॥ अथमंड
लेतत्तन्मंत्रेणतत्तद्देवतास्थापनपूजाप्रयोगःतत्रमध्येब्रह्माणं ब्रह्मयज्ञानमिति गौतमवामदेवोब्रह्मात्रिष्टुप्ब्रह्मस्थापने
पूजनेविनियोगः एवमग्रेपिब्रह्मयज्ञानं उदीचीमारभ्यव्यवायपर्यंतंसोमादयोवद्यवताअष्टौलोकपालास्थापनीयाःत
त्र आप्यायस्व गौतमःसोमोगायत्रीॐआप्यायस्वस- अभित्वाधीगातिःशुनः शेफईशानोजगती अभित्वादेव
सवितः इंद्रंवोमधुच्छद इंद्रोगायत्री ॐइंद्रंवोविश्वतः ॐअग्निंकएवामेधातिथिरग्निर्गायत्रीअग्निंदूतयमायसो
मं यमोनुष्टुप् यमायसोमंमोपुणोघोराःकण्वोनिर्ऋतिर्गायत्री ॐमोपुणः तत्वायामिशुनःशेफोवरुणस्त्रिष्टुप्
ॐतत्वायामि वायोशतं गौतमोवायुरनुष्टुप् वायोःशतवायुसोममध्येअष्टौवसूनतथात्रमैत्रावरुणिर्वासिष्ठोवसवस्त्रिष्टु
प् ज्मयाअत्रसोमेशानमध्येएकादशरुद्रान् आरुद्रासः श्यावाश्वएकादशरुद्राजगती ॐआरुद्रासः ईशानेंद्रमध्ये,
द्वादशादित्यान्त्यानुसामंदोमत्स्यमैत्रावरुणिर्मान्योवावहवोवामत्स्याक्षपयः द्वादशादित्यागायत्री ॐत्यानुंक्ष,
त्रियान् इंद्राग्निमध्ये अश्विनाराहुगणोगौतमोश्विनावुष्णिक् ॐअश्विनानार्ते अग्नियममध्येविश्वेदेवान्सपैतृकान्
ओमासोमधुछंदोविश्वेदेवागायत्री ॐमासः यमनिर्ऋतिमध्येसप्तयज्ञान् अभित्यंदेववामदेवासप्रपक्षाप्रकृतिः अ
भित्यदेवंसवितारमोण्योःकविक्रतुमर्चामि सत्यसवंरत्नधामाभिप्रियंमतिंकविमूर्ध्वायस्यामतिर्भाअदि युतत्सवीम

निर्हिरण्यपाणिरमिमीतसुक्रतुंकृपास्व· निर्ऋतिं वरुणमध्येभूतनागान्आयंगौःसार्पराज्ञीसर्पागायत्री ॐआयंगौः वरुणवायुमध्येगंधर्वाप्सरसः अप्सरवातरशनमांगंधर्वाप्सरसोनुष्टुप् ॐअप्सरसांगंधर्वाणांयतअन्यग्रंथेपुअ प्सरसामेतशऋष्यशृंगइत्युक्तंतन्सावानुक्रमाविरोधादुपेक्ष्यं ब्रह्मसोममध्येस्कंदनंदीश्वरशूलमहाकालान् कुमारं कुमारस्कंदास्त्रिष्टुप् ॐकुमारंमाः ऋषभंऋषभोवैराजाऋषभोनुष्टुप् ॐऋषभंमाब्रह्मेशानमध्येदक्षादीन्सप्तअदि तिर्लोक्यो वृहस्पतिर्दलानुष्टुप् अदितिर्ह्यजनिष्टब्रह्मेंद्रमध्येन्दु तामग्निवर्णांसौभारिदुमात्रिष्टुप्ॐतामाग्निवर्णांइद विष्णुःकण्वोमेधातिथिर्विष्णुगायत्रीॐइदंविष्णुर्वि- ब्रह्माग्निमध्येस्वधां उदीरताशंखःस्वधात्रिष्टुप् ॐउदीरतामव रउत्परास ब्रह्मयममध्येमृत्युरोगान्परंमृत्योः संकुशुकोमृत्युरोगास्त्रिष्टुप् ॐपरंमृत्योअनुपरेहिब्रह्मनिर्ऋति मध्येगणपतिंगणानांत्वागृत्समदोगणपतिर्जगती ॐगणानांत्वा ब्रह्मवरुणमध्येअपः शन्नोदेवीरंवरीःपःसिंधुद्वीप आपोगायत्री शन्नोदेवीः ब्रह्मवायुमध्यमरुतःमरुतोयस्य राहोगणोमरुतोगायत्री ॐमरुतोयस्य ब्रह्मणःपाद मूलेकर्णिकायांपृथ्वींस्योनामेधातिथिभूमिर्गायत्री ॐस्योनापृथिवि तत्रैवगंगादिनद्यःइमंमेसिंधुक्षित्प्रैप्यमेधादयो नद्योजगती इममेगंगेयमुनेतत्रैवसप्तसागरान् धाम्नोधाम्नोराजन्नितोवरुणनोमुंच यदापोअघ्न्याइतिवरुणेतिश पामहे ततोवरुणनोमुंच मैवापोमोषधीहिंसीरतोविश्वन्यभूस्वेतोवरुणनोमुंचतदुपरिमेरवनमइतिनाम्नामेरुम् ततोमंडलाद्बहिःसोमादिसमीपेतुक्रमेणायुधानिगदां त्रिशूलंवज्रशक्तिदंडखड्गपाशअंकुशतद्बाह्येपुनरपितेनैवक्र मेणगौतमंभरद्वाजंविश्वामित्रंकश्यपंजमदग्निंवसिष्ठं अत्रिंअरुंधतींतद्बाह्येपूर्वादौ ऐंद्रींकौमारींवाराहींचामुंडांवै ष्णवींमाहेश्वरींविनायकींनाममंत्रैःपूजयेत् अथमंत्रः ॐब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनआवः स वुध्न्याउपमाअस्यविष्ठाः सतश्चयोनिमसतश्चविवः १ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यंभवावाजस्य

सगथे २ अभिवादेवंसवितरोशानवार्याणा सदावन्भागमीम्हे ३ इन्द्रंवोविश्वतस्यरिहवामहेजनेभ्यः अ
स्माकमस्तुकेवलः ४ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं अस्ययज्ञस्यसुक्रतुम् ५ यमायसोमंसुनतः ६
मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् यदीष्टतृष्णयासह ७ तत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोह
विर्भिः अहेडमानोवरुणेहबोध्युरुशंसमानआयुः प्रमोषीः ८ वायोशतंहरीणांयुवस्वपोष्याणां उतवाते
सहस्रिणोरथआयातुपाजसा ९ ज्मयाअत्रवसवोरतदेवाउरावंतरिक्षेमर्जयंतशुभ्राः अर्वाकपथः उरुज्रयः
कृणुध्वंश्रोतादूतस्यजग्मुषोवोअस्य १० आरुद्रासइंद्रवंतः सजोषुणो हिरण्यरथाः सुवितायगंतन इयं
वोअस्मत्प्रातिहर्यंतेमातिस्तृष्णजेनंदिवः उत्साउदन्यवे ११ स्यानुंक्षत्रियांअवआदित्यान्याचिपामहे सुमृ
डीकांअभिष्टये १२ ओमासश्चर्षणीधृतोविश्वेदेवासआगतदाश्वांसोदाशुषःसुतं १३ अभित्यंदेवंसवि
तारमोण्योः कविक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियंमतिंकविं ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्य
पाणिरमिमीतसुक्रतुःकृपास्वः १४ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरःपितरंचप्रयंत्स्वः १५ अप्सरसां
गंधर्वाणांमृगाणांचरणेचरन् केशिकेतस्यविद्वान्त्सखास्वादुमदिंतमः १६ कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे
वोचेमशंतमंहृदे १७ कुमारंमातायुवतिःसमुब्धंगुहाबिभर्तिनददातिपित्रे अनीकमस्यनमिनज्जनासःपुरःपश्यं
तिनिहितमरतौ १८ ऋषभंमासमानानांसपत्नानांविषासहिं हंतारंशत्रूणांकृधिविराजंगोपतिंगवां १९ अदिति
र्ह्यजनिष्टदक्षयादुहितातव तांदेवाअन्वजायंतभद्राअमृतबंधवः २० तामग्निवर्णांतपसाज्वलंतीं २१ इदंविष्णु
र्विचक्रमे. २२ उदीरतामवरउत्परास.२३ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् चक्षुष्मतेशृण्वतेतेब्र
वीमिमानःप्रजांरीरिषोमोतवीरान् २४ गणानांत्वागणपतिंहवामहेकविंकवीनामुपश्रवस्तमं ज्येष्ठराजंब्रह्म

णांब्रह्मणस्पतिं आनश्रनवंनोतिभिसीदसादनं २५ शन्नोदेवीरभिष्टयें. २६ मरुतोयस्यहिक्षयेपाथादिवोविम
हसःससुगोपातमोजनः२७स्योनापृथिविनोभवा. २८ इमंमेगंगेयमुनेसरस्वतीशतद्रुस्तोमंसचतापरुष्ण्या असि
क्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्याशिपोमया २९ धाम्नोधाम्नोराजन्नितोवरुणनोमुंच यदापोअघ्न्यावरुणेति
शपामहेततोवरुणनोमुंच३०इतिसर्वतोभद्रमंत्राःतदुक्तंतंत्रसारे अनुक्तेकल्पयेद्यंत्रंलिखेत्पद्मंदलाष्टकंषट्कोणांतर्गतं
तत्रवेदद्वारोपशोभितं कमलरचनाकारस्तु आद्यात्तृतीयंततएवभूतंभूतात् द्वितीयंतनयश्चतुर्थं चतुर्थमाद्यंपुनरवेमवे
यागोभवेदष्टदलंचपद्ममितिअथोदकैःपूर्णकुंभंपंचरेखोदरंशुभं चूतपल्लव पुष्पैश्चयुक्तंसंस्थाप्यचार्चितं सौवर्णेराजते
ताम्रेपात्रेषट्कोणमालिखेत् अलाभेविल्वपीठेवाकलशोपरिसंस्थिते स्थाप्योपरिवस्त्रयुग्ममच्छिन्नंसदशंशुभं
दिव्यसिंहासनंतत्रस्थापयित्वार्चयेत्सुधीः ॐनमोभगवतेविष्णवेसर्वभूतात्मनेवासुदेवायसर्वात्मसंयोगपद्मपीठा
त्मनेनम इति तन्मंत्रेणतन्मध्येकुर्यात्पुष्पांजलिंपुनः इतिपीठार्चाअर्घ्यपाद्यादिकंदद्यात्स्नानंपंचामृतेनच .लेप्या
दौनाभिषेकःस्याद्दद्याद्वस्त्रोपवीतकम् ततःसंस्थाप्यपीठेतंपूजांकुर्याद्यथाविधि आवाहनंस्थापनंचसान्निधापनमेवचा
सन्निरोधनमेवंस्यादवरोधनमंजसा तत्तन्मुद्राभिरेवस्यादेवसंप्रार्थ्यभक्तितः नानारत्नविचित्राणिदद्यादाभरणानिच
हिमांबुघृष्टरुचिरघनसारसमन्वितं गंधंदद्यात्प्रयत्नेनसागुरुंचसकुंकुमं कल्हारकेतकीजातीपुंनागाद्यैःप्रपूजयेत्
चंपकैःशतपत्रैश्चचंदनैःसुमनोहरैः चूतपल्लवपुष्पैश्चदूर्वाभिस्तुलसीदलैः कोमलैर्बिल्वपत्रैश्चअशोककुसुमैस्तथ
रामस्यजननीचासिरामात्मिकमिदंजगत् अतस्त्वांपूजयिष्यामिलोकमातर्नमोस्तुते इतिकौसल्यायां नमोदशर
थायेतिपूजयेत्पितरंतथा इतिपितृपूजनं ततोनुज्ञाप्यदेवेशंपरिवारान्समर्चयेत् पूर्वंषट्कोणकोणेषुहृदयादीनिच
क्रमात् तथावरणं हनूमंतंचसुग्रीवंभरतंसविभीषणं लक्ष्मणांगदशत्रुघ्नजांबवंतंदलेष्विमान् द्वितीयं धृष्टिंजयंतं

विजयंसुराष्ट्रंराष्ट्रवर्द्धनं अकोपंधर्मपालंचसुमंतंदलमध्यतः तृतीयंदलाग्रेलोकपालांश्चइतिचतुर्थं तदस्त्राणिततोवहिः
पंचमंनाममंत्रैर्नमस्कारचतुर्थभ्यांप्रपूजयेत् घंटांचवादयन्धूपंदीपंचास्मैनिवेदयेत् भक्ष्यभोज्यादिनाभक्त्यानैवेद्यंवि
धिनाचरेत् आचमनचसतांबूलंमहानीराजनंततः नमस्कुर्यात्ततःस्तोत्रैःस्तुत्वाचपूजयेन्मनुं शृएवनूजयंतीमाहात्म्यंदि
व्यांरामकथांतथारामभक्तैःसमंयामंनयेद्राममनुस्मरन् शंखाद्यावाहनार्चांचकुर्याद्यामेष्वतंद्रितः रामोद्वितीयःसंपूज्यो
मध्याह्नेजन्मभावयेत् उच्चस्थेग्रहपंचकेसुरगुरौइत्यादिमल्वैववादयेद्वाद्यान्दद्यादर्घ्यंजगत्पतेः फलपुष्पांबुसंपूर्णंगृही
त्वाशंखमुज्वलं अशोकचूतकुसुमैर्युक्तंचतुलसीदलैः दशाननवधार्थायधर्मसंस्थापनायच दानवानांविनाशायदैत्या
नांनिधनायच परित्राणायसाधूनांजातोरामःस्वयंहरिः गृहाणार्घ्यंमयादत्तंभ्रातृभिःसहितोनघ इत्यर्घ्यमंत्रः
पुनःपुष्पांजलिंदत्वायामेयामेह्यतंद्रितः पूजयेद्विधिवद्भक्त्यादिवारात्रंनयेद्बुधः इतिरामनवमीविधायकसंग्रहः
अथव्रतपद्धतिः तत्रादावष्टम्यांदंतधावनपूर्वकं नद्यादौस्नात्वानित्यंनिर्वर्त्याचार्यवरणंकुर्यात् तत्रमंत्रः श्रीरामप्र
तिमादानंकरिष्येहंद्विजोत्तम तत्राचार्योभवप्रीतः श्रीरामोपित्वमेवचेति आगतंस्नापयित्वास्वयंतैलेनाभ्यंज्य
विप्रंसात्विकान्नैर्भोजयित्वास्वयंभुंजीत ततोनवम्यामेकभक्तेनअंगभूतेनराघव इक्ष्वाकुवंशतिलकप्रीतोभवरघू
द्वहेत्येकभक्तंनिवेद्यसायंसंध्यांकृत्वाआचार्यसहितोरात्रावधःशयनंकुर्यात् इत्यष्टमीकृत्यपद्धतिः ततःनवम्यांप्रातः
समुत्थायपर्णादिभिर्गंडूषैश्चमुखंसंशोध्यनद्यादिपुस्नात्वासंध्यांविधायनित्यपूजनादिशीघ्रमेवनिर्वर्त्य ततःसूर्यःसो
मोयमःकालःसंध्येभूतान्यहःक्षपा पवनोदिक्पतिर्भूमिराकाशंखेचरानराः ब्राह्मशासनमास्थायकल्पध्वमिहसन्नि
धिमितिमंत्रेणसूर्यादिदेवताभ्योव्रतंनिवेद्य अपसर्पंतुयेभूतायेभूताभुविसंस्थिताः येभूताविघ्नकर्तारस्तेनश्यंतुशिवा
ज्ञयेतिमंत्रेणभूतान्युत्सार्यओमद्यसोपवासंरामनवमीव्रतमहंकरिष्ये उपोष्यानवमीत्वद्ययामेष्वष्टसुराघव तेनश्री

तोभवत्वभोस्संसाराञ्जाहिमांहरे इत्युक्त्वार्घ्यपात्रस्थंसपुष्पाक्षतंजलंक्षिपेत् ततःचतुर्द्वारपताकाढ्यमित्यादिनापूर्व मुक्तशंखचक्रादिभिरलंकृतंचतुर्हस्तवेदिकायुक्तं हस्तमात्रवेदिकायुक्तंवामंडपंविधायतन्मध्येसर्वतोभद्रंकमलंवावि लिख्यतत्रकुंभस्थापनंकुर्यात् तत्रक्रमः आदौगणपतिपूजनंमातृकापूजनं पुण्याहवाचनंचकृत्वा महीद्यौरितिभू मिंस्पृष्ट्वा ॐओषधयइतियवान्निक्षिप्य तत्रआजिघ्रेतिकलशंसंस्थाप्य इमंमेगंगइतिजलेनापूर्य्यगंधद्वारामिति गंधयाओषधीरितिसर्वौषधीःकांडादितिदूर्वा अश्वत्थेवोपंचपल्लवान्स्योनापृथिवीतिसप्तमृदःयाःफलिनीरितिफ लंसहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिरण्यंचनिक्षिप्य युवासुवासाइतिवस्त्रेणावेष्ट्य पूर्णादर्वीतिपूर्णपात्र निधाय तत्रतत्वायामीतिवरुणंसंपूज्य कलशस्यमुखइतिपठेत् इतिकलशस्थापनविधिः ततःकलशोपरिसौवर्णादि पात्रेषट्कोणमालिख्यतदुपरिसदशमहतवस्त्रयुग्मंसुवर्णसिंहासनंस्थापयेत् ततःश्रीरामस्मरणंकृत्वा अस्याराम नवम्यांतुरामाराधनतत्परः उपोष्याष्टसुयामेषुपूजयित्वायथाविधि इमांस्वर्णमयींरामप्रतिमांसुप्रयत्नतःश्रीरामप्री तयेदास्येरामभक्तायधीमते प्रीतोरामोहरत्वाशुपापानिसुबहूनिमे अनेकजन्मसंसिद्धान्यभ्यस्तानिमहान्तिच इतित्रि भिर्व्रतसंकल्पंकुर्यात् अशक्तस्तुइमांधातुमयीमितिपठेत् स्वर्णादिमध्यामग्न्युत्तारणंलेख्यादौतुनास्तितत्रआसनेपृ थ्वीतिमंत्रेणउपविश्यतस्याधः कूर्मायनमः आधारशक्तयेदुष्टविद्रावणायनृसिंहायनमइतिपूजयेत् अपक्रामंत्वि तिपठित्वापार्ष्णिघातत्रयंकृत्वा भूतसंघानुत्सार्य ॐरःअस्त्रायफट् इत्युच्चाकरास्फालनेनछोटिकाभिश्चसर्वादिग्बंध नंकृत्वा स्ववामेगुरुभ्योनमःदक्षिणेगणपतयेनमः मध्येस्वेष्टदेवतायैनमइतिनत्वातालत्रयंकृत्वापुनःॐरःअस्त्रायफ ट् इत्युच्चार्यदक्षिणहस्तेजलंगृहीत्वा स्वात्मानंपरितःशमयन् अग्निप्राकारमुद्रया अग्निप्राकारंभावयेत् ततः भूतशुद्धिंप्राणप्रतिष्ठांकेवलमातृकान्यासंचकृत्वाकेशवादिमातृकान्यासंकुर्यात ॐकेशवाभ्य [illegible]

साध्यनारायणऋषि गायत्रीछंदः लक्ष्मीनारायणोदेवताहलोबीज स्वराःशक्तिः राममंत्रांगत्वेनन्यासे
विनियोगः अंगुष्ठादिषट्सु स्थानेषु वक्ष्यमाणषडंगमंत्रैर्न्यासंविधाय हृदयादिषुन्यसेत् ओंश्रीं ओं
नमोनारायणाय हंसः सोहंअंकंखंगंघंङं आंओंह्रींहंसः सोहं ओंनमोनारायणायक्रुद्धोल्कायस्वाहा ओं
श्रीदेव्यैनमः हृदयायनमः ओंनमोनारायणायहंसः सोहंइंचंछंजंझंञंईओंह्रींहंसः सोहं ओंनमोनारायणायमहो
ल्कायस्वाहा श्रीपद्मिन्यैनमःशिरसेस्वाहा ओंनमोनारायणायहंसः सोहंउंटंठंडंढंणंऊओंह्रींहंसःसोहंओंनमोना
रायणायवरोल्कायस्वाहा श्रीविष्णुपत्न्यैनमः शिखायैवषट् ओंनमोनारायणायहंसः सोहंएंतंथंदंधंनंऐंओंह्रीं
हंसः साहनेमोनारायणायद्वयुल्कायस्वाहा श्रीवरदायैनमः कवचायहुं ओंश्रीं ओंनमोनारायणायहंसःसोहंओं
पंफंबंभंमंऔंओंह्रींहंसः ओंनमोनारायणायसुखोल्कायस्वाहा श्रीकमलारूपायैनम इतिनेत्रं ओंश्रीनुनमोनारा
यणायहंसः सोहंअंयंरंलंवंशंषंसंहंलंक्षंअः ओंह्रींहंसःसोहंनुनमोनारायणाय अनंतोल्कायस्वाहात्रःशूलिन्यैनमः
इतिअस्त्रं इतिकेशवादिमातृकान्यासषडंगंततोध्यानं विद्यारविंदमुकुरामृतकुंभपद्मकौमोदकीदरसुदर्शनशोभिहस्तं
सौदामिनीमुकुरकांतिविभातिलक्ष्मीनारायणात्मकमखंडितमादिमूर्तिंवपुरितिशेषःवामाधः करमारभ्यदक्षिणाधःक
रपर्यंतमायुधक्रमोत्रबोद्धव्यःओंह्रींश्रींक्लीं अंक्लींश्रींह्रींओंकेशवायकांत्यैनमः शिरसि ओंह्रींश्रींक्लीं आंक्लींश्रींह्रींओंन
मोनारायणायकांत्यैनमःमुखवृत्ते ओंह्रींश्रींक्लींइंक्लींश्रींह्रीं ओंमाधवायतुष्ट्यैनमःदक्षनेत्रे ओंह्रींश्रींक्लींईंक्लींश्रींह्रीं ओं
गोविंदायतुष्ट्यैनम.वामनेत्रे ओंह्रींश्रींक्लींउंक्लींश्रींह्रीं ओंविष्णवेधृत्यैनमःदक्षकर्णे ओंह्रींश्रींक्लीं ऊंक्लींश्रींह्रीं ओंमधु
सूदनायक्षांत्यैनमः वामकर्णे ओंह्रींश्रींक्लींऋंक्लीं श्रींह्रीं ओंत्रिविक्रमायदयायैनमः दक्षनासापुटे ओंह्रींश्रींक्लीं ॠंक्लीं
श्रींह्रींओंवामनायदयायैनमःवामनासापुटे ओंह्रींश्रींक्लीं लृंक्लींश्रींह्रींओंश्रीधरायमेधायैनमःदक्षगंडेओंह्रींश्रींक्लींॡं

क्लींश्रींह्रींउंहर्षीकेशायहर्षायैनमःवामगंडेउंह्रींश्रींक्लींएंक्लींश्रींह्रींउंपद्मनाभायश्रद्धायैनमःऊर्ध्वोष्ठेउंह्रींश्रींक्लींऐंक्लीं श्रींह्रींउंदामोदरायलज्जायैनमःअधरोष्ठे उंह्रींश्रींक्लींउंश्रींह्रींक्लीं उंवासुदेवायलक्ष्म्यैनमःऊर्ध्वदंतपंक्तौ उंह्रींश्रीं क्लींऔंक्लींश्रींह्रीं उंसंकर्षणायसरस्वत्यैनमःअधोदंतपंक्तौउंह्रींश्रींक्लींअंक्लींश्रींह्रीं उंप्रद्युम्नायप्रीत्यैनमःमूर्द्धनि उं ह्रींश्रींक्लींअःक्लींश्रींह्रीं उंअनिरुद्धायरत्यैनमःमुखे उंह्रींश्रींक्लींकंक्लींश्रींह्रीं उंचक्रिणेजयायैनमःदक्षबाहुमूले उंह्रीं श्रींक्लींखंक्लींश्रींह्रीं उंगदिनेदुर्गायैनमः दक्षकूर्परे उंह्रींश्रींक्लींगंक्लींश्रींह्रीं उंशार्ङ्गिणेरमायैनमः दक्षमणि बंधे उंह्रींश्रींक्लींघंक्लींश्रींह्रीं उंखड्गिनेसत्यायैनमः दक्षांगुलीमूले उंह्रींश्रींक्लींङंक्लींश्रींह्रीं उंशंखि नेचंद्रायैनमः दक्षांगुल्यग्रेषु उंह्रींश्रींक्लींचंक्लींश्रींह्रीं उंहस्तिनेवाण्यैनमः वामबाहुमूले उंह्रींश्रींक्लींछंक्लींश्रीं ह्रीं उंसुमालिनेविलासिन्यैनमः वामकूर्परे उंह्रींश्रींक्लींजंक्लींश्रींह्रीं उंशूलिनेविजयायैनमःवाममणिबंधे उं ह्रींश्रींक्लींझंक्लींश्रींह्रीं उंपाशिनेविरजायैनमःवामांगुलिमूले उंह्रींश्रींक्लींञंक्लींश्रींह्रींअंकुशिनेविश्वायैनमःवामांगुल्य ग्रे उंह्रींश्रींक्लींटंक्लींश्रींह्रीं उंमुकुंदायाविमदायैनमः दक्षोरुमूले उंह्रींश्रींक्लींठंक्लींश्रींह्रीं उंनंदजायसुनंदनायैनमः दक्षजानुनि उंह्रींश्रींक्लींडंक्लींश्रींह्रीं उंनंदिनेस्मृत्यैनमः दक्षगुल्फे उंह्रींश्रींक्लींढंक्लींश्रींह्रींनरायऋद्ध्यैनमः दक्षपा दांगुलिमूले उंह्रींश्रींक्लींणंक्लींश्रींह्रीं उंनरकजितेसमृद्ध्यैनमः दक्षांगुल्यग्रेषु उंह्रींश्रींक्लींतंक्लींश्रींह्रीं उंहरयेशु द्धायैनमःवामोरुमूले उंह्रींश्रींक्लींथंक्लींश्रींह्रीं उंकृष्णायबुद्ध्यैनमःवामजानुनि उंह्रींश्रींक्लींदंक्लींश्रींह्रींउंसत्याय भुक्त्यैनमः वामगुल्फे उंह्रींश्रींक्लींधंक्लींश्रींह्रीं उंसात्वतायमत्यैनमःवामपादांगुलिमूले उंह्रींश्रींक्लींनंक्लींश्रींह्रीं उंशौरयेक्षमायैवामांगुल्यग्रेषु उंह्रींश्रींक्लींपंक्लींश्रींह्रींउंशूरायपरमायैनमः दक्षपार्श्वे उंह्रींश्रींक्लींफंक्लींश्रींह्रीं उंजनार्दनायउमायै-वामपार्श्वे उंह्रींश्रींक्लींबंक्लींश्रींह्रींउंभूधरायक्लेदिन्यै.पृष्ठे उंह्रींश्रींक्लींभंक्लींश्रींह्रीं उंविश्वमू

लायक्लिन्नायै. नाभौ ॐ ह्रीं श्रीं क्लीं मं क्लीं श्रीं ह्रीं ॐ वैकुंठायवसुदायैनमः जठरे ॐ ह्रीं श्रीं क्लीं यं क्लीं श्रीं ह्रीं ॐ त्वगात्मने पुरुषोत्तमायवसुधायैनमः हृदये ॐ ह्रीं श्रीं क्लीं रं क्लीं श्रीं ह्रीं ॐ असृगात्मने वालिनेपरायैनमः दक्षांसे ॐ ह्रीं श्रीं क्लीं लं क्लीं श्रीं ह्रीं ॐ मांसात्मने वलानुजायपरायणायैनमः ककुदि ॐ ह्रीं श्रीं क्लीं वं क्लीं श्रीं ह्रीं ॐ मेधात्मने वलायसूक्ष्मायै वामांसे ॐ ह्रीं श्रीं क्लीं शं क्लीं श्रीं ह्रीं ॐ अस्थ्यात्मने वृषांघ्रयेसंध्यायैनमः हृदादिदक्षकराग्रपर्यंतं ॐ ह्रीं श्रीं क्लीं पं क्लीं श्रीं ह्रीं ॐ मज्जात्मने वृषायसंध्यायैनमः हृदादिवामकरपर्यंत ॐ ह्रीं श्रीं क्लीं सं क्लीं श्रीं ह्रीं शुक्रात्मने हंसप्रभायै हृदादिदक्षपादांतं ह्रीं श्रीं क्लीं हं क्लीं श्रीं ह्रीं प्राणात्मने वराहायनिशायैनमः हृदादिवामपादांतं ॐ ह्रीं श्रीं क्लीं लं क्लीं श्रीं ह्रीं ॐ शक्त्यात्मने विमलायअमोघायैनमः हृदादिनाभ्यंतं ॐ ह्रीं क्लीं क्लीं क्षं क्लीं श्रीं ह्रीं ॐ परमात्मने नृसिंहायविद्युतायैनमः हृदादिमूर्द्धांतं यद्वा प्रणवादिकामवीजपूर्वकमातृकाक्षरादीन्वा केशवादिकादीन्नमोंतान्न्यसेत् इतिकेशवादिन्यासः अन्येच वैष्णवमंत्रन्यासारामार्चनरत्नाकरेज्ञेयाः अथशंखस्थापनं तत्रातिसूक्ष्मप्रकारोगौतमीयेअस्त्रेणशंखंप्रक्षाल्यहृन्मंत्रेणप्रपूरयेत् पूजयेत्प्रणवेनैवसामान्यार्घमिदंस्मृतं अथविस्तरेणशंखप्रतिष्ठा सामान्यार्घोदकेनस्वपुरतः त्रिकोणषट्कोणचतुरस्रमंडलंकृत्वा आधारशक्तयेकूर्मायअनंतायपृथिव्यैनमइतिसंपूज्य शंखमुद्रांप्रदर्श्यगंधपुष्पाक्षतैः आग्नेयेहृदयायनमः नैर्ऋतेशिरसेस्वाहा वायव्येशिखायैवषट् ऐशानेकवचायहुं मध्येनेत्राभ्यांवौषट् पूर्वादिदिक्षुअस्त्रायफट् इतिमंडलसंपूज्य मूलेनत्रिवेदिकांप्रक्षाल्य रंअग्निमंडलायदशकलात्मने श्रीरामार्घपात्रासनायनम. इतिमंडलोपरिआधारंप्रतिष्ठाप्यतत्रपूर्वाद्यष्टदिक्षु उपर्यधश्च अग्नेर्दशकलाःपूजयेत् पूर्वेयधूम्रार्चिषेनमः आग्नेये रं ऊष्मायैनमः दक्षिणेलंज्वलिन्यैनमः नैर्ऋत्येवज्वालिन्यैनमः पश्चिमेशंविस्फुलिंगिन्यैनमःवायव्येषंश्रियैनमः उत्तरेसंसुरूपायैनमः ऐशान्येहंकपिलायैनमः पूर्वैशानयोर्मध्येलंहव्यवाहायैनमः पश्चिमनैर्ऋत्यमध्ये क्षं कव्यवा

हायैनमइति ततश्चास्त्रेणशंखंप्रक्षाल्यसंसूर्यमंडलायद्वादशकलात्मने श्रीरामार्घपात्राधारायनमः इतिपात्राधा
धारेनिधाय शंखोपरि वृत्ताकारेणसूर्यस्यद्वादशकलाः पूजयेत् पूर्वादिप्रादक्षिण्येनकंभंतापिन्यैनमः खंबंतापि
न्यै-गंफंधूम्रायै. घंपंमरीच्यै.ङंनंज्वालिन्यै. चंधंरुच्यै. छंदंसुषुम्नायै. जंथंभोगदायै. झंतंविश्वायै. ञंणंबोधि
न्यै- टंठंधारिण्यै-ढंडंक्षमायैनमइति ततस्तीर्थोदकेन क्षंलंहंसंषंशंवंलंरंयंमंभंवंफंपंनंधंदंथंतंणंढंडंठंटंञंझंजंछंचंङंघ
गंखंकंअः अंऔंओं ऐंएंलृंलृंॠंऋंऊंउंईंइंआंअंमूलमंत्रंचजप्त्वा शंखमापूर्य ॐसोममंडलायषोडशकलात्मने
श्रीरामार्घामृतायनमइतिसंपूज्य तत्रचंद्रकलाः पूजयेत् अंअमृतायैनमः आंमानदायै इंपूषायै. ईंतुष्ट्यै
नमः उंपुष्ट्यैनमः ऊंमत्यैनमः ऋंधृत्यैनमः ॠंशशिन्यै. लृंचंद्रिकायै लॄंकात्यै एंज्योत्स्नायैनमः ऐं
श्रियै ओंप्रीत्यै औंअंगदायैनमः अंपूर्णायै-अःपूर्णामृतायैनमइति ततोब्रह्मांडोदरतीर्थानिकरैः स्पृष्टा-
नितरवे तेनसत्येनमेदेवतीर्थं देहिदिवाकर गंगेचयमुनेचैवगोदावरिसरस्वति नर्मदेसिंधुकावेरिजलेस्मिन्स
न्निधिंकुरु इतिसूर्यमंडलतीर्थं अंकुशमुद्रयाआवाह्य शंखेसंयोज्य गंधपुष्पाद्यैः शंखजलंसमभ्यर्च्य शंखे
पाणितलंदत्वामूलमंत्रमष्टधाजपेत् तज्जलंचिन्मयंसंचिंत्यअस्त्रमंत्रेणसंरक्ष्यधेनुमुद्रयाऽमृतीकृत्य शंखमुद्रांरुंडमुद्रां
चप्रदर्श्यपरमीकृत्यगंधपुष्पाभ्यांशंखंसंपूज्य तेनजलेनदेवमात्मानंपूजाद्रव्याणिचप्रोक्षयेत् इतिशंखप्रतिष्ठा
शंखात्पूर्वादिप्रादक्षिण्येन अर्घ्यपाद्याचमनीयमधुपर्कादिसामान्यार्घ्यविधिना स्थापयेत् ततोवामभागस्थक
लशंपूजाद्रव्याणिचप्रोक्षयेत् अथांतर्यागः स्वदेहेमंडूकादिन्यासंकृत्वा स्वहृदये धर्मकंदसमुद्भूतंज्ञाननालसुशोभितं
ऐश्वर्याष्टदलंपद्मंपरंवैराग्यकार्णिकं तस्मिन्पीठेचिदात्मानंराघवंचस्वरूपिणं ध्यात्वामानसैर्धूपदीपाद्यैःसंपूज्यनैवे
द्यावसरेकिंचिज्जपंकृत्वा गुह्येतिमंत्रेण. जपंसमर्पयेत्ततः स्वाधिष्ठानगतत्रिकोणकुंडेप्रज्वलितंचिदग्निं ध्यात्वा

विंदुनादप्रणवनाहतादिकहुत्वाततः पूजाहोमादिकदेवकृतयत्त्वदनुग्रहात् तत्प्रीतोभवत्वभोः शुद्धममानसकुरु
इतिमंत्रेणश्वासमार्गगतंतेजइत्युक्त्वाआत्मानंसमर्पयेत् ततस्तन्मयः सच्चिदानंदमयोभूत्वाक्षणंतिष्ठेत् इत्यंतर्यागः
अथपीठपूजा स्ववामभागे श्रीगुरुभ्योनमः दक्षिणेगणपतयेमध्येस्वेष्टदेवतायैपीठमध्येॐमंडूकायनमःकालाग्निरु
द्रायकूर्माय. आधारशक्त्यै. अनंता.पृथिव्यै. क्षीरसागराय. रत्नदीपाय-रत्नमंडपाय.कल्पवृक्षेभ्यो-रत्नवेदि
कायै. रत्नसिंहासनायनम इतिउपर्युपरिसंपूज्य धर्मायनमः आग्नेयेज्ञानाय.नैर्ऋत्ये.वैराग्याय-वायव्येऐश्वर्याय
ऐशान्येअधर्माय. पूर्वेअज्ञानाय-दक्षिणेअवैराग्यायपश्चिमेअनैश्वर्याय.उत्तरेततोमध्येआनंदकंदाय-संविन्नालाय.स
र्वतत्त्वकमलासनाय.प्रकृतिमयपत्रेभ्यो.विकृतिमयकेसरेभ्यो. पंचाशद्वर्णायैकार्णिकायै.अंअर्कमंडलायद्वादशकला
त्मने, ॐसोममंडलायषोडशकलात्मने. मंवन्हिमंडलायदशकलात्मने. संसत्त्वाय. रंरजसे.तंतमसे.आंआत्मने
अंअंतरात्मने-पंपरमात्मने.ह्रींज्ञानात्मने. मायातत्त्वाय. कलातत्त्वाय विद्यातत्त्वाय परतत्त्वाय ॐकाराद्या मंता
योगपीठाएकैकोपरिपूजयेत् ततःपूर्वादिप्रादक्षिण्येननवशक्तीःपूजयेत् विमलायैपूर्वेउत्कर्षिण्यैआग्नेयेज्ञानायैदक्षि
णेक्रियायै नैर्ऋत्येयोगायै पश्चिमेप्रह्व्यै वायव्येसत्यायै उत्तरेईशानायै ऐशान्येअनुग्रहायै मध्ये॥ततःपुष्पांजलिं
गृहीत्वा पीठं मंत्रेणपुष्पांजलिंदद्यात् ॐनमोभगवतेविष्णवेसर्वभूतात्मनेवासुदेवायसर्वात्मसंयोगपद्मपीठात्मने
नमःततोमध्यान्हेजन्मभावयेत् उच्चस्थेग्रहपंचकेसुरगुरौसेंदौनवम्यांतिथौ लग्नेकर्कटकेपुनर्वसुयुतेमध्यंगतेपूपणि
निर्दग्धुंनिखिलाःपलाशसमिधोमध्यादयोध्यारणे राविर्भूतमभूतपूर्वविभवंयत्किंचिदेकंमहः ततःपूर्वोक्तमूर्तौ अयो
ध्यानगरेरम्येरत्नमंडपमध्यगे स्मरेत्कल्पतरोमूलेरत्नसिंहासनंशुभं तन्मध्येष्टदलंपद्मंनानारत्नप्रातिष्ठितं मातुरं
कगतंराममिंद्रनिलमणिप्रभं कोमलांगंविशालाक्षंविद्युद्वर्णवराननं भानुकोटिप्रतीकाशंकिरीटेनविराजितं रत्नग्रै

वेयकेयूररत्नकुंडलमंडितं रत्नकंकणमंजीरकटिसूत्रैरलंकृतं श्रीवत्सकौस्तुभोरस्कंमुक्ताहारोपशोभितदं क्षिणां
गेदशरथंपुत्रान्वेषणतत्परंपार्श्वेभरतशत्रुघ्नौतालवृंतकरावुभौश्रग्रेव्यग्रंहनूमंतंरामानुग्रहकांक्षिणं एवंविधंससीतंरा
मंध्यात्वापुष्पांजलिंगृहीत्वामूलमुच्चार्यश्रात्मसंस्थमजंशुद्धंत्वामहंपरमेश्वरश्ररण्यामिवहव्याशंमूर्तावावाहयाम्यहं
इतिमंत्रंपठेत् सहस्रशीर्षेत्यावाह्यावाहनींमुद्रांप्रदर्शयेत् ततःतवेयंनहिमामूर्तिस्तस्यांत्वांसर्वगंप्रभो भक्तिस्नेहसं
माकृष्टंदीपंसंस्थापयाम्यहमितिपठित्वा स्थापनींमुद्रांप्रदर्शयेत् सर्वांतर्यामिणंदेवंसर्ववीजमयंशुभंस्वात्मस्थमपरं
शुद्धमासनंकल्पयाम्यहमित्युक्त्वापुरुषएवेत्यासनं श्रस्मिन्वरासनेदेवसुखासीनोक्षरात्मक प्रतिष्ठितोभवेशत्वंप्रसी
दपरमेश्वरेत्युक्त्वोपवेशनंश्रथसन्निधापनंश्रनन्यातवदेवेशमूर्त्तिशक्तिरियंप्रभोसान्निध्यंकुरुतस्यांत्वंभक्तानुग्रहतत्परे
त्युक्त्वामूलांतेसन्निधापनं सन्निधापनींमुद्रांप्रदर्शयेत् श्रथसन्निरोधनं श्र.ज्ञयातवदेवेशकृपांभोधेगुणांबुधे श्रात्मा
नंदैकतृप्तंत्वांनिरुणध्मिपितर्गुरोइत्युक्त्वा मूलांते सन्निरोधनींमुद्रांप्रदर्शयेत श्रज्ञानाद्दुर्मनस्त्वाद्वावैकल्यात्साधन
स्यच यदपूर्णंभवेत्कृत्यंतथाप्यभिमुखोभवेत्युक्त्वाभिमुखीमुद्रयासम्मुखीकरणं दृशापीयूषवर्षिण्यापूरयन्यज्ञाविष्टरं
मूर्तौवायज्ञसंपूर्त्तौस्थितोभवमहेश्वरेतिप्रार्थनामुद्रयाप्रार्थना श्रभक्तवाङ्मनश्चक्षुःश्रोत्रदूरांतरेयुते स्वतेजःपंजरेणा
शुवेष्टितोभवसर्वतइति श्रवगुंठनमुद्रयाश्रवगुंठनं ततोदेवदेहे षडंगेनसकलीकरणं धेनुमुद्रयाधुऽमृतीकरणं
महामुद्रयापरमीकरणं ततोदीपिन्याविधयादीपनं साच यथामूलमंत्रं पठित्वा ऐंवदवदवाग्वादिनिऐंक्लीं क्लि
न्नेक्लेदिनिक्लेदयमहाक्षोभंकुरुकुरु क्लींसौंमहाक्षोभंकुरुकुरुसौंःह्यौंःइतिआकारादिक्षकारान्तानांमातृकानामुच्चार्य
श्रर्घ्योदकेनदेवंत्रिःप्रोक्ष्यदेवस्यहृदयंस्पृशन् प्राणप्रतिष्ठांकुर्यात् सायथाउँश्रांह्रींक्रोंयंरंलंवंशं।षंसंहंहंसःसोहंश्री
भगवतः प्राणइहप्राणाउँश्रांह्रींक्रोंयंरंलंवंशंषंसंहंहंसःसोहंभगवतोजीवइहस्थितःउँश्रांह्रींक्रोंयंरंलंवंशषंसंहंहसः

सोहंभगवंतोवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइहागत्यसुखंचिरंतिष्ठंतुस्वाहा यस्यदर्शनमिच्छंतिदेवाःस्वाभीष्टसिद्धये
तस्मैतेपरमेशायरामायस्वागतनमः कृतार्थोनुगृहीतोस्मिसफलंजीवितमम आगतोदेवदेवेशसुस्वागतमिदंपुनः मू
लांतेश्रीरामसुस्वागतोभव ततः शंख१ चक्र २ गदा३ पद्म४ धेनु५ गरुड७ श्रीवत्स८ योनि१० मुद्राःप्रदर्श्यपुष्पां
जलिंगृहीत्वा मूलांतेश्रीरामायसवाहनायसपरिवारायस्वशक्तियुक्ताय पुष्पांजलिं परिकल्पयामि नम इतिसमर्प
येत् यद्भक्तिलेशसंपर्कात्परमानंदसंभवः तस्मैतेचरणाब्जायपाद्यंशुद्धायकल्प्यते एतावानस्येतिमूलांतेश्रीरामाय
पाद्यंपरिकल्पयामिनम. पाद्यपादयोर्दद्यात् तापत्रयहरंदिव्यपरमानंदलक्षणं तापत्रयविनिर्मुक्तंत्वामर्घ्यंकल्प
याम्यहं त्रिपादूर्ध्वः मूलांते रामायइदमर्घ्यंस्वाहा इत्यर्घ्यंशिरसिदद्यात् वेदानामपिवेदायदेवानांदेवतात्मने
आचमनंकल्पयामीशशुद्धानांशुद्धिहेतवे ततोविराड्मूलांतेश्रीरामायइदमाचमनीयं सुधा आचमनं मुखेदद्यात्
सर्वकालेष्वहीनायपरिपूर्णसुखात्मने मधुपर्कमिमंदेवकल्पयामिप्रसीदमे मूलांतेश्रीरामायमधुपर्कंसुधाम धुप
र्कंमुखेदद्यात् उच्छिष्टोप्यशुचिर्वापियस्यस्मरणमात्रतःशुद्धिमाप्नोतितस्मैतेपुनराचमनीयकमितिपुनराचमनंदद्यात्
स्नेहंगृहाणस्नेहेनलोकनाथमहाशयः सर्वलोकेषुशुद्धात्मन्ददामिस्नेहमुत्तममितिस्नेहसमर्पणं ततः सुगंधद्रव्यादि
नाउद्वर्तनंकारयित्वा उष्णोदकेनशुद्धाबुनावास्नापयेत् अथपंचामृतस्नानं आप्यायस्वेतिपयः दधिक्राव्णइतिदधि
घृतंमिमिक्षतइतिघृतं मधुवाताइतिमधु स्वादुः पवस्वेतिशर्करा ततः परमानंदबोधाब्धिनिमज्जन्निजमूर्तये सांगोपां
गमिदंस्नानंकल्पयाम्यहमीशते द्रविणेनचशुद्धेनसर्वगंधजलेनच सर्वोदकस्नानं ततो मूलेन शंखोदकेनाऽभिषि
च्यपुनराचमनीय यस्यशक्तित्रयेणेदंसंप्रोतमखिलंजगत् यज्ञसूत्रायतस्मैतेयज्ञसूत्रंप्रकल्पये तस्माद्यज्ञात्स
र्वहुतः संभृतमित्युपवीतं स्वभावसुंदरांगायनानाशक्त्याश्रयायते भूषणानिविचित्राणिकल्पयाम्यमरार्चितेति

भूषणानि हिमांबुवनसारागुरुकुंकुमघृष्टगंधकानिष्टयासमर्पयेत् परमानंदसौभाग्यपरिपूर्णादिगंतरं गृहाणप
रमगंधकृपयापरमेश्वर तस्माद्यज्ञात्सर्वहुतइतिगंधंदत्त्वा तुरीयवनसंभूतंनानागुणमनोहरं अमंदसौरभंपुष्पं
गृह्यतामिदमुत्तममितिपठित्वा तस्मादश्वाइति पुष्पदत्त्वा पुष्पांजलित्रयंदद्यात् ततश्चंदनाक्षतपुष्पादिभिःसीता
सकौशल्यांपूजयेत् रामस्यजननीव्याप्तीरामात्मकमिदंजगत् अतस्त्वांपूजयिष्यामिलोकमातर्नमोस्तुते ततोन
मोदशरथायेतिदशरथंसंपूज्यलक्ष्मणभरतशत्रुघ्नांश्चसंपूज्यहनुमंतंपूजयेत् ततआवरणपूजार्थमनुज्ञाप्यषडंगपूज
नंकुर्यात् इतिप्रथमावरणम् हनूमंतंचसुग्रीवंभरतंसविभीषणं लक्ष्मणांगदशत्रुघ्नान्जामवंतंदलेष्वितान् द्वितीयं
धृष्टिंजयंतंविजयंसुराष्ट्रंराष्ट्रवर्धनं अकोपंधर्मपालंचसुमंतंदलमध्यतः तृतीय दलाग्रे लोकपालांश्च चतुर्थं तदस्त्रा
णिततोवहिः पंचमं तत पुष्पांजलिंदत्त्वा वनस्पतिरसोपेतोगंधाढ्यःसुमनोहरः आघ्रेयःसर्वदेवानांधूपोयंप्रति
गृह्यतां यत्पुरुषंव्यदधुरितिधूपंदद्यात् सुप्रकाशोमहादीपः सर्वतस्तिमिरापहः सबाह्याभ्यंतरंज्योतिर्दीपोयंप्र
तिगृह्यताम् ब्राह्मणोस्येतिदीपम् अथनैवेद्यम् मूलेनास्त्रायफडितिचसंप्रोक्ष्यचक्रमुद्रयाभिरक्ष्य मूलेनाष्टधाभिमन्त्र्य
धेनुमुद्रांचप्रदर्श्य मूलेनाभिमंत्र्य दक्षिणहस्तेउदकमादाय शालीभक्तंशाशिकरसितंपायसापूपसूपं लेह्यपेयंसुचोष्यं
सितसमृतफलंधारिकाद्यंसुखाद्यं आज्यप्राज्यंसुभोज्यंनयनरुचिकरंराजिकैलामरीचं स्वादीयःशाकराजीपरिकर
ममृताहारजोषज्जुषस्व हेमपात्रगतंदिव्यंपरमान्नंसुसंस्कृतं पंचधाषड्रसोपेतंगृहाणपरमेश्वर चंद्रमामनसइतिनैवे
द्यम् अमृतोपस्तरणमसीतिजलंदत्त्वा प्राणायस्वाहेत्यादिपंचग्रासान्विकचोत्पलमुद्राभिः ग्राहयित्वा नमस्ते
देवदेवेशसर्वतृप्तिकरपरं अखंडानंदसंपूर्णगृहाणजलमुत्तममिति मध्येपानीयंदत्त्वामध्येजवनिकांकृत्वा ब्रह्मेशाद्यैः
परितउरुभिःसूपविष्टैःसमेतोलक्ष्म्याशिंजद्वलयकरयासादरंवीज्यमानःनर्मक्रीडाप्रहसनपरोहासयन्पंक्तिभोक्तॄन्

भुंक्तेपात्रेकनकघटितेषड्रसान्श्रीरमेशइतिपठित्वा - यांश्चितारत्नकामद्रुमांवैभवभुवांमंडनंमंडलानां सर्वासां
संपदांयस्त्रिजगतिजगतामंगलंमंगलानां हैमामत्रस्थदूर्वादधिमधुलवणैर्दृष्टमुत्तार्यचार्थै- नीराज्योरामचंद्रोदिन
करकरजिद्रत्नदीपावलीभि रितिध्यात्वायथाशक्तिजपंकृत्वा अमृतापिधानमसीत्युत्तरापोशनंदत्त्वा विश्वक्सेना
यनम इति उच्छिष्टशेषंदत्त्वा हस्तौप्रक्षाल्यकरोद्वर्तनंदद्यात् इदंफलमितिफलं पूगीफलमितितांबूलंहिरण्यग
र्भेतिदक्षिणां मुकुटाद्याभूषणानिछत्रचामरादीनिपरिकल्प्य महानीराजनंकुर्यात् नाभ्याआसीदितिनमस्कारान्स
प्तास्यासन्नितिप्रदक्षिणां यज्ञेनेतिपुष्पांजलिंदत्त्वा भगवन्प्रसीदेतिनमस्कृत्यस्तुवीत ध्येयंसदापरिभवघ्नमभीष्टदो
ह्तीर्थास्पदंशिवविरिंचिनुतशरण्यंभृत्यार्तिहंप्रणतपालभवाब्धिपोतंवंदेमहापुरुषतेचरणारविंदं त्यक्त्वासुदुस्त्यजसु
रेप्सितराज्यलक्ष्मींधर्मिष्ठआर्यवचसायदगादरण्यमायामृगंदयितयेप्सितमन्वधावद्वंदेमहापुरुषतेचरणारविंदम् २
श्रीरामचंद्ररघुपुंगवराजवर्यराजेंद्ररामरघुनायकराघवेश राजाधिराजरघुनंदनरामभद्रदासोहमद्यभवतःशरणाग
तोस्मि यस्यामलंनृपसदस्सुयशोधुनायगायंत्यजस्रमृषयोदिगिभेंद्रपत्न्यः तन्नाकपालवसुपालकिरीटजुष्टपादां
बुजंरघुपतेःशरणंप्रपद्ये ३ नमोब्रह्मण्यदेवायरामायाकुंठमेधसे उत्तमश्लोकधुर्यायन्यस्तदंडार्चितांघ्रये इदीव
रदलश्यामोरामोराजीवलोचनः वर्ततेमानसेयस्यास्तांसीतांप्रणमाम्यहंततःपुष्पांजलिंदत्त्वाकपिमुद्रांविधायप्रार्थ
येत् यदात्रपासर्वगताहताते ध्यानेनचेत परितोहतते स्तुत्यानयावाक्परताहतातेक्षमस्वसर्वंममदेवदेव अज्ञानादथ
वाज्ञानादशुभंयन्मयाकृतं क्षंतुमर्हसितत्सर्वंदास्येनचगृहाणमां श्रीगोविंदमुकुंदकेशवशिवश्रीवल्लभश्रीनिधे श्रीवैकुं
ठसुकुंठकुंठितखलस्वामिन्नकुंठोदय शुद्धध्येयविधूतधूर्तधवलश्रीमाधवाधोक्षज श्रद्धाबद्धविधेहिनस्त्वयिधियं श्री
राधरित्रीधर त्वमेवभक्तिंजनयस्त्वमेवमामुद्धरास्मात्पतितभवाब्धेः छिष्टकृपालोनदयास्तिचित्तेचेत्तर्हिहाकर्मवशो

हतोस्मि  गजास्यादित्यपंचास्यशक्तिसिंहास्यरूपवान्  ममकृतेनसर्वात्मा रामःप्रीणातुचिद्वपुः  ततउत्तरार्घ्यं
दद्यात्  फलपुष्पांबुसपूर्णंगृहीत्वाशंखमुज्वलं  अशोकचूतकुसुमैर्युक्तंचतुलसीदलैः अर्घ्यमंत्रस्तु  दशाननवधार्थी
यधर्मसंस्थापनायच  परित्राणायसाधूनाजातोरामः स्वयंहरिः  गृहाणार्घ्यंमयादत्तंभ्रातृभि सहितोनघेतिततो
यामेयामेपुष्पांजलिंदत्त्वायथाशक्तिपूजयित्वारात्रौजागरणंकुर्यात्  इतिरामनवमीपूजाविधि. अथदशमीकृत्यततः
प्रातःसमुत्थायस्नानसंध्यादिकाःक्रियाःसमाप्यविधिवद्रामंपूजयेत्पूर्ववन्मुने ततोहोमंप्रकुर्वीतमूलमंत्रेणमंत्रवित् पु
र्वोक्तपीठेकुंडेवास्थंडिलेवासमाहितः  लौकिकाग्नौविधानेनशतमष्टोत्तरंततः  साज्येनपायसेनैवस्मरन्राममनन्य
धीः अथविस्तरेणहोमविधिः तत्रयजमानः कृतनित्यक्रियः शुचि परिहितवासादर्भपाणिः पीठोपविष्टः प्राङ्मु
खोवाचंयतोद्विराचम्यप्राणानयम्यदेशकालौसंकीर्त्य  रामनवमीव्रतांगसाज्यपायसहोमंकरिष्येइतिसंकल्प्य तद
गस्थंडिलादिककरिष्ये  इतिसंकल्प्य  शुद्धगृहेऐशान्यांचतुरंगुलोन्नतमष्टादशांगुलविस्तृतंहोमानुसारेणतद
धिकंवामध्योन्नतस्थंडिलकुर्यात्  स्थंडिलगोमयेनोपलिप्य  यज्ञियशकलेनउदगायतां  पश्चात्प्रागायतां
तयोर्मध्ये  उदक्संस्थाः  प्रागायताः प्रादेशसमितास्तिस्त्र  इत्युल्लेख्य  तासुतच्छकलंउदगग्रनिधायस्थं
डिलमद्भिरभ्युक्ष्यशकलमाग्नेय्यां निरस्यापउपस्पृश्य  ततस्तैजसेनमृण्मये नवापात्रयुग्मेन संपुटीकृत्यसुवा
सिन्याः  श्रोत्रियागारात्स्वगृहाद्वासमिद्धमग्निमाहृत्य  स्थंडिलाद्बहिराग्नेय्यांनिधाय  एह्यग्नेरहूगणोगोत्त
मोग्निस्त्रिष्टुप  जुष्टोदमूनाअत्रियोवसुश्रानोग्निस्त्रिष्टुप्  अग्न्यावाहनेविनियोगः एह्यग्नइहहोतानिषीदादब्धः
सुपुरएनाभवानः  अवतांत्वारोदसीविश्वमिन्वेयजामहे  सौमनसायदेवान्  जुष्टोदमूनाअतिथिर्दुरोणइम
न्नोयज्ञमुपयाहिविद्वान्  विश्वाअग्नेअभियजोविहत्याशत्रूयतामाभराभोजनानि  इत्यक्षतैरावाह्याच्छादनं

दूरीकृत्य समस्तव्याहृतीनांपरमेष्ठी० प्रजापतिर्बृहती० अग्निप्रतिष्ठापनेवि० ॐभूर्भुवःस्वरित्यात्मा भिमुखंपाणिभ्यांपट्सुलेखासुतत्कर्मसुतन्नामकमग्निंप्रतिष्ठापयामीत्यग्निंप्रतिष्ठाप्य प्रोक्षितेंधनानिप्रक्षिप्य वेणुधमन्या प्रबोध्यध्यायेदेवं चत्वारिशृंगावामदेवोग्निस्त्रिष्टुप् अग्निमूर्तिध्यानेवि० चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश सप्तहस्तश्चतुःशृंगीसप्तजिह्वोद्विशीर्षकः त्रिपात्प्रसन्नवदनःसुखासीनःशुचिःस्मितःस्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नं स्रुचंस्रुवं तोमरंव्यजनंवामेघृतपात्रंचधारयन् आत्माभिमुखमासीनएवंरूपोहुताशनः एषोहिदेवःप्रदिशोनुसर्वाःपूर्वोहजातःसउगर्भेअंतः सएवजातःसजनिष्यमाणः प्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसम्मुखोभवेतिध्यात्वा ततोन्वाधानंदध्यात् क्रियमाणेरामनवमीव्रतोद्यापनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्यइतिसंकल्प्य समिद्द्वयमादायास्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंवाघारदेवतेआज्येनाग्नीषोमौचक्षुषीआज्येनात्रप्रधानंश्रीराममष्टोत्तरशतसंख्याकाभिः साज्यपायसाहुतिभिः सीतांरामस्यजननींदशरथंलक्ष्मणंभरतंशत्रुघ्नंहनुमंतहृदयंशिरःशिखांकवचनेत्रंअस्त्रंसुग्रीवंभरतंविभीषणंलक्ष्मणं अंगदं शत्रुघ्नंजाम्बवंतं धृष्टिं जयंतं विजयं सुराष्ट्रं राष्ट्रवर्द्धनं अकोपं धर्मपालं सुमंतं इंद्रं अग्निं यमं निर्ऋतिं वरुणं वायुं कुबेरं ईशानं ब्रह्माणं अनंतं वज्रं शक्तिं दंडं खड्गंपाशं अंकुशं गदां शूलं पद्मं चक्रं एताः प्रधानदेवताः प्रत्येकमष्टाविंशतिसंख्याकाभिरष्टाभिर्वासाज्यपायसाहुतिभिः शेषेणस्विष्टकृतमग्निमिध्मसन्नहनेनरुद्रमर्थंम् एमग्निंदेवान्विष्णुंअग्निंवायुं सूर्यंप्रजापतिंचएताःप्रायश्चित्तदेवता आज्यद्रव्येणज्ञाताज्ञातदोषनिवर्हणार्थेत्रिवारमग्निं सकृन्मरुतश्चाज्येनांगदेवताः प्रधानदेवतास्सर्वाः सन्निहिताःसंतु सांगेनकर्मणासद्योयक्ष्ये व्याहृतीनांपरमेष्ठी

प्रजापतिर्ऋषिर्बृहती अन्वाधानसमिद्धोमेवि- ॐभूर्भुवः स्वः स्वाहा प्रजापतयइदं इध्मबर्हिषोः सन्नहनं
तत्रायंक्रमः प्रादेशमात्रान्षट्त्रिंशद्दर्भान् रज्जुकरणार्थंगृहीत्वा तत्र द्वादशदर्भै-संधितपवनांरज्जुंप्रादक्षिण्ये
नकुर्यात्पुनरन्यांरज्जुंएवंरज्जुद्वयंगृहीत्वातद्रज्जुद्वयंसप्रादक्षिण्येनसमन्या पुनरन्यां रज्जुंपूर्ववत्कृत्वा प्रादक्षिण्येन
त्रिवृत्तं समस्याग्रे प्रदक्षिणं ग्रंथिंकृत्वा तां रज्जुमुदगग्रां वितत्यतत्रप्रादेशमात्रान्मुष्टिपरिमितान्दर्भान्निधायतया
रज्वातान्दर्भान् द्विरावेष्ट्य रज्ज्वग्रेणतद्रज्जुमूलसकृदावेष्ट्य तद्रज्ज्वग्रशेषं पूर्वमावेष्ट्य रज्ज्वधस्तान्निवीयान्मि
दर्भेसदायतनस्यपश्चाद्भागउपरिनिदध्यात् ततःपूर्ववदन्यांत्रिवृतांरज्जुंकृत्वोदगग्रांवितत्यतत्रपलाशखदिराद्यन्य
तमयज्ञियवृक्षस्यद्विप्रादेशप्रमाणं पंचदशसमिदात्मकमिध्मं प्रागग्रं निधाय तयारज्ज्वासकृदावध्यायतनस्य
पश्चाद्भागेउपरिनिधाय ततअग्निमायतनाद्बहिःसोदकेनपाणिनाग्नेयमारभ्यैशानपर्यंतंपरिसमूह्य ततःप्राच्यामुदग
ग्रैःदक्षिणस्यांप्रागग्रैःप्रतीच्यामुदगग्रैरुदीच्यांप्रागग्रैर्दर्भैःपरिस्तृणुयात् पूर्वपश्चिमपरिस्तरणमूलयोरुपरिदक्षिण
परिस्तरणाग्रहोरधस्तादुत्तरपरिस्तरणं एवमग्निंपरिस्तीर्य कांश्चिदुत्तरतोदर्भानास्तीर्याग्नेरैशानी मारभ्यपूर्ववत्प
श्चिमदर्भेपूत्तरतःपात्राणिन्यचिसादयेत् दक्षिणसव्यपाणिभ्यांक्रमेणचरुस्थालीप्रोक्षण्यौदर्वीस्रुचौप्रणीताज्यपात्रे
इध्माबर्हिषीशूर्पंकृष्णाजिने उलूखलमुसले प्रोक्षणीपात्रंचभानीकृत्यप्रादेशमात्रानधायाद्भिः पूरयित्वांगुष्ठोपक
निष्ठिकाभ्यामसंस्पृष्टेगृहीत्वात्रिरुत्पूयपात्राण्युत्तानानिकृत्वादर्भैविस्रंस्यात्रि-प्रोक्षयेत् प्रणीतापात्रमग्नेःप्रत्यङ्नि
धायतत्रपवित्रेनिधायोदकंपूरयित्वा गंधपुष्पाक्षतान्निक्षिप्य अस्मिन्कर्मणिब्रह्माकृताकृतावे- यजमानस्तत्प्रणीता
पात्रंनासिकासमीपेनीत्वोत्तरतोग्नेर्दर्भेपुनिधाय अन्यैर्दर्भैराच्छादयेत् तेपवित्रशूर्पेनिधाय श्रीराममुद्दिश्यतूष्णींच
तुरोमुष्टीन्निरुप्येतरदेवताभ्यः सीतायैत्वाजुष्टंनिर्वपामीत्यादिचतुरश्चतुरोमुष्टीन्निर्वपेत् श्रीरामायजुष्टंप्रोक्षामीति

तथैवसीतायैत्वाजुष्टंप्रोक्षामीतिमंत्रेणप्रतिदैवतंचतुः संरुध्यंप्रोक्षणंपश्चात्प्रत्यगग्रीवेऊर्ध्वलोम्निकृष्णाजिनेउलूखलं
निधायोलूखलनिरुप्तव्रीहीन्मुसलेन.त्रिरवहतान् त्रिःफलीकृतांस्तंडुलान्पयसिश्रपयेत् असंस्कृताग्नौश्रपणपक्षे
सूर्पादीनांचतुर्णांनिर्वापादीनांचानिवृत्तिः पर्यग्निकरणस्यतुन तेपवित्रेआज्यपात्रेनिधायाज्यपात्रं पुरतः संस्था
प्यतत्रविलीनाज्यंनिक्षिप्य ततःपरिस्तरणाद्बहिरुत्तरतोग्नेरंगारानपोह्य तेष्वाज्यपात्रंनिधायवामहस्तेदर्भाग्रद्वयंधृ
त्वाज्वलतादर्भोल्मुकेनावज्वाल्यदर्भाग्रद्वयमंगुष्ठपर्वमात्रप्रक्षालितं तत्र निक्षिप्य ज्वलतातेनैवोल्मुकेन चरुसहि
तंत्रिःपर्यग्निकुर्यात् उल्मुकंनिरस्यापउपस्पृश्याज्यंकर्षन्निवोदगुद्वास्यांगारानग्नौ प्रक्षिपेत् ततोंगुष्ठोपकनिष्ठिका
भ्यामुत्तानाभ्यांपाणिभ्यांपवित्रेअसंहतेधृत्वा सवितुर्हिरण्यस्तूपः सवितापुरउष्णिक् आज्यस्योत्पवनेवि.स
वितुर्वःप्रसवइत्पुनाम्याच्छिद्रेणपवित्रेणवसोः सूर्यस्यरश्मिभिः प्रागुत्पुनातिसकृन्मंत्रेणद्विस्तूष्णीं पवित्रे अद्भिः
प्रोक्ष्याग्नौप्रहरेत् अग्नेःपश्चात्परिस्तरणाद्बहिरात्मनोग्रेभुवप्रोक्ष्य भुविबर्हिःसन्नहनींरज्जुमुदगग्रांवितत्यतद्बहिःप्रा
गग्रमुदगपवर्गमास्तीर्यतत्राज्यस्थापनंकृत्वासकुशौदर्वीस्रुवावग्नौप्रताप्यभूमौदर्वींनिधायस्रुवविलमदर्भाग्रैःप्रागप
वर्गंत्रिःसंमृज्यस्रुवपृष्ठंदर्भाग्रैरात्माभिमुखंत्रिःसंमृज्यकुशमूलेनपृष्ठादारभ्याबिलपर्यंतंदंडंत्रिः संमृज्यप्रोक्ष्यप्रताप्य
घृतादुत्तरतःस्थापयेत्तथैवदर्वींसंमृज्यस्रुवस्योत्तरतोनिधायतान्दर्भानाद्भिःप्रोक्ष्याग्नौप्रहरेत् ततःस्रुवेणाज्यंगृहीत्वा
शृतंहविरभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्येननीत्वादक्षिणबर्हिष्यासाद्यपुनरभिघार्यसहस्रपर्णपेक्ष पात्रांतरेव्युद्धृ
त्यदंश्रीरामायेत्यादिचक्रांतांपृथगभिमृश्यगंधपुष्पाक्षतैरग्निमर्चयेत् विश्वानिश्वानिनइत्यनयोर्वसुश्रुतोग्निस्त्रिष्टुप्
अग्न्यर्चनेवि-विश्वानिनोदुर्गहाजातवेदःसिंधुननावादुरितातिसर्षि.अग्नेअत्रिवनमसागृहणानास्माकंबोध्यवितानूना
यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि जातवेदोयशो अस्मासुधेहिप्रजाभिरग्नेअमृतत्त्वमश्यामित्यृ

गभ्यांप्रतिपादं प्रतिदिशं प्राचीरभ्यर्च्य यस्मैत्वंसुकृतइत्यस्यवसुश्रुतोग्निस्त्रिष्टुप् अग्न्युपस्थानेवि॰ यस्मैत्वंसुकृते जातवेदउलोकमग्नेकृणवस्योनं अश्विनंसपुत्रिणं वीरवंतंगोमंतंरयिंनशस्तेस्वस्ति इत्युपस्थायात्मानंचालंकृत्यह स्तंप्रक्षाल्येध्मसन्नहनींरज्जुंतत्रैवनिधायेध्ममादायमूलमध्येग्निष्वभिध्यायेयंतइध्मइत्यस्यमंत्रस्यवामदेवोजातवेदाग्नि ग्निस्त्रिष्टुप् इध्महवनेवि॰ इयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्द्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेध्य यस्वाहेतिहुत्वाजातवेदसेग्नयइदं अथस्रुवेणाज्यंगृहीत्वापरिस्तरणवायव्यकोणमारभ्याग्नेयीपर्यंतं प्रजापतये इतिम नसास्मरन्स्वाहेत्युच्चार्य विच्छेदेनार्जवेनाज्यधारापद्मीग्रौइध्मग्रौइध्मदारुणिप्लावयन्हुत्वा पुनराज्यं गृहीत्वा परिस्तरणनैर्ऋत्यकोणमारभ्यैशानीपर्यंतंतथैवचहुत्वा उभयत्रप्रजापतयेइदंनममेतित्यजेत् पुनराज्यमादायाग्न येस्वाहेत्युत्तरपार्श्वे पुनराज्यमादाय सोमायस्वाहेत्यग्नेर्दक्षिणपार्श्वेग्नयइदं सोमायेदंनममेतियथाक्रमेणत्यजेत्ः त तोयजमानअष्टोत्तरशतसंख्याहुतिपर्याप्तंसाज्यपायसद्रव्यं श्रीरामायतथाप्रतिदैवतंमष्टाविंशतिसंख्याहुतिपर्या प्तंसाज्यपायसद्रव्यंचतुर्थ्यंतेभ्यः सीताप्रभृतिभ्योनममेतिसाक्षतजलेनत्यागंकुर्यात् ततोराममंत्रस्यऋष्यादिस्मर णपूर्वकंतेनाष्टोत्तरशतसंख्यः साज्यपायसहोमःकार्यःकारणीयोवाआचार्यहस्तेनदीक्षारहितस्तुपूजामिवहोममपिवै दिकमंत्रेणवाकुर्यात् वैदिकपक्षे-तद्विष्णोरितिमंत्रस्यमेधा तिथिर्विष्णुर्गायत्रीरामनवमीव्रतांगसाज्यपायसहोमेवि॰ तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः दिवीवचक्षुराततंस्वाहेतिहोमःकार्यः द्वितीयपक्षे ॐश्रीरामायस्वाहेतिततः ॐसीतायैस्वाहेत्येवंप्रणवादिस्वाहाकारांतमंत्रैः प्रत्येकमष्टाविंशतिसंख्यासाज्यपायसस्यज्याहुतीर्हुत्वास्विष्टकृद्धो मंकुर्यात् दव्यामुपस्तीर्याहविषउत्तरार्द्धात् पूर्ववदानतोभूत्वान्युब्जाभिरंगुलीभिः सैविष्टकृतमवदाज्य स्थालीस्थमनभिघार्य दर्वीस्थहविरभिघार्य यदस्येत्यस्य हिरण्यगर्भऋषिः अग्निःस्विष्टकृद्देवता

अतिधृतिःछंदः स्विष्टकृद्धोमेविनियोग.यदस्यकर्मणोन्यारीरिचंयद्वान्यूनमिहाकर अग्निष्टत्स्विष्टकृद्विद्वान्सर्वंस्विष्टकृतंसहुतंकरोमे अग्नयेस्विष्टकृते सहुतहुतसर्वप्रायश्चित्ताहुतीनांकामानां समर्द्धयित्रे सर्वान्नः कामान्समर्द्धयस्वाहा अग्नेरीशानदेशेजुहुयात् अग्नयेस्विष्टकृतइदंपंचावृताप्रधानहोममध्यापूर्वार्द्धात्पश्चार्द्धात्त्रिभिरवद्यति. स्विष्टकृतउत्तरार्द्धात्पूर्वार्द्धाच्चबर्हिरपनिहृतइत्यमानं ततइध्मवंधनरज्जुंविस्रंस्यरुद्रायपशुपतयेस्वाहेतिहुत्वा रुद्रायेदंनममेतित्यक्त्वापउपस्पृश्य स्रुवेणाज्यमादाय अयाश्चेत्यस्यविमदोथाग्निःपक्तिः प्रायश्चित्तहोमेविनियोगः अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्त्वमया असयाचयसाकृतोयाहव्यमूहिषे यानोधेहिभेषजंस्वाहा अग्नयेअयसइदं अतोदेवाइतिद्वयोर्मेधातिथिराद्यायादेवोदेवताद्वितीयायाविष्णुर्गायत्रीप्रायश्चित्तहोमेविनियोग ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमेपृथिव्याःसप्तधामभिःस्वाहादेवेभ्यइदं इदंविष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरेस्वाहाविष्णवेइदं व्यस्तसमस्तसप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजभृगवऋषयः अग्निवायुसूर्यप्रजापतयोदेवता गायत्र्युष्णिगनुष्टुप्बृहत्यःछंदांसि प्रायश्चित्ताज्यहोमेविनियोगः ॐ भूःस्वाहाअग्नयइदं ॐ भुवःस्वाहावायवइदं, ॐ स्वःस्वाहासूर्यायइदं. ॐ भूर्भुवःस्वःस्वाहाप्रजापतयेइदं- अज्ञोपिताःसप्ताज्याहुतीर्जुहुयात् मंत्रविपर्यासादिनिमित्तप्राप्ते.दोषे अनाज्ञातमितिमंत्रस्यहिरण्यगर्भऋषिः अग्निर्देवतानुष्टुप्छंदः प्रायश्चित्ताज्यहोमेविनियोगः अनाज्ञातंयस्याक्रियतेमिथः अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथस्वाहाअग्नयइदं पुरुषसंमितोयज्ञोयज्ञः पुरुषसंमितः अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथंस्वाहाअग्नयइदं पत्याकन्येत्यास्यत्रितोग्निस्त्रिष्टुप् प्रायश्चित्ताज्यहोमेवि० पत्याकन्यामनसादानदक्षायजरयमन्वेतमर्त्यास अग्निष्टद्धोताक्रतुविद्विजातानांयजिष्ठदेवाऋतुशोयजातिस्वाहा अग्नयइदंयद्वोदेवाअभितयामरुतास्त्रिष्टुप्प्रायश्चित्ताज्यहोमेवि० यद्वोदेवाअतिपाद्यानिवाचाचप्रय

तोदेवहेलातडनं अरायोअस्मांअभिदुछनायनेन्यत्रास्मन्मरुतस्ताति धेतनुस्वाहामरुद्भ्यइदं सर्वप्रायश्चित्तंकरिष्ये
भूर्भुवःस्वःस्वाहाप्रजापतयइदं ततोयजमानअस्यकर्मणः सपूर्णतासिध्यर्थंपूर्णाहुतिंहोष्यामीतिसंकल्प्यद्वादशगृ
हीतेनाष्टगृहीतेनचतुर्गृहीतेनवाज्येनस्रुवंपूरयित्वा तदुपरि वस्त्रादियुतं चंदनादिभूषितंफलंनिधाययजमानान्वार
ब्धःआचार्यस्तिष्ठन्पूर्णाहुतिंजुहुयात् समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवअ.ग्याखिष्टुप्अंत्याजगती
पूर्णाहुतिहोमेवि० ॐसमुद्रादूर्मिमधुमांउदारदुपांळ्शुनासमसृतत्वमानट्यतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृत
स्यनाभिः वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः उपब्रह्माशृणवछस्यमानंचतुः शृंगोदमीद्गौरएतत्
चत्वारिशृंगास्त्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य त्रिधावद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेशात्रिधाहितं
पाणिभिर्गुह्यमानंगविदेवासोघृतमन्वविंदन् इंद्रएकंसूर्यएकंजजानवेनादेकंस्वधयानिष्टतक्षुः एताअर्षंतिहृद्या
त्समुद्राच्छतव्रजादिपुणानाचचक्षघृतस्यधाराअभिचाकशीमिहिरण्ययोवेतसोमध्यआसांसम्यक्स्रवंतिसरीतोनि
धेनाअंतर्हृदामनसापूयमानाः एतेअर्षंत्यूर्मयोघृतस्यमृगाइवक्षिपणोरीषमाणः सिंधोरिव प्राध्वनेशूघनासोवात
प्रमियः पतयंतियह्वाःघृतस्यधाराअरुषोनवाजीकाष्ठाभिंदन्नूर्मिभिः पिन्वमानः अभिप्रवंतसमनेवयोषाःकल्या
ण्यःस्मयमानसोअग्निघृतस्य धाराःसमिधोनसंतताजुषाणोहर्यति जातवेदाः कन्याइव वहतुमेतवाउअंज्यंजा
नाअभिचाकशीमियत्रसोमसूयतेयत्रयज्ञोघृतस्यधाराअभितन्पवंते अभ्यर्शत सुष्टुतिंगव्यमाजिमस्मासु भद्राद्रवि
णानिधत्तइमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवंतेधामतेविश्वंभुवनमधिश्रितमंतः समुद्रेहृद्यंतरायुषिअपाम
नीकेसमिथेयदाभृतस्तदश्याममधुमंतंतदूर्मिंस्वाहा अपरिमितधारांस्रवताद्रव्याग्रेणसावशेषहुताज्यइदंनममेतित्य
क्त्वाविज्योतियेन्यस्यजातोवशऋषिः अग्निर्देवतात्रिष्टुप् छंदःहोमेविनि० विज्योतिषाबृहताभात्यग्निराविर्विश्वानि

नित्यदशपूर्वैर्दशावरैः रामंदूर्वादलश्यामंपद्माक्षपीतवाससं स्तुवंतिनामभिर्दिव्यैर्नतेसंसारिणोजनाः रामाय रामभद्रायरामचंद्रायवेधसे रघुनाथायनाथायसीतायाःपतयेनमः इमंमंत्रंमहादेविजपन्नेदिवानिशं सर्वपापविनिर्मुक्तोविष्णुसायुज्यमाप्नुयात्

॥ इतिश्रीपद्मपुराणेउत्तरखंडेहरगौरीसंवादेश्रीरामचंद्रस्याष्टोत्तरशतनामस्तोत्रम् ॥

श्रीरामचंद्रायनमः

अस्यामेवनवम्यांकालोत्तरोक्तंमातृकाव्रतं चैत्रशुक्लनवम्यांतुमातृव्रतंसमाचरेत् चतुःषष्टिस्तुसंपूज्याभैरवेणसमन्विताः स्रग्गंधवस्त्रनैवेद्यैःप्रभूतैःसुसितैःशुभैरित्युपक्रम्य नवम्यांपूजयेद्यस्तुमासिचाश्वयुजेसदा अखंडितप्रभावस्तुभवेदेवनसंशयइत्यादिहेमाद्रौस्पष्टं इतिमातृव्रतं अस्यामेवभद्रकालीपूजनमुक्तंकल्पतरौब्राह्मे चैत्रेनवम्यांशुक्लायांभद्रकालीमहाबला योगिनीनांतुसर्वासामाधिपत्येभिषेचिता तस्मात्तांपूजयेत्तत्रसोपवासोजितेंद्रियः विचित्रैर्बलिभिर्भक्त्यासर्वासुनवमीषुचेति चैत्रशुक्लनवम्यांचतुष्पष्टियोगिनीपूजा तासांनामानिआगमशास्त्रादौ

ॐविजयायैनमः १ मंगलायै. २ भद्रायै. ३ धृत्यै- ४ शांत्यै- ५ क्षमायै. ६ शिवायै- ७ सिद्ध्यै- ८ पुष्ट्यै. ९ उमायै. १० श्रियै. ११ रत्यै. १२ दीप्तायै. १३ कांत्यै. १४ यशस्विन्यै. १५ लक्ष्म्यै. १६ ईश्वर्यै- १७ वृद्ध्यै- १८ सिद्ध्यै. १९ जयायै. २० ब्राह्मयै- जयंत्यै. २२ अपराजितायै. २३ जितायै. २४ मानस्यै. २५ श्वेतायै. २६ दित्यै. २७ मायायै- २८ महामायायै. २९ मोहिन्यै. ३० रतिलालसायै. ३१ तारायै. ३२ विमलायै. ३३ गौर्यै. ३४शरण्यायै- ३५ कौशिक्यै- ३६ मत्यै. ३७ दुर्गायै. ३८ क्रियायै. ३९ अरुंधत्यै४० घंटायै.- ४१ कर्णायै-४२ कापालिन्यै- ४३ रौद्र्यै. ४४ काल्यै- ४५ मयूर्यै. ४६ त्रिनेत्रायै.४७ सुरूपायै.४८

वहुरूपायै- ४९ रिपुहायै. ५० अंविकायै. ५१ चर्चिकायै- ५२ सुरपूजितायै ५३ वैवस्वत्यै. ५४ कौमार्य्यै-५५
महालक्ष्म्यै. ५६ कार्तिक्यै. ५७ शिवदूत्यै. ५८ चामुंडायै. ५९ ब्रह्माण्यै- ६० दमायै- ६१ माहेश्वर्यै- ६२
वैष्णव्यै. ६३ वाराह्यै. ६४ ॐभैरवायनमः एताभैरवेणसहपूज्याः इतिमातृनवमीव्रतं ॥ चैत्रशुक्लदशम्या
धर्मराजपूजानारदीये चैत्रशुक्लदशम्यांतुधर्मराजंप्रपूजयेत् तत्कालसंभवैःपुष्पैःफलैर्गंधादिभिस्तथा सोप
वासश्चैकभक्तोपूजयित्वाद्विजोत्तमान् चतुर्दशततस्तेभ्यःशक्त्यादद्याच्चदक्षिणां एवंयःकुरुतेविप्रधर्मराजस्यपू
जनं सधर्मस्याज्ञयागच्छेद्देवैःसाधर्म्यमच्युतः धर्मराजमुद्दिश्यचतुर्दशविप्राणांपूजाकार्य्या तत्रमंत्रः यमायध
र्मराजायमृत्यवेचांतकायच वैवस्वतायकालायसर्वप्राणहरायच ॐदुंवरायनीलायदध्नायपरमेष्ठिने वृकोदरा
यचित्रायचित्रगुप्तायवैनमः पाशहस्तायदेवेशसपरिवारायतेनमः अथचैत्रशुक्लैकादश्यांदोलोत्सवउक्तोब्राह्मे
चैत्रमासस्यशुक्लायामेकादश्यांतुवैष्णवैः आंदोलनीयोदेवेशःसलक्ष्मीकोमहोत्सवैः अस्यांनृसिंहपरिचर्य्या
यामपिगारुडेविशेषः चैत्रेमासिसितेपक्षे दक्षिणाभिमुखंहरिं मासमादौसमभ्यर्च्य मासमांदोलयेत्कलौ दोला
रूढश्चभगवानवश्यंसालोक्यार्थिभिः फलपक्षयार्थिभिश्चालोकनीयः तथाचोक्तंतत्रैव दोलासंस्थंचयेकृष्णंप
श्यंतिमधुमाधवे क्रीडातिविष्णुनासार्द्धंवैकुंठेदेववंदिताः दोलारूढंचपश्यंतिकृष्णंकालिमलापहं अपराधसहस्रै
स्तुमुक्तास्तेघूर्णनेकृते घूर्णनेआंदोलने दोलारूढस्यपुरतोजागरणमपिकुर्यात् तथार्चतत्रैव दोलास्थितस्य
कृष्णस्ययेग्रेकुर्वंतिजागरं सर्वपुण्यफलावाप्तिर्निमेषेकेणजायते पद्मपुराणे क्षणंतुयज्ञफलदंघटिकातुचतुर्गु
णाः प्रहरःकोटिगुणितश्चतुःसंख्यानंइष्यते इयंचैकादशी कामदा पद्मललितारव्याच तदुक्तंनारदीये चैत्र
स्यशुक्लैकादश्यांसोपवासोजितेंद्रियः कृत्वाचनियमान्सर्वान्वक्ष्यमाणान्दिनत्रये द्वादश्यामर्चयेद्भक्त्यावासुदेवं

सनातनम् उपचारैःषोडशभिस्ततःसंभोज्यवाडवान् दत्त्वाचदक्षिणांतेभ्योविसृज्यांश्चतंचस्वयं इयंतुकाम
दानामसर्वपातकनाशिनी भुक्तिमुक्तिप्रदाविप्रभक्त्यासम्यगुपोषिता अथास्याःकथा वाराहपुराणेपद्मपुरा
णेच युधिष्ठिरउवाच वासुदेवनमस्तुभ्यंकथयस्वममाग्रतः चैत्रस्यशुक्लपक्षेतुकानामैकादशीभवेत् श्रीकृष्ण
उवाच शृणुष्वैकमनाराजन्कथामेतांपुरातनीं वसिष्ठोयामकथयत्प्राग्दिलीपायपृच्छते दिलीपउवाच
भगवन्छ्रोतुमिच्छामिकथयस्वममाग्रतः चैत्रमासिसितपक्षेकिंनामैकादशीभवेत् वसिष्ठउवाच शृणुष्वक
थयिष्यामिव्रतानामुत्तमंव्रतं पापंधनचयंशुष्कमार्द्रंवैबहुजन्मजं सकलंदहतेसोयंहरिवासरपावकः चैत्रस्यवि
शदेपक्षेतिथिरेकादशीतुया ज्ञेयाकामदानाम्नासामहापापनाशिनी शृणुराजन्कथांदिव्यांपापघ्नींश्रुतिसौख्य
दां पुरानागपुरेरम्येहेमरत्नविभूषिते पुंडरीकमुखानागानिवसंतिमदोत्कटाः नागस्तुपुंडरीकाख्योराजाराज्यं
चकारच गंधर्वैरप्सरोभिश्चसेव्यमानोदिवानिशं वराप्सरापिललितापद्मरागोपशोभिता ललितोपिसगंध
र्वोयुवाकामीमदोत्कटः उभौरागेणसंयुक्तौदंपतीकाममोहितौ रेमातेतौतुस्वगृहेधनधान्यसमाकुले ललिताचि
त्तसलीनोह्यासीत्सललितस्तदा ललितस्यचस्वांतेसालग्नासाह्लिताभृशं पुंडरीकादयोनागावर्ततेसदसिस्फु
ट ललितस्तुंबुरुश्चैवकुरुतांगानमुत्तमं गानंकुर्वन्सललितःसस्मारललितांपुनः कामबाणवशंप्राप्त पुंडरीकस्यचा
ग्रतः गानंकुर्वन्सस्खलितोललितामेवसंस्मरन् गंधर्वकुलरत्नंससर्वविद्याविशारदः तस्यभावंतुतत्रस्थःकर्को
टोज्ञातवांस्तदा कर्कोटउवाच शृणुत्वंपुंडरीकाख्यममवाक्यंतुसांप्रतं ललितस्यत्वयाभावोविज्ञातोदानवाग्र
भो कर्कोटकवचश्रुत्वापुंडरीकोमहोरगः ललितंभर्त्सयामासललितागतमानसं रौद्रोभूत्सतदानागोदुर्निरी
क्ष्योभयंकरः शशापललितंतूर्णंक्रोधसरक्तलोचनः राक्षसोभवदुर्बुद्धेक्रव्यादःपुरुषादकः यतःपत्नीवशोजातो

गायमानोममाग्रतः ललितायावशंप्राप्तः किन्नएनरत्वयाकृत. वचनात्तस्यनागस्यराक्षसः सोभवत्क्षणात् रौद्राननोविरूपाक्षोदीर्घकायोभयंकरः योजनायतकायश्चकंधरांसमुखस्तथा चंद्रसूर्यनिभाक्षश्चपर्वतोपमम स्तकः गुहाप्रतिमगंभीरनासारंध्रभयंकरः चपलोष्टस्तीक्ष्णदंतोयोजनायामविग्रहः ईदृशोराक्षसोभूत्वाक च्छ्रेणविपिनगतः चिंतयामासललितापतिंराक्षसविग्रहं ध्यायमानातमेवाभून्महादुःखाब्धिमध्यगा किंकरोमिकंग च्छामिपतिंशापेनमोहितः इतिसांचिंत्यललितासौख्यंनलभतेस्मसा राक्षसःसविरूपाक्षोनागराज्ञासयोजित. भ्राम्य माणोदिवारात्रंनसुखंलभतेस्मसः ललितातंवियोगार्ताचिंतयंतीपतिंमुहुः बभ्रामविपिनेघोरेरुदंतीकरुणंशनैः ए कादातुश्रमंतासाविंध्यपर्वतमस्तके रम्यमाश्रममासाद्यददर्शतपसिस्थित शृंगिसंज्ञंमुनितत्रसर्वभूतहितेरतं दृष्ट्वातु तंमुनितंचतत्पार्श्वंसाययौशनैः मुनिर्दृष्ट्वाथतस्याग्रेविनयावनताभवत् तामुवाचमुनि. शृंगीकात्वंकस्यसुताशुभे किमर्थमिहसंप्राप्ताकथयस्ववरानने ललितोवाच गंधर्वोवीरधन्वाख्योयोस्तितस्यसुतास्म्यहं ललिताख्या मुनिश्रेष्ठपत्यर्थमिहचागता पतिर्मेललितोनाम्नामदासक्तमना कुधी. पुंडरीकाख्यनागेनशप्तोराक्षसतांगतः तदा प्रभृतिमेब्रह्मन्नसुखंजायतेक्वचित् तद्व्रतंमुनिशार्दूलकथयस्वप्रसादतः यस्यप्रभावात्तस्यापिराक्षसत्वंप्रया स्यति मुनिरुवाच चैत्रमासस्यचाद्यैवशुक्लापक्षेहिजायते नाम्नासापद्मललिताकथितैकादशीवुधैः त्वयासै कादशीभद्रेक्रियतांपतिमुक्तये कृत्वाचतत्पुण्यफलंसंपूर्णंतस्यदीयतां दत्तेपुण्येक्षणादेवप्रेतत्वंयास्यतिक्षयं इ तिश्रुत्वामुनेर्वाक्यंविनयावनतास्थिता अकरोद्विधिनासम्यग्ललितैकादशीव्रतं विप्रस्यैवसमीपेतुमुरारेरग्रतो मुदा इतिवाक्यंजगादासौपत्युःसंतारणायच मयाचयत्कृतपुण्यपत्येदत्ततदच्युत तेनगोविंदमेपत्युराक्षस त्वंप्रणश्यतु. दत्तपुण्येतयापद्मललितैकादशीभवं इतिज्ञात्वातुराजेंद्रकर्तव्यासाप्रयत्नतः राक्षसत्वंगतंतस्य

कृणुतेमहित्वा प्रादेवीमायाःसहतेदुरापा.शिशीतिशृंगेरक्षसेविनिक्षेस्वाहा अनेनावशिष्टंसर्वंहुत्वाग्नयइदं नममे
त्यक्त्वाविश्वेभ्योदेवेभ्य.स्वाहेतिसंस्त्रावंहुत्वाविश्वेभ्योदेवेभ्यइदं अथपूर्णमासादितंपूर्णपात्रंआस्तीर्णबर्हिषिदक्षिण
पाणिनानिधायतत्रगंगादिपुण्यनदीःस्मृत्वा दक्षिणपाणिनाभिमृशन् पूर्णमासिपूर्णमेभूयाः सुपूर्णमसिसुपूर्णमे
भूयाःसदसिसन्मेभूयाः सर्वमसिसर्वमेभूयाः अक्षितिरसिमामेक्षेष्ठाइतिजपित्वाप्राच्यादिपंचदिक्षुकुशाग्रैः प्रादक्षि
ण्यक्रमेणउदकमुक्षेत् प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां दक्षिणस्यांदिशिमासाःपितरोमार्जयंतां प्रतीच्यांदि
शिग्रहाः पशवोमार्जयंतां उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतां उर्द्ध्वायांदिशियज्ञःसंवत्सरःप्रजापतिर्मा
र्जयंतां ततःस्वशिरसिकुशाग्रैरभिषिंचेदेभिर्मंत्रैः आपोअस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् मार्जनेविनियोगः
आपोअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वः पुनंतुविश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यः शुचिरापूतएमि इदमाप
इत्यस्यसिंधुद्वीपआपोनुष्टुप्मार्जनेविनि. इदमापः प्रवहतायत्किंचिदुरितंमयि यद्वाहमभिदुद्रोहयद्वाशेपउतानृत
सुमित्रियानआपओषधयःसंतु दुर्मित्रास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः ततोयजमानोवामपार्श्वस्थितपत्न्यंज
लौस्ववामकरेचपूर्णपात्रस्थंजलं माहंप्रजापरासिचंयानः ममावरीस्थनसमुद्रंवोनिनयानिस्वंपाथोअपीथेत्येकंशु
ण्योत्तराग्रंत्यङ्मुखोनिषिच्यतज्जलंबर्हिषिनिषिंचेत् ताआपःसमुद्रंगच्छंतीतिध्यात्वाततोयजमानोग्नेर्वायव्यदेशे
स्थितः उंचमेस्वरश्चमेयज्ञोपचतेनमश्चयत्तेन्यूनंतउपयज्ञेतिरिक्तंतस्मैतेनमइत्युपस्थायपरिस्तरणानिविसृज्यपरि
समूह्यपर्युक्ष्यविश्वानिवइत्यग्निमलंकृत्य मानस्तोकेकुत्सोरुद्रोजगतीविभूतिग्रहणेवि. मानस्तोकेतनयेमान
आयुषिमानोगोषुमानोअश्वेषुरीरिषः मानोवीरान्रुद्रभामिनोवधीर्हविष्मंतः सदमित्त्वाहवामहे इत्यनेनवि
भूतिंगृहीत्वा उंत्र्यायुषंजमदग्नेर्ललाटे कश्यपस्यत्र्यायुषमितिकंठे अगस्त्यस्यत्र्यायुषमितिनाभौयद्देवानांत्र्या

युपमिंतिदक्षिणस्कंधेतन्मेश्रस्तुत्र्यायुपमितिचामस्कंधे शतायुषामितिशिरासि ,ततःस्थापितानांदेवतानांउत्तरपू
जनंकृत्वाचार्यंगंधादिभिः संपूज्यप्रतिमादानतस्मैकुर्यात् आचार्यायदक्षिणांब्राह्मणभोजनंभूयसींचदत्त्वा यस्य
स्मृत्येतिपठित्वाकर्मेश्वरार्पणंकुर्यादिति इतिहोमविधिः समाप्तः ॥ ततोभक्त्यासुसंतोष्यआचार्यंपूजयेन्मुनेकुं
डलाभ्यांसुरत्नाभ्यामंगुलीयैरनेकधा गंधपुष्पाक्षतैर्वस्त्रैर्विचित्रैःसुमनो हरैः ततोरामंस्मरन्दद्यादेतंमंत्रमुदीरय
न् इमांस्वर्णमयींरामप्रतिमांसमलंकृतांचित्रवस्त्रयुगच्छन्नांरामोहंराघवायते श्रीरामप्रीतयेदास्येतुष्टोभवतुराघव इ
तिदत्त्वाविधानेनदद्यादक्षिणांभुवंग्रन्येभ्यश्चयथान्यायंगोहिरण्यादिशक्तितः दद्याद्वासेयुगंधान्यंयथाविभव
मादतः ब्राह्मणैःसहभुंजीततेभ्योदद्याच्चदक्षिणां ततःपारणंकुर्यात् इयंचपारणायदापूर्वविद्धायामुपवास
स्तदापिनवमीमतिक्रम्यदशम्यांकर्तव्या दशम्यामेवपारणमित्येवकारेणान्ययोगव्य वच्छेदपरेणनवम्य
पारणस्यनिवर्तित्वात् तदनंतरंपारणनिवेदन तवप्रसादस्वीकारात्कृतंयत्पारणंमया व्रतेनानेनसं
तुष्टःस्वस्मिन्भक्तिंप्रयच्छमे इतिपारणं कृत्वैवब्रह्महत्यादिपापेभ्योमुच्यतेध्रुवं तुलापुरुषदानादिफलंप्राप्नोतिमा
नवः अनेकजन्मसंसिद्धःपापेभ्योमुच्यतेध्रुवं वहुनाकिमिहोक्तेनमुक्तिस्तस्यकरेस्थिता कुरुक्षेत्रेमहापुण्येसूर्यपर्व
एयनेकशः तुलापुरुषदानाद्यैर्कृतैर्यल्लभ्यतेफलं तत्फलंलभतेमर्त्योव्रतेनानेनसुव्रत ३ इतिदशमीकृत्यं अकिंच
नोपिनियतमुपोष्यनवमीदिने कृत्वाजागरणंभक्त्यापूजयेद्विधिवन्मुने जपन्राममनुंमाया रमानंगसमन्वितं
ह्रींश्रींक्लींरामायनमः एकाक्षरंवाविधिवत्सर्वन्यासकृतोन्नतिःप्रातःसंध्यांचविधिवद्दिवासंध्यादिकाःक्रियाः गोभूति
लहिरण्यादिदद्याद्वित्तानुसारतः श्रीरामचंद्रभक्तेभ्योविद्वद्भ्यःश्रद्धयान्वितः पारणंचप्रकुर्वीतब्राह्मणैःसहभक्तितःए
वंयःकुरुतेभक्त्यासर्वपापैःप्रमुच्यते ।गायांप्रक्षिपेद्धेप्यांलेख्यांमूर्तिंगृहेन्यसेत्तद्दत्याकिंचनव्रतं शकस्ययद्व्रतंप्रोक्तमश

कोद्यापनंचतत् तदपिस्याद्यथाशक्त्यासांगंतुसकलंसदा एकामपिनरोभक्त्याश्रीरामनवमींमुने उपोष्यकृतकृत्यः
स्यात्सर्वपापैः प्रमुच्यते अपिशक्तादशक्तस्यमूर्तिदानंतुस्वर्चितमित्याकिंचनव्रतोद्यापनं वर्षेवर्षेसमर्थस्यव्रतेनैव
प्रपूर्णता नतस्योद्यापनंकिंचिद्व्रतादन्यद्विधीयते सर्वव्रतस्यपूर्त्यर्थमिदंरामव्रतंचरेत् नान्येनास्यास्तियत्पूर्त्तिरने
नैवप्रपूर्णतेति इत्थंसमर्थोद्यापनं इतिरामनवमीव्रतं इदंव्रतंदिनद्वयात्मकंइयंनवमीमलमासेनैवकार्या सुज
न्मप्यजतस्यान्नोपवासःकृतोभवेदिति नकुर्यान्मलमासेतुमहादानव्रतानिचेतिचमाधवीयेसंग्रहवचनात् इति
दीक्षितप्रभृतयःवस्तुतस्तुउत्सवरूपत्वात् मदनरत्नधृतगृहप्रवेशगोदानस्थनाश्रममहोत्सवात् नकुर्यान्मलमासे
पिगुरौशुक्रेतथास्तगइतिमरीचिवचनान्नभवतीतिवक्तुंयुक्तम् ॥ ओंश्रीरामायनमः अत्ररामनवमीव्रतप्रसंगात् रा
माष्टोत्तरशतनामस्तोत्रं पद्मपुराणेउत्तरखंडे ईश्वरउवाचरामरामेतिरामेतिरमेरामेमनोरमे सहस्रनामभिस्तुल्यंराम
नामवरानने रकारादीनिनामानिशृण्वतोममपार्वतिमनःप्रसन्नतामेतिरामनामाभिशंकयारामित्युक्तामहादेवशंभुना
सहसंस्थितापप्रच्छतंमहादेवंप्रीतिप्रवणमानसा श्रीदेव्युवाच सहस्रनामभिस्तुल्यंरामनामत्वयेरितंतस्यापराणि
नामानिसंतिचेद्रावणद्विषः कथ्यतांममदेवेशतत्रमेभक्तिरुत्थिता श्रीमहादेवउवाच शृणुनामानिवक्ष्यामिरामचं
द्रस्यपार्वति लौकिकावैदिकाः शब्दायेकेचित्संतिसुंदरि नामानिरामचंद्रस्यसहस्रशोपुचाधिकं तेषुचात्यंतमुख्यं
हिनाम्नामष्टोत्तरंशतं विष्णोरेकैकनामैवसर्ववेदाधिकंमतं तादृङ्नामसहस्राणिरामनामसममतं जपतःसर्ववेदाश्च
सर्वमंत्राणिपार्वति तस्मात्कोटिगुणंपुण्यंरामनाम्नैवलभ्यते नामानिशृणुरामस्यमुख्यानिशुभदर्शने ऋषिभिः
परिगीतानितानिवक्ष्यामितेप्रिये ओंश्रीरामोरामचंद्रश्चरामभद्रश्चशाश्वतः राजीवलोचनःश्रीमान्राजेंद्रोरघु
पुंगवः ८ जानकीवल्लभोजैत्रोजितामित्रोजनार्दनः विश्वामित्रप्रियोदांतःशरण्यत्राणतत्परः १५ वालीप्रमथ

नोव.ग्भीसत्यवाक्सत्यंविक्रमः सत्यव्रतोव्रतफलःसदाहनुमदाश्रयः २२ कौशल्येयःखरध्वंसीविराधवधपंडितः
विभीषणपरित्रातादशग्रीवशिरोहरः २७ सप्ततालप्रभेत्ताचहरकोदंडखंडनः जामदग्न्यमहादर्पदलनस्ता
डकांतकृत् ३१ वेदांतसारोवेदात्माभववधैकभेषजं दूषणत्रिशिरोरिश्चत्रिमूर्तिस्त्रिगुणाश्रयः ३७ त्रिविक्र
मस्त्रिलोकात्मापुण्यचारित्रकीर्तनः त्रैलोक्यरक्षकोधन्वीदंडकारण्यपुण्यकृत् ४३ अहल्यापावनश्चैवपितृभक्तो
वरप्रदः जितेंद्रियोजितक्रोधोजितलोभोजगद्गुरुः ५० ऋक्षवानरसंघातीचित्रकूटसमाश्रयः जयतत्रस्तवरदः
सुमित्रापुत्रसेवितः ५४ सर्वदेवाधिदेवश्चमृतवानरजीवनः मायामारीचहंताचमहाभागोमहाभुजः ५९ सर्वदे
वस्ततःसौम्योब्रह्मण्योमुनिसत्तमः महायोगीमहोदारःसुग्रीवस्थिरराज्यकृत् ६६ सर्वपुण्याधिकफलःस्मृतस
र्वाघनाशनः आदिपुरुषोमहापुरुषःपरमःपुरुषस्तथा ७१ पुण्योदयोमहोदारःपुराणपुरुषोत्तमः स्मितवक्त्रोमि
तभाषीपूर्वभाषीचराघवः ७८ अनंतगुणगंभीरोधीरोदारगुणोनरः मायामानुष्यचारित्रोमहादेवाधिपूजितः ८३
सेतुकृज्जितवारीशःसर्वतीर्थमयोहरिः श्यामांगःसुंदरःशूरःपीतवासोधनुर्धरः ९२ सर्वयज्ञाधिपोयज्ञोजरामरण
वर्जितः शिवलिंगप्रतिष्ठातासर्वाष्टगुणवर्जितः ९३ परमात्मापरंब्रह्मसच्चिदानंदविग्रहः परंज्योतिपरंधामप
राकाशःपरात्परः परेशःपारगःपारःसर्वभूतात्मकःशिवः १०८ इतिश्रीरामचंद्रस्यनाम्नामष्टोत्तरंशतं गुह्याद्गु
ह्यतरंदेवितवस्नेहात्प्रकीर्तितं यःपठेच्छृणुयाद्वापिभक्तिप्रव्हेणचेतसा ससर्वैर्मुच्यतेपापैःकल्पकोटिशतोद्भवैः
जलानिस्थलतांयांतिशत्रवोयांतिमित्रतां राजानोदासतांयांतिवह्निर्यातिसौम्यतां सानुकूल्यंचभूतानिस्थैर्यंयां
तिचलाःश्रियः अनुग्रहंग्रहायांतिशांतिमायांत्युपद्रवाः पठतोभक्तिभावेननरस्यागिरिसंभवे यःपठेत्परयाभक्त्या
तस्यवश्यंजगत्त्रयं यद्यत्कामंप्रकुरुतेतत्तदाप्नोतिकीर्तनात कल्पकोटिसहस्राणिकल्पकोटिशतानिच वैकुंठेमोदते

गंधर्वत्वमभूत्पुनः ततस्तौदंपतीहृष्टौललितोललितातदा पूर्वरूपंपुन प्राप्तौविमानवरमास्थितौ गतौ स्वर्गं तदापद्मलालितैकादशीव्रतात् इतिमत्वामहाराजकर्त्तव्यासामहाफला लोकानांतुहितार्थायकथितासामयातव इहलोकेत्रिवर्गश्चपरलोकेचमुक्तिदा ब्रह्महत्यादिपापघ्नीमहाकल्याणकारिणी कुरुत्वंतत्रशार्दूलदिलीपैका दशीव्रत श्रीकृष्णउवाच दिलीपोपितदाचक्रेस्वपौरैर्व्रतमुत्तमम् वसिष्ठवचनात्सौख्यंप्राप्यलेभेपरंपदम् ॥

॥ इतिश्रीवाराहपुराणेचैत्रशुक्लाकामदैकादशीव्रतकथा ॥

अस्यामेवैकादश्यांस्त्रीभि रुक्मिणीयात्राकार्य्या तदुक्तंनिर्णयामृते ब्रह्मपुराणे एकादश्यांतत स्त्रीभिर्देवीपूज्याच रुक्मिणी पुष्पालंकारधूपान्नवस्त्रब्राह्मणतर्पणैरिति ॥ अस्यामेवैकादश्यामपराह्णेवास्तुपूजाकार्य्या तथाचो क्तंनिर्णयामृते पद्मपुराणे तत्रापराह्णेवास्तुश्च वंशयानांवंशधारकः अर्घ्यैर्माल्यैश्चवस्त्रैश्चपूज्योरगैःसुचि त्रितैरिति अथात्रसंक्षेपतोवास्तुपूजात्रिविक्रममतानुसारेण तत्रादौअर्घ्यसस्थाप्याचम्यप्राणानायम्य ॐ चैकादश्यातिथौ आत्मनोवंश्यानावंशवृद्धयेवास्तुपूजनंकरिष्ये प्रणवस्यब्रह्माऋषिर्गायत्रीछंदोग्निः परमात्मा देवता व्याहृतीनांप्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुप्छंदांस्यग्निर्वायुः सूर्योदेवता वास्तुमंडलेशिखाद्यावाहने विनियोगः ॐभूर्भुव स्व शिखिन्निहागच्छ इतिपीतपदे ईशानोशिखिनेनमः १ पीतपदेपर्जन्यायनमः २ पीतपदे जयंताय. ३ पीतपदे कुलिशायुधायपूर्वे ४ रक्ते. सूर्याय. ५ श्वेते. सत्याय. ६ कृष्णे. भृशाय. ७ आग्नेयेधूम्रेवायवे. ८ रक्ते. पूष्णे. ९ पुनारक्तेवितथाय- १० पीते गृहक्षताय. ११ कृष्णपदेयमाय. १२ दक्षिणे. रक्तेगधर्वाः. १३ कृष्णे भृंगराजाय. १४ पीतेमृगाय. १५ वायव्ये रक्ते पितृगणाय . १६ पुनारक्तेदौवारिकाय. १७ शुक्ले सुग्रीवाय. १८ रक्ते पुष्पदताय- १९

पश्चिमे श्वेतवरुणाय. २० पीतेअसुराय. २१ कृष्णे शोषाय.२२ पीते पापयक्ष्मणे- २३ वायव्ये रक्तेरोगा
य. २४ पुनारक्ते अये. २५ पुनारक्ते मुख्याय.२६ कृष्णेभल्लाटाय.२७शुक्ले.उत्तरेसोमाय-२८कृष्णेसर्पाय
२९ पीतेअदित्यै- ३०पुनःपीतेदित्यै. ३१ पर्जन्याधः श्वेते अपाय- ३२ जयंताधःश्वेते अपवत्साय- ३३
कुलिशाधःकृष्णे अर्यम्णे- ३४ सत्याधःरक्ते सवित्रे. ३५ भृशाधः शुक्लेसावित्राय.३६ सावित्राधःशुक्ले
विवस्वते.३७ तस्मादधःश्वेतेजयंताय.३८ ततउत्तरे रक्तेविबुधाधिपाय. ३९ ततोप्युत्तरेश्वेतेमित्राय- ४०
ततोप्युत्तरेरक्तेराजयक्ष्मणे. ४१ ततोप्युत्तरे रक्ते रुद्राय- ४२तदुपरिरक्ते पृथ्वीधरायनमः ४३ मध्ये श्वेते
पीतेवाब्रह्मणेनमः४४ ततोवाह्ये ईशानकोणे धूम्रेचरक्यैनमः४५पूर्वेरक्तेस्कंदायनमः४६आग्नेये रक्तपदे विदा
रिकायै ४७ दक्षिणेकृष्णपदे अर्यम्णेनमः ४८ नैर्ऋत्ये हरितपदे पूतनायैनमः ४९ पश्चिमेरक्तपदे जृंभका
यनमः ५० वायव्ये कृष्णपदे पापराक्षस्यैनमः ५१ उत्तरेपीतपदे पिलिपिच्छायनमः५२ततोवाह्यतः पूर्वकं सा
र्वभौतिकवलिंदद्यात् तद्यथा ओंभूतेभ्योनमः ओंपितृभ्योनमः ओंराक्षसेभ्योनमः ओंपिशाचेभ्योनमः ओंमातृभ्यो
नमः ओंगणेशेभ्योनमः ओंदिव्यांतरिक्षेभ्योभूतेभ्योनमः देव्योदेवामुनींद्रश्चयेचान्येवलिकांक्षिणः तेवलिंप्रतिगृ
ह्णंतुतुष्टायांतुस्वमंदिरं ततःप्रार्थना पूज्योसित्रिषुलोकेषुयज्ञरक्षादिहेतवे त्वांविनानहिसिद्ध्यतियज्ञदानान्य
नेकशः १ अयोनेभगवन्भर्गललाटस्वेदसंभव गृहाणार्घ्यंमयादत्तंवास्तोस्वामिन्नमोस्तुते २ मंत्रहीनंक्रियाही
नंभक्तिश्रद्धाविवर्जितं यत्पूजितंमयादेवपरीपूर्णंतदस्तुमे ३नमस्तेदेवदेवेशसर्वविघ्नहरोभव शांतिंकुरुसुखंदेहिस
र्वान्कामान्प्रदेहिमे ४ इतिवास्तुपूजनं ग्रहयागसहितंकार्य्यम् गंधादिपूजनं पायसादिवलिदानं ॥ इतिचै
त्रशुक्लेकादश्यांब्रह्मपुराणोक्तं वास्तुपूजनं अस्यामेवैकादश्यां दमनोत्सवःकार्य्यःतदुक्तं मदरत्ने.निर्णयामृतेच

ब्रह्मपुराणे चैत्रमास्यथशुक्लायामित्युपक्रम्य दमनेनार्चयित्वाथरात्रौजागरणंचरेदिति नृसिंहपरिचर्यायाम
प्येवं रामार्चनचंद्रिकायांतुद्वादश्यांदमनोत्सव.कार्य्यइत्युक्तं द्वादश्यांचैत्रमासस्यशुक्लायांदमनोत्सवः बौधाय
नादिभिःप्रोक्तःकर्तव्यः प्रतिवत्सरंतत्रस्यात्स्वीयातिथिषुवन्ह्यादेर्दमनार्पणः वन्ह्यादयोदेवतारत्नमालायां
वन्हिर्विरंच्योगिरिजागणेशः फणीविशाखोदिनकृन्महेशः दुर्गांतकोविष्णुहरीस्मरश्चशर्वः शशीचेतिक्रमेणउक्ता
अत्रदेवताविशेषेणतिथिविशेषोज्योतिर्निबंधे भविष्योत्तरेपि चतुर्थीगणनाथस्यदुर्गायानवमीतथा विष्णोस्तुन
वमीपुण्यातथैवद्वादशीशुभा त्रयोदशीयुतस्यैवश्रेष्ठारण्यनिवासिनः भैरवस्यैकवीरायाज्ञेयाभूताकलिप्रदा भू
ताचतुर्दशी पूर्णिमासर्वदेवानांश्रेष्ठादमनकार्पणइति अकरणेप्रत्यवायस्तत्रैव पद्मपुराणे ऊर्जेव्रतंमधौदोलांश्रा
वणेऽनतपूजनं चैत्रेचदमनारोपमकुर्वाणोव्रजत्यधइति शिवभक्तादिभिश्चतुर्दश्यादौकार्यं तत्रस्यात्स्वात्मातिथि
ष्वित्युक्तेः अथागमदीक्षावतोदमनकारोपणविधिः रामार्चनचंद्रिकायामुक्तः अस्यप्रयोगः प्रातःस्नानादिनि
त्यंनिर्वर्त्य प्रार्थनांकुर्यात् क्रियालोपविघातार्थंयत्त्वयाविहितंविभो नमेविघ्नोभवेदत्रकुरुनाथदयांमयि सर्वथास
र्वदाविष्णोममत्वंपरमागतिः उपवासेनत्वांदेवतोषयामिजगत्पते कामक्रोधादयोह्येतेनमेस्युर्व्रतघातकाः अद्य
प्रभृतिदेवेशयावद्वैशेषिकंदिनं तावद्रक्षात्वयाकार्य्यासर्वस्यास्यनमोस्तुते एवंविज्ञाप्यदेवेशंगुरुंनत्वाप्रपूज्यच त
तःसंपूज्यविधिवद्देवेशंप्रयतःशुचिः गच्छेद्दमनकारण्यमेकादश्यांसुशोभनं क्रमेणस्वायतोकृत्यपूजयेच्चंदनादिना
नेष्यामिरामपूजार्थमितिसंप्रार्थ्यतंनमेत् सांवत्सरिकपूजाया.परिपूर्णत्वासिद्धये दमनत्वंसमायाहिक्षमस्वचन
मोस्तुते विष्णुकार्यंसमुद्दिश्यछेत्तव्योसिशिवाज्ञयेति दमनमामंत्रयेत् अन्यदेवतापूजनेतन्नामात्रऊहनीयं उत्पाद्य
पंचगव्येनप्रोक्ष्यप्रक्ष्याल्यवारिणा ततोऽशोकमूलेदेवाग्रेस्थंडिलंकृत्वा तदुपरिकलशेपूर्वक्षतपुजेवा अशोकवृक्षक।

लवसंतकामान् क्रमेणचतुर्भिर्मंत्रैःप्राणप्रतिष्ठापूर्वकंप्रपूजयेत्तत्र अशोकायनमस्तुभ्यंकामस्त्रीशोकनाशनशोकार्ति हरमेनित्यमानंदंजनयस्वमे कालपूजामंत्रः त्रुटयादिकल्पपर्यंतःकालरूपोमहाबलः कलतेचैवयःसर्वंतस्मैकाला त्मनेनमःवसंतपूजामंत्रःवसंतायनमस्तुभ्यंवृक्षगुल्मलताश्रय सहस्रमुखसवाहकामरूपनमोस्तुते कामपूजामंत्रः नमोस्तुपुष्पवाणायजगदाल्हादकारिणे मन्मथायजगन्नेत्ररतिप्रीतियुतायते इतिदमनमुपस्थाय कामभस्म समुद्भूतरतिवाष्पपरिप्लुत ऋषिगंधर्वदेवादिविमोहकनमोस्तुते इतिसंगृह्यदमनंपूजयेन्मनुनामुना नमोस्त्वितिपू र्वोक्तमंत्रेणदमनंसंपूज्यतस्मिन्दमनेरक्तवस्त्राभरणमाल्यानुलेपनंवामदक्षिणयोरतिप्रीतियुतं पाशांकुशेक्षुचापवाण धरंकामदेवंध्यात्वा प्राणप्रतिष्ठापूर्वकं क्लींकामदेवायनमइतिमंत्रेणगंधादिभिःपंचोपचारैःसपूज्यकामदेवस्यवामतो रतिं गौरवर्णांरक्तवस्त्रपरिधानां सर्वाभरणभूषितां पद्मद्वयकरांध्यात्वा श्रींश्रींश्रींक्लींरत्यैनम इतिमंत्रेणगंधादि भिःसंपूज्य कामस्यदक्षिणभागेप्रीतिं श्यामवर्णांसर्वाभरणभूषितांरक्तवस्त्रपरिधानां तांबूलकरांध्यात्वा श्रीं श्रींश्रींक्लींप्रीत्यैनमइतिमंत्रेणपंचोपचारैःसपूज्य पूर्वोक्तनमोस्तुपुष्पवाणायेत्यनेनकामप्रार्थनांकुर्यात् ततोदमन स्यभागद्वयंकृत्वैकस्मिन्भागे ॐक्लींकामायनमइतिमंत्रेणदमनंसंपूज्य द्वितीयभागेदमनायनमइतिदमनंसंपूज्य नवेपटलेनिधाय धौतेनवाससाछाद्यघंटाध्वनिपुरुषसूक्तादिस्वनैः स्वगृहमानयेत् इतिदमनस्यगृहानयन ततो रामाग्रेपुरतःस्थंडिलमुपलिप्य तत्राष्टदलंकृत्वासितकृष्णपीतरक्तवर्णैःसपूर्य तद्बहिश्चतुःकोणंकृत्वापीतवर्णेनसंपू र्य तद्बहिर्वर्तुलमंडलत्रयंविधायश्वेतरक्तपीतवर्णैः संपूर्यतद्बहिश्चतुष्कोणंसंपाद्यरक्तवर्णेनसंपूरयेत् तदेतत्सा र्वकामिकंमंडलं यद्वासर्वतोभद्रमुद्धरेत् उपरिपंचवर्णवितानंकुर्यात् ततोदेवस्यमहापूजनंकृत्वा पूर्वोक्तमंडलेक लशंस्थाप्य तदुपरिदमनाधिवासनंकुर्यात् तत्रमंत्रः पूजार्थंदेवदेवस्यविष्णोर्लक्ष्मीपतेःप्रभोः दमनत्वमिहागच्छ

सान्निध्यंकुरुतेनमः ततोदमननकपूजांकृत्वा क्लींकामदेवायनम इतिकामंसंपूज्य श्रींश्रींश्रींक्लींरत्यैनमइतिरतिं श्रींश्रींश्रीं क्लींप्रीत्यैनम इतिप्रीतिंचपंचोपचारैःसंपूज्य षडंगपूजांकुर्यात् क्लांहृदयायनमः क्लींशिरसेस्वाहा क्लूंशिखायैवषट् क्लैंकवचायहुं क्लौंनेत्राभ्यांवौषट् क्लः अस्त्रायफट् ततोष्टदलेषु देवाग्रमारभ्यप्रादक्षिण्येनभस्मशरीरायनमः अनंगायनमः २ मन्मथायनमः ३ कामायनमः ४ वसंतसखायनमः ५ स्मरायनमः ६ इक्षुचापायनमः ७ पुष्पास्त्रायनमः ८ इतिसंपूज्य चतुरस्रे इंद्रादीन् लोकपालान् वज्रादीन्यायुधानिचसंपूज्य पुनःकामंतन्मंत्रेणाभ्यर्च्यप्रणम्य ॐसत्स्वरूपायविद्महे कामदेवायधीमहि तन्नोनंगः प्रचोदयात् इतिकामगायत्र्याष्टोत्तरशतं दमनकमभिमंत्र्य धूपदीपाद्युपचारानुपकल्प्य हृदयायनमइतिपुष्पांजलिंदत्त्वा ॐनमोस्तुपुष्पबाणायेत्यनेनकामदेवनमस्कारं कुर्यात् ततः स्वेष्टदेवंसंपूज्य हस्तेपुष्पांजलिंगृहीत्वा आमंत्रयेत् आमंत्रितोसिदेवेशपुराणपुरुषोत्तम प्रातस्त्वांपूजयिष्यामिसान्निध्यंकुरुकेशव क्षीरोदधिमहानागशय्यावस्थितविग्रह प्रातस्त्वांपूजयिष्यामिसन्निधोभवतेनमः निवेदयाम्यहंतुभ्यंप्रातर्दमनकंशुभं सर्वथासर्वदाविष्णोनमस्तेस्तुप्रसीदमे इत्थमामंत्र्यदेवेशंदत्त्वापुष्पांजलिंपुनः पूजितंतद्दमनकंकुंभस्योपरिसंस्थितं अस्त्रेणसर्वतोरक्षेत्कवचेनावगुंठयेत् रक्षेद्वाचक्रमंत्रैश्चनारसिंहेणवैपुनः ॐसहस्रारहुंफट् इतिचक्रमंत्रः नारसिंहमंत्रोयथा उग्रंवीरंमहाविष्णुंज्वलंतंसर्वतोमुखं नृसिंहंभीषणंभद्रंमृत्योर्मृत्युंनमाम्यहं ब्राह्मणेभ्योनमस्कृत्यगुरुपादौप्रणम्यच गीतमंगलनिर्घोषैःकुर्याज्जागरणंततः सद्योधिवासेजातेचतत्रजागरणंनहीति दक्षिणामूर्त्तिसंहितावचनात् इतिदमनाधिवासनम् अथाधिवासोत्तरदिनकृत्यं प्रातर्नत्वाचदेवेशंकुर्यात्स्नानंयथाविधिःनित्यपूजांततःकृत्वाकुर्यान्नैमित्तिकींततः दमनंदूर्वयायुक्तंगंधाक्षतमथार्पयेत् तत्रमंत्रः देवदेवजगन्नाथवांछितार्थप्रदायक

कृत्स्नान्पूरयमेकामान्पद्मकामेश्वरीप्रिय इदंदमनकंदेवगृहाणमदनुग्रहात् इमांसांवत्सरींपूजांभगवन्पारिपूरय मूल
संपुटितोह्यपदमनारोपणेमनुः नृसिंहपरिचर्य्यायांतु ततोदमनमंजरींगृहीत्वाहृदयेनाभिमंत्र्यच सर्वरत्नमयींदे
वसर्वगंधमयींशिवां गृहाणदेवदेवेशनमस्तेस्तुनृकेसरिन् इतिमंत्रेणदेवस्यशिरस्यारोपयेत् रमापतेइत्यूहोत्रज्ञेयः
ततस्तत्वपरिभावनयादमनकमंजरीं वनमालांकृत्वाहृदयमंत्रेणाभिमंत्र्य सर्वरत्नमयींदेवदामनींवनमालिकां गृहा
णदेवपूजार्थेसर्वगंधमयींविभो इतिमूलमंत्रेण देवस्यमुकुटंसमर्प्यांगदेवताभ्यःस्वस्वमंत्रेणसमर्पयेदित्युक्तं एवंस
मर्प्यदेवायप्रार्थयेद्विष्णुमव्ययं मणिविद्रुममालाभिर्मंदारकुसुमादिभिः इयंसांवत्सरीपूजातवास्तुगरुडध्वज वन
मालांयथादेवकौस्तुभंवहसेहृदि तद्वद्दामनकींमालांपूजांचहृदयेवह जानताजानतावापिनकृतंयत्तवार्चनं तत्सर्वंपू
र्णतांयातुत्वत्प्रसादाद्रमापते जितंतेपुंडरीकाक्षनमस्तेविश्वभावन नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज मंत्रहीनंक्रि
याहीनंभक्तिहीनंजनार्दन यत्पूजितंमयारामपरिपूर्णंतदस्तुमे एवंसंप्रार्थ्यदेवेशंनिपतेद्दंडवद्भुवि अथसंपूजयेद्भ
क्तयागुरुंवस्त्रादिकांचनैः स्वयंधृत्वाभ्यर्च्यवंधून्विप्रान्संपूज्यधारयेत् स्यादश्वमेधजंपुण्यमित्याहभगवान्शिवः
पारणाहेनलभ्येतद्वादशीघटिकापिचेत् तदात्रयोदशीग्राह्यापवित्रदमनार्पणे नित्यंचेदं ऊर्जेव्रतंमधौदोलांश्राव
णेनंतपूजनं चैत्रेचदमनारोपमकुर्वाणोव्रजत्यध इतिपाद्मात् माधवेदमनारोपःस्यान्मधौविस्मृतोयदि वैशाखेश्रा
वणेभाद्रेकर्त्तव्यंचतदर्पणमितिवचनेन गौणकालेतद्विधानात् दक्षिणामूर्तिसंहितायामपिचैत्रादयस्त्रयोमासाःप्रोक्ताः
पक्षौसितेतरौ एतेषांपूर्वपूर्वस्तुकालःसर्वोत्तमोभवेत् श्रावणावधिशुक्रास्तेकर्तव्यमितिनारद इतिपाठांतरं इदंच
मलमासेनकार्यं उपाकर्मोत्सर्जनंचपवित्रदमनार्पणे इतिकालादर्शेमलमासवर्ज्येषुप्रतिपादनात् उपाकर्मचहव्यं
चकव्यंपर्वोत्सवंतथा उत्तरेनियतंकुर्यात्पूर्वेतन्निष्फलंभवेत् इतिमाधवीयेप्रजापतिवचनाच्च · शुक्रास्तादौतुकार्य्यं

मेवेतिपूर्वोक्तत्वात् उपाकर्मोत्सर्जनंचपवित्रदमनार्पणं ईशानस्यबलिर्विष्णोःशयनंपरिवर्त्तनं कुर्याच्छुक्लस्यचगु
रोर्मौढ्येपीतिविनिश्चय इतिदमनकपूजनारोपणविधिः अथसंक्षिप्तदमनकपूजनं प्रातःस्नात्वानित्यपूजांतंनि
र्वर्त्य दमनकारामंगत्वा क्रमेणतमादायचंदनादिनातत्रैवपूजयेत् श्रीरामपूजार्थंत्वांनेष्यामीतिप्रणमेत् अन्यदेवता
यांतु अमुकदेवतापूजार्थमित्यूहः ततःपंचगव्येनाभिषिंच्य शुद्धोदकेनप्रक्षाल्याशोकमूलं केवलंस्थंडिलेवास्था
पयित्वा तत्राशोकेअशोककालवसंतकामानुगंधादिभिःप्रपूजयेत् ततःशुचौदेशेकाममात्रंपूजयेत् पूजांते अशोका
यनमस्तुभ्यमित्यशोकः त्रुट्यादिकल्पपर्यंतःकालरूपोमहाबलः कालात्मन्नेनमइतिकालंवसंताय नमस्तुभ्यमिति
वसंतं नमोस्तुपुष्पबाणाय. इति कामं- कामभस्मसमुद्भूतइत्यादिदमनमुपतिष्ठेत् ततःकामायनम इति सपरिवा
रंमन्मथरूपिणंदमनकंगंधादिनाभ्यर्च्य ततएवसमुद्भूतदमनंनप्रपूजयेत् ततोधौतवाससाछाद्यवैणवपटलेनिधाय
गीतमंगलपुरुषसूक्तादिस्वनैर्गृहमानयेत् तत्ररात्रौदेवंसंपूज्य तदाज्ञयादमनमधिवास्यदेवस्यपुरतःस्थंडिलमुप
लिप्य तत्राष्टदलंसितपीतकृष्णरक्तवर्णैःकृत्वा तद्बहिश्चतुःकोणंपीतेनपूर्यं तद्बहिर्वृत्तमंडलत्रयंश्वेतरक्तपीतैःपूर्यं
तद्बहिश्चतुःकोणंरक्तवर्णेनपूरयेत् सर्वतोभद्रंवाकारयेत् तदुपरिपंचवर्णवितानंकृत्वा उक्तमंडले शुद्धोदककुंभं हेम
रत्नफलपल्लवयुतंसंस्थाप्य पूजार्थंदेवदेवस्यविष्णोर्लक्ष्मीपतेर्विभोः दमनत्वमिहागच्छसान्निध्यंकुरुतेनन इतिद
मनकपूजनं क्लींकामदेवायनम इतिकामपूजनं श्रींश्रींश्रींक्लींरत्यैनमः श्रींश्रींश्रीं क्लींप्रीत्यैनम एवंरतिप्रीतीपूजन
क्लांहृदयायनमःक्लींशिरसेस्वाहा क्लूंशिखायैवषट् क्लैंकवचायहुं क्लौंनेत्राभ्यांवौषट् क्लःअस्त्रायफट् इतिषडंगमभ्यर्च्य
ततोदेवात्प्रादक्षिण्येन भस्मशरीरायनमः १ अनंगायनमः २ मन्मथायनमः ३ कामायनमः ४ वसंतसखा
यनमः ५ स्मरायनमः ६ इक्षुचापायनमः ७ पुष्पास्त्रायनमः ८ इतिसंपूज्यबहिश्चतुरस्रेइंद्रायनम इत्यष्टौलोके

शान् वज्रायनम इतितेषामायुधानिचाभ्यर्च्य तत्पुरुषायविद्महे कामदेवायधीमहि तन्नोऽनंगःप्रचोदयादिति
कामगायत्र्याष्टोत्तरशतवारमभिमंत्र्यगंधादिभिःसंपूज्यहृदयायनम इतिपुष्पांजलिंनिवेद्य नमोस्तुपुष्पबाणायजग
दाल्हादकारिणे मन्मथायजगन्नेत्रेरतिप्रीतिप्रदायते इतिनत्वा क्षीरोदधिमहानागशय्यावस्थितविग्रह प्रातस्त्वां
पूजयिष्यामिसान्निधोभवतेनम इतिदेवंसंप्रार्थ्यपुष्पांजलिंदत्वा दमनमन्त्रेणसर्वतोरक्षेत् कवचेनावगुंठयेत् ततो
गीतादिनारात्रिमतिवाहयेदितिदमनाधिवासनंकृत्वा प्रातर्नित्यपूजांतेपुनरनेकोपचारैःसंपूज्यसदूर्वागंधाक्षतफ
लांदमनमंजरींमूलेनाभिमंत्र्यकराभ्यांगृहीत्वा जयजयश्रीरामचंद्रेत्युच्चार्यमूलंपठित्वा देवदेवजगन्नाथवांछिता
र्थप्रदायक हृत्स्थान्पूरयमेविष्णोकामान्कामेश्वराप्रिय इदंदमनकंदेवगृहाणमदनुग्रहात् इमांसांवत्सरींपूजांभग
वन्परिपूरयेतिजप्त्वा मूलेनभगवंतसमर्पयेत् ततोयथाशोभंदमनकमारोप्यभगवंतंप्रार्थयेत् मणिविद्रुममालाभि
र्मंदारकुसुमादिभिः इयंसांवत्सरीपूजातवास्तुगरुडध्वज वनमालांयथादेवकौस्तुभंवहसेहृदि तद्वद्दामनकींमालां
पूजांचहृदयेवह जानताजानतावापिनकृतंयत्तवार्चनं तत्सर्वंपूर्णतांयातुत्वत्प्रसादाद्रमापते जितंतेपुंडरीकाक्षनम
स्तेविश्वभावन नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज मंत्रहीनं- ततोदेवंनमस्कृत्य गुरुंदमनेनवस्त्रादिनासंतोष्य
भगवतेकर्मनिवेद्यस्वयंषतत्प्रसादत्वेनदमनशेषंधृत्वा द्विजान्संपूज्यभोजयेत् स्वयंबंधुभिः सहभुंजीतेति इतिसं
क्षेपतोदमनोत्सवविधिः अस्येदंक्रमद्वयंजयासिंहकल्पद्रुमोक्तं श्रीमन्नृसिंहदेवस्यपरिचर्यासकौस्तुभां रामार्च
चंद्रिकांचैवदृष्ट्वेयंपद्धतिःकृता इतिचैत्रशुक्लद्वादश्यांमदनव्रतमाचरेत् स्थापयेदव्रणंकुंभंसिततंडुलपूरितं नानाफल
युतंतद्वदिक्षुदंडसमन्वितं सितवस्त्रयुगच्छन्नंसितचंदनचर्चितं नानाभक्ष्यसमोपेतंसहिरण्यंस्वशक्तितः ताम्रपात्रं
गुडोपेतंतस्योपरिनिवेशयेत् तत्रसंपूजयेद्देवंकामरूपिणमच्युतं गंधाद्यैरुपचारैस्तुसोपवासःपरेहनि पुनःप्रात

समुत्थायब्राह्मणायानिवेदयेत् ब्राह्मणान्भोजयेच्चैवतेभ्योदद्यात्तुदक्षिणां वर्षमेवं व्रतंकृत्वाघृतधेनुसमन्वितां शय्यां
चदद्याद्गुरवेसर्वोपस्करसंयुतां कांचनंकामदेवंचशुक्लांगांचपयस्विनीं वासोभिर्द्विजदांपत्यंपूज्यशक्त्यातदर्पयेत् प्रीय
तांकामरूपीमेहरिरित्येवमुच्चरन् यःकुर्याद्विधिनानेनमदनद्वादशीव्रतं ससर्वपापनिर्मुक्तःप्रयातिहरिसाम्यतां अथ
भर्तृद्वादशीव्रतं अस्यामेवसमुद्दिष्टंभर्तृद्वादशिकाव्रतं स्वास्तृतांतत्रशय्यांतुकृत्वातुश्रीयुतंहरिं संस्थाप्यमंडपेपुष्पै
स्तदुपर्य्यपिकल्पयेत् ततःसंपूज्यगंधाद्यैर्व्रतीजागरणंनिशि - नृत्यवादित्रगीताद्यैस्ततःप्रातःपरेहनि सस्थाप्य
श्रीहरिंहैमंद्विजाग्रयायनिवेदयेत् द्विजान्संभोज्यविसृजेद्दक्षिणाभिःप्रतोषितान् एवंकृतव्रतस्यापिदांपत्यंजायते
स्थिरं सप्तजन्मसुभुंक्तेचभोगान्लोकद्वयेप्सितान् अथचैत्रशुक्लद्वादश्यांमदनद्वादशीव्रतविधानं मत्स्यपुराणे ॥
सूतउवाच ॥पुरादेवासुरयुद्धेहतेषुहरिणासुरैःपुत्रपौत्रपुशोकार्तागत्वाभूलोकमुत्तमं स्यमंतपंचकेतीर्थेसरस्वत्यास्त
टेशुभे भर्तुराराधनपरातपउग्रंचकारह तदादितिर्दैत्यमाताऋषिरूपेणसुव्रता फलाहारातपस्तेपेकृच्छ्रचांद्रा
यणादिकान्पावद्वर्षशतंसाग्रजराशोकसमाकुला ततस्सातपमातप्तावसिष्ठादीनपृच्छत कथयंतुभवंतोमे
पुत्रशोकविनाशनं व्रतंसौभाग्यफलदमिहलोकेपरत्रच ऊचुर्वसिष्ठप्रमुखामदनद्वादशीव्रतं सुतानेकोनपंचाशद्ये
नलोकेभविताघ्रुवः ॥ सूतउवाच ॥ यद्वसिष्ठादिभिःपूर्वंदितेःकथितमुत्तमं विस्तरेणतदेवेदंमत्सकाशान्निबोधत
चैत्रेमासिसितेपक्षेद्वादश्यांनियतव्रतः स्थापयेदव्रणंकुंभंसिततंडुलपूरितं नानाफलयुतंतद्वदिक्षुदंडसमन्वितं
सितवस्त्रयुगच्छन्नं सितचंदनचर्चितं नानाभक्ष्यसमोपेतंसहिरण्यंस्वशक्तितः ताम्रपात्रंगुडोपेतंतस्योपरिनि
वेशयेत् तदभावेकथांकुर्यात्कामकेशवयोर्नरः कामनाम्नाहरेरर्चांस्नापयेद्गुष्णवारिणा शुक्लपुष्पाक्षततिलैरर्चं
येन्मधुसूदनं कामायपादौसंपूज्यजंघेसौभाग्यदायच उरौस्मरायेतिपुनर्मन्मथायेतिवैकटिं स्वच्छोदरायेत्युदरं

मनंगायेत्पुरोहरेः मुखंपद्ममुखायेतिबाहूपंचशरायवै नमःसर्वात्मनेमौलिमर्चयेदितिकेशवं एवंजागरणंकृत्वाशुक्ल
माल्यांबरोव्रती ततःप्रभातेतंकुंभंब्राह्मणायनिवेदयेत् ब्राह्मणान्भोजयेद्भक्त्यास्वयंभुंजीतबंधुभिः भुक्त्वातुदक्षिणां
दद्यादिमंमंत्रमुदीरयेत् प्रीयतामत्रभगवान्कामरूपीजनार्दनः हृदयेसर्वभूतानांयआनंदोभिधीयते अनेनाविधि
नासर्वंमासिमासिसमाचरेत् उपवासीत्रयोदश्यामर्चयेद्विष्णुमव्ययं फलमेकंचसंप्राश्यद्वादश्यांभूतलेस्वपेत् तत
स्त्रयोदशेमासेघृतधेनुसमन्वितां शय्यांदद्याद्द्विजेंद्रायसर्वोपस्करसंयुतां कांचनंकामदेवंचशुक्लांगांचपयस्विनीं वा
सोभिर्द्विजदांपत्यंपूज्यंशक्त्याविभूषणैः संवशय्यादिकंदत्वाप्रीयतामित्युदीरयेत् होमंशुक्लतिलैःकुर्यात्कामना
मानिकीर्त्तयेत् गव्येनसर्पिषातद्वत्पायसेनचधर्मवित् विप्रेभ्योभोजनंदद्याद्वित्तशाठ्यंविवर्जयेत् इक्षुदंडानथोद
द्यात्पुष्पमालांस्वशक्तितः यःकुर्याद्विधिनानेनमदनद्वादशीमिमां सर्वपापविनिर्मुक्तःप्राप्नोतिहरिसाम्यतां इह
लोकेवरान्पुत्रान्सौभाग्यंसुखमश्नुते यःस्मृतोविष्णुरानंददातासचमहेश्वरः सुखार्थीकामरूपेणयजेत्तंजगदीश्वरं
तच्छ्रुत्वाचचकारासौदितिःसर्वमशेषतः कश्यपोव्रतमाहात्म्यादागत्यपरयामुदा वरेणछंदयामाससातुवव्रेसुतंवरं
ततःसाव्रतमाहात्म्याल्लेभेगर्भमनुत्तमं कदाचिल्लब्धसंचारःशत्रुतान्जठरांदितेः प्रविश्यैकोनपंचाशत्कृत्वाशक्रोज
घानतं तावंतोबालकाभूत्वारुरुदुर्नस्मृतिंगताः ततोवैचिंतयामासाकिमेतदितिवृत्रहा धर्मस्यकस्यमाहात्म्यात्पुनः
संजीविताअमी कदाचिदनयानूनंमदनद्वादशीकृता तत्प्रभावेनजीवंतितनयानिहताअपि नूनमेतत्परिणतम
धुनातत्कृतंव्रतं वज्रेणनिहताःसंतोनविनाशमवाप्नुयुः एकोप्यनेकतामापवहुधानिहतोप्यलं अहोमाहात्म्यमेत
स्मिन्मदनद्वादशीव्रतं जीवपुत्रावहुसुतायेननारीप्रजायते ॥ इतिमत्स्यपुराणोक्तंमदनद्वादशीव्रत अस्यामेवभर्तृ
द्वादशीव्रतं नारदाप्सरसंवादमधिकृत्यवाराहपुराणे नारदउवाचवसंतेशुक्लपक्षस्यद्वादशीयाभवेच्छुभा तस्या
मुपोष्यविधिवत्सश्रीकंहरिमर्चयेत् पर्यंकास्तरणंकृत्वानानास्तरणसंयुतं तत्रलक्ष्म्यायुतंदेवंरौप्यंकृत्वानिवेशयेत्

तस्योपरिततःपुष्पैर्मंडपंकारयेद्बुधः नृत्यवादित्रघोषैश्चजागरंतत्रकारयेत् मनोभवायेतिसिरस्त्वनंगायेति
वैकटिं कामायवाहुमूलंचकुसुमास्रायचोदरं मन्मथायेतिवैपादौहरयेइतिसर्वतः. पुष्पैःसंपूज्यदेवेशंमल्लिकाजा
तिभिस्तथा पश्चाच्चतुरस्त्रादायइक्षुदंडान्सुशोभनान् चतुर्दिक्षुन्यसेत्तस्यदेवस्यप्रणतोबुधः एवंकृत्वाप्रभातेतुदाप
येद्ब्राह्मणायतं वेदवेदांगयुक्तायसंपूर्णांगायधीमते ब्राह्मणांश्चतथाभोज्यव्रतमेतत्समापयेत् व्रतस्यांतेतथावि
ष्णुर्भर्त्तावोभविताध्रुवं अकृत्वामत्प्रणामंतुप्रष्टंगर्वेणशोभनाः व्रतेनानेनदेवेशंपतिंलब्ध्वाभिमानतः अवसानेपह
रणंगोपालैर्वोभविष्यति एवमुक्त्वातुदेवर्षिःप्रययौनारदःक्षणात् ताअप्येतद्व्रतंचक्रुस्तुष्टश्चाप्सरसांहरिः इतिभर्तृ
द्वादशीव्रतं अथधरणीव्रतेपुंमेत्रशुक्लद्वादश्यां वामनद्वादशीव्रतं वाराहपुराणे दुर्वासोवाच एवमेवमुनेमासिचैत्रेसं
कल्पद्वादशीं उपोष्याराधयेद्भक्त्यादेवदेवंजनार्दनं वामनायेतिपादौतु.वैष्णवेकटिमर्चयेत् वासुदेवायजठरमुरः
संकर्षणायच कंठंविश्वभृतेपूज्यशिरोवैव्योमरूपिणे वाहूविश्वजितेपूज्यस्वनाम्नाशंखचक्रके अनेनविधिनाभ्य
र्च्यदेवदेवंजनार्दनं प्राग्वद्रत्नोदरंकुंभंसयुग्मंपुरतोन्यसेत् वस्त्रयुग्मेनचकुंभयुग्ममामित्यर्थः प्रागुक्तपात्रसंस्था
प्यवामनंकांचनंबुधः यथाशक्त्याकृतंहृस्वंसितयज्ञोपवीतिनं कुंडिकांस्थापयेत्पार्श्वेछत्रिकांपादुकेतथा अक्ष
मालांचसंस्थाप्ययष्टिकांचविशेषतः एतैरुपस्करैर्युक्तंब्राह्मणायानिवेदयेत् दापयेत्प्रीयतांविष्णुर्हृस्वरूपीतिकीर्त्त
येत् मासनाम्नातुसंयुक्तप्रादुर्भावाभिधानकं प्रीयतामितिसर्वत्रविधिरेपउदाहृतः मासनाम्नामार्गशीर्षेकेशवादिना
म्ना प्रादुर्भावाभिधानकं मत्स्यरूपीकूर्मरूपीनृसिंहरूपीतिकीर्त्तयेत् श्रूयतेचपुराराजाहर्यश्वःपृथिवीपतिः अपु
त्रश्चतपस्तेपेपुत्रमिच्छंस्तपोधन तस्यैवंकुर्वतस्त्विष्टिपुत्रार्थंमुनिसत्तम आजगामहरिर्देवोद्विजरूपधरस्तदा स
चोवाचनृपंराजन्किंतेव्यवसितंविभो पुत्रार्थमितिप्रोवाचसचतंप्रत्युवाचतं इदमेवविधानंतुकुरुराजन्प्रयत्नतः स

त्रिप्रएवमुक्त्वाचक्षणादंतर्हितस्ततः राजाचतच्चकाराथमंत्रवित्तद्द्विजातये दरिद्रायतथाप्रादाज्जयेतिगर्भायधीमते मं त्रविद्यथादितेरपुत्राया इत्यादिमंत्रविज्ञः तंवामनं अनेनविधिनोक्तेनतस्यपुत्रोभवन्मुने उग्राश्वइतिविख्यातश्चक्र वर्तीमहाबलः अपुत्रोलभतेपुत्रान्धनहीनोलभेद्धनं भ्रष्टराज्योलभेद्राज्यमंतेविष्णुपुरंव्रजेत् ॥ इतिवाराहपुराणे धरणीव्रतेपुचैत्रशुक्लद्वादश्यांवामनद्वादशीव्रतं ॥ चैत्रशुक्लत्रयोदश्यांचंदनात्मककामदेवपूजनं नारदीये चैत्रशुक्ल त्रयोदश्यांमदनंचदनात्मकं कृत्वासंपूज्ययत्नेनवीजयेद्व्यजनेनतु ततःसंक्षुभित कामःपुत्रपौत्रविवर्धनः अनंग यात्रातत्रोक्तातांनिबोधमुनीश्वर सिंदूररजनीरागैःफलकेनंगमालिखेत् रतिप्रीतियुतंश्लक्ष्णंपुष्पचापेषुधारिणं का मदेववसंतंचवाजिवक्त्रंझषध्वजं मध्याह्नेपूजयेद्भक्त्यागंधस्रग्भूषणांशुकैः भक्ष्यैर्नानाविधैश्चापिमंत्रेणानेननारद नमोरामायदेवायकामदेवस्यमूर्तये ब्रह्मविष्णुशिवेंद्राणांमनःक्षोभकरायवै ततस्तस्याग्रतोभक्त्यापूजयेदंगनाप तिं वस्त्रमाल्यविभूषाद्यैःकामोयमितिचिंतयेत् पूजयेद्द्विजदांपत्यंगंधवस्त्रविभूषणैः एवयःकुरुतेविप्रवर्षेवर्षेम होत्सवं वसंतसमयेप्राप्तेहृष्टःपुष्टःसदैवसः प्रतिमासंपूजयेद्वायावद्वर्षंसमाप्यते मदनं १ हृद्भवं २ कामं ३ मन्मथंच ४ रतिप्रियं ५ अनंगं ६ चैवकंदर्पं ७ पूजयेन्मकरध्वजं ८ कुसुमायुध संज्ञंच ९ ततःपश्चान्मनोभवं १० विषमेषुंतथाविप्र ११ मालतीप्रियमित्यपि १२ अजादानमप्युक्तं स्नात्वानद्यांविधानतः अजापयस्विनींदद्याद्दरिद्रायकुटुंबिने भूयस्त्वनेनदानेनयमलोकंनगच्छतीति अत्रैवाजा दानांगत्वेननक्तव्रतारंभःकार्य्यः तदुक्तंभविष्योत्तरे चैत्रेचित्रान्नक्षत्रेकाशीनद्यांस्नात्वाददातियः अजास्तत्रपयस्वि न्योदरिद्रायकुटुंबिने नजायतेपुनरसौजीवलोकेकदाचनेति अथाजादानं तत्रसुमंतः अजापालोमहीपालोह्यजा दानेर्दिवंगतइत्यादि॰ विधिंतस्यप्रवक्ष्यामिविश्वामित्रेणभाषितां सर्वरत्नोपसंपन्नांसप्तधान्योपरिस्थितां वस्त्र

माल्योपमाल्यांतुभूपितांपशुजानकीं वस्त्रनेत्रींहेमशृंगींसदोहनसमान्वितां ससुतांरौप्यपादांचकुशोदयात्कुशोदकं गोदानवत्प्रयुंजीतमंत्रेणानेनसंयतः मंत्रश्च अजत्वमसिअजेश्लक्ष्णेयज्ञसंपत्करेशुभे मृष्टत्वंदहमेपापंजन्मांतरशतैः कृतं एवंसमुच्चरेद्भक्त्याद्विजहस्तेजलंक्षिपेत् प्रीयतांपद्मनाभायवासुदेवायवैनमः एवंप्रदक्षिणीकृत्यसूर्यंसमवलोकयेत् ततश्चस्वगृहंगत्वाहरिंसंस्मृत्यमानवः येबाल्येकृताःपापाःकामतोवाप्यकामतः यौवनेवार्द्धकेन्नादेःप्रसंगेनापिपातकं अजादानस्यमाहात्म्यान्निष्पापोजायतेनरः पुत्रपौत्रसमायुक्तःसदाचारगतिश्चिरं विष्णुधर्मोत्तरेपिमंत्रः त्वंपूर्वंब्रह्मणासृष्टापवित्राभवतीपरं त्वत्प्रसूतौस्थितायज्ञास्तस्माच्छांतिकरीभव प्रतिग्रहोर..:पृष्ठदेशप्रोक्तः इयंचोदानकल्पादिरितिकल्पादितिथिनिर्णयेप्रागुक्तम् अत्रश्राद्धदानादिअनंतफलद अथचैत्रशुक्लचतुर्दशीसापूर्वाग्राह्या मधोःश्रावणमासस्ययाचशुक्लाचतुर्दशी सारात्रिव्यापिनीग्राह्यानान्याशुक्लाकदाचनेति हेमाद्रौबौधायनोक्तेः परापूर्वाह्णव्यापिनीतिवापाठः अत्रकेचिद्यथाश्रुतमेवपठंति निशिभ्रमंतिभूतानि शक्तयःशूलधारकाः अतस्तत्रचतुर्दश्यांसत्यांतत्पूजनंभवेदितिब्रह्मवैवर्त्तात् हेमाद्रिमाधवादिलिखितमप्येवं संप्रदायविदस्त्वाहुः चतुर्दशीतुकर्तव्यात्रयोदश्यायुताविभोइतिस्कांदमुत्सर्गः तदपवादश्च मधोःश्रावणमासस्येति तत्रापवादाभावे पुनरुत्सर्गस्थितिरितिन्यायात्पूर्वविद्धैवग्राह्येतिसिध्यति ब्रह्मवैवर्त्ततु सामान्यरूपमन्यत्रसावकाशमितिवचनेनपूर्वदिनेत्रिमुहूर्तवेधेपूर्वा अन्यथोत्तरेति नारदीयेपि चैत्रशुक्लचतुर्दश्यांकुंकुमागुरुचंदनैः गंधाद्यैर्वस्त्रमणिभिःकार्य्यार्चामहतीशिवे विमानध्वजछत्राणिदत्वापूज्याश्चमातरः एवंकृत्वार्चनंविप्रसोपवासोथवैकभुक् अश्वमेधाधिकंपुण्यंलभतेमानवोभुवि अत्रैवदमनार्चांचकारयेद्विधपूर्वकं समर्पयेच्चपूर्णायांशिवायशिवरूपिणे शैवागमे मधुमासेतुसंप्राप्तेचैत्रशुक्लचतुर्दशी स्यातामदनभंजीतिसिद्धासुरमहोत्सवा तत्रयेमूलमंत्रेणसमूलंदमनोच्चयं नि

वेदयंतिगौरीशेतेपांशैवार्चनेफलमिति॥ अत्रलिंगपुराणेविशेषउक्तः मदनंतुत्रयोदश्यांतालवृंतानिलेनतु हंस
यानसमारूढःकामोमंत्राविवार्धितः नारीभिर्वीजितश्चैवत्रैलोक्योन्मादमाचरेत् तन्निर्वापणकामेनचतुर्दश्यांमहा
मुने ततोत्यर्थंमयाप्रोक्तानार्यश्चाथनरास्तथा कुर्वंतिकर्दमेनैवआत्मनस्त्वनुलेपनं निर्वापितानंगपीडाभवत्ये
वममाज्ञया एतदर्थंसदाकार्यंक्रीडनंकर्दमेनच प्रातःप्रहरमात्रंतुकर्तव्यंक्रीडनंनरैः प्रक्षाल्यांगंततःकृत्वागंध
माल्यानुलेपनं वस्त्रतांबूलगीतादिरथ्याहट्टेषुचाचरेत् वादित्रघोषितैश्चैवनित्यंकृत्वाशिवाग्रतः सर्वकामसमृद्ध
स्तुवसेच्छिवपुरेनरः स्वयंतुलिंगमेकंतुदृष्ट्वातस्मिन्दिनेनरः ज्ञानलब्धशिवःसम्यग्भवेदेवनसंशयइति तथाच
मधुमासेतुसंप्राप्तेतथाशुक्लचतुर्दशी प्रोक्तामदनपूजातुसिद्धिदातुमहोत्सवइति अत्रदमनोत्सवविधिःस्कंदपुरा
णे चतुर्दशींतुदमनांवक्ष्यामिहितकाम्यया लोकानांपुण्यजनकींसर्वसौख्यप्रदायिनीं यस्माद्दमनकैःपूजाचतु
र्दश्यांविधानतः क्रियतेशांकरीतस्माद्दमनाख्याचतुर्दशी चैत्रशुक्लचतुर्दश्यांयथावत्पूजयेच्छिवं प्रासादशोभा
कृत्वैवसम्यक्संमार्जनादिभिः संस्नाप्यविधिवद्देवंक्षीरेणेक्षुरसादिभिः श्रीखंडागुरुकर्पूरकुंकुमैश्चानुलेपयेत् ततोद
मनकैर्बिल्वैःपत्रैर्मरुवकैःशुभैः आलिंगपीठपर्यंतंपूजयेद्ग्रथितैस्तथा अगुरुंदेवदारुंचश्रीफलान्यथसिल्हकं तगरं
माहिषाक्षंचधूपंवानिर्दहेत्ततः शालिपिष्टोद्भवैर्दीपैःपंचभिर्नवभिस्तथा कुर्यादारार्तिकंशंभोःकांस्यपात्रेसमुज्ज्वलैः
विचित्रवस्त्रपूजाचकर्तव्यामहतीशिवे पुष्पमंडपिकांचित्रांसवितानोज्ज्वलांशुभां महोत्सवेनविधिवद्वयंतूर्यरवेणच
विविधैर्भक्ष्यभोज्यैश्चनैवेद्यंचोपकल्पयेत् संभवेसतिकार्यास्याद्रथयात्रापिनाकिनः प्रोक्षणीयैस्तथान्नृत्यैर्वाद्यप
त्रैश्चभोजनैः पूजयेच्छिवभक्तांश्चविप्रानन्यांश्चशक्तितः प्रीयतांशिवइत्युक्त्वानक्तंभुंजीतचस्वयं वर्षेवर्षेप्रकर्त
व्यमेतच्चैत्रोत्सवंमहत् शिवभक्तैस्तथान्यैश्चकीर्तिश्रेयोभिवृद्धये ॥ इतिचैत्रशुक्लचतुर्दश्यांशिवदमनोत्सवविधिः

अस्यामेवचतुर्दश्यांकाशीवासिभिः पशुपतीश्वरयात्राकार्य्या तदुक्तंकाशीखंडे " चैत्रशुक्लचतुर्दश्यामुपोषणपराय
णः पूजयित्वापशुपतिंरात्रौजागरणंचरेदिति हेमाद्रौ चैत्रशुक्लचतुर्दश्यांशिवंसंपूज्यभक्तितः ' रोचनापलमात्रेण
ततोलिंगंविलेपयेत् नैवेद्यंपायसंप्रस्थंखंडलड्डुकसंयुतं सघृतंगुग्गुलंदद्यात्पलानांतुशतंपुनः " निवेदयेत्पिष्टालिंगं
तिलप्रस्थंसहेमयुक् ' शिवदक्षिणदिग्भागेस्थापितव्यंप्रयत्नतः 'भवरुद्रायनिर्वर्त्यआचार्यंपूजयेत्ततः एवंकार्यंप्र
यत्नेनमोक्षमक्षयमिच्छतेति अस्यामेवचतुर्दश्यांनृसिंहदोलोत्सवःकार्यः ' ॥ उदुक्तंगारुडे चैत्रशुक्लचतुर्दश्यांनृ
सिंहंजगतःप्रभुं राजोपचारैःसंपूज्यमासमांदोलयेन्नरः ॥ " तत्रैव मधौशुक्लचतुर्दश्यांनृसिंहंजगतांपतिं दक्षिणा
भिमुखंदेवंदोलमानंसुरेश्वरं संपूजितंसकृद्दृष्ट्वासर्वपापैःप्रमुच्यते ॥ इतिचैत्रशुक्लचतुर्दशी ॥ चैत्रपूर्णिमासामा
न्यनिर्णयेपरैव अत्रविशेषोनिर्णयामृतेविष्णुस्मृतौ चैत्रीचित्रायुताचेत्स्यात्तस्यांचित्रंवसुप्रदा तेनसौभाग्यमा
प्नोतीति तथाच ब्राह्मे योगविशेषेणफलविशेषः मंदेवार्केगुरौवापिवारेष्वेतेषुचैत्रिका तत्राश्वमेधजंपुण्यंस्नान
श्राद्धादिभिर्भवेत् अत्रसर्वदेवानांदमनपूजोक्ता तत्रैववायवीये संवत्सरकृतार्चायाःसफलायाखिलान्सुरान् ' द
मनेनार्चयेच्चैत्र्यांविशेषेणसदाशिवमिति अत्रस्वीयस्वीयतिथ्यांदेवतानांदमनारोपविशेषः स्वीयतिथ्यकरणे
चैत्र्यांसर्वेषामेव इत्यन्येदाक्षिणेतरविषयमेवव्यवस्थेत्यपरे इयंमन्वादिरुक्ता मन्वादिगणनायां अत्रापिश्राद्धदा
नाद्यनंतपुण्यकरं तथाचपुण्यकरं नारदीयेसनातनः चैत्रपूर्णातुविप्रेंद्रमन्वादिःसमुदाहृता अस्यांसान्नोदकंकुं
भंप्रदद्यात्सोमतुष्टये मन्वादितिथिःश्राद्धे पराह्णव्यापिनीग्राह्या उत्तरास्नानदानादावित्युक्तेः अत्रश्राद्धमुक्तंमात्स्ये
कृतंश्राद्धंविधानेनमन्वादिषुयुगादिषु हायनानांद्विसाहस्रंपितॄणांतृप्तिदंभवेदिति इदंचाधिकमासेपिविधेयं मन्वा
दिकंचौपायिकंकुर्य्यान्मासक्षयेपिचेतिस्मृतिचंद्रिकोक्तेः ' अत्रापिपिंडदानंनास्ति तथाचकालादर्शे विषुवायनसं

कांतिमन्वादियुगादिषु विहायपिंडनिर्वापंसर्वंश्राद्धंसमाचरेदिति अकरणेप्रायश्चित्तं ऋग्विधाने त्वभुवःइति
मंत्रंशतवारंजलेजपेत् मन्त्राद्यायदान्यूनंकुरुतेनैवचापदि एवंषण्णवतिश्राद्धान्यपिनित्यानि तेषामयंसं
मः अमामनुयुगक्रांतिधृतिपातमहालयाः अन्वष्टकंचपूर्वेद्युःषण्णवत्यःप्रकीर्तिताः इयंपूर्णाचित्रायोगे महाचैत्रीभ
वतितदुक्तं ब्रह्मपुराणे मासंसंज्ञंयदाऋक्षंपौर्णमास्यांभवेत्क्वचित् महतीसातिथिःप्रोक्तास्नानदानेषुचाक्षया अक्षयत्वं
कल्पांतस्थायिफलजनकत्वं अस्यामेवचेंद्रपूजाद्यां तदुक्तंनिर्णयामृतेदेवीपुराणे चैत्रविधिप्रक्रमे पौर्णमास्यांतथा
कार्य्यासर्वकार्य्यसमृद्धयेइंद्रायसहसाध्यायकामिकंलभतेफलमिति अस्यामेवनिकुंभपूजाकार्य्यातदुक्तंहेमाद्रौ आ
दित्यपुराणे सनत्कुमारउवाच उपोष्यचचतुर्दश्यांपौर्णमास्यांहरिंभजेत्पौर्णमास्यांनिकुंभश्चपिशाचैःमहितोवलीयो
नियोद्धुंपिशाचांश्चसिकताद्वीपवासिनइति अत्रमृण्मयंतृणमयंवापिशाचंकृत्वागंधमाल्यादिभिर्ध्यात्वापूजयित्वास्व
स्तिवाचनंकृत्वा ब्राह्मणान्विसृज्यद्वितीयदिवसेसमीपस्थपर्वतमारुह्यतत्सोपकरणंविसृज्यगृहमागत्यवादित्रविशे
षैर्जनकोलाहलैश्चमहोत्सवंकृत्वाइटकाद्यैःसुवेष्टितंतृणमयंसर्पंकृत्वा सर्पापसर्पशमनंतत्रखंडगृहेगृहेपूजनीयंसुगुप्ते
नरक्षितव्यंचत्वत्सरमित्येतेनग्रंथेन महाचैत्रादीनांलक्षणं गार्ग्येणोक्तं मासंसंज्ञेचनक्षत्रेचंद्रः संपूर्णमंडलः गुरुणाया
तिसंयोगंसातिथिर्महतीस्मृतेति शंकरगीतायां देवींप्रति एकराशिगतौवालेयदागुरुनिशाकरौसापूर्णमासीमह
तीसर्वपापहरामता तथा पौर्णमासीषुसर्वासुमासर्क्षसहितासुच दत्तामिहदानानांफलंदशगुणंभवेदिति अस्यांव
राहपुराणदानमुक्तं नारदीये इत्येयंतववाराहंप्रोक्तंपापप्रणाशनंपठतांशृण्वतांचैवभगवद्भक्तिवर्धनं कांचनंगरुड
कृत्वातिलधेनुसमन्वितं लिखित्वातत्रयोदद्याच्चैत्र्यांविप्रायभक्तितः सलभेद्वैष्णवंधामदेवर्षिगणवंदितः योदानुक्र
मणीमेतांशृणोत्यपिचसादरं सोपिभक्तिंलभेद्विष्णौसंसारोच्छेदकारिणीं ॥ अथचैत्रशुक्लपक्षतिथिकृत्यान्युच्यंते ॥

तिथिकृत्येचकृष्णादिंव्रतेशुक्लादिमेवच विवाहादौचसौरादिंमासंकृत्वाविनिर्दिशेदिति ब्राह्म्यंप्रायशोनुसृत्य चैत्रशुक्लप्रतिपदमारभ्य तिथिकृत्यनिरूपणमुचितं व्रतादिनिरूपणेचैत्रशुक्लप्रतिपदमारभ्य वत्सरारंभारोग्य व्रतविधाप्राप्तिव्रह्मपूजादिव्रतकृत्यनिरूपणमुचितमतः चैत्रशुक्लादितोत्रव्रतनिरूपणारंभः सकलनिवंधकृत्संप्रदा यसिद्धःसौरेणमासेन संक्रांतेरारभ्यात्रिंशद्भिर्दिनैरंशैर्वाभुक्तैर्भवति सच पूर्वचांद्रमासस्यशुक्लादितोभवति नक दापिप्रकृतचंद्रमासशुक्लादितः प्रकृतसौरमाससंक्रांतौ भवत्यतोत्रकृष्णपक्षादाविव सौरमाससंक्रांतेः पुण्यका लादिनिर्णयः प्रपच्यते तत्रादौमीनसंक्रांतौपश्चात्षोडशघटिकाःपुण्यकालः रात्रौतुनिशीथात्प्रागूर्द्ध्वतश्चसंक्रमे पूर्वदिनपरदिनयोः परभागपूर्वभागौपुण्यकालयुक्तौ सामान्यनिर्णये नारदःयाम्यायनेस्थिरेत्वाद्याः पराः सौ म्येद्विमूर्त्तिभे मध्याविषुवतिप्रोक्ताःपुण्याःषोडशनाडिकाः याम्यायनेकर्कटे संक्रांतौस्थिरराशौ वृषसिंहवृश्चि ककुंभसंक्रांतिषु संक्रांतिकालादाद्याःपूर्वानाडिकापुण्याः सौम्यायनेमकरसंक्रांतौ द्विमूर्त्तिभेद्विस्वभावराशीनां मिथुनकन्याचापमीनराशीनांसंक्रांतिषुचपराः षोडशनाडिकापुण्याः विषुवतिमेषतुलराश्योःसंक्रमे मध्याना डिकाःकतिचित्पुण्याइतिसामन्यनिर्णयः अथचैत्रशुक्लप्रतिपदिकृत्यविशेषः पद्मपुराणे चैत्रेमासिमहावाहोपुण्या प्रतिपदापरा तस्यांयःश्वपचंस्पृष्ट्वास्नानंकुर्य्यान्नरोत्तमःनतस्यदुरितंकिंचिन्नाधयोव्याधयोनृप भवंतिकुरुशार्दूलत स्मात्स्नानंसमाचरेत् नारीनीराजनंतत्रसर्वरोगविनाशनं गोमहिष्यादियत्किंचित्सर्वंतद्भूषयेन्नृपतैलवस्त्रादिभिःसर्वा स्तोरणाधस्ततोनयेत्व्राह्मणानांततोभोज्यंकुर्य्यात्कुरुकुलोद्वहेति अत्रप्रतिपदौदयिकीग्राह्या प्रवृत्तमधुमासेतु प्रतिपद्युदितेरवावितिभविष्योत्तरवचनात् अत्रहोलिकादीपनाऽव्याहितोत्तरादिनंग्राह्यामितियुक्तं अतएवदृद्धवसिष्ठ, नपूर्वंवाविहिता वत्सरादौवसंतादौरालिराज्येतथैवच पूर्वविद्धैवकर्त्तव्याप्रतिपत्सर्वदाबुधैरिति पूर्वदिनेसूर्योदयवि

द्वाप्रतिपदित्यर्थः अत्रतैलाभ्यंगोनित्यः वत्सरादौवसंतादौबलिराज्येतथैवच तैलाभ्यगमकुर्वाणोनरकंप्रतिप
द्यते अकरणेप्रत्यवायोक्त्यातैलाभ्यंगस्यनित्यत्वंवृद्धवसिष्ठेनोक्तं अथकृष्णपक्षादिचैत्रमासस्यकृत्यंमहाभारते
चैत्रंतुनियतोमासमेकभक्तेनयःक्षिपेत् सुवर्णमणिमुक्ताढ्येकुलेमहतिजायते स्कंदपुराणे यःक्षिपेदेकभक्तेनचैत्रमासं
नरोत्तमः धनधान्यसमृद्धेतुकुलेमहतिजायते वामनपुराणेदानमप्युक्तं चैत्रेविचित्रवस्त्राणिशयनान्यासनानिच
विष्णोः प्रीत्यर्थमेतानि देयानिब्राह्मणेष्वथ अत्रदेयानिब्राह्मणेष्वितिवहुत्वंत्रित्वमात्रपरंवासितंकपिंजलान्यायात्
मत्स्यपुराणेवर्जयेच्चैत्रमासेतुयस्तुगंधानुलेपनं शक्तिंगंधभृतांदद्याद्विप्रायासितवाससी वारुणंपदमाप्नोतिदष्ट्वव्रतमि
दंस्मृतमिति गंधपूर्णांशक्तिसितवासोयुगमंतेदेयमित्युद्यापनं चैत्रादिचतुरोमासान्जलंदद्यादयाचितं व्रतांतेमणिकं
दद्यादन्नवस्त्रसमन्वितं तिलपात्रंहिरण्यंचब्रह्मलोकेमहीयते कल्पांतेभूपतिर्नूनमानदव्रतमुत्तमं वर्जयित्वामधौय
स्तुदधिक्षीरघृतेक्षुकान् दद्याद्वस्त्राणिसूक्ष्माणिरसपात्रैर्युतानिच संपूज्यविप्रमिथुनंगौरीमेप्रीयतामिति एतद्गौरीव्रतं
नामभवानीलोकदायकं भविष्यपुराणे मासिचैत्रेतुसंप्राप्तेयःकुर्यान्नक्तभोजनं शाल्यन्नंपयसायुक्तं भुंजानःसं
यतेंद्रियः भानवेपाटलांदद्याद्वैष्णवींतरुणींनृप पुष्परागमयैर्नानाहसानुयायिभिः नक्तभोजनमिदंमासव्या
पिव्रतांतेतरुण्यागाःप्रदानंरवेविष्णुदेवतत्वेन भानुलोकप्राप्तिःफलं तथाचात्रप्रपादानमुक्तंभविष्यपुराणे अती
तेफाल्गुनेमासिप्राप्तेचैत्रमहोत्सवे पुण्येह्निविप्रकथितेप्रपादानंसमारभेदिति तत्रमंत्रः आविचार्य्येततेदेयंजलं
मासचतुष्टयं तथाच प्रपादातुमशक्तेनविशेषाद्धर्मलिप्सुना प्रत्यहंधर्मघटकोवस्त्रसंवेष्टिताननः ब्राह्मणस्यगृहेदे
यःसान्नःशीतजलःशुचिः तत्रमंत्रः एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्सकलाममसंतुमनोरथाः
अनेनविधिनायस्तुधर्मकुंभंप्रयच्छति प्रपादानफलंसोपिप्राप्नोतीहनसंशयइति इयंचैत्रकृष्णप्रतिपदानारसिंह

कल्पादि अत्रापिश्राद्धदानादिमहाफलमितित्रिंशदमीकल्पास्तिथयः परमेष्ठिनः आरभंतिथयस्तासुयुक्ताःपुण्यतमा मताः तासुश्राद्धकृतेपुण्यंकल्पांतस्थापिकल्प्यत इतिनागरखंडात् अथचैत्रेतुकृष्णायांप्रतिपद्यपिसर्वदा भल्लमल्लनटानांतुद्रष्टव्यकौतुकंमहदिति चैत्रकृष्णद्वितीयायांतिथिपत्येनब्रह्मणः पूजाकार्या चैत्रकृष्णतृतीयायांसौभाग्यसुंदरीव्रतांगत्वेन रतिसंज्ञागौरीपूजा वलायाउदकप्राशयेत् चैत्रकृष्णचतुर्थी श्रावणकृष्णादिक्रमेण संकष्टचतुर्थीव्रतं तत्रगणपतिपूजनेचंद्रोदये चंद्रायार्घ्यदानं पंचगव्यप्राशनं चैत्रकृष्णपचम्यां काश्मीरादेवीपूजा देवीपुराणे चैत्रेतुकृष्णपचम्यांकाश्मीरातुरजस्वला नित्यंभवतितस्मात्तांकृत्वाशौष्णमयींस्त्रियं २ अभ्यंगवस्त्रैर्नैवेद्यैः पूजयंतिदिनत्रयं पुष्पालंकारवस्त्रैश्चगोरसवर्जयंतिच कृष्णाष्टम्यांद्विजैः स्नाप्यसर्वौषधियुतैर्जलैः स्नापयित्वा चतांदेवींगंधपुष्पैश्चपूजयेत् स्विष्टपिष्टैस्त्रिकोणैश्चतथाभक्तैश्चशालिजैतंत्रीवाद्यंसुमधुरंश्रोतव्यंचसदादरात्तान्निवेदितपुष्पंचग्राथितव्यंगृहेगृहे अत परमृतुस्नातागर्भंगृह्णातिमेदिनी चैत्रकृष्णषष्ठी स्कंदपुराणोक्तं दारिद्र्यहरषष्ठीनामतिथिः पूज्या सामान्यादेवतैरपि एकभक्तेननक्तेनतथैवायाचितेनवा उपवासेनदानेनतैलक्षारविवर्जितः अयचभगवान्देवो भास्करः सःपरद्युतिः येनशैघ्र्येणदृश्येत तद्गुह्यंकथयाम्यहं गोपनीयव्रतंदिव्यमिहलोकेसुखप्रदं यस्मिन्कृतेव्रतेचैवदारिद्र्यनभवेत्कुले षष्ठींतिथिंसमुद्दिश्यब्राह्मणस्यतुभोजनं शाल्योदनंचपयसिकृत्वाशर्करयायुतं वर्तुलंघृतसंयुक्तंघेनुकंप्रदापयेत् कुलतस्यैवयेजातायेभविष्यतिनानराः अक्षयास्तेमहात्मानोव्रतेनपुण्यपावनाः ईहितंचैवगच्छंतितद्दारिद्र्यंप्रणश्यति षष्ठीमात्रेसप्तमीभानुयोगेपद्मकाख्योयोगउक्तोनिर्णयामृते षष्ठीचसप्तमीयोगोवारेचेदंशुमालिनः योगोयंपद्मकोनामसूर्यकोटिग्रहैःसमइति अत्रस्नानदानादियत्कृततदक्षयफलदंभवतीति सर्वेष्वपिमासेष्वविशेषादयंयोगोबोद्धव्यइतिनिर्णयसिंधौअथात्रैवप

ष्टीमात्रतिथौरविवासरयोगेलोलयात्रा काशीखंडेप्रोक्ता कृतानियानिपापानिनरैःसंवत्सरादपि नश्यंतिक्षण
तस्तानिपष्ठ्यंर्कलोलदर्शनात् अत्रलोलोनामलोलार्कः तत्रवार्षिकयात्राप्युक्ता काशीखंडे सामार्गशीर्षे
कार्य्या पक्षद्वयगतासुसर्वमासषष्ठीपुतिथिपत्वेनस्कंदपूजा तदुक्तंषष्ठ्यांपूजागुहस्यचेति चैत्रकृष्णसप्तम्यां
तिथिपत्वेनसूर्यपूजाव्रतं उक्तंचसप्तम्यांभास्करस्यचेति चैत्रकृष्णाष्टम्यां काश्यांभैरवयात्रोक्ताकाशीखंडे अ
ष्टम्यांचचतुर्दश्यांरविभूमिजवासरे यात्रांचभैरवींकृत्वा नरः पापैःप्रमुच्यते तत्रैवदुर्गापूजाप्युक्ताअष्टम्यांचच
तुर्दश्यांभौमवारेविशेषतःसंपूज्यसततंकाश्यादुर्गांदुर्गार्तिनाशिनीमित्याष्टमीसामान्यकृत्यंअथभविष्योत्तरोक्तं सो
माष्टमीव्रतं अस्यसामस्यचाष्टम्यांपक्षयोरुभयोरपि विधिवच्चंद्रचूडंतुसोमंसंपूजयेन्निशि सोमं उमयासहितमित्य
र्थःपूजयेदितिशेषः इतिसोमाष्टमीव्रतं अशोकाष्टमीव्रतंचादिपुराणे भानुरुवाच अष्टमीपुचसर्वासुपूजनी
याप्यशोकिका अशोकिकाअशोकतिलका गंधमाल्यनमस्कारधूपदीपान्नसंपदा तस्मिन्नहनियोभुंक्तेनक्त
मिंदुविवर्जिते इंदुवर्जितेकृष्णपक्षे भवत्यत्रविशोकासापुत्रपौत्रसुखान्विता भविष्योत्तरोक्तंचंडिकाव्रतं यो
ब्दमेकनभुंजीतचंडिकाराधनेरतः सयातिपरमंस्थानयत्रसाचंडिकास्थितेति अथाष्टम्युद्यापनं तत्रव्रतकर्ता
अथाष्टम्यांप्रातःस्नानादि नित्यनैमित्तिकंविधाय मंडपशोभांविधाय पुनःसंध्यायांसायंसंध्यादिनिर्वर्त्य उद्या
पनसंकल्पंविधाय गणपतिपूजादिकलशस्थापनांतंकृत्वा तदुपरिताम्रपात्रेरक्तवस्त्रोपरिमंडूकादिपरतत्वांतं
पीठंसंपूज्य सौवर्णीमिष्टदेवप्रतिमांसांगांनीराजनांतोपचारैः संपूज्यरात्रौजागरणंकृत्वानवम्यांपुनःपूजयित्वा
आज्येनवैदिकमूलमंत्रेणवाष्टोत्तरशतसंख्ययाहोमंविधाय आचार्यायगोसर्वादिसहितं देवदत्त्वादंपतीकुमारी
श्चसंभोज्यस्वयमपिभुंजीत चैत्रकृष्णाष्टम्यांविष्णुधर्मोत्तरोक्तंसंतानाष्टमीव्रतम् हेमाद्रौ कृष्णाष्टम्यांचैत्रमासेस्नातो

नियतमानसइत्यादितत्रकृष्णंदेवकींचाभ्यर्च्यपोष्योत्तरदिनेपारणंकुर्यात् इतिसंतानाष्टमीव्रतं इयमेवशीतलाष्ट
मी स्कंदउवाच भगवन्शीतलास्तोत्रंवददेव्यामहत्फलम् अतीवभक्तिर्मेजाताव्रतंवापिव्रवीहिमे ईश्वरउवा
च साधुवत्समहाभागयत्पृच्छसिव्रतोत्तमम् कथयामियथापूर्वंपार्वत्यात्वत्कृतेकृतम् सर्वोपद्रवनाशायसर्वरोगो
पशांतये चैत्रमासिसितेपक्षेयाष्टमीशीतलाह्वया तामारभ्यप्रकर्त्तव्ययावन्मासचतुष्टयम् पतिपुत्रसमेताभि
र्योषिद्भिः श्रद्धयान्वितं विधानशृणुमेवत्सयेनसम्यक्प्रपूजयेत् सुशीतलजलैःस्नात्वास्नानेगोमयलेपिते सु
गंधैःशीतलैस्तोयैः कलशलक्षणान्वितं आपूर्यविधिवत्तंचस्थापयेत्तत्रशीतलां लिखित्वावाह्यतांमूर्तिंपूजयेद्वि
धिनामुना पुष्पचंदनकर्पूरवासितंशीतलंजलम् पाद्यार्घ्याचमनीयंचशीतलेप्रतिगृह्यतांसर्वसंतापशमनंसुगंधि
मनसःप्रियम् गृह्यतांचंदनंदेविमत्कुलंशीतलंकुरु भदन खरयानसमारूढेनिंबपल्लवधारिणि शीतलेकुरुक
ल्याणंपूजेयंप्रतिगृह्यताम् सपूज्यविधिवद्देवींशृणुयाच्छीतलाष्टकम् पूर्वमय्येवसंप्रोक्तंतच्छृणुत्वंसमाहितः ओंन
मामिशीतलांदेवींरासभस्थांदिगंबरां मार्जनीकलशोपेतांशूर्पालंकृतमस्तकाम् स्कंदउवाच भगवन्देवदेवेश
शीतलास्तोत्रमुत्तमं वक्तुमर्हस्यशेषेणविस्फोटकभयापहम् ईश्वरउवाच वंदेहशीतलांदेवींसर्वरोगभयापहां
यामासाद्यनिवर्त्तेतविस्फोटकभयंमहत् शीतलेशीतलेचेतियोब्रूयाद्दाहपीडितः विस्फोटकाभयंपापंक्षिप्रंतस्यप्र
णश्यति यस्त्वामुदकमध्येतुध्यात्वापूजयतेनरः विस्फोटकभयंघोरंकुलेतस्यनजायते शीतलेज्वरदग्धस्यपू
तिगंधहतस्यच प्रणष्टचक्षुषःपुंसस्त्वामाहुर्जीवनौषधम् शीतलेतनुजान्रोगान्नृणांहरसिदुस्त्यजान् विस्फोट
कविशीर्णानांत्वमेकामृतवर्षिणी गलगंडमहारोगायेचान्येदारुणान्नृणां त्वदनुध्यानमात्रेणशीतलेयांतिसंक्ष
यम् नमंत्रंनौषधंकिंचित्पापरोगस्यविद्यते त्वमेकाशीतलेधात्रीनान्यांपश्यामिदेवताम् मृणालतंतुसदृशांना

भिहन्मध्यसंस्थिताम् । यस्त्वांचिंतयेतेदेवितस्यमृत्युर्नजायते । शीतलेत्वंजगन्माताशीतलेत्वंजगत्पिता शीत
लेत्वंजगद्धात्रीशीतलायैनमोनमः । शीतलाष्टकमेवेदंनदेयंयस्यकस्यचित् दातव्यंहिसदातस्मै श्रद्धाभक्तियुता
यच श्रोतव्यंपठितव्यंच श्रद्धाभक्तिसमन्वितैः । उपसर्गविनाशायपरंस्वस्त्ययनंमहत् रासभोगर्दभश्चैवखरोवै
शाखदाहनः शीतलावाहनंचैवदूर्वाकंदननंदनः एतानिखरनामानिशीतलाग्रेचयःपठेत् । तस्यदेहेचगेहेच
शीतलारुङ्नजायते शीतलाष्टकम् ॥ ततक्षमाप्यतांदेवींदद्याद्विप्रायदक्षिणाम् सचयत्तेनतोयेनस्नानमाचरेत्पति
पुत्रकम् भोजनंयत्प्रकर्तव्यंतच्छृणुत्वंषडानन भक्षयेद्वटकान्पूपांश्चैत्रेवैशीतलान्वितान् वैशाखेसक्तुकापाय
साज्यशर्करयान्वितम् ज्येष्ठेशष्कुलिका शीतापूरिकाश्चतथाविधाः आषाढेपायसंसाज्यंसितशर्करयान्वितं
एतन्मासविधानंतेकथितंपार्वतीसुत एवयाकुरुतेनारीव्रतवर्षचतुष्टयम् ततउद्यापनविधिर्वांछितफलमाप्नुयात्
तत्कुलेनोपसर्पंतिगलगंडग्रहादयः नचव्याधिभयंतस्यपतिपौत्रसमन्विता पतिसौख्ययुतासाध्वीचिरकालं
प्रमोदते इतिस्कंदपुराणेशीतलास्तोत्रंसमाप्तम् अथचैत्रशुक्लनवम्यां वाराहजयंतीव्रतं चैत्रशुक्लनवम्यांतु
हरिर्वाराहरूपधृगितिपुराणोक्तेः अत्रैवदशावतारजयंत्योऽन्याश्चापिनिर्णीयंते पुराणसमुच्चये मत्स्योभूद्धुतभुक्
दिनेमधुसितेकूर्मोविधौमाधवे वाराहोगिरिजासुतेनभसियद्भूतेसितेमाधवे सिंहोभाद्रपदेसितेहरितिथौश्रावा
मनोमाधवे रामोगौरितिथावतःपरमभूद्रामोनवम्यांमधौ कृष्णाष्टम्यांनभसितपरेवाश्विनेयद्दशम्यां बुद्धःका
लिकर्नभसिसमभूच्छुक्लषष्ठ्यांक्रमेण अथैषांप्रादुर्भावादिकालाः ॥ अह्नोमध्येचाजनीरामरामौ मत्स्यःक्रोडश्च
पराह्णविभागे कूर्मः सिंहोबौद्धकल्कीचसायं कृष्णोरात्रेःकालसाम्येचपूर्वे इतिअत्रकेचित्स्फुटान्श्लोकान्प
ठंति चैत्रेतुशुक्लापंचम्यांभगवान्मीनरूपधृक् ॥ ज्येष्ठेतुशुक्लद्वादश्यांकूर्मरूपधरोहरिः ॥ चैत्रेशुक्लनवम्यांतुहरिः

वाराहरूपभृत् नारसिंहश्चतुर्दश्यांवैशाखेशुक्लपक्षके । राधशुक्लतृतीयायांरामोभार्गवनामधृक् चैत्रशुक्ल
नवम्यांतुरामोदशरथात्मजः नभस्येतुतृतीयायांवलभद्रोभवद्धरिः श्रावणेबहुलेष्टम्यांकृष्णोभूल्लोकरक्षकः
ज्येष्ठशुक्लतृतीयायांबुद्धकल्कीभविष्यत कोंकणास्तुवाराहपुराणत्वेनवाक्यानिपठंति आषाढशुक्लपक्षेतुएकाद
श्यांमहातिथौ जयंतीमत्स्यनाम्नीतितस्यांकार्यमुपोषणं नभोमासितृतीयायांहरिःकमठरूपभृत् वैशाखस्य
चतुर्दश्यांनृसिंह समपद्यत वैशाखेतुतृतीयायांशुक्लपक्षेभृगूद्वहः मासिभाद्रपदेशुक्लैकादश्यांवामनोहरिः
चैत्रेनवम्यांरामोभूत्कौशल्यायांपरःपुमान् श्रावणेबहुलेष्टम्यांवासुदेवोजनार्दन पौषेतुशुक्लसप्तम्यांकुर्याद्बुद्ध
स्यपूजनं माघशुक्लतृतीयायांकल्किनः एतेषांपूजाकालनियमः प्रात प्रातस्तुमध्यान्हेसायंसायंतथानिशि
मध्यान्हेमध्यरात्रेचसायंप्रातरनुक्रमादिति तत्रसमूलत्वनिषेधविकल्पभेदेनव्यवस्थाद्रष्टव्या एताश्चतत्तदुपा
सकानांनित्याः अन्येषांतुकाम्याः एषांविशेषमग्रेवक्ष्यामः धरणीव्रतेपुस्फुटीभविष्यति चैत्रशुक्लदशम्यातिथि
पत्वेनधर्मराजपूजाव्रत देवीपुराणे धर्मराजंदशम्यांतुपूजयित्वासुगंधिकैः विगताशिर्निशतंकइहचातेपरंपदमिति
चैत्रशुक्लैकादशी पापमोचनिका भविष्योत्तरपुराणे मांधातोवाच आत्मनश्चाहितार्थायल्लोकानांचहितायच
पृच्छामिलोमशाहत्वांसदयंमुनिसत्तम चैत्रस्यप्रथमेपक्षेकिंनामैकादशीभवेत् किंनामकोविधिस्तस्याः कथ-
यस्वममाग्रतः लोमशउवाच चैत्रस्यप्रथमेपक्षेनाम्नावैपापमोचिनी शृणुराजन्कथांदिव्यांपवित्रांपापनाशिनीं
पुराचैत्ररथंनामवनंकोकिलनादितं मयूरनादसुभगंकिन्नरीभिर्विराजितं देवकन्यास्तुतत्रैवनिवसंतिमनोरथाः न
नरपुण्यदंकिंचिद्वनंचैत्ररथाद्वनात् तस्मिन्वनेहिमुनयस्तपंतिपरमंतपः तत्रासीन्मुनिशार्दूलोमेधावीनामनामना
तपोरतंमुनिश्रेष्ठंमंजुघोषाभिधाप्सराः इंद्रेणप्रेषितातत्रतत्तपोहंतुमायया तस्यशापभयाद्भीताक्रोशमात्रेचसाजगौ

कामोपिविजयार्थायाशिवभक्तंमुनिंतदा जघानकुसुमैर्वाणैः। शिववैरादनारत तस्याभ्रुवौधनुःकृत्वातत्पक्ष्माणिगुणं तथा नयनाभ्यांतुवाणाभ्यांजघानमदनोमुनि गायंतींतांपुरोदृष्ट्वामेधावीमुनिपुंगव. कामवाणवशंप्राप्त शंभुनैव शशांकसः मंजुघोषापितदृष्ट्वासुंदरंमुनिपुंगवं कामवाणाहतमनामंदंमंदंतदाजगौ मंजुघोषानमागत्यपुरोमेधाविनमुनि-मोहयामासवामोरूहावभावै.शुचिस्मिता। अथसंस्थाप्यसावीणापरिरंभमनोदधौ वल्लीवपार्श्ववृक्षेणामिलितामुनिनातदा-मेधावीचतयारेमेसतयामंजुघोषया तयासार्धंगतस्तत्रयत्रासीद्विजनंवनं शिवतत्वंगतंतस्यकामात्तस्यानुरागिणः रात्रिंदिनतयासाकस्वाश्रमेरमातस्मिसः एवगतोमहान् कालस्तस्यमेधाविनोमुने मजुघोषोत्कटोवाचरमंततमुनीश्वर आज्ञांमेदेहिमेधाविन्स्वर्गस्यगमनायभो महान्कालोव्यतीतोमेत्वत्समीपेमुनीश्वर मुनिरुवाच अद्यैवत्वंसमायाताप्रत्यूषायांपरानने प्रात संध्यासमायातितावत्त्वंसुस्थिराभव इतिश्रुत्वामुनेर्वाक्यभयभीतातदाभवत् पुनःसारमयासमुनिंमेधाविनंमुदामुनेःशापभयाद्भीतावहुकालंचसारमत् पंचाशत्पचवर्षाणिनवमासंदिनत्रयं रमित्वामंजुघोषासामुनिंप्रोवाचवैशनैःमंजुघोषोवाच प्रसादकुरुमेब्रह्मन्नमादेशःप्रदीयतां त्वत्प्रसादान्मुनिश्रेष्टस्वर्गंयास्यामिसत्वरं मुनिरुवाच प्रात कालःसमायातिशृणुष्ववचनमम प्रात संध्यायावदहंकुर्वेतावत्स्थिराभव इतिवाक्यंमुनेः श्रुत्वामंजुघोषाभयावह हसित्वासातदाविप्रंप्रत्युवाचशुचिस्मिता मंजुघोषोवाच किंप्रमाणंचविप्रर्षेतवसंध्याभविष्यति मयिप्रसादंकृत्वातुपश्चात्सर्वंविचार्यतां इतिश्रुत्वावचस्तस्याविस्मयोत्फुल्ललोचन. सुचिरंमनसिध्यात्वाविचारमकरोन्मुनि. सप्ताशीतिश्ववर्षाणिजातानिविफलानिमे ततश्चुकोपतस्यैसमुनिः क्रोधारुणेक्षणःनेत्राभ्यांतस्यविप्रर्षेःपेतुर्वन्हिकणाभृशं। एवंविचारयामासमेधावीमुनिपुंगव.चिरार्जितंतपोहत्तप.दकप्रभयानया काष्ठवद्धस्मतांनीतकागतिर्मेभविष्यति स्फुरदोष्टप्रदोरोषान्प्रत्युवाचाकुलेंद्रियः मंजुघोषाऐत्रमेशापाद्

भूयास्त्वंवैपिशाचिनी धिक्कांपापेदुराचारांमत्तपोनाशितंत्वया मुनेःशापेनसात्रस्ताविनयावनताब्रवीत् प्रसादंकुरु मेब्रह्मन्शापांतंचवदस्वमे सतांसंगेमुनिश्रेष्ठनैतद्युक्तंकदाचन त्वयासहमयाब्रह्मन्नीताश्चवहवःसमाः मेधाव्युवाच मंजुघोषेममसुखात्शृणुशापांतमात्मनः चैत्रमास्यासितेपक्षेपिशाचत्वविनाशिनी पापमोचनिकानामैकादशीपापहारिणी यदासायातिचोपोष्यातवनश्येत्पिशाचता इत्युक्त्वातांमुनिश्रेष्ठःआजगामनिजाश्रमं आयांतंतंसुतंदृष्ट्वाच्यवनोवाक्यमब्रवीत् यत्तेपापंकृतंवत्सजानेतन्नात्रसंशयः किमर्थंयत्कृतंपुत्रत्वयासीत्पुण्यसंचयः इतिवाक्यंपितुःश्रुत्वामेधावीवाक्यमब्रवीत् मेधाव्युवाच वहुपापंकृतंतातह्यप्सरोरमतामया यत्कष्टेनार्जितंपुण्यंतत्सर्वंमेक्षयंगतं उपायःकथ्यतांतत्रमुच्येयंयेनपापतः च्यवनउवाच चैत्रमास्यसितेपक्षेनाम्नावैपापमोचनी कर्त्तव्यासात्वयायत्नात्ततोनश्यातितेघ्ययं इतिश्रुत्वापितुर्वाक्यंकृतंव्रतमनुत्तमं कृतंपापंमुनेस्तस्यतत्क्षणात्प्रलयंगतं शापेनमंजुघोषापिदिवसावहवोगताः नष्टंपापंचतस्यापिपापमोचनिकाव्रतात् दिव्यरूपधराजातागता स्वर्गवराप्सरा लोमशउवाच एवनन्योपियःकश्चित्पापमोचनिकाव्रतं कुर्यात्तस्यतुराजेंद्रपापंनश्यतितत्क्षणात् कामदात्विहलोकेसापरलोकेचमोक्षदा माहात्म्यश्रवणादस्यागोसहस्रफलंलभेत् ब्रह्महाचैवगोघ्नश्चसुरापोगुरुतल्पगः स्वर्णचौरश्चपूतःस्यात्पापमोचनिकाव्रतात् ॥ इतिभविष्योत्तरेचैत्रकृष्णापापमोचनिकैकादशीमाहात्म्यम् चैत्रकृष्णाद्वादशी दर्शांतमासत्वेनवैराजकल्पादिःअत्रापिश्राद्धाद्यनंतफलंभवति इतिकल्पादितिथिनिर्णयः चैत्रशुक्लत्रयोदशी शतभिषानक्षत्रयुतावारुणीतत्रगंगास्नानमुक्तं स्कांदे वारुणेनसमयुक्तामधौकृष्णात्रयोदशीगंगायां यदिलभ्येतसूर्यग्रहशतैःसमेतिइयमेवशनिवारशतभिषानक्षत्रोपेतामहावारुणी तथाचोक्तंतत्रैव शनिवारसमायुक्तासामहावारुणीमता गंगायांयदिलभ्येतकोटिसूर्यग्रहैःसमेति इयमपिशुभयोगयुतामहावारुणीसंज्ञा तदप्यु

कर्तव्यं शुभयोगसमायुक्ताशनौशताभिषायदि महामहेतिविख्यातात्रिकोटिकुलमुद्धरेत् इति अथास्यांवारुणीपर्व योगस्यवरुणदैवत्यत्वात्रवारुणमंत्रैर्होमदानादिकार्य्यंतस्मादत्रसप्तसागरदानंकर्तव्यमुक्तंमत्स्यपुराणे अथातःसंप्र वक्ष्यामिमहादानमनुत्तमं सप्तसागरकंनामसर्वपापप्रणाशनं पुण्यंदिनमथासाद्यकृत्वाब्राह्मणवाचनं तुलापु रुषवत्कुर्य्याल्लोकेशावाहनंततः ऋत्विङ्मंडपसंभारभूषणाछादनादिकं कारयेत्सप्तकुंडानिकांचनानिविचक्षणः प्रादेशमात्राणितथारत्निमात्राणिवैपुनः कुर्य्यात्सप्तपलादूर्द्ध्वमासहस्राच्चशक्तितःसंस्थाप्यानिचसर्वाणिकृष्णा जिनितिलोपरि कृष्णाजिनाभावेसकुशवस्त्रातिलोपरिस्थाप्यानि प्रथमंकारयेत्कुंडंलवणेनविचक्षणः द्वितीयंपय सातद्वत्तृतीयंसर्पिषाततः चतुर्थंतुगुडेनैवदध्नापंचममेवच षष्ठंशर्करयातद्वत्सप्तमंतीर्थवारिणा स्थापयेल्लवणस्यांतं ब्रह्माणंकांचनंशुभं केशवक्षीरमध्येतुघृतमध्येमहेश्वरं भास्करंगुडमध्येतुदधिमध्येसुराधिपं शर्करायांन्यसेल्लक्ष्मीं जलमध्येचपार्वतींसर्वेषुसर्वरत्नानिधान्यानिचसमंततः तुलापुरुषवच्छेषमत्रापिपरिकल्पयेत् ततोवारुणहोमांते स्नापितोद्विजपुंगवैः त्रिःप्रदक्षिणमावृत्यमंत्रानेतानुदीरयेत् मंत्राःप्रयोगेज्ञेयाः इतिददातिरसामृतसंयुतान् शुचि रविस्मयसागरान् अखिलकांचनवर्णमयानसौपदमपैतिहरेरमराचिंतः १ सकलपापविधौतविराजितः पितृपितामहपुत्रकलत्रकं नरलोकसमाकुलमप्ययंझटितिनेतुमलंशिवमंदिरमिति अथदानकर्तावर्पदिनात्पूर्व दिनेपर्वदिनेवाद्यो मद्यमहामहावारुणीपर्वदिनेवात्र‌आत्मनः सकलकलुषक्षयसंभावितनरकानिवासिपितृ पितामहपुत्रकलत्रादि स्वसगोत्रजत्रिकोटिकुलशिवमंदिरप्राप्ति पूर्वकरामतत्त्वविशिष्टस्वीयहरिपदप्राप्ति कामः सप्तसागरदानंकरिष्ये ततोगोविंदपूजादिगुरुविनियोगांतं-प्रकृतवत्कृत्वाक्रमासादितसकुशकृष्णाजि नवस्त्रादिपुतिलद्रोणेलवणदुग्धघृतगुडदधि शर्करातीर्थवारिभिः-- कांचनसप्तकुंडानि -सप्तकलशान्वावारुण

कलशसहितान्संस्थाप्यतेषुब्रह्मकेशवमहेश्वरभास्करसुराधिपलक्ष्मी पार्वतीमूर्तीःस्थाप्यपरितोदशधान्यानिवि तानकंचोपरिकृत्यब्रह्मादीन्सपरिवारान्संपूजयेच्च तत कुडसमीपस्थकलशस्थापनवनस्पतिहोमांतकुंडेपुअष्टावि शत्यष्टोत्तरशताष्टसहस्रान्यतमसंख्ययास्वशाखीयैर्वारुणमंत्रैस्तिलान्हुत्वास्विष्टकृदादिपूर्णाहुत्यंतमभिषेकःतत्र कृतंकृत्वाभिषेकांतेसप्तसागरांस्त्रिः प्रक्रम्यमंत्रान्पठेत् नमोवःसर्वसत्वानामाधारेभ्यःसनातनाः जन्तूनांप्राणदे भ्यश्चसागरेभ्योनमोनमः क्षीरोदकाज्यदधिमाधुरलावणेक्षुधारामृतेनभुवनत्रयजीवसघान् आनंदयतिवसुभिश्च यतोभवंतस्तस्मान्ममाप्यघविघातमलंविदग्धं यस्मात्समस्तभुवनेषुभवतएवतीर्थामरासुरनिबद्धमणिप्रदानं पा पक्षयामृतविलेपनभूषणायलोकस्यविश्रुतितदस्तुममापिलक्ष्मीः इत्यनुमंत्र्य पुष्पाणिनिक्षिप्यनत्वाचवेदीपश्चि मतउपविश्य ॐतत्सत् अद्येत्यादिपूर्वोक्तदेशकालादिकीर्तनांते सकलकलुषक्षयेत्यादिनहासंकल्पमुक्त्वाइमानि वारुणदैवतलवणदुग्धघृतगुडदधिशर्करातीर्थवारिभिः पूरितान्कांचनादिकुंडकलशादिरूपान्सप्तसागरान् विष्णु दैवतान्तुलापुरुषोक्तमत्स्यपुराणोक्तव्यवस्थयानानानामगोत्रेभ्योब्राह्मणेभ्योयुष्मभ्यमहंसंप्रददेनममेतिदानांतेसु वर्णदक्षिणांदद्यात् स्वल्पेष्वेकाग्निविधिरितिकेचित् सप्तकलशदानमाहृत्यायथासंख्यमपिस्वशक्त्याकार्यंनित्या हुः अत्राशक्तौश्रीगोविंदगंगावरुणमूर्तित्रयंकलशत्रयसहितयथाशक्तिपूजांतेदेयमित्यावश्यकंदानम् ततःपुण्या हवाचनग्रहादिविसर्जनब्राह्मणादियथाशक्तिकुर्यादितिवारुणीपर्वानुष्ठेयंसप्तसागरदानम् चैत्रकृष्णचतुर्दशी पिशा चमोचनी पुराणसमुच्चये चैत्रकृष्णचतुर्दश्यांय स्नायाच्छिवसन्निधौ गंगायांचविशेषेणनसप्रेतोधिजायते चैत्र शुक्लचतुर्दश्यामंगारकदिनंयदि पिशाचत्वंपुनर्नस्याद्गंगायांस्नानभोजनात् भोजनंचात्रजलपानं अत्रान्यदपि कृत्यं तत्रैव धवलितकलशान्यस्तारक्तपताकान्वितासुहाभवने चैत्रासितभूतदिनेपापरुजंदूरतोधत्ते अत्रब्रह्मपुरा

ए तस्यांनिशायांकर्त्तव्योनरैर्नित्यंप्रजागरः शंभुःपूज्योनिकुंभश्चापिशाचेभ्योवलिंहरेत् मत्स्यमांसानिभूरीणित
धानापोदनशुभं वृक्षमूलेषुगोष्टेपुतथाशून्यगृहेपुच चतुष्पथेपुरथ्यासुचत्वरेपुनदीपुच देवालयेपुपुण्येपुराजमा
र्गेपुनित्यशः तस्यांनिशायांरक्ष्याश्चपिशाचेभ्योथवालकाः द्रष्टव्यंपुंश्चलीनृत्यंनकुर्यात्स्त्रीनिषेवणमिति चैत्राम
वास्यायांकृत्यविशेषस्तत्रैव अमायांचैवचैत्रस्यसारमेयैश्चकाश्यपैः वासुदेवाद्दरोलब्धःप्रभूतंभोजनंत्विति तस्मा
त्तत्रपितृन्देवांस्तर्पयित्वाद्विजैःसह शुनामन्नंप्रभूतंचपश्चाद्देयंयथेप्सितं तत्रमंत्रः श्वानौद्वौश्यावशवलौवैवस्वत
कुलोद्भवौ ताभ्यामन्नंप्रदास्यामिस्यातामेतावहिंसकाविति इयममावास्यामन्वादि फाल्गुनस्यत्वमावास्येतिम
न्वादिगणात् साचश्राद्धे अपराह्णिकी ग्राह्येतिदर्शितमासत्वेनेयंफाल्गुनस्योक्ता अथामायांयोगविशेषेण कृ
त्यविशेषोहेमाद्रौ शातातपेनोक्तः अमायांतुभवेद्वारोयदाभूमिसुतस्यवै जान्हवीस्नानमात्रेणगोसहस्रफललभेत्
इतिभौमावास्या महाभारते अमासोमेचभौमेचगुरुवारेयदाभवेत् तत्पर्वपुष्करंनामसूर्यपर्वशताधिकं इतिसोम
भौमगुरुवारेष्वमायोगः तथाशनिवारयोगेप्यमायां फलाधिक्यमुक्त स्कंदपुराणे अवंतीमाहात्म्ये शनिवारे
यदामावैजायतेसर्वकामदा तस्यांस्नानंतथादानंश्राद्धंचैवचकारयेत् तस्यहस्तगतालक्ष्मीर्जायतेसर्वदाभुवीति
अथामायांविशाखानुराधाऋक्षयोगेनश्राद्धकरणफलमुक्तं अमावास्यायदामैत्रविशाखाऋक्षयोगिनी श्राद्धेपितृ
गणास्तृप्तिंतदाप्नोत्यष्टवार्षिकी अन्यच्च अमावास्यायदापुष्परौद्रर्क्षेवापुनर्वसौ द्वादशाब्दंतदातृप्तिंप्रयांतिपि
तरोर्चिताः अत्रैवान्यदप्युक्तंवासवाजैकपादर्क्षेपितृणांतृप्तिमिच्छतां वारुणेचाप्यदैवत्येदेवानामपिदुर्लभा अमा
इतिशेषसंबंधः मैत्रमनुराधारौद्रर्क्षमार्द्रा वासवंधनिष्ठा अजैकपात् पूर्वाभाद्रपदावारुणंशतभिषा आप्यंपू
र्वाषाढा इतिनक्षत्रयोगविशेषामावास्या अथामायांपारिभाषिकयोगविशेषेणव्यतीपातयोगउक्तोभारते

श्रवणाश्विधनिष्टार्द्रानागदैवतमस्तके: अमाचेद्रविवारेणव्यतीपातःसउच्यते अत्रदत्तंहुतंजप्तंसर्वंकोटिगुणंभवेत्
नागदैवतमश्लेषामस्तकंशीर्षकं सोमावारादियुता अमावास्यासप्तम्यष्टम्यः सूर्यग्रहसमानाष्टकाः तदुक्तं शंखेन
अमावास्यातुसोमेनसप्तमीभानुनासह चतुर्थीभौमपुत्रेणसोमपुत्रेणचाष्टमी चतस्रस्तिथयोह्येताःसूर्यग्रहणसन्नि
भाः स्नानंदानंतथाश्राद्धंसर्वंतत्राक्षयंभवेदिति इयंसोमवारादियुता अमाद्यास्तिथयः कपिलधारातीर्थेश्राद्धेत्वा
द्यावतिप्रशस्तातदुक्तंकाशीखंडे अमासोमसमायोगेश्राद्धंयद्यत्रलभ्यते तीर्थेकपिलधारेस्मिन्गयायापुष्करेण
किं दिव्यंतरिक्षभौमानियानितीर्थानिसर्वतः तान्यत्रनिवसिष्यंतिदर्शेसोमदिनान्विते अयंचयोगोदैवशस्तः
इतिशिष्टाः अथसोमवत्यमावास्याव्रतकथाभविष्ये युधिष्ठिरउवाच हतेषुकुरुमुख्येषुभीमसेनेनकोपिता तथाप
रेषुसर्वेषुहतेषुयुधिजिष्णुना दुर्योधनकुमंत्रेणजातोऽस्माकंकुलक्षयः नसंतिभुविभूपालावालवृद्धातुराहते अवशि
ष्टावयंपंचवंशेभारतसंज्ञके एकातपत्रमापिमेनराज्यंभुविरोचते दृष्ट्वासंततिविच्छेदं संतापोहृदयेनिशं जीवितेपि
जुगुप्सामेनचांगेपुरतिःक्वचित् अश्वत्थाम्नात्रिनिर्दग्धउत्तरागर्भसंभव अतोमेद्विगुणदुःखंपिंडविच्छेददर्शनात्
किंकरोमिकगच्छामिपितामहत्विहाधुना येनसंपद्यतेसद्यःसंततिश्चिरजीविनी भीष्मउवाच शृणुराजन्प्रवक्ष्यामि
व्रतानामुत्तमव्रतं यस्याचरणमात्रेणसंततिश्चिरजीविनी अमावास्यायदापार्थसोमवारयुताभवेत् तस्यामश्व
त्थमागत्यपूजयित्वाजनार्दनं अष्टोत्तरशतंकुर्यात्तस्मिन्वृक्षेप्रदक्षिणाः तावत्संख्यान्युपादायरत्नधातुफलानि
च व्रतराजमिदंराजन्विष्णुप्रीतिकरंपरं उत्तराकारयप्राज्ञगर्भेजीवमवाप्स्यति भविष्यतिगुणीपुत्रस्त्रिपुलोकेषुवि
श्रुतः श्रुत्वापितामहवचःप्रत्युवाचयुधिष्ठिरः युधिष्ठिरउवाच तद्व्रतंव्रतराजाख्यंविस्तरेणप्रकाशय केनप्रकाशि
तंमर्त्येकेनेदंचकृतंविभो भीष्मउवाच अस्तियासर्वविख्याताकांचीसंज्ञामहापुरी ब्रह्मक्षत्रियविट्शूद्रैःस्वकर्मनिर

तेध्रंता रजताचलसंकाशैःसौधशृंगैर्विराजिता सुवेषेनांगरजनैर्नारीभिरुशोभिता रूपचातुर्य्यवर्य्याभिर्वैश्याभि.
समलंकृता अलकेवकुवेरस्यशक्रस्येवामरावती तेजोवतीवरत्नाढ्यापावकस्यमहापुरी तत्रराजारत्नसेनोवभूवा
मितविक्रमः तस्मिन्शासतिभूचक्रंऋद्धमासीदतीवहि तस्यदेशेवसद्विप्रोवेदवेदांगपारगः देवस्वामीतिनाम्नावै
देवतातिथिपूजकः तस्यभार्यातुविप्रस्यनाम्नाधनवतीशुभा यथार्थनामधेयासालक्ष्मीरिवसाविग्रहा तस्यां
सजनयामाससप्तपुत्रान्शुभान्वितान् एकादुहितरंरम्यांनाम्नागुणवतीन्नृप कृतदारश्चतेपुत्राविहरंति
यथासुखंकन्याकुमारिकाचासीदनुरूपप्रियार्थिनी अत्रांतरेद्विज.कश्चिद्भिक्षार्थीसमुपागतः दीप्यमान
स्वतेजोभिर्मूर्त्तिमानिवपावकः द्वारदेशमथागत्यप्रयुयोजाशिषंतदा देवस्वामिस्नुषाः सप्तसमुत्थायससं
भ्रमं भिक्षांप्रत्येकमानीयददुस्तस्मैद्विजन्मने अवैधव्याशिषः प्रादात्ताभ्यः सौभाग्यसंपदांततो
गुणवतीमात्राप्रहितासहभिक्षया विप्रायभिक्षांप्रददौकृत्वापादाभिवंदनं आशिषंप्रयुजेविप्र शुभेधर्मवती
भव स्ववैलक्ष्यंगुणवतीश्रुत्वाप्रत्याययौगृहं मात्रेनिवेदयामासआशिषंतेनयोजितां श्रुत्वाधनवतीपुत्रींकरेधृ
त्वासमाययौ प्रणताभ्यांस्नुषाभ्यामेत्वयादत्तावराशिषः अवैधव्यकरा.पुत्रसुखसौभाग्यदायकाः सुतायांप्र
णतायांचविपरीतत्वयोदितं भद्रेधर्मवतीभूयाइत्युदीर्यपुन.पुनः आशीःप्रयुक्ताविप्रैकारणंवदसत्वरं द्विजउ
वाच धन्यासित्वंधनवतिप्रख्यातचरिताभुवि यथायोग्याप्रयुक्तेयंमयाशीर्दुहितुस्तव इयंसप्तपदीमध्येवैध
व्यंसमवाप्स्यति धर्माचरणमत्यर्थंकर्त्तव्यंपरमेतया यदागताभवेत्सोमागृहेचेत्तर्हिसुंदरि तस्या.पूजनमात्रे
णभवेद्वैधव्यनाशनं अतोमयाशीर्दत्तेयंशुभेधर्मवतीभव श्रुत्वाधनवतीजाताचिंताकुलितलोचना उवाचवचनं
दीनंप्रणिपत्यपुन पुनः 'ग्नवत्युवाच सोमागमनमात्रेणभवेद्वैधव्यभंजन कासासोमात्वयाप्रोक्ताकाजातिः कुत्र

संस्थितिः तस्यावदमहाभागनकालोविस्तरस्यमे द्विजउवाच सासोमारजकीजातिः स्थितिस्तस्याश्च
सिंहले सायदायातितेवेश्मतदावैधव्यभंजनं इत्युक्त्वाब्राह्मणोन्यत्रगतोभिक्षाप्रतीक्षया धनवत्यपिपुत्रेभ्यः
प्रोवाचवचनंतदा धनवत्युवाच इयंतुलैलितापुत्राःस्वसागुणवतीशुभा सोमानयनमात्रेणभवेद्वैधव्यभंजनं
अस्तियस्यपितुर्भक्तिर्मातुर्वचनगौरवं सप्रयातुसहस्वस्रासोमामानायितुद्रुतं पुत्राऊचुः ज्ञातमातस्तवस्वांतं
पुत्रीस्नेहवशंवदं यतोदेशांतरंपुत्रान्प्रस्थापयसिदुस्तरं अंतरादुस्तरःसिंधुःशतयोजनविस्तरः अशक्यंगम
नंतत्रनक्षमागमनेवयं देवस्वाम्युवाच अपुत्रःसप्तभिःपुत्रैरहंयास्यामिसिंहलं आनयिष्यामितांसोमांपुत्रीवैध
व्यनाशिनीं एवंवादिनिसक्रोधेदेवस्वामिनितत्क्षणे शिवस्वामीकनिष्ठश्चपुत्रःप्रोवाचसन्नतः मैवंवदमहाभा
गरोपावेशवशंगतः मयितिष्ठतिकःशक्तोगंतुंद्वीपंहिसिंहलं सयुक्तः सहसोत्थायप्रणम्याशिरसागुरुं प्रतस्थेसहितः
स्वस्त्राद्वीपंसिंहलसंज्ञकं कियद्भिर्दिवसैर्गत्वातीरंप्राप्यसरित्पतेः तंततुंनवुधितत्रप्रयासमकरोद्द्विजः सदद
र्शसविस्तीर्णन्यग्रोधद्रुममंतिके तत्कोटरेसुखासीनागृध्रराजसुतास्त्रयः तत्पादपेततःस्थित्वाताभ्यांनीतंतुतादि
नं शावकानांकृतेमांसंगृहीत्वाशिशुभोजनं भोजनंदत्तमपितैर्भुंजतेस्मनशावकाः पप्रच्छचाग्रतोगृध्रःशावका
न्स्वान्हिविह्वलः गृध्रउवाच कथंनभुंजतेपुत्राभवंतःक्षुधिताअपि आनीतंकोमलंमांसंभवद्योग्यमिदंमया शाव
काऊचुः एतद्वृक्षतलेतातमानवौचात्रतिष्ठतः अस्वीकृतेतयोस्तातकथंभुंजामहेवयं एतच्छ्रुत्वासगृध्रस्तुकरु
णाहतचेतनः तयोरंतिकमागत्यवचनंप्रत्यभाषत गृध्रउवाच ज्ञातस्तुयुवयोःकामोभोजनंक्रियतामिदं पार
मुत्तारयिष्यामिजलधेःप्रातरेवतु ततोरात्र्यांव्यतीतायामुदितेतुदिवाकरे पारमुत्तारितौतौतुगृध्रराजेनवेगिनासिं
हलद्वीपमागत्यस्थितौसोमागृहांतिके ततःप्रत्यूषसमयेसम्मार्ज्यांगनमंडलं लेपनंचक्रतुस्तत्रतदावासदिनंप्रति

एवंविदधतेस्तत्रपूर्णःसंवत्सरोययौ स्नुषाःपुत्रान्सनाहूयसोमापप्रच्छविस्मिता मार्जनंलेपनंकोवाकरोतिमम
कथ्यतां एकदैवाथजगदुःसर्वाःकार्य्यंमिदंहिनः एकदारजकीसोमानिभृतासंस्थितानिशि ददर्शब्राह्मणींकन्यां
मार्जयंतींगृहांगनं लिंपंतमंगनंप्राप्तंभ्रातरंचसुदुर्गतं सोमापप्रच्छतौगत्वाकौयुवांकथ्यतांममऊचतुस्तौतदापृष्ट
मायांब्राह्मणपुत्रकौ सोमोवाच दग्धास्मिवतनष्टास्मिब्राह्मणौगृहमार्जकौकांगतिंवतयास्यामिपापादस्मादसंश
यं पापजात्या स्म्यहंस्याना रजकीसर्वनिंदिता कथंवाब्राह्मणोभूत्वाविरुद्धंमेचिकीर्षथ शिवस्वाम्युवाच एषा
गुणवतीनामस्वसामत्सुमध्यमा इयंसप्तपदीमध्येवैधव्यंसंप्रपत्स्यते तवसान्निध्यमात्रेणभवेद्वैधव्यभंजनं अतो
हेतोःसहस्वसादासकर्मकरोमिते सोमोवाच अतःपरनकर्तव्यंयास्यामितवशासनात् इत्युक्त्वागृहमागत्यस्नुषा
भ्यःप्रत्युवाचह यःकश्चिन्ममराज्येस्मिन्म्रियतेमानवःक्वचित् तथैवरक्षणीयोसौयावदागम्यतेमया कस्यचिद्व
चनात्कोपिनदग्धव्यःकथंचन तथेत्युक्तास्नुषाभिःसासोमायातामहांबुधिंपारमुत्तारयामासक्षणेनद्विजपुत्रकौस्व,
यनाकाशयानेनसाततारमहांबुधिं प्राप्ताःकांचींपुरींसर्वेनिमेषात्तत्प्रभावतः सोमांधनवतीदृष्ट्वातत्रपूजामथाक
रोत् अत्रांतरेशिवस्वामीतदादेशांतरात्स्वसुः ब्राह्मणंरुद्रशर्माणंगुणेनसदृशंस्वसुः ततःस रजकीसोमावै
वाहिकनथाकरोत् सुलग्नेचसुनक्षत्रेदेवस्वामीतुकन्यकां ददौतस्मैगुणवतींगुणिनेरुद्रशर्मणे ततोवैवाहिकेमं
त्रेहूयमानेहुताशने अथसप्तपदीमध्येरुद्रशर्माम्रतोभवत् रुरुदुर्बांधवाःसर्वेस्थितासोमानिराकुलाआक्रंदःसुम
हानासीछोकानांतत्रपश्यतां धनवत्यैचसातूर्णंव्रतराजप्रभावजं पुण्यंसंकल्प्यविधिवद्ददौमृतिविनाशनं रुद्र
शर्मापितस्माच्चव्रतराजप्रभावतः आससादतदाजीवंसुप्तवत्सहसोत्थितः एवंविवाहंनिर्वर्त्यव्रतराजंनिवेद्यच
आमंत्र्यतांधनवतींसोमाप्रायाद्गृहंप्रति एवंसारजकीसोमाजीवयित्वामृतंद्विजं चचालहर्षसंपूर्णापूर्णकामास्वमंदिरं

अत्रांतरेगृहेतस्याःप्रथमंतनयोमृतः पुनःस्वामीमृतस्तस्याजामाताचततोमृतः आगच्छंत्यास्तदातस्याः
सोमवारान्वितातिथिः अमावास्याबभूवाथमृतसंजीविनीतिथिः साददर्शततोयांतींकांचिद्वृद्धांस्त्रियंतदा तूल
भारभराक्रांतांक्रंदमानांसुदुःखितां वृद्धोवाच अवतारयमेपुत्रितूलभारंशिरःस्थितं एतद्भारभराक्रांतांक्रंदमानां
सुदुःखितां सोमोवाच अमावास्याद्यहेपुत्रिसोमवारयुतातिथिः तूलराशिंनस्पृशामिनियमोयंमयाकृतःपुनर्द
दर्शसायांतींमूलभारवतींस्त्रियं साप्युवाचततःपुत्रिमूलभारोमहानिति अवतार्यक्षणंतिष्ठसंगयास्याम्यहंतव
सोमोवाच अद्यमूलंतथातूलंनस्पृशामिकथंचन ततोश्वत्थतरुंचैवनदीतीरभवंपथि स्नात्वाविष्णुंसमभ्यर्च्यश
र्कराभिःप्रदक्षिणां साचकारमहाभागातदेवाष्टोत्तरंशतं भीष्मउवाच यदाप्रदक्षिणावर्त्तकृतंशर्करहस्तया
तदाजीवितवंतस्तेजामातापतिपुत्रकाः नगरंश्रीसमाकीर्णंतद्गृहंचविशेषतः अथायातामहाभागासोमास्वभवनं
प्रति जीवितंवीक्ष्यभर्त्तारंपुत्रौंजामातरंतथा अतुलांस्तान्समासाद्यजगामकृतकृत्यतां प्रणिपत्यस्नुषाःसर्वाःप
प्रच्छुस्तांतपस्विनीं स्नुषाऊचुः मृतास्तेतनयादेविपतिजामातृबांधवाः जीवितास्तेकथंदेविमृतास्तेचकथंवद
सोमोवाच गुणवत्यैमयादत्तंव्रतराजप्रभावकं मृतास्तेतद्विपाकेनपतिजामातृपुत्रकाः तूलकंनमयास्पृष्टंमूल
कंचतथैवच अश्वत्थेविष्णुमभ्यर्च्यतदातत्रप्रदक्षिणां शर्कराहस्तयाभूयःकृतमष्टोत्तरंशतं जीवितास्तत्प्रभा
वेणपतिजामातृपुत्रकाः सर्वाभिःक्रियतामद्यव्रतराजंविधानतः भविष्यतिनवैधव्यंसौभाग्यंसंभविष्यति स्नुषा
स्ताःकारयामासतथासोमाव्रतेश्वरं भुक्त्वाभोगान्बहूंस्तत्रपुत्रपौत्रादिभिःसह तैश्चसर्वैःपरिवृताविष्णुलोकमवाप
सा इत्येतत्कथितंपार्थविस्तरेणमयातव युधिष्ठिरउवाच माहात्म्यंव्रतराजस्यकोविधिर्वदविस्तरात् कर्त्तव्यंके
नभीष्मेदंनारीभिःपुरुषेणवा भीष्मउवाच अमावास्यातिथिःपार्थसोमवारान्वितायदा तदापुण्यतमःकालोदेवा

एवंविदधतोस्तत्रपूर्णःसंवत्सरोययो स्नुषाःपुत्रान्समाहूयसोमापप्रच्छविस्मिता मार्जनंलेपनंकोवाकरोतिमम
कथ्यतां एकदैवाथजगदुःसर्वाःकार्यमिदंहिनः एकदारजकीसोमानिभृतासंस्थितानिशि ददर्शब्राह्मणीकन्या
मार्जयंतीगृहांगनं लिंपंतमंगनंप्राप्तंभ्रातरंचसुदुर्गतं सोमापप्रच्छतौगत्वाकौयुवांकथ्यतांममऊचतुस्तौतदाप्रष्ट
पायांब्राह्मणपुत्रकौ सोमोवाच दग्धास्मिवतनष्टास्मिब्राह्मणौगृहमार्जकौकांगतिंवतयास्यामिपापादस्मादसंश
यं पापजात्या स्म्यहंख्याता रजकीसर्वनिंदिता कथंवाब्राह्मणोभूत्वाविरुद्धंमेचिकीर्षथ शिवस्वाम्युवाच एषा
गुणवतीनामस्वसामत्सुमध्यमा इयंसप्तपदीमध्येवैधव्यंसंप्रपत्स्यते तवसान्निध्यमात्रेणभवेद्वैधव्यभंजनं अतो
हेतोःसहस्वस्रादासकर्मकरोमिते सोमोवाच अतःपरनकर्तव्यंयास्यामितवशासनात् इत्युक्त्वागृहमागत्यस्नुषा
भ्यःप्रत्युवाचह यःकश्चिन्ममराज्येस्मिन्म्रियतेमानवःक्वचित् तथैवरक्षणीयोसौयावदागम्यतेमया कस्यचिद्व
चनात्कोपिनदग्धव्यःकथंचन तथेत्युक्तास्नुषाभिःसासोमायातामहांबुधिपारमुत्तारयामासक्षणेनद्विजपुत्रकौस्व.
यनाकाशयानेनसाततारमहांबुधिं प्राप्ताःकांचीपुरींसर्वेनिमेषात्तत्प्रभावतः सोमांधनवतीदृष्ट्वातत्रपूजामथाक
रोत् अत्रांतरेशिवस्वामीतदादेशांतरात्स्वसुः ब्राह्मणंरुद्रशर्माणंगुणेनसदृशंस्वसुः ततःस रजकीसोमावै
वाहिकमथाकरोत् सुलग्नेचसुनक्षत्रेदेवस्वामीतुकन्यकां ददौतस्मैगुणवतींगुणिनेरुद्रशर्मणे ततोवैवाहिकेमं
त्रैहूयमानेहुताशने अथसप्तपदीमध्येरुद्रशर्माम्रतोभवत् रुरुदुर्बांधवाःसर्वेस्थितासोमानिराकुलाआक्रंदःसुम
हानासीछोकानांतत्रपश्यतां धनवत्यैचसातूर्णंव्रतराजप्रभावजं पुण्यंसंकल्प्यविधिवद्ददौम्रतिविनाशनं रुद्र
शर्मापितस्माच्चव्रतराजप्रभावतः आससादतदाजीवंमुप्तवत्सहसोत्थितः एवंविवाहंनिर्वर्त्यव्रतराजंनिवेद्यच
आमंत्र्यतांधनवतींसोमाप्रायाद्गृहंप्रति एवंसारजकीसोमाजीवयित्वाम्रतंद्विजं चचालहर्षसंपूर्णापूर्णकामास्वमंदिरं

अत्रांतरेगृहेतस्याःप्रथमंतनयोमृतः पुनःस्वामीमृतस्तस्याजामाताचततोमृतः आगच्छंत्यास्तदातस्याः सोमवारान्वितातिथिः अमावास्याबभूवाथमृतसंजीविनीतिथिः साददर्शततोयांतींकांचिद्वृद्धांस्त्रियंतदा तूल भारभराक्रांतांक्रंदमानांसुदुःखितां वृद्धोवाच अवतारयमेपुत्रितूलभारंशिरःस्थितं एतद्भारभराक्रांतांक्रंदमानां सुदुःखितां सोमोवाच अमावास्याद्यहेपुत्रिसोमवारयुतातिथिः तूलराशिंनस्पृशामिनियमोयंमयाकृतःपुनर्द दर्शसायांतींमूलभारवतींस्त्रियं साप्युवाचततःपुत्रिमूलभारोमहानिति अवतार्य्यक्षणंतिष्ठसंगेयास्याम्यहंतव सोमोवाच अद्यमूलंतथातूलंनस्पृशामिकथंचन ततोश्वत्थतरुंचैवनदीतीरभवंपथि स्नात्वाविष्णुंसमभ्यर्च्यश र्कराभिःप्रदक्षिणां साचकारमहाभागातदेवाष्टोत्तरंशतं भीष्मउवाच यदाप्रदक्षिणावृत्तंकृतंशर्करहस्तया तदाजीवितवंतस्तेजामातापतिपुत्रकाः नगरंश्रीसमाकीर्णंतद्गृहंचविशेषतः अथायातामहाभागासोमास्वभवनं प्रति जीवितंवीक्ष्यभर्त्तारंपुत्रींजामातरंतथा अतुलांस्तान्समासाद्यजगामकृतकृत्यतां प्रणिपत्यस्नुषाःसर्वाःप प्रच्छुस्तांतपस्विनीं स्नुषाऊचुः मृतास्तेतनयादेविपतिजामातृबांधवाः जीवितास्तेकथंदेविमृतास्तेचकथंवद सोमोवाच गुणवत्यैमयादत्तंव्रतराजप्रभावकं मृतास्तेतद्विपाकेनपतिजामातृपुत्रकाः तूलकंनमयास्पृष्टंमूल कंचतथैवच अश्वत्थंविष्णुमभ्यर्च्यतदातत्रप्रदक्षिणां शर्कराहस्तयाभूयःकृतमष्टोत्तरंशतं जीवितास्तत्प्रभा वेणपतिजामातृपुत्रकाः सर्वाभिःक्रियतामद्यव्रतराजंविधानतः भविष्यतिनवैधव्यंसौभाग्यंसंभविष्यति स्नुषा स्याःकारयामासतथासोमाव्रतेश्वरं भुक्त्वाभोगान्बहूंस्तत्रपुत्रपौत्रादिभिःसह तैश्चसर्वैःपरिवृताविष्णुलोकमवाप सा इत्येतत्कथितंपार्थविस्तरेणमयातव युधिष्ठिरउवाच माहात्म्यंव्रतराजस्यकोविधिर्वदविस्तरात् कर्त्तव्यंके नभीष्मेदंनारीभिःपुरुषेणवा भीष्मउवाच अमावास्यातिथिःपार्थसोमवारान्वितायदा तदापुण्यतमःकालोदेवा

नामापिदुर्लभः प्रातरुत्थायव्रतिना स्नानंकार्यंजलाशये स्नात्वामौनेनकौशेयंपरिधायव्रतीततः प्रायादश्वत्थ
वृक्षस्यसमीपंकुरुनंदन अश्वत्थमूलेकर्त्तव्याविष्णुपूजासमंत्रका विष्णुपूजामंत्रः व्यक्ताव्यक्तस्वरूपायसृ
ष्टिस्थित्यंतकारिणे आदिमध्यांतहीनायविष्टरश्रवसेनमः एवंसंपूज्यगोविंदंपीतवस्त्राक्षतैःफलैः कुसुमैर्विवि
धैश्चैवभक्ष्यभोज्यैस्तथाविधैः अश्वत्थपूजनंकार्य्यंप्रोक्तमंत्रेणपांडव अश्वत्थपूजामंत्रः अश्वत्थाहुतमावास
गोविंदस्यसदाश्रय अशेषंहरमेपापंवृक्षराजनमोस्तुते इतिसोमायनमः सोमवारायनमः सोमायैनमःएवं
पूजाविधिंकृत्वाततःकुर्य्यात्प्रदक्षिणं मौक्तिकैःकांचनैरौप्यैर्हीरकैर्माणिभिस्तथा कांस्यपात्रैस्ताम्रपात्रैर्भक्ष्यपूपैः
पृथक्पृथक् गृहीत्वाभ्रमणंकार्य्यंप्रादक्षिण्येनपिप्पले तावत्प्रदक्षिणंकार्यंयावदष्टोत्तरंशतं तद्वस्तुजातंविप्रा
यपुरंध्रीभ्यःप्रदीयते ततोनिरामिषाहारंकुर्य्यान्नारीजनैःसह एषतेकथितोभूयोव्रतराजविधिर्मया द्रौपदींचसुभद्रांच
कारयस्वतथोत्तरांउत्तरागर्भसंस्थास्तुजीवितंलभतेचिरात् युधिष्ठिरउवाचयाचाल्पविभवानारीकांचनाद्यैर्विनाकृता
साकथंलभतेपूर्णंव्रतराजफलंवद भीष्मउवाच फलैःपुष्पैस्तथाभक्ष्यैर्वस्त्राद्यैरपिपांडव कुर्य्यात्प्रदक्षिणांवत्ससापि
पूर्णफलंलभेत् व्रतमिदमखिलंनरेंद्रविष्णोःश्रुतमनपायिपराक्रमंत्वयापि पतिसुतधनमिच्छतीपुरंध्रीसपदिक
रोतुनचात्रचित्रमस्ति भीष्मउवाच शृणुपार्थप्रवक्ष्येहमुद्यापनविधिंशुभं विनायेनव्रतस्यास्यनपूर्णफलभाग्भवेत्
सर्वतोभद्रमध्येतुस्थापयेत्कुंभमक्षतं वृक्षराजंसुवर्णस्यपंचरत्नसमन्वितं तन्मूलेप्रतिमांविष्णोःसौवर्णींचचतुर्भु
जां लक्ष्म्यावाहनसंयुक्तामामापात्तुपलावधि उपचारैरनेकैश्चयथाविभवविस्तरैः नैवेद्यैःपुष्पधूपैश्चदीपैश्चप
रितःस्थितैः रात्रौजागरणंकुर्य्यात्प्रभातेहोममाचरेत् समिद्भिःपैप्पलाभिस्तुपायसेनतिलैस्तथा पूर्णाहुतिंच
जुहुयाद्गांचदद्यात्पयस्विनीं द्वादशब्राह्मणाभोज्याघृतपायसमोदकैः उपवीतानिवस्त्राणितेभ्योदद्याच्चदक्षिणां

प्रणम्यदंडवद्भूमौप्रार्थयित्वाविसर्जयेत् ॥ इतिभविष्योक्तंसोमवत्यमावास्याव्रतं अथोद्यापनप्रयोगः तिथ्यादिसंकीर्त्यामनअवैधव्यपुत्रपौत्रप्राप्तिपूर्वकातुलसौभाग्यसिद्धिद्वाराअश्वत्थरूपीनारायणप्रीत्यर्थमाचरितसोमवत्यमावास्यसांगताफलसिद्ध्यर्थतदुद्यापनारंभकमहंकरिष्ये इतिसंकल्प्य वृताचार्यः सर्वतोभद्रस्थकलशोपरिस्थमयपीठस्थसौवर्णाश्वत्थवृक्षाधस्थहैमं लक्ष्मीनारायणं इदंविष्णुरितिमंत्रेणपूजयेत् अश्वत्थसोमादिपूजामपि कुर्यात् तत्रमंत्राःपूर्वोक्ताएवज्ञेयाः कथाश्रवणादिनारात्रिंनयेत् प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् तत्रप्रधानं लक्ष्मीनारायणमश्वत्थसमित्पायसतिलद्रव्येण प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्यहुत्यायक्षे एवंहोमंसमाप्यद्वादशब्राह्मणान्वस्त्रादिनासंपूज्य लड्डुकपायसमंडकादिपक्वान्नैःसंतर्प्य, अश्वत्थप्रतिमादिकमाचार्यायदत्त्वागांचसोपस्करांदत्त्वाशिषश्चगृहीत्वाभुंजीत इतिसोमवत्यमावास्याव्रतोद्यापनम् ॥ अथसर्वमासेष्वमावास्यासाधारणव्रतानिहेमाद्रौ अमायांतुनिराहारअब्दमेकंसुयंत्रितः शूलंपिष्टमयंकृत्वावर्षांतेविनिवेदयेत् अनेनभ्रूणहत्यादिपातकहानिररिनाशश्चशिवलोकप्राप्तिश्चभवतीतिशिवधर्मोक्तममायांशूलव्रतं अथपितृव्रतं हेमाद्रौ अगस्त्यउवाच सर्गादौब्रह्मणासृष्टास्तमूचुःपितरस्तदा वृत्तिंनोदेहिभगवन्यथावर्तामहे वयं ब्रह्मोवाच अमावास्यादिनंवोस्तुतस्यांकुशतिलोदकैः तर्पितामानुषैस्तृप्तिंपरांगच्छतनान्यथा तिलादियास्तथैतस्यामुपोष्यपितृभक्तितः चिरायतस्यसंतुष्टावरंयच्छतमाचिरं तस्मादस्यांतिथौविद्वानेतत्सर्वंसमाचरेत् इतिवाराहपुराणोक्तममायांपितृव्रतं. भविष्योत्तरोक्तंपितृव्रतंयथाब्रह्मोवाच पितरःस्वदिनेपिंडैरिष्टाःकुर्वंतिसर्वदा प्रजावृद्धिंधनंरक्षामायुष्यंवस्तुमेवच मूलमंत्राःस्वसंज्ञाभिरंगमंत्राश्चकीर्तिताः गंधपुष्पोपहारैश्चयथाशक्तिविधीयते पूजातुवित्तशाठ्येनकृतापितृफलप्रदाः आज्यधारासमिद्भिश्चदधिक्षीरान्नमाक्षिकैः पूर्वोक्तफलदो

[illegible] इतिभविष्यपुराणोक्तमघायांपितृव्रतं अथास्यांपयोव्रतंब्रह्मपुराणे वर्षमेकंभवेद्यस्तुपं
[illegible] पंचदश्यामघायां वत्सरांतेजलकुंभयुतानिवासांसिदद्यात् तेनविष्णुलोकप्राप्तिर्भवति
इतिब्रह्मपुराणोक्तमाघपयोव्रतम् स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्र
विचारसारसविलसद्वृंदसंरक्षकः धर्माधर्मविभागकृन्नृपतिः पादांबुजार्चिरतोजीव्यात्पुत्रक
लत्रमित्रसहितः संपालयन्क्ष्मांचिरं १ रणवीरसिंहभूपेशकारितेकृत्यसागरे अभव
च्चैत्रकृत्यानामेषोरत्नसमुच्चयः ॥ २ ॥ इति श्रीमत्सूर्यवंशावतं
सरघुकुलतिलक श्रीरणवीरसिंहमहाराज
कारितकृत्यरत्नाकरेचैत्र
मासकृत्यरत्न
समुच्चयः ॥

# वैशाखमासप्रारम्भः

॥ ॐस्वस्तिश्रीगणेशायनमः ॥ अथवैशाखमासेकृत्यनिर्णयः ॥ मेषसंक्रमणेपराः प्राक्चदशघ
टिकाः पुण्यकालः रात्रौचेत्प्रागुक्तोनिर्णयः मध्याविषुवतिप्रोक्ताइतिसामान्यनिनिर्णयेनारदीयवचनात् अत्रध
र्मघटादिदानम् पृथ्वीचंद्रोदये तीर्थेचानुदिनस्नानंतिलैश्चपितृतर्पणम् दानंधर्मघटादिनांमधुसूदनपूजनम् माध
वेमासिकुर्वीतमधुसूदनतुष्टिदम् स्कंदपुराणे वैशाखेयःक्षिपेन्मासमेकभक्तेनमानवः सयातिश्रेष्ठतांलोकेपूजितो
धनवानपि मत्स्यपुराणे वैशाखेपुष्पलवणवर्जयित्वातुगोप्रदः भूत्वाविष्णुपदेकल्पंस्थित्वाराजाभवेदिह विष्णु
पदेविष्णुपुरे भविष्यपुराणे वैशाखेमासिराजेंद्रयःकुर्यान्नक्तभोजनम् दध्योदनंतुभुंजानोजितक्रोधोजितेंद्रियः गो
ष्ठेसायमधःशायीनिशायामेकवस्त्रधृक् नियमेचयथोद्दिष्टंसामान्यंसर्वदाचरेत् महाभारते निस्तरेदेकभक्तेनवैशा
खयोजितेंद्रियः आयुष्यंब्रह्मचर्यंचमहापातकनाशनम् निस्तरेदातिवाहयेत् ब्रह्मचर्यमत्रव्रताङ्गम् महापातक
नाशश्चात्रफलम् विष्णुधर्मोत्तरे हेमाद्रौ यःक्षिपेदेकभक्तेनवैशाखेपूजयेद्धरिम् नरोवायदिवानारीज्ञातीनांश्रेष्ठ
तांव्रजेत् तत्रैव मार्कंडेयउवाच चैत्र्यांतुसमतीतायांयावन्मासंदिनेदिने पूजयेद्देवदेवेशंनृसिंहमपराजितम् हो
मांसिद्धार्थकैःकुर्यात् प्रत्यहंप्रयतोनरः वैशाख्याकनकंदद्यात्त्रिरात्रोपोषितोनृप ज्ञानावाप्तिकरंह्येतद्व्रतंबुद्धिविव
र्द्धनमिति तथाचात्रापूपदानम् तत्रच अपूपानांप्रदानेनवैशाखेसुखमश्नुते राजमार्तंडेपि तुलामकरमेषेषुप्रातः
स्नायीसदाभवेत् हविष्यंब्रह्मचर्यंचमहापातकनाशननिति पृथ्वीचंद्रोदयेविष्णुस्मृतिपाद्मयोः ॥ अथवैशाख
स्नानविधिः ॥ अत्रसौरोमासउक्तः अन्यत्रपक्षद्वयंपाद्मे मधुमासस्यशुक्लायामेकादश्यामुपोषितः पंचदश्यांतु
भोवीरमेषसंक्रमणेपिवाः वैशाखस्नाननियमब्राह्मणानामनुज्ञया मधुसूदनमभ्यर्च्यकुर्यात्संकल्पपूर्वकम् तत्रमं
त्रः वैशाखसकलंमासंमेषसंक्रमणेरवेः प्रातःसनियमःस्नास्येप्रीयतांमधुसूदनः मधुहंतुःप्रसादेनब्राह्मणानामनु

ग्रहात् निर्विघ्नमस्तुमेपुण्यंवैशाखस्नानमन्वहम् प्रार्थनाच माधवेमेषगेभानौमुरारेमधुसूदन प्रातःस्नानेनमेनाथ फलदोभवपापहान्निति तीर्थविशेषोपि तत्रैवोक्तः मेषसंक्रमणेभानोर्माधवेमासियत्नतः महानद्यांनदीतीर्थेनदे सरसिनिर्झरे देवखातेतथास्नायादथप्राप्तेजलाशये दीर्घिकाकूपवापीषुनियतात्माहरिंस्मरन्इति संकल्पेचती र्थनामथाह्यम् अज्ञातेतुविष्णुतीर्थमितिवदेत् तथाच तत्रैव यदानज्ञायतेनामतस्यतीर्थस्यभोद्विजाः तत्रेत्युच्चार णंकार्यंविष्णुतीर्थमिदंत्विति तीर्थस्यदेवताविष्णुसर्वत्रापिनसंशयः अथान्योपिविशेषस्तत्रैवपाद्मे तुलसीकृष्ण गौरारूपातयाभ्यर्च्यमधुद्विषं विशेषेणतुवैशाखेनरोनारायणोभवेत् माधवसकलमासंतुलस्यायोर्चयेन्नरः त्रिसं ध्यंमधुहंतारंतस्यनास्तिपुनर्भवः तथाच प्रातःस्नात्वाविधानेनमाधवेमाधवप्रिये योश्वत्थमूलमासिंचेत्तोयेनबहु नासदा कुर्यात्प्रदक्षिणंतंतुसर्वदेवाप्रियंततः पितृदेवमनुष्यांश्चतर्पयेत्सचराचरं योश्वत्थमर्चयेद्देवमुदकेनसमं ततः कुलानामयुतंतेनतारितस्यान्नसंशयः कंडूयपृष्ठतोगांतुस्नात्वापिजलतर्पणम् कृत्वागोविंदमभ्यर्च्यनदु र्गतिमवाप्नुयात् तथाचात्रव्रतविशेषोपि एकभक्तमथोनक्तमयाचितमतंद्रितः माधवेमासियःकुर्याल्लभतेपुण्यमी प्सितम् वैशाखेविधिनास्नानंदेवनद्यादिकेवहिः हविष्यंब्रह्मचर्यंचभूशय्यानियमास्थितिः व्रतंदानंदमोदेवमधु सूदनपूजनम् अहिजन्मसहस्रोत्थंपापंहरतिदारुणामिति मदनरत्नेस्कांदे प्रपाकार्याचवैशाखेदेवेदेयागलंतिकाः उपानद्व्यजनच्छत्रसूक्ष्मवासांसिचंदनम् जलपात्राणिदेयानितथापुष्पगृहाणिच यानिकानिविचित्राणिद्राक्षारंभफ लानिच देयानितानिवैशाखेमधुसूदनप्रीतये लिखितस्वेच ददातियोहिमेपादौशकुनंबुघटान्वितान् पितृनुद्दिश्य विप्रेभ्य.सर्वपापैःप्रमुच्यते तथा वैशाखेयोघटपूर्णंसंभोज्यवैद्विजन्मने ददातिसुरराजेंद्रसयातिपरमांगतिम् एवं संपूर्णस्नानाशक्तौत्र्यहवास्नायात् तदुक्त तत्रैवपाद्मे त्रयोदश्यांचतुर्दश्यांवैशाख्यांवादिनत्रयम् अपिसम्यग्विधानेन

नारीवापुरुषोपिवा प्रातःस्नातःसनियमः सर्वपापैःप्रमुच्यते इतितथाच तत्रैव निक्षिप्य जलपात्रेचप्राप्तेमाधवे मासके माधवंयेर्चयिष्यंतिदेवतास्तेनराभुवि स्वर्णपात्रेथवारौप्येताम्रेवामृण्मयेपिवा तोयस्थंयोर्चयेद्देवंशालि ग्रामशिलोद्भवम् प्रतिमांवामहाभागतस्यपुण्यमनंतकमिति हेमाद्रौ वामनपुराणेच वैशाखेपुष्पलवणंवर्जयित्वा चगोप्रदः एतत्कांतिव्रतंनामकांतिसौभाग्यदायकमिति विष्णुरेवात्रदेवता यदावैशाखेमलमासोभवति तदाका म्यानां तत्रैवसमाप्तिनिषेधान्मासद्वयम् तन्नियमांश्चकर्त्तव्याः मासोपवासचांद्रायणादिसमाप्तिरतुमलमासएव तदुक्तंदीपिकायांनियतंत्रिंशद्दिनत्वाच्छुभेमास्यारभ्यसमापयेत् मलिनेमासोपवासव्रतमिति अत्रदानविशेषउक्तो ऽपरार्केवामनपुराणे गंधाश्चमाल्यानितथावैशाखेसुरभीणिच देयानिद्विजमुख्येभ्योमधुसूदनतुष्टये एवंस्नानादि नियमंविधिनाविधाय तस्योद्यापनम् तदुक्तं तत्रैव मासमेवंवाहि स्नात्वा नद्यादौविमलेजले एकादश्यांच द्वादश्यांपौर्णमास्यामथापिवा उपोष्यनियतोभूत्वाकुर्यादुद्यापनंचयइत्युद्यापनविधानम् तत्रैवाभिधास्यते अ थवैशाखकृष्णप्रतिपदायां तिथिपत्वेनवह्निपूजाविधानं ब्रह्मपूजा वैशाखस्नानादिविधिः वैशाखकृष्णद्वितीयास्न मानकल्पादि अन्नकल्पादिविधानोक्तं श्राद्धदानादिकार्यं तिथिपत्वेनब्रह्मपूजापि वैशाखकृष्णतृतीयायांगौरी व्रतांगत्वेनप्रीतिदेव्या पूजनं कंकोलोदकप्राशनं वैशाखकृष्णचतुर्थ्यां श्रावणादिसंकष्टव्रतांगत्वेन गणपतिव्रतश तपत्रप्राशनं वैशाखकृष्णपंचम्यातिथिपत्वेननागानांपूजनं वैशाखकृष्णषष्ठ्यां तिथिपत्वेन स्कंदपूजनं वैशाखकृ ष्णसप्तम्यांचतिथिपत्वेनसूर्यपूजनं वैशाखकृष्णाष्टम्यांचैत्रकृष्णादित्वेनशीतलाव्रतविधानम् वैशाखेशक्तुसंयावं साज्यंशर्करयान्वितमितिस्त्रीभिःकार्यम् चैत्रवैशाखकृष्णशुक्लनवम्योश्चंडीपूजनमुक्तं भविष्योत्तरे निर्णयामृते वै शाखेमासिराजेंद्रनवम्यांपक्षयोर्द्वयोःउपवासपरोभूत्वापूजयानश्चचंडिकां हेमकुंदसंकाशतेजसाध्रुवसन्निभम् वि

मानवरमारुह्यदेवलोकेमहीयतइति वैशाखकृष्णदशम्यांमार्गशीर्षादारभ्योभयदशमीव्रतत्रयांगत्वेनधर्मराजपूजा
दिशांपूजाचकार्या इतिविष्णुधर्मोत्तरे वैशाखकृष्णैकादशीवरूथिनी तथाचभविष्योत्तरे युधिष्ठिरउवाच वैशाख
स्यासितपक्षेकिंनामैकादशीभवेत् महिमानंकथयमेवासुदेवनमोस्तुते श्रीकृष्णउवाच सौभाग्यदायिनीराजन्
इहलोकेपरत्रच वैशाखकृष्णपक्षेतुनाम्नाचैववरूथिनी वरूथिन्याव्रतेनैवसौख्यंभवतिसर्वदा पापहानिश्चभवति
सौभाग्यप्राप्तिरेवच दुर्भगायाकरोत्येनांसास्त्रीसौभाग्यमाप्नुयात् लोकानांचैवसर्वेषांभुक्तिमुक्तिप्रदायिनी सर्वपाप
हरान्दृणांसर्वपापनिकृंतनी वरूथिन्याव्रतेनैवमांधातास्वर्गतिंगतः धुंधुमारादयःसर्वेराजानोबहवस्तथा ब्रह्मकपा
लनिर्मुक्तोबभूवभगवान्भवः दशवर्षसहस्राणितपस्तप्तंनियेनराः सतेषांफलमाप्नोतिवरूथिन्याव्रतादपि श्रद्धावा
न्कुरुतेयस्तुवरूथिन्याव्रतंनरः वांछितंलभतेसोपिपरत्रेहापिमानवः पवित्रापाविनीह्येषामहापातकनाशिनी भुक्ति
मुक्तिप्रदाह्येषाकर्त्दृणांराजसत्तम अश्वदानात्परंदानंनृपश्रेष्ठंगजस्यतु गजदानाद्भूमिदानंतिलदानंततोधिकं अन्न
दानात्परंदानंनभूतंनभविष्यति पितृदेवमनुष्याणांतृप्तिरन्नेनजायते तत्समंकविभिःप्रोक्तंकन्यादानंनृपोत्तम धेनु
दानंचततुल्यमित्याहभगवान्स्वयम् एतेभ्यःसर्वदानेभ्योविद्यादानंविशिष्यते तत्फलंसमवाप्नोति नरःकृत्वावरू
थिनीं कन्यावित्तेनजीवंतियेनराःपापमोहिताः पुण्यक्षयांतेगच्छंतिनिरयंयातनायुतम् तस्मात्सर्वप्रयत्नेननग्राह्यं
कन्यकाधनम् कन्यांपुण्येनयोदद्याद्यथाशक्तिरलंकृताम् तत्पुण्यसंख्यांनृपतेचित्रगुप्तोनवेत्त्यलम्तत्तुल्यपुण्यमाप्नो
तिनरःकृत्वावरूथिनीं कांस्यंमांसंमसूरान्नंचणकान्कोद्रवांस्तथाशाकंमधुपरान्नंचपुनर्भोजनमैथुने वैष्णवोव्रतकर्त्ता
चदशम्यांदशवर्जयेत् द्यूतंक्रीडांचनिद्रांचतांबूलंदंतधावनम् परापवादपैशून्यंस्तेयंहिंसांतथारतिम् क्रोधा
ध्यनृतवाक्यंचएकादश्यांविवर्जयेत् कांस्यंमांसमसूरान्नंक्षौद्रंतैलंविभाषणम् व्यायामंचप्रयासंचपुनर्भोजनमैथुने

स्पृष्टास्पृष्टिपरद्रोहं द्वादश्यांपरिवर्जयेत् अनेनविधिनाराजन्विहितेयंवरूथिनी रात्रौजागरणंकुर्यात्पूजितो
मधुसूदनः सर्वपापविनिर्मुक्तास्तेयांतिपरमांगतिम् तस्मात्सर्वप्रयत्नेनकर्त्तव्यापापभीरुभिः आदित्यत
नयाद्भीतैर्नरैर्देववरूथिनी पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत् सर्वपातकनिर्मुक्तोविष्णुलोकेमहीयतेइतिभवि
ष्यपद्मयोर्वैशाखकृष्णावरूथिन्येकादशीव्रतकथा वैशाखकृष्णद्वादश्यांतिथीशपूजात्वेनहरिपूजाभोजनदक्षि
णादिभिर्वैष्णवद्विजानांपरिचर्याकार्या वैशाखकृष्णत्रयोदशीगौरीकल्पादि अत्रापिकल्पादिकृत्यत्वेनश्राद्धदानादे
रक्षयफलकल्पादिगुणप्रतिपादनात् वैशाखकृष्णचतुर्दश्यांमासशिवरात्रिचतुर्दशीव्रतांगत्वेनवर्षशिवरात्रिव्रतव
दुपवासजागरणप्रहरचतुष्टयपूजादिविधानसर्वंकृष्णचतुर्दशीषुकार्य्यम् वैशाखस्यामावास्यायां श्राद्धदानादिक
विधेयम् अकरणेप्रत्यवायः आमास्याव्यतीपातपौर्णमास्याष्टमीषुच विद्वान्श्राद्धमकुर्वाणोनरकंप्रतिपद्यत
इतिवैशाखकृष्णपक्षकृत्यनिर्णयः अथशुक्लपक्षकृत्यनिर्णय. वैशाखशुक्लप्रतिपदायाम् आरोग्यप्रतिपदा
व्रतांगत्वेन धातृनामानंसूर्यम् पूजाव्रतंचकुर्यात्तत्रातिथिपत्वेनवन्हिपूजामपिकुर्य्यात् वैशाखशुक्लद्वितीयायांनी
ललोहितकल्पादि तत्रकल्पादिश्राद्धदानादिविधानंकुर्यात् अत्रविशेषोनारदीये राधशुक्लद्वितीयायांभास्करंभवना
धिपंचतुर्वक्त्रस्वरूपंचसमभ्यर्च्यविधानतःभोजयित्वाद्विजान्भक्त्याभास्करलोकमाप्नुयात् वैशाखशुक्लतृतीया अक्ष
यतृतीया इयंगौरीव्रतेपूत्तराकार्या रंभाख्यांवर्जयित्वातुतृतीयांद्विजसत्तम अन्येषुसर्वकार्येषुगणयुक्ताप्रशस्यते
इतिब्रह्मवैवर्त्तात् गणोत्रगणेशःतदेवाहचतुर्थीतृतीयाविद्धातृतीयाचतयापुनः कर्त्तव्याव्रतिभिस्तातधर्मकामार्थतत्परै
रितिस्कंदपुराणे द्वितीयाविद्धानिषेधप्रयोजकस्त्वत्रद्वितीयावेधोनत्रिमुहूर्तपरः किंतुकलाकाष्ठादिरूपोपि अतएवतृ
तीयाहगौरीव्रतेस्वल्पापिपराकार्याव्रतांतरेषुतुत्रिमुहूर्त्तवेधेनत्याज्यत्व द्वितीयायापित्रिमुहूर्त्तायापृथग्ग्राह्यत्वमि

तिपदानुमतुर्थीयुता किंचिदपि नलभ्यते तदा गौरीव्रते त्रिमुहूर्त्तालाभे चइतरव्रतेष्वपि द्वितीया विद्धापि ग्राह्या एकादशीत
तीया च षष्ठी चैव चतुर्दशी पूर्वविद्धापि कर्त्तव्या यदि नस्यात्परेहनीति वृद्धवासिष्ठवचनात् अत्रसौभाग्यगौरीव्रतांगत्वेन
उमादेव्यां पूजादधिप्राशनं केवलगौरीव्रतांगत्वेन विजयागौरीपूजा गोमयप्राशनंच इयंचत्रेतायुगादि तत्र श्राद्धं नित्यं
काम्यंच युगादीन्प्रकम्यपानीयचप्यत्र तिलैर्विमिश्रंदद्यात्पितृभ्यः प्रयतोमनुष्यइति विष्णुपुराणात् श्राद्धेत्वियम
परान्हव्यापिनी ग्राह्या तस्यापरान्हकालवचनात् कालव्याप्तिशास्त्रस्य सर्वापेक्षया व्यापकत्वात् अतएव अमावास्या
श्राद्धमुक्तंकालादर्शे एवंमन्वंतरादीनां युगादीनां विनिर्णयः महालयस्यपक्षस्य ह्यष्टकानामपिस्मृतइति यत्तुद्वेशुक्ले
द्वेतथाकृष्णेयुगादीकवयोविदुः शुक्लेपूर्वान्हिकग्राह्या कृष्णेचैवापराह्लिक इतिवचनं तदपिउपक्रमकालपरं शु
क्लपक्षस्यपूर्वान्हे श्राद्धंकुर्याद्विचक्षणः कृष्णपक्षेपरान्हेतु रौहिणंतुनलंघयेदितिवायवीयवचनात् रौहिणमुहूर्त्तनलंघये
दित्युक्तं यद्वा शुक्लपक्षगतायुगादितिथिः पूर्वस्मिन्दिनेकुतपोत्तरादारभ्यप्रवृत्तोत्तरादिने वृद्ध्या अपरान्हेपि किंचित्वर्त्त
ते तदा तत्पूर्णा या अपराह्णव्यापित्वेन पूर्वदिनेनुगताया एवग्राह्यताप्राप्तिः तदपवादत्वेन कुतपद्वयविद्धरूपएवपूर्वाह्ण
व्यापिनी अपराह्नस्पर्शिन्युत्तरापिग्राह्येति विधीयते नचतदापराह्नशास्त्रस्यात्यंतबाधः अपराह्नेपिकिंचित्तस्या
विद्यमानत्वात् हेमाद्रिस्तु मन्वादिष्विवानिर्णयः समतयामन्वद्यायुगाद्याश्चतिथयस्तासुमानवः स्नात्वाहुत्वाच
दत्वाचजप्त्वानंतफलंलभेदिति भारतोक्तेः स्नानादौतूत्तरा केचित्तु वैशाखस्यतृतीयांयः पूर्वविद्धांकरोतिवै हव्यंदेवा
नगृह्णंतिकव्यंचपितरस्तथेति गोभिलवचनाच्च श्राद्धेपिपूर्वाह्णव्यापिन्युत्तराकार्येतिवदंति तत्कालादर्शादिविरुद्धा
मपुरुक्तंच अपरान्हः पितृणां अपरान्हेतुपैतृकं अपरान्हेपितृक्रियेत्यादिवचनैरपरान्हकालस्याभिधानात् कर्मणो
यस्यपःकालस्तत्कालव्यापिनीतिथिः तयाकर्माणिकुर्वीतह्रासवृद्धीनकारणमितिवाक्यादपराह्णव्यापिन्याएवश्रा

द्वेग्राह्यत्वात् पूर्वेलिखितगोभिलवचनंत्वनाकरं साकरत्वेपिपितृद्देशेनक्रियमाणतर्पणादिविषयेव्याख्येयंनारद वचनंतुद्वेशुक्लेइतिवचनादेवव्याख्येयं इदंचयुगादिकृत्यंयुगादितिथिमध्यएवकर्त्तव्यं मन्वादौचयुगादौचग्रहणेचं द्रसूर्ययोः व्यतीपातेवैधृतौचतत्कालव्यापिनीक्रियेति स्कंदपुराणात् अत्रकृत्यमुक्तं ब्रह्मपुराणे वैशाखेमासि शुक्लायांतृतीयायांजनार्दनःयवानुत्पादयामासयुगंचारब्धवान्कृतं ब्रह्मलोकात्त्रिपथगांपृथिव्यामवतारयत् तस्यां कार्य्योयवैर्होमोयवैर्विष्णुंसमर्चयेत्यवान्दद्याद्द्विजातिभ्यः स्वयंचप्राशयेद्यवान्पूजयेच्छंकरंगंगांकैलासंचहिमाल यंभगीरथंचनृपतिममराणांसुखावहंस्नानंदानतपःश्राद्धंजपहोमादिकंचयत् श्रद्धयाक्रियतेतत्रतदनंत्यायकल्पतेसिं धोस्तीरेविशेषेणसर्वमक्षयमुच्यते होमश्चायविष्णवेस्वाहा उपक्रमेतथादर्शनात् यवप्राशनंतद्विकारइतिवृद्धाः विष्णुःवैशाखस्यतृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्यतानेवदत्वाच पापेभ्यःपूतोभवति यच्चतस्मिन्नहनिप्र यच्छातितदक्षयत्वमाप्नोति अभ्यर्च्येतृतीयायामित्यन्वयः तेनोपवासोद्वितीयायामित्यर्थात् अक्षतैर्यवैः अक्षता स्तुयवाः प्रोक्ताइत्यादिकोशात् भविष्येयमः वैशाखेशुक्लपक्षेतुतृतीयायांतथैवचगंगातोयेनरःस्नात्वासर्वपापैः प्रमुच्यते भविष्यपुराणे इत्येपातिथिरित्येवंतृतीयालोकविश्रुता सदाविशेषतःपुण्यावैशाखेमासियाभवेत्तुवारि दानप्रशस्तंतस्यांभोदकानांचभारत वैशाखेमासिराजेंद्रतृतीयाचंदनस्यच चंदनस्यदानंप्रशस्तमित्यनुषंगःदेवी पुराणे तृतीयायांतुवैशाखेरोहिण्यर्क्षेप्रपूज्यच उदकुंभप्रदानेनब्रह्मलोकेमहीयते कलधौतंतथाचान्नंघृतंचापिविशे षतः अस्यांदत्तमक्षयंस्यात्तेनेयंत्वक्षयास्मृता पूज्येतिदेवीदुर्गामिति क्रमात्तेनरोहिणीनक्षत्रयुक्तायामक्षयतृतीयायां दुर्गापूज्यापूर्वोदितकुंभदानस्यब्रह्मलोकमहितत्वंफलमित्यर्थः कलधौतंहिरण्यदानस्याप्यत्राक्षयत्वंकलधौतान्नघृत दानमत्यंतप्रशस्तमित्यर्थः तथाइत्येपाकथिताराजन्तृतीयातिथिरुत्तमा तृतीयायांतुवैशाखेब्रह्मलोकेमहीयते व

दनीयघटंभक्ष्यंलड्डुकादिभोज्यंशष्कुल्यादिभविष्योत्तरे वैशाखस्यंतृतीयायांश्रीसमेतंजगद्गुरुंनारायणंपूजये
त्पुष्पधूपविलेपनैः वस्त्रालंकारसद्भावैर्नैवेद्यैर्विविधैस्तथा ततस्तस्याग्रतोधेनुंलवणस्याढकेनतु कुर्यात्कुरुकुल
श्रेष्ठचतुर्भागेनवत्सकंरुरुचर्मोपरिस्थाप्यकल्पयित्वाविधानतः श्रीधरःश्रीपतिःश्रीमान् श्रीशःसंप्रीयतामिति अ
नेनविधिनादत्त्वाधेनुंविप्रायभक्तितः गोसहस्रदशगुणंप्राप्नोतिहिनसंशयः नारदीयेपि तत्रराधातृतीयायामित्युप
क्रम्यपुष्पधूपविलेपनैः यद्यागंगांभसिस्नातोमुच्यतेसर्वकिल्बिषैःअक्षतैःपूजयेद्विष्णुंस्नायादप्यक्षतैर्नरःसक्तून्संभो
जयेद्विप्रान्स्वयमभ्यवहरेच्चतान् एवंकृत्वाव्रतंविप्रनरोविष्णुपरायणः विष्णुलोकमवाप्नोतिसर्वदेवनमस्कृत इति
अत्रदानविशेषस्तत्रैवभविष्ये इमामक्षयतृतीयांप्रक्रम्य उदकुंभान्सकनकान्सान्नान्सर्वरसैःसहयवगोधूमचणका
न्सक्तून्दध्योदनंतथाग्रैष्मिकंसर्वमेवात्रसस्यंदानेप्रशस्यते देवीपुराणे तृतीयायांतुवैशाखेरोहिण्यर्क्षेप्रपूज्यचउदकुं
भप्रदानेनशिवलोकेमहीयते मंत्रस्तु एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्तृप्यन्तुपितरोपिपितामहाः
गंधोदकतिलैर्मिश्रःसान्नंकुंभंफलान्वितं पितृभ्यःसंप्रदास्यामिअक्षय्यमुपतिष्ठतुअत्रश्राद्धंपिंडरहितंकार्यं अयन
द्वितयेश्राद्धंतथाचविषुवद्वये युगादिषुचसर्वासुपिंडनिर्वपणादृतेइतिहेमाद्रौ पुलस्त्यवचनात् अत्ररात्रिभोजनेप्राय
श्चित्तमुक्तमृग्विधानेरात्रौभुंक्तेवत्सरेतुमन्वादिषुयुगादिषु अभिस्त्वष्टिमंत्रंचजपेदशनपावनमितिअपरार्केयमःकृतो
पवाससलिलंयुगादिषुदिनेषुचदास्यंत्यन्नादिसहितंतपांलोकामहोदयाइतिवैशाखेमलमासेसतितत्रैवयुगादिदिनं
कार्य्यम् तथाचहेमाद्रौकृष्णशृंगःदशहराःस्वतोत्कर्षःचतुर्ष्वपियुगादिषु उपाकर्मणिचोत्सर्गेह्येतद्दृष्टंवृषादितइति
कालादर्शेपि अब्दोदकुंभमन्वादिमहालययुगादिष्वतिमलमासकृत्येषुगणनात् महालयशब्देनमन्वादित्रयोदश्यु
च्यतेइतिमाधवस्मृतिचन्द्रिकायांतु मासद्वयेप्यकर्त्तव्यमित्युक्तेयोगादिकंमासिकंचश्राद्धंचापरपक्षिकं मन्वादिकं

तीर्थंकंचकुर्यान्मासद्वयेपिचेति अपरपक्षोपिकृष्णपक्ष नतुमहालय.तस्यतत्रानिषेधात् मदनरत्नेमरीचिरपिप्रतिमा
सम्मृताहेचश्राद्धंतत्प्रतिवासरं मन्वादौचयुगादौचतन्मासोरुभयोरपीति वत्सरंक्रियमाणंकल्पादिश्राद्धमितिसए
वव्याचख्यौअत्रश्राद्धकरणेप्रायश्चित्तमृग्विधानेनयस्त्वपावामंत्रंचशतवारंतदाजपेत् युगादयोयदान्यूनाः कुरुते
नैवचाप्ययइति अत्रसमुद्रेस्नानंप्रशस्तंतदुक्तंपृथ्वीचंद्रोदये सौरपुराणेयुगादौचनरःस्नात्वाविधिवल्लवणे दधौगोस
हस्रप्रदानस्यकुरुक्षेत्रेहियत्फलं तत्फलसमवाप्नोतिभूमिदानस्यचध्रुवमिति इयमेवतृतीयापरशुरामजयंती साप्र
दोषव्यापिनीग्राह्यातदुक्तंस्कांदेभार्गवार्चनदीपिकायां वैशाखस्यासितेपक्षेतृतीयायापुनर्वसौनिशायाः प्रथमेयामेरा
मारुयसमयेहरिःस्वोच्चगैःषड्ग्रहैर्युक्तेमिथुनेराहुसंस्थितेरेणुकायास्तुयोगर्भादवतीर्णोभुविस्वयमिति दिनद्वयेतद्व्या
प्तावंशतःसमव्याप्तौचपरा अन्यथापूर्वा.तदुक्तं तत्रैवचभविष्ये शुक्लतृतीयावैशाखेशुद्धोपोष्यादिनद्वयेनिशायांपूर्वया
मेचेदुत्तरान्यत्रपूर्वकेति अथाक्षयतृतीयाव्रतविधिःभविष्ये श्रीकृष्णउवाच वैशाखस्यतृतीयायांश्रीसमेतंजगद्गुरुं
नारायणंपूजयेथाःपुष्पधूपविलेपनैरिति योस्यांददातिकरकान्वारिवीजसमन्वितान् प्रयातिपुरुषोवीरलोकान्वैहेम
मालिनः वीजमत्रं हेममालिनःसूर्यस्य बहुनात्रकिमुक्तेनकिंवह्वक्षरमालया वैशाखस्यसितामेकांतृतीयामक्षयांशृ
णु अस्यांस्नानंजपोहोमःस्वाध्यायःपितृतर्पणं दानंचक्रियतेतस्यांस्वल्पंवायदिवाबहु तत्सर्वमक्षयंप्रोक्तंतस्मात्सा
ह्यक्षयास्मृता आदिकृतयुगस्येयंयुगादिस्तेनकथ्यतेसर्वपापप्रशमनीसर्वसौभाग्यदायिनी पुरामहोदयेपार्थवणि
गासीत्सनिर्धनः तेनश्रुतावाच्यमानातृतीयारोहिणीयुता यदास्याद्बुधसंयुक्तातदासाहमहाफला तस्यांयद्दीयते
किंचिदक्षयंस्यात्तदेवहि इतिश्रुत्वातुगंगायांसंतर्प्यपितृदेवताः गृहमागत्यकरकान्सान्नानुदकसंयुतान् अन्नपू
र्णान्बृहत्कुंभान्जलेनविमलेनचयवगोधूमलवणान्सक्तून्दध्योदनंतथा द्राक्षाक्षीरविकारांश्चसहिरण्यान्स्वशक्तितः

सुविशुद्धेनमनसाब्राह्मणेभ्योददौवणिक् भार्ययावार्यमाणोपिकुटुंबासक्तचित्तया तयातस्यास्थिरेसत्वेमत्वासर्वंविन
श्वरं धर्मासक्तमतिःपार्थकालेनबहुनाततः जगामपंचत्वमसौवासुदेवमनुस्मरन् ततःसक्षत्रियोजातःकुशावत्यां
युधिष्ठिर बभूवचाक्षयातस्यसमृद्धिर्द्धर्मसंयुता इयाजसमहायज्ञैःसमाप्तवरदक्षिणैः 'सददौगोहिरण्यानिदानान्य
न्यान्यहर्निशं बुभुजेकामतोभोगान्दीनांधांस्तर्पयन्शनैः तथाप्यक्षयमेवास्यलयंयातिनतद्धनं श्रद्धापूर्वंतृती
यायांयद्दत्तंविभवंविना इत्येतत्तेसमाख्यातंश्रूयतामत्रयोविधिः तृतीयांतांसमासाद्यसंतर्प्यपितृदेवताः एकभा
वतदाकुर्याद्वासुदेवप्रपूजयेत् उदकुंभान्सकरकान्सान्नान्सर्वरसैःसह ग्रैष्मिकंसर्वमेवान्नंसस्यंदानेप्रशस्यते छत्रो
पानत्समायुक्तंगोभूकांचनवाससां यद्यदिष्टतमंचान्यत्तद्देयमविशंकया, एतत्तेसर्वमाख्यातंकिमन्यच्छ्रोतुमिच्छसि
अनाख्येयंनमेकिंचित्स्वास्तितेस्तुसदानघ अस्यांतिथौक्षयमुपैतिकृतंतुदत्तंतेनाक्षयेतिकथितामुनिभिस्तृतीया
उद्दिश्यदैवतपितृन्क्रियतेमनुष्यैस्तच्चाक्षयंभवतिभारतसर्वमेव अथविष्णुधर्मोक्तमक्षयतृतीयाव्रतं वैशाखशुक्लप
क्षेतुतृतीयायामुपोषितः अक्षयंफलमाप्नोतितेनसाप्यक्षयामतायदासाकृत्तिकोपेताविशेषेणप्रपूजिता तत्रदत्तंहुतंज
प्तंसर्वमक्षयमुच्यते अक्षयासातिथिस्तस्मात्तस्यांसुकृतमक्षयं अक्षतैः पूज्यतेविष्णुस्तेनसाप्यक्षयामता अक्षतैस्तु
नरःस्नातोविष्णोर्दत्वातथाक्षतान्सक्तूंश्चसंस्कृतांश्चैवदत्वाचभृगुनंदन 'एवमेवतृतीयायांसर्वांसांतुफलंलभेत् इति
वैशाखशुक्लचतुर्थीकृत्यम्नारदीये वैशाखस्यचतुर्थ्यांतुसंप्रपूज्यानिरुद्धकं यतिभ्योलावुपात्राणिदत्वाभीष्टंलभेन्नरः
चतुर्मूर्तिव्रतान्येवंकृत्वाद्वादशवत्सरं उद्यापनविधानेनकर्त्तव्यंफलमिच्छता वैशाखपंचम्यांशिवपूजोक्ता तत्रैव
अथवैशाखपंचम्यांशिवंचाभ्यर्च्यभक्तितः सर्वनागगणैर्युक्तंसोभीष्टंलभतेफलमिति वैशाखशुक्लषष्ठीकृत्यंच तत्रैव
वैशाखशुक्लषष्ठ्यांतुपूजयित्वाचकार्त्तिकं लभतेमातृजंसौख्यंनात्रकार्याविचारणा वैशाखशुक्लसप्तम्यांगंगोत्पत्तिर्ना

रदीये वैशाखशुक्लसप्तम्यांजन्हुनाजाह्नवीपुरा क्रोधात्पीतापुनस्त्यक्ताकर्णरंध्रात्तुदक्षिणात् तांतत्रपूजयेत्स्नात्वा प्रत्यूषेविमलेजले गंधपुष्पाक्षताद्यैश्चसर्वैरेवोपचारकैः ततोघटसहस्रंतुदेयंगंगाव्रतंत्विदं भक्त्याकृतंसप्तकुलंन येत्स्वर्गमसंशयः गंगापूजनप्रकारस्तु दशहराप्रकरणेद्रष्टव्यः अत्रसप्तमीपूर्वान्हव्यापिनीग्राह्येतिसमयमयूखे निर्णयसिंधौतुशिष्टाचारान्मध्यान्हव्यापिनीग्राह्येत्युक्तम् अस्यामेवकमलसप्तमीव्रतं नारदीये कमलव्रतमप्यत्र प्रोक्तंतद्विधिरुच्यते तिलपात्रेतुसौवर्णंविधायकमलंशुभं वस्त्रयुग्मावृतंकृत्वागंधपुष्पादिनार्चयेत् नमस्तेपद्मह स्तायनमस्तेविश्वधारिणे दिवाकरनमस्तुभ्यंप्रभाकरनमोस्तुते इतिसंप्रार्थ्यदेवेशंसूर्येचास्तमुपागते सोदकुंभं तुतत्पात्रंकपिलांतुवियोजयेत् तद्दिनेतूपवासस्तुभोक्तव्यंचपरेहनि संभोज्यब्राह्मणान्भक्त्याव्रतसाफल्यमाप्नुयात् पाद्मेतु वसंतामलसप्तम्यांस्नातःसन्गौरसर्षपैः तिलपात्रेतुसौवर्णंनिधायकमलंशुभमित्युपक्रम्य एवंसंवत्सरंकृ त्वाअंतेसुवर्णकमलान्वितं सूर्यशयनादिदद्यात् सर्वसौख्यान्वितोभवतीतिकमलसप्तमीव्रतम् अस्यामेवसप्त म्यांनिंबसप्तमीव्रतं भविष्योत्तरे नारदीयेपि निंबव्रतंचतत्रैवतद्विधानमिदंशृणु निंबपत्रैस्मृतापूजाभास्करस्य द्विजोत्तम खखोल्कायेतिमंत्रेणप्रणवाद्येननारद ॐखखोल्कायनमःअनेनसूर्यपूजनंनिंबपत्रभक्षणंचकुर्यात् निंब पत्रंततोप्राश्य स्वपेद्भूमौचवाग्यतः द्विजान्परेन्हिसंभोज्यस्वयंभुंजीतबंधुभिः निंबव्रतमिदंचैतत्कर्तॄणांसर्वसौ ख्यदं भविष्योत्तरेच वैशाखशुक्लसप्तम्यांजितक्रोधोजितेंद्रियः निंबपत्रंततोप्राश्यसप्तम्यांमंत्रतोनरः मंत्रस्तु निंबपल्लवभद्रंतेसुभद्रंतेस्तुसर्वदा ममापिकुरुभद्रंवैप्राशनाद्रोगहाभवेति इत्थंप्राश्यस्वपेद्भूमौदेवस्यपुरतोनृप अष्टम्यांभानुंपूजयित्वाब्राह्मणान्भोजयित्वास्वयंभुंजीतेति निंबसप्तमीव्रतम् अस्यामेवशर्करासप्तमीव्रतं - पद्मपु राणे-पुलस्त्यउवाच वैशाखेशर्करानामसप्तम्यांश्रद्धयान्वितः प्रातःस्नात्वातिलैःशुक्लैःशुक्लमाल्यानुलेपनैः

स्थंडिलेपद्ममालिख्यकुंकुमेनसकर्णिकं तस्मैनमःसावित्रीति पुष्पंधूपंनिवेदयेत् स्थापयेदव्रणंकुंभंशर्करापात्र
संयुतं शुक्लवस्त्रेणसंवेष्ट्यशुक्लमाल्यानुलेपनैः सहिरण्यंचयथाशक्त्यामंत्रेणानेनपूजयेत् विश्वदेवमयोयस्माद्वेदवा
दीतिपठ्यसे त्वमेवामृतसर्वस्वमतःपाहिसनातन पंचगव्यंततःपीत्वास्वपेत्तत्पार्श्वतःक्षितौ सौरसूक्तंजपंस्तिष्ठेत्पु
राणश्रवणेनवा अहोरात्रेगतेपश्चादष्टम्यांकृतनित्यकः तत्सर्वंवेदविदुषेब्राह्मणायनिवेदयेत् भोजयेच्छक्तितोवि
प्रांछर्कराघृतपायसैः भुंजीतातैललवणंस्वयमप्यथवाग्यतः अनेनविधिनासर्वंमासिमासिसमाचरेत् वत्सरांतेपु
नर्दद्यात् ब्राह्मणायसमाहितः शयनंवस्त्रसंवीतंशर्कराकलशान्वितं सर्वोपस्करसंयुक्तंतथैकांगांपयस्विनीं गृहंच
शक्तितोदद्यात्समस्तोपस्करान्वितं सहस्रेणाथनिष्काणांकृत्वादद्याच्छतेनवा दशभिर्वात्रिभिर्वापिनिष्केणैकेन
वापुनः पद्मंचशक्तितोदद्याद्वित्तशाठ्यविवर्जितः पद्मंसौवर्णं अत्रमंत्रः अमृतंपिबतावक्रात्सूर्यस्यामृत
विंदवःनिंपेतुर्येःसमुत्पन्नाः शालिमुद्गयवेक्षवः शर्कराचपुनस्तस्मादिक्षुसारामृतोपमाइष्टारवेस्ततः पुण्याश
र्कराहव्यकव्ययोः शर्करासप्तमीचैषावाजिमेधफलप्रदासर्वदुःखोपशमनीपुत्रसंततिवर्द्धिनी अस्यांतुशर्क
रादानशर्कराभोजनंतथा कर्तव्यंहिप्रयत्नेनव्रतमेतद्रविप्रियं यःकुर्यात्परयाभक्त्यासवैसद्गतिमाप्नुयात् कल्प
मेकंवसेत्स्वर्गेततोराजाभवेत्परम् इदमपिचशृणोतियःस्मरेद्वापठतिसयातिसुरेश्वरस्यलोकं मतिमपिचददाति
योजनानाममरवधूजनकिन्नरैःससेव्यः इतिपद्मपुराणेनारदीयेचशर्करासप्तमीव्रतम्
वैशाखशुक्लाष्टमीकृत्यम् नारदीये वैशाखस्यसिताष्टम्यांसमुपोष्यचवारिभिः स्नात्वापराजितांदेवीं
मांसीवालकचंदनैः स्नापयित्वार्च्यगंधाद्यैर्नैवेद्यंशर्करामयं कुमारींभोजयेच्चापिनवम्यांपारणाग्रतः ज्योति
र्मयविमानेनभ्राजमानोयथारविःलोकेषुविचरेद्विप्रदेव्याश्चैवप्रसादतः देवीपुराणेतुसहकारफलैःस्नाने वैशाख

स्नाप्टमीदिने आत्मानंदेवतांस्नाप्यमांसिवालुकवारिभिः लेपनंफलकपूरंधूपंपंचसुगंधिकं फलंजातिफलं पंचसुगं
धिकं कंकोलपूगकर्पूरजातीफललवंगकैः सुगंधपंचकंप्रोक्तमायुर्वेदप्रकाशकैः देव्याःपूजांचकुर्वीतकेतक्याःपंचके
नच शर्कराक्षीरनैवेद्यंकन्याविप्रेषुभोजने आत्मनः पारणंपश्चाद्दक्षिणाशक्तितोददेत् सर्वतीर्थाभिषेकंवातेनप्रा
प्नोतिभार्गवेतिवैशाखशुक्लाकृष्णानवमीद्वयकृत्यम् नारदीये राधेनवम्यांदलयोश्चंडिकांयस्तुपूजयेत् विधिना
सविमानेतुदेवतैः सहमोदते तथाच निर्णयामृते भविष्योत्तरे वैशाखेमासिराजेंद्रनवम्यांपक्षयोर्द्वयोः उपवास
परोभक्तया पूजयानस्तुचंडिकांहंसकुंदेंदुसंकाशस्तेजसाध्रुवसन्निभः विमानवरमारूढोदेवलोकेमहीयतइतिवैशाख
शुक्लदशम्यांकृत्यमुक्तं नारदीये दशम्यांमाधवेविप्रधर्मराजस्वरूपिणं प्रपूज्यशुक्लैर्गंधाद्यैर्विष्णुमभ्यर्च्यमान
वःगंधाद्यैरुपचारैस्तुश्वेतपुष्पैःसुगंधिभिः शतंप्रदक्षिणाः कृत्वाविप्रान्संभोज्यभक्तितः लभतेवैष्णवंलोकंनात्रका
र्याविचारणा वैशाखशुक्लैकादशीमोहिनीतदुक्तंनारदीयेवैशाखशुक्लैकादश्यांसमुपोष्यचमोहिनीम् स्नात्वापरे
ऽह्निसंपूज्यगंधाद्यैः पुरुषोत्तमंसंभोज्यविप्रान्मुच्येतपातकेभ्योनसंशयः अस्यांकथाः कौर्म्येपाद्मे युधिष्ठिरउवाच
वैशाखस्यसितेपक्षेकावाह्येकादशीभवेत् किंफलंकोविधिस्तस्याः कथयस्वजनार्दन श्रीकृष्णउवाच कथया
मिकथामेतांशृणुष्वधर्मनंदन वसिष्ठोयामकथयत्पुरारामायपृच्छते श्रीरामउवाच कथयस्वप्रसादेनवसिष्ठमुनि
सत्तम मयाकृतानिपापानिसीताहरणकालतः केनव्रतप्रभावेनतानियास्यंतिसंक्षये तद्व्रतंमुनिशार्दूलत्वमाख्यातुं
ममार्हसि श्रीवसिष्ठउवाचसाधुसाधुमहाराजत्वत्समोनास्तिमानवः त्वन्नामोच्चारणादेवपूतोभवतिनारकी सभ
वान्पृच्छतिव्रतं पापघ्नंसर्वकामदं मनुष्यतांत्वमापन्नः परमात्मासिमांततः तद्व्रतंराजराजेंद्रकथयिष्यामिविस्तरा
त् येनपापानिनश्यंतिब्रह्महत्यादिकानिच वैशाखस्यसितेपक्षेराघवैकादशीस्मृता मोहिनीनामनाम्नावैसर्वपा

पहरापरा अस्याव्रतप्रभावेनभस्मसात्पातकंभवेत् शृणुष्वराजशार्दूलकथांपापहरांपरां यस्याःश्रवणमात्रेणप्र
पानांनिःकृतिर्भवेत् सरस्वत्यास्तटेराजन्पुरीभद्रावतीपुरा द्युतिमान्नामराजावैतस्यांराज्यंचकारह सोमवंशसमुद्भू
तोराजापरमधार्मिकः धनपालेतिनाम्नावैतस्याभूत्पुष्कलंधनं सकृष्णप्रीतयेत्यर्थमकरोद्धर्मसंचयं पुण्यान्याय
तनान्येवविविधानिचकारसः पंचवपुत्रास्तस्यासन्सुरूपाश्चित्रसान्निभाः सुमनाद्युतिमांश्चैवमेधावीमतिरेवच पं
चमोधृष्टबुद्धिश्चमहापापरताःसदा वारस्त्रीषुचमध्येषुमांसेषु विविधंधनं पितुस्तेनक्षयंनीतमन्यायात्पितृसंचितंम
हा...परतोदुष्टःसोभूद्ब्राह्मणनिंदकः अभक्ष्यभक्षकोनित्यंपापासक्तमनाः सदा वैश्यास्कंधेक्षिप्यबाहुंवैश्यास्यंप
। जनेदृष्टिपथंप्राप्तेनलज्जामकरोत्खलः भ्रातृभिःसतदात्यक्तः स्वजनैर्जनेकनच गणिकाभिश्चसंत्यक्तोध
ेगतादरः सर्वैर्यदापरित्यक्तस्तदाचिंतापरोभवत् किंकरोमिक्वगच्छामिकेनोपायेनसंप्रति जीवाम्यहंद्र
व्यहीनोभाग्यहीनोलघुस्ततः स्तेयकर्मकरिष्यामिस्वपितुर्नगरेधुना इतिसंचिंत्यतेनेत्थंमुषितंनगरंपितुः ज्ञात
राज्ञस्तुगौरवात् एकदासनृपस्याग्रेनीतोनगररक्षकैः संप्रेष्यराज्ञाकाथतंक्रियतांनगराद्बहिः
प्रापितोनगराद्बहिः पुरपालैस्ततोरण्यंगहनंप्रविवेशह क्षुधितस्तृषितश्चैवबभ्रामसइतस्ततः
ुमारेभेमांसजीवीबभूवसः शरांस्तीक्ष्णान्करेन्यस्यतूणींपृष्ठभागतः निर्दयत्वात्पापकर्मासबाणैर्हन
न्मृगान् तत्रैवमुनिवर्योभूत्कौंडिन्योप्यचरत्तपः प्रत्यहंजाह्नवीतीरेस्नानार्थंसमुपाययौ वैशाखेमासिसस्नानंदानंच
स्नानंजगामाशुमार्गेणस्वाश्रमंप्रति मार्गमध्येधृष्टबुद्धिंदुःखितंसंददर्शसः कौंडिन्यःकृपया
गांगवारिणाततस्त्वयंयदास्पृष्टोमुनिनागांगवारिणा तदैवपुण्यवान्जातो धृष्टबुद्धिःप्रहर्षितः कौं
निशार्दूलंविनयावनतोब्रवीत् व्रतंकथयमेस्वामिन्विनावित्तेनयद्भवेत् कौंडिन्यउवाच व्रतंतकथयिष्यामिये

नपापक्षयोभवेत् वैशाखस्यसितेपक्षेमोहिनीनामनामतः एकादशीमहापुण्यानराणांपापनाशिनी मेरुतुल्यानिपापा
निक्षयंनश्यातितत्क्षणात् पातकानिक्षयंयांतिपंचाशल्लक्षजन्मनां तमांस्यर्कोदयेनैवमोहिन्येकादशीव्रतात् इतिकृ
त्वामुनेर्वाक्यंविधिदृष्टंयथाविधिःभक्त्याकरोद्दृष्टबुद्धिर्मोहिन्येकादशीव्रतं सर्वपापंक्षयंनीतंव्रतेनानेनतेनवैजन्मांतिमो
क्षमापन्नोबभूवगरुडासनः ईदृशंकथितंरामर्मोहिन्येकादशीव्रतं माहात्म्यश्रवणादस्यागोसहस्रफलंलभेत् इति
कूर्मपुराणेपाद्मेचवैशाखशुक्लामोहिन्येकादशीव्रतकथा - वैशाखशुक्लद्वादश्यांधरणीव्रतेषुजामदग्न्यद्वादशीव्रतं दु
र्वासाउवाच वैशाखेप्येवमेवंतुसंकल्प्यविधिनानरः तद्वत्स्नानमृदाकृत्वाततोदेवालयंव्रजेत् तत्र राध्यहरिंभक्त्या
मंत्रैरेभिर्विचक्षणः जामदग्न्यायपादौतुउदरंसर्वधारिणे मधुसूदनायेति कटिं मुरः श्रीवत्सधारिणे क्षत्रांतका
यबाहूचमणिकंठायकंठकं स्वनाम्नाशंखचक्रेतिशिरोब्रह्मांडधारिणे एवमभ्यर्च्यमेधावीप्राग्वैतस्याग्रतोघट विन्य
सेद्वाष्टनंतत्रयुग्मंतत्रविशेषतः वेणवेनचपात्रेणतस्मिन्संस्थापयेद्धरिं जामदग्न्येनरूपेणकृत्वासौवर्णमग्रतः दक्षि
णेपरशुंचैवहस्तेतस्यचकारयेत् सर्वगंधैश्चसंपूज्यपुष्पैर्नानाविधैस्तथा ततस्तस्याग्रतःकुर्याज्जागरंभक्तिमान्नरः प्र
भातेविमलेसूर्येब्राह्मणायनिवेदयेत् एवंनियमयुक्तस्ययत्फलंतान्निबोधमे आसीद्राजामहाभागोवीरसेनोमहाबलः
अपुत्रःसपुनस्तीव्रंनपस्तेपेमहाबलःचरतस्तुतपोघोरंयाज्ञवल्क्योमहामुनिःआजगाममहायोगीतंद्रष्टुंचाभियोगतः
राजोवाच कथंनभवितापुत्रः स्वल्पायासेनवैद्विज एतन्मेकथयप्रीत्याभगवन्प्रणतस्यवैएवमुक्तोमुनिस्तेनपार्थिवे
नयशस्विना आचरस्वद्वादशींचेमांवैशाखेसितपक्षजां सहिराजाविधानेनपुत्रकामोविशेषतः उपोष्यलब्ध
वान्पुत्रंतेनपरमधार्मिकं योद्यापिकीर्त्यतेलोकेपुण्यश्लोकोनरोत्तमः प्रासंज्ञकफलंह्येतद्व्रतस्यास्यमहामुने यत्पु
त्रोजायतेनेनविद्यावान्कीर्त्तिरुत्तमा इहजन्मनिकिंचित्रंपरलोकेशृणुष्वमे कल्पमेकंब्रह्मलोकेउषित्वाप्सरसांगणैः

पहरापरा अस्याव्रतप्रभावेनभस्मसात्पातकंभवेत् शृणुष्वराजशार्दूलकथांपापहरांपरां यस्याःश्रवणमात्रेणपा
पानांनिःकृतिर्भवेत् सरस्वत्यास्तटेराजन्पुरीभद्रावतीपुरा द्युतिमान्नामराजावैतस्यांराज्यंचकारह सोमवंशसमुद्भू
तोराजापरमधार्मिकः धनपालेतिनाम्नावैतस्याभूत्पुष्कलंधनं सकृष्णप्रीतयेत्यर्थमकरोद्धर्मसंचयं पुण्यान्याय
तनान्येवविविधानिचकारसः पंचैवपुत्रास्तस्यासन्सुरूपाश्चित्रसन्निभाः सुमनाद्युतिमांश्चैवमेधावीमतिरेवच पं
चमोधृष्टबुद्धिश्चमहापापरतःसदा वारस्त्रीषुचमध्येषुमांसेषुविविधंधनं पितुस्तेनक्षयंनीतमन्यायात्पितृसंचितंम
हापापरतोदुष्टःसोभूद्ब्राह्मणनिंदकः अभक्ष्यभक्षकोनित्यंपापासक्तमनाः सदा वैश्यास्कंधेक्षिप्यबाहुंवैश्यास्वयंप
रिचुंबति जनेदृष्टिपथंप्राप्तेनलज्जामकरोत्खलः भ्रातृभिःसतदात्यक्तः स्वजनैर्जनकेनच गणिकाभिश्चसंत्यक्तोध
नहीनोगतादरः सर्वैर्यदापरित्यक्तस्तदाचिंतापरोभवत् किंकरोमिक्वगच्छामिकेनोपायेनसंप्रति जीवाम्यहंद्र
व्यहीनोभाग्यहीनोलघुस्ततः स्तेयकर्मकरिष्यामिस्वपितुर्नगरेधुना इतिसंचिंत्यतेनेत्थंमुषितंनगरंपितुः ज्ञात
श्चारैर्गृहीतोपिमुक्तोराज्ञस्तुगौरवात् एकदासनृपस्याग्रेनीतोनगररक्षकैः संप्रेष्यराज्ञाकथितंक्रियतांनगराद्बहिः
राजाज्ञयातदैवाशुप्रापितोनगराद्बहिः पुरपालैस्ततोरण्यंगहनंप्रविवेशह क्षुधितस्तृषितश्चैवबभ्रामसइतस्ततः
मृगयाकर्तुमारेभेमांसजीवीबभूवसः शरांस्तीक्ष्णान्करेन्यस्यतूणीरंपृष्ठभागतः निर्दयन्वात्पापकर्मासबाणैरहन्
न्मृगान् तत्रैवमुनिवर्योभूत्कौंडिन्योप्यचरत्तपः प्रत्यहंजाह्नवीतीरेस्नानार्थंसमुपाययौ वैशाखेमासिसस्नानंदानंच
विधिनाकरोत् कृत्वास्नानंजगामाशुमार्गेणस्वाश्रमंप्रति मार्गमध्येधृष्टबुद्धिंदुःखितंसंददर्शसः कौंडिन्यःकृपया
सद्यः स्पृष्टवान्गांगवारिणाततस्त्वयंयदास्पृष्टोमुनिनागांगवारिणा तदैवपुण्यवान्जातो धृष्टबुद्धिःप्रहर्षितः कौं
डिन्यंमुनिशार्दूलंविनयावनतोब्रवीत् व्रतंकथयमेस्वामिन्विनावित्तेनयद्भवेत् कौंडिन्यउवाच व्रतंतेकथयिष्यामिये

नपापक्षयोभवेत् वैशाखस्यसितेपक्षेमोहिनीनामनामतःएकादशीमहापुण्यानराणांपापनाशिनी मेरुतुल्यानिपापा
निक्षयंनश्यातितत्क्षणात् पातकानिक्षयंयांतिपंचाशल्लक्षजन्मनां तमांस्यर्कोदयेनैवमोहिन्यैकादशीव्रतात् इतिश्रु
त्वामुनेर्वाक्यंविधिदृष्टंयथाविधिःभक्त्याकरोद्दृढबुद्धिर्मोहिन्यैकादशीव्रतं सर्वपापक्षयंनीतंव्रतेनानेनतेनवैजन्मांतेमो
क्षमापन्नोवभूवगरुडासनः ईदृशंकथितंरामभोहिन्यैकादशीव्रतं माहात्म्यश्रवणादस्यागोसहस्रफलंलभेत् इति
कूर्मपुराणेपाद्मेचवैशाखशुक्लामोहिन्यैकादशीव्रतकथा वैशाखशुक्लद्वादश्यांधरणीव्रतेपुजामदग्न्यद्वादशीव्रतं दु
र्वासाउवाच वैशाखेप्येवमेवंतुसंकल्प्यविधिनानरः तद्वत्स्नानंमृदाकृत्वाततोदेवालयंव्रजेत् तत्र राध्यहरिंभक्त्या
मंत्रैरेभिर्विचक्षणः जामदग्न्यायपादौतुउदरंसर्वधारिणे मधुसूदनायेति कटिं मुरः श्रीवत्सधारिणे क्षत्रांतका
यबाहूचमणिकंठायकंठकं स्वनाम्नाशंखचक्रेतिशिरोब्रह्मांडधारिणे एवमभ्यर्च्यमेधावीप्राग्वैतस्याग्रतोघट विन्य
सेद्वेष्टनंतत्रयुग्मेतत्रविशेषतः वैणवेनचपात्रेणतस्मिन्संस्थापयेद्धरिं जामदग्न्येनरूपेणकृत्वासौवर्णमग्रतः दक्षि
णेपरशुंचैवहस्तेतस्य वकारयेत् सर्वगंधैश्चसंपूज्यपुष्पैर्नानाविधैस्तथा ततस्तस्याग्रतःकुर्याज्जागरंभक्तिमान्नरः प्र
भातेविमलेसूर्येब्राह्मणायनिवेदयेत् एवंनियमयुक्तस्ययत्फलंतन्निबोधमे आसीद्राजामहाभागोवीरसेनोमहाबलः
अपुत्रःसपुनस्तीव्रंतपस्तेपेमहाबलःचरतस्तुतपोघोरंयाज्ञवल्क्योमहामुनिःआजगाममहायोगीतंद्रष्टुंचाभियोगतः
राजोवाच कथंनभवितापुत्रः स्वल्पायासेनवैद्विज एतन्मेकथयप्रीत्याभगवन्प्रणतस्यवैएवमुक्तोमुनिस्तेनपार्थिवे
नयशस्विना आचरस्वैद्वादशींचेमांवैशाखेसितपक्षजां सहिराजाविधानेनपुत्रकामोविशेषतः उपोष्यलब्ध
वान्पुत्रंतेनपरमधार्मिक योद्यापिकीर्त्यतेलोकेपुण्यश्लोकोनरोत्तमः प्रासंगिकफलंह्येतद्व्रतस्यास्यमहामुने यत्पु
त्रोजायतेनेनविद्यावान्कीर्तिरुत्तमा इहजन्मनिकिंचित्रंपरलोकेशृणुष्वमे कल्पमेकंब्रह्मलोकेउषित्वाप्सरसांगणैः

क्रीडित्वातेपुनःसृष्टौजायंतेचक्रवर्त्तिनः त्रिंशत्कल्पसहस्राणिजायंतेनात्रसंशयः इतिवाराहपुराणेधरणीव्रतेपुवै
शाखशुक्लाजानदग्न्यद्वादशीव्रतकथा अस्यामेवद्वादश्यांयोगविशेषोहेमाद्रौपंच.ननस्थौगुरुभूमिपुत्रौमेषेरविः स्या
दिहशुक्लपक्षे मासाभिधानाकरभेणयुक्तातिथिर्व्यतीपातइतीहयोगः अस्मिंस्तुगोभूमिहिरण्यवस्त्रदानेनपापं
परिहायसर्वं सुरत्वमिंद्रत्वमनामयत्वमर्त्याधिपत्वंलभेतमनुष्यइति पंचाननः सिंहमासाभिधानामास
संस्याभिधानातिथिर्द्वादशी करभेणहस्तऋक्षेणयुक्ता अस्यामेवमाधवपूजनमुक्तं नारदीयेवैशाखशुक्ल
द्वादश्यांसोपवासोजितेंद्रियः संपूज्यमाधवंभक्त्यागंधाद्यैरुपचारकैः पक्वान्नतृप्तिजनकं मधुरंसोदकुंभकं
विधायदद्याद्विधिवत्माधवः प्रीयतामिति वैशाखशुक्लत्रयोदश्यांकामदेवपूजाव्रतम् नारदीये राधाशुक्ल
त्रयोदश्यांकामदेवव्रतंस्मृतं तत्रगंधादिभिःकामंपूजयेदुपवासवान् प्रतिमासंततः पश्चा त्रयोदश्यांसितेदले
एवमेवव्रतंकार्यंवर्षांतेगामलंकृतां दद्याद्विप्रायसत्कृत्यव्रतसांगत्वसिद्धये वैशाखशुक्लचतुर्दश्यांनृसिंहजयंतीव्रतं
तदुक्तंवाराहपुराणे वैशाखस्यशुक्लपक्षेचतुर्दश्यांमहातिथौ जयंतीतत्रकर्त्तव्यानृसिंहस्यद्विजोत्तमैरिति गोविंदार्णवे
ब्राह्मे चतुर्दश्यांशुक्लपक्षेमासिमाधवसंज्ञके प्रादुर्भूतोनृपंचास्यस्तस्मात्तांसमुपोषयेदिति इयंप्रदोषव्यापिनीग्राह्या
तदुक्तंमदनरत्ने हेमाद्रौ नृसिंहपुराणे वैशाखेशुक्लपक्षेतुचतुर्दश्यांनिशामुखे मज्जन्मसंभवंपुण्यंव्रतंपापप्रणाशनं
वर्षेवर्षेतुकर्त्तव्यंममसंतुष्टिकारकमिति टोडरानदेस्कांदे वैशाखस्यचतुर्दश्यांसोमवारेनिलक्षके अवतारोनृसिंहस्य
प्रदोषसमयेद्विज तथाच नृसिंहप्रसादोदाहृतं नृसिंहपुराणे वैशाखशुक्लपक्षस्यचतुर्दश्यांविवस्वति अस्तंगा
मिनिसर्वेपांपुरतस्तंभमध्यतः प्रबभूवमहाविष्णुर्नरसिंहाकृतिर्नृप तस्यांव्रतंनरैःकार्यंमहाविष्णोरतिप्रियमिति कू
र्मसिंहौवौद्धकल्कीचसायान्हेतिपुराणसमुच्चयाच्च।दिनद्वयेप्रदोषव्य.प्तावव्याप्तावेकदेश-संकल्परूपव्रतोपक्रमकाल

सत्वात् शुक्लपक्षगतत्वाच्चवैषम्यनैकदेशयोगेऽधिकव्याप्तिमतीग्राह्याकृत्यरत्नावल्यामप्येवं दीक्षितोयत्तुदिनद्वये
व्याप्त्यावव्याप्तौवापूर्वापूर्वदिनेगौणकालव्याप्तेःसत्वात्-परदिनेचतदभावादित्युक्तं यत्तुकैश्चिदुक्तपूर्वदिने प्रदोषका
लव्यापिनीचतुर्दशीसद्भावे उत्तरदिने प्रदोषकालास्पर्शेपिउत्तराविद्धाग्राह्या अनंगेनसमायुक्तानैवोपोष्याचतुर्दशी
धनपत्यैर्वियुज्येततस्मात्तांपरिवर्जयेदितिवचनेन पूर्वविद्धानिषेधादिति- तन्न एतद्वचनस्यहेमाद्रिमदनरत्नादि
सकलमहानिबंधेष्वलिखितत्वेनानादृतत्वात् अस्याएवंयोगविशेषेणप्राशस्त्यमुक्तं नृसिंहपुराणे स्वातीनक्षत्रयो
गेचशनिवारेमहद्व्रतं सिद्धयोगस्यसंयोगेवणिजेकरणेतथा--पुंसांसौभाग्ययोगेनलभ्यतेदैवयोगतःसर्वैरेतैस्तुसंयु
क्तंहत्याकोटिविनाशनं एतैर्योगैर्विनापिस्यान्मद्दिनंपापनाशनमिति अस्मिन्व्रतेसर्वेषामधिकारः सर्वेषामपिव
र्णानामधिकारोस्तिमद्व्रते मद्भक्तैस्तुविशेषेणकर्त्तव्यमत्परायणैरितितत्रैवोक्तेः इदंचसंयोगपृथक्त्वन्यायेन स ल-
त्वेपिदिनद्वये प्रदोषकालेसमव्याप्तिसत्वेपूर्वविद्धायानिषेधकत्वाच्च वैष्णवानांतुस्मरविद्धायानिषेधात्सर्वथाशुद्धे.
वोपोष्या तथाच हरिभक्तिविलासे बृहन्नारसिंहे वैशाखशुक्लपक्षस्यचतुर्दश्यांसमाचरेत् मज्जन्मसंभवंपुण्यंव्रतं.
पापप्रणाशनं स्वातिनक्षत्रयोगेनलभ्यतेदैवयोगतः सर्वैरेतैस्तुसयुक्तहत्याकोटिविनाशनं केवलचप्रकर्त्तव्यंम-
द्दिनंफलकांक्षिभिः वैष्णवैस्तुनकर्त्तव्यास्मरविद्धाचतुर्दशीति आगमेपि प्रियेचतुर्दशीभौमेकर्त्तव्याकिल्बिषापहा-
कामविद्धानकर्त्तव्यास्वातीभौमयुतायदीति इदंव्रतंनित्यकाम्यच वर्षेवर्षेतुकर्त्तव्यमितिवीप्साश्रवणात् तथाच·
विज्ञायमद्दिनंयस्तुलघयेत्पापकृन्नरः सयातिनरकंघोरंयावच्चंद्रदिवाकरावित्यकरणेदोषश्रवणाच्च अपुत्रोलभ
तेपुत्रानित्यादिफलश्रवणाच्च इतिनृसिंहजयत्याग्राह्यातिथिनिर्णयः अथात्रकृत्यमुच्यते· कृत्यरत्नावल्यां अथा.
स्याःसोद्यापनोव्रतविधिः अस्यांप्रातःकृत्यंविधायसूर्यादिदेवताभ्योव्रतंनिवेद्याचम्य-प्राणानायम्योदङ्मुखोवारि

पूर्णेताघपात्रंगृहीत्वासंकल्पंकुर्यात् तदुक्तंहेमाद्रौ नृसिंहपुराणे नियमंचप्रकुर्वीतदंतधावनपूर्वकमिति दंतधावन ग्रहणंप्रातःकृत्योपलक्षणं दंतधावनंचतृणपर्णादिनाद्वादशगंडूषैर्वाकार्यं उपवासदिनेदंतकाष्ठनिषेधात् निर्णयसिंधौ दीक्षितएव संकल्परूपव्रतकर्मसमारभेदिति नृसिंहपुराणोक्तेरिति मदनरत्नेप्येवमेव वस्तुतस्तुसंकल्पःप्रातरेवकर्तुमुचितः प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकमित्यादिवचनात् व्रतकर्मसमारभेदिति नृसिंहपुराणोक्तेस्तु व्रतस्यपूजादिरूपस्योपयोगियन्मंडपादिसामग्रीसंपादनंतत्परत्वात् नित्यकर्मसमारभेदितिपाठस्यैवबहुशोदृष्टत्वे नतत्रव्रतप्रारंभानुक्तेश्च संकल्पमंत्रस्तत्रैव श्रीनृसिंहोग्रदंष्ट्रस्त्वंदयांकुरुममोपरि अथाहंचविधास्यामिव्रतंनिर्विघ्नतांनयेतिनिर्णयसिंधौतु नृसिंहदेवदेवेशतवजन्मदिनेशुभे उपवासंकरिष्यामिसर्वभोगविवर्जितइतिसंकल्पमंत्रउक्तः ततोव्रतस्थेनमिथ्यालापपाखंड्यादिसंभाषणवर्जनंकार्यं ततोमध्याह्नेनद्यादौ मृद्गोमयतिलोदकैः स्नात्वानित्यकर्मनिर्वर्त्यगृहंगच्छेत् ततःसायंकालेगोमयोपलिप्तभूप्रदेशेऽष्टदलंकृत्वा तत्रकलशंसंस्थाप्यसर्वतोभद्रंवाविरचय्य आचार्यादिवरणंचविधाय कलशोपरि हैमींसुवर्णनृसिंहप्रतिमांपलपलार्धार्धादिमितां लक्ष्मीप्रतिमांच संस्थाप्य अग्न्युत्तारपूर्वकंप्राणप्रतिष्ठांकृत्वा मूलमंत्रेणवैदिकेन वज्रनखायविद्महे तीक्ष्णदंष्ट्रायधीमहि तन्नोनारसिंहःप्रचोदयात् इतिगायत्र्यानाममंत्रेणचषोडशोपचारैःपूजयेत् तत्रादौपूजोपयोगित्वेननृसिंहमंत्रन्यासादिकमुच्यते ॐनमःउग्रंवीरंमहाविष्णुंज्वलंतंसर्वतोमुखं नृसिंहंभीषणंभद्रंमृत्युमृत्युंनमाम्यहं अस्यमंत्रस्यब्रह्माऋषिरनुष्टुप्छंदःश्रीलक्ष्मीनृसिंहदेवता हंबीजंईंशक्तिःन्यासेविनियोगः ब्रह्मणेऋषयेनमः शिरसि अनुष्टुप्छंदसेनमोमुखे श्रीनृसिंहदेवतायैनमोहृदये हंबीजायनमोगुह्ये ईंशक्तयेनमः पादयोः उग्रंवीरं अंगुष्ठाभ्यांनमः महाविष्णुंतर्जनीभ्यांस्वाहा ज्वलंतंसर्वतोमुखंमध्यमाभ्यांवषट् नृसिंहंभीषणंअनामिकाभ्यांहुं भद्रंमृत्युमृत्युकानि

ष्ठिकाभ्यांवौषट् नमाम्यहंकरतलकरपृष्ठाभ्यांफट् एवमेवहृदयादिष्वगन्यासंकुर्यात् ततोध्यानंकुर्यात् नृसिंहभ
जेजानुविन्यस्तबाहुंत्रिनेत्रभुजेप्रोल्लसच्छंखचक्रंकृशानूपमज्योतिषादीप्तदैत्याशिरःशोभिदंष्ट्रासुदीप्तोग्रजिव्हम् १
वामांकेनृहरेःपूज्यालक्ष्मीभूषणभूषिता वामेपद्मधरादक्षबाहुनानृहरिंविभुं २ आश्लिष्यंतींशांतिमूर्त्तिमतोंगानिभ
कल्पयेत् ध्यानांतरचाग्रमे माणिक्याद्रिसमप्रभानिजरुचासंत्रस्तरक्षोगणं जानुन्यस्तकरांबुजंत्रिनयनरत्नो
ल्लसद्भूषणं बाहुभ्यांधृतशंखचक्रमनिशं दंष्ट्राग्रवक्रोल्लसज्ज्वालाजिव्हमुदग्रकेशनिचयंवदेनृसिंहंविभुम् १
एवंध्यात्वामानसैरुपचारैः संपूज्य शंखस्थापन षट्कोणमंडले विधाय पूजांकुर्यात् आगच्छदेवदेवेशप्रह्ला
दवरदायक यावत्पूजांकरोम्यत्रतावत्त्वसुस्थिरोभव सहस्रशीर्षेत्यावाहनं नानारत्नसमायुक्तंकार्त्तस्वरविभू
षित नृसिंहदेवदेवेशस्वासनंपरिगृह्यतां पुरुषएवेदमित्यासनं २ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृत तो
यमेतत्सुखस्पर्शंपाद्यार्थंपरिगृह्यताम् ३ नृसिंहाच्युतदेवेशलक्ष्मीकांतनमोस्तुते अर्घ्यंगृहाणदेवेशभक्तानांव
रदायक त्रिपादूर्ध्वेत्यर्घ्यम् ४ कर्पूरवासिततोयंमंदाकिन्याःसमाहृतं आचम्यतांत्वयादेवमयादत्तंहिभक्तितः त
स्माद्विराडित्याचमनम् ५ पंचामृतेनस्नपनंकरिष्येसर्वसिद्धिदं पयोदधिघृतंगव्यंमाक्षिकशर्करातथा पंचामृते
नस्नपनंगृहाणसुरसत्तम ६ आप्यायस्वेतिपयसा १ दधिक्राव्णेतिदध्ना २ घृतमितिघृतेन ३ मधुवातेतिमधु
ना ४ स्वादुःपवस्वेति शर्करया ५ एवंपंचामृतस्नानम् गंगाचयमुनाचैवनर्मदाचसरस्वती तापीपयोष्णीकृ
ष्णाचताभ्यःस्नानार्थमाहृत तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यतां यत्पुरुषव्यदधुरितिस्नानम् ७ स्नानानं
तरमाचमनीयम् पीतांबरयुगंदेवसर्वकार्यार्थसिद्धये मयानिवेदितंभक्त्यानृसिंहवरदायक तंयज्ञमितिवस्त्रम् ८
लक्ष्मीकांतनमस्तेस्तुत्राहिमांभक्तवत्सल ब्रह्मसूत्रंसोत्तरीयंगृहाणासुरनाशक तस्मात्यज्ञात्संभृतमितियज्ञोपवी

तम् ९ शीतलंचंदनदिव्यंचंद्रकुंकुममिश्रित ददामितवतुष्ट्यर्थंनृसिंहपरमेश्वरे तस्माद्यज्ञात्सर्वहुतइति
गंधम् १० अक्षताश्चसुरश्रेष्ठकुंकुमाक्ताःसुशोभनाः नृसिंहदेवदेवेशप्रीत्यात्वंस्वीकुरुप्रभो इत्यक्षताः माल्यादीनि
द्रवानिपुष्पाणितुलस्यादीनिवैप्रभोपूजयामि नृसिंहत्वां लक्ष्यासहनमोस्तुते तस्मादश्वा इतिपुष्पा
णि ११ कालागुरुमयदिव्यंसर्वदैवतवल्लभं धूपंगृहाणदेवेशसर्वकामसमृद्धये यत्पुरुषेणेतिधू
पम् १२ दीपःपापहरःप्रोक्तस्तमोराशिविनाशनः दीपेनलभतेतेजस्तस्माद्दीपददामिते ब्राह्मणस्ये
तिदीपम् १३ नैवेद्यंसुखदंचारुभक्ष्यभोज्यसमन्वितंददामितेरमाकांतसर्वपापक्षयंकुरु चंद्रमामन
सइतिनैवेद्यम् १४ इदंफलंमयानीतमितिफलम् पूगीफलमहादिव्यमितितांबूलं हिरण्यगर्भगर्भ
स्थमितिदक्षिणा पंचवर्तिसमायुक्तंसर्वमंगलदायकंनीराजनंनिरीक्षस्वरमाकांतनमोस्तुते इतिनीराजनं मा
लतीमल्लिकापुष्पैर्नागचंपकसंयुतैः पुष्पांजलिंगृहाणेमंपादांबुजयुगेर्पितं इतिपुष्पांजलिंसमर्पयेत्नृसिंहदेवदेवे
शसर्वकामफलप्रद लक्ष्मीकांतनमस्तुभ्यंपुत्रपौत्राभिवृद्धये नमस्तेदेवदेवेशनमस्तेसुरनायक नमस्तेकमलाकां
तनमस्तेभक्तवत्सल नमस्तेसर्वभूतेशवासुदेवनमोस्तुते नाभ्याआसीदिति प्रार्थनांनमस्कारंचकुर्यात् सप्ता
स्यासन्निति प्रदक्षिणांचकृत्वा उत्तरार्घ्यंचदद्यात्तत्रमंत्रः नृसिंहाच्युतदेवेशलक्ष्मीकांतनमोस्तुते अनेनार्घ्यप्रदा
नेनसफलाःस्युर्मनोरथाः ततोयज्ञेनयज्ञमितिमंत्रेणपुष्पांजलिंदत्त्वा रात्रौगीतवाद्यपुराणश्रवणादिभिर्जागरणंकु
र्यात् इतिव्रतविधानं उद्यापनेपिसर्वतोभद्रेसर्वमंडलदेवतापूजांते कलशोपरिनारसिंहमंत्रेणयथाविधिपूजनं पू
र्वोक्तमंत्रैर्विधायप्रातःपुनरपिदेवतापूजांमंडलदेवतासहितांविधायकुंडेस्थंडिलेवाब्रह्मवरणंचाग्निसंस्थापनंविधाया
न्वाधानंतिव्याहृतिभिर्हुत्वा नारसिंहगायत्र्यात्वाज्येनचरुणाहुत्वाब्रह्मादयोमंडलदेवताग्रहादियागदेवताश्चैकैकया

हुत्वाहुत्वा नृसिंहोद्देशेनचतुर्दशाधिकान् ब्राह्मणान् प्रतिमाकुंभवस्त्रपवित्रादिभिरभ्यर्च्य स्वर्णमयींसिंहसहि
तां श्रीमन्नृसिंहप्रधानप्रतिमांगोभूहिरण्यतिलपात्रशय्यासहितामाचार्यायदत्वाप्रार्थयेत् मद्वंशेयेचराजानोजनिष्यं
तिचयेपरे तान्समुद्धरदेवेशदुस्तराद्भवसागरात् पातकार्णवमग्नस्यव्याधिदुःखांबुवारिभिः जीवैस्तुपरिभूतस्यम
हादुःखगतस्यमे करावलंबनंदेहिशेषशायिन्जगत्पते श्रीनृसिंहरमाकांतभक्तानांभवनाशन क्षीरांबुधिनिवासे
शचक्रपाणेजनार्दन व्रतेनानेनदेवेशभुक्तिमुक्तिप्रदोभव एवंसंप्रार्थ्यप्रतिमांसोपस्करामाचार्यायदद्यात् तत्रमंत्रः
पीतांबरमहाबाहोप्रल्हादभयनाशकृत् अनेनार्घ्यप्रदानेनयथोक्तफलदोभवेति ततःपूर्णाहुतिंविधाय दक्षिणादि
भिर्ब्राह्मणान्संतोष्य मध्याह्नेबंधुभिः सहभुंजीतेति इतिनृसिंहचतुर्दश्याः सोद्यापनापूजा अथनृसिंहपरिचर्य्या
यामस्याःकथा हेमाद्रौ नृसिंहपुराणे हिरण्यकशिपुंहत्वादेवदेवंजगद्गुरुं सुखासीनंतदुत्संगेशांतकोपंरमापतिं
प्रल्हादोज्ञानिनांश्रेष्ठःप्रालयन्राज्यमुत्तमं एकाकीचतदुत्संगेप्रियवचनमब्रवीत् प्रल्हादउवाच नमस्तेभगवन्वि
ष्णोश्रीनृसिंहरमापते त्वद्भक्तोहंसुरेशैकत्वांपृच्छामितुतत्वतः स्वामिन्त्वयिममाभिन्नाभक्तिर्जातात्वनेकधा कथंच
तेप्रियोजातःकारणंवदमेप्रभो श्रीनृसिंहउवाच कथयामिमहाप्राज्ञशृणुष्वैकाग्रमानसः भक्तेर्यत्कारणंवत्सप्रिय
त्वस्यचकारणं पुराकालेह्यभूर्विप्रःकिंतुतंनाप्यधीतवान् नाम्नात्वंवासुदेवोहिवेश्यास्वासक्तमानसः तस्मिन्नज
न्मानिनैवत्वंचकारसुकृतंकियत् मुक्तातुमद्व्रतंचैकंवेश्यासंगतिलालसः मद्व्रतस्यप्रभावेनभक्तिर्जातातवानघ प्रल्हा
दउवाच श्रीनृसिंहोच्यतांतावत्कस्यपुत्रस्यकिंव्रतंवेश्यायांवर्तमानेनकथंतच्चकृतंमया येनतद्विष्णुमाहात्म्यंवक्तु
मर्हसिसांप्रतं नृसिंहउवाच पुरावंतिपुरेह्यासीद्ब्राह्मणोवेदपारगः तस्यनामसुशर्मेतिबहुलोकेषुविश्रुतः ब्रह्माक्रि
यासुनियतंसर्वासुकिलतत्परः तत्परश्चासक्तः अग्निष्टोमादिभिर्यज्ञैरिष्टाःसर्वेसुरोत्तमाः तेनापिविद्यमानेनकृतंनो

दुष्कृतंकिपतु तस्यभार्यासुशीलांचविख्याताभुवनत्रये पतिव्रतासदाचारापतिभक्तिपरायणा जज्ञिरेस्यांसुताः
पंचतस्माद्द्विजवरात्तथा सदाचाराःसुविद्वांसःपितृभक्तिपरायणाः तेषांमध्येकनिष्ठस्त्वंवेश्यासंगतितत्परः तयानि
षिध्यमानेनसुरापानंत्वयाकृतंसुवर्णंचाप्यपहृतंचौरैःसार्धंत्वयाबहु विलासिन्यागृहेनित्यंवसतोप्यविचारतः विला
सिनीवेश्या एकदातद्गृहेह्यासीत्तयासहमहाकलिः ततःकलहभावेनभोजनंनत्वयाकृतं अज्ञानान्मद्व्रतंकृत्वाव्रताना
मिदमुत्तमं त्वयाविरहयोगेनरात्रौजागरणंकृत वेश्यायावल्लभंकिंचित्प्रज्ञातंनतयासह रात्रौजागरणेचीर्णेत्यक्ताभो
गमनेकशः व्रतेनानेनचीर्णेनमोदतेदिविदेवताः सृष्ट्यर्थंहिपुराब्रह्माचक्रेह्येतदनुत्तमं मद्व्रतस्यप्रभावेननिर्मितंस
चराचरं ईश्वरेणपुराचीर्णंत्रिपुराणांवधार्थिना माहात्म्येनव्रतस्यास्यत्रिपुराविनिपातिता.अन्यैस्तुबहुभिर्देवैर्ऋषि
भिश्चपुरानघ राजभिश्चमहाप्राज्ञविहितंव्रतमुत्तमं एतद्व्रतप्रभावेनसर्वेसिद्धिमुपागताः वेश्यापिमत्प्रियाजाता
त्रैलोक्येसुखचारिणी ईदृशंमद्व्रतंवत्सत्रैलोक्येचातिविश्रुतं कलहेनविलासिन्याव्रतमेतदुपस्थितं प्रल्हादतेनते
भक्तिर्मयिजाताह्यनुत्तमा धूर्त्तयाचविलासिन्याज्ञात्वाव्रतमिदंमहत् कलहश्चकृतोयेनमद्व्रतचकृतभवेत् सावेश्या
त्वप्सराजाताभुक्ताभोगाननेकशः भुक्त्वाकर्मविहीनस्त्वंप्रल्हादविशसेमयि कार्य्यार्थंचभवानास्तेमच्छरीरपृथ
कया विधायसर्वकार्याणिशीघ्रंचैवागमिष्यसि यइदंव्रतमावश्यंप्रचरिष्यंतिमानवाः नतेषांपुनरावृत्तिर्मत्तःकल्प
शतैरपि अपुत्रोलभतेपुत्रान्मद्भक्तांश्चसुवर्चसः दरिद्रोलभतेलक्ष्मींधनदस्यचयादृशी तेजस्कामोलभेत्तेजोराज्या
र्थीराज्यमुत्तमं आयुःकामोलभेदायुर्यादृशंतच्छिवस्यच स्त्रीणांव्रतमिदंसाधुपुत्रदंभाग्यदंतथा अवैधव्यकरंतासां
पुत्रशोकविनाशनंधनधान्यकरंचैवज्ञातिश्रैष्ठ्यकरंशुभं स्त्रियोवापुरुषोवापिकुर्वंतिव्रतमुत्तमं तेभ्योददाम्यहंसौख्यं
भुक्तिमुक्तिसमन्वितं बहुनोक्तेनकिंवत्सव्रतस्यास्यफलंमहत् मद्व्रतस्यफलंवक्तुंनाहंशक्तोनशंकरः ब्रह्माचतुर्भिर्व

कैश्चनलभेन्महिमावधिं प्रल्हादउवाच भगवंस्त्वत्प्रसादेनश्रुतंव्रतमनुत्तमं व्रतस्यास्यफलंसाधुत्वयिमेभक्तिका
रणं स्वामिन्नजातिविशेषेणत्वत्त पापनिकृंतनं अधुनाश्रोतुमिच्छामिव्रतस्यास्यविधिंपरं कस्मिन्मासेभवेद्देवतत्क
स्मिन्वावासरेप्रभो एतद्विस्तरतोदेववक्तुमर्हसिसांप्रतं विधिनायेनवैस्वामिन्समग्रफलभाग्भवेत् ममोपरिकृपा
कृत्वाब्रूहित्वंसकलंप्रभो श्रीनृसिंहउवाच साधुसाधुमहाभागव्रतस्यास्यविधिंपरं सर्वंकथयतोमेद्यत्वमेकाग्रमतिः
शृणु वैशाखेशुक्लपक्षेतुचतुर्दश्यांसमाचरेत् मज्जन्मसंभवंपुण्यंव्रतंपापप्रणाशनं वर्षेवर्षेप्रकर्त्तव्यममसंतुष्टिकारण
महागुह्यमिदंश्रेष्ठंमानुषैर्भवभीरुभिः कर्त्तव्यमितिशेष तेनवैक्रियमाणेनसहस्रद्वादशीफलं जायतेमत्सखाएवम
नुषाणांमहात्मनां मानुषाणांमध्येजायतइत्यन्वय मत्सखाश्रेतइतिशेषः स्वातिनक्षत्रयोगेचशनिवारेमहद्व्रत सिद्धि
योगस्यसयोगेवणिजकरणेतथा पुसांसौभाग्ययोगेनलभ्यतेदैवयोगतः सर्वैरेतैस्तुसंयुक्तंहत्याकोटिविनाशनं एत
दन्यतरेयोगेतद्दिनंपापनाशनं केवलेपिप्रकर्त्तव्यंमद्दिनेव्रतमुत्तमं अन्यथानरकंयातियावच्चंद्रदिवाकरौ यथा
यथाप्रवृत्तिःस्यात्पातकस्यकलौयुगे तथातथाप्रणश्यतिसर्वेधर्मानसंशयः मद्व्रतस्यप्रभावेनमतिर्नस्याद्दुरात्मत
विचार्य्येत्थंप्रकर्त्तव्यमाधवेमासिमद्व्रतं नियमश्चप्रकर्त्तव्योदंतधावनपूर्वक श्रीनृसिंहमहोग्रत्वंकृपांकुरुममोपरि
अद्याहंचविधास्यामिव्रतंनिर्विघ्नतांनय इतिव्रतग्रहणमंत्रःव्रतस्थेननकर्त्तव्यासंगतिःपापिभिःसह मिथ्यालापोन
कर्त्तव्यःसमग्रफलकांक्षिभि स्त्रीभिर्दुष्टैश्चआलापान्व्रतस्थोनैवकारयेत् स्मर्त्तव्यंमेमहारूपंमद्दिनेसकलेप्सुभि ततो
मध्याह्नवेलायांनद्यादौविमलेजले गृहेवादेवखातेवातडागेविमलोदके वैदिकेनैवमंत्रेणस्नानंकृत्वाविचक्षणः मृत्ति
कागोमयेनैवतथाधात्रीफलेनच तिलैश्चसर्वपापघ्नैः स्नानंकृत्वामहामतिः परिधायशुचिवासोनित्यकर्मसमारभेत्
ततोगृहंसमागत्यस्मरन्मांभक्तियोगतः गोमयेनप्रलिप्याथकुर्यादष्टदलंशुभम् कलशंस्थापयेत्तत्ररत्नपल्लवश्र

भितम् तस्योपरिन्यसेत्पात्रंतंडुलैःपरिपूरितम् हैमींतत्रचमन्मूर्तिंस्थाप्याभ्यर्च्यतथैवच पलेनचतदर्द्धेनतदर्धा
र्द्धेनवापुनः यथाशक्तिस्तथाकार्यावित्तशाठ्यविवर्जिता पंचामृतेनसंस्नाप्यपूजनंचसमाचरेत् ततोब्राह्मणमा
हूयतमाचार्य्यमलोलुपं सदाचारसमायुक्तंशांतंदांतंजितेंद्रियम् तेनैवकारयेत्पूजांइष्टाशास्त्रानुसारतः आचार्य्य
पठनाद्धोमान्पूजांकुर्य्याद्यथाविधिः मंडपंकारयेत्तत्रपुष्पस्तवकशोभितम् ऋतुकालोद्भवैःपुष्पैःपूजयेद्यतमान
सःउपचारैःषोडशभिर्मंत्रैर्नामभिरंकितैः ततःपौराणिकैर्मंत्रैःपूजनीयोयथाविधिः चंदनंशीतलंदिव्यंचंद्रकुंकुममि
श्रितं ददामितवतुष्ट्यर्थंनृसिंहपरमेश्वरइतिचंदनमंत्रः कालोद्भवानिपुष्पाणितुलस्यादीनिवैप्रभो पूजयामिनृसिं
हत्वांलक्ष्मीसहनमोस्तुते कालागुरुमयंधूपंसर्वदेवसुवल्लभम् करोमितेमहाविष्णोसर्वकामसमृद्धये दीपःपाप
हरःप्रोक्तस्तमोराशिविनाशनः दीपेनलभ्यतेतेजस्तस्माद्दीपंददाम्यहम् नैवेद्यंसौख्यदंदेवभक्ष्यभोज्यसमन्वि
तम् ददामितेरमाकांतसर्वपापक्षयंकुरु नृसिंहाच्युतदेवेशलक्ष्मीकांतजगत्पते अनेनार्घ्यप्रदानेनसफलाःस्युर्म
नोरथाः पीतांबरमहाबाहोप्रल्हादाभयदायक यथाभूतार्चनेनाद्ययथोक्तफलदोभव रात्रौजागरणंकार्य्यंगीत
वादित्रनिःस्वनैः पुराणपठनैर्नृत्यैःश्रोतव्याचकथाशुभा ततःप्रभातसमयेस्नानंकृत्वाह्यतंद्रितः पूर्वोक्तेनविधा
नेनपूजयेन्मांप्रयत्नतः वैष्णवंतुचरेच्छ्राद्धमदग्रेस्वस्थमानसः ततोदानानिदेयानिवक्ष्यमाणानिचानघ पात्रेभ्य
स्तुद्विजेभ्यश्चलोकद्वयजिगीषया सिंहःस्वर्णमयोदेयोममसंतोषकारकः गोभूतिलहिरंण्यानिदेयानिचफले
प्सुभिः शय्यासतूलिकादेयासप्तधान्यसमन्विता अन्यानिचयथाशक्त्यादेयानिममतुष्टये वित्तशाठ्यंनकर्त्त
व्यंयथोक्तफलमिच्छता ब्राह्मणान्भोजयेद्भक्त्यातेभ्योदेयाचदक्षिणा निर्द्धनैरपिकर्त्तव्यंदेयंशक्त्यनुसारतः सर्वेषा
मेववर्णानामधिकारोस्तिमद्व्रते मद्भक्तैस्तुविशेषेणकर्त्तव्यंमत्परायणैः मद्वंशेयचराजानोजनिष्यंतिचमत्पराः

तान्समुद्धरदेवेशदुस्तराद्भवसागरात् पातकार्णवमग्नस्यव्याधिदुःखांबुराशिभिः जीवैस्तुपरिभूतस्यमहादुःख
गतस्यच करावलंबनदेहिशेषशायिन्जगत्पते श्रीनृसिंहरमाकांतभक्तानांभवनाशन क्षीरांबुधिनिवासस्त्वं
चक्रपाणेजनार्दन व्रतेनानेनदेवेशभुक्तिमुक्तिप्रदोभव एवंप्रार्थ्यततोदेवंविसृज्यचयथाविधिः उपहारादिकंसर्व
माचार्य्यायनिवेदयेत् मध्यान्हेतुसमायुक्तोभुंजीतबंधुभिःसह यइदंशृणुयाद्भक्त्याव्रतंपापप्रणाशनं तस्यश्रवण
मात्रेणब्रह्महत्यांव्यपोहति व्रतंनामव्रतारव्यानमित्यर्थः पवित्रंपरमंगुह्यंकीर्त्तयेद्यस्तुमानवः सर्वान्कामानवाप्नो
तिव्रतस्यास्यफलंलभेत् इतिनृसिंहचतुर्दशीव्रतकथा अस्यामेवचतुर्दश्यां ओंकारेश्वरयात्राप्युक्ता काशीखंडे रा
धशुक्लचतुर्दश्यांममापिक्षेत्रवासिनः तत्रयात्रांकरिष्यंतिमहोत्सवपुरःसरां तत्रजागरणंकृत्वाचतुर्दश्यामुपोषिताः
प्राप्नुवंतिपरंज्ञानंयत्रकुत्रापियेमृताः ब्रह्मांडोदरमध्येतुयानितीर्थानिसर्वतःतानिवैममभूयासुरागत्याकृतिदर्शनाइति
अस्यामेवकालांतरोक्तंलिंगव्रतम् तदुक्तंहेमाद्रौ चतुर्दश्यांशुक्लपक्षेवैशाखस्यप्रयत्नतः शिवंपूज्यविधानेनमहास्नप
नपूर्वकम् विलिप्यकुंकुमेनैवचंदनैश्चार्चयेच्छिवम् लिंगापिष्टमयंकृत्वाहेमपुष्पाविलेपनं तिलप्रस्थस्वर्णयुतंगुग्गुल्व
गुरुसिल्हकंधूपंदत्वा दमनपुष्पैः संपूज्यभवायरुद्रायेतिनाम्नादद्यात्कर्तुस्तत्पितॄणांचशिवलोकप्राप्तिर्भवतीति
अस्याःसर्वमेवकृत्यंनारदीयेप्युक्तम् वैशाखस्यचतुर्दश्यांश्रीनृसिंहव्रतंचरेत् उपवासविधानेनशक्तोशक्तस्तथैकभुक्
निशागमेतुसंपूज्यनृसिंहंदैत्यसूदनंउपचारैःषोडशभिःस्नानैःपंचामृतादिभिःततःक्षमापयेद्देवंमंत्रेणानेननारद तप्त
हाटककेशांतज्वलत्पावकलोचनवज्राधिकनखस्पर्शदिव्यसिंहनमोस्तुते इतिसंप्राथ्र्यदेवेशंव्रतीस्यात्स्थंडिलेश
यः जितेंद्रियोजितक्रोधःसर्वभोगविवर्जितःएवंयःकुरुतेविद्वान्विधिवद्व्रतमुत्तमं वर्षेवर्षेसलभतेभुक्तभोगोहरेःपदंओं
कारेश्वरयात्राचकार्य्यात्रैवमुनीश्वर दुर्लभंचागसंचात्रदर्शनंपापनाशनं किमत्रबहुनोक्तेनपूजाध्यानजपेक्षणात् य

ज्ञानंमोक्षप्रदंनृणाम् अत्रालिंगव्रतंचापिकर्त्तव्यंपापनाशनं पंचामृतेनसंस्नाप्यालिंगमालिप्यकुंकुमै
ध्यैःदीपावलिविभूषणैः एवंयःकुरुतेपैष्टंलिंगंसर्वार्थसिद्धिदं भुक्तिमुक्तीसलभतेमहादेवप्रसादतः इयं
दिःतत्रकल्पादिविधानोक्तं श्राद्धदानादिसर्वमेवाक्षयफलदमुक्तंभवति इतिवैशाखशुक्लचतुर्दशी
वैशाखपौर्णिमायां वैशाखस्नानं प्रातरवश्यमेवकार्यं तथाचभविष्ये वैशाखीकार्त्तिकीमाघीतिथयो
स्नानदानविहीनासानकार्यापांडुनंदन अस्यांदानप्रकारोनारदीये वैशाख्यामपिपूर्णायांदानंसर्वं
यद्द्रव्यंददद्विप्रेतत्तदाप्नोतिनिश्चितं धर्मराजव्रतंचात्रकथितंतन्निशामय घृतान्नमुदकुंभंचवैशाख्यां
स्तुकृष्णाजिनंदद्यात्सत्कृत्यविधिपूर्वकं सर्वंशास्त्रविदेसप्तद्वीपभूमिप्रदःसवै मोदतेविष्णुलोके
रकं कुंभान्स्वच्छतिलैःपूर्णान्हिरण्येनसमन्वितान् यःश्रद्दध्याद्द्विजाग्र्येभ्यः सनशोचतिकर्हिचि
विधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश कृशरंसर्वपापेभ्योमुच्यतेनात्रसंशयइति विष्णुधर्मोत्त
तुब्राह्मणान्सप्तपंचवा क्षौद्रयुक्तैस्तिलैःकृष्णैर्वाचयेद्यदिचेन्नरः प्रीयतांधर्मराजेतियद्वा
दत्तेरितिशेषः वाचयेत्स्वस्तिवाचयेदित्यर्थः यावज्जीवकृतात्पापात्तत्क्षणादेवमुच्यतइति य
र्थः राजः प्रीयतां विष्णुः प्रीयतामितिवा तथा प्रपाकार्याप्रयत्नेनगोद्विजार्थंप्रयत्नतइति
ास्यांतुसृष्टाःकमलयोनिना तिलाःकृष्णाश्चगौराश्चतुष्टयेसर्वदेहिनां तस्मात्कार्यंतिलैः
ान् निवेदयेच्चविधिवत्तिलपात्रंचविष्णवे तिलतैलनदीपाश्चदेयादेवेभ्यएवच मोदकाश्च
र्यपितृतर्पणम् तिलैःसमधुभिर्युक्तंब्राह्मणेभ्यश्चभोजनं दातव्यादक्षिणाचापितिलैर्मधुयुतैः
राणंपारंपर्यक्रमागतं तिलास्तुसोमदैवत्याःसुरैःसृष्टास्तुगोसवे स्वर्गप्रदाःस्वतंत्राश्चतेमांरक्षंतु

नित्यशः दद्यादनेनमंत्रेणतिलपात्राणितत्रच एवंकृतेसमुक्तःस्यात्पापैर्जन्मशतार्जितैः महाभारतेपि वैशाख्यां
पौर्णमास्यांतुतिलान्दद्याद्द्विजातिषु तिलाभक्षयितव्यास्तुतथैवालंभनंतिलैः कार्यंसततमिच्छद्भिः श्रेयःसर्वात्मना
गृहे आलंभनमुद्वर्तनं जाबालिः सुवर्णतिलसंयुक्तैर्ब्राह्मणान्पंचसप्तवा तर्पयेदुदपात्रैश्चब्रह्महत्यांव्यपोह
ति तर्पणमत्रतिलानांदानमुक्तं वैशाखमधिकृत्यदेवीपुराणे इंद्राग्निदैवतेऋक्षेपौर्णमास्यांतथैवच पूजांकृत्वाभ
वेद्ब्रह्मन्विगतार्घोनसंशयः इंद्राग्निदैवतंविशाखा पूजादुर्गायाः देवीपुराणोपक्रमात् तेनविशाखायुक्तायांवैशा
खपौर्णमास्यांदुर्गायाःपूजांकृत्वा ससुवर्णतिलदानेनसकलाघनाशःफलं सुवर्णनाभिंकृत्वातुसखुरंमृगमार्गकंतिलैः
प्रच्छाद्ययोदद्यात्तस्यपुण्यफलंशृणु ससमुद्रगुहातेनसशैलवनकानना चतुरंताभवेद्दत्तापृथिवीनात्रसंशयःकृष्ण
मार्गंकृष्णमृगचर्म एवमेवानिर्णयामृते पुराणसमुच्चये वैशाख्यांपौर्णमास्यांतुविशाखासुविशेषतः यस्तुकृष्णा
जिनदद्यात्सखुरंशृंगसंयुतमित्यादिना अथास्यांसोमव्रतं सुमंतुरुवाच सोमव्रतंतथाचात्रशंकरप्रीतयेशृणु ताम्र
पात्रंपयःपूर्णंकृत्वातत्रचशंकरं प्रच्छाद्योपरिवस्त्रेणगंधपुष्पाक्षतमहत् महत्ताम्रपात्रमित्यन्वयः षट्त्रिंशदंगु
लपात्रमुत्तमंपरिकीर्तितमितिप्रतिपादितं शिवभक्तेद्विजेदद्याद्भोजयित्वाविधानतः प्राच्यांसमुद्गतेसोमेप्रती
च्यांचगतेरवौ पौर्णमास्यांतुवैशाख्यांगृहपात्रशिवाग्रतः प्रीयतांतिमहादेवः सोममूर्तिर्जगत्पतिः तस्मैवि
प्रायतत्पात्रमर्पयेद्भक्तितःशनैः एतत्सोमव्रतंनामकृत्वासोमांतिकंव्रजेत् रुद्रलोकादिहायातोभवेज्जातिस्म
रोनरः पूर्वाभ्यासेनतेनैवपुनःशिवपुरंव्रजेत् इतिवैशाख्यांसोमव्रतम् वैशाखीकार्तिकीमाघीतिथित्रयमधिकृत्य
वैशाखीपौर्णिमाविधानम् भविष्योत्तरे युधिष्ठिरउवाच संवत्सरेपियाः काश्चित्तिथयःपुण्यलक्षणाः तासेवद
यदुश्रेष्ठस्नानेदानेमहाफलाः श्रीकृष्णउवाच वैशाखीकार्तिकीमाघीतिथयोतीवपूजिताः स्नानदानविहीनास्तान

द्वेतत्समुद्दिष्टंज्ञानंमोक्षप्रदंनृणाम् अत्रालिंगव्रतंचापिकर्त्तव्यंपापनाशनं पंचामृतेनसंस्नाप्यालिंगमालिप्यकुंकुमै
नैवेद्यैस्सफलैर्हृद्यैःदीपावलिविभूषणैः एवंयःकुरुतेपैष्टंलिंगंसर्वार्थसिद्धिदं भुक्तिमुक्तीसलभतेमहादेवप्रसादतः इयं
चगारुडकल्पादिःतत्रकल्पादिविधानोक्तं श्राद्धदानादिसर्वमेवाक्षयफलदमुक्तंभवति इतिवैशाखशुक्लचतुर्दशी
कृत्यानि अथवैशाखपौर्णिमायां वैशाखस्नानं प्रातरवश्यमेवकार्यं तथाचभविष्ये वैशाखीकार्त्तिकीमाघीतिथयो
तीवपूजिताः स्नानदानविहीनासानकार्यापांडुनंदन अस्यांदानप्रकारोनारदीये वैशाख्यामपिपूर्णायांदानंसर्वः
स्यसर्वदम् यद्यद्द्रव्यंददद्विप्रेतत्तदाप्नोतिनिश्चितं धर्मराजव्रतंचात्रकथितंतन्निशामय घृतान्नमुदकुंभंचवैशाख्यां
वैद्विजातये यस्तुकृष्णाजिनंदद्यात्सत्कृत्यविधिपूर्वकं सर्वशास्त्रविदेसप्तद्वीपभूमिप्रदःसवै मोदतेविष्णुलोके
हियावच्चंद्रार्कतारकं कुंभान्स्वच्छातिलैःपूर्णान्हिरण्येनसमन्वितान् यःश्रद्धयाद्द्विजाग्र्येभ्यः सनशोचतिकर्हिचि
दिति पाद्मे वैशाख्यांविधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश कृशरंसर्वपापेभ्योमुच्यतेनात्रसंशयइति विष्णुधर्मोत्त
रे वैशाख्यांपौर्णमास्यांतुब्राह्मणान्सप्तपंचवा क्षौद्रयुक्तैस्तिलैःकृष्णैर्वाचयेद्यदिचेन्नरः प्रीयतांधर्मराजेतियद्वा
मनसिवर्त्तते तिलैर्दत्तैरितिशेषः वाचयेत्स्वस्तिवाचयेदित्यर्थः यावज्जीवकृतात्पापात्तत्क्षणादेवमुच्यतइति य
त्कालःस्यादित्यर्थः धर्मराजः प्रीयतां विष्णुः प्रीयतामितिवा तथा प्रपाकार्याप्रयत्नेनगोद्विजार्थंप्रयत्नतइति
ब्रह्मपुराणे वैशाख्यांपौर्णमास्यांतुसृष्टाःकमलयोनिना तिलाःकृष्णाश्चगौराश्चतुष्ट्यैसर्वदेहिनां तस्मात्कार्यंतिलैः
स्नानंतत्राग्नौजुहुयात्तिलान् निवेदयेच्चविधिवत्तिलपात्रंचविष्णवे तिलतैलेनदीपाश्चदेयादेवेभ्यएवच मोदकाश्च
तिलैःस्नानंकर्त्तव्यंपितृतर्पणम् तिलैःसमधुभिर्युक्तब्राह्मणेभ्यश्चभोजनं दातव्यादक्षिणाचापितिलैर्मधुयुतैः
सहमंत्रंजपेच्चपौराणंपारंपर्यक्रमागतं तिलास्तुसोमदैवत्याःसुरैःसृष्टास्तुगोसवे स्वर्गप्रदाःस्वतंत्राश्चतेमांरक्षंतु

नित्यशः दद्यादनेनमंत्रेणतिलपात्राणितत्रच एवंकृतेसमुक्तःस्यात्पापैर्जन्मशतार्जितैः महाभारतेपि वैशाख्यां पौर्णमास्यांतुतिलान्दद्याद्द्विजातिषु तिलाभक्षयितव्यास्तुतथैवालंभनंतिलैः कार्यंसततमिच्छद्भिः श्रेयःसर्वात्मना गृहे आलंभनमुद्वर्तनं जाबालिः सुवर्णतिलसंयुक्तैर्ब्राह्मणान्पंचसप्तवा तर्पयेदुदपात्रैश्चब्रह्महत्यांव्यपोहति तर्पणमत्रतिलानांदानमुक्तं वैशाखमधिकृत्यदेवीपुराणे इंद्राग्निदैवतेऋक्षेपौर्णमास्यांतथैवच पूजांकृत्वाभवेद्ब्रह्मन्विगताघोनसंशयः इंद्राग्निदैवतंविशाखा पूजादुर्गायाः देवीपुराणोपक्रमात् तेनविशाखायुक्तायांवैशाखपौर्णिमायांदुर्गायाःपूजांकृत्वा ससुवर्णतिलदानेनसकलाघनाशःफलं सुवर्णनाभिंकृत्वातुसखुरंमृगमार्गकतिलैः प्रच्छाद्ययोदद्यात्तस्यपुण्यफलंशृणु ससमुद्रगुहातेनसशैलवनकानना चतुरंताभवेद्दत्तापृथिवीनात्रसंशयः कृष्णमार्गं कृष्णमृगचर्म एवमेवनिर्णयामृते पुराणसमुच्चये वैशाख्यांपौर्णमास्यांतुविशाखासुविशेषतः यस्तुकृष्णाजिनंदद्यात्सखुरंशृंगसंयुतमित्यादिना अथास्यांसोमव्रतं सुमंतुरुवाच सोमव्रतंतथाचात्रशंकरप्रीतयेशृणु ताम्रपात्रंपयःपूर्णंकृत्वातत्रचशंकरं प्रच्छाद्योपरिवस्त्रेणगंधपुष्पाक्षतमहत् महत्ताम्रपात्रमित्यन्वयः षट्त्रिंशदंगुलपात्रमुत्तमंपरिकीर्त्तितमितिप्रतिपादितं शिवभक्तेद्विजेदद्याद्भोजयित्वाविधानतः प्राच्यांसमुद्गतेसोमेप्रतीच्यांचगतेरवौ पौर्णमास्यांतुवैशाख्यांगृहपात्रंशिवाग्रतः प्रीयतांतेमहादेवः सोममूर्त्तिर्जगत्पतिः तस्मैविप्रायतत्पात्रमर्पयेद्भक्तितःशनैः एतत्सोमव्रतंनामकृत्वासोमांतिकंव्रजेत् रुद्रलोकादिहायातोभवेज्जातिस्मरोनरः पूर्वाभ्यासेनतेनैवपुनःशिवपुरंव्रजेत् इतिवैशाख्यांसोमव्रतम् वैशाखीकार्तिकीमाघीतिथित्रयमधिकृत्य वैशाखीपौर्णिमाविधानम् भविष्योत्तरे युधिष्ठिरउवाच संवत्सरेपियाः काश्चित्तिथयःपुण्यलक्षणाः तासेवदयदुश्रेष्ठस्नानेदानेमहाफलाः श्रीकृष्णउवाच वैशाखीकार्तिकीमाघीतिथयोतीवपूजिताः स्नानदानविहीनास्तान

नेयाःपांडुनंदनतीर्थस्नानंतथाशस्तंदानंवित्तानुसारतः वैशाख्यांपांडवश्रेष्ठपुण्याचोजायिनीमता कार्तिक्यांपुष्क
रंश्रेष्ठंमाघेवाराणसीमता स्नानेनोदकदानेनतारयंत्यखिलान्पितॄन् कुंभांच्छुद्धजलैःपूर्णान्हिरण्यान्नसमन्वितान्
वैशाख्यांब्राह्मणेदत्त्वानशोचतिकृताकृतौ मधुरान्नरसैःपूर्णभाजनेकत्तकोज्ज्वलेबहूनिधनधान्यानिभक्त्यापरमया
युतः गोभूहिरण्यवासांसिविप्रायाविधिनार्पय माघ्यांस्नात्वातथासम्यक्संतर्प्यपितृदेवताः तिलपात्राणिदेयानि
तथासफलमोदनं कार्पासदानमत्रैवधेनुदानंप्रशस्यते कंबलाजिनरत्नानिमोचकौपापमोचकौ उपानद्दानमत्रैव
तुल्यमश्वरथेनतु प्रत्यूपेतत्रवास्नानंदानंवित्तानुसारतः कलिकालोद्भवसर्वंशस्यतेपांडुनंदन कार्तिक्यांतुत्सवोत्स
गैंविवाहंपुण्यलक्षणम् कुर्य्यात्कुरुकुलश्रेष्ठहरेर्नीराजनंतथा गजाश्वरथदानानिघृतधेन्वादिकानिच प्रदेयानिहि
जातिभ्यस्तास्ताःसंस्मृत्यदेवताः फलानियानिविद्यंतेसुगंधीन्यगदानिच अगदान्यौषधानिएलालवंगादीनि तानि
च कंकोलकंफलंजातीलवंगोलवलीफलं खर्जूरंनारिकेलंचकदलीफलमेवच दाडिमंमातुलिंगंचकर्कोटंत्रपुसंतथा
वृंताकंकारवेल्लंचचिंचाकूष्मांडमेवच फलानामप्रदानेनयेपांतुतिथयोगताः व्याधिताश्चदरिद्राश्चजायंतेभुविमान
वाः नकेवलंब्राह्मणानांदानमत्रप्रशस्यते भागिनीभागिनेयानांमातुलानांपितृष्वसुः दरिद्राणांचबंधूनांदानकोटि
गुणोत्तरं मित्रकुलीनश्चापन्नोबंधुर्दारिद्र्यपीडितः अभ्यागतोहिदूराद्यः सोतिथिःस्वर्गसंक्रमः वनंप्रस्थापिते
रामेससीतेसहलक्ष्मणेमातामहकुलादेत्यविशुद्धेनांतरात्मना शपथैःश्राविताःन्नेकैः कौशल्याभरतेनवै यदानप्र
स्थयंयाताकदाचित्कौशलात्मजा तदासाशुचिभाविनातिथयः श्राविताःपुनः वैशाखीकार्तिकीमाघीतिथयोमरपू
जिताः अप्रदानवतोयांतुयस्यार्योनुमतेगतः अकमानीयभरतंसांत्वयामासदुःखितं एतत्तिथीनांमाहात्म्यकथि
तंबहुविस्तरंभूयस्तुसंप्रवक्ष्यामितवभारतसत्तम वैशाखकार्तिकमघासहितानरेंद्रयापूर्णिमाभवतिपूर्णशशांकचिह्ना

तस्यांजलान्नकरकान्वरमासपत्रंदत्त्वाप्रयातिपुरुषः पुरुहूतलोकं इतिभविष्योत्तरे वैशाखीकार्तिकीमाघीवि
धिः अथवैशाखकृत्योद्यापनं अपरार्केवामनपुराणे मासमेवंबहिः स्नात्वानद्यादौविमलेजले एकादश्यांचद्वा
दश्यांपौर्णिमायामथापिवा उपोष्यनियतोभूत्वाकुर्यादुद्यापनंबुधः मंडपंकारयेदादौकलशंतत्रविन्यसेत् निष्केण
वातदर्धेनतदर्धार्धेनवापुनः शक्त्यातुकारयेद्देवंसौवर्णंलक्षणान्वितं लक्ष्मीयुतंजगन्नाथंपूजयेदासनेबुधः भूपणै
श्चंदनैःपुष्पैर्दीपैर्नैवेद्यसंचयैः एवंसंपूज्यविधिवद्रात्रौजागरणंचरेत् श्वोभूतेकृतमैत्रोथग्रहवेद्यांग्रहान्यजेत् होमंकु
र्यात्प्रयत्नेनपायसेनविचक्षणः तिलाज्येनयवैर्वापितिलैर्वापिस्वशक्तितः अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा प्रत
विष्णुतरेणैवइदंविष्णुरनेनवा व्रतसंपूर्तिसिद्ध्यर्थंधेनुमेकांपयस्विनीं पादुकोपानहौछत्रंगुरवेव्यजनंतथा शय्यां
सोपस्करांदद्याद्दीपिकांदर्पणंतथा ब्राह्मणान्भोजयेत्त्रिंशत्तेभ्योदद्याच्चदक्षिणां कलशांस्तोयसंपूर्णांस्तेभ्योदद्याद्यवां
स्तथा एवंकृतेमाधवस्यउद्यापनविधौशुभ फलमाप्नोतिसकलंविष्णुसायुज्यमाप्नुयात् एतावत्यशक्तौ तत्रैवोक्तं
वैशाख्यांविधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश कृशरंसर्वपापेभ्योमुच्यतेनात्रसंशयः इतिवैशाखोद्यापनम् अथ
होममंत्रौ प्रतविष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठः यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वा १ इदं
विष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरे २ अथगोदानस्यविधिः तत्रादौदेशकालौ संकीर्त्यआत्मना
सह एकविंशतिपुरुषतारणार्थंसर्वपृथिवीदानफलप्राप्त्यर्थंच वैशाखमासस्यस्नानदानजपहोमब्राह्मणपूजनदक्षि
णान्नदानादिसमस्तफलप्राप्तिभूतगोदानमहंकरिष्ये ततोगणपतिपूजनपूर्वकगोदानप्रतिग्रहीतारं ब्राह्मणंवृणु
यात् आत्मनोगोत्रप्रवरनामादिकमुच्चार्यब्राह्मणस्यगोत्रप्रवरनामादिकंद्वितीयांतमुच्चार्य अस्मिन्गोदानप्रतिग्र
हकर्मणित्वामहंवृणे एवंकृत्वायथामिलितोपचारैर्विप्रंसंपूज्य गवेनमइतिसवत्सांगांसंपूज्य तद्देहेदेवानावाहयेत्

शृंगमूलयोर्ब्रह्मविष्णू आवाहयामि ३ शिरोमध्येमहादेवंआवाहयामिललाटाग्रेगौरींमा०नासावंशेपण्मुखमा०४ना
सापुटयोःकंबलाश्वतरौनागावा- ५ कर्णयोरश्विनावा ६ नेत्रयोः शशिभास्करावा- ७ दंतेषुवायुमा. ८ जि.
व्हायांवरुणमा ९ हुंकारेसरस्वतीमा १० गंडयोर्यक्षानावा- ११ ओष्ठयोःसंध्याद्वयमा. १२ ग्रीवायामिंद्र
मा, १३ कुक्षौरक्षांस्या. १४ उरसिसाध्याना- १५ खुराग्रेषुअप्सरोगणाना १६ पृष्ठएकादशरुद्राना. १७
सर्वसंधिपुवसूना. १८ श्रोणीतटेपितृना. १९ लांगूलेसोममा. २० बालसमूहेआदित्यरश्मीन् २१ गोमू
त्रेगंगामा. २२ गोमयेयमुनामा- २३ क्षीरेसरस्वतीमा. २४ दधिनिनर्मदामा. २५ सर्पिषिहुताशनमा- २६
रोमसंधिपुवसूना- २७ समस्तसंधिपुदेवकोटीरावाहयामि उदरेपृथिवीमा. स्तनेषुचतुरः सागरानावाहयामि
इत्यावाह्य सर्वानेवमितिपंचोपचारैः संपूज्य आच्छादनंमयादत्तंशुद्धंदेविविनिर्मितं सुरभ्यैवस्त्रदानेनप्रीयतांपरमे
श्वर इतिमंत्रेणवस्त्रंनिवेद्य स्वर्णशृंगरौप्यखुरताम्रपृष्ठमुक्तालांगूलानियथास्थानंनिवेश्यनैवेद्यंदत्वा कांस्यदो
हनंनिधाय प्राङ्मुखोदातापुष्पांजलिंगृहीत्वा त्रिःप्रदक्षिणीकृत्य यालक्ष्मीःसर्वभूतानांयाचदेवेष्ववस्थिता धेनु
रूपेणसादेवीममपापंव्यपोहतु १ देहस्थायाचरुद्राणीशंकरस्यसदाप्रिया धेनुरूपेणसादेवीममपापंव्यपोहतु २
विष्णोर्वक्षसियालक्ष्मीःस्वहायाचविभावसौ चंद्रार्कशक्रशक्तिर्याधेनुरूपास्तुसाश्रिये चतुर्मुखस्ययालक्ष्मीर्याल
क्ष्मीर्धनदस्यच लक्ष्मीर्यालोकपालानांसाधेनुर्वरदास्तुमे स्वधायापितृमुख्याणांस्वाहायज्ञभुजांतथा सर्वपापह
राधेनुस्तस्माच्छांतिंप्रयच्छमे इतिपुष्पांजलिंदत्वागोपुच्छोदकेनदेवर्षिपितृतर्पणंकुर्यादितिकेचित् तत्रमूलंचिंत्य
ततस्ताम्रपात्रेकांस्यपात्रेवाघृतदधितिलकुशोदकसुवर्णादिदक्षिणान्वितं गोपुच्छंकृत्वाओमद्येत्यादिदेशकालौसंकी
र्त्यात्मनश्चगोत्रप्रवरनामादिकमुच्चार्य पूर्वोक्तफलंचिचिंत्य भुक्तिमुक्तिप्रदसर्वयज्ञजन्यफलप्राप्तिसर्वपापक्षयकामो

वैशाखमासस्नानदानादियथोक्तफलावाप्तये इमांगांरुद्रदैवत्यांसुवर्णशृंगरौप्यखुरताम्रपृष्ठादिसर्वोपस्करसंयुतांत्र्यमुकवेदांतर्गतामुकशाखिनेयथानामगोत्रप्रवरायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददेनममइतिगोपुच्छंविप्रकरेदत्त्वा यज्ञसाधनभूतायाविश्वस्याघविनाशिनी विश्वरूपधरोदेवः प्रीयतामनयागवेतिपठित्वा घृतक्षीरप्रदागावोघृतयोन्योमृतोद्भवाः घृतनद्योघृतावर्त्तास्तामेसंतुगृहेसदा गावोममाग्रतः संतुगावोमेसंतुपृष्ठतः सव्यदक्षिणयोर्गावोगवांमध्येवसाम्यहं कइदंकोदात् इतिपठित्वा स्वस्तीतिवदेत् ततोगोप्रतिष्ठार्थमिदंहिरण्यंदशमाषमितंतुभ्यमहंसंप्रददेइत्युक्त्वादद्यात् विप्रोगांप्रतिगृह्यगोमतींविद्यांपठेत् गावोमामुपतिष्ठंतुहेमशृंग्यः पयोमुचः सुरभ्यःसौरभेय्यश्चसरितः सागरास्तथा गावः पश्याम्यहंनित्यंगावः पश्यंतुमांसदा गावोस्माकंवयंतासांयतोगावस्ततोवयं गावः सुरभयोनित्यंगावोगुग्गुलसन्निभाः गावः प्रतिष्ठाभूतानांगावः स्वस्त्ययनंमहत्अन्नमेवपरंगावोदेवानांहविरुत्तमं पावनंसर्वभूतानांरक्षंतिचवहंतिच सर्वेषामेवभूतानांगावः शरणमुत्तमं गावःसर्वस्यलोकस्यगावोधन्याः शुभावहाः नमोगोभ्यः श्रीमतीभ्यः सौरभेयीभ्यएवच नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतम् एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति ततोब्राह्मणेभ्योभोजनं भूयसीं दक्षिणांच संकल्पयेत् इतिगोदानविधिः अथकृष्णाजिनदानप्रयोगः तत्रादौदेशकालौसंकीर्त्य ममपुत्रभार्याद्यवियोगबहुधनत्वस्वदेशापरित्यागसमग्रभूमिदानफलसर्वलोकजयकामचारित्वाभूतसंप्लवंस्वर्गवासादिसकलाभीष्टप्राप्तिकामः कृष्णाजिनदानमहंकरिष्ये इतिसंकल्प्य गोमयोपलिप्तभूमौकुशोपरिकंबलमास्तीर्य्य तत्रसखुरं सशृंगं कृष्णाजिनमास्तीर्य्य तत्रशृंगयोः सुवर्णंदंतेषुरौप्यं लांगूलेमुक्ताःसंनिवेश्याजसमतिलैरापूर्य्य वासोयुगलेनाच्छाद्य सुवर्णनाभौ निवेश्ययथाशक्तिरत्नैर्गंधैश्चालंकृत्य चतु

दिक्षुपूर्वादिक्रमेणरत्नपूर्णानिचत्वारिकांस्यपात्राणि घृतक्षीरदधिमधुपूर्णानि चत्वारिमृत्पात्राणिचसंस्थापयेत् दा
नप्रदेशाद्बहिर्गोमयाविरचितमंडले चंपकशाखायुक्तमजीर्णपीतवस्त्रसहितं. जलपूर्णकुंभंस्थापयेत् ततस्तिलपूर्णं
लोहपात्रपश्चिमपादेमधुपूर्णं कांस्यपात्रंदक्षिणपादे १ मधुपूर्णंताम्रपात्रं अग्रिमदक्षिणपादे तिलपूर्णरजतपात्रं
अग्रिमवामपादे अक्षतपूर्णसुवर्णपात्रंनाभिदेशे ५ वक्ष्यमाणपंचमंत्रैःप्रत्येकंन्यसेत् तेचमंत्राः यानिकान्यपि
पापानिमयालोभात्कृतानिवै लोहपात्रप्रदानेनप्रणश्यंतुममाद्यवै यानिपापान्यकामानिकामोत्थानिकृतानिच कांस्य
पात्रप्रदानेनतानिनश्यंतुमेसदा २ परापवादपैशुन्याद्दुष्टमांसस्यभक्षणात् तत्रोत्थितंचमेपापंताम्रपात्रात्प्रणश्य
तु कन्यानृतंगवांचैवपरदारप्रधर्षणम् रौप्यपात्रप्रदानेनक्षिप्रंनाशंप्रयातुमे जन्मजन्मसहस्रेषुकृतंपापंकुबुद्धिना
सुवर्णपात्रदानात्तन्नाशयाशुजनार्दन ५ एवंपंचपात्राणांपंचमंत्राण्युक्त्वा ततोहेममुक्ताविद्रुमदाडिमबीजपूरसर्वशा
कसर्वफलानिनिकटेसंस्थाप्य श्रवणयोःप्रशस्तपत्रेखुरेषुशृंगाटकानिसंस्थाप्य समस्तगुणोपेतंस्नातमाहिताग्नि
पात्रं वस्त्रयुग्मेनदत्वायथाशक्त्यालंकारैश्चसंपूज्य ॐतत्सत् पूर्वोक्तफलकीर्तनांते इदंकृष्णाजिनंगोमयोपलि
प्तास्ततकुशोपरिकंबलवस्त्रोपरिस्थितं सुवर्णशृंगंरौप्यदंतंमुक्तालांगूलंवस्त्रयुगाच्छन्नं चतुर्दिक्षुरत्नपूरितकांस्यपात्र
चतुष्टयं घृतदधिक्षीरमधुपूर्णमृत्पात्रयुतं चतुर्षुपादेषु तिलमधुघृतशर्करापूर्णलोहकांस्यताम्ररजतपात्रयुतं ना
भिदेशेऽक्षतपूर्णं सुवर्णपात्रयुतं हेममुक्ताविद्रुमदाडिमबीजपूरसर्वशाकसर्वफलयुतं कर्णयोः प्रशस्तपत्रयुतंखुरेषु
शृंगाटकयुतंसुवर्णनाभिं यथाशक्तिरत्नगंधादिभूपितममुकगोत्रायामुकशर्मणे अमुकगोत्रोमुकनामशर्मातुभ्यम
हंसंप्रददेनममेत्युक्त्वासजलंपुच्छंविप्रहस्तेक्षिपेत् तत्रमंत्राःकर्ताकृष्णोविभुर्देवःकृष्णाजिनधरस्तथा त्वद्दानहतपाप
स्यप्रीयतांमेनमोनमः त्रयस्त्रिंशत्सुराणांत्वमाधारस्त्वेव्यवस्थितः कृष्णोसिमूर्तिमान्साक्षात्कृष्णाजिननमोस्तुते

रूपधृजःप्रीयतामित्युक्त्वादानसद्गुणार्थं शतनिष्कादिदक्षिणांयथाशक्तिदद्यात् विप्रोयथाशाखंकामस्तुतिंपठित्वा देवस्येतियजुषाग्रहणीयात् ततोविप्रंस्वगृहात् विसृज्य गोमयादिरचितेमंडलेयजमानः पूर्वस्थापितचपकशाखा युतकुंभस्थाद्भिराप्यायस्वेत्यष्टभिर्ऋग्भिः समुद्रज्येष्ठेत्यादिभिरष्टभिर्ऋग्भिरभिमंत्र्यताभिरद्भिश्चंपकशाखायुक्तकुंभस्थाद्भिरभिषक्तःस्नायात् ततःपूर्वस्थापिताजीर्णपीतवस्त्रेणअगप्रोक्षणंकृत्वा अहतेवाससीपरिधाय आचातश्चंदनादिना अलंकृतःशुद्धोहमितिभावयेत् अंगप्रोक्षणवस्त्रंकुंभसहितंचतुष्पथेप्रक्षिपेत् ततअन्येभ्योब्रह्मणेभ्योयथाशक्तिदक्षिणांदत्वा अच्छिद्रमस्त्विवाचयेत् ततोब्राह्मणेभ्योभोजनंसंकल्पयित्वा कृतस्यकर्मणईश्वरार्पणंकुर्यात् इतिवैशाख्यांकृष्णाजिनदानविधिः॥ अस्यांब्रह्मपुराणदानमुक्तं नारदीये एतद्ब्रह्मपुराणंतुभागद्वयसमन्वितंवर्णितं सर्वपापघ्नंसर्वसौख्यप्रदायकम् सूतशौनकसंवादंभुक्तिमुक्तिप्रदायकम् लिखित्वैतत्पुराणंयोवैशाख्याहेमसंयुतंजलधेनुयुतंवापिभक्त्यादद्याद्द्विजातये पौराणिकायसंपूज्यवस्त्रभोज्याविभूषणैःसवसेद्ब्रह्मणोलोकेयावच्चंद्रार्कतारकामिति मेषसंक्रांतौ गरुडपुराणदानमपितत्रैव इत्येतद्गारुडंनामपुराणंभुक्तिमुक्तिदम् कीर्तितंपापशमनंपठतांशृण्वतांनृणाम् लिखित्वैतत्पुराणंतुविषुवेयःप्रयच्छति सौवर्णहंसयुग्माढ्यंविप्रायसदिवंव्रजेत् इतिगरुडपुराणदानं अत्रैवमत्स्यपुराणदानमपि नारदीये लिखित्वैतत्पुराणंतुहेममत्स्यसमन्वितम् विप्रायाभ्यर्च्ययोदद्यात्सयातिपरमंपदम् मत्स्यपुराणेपि विषुवेहेममत्स्येनधेन्वाचैवसमन्विनम् योदद्यात्पृथिवीतेनदत्ताभवतिचाखिला इतिमत्स्यपुराणदानम् ॥ स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंदसंरक्षकः धर्मा

धर्मविभागकृद्रघुपतेः पादांबुजार्चारतोजीयात्पुत्रकलत्रमित्रसहितःसंपालयन्क्ष्मांचिरम् १ रणवीरसिंहभूपेनका
रितेकृत्यसागरे अभूद्वैशाखकृत्यानांरम्योरत्नसमुच्चयः २ इतिश्रीसूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंह
महाराजकारितेकृत्यरत्नाकरेवैशाखमासकृत्यरत्नसमुच्चयस्समाप्तः ॥ समाप्तोयंवैशाखमसः ॥ । ※ ※ ※ ※ ॥

॥ तत्सद्ब्रह्म ॥

॥ श्रीरघुनाथमुद्रायंत्रालये ॥
लालाशिव्वामल्लाधिकारेवैशाखमासोमुद्रितस्समाप्तिमगमत्
संवत् १९४१ आषाढ प्र. २१

॥ ॥ श्रीगणेशायनमः अथज्यैष्ठमासकृत्यनिर्णयः तत्रादौ वृषसंक्रांतौ ॥ पूर्वाःषोडशघटिकाःपुण्यकालः रात्रौसंक्रमणेसति प्रागुक्तोनिर्णयः अथमासकृत्यं महाभारते ज्येष्ठामूलंचयोमासमेकभक्तेनसंक्षिपेत् ऐश्वर्यमतुलंश्रेष्ठपुमान्स्त्रीचाधितिष्ठति संक्षिपेदाधिवाहयेत् तथाच निदाघकालेपानीयस्यतिष्ठत्यवारितं संसर्गविघमंकृच्छ्रनकदाचिदवाप्नुयात् छत्रदानात्तथाज्यैष्ठेसर्वान्कामानवाप्नुयात् छत्रोपानहयोर्दानतस्मात्श्रेष्ठंद्विजोत्तमाः अक्षयंफलमाप्नोतिनाकलोकंसगच्छति अक्षयफलंछत्रादिदानेनभवेदित्यर्थःवामनपुराणे तस्माज्ज्यैष्ठेसदाभूपतोयस्थंयोर्चयेद्धरि वीततापोनरस्तिष्ठेद्यावदाभूतसंप्लवं विष्णुधर्मोत्तरे अखिलज्यैष्ठमासव्यापिश्रीप्राप्तिव्रतमुक्तं वैशाख्यांसमतीतायां प्रतिपत्प्रभृतिक्रमात् पूर्ववत्पूजयेद्देवंश्रीसहायंदिनेदिने पुष्पैर्मूलैःफलैश्चैवजुहुयादक्षतांस्तथा विल्वांश्चवह्नौसततंगोरसैर्भोजयेद्द्विजान् त्रिरात्रोपोषितोज्यैष्ठ्यांकनकंप्रतिपादयेत् वस्त्रयुग्मंचराजेंद्रतेनसाफल्यमाप्नुयात् इतिश्रीप्राप्तिव्रतं भविष्योत्तरे पिष्टेनकजजंकृत्वाज्यैष्ठेमासिसवेदकं पुष्पैःसंपूज्यगंधाद्यैर्नानावस्त्रविभूषणैः वर्षकोटियुगंसाग्रंसूर्यलोकेमहीयते कजजोब्रह्मा वामनपुराणे उदकुंभांबुधेनूश्चतालवृंतंसचंदनं त्रिविक्रमस्यप्रीत्यर्थंदातव्यंज्यैष्ठमासिच ज्यैष्ठकृष्णप्रातिपदमारभ्यश्रीप्राप्तिव्रतारंभोत्रैवोक्तः ज्यैष्ठकृष्णद्वितीयासमानकल्पादिः तत्रश्राद्धादिकल्पादिकृत्योक्तं ज्यैष्ठकृष्णतृतीयायांगौरीव्रतांगत्वेनधृतिगौर्य्योः पूजनं शतावरीपूजनं ज्यैष्ठकृष्णचतुर्थीव्रतांगत्वेन गणपतिपूजनं चंद्रोदये अर्घ्यदानं नूतप्राशनंचकार्य्यं ज्यैष्ठकृष्णपंचम्यां शंखनागपूजनं ज्यैष्ठकृष्णषष्ठ्यां स्कंदकुमारपूजाव्रतं ज्यैष्ठकृष्णसप्तम्यां उभयसप्तमीव्रतांगत्वेन मित्राख्यसूर्यपूजाव्रतं ज्यैष्ठकृष्णाष्टम्यां त्रिलोचनाख्याशिवपूजारंभोनारदीये ज्यैष्ठमासिद्विजश्रेष्ठकृष्णाष्टम्यांत्रिलोचनं यःपूजयतिलोकेशनाकलोकंव्रजेन्नरः भविष्योत्तरेपि ज्यैष्ठमासितथाषाढेश्रावणेचतथापरे अपरे भाद्रपदेमासि

पूजयेच्चतुरोमासान्नीलोत्पलकदंबकैः त्रिपुरांतकरंशंभुंशिवलोकेवसेन्नरः ज्यैष्ठकृष्णनवम्यांदुर्गासरस्वतीपूजा ज्यैष्ठकृष्णदशम्यातिथित्वेनधर्मपूजेत्युभयदशमीव्रतं ज्यैष्ठकृष्णैकादशीअपरा युधिष्ठिरउवाचज्यैष्ठस्यकृष्णपक्षेचकावाह्येकादशीभवेत् एतदाचक्ष्वमेकृष्णयावैपापस्यमोचनी श्रीकृष्णउवाचसाधुपृष्टंत्वयाराजन्लोकानांहितकाम्यया ज्यैष्ठस्यकृष्णपक्षेतुह्यपरानामनामतः एकादशीमहाराजमहापातकनाशिनी ब्रह्महामद्यपःस्तेयीगोत्रहाभ्रूणहातथा अपरासेवनाद्राजन्पूतोभवतिमानवः कूटमानीकूटसेवीकूटसाक्ष्यवदेन्नरः तुलाकूटकरःपापीकूटभाषारतश्चयः ज्योतिषांकूटगणकःकूटायुर्वेदिकोभिषक् कूटशास्त्रप्रवक्ताचविज्ञेयानरकौकसः अपरासेवनादेषांपापंनश्यतिनान्यथा क्षत्रियोयःक्षात्रधर्मंत्यक्त्वायुद्धात्पलायते सगच्छेन्नरकंघोरंयावदिंद्राश्चतुर्दश शिष्यःशास्त्रंपठित्वायोगुरुंनिंदतिनित्यशः चतुराशीतिकल्पांतंरौरवेनरकेवसेत् स्वभर्तारंपरित्यज्ययासेवेत्परपूरुषं सानारीनरकंगच्छेद्यावदाभूतसंप्लवं अपरासेवनादेषांपापंनश्यतिनान्यथा कथयिष्यामिमाहात्म्यमपरायानृपोत्तम शृणुष्वपरयाभक्त्यासर्वपापप्रणाशनं पुष्करेचप्रयागेचकाश्यांचनृपसत्तम त्रिष्वरण्येपुराजेंद्रनदीनांसंगमेषुच केदारेचविशालायां जंबूमार्गेतथैवच हरिद्वारेकनखलेकुशावर्त्तेतथैवच ॥ कोटितीर्थेप्रभासेचकुरुक्षेत्रेचपांडव द्वारिकायांचगोमत्यांगंगासागरसंगमे तीर्थेष्वेतेपुराजेंद्रसेव्यमानेषुयत्फलं तत्फलसमवाप्नोतिह्यपरैकादशीव्रतात् रविग्रहेकुरुक्षेत्रेदानहोमनिषेवणात् गयायांपिंडदानेनप्रयागेस्नानमात्रतःयत्फलंमुनिभिःप्रोक्तमपरासेवनात्तुतत् नातःपरतराकाचित्पुण्याशुभफलप्रदा अर्धप्रसूतांगांराजन्योददातिद्विजन्मने तेनैवपृथिवीदत्तासससद्वीपसागरा तस्माच्छतगुणंपुण्यमपराव्रतसेवनात् लोकानांचैवसर्वेषांहितायकथितातव माहात्म्यश्रवणादस्यादशगोदानजंफलं स्त्रीपुमान्समवाप्नोतिनात्रकार्याविचारणा इतिब्रह्मांडपुराणे पद्मपुराणेच ज्यैष्ठकृष्णापरैकादशीव्रतकथा

ज्यैष्ठकृष्णद्वादश्यांतिथिपत्वेनहरिपूजाकार्य्या ज्यैष्ठकृष्णत्रयोदश्यांवटसावित्रीव्रतारंभःकार्य्यः पक्षप्रदोपव्रतम
पिकार्य्यम् अत्रसावित्रीव्रतारंभे अमावास्यांपूर्णिमानुरोधेनयथात्रिरात्रसंपत्तिस्तथात्रयोदशीकार्य्येतिकथायामु
क्त कृत्यरत्नावल्याममापूर्णिमयोः प्राधान्याभिधानात् – 'ज्यैष्ठकृष्णचतुर्दशीमाहेश्वरकल्पादितत्रश्राद्धकल्पा
दिकृत्योक्तकार्य्यम् अस्यामेवोमासतीजन्मदिनव्रतंस्त्रीभिः सौभग्याप्तयेकार्यम् तथोक्तंनारदीये – ज्यैष्ठकृष्णाच
तुर्दश्यांजातापूर्वमुमासती तस्मात्सातत्रसंपूज्यास्त्रीभिःसौभाग्यवृद्धये 'उपहारैश्चविविधैर्गीतनृत्योत्सवादिभिः
होमैःपयोभिर्वस्त्रैश्चपत्रपुष्पैःसुगंधिभिरिति अथज्यैष्ठस्यामावास्यायांसावित्रीव्रतम् ज्यैष्ठमास्यमावास्याय।
सावित्रीव्रतमुत्तमं अवैधव्यायकुर्वंतिस्त्रियःसर्वाः समान्विताइतिराजमार्तंडे उक्तंचनिर्णयामृतेभविष्ये ज्यैष्ठमायां
तथाज्यैष्ठेवटमूलेमहामतिः त्रिरात्रोपोपितानारीविधिनानेनपूजयेत्. अशक्तौतुत्रयोदश्यांनक्तंकुर्य्याज्जितेंद्रिया
अयाचितंचतुर्दश्यामभायांसमुपोषणम् अथव्रतविधिः 'उद्यापनंच नद्यादौ तिलामलकरजनीविलेपनपूर्वकंस्ना
त्वावार्पिकत्वात् पूजादिकंनिर्वर्त्य उद्यापनपूजादिसंकल्पंकुर्यात्. तद्यथा तिथ्यादिकमादावुच्चार्य्यममभर्तुःपुत्रा
दीनांचायुरारोग्यैश्वर्य्यादिप्राप्तिपूर्वकमिहजन्मनि जन्मांतरेच आत्मनश्चावैधव्यप्राप्तये आचरितवटसावित्री
व्रतोद्यापनपूजादिकमहंकरिष्ये इतिसंकल्प्य वृताचार्योवटमूलेगृहेवा-वेदिकांविधाय तत्रसर्वतोभद्रंविरच्यतत्र
ब्रह्मादिदेवताःसंपूज्य तत्रकलशद्वयंप्रतिष्ठाप्य एकस्मिन्कलशेहैमं-ब्रह्माणं ब्रह्मयज्ञानमितिमंत्रेण गायत्रींमंत्रे
णसावित्रींहैमींप्रतिष्ठाप्य तदुत्तरद्वितीयकुंभे पलादधिकराजतपर्यंके हैमींसत्यवत्सावित्रीयमनारदप्रतिमाः
संस्थाप्यनाममंत्रैरावाह्य पुरतः काष्ठमारंकुठारंचहैमंराजतंचनिधायपूजयेत् अत्राशक्तौएकस्मिन्कलशेएकस्या

मेवमूक्तासर्वषांपूजन पुष्पपूजोत्तरनाममंत्रैरंगपूजा सावित्र्यैपादौपू० सावित्र्यै जानुनीकमलपत्राक्ष्यै कटिंभूनधा रिण्यैउदरंपू० गायत्र्यैकटिंपू० ब्रह्मप्रियायैशिरःपू० पत्रपुष्पपूजानंतरं अर्घ्यंदद्यात् रजतादिपात्रेणद्वयोरपिडोकार पूर्वकेदेविवीणापुस्तकधारिणि वेदमातर्नमस्तेस्तुअवैधव्यंप्रयच्छमे पतिव्रतेमहाभागेभर्तुश्चप्रियवादिनि अवै धव्यंचसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौभाग्यंगृहाणार्घ्यंनमोस्तुते अथब्रह्मसत्यव्रतोरर्घ्यदानं त्वया सृष्टंजगत्सर्वंसदेवासुरमानुषं सत्यव्रतधरादेवब्रह्मरूपनमोस्तुते अथयमायअर्घ्यदानं त्वधर्मसाक्षीलोकानांशु भाशुभविवेककृत् वैवस्वतगृहाणार्घ्यंधर्मराजनमोस्तुते ततोनारदीयार्घ्यदानं नारदायनमस्तुभ्यंसुरेशादिभिर र्चित गृहाणार्घ्यंमयादत्तमवैधव्यंप्रयच्छमे अथसर्वेषांप्रार्थना सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेनस त्येनमांपाहिदु खसंसारसागरात् मयाकृतंमहाघोरजन्मांतरशतैरघं भस्मीभवतुतत्सर्वमवैधव्यंप्रयच्छमेब्रह्मस त्यव्रतो• प्रार्थना अवियोगोयथादेवसावित्र्यासहतेविभो अवियोगस्तथास्माकभूयाज्जन्मनिजन्मनि सावित्र्याः प्रार्थना सावित्रीत्वयथादेविचतुर्वर्षशतायुषं पतिंप्राप्तासिगुणिनंममदेवितथाकुरु यमप्रार्थना कर्मसाक्षिनूज गत्पूज्यसर्ववंद्यप्रसीदमे संवत्सरव्रतंसर्वपरिपूर्णंतदस्तुमे ततःसुवासिनीःसंपूज्य वायनानिदद्यात् कथाश्रवणा दिना रात्रिनयेत् प्रातःअग्निप्रतिष्ठाप्यअन्वादध्यात् सावित्रींगायत्रीमंत्रेणपायसघृतदूर्वातिलव्रीहियवद्रव्यैः प्र त्येकमष्टोत्तरशतसंख्याकाहुतिभिर्ब्रह्माणंधर्मराजंनारदंचव्याहृतिमंत्रेण तिलव्रीहियवद्रव्यैः प्रत्येकमष्टोत्तरश तसंख्याहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या पक्षे सत्यव्रतसावित्र्योर्ब्रह्मसावित्र्योश्च यवाहुत्याहु त्वा पृथक् होमादिकनास्तीति पूजादौ तन्नाममंत्राभ्यामेव तयोः पूजाइत्युक्तत्वात् एवंहोमंसंपाद्य तत श्चतुर्विंशतिर्द्वादश अष्टौवाचत्वारि मिथुनानि वस्त्रादिनासंपूज्य पूरिकामोदकमंडकादिकूष्मांडनारिकेल

मातुलुंगदाडिमबीजपूरादिफलहरिद्राकुंकुमकेसरविचूर्णकज्जलकंठसूत्रकंकणमौक्तिकपादभूषणवस्त्रकंचुकीआदर्श पात्रादिदक्षिणातांबूलादियुतं सूर्पस्थंनवसूर्पसहितंवायनंदद्यात् तत्रमंत्रः सोपस्करंद्विजश्रेष्ठव्रतसंपूर्तिकारकं वायनंतेप्रयच्छामिसावित्रीप्रीयतामिति ततःपीठंव्रतपूर्त्यैगांचदत्त्वा सदन्नेनब्राह्मणान्संतर्प्य आशिषोगृहीत्वा इष्टजनैः सहभुंजीत इयानत्रविशेषः रात्रौअरुंधतीं दृष्ट्वा संपूज्य अर्घ्यंदद्यात् अरुंधतिनमस्तुभ्यंवसिष्ठस्यप्रियेशुभे पुत्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यंदत्त्वाभुंजीत अथात्रपंचतपोव्रतं मात्स्ये ज्यैष्ठेपंचतपाःसायंहेमधेनुप्रदोभवेत् यात्यष्टमीचतुर्दश्योरुद्रव्रतमिदंस्मृतं ज्यैष्ठेअष्टम्यांचतुर्दश्यांच शुक्लायांपंचतपाःपंचाग्निव्रतधृक्चतुर्दश्यांसायंकालेव्रतांतेहेम्नोधेन्वाश्वदानाद्दिवंयातीत्यर्थः हेमधेन्वोरितिषष्ठीसमासः षष्ठ्यर्थलक्षणायते तथाचाग्नेये ज्यैष्ठेपंचतपाःसायंचतुर्दश्यष्टमीषुच यःकरोतिसुवर्णस्यधेनुदानंद्विजातये सयातिशांकरंलोकंरुद्रव्रतमिदंस्मृतम् धेनुसौवर्णीशेषंपूर्ववत्इति इंद्रव्रतं ज्यैष्ठशुक्लपक्षेकर्तव्यंसप्ताहमात्रसाध्यं अत्राशक्तौशुक्लपक्षे अष्टमीचतुर्दशीमात्रेपिवाकार्यम् तत्रैवास्यसमाप्तिदर्शनात् अष्टमीचतुर्दश्योःप्रत्येकदिनसाध्यंवा अस्य समाप्तिश्चतुर्दश्यामेवोक्तासायंकालएवेत्युक्तत्वात् वामनपुराणे शुक्लपक्षेदानमुक्तम् उदकुंभंचधेनुंचतालवृंतंसचंदनं त्रिविक्रमस्यप्रीत्यर्थंदातव्यंसाधुभिःसदेति ज्यैष्ठप्रकरणात् सदाज्यैष्ठशुक्लपक्षएवेददानं प्रतिवर्षंप्रदेयमितिसदापदद्योतनाभिप्रायः शिष्टाश्चाप्युदाहरंति योरूपवार्तानिसवितरिशिरीषवरबीजमश्नाति सनरःखगपतिसदृशोनागकुलंदृश्यतेसततम्बीजवरेण कीटाद्यविद्धता ज्यैष्ठशुक्लप्रतिपदायामारोग्यप्रतिपद्व्रतांगत्वेन वरुणाख्यसूर्यपूजाव्रतंकार्यं नारदीये अत्रकरवीरव्रतमुक्तं अथज्यैष्ठेशुक्लपक्षेपक्षत्यांदिवसोदये देवोद्यानभवह्यंकरवीरंसमर्चयेत् रक्ततंतुपरीधानंगंधधूपविलेपनैः प्रभूतसप्तधान्यैश्चनारंगैर्बीजपूरकैः अभ्युक्ष्याभ्युक्ष्यनोयनमंत्रेणत्थक्षमापयेत्

ग्राह्या वृद्दत्तयातथारंभासावित्रीवटपैतृकी कृष्णाष्टमीचभूताचकर्त्तव्यासंमुखीतिथिरितिस्कांदोक्तेः अस्याः कथाविधा
नंच भविष्ये युधिष्ठिरउवाच स्त्रीणांसंपद्यतेयेनमर्त्यलोकेगृहेशुभ पतिप्रेमतथात्यतंतन्मब्रूहिव्रतशुभ श्रीकृष्ण
उवाच एकदापार्वतीशंभूस्थितौमुनिसुरावृतौ कैलासशिखरेरम्येनानाधातुविचित्रिते नानाद्रुमलताकीर्णेनाना
पुष्पोपशोभिते शंकर.पार्वतींप्राहकिंत्वयासुव्रतंकृत वामोरुयेनमेत्यंतप्रियासिवरवर्णिनि आगच्छजानुदेशंमेसुप्र
सन्नाननाप्रिये ब्रूहिचावितथंसर्वंत्वयापार्वेव्रतमस्कृतं इत्युक्ताप्रणताभूत्वागौरीप्राहशिवंशुभा तृतीयायांसमाची
र्णमयारंभाव्रतंशुभ तेनमेत्वंमनोहारीभर्ताभूतोसिशंकरईश्वरीचाप्यहंस्त्रीणांतवदेहार्धहारिणी ईश्वरउवाच कीदृशं
तद्व्रतंभद्रेसर्वसौख्यप्रदायक ब्रूहिपार्वतियत्त्वेनयच्चीर्णंपितुरंतिके गौर्युवाच पुराहदेवतिष्ठामिकुमारीभवनेपितुःहि
मवद्गह्वरेरम्येसखीगणसमावृता ततोहमेनयाप्रोक्तास्वपित्राचाहिमाद्रिणा पुत्रिरंभाव्रतंचीर्णंचिरसौभाग्यवर्धन
येनप्रारब्धमात्रेणसर्वसंपत्स्यतेतव। सौभाग्यश्रीगणैश्वर्यंमहादेवीप्रदंततः एवंकरोमितेतातमयाचोक्तंवच.पितु
मनोभिलषितंकांतंयेनप्राप्नोमिशंकर- मेनोवाच। अद्यशुक्लतृतीयायांस्नात्वानियमतत्परा। कुरुपार्श्वेषुपंचाग्नीनुज्व
लमानान्हुताशनान् गार्हपत्यंदक्षिणाग्निमानायाहवनीयकं पंचमंभास्करंतेजइत्येतेपंचवह्नयः एतेषांमध्यमाभू
त्वातिष्ठपूर्वमुखाचिर सर्वाभरणसंयुक्तादेवीमभिमुखीकुरु महालक्ष्मींमहाकालींमहामायांमहामहीं चतुर्भुजांध्या
नपरांपंकजोपरिसंस्थितां मृगाजिनच्छन्नकुचांजटावल्कलधारिणीं गंगाचयमुनासिंधुःशतद्रुर्नर्मदानदी सरस्व
तीवैतरणीसैवप्रोक्तामहासती तस्याश्चप्रोक्षणपराभवतद्भावभाविता होमंकुर्युर्यतात्मानोब्रह्मणाःसर्वतोदिशं दे
व्याःपूजाप्रकर्त्तव्यापुष्पधूपादिनाततः बहुप्रकारैर्भक्ष्यैश्चनैवेद्यैर्घृतपाचितैःस्थापयेत्पुरतोदेव्या.पृथक्सौभाग्यमेव
चजीरकंतृणराजश्चकुसुंभंकुंकुमंतथा निष्पावाःपावनतरालवणंशर्करागुडं पुष्पमंडपिकाकार्यागंधपुष्पाधिवासि

मातुलुंगदाडिमबीजपूरादिफलहरिद्राकुंकुमकेसरविचूर्णकज्जलकंठसूत्रकंकणमौक्तिकपादभूषणवस्त्रकंचुकीआदर्श
पात्रादिदक्षिणातांबूलादियुतं सूर्पस्थंनवंसूर्पसहितंवायनंदद्यात् तत्रमंत्रःसोपस्करंद्विजश्रेष्ठव्रतसंपूर्तिकारकं वाय
नंतेप्रयच्छामिसावित्रीप्रीयतामिति ततःपीठंव्रतपूर्तयेगांचदत्त्वा सदन्नेनब्राह्मणान्संतर्प्य आशिषोगृहीत्वा इष्टज
नैः सहभुंजीत इयानत्रविशेषः रात्रौअरुंधतीं दृष्ट्वा संपूज्य अर्घ्यंदद्यात् अरुंधतिनमस्तुभ्यंवसिष्ठस्यप्रियेशुभे
पुत्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यंदत्त्वाभुंजीत अथात्रपंचतपोव्रतं मात्स्ये ज्यैष्ठेपंचतपाःसायंहेम
धेनुप्रदोभवेत् यात्यष्टमीचतुर्दश्योरुद्रव्रतमिदंस्मृतं ज्यैष्ठेअष्टम्यांचतुर्दश्यांच शुक्लायांपंचतपाःपंचाग्निव्रतधृक्च
तुर्दश्यांसायंकालेव्रतांतेहेम्नोधेन्वाश्चदानाद्विवयातीत्यर्थः हेमधेन्वोरितिपष्ठीसमासः पष्ठ्यर्थलक्षणायते तथाचा
ग्नेये ज्यैष्ठेपंचतपाःसायंचतुर्दश्यष्टमीपुच यःकरोतिसुवर्णस्यधेनुदानंद्विजातये सयातिशांकरंलोकंरुद्रव्रतमिदं
स्मृतम् धेनुसौवर्णीशेषंपूर्ववत्इति इंद्रव्रतं ज्यैष्ठशुक्लपक्षेकर्त्तव्यंसप्ताहमात्रसाध्यं अत्राशक्तौशुक्लपक्षे अष्टमी
चतुर्दशीमात्रेपिवाकार्यम् तत्रैवास्यसमाप्तिदर्शनात् अष्टमीचतुर्दश्योःप्रत्येकदिनसाध्यंवा अस्य समाप्तिश्चतुर्द
श्यामेवोक्तासायंकालएवेत्युक्तत्वात् वामनपुराणे शुक्लपक्षेदानमुक्तम् उदकुंभांबुधेनुंचतालवृंतंसचंदनं त्रिवि
क्रमस्यप्रीत्यर्थंदातव्यंसाधुभिःसदेति ज्यैष्ठप्रकरणात् सदाज्यैष्ठशुक्लपक्षेएवेददानं प्रतिवर्षंप्रदेयमितिसदापद
द्योतनाभिप्रायः शिष्टाश्चाप्युदाहरति योवृषपर्वणिसवितारिशिरीषवरबीजमश्नाति सनरःखगपतिसदृशोनाग
कुलंदृश्यतेसततमवीजवरेण कीटाद्याविद्धता ज्यैष्ठशुक्लप्रतिपदायामारोग्यप्रतिपद्व्रतांगत्वेन वरुणाख्यसूर्यपूजा
व्रतंकार्यं नारदीये अत्रकरवीरव्रतमुक्तं अथज्यैष्ठेशुक्लपक्षेपक्षत्यांदिवसोदये देवोद्यानभवद्ध्यंकरवीरंसमर्चयेत् रक्त
तंतुपरीधानंगंधधूपविलेपनैः प्रभूतसप्तधान्यैश्चनारंगैर्बीजपूरकैः अभ्युक्ष्याभ्युदयनेयेनमंत्रेणात्थक्षमापयेत्

ग्राह्या वृहत्तयातथारंभासावित्रीवटपैतृकी कृष्णाष्टमीचभूताचकर्त्तव्यासंमुखीतिथिरितिस्कांदोक्तेः अस्याःकथाविधा
नंच भविष्ये युधिष्ठिरउवाच स्त्रीणांसंपद्यतेयेनमर्त्यलोकेगृहेशुभं पतिप्रेमतथात्यतंतन्मब्रूहिव्रतशुभं श्रीकृष्ण
उवाच एकदापार्वतीशंभूस्थितौमुनिसुरावृतौ कैलासशिखरेरम्येनानाधातुविचित्रिते नानाद्रुमलताकीर्णेनाना
पुष्पोपशोभिते शंकरःपार्वतींप्राहकिंत्वयासुव्रतंकृत वामोरुयेनमेत्यंतप्रियासिवरवर्णिनि आगच्छजानुदेशंमेसुप्र
सन्नाननाप्रिये ब्रूहिचावितथंसर्वंत्वयापार्वतियत्कृतं इत्युक्ताप्रणताभूत्वागौरीप्राहशिवंशुभा तृतीयायांसमाची
र्णमयारंभाव्रतंशुभं तेनमेत्वंमनोहारीभर्त्ताभूतोसिशंकर ईश्वरीचाप्यहंस्त्रीणांतवदेहार्धहारिणी ईश्वरउवाच कीदृशं
तद्व्रतंभद्रेसर्वसौख्यप्रदायकं ब्रूहिपार्वतियत्त्वेनयच्चीर्णंपितुरंतिके गौर्युवाच पुराहदेवतिष्ठामिकुमारीभवनेपितुःहि
मवद्गृहेरम्येसखीगणसमावृता ततोहमेनयाप्रोक्तास्वपित्राचाहिमाद्रिणा पुत्रिरंभाव्रतंचीर्णंचिरसौभाग्यवर्धन
येनप्रारब्धमात्रेणसर्वसंपत्स्यतेतव सौभाग्यधीगणैश्वर्यंमहादेवीपदंततः एवंकरोमिवतातमयाचोक्तवच पितुः
मनोभिलषितंकांतंयेनप्राप्नोमिशंकरं मेनोवाच अथशुक्लतृतीयायांस्नात्वानियमतत्परा कुरुपार्श्वेषुपंचाग्नीनूज्व
लमानान्हुताशनान् गार्हपत्यंदक्षिणाग्निमानायाहवनीयकं पंचमंभास्करंतेजइत्येतेपंचवह्नयः एतेषांमध्यमाभू
त्वातिष्ठपूर्वमुखाचिरं सर्वाभरणसंयुक्तादेवीमभिमुखीकुरु महालक्ष्मींमहाकालींमहामायांमहामहीं चतुर्भुजांध्या
नपरांपंकजोपरिसंस्थितां मृगाजिनच्छन्नकुचांजटावल्कलधारिणीं गंगाचयमुनासिंधुःशतद्रुर्नर्मदानदी सरस्व
तीवैतरणीसैवप्रेक्षामहासती तस्याश्चप्रोक्षणपराभवतेद्भावभाविता होमंकुर्युर्यतात्मानोब्राह्मणाःसर्वतोदिशं दे
व्याःपूजाप्रकर्त्तव्यापुष्पधूपादिनाततः वहुप्रकारैर्भक्ष्यैश्चनैवेद्यैर्घृतपाचितैःस्थापयेत्पुरतोदेव्याःपृथक्सौभाग्यमेव
चजीरकंतृणराजश्चकुसुंभंकुंकुमंतथा निष्पावाःपावुन्नतरालवणंशर्करागुडं पुष्पमंडपिकाकार्य्यागंधपुष्पाधिवासि

करवीरवृषावासनमस्तेभानुवल्लभ दंभोलिभृत्सदुर्गादिदेवानांसततंप्रिय आकृष्णेनेतिवेदोक्तमंत्रेणैतंक्षमापयेत्
एवंभक्त्यासमभ्यर्च्यदत्वाविप्रायदक्षिणां प्रदक्षिणंततःकृत्वापश्चात्स्वभुवनंव्रजेत् इदंकरवीरपूजाव्रतं भविष्योत्तरे
पि एतद्व्रतंपुरापार्थसूर्याराधनकाम्यया अनुष्ठितंविक्षुभयासावित्र्या सत्यभामया दमयंत्यासरस्वत्यागायत्र्या
गंगयातथा अन्याभिरपिनारीभिर्मर्त्यलोकेप्यनुष्ठितं करवीरव्रतंपार्थसर्वसौख्यफलप्रदं संपूज्यरक्तकुसुमार्चित
सर्वशाखंनीलैर्दलैस्तततनुकरवीरवृक्षं भुक्त्वामनोभिलषितान्भुविभव्यभोगांस्तेवैप्रयांतिभवनंभरताग्रभानोः अ
थास्याभेवज्येष्ठशुक्लप्रतिपदि दशहराव्रतांगत्वेन गंगापूजास्तवादिप्रारंभः कार्यः तदुक्तंकाशीखंडे ज्येष्ठे
मासिसितपक्षेप्राप्यप्रतिपदातिथिं दशाश्वमेधिकेस्नात्वामुच्यतेसर्वपातकैः एवंसर्वासुतिथिषुक्रमस्नायीनरोत्तमः
आशुक्लपक्षदशमीदशजन्माघमुत्सृजेदितिदशहरागंगास्तोत्रं दशहरादशमीविधाने वक्ष्यमाणं ज्ञेयम् ज्येष्ठशु
क्लद्वितीयायांचतुर्वक्त्ररूपभानुपूजा नारदीये ज्येष्ठशुक्लद्वितीयायांभास्करंभुवनाधिपं चतुर्वक्त्रस्वरूपंचसमभ्यर्च्यवि
धानतः भोजयित्वाद्विजान्भक्त्याभास्करंलोकमाप्नुयात् इयंज्येष्ठशुक्लद्वितीयाकल्किजनयंती तदुक्तंज्येष्ठशुक्लद्वितीया
यांवौद्धः कल्किर्भविष्यतीति नभस्येचद्वितीयायांबलभद्रोभवत्तदेत्यादि इयंद्वितीयासोपपदा इतिकालादर्शे सि
ताज्येष्ठेद्वितीयाचआश्विनेदशमीसिता चतुर्थीद्वादशीमाघेएताःसोपपदाःस्मृताइति अत्रवेदाध्ययननिषेधो नार
दीये युगादिषुचसर्वासुतथामन्वंतरादिषु अनध्यायंप्रकुर्वीततथासोपपदास्वपीति ज्येष्ठशुक्लतृतीयायांरंभाव्रत
मुक्तं नारदीये भविष्येच अथज्येष्ठतृतीयातुशुक्लारंभेतिनामतः तस्यांसभार्यंविधिवत्पूजयेद्ब्राह्मणोत्तमम् गन्ध
पुष्पांशुकाद्यैस्तुनारीसौभाग्यकाम्यया रंभाव्रतमिदंविप्रविधिवत्समुपोषितं ददातिवित्तपुत्रांश्चमतिंधर्मेशुभाव
हा माधवीये भविष्येऽपि भद्रेकुरुष्वयत्नेनरंभाख्यंव्रतमुत्तमं ज्येष्ठशुक्लतृतीयायांस्नातानियमतत्परेति साच विद्धा

ता पद्मासनेनसातिष्ठेद्यावत्परिणतोरविः ततःप्रणम्यरुद्राणींमंत्रमेतदुदीरयेत् वेदेषुसर्वशास्त्रेषुदिविभूमौधरात
ले दृष्टःश्रुतश्चबहुशोनशक्त्यारहितःशिवः त्वशक्तिस्त्वंस्वधास्वाहात्वंसावित्रीसरस्वती पतिंगृहंदेहिदेविवसु
देहिनमोस्तुते एवंक्षमापयेद्देवींप्रणिपत्यपुनःपुनः देहिभक्त्यागृहंरम्यंविचित्रंबहुभूमिकं छाद्यकाटारकेदारक
पोतालिविभूषितं कुड्यस्तंभगवाक्षाढ्यंमणिमंडिततोरणं पद्मरागमहानीलवज्रवैडूर्यभूषितं गृहदानविधाने
नब्राह्मणायतपस्विने सपत्नीकायसंपूज्यसर्वोपस्करसंयुतं सुवासिनीभ्यस्तद्देयंनैवेद्यंसूर्पसंस्थितं निर्वर्त्यविधि
नानेनततः पश्चात्क्षमापयेत् दांपत्यानिचपूज्यानिचतुर्थ्यांमधुरैरसैः इत्युक्तयामयाचीर्णंहररंभाव्रतपरं व्रताते
गस्त्यमुनयेदत्तंगृहवरंशुभं लोपामुद्राप्रियापत्नीतस्यवेश्मानिपूजिता तेनधर्मेणदेवत्वभर्तालब्धोसिशंकर अर्ध
कायेस्थितातेनस्त्रीणाज्येष्ठापिचेश्वरी अतएतद्व्रतंरम्यंयाश्चरिष्यंतियोषितः कौंतेयपुरुषोवापिस्यातव्रह्म व्रतंभुवि
तासांपुत्रागृहभोगाःकुलवृद्धिर्भविष्यति स्त्रीणांचातुलसौभाग्यंगार्हस्थ्यसार्वकामिकं वालवृद्धंस्थमध्यानारूपलाव
ण्यवृंहणं सपत्नीदर्पदलनंवशीकरणमुत्तमं अनेनव्रतधर्मेणपरलोकेयुधिष्ठिर चिंतितोवापिसंपूर्णः पिंडवधः
प्रजायते मर्त्यलोकेशुभेदेशे शुभेग्रामेशुभेपुरे हिमवद्विंध्ययोर्मध्येचार्यावर्त्तेमनोहरे उत्पद्यचशुभेवासे
पूर्वोत्पन्न धनेकुले मृतःशक्रपुरंयातिततोविष्णुपुरंव्रजेत् ततःशिवपुरंयातिव्यासस्यवचनंयथा यद्रंभ
यामलभयाथहरेस्ततश्चगौर्या हिमाद्रिभवनस्थितयापिचीर्णं तस्याव्रतंभुविकरोतिरतास्वधर्मेव्रह्मे
शकेशवपतिंसुखदंलभेत्सा इति भविष्योत्तरे पंचाग्निसाधनंरंभाव्रतं ज्यैष्ठशुक्लतृतीयायांकार्यंअस्यो
द्यापनं यथाशक्तिगृहदानसहितंकार्यं गृहदानं कूर्मपुराणे शक्तितःसर्वसपूर्णंगृहंरम्यमथापिवा सदक्षिणंद्विजे
दत्वाव्रह्मलोकंव्रजेन्नरः गारुडेच ऐष्टिकंदारवंवापिमृण्मयंवापिशक्तितः सर्वोपस्करणोपेतंददातिविपुलंगृहं

ब्राह्मणायदरिद्रायविदुषेचकुटुंबिने क्रीडित्वासुचिरंकालंमानुष्यंलोकमागतः भवत्यव्याहतैश्वर्यःसर्वकामसमन्वितः
अथगृहदानप्रयोगः गृहमध्येदक्षिणभागेपंचवर्णरजोभिः पद्मं विलिख्य तदुपरिप्रस्थमात्रान्तिलान्तदुपरिशय्यां
स्थापयित्वा शय्योपरिसौवर्णींलक्ष्मीनारायणंचसंपूज्य प्रतिग्रहीतारंसपत्नीकंप्रतिग्रहार्थंदत्त्वातंचकरेगृहीत्वास
मंत्रघोषवक्ष्यमाणमंत्रैर्गृहंप्रवेशयेत् तेचमंत्राः एह्येहिनारायणदिव्यरूपसर्वामरैरर्चितपादपद्म शुभाशुभानंदशुचा
मधीशलक्ष्मीयुतस्त्वंचगृहंगृहाण नमःकौस्तुभनाथायहिरण्यकवचायच क्षीरोदार्णवसुप्तायजगद्धात्रेनमोनमः भू
र्लोकप्रमुखालोकास्तवदेहेव्यवस्थिताः नंदंतियावत्कल्पांतंतथास्मिन्भवमेगृहे त्वत्प्रसादेनदेवेशपुत्रपौत्रैर्युतोगृहे
पंचयज्ञक्रियायुक्तोवसेदाचंद्रतारकं ततस्तंपूर्वस्थापितशय्योपरिउदङ्मुखमुपवेश्यस्वयमासनेप्राङ्मुखउपविश्य
ओमद्येत्यादिदेशकालकीर्तनानंतरममुकगोत्रायामुकशर्मणेब्राह्मणायेदंपक्वेष्टिकादिरचितयथोपपत्तिसंपादितंकांस्य
ताम्रादिभाजनसर्वधान्यलवणगुडशर्करादिविविधरसोपेतं गोबलीवर्ददासीदासमंचतूलिकावितानादिसर्वोपकरण
युतसदीपप्रमोश्याम्रसर्वदैवतंगृहं सर्वपापक्षयपूर्वककल्पकोटिशतावधिब्रह्मलोकमहीपत्वादियथाभिलषितकामन
यातुभ्यमहंसंप्रददे शिलाकाष्ठपक्वेष्टिकारचितगृहेतुकल्पकोटिशतावधिनारायणसमीपक्षीरार्णवनिवासकामइति
मृण्मयगृहदानेपि एकैकमन्वंतरावच्छिन्नप्रतिलोकपालपुरनिवासकामइति इहतुमनोभिलषितमहेश्वरप्रतिमभर्तुर
तिप्रेमान्वितस्थिरसौभाग्यप्राप्तयेरंभातृतीयाव्रतोद्यापनसांगतावाप्तयेइदंतुभ्यमहंसंप्रददे ततःप्रार्थना इदंगृहंगृ
हाणत्वंसर्वोपस्करसंयुतं तवविप्रप्रसादेनममास्त्वभिमतंफलं गृहंममविभूत्यर्थंगृहाणत्वंद्विजोत्तम प्रीयतांमेजगन्ना
थोवास्तुरूपीजनार्दनः ततःप्रतिग्रहीतादेवस्यत्वेति यजुषाप्रतिगृह्णीयात् कामस्तुतिंचपठेत् ततःस्वर्णसहस्र
मानस्यैकसुवर्णपर्यंतंदानदक्षिणा यथाशक्तिप्रदेया पादुकोपानच्छत्रचामरादिकंदद्यात् संपन्नंवाप्यसंपन्नं

गृहोपस्करभूषणं सर्वसंपूर्णमेवास्तुत्वत्प्रसादाद्द्विजोत्तमेतिप्रार्थयेत् अस्यफलं मात्स्ये यएवंसर्वसंपन्नपक्वेष्टंविनिवे
दयेत्कल्पकोटिशतंयावद्ब्रह्मलोकेमहीयते शैलजदारुजंवापियोदद्याद्विधिपूर्वकं वसेत्क्षीरार्णवेरम्येनारायणसमी
पतःमृण्मयंवापियोदद्याद्गृहंसुपस्करान्वितं पुरेतुलोकपालानांप्रतिमन्वंतरंवसेत् अत्रवास्तुपूजनमपिकार्यं मंड
पवेदिपूजासर्वतोभद्रमंडलदेवतापूजाग्रहहोमादिकंचाचार्यानुमत्यायथाशक्तिकुर्यात् चतुर्दिक्षुचत्वारिकुंडानिवि
धायदक्षिणाग्निप्रमुखाग्निपूजाहोमादिकं ब्राह्मणैःकारयित्वा दक्षिणावस्त्रगोदानादिकंयथाशक्तिकुर्यात् इतिसोद्या
पनंरंभाव्रतम् अस्यासौभाग्यशयनव्रतांगत्वेनललितादेवीपूजा घृतप्राशनंगौरीपूजाव्रतंमंदारपुष्पप्राशनंच
इतिज्यैष्ठशुक्लतृतीयाव्रतानि ज्यैष्ठशुक्लचतुर्थ्यां सतीव्रतमुक्तं नारदीये ज्यैष्ठशुक्लचतुर्थ्यांतुसतीव्रतमनुत्तमं
कृत्वागणपतेर्मातुर्लोकेमोदेतरत्समं निर्णयामृतेअस्यामुमाजन्मोक्तं ज्यैष्ठशुक्लचतुर्थ्यांतुजातापूर्वमुमासती तस्मा
त्सातत्रसंपूज्यास्त्रीभिःसौभाग्यवृद्धये उपचारैश्चविविधैर्गीतनृत्योत्सवादिभिः होमैःपयोभिर्वस्त्रैश्चपत्रपुष्पैःसुगं
धिभिरिति ज्यैष्ठशुक्लपंचम्यांपितृपूजनं नारदीये तथाज्यैष्ठस्यपंचम्यांपितॄनभ्यर्चयेत्सुधीः सर्वकामफलावाप्त्यै
वायनैर्विप्रभेजनैःज्यैष्ठशुक्लषष्ठ्यांदिननाथपूजाव्रतम् ज्यैष्ठमासेशुक्लषष्ठ्यांविधिनेष्ट्वादिवाकरंलभेतवांछितान्कामांस्त
त्प्रसादान्नसंशयः ज्यैष्ठशुक्लषष्ठ्यामेवस्कंदपूजाव्रतमपिकार्यं ज्यैष्ठशुक्लसप्तम्यामिंद्ररविपूजाव्रतंनारदीये ज्यैष्ठेतुशुक्ल
सप्तम्याजातइंद्रोरविःस्वयं तंसंपूज्यविधानेनसोपवासोजितेंद्रियःस्वर्गतिंलभतेविप्रदेवेंद्रस्यप्रसादतः ज्यैष्ठशुक्लाष्ट
म्यांदेवीपुराणोक्तंशुक्लादेवीपूजाव्रतं शुक्लाष्टम्यांपुरादेवीशुक्लादेवीमहाशनिं बधायदानवेंद्राणांशुक्लाशुक्लेप्रपूजयेत्
अशनिंजयाहतिशेषः नारदीयेप्येवं ज्यैष्ठशुक्लेतथाष्टम्यांयोदेवींपूजयेन्नरःसविमानेनचरतिगंधर्वाप्सरसांगणैः
ज्यैष्ठशुक्लनवम्यामुमाव्रतंनारदीये ज्यैष्ठशुक्लनवम्यांतुसोपवासोनरोत्तमःउमांसंपूज्यविधिवत्कुमारींभोजयेद्द्विजान्

स्वशक्त्या दक्षिणां दत्त्वा शाल्यन्नं पयसाप्लुतं उमाव्रतमिदं विप्रस्य कुर्याद्विधिवन्नरः सभुक्त्वेहवरान्भोगानंतेस्वर्गे
गतिंलभेत् अथैवंभविष्योत्तरेपि उपवासपरोभूत्वातस्यांपूजयेदुमां ब्राह्मणीमितिवैनाम्नाश्वेतरूपेणरूपिणीं ज्यै
ष्ठेमासिनृपश्रेष्ठकृत्वानक्तस्यवैविधिं शाल्यन्नंपयसोपेतंस्वयंभुंजीतवाग्यतः कुमारीभोजयेद्भक्त्यास्वशक्त्याब्राह्म
णांस्तथेति ज्यैष्ठशुक्लदशमीदशहराख्या तदुक्तंनारदीये ज्यैष्ठशुक्लदशम्यांतुजाह्नवीसरितांवरा समायातावरांस्व
र्गात्तस्मात्सापुण्यदास्मृता अत्रदशयोगविशेषस्तत्रैव ज्यैष्ठशुक्लदलहस्तेबुधश्चदशमीतिथिः गरानंदव्यतीपा
ताःकन्येंदुवृषभास्करः दशयोगःसमाख्यातोमहापुण्यतमोमतः हरतेदशपापानितस्माद्दशहरास्मृता अस्यांसो
जान्हवींप्राप्यस्नातिसंप्रीतमानसः विधिनाजान्हवीतोयेसयातिहरिमंदिरं हेमाद्रौभविष्ये अस्याःकेवलदशम्याएव
हस्तमात्रयोगेदशहरात्वमुक्तम् ज्यैष्ठेमासिसितेपक्षेदशमीहस्तसंयुता हरतेदशपापानितस्माद्दशहरास्मृता॥ वारा
हेतु गंगायाएवदशहरेतिनामविशेषः दशम्यांशुक्लपक्षेतुज्यैष्ठमासिकुजेहनि अवतीर्णायतःस्वर्गाद्धस्तर्क्षेचसरिद्वरा
हरतेदशपापानितस्माद्दशहरास्मृता तस्यांस्नानंप्रकुर्वीतदानंचैवविशेषतइति स्कांदेपिदशयोगउक्तोयथा ज्यैष्ठेमा
सिसितेपक्षेदशम्यांबुधहस्तयोः गरानंदव्यतीपातेकन्याचंद्रेवृषेरवौ दशयोगेनरःस्नात्वासर्वपापैःप्रमुच्यते अत्र
बुधभौमयोर्योगःकल्पभेदेनव्यवस्था इयंच यत्रयोगबाहुल्यंतत्रैवकार्या योगाधिक्यश्रवणात् ज्यैष्ठेमलमासेसति
योगविशेषेण तत्रैवकार्यानतुशुद्धे दशहरात्वोत्कर्षश्चचतुर्युगादिष्विवास्तिवादितिहेमाद्रौऋष्यशृंगोक्तेः तथाच
ब्रह्मपुराणेज्यैष्ठस्यशुक्लदशमीसंवत्सरमुखीस्मृता तस्यांस्नानंप्रकुर्वीतदानंचैवविशेषतइति इयंचयुगादिवत्स्वतंत्रैव
योगविशेषंविनापिदशपापहरेति तथाचस्कांदे यांकांचित्सरितंप्राप्यदद्याद्दर्भैस्तिलोदकं मुच्यतेदशभिःपापैर्महा
पातकसंभवैः एवंज्यैष्ठशुक्लदशम्यां नदीस्नानमात्रस्यदशविधपापनिवृत्तिःफलं एवंदानस्यापि तथाच ज्यैष्ठमासि

सितपक्षे दशमी बुधसंयुता । हरते दश पापानि तस्माद्दशहरा स्मृता । अत्र बुधयोगप्राधान्यं । अत्र हस्तयोगोऽधिकः
सर्वत्र तिलतर्पणे तिलप्रयोगस्य तुल्यार्थत्वमपेक्षते नदीनां तु स्नाने दशविधपापनिवृत्तिरिति फलविशेषः तथा ज्यैष्ठशुक्लद
शम्यां तु भवेद्भौमदिनं यदि ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः । तथाच गंगास्नानात्सिताज्यैष्ठदशमी हस्तसंयु
ता हरते दश पापानि तस्माद्दशहरा स्मृतेति कृत्यमहार्णवे गांगेयाख्ययोगनिबंधे च ज्येष्ठमासि क्षितिसुतदिने शुक्लपक्षे
दशम्यां हस्ते शैलान्निरगमद्यदि सा जान्हवी मर्त्यलोके पापं तस्या हरति हि तिथौ सा दशेत्याहुरार्याः पुण्यं दद्यादपि दशगु
णं वाजिमेधायुतस्य एवं चात्र हस्तभौमयुतायां ज्यैष्ठशुक्लदशम्यां गंगास्नातस्य दशविधपापनाशवाजिमेधायुतशत
गुणपुण्यप्राप्तिः फलं दशविधपापानि तु परिभाषितानि भविष्यत्पुराणे स्कंदपुराणे काशीखंडे च परद्रव्येष्वभि
ध्यानं मनसानिष्टचिंतनं वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् १ पारुष्यमनृतं चापि पैशुन्यं चापि सर्वशः
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् २ अदत्तानामुपादानं हिंसा चैवाविधानतः परदारोपसेवा च कायिकं त्रिविधं
स्मृतम् अभिध्यानं जिघृक्षा अत्र विशेषः काशीखंडे ज्येष्ठमासि सितपक्षे प्राप्य प्रतिपदां तिथिं दशाश्वमेधिके स्नात्वा मु
च्यते सर्वपातकैः एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः आषाढशुक्लनवमीं प्रतिजन्मादिमुत्सृजेदिति ज्येष्ठशुक्ल
प्रतिपदमारभ्याषाढशुक्लनवम्यंतं काश्यां दशाश्वमेधिके स्नानं दशाश्वमेधेश्वरदर्शनं तथा च लिंगं दशाश्वमेधेशं
दृष्ट्वा दशहरा तिथौ दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः दशहरादशमीविधानं भविष्योत्तरकाशीखंडयोः
निशायां जागरं कृत्वा समुपोष्य च भक्तितः पुष्पैर्धूपैश्च नैवेद्यैः फलैश्च दशसंख्यया तथा दीपैश्च तांबूलैः पूजयेच्छ्रद्धया
न्वितः स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वा विधानतः दशप्रसृतिभिश्चैव तिलान् सर्पिश्च वै जले सक्तुपिंडान् गुडपिं
डान्दद्याच्च दशसंख्यया ततो गंगातटस्थे हि सारौप्येण वा तथा गंगायाः प्रतिमां कृत्वा वक्ष्यमाणस्वरूपिणीं संस्था

प्यपूजयद्देवतदलाभमृदापत्र अथतत्राप्यशक्तश्चालस्यात्पष्टनवाभुव वक्ष्यमाणेनमन्त्रेणकुर्यात्पूजाविशेषतः
नारायणंमहेशंचब्रह्माणंभास्करंतथा भगीरथंचवारीशंहिमवंतंनगेश्वरं गंधपुष्पादिभिःसम्यग्यथाशक्तिप्रपूजये
त् दशप्रस्थतिलान्दद्यादेशप्रस्थान्यवानपि प्रस्थःषोडशपलानि मुष्टिमात्रंपलंस्मृतमितिमहार्णवेभिधानात् म
त्स्यकच्छपमंडूकमकरादिजलेचरान् कारयित्वायथाशक्तिस्वर्णेनरजतेनवा तदलाभमृण्मयांश्चसंपूज्यकुसुमादि
भिःगंगायांप्रक्षिपेदाज्यंदीपांश्चैवात्रदापयेत् पुष्पाद्यैःपूजयेद्गंगांमंत्रेणानेनभक्तितःगंगामंत्रश्च नमःशिवायैप्रथमंना
रायण्यैपदततः दशहरायैपदमितिगंगायैमंत्रएवं स्वाहांतःप्रणवादिश्चभवेद्विंशाक्षरोमनुः ॐनमःशिवायैनारा
यण्यैदशहरायैगंगायैस्वाहा मुनिर्व्यासोस्यवैछंदःकृतिर्गंगास्यदेवता त्रिवेदवन्हिवाणाग्निनेत्रवर्णैःषडंगकं अ
स्यगंगामंत्रस्य वेदव्यासऋषिः कृतिःछंदो गंगादेवता गंगाप्रीत्यर्थेविनियोगः ऋष्यादीन् शिरसिमुखेहृदयेक्र
मेणन्यसेत् विनियोगश्चसर्वांगेव्यापकत्वेनन्यस्तव्यः त्रिवन्हिवेदवाणाग्निनेत्रवर्णैःषडंगकंॐनमः १ शिवायै २
नारायण्यै ३ दशहरायै ४ गंगायै ५ स्वाहा ६ इतिषडंगन्यासः अथध्यानं उत्फुल्लामलपुंडरीकनिलया
कृष्णेशविष्ण्वात्मिका कुंभेष्टाभयतोयजानिदधतीश्वेतांवरालंकृता हृद्यास्याशशिशेखराखिलनदीशो णादिभिःसे
विता ध्येयापापविनाशिनीनकरगाभागीरथीसाधकैः १ लक्षंजपेद्दशांशेनजुहुयात्सघृतैस्तिलैः जयादिश
क्तिभिर्युक्तेपीठेभागीरथींयजेत् यजेद्दावसरेष्वग्रदलेरुद्रंहरिंविधिं सूर्यंहिमाचलंमेनांभगीरथमपांपतिं दलाग्र
तोमीनकूर्ममंडूकमकरानपि हंसकारंडवांश्चक्रवाकान्सारसकानपि चतुरस्रेशक्रमुख्यानायुधैःसंयुतान्यजेत् एवं
संसाधितोमंत्रोभीष्टंयच्छतिमंत्रिणां ज्यैष्ठशुक्लदशम्यांतविशेषेणभजेद्बुधः दद्याद्दशभ्योविप्रेभ्योदशप्रस्थमितां
स्तिलान् प्रस्थःषोडशपलानिमुष्टिमात्रंपलंस्मृतमिति इतिमंत्रमहोदधौ अस्यागायत्रीच नमःशिवायविद्महे

नारायण्यैधीमहि तन्नोगंगाप्रचोदयात् अत्रगंगास्तोत्रमपिदशवारंपठेत् तदुक्तंभविष्ये तस्यांदशम्यामेतच्चस्तोत्रं
गंगाजलेस्थित यःपठेद्दशकृत्वस्तुदरिद्रोवापिचक्षमः सोपितत्फलमाप्नोतिगंगांसंपूज्यभक्तितः इदंस्तोत्रंचप्रतिप
दादिदशमीपर्यंतंदिनवृद्ध्यापठनीयमितिशिष्टाः अथदशहरागंगास्तोत्रंकाशीखंडे नमःशिवायैगंगायैशि
वदायैनमोनमः नमस्तेविष्णुरूपिण्यैब्रह्ममूर्त्यैनमोनमः नमस्तेरुद्ररूपिण्यैशांकर्यैतेनमोनमः सर्वदेवस्वरूपि
ण्यै नमोभेषजमूर्त्तये सर्वस्यसर्वव्याधीनांभिषक्श्रेष्ठ्यैनमोस्तुते स्थाणुजंगमसंभूतविषहंत्र्यैनमोस्तुते संसारवि
षनाशिन्यैजीवनायैनमोस्तुते तापत्रितयसंहंत्र्यैप्राणेश्यैतेनमोनमः शांतिसंतानकारिण्यैनमस्तेशुद्धमूर्त्तये सर्वसं
शुद्धिकारिण्यैनमःपापारिमूर्त्तये भुक्तिमुक्तिप्रदायिन्यैभद्रदायैनमोनमः भोगायैभोगदायिन्यैभोगवत्यैनमोस्तु
ते मंदाकिन्यैनमस्तेस्तुस्वर्गदायैनमोनमः नमस्त्रैलोक्यभूषायैत्रिपथायैनमोनमः नमस्त्रिशुक्लसंस्थायैक्षमावत्यै
नमोनमः त्रिहुताशनसंस्थायैतेजोवत्यैनमोनमः नंदायैलिंगधारिण्यैसुधाधारात्मनेनमः नमस्तेविश्वमुख्यायै
रेवत्यैतेनमोनमः बृहत्यैतेनमस्तेस्तुलोकधात्र्यैनमोनमः नमस्तेविश्वमित्रायैनंदिन्यैतेनमोनमः पृथ्व्यैशिवामृतायैचसुवृषायैनमोनमः परावरशताढ्या
यैतारायैतेनमोनमः पृथ्व्यैशिवामृतायैचसुवृषायैनमोनमः पाशजालनिकृंतिन्यैअभिन्नायैनमोस्तुते शांतायैच
वरिष्ठायैवरदायैनमोनमः उस्रायैसुखजग्ध्यैचसंजीविन्यैनमोस्तुते ब्रह्मिष्ठायैब्रह्मदायैदुरितघ्न्यैनमोनमः प्रणता
र्तिप्रभंजिन्यैजगन्मात्रेनमोस्तुते सर्वापत्प्रतिपक्षायैमंगलायैनमोनमः शरणागतदीनार्तपरित्राणपरायणे सर्व
स्यार्तिहरेदेविनारायणिनमोस्तुते निर्लेपायैदुर्गहंत्र्यैदक्षायैतेनमोनमः परात्परपरायैचगंगेनिर्वाणदायिनि गंगे
ममाग्रतःपाहिगंगेमेदेविपृष्ठतः गंगेमेपार्श्वयोरेधिगंगेत्वय्यस्तुमेस्थितिः आदौत्वमंतमध्येचसर्वंत्वंगांगतेशिवे
त्वमेवमूलप्रकृतिस्त्वंपुमान्परएवहि गंगेत्वंपरमात्माचशिवस्त्वंचनमःशिवे यइदंपठतिस्तोत्रंशृणुयाच्छ्रद्धयापि

पः दशधामुच्यतेपापैःकायवाचिकमानसैः .रोगस्थोरोगतोमुच्येतविपद्भ्यश्चविपद्गतः मुच्यतेबंधनाद्बद्धोभीतो
भीते.प्रमुच्यते सर्वान्कामानवाप्नोतिप्रेत्यचात्रोदिवंव्रजेत् दिव्यंविमानमारुह्यदिव्यस्त्रीपरिवीजितः गृहेपिलिखितं
पस्यसदातिष्ठतिधारितम् नाग्निचौरभयंतस्यनसर्पादिभयंक्वचित् ज्यैष्ठमासिसितेपक्षेदशमीहस्तसंयुता साहरे
द्दशविधंपापंबुधवारेणसंयुता तस्यांदशम्यामेतच्चस्तोत्रंगंगाजलेस्थितः यःपठेद्दशकृत्वस्तुदरिद्रोवापिचक्षमः सो
पितत्फलमाप्नोतिगंगांसंपूज्यभक्तितः उपवासीवक्ष्यमाणैर्दशपापैःप्रमुच्यते सर्वान्कामानवाप्नोतिप्रेत्यब्रह्मणिली
यते इतिदशहरागंगास्तोत्रं अस्यांसेतुबंधरामेश्वरस्यप्रतिष्ठापितत्वात् तत्रविशेषेणपूजाकार्या तदुक्तं स्कांदेसे
तुमाहात्म्ये ज्यैष्ठमासिसितेपक्षेदशम्यांबुधहस्तयोः गरानंदव्यतीपातेकन्याचंद्रेवृषेरवौ दशयोगेसेतुबंधेलिं
गरूपधरंहरम् रामोवैस्थापयामासशिवलिंगमनुत्तमम् इतिज्यैष्ठशुक्लदशम्यांदशहराविधिः ज्यैष्ठशुक्लैकादशी
निर्जला तत्रनिर्जलमुपोष्यैवविप्रेभ्योजलकुंभान्दद्यादितिनिर्णयामृते उक्तं,मदनरत्नेस्कांदेपि ज्यैष्ठेमासिनृपश्रे
ष्ठयाशुक्लैकादशीशुभा निर्जलंसमुपोष्यात्रजलकुंभान्सशर्करान् प्रदायविप्रमुख्येभ्योविष्णुलोकेसमोदते तथाच
नारदीये ज्यैष्ठशुक्लैकादशींचनिर्जलांसमुपोष्यतु उदयादुदयंयावद्भास्करस्यद्विजोत्तम प्रभातेकृतनित्यस्तुद्वा
दश्यामुपचारकैः हृषीकेशंसमभ्यर्च्यविप्रान्संभोज्यभक्तितः चतुर्विंशैकादशीनांफलंयत्तत्समाप्नुयात्. अथास्याः
कथा भीमसेनउवाच भगवन्देवदेवेशवासुदेवजनार्दन एकादश्यांनभोक्तव्यमितिवेदविदोविदुः एकभक्तंनश
क्नोमिचोपवासस्तुदूरतः वृकनामातुयोवन्हिर्वर्ततेजठरेमम प्रतिक्षणंमुहूर्तंतुभोजनंक्रियतेमया उपवासंनशक्नो
मिकर्तुंदेवकिनंदन तदहंकिंकरोमीहजपहोमादिकंहरे एतद्ज्ञात्वाकृपांकृत्वाममत्र्यकेशवप्रभो येनाखिलैकाद
शीनांत्रेतनफलमाप्नुयात् तद्व्रतंमेसमाचक्ष्वभक्तोस्मितवमाधव श्रीभगवानुवाच सत्यंसत्यंत्वयावीरममाग्रे

कथितंवच: तद्व्रतंवच्मितेयेनवत्सरकादशःफलं ज्येष्ठमासेतुलग्नासवृषभस्थेदिवाकरे अथवामिथुनस्थंकयाशुक्ले
कादशीभवेत् निर्जलानामसाप्रोक्तामहापातकनाशिनी उपवासंतुयस्तस्यांकरोतिजलवर्जितं तेनैवाप्नोतिसन
रोवत्सरैकादशीफलं दशम्यांनियमःकार्योदंतधावनपूर्वकं एकादश्यांनिराहारोवर्जयिष्यामिवैजलं द्वादश्यांपा
रणंचैवकरिष्यामिजनार्दन व्रतेनानेनगोविंदशरणंमेभवाच्युत एकादश्यांनिराहारोरात्रौजागरतत्परः
द्वादश्यांपूजयेद्भक्त्यादेवंनारायणंहरिं गदाचदक्षिणेहस्तेखड्गश्चैवतुदक्षिणे शंखश्चवामहस्तेतुवामे
चक्रंतथोन्मुखं निर्जलायांहृषीकेशोभक्तिभावेनपूजितःइहलोकेशुभान्यंतेददातिपरमांगतिं जलंयोवर्जयेन्मर्त्योनि
र्जलैकादशीदिने फलंकोटिगुणंतस्यसुवर्णस्योपजायते यानारीकुरुतेभक्त्यानिर्जलैकादशीव्रतं वीरपुत्रप्रसूःसास्या
त्नूनंजन्मनिजन्मनि पूजयेत्परयाभक्त्यागंधपुष्पादिभिःसदादेवदेवंहृषीकेशंसंसारार्णवतारकं उदकुंभःप्रदातव्योब्रा
ह्मणायप्रयत्नतःनानावस्त्रान्नसंयुक्तःछत्रोपानहसंयुतःहेमरत्नैस्तथामुक्तामालयालंकृतोगले सितशर्करयायुक्तस्तत्रै
नंमंत्रमुच्चरेत् सितशर्करयायुक्तोहेमरत्नादिसंयुतःउदकुंभप्रदानेनप्रीयतांमेत्रिविक्रमःइमंमंत्रंसमुच्चार्यघटंदद्याद्द्वि
जन्मने धेनुदानंतथाकुर्याद्यथोक्तविधिनानरः योपिदद्याश्रद्धयाभीमयथेष्टफलमाप्नुयात् द्वादश्यांभोजयित्वातुविप्रा
न्दत्त्वाचदक्षिणांसकलैर्बांधवैःसार्धंपश्चाद्भुंजीतवैस्वयं यइदंकुरुतेभीमानिर्जलैकादशीव्रतं सप्राप्नोतिनरोलोकेसम
स्तैकादशीफलं माहात्म्यश्रवणादस्यागोसहस्रफलंलभेत् तस्मात्कुरुसदाभीमनिर्जलैकादशीव्रतं इतिपुराणसंग्र
होक्ता निर्जलैकादशीव्रतकथा ॥ ॐअथज्येष्ठशुक्लैकादशीव्रतकथा युधिष्ठिरउवाच श्रुतामेमानवाधर्मावासिष्ठा
श्चमयाश्रुताः द्वैपायनयथोद्दिष्टान्वैष्णवान्वक्तुमर्हसि १ व्यासउवाच श्रुतास्तेमानवाधर्मावैदिकाश्चश्रुताश्त्वते
कलौयुगेनशक्यंतेतेवैकर्तुंजनाधिप सुखोपायमल्पक्लेशंधर्ममेकंमहाफलं ॥ पुराणानांचसर्वेषांसारभूतंवदामिते

एकादश्यांनभुंजीतपक्षयोरुभयोरपि . एकादश्यांनभुंक्तेयोनयातिनरकंतुसः व्यासस्यवचनंश्रुत्वाकपितोश्वत्थपत्रवत् भीमसेनोमहावाहुर्भीतोवाक्यमभाषत भीमसेनउवाच पितामहनशक्तोहमुपवासंकरोमिकिं अतोवहुफलंब्रूहिव्रतमेकमपिप्रभो व्यासउवाच वृषस्थेमिथुनस्थेर्केशुक्लाह्येकादशीभवेत् ज्यैष्ठमासिप्रयत्नेनसोपोष्याजलवर्जिता स्नानेवाचमनेचैववर्जयेन्नोदकंवुधः उपभुंजीतनैवान्यद्व्रतभंगोन्यथाभवेत् उदयादुदयंयावद्वर्जयित्वोदकंवुधः अप्रयत्नादवाप्नोतिद्वादशद्वादशीर्नरः ततःप्रभातेविमले द्वादश्यांस्नानमाचरेत् जलंसुवर्णंदत्वातुद्विजातिभ्योयथाविधि भुंजीतकृतकृत्यस्तुब्राह्मणैःसहितोवशी . एवंकृतेतुपुण्यंयद्भीमसेनशृणुष्वतत् संवत्सरस्यमध्येतुएकादश्योभवंतियाः तासांफलमवाप्नोतिनास्तिमेचात्रसंशयः अस्यव्रतस्ययत्पुण्यंतन्मेप्राहजनार्दनः एकादश्यांसितपक्षेज्यैष्ठस्योदकवर्जितं उपोष्यफलमाप्नोतितच्छृणुष्ववृकोदर. सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वहोमेषुयत्पुण्यंतदस्याःसमुपोषणात् उपोषितास्तुताःसर्वाएकादश्योनसंशयः धनंधान्यवहाःपुण्याःपुत्रारोग्यप्रदास्तथा उपोषितानरव्याघ्रइतिसत्यंवदामिते यमदूतामहाकाराः करालाः कृष्णपिंगलाः दंडपाशधरारौद्रामरणेदृष्टिगोचराः नप्रयांतिनरव्याघ्रएकादश्यामुपोषणात् पीतांवरधराःसौम्याश्चक्रहस्तामनोजवाः अंतकालेनयंत्येनंवैष्णवावैष्णवींतनुं तस्मात्सर्वप्रयत्नेनउपोष्यजलवर्जितं जलधेनुंतथादत्वासर्वपापैःप्रमुच्यते इतिहेमाद्रौमहाभारतोक्तं निर्जलैकादशीमाहात्म्यं अथब्रह्मवैवर्तपुराणेनिर्जलैकादशीमाहात्म्यं . भीमसेनउवाचपितामहमहावुद्धेशृणुमेपरमंवचः युधिष्ठिरश्चकुंतीचतथाद्रुपदनंदिनी अर्जुनोनकुलश्चैवसहदेवस्तथैवच एकादश्यांनभोक्तव्यंकदाचिदपिसुव्रत . तेमाब्रुवंतिनित्यंहिमाभुंक्ष्वत्वंवृकोदर अहंतानब्रुवंतातवुभुक्षादुःसहामम दानंदास्यामिविधिवत्पूजयिष्यामिकेशवं भीमसेनवचः श्रुत्वाव्यासोवचनमब्रवीत् . व्यासउवाच यदिस्वर्गोह्यभीष्टस्तेनरकस्त्याज्यएवच एकादश्यांनभोक्तव्य

पक्षयोरुभयोरपि भीमसेनउवाचपितामहमहाप्राज्ञकथयामितवाग्रतःएकभक्तेनशक्तोहमुपवासंकुतोमुनेयेनवैप्राप्य
तेस्वर्गंतन्मेवदयथातथा वृकनामातुयोवन्हिरुसर्वदाजठरेमम अतीवान्नंयदाश्नामितदासमुपशाम्यतितदेकंवदानि
श्चित्यंयेनश्रेयोहमाप्नुयां व्यासउवाच वृषस्थेमिथुनस्थेवायदाचैकादशीभवेत्ज्यैष्ठेमासिप्रयत्नेनसोपोष्योदकवर्ज्जि
तातत्रस्नानाचमनादन्यद्वर्जयित्वोदकंबुधःमाषकस्यसुवर्णस्ययत्रमज्जतिवैमणिः एतदाचमनंप्रोक्तंपवित्रंकायशोध
नं उपयुंजीतनान्यत्तुव्रतभंगोन्यथाभवेत् उदयादुदयंयावद्वर्जयित्वोदकंततः अयत्नात्समवाप्नोतिद्वादशद्वादशीफलं
प्रभातेविमलेजातेद्वादश्यांस्नानमाचरेत्सुवर्णंजलंदत्वाद्विजातिभ्योयथाविधि भुंजीतकृतकृत्यस्तुब्राह्मणैःसहितो
वशी एवंकृतेतुयत्पुण्यंभीमसेनशृणुष्वतत् संवत्सरेतुयावत्यएकादश्योभवंतिवै तासांफलमवाप्नोतित त्रमेनास्ति
संशयः इतिमांकेशवःप्राहशंखचक्रगदाधरः सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज एकादश्यांनिराहारःसर्वपापा
त्प्रमुच्यते द्रव्यशुद्धिःकलौनास्तिसंस्कारःस्मार्तएवच वैदिकश्चकुतश्चास्तिप्राप्तेदुष्टेकलौयुगे किंतुतेबहुनोक्तेन
वायुपुत्रपुनःपुनः एकादश्यांनभुंजीतपक्षयोरुभयोरपि एकादश्यांसितपक्षेज्यैष्ठेमास्युदकंविनापुण्यंफलंवाप्राप्नो
तितच्छृणुष्ववृकोदर सर्वतीर्थेषुयत्पुण्यंसर्वदानेषुयत्फलं तत्फलंसमवाप्नोतिइमांकृत्वावृकोदर संवत्सरेपियाश्च
स्युःशुक्लाःकृष्णावृकोदर उपोषितास्ताःसर्वाःस्युरेकादश्योनसंशयः धनधान्यवहाःपुण्याःपुत्रारोग्यफलप्रदाःयम
दूतामहाकायाःकरालाःकृष्णपिंगलाः दंडपाशधरारौद्रानोतिपश्यंतितंनरं पीतांबरधराःसौम्याश्चचक्रहस्तामनो
जवाःअंतकालेनयंत्येनंमानवंवैष्णवींपुरींतस्मात्सर्वप्रयत्नेनसोपोष्योदकवर्जिताजलधेनुंतदादत्वासर्वपापैःप्रमुच्य
ते इतिश्रुत्वातदाचक्रुःपांडवाजनमेजय तथात्वमपिभूपालसोपवासोर्चनंहरेः कुरुसर्वप्रयत्नेनसर्वपापप्रशां
तये स्वभेन्नदश्यमानयन्मर्दंतरगतंचयत् नतस्यममदोषोस्तुप्रार्थयेत्वामहंप्रभो मोक्ष्येपरेन्हिदेवेशानिर्विघ्नंकुरुमे

च्युत इत्युच्चार्य्यततोमन्त्रमुपवासपरोभवेत् सर्वपापविनाशायश्रद्धाभक्तिसमन्वितः मेरुमंदिरमात्रंतुस्त्रियोवापुरु
षस्यवा सर्वंतद्भस्मतांयातिएकादश्याःप्रभावतः नशक्नुवंतियेदातुंजलधेनुनराधिप सकांचनःप्रदातव्योघटको
वस्त्रसंवृतः तोयस्यनियमंयोस्यांकुरुतेवैसपुण्यभाक् पलकोटिसुवर्णस्ययामेयामेश्नुतेफलं स्नानंदानंजपहोमंयद
स्यांकुरुतेनरः तत्सर्वंचाक्षयंप्रोक्तमेतत्कृष्णेनभाषितं किंवापरेणधर्मेणनिर्जलैकादशींनृप उपोष्यसम्यग्विधिवद्वै
ष्णवंपदमाप्नुयात् सुवर्णमन्नंवासांसियदस्यांसंप्रदीयते तत्तस्यैवकुरुश्रेष्ठसर्वंचाप्यक्षयंभवेत् एकादशीदिनेचान्नं
भुंक्तेपापंसकेवलं इहलोकेसचंडालोमृतोदुर्गतिमाप्नुयात् येप्रदास्यंतिदानानिद्वादशींसमुपोष्यवै ज्यैष्ठेमासि
सितेपक्षेप्राप्स्यंतिपरमंपदं ब्रह्महामद्यपःस्तेयीगुरुद्वेष्टासदाव्रती मुच्यंतेपातकैःसर्वैर्द्वादशींयैरुपोषिता विशेषं
शृणुकौंतेयनिर्जलैकादशीदिने यःकर्त्तव्योनरैःस्त्रीभिःश्रद्धाभक्तिसमन्वितैः जलशायीतुसंपूज्योदेयाधेनुश्चतन्मयीप्र
त्यक्षावाकुरुश्रेष्ठघृतधेनुरथापिवा दक्षिणाभिश्चपुष्टाभिर्मिष्टान्नैश्चपृथग्विधैः तोषणीया प्रयत्नेनद्विजाधर्मभृतांवर तु
ष्टाभवंतिवैक्षिप्रंतैस्तुष्टैर्मोक्षदोहरिः आत्मद्रोहःकृतस्तैस्तुयैरेषानह्युपोषिता पापात्मानोदुराचारादुष्टास्तेनात्रसं
शयः कुलानांशतकंचापिकुलातीततथाशतं आत्मनासहितंनीतंवासुदेवस्यमंदिरं कुर्वद्भिर्जागरंरात्रौयैरेषासमु
पोषिता अन्नपानंतथागावोवस्त्रंशय्यासनंशुभं कमंडलुंतथाक्षेत्रंदातव्यंनिर्जलादिने उपानहौयोददातिपात्रभू
तेद्विजोत्तमे समौवर्णेनयानेनस्वर्गलोकेमहीयते यश्चेदंशृणुयाद्भक्त्यायश्चापिपरिकीर्त्तयेत् उभौतौस्वर्गगंतारौ
नात्रकार्य्याविचारणा यत्फलंसन्निहत्यायांराहुग्रस्तेदिवाकरे कृत्वाश्राद्धंलभेन्मर्त्यस्तदस्याःश्रवणादपि नियमश्च
प्रकर्त्तव्योदंतधावनपूर्वकं एकादश्यांनिराहारोवर्जयिष्यामिवैजलं केशवप्रीणनार्थायअन्यदाचमनादृते द्वादश्यांदेव
देवेशःपूजनीयस्त्रिविक्रमः गंधपुष्पैस्तथदीपैर्वासोभिःप्रियदर्शनैः पूजयित्वाविधानेनमन्त्रमेतदुदीरयेत् देवदेवहृषी

केशसंसारार्णवतारक उदकुंभप्रदानेननयमांपरमांगतिं ततःकुंभाःप्रदातव्याब्राह्मणेभ्यःस्वशक्तितः साभवस्त्र
युगाभीमच्छत्रोपानद्युगान्विताः दानानिचात्रदेयानिजलधेनुर्विशेषतः भोजयित्वाततोविप्रान्स्वयंभुंजीतवाग्यतः
एवंयःकुरुतेभीमद्वादशींपापनाशिनीं सर्वपापविनिर्मुक्तोपदंगच्छत्यनामयं ततःप्रभृतिभीमेनकृताह्येकादशीशुभं
पांडवद्वादशीह्येषालोकेख्यातावभूवह इतिब्रह्मवैवर्तेज्येष्ठशुक्लानिर्जलैकादशीमाहात्म्यम् अत्रनिर्जलमुपोष्यवि
प्रेभ्योजलकुंभान्दद्यादितिनिर्णयामृते उक्तंमदनरत्नेस्कांदेच ज्यैष्ठमासिनृपश्रेष्ठ्याशुक्लैकादशीशुभानिर्जलंसमुपो
ष्यात्रजलकुंभान्सशर्करान् प्रदायविप्रमुख्येभ्यस्तापत्रयविवर्जितः विष्णोर्लोकमवाप्येहमोदतेविष्णुसंनिधौवि
धि एवमेतस्यामेकादश्यांपुराणेपुजलधेनुदानंचोक्तं तत्प्रकारस्तूच्यतेहेमाद्रौ वसिष्ठउवाच जलधेनुंप्रवक्ष्यामिप्रोय
तेदत्तयायया देवदेवोहृषीकेशःसर्वेशःसर्वभावनः जलकुंभंनरव्याघ्रसुवर्णरजतान्वितं रत्नगर्भमशेषैस्तुग्राम्यै
र्धान्यैःसमन्वितं सितवस्त्रयुगाच्छन्नंदूर्वापल्लवशोभितं कुष्ठमांसीमुराशीरवालकामलकैर्युतं प्रियंगुपत्रसहितंसितव
स्त्रोपवीतिनं छत्रोपानत्समायुक्तंदर्भविष्टरसंस्थितं चतुर्भिःसंयुतंभूपतिलपात्रैश्चतुर्दिशं स्थापितंदधिपात्रेणघृत
क्षौद्रयुतंमुखे उपोषितःसमभ्यर्च्यवासुदेवंजनेश्वर पुष्पधूपोपहारैश्चयथाविभवमादृतः संकल्प्यजलधेनुंचतंकुं
भमभिपूज्यच पूजयेद्वत्सकंतद्वत्कृतंजलमयंबुधः एवंसंपूज्यगोविंदंजलधेनुंसवत्सकां सितवस्त्रधरःशांतोवीतरागो
विमत्सरः दद्याद्विप्रायराजेंद्रप्रीतयेजलशायिनः जलशायीजगद्योनिः प्रीयतांममकेशवः इतिचोच्चार्यभूना
थविप्रायप्रतिपाद्यतां अपक्वान्नाशिनास्थेयमहोरात्रमतःपरं अत्रायंप्रकारः जलकुंभमित्यादिकुंभोत्रजलकलशः
सुवर्णरजतयोःसुवर्णस्यशृंगाकृतित्वंरजतस्यचखुराकृतित्वंतिलपात्राणांताम्रमयत्वं दधिपात्रस्यकांस्यमयत्वं अनि
यतपरिमाणतयाशक्तिविधानं पंचरत्नानिधान्यानिचपरिभाषायामुक्तानित्रत्रयद्यपिसामान्यतोपदेशःतथापित

त्सामान्यादिनरेपुतथात्वमितिन्यायादितरधेनुवदविरुद्धधर्मोधनुष्ठानंत्रोदितव्यं यथासुवर्णस्यशृंगाकृतित्वरजतस्य खुराकृतित्वं तिलपात्राणांताम्रमयत्वंदाधिपात्रस्यकांस्यमयत्वंचानुसंधेय तथाधान्यानि. पार्श्वद्वयेकुष्ठादीनिघ्राण देशे प्रियंगुपात्रंश्रवणे यज्ञोपवीतंशिरःस्थानेस्थापयेत् वत्सोपिचतुर्थांशेनधेनुवत्कार्यः क्वचित् पूजयेद्वत्सकत द्वत्कृतघृतमयवुध इतिपाठाद्जलघृतयोर्विकल्पोविगम्यते कृष्णाजिनचतुर्हस्तंप्राग्ग्रीवंविन्यसेद्भुवि गोमयेनोपलि प्तायांदर्भानास्तीर्यसर्वतः लध्वेणकाजिनंतद्वद्वत्सस्यपरिकल्पयेत् प्राङ्मुखींस्थापयेद्धेनुमुदक्पादांसवत्सकां एण काजिनकृष्णाजिन प्राङ्मुखींप्राक्शिरसमित्यर्थः तदुत्तरेणवत्सोपितथैवपरिकल्पनीयइतिमत्स्यपुराणे प्राग्वद्गु डधेनुवदन्नद्रव्यंपरिमाणबोध्य तत्रउत्तमागुडधेनुःस्यात्सदाभारचतुष्टय वत्सभारेणकुर्वीतभाराभ्यांमध्यमास्मृ ता • अर्धभारेणवत्संस्याद्गृहवित्तानुसारत. भारस्तु तुलाविंशत्यांपलशतभारःस्याद्विंशतिस्तुलाइतिवचनाद्विंशतितु लापरिमितगृहवित्तानुसारतइति अत्रोत्तममध्यमादिकल्पनानिजवित्तानुसारतः कर्तव्येत्यर्थः अथप्रयोगः कर्ता देशकालौसंकीर्त्यामुकधेनुदानमहंकरिष्ये इतिसंकल्प्य गणेशपूजनं पुण्याहवाचनमाचार्यवरणंब्रह्मवरणंचकृ त्वाचार्यः स्वयंभूशुद्ध्यादिकुर्यात् .तत्रक्रमः यदत्रसंस्थितं भूतमितिसितसर्षपान् विकीर्य शुचीवोहव्येतिभूमिं संप्रोक्ष्य समेभूप्रदेशगोमयोपलिप्तायांभूमौदर्भानास्तीर्य तदुपरिव्रीहियवगोधूमकंगुसर्षपमाषमुद्गरूपाण्यन्य धान्यानि .यथाप्रमाणंपार्श्वद्वयेनिधाय तत्रकुंभंसजलंदर्भविष्टरस्थितं सुवर्णरजतान्वितरत्नगर्भंदूर्वापल्लवशोभितं सितवस्त्रयुगच्छन्नं चतुर्दिक्षुतिलपात्रोपेतंसच्छत्रंसोपानत्कंसंस्थाप्यमुखप्रदेशे दधिघृतक्षौद्रसहितानित्रीणिपात्रा णिविन्यस्य घ्राणदेशेकुष्ठमांसीमुरोशीरामलकादीनिन्यस्य प्रियंगुपात्राणिश्रवणयोर्विन्यस्य शिरसियज्ञोपवीतानि धायद्राक्षाफलक्षणांसितकंबलगलकंबलां ताम्रककुत्पृष्ठांसितचामररोमाणं विद्रुमभ्रूयुगोपेतां इंद्रनीलतारकां नव

नीतस्तनांकितांक्षौमपुच्छांकांस्यदोहां स्वर्णशृंगाभरणोपेतां राजतखुरां नानाफलरूपदंतयुक्तांगांसवत्सांसंपाद्य
आगावोआसन्निति सूक्तपठनोत्तरं सवत्सायैगवेनम इत्यावाह्यप्राणप्रतिष्ठांकृत्वामनोज्यूतिरितिप्रतिष्ठापूर्वकंसंपूज्य
पुष्पांजलिंगृहीत्वात्रिःप्रदक्षिणीकृत्यप्रार्थयेत् यालक्ष्मीःसर्वभूतानांयाचदेवेष्ववस्थिता धेनुरूपेणसादेवीममशांतिं
प्रयच्छतु देहस्थायाचरुद्राणाशंकरस्यसदाप्रिया धेनुरूपेणसादेवीममपापंव्यपोहतु विष्णोर्वक्षसियालक्ष्मीः
स्वाहायाचविभावसो चंद्रार्कशक्रशक्तिर्य्याधेनुरूपास्तुसाश्रिये चतुर्मुखस्ययालक्ष्मीर्यालक्ष्मीधनदस्यच लक्ष्मी
र्यालोकपालानांसाधेनुर्वरदास्तुमे स्वधात्वंपितृमुख्यानांस्वाहायज्ञभुजांतथा सर्वपापहराधेनुस्तस्माच्छांतिंप्रय
च्छमे एवमामंत्र्यताधेनुंब्राह्मणायनिवेदयेत् अत्रैपदानप्रयोगः अद्यअमुकास्मिन्काले अमुकगोत्रोहममुकशर्मा
ऽमुककामः अमुकगोत्रायामुकशर्मणेब्राह्मणाय इमांजलधेनुं सर्वोपस्करणवतीं यथोक्तवत्ससहितांविष्णुदैवतां
तुभ्यंसंप्रददेनमम देवस्यत्वारुद्रायगामित्यादिब्राह्मणस्तुपुच्छदेशंगृहीत्वा स्वस्तिकुर्यात् कइदंकस्माअदात्का
मःकामायादात्कामोदाताकामः प्रतिगृहीता काम समुद्रमाविशत्कामेनत्वांप्रतिगृह्णामि कामैतत्ते वृष्टिरसिद्यौ
स्त्वाददातुपृथिवीत्वाप्रतिगृह्णातु इतकापस्तुतिंपठेत् ततोदक्षिणादानं ततोगोपुच्छेतर्पणंकृत्वा गोस्तवंकुर्य्या
त् गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठ
तः गावःशिरसिमेनित्यंगवांमध्येवसाम्यहं पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ तासांमध्येचयानंदातस्यैदेव्यै
नमोनम. कर्मपरमेश्वरार्पणंकृत्वा ब्राह्मणान्भोजयित्वास्वयंभोजनंकुर्यात् इतिजलधेनुदानविधिः अथघृतधे
नुदानविधिः वसिष्ठउवाच तिलाभावेतुथांदद्यघृतधेनुप्रयत्नतः येनभूपविधानेनतदिहैकमनाःशृणु वासुदेवंजगन्नाथं
घृतक्षीराभिषेचनैः संपूज्यपूर्ववत्पुष्पैर्गंधधूपादिभिर्नवैःअहोरात्रोषितोभत्वाअभिष्यचनार्चिषं घृतार्चिषजगन्नाथ

देवदेवनमोस्तुते इतिस्तुतिः गन्धरस्यसार्पिषकुंभंपुष्पमालाविभूषितं कांस्यपिधानसंयुक्तंसितवस्त्रयुगेनच हिर
ण्यंगर्भसहितंमणिविद्रुममौक्तिकैः अत्र पलसहस्रपरिमाणः कुंभः द्वादशपलाधिकानि पचशतपलानीतिकेचित्
कांस्यपिधानसहितं कांस्यपात्रपिहितं मध्यवर्त्तिनाहिरण्येनसहितमित्यर्थः मणिविद्रुममौक्तिकैः सहि
तमितिशेषः इक्षुयष्टिमयान्पादान्खुरान्रौप्यमयांस्तथा सौवर्णेचाक्षिणीकुर्य्यात्शृंगेचागुरुकाष्ठके अत्र
सुवर्णादेरनुदितसरूयतयायथाशक्तिविधानं सप्तधान्यमयेपार्श्वेपत्रोर्णेनचकवलं कुर्य्यात्तुरुष्ककर्पूरैर्घ्राणंफल
मयान्स्तनान् तद्वच्छर्करयाजिव्हांगुडक्षीरमयंमुखं पत्रोर्णंधौतकौशेयम् तुरुष्कःसिल्हकःसिलारसेतिप्रसिद्धःक्षौ
मसूत्रेणलांगूलंरोमाणिसितसर्पपैः ताम्रपात्रमयंपृष्ठंकुर्य्याच्छूद्रासमान्वितः ईदृक्स्वरूपांसंकल्प्यघृतधेनुंनराधिप
तद्वत्कल्पनयाविद्वान्घृतवत्संप्रकल्पयेत् तद्वद्धेनुवत्खुरशृंगादियुक्तमित्यर्थः सचेधनोश्चतुर्थभागेनकर्त्तव्यः तचवि
प्रमहाभागंमनसैवघृतार्चिपं कल्पयित्वाततस्तस्मैप्रयतः प्रतिपादयेत् एतांममोपकारायगृह्णीष्वद्विजसत्तम
प्रीयतांममदेवेशोघृतार्चिःपुरुषोत्तमः इत्युदाहृत्यविप्रायदद्याद्धेनुंनराधिप स्कंदपुराणेत्वयंमंत्रः घृतंगावःप्रसूयते
घृतंभूमौप्रतिष्ठितं घृतमग्निश्चदेवाश्चघृतंमेसप्रगृह्यतामिति विष्णुधर्मोत्तरेतु घृतमग्निर्घृतंसोमस्तन्मयाःसर्वदेवता:
घृतधेनुप्रदानेनसर्वास्तुष्यतुदेवताः घृतरत्नसुवर्णानां सम्यक्कल्पनयाकृतां दत्त्वैकरात्रंस्थित्वातुघृताहारोनराधिप
मुच्यतेसर्वपापेभ्यस्तथादानफलंशृणु घृतक्षीरवहानद्योयत्रपायसकर्दमाः तेषुलोकेषुसर्वेषुसुपुण्येषूपजा
यते पितॄनूर्ध्वंनयेत्स्वर्गंपुरुषास्तस्ययेप्यधः तांस्तेपुन्नृपलोकेषुसनेयद्यस्तकल्मषः सकामानामि
यंव्युष्टिःकथितान्नृपसत्तम विष्णुलोकंनरायांतिनिष्कामाघृतधेनुदाः घृतमग्निर्घृतंसोमस्तन्मयाःसर्वदेवताः
घृतप्रयच्छतांतृप्ताभवंत्यखिलदेवताः सुवर्णमत्रदक्षिणा अनुक्तदक्षिणेषु तस्ययथाशक्ति विहितत्वात् कृष्ण.

जिनादिसाधनंकेतुजलधेनुवत्कार्यं गोस्तुतिःपूर्ववदेव अस्याःप्रयोगादिकंजलधेनुवत् इतिविष्णुधर्मोक्तोघृतधेनुविधिः अस्यामेवराघवद्वादशीव्रतं तत्र द्वादशीशब्देनएकादश्येवग्राह्या दुर्वासाउवाच . ज्यैष्ठेमासेप्येवमेवसकल्पविधिनानरः अर्चयेत्परमंदेवंपुष्पैर्नानाविधैःशुभैः ॐनमोराघवायेतिपादौपूर्वंप्रपूजयेत् त्रिविक्रमायेतिकटिं धृतविश्वायचोदरं उरःसंवत्सरायेतिकण्ठंसंवर्त्तकायच सर्वास्त्रधारिणेबाहूमुखमब्जरथांगके सहस्रशिरसेभ्यर्च्य शिरस्तस्यमहात्मनः अब्जरथांगकेशंखचक्रे एवमभ्यर्च्यविधिवत्प्राग्वत्कुंभंप्रकल्पयेत् प्राग्वद्वस्त्रयुगाच्छन्नौसौवर्णौरामलक्ष्मणौ प्राग्वन्मत्स्यप्रतिमावत् अनयोःस्वरूपं तथाचविष्णुधर्मोत्तरे रामोदाशरथिर्मौलीराजलक्षणलक्षितः मौलीमुकुटवान् भरतोलक्ष्मणश्चैवशत्रुघ्नश्चधनुर्धरः तथैवनूनंकर्तव्याःकिंतुमौलिविवर्जिताइति अर्चयित्वाविधानेनप्रभातेब्राह्मणायतौ दातव्यौमनसाकाममीहतापुरुषेणतु प्रीयतांमेराघवोयंरामोलक्ष्मणसंयुतः अपुत्रेणपुरापृष्टोराज्ञादशरथेनतु वसिष्ठःपुत्रकामायप्रोवाचपरमादृतः इदमेवविधानंतुकथयामासतंद्विजाः प्राग्रहस्यंविदित्वातुसराजाकृतवानिदं तस्यपुत्रःस्वयंजातोरामाख्योमधुसूदनः चतुरंशोप्यभूद्विष्णुःपरितोषान्महामुने एतदैहिकमाख्यातंपारत्रिकमतःशृणु दिव्यान्भोगान्भुंजतेस्वर्गसंस्थोयावैब्रह्मदशचाद्विद्विसंख्याः अतीत्यकालंपुनरेत्यमर्त्येराजाराज्ञांजायतेयज्ञयाजी दशचाद्विद्विसंख्याश्चतुर्दशब्रह्माइत्यर्थः नश्यंतिपापानिचतस्यपुंसःकामानवाप्नोतियथासमीहान् निःकामएतद्व्रतमेवचीर्त्वाप्राप्नोतिनिर्वाणपदंस्थिरंतत् इतिवाराहपुराणेधरणीव्रतपुज्यैष्ठशुक्लैकादश्यांराघवद्वादशीव्रतं इतिनिर्जलैकादशीविधिः समाप्तः ज्यैष्ठशुक्लद्वादश्यांयमुनास्नानं भविष्यपुराणे यमुनासलिलेस्नात्वापुरुषोमुनिसत्तम ज्यैष्ठमास्यमलेपक्षेद्वादश्यामुपवासकृत् समभ्यर्च्याच्युतंसम्यङ्मथुरायांसमाहितः अश्वमेधस्ययज्ञस्यप्राप्नोत्यविकलंफलं अत्रैकादश्यामुपवासोद्वादश्यामर्चनमिति नारदीये द्वादश्यांज्यैष्ठ

शुक्लायांपूजयित्वात्रिविक्रमं गंधाद्यैर्मधुरान्नाढ्यकरकांविनिवेदयेत् दद्याद्द्विजायतत्पश्चादेकभक्तंसमाचरेत् व्रतेना
नेनसंतुष्टोदेवदेवस्त्रिविक्रमः ददातिविपुलान्भोगांस्ततोमोक्षंचनारद ज्यैष्ठशुक्लत्रयोदश्यांदौर्भाग्यशमनंव्रतं नार
दीये ज्यैष्ठशुक्लत्रयोदश्यांदौर्भाग्यशमनंव्रतं तत्रस्नात्वानदीतोयेपूजयेच्छुभदेशजं श्वेतमंदारमर्कंवाकरवीरंचरक्तकं
निरीक्ष्यगगनेसूर्यंप्रार्थयेन्मंत्रतस्तथा मंदारकरवीरार्काभवंतोभास्करांशजाः पूजितामभदौर्भाग्यंनाशयंतुनमो
स्तुवः इत्थंयोर्चयतेभक्त्यावर्षेवर्षेद्रुमत्रयं नश्यंतितस्यदौर्भाग्यंनात्रकार्याविचारणा भविष्योत्तरेऽपीदंव्रतमुक्तंयु
धिष्ठिरउवाच ब्रूहिमेयदुशार्दूलव्रतंगधविनाशनं कृतंयद्धंतिरोगंचदौर्भाग्यशमनंतथा श्रीकृष्णउवाच इमंप्रश्नंपु
रापार्थजातूकर्ण्योमहामुनिः पृष्टोराज्ञ्यामहामत्यासक्तापिःकालमंदया कथयामाससप्रश्नमुपविष्टाशृणोतिसादेवी
कृतांजलिपुटाजातूकर्ण्योवदद्व्रतं ज्यैष्ठमासिसितपक्षेत्रयोदश्यांयुधिष्ठिर गत्वापुण्येनदीतोयेपूजयेच्छुभदेशजं श्वेत
मंदारमर्कंचकरवीरंचरक्तकं निंबंचसूर्यदेवस्यवल्लभंदुर्लभंतथा दीपनैवेद्यपुष्पाद्यैर्मंत्रेणानेनपांडव निरीक्ष्यगग
नेसूर्यंस्नात्वाहृदिसमुच्चरेत् सूर्यत्वंश्वेतमंदारश्वेतार्कार्कसमप्रभ करवीरनमस्तुभ्यंनिंबवृक्षनमोस्तुते इतियोभ्य
र्चयेद्भक्त्यावर्षेवर्षेपृथग्नरः वर्षत्रयंनृपश्रेष्ठनारीवाभर्तृसंयुता तस्याःशरीरेदौर्गन्ध्यंदौर्भाग्यंचनजायते नसापत्यं
भवेल्लोकेनवंध्यात्वंध्रुवंलभेत् जायतेतीवसौभाग्यंमर्त्यस्त्रीदुर्लभंनृप कथितंयाश्चरिष्यंतिगंधदौर्भाग्यनाशनं स
र्वपापविनिर्मुक्ताःसुखेवत्स्यंतिमातरः निंबःसितार्ककरवीरलताःसपुण्यायाःपूजयंतिकुसुमाक्षतदीपदानैः ताःसर्व
कामसुखवृद्धिसमृद्धिभाजोदौर्भाग्यदोषरहिताःसुभगाभवंति अत्रवृक्षत्रयात्रिंबवृक्षोधिकइति नारदीयाद्विशेषः
ज्यैष्ठशुक्लचतुर्दश्यां पंचतपाख्यं रुद्रव्रतं नारदीये ज्यैष्ठशुक्लचतुर्दश्यादिवापंचतपानिशा मुखेददेद्धेमधेनुंरुद्रव्रत
मिदंस्मृतं ज्यैष्ठपौर्णमासीमन्वादिःसाचपौर्वाह्णिकीग्राह्येति मन्वादिनिर्णये आदित्यपुराणे ज्यैष्ठेमासितिलान्

दद्यात्पौर्णमास्यांविशेषतः अश्वमेधस्ययत्पुण्यंतत्प्राप्नोतिनसंशयः विष्णुरपि ज्येष्ठे ज्येष्ठायुता चेत्स्याच्छत्रोपान
हद्दानतः नरोनराधिपत्यमाप्नोतीतिहेमाद्रौ ज्योतिषे अत्रयोगविशेषः ऐंद्रेगुरुःशशीचैव प्राजापत्येरविस्तथा
पूर्णिमाज्येष्ठमासस्यमहाज्येष्ठीप्रकीर्तिता अपरार्केवामनपुराणे ज्येष्ठ्यांकुंभांबुदानंचतालवृंतंसचंदनं त्रिविक्रमस्य
प्रीत्यर्थंदातव्यज्येष्ठमास्यपि अथास्यांपूर्णिमायांवटसावित्रीव्रतं इयंचपूर्वविद्धाकार्या पूर्वविद्धानकर्तव्याअमाव
स्याचपूर्णिमा वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तममितिब्रह्मवैवर्त्तवर्जयित्वेतिपर्युदासादष्टादशनाडीवेधो वटसा
वित्रीव्रतातिरिक्तपरः इयंचत्रयोदशीमारभ्यपूर्णिमांतंयावत्त्रिरात्ररूपं तथाचस्कादभविष्ययोः ज्येष्ठमासेसितेपक्षे
द्वादश्यांरजनीमुखे व्रतंत्रिरात्रमुद्दिश्यत्वहोरात्रंस्थितोभवेत् इत्युपक्रम्यअशक्तस्तुत्रयोदश्यांनक्तंकुर्याज्जितेंद्रियः इत्युपक्रम्यअतउपर्युदाहितं ज्येष्ठमासिसितेपक्षेपूर्णि
मायांतथाव्रतं चीर्णंपुरामहाभक्त्या कथितंतेमयानघेति धर्मउवाच नारीवाविधवावापिसपुत्रापुत्रवर्जिता सभ
र्तृकासपुत्रावाकुर्याद्व्रतमिदंशुभं ज्येष्ठमासेतुसंप्राप्तेपौर्णमास्यांपतिव्रता स्नात्वाचैवशुचिर्भूत्वानियमंकारयेत्त
तः निर्णयामृते भविष्येच अमायांचतथाज्येष्ठेवटमूलेतथासती त्रिरात्रोपोषितातत्रव्रतेनानेनपूजयेत् इति
अथव्रतविधिः आचम्यमासपक्षाद्युल्लिख्य ममभर्तुः पुत्राणांचायुरारोग्यप्राप्तयेजन्मजन्मन्यवैधव्यप्राप्त्यर्थंचसावि
त्रीव्रतमहंकरिष्ये इतिसंकल्प्य वटसेचनमंत्रः वटसिंचामितेमूलंसलिलैरमृतोपमैः सूत्रेणवेष्टयेद्भक्त्यागंधपु
ष्पाक्षतैर्यजेत् ॐनमोवैवटायेति भ्रामयंतीप्रदक्षिणं भक्त्यादत्तंधर्मराज सावित्रिप्रतिगृह्यतां पाद्यं भक्त्याम
याहृततोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणसावित्रिममास्यव्रतसिद्धये अर्घ्यं सुगंधिसहकर्पूरंसुरभिस्वादुशीत
ल स्वपत्न्यासहसावित्रिकुरुष्वाचमनीयकं अद्भिःपंचामृतैःस्नानंमयाभक्त्याप्रकल्पितं मंदाकिन्याःसमानीतमुदकं
चसदाप्रियं सावित्र्यैनमःधर्मराजायचनमः इतिसर्वत्रपूजामंत्रः आचमनं सूक्ष्मतंतुमयवस्त्रंकार्पासेनविनि

मितं सावित्रिसत्यवत्कांतेमयादत्तप्रगृह्यतां इतिवस्त्र सावित्रिसत्यवत्कांतेधर्मराजसुरेश्वर सावित्रिब्रह्मणासा
र्द्धमुपवीतंप्रगृह्यतां इत्युपवीतं कुंकुमागुरुकर्पूरकस्तूरीरोचनान्वितं चंदनंतेमयादत्तंसावित्रिप्रतिगृह्यता चदनं अ
क्षताश्चसुरश्रेष्ठेकुंकुमाक्ताःसुशोभनाः मयानिवेदिताभक्त्यागृहाणपरमेश्वरि इत्यक्षताः माल्यादीनिसुगंधीनिमा
लत्यादीनिवैप्रभो मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां पुष्पाणि अथांगपूजा सावित्र्यैपादौपूजयामि प्रसा
विन्यैजंघे. कमलायताक्ष्यैकटिं.भूतधात्र्यैउदरंपू- ब्रह्मप्रियायैशिरः .अथब्रह्मसत्यवतोरंगपूजा धात्रेनम.पादौ
ज्येष्ठायउदरं- परमेष्ठिनेगुह्यं.अग्निरूपायकटिंपू. वेधसेऊरू. पद्मनाभायहृदयं. सुमेधसेकठं. हिरण्यगर्भा
यमुखं. ब्रह्मणेशिरः विष्णवेसर्वांगंपूजयामि देवद्रुमसमुद्भूतः कालागुरुसमन्वितः आघ्रेयोयंमहाधूपःसावित्रि
प्रतिगृह्यतां धूपं चक्षुर्दंसर्वलोकानातिमिरस्यनिवारणं आर्तिक्यंकलितभक्त्यागृहाणपरमेश्वरि .दीपं अन्नंचतु
र्विधंस्वादुरसैः.षड्भिःसमन्वित भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यं पूगीफलंमहादिव्यंनागवल्लीदलै
र्युतं खदिराचूर्णसहितंतांबूलंप्रतिगृह्यतां तांबूलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतः
शांतिंप्रयच्छमे इतिदक्षिणा सावित्रीचप्रसावित्रीसततंब्रह्मणःप्रिये जगत्पूज्येजगन्मातर्विधात्रिवरदेनम. सावि
त्रित्वंयथादेविचतुर्वर्षशतायुषं पतिप्राप्तासिगुणिनंममदेवितथाकुरु सावित्रीचप्रसावित्रीसततंब्रह्मण.प्रिये पूजि
तासिद्विजैःसर्वैःस्त्रीभिर्मुनिगणैस्तथा त्रिसंध्यंदेविभूतानांवंदनीयासिसुव्रते मयादत्ताचपूजेयंत्वंगृहाणनमोस्तुते
इतिपुष्पांजलिंदत्त्वा ततोर्घ्यंदद्यात् ओंकारपूर्वकेदेविसर्वदुःखनिवारिणि देविमातर्नमस्तुभ्यमवैधव्यंप्रयच्छमे प
तिव्रतेमहाभागेचाद्विजातेशुचिस्मिते दृढव्रतेदृढभवेसर्वदाप्रियवादिनि अवैधव्यचसौभाग्यंदेहित्वममसुव्रते पु
त्रान्पौत्रांश्चमेसौख्यचगृहाणार्घ्यंनमोनम इत्यर्घ्यंदत्त्वा प्रार्थयेत् सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेन

सत्येनमांपाहिदुःखसंसारसागरात् त्वंगौरीत्वंशचिर्गौरीत्वंप्रभाचंद्रमंडले त्वमेवचजगन्मातर्मामुद्धरवरानने
यन्मयादुःकृतंपूर्वंकृतजन्मशतैरपि भस्मीभवतुतत्सर्वमवैधव्यंचदेहिमे अवियोगोयथादेवसावित्र्यासहितस्तव
अवियोगस्तथास्माकंभूयाज्जन्मनिजन्मनि इतिप्रार्थना इतिपूजाविधिः अथकथास्कांदे सनत्कुमारउवाच कु
लस्त्रीणांव्रतंदेवमाहात्म्यंचतथैवहि अवैधव्यकरंस्त्रीणांपुत्रपौत्रप्रदंवद ईश्वरउवाच आसीन्मद्रेषुधर्मात्माब्रह्मण्यप्र
मधार्मिकः नाम्नाचाश्वपतिर्वीरोवेदवेदांगपारगः अनपत्योमहाबाहुःसर्वैश्वर्यसमन्वितःसपत्नीकस्तपस्तेपेससमा
राधतेनृपः सावित्रींचप्रसावित्रींजपन्नास्तेमहामनाः जुहोतिचैवसावित्रींभक्त्यापरमयायुतः ततस्तुष्टानुसावि
त्रीसादेवीद्विजसत्तम सावित्र्यहवतीदेवीतस्यादर्शनमागता तांतुदृष्ट्वाजगद्वंद्यांसावित्रींचनृपोत्तमः प्रणिपत्यन्नृ
पोभक्त्याप्रहृष्टेनांतरात्मना तंदृष्ट्वापतितंभूमौतुष्टादेवीजगादह तुष्टाहंतवराजेंद्रवरंवरयसुव्रत एवमुक्तस्तया
राजाप्रसन्नांतामुवाचह अनपत्योह्यहंदेविपुत्रमिच्छामिशोभनं नान्यंवृणोमिसावित्रिपुत्रमेवजगन्मये अन्यद
स्तिसमग्रंमेक्षितौयच्चापिदुर्लभं प्रसादात्तवदेवेशितत्सर्वंविद्यतेगृहे एवमुक्तातुसादेवीप्रत्युवाचनराधिपं पुत्रस्ते
नास्तिराजेंद्रकन्यैकातेभविष्यति कुलद्वयंतुसाराजन्नुद्धरिष्यतिभामिनी मन्नाम्नाराजशार्दूलतस्यानामभविष्य
ति इत्युक्त्वातंमुनिश्रेष्ठराजानंब्रह्मणःप्रिया अंतर्धानंगतादेवीससंतुष्टोमहीपतिः ततःकतिपयाहस्सुतस्यराज्ञो
महीभुजः ससत्त्वासुपवेकन्यांपूर्णेकालेसुखायच साविश्यातुष्टयादत्तासावित्र्यांजप्तयातथा सावित्रीतेनवरदात्
स्यानामबभूवह राजतेदेवगर्भाभाकन्याकमललोचना वर्द्धतेचमुनिश्रेष्ठचंद्रलेखेवचांबरे सावित्रीब्रह्मणोवैसाश्री
रिवायतलोचना तांदृष्ट्वाहेमगर्भाभांराजाचिंतामुपेयिवान् अयाच्यमानाचवरैरूपेणाप्रतिमाभुवि तस्यारूपेण
तेसर्वेसान्निरुद्धामहीभुजः ततःसराजासंचिंत्यउवाचकमलेक्षणां पुत्रिप्रदानकालस्तेयाचेतेनचकेचन स्वयंवर

यद्दद्यंत्वंपातिंगुणसमान्वितं मन-प्रल्हादनकरंकुलेनाभिगुणेनच इत्युक्तातांसराजेंद्रोट्टद्धामात्यैःसहैवतां वस्त्रा
लंकारसहितांधनरत्नैःसमन्वितां विसृज्यचक्षणंतत्रयावत्तिष्ठतिभूमिपः तावत्तत्रसमागच्छन्नारदोभगवानृषिःसं
पूज्यचततोराजाअर्घ्यंपाद्येनतंमुनिं आसनेसुखमासीनं प्रोवाचेदंद्विजोत्तम पावितोहंत्वयाविप्रदर्शनेनाद्यनारद
यावदेवंवदन्राजातावत्साकमलेक्षणा आश्रमादागतादेवीट्टद्धामात्यैःसमन्विता अभिवाद्यपितुःपादौववंदे
सामुनिततः नारदेनतुदृष्टासादृष्ट्वाप्रोवाचभूमिपम् कन्येयंदेवगर्भाभाकिमर्थंनप्रयच्छसि वरायत्वमहावा
होवरयोग्यापिसुंदरी एवमुक्तस्तदातेनमुनिनाराजसत्तमः उवाचतांमुनिवाक्यमुनिनाथेनप्रेषिता आगतेयंवि
शालाक्षीमयासंप्रेषितासती अनयाचट्टतोभर्ताएच्छत्वंमुनिसत्तम साएष्टातेनमुनिनातस्मैव्याचष्टभामिनी आश्र
मेसत्यवान्नामद्युमत्सेनसुतोमुने भर्तृत्वेनमयाविप्रट्टतोसौरजनंदनः नारदउवाच कष्टकृतमहाराजदुहित्रातव
सुव्रत अजानंत्याट्टतोभर्तासत्यवानितिविश्रुतः सत्यंवदत्यस्यपितासत्यंमाताप्रभाषते स्वयंसत्यंप्रभाषेतस
त्यवानितितेनसः तथाचाश्वाःप्रियास्तस्यअश्वैःक्रीडतिमृन्मयैः चित्रेपिचालिखत्यश्वांश्चित्राश्वइतिचोच्यते
रूपवान्गुणवांश्चैवसर्वशास्त्रविशारदः नतेनसदृशोलोकेविद्यतेचेहमानवः सर्वैर्गुणैःससंपूर्णोरत्नैरिवमहार्णवः
एकोदोषोमहानस्यगुणानाट्टत्यतिष्ठति संवत्सरेणक्षीणायुर्देहत्यागंकरिष्यति अश्वपतिरुवाच अन्यंवरंभद्रंते
वरंसावित्रिगम्यतांविवाहस्यतुकालोयंवर्त्ततेशुभलोचने सावित्र्युवाच नान्यमिच्छाम्यहंतातमनसापिवरंविभो
योमयाट्टतोभर्तासमेनान्योभविष्यति विचिंत्यमनसापूर्वंपश्चाद्वाचंसमुच्चरेत्क्रियतेचततःपश्चात्शुभंवायदि
वाशुभं ट्टत्तमन्यंपुमांसंचकथंचान्यंट्टणोम्यहं सकृज्जल्पंतिराजानः सकृज्जल्पंतिपंडिताः सकृत्कन्याः
प्रदीयंतेत्रीण्येतानिसकृत्सकृत् पतिंमत्वानमेबुद्धिर्विचलंतीकथंचन सगुणोनिर्गुणोवापिमूर्खःपंडितएवच दीर्घाय

रथवानायुःसचभर्तामम प्रभो नान्यंवृणोमिभर्तारंयदिवास्याच्छचीपतिः इतिमत्वामयातातयत्कर्तव्यंसुखेन चनारद उवाच स्थिराबुद्धिश्चराजेंद्रसावित्र्याःसत्यवान्पतिःवरयस्वविवाहायभर्त्रासहकुरुस्थितिं ईश्वरउवाच निश्चितांतुमतिंज्ञात्वास्थिरबुद्धिश्चनिश्चयात् स्वल्पानुगोमहाराजःप्रतस्थेसौवनंप्रति गृहीत्वातुसुतांराजाद्युमत्सेनस्यसन्निधौ नारदस्तुततःखेवैतत्रैवांतरधीयत सगत्वाराजशार्दूलोद्युमत्सेनवनंगतः वृद्धश्चांधश्चराजाचवृक्षमूलमुपाश्रितः तथाश्वपतिराजासौपादौजग्राहवीर्यवान् स्वनामचसमुच्चार्यतस्थौतस्यसमीपतः उवाचराजातंभूपंकिमागमनकारणं पूजयित्वार्घ्यदानेनवन्यमूलफलैश्चसः ततःपप्रच्छकुशलंसराजामुनिसत्तम अश्वपतिरुवाच कुशलंदर्शनेनाद्यतवराजन्ममाधवै दुहितानामसावित्रीतवपुत्रमभीप्सती भर्तारंराजशार्दूलप्राप्नोत्वियमनिंदिता ममेदंकांक्षितंपूर्वंभर्तारमनयाविभो आवयोश्चैवसंबंधोभवत्वद्यममेप्सितः द्युमत्सेनउवाच वृद्धश्चांधश्चराजेंद्रफलमूलाशनोनृप राज्याच्च्युतश्चमेपुत्रोवन्येनाद्यचजीवति साकथंसहतेदुःखंदुहितातवकानने अनभिज्ञाचदुःखानांप्रत्यहंसाभिकांक्षते अश्वपतिरुवाच अनयाचवृतोभर्ताजानंत्याराजसत्तम अनेनसहवासस्तुतवपुत्रेणमानद स्वर्गतुल्योमहाराजभविष्यतिनसंशयः एवमुक्तस्तदातेनराज्ञाराजर्षिसत्तमः तथेतिसप्रतिज्ञायचकारोद्वाहमुत्तमं कृत्वाविवाहंराजेंद्रः संपूज्यविविधैर्धनैः अभिवाद्यद्युमत्सेनंजगामनगरंप्रति सावित्रीतुपतिंलब्ध्वाइंद्रंप्राप्ययशचीयथा सत्यवानपित्रह्यपैतयापत्न्याभिनंदितः क्रीडतेनगृहोद्देशपौलोम्यामघवानिव नारदस्यचतद्वाक्यंहृद्येनमनस्विनी वहंतीनियमंचक्रेव्रतस्यास्यचभामिनी गणयंतीदिनान्येवनलेभेतोषमुत्तमं ज्ञात्वाचदिवसंविप्रभर्तुर्मरणकारणं अत्रांतरेचनियमंत्रिदिनस्यमनस्विनी तस्मिन्दिनेजिगमिषावनेसत्यवतोभवत् कुठारंसपरिगृह्यपीठकंचैवमुत्तमं प्रस्थितश्चवनायैवसावित्रीवाक्यमब्रवीत् नगंतव्यंवनेत्वद्यममवाक्येनमानद अथवागम्यते

साधोमयासहवनंव्रज संवत्सरश्चसंपूर्णोह्याश्रमेऽस्मिन्ममप्रभो तद्वनंद्रष्टुमिच्छामिप्रसादंकुरुमेप्रभो सत्यवानुवा
च नाहंस्वतंत्रः सुश्रोणिपृच्छस्वपितरौमम ताभ्यांप्रस्थापितागच्छमयासहविनिश्चिता एवमुक्तातदातेनभर्त्रासा
कमलेक्षणा श्वश्रूश्वशुरयोःपादावभिवाद्येदमब्रवीत् वनंद्रष्टुंममेच्छेयमाज्ञामह्यंप्रदीयतां उवाचवचनंसाध्वीवरमे
कंप्रयच्छत भर्त्रासहवनंगंतुमेतद्वर्यतेमनःतस्यास्तद्वचनंश्रुत्वाद्युमत्सेनोब्रवीदिदं व्रतंकृतंत्वयाभद्रेपारणंकुरुसुव्र
ते पारणांतेभीरुततोगंतुंतावत्त्वमर्हसि सावित्र्युवाच नियमश्चकृतोस्माकरात्रौचंद्रोदयेसति जातेमयाद्यकर्तव्यं
पारणंतातमेशृणु वनदर्शनकामोस्तिभर्त्रासहममाद्यवै नमेतत्रभवेद्ग्लानिर्भर्त्रासहनराधिप इत्युक्तस्तुतदाराजाद्यु
मत्सेनोमहीपतिः यत्तेभिलषितंतन्वितत्कुरुष्वसुमध्यमे नमस्कृत्वाथसावित्रीश्वश्रूश्वशुरयोरथ सहितावनसा
साध्वीवनंसत्यवताययौ अवलोकयंतीभर्तारंतंचकालंमनस्विनी वनंचफलितंदृष्ट्वापुष्पितद्रुमसंकुलं द्रुमा
णांचैवनामानिमृगाणांचैवभामिनी पश्यंतीमृगयूथानिहृदयेनप्रवेपती तत्रगत्वासत्यवान्वैफलान्यादायसत्वरः
काष्ठानिचसमादायबबंधभारकंतदा कठिनंपूरयामासकृत्वावृक्षावलोकनं वटवृक्षस्यसासाध्वीउपविष्टामहा
सती काष्ठान्याददतस्तस्यजातासिरसिवेदना ग्लानिश्चमहतीजातागात्राणांवेपथुस्तदा आगत्यवृक्ष
सामीप्यंसावित्रीमिदमब्रवीत् ग्लानिश्चमहतीजाताशिरसश्चापिवेदना कंटकैर्भिद्यतेभद्रेशिरोमेशूलसन्नि
भैः उत्संगेतवसुश्रोणिस्वप्तुमिच्छामिसुव्रते अभिज्ञानाद्विशालाक्षीतस्यमृत्योर्मनस्विनी प्राप्तकालंमन्य
मानातस्थौतत्रैवभामिनी सत्यवानपिसुप्तस्तुकृत्वोत्संगेशिरस्तदा तावत्तत्रसमागच्छत्पुरुषः कृष्णपिं
गलः जाज्वल्यमानोवपुषातंददर्शाथभामिनी उवाचवाक्यंवाक्यज्ञाकस्त्वंलोकभयंकरः यमउवाच ॥
क्षीणायुस्तुवरारोहेभर्तातवमतस्विनि विनाकेनापिमानेतुंनशक्यस्तुत्वदंतिके देविदुर्विमहब्रजः सोदृशक्यंनते

शुभे इतिज्ञात्वामहाभागेस्वयमागमेनंमम इत्युक्त्वातोवरारोहोतस्यदेहान्महात्मनः अंगुष्ठमात्रपुरुषंबद्धवायासेन सत्वरं विचकर्षततोवेगाद्गृहीत्वाप्रस्थितःपुरीं सावित्रीचततःपश्चादनुयातिस्मतंप्रति यमउवाच निवर्त्तस्वमहाभा गेत्वंदूरंसमुपागता गत्वास्वभवनंशीघ्रंकुरुचैवोर्ध्वदैहिकं एवमुक्तातुसातेनप्रत्युवाचयमंतदा नश्रमोनैवचग्लानिः सकाशेतवमानद विशेषतश्चभर्तुर्नैकृतोग्लानिःसुरेश्वर धर्म्मेणत्वपालयसेधर्मेणत्वंविवर्द्धसे नाफलंदर्शनंदेवमत्तो मुक्तंकदाचन आहुःसप्तपदीमैत्रीमितिवेदाविदोविदुः ईश्वरउवाच संतुष्टस्तववाक्येनधर्मराजोयमस्तदा वराणामी श्वरोदातावरंतस्यैदिदेशह सापश्चादात्मनःपुत्रान्पितुःपुत्रान्शतंतथा चक्षुःप्राप्तिंचसावव्रेश्वश्रूश्वशुरयोरपि राज्य प्राप्तिंतथाब्रह्मञ्जीवितंचतथाविभोःभर्त्तुःकमलपत्राक्षीनिवृत्तासासुमध्यमा प्रदक्षिणततःकृत्वाधर्मराजस्यसुव्रता त थेत्युक्त्वाधर्मराजोजगामचस्वमालयं सागत्वावटसामीप्यंकृत्वोत्संगेशिरस्तथा प्रबुद्धस्तुततोब्रह्मन्सत्यवानिदमब्र वीत् मयासुप्तंवरारोहेदृष्टस्वप्नेवभामिनि तत्सर्वंकथितंतस्यायद्वृत्तंसर्वमेवत तयाचकथितंसर्वंसंवादश्चयमेनहि अस्तंगतेततःसूर्येद्युमत्सेनोमहीपतिः पुत्रस्यागमनाकांक्षीइतश्चेतश्चधावति आश्रमादाश्रमंगच्छन्पुत्रदर्शनकांक्ष या आवयोरंधयोर्यष्टिःक्वगतासिविनावयोः एवंसविविधंक्रोशन्सपत्नीकोमहीपतिः चकारदुःखमत्युग्रंपुत्रपुत्रेति चासकृत् अकस्माद्देवराजेंद्रोलब्धचक्षुर्महीश्वरः तदृष्ट्वामहदाश्चर्यंचक्षुःप्राप्तिंद्विजोत्तम तच्चपूर्वंतदावाक्यमूचुस्ते तापसाभृशंचक्षुःप्राप्तिश्चतेराजन्सूच्यतेतुमहामते पुत्रेणचसुसंयोगंप्राप्स्यसेनृपसत्तम ईश्वरउवाचयावदेववदंत्येनं तापसाद्विजसत्तमाः सावित्र्यासहितःप्राप्तःसत्यवान्द्विजसत्तम नमस्कृत्यद्विजान्सर्वान्पितरंमातरंतथा सावित्री चततोब्रह्मन्ववंदेचरणाविति श्वश्रूश्वशुरयोर्ब्रह्मन्सावित्रीकमलेक्षणा मुनयऊचुः किंतुसावित्रिजानासिकारणंवरव र्णिनि दृष्टयोश्चक्षुषोःप्राप्तिःश्वश्रूश्वशुरयोस्तव सावित्र्युवाच नजानामिद्विजश्रेष्ठाश्चक्षुषोःप्राप्तिकारणं चिरसुप्त

स्तुमेभर्त्तातेनकालव्यतिक्रमः सत्यवानुवाच अस्याःप्रभावात्संजातनष्टंचकारणंपरं तत्सर्वंविद्यतेविप्राःसावित्र्या
स्तपसःफल व्रतस्यैवतुमाहात्म्यंदृष्टमेतन्मयाधुना ईश्वरउवाच एवंतुवदतस्तस्यतदासत्यवतोविभोः पौरास्समा
गतास्तत्रचक्षुर्नृपतिर्यतः येनराज्यंबलाद्राजन्हृतंक्रूरेणमंत्रिणाअमात्येनहतःसोपिइतिपौराःसमागताःपौराऊचुः
उत्तिष्ठराजशार्दूलस्वराज्यपालयप्रभो अभिषिंचस्वराजेंद्र पौरैर्मंत्रिपुरोहितैः ईश्वरउवाच सगत्वाराजशार्दूलः
स्वपुत्रजनसंवृतः पितृपैतामहंराज्यंसंप्राप्तश्चमहामनाः सावित्रीसत्यवांश्चैवपरामुदमवापतुः जनयामासपुत्रा
णांशतवैबाहुशालिनां व्रतस्यैवतुमाहात्म्यात्तस्याःपितुरजायत पुत्राणांचशतंब्रह्मन्प्रसन्नाद्यमराजतः एतत्तेकथि
तंसर्वंव्रतमाहात्म्यमुत्तमं क्षीणायुर्जीवितोभर्ताव्रतस्यास्यप्रभावतः कर्त्तव्यंसर्वनारीणामवैधव्यफलप्रदं सनत्कुमा
रउवाच विधानंब्रूहिदेवेशव्रतस्यास्यचत्र्यंबक क्रियतेविधिनायेनस्त्रीभिः पुरनिषूदन ईश्वरउवाच वर्षेकनि
यमंकृत्वाएकभक्तेनमानद नक्ताहारेणवाविप्रभुक्तंप्राप्यद्विजर्षभ त्रिदिनंलंघयित्वातुचतुर्थेदिवसेशुभे चंद्रायार्घ्यंप्र
दद्याच्चपूजयित्वासुवासिनीः सावित्रींचप्रसावित्रींगंधधूपनिवेदनैः मिथुनानियथाशक्त्याभोजयित्वायथासुखं भो
जयेद्दंजगद्धात्रिनिर्विघ्नंकुरुमेशुभे दिनप्रतिदिनंश्रेष्ठंकुर्यान्न्यग्रोधसेवनं कृत्वावंशमयेपात्रेचाक्षतप्रस्थमेवच सप्त
धान्यान्वितंपात्रंप्रस्थैकेनद्विजोत्तम कारयेन्मुनिशार्दूलवस्त्रयुग्मेनवेष्टयेत् तस्योपरिन्यसेद्देवींसावित्रींब्रह्मणासह सा
वित्रीसत्यवांश्चैवकार्य्यौरौप्यमयाविमौ पीठकश्चकुठारश्चकृत्वारौप्यमयौद्विज फलैःकालोद्भवैर्देवींपूजयेद्ब्रह्मणः
प्रियां हरिद्राराजितैश्चैवकंठसूत्रैः समर्चयेत् सखीनांकंठसूत्राणित्रिदिनंप्रतिपादयेत् पक्कान्नानिचदेयानिनित्यमे
वद्विजोत्तम माहात्म्यंचैवसावित्र्याः श्रोतव्यंमुनिसत्तम पुराणश्रवणंकार्य्यंसतीनांचरितंविभो पूजयेन्नित्यमे
वेहमंत्रेणानेनसुव्रत सावित्रीचप्रसावित्रीसततंब्रह्मणःप्रिया पूज्यसेहूयसेदेविद्विजैर्मुनिगणैःसदा त्रिसंध्यंदेवि

भूतानांवंदिताल्वंजगन्मये मयादत्ताचपूजेयत्वंगृहाणनमोस्तुते नमःसावित्र्यैपादौपूजयामित्यादिपूजनं सावि
त्रीचप्रसावित्रीद्विधाभूतासिशोभने जगत्त्रयेस्थितादेवित्रिसंध्येत्वंतथानवे त्रित्वेदेवित्रिलोकेत्वंत्रेधागौरस्त्वंमहेश्वरि
पुत्रान्देहिधनंदेहिसर्वंजन्मसुसर्वदा रूपंदेहियशोदेहिसौभाग्यंदेहिमेशुभे व्याप्तंसकलंलोकमतोमांपाहिसर्वदा
यथातेनवियोगस्तुभर्त्रासहसुरेश्वरि तथामेसुमहाभागेकुरुत्वंजन्मजन्मनि एवंसंपूजयेद्देवीं कमलासन संस्थितां
एवंदिनत्रयंनीत्वाचतुर्थेहनिसत्तम मिथुनानिचसंपूज्यषोडशैवाद्विजोत्तम पूजयेद्वसुदानैश्चभूषणैश्चाद्विजोत्तमान् अ
र्चयित्वातथाचार्यंसपत्नीकंसुसम्मतं तस्मैसंकल्पितंसर्वंहेमसावित्रिसंयुतं मंत्रेणानेनदातव्यंद्विजमुख्यायसत्तम
सावित्रीकल्पविदुषेप्रणिपत्यतथामुने सावित्रीजगतांमातासावित्रीजगतांपिता मयादत्ताचसावित्रीब्राह्मणप्रतिगृ
ह्यतां अवैधव्यंचमेनित्यंयावज्जन्मनिजन्मनि मृत्वाचवसतेलोकेब्रह्मणःपतिनासह तत्रैवचाचिरंकालंभुंक्तेभोगा
ननुत्तमान् अनेनैवविधानेनकर्तव्यंव्रतमुत्तमं सर्वान्मनोरथान्प्राप्यअतेरुद्रोथजायते इतिस्कांदेसावित्रीव्रतं अ
थाब्दसाध्यंहेमाद्रौस्कांदेच धर्मराजवरदानानंतरं सावित्र्युवाच यामदीयंव्रतंदेवभक्त्यानारीकरिष्यति भर्त्रा
सासहितासाध्वीसदास्यात्सुखभाजना धर्मराजउवाच नारीवाविधवावापिअपुत्रापुत्रवर्जिता सभर्तृकासपुत्रा
वाकुर्याद्व्रतमिदंशुभं ज्येष्ठमासितुसंप्राप्तेपौर्णमास्यांपतिव्रता स्नात्वाचैवशुचिर्भूत्वावटंसिंचेद्ब्रहूदकैः सूत्रेणवेष्टये
द्भक्त्यागंधपुष्पाक्षतैःशुभैःनमोवैवस्वतायेतिक्षमयंतीप्रदक्षिणं रात्रौकुर्वीतनक्तंचअभुक्तंचसमाहिता तथैववटवृक्षं
चपक्षेपक्षेप्रपूजयेत् संप्राप्तेचपुनर्ज्येष्ठेलघुभुक्द्वादशीनयेत् दंतानांधावनंकृत्वानियमंकारयेत्ततः त्रिरात्रंलंघयि
त्वातुचतुर्थेदिवसेगृहे चंद्रायार्घ्यंप्रदास्यामिपूजयित्वाशुभाःसती मिष्टान्नासियथाशक्त्यांभोजयित्वाद्विजोत्तमान्
भोक्ष्येदंतुजगद्धात्रीनिर्विघ्नंकुरुमेशुभे इतिनियममंत्रः कृत्वावंशमयेपात्रेवालुकाप्रस्थमेवचसप्तधान्ययुतंपात्रंप्रस्थ

केनद्विजोत्तम वसुधोपरिसंस्थाप्यसावित्रींब्रह्मणासह हैमींततस्तयोःप्रीत्यै त्रिरात्रमुपवासतः न्यग्रोधस्यतले तिष्ठेत्यावन्नैवदिनत्रयं सौवर्णींचैवसावित्रींसत्येनसहकारयेत् रौप्यपर्यंकमारोप्यरथोपरिनिवेशयेत् पलादूर्द्ध्वं यथाशक्त्यारथंरौप्यमयंशुभं काष्ठभारंकुठारंचवटंचैवसुविस्तृतं एवंचमिथुनंकृत्वापूजयेद्गतमत्सरः वर्तुलंमंडलंकार्यंगोमयेनतपोधन पंचामृतेनस्नपनंगंधपुष्पोदकेनच चंदनागुरुकर्पूरैर्माल्यवस्त्रविभूषणैः नमःसावित्र्यैपादौतुप्रसावित्र्येतुजानुनी कटिंकमलपत्राक्ष्यैउदरंभूतधारिण्यै ॐनमोगायत्र्यैकंठंशिरसिब्रह्मणःप्रिये अथ ब्रह्मसत्यवत्योः पादौपूजयेत्प्रयतस्तदा धात्रेनमइतिपूज्याबूरूज्येष्ठायवैनमःपरमेष्ठिनेतथामेरुंअग्निरूपायवैकटिं वेधसेचोदरंपूज्यं पद्मनाभायवैहृदिकंठंसुमेधसेपूज्यमुखंहिरण्यगर्भेजेब्रह्मणेवैशिरःपूज्यसर्वांगंविष्णवेनमःअभ्यर्च्यैवंक्रमेणैवशास्त्रोक्तविधिनाशुभं ततोरजतपात्रेणअर्घ्यंदद्याद्द्वयोरपि अथार्घ्यमंत्र.ॐकारपूर्विकाचैववीणापुस्तकधारिणिवेदमातर्नमस्तेस्तुअवैधव्यंप्रयच्छमे पतिव्रतेमहाभागेवह्निजातेशुचिस्मिते दृढव्रतेदृढमतेभर्त्तुश्चप्रियवादिनि अवैधव्यंचमेदेहिदेविःत्वंममसुव्रते पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोनमःअथब्रह्मसत्यवत्योरर्घ्यमंत्र.त्वयासृष्टंजगत्सर्वंसदेवासुरमानुषंसत्यव्रतधरादेवब्रह्मरूपनमोस्तुतेयमार्घ्यंदानंत्वंकर्मसाक्षीलोकानांशुभाशुभविवेककृत् वैवस्वतगृहाणार्घ्यंधर्मराजनमोस्तुते धर्मराजःपितृपतिःसाक्षिभूतश्चजंतुषु कालरूपगृहाणार्घ्यंमवैधव्यंप्रयच्छमे गंधपुष्पैश्चनैवेद्यैःफलैः.कुसुमदीपकैःरक्तवस्त्रैरलंकारैःपूजयेद्गतमत्सरःअथसावित्रीप्रार्थना सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणीतेनसत्येनमांपाहिदुःखसंसारसागरात्त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले त्वमेवजगतांमातामामुद्धरभवार्णवात् सौभाग्यंकुलवृद्धिंचदेहित्वंममसुव्रते यन्मयादुष्कृतंसर्वंकृतजन्मशतैरपि भस्मीभवतुतत्सर्वमवैधव्यंचदेहिमे अथब्रह्मसत्यवत्योःप्रार्थना अवियोगोयथादेवसावित्र्यासहितस्यते अवियोगस्तथास्माकंभूयाज्ज

न्मनि जन्मनि यमप्रार्थना कर्मसाक्षिजगत्पूज्यसर्ववंद्यप्रसीदमे अथसावित्र्याः सावित्रीत्वंयथादेविचतुर्वेश
तायुंपपतिंप्राप्तासिगुणितंममदेवितथाकुरु सावित्रीचप्रसावित्रीसततंब्रह्मणःप्रिया पूजितासिद्विजैःसर्वैःस्त्रीभि
र्मुनिगणैस्तथा त्रिसंध्यदेविभूतानांवंदनीयासिसुव्रते मयादत्ताचपूजेयंताग्रहाणनमोस्तुते जागरंतत्रकुर्वीतगीतनृ
त्यादिमंगलैःसुवासिन्यस्तथापूज्यादिवसेदिवसेगते सिंदूरंकुंकुमंचैवतांबूलंचसपूगकं तथाद्द्याच्चपूपाणिभक्ष्यंसौ
भाग्यमष्टकंसौभाग्यमष्टकंपरिभाषोक्तं यातिष्ठेद्दिवारात्रौकामक्रोधविवर्जिता दिनत्रयेपिकर्तव्यमेवमर्घ्यादिपूजनं
ततश्चतुर्थेदिवसेकर्तव्यंतच्छृणुष्वमे मिथुनानिचतुर्विंशत्षोडशद्वादशाष्टवा पूजयेद्वसुगोदानैर्भूषणाच्छादनासनैः
आचार्यंचततःपश्चाद्व्रतस्यविधिकारकं सर्वलक्षणसंयुक्तंसर्वशास्त्रार्थपारगंवेदविद्याव्रतस्नातंशांतंदांतंजितेंद्रियंसप
त्नीकंसमभ्यर्च्यवस्त्रालंकारकुंडलैः शय्यांसोपस्करांदद्याद्गृहंचैवातिशोभनं अशक्तस्तुयथाशक्त्यास्तोकंस्तोकंप्र
कल्पयेत् सौवर्णीप्रतिमांपुत्ररतिनासहदापयेत् दानमंत्रःसावित्रित्वंयथादेविचतुर्भिर्शतायुषं सत्यवंतपतिंलब्धाम
यादत्तातथाकुरु सावित्रीजगतांमातासावित्रीजगतांपिता मयादत्ताचसावित्रीब्राह्मणप्रतिगृह्यतां प्रतिग्रहमंत्रः
मयागृहीतासावित्रीत्वयादत्तासुशोभने यावच्चंद्रश्चसूर्यश्चसहभर्त्रासुखीभव गुरुंचगुरुपत्नींचततोभक्त्याक्षमापयेत्
यन्मयाकृतवैकल्यंव्रतेस्मिन्दुराधिष्ठितं सर्वसंपूर्णतांयातुयुवयोरर्चनेकृते अथवटसेचनमंत्रः धर्मराजोयमोधा
तानिलःकालोंतकोव्ययः वैवस्वतश्चित्रगुप्तोदत्तोमृत्युःक्षयोवटः मासिमासितथैतैस्तैर्नामभिःसिंचयेद्वटं इति
द्वादशनामभिर्द्वादशमासेषुवटसेचने द्वादशमंत्रा ज्येष्ठादितोज्ञेयाः ॥ १२ ॥ न्यग्रोधेहंवसेनित्यंतस्माद्यत्नेनसे
चयेत् इतिसावित्रींप्रतिधर्मराजवचनं ततोगुरुंसपत्नीकंपूजयेद्व्रतविस्मया भूषणैश्चसुवस्त्रैश्चकुंकुमैश्चमनोह
रैः न्यग्रोधस्यसमीपेतुगृहेवास्थंडिलेशुभे सावित्र्याश्चैवमंत्रेणघृतहोमंतुकारयेत् पायसंजुहुयाद्भक्त्याघृतेनस

हमामिनि व्याहृत्याचैवमंत्रेणतिलव्रीहियवांस्तथा होमांतेदक्षिणांदद्यात्वित्तशाठ्यविवर्जितां क्षमापयेत्ततो
विप्रंवद्यपादौप्रयत्नतः भुंजीतवासरांतेतुनक्तेशांतायशस्विनी अर्घ्यंदद्यादरुंधत्यै दृष्ट्वाचैवप्रणम्यच . अरुं
धतिनमस्तेस्तुवसिष्ठस्यप्रियेशुभे सर्वदेवनमस्कार्य्येपतिव्रतेनमोस्तुते अर्घ्यमेतन्मयादत्तंफलपुष्पसमन्वितं
पुत्रान्देहिधनंदेहिगृहाणत्वंशुभेमम सखीभिर्ब्राह्मणैःसार्द्धंभुंजीतविजितेंद्रिया एवंकरोतियानारीव्रतमेतदनुत्तमं
भ्रातरः पितरौपुत्राःश्वशुरौस्वजनस्तथा चिरायुषस्तथारोग्याःस्युश्चजन्मशतत्रय भर्त्राचसहितासाध्वीब्रह्म
लोकेमहीयते इतिस्कंदपुराणेसोद्यापनंवटसावित्रीव्रतं अथास्यप्रयोगः संक्षिप्तप्रकारेणइदंव्रतंत्रयोदशीमार
भ्यपंचदश्यांकार्यं कृष्णपक्षेअमांतंशुक्लपक्षेपौर्णिमास्यंतंकार्य्यं तत्रविधिः नद्यादौ तिलामलकरंजनीविलेप
पूर्वकस्नात्वा व्रतस्यवार्षिकत्वात् पूजादिकनिवर्त्योद्यापनेसंकल्पंकुर्यात् तद्यथा तिथ्यादिसंकीर्त्य ममभर्तुःपु
त्रादीनांचपुरारोग्यैश्वर्य्यादिप्राप्तिपूर्वकंइहजन्मनिजन्मातरेचात्मनोः वैधव्यफलप्राप्तये आचरितवटसावित्रीव्र
तोद्यापनंकरिष्य इतिसंकल्प्यआचार्यवरणंविधायवटमूलेगृहेवा वेदींविधाय तत्र सर्वतोभद्रविरच्य ब्रह्मादिदेव
तासग्रहादिकाः संपूज्यतत्रकलशद्वयंप्रतिपाद्य तत्रैकस्मिन् कलशेब्रह्मयज्ञानामितिमंत्रेणहैमंब्रह्माणंगायत्र्यामि
त्रेणहैमांसावित्रींचप्रतिष्ठाप्य तदुत्तरेद्वितीयकलशेपलादधिकराजतपर्यंकेहैमीःप्रतिमाः सत्यवत्सावित्रीयमनार
दानांतामममंत्रैरावाह्य पुरतःकाष्ठभारकुठारंचहैमराजतंचनिधायपूजयेत् अत्राशक्तौ एकस्मिन्कलशे सर्वेषांपू
जा पुष्पपूजांते सावित्र्यैपादौपूजयामि प्रसावित्र्यैजानुनी कमलपत्राक्ष्यैकटिं भूतधारिण्यैउदरंगायत्र्यैकंठं-
ब्रह्मप्रियायैशिरःपू० मंत्रपुष्पार्चनानंतरं अर्घ्यंदद्यात् राजतादिपात्रेण द्वयोःकलशयोरुपरि ॐकारपूर्विकेदे
विवीणापुस्तकधारिणि वैधातर्येनमस्तेस्तुअवैधव्यंप्रयच्छमे पतिव्रतेमहाभागेभर्तुश्चप्रियवादिनि अवैधव्य

चसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौभाग्यंगृहाणार्घ्यनमोस्तुते अथब्रह्मसत्यवतोः त्वयासृष्टंजगत्स
र्वंसदेवासुरमानुषं सत्यव्रतधरोदेवब्रह्मरूपनमोस्तुते यमस्य त्वंकर्मसाक्षीलोकानांशुभाशुभविवेककृत् वैवं
स्वतगृहाणार्घ्यंधर्मराजनमोस्तुते नारदायनमस्तुभ्यंसुरेशाद्यभिवंदित गृहाणार्घ्यंमयादत्तमवैधव्यंप्रयच्छमे
ततःसावित्रींप्रार्थयेत् सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेनसत्येनमांपाहिदुःखसंसारसागरात् . मयाकृ
तंमहाघोरंजन्मांतरशतैरघं भस्मीभवतुतत्सर्वमवैधव्यंप्रदेहिमे ब्रह्मसत्यवतोः अवियोगोयथादेवसावित्र्यास
हितस्तव अवियोगस्तथास्माकंभूयाज्जन्मनिजन्मनि सावित्र्याःसावित्रित्वंयथादेवीचतुर्वर्षशतायुषं पतिंप्राप्ता
सिगुणिनंममदेवितथाकुरु यमस्य कर्मसाक्षीजगत्पूज्यसर्ववेद्यप्रसीदमे संवत्सरव्रतसर्वंपरिपूर्णंतदस्तुमे ततः
सुवासिनीः संपूज्यवायनानिदद्यात् कथाश्रवणादिनारात्रिंनयेत् प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् सावि
त्रींगायत्रीमंत्रेण पायसघृतदूर्वातिलव्रीहियवैःप्रत्येकं अष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्माणंधर्मराजानंनारदं
च व्याहृतिपूर्वकनाममंत्रेण प्रत्येकमष्टोत्तर १०८ शतसंख्याकाहुतिभिर्हुत्वा ब्रह्मादिदेवताश्चैकैकयाहुत्या
हुत्वा पक्षे सत्यवत्सावित्र्यो.ब्रह्मसत्यवतो ब्रह्मसावित्र्योश्च पृथक्पृथक्होमोनास्ति तत्तन्मंत्रैस्तयोःपूजाप्रार्थ
नैवेत्युक्तत्वात् ततश्चतुर्विंशतिद्वादशाष्टौचत्वारिवामिथुनानिवस्त्रादिनासंपूज्य पूरिकामोदकमंडकादिकूष्मांडना
रिकेलमातुलिंगदाडिमबीजपूरादिकहरिद्रा कुंकुमकेसरकस्तूरीविचूर्णितकज्जलकंठसूत्रककणमौक्तिकपादभूष
णवस्त्रकंचुकीआदर्शपत्रादिदक्षिणातांबूलादियुतनवसूर्पविहितंवायनंदद्यात् तत्रमंत्रः सोपस्करंद्विजश्रेष्ठव्रत संपू
र्त्तिकारक वायनंतेप्रयच्छामिसावित्रीप्रीयतांमम ततःपीठंव्रतपूर्त्तयेगाचदत्वा ब्राह्मणान्संतर्प्य आशिषोगृही
त्वाइष्टजनै.सहभुंजीत इयान्तत्रविशेषः रात्रौअरुंधतींदृष्ट्वा संपूज्यअर्घ्यंदद्यात् अरुधतिनमस्तेस्तुवशिष्टस्यप्रिये

शुभे पुत्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुतेइतिवटसावित्रीव्रतोद्यापनं अस्यामेवज्यैष्ठपौर्णमास्यांपुत्रकामव्रतं
पद्मपुराणेसृष्टिखंडे भीष्मउवाच श्रोतुमिच्छाम्यहंब्रह्मन्ज्यैष्ठस्यपूर्णिमाव्रतं सुतानेकोनपंचाशद्येनलेभेपुनर्दितिः
पुलस्त्यउवाच यद्वसिष्ठादिभिःपूर्वंदित्यैकथितपूर्वकं विस्तरेणतदेवेदंमत्सकाशान्निशामय ज्यैष्ठमासिसितेपक्षे
पौर्णमास्यांयतव्रता स्थापयेद्व्रणंकुम्भंसिततंडुलपूरितं नानाफलयुतंतद्वद्दिक्षुदंडसमन्वितं सितवस्त्रयुगच्छन्नंसित
चंदनचर्चितं. नानाभक्ष्यसमोपेतंसहिरण्यंतुशक्तितः ताम्रपात्रंगुडोपेततस्योपरिनिवेशयेत् तस्मादुपरिब्रह्माणंसौ
वर्णंकलशोपरि कुर्यात्शर्करयोपेतांसावित्रींतस्यवामतः गंधधूपंतयोर्दद्याद्गीतंवाद्यंचकारयेत् तदभावेकथांकु
र्य्याद्यथातुष्येत्पितामहः ब्रह्मणःस्थाप्यप्रतिमांकृत्वागुडमयींशुभां शुक्लपुष्पाक्षततिलैरर्चयेत्पद्मसंभवंब्रह्मणेपादौ
संपूज्यजंघेसौभाग्यदायच विश्वायचोरुयुग्मंचमन्मथायेतिवैकटिं स्वच्छोदरायेत्युदरमतंद्रायेत्युरोदितं मुखंपद्म
मुखायेतिवाह्वैवेदपाणये नमःसर्वात्मनेमौलिमर्चयेच्चापिपद्मज ततःप्रभातेतत्कुंभंब्राह्मणायनिवेदयेत् ब्राह्मणा
न्भोजयेद्भक्त्याखयंतुलवणंविना भक्त्यातुदक्षिणांदद्यादिमंमंत्रमुदीरयेत् प्रीयतामत्रभगवान्सर्वलोकपितामहः
हृदयेयंसमालोक्यतच्चानंदोभिधीयते अनेनविधिनासर्वंमासिमासिसमाचरेत् उपवासीपौर्णमास्यामर्चयेद्ब्राह्मण
त्रयं फलमेकंचसंप्राश्यशयथ्यांभूतलेस्वपेत् ततस्त्रयोदशेमासेघृतधेनुसमन्वितां शय्यांदद्याद्विरच्यायसर्वोपस्क
रसंयुतां ब्रह्माणंकांचनंकृत्वासावित्रींरजतैस्तथा पद्मात्मकःसृष्टिकर्त्तासावित्रीमुपलभ्यतु वस्त्रैर्द्विजंसपत्नींकंपू
ज्यभक्त्याविभूषणैः शय्यासनादिकंदद्यात्प्रीयतामित्युदीरयेत् होमंशक्त्यातिलैःकुर्य्याद्ब्रह्मनामादिकीर्त्तयन् ग
व्येनसर्पिषातद्वत्पायसेनचधर्मवित् विप्रेभ्योवायनंदद्यात्पुष्पमालाचशक्तितः य.कुर्य्याद्विधिनानेनपौर्णिमास्यां
स्त्रियोपिवा सर्वपापविनिर्मुक्तःप्राप्नोतिब्रह्मसाम्यतां इहलोकेधनंपुत्रान्सौभाग्यंध्रुवमत्रतु योब्रह्मासस्मृतोवि

प्रणुरानदात्मामहेश्वरः एकार्थत्वस्वरूपेणस्मरेद्देवंपितामहं एवमुक्त्वाचकारासौदितिःसर्वमशेषतः कश्यपोव्रत
माहात्म्यादागत्यपरयामुदा चकारकर्कशांभूयोरूपलावण्यसंयुतां वरैस्तांछदयामाससात्रवव्रेवरवरं पुत्रशक्रव
धार्थायसमर्थंचमहौजसं वरयामिमहात्मानंसर्वामरनिपूदनं उवाचकश्यपोवाक्यमिंद्रहंतारमूर्जितं प्रदास्याम्य
हमेतेनकिंतच्चाक्रियतांश्रुतं आपस्तंभांकुरुत्विष्टिंपुत्रीयांमियशास्विनि विधास्यामिततोगर्भंगर्भस्थेयष्टस्तनौशुभे ॥
भविष्यतिशुभेगर्भेदिविशक्रनिपूदनः आपस्तंभाततश्चक्रेपुत्रेष्टिंद्रविणाधिकां इंद्रशत्रोभवस्वेतिजुहावबहुविरत
रं देवाश्चमुदुर्दैत्यादानवामुमुदुस्तदा दित्यांगर्भमथाधत्तकश्यपःप्राहतांपुनः मुखंतेचंद्रप्रतिमस्तनौबिल्वफलोप
मौ अधरौविद्रुमाकारौवर्णश्चातीवशोभनः त्वांदृष्ट्वाहंविशालाक्षिविस्मरामिस्वकोतनुं तथैवगर्भःसुश्रोणिहस्तेस्पृष्ट
श्चोरतनौतव त्वयायत्नोविधातव्योह्यस्मिन्गर्भेवरानने एवंसवत्सरशतमस्मिन्नेवतपोवने संध्यायांनैवभोक्तव्य
गर्भिण्यावरवर्णिनि नस्थातव्यंनगंतव्यंवृक्षमूलेषुसर्वदा नोपस्करेषुनिविशेन्मुशलोलूखलादिषु जलंनैवावगाहेथाः
शून्यागारंचवर्जयेः नशयानासदातिष्ठेर्व्यायामंचविवर्जयेः ननुपांगारभस्मास्थिकपालिषुसमाविशेत् वर्जयेत्कल
हंस्तोकंगात्राभ्यगंतथैवच नमुक्तकेशातिष्ठतनाशुचिःस्यात्कथचन नशयीतोत्तरशिरानचैवाधःशिराःक्वचित् नवस्त्र
हीनानोद्विग्नानचार्द्रचरणासती नामंगल्यांवदेद्वाचंनवकस्याधिकाभवेत् कुर्य्याच्चगुरुभिर्नित्यंपूजांमंगलतत्परा स
र्वौषधीभिःसृष्टेनवारिणास्नानमाचरेत् कृतरक्षासुशुश्रूषाव्रतापूजनतत्परा तिष्ठेत्प्रसन्नवदनाभर्त्तुःप्रियहितेरता
नतर्जयेच्चभर्त्तारंसर्वावस्थमपिक्वचित् कृशाशादुर्बलाचैववार्द्धक्यंममचागतं स्तनौमेचलितौस्थानान्मुखंचवलि
भिर्युतं एवंविधात्वयाचाहक्ततहिनवदेक्वचित् स्वस्त्यस्तुतेगमिष्यामितथेत्युक्तस्तयापुनः पश्यतांसर्वभूतानां
तत्रैवांतरधीयत ततःस्वभर्तृवाचोक्तविधिनासमतिष्ठत अथज्ञात्वातथेंद्रोपिदितेःपार्श्वमुपागतः विहायदेवसदनंतां

शुभे पुत्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुतेइतिवटसावित्रीव्रतोद्यापनं अस्यामेवज्येष्ठपौर्णमास्यांपुत्रकामव्रतं पद्मपुराणेसृष्टिखंडे भीष्मउवाच श्रोतुमिच्छाम्यहंब्रह्मन्ज्येष्ठस्यपूर्णिमाव्रतं सुतानेकोनपंचाशद्येनलेभेपुनर्दितिः पुलस्त्यउवाच यद्वसिष्ठादिभिःपूर्वंदित्यैकथितपूर्वकं विस्तरेणतदेवेदंमत्सकाशान्निशामय ज्येष्ठमासिसितेपक्षे पौर्णमास्यांयतव्रता स्थापेद्व्रणंकुम्भंसिततंडुलपूरितं नानाफलयुतंतद्वदिक्षुदंडसमन्वितं सितवस्त्रयुगच्छन्नंसित चंदनचर्चितं. नानाभक्ष्यसमोपेतंसहिरण्यंतुशक्तितः ताम्रपात्रंगुडोपेतंतस्योपरिनिवेशयेत् तस्मादुपरिब्रह्माणंसौ वर्णंकलशोपरि कुर्यात्शर्करयोपेतांसावित्रींतस्यवामतः गंधधूपंतयोर्दद्याद्गीतंवाद्यंचकारयेत् तदभावेकथांकु र्याद्यथातुष्येत्पितामहः ब्रह्मणःस्थाप्यप्रतिमांकृत्वागुडमयींशुभां शुक्लपुष्पाक्षततिलैरर्चयेत्पद्मसंभवंब्रह्मणेपादौ संपूज्यजंघेसौभाग्यदायच विश्वायचोरुयुग्मंचमन्मथायेतिवैकटिं स्वच्छोदरायेत्युदरमतंद्रायेत्युरोदितं मुखंपद्म मुखायेतिबाहूवेदपाणये नमःसर्वात्मनेमौलिमर्चयेच्चापिपद्मज ततःप्रभातेतत्कुंभंब्राह्मणायनिवेदयेत् ब्राह्मणा न्भोजयेद्भक्त्यास्वयंतुलवणंविना भक्त्यातुदक्षिणांदद्यादिमंमंत्रमुदीरयेत् प्रीयतामत्रभगवान्सर्वलोकपितामहः हृदयेयंसमालोक्यतद्यानदोभिधीयते अनेनविधिनासर्वंमासिमासिसमाचरेत् उपवासीपौर्णमास्यामर्चयेद्ब्राह्मण त्रयं फलमेकंचसंप्राश्यशयीभूतलेस्वपेत् ततस्त्रयोदशेमासिघृतधेनुसमन्वितां शय्यांदद्याद्विरच्यायसर्वोपस्क रसंयुतां ब्रह्माणंकांचनंकृत्वासावित्रींरजतैस्तथा पद्मात्मकःसृष्टिकर्त्तासावित्रीमुपलभ्यतु वस्त्रैर्द्विजसपत्नीकंपू ज्यभक्त्याविभूषणैः शय्यासनादिकंदद्यात्प्रीयतामित्युदीरयेत् होमंशक्त्यातिलैःकुर्याद्ब्रह्मनामादिकीर्त्तयन् ग व्येनसर्पिषातद्वत्पायसेनचधर्मवित् विप्रेभ्योवासनंदद्यात्पुष्पमालाचशक्तितः यःकुर्याद्विधिनानेनपौर्णमास्यां स्त्रियोपिवा सर्वपापविनिर्मुक्तःप्राप्नोतिब्रह्मसाम्यतां इहलोकेधनंपुत्रान्सौभाग्यंध्रुवमत्रतु योब्रह्मासस्मृतोवि

प्रणुरानदात्मामहेश्वरः एकार्थत्वस्वरूपेणस्मरेद्देवंपितामहं एवश्रुत्वाचकारासौदितिःसर्वमशेषत. कश्यपोव्रत
माहात्म्यादागत्यपरयामुदा चकारकर्कशांभूयोरूपलावण्यसयुतां वरैस्तांछंदयामाससाववेवरवरं पुत्रशक्रव
धार्थायसमर्थंचमहौजसं वरयामिमहात्मानंसर्वामरनिषूदनं उवाचकश्यपोवाक्यमिंद्रहंतारमूर्जितं प्रदास्याम्य
हमेतेनकिंतच्चक्रियतांश्रुतं आपस्तंभांकुरुत्विष्टिंपुत्रीयामयशस्विनि विधास्यामिततोगर्भंगर्भस्येष्टस्तनौशुभे ॥
भविष्यतिशुभोगर्भोदिविशक्रनिषूदनः आपस्तंभाततश्चक्रेपुत्रेष्टिंद्रविणाधिकां इंद्रशत्रोभवस्वेतिजुहावबहुविस्त
र देवाश्चमुदुर्दैत्यादानवामुमुदुस्तदा दित्यांगर्भमथाधत्तकश्यपःप्राहतांपुनः मुखंतेचंद्रप्रतिमस्तनौबिल्वफलोप
मौ अधरौविद्रुमाकारौवर्णश्चातीवशोभनः दृष्ट्वांहविशालाक्षिविस्मरामिस्वकांतनं तथैवगर्भःसुश्रोणिहस्तेस्पृ
ष्टौरतनौतव त्वयायत्नोविधातव्योह्यस्मिन्गर्भेवरानने एवंसवत्सरशतमस्मिन्नेवतपोवने संध्यायानैवभोक्तव्य
गर्भिण्यावरवर्णिनि नस्थातव्यंनगंतव्यंवृक्षमूलेषुसर्वदा नोपस्करेषुनिविशेन्मुशलोलूखलादिषु जलंनैवावगाहेथाः
शून्यागारंचवर्जयेः नशयानासदातिष्ठेव्यायामंचविवर्जयेः नतुषांगारभस्मास्थिकपालेषुसमाविशेत् वर्जयेत्कल
हंस्तोकंगात्राभ्यगंतथैवच नमुक्तकेशातिष्ठेतनाशुचिःस्यात्कथचन नशयीतोत्तरशिरानचैवाधःशिराःक्वचित् नवस्त्र
हीनानोद्विग्नानचार्द्रचरणासती नामंगल्यांवदेद्वाचंनवकस्याधिकाभवेत् कुर्याच्चगुरुभिर्नित्यंपूजांमंगलतत्परा स
र्वौषधीभिःसृष्टेनवारिणास्नानमाचरेत् कृतरक्षासुशुश्रूषावःचापूजनतत्परा तिष्ठेत्प्रसन्नवदनाभर्तुःप्रियहितेरता
नतर्जयेच्चभर्तारंसर्वावस्थमपिकिंचित् कृशाशादुर्बलाचैववार्द्धक्यममचागतं स्तनौमेचलितौस्थानान्मुखंचवलि
भिर्युतं एवंविधात्वयाचाहकृताहिनवदेत्क्वचित् स्वस्थस्तुतेगमिष्यामितथेत्युक्तस्तयापुनः पश्यतांसर्वभूतानां
तत्रैवांतरधीयत ततःस्वभर्तृवाचोक्तविधिनासमतिष्ठत अथज्ञात्वातथेंद्रोपिदितेःपार्श्वमुपागतः विहायदेवसदनंतां

शुश्रूपरवस्थितःदितेःछिद्रांतरप्रेप्सुरभवत्पाकशासनःविपरीतोदरव्यग्रःप्रसन्नवदनोवहिःअजानन्किंचतत्कार्यंमा
त्मनःशुभमाचरत् ततोवर्षशतांतेसान्यूनेतुदिवसैस्त्रिभिः मेनेकृतार्थमात्मानंप्रीत्याविस्मितमानसा अकृत्वापादयोः
शौचंशयानामुक्तमूर्धजा निद्राभारसमाक्रांतादिवापरशिराःक्वचित् ततस्तस्यांतरंलब्ध्वाप्रविश्यांतःशचीपतिं
वज्रेणसप्तधाचक्रेतद्गर्भंत्रिदशाधिपः ततःसप्तचतेजाताःकुमाराःसूर्यवर्चसः रुदंतःसप्ततेबालानिषिद्धाजंभभेदिना
भूयोपिरुदमानांस्तानेकैकंसप्तधाच्छिनत् एवमेकोनपंचाशद्भूतास्तेरुरुदुर्भृशं इंद्रोनिवारयामासमारुदध्वंपुनःपु
नः ततःसंचिंतयामासवितर्कमतिवृत्रहा कर्मणःकस्यमाहात्म्यात्पुनः संजीवितास्त्वमी विदित्वापुण्ययोगेन
पौर्णमासीफलंत्विदं नूनमेतत्परिणतमथवाब्रह्मपूजनात् वज्रेणाभिहताःसंतोनविनाशमवाप्नुयुः एकोप्यनेक
तामापयस्मादुदरगोप्यय अवध्यानूनमेवैतेतस्माद्देवाभवंत्विति यस्मान्मारुदइत्युक्तारुदतोगर्भसंस्थिताः मरुतो
नामतेनाम्नाभवंतुसुखभागिनः ततःप्रसाद्यदेवेशःक्षमस्वेतिदितिंपुनः अर्थशास्त्रंसमास्थायमयैतद्दुःकृतंकृतं कृत्वा
मरुद्गणैर्देवःसमेतोह्यमराधिपः दितिंविमानमारोप्यसंयुक्तामगमद्दिवं यज्ञभागभुजोजातामरुतस्तेततोभवन्
नजग्मुरैक्यमसुरैस्ततस्तेसुरवल्लभाः इतिपाद्मसृष्टिखंडज्येष्ठपूर्णिमायां पुत्रकामव्रतं अथास्यामेवज्येष्ठ्यां विल्व
त्रिरात्रव्रतं ब्रह्मोवाच ज्येष्ठेमासितुसंप्राप्तपौर्णमास्यांद्विजोत्तम ज्येष्ठ्याकुजादिनेकुर्यात्सिद्धार्थैःस्नानमुत्तम श्रीवृ
क्षंसिंतयेद्भक्त्यागधपुष्पैश्चपूजयेत् वत्सरंत्वेकभक्तंतुहविष्यान्ननकारयेत् श्वशूकरखरादीनांदर्शनेभोजनंत्यजे
त् अनेनविधिनासम्यक्मासिमासिसमाचरेत् ततःसंवत्सरेपूर्णेगत्वाविल्वसमीपतःगृहीत्वावालुकांपात्रेप्रस्थमा
त्रांमहामुने अथदाधान्यमादाययवशालितिलादिक ततोवंशमयेपात्रेवस्त्रयुग्मेनवेष्टयेत् उमामहेश्वरंहैमंश
क्त्याकुर्याद्विभूषितं रक्तवस्त्रयुगंदद्यान्नैवेद्यंफलसंयुतं पुष्पैर्बहुविधैश्चापिफलैर्नानाविधैस्तथा गुडेक्षुजरिकैस्तत्रलव

ऐनविरूढकैः सप्तधान्यैस्तथादीपैर्वंशपात्रप्रकल्पितैः रजनीकंठमूत्रैश्चशुभ्रैःकुंकुमकेसरैः अवतारंकुरो
त्येषाउमादेवीहरप्रिया श्रीनिकेतनमस्तुभ्यंशिवप्रियनमोस्तुते अवैधव्यचमेदेहिश्रियंजन्मनिजन्मनि श्रियंध
नपतिंपुत्रानारोग्यंकुलसंततिं सौभाग्यरूपसंपत्तिपूजितस्त्वंप्रयच्छमे सहस्रंबिल्वपत्राणांहोमयेत्तुयथाविधि
पयसंतत्रजुहुयाद्विप्रःशांतोथमंत्रवित् राजतंश्रीतरुंकृत्वासुवर्णफलशोभितं अष्टोत्तरशतंयावत्पीतवस्त्रेणवेष्टयेत् त्र
योदश्यांसमारभ्ययावत्पूर्णाभवेत्तिथिः त्रिरात्रंजागरंकृत्वापीठवासीजितेंद्रियः उमापतेपशुपतेत्रैलोक्याधिपते
प्रभो गृहाणार्घ्यंमहादेवगौर्यासहमहेश्वर ततःप्रभातेसंप्राप्तेस्नात्वाचतिलसर्षपैः वस्त्रालंकारयुग्मैश्चगुरु
दांपत्यमर्चयेत् पादुकोपानहच्छत्रशय्यांगांचसुभूषितां गुरुंसंपूज्यभक्त्यातुदद्यादेतत्प्रयत्नतः षोडशाष्टौतुचतुरो
द्विजान्दांपत्यभूषितान् वस्त्रालंकारगोदानैस्तस्मिन्नहनिपूजयेत् मिष्टान्नंभोजनंदेयमात्मनःश्रेयइच्छता यानां
रीकुरुतेचैतद्व्रतंपापप्रणाशनं सर्वसिद्धिकरंपुण्यंशिवलोकेमहीयते कल्पकोटिशतंयावदास्थायशिवसन्निधौ ततो
राज्ञीभवेन्मर्त्येपुत्रपौत्रसमन्विता इतिस्कंदपुराणोक्तंसोद्यापनंबिल्वत्रिरात्रव्रतं अस्यामेवपौर्णमास्यांतिलदानंछ
त्रोपानहादिदानंचकुर्यात् तदुक्तंनिर्णयामृते ज्यैष्ठमासितिलान्दद्यात्पौर्णमास्यांविशेषतः अश्वमेधस्ययत्पुण्यं
तत्प्राप्नोतिनसंशयः विष्णुधर्मोत्तरे सोपवासस्तथाज्येष्ठपूर्णेतुशशलक्षणे उपानहौतथाछत्रंदत्वात्यंतसुखीभवेत्
तत्रमंत्रः उपानहौप्रदास्यामिकंटकादिनिवारणे सर्वस्थानेषुसुखदेअतःशांतिंप्रयच्छमे छत्रदानमंत्रःइहामुत्रातप
त्राणंकुरुमेकेशवप्रभोछत्रत्वत्प्रीतयेदत्तंब्राह्मणायमयासह मयालक्ष्म्यासह विष्णुस्मृतौ ज्यैष्ठीज्येष्ठायुताचेत्स्यात्त
त्रछत्रोपानहप्रदानेननरोनराधिपत्यमाप्नोतीति तथावामनपुणे उदकुंभांबुदानंत्रिविक्रमस्यप्रीत्यर्थंदातव्यं ज्यैष्ठमा
सित्विति इयंचरौच्यमन्वादिः तत्रमन्वादिकार्यत्वेनश्राद्धदानादिविधेयं तथाचकौर्म्मंकल्पादिरपिकल्पादिकार्यं

मपिकाध्यं अत्रपद्मपुराणदानमुक्तंमत्स्यपुराणे एतदेवयदापद्ममभूद्धैरण्मयंजगत् तत्कथांताश्रयंतद्वत्पाद्ममि त्युच्यतेवुधैः पाद्मंतत्पंचपंचाशत्सहस्राणितुपठ्यते ज्यैष्ठमासितिलैर्युक्तंसोश्वमेधफलंलभेत् नारदीयेच एतद्दै पंचपंचाशत्सहस्रंपद्मसंज्ञितं पुराणंलेखयित्वावैज्यैष्ठ्यांस्वर्णाबजसंयुतं यःप्रदद्यात्सुसंस्कृत्यपुराणज्ञायमानवः सयातिवैष्णवधामसर्वदेवनमस्कृतः इतिपद्मपुराणदानं ॥ स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्ना नाशास्त्रविचारसाररसवित्सद्वृंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेःपादांबुजार्चारतो जीयात्पुत्रकलत्रमित्रसहि तःसंपालयन्क्ष्मांचिरम् १ रणवीरसिंहभूपेनकारितेकृत्यसागरे अभवज्ज्यैष्ठकृत्यानांरम्योरत्नसमुच्चयः २ इति श्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारिते कृत्यरत्नाकरेज्यैष्ठमासकृत्यरत्नसमुच्चयः ॥

॥ श्रीरघुनाथमुद्रायंत्रालये ॥
लालाशिवरामहाधिकारेज्यैष्ठमासोमुद्रितस्समाप्तिमगमत्
संवत् १९४१ श्रावण प्र. २४

॥ ॐश्रीगणेशायनमः ॥ अथाषाढमासकृत्यनिर्णयः ॥

तत्रमिथुनसंक्रांतौपराः षोडशघटिकाःपुण्यकालउक्तः रात्रौतुपूर्वोक्तव्यवस्थाज्ञेया अथकृत्यंस्कंदपुराणे आषाढंचापियोमासमेकभक्तंसमाचरेत् राज्ञोसौमान्यतांप्राप्यकामानाप्नोतिपुष्कलान् महाभारते आषाढमेकभक्तेनस्थित्वामासमतंद्रितःबहुधान्योबहुधनोबहुमान्यश्चजायते आषाढकृष्णप्रतिपदामारभ्य बहुभोगबहुधान्यप्राप्तिव्रतारंभःकार्यः तदुक्तंविष्णुधर्मोत्तरे ज्यैष्ठ्यांतुसमतीतायांप्रतिपत्प्रभृतिक्रमात् पूर्ववत्पूजयेद्देवंविश्वरूपधरं हरिं पूर्ववत्रूपावाप्तिव्रतवत् कृत्वाव्रतांतेचतथात्रिरात्रंदत्वाश्वयुक्तंशयनंद्विजाय लब्ध्वाधनधान्यममुत्रभूमौ स्वर्लोकमासाद्यचभोगवान्स्यात् इदमेवभोगावाप्तिव्रतं अत्रारोग्यप्रतिपद्व्रतांगत्वेन माधवनामधेयमूर्द्धपूजाव्रतं आषाढकृष्णद्वितीयायांतिथिपत्वेनब्रह्मणःपूजाव्रतंकार्य्यं आषाढकृष्णतृतीयायां गौरीव्रतांगत्वेनसुभगगौरीपूजाव्रतं इयंचाग्नेयकल्पादि तत्रापिकल्पादिश्राद्धदानादिकृत्यं कल्पांतस्थायिफलमुक्तं आषाढकृष्णचतुर्थ्यां संकटचतुर्थीव्रतांगत्वेन हरनंदनगणपतिपूजादिकमुपवासव्रतं कार्य्यं पंचम्यांनागपूजा आषाढकृष्णषष्ठ्यां गुहनामधेयस्कंदपूजाव्रतं आषाढकृष्णसप्तम्यां निक्षुभार्कपूजा माघकृष्णादित्वेन भविष्यपुराणे यानाद्युपवसेदेवंकृष्णामेकांतुसप्तमीं सागच्छेत्परमंस्थानंनिक्षुभार्कंप्रपूजयेत् एकांतिथिवर्गमुख्यां कृष्णसप्तमींनिक्षुभार्कसप्तमीव्रतं तत्रादित्यस्यभगवतः पूजोपवासव्रतं स्त्रीभिरनुष्ठेयं आषाढकृष्णाष्टम्यांकृष्णाष्टमीव्रतं तदुक्तं वह्निपुराणे प्रतिमासंचतेपूजामष्टम्यांयःकरिष्यति ममचैवाखिलान्कामान्ससंप्राप्नोत्यसंशयमिति आषाढकृष्णनवम्यामैंद्रीदेवीपूजाव्रतं तदुक्तंमदनरत्ने उपवासपरोभक्त्यानवम्यांपक्षयोर्द्वयोः आषाढमासिराजेंद्रयःकुर्य्यान्नक्तभोजनं पूजयेच्छ्रद्धयादुर्गामैंद्रीनाम्नींतुनामतः ऐरावणगतांशुभ्रांश्वेतवस्त्रस्वरूपिणीं ऐरावणसमारू

ढ इंद्रस्यानुचरोभवेत् आषाढकृष्णदशम्यांधर्मराजस्यपूजनं भविष्यपुराणोक्तंयमव्रतं दशम्यांयमउद्दिष्टः सर्वव्याधिहरोध्रुवं मूलमन्त्राःस्वसंज्ञाभिरंगमंत्राश्चकीर्तिताः मूलमंत्राःप्रधानमंत्राः अंगमंत्राः परिवारमंत्राःप द्मपत्रेषु परिवारदेवतासहितंकार्णिकस्थंतिथीशंगंधादिभिःपूजयेत् सतिलक्षीरान्नमाक्षिकैर्होमंकुर्यात् तत्रादौ यमायधर्मराजायेत्यादिपरिवारदेवतापूजा ततोघृताकधानाहोमस्ततआज्यधारादिहोमः ॥ इतिभविष्यत्पु राणोक्तंयमदशमीव्रतं इदंदशमीमात्रेसर्वमासेष्वनुष्ठेय आरोग्यव्रतमपिदशमीमात्रेसर्वदानुष्ठेय आषाढकृष्णैकाद शीयोगिनीतदुक्तंनारदीये आषाढकृष्णैकादशीयोगिनींसमुपोष्यतां सर्वदानफलंप्राप्य मोदतेविष्णुमंदिरे अ स्याःकथा युधिष्ठिरउवाच आषाढकृष्णपक्षेतुकावाह्येकादशीभवेत् किंनामकोविधिस्तस्याएतद्विस्तरतोवद श्रीकृष्णउवाच व्रतानामुत्तममिदंलोकानांचहितायचकथयिष्यामिराजेंद्रभुक्तिमुक्तिफलप्रद आषाढस्यकृष्णपक्षेयो गिनीनामनामतः तस्याव्रतप्रभावेनपूतोभवतिमानवः तस्मात्सर्वप्रयत्नेनकर्तव्यैकादशीतिथिः कामप्रदेहलोकेच परलोकेचमोक्षदा महापातकहंत्रीचमहापुण्यफलप्रदा योगिनीनामयस्मात्तुतस्मात्सैवोत्तमास्मृता ससारेदुस्तरे राजन्संचरैकादशीव्रतं जगत्रयमसारंवैसारंवैयोगिनीव्रतं कथयामितवाग्रेहंकथांपौराणिकींशुभां अलकायां राजराजः शिवभक्तिपरायणः तस्यासीत्पुष्पवटुकोहेममालीतिनामतः तस्यपत्नीसुरूपाचविशालाक्षीतिनाम तः सतस्यांस्नेहसंयुक्तः कामपाशवशंगतः मानसात्पुष्पनिचयमानीयस्वगृहेस्थितः पत्नीप्रेमसमायुक्तोनकु वेरालयंगतः कुवेरोदेवसदनेकरोतिशिवपूजनं मध्याह्नसमयेराजन्पुष्पागमसमीक्षकः हेममालीस्वभवनेरम तेकांतयासह यक्षराट्प्रत्युवाचाथकालातिक्रमकोपितः कस्मान्नायातिभोयक्षाहेममालीदुरात्मवान् निश्चयःक्रिय तांमस्यइत्युवाचपुनःपुनः यक्षाऊचुः वनिताकामुकोगेहेरमतेस्वेच्छयानृप तेषांवाक्यंसमाकर्ण्यकुवेरःकोपपूरितः

आनयामासतंतूर्णंवटकंहेममालिनं ज्ञात्वाकालात्ययंसोपिभयव्याकुललोचनः अस्नातएवचागत्यकुबेरस्या ग्रत.स्थितः तद्दृष्ट्वाधनदःक्रुद्ध कोपसंरक्तलोचनः प्रत्युवाचरुषाविष्टः स्फुरदोष्ठपुटद्वयः धनदउवाच आःपा पदुष्टदुर्वृत्तकृतंमेदेवहेलनं अष्टादशाश्चित्रकुष्ठीवियुक्तःकांतयातया अस्मात्स्थानादपध्वस्तोगच्छस्थानमथाधमं इत्युक्तोधनदेशेनतस्मात्स्थानात्पपातसः महादुःखाभिभूतश्चकुष्ठैःपीडितविग्रहः नैवतोयंनभक्ष्यंचवनेरौद्रेलभद दसौनसुखदिवसेतस्यननिद्रांलभतेनिशि पातकेनाभिभूतोपिपूर्वकर्मस्मरत्यसौ छायायापिडिततनुर्निदाघेतपपी डितः शिवपूजाप्रभावेनस्मृतिस्तस्यनलुप्यते भ्रममाणस्ततोगच्छद्धिमाद्रिपर्वतोत्तमं तत्रापश्यन्मुनिवरंमार्कंडेयं तपोनिधिं यस्यायुर्विद्यतेसप्तब्रह्मणोदिवसान्यथ आश्रमंतुगतस्तस्यऋषेर्ब्रह्मसदःसमं ववंदेचरणौतस्यदूरतः पापकर्मकृत् मार्कंडेयोमुनिवरोदृष्ट्वातकुष्ठिनंतदा परोपकरणार्थायसमाहूयेदमब्रवीत् कस्मात्कुष्ठाभिभूतस्त्वंकु तोनिघतरोह्यसि इत्युक्तःसप्रत्युवाचमार्कंडेयमहामुनिं हेममाल्युवाच राजराजस्यानुचरोहेममालीतिनामतः मानसात्पुष्पनिचयमानीयप्रत्यहंमुने शिवपूजनवेलायांकुबेरायसमर्पये एकस्मिन्दिवसेकाललोपश्चविहितोम या पत्नीसौख्यप्रसक्तेनकामव्याकुलचेतसा ततःक्रुद्धेनशप्तोहंराजराजेनवैमुने कुष्ठाभिभूतःसजातोवियुक्तःका तयातथा अधुनातवसान्निध्यंप्राप्तोस्मिशुभकर्मणा सतांस्वभावतश्चित्तंपरोपकरणक्षमं इतिज्ञात्वामुनिश्रेष्ठमांप्र शाधिकृतागसं मार्कंडेयउवाच त्वयासत्यमिदंप्रोक्तंनासत्यंभाषितंयतः अतोव्रतोपदेशंतेकथयामिशुभप्रदं आ षाढेकृष्णपक्षेतुयोगिनीव्रतमाचर अस्याव्रतप्रभावेनकुष्ठंनश्यंतितेनघ इतिवाक्यंमुनेःश्रुत्वादंडवत्पतितःक्षि तौ उत्थायदिष्टोमुनिनाबभूवातीवहर्षितः मार्कंडेयोपदेशेनकृततेनव्रतोत्तमं तद्व्रतस्यप्रभावेनदेवरूपोबभूवसः संयोगंकांतयालेभेबुभुजेसौख्यमुत्तमं ईदृग्विधंनृपश्रेष्ठकथितंयोगिनीव्रतं अष्टाद्दशसहस्राणिद्विजान्भोजयेत्

तुपः तत्फलंसमवाप्नोतियोगिनींव्रतकृन्नरः महापापप्रशमनीमहापुण्यफलप्रदा शुचौकृष्णैकादशीतेकथितायो
गिनीनृप पठनाच्छ्रवणान्मर्त्यः सर्वपापैःप्रमुच्यते इतिब्रह्मवैवर्त्तपुराणे ॥

पद्मपुराणेच आषाढकृष्णयोगिन्येकादशीमाहात्म्यं

अस्यांपुंडरीकाक्षनामविष्णुपूजनं आषाढकृष्णद्वादश्यांतिथीशत्वेनहरेःपूजनकार्य्यं आषाढकृष्णत्रयोदश्या
त्रयोदशीमात्रव्रतत्वेनकामत्रयोदशीव्रतं हेमाद्रौ भविष्योत्तरे काममूज्यत्रयोदश्यासुरूपोजायतेध्रुव इष्टारूप
वतींभार्य्यांलभेत्कामांश्चपुष्कलान् मूलमंत्रांगसंज्ञाभिस्तमंत्राःप्रकीर्त्तितः पूर्ववत्पद्मपत्रस्थ कर्त्तव्यश्चातिथी
श्वरः गंधपुष्पोपहारैश्चयथाशक्तिविधीयते पूजात्रवित्तशाठ्येनकृतापिनफलप्रदा आज्यधारासमिद्भिश्चदधिक्षी
रान्नमाक्षिकैः पूर्वोक्तफलकोहोम कृतःशांतेनचेतसा अत्रमूलमंत्रःकामगायत्रीसाचैत्रशुक्लत्रयोदश्यामनंगत्रयो
दश्यां अनंगमंत्राअपि तत्रैव ज्ञेया आषाढकृष्णचतुर्दश्यां मासशिवरात्रिव्रतांगत्वेनशिवचतुर्दशीव्रतं तदुक्तंमदन
रत्ने स्कंदपुराणेयतःकृष्णचतुर्दश्यांपूजायत्नेनमेकृता तथाजागरणंरात्रौसन्निधौमेकृतंतथेति आषाढामावास्यामि
तृकल्पादिःकल्पादिकृत्यमधिकृत्यात्रश्राद्धादिविधेयं अमावास्यायांसकलामावास्यासाधारणं शूलव्रत हेमाद्रौशि
वधर्मेषु अमायांतुनिराहारोयोब्दमेकसुयंत्रितः शूलंपिष्टमयंकृत्वावर्षांतेविनिवेदयेत् अनेनभ्रूणहत्यादिपापानिसक
लान्यपि नश्यंत्यरिविनाशश्चशिवलोकगतिर्भवेत् अथाषाढशुक्लप्रतिपदायामारोग्यप्रतिपद्व्रतं विद्याप्राप्तिव्रतांग
त्वेन सूर्यपूजनं ब्रह्मण पूजनच संवत्सरमिदंकृत्वाततःसाक्षात्त्रयोदशं पूजनंदेवदेवस्यतास्मिन्नहनिभार्गवेतिविष्णु
धर्मोत्तरोक्तमारोग्यव्रतं सदाप्रतिपदप्राप्यशुक्लपक्षस्ययादव संवत्सरंमहाभागशुक्लगंधानुलेपनैरित्यादिशुक्लप्र
तिपदिसविस्तरंज्ञेयं आषाढशुक्लद्वितीयायांरथयात्रोत्सवः तदुक्तंतिथितत्त्वेस्कांदे आषाढस्यासितपक्षेद्वितीया

पुष्यसयुता- तस्यांरथेसमारोप्यरामंमांभद्रयासह नारदीयेपि आषाढस्यासितेपक्षेद्वितीयापुष्यसंयुतेत्यादि द्विजा
तिभिर्व्रतस्यार्थंपरिक्रम्यपुरोदितं जलाशयांतिकंगत्वाकारयेच्चमहोत्सवं तदंतेदेवभुवनंप्रवेश्यचयथाविधि ब्राह्म
णान्भोजयेच्चैवव्रतस्यास्यप्रपूर्त्तयेइति आषाढशुक्लतृतीयायां सलक्ष्मीककेशवपूजा नारदीये आषाढस्यतृतीयायां
शुक्लपक्षेचवासरा केशवंतुसलक्ष्मीकंसस्त्रीकंतुद्विजोर्चयेत् भोजनैःसुरभीदानैर्वस्त्रैश्चैवविभूषणैः प्रियैर्वाक्यैर्भृशं
प्रीत्यानारीसौभाग्यवांछया समुपास्यव्रतंचैतद्धनधान्यसमन्विता देवदेवप्रसादेनविष्णुलोकमवाप्नुयात् आषाढ
शुक्लचतुर्थी रथंतरकल्पादिः तस्यांकल्पादिश्राद्धदानादिकमनंतफलदमितिवाक्यप्रपंचितम् आषाढशुक्लपंचम्यां पं
चवर्णध्वजंग्रामाद्बहिर्धरोपांतेनिधायवायुपूजासर्वलोकपालपूजा तदुक्तंनारदीये आषाढशुक्लपंचम्यांवायुंसर्वगतंमु
नेग्रामाद्बहिर्विनिर्गत्यधरोपांतेसमास्थितः ध्वजंचपंचवर्णंतुवंशदंडाग्रसंस्थितं संमूर्छितंनिदध्यात्तुकल्पितासनमध्य
नः ततस्तन्मूलदेशेतुदिक्षुसर्वासुनारद लोकपालान्समभ्यर्च्यकुर्याद्वायुपरीक्षणं तस्मैतस्मैदिगीशायपूजांसम्य
क्प्रकल्पयेत् एवंस्थित्वानिराहारस्तत्रयामचतुष्टयं सायमागत्यगेहस्वंभुक्त्वास्वयमवस्थितः लोकपालान्नमस्कृत्य
सुप्याद्भूमितलेस्थितः यःस्वप्नोजायतेतस्यरात्रौयामेचतुर्थके सएवभवितानूनंसत्यमित्याहवैशिवः अशुभेतुसमु
त्पन्नेशिवपूजापरायणः सोपवासोयजेद्देवंयामंतद्दिनमेववा भोजयित्वाद्विजानष्टौततःशुभफलंलभेत् एतमेतत्स
मुद्दिष्टंशुभाशुभनिदर्शनं नृणांसौभाग्यजनकमिहलोकेपरत्रच इतिसौभाग्यजनकपंचमीव्रतं आषाढशुक्लषष्ठ्यांस्कं
दव्रतं नारदीये आषाढशुक्लषष्ठ्यांतुस्कंदव्रतमनुत्तमं उपोष्यपूजयित्वैवशिवोमाप्रियमात्मजं लभतेवांछितान्का
मान्पुत्रपौत्रादिसंततिं आषाढशुक्लसप्तम्यां सूर्यपूजाव्रतं नारदीये आषाढशुक्लसप्तम्यांजातइंद्रोरविःस्वयं सं
पूज्यविविधान्नेनसोपवासोजितेंद्रियः स्वर्गतिंभलतेविप्रदेवेंद्रस्यप्रसादतः निर्णयामृतेऽपि आषाढशुक्लसप्तम्यां

कश्यपाद्विवस्वान्नामसूर्योजातः तत्रवर्तुलमंडलस्थितंसूर्यंधूपदीपानुलेपनादिभिः संपूज्यनैवेद्यंदद्यात् तदुक्तंब्रह्म पुराणे आषाढशुक्लसप्तम्यांविवस्वान्नामभास्करः जातःपूर्वंतुतस्मात्तत्रापोष्ययजेत्सदा रथचक्राकृतौरम्येमंडले सर्वकामदं भक्ष्यैर्भोज्यैस्तथापेयैःपुष्पैर्धूपैर्विलेपनैरिति आषाढशुक्लाष्टम्यांमहिषघ्नदेवीव्रतं नारदीये शुक्लाष्टम्यां तथाषाढेस्नात्वाचैवानिशांवुना तेनैवस्नापयेद्देवींपूजयेच्चविधानतःततःशुद्धजलैःस्नाप्यविलिंपेत्सद्गुचंदनैः नैवेद्यंशर्क रोपेतंदत्त्वाचमनमर्पयेत् भोजयित्वाततोविप्रान्दत्त्वास्वर्णंचदक्षिणां विसृज्यचततःपश्चात्स्वयंभुंजीतवाग्यतःएतद्व्र तंनरःकृत्वादेवीलोकमवाप्नुयात् तथाचदेवीपुराणे अष्टम्यांचतथाषाढेनिशातोयेनस्नापयेत् ततोदेवींजलैःकुशैर्वर दासुदकेनच स्नात्वाविलिप्यकर्पूरंचदनरोचनांबुभिरितिपाठांतरं धूपचंदनकर्पूरवालकैःसितासिल्हकैः भक्ष्यान्श र्करयापूर्णान्पानिकानिशुभानिच दापयेत्कन्यकाविप्राभोजनंचात्मनस्तदा शक्तितोदक्षिणांदद्यान्महिषघ्नींचकी र्तयेत् दीपमालांघृतेनैवसर्वान्कामान्प्रयच्छति सर्वयज्ञमहादानसर्वतीर्थफलंलभेत् एतद्व्रतवरंशुक्रमयारुद्रेणवि ष्णुना जगतोहितमिच्छद्भिश्चीर्णंदुर्गाव्रतंमहत् भानुनाग्रहविध्वंससमरेचकृतंपुरा देवासुरैर्यक्षनागाकिन्नरैर्मानवै स्तथा अप्सरोभिस्तथास्त्रीभिःसौभाग्यस्याविवृद्धये कर्तव्यंहशार्दूलयश्चकुर्याद्यथाविधि श्रवणादस्यचाप्नोतिस र्वकामसुखानिच इष्टानिलभतेमर्त्योवंध्यापुत्रंप्रसूयते इतिमहिषघ्नदेवीव्रतं आषाढशुक्लनवम्यामैंद्रीदेवीपूजा व्रतं नारदीये आषाढस्यनवम्यांचयःकुर्यात्पक्षयोर्द्विज नक्तमैंद्रींसमभ्यर्च्यसितामैरावणस्थितां सभवेद्देवलो केतुभोगभाग्देवयानगः आषाढशुक्लदशमीमन्वादिका नारदीये आषाढशुक्लदशमीपुण्यामन्वादिकामता तस्यांस्ना नंदानजपोहोमोवास्वर्गतिप्रदः अथातआषाढशुक्लैकादशीदेवशयनीकृत्यं नारदीये आषाढशुक्लैकादश्यांयद्विधानं तुतच्छृणु उपोष्यतस्मिन्दिवसेविधिवन्मंडपेशुभे स्थापयेत्प्रतिमांविष्णोःशंखचक्रगदाब्जैः लसच्चतुर्भुजांसौम्यां

कांचनींवापिराजतीं पीतांबरधरांशुभ्रेपर्यंकेस्वास्तृतेद्विज- ततःपंचामृतस्नानंमंत्रैः शुद्धजलेनच ॥ पौरुषेणचसूक्तेन
उपचारान्प्रकल्पयेत् नीराजनांतान्पाद्यादींस्ततःसंप्रार्थयेद्धरिं ॥ सुप्तेत्वयिजगन्नाथजगत्सर्वंचराचरं इतिसंप्रार्थ्य
देवाग्रेचातुर्मास्यव्रतोदितान् नियमांस्तुयथाशक्तिगृह्णीयाद्भक्तिमान्नरः ततःप्रभृतिद्वादश्यांसमर्चेच्छेषशायिनं उ
पचारैःषोडशभिस्ततःसंभोज्यवाडवान् व्रतोष्यदक्षिणाभिस्तुस्वयंभुंजीतवाग्यतः ततःप्रभृतिविप्रेंद्रगंधाद्यैःप्रत्य
हंयजेत् कृत्वैवंविधिनाविप्रदेवस्यशयनव्रतं मुक्तिमेतियतोमर्त्योभवाद्विष्णुप्रसादतः अत्रैवदेवशयनोत्थापनव्रत
मुक्तं भविष्योत्तरे मिथुनस्थेसहस्रांशौस्वापयेन्मधुसूदनं तुलराशिगतेतस्मिन्पुनरुत्थापयेद्धरिं आषाढस्यासिते
पक्षेएकादश्यामुपोषितः इत्यादिकृत्यकलापोऽग्रेवक्ष्यते अथदेवशयन्येकादशीकथा भविष्योत्तरे पद्मपुराणेच यु
धिष्ठिरउवाच आषाढस्यसितेपक्षेकावाह्येकादशीभवेत् किंनामकोविधिस्तस्याःकिंपुण्यंचवदस्वमे श्रीकृष्णउ
वाच शृणुपार्थप्रवक्ष्यामिगोविंदशयनव्रतं कटिदानंसमुत्थानंचातुर्मास्यव्रतक्रमं युधिष्ठिरउवाच किंदेवशयनं
नामकिंवैदेवःस्वपित्यहो देवःकिमर्थंस्वापितिकिंविधानंचतद्वद केमंत्राःकेचनियमाव्रतान्यत्रकृतिश्चकाः किंग्राह्यं
किंचभोक्तव्यंसुप्तेदेवजनार्दने श्रीकृष्णउवाच मिथुनस्थेसहस्रांशौस्वापयेन्मधुसूदनं तुलराशिगतेतस्मिन्पुनरु
त्थापयेद्द्रुतं अधिकमासिपतितएषएवविधिक्रमः नान्यथास्वापयेद्देवंतथैवोत्थापयेद्धरिं आषाढस्य
सितेपक्षेएकादश्यामुपोषितः स्थापयेत्प्रतिमांविष्णोःशंखचक्रगदाधरां कांचनींराजतींताम्रमयींपैत्तलिकींतथा
पीतांबरधरांसौम्यांपर्यंकेस्वास्तृतेशुभेसितवस्त्रयुगाच्छन्नेसोपधानेयुधिष्ठिरइतिहासपुराणज्ञोब्राह्मणोवेदपारगः स्ना
पयित्वादधिक्षीरघृतक्षौद्रैर्जलेनवा समालभ्यशुभैर्गंधैःपुष्पैर्धूपैःसुधूपितां पूजितांकुसुमैःशुभ्रैर्मंत्रेणानेनपांडव सु
प्तेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदं विबुद्धेत्वयिबुध्येतजगत्सर्वंचराचरं एवंतांप्रतिमांविष्णोःस्थापयित्वायुधिष्ठिर

तस्यैवाग्रेस्वयास्थत्वा गृह्णीयान्नियमान्नरः चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि गृहीतान्नियमःशुद्धानविघ्न
संचयातुमे स्त्रीवानरोवामद्भक्तोधर्मज्ञोथदृढव्रतः गृह्णीयान्नियमानेतान्दंतधावनपूर्वकं तेषांफलानिवक्ष्यामिक
ऽर्हणांतेपृथक्पृथक् मधुरस्वरोभवेद्राजन्पुरुषोगुडवर्जनात् लभेच्चसंततिंदीर्घांपुत्रपौत्रादिवर्द्धिनीं तैलस्यवर्ज
नात्पार्थसुंदरांगःप्रजायते कटुतैलपरित्यागाद्रिपुनाशमवाप्नुयात् मधुतैलपरित्यागात्सौभाग्यमतुलंभवेत् पुष्पा
दिभोगनियमात्स्वर्गेविद्याधरोभवेत् योगाभ्यासीभवेद्यस्तुसब्रह्मपदमाप्नुयात् कटुकतिक्तमधुरकषायक्षारजान्र
सान् वर्जयेत्सचवैरूप्यंदौर्गंध्यंनाप्नुयात्सदा तांबूलवर्जनाद्भोगीरक्तकंठश्चजायते शाकपत्राशनाद्रोगीचापाकृतमलो
भवेत् पदाभ्यंगपरित्यागाच्छिरोभ्यंगविवर्जनात् दीप्तिमान्दीप्तकरणोयक्षोद्रव्यपतिर्भवेत् लभेतसंततिंदीर्घांतैल
पक्वविवर्जनात् भूमौसंस्तरशायीचहरेरनुचरोभवेत् सदामुनिः सदायोगीएकस्यस्यभोजनात् निर्व्याधिर्नी
रुजोजस्रंमद्यमांसविवर्जनात् एवमादिपरित्यागाद्धर्म्यःस्याद्धर्मनंदन एकांतरोपवासेनब्रह्मलोकेमही
यते धारणान्नखलोमानांगंगास्नानदिनेदिने मौनव्रतीभवेद्यस्तुतस्याज्ञास्खलिताभवेत् भूमौभुक्तेनरो
यस्तुपृथिव्यधिपतिर्भवेत् ॐनमोनारायणायेतिजपित्वानंतकंफलं पादाभिवंदनाद्विष्णोर्लभेद्गोदानजंफलं
कल्पस्थायीभवेद्राजन्सनरोनात्रसंशयः विष्णुपादांबुजस्पर्शात्कृतकृत्योभवेन्नरः विष्णोर्देवालयेकुर्या
दुपलेपनमार्जनं कल्पस्थायीभवेद्राजन्सनारोनात्रसंशयाः प्रदक्षिणशतंयस्तुकरोतिस्तुतिपाठकःहंस
युक्तविमानेनसतुविष्णुपुरंव्रजेत् त्रिरात्रभोजनाच्चैवमोदतेदिविदेववत् षष्ठहभोजनाद्राजन्देवोवैमानुषोभवेत्
प्राजापत्यंचरंश्चैवचातुर्मास्यव्रतंनरः मुच्यतेपातकैःसर्वैस्त्रिविधैर्नात्रसंशयः तप्तकृच्छ्रातिकृच्छ्राभ्यांयःक्षिपेन्नशयनं
हरेः सयातिपरमंस्थानंपुनरावृत्तिवर्जितं चांद्रायणेनरोराजन्क्षिपेन्मासचतुष्टयं दिव्यदेहोभवेत्सोथसोमलोक

चगच्छति शुक्लपक्षेनरोयोवैत्यजेदन्नादिभक्षणं तेनपक्षोपवासेनप्रतिपक्षंहरिप्रियः सगच्छेद्धरिसायुज्यं नभूयस्तु प्रजायते भिक्षाभोजीनरोयोहिसभवेद्वेदपारगः नलिप्यतेसपापेस्तुपद्मपत्रमिवांभसा कृष्णेविष्णौ हृषीकेशेप्रसुप्ते मधुसूदने परान्नवर्जयेद्यस्तुकृतकृत्योभवेद्द्विजः परान्नवर्जनात्पार्थचांद्रायणफलंलभेत् सर्वपापविनिर्मुक्तः सोमलोकमहीयते शाकाहारंतुयःकुर्य्याद्राजन्मासचतुष्टयं तस्यवंशसमुच्छेदःकदाचिन्नोपजायते लवणवर्जयेद्यस्तुभूपमासचतुष्टयं त्रिजन्मोपार्जितपापंसर्वंनाशमवाप्नुयात् शक्त्यादानंतुयःकुर्य्याद्यावन्मासचतुष्टयं विष्णुमुद्दिश्यराजेंद्रसदेवत्वमवाप्नुयात् पंचगव्याशनःपार्थचांद्रायणफलंलभेत् निर्मलंदेहमाप्नोतिगंगास्नानंदिनेदिने कांस्यमांसेन्नंतंद्यूतंव्यायामंक्रोधमैथुने हिंसांतैलंविवादंचानिद्रांनैर्माल्यलंघनं द्वादश्यांद्वादशैतानिविष्णुभक्तोविवर्जयेत् उपवासंतथानक्तमेकभक्तमयाचितं अशक्तस्तुपुमान्कुर्य्यात्सायंप्रातरखंडितः स्नानंपूजादिसंयुक्तंसनरोहरिलोकभाक् गीतवाद्यकरोविष्णोर्गांधर्वलोकमाप्नुयात् लोकान्प्रबोधयेद्यस्तुसोंतेविष्णुपुरंव्रजेत् कृत्वाप्रेक्षणकंदिव्यंलोकमप्सरसांव्रजेत् कृत्वाप्रेक्षणकंविष्णोर्निर्मलंदेहमाप्नुयात् नित्यस्नायीनरोराजन्नरकंनैवपश्यति भोजनंवर्जयेद्यस्तुसस्नानंपौष्करंलभेत् तीर्थजांबुहरिस्नानान्निर्मलंदेहमाप्नुयात् एकभक्ताशनान्नित्यमग्निहोत्रफलंलभेत् अयाचितेनचाप्नोतिवापीकूपप्रपाफलं पष्ठाहःकालभोगेनस्थायीस्वर्गेनरोभवेत् भोगेनभोजनेनेत्यर्थः पत्रेषुयोनरोभुंक्ते कुरुक्षेत्रफलंलभेत् शिलायांभोजनेनित्यप्रयागस्नानजफलं मुप्तेनाथेजगन्नाथेकेशवेगरुडध्वजे निवर्ततेक्रियाः सर्वाश्चातुर्मास्येचभारत यामद्वयजागरणान्नरोगैरभिभूयते क्षणंतुयज्ञफलदंघटिकातुचतुर्गुणा प्रहरःकोटिगुणितस्ततःसंख्यानविद्यते ॥ इतिपद्मपुराणेजागरणफलमुक्तम् ॥ एवमादिव्रतैःपार्थतुष्टिमायातिकेशवः विवाहव्रतबंधादिक्रियाःसंस्कारलक्षणाः क्षौरग्रामप्रवेशादिगोदानादिप्रतिषिद्धं पुण्यान्नियानिकर्माणिवर्जयेद्दक्षिणायने अ

संक्रांततथामासंदैवेपित्र्येविवर्जयेत् मलिम्लुचमशौचचरविसंक्रांतिवर्जिते प्राप्तेभाद्रपदेमासिएकादश्यासितेहानिक
टिदानंभवेद्विष्णोर्महापूजाप्रवर्तने कृष्णकृष्णजगन्नाथयोगिगम्यनिरंजन कटिदानंकुरुष्वाद्यप्राप्तेभाद्रपदेशुभे क
टिदानपार्श्वपरिवर्त्तनम् यदेतद्देवशयनंतत्रमेकारणंशृणु पुरातपःप्रभावेणतोषयित्वाहरिंप्रभु याचितमुखसंन्नास
संस्थानंयोगनिद्रया निरीक्ष्यचात्मनोदेहंरुद्धंलक्ष्म्याउरःस्थलं शंखचक्रासिशार्ङ्गैश्चबाहवोप्यथपश्यमे नाभे
रधोनिरुद्धमेवेनतेयेनपक्षिणामुकुटेनाशिरोरुद्धंकुंडलैःश्रवणेतथा ददाम्यहंततस्तुष्टोनेत्रयोःस्थानमादरात् चतुरोवा
र्षिकान्मासान्वसप्रीताभविष्यसि योगनिद्रापितद्वाक्यंश्रुत्वापौराणिकंशुभं चकारलोचनावासमतोर्थंनृयुधिष्ठिर
अहंतुतावद्रक्ष्यामिमानयामिमनस्विनीं योगनिद्रांमहानिद्रांशेषाहिशयनेस्वयं क्षीरोदतोयवीच्यग्रैर्धौतपादंसमा
हितं लक्ष्मीकरांबुजैःश्लिष्टैर्मृद्यमानपदद्वय तत्रकालेतुयोमासान्मद्भक्तश्चतुरःक्षिपेत् व्रतैरनेकैर्नियमैःपांडवश्रेष्ठमा
नवः कल्पस्थायीविष्णुलोकेवसतेनात्रसंशयः ततोविबोधयेद्देवंशंखचक्रगदाधरं कार्त्तिकेशुक्लपक्षस्यएकादश्या
पृथसुत मंत्रेणानेनराजेंद्रदेवमुत्थापयेत्ततः उत्तिष्ठोत्तिष्ठगोविंदयोगनिद्रांविहायच लक्ष्मींविसृज्यलोकेत्वमल
क्ष्मीनुदकेशव समुत्थितेतदाविष्णौक्रियासर्वाप्रवर्तते तत्रैवदेवदेवस्यपूर्ववत्स्नानमाचरेत्। महानूपरवैरात्रौ
भ्रामयेत्स्यंदनस्थितं दर्शयेत्सर्वलोकांश्चउत्थितधरणीधरं ससदेशोपिराजेंद्रसर्वं स्वर्गायकल्पते रात्रौजागरणं
कार्य्यमेकादश्यांसुरालये प्रभातेविमलेस्नात्वाद्वादश्यांविष्णुमर्चयेत् जुहुयाद्धव्यवाहंचहविर्द्रव्यैर्घृतादिभिः ततो
विप्रान्शुभाचारान्भोजयेदन्नविस्तरैः घृतक्षीरदधिक्षौद्रकपायगुडमोदकैः यजमानोग्रतःस्थित्वाब्राह्मणास्त्वविवर्जिताः
एकादशदशाष्टौवाभोजयेत्कुरुसत्तम अर्चयेच्चंदनैश्चूर्णैःपुष्पैर्गंधाद्वैर्जोत्तमान्। शास्त्रोक्तविधिनापार्थभोजयेद्व्रगवद्व
तान् आश्वास्येभ्यस्ततोदद्यात्पंक्तयःकिंचिदेवच स्वभावाद्यदभीष्टंवैदत्तपुष्पफलादिकं चतुरोवार्षिकान्मासान्नियमो

यस्ययःकृतः कथयित्वाद्विजेभ्यस्तद्दद्यात्कृत्यचदक्षिणां दत्त्वाविसर्जयेद्विप्रांस्ततोभुंजीतचस्वयं यस्यकंचतुरोमासा
न्प्राप्तितस्यसमुच्चरेत् एवंयआचरेत्पार्थसोनंतफलमाप्नुयात् अवसानेतुराजेंद्रवासुदेवपुरंव्रजेत् यस्याविघ्नंसमाप्येत
चतुर्मास्यव्रतंनृप सभवेत्कृतकृत्यस्तुनपुनर्मानुषोभवेत् योदेवशयनंचापिकटिदानंसमाचरेत् उत्थानंचापिकृष्णस्य
सहरेर्लोकमाप्नुयात् शृणोतिध्यायतिस्तौतिजुहोत्याख्यातियोनरःहरिभक्तिकरःपार्थसगच्छेद्वैष्णवंपदम् दुग्धा
ब्धिभोगिशयनेभगवाननंतोयोस्मिन्दिनेस्वपितिचापिविबुध्यतेवा तस्मिन्ननन्यमनसामुपवासभाजांपुंसांददाति
सुगतिंगरुडाग्रगामी ॥ इतिश्रीभविष्योत्तरपद्मपुराणयोर्विष्णोःशयनकटिदानोत्थापनैकादशीमाहात्म्यम्
अस्याभैवैकादश्यांवसुदेवद्वादशीव्रतंवराहपुराणे दुर्वासाउवाच आषाढेप्येवमेवंतुसंकल्प्यविधिनानरः अर्चये
त्परमंदेवंगंधपुष्पैर्विधानतः वासुदेवायपादौतुकटिंसंकर्षणायच प्रद्युम्नायेतिजठरमनिरुद्धायचेत्युरःचक्रपाणये
तुभुजौकंठंभूपतयेतथा स्वनाम्नाशंखचक्रेतुपुरुषायेतिवैशिरः एवमभ्यर्च्यनेधावीप्राग्वत्तस्याग्रतोघटं विन्यसेद्व
स्त्रयुग्मंतुतस्योपरिततोन्यसेत् कांचनंवासुदेवंचचतुर्बाहुंसनातनं तमभ्यर्च्यविधानेनगंधपुष्पादिभिःक्रमात्
प्राग्वत्तद्ब्राह्मणेदद्याद्देवादिनिंसुव्रते एवंनियमयुक्तस्यपुण्यंतस्यफलंशृणु वसुदेवोभवद्राजायदुवंशविवर्द्धनः देव
कीतस्यभार्यासीत्समानव्रतचारिणी सात्वपुत्राभवत्साध्वीपतिधर्मपरायणा तस्याःकालेनमहतानारदोभ्यागम
द्गृहं वसुदेवेनभक्त्यासौपूजितोवाक्यमब्रवीत् कथयामासधर्मज्ञोदेवकीवसुदेवयोः तावप्येवंविधंसत्त्यांचक्रतुःश्रद्ध
यान्वितौ वयोस्तुष्टःस्वयंविष्णुःपुत्रत्वंसंजगामह एवमेपापापहराद्वादशीपुत्रदास्मृता इमामुपोष्यचसुतान्विद्यांवि
त्तंलभंतेच राज्यंचभ्रष्टराज्यास्तुपापिनःपापसंक्षयं यथाभारोपनीतस्तुधरण्याःकेशवेनवै स्तेविष्णुपुरेरम्येमो
दतेकालसंक्षये मन्वंतराणिषट्त्रिंशत्ततःकालात्ययेपुनः इहलोकेभवेद्राजाशतवर्षाणितानितु दातायज्वाक्षमायुक्त

स्ततोनिर्वाणमाप्नुयात् ॥ इतिवाराहपुराणेधरणीव्रतेषु आषाढशुक्लैकादश्यांवसुदेवद्वादशीव्रतमाहात्म्यं पद्मपुराणे श्रीमहादेवउवाच अश्वमेधसहस्राणिवाजपेयशतानिच एकादश्युपवासस्यकलांनार्हंतिषोडशीं स्नानदानंजपोहोम स्वाध्यायदेवतार्चनं चातुर्मास्येकृतयच्चसर्वंहिचाक्षयंस्मृतम् एककालंद्विकालंवापुराणंशृणुतेनरः सर्वपापविनिर्मुक्तोविष्णुलोकंसगच्छति हरौसुप्तेविशेषेणहरेर्नामपठन्जपन् तत्फलंकोटिगुणितंलभतेद्विजसत्तम वैष्णवोब्राह्मणोयस्तुपूजनंप्रकरोतिहि सएवसर्वधर्मात्मापूज्यएवनसंशयः चातुर्मास्यमिदंपुण्यंपवित्रंपापनाशनं श्रुत्वातुलभतेपुण्यंगंगास्नानसमुद्भवं व्रतंकृत्वामहाभागयदिनोद्यापनंचरेत् सकर्ताकर्मणांतातनसम्यक्फलभाग्भवेत् व्रतवैकल्यमासाद्यकुष्ठीनामप्रजायते एतस्मात्कारणाच्चैवकुर्य्यादुद्यापनंद्विज गृहीत्वानियमानितान्पालयित्वायथाविधि सुप्तोत्थितेजगन्नाथेगत्वाब्राह्मणसन्निधौ क्षमापयेद्देवदेवंयथाविधिसविस्तरम् यस्यकंनियमेनात्रतत्तद्द्यात्सदक्षिणं शय्यांसोपस्करांदद्याद्वासोदद्याद्द्विजातये गोभूहिरण्यवासांसिगृहोपकरणानि च अशक्तौतुयथाशक्तिब्राह्मणानेवभोजयेत् यथाशक्तिप्रपूज्याथसर्वंसंपूर्णतामियात् इत्युत्तरखंडे आषाढशुक्लैकादश्यांस्वापमहोत्सवउक्तोमदनरत्ने ब्रह्मपुराणेपि एकादश्यांतुशुक्लायामाषाढेभगवान्हरिः भुजगशयनेशेतेक्षीरार्णवजलेसदा ततस्तत्प्रतिमाकार्यासर्वलक्षणसंयुता सुप्तांतुशेषपर्य्यंकेशैलमृद्भिस्तुवारिभिः ताम्रारकूटरजतैस्तथाचित्रपटेथवा लक्ष्म्याउत्संगहस्तेचविन्यस्तचरणांबुजा उत्संगहस्तेउत्संगस्थितहस्ते नानाविधोपकरणैः पूजाचविधिपूर्वकं उपवासश्चकर्त्तव्योरात्रौजागरणंतथा तस्यांराज्यांव्यतीतायांद्वादश्यांपूजयेत्तथा त्रयोदश्यांतथागीतनृत्यवाद्यंनिवेदयेदिति टोडरानंदेऽपि आषाढशुक्लैकादश्यांकुर्यात्स्वापमहोत्सवमिति अयंचद्वादश्यामपिकार्यं आभाकायेंपुमासेपुमिथुनेमाधवस्यच द्वादश्याशुक्लपंचम्यांप्रस्वापावर्तनोत्सवः ॥

इतिनिर्णयसिंधौभविष्योक्तेः आषाढशुक्लद्वादश्यांक्षीराब्धिशयनोत्सवः कार्योन्यथात्वनाद्दोषभेवत्पौराणिक
व्रते इतिरामार्चनचंद्रिकोक्तेश्च द्वादश्यामित्यत्रपारणाहमात्रंविवक्षित पारणाहेपूर्वरात्रेघंटादीन्वादयेन्मुहुरि
तितत्रैवोक्तेः नृसिंहपरिचर्यायामपियद्यपि आषाढस्यसितपक्षेएकादश्यामुपोषितः नक्तंद्विजवरश्रेष्ठगृह्णीया
न्नियमंव्रती कार्त्तिकेशुक्लपक्षस्यएकादश्यांसमाहित इत्यादिवचनैरेकादश्यामेवानुष्ठेयतागम्यते तथापीयंच
द्वादशीदेवप्रबोधार्थंविनिर्मितेतिमंत्रलिंगानुगृहीतशिष्टाचाराद्द्वादश्यामप्यनुष्ठेयतानिर्धार्यतइत्युक्तं यत्तुद्वादश्या
शयनादिकमुक्तंनमिथुनाकेएव आभाकार्येपुमासेष्वितिभविष्योक्तेः स्वापकालविशेषस्तुनिशिस्वापोदिवोत्थानं
संध्यायांपरिवर्त्तनमिति ब्रह्मपुराणवचनेनविशिष्योक्तेः एताश्चद्वादश्योरात्रिसंध्यादिनेष्वनुराधाश्रवणरेवतीना
मादिमध्यांतभागउक्ताः क्रमेणप्रस्वापादिषुप्रशस्ताः तथाचनारदीये मैत्राद्यपादेस्वपितीहविष्णुः श्रुतेश्चमध्ये
परिवर्त्तमेति पौष्णावसानेनसुरारिहंताप्रबुध्यतेमासचतुष्टयेनेतिभविष्येपि आभाकासितपक्षेपुमैत्रश्रवणरेवती
रेवतीत्यत्रसप्तमीलोपः आदिमध्यावसानेपुप्रस्वापावर्तनोत्सवः यदातुद्वादशीपुरात्र्यादिभागेपु तन्नक्षत्रभागो
नास्तितदा द्वादश्यानक्षत्रमात्रयोगोपिरात्र्यादिगतोग्राह्यः पादयोगोयदातस्याहक्षेणापितदाभवेदितिवाराहपु
राणात् विष्णुर्दिवानस्वपितिनचरात्रौप्रबुध्यते द्वादश्यामुरुपसंयोगेपादयोगेनकारणमितिविष्णुधर्मोत्तराच्च य
दातुद्वादशीपुतानिनक्षत्राणिनसत्येव किंत्वेकादशीपुत्रयोदशीपुवा तदातत्रापि तत्तदृक्षभागएवनिशादिवेलाना
दरेणप्रस्वापादिकार्यं अप्राप्तेद्वादशीमृक्षेउत्थानशयनेहरेः पादयोगेनकर्त्तव्येनाहोरात्रंविचिंतयेदिति जीमू
तवाहनधृतवचनात् पादयोगादन्यतिथौद्वादशाम्नक्षसंगमादितिवचनाच्च कौस्तुभेतु अप्राप्तइत्यादिवचनंमु
ख्यकालेकेनापिनिमित्तेनाकृतोत्सवेनपुंसित्रयोदश्यादिगौणकालेकर्त्तव्यउत्सवः पादयोगवशेनदिवैववाकार्योरा

योगेतिसंदेहनिरासार्थं नतु नक्षत्ररहितद्वादशीबाधेन त्रयोदश्यादौपादयोगोऽ प्राप्तकर्त्तव्यतायाः प्रापणपूर्वं रात्र्यादिनिषेधार्थं अपूर्वेतियोगेरयादितिव्याख्यातम् एवंचद्वादश्यांनिशायादरेऽन्यतिथौचनक्षत्रपादयोगा देवानिनतेसतिपद्वाद्वादशीपुनिशादेरन्यत्रतदक्षभागेयोऽन्यतिथौचतदितरनक्षत्रस्यैवयोगः तदाद्वादशीपुसंध्यायांस्वापादि द्वादश्यांसंधिसमयेनक्षत्राणामसंभवे आभाकासितपक्षेपुशयनावर्त्तनादिकमितिवाराहवचनात् संधिसमयइतिशयनादावन्वेति संधिसमयश्चसायंसंध्यैवरेवत्यादेरलाभेत्वाद्वादश्यांचविभाभवेत् उभयोरप्यभावेतुसंध्यायांचमहोत्सवः ॥ इतिहरिभक्तिविलासे रेवत्यांतोयदारात्रौद्वादश्यांचसमागतः तदाप्रबुध्यतेविष्णुर्दिनातेश्राप्यरेवतीमिति जीमूतवाहनवचनात् अत्रबहुवचनेपुचतुर्थभागवाचिपादग्रहणांचतुर्थीविभक्तानुराधारेवत्योरायांत्यपादयोरेवंस्वापबोधोत्सवौकार्यौनचादिमध्यावसानेपुवितिवाक्येसमस्यांद्वश्रुतत्वादिति त्रेधाविभागएवअतएवमध्यग्रहणमप्युपपद्यतइतिवाच्यं वचनांतरेपुपादग्रहणेनविशेषश्रवणादश्रुतत्वादितिहेतोरसिद्धेः श्रवणस्यतुत्रेधाविभक्तमध्यभागएव ग्राह्यः ॥ आषाढकार्तिकपौर्णमास्योरपि स्वापप्रबोधावाहयमः क्षीराब्धौशेषपर्यंकमाषाढ्यांसंविशेद्धरि.निद्रांत्यजतिकार्तिक्यांतयोस्तंपूजयेत्सदेति अत्रचाषाढीकार्त्तिकीद्व्याषाढस्ययकार्त्तिकस्येयमितिव्युत्पत्त्यैकादशीपरे नचवृद्धिर्यस्याचामादेरितिवृद्धसंज्ञायछत्राषाढीयामितिस्यादितिवाच्यं क्वचिदपवादविषयेप्युत्सर्गोपिकप्रवृत्तिरितिन्यायेनाणप्रत्ययेभेष्टसिद्धिरितिलक्ष्मीधरभट्टाः यत्तु आषाढशुक्लपक्षांतेभगवान्मधुसूदनः भोगिभोगेनिजांमायांयोगनिद्रांसमाश्रयात् शेतसौचतुरोमासान्यावद्भवतिकार्त्तिकीतिवचनं तदपिपौर्णमास्यांशयनप्रबोधस्वीकारोचित्येनतद्विपयंबोध्य श्रीदत्तादयस्तु आषाढशुक्लैकादशीमारभ्यपौर्णमासीपर्यंतंविष्णोर्निद्राग्रहणरूपशयनसमयः अतएवएकादश्यांशयनमभिधायतदादिदिनपंचकेकर्मकथनंब्रह्मपुराणेवाराह

पुराणेच निद्राग्रहणानंतरमाषाढमासे द्वादश्यामित्यभिधानं वामनपुराणेवा अनुज्ञांब्राह्मणेभ्यश्चद्वाद
श्यांप्रयतःशुचिः लब्ध्वापीतांवरधरःस्वस्तिनिद्रांसमानयेदित्यभिधानंच अयमस्मृतौ स्वापःद्वीपदस्योपाधेस्तत्रै
वप्रवृत्तेः पूर्णिमायांशयनाभिधानंचसंगच्छते विष्णुधर्मोत्तरेप्येवम् केचित्तुभगवतःशयनकालेविकल्पएव कथम
न्यथा श्रीवैशाखाद्भुजगवनिताचुंबनायासखिन्नो देवोदैत्यप्रवरपरशुर्यावदेकांतसुप्तः अंतःशय्यापरिणततनु
र्योगनिद्रामुपैति तावद्दृष्टैःसमयउदितोब्रह्मणोभाषितेनेतिगणकशास्त्राद्वैशाखादिमासेहरिशयनमित्याहुः एते
पांचपक्षाणांयथासंप्रदायंव्यवस्था श्रीरामस्यतुपारणोत्तरंद्वादशीमध्येत्रयोदशीमध्येवापूर्वरात्रेस्वापोत्सवः पार
णाहेपूर्वरात्रइतिरामार्चनचंद्रिकोक्तेः शिष्टास्तुसर्वदेवानामपिपारणोत्तरमेवरात्रौकुर्वंतीतिकेचित् यत्तुमोहचूडोत्त
रे मिथुनस्थोयदाभानुरमावास्याद्वयंस्पृशेत् द्विराषाढःसविज्ञेयोविष्णुःस्वपितिकर्कटइति तदुत्तरवर्षगतकर्कार्क
स्वापपरमितिमाधवः मेषादिमिथुनांतेषुयदादर्शद्वयंभवेत् अत्रातेतदावश्यंमिथुनार्केहरिःस्वपेदितिव
राहमिहिरोक्तेः एतस्यचावश्याऽनुष्ठेयतोक्ता रामार्चनचंद्रिकायां गारुडे मिथुनस्थेसहस्रांशौनस्वापयतियोहरिं
वैष्णवैःसहसंभूयह्यनावृष्टिस्तदाभवेदिति अथरामार्चनचंद्रिकोक्तः स्वापमहोत्सवविधिः पारणाहेपूर्वरात्रेघंटा
दीन्वादयेन्मुहुः विधायमहतींपूजांविष्णुमभ्यर्च्यवैष्णवान् नीराज्यनरयानेचराममारोप्यवैष्णवैः गीतवादित्र
घोषेणदेवंनीत्वाजलाशये पुष्पांजलिंप्रदायाथयानादुत्तारयेत्प्रभुं तीरेप्रन्यास्रमाशास्यहस्तंदत्वाप्रवेशयेत् धौतां
घ्रिपाणिराचांतः कुर्यात्संकल्पमादृतः न्यासंकृत्वाचदेवेचस्वर्णधर्मानुवाकतः तथापुरुषसूक्तेनोत्तरनारायणेनच
पंचामृतेनसंस्नाप्यसंपूज्यायरवृत्तमं अतोदेवेतिमंत्रेणजलेप्रस्वापयेत्प्रभुं शेषपर्यंकशय्येस्मिन्फणामणिगणासले
श्वेतद्वीपांतरेदेवकुरुनिद्रांनमोस्तुते अथकृत्वामहापूजांगंधस्रग्धूपदीपकैः अन्नतांबूलनृत्याद्यैराशास्यानुग्रहंहरेः

सुप्तेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदं विबुद्धेचविबुध्येतप्रसन्नोमेभवाव्यय इतिसंप्रार्थ्यतस्याग्रेगृह्णीयान्नियमानि
मान् श्वेतद्वीपेभोगिनाथेयोगनिद्रास्थितेत्वयि चातुर्मास्यव्रतेऽनुज्ञांदेहिलक्ष्मीपतेमम लब्ध्वानुज्ञांशंखहस्तोय
थारोपितभर्तृका चतुरोवार्षिकान्मासान्बोधोत्थापनावधि इमंकरिष्येनियमंनिर्विघ्नंकुरुमेच्युत इदंव्रतंमयादेव
गृहीतंपुरतस्तव निर्विघ्नंसिद्धिमायातुप्रसादात्तेरमापते गृहीतेस्मिन्व्रतेदेवपंचत्वंयदिमेभवेत् तदाभवतुसंपूर्णं
प्रसादात्तेरघूत्तम इत्यभ्यर्थ्याथदेवायशंखेनार्घ्यंनिवेदयेदिति अथप्रयोगः एकादश्यां नित्यंनै
मित्तिकंपूजनंचकृत्वा नरयानेनरथेन वा गीतवादित्रघोषेण देवंजलाशयेनीत्वा पुष्पांजलिंप्रदाययानादुत्तार्यस्व
हस्तेहस्तंदत्त्वातीरउपवेशयेत् ततःस्वयंधौतांघ्रिपाणिराचांतःसंकल्पंकुर्यात् ततोविष्णुमंत्रस्यछंदऋष्यादिन्यास
पूर्वकं ध्यानंकृत्वाकेशवादिनामभिःस्वदेहेदेवेचन्यसेत् ततःसुवर्णघर्मानुवाकपुरुषसूक्तोत्तरनारायणानुवाकान्न्यसेत्
तेनुयथा सुवर्णघर्मंपरिवेदवेनं इंद्रस्यात्मानंदशधाचरंतं अंतःसमुद्रेमनसाचरन्तम् ब्रह्मान्वविंदद्दशहोतारमर्णे
अंतःप्रविष्टःशास्ताजनानामेकःसन्बहुधाविचारःशतंशुक्राणियत्रैकंभवंति सर्वेदेवायत्रैकंभवंति सर्वेहोतारोयत्रैकंभ
वंति समानसानआत्माजनानां अंतःप्रविष्टःशास्ताजनानांसर्वाश्चप्रजायत्रैकंभवंति चतुर्होतारोयत्रसंपदंग
च्छंतिदेवैःसमानसोआत्माजनानां ब्रह्मेंद्रमग्निंजगतःप्रतिष्ठांदिवआत्मानंसवितारंबृहस्पतिं चतुर्होतारंप्रदिशो
तेनुक्लृप्तं वाचोवीर्यंतपसान्वविंदत् अंतःप्रविष्टंकर्तारमेतं त्वष्टारंरूपाणिविकुर्वंतंविपश्चिं अमृतस्यप्राणं यज्ञमेतं
चतुर्होतॄणामात्मानंकवयोनिचिक्युः अंतःप्रविष्टंकर्तारमेतंदेवानांबंधुंनिहितंगुहासु अमृतेनक्लृप्तंयज्ञमेतं चतुर्हो
तॄणामात्मानंकवयोनिचिक्युः शतंनियुतःपरिवेदविश्वाविश्ववारःविश्वमिदंवृणाति इंद्रस्यात्मानिहितःपंचहोता अमृ
तंदेवानमायुःप्रजानां इंद्रंराजानंसवितारमेतं वायोरात्मानंकवयोनिचिक्युःरश्मिंरश्मीनांमध्येतपंतं ऋतस्य

पदेकवयोनियंति यस्रांडकोशंभुवनेविभर्ति अनिर्विण्णःसन्नथलोकान्विचष्टे यस्यांडकोशंशुष्ममाहुः प्राणमुल्वं
तेनक्लृप्तोमृतेनाहमस्मि सुवर्णकोशंरजसापरिवृतं देवानांवसुधानींविराजं ४ अमृतस्यपूर्णांतामुकलांविच
क्षते पादंषड्ढोतुर्नकिलाविविस्से येनर्तवः पचधोतक्लृप्ताःउतवाषड्धामनसोतक्लृप्ताः तंषड्ढोतारमृतुभिःकल्प
मानंऋतस्यपदेकवयोनियंति अंतःप्रविष्टकर्तारमेतंअंतश्चंद्रमसिमनसाचरंतं सहैवसंतंनविजानंतिदेवा इंद्रस्या
त्मानंशतधाचरंतं ॥ ५ ॥ इंद्रोराजाजगतोयईशे सप्तहोतासप्तधाविक्लृप्तः परेणतंतुपरिषिच्यमानःअंतरादित्येम
नसाचरंतं देवानांहृदयंब्रह्मान्वविंदत् ब्रह्मैतद्ब्रह्मणउज्जभार अर्कंश्चोततंसरिरस्यमध्ये अयस्मिन्तसप्तरवःमेहंव
हुलांश्रियंवह्यश्वामिंद्रगोमतीं ॥ ६ अच्युतांवहुलांश्रियं सहरिर्वसुवित्तमः पेरुरिंद्रायपिन्वते वह्यश्वामिं
द्रगोमतीं अच्युतां वहुलांश्रियम् मह्यमिंद्रोनियच्छतु शतंशताअस्ययुक्ताहरीणां अर्वाङातुवसुभीरश्मि
रिंद्र प्रमंहमाणोवहुलांश्रियं रश्मिरिंद्रःसवितामेनियच्छतु ॥ ७ ॥ घृतंतेजोमधुमदिंद्रिय मध्ययम्ग्निर्दधातुह
रिपतंगः पठरीसुपर्णविचक्षयोनभसायएति सनइंद्रःकामवरंददातु पंचारंचक्रपरिवर्ततेपृथु हिरण्यज्योतिःसरि
रस्यमध्ये अजसुंज्योतिर्नभसासर्पदेति सनइंद्र कामवरंददातु सप्तयुंजंतिरथमेकचक्रं ८ एकोअश्वोवहतिसप्त
नामा त्रिनाभिचक्रमजरमनर्वं येनेमाविश्वाभुवनानितस्थुः भद्रंपश्यंतउपसेदुरग्रेतपोदीक्षामृषयः सुवर्विदःततः
क्षत्रंवलमोजश्चजातं तदस्मैदेवाअभिसन्नमंतुश्वेतंरश्मिंबोभुज्यमानं अपांनेतारंभुवनस्यगोपां एकरूपाःशतंसहस्रा
णिप्रयुतानि नाव्यानांत्रयंश्वेतोरश्मिःपरिसर्वमिदंजगत् प्रजांपशून्धनानिअस्माकंददातुश्वेतोरश्मिःपारस
वैवभूव भुवनाह्यपशून्विश्वरूपान् पतंगक्तमक्तमसुरस्यमायया १९ हृदापश्यंतिमनसामनीषिणःसमुद्रेअंतः
कवयोविचक्षते मरीचीनांपदमिच्छंतिवेधसः पतंगोवाचंमनसाविभर्ति तांगंधर्वोवदद्गर्भेअंतःतांद्योतमानांस्वर्य

मनीषां श्रंतरुयपदेकवयोनियंते येग्राम्याःपशवोविश्वरूपाः विरूपासंतोवहुधैकरूपाःश्राग्नस्ताँ्‌श्रग्नमुमुक्त
कुदेवःप्रजापतिःप्रजयासंविदानःवीतँ्‌स्तुकेस्तुके युवनस्मासुनियच्छतं प्रग्नयज्ञपतिंनिरयेग्राम्या पशवोवि
श्वरूपाःविरूपासंतोवहुधैकरूपाः तेषँ्‌सप्तानामिहरंतिरस्तु रायस्पोषायसुवीर्याय यश्रारण्याःपशवोविश्वरूपा
वयुस्ताँ्‌श्रग्ने प्रमुकादेवःप्रजयासंविदानःइडायैसप्तंवृनवचराचरं देवाश्रन्वविदन् गुहाहितंयज्ञारण्यःपशवोवि
श्वरूपाःविरूपासंतोवहुधैकरूपाःतेषाँ्‌सप्तानामिहरंतिरस्तु रायस्पोषायसुप्रजास्त्वायनवीर्याय ॥ १३ ॥ सह
स्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् सभूमिँ्‌सर्वतःस्पृत्वात्यतिष्ठद्दशांगुलम् १ पुरुषएवेदँ्‌सर्वंयद्भूतंयच्चभाव्यं
उतामृतत्वस्येशानो यदन्नेनातिरोहति २ एतावानस्यमहिमातोज्यायांश्चपूरुषःपादोस्यविश्वाभूतानित्रिपादस्या
मृतंदिवि ३ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनःततोविश्वङ्व्यक्रामत्साशनानशनेश्रभि ४ ततोवि
राड्जायतविराजोश्रधिपूरुषःसजातोश्रत्यरिच्यतपश्चाद्भूमिमथोपुरः ५ यत्पुरुषेणहविषादेवायज्ञमतन्वत. वसंतो
स्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ६ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः देवायद्यज्ञंतन्वानाः श्रवध्नन्पुरुषं
पशुंतंयज्ञंवर्हिषिप्रौक्षन्पुरुषंजातमग्रतः तेनदेवाश्रयजंतसाध्याऋषयश्चये ८ तस्माद्यज्ञात्सर्वहुतः सम्भृतं
पृषदाज्यंपशूंस्तांश्चक्रेवायव्यानारण्याग्राम्याश्चये ९ तस्माद्यज्ञात्सर्वहुतऋचः सामानिजज्ञिरे छंदाँ्‌सिजज्ञिरे
तस्मात् यजुस्तस्मादजायत १० तस्मादश्वाश्रजायंतयेकेचोभयादतःगावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः
११ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् मुखंकिमस्यासीत्किंवाहूकिमूरूपादाउच्येते १२ ब्राह्मणोस्यमुखमासीत्
वाहूराजन्यःकृतःऊरूतदस्ययद्वैश्यःपद्भ्याँ्‌शूद्रोश्रजायत १३ चंद्रमामनसोजातश्चक्षोःसूर्योश्रजायत ॥ मुखादिंद्र
श्चाग्निश्चप्राणाद्वायुरजायत १४ नाभ्याश्रासीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकांश्रकः

लपयन् १६ वेदाहमेतंपुरुषंमहांत आदित्यवर्णंतमसस्तुपारे सर्वाणिरूपाणिविचित्यधीर:नामानिकृत्वाभिद यदा
स्ते धातापुरस्ताधमुदाजहार शक्रःप्रविद्वान्प्रदिशश्चतस्रः तमेवंविद्वानमृतइहभवति नान्यःपंथाअयनायविद्यते
यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः १७ अद्भ्य
संभृत:पृथिव्यैरसाच्चविश्वकर्मणः समवर्ततायेतस्यत्वष्टाविदधद्रूपमेतितत्पुरुपस्याविश्वमाजानमग्रे वेदाहमे
तंपुरुषंमहांतं आदित्यवर्णंतमस:पुरस्तात् तमेवविद्वानमृतइहभवति. नान्यःपंथाविद्यतेयनाय प्रजापति
श्चरतिगर्भे अंत प्रजायमानोबहुधाविजायते तस्यधीरा:परिजानंतियोनिंतमरीचीनांपदमिच्छंतिवेधसः योदे
वेभ्यआतपतियोदेवानांपुरोहितः पूर्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये रुचंब्राह्मंजनयंतदेवाअग्रेतदब्रुवन् ॥
यस्त्वैवंब्राह्मणोविद्यात् तस्यदेवाअसन्वशे श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपंअश्विनौव्यात्तं
इष्णन्निषाणमुंमइषाणसर्वलोकंमइषाण ॥ २१ ॥ पुरुपसूक्तेनसंपूज्यअतोदेवेतिमंत्रेणजलेशयनंकुर्यात् शेषपर्य
कवर्येस्मिन्फणामणिगणामले श्वेतद्वीपांतरेदेवकुरुनिद्रांनमोस्तुते इतिमंत्रेण, तत्रापिमहापूजांकृत्वा अस्मिन्
हरेरनुग्रहमाशास्य सुतेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदं विबुद्धेचविबुध्येतप्रसन्नोमेभवाव्ययेतिसंप्रार्थ्य श्वेतद्वीपेभो
गिनाथेयोगिनाथेस्थितेत्वयि चातुर्मास्यव्रतानुज्ञांदेहिलक्ष्मीपतेममेतिभगवत्कृपाकटाक्षदत्तामाज्ञांलब्ध्वाशंख
हस्तोदेवस्याग्रेनियमस्वीकारंकुर्यात् तत्प्रकारस्तुहेमाद्रौभविष्ये एवंतांप्रतिमांविष्णोःपूजयित्वास्वयंनरः प्रभाषे
ताग्रतोविष्णोः कृताजलिपुटस्तथा तत्रमंत्र: चतुरोवार्षिकान्मासान् राघवोत्थापनावधि इमंकरिष्येनियमंनि
र्विघ्नंकुरुमेच्युत इदंव्रतंमयादेवगृहीतंपुरतस्तव निर्विघ्नसिद्धिमायातुप्रसादात्तेरमापते गृहीतेचव्रतेदेवपंचत्वंय
दिमेभवेत् तदाभवतुमेपूर्णंप्रसादात्तेरवृत्तमेति ततोदेवालयेदेवशंखेनार्घ्यंनिवेदयेत तत्रमंत्र: शंखपाणेगन

तोयंफलपुष्पसमन्वित अर्घ्यंगृहाणदेवेशरमाकांतवरप्रदेति अर्घ्यदानोत्तरं भगवतःस्तुतिं कुर्यात्साचयथा यः पृथ्वीभरवारणायदिविजैःसंप्रार्थितश्चिन्मयः संजातःपृथिवीतलेरविकुलेमायामनुष्योऽव्ययःनिश्चक्रंहतराक्षसः पुनरगाद्ब्रह्मत्वमाद्यंस्थिरांकीर्त्तिंपापहराविधायजगतस्तंजानकीशंभजे १ विश्वोद्भवस्थितिलयादिषुहेतुमेकंमायाश्रयंविगतमायमचिंत्यमूर्त्तिं आनंदसांद्रममलंनिजबोधरूपसीतापतिंविदिततत्त्वमहंनमामि २ भजेहंसदाराममिंदीवराभंभवारण्यदावानलाभाभिधानं भवानीहृदाभावितानंदरूपंभवाभावहेतुंभवादिंप्रसन्नं ३ सुरानेकदुःखौघनाशैकहेतुंनराकारदेहंनिराकारमीड्यं परेशंपरानंदरूपंवरेण्यंहरिंराममीशंभजेभारतीशम् ४ प्रपन्नाश्रितानंददोहंप्रसन्नंप्रपन्नार्तिनाशेहुताशाभिधेय तपोयोगयोगीशभावाभिभाव्यंकपीशादिमित्रंनजेशममित्रम् ५ सदाभोगभाजांसुदूरेविभांतंसदायोगभाजामदूरेविभांतं चिदानंदकंदंसदाराघवेशंविदेहात्मजानंदरूपंप्रपद्ये ६ महायोगमायाविशेषानुयुक्तोविभासीशलीलानराकारवृत्तिः चिदानंदलीलाकथापूर्णकर्णाःसदानंदरूपाभवंतीहलोके ७ अहंमानपानाभिमत्तःप्रमत्तोनवेदाखिलेशाभिमानाभिमानः इदानींभवत्पादपद्मप्रसादात्त्रिलोकाधिपत्याभिमानोविनष्टः ८ स्फुरद्रत्नकेयूरहाराभिरामंधराभारभूतासुरानीकदावं शरच्चंद्रवक्त्रंलसत्पद्मनेत्रंदुराचारपारंभजे राघवेशम् ९ सुराधीशनीलाश्मनीलांगकांतिविराधादिरक्षोगणालोकशांति किरीटादिशोभंपुरारातिलाभंभजे रामचंद्ररघूणामधीशम्१० लसच्चंद्रकोटिप्रकाशादिपीठेसमासीनमंकेसमाधायसीतां स्फुरद्धेमवर्णांतडित्पुंजभासंभजेरामचंद्रंनिवृत्तार्तितंद्रम् ॥ ११ ॥ इत्यध्यात्मरामायणोक्तंरामचंद्रस्तोत्रम् ॥

इतिस्तुत्वाप्रजापालराजन्नाशाम्यमंगलं शंखतीर्थचसंप्रोक्ष्यगीतनृत्यादिनाहरिं परितोष्याथसंपूज्यवैष्णवान्नारयानकं भक्तवतसमारंभ्यगीतवादित्रघोषकैः आगत्यमंदिरेकृत्वामहानीराजनंप्रभोः विसृज्यवैष्णवान्देवभुर

वैश्यसुखंस्वपेत् इतिशयनोत्सवः मदनरत्नेमहाभारते आषाढेचासितपक्षेएकादश्यामुपोषितः चातुर्मास्यव्रतं
कुर्याद्यात्किंचिन्नियतोनरः सनत्कुमारस्तु चातुर्मास्यव्रतारंभस्यकालांतरमप्याह एकादश्यांतुगृह्णीयादशक्तौ
कर्कटस्यवा आषाढ्यांवानरोभक्त्याचातुर्मास्योदितंव्रतमिति अस्यचप्रारंभोगुर्वस्तादावपिकार्यः तथाचवृद्धगा
र्ग्यः नशैशवंनमौढ्यंचशुक्रगुर्वोर्नवातिथेः खंडत्वंचिंतयेच्चादौचातुर्मास्यविधौनरः तच्चाविशेषान्नियमव्रतानांप्र
थमारंभविषयमपि यदपिहेमाद्रौव्रतप्रकरणे भविष्ये असंक्रांतंतथामासंदैवेपित्र्येचकर्मणि मलमासमशौचं
चवर्जयेन्मतिमान्नरइति तच्छ्रावणेवर्जयेच्छाकमित्यादिनाश्रावणादिमासविशेषविहितव्रतानुवृत्त्यर्थं स्पष्टमासे
विशेषाख्याविहितंवर्जयेन्मलइतिवचनात् चातुर्मास्यव्रतानित्वंतरामलमासेप्यनुवर्त्तंतएवेत्यपर इतिमयूखे ए
तद्वचनंचातुर्मास्यप्रकरणेपठितमपिअसंबद्धार्थत्वात्पूर्वानुमंत्रणन्यायेनाप्रोत्कृष्टव्यमितिज्ञेयं प्रकरणानिवेशोपिवाप्र
थमारंभविषयंज्ञेयमितिनिर्णयसिंधौ वस्तुतस्तुअधिमासनिपातेऽपिह्येषएवविधिक्रमइतिवचनेन चातुर्मास्यव्रता
रंभानंतरंसमाप्तेः प्रागतरामलमासपातेऽनुवृत्तिं विधाय तेनैतद्वचनंतत्प्रकरणेपठितमपितद्भिन्नविषयं एकाद
श्यामशौचेपूर्णिमायांकर्कसंक्रांतौवारभेत् त्रितयेप्यशौचेप्रथममतोनारंभएव आरब्धेसूतकंनस्यादनारब्धेतुसूत
कमितिविष्णूक्तेः द्वितीयारंभस्तुभवत्येव प्रतिवर्षंचयः कुर्यात्देववैसंस्मरन्हरिं देहांतेतिप्रदीप्तेनविमानेना
र्कवर्चसा मोदतेविष्णुलोकेसौयावदाभूतसंप्लवमितिहेमाद्रौ भविष्यवचने नप्रतिवर्षंक्रियमाणस्यैकफलसंबंधेनै
कव्रतत्वेनप्रथमारंभस्यवृत्तत्वादिति यत्त्वचनदीपिकायांस्कांदे अशुचिर्वाशुचिर्वापियदिस्त्रीयदिवापुमान् व्रत
मेतन्नरःकुर्यान्मुच्यतेसर्वपातकैरिति तदारभोत्तरंबोध्यम् ॥ चातुर्मास्यव्रतानिभविष्योत्तरीयेतिहासप्रसंगेनपर्वमे
वोक्तानि अथचातुर्मास्यवर्ज्यानिभविष्ये श्रावणेवर्जयेच्छाकंदधिभाद्रपदेतथा दुग्धमाश्वयुजेमासिकार्त्तिकेचामि

पत्यजेत् द्विदलत्यजेत्यपिपाठः प्राण्यंगचूर्णचर्मांवुजंवीरंवीजपूरकं अयज्ञशिष्टमन्नाद्यंयद्विष्णोरनि वेदित दुग्धमन्नंमसूरंचमांसमष्टविधमतं रुच्यतत्तद्देशलभ्यंफलमूलादिवर्जयेत् ॥ पाद्मेकार्तिकमाहात्म्ये द्वि जक्रीतारसाः सर्वेलवणंभूमिजंतथा ताम्रपात्रस्थितगव्यंजलपल्वलसंस्थितं आत्मार्थंपाचितचान्नमशितंतत्स्मृ तंवुधैः जंवीरंराजमाषांश्चमूलकंगृंजनंतथा कूष्मांडंचेक्षुदंडंचचातुर्मास्येत्यजेद्बुधः तथा विशेषाद्बदरींधात्रींकू ष्मांडंतिंतिणींत्यजेत् जीर्णधात्रीफलंग्राह्यंकथंचित्कायशोधनमिति तथा निष्पावान्राजमाषांश्चमसूरान्संचि तानिच वृंताकंचकलिंगंचसुप्तेदेवेनभक्षयेत् स्कांदे चत्वार्येतानिनित्यानिचतुराश्रमवर्त्तिनां प्रथमेमासिकर्तव्यं नित्यंशाकव्रतंनरैः द्वितीयेमासिकर्तव्यदधिव्रतमनुत्तम पयोव्रतंतृतीयेतुचतुर्थेपिनिशामय द्विदलवहुवीजंच वृंताकंचैववर्जयेत् नित्यान्येतानिविप्रेंद्रव्रतान्याहुर्मनीषिणः स्कांदे वार्षिकांश्चतुरोमासान्प्रसुप्तेवैजनार्दने मंचख ट्वादिशयनंवर्जयेद्भक्तिमान्नरः अनृतौवर्जयेद्भार्य्यांमांसंमधुपरौदनं पटोलंमूलकंचैववृंताकंचनभक्षयेत् शाकशब्द श्चदशधारूढः मूलपत्रकरीराग्रफलकांडाधिरूढकाः त्वक्पुष्पकवकंचैवशाकदशविधंस्मृतमित्युक्तेः अधिरूढंत्र्यं कुरः स्मृतिकौस्तुभे मूलपत्रेत्यभियुक्तोक्तेःशाकशब्दस्यव्यंजनतयाप्रसिद्धेश्चैव फलमूलादिषूपसंहारः लोकव्यव हारादितियत्तुतत्कालोद्भवाःशाकावर्जनीयाःप्रयत्नतः वहुवीजमवीजंचविकारिंचविवर्जयेदितिभविष्यवचनंतत्प्र यत्नात् इतिविशेषग्रहणात् एतेषांशाकानांदोषाधिक्यज्ञापनार्थं वहुवीजमितिचह्याधिकवीजवत्फलमित्यर्थः अवीजं विकारीतिपदद्वयेनकालादिविकृतंविकारवशेनाविनष्टजंफलमुच्यते चकारद्वयमेकस्मिन्धर्म्मिणिविशेषद्वयसूचनार्थं आचारप्रदीपे वृंताकंचकलिंगंचविल्वोदुंवरभिस्सटाः उदरेयस्यजीर्यंतितस्यदूरतरोहरिः भिस्सटादग्धान्नं भिस्स टेदीर्घपाठेनभीःसदाश्लेष्मांतकमितिधन्वंतरिनिर्घंटुः यत्तुनृसिंहपरिचर्य्यायांवृंताकंसदावैष्णवैर्वर्ज्यं येभक्षयंतिवृं

तांकेतपांडूरतरोहारिरित्यादिनिदाश्रवणादिति तत्श्वेतवृंताकपरंतथाचपराशरःपलांडुंश्वेतवृंताकंकुसुंभंवनकट कंनालिकाचालपुष्पचभुक्त्वादिनमभोजनं अत्रापिपलांडुमितिश्वेतपलांडवेवोपसहि्यतइतिमाधवः देहली दीपकन्यायेनतथैवयुक्तमितितदाशयः एतान्यातुररूपाभिषक्क्रियापाद्यप्रतिषिद्धानीतिसुमतुः तथाचतुर्ष्वपिहिमा सेषुहविष्याशीनपरमभागिति हविष्याणिचपरिभाषायाद्रष्टव्यानि महाभारतेदानधर्मेषु कश्चिद्धर्मंप्रवक्ष्यामिमानु षाणांसुखावहमिति प्रक्रम्य चतुरोवार्षिकान्मासान्योददातितिलोदक भोजनंचयथाशक्तिब्राह्मणेवेदपारगे अ ग्निकार्यंचकर्तव्यंपरमान्नेनभोजनं दीपकश्चापिकर्तव्यःपितॄणांसतिलोदकः एतेनविधिनामर्त्यः श्रद्दधानःस माहितः पशुमधशतस्येहफलंप्राप्नोतिपुष्कलमिति अत्र क्रमेण पैतृकाण्येव तर्पणश्राद्धदीपदानानिविधी यंते अग्निकार्यमन्नोकरणं परमान्नेनेत्यस्यमध्यमणिन्यायेनान्वयः अन्यच्चचातुर्मास्यनियमाभविष्योत्तरोक्तेति हासेद्रष्टव्याः ॥ अथचातुर्मास्यव्रतसमाप्तौविशेषउच्यते चातुर्मास्येतुयत्त्यक्तंभक्ष्यभोज्यादिकंच यत् चतुरोवार्षिकान्मासान्नियमोयस्ययःकृतः कथयित्वाद्विजेभ्यस्तद्दद्याद्भक्त्यासदक्षिणम् दत्त्वाविसर्जयेद्विप्रान् ततोभुंजीतचस्वयमिति अथतत्तद्वस्तुत्यागव्रतसमाप्तौदेयद्रव्याणि काशीखंडे पत्रभोजीभवेद्यूजेकांस्यंत्याज्यं प्रयत्नतः कांस्यस्यनियमेदद्यात्कांस्यंसर्पिःप्रपूरितं ऊर्जेनभक्षयेत्क्षौद्रमतिक्षुद्रगतिप्रदम् मधुत्यागेघृतंदद्यात्पा यसंचसशर्करं अभ्यंगेभ्यवहारेचतैलमूर्जेविवर्जयेत् तैलत्यागेतिलान्दद्यात् द्रोणमात्रान्सकांचनान् वाहुलेकांस्यभोजीयः सक्तुभिःपूयशोणिते मांसाशिनोपियेभूनास्त्यजेयुस्तेपिकार्त्तिके नियमेमत्स्यमां सानांदद्यादुकार्त्तिकेव्रतीकूष्मांडानिससाषानिविंशस्वर्णयुतान्यपि विंशदितिकूष्णांडविशेषणं कार्तिकेमौ नभोजीयःसोश्नात्यमृतमेवहि संघटांसवलांभौनी सहिरण्यांप्रदापयेत कार्तिकेलवणत्यागे...

पत्यजेत् द्विदलंत्यजेत्यपिपाठ प्राण्यंगचूर्णंचर्मांबुजंबीरंबीजपूरकं अयज्ञशिष्टमन्नंचयद्विष्णोरनि वेदित दुग्धमन्नंमसूरंचमांसमष्टविधमतं रुच्यतत्तद्देशलभ्यंफलमूलादिवर्जयेत् ॥ पाद्मेकार्तिकमाहात्म्ये द्वि जक्रीतारसाः सर्वेलवणंभूमिजंतथा ताम्रपात्रस्थितगव्यंजलपल्वलसंस्थितं आत्मार्थंपाचितचान्नमशितंतत्स्मृ तंवुधैः जंबीरंराजमाषांश्चमूलकंगृंजनंतथा कूष्मांडंचेक्षुदंडंचचातुर्मास्येत्यजेद्बुधः तथा विशेषाद्बदरींधात्रींकू ष्मांडंतिंतिणींत्यजेत् जीर्णधात्रीफलंग्राह्यंकथंचित्कायशोधनमिति तथा निष्पावान्राजमाषांश्चमसूरान्संचि तानिच वृंताकंचकलिंगंचसुप्तेदेवेनभक्षयेत् स्कांदे चत्वार्येतानिनित्यानिचतुराश्रमवर्त्तिनां प्रथमेमासिकर्तव्यं नित्यंशाकव्रतंनरैः द्वितीयेमासिकर्तव्यंदधिव्रतमनुत्तम पयोव्रतंतृतीयेतुचतुर्थेपिनिशामय द्विदलंबहुवीजंच वृंताकंचैववर्जयेत् नित्यान्येतानिविप्रेंद्रव्रतान्याहुर्मनीषिणः स्कांदे वार्षिकांश्चतुरोमासान्प्रसुप्तेचजनार्दने मंचख ट्वादिशयनंवर्जयेद्भक्तिमान्नरः अनृतौवर्जयेद्भार्य्यांमांसंमधुपरौदनं पटोलंमूलकंचैववृंताकंचनभक्षयेत् शाकशब्द श्चदशधारूढः मूलपत्रकरीराग्रफलकांडाधिरूढकाः त्वक्पुष्पकवकंचैवशाकंदशविधंस्मृतमित्युक्तेः अधिरूढंअं कुरः स्मृतिकौस्तुभे मूलपत्रेत्यभियुक्तोक्तेःशाकशब्दस्यव्यंजनतयाप्रसिद्धेष्वेव फलमूलादिषूपसंहारः लोकव्यव हारादितियत्तुतत्तत्कालोद्भवाःशाकावर्जनीयाःप्रयत्नतः वहुवीजमवीजंचविकारिंचाविवर्जयेदितिभविष्यवचनतत्प्र यत्नात् इतिविशेषग्रहणात् एतेषांशाकानांदोषाधिक्यज्ञापनार्थं वहुवीजमितिचह्याधिकवीजवत्फलमित्यर्थः अवीजं ‍इतिपदद्वयेनकालादिविकृतंविकारवशेनविनष्टजंफलमुच्यते चकारद्वयमेकस्मिन्धर्म्मिणिविशेषद्वयसूचनार्थं ‍ंचविल्वोदुंवरभिस्सटाः उदरेयस्यजीर्यंतिवस्यदूरतरोहरिः भिस्सटादग्धान्नं भीस्स

अग्निहोत्रंयथानित्यंवेदस्याध्ययनंयथा ब्राह्मणस्यतथानित्यंतप्तचक्रांकधारणम् इतिपाद्मे एतत्प्रकारस्तुरामर्चन चंद्रिकातोज्ञेयः पृथ्वीचंद्रोदयादिग्रंथेषुतु यस्तुसंतप्तशंखादिलिंगाचिह्नतनुर्नरः ससर्वयातनाभोगीचंडालोजन्मकोटिषु द्विजंतुतप्तशंखादिलिंगांकिततनुंनराः संभाष्यरौरवंयांतियावदिंद्राश्चतुर्दशेतिबृहन्नारदीयोक्तेः शंखचक्राद्यंकनंचगीतनृत्यादिकतथा एकजातेरयंधर्मोनजातुस्याद्द्विजन्मनः शंखचक्रेमृदायस्तुकुर्यात्सप्तायसेनवा सशूद्रवद्बहिःकार्यःसर्वस्माद्द्विजकर्मणः यथाश्मशानजंकाष्ठमनर्हंसर्वकर्मसु तथाचक्रांकितोविप्रःसर्वकर्मसुगर्हितःतथा शिवकेशवयोरंकाञ्छूलचक्रादिकान्द्विजःनधारयेतमतिमान्वैदिकेवर्त्मनिस्थितइति विश्वाश्वलायनादिवचनात् ऋग्वेदादिश्रुतीनांतुधर्मादिस्तुतिपरत्वात् अन्यश्रुतीनांच तथाविधानामनुपलंभादुदाहृतपाद्मवचनस्यचाकरग्रंथेष्वनुपलंभाच्चक्रादिधारणं शूद्रविषयमेवेत्युक्तं यद्यपिनिषेधस्य प्रतिसापेक्षत्वा द्विधिंविना चतद्योगादुपजीव्यविरोधेनएकजातेरयधर्मइत्यनेनसामान्यवाक्यानामुपसंहारः द्विजातिनिषेधोनित्यानुवादइति तदाशयइतिनिर्णयसिंधौ यद्यपिविश्वाश्वलायनादिवचनेषुमृदापिशंखचक्रादिधारणनिषेधःप्रतीयते तथापि शंखचक्रांकितोविप्रःश्मशानेप्यधियतेपिचेत् प्रयागेयागतिःप्रोक्तासागतिस्तस्यनारदेति विष्णवायुधांकितंचिन्हंगोपीचंदनमृत्स्नया प्रयागादिषुतीर्थेषुसगत्वाकिंकरिष्यतीत्यादिवाराहपुराणवचनैर्मृदाकर्तव्यतावगमेनविहितप्रतिषिद्धत्वाद्विकल्पोऽवसीयतइत्यलमनयाप्रसक्तचिंतया यतःपंचरात्रागमेमुद्राधारणस्याधिकारिविशेषमपुरस्कृत्यविहितत्वान्मुद्राधारणंसर्वपुरुषधर्मइतिकेचिदाहुः ॥ तथाहिपंचरात्रागमे तद्धारणविधिंवक्ष्येमहापातकनाशनं शंखचक्रंसमाराध्यगंधपुष्पादिभिःशुभैः इत्युपक्रम्याग्निनैवसुसंयुक्तंचक्रमादायमामकं दक्षिणंबाहुमूलंस्वंदहेद्विनतसाधकः उच्चारयन्निमंमंत्रंधूदेशमांविचिंतयन् सुदर्शनमहाज्वालकोटिसूर्यसमप्रभ अज्ञानांधस्यमेनित्यंविष्णोर्मार्गंप्रदर्शय इमंमंत्रं

सदा त्यक्ता सर्वेरसास्तेनतत्त्यागीगांप्रदापयेत् भूशय्यांकार्तिकेकुर्वन्नमंचंसंस्पृशेद्व्रती पर्य्यंकभूशयोदद्यात्सतू लंसोपधानकम् फलत्यागेफलंदेयरसत्यागेचतद्रसम् धान्यत्यागेचतद्धान्यमथवाशालयःस्मृताःधेनूर्दद्यात्प्रयत्नेन सालङ्कारा:सकाञ्चनी.एकतः सर्वदानानिदीपदानंतथैकतः कार्तिकेदीपदानस्यकलांनार्हंतिषोडशीं.तथा दीपय कार्तिकेदद्यादखंडंघृतवर्तिकं मोहांधतमसंप्राप्यनसगच्छातिदुर्गतिमिति ॥ चातुर्मास्यव्रतासंभवेकिंचिद्व्रतम वश्यकार्य्यं चतुर्थेपिचमासेपुनसामर्थ्यंव्रतेयदि तदोर्जव्रतिनाभाव्यमप्यर्धफलमिच्छता अव्रतःकार्तिकोयेषांगतो मूढधियामिह तेषांपुण्यस्यलेशोपिनभवेत्सूकरात्मना।मिति काशीखंडात् अत्रैवदेवार्थस्वस्तिकादिकमपिकर्त्तव्यमि तिपाद्मे इदंचकार्तिकशुक्लद्वादश्यावक्तव्यमपिप्रसंगादत्रलिखितं तथा भार्गवार्चनदीपिकायांपाद्मे शयनीबोधि नीमध्येशमीदूर्वापमार्गकैः भृंगराजेनदेवांस्तुनार्चयेतिकदाचनेतिहेमाद्रौपाद्मे आषाढादिचतुर्मासानभ्यंगंवर्जयेन्न रः समाप्तौचपुनर्दद्यात्तिलतैलघृतंघटम् आषाढादिचतुर्मासंवर्जयेन्नखकृतनं वृंताकंगृंजनंचैवमधुसर्पिर्घटान्वितं कार्तिक्यांतुपुनर्हैमब्राह्मणायनिवेदयेत् अन्यान्यपिवर्जनसंकल्परूपाण्यन्येभ्योग्रंथेभ्योज्ञेयानि ।॥ ०

आषाढशुक्लद्वादश्यांतप्तमुद्राधारणमुक्तरामार्चनचंद्रिकायांशौनकेन तप्तमुद्रांकधारणंकर्तव्यंवैष्णवैरेतत्संप्रदायानु रोधतः शयन्यांचैवबोधिन्यांचक्रतीर्थेतथैवच शंखचक्रविधानेनवह्निपूतोभवेन्नरइति तथा पवित्रंतेविततंब्रह्म णस्पतेप्रभुर्गात्राणिपर्येषिविश्वतः अतप्ततनूर्नतदामोअश्नुतेशृतासइद्वहंतस्तत्समासत ॥ तपोष्पवित्रंविततंदिव स्पदेशोचंतोअस्यतंतवाव्यवास्थिरन् इतिऋग्वेदे सहोवाचयाज्ञवल्क्यस्तप्तमुद्राात्माहितायप्रेम्णाहरिंभजेत् सु श्लोकमौलेर्वमोण्यग्निनासध्वनइतिशातपथिकश्रुतौ अतोहिष्णोव्रजचक्रेसुतप्तेजन्मांभोधिंतर्त्तवेचर्पणींद्राः मूलेवा व्होर्दधतेन्येपुराणालिंगान्यंगेतावकान्यर्पयंति इतिसामवेदे उरुक्रमस्यचिन्हैरंकितालोकेसुभगाभवामइत्यथर्ववेदे

अग्निहोत्रंयथानित्यंवेदस्याध्ययनंयथा ब्राह्मणस्यतथानित्यंतप्तचक्रांकधारणम् इतिपाद्मे एतत्प्रकारस्तुरामचंद्र
चंद्रिकातोज्ञेयः पृथ्वीचंद्रोदयादिग्रंथेषुतु यस्तुसंततप्तशंखादिलिंगाचिह्नतनुर्नरःससर्वयातनाभोगीचंडालोजन्मकोटि
षु द्विजंतुतप्तशंखादिलिंगांकिततनुंनराः संभाष्यरौरवंयांतियावदिंद्राश्चतुर्दशेतिवृहन्नारदीयोक्तेः शंखचक्राद्यं
कनंचगीतनृत्यादिकतथा एकजातेरयधर्मोनजातुस्याद्द्विजन्मन शंखचक्रेमृदायस्तुकुर्यात्तप्तायसेनवा सशूद्रव
द्बहिःकार्यःसर्वस्माद्द्विजकर्मणः यथाश्मशानजंकाष्ठमनर्हंसर्वकर्मसु तथाचक्रांकितोविप्रःसर्वकर्मसुगर्हितःतथा
शिवकेशवयोरंकाञ्छूलचक्रादिकान्द्विजःनधारयेतमतिमान्वैदिकेवर्त्मनिस्थितइति विश्वाश्वलायनादिवचनात् ऋ
ग्वेदादिश्रुतीनांतुधर्मादिस्तुतिपरत्वात् अन्यश्रुतीनांच तथाविधानामनुपलंभादुदाहृतपाद्मवचनस्यचाकरग्रंथेष्व
नुपलंभाच्चक्रादिधारणं शूद्रविषयमेवेत्युक्तं यद्यपिनिषेधस्य प्रतिसापेक्षत्वात् द्विधिविना,चतद्योगादुपजीव्यविरोधे
नएकजातेरयधर्मइत्यनेनसामान्यवाक्यानामुपसंहारःद्विजातिनिषेधोनित्यानुवादइति तदाशयइतिनिर्णयसिंधौ
यद्यपिविश्वाश्वलायनादिवचनेपुमृदापिशंखचक्रादिधारणनिषेधःप्रतीयते तथापि शंखचक्रांकितोविप्रःश्मशानेपि
यतेपिचेत् प्रयागेयागतिःप्रोक्तासागनिस्तस्थनारदेति विष्णवायुधांकितंचिन्हंगोपीचंदनमृत्स्नया प्रयागादिपुतीर्थे
पुसगच्छाकिकरिष्यतीत्यादिवाराहपुराणवचनैर्मृदाकर्तव्यतावगमेनविहितप्रतिषिद्धत्वाद्विकल्पोऽवसीयतइत्यलम
नयाप्रसक्तचिंतया यत पंचरात्रागममुद्राधारणस्याधिकारिविशेषमपुरस्कृत्यविहितत्वान्मुद्राधारणंसर्वपुरुष
धर्मइतिकेचिदाहुः ॥ तथाहिपंचरात्रागमे तद्धारणविधिंवक्ष्येमहापातकनाशनं शंखचक्रंसनाराध्यगंधपुष्पा
दिभिःशुभैः इत्युपक्रम्याग्निनैवसुसंयुक्तचक्रमादायमामकं दक्षिणंबाहुमूलस्थंदहेद्विनतसाधकः उच्चारयन्निमंमं
त्रंभ्रूदेशमाविचिंतयन् सुदर्शनमहाज्वालकोटिसूर्यसमप्रभ अज्ञानांधस्यमेनित्यंविष्णोर्मार्गंप्रदर्शय इमंमंत्रं

समुच्चार्यदक्षिणंबाहुमंकयेत् पांचजन्यनिजध्यानध्वस्तपातकसंचय पाहिमांपापिनंघोरंसंसारार्णवतारण इति मंत्रंसमुच्चार्यदहेत्सव्यभुजंतथेति उक्तएवंसनत्कुमारसंहितादिष्वपिसाधारण्येनचक्रादिधारणविधायकानिवचनानि द्रष्टव्यानि एवंस्मृतिपुराणादिवचनान्यपिचक्रादिधारणविधायकान्युपलभ्यंते वामनपुराणे लीलयापिलिखेद्यस्तुबाहुमूलेसुदर्शनम् कुलकोटिंसमुद्धृत्यसगच्छेद्वैष्णवंपदमितिकूर्मपुराणे चक्रांकितधराःकेचित्कुलेविष्णुपरिग्रहाइति महाभारतेभीष्मपर्वणि ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चकृतलक्षणैः अर्चनीयश्चसेव्यश्चनित्ययुक्तैःस्वकर्मस्थिति चिह्नंलक्ष्मचलक्षणमित्यभिधानकोशादत्रलक्षणशब्देनतप्तचक्रादिचिह्नमेवविवक्षितं यज्ञोपवीतादीनांसर्वसाधारणत्वाभावात् विष्णुधर्मेयमकिंकरसंवादे भवतांभ्रमतामत्रविष्णुसंश्रयमुद्रया आक्रांतोगोचरोनैवभविष्यति नरःक्वचित् इतिहाससमुच्चये पुंडरीकाख्यानेकेचिच्चक्रांकितास्तत्रप्राणिनोविचरंतिहि विचरंतियथायोगंपुण्यतीर्थप्रशंसिनइति तत्सिद्धंचक्रादिधारणसर्वपुरुषधर्मइति अन्येतुपंचरात्रागमविहितंसुदर्शनादिधारणंशूद्रादीनांत्रैवर्णिकानांचधर्मःतंत्रमार्गश्चवैदिकमार्गान्मार्गांतरएव वैदिकंतुपुरस्कृत्वायश्चतंत्रंसमाचरेदितिवचनेनवैदिकतांत्रिककर्मणांक्रमविधायकेनवैदिककर्मानुष्ठानानंतरंतांत्रिकसीमंतोन्नयनादिषोडशकर्मणाविलक्षणरीत्याविहितत्वात् एवंचतांत्रिकोपनयनादिसंस्कृतस्यैवगुरुलघुकल्पाश्रयणेनतांत्रिकपूजनमुच्चावचफलार्थतयाविधीयतेसंस्कारैर्वैष्णवैःशुद्धःपूजार्होभवतिध्रुवमितिपांचरात्रवचनेनतांत्रिकपूजाधिकारिसंस्कारकत्वेनतेषांविधानात् अत्रच प्रकरणबलात् पूजाशब्देनतांत्रिकपूजैवगृह्यते तांत्रिकमार्गस्यचवैदिककर्म्मानुष्ठानेनसहनित्यवदनुष्ठाननियमःवैदिकानांतांत्रिककर्म्माननुष्ठानेप्रत्यवायेशोधकवचनाभावात् किंतुतंत्रमार्गेणश्रेयःप्राप्तुमिच्छतःस्वेच्छयातत्रमार्गप्रवेशःएवंचैतादृशतंत्रमार्गप्रविष्टानां प्रत्येकशंखचक्राद्यंकनशिखायज्ञोपवीतादिधारणवत्तांत्रिककर्म्मकर्तृसंस्काररूपतयाविधीयते ननु

स्वतंत्रफलसाधनपापफलवत्तांत्रिकपूजाविधिसन्निधिपठितस्यप्रधानकर्म्मत्वायोगेनांगत्वस्यैवौचित्यात् फलव
त्सन्निधावफलंतदंगमितिन्यायात् अतएवपांचरात्रोदिव्यासिद्धांतप्रतिपादितं तत्तत्तंत्रप्रवेशाद्यंतत्तत्तंत्रोक्तवर्त्मना दी
क्षाचिह्नादिकंकार्य्यंवैष्णवाग्र्यौयथाविधिः यथाकृष्यादिसंस्कारात्क्षेत्रेसस्यफलोदयः तथातापादिसंस्कारात्पु
रुषस्यफलोदयः भगवच्चिन्हसत्सोभगवच्छास्त्रचोदिते धर्मेयदिनवर्तेतघातयेत्तंमहीपतिरिति सनत्कुमारसंहि
तायामपि तत्रसंस्कारयुक्तस्तुतंत्रमार्गमनाश्रयन् केवलवैदिकंमार्गंसेव्यमानःपतत्यधःउपवीतादिवद्धार्याः शंखच
क्रगदाध्वजाःतंत्रमार्गप्रवृत्तस्यवैष्णवस्ययथाविधि अप्रसन्नप्रवृत्तानांचिन्हमत्रध्वजोयथा तंत्रमार्गप्रवृत्तानांत
थाचक्रादिधारणंचक्रादिधारणंपुंसांहरिसंबधवेदनं यतिब्रह्मानिमित्तंहिकलयाहिविभूषणमिति एवंच सुदर्शनंधार
यित्वावन्हितप्तंद्विजोत्तमःउपनीयविधानेनपश्चात्कर्म्मसुयोजयेदितिवचनेनसुदर्शनादिधारणस्यतांत्रिकोपनयनांग
त्वेनप्रदीयते उपवीतादिवद्धार्य्या इतिसनत्कुमारवचनेनैवकुर्य्यात् उपवीतीशिखीविप्रश्चक्रलांछनसंयुतः
चक्रलांछनहीनस्यविप्रस्यविफलाक्रियेति यमवचनेनापि लांछनहीनस्य तांत्रिकाक्रियावैकल्यमेवप्रतिपाद्यते
पूर्वोक्तप्रमाणैश्चक्रादिलांछनस्यतांत्रिकक्रियायामेवांगत्वावगमात् चक्रांकितायदत्तानिहव्यकव्यानियानिवै रक्षां
सितानिगच्छंतिनपित्रश्चदेवताइत्यादिवचनैःकेवलवैदिकानामुक्ताचारस्यनिषेधाच्च अथपूर्वोक्तरीत्यातप्तमुद्राधा
रणस्यतांत्रिकविषयत्वमस्तुगोपीचंदनादिकृतसुदर्शनस्यसर्वस्वरूपसाधारणंस्यात् गोपीचंदनतोनित्यंलांछितंय
स्यविग्रहम् शंखचक्रगदापद्मैर्देहेतस्यसदाहरिः कृष्णायुधांकनंपुण्यंगोपीचंदनमृत्स्नया प्रयागादिषुतीर्थेषुस
गत्वाकिंकरिष्यति ललाटेतुगदाधार्यामूर्ध्निपाशदरौतथा भ्रूमध्येनंदकंचैवशंखचक्रौभुजद्वये इत्यादिपद्मपुराण
वचनेषुपुरुषविशेषाश्रवणादितिचेन्न अनारभ्याधीतस्याग्निष्टोमेप्रहृणक्रीत्यादिवाक्यादग्निष्टोमार्थत्ववदुत्पत्तिवा

र्च्यसंनिधावध्रूयमाणयजमानसंबंधस्यापि गोपीचंदनादिकृतचक्रादिधारणस्य गोपीचंदनस्तोयैः शंखचक्रा
दिलांछितःस्वगृहेपूजयेद्देवंपांचरात्रविधानतइतिवाक्यात्तांत्रिकपूजांगत्वावगमादित्याहुः - परेतु वैष्णवसंस्काराः
सर्वेपिविष्णवालयपूजार्थाएव ननुगृहेविष्ण्वाराधनार्थाः श्रीशास्त्रेसंकर्षणाद्युत्सवांतानामालयपूजाप्रकाराणा
मेवबहुशः प्रपंचमानतयाआलयपूजायाएवप्रकरणत्वौचित्यात् गृहाराधनस्यक्काचित्कविधानप्रकरणीयत्वायो
गात् तथाचसुदर्शनधारणमालयपूजकदेवलकादिविषयमेवेत्याहुः वस्तुतस्तु पांचरात्राद्यागमांतर्गतानांद्विजा
त्यादिपदघटितवचनानांपांचरात्राद्यागमोक्तदीक्षासंस्कृतद्विजातिविषयत्वेन प्रामाण्यंव्यवस्थापित द्विजात्यादि
पदघटितस्यनिषेधशास्त्रस्यापितद्विषयत्वमेवयुक्तं तथाचविहितप्रतिषिद्धत्वाद्ग्रहणं ग्रहणत्यागावाज्यभागवद्वि
कल्पोमुद्राधारणस्यवैदिकतांत्रिकदीक्षासंस्कृतानां नचशुद्धवैदिकानामेवभ्रांत्यादिप्रसक्तचक्रादिधारणंनिषिध्यत
इतिवाच्यं बहूनानिषेधवाक्यानांविधायकत्वेसंभवति नांतरिक्षेनदिवेत्यादिवदनुवादकत्वानौचित्यात् नचाष्टदोषदु
ष्टविकल्पापत्तिःअप्रामाण्यायपर्यायानुवादकत्वापेक्षयाफलमुखत्वेनविकल्पस्यस्वीकर्त्तुमुचितत्वात् निषेधवाक्या
निबहूनिपुराणादिषूपलभ्यंते स्वशरीरेऽन्यदेहेवाअनंककरणाद्द्विजइति इदंहिमनुवचनंनब्रह्मविष्णुरुद्राणांचिन्ह
मेकस्यधारयेदितिवचनानुरोधेनद्विजशब्दप्रतिपाद्यानांब्राह्मणक्षत्रियवैश्यानां ब्रह्मविष्णुरुद्रचिन्हांकनरूपनिषेध
परंशातातपस्मृतौनाकयेन्नदेहेद्वात्रंदेवतायुधलांछनैः अकयेद्यदिवामोहात्पतत्येवनसंशयइतियमस्मृतौनांकयेन्नदेहे
द्वात्रंदेवतायुधलांछनैःदहनाल्लेखनाद्विप्र पातित्यंयातितत्क्षणात् इतिबौधायनस्मृतौनांकनायदहेदेहंदहेच्चेत्कामका
रत-नाधिकुर्वतिदग्धागान्श्रौतस्मार्तेषुकर्मस्विति अन्यत्रापि ततश्चक्रधराश्चैवपंचायुधधराश्चापि पाखंडाःसर्वएवैते
सर्वकर्मबहिष्कृताःइतिस्मृतिसारसंग्रहे चैडालेपतितंव्यंगतप्तचक्रधरद्विजं सूतिकामाग्निदंदृष्ट्वासवासाजलमाविशेदि

तिर्यग्यांतरे कुक्कुटश्चवराहश्चतप्तचक्रधरस्तथा रजस्वलाचपंढश्चपंचैतेश्राद्धदूषकाः चक्रांकितायदत्तानिहव्यक व्यानियानिवै रक्षांसितानिगच्छंतिनापिस्त्वन्नचदेवताः पाखंडिनश्चपतितायेचचक्रांकिताद्विजाः पुण्यकर्मणितेषां वैसन्निधिर्नेष्यतेक्वचित् तप्तचक्रांकितंविप्रनपश्येत्पुण्यकर्मणि तंदृष्ट्वाचद्विजोभूमावशुद्धिंसहसाप्नुयात् अज्ञाना दथवालोभादंकितोवासुदर्शनम् धत्तेकुलघ्नंतंदृष्ट्वासवासाजलमाविशेत् भुजाग्रेसलिलैनैवविलिखेद्यः सुदर्श नम् वेदशास्त्रविनीतोपिदहत्यासप्तमंकुलमिति चक्रांकिततनुर्वापिराजन्लिंगांकितोपिवा नाधिकारीसविज्ञेयःश्रौ तस्मार्तेषुकर्मसु शंखचक्रंचलिंगंचयोमूढोधारयत्यसौ पाखंडःसहिविज्ञेयः सर्वकर्मवहिष्कृतः पाखंडिनंपा शुपतंविकर्मस्थंनिरीश्वरम् विवासयेत्स्वराष्ट्रात्तुसर्वानेतानवैदिकानिति ताम्ररौप्यसुवर्णादिकृतचक्रादिलांछनम् विधीयतेहिशूद्राणांनद्विजानांकथंचनेति नारदवचनं आदित्यपुराणे वेदेषुयज्ञभागेषुयस्यनास्त्यधिकारिता स तापयित्वाचक्रादिधारयेत्स्वभुजद्वयमिति शंखचक्राद्यंकनंचनृत्यगीतादिकंतथा एकजातेरयंधर्मोनजातुस्याद् द्विजन्मनः यथाश्मशानजकाष्ठमनर्हंसर्वकर्मसु तथाचक्रांकितोविप्रः सर्वकर्मसुगर्हितः शंखचक्रंमृदाय स्तुकुर्यात्तप्तायसेनवा सशूद्रवद्बहिःकार्यःसर्वस्माद्द्विजकर्मणइति किंच लीलयापिलिखेद्यस्तुवाहुमूलेसु दर्शनम् कुलकोटिंसमुद्धृत्यसगच्छेद्वैष्णवंपदमित्यादिमानवादिवचनैः स्वतंत्रफलार्थत्वविहितस्य सुदर्शनधारण स्यपांचरात्राद्यागमविहितदीक्षाकर्तृसंस्कारकत्वेप्रमाणाभावः नचप्रकरणात्तदवगमः प्रकरणापेक्षयाबलीयसा वाक्येनफलार्थतयाविनियुक्तस्यदुर्बलेनप्रकरणेनविनियोगासंभवात् किंचात्रप्रकरणमेवनसंभवति . परस्पराकां क्षालक्षणंहिप्रकरणं नचफलार्थत्वेनविनियुक्तस्यमुद्राधारणस्यस्वोपकार्याकांक्षास्ति ' नचचक्रलांछनस्यविफली क्रियते पूर्वोक्तवचनेनतांत्रिकजांगत्वेप्यस्त्विति वाच्यं अतःक्रियाशब्देनफलसाधनपंचरात्राद्यागमविहितहोम दि

क्रियायाअभिधानेन पूजादेः क्रियाशब्देनाभिधेयत्वेनतदंगत्वेप्रमाणाभावात् नचवैष्णवत्वस्यसिद्ध्यर्थमित्यादि वचनैर्दीक्षांगत्वावगमः तत्रवैष्णवत्वस्यासिद्ध्यर्थसंभवेनवैष्णवत्वस्यविष्णुभक्तेर्व्यंजकत्वस्यैवप्रतीतेः नचोपनीतादिवद्धार्याः शंखचक्रगदादयः तंत्रमार्गप्रवृत्तस्यवैष्णवस्ययथाविधीतिवचनेन तांत्रिककर्मांगत्वावगमः तद्वचनस्य शंखचक्रादिधारणे तंत्रमार्गप्रवृत्तवैष्णवरूपकर्तृविधायकत्वात् शुद्धतांत्रिकविषयत्वेन मिश्रमार्गप्रवृत्तवैष्णवविषयत्वाभावाच्च एवंचसुदर्शनंधारयित्वावन्हितप्तंद्विजोत्तमः उपनीयविधानेनपश्चात्कर्म सुयोजयेदितिवचने त्वाप्रत्ययः कालमात्रविधायकः नत्वंगत्वबोधकोपिदर्शपौर्णमासाभ्यामिष्ट्वासोमेनयजेतेतिवत् वस्तुतस्तुचक्रांकिततनुर्वापिराजन्लिंगांकितोपिवा नाधिकारीपरिज्ञेयः श्रौतस्मार्त्तेषुकर्मस्विति वृहदाह्निकवचने चक्रांकिततनोः श्रौतस्मार्त्तकर्मस्वधिकारनिषेधःप्रतीयते चक्रांकिततनुश्चतंत्रदीक्षासंस्कृतएव तस्यच वैदिकंतुपुरस्कृत्वापश्चात्तंत्रंसमाचरेदितिवचनेनवैदिकधर्माधिकारप्रतीतेर्मिश्रमार्गप्रवृत्तानांस्फुटंविकल्प सिद्धानिनचकेवलतंत्रमार्गप्रवृत्तानामपिविकल्पःस्यादितिवाच्यं वैदिकाधिकारिणामेवनिषेधविधिविषयत्वेन तत्रैवविकल्पोचित्यात् वैदिककर्माधिकारशून्यानामेवकेवलंतंत्रमार्गाधिकारात् एवंताम्ररौप्यसुवर्णादिकृतंचक्रादिलांछनं विधीयतेहिशूद्राणांनद्विजानांकथंचनेत्यादिस्यपुराणवचने कथमपीति कथंचनेतिपदेनघटितेतांत्रिकदीक्षासंस्कृतत्वेपिचक्रादिधारणनिषेधापत्तेः तस्मात्केवलवैदिकैःशंखचक्रादिधारणंनकार्यं प्रापकप्रमाणाभावात् मिश्रमार्गप्रवृत्तैः पूर्वोक्तदिशादिविकल्पेनानुष्ठेयं केवलतंत्रमार्गप्रवृत्तस्तुनियमेनानुष्ठेयमितिसमासात्प्रकृतानुकृतिपरंपरयेत्यलंव्यवस्था अथमत्स्यपुराणोक्तंविभूतिद्वादशीव्रतं नंदिकेश्वरउवाच शृणुनारद वक्ष्यामि विष्णोर्व्रतमनुत्तमं विभूतिद्वादशीनामसर्वामरविभूषितं कार्तिकेत्वथवैशाखेमार्गशीर्षेतुफाल्गुणे आषाढेवैदशम्यां

तुशुक्लायांलघुभुङ्नरः कृत्वासायंतनींसंध्यांगृहीयान्नियमंबुधः एकादश्यांनिराहारःसमभ्यर्च्यजनार्दनं द्वाद
श्यांद्विजसंयुक्तःकरिष्येभोजनंततःतदाविघ्नेनमेयातुसाफल्यंमधुसूदन ततःप्रभातेवोत्थायकृतस्नानजपःशुचिपूजये
त्पुंडरीकाक्षंशुभमाल्यानुलेपनैः विभूतिदेनमःपादौविशोकायेतिजानुनी नमःशिवायेत्यूरूचकटिंवैविश्वरूपिणे कं
दर्पायनमोमेढ्रमादित्यायनमःकरौ दामोदरायेत्युदरंवासुदेवायचस्तनौमाधवायेत्युरोविष्णोःकंठमुत्कंठिनेनमः श्री
धरायमुखंकेशान्केशवायेतिनारद पृष्ठंशार्ङ्गधरायेतिश्रवणौवरदायवै शिरःसर्वात्मनेब्रह्मन्नमइत्यभिपूजयेत् म
त्स्यमुत्पलसंयुक्तंहैमंकृत्वातुशक्तितः उदकुंभसमायुक्तंह्यग्रतःस्थापयेद्विभो गुडपात्रंतिलैर्युक्तंसितवस्त्राभिवेष्टितं रा
त्रौजागरणंकुर्यादितिहासकथादिकं प्रभातायांतुशर्वर्यांब्राह्मणायकुटुंबिने सकांचनोत्पलंदेवसोदकुंभंनिवेदयेत्
यथानमुच्यतेविष्णुःसदासर्वविभूतिभिः तथामामुद्धराशेषदुःखसंसारकर्दमात् दशावताररूपाणिप्रतिमासंक्रमा
न्मुने दत्तात्रेयंतथाव्यासमुत्पलेनसमन्वितं प्रतिमासंतुकर्तव्यामूर्तयःकांचनेनवै कांचनस्यैवपद्मस्यसंस्थाप्योपरि
पूजयेत् पुष्पधूपादिनैवेद्यैर्भक्ष्यभोज्यैःसदीपकैः वस्त्राभरणैश्चैवयथाविभवसारतः रात्रौजागरणंकुर्याद्गीतनृ
त्यादिभिर्नरः ततःप्रभातेविमलेकृतस्नानादिकक्रियः उपदेष्टुर्दातव्यंसर्वमेतत्समाहृतंप्रतिमासंपुराणज्ञेवेदवेदांग
पारगे ततःसंवत्सरांतेचविश्वेशशक्तिपूर्वकं शक्तिपूर्वकमिति सविभूतिपुरःसरंकृत्वासंपूज्यलवणपर्वतेनसमन्वि
तं लवणपर्वतदानविधिस्तुदानखंडेऽवेक्षणीयः शय्यांसोपस्करांश्रेष्ठांगांचैवोपस्करान्वितां ग्रामंदेशपतिर्दद्यात्
क्षेत्रंग्रामपतिस्तथा निवर्तनक्षेत्रपतिर्भवनंत्वल्पसमृद्धिमत् एवंविभवसारेणपूजयित्वेद्दशागुरुं अन्यानपियथाशक्त्या
तर्पयित्वाद्विजोत्तमान् वस्त्रान्नगोहिरण्यादिसत्त्वमास्थायचोत्तमं यत्रसत्वंतत्रहरिस्त्वौपम्यंप्रोक्तसंशयं यथ्यातिनिः
स्वःपुरुषोभक्तिमान्माधवंप्रति पुष्पार्चनविधानेनसत्कुर्याद्वत्सरत्रय अनेनविधिनायस्तुविभूतिद्वादशीव्रतंकुर्यात्स

पापनिर्मुक्तःपितृणांतारयेच्छतं सप्तजन्मन्यसौमर्त्योविभूतिंप्राप्नुयात्परां रोगदौर्गत्यपापानांभाजनंनोपजायते भ
क्तिश्चयज्ञपुरुषेतस्यजन्मनिजन्मनि प्राप्नुयादच्युतंस्थानमच्युतस्यप्रसादतःइयंचाखंडितंकार्याविभूतिद्वादशीन
रैःसर्वपापप्रशमनीसर्वफलप्रदायिनी इतिकलुषविदारणंजनानांपठतिसदाथशृणोतिवेत्तिभक्त्यामतिमपिचददाति
देवलोकेवसतिचिरंचसपूज्यतेऽमरौघैः इतिमत्स्यपुराणोक्तंविभूतिद्वादशीव्रतं ॥ ॥ अथस्कंदपुराणोक्तंदेवशय
यन्येकादशीव्रतं तथाचपद्मपुराणे युधिष्ठिरउवाचआषाढस्यसितेपक्षेकिंनामैकादशीभवेत् कोविधिःकेनवाचीर्णा
किंपुण्यंचवदस्वमे श्रीकृष्णउवाच कथयामिकथांपुण्यांस्वर्गमोक्षप्रदायिनीं कामिकानामनाम्नेतिसर्वपापहराप
रा यस्याःश्रवणमात्रेणवाजपेयफलंभवेत् सत्यंसत्यंमयाप्रोक्तंनातःपरतरंनृणां पापिनांपापनाशायतृणदावान
लोपमा अतःपरंनरश्रेष्ठनैवमोक्षप्रदायिनी यस्मात्तत्कारणाद्राजन्श्रूयतांगतिरुत्तमा वैष्णवैर्ममभक्तैश्चसततंश्रुति
पोपकैः आषाढेवामनोयैस्तुपूजितस्तैर्जगत्त्रयं वामनःपूजितोयेनकमलैःकमलेक्षणः तेनार्चितंजगत्सर्वंत्रयोदेवाः
सनातनाः एतस्मात्कारणाद्राजन्कर्तव्यंहरिवासरं युधिष्ठिरउवाच संशयोस्तिमहाभागश्रूयतांमेजनार्दन कथं
सुप्तोसिदेवेशकथंत्वंबलिमानदःसंतुष्टःपृथिवीदेवाकिंकुर्वंतिजनास्तदा किंव्रतंकोविधिश्चैवचातुर्मास्येसमागते एत
द्विस्तरतोदेवसंशयंछिंधिमेप्रभो श्रीकृष्णउवाच श्रूयतांराजशार्दूलकथांपापहरांपरां बलिर्वैदानवःपूर्वमासीत्त्रेतायु
गेतथा पूजयंश्चैवमांनित्यंमद्भक्तोमत्परायणः यज्ञैस्तुविविधैःसूक्तैर्जपन्नास्तेसनित्यशःद्विजानांपूजकोनित्यंयज्ञक
र्मकृत्ततःपरंसात्विंद्रविद्वेषादिंद्रलोकमजीजयत् मद्दत्तमिंद्रलोकंतज्जिततेनदुरात्मना एवंविधोबहुधास्तुतंइंद्रेण
सूक्तिभिः गुरुणादैवतैःसार्धंबहुधापूजितोह्यहं ततोवामनरूपेणअवतारेतुपंचमे अत्युग्ररूपेणतदासर्वब्रह्मांडरू
पिणा बालकेनजितःसोपिसत्यमालंब्यतास्थिवान् मयाव्यासंचतत्सर्वंत्रैलोक्यंसप्तसागरं एवंरूपंतदाकृत्वा

श्रूयतांराजसत्तम सकलपमात्रेणकृतपदत्रयमिदक्रमात् प्रार्थ्यमानेमयितदासंकल्पःपतितःकरात् भूर्लोकेतुपदंन्य
स्यभुवर्लोकेतुजानुनी स्वर्लोकेतुकटिंन्यस्यमहर्लोकेतथोदरं जनलोकेचहृदयंतपोलोकेचकंटकम् सत्यलोकेमुखं
स्थाप्यउत्तमांगंतदूर्ध्वके सूर्यचंद्रग्रहाःसर्वेनक्षत्रायोगसंयुताः देवाःसेंद्राश्चनागाश्चममतस्थुस्तथोदरे स्तुवंतोवे
दसंभूतैःसूक्तैश्चविविधैस्तदा करेगृहीत्वातुवालिंत्रिपादैःपूरितामही अर्धंतुतस्यपृष्ठेवैतदान्यस्यपदत्वहं क्षिप्तोरसा
तलेराजन्दानवोममपूजकः क्षिप्तेतुदानवेचैवकिमकुर्वंततःपरं विनयावनतोसातुप्रसन्नोहंजनार्दनः आषाढशु
क्लपक्षेवैकामिकाहरिवासरः तस्यामेकाचमेमूर्तिर्बलिमाश्रित्यातिष्ठति द्वितीयाशेषपर्यंकेक्षीराब्धौसागरोत्तमे सुप्त
मयिहृषीकेशेयावच्चायातिकार्तिकी तावदेतद्व्रतंपुण्यंसर्वपुण्येत्तमोत्तमं एतस्मात्कारणाद्राजन्कर्तव्यासाप्रय
त्नतः नातःपरतराकाचित्पवित्रापापनाशिनी यस्यांप्रसुप्यतेदेवःशंखचक्रगदाधरः श्रीयुक्तंपूजयेद्देवंत्रैलोक्यस्य
पितामहं रात्रौजागरणंकृत्वाभक्त्यायुक्तोविशेषतः एवंयःकुरुतेराजन्नेकादश्याविधानकं सर्वपापहरंचैवभुक्तिमुक्ति
प्रदायक शृणुयाच्चैवयोमर्त्यःकथांपापहरांपरां अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ ॥

॥ इतिश्रीस्कंदपुराणेदेवशयनीकामदैकादशीव्रतकथा ॥

अस्यामेवापाढशुक्लैकादश्यांमन्वादितिथिस्तत्रः श्राद्धंकर्तव्यं तत्रैकादशीमध्याह्नव्यापिनीग्राह्येति ॥
प्राक्मन्वादिकृत्येभिधानात् आषढशुक्लैकादशीकृत्यानिर्णयः अत्राषाढशुक्लद्वादश्यामनुराधायोगरहितायांपारणं
कुर्यात् तदुक्तंहेमाद्रिभविष्ये आभाकासितपक्षेपुमैत्रश्रवणरेवती संगमेनहिभोक्तव्यंद्वादशीव्रतमाचरेत्॥अस्या
र्थः आषाढभाद्रपदकार्तिकशुक्लद्वादशीष्वनुराधाश्रवणरेवतीयोगे एकादशीव्रतस्यपारणंनकुर्यात् आसुत्रिसृ
ष्वप्येकादशीपूपवासव्रतकर्तव्यतोक्ता तथाचभगवद्वचनं मच्छयनेतुमदुत्थानेमत्पार्श्वपरिवर्तने नरोमूलफलाहा

रोहिणीश्लेषमापंति यदापादद्वादश्यामैत्रेणाद्यामासमकोयोगस्तदोपवासद्वयप्रसंगादशकादिभिर्मैत्राद्यपादयोगएवपारणेवर्ज्यः तदुक्तंविष्णुधर्मोत्तरे मैत्राद्यपादेस्वपितीहाविष्णुः पौष्णांत्यपादेप्रतिबोधमेति श्रुतेश्चमध्येपरिवर्तमेतिसुप्तिप्रबोधपरिवर्तनमेववर्ज्यमिति इदंत्वनुराधायोगेपारणवर्जनकृतादियुगांतरविषय तथाचज्योतिर्निबंधेमहाभारते आभाकानांसितपक्षेमैत्रांत्यश्रुतिरोहिणी संगमेनैवभोक्तव्यंद्वादशद्वादशीहरेत् मैत्रर्क्षेतुकृतेत्याज्यंत्रेतायांरेवतीत्यजेत् अथपुनरपिदेवशयनमुपक्रम्य सर्वेषांदेवतानांशयनकालःप्रदर्श्यते वामनपुराणे एकादश्यांजगत्स्वामीशयनपरिकल्पयेत् शेषाहिभोगपर्यंकेकृत्वासंपूज्यकेशवं कृत्वापविम्रकंचैवसम्यक्संपूज्यचद्विजान् ॥ अनुज्ञाब्राह्मणेभ्यश्चद्वादश्यांप्रयतःशुचिः लब्ध्वापीतांबरधरः स्वास्तिनिद्रांसमापयेत त्रयोदश्यांततःकामःस्वपितेशयनेशुभे कदंबानांसुगंधानांकुसुमैःपरिकल्पिते चतुर्दश्यांतथायक्षाःस्वपंतिसुखशीतले सौवर्णपंकजकृतेसुखास्तीर्णोपधानके पौर्णमास्यामुमानाथःस्वपितेचर्मसंभवे वैयाघ्रेसजटाभारंसमुद्ग्रथ्याथचर्मणा यदादिवाकरोराशिसमायातिचकर्कटं ततोमराणांरजनीभवतिदक्षिणायनं नीलोत्पलमयेशुभ्रेब्रह्माप्रतिपदितथा तल्पेस्वपितिलोकानांदर्शयन्मार्गमुत्तमं विश्वकर्माद्वितीयायांतृतीयायांगिरेःसुता विनायकश्चतुर्थ्यांतुपंचम्यामपिधर्मराट् षष्ठ्यांस्कंदःस्वपितिहिसप्तम्यांभगवान्रविः कात्यायनीतथाष्टम्यांनवम्यांकमलालया दशम्यांभुजगेशश्चस्वपंतेवायुभोजनाः एकादश्यांतुकृष्णायांसाध्याब्रह्मन्स्वपंतिच ॥ एवमेकादश्यांशयनपरिकल्पनं द्वादश्यांनिद्रोदयः इतिवामनपुराणात् अत्रविभुद्वादश्यांलवणपर्वतदानमुक्तंपाद्मे उत्तमःषोडशद्रोणैःकर्तव्योलवणाचलः मध्यमःस्यात्तदर्द्धेनचतुर्भिरधमःस्मृतः वित्तहीनोयथाशक्त्याद्रोणादूर्ध्वंतुकारयेत् चतुर्थांशेनविष्कंभपर्वतान्कारयेत्पृथक् अनुष्ठानमेव्युक्तं प्रत्येकमेरुद्रव्यचतुर्थांशपरिमितेनलवणेन विष्कंभपर्वतंचनपकमयधान्यपर्वतवत्

विष्कुंभवत्तेपुज्ञेयमितिमदनः अत्रविधानंधान्यपर्वतवत्ज्ञेयं मंत्राश्च सौभाग्यरससंभूतोयतोयंलवणोरसः तदा
त्मकत्वान्मांपाहिपापात्तस्मादन्नमोनमः यस्मादन्नरसाःसर्वे नोत्कृष्टालवणंविना प्रियंचशिवयोर्नित्यतस्माच्छां
तिंप्रयच्छमे विष्णुदेहसमुद्भूतंयस्मादारोग्यवर्द्धनं तस्मात्पर्वतरूपेणपाहिसंसारसागरात् अनेनविधिनाय
स्तुदद्याल्लवणपर्वतं उमालोकेवसेत्कल्पंततोयातिपरांगतिं सकल्पश्च कल्पपर्यंतमुमालोकप्राप्तिसमनंतरपरम
गतित्वकामईश्वरप्राप्तिकामोवालवणाचलदानमहंकरिष्ये एवमेवदानविधानंइतिलवणाचलदानम् ॥ अथचातुर्मा
स्येधारणापारणाव्रतविधानं भविष्योत्तरे श्रीकृष्णउवाच शृणुकौंतेयवक्ष्यामिधारणापारणाव्रतं बांधवादिवर्ध
दोपसर्वोपद्रवनाशकम् चातुर्मास्येतिथावादौमासिकौंतेयसुव्रत पुण्याहंकारयेत्पूर्वमेकादश्यांशुभेदिने पश्चात्स
कल्प्यनियमंतदारभ्यव्रतंचरेत् आदौमासितथाचांतंचातुर्मास्यमथापिवा एकस्मिन्धारणंकार्यंपारणंचतथा
परं उपवासोधारणंस्यात्पारणंभोजनंभवेत् धारणाद्यदिनेप्राप्तेअर्घ्यंपूर्वंनिवेदयेत् पारणंतुततःकार्यंमंत्रमष्टाक्ष
रंजपेत् अष्टोत्तरशतंदद्यादर्घ्यंदेवायतन्मनाः समाप्तेमासिराजेंद्रकुर्यादुद्यापनंबुधः चातुर्मास्यव्रतंचाथमा
सेमासेतुकारयेत् उपवासदिनेप्राप्तेपुण्याहंकारयेत्पुरा आचार्यंवरयेत्पश्चाद्ब्रह्माणंतुततःपरं कुर्यात्तुप्रतिमांत
त्रलक्ष्मीनारायणस्यच पूर्णकुंभेतुतांस्थाप्यपूजयेन्निशिभूमिप पंचामृतैस्तथापुष्पैस्तुलसीदलसंयुतैः माल
तीकेतकीभिश्चमल्लिकाकुसुमैस्तथा रात्रौजागरणंकुर्यात्पुराणपठनादिभिःप्रातःकालेतुसंप्राप्तेब्राह्मणांस्तुनिमंत्रयेत्
मासेविप्राःपंचदशद्विमासेद्विगुणान्नृप चातुर्मास्येतथाराजन् तथात्रिंशत्भूसुरान् आनीयसंख्ययाराजन्ब्राह्म
णांस्तान्निमंत्रयेत् पश्चात्पूजादिकंकृत्वादेवपूजांसमाचरेत् पश्चादग्निंसमाधायहोमंकुर्याद्यथाविधि निषसीदेति
मंत्रेणजुहुयाच्चातिलोदकं अराजिकेशामंत्रेणजुहुयाच्चतिलोदकं अष्टाक्षरेणमंत्रेणपायसंजुहुयात्ततः लक्ष्मीनारा

यणोदेवःस्थानत्रयेपिदेवता पूर्णाहुतिंततोहुत्वाहोमशेषंसमापयेत् ब्राह्मणान्भोजयेत्पश्चादाचार्यंपूजयेत्ततःएवं
कृत्वामहाभागब्रह्महत्यादिपातकैः मुच्यतेनात्रसंदेहस्तस्मात्कुरुमहाव्रतं सुग्रीवस्तुपुराराजन्कृत्वावालिनमा
हवे नारदोपिपुराराजन्पूर्वजन्मनिशूद्रजः द्विजेभ्यउपदेशात्तुसकृद्धारणपारणं होमादिकंविनाचापिव्रतस्यास्य
प्रभावतः जितेंद्रियस्ततोभूत्वाब्रह्मभूद्राशिनांवरः तस्मात्सर्वप्रयत्नेनधारणंपारणंकुरु इंद्रियाणांवशार्थायसर्व
पापापनुत्तये तस्मात्त्वमपिराजेंद्रकुरुष्वेदव्रतोत्तमं किंदानैस्तपसासाध्यैःकिमन्यैश्चव्रतैर्यमैः धारणंपारणंकु
र्याद्व्रतानामुत्तमंव्रतं सर्वयज्ञेषुतीर्थेषुसर्वदानेषुयत्फलं तत्फलंसमवाप्नोतिकृत्वाधारणपारणं इदंव्रतंमहापुण्यंत
पसामुत्तमंतपः यज्ञानामुत्तमोयज्ञोव्रतानामुत्तमंव्रतं तस्मात्त्वमपिराजेंद्रकुरुष्वविधिपूर्वकं बांधवादिवधैर्दोषै
र्मुच्यसेनात्रसंशयः इतितंसंप्रभाष्याथकृष्णःस्वांचपुरींययौ दृश्यमानःपौरजनैःसमस्तैःपांडुपुत्रकैः युधिष्ठिरो
पिराजर्षिश्चकारेदंमहाव्रतं विमुक्तःसर्वपापेभ्योवंशपश्चतथाभवत् इतिभविष्योत्तरेधारणपारणव्रतम् अस्या
मेवद्वादश्यांकृत्यांतरं नारदीये आषाढशुक्लद्वादश्यांविप्रान्द्वादशभोजयेत् मधुरान्नेनसंपूज्यपृथग्गंधादि
भिःक्रमात् तेभ्योवासांसिदंडांश्चब्रह्मसूत्राणिमुद्रिकाः पात्राणिवददेद्भक्त्याविष्णुर्मेप्रीयतामिति महाभारते दा
नधर्मेषु आषाढेमासिद्वादश्यांवामनेतिचपूजयेत् नरमेधमवाप्नोतिपुण्यंचलभतेमहदिति आषाढशुक्लत्रयोद
शीमारभ्यपंचदिनात्मकमुमामहेश्वरमूर्तिपूजाव्रतं नारदीये शुचिशुक्लत्रयोदश्यामेकभक्तंसमाचरेत् पूजयित्वाज
गन्नाथाउमामाहेश्वरीतनू हेम्यौरौप्यौमृण्मयौवायथाशक्तिविधायच सिंहोक्षस्थौदेवगृहेगोष्ठेब्राह्मणवेश्मनि स्था
पयित्वाप्रतिष्ठाप्यदेवमंत्रेणनारद ततःपंचदिनंपूजाचैकभक्तव्रतंतथा स्त्रीवापिदिवसेप्रातःस्नात्वासंपूज्यतौपुनः सम
र्पणीयौविप्रायवेदवेदांगशालिने वर्षेवर्षेततःपश्चाद्विधेयंपंचवर्षकं तदंतेधेनुयुग्मेनसहितौतौप्रदापयेत् इत्थंनरो

वानारीवाकृत्वाव्रतमिदंशुभं नैवदापत्यविच्छेदंलभेतसप्तजन्मसु॥ इतिसोद्यापनमुमामाहेश्वरव्रतं आषाढकृष्णपाद
र्श्यांजयापार्वतीव्रतं भविष्योत्तरे श्रीलक्ष्मीरुवाच देवदेवजगन्नाथभुक्तिमुक्तिप्रदायक कथयस्वप्रसादेनलोकानुग्र
हकाम्यया नारीणांयद्व्रतंचैवअवैधव्यकरंशुभं येनचीर्णेननारीणामखंडफलदंभवेत् श्रीभगवानुवाच सत्यमुक्तंत्व
यादेविनचमिथ्यात्वयोदितं तद्व्रतंकथयिष्यामिनाख्यातंकस्यचित्पुरा येनचीर्णेननारीणामवैधव्यंप्रजायतेअकथ्यं
परमंगुह्यंपवित्रंपापनाशनं आषाढेचैवकर्तव्यंशुक्लपक्षेत्रयोदशी गृहणीयान्नियमंतत्रदंतधावनपूर्वकं तत्रदंत
धावनमंत्रः आयुर्बलंयशोवर्चःप्रजापशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते नियमात्फलमाप्नोतिनि
ष्फलंनियमंविना तस्मात्सर्वप्रयत्नेनव्रतंनियमपूर्वकं एवंभक्तव्रतंचैवकरिष्येविधिनाधुना स्वादुरहितधान्येन
तेनपापंव्यपोहतु उमामहेश्वरौकार्यौसुवर्णरजतादिभिः अथवामृण्मयौसिंहवृषदेहोपरिस्थितौ गोष्ठेदेवा
लयेवापितथाब्राह्मणवेश्मनि स्थापयेद्वेदमंत्रेणप्रतिष्ठांतत्रकारयेत् तद्दिनेदंतकाष्ठंचयूथिकयावरानने कुंकुमा
गुरुकस्तूरीसिंदूरैरष्टगंधकैः चंपकैःसप्तपत्रैश्चयूथिकायामृतोद्भवैः श्रीवासूत्रेणदूर्वाया:पूजयित्वाविधानतः अर्घं
णचातिशुभ्रेणचोत्तरीययुगेनवै श्रीवृक्षद्राक्षादाडिमैस्तथाजातीफलेनच आद्यादेवीचशर्वाणिशंकरस्यसदाप्रिये
अर्घ्यंगृहाणदेवेशिमनोपरिकृपांकुरु इतिपूजाप्रकर्तव्याकथांशृणुद्विजोत्तमात् श्रीलक्ष्मीरुवाच अच्युतायनमस्तु
भ्यंपुरुषादिस्वरूपिणे व्रताध्यक्षमहाप्राज्ञस्त्वंदुःखक्षयकारक कथयस्वप्रसादेनव्रतानांव्रतमुत्तमं केनचादौपुराची
र्णमर्त्यलोकेप्रकाशितं एतत्सर्वंप्रसादेनब्रूहिमेजगदीश्वर श्रीभगवानुवाच अथातःसंप्रवक्ष्यामिपार्वत्यास्तेक
थामिमां यांश्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः आसीत्पुराकृतयुगेकौंडिन्यनगरे वरेब्राह्मणोवसतितत्रसत्यशौ
चपरायणः गुणवाञ्छीलसंतोषीवामनोनामनामतः तस्यभार्याप्रियासत्या रूपलक्षणसंयुता धनाढ्यावेदत्रि

द्रुपोगृहेयेसर्वसंपदः केनकर्मविपाकेनसंतानरहितोभवत् अपुत्रस्यगृहशून्यंश्मशानसदृशंभवेत् दंपतीतिनदुः
खेनक्षामौजातौशरीरतः एकदाकालयोगेननारदोगृहमागतः अर्घ्यंपाद्यंकृतंतेनकथांचक्रेमुनासह वामनउवाच
नारदत्वंमुनिश्रेष्ठसर्वज्ञानपरायण कथयस्वप्रसादेनकथंदुःखंप्रशाम्यति दानेनकेनदेवर्षेव्रतेननियमेनच तीर्थे
नकेनदेवर्षेसंतानंमेभविष्यति नारदउवाच शृणुविप्रप्रवक्ष्यामिसंतानंतुभविष्यति वनस्यदक्षिणेपार्श्वेबिल्ववृ
क्षस्यमध्यतः विधुलिंगंचविख्यातंभवानीसहितंपरं सपर्य्यांकुरुयत्नेनतुष्टोदास्यतिसंततिं अपूज्यंलिंगमभ्य
र्च्यपूज्यस्यचप्रदीयते अनाथप्रेतसंस्कारंकोटियज्ञफलंलभेत् इत्युक्त्वानारदःस्वर्गंगतोवैमुनिपुंगवः वनमध्यग
तौद्वौतौदंपतीपुत्रकांक्षिणौ बिल्वमध्यगतंदृष्ट्वाशिवलिंगंपुरातनं बिल्वपत्रेणजीर्णेनलिंगंतत्रैवछादितं विहायबि
ल्वपत्राणितदादायविलेपनं पंचामृतेनप्रक्षाल्यपूजांकृत्वामनोरमां नित्यंनियमसंयुक्तंपूजयन्परमेश्वरं पंचा
ब्दंपूजितस्तेनपार्वतीसहितोहरः एकदातुगतोसौहिपुष्पार्थेब्राह्मणोत्तमः कुसुमंगृह्यतेयावत्तावद्दष्टस्तुपन्नगैः
पतितस्तद्वनेघोरेसिंहव्याघ्रसमाकुले तृतीयेनमुहूर्तेनतद्भार्याचिंतयत्तदा केनापिकारणेनाद्यकथंनायातिमेप
तिः पार्वतीतुसमायातायत्रतिष्ठतिब्राह्मणी क्रंदमानांचतांदृष्ट्वापार्वतीवरदाभवत् सुधाशीकरहस्तेनविप्रवक्त्रं
प्रासिंचती उत्थितोब्राह्मणस्तत्रनिशीथेनिद्रयायथा तावेत्यचरणौदेव्याःगृहीत्वाविनयान्वितौ पार्वत्योक्तमिदंवाक्यं
वरंवरयसुव्रते ब्राह्मण्युवाच त्वत्प्रसादेनरुद्राणिलब्धंतुवांछितंमया संतानंचैवमेनास्तिएतद्दुःखंचमेनुद पार्व
त्युवाच व्रतंकुरुविधानेनममनाम्नाचविश्रुतं जयाममव्रतंनामत्रैलोक्येपावनंपरं जयापार्वतीव्रतंचैतदापाढेचारु
लोचने रत्नादुरहितधान्येनलवणरहितेनचभोक्तव्यंपंचकदिनंकर्तव्यतुदृढव्रतं त्रयोदश्यांसमारभ्यंतृतीयायांसमा
पन शुक्लपक्षेसमारभ्यकृष्णपक्षेसमापनं पंचाब्दंपावनाःस्त्वव्रतंकार्यंप्रयत्नतः पंचाब्दंतुयवैश्चैवव्रतं

तुलवर्णविना पंचाब्दंतंडुलैःकार्य्यमिक्षुरसविवर्जितं पंचाब्दंचैवमुद्गैस्तुएवंहायनविंशतिः विंशत्तमेततोब्देतुव्र तोद्यापनंसमाचरेत् दंपत्योःपरिधानेहिप्रदद्याद्रुद्रप्रीतये भोज्यंसुवासिनीनांचतृतीयायायथोचित विंशतिःप्रथमे पक्षेवित्तशाठ्यमतःपरं वंधकंपंचकेकार्य्यंपरिधानंसभोजनं नानारसैःसमायुक्तंघृतखंडसमन्वितं संभर्तृकायैदा तव्यंभोज्यंसौभाग्यहेतवे कुंकुमंचजलंदेयमब्देऽब्देचस्वशक्तितःरात्रौजागरणंकुर्य्यादखंडफलदंभवेत् अनेनविधि नायस्तुकुरुतेव्रतमुत्तमं जागरणेकृतेयातिव्रतं संपूर्णतांसदा व्रतेनरहितानारीविधवाजन्मजन्मनि शोचितदुःखसंयु क्तानचसौभाग्यभाग्भवेत् नारीणांचव्रतैर्दानैःपरिभक्त्यातःपरं सौभाग्यमतुलंयातिपतिसंतोषदानतः एवमुक्त्वा व्रतवरंतत्रैवांतरधीयत पश्चाद्गृहंसमागत्यसापत्याचसमन्विता पूर्वोक्तेनव्रतंकृत्वाप्राप्तपुत्रसुखतयोःभर्तारंचविशे षेणअवैधव्यंपरंसुखं भुक्त्वाचविविधान्भोगानंतेप्राप्तौशिवालयं श्रीभगवानुवाच एवंयाकुरुतेनारीनचभर्त्राविमु ज्यते कुलत्रयंसमुद्धृत्यनयतेशिवमंदिरं सान्निध्यसुखमाप्नोतिशिवलोकेमहीयते कथांश्रुत्वाविधानेनसर्वपापैःप्र मुच्यते ॥ इतिभविष्योत्तरेगुर्जराचारप्राप्तं जयापार्वतीव्रतं आषाढशुक्लचतुर्दश्यामपि शिवपूजाव्रतंनारदीये शुचिशुक्लचतुर्दश्यांशिवंसंपूज्यमानवःदेशकालोद्भवैःपुष्पैःसर्वांसंपदमाप्नुयात् आषाढपौर्णिमायांगोपद्मव्रतं को किलागौरीव्रतं नारदीये चतुर्भुजंमहाकायंजांबूनदसमप्रभं शंखचक्रगदापद्मरमागरुडशोभितं सेवितंमुनिभिर्दे वैर्यक्षगंधर्वकिन्नरैः एवंविधंहरिंध्यात्वातत्रपूजांसमाचरेत् पौरुषेणैवसूक्तेनगंधाद्यैरुपचारकैःआचार्य्यंवस्त्रभूषाद्यै स्तोषयेत्स्निग्धमानसः भोजयेन्मिष्टपक्वान्नैर्द्विजानन्यांश्चशक्तितः एवंकृत्वाव्रतंविप्रप्रसादात्कमलापतेः ऐहिकामु ष्मिकान्कामान्लभतेनात्रसंशयः कोकिलाव्रतमप्यत्रप्रोक्तंतद्विधिरुच्यते पूर्णिमायांसमारभ्यव्रतंस्नायाद्वहिर्जले पूर्णांतश्रावणेमासिगौरीमभ्यर्च्यकोकिलां स्वर्णपक्षांरत्ननेत्रांप्रवालमुखपंकजांकस्तूरीवर्णसंयुक्तामुत्पन्नांनंदनेवने

चूतचंपकवृक्षस्थांकलगंभीरनादिनीं चिंतयेत्पार्वतींदेवींकोकिलारूपधारिणीं गंधाद्यैःप्रत्यहंप्र चोल्लिखितांवर्णकैः
पटे ततोव्रतांतेहेमीवातिलपिष्टमयींद्विज आद्यादिप्रायमंत्रेणभक्त्यासस्वर्णदक्षिणां.देविचैत्ररथोत्पन्नेकोकिलेहर
वल्लभे सपूज्यदत्ताविप्रायसर्वसौख्यकरीभव द्विजंसुवासिनींश्चैशदेकांवाभोजयेत्ततः वस्त्रादिदक्षिणांशक्त्यादत्त्वा
नत्वाविसर्जयेत् एवंयाकुरुतेनारीकोकिलाव्रतमुत्तमं साप्नुयात्सुखसौभाग्यंसप्तजन्मसुनारद ॥ अथगोपद्मव्रत
पूजाक्रमःतत्रादौतिथ्यादिसंकीर्त्यात्मनऐहिकामुष्मिकसर्वकामावाप्तिकामोविष्णुप्रीत्यर्थंगोपद्मव्रतंकरिष्ये ध्यानं
चतुर्भुजंमहाकायजांबूनदसमप्रभ शंखचक्रगदापद्मरमागरुडशोभितं सेवितमुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः एवं
विधंहरिंध्यात्वाततोयजनमारभेत् आवाहयामिदेवेशभक्तानामभयप्रदं स्निग्धकोमलकेशंचमनसावाहयेद्ध्रुवं स
हस्रशीर्षेत्यावाहनं १ सुवर्णमणिभिर्दिव्यैरचितंदेवनिर्मितं दिव्यसिंहासनंविष्णोउपविश्यप्रसीदमे पुरुषएवेत्या
सनं २ पादोदकंसुरश्रेष्ठसुवर्णकलशार्पितं गंधपुष्पाक्षतैर्युक्तंपाद्यंमेप्रतिगृह्यतां एतावानस्येतिपाद्यम् ३
अष्टद्रव्यसमायुक्तस्वर्णपात्रोदकंशुभ अभयंकरभक्तानांगृहाणाचमनीयकं तस्माद्विराडित्याचमनम् ४ गंगागोदाव
रीपुण्यायमुनाचसरस्वती नर्मदासिंधुकावेरीतोयःस्नानार्थमाहृतं यत्पुरुषेणेति पंचामृतादिस्नानम् ५ वस्त्रयु
ग्मंसमानीतपट्टसूत्रेणनिर्मितं सुवर्णरचितंदिव्यंगृहाणत्वंसुरेश्वर तंयज्ञमितिवस्त्रम् ६ कार्पासतंतुभिर्युक्तंब्र
ह्मणानिर्मितंपुरा अनेकरत्नखचितमुपवीतंगृहाणमे तस्मादितियज्ञोपवीतम् ७ चंदनंमलयोद्भूतंकस्तूर्यागुरु
संयुतं कर्पूरेणचसंयुक्तंत्वंकुरुष्वानुलेपनं तस्मादितिगंधम् ८ शतपत्रैःकर्णिकारैश्चपंचकैर्मल्लिकादिभिः तुलसी-
युक्तपुष्पाणिगृहाणपुरुषोत्तम तस्मादश्वाइतिपुष्पम् ९ दशांगगुग्गुलंधूपंसुगंधंचमनोहरं कृष्णागुरुसमायुक्तं
धूपंदेवगृहाणमे यत्पुरुषमितिधूपम् १० आज्यसुवर्तिसंयुक्तंवह्निनायोजितंचयत् दीपंगृहाणदेवेशत्रैलोक्य

तिमिरापहं ब्राह्मणास्यातेधूपं ११ अन्नचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तं नैवेद्यंप्रति गृह्यतां चंद्रमाइतिनैवेद्यं १२ इदंफलमितिफलं नाभ्याआसीदिति तांबूलं १३ हिरण्यगर्भमितिः सप्तास्या सन्निति दक्षिणा १४ यज्ञेनयज्ञमिति मंत्रपुष्पांजलिः १५ अथतत्तद्द्रव्योक्तिवायणं सपक्वान्नमिदंविप्रवायणं परिगृह्यतां त्वत्प्रसादाद्गृहेसर्वंव्रतस्यफलमाप्नुयां यानिकानीतिप्रदक्षिणा मंत्रहीनमितिप्रार्थनाइतिपूजा अथ कथा सनत्कुमारउवाच नाथैकंपरिपृच्छामिचतुर्वर्गफलप्रदं नारीणामथवापुंसांभुक्तिमुक्तिफलप्रदं ब्रूहिचेदस्तिदे वर्षेकमांकःयागमोपरि नारदउवाच भगवन्सर्वमाख्याभियत्पृष्टोवदुपास्त्वया गोपद्मकव्रतंनामव्रतानामिदमुत्तमं कार्यसिद्धिकरंलोकेविख्यातंभुवनत्रये सनत्कुमारउवाच भगवन्भूतभव्येशसर्वशास्त्रविशारद तद्व्रतंब्रूहिमेसर्वंक थमुद्यापनंभवेत् पुरैतकेनचाचीर्णंदेवर्षेकथयस्वमे नारदउवाच आषाढकार्तिकोमासौ व्रतग्रहणसिद्धिदौ आषाढ पौर्णमास्यांतुतथाष्टम्यांहरेर्दिने प्रारंभेद्व्रतमेतत्तुकार्तिकावधितातिथौ तिलामलककल्केनस्नानंनित्यंविधायच नदीतीरेतथागोष्ठेशिवागारेहरेर्गृहे शुभेदावनेचापिलिखेद्गोपद्मकपदे त्रयस्त्रिंशत्तुपद्मानिकुर्याद्व्रत्यादिनेदि ने तत्संख्ययाप्रकर्तव्यात्र्यर्घ्यप्रदक्षिणानतीः बालकृष्णंसमुद्दिश्यलक्ष्म्यासहजगद्गुरुं गंधाद्यैरुपचारैस्तुयथाश क्त्याप्रपूजयेत् ब्राह्मणंचततःपूज्यपद्मसंख्यंप्रपूजयेत् प्रथमेऽब्देचवटकैर्द्वितीयेपूपकैर्व्रती तृतीयेशाकामिष्टान्नै श्चतुर्थेपूरिकादिभिः पंचमेपरमान्नैस्तुसद्मगंपूजयेद्व्रती अत्रैवोदाहरंतीममितिहासंपुरातनं ऋषीणांपृच्छमाना नांसूतेनोक्तमयाश्रुतं ऋषयऊचुः केनवादौपुराचीर्णमर्त्यैकेनप्रकाशितं कथमुद्यापनंतस्यकिंफलंसूतकथ्यतां सूत उवाच पुराशक्रोमरावत्यांदेवदानवकिन्नरैः रुद्रैरादित्ययक्षाद्यैर्गंधर्वैःस्वर्गिभिःसह रंभानृत्यसमारंभेक्रीडालोभे नविह्वला एवंनृत्येसमारब्धेत्रुटितंचर्ममंडलं क्षणमात्रंविचार्याथधर्मराजस्तमब्रवीत् यमउवाच जन्मप्रभृत

तंयैश्चनकृतंप्राणिभिः क्वचित् तच्चर्मस्नायुभिःशक्रकर्त्तव्यंछादनंतयोः नारदेनश्रुतंतत्रजगामयदुनंदनं अर्चयि
त्वाथतंकृष्णोवचनंचेदमब्रवीत् श्रीकृष्णउवाच सर्वलोकेषुदेवर्षेभुवनेषुचरतासदा किमाश्चर्यंत्वयादृष्टंसत्यंमेब्रूहि
नारद नारदउवाच शक्रस्यभवनेदृष्टमाश्चर्यंदेवसंसदि तत्रसर्वेसमायाताः सुराश्चेंद्राश्चतुर्दश रुद्राएकादशवि
धाश्चादित्याद्वादशापिच वसवोष्टौतथानागायक्षराक्षसपन्नगाः रंभयाचसमारब्धंनृत्यंशक्रस्यपश्यतः त्रुटितंचर्मवा
द्यानामब्रुवंस्तस्यसाधने यमःप्राहतदादूतान्सुभद्राह्यव्रतास्तिभोः तामानयध्वंतच्चर्मवाद्ययोग्यंसदास्त्विति तच्छ्रु
त्वात्वरयाभद्रभीत्यासर्वंनिवेदितं सूतउवाच इतिनारदवाक्यंतुश्रुत्वाकृष्णस्त्वरान्वितः सुभद्रायागृहंगत्वापूजि
तस्तामुवाचह किंचिद्व्रतंत्वयाभद्रेकर्तव्यंनेतिशंसमे सुभद्रोवाच सर्वव्रतानिभोकृष्णकृतान्येवनसंशयः नोचेत्तवस
होदर्यास्तस्यामर्जुनवल्लभः पुत्रोभिमन्युश्चकथंकथयस्वजगत्पते श्रीकृष्णउवाच तथापित्वंमहाभागेव्रतमेकंसमा
चर गोपद्मेतिचविख्यातंत्रिषुलोकेषुविश्रुतं इतिकृष्णवचःश्रुत्वासुभद्रातत्तदाकरोत् कृष्णोपदिष्टविधिनासत्वरं
तत्समापितं सोद्यापनेव्रतेपूर्णेकालेयमभटाययुः दूताऊचुः सुभद्रेतवदेहस्यचर्मार्थेत्वागतावयं तच्चर्मदेववाद्या
र्थंयमेनपरिकल्पितं इतिदूतवचःश्रुत्वासव्रतास्मीतिसाब्रवीत् ततोयमभटाःसर्वेददृशुःसादरास्तदा पद्मानांनिच
यंतस्यागृहेगांचसवत्सकां स्थंडिलेहस्तमात्रेतुसुसमिद्धंहुताशनं कृष्णोपदिष्टंवीक्ष्यैवभटाजग्मुर्यमांतिकं प्रापव्र
तप्रभावेनसुभद्रापदमच्युतं इतिसूतवचःश्रुत्वामुनयश्चक्रिरेव्रतं सनत्कुमारउवाच भोभोनारददेवर्षेसर्वज्ञानसु
धानिधे शीघ्रंब्रूहिसखेमह्यंव्रतस्योद्यापनेविधिं नारदउवाच पूर्णेतुपंचमेवर्षेव्रतस्योद्यापनंचरेत् श्रीविष्णोःप्रति
माकार्यासुवर्णस्यपलेनवै पुष्पमंडपिकाकार्याचतुर्द्वारेसुशोभना तन्मध्येपूजयेद्भक्त्याश्रमयासहितंहरिं त्रयस्त्रिं
शत्ततोविप्रान्व्रतहोमंसमारभेत् अतोदेवेतिमंत्रेणजुहुयात्तिलपायसं • रक्तवस्त्रयुतांधेनुमाचार्यायप्रदापयेत्

ब्राह्मणांश्चसपत्नीकान्भोजयेच्चयथाक्रमं एवंयाकुरुतेविप्रतस्याःश्रीरचलाभवेत् यंयंचिंतयतेकामंततंप्राप्नो
त्यसंशयं अंतेविष्णुपदंगच्छेत्सर्वपापविवर्जित. इतिनारदोक्तसोद्यापनगोपद्मव्रतं अत्रमूलंशिष्टाचारएव अस्या
मेवाषाढपूर्णिमायांकोकिलाव्रत तस्यविधान स्नात्वा आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्यममेहजन्मनिसर्वपा
पक्षयपूर्वकपुत्रपौत्रस्थिरलक्ष्मीत्वावैधव्यसपत्नीनाशसौभाग्यसिद्धिद्वाराकोकिलारूपगौरीप्रीत्यर्थंकोकिलाव्रतक
रिष्ये इतिसंकल्प्य आषाढेपौर्णमास्यांतुसंध्याकालेह्युपस्थिते संकल्पयेन्मासमेकंश्रावणेप्रत्यहंह्यहं स्ना
नकरिष्येदेवोशिकोकिलप्रतिमेतव जलेस्मिन्पावनेपुण्येसर्वदैवजलाशये इतिमंत्रेण तिलामलफलैः सर्वौषधि
जलेनच पिष्टेन चाष्टौ दिनानि प्रत्येकंतिलामलकापिष्टेनचौषधियुतेनच षड्दिनान्येवंमासावधिस्नानक्रमः एवं
स्नात्वाराविध्यात्वातस्मैअर्घ्यंदद्यात् ततः आदित्यभास्कररवेअर्कसूर्यदिवाकर प्रभाकरनमस्तुभ्यंगृहाणार्घ्यं
नमोस्तुते इतिसूर्यायअर्घ्यंदद्यात् तत स्वर्णपक्षांरौप्यपादांमौक्तिकनेत्रांप्रवालमुखींरत्नपृष्ठांचूतचंपकवृक्षस्थां
गौरीरूपिणींकोकिलांलिखित्वापूजयेदित्युक्तेः ध्यानंकुर्य्यात् स्वर्णपक्षांरक्तनेत्रांप्रवालमुखपंकजां कस्तूरीवर्ण
संयुक्तामुत्पन्नानंदनेवने चूतचंपकवृक्षस्थांपुष्टस्वरसमन्वितां चिंतयेत्पार्वतींदेविंकोकिलारूपधारिणीं श्रीसू
क्तेन गौरीमिमायेतिमंत्रेणपूजा आगच्छकोकिलेदेविदेहिमेवांछितंफलं चंपकद्रुममारूढाक्रीडसेनंदनेवने इ
त्यावाहनं आसनंक्षौमवस्त्रेणनिर्मितंचानयेतव गृहाणेदंमयादत्तंकोकिलेप्रीतिवर्द्धिनि सौभाग्यंधनपुत्रांश्चदेहिमेको
किलेनमः तिलपुष्पफलैर्युक्तंपाद्यमेप्रतिगृह्यतां इतिपाद्यं रत्नचंपकपुष्पैश्चपीतचंदनसंयुतं हेमपात्रस्थितंतोय
गृहाणार्घ्यंनमोस्तुते इत्यर्घ्यं निर्मलंसलिलंगांगंकोकिलेपक्षिरूपिणि वासितंचसुगंधेनगृहाणाचमनीयकं इत्या
चमनं पंचामृतेनस्नपनंकोकिलेकलकंठके मयादत्तेनसुप्रीताभवत्वंपरमेश्वरि इतिपंचामृतं मंदाकिनीजलंपुण्यंसर्व

तीर्थसमन्वितं स्नानार्थंतेमयादत्तंकोकिलेगृह्यतांनम इतिस्नानं यस्मात्कर्पासमूत्रेणवासांसिविविधानिच पी
तवस्त्रप्रदानेनप्रीताभवनमांविके इतिवस्त्रं कंचुकंचमयादत्तंनानावर्णैर्विनिर्मितं कोकिलेगृह्यतांदेविप्रसीदपर
मेश्वरि कंचुकं· हरिद्रारंजितंदेविकंठसूत्रंमयार्पितं कोकिलेसुभगेदेविवरदाभवमेंविके कंठसूत्रं यानिरत्ना
निसर्वाणिगंधर्वेपूरगेपुच तैर्युक्तंभूषणंहेमंकोकिलेप्रतिगृह्यतां इत्याभरणं श्रीखंडचंदनंदिव्यंमलयाद्रिसमुद्भ
वं विलेपनंसुरश्रेष्ठगृह्यतांपरमेश्वरि इतिगंधं अक्षताःकुंकुमाक्ताश्चकामिनीभूषणास्पदं सौभाग्यदेगृहाणे
हनमस्तेहरवल्लभे इत्यक्षताःशतपत्रैर्जातिपुष्पैश्चंपकैर्मरुपत्रकैःपाटलैश्चैवदूर्वाभिर्युतंपुष्पंगृहाणमे इतिपुष्पाणि
तिलस्नेहेतिलमुखेतिलसौख्येतिलप्रिये सौभाग्यंधनपुत्रांश्चदेहिमेकोकिलेनमः पुष्पोत्तरमंगलपूजा शिवायैशिरः
पूजयामि वनवासिन्यै.ललाटंपूजयामि २ सुरूपायैभ्रूमध्यंपू. पार्वत्यैचिवु.पू.तिर्यक्रूपिण्यैकंठंपू.कोकिलायै.
हृदयंपू. पक्षिरूपिण्यैगुह्यंपू.पद्मावत्यै-पादौपूजयामि कृष्णवर्णायैसर्वांगंपू.वनस्पतिरसोधूपेतिधूपं आज्यसद्व
र्तिसंयुक्तमितिदीपं शर्कराखंडखाद्यानिदधिक्षीरघृतानिच आहारार्थंमयादत्तंनैवेद्यंप्रतिगृह्यतामितिनैवेद्यं पाटलो
शीरकर्पूरयुतंस्वादुसुशीतलं पानीयंतेमयादत्तंकोकिलेप्रतिगृह्यतामितिजलं चंदनागुरुकर्पूरकस्तूरीकुंकुमान्वितं
करोद्वर्तनकंदेविकोकिलेप्रतिगृह्यतां इतिकरोद्वर्तनं कूष्मांडंनारिकेलंचपनसंकदलीदलं जंबूचमातुलुंगंचफलंगृह्
णनमोस्तुते इतिफलं पूगीफलंमहाद्दिव्यमितितांबूलं हिरण्यगर्भेतिदक्षिणा कोकिलेकृष्णवर्णेचसदावससिकानने
भवान्यैहरकांतायैकोकिलायैनमोनम इतिनीराजनं पूजितापरयाभक्त्याकोकिलाहरवल्लभा पुष्पैर्नानाविधैस्तुष्टाव
रदास्तुसदामम इतिपुष्पांजलिःकोकिलारूपधारिण्यैजगन्मात्रेनमोस्तुतेशरणागतदीनार्तंत्राहिदेविसदांविके इति
नमस्कारःगंधपुष्पफलैर्युक्तंतोयहेमफलान्वितं कोकिलेत्वंगृहाणार्घ्यंवांछितार्थंप्रयच्छमे आषाढस्यासितपक्षेमध

वृषेहरप्रिये कोकिलेत्वंजगन्मातर्गृहाणार्घ्यंनमोस्तुते इतिपुनरर्घ्यं ततःप्रार्थना रूपंदेहिजयंदेहिसौभाग्यंदेहि मेसदा पुत्रान्देहिधनंदेहिसर्वान्कामान्प्रयच्छमे काकवंध्याविवत्साचमृतवत्सातिदुःखिता ताःसर्वाःफलिताः संतुकोकिलेत्वत्प्रसादतः त्वयालब्धःपतिर्देवःशंकरोलोकशंकरः अतोहंत्वत्प्रसादेनलभेयंपतिमुत्तमानितिप्रा र्थना अतोहंमीतिलपिष्टजांवाकोकिलांकृत्वाविप्रायदद्यात् देविचैत्ररथोत्पन्नेविंध्यपर्वतवासिनि अर्चितापूजि तासित्वंकोकिलेहरवल्लभे कोकिलेकलकंठासिमाधवेमधुरस्वरे वसंतेवससेदेविगच्छत्वंनंदनेवनेइतिविसर्जनं इतिकोकिलाव्रतपूजा अथकथा युधिष्ठिरउवाच स्वभर्तृरतिसंबंधेमहास्नेहोयथाभवेत् कुलस्त्रीणांतथाचक्ष्व व्रतंममजगद्गुरो श्रीकृष्णउवाच यमुनायास्तटेपूर्वंमथुरास्तिमहापुरी तस्यांशत्रुघ्ननामाभूद्राजाराघववंशजः त स्यभार्याकीर्तिमालानाम्नासीत्प्रथिताभुवि तयाप्रणम्यभगवान्वशिष्ठोमुनिसत्तमः पृष्टःकथंमुनिश्रेष्ठसौभाग्यम तुलंभवेत् एवमुक्तस्तयाज्ञानीवसिष्ठःकीर्तिमालया ध्यात्वामुहूर्तमाचख्यौकोकिलाव्रतमुत्तमं वसिष्ठउवाच आषा ढपूर्णमास्यांतुसंध्याकालेह्युपस्थिते संकल्पयेन्माससेकंश्रावणंप्रतिगृह्यतु स्नानं करिष्येनियताब्रह्मचर्येस्थितासती भोक्ष्यामिनक्तंभूशय्यांकरिष्येप्राणिनांदयां इतिसंकल्प्यपुरुषोनारीवाब्राह्मणांतिके प्राप्यानुज्ञांततःप्रातःसर्व सामग्रिसंयुतःपुरुषःप्रत्युषःकालेदंतधावनपूर्वकंस्नानंकुर्यात्तीर्थेसुगंधामलकैस्तिलैःपिष्टाष्टकंततःपश्चात्सर्वौ षध्याःपुनःपुनःस्नात्वाध्यात्वारविंसंध्यांतर्पयित्वापितृंस्तथा पूजयित्वालिखित्पिष्टैःकोकिलांपक्षिरूपिणीं कलकंठां शुभैःपुष्पैःपूजयेच्चंपकोद्भवैः पत्रैर्वाधूपनैवेद्यैर्दीपालक्तकचंदनैः तिलतंडुलदूर्वाद्यैःपूजयेत्तांक्षमापयेत्नित्यंतिलव्रती भक्त्यामंत्रेणानेनपांडव तिलस्नेहेतिलसुखेतिलसौख्येतिलप्रिये सौभाग्यंधनपुत्रांश्चदेहिमेकोकिलेनमःइत्युच्चा र्यततःपश्चाद्गृहमागत्यसंयतःकृताहारःस्वपेत्पार्थयावन्मासःसमाप्यते मासांतेताम्रपात्रेतुकोकिलांतिलपिष्ट

जां रक्तनेत्रांरवर्णपक्षांब्राह्मणायनिवेदयेत् वस्त्रैर्गुडैःसमायुक्तांश्रावण्यांकुलजातिका श्वश्रूश्वशुरवर्णैर्वाद्वैवज्ञेवा पुरोहिते व्यासेचसंप्रदातव्याव्रतिभिःशुभकांक्षया तिलस्नेहइत्यादितिलदानमंत्रः एवंयःकुरुतेनारीकोकिलाव्रत मादरात्सप्तजन्मानिसौभाग्यसाप्राप्नोतीतिनिश्चितांनिःसापत्नपतिंभव्यसस्नेहंप्राप्यभूतलेमृतागौरीपुरयातिविमा नेनार्कवर्चसा तयाचानुष्ठितपार्थसनग्रकीर्तिमालया तस्याश्वसर्वसंपन्नवसिष्ठवचनादिह पुत्रसौभाग्यसत्कारंशत्रु घ्नस्यप्रसादज एवमन्यापिकौंतेयकोकिलाव्रतमादरात् चरिष्यतिव्रतंतस्याःसौभाग्यंचभविष्यति येकोकिलांकल रवांकलकंठपीठांयच्छांतिसाज्यतिलपिष्टमयींद्विजेभ्यः तेनंदनादिपुवनेपुविहृत्यकामंमर्त्येसमेत्यमधुरध्वनयोभवंति ॥ इतिहेमाद्रौभविष्योत्तरेकोकिलाव्रतकथा ॥ अथवाराहेकोकिलाव्रतं कीर्तिमालोवाच वदमेत्वंमुनिश्रेष्ठसौ भाग्यप्राप्तिदंव्रतं पूज्यःकथंचभगवान्शिवःकेनव्रतेनवै वसिष्ठउवाच ।यदिपृच्छसिसत्यंहिव्रतानामुत्तमंव्रतंतार णंसर्वपापानांकथयामिनिबोधतत् दक्षप्रजापतेर्यज्ञेपुरादेवाःसमागताः ऋषयश्चतथासर्वेविद्याधरगणास्तथा ब्रह्माविष्णुश्चवायुश्चदेवराजस्तथैवचवरुणोग्निर्ग्रहाःसर्वेयेचान्येचदिवौकसः वसिष्ठोवान्हिकोगार्ग्योविश्वामित्रोम हामुनिः एतेचान्येचबहवःसर्वेयज्ञार्थमागताःअपश्यन्नारदस्तत्रसंतिकेत्रागताइति ईश्वरेणविनासम्यग्दृष्ट्वासर्वा न्समागतान् शिखांसस्पृश्यपाणिभ्यांननर्तकलहप्रियः ज्ञात्वाकलहमूलंचततःकैलासमाययौसर्वाघनाशनंस्थानं कैलासशिखरंशुभं तत्रदृष्ट्वासमासीनंगौरीसहितमीश्वरं कृतांजलिपुटोभूत्वाप्रणिपत्यमुनिःस्थितःईश्वरस्तमुवाचा थनिःश्वसंतमनकधा किमागमनकृत्यंतेमदीयसदनंप्रति निश्वासोच्छाससंयुक्तस्तन्मेब्रूहितपोधन ईश्वरस्यवचःश्रु त्वाशिखांसंस्पृश्यपाणिना दुःखयुक्तइवोवाचनारदःकलहप्रियःनारदउवाच यन्निमित्तमहंदेवमर्त्यलोकात्समागतः त्वदंतिकंदुःखयुक्तस्तच्छृणुष्वजगत्पते दक्षयज्ञमहंद्रष्टुमद्यदेवास्समागतास्तत्रयज्ञेस्थिताः सर्वेदक्षजामातरःप्रजाः

दृष्टास्तेनचतन्मध्येनदृष्टस्त्वांत्रिलोचनतवावज्ञाकृतातेनदक्षेणापुण्यकर्मणा तेननिश्वाससंयुक्तश्रागतोस्मित्वदंतिकं
ईश्वरेणविनाकिंचिद्धर्मकार्य्यंनसिद्ध्यति अतोस्यविफलःसर्वःप्रयासःस्वमखंप्रति तस्यतद्वापितंश्रुत्वानतन्मिथ्येति
चिंतयन् सक्रोधस्तुततोजातईश्वरोजगदीश्वरः गौर्य्यासंप्रार्थितोदेवःश्रुत्वातन्नारदेरितं तस्ययज्ञस्यघातार्थंदेव
देवव्रजाम्यहं इत्युक्तात्वरिताकोपादीश्वरेणनिवारिता जगदीशनमस्तुभ्यंव्रजामिपितृवेश्मनि नारदेनाथसहि
तागणनाथेनसंयुता यज्ञार्थमागताचैवदक्षद्वारेशिवप्रिया वह्नौदृष्ट्वावसोर्द्वारांलज्जिताचशिवप्रिया तिष्ठतींद्वारितां
दक्षोनददर्शमहासतीं क्षणमेकंचसातिष्ठद्यदादक्षोनपश्यति तदैवंचिंतितंदुःखाजीवितव्यंमयाकथं धाविताकुंड
निकटेहाहाकृत्वाचसाततःवन्हौक्षिसंतदागौर्य्याशापंदत्वासुदारुणं दृष्ट्वातश्चगणेशेनपाशःपरशुरुद्यतःक्षुब्धोह्य
सौतदात्यर्थंगौर्य्याअर्थेगणाधिपः पाशेनवद्ध्वाकतिचित्कोपान्निहतवान्सुरान् दक्षेणनोदितादेवाःसर्वेयुद्धायनिर्य
युः महद्युद्धमभूत्तत्रसहदेवैर्गणेशितुः तदृष्ट्वानारदःशीघ्रंपुनःकैलासमाययौ निवेदयामासचतमुदंतंसर्वमी
श्वरे तच्छ्रुत्वास्फालयामासजटांकोपादुमापतिः ततोजातोतिविकटःपुरुषोरक्तलोचनः सवभाषेमहादेवंस्वा
मिन्नाज्ञांप्रदेहिमे वीरभद्रेतिनामास्यकृत्वाचाज्ञांतमादिशत् दक्षयज्ञविनाशायगच्छवीरेतिसत्वरम् श्रुत्वातदी
श्वरवचः सर्वप्रमथसंवृतः आययौयज्ञसदनमसृग्वह्निपुनिक्षिपन् ततइंद्रादयोदेवास्तद्वधायविनिर्ययुः
क्षणात्पराजितास्तेनविद्रुतास्तेदिशोदश अनुद्रुतांश्चतान्सोपिपूष्णोदंतानपातयत् भगस्यनेत्रेनासांचसहसा
विन्यकृंतत एवंविद्रावितान्सर्वाञ्छिरोयक्षस्यचिच्छिदे कृत्वैवंयज्ञघातंसआजगामशिवांतिकं नमस्कृत्य
पुरस्तस्थौकृतंकार्यमितिब्रुवन् तथाप्रशांतःकोपोस्ययज्ञात्वैवंज्ञानचक्षुषा प्रसादयितुमीशानंब्रह्मविष्णूसमीयतुः
नमस्कृत्यस्तुतस्ताभ्यांप्रसन्नोभूत्सदाशिवः नारदस्तुंवरुश्चैवगीतैःशिवमतोषयन् प्रसन्नंवीक्ष्यतंविप्रःशिवांसं

स्पृश्यपाणिना ननर्तनारदस्तत्रतोपयन्नाधिकांशिवं एतस्मिन्नंतरेब्रह्माविष्णुश्चप्रमथाधिप व्यजिज्ञपत्त्वंदक्षा
दीन्कृपादृष्ट्यावलोकय कृत्तांगान्कुरुपूर्णांगान्मृतान्संजीवयप्रभो विलोकितास्तेदेवेनकृपादृष्ट्याविलोकिताः यथापूर्वं
सुराःसर्वेऽभूवंस्तत्प्रसादतःउत्थायपादमूलंययौदक्षःपिनाकिनः अपराधंक्षमस्वेतिपुनःपुनरुवाचह उत्थापितः
करेणासौततोदक्षःपिनाकिना उक्तश्चमापुनःकार्षीरेवमीशावमाननं विचरस्वसुखेनेतिभूयस्तंकोपआविशत् शशाप
चतदागौरींयज्ञविघ्नकरींशिवःयज्ञविघ्नंकृतवतीदक्षस्यैषाततश्चिरात् तिर्यग्योनिंसमापन्नाविचरिष्यतिभूतले ततो
गौरीवभाषेतंप्रणिपत्यसदाशिवं कथंयास्यामितिर्यक्त्वंभूतलेवास्थितिःकथं अन्यथानैवभविताशापएषत्वयोदितःको
किलानांस्वरंरूपंनारीरूपंपतिव्रता विद्यारूपंकुरूपाणांक्षमारूपंतपस्विनां अचिरादेवचपुनःकुलेमहतिजन्मनि
भूयास्त्वमेवभर्ताचनवियोगश्चनौयतः वरयेत्कुलजांप्राज्ञःकुरूपामपिकन्यकां दुःकुलेयासमुत्पन्नाभर्तुःपातयतेकुलं
नदीपातयतेकूलंनारीपातयतेकुलं नारीणांचनदीनांचस्वच्छंदललितागतिःततस्तुष्टोमहादेवश्चक्रेशापविमोचनं द
शवर्षसहस्राणिकोकिलारूपधारिणी नंदनेदेवविपिनेचरिष्यासिनतःपरं हिमालयसुताभूत्वामत्प्रियात्वमुपैष्यसि दे
वानांचयथाविष्णुःसहकारोमहीरुहां गंगाचसर्वतीर्थानांभव्यातिर्यक्षुकोकिला आषाढ्यांयदास्यात्तांकोकिला
ख्यांतदार्चनं सदायाकुरुतेनारीनसावैधव्यमाप्नुयात् वशिष्ठउवाच एतद्वाक्यावसानेतुगौरीसाकोकिलाभवत् त
द्वाआदिशुचेर्ह्ह्येकोकिलायाव्रतंशुभं यानारीनैवकुरुतेमोहात्साविधवाभवेत् कुरुत्वमेतत्कल्याणिकीर्तिमालेव्रतंशु
भं कीर्तिमालोवाच कथमाराध्यतेगौरीकोकिलारूपधारिणी विधानंब्रूहिमेब्रह्मन्त्वत्प्रसादात्करोम्यहं वसिष्ठउ
वाच कोकिलाव्रतमाहात्म्यंविधानंचवदाम्यहं शृणुदेविप्रवक्ष्यामिमंत्रैःपौराणिकैर्युतं मलमासेत्वतिक्रांतेशुद्धा
षाढेसमागते आषाढ्यांपौर्णमास्यांतुसंध्याकालेह्युपस्थिते संकल्पयेन्मासमेकंश्रावणेप्रतिगृह्यच स्नानसमाचरे

न्नित्यंब्रह्मचर्यस्थितासती भोक्ष्येनर्क्तचभूशय्यांकरिष्येप्राणिनांदयां सौभाग्यधनधान्यादिप्राप्तयेशिवतुष्टये इति
स्नानतवायासंकल्प्यविप्राग्रेनारीविप्रेभ्यएवच प्राप्यानुज्ञांतुसंपाद्यसामग्रींसकलामपि प्रत्यूषेचप्रतिदिनंदंतधाव
नपूर्वकं नद्यांगत्वाथवाप्यांवातडागेगिरिनिर्झरे स्नानंकरोमिदेवेशिकोकिलेप्रीतयेतव जलेस्मिन्पावनेपुण्येसर्वदेव
जलाश्रयेस्नानंकुर्याद्व्रतादौदिविसुगंधामलकैस्तिलैः दिनाष्टकंततःपश्चात्सर्वौषध्यापुनःपृथक् तत पिष्टेनचस्नानंदिना
न्यष्टौसमाचरेत् तिलामलकपिष्टेनसर्वौषधियुतेनच षट्दिनानिततःस्नानंसंपूर्णफललिप्सया स्नात्वाध्यात्वारविंत
स्मैदद्यादर्घ्यंप्रयत्नतः आदित्यभास्कररवेब्रह्मार्कसूर्यदिवाकर प्रभाकरनमस्तुभ्यंगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यमंत्रः
कारयेत्कोकिलांदेवींसौवर्णींसर्वकामदां रौप्यचरणयोश्चैवनेत्रयोश्चापिमौक्तिक रत्नानिपंचपृष्ठेतुचूतवृक्षसमाश्रि
तां अथवातिलपिष्टेनकोकिलांपक्षिरूपिणीं निधायताम्रपात्रेतांपूजयेत्सुसमाहिता उपचारैःषोडशभिर्यथावत्त
न्निबोधय आवाहयामित्वांदेवींकोकिलारूपधारिणीं अवतारंकुरुष्वात्रप्रसादंकुरुसुव्रते आवाहन आगच्छको
किलेदेविदेहिमेखिलवांछितं चूतवृक्षंसमारुह्यरमसेनंदनेवने आसनं तिर्यग्योनिसमुद्भूतेकोकिलेवरकंठके ति
लपुष्पाक्षतैरर्घ्यंगृहाणत्वंनमोस्तुते अर्घ्यं आषाढस्यासितेपक्षेमेघवर्णस्वरूपिणि कोकिलेनामदेवेस्नानी
यंप्रतिगृह्यतां स्नान कोकिलेकलकंठेचमाधवेमधुरस्वरे वसंतवससेदेविवस्त्रंचप्रतिगृह्यतां वस्त्रं श्रीखंडचंदनंदि
व्यंगंधाढ्यंसुमनोहरं विलेपनंमयादत्तंप्रीत्यर्थंप्रतिगृह्यतां गंधं हरिद्राकुंकुमद्रव्यैःकोकिलेकामसंभवे कुंकुमेना
र्चितासित्वमतःशांतिंप्रयच्छमे हरिद्रा कृष्णशुक्लंचरक्तंवावासांसिविविधानिच पीतवस्त्रप्रदानेनप्रीताःस्युःसर्व
देवताः वस्त्रयुग्म शतपत्रैर्जातिपुष्पैश्चंपकैर्मरुपत्रकैः पाटलैश्चैवदूर्वाभिर्युतंपुष्पंगृहाणमे इतिपुष्प वनस्पत्यु
द्भवइतिधूपं आज्यंसहतैर्संयुक्तमितिदीपं सर्वभक्ष्यसमायुक्तंरसैःसर्वैःसमन्वितं सर्वदेवसमाहारं नैवेद्यं प्रतिगृ

ह्यतामितिनैवेद्यं कूष्मांडैर्नारिकेलैश्चखर्जूरैर्दाडिमीफलैः चूतजंबीरजंबूभिःश्रीफलामलकैस्तथा द्राक्षाबादामबदरै
र्मातुलुंगैः सशर्करैः फलानि नागवल्लीदलैःशुद्धंकर्पूरैलासमन्वितं पूगीफलंसखदिरंतांबूलंप्रतिगृह्यतां तांबूलं हिर
ण्यगर्भमितिदक्षिणा भिन्नानिकंठसूत्राणिदद्यादपिदिनेदिने कुंकुमंपुष्पतांबूलमक्षतांश्चादिनेदिने कुर्याद्देवविधां
त्रपूजांश्रावण्यांतच्च सुव्रता विसर्जयेत्तुपश्चात्तांसौवर्णींकोकिलांयदि यदानुतिलपिष्टस्याक्रियतेकोकिल.यदि कुर्या
तुप्रत्यहंपूजांभिन्नायास्तुविसर्जनं रम्यंवनंसमागत्यश्रुत्वाकोकिलकूजितं यदानश्रूयतेशब्दउपवासस्तुतद्दिने
कोकिलेकृष्णवर्णेचसदावासोवनेपुते सोभ.ग्यमतुलंदेहिगृहाणार्घ्यंनमोस्तुते इत्यर्घंदत्वाविसर्जनं तत्रमंत्रःदेवि
चैत्ररथोत्पन्नेविंध्यपर्वतवासिनि गच्छगच्छमहादुर्गेस्वस्थानेनंदनेवने प्रार्थना नमस्कारमंत्रः रूपंदेहिधनं
देहिसर्वसौख्यंचदेहिमे पुत्रान्देहियशोदेहिसौभाग्यंदेहिसंपदः इत्युक्त्वाततःपश्चाद्धविष्यान्नेनसुव्रता नक्त
भोजीभवेत्तावद्यावन्मासःसमाप्यते मासांतेताम्रपात्रेतुकोकिलांस्वर्णनिर्मितां वस्त्रधान्यगुडैर्युक्तांश्रावण्यांकुंडलं
तथा दद्यात्सदक्षिणांचापिदैवज्ञेवापुरोहिते एवमाषाढमासस्यद्वैविध्येसमुपस्थिते सधवाविधवावापियानारी
कोकिलाव्रतं करोतिसप्तजन्मानिसौभाग्यंलभतेतुसा मृतागौरीपुरंयातिविमानेनार्कतेजसा भविष्योत्तरे श्री
कृष्णउवाच एतद्व्रतंवसिष्ठेनमुनिनाकथितंपुरा तयाकृतंसुतत्सर्वंविधिनाकीर्तिमालया तस्याःसर्वंच निष्पन्नं
वसिष्ठवचनंयथा एवमन्यापिकौंतेयकोकिलाव्रतमुत्तमम् करिष्यतिततस्तस्याःसौभाग्यंचभविष्यति आषाढौद्वौ
यदास्यातांकोकिलाव्रतमाचरेत् नकरोतियदानारीव्यालीभवतिकानने एकतःसर्वदानानिकोकिलाव्रतमेकतः कृ
तंपुराप्सरोभिश्चऋषिपत्नीभिरादरात् अहल्ययाचसंस्नात्वाकृत्वाशापविमुक्तये अरुंधत्यासदास्नात्वापूजिता
कोकिलानृप सीतयापूजितासापिसर्वकामार्थसिद्धये गौतम्यांदंडकारण्येस्नानंकृत्वायथाविधि नलान्वेषणकामाय

दमयंत्याचपूजिता रुक्मिण्याचततःस्नात्वापूजिताकोकिलाशिवा विष्णोःपत्युरत्र्यर्थं तच्चजातंनसंशयः कुचेलामलिनादीनापरकर्मरतातथा एवंवंध्याकाकवंध्याकन्यावत्साविवत्सकाः सर्वास्ताःफलभाजः स्युर्व्रतस्यास्यप्रभावतः आयुरारोग्यमैश्वर्यंसुखवृद्धिंयशःसुतान् सौभाग्यंसुंदरंरूपंनारीप्राप्नोतिनान्यथा एवं व्रतंमयाख्यातंकार्य्यंवारत्रयंनृप तृतीयांतेचविधिवत्कार्य्यमुद्यापनंशुभं एकस्माज्जायतेद्रव्यंद्वितीयाल्लभतेसुतान् तृतीयाच्चापिसौभाग्यंप्राप्नुयान्नात्रसंशयः ॥ इतिवाराहे कोकिलाव्रतम् ॥ अथोद्यापनं भविष्योत्तरे युधिष्ठिरउवाच उद्यापनविधिंब्रूहिव्रतस्यास्यममप्रभो येनविज्ञातमात्रेणसौभाग्यंचभविष्यति ॥ श्रीकृष्ण उवाच ॥ श्रावण्यांपौर्णमास्यांतुशुक्लपक्षेविशेषतः द्वितीयायामेकभक्तंदंतधावनपूर्वकम् उपवासस्यनियमं कर्तुंव्रतपरायणं तृतीयापुण्यफलदामध्याह्नेसमुपोषिता उपलिप्यशुचौदेशेमंडलंतत्रकारयेत् लिखेदष्टदलंपद्मंचतुष्कोणोपशोभितम् सप्तधान्यभृतंपात्रंप्रस्थेनैकेनपूरितं तदभावेतदर्द्धंवाकुडवेनाथपादव ऊर्णपट्टंकृष्णवर्णंयुग्मंदद्यात्स्वशक्तितः तस्योपरिन्यसेद्देवींकोकिलांपूजयेत्ततः अन्नगंधप्रदानेनधूपदीपप्रदानकं नैवेद्यंमोदकाद्यंचपक्वान्नंसघृतंवहु अर्घ्यंचैवप्रदातव्यंतांबूलंफलमुत्तमं रात्रौजागरणंकार्यंवाद्यनृत्यसमन्वितं पूजयित्वैकचित्तेनफलंप्राप्नोतिचाक्षयं प्रभातेविमलेजातेस्नानंकृत्वाविधानतः नित्यंनिर्वर्त्यविधिवद्धोमंचविधिनाद्विजः तिलपंचकपुष्पैश्चतंडुलैर्घृतपायसैः अष्टोत्तरशतंहुत्वादुर्गामंत्रैश्चवैदिकैः कोकिलाप्रीतयेतद्वद्द्रव्याहुतीनांशतत्रयं ब्राह्मणान्भोजयेत्पश्चात्सपत्नीकांश्चपंचच अशक्तोह्येकयुग्मंचभोजयेच्चतथागुरुं स्त्रीभ्यश्चैवप्रदातव्याःकरकाःपंचचैवतु मोदकाश्चससूत्राश्चवंशपात्रसमन्विताः कृष्णवर्णसमायुक्ताःपक्वान्नैनवपूरयेत् सर्वोपस्कररसंयुक्तंत्रिस्त्रीभ्यश्चप्रदापयेत् आचार्य्यंपूजयेद्भक्त्यागांकृष्णांचसवत्सकां उपानहौतथाशय्यांचामरंछत्रमेवच

मधुरस्वरे वसंतवससेदेविगच्छत्वंनंदनवनेइतिमंत्रेणविसर्जयेत् ततःसदन्नेनब्राह्मणान्संतोष्य आचार्याय कोकि
लाप्रतिमांसोपस्करांशय्यांगांचदत्वा भूरिदानेनान्यानपि संतोष्याशिषोगृह्णीयादिति कोकिलाव्रतोद्यापनं
अस्यामेवांबिकाव्रतं ब्रह्मपुराणे आषाढस्यपौर्णमास्यांयोर्चयेदंबिकांनरः सोपवासोमहाभागसयातिपरमांगतिं
सोपवासःकृतोपवासःपरमगतिर्मोक्षः अत्रशिवपूजोक्ताभविष्यपुराणे आषाढस्यपौर्णमास्यांविधिवत्पूजयेच्छि
वं सोश्वमेधमवाप्नोतिविष्णुलोकेमहीयते अत्राभियुक्ताः पठंति शुचिसितदिनकरवारेकरमूलेवद्धमूलस्य नागारेरि
वनागाः प्रयांतिकिलदूरतस्तस्य तथा आर्द्रायाःप्रथमेपादेक्षीरमश्नातियोनरः अपिरोपान्वितस्तस्यतक्षकः किं
करिष्यति क्षीरपरमान्नमश्नात्ययंवलादितिव्यालिहस्तकाः तथा मूलंतंडुलवारिणापिवतियः प्रत्यंगिरासंभवं
निष्पिष्टंशुचिभद्रयोगदिवसेतस्याहिभीतिःकुतः कुर्याद्देवयदाफणीदशतितंमोहान्वितोमूलयं स्थानतेनसएव
यातिनियतंचक्रंयमस्याचिरात् शुचिराषाढःप्रत्यंगिराशिरीषः अत्रविश्वेदेवपूजोक्ताब्रह्मपुराणे आषाढयुतेवैश्व
देवेनक्षत्रेसतिशोभने दशतान्पूजयेत्तत्र विश्वेदेवान्महावलान् वैश्वदेवंउत्तराषाढानक्षत्रंतेचदश क्रतुर्दक्षोवसुः
सत्यःकालःकामस्तथैवच धुरिश्चलोचनश्चैवतथाचैवपुरूरवाः आश्रवश्चदशैतेतुविश्वेदेवाःप्रकीर्तिताः इतिवृ
हस्पत्युक्तेः भविष्यपुराणे आषाढ्यांस्नानपूजेच श्रावण्यांसततंनरः आषाढ्यामथकार्तिक्यांमाघ्यांप्राश्यचपादपान्
पूजयेत्पितृपूर्वंतुदत्तमक्षयमुच्यतेइति अत्रविष्णुपुराणदानमुक्तं नारदीये एतद्विष्णुपुराणंतुसर्वशास्त्रार्थसंग्रहः
वाराहकल्पवृत्तांतंव्यासेनकथितंत्विह योनरःपठनेभक्त्यायःशृणोतिचसादरं तावुभौविष्णुलोकंतुव्रजेतांभुक्तभो
गकौ तल्लिखित्वाचयोदद्यादाषाढ्यांघृतधेनुना सततंविष्णुभक्तायपुराणार्थविदेद्विज सयातिवैष्णवंधामविमा
नेनार्कवर्चसाइति घृतधेनुदानंविष्णुधर्मोत्तरेज्ञेयम् अस्यांशिवशयनमुक्तं हेमाद्रौवामनपुराणे पौर्णमास्यामुमा

नाथः स्वपतेच्चर्मसंस्तरे वैयाघ्रेचजदाभारंसमुद्धृत्यागहिवर्ष्मणेति इयंरुद्रव्रतत्वात्पूर्वविद्धाग्राह्या अत्र.वैष्णुय
यनमप्युक्तं प्रागेकादशीप्रकरणे अत्रैव आषाढ्यांशयनपूजाचोक्ताकाशीखंडे उदीच्यांभारभूतेशमाढीशंसमर्चयेत्
आप द्व्यांपंचशब्दंवैनपापैःपरितप्यते कृत्वासांवत्सरींयात्रामनेनाजायतेनरइति अस्यांकिंचिद्दानंकार्यमाषाढी
कार्तिकीत्यादिनावैशाखीप्रकरणेद्रष्टव्यम् अस्यामेवशिवपवित्रारोपणमुक्तं हेमाद्रौ शिवधर्मपुराणभविष्ययोः
पौर्णमास्यांतथाषाढ्यांशिवंसंपूज्ययत्नतः उपवीतंशिवेदद्याच्छिवभक्तांश्चपूजयेत् पुनरेवचकार्तिक्यांपूज्यशंभु
क्षमापयेत् यतिभ्योदक्षिणांदद्यात्सूत्रवस्त्रादिपूर्वकं यः कुर्यात्सकृदप्येवंचातुर्मास्येपवित्रकं कल्पकोटिशतं
दिव्यंरुद्रलोकेमहीयतइति अत्रैव कालांतरविधिपूर्वकनित्यत्वमुक्तंकालांतरे आषाढ्यंतेचतुर्दश्यांनभस्यनभसो
स्तथा अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोःसमं पवित्रारोपणंकार्यंसप्तम्यांचाधिवासनपूर्वक गंधपवित्रारोपणं
शिवकार्यं पौर्णमास्यामनुष्ठानपक्षेचतुर्दश्यामष्टम्यांवाचाधिवासनंकार्यं सप्तम्यांत्रयोदश्यांतत्रगंधपवित्र
कमितिहेमाद्रिवचनात् पवित्रारोपणंशंभोःकुर्यान्नभसिवाशुचौ चतुर्दश्यामथाष्टम्यामधिवास्यविधानतः
श्रावणप्रोष्ठपद्यांचपवित्रारोपणंतुयः कुरुतेनापवित्रः स्यात्ससंवत्सरंनरइति शिवरहस्यवचनाच्च प
वित्रारोपणंशुचौ आपद्व्यामधिमासत्वेतत्रनेदंकार्यं आषाढेतुनकर्तव्यसुप्तेदेवेजनार्दन इतिवचसातदाभि
प्रायेणनिबंधकादिः प्रत्याख्यानात् उक्तमासत्रय तदकरणे कन्यागतेऽपि सूर्ये तत्कार्यं उक्तमासत्रये
यस्तुनकुर्यात्सूत्ररोहणं असौकन्यागतेभानौ यथादक्षाणुनाकृतं कुर्यात्पवित्रंशंभोस्तु तुलायांनकथं
चनेतिवचनाद्दक्षाणुना अघोरमंत्रेणेति व्याख्यातं हेमाद्रिणा सहकालासंभवेसद्योपितत्कर्तव्यं यद्यातदै
वकर्तव्यं यदिप्रत्यग्रनयातदागोदोहांतरितंकृत्वासाधिवासिकंपवित्रकमितिवचनांतरात मंत्रातिरिक्तविधिस्तु

विष्णुपवित्रारोपणवद्बोध्यः अस्यामेवपौर्णमास्यांसंन्यासिनामोत्सर्गिकसंचरणचातुर्मास्यगतापवादस्य परिपालन
संकल्पांगत्वेनक्षौरंव्यासपूजादिकंविहितं उत्सर्गशास्त्रंचाहश्वेताश्वतरीये एकरात्रंवसेद्ग्रामेपत्तनेतुदिनत्रयं पुरेदि
नद्वयभिक्षुर्नगरेपंचरात्रकम् वर्षास्वेकत्र तिष्ठेतस्थानेपुण्यजनाश्रिते आत्मवत्सर्वभूतानिपश्यन्भिक्षुश्चरेन्महीमिति
अरुणस्मृतौ वर्षासुध्रुवशीलस्तुमासानेकाकीयतिश्चरेत् द्वावेवाचरेदिति अत्रवर्षासुमासास्वितिकार्त्तिकांताश्चत्वारो
मासाउच्यंते-द्वाविति द्वयोर्वाश्रावणभाद्रपदयोरित्यर्थः ध्रुवशीलः एकस्थिरः चरेदिति भिक्षाटनाद्यनुवादः मे
धातिथिः आषाढ्यांपौर्णमास्यांचकारयेद्वपनयतिः चातुर्मास्यमध्येतुवर्जयेद्वपनंयतिरिति तथाच वपनांतेतुपु
नःस्नानमद्भिर्द्वादशभिर्यतिरिति द्वादश्यांचप्रकुर्वीतक्षौरांतेप्राणसंयमानिति अत्रिः वपनानंतरंस्नात्वापूजयेत्पुरुषो
त्तममिति यतिधर्मसमुच्चये देवकृष्णामुनिंव्यासंभाष्यकारंगुरोर्गृहं-गुरुंदेवगणाध्यक्षंदुर्गांदेवींसरस्वतीं गणंगणे
शमध्यक्षंक्षेत्रपालं अत्रक्षौरादिसंकल्पकर्मणि औदयिकीत्रिमुहूर्तापूर्णिमाग्राह्या त्रिमुहूर्ताधिकग्राह्यपर्वक्षौरप्र
णामयोरित्यभियुक्तोक्तेः कृत्यरत्नावल्यांदौतु मध्याह्नव्यापिनीग्राह्यादिनद्वयेतादृशीचेत्परैवेत्युक्तं केनापिप्रणिधा
नेन पौर्णमास्या अस्यसंकल्पविधेरसंभवेद्वादश्यामेवातुष्ठेयं द्वादश्यांपौर्णमास्यांवाकुर्यात्संकल्पमात्मविदित्य
दिवचनादिति अथव्यासपूजाविधिरुच्यते आषाढपौर्णमास्यांयतिः प्रातरुत्थायमृच्छौचादिकृत्वा अष्टोत्तरशत
स्नानपूर्वकक्षौरस्नानसंध्यादिपर्वतर्पणांतंकार्यं ततोव्यासपूजास्थापनांगत्वेन हस्तौपादौप्रक्षाल्यप्राणायामंच कृ
त्वा ब्राह्मणैःसहतिथ्यादिसंकीर्त्यव्यासपूजांकरिष्येइतिसंकल्प्य श्रीपर्णीदृभपीठंनिधाय तदुपरि सदशं धौत
वस्त्रंनिस्सार्य्य तत्रसंन्यासपीठंगधादिनालिखेत् तत्रायंक्रमःप्रागायताद्वादशरेखा उदगायताउदक्संस्थाद्वादशरे
खालिखेत्ततःपृथिव्यामेरुपृष्ठऋषिःसुतलछंदः कूर्मोदेवता आसनोपवेशनेविनियोगःपृथ्वित्वेतिपठित्वाआधारश

नाथः स्वपतेचर्मसंस्तरे वेयाग्रेचजदाभारंसमुद्वृथ्याहिवर्षमणेति इयंरुद्रव्रतत्वात्पूर्वविद्धाग्राह्या अत्र.विष्णुश
यनमप्युक्तं प्रागेकादशीप्रकरणे अत्रैव आषाढीशयात्रापूजाचोक्ताकाशीखंडे उदीच्यांभारभूतेशमाढीशंसमर्चयेत्
आप दृष्टांपंचदशगवेनपापैःपरितप्यते कृत्वासांवत्सरींयात्रामनेनाजायतेनरइति अस्यांकिंचिद्दानंकार्यमाषाढी
कार्तिके.स्नादिनावैशाखीप्रकरणेद्रष्टव्यम् अस्यामेवशिवपवित्रारोपणमुक्तं हेमाद्रौ शिवधर्मपुराणभविष्ययोः
पौर्णमास्यांतथाषाढ्यांशिवंसंपूज्ययत्नतः उपवीतंशिवेदद्याच्छिवभक्तांश्चपूजयेत् पुनरेवचकार्तिक्यांपूज्यशंभु
क्षमापयेत् यतिभ्योदक्षिणांदद्यात्सूत्रवस्त्रादिपूर्वकं यः कुर्य्यात्सकृदप्येवंचातुर्मास्येपवित्रकं कल्पकोटिशतं
दिव्यंरुद्रलोकेमहीयतइति अत्रैव कालांतरविधिपूर्वकनित्यत्वमुक्तंक.लांतरे आषाढ्यंतेचतुर्दश्यांनभस्यनभसो
स्तथा अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोःसमं पवित्रारोपणंकार्यंसप्तम्यांचाधिवासनपूर्वकं गंधपवित्रारोपणं
शिवेकार्यं पौर्णमास्यामनुष्ठानपक्षेचतुर्दश्यामष्टम्यांवाचाधिवासनंकार्यं सप्तम्यांवात्रयोदश्यांतत्रगंधपवित्र
कमितिहेमाद्रिवचनात् पवित्रारोपणंशंभोःकुर्यान्नभसिवाशुचौ चतुर्दश्यामथाष्टम्यामधिवास्यविधानतः
श्रावणेप्रोष्ठपद्यांचपवित्रारोपणंतुयः कुरुतेनापवित्रः स्यात्ससंवत्सरंनरइति शिवरहस्यवचनाच्च प
वित्रारोपणंशुचौ आषाढ्यामधिमासत्वेतत्रनेदंकार्यं आषाढेतुनकर्तव्यंसुप्तेदेवेजनार्दन इतिवचसातदभि
प्रायेणनिबंधकाद्भिः प्रत्याख्यानात् उक्तमासत्रयं तदकरणे कन्यागतेऽपि सूर्ये तत्कार्यं उक्तमासत्रये
यस्तुनकुर्य्यात्सूत्ररोहणं असौकन्यागतेभानौ यथादक्षाणुनाकृतं कुर्यात्पवित्रंशंभोस्तु तुलायांनकथं
चनेतिवचनाद्दक्षाणुना अघोरमंत्रेणेति व्याख्यातं हेमाद्रिणा सहकालासंभवेसद्योपित्कर्तव्यं यद्वातदै
वकर्तव्यं यदिप्रत्यग्रनयातदागोदोहांतरितंकृत्वासाधिवासिकंपवित्रकमितिवचनांतरात् मंत्रातिरिक्तविधिस्तु

विष्णुपवित्रारोपणवद्बोध्य अस्यामेवपौर्णमास्यांसन्यासिनामौत्सर्गिकसंचरणचातुर्मास्यगतापवादस्य परिपालन सकल्पागत्वेनक्षौरंव्यासपूजादिकंविहित उत्सर्गशास्त्रंचाहश्वेताश्वतरीये एकरात्रवसेद्ग्रामेपत्तनेतुदिनत्रयं पुरेदि नद्वयभिक्षुर्नगरेपंचरात्रकम् वर्षास्वेकत्र तिष्ठेतस्थानेपुण्यजनाश्रिते आत्मवत्सर्वभूतानिपश्यन्भिक्षुश्चरेन्महीमिति अरुणस्मृतौ वर्षासुध्रुवशीलस्तुमा स्वेकाकीयतिश्चरेत् द्वावेवाचरेदिति अत्रवर्षासुमा.स्विति कार्त्तिकाताश्चत्वारो मासाउच्यंते द्वाविति द्वयोर्वाश्रावणभाद्रपदयोरित्यर्थः ध्रुवशीलः एकस्थिरः चरेदिति भिक्षाटनाद्यनुवादः से धातिथिः आषाढ्यापौर्णमास्यांचकारयेद्वपनयतिः चातुर्मासस्यमध्येतुवर्जयेद्वपनयतिरिति तथाच वपनांतेतुपु नःस्नानमद्भिर्द्वादशभिर्यतिरिति द्वादश्यांचप्रकुर्वीतक्षौरांतेप्राणसंयमानिति अत्रिः वपनानंतरंस्नात्वापूजयेत्पुरुषो त्तममिति यतिधर्मसमुच्चये देवकृष्णमुनिव्यासभाष्यकारगुरोर्गृहं गुरुर्देवगणाध्यक्षदुर्गादेवीसरस्वती गणगणे शाध्यक्षक्षेत्रपालं अत्रक्षौरादिसंकल्पकर्मणि औदयिकीत्रिमुहूर्तापूर्णिमाग्राह्या त्रिमुहूर्ताधिकग्राह्यंपर्वक्षौरप्र णानयोरित्यभियुक्तोक्तेः कृत्यरत्नावल्यांदौतु मध्याह्नव्यापिनीग्राह्यादिनद्वयेतादृशीचेत्परैवेत्युक्तं केनापिप्रणिधा नेन पौर्णमास्या अस्यसंकल्पविधेरसंभवेद्वादश्यामेवानुष्ठेयं द्वादश्यांपौर्णमास्यांवाकुर्यात्संकल्पमात्मविदित्य। दिवचनादिति अथव्यासपूजाविधिरुच्यते आषाढपौर्णमास्यांयतिः प्रातरुत्थायमृच्छौचादिकृत्वा अष्टोत्तरशत स्नानपूर्वकक्षौरस्नानसंध्यादिपर्वतर्पणांतंकार्यं ततोव्यासपूजास्थापनांगत्वेन हस्तौपादौप्रक्षाल्यप्राणायामंच कृ त्वा ब्राह्मणैः सहतिथ्यादिसंकीर्त्यव्यासपूजांकरिष्येइतिसंकल्प्य श्रीपर्णीद्रुमपीठंनिधाय तदुपरि सदशं धौत वस्त्रंनिस्सार्य्य तत्रसन्यासपीठंगधादिनालिखेत् तत्रायंक्रम.प्रागायताद्वादशरेखा उदगायताउदक्संस्थाद्वादशरे खालिखेत्तत पृथिव्यामेरुपृष्ठऋषि'सुतलछंदः कूर्मोदेवता आसनोपवेशनेविनियोगःपृथ्वित्वयेतिपठित्वाआधारश

कयेनमः वेदव्यासायनमः अनंतायनमः इत्यासनमावाह्य पूर्वेरक्षतुगोविंदोह्याग्नेय्यांगरुडध्वजः याम्यांरक्ष तुवाराहोनारासिंहस्तुनैर्ऋते केशवोवारुणींरक्षेद्वायव्यांमधुसूदनः उत्तरेश्रीधरोरक्षेदैशान्यांतुगदाधरः ऊर्ध्वेगोव र्द्धनधरोह्यधस्तात्तुमहीधरः इतिदिग्बंधः प्राणायामत्रयंकृत्वांगकरन्यासौकृत्वा प्रणवस्यऋष्यादिस्मृत्वा पादादि न्यासध्यानंकृत्वा सलिलंस्पर्शेत् आधारशक्तिमारभ्य साक्षतपुष्पैः पीठदेवताआवाहयेत् आधारशक्तयेनमः वै राग्यायनमःऐश्वर्यायनमःवेदव्यासायनमः अनंतायनमः वराहायनमः पृथिव्यैनमः रत्नदीपायनमः रत्न प्रासादायनमः दिव्यसिंहासनायनमः धर्मायनमः ज्ञानायनमः वैराग्यायनमः ऐश्वर्यायनमः अधर्माय नमः अज्ञानायनमः अवैराग्यायनमः अनैश्वर्यायनमः संसत्त्वबोधात्मनेनमः रंरजसेप्रकृत्यात्मनेनमः तं तमसेसोमात्मनेनमः ऊंमूलायनमः कंदायनमः ऊंनालायनमः पद्माय. पत्रेभ्यो- केसरेभ्यो. कर्णिकायै. द्वा दशकलात्मनेसूर्याय. षोडशकलात्मनेसोमाय. दशकलात्मनेअग्निमंडलाय.आत्मने. अंतरात्मनेनम इतिपी ठदेवताआवाह्य ततोमुख्यदेवताऽऽवाहनं तत्रक्रमः गंगणपतये दुंदुर्गायै क्षंक्षेत्रपालाय इंइंद्राय संसर स्वत्यै. निंनिर्ऋतये- इत्याग्नेयवायव्यैशाननैर्ऋत्यकोणेपुस्थापयेत् मध्येश्रीकृष्णायकृष्णपूर्वे वासुदेवाय- दक्षि णेसंकर्षणायनमः पश्चिमेप्रद्युम्नाय- उत्तरेअनिरुद्धाय- इतिकृष्णपंचकम् कृष्णदक्षिणभागेव्यासपंचकंसंस्था प्य मध्येवेदव्यासाय. व्यासपूर्वेसुमंतवे व्यासदक्षिणेजैमिनये व्यासपश्चिमेवैशंपायनायनमः व्यासोत्तरेपैला य- इतिव्यासपंचकन्या- कृष्णवामभागेशंकराचार्यपंचकम्. मध्येशंकराचार्येभ्योनमः पूर्वेविश्वरूपाचार्ये भ्यो-दक्षिणपद्मपादाचार्येभ्यो- पश्चिमेहस्तामलकाचार्येभ्यो. उत्तरेत्रोटकाचार्येभ्योनमः इतिशंकराचार्यपंचक मावाह्य कृष्णपार्श्वयोर्ब्रह्मरुद्रौ पश्चिमादौ सनकादीन्स्थाप्य सनकायनमः सनंदनायनमः सनातनायनमः

सनत्कुमारायनमः सनत्सुजातायनमः पंपरमगुरुभ्योनमः पपरमेष्ठिगुरुभ्योनमः अन्यांश्च ब्रह्मविद्याचार्यान्प
जयेत् तेच ब्रह्मब्रह्मावसिष्ठश्चशक्तिश्चैवपराशरः व्यासःशुकोगौडपादोगोविन्दस्वामिशंकरः इडविडाचार्ये
भ्योनमः समस्तब्रह्मविद्यासप्रदायप्रवर्तकाचार्येभ्योनमः तत इंद्रादिदिक्पालान् स्वस्वस्थाने स्थापयेत्
तत्रार्थक्रमः पूर्वे इंद्रायनमः अग्नये नमः यमायनमः निर्ऋतयेनमः वरुणायनमः वायवेन
मः सोमायनमः ईशानायनमः ब्रह्मणेनमः अनतायनमः आत्मनेनमः अंतरात्मनेनमः परमात्मनेनम इ
तिदिक्पालानावाह्य ग्रहान्वैप्रतिष्ठाप्य ततस्तुमैत्रावरुणौ ततःषोडशोपचारैर्वेदमंत्रैःपूजयेत् सहस्रशीर्षे
तिषोडशर्चस्य नारायणऋषिः पुरुषोदेवता अनुष्टुप्छंदः अंत्यात्रिष्टुप्षोडशोपचारपूजायांविनियोगः
सहस्रशीर्षेत्यावाहनं पुरुषएवेत्यासन एतावानस्येतिपाद्यं. त्रिपादूर्ध्वमित्यर्घ्यं. तस्माद्विराडित्याचमन आ
प्यायस्वेतिमंत्रे पंचामृत यत्पुरुषेणेतिस्नान तयज्ञामेतिवस्त्रं. तस्माद्यज्ञात्सर्वहुत.संभृतामितियज्ञोपवीतं. हि
रण्यरूपइत्यलंकारान् तस्माद्यज्ञात्सर्वहुत ऋचःसामानीतिअक्षताः तस्मादश्वेतिपुष्पाणि. परिमलद्रव्यम्
यत्पुरुषंव्यदधुरितिधूपं ब्राह्मणोस्येतिदीपं चंद्रमामनसइतिनैवेद्यम् मध्येपानीयं . उत्तरापोशानंकरोमीत्युद्वर्त
नम् नाभ्याआसीदितिफलम् तांबूलंच सप्तास्यासन्नितिदक्षिणा नीराजनंच यज्ञेनयज्ञमितिमंत्रपुष्प. अथवा
सर्वानेव तत्तन्नाम्नायति पूजयेत् पश्च दंतकाष्ठवस्त्रचंदनोदकचदद्यात् व्यासयुक्तानिमान्सर्वान्पूजयेच्चयथाक्रमं॥
अथपुष्पांजलिः लक्ष्मीकलत्रललिताब्जनेत्रपूर्णेंदुवक्त्रंपुरुहूतमित्रं कारुण्यपात्रंकमनीयगात्रंवंदेपवित्रंवसुदेवपुत्र
म् १ ॐनमोभगवतेवासुदेवाय शुद्धबुद्धस्वरूपिणे हिरण्यरेतसेतुभ्यंप्राधान्यबलरूपिणे २ नमोस्त्वनंताय
नीलोत्पलदलश्याममंपीतांबरधरंहरिम् शंखचक्रगदापद्मधारिणंप्रणमाम्यहम् १ इतिवैशंपायनपुष्पांजलि

सर्वेशास्त्रार्थतत्त्वज्ञंपरमानंदरूपिणम् ब्रह्माणंशंकराचार्य्यंप्रणमामिविवेकिनम् २ परात्परतरंशांतयोगींद्रंयोगिसेवितं शांतेंद्रियजितक्रोधंसशिष्यंप्रणमाम्यहं इतिशंकराचार्य्यपुष्पांजलिः पदेपदेमहापापसंघान्हंत्यसकृत्कृतान् प्रदक्षिणांतामद्भक्त्यागृहाणजगदीश्वर इतिप्रदक्षिणा ततःपूर्वासनोपरिस्थित्वानमस्कारंकुर्य्यात् व्यक्ताव्यक्तंस्थूलंसूक्ष्मंनिर्गुणंसगुणंशुभम् विश्वव्यापिनमीशानंवंदेदेवंरमापतिम् १ इतिनमस्कारः उद्भिज्जैरंडजैर्वापिप्राणिभिर्व्याप्यतेमही सूक्ष्मासूक्ष्मैश्चकीटाद्यैर्नानारूपैःसमंततः एतेषांरक्षणायाहमाषाढादिवसान्यतः असातिप्रतिबंधेतुमासान्वैवार्षिकानिह नियमामीतिसंकल्प्यमनसाविधिपूर्वकं वाचिकंसंकल्पंसंन्यासिवक्तव्यान्मंत्रानाहात्रिः माधवश्चतुरोमासान्सर्वभूतहितायवै निद्रायांरयतिशेषाकेलक्ष्म्यासहजगत्पतिः सुप्तश्चैवोस्थितोयावन्नभवेत्ससनातन अहंतावन्निवत्स्यामिसर्वभूतहितायवै १ इदंव्रतंमयादेवगृहीतंपुरतस्तव निर्विघ्नंसिद्धिमायातुप्रसादात्तेरमापते २ प्रावृट्कालेतुवायेणप्राणिभिर्व्याप्यतेमही स्थास्यामिचतुरोमासानतस्तेषांहितायवै ३ स्थापयिष्यामिशेषांकेलक्ष्म्यासहजगत्पति शेषपर्यंकवर्येस्मिन्फणामणिगणान्विते श्वेतद्वीपांतरेचैवकुरुनिद्रांजगत्पते ४ सुप्तेत्वयिजगन्नाथेजगत्सुप्तंभवेद्भुवि विबुद्धेचविबुध्येतप्रसन्नोमेभवाव्ययः श्वेतद्वीपेयोगिनाथभोगिनाथेस्थितेत्वयि चातुर्मास्यव्रतानुज्ञादेहिलक्ष्मीपतेनम चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि इतिचातुर्मास्यसंकल्पः ततउक्तवंतयतिंब्रूयुः पार्श्वस्थायेद्विजातयः निवसंतुसुखेनात्रगमिष्यामःकृतार्थतां दर्शनात्सहवासाच्चभाषणादभिवंदनात् भिक्षादानाद्वस्त्रदानाद्गमिष्यामःकृतार्थतां त्वयिभुक्तेजगन्नाथेभुक्तंभवतिसर्वदा त्वयिसुप्तेदेवगणाःसंतोषंयांतिसर्वदा अतोभवद्भिःस्थातव्यंचातुर्मास्यव्रतावधि शुश्रूषांचयथाशक्तिकरिष्यामोह्यहर्निशं गृहस्थैःप्रार्थितोभिक्षुरेवंस्थास्यामीतिप्रतिवदेत् ततोयतिर्यस्यस्मृत्येतिपाठंत्वा अनेनपरमेश्वरः प्रीयतामितिवदेत् ततोगृहस्थैरासनं

कौपीनांतर्वासोवहिर्वासःप्रावरणीयवस्त्रंगंधाक्षतपुष्पधूपदीपसाधनैवेद्य फलनीराजनमंत्रपुष्पप्रदक्षिणाः नम
स्कारैर्यतिस्तोषणीयः पूजानिवेदनंकृत्वाब्राह्मणान्संपूज्ययथाशक्तिदक्षिणांदत्त्वा श्रीपरमेश्वरःप्रीयतामितियथाश
क्तिब्राह्मणान्भोजयेत् इतिगृहस्थधर्माःप्राग्दृष्टेमृदमादायशुद्धांकंचिदपीडयन् प्राग्दृष्टेज्यैष्ठाषाढमासयोः एवंस्मृ
तिकासंग्रहोदलकाष्ठदंडोदकपात्रादिकसंग्रहप्रदर्शनार्थः तस्यसर्वस्यसमानत्वात् स्मरन्यज्ञेश्वरंविष्णुंवामनंक्रोड
रूपिण येनोद्धृतासिदेवित्वंक्रोडरूपेणदंष्ट्रया त्वयासहसमायातुकेशवोधरणीधरः इतिमृत्संग्रहः इतिशंकराचा
र्यकृतव्यासपूजासमाप्ता॥ ॥ * अस्यामेवगजपूजोक्ताव्रतेहेमाद्रौ एवमस्त्वितिदेवेशस्तमुवाचमतंगजं आ
षाढ्यांचतथाभाद्र्यांसमभ्यर्च्यगजाधिपं तवपूजांकरिष्यंतिदत्तोह्येषोवरस्तवेति तद्विधिस्तु तत्रैवद्रष्टव्यः विस्तरभ
यान्नेहप्रतन्यते इयंमन्वादिः अस्यामेवदिग्विशेषेवायुसंचारेफलविशेषउक्तोज्योतिःशास्त्रे आषाढ्यांभास्करास्ते
सुरपतिनिलयेवातिवातेसुवृष्टिः सस्यार्द्धंसंप्रकुर्यादपिदहनदिशिमंदवृष्टिर्यमेन नैर्ऋत्येसस्यनाशोवरुणादिशि
जलंवायुकोणप्रवायुः कौबेर्यांसस्यपूर्णासकलवसुमतीतद्वदीशानवायौ १ अत्रनक्षत्रयोगवशादपिफलविशेष
उक्तःसंहितायां आषाढपूर्णिमायांतुयन्नक्षत्रंविचारयेत् पूर्वाषाढेसुभिक्षंस्यान्मूलेदुर्भिक्षमुच्चकैः उत्तराषाढकेश्वा
नापीडावत्कसहातिरिति अस्यांविष्णुपुराणदानं तल्लिखित्वाचयोदद्यादाषाढ्यांघृतधेनुनेत्युक्तम् घृतधेनुदानंवि
ष्णुधर्मोत्तरे तिलाभावेतथादद्याद्घृतधेनुंप्रयत्नतः वासुदेवंजगन्नाथंघृतक्षीराभिषेचनैः संपूज्यपूर्ववत्पुष्पैर्गंधधू
पादिभिर्नरः अहोरात्रोषितोनाम्नाअभिपूज्यघृतार्चिषं गव्यस्यसर्पिषःकुंभंपुष्पमालाविभूषितं कांस्योपधानसं
युक्तंसितवस्त्रयुगेनच हिरण्यगर्भसहितंमणिविद्रुममौक्तिकैः कुंभःपलसहस्रपरिमाणोवादशपलादिकानिपंचश
तपलानिवाकुंभः इक्षुयष्टिमयान्पादान्खुरान्रौप्यमयांस्तथा सौवर्णेचाक्षिणीकुर्यात् शृंगेचागुरुकाष्ठजे स

सधान्यमयेपार्श्वेपत्रोर्णेनचकेवलम पत्रोर्णधौतकौशेयं कुर्यात्तुरुष्ककर्पूरैर्घ्राणंफलमयान्स्तनान् तुरुष्कःसिल्ह
कःशिलारसइतियावत् पुच्छंक्षौममयंकार्यंरोमाणिसितसर्षपैः ताम्रपृष्ठंविचित्रंतुईदृकरूपांमनोहरां विधिनाक्ल
प्तवत्सांचकुर्यांल्लक्षणलक्षितां एवंकृत्वातथानत्वापूजयित्वाविधानतः तद्भक्तायप्रदातव्यामंगलाशास्त्रपारगे एतां
मयोपकारायगृहाण त्वंद्विजोत्तम प्रीयतांममदेवेशोघनाचैःपुरुषोत्तमः इत्यदाहृत्यविप्रायदद्यादेनुनराधिप स्का
देत्वयंमंत्रः घृत मग्निश्चदेवाश्चघृतंमेदीयतामितिफलं घृतक्षीरवहानद्योयत्रपायसकर्दमाः त्रिपुलोकेषुसर्वेषुसुख
भागीभवेन्नरः सकामानांत्वियंव्युष्टिः कथितानृपसत्तम व्युष्टिःफल विष्णुलोकंनरोयातिनिष्कामायदिदीयते
इत्यादि दक्षिणात्वेकसुवर्णप्रभृतियथाशक्तीतिहिरण्यमितिघृतधेनुदानविधिः ॥ स्वस्तिश्रीरणवीरसिंहधरणीपा
लोवदान्याग्रणीर्नानाशास्त्रविचारसारसवित्सहृदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेःपादाब्जचारतो जीया
त्पुत्रकलत्रमित्रसहितस्संपालयन्क्ष्मांचिरम् ८ रणवीरसिंहभूपेशकारितकृत्यसागरे अभूदाषाढकृत्यानांरम्योऽ
रत्नसमुच्चयः॥ ३ ॥ इतिश्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारितकृत्यरत्नाकरे आषा
ढमासकृत्यरत्नसमुच्चयः समाप्तोऽयमाषाढमासः ॥ *

॥ श्रीरघुनाथमुद्रायंत्रालये ॥
लालाशिवरामल्लाधिकारेऽआषाढमासोमुद्रितस्समाप्तिमगमत्
संवत् १९४१ भाद्रपद प्र. २८

श्रीगणेशायनमः श्रीरघुनाथोजयति

अथश्रावणमासकृत्यनिर्णयः तत्र कर्कटसंक्रांतौ पूर्वास्त्रिंशद्घटिका पुण्यकालः सूर्योदयोत्तरंसंक्रमेतुपरदिन एवपुण्यकालः रात्रौतुनिशीथात्प्राक् परतश्चसंक्रमे अपरार्के हेमाद्यनंतभट्टादिमतेपूर्वोत्तरयोर्दिनयोः पंचपंचनाड्यःपुण्यकालः धनुर्मीनावतिक्रम्यकन्यांचमिथुनंतथा पूर्वापरविभागेनरात्रौसुचरतेरविः दिनांतेपंचनाड्यस्तुतदापुण्यतमामताः उदयेपितथापंचदैवेपित्र्येचकर्माणि इतिस्कांदोक्तेः पूर्वापरविभागेनेति मकरकर्कटभिन्नसंक्रांतिपरं वक्ष्यमाणवचोविरोधात् इत्युक्तंमदनरत्ने तेनायमर्थः रात्रेःपूर्वविभागेमकरेपंचनाड्यः पुण्यकालः रात्र्यर्धपरविभागेकर्कटसंक्रमेपूर्वदिनांतेपंचनाड्यः विषुवतोःपूर्वदिनेपंच परदिनेतिवाक्यांतरानुरोधात् तेनहेमाद्रिमाधवयोः सर्ववचनानांचाविरोधः माधवमतेतु अर्धरात्रेतदूर्ध्वंतुसंक्रांतौदक्षिणायने पूर्वमेवदिनंग्राह्यंयावन्नोदयतेरविरितिवृद्धगर्गोक्तेः मिथुनात्कर्कसंक्रांतिर्यदास्यादंशुमालिनः प्रभातेवानिशीथेवातदापुण्यंतुपूर्ववत् इतिभविष्योक्तेश्चपूर्वदिनएवपुण्यं दाक्षिणात्यास्त्वेतदेवाद्रियंते अर्धरात्रावपिस्नानदानादिभवतीत्युक्तंप्राक्ग्रहणेनोपवासादप्युक्तं तथात्र केशादिविकर्त्तनंनिषिद्धं कुंभेचकर्कटेवापितथैवकार्मुकेपिवा रोमखंडंगृहस्थस्यपितृन्पातयतेऽधः इतिसुमंतुवचनादिति विशेषस्तुजीवत्पितृविषये अत्रनदीनांरजोदोषः हेमाद्रावत्रिः सिंहकर्कटयोर्मध्येसर्वानद्योरजस्वलाः तासुस्नानंनकुर्वीतवर्जयित्वासमुद्रगामिति व्याघ्रोक्तेश्च इदंक्षुद्रनदीविषयमाहुरन्ये स्वगस्त्योदयावधित्वमुक्तं यावन्नोदेतिभगवान्दक्षिणाशाविभूषणं तावद्रजोवहानद्यःकरतोयाःप्रकीर्तिताः करतोया स्वल्पोदकाः तथाचकात्यायनः याःशोषमुपगच्छंति ग्रीष्मेकुसरितोभुवि तासुप्रावृषिनस्नायाद

पूर्णेदशवासरे स्मृतिसंग्रहे धनु सहस्राण्यष्टौचगतिर्यासांनविद्यते नतानदीशब्दवहागर्त्तास्तेकथिताभुवि म
हानदीप्रभविष्योक्तं आदौकर्कटकेदेविमहानद्योरजस्वलाः त्रिदिनंतुचतुर्थेह्निशुद्धाःस्युर्जाह्नवीयथा महानद्यश्चब्रा
ह्मे गोदावरीभीमरथीतुंगभद्राचवेणिका तापीपयोष्णीविंध्याचदक्षिणेपरिकीर्त्तिताः वेणिकाकृष्णवेणा भागीर
थीनर्मदाचयमुनाचसरस्वतीविशोकाचवितस्ताचविंध्यस्योत्तरतःस्थिताः द्वादशैतामहानद्योदेवर्षिक्षेत्रसंभवाः म
दनरत्नेपुराणांतरे महानद्योदेविकाचकावेरीवंजरातथा रजसातुप्रदुष्टास्तुकर्कटादौत्र्यहंनृप कात्यायनः कर्क
टादौरजोदुष्टागोमतीवासरत्रयं चंद्रभागासतीसिंधुःसरयूर्नर्मदातथा इदंगंगाव्यतिरिक्तविषयं गंगाचयमुनाचै
वप्लक्षजाचसरस्वती रजसानाभिभूयंतेयेचान्येनदसंज्ञकाः शोणः सिंधुर्हिरण्याख्यःकोकिलोहितघर्घराः श
तद्रूश्चतथासप्तपावनाःपरिकीर्त्तिता इतिदेवलोक्तेः यत्तु प्रथमंकर्कटेदेवित्र्यहंगंगारजस्वलेतिजाह्नवीभिन्नागोदाव
र्य्यादिगंगांनरपरमितिमदनरत्ने अन्येतु नतुतीरनिवासिनामितिनिगमोक्तेः नूतनकूपादौयोगियाज्ञवल्क्यः अजा
गावोमहिष्यश्चब्राह्मणीचप्रसूतिका दशरात्रेणशुध्यंतिभूमिस्थंचनवोदकमिति क्वचित्तुदोषाभावमाह व्याघ्रपा
दः अभावेकूपवापीनामन्येनापिपयोभृतं रजोदुष्टेपिपयसिग्रामभोगोनदुष्यति तेनोद्धृतेनदोषः तथा तासुस्नानंन
कुर्वीतइत्याहुः वसिष्ठोपि इज्याकर्मणिचोत्सर्गेप्रेतस्नानेतथैवच सूर्यचंद्रग्रहेचैवरजोदोषोनविद्यते इत्यलंविस्त
रेण अथश्रावणेकृत्यविशेषाआग्नेयपुराणे यश्चधनंददेदेवविवर्षादिचतुरोऽकृतन् घृतधेनुप्रदातेचपरंब्रह्मादिगच्छ
ति शातातपअयनादिदानमाह अयनादौसदादेयंद्रव्यमिष्टंगृहेषुयत् यदातुकर्कटंयातिभगवांश्चंडदीधितिः त
तःप्रभृतिकालःस्याद्दक्षिणायनसंज्ञकः तत्रप्रावृट्सुसंपूज्यफलपुष्पांबुभिस्तथा गोरसाक्तांस्तथासक्तून्ब्राह्मणे
भ्योनिवेदयेत् हिमंचशर्करांचैवशाकमूलफलानिच उपानच्छत्रमाल्यानितिलधेनुंचशास्त्रवत् तत्रकर्कटसंक्रांति

दिनेहिमंकर्पूरं अत्रस्वर्गीयफलंविश्वजिन्न्यायात् भविष्ये नैरंतर्य्येणयोमासंविधिनाचयजेद्रवि पुण्यंतदेवसकलं
भवेद्विषुवदर्चनात् एवमेवचविज्ञेयग्रहणेचोत्तरायणे संक्रांतिदिवसेष्वेवंषडशीतिमुखेषुच तत्कार्त्तिक्यांभवेत्पुण्यं
समाराध्यदिवाकरं पुण्यमेवंचफाल्गुण्यामाषाढ्यामेवमेवच मत्स्यपुराणाग्निपुराणयोः आषाढ्यादिचतुर्मासा
न्स्नातः स्नायीभवेन्नरः विप्रेषुभोजनदद्यात्कार्त्तिक्यांगोप्रदोभवेत् सवैष्णवपदयातिविष्णुव्रतमिदंस्मृतं आषा
ढीतिबहुव्रीहिस्तद्गुणसंविज्ञाना आरभ्यचतुरोमासान्कार्तिक्यांगोप्रदोभवेदितिश्रवणात् आग्नेयपुराणे अयनादयन
यावद्वर्जयेत्पुष्पसर्पिषी तदंतेपुष्पदानानिघृतधेन्वासहैवतु दद्याच्छिवपुरंयातिविप्रायघृतपायसं एतच्छीलव्रत
नामशीलारोग्यप्रदायकं महाभारते श्रावणंनियतोमासमेकभक्तेनयःक्षिपेत् यत्रतत्राभिषेकेनयुज्यतेज्ञातिभि
र्धनैः यत्रतत्रेति कृत्रिमेजलाशयेऽपीति श्रावणकृष्णप्रतिपदायां श्रावणमासनियमानांप्रारंभः आषाढ्यामुपो
षणंसकल्पश्चविधेयः अत्रतिथित्वेनवह्निपूजाऽपिकार्या श्रावणकृष्णद्वितीयायामशून्यशयनव्रतं मत्स्यपुराणे
श्रीभगवानुवाच श्रावणस्यद्वितीयायांकृष्णायामधुसूदनः क्षीरार्णवेसलक्ष्मीकः सदास्वपितिकेशवः तस्यासपू
ज्यगोविंदंसर्वान्कामानवाप्नुयात् गोभूहिरण्यदानानिशतकल्पशतायुषं अशून्यशयनीनामद्वितीयासप्रकीर्तिता
तस्यांसपूज्यगोविंदमंत्रैरेभिर्विचक्षणः श्रीवत्सधारिन्श्रीकांतश्रीवासश्रीनिकेतन गार्हस्थ्यमाप्रणाशंमेयातुधर्मार्थ
कामद अग्नयोमाप्रणश्यंतुदेवताःपुरुषोत्तम पितरोमाप्रणश्यंतुमत्तोदांपत्यभेदतः लक्ष्म्यावियुज्यतेदेवोनकदाचि
द्यथादिवि तथाकलत्रसंबंधोदेवमामेवियुज्यतां लक्ष्म्यानशून्यंवरदयथातेशयनसदा शय्याममाप्यशून्यास्तुत
थामेमधुसूदन गीतवादित्रनिर्घोषंदेवदेवस्यकारयेत् घंटाभवेदशक्तस्यसर्ववाद्यमयीयतः एवंसंपूज्यगोविंदंभोज
नंतैलवर्जितं सशकुक्षारलवणमाचन्मासचतुष्टयं ततःप्रभातेसंजातेलक्ष्मीपतिसमन्विता दीपान्नभोजनैर्युक्ताश

य्यांदद्याद्विचक्षणः पादुकोपानहच्छत्रचामरासनसयुतां अभीष्टोपस्करैर्युक्तांशुक्लपुष्पांबरावृतां सोपधानकाव
श्रामांफलैर्नानाविधैर्युतां तथाभरणधान्यैश्चयथाशक्त्यासमन्वितां अव्यंगायचविप्रायवैष्णवायकुटुंबिने दात
व्यावेदविदुषेनचकुष्येतकस्यचित् तत्रोपवेश्यदांपत्यमलंकृत्यविधानतः पत्न्यास्तुभाजनंदद्याद्भक्ष्यभोज्यसमान्वि
तं ब्राह्मणस्यापिसौवर्णीमुपस्करसमन्वितां प्रतिमांदेवदेवस्यसोदकांविनिवेदयेत् एवंयस्तुपुमान्कुर्यादशून्यशयनं
हरेः वित्तशाठ्येनरहितोनारायणपरायणः नतस्यपत्न्याविरहःकदाचिदपिजायते नारीवाविधिवद्ब्रह्मन्यावच्चंद्रार्क
तारकं नविरूप्यंविशोकंचदांपत्यमभिजायते नपुत्रधनरत्नानिक्षयंयांतिपितामह सप्तकल्पसहस्राणिसप्तकल्पश
तानिच कुर्वन्नशून्यशयनंविष्णुलोकेमहीयते विष्णुंपूजयेदित्यर्थः उपक्रमेतथाकीर्त्तनात् स्त्रियाअपिएतद्व्रतंक्रियमा
णेकलत्रपदेपतिपदोह पुरुषस्यास्त्रियश्चेतिप्रक्रमात् यावन्नस्याच्चतुष्टयंस्यादित्यर्थः एवंसंपूज्यगोविंदमश्नीयात्तैल
वर्जितमितिपूजानंतरमत्रातैलाशनप्रतिपादनात् यत्रैवदिनेपूजातत्रैवदिनेऽतैलाशनं पूजनंच कृष्णाद्वितीयाया
मेव तस्यांसंपूजयेद्विष्णुमितिकीर्तनात् अतोयावत्तृतीयाभवतितावत्कृष्णद्वितीयातिथिर्गोविंदपूजनं नक्तमक्षा
रतैललवणभोजनमित्यर्थःततःप्रभातइति चतुर्थकृष्णद्वितीयानंतरंप्रभातेशय्यादिदानमित्यर्थःलक्ष्मीपतिसमन्वि
तामिति लक्ष्मीपतिनाधिवासितांशय्यांदद्यादित्यर्थः नतुतत्प्रतिमान्वितां प्रतिमायाश्चाग्रेदानकथनात् इतिम
त्स्यपुराणे अशून्यशयनद्वितीयाव्रतम् भविष्यपुराणे श्रीभगवानुवाच अशून्यशयनांनामद्वितीयांशृणुभारत शे
तेजगत्पतिःकृष्णःश्रियासार्द्धंमहीपते अशून्यशयनांनामसदाकार्याहिसातिथिः कृष्णपक्षेद्वितीयायांश्रावणेमासि
भूपते इदमुच्चारयेत्प्रातःप्रणम्यजगतःपतिं श्रीवत्सधारिन्श्रीकांतश्रीवासश्रीपतेऽव्यय गार्हस्थ्यंमाप्रणाशंयातु
धर्मार्थकामद शुचयेमाप्रणश्यन्तुमाप्रणश्यंतुनिर्जरा जामयोमाप्रणश्यंतुयतोदांपत्यमेवच लक्ष्म्यावियुज्यतेदेव

नकदाचिद्यथाभवान् तथाकलत्रसंबंधोदेवमामेवियुज्यतां लक्ष्म्यानशून्यंवरदंयथातेशयनंसदा शय्याममाप्यशून्या
स्तुतथैवमधुसूदन एवंप्रसाद्यपूजांचकृत्वालक्ष्म्यास्तथाहरेःफलानिदद्याच्छय्यायामभीष्टानिजगत्पतेःनक्तंप्रणम्या
यतनेहरिंभुंजीतवाग्यतः ब्राह्मणायद्वितीयेन्हिशय्यांदद्यात्सदक्षिणां शतानीकउवाच कानिकानित्वभीष्टानिफला
निकेशवस्यतु योज्यानिशयनेविप्रदेवदेवस्यकथ्यतां किंचिद्दानंद्वितीयेन्हिदातव्यंब्राह्मणस्यच अर्केनरोद्विजश्रे
ष्ठदेवदेवस्यशक्तितः सुमंतुरुवाच यानितत्रमहाबाहोकालेसंतिफलानिच मधुराण्यतितीव्रानिलवणातिकटुकानिच
दातव्यानिनृपश्रेष्ठस्वशक्त्याशयनेतदा मधुराणिचदत्त्वानुमनोवल्लभतामियात् तस्मात्कटुकतीव्राणिस्त्रीलिंगानिचव
र्जयेत् खर्जूरमातुलुंगानिस्थितानिशिरसासह द्वितीयेह्निप्रदेयानिभक्त्याशक्त्याचभारत वासोदानंतथाधान्य
दानंचान्नस्यशस्यते एवंकरोतियःसम्यङ्नरोमासचतुष्टयं तस्यजन्मत्रयंवीरगृहभंगोनजायते अशून्यशयन
श्चस्याद्धर्मकामार्थसाधकः भवत्यव्याहतैश्वर्यःपुरुषोनात्रसंशयः नारीवाराजधर्मज्ञव्रतमेतद्यथाविधिः याकु
रोतिनशोच्यासौवधुवर्गस्यजायते वैधव्यंदुर्भगत्वंचभर्तृत्यागंचसत्तम नाप्नोतिजन्मत्रितयेकृत्वैतद्व्रतमुत्तमं इत्येषा
कथिताराजन्द्वितीयातिथिरुत्तमा यामुपोष्यनरोराजन्वृद्धिमृद्धिंश्रियंलभेत् भागधेयंश्रियासहप्रणम्येत्यर्थः
उपोष्येत्यत्रउपवसनमुपासनं अग्रेनक्तंभुंजीतेत्यभिधानात् शुचयोऽग्रयःशिरसाविद्यमानव्रतेनेत्यर्थः नालिकेरेण
त्यनेन यज्ञभागहरोविष्णुःगांगेयमत्रसुवर्णं मासचतुष्टयं तत्तन्मासकृष्णचतुर्थीचतुष्टयमित्यर्थः स्त्रीकर्तृकपक्षेकल
त्रसंबंधोमामेवियुज्यतामित्यत्रपदस्थानेपतिपदोह पूर्ववदेवफलानिदद्याच्छय्यायामितिधारणमात्रं अभेदानाभि
धानात् नक्तंप्रणम्येत्यादौ नक्तंप्रणम्यभुंजीतेत्यन्वयःइत्येषाकथितेत्यादिना कर्मारंभफलांतरार्थं आपाद्यनंतरश्च
रामाचारात् इत्यशून्यशयनद्वितीयाव्रतम् इदं श्रावणादिमासचतुष्टयं कृष्णपक्षद्वितीयासुकार्यं द्वितीयाव्रचंद्र ...

व्यापिनीग्राह्या एकभक्तेदिवानक्तेनिशिचंद्रोदयेव्रते तिथिस्तात्कालिकीग्राह्येतिमदनरत्नेस्मृतिसंग्रहवचनात्
चंद्रोदयव्रतत्वंचास्य चंद्रोदयेऽर्घ्योदातव्योदध्यक्षतविभूषित इतिचंद्रोदयेऽर्घ्यविधानात् दिनद्वयेतत्सत्त्वेऽसत्त्वे
वापूर्वाचतुर्थ्यसितपक्षेपुमासेपुश्रावणादिपु अशून्याख्यव्रतंकुर्य्याज्जाययातुफलाधिकमितिमदनरत्नेधृतवचना
त् अत्रपूर्णिमांतोमासोग्राह्य दिनद्वयेतथात्वेपूर्वाअत्रगोपूजायवानांप्राशनमितिविशेषोदिवोदासीये श्रावणकृ
ष्णतृतीयाकज्जलीसंज्ञेतिदिवोदासीये कृत्यरत्नावल्यां तत्रश्यामवर्णपुष्पादिभिः सांजनाक्षतैश्चदेवीपूजा कज्ज
लादिसौभाग्यद्रव्यसुवासिनीभ्योदेयमितिशिष्टाचारात् अस्यामेवश्रवणयुक्तायांविष्णुपूजा तदुक्तंहेमाद्रौ विष्णु
धर्मोत्तरे तृतीयाश्रावणेकृष्णायासाश्रवणसंयुता तस्यांसपूज्यगोविंदंतुष्टिमग्र्यामवाप्नुयादिति श्रावणकृष्णचतुर्थी
सोमकल्पादि तत्रश्राद्धादिकल्पातस्थायिफलप्रदम् कल्पादिप्रबंधेश्रावणकृष्णचतुर्थ्यांसंकटचतुर्थीव्रतम् तच्चंद्रो
दयव्यापिन्याकार्य्यं श्रावणेबहुलेपक्षेचतुर्थ्यांतुविधूदये गणेशंपूजयित्वाचचंद्रायार्घ्यंप्रदीयते इतिकथायां तत्रच
पूजाविधानात् दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा मातृविद्धागणेश्वरइतिवचनात् गणेशगौरीबहुलाप्यतिरिक्ता प्रकी
र्त्तिताचतुर्थ्यःपंचमीविद्धादेवतांतरयोगत इतिमदनरत्ने ब्रह्मवैवर्त्तवचनाच्च नंचतृतीयाविद्धाविधायकवचनात् दिवा
त्रिमुहूर्त्तवेधेसत्येवप्रवृत्तिर्नरात्राविति भ्रमितव्यं अह सातिशय पुण्याःकर्मानुष्ठानतोदिवा नक्तादिव्रतयोगपुरा
त्रियोगोविशिष्यतइति नरात्रिवेधस्यापिरात्रिसाध्यकर्मसुहेमाद्रिमाधवाद्यैरुक्तत्वात् अथव्रतविधिः मासप
क्षाद्युल्लिख्य विद्याधनपुत्ररोगमुक्तिसंकटनाशकाम स्त्रीतुभर्त्रादिविरहसंकटविमुक्तिकामासंकटचतुर्थीव्रतपूजादिकं
करिष्य इतिसंकल्पःसौवर्णरौप्यताम्रमृण्मयान्यतमां गणेशमूर्त्तिंकृत्वा जलपूर्णवस्त्रयुतकुंभतस्याग्रेस्थापयि
त्वाषोडशोपचारैः पूजयेत् तत्रादौध्यानं लंबोदरंचतुर्बाहुंत्रिनेत्ररक्तवर्णंक नानारत्नैः सुवेषाढ्यप्रसन्नास्यंविचिंतयेत्

ध्यायेद्गजाननंदेवंतप्तकांचनसन्निभ चतुर्भुजमहाकायंसूर्यकोटिसमप्रभं आवाहनं आगच्छस्वजगन्नाथसुरासुर नमस्कृत अनाथनाथसर्वज्ञाविघ्नराजनमोस्तुते गजास्यायनमः१. आसनं गोत्रालवसर्वलोकानामिंद्रादीनांविशेषतः भक्तदारिद्र्यविच्छेदिन्नेकदंतनमोस्तुते विघ्नराजायनमः२ पाद्यम् मोदकानामर्पणेनभक्तानांवरदायक देवदेवनमस्ते स्तुभक्तानांवरदोभव लंबोदरायनमः३ अर्घ्यम् महाकायमहारूपअनंतफलदायकदेवदेवनमस्तुभ्यसर्वपापनाश न शंकरसूनवेनमः ४ आचमनं स्नानपंचामृतैर्नैवगृहाणगणनायक अनाथनाथसर्वज्ञनमोमूषकवाहन उमासुता यनमःस्नान कुरुष्वाचमनंदेवसुरवधःखवाहन सर्वाघदलनस्वामिन्नीलकंठनमोस्तुते वक्रतुंडायनमः६ वस्त्रं रक्तव स्त्रकयुग्मंचदेवानामपिदुर्लभं गृहाणमंगलंदेवलंबोदरनमोस्तुते शूर्पकर्णायनमः७ यज्ञोपवीतम् ब्रह्मसूत्रंसोत्तरीयं गृहाणगणनायक आरक्तब्रह्मसूत्रंचकनकस्योत्तरीयक कुब्जायनमः ८ चंदनम् गृहाणेश्वरसर्वज्ञदिव्यचंदनमु त्तमम् विनायकनमस्तुभ्यंशिवसूनोनमोस्तुते विघ्ननाशनायनमः ९ अक्षताः शालितंडुलसंभूतान्कुंकुमाक्ता स्त्वखंडितान् अक्षतान्गणनाथत्वंगृहाणवरदोभव पुनर्विघ्ननाशनायनमः १० पुष्पं सुगंधिद्रव्यमाल्यंचगृहा णत्वमिभानन विनायकनमस्तुभ्यंशिवसूनोनमोस्तुते विकटायनमः ११ धूपं दशांगगुग्गुलंधूपमुत्तमंगणना यक गृहाणदेवदेवेशउमासुतनमोस्तुते विकटाक्षायनमः १२ दीपं सर्वज्ञसर्वरत्नानांसर्वेशविबुधप्रिय गृहा णमंगलदीपंघृतकर्पूरसंयुतं वामनायनमः १३ नैवेद्यम् नैवेद्यंगृह्यतांदेवनानामोदकसंयुतं सर्वान्नफलसंयुक्तं सर्वभक्तिसमन्वितं सर्वदेवायनमः १४ फलं फलान्यमृततुल्यानिसुगंधीन्यघनाशन आनीतानियथाशक्त्याग्र हाणेमानिमानद सर्वार्त्तिनाशिनेनमः१५ तांबूलं तांबूलंगृह्यतांदेवनागवल्लीदलैर्युतम् कर्पूरगंधसंयुक्तंसुगंधिमुखभू षणं विघ्नहर्त्रेनमः १६ समस्तपूजार्पणम् सर्वदेवादिदेवायसर्वसिद्धिप्रदायक भक्त्याकृतामिमापूजांगृहाणेमांमर

प्रभो सर्वदेवायनमः १७ एवंपूजाप्रकर्तव्यापोडशैरुपचारकैः मोदकान्कारयेत्प्रातस्तिलजान्दशपार्वति दे
वाग्रेस्थापयेत्पंचपंचविप्रायकल्पयेत् पूजयित्वातुतंविप्रंभक्तिभावेनदेववत् दक्षिणांचयथादत्वाशक्त्यापंचैवमोदं
कान् भक्षयेन्निशिचंद्रस्यअर्घ्यंदद्याद्यथाविधि चंद्रार्घमंत्रः क्षीरसागरसंभूतसुधारूपानिशाकर गृहाणार्घ्यंमयाद
त्तंगणेशप्रीतिवर्धन मोदकदानमंत्रः विप्रवर्यनमस्तुभ्यंमोदकान्वैददाम्यहं मोदकान्सकलान्देवदेवदक्षिणया
न्वितान् आपदुद्धारणार्थायगृहाणद्विजसत्तम प्रार्थना अवुद्धमतिरिक्तंवाद्रव्यहीनमयाकृतं तत्सर्वंपूर्णतांयातुवि
प्ररूपगणेश्वर ब्राह्मणान्भोजयेद्देविपायसेनयथासुखं स्वयंभुंजीतपंचैवमोदकान्फलसंयुतान् अशक्तश्चैकमन्न
वाभुंजीतदधिसंयुतं अथवाभोजनंकार्यमेकवारंहिमाद्रिजे प्रतिमांगुरवेदद्यादाचार्यायसदक्षिणांवस्त्रकुंभसमायुक्तां
त्रमत्रमिमंजपेत् प्रमामनंतिविश्वेशंविश्वनाथमुमासुतं विघ्नेश्वरंक्षिप्रवरंतुभ्यंदास्याम्यभीष्टदं विसर्जनमंत्रःगच्छग
च्छसुरश्रेष्ठस्वस्थानेत्वंगणेश्वर व्रतेनानेनमेनित्यंयथोक्तफलदोभव इतिश्रावणकृष्णचतुर्थीसंकष्टचतुर्थीव्रतम् प्र
संगादत्रपार्थिवगणेशपूजोच्यते अथपार्थिवगणेशव्रताविधिः शमीगर्भाच्चवल्मीकान्मूलादश्वत्थतोपिवा कुलाल
चक्रयंत्रोत्थांनदीकूलगतांमृदं आनीयेतिशेषः तीर्थेदेवकुलेचापिगृहेवापिसमाचरेत् प्रतिमामितिशेषः गणेशा
यनमः मृदाहरणं गणपतयेनमः सेचन हेरंबायनमः संघटनम् धरणीधरायनमःप्रतिष्ठापनं महागणपत
येनमः आवाहनं लक्षलाभकर्त्रेनमः स्नान शिवाप्रियायनमः पूजनं क्षिप्रायनमःक्षमापनं अमोघसिद्धयेनमः
विसर्जनं अनेनैवविधानेनमौनेनप्रतिमांयजेत् वामहस्तास्थितांदिव्यांसपूज्याथविसर्जयेत् प्रथमादिविभेदेनविशे
पाःस्युरिमेस्मृताः रक्तचंदनगंधोवैकरवीरंचपुष्पकं दशांगोगुग्गुलोधूपोनैवेद्यंतुगुडोदनं जातीपुष्पंद्वितीयेतुनैवे
द्यंशर्करातथा तृतीयेपंचकंपुष्पंनैवेद्यंलड्डुकंतथा चतुर्थेवकुलंपुष्पंनैवेद्यंतुह्यपूपकं पंचमेशतपत्रंतुनैवेद्यंवटकंतथा

षष्ठकह्लारकंपुष्पंनैवेद्यंपूरिकामता सप्तमेचैवमंदारंनैवेद्यंघारिकास्मृता अष्टमेह्यर्कपुष्पंचभक्तंनैवेद्यमुच्यते नवमेऽगस्तिपुष्पंचैनवेद्यंपायसंस्मृतं दशमेनारिंगणीपुष्पंदुग्धंनैवेद्यमुच्यते एकादशेकदंबंचनैवेद्यंपंचखाद्यकं द्वादशेकुंदपुष्पंचनैवेद्यंकदलीफलम् त्रयोदशेमालतीपुष्पंनैवेद्यंदाडिमीफलं चतुर्दशेश्वेतपुष्पंनैवेद्यंजामनंफलं षोडशेबिल्वपत्रंचद्राक्षानैवेद्यमुच्यते विष्णुक्रांतांसप्तदशेकालिंगंचनिवेदयेत् शतावर्य्यष्टादशकेमधूकफलमेवच एकोनविंशेचतथाभृंगराजंचक्षीरिका विंशकेचशमीपत्रंप्रियालंचनिवेदयेत् एकविंशेचदूर्वांचनैवेद्यंचघृतोदन दिनेदिनेतथादूर्वाद्वाद्भिःकार्याप्रयत्नतः एकविंशतिमूर्तीर्वाप्रत्यहंपूजयेन्नरः त्रिसप्तदिनपर्यंतंक्षिप्रंसिद्धिः प्रजायते रक्तचंदनगंधोवासर्वाभावेतथाक्षताः पुष्पार्थेचतथादूर्वानैवेद्यंपंचखाद्यकं एकान्नाहारशीलःस्याद्भूमिशायीजितेंद्रिय भाद्रमासिचतुर्थ्यांतुउद्यापनविधिंचरेत् चतुर्थ्यांवारणंहैमंपलेनापितदर्धकं सौवर्णंगणपंचापिविधिनापूजयेन्नरः तद्वत्समाहरेत्सम्यगेकविंशतिपत्रिकाः रात्रौजागरणंकुर्य्याद्गीतवाद्यादिमंगलैः सहस्रनामस्तोत्रंचप्रभातेह्यरुणोदये कृत्वानित्यविधिंसर्वमागमोक्तविधानतः अष्टद्रव्यैर्गणेशस्यमोदकैःपायसेनवा रंभाफलैःसलाजैश्चअष्टोत्तरसहस्रकंअष्टोत्तरशतंवापिततःपूर्णाहुतिंहुनेत् आगमोक्तविधानेनवैदिकेनाथवायजेत् दिक्पालेभ्योबलिंदद्यादभिषेकंसमाचरेत् आचार्य्यंपूजयेत्पश्चाद्वस्त्रालंकारभूषणैः तस्मैतांप्रतिमांदद्यात्सपूज्याविधिवन्नरः दानमंत्रः यमाम्नतिविश्वेशंविश्वनाथमुमासुत विश्वेश्वरंक्षिप्रवरंतुभ्यंदास्याम्यभीष्टद विघ्नेश्वरःप्रीयतांमेक्षिप्रकारीशिवप्रदः हैमवारणदानेनसर्वंविघ्नंविनश्यतु ततोगांदक्षिणांदद्यादेकवर्णांपयस्विनीं सहस्रंवाशतंवापिएकविंशतिमेवच ब्राह्मणान्भोजयेत्पश्चात्पायसैःसाज्यशर्करैः एवंकृतेतुदेवर्षेसर्वसिद्धिःप्रजायते इतिचिंतामणिकल्पेपार्थिवगणपतिपूजाविधिः समाप्तः उक्तंचहेमाद्रौ विष्णुपुराणे चतुर्थ्यांवारणंहैमंपलादूर्ध्वंतुशोभनं कारयित्वाकुशयुतंतिलद्रोणोपरिन्यसेत्

पत्रपुष्पै पूजयित्वा नैवेद्यं विनिवेदयेत् ततस्तु ब्राह्मणे दद्यात् गणेशः प्रीयतामिति कार्यारंभेषु सर्वेषु तस्य विघ्नं न जायते राज्यकामस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् वारणा सप्तजन्मानि भवंति मदविह्वलाः इदं चैत्रे श्रावणे का-
र्त्तिके कार्यमिति हेमाद्रिः अथ दूर्वागणपतिव्रतकथा सौरपुराणे ईश्वर उवाच शृणु वत्स प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् अस्ति दूर्वागणपतेर्व्रतं त्रैलोक्यविश्रुतं भगवत्या पुरा चीर्णं पार्वत्या च मया मुने सरस्वत्या महेंद्रेण विष्णुना धनदेन च अन्यैश्च देवगंधर्वैर्मुनिभिः किन्नरैर्नरैः चीर्णमेतद्व्रतं सर्वैः पुराकल्पे षडानन चतुर्थ्यां भवेच्छुक्ला मासि मासि पुण्यदा तस्यां व्रतमिदं कुर्यात्कार्त्तिक्यां वा षडानन गजाननं चतुर्बाहुमेकदंतं द्विपाननं विधाय हेम्ना विघ्नेशं हेमपीठासनस्थितं तथा हेममयीं दूर्वां तदाधारे व्यवस्थितं संस्थाप्य विघ्नहर्त्तारं कलशे ताम्रभाजने वेष्टितं रक्तवस्त्रेण सर्वतोभद्रमंडले पूजयेद्रक्तकुसुमैः पत्रिकाभिश्च पंचभिः बिल्वपत्रमपामार्गं शमीं दूर्वां हरिप्रियां तुलसीमित्यर्थः अन्नैः सुगंधिकुसुमैः पत्रिकाभिर्विशेषतः फलैश्च मोदकैः पश्चादुपहारं प्रकल्पयेत् यथावदुपचारैश्च पूजयाद्गिरिजासुतं उमासुत नमस्तुभ्यं विश्वव्यापिन्सनातन विघ्नौघं छिंधि सकलमर्घ्यं पाद्यं ददामि ते अर्घ्यपाद्यमंत्रौ. गणेश्वराय देवाय कुमारगुरवे नमः लंबोदराय देवाय सर्वविघ्नापहारिणे पूजामंत्रः उमांगमलसंभूतो दानवानां वधाय वै अनुग्रहाय देवानां स देवः पातु विश्वधृक् धूपमंत्रः परंज्योतिः प्रकाशाय सर्वसिद्धिप्रदाय च दीपं तुभ्यं प्रदास्यामि महादेवात्मनेनमः दीपमंत्रः गणानां त्वा गणपतिं हवे इत्युपहारमंत्रः गणेश्वर गणाध्यक्ष गौरीपुत्र गजानन व्रतं संपूर्णतां यातु त्वत्प्रसादादिभानन प्रार्थनामंत्रः एवं संपूज्य विघ्नेशं यथाविभवविस्तरैः सोपस्करं गणाध्यक्षमाचार्याय निवेदयेत् गृहाण भगवन्ब्रह्मन्गणराजं सदक्षिणं व्रतं त्वद्वचनाद्देव संपूर्णं यातु सुव्रत दानमंत्रः एवं यः पंचवर्षाणि कृत्वोद्यापनमारभेत् ईप्सितान्लभते कामान्देहांते शांकरं पदं अथवा शुक्लपक्षस्य चतुर्थ्यां संयतेंद्रियः कुर्याद्दूर्वयनयत्नेवं

सर्वसिद्धिमवाप्नुयात् उद्यापनंविनायस्तुकरोतिव्रतमुत्तमं तेनशुक्लतिलैःकार्य्यंप्रातः स्नानंषडानन हेम्नावार जतेनापिकृत्वागणपतिंबुधः पंचगव्यैस्तुसंस्नाप्यदूर्वाभिःसंप्रपूजयेत्-मंत्रैस्तुदशभिर्भक्त्यादूर्वायुक्तैःशिखिध्वज दूर्वायुक्तैरित्यनेनप्रतिमंत्रदूर्वानुवृत्तिरनुज्ञायते मंत्राश्चनामात्मकाः स्कंदपुराणे गणाधिपनमस्तेस्तुउमापुत्राघ नाशन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक एकदंतेभवक्त्रेतितथामूषकवाहन कुमारगुरवेतुभ्यमेभिर्नामपदैःपृ थगिति इत्येवंकथितवत्ससर्वसिद्धिप्रदंशुभं व्रतंदूर्वागणपतेःकिमन्यच्छ्रोतुमिच्छसि इदंव्रतंश्रावणेकार्त्तिकेवा रंभणीयं चतुर्थ्यांभवेच्छुक्लानभोमासस्यपुण्यदा तस्यांव्रतमिदंकुर्य्यात्कार्तिक्यांवाषडानन कार्त्तिकशुक्लचतुर्थ्या मारंभणीयं कार्त्तिकशुक्लचतुर्थ्यांवाव्रतंकुर्य्यादितिशुक्लचतुर्थीसमभिव्याहाराच्च अत्रदूर्वालक्षणं सप्तपत्रास्तु हरितादूर्वाःप्रादेशसंमिताः यद्वापंचशाखाःस्युर्विस्तृताःषडभिरंगुलैःप्रत्येकंमूलमंत्रेणलक्षपूजांसमाचरेत् समाप्तौतु महापूजाहैमींदूर्वांसमर्पयेत् प्रथमदिनानुसारेणक्रमेणपुष्पनिवेदनक्रमउच्यते करवीरपुष्पादिविष्णुक्रांतांतंपुष्पा णिपत्राणिचेति अथश्रावणकृष्णचतुर्थ्यांसंकष्टचतुर्थीव्रतकथा हेमाद्रौस्कांदे ऋषयऊचुः दारिद्र्यशोककष्टाद्यैः पी डितानांचवैरिभिः राज्यभ्रष्टैर्नृपैःसर्वैःक्रियतेकिंसुखार्थिभिः धनहीनैर्जनैःस्कंदसर्वोपद्रवपीडितैः विद्यापुत्रगृह भ्रष्टैरोगयुक्तैःशिवार्थिभिः कर्त्तव्यंकिंवदोपायंपुनःक्षेमार्थसिद्धये स्कंदउवाच शृणुध्वंमुनयःसर्वेव्रतानांव्रतमु त्तमं संकष्टतरणंनामपुत्रादिसुखदायकं येनोपायेनसंकष्टंतरतिभुविदेहिनः यद्व्रतंदेवकीपुत्रःकृष्णःपुत्रायदत्त वान् अरण्येक्लिश्यमानायपुनःक्षेमार्थसिद्धये यथाकथितवान्पूर्वंगणेशोमातरंप्रति तथाकथितवान्श्रीशोद्वाप रेपांडवान्प्रति ऋषयऊचुःकथंकथितवान्नवांपार्वतींश्रीगणेश्वरः तथापृच्छंतिमुनयोलोकानुग्रहकांक्षिणः स्कंदउ वाच पुराकृतयुगेपुण्येहिमाचलसुतासती तपस्तस्वतीभूरिनदृष्टःशंकरःपतिः तदास्मारहेरंबंगणेशंपूर्वजंसुत

तत्क्षणादागतंदृष्ट्वागणेशंपरिपृच्छति पार्वत्युवाच तपस्तप्तंमयाघोरंदुस्तरंलोमहर्षणं नप्राप्तःपार्वतीकांतोगि
रीशोममवल्लभः संकष्टहरणंनामव्रतंनारदउक्तवान् त्वदीयंयद्व्रतंनामकथयस्वपुरातनं तच्छ्रुत्वापार्वतीवा
क्यंसंकष्टहरणंव्रतं प्रीत्याकथितवान्देवोगणेशोज्ञानसिद्धिदः श्रीगणेशउवाच श्रावणेकृष्णपक्षेतुचतुर्थ्यांतुविधू
दये गणेशंपूजयित्वाचचंद्रायार्घ्यंप्रदीयते पार्वत्युवाच क्रियतेकेनविधिनाकिंकार्यंकिंचपूजनं उद्यापनकदा
कार्यंमंत्राःकेस्युस्तुपूजने किंध्यानंश्रीगणेशस्यगणेशवदविस्तरात् गणेशउवाच चतुर्थ्यांप्रातरुत्थायदंतधा
वनपूर्वकं ग्राह्यंव्रतमिदंपुण्यंसंकष्टहरणंशुभं कर्तव्यमितिसंकल्प्यव्रतेस्मिन्गणपंस्मरेत् तत्रमंत्रः निराहारो
स्मिदेवेशयावच्चंद्रोदयोभवेत् भोक्ष्यामिपूजयित्वाहंसंकष्टात्तारयस्वमां एवंसंकल्प्यराजेंद्रस्नात्वाकृत्वातिलैःशुभैः
आह्निकंतुविधायैवपश्चात्पूज्योगणाधिपः त्रिभिर्माषैस्तदर्धेनतृतीयांशेनवापुनः यथाशक्त्यातुवाहेम्नाक्रियतेप्रति
मातथा वित्तशाठ्यंनकर्तव्यंकृतेकार्यंविनश्यति जलपूर्णंवस्त्रयुतंकुंभंतस्याग्रतोन्यसेत् पद्ममष्टदलंपुण्यंगंध
पुष्पैःप्रपूजयेत् एवंव्रतंतुकर्तव्यंप्रतिमासंत्वयाद्रिजे यावज्जीवंतुवावर्षाण्येकविंशतिवातथा अशक्त्याचैकवर्षंवा
प्रतिवर्षमथापिवा उद्यापनंतुकर्तव्यंचतुर्थ्यांश्रावणेऽसिते स्वीकारश्चतथाकार्यःसंकष्टहरणेतिथौ गणेशंचत
थाचार्यंसर्वशास्त्रविशारदं श्रद्धयाप्रार्थयेदादौतेनोक्तंव्रतमाचरेत् एकविंशतिविप्रांश्चवस्त्रालंकारभूषणैः पूज
येद्रौहिरण्याद्यैर्हुत्वादौविधिनानलं होमयेन्मोदकान्पश्चात्तिलाक्तान्घृतसंयुतान् अष्टोत्तरसहस्रंवाऽनोचेदष्टोत्त
रंशतं अष्टाविंशतिसंख्यैर्वामोदकैर्वासशर्करैः आज्याक्ताष्टौशुभान्शूलान्जुहुयाज्जातवेदसि गीतैर्वादित्रनिन
दैर्भक्तिभावपुरस्कृतैः पुराणवेदाध्ययनैःपूजयेत्श्रीगणेश्वरं एवंजागरणंकार्यंदत्वादानादिकंतथा सपत्नीक
मथाचार्यंभूषयेद्वस्त्रभूषणैः उपानच्छत्रगोदानकमंडलुफलादिभिः शय्यावाहनभूदानधनधान्यगृहादिभिः

यथाशक्त्यात्रकर्त्तव्यंदारिद्र्यभावमिच्छता एकविंशतिविप्रांश्चभोजयेन्नामभिर्मम गजास्योविघ्नराजश्चलंबोदर
शिवात्मजो वक्रतुंड.शूर्पकर्णःकुब्जश्चैवगणेश्वरः विघ्ननाशोहिविकटोवामन.सर्वदैवतः सर्वार्त्तिनाशोभगवा
न्विघ्नहर्त्ताचधूम्रकः सर्वदेवाधिदेवश्चसर्पे षोडशवैस्मृताः एकदंतःकृष्णरूपोभालचंद्रोगणेश्वर. गणपश्चैकविंश
श्चसर्वएतेगणेश्वराः एवकृतविधानेनप्रसन्नोहंनसंशयः ददामिवांछितान्कामान्मद्व्रतंमत्प्रियंकुरु श्रीभगवानु
वाच एवंतुकथितंपूर्वंगणेशेनस्वयंनृप पार्वत्यातत्कृतराजन्व्रतंसंकष्टनाशनं व्रतेनानेनसालेभेमहादेवपतिंस्वकं
त्वंकुरुष्वमहाराजव्रतंसंकष्टनाशनं चतुर्थीसंकटानामस्कंदेनकथितामुनीन् ऋषिभिर्लोकपालैश्चलोकेकृतमिदंव्रत
सूतउवाच एवंयुधिष्ठिरोराजाराज्यकामनयाद्विज व्रतंशत्रून्निहत्याजौस्वराज्यंप्राप्तवान्स्वयं तस्मात्सर्वप्रयत्नेनव्रत
कार्यंविचक्षणैः व्रतंरूपातिशेषःयेनधर्मार्थकामाश्चमोक्षश्चापिभवेत्किल करोतियोव्रतंविप्रसर्वकामार्थसिद्धिदं स
वांछितफलयातिपश्चाद्गणपतांव्रजेत् यदायदापदंविघ्नान्नरः प्राप्नोतिसंकटं तदातदाप्रकर्त्तव्यंव्रतंसंकष्टनाशनं त्रिपु
रंहंतुकामेनकृतंदेवेनशूलिना त्रैलोक्यभूतिकामेनमहेंद्रेणचतत्कृतं रावणेनकृतंपूर्वंबालिबंधनसंकटे स्वकीयंप्राप्त
वान्राज्यंगणेशस्यप्रसादतः सीतान्वेषणकामेनकृतंवायुसुतेनच संकल्पदृष्टवान्सोयं सीतांरामप्रियांपुरा दमयं
त्याकृतंपूर्वंनलान्वेषणकारणात् सापतिंनैषधंलेभेपुरानश्लोकद्विजोत्तमाः अहल्यापिपतिंलेभेगौतमंप्राणवल्लभं वि
द्यार्थीलभतेविद्यांधनार्थीधनमाप्नुयात् पुत्रार्थीपुत्रमाप्नोतिरोगीरोगात्प्रमुच्यते व्रतमेतद्गणेशस्यसर्वकामफलप्र
दं येनचीर्णेनदेवेशनरोराज्यंचविंदतिराज्ञीचजायतेनारीअपिदासकुलोद्भवा राजपुत्रोजयेच्छत्रून्गरुडःपन्नगानिव
ब्राह्मणोब्रह्मवर्चस्त्वंप्राप्यसर्वाधिपोभवेत् वर्णाश्रमविहीनोपिसोपिसिद्धिंचविंदति इतिसंकष्टचतुर्थीव्रतकथातथैव
नारदीये श्रावणस्यचतुर्थ्यांतुजातेचंद्रोदयेमुने गणेशायप्रदद्याच्चह्यर्घ्यंविधिविदांवर चंद्रोदयेअर्घ्यदानाभिधानात्

कृष्णपक्षचतुर्थ्यभिधानं तत्रध्यानं लंबोदरंचतुर्बाहुत्रिनेत्रंरक्तवर्णकं नानारत्नविभूषाढ्यंप्रसन्नास्यंविचिंतयेत् आ
वाहनादिभि-सर्वैरुपचारैःसमर्चयेत् नैवेद्यमोदकान्दद्याद्गणेशपदमाप्नुयात् नानेनसदृशचान्यद्व्रतमस्तिजगत्त्रये
तस्मात्कार्य्यंप्रयत्नेनसर्वान्कामानभीप्सता श्रावणकृष्णपंचम्यामन्नव्रतम् नारदीये श्रावणेकृष्णपंचम्यांव्रत
मेतत्समृद्धिदं चतुर्थ्यादिनशेषेतुसर्वाण्यन्नानिनारद पृथक्पात्रेषुसंस्थाप्यजलेनाप्लावयेत्सुधीः ततोयामांतरे
तत्तुनिष्कास्यांबुनिधापयेत् प्रातर्भानौसमुदितेपित्रॄंश्चैवतथाऽर्पयेत् देवांश्चाप्यर्च्यसुस्नातःकृत्वानैवेद्यमन्नतः तद
न्नंयाचकेभ्यश्चप्रयच्छेत्प्रीतमानसः सर्वंदिनंक्षिपेदेवप्रदोषेतुशिवालये गत्वासंपूज्यदेवेशंलिंगरूपिणमीश्वरं गंध
पुष्पादिभिः सम्यक्पूजयित्वामहेश्वरं यजेत्पंचाक्षरीविद्याशतंचापिसहस्रकं जपन्निवेद्यदेवायभवायभवरूपिणे
स्नात्वामंत्रैर्वैदिकैश्चपौराणैश्चापिनाकुलः प्रार्थयेद्देवमीशानंशश्वत्सर्वार्थसिद्धये शारदीयानिचान्नानितथावा
संतिकान्यपि यानिस्युस्तैः समृद्धोहंभूयाजन्मनिजन्मनि दत्वान्नंब्राह्मणादिभ्यःस्वयंभुंजीतवाग्यतः एतदन्नव्र
तंनामविधिनाचरितंनृभिः सर्वान्नसंपज्जनकंपरलोकेगतिप्रदं अत्रैवश्रावणकृष्णपंचम्यांस्नुहीविटपदेवीपूजा
तत्रशिष्टाः सुतेजनार्द्दनेदेवपंचम्याभवनांगणे पूजयेन्मनसादेवींस्नुहीविटपसंस्थितां करवीरैर्जातिपुष्पैःशतपत्रैः
सचंदनैः स्नापयेद्गव्यपयसातथाशीतोदकेनच सघृतंपयसापूर्णंदीपंदद्यात्सगुग्गुलं मनसादेवींविषहरां इति
मंत्रेणमौनव्रतेनास्याःपूजाकार्य्या सर्पदंशचकादिविषशांतिर्भवतीति अत्रश्रावणकृष्णषष्ठ्यांस्कंदपूजागुहस्यचे
तिस्मरणात् अथसर्वमाससप्तमीपुतिथिपत्वेनादित्य पूज्यः उक्तंच सप्तम्याभास्करस्यचेति अथात्राष्टम्यांसुगति
प्रदव्रतं गत्वेन नक्ताशीत्वष्टमीपुस्याद्वत्सरांतेचगोप्रदः पौरंदरंपुरंयातिसुगतिव्रतमुत्तममितिपद्मपुराणवचनात्
अत्रश्रावणमासिकृष्णशुक्लनवम्योःकौमारीपूजातदुक्तं नि।याम्भृते भविष्योत्तरे श्रावणेमासिराजेंद्रय कुर्यान्नक्तभा

जनं दारपोष्टकमकनसर्वभूताहितरतः उपवासपरोवापिनक्तभोजीपदाथवा कानीरात्रिवनादिप
डिकांपूजयेत्सदा कृत्वारौप्यमयींशक्त्यादुर्गांवैपापनाशिनीं करवीरस्यपुष्पैश्चगंधैश्चागुरुचंदनैः धूपेनचदशां
गेनमोदकैश्चापिपूजयेत्कुमारींभोजयेत्पश्चात्स्त्रियोविप्रांश्चशक्तितः भुंजीतवाग्यतःपश्चाद्बिल्वपत्रकृताशनः
एवंयःपूजयेदार्य्यांश्रद्धाभक्तिसमन्वितः सयातिपरमंस्थानंयत्रदेवोगुहःस्थित इति अथ श्रावणकृष्णदशम्यां
तिथिपल्वेनांतकपूजाव्रतं तदुक्तं दशम्याअंतकस्येति अंतकोयमः तस्य पूजा कार्य्या श्राव
णकृष्णैकादश्यांरोहिणीयोगान्वितायांरोहिणीचंद्रव्रतंभविष्योत्तरे युधिष्ठिरउवाच घनावृतेंबरेदेववर्षाकाल
उपस्थिते मयूरकेकाकुलितेदर्दुरारावपूरिते कुलस्त्रियःप्रयच्छंतिकस्यार्घ्यंकात्रदेवता किंव्रतंकस्यविख्यातमिदंक
स्यांतिथौभवेत् श्रीकृष्णउवाच प्रवृत्तेश्रावणेमासिकृष्णपक्षेह्युपस्थिते एकादश्यांशुचिर्भूत्वास्नात्वासर्वौषधीजलैः
माषचूर्णेनराजेंद्रकुर्य्याद्दिंडुरिकाशतं मोदकांश्चतथापंचघृतप्रस्थंसुनिर्मलं नरानेकैकमुद्दिश्यततोगत्वाजलाशये
दुष्टपानीयरहितेनवमेघजलैर्भृते तस्यैवपुलिनेरम्येजलांतेगोमयादिना कृत्वामंडलकंवृत्तंपिष्टकादिभिरावृतं चर्चि
तंगंधकुसुमैर्धूपदीपाक्षतैर्जलैः तत्रचंद्रंलिखेद्देवंरोहिण्यासहितंविभुं अर्चयेत्तंसभार्यंहिमंत्रेणानेनभावितः
सोमराजनमस्तेस्तुरोहिण्यैतेनमोनमः महासतिमहादेविसंपादयममेप्सितं इत्थंसंपूज्यतस्याग्रेनैवेद्यंदयमर्चि
तं तच्चैवब्राह्मणेदद्यात्सोमोमेप्रीयतामिति प्रीयतामितिमेदेवीरोहिणीशशिनःप्रियेति एवमुच्चार्य्यदत्त्वाचततोंत
र्जलमाविशेत् कंठांतंकटिमात्रंवागुल्फांतंवाजलाशये ध्यायेतमनसाचंद्ररोहिणीसहितंतदायावत्समस्तंयज्ञुकंभूत्वा
चांतस्तटेस्थितः निवेश्यवसनंप्राप्यततोविप्रायभोजनं दक्षिणासहितंदेयंनिष्पावंवापिकल्पयेत्भक्त्याशक्त्यायथा
वित्तंयथाचित्तंतथातथा-यः करोतिनरोराजन्नारींवाचकुमारिका वर्षेवर्षेविधानेनयथेदंरोहिणीव्रतंइहलोकेचिरं

स्थित्वाधनधान्यसमाकुले गृहाश्रमेशुभांलक्ष्मींपुत्रपौत्रादिसंततिं ततस्तुतीर्थमरणंततोब्रह्मपुरंव्रजेत्तस्माद्विष्णुपु
रंपार्थततोरुद्रपुरशुभं हेरोहिणीशशधराभिमताहिताचाकिंकारणंशृणुनरेंद्रानिवेदयामि संमृष्टमाषवरबिंदुविकासि
तंयदुकंजलेगुडघृतेनफलंतदेव इतिभविष्योत्तरेरोहिणीचद्रव्रतं इयंश्रावणकृष्णैकादशीकामिका अस्या.कथाब्रह्म
वैवर्त्ते पद्मपुराणेच युधिष्ठिरउवाच श्रावणस्यासितेपक्षेकिंनामैकादशीभवेत् तन्मेकथयगोविंदवासुदेवनमास्तु
ते श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिकथांपापप्रणाशिनीं याप्रोक्ताब्रह्मणापूर्वंपृच्छतेनारदायच नारदउवा
च भगवन्श्रोतुमिच्छामित्वत्तोहंकमलासन श्रावणस्यासितेपक्षेकिंनामैकादशीमता कोदेवःकोविधिस्तस्याः
किंपुण्यकथयप्रभो ब्रह्मोवाच शृणुनारदतेवच्मिलोकानांहितकाम्यया श्रावणैकादशीकृष्णाकामिकानामनाम
तः यस्याःश्रवणमात्रेणवाजिपेयफलंलभेत् अस्यांच पूजयेद्देवंशंखचक्रगदाधर श्रीधराख्यमहाविष्णुंमाधवंमधु
सूदन पूजितेध्यायतेयोवैतस्यपुण्यफलशृणु नगयायानकाश्यांचनैमिषेनचपुष्करे तत्फलंसमवाप्नोतियत्फलंकृ
ष्णपूजनात् गोदावर्यांगुरौसिंहेव्यतीपातेचदंडके नतत्फलमवाप्नोतियत्फलंकृष्णपूजनात् ससागरवनोपेतांयो
ददातिवसुंधरां कामिकाव्रतधारीयउभौसमफलौस्मृतौ प्रसूयमानांयोधेनुंदद्यात्सोपस्करान्नृप तत्फलंसमवाप्नो
तिकामिकाव्रतकृन्नरः श्रावणेश्रीधरंदेवपूजयेद्योनरोत्तमः तेनैवपूजितादेवागंधर्वोरगकिन्नराः तस्मात्सर्वप्रयत्ने
नकामिकादिवसेहरिः पूजनीयोयथाशक्तिमानुषैःपापभीरुभिः संसारार्णवमग्नायेपापपंकेसमाकुलाः तेषामुद्धर
णार्थायकामिकाव्रतमुत्तमं एवनारदजानीहिपुराप्राहहरिःस्वयं ॥ अध्यात्मविद्यानिरतैर्यत्फलंप्राप्यतेनरैः ततोबहु
तरंविद्धिकामिकाव्रतसेवनात् रात्रौजागरणंकृत्वाकामिकाव्रतकृन्नरः नपश्यतियमंरौद्रंनैवपश्यतिदुर्गतिं
नपश्यतिकुयोनिंचकामिकाव्रतसेवनात् कामिकायाव्रतंकृत्वाकैवल्यंयोगिनोगताः तस्मात्सर्वप्रयत्नेनकर्तव्यंनियं

तात्मभिः तुलसीप्रसवैःपत्रैर्यो नरःपूजयेद्धरिं नसलिप्यतिपापेनपद्मपत्रमिवांभसा स्वर्णभारसहस्रंतुरजतंचचतुर्गु
णं तत्फलंसमवाप्नोतितुलसीदलपूजनात् रक्तमौक्तिकवैदूर्यप्रवालादिभिरर्चितः नतुष्यतितथाविष्णुस्तुलसीपूज
नाद्यथा तुलस्यामंजरीभिस्तुपूजितोयेनकेशवः आजन्मकृतपापस्यतेनसंमार्जितालिपिः याद्दृष्टानिखिलाघसंघशम
नीस्पृष्टावपुःपावनीरोगानामभिवंदितानिरसनीसिक्तांतकत्रासिनी प्रत्यासत्तिविधायिनीभगवतःकृष्णस्यसंरोपिता
न्यस्तातच्चरणेविमुक्तिफलदातस्यैतुलस्यैनमः दीपंददातियोमर्त्योदिवारात्रौहरेर्दिने तस्यपुण्यस्यसंख्यानंचित्रगु
प्तोनवेत्त्यलं कृष्णाग्रेदीपकोयस्यज्वलत्येकादशीदिने पितरस्तस्यतृप्यंतिह्यमृतेनदिविस्थिताः घृतेनदीपंप्रज्वाल्य
तिलतैलेनवापुनः प्रयातिसूर्यलोकेसदीपकोटिशतैर्वृतः इयंतवाग्रेकथिताकामिकामहिमामया अतोनरैश्चकर्त
व्यासर्वपातकनाशिनी ब्रह्महत्याप्रशमनी भ्रूणहत्याविनाशिनी त्रिदिवस्थानदात्रीच महापुण्यफलप्रदा श्रुत्वा
माहात्म्यमेतस्यानरःश्रद्धासमन्वितः विष्णुलोकमवाप्नोतिसर्वपापैःप्रमुच्यते इतिब्रह्मवैवर्त्तेपद्मपुराणेच श्रावण
कृष्णैकादशीकामिकाव्रतम् अथश्रीधरनाम्नोविष्णोःपूजनंनारदीयेपि श्रावणेकृष्णपक्षेतुएकादश्यांनरोत्तमःकामि
कांसमुपोष्यैवनियमेनद्विजोत्तमः दत्त्वाचदक्षिणांतेभ्योविसृज्याश्नीतबांधवैः एवंयःकुरुतेविभकामिकाव्रतमुत्तमं स
सर्वकामान्लभतेयातिविष्णोःपरंपदमिति अत्रद्वादश्यांश्रीधरपूजादिकंविधेयम् तदुक्तंमहाभारतेदानधर्मे अ
होरात्रेणद्वादश्यांश्रावणेमासिश्रीधरं पंचयज्ञमवाप्नोतिविमानस्थःसमोदतेइति अत्रत्रयोदश्यांकामत्रयोदशीव्रत
हेमाद्रौ ब्रह्मोवाच कामंपूज्यत्रयोदश्यांसुरूपोजायतेनरः इष्टांरूपवतींभार्यांकामांश्चलभतेऽधिकान् पक्षत्रयोद
शीव्रतमपिकार्यं श्रावणकृष्णचतुर्दश्यांपक्षचतुर्दशीव्रतं शिवरात्रिव्रतेवक्ष्यते श्रावणामावास्यायांश्राद्धादिकृत्य
मुक्तं नारदीये ॥ शुचौनभसिभाद्रेचमासेपूर्णासितेतिथौ पितृश्राद्धदानहोमसुरार्चनंत्यमश्नुत इति ॥

अनेवश्रमावास्यांपिठोराव्रतं मध्यदेशेतुपोलाइतिप्रसिद्धं साप्रदोषव्यापिनीग्राह्या यदापूर्वरात्रौप्रदोषव्याप्त्यभा
वस्तदापराकार्या अथव्रतविधिःमासपक्षाद्युल्लिख्यममइहजन्मनिजन्मांतरेवा पुत्रपौत्रफलावाप्त्यर्थंपिठोराव्रतंक
रिष्ये इतिसंकल्प्य देवीपूजांकृत्वा संध्याकालेस्नात्वाप्रदोषसमयेदेवींसंपूज्यषोडशोपचारैःब्राह्मणसुवासिनीसभो
ज्य पश्चात्स्वयंभुंजीत इतिविधिः नमोदेव्यैइतिमंत्रेणषोडशोपचारैःपूजनंकुर्य्यात् अथकथा इंद्राण्युवाच अपु
त्रालभतेकामंपरत्रचमहत्फलं व्रतानांपरमंश्रेष्ठंकथयत्वहिपार्वति पार्वत्युवाच प्राचीन श्रीधरोविप्रअत्रिगोत्रोध
नेश्वरः. तस्यभार्यासुमित्राचगृहधर्मेणवर्त्तते श्रीधरस्यसुतोज्येष्ठःशंकरोनामनामतः तस्यभार्याविदेहाचमृताप
त्याभवत्तदा श्रीधरस्यपितुःश्राद्धेविदेहाचप्रसूयते दुःखयुक्तासुमित्राचविदेहापरिवर्जयत् दुःखयुक्तावनंप्राप्ताम
ठमेकददर्शसा सरिच्चप्रचलायत्रविदेहातत्रसागता मठमध्येस्थितानारीपश्यतीचपुनःपुनः कुत्रयमधुनाप्राप्तालक्ष
णान्वितसुंदरी मठाधिपाविचार्यैवंविदेहामाहसत्वरं डाकिनीयक्षवेतालैरनेकैस्थीयतेशुभे त्वांग्रसिष्यंतिमक
लागच्छशीघ्रंयथागतं विदेहोवाच दुःखयुक्तांचमांचात्रक्रामंतीचवनांतरं मात्रसंयुश्चापिंगाक्षिक्षेमंममभवेत्कथं म
ठनार्युवाच अत्रागत्यचतुःषष्टिदिव्ययोग्यादयस्त्विमाः पूजनार्थंसमायातानिशामध्येशुभाःस्थिताः तवकामंप्रकु
र्वंतिजीविष्यातिचबालकान् विल्वपत्रेषुगुप्तात्वमधुनाभवभामिनी लुप्तात्रविदेहाचविल्वपत्रेपुसंस्थिता.क्षणेनै
केनक्षोटिंगामठमध्येसमागताः ज्ञात्वामनुष्यगंधंचमठनारीमपृच्छन कुतोमनुष्यगंधश्चमठगेहसमाश्रितः निशा
मध्येचतुःषष्टि देव्यस्तत्रसमागताः अनेकैश्चमहारत्नैः फलैर्नानाविधैरपि निविष्टांमठदेवींतामाज्ञानंकुर्व
तेस्महि श्रावणस्यतुमासस्यकृष्णपक्षेकुहूतिथौ पूजांकृत्वाचतुःषष्टिरतिथीन्ब्रुवतेस्महि वदतेस्ममनुष्यास्त
लुप्ताधप्रकटाभवत् ममाशुचित्वमापन्नंमातर्मेबालकंमत तवाग्रेमृतमादायास्थितास्मीतिचबालकं ममाप्यं

श्चतुःषष्ट्यःसंजीवाश्चभवांत्वितःतत्रस्थितंचनैवेद्यंनारिकेप्रतिगृह्यतां चतुःषष्टिस्ततस्तुष्टाददौतस्यैशुभंवरं श्रीधर
स्यस्नुषाहित्वंशकरस्यचवल्लभा पुत्रपौत्रयुताराज्यंभुक्त्वापूज्यासुरालये अष्टपुत्राभवत्वाशुविदेहेगम्यतांपुरं आग
तायेनमार्गेणतेनैवपुनरेव हि पुरांतरंस्थिता गत्वाप्रविवेशस्वमंदिरं श्रीधरश्चसुमित्राचशकरोबांधवैःसह विदेहाचा
ष्टपुत्रैश्चयुक्तासामंगलोत्सवैः प्रापुर्मुदंमहाभागादेवीनांचप्रसादतः द्विजमंत्रादिनिर्घोषैर्दुंदुभीःपटहध्वनैः मृगा
क्षिमंगलारावैर्मृदंगनृत्यघोषकैः तयासंपूजितादेव्यश्चतुःषष्टिःप्रकीर्तिताः तद्व्रतशृणुचंद्राणिपिठोराख्यंकुहूतिथौ
तासांस्मरणमात्रेणपुत्रपौत्रधनान्विता नारीभवतिचेंद्राणिशृणुत्वंनामपूजनं . दिव्ययोगीमहायोगीसिद्धयोगीग
णेश्वरी प्रेताक्षीडाकिनीकालीकालरात्रिर्निशाचरी ह्रींकारीरौद्रवेतालीक्रींकारीभूतडामरी ऊर्ध्वकेशीविरूपाक्षी
शुष्कांगीनरभोजना भराडीवीरभद्राचधूम्राक्षीकलहप्रिया राक्षसीघोररक्ताक्षीविश्वरूपाभयंकरी चंडिकावीरकौ
मारीवाराहीमुंडधारिणी भास्वरीरौद्रवेतालीश्रीपर्णीत्रिपुरांतका भैरवीध्वंसिनीक्रोधादुर्मुखीप्रेतवाहिनी खट्वां
गीदीर्घलंबोष्ठमालिनीमंत्रयोगिनी कालाग्निग्रहणीचक्रीकंकालीभुवनेश्वरी कंटकीकोटिनीरौद्रीयमदूतीकराल
नी घोराक्षीकामुकीलोकीकाकदृष्टिरधोमुखी मुंडाग्रधारिणीव्याघ्रीकिंकिणीप्रेतभक्षिणी कालरूपाचकामाख्या
उग्राणीयोगिपीठिका महालक्ष्मीरेकवीराकालरात्रीचपीठिका नमोस्तुवश्चतुःषष्टिदेवीभ्यःशरणंव्रजे पुत्रप्राप्तिश्री
द्धिकामोहंभक्त्यासंपूजिताःशुभाःएवमिंद्राणिकथितंपिठोराख्यंमहाव्रतं भक्त्याकुर्वंतियानार्यःकृतकृत्याभवंतिताःसु
खसौभाग्यसंयुक्ताश्चतुःषष्ट्याःप्रसादतः इतिभविष्योत्तरपुराणेपिठोराव्रतंसंपूर्णम् ॥ व्रतविधिःस्कांदे प्रातःस्ना
नादिनिर्वर्त्यवार्षिकवत्पूजामुद्यापनसंकल्पंचकुर्य्यात् तिथ्यादिसंकीर्त्यंआत्मनःस्वकुलस्यचसंततिविच्छेदाभावपू
र्वकधनधान्यलक्ष्मीसुखाद्यभिवृद्धयेसप्तवर्षावध्याचरितपिठोराव्रतसंपूर्णतासिद्ध्यर्थं चतुःषष्टियोगिनीस्वरूपसप्तमा

त्कामीत्यंथतदुद्यापनाख्यंकर्मंकरिष्ये कृताचार्येउक्तप्रकारेणसर्वतोभद्रेअष्टाकलशान्प्रतिष्ठाप्य सप्तकलशेषु
क्रमेण हैमीःसप्तप्रतिमानाममंत्रेण ब्राह्मीं महेश्वरीं -कौमारीं. वैष्णवीं- वाराहीं- इंद्राणीं- चामुंडां.
आवाह्य च ब्रानांसप्तमातरोइत्यनेनपूजयेत् तदुत्तरे सुवर्णादिपूर्णपात्रयुते कलशे चतुःषष्टियोगिनीः हैमप्रति
मासुअक्षतपुंजेषुआवाहयेत् दिव्ययोगिनीं १ महायोगिनीं २ सिद्धयोगिनीं ३ गणेश्वरीं ४ प्रेताक्षीं- ५ डाकि
नीं ६ कालीं ७ कालरात्रीं ८ निशाचरीं ९ हूंकारीं १० रुद्रवेतालीं ११ क्रोंकारीं. १२ भूतडामरीं १३ ऊ
र्ध्वकेशीं १४ विरूपाक्षीं १५शुष्कांगीं . १६नरभोजनां १७ भराडीं १८ वीरभद्रीं. १९ धूम्राक्षीं. २० कं
लहप्रियां- २१राक्षसीं. २२ घोररक्ताक्षीं २३ विश्वरूपां. २४ भयंकरीं २५ भास्वरीं २६ रौद्रवेतालीं २७
श्रीपर्णीं २८ त्रिपुरांतकां २९ भैरवीं ३० ध्वांसिनीं३१क्रोधिनीं ३२ दुर्मुखीं ३३ प्रेतवाहिनीं ३४ कटकीं ३५
क्रोटिनीं-३६ यमदूतीं ३७ करालीं ३८ खट्वांगीं ३९ दीर्घलंबोष्ठीं.४०मालिनीं.४१ मंत्रयोगिनीं.४२कालाग्नि
ग्राहिणीं-४३ चक्रीं.४४ कंकालीं.४५ भुवनेश्वरीं-४६स्फाराक्षीं-४७ कार्मुकीं.४८लौकिकीं४९काकदृष्टिं.५०अधो
मुखीं-५१ भक्षणीं.प्रेरणीं.५२ व्याघ्रीं.५३कंकणीं.५४प्रेतभक्षणीं-५५ कालरूपां५६ वीरकौमारिकां५७ चंडां.५८
वाराहीं.५९ मुंडधारिणीं६०कामाक्षीं ६१उष्ट्राणीं ६२ जालंधरीं ६३ महालक्ष्मीं६४ततःसुवर्णपात्रेणफलपुष्पयु
तमर्घ्यंनाममंत्रेणप्रत्येकंदद्यात् रात्रिंनिनयेत् प्रातःपीठदेवताःसंपूज्य अग्निंप्रतिष्ठाप्यअन्वादध्यात् सप्तमातॄःअ
ष्टोत्तरशतमाज्याहुत्यायोगिनीश्चैकैकयाज्याहुत्याब्रह्मादिदेवताश्चैकैकयाज्यहुत्यायक्ष्ये पूजामंत्रेणहोमः होमस्तु
कृताकृतः ततःसप्तमिथुनानिवस्त्रादिनासंपूज्य वस्त्रदक्षिणाप्रतिमायुतान्सप्तकलशांस्तेभ्योदद्यात् तत्रमंत्रः सो
पस्करंचकलशंगृहाणद्विजसत्तम प्रीयतांमातरोमह्यं कामास्थिनिर्हेतवे ततोयोगिनीपीठमाचार्यायदत्त्वाव्रतपूर्त्ते

ये अष्टौगास्तेभ्योदत्त्वासदन्नेनसंतर्प्य आशिषोगृहीत्वास्वयंभुजीतइतिपिठोरव्रतम् श्रावणशुक्लप्रतिपदमारभ्या चारप्रातंविल्वरोटकव्रतम् युधिष्ठिरउवाच हृषीकेशमयाकारिव्रतदानाद्यनेकधा श्रोतुमिच्छामिदेवेशव्रतंसंपत्तिका कारकं येनव्रतेनदेवेशपुनाराज्यंलभामहे तथाव्रततुमेदेहिपांडवानांकृपाकर श्रीभगवानुवाच वक्ष्यामिशुभदंपार्थ लक्ष्मीवृद्धिप्रदायक धर्मार्थकाममोक्षाणांनिदानंपरमव्रतं राजोवाच केनचादौपुराचीर्णंमर्त्यैकेन प्रकाशितंविधिनाके नकर्त्तव्यंतत्सर्वंवदकेशव श्रीभगवानुवाच आसीत्सौम्यपुरेराजासोमोनामेतिविश्रुतः क्षात्रधर्मेतिकुशलःप्रजापाल नतत्परः तस्यराज्येप्रजाःसर्वाःसौम्याधर्मपरायणाः तस्यराज्ञस्तुचामात्यःसोपिसौम्यःशुभावहः तस्मिन्सरस्तुसौ म्यंचसदासौम्यांबुनाप्लुतं अभूत्सोमेश्वरोदेवोलोकानांपालनायच तत्राभवत्सोमशर्माब्राह्मणोवेदपारगः वेदार्थवि च्छास्त्रविच्चशुद्धाचारोतिदुर्लभः तस्यभार्याशुभाचारापुरंध्रीचारुभाषिणी भर्तृशुश्रूषणरताकल्याणाप्रियवादिनी सो करोच्चकुटुंबार्थंकणयज्ञंदिनेदिने नलभ्यतेधिकंतेनधनधान्यतथैवच •अतीवखेदखिन्नस्तुविचार्यचपुनःपुनः किंक रोमिक्वगच्छामिसंभाव्योहंमहीतले केनकर्मविपाकेनलभतेचेदृशंफलं अथवार्थकरधर्म्यंदेवपूजादिकंतथा ससो मेशकरोद्भक्तिदैन्यनाशायपार्थिव कदाचित्खेदखिन्नोसावाजगामसरोवरं अभूत्सोमेश्वरःसाक्षात्तस्मिन्नृदृष्टः सरो वरे वृद्धब्राह्मणरूपेणकृपयापरयायुतः तेनसंदुःखितोदृष्टःसोमशर्माद्विजोत्तमः दुःखंकिमर्थंसंजातंत्वन्यथाचरणेन च किंचिद्दत्तंनास्तिपूर्वंतदर्थमीदृशंफलं तस्यतद्वचनंश्रुत्वाब्राह्मणस्त्विदमब्रवीत् भोभोविप्रवरश्रेष्ठव्रतमेकंवदा मिते तेनादिष्टव्रतंचेदपूर्णंसंपत्तिकारकं सोमशर्मोवाच भोभोब्राह्मणशार्दूलव्रतंतद्वदमेप्रभो यस्यानुष्ठानमात्रे णलक्ष्मीवृद्धिःप्रजायते कस्मिन्मासेचकर्त्तव्यंकिंदानंकिंचभोजनं धनलाभायकर्तव्यकस्यदेवस्यपूजनं केस्तुपुष्पैः प्रकर्त्तव्यापूजाचारुतराशुभा नैवेद्यंकीदृशंदेयमर्ध्यंकैस्तुफलैर्भवेत् यदितुष्टोसिविप्रेंद्रतत्सर्वंब्रूहिमेप्रभो वाद्य

णउवाच साधुविप्रत्वयापृष्टंव्रतंशृद्धिप्रदायकं विधानंतरयवक्ष्यामिसर्वसिद्धिप्रदायकं श्रावणस्यसितेपक्षेप्रथ
मेसोमवासरे प्रकर्त्तव्यंव्रतंविप्रशुभेनियमपूर्वक स धिमासत्रयंविप्रकर्तव्यंविधिपूर्वकं बिल्वदलैस्तुकर्त्तव्यचतु
र्दश्यांतुकार्तिके व्रतारंभस्तुकर्त्तव्योनियमश्चविचक्षणैः अद्यारभ्यव्रतदेवरोटकाख्यंमनोहरं. करोमिपरयाभक्त्या
पाहिमांजगतांगुरो दिनेदिनेप्रकर्त्तव्यापूजादेवस्यशूलिनः कथांविनानभोक्तव्यंप्रत्यहंचपुनःपुनः उपोषणचतुर्द
श्यांकर्त्तव्यविधिपूर्वकं शुचिर्भूत्वादिनेतस्मिन्कर्तव्यंरोटकव्रतं चतुर्दश्यांनिराहार स्थित्वाचैवपरेहनि भोक्ष्यामि
पार्वतीनाथसर्वसिद्धिप्रदायक इत्युपोषणमंत्रः कृत्वा माध्यान्हिककर्मनित्यपूजादिकंतथातस्यारात्रौतुकर्तव्यापूजा
देवस्यशूलिनः शुभेचैतत्प्रदेशेतुकर्त्तव्यंपुष्पमंडप पूज्यस्तत्रशिवोदेवोधर्मकामार्थसिद्धये क्षीरादिस्नपनंकुर्या
च्चंदनादिविलेपनं कृष्णागुरुसकर्पूरंमृगनाभिविमिश्रितं पुष्पैर्नानाविधैरम्यैःपूज्योदेवोमहेश्वरः धनकामेनकर्तव्या
पूजादेवस्यशूलिनः बिल्वपत्रैरखंडैश्चतुलसीपत्रकैस्तथा नीलोत्पलैश्चारुतरैः कर्त्तव्यापुण्यवर्द्धिनी कल्हारकम
लैश्चैवकुमुदैश्चातिशोभनैः चंपकैर्मालतीपुष्पैरकुंरविंदैःशुभावहैः मंदारैरर्कपुष्पैश्चपूजाबाण्यैःशिवप्रियैः अन्यैर्ना
नाविधैःपुष्पैर्ऋतुकालोद्भवैःशुभैः धूपैर्नानाविधैःपार्थपुण्यवर्धनसाधकैः दीपास्तत्रप्रदातव्याघृतपूर्णामनोरमाः
लेह्यैःपेयैस्तथाभोज्यैःस्वादुभिश्चशिवप्रियैः अन्यैर्नानाविधैरस्यैस्तथाविप्रवरैस्तुत नैवेद्यंतुप्रकर्त्तव्यंरोटकानां
विशेषतः कर्तव्यारोटकाःपंचपुरुषाहारमानतः द्वौतुविप्रायदातव्यौद्वाभ्यांचभोजनंशुभ एकोदेवायदातव्योनैवे
द्यार्थंसदाबुधैः महेशायप्रदातव्यंतांबूलंसुमनोहरं अर्घ्यदानप्रदातव्यंधनसंपत्तिकारकं गुर्जरीचशुभाद्राक्षामातु
लिंगंमनोरमं अक्षोटानिदाडिमंचनारंगानिशुभानिच कर्कटीचशुभाप्रोक्ताअर्घ्यदानेमनोहरा अन्यैर्नानाविधैः
पार्थऋतुकालोद्भवैःशुभैः यःकरोत्यर्घदानंचतस्यपुण्यंवदाम्यहं इलांयसागरैर्युक्तांरत्नैश्चान्यैर्मनोरमैः दत्त्वा

यत्फलमाप्नोतितेनतत्फलमाप्नुयात् अनेनविधिनातेनतत्कार्य्यंव्रतसिद्धये पंचवर्षंप्रकर्त्तव्यमतुलधनलिप्सुभिः प
श्चादुद्यापनंकुर्य्याद्रोटकस्यव्रतस्यच उद्यापनेतुकर्त्तव्यौहैमरौप्यौतुरोटकौ इतिशिवपुराणेविल्वरोटकव्रतम् ना
रदीयेऽप्येवं नभःशुक्लप्रतिपदिलक्ष्मीवृद्धिप्रदायकं धर्मार्थकाममोक्षाणांनिदानंपरमंव्रतं सोमवारंसमारभ्य
यावन्मासत्रयंद्विज कार्त्तिकेसितभूतायामुपोष्यव्रतकृन्नरः पूर्णायांशिवमभ्यर्च्यसौवर्णंवस्त्रसंयुतं दद्याद्विप्रा
यसंकल्प्यधनवृद्ध्यैमुनीश्वर श्रावणशुक्लद्वितीयायांविश्वकर्मशयनम् तत्रचंद्रायार्घ्यदानं नारदीये नभःशुक्लद्वि
तीयायांविश्वकर्माप्रजापतिः स्वपतेसातिथिःपुण्याह्यशोकशयनाह्वया सशक्तिकंतुशय्यायांपूजयित्वाचतुर्मुखं
इममुच्चारयेन्मंत्रंप्रणम्यजगतांपतिं चंद्रार्घ्यदानमत्रोक्तंसर्वसिद्धिप्रदायकं श्रीवत्सधारिन्श्रीकांतश्रीवासश्रीपते
ऽव्यय गार्हस्थ्यंमाप्रणाशंमेयातुधर्मार्थकामदइति श्रावणशुक्लतृतीयायांस्वर्णगौरीव्रतंनारदीये नभःशुक्लतृतीया
यांस्वर्णगौरीव्रतंचरेत् उपचारैःषोडशभिर्भवानींनामभिर्यजेत् पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्च
सर्वकामान्मेदेहिदेविनमोस्तुते एवंसंप्रार्थ्यदेवेशींभवानींभवसंयुतां व्रतसंपूर्त्तिकामातुवायनंदापयेत्तथा एवं
षोडशवर्षाणिकृत्वानारीशुभंव्रतं उद्यापनंचरेद्भक्त्यावित्तशाठ्यविवर्जिता मंडपेमंडलेशुद्धेगणेशादिसुरार्चनं
कृत्वाताम्रमयंपात्रंकलशोपरिविन्यसेत् सौवर्णांप्रतिमांतत्रभवान्याःपरिपूजयेत् गंधपुष्पादिभिःसम्यक्ततोहो
मंसमाचरेत् वेणुपात्रैःषोडशभिःपक्वान्नपरिपूरितैः समर्प्यदेव्यैनैवेद्यंद्विजेशंतान्निवेदयेत् वायनंचततःपश्चाद्द
द्यात्संबंधिबंधुषु प्रतिमांगुरवेदत्वाद्विजेभ्योदक्षिणांतथा पूर्णंलभेत्फलंनारीव्रताचरणतत्परा अथास्यांश्राव
णशुक्लतृतीयायांस्वर्णगौरीव्रतेपूजा देविदेविसमागच्छप्रार्थयेहंजगन्मये इमांमयाकृतांपूजांगृहाणसुरसत्तमे आ
वाहनम् १ भवानित्वंमहादेविसर्वसौभाग्यदायके अनेकरत्नसंयुक्तमासनंप्रतिगृह्यतां आसनम् २ सुचारुशी

तलंदिव्यंनानागंधसुवासितं पाद्यंगृहाणदेवेशिशिवेनसहितेशिवे पाद्यं २ अर्घ्यंगृहाणदेवेशिफलरत्नसमन्वितं
अष्टांगकल्पितंभक्त्याशिवेनसहसुव्रते अर्घ्यम् ३ गंगातोयंसमानीतंसुवर्णकलशेस्थितं आचम्यतांमहादेविशं
करप्रियवादिनि आचमनं ४ गंगासरस्वतीरेवापयोष्णीयमुनाजलैः स्नापितासिमयादेविसदाशांतिंप्रयच्छमे
स्नानं ५ सर्वभूपाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेदेविवाससीप्रतिगृह्यतां वस्त्रं ६ कर्पूरकुंकुमैर्युक्तं
हरिद्रादिसमन्वितं कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यतां चंदनं ७ अक्षतान्धवलान्देविकुंकुमाक्तान्सुशोभनान्
भालालंकारसिद्ध्यर्थंगिरिजेप्रतिगृह्यतां अक्षताः ८ माल्यानिचसुगंधीनिमालत्यादीनियानिच मयाहृतानिपु
ष्पाणिपूजार्थंप्रतिगृह्यतां पुष्पाणि ९ देवद्रुमरसोद्भूतःकालागुरुसमन्वितः आदीयतेमयाधूपोभवानिघ्राणत
र्पणः १० आज्यंचवर्त्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशित्रैलोक्यतिमिरापहं दीपं ११ अन्नंचतुर्विधं
स्वादुरसैःषड्भिःसमन्वितम् नैवेद्यंगृह्यतांदेविप्रसादंकुरुसर्वदा नैवेद्यम् १२ कर्पूरैलालवंगादितांबूलदलसंयुतं
क्रमुकस्यफलंदेवितांबूलंप्रतिगृह्यताम् तांबूलं १३ इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसुफलावाप्तिर्भवेज्ज
न्मनिजन्मनि फलं १४ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमे दक्षिणा १५
पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते प्रार्थना भवान्याश्चमहादेव्याव्र
तसंपूर्तिहेतवे वायनंद्विजवर्यायप्रीतयेहंददामिते १७ वायनदानमंत्रः १८ नानाषोडशपक्वान्नैर्वेणुपात्राणिषो
डश कुर्याद्वस्त्रादिभिर्युक्तान्याहूयाद्विजदंपतीः व्रतोद्यापनपूर्त्यर्थंब्राह्मणेभ्योददाम्यहं स्वलंकृताःसुवासिन्यःपा
तिव्रत्येनभूषिताः ममकामसमृद्ध्यर्थंप्रतिगृह्णंतुमोदिता इतिस्वर्णगौरीव्रतपूजा अथोद्यापनं युधिष्ठिरउवाच
उद्यापनविधिंब्रूहितृतीयायाःसुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्त्तिहेतवे श्रीकृष्णउवाच उद्यापन

विधिंवक्ष्येसावधानेनवैशृणु त्रिंशद्दंडप्रमाणेनविस्तीर्णंदक्षिणोत्तरं प्रत्यक्प्राग्वैतुराजेंद्रतत्वगोचनमुच्यते गोचर्म
मात्रंसंलिप्यगोमयेनविचक्षणः मंडलंकारयेत्तत्रनानावर्णैःसुशोभनं ग्रहमंडलपार्श्वेतुपद्ममष्टदलंलिखेत् तन्म
ध्येस्थापयेत्कुंभमव्रणंमृण्मयंशुभं ताम्रपात्रंप्रकुर्वीतपलैःषोडशभिस्ततः तदर्धार्धेनवाकुर्य्याद्वित्तशाठ्यंविवर्ज
येत् कर्षमात्रसुवर्णेनप्रतिमांकारयेद्बुधः तदर्धंमध्यमंप्रोक्तंतदर्धंतुकनिष्ठिकं कृत्वारूपंप्रयत्नेनपार्वत्याचहरस्यच
अथताम्रमयेपात्रेप्रतिमांतच्चविन्यसेत् श्वेतवस्त्रयुगच्छन्नंश्वेतयज्ञोपवीतकं भाजनंचतिलैःपूर्णंकलशोपरिविन्य
सेत् पार्वत्यासंयुतंकृत्वास्थापयित्वाविधानतः वेदोक्तेनप्रतिष्ठाचकर्त्तव्याचयथाविधि पंचामृतेनस्नपनंकृत्वादे
वस्यचोत्तमं स्नानंचकारयेत्पश्चात्ततःपूजांसमाचरेत् चंदनेनसुगंधेनसुपुष्पैश्चप्रपूजयेत् धूपंचकल्पयेद्गंधंचंदना
गुरुसंयुतं नानाप्रकारनैवेद्यंतथादीपंचकारयेत् अर्चयेत्पूजयेद्भक्त्यागंधपुष्पैःफलाक्षतैः आवाहनादिकर्त्तव्यंपु
राणागमसंभवैः कार्य्याविधानतःपूजाभक्तिश्रद्धासमान्वितैः देवदेवसमागच्छप्रार्थयेहंजगत्पते इमांमयाकृतां
पूजांगृहाणसुरसत्तम एवंपूजाप्रकर्त्तव्यारात्रौजागरणंततः गीतनृत्यादिसंयुक्तंकथापुस्तकवाचनं अर्चयेत्पूर्व
वद्देवंपरचाद्धोमंसमाचरेत् स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंततः प्रारभेत्तुततोहोमंनवग्रहपुरःसरं तिला
श्चयवसंमिश्राना‌ज्येनचपरिप्लुतान् स्विष्टकृद्धोमपर्य्यंतंकृत्वाविधिवदाचरेत् एवंसमाप्यहोमंतुतत्राचार्य्यंप्रपूज
येत् अर्घ्यंपुष्पप्रदानेनवस्त्रालंकारभूषणैः शक्त्यातुदक्षिणांदद्याद्गोकारेणसमन्वितां धेनुंसदक्षिणांदद्यात्सुशी
लांचपयस्विनीं स्वर्णशृंगींरौप्यखुरांकांस्यदोहनसंयुतां रत्नपुच्छांवस्त्रयुतांताम्रपृष्ठीमलंकृतां सवत्सामत्रणांभ
द्रांवैतुंदद्यात्प्रयत्नतः सुवर्णेनसमोपेतामाचार्यायचसाधवे षोडशाभिःप्रकारैश्चपक्वान्नैःप्रीणयेत्सदा षोडशप्रति
मांदद्याद्ब्राह्मणेभ्यःप्रयत्नतः वंशपात्रस्थितैःपश्चाद्दद्याद्वित्तानुसारतः बंधुभिःसहभुंजीतनियतश्चपरेहनि एवंकृ

स्याभवेत्पार्थपरिपूर्णंव्रतोत्तमम् इतिभविष्योत्तरे स्वर्णगौरीव्रतोद्यापनं अथकथासूतउवाच कैलासशिखरे
रम्येसिद्धगंधर्वसेविते उमयासहितःस्कंदःपप्रच्छशिवमव्ययम् स्कंदउवाच करुणासागरेशानलोकानांहितका
म्यया व्रतकथयदेवेशपुत्रपौत्रप्रवर्धनं शंकरउवाच साधुपृष्टंमहाभागकथयामिषडानन स्वर्णगौरीव्रतंनामस
र्वसंपत्करंनृणां पुरासरस्वतीतीरेविमलाख्यामहापुरी तत्रचंद्रप्रभोनामराजाभूद्धनदोपमः तस्यश्रीरूपलावण्य
सौंदर्यस्मरविभ्रमे महादेवीविशालाख्येद्वेभार्येचमृगेक्षणे तयोःप्रियतराज्येष्ठतस्यासीन्नृपतेर्भृता सकदाचिद्वनं
भेजेमृगयासक्तमानसः तत्रशार्दूलवाराहवनमाहिषकुंजरान् हत्वावभ्रामतृष्णार्त्तः सरसीविपनेमहत् चक्रो
रचक्रवाकाव्हपुंडरीकशताकुलं उत्फुल्लमल्लिकोद्दामकुमुदोत्पलमंडितं समासाद्यसरस्तीरेपीत्वाजलमनुत्तमं
भक्त्यागौरीमर्चयंतंददर्शाप्सरसांगणं किमेतदितिपप्रच्छराजाराजीवलोचनः स्वर्णगौरीव्रतमिदंक्रियते
स्माभिरुत्तमं सर्वसंपत्करंन्दृणांतत्कुरुष्वनृपोत्तम राजोवाच विधानंकीदृशंव्रतंकिंफलंविस्तरान्ममताऊचुर्योपि
तःसर्वानभोमासिनृतीयके प्रारब्धव्यंव्रतमिदंगौर्य्याःषोडशवत्सरान् तच्छ्रुत्वासोपिजग्राहव्रतंनियतमा
नसः गुणैःषोडशभिर्युक्तंडोरकंदक्षिणेकरे बध्नाम्यनेनमंत्रेणकरिष्येहंव्रतंतव ततःकृत्वाव्रतंदेव्यामंदिरामदम
त्तयाप्रधृतंडोरकंहस्तेदृष्ट्वापत्न्यातिकोपिता त्रोटित्वासाचचिक्षेपबाह्यशुष्कतरूपरि नकर्त्तव्यंनकर्त्तव्यमितिराज्ञि
वदत्यपि तेनसंस्पृष्टमात्रेणततःपल्लवितांगकः तद्द्वितीयाततोदृष्ट्वाभक्त्याकुलिताभवत् तन्मूलेडोरकंछिन्नंगृहा
त्वासाववंधह ततस्तद्व्रतमाहात्म्यात्पत्युःप्रियतराभवत् देवीकृतापचारेणसात्यक्तादुःखितावने प्रययौसातुमहिषी
ध्यायंतीविस्मयाकुला मुनीनामाश्रमेपुण्येनिवसंतीसतीकाचित् निवारितामुनिवरैर्गच्छपार्थेर्यथासुखं धावंतीवि
पिनेघोरेगणाध्यक्षंददर्शह तेनदृष्टापिसागौरीत्याज्येयमनपोपिता ततोददर्शाग्रगतांगच्छंतीतुसरःश्रियं ततो

वनश्रियंचाग्रेसर्वाभरणभूषितां पश्यंतीशकुनैस्तत्तद्व्रजंती॥ष्विवमानुषी तैस्तैर्निराकृतादृष्टा॥निर्विण्णानिष्पपातह तत स्तत्कृपयागौरीप्रादुरासीन्महासती तांदृष्ट्वादंडवद्भूमौनत्वास्तुत्वानृपांगना जयदेविनमस्तुभ्यंजयभक्तवरप्रदे जयशंकरवामांगेमंगलेसर्वमंगले ततोलब्ध्वावरंभक्त्यागौरीमभ्यर्च्यतद्व्रतं चक्रेदेवीपदंतस्यैददौसौभाग्यसंपदः इतिगौर्य्याःप्रसादेनसर्वान्कामानवाप्यच अंतेशिवपुरंप्राप्तःकांताभिःसहितोनृपः यःशोभनंव्रतमिदंकथितंशिवा याः कुर्यात्सचप्रियतरोभविताचगौर्य्याः प्राप्याश्रियंसमधिकंभुविशत्रुसंघंनिर्जित्यनिर्मलपदंसहसाप्रयाति इ तिस्कंदपुराणेरवर्णगौरीव्रतकथा इयमेवतृतीया मधुस्रवेतिनाम्ना गुर्जरदेशेषुप्रसिद्धा परयुताग्राह्येतिदिवोदासः एतस्याचारविधिरपि तत्रैव अस्यामेवाऽनंततृतीयाव्रतंभविष्योत्तरे युधिष्ठिरउवाच सौभाग्यारोग्यफलदंविघ्ना धिक्षयकारकं भुक्तिमुक्तिप्रदंकिंचिद्व्रतंब्रूहिजनार्दन श्रीकृष्णउवाच यदुमायाःपुरादेवउवाचासुरसूदनःकथासु संप्रवृत्तासुललिताराधनंप्रति तदिदानींप्रवक्ष्यामि भुक्तिमुक्तिफलप्रदं नराणामथनारीणामाराधनमनुत्तमं शृ णुष्वावहितोभूत्वासर्वपापप्रणाशनं नभस्येत्वथवैशाखेपुनर्मार्गशिरेतथा शुक्लपक्षेतृतीयायांस्नात्वासद्गौरसर्षपैः गोरोचनंचगोमूत्रंमुस्ताचगोशकृत्तथा दधिचंदनसंमिश्रंललाटेतिलकंन्यसेत् सौभाग्यारोग्यकृद्यस्मात्सदाचल लिताप्रिया प्रतिपक्षंतृतीयासुवद्ध्वावापीतवाससी धारयेदथवारक्तेसितानिकुसुमानिच विधवापांडुरक्तानिकु मारीशुक्लवाससी दध्यर्घ्यंपंचगव्येनततःक्षीरेणकेवलं तर्पयेन्मधुनातद्वत्पुष्पगंधोदकेनच पूजयेत्शुक्लपुष्पैश्चफ लैर्नानाविधैरपि धान्यकाजाजिलवणगुडक्षीरघृतादिषु शुक्लाक्षतैस्तिलैरर्घ्यैर्ललितायाःसदार्चयेत् आपादादर्चनं कुर्य्याद्गौर्य्याःसम्यक्समासतः वरदायैनमःपादौतथागुल्फौश्रियैनमः अशोकायैनमोजंघेभवान्यैजानुनीतथा ऊ रूमंगलकारिण्यैवामदेव्यैचतथाकटिं पद्मोद्भवायैजठरमुरःकामश्रियैनमः करेसौभाग्यवासिन्यैबाहूशशिमुखश्रि

यैं मुखंदर्पणवासिन्यैस्मितगौर्य्यैनमस्तथा तथानासांसुनेत्रायैत्रिनेत्रायैविलोचने । तुष्टयैललाटफलकंकात्यायन्यैशिरस्तथा नमोगौर्य्यैनमःसृष्ट्यैनमःकांत्यैनमःश्रियै रंभायैललितायैचवासुदेव्यैनमोनमः एवंसंपूज्यविधिवदग्रतःपद्ममालिखेत् पत्रैर्द्वादशभिर्युक्तंकुंकुमेनसकर्णिकं पूर्वेणविन्यसेद्गौरीमपर्णांचततःपरं भवानींदक्षिणेतद्वद्रुद्राणींतुततःपरं विन्यसेत्पश्चिमेसौम्यांततोमदनवासिनीं वायव्यांपाटलामुग्रामुत्तरेणततोद्युमां लक्ष्मीस्वाहास्वधातुष्टिर्मंगलाकुमुदासती रुद्राणीमध्यतःस्थाप्याललिताकर्णिकोपरि कुसुमैरक्षतैःशुभ्रैर्नमस्कारेणविन्यसेत् गीतमंगलघोषैश्चकारयित्वासुवासिनीं पूजयेद्रक्तवासोभीरक्तमाल्यानुलेपनैः सिंदूरंकुंकुमस्नानमिष्टंशिरसिपातयेत् नभस्येपूजयेद्गौरीमुत्पलैरसितैस्तथा बंधुजीवैराश्वयुजेकार्त्तिकेशतपत्रकैः कुंदपुष्पैर्मार्गशिरेपौषेवैकुंकुमेनच माघेतुपूजयेद्देवींसिंधुवारेणभक्तितः जात्यातुफाल्गुणेपूज्यापार्वतीपांडुनंदन चैत्रेतुमल्लिकाशोकैर्वैशाखेगंधपाटलैःज्यैष्ठेकमलमंदारैराषाढेचजपांबुजैःकदंबैरथमालत्याश्रावणेपूजयेदुमां गोमूत्रगोमयंक्षीरंदधिसर्पिःकुशोदकं बिल्वपत्रार्कपुष्पचगवांशृंगोदकंतथा पंचगव्यंतथाबिल्वंप्राशयेत्तंडुलोदक एतद्भाद्रपदाद्यंतुप्राशनंसमुदाहृतं प्रतिपक्षंतृतीयायांमयाप्रोक्तंवरानने ब्राह्मणंब्राह्मणींचैवशिवंगौरींप्रकल्प्यच भोजयित्वार्चयेद्भक्त्यावस्त्रमाल्यानुलेपनैः पुंसःपीतांबरंदद्यात् स्त्रियःकौसुंभवाससी निष्पावाजाजिलवणमिक्षुदंडसमन्वितं स्त्रियैदद्यात्फलंपुंसःसुवर्णोत्पलसंयुतं यथानदेवदेवेशस्त्वांपरित्यज्यगच्छति तथामांसपरित्यज्यपतिर्नान्यत्रगच्छतु कुमुदाविमलानंताभवानीवसुधाशिवा ललितासुकलागौरीसतीरंभाचपार्वती नभस्यादिषुमासेषुप्रीयतामित्युदीरयेत् व्रतांतेवायनंदद्यात्सुवर्णकमलान्वितं मिथुनानिचतुर्विंशत्तदर्धंसकृदर्चयेत् अष्टावष्टावथपुनश्चातुर्मास्येसमर्चयेत् तथोपदेष्टारमपिपूजयेच्चतथागुरु नपूज्यतेगुरुर्यत्रसर्वास्तत्राफलाःक्रियाःउक्तानंततृतीयैषासदानंतफलप्रदा सर्वपापहरा

देवीसौभाग्यवरवर्धिनी नचैनांवित्तशाठ्येनकदाचिदपिलंघयेत् नरोवायदिवानारीवित्तशाठ्यात्पतत्यधः गर्भि
णीसूतिकानक्तंकुमारीवाथरोगयुक् यदाकदाचिदन्येनक्रियमाणांतुकारयेत् इमामनंतफलदांतृतीयांयःसमाचरे
त् कल्पकोटिशतसाग्रंशिवलोकेसपूज्यते वित्तहीनोपियःकुर्याद्वर्षत्रयमुपोषणैः युक्तमंत्रविधानेनसोपितत्फल
माप्नुयात् नारीवाकुरुतेयातुकुमारीविधवातथा सापितत्फलमाप्नोतिगौर्यनुग्रहभाविता इतिपठतिशृणोत्यपाप
मिच्छन्गिरितनयाव्रतमिंद्रलोकसंस्थः मतिमपिचददातिसोपिदेवैरमरवधूजनकिन्नरैश्चपूज्यइतिभविष्योत्तरेभाद्र
शुक्लानंततृतीयाव्रतं अथश्रावणेकार्त्तिकेशुक्लचतुर्थीदूर्वागणपतिव्रतं मदनरत्ने सौरपुराणे स्कंदउवाच केनव्रते
नभगवन्सौभाग्यमतुलंभवेत् पुत्रपौत्रधनैश्वर्यंमनुजःसुखमश्नुते तन्मेवदमहादेवव्रतानामुत्तमंव्रतं श्रीमहादेवउ
वाच अस्तिदूर्वागणपतेर्व्रतंत्रैलोक्यविश्रुतं भगवत्यापुराचीर्णंपार्वत्याश्रद्धयासह सरस्वत्यामहेंद्रेणविष्णुनाधनदे
नच अन्यैश्चदेवैर्मनुजैर्गंधर्वैःकिन्नरैस्तथा चीर्णमेतद्व्रतंसर्वैःपुराकल्पेषडानन चतुर्थीयाभवेच्छुक्लानभोमासस्य
पुण्यदा तस्यांव्रतमिदंकार्यंकार्त्तिक्यांवाषडाननन कार्तिकशुक्लचतुर्थ्यामित्यर्थः चतुर्थीविघ्नहर्तारंकलशेताम्रभा
जनेवेष्टितंरक्तवस्त्रेणसर्वतोभद्रमंडले पूजयेद्रक्तकुसुमैःपत्रिकाभिश्चपंचभिः विल्वपत्रमपामार्गंशमीदूर्वाहरिप्रिया
हरिप्रियातुलसी अन्यैःसुगंधकुसुमैर्यथालब्धैःसुगंधिभिः फलैश्चमोदकैःपश्चादुपहारंप्रकल्पयेत् यथावदुपचा
रैश्चपूजयेद्गिरिजासुतं गजाननंचतुर्बाहुमेकदंतंरविप्रभं विधायहेम्नाविघ्नेशंहेमपीठासनस्थितं आगच्छदेवदेवे
शगणनाथजगत्पते विनायकनमस्तुभ्यंगौरीमलसमुद्भव आवाहनं अनेकरत्नखचितं मुक्ताफलविभूषितं
स्वर्णसिंहासनंचारुप्रीत्यर्थंप्रतिगृह्यतां आसनं उमासुतनमस्तुभ्यंविश्वव्यापिन्सनातन विघ्नौघंछिंधिसक
लंतुभ्यंपाद्यंसमर्पितं पाद्यं गणेश्वरायदेवायउमापुत्रायवेधसे पूजांमयाप्रयच्छामिगृहाणभगवन्मम इत्यर्घ्यं

स्नानपंचामृतादिव्यंपयोदधिघृतमधु सितयाचसमायुक्तंपूजार्थंप्रतिगृह्यतां इति पंचामृतस्नानं गंगादिसर्व तीर्थेभ्योमयाप्रार्थनयाहृतं गृहाणविघ्नराजेंद्रमयादत्तंमुभक्तित इति शुद्धोदकस्नानं विनायकायशूरायवरदायगजानन उमासुतायदेवायकुमारगुरवेनम इतिगंधं लंबोदरायदेवायसर्वविघ्नापहारिणे उमांगमलजातायद्रानयनांवधायवै इतिपुष्पाणि दशांगंगुग्गुलंधूपंसुगंधंसुमनोहर उमासुतनमस्तुभ्यंगृहाणवरदायक इति धूपं परंज्योतिःप्रकाशायसर्वसिद्धिप्रदायच दीपंतुभ्यप्रदास्यामिमहादेवात्मनेनम इतिदीपं गणानांत्वागणपतिं हवामहे इतिदीपं लडुकापूपपक्वान्नफलैर्नानाविधैर्युतं नानाभक्ष्यंपायसंचनैवेद्यंप्रतिगृह्यतां इतिनैवेद्यं पूगीफलंमहादिव्यमितितांबूलं हिरण्यगर्भगर्भस्थमितिदक्षिणा गणेश्वरगणाध्यक्षगौरीपुत्रगजानन व्रतंसंपूर्णतांयातुत्वत्प्रसादादिभानन इतिप्रार्थना एवंसंपूज्यविघ्नेशयथाविभवविस्तरैः सोपस्करंगणाध्यक्षमाचार्यायनिवेदयेत् गृहाणभगवन्ब्रह्मन्गणराजंसदक्षिणं व्रतंत्वदर्चनादद्यपूर्णतांयातुसुव्रत इतिमूर्तिदानमंत्रः एवं यःपंचवर्षाणिकृत्वोद्यापनमाचरेत् लभतेसर्वकामानदेहांतेशांकरंपदं अथवाशुक्लपक्षस्यचतुर्थ्यांसंयतेंद्रियः कुर्यादर्षत्रयस्त्वेवंसर्वसिद्धिमवाप्नुयात् उद्यापनंविनायस्तुकरोतिव्रतमुत्तमं तेनशुक्लतिलैःकार्यंप्रातःस्नानंषडानन हेमावारजतेनापिकृत्वागणपतिंबुधः पंचगव्यैस्तुसंस्नाप्यदूर्वाभिःसंप्रपूजयेत् अथदूर्वालक्षणं सप्तपत्रास्तुहरितादूर्वाःप्रादेशसंमिताः यदिवापंचपत्रास्तुविस्तृताःषड्भिरंगुलैःप्रत्येकंमूलमंत्रेणलक्षपूजांसमाचरेत् समाप्तौतुमहापूजांहैमींदूर्वांसमर्पयेत् इतिदूर्वाप्रकारः इदंदूर्वापूजनंपार्थिवगणपतिपूजायामपिकार्यं तथाचैकविंशतिपत्रिकापूजापिकार्या पुष्पपूजापि करवीरपुष्पं १ कल्हारपुष्पं २ कदंबपुष्पं ३ शतावरीपुष्पं ४ जाती. ५ मंदार- ६ कुंदपु. ७ भृंगराज. ८ चंपकपु- ९ कर्कटपु. १० मालतीपु. ११ शमीपु.. १२ वकुलपु. १३

अगस्तिपु० १४ दाडिमपु० १५ दूर्वापुष्पं १६ कर्कटपु० १७ रिंगिणीपु० १८ अपामार्गपु० १९ विल्वपुष्पं २० विष्णुक्रांतपु० २१ अत्रदूर्वागणपतिपूजायांतुदूर्वायुक्तैःपंचगव्यैर्दशभिर्नाममंत्रैःपूजाकार्या तत्रप्रधानं स्नानमात्रमेव दशनाममंत्राःस्कंदपुराणेउक्ताः गणाधिपनमस्तेस्तुउमापुत्राघनाशन विनायकेश पुत्रेतिसर्वसिद्धिप्रदायक एकदंतेभवक्त्रेतितथामूषकवाहन कुमारगुरवेतुभ्यमेभिर्नामपदैःक्रमात् इत्येवंकथितंवत्स सर्वसिद्धिप्रदंशुभं व्रतंदूर्वागणपतेः किमन्यच्छ्रोतुमिच्छसि इतिसौरपुराणोक्तंदूर्वागणपतिव्रतं नारदीयेच॥ अथास्मिन्नेवदिवसेदूर्वागणपतिव्रतं केचिदिच्छंतिदेवर्षेतद्विधानमिदंशृणु हैमंनिर्माप्यगणपंताम्रपात्रेपरिस्थितं वेष्टितंरक्तवस्त्रेणसर्वतोभद्रमंडले पूजयेद्रक्तपुष्पैश्चपत्रिकाभिश्चपंचभिः विल्वपत्रमपामार्गशमीदूर्वाहरिप्रिया एभिरन्यैश्चकुसुमैरभ्यर्च्यफलमोदकैः उपहारंप्रकल्प्याथदद्यादर्घ्यसमुत्थितः ततःसंप्रार्थ्यविघ्नेशंमूर्तिंसोपस्करां मुने आचार्यायविधिज्ञायनमस्कृत्यनिवेदयेत् कृत्वैवंपंचवर्षाणिसमुद्याप्ययथाविधिभुक्त्वेहभोगानखिलांल्लोकं गणपतेर्व्रजेदितिदूर्वागणपतिव्रतं श्रावणशुक्लपंचमीनागपंचमी सानागपूजादौ परैवेतितिथिसामान्यनिर्णये प्रागुक्तं चमत्कारचिंतामणावप्येवं पंचमीनागपूजायांकार्याषष्ठीसमन्विता तस्यांतुतुषितानागाइतरासुचतुर्थिकाइतराःपंचम्यः श्रावणेपंचमीशुक्लासाप्रोक्तानागपंचमीतांपरित्यज्यशेषास्तुचतुर्थीसहिताहिता इतिमदनरत्नविधानाच्च तेनैषांपरैव अत्रविशेषोहेमाद्रौ भविष्ये श्रावणेमासिपंचम्यांशुक्लपक्षेनराधिप द्वारस्योभयतोलेख्यागोमयेनविषोल्वणाः पूजयेद्विधिवद्वीरदधिदूर्वांकुरैःकुशैः गंधपुष्पोपहारैश्चब्राह्मणानांचत[र्पण]ैः एतस्यां पूजयिष्यंतिनागान्भक्तिपुरस्सराः नतेषांसर्पतोवीरभयंभवतिकुत्रचिदिति नागाश्च वासुकितक्षककालियमणिभद्रऐरावतकर्कोटकधृतराष्ट्रधनंजयाः नारदीयेऽपि श्रावणेशुक्लपंचम्यांनाभिरास्तिक्यतत्परैः द्वारस्योभयतोलेख्या

गोमयेनविषोल्बणाः गंधाद्यैःपूजनंतेषांतथेंद्राणीमनंतरं संपूज्यंस्वर्णरूप्यादिदध्यक्षतकुशांबुभिः गंधैःपुष्पैस्त
थाधूपैर्दीपैर्नैवेद्यसंयुतैः ततःप्रदक्षिणीकृत्यतद्द्रव्यंसंप्रणम्यच संप्रार्थ्यभक्तिभावेनविप्राग्रेषुसमर्पयेत् यदिदंस्व
र्णरौप्यादिद्रव्यंवैविप्रसात्कृतं तदनंतफलंभूयान्ममजन्मनिजन्मनि इत्येवंददतोद्रव्यंभक्तिभावेननारद प्रसन्नः
स्याद्धनाध्यक्षःस्वर्णादिकफलप्रदः एतद्व्रतंनरःकृत्वाविप्रान्संपूज्यभक्तितः पश्चात्स्वयंचभुंजीतदारापत्यसुहृद्वृतः
अस्यामेवपंचम्यांवासुकिकुंडस्नानं यःस्नातोनागपंचम्यांकुंडेवासुकिसंज्ञके नतस्यविषसंसर्गोभवेत्सर्पसमुद्भवः
नागाःप्रसन्नाजायंतेकुलेतस्यापिसर्वदेति अत्रैवविषापहपंचमीव्रतं मात्स्ये नागाश्चैवतुकर्त्तव्याःखड्गखेटकपा
णयःअधःसर्पाकृतिस्तेषांनाभेरूर्ध्वंतुमानुषी फणाश्चमुर्द्धनिकर्त्तव्याद्विजिह्वावाहिनीसमाःअसमाःविषमसंख्या तथै
वस्कंदपुराणेपि श्रावणेमासिपंचम्यांशुक्लपक्षेवरानने द्वारस्योभयतोलेख्या गोमयेनविषोल्बणाः कृत्वाकौसुंभि
कान्नागानिंद्राणींचप्रपूजयेत् घृतोदकाभ्यांपयसास्नापयित्वावरानने गोधूमैःपयसापूपैर्लाजैश्चाविविधैरपि पूजयेद्वि
धिवद्देविदधिदूर्वांकुरैःक्रमात् गंधपुष्पोपहारैश्चब्राह्मणानांचतर्पणैः येतस्यांपूजयंतीहनागान्भक्तिपुरस्सरं नतेषां
सर्पतोदेविभयंभवतिकुत्रचिदितिसर्पभयपंचमीव्रतम् ॥ श्रावणशुक्लषष्ठ्यांस्कंदपूजनं नारदीये श्रावणशुक्लषष्ठ्यांतु
शरजन्मानमर्चयेत् उपचारैःषोडशभिर्भक्त्याचपरयान्वितः लभतेभीप्सितानर्थान्षण्मुखस्यप्रसादतइति श्रावण
शुक्लसप्तमी अव्यंगसप्तमीनारदीये श्रावणेशुक्लसप्तम्यामव्यंगसप्तमीव्रतं कार्पासंतुचतुर्हस्तंसार्धंवस्त्राहिगोपतेः
पूजांतेप्रीतयेदेयंव्रतमेतच्छुभावहं अस्यामेवसप्तम्यांविशेषोभविष्योत्तरे श्रावणेमासिसप्तम्यांदेवाग्र्यंसप्तवाहनं
शुक्लपक्षेसमभ्यर्च्यपुष्पगंधादिभिःशुचिः प्राप्येहविपुलंभोगंधर्मानंतरमक्षयं अमुत्रलोकमायातिदिव्यंदिनपतेः
पुरं समर्प्याव्यंगमप्यत्रकार्यंवैनक्तभोजनं अव्यंगशब्देनकार्पाससूत्रनिर्मितः सर्पनिर्मोकाकृतिरंतः सुचि

रोवस्त्रविशेषः सच द्वाविंशत्यधिकशतांगुलपरिमितउत्तमः विंशत्याधिकशतांगुलैर्मध्यमः अष्टोत्तरशतांगुलस्त्वधमः इतिबोध्यः ॥ अस्यामेवपापनाशनीसप्तमीव्रतं हेमाद्रौ शुक्लपक्षस्यसप्तम्यांयदृक्षंतुकरोभवेत् तदा स्यात्सुमहापुण्यासप्तमीपापनाशनी तस्यांसंपूज्यदेवेशंचित्रभानुंदिवाकरं सप्तजन्मकृतंपापंव्रतेनानेननश्यति नारदीयेप्येवमुक्तं यदिचेद्हस्तयुक्तेयंतदास्यात्पापनाशनी अस्यांदानंजपोहोमस्सर्वमक्षयतांव्रजेदिति ॥ श्रावणशुक्लाष्टम्यांदेवीपूजा नारदीये नभःशुक्लेतथाष्टम्यांदेवींचैवविधानतः क्षीरेणस्नापयित्वाथमिष्टान्नंविनिवेदयेत् ततोद्विजान्भोजयित्वापरेह्निस्वयमप्युत भुक्त्वासमापयेदेतद्व्रतंसंतातिवर्धनं अत्रैवदेवीपुराणोक्तं दुर्गाव्रतं देवीव्रतंप्रवक्ष्यामिसर्वकामप्रसाधनं श्रावणेशुक्लपक्षेतुअष्टम्यांवायुभोजनः स्नात्वासार्द्रपटोभूत्वादेवींक्षीरेणस्नापयेत् दत्त्वापायसनैवेद्यंस्वयंभुंजीततद्व्रतीति ॥ श्रावणशुक्लनवम्यांकौमारीव्रतं नारदीये श्रावणेमासिविप्रेन्द्रनवम्यांनक्तभुङ्नरः पक्षयोरुपवासंवाकौमारींचंडिकांयजेत् रौप्यांपापहरांगंधैःपुष्पैर्धूपैश्चदीपकैः नैवेद्यैर्विविधैश्चैवकुमारीभोजनैस्तथा एवंयःकुरुतेभक्त्याकौमारीव्रतमुत्तमं सविमानेनगच्छेद्वैदेवीलोकंसनातनं ॥ श्रावणशुक्लदशम्यांशिवार्चनव्रतं नारदीये श्रावणीशुक्लदशमीसर्वाशापरिपूर्तिदा अस्यांशिवार्चनंशस्तंगंधाद्यैरुपचारकैः तत्रोपवासंनक्तंवाद्विजानांभोजनंजपः होमोदानंचधेन्वादेःसर्वपापप्रणाशनं ॥ श्रावणशुक्लैकादशी पुत्रदा तदुक्तं नारदीये एकादशींनभःशुक्लेपुत्रदांसमुपोष्यवै द्वादश्यांनियतोभूत्वा पूजयेच्चजनार्दनं उपचारैःषोडशभिस्ततःसंभोज्यवाडवान् दद्याच्चदक्षिणांतेभ्यःपुत्रंप्राप्येहसद्गुणं यातिविष्णोःपदंसाक्षात्सर्वदेवनमस्कृतः अस्याःकथाभविष्योत्तरेपाद्मेच युधिष्ठिरउवाच श्रावणस्यसितपक्षेकिंनामैकादशीभवेत् कथयस्वप्रसादेनममाग्रेमधुसूदन श्रीकृष्णउवाच शृणुष्वावहितोराजन्कथांपौराणिकींशुभां यस्याःश्रवणमात्रेणवा

जेपयफलंलभेत् द्वापरस्ययुगस्यादौपुरीमाहिष्मतीशुभा तस्यांमहीजिदाख्यातोराज्यंपालयतिस्वक पुत्रहीन
स्यतरयैवनत्तद्राज्यंसुखावहं अपुत्रस्यसुखंनास्तिइहलोकेपरत्रच ततोस्यपुत्रहीनस्यकालोवहुतरोगतः नप्रा
तश्चसुतोराज्ञः सर्वसौख्यप्रदोनृणां दृष्ट्वात्मानंप्रवयसंराजाचिंतापरोभवत् सदोगतःसभामध्येइदंवचनमब्र
वीत् इहजन्मनिहेलोकानमयापातकंकृतं अन्यायोपार्जितंवित्तंक्षिप्तंकोशेमयानाहि ब्रह्मस्वंदेवद्रविणंनम
यापहृतंक्वचित् न्यासापहारोनकृतःपरस्यवहुपापदःसुतवत्पालितालोकाधर्मेणैवजितामही दुष्टेषुपातितो
दंडोवंधुमित्रप्रियेष्वपि शिष्टास्तुपूजितानित्यंद्वेष्याअपिमयाजनाः इत्येवंव्रजतोमार्गेधर्मयुक्तेद्विजोत्तमाः कस्मा
न्ममगृहेपुत्रोनजातस्तद्विमृश्यतां इतिवाक्यंद्विजाःश्रुत्वासप्रजाःसपुरोहिताः मंत्रयित्वाहितंतेवजग्मुस्तेगहनं
वनं इतश्चेतश्चपश्यंतआश्रमान्मुनिसेवितान् नृपतेर्हितमिच्छंतोददृशुर्मुनिसत्तमं तप्यमानंतपोघोरंनिरानंदं
निरामयं निराहारंजितात्मानंजितक्रोधंसनातनं लोमशंधर्मतत्त्वज्ञंसर्वशास्त्रविशारदं दीर्घायुषंमहात्मानम
नेकब्रह्मसंमितं कल्पेकल्पेगतेयस्यह्येकंलोमारपशीर्यते अतोलोमशनामास्यत्रिकालज्ञंमहामुनिं तंदृष्ट्वाहर्षि
ताःसर्वेआजग्मुस्तस्यसन्निधिं यथान्यायंयथार्हंतंनमश्चक्रुर्यथोचितं विनयावनताःसर्वेऊचुश्चैवपरस्पर अ
स्मद्भाग्यवशादेवप्राप्तोयंमुनिसत्तमः लोमशउवाच किमर्थमिहसंप्राप्ताःकथयध्वंस्वकारणं मद्दर्शनल्हादने
नस्तुवंतइवमांकिमु जनाऊचुः संशयच्छेदनार्थायआगतास्तवसन्निधिं पद्मयोनेःपरतरस्त्वत्तःश्रेष्ठोनविद्यते अ
तःकार्य्यवशात्प्राप्ताःसमीपंभवतोवयं महीजिन्नामराजानःपुत्रहीनोस्तिसांप्रतं वयंतस्यप्रजाब्रह्मन्पुत्रवत्तेनपा
लिताः तंपुत्ररहितंदृष्ट्वातस्यदुःखेनदुःखिताः तपःकर्तुमिहायातामतिंकृत्वातुनैष्ठिकीं तस्यभाग्यवशाद्दृष्टोह्य
स्माभिस्त्वंतपोधन महतांदर्शनेनैवकार्यसिद्धिर्भवेन्नृणां उपदेशवदमुनेःराज्ञःपुत्रोयथाभवेत् इतितेषांवचःश्रुत्वा

पोपिता शुद्धोदनस्यबुद्धोभूत्स्वयंपुत्रोजनार्दनः महतींचश्रियंप्राप्तःपुत्रपौत्रसमन्वितः भुक्काराज्यश्रियंसोथग
तिंपरमिकांगतः इतिवाराहेधरणीव्रतेषुश्रावणशुक्लबुद्धद्वादशीव्रतं नारदीयेतु द्वादश्यांतुनभःशुक्लेश्रीधरंपूजये
त्कृती गंधाद्यैस्तत्परोभूत्वादधिभक्तैर्द्विजोत्तमान् संभोज्यदक्षिणांरौप्यंदत्वातत्वाविसर्जयेत् व्रतेनानेनदेवेशः
श्रीधरःप्रीयतामिति ॥ अथश्रावणशुक्लद्वादश्यांपवित्रारोपणमुक्तं विष्णुरहस्ये श्रावणस्यसितपक्षेकर्कटस्थेदि
वाकरे द्वादश्यांवासुदेवस्यपवित्रारोपणंस्मृतं द्वादश्यांश्रावणेवापिपंचदश्यामथापिवा अनुकूलेपुकर्तव्यंपंच
म्यामथवापिवेति नारदउवाच श्रुतामयाविधानोक्ताविष्णोराराधनक्रिया त्वत्प्रसादात्सुरश्रेष्ठजन्मदुःखक्षयप्र
दा भूयोपिश्रोतुमिच्छामिसम्यक्पूजाफलप्रदां अल्पप्रयत्नदेवेशमहापुण्यफलप्रदां पवित्रारोपणंकृत्वाविष्णो
र्भक्तिसमन्वितैः किंफलंप्राप्यतेदेवनरैस्तद्गतमानसैः यस्मिन्कालेचकर्तव्यंविधानंचतथाभवेत् तिथौकस्यांयथा
सूत्रप्रमाणंचयथाविधि यावंतस्तंतवस्तस्मिंस्तत्रतत्रानुमंत्रणं तत्वन्यासविधानंतुतथाचैवाधिवासनं आरोपणवि
धानंचउपवीतस्यचक्रिणः विसर्जनंचदेवस्यपवित्रारोपणादिकं किंकृत्वाफलमाप्नोतिहियतेकिंनकुर्वतः एतत्सर्वंसमा
चक्ष्वविधानंत्रिदशेश्वर ब्रह्मोवाच शृणुवत्सपरंगुह्यंविधानंदेवनिर्मितंमयाश्रुतंपुरासम्यक्सकाशाच्चक्रपाणिनः पवि
त्रारोपणंविष्णोर्भुक्तिमुक्तिप्रदायकं आयुःकीर्तियशःपुण्यसंपत्भोगधनावहं पुण्यानांतुयथापुण्यंसर्वपापहरंशुभं प
वित्रारोपणंतस्यात्पवित्रपरमंस्मृतं संवत्सरंनरोभक्त्यासमभ्यर्च्यजनार्दनं यत्फलंसमवाप्नोतिपवित्रारोपणेनतत्
नकरोतिविधानेनपवित्रारोपणंतुयः तस्यसांवत्सरीपूजानिष्फलामुनिसत्तम तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरा
यणैः वर्षेवर्षेप्रकर्तव्यंपवित्रारोपणंहरेः श्रावणस्यसितपक्षेकर्कटस्थेदिवाकरे द्वादश्यांवासुदेवस्यपवित्रारो
पणंस्मृतं सिंहस्थेवारवौकार्यंकन्यायांतुगतेथवा तस्यामेवतिथौसम्यक्तुलास्थेनकथंचन विष्णोरुद्रस्य

सूर्यस्यविरंचेः षण्मुखस्यच देव्यागणाधिनाथस्यमातृणांधनदस्यच पवित्रारोपणंकार्यमन्येषांचयथाविधि अ
कृत्वाफलहानिःस्यात्संवत्सरकृतार्चनात् सर्वेषांतुमहापुण्यपवित्रारोपणेकृते तिथयस्तन्तुविन्यासाःपृथगुक्तास्त
पोधनाः प्रतिपद्धनदस्योक्तापवित्रारोपणेतिथिः श्रियोदेव्याद्वितीयातुतिथीनामुत्तमातिथिः तृतीयातुभवा
न्यास्तुचतुर्थीतत्सुतस्यच पंचमीशेषराजस्य षष्ठीप्रोक्तागुहस्यच सप्तमीभास्करस्योक्ता दुर्गायाश्चाष्टमी
स्मृता मातृणांनवमीप्रोक्ता दशमीवासुकेःस्मृता एकादशीऋषीणांतु द्वादशीचक्रपाणिनः त्रयोदशी
ह्यनंगस्य शिवस्योक्ताचतुर्दशी ममदेवमुनिश्रेष्ठ पौर्णमासीतिथिः स्मृता यथोक्तशुक्लपक्षेतुतिथयः
श्रावणस्यच सर्वेषामेवदेवानांकार्यतासुयथाविधि नारदउवाच अस्मिन्सूत्रंतुकर्तव्यं पवित्रंचक्रपाणिनः
प्रमाणंचैवतंतूनांपुण्यंचैवेहकीदृशं कनिष्ठमध्यमेचैवउत्तमेचपवित्रके यथाकृतेफलंकर्तुस्तद्वदस्वपितामह ब्रह्मो
वाच शृणुवत्सयथाकार्यंयत्सूत्रंयत्प्रमाणकं विधानंचयथातस्यफलंतस्ययथाभवेत् प्रथमंदर्भसूत्रंचपट्टसूत्रंत
तः परं शुचिकार्पाससूत्रेणनिर्मितंवाशुभावहं शुचिर्भूत्वाशुचौदेशेकारयेत्प्रयत्नतः तद्विधानोपयुक्तंतुयथो
क्तफलदायकं कन्यातुकर्तयेत्सूत्रंनारीवाथपतिव्रता विधवासाधुशीलावासूत्रमेतत्तुकर्तयेत् केशयुक्तंक्षतंदग्धं
मद्यरक्तादिदूषितं मलिनंनीलरक्तंवाप्रयत्नेनविवर्जयेत् यथोक्तसूत्रमादाय त्रिगुणंत्रिः प्रयोजयेत् पवित्रंते
नकुर्वीतकनिष्ठोत्तममध्यमं कनिष्ठंतत्तुविज्ञेयंसप्तविंशतिभिःशुभं मर्त्यलोकेतुतत्कीर्त्ति सुखायुर्धनपुत्रदं च
तुःपंचाशताज्ञेयंतंतूनांमध्यमंपरं अष्टोत्तरसहस्रंतुतंतूनांपरिसंख्यया वनमालास्मृताविष्णोर्दत्तामुक्तिप्रदाहिसा
कनिष्ठंनाभिमात्रंस्यादूरुमात्रंतुमध्यमं पवित्रंचोत्तमंप्रोक्तंजानुमात्रप्रमाणतः वनमालाप्रमाणेन प्रतिमायाः प्र
णीयते नराणांजन्मसंसंसारमृत्युदुःखप्रणाशिनी कनिष्ठद्वादशैवोक्तामध्यमेद्विगुणाः स्मृताः त्रिगुणास्तु

तमेभेकार्थंयस्तुपवित्रके शतमष्टोत्तरंकार्यंग्रंथीनांतुविधानतः॥ मुनींद्रवनमालायांविष्णुपूजनतत्परैः॥ अधि
वासनसूत्रेतुग्रंथयोद्वादशस्मृताः॥ तन्तुन्यासविधानंतुश्रूयतांगुह्यमुत्तमं॥५॥ इदंविष्णुरितिख्यातोमंत्रराशिर्द्विजन्म
नां शूद्राणांतन्तुविन्यासेमंत्रोवैद्वादशाक्षरः॥ तावदावर्त्तयेन्मंत्रंयावंतोग्रंथयःस्मृताः॥ एकधाचद्विधाचैवत्रिधाचैव
पवित्रके ह्रस्वेप्रतिग्रंथिसकृन्मंत्रजपः॥ मध्यमोत्तमयोर्द्विस्त्रिः॥ कुंकुमोशीरकर्पूरचंदनादिविलेपनैः॥ पवित्राणि
विलिप्याथ तन्तुन्यासपुरःसरं॥ मूलमंत्रेणवैकार्यं॥ पवित्रारोपणंहरेः॥ एकादश्यांचतद्रात्रौमूलमंत्रेणभक्ति
मान् एकादश्यांशुभैर्गंधैःपुष्पधूपविलेपनैः॥ नैवेद्यैर्दीपवस्त्राद्यैःपूजयेद्गरुडध्वजं॥ नृत्यगीतशुभाख्यानैर्मल्लयुद्धैःसुव
ल्गितैः वाद्यैर्मुरजशंखाद्यैर्जागरंकारयेन्निशि॥ क्षीरिकाशर्करासंयाववटकापूपमोदकैः॥ फलैःसुगंधैर्मधुरैर्नैवेद्यंकारयेद्धरेः
एकादश्यांनरोभक्त्यासंपूज्यमधुसूदनं॥ पवित्रारोपणंकुर्याद्देवदेवस्यचक्रिणः॥ सोपवासःशुचिःस्नातःकृतजप्योजि
तेंद्रियः दत्त्वादानंद्विजाग्र्येभ्यःपूजयित्वाजनार्दनं॥ पूर्वाधिवासितंसम्यक्सम्पाद्यपवित्रकं॥ अतोदेवेतिमंत्रेणवि
ष्णोर्मूर्ध्निनिवेशयेत्॥ अयंमंत्रोद्विजातीनांपवित्रारोपणेस्मृतः॥ शूद्रस्यमूलमंत्रेणयेनैवपूजयेद्धरिं॥ वाष्टाक्षरद्वादशा
क्षरेणवा॥ स्तुतिमंगलनिर्घोषैर्गीतवादित्रनिःस्वनैः॥ पवित्रारोपणंकृत्वादेवायप्रार्थयेत्स्वयं॥ मणिविद्रुममाला
भिर्मंदारकुसुमादिभिः॥ एषासांवत्सरीपूजातवास्तुगरुडध्वज॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंजनार्दन॥ यत्पूजितं
मयादेवपरिपूर्णंतदस्तुमे॥ वनमालायथादेवकौस्तुभंसततंहरेः॥ पवित्रमस्तुतेतद्वत्पूजांचहृदयेवहेः॥ कृत्वापवित्र
कंविष्णोर्वत्सरंद्वादशार्पितं॥ फलंप्राप्नोत्यसंख्यातंपूजाहानिंनयाप्नुयात्॥ एवंसंप्रार्थ्यदेवेशंप्रणिपत्यपुनःपुनः॥ भ
क्त्यापिदद्याद्विप्रेभ्योहरिमुद्दिश्यदक्षिणां॥ ततस्तुभोजयेद्भक्त्यागुरुंज्ञानप्रदायिनं॥ वस्त्रगंधानुलेपाद्यैः पुष्पैस्तुवर
भूषणैः॥ अप्राप्यमंत्रंगुरोःशिष्योभक्त्यानार्चयतेगुरुं॥ सगच्छतिविमूढात्मानरकंद्विजराधमः॥ तस्मात्सर्वप्रयत्नेन

यथाविष्णुतथागुरुं आनदेनार्चयेयस्तुसमुक्तिफलमाप्नुयात् ।यथाविष्णुस्तथाविप्रायथाविप्रास्तथागुरु त्रिस
ध्यंपूजयेयस्तुसमुक्तिफलमर्हति ।नि क्रम्यदेवतागारात्संपूज्यपितृदेवताः मूलमंत्रेणजुहुयाद्वह्नौसघृतपायसं ।त
तोनुपूजयेद्विप्रान्दद्याच्छक्त्याचदक्षिणां ताम्बूलपुष्पगंधाद्यैः पूजयित्वाविसर्जयेत् ततोवधून्विशिष्टांश्चयज्ञातिभित्र
समाश्रितान् भोजयेदागतांश्चान्यान्भिक्षुकांश्चस्वशक्तितः एवंविधिविनिर्वर्त्यपवित्रारोपणंहरेः विष्णोःसायु
ज्यमाप्नोतिपुनरावृत्तिवर्जितं स्थंडिलेदेवदेवस्यएपएवविधिः स्मृतः पवित्रारोपणेविष्णोः विशेषःश्रूयतामिह
यावन्मानसमायुक्तभावयेतजनार्दनं तावदंगुलकंतस्यपवित्रमानुवस्मृतं यावतोग्रंथयः प्रोक्ताः स्वतस्तैश्चा
नुमंत्रण तत्रैवमूलमंत्रेणदद्याद्विष्णोः पवित्रकं प्रतिमायांस्थंडिलेवाकृत्वाविष्णोः पवित्रकं कुलानांशतमुद्धृत्यविष्णु
लोकंव्रजेन्नरः एवंसपाद्यविधिनापवित्रारोपणंहरेः अर्चयित्वाविधानेनहरिंचसपवित्रकं विसर्जनस्यमंत्रेणअने
नैवपवित्रकं सांवत्सरींशुभांपूजांसपाद्यविधिवन्ममव्रजेदानीं पवित्रत्वंविष्णुलोकंविसर्जितः मंत्रेणानेनतत्सूत्रप
वनार्थंयथाविधि उत्तार्यब्राह्मणेदद्यात्तोयेचाथविसर्जयेत् यावत्पुण्यस्मृतसम्यक्पवित्रारोपणेकृते उपवीतकृते
भक्त्यातत्फलंचाप्नुयान्नरः अनेनैवविधानेनतस्यपूजाविसर्जनं प्रार्थनावाहनंदानंसमस्तंविधिनाचरेत् तत्वमं
त्रैः समावेश विसर्जनविधिक्रियाः अर्चितेचसुरेंद्राणांसर्वकामानवाप्नुयात् आयुर्बलंधनंविद्यामारोग्यंकीर्तिम
व्ययां प्रयच्छंतियथाशक्त्याप्रसन्नास्तुदिवौकसः अर्चितेदेवदेवेश शंखचक्रगदाधरे आर्चिताःसर्वदेवाः स्यु
र्यतः सर्वगतोहरिः अर्चनेसर्वलोकेशे सुरासुरनमस्कृते केशवेकंसकोशिघ्ननयातिनरकंनरः प्रातर्मध्येपराह्णे
चसुरासुरगुरुंहरिं येनमतिनरानित्यंनतेनरकगामिनः तपस्तप्त्वानरोघोरमरण्येविजितेंद्रियः यत्फलसमवाप्नो
तिस्मृत्वातद्गरुडध्वजं इतिगुह्यतमंविष्णोः पूजाकल्पंमयोदितं समाचरतियोमर्त्यः सयातिपरमांगतिं इ

तिर्ब्रह्मपुराणोक्तः पवित्रारोपणविधिः शिवागमेशिवपवित्रलक्षणं एकाशीत्यथवासूत्रैः त्रिशताचाष्टयुक्तया पं
चाशतावाकर्त्तव्यंतुल्यग्रंथ्यंतरालकं द्वादशांगुलमानानिव्यासादष्टांगुलानिवा लिंगविस्तरमानानिचतुरंगुलिकानिवा तथैवपिंडिकास्पर्शेचतुर्थंसर्वदैवतं गोगावतारकंकार्यंपवित्रंमतिसुंदरं ॥ शिवः अथविष्णुरहस्योक्तः पवित्रारोपणविधिः नारदउवाच भगवन्देवदेवेशपरंकौतूहलंहिमे पवित्रारोपणंपुण्यंप्रसादाद्वक्तुमर्हसि पवित्रेतिकथंसंज्ञाकुतोत्पन्नंकिमुच्यते कृतेचाकिंफलंप्रोक्तं विधानंतस्यकीदृशं द्रव्येनकेनवाकुर्य्यात्किंप्रमाणंहितत्स्मृतं किंदैवतंचकिंछंदः कोवातस्यऋषिःस्मृतः अध्यात्मंचाधिभूतंचअधिदैवंकथंभवेत् केनमंत्रेणतत्कुर्याद्विधानंतस्यकीदृशं कस्मिन्कालेतुकर्त्तव्यं नक्षत्रेचतिथौकथं क्रियंतेध्रियतेकालमेतद्ब्रूहिसुरेश्वर श्रीभगवानुवाच साधुनारद धर्मज्ञतोपिहंत्वयानघश्रृणुष्वतवक्ष्यामिपवित्रारोपणंक्रमात् पावयत्येवयन्नित्यं त्रायतेभवबंधनात् पवित्रंतेनविस्यातंब्राह्मतेजोहिगीयते विष्णवास्यंयत्तुविस्यातंतदालोकेनिगद्यते तदेवसूत्ररूपेणयज्ञेशः कर्मणः प्रभुः तदेवत्रिगुणीभूतेमतंनारायणाख्यया त्रिदेवात्मात्रिवेदात्मा त्र्यक्षरः प्रणवः स्मृतः तेतंतवः समुद्भूतावराहाधीगमिश्रिताः कुतउत्पन्नमितियत्प्रश्नस्यैवेदमुत्तरं संपातेनचसंभूतातत्रात्मापरिकीर्तितः तंतूनांप्रथमोदेवोवासुदेवोजगद्गुरुः हस्तायुधोद्वितीयश्चप्रद्युम्नश्चतृतीयकः अपरस्त्वनिरुद्धस्तु ततोनारायणः प्रभुः ब्रह्माविष्णुस्तथैवाग्निर्वरहिणसमाश्रिताः अधिदैवेनरूपेणअध्यात्मंचनिवोधमे ॥ मनोबुद्धिरहंकारस्तन्मात्राणितथैवच जीवश्चोतिनवैवात्रअध्यात्मेसंव्यवस्थिताः द्यौरंतरिक्षंपृथिवीभूर्भुवस्वस्तथैवच अकारश्चउकारश्चमकारश्चाधिभूतके अग्नित्रयंतथाकर्मत्रयंचसदनत्रयं ज्ञेयंपवित्रंतद्विद्वानधिदैवमुदाहरेत् छंदश्चैवात्रगायत्रीप्रद्युम्नऋषिरुच्यते वासुदेवः परस्तस्य देवतापरिकीर्तिता योगोस्यसर्ववेदानां ब्राह्मणानांविशेषतः अलं

कारंद्विजातीनांकर्त्तव्यंप्रतिवत्सरं ॥ शरद्वर्षासुकुर्वीतपवित्रारोपणंशुभं यावद्धारयेत्तंतूंस्तावत्कुर्वीतवैव्रतं ॥ तथाप
वित्रकंकृत्वात्रीन्मासान्मासमेववा ॥ पक्षंद्विमासमर्द्धंवात्रिरात्रंपंचएववा ॥ अवधिंचकार्त्तिकंकृत्वासितपक्षाद्यनुक्रमा
त् यथाशक्त्यायजेदेवंकालसंकल्पनात्तथा ॥ पवित्रेध्रियमाणेवैनंत्याज्यंदेवतांतिकं ॥ अपवित्रेकृतेपश्चाद्यथेष्टंविच
रेद्बुधः ॥ मंगलंशोभनंरुद्रंविजयंचचतुर्थकं ॥ आषाढस्यक्रमेणैवदेवनामानिधारयन् ॥ द्वादश्यांश्रवणेवाथचाष्टम्या
मथवाद्विज ॥ अनुकल्पेतुकर्तव्यंपंचदश्यामथापिवा ॥ सूत्रंतुसात्विकंकृत्वात्रणवल्कलसंभवं ॥ कार्पासिकंतथाकार्यं
दार्भंकंवापिकारयेत् ॥ ब्राह्मणीकर्त्तितंसूत्रमन्यद्वातुयथारुचि ॥ त्रिगुणंत्रिगुणीकृत्यक्षालयेन्निर्मलांभसा ॥ अस्तेनशोध
येद्दोषान्केशाद्यांश्चस्वसंबुधः ॥ अष्टोत्तरशतंकुर्य्याच्चतुःपंचाशदेवता ॥ सप्तविंशतिरेवाथज्येष्ठमध्यकनीयसां ॥ अंगुष्ठ
पर्वमात्रास्तुयथाश्चोत्तमाःस्मृताः ॥ तदर्द्धंमध्यमाश्चैवतदर्द्धमधमाःस्मृताः ॥ अधमंनाभिमात्रंस्यादूरुमात्रंद्वितीयकं
उत्तमंजानुमात्रंचप्रतिमायान्निगद्यते ॥ एवंहिरूपतःकुर्य्यादधमोत्तममध्यमे ॥ यथाशोभंप्रकुर्वीतग्रंथयोविषमाःस्मृताः
सैवप्रोक्ताभवेदेवग्रंथिर्दैवतविग्रहा ॥ आरोग्यदंद्विजश्रेष्ठएवंविद्याद्विचक्षणः ॥ स्थंडिलेचाथवक्ष्यामिप्रथमंकर्णिकांतरे
दलाग्रगोद्वितीयंचादिशापालांतरंपरंयथाशक्त्यातुकर्त्तव्यंप्रत्यवायोह्यतिक्रमात् ॥ पितृतोमातृतःशुद्धआत्मशुद्धस्तथै
वचसदाचारस्थितोमंत्रीवेदवेदांगपारगः ॥ अलुब्धोपिशुनःसौम्यःसर्वभूतहितेरतः ॥ आचार्यःसतुविज्ञेयःसर्वकर्मरतो
हिसः ॥ ब्राह्मणःक्षत्रियोवैश्यस्तथास्त्रीशूद्रएवच ॥ स्वधर्मावस्थिताःसर्वेभक्ताश्चमधुसूदने ॥ पूर्वोक्तगुरुमासाद्यभक्त्या
संतोषयेच्चतं ॥ यज्ञार्थंप्रार्थयेत्पश्चादुद्धारंकुरुमेप्रभो ॥ पवित्रेणवयज्ञेनयजेयंमधुसूदनं ॥ करिष्यास्यंवामित्युक्तेसंभारांश्च
समाचरेत् ॥ हरेःसूत्रादियत्सर्वंगुरवेतन्निवेदयेत् ॥ यथाशक्त्यापवित्रंचशुचिःकुर्य्यादतंद्रित ॥ अष्टाक्षरेणमंत्रेणग्रथ्यंतेग्रं
थयस्तथा ॥ कुंकुमंरोचनाचैवकर्पूरेणसमन्वितं ॥ आदावुक्तेनमंत्रेणव्यस्तेनार्घ्यंत्रिनिःक्षिपेत् ॥ समस्तेनततोमंत्रीमंत्रयेत ॥

विचक्षणः उक्तेनैवतुमंत्रेणचार्चयेतपवित्रकं इतिकुंकुमनिःक्षिप्यनमइतितदुपरिकर्पूरमिति ध्यरतेनमेलयित्वा ॐ नमोनारायणायेतिसमस्तेनमंत्रेणाभिमंत्र्य समस्तेनैवपवित्रमलंकुर्य्यात् इतिविष्णुरहस्योक्तपवित्रारोपणविधिः स्मृतिकौस्तुभेहेमाद्रौ कालोत्तरेपवित्रारोपणप्रकरणे कृतेमणिमयंकार्यंत्रेतायांहेमसभवं पट्टजद्वापरेसूत्रंकार्पासं तुकलौस्मृत यतेर्मानसकार्यमिति अथनृसिंहपरिचर्या रामार्चनचंद्रिकोक्त पवित्रारोपणविधिः श्रावणस्यसिते पक्षेद्वादश्यांशौनकादिभिः उक्तस्तदाप्रकर्तव्यःपवित्रारोपणोत्सवः तथाचबह्वृचपरिशिष्टे सस्नातःसर्वतीर्थेषुसर्व यज्ञेषुदीक्षितः हरेश्चप्रीतिमाप्नोति यः पवित्रंसमाचरेत् विधिनांश।स्त्रदृष्टेनयोनकुर्यात्पवित्रक हरंतिराक्षसास्तस्य वर्षपूजादिजंफलम् पाद्मेतु ऊर्जेव्रतंमधौदोलांश्रावणांतेतुपूजनं चैत्रेदमनकारोपमकुर्वाणोव्रजत्यधः पवित्रारोपणं विद्यात् श्रावणेनभवेद्यदि कार्त्तिकावधिसिंहार्ककर्तव्यमितिनारद इतिपवित्रनित्यता प्रयोगसारादुत्पत्तिपवित्र स्यप्रतन्यते कनीयान्वासुकेर्भ्रातापवित्रोनामनागराट् ... द्वारवतांभूत्वाद्वैविकं शरदांशतं तपस्तेपेसमाश्रित्य देवदेवंमहेश्वरं प्रसन्नस्तपसातस्यपुरतःपुरुषोत्तमः ... नातिहरः शंभुराविरासीदुमाधवः प्रसादाभिमुखं दृष्ट्वादेवंशंभुजगंश्वरः कंठाभरणतांप्राप्तंबव्रेवरमनुत्तमं तथेत्याभाष्यतत्कंठदधारत्रिपुरांतकः प्रादात्तस्मैवरं चान्यपवित्रायात्मयोगिने येत्वांनवहुमन्यंतेयथासंभावितोमया जपहोमादिजंतेषांफलत्वामेतुनिश्चयात् अत्रैव श्रावणमासिनक्षत्रेवापिवैष्णवे तस्मादाराधयंतुत्वांनित्यनैमित्तिकावताः वैदिकाःसकृद्धोमेनपूजांकुर्वंतुतेनह त्वत्सादृश्यानुकारेणनिर्वीतेनैवतांत्रिकाः आरोप्यपूज्ययेदेवतायैपवित्रकम् नानागमोक्तमार्गेणतस्यकर्त्त व्यतोच्यते हेमरौप्यताम्रक्षौमैःसूत्रैःकौशेयजैःशुभैःकाशैस्तथाचकार्पासैर्ब्राह्मण्याकर्तितैःशुभैःकन्ययावापवित्र स्यात्सुपुंश्चल्यादिभिःकृतैः स्नात्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यशोधयेत् अभिर्मंत्रेर्वेपंचगव्यैरद्भिःप्रक्षाल्येसतः

मूलेनाष्टोत्तरशतंगायत्र्यारामसंज्ञया। अभिमन्त्रयेदितिशपः। शंखोदकेनाभिषिच्यपवित्राणिविनिर्मथेत्। दुग्धद्र व्याज्यविण्मूत्रैःपचगव्यक्रमंविदुः आप्यायस्वदधिक्राव्णस्तेजोसिपचगव्यके। गधद्वारांचगायत्रींक्रमाद्ज्ञेयंवि चक्षणैः इतिसूत्रशुद्धिः। तत्रोत्तमंपवित्रंतुषष्ठ्यासहशतैस्त्रिभिः सप्तत्यासहितद्वाभ्यांपवित्रंमध्यमस्मृतं। साशीति नाशतेनैवकनिष्ठंतत्समाचरेत् अष्टोत्तरतदर्द्धेनवसूत्रक्रमेणवा। जानूरूनाभिपर्यंतमुत्तमादित्रयंभवेत्। अष्टोत्त रसहस्रेणवनमालांप्रकल्पयेत्। उत्तमस्यपवित्रस्यद्वैगुण्येनापिभावयेत्। आरभ्यमुकुटंप्राप्तसूत्रेणरचिताशुभा। आपादलंबिनीमालावनमालाप्रकीर्तिता। यजमानपवित्रंचाधिवासनपवित्रक कनिष्ठेनसमंकार्यंमध्यमेनसमंगुरोःकु र्वीताग्रेपवित्रंचमध्यमेनसमंशुभं। साधारणपवित्राणित्रिभिःसूत्रैःसमाचरेत्। उत्तमंतुशतग्रंथिपंचाशद्ग्रंथिमध्यमं कनिष्ठंतुपवित्रंस्यात्षट्त्रिंशद्ग्रंथिशोभितं। षट्त्रिंशच्चतुर्विंशत्द्वादशेतिचकेचन चतुर्विंशत्द्वादशाष्टावित्यकेमुन योविदुः अंगुष्ठपर्वमात्रंतुकुर्याद्ग्रंथिमथोत्तमे तदर्धेनतदर्धेनमध्यमेचकनिष्ठके ग्रंथीन्कुर्वीतसर्वत्रसुवृत्तान्सुमनोह रान् नवैविषमसंख्याकान्ग्रंथीन्कुर्वीतकर्हिचित्। विशोभेनप्रदानेनकर्तुः स्यादशुभंफलम्। पवित्रंपरयाभक्त्यात स्मात्कुर्वीतशोभनं। कुंकुमरोचनाचैवकर्पूरेणचमिश्रितं तेनसंपूजयेत्सूत्रमष्टाक्षरविमंत्रितं। ततोभिमंत्रणंकुर्यात्इद्धं विष्णुश्चमंत्रतः द्वादशाक्षरमंत्रोवासर्वसाधारणास्मृतइतिपवित्रलक्षणं। ॥ततस्तानिपवित्राणिवैणवेपटलेशुभेसं स्थाप्यशुचिवस्त्रेणविधायपुरतोन्यसेत् अस्त्रतंनिसंमितावेणींकुर्यात्षट्त्रिंशताकुशैःमंत्रयेन्मूलमंत्रेणपंचगव्येनशो धयेत् तांतुकक्षांतरेकृत्वामानसंस्नानमाचरेत्। ततस्तुसर्वतोरक्षांकृत्वासौहोममाचरेत्। महास्नानंप्रकुर्वीतउपचारां स्तथैवच देवस्यसर्वतःस्थाप्यादंतकाष्ठजलकुशाः मृत्तिकांचहरिद्रांचकुष्ठगोरोचनानिच। पादुकोपानहच्छत्रंच मरव्यजनंतथा व्रीह्यादीनिचधान्यानिपुरतःस्थापयेत्तथा। दंडवत्प्रणिपातैश्चस्तोत्रैर्नानाविधैरपि वैदिकैश्चज

पेदेवंयथावत्प्रतिबोधयेत् क्रियालोपविघातार्थंयत्त्वयाविहितंप्रभो । मयैतत्क्रियतेदेवत्वत्तुष्ट्यैचपावित्रकं नहि
विघ्नोभवेदत्रकुरुतात्वंदयांमयि सर्वथासर्वदाविष्णोममत्वंपरमागतिः उपवासेनत्वांदेवतोषयामिजगत्पते काम
क्रोधादयोप्येतेनमेस्युर्व्रतघातकाः अद्यप्रभृतिदेवेशयावद्वैशेषिकंदिनं तावद्रक्षात्वयाकार्य्यासर्वस्यास्यनमोस्तुते
एवंविज्ञाप्यदेवेशंगुरुपादौप्रणम्यच कुर्य्यात्तुवैष्णवैःसार्धंपवित्रारोपणंहरेः कुंभपुण्यांबुनापूर्णंसर्वतोभद्रकेशुभे
स्थापयेत्पुरतोविष्णोरतत्रसूत्राणिपूजयेत् संवत्सरस्ययागस्यपवित्रीकरणायभोः विष्णुलोकात्पवित्रत्वमागच्छेह
नमोस्तुते अनेनाग्रहयेत्सूत्रंमूलमंत्रयुतेनच उत्तमादित्रयेविद्वान्स्मरेद्देवत्रयंतथा गुणान्वेदत्रयंचैवध्यायेल्लोकत्रयं
तथा प्रक्रांतिवनपूर्वायांमालायांनिखिलात्मिकां द्युलोकंमुकुटंसूत्रेध्यायेत्तद्गात्रशालिनि सर्वाभरणचित्रांगसर्वदेवनम
स्कृत लावण्यरूपविश्वात्मन्ज्येष्ठसूत्रंसमाश्रय सर्वलक्ष्मीकरश्रीशसर्वज्ञानमयात्मक निवृत्तरूपविश्वात्मन्मध्यसू
त्रंसमाश्रय अतिवेगजगद्योनिपुरुषात्मन्नादिवस्पते कनीयोमेप्रभोदेवतेजसासूत्रमाश्रय सर्वाधारधरारूपसर्वकर्त्तः
प्रजापते सर्वथात्मेशसूत्रेस्मिन्सान्निध्यंकुरुतेनमः सर्वरत्नोज्वलाकारब्रह्मांडेब्रह्मरोचिष मुकुटोत्तमसर्वांगशिरः
सूत्रइहैहिभोः प्रकृतिर्जगतःकर्त्रीसर्वलावण्यदायिनी श्रीसूत्रेनित्यकल्याणिसान्निध्यंकुरुतेनमः उत्तमादीनिसूत्राणि
क्रमादालभ्यपाणिना मनुभिर्मंत्रयेदेभिःपूजयेन्मूलमंत्रतः ब्रह्मविष्णुमहादेवाःश्रीसूत्रिदेवताः स्मृताःॐकारसोमव
ह्नीचब्रह्मानागः शशीरविः शिवश्चविश्वेदेवाश्चनवसूत्राधिदेवताःक्रियाचपौरुषीवीराविजयेशापराजिता मनोन्म
नीजयाभद्रामुक्तिश्चग्रंथिदेवताः ध्यात्वावाह्यमतीकृत्यगंधपुष्पाक्षतांकुरैः धूपदीपांततांबूलैःपवित्राणिबुधोर्चयेत्
अथदेवकरेविद्वान्पट्टसूत्रसमुद्भवं वितस्तिमानकंडोरवध्नीयान्मंगलात्मकः संवत्सरकृतार्चायाः संपूर्णफलदोसि
यत् पवित्रारोपणोयतत्कुरुकधरकेनमः तेइत्यपिपाठः ॐविष्णुतेजोद्भवंरम्यंसर्वपातकनाशनं । सर्वकामप्रददेव

तवांगेधारयाम्यहं मूलसंपुटितादस्माद्दद्याद्गंधपवित्रकं नीराजयेत्ततोदेवंमंगलाघोषपूर्वकं नैवेद्यंविविधंदद्यात्तां
बूलमनुलेपनं उपतिष्ठेत्ततोदेवंजितमित्यादिभिःस्तवैः मंत्रेणाथसुरेशानंदेवदेवंनिमंत्रयेत् ॥ आमंत्रितोसिदेवेश
पुराणपुरुषोत्तम प्रातस्त्वांपूजयिष्यामिसान्निध्यंकुरुकेशव क्षीरोदधिमहानागशय्यावस्थितविग्रह प्रातस्त्वांपूज
यिष्यामिसन्निधौभवतेनमः निवेदयाम्यहंतुभ्यंप्रातरेतत्पवित्रकं ॥ सर्वथासर्वदाविष्णोनमस्तेस्तुप्रसीदमे निपते
द्दंडवद्भूमौक्षिपेत्पुष्पांजलिंपुनः पूजितान्यत्रसूत्राणिकुंभंचपुरतःस्थितं ॥ अस्त्रेणसर्वतोरक्षेत्कवचेनावगुंठयेत्
रक्षेद्वाचक्रमंत्रेणनृहरेर्मनुनाथवा ब्राह्मणांस्तुनमस्कृत्यगुरुपादौप्रणम्यच गीतमंगलनिर्घोषैः कुर्य्याज्जागर
णंततःअधिवासेविधिःप्रोक्तः कपिलैर्नारदादिभिः अधिवासनकालश्च दीपिकायामुक्तः गोदोहांतरिते
कालेपूर्वेद्युर्वाधिवासनामिति इतिपवित्राधिवासनं ततःप्रातःसमुत्थायध्यात्वादेवंयथोदितं नित्यपूजां
ततः कृत्वापवित्राणांतथैवच नीराजयेच्छनैर्दीपैर्मंगलाघोषपूर्वकं स्तुत्वाचविविधैःस्तोत्रैर्महादेवंसुरा
र्चितं ततोमंगलनिर्घोषैःशंखतूर्यादिनिःस्वनैः गंधदूर्वाक्षतैर्युक्तंदद्याद्देवायसूत्रकं ॐरामरामनमस्तुभ्यंगृ
हाणेदंपवित्रकं पवित्रीकरणार्थायवर्षपूजाफलप्रदं पवित्रंतत्कुरुष्वाद्ययन्मयादुष्कृतंकृतं शुद्धोभवाम्यहंदेव
त्वत्प्रसादात्सुरेश्वर मूलसंपुटितोह्येषपवित्रारोपणेविभुः अंगाद्यावृत्तिदेवेभ्यस्ततोदद्यात्स्वनामभिः नैवेद्यंतु
महापूर्वंततोदद्याच्चभक्तितः नीराजयेत्ततोदेवंरमाकांतंसुमंगलं संवीज्यचामरैः पुण्यैर्दर्पणंदर्शयेत्ततः विविधानि
चपुष्पाणिदद्यात्पुष्पांजलिंततः प्रार्थयेद्देवदेवेशंमंत्रैरेभिर्यथाविधि मणिविद्रुममालाभिर्मंदारकुसुमादिभिः इ
यंसांवत्सरीपूजातवास्तुगरुडध्वज वनमालायथादेव कौस्तुभः सततंहृदि पवित्रमस्तुतेतद्वत्पूजांचहृदयेवह
जानताऽजानतावापिनकृतयत्तवार्चनं केनचिद्विघ्नदोषेणपरिपूर्णंतदस्तुमे अपराधसहस्राणिक्रियंतेहर्निशमया

दासोयमितिमांमत्वाक्षमस्वमधुसूदन निपत्यदंडवत्भूमौभक्तियुक्तेनचेतसा प्रणमेद्देवदेवशरामामष्टाथदेवुधः
ततःपवित्रंगुरवे दद्याद्गंधादिपूर्वकं अथैनंपूजयेद्भक्त्यास्वर्णवस्त्रानुलेपनैः ब्राह्मणान्विष्णुभक्तान्वैगंधपुष्पा
दिनार्चयेत् भक्त्याप्रतोपयेत्तांस्तुवस्त्रभोजनकांचनैः मासंपक्षमहोरात्रंत्रिरात्रंधारयेत्तथा देवेनसूत्रसंभेदेदेश
कालविवक्षया प्रत्यहंस्नानकार्य्यादिसूत्राण्युत्तार्यकारयेत् अभिषिच्यार्घतोयेनपुनर्देवेनिवेदयेत् अथांतेदेव
मभ्यर्च्यविशेषात्पुष्पचंदनैः नैवेद्यंविधिवद्दत्त्वाततःसूत्रंविसर्जयेत् सांवत्सरींशुभांपूजांसंपाद्यविधिवन्मम व्रजे
दानींपवित्रत्वंविष्णुलोकंविसर्जितः यावदेवपवित्राणितावत्तिष्ठेत्समाहितः ब्रह्मचारीहविष्याशीदेवपूजापरायणः
पवित्रारोपणंकालेनकरोतिकथंचन तदायुतंजपेन्मंत्रंस्तोत्रंवापिसमाचरेत् इतिपवित्रारोपणम् अथसर्वसा
धारणप्रयोगः पवित्राणितु स्वर्णरजतताम्रपट्टसूत्रपद्मसूत्रकुशकाशमुंजशणवल्कलकार्पाससूत्रेष्वन्यतम
सूत्रैःकुर्यात्तत्रनिषिद्धसूत्राणि केशयुक्तंक्षतंदग्धं मद्यरक्तादिदूषितं मलिनंनीलरक्तंवाप्रयत्नेनविवर्जयेदिति क
र्पाससूत्रं चेत्सुवासिनीभिः कर्त्तितंतथा लब्धंवागृहीत्वा त्रिगुणीकृत्य नवसूत्रस्यैकरसत्वेनकल्पितैः सूत्रैः
पवित्राणिकुर्यात् स्वर्णादिसूत्रकृतपवित्रेषुयथाकृततंतुमादायवक्ष्यमाणसंख्यासमाननीयेति शिवार्चनचंद्रिका
रत्नमालाकारयोराशयः तत्रादौसूत्रशुद्धिक्रमः तत्सूत्रंपंचगव्येनाभिषिच्याद्भिः प्रक्षाल्य मूलेन रामगायत्र्या
वाष्टोत्तरशतवारमष्टवारंवा शंखोदकेनाभिमंत्र्य शुचौदेशे निधाय पवित्राणिकुर्य्यादितिसूत्रशुद्धिः तत्रउत्तम
पवित्रंषष्ट्यधिकात्रिशतसूत्रैर्मध्यमं साशीतिशतसूत्रैः कनिष्ठं अथवाष्टोत्तरशतेनोत्तमं मध्यमंतदर्धं सप्तविंश
त्याकनिष्ठं तच्चदेवस्यजानुपर्यंतमुत्तमं ऊरुपर्यंतमध्यमंनाभिपर्यंतकनिष्ठं वनमालात्वष्टोत्तरसहस्रसूत्रैः कार्या
उत्तमपवित्रसूत्रप्रमाणार्धगुणेनवाकार्या मुकुटमारभ्यपादपर्यंतामालावनमाला यजमानपवित्रमाधिवासनप
वित्रंचाशीत्यधिकशतसूत्रैः सप्तविंशतिसूत्रैर्वा कार्यं गुरुपवित्रंतु द्विसप्तत्याधिकशतद्वयसूत्रैः चतुः पंचाशता

सूत्रैर्वा कर्त्तव्यं नृसिंहपरिचर्यायां तु गुरुपवित्रे सप्तविंशतिभिः षड्विंशत्या वा नवसूत्र्या वा कर्त्तव्यमित्युक्तं अग्निपवित्रं तु गुरुपवित्रेण समं सप्तविंशत्या सूत्रैर्वा कर्त्तव्यं शिवपवित्रं तूत्तमं अष्टाशीत्या सूत्रैः कार्यं पंचाशता सूत्रैर्मध्यमं अष्टत्रिंशत्सूत्रैः कनिष्ठं तत्पवित्रप्रमाणं च द्वादशांगुलमानानि व्यासादष्टांगुलानि वा लिंगविस्तारमानानि च तुरंगुलकानि चेति अन्यानि साधारणपवित्राणि त्रिभिः सूत्रैः कर्त्तव्यानि क्रमज्ञानां शिष्याणां च स्कंधादिनाभिपर्यंतं दैर्घ्यमुक्तं नृसिंहपरिचर्यायां तु परिवारदेवतानां पवित्राणि सप्तविंशतिषोडश द्वादश नवत्रिसूत्रीभिः कर्त्तव्यानीत्युक्तं उत्तममध्यमकनिष्ठपक्षत्रयानुसारेण पवित्राणि कुर्यादिति शिवार्चनचंद्रिकाकारः अथ पवित्रेषु ग्रंथयः अष्टाक्षराभिमंत्रितैः कुंकुमगोरोचनैः कर्पूरैस्तत्सूत्रं रंजयित्वेदं विष्णुरिति मंत्रेण द्वादशाक्षरमंत्रेण वाभिमंत्र्य ग्रंथीन् कुर्यात् तत्रोत्तमपवित्रे शतग्रंथयः षट्त्रिंशद्वा चतुर्विंशतिर्वा कर्त्तव्याः मध्यमपवित्रे तु पंचाशत् चतुर्विंशतिर्द्वादश वा ग्रंथयः कार्याः कनिष्ठपवित्रे षट्विंशतिरष्टादशाष्टौ वा ग्रंथयः कार्याः शिवार्चनचंद्रिकायां वेतानि सर्वाणि दशदशग्रंथियुक्तानि कर्त्तव्यानीत्युक्तं वनमालायामष्टोत्तरशतग्रंथयः कार्याः गंधपवित्रं तु द्वादश नवसूत्रीभिर्द्वादशग्रंथियुक्तमरत्निमात्रं ग्रंथिरहितं वितस्तिमात्रं वा कार्यं अथ ग्रंथिरचनाप्रकारमाह अंगुष्ठपर्वमात्रग्रंथिरुत्तमे तदर्धेन मध्यमे तदर्धेन कनिष्ठे एवं ह्यनंतान् शोभनान् समान् ग्रंथीन् नारायणाष्टाक्षरकवचमंत्रं वा जपन् कुर्वीत शिवार्चनचंद्रिकायां तु ग्रंथिषु सूत्रवेष्टनसंख्या उक्ता उत्तमपवित्रे षट्त्रिंशत् मध्यमे पु चतुर्विंशतिः कनिष्ठेषु द्वादश इति ततोऽरत्निसंमितां षट्त्रिंशता कुशैर्वेणीं कृत्वा तां वेणीं मूलमंत्रेणाभिमंत्र्य पंचगव्येन संशोध्य कक्षांतरे कृत्वा मानसं स्नानं कुर्यात् तद्यथा सुस्थितं पुंडरीके मंत्रमूर्तिं प्रभुं स्मरन् अनंतादित्यसंकाशं वासुदेवं चतुर्भुजं शंखचक्रगदापद्ममुकुटं वनमालिनं दिव्यचंदनलिप्तांगं चारुहासं शुभेक्षणं नारदाद्यैः सेव्यमानं भास्वद्विपुलकंकणं

सकिंकणीककेयूरहारिणंमणिनूपुर ध्वजच्छत्रांकुशालक्ष्यपादपंकेरुहद्वय तत्पादोदकजांधारांनिपततींस्वमूर्धा
नि ।चिंतयेद्ब्रह्मरंध्रेणप्रविशंतींस्वकांतनु तयासंक्षालयेत्सर्वमंतर्देहगतंमलं तत्क्षणाद्विरजामंत्रीजायतेस्फ
टिकोपमः इदमांतरकंस्नानंसहस्रादधिकंस्मृतम् ततः सर्वतोरक्षणं कुर्यात् तद्यथा जलपुष्पाक्ष
तान्हस्ते गृहीत्वा ओंहूः अस्त्रायफट्इति उच्चार्यात्मनः परितः प्रक्षिप्य अस्त्रायफट् इतिछोटिकाभिः
सर्वदिग्बंधनकृत्वा अग्निप्रकारमुद्रां स्वमूर्धानं परितः प्रादक्षिण्येन त्रिर्भ्रामयेत् तन्मध्यगतमात्मानंसं
चिंत्य संक्षेपेणभगवत्पूजांकृत्वा मूलमंत्रेणवैदिकेनवाहोमांविधाय महापूजांकुर्यात् तत्रनित्यपूजनात्पंचामृत
दिद्रव्यंत्रिगुणितंग्राह्यं ततोगंधतैलदानानंतरमुद्वर्तनंकुर्यात् तत्प्रकारोमहाकापिलपांचरात्रे रजनीसहदेवीच
शिरीपंलक्ष्मणापिच सहाभद्राकुशाग्राणिउद्वर्त्तनमिहोच्यतइति एतदनंतरं शंखजलेन देवायाभिषेकं कुर्य्यात्
तदाहुः शतंसहस्रमयुतंशक्त्यावाप्यभिषेचयेत् शंखसंपूर्यतेनैवसपुष्पेणचदेवतामिति अन्यत्रापि स्वशक्त्या
गंधितोयेनसंस्नाप्यजगदीश्वरं महाभिषेकंसर्वत्रशंखेनैवप्रकल्पयेदिति ततोदेवंसर्वोपचारैःसंपूज्य देवस्यपुरतो
दतकाष्ठंजलंकुशान्मृत्तिकांहरिद्रांकुष्ठगोरोचनंपादुके उपानहौ छत्रं चामरंव्यजनं व्रीह्यादिधान्यानिचस्थापयेत्
तानि चोक्तानि विष्णुपुराणे व्रीहयःसयवामाषागोधूमाअणवस्तिलाः प्रियंगुसप्तमाह्येतेअष्टमाश्चकुलत्थकाः
श्यामाकास्त्वथनीवाराजर्तिलाःसगवेधुकाः तथावेणुयवाःप्रोक्तास्तथामर्कटकामुने ग्राम्यारण्याःस्मृताह्येताओ
पध्यश्चचतुर्दशेति ततः साष्टांगंप्रणिपत्य नानाविधैःस्तोत्रैर्वैदिकैश्चदेवंस्तुत्वाविज्ञापयेत् क्रियालोपविघा
तार्थंयत्त्वयाविहितंप्रभो मयैतत्क्रियतेदेवत्वत्तुष्ट्यैचपवित्रक नहिविघ्नोभवेदत्रकुरुतात्त्वदयांमयि सर्वथासर्व
दाविष्णोममत्वंपरमागतिः उपवासेनत्वांदेवतोषयामिजगत्पते कामक्रोधादयोप्येतेनमेस्युर्व्रतघातकाः

अद्यप्रभृतिदेवेशयावद्दैशेषिकंदिनं तावद्रक्षात्वयाकार्यासर्वस्यास्यनमोस्तुते तवयागंकरिष्येहंपवित्रमयमच्युतं आमंत्रितोसिसपरिवारःश्रीरामभोमया रामराममहारामरक्षमांशरणागतं त्वद्भक्तितुष्टिसंपूर्णंतवतोषकरं परं इतिनिजाराधनायदेवंविज्ञाप्यस्वगुरुपादौप्रणम्य देवाग्रेसर्वतोभद्रमंडलं पंद्मवा विरच्य तत्र फलपुष्पमालालंकृतंवितानमाबध्य मंडलोपरि जलपूर्णकुंभं महीद्यौरित्यादिविधिना संस्थाप्य तदुपरिससूत्रंवैणवं पात्रंचसंस्थाप्य पवित्रपूजनंच कुर्यात् सांवत्सरस्ययागस्यपवित्रीकरणायभोः विष्णुलोकात्पवित्राद्यआगच्छेहनमोस्तुते इत्यनेनमूलमंत्रयुतेनावाहयेत् उत्तममध्यकनिष्ठेषु ब्रह्मविष्णुरुद्रान्सत्त्वरजस्तमांसि वेदत्रयंच ध्यात्वा वनमालायांप्रकृतिंमुकुटसूत्रेषुलोकंध्यात्वा ॐसर्वाभरणाचित्रांगसर्वदेवनमस्कृत लावण्यरूपविश्वात्मन्ज्येष्ठसूत्रंसमाश्रय सर्वलक्ष्मीकरश्रीशसर्वज्ञानमयात्मक निवृत्तिरूपविश्वात्मन्मध्यरूपंसमाश्रय २ अतिवेगजगद्योनेपुरुषात्मन्दिवस्पते कनीयोमेप्रभोदेवतेजसासूत्रमाश्रय ३ सर्वाधारधरारूपसर्वकर्त्तःप्रजापते सर्वथात्मेशसूत्रेस्मिन्सान्निध्यंकुरुतेनमः ४ सर्वरत्नोज्वलाकारसमस्तब्रह्मरोचिष मुकुटोत्तमसर्वांगशिरस्सूत्रइहैहिभोः ५ प्रकृतिजगतः कर्त्रीसर्वलक्षणदायिनी श्रीसूत्रेसर्वकल्याणिसान्निध्यंकुरुतेनमः ६ उत्तमादीनिसूत्राणिक्रमात्पाणिनाएभिर्मंत्रैरालभ्यत्रिसूत्र्यांब्रह्मविष्णुरुद्रान् ॐकारंसोमंवह्निंनागान्शशिनं रविंशिवंविश्वान्देवान्नवसूत्र्यांक्रियांपौरुषींवीरांविजयांशांतिंअपराजितां मनोन्मनींजयांभद्रांमुक्तिंग्रंथिषुध्यात्वा यावद्ग्रंथिसंख्यामावर्त्यमानैरेवनामभिरावाह्यपूजयेत् ततआवाहनादिमुद्राःप्रदर्श्य चक्रमुद्रयासंरक्ष्यधेनुमुद्रयाअमृतीकृत्य गंधाक्षतपुष्पधूपदीपनैवेद्यफलतांबूलादिभिः पवित्रदेवता अभ्यर्च्य गंधपवित्रंवितस्तिडोरकात्मकंगृहीत्वा हृदयमंत्रेणप्रणवेनचाभिमंत्र्यदेवंनमस्कृत्य संवत्सरकृतार्चायाःसंपूर्णफलदोसियत् पवित्रारो

पणार्थैतत्कुरुकंधरकेनमः विष्णुतेजोद्भवंरम्यंसर्वपातकनाशनं 'सर्वकामप्रदंदेवतवांगेधारयाम्यहमिति ' मूल
सपुटितंश्लोकद्वयपठित्वादेवकरेबध्नीयात् ततोमंगलारात्रिकेनदेवंनीराज्यपुनर्नैवेद्यतांबूलादिभिःसपूज्य ' ध्येयं
सदापरिभवघ्नमभीष्टदोहं तीर्थास्पदंशिवविरंचिनुतंशरण्यं भृत्यार्तिहंप्रणतपालभवाब्धिपोतं वंदेमहापुरुषते
चरणारविंदम् १ त्यक्त्वासुदुस्त्यजसुरेप्सितराज्यलक्ष्मीधर्मिष्ठआर्यवचसायदगादरण्यं । मायामृगंदयितये
प्सितमन्वधावद्वंदेमहापुरुषतेचरणारविंदम् २ श्रीमत्सरोरुहयवांकुशचक्रचापसत्स्वस्तिकांकितनवविलोहितपल्लवाभ
लक्ष्म्यालयंपरममंगलमात्मध्येयवंदेमहापुरुषतेचरणारविंदम् ३ वृंदावनांतरमगादनुगोकुलानांसंचारिसर्वपशुभि
सुविद्धिकामि सचिंतयद्व्रजगिरौमृगपक्षिणायद्वंदेमहापुरुषतेचरणारविंदम् ४ यद्गोपिकाविरहजाग्निपरीतदेहा
स्तत्सस्तनेषुविजहुःपरिरभ्यताप रासेतदीयकुचकुंकुमपंकलिप्तंवंदेमहापुरुषतेचरणारविंदम्' ५ ज्ञानालयंश्रु
तिविमृग्यमनादिमर्च्यब्रह्मादिभिर्हृदिविचिंत्यमगाधबोधैः ससारकूपपतितोत्तरणावलंबंवंदेमहापुरुषतेचरणार
विंदम् ६ येनांगचालनवशात् स्तनपानवृद्धाक्षिप्ताग्रिणाहतमनोविपरीतचक्रं विध्वस्तभांडमप्रसक्तविगोपमूर्त्ते
वंदेमहापुरुषतेचरणारविंदम् ८ इत्यष्टकंपठतियः परमस्यपुंसोनारायणस्यनरकार्णवतारणस्य ' सर्वांस्ति
माशुहृदियः कुरुतेमनुष्यःसंप्राप्यदेहविलयंलभतेचमोक्षम् ९ । योंतःप्रविश्यममवाचमिमांप्रसुप्तांसंजीवयत्य
खिलशक्तिधरःस्वधाम्ना अन्यांश्चहस्तचरणश्रवणत्वगादीन्प्राणान्नमोभगवतेपुरुषायतुभ्यम् १० ' इत्यादि
भिःस्तुत्वादेवंनिमंत्रयेत् ' आमंत्रितोसिदेवेशपुराणपुरुषोत्तम प्रातस्त्वांपूजयिष्यामिसन्निधौभवतेनमः ' निवे
दयाम्यहंतुभ्यप्रातरेतत्पवित्रकं ' सर्वथासर्वदाविष्णोनमस्तेस्तुप्रसीदमे ॥ इतिसंप्रार्थ्यसाष्टांगंप्रणिपत्य पुष्पां
जलिं दत्त्वा ' सूत्राण्यस्त्रेणसंरक्ष्य ' कवचेनावगुंठ्य नृसिंहमंत्रेणरक्षणंकुर्यात् ' नृसिंहमंत्रस्तु ' उग्रंवीरंमहाविष्णुं

ज्वलंतंसर्वतोमुखं नृसिंहंभीषणंभद्रंमृत्युमृत्युंनमाम्यहं ततोब्राह्मणवंदनं गुरुवंदनंच कृत्वा रात्रौजाग
रणंकुर्यात् सद्योधिवासनेतु जागरणंनास्ति ततोजागरणंकुर्यात्सद्योजागरणंनहीति दक्षिणामूर्त्तिसंहितावं
चनात् इत्येकादश्यांपवित्राधिवासनं ततोद्वादश्यांनित्यंनैमित्तिकंचदेवपूजनंकृत्वा पवित्राणिचकृत्वासंपूज्यदेवंनी
राज्यस्तोत्रैःस्तुत्वा गंधदूर्वाक्षतैर्युक्तंपवित्रंहस्तेगृहीत्वा मूलमंत्रेणत्रिवारमभिमंत्र्य मूलसंपुटितेनश्लोकद्वयेनप्रवि
त्रमर्पयेत् ॐरामरामनमस्तुभ्यंगृहाणेदंपवित्रकं पवित्रीकरणार्थायवर्षपूजाफलप्रदं पवित्रंतत्कुरुष्वाद्ययन्मयादु
ष्कृतंकृतं शुद्धोभवाम्यहंदेवत्वत्प्रसादात्सुरेश्वरेति ततोगात्रत्तिदेवतास्तत्तन्नामभिर्दद्यात् ततोमहानैवेद्यंसमर्प्य नी
राजनंकृत्वाचामरैःसंवीज्यादर्शंदर्शयित्वापुष्पांजलिंसमर्प्य मणिविद्रुममालाभिर्मंदारकुसुमादिभिः इयंसां
वत्सरीपूजातवास्तुगरुडध्वज वनमालायथादेवकौस्तुभंसततंहृदि पवित्रमस्तुतेतद्वत्पूजांचहृदयेवह
जानताऽजानतावापिनकृतंयत्तवार्चनं केनचिद्विघ्नदोषेणपरिपूर्णंतदस्तुमे अपराधसहस्राणिक्रियंतेहर्निशंमया
दासोयमितिमांमत्वाक्षमस्वमधुसूदन इतिसंप्रार्थ्यसाष्टांगप्रणम्यदेवंप्रसादाभिमुखंविचिंत्य मंत्रहीनंक्रियाही
नंभक्तिहीनंसुरेश्वर पूजनंपूर्णतामेतुपवित्रेणार्पितेनतइतिपठित्वा गुरवेगंधादिपूर्वकंपवित्रंदत्वा सुवर्णवस्त्रादिभिः
पूजयेत् ततोब्राह्मणान्संभोज्य स्वयंभुंजीत पवित्रधारणंतु देवेस्वदेहेच मासपक्षादियथासंभवंकार्यं स्नाना
दिकालेतुतदुत्तार्यदेवंस्नापयेत् तथैव स्वयं स्नायात् अर्घ्यतोयेनाभिषिच्य देवांगे स्वांगेच तद्धार
येत् विसर्जनसमयेदेवंसूर्यंचविशेषेण गंधादिभिः संपूज्य विसर्जयेत् विसर्जनमंत्रस्तु ॐसांवत्सरींशुभां
पूजांसंपाद्यविधिवन्मम व्रजेदानींपवित्रत्वंविष्णुलोकंविसर्जितः यावद्देवेपवित्राणितावद्ब्रह्मचर्यादिनियमेन
स्थेयं एवंयः कुरुतेविद्वान् वर्षेवर्षेनसंशयः सयातिपरमंस्थानं यत्ररामः सनातनः यावत्तंतुपवित्रंतुतावत्स्वर्गेम

हीयते आयुरारोग्यमैश्वर्यंविपुलंतस्यवर्धते अथसंक्षेपेणपवित्रारोपणविधिः दशम्यांहेमरौप्यादिसूत्रपवित्राणि कुर्यात् कार्पाससूत्रंचेत्तस्यनवसूत्रींविधायपंचगव्येनप्रोक्ष्य प्रणवेनप्रक्ष्याल्यमूलेनाष्टोत्तरशतमभिमंत्र्यशुचिदेशे अष्टोत्तरशततदर्धगुणितनवसूत्र्या देवस्यजानुनाभिपर्यंतानि षट्त्रिंशच्चतुर्विंशतिद्वादशग्रंथिकान्युत्तममध्यमकनिष्ठानि पवित्राणिविधायाष्टोत्तरसहस्रनवसूत्र्या अष्टोत्तरशतग्रंथिकवनमालांविधाय द्वादशनवसूत्रीभिः तावद्ग्रंथिकंगंधपवित्रंसप्तविंशतिनवसूत्र्यागुरुपवित्रंचकृत्वाग्रंथीन्कुंकुमेनरंजयित्वापामार्गबिल्वान्यतरकाष्ठेनदंतान्संशोध्य क्रियालोपविघातार्थंयत्त्वयाविहितंप्रभो मयैतत्क्रियतेदेवतवतुष्ट्यैपवित्रकं नमेविघ्नोभवेदत्रकुरुनाथदयांमयि सर्वथासर्वदाविष्णोममत्वंपरमागतिरिति प्रार्थ्यैकभक्तेनतद्दिनमतिवाह्यैकादश्यांकृतनित्यक्रियः श्रीरामंमहामंडपेराजोपचारैः संपूज्य हरेः पुरतः सर्वतोभद्रस्थोदकुंभेवेणुपटलंनिधाय तत्रपूर्वनिर्मितसकलसूत्राणिनिधाय त्रिसूत्र्यांब्रह्मविष्णुशिवान् नवसूत्र्यां ॐकारसोमवह्निब्रह्मनागशशिसूर्यसदाशिवविश्वदेवान्ग्रंथिपुक्रियापौरुषीवीराजयापराजिताविजयामुक्तिदासदाशिवामनोन्मनीसर्वतोमुखी प्रणवादितत्तन्नामभिरेव यावद्ग्रंथिसंख्यमावर्त्यमाननामभिरावाह्य गंधादिभिरभ्यर्च्य गंधपवित्रंधूपितमादाय प्रणवेनाभिमंत्र्य विष्णुतेजोद्भवंरम्यंसर्वपातकनाशनं सर्वकामप्रदंदेवतवांगेधारयाम्यहमितिमंत्रेण मूलसंपुटितेन भगवत्पादयोःसमर्प्यप्रार्थयेत् आमंत्रितोसिदेवेशपुराणपुरुषोत्तम प्रातस्त्वांपूजयिष्यामिसान्निध्यंभवतेनमइति तत्कथाजागरेण तांरात्रिमतिवाह्य द्वादश्यां कृतनित्यक्रियश्श्रीरामं पवित्राणिच संपूज्य गंधदूर्वाक्षतयुक्तकनिष्ठपवित्रमादायदद्यात् मंत्रः देवदेवनमस्तुभ्यंगृहाणेदंपवित्रकं पवित्रीकरणार्थायवर्षपूजाफलप्रदं पवित्रकंकुरुष्वाद्ययन्मयादुष्कृतंकृ

तं शुद्धोभवाम्यहं देवत्वत्प्रसादात्सुरेश्वरेति एवं मध्यमोत्तमवनमालाः एतन्मंत्राद्वृत्त्या समर्प्याः श्रंगदेवताभ्यो
पियथासंभवंसमर्प्यनीराज्यप्रार्थयेत उँमणिविद्रुममालाभिर्मंदारकुसुमादिभिः इयंसांवत्सरीपूजातवास्तुगरु
डध्वज वनमालायथादेवकौस्तुभंसततंहृदि तद्वत्पवित्रतंतूस्त्वपूजांचहृदयेवह जानताऽजानतावापियत्कृ
तंनतवार्चनं केनचिद्विघ्नदोषेणपारिपूर्णंतदस्तुमे अपराधसहस्राणिक्रियंतेहर्निशंमया दासोयमितिमांमत्वा
क्षम्यतांपरमेश्वर ततोगुरुंचसंपूज्यसमर्प्यब्राह्मणैःसह पारणांविधायात्रिरात्रंब्रह्मचर्यादिनियमवान् देवंप्रवि
त्रसंदर्भमाभिपेकान्यकालेसंस्थाप्य त्रिरात्रांतेदेवंसंपूज्य पवित्राणिविसर्जयेदिति इतिसंक्षिप्तपवित्रारोपण
विधिः अत्राप्यसमर्थश्चेत् नित्यपूजांतेपावित्रपूजनंकृत्वामूलेनदेवायपवित्रंसमर्प्य ऽऽ वरणदेवताभ्यएकैकंस
मर्प्यंगुरुंसंपूज्य पवित्रं समर्प्य स्वयंपवित्रं धृत्वा ब्राह्मणान्भोजयेदिति इतिसंक्षिप्तपवित्रारोपणविधिः पद्म
पुराणे महादेवउवाच श्रावणेमासिसंप्राप्तेपवित्रारोपणेविधिः भक्तितेसतिदेवेशिदिव्यभक्तिः प्रजायते पवि
त्रारोपणंविष्णोः कर्त्तव्यंश्रद्धयाबुधैः संपूर्णाजायतेतस्यपूजाभवतिवार्षिकी पवित्रारोपणेविष्णोर्जायतेसुखमा
स्मतः संपूजितेसदाविष्णौनानासुखमवाप्नुयात् सूत्रंचाथसमानीयब्राह्मण्याकर्तितंशुभं स्वेनैवकर्तितंसूत्रं
तेनैवचप्रकारयेत् नशूद्राकर्तितंसूत्रंतद्ग्राह्यंवातथैवच अन्यथाविक्रयेणापिग्राह्यंवाचायथातथा क्षौमेनैवप्रक
र्त्तव्यःपवित्रारोपणेविधिः रुप्यैणवतथाकार्यंपवित्रंविष्णुदैवतं सौवर्णेनापिदेवेशिकर्त्तव्यंविधिपूर्वकं अभावे
सर्वधातूनांग्राह्यंसूत्रंतथाबुधैः कृत्वातुत्रिवृतंसूत्रंप्रक्षाल्यसुदकेनच लिंगेलिंगप्रमाणंतुप्रतिमायांयथामितं प्रा
दांतंजानुपर्यंतंतथानाभिसमंस्मृतं ज्येष्ठमध्यंकनिष्ठंचपवित्रंकारयेद्बुधः संवत्सरदिनंयद्वत्तदर्धार्धेनसंख्यया
सत्रेणैवप्रकर्त्तव्यंग्रंथिमष्टोत्तरेणतु तदर्धसंख्यकेनापियुक्त्यावातत्रपार्वति लिंगेवैलिंगसंज्ञंतुगंगानामभिरन्वितं

प्रतिमायांतथादेविपवित्रंवनमालिकं यथाशोभंतथाकार्यंयेनविष्णुःप्रसीदति एकंवैसुपवित्रंतुगंगाख्यंकारये
त्सदा तंतूनामेवसंयुक्तंकर्त्तव्यंवैष्णवैर्नरैः देवानांचतथैवोक्तंपवित्रंविष्णुदैवतं अंबरीषायभक्तायअन्येचध्रुव
दयः पवित्राणिततःपश्चाद्दातव्यानीहपार्वति प्रतिपद्धनदस्योक्तापवित्रारोपणेतिथिः लक्ष्म्यादेव्याद्वितीया
तुतिथीनामुत्तमातिथिः तृतीयातुतवप्रोक्ताचतुर्थीगणपस्यतु पंचमीस्याच्चंद्रमसःषष्ठीवैकार्त्तिकस्यतु सप्त
मीचरवेःप्रोक्तादुर्गायाश्चाष्टमीमता नवमीचैवमातृणांयमस्यदशमीतथा एकादशीतुरुद्राणांद्वादशीमाधव
स्यतु त्रयोदशीतुकामस्यशिवस्योक्ताचतुर्दशी तद्वत्पंचदशीस्याताधातुर्वैपूजनेपुनः एतावैतिथयःप्रोक्ताः
पवित्रारोपणेक्रमात् कनिष्ठंद्वादशप्रोक्तामध्यमेद्विगुणामता त्रिगुणाश्चोत्तमेचैवग्रंथयश्चपवित्रके कर्पूरकेस
राभ्यांचचंदनेनहरिद्रया रंजयित्वातुतत्सर्वंस्थाप्यंनवकरंडके देवस्यायतनंयत्रस्थाप्यंतत्रचदेववत् आदौदे
वार्चनंकृत्वाधिवास्यंचपवित्रकं अधिवासितपवित्रेतुततोवैपूजनंस्मृतं पवित्रेपुचयेदेवास्तेषांनिकटमाचरेत्
ब्रह्माविष्णुश्चरुद्रश्चत्रयोवैसूत्रदेवताः क्रियाचपौरुषीवीराचतुर्थीचापराजिता जयाचविजयाचैवमुक्तिदाचस
दाशिवा मनोन्मनीतुनवमीदशमीसर्वतोमुखी ग्रंथीनांदेवताश्चैवसूत्रेपुविनिवेशयेत् आवाहनंमुद्रयावैशा
स्त्रोक्तविधिनाततः आवाह्यतत्रताःसर्वाःसन्निधीकरणंततः संरक्षेद्रक्षमुद्राभिर्धेनुमुद्रांमृतीक्रियां प्राग
वदेवताग्रेतुगृहीत्वाकलशोदकं आगमोक्तेनमंत्रेणप्रोक्ष्यक्लींकृष्णमंत्रतः क्लींकृष्णायनमइतिप्रोक्षणमंत्रः गंधपुष्पै
धूपदीपैर्नैवेद्यैःफलसंयुतैः तांबूलदक्षिणादानैस्ततोदेवाग्रतःपुनः धूपयित्वापवित्रंतुनतिमुद्रांसमाचरेत् एवमभ्य
र्च्यमंत्रेणामंत्रयेतपवित्रकं आमंत्रितोसिदेवेशसार्धंदेव्यागणादिभिः मंत्रैर्वालोकपालैश्चसहितःपरिचारकैः

आगच्छभगवन्विष्णोविधिसंपूर्णहेतवे प्रातस्त्वांपूजयिष्यामिसान्निध्यंनियतंकुरु ततोगंधपवित्रंदेवस्यचराचरगु
रोः श्रीविष्णोश्चरणयोर्निक्षिप्य प्रातर्नित्यक्रियांविधाय पुण्याहंस्वस्तिवाचनं विधाय जयशब्दैर्घंटावादित्र
घोषैः पवित्रसमर्पणंपूजांकुर्यात् प्रथमंज्येष्ठंततोमध्यमंपश्चात्कनिष्ठंनोभिर्मंत्रैः सर्वैर्यथाक्रमेण पूजांकुर्यात् ॐ
वासुदेवायविद्महेश्रीविष्णुंचधीमहि तन्नोदेवः प्रचोदयात् इतिपवित्रदानम् अथवास्वमंत्रैः ततोन्नमहतींपूजां
विष्णोश्चैवप्रसाधिनीं यथाचैवार्चितोदेवोविष्णुरात्माप्रसीदति समंताद्दीपमालाचकर्तव्याविधिनाततः चतुर्वि
धंतथान्नंचनैवेद्यंकारयेद्बुधः पवित्राणिततोदद्यात्स्रक्सुजातिसुशोभनं. भक्त्याचैवविशेषेण श्रीधरंपूजयेत्ततः व
स्त्रालंकारविधिनापूजनीयोगुरुर्महान् पूजयित्वागुरुंतत्रपवित्रंधारयेत्ततः अथवा वैष्णवाःसंति तेभ्यस्तांबूला
दिकंदत्वा पूर्णाहुतिमग्नयेपश्चाद्दत्वा श्रीनिवासाय श्रीकृष्णाय कर्म निवेदयेत् मंत्रहीनंक्रियाहीनंभक्तिहीनंतु
केशव यत्पूजितोमयासम्यक् संपूर्णंयातुनेध्रुवम् तत उद्वास्य इष्टबंधुभिस्तथाविप्रैर्वा साहतः
सन्नमिष्टमन्नंस्वयंभुंजीत एतत्पूजनकंदिव्यंयेशृण्वंतिद्विजोत्तमाः सर्वपापविनिर्मुक्तायांतिविष्णोःपरंपदम्याव
च्चंद्रोजगत्यस्मिन्यावत्तपतिवैरविः पवित्रारोपकस्तावन्मोदतेनात्रसंशयः पृथिव्यांयानिदानानिनियमाश्चतथा
पुनः सर्वसंपूर्णतांयांतिपवित्रारोपणेकृते अयमुत्सवराजोवैपवित्रारोपकोविधिः ब्रह्महाशुध्यतेतत्रनात्रका
र्याविचारणा सत्यंसत्यंपुनःसत्यंयदुक्तंनगनांदेनि पवित्रारोपणेपुण्यंदर्शनेनतथास्मृतं श्रद्धयाथमहा
भागपवित्रारोपकोविधिः कृतोवैभक्तिभावेनसवैधन्यतमःस्मृत धन्योहंकृतकृत्योहंसुभाग्योधरणीतले मयायातु
कृताभक्तिर्वैष्णवीमुक्तिदायिका इतिपद्मपुराणे उत्तरखंडेपवित्रारोपणं॥ श्रावणशुक्लत्रयोदश्यांरतिकामव्रतंशुभं वै
धव्यवारणंस्त्रीणांतथासंतानवर्धनं कृतोपवासःपुरुषोनारीवाद्विजपतन् ताम्रेवामृण्मयेवापिसौवर्णेराजतो

तथा रतिकामौप्रविन्यस्यगंधाद्यैःसम्यगर्चयेत् सत्कृत्यभोज्यप्रतिमेदद्यात्ताभ्यांसदक्षिणे एवंचतुर्दशाब्दंतु
कृत्वाव्रतमनुत्तमं धेनुयुग्मान्वितेदेयंव्रतसंपूर्त्तिहेतवे श्रावणशुक्लचतुर्दश्यां देवीपवित्रारोपणं नारदीये नभःशु
क्लचतुर्दश्यांपवित्रारोपणंमतं तत्स्वशाखोक्तविधिनाकर्त्तव्यंद्विजसत्तम शताभिमंत्रितंकृत्वाततोदेव्यैसमर्पयेत्
पवित्रारोपणंकृत्वानरोनार्य्यथवादरात् महादेव्याःप्रसादेनभुक्तिमुक्तिमवाप्नुयात् शिवपवित्रमपि तत्रैव कालांतरे
आषाढेतुचतुर्दश्यांनभस्यनभसोस्तथा अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोरपि अधिवासनंतुदीपिकायां गोदोहांत
रितेकालेपूर्वेद्युर्वाधिवासनमिति अथश्रावण्यांपूर्णिमायां रक्षाबंधनमुपाकर्मच नारदीये अथश्रावणपूर्णायांवे
दोपाकरणंस्मृतं याजुषैस्तत्रकर्त्तव्यंदेवर्षिपितृतर्पणं ऋषीणांपूजनंचापिस्वशाखोक्तविधानतः बह्वृचैस्तुच
तुर्दश्यांसाभगेभेद्रकेकरे रक्षाविधानेनतथाकर्त्तव्यंविधिपूर्वकं सिद्धार्थाक्षतराजिकाश्चविधृतारक्तांशुकारोपि
ता कौसुंभेनचतंतुनाथसलिलैःप्रक्षाल्यकांस्येधृता गंधाद्यैरभिपूज्यदेवनिकरान्संप्रार्थ्यविष्ण्वादिकान् बध्नी
याद्द्विजहस्ततःप्रमुदितोनत्वाप्रकोष्ठेस्वके ततस्तुदक्षिणांदत्वाद्विजेभ्योध्यायमाचरेत् विसृज्यचऋषीन्सप्त
धारयेद्ब्रह्मसूत्रकं रंजितंकुंकुमाद्यैस्तुनवीनंनिर्मितंस्वयं शक्त्यासंभोज्यविप्राग्र्यानेकभक्तंसमाचरेत् कृतेह्य
स्मिन्व्रतेविप्रवार्षिकंकर्मवैदिकं विस्मृतंविधिहीनंचनकृतंतुकृतंभवेत् इत्यभिधानादत्रउपाकर्मणिरक्षाबंधादि
कर्मयथाविधानमाचरंतिशिष्टाः अथश्रावणीकृत्यं तत्ररक्षाबंधनंकार्य्यं तदुक्तंस्कंदनरत्नेभविष्योत्तरे युधिष्ठिर
उवाच सर्वरोगोपशमनंसर्वाशुभविनाशनं सकृत्कृतेनाब्दमेकंयेनरक्षान्वितोभवेत् श्रीकृष्णउवाच शृणुपां
डवशार्दूलइतिहासंपुरातनं इंद्राण्यायत्कृतंपूर्वंशक्रस्यजयवृद्धये देवासुरमभूद्युद्धंपुराद्वादशवार्षिकं तत्रासुरैर्जि
तःशक्रःसहसर्वैःसुरोत्तमः बृहस्पतिंसमामंत्र्यइदंवचनमब्रवीत नस्थातुंचैवशक्नोमिनगंतुंनैव भिन्नः सर्वशः

योद्धुमच्छामगुरुस्त्वंचन्यवारयत् तयोःसंवदतोरेवंशचीप्राहसुरेश्वरं अद्यभूतमिदंदेवप्रातःसर्वंभविष्यति अ हंरक्षांविधास्यामियेनतेजोभविष्यति इत्युक्त्वापौर्णमास्यांसापौलोमीकृतमंगला बबंधदक्षिणेपाणौरक्षापोटलि कांततः बद्धरक्षस्ततः शक्रः कृतस्वस्त्ययनोद्विजैः जघानदानवानीकंक्षणात्कालइवप्रजाःशक्रश्चविजयीभूत्वापुनरे वजगत्त्रयं प्राप्येतिशेषः एषप्रभावोरक्षायाः कथितस्तेयुधिष्ठिर जयदः सुखदश्चैव पुत्रारोग्यधनप्रदः यु धिष्ठिरउवाच क्रियतेकेनविधिना रक्षाबंधः सुरोत्तम कस्मिंस्तिथौकदादेव एतन्मेवक्तुमर्हसि यथायथाहिभग वन् विचित्राणिप्रभाषसे तथातथानमेतृप्तिर्बहुवर्थाःशृण्वतः कथाः कृष्णउवाच संप्राप्तेश्रावणस्यांते पौर्णिमा स्यांदिनोदये स्नानंकुर्वीतमतिमान्श्रुतिस्मृतिविधानतः ततोदेवान्पितृंश्चैव तर्पयेत्परमांभसा उपाकर्मदिने प्रोक्तंऋषीणांचैवतर्पणं कुर्यात्ब्राह्मणैःसार्धंवेदानुद्दिश्यशक्तितः शूद्राणांमंत्ररहितंस्नानंदानंचशस्यते ततोपरा ह्णसमयेकुर्यात्पोटलिकांशुभां कारयेद्वाक्षतैस्तद्वत् सिद्धार्थैर्हेमचार्चितां वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वामलवर्जितैः विचित्रतंतुग्रथितांस्थापयेद्भाजनोपरि कार्यागृहस्यरक्षा गोमयरचितैःसुवृत्तैस्तु दूर्वावर्णकसहितैर्भित्तौदुरितो पशमानाय उपलिप्तेगृहमध्येवृत्तचतुष्केन्यसेत्कुंभं पीठं दत्त्वोपविशेद्राजामात्यैर्युतश्चसुमुहूर्तेवेश्याजनेनसहितो मंगलसहितैः समुत्थितैश्चिह्नैः रक्षाबंधः कार्यः प्रशांतिदः सर्वविघ्नानां देवद्विजातिशस्त्रान्वस्त्रैरक्षाभिरर्चये त्प्रथमं तदनुपुरोधानृपते रक्षांबध्नीतमंत्रेण येनबद्धोबलीराजादानवेंद्रोमहाबलः तेनत्वामभिबध्नामिरक्षेमाचल माचल ब्राह्मणैःक्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्चमानवैः कर्त्तव्योरक्षिकाबंधोद्विजान्संपूज्यभक्तितः अनेनविधिना यस्तुरक्षाबंधनमाचरेत् ससर्वदोषरहितः सुखीसंवत्सरंभवेत् यःश्रावणेविमलमासिविधानदक्षोरक्षाविधानमि दमाचरतेमनुष्यः आस्तेसुखेनपरमेणसवर्षमेकं पुत्रप्रपौत्रसहितःससुहृज्जनःस्यादिति अत्रपूर्णिमाअपराह्ण

व्यापिनीग्राह्या ततोपराह्णसमयेरक्षापोटलिकांशुभामित्युक्तेः दिनद्वयेतद्व्याप्तौअव्याप्तौचपूर्वाग्राह्या श्रावणी
दीक्षानवमीतिवृहद्यमवचनात् स्मृतिकौस्तुभेतु अस्मिन्कर्मण्यौदयिकीतिथिर्ग्राह्या पौर्णमास्यांदिनोदयइत्यु
पक्रमात् उपाकर्मोपलक्षितोत्तरकालताप्रतीतेश्चेतिपूर्वस्यांभद्रासत्वेतूत्तराग्राह्या भद्रायांद्वेनकर्तव्येश्रावणीफा
ल्गुनीतथा श्रावणीनृपतिंहंतिपुण्यंदहतिफाल्गुनीतिवचनाच्च अत्रसर्वेषामप्यधिकारः ब्राह्मणैःक्षत्रियैर्वैश्यै
रितिभविष्यवचनात् इतिरक्षाबंधनविधिः ॥ अथोपकर्मकालनिर्णयः तत्रवह्वृचानामुपाकर्मकालमाहाश्वलाय
नः अथातोध्यायोपाकरणमोषधीनांप्रादुर्भावे श्रवणेनश्रावणस्यपंचम्यांहस्तेनवेति ओषधीनांप्रादुर्भावे अंकु
रोदयइतियावत् श्रवणसंबंधिन्यांहस्तयुक्तपंचम्यांकेवलपंचम्यांहस्तेवाकर्तव्यमितिव्याख्यातारः यजुर्वेदिना
पयेपारस्करः अथातोध्यायोपाकर्मश्रवणेनश्रावण्यांपौर्णमास्यांपंचम्यांहस्तेनवेतिबौधायनः श्रावण्यांपौर्णमा
स्यांवोपाकृत्यछंदांस्यधीयीतेति एवमन्यान्यपियजुर्वेदिकानांगृह्यसूत्राण्युदाहार्याणि छंदोगविषयेगार्ग्यः सिंहे
रवौतुपुष्यर्क्षेपूर्वाह्णेविचरेद्बहिः छंदोगामिलिताःकुर्युरुत्सर्गंसर्वछंदसां शुक्लपक्षेतुहस्तेनउपाकर्मपराह्णिक
मिति अथर्ववेदिनांतूपाकर्मकालउक्तः कौशिकगृह्ये अथर्ववेदस्याध्ययनविधिंवक्ष्यामः श्रावण्यांप्रौष्ठपद्यांवोपाकृ
त्यार्द्धपंचमासानधीयीरन् अर्धमासंवोपाकृत्यक्षपेरन् अहमुत्सृज्यआरंभःश्रावण्यामुक्तपौष्यामुत्सर्गइतिगोभिलः
पर्वण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाःवह्वृचाःश्रवणर्क्षेतुहस्तर्क्षेसामवेदिन इति मनुः श्रावण्यांप्रौष्ठपद्यांवाउपाकृ
त्ययथाविधि युक्तःछंदांस्यधीयीतमासान्विप्रोर्धपंचमानिति अर्धेनयुतःपंचमोयेषांतेऽर्धपंचमाः शाकपार्थिवादि
त्वादुत्तरपदलोपिसमासः सार्धांश्चतुरोमासानित्यर्थः वृहत्प्रचेताः भवेदुपाकृतिः पौर्णमास्यांपूर्वाह्णएवतु ब्राह्म
णान्भोजयेत्तत्रपितृनुद्दिश्यदेवता इति याज्ञवल्क्यः अध्यायानामुपाकर्मश्रावण्यांश्रवणेनवा हस्तेनौषधिभावेवा।

पंचम्यांश्रावणस्यत्विति औषधीनांप्रादुर्भावेश्रावणस्येतिच्सर्वत्रसंवध्यतेहस्तेनयुक्तायांपंचम्यामिति स्मृतिचंद्रि
कायां दिनांतरेपिहस्तेनयुक्तइतिहेमाद्रिः एवमेवस्मृत्यर्थसारेपि अत्रेयंव्यवस्थावव्हचैरोषधीप्रादुर्भावेसति
शुक्लप्रतिपदादिश्रावणमासस्य श्रवणनक्षत्रेवैदिककर्मत्वात् पूर्वाह्णेउपाकर्मकर्त्तव्यं यजुर्वेदिभिस्तुश्रावण्यां पूर्वा
ह्णेकर्त्तव्यं छंदोगैस्तुसिंहस्थेसूर्येहस्तनक्षत्रे अपराह्णेकर्त्तव्यम् एषांग्रहसंक्रांतिदुष्टत्वेवव्हचैःहस्तयुक्ताया
श्रावणशुक्लपंचम्यांकेवलपंचम्यांवाहस्तयुक्तेश्रावणशुक्लतिथ्यंतरेवाकार्यं यजुर्वेदिभिर्भाद्रपद्ये पांगृह्योक्तआषाढ्यु
क्तोरापाढ्यांकार्यं वाजसनेयिभिस्तुपंचम्यां तदुक्तंस्मृत्यंतरे उपाकर्मप्रकुर्वीतक्रमात्सामर्ग्यजुर्विदः ग्रहसंक्रां
त्यदुष्टेषुहस्तश्रवणपर्वसु तथा संक्रांतौग्रहणेचैवसूतकेमृतकेतथा गणस्नानंनकुर्वीतनारदस्यवचोयथा अथचेद्दोष
संयुक्तेपर्वणिस्यादुपक्रमः दुःखशोकामयग्रस्ताराष्ट्रेतस्मिन्द्विजातयः तथा यदिस्याच्छ्रवणं पर्व ग्रहसंक्रांतिदूषि
तं स्यादुपाकरणंशुक्लपंचम्यांश्रावणस्यतु स्मृतिमहार्णवे संक्रांतिर्ग्रहणंवापियदिपर्वणिजायते तन्मासेहस्तपं
चम्यांकार्यंवाजसनेयिभिरिति अत्रपंचमीतन्मासगतैवगृह्यते नान्यमासगता अप्रकृतत्वात् वाजसनेयिग्रहणं
तेषांगृह्येपंचम्युक्तास्तेषामुपलक्षणं येषांगृह्यसूत्रेपंचमीनोक्ता तेषामोषधिप्रादुर्भावइवश्रवणगतकालस्यग्रहादि
दुष्टत्वेपिभाद्रपदएवोदितश्रवणादिकालेपूपाकर्मोचितं एतद्वार्षिकामित्याचक्षतइत्यादिवाक्यानामौषध्यप्रादुर्भावप
र्वसंक्रांतिदोषेपिभाद्रपदप्रापकतायास्तुल्यत्वात् बौधायनीयानांतुश्रावण्याःपौर्णमास्याग्रहादिदुष्टत्वेआषाढ्यां
तदनुष्ठानमुचितं श्रावण्यांपौर्णमास्यामाषाढ्यांवापाकृत्यछंदांस्यधीयेतेतिबौधायनवचनात् ग्रहसंक्रांति
दोषश्चउपाकर्मसंबंधिन्यहोरात्रेभाव्यार्धरात्रात्पूर्वंनक्षत्रपर्वणो विद्यमानएवदूषकोनान्यथा तथातीतादर्धरा
त्रात्परतोविद्यमानोदूषकोनतत्पूर्वः नाप्युपाकर्मांगभूततिथिनक्षत्रयोः पूर्वोत्तरकालीनेति तिथ्यंतरेनक्षत्रांतरेवा

विपमानः अर्धरात्रादधस्ताच्चेत्संक्रांतिर्ग्रहणंतथा उपाकर्मनकुर्वीतपरतश्चेन्नदोपकृत् इतिमदनरत्नधृतगा र्ग्यवचनात् यद्यर्धरात्रादर्वाक्स्याद्ग्रहःसंक्रांतिरेवतु नोपाकर्मतदाकुर्याच्छ्रावण्यांश्रवणेपिचेति शास्त्रांतराच्च बह्वृचःश्रवणेकुर्युर्ग्रहसंक्रांतिवर्जिते इत्यादौश्रवणादिसामानाधिकरण्येनग्रहणादिपर्युदासश्रवणाच्चयानितुत्रयो दश्यादितोवर्ज्यंदिनानानवकंध्रुवं मांगल्येषुसमस्तेषुग्रहणेचंद्रसूर्ययोः तथाद्वादश्यादितृतीयांतोवेधइंदुग्रहे स्मृतः एकादश्यादिकःसौरश्चतुर्थ्यंतःप्रकीर्तितः खंडग्रहेतयोःप्रोक्त उभयत्रदिनत्रयमित्यादीनितुपौर्णमासी व्यतिरिक्तदिनानामपिदोपत्वप्रतिपादकानिवचनानि तान्युपाकर्मादिव्यतिरिक्तकर्मविषयाणि नित्येनैमित्ति केजप्येहोमयज्ञक्रियासुच उपाकर्मणिचोत्सर्गेग्रहवेधोनविद्यते इतिवाक्येन उपाकर्मणिवेधदोषाभावस्यो क्तत्वात् पर्वणिग्रहणेसतिपूर्वत्रिरात्रादिवेधाभावंवक्तुमिदं तेनपर्वणिग्रहणेपि चतुर्दश्यांश्रवणेकार्य मितिहेमाद्रिःयदापिगौणकालेपिश्रौषधिप्रादुर्भावाभावः ग्रहसंक्रांतियोगोवानिमित्तांतरेणकेनचिदनयातिर्वाभव तितदावर्षर्तुमध्ये यदाकदाचित्कार्यंनतुश्रावणसंबंधनियमः तदुक्तंशौनकेन तद्वार्षिकमित्याचक्ष्यतइति वर्षा सुभवंवार्षिकमित्यर्थः अतएवबह्वृचकायाम् आढ्यौषधयस्तस्मिन्मासेतुनभवंतिचेत् तदाभाद्रपदेमासिश्र वणेनतदिष्यतइति गोभिलः प्रौष्ठपदींहस्तेनोपाकरणमिति प्रौष्ठपदींप्राप्येतिशेषः वसिष्ठोपि स्थितेरवावु पाकर्मकर्तव्यंसिंहयुक्तके इतिवचनंतुनर्मदोत्तरभागविषयं नर्मदोत्तरभागेतुकर्तव्यंसिंहपुराणोक्तकं कर्कटेसं स्थितेभानावुपाकुर्यात्तुदक्षिणइतिवचनात् कथंतर्हिनर्मदोत्तरभागगतानांशिष्टानांकर्कटस्थेरवावुपाकर्मानुष्ठा नं अत्रकेचित् अस्यवचनस्यसामगविषयत्वात्तद्व्यतिरिक्तानांकर्कस्थेपिसूर्येनदोपइत्याहुः अन्येतुसामगविषय त्वस्यायुक्तत्वादेतस्यवचनस्यप्राच्यग्रंथेषुदाक्षिणात्यप्राचीननिबंधेषुचादृष्टत्वादनाकरत्वमाहुः एतच्चशुक्लास्ता

दावपिकार्य्यं उपाकर्मोत्सर्जनंचपवित्रदमनार्पणमिति ः दमनारोपेलिखितवचनात् ः यज्ञोपवीतंकर्त्तव्यंश्रावणे
गुरुशुक्रयोः मौढ्येपिवार्धकेवाल्येनित्यवत्कर्मनोदित मितिस्मृतिसारसमुच्चयाच्च प्रथमारंभस्तुनभवति गुरु
भार्गवयोर्मौढ्येबाल्येवावार्धकेपिवा तथाधिमाससंसर्पमलमासादिपुद्विजाः ' प्रथमोपाकृतिर्नस्यात्कृतंकर्मविं
नाशकृदितिसंग्रहवचनात् अत्रआदिशब्देनासिंहस्थगुर्वादिग्रहणं ' द्वितीयादिप्रयोगोपिअधिमासे उत्कर्षं
बालवृद्धौस्यादुपाकर्मादिकर्माणि अभिषेकादिवृद्धीनांनतुकर्पोयुगादिष्विति कात्यायनेनोक्तेश्च यत्तु दशाह
रासुनोत्कर्षश्चतुर्थ्यांपियुगादिपु उपाकर्मणिचोत्सर्गेह्येतद्दिनचतुष्टय ' इतिऋष्यशृंगवचनं तत्सामगविषयं
तेषांसिंहार्कोपजीवनेनविहितस्योपाकर्मणोग्रिममासेसंभवात् एतानिहस्तश्रवणपर्वादिनद्वयेपिकर्मकालप्राप्ता
वौदयिकानिग्राह्याणि उक्तंगृह्यपरिशिष्टे धनिष्ठाप्रतिपद्युक्तंत्वाष्ट्रमृक्षसमन्वितं श्रावणंकर्मकुर्वीरन्ऋग्यजुः
सामपाठका इतिव्यासः श्रवणेनतुयत्कर्मउत्तरापाढसंगतं ' संवत्सरकृतोध्यायस्तत्क्षणादेवनश्यति धनिष्ठा
संयुतंकुर्यात्श्रावणंकर्मयद्भवेत् तत्कर्मसफलंविंद्यादुपाकरणसंज्ञितं निगमे ग्रहयोगोगुरुर्हंतिसंक्रांतिःशिष्य
घातिनी तपोहंत्युत्तरापाढाउपाकर्मणिवैष्णवे धनिष्ठामिश्रितेकार्यमुपाकरणसंज्ञितं कालिकापुराणे चतुर्द
श्यांसमुत्पन्नावसुरौमधुकैटभौ वेदान्स्वीकुर्वतःपद्मयोनेस्ताजह्रतुःश्रुतीः हत्वातावसुरौदेवः पातालतलवासिनौआ
हत्यताःश्रुतीस्तस्मैददौलोकगुरुःस्वयं अभूच्चध्रुश्रुतिर्ब्रह्मापर्वण्यौदयिकेपुनः अतोभूतयुतेतास्मिन्नोपाकरणमि
ष्यते आसुरंवर्जयेत्कालंवेदाहरणशंकयेति औदयिकानिचपर्वादीनिप्रातःसांगवात्मकषण्मुहूर्तव्यापीनिग्रा
ह्याणि श्रावण्यांप्रौष्ठपद्यांवाप्रतिपत्पण्मुहूर्त्तकैः विद्धास्याच्छंदसातत्रोपाकर्मोत्सर्जनंभवेदितिनिगमवचनात्
पर्वग्रहणंहस्तश्रवणयोरप्युपलक्षणं अतएवपृथ्वीचंद्रोदये श्रावणीपौर्णमासीतुसंगवात्परतोयदितदैवोदयि

कीग्राह्यानान्यदौदयिकोभवेदितिगार्ग्यवचनंलिखित्वा उदयेसंगवस्पर्शेश्रुतौपर्वणिवाकंभे कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाःक्रमादितिवचनांतरमपिलिखितं स्मृतिकौस्तुभेतु पृथ्वीचंद्रोदयोदाहृतवचनेसंगवस्पर्शग्रहणात्संगवैकदेशव्याप्तिः प्रतीयते निगमवाक्येतुषण्मुहूर्त्तकइतिपूर्णभागद्वयव्याप्तिः तदधिकव्याप्तिरपि गार्ग्यवचनात्प्रतीयते एषांवचसांयथाश्रुतार्थे परत्वे संभवति नान्यतरस्यानुवादत्ववक्तुमुचितं नापिविकल्पपरत्वंतस्याष्टदोषदुष्टत्वात् अनेकश्रुतिकल्पनाप्रसंगाच्च किंतुयेषांशाखिनांषण्मुहूर्त्तसाध्यमेवोपाकर्मतान्प्रति षण्मुहूर्त्तव्याप्तिरेवाग्राह्यत्वनियामिकाएवमितरे अपिव्याप्तीतितच्छाखिनांप्रतिग्राह्यत्वनियामकेबोध्ये अतएव पुरुषार्थचिंतामणौ तिथिखंडेसत्युदयव्यापिनीप्रयोगपर्याप्तितिथिरूपाकराणिग्राह्येति एवंचनोक्तवचनेषुकस्यापिस्वार्थत्यागः नाप्यनेकश्रुतिकल्पनाप्रसक्तिः सर्वेषांकर्मकालव्यापिशास्त्रप्रपंचकरूपत्वादितिसिंहाभट्टीये श्रावणःश्रवणंपर्वसंगवस्पृग्यदाभवेत् तदेवौदयिकंकार्यनान्यदौदयिकंभवेदिति निर्णयसिंधौतु उदयव्यापिनित्यैवाविष्वक्षेघटिकाद्वय तत्कर्मसफलंज्ञेयं तस्यपुण्यत्वनंतकमितिगार्ग्यवचनविरोधा देतानिवचनानिप्राशस्त्यमात्रपराणीत्युक्तं परमार्थतस्तु बहूनांवचनानांप्राशस्त्यपरत्वस्यानुचितत्वादेकस्योदयव्यापिनीतिगार्ग्यवचनस्यैववैश्वानराधिकरणन्यायेन षण्मुहूर्त्तात्मककालावयवमुहूर्त्तात्मककालस्तुतिद्वाराषण्मुहूर्त्तात्मकपूर्वोक्तकालस्तावकत्वंयुक्तमितिप्रतिभाति हेमाद्रिमदनपारिजातादयस्तु पर्वण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाः बह्वृचाःश्रवणेकुर्युर्ग्रहसंक्रांतिवर्जितइतिवाक्ये तैत्तिरीयकग्रहणात्तैरेवौदयिकेकार्यं धात्रीष्टाप्रतिपद्युक्तामितिगृह्यपरिशिष्टवाक्ये सामान्येन श्रुतोपियजुःशब्दएतद्वचनानुरोधेन तैत्तिरीयकपरःअतोवाजसनेयिभिः श्रावणीदुर्गनवमीतथादुर्गाष्टमीचया पूर्वविद्धातुकर्त्तव्याशिवरात्रिर्बलेर्दिनमितिवचनात्पूर्वविद्ध

पौर्णमास्यामिदंकार्यमित्याहु मदनरत्नस्तु पर्वण्यौदयिकइतिवचनस्यबह्वृचपरिशिष्टत्वेनतान्प्रत्येवकर्मविधा
तुंप्रवृत्तत्वाद्बह्वृचा श्रावणेकुर्युरित्यनने बह्वृचकर्तृकउपाकर्मणिश्रवणान्वितकालेविहितेकालिकापुराणादौप्राश
स्त्यपूर्वकयजुर्वेदादिविशेषमनुपादायसामान्येनविहित हितयदौदयिकं पर्वतद्बह्वृचैः कर्मानुष्ठानयोग्यौदयिक
पर्वलाभेप्राशस्त्यबुद्ध्याश्रवणपरित्यागेन मायाहीत्येनदर्थं धनिष्ठांप्रतिपद्युक्तामित्यादिवाक्यप्राप्तौदयिकपर्वणि
यजुर्वेदिसंबाधपर्वण्यौदयिकेकुर्युः'' श्रावणंतैत्तिरीयका' इतिवाक्यंप्रतिपादयतीत्येतदनुवादक अनुवादस्यच
प्राप्त्यधीनत्वादौदयिकपर्वप्राप्तेश्च ' यजुर्वेदिमात्रसाधारणत्वात्तदनुवादवाक्यगततैत्तरीयपदस्य यजुर्वेदिमा
त्रोपलक्षकत्वात् श्रावणीदुर्गनवमीतिवाक्यस्य पवित्रारोपणादौचरितार्थत्वाच्च सर्वैरपियजुर्वेदिभिरौदयिकेपर्व
ण्युपाकर्मकर्तव्यमित्याह स्मृतिकौस्तुभेतु तैत्तिरीयशब्दस्यप्रसिद्धार्थबाधप्रसगात् गोभिलवाक्यस्य बह्वृचा
न्प्रतिश्रवणविधानमात्रपरत्वेन नेतुमशक्यत्वाच्च अथतदपिसामगामितिस्तुतिमात्रंविधिपरमितिचेत् नहोल
धिकरणेस्मृतीनागृह्यग्रंथानांचाध्यापनव्यवस्थयाप्रामाण्यव्यवस्थानाप्राप्तांदूरीकृत्य सर्वान्प्रतिप्रामाण्यस्यस्था
पितत्वेनतत्पारिशिष्टेतत्तच्छाखीयपुरस्कारेणप्रवृत्तविधेर्विवक्षामगीकृत्येतरशाखीयान्प्रति प्रतीयमानविध्यविवक्षां
गीकारस्यनिर्हेतुकत्वादिति इद ब्रह्मचारिगृहस्थवनस्थैस्त्रिभिरपि कार्यं अतएव नारायणवृत्तौ अथातोध्या
योपाकरणमितिसूत्रव्याख्यानेयस्माद्ब्रह्मव्रताध्ययनंनित्यंअतउपाकर्मावश्यकमित्यादिना ब्रह्मयज्ञांगनायुक्तां अ
तएवजीर्णप्रयोगरत्ने गोभिलः उपाकर्मोत्सर्जनंचवनस्थानामपीष्यते धारणाध्ययनांगत्वाद्गृहिणांब्रह्मचा
रिणामिति ननुगृहस्थस्यसमावर्तनोत्तरं ग्रहणाध्ययनांगतयावाएतस्यकर्मणो ऽनुष्ठान कथंयुक्तमितिचेत् उ
च्यते समावृत्तोब्रह्मचारिकल्पेनयथान्यायमितरेजायामपीत्येके इत्याश्वलायनसूत्रे व्याख्यातंह्येतदित्थंवृत्तिका

मधुमांसस्त्रीगमनखट्वादि
रेण ब्रह्मचारिकल्पेनब्रह्मचारिधर्मैरित्यर्थः स्वाध्यायकाले विहितायेधर्माः मधुमांसस्त्रीगमनखट्वादि
वाशयनादिवर्जनादयः तैर्युक्तोधीयीतसमावृत्तः मेखलादयस्तुनभवंति अस्वाध्यायधर्मत्वात् इतरेब्रह्म
चारिणइत्यर्थः अत्राध्ययने ब्रह्मचारिणमपि प्रवृत्त्यर्थमिदं इतरथासमावृत्तानामेवेतिशंकास्यात्समावृत्तोजायां
गच्छेदित्येकआहु. ऋतावेवगच्छेन्नाऋतावितिवेदव्रतानिवापारंनीत्वाह्युभयमेवचेत्यादिश्रुतिरपिवेदसमाप्त्यभ
वेपिसमावर्त्तनविधानेन गृहस्थानामपिवेदाध्ययनसूचनाच्च अत्रचसायुज्यकामयोराजपुरोहितयोः कुलायय
ज्ञइवाध्येष्यमाणोध्यापयैरन्वारब्धइत्याश्वलायनसूत्राच्चतुरवतपंचावताख्यभिन्नकल्पनायामप्यधिकारः अत्रापि
समानकल्पयोरेवाधिकारोस्त्वितिचेन्नएतदधिकरणस्यतुल्यकल्पादिकाराधिकरणापवादतयाभाष्यादौप्रतिपादित
त्वात् स्मृतिकौस्तुभेतु प्रधानभूतोप्याचार्योवहुभिरपिचतुरवातिभिः सहोपाकर्मकुर्वन् एकस्यापिजामद
ग्न्यस्यानुरोधेनपंचावतमेवकुर्यात् आग्रयणेजघन्येएवद्यावापृथिव्यनुरोधेनमुख्यानेकेंद्राग्न्यादीनांप्रसूमपानियम
साधकतयाद्वादशाध्यायोक्तस्यकास्यभोजिन्यायस्यप्रकृतेपितुल्यत्वात् उक्तंहिचतुरवातिनंप्रत्यपिपाक्षिकपंचावत
नुष्ठानं कात्यायनेनतस्यद्विरवातित्रिर्जामदग्न्यानां सर्वेषांचोभयाविरोधादितिव्याख्यातंचैतत् कर्काचार्येदेवयाज्ञिके
स्वशाखांतरेपंचावतंजमदग्नीनामित्युक्तेस्तेषांपंचावतमेव अन्येषांचतुरवतंपंचावतंवेतिसत्यामप्यत्राव्यवस्थितावि
कल्पप्रसक्तौजामदग्न्यानुज्ञयैवाजामदग्न्यंशकांकुर्यात् अथजामदग्न्योमामन्त्र्यमचावतंकुर्वीतेत्यापस्तवोक्तेः अन
एवतनूनपान्नराशंसयोरिवचतुरवतपंचावतयोर्व्यवस्थाभावात् अजामदग्न्यानांजामदग्न्यैः सहानाधिकारशंकाते
नराजपुरोहितौसायुज्यकामौयजेतामितिवचनात् कुलाययज्ञइवोपाकर्मणिचोत्सर्गइतिकाण्वाजिनिवचनादिहापि

सहाधिकार इति तदुभयमप्यभुक्तवांतिमेवत्युपेक्षणीयं नचकुलायदृष्टांतेनसमाध्यानमप्युचितम् वसिष्ठशौन कादिगोत्रोत्पन्नेनपुरोहितेनसहैवराज्ञोधिकारंप्रतिपादयतोवचनस्योपपत्तौ सत्रवत्कुलायेपिप्रपाजगोचरभिन्नक ल्पार्हाणां सहाधिकारकल्पनानुपपत्तेः सोमचमसाकलचमसार्हत्वेनभिन्नकल्पयोर्विप्रक्षत्रिययोः सहाधिकार प्रतिपादकाज्ञयाचास्याधिकरणस्य तुल्यकल्याधिकाराधिकरणवशादलंसभवत्पाल्यालोकायितुमुचितंविद्वद्भिरि ति अथात्रकर्त्तव्यमुच्यते कार्ष्णाजिनिः उपाकर्मणिचोत्सर्गेयथाकालंसमेत्यतु ऋषीन्दर्भमयान्कृत्वापूजयेत्त र्पयेत्ततइति व्यासः ऋषीणामर्चनंपूर्वकर्त्तव्यंचानिवीतिनेति कार्ष्णाजिनिः वेदारंभणतःपूर्वसक्तुप्राशनतः परं नवयज्ञोपवीतानिदध्याद्वैधारयेत्ततइति गालवः कृत्वायज्ञोपवीतानिनवानिवसुधाधिप हुत्वाग्नौगुरवेदत्त्वापितृभ्यो धारयेत्ततइति पितृभ्यइत्यत्रापिदत्त्वेत्यनुषज्यते वायवीये उपाकर्मणिविप्रेभ्योदद्याद्यज्ञोपवीतकं आयुष्मान् जायतेतेनकर्मणामानवोभुवि ब्रह्मचारिणोविशेषः कालादर्शे मौंजीयज्ञोपवीतंचनवदंडचधारयेत् अजिनंकटि सूत्रंचनववस्त्रंतथैवच अत्रविशेष. कारिकायां पश्चादग्रेषुदर्भेषुप्रागग्रेषुपविश्यच आसिच्यापः शरावादौ दर्भास्तत्रनिधायच प्रागग्रदर्भगर्भास्तेकुर्युर्ब्रह्मांजलीस्तथा सव्याहृतिंजपेयुश्चैः सावित्रींब्रह्मयज्ञवत् त्रिरभ्यसे त्पुरोंकारंव्याहृतीश्चात्रकर्मणीति गोभिलः उत्सर्जनचवेदानामुपाकरणकर्मच अकृत्वावेदजप्येनफलंनाप्नोतिमान व. अतएवचोपाकर्मोत्सर्जनयोर्नित्यत्वमित्युपाकर्मकालनिर्णये अथोत्सर्जनप्रयोगः आचार्यआचम्यप्राणानायम्य देशकालौसंकीर्त्य अधीतानांछदसामाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थंएभिर्ब्राह्मणैः सहअंतरितमुत्सर्जनाख्यंक र्मकरिष्ये तदंगहोमकर्तुंस्थंडिलादिकरिष्ये स्थंडिलमुपलिप्योल्लिख्याभ्युक्ष्य कलशमाग्नेय्यां निरस्यपाणिंप्र क्षाल्य एह्यग्नेराहुगणोगौतमोग्निस्त्रिष्टुप् जुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप्अग्न्यावाहनेविनियोगः ओंएह्य

सदहोतानिषीदादब्धः सुपुरएताभवानः अवतांत्वारोदसीविश्वमिन्वेयजामहे सौमनसायदेवान् जुष्टो
दमूनाअतिथिदुरोणइमन्नोयज्ञमुपयाहिविद्वान् विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि इत्य
क्षेतेराबाह्य व्याहृतीनांपरमेष्ठीप्रजापतिः प्रजापतिर्बृहती अग्निप्रतिष्ठापनेविनियोगः ॐभूर्भुवः स्वः
अग्निंपावकनामानं प्रतिष्ठापयामीतिप्रतिष्ठाप्य प्रोक्षितेंधनानिनिक्षिप्य वेणुधमन्याप्रबोध्य ध्यायेद्देवं च
त्वारिशृंगावामदेवोऽग्निस्त्रिष्टुप्अग्निमूर्तिध्यानेविनियोगः ॐचत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य
त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याआविवेश सप्तहस्तश्चतुःशृंगः सप्तजिह्वोद्विशीर्षकः त्रिपात्प्रसन्नव
दनः सुखासीनः शुचिस्मितः स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचं
स्रुवं तोमरंव्यजनंवामेघृतपात्रंचधारयन् आत्माभिमुखमासीनएवंरूपोहुताशनः एवंध्यात्वासमिद्द्वयमादा
यअस्मिन्नक्रियमाणोत्सर्जनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये अस्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन
प्रजापतिंचाघारदेवते आज्येनाग्नीषोमौचक्षुषीआज्येनात्रप्रधानं॥ सावित्रींब्रह्माणंश्रद्धांमेधांप्रज्ञांधारणांसदस
स्पतिं अनुमतिंछंदांस्यृषीन् एताः प्रधानदेवता आज्यद्रव्येण पुनरत्रप्रधानं अग्निंअसणसूर्य्यम् आग्निं
शकुंतंआग्निंमित्रावरुणौअग्निंअपः अग्निंप्रजापतिं देवंब्रह्माणं आग्निंइंद्रासोमौ इंद्रंआग्निंमरुतः पवमानं सो
मं अग्निंसंज्ञानं एताः प्रधानदेवताग्रहसिद्धान्नद्रव्येण स्विष्टकृतमग्निमिध्मसन्नहनेन रुद्रमयासमग्निं
देवान्विष्णुमग्निंवायुंसूर्यंप्रजापतिं चैताः प्रायश्चित्तदेवता आज्येन ज्ञाताज्ञातदोषनिवर्हणार्थं त्रिवारमग्निं
मरुतश्चाज्येनसांगोपांगेनकर्मणासद्योयक्ष्ये व्याहृतीनांपरमेष्ठीप्रजापतिर्बृहती अग्न्याधानसमिद्धोमेविनियोगः

ॐभूर्भुवः स्वः स्वाहा । प्रजापतयइदंनमम ॥ अग्निंपरिसमूह्य । परिस्तृणीयात् ॥ अग्नेरष्टांगुलपरिमिते देशेऐशानींदिशमारभ्यदक्षिणांसमंतात्सोदकेनपाणिना । त्रिः परिमृज्य । दर्भैर्दशांगुलमितेदेशेप्राच्यादिषुपरिस्तृणीयात् तत्रप्राच्यांप्रतीच्यांचोदगग्रादर्भाअवाच्यामुदीच्यांचप्रागग्राः । पूर्वपश्चात्परिस्तरणमूलयोरुपरिदक्षिणपरिस्तरणं उपरिपरिस्तरणंतु तदग्रयोरधस्तात् एकैकस्यांदिशिचत्वारएवषोडश उत्तरतः ॥ पात्रासादनार्थं कांश्चित्प्रागग्रान्दर्भानास्तृणीयात् अग्नेरैशानितास्त्रिरंभसापरिषिच्यदक्षिणसव्यपाणिभ्यांक्रमेण चरुस्थालीं प्रोक्षण्यौदर्वींस्रुवौ प्रणीताज्यपात्रेइध्मावर्हिषी । इतिद्वेद्वेप्रत्यक्संस्थान्यासादयेत् । ततःप्रोक्षणीपात्रमुत्तानीकृत्वा तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रेकुशद्वयरूपेउत्तराग्रेपवित्रेनिधाय शुद्धाभिरद्भिस्तत्पात्रंपूरयित्वा । गंधपुष्पादिक्षिप्त्वा अंगुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यांपाणिभ्यामुदगग्रेपृथक् । पवित्रेधृत्वा अपस्त्रिरुत्पूयपात्राण्युत्तानानिकृत्वा इध्मग्रंथिंविस्रस्य सर्वाणित्रिःप्रोक्षयेत् । प्रणीतापात्रमग्नेःप्रत्यङ्निधाय तत्र पवित्रेनिधायोत्पूताभिरद्भिः पूरयित्वा गंधपुष्पादिनिःक्षिप्य पूर्णपात्रंपाणिभ्यामादायाग्नेः प्रादक्षिण्येनानामिकाग्रंनीत्वाग्नेरुत्तरतोदर्भेषुनिधायपवित्रेगृहीत्वान्यैर्दर्भैराच्छादयेत् गृहासिद्धान्यद्रव्यं चरुस्थाल्यामादाय तेपवित्रेआज्यपात्रेनिधाय तत्पवित्रपुरतःसंस्थाप्य तस्मिन्नाज्यमासिच्याग्नेरंतःस्थितांगारान्भस्मनासहाग्नेरुदक्परिस्तरणाद्बहिर्निरूह्य तेष्वाज्यपात्रमधिश्रित्य ज्वलतादर्भोल्मुकेन प्रज्वाल्यांगुष्ठपर्वमात्रं प्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्य पुनर्ज्वलतातेनैवदर्भोल्मुकेन सिद्धान्नद्रव्येण सहाज्यं । त्रिःपर्यग्निकृत्वा तदुल्मुकमपास्यापः स्पृष्ट्वाज्यपात्रंतुविकर्षन्नुदगुद्वास्यांगारानग्नौप्रत्यस्यापःस्पृष्ट्वा तत्रस्थमेवाज्यं सवितुष्ट्वाहिरण्यस्तूपः सवितापुरउष्णिकआज्यस्योत्पवने विनियोगः सवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः इतिमंत्रेणैकश्रुत्योच्चारितेनैकवारं

द्विस्तूष्णींउत्पूतपवित्रे अद्भिः प्रोक्ष्याग्नौप्रहरेत् अथाग्नेःपश्चात्परिस्तरणाद्बहिर्भुवंप्रोक्ष्य तत्रबर्हिः सन्नहनीं र
ज्जुमुदगग्रांप्रसार्य तदुपरिबर्हिःप्रागग्रमुदगपवर्गमविरलमास्तीर्य तस्मिन्नाज्यपात्रंनिधायदक्षिणकरेस्रुक्स्रुवौगृ
हीत्वा सव्येनकांश्चिद्दर्भानादायसहैवाग्नौप्रताप्यस्रुचंनिधाय दक्षिणहस्तेन स्रुचस्यविलमग्रेस्तुपृष्ठमभ्या
त्ममग्रतः आरभ्यपृष्ठतोयावदुपरिष्टाद्बिलंभयेत्कुशानां मूलतोदंडमेकैकंत्रिर्मृजीतवै प्रोक्ष्य प्रताप्य चासाद्यबर्हि
ष्युत्तरतोन्यसेत् एवमेवदर्वीमपिसंमृज्यतान्कुशान् कृतसमान् प्रोक्ष्याग्नौप्रहरेत् ततोगृहसिद्धान्नमग्न्याज्य
योर्मध्येननीत्वा आज्याद्दक्षिणतोबर्हिष्यसांतरमासाद्याभिघार्याग्निंगंधादिभिरभ्यर्चयेत् विश्वानिनइतितिसृण
मात्रेयोवसुश्रुतोग्निस्त्रिष्टुप्द्वाभ्यामर्चनेंत्योपस्थाने विनियोगः विश्वानिनोदुर्गहाजातवेदः सिंधुन्ननावादुरितानि
पर्षिअग्नेअत्रिवत्मसा गृणानोस्माकंबोध्यवितातनूनां यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीविजातवेदो
यशो अस्मासुधेहिप्रजाभिरग्ने अमृतत्वमश्यां यस्मैत्वंसुकृतेजातवेद उलोकमग्नेकृणवस्योनंअश्विनंसुपुत्रिण
वीरमंतंगोमंतंरयिन्नशतेस्वस्ति आद्यमंत्राभ्यामष्टसुदिक्ष्वर्चयेदष्टाभिः पादैः अंत्योपस्थानं आत्मानंचालं
कृत्यहस्तंप्रक्षाल्य इध्मबंधनरज्जुमिध्मस्थानेनिधाय पाणिनेध्ममादाय मूलमध्याग्रेषु स्रुवेणत्रिरभिघार्य अयं
तेवामदेवोजातवेदाअग्निस्त्रिष्टुप् इध्महवनेविनियोगः अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेद्धवर्धय
चास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधयस्वाहा जातवेदसेअग्नयइदंनमम ततः स्रुवेणाज्यंगृहीत्वा
वायव्यदिशमारभ्याग्नेयींदिक्पर्यंतमाज्यधारामाहरेत् तथैवनैर्ऋतींदिशमारभ्यैशानीपर्यंतजुहुयात् प्रजापतिंमन
साध्यायन्स्वाहेतिजुहुयात् उभयत्र प्रजापतयइदंनमम ततोग्नयेस्वाहा अग्नयइदंउत्तरतः सोमायस्वाहा सोमा
येदंदक्षिणतः ततः सावित्र्यादिनवभ्यः सावित्र्यैस्वाहा सावित्र्याइदं ओंब्रह्मणेस्वाहा ब्रह्मणइदं ओंश्रद्धायैस्वाहा

श्रद्धायइदं ऊंमेधायैस्वाहा मेधायइदं प्रज्ञायैस्वाहा प्रज्ञायइदं ऊंधारणायैस्वाहा धारणायइदं ऊंसदसस्पतयेस्वाहा सदस्पतयइदं ऊंअनुमतयेस्वाहा अनुमतयेइदं ऊंछंदोभ्यऋषिभ्यःस्वाहा छंदोभ्यऋषिषिभ्यइदं आज्याहुत्यंतेचतुरवत्यप्याचार्य्यः पचावर्तिनंशिष्यमामंत्र्य विंशतिकृत्वः पंचावर्तकुर्वीत शिष्टाचारश्चेत्थंपंचावर्तिनउत्थायाचार्य्यः स्वयंचप्रसूतइतिमंत्रेणनिवेदयंति प्रसूतोभक्षमकरं चरावपिस्तोमंप्रथमः सूरिरुन्मृजेसुतेसातेनपद्मागमेवांप्रतिविश्वामित्रजमदग्नीदमे ततः स्रुवेणस्रुच्याज्यमुपस्तीर्य गृहसिद्धान्नमध्यादगुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखसंस्पर्शनमकुर्वन्नववदायदर्व्यामर्प्य ततोन्नपूर्वार्धात् पार्श्वमार्धाभिस्तथैवावदायदर्व्याप्यपात्रस्थमन्नमभिघार्य दर्वीस्थमावर्त्तंचाभिघार्य अग्निमीलेविश्वामित्रोमधुछंदोऽग्निर्गायत्री उत्सर्जनप्रधानगृहेसिद्धान्नहोमेविनियोगः ऊंअग्निमीलेपुरोहितंयज्ञस्यदेवमृत्विजं होतारंरत्नधातमंस्वाहा अग्नयइदंनममेतिसर्वत्रत्यागमाचार्यएवकुर्य्यात् प्राक्संस्थान्युदक्संस्थानिचावदाना निजुहुयादितिजयंतः कुसुंभकोमैत्रावरुणिरगस्त्योप्तृणसूर्या अनुष्टुप् उत्सर्जनप्र; ऊंकुषुभकस्तदब्रवीद्गिरेः प्रवर्त्तमानकः वृश्चिकस्यारसंविषगरसंवृश्चिकतेविषंस्वाहा अप्तृणसूर्येभ्यइदं त्वमग्नेशौनकोगृत्समदोग्निर्जगती उत्सर्जन. ऊंत्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसेशुचिःस्वाहा अग्नयइदं ऊंआवदंछौनकोगृत्समदः शकुंतोजगतीउत्सः आवदंस्त्वशकुनेभद्रमावदत् त्वमासीनः सुमतिंचिकिद्धिनः यदुत्तमवदासिकर्करिर्यथाबृहद्वदेमविदथेसुवीराः स्वाहा शकुंतायेदं सोमस्यमागाथिनोविश्वामित्रोऽग्निस्त्रिष्टुप् उत्स. ऊंसोमस्यमानवसवक्ष्यग्नेवह्निंचकथं विदथेयजभ्यैदेवांअच्छादीद्युंजेअद्रिंशमायैअग्नेतवंजुपस्वाहा अग्नयइदं गृणानामाभार्गवोजमदग्निर्मित्राव

त्रणोगायत्री उत्स॰ ॐगणानांजगदाग्निनावृत्तस्यसीदतंपातंसोमम्रृतावृधास्वाहा. मित्रावरुणाभ्यामिदं. त्वा
ह्यग्नेगौत्तमोवामदेवोग्निरष्टिः उत्स॰ त्वाह्यग्नेसदांसित्समन्येतदेवासोदेवमरतिन्येरिरइतिरुत्यान्येरिन्ये : अ
मर्त्यंयजतमर्त्येष्वादेवंयादेवंजननप्रचेतसंविश्वमादेवजननप्रचेतसंस्वाहा. अग्नयइदं धामंतेगौत्तमवामदेवत्र्या
पोजगती उत्स. ॐधामंतेविश्वंभुवनमधिश्रितमंतः समुद्रेह्यदं १ तरापुपित्रपामनीकिसमिथपत्राभतस्तम
श्यामम्मधुनंततऊर्म्मिस्वाहा अग्न्यइदं प्रवोध्यात्रेयोवुधगविष्ठिएवाग्निस्त्रिष्टुप् उत्स. ॐत्रवोध्याअग्निंसमिधाज
नानांप्रातधेनुमित्नापतीमुपासंयव्हाइवप्रवयामुज्जिहानांप्रभानवः सिस्तनेनाकमच्छस्वाहा अग्नयइदं गंतान
आत्रेयएत्नपामरुन्मरुतोऽतिजगती उत्स. ॐगंतानोपतंयतिपासुशामिश्रोताहवसरक्षेएवपामरुतज्येष्टासोन
पर्वतासोव्योमानिरूपंतस्यप्रचेतसः स्यातदुर्धर्त्तवोनिदः स्वाहा मरुद्भ्यइदं त्वंह्यग्नेवाहस्पत्योभरद्वाजोग्निस्त्रिष्टप्
उत्स.ॐत्वंह्यग्नेप्रथमोतास्याधिपो अभावादेस्महोतातुसीदयन्नकृणोदुष्टसहोविश्वस्मैसहध्यैस्वाहा अग्नयइदं
योनस्त्वोभरवातः पायुर्देवब्रह्मएयनुष्टुप् उत्स. योनस्त्वोअरएयपश्चानिष्टाजिघ्रादानिदेवास्तसर्वेधूर्वंतुब्रह्मवर्ममभांत
रंस्वाहा देवब्रह्मभ्यइदंअग्निंनरोमैत्रावरुणिर्वसिष्टोग्निर्विराट्. उत्स॰अग्निंनरोदीधितिभिररएयोहस्तच्युतीजनयं
तप्रशस्तं दूरेदृशंगृहपातिमथर्युंस्वाहा : अग्नयइदं प्रतिचक्ष्यमैत्रावरुणिर्वासिष्टइंद्रासोमावनुष्टुपुत्स. ॐप्रतिचक्ष्व
विचक्षेंद्रश्चसोमजागृतं रक्षोभ्योवधमस्यतमशनिंयातुमद्भ्यः स्वाहा इंद्रासोमाभ्यामिदंमाचित्काएवः प्रगाथइंद्रोवृ
हती उत्स. ॐमाविदन्याद्विश:सनसखायोमारिषएयतइंद्रमित्स्तोमोदृपणंसचासुतेमुहुरुक्थाचशंसतस्वाहाइंद्रायेदं
अग्नेपाहिकाएवःसौभरिरग्नामरुतानुष्टप्उत्स. अग्नेपाहिमरुत्सखारुद्रेभिःसोमपीतयेसोभर्याउपसुष्टुतिमादाय

स्वर्णरेखास्वाहा अग्नामरुद्भ्यइदं स्वादिष्ठया वैश्वामित्रोमधुच्छंदः पवमानः सोमोगायत्री उत्स. ॐस्वादिष्ट य
मदिष्ठयापवस्वसोमधारयाइंद्रायपातवेसुतः- स्वाहा पवमानायसोमायेदं पतेराजन्मारीचः कश्यपः सोमपवमा
नः सोमः पंक्तिः उत्सर्ज- ॐपतेराजच्छतंहविस्तेनसोमाभिरक्षतः अरातीवामानस्तारन्मोचनः किंचिनामम
दिंद्रायेंद्रोपरिस्रवास्वाहा पवमानायसोमायेदं अग्नेवृहत्रास्यास्त्रितोग्निस्त्रिष्टुप् उत्स.ॐअग्नेवृहन्नुषसामूर्ध्वो अस्था
न्निर्जगन्वान्नमसोज्योतिषागात् अग्निर्भानुनारुषतास्वंगआजातोविश्वासद्मान्यप्राः स्वाहा अग्नयइदं समानी
वआंगिरसः संवननः संज्ञानमनुष्टुप् उत्स. ॐसमानीवआकूतिः समानाहृदयानिवः समानमस्तुवोमनो य
थावः सुसहासतिस्वाहा संज्ञानायेदं स्रुवेणाज्यंदर्व्यामुपस्तीर्य गृहसिद्धमुत्तरभागतोभूयोनूचानाभिरेवांगुलि
भिरवदायदर्व्यामपात्रस्थंहविरभिघार्य यदस्यकर्मणोहिरण्यगर्भोग्निरतिधृतिः स्विष्टकृद्धोमेविनियोगः ॐय
दस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं अग्निष्टत्स्विष्टकृद्विद्वान्सर्वंस्विष्टंसुहुतंकरोतुमे अग्नयेस्विष्टकृते सुहुतहु
तेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्द्धयित्रेसर्वान्नः कामान्समर्धयस्वाहा अग्नयेस्विष्टकृतइदं रुद्रायपशुपतयेस्वा
हा पशुपतयेरुद्रायेदं ततः प्राणायामंकृत्वा पृथ्वीत्यस्यमंत्रस्यमेरुपृष्ठऋषिः कूर्मोदेवता सुतलंछंदः आसनेवि
नियोगः पृथ्विस्त्वयाधृतालोका देवित्वंविष्णुनाधृता त्वंचधारयमांदेविपवित्रंकुरुचासनं अपसर्पंतुवामदेवो
भूतान्यनुष्टुप् भूतोत्सादनेविनियोगः अपसर्पंतुतेभूतायेभूताभुविसंस्थिताः येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञ
या अनेनभूतानुत्सार्य शरावेजलंकुशांश्चाधायावद्युदासोविद्यमेपाप्मानमृतात्सत्यमुपैमि तज्जलमभिमृश्योप
स्थकृते दर्भगर्भंब्रह्मांजलिंविधाय प्रणवादिस्वयमुच्चारयन्नन्यान्नप्येवमेवोपविष्टान्वाचयेत् प्रणवस्यपरब्रह्मऋषिः
परमात्मादेवता दैवीगायत्रीछंदः व्याहृतीनांपरमेष्ठीप्रजापतिः प्रजापतिर्बृहतीगायत्र्यागाधिनोविश्वामित्रः स

चितागायत्री अग्निमीलइत्यादीनांछंदसांवैश्वामित्रमधुच्छंदादयऋषयः अग्न्यादयोदेवताः गायत्र्यादीनिछंदांस
सर्वेषामुत्सर्जनेविनियोगः ओंभूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ओंभूर्भुवःस्व
वत्स०महिधियो. यात् ओंभूःस्व. तुत्स. हिधियो- प्रचोदयात् अग्निमीलेपुरोहितंयज्ञस्यदेवमृत्विजंहोतारंरत्न
धातमं अग्निः पूर्वेभिर्ऋषिभिरीड्योनूतनैरुतसदेवांएहवक्षतिअग्निनारयिमश्नवत्पोषमेवदिवेदिवे यशसंवीरवत्तमं
अग्नेयंयज्ञमध्वरंविश्वतः परिभूरसिसइद्देवेषुगच्छति अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः देवोदेवेभिराग
मत् यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसितवेतत्सत्यमंगिरः उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयंनमोभरंतएमसि रा
जंतमध्वराणांगोपामृतस्यदीदिविंवर्धमानंस्वेदमेसनः पितेवसूनवेग्नेसूपाय नोभवसचस्वानः स्वस्तये अग्निर्वैदे
वानामवमोविष्णुः परमः अथमहाव्रतम् एषपथाएतत्कर्म अथातः संहितायाउपनिषत् विदामघवन्विदाम
हाव्रतस्यपंचविंशतिसामधेन्यः इषेत्वोर्जेत्वा अग्नआयाहिवीतये शन्नोदेवीरभिष्टये अथैतस्य समाम्नायस्यस
माम्नायः समाम्नातः मयरसतजभनलगसंमितं गौः ग्मा पंचसंवत्सरमयं अथशिक्षांप्रवक्ष्यामि वृद्धिरा
दैच् यदिंद्रादोदाशराज्ञेउदंजनाउपश्रुत योगीश्वरंयाज्ञवल्क्यंनारायणंनमस्कृत्य अथातोधर्मं०व्याख्यास्यामः
अथातोधर्मजिज्ञासा अथातोब्रह्मजिज्ञासा तच्छंयोरावृणीमहे गातुंयज्ञाय गातुंयज्ञपतये दैवीस्वस्तिर
स्तुनः स्वस्तिर्मानुषेभ्यः ओंऊर्ध्वंजिगातुभेषजंशन्नोअस्तुद्विपदेशंचतुष्पदे। ओंनमोब्रह्मणे नमोऽस्त्वग्नये नमः
पृथिव्यैनमओषधीभ्यः नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि इमामृचंत्रिः पठेत् भद्रंनोअपिवा
तयमनः ओंशांतिः शांतिः शांतिःतृप्तिरसितृप्श्चमेपाप्मानमृतात्सत्यमुपागांततःसर्वेउत्सृष्टावेवेदाइत्युक्तांजालिस्था
न्कुशानाचार्यायदद्युः आचार्यः स्रुवेणप्रायश्चित्ताज्याहुतींजुहुयात् तत्रमंत्रः अयाश्चविमदोपाऽग्निः पाक्तिः

प्रायाश्चत्तंज्यहोमविनियोगः ॐअयाश्चाग्नेस्यनभिशस्तियाश्चसत्वमित्यमयाअसि अयासावयसाकृतायासहव्य महिषेयातोधेहिभेषजंस्वाहा अयासेग्नयइदं अतोदेवाइतिद्वयोः-काण्वोमेधातिथिऋषिः पूर्वोदैव्युत्तरावैष्णवीगा यत्रीछंदः मापः क्षेष्टाइनिजापित्वा कुशाग्रैः प्राच्यादिपचादिक्षु प्रादक्षिण्यक्रमेणोदकमुदुक्षेत् प्राच्यांदिशिदेवा ऋत्विजोमार्जयंतां दक्षिणस्यांदिशिमासाः पितरोमार्जयंतांप्रतीच्यांदिशिग्रहाः पशवोमार्जयंतामुदीच्यांदिश्याप ओषधयोवनस्पतयोमार्जयता मूर्ध्वायांदिशियज्ञः संवत्सरः प्रजापति मार्जयतां मार्जयंतामितिवा स्वाशि रसिकुशाग्रैरभिषिंचेदेतैर्मंत्रैः आपोअस्मादेवश्रवा आपास्त्रिष्टुप्मार्जनेविनियोगः आपोअस्मान्मातरः शुध यतुघृतननोघृतप्वः पुनंतुविश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यः शुचिरापूतएमि इदमापः सिंधुद्वीपआपोनुष्टुप् मार्जनेविनियोगः इदमापः प्रवहतायत्किंचिदुरितंमयि यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं सुमित्र्यापओषधयः संतुदुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मइति ततआचार्यः स्ववामकरेप्रणीतापात्र माहंप्रजांपरासिच पानः सयावरीस्थनसमुद्रेवोनिनयानिस्वपाथोअपीथेत्येकश्रुत्या पठन्प्रत्यङ्मुखमवाङ्निनीयतज्जलेनाध्या प्यान्मार्जयेत् विश्वानिनइति ऋचेनाग्नेरुत्तरपूजनोपस्थानकुर्य्यात् मानस्तोकआंगिरसः कुत्सोरुद्रोजगतीवि भूतिग्रहणेविनियोग. ॐमानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः वीरान्मानोरुद्रभामिनोवधी र्हविष्मंतः सदामित्वाहवामहे इतिस्त्रुवबिलपृष्ठेनविभूतिंगृहीत्वा ॐत्र्यायुषंजमदग्नेरितिललाटे कश्यपस्यत्र्यायु षंकंठे अगस्त्यस्यत्र्यायुषंनाभौ यद्देवानांत्र्यायुषंदक्षिणांसे तन्मेअस्तुत्र्यायुषंवामांसे सर्वमस्तुशतायुषं शि रसिधारयेत् आचार्योग्नेर्वायव्यप्रदेशेस्थितं ॐचमेस्वरश्चमेयज्ञोपचीतंचतेनमश्चयत्तन्यूनंतस्मैतउपपत्तातिरिक्त वस्मैतेनमः स्वस्तिश्रद्धांमेधांयशः प्रज्ञांविद्यांबुद्धिश्रियंबलं आयुष्यतेजआरोग्यंदेहिमेहव्यवाहनइति

पूर्ववत्परिसमूह्यपर्युक्षेत् गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन इत्याग्निं विसृज्य यांतुदेवगणाःसर्वे पूजामादायपार्थिवीं इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ततउदकर्तारंगत्व। शरीरशुद्ध्यर्थमुत्सर्जनांगत्वेन सर्वैःसहस्नानानिकुर्यात् तद्यथा प्राणानायम्य देशकालौस्मृत्वा उत्सर्जनांगत्वेनगणस्नानमहंकरिष्यइतिसंकल्प्य स्नात्वाचम्य उत्सर्जनांगत्वेनभस्मगोमयस्नानानिकरिष्ये भस्मादायईशानायनमइतिशिरसि तत्पुरुषायनमइतिमुखे अघोरायनमइतिहृदये वामदेवायनमइतिगुह्ये सद्योजातायनमइतिपादयोः प्रणवेनसर्वांगे यद्वा अग्निरितिभस्मजलमिति भस्मस्थलमिति भस्म व्योमेति भस्म सर्वंहवाइदंभस्म मानस्तोकइतिसर्वांगे विलिप्य स्नात्वाचम्य गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं अतेनगोमयमादाय अग्रमग्रंचरंतीनामोषधीनांवनेवने तासामृषभपत्नीनांपवित्रंकायशोधनं यन्मेरोगांश्चशोकांश्चपापांश्चनुदगोमयःसर्वदेतिशिरःप्रभृत्यंगानिविलिप्य स्नात्वाचम्य बलित्थापर्वतानांछिद्रांबिभर्षिपृथिवि प्रयाभूमिप्रवत्वतिमह्नाजनोषिमहिनि इतिभूमिंप्रार्थ्य मावोरिरस्वनितायस्मैवाकंस्वनामिव द्विपदचतुष्पदस्माकसर्वंसस्त्वनात्वरम् इतिखनित्वा स्योनापृथिविनोभवानृक्षरानिवेशनी यच्छानः शर्मसप्रथाः इतिमृदमादाय आपनेतिपरायणेदूर्वारोहंतुपुष्पिणीः ह्रदाश्चपुंडरीकाणिसमुद्रस्यावहाइमे इतिदूर्वामादायगायत्र्यासर्वांमृदमभ्युक्ष्यभूमौनिधाय त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं ह्वयामिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः इतिपूर्वतः यमायमधुमत्तमंराज्ञेहव्यंजुहोतनइदंनमऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः इतिदक्षिणतः तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोवरुणेहबोध्युरुशंसमानआयुः प्रमोषीः इतिपश्चिमत. वयंसोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावंत. सचेमहि

इत्युत्तरतः तत्सूर्यरोदसीउभेदोषावस्तोरुपब्रुवे भोजिष्ठस्मांअभ्युच्चरासदा इत्युपरिष्टात् अधः पश्यस्वसोमंत
रांपादकोहरमातेकश्यल्पकौदशास्त्रीहिब्रह्मावभूविथा इत्यधोमृदंक्षिप्त्वांगेपुमृदंलिपेत् सहस्रशीर्षापुरुषः सहस्रा
क्षः सहस्रपात् सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलम् इतिशिरसि अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछिबुकाद
धि यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते इतिमुखे ग्रीवाभ्यस्तदूस्मिहभ्योअनुक्यात् यक्ष्मंदोषण्यमंसा
भ्यांबाहुभ्यांविवृहामिते इतिग्रीवायां आन्त्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधियक्ष्मंमतस्नाभ्योविवृहामिते इतिहृ
दये नाभानाभिनआददेचक्षुश्चित्सूर्येसचा कवेरपत्यद्दुहे इतिनाभौ त्वामिंद्रसजोषसमर्कंबिभर्तिवाह्वोः वज्रंशि
शानओजसा इतिबाह्वोः सोमानंस्वरणंकृणुहिब्रह्मणस्पते कक्षीवंतंयऔशिजः इतिकक्षयोः यः कुक्षिः सोम
पातमः समुद्रइवपिन्वते कुर्वीरापोनककुदः इतिकुक्षौ बह्वीनांपिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य
सेकाः पृतनाश्चसर्वा पृष्ठेनिनद्धोजयतिप्रसूतः ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यांयक्ष्मंश्रोणिभ्यांभासदा
दंससोविवृहामिते इत्यूर्वोः मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते इ
तिजान्वोः एतावानस्यमहिमातोज्यायांश्चपूरुषः पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि इतिपादयोः अंगादं
गाल्लोम्नोलोम्नोजातंपर्वणिपर्वणियक्ष्मंसर्वस्मादात्मनस्तमिमंविवृहामिते इतिपुरुषसूक्तेनचसर्वांगे अश्वक्रांते
रथक्रांतेविष्णुक्रांतेवसुंधरे शिरसाधारयिष्यामिरक्षस्वमांपदेपदे इतितिलदूर्वामृदंशिरसिनिधायमृत्तिकास्नानंप्र
क्षाल्य हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः यन्मेमनसावाचाक
र्मणावादुष्कृतंकृतं तन्नइंद्रोवरुणोबृहस्पतिः सविताचपुनंतुपुनःपुनः इमंमेगंगेयमुनेसरस्वतिशतद्रुस्तोमंसच
तापरुष्ण्या असिक्न्यामरुद्वृधे वितस्तयार्जीकीयेशृणुह्यासुषोमया इदंतेन्याभिसमानमद्भिर्याउकाश्चसिंधुप्रव

हंतिनद्यः सर्पोजीर्णामिवत्वचं जहातिपापंसशिरस्कोभ्युपेत्य 'गंगागंगेतियोब्रूयाद्योजनानांशतैरपि मुच्यतेसर्व
पापेभ्योविष्णुलोकंसगच्छति सुमित्र्यानआपओषधयः संतु दुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः 'स
मुद्रज्येष्ठाः सलिलस्यमध्यात्पुनानायंत्यनिविशमानाः इंद्रोयावज्रीवृषभोरराद ताआपोदेवीरिहमामवंतु या
आपोदिव्यउतवास्रवंतिखनित्रिमाउतवायाः स्वयंजाः समुद्रार्थाः ' शुचयः पावकास्ता आपोदेवीरिहमामवं
तु यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानाम् मधुश्चुतः 'शुचयोया पावकास्ताआपो० यासुराजा
वरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति वैश्वानरोयास्वग्निःप्रविष्टस्ताः एतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना शुद्धै
रुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु इंद्रः शुद्धोनआगहिशुद्धः शुद्धाभिरूतिभिः शुद्धोरयिंनिधारयशुद्धोममद्धि
सोम्यः इंद्रः शुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि तरत्समंदीधावति
धारासुतस्यांधसः तरत्समंदीधावतिउस्राविदवसुनामर्त्यस्यदेव्यवसः तरत्० द्वस्त्रयोः पुरुषंन्योरासहस्राणिद
द्महे तरत् आपयोस्त्रिंशतंतनासहस्राणिचदद्महे तरत् त्रिभिष्टंदेवसवितर्वर्षिष्ठैः सोमधामभिः अग्नेदक्षैः पुनीहि
नःपुनंतुमादेवजनाः पुनंतुवसवोधियः विश्वेदेवाः पुनीतमाजातवेदः पुनीहिमा प्रप्यायस्वप्रस्यंदस्वसोमविश्वेभि
रंशुभिः देवेभ्यउत्तमंहविः उमाप्रियंपनिप्रतंयुवायानमाहुतीवृधं अगन्मबिभ्रतोनमः अलाप्यस्यपरशुर्नमा
पचस्वदेवसोमआखुचिदेवसोमय: पावमानीरध्येत्यृषिभिः संतरसंसर्वंसर्वंसपूतमाश्नातिस्वदितंमातरिश्वना प
वमानीर्योअध्येतिऋषिभिः संभृतंसंतस्मैसरस्वतीदुहेक्षीरंसर्पिर्मधूदकं पावमानीः स्वस्त्ययनीः सुदुघाहिघृ
तश्चुतः ऋषिभिः संभृतोरसः ब्राह्मणेष्वमृतंहितपावमानीर्दिशंतुनः इमंलोकमथोअमुंकामान्समर्धयंतुनः दे
वीर्देवैः समाहिता येनदेवाः पवित्रेणआत्मानंपुनतेसदा तेनसहस्रधारेणपावमान्यः पुनंतुमा प्राजाप

स्यंपवित्रंशतोद्यामंहिरण्मयं तेनब्रह्मविदोवयंपूतंब्रह्मपुनीमहे इंद्रः सुनीतीसहमापुनातु सोमः स्वस्त्यावरुणः समीच्या यमोराजाप्रमृणाभिः पुनातुमा जातवेदामांजयंत्यापुनातु आपोहिष्ठेतितिसृभिर्मार्जयित्वा इममेगंगत्युदकमालोड्यऋतंचेतीतिऋचेनाघमर्षणंकृत्वा प्रवाहाभिमुख स्त्रीन्मार्जयित्वाचम्य स्नानांगतर्पणं कुर्यात् तद्यथा ब्रह्मादयोयेदेवास्तांदेवांस्तर्पयामि भूर्देवांस्त० स्वर्देवांस्त० कृष्णद्वैपायनादयोयेऋषयस्तानृषींस्त० भूऋषींस्त० भुवऋषींस्त० स्वऋषींस्त० सोम पितृमा यमांगिरस्वनाग्निकव्यवाहनादयोयेपितरस्तान्पितृंस्त० भूः पितृंस्त० भुवः पितृंस्त० स्वः पितृंस्त० भूर्भुवःस्वः पितृंस्त० अग्निदग्धाश्चयेजीवायेप्यदग्धाकुलेमम भूमौदत्तेनतोयेनतृप्तायांतुपरांगतिमिति जलांजलिंतटेनिक्षिप्य यन्मयादूषितंतोयंशारीरमलसंभवात् तद्दोपपरिहारार्थंयक्ष्माणंतर्पयाम्यहं यक्ष्मतर्पणंकृत्वा ऋषीन्पूजयेत् तद्यथेत्थंआचम्य प्राणानायम्य देशकालौसंकीर्त्य ऋषीन्पूजयिष्यइतिसंकल्प्य कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्चसप्तैतेऋषयंस्मृताः अरुंधतीसहितान्सप्तऋषीनावाहयामि तदस्तुमित्रावरुणागुहावैप्रतिष्ठा अरुंधतीसहितेभ्यः सप्त ऋषीभ्यः सप्त ऋषिभ्योनमः आवाहनंस. आसनं पाद्यं अर्घ्यं आचमनीयं स्नानीयं पुनराचमनं- वस्त्रं. आचमनं यज्ञोपवीतं अथगंधः पुष्पाणिधूपं दीपं नैवेद्यं आचमनं फलं तांबूलं दक्षिणा अरुधतीसाहितेभ्यः सप्तऋषिभ्योनमः मंत्रपुष्पांजलिं समर्पयामि मंत्रहीनक्रियाहीनं. आवाहनंनजानामीतिचक्षमाप्य ततः सावित्र्यादींस्तर्पयेत् सावित्रींतर्पयामि ब्रह्माणंत. श्रद्धांतर्प०मेधांत- प्रज्ञांत- धारणांत० सदसस्पतिंत० अनुमतिंत० छंदांस्यृषींस्त० अत्पृणसूर्यांस्त० आग्निंत० शकुंतत० अग्निंत० मित्रावरुणौत० अश्विनौत० अपस्तर्पयामि अग्निमरुतस्त० अग्निंतर्प० देवब्रह्म

णंत० अग्नितर्पं० इंद्रासोमौत० इंद्रंतर्प० अग्नामरुतस्त० पवमानसोमंतर्प० आग्नेत० संज्ञानतर्प० ब्र
ह्मयज्ञांगसंयुक्ततर्पणंस्यादिहापितन् इतिकारिकोक्तेः, प्रजापतिस्तृप्यतु ब्रह्मातृप्य० वेदास्तृप्यंतु देवास्तृ
प्य ऋग्नयस्तृप्यतु सर्वाणिछंदांसितृप्यंतु, ओंकारस्तृप्यतु वषट्कारस्तृप्यतु व्याहृतयस्तृप्यतु
सावित्रीतृप्यतु यज्ञास्तृप्यंतु द्यावापृथिवीतृप्येतां अंतरिक्षंतृप्यतु अहोरात्राणितृप्यंतु सांख्यास्तृ
प्यंतु सिद्धास्तृप्यंतु समुद्रास्तृप्यंतु नद्यस्तृप्यंतु क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसस्तृप्यतु नागास्तृप्यं
तु वयांसितृप्यंतु गावस्तृप्यतु साध्यास्तृप्यतु, विप्रास्तृप्यतु यक्षास्तृप्यंतु रक्षांसितृप्यंतु भूता
नितृप्यंतु एवमेतानितृप्यतु, अथऋषयः, उपवीतीशतर्चिनस्तृप्यतु मध्यमास्तृप्यंतु गृत्समदस्तृ
प्यतु विश्वामित्रस्तृप्यतु वामदेवस्तृप्यतु भरद्वाजस्तृप्यतु वसिष्ठस्तृप्यतु प्रगाथास्तृप्यतु पावमान्य
स्तृप्यंतु क्षुद्रसूक्तास्तृप्यंतु महासूक्तास्तृप्यंतु प्राचीनावीती अत्रजीवत्पितृकस्यापसव्येविशेषमाह अप
सव्यंद्विजाग्र्याणां पित्र्यसर्वत्रकीर्तितं आप्रकोष्ठान्नकर्तव्यंमातापित्रोस्तुजीवतोरितिशिष्टाचारात् सुमंतु
जैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यंतु जानंति बाहविगार्ग्यगौतमशाकल्यबा
भ्रव्यमांडव्यमांडूकेयास्तृप्यंतु गार्गीवाचक्नवीतृप्यतु, वडवाप्रातिथेयीतृ० सुलभामैत्रेयीतृ० कहोलंतर्पयामि
कौषीतकंत० महाकौषीतकतर्प० पैंग्यंतर्पयामि महापैंग्यंतर्पयामि सुयज्ञंतर्प० सांख्यायनंतर्पया०
ऐतरेयंत० महैतरेयंतर्पयामि, शाकलं तर्पया० बाष्कलं तर्पया० सुजातवक्त्रं तर्पयामि औ
दवाहिंतर्पयामि महौदवाहिंतर्पयामि सौजामिंत० शौनकंतर्पया० आश्वलायनत० येचान्येआचार्या
स्तेसर्वेतृप्यंत्विति अत्रकारिका, त्रिंशद्भिरेकेनैस्तुद्वादशैश्चतथाभवेत्, त्रयोविंशतिवाक्यैस्तुदेवर्षीश्चापितर्पयेत्

क्रमात् । अस्मत्पितरममुकशर्माणममुकगोत्रंवसुरूपस्वधानमस्तर्पयामिएवंपितामहंप्रपितामहं मात्रादींस्तत्र
मातामहादीन्सपत्नीकानूपत्नींसुतादीन्पितृव्यंमातुलंभ्रातरंपितृस्वसारं, मातृष्वसारमात्मस्वसारयथायोग्यंस
धवाः सतनयाः श्वशुरंगुरुंशिष्यानाप्तांश्चतर्पयेत् आब्रह्मस्तंबपर्यंतदेवर्षिपितृमानवाः तृप्यंतुपितरः
सर्वेमातृमातामहादयः अतीतकुलकोटीनांसप्तद्वीपनिवासिनां आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकं येके
चास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकं इत्युत्तरीयतटेनिष्पीड्यसव्येनवा
यमादींस्तर्पयेत् यमंतर्पयामि धर्मराजतर्पयामि ब्रह्मतर्पयामि ततो यमोनिहंतापितृधर्मराजोवैवस्वतोदंड
धरश्चकालः भूताधिपोदत्तकृतानुसारीकृतांतमेतंदशभिर्जपतिइतिदशवारजपेत् ततः शांत्यर्थं आनोभ
द्राः १० शन्नइंद्राग्नी १५ त्यमूषवा ३ महित्रीणांसुदृष्ट्यर्थंतिस्रोवाचः पर्जन्यायप्र ३ अच्छावद १० ब
लित्थापर्वतानां ३ प्रदेवत्राब्रह्मणे १५ बृहस्पतेप्रतिमे १३ एतानिपर्जन्यस्तुतिसूक्तानि ऋषयोवैसरस्व
त्यांसत्रमासतेतिब्राह्मणखंडद्वयंचवैदिकाः पठंति ततोवेदप्रीत्यर्थंब्राह्मणान्भोजयेत् विश्वेतातेसवनेषुप्रवाच्या
याचकथंमघवन्निंद्रसुन्वते परावतमन्युरुसंभतंवसुपार्थणोः शरभापशरवंधवे इत्यूपीन्जलेउद्वासयेत् इत्युत्स
र्जनप्रयोगः अथोपाकर्मप्रयोगः सचोत्सर्जनवद्ज्ञेयः विशेषोलिख्यते नूतनब्रह्मचारिणांउपाकर्मार्थतया. नू
तनकटिसूत्राद्युपकल्पनं स्वस्तिपुण्याहवाचनं नांदीश्राद्धंचकार्यं तादृशब्रह्मचार्यभावेतूपकल्पनमात्रंकृत्वाचम्य
प्राणानायम्य देशकालौसंकीर्त्य अधीतानामध्येष्यमाणानांछंदसांयतयामतानिरासेनाप्यायनद्वारा श्रीपर
मेश्वरप्रीत्यर्थंएभिर्ब्राह्मणैः सहोपाकर्मकरिष्ये अन्वाधानेक्रियमाणेउपाकर्महोमेदेवतापरिग्रहार्थंगृहसिद्धान्नस्थे
नदधिसक्तुद्रव्येणशेषेणस्विष्टकृताग्निमिध्मसन्नहनेनरुद्रंयज्ञोपवीतेनपरमात्मानमयाम: इध्मसन्नहनहोमानंतरं

दधिसक्तुप्राशनोपवीतहोमदानधारणानिच दधिक्राव्णोवामदेवोदधिक्रावानुष्टुप् दधिसक्तुप्राशनेविनियोगः ॐद
धिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् इतिमंत्रेणप्राङ्मुखाः प्रत्ये
कंदधिसक्तून्प्राश्याचामेयुः अग्नेःपश्चादेकधारणया एकैकः प्राङ्मुख उपविश्य मार्जनंचकुर्यात् कृत्वायज्ञोप
वीतानिनवानिवसुधाधिप हुत्वाग्नौगुरवेदत्त्वापितृभ्योधारयेत्ततइति गालववचनात् वेदारंभऋष्यादिस्मरणां
तेसर्वेषामुपाकरणेविनियोगः अतेउपाकृतावैवेदाइत्युक्त्वाअंजलिस्थान्कुशान्दक्षिणकटौनिवेश्यापउपस्पृशेयुः वे
दारंभणतः पूर्वं सक्तुप्राशनतःपरं नवयज्ञोपवीतानिदद्याद्वैधारयेत्ततइति कार्ष्णाजिनिवचनात् पितृभ्यइत्य
स्यापिदत्त्वेत्यनेनान्वयः होमेधारणेचयज्ञोपवीतमितिमंत्र स्यपरब्रह्मपरमात्मात्रिष्टुप्यज्ञोपवीतहोमेविनियोगः
यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजःस्वाहा परमा
त्मनइदंब्रह्मचारीनूतनमेखलादिधारयेत् अजिनकटिसूत्रंचनववस्त्रंतथैवचेति कालादर्शोदाहृतवचनात् एषां
धारणेक्रमोमंत्रप्रकारश्चोपनयनवद्बोध्यः अन्यदुत्सर्जनेनसमानं इत्युपाकर्मप्रयोगः अथात्रकश्चनोपयुक्त
शास्त्रार्थोलिख्यते वृत्तिकृन्मतेउत्सर्जनप्रकरणस्यदेवताग्रहणेनाग्न्यादीनांसावित्र्यादिभिःसहतेनोक्तत्वात् जयं
तमतेसावित्र्यादीनांप्रधानदेवतांगत्वेननसंकल्पआज्यसेवास्विष्टकृतेनावेधाति सावित्र्यादीनामंगत्वादि
तितदुक्तेः अत्रकारिकाः आज्यसंस्कारपर्यंतमुपलेपादिपूर्ववत् आज्येनदधिसक्तूनां त्रिःपर्यग्निकरणंभ
वेत् उत्पूतसातमाज्यंचेत्तेषांत्रिः प्रोक्षणंभवेत् इत्थमभिघारणांतंस्यादाज्यस्योद्वासनादिकं अन्वारं
भोधुनाशिष्यैः स्वयमेवनसंतिचेत् प्रकुर्वीताज्यभागांतामिध्माधानादिपूर्ववत् इहाज्यभागौतत्रस्तरुतथैवो
त्सर्जनेपितौ हुत्वाज्यंनवभिर्मंत्रैःसावित्र्याद्यैरतः परं हुत्वाचदानधर्मेणतान्सक्तून्दधिसंयुतान् हुत्वाग्नि

मीलइत्याद्यैर्मंत्रैर्विंशतिभि. क्रमात् शाकलानांसमानीवइत्यृचांत्या. ऊँतीभवेत् बाष्कलानांतुतच्छंयोरित्यृचांत्या ऊँतीभवेत् योनः स्वतिमंत्रेद् वब्रह्मतेदेवताइतिससदाप: देवानांब्रह्मणश्चदेवतात्वमितितुयुक्तं अस्या ऋचोदेवाब्रह्मचदेवेतिभाष्यकृताभिधानात् ब्रह्ममंत्रः समेश्चांतरंशराणांनिवारककर्मविद्यतइति व्याख्या नदशायामपिभाष्यकृतैववर्मणोब्रह्मतवगुणाभिधेयित्वेनस्वातंत्र्यनिराकरणाच्च एवचऋष्यादिस्मरणकाले पिदेव ब्रह्मएयनुष्टुवित्येवपातितुमुचितं त्यागश्चदेवब्रह्मणइदमितिपंचावत्तिसर्वेह्विरवदाय तथैवदधिसक्तून् सकृद्द्विर्वा वदायाद्विरभिघारयेद्वात्तिकृन्मते जयतमतेतुनाज्यावदानं ततोस्यावशेषः कारिकायां अथस्विष्टकृतंहुत्वा दधिसक्तुभिरेवच दधिसक्तून्स्वयंशिष्यान्प्राश्याचम्यततःपर परिस्तरणदर्भैस्तैरंतर्दधातिवांजलीन् अ न्येनसेचयित्वापस्ताभिः कुर्वीतमार्जनामिति वेदारंभकारिकाः पश्चादग्रेषुदर्भेषुप्रागग्रेषूपविश्यच आ पिच्याप: शरावादौ दर्भांस्तत्रनिधायच प्रागग्रदर्भगर्भांस्तेकुर्युर्ब्रह्मांजलीनथ सव्याहृतिंवदंत्युच्चैः सा वित्रींब्रह्मयज्ञवत् त्रिरभ्यसेत्पुरोंकारव्याहृतीश्चात्रकर्माणि अग्निमीलेइदेसूक्तमनुवाक्यंयथाविधिः प्रारभे रन्नचंवापित्वध्याप्याद्वाचयेद्गुरुः प्रायश्चित्तादिसकलंहोमशेषंसमापयेदिति उत्सर्जनस्नाने याः कारिकाः अथतीरमयागत्वातिवगाह्य ततोजलं सावित्र्याद्यास्तथाग्न्याद्यादेवतास्तर्पयंतिच सावित्रींतर्पयाम्य भितर्पयामीतितर्पयेत् जपंस्तत्वाग्निमीत्यादिमंत्रैस्तर्पणमब्रवीत् ब्रह्मयज्ञांगभुक्तंयत्तर्पणंस्यादिहापिचेति अवगाह्येत्यनेन भस्मगोमयमृत्स्नानानि शास्त्रांतरसिद्धानिविहितानीतिशिष्टव्यवहारः अतएवविवाहादू र्ध्वंकालेप्रसिद्धस्यापिडनमृदास्नानंनकुर्यात् तिलतर्पणमित्यादिनिषेधस्यनात्रप्रवृत्ति· नचात्रनदीनारजोदोषं प्रसक्तिः उपाकर्मणिचोत्सर्गेरजोदोषोनविद्यतइतिगार्ग्यवचन तु वेदा·छंदांसिसर्वाणिब्रह्माद्याश्चादिवौकसः

जलाधिंनोथपितरोमरीच्याद्यामहर्षयः उपाकर्मणिचोत्सर्गेस्नानार्थंब्रह्मवादिनः पिपासवोनुगच्छंतिसंहृष्टाः स्वशरीरिणः समागमस्तुयत्रैषांतत्रहत्यामलानिच नूनंसर्वंक्षयंयांतिकिमुनैकंनदीरजः इतिछंदोगपरिशिष्टा च्च उत्सर्गानंतरमपिपूजातर्पणेकार्ये उपाकर्मणिचोत्सर्गेयथाकालंसमेत्यच ऋषीन्दर्भमयान्कृत्वापूजयेत्तर्पये त्तन इति स्मृतिचंद्रिकोदाहृतवचनात् तत्रत्यजलोपस्पर्शनपानाभ्यामाभ्युदयप्राप्तिः ऋषीणांसिच्यमाना नामंतरालंसमाप्तितः संविवेद्यः शरीरेण स्पृशन्मुक्तजलच्छटः विद्यादीन्ब्राह्मणःकामान्वरादीन्कन्यकास्तथा आमुष्मिकान्यपिमुखान्याप्नुयात्सनसंशयइति छंदोगपरिशिष्टात् ततः प्रकृतदेवतातर्पण ब्रह्मयज्ञांगतर्पणंस्वपि त्रादितर्पणंचकार्यं ततोयमतर्पणं कुर्यादितिशिष्टाः वाष्कलानांतुनच्छंयोशयुर्विश्वेदेवाःशक्करीउऊत्तछंयोदेस्वाहा विश्वेभ्योदेवेभ्यइदं इत्युपाकर्मोत्सर्जनप्रयोगः अत्रैवप्रसंगादुत्सर्जनकालोनिर्णीयते तत्रयाज्ञवल्क्यःपौषमासस्य रोहिण्यामष्टकायामथापिवा जलांतेछंदसांकुर्यादुत्सर्गंविधिवद्बहिः पौषमासस्यरोहिण्यांकृष्णाष्टम्यांवाजलसनि धौ ग्रामाद्बहिर्वेदानामुत्सर्जनंकुर्यादित्यर्थः अनयोः पक्षयोः स्वस्वगृह्यानुसारेणव्यवस्था मनुः पुष्येतुछंदसांकु र्याद्बहिरुत्सर्जनंद्विजः माघशुक्लस्यवाप्राप्तेपूर्वाह्णेप्रथमेहानि व्यवस्थितश्चायंविकल्पः श्रावण्यांप्रौष्ठपद्यांवा प्युपाकृत्ययथाविधि युक्तश्छंदांस्यधीयीतमासान्विप्रोर्द्धपंचमानितितेनैवोक्तत्वात् तेनश्रावण्यांयदोपाकर्मतदापौ षशुक्लप्रतिपदिउत्सर्जनंकार्यं यदाप्रौष्ठपद्यांतदामाघशुक्लप्रतिपदिकार्यमित्यर्थः यत्तुहारीतः अर्धपंचममा सानधीत्योर्ध्वमुत्सृजेत् पंचार्द्धपक्षान्वातितदापाढ्यामुपाकर्मविपर्यं यत्तुकात्यायनः उपाकृत्योदगयनेततो धीयीतधर्मवत् उत्सर्गश्चैकएवपांतेपांप्रौष्ठपदोपिवेति अत्रप्रौष्ठपदांसिंहोपलक्षकं सिंहेरवावितिगार्ग्यवचनात् बोधायनस्तु पौष्यांमाघ्यांवाकुर्युः श्रावण्यांपौर्णमास्यामाषाढ्यांवोपाकृत्यपौष्यांमाघ्यां वोत्सृजेदिति

तत्सूत्रात् तैत्तिरीयास्तु तेषांकार्यपौष्यांपौर्णमास्यांरोहिण्यांवाविरमेदितितत्सूत्रात् बह्वृचैस्तु माघ्याकार्यं अ ध्यायोत्सर्जनंचाध्यायपौर्णमास्यांविधीयतइति कारिकोक्तेः मध्यमाष्टकायामिताभ्योन्नेनहुत्वाभ्यर्चयंति ए ताएवदेवतास्तर्पयति आचार्यानृषीन् पितॄंश्चेतदुत्सर्जनमित्याश्वलायनसूत्राच्च व्याख्यातंचैतद्वृत्तिकारे ण मध्यमाष्टकाग्रहणपञ्चमासांतलक्षणार्थंतेनतस्याःसमीपेमाघ्यांपौर्णमास्यामित्यर्थइति कातीयास्तुभाद्रपदेकुर्युः उत्सर्गश्चेत्तदातिष्यतिथ्यंतेप्रौष्ठपदेवेतिकात्यायनोक्तेः अत्रकातीयसूत्रं अर्धपंचमान्मासानधीत्योत्सृजेयुरर्धसप्त मान्वेति तथा पौषस्यरोहिण्यांमध्यमायांवाष्टकायांअध्यायानुत्सृजेयुरिति अत्रहरिहरः पौषेउत्सर्जन कर्तव्यतामभिधायाह ततस्त्रिरात्रानंतरंशुक्लपक्षेषुछंदांस्यधीयीरन् कृष्णपक्षेष्वंगानि ततःपुनरर्धषष्ठानर्ध सप्तमान्वाधीत्योर्ध्वमेवोत्सर्गंविधायत्रिरात्रमेकरात्रंव्यवस्थाययथेष्टविप्रतिषेधेन् ततः पुनरुपाकृत्यअध्ययनं यावदुत्सर्गमिति अनेनोत्सर्गद्वयं कातीयानां कर्तव्यमितिप्रतीयते अपरेतु एकस्यैवोत्सर्गस्य कालचतुष्टयं मन्यंते तेनोत्सर्गद्वयमिति अत्राद्वितीयमतमेव सूत्रस्वरसानुसारीतिप्रतीयते सामगास्तु सिंहार्केपुष्येकुर्युः सिंहेरवौत्वितिपूर्वोक्तगार्ग्यवचनात् सर्वैरुपाकर्मदिनेवाकार्यं पुष्येतदुत्सर्जनंकुर्यात् उपाकर्मदिनेथवेति हेमाद्रौ खादिरगृह्योक्तेः स्वाध्यायमधीत्येष्टमितिश्रुतेश्च यत्तुतिथ्यर्के इदानींतनैराश्वलायनैरप्ययमेवोत्सर्जन कालआद्रियते तत्रमूलंतजानइत्युक्तं तद्भ्रांतिविजृंभितं पुष्येतदुत्सर्जनंकुर्यादुपाकर्मदिनेऽथवेति स्वय मेवखादिरगृह्यस्यमूलत्वेनोक्तत्वात् नचगृह्यसूत्राणां तत्तच्छाखीयात्मत्वेनव्यवस्थितप्रामाण्यकत्वमितिवाच्यं अविरोधिनात्वेकत्वेनपरशाखीयस्यापिग्राह्यत्वात् यदासिंहस्थेसूर्येसतितन्मध्यस्थहस्तनक्षत्रात्प्राक्पुष्यः क र्कस्थोभवति तदा तस्मिन्पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्तेउपाकर्मसामगाः कुर्युः मासिप्रौष्ठपदेहस्तात्पुष्यः

पूर्वोभवेद्यदा तदातुश्रवणेकुर्यादुत्सर्गंछंदसांद्विजइतितत्परिशिष्टोक्तेः अत्रप्रौष्ठपद श्रावणशब्दौमीनादिसौरमासाभिप्रायेणछंदोगानामुत्सर्जनोपाकर्मणोः सौरमासएवविधानात् एतच्चकर्मद्वयंप्रत्यब्दंकार्यंतदुक्तंहेमाद्रौ कात्यायनेन प्रत्यब्दंकरणकर्मगोत्सर्गोविधिवद्द्विजैः क्रियतेछंदसांतेनपुनराप्यायनंभवेत् अयातयामैश्छंदोभिर्यत्कर्मक्रियतेद्विजैः क्रीडमानैरपिसदातत्तेषांसिद्धिकारकमिति अत्रद्विजैरितित्रयाणामाश्रमिणामवर्णानामधिकारसिद्धिः यत्तु मासान्विप्रोर्धपचमानित्युदाहृतशास्त्रे विप्रग्रहणात् ब्राह्मणस्यैवसतोऽधिकारः क्षत्रियवैश्ययोस्तदन्वारंभमात्रमेवेतिज्ञापनार्थं अध्येष्यमाणोध्यायैरन्वारब्धइत्याश्वलायनसूत्रेअध्यापकपरेणाध्येष्यमाणपदेनअध्यापनाधिकृतब्राह्मणस्यैवस्वतंत्राधिकारप्रतीतिरिति उत्सर्जनोत्तरंकार्यं मनुराह अतऊर्ध्वंतुछंदांसि शुक्लेषुनियतः पठेत् कारिकायांतुविशेषः अतआरभ्यषण्मासान्षडंगानित्वधीयते शुक्लेवेदमधीयीतकृष्णेंगानीतिकेचनेति अत्रनदीनांदोषोनास्तीत्याह वसिष्ठः उपाकर्मणिचोत्सर्गेप्रेतस्नानेतथैवच चंद्रसूर्यग्रहेचैवरजोदोषोनविद्यतइति गार्ग्योपि उपाकर्मणिचोत्सर्गेरजोदोषोनविद्यत इति उपाकर्मोत्सर्गानंतरं त्रिरात्रंपक्षिणीमहोरात्रंवाअध्ययनंनकार्यं तदुक्तं निर्णयसिंधौ मिताक्षरायां उपाकर्मण्युत्सर्गेचत्रिरात्रंपक्षिणीमहोरात्रंवानध्यायइति एतच्चकर्मद्वयमध्येष्यमाणोध्यायैरन्वारब्धइतिसूत्रात्माशिष्यते तदधिकारिकस्यकर्मणआचार्याग्नौनान्यस्याग्नावन्यांजुहुयादितिनिषेधात् कर्मद्वयमिदं केचिल्लौकिकाग्नौप्रकुर्वंत इतिकारिकोक्तेश्च लौकिकाग्नावेवकर्तव्यं तदभावेतु अध्यायोपाकृतिंकुर्यात्तत्रोपासनवह्निनेतिवचनात् स्मार्तइतिगर्गः इत्युत्सर्जनम् अस्यामेवआश्वलायनैःश्रवणाकर्मकार्यं श्रावण्यांपौर्णमास्यांश्रवणाकर्मेति सूत्रात् सामवेदिनामप्यत्रैव --श्रवणाकर्मसर्पबलिश्च अथातः श्रवणाकर्मपौर्णमास्यामित्यादिना श्र

वणाकर्मविधायअहरहस्तूष्णींवालिंहरेत् सायंप्राग्घोमादाग्रहायण्याइतितदीयगृह्यसूत्रात् अत्रपौर्णमासी
मामान्तोस्तावपिग्रंथांतरवशेनपूर्णमासीविशेषेतदुपसंहारसंभवः कातीयसूत्रेऽपि अथातः श्रवणाकर्मश्रावण्यांपौ
र्णमास्यांश्रवणकर्मोक्तातदंतेसर्पबलिरप्युक्तः अस्यामेवरात्रौतैत्तिरीयकैः स्थालीपाकः कार्यः श्रावण्यां पौर्ण
मास्यांस्थालीपाकइतिसूत्रात् अस्मिन्कर्मद्वये प्रदोषव्यापिनीपौर्णमासी ग्राह्या अस्तमितेस्थालीपाकंश्र
पयित्वेति अस्तमयकालविधानात् कर्मणोयस्ययःकालइतिवचनात् पौर्णमासीशब्दस्य पर्वान्यक्षण
वचनत्वात्पर्वसंधिदिवसे रात्रौ श्रवणाकर्मानुष्ठानं वदंति अस्यचश्रवणाकर्मणोमुख्यकालेदैवाद्करणेलोपः
मुख्यकालेऽपि सकृदेवकरणमितिकेचित् यथोक्तमेततुल्यन्यायाष्टकाप्रकरणकर्केणसकृत्करणंचाभ्यासश्रवणा
दिति अन्येत्वादशपाकयज्ञानां प्रत्यब्दमावृत्तिमन्यंते उक्तंहि रेणुकाकारिकायां अथातः श्रवणाकर्म
शास्त्रदृष्टामयोच्यते श्रावण्यामेवतत्कार्यमभावाद्गौणकालतः वचनात्सूत्रकारस्यसकृदस्यक्रियाभवे
त् एवमेवेतरेषांस्यादावृत्तिर्वास्मृतेर्बलात् सकृत्करणमिच्छंतिपाकयज्ञेचकेचन आवृत्तिंकेचिदिच्छंतिनन्ना
वृत्तिः सतांमतेति अस्यामेवहयग्रीवपूजोक्ताकल्पतरौ ब्राह्मे श्रावण्यांश्रवणेजातः पूर्वंहयशिराहरिः
जगादसामवेदंतुसर्वकल्मषनाशनं सिंधुनदीवितस्तायांप्रविष्टातत्रचैवहि अतोत्रश्रवणेतत्रस्नानसर्वार्थसिद्धिदं
तत्रसंगमे कृत्वासंपूजयेद्विष्णुशंखचक्रगदाधरं श्रोतव्यान्यथसामानिपूज्याविप्राश्चसर्वदा क्रीडितव्यंच
भोक्तव्यंतत्रैवस्वजनैः सह जलक्रीडातुकर्तव्यानारीभिर्भर्तृलब्धयइति अत्रसर्वदेवानांपवित्रारोपणमुक्तं नि
र्णयामृते मत्स्यपुराणे आषाढ्यामथचाष्टम्यांचतुर्दश्यामुमापतिं पवित्रैरर्चयेद्भाद्र्यांश्रावण्यांचेतरान्सुरानि
ति अस्यामेवपौर्णमास्यांदेवीपुराणोक्तंजयाव्रतं हेमाद्रौ अगस्त्यउवाच ब्रह्मणायोविधिः शक्रकथितोविज

याग्रहः जयेतिपूर्णिमातातश्रावणस्यशुभावहेत्यादि अत्रयवांकुरादियुक्तायां वेद्यां देवींसंस्थाप्यरोचनाचंदनगं
धेरुपलिप्य पुष्पादिभिः संपूज्य यवगोधूममुद्गशालिपष्टिकाढकीतिलमाषादीन् विल्वादीनि फलानि
चनिवेदयेत् इतिजयापूर्णिमाव्रतम् अत्रजलधेनुदानमुक्तम् विष्णुः श्रावण्यां श्रवणयुतायां जलधेनुं सा
लंकारांवस्त्रयुगाच्छादितांदत्वास्वर्गलोकमवाप्नोतीति विष्णुधर्मोत्तरे श्रावण्यांशुक्लपक्षेतुद्वादश्यांप्रीतयेनृप गो
प्रदानेनदेवेशोयःपूर्वंलिखितंतव कृतोपवासःसंप्राश्यपंचगव्यंनरेश्वर घृतक्षीराभिषेकंचकृत्वाविष्णोः स
माहितः समभ्यर्च्यचगोविंदंपुष्पादिभिररिंदम उदङ्मुखींपूजयित्वातथागृष्टिंपयस्विनीं सपुत्रांवस्त्रसंवी
तांसितयज्ञोपवीतिनीं स्वर्णशृंगींशुभाकारांहिरण्योपरिसंस्थितां हिरण्यंवाचयित्वाग्रेब्राह्मणायोपपादयेत् इमां
त्वंप्रतिगृह्णीष्वगोविंदःप्रीयतामिति सम्यगुच्चार्यतंविप्रंगोविंदंनृपकल्पयेत् अनुव्रजेच्चगांविप्रपदान्यष्टौनराधिप
अनेनविधिनाधेनुंविप्राययः प्रयच्छति गोविंदप्रीणनाद्राजन्विष्णुलोकंसगच्छति सप्तावरांस्तथापूर्वान्सप्त
स्मानचमानवः सप्तजन्मकृतात्पापान्मोचयेदवनीपते पदेपदेतुयज्ञस्यगोसवस्यतुमानवः फलंप्राप्नोतिराजेंद्र
दक्षायैवंजगौहरिः सर्वकामफलासास्यात्सर्वकालेपुपार्थिव भवत्यघौघापहरायावदिंद्राश्चतुर्दश सर्वेषाम
पिपापानांकृतानामविजानता प्रायश्चित्तमिदंप्रोक्तमनुतापोपबृंहितं गृष्टिरेकवारप्रसूतागौः इमांत्वंप्रतिगृ
ह्णीष्वेत्यस्यसमुच्चार्येत्यन्वयः तंविप्रंगोविंदंकल्पयेत् गोविंदरूपतयाचिंतयेत् दत्वाचगोविंदः प्रीयत
मितिविप्रंवाचयित्वा तस्मैब्राह्मणायहिरण्यमुपपादयेत् दद्यादित्यर्थः पदेपदेइत्यादिनाअनुव्रजनफलोदनं हि
रण्योपरिसंस्थितां हिरण्यार्पितखुरचतुष्टयामित्यर्थः जलधेनुदानेविशेषो विष्णुधर्मोत्तरे जलकुंभंनरव्याघ्र
सुवर्णरजतान्वितं सुवर्णरजतशृंगखुरान्वितमितिसांप्रदायिकाः रत्नगर्भमशेषैस्तुग्राम्यैर्धान्यैःसमन्वित सि

ाववस्त्रयुगच्छन्नंदूर्वापल्लवशोभितं कुष्ठमांसीमुरोशीरबालकामलकैर्युतं प्रियंगुपत्रसहितंसितवस्त्रोपवीतिनि
सच्छत्रसदुपानत्कंदर्भविष्टरसंस्थितं चतुर्भिः संभृतंभूपतिलपात्रैश्चतुर्दिशं स्थगितंदधिपात्रेणघृतक्षौद्रवता
मुखे तिलपात्राणिताम्रस्य दधिपात्रं कांस्यस्येतिदानविवेके उपोषितःसमभ्यर्च्यवासुदेवंजलेशयं पुष्प
धूपोपहारैस्तुयथाविभवमादृतः संकल्प्यजलधेनुंचकुंभंतमभिपूज्यच पूजयेद्वत्सकंतद्वत्कृतंजलमयंबुधः एव
संपूज्यगोविंदंजलधेनुसवत्सकां सितवस्त्रधरः शांतोवीतरागोविमत्सरः दद्याद्द्विजायराजेंद्रप्रीत्यर्थंजलशायिनः
जलशायीजगद्योनिः प्रीयतांममकेशवः इतिचोच्चार्यभूनाथविप्रायप्रतिपादयतां अपक्वान्नाशिनास्थेयमहो
रात्रमतः परं तथाधान्यानि पार्श्वद्वये कुष्ठादीनि घ्राणदेशे प्रियंगुपत्रंश्रवणे यज्ञोपवीतंमूर्ध्निअथार्पयेत्वत्स
श्चतुर्थांशेनैव दक्षिणाशक्तितः सुवर्णेन अनेनविधिनादत्वाजलधेनुंनराधिप सर्वान्कामानवाप्नोतिसर्वदाभ
क्तिमान्नरइति अथश्रावण्यांवायुपुराणदान् नारदीये संहितेयंमहापुण्याशंकरस्यमहात्मनः नर्मदाचरितंय
त्रवायुनापरिकीर्तितं लिखित्वेदंपुराणंतुगुडधेनुसमन्वितं श्रावण्यांयोददेद्भक्त्याब्राह्मणायकुटुंबिने रुद्रलोकेवसे
न्नित्ययावदिंद्राश्चतुर्दशेति अथगुडधेनुः मात्स्ये उत्तमागुडधेनुः स्यात्सदाभारचतुष्टयं वत्संभारेणकु
र्वीतभाराभ्यांमध्यमास्मृता अर्धभारेणवत्सः स्यात्कनिष्ठाभारकेणतु चतुर्थांशेनवत्सः स्याद्गृहवित्तानुसारतः
भारः पलसहस्रमिति धेनुवत्सौवृतास्यौतुसितसूक्ष्मांबरावृतौ शुक्तिकर्णाविक्षुपादौशुक्तिमुक्ताफलेक्षणौ
सितसूत्रशिरालौतुसितकंबलकंबलौ ताम्रगंडकपृष्ठौतुसितचामररोमकौ गंडकः ककुत्प्रदेशः विद्रुमाक्षयु
गोपेतौनवनीतस्तनान्वितौ क्षौमपुच्छौकांस्यदोहाविंद्रनीलकतारकौ सुवर्णशृंगाभरणौराजतैः खुरसंयुतौ ना
नाफलमयैर्दंतैर्घ्राणगंधकरंडकौ इत्येवरचयित्वातांधूपदीपैरथार्चयेदिति इतिवायुपुराणसहितगुडधेनुदानविधि

अथमंगलागौरीव्रतोद्यापनपूजनाविधिः युधिष्ठिरउवाच उद्यापनविधिंब्रूहिव्रतराजस्यकेशव यतोनिरुद्यापन
कंव्रतंनिष्फलमुच्यते कृष्णउवाच वदामिव्रतराजस्यस्त्रीणांकर्त्तव्यमुत्तमम् श्रावणेमासिभौमेषुचतुर्षुव्रतमाच
रेत् प्रातरुत्थायसुस्नातासंकल्प्यव्रतमुत्तमं दीपंमहांतंप्रज्वाल्यमंगलांपूजयेच्छुचिः अथपूजाविधिः अद्ये
त्यादिदेशकालौसंकीर्त्य ममपुत्रपौत्रादिवृद्धयेऽवैधव्यायुरादिसकलसिद्धिद्वारा श्रीशिवमंगलागौरीप्रीत्यर्थंपंच
वर्षपर्यंतश्रीमंगलागौरीव्रतमहंकरिष्ये प्रथमेवत्सरेमातुर्गेहेकर्त्तव्यमेवच ततोभर्तृगृहेकार्यमवश्यंस्त्रीभिरादरात्
पंचमेवत्सरेप्राप्तेकुर्यादुद्यापनंशुभम् आचार्यंवरयेत्तत्रवेदवेदांगपारगं श्रावणेमासिभौमेषुह्युद्यापनविधिंचरे
त् प्रातरुत्थायसुस्नातासंकल्प्यव्रतमुत्तमं चतुस्तंभंचतुर्द्वारंकदलीस्तंभमंडितं घंटिकाचामरयुतंकमलैरु
पशोभितं मध्येवितानंबध्नीयात्पंचवर्णैरलंकृतं तन्मध्येस्थापयेत्पीठंदृषदंउपलंतथा रौप्येणकारयेत्पीठंदृ
ढः काचननिर्मितः रौप्यहेम्नोरभावेतुपाषाणस्याविधीयते पीठोपरिन्यसेद्देवींततोग्रेदृषदंतथा तस्याग्रेलि
गतोभद्रंलिखेद्रंगैश्चपंचभिः हरिद्रापिष्टककृत्वातन्मध्येऽष्टदलंलिखेत् तस्योपरिन्यसेद्व्रीहीन्द्रोणेनपरिसंमिता
न् सौवर्णंराजतंताम्रंकलशंविन्यसेद्बुधः पंचरत्नानिनिक्षिप्यसर्वौषधिसमन्वित तस्योपरिन्यसेत्पात्रंताम्रंवे
णवसंभवं उमामहेश्वरीमूर्तिंकाचनेनचनिर्मितां तस्योपरिन्यसेद्राजन्पूजयेच्छिवमंगलां महावैइतिमंत्रेणइ
तिमूर्त्तिंपीठोपरिस्थापयेत् तदस्तुमित्रावरुणेत्यृचावाहनमाचरेत् गोधूमोद्भवपिष्टेनकारयेद्दीपमुत्तमं कृत्वा
प्रज्वालितोदीपोघृतवर्त्तिसमन्वितःउपचारैः षोडशभिर्गंधपुष्पादिभिस्तथा पत्रैःपुष्पैः षोडशैश्चनानाजाति
समन्वितैः तंडुलैर्धान्यकैश्चैवस्वच्छैः षोडशसंज्ञकैः आपमार्गस्यपत्रैश्चदूर्वाधत्तूरसंज्ञकैः षोडशैर्दूर्वसंख्याकै
र्बिल्वपत्रैश्चपंचभिः नीराजनंततःकुर्याद्दीपैः षोडशसंख्यकैः अथपूजा कुंकुमागुरुलिप्तांगांसर्वाभरणभूषि

तां नीलकंठप्रियांगौरींवंदेहंमंगलाह्वयां ध्यानम् अत्रागच्छमहादेविसर्वलोकसुखप्रदे यावद्व्रतमहंकुर्वे पुत्रपौत्रादिवृद्धये आवाहनं रौप्येणचासनंदिव्यंरत्नमाणिक्यशोभितं मयानीतंगृहाणत्वंगौरिकामारिवल्लभे आसनम् गंधपुष्पाक्षतैर्युक्तंपाद्यंसंपादितंमया गृहाणमंगलेगौरिसर्वान्कामान्प्रपूरय पाद्यम् गंधपुष्पाक्षतैर्युक्तमर्घ्यंसंपादितंमया गृहाणपुत्रपौत्रादीन्प्रसन्नाभवसर्वदा अर्घ्यम् कामारिवल्लभेदेविकुर्वाचमनमंबिके निरंतरमहंवंदेचरणौतवपार्वति आचमनम् पयोदधिघृतंचैवमधुशर्करयासमं पंचामृतेनस्नपनात्प्रीयतांपरमेश्वरी पंचामृतस्नानम् जाह्नवीतोयमानीतंशुभंकर्पूरसंयुतं स्नपयामिसुरश्रेष्ठेत्वांपुत्रादिफलप्रद। स्नानम् आचमनम् वस्त्रंचसोमदैवत्यंलज्जायास्तुनिवारणं मयानिवेदितंभक्त्यागृहाणपरमेश्वरि वस्त्रम् कंचुकीमुपवस्त्रंचनानारत्नैः समन्वितं गृहाणत्वंमयादत्तंपार्वतीजगदीश्वरि कंचुकीवस्त्रम् कुंकुमागुरुकर्पूरंचदनंकस्तुरींतथा. विलेपनंमहादेविगंधंदास्यामिभक्तितः गंधम् रंजिताःकुंकुमौघेनअक्षताश्चातिशोभनाः ममैषांदेविदानेनप्रसन्नाभवपार्वति अक्षताः समर्पयामि हरिद्रांकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्याणिसमर्पयामि सेवंतिकावकुलचंपकपाटलाब्जपुन्नागजातिकरवीररसालपुष्पैः विल्वप्रवालतुलसीदलमालतीभिस्त्वांपूजयामिजगदीश्वरिमेप्रसीद पुष्पाणि अपामार्गस्यपत्रैश्चदूर्वाधत्तूरसंज्ञकैः षोडशैर्दूर्वसंख्याकैर्विल्वपत्रादिपंचाभिः पत्रपूजा अथांगपूजा उमायैनमः पादौपूजयामि गौर्यैनमः जंघेपू० पार्वत्यैजानुनीपू० जगद्धात्र्यैऊरूपू० जगत्प्रतिष्ठायै कटिंपू० शांतिरूपिण्यै० नाभिंपू. देव्यैनमः उदरंपू. लोकवंद्यायै. स्तनौपू. काल्यैन. कंठंपू. शिवायैन. मुखंपू. भवान्यैनः नेत्रेपू. रुद्राण्यैकर्णौपू. महादेव्यै. ललाटं. मंगलदात्र्यै० शिरः

पृ० पुत्रदायिन्यैनमः सर्वांगंपूजयामि देवद्रुमरसोद्भूतःकृष्णागुरुसमन्वितः आघ्रेयः सर्वदेवानांधूपोयं प्रतिगृह्यतां धूपं त्वंज्योतिः सर्वदेवानां तेजसातेजउत्तमं आत्मज्योतिः परंधामदीपोयंप्रतिगृह्यतां दीपं०अन्नचतुर्विधंस्वादुरसैः षड्भिः समन्वितं भक्ष्यभोज्यसमायुक्तनैवेद्यप्रतिगृह्यतां नैवेद्यम् आचम नीय०करोद्वर्तन० फलं- तांबूलं. दक्षिणां. वज्रमाणिक्यवैदूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तंभूषणं प्रतिगृह्यता भूषणानि- नीराजनम् नमोदेव्यैपुष्पांजलिं प्रदक्षिणा. नमस्कारः पुत्रान्देहिधनंदे हिसौभाग्यदेहिमगले अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते इतिप्रार्थना ततोवैणवपात्रेतुसौभाग्यद्र व्यमाक्षिपेत् अन्नंकंचुकिसंयुक्तंसवस्त्र फलदक्षिणं वायनंगौरिविप्रायददामिप्रतियेतव सौभाग्यारोग्यकां मानांसर्वसंपत्समृद्धये गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं इतिमंत्राभ्यांवायनं ताम्येवावैणवेपात्रेसौभा ग्यद्रव्यमाक्षिपेत् लड्डुकंचुकिसंयुक्तंसवस्त्रफलदक्षिणं मात्रेसुवासिनीभ्यश्चदेयंवायनमुत्तमं जननींमातृस वंधिस्त्रियः षोडशभोजयेत् नीराजनंततः कुर्याद्दीपैः षोडशसंख्यकैः भोक्तव्याःपूपिकाश्चाथस्त्रीभिः सहस्वयंततः अन्नलवणवर्जंतुमौनेनभोजयेत्स्वयं सुवासिनीश्चापितथावस्त्रालंकारभूषणैः पूजयेच्चततः प श्चात्कुर्याद्गौरीविसर्जनं विप्रायप्रतिमादेयारत्नवस्त्रादिभूषिता एवंकृतेविधानेस्मिन्नार्यवैधव्यमाप्नुयात् इतिमंगलागौरीपूजोद्यापनविधिः अथकथा युधिष्ठिरउवाच नंदनंदनगोविंदशृण्वतोवहुलाः कथाः कथयो त्कृष्टपुत्रायुः करंममशुभंव्रतम् श्रीकृष्णउवाच अवैधव्यकरंवक्ष्येव्रतंचारिनिसूदन शृणुत्वंसावधानः स न्कथांवक्ष्येपुरातनीं कुंडिनंनामनगरंख्यातस्तत्राद्विजाप्रियः आसीद्वाणिग्धर्मपालोनाम्नाबहुधनोपिसः. सप त्नीकोह्यपुत्रोसौनास्तीतिव्याकुलोहृदि तस्यगेहेभस्मलिप्तोदेहरुद्राक्षधारकः जटिलोभिक्षुकोनित्यमागच्छत्

प्रियदर्शनः नस्वीकुर्वंस्तदन्नंसइतिदृष्ट्वाऽबलाऽवदत् स्वामिन्नयंसदायातिभिक्षुकोजटिलोगृहे नस्वीकरोत्यस्म
दन्नमितिदृष्ट्वाममाधिकं दुःखंप्रजायतेनित्यं श्रुत्वाभार्यावचोऽब्रवीत् धर्मपालउवाच प्रियेकदाचिद्गत्वा
त्वंससुवर्णांगणेभव यदाभिक्षार्थमायातिभिक्षोर्विस्रांतरेत्वया वदध्वातस्यप्रदेयानिसुवर्णानिप्रियेनघे अनंतरं
तस्यभार्याऽचीकरत्स्वामिनोदितम् जटिलेनतुसाशप्तापत्यंतेनभविष्यति श्रुत्वाभिक्षोरिदंवाक्यंदुःखि
तातमुवाचह स्वामिन्शप्तात्वयापापाच्छापादुद्धरसंप्रति इत्युक्त्वातस्यचरणौववंदेदीनभाषिणी जटिलउवा
च भर्तुः समीपेवक्तव्यंत्वयापुत्रिममाज्ञया नीलवस्त्रःसमारुह्य नीलाश्वंगच्छकाननं सखनंतत्रकर्त्तव्यं
यत्राश्वस्तेस्खलिष्यति रम्यंपक्षिभिरायुक्तंमृगसंघद्रुमाकुलं सुवर्णरचितंरत्नमाणिक्यादिविभूषितं नानापु
ष्पैः समायुक्तंद्रक्ष्यंदेवालयततः वर्त्ततेतत्रभवतीभवानीभक्तवत्सला आराधयत्वंमनसायथाविध्युद्धरिष्यति
त्वांभवानीतिवचनंश्रुत्वाभिक्षोः सुखप्रदं ववंदेतस्यचरणौपुनः पुनरुवाचह तदैवकालेजटिलस्त्वंतर्भूतो
बभूवसः साऽवदत्पतिमत्रैहिशृणुभिक्षूक्तमादरात् यथोक्तमवदद्वृत्तांतच्छ्रुत्वावाक्यमग्रहीत् नीलवस्त्रः स
मारुह्यनीलाश्वंप्रस्थितोवनं गच्छन्नानाविधान्वृक्षान्पार्थिपश्यन्भयाकुलः मृगान्सिंहान्ददर्शूकान्तथान्य,
नपिपक्षिणः ददर्शसौतडागंचबाहुल्येनाविराजितं रक्तनीलोत्पलैश्चक्रवाकद्वंद्वैश्चराजितं स्नानंचकारतत्रा
सौतर्पणाद्यपिभूरिशः पुनरश्वंसमारुह्यजगामगहनंवनं स्खलितंवाजिनंपश्यदश्वादुत्तीर्यएवच चखानपृ
थिवींतत्रयावद्देवालयगतः ददर्शचमहास्थूलंदेवालयमसौततः रत्नैर्मुक्ताफलैश्चैवमाणिक्यैश्चापिसर्वतः पू
जयामासजटिलवाक्यंस्मृत्वातिविस्मितः सुवर्णयुक्तवस्त्राणिचंदनान्यक्षताञ्छुभान् चंपकादीनिपुष्पाणिधूप
दीपंविशेषतः नानापक्वान्नसंयुक्तंरसैः षड्भिः समन्वितं नानाशाकैःसमाक्रांतं सदुग्धघृतशर्करं

नैवेद्यंकरशुद्धयर्थंचंदनंमलयाद्रिजं संपाद्यतुष्टहृदयः फलतांबूलदक्षिणाः जजापमंत्रान्गुप्तोसौसगुणध्यानपूर्वकं
देवीभक्तगृहादैत्यलोभयामाससादरं प्रसन्नावददत्रेयंपूजासंपादिताकथं येनसंपादितातस्मैददामिवरमद्भुतम् इति
श्रुत्वाधर्मपालोदेव्यग्रेप्रांजलिःस्थितः भगवत्युवाच धर्मपालत्वयासम्यक्पूजासंपादितानघ वरंयाचयमत्कृददा
मिवहुलंधनं धर्मपालउवाचवहुलाधनसंपत्तिर्वर्तितेत्वत्प्रसादतः अपत्यंप्राप्तुमिच्छामिपितॄणांतारकंशुभं आयातिभि
क्षुकोगेहेगृह्णातिनगदन्नकं तेनमेवहुलंदुःखंसभार्यस्योपजायते इतिदीनवचःश्रुत्वादेवीवचनमब्रवीत् देव्युवाच
धर्मपालकृतेऽदृष्टेऽपत्यंनास्तिसुखप्रदं तथापिकिंयाचयसिकन्यांविगतभर्तृकाम् पुत्रमल्पायुषंवाथाण्यंचदीर्घायुषं
सुतं धर्मपालउवाच पुत्रमल्पायुषंदेहितावताकृत्यकृत्यता प्राप्नोमिचोद्धरिष्यामिपितरोममघोरगाः देव्युवाच
मत्पार्श्वेवर्त्तमानस्यनाभावारुह्यशुंडिनः तत्पार्श्ववर्त्तिचूतस्यगृहीत्वाफलमद्भुतं पत्न्यैदेयंततःपुत्रोभाविष्यातिन
संशयः इतिदेवीवचः श्रुत्वागत्वातत्पार्श्वएवच नाभिंगजमुखस्याथारुह्यजग्राहमोहतः फलान्युत्तार्यचततः फ
लमेकंददर्शसः एवंपुनः पुनः कुर्वन्फलमेकंददर्शसः क्षुब्धोगणपतिश्चाथधर्मपालायशप्तवान् षोडशेवत्सरे
प्राप्तेसर्पः पुत्रंदशिष्यति धर्मपालःफलंसम्यक् वस्त्रेवद्ध्वाऽगमद्गृहं फलंपत्न्यैददौसापिभक्षयित्वापतिव्र
ता गर्भंसाधारयामासपत्यासहसुसंगता संपूर्णेनवमेमासेप्रासूतसुतमुत्तमं जातकर्मचकारास्यपितासंतुष्ट
मानसः षष्ठीपूजांचकारास्यषष्ठेतुदिवसेततः द्वादशेऽहनिसंप्राप्तेशिवनाम्नाजुहावतं षष्ठेमासिचकारासावन्न
प्राशनमद्भुतं तृतीयेवत्सरेचूडामष्टमेब्देह्यनुत्तमं कृत्वोपनयनंपार्थविप्रोभूत्तुष्टमानसः दशमेवत्सरेप्राप्तेऽब्रवी
द्भार्यापतिव्रता भार्योवाच बालकस्यविवाहोऽपिकर्त्तव्यः सुमुहूर्तके धर्मपालउवाच मयासंकल्पितंकाश्यांग
मनंबालकस्यतत् कृत्वासमायातुततोविवाहोऽस्याभविष्यति पुत्रोसौप्रेषितस्तेनश्यालकेनसमन्वितः वार

एस्य प्रास्थितौसौगृहीत्वाबहुलधनं कुर्वतौपथिसद्मैप्रतिष्ठापुरमापतुः क्रीडंत्यः कन्यकादृष्टास्तत्रदेशेमनोरमे
तासांसमाजेगौरांगीसुशीलानामकन्यका तयासहसखीकाचिच्चकारकलहंभृशं गालनंचददौतस्यैरंडऽभा
ग्येमुहुर्मुहुः सुशीलोवाच सखित्वयागालनंमेव्यर्थंदत्तंशुभानने जनन्याममानवल्याश्चास्तिगौरीव्रतंशुभं व्रत
स्यप्रसादात्सकलाः संबंधिन्योऽपियाःस्त्रियः आजन्माविधवाजाताः किंपुनः कन्यकाध्रुवं वक्ष्येत
स्यप्रभावंकिंन्नतराजस्यभामिनि पूजनेधूपदीपोऽयंयत्रतत्रसुखंभवेत् इतिश्रुत्वाततोवाक्यंविस्मयोत्फुल्ल
लोचनः मातुलश्चिंतयामासबालकस्याप्रियंततः शतंजीवीभवेदेषएतद्धस्ताक्षरायदि पतंत्वमुष्यशिरसि
इतिभाव्यपुनःपुनः सुशीलामेवपश्यन्सविस्मयोत्फुल्ललोचनः सुशीलाप्रास्थितागेहेतदनुप्रास्थितावुभौ
स्वगृहंप्रापगौरांगीनिकटेतद्गृहस्यतौ तडागेरम्यदेशेचवासंचक्रतुरादरात् विवाहकालेसंप्राप्तेसुशीलाजनको
हरिः विवाहोद्योगवान्जातोविचचारहरंवरं असमर्थंहरंदृष्ट्वातन्मातापितरावुभौ ययाचतुःशिवंबद्धांज
लीविनययुक्तकौ वरापितरावूचतुः उपस्थितोविवाहोनौपुत्रस्यशुभयाहरेः सुशीलयाकन्ययायमसमर्थश्च
दृश्यते अतोदेयःशिवः श्रीमान्लग्नकालेत्वयाविभो लग्नंभविष्यतिततोदेयोस्माभिःशिवस्तव मातुलउवाच अत्र
श्येलग्नकालेऽसौशिवोग्राह्यःप्रियंवदः ततोमुहूर्तेसंप्राप्तेविवाहमकरोच्छिवः तत्रैवशयनंचक्रेससुशीलः प्रि
यंवदः स्वप्नेसामंगलागौरीमातृरूपेणभास्वता सुशीलामवदत्साध्वीहितंवचनमेवच गौर्युवाच सुशीलेतव
गौरांगिभर्तुर्दंशार्थमागतः महान्भुजगउत्तिष्ठदुग्धंस्थापयतत्पुरः घटंचस्थापयाशुत्वंतन्मध्येसगमिष्यति स्व
वस्त्रमंगान्निष्कास्यबंधनीयस्त्वयाघटः प्रातरुत्थायदेहित्वमात्रेवायनकंशुभं इतिगौरीवचःश्रुत्वा सुशीला
क्षणमुत्थिता ददर्शाग्रेनिःश्वसंतंकृष्णसर्पंमहाभयं ततश्चकारगौर्युक्तंप्रवृत्तानिद्रितुततः उवाचवरआसन्नः

क्षुल्लक्षामहतेमम भक्षणायाशुदेहित्वलड्डुकादिकमुत्तमं ॥ श्रुत्वेतिवाक्यपत्न्येसाददौलड्डुकमुत्तमं भक्षयित्वाशि
वंहंनेतस्मिन्पात्रेंगुलीयकं दत्वातत्स्थापयामासस्थलेगुप्तेशुभाननाः सुखेनशयनंचक्रेदृष्टिन्यासवकोविदः ततः
प्रभातसमयेशिवश्रागाद्गृहंस्वकं स्नानशुद्धासुशीलासामात्रेवायनकंददौ मातादर्शतन्मध्येमुक्ताहारमनुत्तमं
ददौप्रियायेकन्यायैसहसातुष्टमानसा क्रीडाकालेसुसंप्राप्तेहरश्रागात्तुमडपे श्रादेशयत्सुशीलातांक्रीडार्थं
जननीततः सुशीलोवाच नायंवरोमेजनानियेनपाणिग्रहः कृतः श्रनेनसहमनसाक्रीडनेच्छातथानमे इ
तिश्रुत्वासमाक्रांतौचिंतयापितरौततः श्रन्नदानमुपायंचाविचेरतुरितिद्रुतं तदारभ्यचक्रतुस्तौपुराणोक्तविधानत
सुशीलापादयोश्चक्रेक्षालनंमुद्रिकान्विता जलधारांददौमाताचंदनंपुत्रकोहरेः हरिर्ददौचतांबूलंबुभुजुस्तत्रमा:
नवाः इतिरीत्यान्नदानंतत्प्रवृत्तंभिक्षुसौख्यदं तावुभौप्रास्थितौकाश्यांप्राप्तौकाशींसुखप्रदां निर्मलांभासिगं
गायाः स्नानंचक्रतुरादरात् स्वर्गद्वारंप्रास्थितौतौकुर्वतौधर्ममुत्तमम् पीतांबराणिददतुर्भिक्षुकाणांगृहेगृहेश्राशि
षश्चददुस्तस्मैचिरंजीवोभवेतिच विश्वेश्वरंसमायातौनत्वास्तुत्वापुनःपुनः स्वयंगृहप्रस्थितौतौशिवोमार्गेद्रुतंवदन्
शिवउवाच कायेमेकिंचिदस्वास्थ्यंमातुलप्रतिभातिहि ततः प्राणोत्क्रमेतस्ययमदूताउपस्थिताः मंगलागौरिकाचा
पितेषांयुद्धमभून्महत् जित्वातान्मंगलाप्राणान्ददौतस्मैशिवायच शिवोऽकस्मादुत्थितोसौमातुलंप्रत्युवाचह स्वप्ने
युद्धंमयादृष्टंमंगलायमभृत्ययोः जितास्तेमंगलागौर्याततोहंशयनच्युतः मातुलउवाच यज्जातंशिवतज्जातंनस्मर्तं
व्यंत्वयापुनः गच्छावश्रावांनगरेपितरौद्रष्टुमुत्सुकौ प्रास्थितौतौततस्तस्मात्प्रतिष्ठपुरमापतुः रम्येतडागेतत्रैतौ
पाकं रंभाविचक्रतुः दृष्टौतौहरिदासीभिर्धैर्यौदार्यधरौशुभौ दास्यऊचुः श्रन्नदानहरेर्गेहेप्रवृत्तंतत्रगम्यतां उभावूचतुः
भोदास्योपात्रिकाचावांगच्छावोनकचिद्गृहे इतिश्रुत्वातयोर्वाक्यंदास्योजग्मुःस्वकंगृहम्

स्वस्वामिनिकटेवाक्यमवदन्सादरंतदा सचदासीवचः श्रुत्वातदर्थंप्रभुरादरात् प्रेषयामासहस्त्यादिरत्नवस्त्राणि भूरिश.तंदृष्ट्वाविस्मितौतावागच्छतश्चहरेर्गृहं हरिर्मातुलमभ्यर्च्यशिवंपूजितुमागतः क्षालयंतौचसाकन्याचरणौ तस्यसत्रपा अभूद्वरोयमितिचजननींप्रत्युवाचह हरिः पप्रच्छसाश्चर्य्याशिवंमंगलदर्शनं हरिरुवाच किंचिच्चिह्नं तवास्त्यत्रब्रूहिमेवरदर्शन शिवउवाच ममेदंचिह्नमस्तीहइत्युक्त्वागृहमागतः ततश्चानीयतत्पात्रंदर्शयामाससादरं तत्पात्रंचहरिर्दृष्ट्वाकन्यादानंचकारसः ददौरत्नानिवस्त्राणिसुवर्णानिबहून्यपि तामादायप्रस्थितौतौददातेवहु लंधनं श्रावणेमासिसंप्राप्तेव्रतंभौमेचकारसा भुक्त्वासर्वेप्रस्थितास्तेयोजनंजग्मुरुत्तमाः सुशीलोवाच गौरीविसर्जनं चापिदीयमानंकरिष्यते ततोगंतव्यमस्माभिःपितरौद्रष्टुमादरात् इत्युक्त्वाआगतास्तत्रगौर्याआवाहनंकृतं ददृशु स्तत्रसौवर्णंदेवालयमनुत्तमं गौरीविसर्जनंदीयमानंसाचव्यचीकरत् ततःसर्वेप्रस्थितास्तेपितरौद्रष्टुमुत्सुकाः कुंडि नासन्नदेशेतान्दृष्ट्वाविस्मयिनोजनाः अब्रुवंस्तेधर्मपालंसोत्कंठंप्रियदर्शनाः जनाऊचुः धर्मपालाद्यतेपुत्रस्स भार्यं श्यालकस्तथा समायातोवयंदृष्ट्वाअधुनैवसमागताः यावज्जनावदंस्तत्रतावत्सोपिसमागतः न मस्कारांश्चकारासौपितृभ्यांपितृवल्लभः मातुलोऽपिनतिंचक्रेभगिनीधर्मपालयोः सुशीलाश्वशुरायापिश्वश्रूंनत्वा स्थितातदा श्वश्रूरुवाच सुशीलेतद्व्रतंब्रूहियद्व्रतस्यप्रभावतः आयुर्वृद्धिःशिशोर्मेऽपिजाताकमललोचने सुशीलोवाच नजानेहंव्रतंश्वश्रजानेमानवतीहरौ श्वशुरंधर्मपालंचश्वश्रूंचभवतींतथा मंगलांदेवतांजानेवरंतु युवयोः सुतं इत्युक्त्वाचसुशीलासाबुभुजेस्वांतहर्षिता कृष्णउवाच तस्माद्व्रतमिदंधर्मस्त्रीभिः कार्यंसदैवतु युधिष्ठिरउ- फलमस्यश्रुतंकृष्णविधानंब्रूहिकेशव कृष्णउवाच श्रावणेमासिभौमेषुचतुर्ष्वव्रतमाचरेत् प्रातरुत्था यसुस्नातासंकल्प्यव्रतमुत्तमं उपचारैः षोडशभिः पूजयेन्मंगलांतथा नीराजनंततःकुर्य्याद्दीपैः षोड

रासंस्पया पात्रेसुवासिनीभ्यश्चदेयंवायनमुत्तमं भोक्तव्याःकन्यकाश्चापिअन्नलवणवर्जितं विसर्जनंमंगला
पादीयमानंततःक्रमात् पंचसंवत्सरेष्वेवंकर्त्तव्यंपतिमिच्छुभिः इतिश्रीभविष्योत्तरपुराणे मंगलागौरीव्रतोद्या.
पनंसंपूर्णम् स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीरित्यादि १ रणवीरसिंहभूपेशकारिते
कृत्यसागरे श्रभूच्छ्रावणकृत्यानांरम्योरत्नसमुच्चयः २ इतिश्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीर
सिंहमहाराजकारितकृत्यरत्नाकरेश्रावणमासकृत्यरत्नसमुच्चयः समाप्तः ॥
समाप्तोयं श्रावणमासः शुभमस्तुसर्वजगताम्

  

॥ श्रीरघुनाथमुद्रायंत्रालये ॥
लालाशिवरामल्लाधिकारे श्रावणमासोमुद्रितस्समाप्तिमगमत
संवत् १९४१ आश्विन प्र. २९

श्रीगणेशायनमः

अथभाद्रपदमासकृत्यानिर्णय॥ तत्रादौसिंहसंक्रमणे आद्याःषोडशनाडयःपुण्यकालःनारदीये याम्यायनस्थिरेत्वाद्याःपराःसौम्येद्विमूर्तिभे मध्याविषुवतिप्रोक्ताःपुण्यनाडयस्तुषोडशेति तथाचात्र ससुवर्णछत्रदानं हेमाद्रौदानखंडे विश्वामित्रःमेषसंक्रमणेभानोर्मेषदानंमहाफलमित्युपक्रम्य ससुवर्णछत्रदानंसिंहेपिविहितंतथा अत्रसिंहसंक्रांतौ कलियुगस्यांतःब्रह्मपुराणे सूर्यस्यसिंहसंक्रात्यामंतःकलियुगस्यतु अत्रश्राद्धादिकमक्षयफलदमिति युगाद्यिषुयुगांतेषुश्राद्धमक्षयमुच्यते तच्चापिंडादिकृत्येनिर्णीतं अथात्रसिंहसंक्रांतौ तुलसीव्रतं विंशतिदिनात्मकंप्रारभ्यं तथा चसिंहसंक्रांतिदिनमारभ्यदशदिनावधितुलसीमूले प्रत्यहंसूत्रप्रक्षेपः पुनर्दशमदिनेतदादायदशगुणंदशग्रथियुतंचकृत्वा पुमान्दक्षिणेनारीवामभुजेधृत्वा तच्चदशदिनावधितुलसीमंत्रेणसपूज्यएवंचांतेमोचयेत् कथायामुक्तदानविसर्जनादिकंकुर्यात् अत्रपूजामंत्रःतुलसिश्रीसखिशुभेपापहारिणिपुण्यदे नमस्तेनारदनुतेनारायणमनःप्रिये अथतुलसीकवचंस्कंदपुराणे तुलसीकवचस्यास्यऋषिर्विष्णुरुदीरितः छंदोनुष्टुप्समाख्यातंतुलसीदेवतेरिता धर्मार्थकाममोक्षार्थेविनियोगः तुलसीमेशिरःपातुमुखंचसुमुखीमम जिव्हांमेपातुसुमदाकंठंविद्यामयीममस्कंधौकल्हारिणीपातुभुजौमेपापहारिणी करौपद्मकरापातुहृदयंविष्णुवल्लभा पुण्यदामध्यमंपातुनाभिंसौभाग्यदायिनी कटिंकुंडलिनीपातुऊरूनारदपूजिता ज्वालिनीजानुनीपातुजंघेसकलवंदिता नारायणप्रियापादौसर्वांगंसर्वरक्षका संकटेविषमेदुर्गे भयेवादेमहाहवे निश्यन्हिसंध्ययोः पातुतुलसीसर्वतःसदा इतीदंपरमंगुह्यं तुलस्याः कवचामृतं तुलसीकाननेतिष्ठन्नासीनोवाजपेदिदं सर्वान्कामानवाप्नोतिविष्णुसायुज्यमाप्नुयात् इति स्कंदपुराणेतुलसीकवचं अथ तुलसीव्रतकथा भविष्योत्तरे श्रीकृष्णउवाच एकदादेवदेवेशोलक्ष्मीप्राण

सिंहराशिंदिवामणिः तदादशादिनंयावत्तुलसीमूलकेक्षिपेत् सूत्रंकार्पासिकशुद्धंगृह्णीयाद्दशमेदिने तत्सूत्रंदशधाकृत्वादशग्रंथिसमन्वितं पुंसातुदक्षिणेकार्य्यंनार्य्यावामेतथाभुजे यावद्दशाहंवध्नीयान्नतंवैपरिमोचयेत् तस्यार्चातुप्रकर्तव्यागंधपुष्पादिभिःशुभैः जलपूर्णंघटंदद्यात्सपक्वान्नंसदक्षिणं सवस्त्रकंतुविप्रायव्रतसंपूर्तिहेतवे तत्रमंत्र: तुलसिश्रीसखिशुभेपापहारिणिपुण्यदे नमस्तेनारदनुतेनारायणमनःप्रिये एवंत्वयाप्रकर्तव्यंव्रतंसंकष्टनाशनं सर्वसिद्धिप्रदंचैवसर्वसौख्यप्रदायकं भद्रतेस्तुशुभाचारेगच्छशीघ्रस्वकंगृह ततोगृहेनिवासंचकुरुयत्तेपितादद्यौ आगंतव्यंनमेगेहकिंचित्कालंप्रतीत्यचविप्रादिष्टासमागत्यप्रविष्टामंदिरंतदा सर्वसपत्समायुक्तमसहायाहरिप्रिया तुलसींतत्रसारोप्यहरिपूजनतत्परा व्रतंचकारविधिवद्विप्रादिष्टंशुभार्थिनी तेनव्रतप्रभावेण वाचःसत्यमवाप्य सा एकदादुःखितासासीत्सूर्यंप्रोक्तवतीसती मदीयाज्ञांविनादेवनोदयंयाहिभास्कर तथास्त्वितिरविः प्राह- ततोलोकोतिदुःखितः नित्यंनैमित्तिकंकर्मसर्वंनष्टंरविंविना ततोलोकःसमागत्यराज्ञःसन्निधिमब्रवीत् किमस्माभिःप्रकर्तव्यंसंकटेसमुपस्थिते इतितेषांवचःश्रुत्वाराजाचिंतातुरोऽभवत् सुमंत्रिणं समाहूयराजावचनमब्रवीत् सांप्रतंकिंप्रकर्तव्यंलोकोह्यत्यंतदुःखितः शृणुराजन्परंगुह्यकन्यातेशुभलक्षणात्वयातस्याःकृतस्त्यागोनारीवचनकारणात् सायदातुष्टिमायातितदासूर्यउदेष्यति राजामंत्रिवचःश्रुत्वाकन्यायामंदिरंगतः ततःसंप्रार्थयामासकन्यकांशुभलक्षणां पुत्रिपुत्रिमहाभागेममोपरिकृपांकुरु क्षंतव्यश्चापराधोमेकुरुलोकसुखान्वितं इतिसंप्रार्थितापित्रासूर्यस्याग्रेसुमानसा उदयंयाहिभोस्वामिन्येनलोकःसुखीभवेत् इतितस्यावचःश्रुत्वाश्रीसूर्यश्चोदयंगतः ततःकर्माणिसंचक्रेलोकःसूर्योदयेसति राज्ञापृष्टातदाकन्याशुभाचारासुसंयता राजोवाच पुत्रिपुत्रिमहाभागेत्वंजाताममवेश्मनि सात्वंब्रूहिमहाभागेव्रतदानंतपश्चाकिं त्वयाकृतंमहाभागेतदेवाद्यकरोम्यहं सपत्नीकःसलोकश्चापिताहंते

सुपुत्रिके पुनरुवाच रामाहितमनाभूपवचनंममचशृणु अत्रैवनगरेविप्रोविष्णुभक्तिपरायणःमहादेवीतिमातामेतस्य
सेवापरायणा अहंतस्यहिविप्रस्यसदाभक्तिपरायणा उपदिष्टंव्रतंतेनतुलस्यामुक्तिदायकंयथोपदिष्टंविप्रेणपित्रेउ
क्तंयथातथाप्रजाभ्य.कारयामासव्रतंचक्रेनृप.स्वय ततःप्रभृतिलोकेस्मिन्व्रतविख्यातिमागत यथायोग्यंवरंलब्ध्वा
राजाकन्याशुभोदये कालेवैवाहिकेलक्ष्मिसुप्रसन्नोनरेश्वरः स्त्रीवापिपुरुषोवापिकरोतिव्रतमुत्तमं ऐहिकंसुखमाप्नो
तितथैवामुष्मिकफलंय'शृणोतिकथामेतांयताचित्तःसमाहित.सर्वपापविनिर्मुक्तोविष्णुलोकंसगच्छति विधिवत्कुरुते
नारीतुलस्याव्रतमुत्तम विष्णुदासीसमाज्ञेयासत्यसत्यंवरानने इतिभविष्योत्तरेतुलसीव्रतकथा अथात्रसिंहार्केगो
प्रसवशांति कार्य्या अद्भुतसागरे नारद भानौसिंहगतेचैवयस्यगौः संप्रसूयते मरणंतस्यनिर्दिष्टंषड्भिर्मा
सैर्नसंशयः तत्रशांतिंप्रवक्ष्यामियेनसंपद्यतेसुख प्रसूतांतत्क्षणादेवगांविप्रायप्रदापयेत् ततोहोमंप्रकुर्वीत
घृताक्तै राजसर्षपैः आहुतीनांघृताक्तानामयुतंजुहुयाततः अयंहोमोव्याहृतिभिः कार्य्यः सोपवासः
प्रयत्नेनदद्याद्विप्रायदक्षिणामिति अथर्ववेदिना गृह्यपरिशिष्टे माघेवुधेचमहिषी श्रावणेवडवादिवा सिंहे
गावः प्रसूयंतेस्वामिनोमृत्युदायकाइति अत्र तत्रोक्ता अमृता शांतिः कार्य्या भाद्रकृष्णप्रतिपदमारभ्य भा
द्रमासोक्तदानव्रतनियमादीनामारभः कार्य्यः मासिभाद्रपदेदद्यात्पायसंमधुसर्पिषी हृषीकेशप्रीणनार्थं
लवणंसगुडोदनमिति अत्रफाणितदानमपि विष्णुधर्मोत्तरे प्रौष्ठपादेतथामासिप्रदाताफाणितस्यच फाणितंखं
डमंडकीतिपायसंविशेषाख्यं महाभारतंप्रौष्ठपादंतुयोमासमेकभक्तेनसंक्षिपेत् गवाढ्यंस्फीतकमलमै
श्वर्य्यंप्रतिपद्यते भाद्रकृष्णद्वितीयायामशून्यशयनव्रत तथाच चतुर्ष्वासितपक्षेषुमासेषुश्रावणादिषु अशून्या
ख्यंव्रतंकुर्य्याज्जययातुफलाधिकमिति अत्रजयया तृतीययाविद्धाद्वितीया कार्येत्यर्थः भाद्रकृष्णतृतीयायां

विशालाक्षीयात्रोक्ताकाशीखंडे भाद्रकृष्णतृतीयायामुपवासपरैर्नरैः कृत्वाजागरणंरात्रौविशालाक्षीसमीपतइ
ति अत्रतृतीयारात्रिव्यापिनीग्राह्यारात्रौजागरणविधानादिति भाद्रकृष्णचतुर्थीसंकष्टचतुर्थीव्रतस्कांदे श्राव
णेवहुलेपक्षेचतुर्थ्यांतुविधूदये गणेशंपूजयित्वातुचंद्रायार्घ्यंप्रदीयते श्रावणेत्रामातोग्राह्यःव्रतेशुक्लादिमेवचे
तिवचनात् इयंचंद्रोदयव्यापिनीग्राह्येतिप्रागभिधानात् चंद्रोदयव्रतत्वाच्च चंद्रोदयव्रतेचैवतिथिस्तात्कालि
कीस्मृतेतिदिनद्वयेचंद्रोदयव्यापित्वे पूर्वा चतुर्थीसतृतीयाचमहापुण्यफलप्रदा कर्तव्याव्रतिभिर्वत्सगणनाथ
सुतोषिणीतिब्रह्मवैवर्तवचनात् गणेशगौरीवहुलाअतिरिक्ताः प्रकीर्तिताः चतुर्थीःपंचमीविद्धादेवतांतरयोगतइ
तिवचनाच्चनचतृतीयाविद्धाविधायकानिवचनानिदिवात्रिमुहूर्तेर्थसत्येवप्रवर्तंते तेनरात्रियोगमात्रतइतिवाच्यं रा
त्रिसाध्यकर्मसुरात्रावपिवेधस्य जन्माष्टमीप्रकरणे माधवादिभिः प्रदर्शितत्वात् अतएवमहालक्ष्मीव्रतसमापने
दिनद्वयेअष्टम्याश्चंद्रोदयकालव्यापित्वे कृष्णपक्षेऽष्टमीचैवकृष्णपक्षेचतुर्दशी पूर्वविद्धैवकर्तव्यापरविद्धानकुत्र
चित् इतिवचनात् पूर्वविद्धाग्राह्येत्युक्तं हेमाद्रौमदनरत्नेच यानि चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते मध्या
ह्नव्यापिनीग्राह्यापरतश्चपरेहनीत्यादिवचनानितु सिद्धिविनायकादिव्रतविषयाणि तेषुमध्याह्नस्यकर्मकालविष.
यत्वात् प्रातःशुक्लतिलैःस्नात्वामध्याह्नेपूजनंसदेतिवचनात् अतएवमाधवेन मध्याह्नस्यकर्मकालत्वमंगीकृत्यच
विनायकव्रतेमध्याह्नव्यापिनीग्राह्येत्युक्तं तस्मादुभयत्रचंद्रोदयकालेसर्वथापूर्वैवेतिन्याय्यः पंथाइत्यलंवहुना अथ
व्रतविधिः उंमद्येत्यादि विद्याधनपुत्रारोग्यादिकामः संकटचतुर्थीव्रतंकरिष्य इतिसंकल्पः स्त्रीतुभर्तादिप्रीतिद्वा
रासर्वकामावाप्त्यै सकष्टचतुर्थीव्रतकरिष्ये सौवर्णरौप्यताम्रमृण्मयाद्यन्यतमांगणपतिमूर्तिंकृत्वा जलपूर्णंवस्त्र
युतंकुंभंतस्याग्रेस्थापयित्वाषोडशोपचारैःपूजयेत् ध्यानं लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकं नानारत्नसुवेषाढ्यं

प्रसन्नास्यंविचिंतयेत् ध्यायेद्गजाननंदेवतप्तकांचनसन्निभं चतुर्भुजमहाकायंसूर्यकोटिसमप्रभं अथव्रतविधिःप्रा
तःकृत्यादिकृत्वासूर्यादिदेवताभ्योव्रतंनिवेद्याचम्योदङ्मुखोवारिपूर्णताम्रपात्रंगृहीत्वा मासाद्युल्लिख्य-ममसर्वकर्म
निर्विघ्नसिद्धिपुत्रपौत्रसौभाग्यादिसिद्ध्यर्थंसंकष्टहरणगणपतिप्रीत्यर्थंसंकष्टहरणचतुर्थीव्रतमहंकरिष्ये ॰ इतिसंक
ल्प्यमौनेनदिनमतिवाह्यसंध्यासमयेतैलाभ्यंगपूर्वकंस्नानंकृत्वासायंसंध्यादिकृत्वा भूतशुद्धिप्राणप्रतिष्ठांकेवलमातृ
कान्यासंचकृत्वा सर्वसंकष्टहरणार्थं चतुर्थ्यां गणपतिपूजनमहंकरिष्ये इतिसंकल्प्यार्घ्यादिस्थापनं कृत्वापीठमं
डूकादिपरतत्त्वांतंसंपूज्यतीव्रायैनमः ज्वालिन्यैनमः नंदायैनमः भोगदायैनमः कामरूपिण्यैनमः उग्रायैनमः
तेजोवत्यैनमः सत्यायैनमः दिक्षुविदिक्षुच मध्येविघ्नविनाशिन्यैनमः सर्वशक्तिकमलासनायनमः इतिपूजयेत्
ततःपीठमध्येमूर्तौफलकेवास्वेष्टदेवतागमोक्तप्रकारेणपूजयेत् अथध्यानं कोटिसूर्यप्रभंदेवगजवक्त्रंचतुर्भुजं पाशां
कुशधरंदेवंध्यायेत्सिद्धिविनायकं इतिध्यात्वा आत्मसंस्थमजंशुद्धंत्वामहंपरमेश्वरं अरण्यामिवहव्याशंमूर्ता
वावाहयाम्यहमितिपठित्वा सहस्रशीर्षेत्यावाहनं आगच्छदेवदेवेशगणनाथनमोस्तुते विनायकनमस्तुभ्यंगौरी
मलसमुद्भव ॥ आवाहन १ अनेकरत्नसंयुक्तंमुक्ताफलविभूषितं स्वर्णसिंहासनंदेवप्रीत्यर्थंप्रतिगृह्यतां पुरुष
एवेति विघ्नविनाशिनेनमः ॥ इत्यासनंसमर्पयामि '२' तवेयमहिमामूर्तिस्तस्यांत्वांसर्वगंविभो भक्तिस्नेहसमा
कृष्टंदीपवत्स्थापयाम्यहमिति १ अनन्यातवदेवेशमूर्तिःशक्तिमहाप्रभो सान्निध्यंकुरुतस्यांत्वंभक्तानुग्रहतत्परेति
सन्निधापनं २ आज्ञयातवदेवेशकृपांभोधेगुणांबुधे आत्मानंदैकतृप्तंत्वांनिरुणध्मिसदागुणेतिसंनिरोधनं ३ अ
ज्ञानाद्देमनस्याद्वावैकल्यात्साधनस्यच यदपूर्णंभवेत्कृत्यंतथाप्यभिमुखोभवेति सम्मुखीकरणं ४ अभक्तवा
ङ्मनश्चक्षुःश्रोत्रदूरायतद्युते स्वतेजःपंजरेणाशुवेष्टितोभवसर्वतः इत्यवगुंठनं ५ ततोमूलमंत्रेणसकली

करणं ६ अमृतीकरणं ७ परमीकरणं ८ ऐंवदवदवाग्वादिनिऐंक्लींक्लिन्नेक्लेदय २ महाक्षोभंकुरुक्लींसौंमहामोहं कुरुसौःह्रौः अआंइत्यादिप्रोक्ष्य प्राणप्रतिष्ठांकुर्यात् ॐआंह्रींक्रौमित्युच्चार्य्य देवस्यजीवइहस्थितः ॐआंह्रींक्रौमित्युच्चार्य्यदेवस्यसर्वेंद्रियाणिइहतिष्ठंतु ॐआंह्रींक्रौमित्युच्चार्य्यदेवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखंचिरंतिष्ठंतुस्वाहा इतिप्राणप्रतिष्ठा ततःपाद्यं गौरीपुत्रनमस्तेस्तुगणानामीश्वरप्रभो भक्त्यापाद्यंमयाद त्तंसर्वसिद्धिप्रयच्छमे एतावानस्येतिलंबोदरायनमः पाद्यंसमर्पयामिनमः व्रतमुद्दिश्यदेवेशगंधपुष्पाक्षतैर्युतं गृहाणार्घ्यंमयादत्तंभक्तिस्नेहेनपूजित त्रिपादूर्ध्वेत्यर्घ्यं चंद्रधारिणेनमः आचम्यतांगणाधीशसर्वसिद्धिप्रदायक अनाथनाथसर्वज्ञगीर्वाणवरपूजित तस्माद्विराडिति विश्वप्रियायनमः आचमनीयंस॰ गव्यंदधिसमानीतंमधुनाचसमन्वित गृह्योक्तविधिनादत्तंमधुपर्कंगृहाणभोः गणपतयेनमः मधुपर्कंस॰ मधुपर्कानंतरंपुनराचमनीयंस॰ पंचामृतंमयानीतंपयोदधिघृतंमधु सितयाचसमायुक्तंस्नानार्थंप्रतिगृह्यतां पंचामृतस्नानंस॰ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं गृहाणविघ्नराजेंद्रमयादत्तंहिभक्तितः यत्पुरुषेणेति सर्वास्त्रधारिणेनमः शुद्धोदकस्नानंसहाचमनं रक्तवस्त्रंमहादिव्यंदिव्यगंधाधिवासितं भक्त्यादत्तंगृहाणेशलंबोदरहरात्मज तंयज्ञमिति कुमारगुरवेनमः आच्छादनंस॰ राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं गृहाणेश्वरसर्वज्ञभक्तानांवरदायक तस्माद्यज्ञात्सर्वहुतः संभृतमिति शिवात्मजायनमः इत्युपवीतंस॰ गंधंगृहाणदेवेशदिव्यचंदनमुत्तमं कर्पूरागुरुसंयुक्तंगणाध्यक्षसुरार्चित तस्माद्यज्ञात्सर्वहुतः ऋचस्सा॰ रुद्रप्रियायनमः गंधंस॰ अक्षताश्चसुरश्रेष्ठकुंकुमाक्ताःसुशोभनाः गृहाणविघ्नराजेंद्रदमांत्स्थाननमोपरि विघ्नहर्त्रेनमः अक्षताः स॰ सिंदूरंगृह्यतांदेवबालार्कसदृशद्युते सर्वसंकष्टनाशार्थंदत्तंपरशुधारिणे परशुधारिणेनमःसिंदूरंस॰ विनायकनमस्तुभ्यंसुरासुरसुपूजितसुगंधीनिचपुष्पाणिगृहाणपरमेश्वर तस्मा

दत्वाइतिं गुणशालिनेपुष्पाणिस- दशांगगुग्गुलंधूपंसुगंधंसुमनोहरं उमासुतनमस्तुभ्यंगृहाणवरदोभव यत्पुरुष
मिति भवानीप्रीतिकर्त्रेनम इतिधूपंस. गृहाणमंगलंदीपंघृतवर्त्तिसमन्वितं भासनंसर्ववस्तूनांतेजोराशेजगत्पते ब्रा
ह्मणोस्येति गजकर्णायनमः दीपंस. लड्डुकाणिचपक्वान्ननानाभक्ष्यचपायसं गृहाणविघ्नराजेंद्रफलैर्नाना
विधैर्युतंचंद्रमामनसइतिनैवेद्यंस- अघनाशिनेनमः पंचप्राणाहुतीर्मुख्याः कारयेत् नमस्तेदेवदेवेशसर्वतृ
प्तिकरंपरं अन्ननिवेदितभक्त्याप्रकृतिस्थंसुशीतलं परमानंदसंपूर्णगृहाणजलमुत्तमं मध्येपानीयं उत्तरापो
शानं दत्वा करोद्वर्त्तनीयादिचदत्वा तांबूलं दद्यात् पूगकर्पूरसंयुक्तंनागवल्लीदलैर्युतं तांबूलंगृह्यतांदेव
सर्वमंगलदायक सिद्धिदायनमः तांबूलंसम- नारिकेलसनारंगकदलीमातुलुंगकं इक्षुदंडंगृहाणेशसर्वप्रियनमो
स्तुते संकष्टनाशिनेनमः सफलमिक्षुदंडंस. हिरण्यगर्भगर्भस्थंहेमबीजविभावसोः अनंतपुण्यफलदमतः शांतिं
प्रयच्छमे सर्वभोगदायिने दक्षिणां . ततः पुष्पांजलिदानायैकविंशतिदूर्वांकुरानादाय वक्ष्यमाणनामभिः पूजां
कुर्यात् गणाधिपायनमः उमापुत्राय. अघनाशनाय. एकदंताय- इभवक्त्राय. मूषकवाहनाय. विनायकाय- ईशपु
त्राय. सर्वसिद्धिप्रदायकाय. कुमारगुरवेनमः एकांदूर्वांगृहीत्वा गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभ
वक्त्रेतिनमोमूषकवाहन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंपूजयामिप्रयत्नतः एभिर्नामभिः
संपूज्य प्रत्येकनामभिर्दूर्वायुग्माद्दिशाद्त्यासमर्पयेत् ततः पुष्पांजलिंदत्वानीराजनंकुर्यात् कर्पूरवर्त्तिकायुक्तः सर्व
वस्तुप्रकाशकः नीराजनार्थमानीतोदीपोयंप्रतिगृह्यतां सर्वविघ्नविनाशिनेनमः नीराजनंसमर्पयामि पुनः पुष्पां
जलिंदत्वासंकष्टहरणंकृत्वाहत्स्थान्कामान्प्रपूरय विघ्नान्नाशयमेसर्वान्नाशाप्योपस्थितान्प्रभो त्वत्प्रसादेनकार्या
णिसर्वाणीहकरोम्यहं इतिविज्ञाप्यदेवेशंप्रणिपत्यपुन.पुन- नमस्कारंकरोमीशसर्वकामार्थसिद्धये प्रीत्यानु

गृह्यदेवेशप्रसादसुमुखोभव नाभ्याश्रासीदातनमस्कारः ततः प्रदक्षिणाकरामोशसर्वकामार्थासिद्धय सर्वकामप्रद
स्त्वद्धिसर्वविघ्नहरोभव सप्तास्यासन्निति उमासुताय नमः प्रदक्षिणा पुनर्नत्वाप्रार्थयेत् संसारपीडाव्यथितंहि
मांसदासकष्टभीतंसुमुखप्रसीदत्वंत्राहिमामोचयकष्टसंघान्नमोनमोविघ्नविनाशनाय त्वामुद्दिश्यकृतंमेद्ययथाशक्त्या
तुपूजनं तत्सर्वंपूर्णतामेतुत्वत्प्रसादाद्गजानन अथवायनदानं श्रीविप्रायनमस्तुभ्यंसाक्षाद्देवस्वरूपिणे गणेशप्री
तयेतुभ्यमोदकान्वैददाम्यहं मोदकान्सफलान्मौद्रान्दक्षिणाभिःसमन्वितान् आवयोस्तारणार्थायगृहाणेमान्न
मोनमः आवयोर्दंपत्योर्वादात्प्रतिग्रहीत्रोरित्यर्थः एवंवायनंदद्यात् ॥ ततश्चंद्रपूजनकृत्वाचंद्रायार्घ्यंदद्यात् शंखे
दुग्धदूर्वाक्षतफलानिदत्वा ज्योत्स्नापतेनमस्तुभ्यंनमस्तेज्योतिषांपते नमस्तेरोहिणीकांतगृहाणार्घ्यंनमोस्तुते सौ
म्यायदेवदेवायग्रहराजायशालिने अर्घ्यंगृहाणदेवेशद्विजराजनमोस्तुते क्षीरोदार्णवसंभूतअत्रिनेत्रसमुद्भव गृहा
णार्घ्यंमयादत्तं रोहिणीसहितप्रभो गगनार्णवमाणिक्यक्षीराब्धिमथनोद्भव जानासित्वंमदीयांतः सोमराजायते
नमः क्षीरोदार्णवसभूतलक्ष्मीबंधोनिशाकर गृहाणार्घ्यंमयादत्तगणेशप्रीतिवर्द्धन समस्ततारकाधीशजगदाल्हाद
कारक गृहाणार्घ्यंमयादत्तंबालचंद्रनमोस्तुते इत्यनेनार्घ्यंदत्त्वा नमस्कारंकुर्य्यात् शंकरस्यललाटस्थंतिलकतुम
नोहरं अत्रिनेत्रसमुद्भूतनमामिशशिनंसदा नमोमंडलदीपायशिरोरत्नायधूर्जटेः कलाभिर्वर्द्धमानायनमश्चंद्राय
चारवे इतिचंद्रप्रार्थनांकुर्यात् ततोगणेशायार्घ्यं गणेशशेषविघ्नेशसर्वसिद्धिप्रदायक संकष्टहरमेदेवगृहाणार्घ्यंन
मोस्तुते गौरीसुतनमस्तेस्तुसततंमोदकप्रिय सकष्टनाशनार्थायगृहाणार्घ्यंनमोस्तुते कृष्णपक्षेचतुर्थ्यांतुपूजितो
सिशुभात्मये गृहाणार्घ्यंमयादत्तममकामान्प्रपूरय इत्यर्घ्यंदत्त्वातिथ्यर्घ्यंदद्यात् तिथीनामुत्तमेदेविगणेशस्यचवल्ल
भे गृहाणार्घ्यंमयादत्तसर्वसिद्धिप्रदायिके इतिचतुर्थ्यअर्घ्यंदत्त्वा गणेशप्रार्थयेत् यद्दत्तंभक्तिमात्रेणपुष्पपत्रंफलं

जलं निवेदितंचनैवेद्यंतद्गृहाणानुकंपया आवाहनंनजानामिनजानामिविसर्जनं पूजांचैवनजानामित्वंगतिः पर
मेश्वर कर्मणामनसावाचात्वत्तोनान्यास्तिमेगतिः अंतश्चरसिभूतानांद्रष्टात्वंपरमेश्वर देवयोनिसहस्रेषुयेषुयेषुव्र
जाम्यहं तेषुतेष्वचलाभक्तिरच्युतास्तुसदात्वयि देवोदाताचभोक्ताचदेवः सर्वमिदंजगत् देवोजयतिसर्वत्रसदेवःस
र्वमेवतत् ततोर्घपात्रमुद्धृत्य साधुवाकर्मदुष्टंवायद्यदाचरितंमया तत्सर्वंभगवन्देवगृहाणाराधनंपरं इतः पूर्वंप्राणबु
द्धिदेहधर्माधिकारजाग्रत्स्वप्नसुषुप्त्यवस्थासुमनसावाचाकर्मणाहस्ताभ्यांपद्भ्यामुदरेणशिश्नायत्कृतंयदर्चितंतत्स
र्वंश्रीगणाधिपरूपपरब्रह्मार्पणमस्तु श्रीगुरुदेवतासमर्पणमस्तु रश्मिरूपागणेशस्यपूजितायाश्चदेवताः गणेशांगे
विलीनास्ताः संतुसर्वाःसुखावहा इतिपुष्पांजलिंदत्वा ततोदंतपाशांकुशविघ्नपरशुलड्डुकबीजपूराख्याः सप्तमुद्राः
प्रदर्श्य व्रतसमर्पणकृत्वा ब्राह्मणेभ्यः प्रदेयभोजनसंकल्पंकुर्यात् सुवर्णमूर्तिश्चेत्तद्दानंकृत्वोद्वासयेत् फलकादावा
हनंचेत्तदा विसर्जनमात्रं दानमंत्रस्तु सुवर्णनिर्मितंदेवरक्तवस्त्रेणवेष्टितं ददाम्यहंद्विजेंद्रायप्रीयतांगणनायकः ततो
विसर्जनं आयातस्त्वमुमापुत्रममानुग्रहकाम्यया पूजितोसिमयाभक्त्यागच्छस्थानस्वकंप्रभो उत्तिष्ठब्रह्मणस्पतइ
तिविसर्जनंकृत्वाब्राह्मणान्भोजयित्वास्वयमपिवाग्यतोभुंजीत इतिसंकष्टचतुर्थीव्रतपूजाविधिः ॥ अथकथा सूतउ
वाच अरण्येवर्त्तमानंतुपांडुपुत्रंयुधिष्ठिरं सभ्रातरंसुखासीनमाययौव्यासआदरात् तंदृष्ट्वा मुनिशार्दूलंव्यासंप्रत्युत्थाय
यौनृपः मधुपर्कंतथार्घ्यंचकृत्वातस्मैह्यवोचत युधिष्ठिरउवाच अद्यमेसफलंजन्मभवदागमनंयतः संकष्टग्रंतुमेजा
तावनेचवनवासिनः तेसर्वेविलयंयाताभवतांदर्शनेनहि आत्मानंसाधुमन्येहराज्यतृष्णापराङ्मुखं दुःखितंमां
कथंस्वामिन्राज्यतृष्णाविचेतसं इमेभीमादयः सर्वेबांधवाव्यथयंतिमां दुराधर्षासवीर्य्याहिमच्छासनविधौहताइ
यंतुद्रौपदीसाध्वीराजपुत्रीपतिव्रता राज्यभोगोपयोग्याहिसापिदुःखोपभोगिनी मयाद्यकिंकृतंव्यासपूर्वकर्मानु

वर्त्तिना दायादैर्वंचितंराज्यंद्यूतच्छद्मरतैस्तथा पराजितावयब्रह्मन्सुहृद्भिर्बंधुभिःसह वनंप्रस्थापितादुष्टैरित्यामुक्तं
चकौरवै इत्थंनिराकृताःसर्वैतदातुवनमागताः अहंतदाप्रभृत्यात्रानतद्रक्ष्यामिभवादृशान् यद्यस्तिव्रतमेकंहिसर्व
संकटनाशनं राज्यदंराज्यसक्तानांदुःखितानांसुखप्रदं पुराकृतंकेनभूमौफलदंदुःखनाशनं तत्सर्वंकथयब्रह्मन्ननु
ग्राह्योस्मितेमुने इत्युक्तवंतंराजानदुःखसकष्टभाजनं उवाचकृपयाव्यासोधर्मपुत्रंधरापतिम् व्यासउवाच नास्तिभू
मंडलेराजात्वत्समोधर्मतत्परः कथयामिव्रतंतुभ्यशुभदंफलदंभुवि यत्कृत्वासर्वकार्य्याणांनिष्पत्तिर्जायतेभुवि य
स्तुकुर्य्याद्व्रतवरंसप्राप्नोतिफलंपुमान् विद्यार्थीलभतेविद्यांधनार्थीलभतेधनं योषिद्वापिपुमान्वापिकरोतिव्रतमुत्तमं
ईप्सितफलमाप्नोतिपतिनासहमोदते संकष्टेषुसदाक्षिप्तोमानवोग्रहपीडितः सदाकुर्याद्व्रतमिदंसर्वसंकटनाशनं य
त्कृत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः आसीत्पुराकृतयुगेचंद्रसेनोमहीपतिः साम्राज्यदीक्षितोनित्यमंत्रिभिः परिवा
रितः सुहृद्भिर्बंधुभिश्चैवतथापुत्रैश्चसंयुतः तस्यापिहितकर्त्रीचपत्नीगुणवतीप्रिया नाम्नारत्नावतीचासीत्पातिव्रत्य
परायणा तयोःपरस्परंप्रीतिरभवच्चगुणाधिका कदाचिद्दैवयोगेनहृतंराज्यंचवैरिभिःकोशोबलंचापहृतंविध्वस्तोबंधु
भिःसच रत्नावत्यातयासार्द्धंनिर्गतोभूमिवल्लभः वनंक्षुधातपक्लांतोह्येकवासास्तृपार्दितः इतश्चेतश्चविचरन्नात
पक्लमितेक्षण एकाकीवनमासाद्यतयासार्द्धंमहीपतिः तदासूर्यास्तसमयेरण्येशिवानिनादिते व्याघ्राश्चचुक्रुशु
स्तत्रपर्जन्योववर्षेह एतस्मिन्नंतरेराज्ञीकृच्छ्रेणात्यंतदुःखिता तांविलोक्यनृपश्रेष्ठोदुःखेनात्यंतपीडितः ततःप्र
भातसमयेमार्कंडेयमहामुनिं ददर्शराजातत्रैवविस्मयाकृष्टमानसः उपगम्यशनैस्तत्रदंडवत्पतितोभुवि
उवाचपश्चाद्भूपोसौ मार्कंडेयंमहामुनिं राजोवाच किंकृतंहिमयाब्रह्मन्दुःकृतंकथयस्वमे केनकर्म
विपाकेन राज्यलक्ष्मीःपराङ्मुखी॥ मार्कंडेयउवाच शृणुराजन्प्रवक्ष्यामियत्त्वयापूर्वजन्मनि कृतांहिलुब्धक

श्वासोनिर्गतस्त्वंमहावनमृगशार्दूलशशकांनहनस्त्ववनेतदा तस्यां।त्रोभ्रमन्राजाचतुर्थीश्रावणस्यहि दृष्टंशु
भंचकृष्णायांतडागपृथुनिर्मितं तत्तीरेनागकन्यानांसमूहंरक्तवाससां गणेशंपूजयंतीनांदृष्टातान्नियमशुभं उपगम्य
शनैस्तत्रपृष्टवानसिपार्थिव आर्य्याःकिमेतत्सर्वंहिकथयध्वंममाग्रतः नागकन्याउवाचपूजयामोगणेशंहिसर्वसिद्धि
प्रदायकं शांतिदंपुष्टिदंनित्यंसर्वसंकटनाशनं पुनःपृष्टास्त्वयारतास्तु।किंदानकोत्रपूज्यते कन्याउवाच यदाचोत्पद्य
तेभक्तिस्तदापूज्योगणाधिपः कृष्णायांवाचतुर्थ्यांवैरक्तपुष्पैःप्रपूजयेत् गंधैःपुष्पैस्तथाधूपैर्नैवेद्यैर्भक्तिभावतः विवि
धान्मोदकान्कृत्वापूरिकान्घृतपाचितान् निवेदयेद्गणेशायह्येवंकुर्य्याद्व्रतंत्विदंततोगृहीत्वाराजेंद्र व्रतंसंकष्टनाशनं
निर्गतस्त्वंवनात्तस्माद्ध्यायन्देवंगणेश्वरं तत्प्रभावेणराजेंद्रगृहंलक्ष्म्यायुतंवभौ जातंहिधनधान्यादिपुत्रपौत्रैःसमाकु
ल ।।नाविधे. रत्नगणैगोंधनैश्वसमन्वितं कस्मिंश्चित्समयेराजन्धनलोभनमोहितःविस्मृतोव्रतराजोहित्वयामत्ते
नभूतिदः ततःप्राप्तंहिपंचत्वंत्वयाप्राणविनाशनंतत्प्रभावाद्राजकुलेजातस्त्वंविमलेनृप त्वयाजन्मप्रभृतितोराज्यं
प्राप्तमिहप्रभो सुहृन्मित्रश्रियायुक्तंप्राप्तंहिविपुलंवपुः कृत्वावज्ञाव्रतस्यांतेतत्प्राप्तंफलमीदृशं ॥ राजोवाच अधु
नातत्करिष्येहव्रतंकथयसुव्रत यत्कृत्वासकलंराज्यंब्रह्मन्प्राप्स्यामिवैपुनः ॥ मार्कंडेयउवाच॥ व्रतसंकल्पपूर्वंत्वंकु
रुराजर्षिसत्तम प्राप्स्यसित्वंनिजंराज्यंसंदेहंमाकुरुष्वहि ॥ व्यासउवाच... ॥ ऋषेरेतद्वचनंश्रुत्वातदादृष्टोमहीप
तिः अकरोत्तद्व्रतंभक्त्यामुनिश्चांतर्दधेनृप आयातास्तत्क्षणात्सर्वेमंत्रिणस्सहसैनिकाः वभूवतैः परिवृतः साक्षा
दाखंडलोयथा लब्धराज्यंस्वकंयेवैगणेशस्यप्रसादतः बुभुजेमेदिनींसर्वांपुत्रपौत्रसमन्वितः तस्मात्त्वमपिराजेंद्र
कुरुसंकष्टनाशनंव्रतंसिद्धिप्रदंन्दणांस्त्रीणांचापिफलप्रदं.. यत्कृत्वासकलान्भोगानतनायासेनविंदति विद्यार्थीलभते
विद्यांधनार्थीलभतेधनं योपिद्वावैपतिव्रताकरोतिव्रतमुत्तमं ईप्सितंफलमाप्नोतिपत्यासहविलासिनी कुमारी

व्रतसामर्थ्याल्लभतेपातिमुत्तमं विधवायदिवाकुर्य्याद्वैधव्यंनपुनर्लभेत् पुत्रार्थीलभतेपुत्रान्व्रतस्यास्यप्रभावतः यु
धिष्ठिरउवाच सविस्तरंव्रतंब्रूहिकृपयाकष्टनाशन दानविधिंचविधिवत्सर्वंब्रूहितपोधन॥ व्यासउवाच॥ यदासंक्ले
शितोमर्त्योनानादुःखैश्चदारुणैः तदाकृष्णचतुर्थ्यांवैपूजनीयोगणाधिपः तैलाभ्यंगंनकुर्वीतरात्रौपूजांसमाचरेत् रक्त
पुष्पैश्चधूपैश्चएभिर्नामपदैःपृथक् आवाहनंगणेशायआसनंविघ्ननाशिने पाद्यंलंबोदरायेतिअर्घ्यंचंद्रार्द्धधारिणे वि
श्वप्रियायाचमनंस्नानंवैब्रह्मचारिणे भवानीप्रीतिकर्त्रेचधूपंदद्याद्यथाविधि गजकर्णायवैदीपंनैवेद्यमघनाशिने तां
बूलंसिद्धिदायेतिफलंसकष्टनाशिने ततोदूर्वांकुरैःपूज्यएकविंशतिसंख्यया दशभिर्नामभिर्द्वौद्वावेकंतंसर्वनामभिः ग
णाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेकवक्त्रेतितथामूषकवाहन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक कुमा
रगुरवेतुभ्यंपूजयामिप्रयत्नतः एवंपूजाप्रकर्तव्याप्रार्थयेद्गणनायकं संसारपीडाचकितंहिमांसदासंकष्टभीतंसुमुख
प्रसीद त्वंपाहिमांमोचयकष्टसंघान्नमोनमोविघ्नविनाशनाय ततस्तुदापयेतोदद्यान्मोदकान्घृतपाचितान् विप्रायदश
संख्याकान्दशचात्मानियोजयेत् ततस्तुमंडलेचंद्रंसंपूज्यविधिवद्व्रती मंडलेराजतेतंदुलपिष्टेनवाराचिते चंदनालिखि
तेवाकास्यपात्रेअर्घ्यंदद्यात् चंद्रात्पूर्वंगणेशायदुग्धेनार्घ्यंनिवेदयेत् पूजांजपंतथाहोमंकुर्य्यान्मूलेनमंत्रवित् श्रा
वणेसिद्धलड्डुकान्भक्षयेद्दधिभोजनं आश्विनेचोपवासंचकार्त्तिकेदधिभक्षकं मार्गमासेनिराहारःपौषेगोमूत्रभक्षणं
तिलांश्चभक्षयेन्माघेफाल्गुणेघृतशर्करां चैत्रमासेपंचगव्यंमाधवेशतपत्रिकां घृतस्यभोजनंज्येष्ठेआषाढेमधुभक्षणं
इतिमासव्रतंकृत्वानरोमुच्येतसंकटात् भुंजीयाद्ब्राह्मणैर्विप्रैःसहस्वस्थस्तुसुव्रत पूर्वोक्तेनविधानेनपूजयेद्भक्तिमान्नरः
चंदनेनसुगंधेनपुष्पैर्नानाविधैःशुभैः ज्योत्स्नापतेनमस्तेस्तुनमस्तेज्योतिषांपते गृहाणार्घ्यंमयादत्तंरोहिण्यासहि
तःशशिन इत्यादिसप्तमंत्रैरेकेन वा चंद्रायार्घ्यंसप्तवारंदेय नमोमंगलदीपायशिरोरत्नायधूर्जटेः कलाभिर्वर्द्धमानाय

नमश्चंद्रायचारवे इतिप्रणामःगजाननमस्तुभ्यंसर्वसिद्धिप्रदायक गृहाणार्घ्यंमयादत्तंसकष्टनाशयाशुमे कृष्णपक्षे
चतुर्थ्यांवैपूजितोसिशुभोदये गृहाणार्घ्यंमयादत्तममकामान्प्रपूरय ॥ अथचतुर्थ्याअर्घ्यम् ॥ तिथीनामुत्त
मेदेवि गणेशस्यातिवल्लभे सर्वसंपत्प्रदेदेविगृहाणार्घ्यंनमोस्तुते एवंपूजाप्रकर्तव्याभक्त्या विप्रांश्चभो
जयेत् स्वयमेवतुभुंजीतवाग्यतोवधुभिस्सह रात्रौजागरणंकुर्य्याद्यथाशक्त्या जितेंद्रियः भूमिशायीजितक्रो
धोलोभदंभविवर्जितः ॥ प्रतिमासंतुयःकुर्यात्पंचाब्दंत्र्यब्दमेववा अथवाजन्मतःकुर्य्यान्नदुःखंजायतेध्रुवं दारिद्र्यं
नभवेत्तस्यसकष्टात्सप्रमुच्यते शृण्वतियेव्रतमिदंस्वयमीदृशंहितेवैसुखंभुविमनोरथपूर्णचित्ताः नित्यभवतिल
लनाःपुरुषै सुखिन्यः पुत्रप्रपौत्रधनधन्ययुताःपृथिव्याम् ॥ सूतउवाच एवमुक्त्वाततोव्यासस्तत्रैवांतरधीयत युधि
ष्ठिरस्तुतत्सर्वमकरोद्व्रतमुत्तमं मेनेव्रतप्रभावेणधर्मोराज्यमवाप्नह हत्वारणेरिपून्सर्वान्सुहृद्बधुजनै सह यज्ञान्नाना
विधान्कृत्वाततसुखमवाप्तवान् प्रद्युम्नेनकृतपश्चाद्बाणनाथस्यतोपरं कृत्वाबाणासुरंयुद्धजयंप्राप्तोह्यधोक्षज. आ
सीनेहद्युपयासार्द्धमनिरुद्धमहीपते अन्यैर्देवासुरनरैःकृतविघ्नशतुष्टये ऋषिभिर्दानवैश्चान्यैर्यक्षगंधर्वकिन्नरैः इति
भविष्योत्तरपुराणे व्यासयुधिष्ठिरसंवादे सकष्टचतुर्थीव्रतकथा॥ एवमेवप्रतिमासंसंकष्टहरणचतुर्थीव्रत भाद्रकृष्ण
पक्षेबहुलाचतुर्थीव्रतं इदचमध्यदेशप्रसिद्धंतत्रचतुर्थीसायंकालव्यापिनीग्राह्या दिनद्वयेचंद्रोदयसत्त्वेऽसत्त्वेवपूर्वैव
ति उक्तंच गौर्य्याश्चतुर्थीसितधेनुपूज्यादुर्गार्चनंदुर्भरहोलिकाच वत्सस्यपूजाशिवरात्रिरेताः परान्विताघ्नंतिनृपं
सराष्ट्रमिति अत्रधेनुपूजामात्रमेवव्रतविधानं बहुलेतिश्वेतागौरेवपूज्यानान्यत्पूजादिविधानं तथाचनारदीये अ
थभाद्रेकृष्णपक्षेचतुर्थ्यांबहुलाव्रत धेनु संपूजनीयात्रवस्त्रगंधयवादिभिः ततःप्रदक्षिणीकृत्यशक्तश्चेद्दानमाचरेत्
अशक्त पुनरेनातुनमस्कृत्याविसर्जयेत् पचाब्दंवादशाब्दंवापोडशाब्दमथापिवा व्रतकृत्वासमुद्याप्यधेनुंदद्यात्

पयस्विनी प्रभाविणव्रतस्यास्यभुक्त्वाभोगान्मनोरमान् सत्कृतोदेवतावृंदैर्गोलोकंसमवाप्नुयात् भाद्रकृष्णपंचम्यांमानवकल्पादि अत्रयुगांतवत्पूजाश्राद्धादिविधेयं अत्रनागानांपूजोक्तानारदीये भाद्रेतुकृष्णपंचम्यांनागान्क्षीरेणतर्पयेत् यस्तस्यांपूजयेन्नागान्कुलेतस्यास्तिनिर्भरं निर्भरंनामानवाच्छिन्नं भाद्रकृष्णषष्ठ्यांकुलपलाशव्रतंतत्रषष्ठीमध्याह्नव्यापिनीग्राह्या पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरितिस्मरणात् सखीभिःसहमध्याह्नेगत्वाचसलिलांतिकामित्यादिनाकथायांकर्मकालव्याप्त्युक्तेः दिनद्वये सत्वे ऽसत्वेवापराकुशपलाशव्रतस्यैवबहुलाषष्ठीतिसंज्ञोक्ता ॥ तत्र स्कंदपूजामुपक्रम्यबहुलासितवर्णागौरेवपूज्येति अस्यामेवचंद्रषष्ठीव्रत सायं चंद्रोदयव्यापिनी ग्राह्या उभयत्र तथात्वेपूर्वातदुक्तंभविष्ये तद्वद्भाद्रपदेमासिषष्ठ्यांपक्षेसितेतरे चंद्रषष्ठीव्रतं कुर्यात्पूर्वविध-प्रशस्यते चंद्रोदयेयदाषष्ठीपूर्वेह्निवापरेहनि सप्तम्यामुदितेचंद्रेनार्घ्यंदद्यात्कदाचन कदाचेद्याददेन्नारी सानारीनरकंव्रजेदितिकथायामप्युक्तेरियं सर्वथापूर्वैवकार्या चंद्रषष्ठ्यासितेपक्षेसेवोपोष्याप्रयत्नतइति अस्याः कथा भविष्योत्तरे ॥ शवरीपउवाच ॥ देवराजकथंस्त्रीणापातकयातिदूरत· भुक्तिमुक्तिप्रदंब्रूहिव्रतधर्मकरंपरम् ॥ इंद्रउवाच ॥ पुराकृतयुगस्यादौदेवर्षिर्नारदोऽभवत् तेनपृष्टोमहीपालब्रह्माब्रह्मविदांवरः ॥ नारदउवाच ॥ रौरवेणांधतमसात्रैलोक्यपरिवेष्टितं तपोदानंचहोमंचव्रतं किंचित्प्रकाशय येनासौमुच्यतेजंतुर्नरकात्पापसंभवात् नरोवाथादिवानारीतद्व्रतकथयस्वमे ॥ ब्रह्मोवाच ॥ शृणुवत्सपरंगुह्यव्रतानामुत्तमव्रतं निश्चितसर्वधर्मेषुमहापापप्रणाशनं विदेहनगरेरम्येचतुर्वर्णसमाकुले गृहप्राकारशोभाढ्येवेदिचत्वरमंडिते गृहधर्मेणसंयुक्तायत्रनार्योनरैःसह भृगुवंशेसमुत्पन्नोब्राह्मणोवेदपारगः सुमित्रस्तत्रनगरेह्यवसद्धर्मवत्सलः एकदातस्यचपितुः क्षयाहःसमुपागतः प्रातःपाकःप्रकर्तव्यस्त्वयापूतातरांगना ·

व्धंनानादीनियत्किंचित्कर्तव्यंघृतसादित एतदुक्तंस्वप्रिया नैतथेत्यंगीकृतंतथा संध्याकालेचतेनैवद्विजाश्चामंत्रि
तास्तथा रात्रौदेववशात्साथसंबभूवरजस्वला आत्मानरजसाक्रांतंनाज्ञासीत्साद्विजांगना रजसाक्रांतयासर्वं
कृतंतद्व्यंजनादिकं तेनकर्मप्रचारेणदेवता·पितरस्तथा नि· श्वासमुष्णमुन्मुच्य निराशानिर्गतास्तथा अथका
लेनसंप्राप्ताकेनचिन्मृत्युगोचरं तेनदोषेणसानारी चंडालीयोनिमागता मृतभार्यस्त्वसौविप्रोनिजकर्मरतः
सदा सुता·पचगृहेतस्यगृहकर्मरता· सदा श्वपचस्यगृहेजाताब्राह्मणीपापसंयुता जातिस्मराभवत्सातु पाति
व्रतप्रभावतः जाताचंडालभवनेवर्द्धतेस्मादिनेदिने अष्टवर्षायदाजातागतासाप्रतिमंदरं देवार्चनविदेरंतेगृहद्वारे
ह्युपस्थिता त्रियामदिनशेषेतुवैश्वदेवंप्रकुर्वता बलिंचददतासम्यग्वायसेभ्योद्विजन्मना तस्मिन्कालेतुसंप्राप्तात
स्यास्तुमुखदर्शनात् हाहाकार·कृतस्तेनसूर्यस्यचनिरीक्षणं स्मरणंवासुदेवस्यभोजनंचविवर्जितं पुन स्नानंकृतंते
नदानंदत्तंयशक्तितः त्रिरात्रोपोषणंकृत्वाचतुर्थेऽहनिपारणं चतुर्थेऽह्निपुनःप्राप्तामातंगस्यचकन्यका मातंगस्यगृहं
गत्वाब्राह्मणस्यसुतस्तदा तमब्रवीत्समातंगंकुपितोवीक्ष्यसंगमात् किमर्थमागतापुत्रीतवास्माकंचवेश्मनि अव
दत्तत्रमातंगःसगृह्णामीहपुत्रिकां तूर्णंगृहंव्रजस्वामिन्प्रसादंकुरुमेप्रभो द्वितीयेदिवसेतत्रमातंगीपुनरागता कु
पिताब्राह्मणा· सर्वेमातंगस्यचकन्यकां तत्पित्रेकथयामासुर्मातंगः·पुनराहतान् त्रायध्वंमांद्विजाः सर्वेकिंकरो
मिसुतांप्रति इत्युक्त्वागृहमागत्यकोपेनाविष्टचेतनः रज्जुभिः सादृढंबद्धाताडितालगुडेनह मुक्तासादिवसस्यान्ते
मातंगेनदुरात्मना रात्रौस्वप्नेगतापुत्रंकिंसुप्तोसिभवान्सुत आगताहंतुजननीमहत्कष्टंसमाश्रिता ॥ पुत्रउवाच ॥
वदमातः कथंकष्टसाप्रतंतववर्त्तते केनकर्मविपाकेनमातंगीयोनिमागता ॥ मातोवाच ॥ तवद्वारेस्थितातत्र
मातंगस्यचकन्यका तांमांविद्धिस्वकर्मातोविषमागतिमास्थिता सहितापितृवशेनगताचंडालतामह स्त्रीधर्म

मविजानंत्याकृतकर्ममयागृहे तेनकर्मविपाकेननरकेपतितास्म्यहं तथाकार्य्यंत्वयापुत्रयथाहंमोक्षमाप्नुयां इति
तस्यावचःश्रुत्वातत्सुतःशोककंपितः शीघ्रंविलोकयतेनैवगौरीसंवादमीक्षितं व्रतंचंदनषष्ठ्याख्यशोकमोहप्रणाश
नं मातुर्विमोचनायैवचकारविधिपूर्वकं नभस्यस्यासितेपक्षेयदापष्ठीप्रलभ्यते तस्यामुपोषणंकार्य्यंचंद्रमालोक्य
भोजनं रक्तचंदनलेपेन लिखत्सूर्य्यससोमकं गंधैःपुष्पैस्तथाधूपैर्दीपनैवेद्यसंयुतैः मनोरसैश्चविविधैः पूजये
त्सुसमाहितः कथानकंचश्रोतव्यंब्राह्मणान्परिभोजयेत् चंद्रोदयेसदादद्यादर्घ्यंचैवफलैः शुभैः सप्तम्यामुदितेचंद्रे
नार्घ्यंदद्यात्कदाचन कदाचिद्यदिदेन्नारीसाध्रुवंनरकंव्रजेत् चंद्रायार्घ्यदानमंत्रः ॥ क्षीरोदसागराजातह्यत्रिनेत्रस
मुद्भव गृहाणार्घ्यमिमंदेवनमोस्तुरजनीपते अनेनविधिनानेनंविप्रेणतद्व्रतंकृतं तेनपुण्यप्रभावेणगतासामोक्षमव्य
यं एतच्चंदनषष्ठ्याख्यंव्रतस्वर्गप्रदंनृणां गोशतस्यप्रदानेनयंत्फलंप्राप्नुयान्नरः तत्फलंसमवाप्नोतिव्रतमेतत्करोतियः सं
वत्सरंकृतंपापंक्षीणानश्यतितत्क्षणात्शुद्धदेहाभवेन्नारीव्रतमतत्समाचरेत् चंद्रलोकेवसेन्नित्यंयावच्चंद्रदिवाकरावितिं
भविष्योत्तरे ब्रह्मोक्तचंद्रषष्ठीव्रतकथानकम् ॥ अथव्रतविधिः ॥ पूर्वदिनेनिरामिषमेकवारं हविष्यभोजनंकुर्य्यात् व्र
तदिनेप्रातःसंकल्पंकुर्यात् ॐमयाहंमनोज्ञातरजोभावकृतपाकादिसंपर्कजपापक्षयपूर्वकचंद्रलोकप्राप्तिरूपमोक्ष
कामनयाचंद्रषष्ठीव्रतंकरिष्येततोनद्यादौगत्वापंचगव्यसहितेनजलेनस्नानं तत्रमंत्रः आपस्त्वमसिदेवेशज्योतिषां
पतिरेवच पापंनाशयदेवेशमनोवाक्कायकर्मजं इतिसूर्यायनमस्कारः॥ पंचपल्लवैर्मार्जनंकृत्वा ततोमृत्तिकयास्ना
नं मृत्तिकेब्रह्मपूतासिकश्यपेनाभिमंत्रिता पवित्रीकुरुमांनित्यंसर्वपापात्समुद्धर ततोवरुणंप्रार्थयेत् पाशग्रहस्त्वं
वरुणनदीनामीश्वरप्रभो अद्याहंप्रार्थयामित्वांपूतंकुरुमहेश्वर इत्येवंस्नात्वा ॥ तिलकंविधाय सूर्यायरक्तचंदना
क्षतपुष्पैरर्घ्यंदद्यात् नमोविवस्वतेब्रह्मन्भास्वतेविष्णुरूपिणे जगत्पवित्रेशुचयेसवित्रेकर्मसाक्षिणे इत्यर्घ्यंदत्वा

सदालापपूजाकीर्त्तनादिभिर्दिनंसमाप्यरात्रौचंद्रोदयेचंद्रायार्घ्यंदद्यात् श्वेतचंदनपुष्पफलाक्षतयुतमर्घ्यपात्रमादाय क्षीरोदसागरोद्भूतह्यत्रिनेत्रसमुद्भव गृहाणार्घ्यमिमंदेवनमस्तेरजनीपतेइत्यर्घ्यंदत्त्वा निरामिषमक्षारलवणं भोजनं कुर्यादितिव्रतविधिः ॥अथोद्यापनं ॥यथोक्तलक्षणंमंडपंवेदिकांवाविधाय तत्रोद्यापनसंभृतिमादाय संकल्पंकुर्यात् ॐअद्याहमात्मनोज्ञाताज्ञातरजोभावकृतपाकादिपंचकजनितपापक्षयपूर्वकचंद्रलोकप्राप्तिरूपमोक्षकामनयायथा कालसमाचरितचंद्रषष्ठीव्रतोद्यापनंकरिष्ये ततआचार्यवरणादिग्रहमंडलसर्वतोभद्रमंडलपूजासामान्यपद्धतिक्रमंविधाय सर्वतोभद्रस्थकलशेव्रताधिष्ठातृदेवताप्रतिमांसंस्थाप्यपूजामारभेत् द्विभुजपंकजारूढंसदाप्रहसिताननं निष्पादितंशिल्पिनाचतस्मिन्नेवादिनेपुनः ॥ अथध्यानम् ॥ ध्येयःसदासवितृमंडलमध्यवर्ती नारायणःसरसिजासनसन्निविष्टः केयूरवान्कनककुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ १ आगच्छदेव देवेशतेजोराशेजगत्पते गृहाणार्घ्यंमयादत्तंकृपयापरमेश्वर ॥ इत्यावाहनं नानारत्नसमायुक्तंकार्तस्वरविभूषितं आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतामित्यासनं ॥ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां इतिपाद्यम् ॥ नमस्तेदेवदेवेशनमस्तेधरणीधर नमस्तेकमलाकांतअर्घ्यंनःप्रतिगृह्यतामित्यर्घ्यं कर्पूरवासितंतोयंमंदाकिन्याःसमाहृतं आचम्यतांजगन्नाथमयादत्तंसुभक्तितइत्याचमनं पंचामृतंसमानीतंपयोदधिघृतंमधु शर्करारससंयुक्तंस्नानार्थंप्रतिगृह्यतामितिपंचामृतस्नानं गंगाचयमुनाचैवनर्मदाचसरस्वती तापीपयोष्णीरेवाचताभ्यःस्नानार्थमाहृतं तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यतां ॥ इतिशुद्धस्नानं ॥ सर्वभूषाधिकेदेवलोकलज्जानिवारणे मयोपपादितेदेववाससीप्रतिगृह्यतां ॥ इतिवासोयुगं ॥ देवदेवनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणसुरसत्तम ॥ इतियज्ञोपवीतं ॥ श्रीखंडचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठ

प्रीत्यर्थंप्रतिगृह्यता ॥ मितिगंधं ॥ अक्षताधवलाः श्रेष्ठाः कुंकुमाक्ताः सुशोभनाः भक्त्यामयार्पिता
देवपूजार्थं प्रतिगृह्यतां इत्यक्षताः मल्लिका मालती जाती केतकी चंपकानिच मयाहृतानिदेवे
शपूजार्थंप्रतिगृह्यतां इतिपुष्पाणि वनस्पतिरसोदिव्योगंधाढ्यःसुमनोहरः आघ्रेयःसर्वदेवानांधूपोयंप्रति
गृह्यतां इतिधूपः आज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहं इतिदीपम् इ
दंफलंमयादेवस्थापितंपुरतस्तव तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि इतिफलं पूगीफलंमहादिव्यंनागव
ल्लीदलैर्युतं खदिरासारसहितंप्रीत्यर्थंप्रतिगृह्यता इतितांबूलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोःअनंतपुण्यफ
लदमतःशांतिंप्रयच्छमे इतिदक्षिणा चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच सर्वेषांज्योतिषांज्योतिर्दीपोयंप्रतिगृ
ह्यतां इतिनीराजनं नमस्तेपुंडरीकाक्षनमस्तेस्तुरमाप्रिय नमस्तेकमलाकांतवासुदेवनमोस्तुते इतिपुष्पांजलिःया
निकानिचपापानिजन्मांतरकृतानिच तानिसर्वाणिनश्यंतिप्रदक्षिणापदेपदे इतिप्रदक्षिणं अर्घ्योयंगृह्यतां
देवभक्तिमेह्यचलांकुरु व्रतंमेपूर्णतांयातुसकलाःस्युर्मनोरथाः इतिपुष्पफलाक्षतमर्घ्यप्रदानं कुर्यात् नमः
सर्वहितार्थायजगदाधारहेतवे साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः इतिसाष्टांगप्रणामः आवाहंनैवजानामिनैव
जानामिपूजनं विसर्जनंनजानामित्वंगतिःपरमेश्वरइतिप्रार्थना ततः कलशेषुमासदेवतानांपूजनं तात्र्चभाद्रपद
मारभ्यात्रपूजनीयाः ॐभगवतेयोगेश्वरायप्राकम्यासहितायनमः इतिगंधादिभिः संपूज्य प्रार्थनांकुर्यात्
मासिभाद्रपदेपापमज्ञानाद्ज्ञानतःकृतं प्राकाम्यासहितस्तस्मात्पातुयोगेश्वरःप्रभुः १ ॐभगवतेपुंडरीकाक्षाय
लघिमासहितायनमः आश्विनेमासियत्पापमज्ञानाद्ज्ञानतःकृतं तस्मान्मांपुंडरीकाक्षोलघिमासहितोवतु २ॐभग
वतेकृष्णायरुक्मिणीसहितायनमः कार्तिकेमासियत्पापमज्ञानाद्ज्ञानतःकृतं तस्मात्त्वंभगवन्कृष्णरुक्मिण्यासह पा

हिमां ३ ॐभगवते महिनीसाहिताय अनंतायनमः मार्गशीर्षेकृतंपापंज्ञानादज्ञानतोयत माहिनासहितानंतभगवन्पा
हि मां ४ ॐभगवते अच्युताय प्रीतिसहितायनमः पौषमासिकृतंपापमज्ञानादज्ञानतोपिवा प्रीत्यासहाच्यु
तोदेवस्तस्मान्मं पातुसर्वदा ५ ॐभगवते चक्रिणे शक्तिसहितायनमः माघेमासिमयापापमज्ञानादज्ञानतोपिवा कृ
तंतस्मान्मांधुनातुचक्रीशक्त्यासमन्वितः ६ ॐभगवते गोविंदाय क्रियासहितायनमः फाल्गुनेमासियत्पापमज्ञाना
दज्ञानतोपिवा तस्मात्क्रियायुतोदेवोगोविंदोमासदावतात् ७ ॐभगवते जनार्दनाय श्रीसहितायनमः चैत्रे
मासिमयापापमज्ञानादज्ञानतोपिवा कृतंजनार्दनस्तस्माच्छ्रीसमेतोवतात्सदा ८ ॐभगवते उपेंद्राय महिमासहिता
यनमः वैशाखेमासियत्पापमज्ञानादज्ञानतः कृतं तस्मान्मां महिमायुक्त उपेंद्रोवतु सर्वदा ९ ॐभगवते यज्ञपु
रुषाय लक्ष्मीसहितायनमः ज्येष्ठमासिमयापापमज्ञानादज्ञानतः कृतं तस्माल्लक्ष्मीसमेतोव्यात्सर्वदा यज्ञपुरुषः
१० ॐभगवते वासुदेवाय कांतिसहितायनमः आषाढेमासियत्पापमज्ञानादज्ञानतः कृतं तस्मात्कांतिसमायुक्तो
वासुदेवः पुनातु मां ११ ॐभगवते प्राप्तिसहिताय हरयेनमः श्रावणेमासियत्पापमज्ञानादज्ञानतोपि वा तस्मात्प्राप्तिस
मायुक्तो हरिर्मां सर्वदावतु १२ ॐभगवते केशवाय ह्रीसमेतायनमः मलमासेपियत्पापमज्ञानादज्ञानत कृतं तस्मा
न्मांकेशवोदेवो ह्रीसमेतोवतात्सदा १३ ॥ इति व्रताधिष्ठातृयज्ञपुरुषपूजा ॥ अथतत्रैव ॥ ताम्रपात्रेघटेवा द्वादशारं
पद्मंविधाय तत्र सौवर्णं सूर्यबिंबं पूजयेत् पूर्वादिदलमारभ्य ॐभगवते आदित्याय प्रभासहितायनमः इति मार्ग
शीर्षमारभ्यान्यव्रतपूजा ॥ ॥ अथ भाद्रपदमारभ्यैवं पूजाकार्या ॐभगवते यमाय संयमनीसहितायनमः मासिभा
द्रपदे पापं दिवायच्चरितंमया तस्मात्संयमनीयुक्तो यमो मां परिरक्षतु १ ॐभगवते त्वष्ट्रे पद्मगर्भासहितायनमः
आश्विने यद्धि पापमज्ञानादज्ञानत कृतं पद्मगर्भासमेतोनः त्वष्टा तस्मात्सदावतु २ ॐनमो भगवते स्वर्पतये स्वर्गा

तिसंहितायनमः कार्तिकेमासियत्पापमज्ञानादज्ञानतःकृतं तस्मान्मांस्वर्पतिर्देव स्वर्गत्यासहितोवतु २ ओंभगवते आदित्यायप्रभासहितायनमः मार्गशीर्षेदिवापापमज्ञानादज्ञानतःकृतं तस्माच्च प्रभयासाकमादित्योहिपुनातुमां ३ ओंभगवतेदीप्तिसहितायरवयेनमःपौषेमासिदिवापापमज्ञानादज्ञानतःकृतं तस्मान्मांदीप्तिसहितःपुनातुभगवान्रविः ४ ओंभगवतेगभस्तयेप्रकाशासहितायनमः माघेमासिदिवापापमज्ञानादज्ञानतोपिवा तस्मात्प्रकाशयासार्द्धंगभस्तेत्वंपुनीहिमां ५ ओंभगवतेभानवेमरीच्यासहितायनमः फाल्गुनेयद्दिवापापमज्ञानादज्ञानतः कृतं तस्मान्मरीच्यासहितोभानुर्मांसर्वदावतु ६ ओंभगवते प्रभाकराय तपत्यासहितायनमः चैत्रेपियद्दिवापापमज्ञानादज्ञानतोपिवा तस्मात्प्रभाकरोदेवस्तपत्यासहितोवतु ७ ओंभगवतेदिवाकरायपद्मिनीसहितायनमः वैशाखेमासियत्पापमज्ञानादज्ञानतःकृतं तस्माद्दिवाकरोदेवःपद्मिन्यासहितोवतात् ८ ओंभगवतेधर्मायहव्यवाहासमेतायनमः ज्येष्ठेमासिदिवापापमज्ञानादज्ञानतोपिवा हव्यवाहासमेतोमांतस्माद्धर्मः सदावतु ९ ओंभगवतेतपनायतेजोवतीसहितायनमः आषाढेमासियत्पापमज्ञानादज्ञानतःकृतं तेजोवत्यासमेतोवैतस्मान्मांतपनोवतु ११ ओंभगवतेवरुणायसत्यभामासहितायनमः श्रावणेमासियत्पापमज्ञानादज्ञानतःकृतं तस्मात्पुनातुमांवरुणस्संयुतस्सत्यभामया १२ ततः श्वेतचंदनेन कांस्यपात्रे द्वादशपत्रं पद्मंनिर्मायतत्रराजतंचंद्रबिंबंनिधायपूजांकुर्यात् ओंभगवतेद्विजराजायपूर्वाभाद्रपदासहितायनमः मासिभाद्रपदेपापमज्ञानादज्ञानतः कृतं पूर्वाभाद्रपदायुक्तोद्विजराजोवतात्ततः १ ओंभगवतेविधवेआश्विनीसहितायनमः मासेचाश्वयुजेपापमज्ञानादज्ञानतःकृतं विधुर्मांभगवांस्तस्मादाश्विन्यासहितोवतु २ ओंभगवतेकुंजराधरायकृत्तिकासहितायनमः कार्तिकेमासियत्पापमज्ञानादज्ञानतः कृतं तस्मान्मांकृत्तिकायुक्तः पुनातुकुंजराधरः ३ ओंभगवतेमृगांकाय मृगशी

पोन्वितायनमः मार्गशीर्षेनयापापमज्ञानाद्ज्ञानतः कृत तस्मान्मृगशिरोयुक्तमृगांकत्वंपुनीहिमां ४ ओंभगवतेसुधांशवेपुष्यसहितायनमः पौषेमासिचयत्पापमज्ञानाद्ज्ञानतःकृत तस्मात्सुधांशुभगवान्पुष्ययुक्तःपुनातुमां ५ ओंभगवतेइंदवेमघासहितायनमः माघेमासिचयत्पापमज्ञानाद्ज्ञानतःकृतं तस्मान्मघासमायुक्तइंदुर्मामवतात्सदा ६ ओंभगवतेकुमुदबांधवायपूर्वाफाल्गुणीसहितायनमः फाल्गुणेमासियत्पापमज्ञानाद्ज्ञानत.कृतं तस्मात्पूर्वाफाल्गुणीत पायात्कुमुदबांधवः ७ ओंभगवतेचंद्रायाचित्रासहितानमः चैत्रेमासिचयत्पापमज्ञानाद्ज्ञानतः, कृतं चित्रयासंयुतस्तस्मान्मांचंद्रःसर्वदावतु ८ ओंभगवतेओषधीशायविशाखासहितायनमः वैशाखेमासियत्पापमज्ञानाद्ज्ञानत.कृतं तस्माद्विशाखासहित ओषधीशःपुनातुमां ९ ओंभगवतेनिशाकरायज्येष्ठासहितायनमः ज्येष्ठमासिमयापापमज्ञानाद्ज्ञानतःकृत तस्मान्निशाकरोदेवोज्येष्ठयासहितोवतु १० ओंभगवतेसुमनसेपूर्वाषाढासहितायनमः आषाढेमासियत्पापमज्ञानाद्ज्ञानतःकृत तस्मान्मांसुमनादेवः पूर्वाषाढायुतोवतु११ ओंभगवतेहिमांशवेश्रवणसहितायनमः श्रावणेमासियत्पापमज्ञानाद्ज्ञानतोपिवा हिमांशुर्भगवांस्तस्मात् श्रवणेनयुतोवतात् १२ ओंभगवतेपुरुषोत्तमायशांतिसहितायनमः मलिम्लुचेचयत्पापमज्ञानाद्ज्ञानत कृतं य.स्यात्शांतिसमायुक्त पातुमांपुरुषोत्तम. १३ तत.षष्ठीतिथिःपूज्या इत्येवंपूजांविधाय स्तोत्रपाठादिनाहःशेषंनीत्वारात्रौजागरणंकथाश्रवणादिकंचविधाय प्रातःस्नात्वा मंडलदेवतापूजां विधाय गृह्योक्तविधिना ग्निस्थापनं विधाय ब्रह्मणोवरणंचकृत्वा अन्वाधानांतमाग्निकार्यं यथाविधि कुर्यात् ततोमंडलदेवतामंत्रैर्ग्रहमंत्रैश्चहोमंसंपाद्य इदंविष्णुरितिमंत्रेणाष्टोत्तरशतमाहुतीः पायसाज्यद्रव्येण तैलाज्यद्रव्येण आऽप्णेनेतिमंत्रेणाष्टोत्तरशताहुतीर्हुत्वा पुन पायसाज्यद्रव्येणाप्यायस्वेतिचंद्रमंत्रेण हुत्वा ततः सकलहोमशेषं समाप्य स्विष्टकृद्धोमांते अभिषेकं

पूर्णाहुतिंचकृत्वा आचार्यंसंपूज्य सर्वतोभद्रस्थकलशप्रतिमादिकंपीठंवाचार्यायदत्त्वा व्रतपूर्तये शय्यादानं गोदानंच विधाय यथाशक्तिब्राह्मणान्संदन्नदक्षिणादिभिःसंतोष्याशिषोगृहीत्वा भूयसींदक्षिणां दत्त्वेष्टजनैःस हभुंजीतइतिसोद्यापनचंद्रषष्ठीव्रतम् अथशुक्लादि-श्रावणमासिककृष्णसप्तम्यांशीतलाव्रतं तच्च मध्याह्नव्यापिन्यां कार्य्यम् तथाच माधवीये हारीतः पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरिति अथव्रतविधिःमासपक्षाद्युल्लिख्य ममावैधव्यदारिद्र्याभावभर्तृवियोगानिरसनपूर्वकबाधानिवृत्त्यर्थं शीतलाव्रतंकरिष्ये तथाच मिलितोपचारैः शीतलांपूजयिष्ये इतिसंकल्पं विधाय कलशं संस्थाप्य तदुपरिशीतलां पूजयेत् ॥ तत्रध्यानं ॥ वंदेहं शीतलांदेवींरासभस्थांदिगंबरां मार्जनीकलशोपेतांसूर्पालंकृतमस्तकां कुंभसंस्थापयेद्देवींपूजयेन्नाममंत्र तःशीतलेदहमेपापंपुत्रसौख्यफलप्रदे धनधान्यप्रदेदेविपूजांगृह्णनमोस्तुते इतिसंप्रार्थ्य शीतलेशीतलाका रेऽवैधव्यसुतप्रदं श्रावणस्यासितपक्षेऽर्घ्यंगृह्णनमोस्तुते इत्यर्घ्यंदद्यात् शीतलेत्राग्निपक्वानिदध्नाचैवान्वि तानिच नैवेद्यस्वीप्रकुर्वीतघृतामिश्रंचसुंदरि कुमारीःसुभगाःसप्तपूजनीयाःप्रयत्नतः इतिपूजाविधिः ॥ अथ कथा हेमाद्रौभविष्यत्पुराणे श्रीकृष्णउवाच प्रसिद्धंश्रूयतांरम्यंनगरंहस्तिनापुरं इंद्रद्युम्नश्चराजाभून्नृपति लोकपालक धर्मकर्मविधानायतस्यभार्यायशस्विनी क्रियानाम्नीचसासाध्वीदानशीलाप्रियंवदा. बभूवप्र थमःपुत्रोमहाधर्मेतिनामतः वर्द्धतेपितृवात्सल्यात्कालेकन्यामजीजनत् द्वितीयाचतथापुत्रीतस्याजातागुणोत्तमा पुत्रीलक्षणसंपन्नाशुभकारीतिनामतः वरयेसापितुर्गेहेसर्वांगगुणसुंदरी नाम्नारूपेणसौवालासर्वोत्तमगुणाधिका सामुद्रिकगुणोपेतापद्महस्ताप्रियंवदा. वरांहिदेहमानेनलक्ष्मीवान्रूपवान्गुणैः समायर्योचजग्राहपाणिग्रहणंपूर्वं कं कदाचित्सापितुर्गेहेजामात्रानयनायच आजगामपरिजनैःस्वपुत्र्यानयनोत्सुका प्रणम्यचपितुःपादौत्व

रितंचारुहासिनी तत्पुत्रीनयनायापिजामाताकृतविग्रहः ततःसाकन्यकाप्रीतापितरंवाक्यमब्रवीत् रथमारुह्य
हेतातयास्यामिस्वपुरेगृहं तस्याःपितेत्युवाचेदंदंपत्योःशुभहेतवे पुत्रित्वंसुस्थिराभूत्वादिनमेकंवदस्वमे कन्यो
वाच तातनन्नपरिज्ञातयदुक्तंपद्मयोनिना पातिव्रत्यसमोधर्मोनास्तीहभुवनत्रये करिष्यामिव्रतंयच्चत्वयोक्तमति
शोभनं ततस्तांकारयामासशीतलाव्रतमुत्तमं पुत्रींचप्रेषयामासब्राह्मणोवेदपारगः व्रतोपकरणेपुत्रीमार्गेप्रासासरो
वरं शीतलापूजनार्थेतोर्गतासाध्वीसरोवरं तत्रदृष्ट्वातदामोहात्तडागंविधिसाधनंवभ्रामसावनेशून्येस्मरंती शीतला
व्रत श्रातिश्रांतायदौमोहाद्भयेनविपिनंमहत् स्मरंतीशीतलांवृद्धांनारीरूपांददर्शसा सुवासिनिविजानीहिसाध्वी
मांवरवर्णिनि भविष्यतिचिरंजीवीभर्त्ताभर्तृवत्सले आगच्छपूजनार्थायदर्शयामिसरोवरं तयासहगतासाध्वीत
डागेविधिपूर्वकं पूजयामासशर्वाणींतोषयामासशीतलां पूजयित्वाचतांदेवींसुपथंगंतुमुद्यता शीतलायाव
रंगृह्यसहसख्याचप्रस्थिता ययौसादृदशेरण्येस्वभर्त्ताकिंनुवक्ष्यति सरोवरंसमायातोन्वेषयन्शतविग्रहः ब्राह्म
णोनिद्रयासुप्तःपूर्वकर्मस्वभावतः दष्टोभुजगरूपेणसंयुक्तःपूर्वकर्मणा दृष्ट्वापतिंविषहतंशीतलायाःपतिव्रता वरंसं
गृह्यशालायांरुरोदकरुणंबहु तयोस्तरुणदंपत्योर्भाग्यसौभाग्यदर्शनात् रुदंतीकरुणंज्वालायाचयामासतद्धृतं याव
त्तुपरलोकायजनसंघैःसुसंस्कृते कृशाणौतुसहैवात्रगंतुमिच्छामिवाह्निना तस्मात्साहंप्रवेक्ष्यामिपावकेपतिनासह श्र
जैयिष्येसुखंदिव्यमक्षयंयद्भवांतरे तावद्ददर्शतांदेवींशीतलांवरदांशुभां शीतलोवाच ॥ वत्सेकिमिदमित्युक्तंनश्रुतं
वरवर्णिनि शीतलाव्रतकारिण्यावैधव्यंनैवजायते स्वस्थमुत्थाप्यकल्याणिपतिंसुप्तंगृहनय बोधयाशुत्वयाचीर्ण
व्रतंवैधव्यनाशनं इत्युक्ताबोधयामासभर्त्तारंसापतिव्रता तथेत्युत्थायतद्भर्त्तामृतोजीवमवाप्यच भर्त्तापिमुदितांद
दृष्ट्वातांप्रियांप्रीतकर्म्मणा दृष्ट्वातुमहदाश्चर्यंतद्ग्रामस्थायिनोजनाः सर्वेतेविस्मयंजग्मुर्ब्राह्मणैःपरिवारिताः ब्राह्मणो

हर्षितांदृष्ट्वाप्रणिपत्यपतिव्रता याचयामासमाभूयोवैधव्यंचवियोगिता अन्यापिशीतलायास्तुतव्रतंनारीकरिष्यति
अवैधव्यमदारिद्र्यमवियोगंस्वभर्त्तृतः इत्युक्त्वांतर्दधेदेवीशीतलाकामरूपिणी शीतलायावरंलब्ध्वाजगामाथस्ववे
श्मनि पद्मानिवासप्रभविष्णुवंद्या समर्हणासाधितसर्वमंगला प्रसादमासाद्यचशीतलयानित्योत्सवापार्वतिवद्बभूव
इतिभविष्योत्तरेशीतलासप्तमीव्रतं अथशीतलामंत्रजपविधिर्भैरवीतंत्रे अस्यश्रीशीतलादेवीमंत्रस्यउपमन्युऋषिः
बृहतीछंदः श्रीशीतलादेवता ओंबीजं ह्रींशक्तिः श्रींकीलकंश्रीशीतलादेवीप्रीत्यर्थेजपेविनियोगः अथन्य,
सः ऋषिः शिरसि छंदोमुखे देवताहृदि बीजंगुह्ये शक्तिः पादयोः कीलकंनाभौ विनियोगः सर्वांगे
व्यापकत्वेनन्यस्तव्यः अथकरषडंगन्यासः ह्रांश्रां १ ह्रींश्रीं २ ह्रूंश्रूं ३ ह्रैंश्रैं ४ ह्रौंश्रौं ५ ह्रः श्रः ६
॥ ध्यानम् ॥ दिग्वाससंमार्जनिकांचसूर्पंकरद्वयेसंदधतींत्रिनेत्रां श्रीशीतलांसर्वरुजांप्रशांत्यैरक्तांगरागस्रजम
र्चयामि १ ओंह्रींश्रींशीतलायैनमः इतिदशलक्षजपेत् पायसेनदशांशहोमः तद्दशांशेनतर्पणं तद्दशांशे
नमार्जनं कुमारीविप्रभोजनंचकार्यं विस्फोटकशांतिर्भवति अस्याःपूजायंत्रं अष्टदलं पद्मं चतुर्द्वारोपेतंविर
चय्य कर्णिकायाषडंगानिसंपूज्य मध्येमूलेनशीतलांदेवींसंपूज्य पत्रेष्वेतादेवताःपूजयेद्यथा ओंह्रींश्रींसुनंदायाः
श्रीपादुकांपूजयामिनमः १ ओंह्रींश्रींचंडिकायाःश्रीपा. २ ओंह्रींश्रींसुमालायाःश्रीपा. ३ ओंह्रींश्रींसुधालायाः
श्रीपा. ४ ओंह्रींश्रींमदविह्वलायाःश्रीपा- ५ ओंह्रींश्रींआमोदायाःश्रीपा. ६ ओंह्रींश्रींप्रमोदायाःश्रीपादु- ७
ओंह्रींश्रींसुखदायाःश्रीपा. ८ चतुरस्रेषुद्वारेषुच इंद्रादीन् ८ पूजयेत् तद्बाह्ये वज्रादीनिआयुधानि ८ पूजयेत्
अथमंत्रांतरमुच्यते ओंह्रींतंनमःशीतलायैविस्फोटकान्विनाशय- २ वातंछेदय. २ दाहंस्तंभय २ ओंह्रींतंनमः
शीतलायैस्वाहा ४८ इत्यनेनमंत्रेणापिजपोयथाशक्तिकार्यःअथशीतलावाहनस्यनामानि रासभोगर्दभश्चैवखरो

वैशाखवाहनः शीतलावाहनचैवदूर्वाकंदननंदनः एतानिखरनामानिशीतलाग्रेतुयःपठेत् तस्यदेहेचगेहेचशीतलारु
क्नजायते अथशीतलाकवचंभैरवतंत्रे देव्युवाच भगवन्सर्ववेत्तात्वंलोकानांहितकारकः देवादिदेवदेवेशस
र्वलोकनमस्कृतः श्रीमान्सर्वकलाभिज्ञः सर्वतंत्रविचक्षणः देव्याःश्रीशीतलायाश्च कवचंब्रूहिभैरव ईश्वरउ
वाचशृणुदेविप्रवक्ष्यामिरहस्यंसुरदुर्लभं कवचंशीतलादेव्याजगन्मंगलकाभिधम् पठनाद्धारणाद्यस्यशुभंभवतिस
र्वतः श्रीजगन्मंगलस्यास्यकवचस्यऋषिः शिवः छंदोनुष्टुप्समाख्यातंदेवताशीतलेरिता लक्ष्मीर्बीजंपराश
क्तिःकामराजस्तुकीलकं बालानांदेविरक्षार्थं विनियोगःप्रकीर्तितः ॐअस्यश्रीशीतलादेवीकवचराजस्यसदा
शिवऋषिरनुष्टुप्छंदः श्रीशीतलादेवीदेवता श्रींबीजं ह्रींशक्तिः क्लींकीलकं बालानांविस्फोटकरोगशांतये
पाठेविनियोगः ॥ ध्यानं ॥ उद्यदिंदुवदनांचतुर्भुजांशक्तिपाशपरिघांकुशायुधां द्वारिणींशवगतांसितांबरांशी
तलांभगवतींहृदिस्मरेत् एवंध्यात्वाकवचंपठेत् ॐह्रींश्रींशुभंकरीपातुमस्तकंचंद्रशीतला ललाटंसुकुमारां
गीभ्रुवौब्रह्मांडचारिणी नेत्रेमेपातुमातंगीश्रुतीमेछिन्नमस्तका नासांमेपातुचामुंडा पायादोष्ठौसुरेश्व
री मुखंमेपातुसुमुखीदंतान्मेरक्तदंतिका जिव्हांज्वालामुखीपातुकंठंकालीममावतु स्कंदमाताचमेस्कं
धौबाहूमेबगलामुखी हस्तौकमलहस्ताव्यान्नखान्मेभैरवेश्वरी वक्षोमेपातुवाराही स्तनौपातुमनोन्मना
पार्श्वौपीतांबरीपातुपृष्ठंनीलसरस्वती शिश्नमेभगमालाव्यान्मेढ्रंमहिषघातिनी गुह्यंमेगुह्यकेशानीऊरूमेभुव
नेश्वरी जानूनेविजयापातुजंघेमेपातुभैरवी गुल्फौमेपातुवीरेशीपादौत्रिपुरसुंदरी विस्मारितंचयत्स्थानंय
त्स्थानंनामवर्जितं तत्सर्वंपातुमेनित्यंविद्येयंश्रीदशाक्षरी पादादिमूर्धपर्यंतंसर्वांगसंधिसंयुतं शिरसःपादप
र्यंतंशीतलापातुमेवपुः रणेराजकुलेद्यूतेविवादेशत्रुविग्रहे मारीभयेचदुर्भिक्षेश्रींह्रींक्लींशीतलावतु पूर्वेमांपातुब्रा

ब्राह्मीवह्नौह्रींवैष्णवीतथा दक्षिणेउँमहेशानीऐंऐंह्रींनैतवेऽस्तु पश्चिमेक्लींचकौमारी वायव्येक्रींनृसिंहिका उत्तरेषोडशीपायादैशानेश्रींशिवावतुऊर्ध्वेउँह्रींउग्रतारापात्वधोमेपराजिता प्रभातेपातुमांवालामध्याह्नेत्रिपुरावतु सायंसरस्वतीपातुनिशीथेभद्रकालिका सर्वत्रशुभदापातुउँह्रींश्रींक्लींदशाक्षरी इतीदंकवचंगुह्यंजगन्मं. गलकाभिधं शीतलायाश्चसर्वस्वंरहस्यंममपार्वति सर्वमंत्रमयंदिव्यंसर्वसिद्धिप्रदायकं पठेद्वापाठयेद्वापि कवचंदेवदुर्लभं रोगीचमुच्यतेरोगाद्बद्धोमुच्येतबंधनात् नाग्निभीर्ज्वरपीडाचजायतेपरमेश्वरि वालानांपीडितानांचपठेद्वापाठयेद्यदि ससद्योरोगमुक्तस्तुजायतेसुभगःशिवे कुंकुमालक्तकस्तूरीरसैर्देविरविर्दिने विलिख्यकवचंदिव्यंपूजयित्वाचशीतलां श्वेतचंदनपुष्पैश्चासितवस्त्रेणपार्वति धूपदीपादिनैवेद्यैः क्षीरेणतर्पयेत्ततः धारयेद्योपिकवचंमृत्युंप्राप्तोपिजीवति शतावर्त्तंपठेद्यस्तुदशावर्तंव्रतीशुचिः तस्यदेवीस्वयंदेवमातवहितकारिणी इतीदंकवचंपुण्यंशीतलायारहस्यकं गोपनीयंगुह्यतममदेयंयस्यकस्यचित् ॥ ॐ ॥ इतिश्रीभैरवीतंत्रेशीतलाकवचम् ॥ इतिभाद्रकृष्णसप्तम्यांशीतलासप्तमीव्रतम् ॥

अस्यामेववाराहपुराणोक्तंपुत्रप्राप्तिव्रतं तत्रविष्णुंसंपूज्य गोपालमंत्रेणसघृतैःकृष्णतिलैरष्टम्यांहोमंकृत्वा ब्राह्मणान्संभोज्यविल्वपत्रप्राशनपूर्वकंस्वयमपिषड्संभुजीत एवंसर्वासुकृष्णपक्षसप्तमीषुव्रतंकुर्वीत वत्सरांतेगोयुग्मं दद्यात्पुत्रप्राप्तिर्भवतीति पुत्रसप्तमीव्रतम् ॥ अथभाद्रकृष्णाष्टम्यांदशाफलव्रतं नारदीये नभस्यस्याऽसिताष्टम्यांदशाफलमितिव्रतं उपवासंचसंकल्प्यस्नात्वाकृत्वाचनित्यकं तुलस्याःकृष्णवर्णायादलैर्दशभिरर्चयेत् कृष्णंविष्णुंतथानंतंगोविंदंगरुडध्वजं दामोदरंहृषीकेशंपद्मनाभंहरिंप्रभुं एतैश्चनामभिर्नित्यंकृष्णदेवंसमर्चयेत् नमस्कारंततःकुर्याद्व्रतानांव्रतमुत्तमं आदौमध्येतथाचांतेहोमंकुर्याद्विधानतः कृष्णमंत्रेणजुहुयाच्चरुणाष्टोत्तरंशतं

होमांतेविधिनासम्यगाचार्यंपूजयेत्सुधीः सौवर्णेताम्रपात्रेवामृण्मयेवेणुपात्रके तुलसीदलंसुवर्णेनकारयित्वासुलक्ष
णं हेम्नावाप्रतिमांकृत्वापूजयित्वाविधानतः विधायप्रतिमांतत्राचार्यायनिवेदयेत् दातव्यागौःसवत्साचवस्त्रा
लंकारभूषिता दशार्द्धकृष्णदेवायपूरिकादशचार्पयेत् तद्वद्द्याद्विधिज्ञायस्वयंवाभक्षयेद्व्रती वायनंचप्रदातव्यंय
थाशक्तिद्विजोत्तम दशमेन्हिततोमूर्तिंसद्रव्यंगुरवेर्पयेत् व्रतांतेदशविप्रेभ्यःप्रत्येकंदशपूरिकाः दद्यादेवंदशाब्दंतुकृ
त्वाव्रतमनुत्तमं उद्याप्यविधिनाभूयात्सर्वकामसमन्वितः अंतेकृष्णस्यसायुज्यंलभतेनात्रसंशयः इदंशुक्लादिश्रव
णकृष्णाष्टम्यांदशाफलव्रतं तत्रास्यविधिः ॥ ध्यानम् ॥ तमद्भुतंबालकमंबुजेक्षणंचतुर्भुजंशंखगदाद्युदायुधं
श्रीवत्सलक्ष्मंगलशोभिकौस्तुभंपीतांबरंसांद्रपयोदसौभगं महार्हवैदूर्यकिरीटकुंडलत्विषापरिष्वक्तसहस्रकुंतलं
उद्दामकांच्यंगदभूषणादिभिर्विरोचमानंवसुदेवऐक्षत ॥ १ ॥ श्रीगोपालकृष्णायनमःध्यायामि चारुदेवायआव
हयामि शेषशायिने आसनं तीर्थपादाय पाद्यं गंगाजनकायअर्घ्यं यमुनावेगसंहारिणे आचमनं नित्यमुक्तायपं
चामृतस्नानं कृष्णायशुद्धोदकस्नानं पीतवासिनेवस्त्रं यज्ञप्रियाययज्ञोपवीतं सर्वेश्वरायगंधं अधोक्षजायाक्षताःक
लाप्रियाय पुष्पाणि तुलसीदलानिच ततोंगपूजां कुर्यात् कृष्णायनमः शिरःपूजयामि विष्णवेनमः
मुखपूज.हरयेनमः कंठंपूज॰ शेषशायिनेनमोबाहूपू॰ गोविंदायनमोहृदयंपू. गरुडध्वजायनमः नाभिंपू.
दामोदरायनमः गुह्यंपू. हृषीकेशायनमः ऊरूपू. पद्मनाभायनमः पादौपू. उपेंद्रायनमः सर्वांगंपूजः
पारिजातापहारकाय धूपं ज्ञानप्रदायदीपं चक्रिणे नैवेद्यं पद्मनाभाय नीराजनं पूगीफलं तांबूलं
इदंफलमितिफलं हिरण्यगर्भगर्भस्थमिति दक्षिणा देवदेवनमस्तेस्तुभक्तप्रियकृपानिधे गृहाणार्घ्यंमयाद
त्तंदेवक्यासहितप्रभो इत्यर्घ्यं त्रिलोकनाथोदेवेशस्सर्वभूतदयानिधिः दानेनानेनसुप्रीतोभवत्विहसदामम

वायनं श्रीकृष्णःप्रतिगृह्णातिश्रीकृष्णोवैददातिच श्रीकृष्णस्तारकोभूभ्यांश्रीकृष्णायनमोनमः संसारार्णवमग्ना नांनराणांपापकर्मणां इहमोक्षफलावाप्तिंकुरुष्वपुरुषोत्तम इति ॥ अथकथा सूतउवाच ॥ शृणुध्व मृषयः सर्वेनैमिषारण्यवासिनः पुराकृतयुगस्यादौकृष्णदेवेनभाषितं तद्व्रतंवःप्रवक्ष्यामिसांगोपांगंमुनीश्वराः पुरावैद्वापरस्यांतेपांडवाःकौरवास्तथा द्यूतंप्रचक्रिरेसर्वेधनमानेनमोहिताः निर्जिताःपांडवादुःखाद्वनंप्रापुर्महीश्वराः कुंतीविदुरगेहेतुसंस्थितासुमहायशाः तच्छ्रुत्वाकृष्णदेवोपिकृपयापरयायुतः आययौगरुडारूढोविदुरस्य गृहंप्रति तत्रापश्यन्महातेजाःकुंतींपरमदुःखितां विदुरेणार्चितःकृष्णःकुंतींचैवाहभक्तितः नत्वाहकुंतींत्वांदेवींपश्याम्यद्यविडंबयन् त्वत्पुत्रास्तुमहादुःखं प्रापुस्तेगहनेवने तवापिसुमहद्दुःखंसर्वदातन्ममाप्रियं कुंत्युवाच हृषीकेशमहाबाहोमहादुःखेनकर्षिताः कृपयापरयादेवरक्षितावयमीदृशाः ममचैवमहादुःखंत्वयिभ्रातृजसंस्थिते मत्पुत्रास्तेमहादुःखात्प्रविष्टागहनंवनं कृपयाविदुरोमह्यंभोजनंप्रस्थसंमितं ददातिप्रत्यहंकृष्णजीवनंममदुःखदं गृहस्यपश्चिमेभागेवसाम्यवंजनार्दन दर्शिताकौरवाणांहिसर्वेषांकुमतिस्तथा इतितस्यावचः श्रुत्वाकृष्णःपरमधर्मवित् दशाफलमितिख्यातंतद्व्रतंकुरुसुव्रते कुंत्युवाच कस्मिन्कालेप्रकर्त्तव्यंतद्व्रतंकेशवप्रभो वदमांप्रातिचेत्युक्तोजगादसात्वतेश्वरः कृष्णउवाच श्रावणस्यासितपक्षेकृष्णाष्टम्यांनिशीथके देवक्यांवसुदेवाद्यप्रादुर्भवतिकेशवः तदर्थेदशगुणितंसूत्रंस्थाप्यप्रपूजयेत् हस्तेवद्ध्वातुतत् सूत्रं दशाहंव्रतमाचरेत् संसारार्णवमग्नानांनराणांपापकर्मणां इहामुत्रफलावाप्तिंकुरुष्वपुरुषोत्तम अनेनडोरकंवद्ध्वादशवर्षंव्रतंचरेत् देवस्यपुरतोनित्यंदशपद्मानिकारयेत् ततश्चशृणुयात्पुण्यांकथामेतांशुभावहां तुलस्याःकृष्णवर्णायादलैर्दशभिरर्चयेत् कृष्णंविष्णुंतथानंतंगोविंदंगरुडध्वजं दामोदरंहृषीकेशंपद्मनाभंहरिंप्रभुं एतैश्चनामभिर्नित्यंकृष्णदेवंसम

चयेत् नमस्कारंप्रकुर्वीतप्रदक्षिणसमन्वित एवंदशादिनंकृत्वाव्रतानामुत्तमंव्रतं आदौमध्येतथाचांतेहोमकु
र्य्याद्विधानतः कृष्णमंत्रेणजुहुयाच्चरुणाष्टोत्तरंशतं ततोहोमांतविधिनाआचार्य्यंपूजयेत्सुधीः सुवर्णताम्रपात्रे
वामृण्मयेवेणुपात्रके तुलसीदलंसुवर्णेनकारयित्वासुलक्षणं प्रतिमांचततःकृत्वापूजयित्वाविधानतः विधायप्र
तिमांतत्रआचार्य्यायनिवेदयेत् दातव्यागौःसवत्साच वस्त्रालंकारभूषिताः दशाहोमेतुकृष्णायपूरिकादश
चार्पयेत् दापयेत्तुब्राह्मणायस्वयंभुक्तातथैवच वायनंतुगृहणीष्वसर्वोपस्करसंयुतं ससारार्णवमग्नानांपाहि
देवकिनंदन अनेनोद्यापनंकृत्वानमस्कृत्यक्षमापयेत् दक्षिणाभिर्युतादेविदातव्याकृष्णसन्निधौ दशांतेदश
विप्रेभ्यःप्रत्येकदशपूरिकाः एवदशसुवर्षेषुव्रतंकुर्य्यान्नरोत्तम एवंव्रतत्वयादेविकर्तव्यंकृष्णसन्निधौ एवमुक्तातु
ष्णेनकुंतीश्रुत्वामुदान्विता उवाचकृष्णदेवंतंममवित्तंनविद्यते प्रत्युवाचहृषीकेशस्तववित्तंभविष्यति एवमुक्त्वाययौ
ष्णःकर्णगृहंमुदान्वितःकर्णोपिसुमहात्मानंकृष्णंदृष्ट्वाप्रहर्षितः सिंहासनंददौतस्मैपाद्यमर्घ्यंतथैवच कर्णोप्युवा
चदेवेशकिमर्थंतवचागमः उवाचकृष्णदेवोथतवमातातिदुःखिता कर्णउवाच दुर्योधनभयात्कृष्णमातरंयाम्यहंक
थं कथंवादुःखितामाताप्रमुच्येतवदस्वमे श्रीकृष्णउवाच सुवर्णपात्रंसंपूर्य्यपायसक्षीरसंयुतं प्रत्यहंतत्रदातव्यं
चार्यपुत्रके तवमातातथाप्रीताभविष्यतिनसंशयः एवमुक्त्वातदाकृष्णोजगामद्वारिकांमुदा सकृष्णभाषितं
शतनिष्कंतुवाग्यतः ततःश्रुत्वाकथांकर्णश्चक्रेसर्वंमहाशयः पंचभक्ष्यसमायुक्तंपात्रंस्वर्णेनकारितं शतनि
ष्कसमायुक्तंविप्रहस्तेप्रदायसः प्रत्यहंवैतथाकुंतीपुत्रंदृष्ट्वातुहर्षिता देवस्यसन्निधौकुंतीव्रतंचक्रेतुभक्तितः कृष्णे
नकारितंसर्वंममभाग्यायवैध्रुवं कृष्णपूजांततःकृत्वाकथांश्रुत्वाचपूर्ववत् उद्यापनेददावन्नंब्राह्मणेभ्योयथाक्रमं तु
लसीदलसुवर्णेनकारयित्वासुलक्षणं प्रतिमांविष्णुभक्तायस्वर्णपात्रेनिधायच गोदानेनसमायुक्तामाचार्यायमहं

सती कुंतीददौतदातत्रविष्णुर्नःप्रीयतामिति व्रतंदशसुवर्णैपुत्रकारोप्यपन्नंततः तद्व्रतस्यप्रभावेणतनूजाःसमुपा
गताः हत्वाशत्रून्मृधेसर्वान्कृष्णस्यचप्रसादतः युधिष्ठिरःसधर्मात्मास्वंराज्यंप्राप्तवान्सुधीः प्रोवाचेदंव्रतंकुंतीद्रौ
पदींचपतिव्रतां दशाफलमितिख्यातंकृष्णदेवेनभाषितं एवंसर्वेमहादुःखान्निस्तीर्यस्वपुरींगताः व्रतस्यास्यप्र
भावेण कृष्णस्यचप्रसादतः सापिचक्रेमहाभागाद्रौपदीव्रतमुत्तमं तस्मात्सर्वप्रयत्नेनकर्तव्यंतुव्रतंजनैः प्राप्त
व्याकुरुतेनारीव्रतानामुत्तमंव्रतं सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते इदंव्रतंमहापुण्यंव्रतानामुत्तमंस्मृतं
वदतांशृण्वतांचैवविष्णुलोकप्रदंध्रुवम् ॥ ॥ इतिभविष्योत्तरेदशाफलव्रतम् ॥ अथास्यामेवभाद्रकृष्णजन्मा
ष्टम्यां श्रीकृष्णजन्माष्टमीव्रतं ॥ तदुक्तंनारदीये ॥ कृष्णजन्माष्टमीचैषास्मृतापापहरानृणां केवलेनोपवासेनत
स्मिन्जन्मदिनेहरेः सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः उपवासीतिलैःस्नातोनद्यादौविमलेजले सुदेशेमंडपे
कृत्वामंडलंलेखयेत्सुधीः तन्मध्येकलशंस्थाप्यताम्रजंवापिमृण्मयं तस्योपरिन्यसेत्पात्रंताम्रंतस्योपरिस्थितं है
मींवस्त्रयुगाच्छन्नांकृष्णस्यप्रतिमांशुभां पाद्याद्यैरुपचारैस्तुपूजयेत्स्निग्धमानसः देवकींवसुदेवंचयशोदांनंदमेवच ब
लंगोपांस्तथागोपीर्गाश्चदिक्षुसमर्चयेत् ततश्चार्धरात्रिंकृत्वाक्षमाप्यानन्यभक्तितः तिष्ठेत्तथैवार्धरात्रेपुनःसंस्नापये
द्धरिं पंचामृतैःशुद्धजलैर्गंधाद्यैःपूजयेत्पुनः धान्याकंचयवानीचनागरंशर्करांतथा सजीरकंघृतंपात्रेनैवेद्यंविनिवेद
येत् पुनरर्धरात्रिंकृत्वादशधारूपधारिणंविचिंतयन्शशांकायदद्यादर्घ्यंसमुद्यते क्षीरोदसागरोत्पन्नह्यत्रिनेत्रसमुद्भ
व गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ततःक्षमाप्यदेवेशंरात्रिशेषंनयेद्व्रती पौराणिकैःस्तोत्रपाठैर्गीतवाद्यै
स्तेनकथा ततःप्रभातेविप्राग्र्यान्भोजयेन्मधुरान्नकैः दत्वाचदक्षिणांतेभ्योविसृजेत्तुष्टमानसःततस्तांप्रतिमांविष्णोःस्व
र्णंधेनुसमन्वितां गुरवेदक्षिणांदद्याद्विसृज्याश्नीतचस्वयम् दारापत्यसुहृद्भृत्यैरेवंकृत्वाविधानतः साक्षाद्गो[illegible]कमा

भोतिविमानवरमास्थितः नैतेनसदृशंचान्यद्व्रतमस्तिजगत्रयेकृतेनयेनलभ्येतकोटिरेकादशीफलम् अत्रशातिमादा नेस्वर्णधेनुसमन्वितंगोदानमुक्तं सुवर्णधेनुतिलधेन्वादिदानप्रकरणोक्तं अथवासुवर्णदक्षिणान्वितधेनुयुताप्रति मादेयाइति अथजन्माष्टमीनिर्णीयतेसाचामांतमासपक्षेश्रावणकृष्णाष्टमी पूर्णिमांतमासपक्षेभाद्रकृष्णाष्टमी उभय थाप्येकैव उभयविधोपिस्मार्तव्यवहारोदर्शयिष्यते साचाद्विविधाशुद्धाविद्धाच तत्रशुद्धायामष्टौतत्रसप्तमीयोग रहिताशुद्धा सप्तमीयुक्ताविद्धा शुद्धाच त्रिविधासमान्यूनाअधिकाचेति तत्रसूर्योदयादुदयपर्यंतस्थितासमाततोर्वा ङ्निवृत्ता न्यूना तमतिक्रम्यप्रवृत्ताअधिका विद्धापिसमन्यूनाधिकभेदेन त्रिधा तत्र शुद्धसमारोहिणीसहितातद्र हिताचेतिद्विविधा शुद्धाधिकातुपूर्वदिनएवरोहिणीसहिता उभयत्ररोहिणीसहिता उभयत्ररोहिणीरहिताचेतिचतु र्विधा एवंशुद्धाप्यष्टविधा एवंविद्धसमापि रोहिणीसहितातद्रहिता विद्धन्यूनाभिरोहिणीसहिता उभयत्ररो हिणीरहिताचेतिचतुर्विधा एवंविधाप्यष्टविधा उभयेषांशुद्धविद्धभेदानां मेलनेषोडशप्रकाराभवंति द्वावन्यावांतर भेदौयथा अर्धरात्रेरोहिणीयुक्ताष्टमीजयंतीत्येके द्वितीयानवमीयुक्ताष्टम्यांबुधवारसोमवारयोरन्यतरणयोगे एव मष्टादशप्रकाराजन्माष्टमीतत्रसकामैर्निःकामैश्चसर्वथोपवासःकर्तव्यः गृध्रमांसखरंकाकश्येनंचमुनिसत्तम त्रैलो क्यजनितंपापंभुंक्तेनसंशयः येनकुर्वंतिजानंतःकृष्णजन्माष्टमीव्रतं तेभवंतिमहाप्राज्ञव्यालामहतिकानने श्रा वणेबहुलेपक्षेकृष्णजन्माष्टमीव्रतं नकरोतिनरोयस्तुभवतिब्रह्मराक्षसः अकुर्वन्नरकंयातियावदिंद्राश्चतुर्दश अती तानागतंतेनकुलमेकोत्तरंशतं पातितंनरकेघोरेयोभुंक्तेकृष्णवासरे रटंतीहपुराणानिभूयोभूयोमहामुने तथा कृष्ण जन्माष्टमींत्यक्त्वायेन्यद्व्रतमुपासते नाप्नुवंतिशुभंकिंचिदिष्टापूर्तमथापिवा श्रावणेबहुलेपक्षेनकरोतियदाष्टमीं क्रूरायु धाःक्रूरमुखाहिंसंतियमकिंकराः इत्यादिवाक्यैरकरणेप्रत्यवायश्रवणात् वर्षेवर्षेतुयानारीकृष्णजन्माष्टमीव्रतं

नकरोतिमहाप्राज्ञव्यालीभवतिकानने वर्षेवर्षेतुकर्तव्यंतुष्ट्यर्थंचक्रपाणिन इत्यादिस्कंदादिवाक्येषु वीप्साश्रुतेश्चव
क्ष्यमाणजयंतीव्रतमपिनित्यं यद्बाल्येयच्चकौमारेयौवनेवार्द्धकेतथा बहुजन्मकृतंपापंहंतिसोपोषितातिथिःसप्तजन्म
कृतंपापंराजन्यत्रिविधंनृणांतत्क्षालयतिगोविंदस्तिथौतस्यांसमर्चितःउपवासश्चतत्रोक्तोमहापातकनाशनःजयंत्यां
जगतोपालविधिनानात्रसंशयइतिवन्हिपुराणवचनेतथा शूद्रान्नेनतुयत्पापंशवहस्तस्यभोजने तत्पापंलभतेमर्त्यो
जयंत्याभोजनेकृतइति स्कंदपुराणवचनेन तथाब्रह्मघ्नश्चसुरापश्चगोवधेस्त्रीवधेपिवा नलोकोमुनिशार्दूलजयंती
विमुखस्यच नकरोतियदाविष्णोर्जयंतीसम्भवंव्रतं यमस्यवशमापन्नःसहतेनारकींव्यथां जयंतीवासरेप्राप्तेकरो
त्युदरपूरणं खाद्यतेतिलमात्रंतुयमदूतैःकलेवरम् जोभुंजीतविमूढात्माजयंतीवासरेन्नृप नरकोत्तरणंनास्तिद्वादशी
मपिकुर्वत इत्यादिवचनैश्च तदकरणेदोषश्रवणात् शवहस्तस्यभोजनेशावहस्तस्थभोजनइत्यर्थः जन्माष्टमीव्रतं
काम्यमपिफलश्रवणात् तथाचस्कान्दे व्रतेनाराध्यदेवेशंदेवकीसहितंहरिं त्यक्त्वायमपथंघोरंयातिविष्णोःपरंपदं
जन्माष्टमीव्रतंयेवैप्रकुर्वंतिनरोत्तमाः कारयंत्यथवालोकाल्लक्ष्मीस्तेषांसदास्थिता स्मरणंवासुदेवस्यमृत्युकालेभ
वेन्मुने सिध्यंतिसर्वकाम्यानिकृतेजन्माष्टमीव्रते इत्यादि तथाजयंतीव्रतमपिकाम्यं महाजयार्थंकुरुतांजयंतीं
मुक्तयेऽनघ धर्ममर्थंचकामंचमोक्षंचमुनिपुंगव ददातिवांछितानर्थान्येचान्येप्यतिदुर्लभा इतिस्कंदादौ फलश्रुतेः
तथाभविष्योत्तरे जयंतीकल्पेपि प्रतिवर्षंविधानेनमद्भक्तोधर्मनंदन नरोवायदिवानारीयथोक्तंफलमाप्नुयात् पुत्रसं
तानमारोग्यंसौभाग्यमतुलंलभेत्इहधर्मरतिर्भूत्वामृतोवैकुंठमाप्नुयादित्यादि तत्रादौजयन्तीस्वरूपंतावन्निरूप्यते
माधवीयेविष्णुधर्मोत्तरे रोहिणीचयदाकृष्णपक्षेष्टम्यांद्विजोत्तम जयन्तीनामसाप्रोक्तासर्वपापहरातिथिरिति सन
त्कुमारसंहितायां शृणुष्वावहितोराजन्कथ्यमानंमयानघ श्रावणस्यचमासस्यकृष्णाष्टम्यांनराधिप रोहिणीयदि

लभ्येतजयंतीनामसातिथिःस्कांदे प्राजापत्येनसंयुक्ताऽष्टमीतुयदाभवेत् श्रावणेबहुलेसातुसर्वपापप्रणाशिनी जयं
पुण्यंचकुरुतेजयांपुण्यांचतांविदुरिति शिवपुराणेपिशिववाक्यं शृणुवत्सप्रवक्ष्यामिअष्टमीभेदनिर्णयं श्रावणेकृष्ण
पक्षस्यघटीह्यष्टिर्यदाभवेत् तदाजन्माष्टमीस्यातासम्पूर्णासाप्रकीर्त्तिता रोहिणीऋक्षसंयुक्ताजयंतीसातुकथ्यते
वसिष्ठउवाच श्रावणेवानभस्येवारोहिणीसहिताष्टमी यदाकृष्णानरैर्लब्धासाजयंतीतिकीर्त्तिता श्रावणेनभवेद्योगो
नभस्येतुभवेद्ध्रुवं तयोरभावेयोगस्यतस्मिन्वर्षेनसम्भवइति अत्रश्रावणइतिमुख्यः कल्पः नभस्योऽनुकल्पः
यदिवाश्रावणेयदिवानभस्येसर्वथापिरोहिणी कृष्णजन्माष्टमीयोगेजयंतीत्येतदविवादं पुराणांतरेपि रोहिणीचय
दाकृष्णपक्षेष्टम्यांद्विजोत्तम जयंतीनामसाप्रोक्तासर्वपापहरातिथिः अत्र चयद्यपिसामान्यतः कृष्णाष्टमीरोहि
णीयोगोजयंतीत्युक्तमिति तथापि पूर्वोक्तवचननिचयपर्यालोचनयात्रत्वष्टमीपदस्यजन्माष्टमीपरतयाननापिवच
नेन जन्माष्टमीरोहिणीयोगस्यैव जयंतीत्वमुक्तं अत्रकेवलेनोपवासेनेतिवाक्ये केवलोपवासस्यफलसंबंधप्र
तीतेरुपवास एव प्रधानं पूजादेःस्पष्टफलसंबंधानवगमात्तदंगत्वं तस्यामभ्यर्चनंशौरेर्हंतिपापंत्रिजन्मजामि
त्यादिस्तुतिमात्रमितिप्राञ्चः उपवासः पूजाचेत्युभयंप्रधानं जन्माष्टमीदिनेप्राप्तइतिस्कांदात् अर्द्धरात्रेतुरो
हिण्यांयदाकृष्णाष्टमीभवेत् तस्यामभ्यर्चनंशौरेर्हंतिपापंत्रिजन्मजं सोपवासोहरेः पूजांकृत्वातत्रनसीदती
ति भविष्यत्पुराणाच्च तयोरेवफलसंबंधावगमादितिकालतत्वविवेचने अत्रकेचित् यत्तुमयूखे सोपवासोहरेःपूजा
मित्यत्र मासिभाद्रपदेऽष्टम्यांकृष्णपक्षेऽर्धरात्रके शशांकेवृषराशिस्थेऋक्षेरोहिणिसंज्ञके योगेस्मिन्वसुदेवाद्दिदे
वकीमामजीजनत् तस्मान्मांपूजयेत्तत्रशुचिः सम्यगुपोषितः इत्यादावुपवासस्य गुणत्वप्रतीतेः सदंतोधाव
तीत्यादिवत्फलसत्कारः पूजैवप्रधानमिति तदापाततः केवलेनोपवासेनतस्मिन्जन्मदिनेशुभे सप्तजन्म

कृतात्पापान्मुच्यतेनात्रसंशयइतिवचनेन केवलोपवासस्यफलसंबंधश्रवणात् अर्द्धरात्रेतुरोहिण्यांयदाकृष्णाष्टमी भवेत् तस्यामभ्यर्चनंशौरेर्हंतियापंत्रिजन्मजमित्यत्रपूजायाः केवलायाएव जयंत्यामुपवासश्चमहापातकनाशनः सर्वैःकार्योमहाभागपूजनीयश्चकेशवइतिभविष्यद्विष्णुधर्मयोरप्येकवाक्ये फलसंबंधश्रवणाच्च अतएव प्रयोगभेदकल्पनापत्तिरपिपरास्ता यत्राप्येकैकस्यश्रवणं तत्राप्यपरस्योपलक्षणीयत्वाच्च सोपवासोहरेः पूजामित्यत्रशुचिः सम्यगुपोषितइत्यत्रचोपवासस्यविशेषणत्वेनोपादानेऽपि प्राधान्यंनविहन्यते यजतावद्देशवत् एवंचसति वासुदेवसमुद्दिश्यसर्वपापप्रशांतये उपवासंकरिष्यामिकृष्णाष्टम्यांनभस्यके इतिभविष्योक्तसंकल्पवाक्ये यदुपवासमात्रग्रहणं तत्पूजाया अप्युपलक्षणं विध्यनुसारित्वात्संकल्पः एवंसतिवासुदेवंसमुद्दिश्येत्यप्यांजस्येनोक्तमिति पूजायांतस्योद्देशत्वादुपवास उद्देश्यानपेक्षणात् वासुदेवशब्देन तत्प्रीतिलक्षणयाच तदपेक्षयाजघन्यउपवासपदएव यथाश्रुततदन्वयार्थं पूजालक्षणायामुक्तत्वात् उपवासोपसर्जनकपूजालक्षणायांच वसुदेवंसमुद्दिश्येत्यस्याविशेष्यपूजान्वयोपपत्तेः अतएवद्वितीयसंकल्पवाक्ये अर्चयित्वोपवासेनभोक्ष्येहमपरेहनि इतिपूजायाअप्युल्लेखः तस्मादुभयमपिप्रधानं स्मृतिकौस्तुभेतु मदनरत्नाद्युदाहृतभविष्योत्तरस्य जन्माष्टमीशास्त्रे तावदालोच्यमाने कीदृशंतद्व्रतंदेवसर्वदेवैरनुष्ठितमित्युपक्रम्य प्रसंगेनापियोभक्त्याव्रतंपश्येज्जनाकुलमित्युपसंहारात् जन्माष्टमीसंज्ञकव्रतस्यैव प्राधान्यमितिप्रतीयते व्रतशब्दश्च मानससंकल्पवाचित्वेन स्नातकव्रतप्रकरणेभियुक्तैर्व्याख्यातः किंविषयकः ससंकल्पइत्याकांक्षायां यावत्योंतरालउपवासपूजादयः फलसंबंधितयानिर्दिष्टाः क्रियास्तावत्योविषयत्वेनसंबध्यंते तावद्विषयकसंकल्पस्य फलसंबंधो ज्ञायत एव सकलश्रुतीनांतेष्टफलश्रुतीनामितात्पर्यावगमात् संभवंति चैवंसतिसंकल्पागमंत्रउपवासशब्देनप्रधानक्रियाप्रकाशना उ

पवासोनामसेतिकर्त्तव्यताकोभोजनसकल्पइतिहेमाद्र्यादिभिरुक्तत्वात् तस्मात्संकल्पस्यैवप्राधान्यमिति ए
तेनजयंतीव्रतमपिव्याख्यातं तत्रापिव्रतशब्देनैवोपक्रमोपसंहारादिति नचैवमष्टमीरोहिणीतिवसिष्ठवचनेर्द्धरा
त्रस्यमुख्यकालत्वाभिधानमनुपपन्नमितिवाच्यं मुख्यस्यकालइतितत्पुरुषापेक्षया मुख्यः कालः इतिकर्मधार
यस्यस्थपत्यधिकरणन्यायेनौचित्यात् कालस्यमुख्यत्वंच स्वव्याप्त्याऽसाधारण्येननिर्णायकत्वमतोनानुपपत्ति
रित्युक्तं अस्याश्च पूजायाः कालउक्तोविष्णुधर्मोत्तरे रोहिणीसहिताकृष्णामासिभाद्रपदेष्टमी सप्तम्यामर्द्ध
रात्राधः कलयापियदाभवेत् तत्रजातोजगन्नाथः कौस्तुभीहरिरीश्वरः तमेवोपवसेत्कालंतत्रकुर्याच्चजागरं
अर्द्धरात्रेतुयोगोयंतारापत्युदयेतथा नियतात्माशुचिः स्नातः पूजांतत्रप्रवर्तयेदिति वसिष्ठस्तु स्पष्टमर्द्ध
रात्रस्य मुख्यकालत्वमाह अष्टमीरोहिणीयुक्तानिश्यर्द्धेदृश्यतेयदि मुख्यकालःसविज्ञेयस्तत्रजातोहरिः
स्वयमिति मुख्यस्य प्रधानस्य कालोमुख्यकालः श्रीभागवते दशमस्कंधे तृतीयाध्यायेऽपि ॥
अथसर्वगुणोपेतःकालः परमशोभनः यर्ह्येवाजनजन्मर्क्षंशांतर्क्षग्रहतारकमित्युपक्रम्यनिशीथेतमउद्भूतेजायमाने
जनार्दने देवक्यांदेवरूपिण्यांविष्णुस्सर्वगुहाशयःआविरासीदित्यादिअजनजन्मर्क्षंरोहिणी यद्यपि त्रिकालंपूजये
द्देवंदिवारात्रौविशेषतःअर्द्धरात्रेपिचतथाप्यर्द्धरात्रकालावच्छिन्नैव पूजा प्रधानं तथाचभविष्योत्तरे मासिभाद्रपदेऽ
ष्टम्यांनिशीथेकृष्णपक्षगे शशांकेवृषराशिस्थेऋक्षेरोहिणिसंज्ञके योगेस्मिन्वसुदेवाद्धिदेवकी मामजीजनत् तस्मा
न्मांपूजयेत्तत्र शुचिः सम्यगुपोषितः ब्राह्मणान्भोजयेद्भक्त्याततोदद्याच्चदक्षिणां हिरण्यंमेदिनींगावोवासांसि
कुसुमानिच यद्यदिष्टतमंतत्तत्कृष्णोमेप्रीयतामिति नारदीयसंहितायामपि उपोष्यजन्मचिह्नानिकुर्याज्जागरणं
तुयः अर्द्धरात्रयुताष्टम्यांसोऽश्वमेधफलंलभेदिति एवंसत्यर्द्धरात्रेऽष्टमीसद्भाव एवात्रकार्यकालव्याप्तिरित्यभिधीयते

यत्तदेवाभिप्रेत्य विष्णुरहस्ये पठ्यते अर्द्धरात्रेतुरोहिण्यामित्यादितस्मिन्नर्द्धरात्रे पूर्वापरयामयोः कियत्प
रिमाणमपेक्षितमित्यपेक्षायामादित्यपुराणेदर्शितं अर्द्धरात्रादधश्चोर्द्ध्वंकलयापियदाभवेत् जयतीनामसाप्रोक्ता
सर्वपापप्रणाशिनीति वराहसंहितायामपि सिंहेर्केरोहिणीयुक्तानभः कृष्णाष्टमीयदि राज्यर्द्धपूर्वापरगा
जयंतीकलयापिचेतिरात्रेरर्द्धं राज्यर्द्धंपूर्वंचअपरंचपूर्वापरे राज्यर्द्धंचतेपूर्वापरेचतयोर्गच्छतिवर्तत इतिराज्यर्द्धपूर्वा
परगा योगीश्वरोपि रोहिणीसहिताकृष्णामासेचश्रावणेऽष्टमी अर्द्धरात्रादधश्चोर्ध्वमित्यादिकलायाअति
सूक्ष्मत्वेनदुर्लक्षणत्वात्सएवपक्षांतरमाह अर्द्धरात्रादधश्चोर्ध्वमेकार्द्धघटिकान्विता रोहिणीचाष्टमीग्राह्याउपवा
सव्रतादिष्विति एकाचार्द्धघटिकाताभ्यामन्विता कलाद्यपेक्ष्यार्द्धघटिकास्थूला तामपेक्ष्यघटिकास्थूलातत्राय
मर्थः पूर्वभागावसानएकाघटिका उत्तरभागादौचैकेतिमिलित्वातन्निशीथशब्दवाच्यंतावत्परिमाणंसर्वैरपिसुल
क्ष्यत्वान्मुख्यः कल्पः तदसम्भवेघटिकार्द्धघटिकाऽन्वेष्टव्या तस्याअप्यसंभवे कलेति तत्रमुख्यंपक्षमभिप्रेत्यभ
विष्योत्तरेनिशीथेकृष्णपक्षगइत्युक्त तच्च वचनं साकल्येनपूर्वमेवोदाहृतं अत्रजयन्त्यांचंद्रार्घ्यस्यावश्यकर्तव्य
त्वात्तस्यचचंद्रोदयकालीनत्वान्निशीथेयोगः प्रशस्तः एतदेवमाधवीयेविष्णुधर्मोत्तरेऽभिहितं अर्द्धरात्रेतुयोगो
यमित्यादिसोयमर्द्धरात्रेयोगोमुख्यः कल्पः यस्तुकृत्स्नाहोरात्रयोगः सोयंमुख्यतरः यश्च यदाकदाचि
दीषद्योगः सोऽनुकल्पः सच वसिष्ठसंहितायांदर्शितः अहोरात्रेतयोर्योगोह्यसंपूर्णोभवेद्यदि मुहूर्तमप्यहोरा
त्रेयोगश्चेत्तामुपोषयेदिति वासरेवानिशायांवायत्रस्वल्पापिरोहिणी विशेषेणनभोमासिसैवोपोष्यामनीषिभि
रिति योयंजयंतीव्रतेयोगनिर्णयः सएवजन्माष्टमीव्रतेऽपिद्रष्टव्यः यस्मिन्वत्सरेयोगोनास्तितस्मिन्वत्सरे ज
न्माष्टमीव्रतमेकमेवप्रवर्त्तते यदाचपूर्वेद्युः परेद्युर्वारोहिणीयोगस्तदाजन्माष्टमीजयंत्यामंतर्भूताज्ञेया नतुज

न्माष्टमीव्रतपृथक्कार्यं तदुक्तंमाधवेनैव यस्मिन्वर्षेजयंत्याख्योयोगोजन्माष्टमीतदा अंतर्भूताजयंत्यांस्यादक्षयोगःप्र
शस्तता इतिमदनरत्ननिर्णयामृते गौडमैथिल्यमतेप्येवंनिर्णयसिंधौ हेमाद्रिस्तु रोहिणीसंयुतोपोष्यासर्वा
घौघविनाशिनी अर्द्धरात्रादधश्चोर्ध्वमित्यग्निपुराणादर्धरात्र एव रोहिणीयोगस्य प्राशस्त्यान्मुहूर्तमपि ल
भ्यतेत्यादिनाचार्द्धरात्रयोगेप्युपपत्तेर्नजयंतीव्रतांभिन्नं किंच रोहिण्यामर्द्धरात्रेचेति विष्णुधर्मोक्तेः समायोगेतु
रोहिण्यांनिशीथेराजसत्तम समजायतगोविंदोवासरूपीचतुर्भुजः तस्मात्तंपूजयेत्तत्रयथावित्तानुरूपत इति
वह्निपुराणाच्चार्द्धरात्रस्य कर्मकालत्वमवसीयते अतः कर्मणोयस्ययः कालइत्यादिवचनात्पूर्वत्रैव प्राप्तेःपरदि
नेसमेपिरोहिणीयोगस्यनप्रयोजकताअन्यथाबुधवारादेरपितत्वापत्तेः किंचजयंतीशब्दोरात्रिविशेषवचनः अ
भिजिन्नामनक्षत्रंजयंतीनामशर्वरी मुहूर्तोविजयोनामयत्रजातोजनार्दन इतिब्रह्मांडपुराणात् तेन तद्योगिरोहि
ण्यागौणत्वान्नव्रतभेदइत्यूचियानितिस्थितं यत्तु निर्णयसिंधौ रोहिणीयोगश्चाहोरात्रेचेत्तामुपोषयेदिति वसिष्ठसंहि
तोक्तेरित्याद्युक्तं तत्तुच्छमाधवाचार्यधृतवसिष्ठसंहितोक्ताष्टमीरोहिणीयुक्तेऽतिमुख्यत्वबोधकवचनविरोधात् पूर्वोक्त
माधवग्रंथविरोधाच्चेत्यलं तदेवकर्मकालेनिरूपितेवक्ष्यमाणव्यवस्थोपयोगित्वेनैव बोधोनिरूप्यते सचात्राति
ध्वंतश्वदष्टम्यादिवाप्रवेशसत्येव न किंतुरात्रिमात्रसत्त्वेपिभवत्येव पूजारूपस्यप्रधानस्यार्द्धरात्रसाध्यत्वात् अहः
सुतिथयःपुण्याइतिवचनाच्च अन्यत्रापिअष्टमीशिवरात्रिश्चह्यर्धरात्रादधोयदि दृश्यतेघटिकायास्तुसर्वविद्धाप्र
कीर्तितेति इदमर्द्धरात्रात्पूर्वंघटिकासद्भावेवचनंसर्वकृष्णाष्टमीसाधारणं जन्माष्टम्यांतुकलासद्भावोपिपूर्वोक्त
विष्णुधर्मोत्तरादिवचनेष्वभिहितः तदेववेधेनिर्णीतेसंप्रतिपूर्वोक्तभेदेषुव्यवस्थोच्यते तत्रशुद्धयोः समन्यूनयो
रोहिणीसहितयोस्तद्रहितयोर्वानविवादःउत्तरदिनेऽष्टम्यभावात्एवंविद्धयोरपिसमन्यूनयोर्नविवादः शुद्धाधिक

विद्धाधिकावायदान्यतरास्मिन्नेवदिने रोहिणीसहिता तदा सैव ग्राह्या जन्माष्टम्यांभवेदत्रकलैकारोहिणी
नृप जयंतीनामसाज्ञेयाउपोष्यासाप्रयत्नतः सप्तजन्मकृतं पापंराजन्यत्त्रिविधंनृणां तत्क्षालयतिगोविंद
स्तिथौतस्यांसुभावित इतिवन्हिपुराणवचनात् कृष्णाष्टम्यां कृष्णजन्माष्टम्यां कालतत्त्वविवेचने उत्तर
दिनएव रोहिणीयोगे निशीथव्यापिनीमपिकिंबहुनाशुद्धामपिपूर्वांपरित्यज्योत्तरैव जन्मष्टमी व्रते ग्राह्या ननु
चार्द्धरात्रस्यकर्मकालत्वतावास्थितं कर्मकालव्याप्तिशास्त्रस्यचसर्वापेक्षयाबलवत्त्वमुपपादितमेव रोहिणीयो
गेतु प्राशस्त्यात्फलातिशयमात्रं नतु तस्यनिर्णयोपयोगिता नवमीबुधवारादियोगवत् अन्यथाव्रतयोनिगता
नांतुव्रतत्वंनाशितंनरैः यैःकृताश्रावणेमासिअष्टमीरोहिणीयुता किंपुनर्बुधवारेणसोमेनापिविशेषतः किंपुनर्न
वमीयुक्ताकुलकोट्यास्तुमुक्तिदेति पद्मपुराणवचनात्पूर्वेद्युरर्धरात्रे रोहिणीयुतामप्यष्टमीं विहाय बुधवारादि
युक्तापराकर्तव्यास्यादिति अत्रोच्यते कर्मकालव्याप्तिशास्त्रादेवप्रधानभूतायाअर्द्धरात्रसत्त्वेनप्राप्तग्राह्यं दिवावाय
दिवारात्रौनास्तिचेद्रोहिणीकला रात्रियुक्तांप्रकुर्वीतविशेषेणेंदुमयुतामितिवचनेन रोहिणीयोगाभावविषयंक्रियते
एवंहितस्यार्थः दिवावच्छेदेनरात्र्यवच्छेदेनवाकलामात्रापिचेद्रोहिण्यष्टम्यांनास्तितदैवचंद्रोदयसंयुतामर्द्धरात्रव्या
पिनीमितियावत् प्रकुर्वीत दिनद्वयेपिताद्दश्याअभावेबहुरात्रिसंयुतामुत्तरांप्रकुर्वीतेति विष्णुरहस्यादिपदमर्द्धरात्र
गततत्परमितित्वत्यंताशुद्धं तथात्वेचात्थस्यैवानर्थक्यप्रसंगात् यदाहि शुद्धाप्यष्टम्यर्द्धरात्रवर्त्तमानाग्राह्यातदारोहि
णीसहितामुत्तरामितिकिंवचनेन मुहूर्तमप्यहोरात्रइति वचनेतु स्पष्टैवाहोरात्रसंबाधियात्किंचिन्मुहूर्तप्रतीतिः उदये
चाष्टमीकिंचिन्नवमीसकलादीत्यत्रच सूर्योदयप्रतीतिः तेनरोहिणीरहितायानिशीथव्यापिन्याअपवादेनानिर्णाय
कएवरोहिणीयोगोनतुबुधवारादिवत्प्राशस्त्यमात्रहेतुप्रतीतेरित्यपियुक्तं रात्रियुक्तांप्रकुर्वीततामुपावसेदुपोष्यासा

प्रयत्नात्स्याद्दिनुनिर्णायकत्वस्यैवप्रतीतेः बुधवारादियोगवाक्येषुतुप्राशस्त्यमात्रप्रतीतेरिति मयूखेतुयदापूर्वेद्युरो
हिणीरहितानिशीथगाष्टतिथिः परेद्युरोहिणीसहितानिशीथास्पृक्चतदापूर्वैवग्राह्या कर्मकालशास्त्रस्यसर्वापेक्षया
प्राबल्यस्यसर्वग्रंथसिद्धत्वात् रोहिणीयोगेतुप्राशस्त्यात्फलातिशयमात्रंतुतस्यनिर्णयोपयोगिता नवमीबुध
वारयुत् अन्यथाप्रेतयोनिगतानामितिपाद्मवचसापूर्वेद्युरर्द्धरात्रेवर्त्तमानां सरोहिणीमप्यष्टमीं त्यक्त्वा बुधन
वमीयुतापरैवकार्येत्यापद्येनेति निर्णयसिंधावपि यदापूर्वेद्युर्निशीथेष्टमीपरेह्निरोहिणीतदापरेद्युर्जयंतीयोगस्यस
त्त्वात्परैवेतिमाधवः तदुक्तंतेनैव यस्मिन्वर्षेजयंत्याख्येति पूर्वविद्धाष्टमीयातुह्युदयेनवमीदिने मुहूर्तमपि
संपूर्णासंपूर्णासाष्टमीभवेत् कलाकाष्ठामुहूर्तापियदाकृष्णाष्टमीतिथिः नवमीसैवग्राह्यास्य त्सप्तमीसंयुतानहीं
तिपाद्मोक्तेश्च केचित्तु हेमाद्रौ अष्टम्याःप्राधान्यात्तस्याश्चपूर्वेद्युःकर्मकालव्यापित्वात्पूर्वैव पाद्मेतु पूर्वेह्निनिशी
थेष्टम्यभावस्तत्रव्रतंज्ञेयं अंतर्भावोक्तिरतुमूर्खप्रतिदर्शनमात्रमित्याहुःनत्वष्टम्याःकर्मकालव्याप्तौदिवावापि दिवेति
वाक्येरोहिणीयुतायाग्राह्यत्वोक्तेर्वचनात्कर्मकालव्यापिनींत्यक्त्वापूर्वांपरावाल्पापिरोहिणीयुताग्राह्येति वस्तुतस्तुउ
पवासद्वयंकार्यंद्वयोर्नित्यत्वादितिस्थितं शुद्धाधिकायदापूर्वस्मिन्दिनेनिशीथेरोहिणीयुक्ता उत्तरदिनेपितद्युक्तातदा
पूर्वैवग्राह्या रोहिण्यामर्द्धरात्रेचयदाकृष्णाष्टमीभवेत् सोपवासोहरेःपूजांकृत्वातत्रनसीदति विष्णुधर्मोत्तरवच
नात् यदातुशुद्धाधिका कार्यादिनद्वयस्यार्द्धरात्रंविहायरोहिणीयोगस्तदापिपूर्वैवग्राह्या तस्याः सर्वाहोरात्रव्यापि
त्वप्रथमातिक्रमेकारणाभावाद्यदातुशुद्धाधिकादिनद्वयेपिरोहिणीरहितातदाप्यहोरात्रव्यापित्वात्पूर्वैवग्राह्यादिवा
वेतिवचनाच्च विद्धाधिकातुयदापूर्वस्मिन्नेवदिनेनिशीथेरोहिणीयुक्ता दिनांतरेतुनिशीथंविहाय रोहिणीयुक्तातदापू
र्वैवग्राह्या सप्तमीसंयुताष्टम्यांनिशीथेरोहिणीयदि भवितासाष्टमीपुण्यायावच्चंद्रदिवाकरावितिवह्निपुराणवचनात्

पद्मपुराणेपि कार्याविद्धापिसप्तम्यारोहिणीसहिताष्टमीतत्रोपवासंकुर्वीतातिथिभांतेचपारणमिति आदित्यपुराणे
विनाऋक्षेनकर्तव्यानवमीसंयुताष्टमी कार्याविद्धापिसप्तम्यारोहिणीसहिताष्टमी तत्रोपवासंकुर्वीततिथिभांतेचपारण
मिति विष्णुधर्मोत्तरे जयंतीशिवरात्रिश्चकार्येभद्राजयान्विते कृत्वोपवासंतिथ्यंतेतथाकुर्यात्तुपारणमिति जन्माष्ट
मीजयंतीचशिवरात्रिस्तथैवच पूर्वविद्धैवकर्तव्यातिथिभांतेचपारणमिति जयंत्यापूर्वविद्धायामुपवासंसमाचरेदिति
गारुडाच्च यदातुविद्धाधिकोत्तरस्मिन्नेवदिनेनिशीथेरोहिणीसहितापूर्वदिनेतुनिशीथंविहायरोहिणीतदोत्तरैवग्रा
ह्या मासिभाद्रपदेष्टम्यांकृष्णपक्षेर्द्धरात्रके शशांकेवृषराशिस्थेप्राजापत्यर्क्षसंयुते उपोषितोर्चयेद्विष्णुंयशोदांदेव
कींतथेतिभविष्योत्तरवचनात् यदानविद्धाधिकादिनद्वयेप्यर्द्धरात्रेरोहिणीयुक्तादिनद्वयेप्यर्द्धरात्रंविहायरोहिणीस
हितावातदोत्तरैवग्राह्या अविद्धायांतुसंज्ञायांजातोदेवकिनंदनइतिवचनात् वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमीस
ऋक्षापिनकर्तव्यासप्तमीसंयुताष्टमी ब्रह्मवैवर्त्तवचनात्हेमाद्रौयदार्द्धरात्रादूर्ध्वंकलामात्रमप्यतिक्रम्याष्टमीप्रवृत्तारो
हिणीच द्वितीयेन्हिमुहूर्त्तंद्वेमुहूर्त्तेवातदाद्वितीयैवग्राह्या तथाचस्कंदपुराणे सप्तमीसंयुताष्टम्यांभूत्वाऋक्षंद्विजोत्तम
प्राजापत्यंद्वितीयेह्निमुहूर्ताधंभवेद्यदि तदाष्टयामिकंज्ञेयंप्रोक्तंव्यासादिभिःपुरेति पाद्मेपि मुहूर्तेनापिसंयुक्तासम्पू
र्णासाष्टमीभवेत् किंपुनर्नवमीयुक्ताकुलकोट्यस्तुमुक्तिदेति तत्रैव पूर्वविद्धाष्टमीयातुउदयेनवमीदिनेमुहूर्त्तमपिसंयुक्ता
संपूर्णासाष्टमीभवेत् कलाकाष्ठमुहूर्तापियदाकृष्णाष्टमीतिथिः नवम्यांसैवग्राह्यास्यात्सप्तमीसंयुतानहीति यदाशु
द्धाधिकायांविद्धाधिकायांवाद्वितीयदिनएवरोहिणीयोगः तदाप्राजापत्यर्क्षसंयुक्तेतिविष्णुरहस्यवचनादुत्तरस्या
ग्राह्यत्वंप्रागुक्तं तस्याएवबुधवारादियोगेनप्राशस्त्यातिशयोपि पूर्वोक्तः प्रेतयोनिगतानामितिपद्मपुराणेप्रदर्शितः
निर्णयामृतेपि यदास्वल्पापिसूर्योदयेष्टमीसाचरोहिणीयुक्ता उपरिसकलानवमीबुधवारेणवायुताभवति तदासं

पूर्णामप्यष्टमींपरित्यज्यसैवस्वल्पाप्युपोष्या  तदुक्तंब्रह्मपुराणे  उदयेचाष्टमीकिंचित्सकलानवमीयदि भवेद्बुधे नसंयुक्ताप्राजापत्यर्क्षसंयुता  अपिवर्षशतेनापिलभ्यतेवानवाविभोइति  केचित्तुयत्तुमयूखे  सोमेनेत्यत्रयुक्तं तुचंद्रोदययुतेत्युक्तं तन्मंदं  बुधवारसांनिध्यात्सोमवारग्रहणौचित्यान्माधवमदनरत्नानिर्णयामृतादिषुसोमपदेन सोमवारग्रहणाच्च  नृसिंहपरिचर्यायामपि सोमपदस्यसोमवारत्वमुक्तं निर्णयसिंधौतु उदयेत्यादिवचनं दानादिविषयंउपवासाश्रवणादित्यनंतभट्टःउदयेचन्द्रोदये इतिदीक्षिताःअप्येवंगौडास्तु नवमीक्षयपरमिदंवचनं नवमीसकलायदीतिभविष्योक्तेः  एवंतत्पूर्वदिनेजयंत्यभावपरमित्याहुः  जयंत्यादिसर्वापवादोयमित्याचार्यचूडामणयादयः वयंतु  सत्यंव्रतभेदः  जन्माष्टम्युपवासःपूर्वेद्युरेवपरेद्युर्जयंतीव्रतत्वादुपवासद्वयंकार्यमित्यपिस्थितं यातु विद्धाधिका दिनद्वयेऽपि रोहिणीयोगरहितासाचतुर्वेधा पूर्वस्मिन्नेवदिनेनिशीथवर्तमानोत्तरस्मिन्नेवदिनेनिशीथवर्तमाना दिनद्वयेऽनिशीथवर्त्तमानादिनद्वयेपितत्रावर्तमानाचेति  तत्राद्ययोः पक्षयोर्यानिशीथव्यापिनीसैवग्राह्या दिवावायदिवारात्राविति वचनात्  तृतीयचतुर्थयोस्तूत्तरैवग्राह्या  बहुतरसंकल्पादिकर्मकालव्यापित्वात् वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमीत्यादिवचनैः  सप्तमीसहितायाअष्टमीनिषेधाच्चेतिकृतमलंविस्तरेण  यद्यप्यत्राद्वितीयचतुर्थभेदौमाधवाद्युदाहृताष्टमीशिवरात्रिश्चेतिवचनप्रतिपादितार्द्धरात्रात्पूर्वसप्तमीसद्भावरूपवेधग्रहणेऽ नुपपन्नौतथापिविद्धापदेनप्रकृते  सप्तमीमिश्रामात्रोपादानेनानुपपन्नौ अथनृसिंहपरिचर्यामतंलिख्यते सूर्योदयादुपरिपलमात्राष्टमीनिर्गमे सत्यामसत्यांवारोहिण्यांद्वितीयदिनएवजन्माष्टमीव्रतंकर्त्तव्यं  उदयेचाष्टमीतिस्कांदवचनात् प्रेतयोनिगतानामितिपाद्मवचनाच्चसप्तमीविद्धातुसर्वथात्याज्यैवजन्माष्टमींपूर्वविद्धांसऋक्षांसकलामपि  विहायनवमींशुद्धामुपोष्यव्रतमाचरेत्  शुद्धांऋक्षहीनां पलवेधेतुविप्रेंद्रसप्तम्याअष्टमींत्यजेत्  सुरायाबिंदुनास्पृष्टंगंगाम्भः

कलशंपयेति वर्जनीयाप्रयत्नेनेत्यादिपूर्वोक्तस्कांदवचनाच्च अष्टम्यनिर्गमेतुसप्तमीविद्धाप्युपोष्या एकादश्यांअनि
र्गमेपिदशमीविद्धापरित्यागेनशुद्धद्वादश्युपवासविधानवच्छुद्धनवम्युपवासविधानाभावात् रोहिणीयोगस्तुबुध
सोमवारादियोगवत्प्राशस्त्यातिरेकपरोनोपवासप्रयोजकः तथात्वेनदभावेव्रतलोपप्रसंगात् कालनिर्णयक
रास्तूभयार्द्धरात्रेरोहिण्यष्टमीयोगउभयार्द्धरात्रेरोहिण्यष्टमीयोगाभाव उत्तरार्द्धरात्रएवरोहिण्यष्टमीयोगेपूर्वार्द्धरा
त्रेरोहिणीमात्रयोगेचोत्तरेद्येपोष्यान्यदापूर्वा दिनद्वयेऋक्षाभावेपिव्यवस्थापयिपवउदयेचेत्यस्यदिनद्वयेप्यर्द्ध
रात्ररोहिण्यष्टमीयोगपरत्वंवर्णयांवभूवुः तत्राष्टमीयोगातिरिक्तस्यऋक्षादियोगस्योपवासविधानायोद्देश्यविशे
पणतयाविवक्षितत्वेहविरुभयत्ववदापाततोवाक्यभेदस्यपरिहारोदिव्यदृष्टयाशिष्टैरन्वेष्टव्यः हरिभक्तिविलास
मते श्रीजन्माष्टमीव्रतदिननिर्णयः ॥ तथाचकारिका कृष्णोपोष्याष्टमीभाद्रेरोहिण्याढ्यामहाफला निशी
थेन्नापिकिंचेन्दौक्षेवापिनवमीयुता अत्रयोगवाहुल्यंयोगप्राशस्त्यंचोपवासानियामकं तथैव'हनं दुःपूर्वेहनि
क्षीवापरेचेद्रोहिणीयुता केवलावाष्टमीवृद्धासोपोष्यानवमीयुता वृद्धावृद्धिगामिनीसतीस्वल्पापीत्यर्थः तथो
क्त उदयेचाष्टमीकिंचिदित्यादि मुहूर्तेनापिसंयुक्तासासम्पूर्णाष्टमीभवेदितिच ननुपरेचेद्रोहिणीयुतेत्यनेनपूर्वेह
निरोहिणीयुतत्वंनास्तीतिज्ञापनात् परेहनिरोहिणीनवमीयुतेतिहेतुगर्भविशेषणं युतोनवमीयुतातः सैवोपो
ष्येत्यर्थः नवमीयोगस्यप्राशस्त्यात् तच्चकिंपुनर्नवमीयुक्तेत्यादौकैमुतिकन्यायात् मासिभाद्रपदेकृष्णाअष्टमी
नवमीभवेत् पूज्याष्टमीततःपुंभिःस्त्रीभिश्चापिविशेषतइतिसूत्रोक्तेश्चगौतमीतंत्रेच अष्टमीनवमीविद्धाउमामाहेश्व
रीतिथिः सैवोपोष्यासदापुण्यकांक्षिभीरोहिणींविना अत्रकारिका अत्रकेवलमित्यादाउमामाहेश्वरीतिथिः
प्रोक्तासैवयस्मादुपोष्यत्वेनानिश्चितेति तत्तद्योगाभावेतुकेवलाष्टम्युपोष्या तथाचकारिका रोहिण्यादिवियु

गापिसोपोष्याकेवलाष्टमी तत्तद्योगस्तुवैशिष्टेव्रतलोपोन्यथाभवेत् इत्थंशुद्धबलिखितायोगाद्बहुविधाष्टमीत्या
ज्याविद्धाचसतन्यासा विद्धै कादशीयथा ननुभवत्वष्टमीनिर्गमेपरादिनोपवास· अष्टमीक्षयेतदनिर्गमे कात्यव
स्थेत्याशंक्याह तदेवमष्टमीहानौव्रतलोपःप्रसज्यते तन्निरस्तं पूर्वमेवस्कंदवाक्यानुसारतः जन्माष्टमींपूर्व
विद्धामित्यार्धयदुदीरितमितिस्कांदीयवचनद्वयपूर्वं लिखितं यथाजन्माष्टमींपूर्वविद्धामित्यादिसकलापिस
ऋक्षापिनवमीसंयुतापिच जन्माष्टमीपूर्वविद्धानकर्तव्याकदाचनेति नवमीसंयुतापीत्यष्टमी क्षयाभिप्रायेण
तदेवमेकादश्यानिर्गमेशुद्धद्वादश्युपवासवदत्रापिनवमींशुद्धामुपोष्यव्रतमाचरेदितिवचनबलात्तादृशस्थले शुद्धनव
मीव्रतमेवविधेयं विद्धाव्रतंतुसर्वथैवत्याज्यंमोक्षकांक्षिभिर्यतिविधवाभिश्चसकामैस्तुपूर्वविद्धावाशुद्धाष्टम्यांनिशी
थव्यापिन्यामेवकार्यमितिदिक् स्मृतिकौस्तुभेपि पूर्वदिनेसप्तमीवेधेन निशीथव्यापिन्याअपिग्राह्यत्वापवा
दोवैष्णवीयः यथोक्तज्योतिर्निबंधे सर्वथासप्तमीयुक्तासंत्याज्यासर्ववैष्णवैः उपोष्यानवमीयुक्तातदुक्तंपुष्करे
स्फुटं वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमी सऋक्षापिनकर्तव्यासशल्यासाप्रकीर्तितेत्यादि तदलमतिप्रसंगेन
इतिजन्माष्टमीजयंतीनिर्णयः ॥ अत्रकृत्यविशेषः ततोष्टम्यांतिलैःस्नातोनद्यादौविमलेजलइत्यादिवक्ष्यमाणभ
विष्योक्तेतिहासेद्रष्टव्यः अथप्रयोगः तत्रकर्तोक्तवजन्माष्टम्युपवासपूर्वदिनेलघुभुक्रात्रौजितेंद्रियः सुखोप
वासदिने प्रातः स्नानादिनित्यकृत्यंविधाय सूर्यःसोमोयमः कालःसंध्येभूतान्यहः क्षपा पवनोदिक्पतिर्भूमिरा
काशंखचराममं ब्रह्मशासनमास्थायकल्पध्वमिहसंनिधिमित्युक्त्वा सूर्यादिदेवताभ्योनमस्कृत्वाचम्य· प्राणा
नायम्यप्राङ्मुखउदङ्मुखोवादर्भहस्तः फलपुष्पाक्षतैर्वापूर्णताम्रादिपात्रंदक्षिणहस्तेनादायमासपक्षवारनक्षत्र
मुच्चिस्यामुकफलकाम· पापक्षयकामोवा श्रीकृष्णप्रीतयेजन्माष्टमीव्रतमहंकरिष्ये तथाव सुदेवंसमुद्दिश्यसर्वपाप

प्रशान्तयें उपवासंकरिष्यामिकृष्णाष्टम्यांनभस्यहं अद्यकृष्णाष्टमींदेवीनभश्चंद्रंसरोहिणीं अर्च यित्वोपवासेनभोक्ष्येहमपरेहनि एनसोमोक्षकामोस्मियद्गोविंदात्रियोनिजं ॥ तन्मेमुंचतुमांत्राहिपतितंशोकसागरे आजन्ममरणयावद्यन्मयादुष्कृतंकृतं तत्प्रणाशयगोविंद प्रसीदपरमेश्वर इतिपठित्वाजलमुत्सृजेत् नृसिंहपरिचर्यायांतु अद्यस्थित्वानिराहारः श्वोभूतेपरमेश्वर भोक्ष्यामिपुंडरीकाक्षअस्मिन्जन्माष्टमीव्रते ॥ इतिसंकल्पवाक्यंपठेत् ॥ सप्तम्यांचैकभक्तानंतरेसंकल्पंकुर्यादितिचोक्तं ततोमध्यान्हेकृष्णतिलैः स्नात्वा देवक्याः सूतिकागृहादिकुर्यात ॥ तद्यथा ॥ सूपलिप्तसुदेशेकदलीस्तंभनानावर्णवासः शोभितं समंतात्स्थापितैराम्रपल्लवादियुतैर्जलपूर्णनवकलशैर्दीपावलीभिः पुष्पमालाभिर्युतंचंदनागुरुधूपितं अग्निखड्गकृष्णछागरक्षामणिद्वारन्यस्तमुशलादियुतं गीतवादित्रनृत्यादिमंगलोपेतंपष्ठ्यादेव्याधिष्ठितंदेवक्याः सूतिकागृहंविधायतस्यसमंताद्भित्तिषु सकुसुमाञ्जलीन्देवगंधर्वादीन्खड्गचर्मधरंवसुदेवदेवकीगर्भगोपीगोपान्कंसनियुक्तान्गोधेनुकुंजरान्यमुनांतर्जलस्थंकालियमन्यच्चसकलंतत्कालीन गोकुलचरितंयथासम्भवंलिखित्वासूतिकागृहमध्येमंचकंस्थापयित्वा तदुपरिसर्वतोभद्रमंडलोपरिकलशेसिंहासनेवाहैमींराजतींताम्रींपैत्तलींमणिमयींवार्क्षींमृन्मयींलेख्यरूपांवायथासंभवं तांश्रीकृष्णप्रतिमांदेवकीस्तनधयींप्रसूतांदेवक्याश्चरणौसंवाहयंतींलक्ष्मीप्रतिमांच प्रसूतांदेवकीप्रतिमांचसंस्थापयेत् तथैवकचित्प्रदेशेसकन्यकांयशोदांरोहिणींवसुदेवंनंदंबलभद्रंगोपीगोपांश्चोपकल्प्यदेवकीसमीपेखड्गहस्तंकंसंपूतनाराक्षसादींश्चावस्थापयेत् तत्रप्रतिमायाअग्न्युत्तारणंकृत्वादेशकालाद्यनुस्मृत्यसपरिवारश्रीकृष्णपूजांकरिष्ये इतिसंकल्प्य ॥ हस्तेपुष्पांजलिंगृहीत्वागायद्भिरितिमंत्रपुरःसरंदेवक्यांक्षिपेत् साच गायद्भिःकिन्नराद्यैःसततपरिवृतावेणुवीणानिनादैः भृंगारादर्शकुंभप्रवरकृतकरैःकिन्नरैःसेव्यमाना

पर्यंकेस्वांस्ततेयामुदिततरमुखीपुत्रिणीसम्यगास्ते सादेवीदेवमाताजयतिसुवदनादेवकीदिव्यरूपेति विश्वे
श्वरायदेवायतथाविश्वंभरायच विश्वस्यपतयेतुभ्यंगोविंदायनमोनमइति श्रीकृष्णायपुष्पांजलिंदद्यात् श्रीकृष्णा
विर्भावंपरिभाव्य तमद्भुतंबालकमंबुजेक्षणंचतुर्भुजंशंखगदाद्युदायुधं श्रीवत्सलक्ष्मंगलशोभिकौस्तुभंपीता
म्बरंसान्द्रपयोदसौभग महार्हवैडूर्यकिरीटकुण्डलत्विषापरिष्वक्तसहस्रकुंतलं उद्दामकांच्यंगदकंकणादिभि
र्विरोचमानंवसुदेवऐक्षत सविस्मयोत्फुल्लविलोचनोहरिंसुतंविलोक्यानकदुंदुभिस्तदा कृष्णावतारोत्सवसंभ्रमो
स्पृशन्मुदाद्विजेभ्योयुतमाप्लुतोगवां अथैनमस्तौदवधार्यपूरुषपरंनतांगःकृतधीःकृतांजलिरिति ॥ जन्मश्लोका
न्पठेत्ततःश्रीकृष्णमंत्रन्यासान्विदध्यात् तेचयथा शिरसिनारदऋषयेनमः मुखेगायत्रीछंदसेनमः हृदि श्री
कृष्णपरमात्मदेवतायैनमः क्लींबीजायनमः गुह्ये श्रींशक्तयेनमःपादयोः ततःषडंगन्यासः क्लांअंगुष्ठाभ्यांनमः
क्लींतर्जनीभ्यांस्वाहा क्लूंमध्यमाभ्यांवषट् क्लैंअनामिकाभ्यांहुं क्लौंकनिष्ठिकाभ्यांवौषट् क्लःकरतलकरपृष्ठाभ्यां
फट् एवंक्लांहृदयायनमइत्यादिततोमुद्रादिकप्रदर्श्य अव्याद्व्याकोशनीलांबुजरुचिररुणांभोजनेत्रोंबुजस्थोबालो
जंघाकटीरस्थलकलितरणत्किंकिणीकोमुकुंदः दोर्भ्यांहैयंगवीनंदधदतिविमलंपायसंविश्ववंद्यो गोपीगोपाल
वीतोरुणनखविलसत्कंठभूषश्चिरंव इतिहृदिध्यात्वापूजनंकुर्यात् प्रतिमापूजनंचसर्वत्रप्राणप्रतिष्ठापुरःसरंकर्त्तव्यं
प्रतिमायाःकपोलौद्वौस्पृष्ट्वादक्षिणपाणिना प्राणप्रतिष्ठांकुर्वीततस्यांदेवस्यवाहरेः अकृतायांप्रतिष्ठायांप्राणानां
प्रतिमासुच यथापूर्वंतथाभावःस्वर्णादीनांनदेवता अन्येषामपिदेवानांप्रतिमास्वपिपार्थिव प्राणप्रतिष्ठाकर्त
व्यातस्यांदेवत्वसिद्धये वासुदेवस्यबीजेनतद्विष्णोरित्यनेनच तथैवहृदयेगुष्ठंदत्वाशश्वन्मंत्रवित् एभिर्मंत्रैः
प्रतिष्ठांतुहृदयेपिसमाचरेत् अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःक्षरंतुच अस्यैदेवत्वसंख्यायैस्वाहेतियजुरीरयन्

अगमैरागमैर्वैदिकैरित्यनेनच प्राणप्रतिष्ठांसर्वत्रप्रतिमासुसमाचरेदितिकालिकापुराणात् बीजेनमूलमंत्रेणचे
दंकर्मसमाचरेत् ह्यतंकृष्णमाध्यायपूजनंवेदयेन्नरइत्यभिप्रायेण यदास्वहृदयेपूजाक्रियते तदाहृदयेंगुष्ठंदत्वा
मंत्राःपठनीयाः प्रतिमाया कपोलौहृदयंवास्पृष्ट्वेतिविशेषः वैदिकमूलमंत्राभावे प्रणवादिचतुर्थ्यंतनमोंतनाम
भिरित्यनेनसंगृहीतानि अस्मैइत्यस्यस्थानेतत्तद्देवतानामयुक्तामस्माइत्यादिस्वाहांतंमंत्रपठन् प्राणप्रति
ष्ठांकुर्यात् ततोगायद्भिरित्यनेनदेवकीं मांचापिबालकसुतपर्यंकेस्तनपायिनं श्रीवत्सवक्षसंशांतंनीलोत्पलदल
च्छविमिति ॐनमोदेव्यैश्रियैइतिश्रियंचसम्पूजयेत् प्रणवादिनमोंतंचपृथक्नामानुकीर्तयन् कुर्यात्पूजांवि
धिज्ञश्चसर्वपापापनुत्तये देवक्यैवसुदेवाययशोदायैचवाहि बलदेवायनंदाययशोदायैपृथक्पृथक्इति नमोदे
व्यैश्रियैइतीतिचभविष्योत्तरवचनात् एवंनंदयशोदाबलभद्रचंडिकादीन् षोडशोपचारैः प्रत्येकंमंत्रेणपूजयेत्
भविष्योत्तरेतु केषुचिदुपचारेषु विशेषमंत्राअप्युक्ताः तत्रस्नानमंत्रः योगेश्वरायदेवाययोगानांपतयेविभो योगो
द्भवायनित्यायगोविंदायनमोनमइति नृसिंहपरिचर्यायांतु योगेश्वरायदेवायदेवकीसहितायच योगोद्भवा
येतिपूर्ववत्क्षीरेणस्नपयेत् गारुडेतु योगेश्वराययोगाययोगिनांपतयेनमः योगगम्याययोगींद्रैर्गोविंदायन
मोनमः इतिशुद्धोदकस्नपनं यज्ञेश्वरायदेवायतथायज्ञोद्भवायच यज्ञानांपतयेनाथगोविंदायनमोनमः अ
थनैवेद्यमंत्रः विश्वेश्वरायविश्वायतथाविश्वोद्भवायच विश्वस्यपतयेतुभ्यंगोविंदायनमोनमः इतिफलदक्षि
णादिसर्वंदत्वा देवक्यैअर्घ्यंदद्यात् प्रणमेदेवजननींत्वत्तोजातस्तुवामनः वसुदेवात्तथाकृष्णोनमस्तुभ्यंनमोन
मः सपुत्रार्घ्यंप्रदत्तंमेगृहाणेमंनमोस्तुतइति ततःश्रीकृष्णायार्घ्यंदद्यात् तत्रमंत्रोगारुडे यज्ञाययज्ञेश्वराययज्ञ
पतयेयज्ञसंभवायगोविंदायनमोनमइति नृसिंहपरिचर्यायांतु जातःकंसवधार्थायभूभारोत्तारणायच देवानां

हितार्थायधर्मसंस्थापनायच गृहाणार्घ्यंमयादत्तंदेवक्यासहितोनघेति ततोदेवकीप्रार्थना देवक्यैतुनमस्तुभ्यंकृ
ष्णोत्पादनतत्परे पापक्षयकरींदेवींतुष्टयातुमयार्चिता अदितेदेवमातस्त्वंसर्वपापप्रणाशिनि अतस्त्वंपूजिता
देवीभीतोहंभवसागरात् पूजितासिचयद्देवैःप्रसन्नात्वंवरानने पूजितातुमयाभक्त्याप्रसादंकुरुसुव्रते यथापुत्रं
हरिंलब्ध्वाजातासित्वंचनिर्वृता परीतादेविनिर्वृत्तस्वपुत्रान्दर्शयस्वमइति ॥
अथश्रीकृष्णप्रार्थना अवतारसहस्राणिकरोषिमधुसूदन नसंख्यामवताराणांकश्चिजानातिवैभुवि देवाब्रह्मादयोवा
पिस्वरूपंनविदुस्तव अतस्त्वांपूजयिष्यामिमातुरुत्संगसंस्थितं वांछितंकुरुमेदेवदुःकृतंचैवनाशय कुरुष्वमेदयां
देवसंसारार्त्तिभयापहेति ततः श्रीकृष्णायपुष्पांजलिंदद्यात् ॥ गारुडं ॥ ध ायधर्मेश्वरायधर्मपतयेधर्मसंभवाय
गोविंदायनमोनमः इतिस्वाहांतोघृताक्ततिलहोमेमंत्रउपात्तः ततोगव्यघृतेनवसोर्धाराकार्या काचिद्गुडघृतेनेत्यु
क्तंततोजातकर्मनालच्छेदनंषष्ठीपूजनंनामकर्मचसंक्षेपेणकार्यं तत्रादौजातकर्मप्रयोगः मासपक्षाद्युल्लिख्यास्यकु
मारस्यबीजगर्भसमुद्भवैनोनिवर्हणद्वारागर्भांबुजनितदोषपरिहारार्थंमेधायुर्वृध्यर्थंजातकर्माहंकरिष्ये तत्रनिर्वि-
घ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्धारानांदीश्राद्धंचकरिष्ये इतिसंक
ल्प्य ॥ गणानांत्वेतिपंचोपचारैर्गणेशंपूजयेत् -ततः पुण्याह कल्याणं ऋद्धिः स्वस्तिश्रीः पुनंतुमां यथेनां
सत्र.यऋद्धिः स्वस्तिनः श्रीश्चते इतिपुण्याहवाचनं ॥ अथमातृकापूजनं ॥ गौरीपद्माशचीमेधा सावि
त्रीविजयाजया देवसेनास्वधास्वाहामातरोलोकमातरः हृष्टिः पुष्टिस्तथातुष्टिरात्मनः कुलदेवता ब्राह्मीमा
हेश्वरीचैवकौमारीवैष्णवीतथा वाराहीचतथेंद्राणीचामुंडासप्तमातरइति वसोपवित्रमसि ॥ इतिघृतधाराः ॥
पंचसप्तवाकुड्येकृत्वासंपूजयेत् ततआयुष्यसूक्तजपः आयुष्यवर्चस्यरायस्पोषमौद्भिदं इदंहिरण्यंवर्चस्

जैत्रायाविशतादिमां नतद्रक्षांसिनपिशाचाश्चरंतिदेवानामोजः प्रथमह्यंह्येतत् योबिभर्त्तिदाक्षायणंहिरण्यंसदेवेषुकृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ॥

॥ इतिमातृकापूजनम् ॥

अथनांदीश्राद्धं सत्यवसुसंज्ञकाविश्वेदेवानांदीमुखा भूर्भुवःस्वःइदंवःपाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिगोत्रानांदीमुख्योमातृपितामहीप्रपितामह्यः इदंवः पाद्य पादा० पितृपितामहप्रपितामहा. नांदीमुखाः भूर्भुवः स्व. इदंपाद्य पादा ०द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहा भू. इदं पादा०नेत्रस्पर्शः मासपक्षाद्युल्लिख्य अस्मिन्कर्मणीसाकल्येनविधिनानांदीश्राद्धमहंकरिष्ये सत्यवसुसंज्ञकानांविश्वेषांदेवानांभूर्भुवःस्वः इमे आसनेवोनमोनमः नांदीश्राद्धेक्षणौक्रियेतातथाप्राप्नुतौ भवंतौप्राप्नुतांगोत्राणांमातृपितामहीप्रपितामहीनां इमे नांदीश्राद्धेगोत्राण।पितृपितामहप्रपितामहानांनांदी. इमं० नांदीयाअक्षताःपांतुपुष्पाणिपांतु सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योवः गंधार्चनंस्वाहा सपद्यतांवृद्धिगोत्राभ्योः मातृपितामहीप्रपितामहीभ्योनांदीमुखीभ्योवः द्रव्याणिपुनर्गंधादिदत्त्वा गोत्रेभ्य. पितृपितामहप्रपितामहेभ्यः नांदीमुखेभ्य.वःगं०द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यःवःस्वधानमः सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्यो दास्यमानब्राह्मणयुग्मभोजनायपायसाद्यंअन्नंअमृतरूपेणस्वाहासंपद्यतां वृद्धिगोत्राभ्योमातृपितामहीप्रपितामहीभ्योनांदीमुखेभ्यः दास्यमानब्राह्मणभोजनायादीत्युक्त्वावृद्धिद्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यो वृद्धौसत्यवसुसंज्ञकाविश्वेदेवाः प्रीयंतां वृद्धिगोत्रानांदीमुख्योमातृपितामहीप्रपितामह्य.प्रीयंतांवृद्धिगोत्रानांदीमुखाःपितरःप्रीयंतां द्वितीयगोत्राः नांदीमुखाः मातामहाः प्रीयतां सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यः कृतै

ऽप्रतिष्ठासिध्यर्थंद्राक्षामलकयवमूलनिष्क्रयणीं दक्षिणांदातुमहमुत्सृजे वृद्धिगोत्राभ्योमातृ
भ्योनांदीश्राद्धस्यदक्षिणांदातुमहमुत्सृजे वृद्धिगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः कृ
णांदातुमहमुत्सृजे द्वितीयगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यः कृतैतन्नांदीश्रा
तुमहमुत्सृजे उपास्मैगायतानरः पवमानायेंदवेअभिदेवांयइक्षते नांदीश्राद्धंसंपन्नंसुसंपन्नं अनेन
कर्मदेवताः प्रीयंतां वृद्धिः अनामिकयासुवर्णांतर्हितयामधुघृतेप्राशयेत् भूः त्वयिदधामि
यिदधामि स्वस्त्वयिदधामि भूर्भुवः स्वः सर्वंत्वयिदधामि अथास्याः पुष्पंकरोति ताभ्या
क्षिणवामेवाकर्णेजपति अग्निरायुष्मान्सवनस्पतिभिरायुष्मान् तेनत्वा युषायुष्मंतंकरोमि सोमआयुष्मा
न् सओषधीभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ब्रह्मायुष्मानृतद्ब्रह्मणैरायुष्मान्तेनत्वा ऋषयआयुष्मंतस्तेव्र
तैरायुष्मंतस्तेनत्वा देवाआयुष्मंतस्तेमृतेनायुष्मंतः तेनत्वा यज्ञआयुष्मान्सवनस्पतीभिरायुष्मान्तेन इति
त्रिः त्र्यायुषंजमदग्नेः कश्यपस्यत्र्यायुषंयद्देवानांत्र्यायुषंतन्मेअस्तुआयुषं इति त्रिः सयास्मिन्देशेजातोभव
तितमभिमंत्रयेत् वेदतेभूमिहृदयंदिविचंद्रमसिश्रितं तंवेदाहंतन्मांतद्विद्यात् पश्येमशरदःशतंजीवेमशरदःशतंशृणुया
मशरदःशतमिति अथैनमभिमृशति अश्माभवपरशुर्भवहिरण्यमस्तुते आत्मावैपुत्रनामासिजीवत्वंशरदःशतमि
तिततोनालछेदनंषष्ठीपूजनंचकुर्यात् ॥ ॥ तत्रषष्ठीपूजनविधिः पंचम्यांषष्ठ्यांचरात्रौपितादेशकालौस्मृत्वास्यशिशो
सूतिकायाश्चसर्वारिष्टशांत्यर्थमायुरारोग्यसिद्ध्यर्थंविघ्नेशस्यजन्मदानां.षष्ठीदेव्याः जीवंतिकायाः स्कंदस्यराका
दीनांचपूजांकरिष्य इतिसंकल्प्यगणेशंसम्पूज्यकलशंसंस्थाप्य तत्रप्रतिमास्वक्षतपुंजेषुवागणेशजन्मदाः जीवं
तिकास्कंदराकामनुमतिसिनीवालीकुहूकुड्येलिखितांषष्ठींभगवतींच आवाह्यततस्तुग्रहान्वैप्रतिष्ठाप्यषोडशोपचा

रैः सम्पूज्यदधिभक्तनिवेद्यदीपान्माषभक्तबलीन्दत्वाप्रार्थयेत् गौरीपुत्रोयथास्कंदःशिशुत्वेरक्षितः पुरा तथा ममाप्ययंबालःषष्ठिकेरक्ष्यतांनमः ॥ : : ॥ अथनामकरणं तच्च दशरात्रेव्युष्टेनामकरणमितिगोभिलसूत्रात् अहन्येकादशेनामेतियाज्ञवल्क्यस्मृतेः ॥ दशम्यामुत्थाप्यब्राह्मणान्भोजयित्वा पितानामकारीतिगृह्यसूत्रात् एकादशेन्हिब्राह्मणेनकर्तव्यं तत्रभद्रावैधृत्यमावास्यादिकालाशुद्धौद्वादशेपूर्णमासे दशरात्रेवर्षेकार्यं क्षत्रादिस्तु स्वस्वाशौचांतेकुर्यात् तत्रनियतकालेगुरुभार्गवयोरस्ताद्याधिमासादिदोषोनास्ति अतीतकालेतुसोस्त्येव अतीतकालश्चेत् अश्विनीरोहिणीमृगपुनर्वसुउत्तरात्रय हस्तत्रयानुराधाश्रवणत्रयरेवतीषु शुभवारेरिक्ताष्टमीवर्जिततिथौकार्यं तत्रपूर्वाह्णेपित्रादिःकृताह्निकः प्राणानायम्यदेशकालकीर्तनांतेअस्यकुमारस्यबैजिकगार्भिकैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वारापरमेश्वरप्रीतये नामकरणमहंकरिष्ये इतिसंकल्प्यतान्निकृत्वा ॥ नामकरणपूर्वांगत्वेनविहितब्राह्मणत्रयायभोजनं संप्रदास्यइतिचसंकल्प्यानुच्छिष्टपाकेनत्रीनधिकान्वाब्राह्मणान्भोजयित्वा प्रशस्तपात्रेतंडुलोपरिआदौलक्ष्मीनृसिंहभक्तइत्यादि स्वकुलदेवतानामलेख्यम् ॥ ततोमार्गशीर्षादेः ॥ कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः योगेशः पुंडरीकाक्षो मासनामान्यनुक्रमात् ॥ इतिक्रमादागतंमासनामकृष्णइत्यादिलेख्यम् ॥ ततोवकहडचक्रानुसारेणजन्मनक्षत्राश्विन्यादिप्रथमद्वितीयतृतीयचतुर्थपादप्रयुक्ताद्यक्षराणि जन्मनामानिलेख्यानि ॥ तथा ॥ तत्राश्विनीनक्षत्रस्य चूचेचोलाअश्विनी चूडामणिः चेलयतिः चूळभद्रः लाडिकाइति भरणीनक्षत्रस्य लिलूलेलोभरणी लीलाधरः लूतारिः लोकप्रियः लोकनाथः कृत्तिकानक्षत्रस्य आईऊएकृत्तिका आत्मारामः ईश्वरभट्टः ऊधोरभट्टः एकनाथः रोहिणीनक्षत्रस्य ओवाविवूरोहिणी ओंकारेश्वरः वाचस्पति

यरेश्वरः वूलारामः मृगशिरनक्षत्रस्य वेवोकाकीमृगशिरः वेशिभट्टः वासनापतिः कालभट्टः की
र्त्युज्ज्वलइत्यादीनिवोध्यानि ततः काचवर्गाणांघोपसंज्ञकं . तृतीयचतुर्थपंचमाक्षरंहकाराद्यंअंतस्थसंज्ञकंय
रलवाद्यन्यतमनध्यमाक्षरंदीर्घांताक्षरंपितामहादिनामकृत्प्रत्ययतंतद्धितांतवर्ज्यंद्व्यक्षरंवाशर्मब्राह्मणस्य सुखवाच
कशब्दांतंब्रह्मणस्ययथा हरदत्तशर्माहरिशर्माइत्यादिक्षत्रियस्यतुवर्मा यथाहरदत्तवर्मा हरवर्माहरदत्तसिं
हहरसिंहइत्यादि वैश्यस्यतुहरिगुप्तइत्यादि शूद्रस्यतु हरिदासइत्यादिलेख्य नामदेवताभिरितिसम्पू
ज्य मातुरुत्संगस्थशिशोर्दक्षिणकर्णे कुलदेवता लक्ष्मीनृसिंहभक्तोसीत्यादिकथनीयं मासनाम्नाकृष्ण
इत्यादि नक्षत्रनाम्ना चूडामणिरसीत्यादि व्यावहारिकनाम्नाहरदत्तशर्मासीत्यादिनामचतुष्टयंकथनीयं विप्रैर्मनो
जूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टयज्ञंसमिमंदधातु विश्वेदेवासइहमादयंतामोंप्रतिष्ठ इतिमं
त्रेण नामसुप्रतिष्ठितमस्तुइतिवक्तव्यं उत्थितोबद्धांजलिः कर्त्ता कुलदेवतानाम्ना लक्ष्मीनृसिंहभक्तनामायंभव
तोभिवादयते इतिवदेत् तेचआयुष्मान्भवतुलक्ष्मीनृसिंहभक्तइतिवदेयुः एवमेवकर्त्तामासनाम्नाकृष्णनामायं
भवतोभिवादयते इतिवदेत् तेचआयुष्मान्भवतुकृष्णशर्माइतिवदेयुः पुनः कर्त्तानक्षत्रनाम्नाचूडामणिश
र्मायंभवतोभिवादयते इतिवदेत् तेचआयुष्मान् भवतु चूडामणिशर्मा इतिवदेयुः पुनः कर्त्ताव्याव
हारिकनाम्ना हरदत्तशर्मायं भवतोभिवादयते इतिवदेत् तेचआयुष्मान्भवतुहरदत्त शर्मा इतिवदेयुः ॥ ॥
इतियस्ययथागतंनामचतुष्टयं अभिवादनप्रत्यभिवादनपूर्वं ततः कर्त्ताविप्रान्नत्वा कृतैतन्नामकारणांगतया वि
हितंदशसंख्याकब्राह्मणेभ्योभोजनंसंप्रदास्ये ॥ इतिसंकल्प्यब्राह्मणान्दशभोजयेत् ॥
विप्रान्संपूज्यतांबूलदक्षिणाभिस्तेभ्यआशिषोगृह्णीयात् कन्यायास्तु अयुताक्षरमकारांततद्धितप्रत्ययांत कार्य

मासनामस्वपि कृष्णानंताच्युताचक्रिणीवैकुंठाजनार्द्दना- उपेंद्रीयज्ञपुरुषीवासुदेवीहरियोगेशी पुंडरीकाक्षा इति नामकरणप्रयोगः ॥ ॥ इतिकार्त्तिकीनां जातकर्म नामकर्मच ॥ ऽ ऽ

ततःप्रतिमादौमंडलेवासोमायसोमेश्वरायपतये सोमसम्भवाय सोमायनमोनम इतिगारुडोक्तमंत्रेण चंद्रं संपूज्य ॥ शंखेतोयंसमादायसपुष्पकुशचंदनं जानुभ्यांधरणींगत्वाचंद्रायार्घ्यंनिवेदयेत् क्षीरोदार्णवसंभूतआत्रिनेत्रसमुद्भव गृहाणार्घ्यंशशांकेमरोहिण्यासहितोमम ज्योत्स्नापतेनमस्तुभ्यंनमस्तेज्योतिषांपते नमस्तेरोहिणीकांतअर्घ्यंमेप्रतिगृह्यतामितिमंत्राभ्यां ततोज्योत्स्नायाः पतयेतुभ्यंज्योतिषांपतयेनमः नमस्तेरोहिणीकांतसुधावासनमोस्तुते नमोमंडलदीपायशिरोरत्नायधूर्जटेः कलाभिर्वर्द्धमानायनमश्चंद्रायचारवे इतिमंत्राभ्यांप्रणमेत् ॥ ततो भगवत्स्तुतिं कुर्यात् अनघवामनंशौरिंवैकुंठंपुरुषोत्तमं वासुदेवंहृषीकेशंमाधवंमधुसूदनं वाराहंपुंडरीकाक्षंनृसिंहंदैत्यसूदनं दामोदरपद्मनाभंकेशवगरुडध्वजं गोविंदमच्युतंकृष्णमनंतमपराजितं अधोक्षजंजगद्बीजंसर्गस्थित्यंतकारिणं अनादिनिधनंविष्णुंत्रिलोकेशंत्रिविक्रमं नारायणंचतुर्बाहुंशंखचक्रगदाधरं पीतांबरधरंनित्यंवनमालाविभूषितं श्रीवत्सांकंजगत्सेतुंकृष्णंचक्रधरंहरिं प्रपद्येऽहंसदादेवंसर्वकामप्रसिद्धये प्रणमामिसदादेवं वासुदेवं जगत्पति मिति त्राहिमांसर्वलोकेशहरेसंसारसागरात् त्राहिमांसर्वपापघ्न दुःखशोकार्णवात्प्रभो सर्वलोकेश्वरत्राहिपतितंमांभवार्णवे ॥ देवकीनंदनः श्रीमान् हरेसंसारसागरात् त्राहिमांसर्वदुःखघ्न रोगशोकार्णवाद्धरे दुर्गतांस्त्रायसेविष्णोयेस्मरंतिसकृत्सकृत् सोहंदेवेनदुर्वृत्तस्त्राहिमांशोकसागरात् पुष्करक्षनिमग्नोहंमायाविज्ञानसागरेत्राहिमादेवदेवेशत्वत्तोनान्योस्तिरक्षिता यद्बाल्येयच्चकौमारेयौवनेयच्चवार्द्धके तत्पुण्यंवृद्धिमाप्नोतुपापंहरहल॥

युधेतिमंत्रैःप्रार्थयेत् ततःस्तोत्रपुराणपठनादिभी रात्रिशेषमतिवाह्य परादिनेप्रातःस्नानादिनित्यकृत्यं विधाय पुनः सपरिवारं श्रीकृष्णंयथासंभवं संपूज्य चंडिकायाश्च यथाविभवं महोत्सवं कृत्वा यथाशक्ति ब्राह्मणान्भो जयित्वा तेभ्यः सुवर्णमेदिनीधेनुवस्त्रादियथादिष्टं ततःकृष्णोमेप्रीयतामिति दत्वा यंदेवंदेवकीदेवीवसुदे वादजीजनत् भौमस्यब्रह्मणोगुप्त्यैतस्मैब्रह्मात्मनेनमः सुजन्मनेसुदेवायगोब्राह्मणहितायच शांतिरस्तुशिवं चास्त्वित्युक्त्वाप्रतिमामुद्वास्यतांब्राह्मणायदत्वाब्राह्मणान्विसृज्य इष्टैःसह स्वयंपारणंकुर्यादिति गारुडेपु सर्वा यसर्वेश्वरायसर्वपतयेसर्वभवायगोविंदायनमइतिपारणारंभे भूताय भूतपतये भूतेश्वराय भूतसंभवाय गोविंदा यनमः इतिसमापनेमंत्रउक्तः इदंचप्रतिमासं कृष्णाष्टम्यामप्युक्तं मदनरत्ने वह्निपुराणे प्रतिमासंचतेपूजाम ष्टम्यांयःकरिष्यति ममचैवाखिलान्कामान्संप्राप्स्यतिनसंशयइति अथपारणनिर्णयः पारणमुपवासपर दिनेपूर्वाह्णेकर्तव्यं उपवासेषुसर्वेषुपूर्वाह्णेपारणंभवेदिति देवलस्मरणात् एवंसामान्यतः पूर्वाह्णे पारण प्राप्तौ पारणदिनेकेवलाष्टमीसद्भावेतदंतेकर्तव्यं तदाहभृगुः जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच पूर्वविद्धै वकर्तव्यातिथिभांतेचपारणमिति अत्ररोहिणीव्रतोपवासेभांते कर्तव्ये इतरोपवासे तिथ्यंते पारणमितिविवेकः ॥ विष्णुरहस्ये ॥ कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी एताः पूर्वयुताः कार्यास्तिथ्यंतेपारणंभवेदिति ॥ निगमेऽपि ॥ पूर्वविद्धासुतिथिषुभेषुचश्रवणंविना उपोष्यविधिवत्कुर्यात्तत्तदंतेचपारणमिति ॥ विष्णुध र्मेऽपि ॥ जयंतीशिवरात्रिश्चकार्येभद्राजयान्विते कृतोपवासस्तिथ्यंतेतथाकुर्याच्चपारणमिति ॥ यदातुपारण दिनेऽष्टमीरोहिण्योः संभवस्तदोभयांते पारणंकर्तव्यं तदुक्तंपद्मपुराणे कार्याविद्धातुसप्तम्यारोहिणीसहिताष्ट मी तत्रोपवासंकुर्यात्तुतिथिभांतेचपारणमिति ब्रह्मवैवर्तेपि अष्टम्यामथरोहिण्यांनकुर्यात्पारणंक्वचित् हन्यात

पुराकृतंकर्मउपवासार्जितंफलं तिथिरष्टगुणंहंतिनक्षत्रंचचतुर्गुणं तस्मात्प्रयत्नतः कुर्यात्तिथिभांतेचपारणमिति स्कंदपुराणे · तिथिनक्षत्रनियमेतिथिभांतेचपारणं अतोन्यथापारणेतुव्रतभंगमवाप्नुयादितिनिर्णयामृते अत्रा ष्टम्यंतेपारणंकार्यंरोहिण्यंतोनापेक्षितः भांतेपारणविधानस्य रोहिणीश्रवणातिरिक्तनक्षत्रविषयत्वात् याका श्चित्तिथयःप्रोक्ताःपुण्यानक्षत्रसंयुताः ऋक्षांतेपारणंकुर्याद्विनाश्रवणरोहिणीमितिस्मरणात् माधवीयेतु नक्षत्रं चतुर्गुणमितिप्रत्यवायस्योदाहृतत्वात् मैवंयुक्तं विनाश्रवणरोहिणीमिति वचनंतु केवलनक्षत्रोपवासविषय मनुकल्पविषयंचत्यवगंतव्यमित्युक्तं ननु यदा पूर्वविद्धोपवासपरदिनेर्द्धरात्रतदूर्ध्वंवातिथ्यंतोभवति तदा महा निशायां भोजननिषेधात् द्वितीयदिनउपवासः प्रसज्येत सच नयुक्तः पारणस्यावश्यकांगत्वात् यदिपारणभं गोनस्यात्तदाप्रतिनिधिविधानं नोपपद्येत तद्विधानंच द्वादशीप्रस्तावे देवलेनदर्शितं संकटेसमनुप्राप्तेद्वादश्यांपार येत्कथं अद्भिस्तुपारणंकुर्यात्पुनर्भुक्तंनदोषकृदिति अतः पारणशब्दबलात्प्रतिनिधिबलाच्च पारणस्यांगत्वंद्र ष्टव्यं अतएवादित्यपुराणे पारणांतंव्रतंज्ञेयंव्रतांतेतद्विभोजनं असमाप्तेव्रतेपूर्वंनैवकुर्याद्व्रतांतरमितिपारणशब्द स्य पारकर्मसमाप्ताविति धातोर्निष्पन्नत्वेनव्रतसमाप्त्यर्थत्वात्तदभावेव्रतस्यासमाप्तिः स्यादितिचेत् सत्यं तिथि भांतकालः पारणस्यांगं पारणंचांगि नह्यंगभावेंगिन एवलोपइतिप्रसिद्धिरस्ति अतश्चतिथ्यंताभावेपि दिवैवपारणं कर्तव्यं तदुक्तं तिथ्यृक्षयोर्यदाछेदोनक्षत्रं.तमवाप्यवा अर्द्धरात्रेऽपिवाकुर्यात्पारणंह्यपरेऽहनीति अस्यायमर्थः तिथ्यृक्षयोः छेदद्वयोः परिसमाप्तौ दिवैव पारणं कर्तव्यं अयंमुख्यः नक्षत्रांतइत्यनुकल्पः नक्षत्रपदंतिथेर प्युपलक्षणं अन्यतरांतेवापारणंकुर्यादित्यर्थः अर्धेचार्धरात्रेयद्युभयांतस्तदादिवसे मुख्यानुकल्पयोरुभयोरप्य संभवाद्रात्रौच पारणस्यनिषिद्धत्वाच्चार्धात्तत्राप्युपवासप्राप्तौ पारणप्रतिप्रसवः क्रियते अर्द्धरात्रेऽपिवा कुर्यादिति

निर्णयामृतेतु अर्द्धरात्रेतिथिभांतः स्यात्तदा ऽपरेहनि परदिनेपारणंकुर्यात् दिवसपारणंच सर्वोपवाससाधारणं
तदुक्तंब्रह्मवैवर्ते सर्वेष्वेवोपवासेषुदिवापारणमिष्यते अन्यथापुण्यहानिःस्याद्दतेधारणपारणामिति गरुड
पुराणेऽपि अन्यतिथ्यागमोरात्रौतामसस्तैजसोदिवा तामसेपारणंकुर्वंस्तामसींगतिमश्नुतइति अन्यत्तदसाद्
ति स्मृतिकौस्तुभे शास्त्रांतरादेवास्यार्थस्यासिद्धत्वेन वाक्यद्वयवैयर्थ्यापत्तेः अपिशब्देन प्रतिप्रसवतात्पर्यद्यो
तनाच्च अन्यतरांतेपारणाभ्यनुज्ञानं नारदीयेऽपि तिथिनक्षत्रसंयोगेउपवासोयदाभवेत् पारणंतुनकर्तव्ययाव
न्नैकस्यसंक्षयइति वह्निपुराणे जयंतीमुपक्रम्य भांतेकुर्यात्तिथेर्वापिशस्तंभारतपारणमिति तथा रोहिणी
सहिताचेयंविद्वद्भिःसमुपोषिता वियोगेपारणंकुर्युरार्याब्रह्मप्रवादिनः सांयोगिकव्रतेप्राप्तेयद्येकोपिवियुज्यते
तत्रैवपारणंकुर्यादेववेदविदोविदुरिति मदनरत्नेपि यदादिने नैकतरस्यापगमः किंतुरात्रावेव निशीथादर्वागुभ
यांतोन्यतरांतोवातदारात्रावप्युभयांतेऽन्यतरांतेवाकर्तव्यं यदातुनिशीथव्यवहितपूर्वक्षणएवोभयांतएकतरांतोवा
तदा निशीथे पारणं कर्तव्यं तिथ्यृक्षयोरितिवचनादिति निशीथोरात्रेरष्टमोमुहूर्तो यत्तु नरात्रौपारणंकुर्याद्द
तेवैरोहिणीव्रतात् तत्रनिश्यपितत्कुर्याद्वर्जयित्वामहानिशामिति गौडोदाहृतभविष्योत्तरवचनेन महानिशायां
पारणनिषेधः समहानिशातोऽर्वाक् पारणकाललाभेऽवगंतव्यः निर्णयसिंधावपि महानिशातोर्वागन्यतरांत
लाभेमहानिशानिषेधः महानिशायामेवान्यतरांतलाभे तत्रैवपारणमिति अत्रकेचित् यत्तु मयूखउक्तं पारणंरा
त्रौनकुर्यात् किंतुदिवैवेति तत्रौढिवादमात्रं अर्द्धरात्रेपिवाकुर्यादित्याद्यनेकवचनानर्थक्यप्रसंगात् प्राचीनहेमा
द्र्यादिसर्वग्रंथविरोधाच्च यदप्युक्तंमाधवेन अर्द्धरात्रशब्देन रात्रिमात्रंगृह्यत इति तदपिमाधवग्रंथे तादृशार्थानुपलं
भान्मृग्यं महानिशासार्द्धयामादुपरितोयामः तदुक्तं महानिशातुविज्ञेयामध्यमंमध्ययामयोः तथा मध्यम.

प्रहरोरात्रौविज्ञेयातुमहानिशेतिस्मृत्यंतरमिति इदमेवहेमाद्रिमदनरत्नमाधवादीनांमतं कामधेनौ गर्गस्तु महानिशातुविज्ञेयामध्यमंप्रहरद्वयमित्यादि वृद्धशातातपस्तु महानिशाद्वेघटिकेरात्रौमध्यमयामयोरित्याह वेदपाठपरंतदित्यन्ये अशक्तस्तु गौणमुख्यकालालाभेपिदिवैवपारणंकुर्यात् जयंत्यांपूर्वविद्धायामुपवासंसमाचरेत् तिथ्यंतेचोत्सवांतेवाव्रतेकुर्वीतपारणमिति कालादर्शादिनिबंधवचनात् उत्सवांते जागराद्युत्सवांते द्वितीयदिवसेप्रातरित्यर्थः अत्रकेचित् यत्तूक्तंमयूखे उद्यापनंत्वनुक्तत्वान्नास्तीतितदप्यपेशलं उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत् यदिचोद्यापनंनोक्तंव्रतानुगुणतश्चरेत् वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते गांचैवकांचनंदद्याद्व्रतस्यपरिपूर्त्तये ॥

॥ इतिपृथ्वीचंद्रोदयेनंदिपुराणोक्तेस्तस्मात्सर्वथाउद्यापनंकर्त्तव्यम् ॥

॥ तत्प्रकारश्चभविष्योत्तरोक्तेजन्माष्टमीव्रतकथाच ॥

॥ युधिष्ठिरउवाच ॥ कीदृशंतद्व्रतंदेवदेवैः सर्वैरनुष्ठितं जन्माष्टमीतिसंज्ञंचपवित्रंपापनाशनं येनत्वंतुष्टिमायासिचाचिंनप्रभवायचएतन्मेत्वंतोब्रूहिसविधानंसविस्तरं ॥ श्रीकृष्णउवाच ॥ मासिभाद्रपदेष्टम्यांनिशीथेकृष्णपक्षगे शशांकेवृषराशिस्थे ऋक्षेरोहिणीसंज्ञके योगेस्मिन्वसुदेवाद्धिदेवकीमामजीजनत् भगवत्याश्चतत्रैवक्रियतेस्ममहोत्सवः योगेस्मिन्कस्यअष्टम्यांसिंहराशिगतेरवौ सप्तम्यांलघुभुक्कुर्याद्दंतधावनपूर्वकं उपवासस्यनियमंरात्रौस्वप्याज्जितेंद्रियः केवलेनोपवासेनतस्मिञ्जन्मदिनेमम सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह उपवासःसविज्ञेयः सर्वभोगविवर्जितः ततोष्टम्यांतिलैःस्नातोनद्यादौविमलेजले सुदेशेशोभनंकुर्याद्देवक्याःसूतिकागृहं सितपीतैस्तथारक्तैः

कर्बुरैर्हरितैःपृथक् वासोभिः शोभितंकृत्वा समंतात्कलशैर्नवैः भक्ष्यैःफलैरनेकैश्चदीपालिभिरितस्ततः पुष्प
मालाविराचितंचंदनागुरुधूपितं अतिरम्यमनोपम्यंरत्नजालादिभूषितं हरिवंशस्यचरितंगोकुलंचविलेखयत्तवतो
वादित्रनिनदैर्वीणावेणुरवाकुलनृत्यगीतक्रमोपेतंमंगलैश्चसमंततः , वन्हिवारिलोहखड्गैःकृष्णच्छायास्वरादिभिः
द्वारिविन्यस्तमुसलंरक्षितंरक्षपालकैः पष्ठ्यादेव्याधिष्ठितंचस्त्रीभिश्चस्वजनैस्तथा एवंविभवसारेणकृत्वातत्सूति
कागृहतन्मध्येप्रतिमास्थाप्यासाचाप्यष्टविधास्मृता काचनीराजतीताम्रीपैतलीमृन्मयीतथा वार्क्षीमणिमयीचै
ववर्णकैर्लिखितातथा सर्वलक्षणसंपूर्णाःपर्यंकेचावृतास्तते संतप्तकांचनाभासांमयासहतपस्विनीं प्रसुप्तांत्र
प्रसूतांचस्थापयेन्मंचकोपरि मांतत्रबालकंगुह्यपर्यंकेस्तनपायिनं श्रीवत्सवक्षसंशांतनीलोत्पलदलच्छविं यशो
दातत्रचैकास्मिन्प्रदेशेसूतिकागृहे तद्वच्चकल्पयेत्पार्थप्रसूतवरकन्यकां तथैवममपार्श्वस्थाःकर्ता ।लिपुटानृप
देवाग्रहास्तथानागायक्षाविद्याधरानटाः प्रणताःपुष्पमालाग्रचारुहस्ताःसुरासुराः संचरंतइवाकाशेप्रहारैरुदितो
दितैः वसुदेवोपितत्रैवखड्गचर्मधरः स्थितः कश्यपोवसुदेवश्चअदितिश्चैवदेवकी शेषोपिबलभद्रोयंयशोदादि
तिरन्वभूत् नदःप्रजापतिर्दक्षोगर्गश्चापिचतुर्मुखः गोप्यश्चाप्सरसःसर्वे गोपाःसर्वेदिवौकसः एषोवतारोराजं
ल्लकसोयंकालनेमिजः तत्रकंसनियुक्ताश्चमोहितायोगनिद्रया गोधेनुकुंजराश्चैवदानवाःशस्त्रपाणयःनृत्यंतश्चाप्स
रोभिश्चगंधर्वागीततत्पराः रम्यामेवंविधांकृत्वादेवकींनवसूतिकां लेखनीयश्चतत्रैवकालियोयमुनाहृदेश्चत्येव
मादियत्किंचिच्छक्यतेचरितंमम लेखयित्वाप्रयत्नेनपूजयेद्भक्तितत्परः ततस्तान्पूजयेद्भक्त्यागंधपुष्पाक्षतैःफ
लैःकूष्मांडैर्नारिकेलैश्चखर्जूरैर्दाडिमीफलैः वीजपूरैःपूगफलैर्लकुचैस्त्रपुसैस्तथा कालदेशोद्भवैःपुष्टैःपुष्पैश्चापियुधि
ष्ठिर पाद्यार्घ्यैःपूजयेद्भक्त्यागंधपुष्पाक्षतैः फलैः मंत्रेणानेनकौंतेयदेवकींपूजयेन्नरः गायद्भिःकिन्नराद्यैःसतत

परिहृतावेणुवीणानिनादै भृंगारादर्शकुंभप्रवरकृतकरैःकिन्नरैःसेव्यमाना पर्यंकेस्वास्तृतेयामुदिततरमुखीपु त्रिणीसम्यगास्ते सादेवीदेवमाताजयतिसुवदनादेवकीकांतरूपा पादौसंवाहयंतीश्रीर्देवक्याश्चरणांतिके नि षण्णापंकजेपूज्यानमोदेव्यैश्रियैइति प्रणवादिनमोंतंचपृथक्नामानुकीर्त्तयेत् कृत्वापूजांविधिज्ञश्वसर्वपापापनु त्तये देवक्यैवसुदेवायवासुदेवायचैवहि वलदेवायनंदाययशोदायैपृथक् पृथक् क्षीराद्यैःस्नपनंकृत्वाचंदनेनानुलेप येत् पूजांतरमपीच्छंतिकेचिदत्रैवसूरयः चंद्रोदयेशशांकायअर्घ्यंदद्याद्धरिंस्मरेत् अनघंवामनंशौरिंवैकुंठपुरुषो त्तमम् वासुदेवंहृषीकेशंमाधवंमधुसूदनं वाराहंपुंडरीकाक्षंनृसिंहंदैत्यसूदनं दामोदरंपद्मनाभंकेशवंगरुडध्व जं गोविंदमच्युतंकृष्णमनंतमपराजितं अधोक्षजंजगद्वीजंसर्गस्थित्यंतकारकं अनादिनिधनंविष्णुंत्रिलोकेशंत्रि विक्रमं नारायणंचतुर्वाहुंशंखचक्रगदाधरं पीताम्बरधरंनित्यंवनमालाविभूषितं श्रीवत्सांकंजगत्सेतुंश्रीधरं श्रीपतिंहरिं योगीश्वरायदेवाययोगिनांपतयेनमः योगोद्भवायनित्यायगोविंदायनमोनमः स्नानमंत्रः यज्ञे श्वरायदेवायतथायज्ञोद्भवायच यज्ञानांपतयेचाथगोविंदायनमोनमः धूपादिमंत्रः विश्वेश्वरायविश्वायतथा विश्वोद्भवायच विश्वस्यपतयेतुभ्यंगोविंदायनमोनमः पूजामंत्रः मंत्रेणानेनयोयश्चपूजयेच्चंद्रमसंनरः तथैवा र्घ्यंचमंत्रेणअनेनैवतुदापयेत् क्षीरोदार्णवसंभूतअत्रिनेत्रसमुद्भव गृहाणार्घ्यंशशांकेमंरोहिण्यासहितोमम ज्योत्स्नापतेनमस्तुभ्यंनमस्तेज्योतिषांपते नमस्तेरोहिणीकांत अर्घ्यंनः प्रतिगृह्यतां स्थंडिलेस्थापयेद्देवंशशां करोहिणीयुत देवक्यावसुदेवंचनंदंचैवयशोदया वलदेवंमयासार्द्धंभक्त्यापरमयानृप सपूज्यविधिवद्देवींकिंना प्नोतिचदुर्लभं अर्द्धरात्रेवसोर्धारांपातयेद्गव्यसर्पिषा ततोवर्द्धापयेन्नालषष्ठीनामादिकंनम कर्त्तव्यंतत्क्षणाद्रा त्रौप्रभातेनवमीदिने यथामयितथाकार्यो भगवत्यामहोत्सवः ब्राह्मणान्भोजयेद्भक्त्यातेभ्योदद्याच्चदक्षिणां

हिरण्यंमेदिनींगावोवासांसिकुसुमानिचयंद्यदिष्टतमंतत्तत्कृष्णोमेप्रीयतामिति यंदेवंदेवकीदेवीवसुदेवादजीज
नत् भौमस्यब्रह्मणोगुप्त्यै तस्मैब्रह्मात्मनेनमः सुजन्मनेसुदेवायगोब्राह्मणहितायच शांतिरस्तुशिवचास्तुइ
त्युक्तामांविसर्जयेत् ततोबंधुजनौघंचदीनानाथजनंतथा भोजयित्वासुशांतात्मास्वयंभुंजीतवाग्यतः एवंय
कुरुतेदेव्यादेवक्यासमहोत्सवं प्रतिवर्षंविधानेनमद्भक्तोधर्मनंदन नरोवायदिवानारीयथोक्तफलमाप्नुयात् पुत्र
संतानमनघंसौभाग्यमतुलंलभेत् इहधर्मरतिर्भूत्वामृतोवैकुंठमाप्नुयात् तत्रदिव्येनमानेनवर्षलक्षंयुधिष्ठिर भो
गान्नानाविधान्भुक्त्वापुण्यशेषादिहागतः सर्वकामसमृद्धेतुसर्वासुखविवर्जिते सर्वरत्नयुतेपार्थसर्वगोकुलमंड
ले महान्नृपवरिष्ठानांजायतेहृदयोमम यस्मिन्सदैवदेशेतुलिखितवापटार्पितं ममजन्मदिनंपुण्यंसर्वालंकारभू
षितैः पूज्यतेपाण्डवश्रेष्ठजनैरुत्सवसंयुतैः परचक्रभयंतत्रनकदाचित्भवेत्पुनः पर्जन्यःकामवर्षीस्यादीतिभ्यो
नभयंभवेत् गृहेवापूज्यतेयास्मिन्देवक्याश्चरितमम तत्रसर्वंसमृद्धिः स्यान्नोपसर्गादिजभयं पशुनोनकुलाद्व्या
लात्पापरोगाच्चपातकात्राजतश्चौरतश्चापिनकदाचिद्भयंभवेत् प्रसंगेनापियोभक्त्याव्रतंपश्येजनाकुलं सोपि
पापविनिर्मुक्तः प्रयातिहरिमंदिरं जन्माष्टमीजनमनोनयनाभिरामा पापापहासदितिनंदित नंदगोपा. यो
देवकींसुतयुतांयजतीहतस्यां पुत्रान्नवाथसमुपैतिपदंसविष्णोः ॥

॥ इतिश्रीजन्माष्टमीव्रतकथासमाप्ता ॥

अन्याकथापद्मपुराणे ॥ ॥ शौनकउवाच ॥ कृष्णजन्माष्टमींसूततस्यामाहात्म्यमुत्तमं कथयस्वमहाप्राज्ञ
चोद्धरस्वभवार्णवात् सूतउवाच कृष्णजन्माष्टमींब्रह्मन्भक्त्याकरोतियोनरः श्वेतविष्णुपुरयातिकुलकोटियुतोद्वि
ज अष्टमीबुधवारेचसोमेचैवाद्विजोत्तम रोहिणीऋक्षसयुक्ताकुलकोटयाश्चमुक्तिदा ३ महापातकसंयुक्तः करोति

व्रतमुत्तमं सर्वपापविनिर्मुक्तश्चांतेयातिहरेर्गृहं कृष्णजन्माष्टमींब्रह्मन्नकरोतिनराधमः इहदुःखमवाप्नोतिस
प्रेत्यनरकंव्रजेत् ५ नकरोतियानारीकृष्णजन्माष्टमीव्रतं वर्षेवर्षेतुसामूढानरकंयातिदारुणम् ६ जन्माष्टमीदि
नेयोवैनरोऽश्नातिविमूढधीः महानरकमश्नातिसत्यसत्यंवदाम्यहं ७ दिलीपेनपुराष्टष्टोवसिष्ठोमुनिसत्तमः त
च्छृणुष्वमहाप्राज्ञसर्वपातकनाशनम् ८ दिलीपउवाच भाद्रेमास्यसिताष्टम्यांयस्यांजातोजनार्दनः तदहंश्रो
तुमिच्छामिकथयस्वमहामुने ९ कथंवाभगवाञ्जातःशंखचक्रगदाधरः देवकीजठरेविष्णुःकिंकर्तुकेनहेतुना
१० वसिष्ठउवाच शृणुराजन्प्रवक्ष्यामिकस्माज्जातोजनार्दनः पृथिव्यांत्रिदिवंत्यक्त्वाभवनकथयाम्यहम् ११ पु
रावसुधराह्यासीत्कंसादिनृपपीडिता स्वाधिकारप्रमत्तेनकंसदूतेनताडिता क्रंदतीरुदतीक्ष्मातुययौघूर्णितलोच
नां यत्रतिष्ठतिदेवेशउमाकांतोवृषध्वजः कंसेनताडितानाथइतितस्मैनिवेदितम् १४ क्रंदंतींतांसमालोक्यकोपेन
स्फुरिताधरः उमयासहितः सर्वैर्देववृंदैरनुद्रुतः आजगाममहादेवोविधातृभवनंरुषा गत्वाचोवाचब्रह्माणं
कंसध्वंसनिमित्तये १६ उपायः सृज्यतांब्रह्मन्भवताविष्णुनासह ऐश्वरंतद्वचःश्रुत्वागंतुंचप्रोद्यतोविभुः
क्षीरोदयत्रवैकुंठःसुप्तोऽस्तिभुजगोपरि हंसपृष्ठंसमारुह्यहरेरंतिकमाययौ तत्रगत्वासमंधात्रादेववृंदैर्हरा
दिभिः सयुक्तैःस्तूयतेवाग्भिः कोमलैर्वाग्विदांवरैः १९ नमः कमलनेत्रायहरयेपरमात्मने जगतःपालयित्रे
चलक्ष्मीकांतनमोस्तुते २० इतितेभ्यःस्तुतिंश्रुत्वाप्रत्युवाचजनार्दनः देवान्ब्रह्मिष्ठमुखान्सर्वान्भवाद्भिरागतंकथम् २१
ब्रह्मोवाच शृणुदेवजगन्नाथयस्मादस्माकमागतं कथयामिसुरश्रेष्ठतदहंलोकभावन २२ शूलिदत्तवरोन्मत्तः कं
सराजोदुरासदः वसुधाताडितातेनकरादानेनपीडिता २३ पूर्वंतपः कृतंतेनदुष्करंभुविमानवैः तस्माच्चकम्पिरे
देवाः शूलिनः शरणययुः ततःशूलीतत्समीपंगत्वावाक्यमुवाचह वरंवरयभद्रंतेदास्यामिसुरदुर्लभम् त

तोवत्रैवरंकंसोमाययातुप्रवंचितः भगिनेयंविनाशंभोमरणंभवितानवै २४ तस्माद्गच्छस्वयंदेवकंसंहंतुंदुरासदं
देवकीजठरेजन्मलब्ध्वागत्वाचगोकुलम् २५ ब्रह्मणाप्रेषितोदेवः प्रत्युवाचचशूलिनं पार्वतींदेहिविशभोऽब्दंस्थि
त्वागमिष्यति २६ उमयारमयासार्द्धंशंखचक्रगदाधरः उद्दिश्यमथुरांचक्रे प्रयाणंकमलासन २७ देव
कीजठरेजन्मलेभेतत्रगदाधरः यशोदाकुक्षिमध्यास्तेशर्वाणीमृगलोचना नवमासांश्चविश्रम्यकुक्षौनवदिनाधि
कान् भाद्रमास्यासितेपक्षेचाष्टमीसंज्ञिकेतिथौ रोहिणीतारकायुक्तारजनीघनघोरिता तस्यांजातोजगन्नाथः
कंसारिर्वसुदेवजः ३० वैराटीनंदपत्नीचयशोदाऽजीजनत्सुतां पुत्रपद्मकरंपद्मनाभंपद्मदलेक्षणं ३१ तदाह
पितुमारेभेदृष्ट्वाचानकदुंदुभिः कंसासुरभयत्रस्ताप्रोवाचदेवकीतदा ३२ विराटंगच्छभोनाथसुतंप्रत्यर्पितुंकिल
पुत्रदत्त्वायशोदायैसुतांतस्याःसमानय तस्यावचःसमाकर्ण्यवसुदेवोपिदुःखितः अंकेकुमारमादायविर
टाभिमुखोययौ ३४ यमुनाजलसपूर्णातत्पथोमध्यवर्तिनी आसीत्प्रांतेमहादीर्घागंभीरोदकपूरभाक् ३५
एवंदृष्ट्वातटेस्थित्वायमुनामवलोक्यच वसुदेवोऽपिदुःखार्तोविललापातिचिंतया ३६ किंकरोमिक्वगच्छामिवि
धिनाऽपिहिवंचितः कथमद्यगमिष्यामिविराटनंदमंदिरम् ३७ हरिणातत्रसानंदमाययावंचितः पिता क्षण
मात्रंतटेस्थित्वायमुनामवलोकयत् ३८ तेनदृष्ट्वापुनः सापिक्षणाज्जानुवहाऽभवत् तांदृष्ट्वाहृष्टचित्तः सप्र
स्थानमकरोत्तदा ३९ मायांकृत्वाजगन्नाथःपितुरंकाज्जलेऽपतत् तंपुत्रंपतितंदृष्ट्वाहाहाकृत्वासुदुःखितः म
हापापंपुनः कर्त्तुंविधिनातेनवंचितः त्राहिमांजगतांनाथसुतंरक्षसुरोत्तम ४१ जनकक्रंदितंदृष्ट्वाकंसारिः कृप
यामुहुः जलक्रीडांसमाचीर्यपितुः क्रोडमगात्पुनः पथातेनद्विजश्रेष्ठजगामनंदमंदिरं सुतंदत्त्वायशोदायैसु
तांतस्याः समानयत् निजागारंततःप्राप्यपत्न्यैप्रत्यर्पितासुता ॥ देवकीचप्रसूतेतिवार्त्ताप्राप्तासुरारिणा

आनेतुंप्रेपितादूताः सुतांदुहितरंतदा आगत्यकंसदूतास्तेसुतानेतुंप्रचक्रमुः ४५ बलाद्धस्तात्समाकृष्यदेवकीवसुदे
वयोः कंसदूताग्रहीत्वातामर्पित्वातुसुरारये ४६ । सधृत्वातांमहाराजंसभयोभूद्दुरासदः शुद्धकांचनवर्णाभांपूर्णें
दुवदनांहसन् दृष्ट्वाकंसोहसंतींतांविद्युत्स्फुरितलोचनां आदिदेशासुरश्रेष्ठोजहिनीत्वाशिलोपरि आज्ञांलब्ध्वाऽ
सुरास्तेवैनिष्पेष्टुंतांप्रवर्तिताः विद्युच्छीघ्रतरागौरीजगामखंकरांतिकात् गौर्युवाच शृणुराजन्प्रवक्ष्यामिय
आस्तेशत्रुरुत्तमः नंदस्यनिलयेगुप्तस्तवहंतासुरोत्तमः वसिष्ठउवाच एवमुक्त्वातुसादेवीजगामनिजमंदिरं
श्रुत्वावाक्यंततोदेव्याःकंसोराजासुदुःखितः भगिनींपूतनामाहगच्छत्वंनंदमंदिरं छद्मनातत्सुतंहत्वागच्छत्वं
वांछितंबहु दास्यामिशासनंतेवैव्रजशीघ्रंशुभंकुरु आज्ञांप्राप्यराक्षसीसागोकुलाभिमुखंगता माययातग्रह
द्वारंप्रविष्टासुरमर्दनं स्तनपानेनतत्प्राणानाकृष्यनंदगोकुले केशिनंचवकंदैत्यंधेनुकंरासभंपुनः जृंभणंचाग्नि
व्हंचहत्वागोवर्धनंदधत् कालीयमर्दनंकृत्वागतोमधुपुरींततः दृष्ट्वाकंसोहतः क्रूरः कंसमल्लानजीजयत् पित
रौतोपयामाससुप्रसन्नैस्ससंस्कृतः एतत्तेकथितंराजन्विष्णोर्जन्मदिनव्रतं श्रुत्वापापानिनश्यतिकृत्वाकिंनभ
विष्यति यइदंकुरुतेमर्त्योयाचनारीहरेर्व्रतं ६१ ऐश्वर्यमतुलंप्राप्यजन्मन्यत्रयथेप्सित पूर्वविद्धानकर्त
व्यातृतीयापर्षिरेवच अष्टम्येकादशीभूताधर्मकामार्थवांछिभिः वर्जयित्वाप्रयत्नेनसप्तमीसंयुताष्टमीं विनाऋक्षे
णकर्तव्यानवमीसयुताष्टमी उदयेचाष्टमीकिंचित्सकलानवमीयदि मुहूर्तंरोहिणीयुक्तासंपूर्णासाष्टमीभवेत् अ
ष्टमीबुधवारेणरोहिणीसहितायदि सोमेनवाभवेद्राजन्किंकृतैर्व्रतकोटिभिः नवम्यामुदयात्किंचित्सोमेवापिबुधे
पिच अपिवर्षशतेनापिलब्धात्रापिनलभ्यते विनाऋक्षंतुकर्तव्यानवमीसंयुताष्टमी कार्याविद्धापिसप्तम्यारो

रिणीसंयुताष्टमी कलाकाष्ठामुहूर्तापियदाकृष्णाष्टमीतिथिः नवम्यासहितायाह्यासप्तमीसंयुतानहि किंपुनर्बुध
वारेणसोमेनापिविशेषतः किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदा पलदेवेननराजेंद्रसप्तम्याअष्टमीत्यजेत् सु
रापाविंदुनास्पृष्टोगंगाम्भःकलशायथा दिलीपउवाच केनचादौकृतंचेद्वाकेनवातत्प्रकाशितं किंपुण्यंकिंफलदेवः
कथयस्वमहामुने वसिष्ठउवाच चित्रसेनोमहाराजामहापापपरोमहान् अगम्यागमनंकृत्वास्वर्णस्तेयद्विज
स्यच सुरांपाचसञ्जातस्तोयथामांसेसदारतः एवंपापसमायुक्तोनित्यंप्राणिवधेरतः चांडालैःपतितैःसार्द्धंमा
लापंसर्वदाकरोत् एकदैवविधोराजामृगयायामनोदधे अरण्येद्वीपिनंज्ञात्वावेष्टयित्वाचसर्वतः सावधानंभ
टान्सर्वान्वाक्यमेतदुवाचह सचवध्यः पुरोयस्यगच्छेद्राज्ञोजगामह सलज्जोपिततोराजाव्याघ्रंपश्चाज्जगामह अ
नेकक्लेशदुःखेन व्याघ्रंहंतुंसमाहितः क्षुत्पिपासाकुलः प्राप सध्यायांयमुनातटम् अष्टमीरोहिणीयुक्तातद्दिनज
न्मवासरं स्वकन्यायमुनायावैव्रतंचक्रुर्नराधिप नानोपहारैर्द्रव्यैश्चधूपदीपैःसुशोभनैः गंधपुष्पंतथाद्रव्यं
कुंकुमादिमनोहरम् ॥ अन्नंबहुगुणंदृष्ट्वाभोजनेमानसंकृतम् श्रीराजोवाच अन्नाभावान्ममाद्याशुप्राणायास्यंति
निश्चितं स्त्रियऊचुः जन्माष्टम्यांहरेस्त्वनभोक्तव्यंत्वयानघ गृध्रमांसंखरंकाकंगोमांसमन्नमेवच भुक्तवान्नरसं
देहोयोभुंक्तेकृष्णजन्मनि किंकिंछिद्रंनसंजातंसंसारेवंसतांनृणां यैर्नदेहेस्थितप्राणैःजन्तीनकृतान्नृप तत्राकृतो
पवासस्याकठिनंयममंदिरं यद्दत्तंपितरोनित्यंनगृह्णंतियथाविधि पितरःपातिताःसर्वेजयंत्याभोजनेकृते इ
तिश्रुत्वाततोराजन्व्रतंचक्रेनराधिपः किंचित्पुष्पंकियद्द्रव्यंवस्त्रंचानीयहर्षितः एतद्व्रतेसमायुक्तास्तांथिमातेचपारणं
॥ सूतउवाच ॥ यत्फलंमथुरांगत्वादृष्ट्वाकृष्णमुखांबुजं तत्फलंप्राप्यतेपुंसांकृष्णजन्माष्टमीव्रतात् । यत्फलंद्वारिकां
गत्वादृष्ट्वाविश्वेश्वरेहरौ तत्फलंप्राप्यतेदीनैस्तस्यजन्माष्टमीव्रतात् ॥ इतिश्रीपद्मपुराणेहरिजन्माष्टमीव्रतकथनम

## ॥ अथभविष्यत्पुराणोक्तजन्माष्टमीव्रतोद्यापनम् ॥

युधिष्ठिरउवाच उद्यापनविधितत्रब्रूहिदेवदयानिधे येनसंपूर्णतायातिव्रतमेतदनुत्तमम् ॥ श्रीकृष्णउवाच पूर्णा
तिथिमनुप्राप्यश्रद्धाचित्तादिसंयुतः पूर्वेद्युरेकभक्ताशीस्वपन्मास्वहादिस्मरन् प्रातरुत्थायसस्मृत्यपुण्यश्लोका
न्समाहित निर्वर्त्यावश्यक कर्मब्राह्मणान्स्वास्तिवाचयेत् गुरुमानीयधर्मज्ञंवेदवेदांगपारगम् वृणुयादृ
त्विजश्चैववस्त्रालंकरणादिभि॰ पलेनवातदर्द्धेनतदर्द्धार्द्धेनवापुनः शक्त्यावाकारयेत्तत्रवित्तशाठ्यविवर्जितः सौ
वर्णीप्रतिमाकार्यापाद्यार्घ्याचमनादिकं एतत्सपाद्याविधिवत्पूजोपकरणादिक गोचर्ममात्रसंलिप्यमध्येमंड
पमाचरेत् ब्रह्माद्यादेवतास्तत्रस्थापयित्वाप्रपूजयेत् मंडपरचयेत्तत्रकदलीस्तंभमंडितं चतुर्द्वारसमोपेतफ
लपुष्पादिसंयुत वितानंतत्रबध्नीयाद्विचित्रंचैवशोभितं ' मंडपेस्थापयेत्कुंभताम्रंवामृण्मयंशुचिः तस्योपरि
न्यसेत्पात्रंराजतंवैणवंतुवा वाससाच्छाद्यकौंतेयपूजयेत्तत्रमाधुव॰ उपचारैः षोडशभिर्मंत्रैरपिसमाहित॰ ध्या
त्वावाह्यानंतीकृत्यस्वागतादिभिरादरात् ध्यात्वाचतुर्भुजंदेवंशंखचक्रगदाधर शुद्धेह्यस्मिन्नधिष्ठानेसन्निधेहि
कृपांकुरु आवाहनं देवदेवजगन्नाथगरुडासनसंस्थित॰ गृहाणासनकंदिव्यंजगद्धातर्नमोस्तुते ॥ आसनं ना
नातीर्थाहृतंशुद्धंनिर्मलंपुष्पमिश्रितं पाद्यंगृहाणदैत्यारिविश्वरूपनमोस्तुते पाद्य गंगादिसर्वतीर्थेभ्योमया
नीतंसुशीतलं गृहाणाचमनंकृष्णविश्वकायनमोस्तुते आचमनीयं गंधपुष्पाक्षतैश्चैवफलेनचसमन्वितं अ
र्घ्यंगृहाणदेवेशमयादत्तंहिभक्तितः अर्घ्यं दधिक्षौद्रघृतंशुद्धंकपिलायाःसुगंधियत् सुस्वादुमधुरंशौरेमधुपर्कंगृ
हाणमे मधुपर्कं आचमन पंचामृतैस्तुस्नपनंकारिष्यामिसुरोत्तम क्षीरोदधिनिवासायलक्ष्मीकांतायतेनमः
मंदाकिनीगौतमीचयमुनाचसरस्वती ताभ्यः स्नानार्थमानीतंगृहाणशिशिरंजलं ॑ स्नानं पुनराचमनं शु

द्दजांबूनदप्रख्येतडिद्भास्वररोचिषी मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतांवस्त्रं पुनराचमनीयं यज्ञोपवीतंपर
ममितियज्ञोपवीतं किरीटकुंडलादीनिकांचीवलययुग्मक कौस्तुभंवनमालांचभूषणानिभजस्वमे भूषणानि
मलयाचलसंभूतंगंधसारमनोहरं हृदयानंदनंचारुचंदनंप्रतिगृह्यतां चंदनं मालतीचंपकादीनियूथिकाबहु
लानिच तुलसीपत्रमिश्राणिगृहाणसुरसत्तम पुष्पाणि देवकींवसुदेवंचरोहिणींसबलांतथा सात्यकिंचो
द्धवाक्रूरावुग्रसेनादियादवान् नंदंयशोदांतत्कालप्रसूतांगोपिकास्तथा कालिंदींकालियंचैवपूजयेन्नाममंत्रतः
वनस्पतिरसोद्भूतंकालागुरुसमन्वितं धूपंगृहाणगोविंदगुणसागरगोपते धूपं आज्यंचवर्तिसंयुक्तमितिदी
पं नैवेद्यंगृह्यतांदेवेतिनैवेद्यं शाल्योदनंपायसंचसिताघृतविमिश्रितं नानापक्वान्नसंयुक्तंनैवेद्यं प्रतिगृह्यतां नैवे
द्यं तदंतेपुनराचमनीयं पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं इ
दंफलमितिफलं हिरण्यगर्भगर्भस्थमितिदक्षिणा नीराजयेत्ततोभक्त्यामंगलंसमुदीरयन् जयमंगलाघो
षैर्देवदेवंसमर्चयेत् दत्त्वापुष्पांजलिंचार्घ्यदक्षिणादिपुरःसरं प्रणमेद्दंडवद्भूमौभक्तिप्रव्हःपुनःपुनः स्तु
त्वानानाविधैःस्तोत्रैः प्रार्थयेत्तंजगत्पतिं नमस्तुभ्यंजगन्नाथदेवकीनंदनप्रभो वसुदेवात्मजानंतयशोदानं
दवर्द्धन गोविंदगोकुलाधारगोपिकांतनमोस्तुते ततस्तुदापयेदर्घ्यमिंदोरुदयतः शुचिः कृष्णायप्रथमंद
द्याद्देवकीसहितायच नारिकेलेनशुद्धेनदद्यादर्घ्यंविचक्षणः कृष्णायपरयाभक्त्याशंखेकृत्वाविधानतः जा
तः कंसवधार्थायभूभारोत्तारणायच कौरवाणांविनाशायदैत्यानांनिधनायच गृहाणार्घ्यंमयादत्तंदेवकीसहितो
हरे कृष्णार्घ्यमंत्रः शंखेकृत्वाततस्तोयंसपुष्पफलचंदनं जानुभ्यामवनींगत्वाचंद्रायार्घ्यंनिवेदयेत् क्षीरो
दार्णवसंभूतअत्रिनेत्रसमुद्भव गृहाणार्घ्यंमयादत्तंरोहिणीसहितोविधो ज्योत्स्नापतेनमस्तुभ्यंनमस्तेज्योतिषांपते

नमस्तेरोहिणीकांतगृहाणार्ध्यनमोस्तुते चंद्रार्घ्यमंत्रः इत्थंसंप्रार्थ्यदेवेशंरात्रौजागरणंचरेत् गीतनृत्यादिनाचै
वपुराणश्रवणादिभिः प्रत्यूषेविमलेस्नात्वापूजयित्वाजगद्गुरुं पायसेनतिलाज्यैश्चमूलमंत्रेणभक्तितः अष्टोत्तर
शतंहुत्वाततः पुरुषसूक्ततः इदंविष्णुरितिप्रोक्ताजुहुयाद्घृताहुतीः होमशेषंसमप्याथपूर्णाहुतिपुरस्सरं आ
चार्य्यंपूजयेद्भक्त्याभूषणाच्छादनादिभिः गामेकांकपिलांदद्याद्व्रतसंपूर्त्तिहेतवे पयस्विनींसुशीलांचसवत्सासगु
णांतथा स्वर्णशृंगींरौप्यखुरांकांस्यदोहनिकायुतां रत्नपुच्छांताम्रपृष्ठींस्वर्णघंटासमन्वितां अव्यगांवस्त्रसंछन्ना
मेवंसंपूर्णतांव्रजेत् कपिलायाअभावेतुगौरन्यापिप्रदीयते ततोदद्याच्चऋत्विग्भ्योऽन्येभ्यश्चैवयथार्हतः ब्राह्म
णान्भोजयेत्पश्चाद्दद्यात्तेभ्यश्चदक्षिणां कलशानन्नसंपूर्णान्दद्याच्चैवसमाहितः प्राप्यानुज्ञांतथातेभ्योभुंजी
तसहबंधुभिः एवंकृतेमहाराजव्रतोद्यापनकर्मणि निःपापस्तत्क्षणादेवजायतेविबुधोत्तमः पुत्रपौत्रसमा
युक्तोधनधान्यसमन्वितः भुक्त्वाभोगान्चिरंकालमंतेममपुरंव्रजेत् इतिभविष्योत्तरोक्तं जन्माष्टमीव्रतोद्यापनं
अथस्मृतिकौस्तुभोक्तंजन्माष्टमीव्रतोद्यापनं ॥ युधिष्ठिरउवाच ॥ त्वत्प्रसादाद्धृषीकेशश्रुतंमेव्रतमुत्तमं इदा
नींकृपयाब्रूहिव्रतोद्यापनकर्मच १ उद्यापनंविनानैवव्रतस्यफलमश्नुते कर्त्तव्यंतुकथंभक्तैरखंडफलभोक्तृभिः २
श्रीकृष्णउवाच शृणुपांडववक्ष्यामिव्रतोद्यापनमुत्तमं व्रतंकृतेनराजेंद्रसफलंविपुलंभवेत् ३ यथातथाचत
त्कुर्याद्वित्तशाठ्यंनकारयेत् वर्षेवर्षेतथाऽष्टम्यांकुर्याद्व्रतमनुत्तमम् ४ सप्तम्यांपंचगव्येनविधिवत्कायशोधनं
कुर्याद्व्रतेतथाऽष्टम्यांमध्यान्हेचेष्टबंधुभिः ५ इष्टबंधवोऽपितत्रसहायाभवेयुरित्यर्थः सर्वौषधैःसर्वगंधैः स्नानंशु
छतिलामलैः वेदोक्तविधिनास्नात्वातर्पयेत्पितृदेवताः ६ ततोयथोक्तविधिनाकुर्यादाराधनंहरेः एह्येहि
कृपयाकृष्णक्षीरोदार्णवसंस्थित ७ पद्मचक्रमहाशंखलक्ष्मीगरुडशोभित श्रीवत्सकौस्तुभोरस्कफणासुप्त

न्वितप्रभो ८ अतस्त्वंयापनेनत्वंसर्वकामप्रदोभव इत्यावाहनमंत्रः इतिप्रार्थ्यततोदेवमार्चितंसनकादिभिः
९ आगतानर्चयेत्सर्वान्गंधपुष्पादिभिःक्रमात् पुण्याहवाचनंकुर्यात्संकल्पंचयथाविधि १० आचार्यमर्चयेद्वि
द्वान् श्रोत्रियंचकुटुंबिनं श्रुतिस्मृतिसमायुक्तंब्रह्माणंवरयेत्ततः ११ धर्मश स्त्रार्थतत्त्वज्ञानन्यांश्चवेदपारगान् वरये
द्यजनार्थंहिब्राह्मणानांचसप्तकं १२ आशीर्वादंगृहीत्वाथसर्वैर्द्विजवरोत्तमैः शुचौदेशेतुसंलिप्तेगोमयेनविचक्षणः १३ मं
डलंकारयेत्तत्रपंचवर्णंसुशोभनं नवनाभंसारविंदंसर्वतोभद्रसंज्ञकं १४ मंडलंकारयेन्मध्येमनसोल्हादकंपरं मंडपं
कारयेत्तत्रसुतोरणसमन्वितं १५ चतुर्द्वारान्वितंह्येतत्स्थापयेदिष्टदेवताः प्रथमेद्वारमार्गेतुगरुडंस्थापयेद्बुधः १६ अत्र
तेहेलमंत्रेणनैवेद्यांतंप्रकल्पयेत् द्वितीयद्वारदेशेतुकुबेरंस्थापयेत्ततः १७ गणानांत्वेतिमंत्रेणचतुर्थंगणनायकं एवं
सुपूजितेतत्रमंडलेपंकजादिभिः १८ मध्येऽवस्थापयेत्कुंभंसौवर्णंराजतंतथा अभावेताम्रजंवापिमृण्मयंवापिकारये
त् १९ सुधाधवलितंकृत्वाचंद्रसूर्यनिभंशुभं नामांकितंतुतत्कृत्वाजलपूर्णंसरत्नकं गंधपुष्पादिसंयुक्तंसपल्लव
फलंतथा २० पात्रंचकारयेत्पश्चाद्धेम्नावारजतेनवा अभावेताम्रपात्रंतुकुंभस्योपरिविन्यसेत् २१ सर्वेसमुद्राःस
रितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः २२ इतिजलावाहनं स्थितंत्वयिजग
त्सर्वंसदेवासुरमानुषं आत्मनःकार्यसिध्यर्थंस्थापयित्वाघटोपरि मूर्तिंचकारयेत्तत्रकृष्णस्यैवविचक्षणः २३
अष्टमाषप्रमाणांतुवित्तशाठ्यंनकारयेत् तदर्धेनाथवार्धेनशक्त्यावाकारयेद्बुधः २४ आवाहयेत्प्रयत्नेनमूर्तिंकलशसं
स्थितां चामरछत्रशय्यांचपीठिकांचाथपात्रकम् २५ सूपस्करसमायुक्तंदेवस्याग्रेनिवेदयेत् २६ देवस
मीपेस्थापयेत् एवंपंचामृताद्युपकल्पनविधानम् पंचामृतेनततस्नानंकुर्याद्देवस्यमंत्रतः स्नानंचकारयेत्पार्थपश्चा
त्पूजांसमाचरेत् ततस्तुपूजयेद्देवंविष्णुंतंविश्वरूपिणम् २७ वस्त्रयुग्मेनसंवीतंपीतयज्ञोपवीतिनं चंदनेनसुगंधेन

कर्पूरागुरुगंधिना विलेपनेनभोगायप्रीयतांमधुसूदनः २८ उक्तविलेपनेनसहभोगाययदपेक्षितनैवेद्यतांबूलादि
तस्याशुप्रकल्पनंकार्यमित्याशयः अथपूजाप्रकर्तव्यामन्त्रैर्वेदपुराणिकैः ३० आगच्छदेवदेवेशतेजोराशे
जगत्पते पूजयिष्याम्यहंदेवप्रसादसुमुखोभव सहस्रशीर्षेत्यावाहनं देवाब्रह्मादयोयेचस्वरूपंनविदुस्तव अ
तस्त्वांपूजयिष्यामिमातुरुत्संगवासिनं यस्यावताररूपाणिसमर्चंतिदिवौकसः अपश्यत.स्वयंरूपतस्मै
श्रीब्रह्मणेनमः पुरुषएवेदआसन अवतारसहस्राणिकरोषिमधुसूदन नतेसंख्यावताराणांकश्चिज्जानाति
तत्वतः एतावानस्येतिपाद्यं जातः कंसवधार्थायभूभारोत्तारणायच देवानांचहितार्थायधर्मसंस्थापनायच
कौरवाणांविनाशायपांडवानांहितायच गृहाणार्घ्यंमयादत्तंदेवक्यासहितोहरे त्रिपादूर्ध्वइत्यर्घ्यं सुरासुरनरेश।
यक्षीराब्धिशयनायच योगेश्वरायदेवाययोगिनांपतयेनमः योगोद्भवायनित्यायगोविंदायनमोनमः कृष्णायवासु
देवायदद्यादाचमनंशुभ तस्माद्विराजाचमनीयं नारायणनमस्तेऽस्तुनरकार्णवतारक गंगोदकंसमानीत
स्नानार्थंप्रतिगृह्यतां तस्माद्यज्ञात्स्नानं पयोदधिघृतक्षौद्रशर्करास्नानमुत्तमं तृप्त्यर्थंदेवदेवेशगृह्यतां
देवकीसुत पंचामृतस्नानं शुद्धोदकस्नानं आचमनं क्षौमचपट्टसूत्राढ्यमयानीतांशुकशुभं गृह्यतां
देवदेवेशमयादत्तंसुरोत्तम तस्माद्यज्ञाद्‌ द्वितीयवस्त्रंच नमः कृष्णायदेवायशंखचक्रधरायच ब्रह्मसूत्रं
जगन्नाथगृहाणपरमेश्वर तस्मादश्वेत्युपवीत नानागंधसमायुक्तंचंदनंचारुचर्चितं कुंकुमाक्ताक्षतैर्युक्तंगृह्यतांप
रमेश्वर तंयज्ञमितिगंध पुष्पाण्येतानिदिव्यानिपारिजातोद्भवानिच मालतीकेसरादीनिपूजार्थंप्रतिगृह्यतां य
त्पुरुषमितिपुष्पं अष्टांगपूजा श्रीकृष्णायनमः पादौ पूजयामि संकर्षणायनमः स्फिजौपू. कालात्मने
नमोजानुनी पू. विश्वकर्मणे. जघनंपू. विश्वनेत्राय. कटिंपूजयामि विश्वकर्मणे मेढ्रंपू. वाचस्पते

न्वितप्रभो ८ व्रतस्योद्यापनेनत्वंसर्वकामप्रदोभव इत्यावाहनमंत्रः इतिप्रार्थ्यततोदेवमार्चेतंसनकादिभिः
९ आगतानर्चयेत्सर्वान्गंधपुष्पादिभिःक्रमात् पुण्याहवाचनंकुर्यात्संकल्पंचयथाविधि १० आचार्यमर्चयेद्वि
द्वान् श्रोत्रियंचकुटुंबिनं श्रुतिस्मृतिसमायुक्तंब्रह्माणंवरयेत्ततः ११ धर्मज्ञ आर्थनत्वज्ञानन्यांश्चवेदपारगान् वरये
द्यजनार्थंहिब्राह्मणानांचसप्तकं १२ आशीर्वादंगृहीत्वाथसर्वैर्द्विजवरोत्तमैः शुचौदेशेतुसंलिप्तेगोमयेनविचक्षण. १३ मं
डलंकारयेत्तत्रपंचवर्णंसुशोभनं नवनाभंसारविंदंसर्वतोभद्रसंज्ञकं १४ मंडलंकारयेन्मध्येमनसोल्हादकंपरं मंडपं
कारयेत्तत्रसुतोरणसमन्वितं १५ चतुर्द्वारान्वितंह्येतत्स्थापयेदिष्टदेवता· प्रथमेद्वारमार्गेतुवरुणंस्थापयेद्बुध· १६ अत्र
तेहेलमंत्रेणनैवेद्यांतप्रकल्पयेत् द्वितीयद्वारदेशेतुकुवेरंस्थापयेत्ततः १७ गणानांत्वेतिमंत्रेणचतुर्थेगणनायक एवं
सुपूजितेतत्रमंडलेपंकजादिभिः १८ मध्येऽवस्थापयेत्कुंभंसौवर्णंराजतंतथा अभावेताम्रजंवापि मृण्मयंवापिकारये
त् १९ सुधाधवलितंकृत्वाचंद्रसूर्यनिभंशुभं नामांकितंतुतत्कृत्वाजलपूर्णंसरत्नकं गंधपुष्पादिसंयुक्तंसपल्लव
फलंतथा २० पात्रंचकारयेत्पश्चाद्धेम्नावाराजतेनवा अभावेताम्रपात्रंतुकुंभस्योपरिविन्यसेत् २१ सर्वेसमुद्राःस
रितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः २२ इतिजलावाहनं स्थितत्वयिजग
त्सर्वंसदेवासुरमानुषआत्मन.कार्यसिद्ध्यर्थंस्थापयित्वाघटोपरि मूर्तिंचकारयेत्तत्रकृष्णस्यैवविचक्षणः २३
अष्टमाषप्रमाणांतुवित्तशाठ्यंनकारयेत् तदर्द्धेनाथवार्द्धेनशक्त्यावाकारयेद्बुधः २४ आवाहयेत्प्रयत्नेनमूर्तिंकलशसं
स्थितां चामरछत्रशय्याचपीठिकांचाथपात्रकम् २५ सूपस्करसमायुक्तंदेवस्याग्रेनिवेदयेत् २६ देवस
मीपेस्थापयेत् एवंपंचामृताद्युपकल्पनाविधानम् पंचामृतेनततस्नानंकुर्याद्देवस्यमंत्रत. स्नानंचकारयेत्पार्थपश्चा
त्पूजांसमाचरेत् ततस्तुपूजयेद्देवंविष्णुंतंविश्वरूपिणम् २७ वस्त्रयुग्मेनसवीतंपीतयज्ञोपवीतिनं चंदनेनसुगंधेन

कर्पूरागुरुगंधिना विलेपनेनभोगायप्रीयतांमधुसूदनः २८ उक्तविलेपनेनसहभोगाययदपेक्षितंनैवेद्यतांबूलादि तस्याशुप्रकल्पनंकार्यमित्याशयः अथपूजाप्रकर्तव्यामंत्रैर्वेदपुराणिकैः ३० आगच्छदेवदेवेशतेजोराशे जगत्पते पूजयिष्याम्यहंदेवप्रसादसुमुखोभव सहस्रशीर्षेत्यावाहनं देवाब्रह्मादयोयेचस्वरूपंनविदुस्तव अतस्त्वांपूजयिष्यामिमातुरुत्संगवासिनं यस्यावताररूपाणिसमर्चंतिदिवौकसः अपश्यत.स्वयंरूपतस्मै श्रीब्रह्मणेनमः पुरुषएवेदआसन अवतारसहस्राणिकरोषिमधुसूदन नतेसंख्यावताराणांकाश्चिज्जानाति तत्त्वतः एतावानस्येतिपाद्यं जातः कंसवधार्थायभूभारोत्तारणायच देवानांचहितार्थायधर्मसंस्थापनायच कौरवाणांविनाशायपांडवानांहितायच गृहाणार्घ्यंमयादत्तंदेवक्यासहितोहरे त्रिपादूर्ध्वइत्यर्घ्यं सुरासुरनरेश। यक्षीराब्धिशयनायच योगेश्वरायदेवाययोगिनांपतयेनमः योगोद्भवायनित्यायगोविंदायनमोनमः कृष्णायवासु देवायदद्यादाचमनंशुभ तस्माद्विराजाचमनीयं नारायणनमस्तेऽस्तुनरकार्णवतारक गंगोदकंसमानीत स्नानार्थंप्रतिगृह्यतां तस्माद्यज्ञात्इतिस्नानं पयोदधिघृतक्षौद्रशर्करास्नानमुत्तमं तृप्त्यर्थंदेवदेवेशगृह्यतां देवकीसुत पंचामृतस्नानं शुद्धोदकस्नानं आचमनं क्षौमचपट्टसूत्राढ्यमयानीतांशुकशुभं गृह्यतां देवदेवेशमयादत्तंसुरोत्तम तस्माद्यज्ञाद् द्वितीयवस्त्रंच नमः कृष्णायदेवायशंखचक्रधरायच ब्रह्मसूत्रं जगन्नाथगृहाणपरमेश्वर तस्मादश्वेत्युपवीतं नानागंधसमायुक्तंचंदनंचारुचर्चितं कुंकुमाक्ताक्षतैर्युक्तंगृह्यताप रमेश्वर तंयज्ञमितिगंध पुष्पाण्येतानिदिव्यानिपारिजातोद्भवानिच मालतीकेसरादीनिपूजार्थंप्रतिगृह्यतां य त्पुरुषमितिपुष्पं अष्टांगपूजा श्रीकृष्णायनमः पादौ पूजयामि संकर्षणायनमः स्फिजौपू. कालात्मने नमोजानुनी पू. विश्वकर्मणे. जघनंपू. विश्वनेत्राय- कटिंपूजयामि विश्वकर्मणे मेढ्रंपू. वाचस्पते

नमस्तुभ्यमितिसंपूजयेन्मुखं ललाटेकेशवायैवललाटपू. सर्वात्मने. शिरःपू. कालात्मन्विश्वरूपात्मन्
नारायणनमोनमः इतिसर्वांगपूजा वनस्पतिरसोदिव्योगंधाढ्यः सुमनोहरः आघ्रेयः सर्वदेवानांधूपो
यंप्रतिगृह्यतां ब्राह्मणोस्येतिधूपं त्वंज्योतिः सर्वदेवानांतेजस्त्वंतेजसांपरं. आत्मज्योतिर्नमस्तुभ्यंदीपोयंप्र
तिगृह्यतां चंद्रमामनसइतिदीपं नानागंधसमायुक्तंभक्ष्यंभोज्यंचतुर्विधं नैवेद्यार्थंमयादत्तंगृहाणपरमेश्वर
नाभ्याआसीदितिनैवेद्यं तांबूलंचसकर्पूरंपूगीफलसमन्वितं मुखवाकरंरम्यंप्रीतिदंप्रतिगृह्यतां यत्पुरुषेणेति
तांबूलम् सुवर्णरजतंताम्रंनानारत्नसमन्वितं कर्मसाद्गुण्यसिद्ध्यर्थंदक्षिणाप्रतिगृह्यतां सप्तास्यासन्निति दक्षि
णा इदंफलं यज्ञेनयज्ञमितिफलं १३ ततोवैदिकमंत्रैः पुष्पांजलिंदद्यात् इदंविष्णुरित्यादिभिः एवं
पूजाप्रकर्त्तव्यारात्रौजागरणंतथा गीतवादित्रसंयुक्तंपुराणश्रवणंतथा प्रतिमायांविधायैवंपूजांदेवस्यचक्रिणः
ततःप्रभातसमयेस्नात्वशुचिजलाशये पूर्ववत्पूजयेद्देवंपश्चाद्धोमंसमाचरेत् स्वगृह्योक्तविधानेनप्रतिष्ठाप्यचरुंततः
व्रीहीयवतिलैश्चैवघृतेनचपरिप्लुतैः अतोदेवेतिमंत्रेणशतमष्टोत्तरंक्रमात् त्रुटयेस्वाहा कालात्मनेस्वाहा
अहोरात्रायस्वाहा अर्द्धमासायस्वाहा मासायस्वाहा संवत्सरायस्वाहा सर्वात्मनेस्वाहा ततइदंवि
ष्णुरितिमंत्रेणपंचखाद्यहुतंस्मृतं यथासंख्यचकर्तव्यंहुतंसंपूर्णमेवच ततोमहाव्याहृतयोहोममंत्राः प्रकीर्त्तिताः
जपेत्पुरुषसूक्तंतुस्मरेद्देवमनंतकं पूर्णाहुतिंततोहुत्वायवैर्व्रीहिघृतादिभिः आदित्यादीन्ग्रहान्सर्वान्शक्तोवा
राधयेदिह नवैर्धौतैरतिश्वेतैर्वस्त्रैराभरणैःशुभैः कर्णांगुलीभूषणैश्चरौप्यंकृत्वापवित्रकं अर्घ्यपुष्पप्रदानेन
आचार्यंतुप्रपूजयेत् आचार्यंपूजयित्वाचवस्त्रैर्नानाविधैःशुभैः वस्त्रंछत्रंचहेमंचरत्नादिभिरलंकृतं सकंक
णंहारयुक्तंसपत्नीकायदाप्यच मुद्रिकाकर्णभूषैश्चतथावस्त्रैःप्रपूजयेत्. दद्यात्सदक्षिणांधेनुंसवत्सांचपयस्विनीम

स्वर्णशृंगींरौप्यखुरांकांस्यदोहनसंयुतां ताम्रपृष्ठींस्वर्णघंटांनासिकामौक्तिकान्वितां . रत्नपुच्छांवस्त्रयुतांनि
ष्कत्रयसमन्विता भक्त्यासमर्पयेत्सर्वंयथाविभवसारतः सुरभीवैष्णवीमातानित्यंविष्णुपदेस्थिता . गोग्रासंतु
मयादत्तंसुरभिप्रतिगृह्यतां गावोममाग्रतः संतुगावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं धे
नुंस्पृष्ट्वानमस्कुर्यात्कुर्याच्चैवप्रदक्षिणां प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा . नमोगोभ्यः श्रीमतीभ्यः सौर
भेयीभ्यएवच नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः नमस्कारः गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश य
स्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच गोप्रार्थना. यस्मात्त्वंपृथिवीरूपाधेनुरूपेणसंस्थिता त्वदर्चनाद्धरिःप्री
तोममपापंव्यपोहतु मंत्रैरेभिस्तुसंपूज्यआचार्यायानिवेदयेत् . पदंचैवप्रदातव्यंवस्त्राद्यष्टकसंयुतं पादुकोपान
हच्छत्रमुद्रिकादिभिरंकितं नामांकंसजलंकुंभंतंडुलैःपूरितंतथा सोपस्करांचप्रतिमामाचार्यायानिवेदयेत्
कृष्णायानंतरूपायदास्यामिप्रतिमामिमां द्रव्यंविष्णुसमुद्भूतामतःशांतिंप्रयच्छमे . प्रतिमामंत्रः मंडलंफल
संयुक्तंब्राह्मणायनिवेदयेत् अन्येभ्योब्राह्मणेभ्यश्चभक्त्यादद्याच्चदक्षिणां अभिषेकंततःकुर्याद्यजमानस्य
मंत्रतः समुद्रेतिप्रतिमंत्रैः शर्करास्त्वितिमंत्रतः कोटितीर्थसमंपुण्यमाचार्यंतुक्षमापयेत् मंत्रहीनांक्रियाहीं
नंभक्तिहीनंजनार्दन संपूजितंमयादेवपरिपूर्णंतदस्तुमे क्षमापनमंत्रः इष्टमित्रादिसंयुक्तोगृहमागत्यसंयुतः
ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवविस्तरैः मिष्टान्नपायसैर्भोज्यैः पश्चाद्दद्याच्चदक्षिणां दीनानाथांश्चसंपू
ज्यब्राह्मणांश्चविशेषतः भुंजीतवाग्यतोभूत्वाचिंतयेत्तद्दिनेहरिं एवंकृतेधर्मराजकर्मणासौजनार्दनः सकृष्ण
रूपीभगवान्प्रियोभवतिसर्वदा सगरेणपुराचीर्णंराजभिर्जनकादिभिः मनुनाचादिलीपेनरघुणाभरतेनच नृपैर
न्यैश्चचरितंराज्यंभुक्त्वादिवंगताः यः करोतिनृपश्रेष्ठव्रतस्योद्यापनंमुदा . व्रतस्यफलमाप्नोतिविष्णुलोकेमहीं

यते ॥ इतिजन्माष्टम्युद्यापनविधिस्समाप्तः ॥ ॥ ॥ अथास्यामेव रोहिणीयुक्तायामाग्नि
पुराणोक्तंजयंतीव्रतम् ॥ वासिष्ठउवाच कृष्णाष्टम्यांभवेद्यत्रकलैकारोहिणीनृप जयंतीनामसाज्ञेयाउपोष्याच
प्रयत्नतः सप्तजन्मकृतंराजन्यत्पापंत्रिविधंनृणां तत्क्षालयतिगोविंदास्तिथौतस्यांसुभावितः उपवास
श्चतत्रोक्तोमहापातकनाशनः जयंत्यांजगतीपालविधिनानात्रसंशयः त्रेतायांद्वापरेचैवराजन्कृतयुगेपुरा रो
हिणीसहिताचेयंविद्वद्भिःसमुपोषिता वियोगेपारणंचक्रुर्मुनयोब्रह्मवादिनः सांयोगिकेव्रतेप्राप्तेयत्रैकोपि
वियुज्यते तत्रपारणकंकुर्यादेवंविधिविदोविदुः अतः परंमहीपालसंप्राप्तेतामसेकलौ जन्मनोवासु
देवस्यभविताव्रतमुत्तमं आराधितःसदेवक्याविष्णुःसर्वेश्वरःपुरा समयोगेतुरोहिण्यांनिशीथेराजसत्तम
समजायतगोविंदोबालरूपीचतुर्भुजः तंदृष्ट्वाजगतांनाथंप्रणम्यगरुडध्वजं देवकीप्रांजलिर्भूत्वाइदंवच
नमब्रवीत् देवक्युवाच नाहमेवंविधंवोढुंहार्देप्रस्तुतलोचन तवेदकूरूपमालोक्यशक्नोमिमधुसूदन वासुदे
वउवाच त्वमाद्रक्षस्यसंदिग्धंदिनेस्मिन्नेवतामसे तवदर्शनमेष्यामिबालरूपेणदेवकि येत्वांपुष्पादिभि
र्देविपूजयिष्यंतिमानवाः दिनेऽस्मिन्मांमहाभागास्तवोत्संगेऽप्यवस्थितं दास्यंतियेनिशीथेऽर्घ्यंरोहिणीसहिते
विधौ सुवर्णेनकृतेपात्रेराजतेवानरोत्तमाः सर्वान्कामानवाप्स्यंतिइहलोकेपरत्रच सप्तमीसंयुताष्टम्यांनि
शीथेरोहिणीयदि भवितासाऽष्टमीपुण्यायावच्चंद्रादिवाकरौ प्रतिमासंचतेपूजामष्टम्यांयःकरिष्यति ममचैवा
खिलान्कामान्सप्राप्स्यतिनसंशयः वशिष्ठउवाच अनेनविधिनायस्तुप्रतिमासंनरेश्वर करोतिवत्सरंपूर्णं
यावदागमनंहरेः दद्याच्छय्यांसुसंपूर्णांभोगरत्नैरलंकृतां ब्राह्मणायनृपश्रेष्ठतस्यपुण्यफलंशृणु यत्पुण्यंसम्यगि
ष्टेनराजसूयेनपार्थिव तत्पुण्यंसफलंलब्ध्वाविष्णोःसालोक्यतांव्रजेत् नापुत्रोह्यथनोदुःखीनवियोगीकुरूपवान्

भवेन्नाकालतोमृत्युर्यावज्जन्मशतंनृप ,, शंखेतोयंसमादायसपुष्पफलकांचनं जानुभ्यांचधरांगत्वाचंद्रायार्घ्यंनि
वेदयेत् क्षीरोदार्णवसंभूतअत्रिनेत्रसमुद्भव अर्घ्यंगृहाणशशांकेमंरोहिण्यासहितोमम रोहिण्यासहितंचंद्रंकृत्वा
रौप्यमयंबुधः द्वादशांगुलविस्तारंतत्रार्घ्यंसंनिवेदयेत् ततोऽनुपूजयेत्तांतुसकृष्णांदेवकींनृप गंधपुष्पैःसनैवेद्यैर्वं
स्त्रालंकारभूषणैः प्रणम्यदेवजननींत्वत्तोजातस्तुवामनः वासुदेवस्तथाकृष्णोनमस्तुभ्यंनमोनमः सपु
ष्पार्घ्यंप्रदत्तंमेगृहाणेमंनमोस्तुते अदितिर्देवमातात्वंवसुदेवस्तुकश्यपः अजीजनस्त्वमीड्यंहवासुदेवंसनातनं इ
त्येवंपूजयित्वातु पुनःसूक्तैः सुवैष्णवैः स्तुत्वावादित्रनिर्घोषैः गीतवाद्यैःसुमंगलैः सुकथाभिर्विचित्रा
भिस्तथाप्रेक्षणकैरपि पूर्वैतिहासैःपौराणैः क्षपेत्तांशर्वरींनृप दद्यात्स्वशक्तितोराजन् प्रभातउदितेर
वौ ब्राह्मणेभ्योयथाशक्त्याधेनुवस्त्रादिकांचनं दक्षिणांतुद्विजेभ्यस्तुसर्वंतच्चाक्षयंभवेत् भातेकुर्यात्तिथेर्वापि
शरतंभारतपारण कृतेनतेनपूतात्माराजसूयफलंलभेत् यःकुर्याद्व्रतमेतत्तु पुण्यवान्शक्तितःसदा
इहामुत्रसुखोविद्वान्पराप्परतरंव्रजेत् आदित्यपुराणे तमेतमेवविधिमभिधायपूजाविशेष उक्तः गंधैर्माल्यै
स्तथापेयैर्यवगोधूमसंभवैः सगोरसैर्भक्ष्यभोज्यैः फलैश्चाविविधैरपि रात्रौप्रजागरः कार्योनृत्यगीतसमा
कुलैः अरुणोदयवेलायां नवम्यांचततःस्त्रियः रक्तवस्त्रान्विताःसर्वाः पुष्पमाल्यैरलंकृताः नयातिप्रतिमां
हृतानानाविभवसंभवाः नदीतीरंशुभंरम्यंविविक्तंप्रतिवत्सरं तत्रस्नानंप्रकुर्वंतिस्नापयंतिचतास्ततः तत.प्र
विश्यचगृहपवित्रंभुंजतेचताः युक्तमिक्षुविकारैश्चमध्वाज्यमरिचैः सह इतिजयंतीव्रतम् अथव्रतोद्यापनकौ
मुगुकसंक्षेपेणजन्माष्टमीव्रतोद्यापनं ॥ ॥ प्रातर्दंतधावनपूर्वकस्नात्वादेशकालौसंकीर्त्य ममाखिलपापक्षयपू
र्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा अमुककामनयावाआचरितजन्माष्टमीव्रतोद्यापनंकरिष्ये तदंगं

पुण्याहवाचनादिकृत्वावृताचार्यः गोमयादिलिप्तशुद्धदेशेपंचवर्णपुष्पमालादिशोभितायांवेद्यांसर्वतोभद्रस्थतिलो परिस्थकलशोपरिपूर्णपात्रेरौप्यपर्य्यंकेसौवर्णीदेवकीं तदुत्संगेवामस्तनपायिनंसौवर्णंश्रीकृष्णमिदंविष्णुरितिमं त्रेणविष्णोर्नुकमितिवापरितः वासुदेवं वलदेवंनंदंयशोदांसुभद्रांरोहिणींविधुमत्स्यादिदशरूपाणिआदित्यादिग्रहा न्अश्विन्यादिसप्तविंशतिनक्षत्राणिदेवान् नागान्यक्षान्विद्याधरान् उरगान्यमुनांकालियंकंसंगां योगनिद्रां सा त्यकिंउद्धवंअक्रूरंउग्रसेनादियादवान् शंखचक्रंगदांपद्मं त्रुटिंकालात्मानं अहोरात्रं मासं संवत्सरं सर्वात्मानं द्वार पालान् पुण्यशीलं जयंविजयं पुरतोगरुडं एवंनाममंत्रेरावाह्य पुरुषसूक्तेनपूजयेत् कृष्णंचतुर्भुजंदेवंशंखचक्रगदा धरं पीतांवरयुगोपेतंलक्ष्मीयुक्तंविभूषितं लसत्कौस्तुभशोभाढ्यंमेघश्यामंसुलोचनंध्यायामिपुंडरीकाक्षंजगदा नंदकारकं अथांगपूजा कृष्णायनमःपादौपूजयामि संकर्षणाय. गुल्फौ कालात्मनेनमः जानुनी॰ विश्व कर्मणे जंघे॰ विश्वनेत्राय॰ कटिं पद्मनाभाय. नाभिं॰ परमात्मने॰हृदयं. श्रीकराय॰ कंठं॰ सर्वास्त्रधारिणे. वाहुं. वाचस्पतये॰ मुखं. केशवाय॰ललाटं॰सर्वात्मने. शिरसि॰ पूजांसमाप्यस्तोत्रंपठेत् अनघंवामनंशौरिं श्रीकंठंपुरुषोत्तमम् वासुदेवंहृषीकेशंमाधवंमधुसूदनं वाराहंपुंडरीकाक्षंनृसिंहदैत्यसूदनं दामोदरंपद्मनाभंके शवंगरुडध्वजं गोविंदमच्युतंकृष्णमनंतमपराजितं अधोक्षजंजगद्बीजंसृष्टिस्थित्यंतकारकं अनादिनिधनं विष्णुंत्रैलोक्येशंजगद्गुरुं नारायणंचतुर्वाहुंशंखचक्रगदाधरं पीतांवरधरंनित्यंवनमालाविराजितं श्रीवत्सां कंजगद्धेतुंश्रीधरंश्रीपतिंहरिं एवंस्तुत्वादेवस्यजातकर्मनामकर्मषष्ठीपूजादिकृत्वा पुरतः अभयावचाकुष्ठंगु डूचीपिप्पलीशस्त्राणिनिक्षिप्यार्घ्यंदद्यात् चंद्रोदये जातः कंसवधार्थायधर्मसंस्थापनायच गृहाणार्घ्यंम यादत्तंदेवकीसहितोहरे ॥ इतिकृष्णार्घ्यं ॥ अंगनेभूमौराजतचंद्रविंबंसंपूज्यअर्घ्यंजानुभ्यामवनींगत्वाद

यात् मंत्रः क्षारोदार्णवसंभूतलक्ष्मीवंधोनिशाकर गृहाणार्घ्यंमयादत्तं रोहिण्यासहितः शशिन् ततः प्रार्थना त्राहिमांसर्वगश्रीशघोरसंसारसागरात् त्राहिमांसर्वपापघ्न दुःखशोकार्णवात्प्रभो यद्बाल्येयच्च कौमारेयौवनेयच्चवार्द्धके तत्पुण्यंवृद्धिमाप्नोतुपापंहरहलायुधेति रात्रौजागरणंकुर्यात् प्रातः स्नात्वासंपूज्याग्निंप्रतिष्ठाप्यान्वादध्यात् प्रधानंविष्णुं इदंविष्णुरितिमंत्रेणाज्यसतिलव्रीहियवद्रव्यैः प्रतिद्रव्यं अष्टोत्तरशतसंख्याकाहुतिभिः पुनः पंचवाद्येन विष्णोर्नुकमिति मंत्रेणाष्टोत्तरशतसंख्याकाः पुनः पुरुषसूक्तेनप्रत्यृचं एकैकयाज्याहुत्या महाव्याहृतिभिश्चाष्टाविंशतिसंख्याज्याहुतिभिः परिवारदेवताश्चैकैकाज्याहुत्या शेषेणस्विष्टकृतमित्यादिहोमशेषंसमाप्य तत आचार्य्यंसंपूज्य विभवेसति भूशय्यारौप्यवस्त्रकांचनासनं दत्वा पीठंदत्वा श्रीकृष्णः प्रतिगृह्णाति श्रीकृष्णोवैददातिच श्रीकृष्णस्तारकोभक्त्या श्रीकृष्णायनमोनमः श्रीकृष्णानंतरूपायदास्यामिप्रतिमामिमां द्रव्यंविष्णुसमुद्भूत मतःशांतिंप्रयच्छमे व्रतपूर्तयेगांचदद्यात् सुरास्त्वामित्यादिभिर्यजमानमभिषिंचेत् अग्निंविसृज्य भूयसींदक्षिणांदत्वा शतमर्द्धशतंविंशतिंदशवा ब्राह्मणान्संतर्प्य स्वयंभुंजीतेति जन्माष्टमीव्रतंभविष्योत्तरे ॥ ॥ ॥ ः ॥

अस्यामेवकृष्णाष्टम्यामुमामाहेश्वरंव्रतं हेमाद्रौ नभस्येमासिचाष्टम्यांयदार्द्राजायतेतदा व्रतमेतद्विधातव्यमुमामाहेश्वरंभुवित्यादि अस्यामेवमृगशिरोयुक्तायां कालाष्टमीव्रतम् हेमाद्रौवामनपुराणे नभस्येमासिच तथायास्यात्कृष्णाष्टमीशुभा युक्तास्यान्मृगशीर्षेणसातुकालाष्टमीमता तस्यामपिशिवपूजनंकार्य्यं इयंमन्वादिरपि भाद्रकृष्णनवमीगोगामिनवमीतिकचित्प्रसिद्धा गोगामीवृषभध्वजइतिनामानुसारेण कालाष्टमीव्रतंकुर्यात्तिथिरंतेचपारणम् शिवपूजैवात्रकार्य्यादशम्यामंतकस्यचेतिवाक्यात् ॥ दशम्यांधर्मराजव्रतम् ॥

भाद्रकृष्णैकादश्यजानामैकादशी ब्रह्मांडपुराणे ॥ युधिष्ठिरउवाच भाद्रस्यकृष्णपक्षेतुकिंनामैकादशी
भवेत् एतदिच्छाम्यहंश्रोतुंकथयस्वजनार्दन श्रीकृष्णउवाच शृणुष्वैकमनाराजन्कथयिष्यामिविस्तरात्
अजेतिनामविख्यातासर्वपापप्रणाशिनी पूजयित्वाहृषीकेशव्रतमेतत्करोतियः पापानितस्यनश्यंतिमहापा
तकजान्यपि नातः परतराराजन्लोकद्वयहितावहा सत्यमेतन्मयाप्रोक्तंनासत्यंममभाषितं हरिश्चंद्रइ
तिख्यातो बभूवनृपति पुरा चक्रवर्त्तीसत्यसंधः समस्तायाभुवःपतिः कस्यापिकर्मणोयोगाद्राज्यभ्र
ष्टोबभूवसः विक्रीतौवनितापुत्रौसचकारात्मविक्रयं पुक्कसस्यचसदासत्वंगतोराजासपुण्यकृत् सोऽभवन्नृप
तिश्रेष्ठोनसत्याच्चालितस्तथा एवंभूतस्यनृपतेर्बहवोवत्सरागताः ततश्चिंतातुरोराजासबभूवातिदुःखितः
किंकरोमिक्वगच्छामिनिष्कृतिर्मेकथंभवेत् इतिचिंतयतस्तस्यमग्नस्यवृजिनार्णवे आजगाममुनिःकश्चिद्ज्ञा
त्वाराजानमातुरं परोपकरणार्थायब्रह्मणानिर्मिताद्विजाः सतंदृष्ट्वाद्विजवरंननामनृपसत्तमः कृतांजलिपुटो
भूत्वागौतमस्याग्रतः स्थितः कथयामासवृत्तांतमात्मनोदुःखसंयुतं श्रुत्वानृपतिवाक्यंतद्गौतमोवि
स्मयान्वितः उपदेशंनृपतयेव्रतस्यास्यददौमुनिः मासेभाद्रपदेराजन्कृष्णपक्षेऽतिशोभना एकादशीसमा
ख्याताजानाम्नातिपुण्यदा अस्याःकुरुव्रतंराजन्पापस्यांतोभविष्यति तवभाग्यवशादेषासप्तमेऽह्निस
मागताऽउपवासपरोभूत्वारात्रौजागरणंकुरु एवमस्याव्रतेचीर्णेतवपापक्षयोध्रुव तवपुण्यप्रभावेणआगतोहंनृ
पोत्तम इत्येवकथयित्वातुमुनिरंतरधीयत मुनेर्वाक्यंनृपःश्रुत्वाचकारव्रतमुत्तमं कृतेतस्मिन्व्रतेराजन्पा
पस्यांतोभवत्क्षणात् श्रूयतांराजशार्दूलप्रभावोऽस्यव्रतस्यच निस्तीर्णदुःखोराजासीद्व्रतस्यास्यप्रभावतः
पत्न्यासहसमायोगंपुत्रेणचसमागतः देवदुंदुभयोनेदुः पुष्पवर्षमभूद्दिवः एकादशीप्रभावेणप्राप्यराज्य

मकंटकं स्वर्गंलेभेहरिश्चंद्रः सपुत्रः सपारिच्छदः ईदृग्विधंव्रतंराजन्येकुर्वंतिद्विजोत्तमाः सर्वपापविनि र्मुक्तास्त्रिदिवंयांतितेनृप पठनाच्छ्रवणाद्वापिअश्वमेधफलंलभेत् ॥ ॥

॥ इतिब्रह्मांडपुराणपद्मपुराणयोर्भाद्रकृष्णाजैकादशीव्रतकथा ॥ ॥

भाद्रपदमासकृष्णद्वादशीवत्सद्वादशी ॥ साचपांचनदादिदेशप्रसिद्धा अस्यामूलमृग्यं तत्रसवत्स याग्रोपुजा पिष्टमयीं सवत्सां गां स्त्रियः पूजयंति तच्चोक्तं भविष्योत्तरे सवत्सांतुल्यवर्णांगांशीलिनीं चपयस्विनीं चंदनादिभिरालिप्यपुष्पमालाभिरर्चयेत् सवत्सायै धेनवे नमः ॥ इतिसंपूज्य ॥ वस्त्रा णाच्छाद्याऽर्घ्यंदद्यात् क्षीरोदार्णवसंभूतेसुरासुरनमस्कृते सर्वदेवमयेमातर्गृहाणार्घ्यंनमोस्तुते ततः प्र त्यक्षंगांसंपूज्य तस्यैग्रासदानमंत्रः 'सुरभिस्त्वंजगन्मातानित्यंविष्णुपदेस्थिता सर्वदेवमयीग्रासंमयादत्त मिमंग्रस ॥ तत प्रार्थना सर्वदेवमयेदेविसर्वरत्नैरलंकृते मातर्ममाभिलषितंसफलंकुरुनंदिनि भाद्रकृष्णत्र योदशीयुगादिः ॥ तदुक्तं भविष्योत्तरे कलिःकृष्णत्रयोदश्यांनभस्येमासिनिर्गतः अत्रकृत्यंयुगादीन्प्र क्रम्य ॥ पानीयमप्यत्रतिलैर्विमिश्रंदद्यात्पितृभ्यः प्रयतोमनुष्यः श्राद्धंकृतंतेनसमा सहस्रं रह स्यमेतत्पितरोवदंति ॥ विष्णुपुराणेपि ॥ युगादयः स्मृताह्येताः पितॄणांतृप्तिहेतवे ॥ भारतेऽपि यामन्वाद्यायुगाद्याश्चतिथयस्तासुमानवः स्नात्वादत्त्वाचहुत्वाचजप्त्वानंतफलंलभेत् युगादिषुयुगांतेषुश्राद्ध मक्षयमुच्यते इत्यत्रश्राद्धमप्युक्तं पानीयमित्यादिना भाद्रकृष्णचतुर्दश्यां शिवपूजाविधीयतइति च तुर्दश्यांशिवस्यचेतिवचनात् भाद्रामायांकुशग्रहणं हेमाद्रौहारीतः मासेनभस्येमावास्यातस्यांदर्भोच्चयो मतः अयातयामास्तेदर्भाविनियोज्याःपुनःपुनः अत्रातिदेशमाह नभस्यैकादशीभूतदर्शाष्टम्यांसमुद्धृताः वर्षंयी

ग्याः कुशास्तास्विर्त्यादि नारदीये शुचौनभसिभाद्रेचमासेपूर्णांतिकेद्विज पितृश्राद्धदानहोम.सुरार्चनंत्यमश्नु
ते भाद्रदर्शेऽपराह्णेतुतिलक्षेत्रसमुद्भवान् विरिंचिमनुनामंत्र्यहुंफट्छिन्नान्कुशान्द्विजः सर्वदासर्वकार्येषुयोजयेदेक
दापरान् मंत्रस्तु विरिंचिनासहोत्पन्नपरमेष्ठिनिसर्गज दहपापानिसर्वाणिदर्भस्वस्तिकरोभव भाद्रशुक्ल
प्रतिपदाकृत्यं नारदीये भाद्रशुक्लप्रतिपदिजपेन्नाम्नांसहस्रकं व्रतंमौनमयंकेचिदाहुरत्रशिवार्चनं नैवेद्यंतुप
चेन्मौनीषोडशत्रिगुणानिच फलानिपिष्टपक्वानिदद्याद्विप्रायषोडश देवायषोडशान्यानिभुज्यंतेषोडशात्मना
सौवर्णंशिवमभ्यर्च्यकुंभोपरिविधानवित् तत्सर्वंधेनुसहितमाचार्यायनिवेदयेत् इतिकृत्वाव्रतंविप्रदेवदेवस्यशू
लिनः चतुर्दशाब्दंदेहांतेभुक्त्वाभोगान्शिवंव्रजेदिति अथभाद्रशुक्लप्रतिपदि स्कंदपुराणोक्तं महत्तमाख्यंशि
वव्रतं तदेवमौनव्रतमित्युच्यते इदंव्रतपूर्वविद्धायामेवकर्तव्यं तदुक्तंनिर्णयामृतेब्रह्मवैवर्तेच पूजाव्रतेषु
सर्वेषुकर्तव्यासंमुखीतिथिरिति मदनरत्नेस्कांदे नंदिकेश्वरउवाच देवकेनविधानेनव्रतपुण्यंमहत्तमं कस्मिन्स्ति
थौतत्कर्तव्यंविधानतद्वदस्वमे स्कंदउवाच मासिभाद्रपदेशुक्लेपक्षेचप्रतिपत्तिथौ नैवेद्यंतुपचेन्मौनीषोडशत्रिगु
णानिच फलानिपिष्टपक्वानिदद्याद्विप्रायषोडश देवायषोडशैतानिदातव्यानिप्रयत्नतः भुज्यंतेषोडशतथा
व्रतस्यनियमाश्रयात् सौवर्णंकारयेद्देवयथाशक्त्याहिरण्मयं सौवर्णकर्षपरिमितसौवर्णघटित यथाशक्तिव
नेत्रत्रयसमायुक्तंजटामंडलमंडितं पंचवक्त्रंचतुर्बाहुंषडस्यूब्जस्यमध्यगं त्रिशूलंयज्ञसूत्रंचवहंतंदक्षिणेकरे क
पालंकुंडिकावामेशिखायांचंद्रधारिणं पंचामृतेनस्नपनंकृत्वासंस्थापयेत्ततः कुंभस्योपरिदेवेशंशुक्लवस्त्रयुगा
न्वितं गंधपुष्पैः समभ्यर्च्यफलैर्नानाविधैस्तथा प्रसीददेवदेवेशचराचरजगद्गुरो वृषध्वजमहादेवत्रिने
त्रायनमोनमः पूजामंत्र देवस्यचपरीधानंदद्याद्धेनुंपयास्विनीं अनेनतुविधानेनय. कुर्याद्व्रतमुत्तमं सरा

ज्यंलभतेदेवदीर्घमायुस्तथैवच सर्वपापविनिर्मुक्तः शिवलोकेमहीयते भुक्त्वातुविविधान्भोगांस्ततः शिवपु
रंव्रजेत् इतिमहत्तमव्रतं अथास्यामेवस्कंदपुराणोक्तं मौनव्रतम् पार्वतीप्रश्नानंतरं ईश्वरउवाच शृणु
देविप्रवक्ष्यामियत्पृष्टोऽहंत्वयाधुना व्रतमेतत्पुराचीर्णंसीतयाराघवेणच अन्यैरपिजनैः सर्वैराचीर्णंव्रतमुत्त
म नभोमासेव्यतिक्रांतेनभस्येचप्रवर्त्तिते नभः श्रावणः, नभस्योभाद्रपदः तौचात्रपूर्णिमांतौ ग्राह्यौ ए
वंकालक्रमेणैवश्रावणीपूर्णिमागता तद्दिनंप्राप्यविप्रेणत्वग्रेतत्रैवाभिधानात् व्रतमेतत्तुकर्त्तव्यपोडशैवदिना
नितु एतच्छ्रुत्वाततोदेवीप्रहृष्टावाक्यमब्रवीत् पार्वत्युवाच विधानंचपुराप्रोक्तंव्रतंमौनव्रतात्मक तत्सम
स्तंसमाचक्ष्वप्रसादकुरुमेप्रभो ईश्वरवाच तद्दिनेचैवसंप्राप्यसभार्यः सहवाधवः गत्वाप्रभातसमयेस्नानार्थं
जलसन्निधौ तडागेवानदीतीरेगत्वाप्रस्रवणेऽथवा स्नानंकार्यंतदासर्वैः शिवध्यानपरायणैः दूर्वाः पो
डशसंगृह्यपोडशग्रंथिसंयुताः तत्सूत्रंचकरेन्यस्यास्त्रियावामेनदक्षिणे एवंविधानंकर्त्तव्यंयावत्स्यात्प्रतिप
द्दिनं तद्दिनेचैवसंप्राप्तेसमाप्त्यर्थंव्रतस्यतु मौनेनैवानयेत्तोयंमौनाद्धोधूमपेपणं मौनेनैवचकर्त्तव्यंनैवेद्यंभोज
नादिकं सर्वोपस्करमादायगत्वाचजलसन्निधौ स्नानकार्यंतदातत्रनित्यकर्मततः परं देवर्पिमनुजानाच
पितृणांचैवतर्पण पश्चाद्देवायदेवेशिमंत्रैःसंपूजयेत्ततः शूलपाणेवृपारूढअर्द्धचंद्रविभूपण तोयेनस्नापितो
देवपवित्रंकुरुमांसदा देवैस्तुवंदिताधेनुः सर्वपापप्रणाशिनी तत्क्षीरस्नापितोदेवनित्यंशोकहरोभव काम
तोऽकामतोवापियन्मयादुःकृतंकृतं तत्सर्वंविलयंयातुदध्नःस्नानेनमेशिव रसानामुत्तमंत्वाज्यंदेवानांचसदाप्रियं तेन
त्वंस्नापितोदेवनिधिकांतिप्रदोभव यस्योच्चारणमात्रेणतृप्तिंयांतिपितामहाः मधुनास्नापितोदेवनित्यंशोकहरोभव
यमलोकभयत्रस्तः शरणंत्वागतःशिव खडस्नानेनदेवेशमांकुरुष्वस्वमानुपं यस्यदर्शनमात्रेणशुद्धिमायाति

जानितं तेनैवोत्तमतोयेनस्नातोदेहिप्रियंध्रुवम् सुगंधिचंदनैर्देवकुंकुमेनसमन्वितैः अर्चितोसिमयाभक्त्याशिवलोक
प्रदोभव अक्षयान्वधुपुत्रादीन्ज्ञानचैवातिवाङ्मन. अनेनैवाक्षयलोकमक्षतैरर्चितः कुरु सतान.पारिजातश्चयेचा
न्येसुरपादपाः तेषांपुष्पैर्मयादेवःसुंदरोगंधवान्शुचिः ईप्सितंमेवरंदेहिपरत्रचशुभांगान्॑ शुद्धाशुक्लावराव
र्तिराज्येनचसमन्विता दीपवर्तिप्रदानेनप्रीतःस्यादीश्वरोमम सर्वमन्नमयादत्तंदेवानांवसदाप्रिय तेनैवा
न्नप्रदानेनसुप्रीतोवरदोभव शाखाप्रशाखाचासिताचदूर्वाविस्तारभूताधरणीतलेयथा ममापिसंतानवरंनथा
क्षयकुरुष्वदूर्वेशिवपूजनेन नानाविधंफलमुख्यसपुष्पाक्षतचंदनं भक्त्यापरमयादत्तंगृहाणत्वंसुरेश्वर ज
न्मंजन्मांतरेष्ववभावाभावेनयत्कृतं क्षंतव्यंदेवतत्सर्वंशंभोत्वांशरणगतः एतत्सर्वंतुमौनेनशुद्धोभूत्वासमाहितःशि
वपूजाप्रकुर्वाण·कृतकृत्योभवेन्नरः एवंसंपूज्यविधिनासंकल्प· क्रियतेततः सदासपन्नपूजायांप्रीयतांममशंकरःसं
प्रीतोभवदेवेशभक्तिग्राह्यसदार्चितः एवपंचामृतस्नानंयःकारयतिमानवः आजन्मोपार्जितात्पापान्मुच्यतेनात्र
संशयः विभागेनप्रदातव्यब्राह्मणायशिवायच आत्मनाचैवभोक्तव्यंपक्वान्नंविधिवच्छुभं एवंक्रमेणकर्तव्यस
हष्टजनबांधवै· व्रतिनाहितकामार्थंद्विजाभोज्याःसदक्षिणाःदातव्यंप्रीतिपूर्वेणयाचिताच्छिद्रकांक्षिजे ततश्चशिवपू
जादिभावाभावेनयत्कृतं तत्सर्वंममपूर्णंस्याद्धर्मकामार्थसाधनं पुत्रपौत्रप्रदंह्येतत्सर्वकामप्रदंव्रतं एतत्सर्वंमया
ख्यातंत्वदग्रेप्रीतिपूर्वकं श्रुतमात्रेणदेवेशिसर्वपापैः प्रमुच्यते इतिमौनव्रतम् ॥ ॥ ॥

भाद्रशुक्लद्वितीयायां शक्ररूपविधातृपूजा नारदीये भाद्रशुक्लद्वितीयायांशक्ररूपजगद्विधि पूजयित्वाविधाने
नसर्वक्रतुफलंलभेत् भविष्यपुराणे भाद्रशुक्लतृतीयामधिकृत्योक्तं माघेभाद्रपदेवापिस्त्रीणांधन्या·प्रचक्षते गुडापू
पास्तुदातव्यामासिभाद्रपदेतथा . तृतीयायांपायसंवावासुदेवस्यतुष्टये इयंमन्वंतरादिः भारते यामन्वाद्य

युगाद्याश्चतिथयस्तासुमानवः स्नात्वादत्त्वाचहुत्वाचजप्त्वाचानंत्यमश्नुते॥ अथास्याहारितालव्रतं नारदी
ये भाद्रशुक्लतृतीयायाव्रतंयैहारितालिकं कुर्याद्भक्त्याविधानेनपाद्यार्घ्याचमपूर्वकम् ततस्तुकांचनेपात्रे
राजतेवापिताम्रके वैणवेमृण्मयेवापिविन्यस्यान्नंसदक्षिणं सफलंचसवस्त्रंचद्विजायप्रतिपादयेत् तदंतेपार
णकुर्यादिष्टबंधुजनै. सह एवंकृतव्रतानारीभुक्त्वाभोगान्मनोरमान् व्रतस्यास्यप्रभावेणगौर्याः सहचरी
भवेत् सौभाग्यद्रव्यवस्त्राणिवंशपात्राणिषोडश दातव्यानिप्रयत्नेनब्राह्मणेभ्योयथाविधि अन्येभ्योविप्रव
र्येभ्योदक्षिणाचप्रयत्नतः भूयसींचततोदद्याद्विप्रेभ्यो देवितुष्टये एवंयाकुरुतेनारीव्रतसौभाग्यवर्द्धनं सातुदे
वीप्रसादेनसौभाग्यंलभतेध्रुवं यदातृतीयाभाद्रेतुहस्तर्क्षसहिताभवेत् ब्रह्मगौरीव्रतंनामसमुद्दिष्टंतुशौरिणा धर्मे
णहारिणावेतिवोध्य तथाकोटीश्वरंनामव्रतंप्रोक्तंपिनाकिना लक्षेश्वरीतिचतथातद्विधानमथोच्यते अस्या
व्रतंतुसग्राह्यंयावद्वर्षचतुष्टयं उपवासेनकर्त्तव्यंवर्षेवर्षेतुनारद अखंडानांतिलानांतुतण्डुलानांचनारद ल
क्षमेकविशोध्याथक्षिपेत्पयसिसंश्रृते तत्पक्वेनविनिर्मायदेवीमूर्त्तिसुशोभनां अकरैर्गंधपुष्पाणापुष्पमालाविभू
षितां संस्थाप्यपार्वतींतत्रपूजयेद्भक्तिभावतः गंधैः पुष्पैस्तथाधूपैस्तथानैवेद्यविस्तरैः विविधैश्चफलैर्विप्रनमस्कृ
त्यक्षमापयेत् ततोविसर्जयेद्देवींजलमध्येचदक्षिणां दद्याद्विधिज्ञविप्रेभ्योभुंजीयाच्चपरेऽहनि इतितेकथित
विप्रलक्षकोटीश्वरीव्रतं गौरीलोकंप्रयात्यंतेव्रतस्यास्यप्रभावतः अतोस्यां तृतीयायां गौरीदैवत्यं व्रतच
तुष्टयमुक्त ॥ हरितालिकाव्रतं ॥ हस्तगौरीव्रतम् ॥ कोटीश्वरीव्रतम् लक्षेश्वरीव्रतंच ॥ तत्र
शिष्टपरिगृहीतं - हरितालिकाव्रतं तच्च परविद्धायां कार्यं मुहूर्तमात्रसत्त्वेऽपि दिनेगौरीव्रतंपरेइतिमाधवोक्तेः

आषाढमधुश्रावणिकाक ज्जलीहरितालिका चतुर्थीमिश्रितास्त्रीभि र्दिवानक्तेविधीयते तृतीयानभसः शु
क्लामधुश्रावणिकास्मृता रंभाख्यांवर्जयित्वातुतृतीयांद्विजसत्तम अन्येपुसर्वकार्येषुगणयुक्ताप्रशस्यत इति
ब्रह्मवैवर्त्तात् द्वितीययातुयाविद्धातृतीयानकदाचन कर्त्तव्यासूरिभिस्तातधर्मकामार्थतत्परैः विहायैकातु
रंभाख्यांतृतीयांपुण्यवर्द्धनीमितिस्कांदोक्तेर्द्वितीयाविद्धानिषेधप्रयोजकश्चात्र द्वितीयोनात्रिमुहूर्तकः किंतुकला
काष्ठात्मकोपि तदुक्तं स्कांदे कलाकाष्ठादिमात्रादिद्वितीयासंप्रदृश्यते सातृतीयानकर्तव्याकर्तव्यागणसंयुते
ति अतएव स्वल्पापि तृतीयाचतुर्थ्यांअयंचाल्पवेधप्रयुक्तोनिषेधोगौरीव्रतविषयः विहायैकातुरम्भाख्यामितिपर्यु
दासेनस्वेतत्सदृशानामेवव्रतांतराणांप्रतीतेः इयंमन्वादिः भाद्रस्यकज्जलीकृष्णाशुक्लाचहरितालिकेतिदिवो
दासोदाहृतवचनात् अथहरितालिकाव्रतविधिः मासपक्षाद्युल्लिख्यममसमस्तपापक्षयार्थंसप्तजन्मारोग्यसौ
भाग्यादिवृद्धयेउमामहेश्वरसायुज्यतासिद्ध्यर्थंहरितालिकाव्रतमहंकरिष्ये तत्रादौ गौरीयुक्तंमहेश्वरंसंपूजयिष्ये॥
अथध्यान पीतकौशेयवसनांहेमाभांकमलासनां भक्तानांवरदांगौरींसौशिवांचिंतयाम्यहम् १ मंदारमाला
कुलितालकायैकपालमालांकितशेखराय दिव्यांवरायैचदिगंबरायनमः शिवायैचनमः शिवाय २ इ
तिध्यात्वा ॥ देवदेविसमागच्छप्रार्थयेहंजगन्मये इमांमयाकृतांपूजां गृहाणसुरसत्तमे शिवगौरीभ्यांनम
इत्यावाहन ॥ भवानित्वंमहादेवि सर्वसौभाग्यदायिके अनेकरत्नसंयुक्तमासनंपरिगृह्यतां इत्यासनम् ॥
सुचारुशीतलंदिव्यंनानागंधाधिवासितं पाद्यंगृहाणदेवेशिमहादेविनमोस्तुते पाद्यम् ॥ श्रीपार्वतिमहाभागे
शंकरप्रियवादिनि अर्घ्यंगृहाणकल्याणिभर्त्रासहपतिव्रते इत्यर्घ्यम् ॥ गंगाजलंसमानीतंसुवर्णकलशेस्थितं
आचम्यतामहाभागेरुद्रेणसहितेऽनघे इत्याचमनम् ॥ गंगासरस्वतीरेवाकावेरीनर्मदाजलैः स्नापितासिमया

देविसदाशांतिंप्रयच्छमे स्नानम् ॥ आप्यायस्वेतिपयः दधिक्राव्णेतिदधि घृतमितिघृतं मधुवातेतिमधु स्वादुपवेतिशर्करा पंचामृतसमानीतंपयोदधिघृतंमधु शर्करांजलसंयुक्तांस्नानार्थंप्रतिगृह्यतां पंचामृतस्नानं वरुणस्येतिशुद्धस्नानं हरिद्रासर्षपद्रव्यैरुद्वर्तनं पुनराचमनं शिवगौरीभ्यांनमः सर्वसत्वाधिके१म्येलोकलज्जानिवारणे मयोपपादितेदेविवाससीपरिगृह्यतां वस्त्रम् कर्पूरागुरुसंघृष्टंकुंकुमादिसमान्वितं कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यतां गंधम् रंजिताः कुंकुमाद्येन अक्षताश्चातिशोभनाः ममैषां देविदानेनप्रसन्नाभवसर्वदा अक्षताः मल्लिकावकुलचंपकपाटलापुन्नागजातिकरवीररसालपुष्पैः विल्वप्रवालतुलसीदलमालिकाभिस्त्वांपूजयामिजगदीश्वरिमेप्रसीद पुष्पाणि देवद्रुमरसोद्भूतः कृष्णागुरुसमन्वितः आनीतोयंमयाधूपोभवानिप्रतिगृह्यतां धूपः त्वंज्योतिःसर्वदेवानां तेजसांतेजउत्तमं आत्मज्योतिः परंधामदीपोयंप्रतिगृह्यतां नैवेद्यम् पुनराचमनं श्रीशिवाभ्यांनमः मलयाचलसंभूतंकर्पूरेणसमन्वितं करोद्वर्तनकंचारुगृह्यतांजगदीश्वरि करोद्वर्तनं इदंफलमितिफलं कर्पूरैलालवंगादितांबूलदलसंयुतं क्रमुकस्यफलदेवितांबूलंप्रतिगृह्यतां तांबूलं हिरण्यगर्भेतिदक्षिणाद्रव्यं वज्रमाणिक्यवैदूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तंकांचनंप्रतिगृह्यतां सुवर्णमंत्रपुष्पं चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वतेजांसि आर्तिक्यंप्रतिगृह्यतां नीराजनं अथनामपूजा उमायैनमः गौर्यैनमः जगद्धात्र्यैनमः जगत्प्रतिष्ठायैनमः शांतिरूपिण्यैनमः हरायनमः महेश्वरायनमः शंभवेनमः शूलपाणयेनमः पिनाकधृतेनमः शिवायनमः पशुपतयेनमः महादेवायनमः इतिपुष्पांजलयः यानिकानिचपापानि जन्मांतरकृतानिच तानिसर्वाणिनश्यंतिप्रदक्षिणपदेपदे इतिप्रदक्षिणा ॥ अन्यथाशरणंनास्तित्वमेवशरणं

मम तस्माच्छरण्यभावेनरक्षमांपरमेश्वरि इतिनमस्कारः ततोवैणवपात्रस्थंवायनंदद्यात् अन्नंसौवर्णपात्रस्थंफलवस्त्रसदक्षिणं वायनंगौरिविप्रायददामिप्रीतयेतव सौभाग्यारोग्यकामाना सर्वसंपत्समृद्धये गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं प्रतिगृह्यद्विजश्रेष्ठसंपूर्णफलदायक त्वत्प्रसादात्सुरश्रेष्ठमुच्येहंसर्वपातकात् इतिवायनदानं आचार्यायचगांदद्यात्सवत्सांचपयस्विनीं शक्त्याचदक्षिणांदद्याद्व्रतसंपूर्तिहेतवे अथोपवासनिवेदनं निराहारोयदेवेशउमाकांतजगद्गुरो भोक्ष्यामिश्वोजगन्नाथास्मिन्हरितालिकाव्रते कथांश्रुत्वातदनंतरप्रातिमादानं अथकथा नारायणंनमस्कृत्य. सूतउवाच मदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांवरायैचदिगंवरायनमःशिवायैचनमःशिवाय कैलासशिखरासीनगौरीपप्रच्छशकरं प्रपन्नास्मिजगन्नाथतथ्यंब्रूहिममप्रभो केनव्रतप्रभावेणतपोदानेनशंकर अनादिमध्यनिधनोभर्तात्वंजगतःप्रभुः मयाप्राप्तोसिदेवेशनजानेतत्सदाशिव कथयस्वप्रसादेनयद्यहंतववल्लभा ईश्वर- शृणुदेविप्रवक्ष्यामितवाग्रेव्रतमुत्तमं येनव्रतप्रभावेणप्राप्तमर्द्धासनंप्रिये यद्गुह्यंममसर्वस्वंकथयामितवप्रिये यथाचोडुगणेचंद्रोग्रहाणांभानुरेवच वर्णानांतुयथाविप्रोदेवानांविष्णुरुत्तमः नदीनांतुयथागंगापुराणानांतुभारतं वेदानांतुयथासामइंद्रियाणांमनोयथा पुराणवेदसर्वस्वमागमेपुयथोदितं तदेकाग्रेणमनसाशृणुष्वेदंसनातनं येनपुण्यप्रभावेणप्राप्तमर्द्धासनंमम तत्सर्वंकथयिष्यामित्वममप्रेयसीयतः भाद्रेमासिसितेपक्षेतृतीयाहस्तसंयुक् तदनुष्ठानमात्रेण सर्वान्कामानवाप्नुयात् शृणुपूर्वंयथादेवित्वयातस्यामनुष्ठितम् तत्सर्वंकथयिष्यामियथावृत्तंहिमाचले ॥ पार्वत्युवाच ॥ कथपूर्वंमयाचीर्णंव्रतानामुत्तमव्रतं तत्सर्वंश्रोतुमिच्छामित्वत्सकाशावृषध्वज ईश्वरउवाच नानापक्षिगणैर्युक्तोनानामृगनिषेवित. यत्रदेवाःसगंधर्वा. सिद्धचारणगुह्यका.

विहरंतियथासौख्यंगंधर्वागीततत्पराः स्फाटिकैः कांचनैःशृंगै र्मणिवैडूर्यभूषितैः भुंजौलैखन्निवाकाशंसुद
ढोमंदरोयथा हिमेनापूरितःसर्वो गंगाध्वनिविराजितः नृत्यंत्यप्सरसोयत्रशोभमानोनगेश्वरः तत्रत्वंपार्वती
वाल्येआचरंतीमहत्तपः द्वादशाब्दानिदेवेशिधूमपानमधोमुखी भूत्वात्वंपतिरित्येवंमदाराधनतत्परासंवत्सरचतु
षष्टिंपक्वपर्णाशनंत्वया दृष्टातातस्तुतेकष्टं दुःखितश्चिंतितोभृशं कस्मैदेयामयाकन्याएवंचिंतातुरोऽभवत् इत्येवं
चिंतयाविष्टेदेवर्षिर्नारदोऽभ्यगात् पाद्यार्घ्याचमनादीनिनारदायददौगिरिः सुखासनगतंतंतुहिमवानिदमब्रवीत्
हिमवानुवाच किमर्थमागतः स्वामिन्वदस्वमुनिसत्तम महाभाग्येनसंप्राप्तंत्वदीयागमनंप्रभो अद्यमेसफलंज
न्म अद्यमेसफलाः क्रियाः गतंचाद्यजडत्वंमे यज्ज्ञातंतवदर्शनं गताद्यमानसीचिंता यथाहंदुःखिता
भृशं कन्यारत्नमिदंकस्मैदेयंतत् हिमुने नारदउवाच शृणुशैलेंद्रमद्वाक्यं विष्णुनाप्रे पितोह्यहं यो
ग्यंयोग्यायदातव्यंकन्यारत्नमिदंत्वया वासुदेवसमोनास्तिब्रह्मसूर्यशिवादिषु चतुर्वर्गप्रदश्चैवदीयतांमम
संमतं हिमवानुवाच वासुदेवसमोदेवः कन्यांप्रार्थयतेयदि तस्मैदेयामयाकन्यात्वदागमनगौरवात् इ
त्येवंगदितंश्रुत्वावैकुंठंनारदोययौ प्रीतः पीतांबरधरंशंखचक्रगदाधरं चतुर्भुजंवासुदेवंनमस्कृत्याभ्यभाषत
नारदउवाच शृणुदेवविवाहार्थं गतव्यःशैलजांप्रति तेनदत्तंप्रतिग्राह्यंकन्यारत्नंसुशोभनं हिमवांस्तुत
दागौरीमुवाचातीवहर्षितः दत्तासित्वंमयादेविदेवायगरुडध्वजे श्रुत्वावाक्यंपितुर्देवीसख्यासार्द्धंवनांतरं गता
ह्यनशनंकृत्वातपस्तप्तुंसुदुःखिता सख्युवाच किमर्थंनगपुत्रित्वंदुःखि तातप्यसेपुनः कोवाका
मोभिलषितः सखिजानेनवैशुभे पार्वत्युवाच सखिशृणुमहान्कामोमनसाचिंतितोमया अल्पेनतप
साकिंसप्राप्यतेमादृशैः खलु अतोमयासहपुन श्चलत्वप्तुंवनांतरे सख्युवाच कोवाकामोभिलषितोयोल्पेन

तपसानरैः नप्राप्यतेतंमेब्रूहि उपायंचिंतयामिवै ॥ पार्वत्युवाच ॥ कैलासाशिखरासीनदेवदेवंवृषध्वजम्
मतेत्वनैवमनसाकामयेहनसंशयः सोयंकामोमहानघमेतातेनकृतोऽन्यथा तस्मादेहपरित्यागंकरि
ष्येहंनसंशयः पार्वत्यावचनश्रुत्वासखीवचनमब्रवीत् नगपुत्रिमहद्भाग्यंप्रार्थतविष्णुनायतःसंसेव्योदे
वतैः सर्वै र्महेंद्रादिपुरोगमैः यस्यैकगुणलेशेनगुणवंतोभवंतिहि सगुणानामनंतत्वादनंतइतिविश्रुतःदेवा
नांकन्यकाभद्रेस्वकार्यांचेष्टदेवतां संपूजयितुमिच्छतिप्रार्थयंतिदिवानिशंअतिभाग्यवशाद्देविमाहिष्यंप्राप्यतेयथा
किंत्वयापापसंत्यक्ताभिक्षार्थंगम्यतेन्यतः प्राप्यापिकामदंदेवप्रार्थ्यतेकामदाहकः अस्तिकाचित्कचिद्रम्या
त्रिलोक्यांत्वाद्दिनाप्रिये नरोत्तमायदत्तासितवपित्राशुभंकृतं माशोचस्वनिवर्तस्वजानासित्वगुणांस्तयोः
श्रामितास्यथकेनत्वंशृणुष्वैकमनानघे किरीटीकेशवोनित्यंजटीमृत्युंजयोऽनघे केशवः सुमुखोभद्रे सचभीम
मुखः सदा सुपंक्तिरत्नदतश्चाविपाक्तिदीर्घदष्ट्रकः रत्नकुंडलवान्विष्णुर्नागकुंडलवाञ्शिवः विष्णुः कमल
नेत्रश्च ज्वलन्नेत्रः सदाशिवः चतुर्भुजधरोविष्णुः सवैदशभुजोमहान् श्रीवत्सलांछनोविष्णुः शिवस्य
ब्रह्मणःशिरः पीतांबरधरोविष्णुः सचचर्मांबरः सदा पद्मपाणिर्युत्राविष्णुः सदृढः शूलपाणिधृक्
अम्लानपद्ममाल.स मुंडमालाप्रियः सच कंठेऽस्यकौस्तुभंरत्नं तस्यकंठेविषंसदा वाहनंगरुडोयस्य
जरठोक्षाशिवस्यच शेषपर्यंकाशायीस चिताभस्मशयः सच गंधर्वध्वनिनाहृष्टो भूतानांरोदनेनसः वि
ष्णुर्भोगीचयोगीच कथकामयसेशिवं पार्वत्युवाच नजानासिविमूढात्वयोगिनंशूलपाणिनं यस्याज्ञासाधको
विष्णुस्त्रिलोकींपातिनान्यथा राजसेनस्वरूपेणब्रह्मासृष्टिंविधातिच तामसेनस्वरूपेणरुद्रोत्तिसकलंरुपा गु
णान्नातस्यवैशिष्ट्यं महत्त्ववेत्तिकः शुभं यस्याज्ञावशगोभूत्वा विष्णुः पृथ्वींदधारवै पुनः ससूकरः

भूत्वातांचदत्तेदधारवै यद्दत्तान्भुंजतेभोगान्विष्णुर्भोगीतिकथ्यते सहस्त्रकमलैःपूर्वं विष्णुनाराधितः शि
वः वैकुंठसंश्रयंतेज स्तेनदत्तंनिजंक्षणात् इंद्रादीनांतुयोदातासदेवोनश्रुतस्त्वया यद्दतंतत्रराज्यंतुइंद्राद्याभुंज
तेसुखं कुबेरेणापिमहती श्रीरवाप्तावरानने वरुणेनजलेशत्वं शेषः पातालसंस्थितः सूर्यस्तपतिभीत्यावैवा
युर्वातिदिवानिशं यमः संयमनीशत्वं तद्देवंकिंनवेत्स्यासि यस्याज्ञयास्वकालेनमेघावर्षंतिसर्वतः पावकः स
र्वदेवानांवदनंवर्त्ततेनघे पितरः पितृलोकत्वं मत्पितापर्वतेश्वरः चंद्रोह्युडुगणेशत्वंसमुद्रोवैगभीरतां सोमः
प्रायोपधीशत्वंचंदनश्चसुगंधितां यस्याज्ञयास्वकालेपिभवंत्यादेशवार्तिनः दृष्टिःशीतंचधर्मश्च स्वकालेचग
मागमं शक्राद्याश्चापिदिक्पालाः स्वांदिशंपालयंतिते येषुकृत्येषुयेदेवायोजितास्तेतुतत्पराः अन्यथा
करणेतेषांसचदंडंविधास्यति परात्परः सर्वदेवो निर्गुणः सगुणोपिवा निराकारश्चसाकारोयोगीभोगी
सएवच केवलोनिर्गुणः साक्षी क्षरश्चाक्षरएवच कोवेदतस्यतद्रूपंयद्ब्रह्मेतिप्रचक्षते ब्रह्माद्यादेवताः सर्वा
ऋषयश्चतपोधनाः योगिनोज्ञाननिष्ठायेयदर्थेत्यक्तबंधनाः तेपितस्यनजानंतिस्वरूपंसखिशूलिनः अत
स्तंकामयेहंवैविपत्तिपतिताशुभे ॥ सख्युवाच ॥ सम्यक्कामोभिलषितस्तदर्थेत्यक्तजीविता यत्रवैनि
श्चितावुद्धिः सकामोभवतिध्रुवं ममापिचमहद्भाग्यंयतत्त्वत्कर्मकारिका किंचिद्विज्ञप्तुमिच्छामित्वयाचेच्छ्रूयतेव
चः अंबिकापूजनंकार्यंतन्मयाकामदंश्रुतं तवेष्टदात्रीयादेवीसापिपूज्याप्रयत्नतः तत्पित्रनुग्रहंदाविमायिप्री
तिरनुत्तमा अनुज्ञादानमात्रेणनित्यंसफलतांनय करिष्याम्यहमप्येतद्गौर्याः पूजनमुत्तमं तथेतिसंमतं
कृत्वायातायत्रमहावनं पितानिरीक्षयामासहिमवांस्तांगृहेगृहे केननीतानुसापुत्रीदेवदानवकिन्नरैः सत्यं
कृतंचऋषयेकिंदास्येगरुडध्वजे इत्येवंचिंतयाविष्टोमूर्छितोनिपपातह हाहाकृत्वाततोलोका प्रधावंतिगि

रिशति आगत्यमुनयः सर्वे पप्रच्छुस्तंहिमालयं किमर्थंमूर्छतांप्राप्तः कथयस्वयदिस्थितम् ॥ हिमवानुवाच यदर्थंदुःखसंभ्रांतः कन्यारत्नंहृतंमम दष्टावाकालसर्पेणसिंहव्याघ्रेणवाहृता पतितः शोकसंतप्तोवातेनैवयथातरुः निर्गतोगिरिराजस्तुदुहितुश्चगवेषणे गत्वाथविपिनंघोरंसिंहशार्दूलसंकुलं व्याघ्रैःसिंहैश्चभल्लूकैर्युध्यमानैर्महागजैः तस्मिन्वनेमहाघोरेगत्वातांसखिभिर्युतां दष्ट्वांतत्रनदीरम्यांवनमध्येगुहांतरे उपविष्टालिभिः सार्द्धमन्नाहारविवर्जिता सस्थाप्यवालुकापिंडपार्वत्यासहितममहस्तनक्षत्रसंयुक्तामासिभद्रेसिताजया तत्रवाद्येनगीतेनरात्रौजागरणकृतं तेनव्रतप्रभावेणआसनंचलितंमम प्राप्तोहंदेवितत्रैवयत्रत्वंसखिभिः सह करोपिमस्मीत्यर्थमदगंधादिलेपनं गुरूपदिष्टमार्गेणतेनतुष्टोभृशमुदा प्रसन्नोस्मिवरंब्रूहिमयाप्रोक्तवरानने ॥ पार्वत्युवाच ॥ प्रसन्नोसियदादेवददस्वमनसेप्सितं सर्वज्ञस्यनचाज्ञातंकिंचिदस्तिमहीतले ॥ महादेवउवाच ॥ अहमत्तांभवेयंवैइतिहेतोः कृतंव्रतं त्वप्राप्स्यसित्वसुभगेनष्टथाममदर्शनं व्रतमेतत्करिष्यंतियानार्योदृढमानसाः प्राप्याधिसकलान्कामानुयुज्यतेब्रह्मणासह इत्युक्त्वाचततोदेविकैलासमहमागतः ततःप्रभातसमये नद्यामेवविसृज्यतां पारणंतुततः कृत्वायत्प्राप्तवनमध्यगं पुनस्तत्रैवसुप्तासिसख्यासार्द्धंसरित्तटे हिमवानपितत्रैवसंप्राप्तस्त्वद्गवेषणात् पश्यन्नयौचतुर्दिक्षुअन्नपानविवर्जितः सुप्तेदृष्ट्वानदीतीरेदूरतः कन्यकाद्वयं उत्थाप्योत्संगमानीयरुदंतीत्वामुवाचह सिंहव्याघ्रादिभिर्जुष्टेसेवितेहिमहावने पुत्रिप्राप्ताकिमर्थंत्वंप्रियेकिंकरवाणिते श्रीपार्वत्युवाच शृणुतातमयाज्ञातंत्वंमादास्यसिशूलिने तदन्यथाकृततातेनाहंवनमागता तथेत्युक्तंहिमवतात्वमानीतागृहंप्रति तेनाप्युक्तस्त्वहंदिविविवाहार्थंत्वयासह ॥ श्रीपार्वत्युवाच ॥ किंकृतंगिरिणातत्रविवाहोभूत्कथमम त्वयात्रकिंकृतंनाथश्रोतुमिच्छामिविस्तरात् ॥ श्रीमहादेवउवाच ॥

ऋषयः सप्तमोदेवि वदर्थेप्रेपितामया दृष्टास्तेनगराजेनप्रपच्छमुदिताननान् कुतश्रागमनंजातंभवतांज्ञानच क्षुरा अन्यथामहतांप्राप्तिर्जडानांवैकथंभवेत् ऋषयऊचु नगराजवयतावच्छंकराज्ञाविरायिनः त्वत्समी पेतुकन्यार्थंदीयतांयदिरोचते ॥ गिरिरुवाच ॥ महादेवोयदामत्तः कन्यांप्रार्थयतेतदा कन्ययाच कृतसम्यकूयदर्थंदुश्चरंतपः अतस्तेनप्रसादोऽस्याः कर्त्तव्यः शूलपाणिना ऋषिभिर्गीयतेनित्यंसदेवोभ क्तवत्सलः इतिश्रुत्वागताविप्रामहादेवस्यसन्निधौ तद्वृत्तांतम्समाकर्ण्यत्र्यजगाममहेश्वरः आजग्मुस्तत्रवै सर्वेदेवाइंद्रपुरोगमाः पातालादागतः शेषः क्षीराब्धिशयनाद्विभुः यत्रतत्रस्थितादेवा गंधर्वाः सि द्धचारणाः तेतत्स्थानात्समाजग्मुस्तन्महोत्सवसंभ्रमाः विष्णुनाचधृतछत्रंश्वेतंशतशलाकजं इंद्रोवैचा मरंदिव्यंकुवेरः कोशधारकः स्वफणामणिभिः शेषोदीपमालाविभर्तिसः सहस्रयोजनायामंतेनाक रिसुमंडप एकस्तंभमयंप्रोक्तंयोजनानांशताधिकं ब्रह्माद्यादेवताःसर्वेमंत्राशिषमचीकरन् जयशब्दकृतोदेवाऋष यश्चतपोधनाः नृत्यंत्यप्सरसस्तत्रगंधर्वाललितंजगुः वाद्यानांस्वनितंमेघोमंदमंदंचगर्जति विकिरंश्चचतुर्दिक्षुतु पारकुसुमानिसः देवकन्यानागकन्यालाजैस्तुकृतमंगलाः सरस्वतीरमादेवीशच्याद्यादेवतास्त्रियः स्वर्णपात्रेनि धायाशुपुष्पचंदनमक्षतान् दधिदूर्वांचसिद्धार्थांहरिद्रारत्नदीपिकां नीराजनंप्रकुर्वंतिगिरिजायाः शिवस्यच पुष्प वृष्टिप्रकुर्वंतिदेवाःसव्यापसव्यतः महोत्सवः प्रवृत्तोभूद्धिमालयगिरौतथा गिरिणाचतदातस्मैदत्तंजामातृतोपकं गजानादशसाहस्रमश्वानांनियुतंतथा अनर्घ्यान्यपिरत्नानिददौतस्मैगिरीश्वरः मुक्तानांदशकोट्यश्चदशकोट्य श्चविद्रुमाःहीरकंदशकोट्यस्तुपारिवर्हंददौगिरिः असंख्याताश्चवैदास्योमनःसंतुष्टिकारिकाः मैनाकस्तत्प्रिया र्थंवैगिरिणाप्रेपितःस्वयं एवंगिरिजयासार्द्धंकैलासमहमागतः आगत्यदेवतान्सर्वान्स्वंस्वंस्थ.नंसमादिशम्

शिवउवाच ॥ तेनव्रतप्रभावेणसौभाग्यमतुलंत्वया प्राप्तमर्द्धासनंदेविसाधितंसुमहत्तरं अद्यारभ्यव्रतंदेविनक
स्यापिनेवेदितं यद्गोप्यपरमदेवियन्नोक्तंकस्यचिन्मया तदुक्तंत्वत्समीपंतुत्वत्सौभाग्यविमोहनात् व्रतराज
स्यनामापिशृणुदेवियथाऽभवत् आलिभिर्हरितायस्मात्तस्मात्साहरितालिका पार्वत्युवाच केनपूर्वंकृतंनाथ
विधिंचास्यवदप्रभो किंपुण्यंकिंफलंचास्यकैश्चवाक्रियतेनरैः ॥ महादेवउवाच ॥ शृणुदेविविधिं
वक्ष्येनारीणांव्रतमुत्तमं कर्त्तव्यंतुप्रयत्नेनयदिसौभाग्यमिच्छति तोरणादिचकर्तव्यंकदलीस्तंभमंडितं
आच्छाद्यपट्टवस्त्रैर्वानानावर्णविचित्रकैः चंदनानिसुगंधीनिलेपयेद्गृहमंडपे शंखभेरीमृदंगैश्चवादित्रैर्बहुनिः
स्वनैः नानामंगलचारस्तुकर्त्तव्योममसद्मनि स्थापयेत्प्रतिमांतत्रपार्वत्यासहितांमम पूजयेद्बहुभिः पुष्पैर्गं
धधूपैर्मनोहरैः नानाकारैश्चनैवेद्यैर्नानाभक्ष्योपचारकैः नानोपहारतांबूलैरुपवासप्रजागरैः नारिकेलैः पू
गफलैर्दाडिमैः कनकादिभिः वीजपूरैः सनारंगैरन्यैर्ऋतुभवैस्तथा कालदेशोद्भवैः सर्वैः फलैश्चविविधैः
शुभैः गंधपुष्पैस्तथादीपैर्मंत्रेणानेनपूजयेत् नमः शिवायशांतायपंचवक्त्रायशूलिने नंदिभृंगिमहाकाल
गणयुक्तायशंभवे शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे शिवायैसर्वमंगल्यैशिवरूपेजगन्मये शिवकल्याण
देनित्यंशिवरूपेनमोनमः शिवरूपेनमस्तुभ्यंशिवायैसततंनमःनमस्तेब्रह्मरूपिण्यैजगद्धात्र्यैनमोनमः संसारभ
यसंतापात्त्राहिमांसिंहवाहिनि येनकामेनदेवित्वंपूजितासिमयेश्वरि राज्यंसौभाग्यसंपत्तिंदेहिमामवपार्वति पूर्वो
क्तेनविधानेनपूजयेदुमयासह कथांश्रुत्वैकचित्तेनदद्यादन्नानिभूरिशः आचार्यायप्रदातव्यवस्त्रधेनुहिरण्यकं अ
न्येषांदीयतेदानंस्त्रीणांवाभूषणादिक ततोवाद्येनगीतेननतानिशांकौतुकादिना नयेदतंद्रितादेवियदिसौभाग्यमिच्छ
ति तस्मिन्नहनियानारीभोजनकुरुतेयदि सप्तजन्मभवेद्वन्ध्याविधव्यचपुनः पुनः दारिद्र्यपुत्रशोकचकर्कश-

दुःखभोगिनी पतेत्सानरकेघोनोपवासंकरोतिया कांचनंराजतंताम्रंवेणुजंवापिमृन्मयं संपुटीकृत्यतन्मध्येफ
लानिविविधानिच हरिद्राकुंकुमंचैवअंजनादिप्रकल्पयेत् वस्त्राण्याभरणादीनितांबूलंसहिरण्यकं कृत्वासं
छाद्यवस्त्रेणप्रदद्याद्ब्राह्मणस्त्रियै प्रीत्यर्थंतवदेवेशिदानंदेयंस्वशक्तितः दत्त्वानेनविधानेनपारणंतदनंतरं एवं
विधियाकुरुतेचनारीभर्त्रासमंसारमतेसुखेन विनाशकालेममतुल्यरूपंसायुज्यमुक्तिंलभतेसुखेन अश्वमेधसहस्रा
णिवाजपेयशतानिच कथाश्रवणमात्रेणतत्पुण्यंलभतेनरः एतत्तेकथितंदेविविधानसरहस्यकं कोटियज्ञकृ
तंपुण्यमस्यानुष्ठानमात्रतः. इतिभविष्योत्तरपुराणेहरितालिकाव्रतं अथोद्यापनं ॥ पार्वत्युवाच उद्याप
नविधिंब्रूहितृतीयायाःसुरेश्वर भक्तितः श्रोतुमिच्छामिव्रतसंपूर्तिहेतवे ॥ महादेवउवाच ॥ उद्याप
नविधिंवक्ष्येयेनसांगफलंलभेत् प्राप्तेभाद्रपदेमासितृतीयाहस्तसोमयुक् तस्यांरात्रौप्रयत्नेनयथोक्तंसर्वमा
चरेत् सर्वतोभद्रसंज्ञंवालिंगतोभद्रमेवच कारयेद्विधिवद्देविमंडलस्यप्रपूजनं तस्याग्रेस्थापयेत्कुंभंव्रणच्छिद्र
विवर्जितं तस्योपरिन्यसेद्धैमंपार्वत्यासहितंशिवं वस्त्रयुग्मेनसंवेष्ट्यपूर्ववत्पूजनंचरेत् ततः प्रभातसमये
युग्मान्यद्यौनिमंत्रयेत् कश्चित्तु षोडशाद्विजयुग्मांश्चपक्वान्नाद्यैश्चपूजयेत् सौभाग्यद्रव्यवस्त्राणिवंशपात्राणि
षोडशेत्युक्तं तच्छक्तपरतयाज्ञेयं आचार्यंवरयेत्तत्रचतुर्भिर्ब्राह्मणैः सह स्थंडिलंतुप्रकर्तव्यंहस्तमात्रंसुशोभन
ततोहोमंप्रकुर्वीतघृतदूर्वासमित्तिलैः पृथक्पृथक्शतंकृत्वामंत्रेणजातवेदसे पातयित्वावसोर्धारांपुनःपूजन
माचरेत् नमः प्रणतपालायनमः कैलासवासिने नमोवेदांतवेद्यायउमादेहार्द्धधारिणे उत्पत्तिस्थितिसं
हारकर्त्रेनेत्रेनमोऽस्तुते येनकामेनमेदेवपूजितश्चोमयासह व्रतंसंपूर्णतांयातुत्वत्प्रसादाज्जगद्गुरो इतिस्तु
त्वामहादेवंप्रणिपत्यपुनः पुनः गोभूहिरण्यदानानिवस्त्रदानान्यनेकशः सहिरण्यंसवस्त्रंचतेभ्योदद्याच्चभ

क्तिः उमानहेश्वरोदेवः प्रीयतामेनमोनमः ततः कुर्यात्स्वयदेविबधुभिः सहभोजनं सर्वान्कामा
नवाप्नोतिसौभाग्यंलभतेध्रुवं मृतवत्सातुयानारीपुत्रंप्राप्याचिरायुषं नपुनर्गर्भमायातिसागौर्यासहलीयते॥ इति
स्कंदपुराणेउमामहेश्वरसंवादेसोद्यापनहरितालिकाव्रतकथासंपूर्णा॥ अथोद्यापनं पार्वत्युवाच उद्यापनविधिं
ब्रूहितृतीयायाः सुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्तिहेतवे ईश्वरउवाच ॥ उद्यापनविधिंवक्ष्येव्रतराजस्यशो
भनं यस्यानुष्ठानमात्रेणसंपूर्णंहिव्रतंभवेत् चतुःस्तंभंचतुर्द्वारंकदलीस्तंभमंडितं घंटिकाचामरयुतंकमलैरु
पशोभितं चंदनागुरुकर्पूरैर्लेपितंधूपितंशुभं मध्येवितानंवध्नीयात्पंचवर्णैरलंकृतं तन्मध्येकारयेत्पद्मंपं
चवर्णैः सुशोभनैः तस्योपरिन्यसेद्व्रीहीन्द्रोणेनपरिसंमितान् सौवर्णंराजतंताम्रंकलशंविन्यसेद्बुधः पंचर
त्नानिनिक्षिप्यसर्वौषधिसमन्वित तस्योपरिन्यसेत्पात्रंसौवर्णंराजतंहिवा वृषारूढंमहादेवंरजतेनविनिर्मितं
सर्वावयवसंयुक्तागौरींहेम्नाविनिर्मितां पूजयेत्तत्रगंधाद्यैः पुष्पैर्नानाविधैः शुभैः रात्रौजागरणंकुर्यात्कथा
वाचनपूर्वकं ततः प्रभातेविमलेकृत्वास्नानादिकर्मच पूर्ववच्चार्चयेद्देवंपश्चाद्धोमंसमाचरेत् स्वगृह्योक्तविधा
नेनकृत्वाग्निंस्थापयेत्ततः प्रारभेच्चततोहोमंनवग्रहपुरः सरं तिलांश्चयवसंमिश्रानाज्येनचपरिप्लुतान् जु
हुयाद्घोरमंत्रेणगौरींमंत्रेणमंत्रवित् अष्टोत्तरशतंवापिअष्टाविंशतिरेववा एवंसमाप्यहोमंतुतत्राचार्यंप्रपूजयेत्
सुवर्णरत्नवासोभिर्गांचदद्याद्यथाविधि शय्यांसोपस्करांदद्यादाचार्यायप्रयत्नतः षोडशद्विजयुग्मांश्चपक्वान्नाद्यै
श्चभोजयेत् सौभाग्यद्रव्यवस्त्राणिवंशपात्राणिषोडश दातव्यानिप्रयत्नेनब्राह्मणेभ्योयथाविधि अन्येभ्यो
विप्रवर्येभ्योदक्षिणांचप्रयत्नतः भूयसींपरयाभक्त्याप्रदद्याच्छिवतुष्टये उद्दिश्यपार्वतीशंचसर्वंकुर्यादतंद्रितः वं
धुभिः सहभुंजीतनियतश्चपरेऽहनि एवंयाकुरुतेनारीव्रतराजंसुमध्यमे सौभाग्यमतुलंतस्याः सप्तजन्मनसंशयः

इति श्रीभविष्योत्तरेहरितालिकाव्रतोद्यापनम् ॥ अस्यामेवतृतीयायांकोटीश्वरीव्रतं ॥ मदनरत्ने रंभोवाच देवलोकेमहादेविगणिकाःसौख्यसंयुताः मर्त्यलोकेतथासर्वाःस्त्रियः सौभाग्यगर्विताः कथंभाग्यंचभो गांश्चलभंतेपरमेश्वरि ॥ पार्वत्युवाच ॥ शृणुभद्रेपरंगुह्यंसर्वकामफलप्रदं दुर्भगाणांचनारीणांसौ भाग्यकरणंपरं लक्षेश्वरीतिविख्यातंततः कोटीश्वरीव्रतं तृतीयाशुक्लपक्षेतुमासिभाद्रपदेभवेत् तस्या व्रतंतुसंग्राह्यंयावद्वर्षचतुष्टयं उपवासेनकर्तव्यंवर्षेवर्षेतुसुंदरं अखंडानांतंडुलानांवातिलानांसुलोचने लक्षमेकंविवि च्याथक्षिपेत्पयसिशोभने क्षीरसंमिश्रितैः कार्य्यादेव्यामूर्त्तिः सुलोचना कृत्वातुपुष्पप्राकारंफलपुष्प सुमंडितं संस्थाप्यपार्वतींदेवींपूजयेद्भक्तिसंयुतः पूजयेद्विविधैः पुष्पैः कुंकुमागुरुचंदनैः गंधैः पु ष्पैश्चधूपैश्चनैवेद्यैर्विविधैस्तथा वस्त्रेणचैवरक्तेनपूजयेत्परमेश्वरीं उमादेविनमस्तुभ्यंकात्यायनिनमोस्तुते न मः शर्वाणिरुद्राणिअपर्णेशंकरप्रिये सर्वभूतहितेदेवित्राहिसंसारसागरात् ॥ अत्रपूजामंत्रः ॥ न मोलक्षेश्वरीदेविकोटीश्वरिनमोस्तुते गृहाणार्घ्यंमयादत्तंशंकरेणसमंमम इत्यर्घ्यमंत्रः ॥ पुराव्रतमिदंभ द्रेइंद्राण्याथकृतंशुभम् विंध्यावल्याचसावित्र्याअरुंधत्याकृतंपुरा दमयंत्याचरोहिण्याकृतंव्रतवरंशुभं गौरि णींभोजयेच्छक्त्याइंद्राण्येवंसुदीक्षिता गौरिणीसुवासिनी एवंविधिविधानेनकरोतिनियतव्रतं नतस्याः स्याद्वदारिद्र्यंनचैवेष्टवियोजनं अष्टपुत्राभवेन्नारीभर्तारंचगुणाधिकं सुरूपंगुणिनंकांतंपंडितंप्रियदर्शनं ई श्वरंचैवराजानंलभेद्दीर्घायुषंप्रियं दातारंचैवभोक्तारंसमस्तजनवल्लभं सुशीलधार्मिकंशूरंचंद्रवत्प्रियदर्शनं सु रूपासुभगाचैवसदापत्युः प्रियाभवेत् सदपत्यावरारोहाकुरुतेराज्यमुत्तमं अंतकालेसमंतेनरमतेत्रिदिवे तथा षष्टिवर्षसहस्राणिषष्टिवर्षशतानिवा इदंकृत्वापुरेंद्राणीइंद्रंलेभेपतिंप्रियं रोहिणीपतिमालेभेचंद्रंव्रत

निषेवणात् संज्ञादेवीस्वभर्त्तारमादित्यंप्राप्यसत्पतिं इदंतेकथितंभद्रेव्रतंकोटीश्वरीभवं लक्षेश्वरीतिवि
ख्यातंकुरुरंभेयथोदितं ॥ इतिकोटीश्वरीलक्षेश्वरीव्रतम् ॥ ॥ ॥ अथास्यास्तृतीयायाः संक्षि
प्तमुद्यापनमुच्यते तिथ्याद्युल्लिख्यममसकलपापक्षयपूर्वकसप्तजन्मसौभाग्यवृद्धिभर्तृवियोगराहित्यादिभोग
प्राप्तिद्वाराउमामहेश्वरप्रीत्यर्थंयथाकालाचरितहरितालिकाव्रतोद्यापनंकरिष्ये आचार्यंवृत्वा उक्तविधिनालिंग
तोभद्रेद्रोणपरिमितव्रीहिस्थकलशेराजतंशिवंहैमींगौरींपुरतोराजतवृषभमुक्तमंत्रैः प्रतिष्ठाप्य संपूजयेत् तत्र
मंत्रः मंदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांवरायैचदिगंवरायनमः शिवायैचनमः
शिवाय इत्यावाहनादिषोडशोपचारैः पूर्ववत्संपूज्य प्रार्थयेत् नमः शिवायसोमायपंचवक्त्रायशूलिने नं
दिभृंगीमहाकालगणयुक्तायशंभवे शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे नमस्तेरुद्ररूपिण्यैजगद्धात्र्यैनमोनमः
येनकामेनदेविस्त्वपूजितासिहरप्रिये सपूर्णंकुरुमेकामंसौभाग्यंचप्रयच्छमे ततः सुवासिनी पूज्यरात्रौतानि
यतानयेत् प्रातः अग्निप्रतिष्ठाप्य अन्वादध्यात् प्रधाने उमामहेश्वरचगौरीमिमायेतिमंत्रः गौरीमि
मायसलिलानितक्षत्येकपदी द्विपदीसाचतुष्पदी अष्टापदीनवपदीबभूवुषीसहस्राक्षरायहमेव्योमन् त्र्यंवकंयजा
महइतिमंत्रः त्र्यंवकंयजामहेसुगंधिंपुष्टिवर्द्धनं उर्वारुकमिववंधनान्मृत्योर्मुक्षीयमामृतात् मंत्राभ्यांप्रतिमां
च प्रतिद्रव्यंअष्टोत्तरशतसंख्याकाभिस्तिलयवसाज्याहुतिभिर्यक्ष्ये ब्रह्मादिदेवताः परिवारदेवताश्च एकैकया
व्याहुत्यायक्ष्येएवंहोमंसमाप्य ततः संपूजितायाचार्यायगांदत्त्वा षोडशाष्टौवायुग्मा निसंपूज्य सौभाग्यद्र
व्यवस्त्रदक्षिणायुतानिसशूर्पाणिवायनानिदद्यात् तत्रमंत्रः सौभाग्यारोग्यकामानासर्वसंपत्समृद्धये गौ
रीगौरीशतुष्ट्यर्थंवायनंतुददाम्यहं इतिसाक्षिसहरितालिकाव्रतोद्यापनम् ॥ अथात्रैवहस्तगौरीव्रतं ॥ सूतउवाच

कुंत्यांसुखोपविष्टायांहास्तिनापुरमुत्तमं मानितायांनरेंद्रैश्चतनयैः पंचभिः सह तस्याःकुशलमन्विच्छन्ना
जगामाथमाधवः अभिनंद्यसुखासीनंदेवदेवंजनार्दनं उवाचकुंतीसानंदाह्यप्रगल्भमिदंवचः ॥ कुंत्युवाच धन्या
स्मिकृतकृत्यास्मिसनाथास्मिपरंतप साहंसंभावितास्मित्वयासर्वजगद्गुरो यदिमेसुप्रसन्नोसितदाचक्ष्वव्रतंत्रि
भो यद्विधायसुखंराज्यंप्राप्नुयांतनयैःसह कृष्णउवाच कुंतितेकथयिष्यामिव्रतानामुत्तमंव्रतं यत्कृत्वासुखसंता
नेधनधान्यसमान्वितं विधूतदुष्कृतापुण्यासपुत्राराज्यमाप्स्यसि हस्तगौरीव्रतंभद्रेकुरुष्वशुचिमानसा 'कुं
त्युवाच यच्चोक्तंतुव्रतंनाथविधानंतस्यकीदृशं केनपूर्वंकृतंदेवतन्मेब्रूहिजनार्दन ॥ कृष्णउवाच 'कैलासशि
खरेदेवीहस्तस्थेचदिवाकरे दिवाप्रसुप्तासागौरीहरसान्निधिमानसा सासुप्तादेवदेवेशंस्वप्नेशंभुंददर्शह अर्द्धदेहं
रूपार्द्धस्थमर्धचंद्रकलाधरं उत्थायसहसागौरीप्रोवाचशंकरंप्रति किमिदंतन्ममाचक्ष्वतप्यतेमानसंमम ॥ ई
श्वरउवाच देविपूर्वंनिषिद्धासिहस्तऋक्षगतेरवौ नस्वप्तव्यंदिवातत्रतस्येदंविहितंफलं शृणुदेवित्वयायेन
खंडितोहंविलोकितः त्वयारब्धंव्रतंदेविमदाराधनकाम्यया अपूर्णेस्मिन्प्रसन्नोस्मिनत्वयाचसमुज्झितं
अपूर्णंव्रतचारेणदृष्टोऽहंतादृशस्त्वया तत्कुरुष्वाधुनादेविहस्तगौरीव्रतंशुभम् पार्वत्युवाच ॥ आदिशयतांव्रतंना
थविधानेनमहेश्वर आरंभोस्यकदाकार्यः कोविधिः कस्यपूजनम् ॥ ईश्वरउवाच मंडपेस्थापनंकुर्यात्सर्वा
लंकारभूषिते अन्वहंकांचनैः पुष्पैः फलमुक्तान्वितैः शुभैः नैवेद्यैः पंचखाद्यैश्चशृणुयात्प्रत्यहं
कथां दिनेचतुर्दशेप्राप्तेस्थापयेत्प्रतिमांशुभां पूजयेच्चसुवर्णस्यपुष्पैश्चान्यैः सुगंधिभिः चंदनैर्धूपदीपै
श्चतांबूलैश्चफलादिभिः ध्यायेच्चहृदयेगौरींहरहेरंबसंयुतां दक्षिणांचततोदत्त्वानत्वादेवींविसर्जयेत् व्रतंस
माचरेद्देवियावद्वर्षंत्रयोदशं स्वर्णभाजनगौर्यादिप्रतिवर्षंविसर्जयेत् ततश्चतुर्दशेवर्षेतदुद्यापनमाचरेत् सं

स्थापयगणपंगौरींकांचनींकांचनेगजे पूर्वोक्तविधिनापूज्यवासराणित्रयोदश चतुर्दशेथदिवसेसंजातेप्रातरु
त्थिता कृतोपवासानियमागजंगौरींप्रपूजयेत् पक्वान्नंस्वर्णपात्रेपुत्रयोदशसुनिक्षिपेत् स्त्रीभ्यश्चकंचुकींद
त्वाभोजयित्वाविसर्जयेत् एवंदेविव्रतंकृत्वासर्वान्कामानवाप्नुयात् अशक्तौतुसदाकार्याप्रतिमामृत्तिकामयी
पात्राणिवेणवान्येवपीतपुष्पाणिवैग्रहि ॥ श्रीकृष्णउवाच ॥ तनश्चकेव्रतंगौरीप्राप्तासावांछितंफलं त्वन
प्येतद्व्रतंकुंतिकुरुश्रद्धासमन्विता अथभक्त्याव्रतंकुंतीसविधानतदाऽकरोत् गौरीचापितच्छ्रुत्वाव्रतंचक्रेयथावि
धि तुष्टाचभक्तिभावेनपुष्टागौरीततोऽब्रवीत् ॥ पार्वत्युवाच ॥ कुंतितेपरितुष्टास्मिवरंवरयसुव्रते ॥ कुंत्युवाच
देहिमेसर्वसंपत्तिंसर्वसौख्यंसदोदयं प्रयच्छममपुत्राणांमहद्राज्यमनामयम् व्रतमेतत्तुयःकुर्यात्तत्रलोकनत्रा
प्स्यति नदारिद्र्यंनवैधव्यंनशोकोनापिदुष्कृतं कृच्छ्रनोपहतदेविकदाचित्संभवेदिह तथेत्युक्त्वाततोदेवीतत्रै
वांतरधीयत एतद्व्रतंसकलदुःखविनाशहेतुः सौभाग्यराज्यफलभावनयाचरंति यायोषितः. सुखमन
तमिहापिपूज्यागौरीपतिंपतिरतास्तुततंलभंते ॥इतिभविष्योत्तरोक्तभाद्रपदशुक्लतृतीयायांहरितगौरीव्रतंसमाप्तम्
अस्योद्यापनंहरितालिकाव्रतोद्यापनवद्ज्ञेयं विशेषश्चात्र गौरीहरगणेशपूजा त्रयोदशाविधवायनदानम् ॥
तिथ्यादिसंकीर्त्य सकलदुःखदुःस्वप्ननाशसौभाग्यसुखावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थंत्रयोदशवर्षाचरित
हरितगौरीव्रतपूर्णतासिद्ध्यर्थंतदुद्यापनंकरिष्यइति तत्राचार्यंवृत्वा लिंगतोभद्रेउक्तप्रकारेणकलशेकांचनगजेगौरींह
रंगणेशंच सुवर्णपुष्पादिनातत्तन्मंत्रैः संपूज्य सुवासिनीः पूज्यरात्रिंनिनयेत् प्रातराचार्यश्चाग्निंप्रतिष्ठाप्य अन्वा
दध्यात् गौरींहरंगणेशंचगौरीमिमायेतिगौरीं तत्पुरुषायविद्महेइतिहरं गणानात्वेतिगणपतिं प्रत्येक
मष्टोत्तरशततिलाज्याहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्येशेषेणस्विष्टकृतमित्यादिहोमंसमाप्य वायनं

त्रयोदशविधत्रयोदशसंख्याकपक्वान्नपूरितं सौवर्णंवेणवे वा पात्रंकृत्वा त्रयोदश दंपतीः सुवासिनीर्वा संपूज्यदद्यात् तत्रमंत्रः पक्वान्नपूरितंविप्रव्रतसंपूर्त्तिहेतवे वायनंतेप्रयच्छामिगौरीगौरीशतुष्टये तत्रआचार्यायगांशय्यादिकंचदद्यादितिहस्तगौरीव्रतोद्यापनम् ॥ ॥ ॥

अस्यामेवभाद्रशुक्लतृतीयायांभविष्योत्तरोक्तहरिकालीव्रतम् ॥ ॥ युधिष्ठिरउवाच भगवन्हरिकालीतिकादेवीप्रोच्यतेभुवि आर्द्रधान्यस्थिताकस्मात्पूज्यतेस्त्रीजनेनसा पूजिताकिंददातीहसर्वमेब्रूहिकेशव ॥ श्रीकृष्णउवाच पार्थपौराणिकींदिव्यांमत्तः शृणुकथामिमां आसीद्दक्षस्यदुहिताकालीनाम्नीतुकन्यका वर्णेनापिचसाकृष्णानवनीलोत्पलप्रभा त्र्यंबकायचसादत्तामहादेवायशूलिने विवाहिताविधानेनशंखतूर्यनिनादिना यज्ञयात्रागतैर्देवैर्ब्राह्मणानांचनिःस्वनैः निवर्तितेविवाहेतुकाल्यासार्धंत्रिलोचनः क्रीडतेविविधैःकामैर्मनसः प्रीतिवर्धनैः अथदेवसमाजेतुकदाचिद्वृषभध्वजः आस्थानमंडपेरम्येआस्तेविष्णुसहायवान् तत्रस्थश्चाह्वयामासनर्मणात्रिपुरांतकः कालींनीलोत्पलश्यामांगणमातृगणान्वितां एह्येहित्वमितःकालिभिन्नकृष्णांजनप्रभे कालमप्यातिसौन्दर्यात्तवरूपंममाप्रिये इत्येवमुक्तासदेवीव्रीडिताकद्रुनानसा निःश्वासोच्छ्वासताम्राक्षीवाष्पगद्गदयागिरा रुरोदसस्वरंबालाप्रोवाचस्फुरिताधरा किंदेवनाम्नायागौरीसागौरीत्यभिधीयते यस्मान्ममोपमादत्ताभिन्नकृष्णांजनप्रभो समाजेदेवसंघानांवासुदेवस्यसन्निधौ तस्मादिहामिमंकृष्णंजुहोमिज्वालितेऽनले इत्युक्त्वावार्यमाणापिहरिकालीरुषान्विता मुमोचहरितांछायांकांतिहरितशाद्वले चिक्षेपदेहंरोषेणज्वालितेहव्यवाहने पुनः पर्वतराजस्यगृहेगौरीबभूवसा महादेवस्यदेहार्धेस्थितासंपूज्यतेसुरैः यामुक्ताशाद्वलेदेव्याकालकांतिः स्वदेहजा साबभूवमहावीर्यादेवीकात्यायनीपुनः तयाकृतानि

भूरीणिदेवकार्याणिपांडव तुष्टैर्देवगणैर्दत्तोवरस्तस्यैशृणुष्वमे येत्वांशाद्वलसंस्थांवैकालीतैवरदार्येनां पूज
यिष्यंतिपुरुषानार्येवापिविशेषतः सर्वपापविनिर्मुक्ताः सुखसौभाग्यगर्विताः चिरायुषोभविष्यंतिभर्तृपु
त्रसमन्विताः एवंसाहरिकालीतिगौरीसाम्येव्यवस्थिता ॥ श्रीकृष्णउवाच शुक्लभाद्रपदस्यैवंतृतीयायां
समाचरेत् सप्तधान्यैस्तुवैरूढैः कृत्वाहरितशाद्वलीं खर्जूरैर्नारिकेलैश्चफलैश्चमधुरैस्तथा मातुलुंगकुसुं
भैश्चधान्यकैर्जीरकैस्तथा गंधैः पुष्पैः फलैर्धूपैर्नैवेद्यैर्मोदकादिभिः प्रीणयित्वासमाच्छाद्यपद्मरागेणभास्वता
घंटावाद्यादिभिर्गीतैः शुभैर्दिव्यकथानकैः पूजनीयामहाराजमंत्रेणानेनभक्तितः हरिनाम्निसमुत्पन्नेहरि
कालिहरिप्रिये सर्वदाशस्यमूर्तिस्थेप्रणतार्तिहरेनमः इत्थंसंपूज्यतांदेवींदद्याद्विप्रायदक्षिणां कृत्वाजागर
णंरात्रौप्रभातेकिंचिदुद्गते रवौसुवासिनीभिश्चसानेयातुजलाशये ततोजलाशयेरम्येमंत्रेणैवविस
र्जयेत् अर्चितासिमयाभक्त्यागच्छदेविसुरालयं ममदौर्भाग्यनाशायपुनरागमनायच एवंनः पांडवश्रे
ष्ठहरिकालीव्रतचरेत् प्रतिवर्षंविधानेननारीवाभक्तितत्परा चीर्त्वायत्फलमाप्नोतितदन्येननचाप्यते मर्त्य
लोकेचिरंजीवेत्सर्वकामैः सुपूजिता पुत्रपौत्रसुहृन्मित्रनप्तृदौहित्रसंकुले साग्रंवर्षशतंजीवेद्भोगान्भुक्त्वा
महीतले ततोऽवसानेदेहस्यशिवलोकेमहीयते वीरभद्रमहाकालनंदीश्वरविनायकाः सर्वेप्रसादसुमुखाभ
वंतिव्रतयोगतः संपूज्यसूर्पगतसुप्तविरूढसस्यांदेवींहिमाद्रितनयांहरिकालिकाख्यां नैवेद्यजागरसमुद्धत
गीतवाद्यैः संप्राप्नुवंतिमनुजाः सुचिरंसुखानि ॥ इतिभविष्योत्तरोक्तंहरिकालीव्रतम् ॥ ॥ अथ
भाद्रशुक्लचतुर्थ्यांसिद्धिविनायकव्रतम् ॥ हेमाद्रौस्कांदे तच्च मध्याह्नव्यापिन्यांकार्यं प्रातः शुक्ल
तिलैः स्नातोमध्याह्नेपूजयेन्नृपतिगणपतिकल्पे तत्रैव पूजाविधानात् दिनद्वयेतद्व्याप्तावव्याप्तौवा पूर्वा अ
न्यथापरा चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते मध्याह्नव्यापिनीसाचपरतश्चेत्परेऽहनीतिवृद्धस्पत्युक्तेः इयच

रविभौमयोरतिप्रशस्ता भाद्रशुक्लचतुर्थीयाभौमेनार्केणवायुता महतीत्यत्रविघ्नेशमर्चयित्वेष्टमाप्नुयादितिवारा
होक्तेः अथव्रतविधिः मासपक्षाद्युल्लिख्यजयपुत्रादिकामः स्त्रीसुतसौभाग्यादिकामःसिद्धिविनायकव्रतेतत्पू
जनमहंकरिष्ये इतिसंकल्पः ॥ षोडशोपचारैः पूजांकुर्यात् ॥ तत्रध्यानं ॥ एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं
पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकंध्यायेद्गजाननंदेवंतप्तकांचनसन्निभं चतुर्भुजंमहाकायंसर्वाभरणभूषितंदंताक्ष
मालापरशुपूर्णमोदकधारिणं मोदकासक्तशुंडाग्रमेकदंतंविनायकम् इतिध्यानं आवाहयामिविघ्नेशसुरराजार्चि
तेश्वर अनाथनाथसर्वज्ञपूजार्थंगणनायक सहस्रशीर्षेत्यादिपुरुषसूक्तमंत्रैः सर्वोपचारपूजा सहस्रशीर्षेत्या
वाहनं विचित्ररत्नखचितंदिव्यास्तरणसंयुतं स्वर्णसिंहासनंचारुगृहाणसुरपूजितइत्यासनं ॥ गणाध्य
क्षनमस्तेऽस्तुगृहाणकरुणाकर अर्घ्यंचफलसंयुक्तंगंधमाल्याक्षतैर्युतं इत्यर्घ्यं सर्वतीर्थसमुद्भूतंपाद्यंगंधादि
भिर्युतं विघ्नराजगृहाणेदंभगवन्भक्तवत्सल इतिपाद्यं दध्याज्यमधुसंयुक्तंमधुपर्कंमयाहृतं गृहाणसर्वलोकेश
गणनाथनमोऽस्तुते मधुपर्कं विनायकनमस्तुभ्यंत्रिदशैरभिवंदित गंगोदकेनदेवेशकुरुष्वाचमनंप्रभो इत्याच
मनं ॥ स्नानंपंचामृतंदिव्यंसर्वतीर्थाहृतंमया गंधतोयैरुमापुत्रगृहाणाभीष्टदायक स्नानं रक्तवस्त्रद्वयंदेवदे
वांगसदृशंप्रभो सर्वप्रदंगृहाणेदंलंबोदरहरात्मज वस्त्रं राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं गृहाणचारुसर्व
ज्ञभक्तानाभक्तवत्सल यज्ञोपवीतम् नानाविधानिदिव्यानिनानारत्नोज्वलानिच भूषणानिगृहाणेशपार्वतीप्रि
यनंदन आभरणं गंधगृहाणभगवन्सर्वगंधसमन्वितं गणाध्यक्षनमस्तेऽस्तुभक्ताभीष्टफलप्रद गंधं अक्षतान्ध
वलान्देवगृहाणद्विरदानन अनाथनाथसर्वज्ञगीर्वाणासुरपूजित अक्षताः सुगंधीनिचपुष्पाणिजातीकुंदमुखा
न्यपि विविधानिचपत्राणिगृहाणगणनायक पुष्पाणि अथांगपूजा गणेशायनमः पादौपूजयामि १ विघ्नराजाय

ननः जानुनीपू॰ २ आखुवाहनायनमः ऊरूपू. ३ हेरंबाय॰ कटिंपू॰ ४ कामारिसूनवे॰ नाभिं॰ पू॰ ५ लंबोदराय॰ उदरंपू. ६ गौरीसुताय॰ स्तनौपू॰ ७ गणनायकाय॰ हृदयपू॰ ८ स्थूलकंठाय॰ कंठपू॰ ९ स्कंदाग्रजाय॰ स्कंधौपू॰ १० पाशहस्ताय॰ हस्तौपू॰ ११ गजवक्राय॰ मुखंपू॰ १२ विघ्नहर्त्रेन॰ ललाटं॰ पू॰ १३ सर्वेश्वराय॰ शिरः पू, १४ गणाधिपायनमः सर्वांगंपूजयामि. १५ अथपत्रिकापुजा सुमुखायकाकमाचीपत्रसमर्पयामि॰ १ गणाधिपायभृंगराजंस. २ उमापुत्रायबिल्वपत्रस. ३ गजाननायदूर्वापत्रंस. ४ लंबोदरायबदरीपत्रंस॰ ५ हरसूनवेधत्तूरपत्रंस ६ गजकर्णायतुलसीदलंस॰ ७ वक्रतुंडायशमीपत्रंस. ८ गुहाग्रजायअपामार्गपत्रंस. ९ एकदंतायबृहतीपत्रंस. १० विकटायमधुपत्रस. ११ विनायकायअश्मंतपत्रंस॰ १२ कापिलाय. अर्कपत्रंस॰ १३ गजदंतायअर्जुनपत्रंस॰ १४ विघ्नराजायविष्णुक्रांतपत्रंस॰ १५ वटवेदाडिमीपत्रंस॰ १६ सुराग्रगण्यायदेवदारुपत्रस॰ १७ भालचंद्रायमरुपत्रंस १८ हेरंबायासिंदूरपत्रंस. १९ चतुर्भुजायजातीपत्रस. २० सर्वेश्वरायअगस्तिपत्रंस॰ २१ इत्येकविंशतिनामभिरेकविंशतिपत्रिकापूजा ॥ ॥ कुमारगुरवेतुभ्यंपूजयामिप्रयत्नतः दूर्वायुग्मंगृहीत्वातुगंधपुष्पाक्षतैर्युतं एकैकेनतुनाम्नातुदद्यादेकसर्वनामभिः अथैकविंशतिंगृह्यमोदकान्घृतपाचितान् स्थापयित्वागणाध्यक्षसमीपेकुरुनंदन दशविप्रायदातव्याः स्वयंचाद्यात्तथादश एकंगणाधिपेदद्यात्सनैवेद्य नृपोत्तम जातरूपमयंदेवब्राह्मणायनिवेदयेत् कृत्वानैमित्तिकंकर्मपूजयेदिष्टदेवतां ब्राह्मणान्भोजयेत्पश्चात्भुंजीयात्तैलवर्जितं विनायकस्यप्रतिमांवस्त्रयुग्मसमन्वितां दद्याद्विप्रायविदुषेसर्वविघ्नोपशांतये एवंकृतेधर्मराजविघ्ननाथस्यपूजने विजयस्तेभवेन्नूनसत्यंसत्यंमयोदितं वैष्णवाद्यासुदीक्षासुआदौपूज्योगणाधिपः

तस्मिन्संपूजितेविष्णुरीशोमाचतथारमा हव्यवाहमुखादेवाः पूजिताःस्युर्नसंशयः चंडिकाद्यामातृग णाः परितुष्टाभवंतिच तस्मिन्संपूजितेविप्रा भकथासिद्धिविनायके अइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः सिद्ध्यंतिसर्वकार्याणिसिद्धिदस्यप्रसादतः ॥ इतिसिद्धिविनायकव्रतपूजा ॥ ॥ एवमेवोक्तंनारदीयेऽ पि ॥ ॥ अथशुक्लचतुर्थ्यांतुसिद्धिवैनायकंव्रतं आवाहनादिभिःसर्वैरुपचारैःसमर्चयेत् एकाग्रमानसोभूत्वा ध्यायेत्सिद्धिविनायकं पाशांकुशधरंदेवंतप्तकांचनसन्निभं एकविंशतिपत्राणिचैकविंशतिनामभिः समर्पयेद्भ क्तियुतस्तानिनामानिमेशृणु सुमुखायकाकमाचीं गणाधीशायभृंगजं उमापुत्रायबिल्वस्यदूर्वांगजमुखाय तु लंबोदरायबदरींधत्तूरंहरसूनवे सूर्पकर्णायतुलसींवक्रतुंडायवैशमीं गुहाग्रजायापामार्गमेकदंतायवार्हतं वि कटायाश्मंतपत्रंकपिलायार्कपत्रकं गजदंतायार्जुनंचविष्णुक्रांताविघ्नराजके वटवेदाडिमीपत्रंसुराग्रण्येसुरद्रुजं मरुपत्रंभालचंद्रेप्रदद्याद्भक्तिभावतः हेरंबायचसिंदूरजातीपत्रंचतुर्भुजे सर्वेश्वरेऽगस्तिपत्रंदद्यात्प्रीतिविवर्धनं विंशतिरेवभवंतिनामानि विनायकेतिनामपूर्वोक्तंज्ञेनं दूर्वायुग्मंततोगृह्यगंधपुष्पाक्षतैर्युतं पूजांनिवेदयेद्भक्ति युतोमोदकपंचकं आचमय्यनमस्कृत्यसंप्रार्थ्यचविसर्जयेत् विनायकस्यप्रतिमांहैमींसोपस्करांमुने निवेदये च्चगुरवेद्विजेभ्योदक्षिणांददेत् एवंकृत्वाऽर्चनंभक्त्यापंचवर्षाणिनारद उद्याप्यलभते कामानैहिकामुष्मिकान् शुभान् इतिहेमाद्रौ ॥ भविष्योत्तरेच मासिभाद्रपदेयान्याशिवलोकेप्रपूजिता तस्यांस्नानंतथादानमुपवा सोर्चनंतथा क्रियमाणंशतगुणंप्रसादाद्दंतिनोनृप चतुर्थीत्यनुषंगः ॥ अत्रैवरात्रौचंद्रंनपश्येत् तस्यदर्शनेनमि थ्याभिशापप्राप्तिर्भवति तदाहापरार्के मार्कंडेयः भाद्रेमासिसितेपक्षेचतुर्थीस्वातियोगिनी मिथ्याभिशापंकुरुतेदृष्ट चंद्रान्नसंशयः पराशरोऽपि कन्यादित्येचतुर्थ्यांतुशुक्लेचंद्रस्यदर्शनं मिथ्याभिदूषणंकुर्याद्रात्रौपश्येन्नतंसदा

पंचाननगतेभानौपक्षयोरुभयोरपि चतुर्थ्यामुदितःसोमोनिरीक्षितव्यःकदाचनेति तेनचतुर्थ्यांनपश्येदित्यर्थः प्रधान
क्रियान्वयलाभात् तेनचतुर्थ्यामुदितस्यपंचम्यांननिषेधः अत्ररात्रिशब्दग्रहणाद्दिवाचंद्रदर्शनेननिषेधइति यत्तुके
नचिदुक्तंरात्रिशब्दोऽहोरात्रपरइतितन्मृग्यंएतादृशार्थप्रतिपादकवचनस्यमहानिबंधेष्वदृष्टत्वात् कदाचित्प्रमादा
द्दृष्ट्वाविष्णुपुराणोक्तंश्लोकंपठेत् तथाचपुराणांतरेततश्चतुर्थ्यांरात्र्यांयःप्रमादादीक्षमानवःपठेत्पौराणिकंवाक्यं
प्राङ्मुखोवाप्युदङ्मुख इतिनिर्णयामृते ब्रह्मपुराणेतु चंद्रदर्शनेविशेषउक्तः वासुदेवोभिशप्तस्तुनिशाकरम
रीचिषु स्थितश्चतुर्थ्यांमायायामनुष्याणांपतिश्वसः ततश्चतुर्थ्यांचंद्रंतुप्रयत्नाद्वीक्ष्यमानवः पठेत्पौराणि
कंवाक्यंप्राङ्मुखोवाप्युदङ्मुखः तद्दोषशांतयेसिंहः प्रसेनइतिवैपठेत् सिंहः प्रसेनमवधीत्सिंहोजांबव
ताहतः सुकुमारकमारोदीस्तवह्येषस्यमंतकइति सिंहः प्रसेनमितिमंत्रेणाभिमंत्रितं जलंपेयं स्य
मंतकोपाख्यानंचश्रोतव्यमाचारादितिस्मार्त्तां इतिकृत्यरत्नावल्यां ॥ ॥ अथस्यमंतकोपाख्यानम् ॥ नंदि
केश्वरउवाच ॥ शृणुष्वैकाग्रचित्तः सन्व्रतंगाणेश्वरंशुभं चतुर्थ्यांशुक्लपक्षस्यसदाकार्यंप्रयत्नतः सन
त्कुमारयोगींद्रयदीच्छस्तुभमात्मनः नारीवापुरुषोवापि नरः कुर्याद्व्रतमुत्तमं मोचयित्वाशुसंकष्टाद्दिव्यंव्रति
नंनरं अपवादहरंचैवसर्वविघ्ननिवारणं कांतारेविषमेचैवात्रिपुलोकेषुविश्रुतं अतोनविद्यतेचान्यत्संसंकष्ट
नाशनम् ॥ सनत्कुमारउवाच ॥ केनचादौपुराचीर्णंमर्त्यलोकेकथंगतं एतत्समस्तंविस्तार्यंब्रूहिगाणेश्वरंव्र
तं ॥ नंदिकेश्वरउवाच ॥ चक्रेव्रतंजगन्नाथोवासुदेवः प्रतापवान् आदिष्टंनारदेनैवद्यथालांछनशांतये ॥ स
नत्कुमारउवाच ॥ षड्गुणैश्वर्यसंपन्नः सृष्टिसंहारकारकः वासुदेवोजगन्नाथोप्राप्तवान्लांछनंकथं एतदा
श्चर्यमाख्यानंब्रूहित्वंनंदिकेश्वर नंदिकेश्वरउवाच ॥ भुवोभारावतारार्थंवसुदेवसुतावुभौ रामकृष्णौसमुत्पी

र्णोपद्मनाभहलायुधौ जरासंधभयात्कृष्णोद्वारिकांसमकल्पयत् .विश्वकर्माणमाहूयपुरींहाटकनिर्मितां तत्र
षोडशसाहस्रस्त्रीणांचैवशताधिकं भुवनानिमनोज्ञानितेषांमध्येप्यकल्पयत् यादवानांगृहास्तत्रषट्पंचाशच्च
कोटयः अन्येचबहवोलोकावसंतिविगतज्वराः यत्किंचित्त्रिपुलोकेषुसौंदर्यंयतत्रदृश्यते सत्राजितप्रसेनाख्यौ
पुत्रावुग्रस्यविश्रुतौ अंभोधेस्तीरमासाद्यतन्मनस्कतयाचसः सत्राजितस्तपस्तेपेसूर्यमुद्दिश्यबुद्धिमान् व्रतं
निरशनंगृह्यसूर्यसंबद्धलोचनः, ततः प्रसन्नोभगवान्सत्राजितपुरःस्थितः सत्राजितोपितुष्टावदृष्ट्वादेवंदिवाकरम्
तेजोराशेनमस्तुभ्यंनमस्तेसर्वतोमुख विश्वव्यापिन्नमस्तेऽस्तुनमस्तेविश्वरूपिणे काश्यपेयनमस्तेस्तुहरिद
श्वनमोस्तुते ग्रहराजनमस्तेऽस्तुनमस्तेचंडरोचिषे वेदत्रयनमस्तेऽस्तुसर्वदेवनमोनमः प्रसीदपाहिदेवेशसं
तुष्यामांदिवाकर इत्थंसंस्तूयमानोऽसौदेवदेवोदिवाकरः स्निग्धगंभीरमधुरंसत्राजितमुवाचह ॥ सूर्यउवाच
वरंब्रूहिप्रसन्नोस्मियत्तेमनसिवर्तते सत्राजितमहाभागतुष्टोहंतवनिश्चयात् ॥ सत्राजितउवाच ॥ स्यमंतकम
णिंदेहियदितुष्टोसिभास्कर ददौतस्यचतद्रत्नंस्वकंठादवतार्यसः ॥ सूर्यउवाच ॥ भाराष्टकंशातकुंभस्रवते
सोमहामणिः शुचिष्मतासदाधार्यंरत्नमेतन्महोत्तमं सत्राजितक्षणेनैतदशुचिंहंतिमानवं इत्युक्त्वांतर्दधेदे
वस्तेजोराशिर्दिवाकरः तत्कंठरत्नज्वलमानरूपः पुरींसकृष्णस्यविवेशसत्वरं दृष्ट्वातुलोकामनसादिवाक
रंसंचिंतयंतस्तिमिरास्तदृष्टयः समागतोयंहरिदश्वदीधितिर्जनार्दनंद्रष्टुमसंशयेन नायंसहस्रांशुरितीहलोकाः
सत्राजितोयंमणिकंठभास्वान् ॥ स्यमंतकमहारत्नंदृष्ट्वातत्कंठमंडले स्पृहांचक्रेजगन्नाथोनजहारमणिंतदा स
त्राजितोजातभयोयाचयिष्यतिमांहरिः प्रसेनायददौभ्रात्रेधर्यीयंशुचिनात्वया एकदाकंठदेशेसौक्षिप्त्वातंम
णिमुत्तमं मृगयाक्रीडनार्थायगतः कृष्णेनसंयुतः अश्वारूढोऽशुचिश्वासौहतः सिंहेनतत्क्षणात् रत्नमादा

यासिंहोपिगच्छन्जांबवताहतः नीत्वास्वेविवरेरत्नंददौपुत्रायजांबवान् पुरींविवेशकृष्णोपिस्वकैः सर्वैः समावृतः
प्रसेनोयापिनायातिहतः कृष्णेननिश्चितं मणिलोभेनहाकष्टंबांधवः पापिनाहतः द्वारिकावासिनः सर्वे
जनाऊचुः परस्परं वृथापवादसंतप्तः कृष्णोपिनगराच्छनैः सहैवतैर्गतोरण्यंदृष्ट्वासिंहंनिपातितं प्रसेनंवाहनयु
तंतत्पदानुसरन्गतः ऋक्षेणनिहतंसिंहंदृष्ट्वाकृष्णश्चताद्विलं विवेशयोजनशतमंधकारंस्वतेजसा निवारयन्ददर्शा
ग्रेप्रासादंचदृढभूमिकं कुमारंजांबवंतस्य दोलायाममितद्युतिं मणिमालंत्रसाणंचददर्शभगवान्हरिः रूपयौव
नसंपन्नांकन्यांजांबवतींपुनः दोलांदोलायमानांचददर्शकमलेक्षणः समहाविस्मयंचक्रेदृष्ट्वातांचारुहासिनीं सिंहः
प्रसेनमवधीत्सिंहोजांबवताहतः सुकुमारकमारोदीस्तवह्येषस्यमंतकः मदनज्वरदाहार्तादृष्ट्वातंकमलेक्षणं उ
वाचललितंवाक्यंगम्यतांगम्यतामिति रत्नंगृहीत्वावेगेनयावच्छेतेतुजांबवान् इत्याकर्ण्यहसन्शौरिःशंखंदध्मौ
प्रतापवान् आकर्ण्यसहसोत्थायऋक्षः संयुयुधेततः तयोर्युद्धमभूद्घोरंहरिजांबवतोस्तदा द्वारिकावासिनः सर्वे
गतास्तेसप्तमेदिने मृतः कृष्णोभक्षितोवानिःसंदिग्धाविचार्यच परलोकक्रियांचक्रुः परेतस्यचतेतदा ऊनावि
शदिनंयावद्बाहुप्रहरणोविभुः युयुधेतेनऋक्षेणयुद्धकर्मणितोपितः जांबवान्प्राकृतंस्मृत्वादृष्ट्वादेवबलंमहत् जां
बवानुवाच अजेयोऽहंसुरैः सर्वैर्यक्षरक्षसदानवैः त्वयाजितोऽहंदेवेशदेवस्त्वमसिनिश्चितं जानेत्वांवैष्णवंतेजो
नान्यथाबलमीदृशं इतिप्रसाद्यदेवेशंददौमाणिक्यमुत्तमं सुतांजांबवतींचाथभार्यार्थेवरवर्णिनीं पाणिंचग्राहया
मासत्रासुदेवंचजांबवान् मणिमादायदेवोऽपिजांबवत्याचसंयुतः तद्वृत्तांतंसमाचष्टेद्वारिकावासिनांततःसत्राजितस्य
माणिक्यंदत्तवान्सदसिस्थितः मिथ्याभिशापसंशुद्धिप्राप्तवान्मधुसूदनः सत्राजितोऽपिसत्रस्तःकृष्णायप्रददौ
सुतां सत्यभामांमहाबुद्धिर्ददौसर्वगुणान्वितां शतधन्वाक्रूरमुख्यायादवादुष्टमानसाः सत्राजितेनतेवैरंचक्रु

रत्नाभिलाषिणः दुरात्माशतधन्वापिगते कृष्णेऽपिकुत्रचित सत्राजितंनिहत्याशुमणिजग्राहपापधीः कृष्णस्यपुर
तःसत्यासमाचष्टविचेष्टितं अतहंदेवहि कोपिकृष्णः कपटनायकः बलदेवपुरोवाक नमुनाचधरणीधरः हत्वास
त्राजितंहत्वामणिमादायगच्छति निहत्यशतधन्वानंगृहीत्वारत्नमावयोः ममयोग्यंचतद्रत्नंभविष्यतिनसंशय
एतच्छ्रुत्वाभयत्रस्तः शतधन्वापियादनः आहयाक्रूरनामानमाणिक्यंप्रददौचसः आरुह्यवडवांवेगान्निर्गतः
दक्षिणांदिशं रथस्थावनुगच्छेतांतदारामजनार्दनौ शतयोजनमात्रेणनमारवडवातदा पलायमानोनिहतः पदाति
स्तुपदातिना अदृष्ट्वातत्रतद्रत्नंबलदेवंपुरोवदत् तदाकर्ण्यमहारुष्टउवाचयदुनंबलः कपटीत्वसदाकृष्णनापी
लोभीसुनिश्चितं अथ स्वजनंहासिकस्त्वांबंधुःसमाश्रयेत् अनेकशपथैः कृष्णोबलदेवंप्रसादयन् सोपिधि
क्कृष्णमित्युक्तायौवैदर्भमंडलं कृष्णोपिरथमारुह्यद्वारिकांप्रययौपुनः तथैवोचुर्जनाःसर्वेनसाधीयानयंहरिःनि
ष्कासितोरत्नलोभाज्ज्येष्ठभ्राताबलोवली तच्छ्रुत्वादीनवदनःसंतप्तोनवभातिच वृथाभिशापसंतप्तोबभूवसजग
त्पतिः अक्रूरोपिविनिर्गम्यतीर्थयात्राभिपाततः काशींगत्वासुखेनासाववसत्प्रभुनीश्वरं तोपमुदपादयेतेनद्रव्य
णासौचबुद्धिमान् सुरालयगृहैश्चित्रैर्नगरंसमकल्पयत् नदुर्भिक्षनरोगाश्चनयोनचबंधनं शुचिनाधार्यतेतत्रम
णिःसूर्यस्यनिश्चितं जानन्नपिससर्वज्ञोमानुषंभावमाश्रितः लोकाचारंतथामायामज्ञानंचसमाश्रितः बंधुवैरसमुत्प
न्नंसांछनसमुपस्थितं वृथापवादबहुलंजायमानंकथंसहे इतिचिंतातुरंकृष्णंनारदः समुपस्थितः गृहीत्वात
त्कृतांपूजांसुखासीनस्ततोऽब्रवीत् नारदउवाच किमर्थंखिद्यसेदेवकिंनातेशोककारणं यथावृत्तंसमाचष्टनारदा
यतुकेशवः जानामिकारणंदेवयदर्थंलांछनंतव त्वयाभाद्रपदेशुक्लेचतुर्थ्यांचंद्रदर्शनं कृतंतेनसमुत्पन्नंलांछनं
तुदृष्टैवहि श्रीकृष्णउवाच वदनारदमेशीघ्रंकोदोषश्चंद्रदर्शने किंनयैस्तुद्वितीयायांकुर्वंतितस्यदर्शनं नारद

उवाच गणनाथेनशप्तश्चचंद्रमारूपदर्पितः त्वद्दर्शनेननराणांहिवृथानिंदाभविष्यति श्रीकृष्णउवाच किमर्थं
गणनाथेनशप्तश्चंद्रः सुधानयः इदमाख्यानकश्रेष्ठंयथावद्वक्तुमर्हसि नारदउवाच गणानामाधिपत्येनरुद्रे
णब्रह्मणाएर.अणिमामहिमाचैवगरिमालघिमातथा प्राकाम्यंशित्वमित्येवअर्थकामावसापिताभार्यार्थंप्रददौदेवो
गणेशस्यप्रजापतिः पूजयित्वागणाध्यक्षंस्तुतिंकर्तुंप्रचक्रमे ब्रह्मोवाच गजवक्त्रगणाध्यक्षलंबोदरवरप्रद विद्या
धीश्वरदेवेशसृष्टिसंहारकारक पूजयेयुर्गणाध्यक्षंमोदकाद्यैःप्रयत्नतः तेषांवैजायतेसिद्धिर्निर्विघ्ननसंशयः अस
पूज्यगणाध्यक्षंयेवांछंतिनराःसुख नतेषांजायतेसिद्धिःकल्पकोटिशतैरपि त्वद्भक्त्यातुगणाध्यक्षविष्णुःपालय
तेसदा रुद्रोपिसंहरत्याशुत्वच्छक्त्यैवसृजाम्यहं इत्थंसंस्तूयमानोसौदेवदेवोगजाननः उवाचपरमप्रीतोब्र
ह्माणंजगतांपतिम् गणेशउवाच वरंब्रूहिप्रदास्यामियत्तेमनसिवर्त्तते ब्रह्मोवाच क्रियमाणातुमेसृष्टिर्निर्वि
घ्नंजायतांप्रभो एवमस्तिवतंदेवेशोगृहीत्वामोदकान्करे सत्यलोकात्समागच्छन्स्वेच्छयागगनेशतैः चंद्रलोकं
समासाद्यरखलितोगणनायकः अथहास्यंमहच्चक्रेसोमोरूपमदान्वितः तंदृष्ट्वाकोपताम्राक्षोगणनाथःशशापह
दर्शनीयःसुरूपोहंसुंदरश्चाहमित्यथ गर्वितोसिशशांकत्वंफलंप्राप्स्यसिसत्वरं अद्यप्रभृतिलोकास्त्वांनहि
पश्यंतिपापिनं येपश्यंतिप्रमादेनत्वांनरामृगलांछनं मिथ्याभिशापसंयुक्ताभविष्यंतिहितेध्रुवं हाहाकारोम
हान्जातःश्रुत्वाशापंसुदारुणं अत्यंतम्लानवदनोजलेचंद्रःसमाविशत् कुमुदेकौमुदीनाथःस्थितस्तत्रकृतालयः
तत्रदेवर्षिगंधर्वानिराशादीनमानसाः सुरासाहंपुरोधायजग्मुस्तत्रपितामहं दृष्ट्वापितामहंदेवंशशंसुश्चंद्रचे
ष्टितं दत्तशापोगणेशेनकथयामासुरादरात् विचार्यभगवान्ब्रह्मातान्सुरानिदमब्रवीत् गणेशशापोदेवेंद्रा श
क्यतेकेनचान्यथा कर्त्तुमिंद्रेणनमयाविष्णुनापिविनिश्चितं तमेवद्रुतदेवेशंव्रजध्वंशरणंसुराः सएवशाप

मोक्षंचकरिष्यतिनसंशयः देवाऊचुः । केनोपायेनवरदोगजवक्त्रोगणेश्वरः पितामहमहाप्राज्ञतदस्माकंवदप्रभो
पितामहउवाच चतुर्थ्यांदेवदेवोऽसौपूजनीयःप्रयत्नतः कृष्णपक्षेविशेषेणनक्तंकुर्याद्व्रतंप्रियं अपूपैर्घृतसंयुक्तै
र्मोदकैःपरितोषयेत् मधुरान्नंहविष्यंचस्वयंभुंजीतवाग्यतः स्वर्णरूपंगणेशस्यदातव्यंद्विजसत्तम शक्त्याचदक्षि णां
दत्त्वावित्तशाठ्यंनकारयेत् गीष्पतिंप्रेषयामासुःसमेत्यात्रिदशेश्वराः सगत्वाकथयामासवचोब्रह्मोदितंतु तत् च ं
चक्रेततश्चन्द्रोयथोक्तंब्रह्मणापुरा आविर्बभूवभगवान्गणेशोव्रततोषितः संक्रीडमानगणनायकंचतुष्टावदृष्ट्वातु
कलानिधानः चंद्रउवाच त्वंकारणकारणकारणानांवेत्तासिवेद्यंचविभोप्रसीद प्रसीददेवेशजगन्निवासगणे
शलंबोदरवक्रतुंड ॥ १ ॥ विरिंचिनारायणपूज्यमानक्षमस्वमेगर्वकृतंचहास्यं येत्वामसंपूज्यगणेशनूनंवां
छंतिमूढाविहितार्थसिद्धिम् ॥ २ ॥ तेदैवनष्टानिभृतंचलोकेज्ञातोमयातेसकलःप्रभावः येचाप्युदासीनतरास्तु
पापास्तेयांतिपापंनरकंसदैव ३ एवंसंस्तूयमानोसौचंद्रेणाथगजाननः उवाचमेघगंभीरया
गिरा तुष्टोहंतवदास्यामिवरंब्रूहिनिशाकर ४ चंद्रउवाच लोकानांदर्शनीयोऽहंभवामिपुनरेवहि विपापोऽहंवि
शापोहंत्वत्प्रसादाद्गणेश्वर गणेशउवाच वरमन्यप्रदास्यामिनैतद्देयमयातव विघ्नेशवचनंश्रुत्वाब्रह्माद्यास्तुभय
कुलाः देवंविज्ञापयाचक्रुर्गणेशभक्तवत्सलं देवाऊचुः विशापंकुरुदेवेशप्रार्थयामोवयंतव ततोनुनीतोब्र
ह्माद्यैःप्रसन्नोभूद्गजाननः विशापमकरोच्चंद्रंकमलासनगौरवात् शुक्लपक्षेचतुर्थ्यांतुयेपश्यंतिसदैवहि मिथ्यानि
वादमायासतेप्राप्स्यंतिनसंशयः मासादौपूर्वमेवत्वांयेपश्यंतिसदाजनाः भद्रायांशुक्लपक्षस्यतेषांदोषोनजायते
तदाप्रभृतिलोकोऽयंद्वितीयायांकृतादरः चंद्रस्यदर्शनार्थायगणनाथस्यभारत भाद्रशुक्लचतुर्थ्यांतुयस्त्वपश्यति
पापधीःमिथ्याभिशापमालिन्यमावर्षंतस्यजायते पुनरेवतुपप्रच्छकलावान्गणनायकं केनोपायेनदेवेशदृष्टेभ

व सितद्वद गणेशउवाच . सदाकृष्णचतुर्थ्यांतुमोदकाद्यैःप्रपूजयेत् रोहिणीसहितंत्वांचसमभ्यर्च्यविधानतः य
थाशक्त्यातुमद्रूपंस्वर्णेनपरिकल्पित दत्त्वाद्विजायभक्तायकथांश्रुत्वाविधानतः सदातस्यकरिष्यामिसंकष्ट
स्यविनाशनं भाद्रशुक्लचतुर्थ्यांतुमृण्मयीप्रतिमाशुभा हेमाभावेतुकर्त्तव्यानानापुष्पैःप्रपूजिना ब्राह्मणान्भोजये
त्पथ्याज्यात्ययाद्यविशेषनः स्थापयेदव्रणंकुंभधान्यस्योपरिशोभित यथाशक्त्यातुमद्रूपंशातकुंभेननिर्मितं वस्त्र
द्वयसमाच्छन्नंमोदकाद्यैःप्रपूज्यमा रक्तांबरधरोमर्त्योब्रह्मचर्यरतःसुधीः रोहिणीसहितत्वांचपूजाप्राप्यचमत्पर
रजतस्यतुतेरूपंयथाशक्त्याविनिर्मितं वस्त्रंशिवप्रियायेतिगणाधिपनमोऽस्तुते गंधलंबोदरायेतिपुष्पंसिद्धिप्रद
यच धूपंगजमुखायेतिदीपंमूषकवाहिने विघ्ननाथायनैवेद्यंफलसर्वार्थसिद्धिदे तांबूलकामरूपायदक्षिणांधन
दायच इक्षुदंडैस्सदापूज्यंनाम्नाशोभाकरंशुभं विसर्जनसमारंभैःसर्वसिद्धिप्रदायकं एवंसंपूज्यविघ्नेशकथां
श्रुत्वाविधानतः मंत्रेणानेनतत्सर्वंब्राह्मणायनिवेदयेत् दानेनानेनदेवेशप्रीतोभवगणेश्वर सर्वत्रसर्वदादेवनि
र्विघ्नंकुरुसर्वदा मानोन्नतिंचराज्यंचपुत्रान्पौत्रान्प्रदेहिमे गाश्चधान्यंचवासांसिदद्यात्सर्वस्वशक्तितः दत्त्वातु
ब्राह्मणेसर्वंस्वयंभुंजीतकामतः मोदकापूपमधुरंलवणक्षारवर्जितं एवंकरोतियश्चव्रतस्याहंसर्वदाजयं सिद्धिंच
धनधान्यंचददामिविपुलांप्रजां इत्युक्त्वातर्दधेदेवोगणनाथोविनायकः तद्व्रतंकुरुकृष्णत्वंततःशुद्धिमवाप्स्यसि नं
दिकेश्वरउवाच नारदेनैवमुक्तश्चव्रतंचक्रेहरिःस्वय मिथ्यापवादसंशुद्धिंप्रापदेवोजनार्दनः येशृण्वंतितवा
ख्यानंस्यमंतकमणीयकं चंद्रस्यचरितंसर्वंतेषांदोषोनजायते भाद्रशुक्लचतुर्थ्यांतुचंद्रस्यदर्शनंक्वचित् जातं
तत्परिहारार्थंश्रोतव्यंसर्वमेवतु यदायदामनःकष्टसंदेहमुपजायते तदातदाचश्रोतव्यमाख्यानंकष्टनाशनं ए
वमुक्त्वाततोदेवोगणेशःकृष्णतोषितः यदायदापश्यतिकार्यमुद्यतनरोनरश्चापिकरोतिसद्व्रत सिद्ध्यंतिकार्याणि

समीप्सित।निकिंदुर्लभंविघ्नहरेप्रसन्ने श्रावणस्यासितेपक्षेचतुर्थ्यामेकभुग्व्रती व्रतंकुर्य्याद्गणेशस्ययावन्मा
सचतुष्टयम् इतिस्कंदपुराणेस्यमंतकोपाख्यानम् ॥ ॥ ॥ अथान्यप्रकारोक्तंसिद्धिविनायकव्रतम् ॥ तत्रप्रा
तःकृत्यादिकृत्वा ॥ सूर्य्यादिदेवताभ्योव्रतंनिवेद्य आचम्योदङ्मुखोवारिपूर्णताम्रपात्रंगृहीत्वा मासपक्षाद्युल्लि
ख्यममसर्वकर्मनिर्विघ्नसिद्धिपुत्रपौत्रसौभाग्यादिसुखसिद्ध्यर्थंसिद्धिविनायकगणपतिप्रीत्यर्थंचासिद्धिविनायकपूजा
महंकरिष्ये इतिसंकल्प्य ध्यानम् . एकदंतंशूर्पकर्णमिति आगच्छजगदाधारसुरासुरवरार्चित अनाथनाथ
सर्वज्ञगीर्वाणवरिपूजित ॥ आवाहनम् १ स्वर्णसिंहासनंदिव्यंसर्वमंगलसंयुतं त्वामहंस्थापयिष्यामिग
णाध्यक्षनमोऽस्तुते आसनम् २ गौरीसुतनमस्तेस्तुशंकरप्रियसूनवे पाद्यंगृहाणदेवेशगंधपुष्पाक्षतैःसह
पाद्यम् ३ अर्घ्यंगंधोदकंदिव्यंसर्वमंगलसंयुतं गृहाणदेवदेवेशभक्तानांवरदायक इत्यर्घ्यम् ४ गंगाजलं
समानीतंसुवर्णकलशेस्थितं आचम्यतांगणाध्यक्षसर्वविघ्नहरोभव आचमनम् ५ दधिक्षीरंघृतंचैवमधुखं
डविमिश्रितं तृप्त्यर्थंदेवदेवेशमधुपर्कंददामिते मधुपर्कं ६ स्नानंपंचामृतंदेवगृहाणवरदायक अनाथनाथसर्वज्ञस
र्वसिद्धिप्रदोभव पंचामृतस्नानं ७ सर्वतीर्थात्समुद्धृत्यगंधतोयैःकुशोदकैः फलतोयैर्जलैर्गांगैःस्नपयामिगणेश्वर शुद्ध
स्नानं ८ रक्तवस्त्रद्वयंदेवदेवांगसदृशप्रभो गणेश्वरगृहाणत्वंभक्तानांवरदायक वस्त्रं ९राजतंब्रह्मसूत्रंचकांचनंचो
त्तरीयकं गृहाणदेवदेवेशगणाध्यक्षनमोऽस्तुते यज्ञोपवीतं१०श्रीखंडचंदनंदिव्यंकर्पूरेणचसंयुतं गंधंदास्यामिदे
वेशगणाध्यक्षनमोनमः गंधं११अक्षतान्धवलान्देवगृहाणद्विरदानन सर्वदेवोत्तमस्त्वंहिचाक्षयंकुरुमेफलम्अक्षताः
१२सुगंधीनिचपुष्पाणिगृहाणद्विरदानन विनायकनमस्तेऽस्तुसुरासुरसुपूजित पुष्पं१३अथांगपूजा गणेशायनमः
पादौपूजयामि १ विघ्नराजाय जानुनी २ आखुवाहनाय ऊरू ॥ ३ ॥ हेरंबाय कटिंपू-
॥ ४ ॥ गणाधिपाय नाभिं५लंबोदराय उदरं ॥ ६ ॥ गणनाथायहृदयं ॥ ७ ॥ गुहाग्रजाय

स्कंधौपू० ८ स्थूलकठायकंठंपू० ९ परशुहस्तायहस्तान्० १० गजवक्रायवक्रं० ११ विघ्नराजाय नेत्राणि०१२ सर्वेश्वरायशिरः पूजयामि १३ अथपत्रिकापूजा सुमुखायनमः साचीपत्रंसमर्पयामि १ गणाधिपायभृंगराजपत्रं० २उमापुत्राय० विल्वपत्र० ३ गजाननाय०दूर्वापत्रं० ४ लंबोदराय वदरीपत्रं० ५ हरसूनवे धत्तूरपत्र० ६ गजकर्णाय तुलसीपत्रं० ७ गुहाग्रजाय अपामार्गपत्रं० ८ एकदंताय कंटकारिपत्रं० ९ वक्रतुंडाय शमीपत्र०१० विकटाय करवीरपत्रं०११ इभतुंडाय अश्मंतकपत्रं० ॥ १२ ॥ कपिलाय अर्जुनपत्रं॥१३॥ भिन्नदंताय० विष्णुक्रांताय० ॥१४ पत्नीहीनाय दाडिमीपत्र० १५ वटवेदेवदारुपत्रं० ॥ १६॥ भालचंद्राय मरुवकपत्रं० ॥ १७॥सूर्पकर्णाय जातीपत्र० ॥ १८ ॥सुराग्रजाय गांधारीपत्रंस० ॥ १९ ॥ सिद्धिविनायकाय केतकीपत्रंसमर्पयामिनमः ॥ २० ॥ इत्येकविंशतिपत्राणिसमर्पयामि ॥ २१ ॥ अथदूर्वापूजा दूर्वायुग्मंगृहीत्वातुगंधपुष्पाक्षतैर्युतं पूजयेत्सिद्धिविघ्नेशं प्रत्येकंसर्वनामभिः एकंसमर्पयामीतिशेषः गणाधिपायनमः दूर्वायुग्मं ॥ १ ॥ उमापुत्रायनमः २ अघनाशिनेनमः३ विनायकायनमः ४ ईशपुत्रायनमः ५ सर्वसिद्धिप्रदायकायनमः ६ एकदंतायनमः ॥ ७ ॥ इभवक्त्रायनमः ॥ ८ ॥ मूषकवाहनायनमः ॥ ९ ॥ कुमारगुरवेनमः १० सर्वनामभिरेकंदूर्वादलंसमर्पयामिनमः २१ दशांगगुग्गुलोधूपंसुगंधिचमनोहरं गृहाणेश्वरसर्वज्ञउमापुत्रनमोऽस्तुते धूपं सर्वज्ञसर्वलोकेशसर्वपातिमिरापह गृहाणमंगलंदीपरुद्रप्रियनमोस्तुते दीपं नैवेद्यंगृह्यतांदेवभक्तिमेह्यचलांकुरु ईप्सितंमेवरंदेहिपरत्रचपरांगतिं नैवेद्यं १६ तांबूलंगृह्यतांदेवनागवल्लीदलैर्युतं कर्पूरेणचसंयुक्तंदेवतानांपराप्रियम् तांबूलं १७इदंफलमिति १८ हिरण्यगर्भस्थमितिदक्षिणा ॥ १९ ॥ विघ्नेश्वरविशालाक्षसर्वाभीष्टफलप्रद प्रदक्षिणंकरोमित्वांसर्वान्का

मान्प्रयच्छमे प्रदक्षिणा २० नमस्कृतोसिदेवेशसर्वविघ्नहरोभव ईप्सितंमेवरंदेहिनमस्तेभक्तवत्सल दे
वदेवजगन्नाथभक्तानांवरदायक अविघ्नंकुरुमेदेवसर्वकार्य्येषुसर्वदा नमस्कारः विनायकनमस्तेस्तुविघ्नेशसु
रपूजित इप्सितंमेवरंदेहिनमस्तेकरुणाकर प्रार्थनामंत्रः मल्लिकामालतीपुष्पनानाचंपकसंयुतं पुष्पांज
लिंगृहाणेमंपादांबुजयुगार्पितम्॥ गणानांत्वेतिमंत्रेणवा॥गणाधिपनमस्तेस्तुसततंमोदकप्रिय अविघ्नंकुरुमेदेवसर्व
कार्येषुसर्वदा दाताविघ्नेश्वरोदेवोग्रहीताचसाविघ्नराट् तस्मादिदंमयादत्तंसंपूर्णव्रतमस्तुमे गणेशःप्रतिगृह्णाति
गणेशोवैददातिच दीयतेगणनाथायप्रीयतांमेगणाधिपः सौख्यंसौमनसंनित्यंकरोतुगणनायकः इतिमंत्रंस
मुच्चार्य्यदशदद्याद्द्विजातये इतिनैवेद्यदानम् ॥ विनायकस्यप्रतिमावस्त्रयुग्मसमन्विता ब्राह्मणायप्रदास्यामि
सर्वविघ्नोपशांतये इतिप्रतिमादानम् ॥ प्रार्थना विघ्नानिनाशमायांतुसर्वाणिसुरनायक कार्याणिसिद्धिमा
यांतुपूजितेत्वयिधातरि न्यूनातिरिक्तानिपरिस्फुटानियानीहकर्माणिमयाकृतानि क्षम्यानिसर्वाणिशुभप्रदायप्र
याहितुष्टिपुनरागमाय अथसंकष्टहरणचतुर्थ्युक्तप्रकारेणरोहिणीसहितचंद्रपूजांकुर्य्यात् अथकथा ऋषय
ऊचुः ॥ निर्विघ्नेनतुकार्य्याणिकथंसिद्ध्यंतिसूतज अर्थसिद्धिकरंन्हणांपुत्रसौभाग्यसंपदंदंपत्योःकलहेचैकथं
बंधुभेदेतथान्टणां उदासीनेपुलोकेपुकथंसंमुखताभवेत्. विद्यारंभेतथान्हणांवाणिज्यार्थेकृपौतथा नृपतेः पर
चक्रस्यजयसिद्धिकरीनृणां सूतउवाच सन्नद्वयोः पुराविप्राः कुरुपांडवसेनयोः पृष्टवान्देवकीपुत्रंधर्मपुत्रो
युधिष्ठिरः ॥ ॥ युधिष्ठिरउवाच निर्विघ्नेनजयोह्यपांवददेवकथंभवेत् कांदेवतांनमस्कृत्यसम्यक्राज्यंल
भेमहि श्रीकृष्णउवाच पूजयस्वगणाध्यक्षंविघ्नेशंसिद्धिदायकं तस्मिन्संपूजितेराजन्सर्वान्कामानवाप्स्य
सि युधिष्ठिरउवाच देवकेनविधानेनपूजनीयोगणाधिपः पूजितस्तुतिथौकस्यांसिद्धिदोगणपोभवेत् श्रीकृष्णउवाच

गजवक्त्रश्चतुर्थ्यांतुसदापूज्योनराधिप यदाचोत्पद्यतेभक्तिस्तदापूज्योगणेश्वरः शुक्लपक्षेचतुर्थ्यांतुमासि
भाद्रपदेतथा प्रातःशुक्लतिलैःस्नात्वामध्याह्नेपूजयेन्नृप निष्कमात्रसुवर्णेन तदर्द्धेनवापुनः स्वशक्त्या
गणनाथस्यस्वर्णरौप्यमयाकृति अथव मृण्मयींकुर्याद्वित्तशाठ्यविवर्जित· कृत्वापूजाप्रयत्नेनस्नाप्यपंचामृतैःशु
भैः वस्त्रंसर्वप्रदेरक्तयुग्मदद्यात्सुभावित गणाध्यक्षेतिनाम्नावैगंधंदद्याच्चभक्तित· विनायकेतिपुष्पाणिधूपंचोमासु
तेतिच दीपंरुद्रप्रियायेतिनैवेद्यंविघ्ननाशिने ततोदूर्वांकुरान्गृह्य विंशतिंचैकमेवहि पूजयेत्तुप्रयत्नेन एभिर्ना
मपदैः पृथक् गणाधिपनमस्तेस्तु उमापुत्राघनाशन विनायकहरपुत्रेति सर्वसिद्धिप्रदायक एकदंतेभवक्त्रे
तितथामूषकवाहन कुमारगुरवेतुभ्य पूजनीयः प्रयत्नतः दूर्वायुग्मगृहीत्वातु गंधयुक्तप्रपूजयेत् एकैकेनतु
नाम्नावैपूजाचैकेनसर्वतः एकेनदूर्वांकुरेणसर्वनामभिःपूजाकार्या दत्वैकसर्वनामभिरितिवार मित्रोदये तथैकविं
शतिगृह्यमोदकान्घृतपाचितान् स्थापयित्वागणाध्यक्षसमीपेकुरुनंदन दशविप्रायदातव्याः स्वयंचाद्यात्तथा
दशएकगणाधिपेदत्वानैवेद्यचनृपोत्तम गणेश प्रतिगृह्णातिगणेशोवैददातिच दीयतेगणनाथायप्रीयतांमेगणा
धिपः सौख्यंसौमनसनित्यंकरोतुगणनायक इतिमंत्रसमुच्चार्यदशदद्याद्द्विजातये गुरुंव्रतोपदेष्टारमलंकृत्यप्रय
त्नतः दद्याच्चदक्षिणांसम्यक्यथाविभवविस्तरं जातरूपमयंदेवंब्राह्मणायनिवेदयेत् कृत्वानैमित्तिकंकर्मपूज
येदिष्टदेवतां ततःप्रार्थना विघ्नानिनाशमयांतुसर्वाणिसुरनायक कार्यंमेसिद्धिमायातुपूजितेत्वयिधातरिविप्रा
यभोजनंदद्याद्भुंजीयात्तैलवर्जितं एवकृतधर्मराजगणनाथस्यपूजने विजयस्तेभवेन्नित्यंसत्यंसत्यमयोदितं त्रिपु
रदग्धुकामेनपूजितःशूलपाणिना शक्रेणपूजितःपूर्वंतथावृत्रवधेनृप रामेणाराधित·पूर्वंसीतामन्वेषतापुरा दृष्टा
सीतामहाभागवानरेणहनूमता भगीरथेनतद्वच्चगंगामानायतापुनश्चामृतोत्पादनार्थाय॰थादेवासुरैरपि अमृता

हरणात्पूर्वंवेनतेयेनपत्रिणा -आराधितोगणाध्यक्षोह्यमृतंनुहृतंबलात् यदापूर्वंतुदैत्येनहृतोरुक्मिणिनंदनः आराधितोमयातद्वत्रुक्मिण्यासहितेनचकुष्ठव्याधियुतेनाथसांबेनारा धितःपुरा जयकामस्तथात्वंहितमाराधयशांकरिं प्राप्स्यसित्वंनिजंराज्यंजित्वाशत्रुगणान्रणे—सिध्यंतिसर्वकार्याणिनात्रकार्य्याविचारणा सूतउवाच एवमुक्तस्तुकृष्णेनसानुजःपांडुनंदनः -पूजयामासदेवेशंपुत्रंत्रिपुरघातिनः ''शत्रुसंघान्निहत्याशुप्राप्तवान्राज्यमोजसा सिद्ध्यंतिसर्वकार्य्याणिमनसाचिंतितान्यपि विद्यारंभपूजनीयोविद्यालाभोभवेन्नृणां विवाहेक्रियमाणेतुपूज्यश्चासौविनायकः सिद्ध्यंतिसर्वकर्माणिअर्थसिद्धिर्भवेन्नृणां कृषिप्रारंभसमयेकार्षिकेणविनायकः पूजनीयःप्रयत्नेनधान्यंतस्याक्षयंभवेत् व्युष्टिकाभिस्तथाशूद्रैःपूजनीयोगणाधिपः विद्याकामोलभेद्विद्यांधनकामोलभेद्धनं जयंचजयकामश्चपुत्रार्थीलभतेसुत –पतिकामाचभर्त्तारंसौभाग्यंतुसुवासिनी विधवापूजयित्वातुवैधव्यंनाप्नुयात्पुनः यंयंचिंतयतेकामंतंतंप्राप्नोतिलीलया '-वैष्णवादिपुदीक्षासुआदौपूज्योगणाधिपः यस्मिन्संपूजितेविष्णुरीशोभानुस्तथाह्यमा हव्यवाहमुखादेवाःपूजितास्युर्नसंशयः चंडिकाद्यामातृगणाःपरितुष्टाभवंतिच यस्मिन्संपूजितेभक्त्याविप्राःसिद्धिविनायके यइदंशृणुयान्नित्यंश्रावयेद्वापिभक्तितः सिद्ध्यंतिसर्वकार्याणिसिद्धिदस्यप्रसादतः ॥ ॥ इतिस्कंदपुराणेसिद्धिविनायकव्रतम् ॥ इयमेवचतुर्थीशिवानाम्नी ॥ ॥ सुमंतुरुवाच ॥ शिवाशांतासुखाराजन्चतुर्थीत्रिविधामता। 'मासिभाद्रपदेशुक्लाशिवालोकेषुपूजिता माघशुक्लास्मृताशांताभौमवारेसुखास्मृता तस्यांस्नानंतथादानमुपवासोजपस्तथा क्रियमाणंशतगुणंप्रसादाद्दंतिनोनृप दंतिनोविनायकस्येत्यर्थः गुडलवणघृतानांदानंशुभकरंस्मृतं गुडापूपैस्तथाविप्रपुण्यंब्राह्मणभोजनं चतुर्थ्यांनरशार्दूलपूजनीयाःसदास्त्रियः गुडैर्लवणपूजाभिः स्वस्तृःश्वश्रूश्चमातरः ताःसर्वाःसुभगाःसंवैविघ्नेशस्यानु

मोदनात्कन्यकातुविशेषेणविधिनानेनपूजयेत् ॥ इतिभविष्योत्तरोक्तशिवाचतुर्थीव्रतम् ॥ ॥ अस्यामेवह र्षणीनाम्नीपार्वतीपूज्या तत्रस्मृतिः ॥ भाद्रशुक्लचतुर्थ्यांतुहर्षणीनामयामता पूजयेत्पार्वतींतस्यांसौभाग्यं नविहन्यते ॥ अथभाद्रशुक्लपंचम्यांनागपूजा ॥ अत्रपंचमीपरयुताग्राह्या तदुक्तंचमत्कारचिंतामणौ पंचमीनागपूजायांग्राह्याषष्ठीसमन्विता तस्यांतुतुषितानागाइतरायचतुर्थिकेतिवचनात्सूर्योदययुतांग्राह्येत्यर्थः अ भातखंडे ॥ शिवउवाच ॥ तथाभाद्रपदेमासिपंचम्यांश्रद्धयान्वितः यस्त्वालेख्यनरोनागान्नीलपीतादिवर्ण कैः कुरुकुल्यातथावीथ्यांस्वगृहेविलिखेद्बुधः कुरुकुल्यामंत्रेण ॥ ॐकुरुकुल्येहुंफट्स्वाहा पूजयेद्गंधपु ष्पैश्चपयसापायसेनच तस्यसंतुष्टिमायांतिपन्नगास्तक्षकादयः आसप्तमात्कुलात्तस्यनभयंनागतोभवेत् अ आयंप्रोच्यतेमंत्रः सर्वासुखनिषेधकः यस्मिन्प्रजप्तमात्रेतुनविषंक्रमतेतदा इत्येवंकथितंदेविनागव्रतमनुत्तमं यच्छ्रुत्वाचपठित्वाचमुक्तःस्यात्सर्वपातकैः नागाश्चात्र वासुकि तक्षक कालिय मणिभद्र ऐरावत कर्कोटक धनंजय धृतराष्ट्रसंज्ञाः इत्यालेख्यापंचमी अत्रैवनागदष्टव्रतमुक्तं सुमंतुरुवाच ॥ नागदष्टोनरोराजन् प्राप्यमृत्युंव्रजत्यधः अधोगत्वाभवेत्सर्पोनिर्विषोनात्रसंशयः ॥ शतानीकउवाच ॥ नागदष्टःपितायस्य भ्रातावादुहिताथवा मातापुत्रोथवाभार्याकर्तव्यंतदवदस्वमे मोक्षायतस्यविप्रेंद्रदानंव्रतमुपोषणं ब्रूहिमेद्विज शार्दूलयेनतत्करोम्यहं सुमंतुरुवाच उपोष्यपंचमीसम्यक्नागानांबलवर्द्धिनी त्वमेकमेवतावच्च विधानंशृ णुभारत उपोष्येतिदिवसेभोजनाभावस्यांतेनक्तव्रतमित्यग्रेतथोक्तेः मासिभाद्रपदेचैवशुक्लपक्षेतुपंचमी सर्व पुण्यतमाप्रोक्ताग्राह्यासौगत्यकाम्यया चतुर्थ्यामेकभक्तंचतस्यांनक्तंप्रकीर्तितं तस्यांपंचम्यामित्यर्थः कृत्वारोप्य मपनागमथवाकलधौतजं अथदारुमयंभव्यं मृण्मयंवाथभक्तितः पंचम्यामर्चयेद्भक्त्यानागंपंचफणंतथा

करवीरैस्तथापद्मैर्जातिपुष्पैःसुगंधिभिः गंधपुष्पैः सुनैवेद्यैः स्नापयेत्क्षीरादिभिर्नृप ब्राह्मणान्भोजयेत्पश्चाद्घृतपायसमोदकैः अनंतंवासुकिंशंखंपद्मंकंबलमेवच धृतराष्ट्रंशंखपालंकालियंतक्षकंतथा पिंगलंचतथानागमासिमासिप्रपूजयेत् पूजयित्वाप्रयत्नेनपंचम्यांनक्तभुग्भवेत् एवंद्वादशकृत्वावैमासिभाद्रपदेनृप वत्सरांतेयथाशक्त्यामहाभोज्यंतुकारयेत् ब्राह्मणानांयतीनांचनागानुद्दिश्यभक्तितः इतिहासविदेनागं कांचनंरत्नचित्रितंगांचदद्यात्सवत्सांवैसर्वोपस्करसंयुतां दानकालेपठेदेतत्स्मरन्नारायणंविभुं सर्वगंसर्वधातारमनंतमपराजितं येकेचिन्मत्कुलेसर्पा दंष्टाःप्राप्ताअधोगतिं व्रतेनानेनगोविंदमुक्तिभाजोभवंतुते इत्युच्चार्घ्याक्षतैर्युक्तांसितचंदनामिश्रितं वासुदेवाग्रतोभूप तोयंतोयेषुनिक्षिपेत् अनेनविधिनासर्वेयेमरिष्यंतियेमृताः सर्पतस्तेभियास्यंतिस्वर्गतिंनृपसत्तम कृत्वासर्वान्समुद्धृत्यकुलजान्कुलनंदन प्रयांतिविष्णुसान्निध्यंसेव्यमानोप्सरोगणैः वित्तशाठ्यविहीनोयःसर्वमेतत्फलंलभेत् नकेनभुक्तिसंहिताःकिलपंचमीषु येपूजयंतिसुभगाः कुसुमोपहारैः तेषांगृहेत्वभयदाहिभवंतिसर्पादर्पान्विताम‍णिमयूखविभासितांगाः इतिदष्टपंचमीव्रतं अस्यामेवभाद्रशुक्लपंचम्यां ऋषिपंचमीव्रतं तत्रमध्यान्हव्यापिनीपंचमीग्राह्या पूजाव्रतेषुसर्वेषुमध्यान्हव्यापिनीतिथिरितिहारीतोक्तेः दिनद्वयेतथात्वेहेमाद्रिमतेपरा पंचमीतुप्रकर्तव्यापष्ठीयुक्तातुनारदेतिवाक्यात् सितापरयुतास्तस्यादसितापूर्वसंयुतेतिदीपिकोक्तेश्चशुक्लपक्षेतिथिर्ग्राह्यायस्यामभ्युदितोरविरितिवचनाच्चऋषिपंचमीषष्ठीयुतेतिदिवोदासीयेपि माधवमदनरत्नादिमतेतुपूर्वासर्वत्रपंचमीपूर्वेत्युक्तेः निर्णयासिंधौकल्पतरुरत्नावल्यामप्येवं अत्रऋषिपूजनमुक्तंनारदीये भाद्रस्यशुक्लपंचम्यांवेदिकाकारयेन्मुदा गोमयेनोपलिप्याथकृत्वापुष्पोपशोभितां तत्रास्तीर्यकुशान्विप्रऋषीन्सप्तसमर्चयेत् गंधैश्वविविधैः पुष्पैर्धूपदीपैः सुशोभनैः कश्यपोत्रिर्भरद्वाजोविश्वा

मित्रोथगौतम जमदग्निर्वसिष्ठश्चसप्तैतेऋषयः स्मृताः एतेभ्योचैवविधिवत्कल्पयित्वाविधानतः नैवेद्यकल्पये
द्विद्वान्श्यामाकाद्यैरकृष्टजैः तान्निवद्यविसृज्यैतान्स्वयंचाद्यात्तदेवहि अनेनविधिनासप्तवर्षाणिप्रतिवत्सर
कृत्वातनिवचरेयदाचार्यांन्सप्तवैदिकान् प्रतिमासप्तकुर्वीतसुवर्णेनस्वशक्तितः जटिलाःसाक्षसूत्राश्चकमंडलु
समन्विताः सस्थाप्यकलशेष्वेतान्ताम्रेषुमृण्मयेषुवा स्नापयेद्विधिवद्भक्त्याष्टथक्पचामृतैरपि उपचारैः
षोडश भिस्ततःसंपूज्यभक्तितः अर्घ्यंदत्वाततोहृत्वास्तिलव्रीहियवादिभिः सहस्तोमाइतिऋचानाममंत्रै
स्तुवाष्टथक् पुण्यैर्मंत्रैस्तथैवान्यैर्हुत्वापूर्णाहुतिंचरेत् ततस्तुसप्तगादद्यादस्त्रालंकारसंयुताआचार्यंपूजयेच्चैववस्त्रा
लंकारभूषणैः अनुज्ञयागुरोः पश्चान्मूर्तीर्विप्रेषुचार्पयेत् भोजयित्वाचतान्भक्त्याप्रणिपत्याविसर्जयेत् ततः
शिष्टै सहस्नातःस्वयंब्राह्मणशेषतः एवंकृत्वाव्रतंसांगंभोगान्भुक्त्वावांछितान् सप्तर्षीणांप्रसादेनाविमानवर
गोभवेत् ब्रह्मपुराणेपि नभस्यशुक्लपक्षेतुयावैभवतिपचमी नद्यादिकेनदास्नात्वाकृत्वानियममेवच ब्राह्मणी
क्षत्रियावैश्याशूद्राचापिवरानने कृत्वानैमित्तिकंकर्मगत्वानिजगृहंपुनः वेदींसम्यक्प्रकुर्वीतगोमयेनोपलेपि
तां रंगवल्लीसमायुक्तांश्वेतपुष्पोपशोभितां तत्रसप्तऋषीन्दिव्यान्भक्तियुक्तःप्रपूजयेत् गंधैश्चविविधैःपुष्पै
र्धूपदीपैः सुशोभनैः ततोनैवेद्यसपन्नमर्घंदद्याच्छुभैःफलैः तत्रार्घ्यमंत्राः कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथ
गौतमः जमदग्निर्वसिष्ठश्चअरुंधत्यासमान्विताः गृहाणार्घ्यंमयादत्ततुष्टाभवंतुमेसदेति एवंपूजांविनिर्वर्त्य
ऋषीन्ध्यात्वासमाहितः अकृष्टपृथ्वीसजातशाकाहारप्रकल्पयेत् शयीतब्रह्मचर्येणऋषीन्ध्यात्वासमा
हितः अनेनविधिनासप्तवेदवेदांगपारगानित्यादिसर्वत्रपाठः अनुज्ञयागुरोः पश्चा द्ब्राह्मणेभ्योनिवेदयेत्
प्रीतिभावसमायुक्तोभोजयित्वायथाविधि अनेनविधिनासम्यग्व्रतमेतत्समाचरेत् सर्वव्रतेषुयत्पुण्यसर्वतीर्थेषु

यत्फलं सर्वदानेषु दत्तेषु तद्दत्तत्फलमाप्नुयात् ॥ ॥ इति नारदीये ब्रह्मपुराणे चऋषिपंचमीव्रतविधानम्
अथकथा हेमाद्रौ ब्रह्मांडपुराणे सिताश्व उवाच ॥ श्रुतानि देवदेवेश व्रतानि सुवहूनि च ॥ सांप्र
तमे समाचक्ष्व व्रतं पापप्रणाशनम् ॥ ब्रह्मोवाच ॥ शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतं ऋषिपंचमीति वि
ख्यातं सर्वपापहरं परं येन चीर्णेन राजेंद्र नरकं नैव पश्यति अत्रैवोदाहरंतीममितिहासं पुरातनं वैदिशे भूद्द्विज
वर उत्तंगो नाम नामतः तस्य भार्य्या सुशीलेति पातिव्रतपरायणा अस्या अपत्ययुगलं पुत्रो हि मुविभीषणः अधीत
वान्सुतस्तस्य वेदान्सांगपदक्रमान् समानेन कुलीनेन सुता चापि विवाहिता विवाहितैव सा दैवाद्वैधव्यं प्राप सत्तमा
सशीलं पालयंती सा आस्ते निजा पितुर्गृहे तस्या दुःखेन संतप्तः सुतं संस्थाप्य वेश्मनि गंगातीरे वनं प्राप्तः सकलत्र
स्तया सह स तत्राध्यापयामास शिष्यान्वेदं द्विजोत्तमः सुता च कुरुते तत्र पितुः शुश्रूषणं परं पितुः शुश्रूषणं कृत्वा परिश्रां
ता कदाचन निशीथे किल सा सुप्ता कृमिराशिरजायत तां तथाविधां दृष्ट्वा विवस्त्रां प्रस्तरस्थितां शिष्या निवे
दयामासुस्तन्मातुः करुणां स्थिताः न जानीमो वयं किंचिद्देवी साध्वी तथाविधा कृमिराशिमयी जाता मातः सपदि
दृश्यते वज्रपातसदृक्षं तत् श्रुत्वा शिष्यैरुदीरितं संभ्रांतमानसा शीघ्रं तत्समीपमुपागता सुतां तथाविधां दृष्ट्वा वि
ललाप सुदुःखिता उरश्च ताडयामास सुतरां मोहमाप च क्षणेन प्राप्य चैतन्यमुत्थाप्य परिमृज्य च समाल
भ्य च बाहुभ्यां नीत्वा तातपितुरतिकं स्वामिन्कथय मे साध्वी केन दुष्कृतकर्मणा निशीथे संप्रसुप्तेयं जायते कृमिसं
कुला एतच्छ्रुत्वा ततो वाक्यं मुनिर्ध्यानपरायणः ज्ञात्वा निवेदयामास तस्याः प्राग्जन्मचेष्टितं ॥ ऋषिरुवाच
प्रागियं सप्तमे तीते जन्मनि ब्राह्मणी ह्यभूत् नोत्ससार स्वभांडेभ्यः संजाता च रजस्वला अस्याः कृतेन पापेन जा

पतेकर्मिवद्दृः रजस्वलायाःपापेन युक्ताभवतिसानघे प्रथमेहनिचंडालीद्वितीयेब्रह्मघातिनी तृतीयेरजकी
प्रोक्ताचतुर्थेऽनिशुध्यति तयैतथासखीसंगाद्व्रतंदृष्ट्वावमानितं दृढव्रतप्रभावेणजाताद्विजकुलेमले अवमाना
द्व्रतस्यास्यकर्मिराशिमयीतुसा एतत्तेकथितंसर्वकारणंदुष्कृतस्यच सुशीलोवाच ॥ दर्शनादपियस्तस्या
विप्राणांनिर्मलेकुले जन्मयुष्मद्विधानांहि जायतेब्रह्मतेजसा अवमानात्प्रजायंतेविग्रहेक्व
निराशयः महाश्चर्यकरंनाथतद्व्रतंकथयस्वमे ॥ ऋषिरुवाच ॥ सुशीलेशृणुतत्सम्यग्व्र
तानामुत्तमंव्रतं येनचीर्णेनसहसापापादस्मात्प्रमुच्यते दुःखत्रयाभिघातश्च जायतेनात्रसं
शयः कल्याणानिप्रवर्द्धंतेसंपदश्चानिरापदः नभस्येशुक्लपक्षेतुयदाभवतिपंचमी नद्यादिषुतदास्नानंकृ
त्वानियममेवच विधायनित्यकर्माणिगत्वाद्वारवतीमृषीन् द्वारवतीमग्निहोत्रशालां स्नापयेद्विधिवद्भक्तयापंचामृ
तरसैः शुभैः चंदनागुरुकर्पूरैर्विलिप्यचसुगंधिभिः पूजयेद्विविधैः पुष्पैर्गंधधूपादिदीपकैः समाच्छाद्यशुभैर्वस्त्रैः
सोपवीतैर्यथाविधिः ततोनैवेद्यसंपन्नमर्घ्यंदद्याच्छुभैःफलैः अर्घ्यमंत्रः जमदग्निभरद्वाजइतिश्रोतव्यमिदमाख्यानं
शाकाहारंप्रकल्पयेत् स्थातव्यंब्रह्मचर्येणऋषिध्यानपरायणैः अनेनविधिनासम्यग्व्रतमेतत्समाचरेत् त
स्यापिजायतेपुण्यंतच्छृणुष्वसमाहिता सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतदस्यव्रतमात्रतः
कुरुतेयाव्रतंचैतत्सानारीसुखभागिनी रूपलावण्यसंयुक्तापुत्रपौत्रादिसंयुता इहलोकेसदैवस्यात्परत्राप्यक्ष
यागतिः व्रतस्यास्यप्रभावेणजातिंस्मरतिपौर्विकीं ॥ इतिहेमाद्रौब्रह्मांडपुराणेऋषिपंचमीव्रतकथा ॥ ॥
अथपूजाविधिः ॥ ॐमासपक्षाद्युल्लिख्यमयाज्ञानतोऽज्ञानतोवारजस्वलावस्थायांभांडादिसंपर्कजनितदोषपरि
हारार्थंसाक्षोकृसमस्तफलप्राप्त्यर्थंऋषिपंचमीव्रतपूजनमहंकरिष्ये इतिसंकल्प्य पीठेकलशेवादर्भमयान्[illegible]

संहितान्सप्तऋषीन्पूजयेत् तत्रमंत्रः मूर्त्तंब्रह्मण्यदेवस्यब्राह्मणोनिजमुत्तमं । सूर्यकोटिप्रतीकाशंऋषिवृंदं विचिंतयेत् इतिध्यानं आगच्छंतुमहाभागाश्चतुर्वेदस्वरूपिणः यावद्व्रतमहंकुर्वेकृपयाभवतांप्रभो आवाहनम् ऋग्यजुः सामवेदानांस्वरूपेभ्योनमोनमः पुराणपुरुषेभ्योहिदेवर्षिभ्योनमोनमः । आसनं गंधपुष्पाक्षतैर्युक्तं पाद्यंगृह्णंतुभोद्विजाः प्रसादंकुरुतप्रीत्या तुष्टाःसंतुसदामम पाद्यम् नभस्येशुक्लपंचम्यामर्चिता ऋषिसत्तमाः दहंतुपापंमेसर्वमर्घ्यंगृह्णंतुवोनमः अर्घ्यं लोकानांसृष्टिकर्तारोयूयंसर्वेतपोधनाः नमोवोधर्मविज्ञेभ्योमहर्षिभ्योनमोनमः आचमनं मंदाकिनीगौतमीचयमुनाचसरस्वती गोमतीनर्मदातापी ताभ्यः स्नानीयमाहृतं स्नानं सर्वेनिस्यंतपोनिष्ठाब्रह्मज्ञाः सत्यवादिनः वस्त्राणिप्रतिगृह्णंतुमुक्तिंयच्छंतुसर्वदा वस्त्रं यज्ञोपवीतपरमंपवित्रमितियज्ञोपवीतं कुंकुमागुरुकर्पूरसुगंधैर्मिश्रितंशुभं गंधाढ्यंचंदनंदिव्यंगृह्णंतुऋषिसत्तमाः चंदनं रंजिताःकुंकुमाद्येनअक्षताश्चसुशोभनाः गृह्णंतुममसंतुष्टाःप्रसन्नाऋषिसत्तमाः अक्षताः माल्यानिवकुलादीनिमालत्यादीनिवैद्विजाःमयाहृतानि पुष्पाणिपूजार्थंप्रतिगृह्यतां पुष्पाणि वनस्पतिरसोधूपोगंधाढ्यःसुमनोहरः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां धूपः आज्यंचवर्तिसंयुक्तंवान्हिनायोजितंमया दीपंगृह्णंतुमुनयस्त्रैलोक्यतिमिरापहं दीप नानापक्वान्नसंयुक्तंरसैःषड्भिःसमन्वितं नैवेद्यमृषयःसर्वेगृह्णंतुवरदायकाः नैवेद्यं लोकानांसृष्टिकर्तारोयूयंसर्वेतपोधनाः नमोवोधर्मविज्ञेभ्योमहर्षिभ्योनमोनम आचमनं पूगीफलंमहादिव्यंनागवल्लीदलैर्युतं कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं इदंफलमितिफलं हिरण्यगर्भस्थमितिदक्षिणा यानिकानिचपापानीतिप्रदक्षिणा वायनंफलसंयुक्तंव्रतसंपूर्तिहेतवे भवंतःप्रतिगृह्णंतुज्योतीरूपास्तपोधनाः वायनं न्यूनातिरिक्तकर्माणिमयायानिकृतानिच क्षमध्वंतानिसर्वाणियूयंसर्वेतपोधना इतिप्रार्थना इतिपूजा ॥ ॥

अथकथा युधिष्ठिरउवाच श्रुतानिदेवदेवेशव्रतानिसुबहूनिच सांप्रतंमेसमाचक्ष्व व्रतंपापप्रणाशनं श्रीकृष्णउवाच अथान्यच्चापिराजेंद्रऋषिपंचमिसंज्ञिता कथयिष्यामियांकृत्वानारीपापात्प्रमुच्यते युधिष्ठिरउवाच कीदृशीपंचमीकृष्णकथचऋषिसंज्ञिता पातकान्मुच्यतेकस्मान्नारीयदुकुलोद्भव श्रीकृष्णउवाच अज्ञानाज्ज्ञानतोवापियास्त्रीजातारजस्वला दुष्टास्पृशतिभांडानिगृहकर्माणिसंस्थिताप्राप्नोतिसमहापापंसर्ववर्णसमुद्भवा शृणुष्वकारणंयस्माद्वर्जनीयारजस्वला प्रोत्साप्यागृहतश्चापिचातुर्वर्ण्येनभारत ब्रह्महत्यापुराशक्रोवृत्रंहत्वाह्यवाप्तवान् तयावैप्रीडितोराजन् पीडितोवृत्रहापुनः ब्रह्माणसमुपागच्छदात्मनःशुद्धिकारणात् शुद्धिंशक्रस्यराजेंद्रप्रहृष्टेनांतरात्मना विभज्यब्रह्महत्यांतुचतुर्धाचचतुर्मुखः प्राक्षिपत्राजशार्दूलचतुःस्थानेषुवैतदा वह्नौप्रथमजातासुज्वालासुचनदीषुच पर्वतेषुचराजेंद्रनारीरजसिचैवहि अतोरजस्वलानारीप्रोत्साप्याचप्रयत्नतः ब्रह्मणःशासनात्पार्थचातुर्वर्ण्येनसर्वदा प्रथमेहनिचंडालीद्वितीयेब्रह्मघातिनी तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुद्ध्यति अज्ञानाद्ज्ञानतोवापिजातसंपर्कपातक तत्पापसंक्षयार्थंहिकार्य्येयमृषिपंचमी सर्वपापप्रशमनीसर्वोपद्रवनाशिनी ब्रह्मक्षत्रियविट्शूद्रैःस्त्रीभिःकार्य्याविशेषतः ॥ श्रीकृष्णउवाच॥ अथान्यदपिवक्ष्यामितवराजन्कथानकं पुराकृतयुगेराजन्विदर्भायांबभूवह श्येनजिन्नामराजेंद्रश्चतुर्वर्णानुपालकः तस्यदेशेचसद्विप्रोवेदैर्वेदांगपारगः सुमित्रोनामराजेंद्रसर्वभूतहितेरतः कृषिवृत्त्यासमासीनःकुटुंबपरिपालकः तस्यभार्यासुसाध्वीचपतिशुश्रूषणेरता जयश्रीर्नामविख्यातावहुभृत्यसुहृज्जना क्षेत्रादिषुरतासाध्वीव्याकुलीकृतमानसा एकदास्वात्मनिप्राप्तमृतुकालव्यलोकयत् रजस्वलापिसानारीगृहकर्मचकारह भांडानिसास्पृशद्राजन्नतोप्राप्तेपिभामिनी कालेनबहुनासाध्वीपंचत्वमगमत्तदा भार्यातस्यजयश्रीःसाऋतुसपुर्कदोषतः शुनीयोनि

मनुप्रातासुमित्रोपिनरेश्वर तस्याःसंपर्कदोषेणवलीवर्दोबभूवह तद्दोषेणमहाराजदुर्गतिंतोगतोतदा सुमित्रस्य चपुत्रोभूत्पितृशुश्रूषणेरतः सुमतिर्नामधर्मज्ञोदेवतातिथिपूजकःतस्यतौपितरौपार्थऋतुसंपर्कदोषतः तिर्यग्योनिमनुप्राप्तावुभौजातिस्मरौनृप उच्छिष्टभोजिनासाभूत्स्मरतीपूर्वपातकं सुमित्रोपिपितातस्यवलीवर्दोबभूवह अथक्षयाहेसंप्राप्तेपितृशुश्रूषणेरतः भार्यांचंद्रवतींप्राहसुमतिःश्रद्धयान्वितां तयाकृतापाकशुद्धिःसुमतेर्भर्त्तुराज्ञया मुक्तंपायसभांडेस्याःसर्पेणगरलंततः दृष्ट्वाब्रह्मवधाद्भीताशुनीभांडान्स्पृशन्मुहुः द्विजभार्याचतांदृष्ट्वाउल्मुकेनजघानतां भोजिताब्राह्मणास्तत्रश्राद्धंकृत्वाप्रयत्नतः ततोभुक्तेषुविप्रेषुनोच्छिष्टंप्रददौबहिः द्वारस्थायास्तदाशुन्याउपवासस्तथाभवत् ततोरात्र्यांप्रवृत्तायांसाशुनीक्षुधितानृप वलीवर्दमुपागत्यभर्त्तारमिदमब्रवीत् बुभुक्षिताधनाथाहंनदत्तंभोजनंतुमे ग्रासादिकंवानलभेक्षुधामांबाधतेबलात् अन्यस्मिन्दिवसेपुत्रोममलेह्यंददत्यसौ अद्यमह्यंकिमप्येवउच्छिष्टमपिनोददौ पायसान्नेपपाताथगरलंसर्पसंभवं मयाविचिंत्यमनसामरिष्यंतिद्विजोत्तमाः संस्पृष्टंपायसंरोषाद्वध्वाहंताडिताभृशं दुःखितंतेनगात्रंमेकटिर्भग्नाकरोमिकिं ततःप्रहस्यवैभर्त्ताभद्रेतेपायसंग्रहान् कथंहराम्यशक्तश्चभारवाहत्वमागतः अद्याहमात्मजैः क्षेत्रेवाहितःसकलंदिनं मारितश्चात्मजेनाहंमुखंवद्ध्वाबुभुक्षितः वृथाश्राद्धकृतंतेनजाताचममकष्टता श्रीकृष्णउवाच॥ तयोःसंवदतोरेवंमातापित्रोश्चभारत श्रुत्वावाक्यंतदापुत्रोयदुक्तंचतदोभयोः ततोरजन्यातत्कालंददौतस्यैसुभोजनं पितरौतौविदित्वातुदत्तवान्सुमतिस्तदा तदसौदुःखितःपुत्रःश्रुत्वावस्थांतदातयोः मातापित्रोश्चराजेंद्रतदासौप्रास्थितोवनं ज्ञातुमिच्छामिकष्टंवैमातापित्रोश्चभारत तत्रगत्वाज्ञानवृद्धानृषीन्सप्तवनाश्रितान् प्रणिपत्याब्रवीद्वाक्यंहितंचैवतदातयोः सुमतिरुवाच कथयध्वंब्रह्मर्षयःप्रश्नमेतत्समाहिताः केनकर्मविपाकेनापितरौमेतपोधनाः

इमामवस्थांसंप्राप्तौमोक्ष्यंतेपातकात्कथं ऋपयऊचुः तवमातापुराविप्रस्वगृहेबालभावतः ऋतुंप्राप्तांविदित्वातुसं
पर्कमकरोद्द्विज तेनकर्मविपाकेनशुनीयोनिमुपागता पिताचस्पर्शदोपेणबलीवर्दोबभूवह एतयोर्मुक्तिकामार्थं
कुरुत्वमृपिपंचमीं भार्ययासहविप्रेंद्रऋपीन्संपूज्ययत्नतः आचरस्वव्रतंतत्रसप्तवर्षाद्द्विजोत्तम श्रीतेचोद्या
पनंकुर्याद्वित्तशाठ्यविवर्जितः शाकाहारस्तुकर्तव्यः श्यामाकाहारएवच नीवारैर्वापिकर्तव्यः कृष्टपच्यंनभक्षये
त् प्राप्यभाद्रपदेमासिशुक्लपक्षस्यपंचमीं तस्यांमध्यान्हसमयेनद्यादौविमलेजलेकृत्वापामार्गकाष्ठेनदंतधावन
मादितः आयुर्बलंयशोवर्चः प्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्दं
तधावनं मुखदौर्गंध्यनाशायदंतानांचविशुद्धयेष्ठीवनायमलानांचकुर्वेहंदंतधावनं अनेनदतान्संशोध्यस्नायान्मृत्स्ना
नुपूर्वकं तिलामलककल्केनकेशान्संशोध्ययत्नतः परिधायनवेशुद्धेवाससीसुसमाहितः पूजयत्वऋषीन्दिव्या
नरुंधत्यासमन्वितान् कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती मंत्रेणाने
नसप्तर्षीन्पूजयेत्सुसमाहितः व्रतेनऋपिपंचम्यांकृतेनैवंद्विजोत्तम ऋतुसंपर्कजोदोपः क्षयंयातिनसंशयः
श्रीकृष्णउवाच श्रुत्वातत्सुमतिर्वाक्यंपरमंऋपिभापितं गृहमेत्यव्रतंचक्रेसभार्यःश्रद्धयान्वितः व्रतंतु
ऋपिपंचम्याः सर्वपापविनाशनं कृत्वासर्वंयथोक्तंचमातापित्रोःफलंददौ व्रतपुण्यप्रभावेणमातातस्यश्वयोनि
तःमुक्तातुनृपशार्दूलविमानवरमास्थिता दिव्यांबरधराभूत्वागतास्वर्गंचभारत पितापिसोमृतोगच्छत्सुमतेःपशुयो
नितःस्वर्गंप्राप्तोमहाराजव्रतस्यास्यप्रभावतः कायिकंवाचिकंवापिमानसंयच्च दुष्कृतं तत्सर्वंविलयंयातिव्रतस्यास्य
प्रभावतः अस्ययज्जायतेपुण्यंतच्छृणुष्वनृपोत्तम सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतद्व्रतधारणा
त् कुरुतेपात्रतंनारीसाभवेत्सुखभागिनी रूपलावण्ययुक्ताचपुत्रपौत्रादिसंयुता इहलोकेसदैवस्यात्परत्रचपरांगतिं

एतत्तेकथितंराजन् व्रतानामुत्तमव्रत सर्वसपत्प्रदंचैवनारीणांपापनाशनं धनंयशश्चस्वर्गंश्चपुत्रानपिचभारत पठ तांश्रृण्वतांवापिनारीणांपापनाशनम् ॥ ॥ इतिभविष्योत्तरेऋषिपंचमीव्रतकथा ॥ ॥ अथोद्यापनं युधिष्ठिरउवाच किमस्योद्यापनंप्रोक्तंव्रतपूर्णफलप्रदं सुमतिःकेनविधिनाचकारवदतत्त्वतः श्रीकृष्णउवाच पूर्वस्मिन्दिवसेकुर्य्यादेकभक्तंसमाहितः शुचौदेशेसमालिख्यसर्वतोभद्रमंडलं अव्रणंसजलंकुंभंताम्रंमृण्मयमेववा सस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभने पंचरत्नसमायुक्तंफलगंधाक्षतैर्युतं सहिरण्यंसमाछाद्यताम्रेणपत्रजेनवा वंशमृण्मयपात्रेणयवपूर्णेनचैवहि आछादयेच्चचैलेनलिखेदष्टदलंततः सौवर्णीःप्रतिमाः कार्य्या ऋषीणां भावितात्मनां पलेनवातदर्धेनतदर्धार्धेनवापुनः शक्त्यावाकारयेत्तत्रवित्तशाठ्यविवर्जितः वितानंपंचवर्णंचफलपुष्पसमन्वितं बध्नीयादुपरिश्रीमान्संविधायात्रवेदिकां मध्यान्हेपूजयेद्भक्त्याऋषीन्श्रद्धासमन्वितः कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौत्तमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती मंत्रस्नानेनराजेंद्रकृत्वापूजांसमाहितःरात्रौ जागरणंकुर्य्यात्पुराणश्रवणादिभिः कृतनित्यक्रियःप्रातर्जुहुयात्तिलसर्पिषा वैदिकोवापिपौराणोअधिकारान्मनुस्मृतात् अत्रवैदिकोमंत्रः सहस्तोमाःसहछंदसइति ॥ सप्तऋषयइतिवा अष्टोत्तरसहस्त्रंवाशतमष्टोत्तरंतु वा पुनःपूजांततःकृत्वागुरुंसंपूजयेद्व्रती स्वर्णांगुलीयवासोभिः कुंडलामृतभोजनैः दद्यादेकासवत्सांतुगुरवे गांपयस्विनीं पूजयेद्द्विज सप्तवासोभिर्दक्षिणादिभिः कलशांश्चपवित्रांश्चदद्यात्तेभ्यःसुभक्तितः आचार्यंच सपत्नीकंप्रणिपत्यक्षमापयेत् लब्धानुज्ञोनुभुजीतहृष्टैर्बंधुजनैर्वृतः उद्यापनविधिःप्रोक्तसर्वत्रायंफलार्थिनां एवंयः कुरुतेभूपउद्यापनविधिंपरं सर्वपापविनिर्मुक्तःस्वर्गलोकेमहीयते इहलोकेचिरंकालंभर्त्रासहशुचिस्मितापुत्रपौत्रैःपरिवृताभुक्त्वाभोगान्मनोरमान् निष्पापासुभगानित्यंलभतेचाक्षयांगतिम् ॥ इतिभविष्योत्तरेसोद्यापनऋ

पिपंचमीव्रतम् ॥ ॥ ॥ अथप्रयोगाःनद्यादौसमंत्रकदंतधावनपूर्वकंस्नात्वा नित्यपूजांकृत्वा ॐमद्यम
मज्ञानतोऽज्ञानतोवारजस्वलावस्थायांकृतसंपर्कजातदुर्योनित्वदोषपरिहारार्थंशुभप्राप्त्यर्थंयथाशक्त्याचरितऋ
पिपचमीव्रतपूजोद्यापनंकरिष्ये आचार्यवरणंविधाय सर्वतोभद्रेसप्तकलशेषुएकस्मिन्वा अरुंधतीसहि
ताःसप्तर्षिप्रतिमाःसंपूजयेत् सग्रहाःसर्वतोभद्रादिमंडलदेवताश्चग्रहयज्ञविधिना संपूज्य कश्यपोत्रिर्भर
द्वाजइतिमंत्रेणवैदिकमंत्रैर्वाऋपिपूजनकार्यं पूजांते वायनंदद्यात् न्यूनातिरिक्तकर्माणिमयायानिकृतानिच
क्षमध्वंतानिसर्वाणियूयंसर्वेतपोधनाः ततःकथाश्रवणादिनारात्रिंनयेत् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्र
प्रधानं अरुंधतीसहितकश्यपादिऋषीन्पूजामंत्रेण तिलव्रीहियवसर्पिर्द्रव्यैःप्रतिद्रव्यमष्टोत्तरशतमष्टाविंशति
संख्याहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये शेषेणस्विष्टकृतमितिहोमंसमाप्यपुनःपूजांकृत्वा सपत्नीका
न्सप्तब्राह्मणान्संपूज्यतेभ्यः क्रमेणदक्षिणाप्रतिमायुतान् कलशान्दद्यात् तत्रमंत्रः प्रतिगृह्यद्विजश्रेष्ठाःप्रतिमादिस
मन्वितान् कलशानृषिसप्रीत्यैव्रतसंपूर्तिहेतवे यदेककुंभेप्रतिमापूजनंतदासर्वप्रतिमायुतकलशमाचार्याय अ
न्येभ्यःपक्वान्नवस्त्रदक्षिणायुतान् दद्यात् ततःसत्तभ्यःसप्तगाः आचार्यायएकांगांदत्वाप्रार्थयेत् सप्तर्षिभ्यःशु
भाःश्रेष्ठाःसर्वपापफलप्रदाः सर्वपापंचमेव्रतंज्ञानतोज्ञानतः कृतं एतेसप्तर्षयः सर्वेभक्त्यासंपूजितामया। यथोक्तफल
दासंतुव्रतस्यफलदायकाइति ततआशिषोगृहीत्वा ब्राह्मणान्संतर्प्यस्वयंभुंजीत ॥ ॥ इतिऋषिपंचमीव्रतोद्या
पनम् ॥ ॥ ॥ ॥ भाद्रशुक्लषष्ठीसूर्यषष्ठी ॥ सासप्तमीयुतेतिदिवोदासः शुक्लेभाद्रपदेषष्ठ्यांस्नानंभास्कर
पूजनं प्राशनंपंचगव्यस्यचाश्वमेधकजफलमितिवचनात् अत्रस्नानादिकृतमक्षयंभवति तदुक्तंभविष्योत्तरे येयंभाद्र
पदेमासिषष्ठीस्याद्भरतर्षभ इयंपापहरापुण्याशिवाशांताशुभानृप स्नानदानादिकंसर्वमस्या मक्षयमुच्यते योस्यां

पश्यतिगांगेयंदक्षिणापथवासिनं ब्रह्महत्यादिपापैस्तुमुच्यतेनात्रसंशयः ॥ इयमेवललिताषष्ठी ॥ तथाचोक्तं ना
रदीये ॥ भाद्रेमासिशुक्लपक्षेचललिताव्रतमुच्यते प्रातः स्नात्वाविधानेननारीशुक्लांबरावृता शुक्लमा
ल्यधराचापिनद्योः संगमवालुकां गृहीत्वावेशपात्रेतुकृत्वापिंडाकृतिंवतो पंचधाललितांतत्रध्यायेद्वनविलासिनीं पं
कजंकरवीरंचनैपमालिनींतथा नीलोत्पलंकेतकींचसंगृह्यतगरंतथा एकैकाष्टशतंग्राह्यंताभ्योदेवींप्रपूज्यच प्रार्थ
येदग्रतःस्थित्वादेवींतांगिरिशाप्रियां गंगाद्वारेकुशावर्तेविल्वकेनीलपर्वते स्नात्वाकनखलेतीर्थेहरंलब्धवतीपतिं ल
लितेसुभगेदेविसुखसौभाग्यदायिनी अनंतंदेहिसौभाग्यंमह्यंतुभ्यंनमोनमः मंत्रेणानेनकुसुमैश्चंपकस्यसुशोभनैः
अभ्यर्च्यविधिवत्तस्यानैवेद्यंपुरतोन्यसेत् क्रमुकैरपिकूष्मांडैर्नारिकेलैश्चदाडिमैः वीजपूरैस्तुजवीरैःकारवेल्लैःसु
निर्भरैः फलैस्तत्कालसंभूतैःकृत्वाशोभांतदग्रतः विरूढधान्यांकुरकैः सदीपावलिभिस्तथा साधसुगुणकैर्धूपैःसो
हालिककरंजकैः गुडपुष्पैः कर्णवेष्टैः मोदकैरुपमोदकैः वहुप्रकारैर्नैवेद्यैर्यथाविभवमानतां एवमभ्यर्च्यविधि
वद्रात्रौजागरणोत्सवं गीतवाद्ययुतंनृत्यैः प्रेक्षणीयैरनेकशः सखीभिःसहितासाध्वीतांरात्रिंप्रयतानयेत् एवंजा
गरणंकृत्वासप्तम्यांसरितंनयेत् गंधपुष्पैरथाभ्यर्च्यगीतवाद्यपुरःसरं तद्वद्याद्द्विजेंद्रायनैवेद्यादिद्विजोत्तम स्नात्वा
गृहसमागत्यहुत्वावैश्वानरंततःदेवान्पितॄंश्चसंतर्प्यपूजयित्वासुवासिनीः कन्यकाश्चैवसंभोज्याब्राह्मणादशपंचचभ
क्ष्यैर्भोज्यैर्वहुविधैर्दत्वादानान्यनेकशःललितामेस्तुसुप्रीताइत्युक्त्वातांविसर्जयेत् यःकश्चिदाचरेदेतद्व्रतंसौभाग्यदंप
रंनरोवायदिवानारीतस्यपुण्यफलंशृणु यद्व्रतैश्चतपोभिश्चदानैर्वानियमैरपि व्रतेनानेनलभ्येतकिंवहूक्तेननारद मृते
रनंतरंप्राप्यशिवलोकंसनातनं मोदतेललितादेव्यासहैवसाखिवाचिरम् ॥ इतिनारदीयेललिताषष्ठीव्रतम् ॥
अस्यामेवचंपाषष्ठीव्रतमुक्तंस्कांदे ॥ षष्ठीभाद्रपदेशुक्लावैधृतेनसमान्विता विशाखाभौमयोगेनचंपाषष्ठीतिवि

श्रुता रविवारेणाप्युक्ता रविवारेणसंयुक्तासाचपेतीहकीर्तितेतिमदनरत्ने देवासुरमनुष्याणांदुर्लभापष्टिहा यनी कृतेत्रेतायांपंचाशद्वायनीद्वापरेपुनः चत्वारिंशत्कलौत्रिंशद्वायनीसफलामता अत्ररम्येसूर्यपूजा ॥ द्वादशदलेनाममंत्रैः पद्मांकार्या अत्रनाममंत्राः आदित्यस्तपनः पूषाभानुमान्भानुरर्यमा विष्णुःशक्रोंश मान्देवःसहस्रांशुर्विनायकः सूरः सूर्यःखगइति पूजनीयः प्रयत्नतः अत्रादित्यः कर्णिकायांदलेषुशेषना मभिः पूजाकार्या ॥ स्कंदउवाच प्राप्तराज्यंचराजानंधर्मपुत्रयुधिष्ठिरं कदाचिदागतोद्रष्टुंदुर्वासामुनिसत्त मः ततोराजातमभ्यर्च्यपाद्यार्घ्यैरिदमब्रवीत् तद्व्रतंश्रोतुमिच्छामिकर्तुंचमुनिसत्तम दुर्वासाउवाच शृणुराज न्महाभागव्रतानामुत्तमंव्रतं अस्तीहयच्चीर्णमात्रंसर्वकामांस्तुपूरयेत् यदिलभ्येतजीवद्भिर्दैवेनन्नृपसत्तम षष्ठी भाद्रपदेशुक्लावैधृतेनसमन्विता विशाखाभौमयोगेनसाचपेतीहाविश्रुता तस्मादियंचपापष्ठीह्यात्रेयाएकावै धृतियोगवती भाद्रशुक्ला अपराविशाखाभौमयोगवत्येवपष्ठीचेति देवासुरमनुष्याणांदुर्लभापष्टिहायिनी कृ तेत्रेतायांपंचाशद्वायनीद्वापरेपुनः चत्वारिंशत्कलौत्रिंशद्वायनीदुर्लभाततः घ्रादौकृतयुगेपूर्वंचाचीर्णाविश्वक र्मणा तत्फलाद्विश्वकर्तृत्वंप्राजापत्यमवाप्तवान् एपुनाकार्तवीर्येणभुविनारायणेनच ईश्वरेणानयासार्द्धमि तरेतरलिप्सया यश्चैनांविधिवत्कुर्यात्सोनंतफलमश्नुते युधिष्ठिरउवाच तद्विधिंश्रोतुमिच्छामिविस्तराद्वद तोमुने केमंत्राः केचनियमाः साचकिंलक्षणाभवेत् दुर्वासाउवाच द्विदैवत्यर्क्षभौमेनवैधृतेनसमन्विता नभस्येयासितापष्ठीसाचंपेतिनिगद्यते द्विदैवतर्क्षाविशाखा पंचम्यांनियमंकुर्यादुपवासस्यचव्रती उपवास स्यांगभूतं नियममेकभक्तंकुर्यादित्यर्थः चंपापष्ठीव्रतंकुर्यादित्यर्थः चंपापष्ठीव्रतंकुर्याद्यथोक्तवचनाद्बुधः ततःप्रभातेविमलेदंतधावनपूर्वकं कृत्वासम्यक्व्रतंतस्यसंकल्पंकुरुतेनरः कृत्वेतिसकलांगोपेतंव्रतं स्वसाध्य

त्वेनमनसिनिधायेत्यर्थः निराहारोद्यदेवेशत्वद्भक्तस्त्वत्परायणः पूजयिष्याम्यहंभक्त्याशरणंभवभास्कर संक
ल्पमंत्राः ततःस्नानंप्रकुर्वीतनद्यादौविमलेजले मृदमालभ्यमंत्रैश्चतिलैःशुक्लैश्चमंत्रवित् सावित्रःपरमस्त्वं
हिपरंधामजलेमम त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधा प्रार्थनामंत्रः आपस्त्वमसिदेवेशज्योतिषांपतिरेवच ॥
पापनाशयमेदेववाङ्मनःकर्मभिःकृतं स्नानमंत्रः ततःसंतर्पयेद्देवानृषीन्पितृगणानपि ततश्चैत्यगृहंमौ
नीपाखंडालापवर्जितः स्थंडलंकारयेच्छुभ्रंचतुरस्रंसुशोभनं स्थापयेदव्रणंकुंभंपंचरत्नसमान्वितं रक्तवस्त्र
युगच्छन्नंरक्तचंदनचर्चितं तस्योपरिन्यसेत्पात्रंसौवर्णंताम्रमेवच कुंकुमेनलिखेत्पद्मंद्वादशारंसकर्णिकं तस्यो
परिन्यसेत्सूर्यंसौवर्णंसरथारुणं शक्त्यावावित्तसारेणवित्तशाठ्यविवर्जितः तमर्चयेद्गंधपुष्पैर्विधिमंत्रपुरःसरं
पंचामृतेनस्नपनंकुर्याद्देवस्यसंयुतः ततस्तुगंधतोयेनपरांपूजांसमाचरेत् गंधैर्नानाविधैर्दिव्यैः कर्पूरागुरु
कुंकुमैः फलैस्तदृतुसंभूतैः रनेकैश्चसुगंधिभिः मंडपंकारयेत्तत्रपुष्पमालाविभूषितं यथाशोभंप्रकुर्वीतअध
श्चोपरिसर्वतः ततस्तुपूजयेद्देवंभास्करंकमलोपरि आदित्यायनमः तपनायनमः पूष्णेनमः भानुमतेनमः
भानवेनमः अर्यम्णेनमः विश्वचक्रायनमः अंशुमतेनमः खनायकायनमः सुरायनमः सूर्यायनमः
खगायनमः एषुत्रयोदशसुनामसु आदित्यायनमइत्यनेनमध्येपूजनं इतरैर्द्वादशभिः पूर्वादिदलक्रमेण पू
जनं जन्मांतरसहस्रेणदुष्कृतयन्मयाकृतं तत्सर्वंनाशमायातुदिवाकरतवार्चनात् प्रार्थनामंत्रः विनतातन
योदेवः कर्मसाक्षितमोनुदः सप्ताश्वः सप्तरज्जुश्चअरुणोमे प्रसीदतु ॥ अरुणपूजामंत्रः ततःसंपूजयेद्देवम
च्युतंतुरथेस्थितं अष्टाक्षरेणमंत्रेणगंधपुष्पादिभिःक्रमात् अष्टाक्षरोघृणिरितिमंत्रः घृणिआदित्यायनमःकाला
त्मासर्वभूतात्मावेदात्मासर्वतोमुखः जन्ममृत्युजरारोगसंसारभयनाशन इत्यर्घ्यमंत्रः ॥ सूर्योदयेपठनीयः

ततः संपूजयेच्छुक्लांसवत्सांगांपयस्विनींसवस्त्रकंठाभरणांसुघंटाभिरलंकृतां ब्रह्मणोत्पादितादेविसर्वपापविनाश
निसंसारार्णवमग्नंमांगोमातस्त्रातुमर्हसि स्वरूपावहुरूपाश्चमातरोलोकमातरः गावोमामुपसर्पंतुसरितः साग
रंयथा यालक्ष्मीः सर्वदेवानांयाचदेवीव्यवस्थिता धेनुरूपेणसादेवीममपापंव्यपोहतु यालक्ष्मीलोकपाला
नायालक्ष्मीर्धनदस्यच चन्द्रार्कशक्रशक्तिर्यासाधेनुर्वरदास्तुमे ॥ धेनुपूजामन्त्रः ॥ तिलहोमंततःकुर्या
त्सावित्र्याष्टोत्तरंशत ततस्तांकल्पयेद्धेनुमर्कोमेप्रीयतामिति आचार्यायततोदद्यादादित्यंसरथारुणं सकुंभर
त्नैर्वस्त्रैश्चसर्वोपकरणैः सह ददामिभानुंभवतांसर्वोपस्करसंयुतं मनोभिलषितावाप्तिंकरोतुममभास्करः
दानमंत्रः गृह्णामिभास्कररवेभवंतंविश्वतोमुखं मनोभिलषितावाप्तिमुभयोःकर्त्तुमर्हसि प्रतिग्रहमंत्रः सर्व
तीर्थमयींधेनुंसर्वयज्ञमयींशुभां सर्वदानमयींदेवींब्राह्मणायददाम्यहं गोदानमंत्रः गृह्णामिसुरभिंदेवींसर्व
यज्ञमयींशुभां उभौपुनीहिवरदेउभयोस्तारकाभव धेनुप्रतिग्रहमंत्रः ॥ ततस्तुभोजयेद्विप्रान्दशैवस्वश
क्तितः दद्याच्चदक्षिणातेभ्यः प्रणिपत्यविसर्जयेत् अवैकल्यंव्रतस्यशंसेयुस्तेद्विजोत्तमाः अभिनंद्यतमा
शीर्भिः परिरंभुरनिंदिताः ततस्तुस्वयमश्नीयाद्द्विजानांशेषमिष्टकं सहपुत्रैः कलत्रैश्चअन्यैर्बहुजनैर्वृतः ए
वंयःकुरुतेचैषा सोत्यंतफलमश्नुते प्रभूणांचप्रभुःप्रोक्तस्त्वंप्रभूणांचगोचरः सर्वैश्चतद्व्रतकार्य्यंस्वशक्त्याद्दु
खभीरुभिः प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्त्तते विफलंतस्यतत्स्यादनीशस्त्वनुकल्पकः पंचम्यांनियमं
कुर्य्यादाचार्य्यवचनाद्व्रती पश्चात्स्नानंप्रकुर्वीतसंतर्प्यपितृदेवताः अभ्येत्यस्वगृहंमौनी सूर्य्यमनासिंचित
येत् स्थापयेद्व्रणंकुंभंम्रत्पात्रंचतथोपरि तस्योपरिन्यसेत्सूर्यंपलेनैकेननिर्मितं सौवर्णंभक्तिसंयुक्तोवित्तसा
रंतथारुणं तमर्चयेज्जगन्नाथंगृहीत्वाज्ञांगुरोस्स्वयं षडक्षरेणमंत्रेणगंधपुष्पानुसंभवं ॐनमःसूर्यायेतिषडक्षर

मंत्रः संपूज्यविधिवद्देवंफलपुष्पादिकंचयत् सूर्यायवेदयेत्सर्वं सूर्योमेप्रीयतामिति ततः प्रभातेविमलेगत्वा गुरुगृहंव्रती सर्वोपकरणैःसूर्य माचार्यायनिवेदयेत् धान्यपुष्पफलवस्त्ररत्नधन्वादिकचयत् गवांकोटिसहस्रेणकुरुक्षेत्रेर्कपर्वणि चपादानस्यराजेंद्रकलांनार्हंतिषोडशीं सर्वतीर्थप्रदानानितथान्यान्यपिषोडश. चंपयातुलितान्नायाश्चंपैकाव्यतिरिच्यते आदित्यस्तपनःपूषाभानुमान्भानुरर्यमा विश्वचक्षोंशुमान्देवः सहस्रांशुखनायकः सूरः सूर्यः खगः पूज्यः पूर्वपत्रादिवइत्यंशुमतोविशेषण पचम्यामित्यादिनापुनर्व्रतविधिर्धनहीनविषयः इतिस्कंदपुराणोक्तंचंपाषष्ठीव्रतम् ॥

ब्रह्मांडपुराणे मल्लारिमाहात्म्ये मार्गेपौषेचपाप्रयुक्ता मार्गेभाद्रपदेशुक्लाषष्ठीवैधृतिसंयुता रविवारेणसंयुक्तासाचपेतीहविश्रुता ॥ अथभाद्रशुक्लसप्तम्यामनतसप्तमीव्रत हेमाद्रौ विष्णुधर्मोत्तरे शुक्लपक्षेतुसप्तम्यामासेभाद्रपदेनृप तंत्रसूर्यदिवापूज्यनक्तंभुंजीतवत्सर मत्स्यपुराणेपि शुक्लपक्षेतुसप्तम्यांमासिभाद्रपदेच्युतं प्रणम्याशिरसानित्यंपूजयेत्सप्तवासरान् पुष्पधूपादिभिर्वीरकुतुपानांचतर्पणैः पाखंडादिभिरालापंवर्जयेत्प्रयतात्मना अत्रकुतपाब्राह्मणाउक्ताः विधायदक्षिणादद्यान्नक्तंभुंजीतवाग्यतः तिष्ठन्व्रजन्प्रस्थितश्चचक्षुःप्रस्खलनादिषु आदित्यनामस्मरणंकुर्वन्नुच्चारणतथा अनेनैवविधानेनमासान्द्वादशवैक्रमात् उपोष्यपारणेपूर्णेसमभ्यर्च्यजगद्गुरुं पुण्येनश्रवणेनेहप्रीणयन्पुष्टिमच्युतां एवयःपुरुषःकुर्यादादित्याराधनशुचिः नारीवास्वयमभ्येत्यआनंत्यफलमश्नुते ॥ अस्यामेवभाद्रशुक्लसप्तम्याममुक्ताभरणसप्तमीव्रतम् ॥ ॥ ॥ तत्रपूजायांसप्तमीपूर्वविद्धाग्राह्यापणमुन्योरितियुग्मवाक्यात् नारदीये ॥ भाद्रस्यशुक्लसप्तम्याममुक्ताभरणव्रतं सोमस्यतुमहेशस्यपूजनंचात्रकीर्त्तितं गंधादिभिःषोडशभिरुपचारैःस

मर्चयेत् ॥ प्रार्थ्यप्रणम्यविसृजेत् सर्वकामसमृद्धये ॥ अत्रकृत्यंभविष्योत्तरे ॥ भूमौलिखितोमासहितशि
वप्रतिमायामावाहनं एह्येहिभगवन्देवसर्वपापप्रणाशन तवपूजांकरिष्यामिसन्निधौभवशंकरेति भवानीशं
करावावाह्यषोडशोपचारैःसंपूज्य नमस्तेभूतनाथायनमस्तेशशिशेखर नमस्तेदक्षयज्ञघ्ननमस्तेकामनाशन
नमस्तेपार्वतीदेव्यैचंडिकायैनमोनमःवरदायैनमस्तेस्तुभद्रकाल्यैनमोनमः इतिसंप्रार्थ्य ॥ शर्कराघृतमि
श्रंतंडुलपिष्टमुपहारंनिवेद्य एकादशतंतुयुतसूत्रमेकादशग्रंथिविशिष्टंवामहस्तेबध्वापूजांतेकथांश्रृणुयात् ॥ अ
थपूजाविधिः मासपक्षाद्युल्लिख्यसर्वपापक्षयपूर्वकंसर्वकामसमृद्ध्यर्थंउमासहितसोमशंकरपूजनव्रतमहंकरिष्ये ॥
भूमौलिखितभवानीशंकरप्रतिमायामावाहनादिसर्वोपचारपूजांकुर्यात् देवदेवमहेशानपरमात्मन्जगद्गुरो प्र
तिपादितयासोमपूजयापूजयाम्यहं ॥ इत्यावाहनम् ॥ अनेकरत्नखचितंसौवर्णमणिसंयुतं मुक्तान्वितंमहादेव
गृहाणासनमुत्तमम् ॥ इत्यासनम् ॥ पाद्यंगृहाणदेवेशसर्वविद्यापरायण ध्यानगम्यसदाशंभोसर्वेश्वरनमो
स्तुते ॥ इतिपाद्यम् ॥ इदमर्घ्यमनर्घ्यंत्वममराधीशशंकर किंकरीभूतसर्वेशमयादत्तंगृहाणवै इत्यर्घ्यं ॥
गंगादिसर्वतीर्थेभ्यःसमानीतंसुशीतलं जलमाचमनीयार्थंगृहाणसोमयासह ॥ इत्याचमनम् ॥ मध्वाज्य
शर्कराभ्यश्चसुधयापरिकल्पितं शंकरप्रीतयेतोहंमधुपर्कंनिवेदये ॥ इतिमधुपर्कः ॥ आदौपंचामृतैःस्ना
नंपश्चाच्छुद्धेनवारिणा स्नानंकुरुमहादेवनिजयाकांतयासह ॥ इतिस्नानम् ॥ स्नानादूर्ध्वंमहादेवप्रीत्यापा
पप्रणाशन वस्त्रयुग्मंसमानीतंमद्दत्तंप्रतिगृह्यताम् ॥ इतिवस्त्रम् ॥ उपवीतंसोत्तरीयंनानाभरणभूषितं गृ
हाणसोमविमलंमयाहृतमिदंशुभम् ॥ इतियज्ञोपवीतम् ॥ मलयाचलसंभूतंसुगंधिघनसारयुक् चंदनंपंचव
दनगृहाणदयितायुत ॥ इतिगंधम् ॥ जातीचंपकपुन्नागबकुलैःपारिजातकैः शतपत्रैश्चकल्हारैरर्चयेहमुमा

पतिम् ॥ इतिपुष्पाणि ॥ त्रैलोक्यपावनानंतपरमात्मन्जगद्गुरो चंदनागुरुकर्पूरैर्धूपंदास्यामिशंकर ॥ इति धूपम् ॥ शुभवर्त्तियुतंसर्पिर्लोडितंवन्हिनायुतं दीपमेकमनेकार्कप्रतिमंकल्पयेत्विमम् इतिदीपम् पायसापूपक शर्करादुग्धान्नंसगुडोदनं दिव्यान्नंषड्रसोपेतं सुधारससमन्वितं समर्प्पयामिदेवेशकिंकरःशंकरायते नैवेद्यं पुनराचम नंशुद्धंकुरुसोमांबुनामुना मुखशुद्धिकरंपूर्णंकृपयात्वंगृहाणवै ॥ पुनराचमनम् ॥ कस्तूरिकासमायुक्तंमल याचलसंभवं गृहाणचंदनंसोम करोद्वर्तनहेतवे ॥ इतिकरोद्वर्त्तनम् ॥ नारिकेलफलंजंबूफलंनारंगमुत्तमं कू ष्मांडपुरतोभक्त्याकल्पितंपरिगृह्यतामितिफलम् ॥ पूगीफलंमहादिव्यं० ॥ इतितांबूलम् ॥ हिरण्यगर्भगर्भस्थ मितिदक्षिणा ॥ भक्त्यादीपावलिंदेव ॥ इतिनीराजनं ॥ अथपुष्पांजलिः ॥ यानिकानिचपापानि. ॥ इति प्रदक्षिणा महादेवमहाराजभक्तानांपापनाशन अस्माकंकुर्वतांपूजांसाधुवासाधुयोजितां ज्ञानतोज्ञानतो वापिभव तोविहितांचयां संपूर्णंयतुविश्वेशोविमलांकोमलस्तुतिं पापोहंपापकर्माहमितिप्रार्थना देवदेवजगन्नाथसर्वसौ भाग्यदायक गृहणीयडोररूपंत्वांपुत्रपौत्रप्रवर्द्धनं ॥ इतिडोरकग्रहणम् ॥ सततसामोपगीतंत्वांधारयामिजगद् गुरो सूत्रग्रंथिस्थितंनित्यंधारयामिस्थिरोभव ॥ इतिडोरकोत्तारणम् ॥ ॥ ॥ अथयपनम् ॥ मंडकान्विष्टका न्वाथसघृतान्दक्षिणायुतान् एकादशमितान्सान्नान्ब्राह्मणायकुटुंबिने ॥ वेदशास्त्रप्रवीणायदद्यात्सोमस्यतुष्टये शंकरःप्रतिगृह्णातिशंकरोवैददातिच शंकरस्तारकोस्माकंशंकरायनमोनमः इतिवायनदानम् एवंतुपूजनंकुर्या त्सोमस्यसुखदस्यच सर्वान्कामानवाप्नोति पुत्रपौत्रैश्चमोदते ॥ इत्यमुक्ताभरणसप्तमीव्रतसोमशिवपूजा ॥ अथकथा हेमाद्रौ भविष्योत्तरे श्रीकृष्णउवाच मुनींद्रोलोमशोनाममथुरायांगतःपुराश्च चिंतावसुदेवेनदेवक्याचयुधि ष्ठिरं उपविष्टःकथाःपुण्याः कथयित्वामनोरमाः ततःकथयितुंभूयःकथामेतांप्रचक्रमे कंसेनतेहताःपुत्राजाताजाताः

पुन· पुन· मृतवत्सादेवाकिंत्वंपुत्रदुःखेनदुःखिता यथाचंद्रमुखीदीनाबभूवनहुपप्रिया पश्चाच्चीर्णव्रताचैवबभूवाक्ष
तबालका त्वमपिदेवकितथाभविष्यसिनसंशयः देवक्युवाच कासि चंद्रमुखीब्रह्मन्बभूवनहुषप्रिया किंचीर्णंहि
व्रतदिव्यतथासंततिवर्द्धनं सपत्न्यादर्पशमनंसौभाग्यारोग्यवर्द्धनं लोमशउवाच अयोध्यायांपुराराजानहुषो
नामविश्रुतः तस्यासीद्रूपसंपन्नादेवीचंद्रमुखीप्रिया तथातत्रैवनगरेविष्णुगुप्तोभवद्द्विज आसीद्गुणवतीतस्यपत्नी
भद्रमुखीतथा तयोरासीदतिप्रीतिः स्पृहणीयापरस्परं अथतेदयितसख्यौस्नानार्थंसरयूजले प्राप्तेप्राप्ताश्चत
त्रैवबह्व्योवैनागरांगना· ता·स्नात्वामंडलंचक्रुस्तन्मध्येऽव्यक्तरूपिणं लेखयित्वाशिवंसोममुमयासहशंकरं गंधपु
ष्पाक्षतैर्भक्त्यापूजयित्वायथाविधि प्रणम्यगंतुकामास्ता·पप्रच्छतुर्वरस्त्रिय ताऊचुःशंकरोरमाभि·पार्वत्यासहपूजि
त सद्ध्यासूत्रमयंतंतुशिवस्यात्मानिवेदितः धारणीयमिदंतावद्यावत्प्राणविधारणं तासांतद्वचनंश्रुत्वासख्यौचमो
तदेवाहि कृत्वातुसमयंतत्रबद्ध्वादोर्भ्यांतुडोरकं ततस्ताश्चगृहंजग्मुःस्वसखीभि·समावृताः कालेनमहतातस्यास्त
द्व्रतंविस्मृतंशुभ चंद्रमुख्याःप्रमत्तायाविस्मृतःसतुडोरक·भद्रमुख्यास्तथाभद्रेविस्मृतंसर्वमेवतत् मृताकैश्चिदहोरा
त्रैः सापभूद्विहगमी भद्राख्याकुक्कुटीजातात्रतभगाच्छुभानने संभूयभूयः समयंप्राग्व्रतचक्रतु· सदा कालेनपंच
तांप्राप्तेसखीभावात्सहैवते अथैवमानुकेदेवजातेपिकुलसंयुते ब्राह्मणीब्राह्मणीजाताराज्ञीचंद्रमुखीपुरा नाम्नाभद्रमु
खीजाताभूपणानामसामता अग्निभीलस्यसादत्तापित्रातस्यपुरोधसा अतीववल्लभाचासीद्रूपेणाभूषणप्रिया भू
पिताभूषणैर्वैरूपेणालंकृतास्वयं तस्यावभूवुरष्टौचपुत्राः सर्वगुणान्विताः मातृवद्रूपसंपन्ना·पितृवद्धर्मशीलि
नः सख्योतेतेनतद्वच्च जातेजातिस्मरेकिल पुनर्निरंतराप्रीतिस्तयोरासीद्यथापुरा कालेवहुतिथेजाते
त्यक्तासात्यक्तयौवना मध्येवयसिराज्ञीचपुत्रमेकमजीजनत् ईश्वरीरोगिणंमूकप्रज्ञाहीनंचविस्वरं तादृशो

पिमहाभागस्तोसौनवर्वार्षिकः ततस्तांभूषणांद्रष्टुमीश्वरीपुत्रदुःखिनी सखीभावादतिस्नेहात्पुत्रैःस्वैःपरिवारिता ॥ अमुक्ताभरणाभद्रास्वरूपेणैवभूषिता सा हिभद्रांद्विजस्याभूद्भार्याभूषणनामिका पुरोहितस्यका लेन कुक्कुटीवहुपुत्रिणी तांदृष्ट्वांतिहर्षाभद्राप्रजज्वालेश्वरीरुषा ततोगृहेप्रेषयित्वाब्राह्मणींतीव्रमत्सरा चिंतयामाससाशीघ्रंतस्याःपुत्रवधंप्रति निश्चित्यचेतसाक्रूराघातयामासतान्सुतान् हताहतास्चतेपुत्राःपुनर्जीवं त्यनामयाः तदद्भुततरंदृष्ट्वासखीमाहूयभूषणां उपविश्यासनेश्रेष्ठेवहुमानपुरःसरंप्रपच्छद्विस्मयाविष्टाराज्ञीसा नृपवल्लभा ब्रूहितथ्यंमहाभागेकिंत्वयासुकृतंकृतं दानंव्रतं पोवापिशूश्रुपण मुपोषणं येनतेनिहताःपुत्राः पुनर्जीवंत्यनामयाः तथाहिवहुपुत्राचजीववत्साशुभानना अमु क्ताभरणानित्यंभर्तुश्चैतसिचास्थिता अतीवशोभसेभद्रेविधुर्घर्मात्ययेयथा ॥ भूषणोवाच ॥ शृणुदेविप्रव क्ष्यामिजन्मांतरविचेष्टितं किंतंतद्विस्मृतंसर्वंनयोध्यायांकृतंहियत् आवाभ्यांव्रतवैकल्पप्रमत्ताभ्यावराननेये नत्वंप्लवगीजाताजाताहंकुक्कुटीतथा तत्रापिव्रतवैकल्यंत्वयाचापल्यतःकृतं मयातुसर्वभावेनचेतस्याध्यायशंकरं तिर्यग्योन्यनुसारेणमनोवृत्त्याहिनुष्ठितं एतद्विकारणंभद्रेनान्यात्किंचित्करोम्यहं ॥ लोमशउवाच ॥ इत्याक र्ण्यचसंस्मृत्यपूर्वजन्मविचेष्टितं ईश्वरीचंतयासार्द्धं पुनःसम्यक्चकारह व्रतस्यास्यप्रभावेणपुत्रपौत्रादिसंभृतं भुक्त्वाचसौख्यमतुलंमृताशिवपुरंगता तस्मात्त्वमपिकल्याणिव्रतमेतत्समाचर आरब्धेस्मिन्व्रतेदव्येजीव पुत्राभविष्यसि ॥ देवकयुवाच ब्रह्मन्नास्याहिमेसम्यक्तमेतत्सुखप्रदं संतानवृद्धिकरणंशिवलोकस्थिति प्रदं भद्रेभाद्रपदेमासिसप्तम्यांसलिलाशये स्नात्वाशिवमंडलकेलेखयित्वासहांविकं तत्रसंपूज्यसमयंकु र्याद्दृढाकरेगुणं यावज्जीवंमयात्वंतुशिवरसचविनिवेदितः इत्येवंसमयंकृत्वाततः अश्वतिडोरकं सौवर्णंरा

जतंवापिसौत्रंवाधारयेत्करे मंडकान्वाष्टकोनदद्यान्मासपक्षेथवाद्विज स्वयंताश्चैवभोक्तव्याव्रतभंगभयाच्छुभे प्रतिमासंतुसप्तम्यांशुक्लपक्षेविशेषतः कुर्य्यादेवंव्रतभद्रे वर्षांते . पिचदेव के कारितामुद्रिताव्रीह्यैर्हैमीरूप्यां स्वशक्तितः ताम्रपात्रे परिस्थाप्यब्राह्मणेभ्योनिवेदयेत् आचार्यायविशेषेणसौवर्णंह्यंगुलीयकं पुष्पकुंकुमसंयुक्तंतूलांजनसूत्रकैः एवंतत्पारयित्वातुव्रतंसंततिवर्द्धनं सर्वपापविनिर्मुक्ताभुक्त्वा सौख्यमनामयं संतानंवर्द्धयित्वाचशिवलोकेमहीयते एतत्तेसर्वमाख्यानमाख्यातंव्रतमुत्तमं कुरुदेवकियत्नेननजीवपुत्राभविष्यति श्रीकृष्णउवाच ॥ इत्युक्त्वातुमुनिश्रेष्ठस्तत्रैवांतरधीयत चकारसर्वयत्नेनयदुक्तंतेनधीमता व्रतस्यास्यप्रभावेणदेवकीमामजीजनत् तस्मात्पार्थनरैःकार्य्यं स्त्रीभिःकार्य्यंविशेषतः व्रतंपापप्रशमनंसुखसंततिवर्द्धनं एवंयः शृणुयाद्भक्त्यायश्चैतत्प्रतिपादयेत् व्रतमाख्यानसहितंनहिपापैःप्रमुच्यते साख्यानकंव्रतमिदंसुतसौख्यकामायास्त्रीकरिष्यातिशिवंहृदयेनिधाय दुःखंविहायबहुशः कृतकल्मषौघान्सास्त्रीव्रताद्भवतिशोभनजीववत्सा इतिहेमाद्रौभविष्योत्तरे ॥ अमुक्ताभरणसप्तमीव्रतं अस्याविधिः हेमाद्रौ नद्यादौजलाशयेस्नात्वा गृहमागत्यगोमयादिलिप्तशुद्धदेशेमंडलंविधाय तदुपरिचंदनादिनाउमयासहितं शिवंलिखित्वोक्तविधिनापूजयेत् देशकालौसंकीर्त्यममाखिलपापक्षयपूर्वकपुत्रपौत्रधनधान्यसौख्यातिशयद्वाराश्रीसांबसदाशिवप्रीत्यर्थममुक्ताभरणसप्तमीव्रतंकरिष्ये इतिसंकल्प्यपूर्वोक्तप्रकारेणपूजांसमाप्यप्रार्थयेत् महादेवमहाराजप्रीत्यापापप्रणाशन अस्माकंकुर्वतांपूजांसाधुवाऽसाधुयोजितां ज्ञानतोऽज्ञानतोवापिभक्ततोविहितांचयां संपूर्णयतुविश्वेशोविमलांकोनलस्तुतिं ततोदेवस्यपुरतः यावज्जीवंमयात्मातुशिवस्यविनिवेदितः इत्येवंसंकल्पंकुर्य्यात् सौवर्णंराजतंसौत्रंवाडोरकंदेवाग्रेतत्संपूज्यानेनमंत्रेणगृह्णीयात् देवदेवजगन्नाथसर्वसौभाग्यदायक गृह्णीयां

डोररूपत्वांपुत्रपौत्रविवर्द्धनं ~ ततोहस्तेबंधनमंत्रः सप्तसामोपगीतत्वांधारयामिजगत्पते सूत्रग्रंथस्थितं
नित्यंधारयामिस्थिरोभवेतिमंत्रेणहस्तेबध्वा ततः दहसर्वाणिपापानिकृपांकुरुदयानिधे ।। प्रसन्नः सन्नुमाका
ं दीर्घायुःपुत्रदोभवेतिजीर्णडोरकोत्तारणकृत्वा सौवर्णराजतंपुत्रायशिष्यायब्राह्मणन्वादद्यात् स्त्रिया
चद्दुहितृस्नुषादिभ्योस्यसौत्रस्यवेलाविसर्जनीय - मितिसदाचारः ततोब्राह्मणेभ्यएकादशशतसंख्याका
न्मोदकान्वेष्ठकान्वाघृतदक्षिणायुतान् चायनदद्यात् स्वयंबंधुभिः सहभुंजीत ।। प्रतिमासंशुक्लसप्तम्यामेवै
तद्व्रतंकार्यं वर्षांतेहैमींराजतींनामुद्रिकांताम्रपात्रोपरिस्थाप्यब्राह्मणेभ्योयथाशक्तिदद्यात् आचार्यायवि
शेषेणसौवर्णमगुलीयक पुष्पकुकुमतांबूलजनसूत्रयुतंसदक्षिणंचदद्यात् । ब्राह्मणान्भोजयित्वास्वयभुंजीत
संतानवृद्धिंलब्ध्वाशिवलोकेमहीयते इत्यमुक्ताभरणसप्तमीव्रत । नारदीये शुक्लाष्टम्यानभस्यम्यकुर्याद्राधा
व्रतनरः पूर्ववद्राधिकादेवीकलशस्थांप्रपूजयेत् मध्याह्नेपूजयित्वैनामेकभक्तंसमाचरेत् शक्तोभक्त्योपवा
संपरेह्निविधिनाततः सुवासिनीभोंजयित्वागुरवेप्रतिमार्पणं कृत्वास्वयंचभुंजीतव्रतमेतत्समापयेत् । व्रतेना
नेनदेवर्षेकृतेनविधिनाव्रती रहस्यंगोष्ठजंलब्ध्वाराधापरिकरेवसेत्

अथकथाप्रारंभः ॥ शौनकउवाच कथयस्वमहाप्राज्ञ गोलोकेयातिकर्म्मणा सुमतेदुस्तरात्केनजनःसंसारसाग
रात् राधायाश्चाष्टमीसूततस्यमाहात्म्यमुत्तम सूतउवाच ब्रह्माणंनारद पृष्टः पुराचैतन्महामुनेतच्छृणुष्वसमासं
नउचिवांस्तंप्रतिद्विज नारदउवाच पितामहमहाप्राज्ञसर्वशास्त्रविदांवर राधाजन्माष्टमीतातकथयस्वनमाग्रत
तस्याःपुण्यंफलंकिंवा कृतंकेनपुराविभो अकुर्वतांजनानांहिकिल्विषंकिंभवेद्द्विजकेनचैतुविधानेनकर्तव्यंतद्व्रतंक ः।
कस्माज्जाताचसाराधातन्मेकथयमूलतः ब्रह्मोवाच राधाजन्माष्टमीवत्सश्रृणुष्वसुसमाहितःकथयामिसमासेनसम

ग्रहिरणेोदितंकन्यादानसहस्त्रेणयत्पुण्यंप्राप्यतेजनैः गंगादिषुचतीर्थेषुस्नात्वायत्फलमाप्यतेसकृद्राधाष्टमींकृत्वा
तस्माच्छतगुणंलभेत् कृष्णप्राणप्रियाष्टम्या फलंप्राप्नोतिमानवः एतद्व्रतंतुयःपार्थःश्रद्धयाऽश्रद्धयापिवा क
रोतिविष्णुसदनंगच्छेत्कोटिकुलैर्द्विज पुराकृतयुगेवत्सवरनारीसुशोभना सुमध्याहरिणीनेत्राशुभागाचारुहासिनी
सुकेशीचारुकेशीचनाम्नालीलावतीस्मृता तयाबहूनिपापानिकृतानिसुदृढानिचसैकदासाधनाकांक्षीनिसृत्यपुरतः
स्वतःगतान्यनगरंतत्रदृष्ट्वाचैवजनान्बहून् राधाष्टमीव्रतपरान् सुन्दरदेवतालये गंधपुष्पैर्धूपदीपैर्वस्त्रैर्नानाविधैः फ
लैःभक्तिभावे पूजयंतोराधायामूर्त्तिमुत्तमम् केचिद्गायंतिनृत्यंतिपठंतिस्तवमुत्तमं तालवेणुमृदंगांश्चवादयंतिचकेमु
दा जनांस्तथाविधान्दृष्ट्वाकौतूहलसमन्विता तस्यास्तुवचनंश्रुत्वापरकार्येहितेरता आरेभिरेतदावक्तुंवैष्णवाव्र
ततत्पराःराधाव्रतिनऊचु भाद्रेमासिसिताष्टम्यांजाताश्रीराधिकायतः अष्टमीसाद्यसंप्राप्तातांकुर्वंप्रयत्नतःगोदा
नजनितंपापंस्तेयजंब्रह्मघातकं परस्त्रीहरणेचैवतथाचगुरुतल्पगं विश्वासघातजंचैवस्त्रीहत्याजनितंतथाएतानिना
शयत्याशुकृताराधाष्टमीनृणां तेषांतुवचनंश्रुत्वासर्वपातकनाशनं करिष्याम्यहमित्येवपरामृश्यपुनःपुनः तत्रैवव्र
तिभिः सार्द्धंकृत्वासाव्रतमुत्तमं दैवात्सापंचतांयातासर्पघातेननिर्मलाः ततोयमाज्ञयादूताः पाशमुद्गरपाणयःआग
तास्तासमानेतुंबबंधूरज्जुभिस्तदा यदानेतुंमनश्चक्रुर्यमस्यसदनंप्रतितदागताविष्णुदूताशंखचक्रगदाधराः हिरण्
मयंविमानंचराजहंसयुतंशुभं पाशस्यछेदनंकृत्वाचक्रेणातित्वरान्विताःरथेचारोपयामासुस्तांनारींगतकिल्बिषां
न्युर्विष्णुपुरंतेचगोलोकाख्यमनोहरं कृष्णेनराधयास्तत्रास्थिताव्रतप्रसादतः राधाष्टमीव्रतंतातयोनकुर्याच्चमूढ
धीः नरकान्निष्कृतिर्नास्तिकोटिकल्पशतैरपि स्त्रियश्चयानकुर्वीतव्रतमेतच्छुभप्रदं राधाविष्णोःप्रीतिकरंस
र्वपापप्रणाशनं अंतेयमपुरींगत्वापततिनरकेचिरं कदाचिज्जन्मचासाद्यपृथिव्यांविधवाध्रुवं एकदापृथिवी

वत्सदुष्टसंघैश्चताडिताः गौर्भूत्वाचभृशदीनाचायर्यौसाममांतिकं निवेदितानिनोदुःखरुदतीचपुनः पुनः तद्वा
क्यंचसमाकर्ण्यगतोहंविष्णुसंनिधिं कृष्णेनिवेदितेचाशुपृथिव्यादुःखसंचय तेनोक्तंगच्छभोब्रह्मन्देवैः सार्द्धंचभूत
ले अहंतत्रापिगच्छामिपश्चान्ममगणैः सह तच्छ्रुत्वाहसितोहंवैआगतःपृथिवीतल ततः कृष्णसमाहूयराधा
प्राणगरीयसी उवाचवचनंदेवी गच्छेहपृथिवीतले-पृथिवीभारनाशायगच्छा मिमर्त्यमंडलं इतिश्रुत्वापिसारा
धाप्यागतापृथिवींततः भाद्रेमासिसितेपक्षेअष्टमीसंज्ञिकेतिथौ वृषभानोर्यज्ञभू मेर्जातासाराधिकादिवायज्ञार्थंगो
पनार्यश्चचक्रुस्तांदिव्यरूपिणीं राजानंदमनाभूत्वातांप्राप्यानिजमंदिरं दत्तवान्महिर्षीनिःस्वासाचतांपरिपालयन्
इतितेकथितंवत्सत्वयापृष्टंचयद्वचः गोपनीयंगोपनीयंगोपनीयंप्रयत्नतः सूतउवाच यइदंशृणुयाद्भक्तयाचतुर्वर्गफ
लप्रदं सर्वपापविनिर्मुक्तोप्यंतेयातिहरेर्गृहम् इतिश्रीपाद्मब्रह्मखंडेव्रतकथाइयमेवज्येष्ठानक्षत्रयोगेज्येष्ठाष्टमीत
थाच नारदीये यदाज्येष्ठर्क्षसंयुक्ताभवेज्येष्ठाष्टमीद्विज ज्येष्ठानाम्नीतिसाज्ञेयापूजितापापनाशिनी अथैतांतुसमार
भ्यव्रतंषोडशवासरं महालक्ष्म्याः समुद्दिष्टंसर्वसंपद्विवर्धनं करिष्येहमहालक्ष्मिव्रतंतेत्वत्परायणः तद
विघ्नेनमेयातुसमाप्तिंत्वत्प्रसादतः तदविघ्नेनमेयातुडोरकंदक्षिणेकरे षोडशग्रंथिसहितंगुणैः षोडशभिर्यु
तं ततोन्वहंमहालक्ष्मींगंधाद्यैरर्चयेद्व्रती यावत्कृष्णाष्टमींतत्तुचरेदुद्यापनबुधः अथज्येष्ठापूजा लिंगपुराणे
कन्यास्थार्काष्टमीयातुज्येष्ठर्क्षेमहतीस्मृता अलक्ष्मीपरिहारायज्येष्ठांतत्रप्रपूजयेत् अत्रकन्यास्थार्कयोगेनप्राश
स्त्यमात्रं मासस्तुभाद्रपदश्चांद्रएव कालादर्शेपि भाद्रशुक्लाष्टमीज्येष्ठानक्षत्रेणसमन्विता महतीकीर्त्तिता
तस्यांज्येष्ठांदेवींप्रपूजयेत् यत्तुज्येष्ठानक्षत्रापेक्षंव्रतं तत्तिथिव्रताद्भिन्नं तयस्यांतिथौज्येष्ठानक्षत्रंतस्यांति

थोकार्य्यं तदुक्तमाथर्वणीयेस्कांदे मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुते यस्मिन्कस्मिन्दिनेकुर्य्याज्ज्येष्ठायाः प
रिपूजनमिति अष्टम्याखंडत्वेज्येष्ठ।योगवशेनपूर्वापरावाग्राह्या दिनद्वयेयोगेतदभावेवापरा पूर्वेह्निसन्नियोगे
पूर्वैव नवम्यासहिताकार्य्यासाष्टमीनात्रसंशयः मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुते रात्रिर्यस्मिन्दिनेतत्र
ज्येष्ठायाःपरिपूजनमिति तत्रैवोक्तेः अस्यापवादः यस्मिन्दिनेभवेज्ज्येष्ठामध्यान्हादूर्ध्वमप्यणु तस्मिन्न
न्हिचपूजाचन्यूनाचेत्पूर्ववारःइतिज्येष्ठानक्षत्रेतस्यखंडत्वेऽष्टमीभानुवारयुगन्यतरयुग्वाज्येष्ठानक्षत्रंग्राह्यं तत्रा
ष्टम्यांभानुवारोयदाज्येष्ठर्क्षमेववा लोलज्येष्ठेतिसाप्रोक्तादुर्लभावहुकालिकेतिस्कंदात् अन्यतरयोगस्याप्य
भावेमध्याह्नादूर्ध्वमनुवर्तमानंग्राह्यं पूर्वोक्तस्कांदात् तथा मंत्रेणावाहयेद्देवींज्येष्ठायांतुप्रपूजयेत् मूलेविसर्ज
येद्देवींत्रिदिनंव्रतमुत्तमिति विशाखायोगेसतिज्येष्ठानुमंत्रणमनुराधायां तद्योगरहितायांकार्यं असंभवेपाद
मात्रंहित्वास्थापयेदिति निर्णयोद्धारेउक्तं अत्रभद्रादिवर्जयित्वाज्येष्ठांनिमंत्रयेत् अपरिहारयोगेतुभद्रामुखमा
त्रंत्यजेत् संपूर्णावैधृतिश्चेत्तदाघटिकाः षोडशद्वादशवात्यक्त्वामंत्रयेत् इदंव्रतंमहाराष्ट्रेषुप्रसिद्धं निर्णयसिंधौ इदं
व्रतंकेवलतिथौकेवलनक्षत्रेचोक्तं मात्स्ये प्रत्याब्दिकतिथावुक्तंज्येष्ठादेवतंव्रतं प्रतिज्येष्ठाव्रतंयच्चविहितंकेवलोडु
नि तिथावेवाचरंत्याद्यद्वितीयंकेवलोडुनि दाक्षिणात्यास्तुऋक्षेएवकुर्वंति अतएवमदनरत्नेभविष्येउक्तं मा
सिभाद्रपदेशुक्लेपक्षेज्येष्ठायदाभवेत् रात्रौजागरणंकुर्य्यादेभिर्मंत्रैश्चपूजयेत् पूजामंत्रोभविष्ये पुत्रदारसमृद्ध्यर्थंल
क्ष्म्याश्चैवविवृद्धये अलक्ष्म्याश्चविनाशायज्येष्ठेत्वांपूजयाम्यहमितिमंत्रेणषोडशोपचारैः पूजयेत् ततोनमस्कारमं
त्रः ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः शर्वाण्यैतेनमस्तुभ्यंशाकंभर्यैतेनमोनमः अथकथारूपपूजाविधानं भवि
ष्योत्तरे युधिष्ठिरउवाच ऋतुवंध्यातुयानारीकाकवंध्यातथापरा मृतप्रजाद्वितीयाचयोनिदोषैश्चदूषिता निर्धना

ध्वजनायेचदारिद्रेमहतिस्थिताः कर्मणाकेनमुच्यंतेतन्मेब्रूहिजनार्दन कृष्णउवाच मासिभाद्रपदेशुक्ले पक्षेज्येष्ठायदाभवेत् रात्रौजागरणकुर्य्याद्गीतवादित्रनिःस्वनैः एवंविधिविधानेनएभिर्मंत्रैश्चपूजयेत् एह्येहित्वंमहाभागेसुरासुरनमस्कृते ज्येष्ठेत्वंसर्वदेवानांमत्समीपगताभव ॥ आवाहनं ॥ श्वेतसिंहासनस्थात्वंश्वेतवस्त्रैरलंकृता वरदंपुस्तकपाशविभ्रत्यैतेनमोनमः आसनम् ॥ ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्राह्मिब्रह्मवादिनि क्षीराब्धौतुसमुद्भूतेअर्घ्यंज्येष्ठनमोस्तुते ॥ अर्घ्यम् शार्ङ्गबाणाश्चखड्गंचप्रासतोमरदर्पणौ.अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं सुरासुरनरैर्वंद्यायक्षकिन्नरपूजिता पूजितासिमयादेविज्येष्ठेत्वामर्चयाम्यहं विप्रप्रियेमहाभागेसुरासुरसुपूजिते स्थूलसूक्ष्ममयेदेविज्येष्ठेत्वमर्चयाम्यहं एभिर्मंत्रैः सर्वोपचारपूजा त्वंलक्ष्मीस्त्वमुमादेवीत्वंज्येष्ठेसर्वदामरैःपूजितासिमयादेविवरदाभवमेसदा इतिप्रार्थनामंत्रःपुत्रदारविवृद्ध्यर्थंलक्ष्म्याश्चैवाद्विजोत्तमं गुरुंसंपूजयेद्वस्त्रधान्यैराभरणादिभिः द्वादशैवतुवर्षाणिपूजनीयाप्रयत्नतः यावज्जन्मतथापूज्याविधिनानेनमानवैः ददातिवित्तपुत्रांश्चपूजनीयासदास्त्रियः अनेनविधिनायुक्तोयोहिपूजयतेनरः नारीवापूजयस्येनांतस्यलक्ष्मीर्विवर्धते वंध्यातुलभतेपुत्रान्दुर्भगासुभगाभवेत् मृतवत्साजीवपुत्राकाकवंध्याप्रजावती दुःखितोहिनरःकश्चित्ससर्वदाससुखीभवेत् एवंविधविधानेनज्येष्ठावस्त्वर्चयेत्सदा विघ्नास्तस्यप्रणश्यंतियथाप्सुलवणंतथा यथाप्राप्यंकुरुश्रेष्ठज्येष्ठायाःशोभनंव्रतं निराजनीकृत्वापश्चाद्दीपोग्राह्यःसुभक्तितः नैवेद्यसहितप्राणाहुतित्वथयुधिष्ठिर गुरुहस्तात्सदाग्राह्योदीपः प्रज्वलितोमहान् व्रतस्याभक्तियुक्तस्तुशुचिःप्रयतमानसः अनेनविधिनाचैवव्रतग्राह्यंयुधिष्ठिर ज्येष्ठानामपरादेवीभुक्तिमुक्तिफलप्रदा यस्तुपूजयतेराजन्तस्मैस्वर्गंप्रयच्छति तत्रैवस्कांदे मासिभाद्रपदेपक्षेशुक्लेज्येष्ठर्क्षसंयुतेयस्मिन्कस्मिन्दिने कुर्य्याज्ज्येष्ठायाःपरिपूजनं तत्राष्टम्यांयदाव.योभानोर्ज्येष्ठर्क्षमेवचनीलज्येष्ठेतिसाप्रोक्तादुर्लभाबहुकालिकीकृतःस्त.नो।

नरःकुर्य्यात्तस्यामन्यत्रवादिने भक्तियुक्तःशुचि कुर्य्याज्ज्येष्ठादेव्यास्तुपूजनं नद्याःपूर्वेचुशाहृत्यसिकताःशुद्धदेशजाःदे
वीरूपतुतत्रैवकृत्वातुब्राह्मणैःसह- मंडलेतांनुसंस्थाप्यदेवींहेममयींततः स्थापयेद्राजतींताम्रींलेख्यांवापटकुडय
योः आवाहयेत्ततोदेवीमथवापुस्तकेपिवा त्रिलोचनांशुक्लदंतींराजजींबिभ्रतींतनुं विवस्त्रांरक्तनयनांज्येष्ठामावाह
याम्यहं । इतिमंत्रेणतादेवीमावाह्यसुकृतव्रती स्नानंदद्यात्तथापाद्यंपादयोर्द्विजपुंगवः श्रीखंडकर्पूरयुतंदद्यादर्घ्यंतथा
र्घनं भक्त्यामयाप्रपन्नेनयदन्नंदीयतेतवतद्गृहाणसुरेशानिज्येष्ठेश्रेष्ठेनमोनमः इत्युच्चार्य्यसुवर्णादिपात्रेणांजालिना
पिवा अर्घ्यंदत्त्वास्मरेद्देवींगंधपुष्पैस्तथार्चयेत् गोधूमयवशाल्यादितद्द्रव्यैस्तुपारयेत् तन प्रसृतमात्रैस्तुपूरिकादी
निसर्पिपानिवेदयेद्व्रतैरेवदद्याद्देव्यैप्रयत्नतः ततस्तुत्वामहादेवींसर्वकामफलप्रदां ज्येष्ठायैतेनमस्तुभ्यश्रेष्ठायैतेनमो
नमःज्येष्ठेश्रेष्ठतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि गृह्याहिस्वंमहामायेअर्घ्यंगृहाणनमोस्तुते अर्घ्यंस्तुत्योत्तयास्तोत्रंसंपस्या
गीतानिपुरतस्ततःसौवीरैश्चैवसंयुक्तोदद्याच्छास्त्रेभ्यएवच सुवासिनीभ्यःशक्त्यातुदद्याद्द्रव्यंकृतव्रती तत्रदेवीमनुज्ञा
प्यततोभुंजीतवाग्यतः भक्षयित्वातदाचम्यदेवींनत्वापुनःपुनःशयीतब्रह्मचर्य्येणकुर्य्यात्प्रातर्विसर्जनं एवमेवप्रकु
र्य्याद्वैव्रतंतुप्रतिवत्सरं विसर्जनांतेतुतज्ञःसिकतावारिणिक्षिपेत् अपूपवटकान्दद्याद्ब्राह्मणेभ्यस्ततोद्विजः कुर्य्यादेवं
प्रयत्नेनसायंप्रातर्विसर्जयेत्विद्यार्थीप्राप्नुयाद्विद्यांस्त्रीकामःस्त्रियमाप्नुयात्शिवस्मरणकारीतुद्रव्यैदद्यादसौ अयं सौ
वर्णंराजतंतास्रंकृतकृत्योभवेत्तदा व्रतस्त्वंचकृतयाकृतार्हणः देव्यामहत्त्वकथितंतदेवंविधिश्चयत्रार्चनसयुतस्तथा
मंत्रोपिसायुज्यकरोव्रतस्यतस्मान्मयातेकथितसदैवं ॐअथोद्यापन ॐमदममालक्ष्मीपरिहारपूर्वकधनधान्यपुत्र
सौभाग्यादिवृद्ध्यैज्येष्ठाव्रतोद्यापनंकरिष्ये सौवर्णीज्येष्ठाप्रतिमांसर्वतोभद्रस्थकलशोपरिसंस्थाप्यमंडलदेवतास
हितांतस्याःपूजांकृत्वात्रिलोचनाशुक्लदंतामितिध्यात्वा विवस्त्रारक्तनयनामित्यावाह्य ज्येष्ठेश्रेष्ठतपोनिष्ठेत्यर्घ्यं

दत्वातामग्निवर्णां आपोहिष्ठेतितिसृभिः हिरण्यवर्णामित्यादिभिःसंपूज्य यस्याःसिंहोरथयुक्तोव्याघ्रश्चापिमहा
बलःज्येष्ठामहामिमांदेवींप्रपद्येशरणंविभुं ततःप्रार्थना ज्येष्ठांतर्पयामि श्रेष्ठांतर्पयामि विद्यांतर्पयामि वैनायिकीं
तर्पयामितापिनींतर्पयामि श्रीकृष्णांतर्पयामिनमः ततःअष्टवटुकानांवायनंदद्यात् रात्रौजागरणंकुर्य्यात् प्रातःपु
नःसंपूज्याग्निंप्रतिष्ठाप्य अन्वादध्यात् ततोहोमंकुर्य्यात् तत्रप्रधानं गौरींतामग्निवर्णांतपसाज्वलंतींवैरो
चनींकर्मफलेजुष्टां दुर्गांदेवींशरणमहंप्रपद्ये इतिमंत्रेण ॥ दधिमधुक्षीरघृतैःप्रत्येकमष्टोत्तरशतसंख्याहुतिभिः
मंडलदेवताश्चैकैकयाआज्याहुत्यायवादिचरुहोमेनयक्षे एवंहोमंसंपाद्य आचार्यायपीठंप्रतिमावस्त्रगोदाना
दिदत्वा सुवासिनीर्ब्राह्मणाश्चसंपूज्याःसिकतादिकं नद्यांत्यजेत् एवंद्वादशपर्यंतंआजन्मपर्यंतवाज्येष्ठाव्रतं
अत्रपूजा स्नानमाचमनंचैवमधुपर्कोपवीतकं गंधपुष्पतथाधूपंदीपंनैवेद्यमेवच पुनराचमनंचैवकारयित्वा
विसर्जयेत् ॐज्येष्ठायैनमः ॐसत्यायैनमः ॐकलियायैनमः ॐविद्यायैनमः ॐविनायकायैनमः ॐताप्यै
नमः- ॐश्रियैनमः ॐश्रीकृष्णायैनमः एभिरष्टभिर्नामभिस्तर्पणंहोमंचकुर्य्यात् हविष्यंस्वयमश्नीयाद्ब्रा
ह्मणांस्तेनभोजयेत्अनेनविधिनायस्तुब्राह्मणानांचतुष्टयं व्रतांतेप्रतिमांकुर्य्यात्सौवर्णींफलसंमितां कृष्णवस्त्रे
णसंयुक्तामाचार्य्यायनिवेदयेत् वस्त्राभरणमाल्यादिलेपनैःपूजितंद्विजं प्रणिपत्यततःपश्चात्तस्मैसर्वंनिवेदयेत्
ब्राह्मणानुक्त्वंतस्तेप्रकुर्य्याःस्वस्तिवाचनं एवंकृतेव्रतेःसम्यक्सर्वशांतिःप्रजायते धनधान्यसमृद्ध्यर्थंआरोग्यं
चप्रजायते इतिज्येष्ठाव्रतम् ॥ ॥ ॥ अत्रैवदूर्वाष्टमीव्रतम् ॥ नारदीये ॥ दूर्वाष्टमीव्रतंचात्रकथितं
तत्रमेशृणु शुचौदेशेप्रजातायांदूर्वायांद्विजसत्तम स्थाप्यलिंगंततोगंधैःपुष्पैर्धूपैश्चदीपकैः नैवेद्यैरर्चयेद्द
त्तयादध्यक्षतफलादिभिः अर्घ्यंप्रदद्यात्पूजांतेमंत्राभ्यांसुसमाहितइति _ इदंचपूर्वविद्धायामष्टम्यांकार्य्यंश्राव

णीदुर्गानवमीदूर्वाचैवहुताशनी पूर्वविद्धातुकर्तव्याःशिवरात्रिर्बलेर्दिनामितिदृहद्यमवचनात् शुद्धाष्टमीतिथि
र्यातुमासिभाद्रपदेभवेत् दूर्वाष्टमीतुसाज्ञेयानोत्तरासाविधीयते इतिहेमाद्रौमदनरत्नधृतपुराणसमुच्चयवचना
च मुहूर्त्तैर्वाहिपेष्टम्यांपूर्वावायदिवापरा दूर्वाष्टमीतुसाकार्य्याज्येष्ठांमूलंचवर्जयेदितिपरेत्युक्तं तत्पूर्वज्येष्ठामू
लयोगेकर्मकालव्याप्त्यभावेचद्रष्टव्यं दूर्वाष्टमीसदात्याज्याज्येष्ठामूलर्क्षसंयुता तथाभाद्रपदेमासिशुक्लाष्टम्या
चभारत दूर्वामभ्यर्चयेद्भक्त्याज्येष्ठामूलेविवर्जयेत् ऐन्द्रर्क्षपूजितादूर्वाहंत्यपत्यानिनान्यथा भर्त्तुरायुर्हरामूलेत
स्मात्तंपरिवर्जयेदिति मदनरत्नेस्कांदेशुक्लभाद्रपदेमासिदूर्वासंज्ञाचयाष्टमी सिंहार्कएवकर्तव्यानकन्यार्केक
दाचन सिंहस्थेतूत्तमासूर्येनुदितेमुनिसत्तम तत्रैव अगस्त्यउदितेतानपूजयेदम्रतोद्भवां वैधव्यंपुत्रशोकंच
दशजन्मानिपंचच यदातुभाद्रशुक्लाष्टम्यामगस्त्योदयस्तदातत्पूर्वकृष्णाष्टम्यांकार्यं शुक्लपक्षालाभेपूर्णिमांतमा
नभाद्रपदलाभात् यदातुभाद्रपदोधिकस्तदासिंहार्कएवेतिउदाहृतवचनात् अधिमासेतुसंप्राप्तेअगस्त्यउदि
तेमुने अर्वाक्चेदंव्रतकार्य्यंपरतोनतुकुत्रचिदितिविनिर्णयदीपेस्कांदाच्चाधिकएवकर्त्तव्यं इदंचस्त्रीणांनित्यं यानपूजय
तिनारीमोहादिहयथाविधि त्रीणिजन्मानिवैधव्यंलभतेनात्रसंशयः तस्मात्संपूजनीयासाप्रतिवर्षंवधूजनैरितिपुरा
णवचनात् यदातुज्येष्ठादिकंविनासर्वथाष्टमीनलभ्येततदाकर्त्तव्याचैकभक्तेनज्येष्ठामूलयदाभवेत् दूर्वामभ्यर्चयेद्भ
क्त्यानिर्धर्थ्यादिवसंनयेदितिभविष्योत्तरादनुकल्पेनानुष्ठानंनतुसर्वथाव्रतलोपः ॥ अथव्रतम् हेमाद्रौभविष्येब्रह्मन्भा
द्रपदेमासिशुक्लाष्टम्यामुपोषितः पूजयेच्छंकरंभक्त्यायोनरःश्रद्धयान्वितः सयातिपरमंस्थानयत्रदेवस्त्रिलोचनः
गणेशपूजयेद्यस्तुदूर्वयासहितंमुने अत्रगणेशः शिवः ॥ फलार्घैःसकलैर्दिव्यैर्गंधपुष्पैर्विलेपनैः दूर्वांपूज्यतथे
शानमुच्यतेसर्वपातकैः शुचौदेशेप्रजातायांदूर्वायांब्राह्मणोत्तमस्थाप्यलिंगंप्रतिष्ठाप्यपुष्पैर्धूपैः समर्चयेत् खर्जूरै

नारिकेलैश्चमातुलिंगैः फलैस्तथा पूजयेच्छंकरंभक्त्यादूर्वायांविधिवद्द्विज दध्यक्षतैर्द्विजश्रेष्ठअर्घ्यंदद्यात्रिलोचने
दूर्वाशमिभ्यांसंपूज्यमानवःश्रद्धयान्वितःसर्वसुकृतजन्मास्यात्सर्वदेवैर्नमस्कृतः विद्यांप्राप्नोतिविद्यार्थीपुत्रार्थीपुत्रमा
यात् धर्मार्थीधर्ममाप्नोतिकन्यार्थीलभतेध्रुवं मनसायद्यदिच्छेतत्तत्तदाप्नोतिमानवः यएवपूजयेद्दूर्वांभूतेशंमानवःफ
लैः सःसप्तजन्मपापौघैर्मुच्यतेनात्रसंशयः कृतोपवासःसप्तम्यामष्टम्यांशिवमर्चयेत् दूर्वासमेतंविप्रेंद्रदध्यक्षत
फलैःशुभैः ॥ अथदूर्वापूजामंत्रः त्वंदूर्वेमृतजन्मासिवंदितासिसुरासुरैः सौभाग्यंसंततिं
देहिसर्वकार्यकरीभव यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले तथाविस्तृतसंतानंदेहि त्वमजरामरं तालिं
गमंत्रैरीशानमर्चयेत्प्रयतः शुचिः ततः संपूजयेद्विप्रान्फलैर्नानाविधैर्द्विज अनाग्निपक्वमश्नीयाद्दध्नंदधिफलं
तथा अक्षारलवणंब्रह्मन्नश्नीयान्मधुनान्वितं दद्यात्फलानिविप्रेभ्यः फलाहारः स्वयंभवेत् प्रणम्यशिरसा
दूर्वांशिवंशिवमुपाश्नुते यएवंकुरुतेभक्त्यामहादेवस्यपूजनं गणत्वंयात्यसौब्रह्मन्मुच्यतेब्रह्महत्यया एवंपु
ण्यापापहरा अष्टमीदूर्वसंज्ञिता चतुर्णामपिवर्णानांस्त्रीजनानांविशेषतः आदित्यपुराणे अत्रश्रीपूजनमप्युक्तं
शुक्लाष्टम्यांतुसंप्राप्तेमासिभाद्रपदेतथा दूर्वाप्रतानंसुश्वेतमुत्तराशाभिगामिनं पूजयेद्गृहमानीयगंधमाल्यानुले
पनैः फलपुष्पैस्तथाचैवदीपैर्धूपैर्विसर्जयेत् अग्निपक्वंतथासर्वंनानिवेद्यंकथंचन भोक्तव्यंचतथाब्रह्मन्नाग्नि
पक्वविवर्जितं दूर्वांकुरस्थासंपूज्याविधिनायौवनेश्रियं यौवनंस्थिरमाप्नोतियत्रयत्राभिजायते भविष्योत्तरे
विशेषः अष्टम्यांफलपुष्पैश्चखर्जूरैर्नारिकेलकैः द्राक्षामोदकापिष्टैश्चबदरैर्लकुचैस्तथा नारंगैर्जंबुकैर्बीजपूरैश्चदाडिमैः दध्यक्षतैःस्रजोभिश्च धूपनैवेद्यदीपकैः मंत्रेणानेनराजेंद्रश्रृणुष्वावहितोमम त्वंदूर्वेमृत
जन्मासित्यादिपूर्वोक्तएवमंत्रः दत्त्वापिंडानिविप्रेभ्यः फलैश्चविविधैःप्रभो तिलपिष्टकगोधूमधान्यपिंडानिप्र

द्य भोजयित्वासुहृन्मित्रसंबंधिसुजनांस्तथा ततोभुंजीततच्छेषंस्वयंश्रद्धासमन्वितः कर्तव्यंचैकभक्तेनज्येष्ठा मूलंयदाभवेत् दूर्वामभ्यर्चयेद्भक्त्यान.वंध्यादिवसंनयेत् पक्षेभाद्रपदस्यैवंशुक्लाष्टम्यांयुधिष्ठिर दूर्वाष्टमीव्रतंपुण्यंयः करोतिहमानवःनतस्यक्षयमाप्नोतिसंतानंसप्तपौरुषंनंदनेवर्धतेनित्यंयथादूर्वातथाकुलं इतिभविष्येदूर्वाष्टमीव्रतम्

भाद्रशुक्लनवम्यांश्रीवृक्षनवमीव्रतम् भविष्योत्तरे श्रीकृष्णउवाच समुद्यतेपुरेदेवेषुक्षीरोदमथनेपुरादैत्या नामोहनाधाययापिद्रुतेंजनार्दने विल्ववृक्षेक्षणश्रांताकमलाकमलालया ममेयमितिचान्योन्यंयुयुधुर्देवदानवाः जितासर्वेपुरापार्थयुधिकृष्णेनचक्रिणा पातालंगमितादैत्याः साश्रीशमाययौतदा श्रीसमावासितायस्मा त्श्रीवृक्षस्तेनसंस्मृतः तस्माद्भाद्रपदस्यैवशुक्लपक्षेकुरूत्तम नवम्यामर्चयेद्भक्त्याइपत्सूर्योदयेव्रतं श्रीवृ क्षंविविधैः पुष्पैः रनाग्निपाचितैः फलैः तिलमिष्टान्नगोधूमैर्धूपगंधस्रगंवरैः ईषद्भानुकरातामृताम्रेकृतनभ स्तले मंत्रेणानेनराजेंद्रश्राकाकोलुकदर्शने श्रीनिवाशनमस्तेस्तुश्रीवृक्षशंकरप्रिय ममाभिलषितंकृत्वा स र्वविघ्नहरोभव संपूज्यमांततोभ्यर्चश्रीवृक्षंप्रणिपत्यच मंत्रेणानेनराजेंद्रदत्वाब्राह्मणभोजनैः ततोभुंजीतन क्षैतिलक्षारविवर्जितं अनग्निपक्कमूपान्नंदधिपुष्पफलंशुभं एवंयः कुरुतेपार्थश्रीवृक्षाभ्यर्चनंनरः नारीवा दुःखशोकाभ्यांमुच्यतेनात्रशंशयः सतजन्मातरंयावत्सुखसौभाग्यधान्यथा श्रीमतीफलिनीधन्यामर्त्यलोके महीपते श्रीवृक्षमक्षतफलंसततनवम्यानैवेद्यपुष्पफलवस्त्रविरूढधान्यैः पूज्याप्रभातसमयेपुरुषोत्तमेष्टांसं प्राप्नुवंतिपुरुषाः श्रियमुत्तमांच ॥

इतिश्रीभविष्योत्तरे श्रीवृक्षनवमीव्रतम्

अत्रैवनंदानवमी अत्रदुर्गापूजाक्ता नारदीये भाद्रेतुशुक्लानवमीनंदाख्यापरिकीर्तिता तस्यांयः पूजयेद्

दुर्गांविधिवच्चोपचारकैः सोऽश्वमेधफलंप्राप्यविष्णुलोकेमहीयते मदनरत्नेभविष्योत्तरेपिसुमंतुरुवाच मासि
भाद्रपदेयातुनवमीवहुलेतरा वहुलः कृष्णपक्षस्तदितराशुक्लानवमी तस्यांयःपूजयेद्दुर्गां विधिवत्कुरुनंदन
सोऽश्वमेधफलंविद्याविष्णुलोकंचगच्छति एकभक्तंतुसप्तम्यामष्टम्यांसमुपोषितःदूर्वोपरिस्थितादेवीमित्यादिखर्जू
रनारिकेलादिभिः पूजयित्वा रात्रौजागरणंकृत्वा नंदामंत्रंजपेत् ॐनंदायैस्वाहा हुंस्वरिति ततः प्रभाते
नवम्यांचंडिकांप्रीणयित्वा गुरुंशक्त्याकुमारीपूजयेत्ततः एवंचाश्वयुजेमासिकार्तिकेकार्तिकोत्तरे पूजयेच्चतु
रोमासान्नंदाभगवतींविभो स्नानंकुशोदकंप्रोक्तंप्राशनेचनराधिपेत्यादि इतिनंदानवमीव्रतम् ॥ ॥
भाद्रशुक्लदशम्यांदशावतारव्रतं नारदीये अथनभस्यशुक्लायांदशम्यांद्विजसत्तम व्रतंदशावतारास्यंस्नानं
तत्रजलाशये कृतसंध्यादिनियमोदेवर्षिपितृतर्पणं ततोदशावताराणिसमभ्यर्चेत्समाहितः मत्स्यंकूर्मंव
राहंचनरसिंहंत्रिविक्रमं रामंरामंचकृष्णंचवौद्धंकल्किनमेवच दशमूर्तींतुसौवर्णीः पूजयित्वाविधानतः दद्या
दशभ्योविप्रेभ्यः पूजयित्वातुनारदउपवासंचैकभक्तंकृत्वासंभोज्यवाडवान् विसृज्यपश्चाद्भुंजीतस्वयंस्वीयैः स
माहितः भक्त्याकृत्वाव्रतंह्येतद्भुक्त्वाभोगानिहोत्तमान् विमानेनव्रजेदंतेविष्णुलोकेसनातनमिति दशावता
रमूर्तयः पंचरात्रे वामेशंखगदांदक्षेद्विभुजोमत्स्यरूपधृक् नरांघ्रिर्मत्स्यरूपोवामत्स्यरूपीजनार्दनः अधों
घ्रिर्मत्स्यरूपोवायुक्तायुधकरचरणादिमान्मत्स्यरूपइतिविकल्पः कूर्मस्तुकमठाकारोमत्स्यरूपोक्तरूपवान् २॥
नरांगंसूकरास्यचमनाक्यौनसुभीषणं श्रीवामकूर्परस्थातुधरानंतौपदानुगौ एतद्रूपधरंदेवंवाराहंभुक्ति
मुक्तिदं कूर्परंदंष्ट्राग्रमिति ॥ ३ ॥ ज्वलदग्निसमाकारंसिंहवक्त्रंनरांगकं दंष्ट्राकरालवदनंललज्जिह्वंसुभी
षणं वृत्तास्यंकुटिलंक्रुद्धमानद्धंपीनवक्षसं अभेद्यतीक्ष्णनखरमात्मसंहतदानवंतद्वक्षोदारयंतंचकराभ्यांन

खरैर्भृशं गदाचक्रधरंदोर्भ्यांनरसिंहंचतुर्भुजम् ॥ ४ ॥ कुंडीछत्रधरोह्नंदोर्वामनः परिकीर्त्तितः द्विदोर्द्विभुजा ॥ ५ ॥ क्षत्रांतकरणंघोरंमुद्वहन्परशुंकरे जामदग्न्यश्चकर्त्तव्योभृशंरोषारुणेक्षणः ॥ ६ ॥ युवाप्रसन्नवदनः सिंहस्कंधोमहाबलः आजानुबाहुःकर्तव्यो रामोबाणधनुर्धरः मद्यपात्रंचसीरंचवामदक्षिणयोः क्रमात् गदामुशलवज्रंचहलीरामः प्रकीर्त्तितः शंखचक्रगदापद्मंदधानोनीलमेघभः कृष्णः कमलपत्राक्षः कर्तव्यश्चचतुर्भुजः द्विभुजोवापिकर्त्तव्यः पीतांबरविभूषितः शंखचक्रधरः श्यामोद्विभुजः कृष्णसंज्ञकः ॥ ८ ॥ कषायवस्त्रसंवीतः स्कंधसंसक्तचीवरः पद्मासनस्थोद्विभुजो ध्यायीबुधः प्रकीर्त्तितः खड्गोद्यतकरःक्रुद्धो हयारूढोमहाबलः म्लेच्छच्छेदकरः कल्की द्विभुजः परिकीर्त्तितइति ॥ १० ॥ अस्याविधानंभविष्योत्तरे ॥ युधिष्ठिरउवाच दशम्यांशुक्लपक्षस्ययासौप्रोष्ठपदेशुचिः स्नात्वाजलाशयेस्वच्छेपितृदेवादितर्पणं कृत्वाकुरुकुलश्रेष्ठगृहमागत्यमानवः गृहीत्वाधान्यचूर्णस्यस्वहस्तेप्रसृतित्रयं क्रमेणपाचयेत्ततुपायसंघृतसंयुतं प्रथमेपूपकान्वर्षे द्वितीयेघृतपूपकान् तृतीयेपूपकसराश्चतुर्थेमोदकान्शुभान् सोहालकान्पंचमेचषष्ठेविखडवेष्टकान् सप्तमेद्वेकोकरसामकंपुष्पांस्तथाष्टमे नवमेकर्णवेष्टांश्चदशमेमंडकान्शुभान् दद्यात्स्वयंदशहरेर्देशविप्रायदापयेत् क्रमेणभक्षयेद्दत्वायथोक्तविधिनानृप अर्धार्द्धंविष्णवेदेव मर्धार्धं चद्विजातये ततोपरार्धमश्नीयाद्दत्वारम्येजलाशये मंत्रेणानेनमेधावीहारिमभ्युक्षवारिणा मत्स्यकूर्मवराहंचनरसिंहंत्रिविक्रमं रामंरामचकृष्णंचबौद्धंचैवसकल्किकं गतोस्मिशरणंदेवंहरिंनारायणं विभुं प्रणतोस्मिजगन्नाथंसमेविष्णुप्रसीदतु छिनत्तुवैष्णवीमायांभक्त्याप्रीतोजनार्दनः श्वेतद्वीपंनयेत्तस्मात्मयात्मासन्निवेदितः अत्रहैमीर्मत्स्यादिप्रतिमाः कृत्वापूज्याः एवयः कुरुतेभक्त्याविधिनानेनसुव्रत दशावारनामाद्यतस्यपुण्यफलंश्रृणु । श्रूयतेयास्त्विमालोके

मनुष्याणांदशदर्शा: तांछिनत्तिनसंदेहश्चक्रप्रहरणोविभु: संसारसागराद्घोरात्समुद्धृत्यजगत्पति: श्वेतद्वीपं
नयत्याशुव्रतेनानेनतोषित: किंतस्यनभवेल्लोकेयस्यतुष्टोजनार्दन: यद्दुर्लभंयदप्राप्यंमनसोयन्नगोचरं तदप्यप्रा
र्थितंध्यातोददातिमधुसूदन: सोहंजनार्दन: प्राज्ञ:कालरूपधरोच्युत: मर्त्यलोकेस्वयंपार्थभूभारोत्तारकारणात् या
स्त्रीव्रतमिदंपार्थचरिष्यतिमयोदितं सालक्ष्म्याचलयुक्तास्यात्पुत्रभर्तृसमन्विता मर्त्यलोकेचिरंस्थित्वाविष्णुलोके
महीयते विष्णुलोकाद्रुद्रलोकंततोयातिपरांगतिंयेपूजयतिपुरुषा:पुरुषोत्तमस्यमत्स्यादिकास्तुदशमीषुदशावता
रान् मन्येदशस्वपिदशासुसुखंविहृत्यतेयांतियानमधिरुह्यसुरारिलोकम् इतिभविष्येदशावतारदशमीव्रतम्
भाद्रशुक्लेकादशीपद्मा तदुक्तं नारदीये नभस्यैकादशींशुक्लांपद्माख्यांसमुपोष्यवै कृत्वानित्यार्चनंतत्रकटिदानम
थाचरेत् पूर्ववत्स्नापितायास्तुप्रतिमायाद्विजोत्तम समुत्सवविधानेननीत्वातांसलिलाशये कृत्वांबुस्पर्शनंतस्य
संपूज्यविधिनातत: आनीयमंडपेतस्मिन्पार्श्वेनचस्वापयेत् तत:प्रभातेद्वादश्यांगंधाद्यैरर्च्यवामनं संभोज्यवा
डवान्दत्त्वादक्षिणांचाविसर्जयेत् एवंय:कुरुतेविप्रपद्माव्रतमनुत्तमं भुक्तिमत्रामुत्रमुक्तिंलभतेनात्रसंशय:कटिदानंभग
वत: पार्श्वपरिवर्तनेशय्यादानमित्यर्थ: अथकथाभविष्योत्तरे युधिष्ठिरउवाच नभस्यस्यासितपक्षेकिंनामैकादशी
भवेत् कथयस्वप्रसादेनकोवात्रविधिरुत्तम: कृष्णउवाच कथयामिमहीपालकथामाश्चर्यकारिणीं कथ
यामासयांब्रह्मानारदायमहात्मने नारदउवाच कथयस्वप्रसादेनचतुर्मुखनमोस्तुते नभस्यशुक्लपक्षेतुकिंना
मैकादशीभवेत् एतदिच्छाम्यहंश्रोतुंविष्णोराराधनायवै ब्रह्मोवाच वैष्णवोसिमुनिश्रेष्ठसाधुपृष्टंकविप्रिय
नात:परतरंलोकेपवित्रंहरिकीर्तितं पद्मानामेतिविख्यातानभस्यैकादशीसिता हृषीकेश:प्रीतयेस्या:कर्तव्यंव्रतमु
त्तमं कथयामितवाग्रेहंकथांपौराणिकींशुभां यस्या:श्रवणमात्रेणमहापापंविनश्यति मांधातानामराजर्षिर्विवस्व

ढंशतंभवः बभूवचक्रवर्त्तीसनृपःसत्यप्रतापवान् धर्मतःपालयामासप्रजाःपुत्रानिवौरसान्तस्यदेशेनदुर्भिक्षंनाध
योव्याधयस्तथा निरातंकाःप्रजास्तस्यधनधान्यसमेधिताः नान्यायोपार्जितंवित्तंकोशेतस्यमहीपतेः स्वस्व
मार्गंप्रवर्त्तन्प्रजाधर्मपरायणाः कामधेनुसमाभूमिस्तस्यराज्ञोमहीपते तस्यैवकुर्वतोराज्यंबहुवर्षगणागताः अ
थकदाचित्संजातेविपाकेकिलकर्मणः वर्षत्रयंतुतद्विषयेनववर्षवलाहकः तेनोद्विग्नाःप्रजास्तस्यबभूवुःक्षुधयार्दिताः
अथप्रजाःसमागम्यराजानमिदमब्रुवन् श्रोतव्यंनृपशार्दूलप्रजानांवचनंत्वया आपोनाराइतिप्रोक्ता पुराणेपुम
हर्षिभिः अयनंभगवांस्तस्मान्नारायणइतिस्मृतः पर्जन्यरूपीभगवान्विद्वन्सर्वगतःस्थितः सएवकुरुतेवृष्टिम
न्नंचततःप्रजाःतदभावेनन्नृपतिक्षयंगच्छंतितःप्रजाःतथाकुरुनृपश्रेष्ठयोगक्षेमंयथाभवेत् राजोवाच सत्यमुक्तंभ
वद्भिस्तुनमिथ्याभिहितंवचः अन्नंब्रह्मेतियत्प्रोक्तंसर्वमन्नेप्रतिष्ठितं इत्येवंश्रूयतेलोकेपुराणेबहुविस्तरे नृपा
णामपचारेणप्रजानांपीडनंभवेत् नाहंपश्याम्यपकृत्यंदोषंपश्याद्विचारयन् तथापिसाधयिष्यामिप्रजानांहितक
म्यया इतिकृत्वामतिंराजापरिमेयपरिच्छदः नमस्कृत्यविधातारंजगामगहनंवनं चचारमुनिमुख्यानामाश्र
मांस्तपसाश्रितान् ददर्शाथतपस्ततमृषिमांगिरसंनृपःतेजसाद्योतितदिशंद्वितीयमिवभास्करं तंदृष्ट्वाहर्षितो
राजाअवतीर्यस्ववाहनात् नमश्चक्रेन्वपादत्यराजांजलिपुटोभवत् मुनिस्तमभिनद्याथस्वस्तिवाचनपूर्वकंपप्र
च्छकुशलंराज्येसप्तस्वंगेषुभूपतेः निवेदयित्वाकुशलंपप्रच्छानामयंनृपःदत्तासनोगृहीतार्घ्यमुपविष्टंस्वसान्निधौ
प्रत्युवाचमुनिंराजापृष्टोह्यागमकारणं राजोवाच भगवन्धर्मविधिनाममपालयतोमहीं अनावृष्टिःप्रवृत्तावै
नाहंवेदात्रकारणं संशयच्छेदनार्थायह्यागतोहंतवांतिकं योगक्षेमविधानेनप्रजानांकुरुनिर्वृतिं अंगिराउवाच
एतत्कृतयुगंराजन्युगानामुत्तमंस्मृतं अत्रधर्मपरालोकाधर्मःस्याच्चतुष्पदःअस्मिन्युगेतपोयुक्ताब्राह्मणानेतरेजनाः

विपयेतवराजेंद्रदृपलोहितपस्यतिविकर्मकरणात्तस्यनवर्षतिवलाहकः कुरुतस्यविधेयत्वंयेनदोपःप्रशाम्यति
॥ राजोवाच नाहमेनंवधिष्यामितपस्यतमनागसं धर्मोपदेशंकथयह्युपसर्गविनाशनम् ॥ ऋषिरुवाच ॥
ततःशृणुनृपश्रेष्ठकुरुष्वैकादशीव्रतं नभस्यस्यासितेपक्षेपद्मानामेतिविश्रुता यस्याव्रतंकुरुनृपसप्रज·सपरिच्छद·
इतिवाक्यंनृपे श्रुत्वाराजास्वगृहमागतः तस्याव्रतप्रभावेणसुवृष्टिरभवत्तदा सर्वसिद्धिकरीह्येपासर्वोपद्रवना
शिनी प्राप्तेभाद्रपदेमासिपद्माव्रतमथाकरोत् प्रजाभिश्चाथसर्वाभिश्चातुर्वर्ण्यसमन्वितः एवंव्रतेकृतेराजन्
प्रववर्षबलाहक· जलेनप्लावृताभूमिरवसत्सस्यशालिनी हृषीकेशप्रसादेनलोका·सौख्यंप्रपेदिरे एतस्मा
त्कारणादेवकर्त्तव्यंव्रतमुत्तम भुक्तिमुक्तिप्रदंचैवलोकानांसुखदायकं पठनाच्छ्रवणाद्राजन्सर्वपापैःप्रमुच्यते इ
तिब्रह्मांडपुराणेभाद्रशुक्लापद्मैकादशीव्रतमाहात्म्यकथा अस्यामेवैकादशीश्रवणनक्षत्रसंयुतायांविजयैकादशी
व्रतं तदुक्तंमदनरत्नेहेमाद्रौचभविष्योत्तरे ॥ श्रीकृष्णउवाच द्वादश्यास्तेविधिःप्रोक्तःश्रवणेनयुधिष्ठिरस
र्वपापप्रशमन·सौख्यमोक्षप्रदायकः एकादशीयदाशुक्लाश्रवणेनसमन्विता विजयासातिथिःप्रोक्ताभक्तानां
विजयप्रदाअभीष्टासर्वदेवस्यसर्वदाविजयातिथिः एपवैफाल्गुणेमासिपुष्येणसहितानृप विजयाप्रोच्यतेस
द्भिःकोटिकोटिगुणोत्तरा एपैवशुक्लपक्षैकादशीपरामृशते एकादश्यांसोपवासोरात्रौसंपूजयेद्धरिं सौवर्णे
रौप्यपात्रेवादारुवंश्यमयीपिवा सौवर्णंवामनंकुर्य्यात्स्वचित्तस्यानुसारतः शुभाननधारयंतमक्षसूत्रंतथैवच शि
खीकमंडलुधरच्छत्रीयज्ञोपवीतवान् एवंलक्षणसंपन्नंवामनंपूजयेद्धरिं आच्छाद्यपात्रंवासोभिरक्षतैःफलसंयु
तं मार्गेणचर्मणावापिभक्त्यावाशक्त्यपेक्षया तिलोदकेनसंपूर्णंप्रस्थेनकुडवेनवा अलाभेयवगोधूमै·फलंमु
ख्यंतिलैर्भवेत् पुष्पैर्गंधै·फलैर्धूपै·कालोत्थैरर्चयेद्धरिं नानाविधैश्चनैवेद्यैर्भक्ष्यैर्भोज्यैर्गुडोदनैः मंत्रवत्तच्छत

गुणंभक्त्याकोटिगुणोत्तरं पूजामंत्रान्प्रवक्ष्यामितान्शृणुष्वयुधिष्टिर पादौमत्स्यायचनमोनमःकूर्मायजानुनी
वाराहायनमोगुह्यंनृसिंहायेतिनाभितः उरस्तुवामनायेतिभुजौरामायवैनमः मुखंरामायचनमःकृष्णायचनमः
शिरः मत्स्यःकूर्मोवराहश्चनरसिंहोथवामनः रामोरामश्चकृष्णश्चअर्चयामिनमोनम इत्यर्चनमंत्रः गंधपुष्प
फलैर्वन्यैर्नैवेद्यैर्विधिनार्चयेत् एवमभ्यर्च्यविधिवदेकादश्यांसमंत्रकं जागरंतत्रकुर्वीतगीतवादित्रनिस्वनैः एवं
सनियमंस्थित्वाप्रभातेविमलेसति पूर्वोक्तविधिनातद्वदर्चयेद्वामनंहरिं प्रदद्याद्वेदविदुषेब्राह्मणेमंत्रतोनृप वा
मनोबुद्धिदोदाताद्रव्यस्थोवामनःस्वयं वामनोस्यप्रतिग्राहीवामनोवैनमस्कृतःब्राह्मणोग्निरितिमंत्रेणप्रतिगृह्णी
तमंत्रवित् वामनःप्रतिगृह्णातिवामनोवैददातिच वामनस्तारकोभूम्यांवामनायनमोनमइतिप्रतिग्रहमंत्रः ए
वंदत्वाततःप्रातर्भोजनप्रदापयेत्‌ पूर्वंदत्वावामनेभ्यःपश्चाद्भुंजीतचस्वयं भूयोयथेच्छयाराजन्सर्वत्रैवविधिः
स्मृतः एवंकृतव्रतेब्रह्मन्यत्पुण्यंतन्निबोधमे यावत्कल्पशतंपूर्णमेकसप्ततिसंख्यया प्राप्यविष्णुपुरंराजन्क्रीड
तेकालमक्षयं इहागत्यभवेद्राजाप्रतिपक्षक्षयंकरः हस्त्यश्वरथदानानांदाताभोक्ताविमत्सरी रूपसौभाग्यसं
पन्नोदीर्घायुर्नीतिजोभवेत् पुत्रपौत्रैःपरिवृतोजीवेच्चशरदांशतं एषाव्युष्टिःसमाख्याताएकादश्यामयंतव व्यु
ष्टिःफलं पृथगेवसमाख्याताद्वादशीश्रवणान्विता उपोष्यैकादशींपश्चाद्द्वादशीमप्युपोषयेत् नचात्रविधिलो
पःस्यादुभयोर्दैवतंहरिरिति इदंश्रवणद्वादशीव्रतमुत्तरदिने विजयैकादशीव्रतंचैकादश्यामेवश्रवणयुक्तायां
कार्यंश्रवणयुक्तैकादश्याउत्तरदिनेऽलाभेदशमीविद्धायामपिश्रवणयुक्तैकादश्यामेवकार्यं दशम्येकादशीयत्रेत्येत
द्व्रतप्रकरणस्थवह्निपुराणवचनात् विशेषस्तुद्वादशीनिर्णयेज्ञेयः एतत्पारणंतुपरान्हेश्रवणापेक्षयाकर्तव्यश्रवण
स्याधिक्येपारणनिषेधसतिश्रवणमतिवाह्यत्रयोदश्यामेवकर्तव्य तिथिवृद्धौतुद्वादश्याउडुसंख्यया‌त् वृद्धौकुर्या

त्रयोदश्यांतत्रदोषोनविद्यते इत्येतत्प्रकरणपठितवन्हिपुराणवचनात् ॥ ॥ इतिविजयैकादशीव्रतनिर्णयः ॥ अस्यांश्रवणैकादश्यांमध्यान्हेवामनावतारइतिनिर्णयामृतेनिर्णयसिंधौचभविष्योत्तरश्रीभागवताष्टमस्कंधाष्टादशाध्यायेतुवामनोत्पत्तिरुक्तासायथा श्रावणेश्रवणद्वादश्यांमुहूर्तेभिजितिप्रभुः सर्वनक्षत्रताराद्याश्चक्रुस्तज्जन्मदक्षिणम् १ द्वादश्यांसवितातिष्ठन्मध्यंदिनगतोनृप, विजयानामसाप्रोक्तायस्यांजन्मविदुर्हरेः २ अस्यार्थः श्रवणस्थेचंद्रेतत्रापिश्रवणांशेअभिजितिनक्षत्रेतच्चश्रुत्युपदर्शितं अभिजिन्नामनक्षत्रमुपरिष्टादुपानामधस्ताच्छ्रोणायाइतिएवंविशिष्टेमुहूर्तेप्रादुर्बभूवेत्यर्थः यस्यांद्वादश्यांहरेर्जन्मतत्तस्यामेवविदुः तदाचमध्यंदिनगतः सवितातिष्ठत्साचद्वादशीविजयानामेतिप्रोक्तेत्यन्वयइतिश्रीधरस्वामिनः अत्रकल्पभेदाद्व्यवस्थेतिकेनच वस्तुतस्तुद्वादशीशब्देनैकादश्याएवाभिधानात् भविष्योत्तरभागवतयोर्नैवार्थस्यसंगतिः सप्रवृत्तिपरजासिनत्याज्य १ द्वादशीव्रतमित्यादिषुद्वादशीशब्देनैकादश्याएवगृहीतत्वात् अथात्रभविष्योत्तरेवामनपूजाप्रयोगः तत्रप्रातः स्नानादित्रिवर्त्यमध्याह्नेकलशस्थापनंकृत्वा तदुपरिआढकादिपरिमिततिलयवादिपूर्णस्वर्णादिपात्रेसौवर्णवामननिधाय शुभाननंधारयतमित्यादिप्रकारेणध्यात्वा वामनायनमइत्यनेनपौरुषसूक्तेनचावाहनादिपुष्पांजलिपर्यंतंपूजयित्वा मत्स्यादिनामभिः पादादिपूजांविधायगंधादिनातमभ्यर्च्यदध्यक्षतफलयुक्तमर्घ्यंगृहीत्वा नमस्तेपद्मनाभायनमस्तेजलशायिने तुभ्यमर्घ्यंप्रयच्छामिबालवामनरूपिणइत्यर्घ्यंसमर्प्य नमःकमलकिंजल्कपीतनिर्मलवाससेमहाहवरिपुस्कंधघृष्टचक्रायचक्रिणे इतिस्तुत्वापुष्पांजलिंदत्वा रात्रौजागरणंविधाय प्रभातेपुनःसपूज्यवामनोबुद्धिदातेत्यादिमंत्रेणमूर्तिंदद्यादितिपूजाविधिः अथाग्निपुराणोक्तविजयद्वादशीव्रतं मैत्रेयउवाच विधानं

शृणुराजेंद्रयथादृष्टंमनीषिभिः यथोक्तंनियमंकुर्य्यादेकादश्यामुपोषितः दंतकाष्ठंविगृह्यादौवाग्यतोविजितेंद्रि
यः श्रवणद्वादशीमद्यसमुपोष्यजनार्दनं अर्चयित्वाविधानेनअहभोक्ष्येपरेहनि नदीनांसंगमेस्नात्वाह्यर्चये
त्तत्रवामनं सौवर्णंरत्नसंयुक्तद्वादशांगुलमुच्छ्रितं पीतवस्त्रैः शुभैर्बध्यंभृंगारेणनिर्व्रणेनवे हिरण्मयेनपात्रेण अ
र्घ्यपात्रंप्रकल्पयेत् दध्यक्षतफलैश्चैवसहिरण्यंसदक्षिण नमस्तेपद्मनाभायनमस्तेजलशायिने तुभ्यम
र्घ्यंप्रयच्छामिबालवामनरूपिणे नमःकमलकिंजल्कपीतनिर्मलवाससे महाहवरिपुस्कंधघृष्टचक्रायचक्रिणे
नमःशार्ङ्गासिशंखवज्रपाणयेवामनायच यज्ञभुक्फलदात्रे चवामनायनमोनमः देवेश्वरायदेवायसर्वसंभूतिकारि
णे मत्स्यकूर्मवराहायनृसिंहस्वरूपिणे रामरामात्रेरामायवामनायनमोनमः श्रीधरायनमस्तुभ्यंनमस्ते
गरुडध्वज चतुर्बाहोनमस्तेस्तुनमस्तेधरणीधर संपूज्यैवंविधानेन नरः स्रक्चंदनादिभिः रात्रौजागरणंकुर्य्या
त्पुरतोजलशायिनः धृत्वाजलमयंरूपंदेवदेवस्यचक्रिणः ब्रह्मांडमुदरेयस्यमहद्भूतैरधिष्ठितं मायावीवामनः
श्रीमान्सोत्रायतुजगत्पतिः एवंसंपूज्यविधिनाद्वादश्यामुदयेरवेः भू रंदेवहितंपूर्ववत्संप्रपूजयेत् वामनःप्रति
गृह्णातुवामनोहंददामिते वामनः सर्वतोभद्रंद्विजायाथनिवेदयेत् जलधेनुंतथादद्याच्छत्रंचैवतुपादुकां सहि
रण्यानिवस्त्राणिधेनुंसवत्सांतथा यत्किंचिद्दीयतेदानंतदानंत्यायकल्प्यते श्रवणद्वादशीयोगेसंपूज्यगरुडध्वजं
दत्वादानंद्विजातिभ्योवियोगेपारणंयतः सिंहस्थितेतुमार्तंडेश्रवणस्थेनिशाचरे साधनुद्वादशीज्ञेयानस्याद्भाद्र
पदादृते दशम्येकादशीयत्रसानोपोष्याभवेत्तिथिः श्रवणेनतुसंयुक्तासाशुभासर्वकामदा इत्येषाकथितारा
जन्द्वादशीश्रवणेनच कर्त्तव्यासाप्रयत्नेनइहामुत्रफलप्रदा इयंसिंहस्थेचंद्रेचधनुर्द्वादशीज्ञेयासाद्वादश्यामेव
कार्य्या श्रवणयुक्तैकादशीविजयैकादशी श्रवणान्विताद्वादशीश्रवणद्वादशी इत्यग्निपुराणेविजयैकादशीव्रतम्

अथनृसिंहपरिचर्य्योक्तोविजयाव्रतानुष्ठानविधिः ॥ विजयाव्रतंसंगमेऽनुष्टेयं नदीसंगमालाभे मार्कंडेयोपदिष्टतीर्थसंगमेऽनुष्टेयं तथाच- शालग्रामशिलावारितुलसीजलमेवच संगमेचोद्धरेतत्रविजयाव्रतमाचरेदित्युक्ते तत्रादौगुरुंप्रणम्यसंकल्पंकुर्य्यात् ॥ तत्रमंत्रः द्वादश्यांतुनिराहारः स्थित्वाहमपरेहनि भोक्ष्ये त्रिविक्रमानंतशरणंभवाच्युतेति सशार्ङ्गशरायुधंसौवर्णंदेवंकृत्वा ताम्रकलशोपरिवैणवपात्रेपंचामृतस्नापितं सवस्त्रेदेवमुपवेश्य सितचंदनेनानुलिप्य सितवस्त्रछत्रोपानहसमर्प्यावयवपूजांकुर्यात् शिरसिवासुदेवायनमः मुखे श्रीधरायनमः कंठे श्रीकृष्णायनमः वक्षसि श्रीपतयेनमः बाह्वोः सर्वास्त्रधारिणेनमः पादयोः सर्वात्मनेनमः ततोविशेषार्घ्यंदद्यात् तत्रमंत्रः शंखचक्रगदापद्मसशार्ङ्गशरपूजित गृहाणार्घ्यंमयादत्तं शार्ङ्गपाणेनमोऽस्तुते इतिधूपदीपौदत्वा घृतपक्वनैवेद्यंफलतांबूलादीनिचसमर्प्य जागरणं कृत्वा प्रभातेस्नात्वा देवं संपूज्य पुष्पांजलिंदद्यात् तत्रमंत्रः नमस्तेअस्तुगोविंदबुधश्रवणसंज्ञक अघौघस्यक्षयंकृत्वासर्वसौख्यप्रदोभवेति ततः सर्वमाचार्यायदत्वा पारणंकुर्य्यादिति अस्यव्रतस्यबुधयोगेसति फलातिशयोऽवगंतव्योबुधश्रवणसंज्ञकेतिमंत्रलिंगात् ॥ इतिनृसिंहपरिचर्य्योक्तारः ॥ अत्रदध्योदनदानादिकंकार्य्यं तच्च द्वादश्यामनुष्ठेयम् ॥ इतिविजयैकादशीव्रतम् ॥ ॥ ॥ अत्रैवकाल्किद्वादशीव्रतं वाराहे धरणीव्रतेपु- दुर्वासाउवाच तावद्भाद्रपदेमासिशुक्लपक्षेतुद्वादशीं संकल्प्यविधिनादेवमर्चयेत्परमेश्वरं नमोऽस्तुकल्किने पादौ हृषीकेशायवैकटिं म्लेच्छप्रध्वंसनायोरूजगन्मूर्तेतथोदरं श्रीकंठायेतिवैकंठंखड्गपाणीतिवैकटिं स्वनाम्नाशंखचक्रेविश्वमूर्तेतथाशिरः सितवस्त्रयुगच्छत्रंगंधपुष्पोपशोभितं कृत्वाप्रभातेविप्रायप्रदेयंशास्त्रवित्तमे प्रीयतांमेहृषीकेशकल्किरूपेतिमंत्रतः ॥ पूर्वंराजाविशालोभूत्काशीपुर्य्यांमहाबलः द्वादशींकृतवान्सोपिचक्रवर्तीबभू

वह यज्ञैश्चाविविधैरिष्ट्वापरांनिर्वाणमाप्तवान् अथैतासांद्वादशीनांफलानांभिदउच्यते पूज्यतेमत्स्यरूपेणसर्वज्ञ
त्वमभीप्सुभिः स्ववंशोद्धरणार्थायकूर्मरूपीतिपूज्यते नरसिंहस्वरूपेणसर्वपापभयातुरैः वामनोमोहनाशा
यवित्तार्थंजमदग्निजः शूरशत्रुविनाशाययजेद्दाशरथिंबुधः बलकृष्णौयजेद्धीमान्पुत्रकामोनसंशयः रूपकामो
यजेद्बुद्धंकल्किनंशत्रुघातनं इतिधरणीव्रतेषु कल्किद्वादशीव्रतम् ॥ अथात्रैवकटिपरिवर्त्तनोत्सवः तथाचभ
विष्योत्तरे प्राप्तेभाद्रपदेमासिएकादश्यांसितेऽहनि कटिदानभवेद्विष्णोर्महापातकनाशन कटिदानपार्श्वप
रिवर्त्तनं रामार्चनचंद्रिकायां शयनोत्सववच्चैवदेवंनीत्वाजलाशये कटिदानोत्सवंकुर्वेइतिसंकल्प्यपूजयेत्
देवदेवजगन्नाथयोगगम्यनिरंजन कटिदानकरोम्यद्यप्राप्तेभाद्रपदेशुभे अनेनकटिपरिवर्त्तिंदाक्षिणांप्रकल्प
येत् महापूजांततः कृत्वापूर्ववत्स्वगृहंव्रजेत् इतिनिर्णयसिंधौतुद्वादश्यांविष्णोःपरिवर्त्तनकृत्यमुक्तं तच्च
संध्यायांविष्णुंसंपूज्यप्रार्थयेत् मंत्रस्तुतिथितत्त्वे वासुदेवजगन्नाथप्राप्तेयंद्वादशीतव पार्श्वेनपरिवर्त्तस्वसुखंस्वपि
हिकेशव इतिभाद्रपदशुक्लैकादशीकृत्यं ॥ ॥ अथभाद्रशुक्लद्वादशीकृत्य तत्रपारणंश्रवणयोगरहितायांकुर्या
त् आभाकासितपक्षेपुमैत्रश्रवणरेवती संगमेनैवभोक्तव्यंद्वादशद्वादशीर्हरेदितिदिवोदासोदाहृतवचनात् ज्यो
तिर्निबंधेतु आभाकापौसितेपक्षेमैत्रांत्यश्रुतिरोहिणीसंगमेनैवभोक्तव्यंद्वादशद्वादशीर्हरेदितिवायुपुराणोक्तेःपौषशु
क्लैकादश्यांव्रतपारणेरोहिणीद्वादशीयोगेऽपिपारणनिषेधउक्तः तत्रैवकृतयुगादिवशाद्व्यवस्थाप्युक्ता महाभारते
मैत्रक्षंतुकृतेत्याज्यत्रेतायांरेवतींत्यजेत् द्वापुरेरोहिणींत्याज्याकलौतुश्रवणंत्यजेत् अत्रश्रवणद्वादशीयोगे
पारणप्रत्यवायापत्तिरुक्ता उपोष्यैकादशींमोहात्पारणश्रवणेयदि करोतिहंतितत्पुण्यंद्वादशद्वादशीभवमिति
स्कंदाच्च अस्यतत्रैवप्रतिप्रसवः मार्कंडेयः विशेषेणमहीपालश्रवणंवर्धतेयदि तिथिक्षयेनभोक्तव्यंद्वादशींलघये

न्नर्हति इहचयदाश्रवणद्वादशीयोगवाहुल्यंतदाश्रवणर्क्षंत्रेधाविभज्य मध्यमविंशतिघटिकायोगत्यक्त्वापारणंकार्यं
तदुक्तंविष्णुधर्मेश्रुतेश्चमध्येपरिवर्त्तमेतिसुप्तिप्रबोधिपरिवर्त्तनमेववर्ज्यमिति केचित्तुश्रवणर्क्षंत्रेधाविभज्यमध्यमपाद
द्वयं वर्जयित्वापारणमाहुः अन्येत्वाभाकाविंत्यतिमैत्रांत्यपादइत्यापिचनिर्मूलमित्याहुःअत्रैवशक्रध्वजोत्थापनमुक्त
मपरार्के गर्गेण द्वादश्यातुसितेपक्षेमासिभाद्रपदेतथा शक्रमुत्थापयेद्राजाविश्वश्रवणवासरे ब्रह्मपुराणे
इंद्रोभाद्रपदेमासिपक्षेशुक्लेचविष्णुना नियुक्तःसर्वसस्यानिव्रीहींश्चैवफलानिच औषधीर्वज्रहस्तश्चजनर
न्पालयत्यपि तद्वयार्त्तानिसर्वाणिवर्धयत्यखिलंजगत् तस्मात्सतत्रसंपूज्यः सभार्यश्चदिनेदिने सग
णःसायुधश्चैवसानुयात्रःसवाहनःपटभित्तिकृतोदेवोराज्ञापूज्योविशेषतः भक्तैःफलैर्नवैर्मूलैर्वस्त्रैश्चैवविशेषतः र
मुद्दिश्यार्चयेद्विप्रांस्तथारंगोपजीविनः पटभित्तिकृतइति पटेभित्तौवालिखितइति दिनेदिनेइतिवचनात्
द्वादशीमारभ्ययावदवस्थानंप्रत्यहंपूज्यः ज्योतिःशास्त्रे द्वादशींतुपरित्यज्यतिथावन्यत्रशास्त्रतःशक्रउत्थापि
तोहंति राजानंराष्ट्रमेवचशक्रमुत्थापयेद्राजाउत्तरेणकदाचन श्रवणेवाधनिष्ठायांनतुऋक्षांतरेणतुविश्वमुत्थित
मश्विन्यांश्रवणेयमदैवते वासवेतुधनिष्ठायांनिशिशक्रंप्रवासयेदिति अत्रैवश्रीपतिसंहितावचनम् द्विरापाढे
तुकन्यायांशक्रमुत्थापयेद्यदि राज्ञोराज्यंविनश्येतप्रजाचैवनिपीड्यते अथतत्पूजा तत्रावाहनमंत्रः एह्ये
हिसर्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरामरेश समुत्थितस्त्वंश्रवणाद्यपादेगृहाणपूजांभगवन्नमस्ते इत्यावाहनम्
ऐरावतसमारूढोवज्रहस्तोमहाबलः शतयज्ञाधिपोदेवस्तस्मैनित्यंनमोनमः वज्रहस्तसुरारिघ्नबहुनेत्रपुरंदर
रक्षार्थंसर्वभूतानांपूजेयंप्रतिगृह्यतां इत्येतैर्मंत्रैः संपूज्यप्रार्थयेत् नमस्तेदेवदेवेशसहस्राक्षनमोस्तुते आ
खंडलनमस्तेस्तुरूपंदेहिश्रियंस्थिरां इत्यष्टदिवसांतंप्रत्यहंसंपूज्यविसर्जयेत् अष्टमेदिनेभरण्यांविसर्जनं राज

मार्त्तंडे याम्येततोदेवपतेर्निशायांविसर्जनंशांतिकरंनृपाणां विसर्जनेतुव्यासोक्तोमंत्र भार्द्दसुरासुरगणै पुरंद
रशतक्रतो उपहारंगृहीत्वैनमहेंद्रप्रतिगम्यतां अयमष्टमेह्नि भरण्यामेव विसर्जनीयः तदुक्तंराजमार्त्त
डे अनंकरत्यादिमध्यानयादित्यादष्टमेहनि शक्रंविसर्जयेत्तत्रनोविधिश्चाष्टमोपरि पातयेदष्टमेचाह्निलोकपा
लंतदातिकं निशायांसर्वसत्त्वानांकरोतिकुशलंभुवि नरमेतुदिनेदृष्टोराज्ञांशक्रोभयप्रदः ततोनाहन्यमायां
निशिसुप्तोनुपातयेत् नत्रमात्परतःशक्र मतकस्यानुरोधतः ये पश्यंतिवज्रपाणिंतेषांराष्ट्रंविनश्यति अं
तकांतयमदैवतस्यभरणीनक्षत्रस्यसुप्तनिशावसाने अत्रातावष्टमनिशावसानेभरण्युदयस्यतन्मध्यस्यतदंतस्य
वालाभेशक्रविसर्जनं तदपितद्लाभेतदेवाश्विन्यामपितद्विसर्जनं अत्रभौमशनिवारवर्ज्यंविसर्जनमुक्तं त
थाच सौरभूमिजयोर्वारेसूतकेमृतकेपिवा भूमिपालादिकोत्पातेशक्रंनैवप्रवासयेत् इयमेवश्रवणद्वादशी
नारदीये नभस्यशुक्लद्वादश्यांव्रतीसंपूज्यवामनं तदग्रेभोजयेद्विप्रान्पायसैर्द्वादशीतिथौ सौवर्णींदक्षिणां
दत्वाविष्णुप्रीतिकरोभवेत् अत्रोपवासादिकं महाफलमित्युक्तं हेमाद्रौभविष्योत्तरे मासिभाद्रपदेशुक्लाद्वाद
शीश्रवणान्विता सर्वपापहरापुण्याउपवासेमहाफलेति शुक्लद्वादश्यांश्रवणाभावे कृष्णद्वादश्यामपादोस
त्वेसर्वग्राह्या तदुक्तंमाधवीये शुक्लावायदिवाकृष्णाद्वादशीश्रवणान्विता ॥ तस्यामेवोपवासश्चत्रयोदश्यां
तुपारणमिति एतच्चवचनश्रवणयुक्तद्वादशीसामान्याभिप्राय ॥ भाद्रपदशुक्लद्वादश्यांनियमेनश्रवणयोगस्थास
भवात् तत्रैकादश्यांद्वादशीश्रवणयोगेसैवपोष्याएकादशीद्वादशीचविष्णुत्रमपितत्रचेत् तद्विष्णुशृंखलंनामवि
ष्णुसायुज्यकृद्भवेदितिविष्णुधर्मोक्तेः यदादिनद्वयेपिश्रवणद्वादश्योर्योगस्तदाप्येकादशीयोगस्यप्रशस्तत्वात्तद्युक्ता
यामेवोपवासादिकर्तव्यं तदुक्तंमदनरत्नेमात्स्ये द्वादशीश्रवणस्पृष्टाभवेदेकादशीयदि । सएववैष्णवोयोगो

विष्णुशृंखलसंज्ञितः तस्मिन्नुपोष्य विधिवन्नरः संक्षीणकल्मषः प्राप्नोतीत्युक्तमां सिद्धिं पुनरावृत्तिवर्जितामिति यदा त्वे-
कस्मिन्नहोरात्रे श्रवणमेकादशीं स्पृष्ट्वा द्वादशीं स्पृशति तदा फलाधिक्यमुक्तं नारदीये संस्पृश्यैकादशीं राजन् द्वाद-
शीं यदि संस्पृशेत् श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति इति अस्मिंस्तु विष्णुशृंखलयोगे एकादश्युपवासश्चेत्तत्र
पौर्वानुष्ठेयः एकदैवत्यत्वाद्विरोधाभावाच्च अत्र चैकादश्याः श्रवणयोगाभावेपि तद्दिनावच्छेदेन श्रवणद्वादशीयोगादेव
विष्णुशृंखलमिति हेमाद्रिमतं निर्णयामृते तु श्रवणस्यैकादशीद्वादशीभ्यां योगे एव विष्णुशृंखलं नान्यथेति अत्रोदया-
दुदयपर्यंतोऽस्तमयपर्यंतो वा मनक्षत्रयोग इतरद्द्वादशीव्रताऽपेक्षितः मासि भाद्रपद इति भविष्योत्तरवाक्यात् तथा च
मदनरत्नादिषु स्वल्पश्रवणयोगेपि संपूर्णा पुण्यतमा भवतीत्युक्तं द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा तिथिः न तु मान-
न संयुक्ता तावत्येव प्रशस्यत इति मत्स्यपुराणात् निर्णयसिंधौ दीक्षितीये च यदा तिथ्यंतरं सूर्योदयावधि द्विकलामा-
त्रमपि श्रवणर्क्षे भवति तदापि पूर्वैवेत्युक्तं प्रक्रम्य तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप द्विकलो यदि लभ्येत संज्ञयो
ह्यष्टयामिक इति नारदीयवचनात् दिवोदासीये तु रात्रेः प्रथमयामे श्रवणयोगे पूर्वाऽन्यथोत्तरा रात्रेः प्रथमपादे चेच्छ्रव-
णं हरिवासरे तदा पूर्वामुपवसेत्स्नातः भवति पारणमित्युक्तरीतिः इदं तु निर्मूलत्वात्पूर्वविरोधादुपेक्ष्यमिति निर्णयसिंधौ
दीक्षितस्मृतिकौस्तुभयोर्मते समूलमेवं मदनरत्ने निर्णयसिंधौ एतावन्मत्तिंडे च अथ तु यस्मिन्दिने उदयकालीनश्र-
वणद्वादशीयोगस्तस्मिन्दिने श्रवणद्वादशीव्रतस्य विधायकं मुहूर्तव्यापिनी ग्राह्या श्रवणद्वादशीव्रत इति हेमाद्रिरास्दी-
यवचनं यच्च स्मृत्यर्थसारे उदयव्यापिनी ग्राह्येत्युक्तं तद्यदा शुद्धाधिका द्वादशी परदिने पूर्वोदयकालिकश्रवणयोगु-
वती पूर्वदिने उदयकालव्यतिरिक्तकालिकश्रवणयोगवती तदोत्तराग्राह्येत्येवंपरमित्युक्तं यदा तूभयकालीनः
श्रवणयोगस्तदा पूर्वा ग्राह्या बहुतरकर्मकालव्यापित्वात् यदा तु श्रवणनक्षत्रमेकादश्यामेव भवति न तु द्वादश्यां

तदाश्रवणद्वादशीव्रतमेकादशीव्रतमेकादश्यामपिकर्त्तव्यं तदुक्तं यदानप्राप्यतेऋक्षंद्वादश्यांवैष्णवंक्वचित् एका
दशीततोपोष्यापापघ्नीश्रवणान्विता उभयोर्देवताविष्णुःपुराणपुरुषोत्तमःविभेदोनैवकर्त्तव्योविभेदात्पतितोनरइति
विष्णुपुराणेपि याःकाश्चित्तिथयःप्रोक्ताःपुण्यनक्षत्रयोगतः तास्वेवतद्व्रतंकुर्याच्छ्रवणद्वादशीविनेति श्रवणद्वादशी
व्रतश्रवणान्वितायामेकादश्यामपिकर्तव्यम् नतुश्रवणरहितायांद्वादश्यामेवेतिनियमइत्यर्थः श्रवणयुतशुद्धैकाद
श्यालाभेतुदशमीविद्धापिश्रवणयुताग्राह्या तथाचवन्हिपुराणे दशम्येकादशीयत्रसातत्रोपोष्याभवेत्तिथिःश्रवणे
नतुसंयुक्तासोपोष्यासर्वकामदेति एतावांस्तुविशेषः अत्रैकादश्यांवामनावतारः कृष्णपूजाच श्रवणद्वादश्यां
जनार्दनपूजाविधिस्त्वेकएव हरिभक्तिविलासेऽयंविशेषः तथाचकारिका एकादश्यामुपवसेत् प्रादुर्भूतोहिभ
गवान्द्वादश्यामेववामनःतथाचमत्स्यपुराणे उपोष्यैकादशींपूर्वंद्वादश्यांपूजयेद्धरिमिति अतोनयादिलभ्येतमध्या
न्हेद्वादशीतदा द्वादशीमध्य एवार्च्योवामनस्तार्हैसूरिभिःयदात्वेकादशी शुद्धाद्वादशीश्रवणान्विता तदातुसमर्थे
नोपवासद्वयंविधायत्रयोदश्यांपारणंकर्त्तव्यंतदुक्तभविष्योत्तरे एकादशीमप्युपोषयेत् नचात्रविधिलोपःस्यादुभयो
र्देवतहरिरिति पारणमंतरेणैकादशीव्रतसमाप्तिरूपविधिलोपोनस्यादित्यर्थः यत्तुविष्णुधर्मे पारणांतंव्रतंज्ञेयंव्र
तांतेविप्रभोजनम् असमाप्तेव्रतेपूर्वेनैवकुर्याद्व्रतांतरमितितदेतदन्यव्रतविषयं नारदीयपुराणे द्वादश्यामुपवा
सोत्रत्रयोदश्यांतुपारण निषिद्धमपिकर्तव्यमित्याज्ञापारमेश्वरीति मार्कंडेयोप्येवं निर्णय
सिंधौ अत्रगौडाः शृणुराजन्परंकाम्यंश्रवणद्वादशीव्रतमितिस्थूलशीर्षवचनात् काम्यमेवेदम् तेनाशक्त
स्यनित्यमेकादशीव्रतमेवेतिमन्यंते द्वादशीमुपवासेनशुद्धात्मानृपसर्वशः चक्रवर्त्तित्वमतुलंसंप्राप्नोत्युत्तमां
श्रियमितिगौडनिबंधमार्कंडेयोक्तिश्चेति कालतत्त्वविवेचने एताश्चाष्टौद्वादश्यः काम्याएवेतिनित्यत्वप्रमाणा

भावात् फलश्रवणाच्च यत्तु नकरिष्यंतियेलोकेद्वादश्योष्टौममाज्ञया । तेषांयमपुरेवासोयावदाभूतसंप्लवमित्या
दीनिपद्मपुराणस्थवचनानीतिकेनाचिल्लिखितानि तान्यपिवैष्णवग्रंथेष्वप्यदर्शनादनादरणीयान्येव कौस्तुभेतु
इदंचव्रतंनित्यंकाम्यं उपवासमकृत्वातु नरोनरकमृच्छतीति श्रवणद्वादशीप्रकरणे वामनपुराण । वचनादिति
तन्मूलंमृग्यं कृत्यरत्नावल्यातु अत्रव्रतकाम्यंनित्यमितिकेचिदित्युक्तं यस्तूपवासद्वयासमर्थोयावज्जीवं स्वीक
रोत्येकादशीव्रतचसत्वेकादश्यामुपोष्य श्रवणद्वादश्यांविष्णुंसंपूज्यदध्योदनदानादिंकृत्वापारणंकुर्यात्- तदु
क्तंमत्स्यपुराणे द्वादश्यांशुक्लपक्षेतुनक्षत्रंश्रवणंयदि उपोष्यैकादशींतत्रद्वादश्यांपूजयेद्धरिं । अस्यार्थः का
लतत्वविवेचने हरिपूजामेवकुर्यान्नतूपवासमित्यर्थः उपवासकरणेतदंगहरिपूजायाः । प्राप्तत्वादेवतद्विधि
वैयर्थ्यादिति उपवासद्वयासमर्थेनास्वीकृतैकादशीव्रतेनकाम्यंनित्यस्यवाधकमितिन्यायेनश्रवणद्वादश्यामेवो
पवासः कर्तव्यः तदुक्तनारदीयपुराणे उपोष्यद्वादशींपुण्यांवैष्णवर्क्षेण संयुतां एकादश्युद्भवंपुण्यनरःप्राप्नोत्य
संशयम् वाजिपेययथायज्ञेकर्महीनोपिदीक्षितः सर्वफलमवाप्नोतिह्यस्नातोप्यहुतोपिसन्निति । एवमेकादशींभुक्त्वा
द्वादशींसमुपोषणात् पूर्ववासरजपुण्यसर्वंप्राप्नोत्यसंशयमिति -- निर्णयसिंधावपिवामनपुराणे एकाद
श्यांनरोभुक्त्वाद्वादश्यांसमुपोषणात् व्रतद्वयकृतपुण्यसर्वंप्राप्नोत्यसंशयमिति दिवोदासीयेभविष्यपुराणे उ
पवासद्वयंकर्तुंनशक्नोतिनरोयदि प्रथमेह्निफलाहारीनिराहारोपरेहनीति- उभयदिनेश्रवणाभावेतुएकादश्या
मुपोष्यद्वादश्यांवामनोत्सवंकुर्यात् श्रवणयोगाभावेकेवलद्वादश्याव्रतविधानाभावात् तथाहरिभक्तिविलासी
कारिका दिनद्वयेपिश्रवणाभावेतद्योगहानितः - एकादश्यामुपोष्यैवद्वादश्यांवामनंयजेत्- पारणेतूभयांते
मुख्यः तदुक्तस्कंदपुराणे तिथिनक्षत्रनियमेतिथिभांतेचपारणं अतोन्यथापारणात्व्रतभंगमवाप्नुयात्

तदाश्रवणद्वादशीव्रतमेकादशीव्रतमेकादश्यामपिकर्त्तव्य तदुक्त यदानप्राप्यतेऋक्षद्वादश्यांवैष्णवंक्वचित् एका
दशीततोपोष्यापापघ्नीश्रवणान्विता उभयोर्देवताविष्णुःपुराणंपुरुषोत्तमःविभेदोनैवकर्त्तव्योविभेदात्पतितोनरइति
विष्णुपुराणेपि याःकाश्चित्तिथयःप्रोक्ताःपुण्यनक्षत्रयोगतः तास्वेवतद्व्रतंकुर्याच्छ्रवणद्वादशींविनेति श्रवणद्वादशी
व्रतश्रवणान्वितायामेकादश्यामपिकर्तव्यम् नतुश्रवणरहितायांद्वादश्यामेवेतिनियमइत्यर्थः श्रवणयुतेशुद्धेकाद
श्यालाभेतुदशमीविद्धापिश्रवणयुताग्राह्या तथाचवान्हिपुराणे दशम्येकादशीयत्रसातोपोष्याभवेत्तिथिःश्रवणे
नतुसंयुक्तासोपोष्यासर्वकामदेति एतावांस्तुविशेषः अत्रैकादश्यांवामनावतारः कृष्णपूजाच श्रवणद्वादश्यां
जनार्दनपूजाविधिस्त्वेकएव हरिभक्तिविलासेऽयंविशेषः तथाचकारिका एकादश्यामुपवसेत् प्रादुर्भूतोहिभ
गवान्द्वादश्यामेववामनःतथाचमत्स्यपुराणे उपोष्यैकादशींपूर्वंद्वादश्यांपूजयेद्धरिमिति अतोनयादिलभ्येतमध्य
न्हेद्वादशीतदा द्वादशीमध्य एवार्चोवामनस्ताहिसूरिभिःयदात्वेकादशी शुद्धाद्वादशीश्रवणान्विता तदातुसमर्थे
नोपवासद्वयंविधायत्रयोदश्यांपारणंकर्त्तव्यंतदुक्तंभविष्योत्तरे एकादशीमप्युपोषयेत् नचात्रविधिलोपःस्यदुभयं
दैवतहरिरिति पारणमंतरेणैकादशीव्रतसमाप्तिरूपविधिलोपोनस्यादित्यर्थः यत्तुविष्णुधर्मे पारणांतंव्रतंज्ञेयंव्र
तांतेविप्रभोजनम् असमाप्तेव्रतेपूर्वेनैवकुर्याद्व्रतांतरमितितदेतदन्यव्रतविषयं नारदीयपुराणे द्वादश्यामुपव
सेत्त्रयोदश्यांतुपारण निषिद्धमपिकर्तव्यमित्याज्ञापारमेश्वरीति मार्कंडेयोप्येवं निर्णय
सिंधौ अत्रगौडाः शृणुराजन्परंकाम्यंश्रवणद्वादशीव्रतमितिस्थूलशीर्षवचनात् काम्यमेवेदम् तेनाशक्त
स्यनित्यमेकादशीव्रतमेवेतिमन्यंते द्वादशीमुपवासेनशुद्धास्मान्नृपसत्तमः चक्रवर्त्तित्वमतुलंसंप्राप्नोत्युत्तमां
श्रियमितिगौडानिबंधमार्कंडेयोक्तेश्चेति कालतत्त्वविवेचने एताश्चाष्टौद्वादश्यः काम्याएवेतिनित्यत्वप्रमाणा

भावात् फलश्रवणाच्च यत्तु नकरिष्यंतियेलोकेद्वादश्योष्टौममाज्ञया- तेषांयमपुरेवासोयावदाभूतसंप्लवमित्या
दीनिपद्मपुराणस्थवचनानीतिकेनचिल्लिखितानि तान्यपिवैष्णवग्रंथेष्वप्यदर्शनाददादरणीयान्येव-कौस्तुभेतु
इदंचव्रतंनित्यंकाम्यं उपवासमकृत्वातु नरोनरकमृच्छतीति श्रवणद्वादशीप्रकरणे वामनपुराण वचनादिति-
तन्नमूलंमृग्यं कृत्यरत्नावल्यातु अत्रव्रतकाम्यंनित्यामितिकेचिदित्युक्तं यस्तूपवासद्वयासमर्थोयावज्जीवं स्वीक
रोत्येकादशीव्रतंचसत्वेकादश्यामुपोष्य श्रवणद्वादश्यांविष्णुंसंपूज्यदध्योदनदानादिकंकृत्वापारणंकुर्यात्- तदु
क्तंमत्स्यपुराणे द्वादश्यांशुक्लपक्षेतुनक्षत्रंश्रवणंयदि- उपोष्यैकादशींतत्रद्वादश्यांपूजयेद्धरिं अस्यार्थः-का
लतत्त्वविवेचने हरिपूजामेवकुर्यान्नतूपवासमित्यर्थः- उपवासकरणेतदंगहरिपूजायाः प्राप्तत्वादेवताद्विधि
वैयर्थ्यादिति उपवासद्वयासमर्थेनास्वीकृतैकादशीव्रतेनकाम्यंनित्यस्यबाधकमितिन्यायेनश्रवणद्वादश्यामेवो
पवासः कर्तव्यः तदुक्तंनारदीयपुराणे उपोष्यद्वादशींपुण्यांवैष्णवर्क्षेणसंयुतां एकादश्युद्भवंपुण्यंनरःप्राप्नोत्य
संशयम् वाजिपेययथायज्ञकर्महीनोपिदीक्षितः सर्वफलमवाप्नोतिह्यस्नातोप्यहुतोपिसन्निति एवमेकादशींभुक्त्वा
द्वादशीसमुपोषणात् पूर्ववासरजपुण्यसर्वंप्राप्नोत्यसंशयमिति -- निर्णयसिंधावपिवामनपुराणे एकाद
श्यांनरोभुक्त्वाद्वादश्यांसमुपोषणात् व्रतद्वयकृतपुण्यसर्वंप्राप्नोत्यसंशयमिति -दिवोदासीयेभविष्यपुराणे उ
पवासद्वयंकर्तुंनशक्नोतिनरोयदि प्रथमेह्निफलाहारीनिराहारोपरेहनीति- उभयदिनेश्रवणाभावेतुएकादश्या
मुपोष्यद्वादश्यांवामनोत्सवंकुर्यात् श्रवणयोगाभावेकेवलद्वादश्याव्रतविधानाभावात् तथाहरिभक्तिविलासी
कारिका दिनद्वयेपिश्रवणाभावेतद्योगहानितः - एकादश्यामुपोष्यैवद्वादश्यांवामनंयजेत्- पारणेतूभयांते
मुख्यः तदुक्तस्कंदपुराणे तिथिनक्षत्रनियमेतिथिभांतेचपारणं अतोन्यथापारणायांव्रतभंगमवाप्नुयात

उभयांतालाभे एकतरांतेवापारणंकुर्यात् तदुक्तं हेमाद्रौमदनरत्ने नारदीयपुराणे तिथिनक्षत्रसंयोग
उपवासोयदाभवेत् पारणंतुनकर्तव्ययावन्नैकस्यसंक्षयइति इयंबुधवारेतिप्रशस्ता श्रवणद्वादशीयोगेबुध
वारोयदाभवेत् अत्यंतमहतीनामद्वादशीसाप्रकीर्तितेतिविष्णुधर्मोत्तरीयवचनात् भाद्रपदेसाऽत्यंतफलदा
तथाचस्कंदपुराणे मासिभाद्रपदेशुक्लाद्वादशीश्रवणान्विता महतीद्वादशीज्ञेयाउपवासेमहाफला बुधश्रवण
संयुक्तासाचैवद्वादशीभवेत् अत्यंतमहतीतस्यांदत्तंभवतिचाक्षयमिति अत्रकृत्यंकृत्यरत्नावल्यां ब्रह्मवैवर्त
पुराणे बुधश्रवणसंयुक्ताविजयासंगमेतदा वारिधानींप्रदायास्यांदध्योदनसमन्वितां प्रेतयोनौनजायेतपूज
यित्वाचवामनं वंशसमुद्धरस्तेनमुक्तःपितृऋणादसौ अत्रतीर्थस्नानादिकमनंतफलंभवति तदुक्तंविष्णुध
र्मोत्तरे भाद्रस्यशुक्लपक्षेतुनक्षत्रंश्रवणंयदि तस्यांतीर्थेयत्स्नानंतदनंतफलंभवेत् देवतापूजनंविप्रभोजनहव
नंतथा एकजप्यात्सहस्रस्यजपस्यफलमश्नुते दानंचमहदल्पवासहस्रगुणितंभवेदिति अस्यांबुधयोगे
संगमस्नानमुक्तंलिंगे अत परंतुसंसेव्योगंगावरुणसंगमः श्रवणद्वादशीयोगेबुधवारोयदाभवेत् तदातस्मि
नरःस्नात्वागोसहस्रफलंलभेदिति श्राद्धंकरोतियस्तत्रतस्मिन्कालेयशस्विनि तारयेत्सपितॄन्सर्वान्विष्णु
लोकंसगच्छति अन्यत्रापि नदीनांसंगमेस्नानमुक्तंविष्णुधर्मोत्तरे श्रवणद्वादशीयोगेपूजयित्वाजनार्दनं द्वा
दशंत्वाचविप्रेभ्यःसोपवासोजितेंद्रियः पुण्येषुसततंराजन्नदीनांसंगमेषुच गंगासरस्वतीभ्यांगायाःशोणस्यचसमा
गमे इक्षुमत्याश्चगायाः गंगायमुनयोस्तथा गोमत्याश्चसरय्वाश्चकौशिक्यागंडकागमे विपाशायादेविकाद्वो
यत्रयोगंप्रपद्यते विपाशाचतथायोगयत्रयातिशतद्रुहा इरावतीतथायोगंयत्रयातिचासिंधुना चंद्रभागातथायोगं
तोष्यामत्रसमागता चंद्रभागायत्रयातिवितस्तायाःसमागमे महासिंधुश्चसंयोगं यत्रयातिवितस्तया विष्णु

लोकंप्रापयतियावदाभूतसंप्लवं .राजसूयादिभिर्यज्ञैर्यत्फलंसमवाप्यते श्रवणद्वादशींप्राप्यतत्फलंलभतेनरइति
॥ अथविष्णुधर्मोत्तरेश्रवणद्वादशीविधानम् रामउवाच उपवासासमर्थानांकिंचिदेकमुपोषितं महाफलंमहादेवत
न्ममाचक्ष्वपृच्छतःशंकरउवाच याराम श्रवणोपेताद्वादशीमहतीतुसा तस्यामुपोषितःस्नातःपूजयित्वाजनार्दनंप्राप्नो
त्ययत्नद्धर्मज्ञो द्वादशद्वादशीफलं दध्योदनयुतंतस्यांजलपूर्णघटंतथा वस्त्रेणवेष्टितंदत्त्वाछत्रोपानहमेवच
नदुर्गतिमवाप्नोतिगतिमग्र्यांचविंदति अक्षयंस्थानमाप्नोतिनात्रकार्याविचारणा श्रवणद्वादशीयोगेबुधवारोभवेद्य
दिअत्यंतमहतीनामद्वादशीसाप्रकीर्त्तिता स्नानंजप्यंतथादानंहोमश्राद्धंसुरार्चन सर्वमक्षयमाप्नोतितस्यांभृगुकुलो
द्वहतस्मिन्दिनेतथास्नातोयत्रक्वचनसंगमे सगंगास्नानजंरामफलंप्राप्नोत्यसंशयं श्रवणेसंगमाःसर्वे परपुष्टिप्र
दाःसदा विशेषाद्द्वादशीयुक्तेबुधयुक्तेविशेषतः नथैवद्वादशीप्रोक्तासर्वकामफलप्रदा ॥ इतिविष्णुधर्मोत्तरोक्त
श्रवणद्वादशी ॥ ॥ अथभविष्योत्तरोक्ताश्रवणद्वादशीकथा ॥ युधिष्ठिरउवाच उपवासासमर्थानांसदैवपुरुषो
त्तम एकायाद्वादशीपुण्यातांवदस्वममानघ श्रीकृष्णउवाच मासिभाद्रपदेशुक्लाद्वादशीश्रवणान्विता सर्वका
मप्रदापुण्याउपवासेमहाफला संगमेसरितांस्नात्वाद्वादश्यांसमुपोषितः समग्रंफलमाप्नोतिद्वादशद्वादशीभवं
बुधश्रवणसंयुक्तासैवचेद्द्वादशीभवेत् अतीवमहतीतस्यांसर्वंकृतमिहाक्षयं द्वादशीश्रवणोपेतायदाभवतिभारत
संगमेसरितांस्नात्वागंगादिस्नानजफलं सोपवासःसमाप्नोतिनात्रकार्याविचारणा जलपूर्णंतथाकुंभंस्थापयित्वा
विचक्षणः पंचरत्नसमोपेतंसोपधीतंसुपूजितं तस्यस्कंधेसुघटितंस्थापयित्वाजनार्दनं स्वशक्त्यास्वर्णघटि
तंशंखशार्ङ्गविभूषितं स्नापयित्वाविधानेनासितचंदनचर्चितं सितवस्त्रयुगच्छत्रवस्त्रोपानद्युगान्वितं ॐनमो
वासुदेवायशिरःसपूजयेत्ततःश्रीधरायमुखंतद्वत्कंठायदशौनमःनमःश्रीपतयेवक्षंभुजौसर्वास्त्रधारिणे व्यापकायन

मःकुक्षी केशवायोदरनमः त्रैलोक्यजनकायेतिमेढ्रंसपूजयेद्धरिःसर्वाधिपतयेजंघेपादौसर्वात्मनेनम अनेनवि
धिनाराजन्पुष्पैर्धूपैःसमर्चयेत्ततस्तस्याग्रतोदद्यान्नैवेद्यघृतपाचितं मोदकांश्चनवान्कुंभान्दद्याच्छक्त्याविचक्षणः
एवंसंपूज्यगोविंदंकुर्य्याज्जागरणंनिशि प्रभातेविमलेस्नात्वासंपूज्यगरुडध्वजं पुष्पधूपादिनैवेद्यैःफलैर्वस्त्रैःसुशो
भनैः पुष्पांजलिंततोदत्वामंत्रमेतमुदीरयेत् नमोनमस्तेगोविंदबुधश्रवणसंज्ञक अघौघसंक्षयंकृत्वासर्वसौ
ख्यप्रदोभव अनंतरंब्राह्मणेतंवेदवेदांगपारगे पुराणज्ञेविशेषेणविधिवत्संप्रदापयेत् प्रीयतांदेवदेवेशोममसंकटना
शनः अनेनविधिनाराजन्नद्यास्तीरेनरोत्तमः सर्वंनिवर्तयेत्सम्यगेकभक्तरतोपिसन् अत्रार्घ्यदानंभक्तिचंद्रोदये
शंखचक्रगदापद्मशरशार्ङ्गविभूषित गृहाणार्घ्यंमयादत्तंशार्ङ्गपाणेनमोस्तुते इतिभविष्योत्तरोक्तंश्रवणद्वादशी
व्रतम् ॥ ॥ अथवामनपुराणोक्ताश्रवणद्वादशीकथा ॥ पुलस्त्यउवाच श्रूयतांकथयिष्यामिकथांपापप्र
णाशिनीं पुरात्रेतायुगस्यादौयथावृत्ततपोधन मद्रदेशइतिख्यातो देशोवैब्रह्मणः सुत शाकलंनगरंतत्रख्या
तंस्थानीयमुत्तमं तत्रविपणिवृत्तिस्थः सुधर्माख्योभवद्वणिक् धनाढ्योगुणवान्भोगीनानाशास्त्रविशारदः सचै
कदानिजाद्राष्ट्रात्स्वराष्ट्रंगंतुमुद्यतः सार्थेनमहतायुक्तोनानाविपणिपण्यवान् गच्छतः पथितस्याथ मरुभूमौ
कलिप्रिय अभवद्दस्युतोत्पन्नो ह्यवस्कंदोतिदुःसहः ततःसहृतसर्वस्वो वणिग्दुःखसमन्वितः असहायोम
रौतास्मिंश्चचारोन्मत्तवद्वशी चरतातदरण्यंवै दुःखाक्रांतेननारदश्रान्तेनाइवशमीवृक्षो मरावासादितः शुभः तं
मृगैः पक्षिभिश्चैवहीनंदृष्ट्वाशमीतरुं क्षांतः क्षुत्तृट्परितात्मातस्याधः समुपाविशत् सुप्तश्चापिसुविश्रांतो
मध्याह्नेचसउत्थितः समपश्यत्तथायांतंप्रेतंप्रेतशतैर्वृतं उह्यमानंतमथान्येनप्रेतेनप्रेतनायकं पिंडाशिभिश्चपुर
तोधावद्भिर्भीमविग्रहैः अथाजगामप्रेतोसौपर्यटित्वावनानिच उपगम्यशमीमूलेवणिक्पुत्रंददर्शह स्वागतं

नाभिवाद्यैनंसमाभाष्यपरस्परं उपोपविष्टः छायायांदृष्ट्वाकुशलमात्मवान् ततः प्रेताधिपतिनापृष्टः सतुवभू
वतुः कुतश्चागम्यतेब्रूहिक्कसाधोवागमिष्यति कथंचेदमहारण्यंमृगपक्षिविवर्जितं समःसन्नोसिभद्रंतेसर्वमा
ख्यातुमर्हसि सर्वमाख्यातवान्ब्रह्मन्स्वदेशधनविच्युतिं तंचश्रुत्वासवृत्तांतंतस्यदुःखेनदुःखिता वणिक्पु
त्रवचःप्राहप्रे तपालःसबंधुवत् प्रेतपालउवाच ॥ एवंगतोपिमाशोकंकर्तुमर्हसिसुव्रत भूयोप्यर्थाभविष्यं
तियादिभाग्यफलंतव .भाग्यक्षयेथक्षीयंतेभवत्यभ्युदयेनते क्षीणस्यास्यशरीरस्याचिंतयानोभयंभवेत इत्युक्त्वा
र्थंसमारुह्यस्वान्भृत्यान्वाक्यमब्रवीत् अयातिथिरयंपूज्यः सहदेशजनैर्मम अस्मिन्दृष्टेवणिक्पुत्रेयथास्वजन
दर्शनं अस्मिन्समागतेप्रेताः प्रीतिर्जातामभातुला एवंहिवदतस्तस्यमृत्पात्रंसुदृढंनवं दध्योदनेनसंपूर्णमाज
गामयथेप्सितं तथानवाचसुदृढासंपूर्णापरमांभसा वारिधानीचसंप्राप्ता प्रेतानामग्रतःस्थिता तदागतंचस
लिलमन्नंवीक्ष्यमहामतिः प्राहोत्तिष्ठवणिक्पुत्रत्वमाह्निकमुपाचर ततस्तौवारिवाहिन्याः सलिलेनविधानतः
कृत्वाह्निकावुभौजातौवणिक्प्रेतपतिस्तथा ततोवणिक्सुतेआदौदध्योदनमथेच्छया दत्त्वातेभ्यश्चसर्वेभ्यः प्रे
तेभ्योप्यददात्ततः भुक्तवत्सुचसर्वेषुकामतोभिसिसेविते अनंतरंचबुभुजेप्रेतपालोवराशनं प्रकामतृप्तेप्रेतेतु
वारिधान्योदनस्ततः अंतर्धानमगाद्ब्रह्मन्वणिक्पुत्रस्यपश्यतः ततस्तदद्भुततमंदृष्ट्वासौमतिमान्वणिक् पप्र
च्छतंप्रेतपालंकौतूहलमनावशी अरण्येनिर्जलेदेशेकुतोन्नस्यसमुद्भवः कुतस्तुवारिधानीयंसंपूर्णापरमांभसा
तथावीतभयाभृत्यास्तेभ्यर्णोवर्णतःकृशाः भवानपिचतेजस्वीकिंचित्पुष्टवपुःशुभः शुक्लवस्त्रपरीधानोवहूनांपरि
पालकः सर्वमेतन्ममाचक्ष्वभवान्कःकाशमीविर्य इत्थंवणिक्सुतवचःश्रुत्वासौप्रेतनायकः शशंससर्वंतस्या
थयथावृत्तंपुरातनं अहमासंपुराविप्रःशाकलेनगरोत्तमेसोमशर्मेतिविख्यातोवहुलागर्भसंभवः नमासीद्ववणि

कुश्रीमान्प्रातिवेश्योमहायशाःसोहंकदर्य्योमूढात्माधनेपिसतिदुर्मतिः नददामिद्विजातिभ्योनचाश्नाम्यन्नमुत्तमं
प्रमादाद्यदिभुंजेयंदाधिक्षीरघृतान्वितं रात्रौततोनुभिर्घोरैस्ताडयतेममविग्रहः प्रातर्भवतिमेघोरामृत्युतुल्याविं
सूचिका नचकश्चिन्ममाभ्यासेतत्रतिष्ठतिबांधवःकथंकथमपिप्राणामयासंप्रतिधारिताः एवमेतादृशःपापोनिव
साम्यतिनिर्घृणःसौवीरतिलपिण्याकशक्तुशाकार्दभोजनैः क्षपयामिकदन्नाद्यैरात्मनःकालयातनां एवंतत्रस
खेमह्यंमहान्कालोभ्यगादयंश्रवणद्वादशीनाममासिभाद्रपदेभवत् तत्रनागरिकोलोकोगतःस्नानंचसंगमेःइराव
त्यानद्वलायाब्रह्मक्षत्रपुरःसरःप्रातिवेशप्रसंगेनतत्रस्नातुंगतोह्यहं कृतोपवासःशुचिनात्वेकादश्यांयतव्रतः ततःसं
गमतोयेनवारिधानींनवांदृढां संपूर्णांवस्त्रसवीतांछत्रोपानहसंयुतांमृत्पात्रमपिसृष्टस्यपूर्णंदध्योदनस्यहि प्रद
त्तंब्राह्मणेंद्रायशुचयेस्नातधर्मिणे तदेकंजीवितादत्तंमयादानंवणिक्सुत वर्षाणांसप्ततीनांतुनान्यद्दत्तंहिकिंचन
मृतःप्रेतत्वमापन्नोदत्वाप्येतान्समेहिमे एतत्तेकारणंप्रोक्तंयद्दत्तंतुमयांभसा दत्तंतदिदमायातिमध्याह्नेपिदिनेदिने
यावद्यान्नंनभुंजेहंनतावत्क्षयमेतिवै मयिभुक्तेचपीतेचसर्वमंतर्हितंभवेत् यच्चानपत्रमददंसोयंजातःशमीतरु उपानयु
गलेदत्तेप्रेतोमेवाहनोभवत् इदंतवोक्तंसर्वंहिमयाज्ञानवतात्मना श्रवणद्वादशीपुण्यातवोक्तापुण्यवर्धिनी इत्येवमु
क्तोवचनेवणिक्पुत्रोह्यवोह्यचः यन्मयातवकर्त्तव्यंतदनुज्ञातुमर्हसि तत्तस्यवचनंश्रुत्वावणिक्पुत्रस्यनारदप्रेतपा
लोवचःप्राहस्वार्थसिद्धिकरंततः यत्त्वयाताकर्त्तव्यंमद्धितार्थंमहामते कथयिष्यामितत्सम्यक्तवश्रेयस्करंमम
गयायांतीर्थंजुष्टायांस्नात्वाशौचसमन्वितः ममनामसमुद्दिश्यपिंडनिर्वापनंकुरु तत्रपिंडप्रदानेनप्रेतभावादहंसखे
मुक्तःसर्वपितॄणांहियास्यामिसहलोकतांयाचेयं द्वादशीपुण्यामासिप्रोष्ठपदेसिता बुध श्रवणसं युक्तासातेश्रेयस्क
रीस्मृताइत्येवमुक्तातुवचःप्रेतराजोनुगैः सह स्वनामानियथान्यायंसम्यगाख्यातवान्शुचिः प्रेतस्कंधंसमारोप्य

यातितोमरुधन्वकं रम्येचशूरसेनाख्येदेशेग्रामःसर्ववैणिक् स्वकर्मधर्मसंयोगेन धनमुच्चावचंवहु उपार्ज
यित्वाप्रययौगयातीर्थमनुत्तमं पिंडनिर्वपणचक्रेअथान्येपास्वगोत्रिणां एवंप्रदत्तेष्वथवैपिंडेपुप्रेतभावतः विमु
क्तास्तेद्विजप्रेताब्रह्मलोकंततोगताः सत्रापिहिवणिक्पुत्रोत्तिजमालयमाव्रजत् श्रवणद्वादशींकृत्वाकालधर्ममुपे
यिवान् गंधर्वलोकेसुचिरंभोगान्भुक्तासुदुर्लभान् मानुष्यंजन्मचासाद्यसवभौशाकलेविराट् स्वकर्मधर्मवृत्तिस्थः
श्रवणद्वादशीरतः कालधर्ममवाप्यासौगुह्यकावासमाप्तवान् तत्रोष्यसुचिरंकालंभोगान्भुक्ताप्रकामतः मर्त्यं
लोकमथप्राप्यराजन्यतनयोऽभवत् तत्रापिक्षत्रवृत्तिस्थोदानधर्मरतोवशी नोयहेरिगणान् जित्वाकालधर्ममुपेयि
वान् शक्रलोकंचदम्प्राप्यं देवैःसर्वैःसुपूजितः पुण्यक्षयादिहागत्यशाकलेचाभवद्द्विजः ततोविकटरूपोसौसर्व
शास्त्रार्थपारगः व्यवाहयद्द्विजसुतांरूपेणानुपमांद्विजः सातुतंतिजभर्त्तारंसुशीलंतपभामिनी विरूपमितिम
त्वाना ततःसोभूत्सुदुःखितः ततोनिर्वेदसंयुक्तोगत्वाश्रमपदंमहत् इरावत्यास्तटेधीमान्चक्रधारिणमासदत् त
माराध्यजगन्नाथंनक्षत्रपुरुषेणहि नक्षत्रपुरुषव्रतेनेत्यर्थः सुरूपांतासवाप्यारव्यामस्मिन्नेवजन्मनि त
तःप्रियोभूद्भार्यायाःसोभवानभवद्वशी श्रवणद्वादशीयुक्तःपूर्वाभ्यासादजायत एवंपुरासौद्विजपुंगवस्तुकुरूपरू
पोभगवत्प्रसादात् अनंगरूपप्रतिमोवभूवमश्वराजासपुरूरवाभवत् ॥ इतिश्रीवीरमित्रोदयेवामनपु
राणोक्ताश्रवणद्वादशीकथा ॥
अथभविष्योत्तरोक्ताश्रवणद्वादशीकथा ॥ श्रीकृष्णउवाच अत्राप्युदाहरंतीममितिहासंपुरातनं
महत्यरण्येयद्वृत्तंभूमिपालशृणुष्वतत् देशोदशार्णकोनामतस्यभागेतुपश्चिमे मरुदे
शः सर्वसत्वभयंकरः संतप्तसिकताभूमिर्यत्रकृष्णामहोरगाः अल्पछायाद्रुमाकीर्णाम्तप्रा

णिसमाकुला — शमीखदिरपालाशसकरीरैश्चपीलुकैः — तत्रभीमद्रुमाः पार्थ कंटकैः संवृताद्दढाः दुष्टप्राणिग णाकीर्णातत्रभूर्दृश्यतेक्वचित् — अग्न्यर्कतापविभ्रमाविस्तृणापुरुषोज्वलाः ज्वलदग्निसमैचवर्यैः किंचित्तत्रदृश्यते तथापिजीवाजीवंतिसर्वेकर्मनिबंधनाः॥ नोदकमुदकाभाशाराजंस्तत्रवलाहकाः — कदाचिदपिदृश्यंतेछत्रमाताविहंगमाः येकांतारगतैः कैश्चिच्छशाभिस्तापितैः — सम गच्छतिजलपानायसंभ्रमात्सैकतेतटे सैकतेष्वेवनश्यंतिजलेसैकवसेतुवत् तस्मिंस्तथाविधेदेशेकैश्चिद्दैववशाद्वणिक् — निजसार्थपरिभ्रष्टः प्रविष्टोमरुजांगले — बभ्रामभ्रांतहृदयः क्षुत्तृष्णाश्रमपीडितः — क्वग्रामः क्वजनः कुत्रैयास्यामिवहुधेरितः। अथप्रेतान्ददर्शासौतृष्णाव्याकुलितेंद्रियः स्नायुवद्धास्थिचरणांधावमानानितस्ततः — उत्कचान्मलिनान्रूक्षान्निर्मांसान्भीमदर्शनान् — प्रेतस्कंधसमारूढमेकंविकृतदर्शनं दुदर्शवहुभिः प्रेतैः सर्वतःपरिवारितं — आगच्छन्शिवभक्तोसि। स्तुतिशब्दपुरःसरप्रेतस्कधान्महीगत्वातस्यांतिकमुपागमत्। सोभिवाद्यवणिक्श्रेष्ठमिदंवचनमब्रवीत् — आस्मिन्घोरतरेदेशेप्रवेशोभवतःकथं तमुवाचवणिक्श्रीमान्ससार्थभ्रष्टयोगतः — प्रवेशोदैवयोगेनकृष्ठकर्मकृतनतु॥ तृष्णासेवाधतेत्यर्थेक्षुद्भ्रमोथभृशंतथा प्राणाः कंठमनुप्राप्ता — वचनंतष्टयेवमे अत्रोपायंनपश्यामिजीवेयंयेनकेनचित्॥ कृष्ण उवाच ॥ इत्येवमुक्तः प्रेतस्तं वणिजंवाक्यमब्रवीत् — एवमुक्तेतथाचक्रेसवणिक्तृष्णयार्दितः मध्यान्हसमयेप्रेतेततस्त्वंदेशमागताः — पुन्नागवृक्षाच्छीतावारिधानीमनोरमा — दध्योदनस्य भक्तेन वर्धमानेनसंयुता अवतीर्यततःसोग्र दधावतिक्षयेततः — तेषामामंत्रणेनैवपरान्तृप्तिमुपागतः — वितृष्णोविज्वरश्चैवक्षणेनसमपद्यत तत्तश्च प्रेतसंघस्यतस्माद्भागात्क्रमाद्ददौ दध्योदनात्सपानीयात्प्रेतास्तृप्तिपरांगताः — अतिथितर्पयित्वातुप्रेतलोकंचसर्वशः ततः स्वयंचबुभुजे भुक्तशेषंयथासुखं तस्मिन्भुक्तवतस्तत्रपानीयंचक्षयंययौ प्रेताधिपंततस्तुष्टाव

णिग्वचनमब्रवीत् आश्चर्यमेतत्परमवनेस्मिन्प्रतिभातिमे अन्नपानस्यसंप्राप्तिः प्रसूस्यकुतस्तव स्तोके
तत्तथान्नेनविभर्षिसुबहून्पृथक् । तासिगता कथत्वेतिनिर्मांसाभिन्नकुक्षयः अपरंचकथंह्येतन्ममाश्चर्यंकथं
यत् कथमस्यामटव्यांत्वंघोरायाचकृतालया तदेतत्संशयछिधिवरंकौतूहलंमम एवमुक्तः सवाणियंप्रेतो
वचनमब्रवीत् ॥ प्रेतउवाच ॥ शृणुभद्रप्रवक्ष्यामिदुःकृतंकर्मचात्मनः शाकलेनगरेरम्येअहमासंसुदुर्मतिः
वणिगासंपुराकालेततोभद्रंममानघ शाकलेनगरेतस्मिन्नास्तिकश्चस्यदुरात्मनः धनलोभात्तदातत्रकदाचित्क
मदेरिता नदत्ताभिक्षवेभिक्षानतृष्णार्तेजलंकदा प्रतिवेश्यस्तुतत्रासीद्ब्राह्मणोगुणवान्मम श्रवणद्वादशीयो
गेमासिभाद्रपदेतथा सकदाचिन्मयासार्द्धंतौर्षांनामनदींययौ तस्यास्तुसंगमे पुण्येयत्रासीच्चंद्रभागया चं
द्रभागासोमसुतातौषीचैवार्कनंदिनी तयो.शीतोष्णसलिलेसंगमंसुमनोहरं तत्तीर्थवरमासाद्यप्रातिवेश्यस्तुमे
द्विज श्रवणद्वादशीयोगेस्नातश्चैवउपोषितः चाद्रभागस्यतोयस्यवारिधान्योनवादृढा दध्योदनयुते.सार्द्धंस
पूर्णैर्वर्द्धमानकैः छत्रोपानद्युगंवस्त्रंप्रतिमाविधिवद्धरेः प्रददौविप्रमुख्यायरहस्यज्ञोमहामतिः चित्तसंरक्षणार्थं
यतस्यापिचततोभयात् सोपवासेनदत्तावैवारिधातीतदामया चांद्रभागस्यतोयस्यदध्योदनयुतातदा एत
त्कृत्वागृहंप्राप्तस्तत.कालेनकेनचित् पंचत्वमहमायातोनास्तिकश्चात्प्रेततागत अस्यामटव्यांघोरायांयथाद
ष्टस्तयानघ ब्रह्मस्वहारिणस्त्वेतेपापाःप्रेतत्वमागताः परदाररताःकेचित्स्वामिद्रोहरताः परे मित्रद्रोहरताः
केचित्पापकर्मरताश्चये ममैतेभृत्यतांयाताअन्नपानकृतेनघ अक्षयोभगवान्विष्णुःपरमात्मासनातनः य
द्दीयतेतमुद्दिश्यअक्षयंतत्प्रकीर्तितं मयाविहीनाः किल्वेतेवनेस्मिन्भृशदारुणे पीडामनुभविष्यतिदारुणंकर्मयो
निज एतेषांतुमहाभागममानुग्रहकाम्यया अनेकनामगोत्राणिशृण्वीयास्त्वचिरेणच मयाप्रीतिरनेन

श्राद्धकुरुमहामते । एकमेकंसमुद्दिश्यप्रेतप्रेतंयथाक्रमं ॥ अस्तिकक्षागताचैवतत्रसंपुटिकाशुभा । हिमवंतमथा
साद्यतत्र वेलप्स्यसेनिधिं । इत्याज्ञाप्यसचप्रेतोवणिजंतंयथासुखं ॥ विसर्जयामासतदासवैश्यायात्स्वमालयं स
मासयगृहंतत्रपश्चाच्छायाद्विमालय तत्रोपदिष्टंविधिवन्निधिंप्राप्यसमागतः सयाष्टिंसंप्रतिष्ठाप्यगयाशीर्षंततोगतः
धनभाग त गदायगयाशीर्षंततोघट । प्रेतानाक्रमशस्तत्रचक्रेश्राद्धंदिनेदिने । ततःसप्रेतनाथोहितोतजांबूनदप्रभःस
मारुह्यविमानेसौस्वर्गलोकमितोगतःस्वर्गतेप्रेतनाथेतु प्रभावात्सवणिक्ततः प्रेतानाक्रमशस्तत्रचक्रेश्राद्धानिसर्वं
तःयस्ययस्ययथाश्राद्धकरोतिसदिनेवणिक् सःसस्तदातदास्वप्नेदर्शयत्यात्मनस्तनुंब्रवीतिचमहाभागप्रसादेनतवा
नघप्रेतभावमिमंत्यक्त्वाप्राप्तोस्मि परमांगतिं सकृत्वाधनलोभेनप्रेतानांसद्गतिंवणिक्जगामस्वगृहेतत्रमासिभाद्रे
युधिष्ठिर चकारविधिवद्दानंततोधिष्ठातमागतः अवापपरंसंस्थानंदुर्लभंसर्वमानुषैः यत्रकामफलावृक्षाःनद्यःपा
यसकर्दमाः शीतलामलपानीयाःपुष्करिण्योमनोरमाः ॥ तद्देशमासाद्यवणिक्महात्मासमृष्टजांबूनदभूषितांगः
कल्पसमग्रसुरसुंदरीभिःस्वर्गेसरेमेमुदितःसदैव । बुधश्रवणसंयुक्ताद्वादशीसर्वकामदा दानंदध्योदनंशस्तमुपवा
सपरोभव सगरेणककुत्स्थेनधुंधुमारेणगाधिना एतैश्चान्यैश्चराजेंद्रकामदाद्वादशीकृता । याद्वादशीबुधयुताश्रव
णेनसार्द्धंसावैजयंतिकथितामुनिभिर्नभस्ये तामादरेणसमुपोष्यनरोहिसम्यक्प्राप्नोतिसिद्धिमणिमादिगुणोपपन्नम्
इतिभविष्योत्तरोक्ताश्रवणद्वादशीव्रतकथा ॥
अथोद्यापनं उपोषितोनरोभक्त्यास्थाप्येत्प्रतिमागृहे कृत्वासौवर्णिकदेवंवामनंतमथार्च्ययेत् गंधैःपुष्पैस्तथाधूपैर्नै
वेद्यैर्विविधैरपि ततस्तस्यासमीपेतुदधिभक्तघटंन्यसेत् करकःपुरतःस्थाप्योगंधोदकसमन्वितः छत्रंचसाक्षसू
त्रंचसुयष्टिंकुंडिकातथा न्यसेत्तस्यसमीपेतुशुचि शुद्धेनचेतसा ॥ नैवेद्यैर्विविधैर्भक्ष्यैःसर्वतस्तंप्रपूजयेत्

खतूर्य्यरवैश्चैवब्रह्मघोषविमिश्रतैः एवंजागरणंकृत्वाप्रभातेविमलेजले स्नानादिकंविधायाथहोमंकुर्य्यात्तिलैः सहपूजांचपूर्ववत्कृत्वावामनस्यसमीपतः दद्यात्तद्विप्रवर्य्यायवामनंतिलमध्यगं वामनोबुद्धिदोदाताद्रव्यस्थो वामनःस्वयं वामनोस्यप्रतिग्राहीतेनवामनतेनमः वामनःप्रतिगृह्णातिवामनोवैददातिच वामनस्तारको भाभ्यांतेनवामनतेनमः ॥ इतिदानप्रतिग्रहमंत्रोः ॥ ॥ अत्रप्रतिमाग्रतइतिउपवासदिनेश्रवणद्वादशीव्र तांगत्वेनयस्याःप्रतिमायाःपूजनंकृतं तदग्रेउपवासदिनेएवोद्यापनांगत्वेनप्रतिमांतरस्थापनरात्रौपूजांतरविधा नमुच्यते उपोषितइतिचाशक्तस्यापिदिवाहारवर्जनरात्रिपूजात्वेनकथ्यतेद्रष्टव्यं एवंजागरणंकृत्वेतिश्लोकेपूर्व कृतस्नानादिभिन्नवक्ष्यमाणहोमांगत्वेनस्नानवास. परिधानादिविधीयते उद्यापनांगत्वेनजागरणतुल्यतांदर्शयितुं तदपवास्तिलैःसहेति पायसाक्षतानांचातिशेषः पौरुषेणतुसूक्तेनपायसंहोमयेत्सुधीः पश्चात्तिलाक्षितांश्चैवपूर्णाहु त्यासमन्वितः दध्यातुद्विजवर्य्यायवामनंविमलंस्थितमितिशास्त्रांतरसंप्रधायात् ॥ ॥

अथप्रयोगः भाद्रशुक्लद्वादश्यांसंगमेस्नात्वा गृहमागत्यश्रवणद्वादशीप्रयुक्तांविष्णुपूजनंकृत्वा वुद्धश्रव णद्वादशीव्रतांत्वेनोद्यापनंकरिष्ये इतिसंकल्प्य तदंगत्वेनगणेशपूजनाद्याचार्यवरणांतंकुर्य्यात् यथाविभवतस्यपू जनंच अथाचार्योहंस्यावामनप्रतिमाया मग्न्युत्तारणंकुर्यात् यथाविभवंतत्पूजनंचसाय संध्योत्त रपूर्वपूजितप्रतिमाग्रेपुष्पमडपिकायासर्वतोभद्रादिमंडलस्थकलशोपरिवामनप्रतिमायां ॐवामनायनमइतिमं त्रेणसहस्रशीर्षेत्यादिमंत्रसहितेनषोडशोपचारैः संपूजयेत् तत्रनैवेद्यंवहुविधंप्रदर्शयेत् पूजांतेदेवदेवस्यपुर तः दधिघटगंधोदकपूर्णकरकछत्रादिचसादयेत् , ततोनानावाद्यघोषैर्ब्रह्मणरद्घोषैश्चजागरणंकुर्य्यात् सर्वं प्रहरेपुनानाविधभक्ष्यनैवेद्यसमर्पणंचकुर्य्यात् , ततः प्रातर्नित्यंस्नानहोमौविधायपुनः स्नानधौतवासास्तिलकधा

रणेकृत्वोद्यापनांगहोमंकल्पयेत् आचार्य्योयदन्नसंस्थितामितिसर्षपविकिरणप्रोक्षणादिदेशशुद्धिंविधायहोमांग
त्वेनस्थंडिलेऽग्निंप्रतिष्ठाप्यैशान्देशेकलशेवरुणपूजनांतंग्रहपूजनंचकृत्वाऽग्नेःपश्चिमेदेशेउपविश्य ग्रहोद्देशे
नान्वाधानेऽर्कादिसमिच्चर्वाज्याहुतिसंकीर्तिं पुरुषनारायणंषोडशपायसाहुतिभिः षोडशतिलाक्षताहुतिभिःशे
षेणस्विष्टकृतमित्यादि अष्टपात्रासादनप्रणीतानिधानांतेआज्यनिर्वापः ग्रहसमिद्वपायसेनसहतिलैर्यवतंडु
लैश्चआज्यपर्य्यग्निकरणं संमार्जनांते पायससमन्वाधिश्रित्याभिघार्योद्वास्याज्यंदक्षिणे आसाद्याग्न्यर्चनादिआ
ज्यभागांतेयथान्वाधानं प्रायश्चित्तांतेबलिदानपूर्णाहुति ततः पूर्णपात्रानयनसंस्रवाजयपरिस्तरणविसर्जना
र्चना ततोवरुणकलशोदकेनयजमानाभिषेकः आचार्य्यायधेनुदानं ततोवामनस्यग्रहाणांचोत्तरपूजांते ताःप्र
तिमाआचार्य्यहस्तेप्रतिपाद्यदशावतारब्राह्मणभोजनसंकल्पेश्वरार्पणंकुर्य्यादितिश्रवणद्वादशीव्रतं ॥

अथवामनजयंतीव्रतकथा ॥ भविष्योत्तरे ॥ श्रीकृष्णउवाच ॥ ॥ द्वादश्यास्तेविधिःप्रोक्तः
श्रवणेनयुधिष्ठिर सर्वपापप्रशमनः सर्वसौख्यप्रदायकः एकादशीयदासास्यात्श्रवणेनसमन्विता वि
जयासातिथिःप्रोक्ताभक्तानामभयप्रदा पुरादेवगणैःसर्वैर्निजधामपरिच्युतैः प्रार्थितोभगवान्विष्णुरिंद्रा
द्यैस्तिलसंयुतैः बलवानितितोविष्णुर्बलिर्नाममहाबलः तेनदेवगणाः सर्वेपातितानिजमंदिरात् त्वंगतिः
सर्वदेवानांशीघ्रंकष्टंत्वमुद्धर जहिदैत्यंमहाबाहोबलिंबलवतांवर श्रुत्वाविष्णुस्तदावाक्यंदेवानां
करुणोदयं उवाचवाक्यंवाक्यज्ञोदेवानांहितकाम्यया जानेविरोचनसुतंबलिंत्रैलोक्यशंकितं तपसाभा
वितात्मानंशांतंदांतंजितेंद्रियं मद्भक्तंसद्व्रतप्राणंसत्यसंधंमहाबलं सपूजयतिमांभक्त्याप्रजानांप्रियकारकः
नगुणास्तस्यशक्यंतेवक्तुंकेनापिभूतले अवश्यंतपसोपेतैर्भोक्तव्यंतपसःफलं तपसस्तस्यबहुनाकालेनांतोभवि

ष्यति यदा विजयिसंज्ञा स्यात्कालेनकेनचित्कृता ।। समाहृत्य श्रियं तस्मात्तदादास्येदिवौकसां ।। अदितिर्मे प्रयत्ना
द्वैपुत्रार्थी पुत्रगृधिनी तस्यामनीषितं देवकार्य्यं विष्णुरचिंतयत संचिंतयित्वासुचिरं देव्या गर्भावधारणं अदितिर्वरया
मास सा छिन्नेनभविष्यति अथकाले बहुगते गर्भिणी साभवत्तदा ।। सुषुवे नवमेमासि पुत्रं सा वामनं हरिं ।। ह्रस्वपादं ह्र
स्वकायं महाशिरसमन्वितं पाणिपादोदरकृशं ह्रस्वजंघोरुकेसरं दृष्ट्वातु वामनं जातमदितिर्मोददायकं ।। अयं वभूव
दैत्यानां देवतारं तो प्रमागमन् ।। जातकादीनशुभकरान्संस्कारान्स्वयमेवहि ।। चकार कश्यपो धीमान्प्रजापतिसम
न्वितः ।। आवद्धमेखलो दंडी जटी यज्ञोपवीतवान् ।। कुशचर्माजिनधरः ।। कमंडलुविभूषितः ।। वलेर्बलवतो यज्ञं जगा
मवकविस्तरं दृष्ट्वा दैत्यवलं सर्वं वामनो भेतत्क्षणं ।। अथैनाहं यज्ञपते दीयतां मम मेदिनी ।। पदत्रयप्रमाणेन तथा
पनार्थं स्थितोस्म्यहं ।। दत्ता दत्तातवतथा वलिः प्राह द्विजोत्तमं ततो वर्द्धितुमारेभे वामनोनंतविक्रमः ।। पादौ भूमौ
प्रतिष्ठाप्य शिरसा व्याप्य रोदसी तं दृष्ट्वा महदाश्चर्यं सिद्धा देवर्षयस्तथा साधुसाध्विति देवेशं प्रशशंसुर्मुदान्विताः ततो
दैत्यगणान्सर्वान्जित्वा त्रिभुवनं वशी वलिं प्राह च भो गछ पातालं सवलानुगः तत्र त्वमीप्सितान्भोगान्भुंक्ष्व मद्वाहुपा
लितः अस्येंद्रस्यावसाने तु त्वमेवेंद्रो भविष्यसि ।। एवमुक्तो वलिः प्रायान्नमस्कृत्य नरोत्तमं ।। विसृज्य च वलिं देवो लो
कपालानुवाच ह स्वानि धिष्ण्यानि लोकेशा गछध्वं विगतज्वराः ।। देवेनोक्ता गता देवाः प्रहृष्टाः पूज्य वासवं देवः कृत्वा ज
गत्कार्य्यं तत्रैवांतरधीयत एतत्सर्वं समभवदेकादश्यां नराधिप तेनेष्टा देवदेवस्य सर्वेशा विजया तिथिः एवं च फाल्गुने
मासि पुष्पेण सहिता नृप विजया प्रोच्यते सद्भिः कोटिकोटिगुणस्तदा एकादश्यां सोपवासो रात्रौ संपूजयेद्धरिं रौप्ये सौ
वर्णपात्रे वा दारुवंशमयेपि वा ।। सौवर्णं वामनं कुर्य्यात्स्ववित्तस्यनुसारतः शिखी कमंडलुधरः छत्री यज्ञोपवीतवान् ए
वं लक्षणसंपन्नं वामनं पूजयेद्धरिं आच्छाद्य पात्रं वासोभिरहतैः फलसंयुतैः मार्गेण चर्मणा तद्वद्भक्त्या वा शक्त्यपेक्षया ।। ति

लोदकेनसंपूर्णंप्रस्थेनकुडवेनच अलाभेयवगोधूमैःफलैशक्त तिलैर्नवैः पुष्पैर्गंधैः फलैर्धूपैःकालोत्थैरर्चयेद्धरिं ना
नाविधैश्चनैवेद्यैर्भक्ष्यैर्भोज्यैर्गुडोदनै स्वस्यवित्तानुसारेणसहिरण्यंचकारयेत् एभिर्मंत्रपदैस्तत्रपूजयेद्गरुडध्वजं उ
पहारैर्नृपश्रेष्ठशुचिर्भूत्वासमाहित· ॥ ॥ अथाग्रेभविष्योत्तरोक्तोवामनजयन्त्याःप्रयोगः ॥
तत्रादौभाद्रशुक्लद्वादश्यां नदीसंगमादितीर्थंगत्वा ॥ वरोवरेण्योवरदोवराहोधरणीधरः अपवित्रपवित्र
मांकरोतुभगवान्हरिरितिमंत्रेणा मलकल्कादिविलेपनपूर्वकंस्नात्वा संध्यापूजादिनित्यविधिंसमाप्य संकल्पंकुर्या
त् ॥.॥ ॐमद्येत्यादिदेशकालौसंकीर्त्यात्मनोखिलपापक्षयपूर्वकपैशाच्यादिदुर्गतिनिवारणद्वाराविष्णुप्रीत्यर्थं
पुत्रपौत्रादिपरिवारसहितचिरंजीवत्वसुखसौभाग्यादिसदभीष्टसिद्ध्यर्थंवामनजयंतीव्रतोद्यापनांगभूतवाम नपू
जाविधानंकरिष्ये आचार्यवरणादिपूजांततसमाप्य मंडपांतर्वेदिकायांपीठादौदेवताःपूजयेत् आधारशक्तयेनमः
विमलायैनमः उत्कर्षिण्यैनमः ज्ञानायनमः क्रियायैनमः प्रह्वायैनमः सत्यायैनमः मेधायैनमः मध्येपर
देवतायैनमः परितोबाह्ये इंद्रादिलोकपालेभ्यः सायुधेभ्यः सपरिवारेभ्योनमः पूर्वादिदिक्षु गणपतिंदुर्गांक्षेत्रपा
लं वास्तोष्पतिमभ्यर्च्यसर्वतोभद्रंप्रसार्यतत्रब्रह्मादिदेवताश्चावाह्यसपूज्य तदुपरिकुशान्कृष्णाजिनंवाप्रसार्यतत्र
द्रोणपरिमितंतिलपर्वत अलाभेयवगोधूमान्उपरितिलपूरितंपात्रंसकलशंसंस्थाप्यतत्रद्वादशारपद्मे हैमींवाम
नप्रतिमांस्थापयेत् तत्रमंत्रः त्रीणिपदानिविचक्रमेविष्णुर्गोपाअदाभ्यः अतोधर्म्माणिधारयन् इतिसंस्थाप्यपू
जयेत् ॥ ॥ ॥ अथध्यानम् ध्यात्वाजलमयेदेहदेवदेवस्यचक्रिणः ब्रह्मांडमुदरेयस्य
महद्भूतैरधिष्ठितं मायावीवामनः श्रीमान्समापायाजगत्पतिः शिखीकमंडलुधर.छत्रीयज्ञोपवीतवान् एव
ंलक्षणसंपन्नंवामनंपूजयेद्धरिं सहस्रशीर्षेतिआवाहनम् आगच्छदेवदेवेशतेजोराशीजगत्पते क्रियमाणा

मयापूजांगृहाणसुरसत्तम ॥ १ ॥ पुरुषएवेदमासनं नानारत्नसमाकीर्णंकार्तस्वरविभूषितं आसनंदेवदेवेशपूजा
र्थंप्रतिगृह्यतां ॥ २ ॥ एतावानस्यपाद्यं पाद्यंगृहाणदेवेशसर्वक्षेमकरप्रभो भक्त्यासमर्पितंदेवलोकनाथनमोस्तु
ते ॥ ३ ॥ त्रिपादूर्ध्वमर्घ्यं नमस्तेदेवदेवेशनमस्ते धरणीधर नमस्तेजगदाधारअर्घ्यंनःप्रतिगृह्यतां ॥ ४ ॥ ततो
विराडित्याचमनं कर्पूरवासितंतोयंमंदाकिन्याःसमाहृतं आचम्यतांजगन्नाथमयादत्तंहिभक्तितः ॥ ५ तस्माद्यज्ञात्स
र्वहुतःसंभृतमितिस्नानं पंचामृतंमयानीतंस्नानार्थंपरमेश्वर शर्करारससंयुक्तंपयोदधिघृतंमधु अजनायमहेशायज
लजास्यायशंखिने नमस्तेकेशवानंतवासुदेवनमोस्तुते ॥ ६ ॥तस्माद्यज्ञात्सर्वहुतऋचःसामानिवस्त्रं सर्वभूषाधिके
सौम्ये लोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां ७ तस्मादश्वेति यज्ञोपवीतम् सर्वदेवनमस्तेस्तु
त्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपरमेश्वर ८ तंयज्ञमितिगंधं मलयेपुसमुत्पन्नंगंधयुक्तंमनोहरं मया
निवेदितंगंधंगृहाणपुरुषोत्तम ९ यत्पुरुषमितिपुष्पं माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो मयाहृतानिपूजार्थं
पुष्पाणिप्रतिगृह्यतां पुष्पपूजांतेअंगपूजांकुर्यात् पादादाविक्रमेकांगंपूजयेत्छीर्षमततः पादौमत्स्यायचनमःनमःकू
र्मायजानुनी वराहायनमोगुह्यंनारसिंहायेतिनाभितः उरस्तुवामनायेतिभुजौरामायवैनमः मुखंश्रीरामचंद्रायकृष्णा
यचनमःशिरः मत्स्यंकूर्मंवराहंचनारसिंहंचवामनं रामंरामंरामकृष्णमर्चयामिहितेनमः ततोधूपादिपूजा ब्राह्मणोस्ये
तिधूपः धूपोयंदेवदेवेशशंखचक्रगदाधर अच्युतानंतगोविंदवासुदेवनमोनमः चंद्रमामनसेतिदीपं त्वमेवपृथिवी
ज्योतिर्वायुराकाशमेवच त्वमेवज्योतिषांज्योतिर्दीपोयंप्रतिगृह्यतां १२ नाभ्याआसीतिनैवेद्यं अन्नंचतुर्विधंस्वादुर
सैःषड्भिःसमन्वितं मयानिवेदितंदेवप्रसीदपरमेश्वर १३ यत्पुरुषेणहविषेतितांबूलं पूगीफलंमहादिव्यंनागवल्ली
दलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां १४ इदंफलंमयादेवइतिफलं सप्रास्यासन्निति[illegible] हिरण्यगर्भग

भंस्थमित्यादिपठेत्१ ५चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वज्योतींपिश्रार्तिक्यप्रतिगृह्यतां इतिनीराज
नं यानिकानिचपापानीतिप्रदक्षिणायज्ञेनयज्ञमितिमंत्रपुष्पांजलि नमस्तेपुंडरीकाक्षनमस्तेस्त्वमरप्रिय नमस्तेज
गदाधारदेवदेवनमोनमः इतिनमस्कारः१६ततःप्रार्थना अग्निर्यमोवैश्रवणःकेशवःसलिलंशिवःत्वष्टायमोथवरुणः
पापंमेहंतुसर्वदा जगत्पूज्योजगद्वंद्यअनादिर्जगदंतकृत् जलाशयोजगद्योनिःप्रीयतांमेजनार्जनः अनेककर्मनिर्बंध
ध्वंसनंजलशायिनं नतोस्मिमथुरावासमाधवंमधुसूदनं नमोवामनरूपायनमस्तेस्तुत्रिविक्रम नमस्तेबलिबंधायवा
मनायनमोनमः नमोनमस्तेगोविंदवामनेशत्रिविक्रम पापस्यसंक्षयंकृत्वासर्वकामप्रदोभव सर्वगःसर्वदेवेशः
श्रीधरःश्रीनिकेतनः विश्वेश्वरायविष्णवेश्रीशायच नमोनमः एवसंपूजयेद्रात्रौएकादश्यांनरोत्तमः जा
गरंतत्रकुर्वीतगीतवादित्रमंगलैः प्रातः पूर्वोक्तविधिनापूजयेद्वामनंहरिं स्त्रियोवापुरुषावापिवामनंमत्रवद्ददेत वाम
नः प्रतिगृह्णातिवामनोवैददातिच वामनस्तारकोभाभ्यांवामनायनमोनमः इतिपूजा अथोद्यापनांगभूतोहो
मः तत्रस्वगृह्योक्तविधिनाअग्निंप्रतिष्ठाप्य अनाध्वानांतमग्निकार्यं समाप्य वामनंपायसघृतसंमिश्रिततिलैःप्र
तिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः पीठदेवताब्रह्मादिदेवताश्चैकैकयाहुत्यापक्षे इत्यभिलप्य इरावतीतिमंत्रेण
पायसंघृतचजुहुयात् इरावतीधेनुमतीहिभूतंसूयवसनीमनवेदशस्या०व्यस्कभ्णरोदसीविष्णवेतेदाधर्मथंपृथिवी
मभितोपपूर्पैः स्वाहा १०८ इदंविष्णुरितिपालाशसमिद्भिः इदंविष्णुर्विचक्रमेत्रेधानिदधेपद समूढमस्यपांसुरे
रेस्वाहा १०८ त्रीणित्याज्यहोमः त्रीणिपदानिविचक्रमेविष्णुर्गोपाअदाभ्यः अतोधारयन्स्वाहाः १०८ वि
ष्णोःकर्माणीत्याज्यहोमः विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशेइंद्रस्ययुजःसखास्वाहा १०८ ततोहोमशे
पसमाप्य द्वादशविप्रान् वस्त्रादिनासंपूज्य दध्यन्नमुपवीतंगोपीचंदनपूगीफलदक्षिणायुतान्करकान्तेभ्यो

दद्यात् तत्रमंत्रः वामनः प्रतिगृह्णातीतिमंत्रपाठः ततः एकंसुगंधिजलपूर्णंदधिभक्तयुतंद्विज करकंतेप्रयच्छामिवाम नःप्रीयतामिति वामनःप्रतिगृन्हातीतिपठित्वा आचार्य्यायदद्यात् सोपस्करं शय्यांगांचअन्नपूर्तंयेआचार्या यदत्वा पूर्णाहुतिंविधाय ईशानकलशोदकेनाभिषेकंविधाय अन्यानपिभूरिदक्षिणादिभिःपरितोष्यआशिषांगृह्णी यात् श्रीकृष्णउवाच एवंदत्वाततःप्रातर्भोजनंपृथदाज्यकं पूर्वंदद्याद्ब्राह्मणेभ्यः पश्चाद्भुंजीतवाग्यतः भूयोयथेच्छया राजन् सर्वत्रैषविधिःस्मृतः, एवंकृतेव्रतेराजन्यत्पुण्यंतच्छृणुष्वमे, यावत्कल्पशतंपूर्णंतावद्वर्षाणिसुव्रत प्राप्य विष्णुपुरेभोगान्भुक्त्वांतेकल्पसंक्षये इहागत्यभवेद्राजाराजभिश्चापिसेवितः हस्त्यश्वरथपादातीदाताभोक्ताविम त्सरः रूपसौभाग्यसंपन्नोदीर्घायुर्नीतिसंयुतः पुत्रपौत्रैः परिवृतोजीवेत्सशरदांशतं एषाव्युष्टिर्मयाख्याताद्वादश्याः स्तेयुधिष्ठिर एवमेवसमाख्याताद्वादशीश्रवणान्विता उपोष्यैकादशींपश्चाद्द्वादशीमप्युपोषयेत् नचात्रविधिलोपः स्यादुभयोर्देवताहरि बुधश्रवणसंयुक्ताद्वादशीसंगमोदकं दानंदध्योदनंसम्यगुपवासोर्चनंहरेः सगरेणककुत्स्थे नधुंधुमारेणगाधिना एतैश्चान्यैश्चराजेंद्रकृतोयंद्वादशीविधिः इतिभविष्योत्तरपुराणेसोद्यापनंवामनजयंतीव्रतम्

अथास्यामेवभाद्रशुक्लद्वादश्यामवियोगद्वादशीव्रतंभविष्योत्तरे युधिष्ठिरउवाच ॥ अवियोगव्रतंब्रूहिमह्यंदे वकिनंदन विधानंकीदृशंचास्याकिंपुण्यंकात्रदेवता श्रीकृष्णउवाच श्रृणुपांडवयत्नेनकथ्यमानमयाखिलं अवियोगव्रतंनामव्रतानामुत्तमोत्तमं प्रौष्ठपादेशुक्लपक्षेद्वादश्यांप्रातरुत्थितः सशुचिः शुक्लाभरणः स्नात्वापूर्वं जलाशये हृद्येरम्येविलिप्तेचविलिखन्मंडलेहरिं गोधूमचूर्णपिष्टैर्लक्ष्मीमनुपार्श्ववर्तिनीं तत्रैवहरंगौरीसहितं सावित्रींब्रह्मणासहितांरज्ञींसहितंचरविंत्रैलोक्यद्योतकर्तारं गंधैः पुष्पैर्धूपनैवेद्यैरर्चयेद्यथाशक्त्या अवियोगव्र तचारीमंत्रेणानेनराजेंद्रनारीवापुरुषोवा अवियोगव्रतंदृढकृत्वा भक्त्याध्यात्मीमौनीभूत्वापूजयेद्देवान् सहस्रमूर्द्धा

पुरुषः पद्मनाभोजनार्दनः व्यासर्पिकपिलाचार्यौभगवान्पुरुषोत्तमः नारायणोमधुलिहाविष्णुर्दामोदरोहरिः म
हावराहोगोविंदः केशवोगरुडध्वजः श्रीवत्सः पुंडरीकाक्षोविश्वरूपस्त्रिविक्रमः उपेंद्रोवामनोरामोवैकुंठोमाध
वोविभुः वासुदेवोहृषीकेशः कृष्णः संकर्षणोच्युतः अनिरुद्धोमहायोगीप्रद्युम्नोनंतएवच नित्यंममास्तुसुप्री
तः ससुतः केशिसूदनः उमापतिर्नीलकंठःस्थाणुस्सभगाक्षिहा ईशोस्तुसहपार्वत्याशंकरः शंकरेश्वरः
ब्रह्माशंभुः प्रभुस्त्रष्टापुष्कराक्षः पितामहः हिरण्यगर्भोवेदज्ञः परमेष्ठीप्रजापतिः वेधाश्चतुर्मुखःकर्ता स्वयंभुः
कमलासनः विरिंचिपद्मयोनिश्चममास्तुवरदःसदा आदित्योभास्करोभानुःसूर्योर्कः सवितारविः मार्तंडोमं
डलीज्योतिराशिमरश्मिमहेश्वरः प्रभाकरःसुसप्तरश्मिस्तरणिःसरणिःखगः दिवाकरोदिनकरः सहस्रांशुर्मरीचिवा
न् पद्मप्रबोधनः पूषाकिरणभिरुभूषणः दिक्षुभावल्लभोदेवः सुप्रीतोस्तुसदामम लक्ष्मीः श्रीपद्महस्ताचचंचला
कमलालया सदाभवतुसुप्रीताममसाहरिवल्लभा उमागौरीमडानीचगिरिजामेनकात्मजा सदाभवतुमे प्रीतापा
र्वतीहरवल्लभा सावित्रीभारतीवाणीवीणापुस्तकसंयुता सासदामेप्रसन्नास्यात् विधियुक्तासर
स्वती प्रभाकरयुतानित्यंछायाभाद्योतकारिणी प्रीताभवतुमेसंज्ञादिक्षुभाभास्करप्रिया इति
पद्मनाभशंकरपितामहार्कांन्प्रिया सहितान् एवंपूजांकृत्वादत्वादानंव्रजेद्देशमयश्च रतिनरः काश्चि
त्कृतमेतद्भक्तिभावितोलोके भवतियशोधनभागीसंततिमान विगतसंतापः हरिहराहिरण्यगर्भप्रभाकराणां
क्रमेणलोकेषु भुक्त्वाभोगान्विपुलानथयोगीनिर्वृतोभवति स्त्रीपुंसोयदियस्मिन्पुरुषोवायदिसमाचरतिकश्चित् नारी
वाव्रतमेतत्कृत्वायात्यालयविष्णोः इतिभविष्योत्तरेहरिहराहिरण्यगर्भप्रभाकराणांसंयोगव्रताध्यायः ॥ ॥
अस्यामेवभाद्रशुक्लद्वादश्यांदुग्धत्यागव्रतारंभः कार्यः तदुक्तं दुग्धमाश्वयुजेमासीतिदुग्धव्रतंपायसादिवर्ज्यं दधि

घृतादयस्तुग्राह्याएव नन्वेवंसंधिन्यानिर्दशावत्सागोःपयःपरिवर्जयेदिति संधिन्यादिक्षीरनिषेधेपिदध्यादिग्राह्य
स्यादितिकेचित् तन्नचवाचिकनिषेधसत्त्वात्तदाह अपरार्के शंखः क्षीराणियान्यभक्ष्याणितद्विकाराशनेबुधः
सप्तरात्रंव्रतंकुर्य्यात्प्रयत्नेनसमाहितइति व्रतंचात्रगोमूत्रयावकमितिनिर्णयामृतेधौदीक्षितीयेच ॥ इतिभाद्रशुक्लद्वा
दशीकृत्यानि ॥ ॥ अथभाद्रशुक्लत्रयोदश्यागोत्रिरात्रव्रतं नारदीये भाद्रशुक्लत्रयोदश्यांगोत्रिरात्रव्रतंस्मृतं
लक्ष्मीनारायणंकृत्वासौवर्णंवापिराजतं पचामृतेनसंस्नाप्य मंडलेऽष्टदलेशुभे घटेविन्यस्यवस्त्राढ्यंगंधाद्यैः
परिपूजयेत् आरात्रिकंततःकृत्वादद्यात्सान्नोदकघटं एवंदिनत्रयंकृत्वाव्रतांतेगांसमर्च्यच-सम्यगर्घ्यंचसपाद्यदद्या
न्मंत्रेणनारद पचगावःसमुत्पन्नामथ्यमानेमहोदधौ- तासांमध्येचयानंदातस्यैधेन्वैनमोनमःप्रदक्षिणीकृत्यततो
दद्याद्गांविप्रायमन्त्रतः गावोममाग्रतःसंतु गावोमेसंतुपृष्ठतः गावोमेपार्श्वतःसंतुगवांमध्येवसाम्यहं ततश्च
द्विजदांपत्यंसम्यगभ्यर्च्यभोजयेत् लक्ष्मीनारायणंतस्मैनमस्कृत्यप्रदापयेत् - अश्वमेधसहस्राणिराजसूयशता
नि च कृत्वायत्फलमाप्नोतिगोत्रिरात्रव्रताच्चतत् अथहेमाद्रौ भविष्योत्तरोक्तं गोत्रिरात्रव्रतं ॥ ॥ - युधिष्ठिरउवाच
भगवंस्त्वत्प्रसादेनवहूनिसुकृतानिमे श्रुतानिवहुपुण्यानिकृतानिमधुसूदन ॥ सर्वपापहराणिस्युःसर्वकामप्रदा
निच तंव्रतंश्रोतुनिच्छामिव्रतानांव्रतमुत्तमं किंचिद्योगव्रतंब्रूहियदितुष्टोसिमाधव यत्कृत्वासर्वपापेभ्योनरोनारी
विमुच्यते श्रीकृष्णउवाच कथयामिनृपश्रेष्ठव्रतानामुत्तमंव्रतं महाफलप्रदंचैवतच्छृणुष्वनृपोत्तम ॥ या
न्यान्कामांश्चवांछितिलभतेतांस्तथैवच तत्क्षणादेवमुच्यतेनराःपापैश्चसर्वशः । विष्णोर्भगवतोराजन्कामधेनोः
प्रसादतः सौभाग्यंसंततिंलक्ष्मींप्राप्नोतिमनुजोत्तमः युधिष्ठिरउवाच यदितुष्टोसिभगवन्व्रतस्यास्यविधिंशुभं ब्रू
हिमेयदुशार्दूलकरोमित्वत्प्रसादतः केमंत्राः केनमस्कारादेवताःकेचकीर्तिताः - - किंदानमर्चनंतत्रकथयस्वसुरो

त्तम कृष्णउवाच नारदेनपुराराजन्यदुक्तंसगरादिषु स्मारितंतत्त्वयाराजंस्तच्छृणुष्वव्रतोत्तमं मासिभद्रा
पदेशुक्लेत्रयोदश्यांसमारभेत् त्रयोदश्यांप्रभातेतुसमुत्थायशुचिर्भवेत् गृह्णीयान्नियमंपूर्वंदंतधावनपूर्वकं आ
चम्योदकमादायइमंमंत्रमुदीरयेत् गोत्रिरात्रव्रतस्यास्योपवासकरणेमम शरणंभवमेनित्यंनमस्तेधेनुरूपिणी
प्रसीदतुमहादेवोलक्ष्मीनारायणःप्रभुः लक्ष्मीनारायणंदेवसौवर्णंवास्वशक्तितः पंचामृतेनगव्येनस्नापयेत्क
मलापतिं स्थापयेत्सर्वतोभद्रेमंडलेष्टदलेपिवा गंधपुष्पैश्चनैवेद्यैःस्तुतिगीतादिनर्तनैः नारिकेलार्घ्यदानेनप्री
णयेद्वाहरिंतथा लक्ष्मीकांतजगन्नाथगोत्रिरात्रव्रतंमम परिपूर्णंकुरुष्वमंगृहाणार्घ्यंनमोस्तुते आरात्रिकंततःकुर्या
द्भक्त्याकृष्णस्यतुष्टिदं नवकुंभजलंभृतंहविष्यान्नेनपूरितं कृत्वादिनत्रयंपार्थप्रीतयाविनिवेदयेत् पंचपूजांत
तःकृत्वाजलधारांप्रदक्षिणां पुरादत्त्वातुमुकुटकुंडलेकुंकुमंतथा अन्नगोदानगंधादिदिव्यपुष्पैःसुदीपकैः
अहोरात्रमवंकाचिद्घृतदीपंदिनत्रयं अर्घ्यंदानंततः कुर्यान्नारिकेलादिभिःफलैः मंत्रोयथा
पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः प्रदक्षिणीकृतायेनधेनु
र्वध्यातुपांडव प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः गावोमेपार्श्वतःसंतु
गवांमध्येवसाम्यहं आरात्रिकंसनैवेद्यंगीतवाद्यमहोत्सवं कुंकुमंकलशंसूत्रंधेन्वैदद्याद्विचक्षणः एवंसंपूज्यतांधे
नुंसम्यग्भक्त्यादिनत्रयं यवांश्चयवसंचैवचारयेत्प्रापयेद्बुधः गोमयादागतैर्धान्यैः कुर्य्यात्तैरेवपारणं धेन्वैप्रजागरं
कुर्य्यात्सर्वपापप्रणाशनं त्रिविधान्मुच्यतेपापात्प्रहरार्द्धेनपांडव तस्योत्तरकृतात्पापात्प्रहरेणविमुच्यते च वारिवेणु
पात्राणिकारयित्वाप्रपूजयेत् नारिकेलाम्रकदलीद्राक्षाखर्जूरदाडिमैः शुभैर्विरूढैः सिंदूरैर्वस्त्रैः कुंकुमकज्जलैः
प्रथमेबीजपूरार्घ्याद्वितीयेदाडिमंशुभं तृतीयेनारिकेलेनदद्यादर्घ्यंदिनत्रयं करकास्तुत्रयःकार्य्या हविष्यान्नेनपू

रिताः लक्ष्मीनारायणदेवब्राह्मणंभार्ययासह । पूजयेत्कुसुमैर्वस्त्रैर्हेमसूत्रैर्युधिष्ठिर । दंपत्योर्भोजनंदेयंधेनुभक्त्याद्वि
नत्रयं । पारणेपारणेविप्रानिष्टान्वधूश्चभोजयेत् । गुरुरूपायतांधेनुंद्विजायप्रतिपादयेत् सकुंकुमांसवस्त्रांचघटामुकु
टभूषितां गीतवादित्रनृत्यादिस्तुतिपाठपुरस्सर यायाद्विप्रगृहंयावत्प्रापयेत्ततएवच एवंयःकुरुतेनारीत्रिरात्रव्रतमुत्त
मं भवांतरकृतात्पापात्त्रिविधान्मुच्यतेनरः । पापाकाचिन्नपश्येतभर्तृदुःखनराधिप । पुत्रपौत्रसुखंतस्याभविष्य
तिनसंशय । जन्मांतरेप्यसौनारीवैधव्यंनैवपश्यति । वैधव्यंतुमहद्दुःखंनभवेत्तुभवांतरे अपुत्रोलभतेपुत्रान्धनहीनोध
नंलभेत् कायेनमनसाचैवकर्मणायदुपार्जितं तत्सर्वंपातकंयातिगोत्रिरात्रव्रतेकृते इहभोगान्सविपुलान्भुक्त्वापुःपूर्ण
मेवच व्रतस्यास्यप्रभावेणस्वर्गलोकेमहीयते । कीर्तिदंधनदंचैवसौभाग्यकरणंनृप । आयुरारोग्यकरणंसर्वपा
पप्रणाशनं एतस्मात्कारणाद्राजन्सभार्यस्त्वंकुरुव्रतं यदिराज्यपरांकीर्तिंनिर्विघ्नप्राप्तुमिच्छसि ॥ । अथगुर्ज
राचारप्राप्तगोत्रिरात्रव्रतं । युधिष्ठिरउवाच येनापिसकलालक्ष्मीर्नराणांभवनेभवेत् । संततिर्वर्द्धतेस्त्रीणांतद्व्रतंवदमे
प्रभो कृष्णउवाच शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमंव्रतं । येनैवक्रियमाणेनसर्वपापक्षयोभवेत् गोत्रिरात्रमिति
ख्यातंनृस्त्रीणांफलदायकं । वांछितंजायतेतेषांयेषांचेतसिवर्तते ॥ युधिष्ठिरउवाच कीदृशंतद्व्रतंदेवविधानंतत्रकी
दृशं । कथमेवसमुत्पन्नंकस्मिन्कालेतुकेशव ॥ कृष्णउवाच पुराकृतयुगेपार्थमनुर्नामबभूवह । वैवस्वतकुलेजा
तोबभूवपृथ्वीपतिः द्वितीयइतिविख्यातःसाक्षान्मनुरिवापरः नृपाःसर्वेवशंयाताबभूवुर्वरदायकाः । नित्यंधर्म
परोराजापूजनीयोमनीषिणां नजायतेतुसंतानंतस्यैववर्ततं ततः वांछतासंततिंतेनदत्तामात्रिपुकोशला । सपुत्रार्थंसप
त्नीकोवसिष्ठस्याश्रमययौ वांछद्भिःपथिकल्याणंसारसैस्तोरणीकृतं विविधानिचवृक्षाणिमार्गेपुफलितानिच सरा
जामहिपीसार्द्धरथारूढःसुवाहनः सध्यायांयोगिनस्तस्यमहर्षेःप्रापआश्रमं सारथिंचसमादिश्यवाजीन् विश्रामये

त्यप रथादुत्तीर्यदांपत्यमाश्रमंतुगतंमुनेः एवंकर्माणिसंध्यायांदिलीपोददर्शगुरु अरुधत्यासमासीनंसावित्र्येवपि
तामहं तौप्रणम्यगुरुंतत्रमुनिपत्नींविशेषतः स्थितौतस्यसमीपेतुप्रीत्यानंदिनतौतयोः दिलीपंचतदर्थंस्यधर्मंज्ञलो
कपालकं पप्रच्छकुशलंराज्येवसुधायांशुभंमुनिः दिलीपउवाच-कुशलंन-सर्वदावस्थितेत्वयिगुरौसति सुराणांचम
नुष्याणांविपद्योरक्षिताभवान् विपयेममकांतायामपत्यंकिंनजायते नतुकार्यंधरित्र्यामेनिराशाःपितरोमम् तथाकु
रुमुनिश्रेष्ठपुत्रोभवतिमेयथा राज्ञाविपत्तिसप्राप्तैत्वदायत्तंसुखंमुने वेदेतिकथिनराज्ञामुनयेवैयुधिष्ठिर तथामुनिः
क्षणंनस्थौध्यानस्तिमितलोचनः कारणंसंततेराज्ञोमुनिर्दृष्ट्वासमाधिना पश्चान्निवेदितंतस्मैदिलीपायप्रयत्नतः व
सिष्ठउवाच पुराद्वृत्रारिमाराध्यवसुधांगच्छतस्तव अभूत्कल्पद्रुमस्याधः कामधेनुर्नवंदिता जातस्तस्यास्तदाको
पोदत्तस्तेशापईदृशः नवंदिताहंभवतासांप्रतंयदिभूपते भविष्यतिनतेपुत्रस्तच्छापेनश्रुतस्त्वया नपूजयेच्च
यःपूज्यान्योवंद्यान्नैववंदते नजायतेतुकल्याणपातकैरनुलिप्यते दिलीपउवाच कृतोमयापराधोयंकिंकरोमि
महामुने संततिर्जायतेयेनतद्व्रतंवदमेप्रभो वसिष्ठउवाच अन्यैर्नानाविधैःपुण्यैस्तपोभिर्नृपदुःसहैः नजाय
तेतुसंतानंगोत्रिरात्रव्रतंविना सपत्नीकःसवत्सामेधेनुंराजन्फलप्रदां आराधयैकाग्रमनागोत्रिरात्रव्रतकुरुष्व
यदित्थंदिलीपस्यमुनिनाकथितंव्रतं तावच्चनंदिनीधेनुर्वनादावृत्तेशुभा कुंडोध्नीतिलकसितंसुकापिलादुग्धशुचि
बिभ्रती देवानांवरदाशुभोदधिभवाकामप्रदापाटला ... गीर्वाणाःसकलाःश्रुतौवपुषिवैतिष्ठतियस्याश्रुते
संपूर्णाशशिनःकलाचदधतीश्रेयस्करीपूर्णिमा भाद्रेमासिसमायातशुक्लपक्षेतुपार्थिव प्रातःस्नात्वात्रयो
दश्यांनियमंतुसमाचरेत् समुपोष्यगोत्रिरात्रंभक्तिकृत्वाततस्तव भोक्ष्यहनिचतुर्थेहंसौभाग्यदेहिगोमम इति
यममंत्रः ततोगाश्चासमभ्यर्च्यमंडलेगंधदीपकैः नगरेशतपत्रैश्चचंपकाद्यैशुभाननागावोममाग्रतःसन्तुगावो

मेसंतुष्टघतः गावोमेपार्श्वयोःसंतुगवांमध्येवसाम्यहं पचगावःसमुत्पन्नामथ्यमानेमहोदधौ तासांमध्येतु यानंदातस्यैधेन्वैनमोनमः इतिपूजामंत्रः फलैर्नानाविधैः पुष्पैर्गंधैरपिस्वशक्तितः पूजनीयाप्रयत्नेनदद्याद र्घ्यविधानतः नालिकेरंचकूष्मांडंमातुलिंगंचदाडिमं समिष्टान्नंचनैवेद्यंकारयेद्यवसंयुतं गोत्रिरात्रव्रतार्थायफल मद्यकरेधृतं सर्वकामप्रदंदेविगृहणार्घ्यंनमोस्तुते इत्यर्घ्यमंत्रः वस्त्रयुग्मंविधानेनदद्याद्वासांसिदक्षिणां सप त्नीकायगुरवेस्वशक्त्याचव्रतीनरः दिनानित्रीणिभिस्त्रीणिश्रोतव्याचकथाशुभा जितक्रोधैस्ततःसर्वैःस्त्रीभिर्वापुरु षैरपि एवंसपूज्यविधिवल्लक्ष्मीयुक्तंतुकेशवं चतुर्थेदिवसेप्राप्तेततोधेनुंविसर्जयेत् अथधेनुसवत्सांचमंत्रेणानि नपार्थिव दद्याद्विप्रायविदुषेधर्मज्ञशास्त्रपारगे परिपूर्णंव्रतंकृत्वादत्वाकामानभीप्सितान् विप्रायत्वंमयादत्तामा तर्गच्छयथासुखं इतिदानमंत्रः ॥ सर्वदानानिदेयानिस्वशक्त्याव्रतिभिर्नरैः विविधेभ्योद्विजेभ्यश्चदक्षिणांचस्व शक्तितः वित्तशाठ्यंनकुर्वीतदापयेच्चततोनरः गृहंयावत्व्रजेत्तिष्ठेद्गीतवाद्यपुरस्सरं गोपालानांचपाथेयपूजा पूर्त्तिकरंपरं यवायेचारितानित्यंफलैर्नानाविधैःसह भुक्तायेकामधेन्वाचसंयुक्तागोमयेनच पारणंतैःप्रकर्तव्यं सर्वैरिष्टजनैःसह सपत्नीकायगुरवेदद्याचान्नसदक्षिणं कृष्णउवाच एवमाराध्यतांधेनुंराजावैभक्तितत्पर ततःप्रजानामधिपः प्रभातेसुरभिमुनेः भाद्रेमासिसितेपक्षेत्रयोदश्यांयुधिष्ठिर पूजांकृत्वाविधानेनमुमोच त्वरितंशुचिः-संध्यायप्रभृतिस्थित्वाआययौपुनराश्रमं अर्चांसुदाक्षिणाकर्तुंनत्वाचाविधिवद्बलिं ययौधेनोःस मीपेतुवलिदत्वादिनत्रय अनुयातस्ततोधेनोस्तृतीयेदिवसेपुनः जगतींगोरूपधरामिवोदधिपयोधरां लताभिः श्चततोराजापुष्पैर्वर्धयितस्तदा जयशब्दंचभापतेपक्षिणःसुंदरस्वनाः गीतेचवनदेवीभिर्गीयमानंयशःस्वकं शुश्रा वचततोराजाभृशंमनसिहर्षितः तद्दिनेवैमुनेर्धेनूराज्ञोभावंपरीक्षितुं विवेशगह्वरंतत्रपार्वत्याश्चपितुर्गृहं कृत्रिम

अथतनःसिंहोमुनेर्धेन्वाभयंकरः सिंहश्चददर्शराज्ञाधेनुकर्पन्बलेनवै दृष्ट्वाराज्ञातदाधेनुं क्रंदमानास्वरोलवणैः ततो धनुर्धरःसोपितंमोक्तुमुपचक्रमे तूण्या सिंहवधार्थायराजावाणंसमाददे उत्पः स्तुतदारोधःकोपयुक्तोबभूव सः धनुष्यारोपयन्वाणंचित्रन्यस्तइवास्थितः हस्तस्यनिश्चलत्वेनक्रोधस्तस्यव्यवर्धत विस्मयंप्राप्यात्सिंहोराजानंवैयुधिष्ठिरं म नवस्यगिराआहदृष्ट्वैनगाविस्थितः सिंहउवाच वाण प्रयुक्तोभवताव्यर्थामयिभविष्यति ततःकष्टेनमहता श्रमंमाकुरुसर्वथा नमारुतस्यवेगोहिपर्वतोन्मूलनेक्षमः जानीतेनमहाराजस्यात्किंवलमनोकुले महेश्वरस्यमाराजन्नाम्नाकुंभोदरस्तुवै सेवकानांचसर्वेषामुख्यंजानीहिभूमिप विलोकयेसंपुरतोदेवदारुंमहाद्रुम सिक्तःस्नेहेनभूपालशिवयायंसुतःकृतः कदाचिदागतोहस्तीभग्नस्तेनमहाद्रुमः तस्यसंरक्षणार्थायनियुक्तोयंशिवेनतु कृत्वाशिवेनसिंहत्वयुक्तोहजीवभोजनः तर्हीयंखलुगौराजन्भक्ष्यार्थंसमुपागता त्यक्त्वालज्जानिवर्तस्वसुभक्तोसितगुरोर्भवान् आपत्कालइदवृत्तंनस्याच्छस्त्रभृतोयदि दोषोनजायतेतेतस्यंयशोराजन्नगच्छति श्रुत्वागिरंतुसिंहस्यराजाचैनमुवाचह ईश्वरेणसमोनान्यावेत्सिसिंहभवानपि समीक्षचकथंयातिममधेनुरियंगुरोः प्रसिद्धदेहंगृह्णीष्वमुंचधेनुसवत्सिका भविष्यतिजनन्याश्चवत्सोमार्गंविलोकयन् सिंहेनतुदिलीपायकथितंवैतदावचः देहांतरेचदृष्टानिभयकारीणिकुर्वता लोकेनहेतुनापार्थैकांतछत्रंचमत्कृतं सर्वस्यजगतोराज्यंवपुरेतन्नवंवयः त्यक्तुमिच्छसिनोराजन्मूर्खत्वंकथमीदृशं ददासिचकथंप्राणान्प्रजापालनतत्पर जीवन्नेवमहाराजंमुने-कोपश्चशाम्यति ततोरक्षस्वकंदेहं राज्यंचकुरुभूमिप यावच्चोवाचासिंहोसौतन्नगेनानुगता गिरः दिलीपोपितदापार्थवाणीमितामुवाचह गवानिरीक्षितश्चैवभूमिपोदीननत्रया किमेराज्येनभोसिंहविष्टपेजीवनेनने यशोगनचमेसर्वंगुरोर्धेनुग्रहीष्यसि यदिसिंहततश्चायसिंहस्यपातितस्तदा यावदित्थंच

पतितोमांसस्यापिंडवन्नृप तावत्सिंहोरवंकृत्वाधावितश्चभयकर दृष्ट्वासिंहंनिपतितं चंचलोनबभूवह तावत्तस्यो
परिष्टाच्चपुष्पवृष्टि पपातवै उत्तिष्ठवत्सभूपालवाचमित्थंनिशम्यस उत्थितश्चपुनश्चाग्रेगाददर्शनवैहरिः सेवु
याचेगुरो पार्थभक्त्याचैवविशेषतः प्रीताकामदुघाहंचवरयाचयतद्भवान् योजयित्वाकरौराजाययाचेतनयंततः
वंशकर्तामहाप्राज्ञ शिवभक्तोनिरतर ॥ धेनुरुवाच ॥ गोत्रिरात्रव्रतराजन्मद्भक्त्याभवताकृतं तनोयस्याश्वतेद
क्षपुत्र पौरुषविग्रहः येचान्येपिकरिष्यंतिगोत्रिरात्रव्रतमम तेषांकामप्रदास्यामिमनसीप्संसंशयः इत्युक्त्वा
चलितधेनुर्वसिष्ठस्याश्रमप्रति गामागतांबलिनीत्वाश्रायेतुसुदक्षिणा पूजाकृत्वाविधानेनराजपत्नीविशेष
तः प्रदक्षिणक्रियांकृत्वाचलितावैयुधिष्ठिर आश्रमेचततोगत्वादिलीपोसौतत पुनः गुरोरग्रेचतत्सर्ववृत्तांतमवदी
त्पुनः नंदितोचतदापार्थदंपतीतौसुकोमलौ पारणचतत कृत्वाप्रस्थितौनगरप्रति हुताशचनमस्कृत्यहोतारंगात
श्चैवच आगतश्चततोराजाउत्पताकपुरप्रति राज्ञातेनकृशागेनराज्यमारोपितंभजे दिनैःकतिपयैरवगोत्रिरात्र
प्रभावतःराज्यंचकुर्वतस्तस्यसुतस्तस्यमहाबली प्रभातिसमुहूर्तेचउत्पन्नोरघुसज्ञया रम्यज ततदासर्वसंजातानि
र्मलादिशः आददेचहुतंवाह्निर्वायत्र शीतलावृः मृदंगानास्वनैरम्यैः पूर्णखसमभूत्तदा प्रजाःसर्वास्तदापा
र्थवदतिचपुन पुन गोत्रिरात्रप्रभावेणराज्ञ पुत्रोबभूवह पुरंदरस्यजेताचमहाधर्मपरायण दिग्विजयस्ययज्ञस्य
कर्तासोपियुधिष्ठिर यज्ञादिग्विजयकृत्वाविप्रेभ्यश्चददौवसु ईदृशश्चाप्ययसूनुर्गोत्रिरात्रप्रभावत तदाप्रभृतिवैलोका
लोकेस्मिन्कुर्वतेव्रतं देवैः सर्वैः कृततत्रसर्वकामार्थसिद्धये सर्वाभिर्देवपत्नीभिःकृतचव्रतमुत्तमं गोत्रिरात्रव्रतपुण्यं
विधानेनफलप्रदं कुरुष्वत्वंमहाराजकुरुराजयुधिष्ठिर साक्षादनतरमातुः कृनामनसिपार्थिव भाद्रपदेसवत्सांत्वं
भक्त्यात्वाराधयस्वगा एवय कुरुतेपार्थगोत्रिरात्रव्रतपुनः सिद्ध्यतिसर्वकार्याणिसुखचैवप्रवर्द्धते नजायतेयदा

ःस्ययस्याःपार्थभुवस्तले भक्त्येदंयदिकुर्वीततस्याःस्याच्चनसंशयः तपोभिर्दुष्करैःकिंचिद्यज्ञैस्तीर्थव्रतादिभिः
ुक्तोखिलेभ्यःपापेभ्योव्रतमेतद्विधायतु कुर्वंतियेव्रतमिदंजगतिप्रसिद्धंपापापहंसकलचिंतितकामदंच ॥
आरुह्यतेवरविमानमनुत्तमंचस्वर्गंप्रयांतियमभृत्यभयंविहाय ॥ इतिभविष्योत्तरेगोत्रिरात्रव्रतं ॥

अथोद्यापनम ॥ युधिष्ठिरउवाच कथयस्वमहापुण्यंगोत्रिरात्रव्रतस्यवै उद्यापनविधिंकृष्णयेनचीर्णेन तत्फलम् ॥ श्रीकृष्णउवाच वर्षेचतुर्थेसंप्राप्तेगोत्रिरात्रव्रतस्यवै उद्यापनविधिंवक्ष्येसर्वेषांव्रतसिद्धये तृतीयेदिवसेस्नात्वामध्याह्नेविधिपूर्वकं देवान्पितॄन्समभ्यर्च्यशुद्धेचसुगृहेव्रती रात्रौचसर्वतोभद्रंगौरीतिलकमुत्तमं पूरयेत्पंचभिर्वर्णैः शोभनंचयथोदितं ताम्रस्यकलशंकुर्यात्ताम्रपात्रसमन्वितं मासैनैकेनराजेंद्रलक्ष्मीनारायणंविभुं नवेसूक्ष्मेधृतेवस्त्रेदेवार्थंपरिकल्पयेत् वंशपात्राणिकुर्वीतसौभाग्यगुणचिह्नकैः विरूढवस्त्रपक्वान्नैर्नारिकेलादिभिः फलैः विलेपनैश्चपुष्पैश्चधूपैर्दीपैस्तथोत्तमैः पंचामृतैश्चनैवेद्यैः पूजयेद्विधिपूर्वकं लक्ष्मींनारायणंदेवंगांसवत्सांविशेषतः रात्रौजागरणंकृत्वागीतवादित्रकौतुकैः ततःप्रभातसमयेहोमंकृत्वाचवैष्णवं आचार्यंवरयेत्तत्रवेदवेदांगपारगं तदाज्ञयाचकर्तव्यंसाधुकर्मप्रयत्नतः गोत्रयंचप्रदातव्यमेकामपिसवत्सकां वहद्दुग्धांसुशीलांचतारुण्याभरणान्वितां दंपतीपरिधानंचवस्त्रैराभरणैः शुभैः शय्यांसोपस्करांदद्यात्पानपात्रंकमंडलुं चामरंघृतपात्रंचतिलपात्रंसदक्षिणं पात्राणिचसुवर्णंचभोज्यागव्येनवैद्विजाः एवंधेनुंचविप्राययदत्त्वाचपृष्ठतोव्रजेत् पदेपदेऽश्वमेधस्यफलंप्राप्नोत्यसंशयः अवारितान्निदानानिदत्त्वातंचविसर्जयेत् भूयसींदक्षिणांदद्याद्व्रतसंपूर्तिहेतवे गोपालेभ्योपिदद्याच्चशष्कुल्यादिसकंबलं सर्वंक्षमापयित्वातुपारणंचततश्चरेत् अनाथैर्व्याधिमुक्तैश्चसीदद्भिश्चकुटुंबकैः गवांभक्षितमन्नंयद्दुग्धेनपरिपाचितं तेनान्नेनप्रकर्तव्यादेहस्यशुद्धिमिच्छता

एवमुद्यापनंकार्य्यंव्रतस्यफलमिच्छता शक्त्यभावेद्विजानुज्ञांगृह्णीयुर्व्रतिनःसदा तयातत्पूर्णतामेतिनान्यथापिकदा चन नारीवापुरुषोवापिपुत्रवान्जायतेध्रुवं इहलोकेसुखभुक्त्वान्तेगोलोकमाप्नुयात श्रीकृष्णउवाच एतत्तेकथितंराजन्व्रतस्योद्यापनंशुभम् श्रोष्यंतिवापठिष्यंतितेषांसर्वेमनोरथाः येकरिष्यंत्यसंदेहंतेषांलोकाश्चशाश्वताः

इतिभविष्योत्तरेसोद्यापनंगोत्रिरात्रव्रतम्

अथात्रैवप्रसंगादशोकत्रिरात्रव्रतभविष्योत्तरे ॥ ॥ श्रीकृष्णउवाच ॥ शृणुराजन्पुराद्वृत्तमयोध्यायांव्रतंशुभं वसिष्ठेनमुनींद्रेणसीतायैपत्निवेदित विधायरावणवधंयदारामोपुरेभ्यगात् तदासीताप्रणम्याथवासिष्ठंवाक्यमब्रवीत् सीतोवाच भगवन्दंडकारण्याद्रावणेनहृतापुरा नपश्यामितदाकिंचिदात्मीयंविकलेंद्रिया मासान्दशोषितातत्रराक्षसेनहृतासती अशोकवृक्षप्रणताजाताचिंतापरायणा उक्तंत्रिजटयातत्रवाक्यंहेत्वर्थसंयुतं अशोकंप्रणमसीतेविशोकात्वंभविष्यसि तथेत्युक्तंमयाब्रह्मन्यथोक्तत्रिजटावचः ततः प्रभृत्यहंशश्वदशोकव्रतमारभे तेनव्रतप्रभावेणहनुमान्पवनात्मजः शतयोजनविस्तीर्णंतीर्त्वासागरमव्यय मयादृष्टो द्विजश्रेष्ठसाभिज्ञानोमहाबलः पुनश्चकुशलीजातोदग्ध्वालंकांमहाबलः ततोमेप्रत्ययोजातोव्रतस्यास्यमहात्मनः अस्यचव्रतराजस्यप्रभावेणात्मजोहरिःततः कैश्चदहोरात्रैर्भर्त्तामेराघवोबली निहत्यरावणंसंख्येमांविशुद्धांगृहीतवान् तदहंभगवन्विप्रपृच्छामित्वांदृढव्रतं अशोकस्यप्रभावंमेवक्तुमर्हस्यशेषतःव्रतस्यतस्यपुण्यंतुपुराणोक्तंमहीतले अथवासुरलोकेपुसुरनारीनिषेवितं वसिष्ठउवाच॥ एवमेतज्जनकजेयथावक्ष्यासिसुव्रते अशोकस्यप्रभावेणतद्वाक्यमयाधुनाशृणुचात्रमयाख्यातंनंदनोदिव्यकानने बृहस्पतिमुखाच्छ्रुत्वायजातपरमाद्भुतंवृत्राभिभूतेनेंद्रेणहतोदैत्यात्महासुरःविश्वंसत्वाद्बुद्धिहानिस्तस्यधर्मेथजायत ब्रह्महत्यामवाप्याथदेवेंद्रोनष्टचेतनःत्रैलोक्यराज्यंत्यक्त्वाशु

समुरारिभर्यार्दितः एतस्मिन्नंतरेदेवि नहुषोनृपसत्तमः त्रैलोक्यराज्यंसकलजहारवलदर्पितः ततःशचीप्र
व्यथिताहृतराज्यमवेक्ष्यसा नंदनांतरमासाद्यतपस्तेपेसुदुष्करंतांश्रुत्वाधर्मनिरताबृहस्पतिरुदारधीःआगत्य
नंदनेदेवींवाक्यमाहमहातपः ॥बृहस्पतिरुवाच किमर्थंतप्यतेदेवि तपः परमदुष्करं त्वयाकिंप्रार्थ्यतेतेन
तपसाब्रूहिकारणम् ॥ शच्युवाच ॥ हत्याभिभूतंदेवेंद्रंहृतराज्यंहताविपं क्वापिप्रनष्टंतंविप्रनजानेहंप्रियंपतिं
एतस्मात्कारणाद्ब्रह्मन्तपउग्रंसमाश्रिता यथापुनर्निजंराज्यंदेवेंद्रः प्राप्नुयादिति कतिपतिमुनेब्रूहिसुरराट्शत्रु
तापनः प्रसादंकुरुमेदेवसंयोगंतेनचाप्नुयां ॥ वाक्पतिरुवाच ॥ शृणुपौलोमिदेवेंद्रोयथानष्टोभयातुरः मानसों
भसिसंभूतपंकजांतरमाश्रितः ब्रह्महत्याप्रभावेणउद्वेगंगुरुमाश्रितः अभिभूतमिहापश्यत्ततोप्सुविलयंगतः का
मंततःप्रसंगेन सर्वंप्राप्स्यसिसुव्रते वहुकालेप्सितंयस्मात्तपसालभ्यतेफलं स्त्रीणापुष्टिप्रदंह्येकंव्रतंप्रोक्तंस्वयंभुवा
सावित्र्याःपृच्छमानायास्तत्त्वंकर्तुमिहार्हसि अशोकव्रतमित्येवनाम्नाख्यातंत्रिविष्टपे येनचीर्णेनपौलोमिनारीदुः
खंनविंदति हरः स्वयंभवत्येपवृक्षराजेपुनंदने अस्मिंस्तुष्टेहरस्तुष्टइतिविज्ञायानिश्चितं ॥ शच्युवाच पुन्नागनाग
वकुलंचंपकाद्यान्महीरुहान् परित्यज्यकथंवान्यान्हरोस्मिकृतसन्निधिः वाक्पतिरुवाच हरेणानिर्मितःपूर्वंअशो
कोयंकृपालुना लोकोपकारकरणेततोयंशिववल्लभः वसिष्टउवाच निर्माय्यवृक्षप्रवरंप्रणम्यभक्त्यार्चयित्वाविधिव
च्चधर्मंपप्रच्छदेवीपुनराहनाम्नोदेविशृणुत्वंविधिमस्यसर्वं ॥ बृहस्पतिरुवाच आरभ्यतद्व्रतंकार्यंत्रिरात्रंसमुपोषणं
त्रिरात्रंदेविविख्यातमशोकतरुमूलके कार्यंनारीभिरमलंमनोवाक्कायकर्मभिःतत्र.प्रदक्षिणादेयाअष्टोत्तरशतंफलैः
नारिकेलैश्चखर्जूरैर्गोस्तनीभिर्दिनेदिने मंत्रेणानेनमनसापूजयंतिसदाशिवं अशोकशोकापनुदसर्वकामफलप्रद
व्रतेनानेनपूर्णेनयथोक्तफलदोभव इतिप्रदक्षिणामंत्रः ततस्तृतीयेदिवसेसमभ्यर्च्यविधानतः महादेवंवृष

युतंवंशपात्राणिकारयेत् अनेनैवविधानेनयःकुर्य्याद्व्रतमुत्तमं वैधव्यनाप्नुयान्नारीपुत्रसौख्ययुताभवेत् वसिष्ठउवाच ॥ वृहस्पतिमुखाच्छ्रुत्वाशचीचक्रेव्रतोत्तम शास्त्रोक्तविधिनासीते भक्त्यादेवःसमागतः ब्रह्महत्याविनिर्मुक्तोयथाभवतिवासवः तथात्वमपिवांछार्थंव्रतमेतत्समाचर यथासाध्वीषुसुश्रोप्राधान्यंजायतेक्षितौ व्रतमेतत्कृतं लोकेख्यातादेवीभविष्यति व्रतमेतदशोकस्यसर्वकामफलप्रदम् कृष्णउवाच वसिष्ठस्यवचःश्रुत्वा सीताचक्रेव्रतोत्तमं रामाज्ञांसमनुप्राप्यअयोध्यायांचकारसा सीताव्रतेकृतेतस्मिन्दुःखहीनासदाभवेत् युधिष्ठिरउवाच ॥ अशोकेव्रतराजस्यपूजांदेवविधानतः कादेवतात्रपूज्यानारीभिर्वदकेशव श्रीकृष्णउवाच ॥ अशोकवृक्षेतिष्ठंति सर्वेदेवायुधिष्ठिर पल्लवेषुचशाखासुशिवाद्याःसर्वदैवहि अशोकसन्निधौरामः पूजनीयःसलक्ष्मणः सीतयासहितोराजन्विष्णुरंशोयतोमतः पृथङ्मंत्रैःपृथग्वस्त्रैरशोकाख्यायथाक्रमं पूज्याश्चभरतश्रेष्ठपुराणोक्तविधानतः अशोकवृक्षाविहिताः शिवाद्यायेसुरोत्तमाः अशोकपूजनेनाशु तैःसंतुष्टाभवंत्विह गौर्य्यालक्ष्म्यातथेंद्राण्यादमयंत्याचसीतया त्वंसमाराधितःपूर्वमशोकफलदोभव इतिपूजामंत्रः ॥ अशोकवनिकामध्येसीतयात्वंप्रसाधितः अशोकसंपन्नफलोगृहाणार्घ्यंकृतंमया इत्यशोकार्घ्यमंत्रः । रावणस्यवधार्थायउत्पन्नस्त्वंमहीतले विष्णोरंशोसिदेवेशगृहाणार्घ्यंनमोस्तुते तातभक्तयुन्मुखरामंवंदेहंलोकसुंदरं इतिरामार्घ्यमंत्रः । रामभक्तियुतंभ्रातंसुमित्रानंदवर्धनं तंलक्ष्मीवर्द्धनंगौरंलक्ष्मणंपूजयाम्यहं इतिलक्ष्मणपूजा ॥ अवनीतलसंभूतेसीतेसर्वांगसुंदरि गृहाणार्घ्यंमयादत्तंपूजांजनकनंदिनि इतिसीतापूजा लक्ष्मीस्त्वंसर्वदेवस्यविष्णोरंशामहीतले अवतीर्णामयादत्तंगृहाणार्घ्यंनमोस्तुते इतिसीतायाअर्घ्यमंत्रः एवसपूज्यविधिवत्सर्वशोकविनाशनं सर्वपापप्रशमनंसर्वकीर्त्तिविवर्द्धनं अपुत्रयापुरापार्थपार्वत्यामंदिराचले

अशोकःशोकशमनःपुत्रत्वेपरिकल्पितः दिकंचास्यत्र शोकस्यमहातरोः कारितंविधिवत्तत्रतेनार्शो कोनगोत्तमः यावतंकुरुतेनारीपुराणोक्तविधानतः अशोकस्यप्रभावेणसर्वान्कामानवाप्नुयात् अवैधव्ययु तासातुलक्ष्मीसान्निध्यमाप्नुयात् सर्वोपहाररराजेन्द्रब्राह्मणायनिवेदयेत् कथामपिसमाकर्ण्यंयःकुर्याद्द्विजपू जन व्रतस्यफलमाप्नोति सव्रतोहिनसंशयः युधिष्ठिरउवाच विशेषंब्रूहिमेदेवअशोकतरुपूजने येनार्चितेतरौ सर्वंप्राप्यतेसकलंफलं श्रीकृष्णउवाच कथयामितेराजन्याभिर्व्रतमिदंकृतं मनुष्यदेवगंधर्वनारीभिःपुत्र वृद्धये अनसूययात्रिपत्न्याअरुंधत्यातथैवच देवक्यासीतयाचैवद्रौपद्यासत्यभामया दमयंत्याचसावि त्र्यातद्व्रतंकृतमुत्तम अशोकःपूजितःपूर्वं यथावच्छृणुपार्थिव अशोकोराजतश्चैवसौवर्णश्चतथाशिवः तथै वकारयेत्सीतांसौवर्णौरामलक्ष्मणौ पूजयेद्विधिवन्मंत्रैः पूर्वोक्तैर्नृपसत्तम अशोकंपूजयेद्वृक्षंप्ररूढंशुभपल्लवैः विरूढैःसप्तधान्यैश्चगुणकमोदकैःशुभैः कालोद्भवैः शुभैर्दिव्यैर्नारिकेलःसदाडिमैः पुष्पादिभिस्तस्थाधूपैः पूज येत्तरुमुत्तमं अशोकःपांडवश्रेष्ठशोकंनाशयतिस्मृतः पितृमातृपतीनांचश्वशुराणांतथैवच . अशोकस्त्वंशो कहरोभवसर्वत्रनःकुले इतिश्रीभविष्योत्तरेअशोकत्रिरात्रव्रतम्

अथभाद्रशुक्लचतुर्दशीकृत्यानिनारदीये ॥ भाद्रशुक्लचतुर्दश्यामनंतव्रतमुत्तमं कर्तव्यमेकभक्तंहिगोधूमप्रस्थपिष्टकं विपाच्यशर्कराज्याक्तमनंतायनिवेदयेत् गंधाद्यैःप्राक्समभ्यर्च्यकार्पासंपटजंतुवा चतुर्दशग्रंथियुतंसूत्रंकृत्वासुशोभ नं ततःपुराणमुत्तार्यसूत्रंक्षिप्त्वाजलाशये निबध्नीयान्नवंनारीवामदक्षेभुजेपुमान् विप्रायमिष्टपक्वान्नंप्रदद्याद्दक्षिणा न्वितं स्वयंचतन्मितंचाद्यादेवंकुर्याद्व्रतोत्तम मंडलंसर्वतोभद्रंधान्यवर्णैः प्रकल्प्यच सुशोभनंन्यसेत्तत्रकलशंता म्रजमुत्तमं तस्योपरिन्यसेद्धैमीमनंतप्रतिमांशुभां पीतपट्टांशुकाच्छन्नांतत्रतांविधिनायजेत् गणेशमातृकाखेटान्

श्रवणान्मध्याह्नव्यापिनीग्राह्येत्युक्तं अथानंतपूजनविधिः तत्रमासपक्षाद्युल्लिख्याखिलपापनिर्मुक्तिपूर्वकोत्तमासिद्धि
पुत्रपौत्रधनधान्यसंपत्त्यारोग्यामुष्मिकपरमगतिप्राप्तये चतुर्दशवर्षपर्यंतयथाविध्यनंतव्रतकरिष्य इतिसंकल्पंकृत्वा
मंडलंसर्वतोभद्रंकृत्वाकुंभतत्रविन्यसेत् तत्राष्टदलपद्मंतुपूजयाद्ब्रह्मणमव्ययं कुंभोपरिपात्रंविन्यस्य तदुपर्यष्टदलं
कृत्वा तत्रपूजयेदित्यर्थः कृत्वादर्भमयंदेवंफणासप्तकमंडितं तस्याग्रतोदृढसूत्रं कुंकुमाक्तंसुशोभनं चतुर्दशग्रं
थियुतमुपस्थाप्यप्रपूजयेत् ततस्तंमूलमंत्रेणनमस्कृत्यचतुर्भुजं नवाम्रपल्लवाभासंपिंगलश्मश्रुलोचनं पीतांब
रधरंदेवंशंखचक्रगदाधरं प्रसन्नवदनंविष्णुंविश्वरूपंविचिंतयेदितिध्यानम् । अत्रआधिदेवताः विष्णुरग्निस्तथा
दित्यःसहस्राक्षःपितामहः इंद्रःपिनाकीविघ्नेशः स्कंदः सोमस्तथैवच वरुणः पवनःपृथ्वीवसवोऽग्रथदेवता
इतितत्रावाह्यपूजयेत् आगच्छानंतदेवेशतेजोराशेजगत्पते क्रियमाणांमयापूजांगृहाणसुरसत्तम सहस्रशीर्षेत्यावा
हनम् १ नानारत्नसमायुक्तंकार्तस्वरविभूषितं स्वासनंदेवदेवेशगृहाणपुरुषोत्तम पुरुषएवेत्यासनं २ गंगा
दिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां एतावानस्येतिपाद्यं ३ अनंतानंतदे
वेशअनंतगुणसागर अनंतानंतरूपोसिगृहाणार्घ्यंनमोस्तुते त्रिपादूर्ध्वइत्यर्घ्यं ४ कर्पूरवासितंतोयंमंदाकिन्याः
समाहृतं आचम्यतांहृषीकेशत्रैलोक्यव्याधिनाशन ततोविराडित्याचमनं ५ वांछितंकुरुमेदेवदुष्कृतंमाविनाशय
मधुपर्कंगृहाणेदंत्रैलोक्यानिर्भयप्रद इतिमधुपर्कम् ६ ततः पुनराचमनं पूर्वोक्तमंत्रेण शर्करामधुसंमिश्रंपयो
दधिघृतंतथा पंचामृतेनस्नपनंगृहाणजगतांपते आप्यायस्वइतिदुग्धंदधिक्राव्णइतिदधि घृतंमिमिक्षइतिघृतं
मधुवातेतिमधुःस्वादुःपवस्येतिशर्करा इतिपंचामृतं गंगाचगोमतीचैवयमुनाचसरस्वती नदीनदसहस्राणांतो
यमेतत्समाहृतं अनंतगुणरत्नायविश्वरूपधरायच नमोमाहात्म्यदेवायअनंतायनमोनमः ७ यत्पुरुषेतिस्नानं

पीतांबरयुगंदेवसर्वकामार्थसिद्धये ॥ मयानिवेदितंभक्त्यागृहाणसुरसत्तम ॥ तंयज्ञमितिवस्त्रं ॥ दामोदरनमस्तुभ्यंहि
संभवसागरात ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम तस्माद्यज्ञात्सर्वहुतःसंभृतमित्युपवीतं ॥ कस्तूरीकुंकुमोपेतंकर्पू
रेणचसंयुतं गंधंदास्यामिदेवेशअनंतायनमोनमः ॥ श्रीखंडचंदनंदिव्यंगंधाढ्यंसुमनोहरं ॥ विलेपनंसुरश्रेष्ठप्रीत्यर्थं
तवगृह्यतां ॥ तस्माद्यज्ञात् ऋचःसामानीतिगंधं ॥ नमःसर्वहितार्थायजगदाधारहेतवे सर्वसंस्थितरूपायअनंताय
नमोनमः ॥ मुक्ताफलाक्षताः ॥ कुंकुमाक्ताक्षताःशुभाः ॥ वासुदेवजगन्नाथश्रीअनंतस्वीकुरुप्रभो इत्यक्षताः ॥ माल्या
दीनिसुगंधीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपुष्पाणि ॥ पूजार्थंप्रतिगृह्यतां तस्मादश्वाइतिपुष्पाणि ॥ अथां
गपूजा ॥ अनंतायनमः पादौपूजयामि ॥ संकर्षणाय ॥ गुल्फौपू ॥ कालात्मने जानुनीपू ॥ विश्वरूपाय ॥ जंघेपू-
विश्वरूपाय ॥ कटिंपू ॥ विश्वसाक्षिणे ॥ मेढ्रंपू ॥ पद्मनाभाय ॥ कटिंपू ॥ पद्मनाभाय ॥ नाभिंपू ॥ परमात्मने ॥ हृद
यंपू ॥ श्रीकंठाय कंठंपू ॥ सर्वास्त्रधारिणे ॥ बाहूनपू ॥ वाचस्पतये ॥ मुखंपू ॥ दामोदराय ॥ दंतान्पू ॥ केशवाय
ललाटंपूज ॥ कमलासनाय ॥ शिरःपू ॥ सर्वात्मनेनमः ॥ सर्वांगंपूजयामिनमः ॥ वनस्पतिरसोद्भूतोगंधाढ्यः सु
मनोहरः आघ्रेयःसर्वदेवेशधूपोयंप्रतिगृह्यतां ॥ यत्पुरुषंव्यदधुरितिधूपं ॥ घृतवर्तिसमायुक्तंवह्निनायोजितंमया
दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ ब्राह्मणोस्येतिदीपं ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ नैवेद्यंगृह्य
तांदेवभक्तिमेह्यचलांकुरु चंद्रमामनसइतिनैवेद्यं ॥ कर्पूरवासितंतोयंमंदाकिन्याःसुशीतलं ॥ आचम्यतांजगन्ना
थमयादत्तंहिभक्तितः ॥ आचमनं गंधकर्पूरकस्तूरीसमायुक्तंमनोहरं ॥ करोद्वर्तनकंदेवगृहाणपरमेश्वर ॥ इतिकरो
द्वर्तनं इदंफलंमयादेवस्थापितंपुरतस्तव ॥ तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ नाभ्याआसीदितिफलं ॥ पूगी
फलसमायुक्तंसकर्पूरंमनोहरं भक्त्यादत्तंमयादेवतांबूलंप्रतिगृह्यतां ॥ इतितांबूलं ॥ हिरण्यगर्भगर्भस्थंहेमबीजं

मल्लिकामालतीचैत्यादि॥ यज्ञेनयज्ञमितिमंत्रपुष्पांजलिः॥ नमःसर्वहितार्थायजगदाधारवक्षसे सर्गास्थि
त्यंतरूपायगृहाणार्घ्यंनमोस्तुते॥ इतिपुनरर्घ्यंदत्त्वा प्रार्थना अनंतकामान्मेदेहिपुत्रपौत्रविवर्द्धन अनंतः सर्वकामा
नामधिपः सर्वकामदः॥ व्रतेनानेनसुप्रीतोभवत्विहसदामम॥ अनंतायनमस्तुभ्यंसहस्रशिरसेनमः॥ नमोस्तुपद्मना
भायनागाधिपतयेनमः॥ अनंतसंसारमहासमुद्रेमग्नंहिमामुद्धरवासुदेव अनंतरूपेविनियोजयस्वअनंतसूत्रायनमो
नमस्ते॥ इत्यनंतसूत्रनमस्कारः॥ अनंतकामदंदेवंसर्वकामफलप्रदं अनंतडोररूपेणपुत्रपौत्रप्रवर्द्धन नमस्तेदेव
देवेशनमस्तेधरणीधर॥ सूत्रग्रंथिषुसंस्थायअनंतायनमोनमः॥ अथसूत्रग्रहणं॥ संसारगह्वरगुहासुसुखंवि
हर्तुंवांछंतियेकुरुकुलोद्भवशुद्धसत्त्वाः॥ संपूज्यचत्रिभुवनेशमनंतरूपंबध्नंतिदक्षिणकरेवरडोरकंते॥ इतिनूतना
नंतसूत्रधारणं॥ अथजीर्णानंतसूत्रविसर्जनम्॥ संवत्सरकृतांपूजांसंपाद्यविधिवन्मम व्रजेदानींसुरश्रेष्ठत्वमनंत
फलप्रद॥ तस्यापिषोडशोपचारपूजाद्यं॥ पूर्वोक्तेनविधानेनपूजयेद्विष्णुरूपिणं॥ पूजयित्वाहरिंदेवमाचार्यंपू
जयेत्ततः॥ परिधायसपत्नीकंवस्त्रालंकारभूषणैः॥ मंत्रैःसंपूज्यविधिवद्धेनुंदद्यात्प्रयत्नतः॥ सुरभीवैष्णवीमा
तानित्यंविष्णुपदेस्थिता॥ ग्रासंगृहाणमयादत्तंगोमातस्त्रातुमर्हसि॥ गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः॥ गा
वोमेहृदयेसंतुगवांमध्येवसाम्यहं॥ मंत्रेणानेनसंपूज्यआचार्यायनिवेदयेत्॥ गोदानस्यप्रतिष्ठार्थं॥ स्वर्णंदद्या
द्यथाविधि॥ ततश्चामंत्रितान्विप्रान्पूर्वेद्युश्चचतुर्दश॥ वस्त्रोपवीतैःसंपूज्यभोजयेदन्नविस्तरैः॥ ततस्तुदक्षिणां
तेभ्योवित्तशाठ्यविवर्जितः॥ स्वशक्त्यादक्षिणांदद्यादाचार्यंचक्षमापयेत्॥ क्रियाहीनंभक्तिहीनंद्रव्यहीनंतथै
वच॥ मंत्रहीनंपठेत्पश्चात्व्रतसंपूर्तिहेतवे॥ अनंतसंसारमहासमुद्रे अनंतरूपायनमोनमस्ते॥ इत्यनंतंविसृज्या
थब्राह्मणांश्चतथैवच॥ दीनांधकृपणेभ्यश्चदद्यादन्नादिकंधनं॥ यथोपपन्नंभोक्तव्यंकृत्वामानंसमव्ययं॥ आच

म्यचशुचिर्भूत्वाध्ययेद्दिपणुंचतद्दिने एवंकृतेनृपश्रेष्ठकर्मणाचजनार्दनः अनंतरूपीभगवान्तुष्टोभवतिसर्वद
व्रतस्यफलमाप्नोतिविष्णुलोकंव्रजेन्नरः ३ इतिसोद्यापनं प्रतिवर्षमनंतपूजनम् ॥ अथकथा ॥ भविष्योक्तं
युधिष्ठिरउवाच, अहंदुःखेहसंजातोभ्रातृभिःसहकेशव कथंमुक्तिर्भवेदस्माकमनंताद्दुःखसागरात कंदेवंपूजयि
त्वावैप्राप्स्यामोराज्यमुत्तमं अथवाकिंव्रतंकृत्वात्वत्प्रसादाद्भवीहिनः श्रीकृष्णउवाच अनंतव्रतमस्त्यन्यत्ति
थावस्यायुधिष्ठिर सर्वपापहरंन्दृणांस्त्रीणांचैवयुधिष्ठिर शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेभवेत तस्यानुष्ठानमा
त्रेणसर्वपापंव्यपोहति युधिष्ठिरउवाच कृष्णकोयमनंतोतिप्रोच्यतेयस्त्वया विभो किंशेषनागआहोस्विदनं
तस्तक्षकःस्मृतः परमात्माथवानंतउताहोब्रह्मगीयते कएषोनंतसंज्ञोवैतथ्यंमेब्रूहिकेशव श्रीकृष्णउवाच
अनंतइत्यहंपार्थममरूपंनिबोधतत आदित्यादिग्रहात्माययःकालउपपद्यते लवकाष्ठामुहूर्तादिदिनरात्रिस्वरूप
वान् पक्षमासर्तुवर्षाणियुगकालव्यवस्थया योयंकालोमयाख्यातःसोनंतइतिकीर्त्यते सोहंकालोवतीर्णो
भूभारोत्तारणायच दानवानांवधार्थायसाधूनांपालनायच अनादिमध्यपर्यंत कृष्णविष्णुहरिंशिवं वै
कुंठभास्करंसोमंसर्वव्यापिनमीश्वरं विश्वरूपंमहाकालंसृष्टिसंहारकारकं प्रत्ययार्थंमयारूपंफाल्गुणायप्रदर्शि
तं पूर्वमेवमहाबाहो योगिध्येयमनुत्तमं विश्वरूपमनंतंचयस्मिन्निंद्राश्चतुर्दश वसवोष्टौतथादित्या रुद्रा
एकादशस्मृताः सप्तर्षयःसमुद्राश्चपर्वताःसरितोद्रुमाः नक्षत्राणिदिशोभूमिः पातालंभूर्भुवादिकं माकुरुष्वा
त्रसंदेहसोहपार्थनसंशयः युधिष्ठिरउवाच अनंतव्रतमाहात्म्यंविधिंवदविदांवर किंपुण्यंकिंफलंचास्यअनुष्ठा
नवतांनृणां केनचादौपुराचीर्णंमर्त्येकेनप्रकाशितं एवंसविस्तरंकृत्वाब्रूह्यनंतव्रतंमम कृष्णउवाच आसी
त्पुराकृतयुगे सुमंतुर्नामवैद्विजः वसिष्ठगोत्रचोत्पन्नःसुरूपांचभृगोःसुतां शीलानाम्नींचोपयेमेवेदोक्तविधिना

नृप। तस्याः कालेन संजाता दुहिता नंतलक्षणा॥ शीलानाम्नी सुशीला सा वर्धते पितृवेश्मनि॥ माता च तस्याः का
लेन ज्वरदाहेन पीडिता॥ विनष्टा शनदीतीरे ययौ स्वर्गं पतिव्रता॥ सुमंतुस्तु ततोन्यां वै धर्मपुंसः सुतां पुनः॥ उपयेमे वि
धानेन दुःशीलां नामनामतः॥ दुःशीला कर्कशा चंडी नित्यं कलहकारिणी॥ सापि शीला पितुर्गेहे गृहार्चनपरा बभौ॥
कुड्यस्तंभगृहद्वारदेहलीतोरणादिकं॥ वर्णकैश्चित्रमकरोन्नीलपीतासितासितैः॥ स्वस्तिकैः पद्मकैश्चैव शंखैश्चर्चयंती पुनः
पुनः॥ ततः काले बहुगते कौमारवशवर्तिनी॥ पित्रा दृष्टा तदा तेन स्त्रीचिह्ना यौवनेस्थिता॥ कस्मै देया मया शीला विचार्यै
ति स दुःखितः॥ एतस्मिन्नेव काले तु मुनिर्वेदविदांवरः॥ कन्यार्थी चागतः श्रीमान्कौंडिन्यो नाम नामतः॥ उवाच रूप
संपन्नां त्वदीयां तनयां नृप॥ पिता ददौ द्विजश्रेष्ठाय कौंडिन्याय शुभे दिने॥ स्वगृह्योक्तविधानेन विवाहमकरोत्तदा॥ निव
र्त्योद्वाहिकं सर्वं कर्कशां प्रोक्तवांस्तदा॥ किंचिदाद्यादिकं देयं जामातुः परितोषिकं॥ तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोत्साद्य गृह
मंडलं॥ पेटायां प्रस्थरं बद्ध्वा स्वगृहं गम्यतामिति॥ भोज्यावशिष्टचूर्णेन पाथेयं च चकार सा॥ कौंडिन्योपि विवाह्यैनां प
थि गच्छन्शनैःशनैः॥ शीलां सुमंतुरादाय नवोढां गोरथेन वै॥ मध्याह्ने भोजवेलायां समुत्तीर्य सरित्तटे॥ ददर्श शीला स्त्रीणां
तु समूहं रक्तवाससां॥ चतुर्दश्यां तदा पार्थ स्वर्चयंत जनार्दनं॥ उपगम्य शनैः शीला पप्रच्छ स्त्रीकदंबकं॥ आर्याः किमेत
न्मे ब्रूत किं नाम व्रतमीदृशं॥ ता ऊचुर्योषितस्तां वै शीलां शीलविभूषणां॥ अनंतव्रतमेतद्धि व्रतेनंतः प्रपूज्यते॥ साब्रवीदह
मप्येतत्करिष्ये व्रतमुत्तमं॥ विधानं कीदृशं तत्र किं दानं कोत्र पूज्यते॥ स्त्रिय ऊचुः॥ शीले सदन्नप्रस्थस्य पुंनाम्नः संस्कृत
स्य च॥ अर्धं विप्राय दातव्यमर्धमात्मनि भोजनं॥ शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः॥ कर्तव्यं सहसरित्तीरे वि
धिनानेन भामिनि॥ स्नात्वानंतं समभ्यर्च्य मंडले धूपदीपकैः॥ पुष्पैर्गंधैश्च नैवेद्यैः पीतरक्तैश्चतुःसमैः॥ चतुःसमैः परिभा
षोक्तगंधद्रव्यैः॥ तस्याग्रतो दृढं सूत्रं कुंकुमाक्तं सडोरकं॥ चतुर्दशग्रंथियुतं वामे करतले न्यसेत्॥ अनंतसंसारमहासमुद्रे

सग्रंहिमामुद्धरवासुदेव। अनंतरूपेविनियोजयस्वअनंतसूत्रायनमोनमस्ते अनेनडोरकंबद्ध्वाभोक्तव्यंस्वस्थमा
नसैःध्यात्वानारायणंदेवमनंतंविश्वरूपिणं। भुक्त्वाचांतेव्रजेद्वेश्मभद्रेप्रोक्तमिदंव्रतम्। कृष्णउवाच। एवमाकर्ण्यराजें
द्रप्रहृष्टेनांतरात्मना। सापिचक्रेव्रतंशीलाकरेबद्ध्वासुडोरकं। पाथेयमर्धंविप्रायदत्त्वाभुक्त्वास्वयंततः पुनर्जगामसं
हृष्टागोरथेनस्वकंगृहं। भर्त्रासहैवशनकैःप्रत्ययस्तत्क्षणादभूत्। तेनानंतव्रतेनास्यावभौगोधनसंकुलं गृहाश्रमंश्रि
याजुष्टंधनधान्यसमाकुलं आकुलंव्याकुलंरम्यंसर्वत्रातिथिभोजनैः। सापिमाणिक्यकांचीभिर्मुक्ताहारविभूषिता
देवांगवस्त्रसंछन्नासावित्रीप्रतिमाभवत्। कदाचिदुपविष्टायादृष्टोबद्धस्तुडोरकः शीलायाहस्तमूलेनुतेनोक्ताकिमिदं
त्वया धृतस्तुडोरकस्त्वेनाकिमर्थंब्रूहितत्त्वतः यस्यप्रसादात्सकलाधनधान्यादिसंपदः लभ्यतेमानुषैश्चापिसोनं
तोयंमयाधृतः। शीलायास्तद्वचःश्रुत्वाभर्त्रातेनद्विजन्मना श्रीमदाधिनकौरव्यसापेक्षस्त्रोटितोरुषा कोनंतइतिमू
ढेनजल्पतापापकारिणा। क्षिप्तोज्वालाकुलेवह्नौहाहाकृत्वाप्रधावती शीलागृहीत्वातत्सूत्रंक्षीरमध्येसमाक्षिपत्। तेन
कर्मविपाकेनसाश्रीस्तस्यक्षयंगता। गोधनंतस्करैर्नीतंगृहंदग्धंधनंगतं यद्यथैवागतंगेहेतत्तथैवपुनर्गतं। स्वज
नैः कलहोनित्यंबंधुभिस्तर्जनंतथा। अनंताक्षेपदोषेणदारिद्र्यपतितंगृहं नकश्चिद्वदतेलोकेतेनसार्धंयुधिष्ठिर। श
रीरेणातिसंतप्तोमनसाप्यतिदुःखितः। निर्वेदंपरमंप्राप्तःकौडिन्यःप्राहतांप्रियां। शीलेममेदमुत्पन्नंसहसाशोकका
रकं येनातिदुःखितोस्मिजातंसर्वंधनक्षयं। स्वजनैःकलहोगेहेनकश्चिन्मांप्रपद्यते शरीरेनित्यसंतापः खेद
श्चेतसिदारुणः जानासिदुर्नयःकोत्रकिंकृतेसुकृतंभवेत् प्रत्युवाचाथतंशीलासुशीलाशीलमंडिता। प्रायोनंतकृता
क्षेपपापसंभवजंफलं। भविष्यतिमहाभागतदर्थंयत्नमाचर एवमुक्तःसविप्रर्षिर्जगाममनसाहरिं निर्वेदान्निर्ज
गामाथकौडिन्यःप्रययौवनं तपसेकृतसंकल्पोवायुभक्ष्योद्विजोत्तमः मनसाध्यायचानंतंकद्रक्ष्यामिचतंविभुं

स्यप्रसादात्संजातमाक्षेपान्निधनंगतं धनादिकंममातीवसुखदुःखप्रदायक एवंसचिंतयन्सोथवभ्रामविज
र्धने ॥ तत्रापश्यन्महाचूतपुष्पितंफलिततंतथा वर्जितंपक्षिसघातैःकीटकोटिवृतंतथा तमपृच्छत्त्वयाऽनं
तःकश्चिद्दृष्टोमहातरो ब्रूहिसौम्यममातीवदुःखंचेतसिविद्यते सोब्रवीद्भद्रनानंतंकश्चिज्जानामिवाद्विज एवंनि
राकृतस्तेनसजगामाथदुःखितः क्वद्रक्ष्यामीतिपश्यन्सगामपश्यत्सवत्सकां तृणमध्येप्रधावंतीमितश्चेत
श्चपांडव अब्रवीद्धेनुकेब्रूहियद्यनतस्त्वयेक्षितः साचोवाचाथकौंडिन्यंनानंतंवेद्म्यहंद्विज ततोव्रजन्ददर्शाग्रेगो
वृषंशाद्वलस्थितं दृष्ट्वापप्रच्छगोस्वामिन्ननंतोवीक्षितस्त्वया गोवृषस्तमुवाचेदंनानंतोवीक्षितोमया ततोव्रजन्दद
र्शाग्रेरम्यंपुष्करिणीद्वयं अन्योन्यजलकल्लोलैर्वीचीपर्यंतसंगमं छन्नंकिंजल्ककल्हारकमलोत्पलमंडितं सेवितं
भ्रमरैर्हंसैश्चक्रैःकारंडवैर्बकैः तेचापृच्छद्द्विजोनंतोभवद्भ्यांनोपलक्षितः ऊचतुस्तेद्विजश्रेष्ठनानंतोवीक्षितोद्विज ददर्श
थवनेतस्मिन्गर्दभंकुंजरंतथा तावप्युक्तौद्विजेनेत्थंनोतिताभ्यांनिवेदितं एवंसंपृच्छयनष्टाशस्तत्रैवतिप्रसादह
कौंडिन्योविह्वलीभूतोनिराशोजीवितेनृप दीर्घमुष्णंचनिःश्वस्यपपातभुविभारत प्राप्यसंज्ञामनंतेतिजल्पन्नुत्थ
सद्विजः नूनंत्यक्ष्याम्यहंप्राणानितिसंकल्प्यचेतसि उत्थायोद्बध्यवृक्षेस्मिंस्तावद्भारतसत्तम कृपयानंतदेवोपि
प्रत्यक्षसमजायत वृद्धब्राह्मणरूपेणइत एहीत्युवाचत गृह्यदक्षिणेपाणौगुहायाचप्रवेश्यतं स्वांपुरींदर्शय
मासदिव्यनारीनरैर्वृतां तस्यांनिविष्टमात्मानंदिव्यसिंहासनेशुभे पार्श्वस्थशंखचक्राब्जगदागरुडशोभितं
दर्शयामासविप्रायस्वीयरूपमनंतकः विभूतिभेदैश्चानंतैरनंतममितौजसं तंदृष्ट्वातादृशंरूपमनंतमपराजितं
धमनोजगादोच्चैर्जयशब्दपुरःसरं पापोहंपापकर्माहंपापात्मापापसंभवः त्राहिमापुंडरीकाक्षसर्वपापहरोभव
छुरुत्वादेवदेवेशःप्राहसुस्निग्धयागिरा माभैस्त्वंब्रूहिविप्रेंद्रयत्तेमनसिवर्त्तते कौंडिन्यउवाच नयाभूत्या

लिखितनत्रोटितोनंतडोरकः तेनपापविपाकेनभूतिर्मेप्रलयंगता स्वजनैःकलहोगेहेनकश्चिन्मांप्रभाषते निर्वे
दाद्धमतोरण्येतवदर्शनकांक्षया कृपयादेवदेवेशत्वयात्मासंप्रदर्शितः तस्यपापस्यमेशांतिकारुण्याद्वक्त
मर्हसि कृष्णउवाच ॥ तच्छ्रुत्वानतदेवेशस्तमुवाचद्विजोत्तम भक्त्यासतोषितोदेवःकिंचिद्दयासमन्वि
तः अनंतउवाच स्वगृहंगच्छकौडिन्यमाविलंबसमाचर चरानंतव्रतभक्त्यानववर्षाणिपंचच सर्वपापैः
शुद्धात्माप्राप्स्यसेसिद्धिमुत्तमां पुत्रपौत्रान्समासाद्यभुक्त्वाभोगान्यथेप्सितान् अंतेचस्मरणंप्राप्यमामुपेष्यस्य
संशयं अन्यच्चतेवरंदद्मिसर्वलोकोपकारकं इदमाख्यानकवरंशीलानंतव्रतादिकं शृणोतिचनरोयस्तुकु
र्व्रतमिदंशुभ सोचिरात्पापनिर्मुक्तःप्राप्नोतिपरमांगतिं गच्छविप्रगृहंशीघ्रंयथायेनागतोह्यसि कौडिन्यउवाच
स्वामिन्पृच्छामिमेब्रूहि किंचित्कौतूहलंमया अरण्येभ्रमतादृष्टंतन्नवेदामिजगद्गुरो सचूतवृक्षःकस्तत्रकागौःक
वृषभस्तथा कमलोत्पलकल्हारैःशोभितंसुमनोहरं मयादृष्टंमहारण्येकिंतत्पुष्करिणीद्वयं कःखरःकुंजरःक
श्चकोसौवृद्धोद्विजोत्तमः अनंतउवाच सचूतवृक्षेविप्रोसौवेदविद्याविशारदः सोर्थितोपिनचप्रादाच्छिष्येभ्यस्सु
रुतांगतः सागौर्वसुंधरादृष्टा सफलायात्वयाद्विज वृषोधर्मस्त्वयादृष्टःशाद्वलंसत्यमास्थितः ब्राह्मण्यौकौ
दृष्पास्तां भगिन्यौतेपरस्परं अन्नदानादियत्किंचित्तन्निवेदयतोमिथःविप्रायनक्वचिद्दत्तंमातिथौनिर्बलेतथा भिक्षु
दत्तानचार्थिभ्यस्तेनपापेनकर्मणा विचिकल्लोलमालाभिर्गच्छतस्तेपरस्परं खरःक्रोधस्त्वयादृष्टः कुंजरोमद
उच्यते ब्राह्मणोसावनंतोहं गुहाससारगह्वरं इत्युक्त्वादेवदेवेशस्तत्रैवांतरधीयत स्वप्नप्रायंतुतद्दृष्ट्वाततः स्व
गृहमागतः कृत्वानंतव्रतंसम्यग्वर्षाणिनवपचच भुक्त्वासर्वमनंतेनयथोक्तंकुरुनंदन अंतेचस्मरणंप्राप्यततो
नंतपुरंगतः तथात्वमपिराजर्षेकथांशृणुव्रतंकुरु प्राप्स्यसेचिंतितंसर्वमनंतस्यवचोयथा यद्यच्चतुर्दशीवर्ष

फलंप्राप्तंद्विजन्मना वर्षैकेनतदाप्नोतिकृत्वोपाख्यानकव्रतं एतत्तेकथितंभूपव्रतानामुत्तमंव्रतं यत्कृत्वासर्वपापे
भ्योमुच्यतेनात्रसंशयः येऽपिशृण्वंतिसततंपठ्यमानंपठंतिये तेपिपापाविनिर्मुक्तायास्यंतिचहरेःपदम् संसार
गह्वरगुहासुसुखंविहर्तुंवांछंतियेकुरुकुलोद्वहशुद्धसत्त्वाः संपूज्यचत्रिभुवनेशमनंतदेवंबध्नंति दक्षिणकरेवरडोरकं
ते इतिश्रीभविष्योत्तरे अनंतव्रतकथा ॥

अथोद्यापनं ॥ युधिष्ठिर उवाच ॥ देवदेवसमासेनव्रतस्यास्यफलंश्रुतं उद्यापनविधिंहित्वान्नव्रतस्यफलं
लभेत् कृष्णउवाच मासेभाद्रपदेप्राप्तेपरिपूर्णेव्रतेततः शुक्लायांतुचतुर्दश्यांब्रह्मचारीभवेत्ततः एकभक्ते
ननियमंकृत्वाभक्तिसमन्वितः स्नात्वानद्यादस्थानेतीर्थेप्रस्रवणेतथा सर्वौषधैःसर्वगंधैस्तिलकल्कैरथामलकैः
वेदोक्तविधिनासम्यक्तर्पयेत्पितृदेवताः नवनाभंसुसंपूर्णंसर्वतोभद्रमेववा तस्योपरिन्यसेत्कुंभमव्रणं
सुदृढंनवं ताम्रपात्रसमायुक्तंपंचरत्नसमान्वितं सुवर्णडोरकंकृत्वा चतुर्दशग्रंथियुतं सूत्रमयानंतरूपंच
माषकेणसुवर्णस्यदारिद्रेणापिपार्थिव शय्यांसोपस्कारांकृत्वातत्रानंतंन्यसेद्व्रती लक्ष्म्यायुतंवासुदेवंमुसलेनह
लेनच कुंभस्थताम्रपात्रोपरिस्वर्णनिर्मितमनंत शय्योपरिस्वर्थात्सूत्रमयमनंतपूजयेदितिकेचित् तन्नलक्ष्म्या
युतासित्यादेरसंगतेः आचार्यंपूजयित्वाचवस्त्रैराभरणैस्तथा कर्णांगुलीपवित्रैश्चभक्त्यातत्रसमाहितः ततस्तु
पूजयेद्देवमनंतंविश्वरूपिणं वस्त्रयुग्मंशुचिर्यस्माद्वासुदेवस्यवल्लभं अनंतःप्रीयतांतेनपीतवस्त्रेणमेसदा वस्त्रयुग्म
समाच्छन्नंपीतयज्ञोपवीतकं चंदनेनसुगंधेनकर्पूरागुरुमिश्रिणा लेपयेऽहंतवांगानिप्रीयतांमधुसूदनः गंधः पुनः
पुष्पाणिसंगृह्यपूजयेन्नामभिःपृथक् अनंतायनमःपादौगुल्फौसंकर्षणायच नमःकालात्मनेजानूजघनंविश्वरूपि
णे कटिंवैविश्वरूपायमेढ्रंवैविश्वतेजसे नाभ्यांतुपद्मनाभायहृदयेपरमात्मने कंठंश्रीकंठनाथायवाहुसर्वास्त्रधारि

णे वाचस्पतेनमस्तुभ्यंमुखंसंपूजयेद्धरेः ललाटेकेशवायेतिशिरःसर्वात्मनेनमः लोकात्मासर्वभूतात्मानि
पत्नुष्टिसंभवः जन्ममृत्युजराव्याधिसंसारभयनाशनः वनस्पतिरसोदिव्योगंधाढ्यःसुमनोहरः आघ्रेयःसर्व
देवानांधूपोयंप्रतिगृह्यतां आज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहः अन्नं
चतुर्विधंस्वादुरसैःषड्भिःसमन्वितं नैवेद्यंतेमयादेवदत्तंतत्प्रतिगृह्यतां पूगीफलंसपत्रंचसकर्पूरंमनोहरं पवित्रीकृत
मर्पितंतांबूलंप्रतिगृह्यतां एवंपूजांततःकृत्वागच्छेत्कुंडसमीपतः स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंबुधः प्रारभ
ततोहोमंसेश्वत्थसमिधैस्तिलैः व्रीहिभिर्मिश्रितैश्चापिघृतेनतुविधानतः ततःपुरुषसूक्तेनअतोदेवेतिवापुनः
इदंविष्णुर्विचक्रमेशतमष्टोत्तरंहुनेत् चरुहोमंततःकुर्यान्मंत्रैरेतैर्विचक्षणः अनंतायचकालायअहोरात्रायवैनमः
अर्द्धमासायमासायऋतुभ्यश्चतथापुनः मदनरत्नेजुहुयाद्गुरुरित्यस्याग्रे सर्वंहुत्वाविधानेनमंत्रैरेतैर्विचक्षणः एते
मनाणैश्चमंत्रैर्जुहुयादितिसंबधः मंत्राश्चैते अनंतायस्वाहा कालायस्वाहा अहोरात्रायस्वाहा अर्ध
मासायस्वाहा मासायस्वाहा ऋतुभ्यःस्वाहा संवत्सरायस्वाहा ततोव्याहृतिहोमः सर्वं प्रायश्चित्तं
...णा आज्यतिलैःस्विष्टकृतं प्रजापतिभ्योजुहुयात ततोवैलोकपालांश्चग्रहान्पूज्ययथाक्रमं गीत
आदिभिर्नंदेहुत्वापूर्णाहुतिंव्रती ॥ पुराणश्रवणैस्तद्वत्रिशेषंनयेद्व्रतीतिरात्रौहोमोनभवति पूजांते पूर्वादि
एवकार्यः अथवा जागरणांते प्रातर्होमःकार्यइतिसंप्रदायानुसारतः पूर्वोक्तेनविधानेनपूजयेद्विश्वरूपि
पूजयित्वाहरिंदेवमाचार्यंपूजयेत्ततः परिधाप्यसपत्नीकंवस्त्रालंकारभूषणैः मंत्रैःसंपूज्यविधिवद्धेनुंदत्त्वा
विधानतः सुरभीवैष्णवीमातानित्यंविष्णुपदेस्थिता ग्रासंगृहाणमयादत्तंगोमातस्त्रातुमर्हसि गावोमे
अग्रतःसंतुगावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं मंत्रेणानेनसंपूज्यआचार्यायानिवेदयेत्

गोदानस्यविधानार्थंदद्यात्स्वर्णंयथाविधि अनंतंसपरीवारमाचार्य्यायनिवेदयेत् ततआमंत्रितान्वि
प्रान्पूर्वेद्युश्चचतुर्दश वस्त्रोपवीतैःसंपूज्यभोजयेदन्नविस्तरैः ततस्तुदक्षिणांतेभ्योवित्तशाठ्यविवर्जितःस्वशक्त्या
दक्षिणांदद्यादाचार्य्यायक्षमापयेत् क्रियाहीनंभक्तिहीनंद्रव्यहीनंतथैवच मंत्रहीनंपठेत्पश्चाद्व्रतसंपूर्तिहेतवे दी
नांधकृपणेभ्यश्चदद्याच्चैवतथाधनं ततोहृष्टैःसमस्तैश्चपुत्रसंबन्धिबांधवैःयथोपपन्नंभोक्तव्यंकृत्वामानसमव्ययं-
आचम्यचशुचिर्भूत्वाचिंत्योविष्णुश्चतद्दिने एवंकृतेनृपश्रेष्ठकर्मण्याशुजनार्दनः अनंतरूपीभगवान्तुष्टोभवतिसर्वदा
व्रतस्यफलमाप्नोतिविष्णुलोकेमहीयते इतिश्रीहेमाद्रौभविष्येसोद्यापनमनंतव्रतं
अथहेमाद्रिमदनरत्नोलिखितभविष्यपुराणानुयायी अनंतव्रतोद्यापनप्रयोगः तत्रग्रहणदिनादिकचतुर्दशवर्षा
समाप्तिदिनेत्रयोदश्यांकृतैकभुक्तस्तदुत्तरशुक्लचतुर्दश्यांब्रह्मचर्य्याद्युपवासनियमवतोयथासंभवंपुण्यतीर्थादौसर्वौ
षधितिलकल्कामलैः स्नात्वास्नानांगतर्पणांतंनित्यकर्मनिर्वर्त्य गृहमागत्यस्तदावेदिंकृत्वा तत्रनवनाभंसर्वतो
भद्रंवाविलिख्यपंचवर्णैर्यथासंभवंसप्तधान्यादिभिःसंपूर्य्य सपवित्रपाणिराचम्यमासपक्षाद्युल्लिख्यचरितानंत व्रत
परिपूर्णतायै उत्तरांगमुद्यापनमहंकरिष्ये इतिसंकल्प्य तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिंपूजयेत् ततआचार्यं
मासनवस्त्रदक्षिणाकुंडलादिभिर्वृत्वापूजयेत् ततआचार्यो यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा स्थानंत्यक्त्वा
तुतत्सर्वंयत्रस्थंतत्रगच्छतु अपवित्रःपवित्रोवेतिपंचगव्येनप्रोक्ष्यसर्वतोभद्रकरणपक्षे तत्रसर्वतोभद्रेदेवताआ
वाह्यपूजयेत् सर्वतोभद्रनिर्माणप्रकारोदेवतापूजादिप्रकारश्चपरिभाषायामुक्तः सोत्रापियथासंभवमनुष्ठेयः ततोमं
डलमध्येमहीद्यौरित्यादिकलशस्थापनमुक्तप्रकारेणकार्य्यं तत्रताम्रपूर्णपात्रयुतंकलशंस्थापयेत् तस्मिन्माषमात्रा
दिस्वर्णनिर्मितंचतुर्दशग्रंथियुतानंतंस्थापयेत् तदुत्तरतःसुविस्तृतांशय्यामासाद्यतत्रापिस्वर्णडोरकप्रतिमायांश्री

मंदनंतापनइतिमंत्रेणावाहनादिपंचामृतस्नपनानंतरंवार्षिकपूजावत्कुर्यात् । ततोवस्त्रयुग्मंशुचियस्माद्वासुदेवांगव
ल्लभं. अनंतःप्रीयतांतेनवस्त्रयुग्मेनसर्वदा. इतिमंत्रेणवस्त्रयुग्मंयज्ञोपवीतंचसमंत्रकंसमर्प्य चंदनेनसुगंधेनकर्पू
रागुरुगंधिना लेपयेहंतवांगानिप्रीयतांमधुसूदन । इतिचंदनंसमर्प्य मालत्यादीनीतिपुष्पाणिसमर्प्य पुष्प
णिगृहीत्वांगपूजांकुर्यात् अनंतायनमःपादौपू० संकर्षणायनमःगुल्फौ कालात्मने० जानुनीपू० विश्वरूपायकटिं
विश्वरूपिणेजघनं विश्वसाक्षिणेमेढ्रंपू० पद्मनाभाय० नाभिंपूजयामि. परमात्मनेहृदयंपू० श्रीकंठाय. कंठं० सर्वास्त्र
धारिणेबाहू. वाचस्पतयेमु. केशवाय० ललाटंपू. सर्वात्मने. शिरःपूजयामिततःकालात्मासर्वभूतात्मानिमेषत्रुटिसंभव
जन्ममृत्युजराव्याधिसंसारभयनाशन । इतिमंत्रेणपुष्पाणिसमर्प्यधूपदीपादिदत्वा पूजासाद्गुण्यार्थंदक्षिणां.
चदत्वानीराजनंकुर्यात् ततःकुंभात्पश्चिमभागेकुंडंस्थंडिलंवानिर्माय । तत्रउद्यापनांगभूतंहोमंकरिष्ये । इति
संकल्प्य स्थंडिलोपलेपनादिअग्निप्रतिष्ठापनांकृत्वा । अन्वादध्यात् । तत्रेत्थं अस्मिन्नन्वाहितेअग्नौजातवेद
समिद्धंप्रजापतिंचाघारदेवतेआज्येन । अग्निसोमौचक्षुषीआज्येनप्रधानदेवताः अनंतमश्वत्थसमित्तिलव्रीहियवघृत
द्रव्यैःप्रत्येकमष्टोत्तरशताविंशत्यष्टान्यतमसंख्ययापुनरनंतकालसंवत्सरर्तुमासार्धमाससंवत्सरं अग्निंवायुंसूर्यं
प्रजापतिंचवरुणाएकैकयाआज्याहुत्याग्रहान्समिदाज्यचरुद्रव्येणप्रत्येकं । अष्टोत्तराष्टायातमसंख्ययावासर्वतोभ
द्रपीठदेवता आज्येनैकैकयाहुत्यास्विष्टकृतं । प्रजापतिंचाज्यहुतातिलैःदध्यन्तहवनेनरुद्रमित्यादिसर्वमाज्या
नागांतहुत्वोक्तद्रव्येणपुरुषसूक्तेन । अतोदेवा । उत्पनेनइदंविष्णुरित्येननचान्वाधानक्रमेणजुहुयात् । ततः
प्रायश्चित्तहोमंससाप्यलोकपलान्ग्रहांश्चपंचोपचारैः संपूज्यबलिदानंचकृत्वागीतवादित्रनिनदैः पूर्णाहुतिंजु
हुयात् पुराणश्रवणजागरणादिभिर्निशामतिवाह्याऽपरेह्निकृत्वान्हिकोऽयमानः पूर्वदिनस्थापितमनंतंसप्रतिमा

रमंडलांतंपूर्ववत्पूजयित्वाआचार्य्यंप्रपूजयेत् ततोगावोममाग्रतः संतुइत्यनेनधेनुंपूज्य सुरभीवैष्णवीमा
ताइतिमंत्रेणतस्यैवग्रासंदत्वा आचार्य्यायतांधेनुंदद्यात् ततःप्रतिमांशय्याकलशादियुक्तामध्याचार्यायनिवेद
येत् अतःपूर्वेद्युर्निमंत्रितान्चतुर्दशब्राह्मणान् वस्त्रयज्ञोपवीतादिभिःसम्पूज्य नानाविधेनान्नेनाचार्यसहिता
न्भोजयित्वातेभ्योवस्त्रकलशप्रतिमादिसहितां अनंतव्रतोद्यापनसामग्रींदत्वादक्षिणांचदत्वाआशिषोगृहीत्वा
विसर्जयेत् ततआचार्य्यायदक्षिणांदत्वाक्षमापयेत् तत्रमंत्रः क्रियाहीनंद्रव्यहीनंभक्तिहीनंतथैवच मंत्रही
नंकृतंयच्चपरिपूर्णंतदस्तुमे इतिएवंक्षमाप्यस्वयंभुंजीत इत्यनंतव्रतोद्यापनप्रयोगः॥
अथनष्टडोरकप्रायश्चित्तं युधिष्ठिरउवाच ॥ अनंतव्रतमाहात्म्यंकृष्णत्वयोदितं भगवन्डोररूपेण
भाग्यदोसिमहात्मनां डोरःप्रमादत्तोनष्टोयदिस्याद्धिदितेजनैः तदाकिंकरणीयंस्याद्व्रतंत्रैलोक्यपावनं कृ
ष्णउवाच ॥ साधुपृष्टंत्वयाराजन्वक्ष्यामिव्रतनिष्कृतिं फलंलोकस्यसर्वस्यरक्षार्थंशृणुतत्क्रमात् डोरेन
ष्टेमहान्दोषः प्रभवेद्व्रतिनामिहवस्मात्तदोपशांत्यर्थं प्रायश्चित्तंविधीयते गुरुंप्रदक्षिणीकृत्यनमस्कृत्यसमाहितः
विज्ञाप्यडोरशंचकृत्वाडोरंव्रतीततः हव्यवाहंप्रतिष्ठाप्यतस्मिन्ध्यात्वाहरिंपरं आज्यमन्नावधिश्रित्यदद्याद्धि
प्रायवाससं अष्टोत्तरशतंहुत्वामूलमंत्रेणवैष्णवः नाममंत्रेणजुहुयाद्द्वादशार्णयुतेनवा केशवादिसकृ
द्धुत्वाप्रायश्चित्तंतुशक्तितः केशवादिचतुर्विंशतिनामभिर्होमंकृत्वापूर्णाहुतिंततोहुत्वाहोमशेषंसमापयेत् व्रत
च्छिद्रंतपच्छिद्रंयज्ञच्छिद्रंयज्ञकर्मणिब्राह्मणानांसिदेवानांसर्वसंपूर्णतांव्रजेत् मंत्रहीनं क्रियाहीनं भक्तिहीनंजनार्द
नयत्पूजितंमयादेवपरिपूर्णंतदस्तुमे आचार्य्यपूजनंकार्य्यंदक्षिणाद्यैर्नृपोत्तम एवंशांतिविधिंकृत्वापूर्ववद्धुतमा
दिशेत् प्रायश्चित्तमकृत्वातुपुण्यंनस्याद्व्रतेक्वचित् व्याधिनाग्रसितोदेहःश्रियासंत्यज्यतेगृहं डोरस्यातिक्रमे
चैवचेरत्सर्वमिदंबुधः यइदंकुरुतेपार्थतस्यायुःपुत्रसंपदःभवंतीतिशेषः इत्यनंतडोरप्रायश्चित्तं

अथापरमनंतव्रतोद्यापनं त्वत्प्रसादाच्छ्रुतंकृष्णमयानंतव्रतंशुभं इदानींब्रूहिमेनंतव्रतोद्यापनमुत्तमं श्रीकृष्ण
उवाच यदाचित्तस्यवित्तस्यसंपत्तिर्जायतेशुभा तदाचोद्यापनंकुर्याच्छुभलग्नेशुभेदिने संकल्पयेदुपावासंदेशकाला
वनुस्मरन् ततोनदीतडागंवागत्वासर्वौषधैस्तथा तिलकल्केमासलकैःस्नायान्मज्जनपूर्वकं तीरेमंडपिकांकृत्वा
गृहेवापिसुशोभितां तन्मध्येउपविश्याथदेशकालौस्मरेत्ततः गणेशंपूजयित्वाथपुण्याहंवाचयेद्द्विजैः आचार्यं
वृणुयाद्धार्म्मयुतंवेदांगपारगं ब्राह्मणान्त्वितश्चापिचतुर्दशफलादिना सर्वान्वस्त्रालंकारैर्जलपात्रादिनार्चयेत्
सौवर्णंराजतंवापिताम्रजंवापिमृण्मयंकुंभंन्यसेत्तदुपरिसुधाचंदनचर्चितं तस्मिन्जलेगंधपुष्पफलपल्लवमृत्तिकाः
क्षिप्तारत्नहिरण्यादिवाससावेष्टयत्नतः सौवर्णंराजतंताम्रजातंवंशजमेवच पात्रंतदुपरिन्यस्यपट्टकूला
दिकंशुभंप्रसार्यतदुपर्यत्राष्टदलंचंदनादिना पद्मंविरच्यतन्मध्येनंतमूर्तिंनिधायच पलेनचतदर्द्धेनतदर्द्धे
नापिवाकृतां सौवर्णमयाऽऽयुक्तांशंखचक्रगदाब्जकां आवाहनाद्युपचारैःपूजयेत्सुसमाहितः पंचामृतेनस्त्रपये
त्ततश्चवसनद्वयं पट्टकूलादिकंपीतमर्पयित्वार्चयेद्व्रती गंधपुष्पादिभिर्नानामक्ष्यैर्नानाफलैस्तथा एवंसंपूज्य
विधिवद्विधिनावाधिकेणतु पुष्पैःसंपूजयेदंगान्यनंतस्यचनामभिः अनंतायनमः पादौगुल्फौसंकर्षणायच का
लात्मनेजानुनीचजघनंविश्वरूपिणे विश्वनाथायवैगुह्यंकटिंवैविश्वरूपिणे नाभिंचपद्मनाभायहृदयंपरमात्म
ने कंठंश्रीकंठनाथायबाहून्सर्वास्त्रधारिणे मुखंचवाचस्पतयेचक्षुषीकपिलायच ललाटेकेशवायेतिशिरःसर्व
त्मनेनमः नमःपादौजयागत्यैवमादिप्रपूजयेत् एवंपूजांयदायैवंरात्रौजागरणंचरेत् गीतवादित्रनृत्यादिपुरा
णश्रवणान्वितं प्रतिमायांप्रकुर्वीतपूजांगंधादिनाहरेः नानाफलानिभक्ष्याणिचोपवासीनिवेदयेत् ततः
प्रभातसमयेस्नात्वाचार्य्यादिभिःसह अनंतपूजयेत्प्राग्वंजुहुयात्पश्चिमेततः कुंडेवास्थंडिलेकुर्यादग्निस्थाप

नपूर्वकं आज्यभागांतमाचार्यःस्वगृह्योक्तविधानतः ततोश्वत्थसमिद्भिश्चतदलाभेन्यथापिवा दधिमध्वाज्य स्निग्धाभिस्तिलैर्वापायसेनच आज्येनचप्रतिद्रव्यमष्टोत्तरसहस्रकं अष्टोत्तरशतंचाष्टविंशतिजुहुयात्क्रमात् अतो देवेतिमंत्रेणस्त्रीणांवैनाममंत्रतः प्रणवाद्यंचतुर्थ्यंतंनमोंतानंतनामतःनाममंत्रैश्चजुहुयांश्चतुर्दशभिरादरात् ॐअनं तायस्वाहा १ कपिलायस्वाहा २ शेषायस्वाहा ३ कालात्मनेस्वाहा ४ अहोरात्रायस्वाहा ५ अर्धमासा यस्वाहा ६ षड्ऋतुभ्यःस्वाहा ७ संवत्सरायस्वाहा ८ परिवत्सरायस्वाहा ९ उपसेस्वाहा १० कलायैस्वाहा ११ काष्ठायैस्वाहा १२ मुहूर्तायस्वाहा १३ समिधादिभिरेवंचप्रत्येकंजुहुयात्क्रमात् ततःस्विष्टकृदा र्भ्यपूर्णपात्रांतमाचरेत् जप्त्वापुरुषसूक्तंतुस्मृत्वानंतंसुरोत्तमं पूर्णाहुतिंचजुहुयाद्धोमांतेविश्वमित्यृचा होमशेषंसमा प्याथकृत्वात्र्यायुषमप्यथ पूजयित्वाहरिंदेवमाचार्यंपूजयेत्ततः वस्त्रालंकारभूषाद्यैस्ततोधेनुंसमर्पयेत् पयस्विनीं सुशीलांचवस्त्रालंकारभूषितां स्वर्णशृंगींरौप्यखुरींताम्रपृष्ठींसुवाससं कांस्यदोहांरत्नपुच्छांनिष्कर्कटींसवत्सकां गां वामंत्रेणसंपूज्याचार्यायचसमर्पयेत् मंत्रः गवामंगेषुतिष्ठंति भुवनानिचतुर्दश यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच अत्रास्तुगवामेगेष्वतिगावोममाग्रतः संतुगावोमेसंतुष्टंतःगावेमिहृदयेसं तुगवांमध्येवसाम्यहंमंत्रमेतत्समुच्चार्य वस्त्रालंकारभूषणैःतत्पत्नींपूजयित्वाथब्राह्मणांस्तोषयेत्ततःऋत्विजःपूजयि त्वाथतेभ्योदद्याचदक्षिणां चतुर्दशचकुंभांश्चपक्वान्नपरिपूरितान् वस्त्रोपवीतंदद्याच्चाप्यनंतःप्रीयतामिति आचा र्यादीन्भोजयित्वापूर्णतांवाचयेत्ततः अथानंतंविसृज्याथगृह्णीयादाशिषस्ततः भक्तियुक्तोनमस्कृत्यब्राह्मणा स्तान्विसर्जयेत् ततोइष्टैर्बंधुयुतोभुंजीतसुसमाहितः एवंकृतेनंतफलदातानंतोनसंशयः इतिभविष्योत्तरेऽ नंतव्रतोद्यापनविधिः

अथसंक्षिप्तप्रकारेणानंतव्रतोद्यापनम् व्रतोद्यापनकौमुद्यां तत्रादौतिथ्यादिसंकीर्त्यात्मनोनिखिलपापक्षयपूर्वोत्त

मसिद्धिपुत्रपौत्रपूरितविविधभोगधनधान्यपरमगतिप्राप्तिकामनया अतुर्दशवर्षाचरितानंत व्रतोद्यापनं करिष्येइ
तिसंकल्प्य नित्यविधिनास्वयंदेवंसंपूज्य ततोव्रताचार्य्यःसर्वतोभद्रे ब्रह्मादिदेवताआवाह्यतदुपरिकलशंविधिना
प्रतिष्ठाप्य तत्र यमुनामावाह्यश्रीसूक्तेन नाममंत्रेणवासंपूज्य तदुपरिअक्षतपरिपूर्णपात्रंनिधायतत्राष्टदलंविलि
ख्यतत्र स्वर्णनिर्मिताचतुर्दशग्रंथियुतामनंतप्रतिमां सहस्रशीर्षेतिपुरुषसूक्तेन स्थापयेत् तदुत्तरतःसप्तधान्यो
परिविस्तृततरौप्यशय्यायांनिर्मितलक्ष्मीसहितंहैमं हलमुसलोपेतमनंतदेव अतोदेवेतिमंत्रेणइदं विष्णुरितिमंत्रेण
वास्थापयेत् स्वर्णंद्वारकप्रतिमायोःपुरुषसूक्तेनश्रीमदनंतायनमः इतिनाममंत्रेणवा पूजांवार्षिकवत्कार्य्या अंगस्था
अधिदेवताः विष्णुः १ अग्निः २ आदित्यः ३ सहस्राक्षः ४ पितामहः ५ इंद्रः ६ पिनाकी ७ विघ्ने
शः ८ स्कंदः ९ सोमः १० वरुणः ११ पवनः १२ पृथ्वी १३ वसवः १४ ततःशय्यायांप्रतिमायाः
शंखचक्रंगदांपद्मंनाममंत्रेण तद्वहिर्नाममंत्रेण अनंतकपिलंदक्षंमनुंप्रजापतिं संकर्षणं बालं वनमालिनं त्रि
विक्रमं अहोरात्रं अर्धमासं मासं ऋतुं अयनं संवत्सरं परिवत्सरं इडावत्सरं अनुवत्सरं संवत्सरं प्रजा
ध्यक्षं अजितं सर्वभूतं प्रद्युम्नं अनिरुद्धं श्रीधरं पुरुषोत्तमं पद्मनाभं विश्वरूपं त्रिविक्रमं कृष्णं अच्युतं
तद्वहिरिंद्रादीन् तद्वहिरष्टवसून् तद्वहिरेकादशरुद्रान् तद्वहिरश्विन्यादिसप्तविंशतिनक्षत्राणि तद्वहिर्ब्राह्म्यादि
सप्तमातॄः तद्वहिश्चैत्रादिद्वादशमासान् तद्वहिर्दीप्तादिशक्तीःदीप्तासूक्ष्माप्रभाप्रज्ञाविभूतिर्विश्वतोमुखी अमोघा
विद्युतातद्वहिर्विष्कुंभादियोगानावाह्य नाममंत्रैरेवपूजाकार्य्या पीठस्यपरितः पक्वान्नसहितान् चतुर्दशकुं
भान्तस्याप्यचतुर्दशनामभिःपूजयेत् नाममंत्राः अनंतायनमः १ संकर्षणायनमः २ कालायनमः ३ शेषा
यनमः ४ वासुदेवायनमः ५ विश्वनाथायनमः ६ विश्वरूपायकटिषु ७ पद्मनाभायनमः ८ दामोदरायनमः ९

जगन्नाथायनमः ॥ १० ॥ चतुर्भुजायनमः ॥ ११ ॥ श्रीकंठायनमः ॥ १२ ॥ केशवायनमः ॥ १३ ॥ सर्वात्मनेनमः ॥ १४ ॥
इतिसर्वेषांपूजा ॥ ततोंगपूजा ॥ अनंतायपादौपूजयामि ॥ १ ॥ संकर्षणायगुल्फौपू ॥ २ ॥ कालायजंघेपू ॥ ३ ॥ शेषायजा
नुनीपू ॥ ४ ॥ वासुदेवायऊरूपू ॥ ५ ॥ विश्वनाथायगुह्यंपू ॥ ६ ॥ विश्वरूपायकटिंपू ॥ ७ ॥ पद्मनाभायनमः नाभिंपू ॥ ८ ॥
दामोदरायउदरंपू ॥ १० ॥ जगन्नाथायहस्तौपू ॥ चतुर्भुजायबाहुद्वयंपू ॥ ११ ॥ श्रीकंठायनमःकंठंपू ॥ १२ ॥ केशवायल
लाटंपू ॥ १३ ॥ सर्वात्मनेनमः ॥ शिरःपूजयामि अनंतायनमः ॥ सर्वांगंपूजयामि ॥ ततोधूपादिमंत्रपुष्पान्तैः ॥ सर्वोपचा
रैःसंपूज्य नमस्कुर्यात् नमस्तेदेवदेवेशनमस्तेधरणीधर ॥ नमस्तेसर्वनागेंद्रअनंतायनमोनमः ॥ इतिनमस्कारः ॥
ततःप्रार्थना अनंतकामान्मेदेहिसर्वकामफलप्रद ॥ अनंतायनमस्तुभ्यंपुत्रपौत्रविवर्द्धन ॥ व्रतेनानेनसुप्रीतोभवत्विव
हसदामम ततःपुराणपाठजागरणादिभिर्निशांनीत्वा प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् तत्रप्रधानंश्रीमदनंतं
अश्वत्थसमित् तिलव्रीहियवघृत पायसद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः पीठदेवताआवरणदेवता
श्चैकैकयाआज्याहुत्याब्रह्मादिदेवताश्चैकैकया आज्यहुत्यायक्ष्येस्थपनोक्तनाममंत्रैः सकलहोमःकार्यःकेचित्तु
व्रतदिन एवसर्वहोममिच्छंति प्रातस्तुब्राह्मणभोजनमात्रं ततःपीठंसंपूज्यवस्त्रादिभिराचार्यंचसंपूज्यपीठंदद्या
त् तत्रमंत्रः प्रतिगृह्णद्विजश्रेष्टसमस्तफलदायक ब्रह्मसाक्षाद्देहांविप्राविमुच्य भवबंधनात् अनंतःप्रतिगृह्णा
तिअनंतोवैददातिच ॥ अनंतस्तारकोभाभ्यामनंतायनमोनमः ततःपूर्वद्युर्निमंत्रितान् चतुर्दशब्राह्मणान्
वस्त्रादिभिः संपूज्यस्थापितचतुर्दशकलशान्यकान्नादिसहितान् सदक्षिणानतेभ्योदद्यात् प्रतिगृह्णद्विजश्रेष्ठेत्या
दिमंत्रौपठेद्व्रतपूर्तयेगांदत्वासुवर्णदानप्रतिष्ठांदद्यात् ततआशिषोगृहीत्वाक्षमाप्यचविसर्जयेत् क्रियाहीनंभक्ति
हीनंद्रव्यहीनंतथैवच ॥ मंत्रहीनंकृतंयच्चपरिपूर्णंतदस्तुमे ॥ ततोब्राह्मणभोजनंपुरःसरंस्वयंभुंजीत इतिव्रतोद्या
पनकौमुद्यामनंतव्रतोद्यापनं

अथास्यामेवचतुर्दश्यांपालीव्रतम् हेमाद्रौ भविष्योत्तरे युधिष्ठिरउवाच अंबुपूर्णतडागेषुमहत्तोयाशयेषुच क
स्यार्घ्यंसंप्रयच्छंतिकृष्णैताः कुलयेपितः श्रीकृष्णउवाच मासिभाद्रपदेप्राप्तेशुक्लभूतातिथौनृप तडागपाल्यां
दातव्योवरुणायार्घ्यउत्तमः ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिर्विशेषतः तस्मिन्दिनेभक्तिनम्रैर्देयोऽर्घ्यः पांडुनन्दन
फलैः पुष्पैस्तथावस्त्रैर्दीपालक्तकचंदनैः विरूढैः सप्तधान्यैश्चदधिमिष्टान्नचंदनैः अनग्निपक्वसिद्धान्नैस्तिलतं
डुलमिश्रितैः खर्जूरैर्नारिकेलैश्चबीजपूरैः फलैस्तथा द्राक्षादाडिमयुग्मैश्चपुष्पैश्चापिप्रपूजयेत् आलिख्यमंड
लेदेवंवरुणंवारुणीयुतं प्रभासतीर्थसहितंगयापुष्करसंयुतं मन्त्रेणानेनराजेंद्रपूजयेद्भक्तिभावतः वरुणायनमस्तु
भ्यंनमस्तेयादसांपते अपांपतेनमस्तुभ्यंरसानांपतयेनमः माक्लेदंमाचदौर्गन्ध्यंवैरस्यंमामुखेमम वरुणोवारुणी
भर्तावरदोऽस्तुसदामम एवंयःपूजयेद्भक्त्यापुरुषोवरुणालयं मध्याह्नेसरसिस्नात्वानग्निपक्वव्रतीनृप चातुर्वर्ण्या
चयानारीव्रतेनानेनपांडव निवेद्यब्राह्मणेदद्यत्तन्नैवेद्यंप्रकल्पितं एवंयःकुरुतेपार्थपालीव्रतमनुत्तमंतत्क्षणा
त्सर्वपापेभ्योमुच्यतेनात्रसंशयः यथांबुयुद्धेगाभीर्यंजायतेनेहकुत्रचित् एवंहिव्रतिनागेहेधर्मज्ञातुंनशक्यते
आयुपाययशसाकीर्त्यासौभाग्येनयुतासदा भवंति व्रतमाहात्म्याज्जंतवोनात्रसंशयः संरुद्धशुद्धसलिलाति
विलांविशालांपालीमुपेत्यबहुभिस्तरुभिः कृताली येपूजयंतिवरुणीसहितं समुद्रंतेषांगृहेभवतिभूतिरलंपु
राद्या इतिभविष्योत्तरेपालीव्रतं ॥ अस्यामेवभाद्रपदशुक्लचतुर्दश्यांरंभाव्रतं भविष्योत्तरे श्रीकृष्णउवाच ॥
अस्मिन्नेवदिनेपार्थशृणुब्रह्मसभातलेदेवलेनपुरागीतादेवर्षिगणसन्निधौ अप्सरोगणगंधर्वैर्देवैःसर्वैःसमर्चितं संसा
रासारताहेतुर्यातत्ररंभाकदलीततः शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेनृप जातीफलैःपूगफलैर्लवंगैः कदलीफलैः
सकृद्दत्वैतुरंभायैपूजाचात्रनिगद्यते तस्मिन्नहनिदातव्यस्त्रीभिरन्याभिरप्यलं मन्त्रेणानेनवैपार्थसशृणुष्वनरेश्वर

त्तम ॥ यथात्वंकंदलदलैःकदल्येकामदायिनि शरीरारोग्यलावण्यंदेहिदेहिनमोस्तुते इत्थंयः पूजयेद्रंभांपुरु
प्रभक्तिमान्नृप ॥ नारीवानन्निपक्वान्नाचातुर्वर्ण्यायुधिष्ठिर तस्याःकुलेपिनभवेत्कापिनारीकुलाटनी दुर्गतादुर्भगावं
ध्यास्वैरिणीपापकारिणी विलासिनीवाहपलीपुनर्भूभुगुणेतरा गणिकास्थाविरास्यावामूलकर्मकराखला
भर्तृव्रताच्चचलितानकदाचित्प्रजायते भवेत्सौभाग्यसौख्याढ्यापुत्रपौत्रश्रियावृता आयुष्मतीकीर्तिमतीरमेद्व
र्षशतंभुवि एतद्रंभाव्रतंचीर्णंगायत्र्यास्वर्गसंस्थया तथागौर्याचकैलासेइंद्राण्यानंदनेवने श्वेतद्वीपेतथालक्ष्म्या
रंभयारविमंडले ॥ भानुमत्यानागपुरेव्रतमेतदनुष्ठितं एतद्व्रतंपार्थिवेंद्रमासिभाद्रपदेसति याकरोतिनसादुःखैः
कदाचिदपिपीड्यते उन्निद्रकंदलदलांकदलींमनोज्ञांयाःपूजयंतिकुसुमाक्षतधूपदीपैः तासांगृहेपुनर्भवतिकदा
चिदेवनार्यःस्वनार्यचरितावियवाविरूपाः ॥ इतिभविष्योत्तरोक्तं भाद्रपदशुक्लचतुर्दश्यांरंभाव्रतम्
अथागस्त्यार्घ्यदानव्रतं पद्मपुराणेसृष्टिखंडे ॥ भीष्मउवाच भूर्लोकोथभुवर्लोकःस्वर्लोकोथमहर्जनः तपःस
त्यश्चसप्तैते देवलोकाःप्रकीर्तिताः पृथ्वीपेणतुसर्वेषामाधिपत्यंकथंभवेत् इहलोकेशुभंरूपमायुरारोग्यमेवच
लक्ष्मीश्चविपुलाब्रह्मन्कथंस्यात्सुरपूजित ॥ पुलस्त्यउवाच वसिष्ठःसंभवत्यस्मिन्जलकुंभेचपूर्ववत् ततश्चैव
बभूवाथसाक्षसूत्रकमंडलुः अगस्त्यइतिशांतात्मावभूवऋषिसत्तमः मलयस्यैकदेशेतुवैखानसविधानतः सभा
र्यःसंसुतोविप्रस्तपश्चक्रेसुदुष्करं ततःकालेनमहताह्युदकादिनिपीडितं जगद्वीक्ष्यसकोपेनपीतवान्वरुणा
लयं ततोस्यवरदाःसर्वेबभूवुःशंकरादयः ब्रह्माविष्णुश्चभगवान्वरदानायजग्मतुः वरंवृणीष्वभद्रंतेयश्चाभीष्टो
व्रतेशुभ ॥ अगस्त्यउवाच यावद्ब्रह्मसहस्राणांपंचविंशतिकोटयः वैमानिकोभविष्यामिगगनांतरवर्त्मनि मद्वि
मानोदयेकुर्यार्घ्यं ॥ कश्चित्पूजनंमम सर्वेपुण्यत्वमायातुवरएकोवृतोमया श्राद्धेयवैकरिष्यंतिपिंडपूर्वंतुभक्तितः

तेषां पितृगणाः सर्वे मया सार्द्धं दिवि स्थिताः ॥ स संकल्पं प्रतिष्ठंतु एष एवं वरो मम ॥ एवमस्त्विति तं चोक्त्वा ययुर्देवा
यथागतं ॥ तस्मादर्घ्यः प्रदातव्यो ह्यगस्त्यस्य सदा बुधैः ॥ अथागस्त्यार्घ्यदानविधिः श्रीरामित्रोदयेमत्स्यपुराणे
कथमर्घ्यप्रदानादि कर्तव्यं तस्य वै प्रभो ॥ विधानं यदगस्त्यस्य पूजने तद्वदस्व मे ॥ ईश्वर उवाच ॥ प्रत्यूषसमये विद्वान्
कुर्यात्तस्योदये निशि ॥ स्नानं शुक्लतिलैस्तद्वच्छुक्लमाल्यांबरो गृही ॥ स्थापयेदव्रणं कुंभं माल्यवस्त्रविभूषितं ॥ पंचर
त्नसमायुक्तं ताम्रपात्रसमन्वितं ॥ अंगुष्ठमात्रं पुरुषं तथैव सौवर्णमत्यायतबाहुदंडं ॥ चतुर्भुजं कुंभमुखे निधाय धान्या
नि सप्तांकुरसंयुतानि ॥ सकांस्यपात्राक्षतशुक्तियुक्तं मंत्रेण दद्याद्द्विजपुंगवाय ॥ उत्क्षिप्य लंबोदरदीर्घबाहुमनन्यचेता
यमदिङ्मुखस्थः ॥ उत्क्षिप्य कुंभमुखान्निःसार्य लंबोदरदीर्घबाहुं पुरुषं मंत्रेण दद्यादित्यर्थः ॥ लंबोदरमित्यादि पुनर्वि
शेषणं लंबोदरत्वविधानार्थं । यमदिङ्मुखस्थ इति कुंभस्थापनादौ सर्वत्र संबध्यते ॥ अयोगांगकर्तृधर्मत्वात् श्वेतां च
दुग्धाय दिशक्तिरस्ति रौप्यैः खुरैर्हेममुखीं सवत्सां धेनुं नरः क्षीरवतीं प्रणम्य सवस्त्रघंटाभरणां द्विजाय ॥ हेममुखीं सुव
र्णशृंगीं अन्यत्तथा दर्शनात् ॥ आसप्तरात्रादुदयेऽर्घ्यमस्य दातव्यमेतत्सकलं नरेण ॥ उदयाद्यमस्येति पाठो हेमाद्रे
यमोऽगस्त्यः ॥ यावत्समाः सप्तदशाथवा स्युरथोर्ध्वमप्येवं वदंति केचित् ॥ १२ ॥ ॥ अथार्घ्यदानमंत्रः ॥
काशपुष्पप्रतीकाश वह्निमारुतसंभव ॥ मित्रावरुणयोः पुत्र कुंभयोने नमोऽस्तु ते ॥ १ ॥ अर्घ्यं दद्याच्च फलत्यागमेवं कुर्वन्प्र
सीदति ॥ त्यजेदगस्त्यमुद्दिश्य धान्यमेकं फलं रसं ॥ होमं कृत्वा ततः पश्चाद्वर्जयेन्मानवः फलं ॥ अनेन विधिना
यस्तु पुमानर्घ्यं निवेदयेत् ॥ इंद्रलोकमवाप्नोति रूपारोग्यसमन्वितः ॥ सप्तैव लोकानाप्नोति सप्ताद्यर्घ्यान्निवः ॥ अग
च्छति ॥ आसप्तरात्रादित्यादेरयमर्थः ॥ यस्मिन् अंशे अगस्त्योदयः तस्याद्यः आरभ्य तावंशः ततः प्रागेक
स्मिन्दिने दर्घ्यो दातव्यः ॥ अगस्त्योदयकालश्च ब्रह्मपुराणे ॥ अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः

वरुणस्यात्मजो योगी विंध्यवृद्धिविमर्दनः॥ कन्यांशेभ्यः पश्चिमेभ्यः पंचप्रारभ्यसंख्यया॥ अंशान्दिद्वाविंशतिर्यावद्भुंक्ते सूर्यस्तु राशिषु विंशतिमिति कल्पतरौ पाठः उदेति तावद्भगवानगस्त्यो मित्रो प्रभुरिति कन्यांशेभ्य इति पूर्वदिक् शब्दस्याध्याहारे पंचमी पाश्चिमेभ्य इति त्वधिकरणे च। तेनायमर्थः कन्यांशपूर्वेभ्यः सिंहांशकेष्वतीतेभ्यः पंचदशभ्यः प्रारभ्य अगस्त्योदय इति चोदयात्पूर्वस्यापि पाश्चिमत्वमित्येक एवार्थः॥ अत एवागमः॥ कन्यामप्राप्ते सूर्ये स्वस्त्रर्घ्यो विसप्तमादिति॥ सिंहांतिमेष्वंशकेष्वर्घ्यं दर्शयति। यत्तु आगमज्योतिषयोः॥ अप्राप्ते भास्करे कन्यां त्रिभिर्भागैर्विभिर्दिनैः॥ अर्घ्यं दद्युरगस्त्याय पर्यवसति मदालये॥ इतिवचनं सप्तविंशांशादिषु॥ अर्घ्यदानं तत्र शास्त्रप्रवृत्तं तु पूर्वांशकनिषेधपरं धर्मशास्त्रविरोधेनैतद्वचनमनादेयमित्युक्त्वा ब्रह्मपुराणार्थपरत्वेनानेतव्यमिति लिखितवन्तो रत्नाकरकृताप्येतदभिप्रेतं। समयप्रदीपे तु ज्योतिःशास्त्रात् सप्तविंशे सिंहांशके अगस्त्योदयस्तदनुसारि कन्यांशकेष्वर्घ्यदानं आसप्तरात्रादिति श्रवणात् आगमे तु कन्यायां समनुप्राप्ते सूर्येऽर्घ्यः सप्तकीर्तित इति कन्यांशकेष्वर्घ्यो निषिद्ध इत्युक्तं। अर्घ्यद्रव्याणि तु रक्तबिल्वाक्षतैः पुष्पैर्दधिदूर्वाक्षतैस्तिलैः। सामान्यः सर्वदेवानामर्घ्योऽयं परिकीर्तित इति सामान्यविधिः। रत्नाकरे तु पुंखेनासितपुष्पाक्षतैः जलैरर्घ्यो देय इति नृसिंहपुराणे आगस्त्यार्घ्ये तथादर्शनात् इतिदर्शनादित्युक्तं। एतत्सकलमिति एभिर्द्रव्यैः संपूर्णमित्यर्थः। सकलमिति पाठे सकलमर्घ्यमित्यर्थः समावर्पाणिवदस्येवेति संबंधः काशपुष्पप्रतीकाशेति मंत्रः सौवर्णपुरुषदानेऽप्ययमेवार्घ्यमंत्रः मंत्रांतराभिधानात्। ब्राह्मणकर्तृके अर्घ्ये तु अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगामेति वैदिकमंत्रान्वयज्ञातिविशेषोऽस्मिन्कल्पे नास्ति एतन्मंत्रस्य विशेषात्सिधान्ते न चातुर्वर्ण्यगोचरत्वादिति॥ वीरमित्रोदयेऽप्येवमिति॥ अत्र फलत्यागे विशेषः स्मृत्यंतरे ब्रीजा

पूरंनारिकेलंरंभाजातीफलंतथा खर्जूरचूतदाडिम्यः फलान्येतानिवर्जयेदिति होमश्च महाव्याहृतिभिश्च
ज्येनवैदिकमंत्रेणनाममंत्रेणच स्वयमाचार्य्यद्वारावा अत्रायमनुष्ठानक्रमः प्रथमं यथोक्तस्नानं ततोयथोक्त
कुंभस्थापनं यथोक्तसौवर्णपुरुषस्थापनं ततोऽगस्त्यपूजा नवग्रहपूजायां मानाभ विधानंयदगस्त्य
स्यपूजनेतद्वदस्त्वमे इत्युपक्रमे तथाकीर्तनात् अत्र शिष्टा यामचतुष्टये पूजां रात्रौजागरणं लोपामुद्रापूजन
माचरंति ततोऽर्घ्यदानं ततोहोमः ततः फलत्यागः सौवर्णपुरुषदानसंपत्तौ धेनुदानंच हेमाद्रौ तु
सकाशपुष्पाक्षतशुक्तियुक्तमित्यादिपठित्वाव्याख्यातं सकाशपुष्पाक्षतयाशुक्त्यायुक्तमर्घ्यमुत्क्षिप्यदद्यादित्य
न्वयः आयतबाहुदंडमित्युत्क्षेपणक्रियाविशेषणं लंबोदरंदीर्घबाहुमिति प्रतिमाविशेषणंद्विजपुंगवोऽगस्त्य
इति ॥ इत्यर्घ्यदानम् ॥
ब्रह्मपुराणे ॥ कृतोपवासःसंपश्येदगस्त्यमुदितंमुनिं सर्वकामप्रदंपुण्यंसर्वसौभाग्यवर्द्धनं अर्चितव्यश्चभगवा
न्श्रद्धाभक्तिसमन्वितैः पूर्णकुंभैःसकूष्मांडैर्धूपैर्दीपैर्घृतेनच जातीपद्मोत्पलैः शुभैश्चंदनेनसितेनच गोभिः
श्वेतैस्तथावस्त्रैरत्नैः सागरसंभवैः उपानच्छत्रदंडैश्चपादुकाजनवल्कलैः भूरिणापरमान्नेनफलैः पुष्पैः सुशो
भनैः अनप्रकारैर्भक्ष्यैश्चहोमैर्ब्राह्मणतर्पणैः आशास्यचशुभंकाममुद्दिश्यचमनोगतं यद्यहंभगवन्कामंप्राप्नुया
मतसेप्सितं त्वत्प्रसादादविघ्नेनभूयस्त्वांपूजयाम्यहं इत्युक्त्वापूजयेत्पश्चाद्देवज्ञांश्चतथागुरुं ब्राह्मणान्भोजयि
त्वातुततोभुंजीतवाग्यतः अत्रचसंपश्येदित्यभिधानात् मेघादिछन्नेनशास्त्रासिद्धिः मत्स्यपुराणीयकल्पेतुदर्शन
स्यांगत्वात् कालमात्रस्यमेघादिसत्त्वेऽसत्त्वेपि सत्त्वेविकल्पएवशास्त्रार्थः नत्वेकएवकल्पोद्वाभ्यांवोढव्यइतिवा
च्यं फलभेदात्करणभेदाच्च मत्स्यपुराणीयकल्पे अर्घ्यदानमेवप्रधानं अनेनविधिनायस्तुपुमानर्घ्यंनिवेदयेत

इत्यादिनातस्यैवफलसंबंधबोधनात् ब्राह्मेतुपूजैवप्रधानं तत्रैवमनोगतकामलाभरूपफलश्रवणात् अर्घ्यस्यवा
कथ्यतात्–एवंचमत्स्यपुराणीयेकल्पे उपवासआचारबलादेव अथचमत्स्यपुराणीयेपुमानितिश्रवणात्पुंसामेवा
धिकारः–ब्राह्मेतुसर्वाधिकारोविशेषाश्रवणात् इत्यगस्त्यपूजाविधिः ॥
नृसिंहपुराणेतु यदागस्त्योदयप्राप्तिस्तदासर्वसुराधिप अगस्त्यायदद्यात्यर्घ्यंमहापुण्यविवृद्धये शंखेतोयंविनि
क्षिप्यसितपुष्पाक्षतैर्युतं मंत्रेणानेनवैदद्यात्सितपुष्पसमन्वित काशपुष्पप्रतीकाशवह्निमारुतसंभव मित्रावरु
णयोःपुत्र कुंभयोनेनमोस्तुते वातापिर्भक्षितोयेनइल्वलश्चमहासुरः समुद्रः शोषितोयेन सनोगस्त्यः प्रसीद
तु एवंतुयोददात्यर्घ्यमगस्त्यायमहात्मने सर्वपापविनिर्मुक्तः सर्वांतरतिदुर्गतिम् ॥ भविष्योत्तरे ॥
श्रीकृष्णउवाच काचनंकारयित्वातुयथाशक्त्यासुशोभनं पुरुषाकृतिप्रशांतचजटामंडलधारिणं कमंडलुकरंशिष्यै
र्गोभ्यपरिवारितं सद्भूतविषहंतारंदर्भाक्षसूत्रधरंमुनि तस्मिन्कुंभेसमालभ्यचंदनेनततोन्यसेत् स्नापितचानुलिप्तं
चचंदनेनसुगंधिना पूजितंजातिकुसुमैर्धूपैश्चधूपितं ततश्चार्घ्यः प्रदातव्यो मैत्रवर्णैस्तच्छृणुष्वमे खर्जूरैर्ना
रिकेलैश्चकूष्मांडैस्त्रपुसैरपि कर्कोटैः कारवेल्लैश्चकमरैर्बीजपूरकैः वृंताकैर्दाडिमैश्चैव नारंगैः कदलीफलैः दूर्वा
कुरैः कुशैः काशैः पद्मैर्नीलोत्पलैस्तथा नानाप्रकारैर्भक्ष्यैश्च शोभितैश्च शुभैरसैः विरूढैः सप्तधान्यैश्च वंश
पात्रेनिधापितैः सौवर्णरूप्यपात्रेणताम्रवशमयेनच मूर्ध्नि स्थितेनमंत्रेणजानुभ्यामवनींगतः दक्षिणाभिमुखोभू
त्वाप्यात्वागस्त्यंक्षणंनृप दद्यादर्घ्यंप्रयत्नेनपयसागुरुचंदनैः अर्घ्यपात्रंशुक्तयाकारंसिंतिसंप्रदायात् सकाशपु
ष्पाक्षतशक्तीतिहिमाद्रिः काशपुष्पप्रतीकाशवह्निमारुतसंभव मित्रावरुणयोः पुत्रकुंभयोनेनमोस्तुते वातापिर्भ
क्षितोयेनसमुद्रः शोषितः पुरा लोपामुद्रापतिः श्रीमान्योसौतस्मैनमोनमः यस्योदितेनपापानिविलयंयांति

व्याधयः तस्मैनमोस्त्वगस्त्यायसशिष्यायचपुत्रिणे । ब्राह्मणोवेदमंत्रेणदद्यादर्घ्यंनृपोत्तम ॥ वेदमंत्रस्तु अग
स्त्यःखनमानेत्यादिपूर्वमुक्तः दत्त्वैवमर्घ्यंकौंतेयप्रणिपत्यविसर्जयेत् । अर्चितस्त्वंमयाशक्त्यानमोगस्त्यमहर्षे
ये ऐहिकामुष्मिकांदत्त्वाकार्यसिद्धिंदरस्वमे इति विसर्जयित्वागस्त्यंतंविप्रायप्रतिपादयेत् । द्वैवज्ञायसरूपाय
वेदवेदांगवेदिने । दानमंत्रः अगस्त्योममनस्स्थोस्तुयोगस्त्योस्मिन्घटेस्थितः । अगस्त्योद्विजरूपेणप्रतिगृ
ह्णातुसत्कृतः अगस्त्यःसप्तजन्मोत्थंनाशयत्वावयोरघं अतुलंविमलंसौख्यंप्रयच्छतुमहामुने । प्रतिग्रहमंत्रः
एवंयः कुरुतेभक्त्यात्वगस्त्यव्रतमादरात् फलमेकंतथाधान्यंरसंचैकंपरित्यजेत् संपूर्णेचतथावर्षेपुनरन्यमुप
क्रमेत् अन्यत्फलरसधान्यादित्यागंद्वितीयवर्षादावुपक्रमेदित्यर्थः । दत्त्वार्घ्यंसप्तवर्षाणिक्रमेणानेनपांडव
पुमान्फलमवाप्नोतितदेकाग्रमनाः शृणु ब्राह्मणःस्याच्चतुर्वेदः सर्वशास्त्रविशारदः । क्षत्रियःपृथिवींसर्वांप्राप्नो
त्यर्णवमेखलां वैश्यानांधान्यनिष्पत्तिर्गोधनंविपुलंभवेत् । शूद्राणांधनमारोग्यंसन्मानंचाधिकंभवेत् । स्त्रीणां
पुत्राःप्रजायंतेसौभाग्यंगृहसमृद्धिमत् विधवानांमहत्पुण्यंभर्तृलोकगतिप्रदं । कन्याभर्तारमाप्नोतिव्याधेर्मुच्ये
तदुःखिता । येषुदेशेष्वगस्त्यार्घ्यंपूजयंक्रियतेजनैः तेषुदेशेषुपर्जन्यःकामवर्षीप्रजायते । ईतयःप्रशमंयांतिन
श्यंतिव्याधयस्तथा । विष्णुरहस्ये काशपुष्पमयींरम्यांकृत्वामूर्तिंतुवारुणेः । प्रदोषेविन्यसेत्तांतुपूर्णकुंभेस्वलं
कृते जलपूर्णेकुंभे । कुंभस्थंपूजयेत्तंतुपुष्पधूपविलेपनैः दध्यक्षतवलिंदद्याद्रात्रौकुर्यात्प्रजागरं । प्रभातेतंस
मादाययायात्पुण्यजलाशयं निशावसानेतांपश्यन्जलांतेप्रतिमांमुने । पुष्पैर्मूलैःफलैर्गंधधूपैरथसुगंधिभिः द्रा
क्षाखर्जूरककैधुनारिकेलादिभिःशुभैः पंचरत्नसमायुक्तंहेमरूप्यसमन्वितं । सप्तधान्यभृतंपात्रंचदनेनसमायुतं
तत्तुताम्रमयंकृत्वादद्यादर्घ्यंद्विजातये अगस्त्यः खनमानइतिपूर्वोक्तोमंत्रः ॥ अगस्त्यःखनमानेतिपठन्मंत्रमिमं

मुने यथालाभकृतार्घ्येण सम्यगभ्यर्च्यभक्तितः अर्घ्यंदद्युरगस्त्यायशूद्रेमंत्रविधिस्त्वयं काशपुष्पप्रतीकाश
वह्निमारुतसंभवमित्रावरुणयोः पुत्र कुंभयोनेनमोस्तुते ॥ अथविष्णुरहस्यानुसारेणागस्त्यार्घ्यदा
नपद्धतिः ॥ काशपुष्पमयीमगस्त्यप्रतिमांकृत्वा जलपूर्णपंचपल्लवालंकृतप्रतिष्ठापितकुंभेतन्मत्रेणतांविन्यस्यप्रा
पुरुषाकृतिप्रशांतंचजटामंडलधारिणं कमंडलुकरंशिष्यैर्मृगैश्चपरिवारितं मृत्युग्रविपहंतारंदर्भाक्षस्रग्धरंमुनि
मितिध्यात्वा अगस्त्यः खनमानइतिमंत्रेणतांसंपूज्य पुष्पधूपदीपनैवेद्यादिभिरर्चयित्वा पुष्पमूलफलगंध
सुगंधधूपद्राक्षाखर्जूरनारिकेलादिफलपंचरत्नहेमरूप्यादिभिः सप्तधान्यैश्चंदनेनचयुक्तंताम्रपात्रंशंखंवासज्ज
लंपाणिभ्यामादायागस्त्यायार्घ्यंदद्यात् ॥ तत्रमंत्रः विंध्यवृद्धिक्षयकरमेघतोयविषापह रत्नवल्लभदेवेश
लंकावासनमोस्तुते वातापीभक्षितोयेनसमुद्रःशोषितःपुरा लोपामुद्रापतिःश्रीमान्योसौतस्मैनमोनमः येनो
दितेनपापानिप्रलयंयांतिव्याधयः तस्मैनमोस्त्वगस्त्यायसशिष्यायचपुत्रिणे लंकावासनमस्तुभ्यंमुपीण्
प्रवरोत्तम उदितोद्वारिलंकाया अर्घ्योमेप्रतिगृह्यतां शंखपुष्पफलतोयरत्नानिविविधानिच सुरासुरमुनिश्रे
ष्ठअर्घ्योमेप्रतिगृह्यताम् राजपुत्रिनमस्तुभ्यमपीपत्निनमोस्तुते गृहाणार्घ्यंमयादत्तंलोपामुद्रेशुभानने ॥ इत्य
गस्त्यार्घ्यदानविधिः॥ अथभाद्रपदपौर्णमासीकृत्यानि नारदीये प्रौष्ठपद्यापौर्णमास्यामुमामाहेश्वरंव्रतं एकभ
क्तःस्वयंस्नातःशिवसपूज्यभक्तितः कृतांजलिःप्रार्थयेतश्वःकरिष्येव्रतप्रभो एवंविज्ञाप्यदेवेशंगृह्णीयाद्व्रतमुत्तमं
रात्रौदेवांतिकेस्नात्वाव्युत्थायापररात्रके कृतमैत्रादिनियमोभस्मरुद्राक्षभृत्ततः पूजयेच्छंकरसम्यगुपचारैः पृथ
ग्विधैःविल्वपत्रैःसुगंधाढ्यैर्नैवेद्यैर्धूपदीपकैः ततश्चोपवसेद्विद्वानाप्रदोषाद्विधूदये पुनःसपूज्यतत्रैवरात्रौजागरणं
चरेत् एवपंचदशाब्दंतुकृत्वाव्रतमतंद्रितः वर्षेवर्षेतदुत्सर्गंविदध्याद्विधिपूर्वकं उमयाश्चमहेशस्यसौवर्णंप्रतिमा

उमामहेश्वरंचैवसौवर्णंप्रतिमाद्वयं संपादनीयंयत्नेनराजतंवामनोहरं पलाद्र्ध्वप्रकर्तव्यंप्रतिमाद्वयमुत्तमं
अधिकंचेयथाशक्तिकर्तव्यमितियत्नतः सौवर्णंराजतंवापिताम्रंवाकलशोत्तमं संपाद्यंतप्रयत्नेनप्रयतोव्रततत्प
रः ततःसदर्भैर्युंजीतवस्त्रयुग्मार्चितंशुभं पृथक्पृथक्स्थापनीयंकलशेप्रतिमाद्वयं आपोहिष्टादिभिर्मंत्रैस्तथा
न्यैर्वरुणैरपि अभिषिच्यप्रयत्नेनपूजयेत्प्रतिमाद्वयं ततःप्रयत्नतोगच्छेदलंकृतशिवालयं शिवस्थानंततःकु
र्यात्तोरणाद्यैरलंकृतं ततःषोडशपत्रेब्जेवहिरंतश्चतुर्गुणे अलंकृतैः स्वस्तिकाद्यैः स्थापयेत्कलशंनवं ध्या
येत्ततोमहादेवमुमादेहार्धधारिणं मुक्तामालाहारनागदुकूलपरिवेष्टितं पंचाननमुमाकांतमनलेंदुरवीक्षणं चंद्रा
र्द्धशेखरंत्र्यक्षंजटामुकुटमंडितं त्रिपुंड्रेखाविलसद्भालभागमनामयं भस्मोद्धूलितसर्वांगंरुद्राक्षाभरणान्वितं मं
दस्मितमनाधारमाधारंजगतांप्रभुम् देवैरनंतैरनिशंस्तूयमानमनेकधा देवात्मकंदेववंद्यंविष्णुब्रह्मादिवंदितम्
विष्णुनीराजितारक्तपादपंकजमुत्तमं अप्रतिद्वंद्वमद्वंद्वंसर्ववृंदारकार्चितं सर्वोत्तममनाद्यंतंसर्वदेवनिषेवितं ऋतंशु
द्धंपरंब्रह्मपुरुषंकृष्णपिंगलं ऊर्द्ध्वकेशंविरूपाक्षंविश्वरूपंचिदात्मकं निष्कलनिर्गुणंशांतंनिरवद्यंनिरंजनं अप्र
मेयंजगन्मध्येसृष्टिसंहारकारकं विश्वबाहुंविश्वपादंविश्वाक्षंविश्वसंभवं विश्वंनारायणाराध्यमक्षरंपरमंपदं वि
श्वतःपरमंनित्यंविश्वस्येशमनामयं एवंध्यात्वामहादेवंसर्वदेवोत्तमोत्तमं ध्यायेत्ततःपरंगौरीमाद्यांविद्यामनामयां
लक्ष्मीसेवितपादाब्जांशचीसेवितपादुकां सरस्वत्यादिभिर्नित्यंस्तूयमानपदांबुजां अधरीकृतधरीभूतपक्वबिं
बफलामुमां मुखकांतिकलोपेतपूर्णचंद्रामनामयां तिरस्कृतालिमालानामलकावलिभिःसदा पीनवक्षोजनि
र्धूतचक्रवाकवरांगनां नित्यंतिरस्कृताभोज्यनयनाभ्यामनिंदितां सीतावाधिकृताशेषकामभल्लामहर्निशं भृकु
ट्यूर्द्धीकृताशेषकामचापमनाकुलां बाहुनालकलोद्धृतहेमनालांविलासिनीं रोमावलीतिरोभूतभ्रमद्भ्रमरजामिकां ना

भिरंधतिरोद्भूतघनावर्त्ताघवर्त्तुलां ऊरुयुग्मतिरोभूतरंभास्तंभांशुभावहां पादयुग्मतिरोद्भूतानिर्जितारुणपंकजां ब्रह्मेंद्रोपेंद्रजननीं महेशार्द्धांगभागिनीं महेशाश्लिष्टवामांगां वरदाभयदां सदां प्रसन्नवदनां शांतां स्मितपूर्वाभिभाषिणीं पूर्णचंद्रदुकूलाढ्यां जनाभरणभूषितां स्तूयमानां सदा देवैर्यक्षैर्दानैश्च कोटिशः एवंध्यात्वा ततः सम्यगुपचारान्प्रकल्पयेत् ततः पुष्पाणि संगृह्य शिवमावाहयेच्छिवां अथावाहनं महादेवदयासिंधो विष्णुब्रह्मादिवंदित आवाहयामि देवत्वां प्रसीद परमेश्वर लक्ष्म्यादिदेववनितापरिसेवितपादके आवाहयामि देवित्वां प्रसीद परमेश्वरि इत्यावाहनं १ गृहाण सोमविश्वात्मन्नासनं रत्नानिर्मितं अनंतासन विश्वेश करुणासागर प्रभो उमेसोमधराश्लिष्टसोमार्द्धकृतशेखरे नानारत्नसमाकीर्णमासनं परिगृह्यतां। इत्यासनं २ पाद्यं गृहाण गौरीश हेमपात्रास्थितं शुचिगृहाण देवि पाद्यं त्वं वेदवेदांतसंस्तुते इति पाद्यं ३ अर्घ्यं गृहाण देवेश सपुष्पगंधसंयुतं शिवानंतगुणग्रामसर्वाभीष्टफलप्रद गृहाणार्घ्यं शिवे नित्ये सर्वावयवशोभने शिवप्रिये शिवाकारे नित्यं भक्तवरप्रदे इत्यर्घ्यं ४ गृहाणाचमनं शंभो शुचिभूतं शुचिप्रिय गृहाणाचमनं देवि शुचिभूते शुचिप्रिये इत्याचमनं ५ मधुपर्कं गृहाणेश सर्वदा मधुपर्कद मधुपर्कप्रदानेन प्रीतो भव महेश्वर मधुपर्कमिदं देवि स्वीकुरु प्रियशंकरे मधुपर्कप्रदानेन सुप्रीता भव शोभने इति मधुपर्कं ६ शंभो पंचामृतस्नानं स्वीकुरुष्व कृपानिधे सर्वतीर्थमयं नित्यं स्नानं शासनपावन शिवपंचामृतस्नानं स्वीकुरुष्वा शिवप्रिये श्रेष्ठतीर्थोत्तमे शुद्धे तीर्थराजानिवेविते इति पंचामृतस्नानं ७ शंभो शुद्धोदकस्नानं स्वीकुरुष्व सुरोत्तम प्रसीद परया भक्त्या पाहि मां करुणानिधे शिवे शुद्धोदकस्नानं स्वीकुरुष्वा शिवप्रिये प्रसीद देवि दीनं त्वं पाहि मां शरणागतं इति शुद्धोदकस्नानं ८ सोत्तरीयं गृहाणेदं दुकूलं शंकरप्रिये प्रसीद पाहि मां दीनमनन्यशरणं शिवे इति वस्त्रं ९ उपवीतं गृहाणेश शंभो सर्वामरोत्तम उपवीतं गृहाणेशि शिवसाश्लिष्टविग्रहे इति यज्ञोपवीतं १० गृहाण चंदनं दिव्यं गंधाढ्येन विराजितं

प्रसीदपार्वतीनाथशरणागतवत्सल गृहाणचंदनंदेविवालचंद्रविराजितं विश्वंविश्वादिमेकेपाहिविश्वनाथप्रियेसदा
इतिगंधं ११ गृहाणाभरणानीशनिराशानियमाश्रय विश्वाभरणविश्वेश रत्नाभरणभूपित गृहाणाभरणान्यंवेस
र्वाभरणभूपिते सर्वप्रियेजगद्वंद्येजगदानंददेशिवेइत्याभरणं १२ गृहाणविल्वपत्राणिसपुष्पाणिमहेश्वर सुगंधीनि
नवानीशशिववत्वकुसुमाप्रिय गृहाणविल्वपुष्पाणिसामोदानिशिवप्रिये सुगधविल्वमंदारमालिकासमलंकृते इति
पुष्पविल्वपत्राणि १३ दशांगंगुग्गुलंधूपंनानागंधमनोहरं गृहाणभक्तवरदेलक्ष्मीदेव्याधिवंदितेइतिधूपम् १४का
र्पासवर्त्तिसंयुक्तंगोघृतेनप्रदीपितं गृहाणाच्युतसूर्याग्निचंद्रप्रभनमोस्तुते श्राज्यंत्रिवर्तिविस्फूर्त्तिदीपमीशानवल्लभे
गृहाणचंद्रसूर्याग्निमंडलाधिकसुप्रभे इतिदीपम् १५ शंभोगोघृतसंयुक्तंपरमान्नंमनोहरंसशर्करंगृहाणावेपरमानंददा
यिनि इतिनैवेद्यम् १६ शंभोगृहाणगंधाढ्यमिदमाचमनीयकं शुद्धेशुद्धिप्रदेदेविशिवभूपितविग्रहे इत्याचमनीयं
१७ शंभोगृहाणतांबूलमेलाकर्पूरसंयुतं प्रसीदभगवन्शंभो सर्वज्ञामितविक्रम शिवेगृहाणतांबूलं क्रमुकादि
फलान्वितं प्रसीदसुस्मितेदेविसोमलिंगार्द्धविग्रहे इतितांबूलं १८ गृहाणपरमेशानसरत्नेछत्रचामरं दर्पणंव्य
जनंत्वीशसर्वदुःखविनाशन गृहाणोमेसुराराध्येसरत्नेछत्रचामरं दर्पणंव्यजनंचार्यविद्याधारेनमोस्तुते इतिछत्र
चामरादि १९ प्रदक्षिणनमस्कारान्गृहाणपरमेश्वर नर्तनंचमहादेविशिवमायाप्रियेशिवे इतिप्रदक्षिणनमस्काराः
२० एवंप्रयत्नतःकार्यंशिवयोःपूजनंशिव शिवानीचप्रयत्नेनपूर्वोक्तमपिपूजनं उक्तमंत्रंसमुच्चार्ययथापूर्वंयथाक्रमं
शिवायनमःशिवंपूजयामि श्रावाहंतीतिमंत्रस्तुभवान्याःपरिकीर्त्तितः कपर्दिनेनमःकपर्दंपूजयामि भाललोचनायन
मः भालंपूजयामि सोमसूर्याग्निलोचनायनमः नेत्राणिपूजयामि सुश्रोत्रायनमः श्रोत्राणिपूजयामि घ्राणगं
धायनमः घ्राणानिपूजयामि स्मृतिदंतायनमः दंतान्पूजयामि श्रुतिजिव्हायनमः जिव्हांपूजयामि कंठकु

पोलायनमः कपोलानिपूजयामि ज्ञानोष्ठायनमःउोष्ठान्पूजयामि नीलकंठायनमः कंठान्पूजयामि भूरिव
वक्षसेनमः वक्षांसिपूजयामि हिरण्यवाहवेनमः वाहून्पूजयामि विश्वोदरायनमः जठरंपूजयामि विश्वनखाय
नमः नखान्पूजयामि सर्वात्मकायनमः सर्वांगंपूजयामिनमः ॥ अथगौर्य्याः ॥ शिवायैनमः शिरःपूजया
मि पृथुवेण्यैनमः वेणींपूजयामि सीमंतराजितायैनमः सीमंतपूजयामि कुंकुमभालायैनमः भालपूजयामि
सोमसूर्याग्निलोचनायैनमः लोचनानिपूजयामि श्रुतिश्रोत्रायैनमः श्रोत्राणिपूजयामि गंधप्रियायैनमः घ्राणंपूज
यामि सुभगकपोलायैनमः कपोलौपूजयामि कोमलदंतायैनमः दंतान्पूजयामि विद्याजिव्हायैनमः जिव्हां
जयामि विंवोष्ठयैनमः उोष्ठौपूजयामि घृतकंठायैनमः कंठपूजयामि पृथुलकुचायैनमः कुचौपूजयामि विश्वगर्भा
यैनमः उदरपूजयामि शुभकट्यैनमः कटिंपूजयामि दिव्योरुदेशायैनमः ऊरूपूजयामि वृत्तजघायैनमः जंघा
युगंपूजयामि लक्ष्मीसेवितपादायैनमः पादौपूजयामि महेश्वरप्रियायैनमः नखान्पूजयामि शोभन
विग्रहायैनमः सर्वांगपूजयामि अंगपूजांसमाप्यैवडोरकंतुविसर्जयेत् प्रत्येकंग्रंथिपुरवच्छैःस्वच्छैर्बिल्वदलादि
भिः प्रथमग्रंथिमारभ्य नमःसोमेतिमंत्रतः यथाक्रमेणसंपूज्यततोधार्य्यंतुडोरकं तत्रोपचाराः सर्वेपि तेनमं
त्रेणसादर व्रतिभिर्यत्नतःकार्य्यंकुंकुमाक्तंतुडोरकं ततःपंचदशप्रस्थगोधूमास्तंडुलाश्चवाउपायनार्थमानेयाः
शुद्धाःकीटाद्यदूषिताः यद्वापंचदशाज्याक्तागोधूमाधूपमंडकाः ततःशिवैकशरणाःशैवाःशिवव्रतप्रियाःपूजनीयाः
प्रयत्नेनगंधपुष्पादिभिः क्रमात् ततःसवस्त्रंकलशंशिवयोःप्रतिमाद्वय शैवायदेयंयत्नेनसुवर्णपलसंयुतं आ
दावुपायनदत्त्वादेवमेतदतःपरं उपायनस्यमंत्रोपिवक्ष्यतेत्रविशेषतः उमेशःप्रतिगृह्णातिउमेशोवैददातिच उ
मेशस्तारकोभाभ्यामुमेशायनमोनमः अमुंमंत्रसमुच्चार्य्यदत्त्वोपायनमेवच तथाशैवाःप्रयत्नेन भोजनीया

विशेषतः सुवासिन्योपियत्नेनभोजनीयाःशिवप्रियाः शैवानेवंभोजयित्वास्वयंभुंजीतवाग्यतः अतिथीन
पिसंतर्प्यद्वारदेशस्थितान्नृप एवंप्रयत्नतःकार्य्यंप्रतिवत्सरमादरात् नियमेनैवविधिवद्दुक्करीत्यायथाक्रमं ब्रा
ह्मणाद्यैरिदंकार्य्यंव्रतंसंयतमानसैः सर्वाभीष्टप्रदंपुण्यंव्रतमेतच्छिवात्मकं प्राप्तेतुषोडशेवर्षेकार्य्यमुद्यापनंनृप
उद्यापनविधानंचवक्ष्येशृणुयथाक्रमं पौर्णमास्यांभाद्रपद्यांव्रतोद्यापनमादरात् कर्तव्यमितियत्नेनद्रव्यंसंपा
द्यसादरं हैमीकार्य्यासार्द्धपष्टी प्रतिमाचपलोन्मिता तदर्धेनाथवाकार्य्यातदर्धार्धेनवानृप रजतेनाथवाकार्य्या
यथोक्तपलमानतः संपादनीयाःकुंभाश्च हैमाः पंचदशोत्तमाः अथवाराजताःकार्य्या यद्वाताम्रमयानृप भाद्र
शुक्लचतुर्दश्यांशैवाब्राह्मणपुंगवाः निमंत्रणीयायत्नेन प्रातःसप्तदशोत्तमाः ततोगृहंवितानाद्यैरलंकृत्यप्रयत्नतः
स्वस्तिकाद्यैरलंकुर्य्यात्तुशिवस्थानमघापहं ततःसाहंप्रयत्नेनतस्मिन्शंकरमंदिरे पूजनीयाःप्रयत्नेनशिवयोः
प्रतिमाःशुभाः पूर्वोक्तेनविधानेनमंत्रैस्तैरेवसाधनैः रात्रौजागरणंकार्य्यंसोपवासंप्रयत्नतः ऋत्विग्भिः सह
सोत्साहंपयोमात्राशनेनवा रात्रौशिवकथाःश्राव्याःश्रोतव्यायत्नतोनृप कर्त्तव्यायत्नतोरात्रौपूजायामचतु
ष्टये ततःस्थेयंप्रयत्नेनस्नात्वाशंकरसन्निधौ पूजनीयाःप्रयत्नेनशिवोदेवःशिवापतिः चतुरस्त्रंततःकार्य्यंकु
ण्डमष्टदलान्वितं कंठदघ्नप्रांतदेशेहस्तद्वयसमन्वितं तत्रवह्निंप्रतिष्ठाप्यविधिवद्गृह्यमार्गतः पंचविंशतिसा
हस्त्रंहोमःसोमेतिमंत्रतः ततःप्रयत्नतोराजन्नमःपूर्वंसतारकं ततःपूर्णाहुतिंहुत्वाशैवान्संपूजयेत्ततः बिल्वप
त्रभस्मनाचपूजनीयायथाक्रमं एकैकस्मैप्रदातव्यंशिवयोःप्रतिमाद्वयं कलशोपिप्रदातव्यस्ततोवस्त्रद्वयान्वि
तः आचार्य्यायप्रदातव्यंसुवर्णशतमादरात् ततोयत्नेनशैवेंद्राभोजनीयाधृतव्रतैः सुवासिन्योपिशैवानांभो
जनीयाःप्रयत्नतः ततोदेयास्वशक्त्याचभोजितेभ्यश्चदक्षिणा ततश्चस्वकृतंकर्मशिवायविनिवेदयेत् उद्या

प्रमंकृतशंभोमयैतदधुनाप्रभो इदंसंपूर्णतामेतुत्वत्प्रसान्महेश्वर मन्त्रहीनंभक्तिहीनंशक्तिहीनमुमापते विधिही
नंकृतंकर्मत्वत्प्रसादात्फलप्रद प्रायश्चित्तंवैदिकानांव्यंगानामपिकर्मणा शिवस्मरणमेवेतिश्रुतिरप्यस्तिशांकरी
अतःकृतमिदंश्रौतंकर्मव्यगमपिप्रभो सांगंभवतुविश्वेशतवैवस्मरणात्प्रभो इतिसंप्रार्थ्यदेवेशंसावसर्वसुरो
त्तमं भुंजीयाद्बधुभिःसार्द्धंसमौनतिलवर्जितं एवंयःकुरुतेसम्यगुमामाहेश्वरंव्रतं ससर्वभोगान्भुक्तातेमोक्षप्राप्नोति
सर्वथा ॥ राजोवाच गौत्तमैतद्व्रतचीर्णंपुराकेनवदस्वमेकस्यकामसमभूत्सिद्धिर्व्रतस्यास्यप्रभावतः ॥ गौत्तमोवाच
पुराशैववरोराजन्दुर्वासाख्योमुनीश्वरः कदाचित्संचरल्लोकान्ददर्शकमलापतिं ततःसमागतंदृष्ट्वादुर्वासा
मुनिरंजतः बिल्वमालांददौतस्मैशंकरेणसमर्पितां गृहीत्वाबिल्वमालांतांहरिर्गमनसंभ्रमात् शिरसापूजनी
यांतांगरुडांशोविनिःक्षिपत् ततस्तांतादृशींवीक्ष्यदुर्वासाःक्रोधमूर्छितः हरिंप्रशापबहुधाधिग्धिग्जन्मेतिसंवद
न् मयाशिवार्पितामालादत्तातुभ्यंघनघापहा साकथंगरुडस्कंधेविनिःक्षिप्तातुयाहरे गर्वस्यमूलभूतेयंतवल
क्ष्मीर्विनश्यति लक्ष्मीःपततुदुग्धाब्धौगरुडोपिविनश्यतु वैकुंठस्याधिकारोपितवयातुमदाज्ञया निस्तेजस्को
वनेःपृष्ठेसंचरायावधिध्रुवं इत्युक्तासतुदुर्वासाययौलोकांतरंनृप ततःपपातदुग्धाब्धौलक्ष्मीर्विष्णोर्मनोहरा त
तोतिदुःखितोविष्णुः प्रलपन्वनमास्थितः उवासविपिनेघोरेस्वकृतंकर्मसंस्मरन् ततःकदाचिद्भूपालमयातत्र
गतंपुरा तदामामागतंदृष्ट्वापूजयामासमांहरिः ततोश्रुपूर्णनयनःकृतांजलिपुटोहरिः जगादपूर्ववृत्तांतंस्वल
क्ष्मीनाशकारणं ततोतिक्रांतचित्तायविष्णवेव्रतमुत्तम तत्पृष्ठेनमयाभूपकथितंसादरंभया ततोविलंबविधि
वच्चकारश्रद्धयान्वितं ततःप्रसन्नोभगवानहरयेपार्वतीपतिः ददौलक्ष्मींसगरुडांकरुणानिधिरव्यय. इदमेव
व्रतंचीर्णमिंद्रेणाप्यमितौजसा तेनप्राप्तस्ततःस्वर्गं स्वर्गभोगाश्चशाश्वता ब्रह्मणापिव्रतंचीर्णमिदमेवपुरान्नृप

नष्टावागीश्वरीतेनसंप्राप्तादुर्लभापिसा मुनिभिश्चपुराचीर्णंव्रतमेतन्मुमुक्षुभिः अस्यव्रतस्याचरणान्मुक्तिःप्राप्तामुनी
श्वरैः इदंव्रतंप्रयत्नेनयःकरिष्यतिभक्तितः तस्यसौभाग्यसंपत्तिर्भविष्यत्येवसर्वथा यस्यास्त्यैश्वर्यभोगेच्छामोक्षे
च्छाप्यनपायिनीयस्यसर्वाधिपत्येच्छातेनकार्यमिदंव्रतं वैधुतेनापिविप्रेणमोक्षार्जमतियत्नतः कृतमेतद्व्रतंपूर्वंसर्वा
भीष्टप्रदायकं शारदोनामविप्रोभूद्वेदवेदांगपारगः मोक्षार्थमतियत्नेनतेनचीर्णमिदंव्रतं मुक्तिःप्राप्ताचतेनापिव्रत
स्यास्यप्रभावतः यंयंकामंसमुद्दिश्यव्रतमेतदनुत्तमं यःकरिष्यतिसःकामंतंतमाप्नोतिनिश्चितं इदंव्रतंमहेशेनसमाख्या
तमुमांप्रति कुमारायसमाख्यातमुमयैतद्व्रतंनृप नंदिकेशायकथितंकुमारेणव्रतंततः नंदिकेशेनकथितंदुर्वाससमुनये
ततःदुर्वाससापिकाथितमगस्त्यायव्रतोत्तमं व्रतंतत्सागरेमह्यमगस्त्येनमहात्मना मयातिखिन्नचित्तायविष्णवेक
थितंपुरा तेनचीर्णंव्रतमिदंसर्वसौभाग्यदायकं ब्रह्मणेकथितंपूर्वमिदमेवव्रतंमया तेनचीर्णव्रतंसांगवाणीप्राप्त्यर्थ
मादरात् सूर्यायेंद्रायचंद्रायमयैतत्कथितंव्रतं तैस्तुचीर्णंव्रतमिदंसर्वसौभाग्यदायकं कश्यपादिमुनिभ्यश्चकथि
तंव्रतमुत्तमं तैश्चचीर्णंव्रतंसम्यक्भुक्तिमुक्तिफलप्रदं भूपव्रतानिसंत्येवबहूनिविविधानिच तथाप्येतद्व्रतसमंव्रतं
नास्त्येवसर्वथा भवानपिकुरुप्रीत्याभूपालव्रतमुत्तमं इदंव्रतंशिवक्षेत्रेयःकरिष्यतिभक्तितः तस्यसर्वार्थसं
सिद्धिर्भविष्यतिनसंशयः ॥ ईश्वरउवाच ॥ इत्येतद्वचनंश्रुत्वासराजाप्रीतमानसः सपुत्रःपूजयामासगौत
मंशैवपुंगवं ततोधर्मंव्रतंचेदमुपदिश्यसगौतमः पुनःसंपूजितोराज्ञास्वाश्रमंप्रतिसंययौ राजासपुत्रस्तद्वाक्या
दिदंमाहेश्वराभिधं व्रतंचकारविधिनायथाक्रममतंद्रितः येमामनन्यहृदयाःसकलामरेशंसंपूजयंतिसततंधृतभ
स्मपूताःतेमामुपेत्यविगताखिलदुःखबंधामद्रूपमेत्यसुखिनोनिवसंतिनित्यम्

इतिशिवरहस्येशिवप्रोक्तंभाद्रपदपौर्णमास्यामुमामाहेश्वरंव्रतंसोद्यापनम् ॥

अत्रैवलोकपालानांपूजाव्रतं तदुक्तं निर्णयामृते ब्रह्मपुराणे पूर्वाभाद्रपदायोगेपौर्णमास्यांपितामहः शक्राग्नियमरक्षोंभोवायुवित्तेशशंकरान् लोकपालांस्तुरक्षार्थंत्रैलोकस्याभिषेचयत् पृथिव्याधारणार्थायतथानंतंचभोगिनं तस्मात्तत्रलिखेत्पद्ममष्टपत्रंसकर्णिकं कर्णिकायांलिखेत्तत्रसानंतंकमलोद्भवं प्राच्यादिषुचपत्रेषुवाह्येवाधांश्चसायुधान् ततःक्रमेणतेनैवसंस्थाप्यकलशान्शुभान् पश्चात्संपूजनीयाश्चभक्त्याब्रह्मादयःसुराइति अथभाद्रशुक्लचतुर्दश्यां हेमाद्रौभविष्योक्तकदलीव्रतं पुण्येमासिप्रकुर्वीतपूर्णिमायांशुभेदिने इत्युक्त्यापौर्णिमायाकार्य्यं उमामाहेश्वरपूजायाकथायामभिधानाच्च यत्प्रसिद्धंसमाख्यातंकदलीव्रतमुत्तमं तत्तेहंसंप्रवक्ष्यामिलोकानुग्रहकारकं नाकपृष्ठेःपुरादेवैर्यक्षगंधर्वकिन्नरैः अप्सरामरकन्याभिर्नागकन्याभिरर्चिता संसारासारतांज्ञात्वाकदलीनंदनस्थिता शुक्लपक्षेचतुर्दश्यामासिभाद्रपदेनृप देयमर्घ्यंवरस्त्रीभिःफलैर्नानाविधैस्तथा विरूढैःसप्तधान्यैश्चदीपालीरक्तचंदनैः दधिदूर्वाक्षतैर्वस्त्रैर्नैवेद्यैर्घृतपाचितैः जातीफलैः पूगफलैः पूजयेद्गतमत्सरः तस्मिन्नहनिदातव्यंस्त्रीभिरन्याभिरेवच मंत्रेणानेनचैवार्घ्यंतंशृणुष्वनराधिप चिंतयेत्कदलींनित्यं कंदलैः कामदीपितैःशरीरारोग्यलावण्यंदेहिदेविनमोस्तुते एवंयः पूजयेद्रंभांपुरुषोभक्तिमान्नृप नारीवाग्निपकाशीत्रीन्मासांश्चतुरोपिवातस्मिन्कालेनहिभवेत्काचिन्नारीकुलाटिनीदुर्गतादुर्भगावंध्यगास्वैरिणीपापचारिणी भवेत्सौभाग्यसौख्याढ्यापुत्रपौत्रश्रियायुता आयुष्मतीजीववत्साजीवेद्वर्षशतंभुवि इतिहेमाद्रौभविष्येकदलीव्रतम् ॥

अत्रगुर्जराचारप्राप्तं कार्तिक्यांमाघ्यांवैशाख्यांचकदली व्रतं तत्र कदली व्रते पूजनं आगच्छकदलीदेविसौभाग्यफलदायनी रूपदेहियशोदेहि जयंदेहिसुनिश्चितं आगच्छागच्छवरदे शंकरेणमहेश्वरि

करिष्यमाणांपूजांमिगृहाणानुग्रहंकुरु ॥ आवाहनम् १ कार्तस्वरमयंदिव्यंनानामणिगणान्वितं अधितिष्ठमहादे
विशिवेनसहपार्वति ॥ आसनम् ॥ २ ॥ दूर्वाक्षतादिभिर्युक्तंस्वर्णपात्रेस्थितशुभं पाद्यार्थंकल्पितंभक्त्यागृहाणपर
मेश्वरि ॥ पाद्यम् ॥ ३ ॥ अर्घ्यपात्रस्थितंतोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणदेवित्वंभक्त्यादत्तंशिवप्रिये ॥
अर्घ्यम् ॥४॥ कर्पूरोशीरसुरभिशीतलंविमलंजलं गंगायास्तुसमानीतंगृहाणाचमनीयकं ॥ आचमनम् ॥५॥गंगा
दिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतंस्नानार्थंतेमयातोयंगृहाणपरमेश्वरि॥स्नानम् ॥६॥यथारंभेविवृद्धिस्तेशाखादीनां
सदाभवेत् तथावर्द्धयमांदेविसेचनात्पार्वतिप्रिये ॥ इतिसेचनमंत्रः ॥ ७ ॥ वस्त्रंशुभ्रमिदंशुभ्रंकुंकुमारक्तशोभनं
गृहाणाच्छादनंदेवितथावर्द्धयमांसदा ॥ वस्त्रम् ॥ ८ ॥ आचमनीयं पूर्वोक्तमंत्रेण ॥ श्रीखंडचंदनंदिव्यंघनसारंम
नोहरं विलेपनंगृहाणेदंरुद्राणिप्रियवल्लभे ॥ चंदनम् ॥९॥ मालतीचंपकादीनिशतपत्राधिकानिच सुगंधीनि
गृहाणत्वंपूजार्थंसुमनांसिनः॥पुष्पाणि ॥ १० ॥ अगुरुंगुग्गुलंधूपंदशांगंसुमनोहरं गृहाणदेविवरदेघ्राणतृप्ति
करंपरम् ॥ धूपम् ॥११॥ चक्षुदंसर्वलोकानांतिमिरस्यानिवारणं आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि दीपं॥
१२ ॥ नानापक्वान्नसंयुक्तं रसैःषड्भिःसमन्वितं तेनैवेद्यंविधिभक्त्याकल्पितंत्वंगृहाणमे ॥नैवेद्यम् ॥ १३ ॥ क
र्पूरैलालवंगादिनागवल्लीदलान्वितं पूगीफलसमायुक्तंतांबूलंप्रतिगृह्यताम् ॥ तांबूलम् १४ इदंफलंमयादेविस्था
पितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥फलम् ॥१५॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोःअनं
तपुण्यफलदमतः शांतिंप्रयच्छमे ॥ हिरण्यम् ॥ १६ ॥ त्वमिंद्राणीप्रियानित्यंपार्वत्याश्चातिवल्लभा सतीनांका
मदापूज्याकामान्मेपरिपूरय ॥ नीराजनम् ॥ १७॥ आश्रयोदेवपत्नीनांपूजितात्वंश्रियास्वयं सौभाग्यारोग्यमा
युष्यंदेहिरंभेनमोस्तुते ॥ १८ ॥ प्रार्थना ॥ कदल्यैकमलायैन्यैमेधायैतेनमोनमः रंभायैभूतिसारायैसर्वसौख्य

प्रदेनमः ॥ नमस्कारः ॥ १९ ॥ यथायथातेप्रसवोवर्द्धतेकदलेध्रुवंनथामनोरथानामेप्रभावोवर्द्धतात्स्वयम् ॥ इति
कदलीदानमंत्रः ॥ २० ॥ ॥ अथकथा युधिष्ठिरउवाच कृष्णकृष्णमहाबाहोसर्ववि
द्याविशारद अनाथनाथविश्वात्मन्दीनदैन्यनिकृतन त्वमस्माकंपुरोबधु स्त्वमस्माकंपर सखा त्वयाभिरक्षि
तानित्यं विचरामोत्रनिर्भयाः किंचित्पृच्छामिदेवेशवदस्वकृपयाविभो यद्गुह्यंसर्वधर्मेषुकृतेयास्मिन्महत्फलं सौ
भाग्यारोग्यदंपुण्यंधनधान्यविवृद्धिद अन्नाच्छादनपुत्रादिवर्द्धनंश्रीनिकेतनं तन्ममाचक्ष्वभगवन्लोकानामुपका
रक ॥ श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमव्रत यत्कृत्वासर्वदुःखेभ्योनारीमुच्येतसंकटात् वस्त्रा
न्नपानविच्छित्तिर्नभवेत्तुकदाचन पुरामामेत्यकौंतेयरुक्मिणीप्राणवल्लभा प्रणिपत्याभवेद्दीनासर्वकामान्वयेशुभा
सौभाग्यंमेकथंदेवभवेज्जन्मनिजन्मनि सपत्नीनांश्रियंवीक्ष्यस्पृहामेजायतेप्रभो इतिप्रियायावचनंश्रुत्वाहंतांस
मब्रुवं रंभाव्रतंकुरुष्वाशुसौभाग्यप्राप्तयेशुभं कृतेयस्मिन्व्रतेदेविपरंसौभाग्यमाप्स्यसि इतिश्रुत्वावचोदेवीरुक्मि
णीमामभाषत रंभाव्रतंभवेत्कीदृक् कोविधिःकिंचपूजनं केनचादौपुराचीर्णमस्यैकेनप्रकाशितं रुक्मिणीभाषितं
श्रुत्वापुनरेवाहमब्रुवं रंभाव्रतमिदंवक्ष्येशृणुदेवियथोदितं गोचर्ममात्रंसंलिप्यसर्वतोभद्रमंडल लिखेत्तत्रतथावर्णै
र्नीलपीतसितासितैःब्रह्माद्यादेवतास्तत्रस्थापयित्वाप्रपूजयेत् अथवास्वस्तिकंकुर्य्यात्पद्ममष्टदलंतुवैततः साग्रांस
पर्णांहिसस्मितांवसुशोभनां समूलांकदलींस्थाप्यपूजयेत्तांयथाविधिउत्तमांतांसमानीयसेचयेत्तांसमाहिता यथारं
भेविवृद्धिस्तेशाखादीनांसदाभवेत्तथावर्द्धयमांदेविसेचनात्पार्वतीप्रियेयथायथातेप्रसवोवर्द्धतेकदलीनवःतथामनो
रथानामेप्रसवोभवतुस्वयं एवंसपूज्यविधिवद्भक्तियुक्तेनचेतसारात्रौजागरणंकुर्य्याद्गीतवादित्रनिःस्वनैःएवंयाकुरु
तेनारी व्रतानामुत्तमंव्रतं भुक्त्वातुविविधान्भोगान्सौभाग्यंविंदेतध्रुवं एवमेनत्प्रकर्त्तव्यंकदलीव्रतमुत्तमं तस्मात्कुरु

विधानेनयथोक्तफलमाप्स्यसि । इतिश्रुत्वाविधानेनसाचकारव्रतोत्तमं अवापसकलंकामं मनसायदभीप्सितं
अन्यच्चशृणुराजेंद्रयदाश्चर्यकरंनृणांद्यूतेपराजितायूयंकृष्णानीतासभांप्रतिदुःशासनेनदुष्टेनद्रौपदीमुक्तमूर्द्धजा आकृ
ष्यमाणेवस्त्रेतुचित्तेमामस्मरत्तदा तूर्णंतत्रगतोराजन्द्रौपद्यास्त्राणनायवै । अदृश्यमानःकृष्णायैव्रतंसमुपातिष्ठ
वान् तदाकर्तुमशक्येतुव्रतेस्मिन्राजसत्तम रुक्मिण्याचरितंपूर्वंयदेतद्व्रतमुत्तमं । तस्यपुण्यफलंदत्तंकृष्णायै
राजसत्तम तत्कालमेववस्त्राणांसमृद्धिरभवत्पुरा दुःशासनेनदुष्टेनआक्षिप्तेष्वंशुकेषुच । प्रादुर्भूतानिवस्त्राणि
नानावर्णानिभारत । खिन्नोदुःशासनःपापो विरराम्शुकग्रहात तावद्बभूवुर्वस्त्राणिकदलीगर्भवन्नृप । इत्थंव्रत
प्रभावोयंगुह्योपिकथितोमया कारयस्वविधानेनपूर्णकामोभविष्यसि ॥ अथोद्यापनम्
॥ युधिष्ठिरउवाच ॥ कस्मिन्मासेतिथौकस्मिन्नाचरेद्व्रतमुत्तमं कथंभावेनकिंकार्यंतन्ममाचक्ष्वकेशव
॥ श्रीकृष्णउवाच ॥ कार्त्तिकेमाघमासेवावैशाखेत्वितरेतुवा पुण्येमासिप्रकुर्वीतपौर्णमास्यांसभेदिने
तिथिक्षयंवर्जयेतशुभायांसुसमाहितः यस्मिन्देशेनलभ्येतकदलीराजसत्तम सुवर्णेनशुभांतत्रकृत्वापूजांस
माचरेत् यदिलभ्येतुकदलीमारोप्यादौप्रपूजयेत् यावन्नस्यात्फलंतावत्सिचेन्नीरेणभूपते फलोद्भूतक्रमेतस्याः
पश्चाद्विप्रान्समाकयेत् प्रभातेविमलेस्नात्वानद्यादौविमलेजले अहतेवाससीधृत्वाकृत्वासंध्यादिकर्मच अरत्नि
मात्रंकृत्वातुस्थंडिलंवाग्यतःशुचिः अग्निंसंस्थाप्यविधिवत्तत्रहोमंसमाचरेत् शतमष्टोत्तरंविद्वान्तिलाज्याहु
तिभिस्तथा एकाग्रचित्तःसंहृष्टः कर्तव्याहुतीभिः पृथक् ब्रह्मादिभ्योदेवताभ्योनाममंत्रैःपृथक्पृथक् आ
चार्यंचसपत्नीकं वस्त्राद्यैःपूजयेत्ततः धेनुंपयस्विनींदद्यात्सवत्सांरत्नभूषितां स्वर्णशृंगींरौप्यखुरांकांस्यदोहनि
कायुतां ताम्रपृष्ठींरत्नपुच्छांवस्त्रघंटाविभूषितां अभ्यर्च्यवेदविदुषेआचार्यायनिवेदयेत् पादुकोपानहौछत्रम

लंकारानेकशः यथाशक्तिप्रदेयानि व्रतस्यपरिपूर्त्तये चतुर्विंशद्वाडवानांयुग्मान्याहूयसंयतः वस्त्रालंकारगंधा द्यैः पूजयित्वातुभोजयेत् वायनानितुदेयानिवंशपात्रैस्तुशक्तितः दद्याद्दक्षिणांसम्यग्यथाविभवसारतः अन्येभ्योपियथाशक्तिदद्यादन्नसुसंस्कृतं क्षमापयित्वातान्देवीव्रतस्यपरिपूर्त्तये वाचयित्वायथान्यायमाच्छिद्रंच क्षमापयेत् दीनानाथान्प्रतर्प्याशुस्वयंभुंजीतवाग्यतः एवंयःकुरुतेदेविकदलीव्रतमुत्तमं भुक्त्वातुविविधान्भोगान्सौभाग्यंविंदतेपरं तस्मात्कुरुविधानेनयल्लोकफलमाप्स्यसि एवंनारीनरोवापियः कुर्यात्कदलीव्रतं सर्वान्कामानवाप्नोतिस्वर्गलोकेमहीयते इति भविष्योत्तरोक्तंकदलीव्रतं एतच्चपौर्णमास्याविहितमपिहेमाद्रिमतेन चतुर्दश्यांकार्य्यम्

इतिभाद्रशुक्लचतुर्दश्यांकदलीव्रतंभविष्योत्तरोक्तमिदम्

अस्यांभाद्रपौर्णिमायांसुवासिन्योनार्योभर्तुरायुरभिवृद्धयेसावित्रीव्रतंकुर्वीरन् वीरमित्रोदयेभविष्ये ॥ युधिष्ठिर उवाच स्मरामिचहृषीकेशयच्चोक्तंभवतामम तत्सावित्रीव्रतंब्रूहिप्रसादसुमुखोभव ॥ श्रीकृष्णउवाच कथयामि कुलस्त्रीणांमहिम्नोवर्द्धनपरं यथाचीर्णंतुसावित्र्याव्रतंवैराजकन्यया आसीन्मद्रेषुधर्मात्मासर्वभूतहितेरतः पार्थिवोश्वपतिर्नामपौरजानपदप्रियः सर्वेश्वरोनयत्यश्वसत्यवाक्संयतेंद्रियः समभार्य्योव्रतमिदंचकारापत्यकाम्यया सावित्रीतिप्रसिद्धंयत्सर्वकामप्रदायकं तस्यतुष्टातुसादेवीसावित्रीब्रह्मणःप्रिया उवाचदुहिताह्येकातवराजन्भविष्यति तस्याःप्रसादात्तुष्टामेतवसर्वंभविष्यति मन्नाम्नासाचकर्तव्यामहाकीर्तिमतीतुसा भविष्यतिमहाराजनशोकं कर्त्तुमर्हसि एवमुक्त्वातुसावित्रीजगामादर्शनंतदा कालेनगच्छताजातादुहितादेवरूपिणी सावित्र्याप्रीतयादत्तासावित्र्याजपतयातथा आदिष्टाचैवसावित्र्यासावित्रीसदृशीयतः सावित्रीत्येवनामास्याश्चक्रुर्विप्रास्तथापिता साश्रीव

ह्यिग्रहवतीव्यवर्द्धतपितुर्गेहे कालेवहुतिथेजाते यौवनस्थावभूवसा तांसुमध्यांतुसुश्रोणींप्रतिमांकांचनीमिव प्रा
प्तेयंदेवकन्येतिदृष्ट्वातांमेनिरेजनाः सातुपद्मपलाशाक्षीप्रज्वलंतीवतेजसा चचारचापिसावित्रीव्रतंयद्भृगुणोदि
त अथोपोष्यशिरः स्नात्वा सम्यक्संपूज्यदेवताः हुत्वाग्निविधिवद्विप्रान्वाचयित्वेंदुपर्वणि तेभ्य सुमनसःसिद्धाः
प्रतिगृह्यनृपात्मजा सखीपरिवृताभ्येत्य देवीश्रीरिवरूपिणी साभिवाद्यपितुः पादौविनीताचारुहासिनी कृ
तांजलिर्वरारोहा नृपतेः पार्श्वतः स्थिता तांदृष्ट्वायौवनप्राप्तांस्वांसुतांदेवरूपिणी उवाचराजापत्यर्थंसंमंत्र्यस
हमंत्रिभिः पुत्रिप्रदानकालोयनचकश्चिद्वृणोतिमां विचारयन्नपश्यामिवरंतुल्यमिहात्मनः तथापिदेयासिमयादो
षः स्यादन्यथामम पठ्यमानंमयापुत्रिधर्मशास्त्रेषुसश्रुतं पितुर्गेहेतुयाकन्या रजःपश्यत्यसंस्कृता ब्रह्महत्या
पितुस्तस्यसाकन्यावृषलीस्मृता अतोर्थंप्रेषयामित्वांकुरुपुत्रिस्वयंवरं वृद्धैरमात्यैःसहिता शीघ्रगच्छस्वमाचि
रं वेदादीनांयथावाच्योनभवेयतथाकुरु एवमस्त्वितिसावित्रीप्रोक्ताशीघ्रंविनिर्ययौ स्यंदनेनमहार्हेणमंत्रिभिः
परिवारिता तपोवनानिरम्याणिराजर्षीणांजगामसा मान्यानांतत्रवृद्धानांकृत्वापादाभिवंदनं ततोवभ्रामतीर्थानि
पर्वतानिवनानिच देशांश्चविविधान्रम्यानाश्रमान्सुमनोहरान् एकस्मिन्साश्रमपदेकृतकृत्यावभूवह . व
रयित्वावरसातुआजगामस्वमालय सावित्रीमंत्रिसहितापरितुष्टेनचेतसा तत्रापश्यतदेवर्षिनारदंपितुरंतिके आ
सीनमासनेविप्रंप्रणम्यास्मितभाषिणी कथयामासतत्सर्वंप्रेम्णारण्यगतासती ॥ सावित्र्युवाच आसीच्छाल्वेषुध
र्मात्मा क्षत्रियः पृथिवीपतिः द्युमत्सेनइतिख्यातोदैवादंधोवभूवसः तस्यचाप्यभवद्भार्यारुक्मिणीरूपशालिनी
तस्यप्रतिहतराज्यवैरिभिर्दैवयोगतः सावालापत्ययासार्द्धंभार्ययाप्रस्थितोवनं सचास्यवनसंवृद्धः पुत्रःपरम
धार्मिकः सत्यवान्नामरूपाढ्योभर्तेतिमनसाकृतः ॥ नारदउवाच अहोकष्टमहोकष्टंसावित्रिकिमिदंकृतं वृतस्तेवा

लभावायतगुणवान्सत्यवान्नृपः सत्यवदत्यसौराजा सत्यवाकेनसः संमृतः नित्यमश्वाः प्रियास्तस्य करोत्यश्वा
न्समृण्मयान् चित्रेपिचलिखत्यश्वान्चित्राश्वस्तेनसोच्यते किंवर्यौरंतिदेवश्च शक्त्यादानगुणैःसमः ब्रह्मण्यःस
त्यवाग्दक्षः शिविरौशीनरोयथा ययातिरिवचोदारः सोमवत्प्रियदर्शनः अश्विन्याविवरूपेणद्युमत्सेनसुतोव
ली एकोदोपोस्तिनान्योस्तिअद्यप्रभृतिसत्यवान् संवत्सरेणक्षीणायुर्देहत्यागंकरिष्यति ॥ श्रीकृष्णउवाच ना
रदादेतदाकर्ण्यदुहितामाहपार्थिवः पुत्रिसावित्रिगच्छान्यंवरंवरयसत्पतिं संवत्सरेणसोल्पायुर्देहत्यागंकरिष्य
ति ॥ सावित्र्युवाच सकृज्जल्पंतिराजानः सकृज्जल्पंतिपण्डिताः सकृत्प्रदीयतेकन्यात्रीण्येतानिसकृत्सकृत् दी
र्घायुर्वापिस्वल्पायु र्निर्गुणः सगुणोपिवा सकृद्वृतोमयाभर्तानद्वितीयंवृणोम्यहं मनसानिश्चयंकृत्वाततोवाचाभि
धीयते क्रियतेकर्मणापश्चा देपधर्मःसनातनः ॥ नारदउवाच यद्येतदिष्टंदुहितुस्ततः शीघ्रंविधीयतां अविघ्नम
स्तुसावित्र्यादिष्टंभद्रंकरिष्यति ॥ श्रीकृष्णउवाच ॥ एवमुक्त्वासमुत्पत्यनारदस्त्रिदिवंययौ उत्पाद्यदुःखमतुलं तस्यरा
ज्ञोयुधिष्ठिर राजापिदुःखसंविग्न श्चिरंध्यानपरोभवत् अहोतिदुःखमुत्पन्नमपारंमादृशात्मना एतदुःखम
होदृष्ट्वावरमेवानपत्यता सत्यमुक्तपुराणज्ञैः कन्यादुःखैकभाजनं दैव्यायदुक्तंतत्सर्वं व्यलीकंप्रतिभातिमे
एवंसंशोच्यबहुधादधारात्मानमात्मना देवींसंस्मृत्यसावित्रीं मयादत्तोवरःपुरा राजास्वदुहितुःसर्वंवैवाहिक
मथाकरोत् स्वयंगत्वातुसामीप्यवनमुनिनिषेवितंशुभेमुहूर्तेपार्श्वस्थैर्ब्राह्मणैर्वेदपारगैः समर्पयित्वाकन्यां
तांदत्वादायांश्चपुष्कलान् उवाचेदंमहाभागंसुप्रीतेनांतरात्मना द्युमत्सेनमहाभागशृणुमेपरमंवचः इद
मेदुहितातातवल्लभाजीवितादपि भर्तासमुचितोह्यस्याः सत्यवान्सत्यवल्लभः त्वमप्यस्यासमुचितः
श्वशुरोधर्मवत्सलः अतोपराधाःक्षतव्याबालेयं कार्यबालिशा यदभीष्टचजामातुर्युवयोर्यदभीप्सितं तदास्थेय

मतोस्माकंस्वास्तितस्तुव्रजाम्यहम् ॥ श्रीकृष्णउवाच इत्यभाष्यगतोराजानारदोक्तैर्यथान्वितः सावित्र्यपिचतं
लब्ध्वापतिंसर्वगुणान्वितं मुमुदेनीवतन्वंगीदिवसान्यापुण्यकृत् एवंतत्राश्रमेतेपांतदानिवसतांसतां कालस्त
त्पश्यतांकश्चिदतिचक्रामभारत सावित्र्यास्तुशयानायाश्चितयंत्यादिवानिशं नारदेनयदुक्तंतत्कदाचिन्नाप
सर्पति ततःकालेवहुतिथेव्यतिक्रांतेकदाचन प्रातःकालेहिमर्तव्यंयत्रसत्यवतानघ प्रौष्ठपादेसितपक्षेद्वादश्यां
रजनीमुखे गणयंत्याश्चसावित्र्यानारदोक्तंवचोहृदि चतुर्थेहनिमर्तव्यमितिसाचिंत्यभामिनी व्रतंत्रिरात्रमुद्दिश्यसा
वित्र्याख्यंमहाफलं उपोष्यसंस्थितासाध्वीसावित्रीसापतिव्रता ततस्त्रिरात्रंनिर्वर्त्यस्नात्वासंतर्प्यदेवताः श्वश्रूश्वशु
रयोःपादौववंदेचारुहासिनी अथप्रतस्थेपरशुंगृहीत्वासत्यवान्स्वयं सावित्र्यपिचभर्तारंगच्छंतंपृष्ठतोन्वगात् वार्य
माणापिसाभर्त्रावृद्धाभ्यांचाभिभाषिता उवाचश्वश्रूर्मांभद्रेगच्छकंटकिनंवनं सुकुमारासिकल्याणिवालिसाभूमिपा
त्मजे अपदाहांपदेर्यातुकथंशक्ष्यसितद्वनं उपवासात्त्रयस्तेद्यतस्माद्रक्ष्वसुमध्यमे सावित्र्युवाच नैषधर्मे
वरस्त्रीणांयद्भर्तरिवुभुक्षिते स्वयमेवचभोक्तव्यमित्याहुर्धर्मदर्शिनः अपरंकौतुकंमास्तिवनस्याद्यप्रदर्शने भर्त्रा
सहाद्ययास्यामिमानिषेधंकरिष्यथ भर्त्रासहागमिष्यामिकिंविषादेनमाचिरं ततोज्ञात्वाथसावालाजगामाथप
तिव्रता सावित्र्यनुपदंभर्तुर्वनेतस्मिन्मनोरमे गत्वासौदूरमध्वानंजग्राहाथफलादिकं समित्कुशंचकुसुमंभार्या
यासंवदन्प्रियं काष्ठंकुठारेणतथापाटयामासलीलया अथपाटयतस्तस्यजाताशिरसिवेदना ततःसंवृत्यतत्स
र्वंवटच्छायामुपाश्रितः सत्यवान्वेदनाक्रांतःकिंचिद्घूर्णितमानसः वटशाखामुपाश्रित्यसत्यवान्प्राहगद्गदं सावि
त्रिपश्यशिरसिवेदनामांप्रवाधते नचकिंचित्प्रपश्यामिभ्रमतीवहिमेमनः तवोत्संगेक्षणंतावत्स्वप्तुमिच्छामिसुं
दरि सावित्र्युवाच विश्रमस्वमहावाहोसावित्रीप्राहदुःखिता पश्चादपिगमिष्यामोह्याश्रमंसुसुखोदयं ॥

श्रीकृष्णउवाच ॥ यावदुत्संगंकृत्वाशिरश्चास्तेमहीतले तावत्करालवदनाःशतशोथसहस्रशः आजग्मुर्यम
दूताश्चरौद्राश्चातिभयंकराः नशेकुर्दृष्टिपातात्तेसावित्र्याःस्थातुमंतिके गत्वाचचक्षुस्तत्सर्वंसावित्र्यास्तुयमंद्रुतं
दृष्टिपातेननास्माभिःसाध्यतेसत्यवान्कचित् इत्याकर्ण्ययमःकोपादुत्थायचवरासनात् आरुह्यमहिषंरौद्रंरौद्रः
प्राणहरोबली आजगामत्वरायुक्तोयत्रास्तेसापतिव्रता सावित्र्यपिचसंत्रस्तावीक्ष्यमाणाइतस्ततः सविधानाक
र्थकोयंभर्त्तारंममनेष्यति तावद्ददर्शसाबालापुरुषंकृष्णपिंगलं किरीटिनंपीतवस्त्रंसाक्षात्सूर्यमिवोदितं तमुवाचा
र्थसावित्रीप्रणम्यमधुराक्षरं सावित्र्युवाच कस्त्वंदेवोथवादैत्योमांधर्षयितुमागतः नचाहंकेनचिच्छक्या स्वधर्मा
द्देवरोपितुं द्रष्टुंवापुरुषश्रेष्ठदीप्तांवह्निशिखामिव यमउवाच यमःसंयमनश्चाहंसर्वभूतभयंकरः क्षीणायुरेप
तेभर्त्तासंनिधौतेपतिव्रते नशक्यःकिंकरैर्नेतुंततोहंस्वयमागतः शरीरात्पाशसंयुक्तंपृथग्भूतंमहाद्युतिं अंगुष्ठमा
त्रंपुरुषंनिचकर्षयमोबलात् पुनःप्रयातुमारेभेपंथानंपितृसेवितं सावित्र्यपिवरारोहाकृत्वापादेनसंडलं रक्षार्थे
भर्तृकायस्ययथावनुपदंततः पतिव्रतातदाश्रांताध्यायमानानिजंपतिं तन्चित्ततद्गतप्राणातामुवाचयमस्तदा
यमउवाच निवर्त्यगच्छसावित्रिसदूरंतुमिहागता एषमार्गोविशालाक्षिनकेनाप्यनुगम्यते सावित्र्युवाच नश्रमो
नचमेग्लानिः कदाचिदपिजायते भर्त्तारमनुगच्छंत्यास्तवशिष्टस्यसन्निधौ सतांसंतोगतिर्नान्यास्त्रीणांभर्त्तासदा
गतिः वेदावर्णाश्रमाणांचशिष्याणांचगुरुर्गतिः सर्वेषामेवजंतूनांस्थानमस्तिमहीतले मुक्त्वाभर्त्तारमेकंतुस्त्रीणां
नान्यःसमाश्रयः एभिरन्यैःसमुचितैर्वाक्यैर्धर्मार्थसंयुतैः तोषितोधर्मराजस्तुसावित्रीमिदमब्रवीत्—यमउवाच
तुष्टोस्मितवभद्रेत्वंवरंवरयसुव्रते सावव्रेस्वराज्यंचाविनयावनतासतीचक्षुः प्राप्तिस्तथाराज्यंश्वशुरस्यमहात्मनः
जीवितंचतथाभर्तुर्धर्मसिद्धिंचशाश्वतीं पितुःपुत्रशतंचैवतथाचशतमात्मनः धर्मराजोवरान्दत्वाप्रेषयामासतां

ततः आजगामाथसातन्वीन्यग्रोधविटपंतदा कृत्वोत्संगेशिरस्तस्यपूर्ववन्निषसादच गात्रसंवाहनंचक्रेभर्त्तुःश्रां
तस्यभारत उत्थिताश्चेतनांप्राप्यनीरुक्प्राहेदमादरात् कथंनबोधितोभद्रेकालोतीवगतोमम किंमांवक्ष्यति
मेतातःकिंवामाताचदुःखिता विरुद्धंवाचसंजातंकालोतीवगतोवने विहायमातापितरौकालेनक्कापिमेत्यगात् इति
मत्वाविरुद्धंतेकृतंनेहप्रबोधनं सावित्र्युवाच कथंत्वांबोधयेवीरपीडितंतुशिरोरुजा ममैवात्रविलंबोभूदकार्य्यस्य
तवानघ प्रपश्योत्थायसावित्रीजग्राहशिरसेंधनं समित्कुशादिकंसोथजग्मतुस्तौस्वमाश्रमं ततःपित्रास्वनेत्रा
भ्यांदृष्टौतौपरयामुदा आलिंग्यमूर्ध्न्युपाघ्रायपुत्रमंकेनिवेश्यसः उवाचदिष्ट्यापश्यामिसभार्य्यंत्वांसमागतं वि
लंबकारणंएषःसमाभष्टेयथातथ वेदितार्थोथसंहृष्टःपूजयामासतांसतीं अथवापूर्वजैर्भुक्तंराज्यंनिहतकंटकं द्यु
मत्सेनोर्महाभागइयाजक्रतुभिस्तदा ततोश्वपतिरासाद्यपुत्रानात्मगुणाधिकान् सावित्र्याश्चेष्टितंज्ञात्वाजामा
तुर्जीवितंतथा राज्यप्राप्तिंचाविपुलांपरांमुदमवापसः सावित्र्याख्यानकमिदंसर्वपापप्रणाशनं अवैधव्यप्रदं
स्त्रीणांस्वर्गमोक्षप्रदायकं सुखसौभाग्यदंचाथव्रातर्जप्यमिदंसदा भाद्रपदेपूर्णिमायामाशुचीर्णंव्रतंत्विदं माह
त्म्यमस्यनृपतेःकथितंसकलंमया ॥ युधिष्ठिरउवाच ॥ कीदृशंतद्व्रतंकृष्णसावित्र्यायदनुष्ठितं तस्मिन्भाद्रपदेमासि
विधानंतस्ययशंसमे कादेवताव्रतेतस्मिन् कोमंत्रः किंफलंप्रभो एतदाख्याहिमेनाथ नाहितृष्यामिमाधव
॥ श्रीकृष्णउवाच ॥ श्रूयतांपांडवश्रेष्ठसावित्रीव्रतमादरात् कथयामिकथंचीर्णं तयासम्यग्युधिष्ठिर त्रयोदश्यां
भाद्रपदेदंतधावनपूर्वकं त्रिरात्रंनियमंकुर्य्यादुपवासस्यभक्तितः अशक्तश्चत्रयोदश्यांनक्तंकुर्य्याज्जितेंद्रियः अयाचितं
चतुर्दश्यांपौर्णमास्यामुपोषितः नित्यंस्नात्वामहानद्यांतडागेनिर्झरेपिवा विशेषतःपौर्णमास्यांस्नानंसर्षपमृज्जलैः गृ
हीत्वावालुकांपात्रेप्रस्थमात्रांयुधिष्ठिर अथवाधान्यमादाययवशालितिलादिकं ततोवंशमयेपात्रेवस्त्रयुग्मेनवेष्टिते

सावित्रीं प्रतिमां कृत्वा ब्रह्मणश्चैव शोभनां। सौवर्णीं मृण्मयीं वापि स्वशक्त्या रौप्यनिर्मितां॥ ब्रह्मस्वरूपनिर्माणं विष्णु
धर्मोत्तरे हितं। पद्मपद्मासनस्थश्च ब्रह्मा कार्यश्चतुर्मुखः। पुस्तकं स्वस्तिकं तद्वद्दक्षमालां कमंडलुं। सावित्री तस्य कर्तव्या
वामोत्संगगता तथा। आदित्यवर्णा धर्मज्ञा साक्षसूत्रकरा तथेति॥ रक्तवस्त्रयुगं दद्यात्सावित्र्या ब्रह्मणः सितं। सावि
त्रीं ब्रह्मणा सार्द्धमेवं भक्त्या प्रपूजयेत्। गंधैः पुष्पैश्च नैवेद्यैर्दीपकैर्मोदकैः शुभैः। पूर्णकोशातकैः पक्वैः कूष्मांडैः क
र्कटीफलैः। नारिकेलैः सखर्जूरैः शाखोटैः पनसैस्तथा। धान्याकैर्जीरकैर्हिंग्वैर्गुडेन लवणेन च। विरूढैः सप्तधान्यैश्च
वंशपात्रप्रकल्पितैः। हरिद्रया कंठसूत्रैः शुभैः कुंकुमकेसरैः। अवतारं करोत्येवं सावित्री ब्रह्मणः प्रिया। अवतारमवस्थितां॥
शुभवेष्टितमंत्रेण सावित्रीं ब्राह्मणीं स्वयं। इतरासां तथा स्त्रीणां पुराणोक्तो विधिः स्मृतः। ॐकारपूर्वकैर्देवि वीणापुस्तकधा
रिणी। वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे। रूपं देहि यशो देहि सौभाग्यं देहि देहि मे। एवं संपूज्य विधिवज्जागरणं तत्र
कारयेत्। गीतवाद्यनिर्घोषैर्हृष्टनारीकदंबकैः। पुण्याख्यानैश्च विविधैस्तां रात्रिमतिवाहयेत्। उत्सवेन तन्नयेद्रात्रिं स
विप्राश्च कथानकैः। ततः प्रभातसमये रवावभ्युदिते सति। सावित्रीं ब्राह्मणश्रेष्ठे सनैवेद्यां निवेदयेत्। अथ सावित्रि
कल्पज्ञे सावित्र्याख्यानवाचके। वेदज्ञे तु स्ववृत्तस्थे दरिद्रे वा कुटुंबिनि। मंत्रेणानेन कौंतेय प्रणम्य विधिपूर्वकं। दूर्वा
क्षततिलैर्मिश्रा पूर्वाशाभिमुखा स्थिता। शुचिवस्त्रधरा विप्रे ॐकारस्वस्तिपूर्वकं। सावित्रीयं मया दत्ता सहिरण्या हिर
ण्मयी। ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यतां। एवं दत्वा द्विजेंद्राय सावित्रीं तां युधिष्ठिर। नैवेद्यादि च तत्सर्वं ब्राह्मण
स्य गृहं नयेत्। स्वयं द्विजपदं गच्छेत्स्ववेश्म ततः आविशेत्। गौरिण्यो भोजयेद्भक्त्या हविष्यान्नेन शक्तितः। पुष्पैः कुसुम
सिंदूरैः सतालकैः कंठसूत्रकैः। वासोभिर्भूषणैर्भक्त्या वित्तशाठ्यविवर्जिता। तथा भुक्त्वा हविष्यान्नं ब्राह्मणैर्बहुभिः सह
विसर्जयेत्ततस्तांश्च सावित्री प्रीयतामिति वक्तव्य ब्राह्मणैः सर्वैः स्तुष्टैर्भुक्तैर्भृशं। सावित्री वरदा तुभ्यं सदा भवतु

सुव्रते पुत्रीपुत्रंस्तथाभर्त्तापरमायुरनामयः पुत्रपौत्रैश्चसंवर्द्धवर्द्धतांतवसत्कुलं अतस्त्वसुव्रतंतद्वद्विधिनानेनात्तिश्चितम्॥
इतिश्रीभविष्योत्तरोक्तप्रौष्ठपद्यांसावित्रीव्रतम्॥
अस्यामेववारुणव्रतारंभःकार्यः तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे॥ मार्कंडेयउवाच॥ प्रौष्ठपद्यास्तथारभ्यसंपूर्णे
शशलक्षणे। संपूज्यवरुणदेवंगंधमाल्यानु संपदा जलाशयजलेदेवंध्यात्वासंवत्सरावधौ दद्याद्व्रतावसानेतुजल
धेनुंद्विजातये छत्रोपानद्युगयुतांवासोयुगविभूषितां प्राप्नोतिलोकंवरुणस्यराज्ञस्तत्राप्यकालंसुचिरंमनुष्यः मा
नुष्यमासाद्यभवत्यरोगोरूपान्वितोवित्तयुतस्तथैव॥ इतिभाद्रीकृत्यसमाप्तम्॥
अथास्यांश्रीभागवतपुस्तकदानम् नारदीये प्रौष्ठपद्यांपौर्णमास्यांहेमसिंहासनस्थितं देयंभागवतायेदंद्वि
जायप्रीतिपूर्वकं मदनरत्नेमात्स्ये यत्राधिकृत्यगायत्रींवर्ण्यतेधर्मविस्तरः वृत्रासुरवधोपेतं तद्भागवतमुच्यते
अष्टादशसहस्राणिपुराणंतत्प्रकीर्तितं लिखित्वातच्चयोदद्याद्धेमसिंहसमन्वितं पौर्णमास्यांप्रौष्ठपद्यांसयातिपरमंप
दमिति॥ अस्यामेवकन्यार्कयुक्तायामयुक्तायामपित्रीपितामहान्परान्त्रीनुद्दिश्यश्राद्धंकुर्यात्॥
तदुक्तं हेमाद्रौ मार्कंडेयपुराणे नांदीमुखानांकर्तव्यंकन्याराशिगतेरवौ पौर्णमास्यांतुकर्तव्यंवराहवचनंयथेति
नांदीमुखस्त्वंचोक्तंब्राह्मे पितापितामहश्चैवतथैवप्रपितामहः त्रयोह्यश्रुमुखाश्चैतेपितरः परिकीर्तिताः तेभ्यःपूर्व
तरायेतप्रजावंतःसुखैधिताः तेतुनांदीमुखानांदीसमृद्धिरभिधीयते एतच्चनित्यंप्रत्यब्दंकर्तव्यं प्रत्यब्दंनित्यमुक्त
त्वात् अत्रमातामहाअपिकार्याः पूज्यतेपितरोयत्रतत्रमातामहाअपीतिबौधायनोक्तेः अत्रपितृशब्दस्यजनकपर
त्वेनवहुवचनविरोधनिश्चयांमातुःश्राद्धेतदापत्तिः इष्टापत्तेः अत्रपिंडपातनिषेधापवादः पौर्णमासीपुसर्वासुवर्ज्जयेत्
पिंडपातनं वर्जयित्वाप्रौष्ठपदींयथादर्शस्तथैवसेति॥ निर्णयदीपेगार्ग्योक्तेः अथात्रसपिंडकाभ्युदयिकश्राद्ध

प्रयोगः सचदेशाचारपरिग्रहीतस्वगृह्योक्तविधिन कार्यः ॥ सपिंडकाभ्युदयिकश्राद्धम् ॥

अथप्रयोगः तत्रदक्षिणोत्तरक्रमेणद्वादशस्थानेपुप्रत्येकंआसादितद्रव्यज्वालितप्रदीपदेशमागत्य आचम्य प्राङ्मुखउदङ्मुखोवाउपविशेत् सव्येनसर्वंकर्तव्यंऋजवएवकुशाः तिलकार्येयवाःकर्तव्या ॐअपवित्रःपवित्रोवेत्यादिनापुंडरीकाक्षःपुनात्विति श्राद्धीयवस्तूनिसिंचेत् कुशोदकेन ततःकुशयवजलान्यादाय ॐअद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनांअमुकामुकदेवीनांनांदीमुखीनांतथामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्म्मणांनांदीमुखानांतथामुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्म्मणांनांदीमुखानाममुकगोत्रस्यामुकस्यकर्तव्यामुककर्म्मनिमित्तकमाभ्युदयिकश्राद्धमहंकरिष्ये

इतिसंकल्पंकुर्यात् ॥ ततोगायत्रींदेवताभ्यइतित्रिर्जपेत् ॥

ॐअद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाइदमासनंवोनमः ॥ इतिकुशत्रयरूपंपवित्रमासनं दक्षिणतः आरभ्यउत्सृजेत् एवंयथोत्तरं ॐअद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्म्मणांनांदीमुखानामाभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाइदमासनंवोनमः ॥ ॐअद्यामुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्म्मणांनांदीमुखानामाभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाइदमासनंवोनमः ॐमद्यामुकगोत्रेमातरमुकदेविनांदीमुखिआभ्युदयिकश्राद्धइदमासनंतेनमः एवंपितामहीप्रपितामहीभ्यामासनंदद्यात् ततः ॐअद्यामुकगोत्रपितरमुकशर्म्मन्नांदीमुखाभ्युदयिकश्राद्धइदमासनंतेनमः एवंपितामहप्रपितामहयोरपि ॐमद्यामुकगोत्रमातामहामुकशर्मन्नांदीमुखाभ्युदयिश्राद्धमासनंतेनमः एवंप्रमातामहवृद्धप्रमातामहयोरपि ततः आवाहनं ॐविश्वान्देवानहमावाह

ॐविश्वेदेवासआगतशृणुतामइमंहवं इदंवर्हिनिषीदत इत्यावाह्य ॐयवोसियवयास्मद्वेषोयवयारातीरिति देवपात्रेषुयवान्विकीर्य ॐविश्वेदेवाः शृणुतेमंहवमेयेअंतरिक्षेयउपद्यविष्ठयेअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वं ॐआगच्छंतुमहाभागाविश्वेदेवामहाबलाः येयत्रविहिताःश्राद्धे सावधानाभवंतुमे इतिपठित्वा ॥ ततः ॐपितृनहमावाहयिष्ये इत्युक्त्वा ॐउशंतस्त्वानिधीमहिसमिताःसमिधीमहि ॥

इतिपितृनावाह्य

ॐअपहताअसुरारक्षांसिवेदिषद इतिमात्रादिपात्रेषुयवान्विकीर्य ॐआयंतुनःपितर इतिपठित्वा ततोर्घ्यकरणं तत्रदेवपूर्वकंसर्वेषु ॐशन्नोदेवीतिमंत्रेणजलंक्षिपेत् ततोदेवार्घपात्रेषु ॐयवोसी तियवान्विकीर्य मात्रादिपात्रेषु ॐयवोसिसोमदेवत्योगोसवोदेवानिर्मितः प्रत्नमद्भिःएकःयुष्मान्नांदीमुखान्पितॄन्लोकान्प्रीणाहिनः स्वाहा इति मंत्रेणयवान्क्षिप्त्वा ततःप्रत्येकंगंधपुष्पाणिक्षिपेत् ॥ ततःप्रथमं देवार्घपात्रं वामहस्ते कृत्वा तत्रस्थपवित्रंभोजनपात्रेनिधाय तदुपरिकिंचिदुदकांतरंदत्वा ॐयादिव्याइतिपठित्वाकुशयवजलान्यादाय ॐमद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनामाभ्युदयिक श्राद्धसंबंधिनोविश्वेदेवाएषवोहस्तार्घोनमः एवंपित्रादिश्राद्धदेवेभ्योमातामहादिश्राद्धदेवेभ्योपिदद्यात् ततोमातुरर्घपात्रमादाय पूर्ववत् यादिव्याइतिपठित्वाकुशादीन्यादाय ॐमद्यामुकगोत्रेमातरमुकदेविनांदीमुखिआभ्युदयिकश्राद्धएषतेहस्तार्घोनमः एवंपितामहीप्रपितामह्योरपिदद्यात् ततःपित्रर्घपात्रमादायसर्वंपूर्ववत्कृत्वाकुशादीन्यादाय ॐमद्यामुकगोत्रपितरमुकशर्मन् नांदीमुखाभ्युदयिकश्राद्धएषतेहस्तार्घोनमः एवंपितामहादिपंचभ्योदद्यात् तत्रावशिष्टंजलंपवित्रयुतंप्रथमंदेवार्घपात्रमादाय ॐविश्वेभ्योदेवेभ्यःस्थानमसीतिदेवासनदक्षिणपार्श्वेउत्तानंस्थापयेत् एवं

मपरदेवार्घपात्रद्वयं तत्तदासनदक्षिणभागेप्रत्येकंस्थापयेत् ततःपितामहीप्रपितामहीअर्घपात्रद्वयस्थितंपवित्रं भोजनपात्रोपरिधृत्वादक्षिणकरेणादाय ॐमातृभ्यःस्थानमसीतिमात्रासनवामभागेन्युब्जीकुर्यात् एवमेवपित्रा र्घपात्राणांमेलनंकृत्वापित्राद्यासनवामभागे ॐपितृभ्यःस्थानमसीतिन्युब्जीकरणं ततोगंधादिदानं ॐमद्यामुक गोत्राणांमातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाएतानिगं धपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमः एवंपित्रादिदेवेभ्योमातामहादिदेवेभ्यश्चदद्यात् ततः ॐमद्या मुकगोत्रापितरमुकशर्म्मन्नांदीमुखाभ्युदयिकश्राद्धएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेनमः एवं पितामहादिपंचभ्योपिदद्यात् ततपात्रमर्घासनसहितंचतुष्कोणमंडलंकुर्यात् ततःसजलेपुटकादोहस्तेनैवस घृतमन्नमादाय ॐअग्नयेकव्यवाहनायस्वाहा इत्याहुतिद्वयंजुहुयात् सोमायपितृमतेस्वाहा इत्याहुतिद्वयं जुहुयात् ततोमसव्यंकृत्वा दक्षिणाभिमुखः पातितवामजानुः मोटकतिलजलान्यादाय ॐइदमन्नमेतद्भूस्वामि पितृभ्योनमः इतिभूस्वामिनेकिंचिदन्नंदद्यात् पिंडार्थंकिंचिदवशेषयेत् ततोन्यदन्नंयथासंभवंसर्वत्रपरिविषयद्यु तंजलंचतत्रोपनीयपात्रमालभेत् तत्रक्रमः उत्तानपाणिभ्यांदेवपात्रंस्पृष्ट्वा ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्म णस्यमुखेअमृतेअमृतंजुहोमिस्वाहा इतिपठित्वा ॥

ॐइदमन्नंविचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरेकृष्णहव्यंरक्षमदीयं इतिपठित्वा इदमन्नमित्यन्ने ॐ इमाआपा इतिजले ॐइदमाज्यमितिघृते ॐइदंहविरितिपुनरन्नेदक्षिणांगुष्ठमारोप्य ॐयवोसियवयास्म द्द्वेषोयवयारातीरिति यवान्विकीर्य कुशादीन्यादाय ॐमद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनां अमुका मुकदेवीनांनांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाइदमन्नंसोपकरणंवोनमः यद्येकमेवपात्रंभवति तद्

वामेनपाणिनापात्रमत्यजन्नेव ऊँइदंविष्णुरित्यादिपठित्वा यवक्षेपपर्यंतंकृत्वा कुशादीनादायपित्राद्युल्लेखेन पित्रादिदेवेभ्योपिजलमुत्सृजेत् एवमेवमातामहादिदेवेभ्यःभिन्नपात्रपक्षे पृथिवीतिपात्रमित्यादीनांसर्वेषा माद्यावृत्तिः ततोमातृपात्रमुत्तानाभ्यामेवपाणिभ्यांस्पृष्ट्वा ऊँपृथिवीतिपात्रमित्यादि ऊँइदंविष्णुरित्यादिपठि त्वा ऊँकृष्णकव्यमिदंरक्षमदीयं ऊँइदमन्नमित्यन्नेदक्षिणांगुष्ठंनिवेश्य ऊँअपहताअसुरारक्षांसिवेदिषद इत्यन्नोपरियवान्विकीर्य ऊँमद्यामुकगोत्रमातरमुकदेविनांदीमुखिअभ्युदयिकश्राद्धइदमन्नंसोपकरणतेनमः एवंपात्रालंभनादिकं प्रत्येकंपितामहीप्रपितामहीभ्यामपिदद्यात् एवंपितृपात्रमालभ्य ऊँपृथिवीतिइत्यादिप ठित्वा पूर्ववत्सर्वंकृत्वा ॥

ऊँमद्यामुकगोत्रपितरमुकशर्म्मन्नांदीमुखाभ्युदयिकश्राद्धइदमन्नंसोपकरणंतेनमः इतिपित्रेन्नमुत्सृजेत् एवंपिता महादिपंचभ्योन्नमुत्सृजेत् ततःप्रांजलिः

ऊँअन्नहीनमित्यादिजपेत् दर्भेपूपविश्यगायत्रींत्रिर्जपित्वा ॥ ऊँमधुमधुमध्विति मधुवाताइत्यादिऋचंजपेत् पितृमंत्रान् ऊँउदीरतामवरइत्यादीन् जपेत् अन्यानितुपुरुषसूक्तादीनिपवित्राणिजपेत् ततःप्रागग्रकुशान्भू भूमावास्तीर्य्य जलेनप्रोक्ष्यजलप्रोक्षितं सयवघृतमन्नंकुशादिना अनग्निदग्धाश्चयेजीवायेप्रदग्धाःकुलेमम भू मौदत्तेनतृप्यंतुतृप्तायांतुपरांगति मितिमंत्रेणकुशोपरि अन्नंविकरेत् ॥

ततआचम्यहरिंस्मृत्वागायत्रींत्रिर्जपेत् चतुरस्रांपिंडयोग्यभूमिंपरिस्कृत्यउत्तरोत्तरक्रमेणस्थानत्रयेप्रादेशमात्रप रिमायतप्रागग्रांरेखांदर्भपिंजुलीमूलेन ऊँअपहतेत्यादि जपित्वा कुर्य्यात् प्रत्येकंरेखात्रयोपरि ऊँयेरूपाणी ति अंगारान् भ्रामयेत् तदुपरिप्रत्येकंकुशत्रयमास्तीर्य्य प्रत्येकमवनेजनंदद्यात् ॥ तत्रक्रमः ॥ युवजलेषां

धपुष्पैनैवपात्राणिपूरयित्वाएकंपात्रंवामहस्तेकुशादीन्यादाय ॥ ओंमद्यामुकगोत्रेमातरमुकदेविनांदीमुखिश्रा
भ्युदायिकश्राद्धपिंडस्थानेअत्रावनेनिक्ष्वतेनमः ॥ इतिसर्वदक्षिणकुशत्रयमूलमात्रेऽवनेजनंदद्यात् एवमेव
पात्रांतरमादाय तत्कुशत्रयमध्येपितामह्यै अवनेजनंदद्यात् तत्कुशत्रयाग्रेप्रपितामह्यै अवनेजनंदद्यात् ततः
श्चतुर्थमादाय ओंमद्यामुकगोत्रपितरमुकशर्मन् नांदीमुखाभ्युदायिकश्राद्धपिंडस्थानेअत्रावनेनिक्ष्वतेनमः ॥
इतिसर्वदक्षिणकुशत्रयमूलपित्रेऽवनेजनंदद्यात् किंचिज्जलमवशेषयेत् एवंपितामहप्रपितामहयोःपिंडस्थानेऽव
नेजनंदद्यात् एवमेवपात्रांतरमादाय ओंमद्यामुकगोत्रमातामहामुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धपिंडेत्रावने
निक्ष्वतेनमः इत्यपरकुशत्रयमूलेमातामहायावनेजनंदद्यात् एवंप्रमातामहवृद्धप्रमातामहयोर्दद्यात ततोयवदु
धिवदरघृतमिश्रितान्नेनपिंडान्निर्माय एकंपिंडंकुशादींश्चादायओंमद्यामुकगोत्रेमातरमुकदेविनांदीमुखिश्राभ्युद
यिकश्राद्धएषतेपिंडोनम इतितदवनेजनस्थानेपिंडंदद्यात् एवमेवपितामहीप्रपितामहीभ्यांस्वीयावनेजन
स्थानेपिंडंदद्यात ततश्चतुर्थपिंडमादाय ओंमद्यामुकगोत्रपितरमुकशर्म्मन् नांदीमुखाभ्युदयिकश्राद्धएषतेपि
डोनमः एवंपितामहप्रपितामहयोः ततःसप्तमंपिंडमादाय ओंमद्यामुकगोत्रमातामहामुकशर्म्मन्नांदीमुखाभ्यु
दयिकश्राद्धएषतेपिंडोनमः ॥ इति तदवनेजनदद्यात् एवंप्रमातामहवृद्धप्रमातामहयोर्दद्यात् ततोदर्भमू
लेकरंप्रोंछयआचम्यहरिंस्मृत्वा अत्रमातरोमादयध्वयथाभागमावृषायध्वइतिपठित्वा उदङ्मुखीभूयश्वासान्नि
यम्यतेनैवपथामुखंपरावर्तयन् ओंअमीमदंतमातरोयथाभागमावृषायिषतइतिजपेत् ॥ एवंअत्रपितरोमादयध्वं
यथाभागमावृषायध्वमितिजपित्वा ॥ २
उदङ्मुखीभूयश्वासान्नियम्य तेनैवपथामुखंपरावर्तयन् ओंअमीमदंतइत्यादिजपेत् ॥ ततोऽवनेजनावशिष्टज
लेनप्रत्यवनेजनदद्यात्-॥ तत्रक्रम, ओंअद्यामकगोत्रेमातरमुकगोत्रेनांदीमुखाभ्युदयिकश्राद्धपिंडेप्रत्यवनेनिक्ष्व

जनांनिक्ष्वतेनमः इतितात्पिंडोपरिदद्यात् ॥ एवंपितामहीप्रपितामहीभ्यां तथा ॐअद्यामुकगोत्रपितरमुकशर्म्मन् नांदीमुखाभ्युदयिकश्राद्धप्रत्यवनेनिक्ष्वतेनमः इत्युपरिदद्यात् एवमेवतत्तत्पिंडोपरिपितामहादिपंचभ्योदद्यात् ततो नीवींविस्रस्याचम्यहारिंस्मृत्वासूत्राण्यादाय ॐनमोवोमातरोरसायनमोवोमातरो मन्यवेनमोवोमातरोनमोवोमातरोगृहान्नोमातरोदत्तसतोवोमातरोद्वेष्मः एतद्वासः ॥ इतिमात्रादिपिंडत्रयोपरिप्रत्येकंसूत्रंदद्यात् ततः नमोवः पितरइत्यनेनमंत्रेणपित्रादिपिंडपक्षोपरिप्रत्येकंसूत्रंदद्यात् ततःकुशजलान्यादाय ॐअद्यामुकगोत्रेमातरमुकदेविनांदीमुखाभ्युदयिकश्राद्धपिंडेएतत्तेवासोनमः ॥ एवंपितामहीप्रपितामहीएवंपितामहादीनांपंचानांसूत्रमुत्सृजेत् ततोगंधपुष्पधूपदीपतांबूलानिप्रत्येकंपिंडमभ्यर्च्य ॐशिवाआपः संत्वितिजलं ॐसौमनस्यमस्त्वितिपुष्पाणि ॐअक्षतंचारिष्टमास्त्वितितंडुलान्प्रत्येकंपात्रेषुनिक्षिप्य कुशादीन्यादाय ॐअद्यामुकगोत्रायामातुरमुकदेव्यानांदीमुख्याभ्युदयिकश्राद्धदत्तैतदन्नपानादिभिःप्रीयतां इत्यक्षय्योदकंदद्यात् एवंपितामह्याः प्रपितामह्याश्चाक्षय्योदकं ॐअद्यामुकगोत्रस्यपितुरमुकशर्म्मणोनांदीमुखस्याभ्युदयिकश्राद्धदत्तैतदन्नपानादिभिः प्रीयतांइतिपित्रे एवंपितामहादिपंचभ्योक्षय्योदकंदद्यात् ॥ ततः ॐअघोरामातरःसंत्वितिमातृपिंडोपरिपूर्वाग्रां जलधारांदद्यात् एवंपितामहीप्रपितामह्योः ततॐअघोराः पितरः संत्वितिपित्रादिपिंडपक्षोपरिजलधारांदद्यात्-ततॐगोत्रंनोवर्द्धतांदातारोनोभिवर्द्धतांवेदाः संततिरेवच श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्त्विति अन्नंचनोबहुभवेदतिथींश्चलभेमहि याचितारश्चनःसंतुमाचयाचिष्मकंचन एताःसत्याशिषःसंतुइत्याशीःप्रार्थयन् सपवित्रकुशत्रयाणिप्रत्येकमात्रादिपिंडत्रयेमातामहादिपिंडत्रयेदत्त्वा ॐऊर्जंवहंतिरमृतंघृतंपयः कीलालंपरिश्रुतं स्वधास्थतर्पयतमेमातॄः इतिमात्रादिपिंडोपरिदक्षिणाग्रांजलधारांदद्यात् ततस्तथैव ऊर्जंवहंतिरमृतंघृतंपयःकीलालंप

रिश्रुतं स्वधास्थतर्पयतमेपित्ढन् इतिपित्रादिपिंडषट्कोपरिदक्षिणाग्रांजलधारांदद्यात् ततः पिंडमाघ्रायोत्था
प्यापिंडाधारकुशान्नुल्मुकंचवन्हौक्षिपेत् अर्घपात्राण्युत्तानीकृत्यदक्षिणांदद्यात् दक्षिणाद्रव्यंचफलमूलेफलंमूलंवा प्र
त्येकतत्रक्रमः उोमद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनामाभ्युद यिकश्राद्ध
संबधिनांविश्वेषांदेवानांकृतैतच्छ्राद्धप्रतिष्ठार्थमिमेफलमूलेवनस्पतिदैवतेयथानामगोत्रायब्राह्मणायदक्षिणांदातुमह
मुत्सृजेत् एवंपित्रादिश्राद्धसंबंधिदेवताश्राद्धदक्षिणांमातामहादिश्राद्धसंबंधिविश्वेदेवश्राद्धदक्षिणांदद्यात् ॥
उोमद्यामुकगोत्रायामातुरमुकदेव्यानांदीमुख्याः कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमेफलमूलेवनस्पतिदैवतेइ
त्यादि अद्यामुककगोत्रस्यपितुरमुकशर्म्मणोनांदीमुखस्यकृतैतदाभ्युदयिकश्राद्धदक्षिणांदद्यात् उोंवाजेवा
जेइत्यादिनामात्रादिविसर्जनं विश्वेदेवाप्रीयंतामितिदेवविसर्जनं ततः उोंदेवताभ्यइतित्रिर्जपेत् दीपनिर्वापण
म् श्राद्धीयद्रव्यप्रतिपत्तिः ॥ इत्याभ्युदयिकश्राद्धविधिः
अथसंकल्पश्राद्धमपरशाखायाम् मध्यान्हस्नानंविधाय संध्यांकृत्वा तर्पणंविधाय ॥ श्राद्धस्थलेगत्वा
दीपंप्रज्वाल्यआचम्य शुक्लांबरधरंविष्णुमितिविष्णुंनमस्कृत्य यंब्रह्मवेदांतविदोवदंतिपरंप्रधानपुरुषंतथान्ये वि
श्वोद्गतेः कारणमीश्वरंवा तस्मैनमोविघ्नविनाशनाय अभीप्सितार्थसिद्ध्यर्थंपूजितोयःसुरैरपि सर्वविघ्नछिदेतस्मै
गणाधिपतयेनमः स्ववामभागेकर्मपात्रपूरणं भूमौशंखचक्रेलिखित्वा आसनं आसनेपात्रं पात्रे पवित्रं
उोंपवित्रस्थोवैष्णव्यौसवितुर्वः प्रसवउत्पुनाम्यछिद्रेणपवित्रेणसूर्यस्यरश्मिभिः शन्नोदेवीतिजलं ॥ उोंश
न्नोदेवीरभिष्टयऽआपोभवंतुपीतयेशंयोरभिस्रवंतुनः उोंयवोसीतियवान् ॥ उोंयवोसियवयास्मद्द्वेषो
यवयारातीदिवेत्वांतरिक्षायत्वापृथिव्यैत्वाशुंधंताल्लोकाः पितृषदनाःपितृषदनमासीद ॥ तिलोसीतितिलान् ति

लोसिसोमदेवत्योगोसवोदेवनिर्मितः प्रत्नमद्भिःपृक्तः स्वधयापितृंल्लोकान्प्रीणाहिनःस्वाहा गंधपत्रिकाक्षता
दितूष्णींनिक्षिप्य तेनजलेन आत्मानं प्रोक्ष्यसंकल्पश्राद्धसामग्रीःसंप्रोक्ष्य प्राणानायम्य पुंडरीकाक्षस्मरण
विधाय अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा यः स्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरः शुचिः ओंपुंडरीका
क्षायनमः ओंदेवताभ्यः पितृभ्यश्चमहयोगिभ्यएवच नमः स्वाहायैस्वधायैनित्यमेवनमोनमः ३ सप्तव्याधा
दशार्णेषुमृगाः कालंजरेगिरौ चक्रवाकाःशरद्वीपे हंसाः सरसिमानसे तेपिजाताः कुरुक्षेत्रे ब्राह्मणावेद
पारगाः प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ श्राद्धकालेगयांध्यात्वाध्यात्वादेवंगदाधरं मनसाचपितॄन्ध्यात्वा
संकल्पश्राद्धमारभेत् अपसव्य ओंसोमस्यनीवीरसिविष्णोशर्मासिशर्वयजमानस्येंद्रस्ययोनिरसिसुसास्कृधिइ
तिवाकट्यांनीवीवंधनं अग्निष्वात्ताः पितृगणाः प्राचींरक्षंतुमेदिशं तथाबर्हिषदःपांतु याम्यांयेपितरःस्थि
ताः प्रतीचीमाज्यपाःपांतु उदीचीमपिसोमपाः रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः सर्वतश्चाधिपस्ते
षांयमोरक्षांकरोतुमे तिलारक्षंतुदितिजान्दर्भारक्षंतुराक्षसान् पंक्तिवैश्रोत्रियोरक्षेदतिथिः सर्वरक्षकः सव्यं
ओंयद्देवादेवहेडनंदेवासश्चकृमावयं अग्निर्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः यदिदिवायदिनक्तमेनाꣳसि
चकृमावयं वायुर्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः २ यदिजाग्रद्यदिस्वप्नएनाꣳसिचकृमावयं सूर्योमा
तस्माद्देनसोविश्वान्मुंचत्वꣳहसः गायत्र्याशूद्रादिदृष्टिदोषनिपातात्पाकादीनांपवित्रतास्तु प्रतिज्ञा ओंविष्णु
३ इत्यादिदेशकालौसंकीर्त्य अपसव्यं अमुकनामसंवत्सरेअमुकायनेअमुकऋतौअमुकमासेअमुकपक्षेअमुक
तिथौअमुकगोत्राणांअस्मत्पितृपितामहानांअमुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणांतथाअमुक गोत्रा
णांअस्मन्मातामहप्रमातामहवृद्धप्रमातामहानांअमुकामुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणां अमुकस

ज्ञकाविश्वेदेवपूर्वकंसंकल्पश्राद्धंकरिष्ये उॊंकुरुष्व ॥ सव्यम् विश्वेदेवाआसनं यवजलकुशद्वयंगृहित्वा अद्येह- अमुकगोत्रपित्रादित्रयश्राद्धसंबंधिनांतथामुकगोत्रमातामहादित्रयश्राद्धसंबंधिनां पूरूरवोमाद्रवसंज्ञकानांविश्वेषांदेवानांइदमासनमस्तु उॊंभूर्भुवःस्वः इदमासनमास्यतांआस्ये ॥ अपसव्यम् तिलमोटकजलं गृहीत्वा अद्येहामुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकशर्मणांसपत्नीकानां वसुरुद्रादित्यस्वरूपाणांसंकल्पश्राद्धेइदमासनमस्तु उॊंभूर्भुव स्वः इदमासनमास्यतांआस्ये ॥ अद्येह अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणांइदमासलमस्तु उॊं भूर्भुवःस्वः इदमासनमास्यतां आस्ये सव्यं विश्वेदेवार्चनविधौअत्र २ सुगंध नमोस्त्वनंतायेतिपूजनंधूपदीपौ ॥ यवकुशानादाय. अद्ये- अमुकगोत्रपित्रादित्रयः श्राद्धसंबंधिनः तथा अमुकगोत्रमातामहादित्रयश्राद्धसंबंधिनः विश्वेदेवार्चनविधौ इमानिगंधाक्षतपुष्पधूपदीपादीनिनिधायविभागंवोनमः स्वाहा विश्वेदेवार्चनविधेः सर्वपरिपूर्णम् ॥

अपसव्यं अत्र २ सुगंध पितृभ्योपिपूजनं धूपदीपौतिलमोटकं अद्येह-अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहाः अमुकामुकशर्माणः सपत्नीकावसुरुद्रादित्यस्वरूपाः तथा अमुकगोत्रा अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकशर्माणः सपत्नीकावसुरुद्रादित्यस्वरूपाः अर्चनविधौ-इमानिगंधाक्षतपुष्पधूपदीपादियथाविभागशः स्वधा ॥ सव्यं अर्चनविधेः सर्वपरिपूर्णमस्तु अस्तुपरिपूर्णं गंधादिदानाचमनेस्वयंवाचमेत् परिवेषणार्थंभस्मनारेखाकरणं यथाचक्रायुधोविष्णुस्त्रैलोक्यंपरिरक्षति एवंमांसंडभस्माकसर्वभूतानिरक्षतु पत्रावलिः संस्थाप्य ॥

ॐमधु ३ अधोमुखाभ्यांपाणिभ्यांपात्रमालभ्यजपति पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेअमृतंजुहोमिविष्णोहव्यꣳरक्ष यवान्विकीर्य अपहताअसुरारक्षाꣳसिवेदिषद इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्यपाꣳसुरे अंगुष्ठग्रहणंइदमन्नं इमाआपः इदमाज्यं इदंशाकादिकंसर्वंहविः ततः कुशयवजलान्यादाय. अद्येह अमुकगोत्राअस्मत्पित्रादित्रयः श्राद्धसंबंधिभ्यः तथाअमुकगोत्राअस्मन्मातामहादित्रयःश्राद्धसंबंधिभ्यः पूरूरवोमाद्रवसंज्ञकेभ्योविश्वेभ्योदेवेभ्यः अस्मिन्श्राद्धेइदमन्नंसोदकंसोपस्करघृताद्युपस्करसहितंयत्परिविष्टंपरिवेष्यमाणंब्राह्मणस्यतृप्तिपर्याप्तं अमृतस्वरूपंनिषद्यजंब्राह्मणायदीयमानमन्नंचयथाविभागंवोनमः विश्वेभ्योदेवेभ्योनमःयथासुखेनभुंजध्वंभुंजयामि ॥ अपसव्यं ॐमधु ३ पात्रमालभ्य उत्तानाभ्यांपाणिभ्यांजपति पृथिवीतेपात्रंद्यौः विष्णोहव्यꣳरक्ष तिलान्विकीर्य अपहता. इदंविष्णुर्वि. अंगुष्ठग्रहणं इदमन्नं पूर्ववत् ॥ सर्वंकव्यं अद्येह. अमुकगोत्रेभ्यः अस्मत्पितापितामहप्रपितामहेभ्यः अमुकशर्मभ्यः सपत्नीकेभ्योवसुरुद्रादित्यस्वरूपेभ्यः अस्मिन्श्राद्धेइदमन्नं- यथाविभागंवःस्वधा पित्रादिभ्योजपति पृथि- विष्णोःकव्यꣳरक्ष तिलान्विकीर्य अपहता- इदंविष्णुर्वि. अंगुष्ठग्रहणंइदमन्नं सर्वंकव्यं- अद्येह- अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः अमुकामुकशर्मभ्यः सपत्नीकेभ्योवसुरुद्रादित्यस्वरूपेभ्यः अस्मिन्श्राद्धेइद० यथाविभागंवःस्वधा मातामहादिभ्योनमः यथासुखेनभुंजयामि सव्यं ॐयेचेहपितरोयेचनेहयांश्चविद्मयांचनप्रविद्मत्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञꣳसुकृतंजुषस्व इतिसर्वेभ्योजलदानं
अपसव्यं ॐमधुवाताऋतायतेमधुक्षरंतिसिंधवः माध्वीर्नः सन्त्वोषधी मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनःपिता मधुमान्नोवनस्पतिर्मधुमांअस्तुसूर्यः माध्वीर्गावोभवंतुनः ॐमधु ३ विकरदा

नं सर्वान्पाकजातान् एकीकृत्यवारिणाप्लाव्य कुशोपरिविकिरेत् यथा असंस्कृतप्रमीतानांत्यागिनांकुलभागिनां उच्छिष्टभागधेयानांदर्भेषुविकरासनं अनेनदक्षिणाग्रान्कुशान्निक्षिप्य पाकमादाय अग्निदग्धाश्चयेजीवायेप्यदग्धाकुलेमम भूमौदत्तेनतृप्यंतुतृप्तायांतुपरांगतिम् येषांनपचतेमातायेषांनपचतेपिता उच्छिष्टंयेचकांक्षंतितेभ्योन्नंदत्तमक्षयं उच्छिष्टभागधेयेभ्योनमः इतिसंपूज्य सव्यं हस्तौपादौप्रक्षाल्यआचम्यश्राद्धस्थलेगत्वा विकिरेद्द्विराचमनं विश्वेदेवब्राह्मणाय सकृत्सकृत् मधुवाता इतिपठित्वा सव्येनोब्राह्मणाअस्मिन्पाकमध्येयत्किंचिद्रोचतेतत्प्रतिगृह्यतां तृप्तास्थ तृप्तास्मः शेषमन्नं इष्टैःसहभुज्यतां अपसव्येनअक्षय्योदकदान अद्येह- अमुकगोत्रस्यअस्मत्पितुः अमुकशर्मणः सपत्नीकस्यवसुस्वरूपस्यअस्मिन्संकल्पश्राद्धइदमन्नोदकादियद्दत्तंतदक्षयमस्तु अस्तु अक्षय्यं तथाअमुकगोत्रस्यपितामहस्यअमुकशर्मणः सपत्नीकस्यआदित्यस्वरूपस्यइदम० तथाअमुकगोत्रस्यअस्मन्मातामहस्यअमुकशर्मणः सपत्नीकस्यवसुरूपस्यइदमन्नं- अद्येह- अमुकगोत्रस्यप्रमातामहस्यअमुकशर्मणः सपत्नीकस्यरुद्रस्वरूपस्यइदमन्नं- तथा- अद्येह- अमुकगोत्रस्यअस्मद्वृद्धप्रमातामहस्यअमुकशर्मणः सपत्नीकस्यआदित्यस्वरूपस्यइदमाचमनं ॥ सव्यं आशीर्ग्रहणं अघोराःपितरःसंतुगोत्रंनोवर्द्धतां- २ दातारोनोभिवर्द्धंतां २ वेदावर्द्धंतां १ संततिर्वर्द्धतु श्रद्धाचनोमाव्यगमत् वहुदेयंचनोअस्तु अन्नंचनोवहुभवेत्भवतु अतिथींश्चलभेमहि लभध्वं याचिताश्चनःसंतुमाचयाचिष्मकंचनमायाचेथा एताएवआशिषः सत्याः संतुपितृणांप्रसादोस्तु दक्षिणा देशकालौसंकीर्त्य अद्येह- अमुकगोत्राणांअस्मत्पितृपितामहप्रपितामहानांअमुकामुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणां तथा अमुकगोत्राणांअस्मन्मातामहप्रमातामहवृद्धप्रमातामहानांअमुकामुकशर्मणांसपत्नीकानांवसुरुद्रा-

दित्यस्वरूपाणांकृतैतत्संकल्पश्राद्धकर्मणःसांगतासिद्ध्यर्थंइमांरजतानिष्क्रयिणींदक्षिणांश्राद्धभोक्तृभ्यांब्राह्मणाभ्यां
दास्ये. ओंतत्सन्नमम कुशयवानादाय अद्येह-अमुकगोत्रपित्रादित्रयश्राद्धसंबंधिनांतथाअमुकगोत्रअस्मन्मातामहा-
दित्रयाणां श्राद्धसंबंधिनांपुरूरवोमाद्रवसंज्ञकानांप्रीतयेकृतस्यास्यसंकल्पश्राद्धार्थंवैश्वदेवकर्मणः सांगता
सिद्ध्यर्थं इमांसुवर्णनिष्क्रियिणींदक्षिणांश्राद्धभोक्त्रेब्राह्मणायदास्ये ओंपितृपूर्वं ओंस्वस्तिभवंतोब्रुवंतु तिलकं
सत्यानुष्ठानसंपन्नाः सर्वदायज्ञबुद्धयः पितृमातृपराश्चैवसंत्वस्मत्कुलजानराः ॥ देवताभ्यःपितृभ्यश्च
महायोगिभ्यएवच नमःस्वहायैस्वधायैनित्यमेवनमोनमः ३ सप्तव्याधादशार्णेपुमृगाःकालंजरेगिरौ चक्रवा
काःशरद्वीपे हंसाःसरसिमानसे तेपिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ
श्राद्धकालेगयांध्यात्वाध्यात्वादेवंगदाधरं मनसाचपितॄन्ध्यात्वासंकल्पश्राद्धंविसर्जयेत् इदंमयाकृतंसंकल्प
श्राद्धंविधिहीनंयत्कृतंतत्सुकृतमस्तु यन्नकृतंतत्श्रीविष्णोः प्रसादाद्विश्वेषांदेवानांब्राह्मणवचनात्सर्वंपरिपूर्णमस्तु
अस्तुपरिपूर्णम् ॥ अपसव्यं उतिष्ठतिपितृविप्रासनंउत्थाप्य सव्यं- विश्वेदेवाआसनंच
उत्थाय ओंउत्तिष्ठब्रह्मणस्पते देवयंतस्त्वेमहे उपप्रियंतुमरुतः स्वधानमः इंद्राप्राशुर्भवासचा अपसव्य
आमावाजस्येतिप्रदक्षिणीकृत्य ओंआमावाजस्यप्रसवोजगम्यादामाद्यावापृथिवीविश्वरूपे आमागंतांपितरं
मातरंचामासोमोअमृतत्वेनगम्यात् नीवींविस्रंस्य पाणिनादीपंनिर्वाप्य. सव्येन आचम्य यस्यस्मृत्येति.
चतुर्भिश्च. कायेनवाचामनसेंद्रियैर्वाबुध्यात्मनावाप्रकृतिस्वभावात् करोमियद्यत्सकलंपरस्मैनारायणायेतिस
मर्प्ययामि अनेनकर्मणा श्रीभगवान्यज्ञपुरुषः प्रीतोस्तु ॥ इतिसंकल्पश्राद्धम् ॥
अथातिकार्य्यासक्तस्यराजादेः संक्षेपतः संकल्पश्राद्धं तत्रादौपुंडरीकाक्षःपुनात्विति विष्णुंस्मृत्वा

श्राद्धकालेगयाध्यात्वेतिध्यानं ॥ गयागदाधराभ्यांनमः ॐमद्येत्यादि अमुकगोत्रस्यअस्मत्पित्रादित्रयस्या
मुकामुकसंज्ञस्यवसुरुद्रादित्यरूपिणोमातामहादित्रयस्यचसपत्नीकस्याविश्वेदेवपूर्वकपार्वणश्राद्धं अथवैकोद्दिष्टं
वासंकल्पविधिनाहंकरिष्ये देवताभ्यःपितृभ्यश्चेतिजपित्वा ॐमद्यामुकगोत्रस्यास्मत्पित्रादित्रयस्यामुकगोत्र
स्यमातामहादित्रयस्यच मातादित्रयस्यमातामह्यादित्रयस्यचसंकल्पश्राद्धसंबंधिनांविश्वेषांदेवानांश्राद्धविधिसंप
त्त्यर्थमिदंसदक्षिणमन्नंसोपकरणं यथानामगोत्राभ्यांब्राह्मणाभ्यांदातुमहमुत्सृजे विश्वेदेवाःप्रीताभवंतु इति
सव्येन अपसव्यंकृत्वा ॐमद्यामुकगोत्राणामस्मत्पितृपितामहानाममुकामुकशर्मणां तथाचमातृपिताम
हीप्रपितामहीनांतथाचामुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानांसपत्नीकानामक्षयतृप्तिहेतोःसांवत्सरि
कमहालयपार्वणैकोद्दिष्टश्राद्धस्यसमग्रफलप्राप्त्यर्थंइदंसिद्धान्नंपक्वान्नमामान्नंवासदक्षिणं यथानामगोत्रेभ्योब्राह्म
णेभ्यो दीयमानमक्षय्यमस्तु स्वधा पितृभ्यःस्वधायिभ्यः स्वधानम पितामहेभ्यःस्वधायिभ्यःस्वधानमः
प्रमातामहेभ्यःस्वधायिभ्यः स्वधानमः अक्षन्नपितरोमीमदन्तपितर शुंधध्वं श्रीगयागदाधरौप्रीयेतांगोत्रंनोवं
र्द्धतामित्याशीःप्रार्थनं ततःसव्यं कृत्वा ॐमद्यास्मत्पित्रादेः कृतस्यास्यसंकल्पविधिश्राद्धस्यसाद्गुण्यार्थमिमं
दक्षिणाद्रव्यचंद्रसूर्याग्निदैवतं यथानामगोत्राय ब्राह्मणाय तुभ्यमहंसंप्रददे श्रीगयागदाधराभ्यांनमः ॥

इत्यातिसंक्षिप्तसकल्पश्राद्धम्

अथनित्यश्राद्धप्रयोग आचम्य प्राङ्मुखउपविश्यवाउदङ्मुखउपविष्टः ॐअपवित्रःपवित्रोवासर्वावस्थांग
तोपिवा यःस्मरेत्पुंडरीकाक्षंसवाह्याभ्यंतरःशुचिरितिपठित्वा ॐपुंडरीकाक्ष पुनात्वितिकुशत्रयजलेनश्राद्धीयद्र
व्याणिसिंचेत् ततःकुशत्रयतिलजलान्यादाय ॐअद्यामुकगोत्रणांपितापितामहप्रपितामहानाममुकामुकशर्म
णांनित्यश्राद्धमहंकरिष्ये इतिसंकल्पंकुर्यात् ततस्त्रिर्गायत्रींजपित्वा ॐदेवताभ्यइतित्रिर्जपेत् ततोपसव्यं

कृत्वा दक्षिणाभिमुखःपातितवामजानुर्मोटकतिलजलान्यादाय ओंअद्यामुकगोत्रपितरमुकशर्मन्नित्यश्राद्धे इदमासनंतेस्वधेति तिलजलप्रोक्षितंमोटकरूपमासनंदक्षिणाग्रंपित्रेदद्यात् एवमेवपितामहादिभ्यः प्रत्ये कमासनमुत्सृजेत् ओंअपहताअसुरारक्षांसिवेदिषद इतिश्राद्धदेशेतिलान्विकीर्य्य ओंआयांतुनःपितर इतिजपेत् ततःओमद्यामुकगोत्रपितरमुकशर्मन्नित्यश्राद्धेएतानिगंधपुष्पधूपदीपतांबूलानितेस्वधा इतियथासं भवंपित्रेगंधादिकमुत्सृजेत् एवमेवपितामहादिभ्योप्युत्सृजेत् ततोजलेनमंडलंचतुष्कोणमन्नपात्रस्यचतुर्दि क्षुकृत्वान्नपरिवेषणंकुर्यात् ततोमधुदत्त्वा ओंमधुवाताऋतायतेइति ओंमधुमधुमध्वितिमंत्रयेत् ततोन्नपात्रंन्य स्ताभ्यामधोमुखाभ्यांपाणिभ्यांस्पृशन् ओंपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेऽमृतंजुहोमिस्वाहा ओं इदंविष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरेइतिजापित्वावामहस्तेनान्नपात्रमत्यजन् ओंकृष्णकव्यमिदं रक्षमदीयमितिजपित्वा ओंइदमन्नं ओंइमाआपः ओंइदमाज्यं ओंइदंहविरितिअत्रघृतजलेषुपुनरन्नेपिदक्षिणां गुष्ठमारोप्य ओंअपहताअसुरारक्षांसिवेदिषद इत्यन्नोपरितिलान्विकीर्य मोटकादीन्यादाय ओंअद्यामुक गोत्रपितरमुकशर्मन्नित्यश्राद्धमिदमन्नंसोपकरणंतेस्वधेतिपित्रेन्नमुत्सृजेत् एवंपितामहादिपंचभ्योप्युत्सृजेत् ततो दक्षिणवासीनःगायत्रींमधुवाताइतिऋचंओंमधुमधुमध्वितिचजपेत्ततः कृणुष्वपाजइत्यादिऋचंपठेत्ततस्तिलान्भू मौक्षिप्त्वाओंउदीरतामवरेत्यादिपित्र्यमंत्रान् ओंसहस्रशीर्षेत्यादिपुरुषसूक्तंओंआशुःशिशानेत्यादिकंप्रतिरथम न्यानिचपवित्राणियथाशक्तिजपेत् ओंनमस्तुभ्यंविरूपाक्षनमस्तेनेकचक्षुषे नमःपिनाकहस्तायवज्रहस्तायवैनमः इतिपठेत् ततःओमद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्मणांकृतैतन्नित्यश्राद्धप्रतिष्ठार्थमेकाकि नींमूलरजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजेत् इतिमोटकादिनादक्षिणांदद्यात् ततःस

ध्यंकृत्वा ॐदेवताभ्यःपितृभ्यइत्यादित्रिःपठेत् ॐप्रमादात्कुर्वतांकर्मइतिपठित्वा विष्णुंस्मरेत् नित्यश्रा
द्धीयमन्नंब्राह्मणायप्रतिपादयेत् जलेवाक्षिपेत्

इतिनित्यश्राद्धविधिः ॥

स्वस्तिश्रीरणवीरसिंहधरणीपालोवदन्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंदसंसेवकः धर्माधर्मविभागकृद्रघुप
तेःपादांबुजाचारतोजीयात्पुत्रकलत्रमित्रसहितःसंपालयन्क्ष्मांचिरम् १ रणवीरसिंहभूपेशकारितेकृत्यसागरे श्र
भून्नभस्यकृत्यानांरम्योरत्नसमुच्चयः २ ॥

इति श्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारितेकृत्यरत्नाकरेभाद्रपदमासकृत्यरत्नसमुच्च
यःसमाप्तः शुभमस्तुसर्वजगताम् ॥



॥ श्रीरघुनाथमुद्रायंत्रालये ॥

लालाशिवरामल्लाधिकारेभाद्रपदमासेमुद्रितस्समाप्तिमगमत्

संवत् १९४१ कार्तिक प्र. २९

॥ ॐश्रीगणेशायनमः अथाश्विनमासकृत्यनिर्णयः ॥

कन्यार्कसंक्रमणेपराः षोडशघटिकाःपुण्यकालःशेषंप्राग्वत् संक्रांतिनिर्णयेज्ञेयं अत्रकृत्यंविष्णुःआश्विनेसक
लेमासेघृतंप्रदायाऽश्विनौपूजयित्वारूपवान्भवति वामनपुराणे तिलांस्तुरंगंवृषभंदधितास्त्ररसादिकं प्रीत्यर्थं
पद्मनाभस्यदेयमाश्वयुजेनरैः आदिशब्देनाभीष्टद्रव्यपरिग्रहः भविष्यपुराणे कृत्वात्वाश्वयुजेमासिविपुलं
धान्यपर्वतं सुवर्णवस्त्रगंधाढ्यंसूर्यस्याग्रेनिवेदयेत् सविमैःसमहायानैर्वरभोगसमन्वितैः वर्षकोटिसहस्त्रा
णिसूर्यलोकेमहीयते योवाप्यश्वयुजंमासमेकभक्तेनसंक्षिपेत् प्रजावान्वाहनाढ्यश्चबहुपुत्रश्चजायते स्कंदपु
राणे योपिचाश्वयुजंमासमेकभक्तेनसंक्षिपेत् वाणिज्यंतुलभेत्तस्यकृषिःपशुगणस्तथा विष्णुधर्मोत्तरे आश्विनेघृ
तदानेनरूपवानभिजायते अत्रग्रहणमुपक्रम्यदेवीपुराणे आश्विनेसरयूःपुण्यास्नानदानादिकर्मसु नंदिपुरा
णे अथवाश्वयुजंमासंवर्जयेन्मांसभोजनं मासषट्ककृतंपुण्यंलभतेनात्रसंशयः मासषट्केमांसवर्जजन्यंपुण्यंल
भतइत्यन्वयः अत्रसौरमासएवग्राह्यः कन्यास्थार्कस्यफलविशेषप्राधान्याच्च अथमहालयोनिर्णीयते सचाश्वि
नमासस्यकृष्णपक्षः कन्यास्थार्कैमहापुण्यप्रदः सचश्राद्धकरणेनित्यः कन्यास्थार्कैविनापिनित्यएवमलमास
संभवेकन्यास्थार्कस्यविरहात् तत्रपृथ्वीचंद्रोदयेवृद्धमनुः आषाढीमवधिंकृत्वापंचमंपक्षमाश्रिताः वांछंतिपि
तरःक्लिष्टाअन्नमप्यन्वहंजलं अथकन्यार्कयोगेपुण्यतमत्वमाह शाकटायनिः कन्यास्थार्कान्वितःपक्षसोत्यंतंपु
ण्यउच्यते अत्रविशेषमाह वृद्धमनुः मध्येवायदिवाप्यंतेयत्रकन्यांव्रजेद्रविः सपक्षःसकलःश्रेष्ठःश्राद्धषोड
शकंप्रति मार्कंडेयब्रह्मांडपुराणयोः कन्यागतेसवितरियान्यहानितुषोडशक्रतुभिस्तानितुल्यानिदेवोनारायणो
ब्रवीत् अत्रहेमाद्रिः षोडशत्वंत्रिधाव्याचख्यौ तिथिवृद्ध्यापक्षस्यषोडशदिनत्वे श्राद्धवृद्ध्यर्थमित्येकः पक्षःभद्रा

पौर्णमासीसहितइतिद्वितीयः पक्षः आश्विनशुक्लप्रतिपत्सहितस्तृतीयःपक्षइति अत्रकेचित्षोडशशक्ताशक्तविषय
त्वेनषट्पक्षाइत्याहुः यथा कृष्णप्रतिपदादिशुक्लप्रतिपदांतएकःप्रतिपदादिदर्शांतोद्वितीयः पंचम्यादिदर्शांतस्तृ
तीयःअष्टम्यादिदर्शांतश्चतुर्थः दशम्यादिदर्शांतः पंचमः अतएवचतुर्दशीवर्जितादर्शांताः दशसप्तपंचतिथिप
क्षाइतिकेचित् एकतिथिपक्षश्चेतिषट् तत्रप्रथममाह शाकटायनिः नभस्यस्यापरेपक्षेतिथिषोडशकश्चयःकं
न्यागतान्वितश्चेत्स्यात्सकलःश्राद्धकर्मणीति केचिदितिसंदिग्धेसंदेहवचनं नभस्यस्येत्यमांतमासेन तिथिषोड
शकश्चासावास्योत्तरांप्रतिपदमादाय देवलेनोक्तं अहःषोडशकंयत्तुप्रोक्तंप्रतिपदासह चंद्रक्षयाद्विशेषेणसार्चं
दर्शात्मिकास्मृतेति पंचदशदशसप्तपंचातिथिपक्षविषयो ब्रह्मपुराणे अश्वयुक्कृष्णपक्षेतुश्राद्धंकुर्याद्दिनेदिने त्रि
भागहीनपक्षंवात्रिभागंत्वर्द्धमेवचेति त्रिभागहीनंपंचम्यादि पक्षंप्रतिपदादि त्रिभागंदशम्यादि अर्धंत्वष्टम्या
दि अत्रतृतीयोभागःत्रिभागःपक्षस्य तद्धीनत्वाच्चाद्यानांचतसृणांचतुर्दश्याश्चवर्जनंएवमर्द्धत्रिभागयोरपिचतुर्दशी
वर्जनं यच्च नभस्यस्यापरेपक्षे श्राद्धंकुर्याद्दिनेदिने नैवनंदादिवर्जस्या नैववर्ज्याचतुर्दशीति वचनेन प्र
तिपदादिपक्षएवचतुर्दशीवर्जनानिषेधादितरपक्षेपुतद्वर्जनप्रतिपत्तेः [ नंदादिवर्जनंतुनभवति संख्याहानिप्रसंगात्
अथापरपक्षःतत्रगौतमः श्राद्धंपितृभ्योदद्यात्पंचम्यादिदर्शांतमष्टम्यादिदशम्यादिसर्वास्मिंश्चेति एकदिनपक्षोनाग
रखंडे आषाढ्याःपंचपक्षेकन्यासंस्थेदिवाकरे योवैश्राद्धंनरःकुर्य्यादेकस्मिन्नपिवासरे तस्यसंवत्सरंयावत्तृप्ताःस्यु
पितरोध्रुवमिति अस्मिन्पक्षेनंदादिवर्जनमपिभवति अत्रतदप्रवृत्त्यैकरणाभावात् नंदादिवर्जनमाह नारदः
ननंदासुभृगोर्वारेरोहिण्यांचत्रिजन्मसु रेवत्यांचमघायांचकुर्यादापरपाक्षिकमिति नंदातिथयः प्रतिपत्षष्ठिए
कादश्यः त्रिजन्मनक्षत्राणि श्राद्धकर्तुर्जन्मनक्षत्रदशमएकोनविंशतिनक्षत्राणि जन्मतारासंज्ञानि यत्तु कर्तु

श्चपुत्रदाराणांत्रिजन्मर्क्षाणिवर्जयेदिति क्वचिल्लिखितवचनं तद्यदिसांकरंतदैवंव्याख्येयं कर्तुस्तत्पुत्रस्यतद्दाराणांचत्रिजन्मर्क्षाणि आद्यदशमैकोनविंशनक्षत्राणि यत्रदिनेभवंति तद्दिनेश्राद्धंवर्जयेदिति अन्यथा त्रिशब्दस्यबहुवचनस्यचवैयर्थ्यापत्तेः केचित्तुत्रिजन्मानीत्यत्र जन्मनक्षत्रतःपूर्वोत्तरतश्चनक्षत्रेण त्रिजन्मनक्षत्राणीतिव्याख्यानंतुपूर्वोत्तरनक्षत्रयोर्जन्मनक्षत्रवाच्यत्वाभावान्मूललेखनाभावाच्चोपेक्षितं अन्यत्रापि श्राद्धनिषेधविषयः नंदाश्वकाममह्यारभृग्वाग्निपितृकालभे गंडेवैधृतिपातेचपिंडास्त्याज्याःसुतैप्सुभिरिति अश्वेतिसप्तमी कामेतित्रयोदशी आरोभौमः अग्निपितृकालभानि कृत्तिकामघाभरण्याख्यानिनक्षत्राणि अत्रपिंडदानग्रहणंश्राद्धोपलक्षणं एककल्पनालाघवात् अस्यापवादःप्रयोगपारिजातोदाहृतेसंग्रहवचने अमायांतेभरण्यांचद्वादश्यांपक्षमध्यके तिथिवारंचनक्षत्रंयोगंचनविचारयेदिति मासतिथिसमानजातीयामपिचतुर्दशीभिन्नायांतिथौनिषेधप्रयोजकयुक्तायामपियावत्संभवंशिष्टाः महालयश्राद्धमाचरंति आधुनिकेषुग्रंथेषुवचनान्यपिलिखितानि नागरखंडे आषाढ्याःपंचमेपक्षेकन्यासंस्थेदिवाकरे मृताहनिपितुर्योवैश्राद्धंदास्यतिमानवः तस्यसंवत्सरंयावत्संतुष्टाःपितरोध्रुवं कात्यायनः यातिथिर्यस्यतातस्यमृताहेतुप्रवर्तते सातिथिः पितृपक्षेतुपूजनीयाप्रयत्नतः तथा अशक्तः पक्षमध्येतुकरोत्येकदिनेयदा निषिद्धेपिदिनेकुर्य्यात्पिंडदानंयथाविधि इति एतानिवचनानिमहानिबंधेष्वदर्शनादनादरणीयानीति तथामार्कंडेयः कन्यागतेसवितरिदिनानिनवपंचच पार्वणेनविधानेनश्राद्धंतत्रविधीयते यस्तुवैवाहितोमासान्सत्यजेद्द्वादशैवहि सापिंडःपिंडनिर्माणंमौंजीबंधेषडेवहीति विवाहानंतरंपिंडदाननिषेधो ज्योतिः शास्त्रेपराशरेणोक्तः तस्यापवादःस्मृतिसंग्रहे महालयेगयाश्राद्धेमात्रापित्रोर्मृतेहनि यस्यकस्यापिमर्त्यस्यसपिंडीकरणेतथा कृतोद्वाहोपिकुर्वीतपिंडनिर्वपणंसुतइति सन्यासिनांतुमहालयश्राद्धंद्वादश्यांकर्त्तव्यं यतीनांचवन

पृथ्वीचंद्रोदयोक्तेः वायुपुराणेपि संन्या स
स्यानांचैष्णवानांतथैवच द्वादश्यांविहितंश्राद्धंकृष्णपक्षेविशेषतइति
नोप्यौरसादिपुत्रःकुर्य्याद्यथाविधि महालयेतुयच्छ्राद्धंद्वादश्यामेवतद्भवेदितिइदंतुतन्त्रेणैवकर्तव्यं मृताहंचसपिंडंच-
गयाश्राद्धंमहालयं आपन्नोपिनकुर्वीतश्राद्धमामेनकर्हिचित् इतिस्मृतिदर्पणेगालवोक्तेः अथात्रदेवताः तत्रायं
तावत्संग्रहश्लोकः तातांबात्रितयंसपत्नजननीमातामहादित्रयं सस्त्रीस्त्रीतनयादितातजननीस्वभ्रातरस्तास्त्रियः
तातांबात्मभगिन्यपत्यधवयुग्जायापितासद्गुरुः शिष्याप्ताःपितरोमहालयविधौतीर्थेतथातर्पणे अत्रमहालयविधौ
एतेसपिंडकश्राद्धदानार्हाः तथैतेषांपार्वणैकोद्दिष्टादिश्राद्धनिर्णयः पितरोयत्रपूज्यंतेतत्रमातामहाअपि तथाच अ
न्वष्टकासुवृद्धौचप्रतिसंवत्सरंतथा महालयेगयायांचसापिंडीकरणात्पुनः मातुःश्राद्धंपृथक्कुर्यादन्यत्रपतिनासह
हेमाद्रौ महालयेगयाश्राद्धेवृद्धौचान्वष्टकासुच नवदैवतमत्रेष्टंशेषंपाट्पौरुषंविदुरिति सपत्नमातुः सहैकतंत्रे
णद्विपितृकश्राद्धवत् निगमे महालयेगयाश्राद्धेश्राद्धेचान्वष्टकासुच ज्ञेयंद्वादशदैवत्यंतीर्थेप्रौष्ठेगयासुच तथाच
हेमाद्रौ उपाध्यायगुरुश्वश्रूपितृव्याचार्य्यमातुलाः श्वशुरभ्रातृतत्पुत्राऋत्विक्शिष्याह्युपोषकाः भगिनीस्वामि
दुहितृजामातृभगिनीसुताः एकोद्दिष्टविधानेनपूजनीयाः प्रयत्नतइति अत्रसंबंधप्रत्यासत्त्याक्रमः तत्तुल्यत्वेभर
णक्रमात्तेनार्थनिर्णयेपाठक्रमादितिवोध्यं अत्रप्रत्येकोद्दिष्टब्राह्मणभेदइतिमुख्य पक्षः अशक्तौतुचतुर्विंशतिमतेएक
स्मिन्ब्राह्मणेसर्वानाचार्य्यादीन्प्रपूजयेत् दशद्वादशवापिंडान्दद्यादकरणंनतु पार्वणानुवृत्तौविप्रानाहयाज्ञवल्क्यः
द्वौदैवेपितृकृत्येत्रीनेकैकमुभयत्रवा मातामहानामप्येवंतंत्रंवावैश्वदेविकं श्राद्धादेःसंपत्तैच दीपिकायांपराशर सं
पत्तावप्यपात्राणामेकैकस्यत्रयस्त्रयः पित्रादेर्ब्राह्मणाःप्रोक्ताश्चत्वारोवैश्वदैविके पात्रालाभेमनुः द्वौदैवेपितृकृत्येत्री
नेकैकमुभयत्रवा भोजयेत्सुसमृद्धोपिनप्रसज्येतविस्तरे अत्यशक्तौ हेमाद्रौदेवलः एकेनापिहिविप्रेणषट्पिंडंश्राद्ध

माचरेत् ॥ षडर्घ्यान्दापयेत्तत्र षड्भ्योदद्यात्तथाहविः ॥ तत्रैववसिष्ठः ॥ युग्मकंभोजयेच्छ्राद्धेदैवतत्रापिवैकथं ॥ अन्न
पात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यच देवतायतनेकृत्वाततःश्राद्धंसमाचरेत् ॥ आस्येदग्नौतदन्नंतुदद्याद्वाब्रह्मचारिणे ॥ अ
त्रदेवलः । एकेनापिचविप्रेणषट्पिंडश्राद्धमाचरेत् ॥ षडर्घ्यान्दापयेत्तत्रषड्भ्योदद्यात्तदासनं ॥ पिताभुंक्तेविप्रकरेमु
खेभुंक्तेपितामहः प्रपितामहस्तुतालुस्थः कंठेमातामहस्तथा प्रमातामहश्चहृदयेवृद्धोनाभौतुसंस्थितः ॥ एवम
प्याचरेच्छ्राद्धंषड्दैवत्यंमहामुने विलुप्तिकारयेयस्तुपितृहासप्रजायते ॥ हेमाद्रौसत्यव्रतः ॥ निधायदर्भानिचयमास
नेषुसमाहितः प्रैष्यानुप्रैष्यसंयुक्तंसर्वतत्रप्रकल्पयेत् मातृश्राद्धेतुविप्रालाभे सुवासिन्योऽपिभोजनीया इत्याह
परार्के वृद्धवसिष्ठः मातृश्राद्धेतुविप्राणामलाभेपूजयेदपि । पतिपुत्रान्विताभव्यायोषितोऽष्टौकुलोद्भवाइति ॥ वि
धवायास्तुविशेषः स्मृतिसंग्रहे चत्वारिपार्वणानीहविधवायाःसदैवहि स्वभर्तृश्वसुरादीनांमातापित्रोस्तथैवच
ततोमातामहानांचश्राद्धदानमुपक्रमेदिति । तथा श्वश्रूणांचविशेषेणमातामह्यास्तथैवचेत्यपिपाठः तस्याःषड्
दैवत्येविशेषःस्मृतिरत्नावल्यां स्वभर्तृप्रभृतित्रिभ्यःस्वपितृभ्यस्तथैवच । विधवाकारयेच्छ्राद्धंयथाकालमतन्द्रि
तेति विधवास्वयंसंकल्पंकृत्वा अन्यद्वाराकारयेदितिप्रयोगपारिजातः अत्रचैकपाकः वैश्वदेववदेकतंत्रं पृथग्वा
एकोद्दिष्टं एकोद्दिष्टेअग्नौकरणंनकर्त्तव्यमितिगृह्यकाराः ॥ एकोद्दिष्टस्वरूपमाह याज्ञवल्क्यः एकोद्दिष्टंदैवहीनमे
कार्घ्यैकपवित्रकं आवाहनाग्नौकरणरहितंत्वपसव्यवदिति । अत्रपाणिहोमः पिंडश्चद्विजातिकरइत्याह ॥ प्रयोग
पारिजाते आचार्यः काम्यमभ्युदयोऽष्टम्यामेकोद्दिष्टमथाष्टकं चतुर्ष्वेषुकरेहोमःपिंडश्चात्रद्विजातकइति पार्वणैको
द्दिष्टयोः समानतंत्रत्वेतु अग्निसमीप एवहोमः अत्रधुरिलोचनौविश्वदेवौ आपिकन्यागतेसूर्येकाम्येचधुरिलोच
नाविति हेमाद्रावादित्यपुराणवचनं तत्काम्यवृद्ध्याक्रियमाणमहालयश्राद्धविषयमितिहेमाद्र्यादयःकेचित्तुनित्येम

हालयश्राद्धंतावदिच्छंति ॥ सतांत्विंतन्नसेचते ॥ अथतोनाम्नमहालयपदं श्रूयते ॥ किंतुकन्यागतेसूर्ये श्राद्धइत्येव तत्र.
किंकन्यागतेसूर्येइत्यधिकरणसप्तमी उतनिमित्तसप्तमी ॥ आद्येकन्यागताधिकरणतुवार्षिकादिष्वतिप्रसंगः ॥ महाल
यश्राद्धस्यतन्निमित्तकत्वाभावेतत्रधुरिलोचनौनस्यातांकिंतुपुरूरवोमाद्रवनाम्नौ ॥ आषाढीमवधिंकृत्वायःस्यात्पक्ष
स्तुपंचमः श्राद्धंतत्रप्रकुर्वीतकन्यांगच्छतुवानवा आगतेपिरवौकन्यांश्राद्धंकुर्वीतयत्नतः आषाढ्याःपंचमःपक्षःप्र
शस्तः पुण्यकर्मणीति जातूकर्णजाबालिवचनाभ्यां महालयश्राद्धस्य केवलाषाढ्याःपंचमपक्षप्रयुक्तत्वात् तत्रैव
शक्रध्वजनिपातांतोयःस्यात्पक्षस्तुपंचमः सविज्ञेयोऽपरःपक्षःश्राद्धंतत्रविधीयते पुत्रानायुस्तथाधान्यमारोग्यंप्रभु
तिमेवच प्राप्नोतिपंचमेदत्वाश्राद्धंदातातथापरान् ॥ एतान्यपिहिहिंसातिपंचयोवैव्यतिक्रमेत् ॥ तस्मान्नातिक्रमे
विद्वान्पंचमेपितृकंविधिमिति कन्यार्कयोगस्यप्राशस्त्यार्थः ॥ नतुतस्यनिमित्तत्वं तर्हि किंनिमित्तमेतद्वचनमितिचे
त् नांदीमुखानांप्रत्यब्दंकन्याराशिगतेरवौ ॥ पौर्णमास्यांतुकर्त्तव्यंश्राद्धंतत्रविजानता इतिविहितेश्राद्धे कन्या
र्कयुक्तपौर्णमास्यानिमित्तत्वेनतत्रकन्यार्कस्यापिनिमित्तत्वात् तत्रभवेतांधुरिलोचनौ यद्वा कन्यार्कसंक्रांतिश्राद्धेषु
वेतौ ॥ नतुकदाचिन्महालयश्राद्धेइति ॥ अत्रैवप्रतिदिनप्रयोगभेदाद्दक्षिणाभेदः यत्तु हेमाद्रिणाऽभ्यासपक्षे अंतेद
क्षिणादानमित्युक्तं तत्कौर्म्येऽपि प्रतिदिनप्रयोगभेदाद्दक्षिणायाश्च प्रयोगांगत्वात्प्रत्युक्तं प्रयोगांगतायाश्चानंतत्व
मुक्तमित्यर्थः एतच्चगुर्विणीपतिनाजीवत्पितृकेणापिपिंडरहितंकार्यं तथाषदक्षः मुंडनंपिंडनंचैवप्रेतकर्मचसर्वशः
नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवचेति जीवत्पितृकस्यत्वष्टकावार्षिकादौवचनाद्भवति नान्यत्रेति ॥ एतच्चसंन्यस्त
पितृकादिनाजीवत्पितृकेणापिकार्यं ॥ वृद्धौतीर्थेचसंन्यस्तेताते चपतितेसति ॥ येभ्यएवपितादद्यात्तेभ्योदद्यात्स्व
यंसुत इतिकात्यायनोक्तेः यत्तुकौंडिन्यः दर्शश्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षिकं ॥ नजीवत्पितृकःकुर्यात्तत्संन्यस्त.

पितृकस्तत् जीवत्पितृकातिरिक्तविषयं पिंडप्रतिषेधस्तु छागलेयः पिंडो यत्र निवर्त्तेत मघादिषु कथंचन। संकल्पं तु तदा कार्यं नियमाद्ब्रह्मचर्यादिभिरिति संकल्पश्राद्धं कर्तव्यं अशक्तश्चापार्वणश्राद्धं यथावत्कर्तुमक्षमः। पिंडार्घ्यादिविहीनं तु संकल्पश्राद्धमाचरेत्। अत्र श्राद्धतर्पणं पक्षश्राद्धप्रतिदिनं। श्राद्धोत्तरं सकृन्महालये तु परान्हे कार्यं तदुक्तं नारदीये पक्षश्राद्धं यदा कुर्यात्तर्पणं तु दिने दिने। सकृन्महालये चैव परेऽहनि तिलोदकं। गोभिः पक्षश्राद्धे हिरण्यं च अनुव्रज्यातिलोदकमिति प्रयोगपारिजातेऽपि गर्गः कृष्णभाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत्। पितृणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणं। सकृन्महालयो यः स्यादष्टकास्वेतन एव ही। क्षिप्रं [illegible] दिनेऽपि कार्यै तीर्थे तीर्थविशेषेषु कार्यं प्रेते च सर्वदेति स्मृत्यर्थसारोक्तेः तीर्थे तीर्थविशेषे च गयायां प्रेतपक्षके। निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितमिति स्मृतिरत्नावल्यां वचनाच्च। एतच्च मलमासे न कार्यं। तदाह भृगुः। वृद्धिश्राद्धं तथा सोमम् अग्न्याधानं महालयं। राजाभिषेकं काम्यं च न कुर्याद्भानुलंघिते इति हेमाद्रौ। नागरखंडेऽपि। नभो वाथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्रैव तु पंचम इति। एतच्च पित्रोर्मरणे प्रथमाब्दे कृताकृत इति त्रिस्थलीसेतौ भट्टाः। इदं च नित्यं काम्यं च। पुत्रानायुस्तथारोग्यमैश्वर्यमतुलं तथा। प्राप्नोति पंचमे दत्त्वा श्राद्धं कामांश्च पुष्कलानिति जाबाल्युक्तेः। आषाढ्याः पंचमे पक्षे यः श्राद्धं न करिष्यति। शाकेनापि दरिद्रोऽपि सोऽस्य जत्वमुपैष्यति। आसनं शयनं भोज्यं स्पर्शनं भाषणं तथा। तेन सार्द्धं करिष्यंति ते तु पापप्रा नराः। इति नागरखंडोक्तेश्च। वृश्चिके समतिक्रांते पितरो दैवतैः सह। विश्वस्य प्रतिगच्छंति शापं दत्त्वा सुदारुणमिति कार्ष्णाजिनिवचनात्। तदतिक्रमे प्रायश्चित्तमुक्तं स्मृतिविधाने। द्रुरोत्रश्वत्थमंत्रं च दशवारं द्विमासयोः। महालयं यदा न्यूनं तदा संपूर्णमिति तदिति। द्विमासयोः कन्यातुलयोः महालयं श्राद्धं सदा [illegible] इत्यर्थः। इदं चाश्विनापरपक्षपार्वण

सूर्येकन्यांगतेश्राद्धंयोनकुर्याद्दिनेदिने धनं
निर्त्यश्राद्धंदेयंदिनेदिनेइतिफलनिरपेक्षश्रवणात्संध्यावंदनवत् काम्यमपि पार्वणमिदं तदुक्तं वायुपुराणे प्र
पुत्राः कुतस्तस्यपितृनिः श्वासपीडनादिति द्वितीयायांतुयः कुर्याद्द्विपदाधिपतिर्भवेत् परार्थिनीतृतीयातुशत्रुघ्नीप्र
तिपद्धनलाभायलब्धंचास्यननश्यति पंचम्यांचैवकुर्वाणः प्राप्नोतिपरमंपदं षष्ठ्यांश्रा
पनाशिनी श्राद्धचतुर्थ्यांकुर्वाणः शत्रोश्छिद्रंसपश्यति महाशत्रुगणाध्यक्षोवहुबंधुश्चजायते
द्धप्रकुर्वाणोद्विजास्तपूजयत्युत कुरुतेयस्तुसप्तम्यांश्राद्धंतुसततंनरः महाशत्रुगणाध्यक्षोवहुबंधुश्चजायते
महासत्त्वमवाप्नोतियोष्टम्यांकुरुतेनरः श्राद्धंनवम्यांकर्त्तव्यमैश्वर्य्यंस्त्रैणमिच्छता कुर्वन्दशम्यांतुनरोब्राह्मींश्रिय
मवाप्नुयात् वेदांश्चावाप्नुयात्सर्वान्विप्राणांकुरुतेतथा एकादश्यांपरंदानमैश्वर्य्यंसंततिंतथा द्वादश्यांजयलाभंच
राज्यमायुः प्रजावसु प्रजावृद्धिंपशून्मेधांस्वातंत्र्यंपुष्टिमुत्तमां दीर्घमायुरथैश्वर्य्यंकुर्वाणस्तुत्रयोदशीं श्रमा
वास्यांप्रयत्नेनश्राद्धंकुर्याद्विचक्षणः सर्वान्कामानवाप्नोतिस्वर्गंचानंत्यमश्नुते एवंब्रह्मपुराणेऽपि कालाविशेषा
भिधानात् चतुर्दश्यांतुशस्त्रहतानामेवश्राद्धंभवति तथाच ब्रह्मपुराणे जलानशनशस्त्राग्निविषाद्धगता
तथा चतुर्दश्यांभवेत्पूजातृप्त्यर्थमितिनिश्चयः इतिमहालयनिर्णयः अथमहालयपक्षे प्रतिदिनकृत्यानि
तत्रादौ आश्विनकृष्णप्रतिपदायां तिथिपत्वाद्वह्निपूजा महालयश्राद्धंच स्कांदे सेतुखंडे
तस्माच्छुभेकृष्णपक्षेप्रथमायांतिथौतथा श्राद्धमहालयंकुर्याद्योनरोभक्तिपूर्वकं दशकल्पसहस्राणिपितरोयां
तितृप्ततां आश्विनकृष्णद्वितीया भरणीयुता तृतीयाचं कृत्तिकायुतापितृणामतिप्रीतिदा तदुक्तंपृथ्वी
चंद्रोदये वृहस्पतिः नभस्यापरपक्षेतु द्वितीयायादियाम्यभे तृतीयाजाग्नितारामिःसहिताप्रीतिदापितुरि
ति स्कांदेसेतुखंडे वेदविद्ब्राह्मणोभुंक्तेद्वितीयायांमहालये विंशत्कल्पसहस्राणिपितरोयांतितृप्ततामिति

आश्विनकृष्णतृतीया कृत्तिकायुता महालयश्राद्धेऽतिपुण्यदेति प्रागुक्तं स्कांदे सेतुखंडे ऽपि
तृतीयायांतुयोभक्त्याश्राद्धंकुर्यान्महालये तृप्यंतिपितरस्तस्यत्रिंशत्कल्पसहस्रकमिति अस्या
मेव हस्तार्कयोगेबृहद्गौरीव्रतं भविष्योत्तरे नारदीयेऽपि अथान्यद्बृहतीगौरीव्रतंकन्यागतेरवौ मासिभाद्रपदे
कृष्णतृतीयायांचतद्व्रतं भाद्रोऽत्रदर्शांतः अथबृहद्गौरीव्रतपूजा चतुर्भुजांसुवर्णाभांनानालंकारभूषितां हिमेंदुतु
हिनाभासांमुक्तामणिविभूषितां पाशांकुशधरांदेवींध्यायेत्सर्वार्थसिद्धिदां कमंडलुधरांसूक्ष्मांपानपात्रंचबिभ्र
तीं ध्यान एहिमातर्विशुद्धेत्वंत्रिगुणेपरमेश्वरि आवाहयामिभक्त्यात्वांप्रसन्नाभवसर्वदा आवाहनं हेमरत्न
कृतंदेविआसनंतेविनिर्मितं पाशांकुशधरेदेवीमासनेस्थापयाम्यहं आसनं अक्षमालांकुशधरेवीणापुस्तक
धारिणि भक्त्यादत्तंमयातोयंपाद्यार्थंप्रतिगृह्यतां पाद्यं अर्घ्यंददामितेभक्त्याभक्तानामभयंकरे गृहाणत्वं बृहद्गौ
रिनमस्कारोऽस्तुतेमम अर्घ्यं भक्तानामिष्टदेमातःसर्वालंकारसंयुते आचम्यतांजगन्मातर्बृहद्गौरिनमोऽस्तुते
आचमन सपचामृतंस्नान स्नापयामिजगन्मातस्त्वांसतीर्थजलेनवै प्रार्थितासिमयादेविसद्यस्तापविनाशि
नी स्नान वस्त्रंधौतंमयादेविदुकूलंतवनिर्मितं भक्त्यासमर्पितंमातर्गृह्यतांजगदंबिके वस्त्र अथसिंदूरहरिद्राकुं
कुमादिसौभाग्यद्रव्याणिनिवेदयेत् मलयाचलसंभूतंघनसारंमनोहरं गंधंगृहाणदेवित्वंबृहद्गौरिनमोस्तुते गं
धं अक्षतानरविंदाक्षिकुंकुमाक्तानखंडितान् गृहाणवरदेमातर्नमस्तेसकलेष्टदे अक्षताः ॥ चंपकादीनिपुष्पाणिभ
क्त्यानीतानिमेशुभे पूजार्थंगृह्यतांदेविजातीपुन्नागमालती पुष्पं धूपोऽयंगृह्यतांदेविकालागुरुघृतान्वितः आघ्रे
यः सर्वदेवानांदेवद्रुमरसोद्भवः धूपं दीपंगृहाणदेवेशित्रैलोक्यतिमिरापहं वह्निनायोजितंमातर्बृहद्गौरिनमो
स्तुते दीपं नैवेद्यंगृह्यतांदेविनानारसमनोहरं भक्ष्यभोज्यादिकंस्वादुप्रीयतांपरमेश्वरि नैवेद्यं कर्पूरेलालवगा

हिरण्यगर्भगर्भस्थं हेमवीजविभावसोः ...
द्दिनागवल्लीदलैर्युतं पूगीफलयुतंदेवितांबूलंप्रतिगृह्यतां तांबूलं सर्वकार्य्यप्रदेदेविगृहाण
पुण्यफलदमतःशांतिप्रयच्छमे दक्षिणाद्रव्यं क्षेमसंपत्करेदेविसर्वसौभाग्यदायिनि आयुर्देहियशोदेहिसौभाग्यंदेहिमेशिवे इ
र्घ्यंनमोस्तुते इत्यर्घ्यं धारयिष्यामिभद्रेत्वांत्वद्भक्त्यात्वत्परायणा चंद्रायार्घ्यंदान
तिडोरकबंधनं गगनांतरसद्दीपक्षीराब्धिमथनोद्भव भाभासितदिगाभोगरमानुजनमोस्तुते इतिवायनम् आहूतासिमयादे
मिति पक्वान्नफलसंयुक्तंवंशपात्रसदक्षिणं वायनंतेप्रयच्छामिव्रतहद्दौरिनमोस्तुते इतिविसर्जनपूजाविधिः अथकथा भविष्योत्तरे
विपूजितासिपथाविधि ममसौभाग्यदानाययथेच्छातत्रगम्यतां मासिभाद्रपदेकृष्णातृतीयायांचतद्व्रतं आनयेद्बृहतींगौरींशा
विजयोवाच अथान्यद्बृहतीगौरीव्रतंवक्ष्यामिकन्यके न्यसेच्चन्द्रोदयंदृष्ट्वास्नात्वाधौतांवरावृता सखीभिः
खामूलफलैः सह निक्षिप्यदेवतावेधांतदधः सिकताशुभां गंधपुष्पाक्षतैर्दिव्यैर्धूपैर्दीपैरनेकशः
सहितासन्यगलंकृत्यप्रपूजयेत् गौरीमावाह्यविधिवत्सिकतामंडलेशुभे डोरकंबंधयेत्पश्चात्तंतुपंचकनिर्मितं
सर्वोपचारैर्बृहतींपंचपंचभिरर्चयेत् एवंपूज्ययथाशक्त्याकृत्वाचैवप्रदक्षिणां सर्वकामप्रदेदेविगृहाण
वध्नामिडोरकंभक्त्यात्वद्भक्तात्वत्परायणा आयुर्देहियशोदेहिसर्वसौभाग्यदायिनि डोरकंप्रथमंवद्ध्वा
र्घ्यंनमोस्तुते गगनांगनसद्दीपक्षीराब्धिमथनोद्भव भाभासितदिगाभोगरमानुजनमोस्तुते पक्वान्नमर्घं
चंद्रायार्घ्यंप्रदापयेत् कथामेतांचशृणुयाद्गौर्य्यंव्रतन्मनाःसदा ततोगोधूमचूर्णेनपंचाभिःकुडवैःकृतं
विप्रायदत्त्वाभुंजीतचस्वयं एवंवैपंचवर्षाणिकृत्वाव्रतमनुत्तमं सर्वान्कामानवाप्नोतिनात्रकार्याविचारणा कन्योवाच
केनचादौपुराचीर्णंव्रतंयत्तुत्वयोदितं ईप्सितंकोत्रलभेवाव्रतस्यास्यप्रभावतः विजयोवाच शृणुध्वमृष
यःसर्वेनैमिपारण्यवासिनः पुराकृतयुगस्यादौसर्वभूतहितैषिणा शंभुनाकथितंगौर्य्यैतद्व्रतंकथयाम्यहं कदाचि

दुपविष्टंतंपार्वतीपर्य्यपृच्छत शंभोत्वांप्रष्टुमिच्छामिकरुणाकरशंकर सर्ववाधोपशमनंसर्वकामफलप्रदं व्रता
नांसर्वदानानामुत्तमंब्रूहितत्त्वतः आयुरारोग्यदंदेवपुत्रपौत्रप्रदायकं तद्व्रतंब्रूहिदेवेशयथाहंतववल्लभा ईश्वरउवाच
शृणुदेविपरंगुह्यंव्रतंपरमदुर्लभं पुराभूद्द्वापरस्यांतेपांडोःप्रियवरांगना वर्षषोडशसंपूर्णासंपन्ननवयौवना अ
नपत्यातुसाकुंतीभर्तारमिदमब्रवीत् केनकर्मविपाकेनपुत्रहीनास्मिदुःखिता अनपत्येप्रतीकारमिदानींब्रूहित
त्त्वतः पांडुरुवाच ऋषिशापोस्तिमेभद्रेयतःसोनभविष्यति भर्तुस्तद्वचनंश्रुत्वापितृगेहेभ्यगात्स्वयं पितुर्गेहेवर्तमा
नाकुंतीव्यासंददर्शह नमस्कृत्यचतंप्राहकुंतीमुकुलितांजलिः कुंत्युवाच तातमेकथयाशुत्वंपुत्रसंतानदायक
सर्वसंपत्प्रदंन्दृणांव्रतमेकंमहामुने व्यासउवाच शृणुत्वंवृहतीगौर्याव्रतंसंतानदायकं भाद्रकृष्णतृतीयायांनि
शिचंद्रोदयेशुभे स्नानंकृत्वातुविधिवन्मौनंधृत्वाव्रतंचरेत् सर्वसंपत्करंस्त्रीणांधनपुत्रान्नसौख्यकृत् गोभूहिरण्य
दानानांसर्वेषामधिकंश्रुतं पंचवर्षविधातव्यंततउद्यापनंचरेत् उद्यापनविधानेनसंपूर्णंफलमश्नुते अंतेतुकार
येद्भद्रेसौवर्णंवृहतीफलं षडुत्तरचतुर्भिश्चशुभैर्वंजैर्युतंतुतत् देव्याःपुरस्तात्संस्थाप्यपूर्ववत्प्रतिपूजयेत् आचा
र्यंपूजयेद्भक्त्याविप्रान्पंचतथैवच सुवासिन्यः पंचपूज्यावस्त्रालंकारभूषणैः कंचुकैश्चैवताटंकैःकंठसूत्रैर्हरिद्रया
वंशपात्राणियुग्मानिसूत्रैःसंवेष्टितानिचसिंदूरंजीरकंचैवसौभाग्यद्रव्यसंयुतं गोधूमपिष्टजातंचवृहतीफलपंचकंवा
यनानिचपंचैवताभ्योदत्त्वातुभोजयेत् अर्घ्यंदत्त्वावायनानिस्वयंभुंजीतवाग्यता तत्फलंधारयेत्कंठेसर्वकामसमृ
द्धये ततःप्रातःसमुत्थायसालंकारासखीजनैः गीतवाद्ययुतानद्यांगौरींतांतुविसर्जयेत् आहूतासिमयादेविपू
जितासिमयाशुभे ममसौभाग्यदानाययथेष्टंगम्यतांत्वया एतद्व्रतप्रभावेणकाचिद्ब्राह्मणकन्यका पतिंसंपूज
यामासनिर्भर्त्स्यचमाकिंकरान् तस्माच्चरत्वंव्रतमेतदाद्यमायुःप्रदंपुत्रसमृद्धिदंवा पुत्रैश्चपौत्रैश्चयुताचपत्यागौरी

प्रसादाद्ध्रुवजीवपुत्रा    यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः   सभुक्त्वाविपुलान्भोगानंतेशिवपदंव्रजेत् ॥ ॥

इतिभविष्योत्तरेबृहद्गौरीव्रतम्

नारदीयेपि इषकृष्णतृतीयायांबृहद्गौरीव्रतंचरेत्  पंचवर्षविधानेनपूर्वोक्तमिवनारद ..  आचार्यंपूजयेदंतेविप्रा
न्पंचधनादिभिः  सुवासिनीःपंचपूज्यावस्त्रालंकारचंदनैः  कुंचुकैश्चैवताटंकैःकंठसूत्रैर्हरिद्रया  वंशपात्राणिपंचै
वसूत्रैःसंवेष्टितानिच  सिंदूरंजीरकंचैवसौभाग्यद्रव्यसंयुतं  गोधूमपिष्टजातंचनवापूपफलादिकं  वायनानिच
पंचैवताभ्योदद्याच्चभोजयेत्  अर्घ्यंदत्त्वावायनानिपश्चाद्भुंजीतवाग्यता  तत्फलंधारयेत्कंठेसर्वकामसमृद्धयेततःप्रा
तःसमुत्थायसालंकारासखीजनैः गीतवाद्ययुतानद्यांगौरींतांतुविसर्जयेत्  आहूतासिमयादेविपूजितासियथाविधि
ममसौभाग्यदानाययथेष्टंगम्यतांत्वया  एवंकृत्वाव्रतंनारीद्विजदेवीप्रसादतः भुक्त्वाभोगांस्तुदेहांतेगौरीलोकमवाप्नु
यादिति  अथहस्तर्क्षगतेसूर्ये रविवारप्राप्तहस्तगौरीव्रतं सूतउवाच  कुंत्यांचतदपेतायांहस्तिनापुरमुत्तमं  याचि
तायांनरेंद्रैश्चतनयैः पंचभिः सह   तस्याः कुशलमान्विच्छन्नाजगामाथमाधवः  अभिनंद्यसुखासीनंदेवदेवंज
नार्दनं  उवाचकुंतीसानंदाह्यप्रगल्भमिदंवचः कुंत्युवाच  धन्याऽस्मिकृतकृत्याऽस्मिसनाथाऽस्मिपरंतप साहंसंभा
वितास्मित्वयासर्वजगत्पते यदिमेसुप्रसन्नोऽसितदाचक्ष्वव्रतंविभो यंविधायसुखंराज्यंप्राप्नुयांतनयैः सह श्रीकृ
ष्णउवाच  शृणुकुंतिप्रवक्ष्यामिव्रतानामुत्तमंव्रतं   यत्कृत्वासुखसंतानेधनधान्यसमन्विता विधूतदुष्कृतापुण्यास
पुत्राराज्यमाप्स्यसि   हस्तगौरीव्रतंभद्रेकुरुष्वशुचिमानसा यत्कृत्वासर्वतः संपल्लभतेवांछितंफलम्  कुंत्युवाच
यत्त्वयोक्तंव्रतंनाथविधानंतस्यकीर्तय  केनपूर्वंकृतंदेवतन्मेब्रूहिजनार्दन  श्रीकृष्णउवाच  कैलासशिखरेदेवीहस्त
र्क्षेचदिवाकरे दिवाप्रसुतागौरीतुहरसान्निधिमागता   सासप्तादेवदेवेशंस्वप्नेशंभुंददर्शह  अर्धदेहंवृषारूढस्थमर्धचंद्र

कलाधरं किमिदंतन्ममाचक्ष्वतप्यतेमानसंमम ईश्वरउवाच देविपूर्वंचसुप्तोऽसिहस्तऋक्षगतेरवौ नस्वपत्यंदिवात
व्रतस्येदंविहितंफलं,शृणुदेवित्वयायेनखंडितोहंविलोकितः त्वयारब्धंव्रतंदेविमदाराधनकाम्यया अपूर्णेऽस्मिन्प्र
सन्नोऽस्मितत्त्वयाचसमुज्झितं अपूर्णव्रतपातेनदृष्टोऽहंतादृशस्त्वया तत्कुरुष्वाधुनादेविहस्तगौरीव्रतंशुभं पार्वत्युवा
च आदिश्यतांव्रतंनाथविधानंचमहेश्वर आरंभोऽस्यकदाकार्य्यःकोविधिः कस्यपूजनं ईश्वरउवाच मंडपस्थाप
नकुर्यात्सर्वालंकारभूषितं अन्वहंकांचनैः पुष्पैः फलमुक्तासमन्वितैः नैवेद्यैः पंचखाद्यैश्चशृणुशास्त्रस्यहंक
थां दिनेचतुर्दशेप्राप्तेस्थापयेत्प्रतिमांशुभां पक्वान्नैः सुरसैः शुभैः सार्धसार्धत्रयोदश सार्धत्रयोदशादिनं नैवे
द्यमुपकल्पयेत् फलमूलानिचान्यानितावंतिसमुपाहरेत् पूजयेच्चसुवर्णस्यपुष्पैश्चान्यैःसुगंधिभिः चंदनैर्धूपदी
पैश्चतांबूलैश्चफलादिभिः ध्यायेच्चहृदयेगौरींहरदेहेवसंयुतां दक्षिणांचततोदत्वानत्वादेवींविसर्जयेत् सार्धत्रयो
दशतथादीपिकाश्चोलिकान्विताः सुवासिन्यैस्त्रियै दत्वातावतः स्वयमाहरेत् व्रतसमाददेहिवियावद्वर्षत्र
योदश स्वर्णभाजनगौर्य्यादिप्रतिवर्षंविसर्जयेत् पूर्वोक्तविधिनापूज्यवासराणित्रयोदश चतुर्दशेऽथदिवसेसं
जातेप्रातरुत्थिता कृत्वोपवासंनियमंगजगौरींप्रकल्पयेत् पक्वान्नंस्वर्णपात्रेषुत्रयोदशाविनिःक्षिपेत् स्त्रीभ्यश्च
कंचुकीर्दद्याद्भोजयित्वाविसर्जयेत् एवंदेविव्रतंकृत्वासर्वान्कामानवाप्नुयात् अशक्तौतुसदाकार्य्या प्रतिमामृत्तिका
मयी पात्राणिवैणवान्येवपीतपुष्पाणिचैवहि श्रीकृष्णउवाच ततश्चक्रेव्रतंगौरीप्राप्तासावांछितंफलं त्वमप्येतद्व्रतं
कुंतिकुरुश्रद्धासमन्विता अथभक्त्याव्रतंकुंतीसविधानमथाकरोत् गांधारीचापितच्छ्रुत्वाव्रतंचक्रेयथाविधि तुष्टा
साभक्तिभावेनहस्तगौरीवचोऽब्रवीत् गौर्य्युवाच कुंतितेपरितुष्टास्मिवरंवरयसुव्रते कुंत्युवाच देहिमेसर्वसंपत्तिंसर्वं
सौख्यंचसौहृदंप्रयच्छममपुत्राणांमहद्राज्यमनामयं व्रतमेतत्तुयाकुर्य्यात्त्वल्लोकमवाप्स्यति नदारिद्र्यंनवैधव्यंन

एतद्व्रतंसकलदुःख
शोकोनापिदुष्कृतंकृच्छ्रंनापत्कृतंदेविकदाचित्संभविष्यति तथेत्युक्त्वाततोगौरीतत्रैवांतरधीयत एतद्व्रतंसकलदुःख
विनाशहेतुसौभाग्यराज्यफलभाजनमाचरंति यायोषितःसुखमनंतमिहाऽपिराज्यंगौरीपतिव्रतरतास्तुततोलभंते
इतिभविष्योत्तरेहस्तगौरीव्रतम् ॥
आश्विनकृष्णचतुर्थ्यांमासचतुर्थी गणेशव्रतंमहालयश्राद्धं स्कांदे सेतुखंडे चतुर्थ्यांतुतिथौमर्त्योयस्तुकुर्यान्महा
लय पितरःकल्पसाहस्रंचत्वारिंशत्प्रहर्षिताः बहून्पुत्रान्प्रदास्यंतिश्राद्धकर्मणितर्पिताः आश्विनकृष्णपंचम्यांमहा
लयश्राद्धंपंचम्यांतुतिथौमर्त्योयः करोतिमहालयं पंचाशत्कल्पसाहस्रंतृप्यंतिपितरस्तदा संततिंचाप्यविच्छिन्नांत
स्मैदास्यंतितर्पिताः पार्वतीतुप्रसन्नास्यान्महदैश्वर्यदायिनी एनामधिकृत्यदेवीपुराणे तत्रैवकारयेद्देवींपितृ
पांमहोदयां कन्यास्थेचरवौवत्सपूजनीयायथाविधि भौजंगींतिथिमासाद्ययावच्चंद्रार्कसंगमं तत्रापिमहतींपू
जाकर्त्तव्यापितृदैवते ऋक्षेपिंडप्रदानंतुज्येष्ठपुत्रीविवर्जयेत् भौजंगीतिथिः पंचमी तेनात्रापिपंचम्यादयः प्रश
स्ताइति पितृदैवतमत्रभरणीनक्षत्रं मघाच अत्रपिंडप्रदाननिषेधविषयं मघाविषयेवक्ष्यते आश्विनकृष्णष
ष्ठ्यांमहालयश्राद्धं स्कंदपुराणेसेतुखंडे षष्ठ्यांतिथौतुयोमर्त्यः श्राद्धंकुर्यान्महालये षष्टिवर्षसहस्राणिपितरोयांति
तृप्ततां पुत्रानपिप्रदास्यंतिश्रियंचाविपुलांतथा अस्यामेवरोहिणीव्यतीपातभौमवारयुक्तायां कपिल
षष्ठीव्रतं तदुक्तं वाराहे नभस्यकृष्णपक्षेतुरोहिणीपातभूसुतैः युक्तायाषष्ठिपुराणज्ञैः कपिलासाप्रकीर्त्तिता
नभस्योभाद्रमासोऽत्रदर्शांतः व्रतोपवासनियमैर्भास्करंतत्रपूजयेत् कपिलांतुद्विजाग्र्यायदत्त्वाक्रतुफलंलभेत्
पुराणसमुच्चये हस्तार्कयोगेनातिशस्तोक्ता भाद्रमासिसितपक्षेभानौचैवकरेस्थिते पातकुजेचरोहिण्यांसाष
ष्ठीकपिलास्मृता तदुक्तं निर्णयामृते हेमाद्रौ स्कांदे संयोगेतुचतुर्णांहिनिर्दिष्टापरमर्षिभिः तत्रैवोक्तं

अत्रविशेषेहेमाद्रौ स्कांदे । देवदारुतथोशीरंकुंकुमैलामनःशिला । पत्रकंपद्मकंयष्टीमधुगव्येनपेषयेत । क्षीरेण
लोडयकल्केनस्नानंकुर्यात्समंत्रकं । तत्रमंत्रः । आपस्त्वमसिदेवेशज्योतिषांपतिरेवच । पापंशमयमेदेववाङ्म
नः । कायकर्मजं । पंचगव्यकृतस्नानः । पंचभंगैस्तुमार्जयेत । पंचभंगैः । पंचपल्लवैः । तथा । तत्त्वेनान्ना
विधेयुक्तंसौवर्णंकारयेद्रविं । शक्तितस्तुपलादूर्ध्वंतदूर्ध्वंकर्षतोपिवा । सौवर्णमरुणंकुर्यान्नौकांचैवतथारथं । अल्प
वित्तोऽपियः कश्चित्सोऽपिकुर्याद्दिमंविधिं । प्रभासखंडेच । स्थापयेद्व्रणकुंभंचंदनोदकपूरितं । रक्तवस्त्रयु
गंच्छन्नंताम्रपात्रेणसंयुतं । तथारौक्मपलस्यैवएकचक्रः । सुचित्रितः । सौवर्णपलसंयुक्तांमूर्तिंसूर्यस्यकारयेत्
ततः सूर्यंचकपिलांपूजयेदुपचारकैः । दिव्यमूर्त्तिर्लोकचक्षुर्द्वादशात्मादिवाकरः । कपिलासहितोदेवोममभक्तिं
प्रयच्छतु । यस्मात्त्वंकपिलेपुण्यासर्वलोकस्यपावनी । प्रदत्तासहसूर्येणममभक्तिप्रदाभवेति । अथकथा । हेमा
द्रौ स्कांदे । विक्रांतउवाच । रूपसंपदमारोग्यंसंततिंचापिपुष्कलां । प्राप्नोतिनरयेनात्तत्वंतद्वदस्वमे । अग
स्त्यउवाच । साधुसाधुमहाप्राज्ञयत्पृष्टोहंत्वयानघ । तत्सर्वंकथयिष्यामितवश्रेयोभविष्यति । शृणुपार्थिवव
क्ष्यामिस्वर्गमोक्षप्रदंनृणां । मन्वगुप्तंपुराराजन्ब्रह्मोपेंद्रादिदैवतैः । असुराणांचसर्वेषांराक्षसानांतथैवच । शंकरे
णपुराचैवषण्मुखायनिवेदितं । षण्मुखेनममाख्यातंमहापातकनाशनं । यच्छ्रुत्वाब्रह्महागोघ्नः । सुरापोगुरुतल्प
गः । आगारदाहीगरदः सर्वपापरतोपिवा । मुच्यतेसर्वपापेभ्यः स्वर्गलोकंचगच्छति । तच्चपुण्यंपवित्रंचतृ
णांदुष्कृतनाशनं । उपकारायलोकानांतथातवनृपोत्तम । शृणुभूपमहापुण्यंषष्ठीमाहात्म्यमुत्तमं । औष्पद्यासिते
पक्षेषष्ठीभौमेनसंयुता । व्यतीपातेनरोहिण्यासाषष्ठीकपिलामता । द्वितीयातुमहापुण्यादुर्लभाव्रतिनांकचित्
द्वितीयाकपिलाषष्ठीत्यर्थः । प्रथसिंवत्सरस्यांतेसापुनस्तेनसंयुता । चैत्रवैशाखयोर्मध्येसितपक्षेशुभोदये । वैशा

तस्यसर्वस्यपुण्यस्यसंख्यावक्तुंन
खेऽपिचराजेंद्रद्वारावत्यांपुरास्मृता ॥ तस्यांचैवहुतंदत्तंयत्किंचित्प्रतिपादितं ॥४॥ षष्ठ्यांप्रातः ॥ स
शक्यते । यस्मिन्कालेभवेदेतेगुणाः ॥ षष्ठीयुतातदा ॥ पंचम्यामेकभक्तंचकुर्यात्तत्रविचक्षणः ॥६॥ निराहारोथदेवेशत्वद्भक्तस्त्वत्परायणः ॥ पूजयि
मुत्थायकृत्वादौदंतधावनं । जलपूर्णांजलिंकृत्वाइमंमंत्रमुदारयेत् ॥ अर्घ्यंदत्त्वेतिसंकल्पंकृत्वायत्नाच्छुचिः ॥ स्थितः ॥ स्नानंकृत्वाप्रय
ष्याम्यहं भक्त्याशरणंभवभास्कर ॥ देवदारुतथोशीरंकुंकुमैलामनःशिला । पद्मकं
त्नेननद्यांतीर्थोदकेनदे । तडागेदीर्घिकायांवागृहेवानियतात्मवान् ॥ आपस्त्वमसिदेवेशज्योतिषांपतिरेवच
पत्रकंयष्टिमधुगंधेनपेषयेत् क्षीरेणालोड्यकल्केनकुर्यात्स्नानंसमंत्रकं ॥ पंचभंगैः पंचपल्लवैः आनयेन्मृत्ति
पापंनाशयमेदेवमनोवाक्कायकर्मजं । पंचगव्यकृतस्नानः पंचभंगैस्तुमार्जयेत् । पवित्रंकुरुमांनित्यंसर्वपापात्समुद्धर मंत्रेणाने
कांशुद्धांस्नानार्थंचैवयत्नतः मृत्तिकेब्रह्मदत्तासिकश्यपेनाभिमंत्रिता । अद्याहंप्रार्थयामित्वांपूतंकुरुसुरेश्वर । आदित्यो
नवरुणंपूजयेद्भक्तिमान्नरः । पाशाग्रहस्तवरुणसर्वयागेश्वरप्रभो । गोमयेनोपलिप्तायां भूम्यांवैकुंकुमे
भास्करोभानूरविःसूर्योदिवाकरः ॥ प्रभाकरोसित्वंवीरोदेवःसर्वेश्वरोहरिः ॥ पूर्वपत्रेन्यसेत्सूर्यमाग्नेय्यांभा
नतु मंडलंसर्वतोभद्रमालिखेद्बुद्धिमान्नरः ॥ तत्रमध्येलिखेत्पद्ममष्टपत्रंसकर्णिकं ॥ सौम्येप्रभाकरंत
स्करंन्यसेत् सुवर्णरेतसंयाम्येनैरृत्येविन्यसेद्रविं ॥ आदित्यंवारुणेपत्रेवायव्येचदिवाकरं ॥ सहस्रर
त्रसूर्यमीशानपत्रके तीव्ररश्मिधरंचैवब्रह्माणंचैवविन्यसेत् ॥ आधाररूपिणंदेवंमध्येवैवारुणंन्यसेत् ॥ सप्ताश्वरथमारूढंपद्महस्तंदिवाकरं ॥ अ
श्मिंसूर्यंचस्थूलसूक्ष्मगुणान्वितं ॥ सर्वगंसर्वरूपंचमध्येभास्करमेवच ॥ शक्तितस्तुपलादूर्ध्वंतदूर्ध्वंकर्पतोपिवा सौ
क्षसूत्रधनुष्पाणिंकुंडलैर्मुकुटेनच । रत्नैर्नानाविधैर्युक्तंसौवर्णंतत्रकारयेत् । अरुणंचित्ततापुत्रंगृहीताश्वमनूरुकं
वर्णमरुणंकृत्वानौकांचैवतथापरां । सप्ताश्वभूषितंकृत्वारथंतस्याग्रतःस्थितं ॥

एवंरूपंरथंकृत्वापद्मस्योपरिविन्यसेत्     तस्योपरिन्यसेद्देवंरक्तवस्त्रविभूषितं  रक्तचंदनमाल्यादिमंडितंचातिशोभि
त  अग्रतःसारथिंकृत्वापूजयेदरुणशुचिः  रक्तपुष्पैः सुगंधैश्चतथान्यैरपिशक्तितः  विनतातनयोदेव कर्मसाक्षी
तमोनुदः  सप्ताश्व सप्तरज्जुश्चअरुणोमेप्रसीदतु  मंत्रेणानेनसपूज्यसारथिंनदनतरं  देवस्यचासनकल्प्यप्रभू
तादिकपचक  प्रभूतविमलसारमाराध्यपरमशुभ  दीप्तादिशक्तिभिश्चैवततोभानुप्रपूजयेत्  दीप्तासूक्ष्मातथाभ
द्राविभूतिर्विमलानना  अमोघावैद्युताचांतेनवमीसर्वतोमुखी  अपवित्र पवित्रोवासर्वावस्थांगतोपिवा  य स्म
रेत्पुंडरीकाक्षसबाह्याभ्यंतर शुचिः  शिखायांभास्करंन्यस्यललाटेसूर्यमेवच  चक्षुर्मध्येन्यसेद्भानुमुखेतत्ररविंन्यसेत्
कंठेन्यसेद्भानुमतपद्मगर्भंहिहस्तयोः  तिमिरक्षयकृद्देवस्तनयोरेवविन्यसेत् उग्ररूपगुह्यदेशेतेजोरूपतुजघयो. पा
दयो.सर्वरूपतुसूक्ष्मस्थूलगुणान्वित  एवयथोक्तविन्यस्यपात्रगृह्यततोर्चयेत्  करवीरार्ककुसुमैरक्तचदनपकजैः
पुष्पैः सुगंधैर्धूपैश्चकुंकुमैरुपशोभितं  मार्तंडभानुमादित्यंभास्करंतपनंरविं ' हंसदिवाकरंचैवभास्करहरिमेवच सू
र्यचद्वादशात्मानपूजयेच्चप्रयत्नतः  जानुभ्यामवनींनत्वासूर्यायार्घ्यंनिवेदयेत् 'वेदगर्भनमस्तुभ्यंदेवगर्भनमोस्तुते
अव्यक्तमूर्त्तयेतुभ्यमर्घ्यंगृह्णनमोस्तुते ब्रह्ममूर्तिधरस्त्वच चतुर्वक्त्रसनातन सृष्टिस्थितौसस्थितायगृहाणार्घ्यंनमो
स्तुते  विष्णुरूपधरोदेवःपीतवस्त्रश्चतुर्भुजः  प्रभवःसर्वदेवानामर्घ्यंगृह्णनमोस्तुते  कालात्मासर्वभूतात्मा
वेदात्मासर्वतोमुखः  जन्ममृत्युजराशोकसंसारभयनाशनः दारिद्र्यव्यसनध्वंसीश्रीमान्देवोदिवाकरः सुवर्ण.
स्फटिकोभानु स्वर्णरेताःदिवाकरः  हरिदश्वांशुमालीचअर्घ्यंगृह्णनमोस्तुते  चतुर्भिर्मूर्त्तिभिः  संस्थाअष्टा
भिःपरिगीयते  सामध्वनिस्तपोयज्ञअर्घ्यंगृह्णनमोस्तुते  अथगंधंचपुष्पंचतथाधूपप्रदीपकं  नैवेद्यंच
यथाशक्त्याप्रार्थयेत्सूर्यदेवतां  अग्निमीलेनमस्तुभ्यंनमस्तेजातवेदसे .  इषेत्वैवनमस्तुभ्यमग्नेचैवनमोस्तुते

शन्नोदेवीनमस्तुभ्यंजगच्छत्रनमोनमः आत्मरूपिन्नमस्तुभ्यंविश्वमूर्त्तेनमोस्तुते त्वंब्रह्मात्वंचवौविष्णु
स्त्वधातात्वंहुताशनः मुक्तिकाममभीप्सामिप्रार्थयामिसुरेश्वर ।।इतिमंत्रंसमुच्चार्य्यनमस्कुर्वीतभास्करं
संवर्चसेतिपाणिभ्यांतोयेनविसृजेन्मुखं हंसःशुचिषदित्यृचासूर्यस्यैवावलोकनं उदुत्यंचित्रमित्येतत्सूक्तंसू
र्याग्रतोजपेत् प्रशस्तेचैवकोणेचफलकंचैवकारयेत् प्रथमेस्तेशैवकोणइतिकोस्तुभेपाठः अस्तत्रारंभसमये
ऐशान्यामितितदर्थः फलैःपुष्पैरक्षतैश्चभक्ष्यैर्नानाविधैरपि शय्यांतत्रचदेवस्यशुभेदेशेप्रकल्पयेत् पड्धा
न्यंपट्टसंदेवंरौप्यंचैवमहाप्रभुं पुरुषंखड्गहस्तंचकारयेन्नैवबुद्धिमान् वस्त्रयुग्मेनसंछन्नंलवणोपरिवर्त्तयेत्
अनेनैवतुमंत्रेणस्नानमभ्यर्चनंततः नमस्तेक्रोधरूपायखड्गहस्तजिघांसवे जिघांसुकामंत्वांदृष्ट्वाद्रुद्रुवुः सं
र्वदेवताः त्वयाव्यातंमेरुपृष्ठंचंद्रभास्करसुप्रभ अतस्त्वांपूजयिष्यामिअर्घ्यंगृहाणनमोस्तुते क्षपयित्वातु
तांरात्रिंगीतवादित्रनिःस्वनैः ततस्त्वभ्युदितेसूर्येहोमंकुर्यात्स्वशक्तितः पूजयेत्तत्रशक्त्याचविप्रांश्चविधिव
द्गुरुं होमोर्कस्यसमिद्भिश्चघृतमिश्रैस्तिलैस्तथा समिद्भिश्चरुकंचैवघृतंचजुहुयाद्द्विजः आकृष्णेनेतिमंत्रेणशतम
ष्टोत्तरंक्रमात् होमोव्याहृतिभिर्वाथस्विष्टकृत्तदनंतरं कपिलांपूजयेद्देवींसवत्सांपापनाशिनीं वस्त्रयुग्मांसघं
टांचस्वर्णशृंगविभूषितां सौवर्णास्यांरौप्यखुरींकांस्यदोहनकान्वितां मंत्रेणानेनतांदद्याद्ब्राह्मणायचशक्तितः मं
त्रेणतितृतीयांतस्यपूजयेदित्यनेनान्वयः कपिलेसर्वदेवानांपूजनीयासिरोहिणी सर्वतीर्थमयीयस्मादतःशां
तिंप्रयच्छमे यालक्ष्मीः सर्वदेवानांयाचदेवेष्ववस्थिता धेनुरूपेणसादेवीममशांतिंप्रयच्छतु देहस्थाया
चरुद्राणांशंकरस्यचयाप्रिया धेनुरूपेणसादेवीममपापंव्यपोहतु विष्णोर्वक्षसियालक्ष्मीः स्वाहाचैवविभावसौ
चंद्रार्कानलशक्तिर्याधेनुरूपास्तुसाश्रिये चतुर्मुखस्ययालक्ष्मीर्यालक्ष्मीर्धनदस्यच लक्ष्मीर्यालोकपालानांसा

धेनुर्वरदास्तुमे स्वधात्वंपितृमुख्याणांस्वाहायज्ञभुजामपि वषट्नाम्नोच्यतेलोकेसाधेनुस्तुष्टिदास्तुने
गावोममाग्रतः संतुगावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं इतिगोपूजामंत्रः गावः स्पृ
ष्ट्वानमस्कृत्ययोवैकुर्यात्प्रदक्षिणां प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा नमस्तेकपिलेदेविसर्वपापप्रणाशि
नि. संसारार्णवमग्नंमांगोमातस्त्रातुमर्हसि गोदानमंत्रः हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपु
ण्यफलदमतः शांतिंप्रयच्छमे रक्तवस्त्रयुगंयस्मादादित्यस्यतुवल्लभं प्रदानादस्यमेदेवोभास्करोवरदोस्तु
मे सुवर्णवस्त्रयुग्मंचपरिधानंचकारयेत् एभिः प्रकारैः संयुक्तांदद्याद्धेनुंद्विजातये भानोः प्रदक्षिणांद
द्यान्मंत्रेणानेनयत्नतः भास्करोविधितोजातोद्रव्यस्थोभास्करः स्वयं भास्करःस्वःप्रदाताचतेनवैभास्करोम
त इतिदानमंत्रः भास्करः प्रतिगृह्णातिभास्करोवैददातिच भास्करस्तारकोभूम्यांभास्करायनमोनम
इतिप्रतिग्रहमंत्रः ब्राह्मणान्भोजयेत्पश्चात्पायसेनगुडेनच शक्त्याचदक्षिणांदद्यात्तेभ्यश्चैवविशेषतः अ
ल्पवित्तोऽपियः कश्चित्सोऽपिकुर्य्यादिमंविधिं आत्मशक्त्यनुसारेणसोपितत्फलमाप्नुयात् आचार्यस्यततोभ
क्त्यासर्वपाणौविनिःक्षिपेत् गोभूहिरण्यवासांसिग्राहयेल्लवणंतिलाः एतत्सर्वंप्रदत्वाच कपिलांप्रार्थयेत्ततः कपिले
पुण्यकर्मासिनिष्पापेपुण्यकर्मिणि मांसमुद्धरदानंचददतोह्यभयंकुरु दिविवादित्रशब्दैश्चसेव्यसेकपिलेसदा तथा
विद्याधराःसिद्धाभूतानागगणाग्रहाः कपिलारोमसंख्यातास्तत्पदेवाप्रतिष्ठिताः पुष्पवृष्टिंप्रमुंचंतिनित्यमाकाशमा
स्थिताः ब्रह्मणोत्पादितादेवीअग्निकुंडात्समुद्भवा नमस्तेकपिलेपुण्येसर्वदेवनमस्कृते जयनित्यंमहासत्वे
सर्वतीर्थादिमंगले दातारंस्वजनोपेतंब्रह्मलोकंनयस्वमां ततःप्रदक्षिणंकृत्वानत्वाब्राह्मणपुंगवान् आशीर्वादा
न्विदयुस्तेपुत्रपौत्रधनागमान् आरोग्यंरूपसौभाग्यंसर्वदुःखविवर्जितः अंतेगोलोकमासाद्यचिरायुःसुखभाग्भवेत्

यदा स्वर्गात्प्रपततिराजाभवतिधार्मिकः सतद्वीपवतीं भुक्त्वाराज्यमकंटकम् अहोव्रतमहत्पुण्यंसर्वदुःखविना
शनं अतः परंप्रवक्ष्यामिदानस्यफलमुत्तमम् यथावेदमयेपात्रेसद्वृत्तेचाक्षयंभवेत् तथासर्वव्रतेश्रेष्ठमिदम
न्यूमहाफलम् उद्धरिष्यातिदातारंनूनमक्षयमव्ययम् एवंभूतगणाः सर्वेदेवसंघाः प्रहर्षिताः
प्राप्तमोदाःप्रव्रजंतिपुण्येऽस्मिन्दिवसागमे पात्रभूतायऋषयेश्रोत्रियायकुटुंबिने एवंयःकपिलांदद्या
द्विधिदृष्टेनकर्मणा सयातिपरमंस्थानंयावच्चंद्रदिवाकरौ तत्रैवस्कांदे प्रभासखंडे विशेषः उ
पलिप्तेशुभेदेशेकुशाक्षतविभूषिते स्थापयेदव्रणंकुंभंचंदनोदकपूरितं पंचरत्नसमायुक्तंदूर्वापुष्पाक्षतान्वितं
रक्तवस्त्रयुगाच्छन्नंताम्रपात्रेणसंयुतं रथोरौप्यमयश्चैवचतुष्कःसुविचित्रितः सौवर्णपलसंयुक्तांमूर्तिंसूर्यस्यका
रयेत् कुंभस्योपरिसंस्थाप्यगंधैःपुष्पैःसमर्चयेत् आदित्यंपूजयेद्देवंनामभिःस्वैःप्रचोदितैः आदित्यभास्क
ररवेभानोसूर्यदिवाकर प्रभाकरनमस्तुभ्यंसंसारान्मांसमुद्धर भुक्तिमुक्तिप्रदोयस्मात्तस्माच्छांतिंप्रयच्छमे
प्रार्थनामंत्रः नमोनमस्तेवरदऋक्सामयजुषांपते नमोस्तुविश्वरूपायविश्वपात्रनमोनमः एवंसंपूज्यवि
धिवद्देवदेवंदिवाकरं पूजयेत्कपिलांधेनुंवस्त्रमाल्यानुलेपनैः तत्र दानमंत्रः विश्वमूर्तिर्जगच्चक्षुर्द्वादशात्मा
दिवाकरः कपिलासहितोदेवोममसुक्तिंप्रयच्छतु यस्मात्त्वंकपिलेपुण्यासर्वलोकस्यपावनी प्रदत्तासहसू
र्येणममभुक्तिप्रदाभव इतिहेमाद्रौ स्कांदे कपिलाषष्ठीव्रतं अथास्याःप्रयोगः कपिलाषष्ठीव्रतदिनात्पूर्वेद्युः
पंचम्यामेकभक्तंकृत्वा षष्ठ्यांप्रातर्दंतधावनं कृत्वा जलपूर्णमंजलिंकृत्वा निराहारोद्यदेवेश त्वद्भक्तस्त्वत्प
रायणः पूजयिष्यामित्वांभक्त्याशरणंभवभास्कर इत्यर्घ्यंदत्त्वाप्रणम्य नद्यादौगत्वा तत्र देवदारु उशीरकुं
कुम मनःशिला पद्मपत्रं यष्टीमधुकं युगपद्द्रव्याणांपेषणं कृत्वा क्षीरेणालोडयतेनकल्केनस्नानंकुर्यात्

तत्रःमंत्रः आपस्त्वमसिदेवेशज्योतिषांपतिरेवच पापंनाशयमेदेवमनोवाकायकर्मजं ततःपंचगव्यस्नानम्
ततःपंचपल्लवैर्मार्जनंकृत्वा विशुद्धांमृत्तिकांगृहीत्वा स्नायात् तत्रमंत्रः मृत्तिकेब्रह्मपूतासिकश्यपेनाभिमंत्रि
ता पवित्रंकुरुमांनित्यंसर्वपापात्समुद्धर ततोवरुणपूजामंत्रः पाशाग्रहस्त्वंवरुणसर्ववागीश्वरप्रभो अद्या
हंप्रार्थयामित्वांपूतंकुरुसुरेश्वरततःस्नात्वाभास्करंप्रणमेत् आदित्योभास्करोभानूरविःसूर्यौदिवाकरः प्रभा
करोमितोवीरोदेवःसर्वेश्वरोहरिः ततोगृहमागत्य तिथ्यादिसंकीर्त्य ममाशेषपापक्षयपूर्वकरूपसंपदारोग्यविपुल
संतति स्वर्गलोकप्राप्तिद्वारा सर्वाभासकसर्वतेजोमयश्रीसूर्यनारायणप्रीत्यर्थं सोद्यापनं कपिलाषष्ठी
व्रतंकरिष्ये ततःपुण्याहवाचनादि कृत्वा ततोवृताचार्यः स्वयंगोमयोपलिप्तायां भूमौ कुंकुमेनाष्टदलंपद्मंवि
धाय तदुपरिसर्वतोभद्रेकलशोपरिरक्तवस्त्राष्टपत्रंसकर्णिकंपद्मंकृत्वा तत्रपूर्वादिक्रमेण देवताआवाहयेत् सूर्यं
भास्करं भानुं सुवर्णरेतसं रविं आदित्यं दिवाकरं प्रभाकरं तीव्ररश्मिधरंमध्ये आधाररूपिणंच न्य
सेत् तदुपरिसप्ताश्वभूषितंरथं तस्याग्रतःसौवर्णमरुणं सारथिंकृत्वा रक्तपुष्पैःसुगंधैश्चपूजयेत्तत्रमंत्रतः
विनतातनयोदेवःकर्मसाक्षीसुरेश्वरः सप्ताश्वःसप्तरज्जुश्चसोरुणोमेप्रसीदतु एवमरुणं संपूज्य रथोपरिसूर्यप्र
तिमां आकृष्णेनेतिमन्त्रेणावाह्य परितोदीप्तादिशक्तीर्न्यसेत् ताश्च दीप्ता सूक्ष्मा जया भद्रा प्रभा, विम
लानना अमोघा वैद्युता मध्येसर्वतोमुखींचन्यसेत् ध्यात्वा स्नानंपाद्यं ततःकरवीरार्कपुष्पाणि र
क्तचंदनम् सुगंधस् रक्तपुष्पं कुंकुमयुतंपात्रेणादाय जानुभ्यामवनींगत्वा अर्घ्यं निवेदयेत् मंत्राः
वेदगर्भनमस्तेस्तुदेवगर्भनमोस्तुते अव्यक्तमूर्त्तयेतुभ्यमर्घ्यंगृहाणनमोस्तुते ब्रह्ममूर्त्तिधरस्त्वंचचतुर्वक्त्रसनातन
सृष्टिस्थितौसंस्थितायअर्घ्यंगृह्णनमोस्तुते विष्णुरूपधरोदेवःपंचवक्त्रश्चतुर्भुजः प्रभुस्त्वंसर्वदेवानामर्घ्यंगृहाणनमो

ऽस्तुते कालात्मासर्वभूतात्मावेदात्मासर्वतोमुखः जन्ममृत्युजराव्याधिसंसारभयनाशनः दारिद्र्यव्यसनध्वंसीश्रीमा
न्देवोदिवाकरः हरिदश्वांशुनालीचअर्घ्यंगृहणमोऽस्तुते चतुर्भिर्मूर्त्तिभिःसंस्थाअष्टभिःपरिगीयते सामध्वनिस्तपो
ज्ञेय अर्घ्यंगृहणनमोऽस्तुते ततःपुष्पपूजांतेऽगपूजांकुर्यात् भास्करायनमःशिखांपूजयामि सूर्यायनमः ललाटं
पूजयामि भानवेनमःचक्षुषीपूजयामि रवयेनमःमुखंपूजयामि भानुमतेनमःकंठंपूजयामि पद्मगर्भायन
मःहस्तौपूजयामि तिमिरक्षयकृतेनमःस्तनौपूजयामि · जातवेदसेनमः नाभिंपूजयामि भानवेनमः कटिंपूज
यामि उग्ररूपायनमःगुह्यंपूजयामि तेजोरूपायनमःजंघेपूजयामि स्थूलसूक्ष्मरूपायनमःपादौपूजयामि
एवपूजांसमाप्यप्रार्थयेत् अग्निमीलेनमस्तुभ्यंनमस्तेजातवेदसे इषेत्वोर्जेनमस्तुभ्यमग्नेचैवनमोनमः आ
त्मरूपिन्नमस्तुभ्यंविश्वमूर्तेनमोनमः त्वंब्रह्मात्वंचवैविष्णुस्त्वंधातात्वंहुताशनः मुक्तिकानमभीप्सामिप्रार्थयामिसुरे
श्वरेतिनमस्कारः ततःसुवर्चसेतिमंत्रेण पाणिभ्यांतोयेनमुखंसंपूज्य हंसः शुचिषदित्यृचासूर्यमालोक्य उ
दुत्यंचित्रंदेवानामितिसूक्तंदेवाग्रतोजपेत् ततःपूर्वोक्तफलपुष्पाक्षतानां नानाविधैर्भक्ष्यैः फलकं कृत्वा तत्र शु
भदेशेशय्यांप्रकल्पयेत् ततोलवणाचलोपरिरौप्यमयंखड्गंवस्त्रयुगच्छन्नं संस्थाप्यपूजयेत् तत्रमंत्रः नमस्ते
क्रोधरूपायखड्गहस्तजिघांसवे जिघांसुकामंत्वांदृष्ट्वादुद्रुवुःसर्वदेवताः त्वयाव्याप्तमेरुपृष्ठंचंद्रभास्करसुप्रभ
अतस्त्वांपूजयिष्यामिअर्घ्यंगृहणनमोऽस्तुते ततस्तांरात्रिंकथादिभिरतिवाह्य अभ्युदितेसूर्येपुनःस्नात्वा देवंसंपू
ज्य अग्निंप्रतिष्ठाप्य अन्वादध्यात् तत्र प्रधानंसूर्यं अर्कसमिद्भिः घृताक्ततिलैःसिद्धचरुणा घृतेनच· प्र
तिद्रव्यं अष्टोत्तरशतविंशतिसंख्याकाभिः आकृष्णेनेतिमंत्रेण व्याहृतिभिर्वापीठावरणादिदेवता ब्रह्मादि
देवताश्चैकैकयाहुत्यायक्ष्ये ततःस्विष्टकृतं एवंहोमंसमाप्य ततःसर्वोपस्करसहितां कपिलां गामुक्तप्रकारेण

संपूज्यप्रार्थयेत् कपिलेसर्वदेवानांपूजनीयासिरोहिणी सर्वतीर्थमयीयस्मादतःशांतिंप्रयच्छमे ततआचार्यं
पूजनंकृत्वा तस्य हस्तेगोभूहिरण्यवासोव्रीहिलवणतिलान्दत्त्वा कपिलांप्रार्थयेत् कपिलेपुण्ड्जन्मासेनिष्पापे
पुण्यकार्मिणि मांसमुद्धरदीनंचददतोह्यभयंकुरु ब्रह्मणोत्पादितादेवीअग्निकुंडात्समुद्भवा नमस्तेकपिले
पुण्येसर्वदेवनमस्कृते जयनित्यंमहासत्त्वेसर्वतीर्थादिसंगमे ॥ दातारंस्वजनोपेतंब्रह्मलोकंनयाशुमां ततःप्रदक्षि
णंकृत्वा आचार्यहस्तेसोपस्करदक्षिणांगां पीठंच दत्त्वा प्रार्थयेत् दिव्यमूर्त्तिर्जगच्चक्षुर्द्वादशात्मादिवाकरः क
पिलासहितोदेवोममुक्तिंप्रयच्छतु यस्मात्त्वंकपिलेपुण्येसर्वलोकस्यपावनि प्रदत्तासहसूर्येणममुक्तिप्रदाभ
वेति ततोन्यानपिब्राह्मणान्संपूज्यान्नादिभिःसंतर्प्याशिषोगृहीत्वा ॥ स्वयंससुहृद्भुंजीतइत्युद्यापनकौमुद्यां सो
द्यापनंकपिलाषष्ठीव्रतं इयंषष्ठीतत्पुरुषकल्पादिरितिकल्पादिनिर्णये प्रागुक्तं अथाश्विनकृष्णसप्तम्यांतिथिप
त्वेनसूर्यपूजा महालयश्राद्धंचकार्यं स्कांदेसेतुखंडे सप्तम्यांयोनरोभक्त्याश्राद्धंकुर्यान्महालये सप्ततिः
कल्पसाहस्रंपितरोयांतितृप्ततां संततिंचाप्यविच्छिन्नांसंपदांविपुलांतथा पुत्रानपिप्रदास्यंतितुष्टाःपितृगणा
स्तदा आश्विनकृष्णाष्टम्यामाश्वलायनेनमाध्यावर्षसंज्ञकंश्राद्धमुक्तं एतेनमाध्यावर्षप्रौष्ठपद्याअपरपक्षइति इ
दंचसप्तम्यादित्रिष्वप्यहस्सुकार्यंइतिनारायणवृत्तौ हरदत्तस्तु मघायुक्तवर्षासुभवंत्रयोदशीश्राद्धमितिव्या
चख्यौ पृथ्वीचंद्रोदयेत्वस्यामेवाष्टम्यांश्राद्धंगयातुल्यफलं तथाचोक्तं ब्रह्मांडे आषाढ्याःपंचमेपक्षेगया
माध्याष्टमीस्मृता त्रयोदशीगजच्छायागयातुल्यातुपैतृकेइति हेमाद्रौपाद्मेपि वसुनामापिताकन्यांशशापा
नुग्रहायच प्रौष्ठपद्यष्टकाभूयःपितृलोकेभविष्यसि आयुरारोग्यदानित्यंसर्वकामफलप्रदेति एतस्याःपद्मसंज्ञा
प्युक्ता तथाच जातूकर्ण्यः शंखंप्राहुरमावास्यांक्षीणसोमांद्विजोत्तमाः अष्टकाचभवेत्पद्मंतत्रदत्तमथाक्षयम्

अस्यांमहालयेश्राद्धफलं पाद्मेसेतुखंडे योष्टम्यांश्रद्धयाश्राद्धंनरःकुर्यान्महालये अशीतिःकल्पसाहस्रंतृप्यं
तिपितरोस्यवै आशीर्भिर्वर्धयंत्येनंविघ्नांश्चास्यव्यपोहति संततिंचाप्यविच्छिन्नांदद्युः पितृगणाः सदेति अ
स्यामेवाष्टम्यांविष्णुधर्मोत्तरोक्तंपुत्रीयव्रतं हेमाद्रौ प्रौष्ठपद्यामतीतायांकृष्णपक्षाष्टमीतुया सोपवासीनरस्त
स्यांयोपिद्वातनयार्थिनी अत्रवासुदेवपूजनं पुरुषसूक्तेन पायसघृतादिहुत्वा पुत्रार्थीपुंनामभिः फलैः कन्या
र्थीस्त्रीनामभिःप्राश्य संवत्सरव्रतं कुर्यादितिपुत्रीयंव्रतं अस्यामेवाष्टम्यांमहालक्ष्मीव्रतमुक्तं तत्रनिर्णयामृ
ते पुराणसमुच्चये श्रियोव्रतंभाद्रपदेसिताष्टमीमारभ्यकन्यागतेचसूर्ये समापयेत्तत्रतिथौचयावत्सूर्यश्चपूर्वार्द्ध
गतोयुवत्याइति तत्रैव कन्यागतार्कमारभ्यकर्तव्यंहिश्रियोर्चनं हस्तप्रांतदलस्थेर्केतद्व्रतंतुसमापयेत् पूजनी
यागृहस्थानामष्टमीप्राप्यश्रियः दोषैश्चतुर्भिःसंत्यक्तासर्वसंपत्करातिथिः पुत्रसौभाग्यसौख्यायुर्नाशिनीसा
प्रकीर्त्तिता तस्मात्सर्वप्रयत्नेनत्याज्याहस्तगतेरवौ विशेषणपरित्याज्यानवमीदूषितायदीति दोषचतुष्टयंतत्रै
वोक्तं त्रिदिनेचावमेचैवअष्टमीनोपवासयेत् पुत्रहानवमीविद्धास्त्रीघ्नीहस्तगतेरवौ त्रिदिनादिलक्षणमुक्तंर
त्नमालायां यत्रैकः स्पृशतिदिनद्वयावसानंवारश्चेदवमदिनंतदुक्तमार्यैः यःस्पर्शोभवतितिथित्रयस्यचाह्निद्यु
स्पृग्वायमदिनंद्वयंचनेष्टं यएतेसर्वेनिषेधाः प्रथमारंभविषयाः मध्येतु सतिसंभवे ज्ञेयाः व्रतस्यषोडशाब्द
साध्यत्वेनमध्येसामान्ययोगात् इयंचचंद्रोदयव्यापिनीग्राह्या तत्रैवपूजायुक्तेः परदिने चंद्रोदयादूर्ध्वात्रिमुहू
र्तव्यापित्वेपरैवकार्या अन्यथापूर्वैव पूर्वावापराविद्धावाग्राह्याचंद्रोदयेसदा त्रिमुहूर्त्तापिसाकार्यापरत
श्चोर्ध्वगामिनीति मदनरत्नेनिर्णयामृते संग्रहोक्तेः अर्द्धरात्रमतिक्रम्यवर्त्ततेयोत्तरातिथिः तदातस्यांतिथौ
कार्यमहालक्ष्मीव्रतंसदेतिवचनाच्चेतिसंक्षेपः इदंव्रतंच भाद्रशुक्लाष्टमीमारभ्याश्विनकृष्णाष्टम्यंतं षोडश

दिनसाध्यमर्द्धरात्रव्यापिन्यामष्टम्यांकार्य्यं प्रारंभस्तस्यांज्येष्ठायुतायांशुक्लाष्टम्यांकार्य्यः तथाचस्कांदे मासिभा
द्रपदेपक्षेशुक्लेज्येष्ठायुताष्टमी प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्मभिः समापनंचकृष्णायामष्टम्यामेवतद्भवेत् चं
द्रोदयव्यापिन्यामष्टम्यामेव चंद्रोदयव्रतेचैवतिथिस्तात्कालिकीस्मृतेति दिनद्वयेचंद्रोदयसत्त्वेऽसत्त्वेवा पूर्वैव प
रादिनेचंद्रोदयोत्तरंचेदष्टमीतदापरैव मदनरत्ने पुराणसमुच्चये पूर्वावापरविद्धावाग्राह्याचंद्रोदयेसदा त्रिमु
हूर्तातुसापूज्यापरतश्चोर्ध्वगामिनीति अथव्रतविधिः हेमाद्रौ मदनरत्ने स्कांदे स्कंदउवाच सौभा
ग्यजननस्त्रीणांदौर्भाग्यपरिकृंतनं परमैश्वर्य्यजननंतद्व्रतंब्रूहिशंकर ईश्वरउवाच साधुसाधुमहाबाहोयत्पृ
ष्टोहंत्वयानघ तत्तेहंसंप्रवक्ष्यामिव्रतानामुत्तमंव्रतं येनचीर्णेननरोदुर्गतिंयातिकर्हिचित् सुभगावासपुत्रावा
वध्यावापिस्त्रियोगुह अस्तिदेव्याव्रतंपुण्यंमहालक्ष्म्याःषडानन नारीणांचनराणांचव्रतंसर्वसुखावहं
स्कंदउवाच देव्याश्चरितमाहात्म्यंमर्त्येकेनप्रकाशितं विधानंकीदृशंब्रूहिव्रतस्यास्य महाविभो शंकरउवाच
देवासुरमभूद्युद्धंपूर्णमब्दशतंकृते महिषेसुराणामधिपेदेवानांचपुरंदरे तत्रदेवैर्महावीर्यैर्नारायणबलाश्रयात्
असुरानिर्जिताः सर्वेपातालतलमाययुः केचिल्लंकांगताः केचित्प्रविष्टावरुणालयं गिरिदुर्गंसमाश्रित्य
केचित्तस्थुर्महासुराः तत्रकोलासुरोनामदुर्जयस्समहाबलः गोमंतंदुर्गमंदुर्गंगिरिमाश्रित्यनिर्भयः याराजक
न्यकालोकेरूपवत्योमहागुणाः आनीयगिरिदुर्गस्थोरमयामाससर्वशः रमयित्वाक्षिपन्नत्रकामरूपीविलंगमः
एतस्मिन्नेवकालेतुह्यागतौमुनिसत्तमौ श्रुतप्रभावसंपन्नौपुलस्त्योगौतमस्तथा तीर्थयात्राप्रसंगेनश्रुत्वावा
क्यंजनस्यच कोलासुरेणचरितंकन्याहेतोः शिखिध्वजे तावूचतुर्जनंसर्वसगस्त्योऽस्तिमहामुनिः येनतोयनि
धिः पीतोविंध्याद्रिश्चनिवारितः तंब्रूवंयमोसर्वेकोलासुरवधासये इत्यामंत्र्ययपुः सर्वेगत्वा तमभि

अस्यांमहालयेश्राद्धफलं पाद्मेसेतुखंडे योष्टम्यांश्रद्धयाश्राद्धंनरःकुर्य्यान्महालये अशीतिःकल्पसाहस्त्रंतृप्यं
तिपितरोस्यवै आशीर्भिर्वर्धयंत्येनंविघ्नांश्चास्यव्यपोहति संततिंचाप्यविच्छिन्नांदद्युः पितृगणाः सदेति अ
स्यामेवाष्टम्यांविष्णुधर्मोत्तरोक्तंपुत्रीयव्रतं हेमाद्रौ प्रौष्ठपद्यामतीतायांकृष्णपक्षाष्टमीतुया सोपवासीनरस्त
स्यांयोपिद्वातनयार्थिनी अत्रवासुदेवपूजनं पुरुषसूक्तेन पायसघृतादिहुत्वा पुत्रार्थीपुंनामभिः फलैः कन्या
र्थीस्त्रीनामभिःप्राश्य संवत्सरव्रतं कुर्य्यादितिपुत्रीयंव्रतं अस्यामेवाष्टम्यांमहालक्ष्मीव्रतमुक्तं तत्रनिर्णयामृ
ते पुराणसमुच्चये श्रियोव्रतंभाद्रपदेसिताष्टमीमारभ्यकन्यागतेचसूर्ये समापयेत्तत्रतिथौचयावत्सूर्यश्चपूर्वार्द्ध
गतोयुवत्याइति तत्रैव कन्यागतार्कमारभ्यकर्त्तव्यंहिश्रियोर्चनं हस्तप्रांतदलस्थेर्केतद्व्रततुसमापयेत् पूजनी
यागृहस्थानामष्टमीप्राप्यपिश्रियः दोषैश्चतुर्भिःसंत्यक्तासर्वसंपत्करातिथिः पुत्रसौभाग्यसौख्यायुर्नाशिनीसा
प्रकीर्त्तिता तस्मात्सर्वप्रयत्नेनत्याज्याहस्तगतेरवौ विशेषणपरित्याज्यानवमीदूषितायदीति दोषचतुष्टयंतत्रै
वोक्तं त्रिदिनेचावमेचैवअष्टमींनोपवासयेत् पुत्रहानवमीविद्धास्त्रीघ्नीहस्तगतेरवौ त्रिदिनादिलक्षणमुक्तंर
त्नमालायां यत्रैकः स्पृशतिदिनद्वयावसानंवारश्चेदवमदिनंतदुक्तमार्यैः यःस्पर्शोभवतितिथित्रयस्यचाह्निद्यु
स्पृग्वायमदिनंद्वयंचनेष्टं यएतेसर्वेनिषेधाः प्रथमारंभविषयाः मध्येतु सतिसंभवे ज्ञेयाः व्रतस्यषोडशाब्द
साध्यत्वेनमध्येसामान्ययोगात् इयंचचंद्रोदयव्यापिनीग्राह्या तत्रैवपूजाद्युक्तेः परदिने चंद्रोदयादूर्ध्वंत्रिमुहू
र्तव्यापित्वेपरैवकार्य्या अन्यथापूर्वैव पूर्वावापराविद्धावाग्राह्याचंद्रोदयेसदा त्रिमुहूर्त्तापिसाकार्य्यापरत
श्चोर्ध्वगामिनीति मदनरत्नेनिर्णयामृते संग्रहोक्तेः अर्द्धरात्रमतिक्रम्यवर्त्ततेयोत्तरातिथिः तदातस्यांतिथौ
कार्य्यंमहालक्ष्मीव्रतंसदेतिवचनाच्चेतिसंक्षेपः इदंव्रतंच भाद्रशुक्लाष्टमीमारभ्याश्विनकृष्णाष्टम्यंतं षोडश

दिनसाध्यमर्द्धरात्रव्यापिन्यामष्टम्यांकार्य्यं प्रारंभस्तस्यांज्येष्ठायुतायांशुक्लाष्टम्यांकार्यः तथाचस्कांदे मासिभा
द्रपदेपक्षेशुक्लेज्येष्ठायुताष्टमी प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्मभिः समापनंचकृष्णायामष्टम्यामेवतद्भवेत् चं
द्रोदयव्यापिन्यामष्टम्यामेव चंद्रोदयव्रतेचैवतिथिस्तात्कालिकीस्मृतेति दिनद्वयेचंद्रोदयसत्वेऽसत्वेवा पूर्वैव प
रादिनेचंद्रोदयोत्तरंचेदष्टमीतदापरैव मदनरत्ने पुराणसमुच्चये पूर्वावापरविद्धावाग्राह्याचंद्रोदयेसदा त्रिमु
हूर्तातुसापूज्यापरतश्चोर्ध्वगामिनीति अथव्रतविधिः हेमाद्रौ मदनरत्ने स्कांदे स्कंदउवाच सौभा
ग्यजननस्त्रीणांदौर्भाग्यपरिकृंतनं परमैश्वर्य्यजननंतद्व्रतंब्रूहिशंकर ईश्वरउवाच साधुसाधुमहाबाहोयत्पृ
ष्टोहंत्वयानघ तत्तेहंसंप्रवक्ष्यामिव्रतानामुत्तमंव्रतं येनचीर्णेननरोदुर्गतिंयातिकर्हिचित् सुभगावासपुत्रावा
वंध्यावापिस्त्रियोगुह अस्तिदेव्याव्रतंपुण्यंमहालक्ष्म्याःषडानन नारीणांचनराणांचव्रतंसर्वसुखावहं
स्कंदउवाच देव्याश्चरितमाहात्म्यंमर्त्येकेनप्रकाशितं विधानंकीदृशंब्रूहिव्रतस्यास्य महाविभो शंकरउवाच
देवासुरमभूद्युद्धंपूर्णमब्दशतंकृते महिषेसुराणामधिपेदेवानांचपुरंदरे तत्रदेवैर्महावीर्यैर्नारायणबलाश्रयात्
असुरानिर्जिताः सर्वेपातालतलमाययुः केचिल्लंकांगताः केचित्प्रविष्टावरुणालयं गिरिदुर्गंसमाश्रित्य
केचित्तस्थुर्महासुराः तत्रकोलासुरोनामदुर्जयस्समहाबलः गोमंतंदुर्गमंदुर्गंगिरिमाश्रित्यनिर्भयः याराजक
न्यकालोकेरूपवत्योमहागुणाः आनीयागिरिदुर्गस्थोरमयामाससर्वशः रमयित्वाक्षिपत्तत्रकामरूपीविलंगमः
एतस्मिन्नेवकालेतुह्यागतौमुनिसत्तमौ श्रुतप्रभावसंपन्नौपुलस्त्योगौतमस्तथा तीर्थयात्राप्रसंगेनश्रुत्वावा
क्यंजनस्यच कोलासुरेणचरितंकन्याहेतोः शिखिध्वज तावूचतुर्जनंसर्वंसगस्त्योऽस्तिमहामुनिः येनतोयनि
धिः पीतोविंध्याद्रिश्चनिवारितः तंब्रूवंयमोसर्वेकोलासुरवधासये इत्यामंत्र्ययगुः सर्वेगत्वा तमभि

शिरः कंठांसकुक्षिषु वभंजुस्तांगदांतास्तुहसंत्यः सुमदाकुलाः ततोधनुर्धरोभूत्वाबाणजालमवा
किरत् तांसांशरीरमर्माणिभिंदञ्छरशतैःशितैः ननादवद्धवैरोसौहृदयंचाभिनच्छरैः ततः क्रुद्धतरास्तास्तुतंपादैर्ज
गृहुर्भृशं आकाशेभ्रामयित्वातंचिक्षिपुर्गगनेक्रुधा कोलासुरोपिपतितोयावदुत्थातुमिच्छति तावन्निर्गत्य
लक्ष्मीस्तंपादाभ्यांप्रत्यपीडयत् तत्पादपीडितंरक्षोविवृत्यनयनेभृशं मुक्तकंठःस्वनंकृत्वाततोमोहमुपेयिवान्
ततोदेवाः सगंधर्वामनुष्याऋषयोऽस्तुवन् देवनाथाश्चदेव्यश्चननृतुः सुमदाकुलाः देवदुंदुभयोनेदुःपुष्प
वृष्टिः पपातखात् दिशःप्रसेदुर्मरुतोववुर्मंदरवंजगत् सुरासुरशिरोरत्नवंद्यपादांबुजास्ततः देव्योदि
व्येनयानेनयांतिकोलापुरंप्रति आयांतींपंकजांवीक्ष्यमुक्तपादाग्रशृंखलः तुष्टावपरयाभक्त्याराजकन्यागणो
मुदा पंकजां कमलां राजकन्याऊचुः वंदारुवीरसुरवृंदाकिरीटकोटीरोचिर्घटासिकरकल्पितरत्नदीपं देवि
त्वदीयचरणंशरणंजनानांसेवामहेसकलमंगलवर्द्धनाय १ उत्फुल्लकैरवदलायतलोचनायैगंडोल्लसच्चटुलकुंडलमंडि
तायै राकाशशिप्रतिभटाननकोमलायैतस्यैनमः कमललोचनवल्लभायै २ सद्भक्तकल्पलतिकांहरकंठभू
षांकेयूरहेमकटकोज्वलकंकणांकां संसारसागरमुखेपततोममाद्यत्वत्पादपीठकरयष्टिरनंगमातः ३ दृष्ट्यादेवि
जनास्तवाद्यविविधाब्रह्माधिपत्यंगताः विष्णोर्वक्षसियाचकारतरलालीलाब्जमालाभ्रमं क्लेशाग्निग्राहितंत्वदीय
चरणद्वंद्वाब्जसेवारतं कारुण्यामृतसारपूरितदृशामामद्यपश्येश्वरि ४ मल्लीविफुल्लकुसुमोज्वलमध्यभाग
धाम्मिल्लभारजिततारकचित्रिताभा उत्तप्तहेमनिकषोज्वलकायकांतिर्लक्ष्मीः स्वयंप्रणमतांश्रियमातनोतु ५
इतिस्तुतामहालक्ष्मीर्भक्तानामिष्टदायिनी राजकन्यास्तुताःसर्वामुक्तास्वपुरमाययौ ततःप्रभृतिलोकेषुपूज्यास्ताः
सर्वकामदाः ताश्चतुःषष्टियोगिन्योमहालक्ष्मीपरिग्रहात् नृत्यंतीनिवहैस्तत्रगीतवादित्रनिःस्वनैः पुरोदेव्यामहा

लक्ष्म्याः करहाटपुरेनिशि एवंप्रभावासादेवीविष्णुरामाषडानन व्रतस्यास्यविधानंचशृणुमत्तोविधानतःमासिभाद्र
पदेशुक्लेपक्षेज्येष्ठायुताष्टमीप्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यामहात्मभिः करिष्यामिव्रतंदेविल्वद्भक्तस्तत्परायणः तदवि
घ्नेनमेयातुसमाप्तिंत्वत्प्रसादतः इत्युच्चार्यततोबद्ध्याडोरकंदक्षिणेकरे षोडशग्रंथिसहितंगुणैःषोडशभिर्युतं तता
न्वहंमहालक्ष्मींपूजयेन्नियतात्मवान् गंधपुष्पैःसनैवेद्यैर्यावत्कृष्णाष्टमीदिनं तस्मिन्दिनेतुसंप्राप्तेकुर्यादुद्यापनंव्रतं
वस्त्रमंडपिकांकृत्वामाल्यरत्नोपशोभितां त्रिभूमिकांचसुश्लक्ष्णांनानादीपैरलंकृतां चतस्रःप्रतिमाःकृत्वासौवर्णास्त
त्स्वरूपिणीः स्नपनंकारयेत्तासांपंचामृतविधानतः षोडशैरुपचारैश्चधूपदीपादिभिस्तथा जागरंतत्रकर्तव्यंगीत
वादित्रनिःस्वनैः ततोनिशीथेसंप्राप्तेभ्युदितेऽमृतदीधितौ कृत्वातुस्थंडिलेपद्मंषडंगंतुप्रपूजयेत् दद्यादर्घ्यंचश
शिनेव्रतीतस्मैसमाहितः क्षीरोदार्णवसंभूतचंद्रलक्ष्मीसहोदर पीयूषधामरोहिण्यासहितोर्घ्यंगृहाणमे जानु
भ्यामवनींगत्वामंत्रेणप्रार्थयेत्ततः क्षीरोदार्णवसंभूतकमलेकमलालये प्रयच्छसर्वकामान्मेविष्णुवक्षस्थलाल
ये पुत्रान्देहियशोदेहिसौख्यंसौभाग्यमेवच कालिकालिमहाकालिविकरालिनमोस्तुते त्रैलोक्यजननित्राहि
वरदेभक्तवत्सले एकनाथेजगन्नाथेजमदग्निप्रियेऽव्यये रेणुकेत्राहिमांदेविरामममातःशिवंकुरु भूतनाथेजगन्नाथे
प्रसीदपुरुषोत्तमे कपालकर्त्तिकाशूलडमरुव्यग्रहस्तके श्रियंकुरुमहालक्ष्मिमह्यश्रियंचाशुनाशय मंत्रैरेतैर्म
हालक्ष्मींप्रार्थ्यश्रोत्रिययोषितां श्रीसूक्तेनतथावह्नौपद्मानिजुहुयाच्छुचिः पायसंचैवबिल्वानितदलाभेथवाघृतं
ग्रहेभ्यश्चैवहोतव्यंसमिच्चरुघृतादिकं चंदनंतालपत्रंचपुष्पतालादिकंतथा नवेशूर्पेथभक्ष्याणिक्षिप्त्वाबहुविधा
निच प्रत्येकंषोडशैतानिपूगपूर्णानिचैवहि तान्यन्नेनसमाच्छाद्यव्रतीदद्यात्समंत्रकं क्षीरोदार्णवसंभूतालक्ष्मी
श्चंद्रसहोदरा व्रतेनानेनसंतुष्टाप्रीयतांविष्णुवल्लभा इंदिराप्रतिगृह्णातिइंदिरावैददातिच इंदिरातारकोभाभ्यां

इंदिरायैनमोनमः दत्वार्घ्यंवायनादींश्चश्रोत्रियाणांचयोषितः चतस्रःप्रतिमास्तास्तुब्राह्मणायनिवेदयेत्
एवंकृत्यंसुनिर्वर्त्यंव्रतीभोजनमाचरेत् इतिव्रतविधानं अथकथा स्कंदउवाच केनेदंस्वीकृतंपूर्वंकथमस्मिन्प्र
काशितं ब्रूहिमेतत्त्वतोदेवयद्यहंवल्लभस्तव शंकरउवाच आसीद्राजासार्वभौमोमंगलाह्वइतिश्रुतः कुंडिनेन
गरेरम्येतस्यपद्मावतीप्रिया तमागतःकश्चिदेकस्सेवकोब्राह्मणोत्तमः अज्ञातनामातस्यासौनामचक्रेनृपोत्तमः
तवल्लकइतिख्यातोबभूवद्विजसत्तमः कदाचिन्मृगयासक्तोभूपालोवनमाविशत् तत्रविद्ध्वावराहादीन्मृगान्हत्वा
सहस्रशः क्षुत्तृट्परिप्लुतःश्रांतोवृक्षमूलमुपागतः उदकान्वेषणेचारान्प्रेषयामाससर्वतः वनेजलंतेनापश्यन्चिर
भ्रांत्वाप्रयत्नतः तेगत्वानृपतिंप्रोचुर्नात्रांभइतिदुःखिताः तवल्लकोपिबभ्रामविपिनंतदतंद्रितः भ्रममाणस्त
दापश्यत्कस्मिंश्चिद्वनगह्वरे रम्यंसरोवरंदिव्यंकुमुदोत्पलमंडितं तत्रापश्यद्देवकन्यादिव्यरूपामनोरमाः तन्व
गीश्चारुनयनाः पीनोन्नतपयोधराः हारकंकणकेयूरनूपुरालंकृताःशुभाः पूजयंतीर्महालक्ष्मीव्रतरूपेणसादरात् त
वल्लकोपिपप्रच्छकिमिदंकथ्यतामिति स्त्रियऊचुः महालक्ष्मीव्रतमिदंसर्वकामफलप्रदं क्रियतेस्माभिरेकाग्र
मनोभिस्त्वत्रभक्तितः तवल्लकोपितच्छ्रुत्वाव्रतंजग्राहभक्तिमान् तदनुज्ञांगृहीत्वास्यजलमादायसत्वरं आजगा
मजलंतस्मैदत्वाप्रांजलिनासह जलपीत्वानृपस्तस्यदृष्टवान्डोरकंकरे किमिदंडोरकंविप्रकिंव्रतंकृतवानसि. राज्ञा
पृष्टस्तवल्लोपिकथयामासतद्व्रत तच्छ्रुत्वाराजशार्दूलोव्रतंजग्राहभक्तिमान् तवल्लेनैवसहितोराजास्वपुरमाय
यौ पद्मावतीगृहंगत्वातयारंतुंगतोरहः रममाणाथसादेवीतेनराज्ञाप्रियेणवै तंदृष्ट्वाडोरकहस्तंकुपितात्यंतको
पना कयात्वंवंचितोब्रूहिकयाबद्धंसुडोरकं मावादीरन्यथात्वेतल्लक्ष्मीव्रतमनुत्तमं इत्युक्तापिप्रियेणासौहस्तेचि
च्छेदडोरकं ज्वालामालाकुलेवह्नौक्षिप्तवत्यतिकोपना हाहाकष्टमिदंपापंकृतंमूढधियात्वया इतिनिर्भर्त्स्यतां

राजातत्याजवनगव्हरे साचहानियौपश्चात्तत्रहानियौनृपः महालक्ष्म्यपचारेणसारण्येजलवार्जिते मृगमा
णावनेतास्मिन्नकांचिद्गतिमापसा विचरंतीवनेतत्रऋषेःकस्यचिदाश्रमं ददर्शमृगसंकीर्णंशांततृष्णमृगाश्रितं
तत्रापश्यद्वनेरम्येवसिष्ठंमुनिपुंगवं ववंदेचरणौतस्यविसंज्ञादुःखकर्षिता चिरंध्यात्वामुनिस्तस्याज्ञातवान्दुःख
कारणं महालक्ष्म्यपचारेणज्ञातंविज्ञानचक्षुषा तद्व्रतंकारयामासतस्यादुःखोपशांतये तद्दुःखंतत्क्षणादेवविनष्ट
मभवत्तदा पुनश्चमृगयासक्तोभूपालोवनमाविशत् कंचिन्मृगंसमाविध्यद्बाणेनैकेनवाहुमान् अन्वगच्छन्मृग
पदंतस्याश्रममुपागमत् वरंमुनिंददर्शाथवसिष्ठंवीतकल्मषं कृतातिथ्यक्रियोदृष्ट्वाचरंतींवहिरंतिकात् हाव
भावविलासाढ्यैर्हरंतींहरिणेक्षणां तदानिर्गत्यनृपतिःप्रोवाचमधुरंवचः वामोरुकासिकल्याणिकिमर्थंचरसेवने
किन्नरीमानुषीवात्वंयक्षिणीचारुहासिनि किमत्रवहुनोक्तेनभजमानंभजस्वमां नृपेणतेनसापृष्टासास्मितावाक्यम
ब्रवीत् पुनर्भजामिचाहंत्वामवेहिमहिषींतव महालक्ष्म्यपचारेणत्वयाहीनाचराम्यहं मुनींद्रस्याश्रमेरम्येतरुगुल्मो
पशोभिते ममोपरिकृपाविष्टोमहालक्ष्मीव्रतोत्तमं कारयामासविधिवत्सर्वविघ्नोपशांतये तयोक्तंवचनंश्रुत्वा
सचोत्फुल्लविलोचनः ऋषेरनुज्ञामादायप्रियामादायसत्वरः हृष्टपुष्टजनैर्जुष्टंपताकाध्वजशोभितं प्रविवेशतया
सार्द्धंसपौरैरभिवंदितः महालक्ष्म्याव्रतंभूयस्तयासहचकारह भुक्तेहभोगान्विपुलान्पुत्रैःपौत्रैःसमावृतः भूपालः
सार्वभौमोभूत्तवल्लोमात्यतांययौ महालक्ष्मीप्रसादेनमंत्रिभिःसर्वसंपदां एवंप्रभावासादेवीनराणामिष्टदा
यिनी सर्वपापहरादेवीसर्वदुःखापहारिणी एवंषोडशवर्षंतुकर्त्तव्यंव्रतमुत्तमं याकरिष्यतितांभक्त्यास्वयंसिद्धि
रुपासते लोकपालाश्चपुष्यंतिदासाइवमनोरथान् नारीवापुरुषःकरिष्यतिमुदाभक्त्याव्रतंयत्नतः सेवंतेहरिरुद्रप
द्मजसुराजुष्यंतितस्यप्रियं तत्पादौपरिरंजयंतिमनुजामौलिप्रभामंडले स्तस्मिन्नेवकुटुंविनीववसतेलक्ष्मीःस्व

यंविष्णुना येभक्त्याचाप्यभक्त्यावाकुर्वंतिव्रतमुत्तमं अंतकालेस्वयंविष्णुःसंसारात्परिरक्षति यइदंशृणुया
न्नित्यंश्रावयेद्वासमाहितः नसंत्यजतितंलक्ष्मीरलक्ष्मीनैवतंभजेत् सर्वपापविनिर्मुक्तःस्वर्गलोकेमहीयते ॥

॥ इतिस्कंदोक्तंमहालक्ष्मीव्रतं ॥

अथभविष्योत्तरंमहालक्ष्मीव्रतं युधिष्ठिरउवाच स्वस्थानलाभपुत्रायुःसर्वैश्वर्यसुखप्रदं व्रतमेकंममाचक्ष्वविचा
र्यपुरुषोत्तम श्रीकृष्णउवाच दुर्वारवृत्रदैतेयपरिख्यातेत्रिविष्टपे एतदेवकृतस्यादौदेवेंद्रःप्राहनारदं तस्यश्रु
त्वाततोवाक्यंसमुनिःप्रत्यभाषत नारदउवाच पुरंदरपुरापूर्वंपुरमासीत्सभान्वितं रत्नगर्भाभवद्भूमिर्यत्ररत्ना
ढ्यभूधरैः यत्रांगनाजनापांगभंगलोचनसायकैः त्रैलोक्यंस्ववशंचक्रेदेवःकुसुमसायकः चतुर्वर्गजनिर्यत्रयच्चविश्व
विभूषणं विश्वकर्मापियद्वीक्ष्यकंपयत्यनिशंशिरः तत्राभवन्महीपालोमंगलोमंगलाशयः चिल्वदेवीप्रियातस्यदु
र्भगैकाबभूवह अन्यातुचोलदेवीवामहिषीसायशस्विनी कदाचिन्मंगलोराजाचोलदेवीसहायवान् प्रासादशिखरा
रूढःस्थलीमेकामपश्यत तामालोक्यमहीपालःस्मरस्मेरमुखांबुजः चोलदेवींपतिःप्राहदंतद्योतितदिङ्मुखःचंचला
क्षितवोद्यानकांतिनंदितनंदनं कारयामितवोद्दिष्टंतत्रोद्यानमकारयत् संपन्नंचतदुद्यानंनानाद्रुमलताकुलंअथागत्य
महाकोलस्तनुस्पृष्टनभस्तलः पंकप्रावृड्घनश्यामश्चक्षुराक्षिप्तचंचलः दंष्ट्रातर्जितचंद्रार्कःप्रलयांभोधरस्वनःक्व
चिद्दंष्ट्राप्रहारेणक्वचिदंगविघर्षणैः अमूलयत्खनन्सर्वान्पादपान्पांडुनंदन तद्भग्नकीर्तिविज्ञायसमेत्योद्यानपालकाः
सभयास्तस्यवृत्तांतमूचुस्तेनृपतेःपुरः तदाकर्ण्यततोराजाक्रोधाद्दूषितलोचनः वधायदंष्ट्रिणस्तस्यसंदिदेशाखि
लंजनं ततश्चचालभूपालःस्वगंडगलितैर्गजैःआप्लावयन्महींसर्वांवाजिघंटावृतांबरां चालयन्निखिलान्शैलान्स्यं
दनौघमरुद्रवैः पत्तिव्रातमहाध्वानैस्त्वरयन्यवनांतिकं तस्यावश्यंशिरश्छेदंविदधामिरिपोरिव तस्यभूपस्यतद्वाक्यं

समाकर्ण्यससूकरः जगामास्थैवमार्गेणप्राणिनश्चेष्टितंयथा ततःक्रुद्धोमहीपालःकशयाश्वंप्रताड्यच
व्रीडाकलंकितास्येंदुर्मार्गेतस्यैवसोऽगमत् गत्वाथविपिनंघोरंसिंहशार्दूलसंकुलं तमालतालहिंतालशालार्जु
नलतान्वितं झिल्लीझांकारसंरावबाचालितदिगंतरं तत्रैकचेतसापश्यन्वहुवभ्रामभूपतिः कोलोविलामवा
प्याथसोभवद्राजसन्मुखः भल्लेनसोवधीत्कोडंवज्रेणाद्रिंयथाभवान् अथव्योम्निविमानस्थःस्मरसुंदरविग्रहः
कालरूपंपरित्यज्यसोब्रवीन्मंगलंनृपम् गंधर्वउवाच स्वस्त्यस्तुतेमहीपालत्वयामुक्तिःकृताम्म तमाकर्णय
वृत्तांतयेनाहंजातईदृशः 'एकदादेवतावृंदैःसंवृतःकमलासनः चंचत्पदादिभिःस्थानैःषड्गाद्यैःसप्तभिःस्वरैः मं
द्रादिभिस्त्रिभिर्गानैर्गीयमानंमयानृप नानास्थानगुणोपेतमश्रौषीद्गीतमुत्तमं गीयमानंच्युतस्थानंततोहंकर्मणा
मुना प्राप्तश्चित्ररथस्तेनब्रह्मणासृष्टिकर्मणा ब्रह्मोवाच कोलोभवेतिमेदिन्यांमुक्तिस्तेतुयदातदा निर्जि
ताखिलभूपालोमंगलस्त्वांहनिष्यति तदद्यघटितंसर्वंत्वत्प्रसादान्महीपते तद्गृहाणवरंभूपदेवस्यापिसुदुर्लभं म
हालक्ष्मीव्रतंदिव्यंचतुर्वर्गफलप्रदं लभस्वसार्वभौमत्वंगच्छराज्यंनिजंद्रुतं नारदउवाच चित्ररथोथगंधर्वउ
क्तेदंभूपतिंप्रति अंतर्धानंगतस्तुष्टःशरत्कालइवांवुदः अथमंगलभूपालःपार्श्वस्थंद्विजमाकुलं विलोक्यवटु
कंकिंचित्कक्षानिक्षिप्तशंवलं उवाचमधुरांवाचंस्मितपूर्वां शुचिस्मितः देवस्त्वंदानवस्त्वंवागंधर्वोवापिराक्षसः स
त्यंवदवटोकस्मात्किमर्थंत्वमिहागतः श्रुत्वात्वाशिष्यविप्रस्तंप्राहत्वदेशसंभवः अहंसार्धंत्वयाजातस्तदादिशयथो
चितं राजाथतमुवाचेदंत्वंवटोभूतनायकः अपत्याणिविधायाश्वंतूर्णंतोयंचपायय अथविश्रम्यभूपालंवटुको
वटपादपे तथाकृत्यतुरंगंचसमारुह्यमहामतिः जगामपक्षिघोषेणयत्रास्तेसुंदरंसरः कमलैकविलासेनरथां
गाभरणेनच वनमालाश्रयत्वेनदधन्नारायणीतनुं भग्नवायुसुतोद्योगमक्षारंविषवर्जितं नाशितागस्त्यतृष्णार्त्तिं

प्रसन्नसागराधिकं पंकेमग्नोथतत्राश्वःपृष्ठादुत्तीर्यतस्यसः चतुर्दिशंनिरीक्ष्याथंतस्यैवसरसस्तटे दिव्यवस्त्र
परीधानंदिव्याभरणभूषितं कथयंतंकथांदिव्यांस्त्रीणांसार्थमपश्यत उपसृत्याथतसार्थतद्वृत्तांतंनिवेद्यच कृ
तांजलिरितिप्राहवटुर्मधुरयागिरा वटुरुवाच एतत्किंक्रियतेसार्थत्वयाभक्तिपरेणच कोविधिःकिंफलंच स्यत्रू
हितन्मेयथातथ श्रुत्वेतितमुवाचेदंसार्थःकरुणयाऽन्वितः सार्थउवाच शृणुविप्रैकचित्तेनश्रद्धाभक्तिसमन्वितः
यामायाप्रकृतिःशक्तिस्त्रैलोक्येष्वभिधीयते व्रतमेतन्महालक्ष्म्यास्तस्याःसर्वफलप्रदं आकर्णयविधिंचास्यकथ्य
मानंवटोमया भाद्रेमासिसिताष्टम्यांप्रारंभोस्यविधीयते प्रातःषोडशकृत्वस्तुप्रक्षाल्यांघ्रिकरौमुखं तंतुषोडशसंयु
क्तंग्रंथिषोडशसंयुतं मालतीपुष्पकर्पूरचंदनागुरुचर्चितं लक्ष्म्यैनमोथमंत्रेणप्रतिग्रंथ्यभिमंत्रितं धनंधान्यंध
रांधर्मंकीर्तिमायुर्यशःश्रियं तुरंगान्दंतिनःपुत्रान्महालक्ष्मिप्रयच्छमे मंत्रेणानेनबद्ध्वाथडोरकंदक्षिणेकरे कां
डानिषोडशादायदूर्वायाश्चाक्षतानिच एकचित्तः कथांश्रुत्वापूजयेत्तैश्चडोरकं ततस्तुप्रातरारभ्ययावत्स्याद
सिताष्टमी तावत्प्रक्षाल्यहस्तौतुपादादीनिकथांतथा शृणुयात्प्रत्यहंदेव्यैतत्संख्यैरक्षतादिभिः अथकृष्णाष्ट
मींप्राप्यनक्तकालेजितेंद्रियः स्नातःशुक्लांबरधरोव्रतीपूजागृहंविशेत् तत्रोपविश्यपूर्वास्यश्चारुधौतासनोपरि श्वे
तपट्टेलिखेदष्टदलंकमलमुत्तमं ऐंद्र्यादिशक्तिसंयुक्तंपार्श्वपत्रंसकेसरं कर्णिकायांततोलक्ष्मींकर्पूरक्षौद्रपांडुरां शु
भ्रवस्त्रपरीधानांमुक्ताभरणभूषितां पंकजासनसंस्थांतांस्मराननसरोरुहां शारदेंद्वमलाकांतिंस्निग्धनेत्रांचतु
र्भुजां पद्मयुग्मामभयदांवरव्यग्रकरांबुजां अभितोगजयुग्मेनसिच्यमानांकरांबुना संचिंत्यविलिखेद्देवींक
र्पूरागुरुचंदनैः ततस्त्वावाहनंकुर्यान्मंत्रेणानेनसव्रती महालक्ष्मिसमागच्छपद्मनाभपदादिह पंचोपचारपू
जेयंत्वदर्थेदेविसर्वदा आवाहनं ॥ १ ॥ आलयस्तेहकलितःकमलेकमलालये कमलेकमलेलक्ष्मिस्थितिंत्वं

कृपयाकुरु स्थापनं २ गंगादिसलिलाधारंतार्थमंत्राभिमंत्रितं दूरयात्राश्रमहरंपाद्यंमेप्रतिगृह्यतां पाद्यं ३ स्नानंतवमहालक्ष्मिकर्पूरागुरुवासितं सुतीर्थेभ्यःसमानीतंस्नानंतत्प्रतिगृह्यतां स्नानं ४ मलयाचलसंभूतंनाना पन्नगरक्षितं शीतलंवहुलामोदंचंदनंप्रतिगृह्यतां चंदनं ॥ ५ ॥ मिलत्परिमलामोदंमत्तालिकुलसंकुलं आनंदिनंदनोद्यानपद्मायैकुसुमंनमः पुष्पं ॥ ६ ॥ अथांगपूजा चपलायैनमःपादौपूजयामि चंचलायै जानुनीपूजयामि कमलवासिन्यै- कटिंपू- शांत्यै- नाभिंपू- मन्मथवासिन्यै- स्तनौपूज- ललितायै- भुजद्वयंपू- उत्कंठिन्यै- कंठंपू- मायायै- मुखंपू- श्रियै शिरःपू- पद्मायैनमः सर्वांगंपूजामि गंधसंभारसंवद्धपृथुवस्तुसमुद्भवं सुरासुरनरानंदिधूपंदेविगृहाणमे धूपं ॥ ७ ॥ श्रियं प्रजावर्तांलक्ष्मींवरदांविष्णुवल्लभां हिरण्याव्हयांस्वर्णमालिनींपद्मवासिनीं पद्मश्रियांमुक्तालंकारां सूर्याचंद्रां विश्वमूर्तिंविश्वभूतिं ऋद्धिं समृद्धिं तुष्टिं पुष्टिंधनेश्वरींशुद्धांभोगिनींभोगदात्रींधारामिति मार्तंडमंडलाखंडचंद्रविंवाग्नितेजसां निधानंदेविदीपोयंनिर्मितस्तवभक्तितः दीपः ॥ ८ ॥ देवतालयपातालभूतलाधारधान्यजं षोडशाकारसंभारंनैवेद्यंतेश्रियेनमः नैवेद्यं ॥ ९ ॥ स्नानादिकंविधायापियतःशुद्धिरवाप्यते तदेतदाचमनीयंमहालक्ष्मिविधीयतां आचमनं ॥ १० ॥ पातालतलसंभूतंवदनांभोजभूषणं नानागुणसमाकीर्णंतांवूलंदेवितेनमः तांवूलं ॥ ११ ॥ तंतुसंतानसंवद्धकलाकौशलनिर्मितं सर्वांगाभरणंश्रेष्ठंवसनंपरिधीयतां वस्त्रं ॥ १२ ॥ विष्णोर्वक्षसिपद्मेचशंखेचक्रेतथांवरे लक्ष्मीर्देवियथासित्वंमयिदेवितथाभव प्रार्थना उत्तार्य्यडोरकंवाव्होर्लक्ष्मीपार्श्वेनिधापयेत् लक्ष्मिदेविगृहाणत्वंडोरकंयन्मयाधृतं कथांश्रुत्वासुवर्णंवादत्वाचार्य्यायदक्षिणां एवंनिर्वर्त्यविधिवत्पूजनंवटुकाश्रियः हेवटुकेतिसंवोधनं चातुर्वर्ण्यायदेवाययथाशक्त्या

श्रदक्षिणां दीपान्पोडशपिंडाश्चगोधूमस्याद्विजातये दत्वातत्संख्ययाभुक्वारात्रौजागरणंचरेत् चंद्रोदयेथसंजातेद
द्यादर्घ्यंततोव्रती मंत्रेणानेनविप्रेंद्रशंखेनांबुफलादिना नमोस्तुतेनिशानाथलक्ष्मीभ्रातर्नमोस्तुते संपूर्णतांव्रतंया
तुगृहाणार्घ्यंविधोनमः इतिचंद्रायार्घ्यदानं प्रातर्विसर्जयेद्देवीं मंत्रेणानेनसुव्रती पंकजंदेविसंत्यज्यममवेश्मनिसंवि
श मातःसपुत्रभृत्योहंसुखीस्यांत्वत्प्रसादतः इतिविसर्जनं षोडशाहेतुसंपूर्णेकुर्य्यादुद्यापनंव्रती विधिनायेनविप्रें
द्र शृणुश्रद्धासमन्वितः दातव्याधेनुरेकावैस्वर्णशृंगादिसंयुता श्रोत्रियायसुवर्णंचप्रदद्याद्वसनादिकं सार्थउवाच एत
त्तेकथितंविप्रव्रतानामुत्तमंव्रतं यद्विधानादनायासाल्लभतेवांछितंफलं कृत्वाव्रतवरंविप्रराजानंतंचकारय व्रतमेतत्त्व
याविप्रदेयंश्रद्धावतेपरं नास्तिकानांपुरस्तात्तुनप्रकाश्यंकथंचन नमस्कृत्वापितंसार्थंपंकाद्दुस्थाप्यवाजिनं सपीत्वां
भस्तमादायपद्मिनीपत्रसन्निभं आरुह्यतुरगंविप्रोराजांतिकमुपागमत् नानाप्रकारसंभारशंवलान्युदकस्यच व्रत
प्रभावादभवन्बुभुजेभूभृतांवरः अथारुह्यमहीपालोवटुपर्य्याणितंहयं तद्व्रतस्यप्रभावेणतूर्णंस्वपुरमागतः त
मालोक्यसमालोक्यराजानंभूपुरंदरं उत्सवंचक्रिरेपौरास्तौर्य्यत्रिकपुरःसराः चलत्पताकाधामानंराजत्कल
शमौक्तिकं पुरंनृत्यदिवाभातिछत्रदंडोचितैःकरैः अथोत्सुकतयाद्वाराद्धावतिस्मवरांगना स्खलन्मुक्तालता
जालैश्चतुष्कमिवकुर्वती काचिद्विमुक्तकेशैवकृतैकनयनांजना काचिन्नितंबभारार्त्ताकाचित्पीनपयोधरा अथा
विशन्महीपालोवटुनासहितोगृहं पौरनारीजनाक्षिप्तलाजैःपूरितविग्रहः अथोत्तीर्य्यहयात्तस्माद्वटुहस्तावलं
बितः जगाममंगलोराजाचोलदेवीतुयत्रवै दृष्ट्वातुचोलदेवीसाडोरकंवलिवाहुके विमृश्यमनसाक्रुद्धाशंकां
चक्रेनृपेत्विमां आखेटकस्यव्याजेनगतोन्यांवल्लभांप्रति सौभाग्यायतयाबद्धोडोरकोदक्षिणेभुजे तयैवटुकश्चा
यंमांद्रष्टुंप्रेषितोध्रुवं ततोदुर्दैवदुष्टात्साकोपादाच्छिद्यडोरकं चिक्षेपचमहीपृष्ठेस्वसौभाग्यसुखैःसह नवुबोधचतां

राजाश्रोटयंतींचडोरकं सामंतमात्रभिःस्याद्यःकुर्वन्वार्त्तांवनोद्भवां तद्व्रतस्यविधानार्थस्वस्वामिन्यैनिवेदितं त
तोनूतनमादायचिल्लदेव्यकरोद्व्रतं अथसंवत्सरेतीतेलक्ष्मीपूजादिनेनृपः तौर्यत्रिकस्यनिःस्वानंचिल्लदेव्यागृहे
शृणोत् तदाकर्ण्यमहीपालोनूतनंवटुमब्रवीत् वटोस्त्यद्यदिनंलक्ष्म्याःसचतस्यकडोरकः वटोऽद्यविधास्या
मिमहालक्ष्मीव्रतंशुभं इतिपृष्टोनृपंप्राहडोरकस्त्रोटितोयथा तच्छ्रुत्वामंगलोराजाचिल्लदेव्यैप्रकुप्यच मया
द्यपूजनंकार्यंचिल्लदेवीगृहंप्रति अत्रांतरेमहालक्ष्मीर्वृद्धारूपंविधायच अथमंगलभूपालोवटुवाक्यवलंबितः
चचालकमलाचार्यैचिल्लदेवीगृहंप्रति जिज्ञासार्थंगृहंतस्याश्चोलदेव्याःसमागता गच्छगच्छाद्यदुष्टेकिमिहा
गत्यकरोषिमे तयादुराशयात्यर्थंलक्ष्मीःसाप्यवमानिता ततःक्रुद्धामहालक्ष्मीश्चोलदेवीमभाषत शशापाथमहा
लक्ष्मीश्चोलदेवींपुनःपुनः कोलास्याभवदुष्टेत्वंययाहमवमानिता चोलदेवीतुश्रीशापात्कोलास्यासाभवत्तदा
कोलापुरमितिख्यातंक्षितौतन्मंगलंपुरं अथायातामहालक्ष्मीश्चिल्लदेवीनिकेतनं यहुधाचिल्लदेव्यासालक्ष्मीः
सम्मानितार्चिता वृद्धारूपंपरित्यज्यप्रत्यक्षासाभवत्तदा पंचोपचारपूजाभिःश्रियंराज्ञीततोर्चयत् अतितु
ष्टातदालक्ष्मीश्चिल्लदेवीमुवाचह श्रीरुवाच अर्चनात्तेप्रसन्नास्मिचिल्लदेविवरंशृणु वव्रेवरंततोराज्ञीचिल्लदे
वीशुभाशया चिल्लदेव्युवाच येकरिष्यंतितेदेविव्रतमेतत्सुरेश्वरि तद्देशमनत्वयात्याज्यंयावच्चंद्रदिवाकरौ अ
द्यारभ्यकथाह्येषाभूपसंबंधिनीत्वया ख्यातियातुक्षितौदेविभक्तिर्भवतुमेत्वयि सद्भावेनकथामेतांयेशृण्वंति
पठंतिच तेषांतुवांछितंसर्वंत्वयासहसदैवहि तथेत्युक्त्वामहालक्ष्मीस्तत्रैवांतरधीयत अथमंगलभूपालस्तत्रा
गत्यश्रियोर्चनं चक्रेपरमयाभक्त्याचिल्लदेव्यासमान्वितः अथैषायादुराचाराचिल्लदेव्यागृहंप्रति चोलदेवी
समायाताद्वारस्थैर्वारिताजनैः ततोजगामविपिनंयत्रासीदंगिरामुनिः अथालोक्याद्भुताकारांज्ञात्वादृष्ट्याविचिंत्यतां

कृतव्रताथसंजाताचोलदेवीमहायशाः दाक्षिण्यकेलिलीलादि
समुनिःश्रीव्रतंदिव्यंचोलदेवीमकारयत् मुनेर्वेश्मनिराजातांददर्शवामलोचनां अथराजामुनिं
लावण्यैकनिकेतनं ततःकदाचिदागत्यवनमाखेटकेनृपः चोलदेवीसमन्वितः चिल्लदे
ग्राहकेयंधन्येतिकथ्यतां तद्वृत्तांतसमाख्यायराज्ञेतांप्रददौमुनिः अथागत्यनिजंराज्यं समुद्रस्ययथागंगायमुनेसंगतेसदा तथा
व्याचसहितोबुभुजेमंगलोनृपः चिल्लदेवीवरंवव्रेचोलदेवीसमागमं चिल्लदेव्यासमंसोथचोलदेव्यासहाखि
मंगलभूपस्यसंजातेवामलोचने परस्पराधिकेतेतुप्रियेराज्ञोबभूवतुः अभून्मंगलभूपस्यमंत्री
लां सप्तद्वीपवतींपृथ्वींबुभुजेमंगलोनृपः व्रतस्यास्यैवसामर्थ्याद्दृटुकःसोपिनूतनः
तवयथागुरुः भुक्त्वाथसकलान्भोगान्मंगलोभूभुजांवरः सपुनःस्वर्गमेत्याभून्नक्षत्रंविष्णुदैवतं नारदउवाच एत
त्तेकथितंशक्रव्रतानामुत्तमंव्रतं यत्कथाश्रवणेनापिलभतेवांछितंफलं प्रयागमिवतीर्थेषुदेवेषुभगवानिव नदी
षुचयथागंगाव्रतेषुचतथाव्रतं धर्मंचार्थंचकामंचमोक्षंचयदिवांछसि तदेतच्चव्रतंशक्रकुरुश्रद्धासमान्वितः श्रीकृ
ष्णउवाच व्रतमिदमथचक्रेनारदेनोपदिष्टंसुरपतिरपियस्माद्वांछितार्थंसलेभे त्वमपिकुरुतथैतद्धर्मसूनोयथास्याद
भिमतफलसिद्धिःपुत्रपौत्रादिवृद्धिःधनंधान्यंधरांधर्मंकीर्त्तिमायुर्यशःश्रियं तुरगान्दंतिनःपुत्रान्महालक्ष्मीःप्रयच्छति

इतिभविष्योक्तमहालक्ष्मीव्रतं ॥ ॥

अस्योद्यापनंव्रतोद्यापनंकौमुद्यां पूर्वोक्तविधिनाषोडशवर्षपर्यंतं व्रतं विधायोद्यापनंकार्यं तिथ्यादिसंकीर्त्यात्मनो
ऽखिलपापक्षयपूर्वकसकलदुःखदौर्भाग्यनिरसनधनधान्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वारा श्रीमहालक्ष्मीप्रीत्यर्थंमा
चरितमहालक्ष्मीव्रतोद्यापनंकरिष्ये आचार्यंवृत्वा सर्वतोभद्रपूजान्वितंपूजनंविधाय रात्रौजागरणंचकृत्वा प्रात
रग्निंप्रतिष्ठाप्यअन्वादध्यात् प्रधानंमहालक्ष्मीश्रीसूक्तेन प्रत्यृचंकमलैःपुनर्घृताक्तपायससघृतबिल्वादिद्रव्येण

प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिर्लक्ष्मीमंत्रेणयक्ष्येमंडलदेवताश्चाज्येनएकैकयाहुत्याएवंहोमंकृत्वा आचार्यंसं
पूज्यपीठंगांशय्यादिकंचदत्त्वा षोडशमिथुनानि वस्त्रादिभिः संपूज्य सूर्पेषोडशनानाविधभक्ष्याणिचंदनतालवृं
तताडवृक्षपत्रपूगपूर्णफलनिचयंनिक्षिप्यसूर्पेणाच्छाद्यदद्यात् क्षीरोदार्णवेत्यादिमंत्रेणवायनंदत्त्वा ब्राह्मणान्संत
र्प्याशिषोगृहीत्वाभुंजीतेतिसंक्षेपः अथमहालक्ष्मीव्रतस्यागमपुराणोक्तव्रतविधिः तत्रादौ भाद्रशुक्लाष्टम्यां
प्रातरुत्थाय प्रातःषोडशकृत्वोंघ्रीकरौमुखंचप्रक्षाल्य स्नानादिकंविधाय संकल्पंकृत्वा पूजनं कुर्यात् महा
लक्ष्म्याश्चंदनादिनाप्रतिमांविधाय तदग्रेतंतुषोडशसंसिद्धषोडशग्रंथिसंयुतं सूत्रं लक्ष्म्यैनमइतिमंत्रेण प्रतिग्रं
थ्यभिमंत्रितंसंस्थाप्यलक्ष्मीपूजनंडोरकपूजनंचकृत्वा हस्ते डोरकबंधनंकुर्यात् तत्रमंत्रः धनंधान्यंधरांहर्म्यंकी
र्त्तिमायुर्यशःसुखं तुरगान्दंतिनःपुत्रान्महालक्ष्मिप्रयच्छमे मंत्रेणानेनबद्ध्वाथडोरकंदक्षिणेकरे कांडानिषो
डशादायदूर्वायाश्चाक्षतानिच एकचित्तःकथांश्रुत्वापूजयेत्तच्चडोरकं ततस्तुप्रातरारभ्ययावत्स्यादसिताष्टमी
तावत्प्रक्षाल्यतद्धस्तपादादीनिकथांतथा शृणुयात्प्रत्यहंतावत्तत्संख्यैरक्षतादिभिरिति अथलक्ष्मीपूजनविधिः
तत्राष्टदलंविधायपंचदशोपचारैर्लक्ष्मींपूजयेत् तदुक्तं सारसंग्रहे आवाहनंचासनंस्यादर्घ्यपाद्याचमानिच
मधुपर्काभिषेकौचवस्त्रालंकारचंदनं पुष्पंधूपंदीपभोज्येप्रोद्वासनमथापिच एतानिमंत्रवित्कुर्यादुक्तंपंचदशाके
नहि अथप्रयोगः प्रणवेनश्रीबीजेनवा प्राणायामत्रयं कृत्वा ऋष्यादिस्मरणपूर्वकमंगन्यासंकुर्यात् आ
नंदकर्दमचिक्लीतपुत्रेभ्यऋषिभ्योनमोमुखे अनुष्टुप्बृहतीत्रिष्टुप्प्रस्तारपंक्तिछंदोभ्योनमोहृदि श्री
विभावसुदेवताभ्यांनमइति विन्यस्य विध्यनुसारेण विनियोगमुक्त्वा हिरण्मयायैनमोहृदया
यनमः चंद्रायैनमःशिरसेस्वाहा रजतस्रजायैनमः शिखायैवषट् सुवर्णस्रजायैनमःकवचायहुं

हिरण्यस्रजायैनमोनेत्राभ्यांवौषट् हिरण्यवर्णायैनमश्रस्त्रायफट् इतिषडंगमंत्रान्हृदयादिपदस्थाने अंगु
ष्ठादिपदेष्वंगुष्ठादिकरतलांतकरयोर्यथास्थितान् हृदयादिषडंगेषु विन्यस्य हिरण्यवर्णामितिपंचदशभिर्न्यासा
न्कुर्य्यात् शिरसिहिरण्यवर्णामित्यादि १ नेत्रयोः ताम्मआवहइति २ कर्णयोः अश्वपूर्वामिति ३
नासायां कांसोस्मितामि ४ गुह्येमनसइति ५ कर्दमेनेति ६ ऊर्वोः आपःसृजंत्विति ७ जान्वोःआर्द्रांसूर्यां
मिति ८ जंघयोःआर्द्रांचंद्रामिति ९ पादयोः ताम्मइति एवमेताः प्रणवादिनमोंताविन्यस्य सरसिजनिल
येइतिध्यात्वा मानसपूजांतेचतुर्द्वारं चतुरस्रत्रयावृतं अष्टदलकमलंपूजाचक्रंस्वपुरतोनिधायार्घ्यपात्रस्थापना
दिपीठार्चनांतेपीठशक्तीःपूजयेत् ॐविभूत्यैनमःकांत्यै सृष्ट्यै कीर्त्यै संतत्यै तुष्ट्यै पुष्ट्यै मध्ये ऋद्ध्यैनमः
ततःप्रतिमादौदेव्यावाहनार्घ्यादि अथवा योगपीठन्यासं कृत्वा मूलमंत्रन्यासंकुर्यात् अस्याविद्याया भृगुर्ऋ
षिस्त्रिष्टुप्छंदः श्रीर्देवतान्यासेविनियोगः भृगवेऋषयेनमःशिरसि त्रिष्टुप्छंदसेनमोमुखेश्रीदेवतायैनमोहृदये
शंवीजायनमोगुह्ये इंशक्तयेनमः पादयोः रंकीलकायनमोनाभौ श्रांअंगुष्ठाभ्यांनमः श्रींतर्जनीभ्यां
नमः श्रूंमध्यमाभ्यांनमः श्रैंअनामिकाभ्यांनमः श्रौंकनिष्ठिकाभ्यांनमः श्रःकरतलकरपृष्ठाभ्यांनमः श्रां
हृदयायनमः श्रींशिरसेस्वहा श्रूंशिखायैवषट् श्रैंकवचायहूं श्रौंनेत्रत्रयायवौषट् श्रःअस्त्रायफट् मूले
नव्यापकंकुर्यात् ध्यान कांत्याकांचनसन्निभांहिमगिरिप्रख्यैश्चतुर्भिर्गजै हस्तोक्षिप्तहिरण्मयामृतघटैरासिच्य
मानांश्रियं विभ्राणांवरमब्जयुग्ममभयंहस्तैःकिरीटोज्ज्वलां क्षौमावद्धनितंवविंवललितांवंदेरविंदस्थिताम् इ
तिध्यात्वामनसा सपूज्य मूलमंत्रंजपित्वा गुह्येतिमंत्रेणसंपूज्यंअर्घ्यस्थापनादिकृत्वा वाह्यपूजामारभेत् त
त्रतांत्रिकवैदिकवाध्यानंकृत्वा प्रतिमादिप्राणप्रतिष्ठवाहनादिकंकुर्य्यात् तद्यथा हिरण्यवर्णांहरिणींसु

वर्णरजतस्रजं चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह १ महालक्ष्मिसमागच्छपद्मनाभपदादिह यथोपचारपूजेयंत्वदर्थंदेविनिर्मितेति मूलेनावाहनंकुर्यात् त्वबायंमहिमेति आलयस्तेहिकथितइतिमूलेनसंस्थापनं सर्वांतर्यामिणीत्यासनं अस्मिन्वरासनेइतिप्रतिष्ठापनं अनन्यातवेतिसान्निरोधनं अज्ञानाद्दुर्भदत्वाद्वेतिसंमुखीकरणं दृशापीयूषेतिस्थिरीकरणं अभक्त्यावाङ्मनइतिअवगुंठनं ततःषडंगेनसकलीकरणं धेनुमुद्रयाअमृतीकरणं महामुद्रयापरमीकरणं ततःप्राणप्रतिष्ठांकृत्वाआसनंदद्यात् तांमआवह श्रीलक्ष्म्यैनमःइदमासनं अथअर्घ्यःतापत्रयहरामिति अश्वपूर्णांरथमध्यांहस्तिनादप्रमोदिनीं श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषतां श्रीरेपतेअर्घ्यःस्वाहा ततःपाद्यं यद्भक्तिलेशेतिकांसोस्मितांहिरण्यप्राकारामार्द्रां ज्वलंतींतृप्तांतर्पयंतीं पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं श्रीरेतत्ते पाद्यं अथाचमनीयं यंवेदानामपीति चंद्रांप्रभासांयशसाज्वलंतीं श्रियंलोकेदेवजुष्टामुदारां तांपद्मिनीमिहशरणमहंप्रपद्ये अलक्ष्मीर्मेनश्यतांत्वावृणोमि मूलेनश्रीरेतत्तेआचमनीयं अथमधुपर्कः सर्वकालुष्यहीनेतिपठित्वा आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः तस्यफलानि तपसानुदंतुमायाअंतरायाचबाह्याअलक्ष्मीः श्रीरेपतेमधुपर्कःस्वधा ततःपुनराचमनीयंस्वधा स्नानं परमानंदबोधाब्धिपइति उपैतुमांदेवसखः कीर्तिश्चमणिनासह प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे श्रीरेतत्ते स्नानंनमः ततः पुनराचमनीयं ततोवस्त्रं मयाचित्रेति यमाश्रित्येति तंतुसंतानमितिच क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहं अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् श्रीरेतत्तेवासोनमः ततोभूषणानि स्वभावसुंदरेति गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं श्रीरेतत्तेभूषणंनमः ततश्चंदनं मनसः काममाकूतिंवाचः सत्यमशीमहि पशूनां

रूपमन्नस्यमयिश्रीः श्रियतांयशः मलयाचलसंभूतंनानापन्नगसेवितं शीतलंबहुलामोदंचंदनंप्रतिगृह्यतां
श्रीरेपतेगंधःततोक्षताःअक्षताश्वसुरश्रेष्ठकुंकुमाक्ताःसुशोभनाःगृहाणदेवदेवेशिमयादत्तानुभक्तितः श्रीरेतेतेऽक्ष
ताः ततःपुष्पाणि नानापरिमलामोदमुक्तालिकुलसंकुलं आनंदिनंदनोद्यानंपद्मायैकुसुमंनमः कर्द्दमेनप्र
जाभूतामयिसंभ्रमकर्द्दम श्रियंवासयमेकुलेमातरंपद्ममालि-नीं श्रीरेतानितपुष्पाणिवौषट् ततःपंचपुष्पांजली
दत्त्वा पंचावरणपूजांकुर्य्यात् कर्णिकायांषडंगानिपूज्यांतः अष्टदले दिग्दलेषु वासुदेवायनमःसंकर्षणाय
नमः प्रद्युम्नायनमः अनिरुद्धायनमः हिमपीततमालेतनीलाभान्पीतवाससः शंखचक्रगदापद्मचतुर्भुजान्पूज
येत् ततोविदिग्दलेषु सनकाय सलिलाय गुग्गुलवे कुरंटकाय इतिसंपूज्य देव्यादक्षिणे शंखनिधयेव
सुधारासहिताय देव्यावामे वसुमतीसहितायपद्मनिधये तथाच यजेच्छंखनिधिंदेव्यादक्षिणेदयितान्वित
मुक्तामाणिक्यसंकाशौकिंचित्स्मितमुखांबुजौ अन्योन्यालिंगितपरौशंखपंकजधारिणौ वामेस्याःपंकजनिधिं
प्रिययासहितंयजेत् सिंदूराभौभुजाश्लिष्टौरक्तपद्मदलान्वितौ निःसरद्रत्नवर्षाभ्यापद्माभ्यांमूर्ध्निलांछितौ सुदले
पंकजनिभांनत्वावसुमतीमिति इतिसंपूज्य अभीष्टेतिसंप्रार्थ्य हस्तौप्रक्षाल्य तृतीयावरणपूजां कुर्यात् व
लाकायैनमः विमलायैनमः कमलायैनमः वनमालिकायैनमः विभीषणायैनमः मालिकायैनमः शां
कर्यैनमः वसुमालिकायैनमः पंकजधारिण्यैनमः मुक्ताहारसमप्रभा एताःसंपूज्य मूलेनस्वेष्टदेवंसंपूज्य
मूलेनपुष्पांजलिंदत्त्वा इंद्रादिपूजनं वज्रादिपूजनंकृत्वा पुष्पांजलिंदद्यात् गंधसंभारसन्नद्धपृथुवस्तुसमुद्भ
वं सुरासुरनरानंदिधूपोयंप्रतिगृह्यतां आपःसृजंतुस्निग्धानिचिक्लीतवसमेगृहे निजांदेवींमातरं श्रियंवासयमे
कुले लक्ष्म्यैनमः धूपंसमर्पयामीति धूपः मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसां निधानंदेविदीपोयंनिर्मितस्त

वभक्तितः आर्द्रांपुष्करिणींपुष्टिंसुवर्णांहेममालिनीं सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह इतिदीपः देवतालयपातालभूतलाधारधान्यजं षोडशाकारसंभारंनैवेद्यंतोश्रियेनमः आर्द्रांयस्करिणींयष्टींपिंगलांपद्ममालिनीं चंद्रांहिरण्मयींयष्टींजातवेदोममावह इतिनैवेद्यं स्नानादिकंविधायापियतःशुद्धिरवाप्यते एतदाचमनीयंमेमहालक्ष्मिविधीयतां इत्युत्तरापोशानं इदंफलमितिफलं पातालतलसंभूतंवदनांभोजभूषणं नानागुणसमाकीर्णंतांबूलंदेवितेनमः इतितांबूलं हिरण्यगर्भामितिदक्षिणा श्रियंजातइतिनीराजनं यानिकानिचेत्येकप्रदक्षिणा ततोनमस्कारः ततः श्रीसूक्तं पठित्वाप्रार्थनां कुर्यात् एवंप्रत्यहं पूजनं विधाय समाप्तिदिने कृष्णाष्टम्यां महापूजां कुर्यात् अथ कृष्णाष्टमीप्रयोगः नक्तं स्नानं विधाय शुक्लांबरधरः पूजागृहंगत्वा आसनोपरि पूर्वमुखउपविश्य श्वेतवस्त्रेऽष्टदलं विलिख्य तत्कर्णिकायां गजकुंभस्थसलिलासिच्यमानां लक्ष्मीं संलिख्य पुष्पांजलिदानांतमुक्तपूजनं कृत्वा विष्णोर्वक्षसियापद्मेशंखचक्रेतथांवरे लक्ष्मिनित्यायथासित्वं मयिनित्यातथाभवेति संप्रार्थ्य उत्तार्य डोरकंवाहोर्लक्ष्मीपार्श्वेनिवेदयेत् लक्ष्मिदेविगृहाणत्वंयन्मयाडोरकंधृतं व्रतंसंपूर्णतांयातुकृपाकार्यामयित्वयेति ततोवायनदानं षोडशपिंडान्षोडशदीपांश्चदद्यात् तत्रमंत्रः इंदिराप्रतिगृह्णातिइंदिरावैददातिच इंदिरातारिकोभाभ्यामिंदिरायैनमोनमइतिमूलेनार्घ्यंदत्वा तत्संख्यान्गोधूमचूर्णदीपान् पिंडांश्च दत्वारात्रौजागरणंकृत्वा चंद्रोदयेफलादियुक्तेनशंखेनार्घ्यंदद्यात् नमोस्तुतेनिशानाथलक्ष्मीभ्रातर्नमोस्तुते व्रतंसंपूर्णतांयातुगृहाणार्घ्यंखगोत्तम ततोनमस्कारंकृत्वा जानुभ्यामवनींगत्वाप्रार्थयेत् क्षीरोदार्णवसंभूतेकमलेकमलालये प्रयच्छकामान्मेसर्वान्विष्णोर्वक्षस्थलालये पुत्रान्देहियशोदेहिसौख्यंसौभाग्यमेवच कालिकालिमहाकालिविकरालिनमोस्तुते त्रैलोक्य

जननित्राहिवरदेभक्तवत्सले एकनाथेजगन्नाथेजमदग्निप्रियेऽव्यये रेणुकेत्राहिमादेविराममातःशिवंकुरु वै
देहित्राहिमांसीतेप्रसीदपुरुषोत्तमे कपालकर्त्तिकाशूलडमरुव्यग्रहस्तके ।श्रियंकुरुमहालक्ष्मिश्रश्रियंत्वाशुनाश
येति वंदारवीरसुरवृंदकिरीटकोटीरोचच्छटाग्निपरिकल्पितरत्नदीपं देवित्वदीयचरणंशरणंजनानांसेवामहेसक
लमंगलवर्द्धनाय उत्फुल्लकैरवदलायतलोचनायैगंडोल्लसच्चटुलकुंडलमंडितायै राकाशशिप्रतिभटाननकोमला
यैतस्यैनमःकमललोचनवल्लभायै सद्भक्तकल्पलतिकाहारिकंठभूषाकेयूरहेमकटकोज्ज्वलकंकणांकां संसारसाग
रमुखेपततोममाद्यदेहित्वदीयकरयाष्टिमनंगमातः दृष्ट्वादेविजनाययापिविविधाब्रह्माधिपत्यंगताः विष्णोर्वक्षसि
याचकारतरलालीलाब्जमालाभ्रमं क्लेशाग्निप्रहितत्वदीयचरणद्वंद्वाब्जसेवारतं कारुण्यामृतसारपूरितदृशामाम
द्यपश्येश्वरि मल्लीविफुल्लकुसुमोज्ज्वलमध्यभागधाम्मिल्लभारजिततारकचित्रताम्रा उत्तप्तहेमनिकषोज्ज्वलकायका
तिर्लक्ष्मीःस्वयंप्रणमतांश्रियमातनोतु इतिमहालक्ष्मींस्तुत्वा प्रातर्विसर्जयेत् विसर्जनमन्त्रस्तु ताम्मआव
हजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंप्रभूतंगावोदास्योऽश्वान्विंदेयंपुरुषानहं पंकजदेविसंत्यज्यममवे
श्मनिसंविश यथासपुत्रभृत्योऽहंसुखीस्यांत्वत्प्रसादतः इतिदेवीविसर्जनं याश्रीःपद्मासनस्थाविपुलकटि
तटीपद्मपत्रायताक्षी गंभीरावर्तनाभिस्तनभरनमिताशुभ्रवस्त्रोत्तरीया लक्ष्मीर्दिव्यैर्गजेंद्रैर्मणिजलसलिलैः स्नापि
ताहेमकुंभैः नित्यंसापद्महस्ताममवसतुगृहेदिव्यमांगल्ययुक्ता ॥ अथनारदीयपुराणोक्तं महालक्ष्मीव्रतं श्र
द्धेनांतुसमारभ्यव्रतंषोडशवासरं महालक्ष्म्याःसमुद्दिष्टंसर्वसंपद्विवर्द्धनं करिष्येऽहंमहालक्ष्मिव्रतंतेत्वत्परायणः
तदविघ्नेनमेयातुसमाप्तिंत्वत्प्रसादतः इत्युच्चार्यततोवद्ध्वाडोरकंदक्षिणेकरे षोडशग्रंथिसहितंगुणैःषोडशभिर्युतं त
तोऽन्वहंमहालक्ष्मींगंधाद्यैरर्चयेद्व्रती यावत्कृष्णाष्टमींतत्रचरेदुद्यापनंसुधीः वस्त्रमंडपिकांकृत्वासर्वतोभद्रमंडले कल

शसुप्रतिष्ठाप्यदीपमुद्योतयेत्ततः उत्तार्य्यडोरकंबाहोःकुंभस्यादौनिवेदयेत् चतस्रःप्रतिमाःकृत्वासौवर्णास्तत्स्व
रूपिणीः स्नपनंकारयेत्तासांजलैः पंचामृतैस्तथा उपचारैःषोडशभिःपूजयित्वाविधानतः जागरस्तत्रकर्त्तव्यो
गीतवादित्रनिःस्वनैः ततोनिशीथेसंप्राप्तेऽभ्युदितेमृतदीधितौ कृत्वार्घ्यंचंदनद्रव्यैःश्रीखंडाद्यैर्विधानतः चंद्रमंड
लस्थायमहालक्ष्म्यैप्रदापयेत् क्षीरोदार्णवसंभूतकमलेकमलालये विष्णुवक्षस्थलस्थेमेसर्वकामप्रदाभव
एकनाथेजगन्नाथेजमदग्निप्रियेऽव्यये रेणुकेत्राहिमांदेविराममातःशिवंकुरु मंत्रैरेतैर्महालक्ष्मींप्रार्थ्यश्रोत्रिययो
षितः सम्यक्संपूज्यस्रग्गंधवासोयावककज्जलैः संभोज्यजुहुयादग्नौबिल्वपत्रकपायसं तदलाभेघृतंविप्रग्रहे
भ्यःसमिधस्तिलान् मृत्युंजयायचपुरंसर्वरोगप्रशांतये चंदनंतालपत्रंचपुष्पमालांतथाक्षतान् दूर्वांकौसुंभसू
त्रंचपूगंश्रीफलमेवच भक्ष्याणिचनवेसूर्पेप्रतिद्रव्यंतुषोडश समाच्छाद्यान्यसूर्पेणव्रतीदद्यात्समंत्रकं क्षीरोदा
र्णवसंभूतालक्ष्मीचंद्रसहोदरा व्रतेनानेनसंतुष्टाभवताद्विष्णुवल्लभा चतस्रःप्रतिमास्तास्तुश्रोत्रियेभ्यःसमर्पयेत्
ततस्तुचतुरोविप्रान्षोडशाथसुवासिनीः मिष्टान्नंप्राशयित्वातुविसृजेत्प्राप्तदक्षिणान् समाप्तनियमःपश्चाद्भुंजी
तेष्टैःसमन्वितः भुक्त्वेष्टानैहिकान्कामान्लक्ष्मीलोकेवसेच्चिरं एषाशोकाष्टमीचोक्तायस्यांपूर्णंरमाव्रतं अत्राशो
कस्यपूजास्यादेकभक्ततयास्मृतं कृत्वाशोकव्रतंनारीह्यशोकाजन्मजन्मनि यत्रकुत्रापिसंजातानात्रकार्यावि
चारणेति इत्यशोकाष्टमीव्रतं सर्वास्वष्टमीषुप्रोक्तमप्याश्विनकृष्णाष्टम्यांमेवकार्यं तदुक्तंहेमाद्रावादित्यपुराणे
अष्टमीषुचसर्वासुपूजनीयाह्यशोकिका गंधमाल्यनमस्कारधूपदीपान्नसंपदा तस्मिन्नहनियाभुंक्तेनक्तमिंदुविवर्जि
तं भवत्यथाविशोकासायत्रयत्राभिजायते अष्टमीषुचसर्वासुनचेच्छक्नोतिवैमुने प्रौष्ठपद्यामतीतायांयास्यात्कृ
ष्णाष्टमीद्विज तत्रकार्यंव्रतंचैतत्सर्वकामफलप्रदं इत्यशोकाष्टमीव्रतं इयंशिवाष्टमीतिभविष्योत्तरे कन्यागते

सवितरिकृष्णपक्षेष्टमीचया साचपुण्यापापहराशिवस्यानंददायिनी स्नानंदानंजपोहोमःपितृदेवाभिपूजनं स
र्वंप्रीतिकरंस्याच्चप्रीतेतस्मिंस्त्रिलोचने आश्विनकृष्णनवम्यांरथनवमीव्रतं भविष्यपुराणे कृत्वैवाश्वयुजेमा
सिकृष्णपक्षेनराधिप नवम्यामुपवासंतुदुर्गांदेवींप्रपूजयेत् पुष्पधूपोपहारैस्तुब्राह्मणानांचतर्पणैः पूजयि
त्वारथंकृत्वानानावस्त्रोपशोभितं शोभितंध्वजमालाभिःछत्रदर्पणचामरैः कृत्वास्वर्णमयींदुर्गांमहिषेशूलशो
भितां विन्यस्यरथमध्येतुपूजयेत्कृतलक्षणां नवम्यांभ्रामयित्वातुजलेदुर्गांनयेन्नृप तत्रजागरपूर्वंस्तुप्रदीपा
द्युपशोभितं प्रभातेस्नपनंकुर्यात्तद्भक्तानांचपूजनं रथंशोभासमायुक्तंभगवत्यैनिवेदयेत् भुक्त्वाचबांधवैःसार्द्धंप्र
णम्यार्य्यांगृहंव्रजेत् सर्वव्रतानांप्रवरंसर्वपापप्रणाशनं व्रतंरथनवम्याख्यंसर्वकामार्थसाधकं सर्वयज्ञेषुय
त्पुण्यंसर्वतीर्थेषुयत्फलं तत्फलंसकलंविंद्यान्नवमीव्रतपालनात् कल्पकोटिशतंसाग्रंविष्णुलोकेमहीयते त
तोभुंजन्महींसर्वांसार्वभौमोभवेदिह रत्नोपकरणैर्युक्तांकृत्वादारुमयींशुभां शय्यांनिवेदयेद्यस्तुभगवत्यैनराधिप
दुगूलतूलवस्त्राणांपलसंख्यातुयावती तावद्वर्षसहस्राणिदुर्गालोकेमहीयते वृषंशूलांकितंयस्तुभगवत्यैनिवे
दयेत् आसप्तसंततिकुलंगृह्यदेव्यालयंव्रजेत् दत्वोभयमुखींगांचभगवत्यैसुशोभनां सप्तद्वीपांधरांदत्वाय
त्फलंतदवाप्नुयात् पादद्वयंशिरोद्वंचयावद्वत्सस्यनिर्गतं तावद्यौःपृथिवीज्ञेयादातास्याश्वमहीप्रदः इतिरथ
नवमीव्रतं अत्रशय्यादिदानानिस्वतंत्राणीतिफलश्रुतेः अथाश्विनकृष्णनवम्यां महालयश्राद्धंस्कांदे सेतुखंडे
नवम्यांयस्तिथौमर्त्यः कुर्याच्छ्राद्धंमहालये नवतिःकल्पसाहस्रंतृप्यंतिपितरोस्यवै संततिंचाप्यविच्छिन्नां
दद्युःपितृगणाःसदा अत्रैवनवम्यामन्वष्टकाश्राद्धंकात्यायनः अन्वष्टकासुनवभिःपिंडैःश्राद्धमुदाहृतं पित्रा
दिमातृमध्यंचततोमातामहांतकं हेमाद्रौछागलेयः केवलास्तुक्षयेप्रोक्तावृद्धावादौप्रकीर्त्तिताः अन्वष्टकासु

उत्तार्य्यडोरकंवाहोःकुंभस्यादौनिवेदयेत् चतस्रःप्रतिमाःकृत्वासौवर्णास्तत्स्व
शसुप्रतिष्ठाप्यदीपमुद्योतयेत्ततः उत्तार्य्यडोरकंवाहोःकुंभस्यादौनिवेदयेत् चतस्रःप्रतिमाःकृत्वासौवर्णास्तत्स्व
रूपिणीः स्नपनंकारयेत्तासांजलैः पंचामृतैस्तथा उपचारैःषोडशभिःपूजयित्वाविधानतः जागरस्तत्रकर्त्तव्यो
गीतवादित्रनिःस्वनैः ततोनिशीथेसंप्राप्तेऽभ्युदितेमृतदीधितौ कृत्वार्घ्यंचंदनद्रव्यैःश्रीखंडाद्यैर्विधानतः चंद्रमंड
लसंस्थायैमहालक्ष्म्यैप्रदापयेत् क्षीरोदार्णवसंभूतकमलेकमलालये विष्णुवक्षस्थलस्थेमेसर्वकामप्रदाभव
एकनाथेजगन्नाथेजमदग्निप्रियेऽव्यये रेणुकेत्राहिमांदेविराममातःशिवंकुरु मंत्रैरेतैर्महालक्ष्मींप्रार्थ्यश्रोत्रिययो
षितः सम्यक्संपूज्यस्रग्गंधवासोयावककज्जलैः संभोज्यजुहुयादग्नौविल्वपत्रकपायसं तदलाभेघृतंविप्रग्रहे
भ्यःसमिधास्तिलान् मृत्युंजयायचपुरंसर्वरोगप्रशांतये चंदनंतालपत्रंचपुष्पमालांतथाक्षतान् दूर्वांकौसुंभसू
त्रंचपूगंश्रीफलमेवच भक्ष्याणिचनवेसूर्पेप्रतिद्रव्यंतुषोडश समाच्छाद्यान्यसूर्पेणव्रतीदद्यात्समंत्रकं क्षीरोदा
र्णवसंभूतालक्ष्मीचंद्रसहोदरा व्रतेनानेनसंतुष्टाभवताद्विष्णुवल्लभा चतस्रःप्रतिमास्तास्तुश्रोत्रियेभ्यःसमर्पयेत्
ततस्तुचतुरोविप्रान्षोडशाथसुवासिनीः मिष्टान्नंप्राशयित्वातुविसृजेत्तान्सदक्षिणान् समाप्तनियमःपश्चाद्भुंजी
तेष्टैःसमन्वितः भुक्त्वेहैहिकान्कामान्लक्ष्मीलोकेवसेच्चिरं एवाशोकाष्टमीचोक्तायस्यांपूर्णारमाव्रतं अत्राशो
कस्यपूजास्यादेकभक्ततयास्मृतं कृत्वाशोकव्रतंनारीह्यशोकाजन्मजन्मनि यत्रकुत्रापिसंजातानात्रकार्याववि
चारणेति इत्यशोकाष्टमीव्रतं सर्वास्वष्टमीषुप्रोक्तमप्याश्विनकृष्णाष्टम्यामेवकार्य्यं तदुक्तंहेमाद्रावादित्यपुराणे
अष्टमीषुचसर्वासुपूजनीयाह्यशोकिका गंधमाल्यनमस्कारधूपदीपान्नसंपदा तस्मिन्नहनियाभुंक्तेनक्तमिंदुविवर्जि
तं भवत्यथविशोकासायत्रयत्राभिजायते अष्टमीषुचसर्वासुनचेच्छक्नोतिवैमुने प्रोष्ठपद्यामतीतायांयास्यात्कृ
ष्णाष्टमीद्विज तत्रकार्य्यंव्रतंचैतत्सर्वकामफलप्रदं इत्यशोकाष्टमीव्रतं इयंशिवाष्टमीतिभविष्योत्तरे कन्यागते

त्पुपिंडदानकार्यमवति अत्रातिदेशादेव पिंडदानेप्राप्ते गुर्विणीपतित्वादिप्रयुक्तनिषेधंप्रतिवचन -यसर्वार्थत्वात् मातृश्राद्धेसुवासिनीपूजनमुक्तंमार्कंडेयपुराणे मातुःश्राद्धेतुसंप्राप्तेब्राह्मणैःसहभोजनं सुवासिन्यैप्रदातव्यमितिशातातपोब्रवीत् भर्तुरग्रेमृतानारीसहदाहेनवामृता तस्याःस्थानेनियुंजीतविप्रैः सह सुवासिनीं तत्रैव मदालसावाक्यं स्त्रीश्राद्धेषुप्रदेयाःस्युरलंकाराश्चयोषिते मंजीरमेखलादामकर्णिकाकंकणादयः अत्राशक्तावनुकल्पमाहाश्वलायनः अनडुहेयवसमाहरेत् अग्निनावाकृच्छ्रमुपोषेदेषाष्टकेतितत्त्वेच नष्टकल्पादिति हेमाद्रौपितामहः अमावास्याव्यतीपातपौर्णमास्यष्टमीषुच विद्वान्श्राद्धमकुर्वाणोनरकंप्रतिपद्यते अकरणेप्रायश्चित्तमुक्तमृग्विधाने एभिर्ऋग्भिर्जपेन्मंत्रंशतवारंतुतद्दिने अन्वष्टक्यंयदाशून्यंसंपूर्णंयातिसर्वदेति अस्यामेवनवम्यां बिल्वशाखायांदेवीबोधनमुक्तं देवीपुराणे कन्यायांकृष्णपक्षेतुपूजयित्वार्द्रभेदिवा नवम्यांबोधयेद्देवींगीतवादित्रनिःस्वनैरिति अथदशम्यादिमहालयपक्षमाह यत्तु कृष्णपक्षेदशम्यादौवर्जयित्वाचतुर्दशीं श्राद्धेप्रशस्तास्तिथयोयथैतानतथेतराइतिप्रतिपदादिमहालयपक्षाणामप्रातिकर्षमाह कात्यायनः अत्रापरपक्षांतराणामपिनित्यत्वासिद्धे गौतमादिवचनैकवाक्यतया पंचम्यादिकल्पेसिद्धे शक्तेनप्रतिपदमारभ्य तदशक्तौपंचमीमारभ्य दशमीमारभ्यवा तदशक्तावेकस्यामपि तिथौ श्राद्धमवश्यंकर्तव्यमितिसिद्धं सकृत्करणादेवाश्विनापरपक्षादेर्षांभेदः तत्रसर्वत्रदेशाचारतोव्यवस्था एकाहपक्षेऽपिमृताहतिथिरावश्यकी यदाहुः आषाढ्याःपंचमेपक्षेकन्यासंस्थेदिवाकरे मृताहनिपुनर्योवैश्राद्धंदास्यतिमानवः तस्यसंवत्सरंयावत्तृप्ताःस्युःपितरोध्रुवमिति अत्रैवहस्तादित्यखंजनदर्शनमुक्तंज्योतिषे हस्तगतेऽवजवंधोपश्येद्यदिखंजनंनृपोयांतं पश्येत्त

मध्यस्थानांत्याःकार्यास्तुमातरः पृथ्वीचंद्रोदये ब्रह्माण्डपुराणे पितृणांप्रथमंदद्यान्मातृणांतदनंतरं ततो[illegible]
तामह्यानांचअन्वष्टक्येक्रमःस्मृतः दीपिकायांमातुःश्राद्धमादौकर्त्तव्यमित्युक्तं निर्णयामृते मैत्रायणीयगृह्य
परिशिष्टेअन्वष्टक्यंतुक्रमशोमातृपूर्वंतदिष्यते अत्रशाखाभेदेन व्यवस्थेति पृथ्वीचंद्रोदयः जीवत्पितृकवि
षयमितिनिर्णयदीपः इदंचजीवत्पितृकेणापिकार्य्यं अन्वष्टक्यंगयाप्राप्तौसत्यांयच्चमृतेहनि मातुःश्राद्धंसु
तःकुर्य्यात्पितर्यपिचजीवति यद्यपि जीवत्पितृकस्य पंचाष्टकाअवश्यंकर्त्तव्यास्तथाप्यशक्तस्येयमावश्यकी
प्रोष्ठपद्यष्टकाभूयःपितृलोकेभविष्यतीति हेमाद्रौपाद्मोक्तेः यत्तु इयंमातृनवमीतिकथ्यते सर्वासामेवमातॄ
णांश्राद्धंकन्यागतेरवौ नवम्यांहिप्रदातव्यंब्रह्मलब्धवरायतइतिसूतेनावश्यकोक्तेश्च अत्रसर्वासामित्युक्तेः मा
तरिजीवन्त्यामपिसपत्नमात्रादिभ्योदद्यात् तन्मरणेसतितस्यैताभ्यश्चदद्यादित्युक्तंजीवत्पितृनिर्णये सर्वैरप्या
चार्य्यैः अत्रभर्तृमरणोत्तरंमातामृता तस्याः श्राद्धंनकार्य्यमितिकेचिदाहुः श्राद्धंनवम्यांकुर्य्यात्तुमृतेभर्तरिलुप्यते
तदेतन्निर्मूलत्वान्मूर्खप्रतारणमात्रं श्राद्धदीपिकायांब्राह्मे पितृमातृकुलोत्पन्नायाःकाश्चनमृताःस्त्रियः श्राद्धार्हामातरो
ज्ञेयाःश्राद्धंतत्रप्रदीयतेइति अत्रदेशाचारात्व्यवस्था इदंचानुपनीतेनापिकार्य्यं तदुक्तंश्राद्धशूलपाणौ मात्स्ये अ
मावस्याष्टकाकृष्णापक्षपंचदशीषुचेत्यभिधाय एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वसु श्राद्धंसाधारणंनामसर्वकाम
फलप्रदं भार्य्याविरहितोप्येतत्प्रवासस्थोपिनित्यशः शूद्रोपिमंत्रवत्कुर्य्यादनेनविधिनाबुधइति तथाग्निपुराणे
अन्वष्टकासुवृद्धौचगयायांचक्षयेहनि अत्रमातुःपृथक्श्राद्धमन्यत्रपतिनासहेति यत्तु तमिस्रपक्षेनवमीपुण्या
भाद्रपदेहिया चत्वारःपार्वणाःप्रोक्ताःपितृपक्षेमनीषिभिरिति तद्देशाचारतोव्यवस्थितं इदंचजीवत्पितृकेणापि
सपिंडकंकार्य्यं हेमाद्रौविष्णुधर्मोत्तरे अन्वष्टकासुचस्त्रीणांश्राद्धंकार्य्यंतथैवचेत्युपक्रम्य पिंडनिर्वापणंकार्य्यं

तस्यामपिचसत्तमेत्युक्तत्वात् तस्यामन्वष्टकायामित्यर्थः अपिशब्देनतीर्थमहालयप्रत्याब्दिकानांग्रहणं तेनगु
र्विणीपतेरप्येतेषुपिंडदानंकार्यंभवति अत्रातिदेशादेव पिंडदानेप्राप्ते गुर्विणीपतित्वादिप्रयुक्तनिषेधंप्रतिवचन
स्यसर्वार्थत्वात् मातृश्राद्धेसुवासिनीपूजनमुक्तंमार्कंडेयपुराणे मातुःश्राद्धेतुसंप्राप्तेब्राह्मणैःसहभोजनं सुवासि
न्यैप्रदातव्यमितिशातातपोब्रवीत् भर्तुरग्रेमृतानारीसहदाहेनवामृता तस्याःस्थानेनियुंजीतविप्रैः सह
सुवासिनीं तत्रैव मदालसावाक्यं स्त्रीश्राद्धेषुप्रदेयाःस्युरलंकाराश्चयोषिते मंजीरमेखलादामकर्णिकाकंक
णादयः अत्राशक्तावनुकल्पमाहाश्वलायनः अनडुहोयवसमाहरेत् अग्निनावाकृच्छ्रमुपोपेदेषोष्टकेतितत्वेच
नष्टकल्पादिति हेमाद्रौपितामहः अमावास्याव्यतीपातपौर्णमास्यष्टमीषुच विद्वान्श्राद्धमकुर्वाणोनरकंप्र
तिपद्यते अकरणेप्रायश्चित्तमुक्तमृग्विधाने एभिर्ऋग्भिर्जपेन्मंत्रंशतवारंतुतद्दिने अन्वष्टक्यंयदाशून्यंसंपूर्णं
यातिसर्वदेति अस्यामेवनवम्यां बिल्वशाखायांदेवीबोधनमुक्तं देवीपुराणे कन्यायांकृष्णपक्षेतुपूजयित्वार्द्र
भेदिवा नवम्यांबोधयेद्देवींगीतवादित्रनिःस्वनैरिति अथदशम्यादिमहालयपक्षमाह यत्तु कृष्णपक्षेदशम्या
दौवर्जयित्वाचतुर्दशीं श्राद्धेप्रशस्तास्तिथयोयथैतानतथेतराइतिप्रतिपदादिमहालयपक्षाणामप्रातिकपमाह कात्या
यनः अत्रापरपक्षांतराणामपिनित्यत्वासिद्धे गौतमादिवचनैकवाक्यतया पंचम्यादिकल्पेसिद्धे शक्तेनप्रतिपद
मारभ्य तदशक्तौपंचमीमारभ्य दशमीमारभ्यवा तदशक्तावेकस्यामपि तिथौ श्राद्धमवश्यंकर्तव्यमितिसिद्धं
सकृत्करणादेवाश्विनापरपक्षादेर्पाभेदः तत्रसर्वत्रदेशाचारतोव्यवस्था एकाहपक्षेऽपिमृताहतिथिरावश्यकी यदाहुः
आषाढ्याःपंचमेपक्षेकन्यासंस्थेदिवाकरे मृताहनिपुनर्योवैश्राद्धंदास्यतिमानवः तस्यसंवत्सरंयावत्तृप्ताःस्युः
पितरोध्रुवमिति अत्रैवहस्तादित्यखंजनदर्शनमुक्तंज्योतिषे हस्तगतेऽवुजवंधौपश्येद्यदिखंजनंनृपोयातं पश्येत्त

मध्यस्थानांत्याःकार्यास्तुमातरः पृथ्वीचंद्रोदये ब्रह्मांडपुराणे पितॄणांप्रथमंदद्यान्मातॄणांतदनंतरं ततोमा
तामहानांचअन्वष्टक्येक्रमःस्मृतः दीपिकायांमातुःश्राद्धमादौकर्त्तव्यमित्युक्तं निर्णयामृते मैत्रायणीयगृह्य
परिशिष्टेअन्वष्टक्यंतुक्रमशोमातृपूर्वंतदिष्यते अत्रशाखाभेदेन व्यवस्थेति पृथ्वीचंद्रोदयः जीवत्पितृकवि
षयामितिनिर्णयदीपः इदंचजीवत्पितृकेणापिकार्य्यं अन्वष्टक्यंगयाप्राप्तौसत्यांयच्चमृतेहनि मातुःश्राद्धंसु
तःकुर्य्यात्पितर्यपिचजीवति यद्यपि जीवत्पितृकस्य पंचाष्टकाअवश्यंकर्त्तव्यास्तथाप्यशक्तस्येयमावश्यकी
प्रौष्ठपद्यष्टकाभूयःपितृलोकेभविष्यतीति हेमाद्रौपाद्मोक्तेः यत्तु इयंमातृनवमीतिकथ्यते सर्वासामेवमातॄ
णांश्राद्धंकन्यागतेरवौ नवम्यांहिप्रदातव्यंब्रह्मलब्धवरायतइतिसूतेनावश्यकोक्तेश्च अत्रसर्वासामित्युक्तेः मा
तरिजीवत्यामपिसपत्नमात्रादिभ्योदद्यात् तन्मरणेसतितस्यैताभ्यश्चदद्यादित्युक्तंजीवत्पितृनिर्णये सवैरप्या
चार्य्यैः अत्रभर्तृमरणोत्तरंमातामृता तस्याः श्राद्धंनकार्य्यमितिकेचिदाहुः श्राद्धंनवम्यांकुर्य्यात्तुमृतेभर्तरिलुप्यते
तदेतन्निर्मूलत्वान्मूर्खप्रतारणमात्रं श्राद्धदीपिकायांब्राह्मे पितृमातृकुलोत्पन्नायाःकाश्चनमृताःस्त्रियः श्राद्धार्हामातरो
ज्ञेयाःश्राद्धंतत्रप्रदीयतेइति अत्रदेशाचाराद्व्यवस्था इदंचानुपनीतेनापिकार्य्यं तदुक्तंश्राद्धशूलपाणौ मात्स्ये अ
मावस्याष्टकाकृष्णपक्षपंचदशीषुचेत्यभिधाय एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वसु श्राद्धंसाधारणंनामसर्वकाम
फलप्रदं भार्य्याविरहितोप्येतत्प्रवासस्थोपिनित्यशः शूद्रोपिमंत्रवत्कुर्य्यादनेनाविधिनाबुधइति तथाग्निपुराणे
अन्वष्टकासुवृद्धौचगयायांचक्षयेहनि अत्रमातुःपृथक्श्राद्धमन्यत्रपतिनासहेति यत्तु तमिस्रपक्षेनवमीपुण्या
भाद्रपदेह्यिया चत्वारःपार्वणाःप्रोक्ताःपितृपक्षेमनीषिभिरिति तद्देशाचारतोव्यवस्थितं इदंचजीवत्पितृकेणापि
सपिंडकंकार्य्यं हेमाद्रौविष्णुधर्मोत्तरे अन्वष्टकासुचस्त्रीणांश्राद्धंकार्य्यंतथैवचेत्युपक्रम्य पिंडनिर्वापणंकार्य्यं

तस्यामपिचसत्तमेत्युक्तत्वात् तस्यामन्वष्टकायामित्यर्थः अपिशब्देनतीर्थमहालयप्रत्याब्दिकानांग्रहणं तेनगु र्विणीपतेरप्येतेषुपिंडदानंकार्यंभवति अत्रातिदेशादेव पिंडदानेप्राप्ते गुर्विणीपतित्वादिप्रयुक्तनिषेधंप्रतिवचन स्यसर्वार्थत्वात् मातृश्राद्धेसुवासिनीपूजनमुक्तंमार्कंडेयपुराणे मातुःश्राद्धेतुसंप्राप्तेब्राह्मणैःसहभोजनं सुवासि न्यैप्रदातव्यमितिशातातपोब्रवीत् भर्तुरग्रेमृतानारीसहदाहेनवामृता तस्याःस्थानेनियुंजीतविप्रैः सह सुवासिनीं तत्रैव मदालसावाक्यं स्त्रीश्राद्धेपुप्रदेयाःस्युरलंकाराश्चयोषिते मंजीरमेखलादामकर्णिकाकक णादयः अत्राशक्तावनुकल्पमाहाश्वलायनः अनडुहोयवसमाहरेत् अग्निनावाकृच्छ्रमुपोषेदेषोष्टकेतितस्वेच नष्टकल्पादिति हेमाद्रौपितामहः अमावास्याव्यतीपातपौर्णमास्यष्टमीषुच विद्वान्श्राद्धमकुर्वाणोनरकंप्र तिपद्यते अकरणेप्रायश्चित्तमुक्तमृग्विधाने एभिर्ऋग्भिर्जपेन्मंत्रंशतवारंतुतद्दिने अन्वष्टक्यंयदाशून्यंसंपूर्णं यातिसर्वदेति अस्यामेवनवम्यां बिल्वशाखायांदेवीबोधनमुक्तं देवीपुराणे कन्यायांकृष्णपक्षेतुपूजयित्वार्द्र भेदिवा नवम्यांबोधयेद्देवींगीतवादित्रनिःस्वनैरिति अथदशम्यादिमहालयपक्षमाह यत्तु कृष्णपक्षेदशम्या दौवर्जयित्वाचतुर्दशीं श्राद्धेप्रशस्तास्तिथयोयथैतानतथेतराइतिप्रतिपदादिमहालयपक्षाणामप्रतिकर्षमाह कात्या यनः अत्रापरपक्षांतराणामपिनित्यत्वासिद्धे गौतमादिवचनैकवाक्यतया पंचम्यादिकल्पेसिद्धे शक्तेनप्रतिपद मारभ्य तदशक्तौपंचमीमारभ्य दशमीमारभ्यवा तदशक्तावेकस्यामपि तिथौ श्राद्धमवश्यंकर्तव्यमितिसिद्धं सकृत्करणादेवाश्विनापरपक्षादेर्पाभेदः तत्रसर्वत्रदेशाचारतोव्यवस्था एकाहपक्षेऽपिमृताहतिथिरावश्यकी यदाहुः आषाढ्याःपंचमेपक्षेकन्यासंस्थेदिवाकरे मृताहनिपुनर्योवैश्राद्धंदास्यतिमानवः तस्यसंवत्सरंयावत्तृप्ताःस्युः पितरोध्रुवमिति अत्रैवहस्तादित्यखंजनदर्शनमुक्तंज्योतिषे हस्तगतेऽवुजबंधौपश्यद्यदिखंजनंनृपोयातं पश्येत्त

घागतस्यचक्षिप्रंमहीपतिर्वशयाति १ खंजनकोनामायंविहगस्तस्यावलोकनेप्रथमे श्लोकानियानिमुनिभिः
फलानितानिवक्ष्येहम् २ समंतभद्रस्तदनुप्रभद्रस्ततोनुभद्रोतिबलादिकश्च एषांचतुर्णामथखंजनानामाचक्ष्म
हेसंप्रतिलक्षणानि ॥ ३ ॥ यःकंधरोरःशिरसासमंताद्विभर्तिकार्ष्णंससमंतभद्रः कृष्णेनवायःशिरसोरसाचेत्सतु
प्रभद्रःकथितःकंठपृष्ठः ॥ ४ ॥ कंठोरसीयस्यचमेचकेस्तःसमंततश्चापिसितोनुभद्रः कृष्णाभवेत्कंठगतैक
रेखा यस्यापसोयंबलभद्रनामा ॥ ५ ॥ एवंचतुर्णामपिकार्यसिद्धौ योयोभवेत्पूर्वतरःसमुख्यः
६ ॥ आकंठमुखात्कृष्णःसंपूर्णःपूरयत्याशाः निंदितानाह आकारभद्रोगलमात्रकृष्णः सितानानःका
र्यविनाशनाय ७ अंगेहरिद्राद्रवसन्निकाशोगोमूत्रनामाखलुखंजरीटः निरीक्षितःप्राग्दिवसेप्रभूतंदुःखोदयंशं
सतियावदब्दम् ८ वाराहसंहितायामधिकृत्य अथसुरभिमधुकुसुमफलपादपसलिलांबुपूर्णेषु करितुरगभु
जगशातानयुयानमूर्ध्निहर्म्येषु ९ गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे हस्त्यश्वतुरगशालाछत्रध्व
जचामरांद्येषु १० हेमसमीपसितांबरकमलोत्पलपूजितोपलिप्तेषु दधिपात्रधान्यकूटेदृष्टोभीष्टानिचेष्टतेविहगः
११ पंकेत्वादुधनानिगोरससंपन्नगोमयोपलिप्तेतु शाद्वलकेवस्त्राप्तिः शकटस्थेदेशविभ्रमोभवति १२ गृह
पटलेपुधंशोवक्रेवंधोःशुचारोगः पृष्ठेप्वजाविकानांप्रियसंगममावहत्याशु १३ माहिषीगर्दभास्थिश्मशान
गृहकोणशर्करादृष्टः प्राकारशुचिविमलसुनियतमसोमरणदोभयदः १४ पक्षौधुन्वन्नशुभःखादन्नपिबन्वाव
रियाहस्यःसूर्योदयेप्रशस्तोनिष्टकरःखंजनोऽस्तमये १५ वारिवाहोऽत्रजलप्रणालिका आगमांतरेऽपि आजेषु
गोपुगजवाजिमहोरगेपुराज्यप्रदःकुशलदःशुचिशाद्वलेषु भस्मास्थिकाष्ठिनखलोष्टतुषेपुदृष्टःकष्टंददातिनियतंख
लुखंजरीटः अथास्यदर्शनेपठनीयोमंत्रः नीलग्रीवशुभग्रीवसर्वकामफलप्रद पृथिव्यामवतीर्णोसिखंजरीटनमो

स्तुते त्वंयोगयुक्तोमुनिपुत्रकस्त्वमदृश्यतामेषिशिखोद्गमेन ःत्वंदृश्यसेप्रावृषिनिर्गतायांत्वंखंजनाश्चर्यमयोनमस्ते
वा यांम्यामग्निभयंसुरद्विषिकलिर्लाभःसमुद्रालये
आगमांतरे वित्तंब्रह्मणिकार्यसिद्धिरतुलाशक्रेहुताशेभयं
ऐशान्यांमरणंध्रुवंनिगदितांदिग्लक्षणंखंजने तथा कुचेष्टितोयःकुव
यन्यांवरवस्त्रमन्नसलिलंदिव्यांगनाचोत्तरे
पुःकुवेषोनिरीक्षितःखंजनकःकदाचित् ःद्रष्टाविशेषात्परितोषयेत्त्वाकिंघातयेत्संचितदुष्कृतंतु मासंनभुंजीतशयी
तभूमौस्त्रियंनसेवेतादिनानिसप्त स्नायाज्जपेत्संजुहुयाच्चवह्नौपिष्टंपुमान्खंजनमर्चयेच्च वराहसंहितायामपि नृप
तिरपिशुभप्रवेशेखगमवलोक्यमहीतलेविदध्यात् सुरभिकुसुमधूपयुक्तं शुभमभिनंदितमेवसिद्धं अशुभमपि
विलोक्यखंजरीटंद्विजगुरुसाधुसुरार्चनेसुयुक्तः नचनृपतेरशुभंभवेत्कथंचित्सप्तदिनानिनसप्तमांसभोजी ॥ आ
श्विनकृष्णदशम्यांमहालयश्राद्धं स्कांदे सेतुखंडे दशम्यांतुतिथौमर्त्यःश्राद्धंकुर्यान्महालये शतंकल्पसह
स्त्राणितृप्यंतिपितरोस्यवै संततिंचाप्यविच्छिन्नांदद्युःपितृगणाःसदा ॥ आश्विनकृष्णपक्षे इंदिरैकादशीव्र
तं नारदीये इषस्यैकादशींकृष्णामिंदिरांसमुपोष्यवै शालिग्रामशिलाग्रेतुमध्याह्नेश्राद्धमाचरेत् विष्णोः
प्रीतिकरंविप्रततःप्रातर्हरेर्दिने पद्मनाभंसमभ्यर्च्यभूदेवान्भोजयेत्सुधीः विसृज्यदक्षिणांदत्वातांस्ततोश्नीतचस्वयं
एवंकृतव्रतोमर्त्योभुक्त्वाभोगानिहेप्सितान् पितॄणांकोटिमुद्धृत्ययात्यंतेवैष्णवंपदं स्कांदे सेतुखंडेऽपि एकादश्यांति
थौयस्तुश्राद्धंकुर्यान्महालये द्विशतंकल्पसाहस्रंतृप्यंतिपितरोस्यवै अथैतस्याएकादश्याः कथा ब्रह्म
वैवर्ते पाद्मेच युधिष्ठिरउवाच कथयस्वप्रसादेनममाग्रेमधुसूदन कृष्णायाचाश्विनेपक्षेकिंनामैकादशीतुसा
श्रीकृष्णउवाच आश्विनेकृष्णपक्षेतुइंदिरानामनामतः तस्याव्रतप्रभावेणमहापापंप्रणश्यति अधोयोनिग
तानांचपितॄणांगतिदायिनी शृणुष्वावहितोराजन्कथांपापहरांशुभां यस्याःश्रवणमात्रेणवाजपेयफलंभवेत्

पुराकृतयुगेराजाबभूवरिपुसूदनः इंद्रसेनइतिख्यातोपुरीमाहिष्मतीपतिः सराज्यपालयामासध र्मेणयशसान्वितः पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः माहिष्मत्यधिपोराजा विष्णुभक्तिपरायणः जपन्गोविंदनामानिमुक्तिदानिनराधिप कालंनिनायविधिवदध्यात्मपरिचिंतकः ए कस्मिन्दिवसेराज्ञिसुखासीनेसभासने अवतीर्य्यागतोधीमानंबरान्नारदोमुनिः तमागतमभिप्रेक्ष्यसमुत्थायकृ तांजलिः पूजयित्वार्घ्यविधिनाचासनेसंन्यवेशयत् सुखोपविष्टः समुनिःप्रत्युवाचनृपोत्तमं कुशलंतवराजें द्रसप्तस्वंगेषुवर्तते धर्मेमतिर्वर्ततेतेविष्णुभक्तिरतः सदा राजोवाच त्वत्प्रसादान्मुनिश्रेष्ठसर्वत्रकुशलंमम अ द्यक्रतुक्रियाः सर्वाः सफलास्तवदर्शनात् प्रसादंकुरुविप्रर्षेब्रूह्यागमनकारणं नारदउवाच श्रूयतांराजशा र्दूलमद्वचोविस्मयप्रदं ब्रह्मलोकादहंप्राप्तोयमलोकनरोत्तम शमनेनार्चितोभक्त्याचोपविष्टोवरासने धर्मशी लः सत्यवतोभास्करंसमुपासते व्रतपुण्यप्रकर्तारोव्रतवैकल्यदोषतः सभायां श्राद्धदेवस्यमयादृष्टः पिता तव कथितस्तेनसंदेशस्तन्निबोधनृपोत्तम इंद्रसेनइतिख्यातोराजामाहिष्मतीप्रभुः तस्याग्रेकथयब्रह्मन्स्थितमां यमसन्निधौ केनापिचांतरायेणपूर्वजन्मभवेनवै स्वर्गंप्रेषयमांपुत्रइंदिराव्रतदानतः इत्युक्तोहंसमायातः स मीपंतवपार्थिव पितुःस्वर्गगतिंराजन्निंदिराव्रतदानतः राजोवाच कथयस्वप्रसादेनभगवन्निंदिराव्रत विधि नाकेनकर्त्तव्यंकस्मिन्पक्षेतिथौतथा नारदउवाच शृणुराजन्हितंवाच्मिव्रतस्यास्यविधिंशुभं आश्विनस्यासि तेपक्षेदशमीदिवसेशुभे प्रातःस्नानंप्रकुर्वीतश्रद्धायुक्तेनचेतसा ततोमध्यान्हसमयेस्नानंकृत्वाबहिर्जले पितॄ णांप्रीतयेश्राद्धंकुर्याच्छ्रद्धासमन्वितः एकभक्तंततःकृत्वारात्रौभूमौशयीतवै प्रभातेविमलेजातेप्राप्तेचैकादशीदि मुखप्रक्षालनंकुर्याद्दंतधावनवर्जितं उपवासस्यनियमंगृह्णीयाद्भक्तिभावतः अद्यस्थित्वानिराहारःस

पूजायि
र्वभोगविवर्जितः श्वोभोक्ष्येपुंडरीकाक्षशरणंमेभवाच्युत शालिग्रामशिलाग्रेतुश्राद्धंकृत्वायथाविधि पूजायि
त्वाहृषीकेशंधूपदीपादिभिस्तथा बंधुदौहित्रपुत्राद्यैःस्वयंभुंजीतवाग्यतः अनेनविधिनाराजन्व्रतंकुरुप्रयत्नतः
विष्णुलोकंप्रयास्यंतिपितरस्तवभूपते इत्युक्त्वानृपतिंराजन्मुनिरंतरधीयत यथोक्तविधिनाराजाचकारव्रतमुत्त
मं अंतःपुरेणसहितःपुत्रभृत्यसमन्वितः व्रतेकृतेतुकौंतेयपुष्पवृष्टिरभूद्दिवः तत्पितागरुडारूढोजगामहरिमंदिरं
इंद्रसेनोपिराजर्षिःकृत्वाराज्यमकंटकं इंदिराव्रतपुण्येनययौवैकुंठमेवहि पठनाच्छ्रवणादस्यसर्वपापैः प्रमुच्यते इति
ब्रह्मवैवर्तपद्मपुराणयोरिंदिरैकादशीव्रतं आश्विनकृष्णद्वादश्यां संन्यासिनामपिमहालयश्राद्धं पुत्रादिभिः कार्यं
तत्पार्वणमेव तदुक्तंवायुपुराणे संन्यासिनोप्यौदकादिकुर्यात्पुत्रोयथाविधि महालयेतुयच्छ्राद्धंद्वादश्यांमे
वतद्भवेत् महालयेतुयच्छ्राद्धंद्वादश्यांपार्वणंनत्विति पृथ्वीचंद्रोदये संग्रहेपि यतीनांचवनस्थानांवैष्णवानांविशे
षतः द्वादश्यांविहितंश्राद्धंकृष्णपक्षेविशेषत इतिस्कांदे सेतुखंडेपि द्वादश्यांभक्तितोयस्तुश्राद्धंकुर्यान्म
हालये षट्शतंकल्पसाहस्रंतृप्यंतिपितरोस्यवै आश्विनकृष्णत्रयोदशीश्राद्धंचंद्रिकायां त्रयोदशीभाद्रपदी
मुख्याकृष्णापितृप्रिया तृप्यंतिपितरस्तस्यांवर्षाणामयुतायुतं स्कांदे सेतुखंडेच पितॄनुद्दिश्ययः कु
र्यात्त्रयोदश्यांमहालयं साहस्रकल्पसाहस्रंतृप्यंतिपितरोस्यवै संततिश्चाप्यविच्छिन्नादद्युःपितृगणाः सदा
हेमाद्रौ मनुस्मृतौ यत्किंचिन्मधुनामिश्रंप्रदद्यात्त्रयोदशीं तदप्यक्षयमेवस्याद्वर्षासुचमघासुच यमस्मृता
वपि गाथाश्चपितृभिर्गीताः कीर्त्तयंतिपुरातनाः अपिनःसकुलेजायाद्योनोदद्यात्त्रयोदशीं मघासुस
र्पिषायुक्तंपायसंदक्षिणामुखः प्रयोगपारिजाते शंखः प्रौष्ठपद्यामतीतायांमघायुक्तांत्रयोदशीं प्राप्यश्राद्धंप्रकु
र्वीतमधुनापायसेनच प्रजामिष्टांयशः स्वर्गमारोग्यंचधनंतथा नृणांश्राद्धेसदाप्रीताः प्रयच्छंतिपितामहाः

एतन्नित्यमपि पृथ्वीचंद्रोदयेविष्णुधर्मे औष्ठपद्यामतीतायांतथाकृत्वात्रयोदशीं एतांस्तुश्राद्धकालान्वैनि
त्यानाहप्रजापतिः श्राद्धमेतेष्वकुर्वाणोनरकंप्रतिपद्यते इत्यादिवचनैरत्रैवत्रयोदश्यांश्राद्धमहाफलं मघायु
क्तायांत्वतिप्रशस्तंमघायुक्ताथतत्रापिशक्त्याराजन्त्रयोदशीतिवचनात् अत्रमलमासेपिश्राद्धंकार्य्यं अनन्य
गतित्वात् मघात्रयोदशीयोगप्राशस्त्याच्च मघात्रयोदशीश्राद्धंप्रत्युपस्थितिहेतुकं अनन्यगतिकत्वेनकर्तव्यं
स्यान्मलिम्लुचइतिकाठकगृह्याच्च इदंचयुगादिविशेषप्रयुक्तत्वात्पिंडरहितंकार्य्यं अयनद्वितयेश्राद्धंविषुव
द्वितयेतथा युगादिषुचकर्तव्यंपिंडनिर्वपणादृते अपिंडकश्राद्धेविशेषमाह छागलेयः पिंडोयत्रनिवर्तेतम
घादिषुकथंचन सांकल्पंतुतदाकार्य्यंनियमाद्ब्रह्मवादिभिः सांकल्पंतुयदाकुर्यात्तत्कुर्य्यात्पात्रपूरणं नावाह
नाग्नौ डंविकरंनच अशक्त्यापार्वणंश्राद्धंयथावत्कर्तुमक्षमः पिंडाद्यर्घादिविहीनंतुसंकल्पश्राद्धमाचरेदिति
पुत्रवतापुत्रांनरोद्देशेनकार्य्यम् कृष्णपक्षेत्रयोदश्यांयः श्राद्धंकुरुतेनरः पंचत्वंतस्यजानीयाज्ज्येष्ठ
यतामितिवचनात् अतएव योवांछतिनरोमुक्तिंपितृभिःसहचात्मनः असंतानश्चयस्तस्यश्राद्धे
डे तत्रैव अद्यप्रभृतियःश्राद्धंत्रयोदश्यांकरिष्यति कन्यासंस्थेसहस्रांशौ
तत्रबहुभिर्वचनैर्बहुलार्थतया विहितस्यात्यंतनिषेधायोगात् विषयभेदेनवक्तव्ये
पविस्ताररहित्यरूपस्तावदेकस्तद्विषयो नागरखंडे उक्तः अतःश्राद्धंविनादेयंतद्दिनेमधुपायसं
लशाकंमांसंवार्ध्रीणसस्यच तस्याभावेपिदातव्यंक्षीरौदनमनुत्तमं तस्मिन्नहनिदातव्यंपित्दृणांतृप्त
वेपिदातव्यंक्षीरौदनमनुत्तमं तस्मिन्नहनिदातव्यंपित्दृणांत्दृप्तयेनृप
लविमिश्रितमिति अत्र श्राद्धशब्दः पिंडदानपरः तस्यापि पितृ

दैवतत्वेनश्राद्धशब्दवाच्यत्वात् अयेब्राह्मणभोजनस्योक्तत्वेन तन्निषेधासंभवात् अत्रान्योप्येकवर्गोद्देश्यैकरूपो
निषेधविषयः कार्ष्णाजिनिनोक्तः श्राद्धंनचैकवर्गस्यत्रयोदश्यांसमाचरेत् अतृप्तासोत्रयेयस्यप्रजांहिंसंतितस्य
ते इतिएकवर्गस्य पितृवर्गमात्रस्यनकुर्यात् किंतुमातामहवर्गस्यापिकुर्यादितिविधेर्विषयः नचदर्शश्राद्धातिदे
शवत् त्रयोदशीश्राद्धेमातामहवर्गस्यापिप्राप्तत्वादेकवर्गोद्देश्यकश्राद्धनिषेधानुपपत्तिः दर्शश्राद्धएवमातामहव
र्गस्यश्राद्धानावश्यकत्वस्यमिताक्षरायामुक्तत्वात् तदवश्यकत्वेतुत्रयोदश्यामेकवर्गश्राद्धादिषुचवोध्यःपितृभ्यस्तद
नुश्राद्धदानमुपक्रमेदित्यादिमातामहश्राद्धेपुनर्वचनमूलं हेमाद्रावुदाहृतपैतृकेतु कुर्वन्त्रयोदशीश्राद्धंपुत्रवा
न्यःसुतायुषे एकस्यैवनकुर्य्याच्चपार्वणंतुसमाचरेत् एकस्यैववर्गस्यपार्वण पर्वणिदर्शेक्रियमाणेअमावास्या
श्राद्धेनसाध्यंषड्दैवत्यमित्यर्थः केचित्तु नतृप्तास्तत्रयस्यातिदोषश्रवणात् पितृव्यादीनामपि महालयवत्त्रयोद
श्यां श्राद्धंकर्तव्यमितिवदंति तद्दूषणकालविवेचनेद्रष्टव्यं तेनकृष्णत्रयोदशीमात्रेपुत्रवद्गृहिणात्रयोदश्यां
वहुपुत्रेच्छयाश्राद्धंनकर्त्तव्यं भाद्रकृष्णत्रयोदश्यांतैववहुप्रजाइतिवचनंपितृवर्गमात्रस्यनकर्तव्यं किंतुमातामहवर्ग
स्यापि तत्रेदंवचनं पितरोयत्रपूज्यंतेतत्रमातामहाअपि तत्रापिपिंडदानंनकर्तव्यं किंतु ब्राह्मणभोजनमात्रे
मधुप्लुतघृतपायसादिनेति सामान्यविशेषरूपाविधिनिषेधवचनानां व्यवस्थासिद्धा अस्मिन्पक्षे केवलमघापिश्रा
द्धकालः तथाचवसिष्ठः पितापितामहश्चैवतथैवप्रपितामहः उपासंतेसुतंजातापिप्पलंशकुनाइव मधुमांसैश्चशाकै
श्चपयसापायसेनच एपनोदास्यतेश्राद्धंवर्षासुचमघासुचेति अत्रपिंडदाननिषेधोभविष्यत्पुराणे संक्रांत्यामुपवासे
नपार्वणेनचभारत मघायांपिंडदानेनज्येष्ठपुत्रोविनश्यतीति अन्यत्रापि ऋक्षेपिंडप्रदानंतुज्येष्ठपुत्रीविवर्जयेत् ऋक्षं
मघातत्रज्येष्ठपुत्रीविद्यमानज्येष्ठपुत्रकः अयंज्येष्ठपुत्रिणः श्राद्धनिषेधएव इतिनाशंकनीयं किंतु पिंडदानमात्रे

एतन्नित्यमपि पृथ्वीचंद्रोदयेविष्णुधर्मे औष्टपद्यामतीतायांतथाकृष्णत्रयोदशी एतांस्तुश्राद्धकालान्वैनि
त्यानाहप्रजापतिः श्राद्धमेतेष्वकुर्वाणोनरकंप्रतिपद्यते इत्यादिवचनैरत्रैवत्रयोदश्यांश्राद्धंमहाफलं मघायु
क्तायांत्वतिप्रशस्तंमघायुक्ताथतत्रापिशक्त्याराजंस्त्रयोदशीतिवचनात् अत्रमलमासेपिश्राद्धंकार्य्यं अनन्य
गतित्वात् मघात्रयोदशीयोगप्राशस्त्याच्च मघात्रयोदशीश्राद्धंप्रत्युपस्थितिहेतुकं अनन्यगतिकत्वेनकर्तव्यं
स्यान्मलिम्लुचइतिकाठकगृह्याच्च इदंचयुगादिविशेषप्रयुक्तत्वात्पिंडरहितंकार्य्यं अयनद्वितयेश्राद्धंविषुव
द्वितयेतथा युगादिषुचकर्तव्यंपिंडनिर्वपणादृते अपिंडकश्राद्धेविशेषमाह छागलेयः पिंडोयत्रनिवर्तेतम
घादिषुकथंचन सांकल्पंतुतदाकार्य्यंनियमाद्ब्रह्मवादिभिः सांकल्पंतुयदाकुर्यात्कुर्य्यात्पात्रपूरणं नावाह
नाग्नौकरणंनपिंडांविकिरंनच अशक्तःपार्वणंश्राद्धंयथावत्कर्तुमक्षमः पिंडार्घ्यादिविहीनंतुसंकल्पश्राद्धमाचरेदिति
वचनात् एतच्चपुत्रवतापुत्रांनरोद्देशेनकार्य्यम् कृष्णपक्षेत्रयोदश्यांयः श्राद्धंकुरुतेनरः पंचत्वंतस्यजानीयाज्ज्येष्ठ
पुत्रस्यनिश्चितामितिवचनात् अतएव योवांछतिनरोमुक्तिंपितृभिःसहचात्मनः असंतानश्चयस्तस्यश्राद्धे
प्रोक्तात्रयोदशी नागरखंडे तत्रैव अद्यप्रभृतियःश्राद्धंत्रयोदश्यांकरिष्यति कन्यासंस्थेसहस्रांशौ
तस्यश्राद्धस्यसंक्षयइति तत्रबहुभिर्वचनैर्बहुलार्थतया विहितस्यात्यंतनिषेधायोगात् विषयभेदेनवक्तव्ये
पिंडदानयुक्तत्वरूपविस्ताराहित्यरूपस्तावदेकस्तद्विषयो नागरखंडे उक्तः अतःश्राद्धंविनादेयंतद्दिनेमधुपायसं
खड्गमांसंकालशाकंमांसंवाध्रीणसस्यच तस्याभावेपिदातव्यंक्षीरौदनमनुत्तमं तस्मिन्नहनिदातव्यंपितॄणांतृप्त
येनृप तस्याभावेपिदातव्यंक्षीरौदनमनुत्तमं तस्मिन्नहनिदातव्यंपितॄणांतृप्तयेनृप
तस्याभावेपिदातव्यंजलंतिलविमिश्रितमिति अत्र श्राद्धशब्दः पिंडदानपरः तस्यापि पितृ

दैवतत्वेनश्राद्धशब्दवाच्यत्वात् अग्रेब्राह्मणभोजनस्योक्तत्वेन तन्निषेधासंभवात् अत्रान्योप्येकवर्गोद्देश्यैकरूपो
निषेधविषयः कार्ष्णाजिनिनोक्तः श्राद्धंनचैकवर्गस्यत्रयोदश्यांसमाचरेत् अतृप्तासोत्रयेयस्यप्रजांहिंसंतितस्य
ते इतिएकवर्गस्य पितृवर्गमात्रस्यनकुर्यात् किंतुमातामहवर्गस्यापिकुर्यादितिविधेर्विषयः नचदर्शश्राद्धातिदे
शवत् त्रयोदशीश्राद्धेमातामहवर्गस्यापिप्राप्तत्वादेकवर्गोद्देश्यकश्राद्धनिषेधानुपपत्तिः दर्शश्राद्धएवमातामहव
र्गस्यश्राद्धानावश्यकत्वस्यमिताक्षरायामुक्तत्वात् तदवश्यकत्वेतुत्रयोदश्यामेकवर्गश्राद्धादिषुचवोध्यःपितृभ्यस्तद
नुश्राद्धदानमुपक्रमेदित्यादिमातामहश्राद्धेपुनर्वचनमूलं हेमाद्रावुदाहृतपैनृकेतु कुर्वंनूत्रयोदशीश्राद्धंपुत्रवा
न्यःसुतायुषे एकस्यैवनकुर्य्याद्वपार्वणंतुसमाचरेत् एकस्यैववर्गस्यपार्वण पर्वणिदर्शेक्रियमाणेश्रनावास्या
श्राद्धेनसाध्यंषड्दैवत्यमित्यर्थः केचित्तु नतृप्तास्तत्रयस्येतिदोषश्रवणात् पितृव्यादीनामपि महालयवत्त्रयोद
श्यां श्राद्धंकर्तव्यमितिवदंति तद्दूषणकालविवेचनेद्रष्टव्यं तेनकृष्णत्रयोदशीमात्रेपुत्रवद्गृहिणात्रयोदश्यां
वहुपुत्रेच्छयाश्राद्धंनकर्त्तव्यं भाद्रकृष्णत्रयोदश्यांनैववहुप्रजाइतिवचनंपितृवर्गमात्रस्यनकर्तव्यं किंतुमातामहवर्ग
स्यापि तत्रेदंवचनं पितरोयत्रपूज्यंतेतत्रमातामहाअपि तत्रापिपिंडदानंनकर्तव्यं किंतु ब्राह्मणभोजनमात्रं
मधुप्लुतघृतपायसादिनेति सामान्यविशेषरूपाविधिनिषेधवचनानां व्यवस्थासिद्धा अस्मिन्पक्षे केवलमघापिश्रा
द्धकालः तथाचवसिष्ठः पितापितामहश्चैवतथैवप्रपितामहः उपासंतेसुतंजातंपिप्पलंशकुनाइव मधुमांसैश्चशाकैं
श्चपयसापायसेनच एषनोदास्यतेश्राद्धंवर्षासुचमघासुचेति अत्रपिंडदाननिषेधोभविष्यत्पुराणे संक्रांत्यामुपवासे
नपार्वणेनचभारत मघायांपिंडदानेनज्येष्ठपुत्रोविनश्यतीति अन्यत्रापि ऋक्षेपिंडप्रदानंतुज्येष्ठपुत्रीविवर्जयेत् ऋक्षं
मघातत्रज्येष्ठपुत्रीविद्यमानज्येष्ठपुत्रकः अयंज्येष्ठपुत्रिणः श्राद्धनिषेधएव इतिनाशंकनीयं किंतु पिंडदानमात्रे

तथापिमघाधिकरणकेश्राद्धेपिंडदाननिषेधः पिंडपदेनश्राद्धाभिधानेनलक्षणापत्तेः अन्यथा सपिंडनदिनेपि मघा
सत्त्वेपिंडपर्युदासापत्तेः किंतुमघानिमित्तिके तथाच मघापुरस्कारेणज्येष्ठपुत्रिणा यदिश्राद्धंक्रियेत तदातत्तेनापिंड
रहितंकार्य्यमितिशास्त्रार्थः मघाश्राद्धंकाम्यं तत्रपितापितामहश्चेत्यादिवसिष्ठवचनोदाहृतप्रामाण्येन त्रयोद
शीश्राद्धंतुनित्यं तस्यानित्यगणेपाठात् एवंमघायांत्रयोदश्यांचकेवलायामपिश्राद्धं अनयोस्तु मिलितयोः
प्राशस्त्यं तदुक्तंमहाभारते अपिनःसकुलेजायाद्योनोदद्यात्त्रयोदशीं पायसंसर्पिषापृक्तंमघासुदक्षिणायने त
त्रैवच हस्तार्कयोगेगजच्छाया तदुक्तंब्राह्मे योगोमघात्रयोदश्योःकुंजरच्छायसंज्ञकः भवेन्मघायांसंस्थेचश
शिन्यर्केकरसंस्थिते अपरार्केवायव्यांये हंसेहंसास्थितेयातुमघायुक्तात्रयोदशी तिथीर्वैवस्वतीनामसाछायाकुं
जरस्यच अन्यत्रापि अपिनः सकुलेजायाद्योनोदद्यात्त्रयोदशीं पायसंसर्पिषायुक्तंप्राक्छायेकुंजरस्यच यावच्चग
जच्छायातावद्ब्राह्मणैर्नभोक्तव्यं सूतकेमृतकेचैवग्रस्तयोश्चंद्रसूर्ययोः छायायांकुंजरस्यापिभुक्त्वाचनरकंव्रजेत् प्र
मादाद्ब्राह्मणोभुक्त्वातत्रचांद्रायणंचरेदिति ब्रह्मपुराणवचनात् अस्यामेवविष्णुधर्मोक्तंयुगावतारव्रतं ब्रह्मोवा
च मासिप्रौष्ठपदेयातुकृष्णपक्षेत्रयोदशी अवतीर्णंयुगंतस्यांत्रेतायांतुतपोधनाः त्रेतायांविनिवृत्तायामेतस्यां
तिथौयुगमवतीर्णमितिसंबंधः तेनद्वापरयुगमत्रलभ्यते अत्रकृत्यं गोमूत्रंगोमयंदूर्वांसमालभ्यचमृत्तिकां स्ना
त्वान्नद्यांतडागेवातिथौतस्यांसमाहितः स्नात्वासतर्पयेद्देवपितृभ्यश्चतिलोदकं श्राद्धस्यतर्पणेनैवफलंयुगशतंभ
वेत् यःकरोतितिलैःश्राद्धंनरस्तस्यांसमाहितः कृतंतेनभवेच्छ्राद्धंगयायांतुनसंशयः युगादौयस्त्रिलोकेशंतर्प
येद्गरुडध्वजं घृतक्षीरजलैःपुष्पैःसगच्छेद्वैष्णवींपुरीं स्नापितोथविलिप्तस्तुपूजितोथनमस्कृतः युगादौयुगक
र्ताचनृणांमुक्तिप्रदोहरिः अतोवैसर्वयत्नेनयुगादौजगतांपतिः पूजनीयोजनैर्भक्त्यासर्वदुःखहरोहरिः इति

युगावतारव्रतं अथाश्विनकृष्णपक्षेचतुर्दशीश्राद्धं तत्रमहालयश्राद्धदुर्मरणमृतानांकार्यं पृथ्वीचंद्रोदये प्रचे
ताः वृक्षारोहणलोहाद्यैर्विद्युज्ज्वालाविषादिभिः नाखिदंष्ट्रिविपन्नानांतेषांशस्ताचतुर्दशी ब्राह्मे युवानःपितरोय
स्यमृताःशस्त्रेणवाहताः तेनकार्यंचतुर्दश्यांतेषांतृप्तिमभीप्सता नागरखंडे अपमृत्युर्भवेद्यस्यशस्त्रमृत्युरथा
पिवा श्राद्धंतस्यचतुर्दश्यांप्रकर्तव्यंनराधिप मरीचिः विषशस्त्रश्वापदादिशस्त्रब्राह्मणघातिनां चतुर्दश्यां
क्रियाकार्य्याअन्येषांतुविगर्हिता अत्रब्रह्मघातीब्राह्मणेनहतोनतुब्रह्महा तस्यपतितत्वादितिशूलपाणिः ये
षांशस्त्रहतानांचाविषमृत्युमुपेयुषां वन्हिनाचप्रदग्धानांजलमृत्युमुपेयुषां सर्पव्याघ्रहतानांचशृंगैस्तद्वंधनैर
पि श्राद्धंतेषांप्रकर्तव्यंचतुर्दश्यांनराधिपेति मार्कंडेयपुराणात् शृंगैःशृंगिभिः प्रायोनशनशस्त्राद्यैर्विषो
द्बंधनिनांतथा चतुर्दश्यांभवेच्छ्राद्धमितिब्रह्मपुराणात् प्रायोमहाप्रस्थानं यत्तुशाकटायनः जलाग्निभ्यां
विपन्नानांसंन्यासेवागृहेपथि श्राद्धंकुर्वीततेषांवैवर्जयित्वाचतुर्दशीमिति यत्प्रायश्चित्तार्थंजलादिमृतविषयमि
ति एतच्चदैवयुक्तमेकोद्दिष्टंकार्य्यं पित्रादीनामेकोद्दिष्टमेव नतु पार्वणं तथाचगार्ग्यः चतुर्दश्यांतुयच्छ्राद्धंस
पिंडीकरणात्परं एकोद्दिष्टविधानेनतत्कार्य्यं पित्रादिपुशस्त्रहतेषुसर्वेषामेकोद्दिष्टान्येवकार्याणि पार्वणविधा
यकवचनाभावात् यत्तु पित्रादयस्त्रयोयस्यशस्त्रपानादिभिर्मृताः सभूतपार्वणंकुर्य्यादाब्दिकानिपृथक्पृथगि
तिवचनं तत्प्रामाणिकग्रंथेष्वदर्शनादनादरं इदंचैकोद्दिष्टंसदैवकंकार्य्यं प्रेतपक्षेचतुर्दश्यामेकोद्दिष्टंविधानतःदै
वयुक्तंतुतच्छ्राद्धंपितॄणामक्षयंभवेदिति प्रयोगपारिजातोदाहृतवचनात् यस्तुतस्यामेवचतुर्दश्यांमृतस्तस्यक्ष
याहनिमित्तंपार्वणमेवकर्तव्यं अमायांचक्षयोयस्यप्रेतपक्षेथवापुनः पार्वणंतस्यकर्तव्यंनैकोद्दिष्टंकदाचनेतिवि
ज्ञानेश्वरधृतवचनात् चतुर्दश्यांमहालयश्राद्धं स्कांदेसेतुखंडे चतुर्दश्यांतिथौयस्तुश्राद्धंकुर्य्यान्महालये

सूतउवाच - धनुष्कोटिस्तुमाहात्म्यंभूयोपिप्रवदाम्यहम् । दुराचाराभिधोयत्रस्नात्वामुक्तोबभूवहे । इत्यु
पक्रम्य दत्तात्रेयउवाच महापातकिसंसर्गात्दुराचारकृतात्पुरा ब्राह्मण्यंनष्टमभवद्वेतालस्तंततोऽग्र
हीत् सचभाद्रपदेमासेकृष्णपक्षेमहालये पार्वणेनविधानेनपितॄणांनाकरोत्सदा तैरेवपितृभिः शप्तोवे
तालत्वमगादयं सोपिचास्याधनुःकोटेरवलोकनमात्रतः वेतालत्वंविहायैवविष्णुलोकमवाप्तवान् अतोभाद्र
पदेमासेकृष्णपक्षेमहालये उद्दिश्यस्वपितॄन्येतुनकुर्वंतिहिलोभतः महापापयुतास्तेतुवेतालाःस्युर्नसंशयः त
स्माद्भाद्रपदेमासिकृष्णपक्षेमहालये पितॄनुद्दिश्ययेभक्त्याब्राह्मणान्वेदपारगान् भोजयेयुर्महाप्राज्ञास्तेनावि
दंतिदुर्गतिं यस्तुभाद्रपदेमासिकृष्णपक्षेमहालये स्वशक्त्यान्नमहाविप्रानेकद्वौत्रीनाकिंचन भोजयेदस्यदौर्गत्यं
नभवेद्यकदाचन अयंभाद्रपदेमासिपितॄणामनपायनात् वेतालतांययौविप्रयत्त्वांजग्राहपापिनं । मासोभा
द्रपदःकालस्तत्रापिहिविशिष्यते कृष्णपक्षोविशिष्टःस्यात्तत्रश्राद्धंप्रशस्यते तस्माच्छुभेकृष्णपक्षेप्रथमायांति
थौतथा श्राद्धंमहालयंकुर्य्याद्योनरोभक्तिपूर्वकं तस्यप्रीणातिभगवान्पावकःसर्वभावनः सवह्निलोकमाप्नोति
वह्निनासहमोदते तस्मैप्रज्वलितोदेवःसर्वैश्वर्यंददात्यपि प्रथमायांतिथौसत्यांयोनकुर्यान्महालयं वह्निर्गृ
हंदहेत्तस्यश्रियंक्षेत्रादिकंतथा वेदविद्ब्राह्मणोभुंक्तेप्रथमायांमहालये दशकल्पसहस्राणिपितरोयांतितृप्तताम् १
द्वितीयायांतुयोभक्त्याकुर्य्याच्छ्राद्धंमहालये तस्यप्रीणातिभगवान्भवानीपतिरीश्वरः सकैलासमवाप्नोतिशिवेन
सहमोदते विपुलांसंपदंतस्यप्रीतोदद्यान्महेश्वरः द्वितीयायांतिथौमर्त्योयोनकुर्यान्महालयं तस्यवैकुपितःशंभुर्ना
शयेद्ब्रह्मवर्चसं रौरवकालसूत्राख्यनरकंचास्यदास्यति वेदविद्ब्राह्मणोभुंक्तेद्वितीयायांमहालये । विंशत्कल्पसह
स्राणिपितरोयांतितृप्ततां अनुग्रहात्पितॄणांतुसंततिश्चास्यवर्द्धते । १ तृतीयायांतुयोभक्त्याश्राद्धंकुर्य्यान्महालये

तस्यानुगास्त्रयोदेवाब्रह्म
तस्यप्रीणातिभगवान्लोकपालोधनाधिपः महापद्मादिनिधयोवर्त्ततेतस्यवैवशे दारिद्र्यं
विष्णुमहेश्वराः तृतीयायांतिथौमर्त्योयोनकुर्यान्महालये धनलोभवशात्तस्यसंपदंहरतिक्षणात् तृप्यंतिपितरस्तस्यत्रिंशत्कल्पस
हिसदातस्यवहुदुःखसमाकुलं तृतीयायांतुयोमर्त्यःश्राद्धंकुर्यान्महालये पार्वतीसुतः तस्यविघ्नानिन
हस्रकं चतुर्थ्यांतुनरोभक्त्याश्राद्धंकुर्यान्महालये तस्यप्रीणातिभगवान्हेरंवः विघ्नेशोभगवांस्तस्यसदाविघ्नंकरोतिहि
श्यंतिगजवक्त्रप्रसादतः चतुर्थ्यांतुतिथौमर्त्योयोनकुर्यान्महालयं पितरःकल्पसाहस्रंचत्वारिंशत्प्र
चंडकोलाहलाख्येतुनरकेचपतत्ययं चतुर्थ्यांतुतिथौमर्त्योयःकरोतिमहालयं तस्यलक्ष्मी
हर्पिताः वहून्पुत्रान्प्रदास्यंतिश्राद्धकर्तुर्निरंतरम् ४ पंचम्यांचतिथौमत्त्याश्राद्धंकुर्यान्महालये पंच
भगवतीप्रीणातिहरिवल्लभा गृहक्षेत्रकलत्रादितस्यनृत्यतिसर्वदा कीर्तिश्चवर्धतेतस्ययावदाचंद्रतारकं
म्यांतुतिथौमर्त्योयोनकुर्यान्महालयं तस्यलक्ष्मीर्भगवतीपरित्यजतिमंदिरं अलक्ष्मीःकलहद्वारातस्यप्राप्तोभ
वेद्गृहे पंचम्यांतुतिथौमर्त्योयःकरोतिमहालयं पंचाशत्कल्पसाहस्रंतृप्यंतिपितरस्तथा संततिंचाप्य
विच्छिन्नांतस्मैदास्यंतितर्पिताः पार्वतीचप्रसन्नास्यान्महदैश्वर्यदायिनी ५ षष्ठ्यांतिथौनरोभक्त्याश्राद्धंकुर्या
न्महालये तस्यप्रीणातिभगवान्षण्मुखःपार्वतीसुतः तस्यपुत्राश्चपौत्राश्चषण्मुखस्यप्रसादतः षष्ठ्यांतिथौ
नरोयस्तुनकुर्याच्चमहालयं तस्यस्कंदोमहासेनोविमुखःस्यान्नसंशयः गर्भान्निर्गममात्रेणप्रजातस्यविन
श्यति पूतनादिग्रहगणैर्बाध्यतेचनिरंतरं वह्निज्वालाप्रवेशाख्येनरकेचपतत्ययं षष्ठ्यांतिथौतुयःश्राद्धंकु
र्यान्मर्त्योमहालये षष्टिकल्पसहस्रंतुपितरोयांतितृप्ततां पुत्रानपिप्रदास्यंतिश्रियंचविपुलांतथा ६ स
प्तम्यांतुतिथौमर्त्यःश्राद्धंकुर्यान्महालये हिरण्यपाणिर्भगवानादित्यस्तस्यतुष्यति आरोग्यंदृढगात्रंस्याद्धा

स्करस्यप्रसादतः हिरण्यपाणिर्भगवान्हिरण्यानुवाहरेत्स्वयं महालयश्राद्धकर्त्रेददातिप्रीतमानसः सप्त
म्यांतुतिथौमर्त्योयोनकुर्य्यान्महालयं व्याधिभिःक्षयरोगाद्यैर्बाध्यतेसदिवानिशं तीक्ष्णधारास्त्रशय्यास्ये
नरकेचपतत्ययं सप्तम्यांयोनरोभक्त्याश्राद्धंकुर्य्यान्महालये सप्ततिःकल्पसाहस्रंपितरोयांतितृप्ततां पु
त्रानपिप्रदास्यतिसंपदांविपुलातथा संततिंचाप्यविच्छिन्नांदद्युःपितृगणःसदा ७ अष्टम्यांतुतिथौमर्त्यःश्रा
द्धंकुर्यान्महालये मृत्युंजयःकृत्तिवासास्तस्यप्रीणातिशंकरः करस्थंतस्यकैवल्यंशंकरस्यप्रसादतः महालये
नश्राद्धेनतुष्टःसाक्षाच्छिवंकरः चतुर्दशसुलोकेषुदुर्लभंतस्यकिंभवेत् महालयनकुर्याद्यस्त्वष्टम्यांमूढचेतनः सं
सारसागरेघोरेसदामज्जतिदुःखितः कदाचिदपितस्येष्टनसिद्ध्यतिकथंचन वैतरण्याख्यनरकेपतत्याचंद्रतारकम्
योऽष्टम्यांश्रद्धयाश्राद्धंनरःकुर्य्यान्महालये अशीतिःकल्पसाहस्रंतृप्यंतिपितरोस्यवै आशांभिर्वर्धयंत्ये
नंविघ्नांश्चास्यव्यपोहति संततिंचाप्यविच्छिन्नांदद्युःपितृगणामुदा नवम्यांतुतिथौमर्त्यःश्राद्धंकुर्य्यान्महा
लये दुर्गादेवीभगवतीतस्यप्रीणातिशांभवी क्षयापस्मारकुष्ठादीन्क्षुद्रप्रेतापिशाचकान् नाशयत्यस्य
सतुष्टादुर्गामहिषमर्दिनी ॥ ९ ॥ नवम्यांतुतिथौचैवयेनकुर्य्युर्महालयं अपस्मारेणपीड्यंतेतथैवब्रह्मरा
अकृतंचाभिचारंसयातिनित्यंनिरंतरं नवम्यांयस्तिथौमर्त्यःश्राद्धंकुर्यान्महालये नवतिः
.हस्रंतृप्यंतिपितरोस्यवै संततिंचाप्यविच्छिन्नांदद्युःपितृगणाः सदा ॥ ९ ॥ दशम्यांतुतिथौ
रकुर्यात्श्राद्धमहालये तस्यमृगधरश्चंद्रःषोडशात्माप्रसीदति ओषधीनामधीशोस्मिन्श्राद्धेना
नेन[illegible]ः व्रीह्यादीनितुधान्यानिदद्याद्देशादिकतथा योनकुर्य्याद्दशम्यांतुमहालयमनुत्तमंओषध्यो
[illegible]तस्यकृपिश्चास्यापिनिष्फला दशम्यांतुतिथौमर्त्यःश्राद्धंकुर्य्यान्महालये शतंकल्पसहस्राणि

एकादश्यांतुयोभक्त्या श्राद्धंकुर्यान्महालये सं
तृप्यंतिपितरोस्यवै संततिचाप्यविच्छिन्नांदद्युःपितृगणाःसदा १० एकादश्यांतुयोभक्त्या श्राद्धंकुर्यान्महालये सं
तृप्यंतिपितरोस्यवै संततिचाप्यविच्छिन्नांदद्युःपितृगणाःसदा १० एकादश्यांतुयोभक्त्या श्राद्धकर्तानि
हर्तासर्वलोकस्यतस्यरुद्रःप्रसीदति रुद्रस्यसर्वसंहर्तुः प्रसादेनजगत्पतेः शत्रून्पराजयत्येपश्राद्धकर्तानि
हर्तासर्वलोकस्यतस्यरुद्रःप्रसीदति रुद्रस्यसर्वसंहर्तुः प्रसादेनजगत्पतेः एकादश्यांनरोभ
रंतरं ब्रह्महत्यायुतंवापितस्यनश्यतितत्क्षणात् अग्निष्टोमादियज्ञानांफलंप्राप्नोत्यनुत्तमं एकादश्यांनरोभ
रंतरं ब्रह्महत्यायुतंवापितस्यनश्यतितत्क्षणात् सर्वदावर्धमानंतंबाधतेचतथोद्यतं अग्निष्टोमा
स्थायोनकुर्यान्महालयं तस्यैवविमुखोरुद्रोनकदाचित्प्रसीदति सर्वदावर्धमानंतंबाधतेचतथोद्यतं अग्निष्टोमा
स्थायोनकुर्यान्महालयं तस्यैवविमुखोरुद्रोनकदाचित्प्रसीदति ब्रह्मघातकतुल्यश्च श्राद्धाकरणदो
दियज्ञाश्चकृताश्चबहुदक्षिणाः निष्फलाएवतस्यस्युर्भस्मन्यस्तसुहव्यवत् ब्रह्मघातकतुल्यश्च श्राद्धाकरणदो
दियज्ञाश्चकृताश्चबहुदक्षिणाः निष्फलाएवतस्यस्युर्भस्मन्यस्तसुहव्यवत् ११ द्वादश्यां
पतः एकादश्यांतिथौयस्तुश्राद्धंकुर्यान्महालये द्विशतंकल्पसाहस्रंतृप्यंतिपितरोस्यवै ११ द्वादश्यां
पतः एकादश्यांतिथौयस्तुश्राद्धंकुर्यान्महालये द्विशतंकल्पसाहस्रंतृप्यंतिपितरोस्यवै प्रसन्नेसतिदेवेशेतृप्तेसतिजना
तुतिथौमर्त्यःश्राद्धंकुर्यान्महालये तस्यलक्ष्मीपतिःसाक्षात्प्रसीदतिजनार्दनः प्रसन्नेसतिदेवेशेतृप्तेसतिजना
तुतिथौमर्त्यःश्राद्धंकुर्यान्महालये तस्यलक्ष्मीपतिःसाक्षात्प्रसीदतिजनार्दनः लक्ष्मीश्चवर्धतेतस्यमंदि
र्दने चराचरंजगत्सर्वंप्रीतमेवनसंशयः भूमिर्हरिप्रियाचास्यसस्यान्वैवर्धयत्यलं लक्ष्मीश्चवर्धतेतस्यमंदि
र्दने चराचरंजगत्सर्वंप्रीतमेवनसंशयः भूमिर्हरिप्रियाचास्यसस्यान्वैवर्धयत्यलं तीक्ष्णधारंतथाच
रेहरिवल्लभा गदाकौमोदकीनामनारायणकरस्थिता अपस्मारादिभूतानिनाशयत्येवसर्वदा तीक्ष्णधारंतथाच
रेहरिवल्लभा गदाकौमोदकीनामनारायणकरस्थिता अपस्मारादिभूतानिनाशयत्येवसर्वदा एवंसर्वात्मनादेवोनाशयत्यस्यकेशवः
क्रंशत्रूनस्यदहत्यपि यातुधानपिशाचादीन्शंखश्चास्यव्यपोहति एवंसर्वात्मनादेवोनाशयत्यस्यकेशवः
क्रंशत्रूनस्यदहत्यपि यातुधानपिशाचादीन्शंखश्चास्यव्यपोहति अपस्मारादिभूतानिशत्रवश्च
महालयंनकुर्याद्योद्वादश्यांमनुजाधमः तस्यक्षेत्राणिसंपच्चविनश्यंतिनसंशयः अपस्मारादिभूतानिशत्रवश्च
महालयंनकुर्याद्योद्वादश्यांमनुजाधमः तस्यक्षेत्राणिसंपच्चविनश्यंतिनसंशयः द्वादश्यांभक्तितो
महाबलाः यातुधानाश्चबाधंतेतंवैविष्णुपराङ्मुखं पात्यतेनरकेचासौअस्थिमर्दननामके द्वादश्यांभक्तितो
महाबलाः यातुधानाश्चबाधंतेतंवैविष्णुपराङ्मुखं पात्यतेनरकेचासौअस्थिमर्दननामके संततीश्चाप्यविच्छिन्नाःपितरोस्यददत्यमी
यस्तुश्राद्धंकुर्यान्महालये षट्शतंकल्पसाहस्रंतृप्यंतिपितरोस्यवै संततीश्चाप्यविच्छिन्नाःपितरोस्यददत्यमी
यस्तुश्राद्धंकुर्यान्महालये षट्शतंकल्पसाहस्रंतृप्यंतिपितरोस्यवै संक्रंदनादयोदेवा
१२ त्रयोदश्यांनरोभक्त्याश्राद्धंकुर्यान्महालये प्रसीदत्यस्यभगवान्कंदर्पोरतिनायकः संक्रंदनादयोदेवा
१२ त्रयोदश्यांनरोभक्त्याश्राद्धंकुर्यान्महालये प्रसीदत्यस्यभगवान्कंदर्पोरतिनायकः आजन्ममरणांतंचसुखमेवसविंदति योन
ललनाश्चमनोरमाः कामदेवप्रसादेनतस्यासिद्ध्यंतिसर्वदा आजन्ममरणांतंचसुखमेवसविंदति योन
ललनाश्चमनोरमाः कामदेवप्रसादेनतस्यासिद्ध्यंतिसर्वदा अंगारशय्याभ्रमणेनरकेपा
कुर्यात्त्रयोदश्यांनरःश्राद्धंमहालये कामदेवोस्यविमुखःस्त्रियोभोगाश्चनाशयेत् अंगारशय्याभ्रमणेनरकेपा

तयत्यमुं पितॄननुद्दिश्ययःकुर्य्यात्त्रयोदश्यांमहालयं सहस्रकल्पसाहस्रंप्रीणंतिपितरोस्यवै संततीश्चाप्य
विच्छिन्नादद्युःपितृगणा.सदा १३ चतुर्दश्यांनरोभक्त्याश्राद्धंकुर्य्यान्महालये तस्याभीष्टप्रदाताग्रजागर्तिभगवान्
शिवः उपदिश्यशिवज्ञानंस्वसायुज्यंददात्यसौ सुरापानायुतंचापिस्वर्णस्तेयायुतंतथा नश्यंतितत्क्षणा
देवचतुर्दश्यांमहालयात् चंडालद्विपलस्त्रीणांसंगदोषादिनश्यति अश्वमेधसहस्राणिपौंडरीकायुतस्यच पु
ष्कलाफलसिद्धिःस्याच्चतुर्दश्यांमहालयात् योनकुर्य्याच्चतुर्दश्यांनरःश्राद्धंमहालये संसाराध्वमहाकूपतमस्य
स्यननिष्कृतिः अचोरयित्वाकनकमपीत्वापिसुरासव सुरापानादिभिर्दोषैर्लिप्यतेसविमूढधीः कृताअपिविधा
नेनयज्ञाःस्युर्निष्फलास्तथा चतुर्दश्यांतिथौयस्तुश्राद्धंकुर्यान्महालये लक्षकोटिसहस्राणिकल्पकोटिशतानि
च. कल्पानिपितरस्तस्यतृप्यतेचनसंशयः नरकस्थाश्चपितरःस्वर्गंयांतिप्रहर्षिताः संततीश्चाप्यविच्छिन्नाद
द्युःपितृगणास्तथा १४ अमायांतुनरोभक्त्याश्राद्धंकुर्य्यान्महालये पितॄणांतस्यतृप्तिःस्यादनंतानात्रसंश
यः सुधामासाद्ययातृप्तिःसातृप्तिस्तुपितुर्भवेत् अनंताहीदृशीतृप्तिरमावास्यांमहालयात् अमावास्यामहाप
एयापितृदेवनमस्कृता एषातिथिस्तुपरमाशिवस्यपरमाप्रिया तस्यांमहालयेश्राद्धेभोजितेवेदवित्तमे तेन
तृप्तिःपितॄणांस्यादनंतातुष्यतेशिवः ब्रह्महत्यादिकाःपंचपातकानाशमाप्नुयुः कृताश्चस्युर्विधानेनसर्वेयज्ञाःसद
क्षिणाः अनुष्ठिताःस्युर्विधिवत्सर्वेधर्माःसनातनाः योनकुर्य्यादमावास्यामहालयमचेतनः ब्रह्मलोकगताश्चा
स्यपितरोयांतिनारकं संततिश्चास्यमूढस्यविच्छिद्यतेतवतत्क्षणात् सएवहिमहानर्थोयदमायांतिथौनरैः म
हालयार्थेविप्रेंद्राविधिवन्नैवभोजिताः मासिभाद्रपदेमायांतुष्यंतिपितृदेवताः अस्मानुद्दिश्यसत्पुत्राभोजयेयुर्द्विजोत्त
मान् तेननोनरकक्लेशोनभविष्यतिदारुणः प्राप्तश्चसर्वलोकःस्याद्यावदाचंद्रतारक मासिभाद्रपदेप्राप्तेपि दृणां

करणादिष्टसिद्धिश्च भविष्यति न संशयः    महालयस्य क्र
तस्मादकरणे तस्य प्रत्यवायो महान्भवेत्    यातुधानाः पिशाचाश्च वेतालाश्च
रणाद्भूतवेतालकादयः    अपस्मारग्रहाश्चापि शाकिनीडाकिनीगणाः    पुरा दशरथो रा
भयानकाः    नश्यंति तत्क्षणादेव भूतान्यन्यानि वै तथा    महालयस्य करणाद्विपुलां श्रियमश्नुते    वि
जाव सिष्ठस्योपदेशतः    मासि भाद्रपदे प्राप्ते कृत्वा श्राद्धं महालये    रामादींश्चतुरः पुत्रान्प्राप्तवान् लोकसम्मतान्
श्चातिशायिनीं लक्ष्मीं प्रपेदे किल्वनुत्तमाम्    महालयस्य करणात्तु ययाती राजसत्तमः    यदुमुख्यान्महापुत्रान्प्रपेदे वंश
वर्द्धनान्    अनन्यदुर्लभं स्वर्गं प्रपेदे श्राद्धपुण्यतः    दुष्यंतो भरतं लेभे महालयविधानतः    महालयविधानेन दमयंती
प्रतिं नलः    कृच्छ्रं महत्तरं तीर्त्वा पुनर्लेभे महीमिमां    निजभ्रातृकलिं घोरं पुष्करं चाप्यरातिनं    इंद्रसेनाभिधानं च पुत्रं
लेभे तु धार्मिकं    हरिश्चंद्रो महाराजो महालयविधानतः    लेभे चंद्रमतीं भार्यां लोहिताश्वसुतं पुनः    महालयविधा
नेन कृतवीर्यसुतो बली    अष्टादशानां द्वीपानां भूपत्वं समवाप्तवान्    रामोपि दंडकारण्ये महालयविधानतः    हत्वा
तु रावणं संख्ये सीतां पुनरवाप्तवान्    महालयप्रभावेण धर्मराजो युधिष्ठिरः    दुःखसागरमुत्तीर्य धार्त्तराष्ट्रान् जघान ह    म
हालयस्य करणाद्वसिष्ठो मुनिसत्तमः    अत्रिर्भृगुः क्रतुश्चैव गौतमश्चांगिरास्तथा    कश्यपश्च भरद्वाजो विश्वामित्र
श्च कुंभजः    पराशरो मृकंडुश्च ये चान्ये मुनिसत्तमाः    विधाय विधिवच्छ्राद्धं महालयमनुत्तमं    अणिमाद्यष्टसिद्धी
नां व्रतानां तपसां तथा    निवासभूताः संजातास्तथा श्राद्धप्रभावतः    जीवन्मुक्ताश्च ते सर्वे ह्यभवन्मुनिसत्तमाः    अहो
महालयं श्राद्धं कर्तव्यं भूतिमिच्छता    अतो योपि दुराचारो न कुर्याद्वै महालयं    भूतवेतालप्रेतेभ्यो भूयात्तस्य महद्भयं
महालयस्याकरणाद्वेतालत्वमवाप्तवान्    त्वया निष्टमिदं प्राप्तं विप्र त्वं पूर्वजन्मनि    नाम्ना वेदनिधिः पुण्ये भारद्वा
जस्य वंशजः    कुशस्थल्यभिधाने च वसन्नयामि महामनाः    न चकार विधानेन श्राद्धमेतन्महालये    ततस्त्वं पितृणां शा

पद्धितालत्वमवाप्तवान् तस्माद्भाद्रपदेमासिदुराचारःपितॄन्प्रति ब्राह्मणान्भोजयेदेवपायसेनसभक्तिकं दारिद्र्यंतेनतेनस्यात्सुखीचैवभवान्भवेत् ॥

इतिस्कंदपुराणेब्रह्मखंडेपूर्वभागेसेतुमाहात्म्येमहालयश्राद्धमाहात्म्यम् ॥

अथाश्विनशुक्लप्रतिपादिमातामहस्यमहालयश्राद्धंदौहित्रेणकार्य्यं हेमाद्रौसंग्रहेच जातमात्रोपिदौहित्रोजीवत्यपिचमातुले कुर्य्यान्मातामहंश्राद्धंप्रतिपद्याश्विनेसिते इयंप्रतिपत्संगवव्यापिनीग्राह्येति प्रतिपद्याश्विनेमासिदौहित्रेणैवपार्वणं श्राद्धंमातामहंकार्य्यंसापित्रासंगवेसदेति जातमात्रोपिदौहित्रोजीवत्यपिचमातुले प्रातःसंगवयोर्मध्येआचार्य्यप्रतिपद्भवेत् अत्रमूलंमृग्यं इदंचमलमासेनकार्य्यं स्पष्टमासविशेषाख्यंविहितंवर्जयेन्मले इतिनिषेधात् इदंचजीवत्पितृकेणापिकार्य्यमतिशिष्टाः शिष्टाचारात्सपिंडंकार्य्यमितिकेचित् पिंडरहितंतुयुक्तमितिकेचिद्वदंति मुंडनंपिंडदानंचापितृकर्मचसर्वशः नजीवत्पितृकःकुर्य्यात्तिलैस्तर्पणमेवचेत्यनेनजीवत्पितृकंप्रति पिंडदाननिषेधादन्वष्टकावर्जं विशेषवचनाभावात् पिंडरहितंकार्य्यमिति केचिद्वदंति अन्येतुवदंति न जीवत्पितृकंप्रतिपिंडदानमात्रमनेनानिषिध्यते किंतु दर्शश्राद्धंगयाश्राद्धश्राद्धंचापरपाक्षिकं नजीवत्पितृकः कुर्य्यात्तिलैःकृष्णैश्चतर्पणं पित्र्यंजीवत्पितुर्नेष्टं इत्यादिवचनैकवाक्यतयाश्राद्धमेवनिषिध्यते एवंच तत्रविशेषवचनप्राप्तंश्राद्धंसपिंडमेवभवति ॥ इतिमहालयश्राद्धनिर्णयः समाप्तः

स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीरित्यादि १ रणवीरसिंहभूपेशकारितेकृत्यसागरे अभून्महालयश्राद्धकृत्यानांरत्नसंग्रहः २ अथाश्विनशुक्लप्रतिपदायां अशोकव्रतं नवरात्रव्रतारंभश्च नारदीये आश्विनेसितपक्षस्यांकृत्वाऽशोकव्रतंनरः व्रतांतेद्वादशेवर्षेमूर्तिंचाशोकशाखिनः समर्प्यगुरवेभक्त्या

कृष्णपक्षे
तृप्तिदायिनि    एकैकंभोजयेद्विप्रंप्रत्यहंभक्तिपूर्वकं    पितृमातृकुलोद्भूताःपितरस्तृप्तिमाप्नुयुः    सुधांप्राप्स्यंतिपितरस्तस्यकल्पंप्रह
विशेषेणभोजयेद्ब्राह्मणान्सुधीः    घृतापूपादिभिर्भक्ष्यैस्तैलाभ्यंगपुरस्सरं    अन्यथैश्वर्य्य
पिताः    सप्तम्याःकृष्णपक्षस्यप्रारभ्यप्रत्यहंनरः    विप्रान्यावदमावस्यांपितृंस्त्रीनभिभोजयेत्    पयसापायसान्नेनघृतापूपादिभिस्त
हानिःस्यान्महद्दारिद्र्यभाग्भवेत्    अतिलाभंपरित्यज्यविप्रान्सूपघृतादिभिः    तेनब्रह्माहरिःशं
था    सूपैर्लेह्यैश्चचोष्यैश्चभक्ष्यैश्चविविधैरपि    भोजयेद्वेदविन्मुख्यांस्तृप्तिस्तेषांयथाभवेत्    पार्व
भुस्तृप्ताःस्युर्नत्रसंशयः    अग्निष्वात्तादिपितरउपेंद्राद्याधिदेवताः    वहुनात्रकिमुक्तेनतृप्यत्येवजगत्त्रयं
णनाविधानेनकुर्य्याच्छ्राद्धंमहालये    नरोमहालयेश्राद्धेपितृवंशान्पितृन्प्रति    मातृवंश्यानपिपितृन्भोजयेच्छ्रेय
सेमुदा    दक्षिणांचयथाशक्तिदद्याद्वित्तानुसारतः    अस्मिन्महालयेश्राद्धेवित्तशाठ्यंनकारयेत्    दक्षिणासर्वेष
ज्ञानांकथितेयंपुरोगवा    अतःपुरोगरहितातिथ्यमध्वर्यवेत्रिधा    अदक्षिणस्तथाचायंपितृयज्ञोपलिप्यते    त
समाधज्ञेपुदातव्यादक्षिणाल्पापिजानता    विधवाभिरपिस्त्रीभिरपुत्राभिर्महालये    भर्तुरुद्दिश्यकर्त्तव्यंभूरिभोज
नकर्मणा    अन्यथाधर्महानिःस्यान्नरकेचमहद्भयं    मासेभाद्रपदेप्राप्तेयोनकुर्य्यान्महालयं    तत्कालंशापमाप्नो
तिब्रह्महत्यांचाविंदति    महालयेचकुर्वंतिश्रद्धावंतःपितृनपि    नतेषांसंततिच्छेदोभवेत्संपदभंगुरा    आलय
स्त्वास्पदंप्रोक्तंमहत्कल्याणमुच्यते    कल्याणस्यास्पदत्वाच्चमहालयमितीर्य्यते    तस्मान्महालयंमर्त्यःकुर्य्या
न्कल्याणसिद्धये    अमंगलंभवेत्तस्यनकुर्य्याच्चेन्महालयं    कर्तुंमहालयंश्राद्धंयदिशक्तिर्नविद्यते    याचित्वापि
नरःकुर्य्यात्पितृणांतुमहालयं    ब्राह्मणेभ्योविशिष्टेभ्योयाचेतधनधान्यकं    पतितेभ्योनगृह्णीयाद्धनंधान्यंकदाच
न    ब्राह्मणेभ्योनलभ्येतयदिधान्यधनादिकं    याचेत्क्षात्रियश्रेष्ठान्महालयचिकीर्षया    दातारश्चेन्नभूपालावे

श्येभ्योपिचयाचयेत् वैश्याअपिहिदातारोयदिलोकेनसंतिवै । दद्याद्भाद्रपदेमासिगोग्रासंपितृतृप्तये अथवारोद
नंकुर्य्याद्वहिर्निर्गत्यकानने । पाणिभ्यामुदरंस्वीयंपीड्याश्रूणिचपातयेत् अथवारण्यदेशेषुउच्चैर्वरोदनेनरः शृ
एवंतुपितरःसर्वेमत्कुलीनावचोमम अहंदरिद्रःकृपणोनिर्लज्जःपापकर्मकृत् प्राप्तेभाद्रपदेमासेपितृप्रीतिविव
र्द्धनं कर्तुंमहालयंश्राद्धंनचमेशक्तिरस्तिवै याचित्वापिमहींकृत्स्नांनवैकिंचित्तुलभ्यते अतोमहालयश्राद्धंनयु
ष्माकंकरोम्यहं क्षमध्वंममतद्यूयंभवंतोपिदयापराः उच्चैर्वरोदनंकुर्य्याद्वनदेशेषुभूसुराः तस्यरोदनमाकर्ण्य
पितरस्तत्कुलोद्भवाः तृप्ताःस्युःसिप्रयांत्येवअमृतेनेवनिर्जराः महालयार्थविप्राग्र्यैर्भुक्तैस्तृप्तिर्यथाभवेत् गोग्रा
सारण्यरुदितैःपितृतृप्तिस्तथाभवेत् मासिभाद्रपदेविघ्नोभवेच्चेत्सूतकादिना गतेपुसूतकाहस्सुतत्कुर्य्याद्वृश्चिकावधि
अतोमहालयार्थेहिब्राह्मणान्वृणुयाच्छुचीन् द्विजमेकंतुवृणुयात्पितामहकृतेथवा प्रपितामहमुद्दिश्यतथैववृणुया
द्द्विजं तथामातामहाद्यर्थमेकैकंवृणुयाद्द्विजं एकैकंवृणुयादेवंमातुश्चप्रपितामहं तथैववैश्वदेवार्थंवृणुयाद्
द्वौद्विजोत्तमौ विष्ण्वर्थंब्राह्मणंचैकंवृणुयाद्वेदवित्तमं एवंमहालयेश्राद्धेब्राह्मणान्वृणुयान्नव अथवापितृवर्गार्थे
वरयेद्विप्रमेककं मातामहादींश्चोद्दिश्यवरयेद्विप्रमेककं वैश्वदेवार्थमेकैकंविष्ण्वर्थंचतथापरं एवंवैवृणुयाद्धि
तुमहालये ब्राह्मणान्वेदसंपन्नान्सुशीलान्वरयेत्सुधीः दुःशीलान्वरयेद्यस्तुसवैश्राद्धस्यघातकः
पदेप्राप्ते कृष्णपक्षेविशेषतः कुर्य्यान्महालयेश्राद्धंयोनरःश्रद्धयासह सस्नातःसर्वतीर्थेषु श्रद्धाचारा
मिते अग्निष्टोमादयोयज्ञाःशतशोप्यमुनाकृताः तुलापुरुषमुख्यानिदानान्यपिकृतानिवै चांद्रायणा
देकृच्छ्रा ... तान्येवनसंशयः चतुर्णांसांगवेदानांपारायणफलंलभेत् महालयसमंपुण्यंभूतना
ब्रह्मविष्णुमहेशानांलोकप्राप्तिर्महालये महालयादिकंश्राद्धंनित्यंकाम्यान्विशिष्यते

शिवलोकेमहीयते अस्यामेवप्रतिपदिंनवरात्रंसमारभेत् पूर्वाह्णेस्थापयेद्देवींघटस्थापनपूर्वकं अंकुरारोप
णंकृत्वायवैर्गोधूममिश्रितैः ततःप्रतिदिनंकुर्य्यादेकभक्तमयाचितं उपवासंयथाशक्तिपूजापाठजपादिकं मार्कंडे
यपुराणोक्तंचरितत्रितयंतथा पठनीयंनवदिनंभुक्तिमुक्तिमभीप्सता कुमारीपूजनंतत्र प्रशस्तंभोजनादिभिः एवंकृ
त्वाव्रतंतत्रसर्वसिद्ध्यान्वितोनरः जायतेभुविदुर्गायाःप्रसादान्नात्रसंशयः तत्रादावशोकपूजाव्रतंभविष्योत्तरे अ
श्वयुक्शुक्लपक्षस्यप्रथमेन्हिदिनोदये अशोकंपूजयेत्तत्रप्ररूढनवपल्लवं प्ररूढैःसप्तधान्यैश्चतंतुभिर्मोदकैःशुभैःफलैः
कालोद्भवैर्दिव्यैर्नारिकेलैःसदाडिमैः धूपदीपादिनातद्वत्पूजयेत्तद्दिनेनगं सनरःपांडवश्रेष्ठशोकंनाप्नोतिकुत्रचित्
पितृभ्रातृपतिश्वश्रूसुतानांचतथैवच अशोकशोकशमनोभवसर्वत्रनःकुले इत्युच्चार्यततोदद्यादर्घ्यंश्रद्धासम
न्वितः पताकाभिरलंकृत्यप्रच्छाद्यचसुवाससा दमयंतीयथास्वाहायथावेदमतीसती तथाऽशोकव्रतादस्माज्जा
यतेपतिवल्लभा वनेव्रजंत्यासाधर्म्यंसीतयासंप्रदर्शितं दृष्ट्वाशोकवनेपार्थपल्लवालंकृतंनगं कृत्वासमीपेभ
र्त्तारंदेवरंचतिलाक्षतैः दीपालक्तकनैवेद्यैर्धूपस्रक्सफलार्चनैः अर्चयित्वाभ्यर्थितोसौरक्ताशोकोयुधिष्ठिर मैथि
लीप्रांजलिर्भूत्वाशृण्वतोराघवस्यच चिरंजीवतुमेवृद्धःश्वशुरःकोसलेश्वरः भर्त्तामेदेवरश्चैवजीवंतुपितृकादयः कौ
शल्यामपिजीवंतींपश्येयमितिमैथिली ययाचेयंमहाभागाद्रुममभ्यर्च्ययाचितं प्रदक्षिणमुपावृत्यप्रीतास्तेत्रय
युस्ततः एवमन्यापिभक्त्यायापूजयेद्व्रतिनीनगं तिलतंडुलसंमिश्रैर्यवगोधूमसर्षपैः क्षमाप्यवंदयेन्मूलेपा
दपंरक्तपल्लवं मंत्रेणानेनकौंतेयप्रणम्यस्त्रीपतिव्रता महावृक्षमहाशाखमकरध्वजमंदिर प्रार्थयेत्वांमहाभा
गवनोपवनभूषण एवमाभाष्यतंवृक्षंदत्त्वाविप्रायदक्षिणां सखीभिःसहितासाध्वीततःस्वभवनंव्रजेत् याः
शोकनाशनमशोकतरुंतरुण्यःसंपूजयंतिकुसुमाक्षतधूपदीपैः ताःप्राप्यसौख्यमतुलंभुविभर्तृजातंगौरीवनंप्रमुदि

ताःपुनराभुवंति ॥ अथव्रतस्वरूपं निर्णयसिंधौ भविष्योत्तरे एवंचविंध्यवासिन्यांनवरात्रोपवासतः एकभ
क्तेननक्तेनस्वशक्त्यायाचितेनवा पूजनीयाजनैर्देवीस्थानेस्थानेपुरेपुरे गृहेगृहेशक्तिपरैर्ग्रामेग्रामेनरैर्नरैः स्नातैः
प्रमुदितैर्हृष्टैर्ब्राह्मणैःक्षत्रियैर्नृपैः वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैः स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदंशृणु दे
वीपुराणेऽपि कन्यासंस्थेरवौशुक्लामारभ्यनंदिकां अयाचिताशीचैकाशीनक्ताशीवाथवाब्दः भूमौशयीत
चामंत्र्यकुमारीर्भोजयेन्मुदा वस्त्रालंकारदानाद्यैः संतोष्यप्रतिवासरं बलिंचप्रत्यहंदद्यादोदनमाषमांसवत् त्रिका
लंपूजयेद्देवींजपस्तोत्रपरायणइति अत्रदेवीपूजैव प्रधानं व्रत उपवासादिकमंगं पूजयित्वाश्विनेमासिविशोको
जायतेनरः एवमन्यैरपिसदादेव्याःकार्यप्रपूजनं विभूतिमतुलांलब्धुंचतुर्वर्गप्रदायिकामित्यादौपूजायाएवफल
संबंधात् मार्कंडेयपुराणेऽपि महापूजाविधानमत्रैवोक्तं शरत्कालेमहापूजाक्रियतेयाचवार्षिकीति वार्षिकीपूजानव
रात्रव्रतविधानेन कर्तव्यतयाप्रोक्ता ॥

अथनवरात्रव्रतप्रारंभः

तन्निर्णयस्तु निर्णयामृते देवीपुराणे सुमेधाउवाच शृणुराजन्प्रवक्ष्यामिचंडिकापूजनक्रमं आश्विनस्य
सितेपक्षेप्रतिपत्सुशुभेदिने पुण्याहवाचनंकृत्वा कन्यामावाहयेत्ततः कृत्वास्वर्णमयींदेवींपलमात्रामि
कांबिकां भैरवाष्टकसंयुक्तांन्यसेद्ध्यानपीठके पंचप्रणवमुच्चार्यपश्चाद्देवींसमर्चयेत् शुद्धेतिथौप्रकर्त्तव्यंप्रतिप
च्चोर्ध्वगामिनी आद्यास्तुनाडिकास्त्यक्त्वाषोडशद्वादशापिवा अपराह्णेप्रकर्त्तव्यंशुद्धसंततिकांक्षिभिः इदंचाप
राह्णयोगिन्याःप्राशस्त्यं द्वितीयदिनेप्रतिपदोऽभावेज्ञेयं तथा तत्रैवदेवीवचनं अनायुकानकर्त्तव्याप्रतिपत्पूजने
मम मुहूर्तमात्राकर्त्तव्याद्वितीयादिगुणान्विता आद्याःषोडशनाड्यश्चलब्ध्वायःकुरुतेनरःकलशस्थापनंतत्रअरिष्टं

जायतेध्रुवम् वर्जनीयाप्रयत्नेन अमायुकातुपार्थिव द्वितीयादिगुणैर्युक्ता प्रतिपत्सर्वकामदा शर
त्कालेविधातव्यं नंदामाश्रित्ययत्नतः पूजनंगंधपुष्पाद्यै र्नाना भक्ष्यसमन्वितैः
देवीवचनं योमांसंपूजयेन्नित्यं द्वितीयादिगुणान्विते प्रतिपच्छरदिज्ञात्वा सोऽश्नुतेसुखमव्ययम्
यदिकुर्यादमायुक्तप्रतिपत्स्थापनंमम तस्यसंपाद्विनाशःस्याज्ज्येष्ठःपुत्रोविनश्यति अमायुकानकर्तव्या प्रतिपच्चं
डिकार्चने उदयेद्विमुहूर्तापिग्राह्यासोदयगामिनी रुद्रयामले अमायुकासदाचैवप्रतिपन्निंदितासदा तत्रचेत्
स्थापयेत्कुंभंदुर्भिक्षंजायतेध्रुवं प्रातिस्तद्वितीयास्यात्कुंभारोपणकर्मणि यत्तु कैश्चिदुक्तं नदर्शकलयेत्यादि
शतयज्ञफलप्रदमित्यंतान्यमायोगनिषेधकानि यानि द्वितीयाशेषसंयुक्ताप्रतिपच्चंडिकार्चने मोहादथोपदेशाद्वा
कृतापुत्रविनाशकृत् आरंभेनवरात्रस्याद्वितीयात्रुटिसंयुता नकेवलंतिथिंहंतिवेधात्सापुत्रसंपदइत्यादीनिद्वितीयायो
गनिषेधकानि तान्युभयविधान्यपिसर्वाणिनिर्मूलानि समूलत्वेपिवापरस्परंसत्प्रतिपक्षत्वादनिर्णायकानीतितत्त्रौ
ढिवादमात्रंप्रत्यक्षतोदेवीपुराणे सर्वेषामेवोपलंभात् वाक्योपपत्तिरपीत्थंकर्तव्या नदर्शकलयेत्यादिवाक्यानि
प्रतिपदःखंडत्वे पूर्वविद्धानिषेधकानि द्वितीयाशेषसंयुक्तेत्यादिवाक्यानितु यदामाविद्धाप्रतिपत्परदिने नास्ति
तदाविद्धापिग्राह्येतितत्परराण्येवंद्विपराण्येव अमायुक्तैवकर्तव्याप्रतिपच्चंडिकार्चनइत्यादीनि नृसिंहप्रसादोदाहृता
नीति अत्रेदंतत्त्वं यापूर्वदिनेषष्टिदंडाभूत्वापरादिनेत्रिमुहूर्तापि साअमायोगाभावात्पूर्वैवग्राह्या पूर्णत्वात् आदि
त्योदयवेलायामारभ्यषष्टिनाडिका तिथिस्तुसाहिशुद्धाख्यासार्वतिथ्योह्ययंविधिरितिनारदीयात् यानिवाद्वि
तीयायोगनिषेधकानि वचनानि तान्यपि शुद्धाधिकानिषेधपराणि परादिनेप्रतिपदेत्यंतासत्त्वेतु प्रातिपद्यमावास्ये
तियुग्मवाक्याद्दर्शयुतैवग्राह्येति तदाहलल्लः तिथिः शरीरंतिथिरेवकारणमित्यादि कालतत्त्वविवेचनकारैस्तदनु

सारिभिश्च माधवहेमाद्याद्युक्तनक्तव्रतानुरोधेन खंडाप्रतिपत्प्रदोषव्यापिनीग्राह्येत्युक्तं नक्तव्रतत्वंचननक्तभोजन
त्वंतस्यपाक्षिकत्वाच्च किंतुपूजारूपस्यप्रधानस्य नक्तकालसाध्यत्वात् तच्चानिशिभ्रमंतिभूतानिशकयःशूलभृद्युताइ
त्यादिसामान्यवचनात् आश्विनेमासिमेघांतेमहिषासुरमर्दिनीं निशासुपूजयेद्भक्त्यासोपवासादिकंक्रमात् तथा
आश्विनेमासिमेघांतेप्रतिपद्यातिथिर्भवेत् तस्यांनक्तंप्रकुर्वीतनवरात्रेविशेषतः संपूज्यनवदुर्गांचनक्तंकुर्यात्समाहि
तः नक्तंनक्तभोजनमितिपाक्षिकनक्तभोजनपरामर्शः रात्रिव्रतमिदंदेविसर्वपापप्रणाशनं सर्वकामप्रदंन्दणांसर्व
शत्रुनिवर्हणं तथा रात्रिव्रतमिदंतस्यरात्रौकर्त्तव्यतेष्यते इत्यादिदेवीपुराणादिवचनेभ्यश्चावगम्यते एवंचपूजा
रूपस्यप्रधानरात्रिकालत्वेस्थिते कर्मणोयस्ययः कालइतिवचनात् प्रदोषव्यापिनीग्राह्यातिथिर्नक्तव्रतेसदा तिथिः
शरीरमित्यादिनक्तव्रतेष्वित्यादिवचन च प्रदोषव्यापिनी प्रतिपन्नवरात्रव्रतेग्राह्या अयमेव निर्णयोद्वितीयादिषु
रात्रिपूजने द्रष्टव्यः कौस्तुभेप्येवमेव तत्र पूर्वदिनएवप्रदोषकालव्याप्तौपूर्वाएतद्विषयाएवेव अमायुक्तैवकर्त्तव्ये
त्यादिनृसिंहप्रसादोदाहृतवचनानि द्वितीयाशेषसंयुक्तेत्यादिलल्लसंहितावचनानिच तथा द्वितीयादिकलोपेताप्र
तिपच्चंडिकार्चने वर्जनीयाप्रयत्नेन विषलेशोयथाम्भसि धवलनिबंधे देव्युवाच प्रतिपच्छेषसंयुक्तद्वितीयायां
ममार्चनं कृतंधनंनाशयतिसंततिंपुत्रपौत्रिकीं अमायुक्तैवसाग्राह्याप्रतिपच्चंडिकार्चने अन्यथाकरणेतावद्राज्यभं
गःप्रजायत इत्यादीनिच दिनद्वये तद्व्याप्तावुत्तरा दिनद्वये तदव्याप्तावुत्तरैव सायान्हरूपगौणकालव्याप्तेला
भात् एतद्विषयाएवेव द्वितीयायुक्तविधायकान्यमायुक्तानिषेधकानि वचनानि द्विमुहूर्तापीत्यपिशब्देन कैमुतन्यायप्र
दर्शनात्कलादिशब्दा अविरुद्धाः यत्तु आद्यास्तुनाडिकास्त्याज्याः षोडशद्वादशापिवा अपराह्णेचकर्तव्यं
शुद्धसंततिकांक्षिभिरितिवचनं नंदाषोडश नाडयस्तु लब्ध्वायःकुरुतेनरः कलशस्थापनं तत्रअरिष्टंजायते

ध्रुवमिति वचनांतरैकवाक्यतया कुलाचारप्राप्तकलशस्थापनविषयं एवंद्वितीयाविद्धप्रतिपद्विधायकानि वच
नानि वस्तुतस्त्वविषयाण्येवेत्येवमाहुः तत्र प्रारंभतिथेः खंडत्वे समग्रत्वेवा देवीपूजनरूपं व्रतं कदा प्रारब्धव्य
मितिसंशयेकालव्याप्तौनिर्णयार्थः तत्रकालोनिर्णयः अत्रगौडाः पूर्वाह्णएवतत्कालः तद्व्याप्त्यैवचानिर्णयःतथा
हिदेवीपुराणे प्रातरावाहयेद्देवींप्रातरेवप्रवेशयेत् प्रातःप्रातश्चसंपूज्यप्रातरेवविसर्जयेदिति· अत्रप्रातः शब्दः
पूर्वाह्णपरःआश्विनस्यसितेपक्षेप्रतिपत्सुयथाक्रमंसुस्नातस्तिलतैलेनपूर्वाह्णेपूजयेच्छिवामितिवचनेननवतिथ्यधि
करणकप्रातःपूजाविधीयते प्रतिपत्स्वितिबहुवचनांतस्य लिंगसमवायेन प्रतिपत्तादितरातिथिपरत्वादितिकौ
स्तुभे अतएवकालतत्त्वविवेचनेप्रतिपदादीत्युक्तं तत्रैव भगवत्याः प्रवेशादिविसर्गांताश्चयाःक्रियाः तिथ्यो
रुदयगामिन्योःसर्वास्ताःकारयेद्बुधइत्यादिच तस्मात्पूर्वाह्णएवपूजादिकर्तव्यमितिप्राहुः अयमेवमुख्यःपक्षइति
प्रतिभातिपूर्वाह्णेदैविकंकर्मेत्यादिपूर्वाह्णेवैदेवानामित्यादिश्रुतेः शरत्कालेमहापूजाक्रियतेयाचवार्षिकी साका
र्योदयगामिन्यांनतत्रतिथियुग्मतेत्यादिनदिकेश्वरपुराणादिवचनाच्च युग्मतेतिनयुग्मवाक्यानुरोधेननिर्णयइत्यर्थः
वार्षिकीत्यनेन संवत्सरस्यादौ चैत्रशुक्लप्रतिपद्युपक्रम्य नवम्यंतापूजाभिधीयते ततश्चशरद्वसंतयोस्तुल्यए
वदुर्गोत्सवः कार्यइतिफलितं निर्णयसिंधौतु गौडनिबंधेपुनिर्णयादौदयिकीग्राह्या तत्रापिघटिकैकेत्यस्य
मुहूर्तस्तुतित्वोक्तेर्द्विमुहूर्ताग्राह्या उदितेदैवतंभानावित्यत्र द्विमुहूर्तात्रिरन्हश्चेतिवचनादौदयिक्याद्विमुहूर्तस्तुति
रितिस्थितं एवममायुक्तायानिषेधादपि पूर्वाह्णस्यमुख्यकर्मकालत्वं तथाचदेवीपुराणे कुहूकाष्ठोपसंयु
क्तांवर्जयेत्प्रतिपत्तिथिं राज्यनाशायसाप्रोक्तानिंदिताचापिपूजन इति रुद्रयामले अमायुक्तासदाचैवप्रति
पन्निंदितामम तत्रचोत्थापयेत्कुंभंदुर्भिक्षंजायतेध्रुवं प्रतिपत्सर्वनाशायकुंभारोपणकर्मणीति उदयकालि

कातिथेः सविस्तरपूजापर्याप्तत्वे संक्षेपपूजायांकालिकापुराणे सम्यक्कल्पोदितांपूजांयदिकर्तुंनशक्नुयात् उपचा
रांस्तथादातुंपंचैतान्विचरेत्तदा गंधंपुष्पंचधूपंचदीपंनैवेद्यमेवच अभावेतोयपुष्पाभ्यांतदभावेतुभक्तितः संक्षेप
पूजाकथितेति यत्तुकैश्चिदुक्तं रुद्रयामलडामरवचनंनिर्मूलमितितन्न तयोरपिवेदांगत्वावगमादन्यांगवत्प्रामा
ण्यस्यस्वीकर्तव्यत्वात् तदुक्तंशिवार्चनचंद्रिकायांकपिलपंचरात्रे नवेदःप्रणवंत्यक्त्वामंत्रोवेदसमुत्थितः तस्माद्वेदः
परोमंत्रोवेदांगंचागमःस्मृतः वश्याकर्षादिकंकर्मदृष्टादृष्टफलप्रदं वेदेनसाध्यतेसर्वंगृहयज्ञादिभिःकिल नवेदेनवि
नायज्ञानवेदायज्ञवर्जिताः तस्माद्वेदःपरो मंत्रोनमंत्रो वेदवर्जितः नमंत्रेऽत्राधिकारोस्तिशूद्राणां नियमःपरः मंत्रा
भावादमंत्रेणभावितंसर्वकर्महीति व्यवस्थापितंच शारदाटीकायामागमानां श्रुतिमूलत्वं प्रत्यक्षोपलभ्यमान
रामपूर्वोत्तरतापिनीयनृसिंहपूर्वोत्तरतापिनीयसौराष्ट्राक्षरशिवपंचाक्षरश्रीविद्यात्मिकाचसाक्षात् श्रुतिराथर्वणउप
लभ्यतएव अतएव उपासनाकांडमेवआगमशास्त्रात्मकंलोकप्रसिद्धं किंच ऋग्वेदचतुर्थाष्टकतृतीयाध्यायप्रथम
वर्गेचतुर्थ्यामृचिश्रीविद्यामंत्रोद्धारःश्रूयते साचचत्वारईंबिभ्रतिक्षेमयंतोदशगर्भंचरमेधापयंते त्रिधातवःपर
माअस्यगावोदिवश्चरंतिपरिसद्योअंतानिति अस्याअर्थस्तुलक्ष्मीधरकृतसौंदर्यलहरीटीकायांद्रष्टव्यः तस्मा
त्सर्वथारुद्रयामलडामरादिवेदांगमेवेतिसर्वैरभ्युपेयंनिर्णयसिंधौतु एषुवचनेषुकलशस्थापनग्रहणात् तदेवप्र
थमेदिनेनिषिध्यते नतूपवासादितस्यप्रतिपद्यप्यमावास्येतियुग्मवाक्याच्छुक्लास्यात्प्रतिपत्तिथिः प्रथमतइतिदी
पिकोक्तेः शुक्लपक्षेदर्शविद्धेतिमाधवोक्तेश्चपूर्वदिनेप्राप्तस्यबाधेमानाभावात् इतिकेचित् वस्तुतस्तुपूर्वोक्तवाक्येषु
चंडिकार्चनपूजनग्रहणादुपवासादेश्चांगत्वात्प्रधानदेवीपूजादावपिपरेनियुक्तंकलशस्थापनग्रहणंतूपलक्षणं अत
एवदेवलःव्रतोपवासनियमेघटिकैकापियाभवेत् सातिथिस्तद्दिनेपूज्याविपरीतातुपैतृके इतिस्थितं प्रसंगात्द्वितीया

क्यानिलिख्यंते ग्राचाश्वयुजिमासेस्यात्प्रतिपद्ध
युक्तप्रतिपदोग्राह्यताबोधकान्यमायुक्तायानिपेधकान्यन्यान्यापवा नंदायांदर्शयुक्तायांयत्रस्या
द्रयान्विता शुद्धाममार्चनंतस्यांशतयज्ञफलप्रदं देशभंगोभवेत्तत्रदुर्भिक्षंचोपजायते प्रतिपत्त्रिमुहूर्तापि
न्ममपूजनं तस्माद्भद्रान्वितानंदानवरात्रेप्रशस्यते आश्विनेमासिमेभक्तैःकर्तव्याशुक्लपक्षगा योन्यथाकुरुतेमोहा
पुत्रपौत्रप्रवर्द्धिनी धनवृद्धिकरीपुंसांसर्वसौख्यकरीतथा अतोन्यथानकर्तव्यानवरात्रव्रतेमम सर्वं
द्राजापूजाविधौमम तस्यराष्ट्रेप्रजानाशंकरिष्यामिनसंशयः सामयासहिताग्राह्या नकदाचिद्विचक्षणैः
क्षयकरीयस्मात्तस्मात्तांपरिवर्जयेत् अमावास्यायुतांकुर्याद्यदिकश्चित्कदाचन राजानाशमवाप्नोतिपंचत्वंवापि
गच्छति पूर्वविद्धातुयाशुक्लाभवेत्प्रतिपदाश्विने नवरात्रव्रतंतस्यांनकार्यंशुभमिच्छतेत्यादि तथा यथाद्वादश
भिर्मासैर्मासोवृद्धोमलिम्लुचः तथातिथिस्त्वहोरात्रवृद्धौप्रोक्तामलिम्लुचा यथामलिम्लुचःपूर्वोमासोदैवस्तथो
त्तरः त्याज्यातिथिस्तथापूर्वाग्राह्यादैवेतथोत्तरेत्यादि प्रतिपदिचित्रावैधृत्यादियोगनिषेधोभार्गवार्चनदीपिका
यांदेवीपुराणे प्रारंभोनवरात्रस्याद्वित्वाचित्रांचवैधृतिमिति त्वाष्ट्रवैधृतियुक्ताचेत्प्रतिपच्चंडिकार्चनं तांनारभ्य
विधातव्यंकलशारोपणंगृहेइति रुद्रयामलेऽपि वैधृतौपुत्रनाशःस्याच्चित्रायांधननाशनं तस्मान्नस्थापयेत्कुंभं
चित्रायांवैधृतौतथेति तत्रविशेषउक्तःकात्यायनेन प्रतिपद्याश्विनेमासिभवेद्वैधृतिचित्रयो आद्यपादौपरित्यज्य
प्रारभेन्नवरात्रकं भविष्ये चित्रावैधृतिसंयुक्ताप्रतिपच्चेद्भवेन्नृप त्याज्याह्यंशास्त्रयस्त्वाद्यास्तुरीयांशेतुपूजन
मिति चित्रावैधृतियुक्तापिहितायायुक्ताचेत्सैवग्राह्येत्युक्तंदुर्गोत्सवे भद्रान्विताचेत्प्रतिपन्नलभ्यतेविरुद्धयोगै
रपिसंगतासती सेवापराह्णेविबुधैर्विधेयाश्रीपुत्रराज्यादिविवृद्धिहेतुरिति रुद्रयामले संपूर्णाप्रतिपच्चैवाचि
त्रायुक्तायदाभवेत् वैधृत्याचापियुक्तास्यात्तदामध्यंदिनेरवौ अभिजित्तुमुहूर्तेयत्तत्रस्थापनमिष्यतइति एवं

रात्रौचित्रावैधृत्योरलाभेऽपिदिवैवकलशस्थापनंकार्यंनरात्रौ नचकुंभाभिषेचनामितिवचनेन रात्रातान्नषधात् व
एणुधर्मे भास्करोदयमारभ्ययावत्तुदशनाडिकाः प्रातःकालइतिप्रोक्तःस्थापनारोपणादिकमिति अथविस्तरे
एनवरात्रकृत्यं आश्विनेमासिशुक्लेतुकर्तव्यंनवरात्रकं प्रतिपदादिक्रमेणैवयावच्चनवमीभवेत् भविष्योत्तरे
एवंचविंध्यवासिन्यांनवरात्रोपवासतः एकभक्तेननक्तेनस्वशक्त्यायाचितेनवा पूजनीयाजनैर्देवीस्थानेस्थाने
पुरेपुरे गृहेगृहेशक्तिपरैर्ग्रामेग्रामेवनेवने स्नातैःप्रमुदितैर्हृष्टैर्ब्राह्मणैःक्षत्रियैर्नृप वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यै
श्चमानवैः स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदंशृणुइति विंध्यवासिन्यामधिष्ठानेदेवीपूजनीयेतिसंभवाभिप्रायेण
नतुनियतं स्थानेस्थानेपुरेगेहेतदसंभवात् अत्रोपवासादिदेवीपूजाकुमारिकापूजादिबहुकर्माभिधानेपिपूजायाए
वप्राधान्यं पूजयित्वाश्विनेमासिविशोकोजायतेनरइति हेमाद्रौ भविष्ये तस्याएवफलसंबंधावगमात् व्रतत्वाक्ते
श्चतथाहि भागवते चेरुर्हविष्यंभुंजानाःकात्यायन्यर्चनंव्रतमितितद्द्वारापिकर्तव्यत्वाभिधानेनावश्यकताप्रतीयते
स्वयंवाप्यन्यतोवापिपूजयेत्पूजयीतचेति पूजायाएवहित्रिविधत्वमुक्तंस्कंदपुराणे भविष्येणशारदीचंडिकापूजा
त्रिविधापरिगीयते सात्त्विकीजपयज्ञाद्यैर्नैवेद्यैश्चनिरामिषैः माहात्म्यंभगवत्याश्च पुराणादिषुकीर्तितं पाठस्तस्य
जपःप्रोक्तःपठेद्देवीमनास्तथा राजसीबलिदानेननैवेद्यैः सामिषैस्तथा सुरामांसाद्युपाहारैर्जपहोमैर्विनातुया
विनामंत्रैस्तामसीस्यात्किरातानांतुसंमता ब्राह्मणैः क्षत्रियैर्वैश्यैःशूद्रैरन्यैश्चमानवैः एवंनानाम्लेच्छगणैः पूज्यते
सर्वदस्युभिरिति अतएवहोमादेरपिपूजात्वमुक्तंलिंगपुराणे शारदीयामहापूजाचतुः कर्ममयीशुभा तांतिथित्रय
मासाद्यकुर्याद्भक्तोविधानतइति अत्रस्नपनपूजनबलिदानहोमरूपाणिचत्वारिकर्माणीत्युक्तंकालतत्त्वविवेचने
तिथित्रयंसप्तम्यादि मदनरत्नेदेवीपुराणे कन्यासंस्थेरवौशुक्रशुक्लामारभ्यनंदिकां आयाचीत्वथवैकाशीनक्ता

शीवापिवाव्रती प्रातःस्नायीजितद्वंद्वस्त्रिकालंशिवपूजकः जपहोमसमायुक्तःकन्यकांभोजयेन्मुदा वस्त्रालंकार
दानैश्चसंतोष्यप्रतिवासरं बलिंचप्रत्यहंदद्यादोदनंमांसमाषवत् त्रिकालंपूजयेद्देवींजपस्तोत्रपरायणइति नं
दिकाप्रतिपदितिमैथिलाः षष्ठीतिगौडाः साचकाम्यानित्याच एवमन्यैरपितथादेव्याःकार्यंप्रपूजनं विभू
तिमतुलांलब्धुंचतुर्वर्गप्रदायकमिति योमोहादथवालस्याद्देवींदुर्गांमहोत्सवे नपूजयतिदंभाद्वाद्वेषाद्वाप्यथ
भैरव क्रुद्धाभगवतीतस्यकामानिष्टान्निहंतिवै इतिकालिकापुराणेफलनिंदाश्रुतेः भविष्योत्तरेपि भवानी
तुष्टयेपार्थसंवत्सरसुखायच भूतप्रेतपिशाचानांनाशार्थंचोत्सवायचेति अन्यत्रापि पूजयित्वाश्विनेमासिवि
शोकोजायतेनरइति वर्षेवर्षेविधातव्यंस्थापनंचविसर्जनमिति तिथितत्त्वे देवीपुराणाच्च पूजाचरात्रावपि
कार्या आश्विनेमासिमेघांतेमहिषासुरमर्दिनीं निशासुपूजयेद्भक्त्यासोपवासादिकंक्रमादितिदेवीपुराणात्
संग्रहेपि आश्विनेमासिवर्षांतेप्रतिपद्यातिथिर्भवेत् तस्यांनक्तंप्रकुर्वीतरात्रौदेवींप्रपूजयेत् रात्रिरूपायतोदेवी
दिवारूपोमहेश्वरः रात्रिव्रतमिदंदेविसर्वपापप्रणाशनं सर्वकामप्रदंन्हणां सर्वशत्रुनिवर्हणं रात्रिव्रतमिदंतस्यरात्रौ
कर्तव्यतेष्यते नक्तव्रतमिदंयस्मादन्यथानरकेगतिरित्यादिवचनाच्च अष्टम्यांविशेषतोरात्रौपूजाविहिता निशा
यांपूजितादेवीवैष्णवीपापनाशिनी तस्मात्सर्वप्रयत्नेनअष्टम्यांनिशिपूजयेदिति कन्यासंस्थेरवावीषेयाशुक्लाति
थिरष्टमी तस्यांरात्रौपूजितव्यामहाविभवविस्तरैरितिच यत्तु अतोर्थंपूजनीयासातस्मिन्नहनिमानवैरिति तत्राहः
पदंतिथिरूपचंद्रादिनपरंतस्मिन्निितिप्रकृताष्टमीपरामर्शात् ननुआश्विनस्य सितपक्षेइत्यादिपूर्वोक्तवचनैःरात्रिपूजा
भिहिता प्रातरावाहयेद्देवीमित्यादिवचनैश्चपूर्वाह्णेपूजनमभिहितं एवमेतेषांवचनानांपरस्परविरोधे कुत्रपूजनंकर्त
व्यमितिअनिर्णयइतिचेत् अत्रोच्यते प्रातर्मध्यान्हयोःसंक्षेपपूजनंअंगादिविस्तरपूजनंतुरात्रावेव रात्रौशक्तिपूजन

स्यफलाधिक्यात् एवंसतिप्रातरेवकलशस्थापनादिपूर्वकं देवीस्थापनं पूर्वाह्णेपूजयेच्छिवामित्यादिवचनानि प्रथमकालपूजार्थकानिचसंगच्छंते तथाचदेवीपुराणेकालत्रयेपिपूजनमुक्तंत्रिकालंपूजयेद्देवींजपस्तोत्रपरायणइति नवरात्ररूपंकर्मतुदशमीपर्यंतंकार्यं संपूज्यअर्पणंकुर्याद्दशम्यांशावरोत्सवैरितिभविष्योत्तरात् अत्रप्रतिपदमारभ्यनवमीपर्यंतंवृद्ध्यापूजाजपकुमारीपूजनादिकंविहितं यश्चाद्येदिवसेकुर्याच्चंडिकापूजनादिकं द्विगुणंतद्द्वितीयेन्हि त्रिगुणंतत्परेहनि नवमीतिथिपर्यंतंवृद्ध्यापूजाजपादिकमिति अत्रकेचित् नवरात्रशब्दोनवाहोरात्रपर इतिमत्वा तिथिवृद्धौतिथिन्हासेनवरात्रमपार्थकमिति पूर्वपक्षे प्रारंभानवचंद्र्यांतुनवरात्रमतोर्थवदितिदेवीपुराणवचनेनसमाधिरेअन्येतुवचनमिदंनिर्मूलमितिमत्वातिथिविशेषपरतामेवाहुः युक्तंचैतत् अमावास्यारात्रौप्रतिपत्प्रवेशाभावेपिप्रतिपत्प्रभृत्येवात्यंतापचयेनाष्टरात्रिपूजने तिथिवृद्धावष्टम्यहोरात्रास्पर्शिनवमींगृहीत्वा दशरात्रिपूजने तिथिविशेषपरत्वस्यावश्यकत्वात् प्रारंभोनवरात्रस्येत्यादौतुनवरात्रशब्दस्यलक्षणयाकर्मपरत्वं अत्रकालतत्वविवेचनकाराः नवरात्रशब्दोरात्रिशब्दस्यतिथिविषयपूर्ववाक्यैकवाक्यतयोत्सर्गिकसंपूर्णतिथेरेवप्रायोव्यवहारविषयत्वेनसंप्रतिपत्त्याचतिथिलक्षकत्वात् सप्तम्यंतः कालरूपगुणविधिः द्वितीयातोपिक्वचिच्छ्रुतः कालाध्वनोरत्यंतसंयोगइतिवचनात्तादृशएवनतुनामधेयं तत्रैतद्ग्रंथेवाक्यांतरेणप्रवृत्तिनिमित्तकालसंबंधस्याविधानेनतत्रस्यन्यायाभावात् श्रुत्यागुणविधानेसंभवेतिबहुव्रीहौसमासांतानुपपत्त्यासमाहारद्विगुणत्वंतुरात्रिसमुदायवचनतयानिरूढप्रायस्यलक्षणयानामधेयत्वानौचित्यात् नवरात्रोपवासतइत्यत्रकथंचिदुपवाससामानाधिकरण्यसंभवेपि प्रधानेन पूजनेन वैकल्पिकैकभुक्तादिनित्यदेवीपूजनादिष्वघटितसमुदायेनवा सामानाधिकरण्याभावाच्च नचतिथिन्हासवृद्ध्योर्गुणविध्यसंभवान्नित्यवच्छ्रवणविरोधः नामधेयत्वंतुयदाकदा

चित्रवृत्तिनिमित्तसद्भावेनाप्युपपन्नं वैश्वदेवशब्दस्यैवैकदेवतासंबंधेनेतिवाच्यं रात्रिशब्दस्यतिथिपरत्वेऽह्रास
वृद्ध्योरपितद्गुणविधिसंभवेनाविरोधात् ह्रासेतिथिद्वयप्रयुक्तस्यपूजादेस्तंत्रानुष्ठानेन वृद्धौचैकतिथिप्रयुक्तस्यत्रक्रां
तनियमभंगभयादावृत्त्यानुष्ठानेनसर्वदानवतिथिप्रयुक्तकर्मसत्त्वादिति दीक्षितनिर्णयसिंधुकारप्रभृतयोप्येवमेवाहुः
अत्रमुख्यकल्पे समर्थस्यान्येपि पक्षाउक्ताः अथात्रनवरात्रंचसप्तपंचत्रिकादिवा एकभक्तेननक्तेनायाचितोपोपि
तैः क्रमादिति अत्रादिशब्देनाष्टरात्रद्विरात्रैकरात्रपक्षाः संगृहीता भविष्यपुराणे व्रतीप्रपूजयेद्देवींस
प्तम्यादिदिनत्रयमिति भविष्येपि आश्विनेमासिशुक्लेतुकर्तव्यंनवरात्रकं प्रतिपदादिक्रमेणैवयावच्चनवमीं
भवेत् त्रिरात्रंवापिकर्तव्यंसप्तम्यादिर्यथाक्रममिति अष्टमीनवम्योरेववादेवीपूजनंकर्तव्यं अष्टम्यांचनवम्यांच
जन्ममोक्षप्रदांशिवां पूजयित्वाश्विनेमासिविशोकोजायतेनरइति केवलाष्टमीकेवलनवमीकल्पावुक्तौकालिपुराणे
पस्त्वेकस्यामथाष्टम्यांनवम्यांवापिसाधकः पूजयेद्वरदांदेवींमहाविभवविस्तरैरिति गौडार्णवेदेवीपुराणेपि नवरा
त्रव्रतेशक्तः त्रिरात्रंचैकरात्रकं व्रतचरतियोभक्तस्तस्मैदास्यामिवांछितमिति भविष्ये प्रथमाद्वितृतीयाचच
तुर्थीचनराधिप एतास्तुचैकभक्तेनप्रवदंतिमनीषिणः नेयाइतिविशेषः पंचमीचतथाषष्ठीसप्तमीचाष्टमीषुव उ
पवासपरोभूत्वापूजयेच्चंडिकांबुधइति सप्तरात्रपक्षोरुद्रयामले दुर्गोत्सवेस्मृतंदेविउपवासस्यसप्तकं अष्टमेदिव
सेहोमस्ततःकिंचित्तुभक्षयेदिति पंचरात्रपक्षेभविष्ये एकभक्तस्तुपंचम्यांषष्ठ्यांनक्तंप्रवर्तयेत् अयाचितस्तुसप्तम्या
मष्टम्यांतुउपोषितः नवम्यांपारणंकुर्यादित्येवंपंचरात्रकमिति षष्ठ्यादिपक्षोप्युक्तः कालिकापुराणे बोधयेद्बिल्व
शाखायांषष्ठ्यांदेवींफलेषुच सप्तम्यांबिल्वशाखायांतामाहृत्यप्रपूजयेत् पुनःपूजांतथाष्टम्यांविशेषेणसमाचरेत्जाग
रंचस्वयंकुर्याद्बलिदानंमहानिशि प्रभूतबलिदानंचनवम्यांविधिवच्चरेत् ध्यायेद्दशभुजांदेवीं दुर्गांतंत्रेणपूजयेत वि

सर्जनं दशम्यांतु कुर्याद्वैशारदोत्सवे धूलिकर्दमविक्षेपैः क्रीडाकौतुकमंगलैः भगलिंगाभिधानैश्च भगलिंगप्रगीत
केरिति कल्पांतर प्रतिपादकदेवीपुराणेपि इषेमासिसितपक्षेकन्याराशिगतेरवौ नवम्यां बोधये देवीं क्रीडाकौतुक
मंगलैः ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यांबिल्वाभिमंत्रणं सप्तम्यांमूलयुक्तायां पत्रिकायाः प्रवेशनं पूर्वाषाढायुता
ष्टम्यां पूजाहोमाद्युपोषणं उत्तरेणनवम्यांतुबलिभिःपूजयेच्छिवां श्रवणेनदशम्यांतु प्रणिपत्यविसर्जयेदिति अत्र
देवीपूजाप्रकारउक्तोरुद्रयामले स्नानंमांगलिकंकृत्वाततोदेवीं प्रपूजयेत् शुभाभिर्मृत्तिकाभिश्च पूर्वंकृत्वातुवेदिकां
यवांश्चैवापयेत्तत्रगोधूमैश्चापिसंयुतान् तत्रसंस्थापयेत्कुंभंविधिनामंत्रपूर्वकं सौवर्णीरजतंवापिताम्रंमृण्मयजंतुवा प्र
तिमांपूजयेत्चेति प्रतिमांतुमंडलमध्यस्थापितकलशोपरिस्थापयित्वापूजयेत् पूजामंडलमध्यस्थेतिदेवीपुराणा
त् साचहेमादिमयीभवति तस्मिन्देवीप्रकर्तव्याहैमीवाराजतीयथा मृद्वार्क्षीलक्षणोपेतापट्टेशूलेथपूजयेत् तथा
हैमराजतमृद्वार्क्षी शैलीचित्रार्पितापिवा खड्गेशूलेर्चितादेवी सर्वकामफलप्रदा तथा मृण्मयीं
प्रतिमांकृत्वा चित्रस्थांयस्तुपूजयेत् आत्मवित्तानुसारेण सलभेन्नौकिकंफलमित्यादि देवी
पुराणादिवचनात् अन्यत्रापि कांचनीराजतीताम्री पैत्तली मृण्मयीतथा वार्क्षीमणिमयी
चैव वर्णैर्लिखितातथेति हयशीर्षपंचरात्रे मृण्मयीदारुघटिता लोहजारत्नजातथा
शैलजागंधजाचैव कौसुमीसप्तधास्मृता कौसुमी गंधजाचैव मृण्मयी प्रतिमाहिता तत्कालपूजिता
तैताःसर्वकामफलप्रदाः अथासांफलानि दारुजाकामदाप्रोक्तासौवर्णीभुक्तिमुक्तिदा राजतीस्वर्गसुखदाता
म्रीह्यायुर्विवर्द्धिनी कांस्यावव्हापदेहंतिरैतिकीशत्रुनाशिनी सर्वभोगप्रदाशैलीस्फाटिकीमोक्षकारका
भोगप्रदाख्यातामृण्मयीखलुशोभना देवीमूर्तिस्थापनंदुर्गाभक्तितरंगिण्यां देवीपुराणे याम्यांस्याशुभदा

प्रतिमाभविविशेपस्तत्रैव
दुर्गापूर्वास्याजयवर्द्धिनी पश्चिमाभिमुखीस्थाप्यानस्थाप्यासौम्यदिङ्मुखी
कृत्यतत्त्वार्णवे यद्यदस्यायुधंप्रोक्तंतस्मिंस्तस्मिंस्तुपूजयेत् देवीभक्त्यार्चितापुंसांराज्यायुः कृतसौख्यदा
चित्रचत्रिशिखे कालिकापुराणे लिंगस्थांपूजयेद्देवींमंडलस्थांतथैवच पुस्तकस्थांमहादेवींपावकेप्रतिमासुच
सिंदूरजेतथा खड्गे जलस्थांवापिपूजयेत् चित्रम्लेप्यादौस्नानाद्यसंभवे तत्रैवोक्तं सद्यः स्निग्धेमृण्मयेवासर्पिः
श्रंगुष्ठपर्वमारभ्य श्रीचंदनप्रतिष्ठेवालेपजेप्रतिमातनौ श्रंतिकेस्थापितेखड्गेस्नापयेद्दर्पणेऽथवेति श्रन्यत्रापि
गृहेतु वितस्तिर्यावदेवतु गृहेतुप्रतिमाकार्यानाधिकाशस्यतेबुधैरिति मानांगुलप्रमाणेन दशमंचांगुलात्मिका
क्षेमसुभिक्षायभवेद्वि प्रतिमापूज्यानाधिकाहिप्रशस्यतइति सौम्यातुहस्तमात्रावसुदाहस्तद्वयोच्छ्रताप्रतिमा
मृण्मयींप्रतिमांवक्ष्येयथावत्तांनिबोधमे त्रतुर्हस्तप्रमाणाचेतितुस्थापितप्रतिमाविषयंज्ञेयं मृण्मय्यांविशेषउक्तः
श्रपक्काप्रतिशस्तावैसैव पक्कापक्काद्विधाप्रोक्तामृण्मयीप्रतिमाक्रमात् सर्वेलोकानशंसंतिप्रतिमांदग्धमृण्मयीं
ब्राह्मण कार्याविचक्षणैः सुधयाचैवकर्तव्यानाश्मचूर्णैःकदाचन श्रथमृद्भेदः मृदेवंमृण्मयींकुर्याद्यथावदनुपूर्वशः
क्षामोदर्याक्षुद्भयमर्थ स्यसितामृद्वैक्षत्रियस्यारुणास्मृता श्रन्यच्च नृपभयमत्यंगायांहीनांगायामकल्पताकर्तुः
श्रंध विनाशःकृशांगायां मरणंतुसक्षतायांशस्त्रनिपातेननिर्दिशेत्कर्तुः वामेविनतापत्नींदक्षेविनताहिनस्त्यायुः
नाधि त्वमूर्ध्वदृष्टौकरोतिचिंतामधोमुखीदृष्टिः सर्वप्रतिमास्वेवंशुभाशुभंभास्करोक्तमवगच्छेदिति तथान्यत्रापि
कांगीनहीनांगीकर्तव्यादेवताक्वचित् श्रधिकाशिल्पिनंहन्यात्कृशाचैवार्थनाशिनी कृशोदरीतुदुर्भिक्षंनिर्मांसाधन
नाशिनी. वक्रनासातुदुःखायसंक्षिप्तांगीभयंकरी चिपिटादुःखशोकायश्रनेत्रानेत्रनाशिनी दुःखदाहीनवक्त्रातु
इत्यादि . पाणिपादविहीनायांजायतेनरकोमहान् जंघाहीनाचयामूर्त्तिःशत्रुकल्याणकारिणी पुत्रमित्रविना

शाय हीनांवृक्षस्थलेतुया संपूर्णावयवायानुआशुलक्ष्मीप्रदासदा एवंलक्षणमासाद्यकर्तव्यामूर्तिरुत्तमेति अन्य त्रविशेषः खंडितेस्फुटितेभ्रष्टेदग्धेमानविवर्जिते यागहीनेथवोच्छिष्टेपतितेदुष्टभूमिषु अन्यमंत्रार्चितेचैवपतित स्पर्शदूषिते दशस्वेतेपुनोचक्रुः सन्निधानंदिवौकसइति अत्रदेव्यादिगृहादिकमपिकुर्यात् तदुक्तंनिर्णयामृते भविष्योत्तरे देव्यागृहंप्रकर्तव्यंचतुरस्रंसुशोभनं रहस्यंस्वस्तिकाद्यैश्चचर्चितंवस्त्रमंडितं गोरमृद्गोमयाभ्यांच लिप्तंशङ्खसमान्वितं तन्मध्येवेदिकाकार्याचतुर्हस्तासमाशुभा तस्यांसिंहासनंक्षौमंकंबलाजिनसंयुतं तत्रदुर्गांप्रति ष्ठाप्यसर्वलक्षणसयुतां ग्रैवेयहारकेयूरनूपुराभरणान्वितां नानारत्नविचित्रेणमुकुटेनविराजितां अनेककुसुमा कीर्णकपर्देनसुशोभितां नितंबबिंबसंबद्धकिंकिणीक्वणनादितां शूलंचक्रंदंडशक्तीवज्रपाशासिधारिणीं भक्त घंटाक्षमालांककरपात्रलसत्करां तदग्रेछिन्नशिरसंमहिषंरुधिरप्लुतं निःसृतार्धतनुंकुतनाराचमसिधारिणं देवी करधृतग्रीवंशूलेनोरसिताडितं दैत्यकरालदंष्ट्रास्यंविद्युत्कपिलमूर्द्धजं नागपाशेनसंक्षिप्तंहर्यक्षेणापिविह्लतं वमद्रुधिरवक्त्रेणह्युन्नतोर्ध्वसटंरुषा अर्द्धलांगूलदंडेनदंडाधिष्ठानशोभिना सर्वतोमातृचक्रेणसेव्यमानांसुरैस्तथा पूज नंप्रयतोदेवीनरोनियममास्थित इति वेदिकोणेष्वपि कलशस्थापनविधिना चत्वारः कलशाःस्थाप्याः चतुरः कलशान्यस्तुदद्याद्देवगृहेनरः चतुःसमुद्रवलयांसतुभुंक्तेवसुंधरामितिविष्णुधर्मोत्तरात् ततःपूजनंकुर्यात् अथपूजावि धिःतत्रप्रतिपदिपूर्वाह्णेपुष्पतैलादिनाकृतमंगलस्नानोनित्यक्रियांकृत्वानववाससी परिधाय चंदनमृगमदकुंकुमैः सर्वांगमनुलिप्यत्रिपुंड्रंकृत्वापूर्वाभिमुखोदेवीवासमुपविश्य सोपग्रहपाणिराचम्यममेहजन्मनिदुर्गाप्रीतिद्वारासर्व पापक्षयपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यवच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थं शारदनवरात्रप्रतिपदिविहितकलशस्थापनदुर्गापूजादिकरिष्यइतिसंकल्प्य गणपतिपूजनंस्वस्तिवाचनंकृत्वा

शुभेदारुमयेदेवीपूजार्थनेवानिर्मिते कदलीस्तंभादिमंडितेगृहेउत्तमवस्त्रादिभूषिते पूर्वगृहएवचातुरस्त्रंतुहस्तंवेदि
कोपरिसर्वतोभद्रादिमंडलविधायमंडपंचकृत्वातत्रप्रतिमास्थापनंकुर्यात् तत्रक्रमः आदौगणानांत्वेतिमंत्रेणगणेशंसं
स्थाप्य तदनंतरहेरंबत्वमेह्येहिचांबिकात्र्यंबकात्मज सिद्धिबुद्धिपतेत्र्यक्षलक्षसूर्यसमप्रभ नागास्यनागहारत्वंगण
राजचतुर्भुज भूषितः स्वायुधैर्दिव्यैःपाशांकुशपरश्वधैः आवाहयामिपूजार्थरक्षार्थंचममक्रतोः इहागत्यगृहा
णत्वंपूजाकतुंचरक्षमां आवाह्यैवंगणेशानपूजाद्रव्यैः प्रपूजयेदिति एवंयथासंभवंपूजयित्वाऽर्घ्यपात्रे गंधादि
कृत्वाऽर्घ्यंदद्यात् तत्रमंत्रः रक्षरक्षगणाध्यक्षत्र्यक्षत्रैलोक्यरक्षक भक्तानामभयंकर्तात्राताभवभवार्णवात्
द्वैमातुरकृपासिंधोषाण्मातुराग्रजप्रभो वरदत्वंवरंदेहिवांछितंवांछितार्थद गृहाणार्घ्यमिदंदेवसर्वदेवनमस्कृत
अनेनफलदानेनफलदोस्तुसदाममेति विश्वेश्वरायवरदायसुरप्रियायलंबोदरायसकलायजगद्धिताय नागाननाय
श्रुतियज्ञविभूषितायगौरीसुतायगणनाथनमोनमस्ते भक्तार्तिनाशनपरायगणेश्वरायसर्वेश्वरायशुभदायसुरेश्वराय
विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते २ विघ्नराजनमस्तेस्तुउमापुत्राघनाशन तद्वि
धकृतंतेस्तुमयाभक्त्याप्रपूजनं त्वांविघ्नशत्रुदलनेतिचसुंदरेतिभक्तप्रियेतिसुखदेतिफलप्रदेति विद्याप्रदेत्यघहरे
तिचयेस्तुवंतितेभ्यो गणेशवरदोभवनित्यमेव तेनतुष्टोममाप्याशुसर्वान्कामान्प्रपूरय विघ्नान्नाशयमेसर्वान्दुग्र
हादिभिरागतान् त्वत्प्रसादेनकार्याणिसर्वाणीहकरोम्यहं शत्रूणांबुद्धिनाशार्थंमित्राणामुदयायच नमस्तेब्रह्मरूपा
यविष्णुरूपायतेनमः विश्वरूपस्वरूपायनमस्तेरुद्ररूपिणे भक्तिप्रियायदेवायनमस्तुभ्यंविनायक लंबोदरनमस्ते
स्तुसततंमोदकप्रिय अविघ्नंकुरुमेदेवसर्वकार्येषुसर्वदेतिप्रार्थयेत् ततोमहीद्यौः पृथिवीचनइमंयज्ञंमिमिक्षतां पि
पृतांनोभरीमभिरितिभूमिंस्पृष्ट्वाओषधयः संवदंतेसोमेनसहराज्ञा यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसीति

यवान्निक्षिप्य आकलशेपुधावंतिपवित्रेपरिपिच्यतेउक्थैर्यज्ञेषुवर्द्धतेइतिकलशंसंस्थाप्य इमंमेगंगेयमुने सरस्वति
शतद्रुस्तोमंसचतापरुष्ण्या असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमयेतिजलेनापूर्य गंधद्वारांदुराध
र्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियमिति गंधांनिक्षिप्य याओषधीःपूर्वाजातादेवेभ्य
स्त्रियुगंपुरा मनैनुबभ्रुणामहशतंधामानिसप्तचेतिसर्वौषधीः कांडात्कांडात्प्ररोहंतीपुरुषःपुरुषस्परि एवानोदूर्वे
प्रतनुसहस्रेणशतेनचेतिदूर्वाः अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता गोभाजइत्किलासथयत्सनवथपूरुषमिति
पंचपल्लवान् स्योनापृथिवीनोभवानृक्षरानिवेशनी यच्छानःशर्मसप्रथाइतिसप्तमृदः याःफलिनीर्याअफ
लाअपुष्पायाश्चपुष्पिणीः बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसइतिफलं सहिरत्नानिदाशुषेसुवातिसविता
भगः तंभागंचित्रमीमहेइतिपंचरत्नानि हिरण्यरूपःसहिरण्यसंदृगपान्नपात्सेदुहिरण्यवर्णः हिरण्ययात्प
रियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मैइतिहिरण्यंनिक्षिप्य युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः
तंधीरासःकवयउन्नयंतिसाध्योमनसादेवयंतइतिवस्त्रेणावेष्ट्य पूर्णादर्विपरापतसुपूर्णापुनरापत वस्नेवविक्री
णावहाइषमूर्जंशतक्रतोइतिपूर्णपात्रंनिधाय तत्रवरुणंसंस्थाप्य उतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेय
जमानोहविर्भिः अहेडमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीरितिवरुणंसंपूज्य पुष्पांजलिंदद्यात् क
लशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः कुक्षौतुसागराःसर्वेसप्तद्वीपा
वसुंधरा ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः अत्रगायत्रीसावित्रीशां
तिःपुष्टिकरीतथा आयांतुयजमानस्यदुरितक्षयकारकाः सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतु
यजमानस्यदुरितक्षयकारकाः ॥ इतिकलशंप्रार्थयेत् इतिऋग्वेदिनांकलशस्थापनविधिः अनेनैवप्रकारेण

चतुर्ष्वपिवेदिकोणेषुकलशचतुष्टयंस्थापयेत् अथकात्यायनानांकलशस्थापनविधिर्लिख्यते महीद्यौरिति भू
मिंस्पृष्ट्वा याओषधीरित्यनेन धान्यमसीत्यनेन व्रा यवान्प्रकिरेत धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वा
व्यानायत्वा आजिघ्रकलशमितिकलशंसंस्थापयेत् आजिघ्रकलशमह्यात्वाविशंत्विंदवः पुनरुर्जानिवर्त्तस्वसा
नः सहस्रंधुक्ष्वोरुधाराप्यस्वतीपुनर्माविशताद्रयिः वरुणस्योत्तंभनमसीतिजलेनपूरयेत् वरुणस्योत्तंभनमसि
वरुणस्यस्कंभसर्जनीस्थोवरुणस्यऋतसदन्यसिवरुणस्यऋतसदनमसि वरुणस्यऋतसदनमासीद अश्वत्थेवइति
पंचपल्लवान् याओषधीरिति सर्वौषधीर्निक्षिपेत् कांडादिति दूर्वांनिक्षिपेत् स्योनापृथिवीतिसप्तमृदोनिक्षिपेत् परि
वाजपतिरिति पंच रत्नानि परिवाजपतिः कविरग्निर्हव्यान्याक्रमीत् दधद्रत्नानि दाशुषे युवा
सवासाइति सूत्रेण वेष्टयेत् युवासवासाः परिवीत आगात्सउश्रेयान्भवति जायमानः तंधीरासः कवय
उन्नयंतिसाध्योमनसादेवयंतः याः फलिनीरितिफलं हिरण्यगर्भेतिहिरण्यं हिरण्यगर्भःसमवर्तताग्रे भू
तस्यजातःपतिरेकआसीत् सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम पूर्णादर्वी तंत्वायामीतिशुनःशे
फऋषिःत्रिष्टुप्छंदःवरुणोदेवतावरुणावाहनेविनियोगः तंत्वायामिअस्मिन्कलशेवरुणइहागच्छइहतिष्ठ कलशस्य
मुखेविष्णुरित्यादिदुरितक्षयकारकाइत्यंतंपठित्वा देवदानवसंवादेमथ्यमानेमहोदधौ उत्पन्नोऽसितदाकुंभविधृतो
विष्णुनास्वयं त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः शिवःस्वयंत्व
मेवासिविष्णुस्त्वंचप्रजापतिः आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदः त्व
त्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदेतिपठेत् अथस्वस्तिवाचनं ब्राह्मण्यंपुण्य
महर्यच्चसृष्ट्युत्पादनकारकं वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवंतुनः अस्यकर्मणः पुण्याहंभवंतोब्रुवंतु इतित्रिः

पुनंतुमेतिपठित्वा पृथिव्यामुद्धृतायांतुयत्कल्याणंपुराकृतं ऋषिभिःसिद्धगंधर्वैस्तत्कल्याणंब्रुवंतुनः अस्यकर्मणः कल्याणंभवंतोब्रुवंत्विति त्रिः यथेमांवाचंकल्याणीमित्यादि सागरस्ययथाऋद्धिर्महालक्ष्म्यादिभिःकृता संपूर्णा सुप्रभावाचतांतामृद्धिंब्रुवंतुनः ऋद्धिंभवंतोब्रुवंत्वित्युक्त्वा सत्रस्यऋद्धिरस्यगन्मज्योतिरमृताअभूमादिवंपृथिव्या अध्यारुहामाविदामदेवान्स्वर्ज्योतिः स्वस्तिर्याऽविनाशाख्यापुण्यकल्याणवृद्धिदा विनायकप्रियानित्यंतांतांस्वस्तिं ब्रुवंतुनः स्वस्तिभवंतोब्रुवंत्वित्युक्त्वा समुद्रमथनाज्जाताजगदानंदकारिका हरिप्रियाचमांगल्यातांश्रियंप्रब्रुवंतुनः श्रीश्चतेलक्ष्मीश्चतेपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तं इष्णन्निषाणामुम्मइषाणेतिपठेत् इतिकातीयानांस्वस्तिवाचनं ॥ अपसर्पंतुतेभूतायेभूताभुविसंस्थिताः येभूताविघ्नकर्तारस्तेगच्छंतुशिवाज्ञयेति सर्वदिक्षुसर्षपान्विकीर्य सूर्यःसोमश्चकालश्चसंध्येभूतान्यहःक्षपाः पवनोदिक्पतिर्भूमिराकाशंसचराचराः ब्राह्मंशासनमास्थायकल्पध्वमिहसन्निधिं इत्यनेनभूमिं स्पृष्ट्वा दिग्बंधनंकुर्यात् पंचगव्येन भूमिं प्रोक्षयेत् ततोभूतशुद्धिप्राणप्रतिष्ठामातृकान्यासान्कृत्वा स्वेष्टदेवतामागममार्गेण मत्स्यपुराणोक्तमार्गेण वा ध्यायेत् तद्यथा जटाजूटसमायुक्तामर्द्धेन्दुकृतलक्षणां लोचनत्रयसंयुक्तांपद्मेंदुसदृशाननाम् अतसीपुष्पवर्णाभांसुप्रतिष्ठांसुलोचनां नवयौवनसंपन्नांसर्वाभरणभूषितां सुचारुवदनांतद्वत्पीनोन्नतपयोधरां त्रिभंगस्थानसंस्थानांमहिषासुरमर्दिनीं त्रिशूलंदक्षिणेदध्यात्खड्गंचक्रंक्रमादधः तीक्ष्णबाणंतथाशक्तिंवामतोपि निबोधत खेटकंपूर्णचापंचपाशमंकुशमूर्ध्वगं घंटांवापरशुंवापिवामतःसन्निवेशयेत् अधस्तान्महिषंतद्वद्विशिरस्कंप्रदर्शयेत् शिरश्छेदोद्भवंतद्वद्दानवंखड्गपाणिनं हृदिशूलेननिर्भिन्नंतिर्यग्यंत्रविभूषितं रक्तरक्तीकृतांगंचरक्तविस्फारितेक्षणं वेष्टितंनागपाशेनभ्रुकुटीभीषणाननं सपाशवामहस्तेनधृतकेशंचदुर्गया वमद्रुधिरवक्त्रंचदेव्याः

सिंहंप्रदर्शयेत् देव्यास्तुदक्षिणंपादंसमंसिंहोपरिस्थितं किंचिदूर्ध्वंतथावाममंगुष्ठमहिषोपरि स्तूयमानंचतद्रूप
ममरैः सन्निवेशयेदिति एवंध्यात्वा अर्घ्यस्थापनंकुर्यात् ततोनूतनमूर्तिः स्वर्णादिमयीचेत्तदा अग्न्युत्तारणादि
कंकुर्यात् तत्रक्रमः स्वर्णादिशलाकयाप्रतिमांमधुसर्पिर्भ्यामभ्यज्य इमंमेगंगेइतिपुरुषसूक्तेनचाभ्युक्ष्य पंचगव्ये
नप्रोक्ष्य अग्निसूक्तेनप्रतिमायांजलधाराकुर्यात् तच्चाग्निसूक्तं ऋग्वेदिनां अग्निपदरहितामंत्राः अग्निः सप्तिमिति
सप्तर्चस्य सप्तिर्वाजंभरऋषिरग्निर्देवता त्रिष्टुप्छंदोऽग्न्युत्तारणेविनियोगः ॐसप्तिंवाजंभरंददातिवीरंश्रुत्यंकर्म
निष्ठं रोदसीविचरत्समजन्नारींवीरकुक्षिंपुरंधिं १ अप्तसः समिदस्तुभद्रामहीरोदसीआविवेश एकंचोदयत्सम
त्सुवृत्राणिदयतेपुरूणि २ हत्यंजरतः कर्णमावांअद्भ्योनिरदहज्जरूथं अत्रिंघर्मउरुष्यदंतः नृमेधंप्रजयासृजत्सम्
३ वाद्रविणंवीरपेशाः ऋषिंयः सहस्रासनोतिदिविहव्यमाततानधामानिभृतापुरुत्रा ४ उक्थैर्ऋषयोविहूयंते
नरोयामनवाधितासः वयोअंतरिक्षेयजंतः सहस्रापरिपातिगोनाम् ५ विपईळतेमानुषीर्यां मनुष्योनहुषोवि
जाताः गांधर्वींपथ्यामृतिर्गव्यूतिर्घृताअनिषाता ६ ब्रह्मऋभवस्ततक्षुमहामवोचामासुवृक्तिं प्रावजारितारयवि
ष्ठमहिद्रविणमायजस्व ७ इत्यग्निपदरहितंसूक्तं १ अथाग्निपदसहितंऋग्वेदिनामग्निसूक्तं अग्निंसप्तिंवाजंभरं
ददात्यग्निर्वीरंश्रुत्यंकर्मनिष्ठं अग्नीरोदसी विचरत्समंजन्नग्निर्नारींवीरकुक्षिंपुरंधिं १ अग्नेरप्तसः समिदस्तुभद्रा
अग्निर्महीरोदसीआविवेश अग्निरेकंचोदयत्समत्स्वग्निर्वृत्राणिदयतेपुरूणि २ अग्निर्हत्यंजरतःकर्णमावाग्नि
रद्भ्योनिरदहज्जरूथं अग्निरत्रिंघर्मउरुष्यदंतरग्निर्नृमेधंप्रजयासृजत्सं ३ अग्निर्दाद्रविणंवीरपेशाअग्निर्ऋषिंयःसहस्रा
सनोतिअग्निर्दिविहव्यमाततानाग्नेर्धामानिविभृतापुरुत्रा ४ अग्निमुक्थैर्ऋषयोविहूयंतेग्निनरोयामनवाधितासः अ
ग्निंवयोअंतरिक्षेयजंतोग्निः सहस्रापरियातिगोनाम् ५ अग्निंविशइळतेमानुषीर्या अग्निंमनुष्योनहुषोविजाताः अग्नि

गांधर्वीपथ्यामृतस्याग्नेर्गव्यूतिर्घृतआनिषाता ६ अग्नयब्रह्मऋभवस्ततक्षुरग्निमहामवोचामासुवृक्तिं अग्नेप्रावज
रितारंयविष्ठाग्नेमहिद्रविणमायजस्व ७ अत्रचपूर्वंअग्निशब्दराहितान्मंत्रान्सकृत्पठित्वाअग्निपदसहितान्मंत्रान्वार
द्वयंपठेत् अथकातीयानांअग्न्युत्तारणेसूक्तंनामअस्याजरासोदमामरित्राअर्चद्धूमासोअग्नयः पावकाः श्वितीचयः
श्वात्रासोभुरण्यवोवनर्षदोवायवोनसोमाः १ हरयाधूमकेतवोवातजूताउपद्यवियतंतेपृथगग्नयः २ यजानोमित्रा
वरुणायजादेवां ऋतंबृहत् अग्नेयक्षिस्वन्दमम् ३ युक्ष्वाहिदेवहूतमां अश्वां अग्नेरथीरिव निहूतापूर्व्यः
सदः ४ द्वेविरूपेचरतः स्वर्थे अन्यान्यावत्समुपधापयेते हरीरन्यस्यांभवतिस्वधावाञ्छुक्रो अन्यस्यांददृशेसुवर्चाः
५ अयमिहप्रथमोधायिधातृभिर्होतायजिष्ठोअध्वरेष्वीड्यः यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ६
त्रीणिशतात्रीसहस्राण्यग्निंत्रिंशच्चदेवानवचासपर्यन् औक्षन्घृतैरस्तृणन्बर्हिरस्माआदिद्धोतारन्यसादयंत ७
मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निम् कविंसम्राजमतिथिंजनानामासन्नापात्रञ्जनयंतदेवाः ८
अग्निर्वृत्राणिजंघनद्द्रविणस्युर्विपन्यया समिद्धःशुक्रआहुतः ९ विश्वेभिःसोम्यंमध्वग्नइंद्रेणवायुना पिबामित्रस्यधा
मभिः १० आयदिषेनृपतितेजआनट्शुचिरेतोनिषिक्तंद्यौरभीके अग्निःशर्धमनवद्यंयुवानंस्वाध्यंजनयत्सूदयच्च
११ अग्नेशर्धमहतेसौभगायतवद्युम्नान्युत्तमानिसंतुसंजास्पत्यंसुयममाकृणुष्वशत्रूयतामभितिष्ठामहांसि १२
हिमंद्रतममर्कशोकैर्ववृमहेमहिनःश्रोष्यग्ने इंद्रनत्वाशवसादेवतावायुंपृणन्तिराधसानृतमाः १३ त्वेअग्नेस्वाहुतप्रि
यासःसंतुसूरयःयंतारोयेमघवानोजनानामूर्वांदयंतगोनाम् १४ श्रुधिश्रुत्कर्णवह्निभिर्देवैरग्नेसयावभिः आसिदं
तुबर्हिषिमित्रोअर्यमाप्रातर्यावाणोअध्वरं १५ विश्वेषामदितिर्यज्ञियानांविश्वेषामतिथिर्मानुषाणां अग्निर्देवानामव
आवृणानःसुमृडीकोभवतुजातवेदाः १६ महोअग्नेःसमिधानस्यशर्मण्यनागामित्रेवरुणेस्वस्तये श्रेष्ठस्यामसवितुः

सर्वामनितदेवानामवोअयावृणीमहे १७ इतिकातीयानां कलशस्थापनाविधिः हिमस्यत्वाजरायुणाग्ने रिण्यथामसि पावकोअस्मभ्यंᳬशिवोभव उपज्मन्नुपवेतसेऽवतरंनदीष्वा अग्नेपित्तमपामसिमंडकिताभिरा गहिसेमन्नोयज्ञंपावकवर्णंᳬशिवंकृधि अपामिदंन्ययनउसमुद्रस्यनिवेशनं अन्यांस्तेअस्मत्तपंतुहेतयः पाव कोअस्मभ्यंᳬशिवोभव अग्नेपावकरोचिषामंद्रयादेवजिह्वयाआदेवान्वाक्षिजक्षिचसनःपावकोअस्मभ्यंᳬशिवोभव अग्नेपावकरोचिषामंद्रयादेवजिह्वयाआदेवान्वाक्षिजक्षिच सनःपावकदीदिवोग्नेदेवांइहावह उपयज्ञᳬंहविश्चनः पावकयायश्चितयंत्याकृपाक्षामन्नुरुच उरवसोनभानुना तूर्णंनयामन्येतमस्यरूरणआयोघृणेनतत्नुषाणोअज रनमस्तेहरसेशोचिषेनमस्तेअस्त्वर्चिषे अन्यांस्तेअस्मत्तपंतुहेतयः पावकोअस्मभ्यंᳬशिवोभव अग्निस्तिग्मे नशोचिषायासद्विश्वंन्यत्रिणंअग्निर्नोवननेरयिं इतिवाजसनेयिनामाग्निसूक्तं लेख्यामूर्त्तिश्चेत्लेख्यायांनाभिषेकः स्यादित्यादिवचनात् अभिषेकादिकंतत्रनकर्त्तव्यं किंतु तदग्रे पात्रंस्थापयित्वा तस्मिन्नेवकर्त्तव्यं ततःपंचगव्य पंचामृतादिनामूर्तिंसंस्थाप्य पुरुषसूक्तेनस्नापयित्वा पूज्यपूजकयोर्मध्येप्राचीप्रोक्ताविचक्षणैरितिप्राचींप्रकल्प्य मंडूकादिपीठपूजांकृत्वा सिंहासनंसंपूज्य ईशानादिक्रमतः विष्णुहरैकदंतरवीन्फलेषुचतुर्षुकलशेषुवा संपूज्य वेदि मध्यस्थकलशेस्वर्णादिमूर्त्तौदुर्गांपूजयेत् कलशएव देवीपूजनंचेत् मूर्त्तिस्थापनंसिंहासनोपरिकार्यं अत्रचतुर्भिरा यतनैःसहदुर्गापूजनं गौडानुसारेण लिखितं अत्रप्रमाणत्वेनकालिकापुराणवचनंतैरुपन्यस्तं शिवंभास्करम ग्निंचकेशवंकौशिकीमपि मनसानर्चयन्यातिदेवलोकादधोगतिमिति अत्राग्निशब्देनगणेशइतिशिवार्चनचंद्रिका यांपाठः कार्त्तिकेयोसौ कार्त्तिकेयोविनायकइतिभविष्योत्तरवचनात् यत्तु गौडैरग्निपूजनंपार्थक्येनक्रियते तन्मृ ग्यं एतच्च ब्राह्मणादिभिर्यथाधिकारंवैदिकादिकार्यं तदुक्तंमंत्रराजानुष्ठानविधाने श्रौतार्चनंतुविप्राणांविशेषे

णभवेत्तदा स्मार्त्तागमार्चनंक्षत्रैवैश्यैः केवलमागममिति एवंपूर्वोक्तक्रमेण चतुरायतनपूजानंतरं जटाजूटेत्यादि ध्यात्वाहस्तस्थपुष्पांजलौ अथार्कतोवाहृदयारविंदादावाहयेदितिवचनात् सूर्यमंडलात्हृदयारविंदाद्वा देवीमाग तांविभाव्य पुष्पाणिकलशेमूर्त्यांवाप्रक्षिपेत् ततश्चात्मसंस्थामिति एहिदुर्गेमहाभागेरक्षार्थंममसर्वदा आवाहया म्यहंदेविसर्वकामार्थसिद्धये अस्यांमूर्त्तौसमागच्छस्थितिंमत्कृपयाकुरु रक्षांकुरुसदाभद्रेविश्वेश्वरिनमोस्तुतइति आ गच्छवरदेदेविदैत्यदर्पनिषूदिनि पूजांगृहाणसुमुखिनमस्तेशंकरप्रिये सर्वतीर्थमयंवारिसर्वदेवसमन्वितं इमंघटंस मागच्छतिष्ठदेवगणैःसह दुर्गेदेविसमागच्छसान्निध्यमिहकल्पयवलिंपूजांगृहाणत्वमष्टाभिःशक्तिभिःसहेत्यावाहन मंत्रेणावाहयेत् मूर्त्तिपूजनेतुसर्वतीर्थमयमितिश्लोकोनपठनीयः पूजातुजयंतीमंत्रेणवाकार्या तदुक्तंदेवीपुराणे कुर्या देव्यास्तुमंत्रेणपूजांक्षीरघृतादिभिरिति जयंतीमंगलाकालीभद्रकालीकपालिनी दुर्गाक्षमाशिवाधात्रीस्वाहास्वधा नमोस्तुते अनेनैवतुमंत्रेणजपहोमौतुकारयेदिति दुर्गामंत्रोवैदिकआगमिकोवावैदिकोजातवेदसइत्यादि आगमि कस्तुओंदुर्गेदुर्गेरक्षणिस्वाहेतिनवाक्षरः तल्लिंगैःपूजयेन्नमेदितिसाधारणवाक्यात् स्कांदेतु दुर्गेमदुस्तरेकार्येभवदुः खविनाशिनी पूजयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीं अनेनैवतुमंत्रेणजपहोमादिकारयेदित्युक्तं पूजाचषोडशोप चारैःछत्रचामरादिभिर्यथाविभवंकार्या पूजायांवादित्राणामभावेघंटावादनंकार्यं तदुक्तं वादित्राणामभावेतुपूजाका लेचसर्वदा घंटाशब्दोनरैःकार्यःसर्ववाद्यमयोयतःपाद्यादौविशेषोदेवीपुराणे पद्मश्यामाकदूर्वाचविष्णुक्रांतादिरिष्य ते गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपाः तत्रैवं विल्वरक्ताक्षतैःपुष्पैर्दधिदूर्वाकुशैस्तिलैः सामान्यःसर्वदेवानामर्घ्यो यंपरिकीर्तितः पुष्पं सारसुधानिधौ इक्षुर्मधुघृतंचैवपयोदधिसदैवतु प्रस्थप्रमाणंवाग्राह्यंमधुपर्कइहोच्यते आचमनेतु जातीलवंगकंकोलादिद्रव्याणिदेयानि पंचामृते स्कांदे क्षीराद्दशगुणंदध्नोघृतंचैवदशोत्तरं घृताद्दश

गुणंक्षौद्रंक्षौद्राचैवेक्षुजंतथेति पूजानंतरंमाषभक्तवलिं कूष्मांडादिवलिंवानिवेदयेत् ततोनीराजनंकृत्वायथाशक्ति वैदिकमागमिकंवादुर्गामंत्रंजपेत् दुर्गाग्रतोजपेन्मंत्रमेकचित्तस्समाहितइतिदेवीपुराणात् ततश्चंडीपाठंकृत्वा देवींप्रार्थयेत् महिषघ्निमहामायेचामुंडेमुंडमालिनि द्रव्यमारोग्यविजयंदेहिदेविनमःसदा भूतप्रेतपिशाचेभ्योर क्षोभ्यश्चमहेश्वरि देवेभ्योमानुषेभ्यश्चभयेभ्योरक्षमांसदा सर्वमंगलमांगल्येशिवेसर्वार्थसाधके शरण्येत्र्यंबके गौरिनारायणिनमोस्तुते रूपंदेहियशोदेहिभाग्यंभगवतिदेहिमे पुत्रान्देहिधनंदेहिसर्वान्कामान्प्रदेहिनइति ततः शिवरहस्योक्तांदुर्गास्तुतिंपठेन्नरःदुर्गांशिवांशांतिकरींब्रह्माणींब्रह्मणःप्रियां सर्वलोकप्रणेत्रींचप्रणमामिसदाशिवां मंगलांशोभनांशुद्धांनिःकलांपरमांकलां विश्वेश्वरींविश्वमातांचंडिकांप्रणमाम्यहं सर्वदेवमयींदेवींसर्वरोग भयापहां ब्रह्मेशविष्णुनमितांप्रणमामिसदाउमां विंध्यस्थांविंध्यनिलयांदिव्यस्थाननिवासिनीं योगिनींयो गमातांचचंडिकांप्रणमाम्यहं ईशानमातरंदेवीमीश्वरीमीश्वरप्रियां प्रणतोस्मिसदादुर्गांसंसारार्णवतारिणीं यइ दंपठतिस्तोत्रंशृणुयाद्वापियोनरः समुक्तःसर्वपापैस्तुमोदतेदुर्गयासहेति ततःपुष्पांजलिंदद्यात् इतिदुर्गापूजा विधिः विस्तृतपूजायामशक्तंप्रति संक्षिप्तपूजाविधिः कालिकापुराणे सम्यक्कल्पोदितांपूजांयदिकर्तुंनशक्नुयात् उपचारांस्तथादातुंपंचैतान्वितरेत्तदा गंधंपुष्पंचधूपंचदीपंनैवेद्यमेवच अभावेतोयपुष्पाभ्यांतदभावेतुभक्तितः सं क्षेपपूजाकथितेतिस्मृतिकौस्तुभे अत्राखंडदीपदानमुक्तं नारदीये अखंडदीपकंदेव्याः प्रीतयेनवरात्रके प्रज्वालयेदहोरात्रमेकचित्तोधृतव्रतइति अथचंडीपाठविधिः देवीपुराणे माहात्म्यंभगवत्यास्तुपुराणादिषु कीर्त्तितं पठेच्चशृणुयाच्चापि सर्वकामसमृद्धये श्रावणंच ब्राह्मणैनैवकारणीयं ब्राह्मणंवाचकंविद्या न्नान्यवर्णजमादरादिति भविष्योक्तेः तथा एकोत्तराभिवृद्ध्यातु नवमींयावदेवहि चंडीपाठं जपेच्चैव

जापयेद्वाविधानत इति वाराहीतंत्रे संकल्पितस्तोत्रपाठे संख्यांकृत्वाजपेत् सुधीः आवृत्तिसंख्या भेदेनफलभेदश्च तत्रैवोक्तः चंडीपाठफलंदेवि शृणुष्वगदतोमम एकावृत्त्यादिपाठानां यथावत्कथयामिते संकल्पपूर्वसंपूज्यन्यस्यांगेषुमनून्सकृत् पाठाद्बलिप्रदानाच्चसिद्धिमाप्नोतिमानवः उपसर्गोपशांत्यर्थंत्रिरावृत्तंपठे न्नरः ग्रहोपशांतौकर्त्तव्यंपंचावृत्तवरानने महाभयेसमुत्पन्नेसप्तावृत्तंसमुन्नयेत् नवावृत्ताद्भवेच्छांतिर्वाजपेयफलंल भेत् राजवश्यायभूतौचरुद्रावृत्तमुदीरयेत् अर्कावृत्तेः काम्यसिद्धिर्वैरिहानिश्चजायते मन्वावृत्तादिपुर्वश्यं तथास्त्री वश्यतामियात् सौख्यंपंचदशावृत्त्याश्रियमाप्नोतिमानवः कलावृत्त्यापुत्रपौत्रधनधान्यागमंविदुः राज्ञांभीतिविमो क्षायवैरस्योच्चाटनायच कुर्यात्सप्तदशावृत्तंतथाष्टादशकंप्रिये महाग्रहविमोक्षायविंशावृत्तंपठेत्सुधीः पंचविंशावर्त्त नात्तुभवेद्बंधविमोक्षणं संकटेसमनुप्राप्तेदुश्चिकित्साभयेतथा जातिध्वंसेकुलोच्छेदेआयुषोनाशआगते वैरिवृद्धौव्या धिवृद्धौधननाशेतथाक्षये तथैवत्रिविधोत्पातेतथाचैवातिपातके कुर्याद्यत्नाच्छतावृत्तंततः संपद्यतेशुभं आयुर्वृद्धिः श तावृत्ताद्राज्यवृद्धिस्तथापरा मनसाचिंतितंदेविसिद्ध्येदष्टोत्तराच्छतात् शताश्वमेधयज्ञानांफलमाप्नोतिसुव्रते सहस्रा वर्त्तनाल्लक्ष्मीरावृणोतिस्वयंस्थिरा भुक्त्वामनोरथान्सर्वान्नरोमोक्षमवाप्नुयात् यथाश्वमेधःक्रतुराट्देवानांचय थाहरिः स्तवानामपिसर्वेषांतथासप्तशतीस्तवः अथवाबहुनोक्तेनकिमेतेनवरानने चंड्याःशतावृत्तपाठात् सर्वाःसिद्ध्यंतिसिद्धयइति सचैवंगुणयुक्तः विस्पष्टमद्रुतंशांतंस्पष्टाक्षरपदंतथा कलस्वरसमायुक्तंरसभावसम न्वितं बुध्यमानःसदाह्यर्थंग्रंथार्थंकृत्स्नशोनृप ब्राह्मणादिषुपाठार्थंग्रंथार्थंचार्पयेन्नृपः यएवंवाचयेद्ब्रह्मन्सविप्रो व्यासउच्यतइति स्तोत्रपाठश्चनारायणंनमस्कृत्यकर्त्तव्यः नारायणंनमस्कृत्यनरंचैवनरोत्तमं देवींसरस्वतीं चैवततोजयमुदीरयेदितिवचनात् जयशब्दार्थश्चभविष्ये अष्टादशपुराणानिरामस्यचरितंतथा विष्णुधर्मादि

शास्त्राणिशिवधर्माश्चभारत वेदार्थःकृत्स्नशोयत्रतन्महाभारतंस्मृतं शैवाश्चधर्माराजेंद्रमानवोक्तामहीपते जयेति
नामएतेषांप्रवदंतिमनीषिणइति पाठप्रकारश्च मत्स्यसूक्ते प्रणवंचादितोजप्त्वास्तोत्रंवासंहितांपठेत् अंतेचप्रण
वंदद्यादित्युवाचादिपूरुषः सर्वत्रपाठेविज्ञेयोह्यन्यथाविफलंभवेत् शुद्धेनानन्यचित्तेनपठितव्यंप्रयत्नतः नका
र्यासक्तमनसाकार्यंस्तोत्रस्यवाचनं आधारेस्थापयित्वातुपुस्तकंप्रजपेत्सुधीः हस्तसंस्थापनादेवयस्मादल्पफलंभ
वेत् स्वयंचलिखितंयत्तुयतिनालिखितंचयत् अब्राह्मणेनलिखितंतच्चापिविफलंभवेत् ऋषिच्छंदादिकंन्यस्यप
ठेत्स्तोत्रंविचक्षणः स्तोत्रेनदृश्यतेयत्रप्रणवन्यासमाचरेत् संकल्पितस्तोत्रपाठसंख्यांकृत्वापठेत्सुधीः अध्यायं
प्राप्यविरमेन्नतुमध्येकदाचन कृतेविरामेमध्येतुअध्यायादिंपठेत्पुनरिति अथप्रसंगात्शतचंड्यादिविधानंलि
ख्यते रुद्रयामले शतचंडीविधानंचप्रोच्यमानंशृणुष्वतत् सर्वोपद्रवनाशार्थंशतचंडींसमाचरेत् षोडशस्तंभ
संयुक्तंमंडपंपल्लवोज्ज्वलं वसुकोणयुतांवेदींमध्येकुर्यात्त्रिभागतः पक्वेष्टकाचितांरम्यामुच्छ्रयेहस्तसंमितां पंचव
र्णरजोभिश्चकुर्यान्मंडलकंशुभं पंचवर्णवितानंचकिंकिणीजालमंडितं आचार्येणसमंविप्रान्वरयेद्दशसुव्रतान्
ऐशान्यांस्थापयेत्कुंभंपूर्वोक्तविधिनाहरे वारुण्यांचप्रकर्तव्यंकुंडंलक्षणलक्षितं मूर्त्तिंदेव्याः प्रकुर्वीतसुवर्णस्यप
लेनवै तदर्द्धेनतदर्द्धेनतदर्द्धेनमहीपते अष्टादशभुजांदेवींकुर्यादष्टभुजामपि पट्टकूलयुगच्छन्नांवेदीमध्येनिधापयेत
वैकृतिरहस्ये आयुधान्यत्रवक्ष्यंतेदक्षिणाधः करक्रमात् अक्षमालाचकमलंबाणोसिः कुलिशंगदा चक्रंत्रिशू
लंपरशुःशंखोघंटाचपाशकः दंडशक्तिश्चर्मचापंपानपात्रंकमंडलुः अलंकृतभुजामेभिरायुधैःकमलासनां
तत्रैव दद्याच्चाष्टभुजांबाणमुसलेशूलचक्रभृत् शंखघंटालांगलंचकार्मुकंवसुधाधिप देवींसंपूज्यविधिवज्जपंकु
र्युर्दशद्विजाः शतमादौशतंचांतेजपेन्मंत्रनवार्णकं चंडीसप्तशतीमध्येसंपुटोयमुदाहृतः सच ॐऐंह्रींक्लींचामुंडायै

विधेइति एकद्वित्रीणिचत्वारिजपेद्दिनचतुष्टयं रूपाणिक्रमशस्तद्वत्पूजनादिकमाचरेत् पंचमेदिवसेप्रातर्होमंकुर्या
द्विधानतः गुडाज्यपायसंदूर्वांतिलाञ्छुक्लान्यवानपि चंडीपाठस्यहोमंतुप्रतिश्लोकंदशांशतः होमंकुर्याद्गुहादिभ्यः
समिदाज्यचरून्क्रमात् हुत्वापूर्णाहुतिंदद्याद्विप्रेभ्योदक्षिणांक्रमात् कपिलांगांनीलमणिंश्वेताश्वंछत्रचामरे अभि
षेकंततःकुर्युर्यजमानस्यऋत्विजः एवंकृतेऽमरेशानसर्वसिद्धिःप्रजायतइति इतिशतचंडीविधिः सहस्रचंडीविधि
वच्छृणुविष्णोमहामते राज्यध्वंसेमहोत्पातेजनमारेमहाभये राजमारेऽश्वमारेचपरचक्रभयेतथा इत्यादिविवि
धेदुःखेनृपरोगादिजेभये सहस्रचंडिकापाठंकुर्याद्वाकारयेत्तथा जापकास्तुशतंप्रोक्ताविंशद्धस्तश्चमंडपः भोज्याः
सहस्रंविप्रेंद्रागोशतंदक्षिणांदिशेत् गुरवेद्विगुणंदेयंशय्यादानंतथैवच धनंधान्यंचभूदानंश्वेताश्वंचमनोहरं पंच
निष्कमितामूर्तिःकर्त्तव्यावार्द्धमानतः अष्टादशभुजादेवीसर्वायुधविभूषिता अवारितान्नदातव्यंसहस्रंप्रत्यहंविभो
शतंवानियताहारः पयः पानेनवर्तयेत् एवंयश्चंडिकापाठंसहस्रंतुसमाचरेत् तस्यस्यात्कार्यसिद्धिस्तुनात्रका
र्याविचारणा इतिसहस्रचंडीविधिः अथकुमारीपूजनं तच्चप्रत्यहंयथाशक्तिएकद्व्यादिक्रमेणकार्यं तत्प्रकारश्च दे
वीपुराणे ब्रह्मोवाच नतथातुष्यतेशक्तिर्होमदानजपेनतु कुमारीभोजनेनात्रयथादेवीप्रसीदति अत्रनवरात्रे
पितरोवसवोरुद्राआदित्यागणलोकपाः सर्वेतेपूजितास्तेनकुमार्योयेनपूजिताः शुक्लाष्टमीचतुर्दश्योर्नवरात्रोविशेष
तः कृष्णपक्षेविशेषेणभोजयेत्तुकुमारिकाइति अन्यत्रापि प्रक्षाल्यपादौसर्वासांकुमारीणांचवासव सुलिप्तेभूतलेरम्ये
तंत्रतत्श्चासनेस्थिताः पूजयेद्गंधपुष्पैश्चस्रग्भिश्चापिमनोरमैः पूजयित्वाविधानेनभोजनंतास्सदापयेत् खंडलड्डुक
गुडसर्पिर्दधिक्षीरंसमाक्षिकं तासांदेयंकुमारीणांशनैर्भुंजापयेत्तुताः पानीयंयाचितंदेयमन्नंवायाचितंशुभं तास्तु
ष्टास्तुयदासर्वास्तदास्वाचमनंददेत् आचम्यचाक्षतान्दत्वात्वयाक्षंतव्यमित्युत दातुःशिरसिदातव्याःकन्यका

भिरथाक्षताः तेनापिप्रणिपातस्तुकर्तव्योभक्तिपूर्वकम् अनेनविधिनाशश्वद्देवीक्षिप्रंप्रसीदति ददातिविविधान्
कामान्मनोभीष्टान्सुराधिप राज्यंकृत्वाततःपश्चाद्देवलोकंचगच्छति कौस्तुभेतु एकांकन्यांभोजयित्वाऐश्वर्यं
लभतेनरः कन्याद्वयंभुक्तिमुक्तीत्रिवर्गफलदंत्रयं चतुष्टयंराज्यदंचसर्वकामफलप्रदं विद्याप्रदंपंचकंचषट्कंषट्कर्म
सिद्धिदं सप्तभिर्लभतेराज्यमष्टभिर्गुणसंपदः नवभिःपृथिवीशःस्यात्कुमारीभिश्चपूजनादित्युक्तं स्कांदे एकैका
पूजयेत्कन्यामेकवृद्ध्यातथैवच द्विगुणंत्रिगुणंवापिप्रत्येकंनवकंतरं नवभिर्लभतेभूमिमैश्वर्यंद्विगुणेनतु एकवृद्ध्या
लभेत्क्षेममेकैकेनश्रियंलभेत् एकवर्षातुयाकन्यापूजार्थंतांविवर्जयेत् गंधपुष्पफलादीनाप्रीतिस्तस्यानविद्य
ते द्विवर्षकन्यामारभ्यदशवर्षावधिक्रमात् तासांच क्रमेण कुमारिकात्रिमूर्त्तिः कल्याणीरोहिणीकालीचंडिकाशां
भवीदुर्गासुभद्रेतिनामान्युक्तानि स्कांदे कुमारिकाद्विवर्षातुत्रिवर्षातुत्रिमूर्त्तिनी चतुर्वर्षातुकल्याणी पंचवर्षातुरो
हिणी षड्वर्षातुभवेत्कालीसप्तवर्षातुचंडिका अष्टवर्षाशांभवीतुदुर्गातुनवभिर्मता आसांक्रमेणफलान्याहसएव दुः
खदारिद्र्यनाशायशत्रूणांनाशनायच आयुष्यबलवृद्ध्यर्थंकुमारींपूजयेन्नरः आयुष्कामस्त्रिमूर्त्तिंतुत्रिवर्गस्यफलाप्तये
अपमृत्युव्याधिपीडादुःखानामपनुत्तये सौख्यधान्यधनारोग्यपुत्रपौत्राभिवृद्धये कल्याणींपूजयेद्धीमान्नित्यं
कल्याणवृद्धये आरोग्यसुखकामस्तुलक्ष्मीकामस्तथैवच यशस्कामोनरोनित्यंरोहिणींपरिपूजयेत् विद्यार्थी
चजयार्थीचराज्यार्थीचविशेषतः शत्रूणांचविनाशार्थंकालिकांपूजयेन्नरः संग्रामेजयकामीचचंडिकांपरिपूजयेत्
दुःखदारिद्र्यनाशायनृपसंमोहनायच महापापविनाशायशांभवींचप्रपूजयेत् सबलोत्कटशत्रूणामुग्रसाधनक
र्मणि दुर्गांदुर्गार्त्तिनाशायपूजयेद्यत्नतोबुधः सौभाग्यधनधान्यादिवांछितार्थफलाप्तये सुभद्रांपूजयेन्मर्त्योदा
सीदासविवृद्धये पूजाप्रकारश्च तत्रैव प्रातःकालेविशेषेणकृत्वायंत्रंविशेषतः आवाहयेत्ततःकन्यांमंत्रेणानेन

भार्गव मंत्राक्षरमयींलक्ष्मींमातॄणांरूपधारिणीं नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहं आवाहनमंत्रः
तत्रसंपूजयेद्धीमान्मंत्रैरेभिः पृथक्पृथक् जगत्पूज्येसर्ववंद्येसर्वशक्तिस्वरूपिणि पूजांगृहाणकौमारिजगन्मात
र्नमोस्तुते कुमार्याः त्रिपुरांत्रिपुराधारांत्रिवर्गज्ञानरूपिणीं त्रैलोक्यवंदितांदेवींत्रिमूर्तिंपूजयाम्यहं त्रिमूर्तेः
कलात्मिकांकलातीतांकारुण्यहृदयांपरां कल्याणजननींनित्यंकल्याणींपूजयाम्यहं कल्याण्याः अणिमादिगु
णाधारामकाराद्यक्षरात्मिकां अनंतशक्तिकांलक्ष्मींरोहिणींपूजयाम्यहं रोहिण्याः कामचारींशुभांकांतां
कालचक्रस्वरूपिणीं कामदांकरुणोदारां कालींसंपूजयाम्यहं काल्याः श्रीमत्सुरासुराराध्य चरणांभो
रुहद्वयीं चराचरजगद्धात्रीं चंडिकांपूजयाम्यहम् चंडिकायाः सदानंदकरींशांतां सर्वदेवनम
स्कृतां सर्वभूतात्मिकांलक्ष्मीं शांभवींपूजयाम्यहं शांभव्याः दुर्गमेदुस्तरेकार्ये भवदुर्गविनाशिनीं
भक्ताभीष्टप्रदांनित्यं दुर्गामावाहयाम्यहम् दुर्गायाः सुंदरींस्वर्णवर्णाभां सुखसौभाग्यदायिनीं सुभद्र
जननींदेवीं सुभद्रांपूजयाम्यहं सुभद्रायाः एवमभ्यर्चनंकुर्यात्कुमारीणांप्रयत्नतः कंचुकैश्चैववस्त्रैश्च
गंधपुष्पाक्षतादिभिः नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः प्रत्यहंब्राह्मणभोजनं योगिनीभोजनंचोक्तं
नारदीये प्रत्यहंभोजयेद्विप्रान्कुमारीयोगिनीरपि हीनाधिकांगींकुष्ठादिविकारांकुकुलांतथा ग्रंथिस्फुटितग
र्भांगींरक्तपूयव्रणांकितां जात्यंधांकेकरींकाणांकुरूपांतनुरोमशां संत्यजेद्रोगिणींकन्यांदासीगर्भसमुद्भवां अ
रोगिणींसुपुष्टांगींसुरूपांव्रणवर्जितां एकवंशसमुद्भूतांकन्यांसम्यक्प्रपूजयेत् ब्राह्मणींसर्वकार्येषुजयार्थेनृपवंश
जां लाभार्थेवैश्यवंशोत्थांसुतार्थेशूद्रवंशजां दारुणेचांत्यजातीयांपूजयेद्विधिनानरइति क्वचिन्मंत्राक्षरमयीमि
ति सर्वासामेकएवमंत्रउक्तः यथोक्तालाभेतु देवीपुराणे विवाहानंतरंत्वासांकन्यात्वन्नोपगच्छति तावत्

संपूज्यतेकन्यायावत्पुष्पंनदृश्यते इतिकन्यापूजनं अत्रवेदपारायणमप्युक्तं रुद्रयामले एवंचतुर्वेदविदोविप्रान्वात्र
प्रसादयेत् तेषांचवरणंकार्यंवेदपारायणायवा इतिशिष्टाः अथ वेदपारायणविधिः तत्रादौब्रह्मादिपूजाविधिर्महार्णवे
तीर्थेदेवालयेगेहेप्रशस्तेसुपरिष्कृते कलशंविधिनातत्रवेदिमध्येन्यसेत्पुनः पंचाशद्भिःकुशैःकार्योब्रह्मापश्चान्मुखः
स्थितः स्नापितःस्थापितःकुंभेचतुर्बाहुश्चतुर्मुखः वत्सजान्वाकृतिंवेदमुत्तराग्रैःकुशैःकृतं ब्रह्मोपधानेदत्त्वातंततःस्व
स्त्ययनंपठेत् ब्रह्मयज्ञानमितिवागायत्र्यावाप्रपूजयेत् उपाध्यायंचसंपूज्ययथापाठंपठेत्ततः बौधायनःस्थंडिलंकल्प
यित्वाग्निमुपसमाधाय संपरिस्तीर्याज्येनैताभ्योदेवताभ्योजुहोति अग्नये सोमायेन्द्राय विश्वेभ्योदेवेभ्यऋषिभ्य
ऋग्भ्योयजुर्भ्यः सामभ्योऽथर्वभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्व
ऋषये सोमाय काण्वऋषये अग्नये काण्वऋषये विश्वेभ्योदेवेभ्यः काण्वऋषिभ्यः संहिताभ्योदेवताभ्यः
उपनिषद्भ्यो याज्ञिकाभ्यो देवताभ्य उपनिषद्भ्योवारुणीभ्यो देवताभ्य उपनिषद्भ्योहव्यवाहाय विश्वेभ्यो
देवेभ्यः स्वयंभुवे वारुणीभ्योऽनुमत्यै स्विष्टकृतेच पृथक्स्वाहाकारेण हुत्वा व्याहृतिभिश्चपुनः परि
षिंचति समाप्ते चैतायजुषातर्पयति एवमृग्वेदस्य काण्वऋष्यादि वर्जमास्विष्टकृतस्त्वेषां स्थाने
शतर्चिभ्योगृत्समदाय विश्वामित्राय वामदेवायात्रये भारद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथे
भ्यःक्षुद्रसूक्तेभ्योमहानाम्नीभ्यइति ततोवेदादिमारभ्य संततमधीयेतेत्याह भगवान् बौधायनः इतिवेदपाराय
णविधिः शिष्टाः पुराणादिपारायणमपि कुर्वंति अथबलिदानं तत्राश्वमेषच्छागमहिषस्यमांसानामुत्तरोत्त
रप्राशस्त्यंफलविशेषश्च बलिद्रव्याणि कालिकापुराणे पक्षिणःकच्छपाग्राहामत्स्यानवविधामृगाः महिषोगोधि
कागौरःछागोबभ्रुश्चसूकरः खड्गश्चकृष्णसारश्चगोधिकाशरभोहरिः शार्दूलश्चनरश्चैवस्वगात्ररुधिरंतथा श्रा

गारेगोधिकेतिग्राम्यस्त्वंज्ञाप्यते द्वितीयगोधाग्रहणमारण्याभिप्रायं क्षत्रियादिकंप्रति कृष्णसारनिषेधस्तत्रैव न
कृष्णसारंवितरेद्बलिंतुक्षत्रियादिकः प्रददत्कृष्णसारंतुब्रह्महत्यामवाप्नुयात् हयोष्ट्रावपिपशुस्थानेनियोक्तव्या
वितितिथितत्त्वे तच्चप्रत्यहंकार्यं तथाच देवीपुराणे बलिंचप्रत्यहंदद्यादोदनमांसमापवत् त्रिकालंपूजयेद्देवीं
जपस्तोत्रपरायणइति यत्तुकैश्चिदुक्तं होमोऽष्टम्यांनवम्यांवाकार्यः बलिदानमप्यष्टमीनवम्योरेवेति तत्तुच्छं
देवीपुराणे बलिंचप्रत्यहंदद्यादितिवाक्येन प्रतिदिनंतस्याभिधानात् होमोऽपिप्रत्यहंकार्यः पूर्वोक्तदेवीपुराण
वाक्ये जपहोमसमायुक्तइत्युक्ते पुनःपूजांतथाष्टम्यामित्यादिवचनंतु अष्टमीनवम्योर्विशेषपूजापरं कौस्तुभेप्ये
वमेव अत्रचच्छागादिबलिदानमग्नीषोमीयपशुहिंसान्यायेन धर्म्यमपि क्षत्रियादिविषयमेव ब्राह्मणस्यतु सा
त्त्विकीजपयज्ञाद्यैर्नैवेद्यैश्चनिरामिषैरितिवाक्योपात्तसात्त्विकपूजायामेवाधिकारात् तथैव भगवद्गीतादिषुप्रतिपादि
तत्वात् यदपिकालिकापुराणादिषु मद्यस्वगात्ररुधिरनिवेदनादिकमुक्तं तदपिब्राह्मणस्यनभवति नदद्याद्ब्राह्म
णोमद्यंतथादेव्यैकदाचन सिंहव्याघ्रनरान्दत्वाब्राह्मणोनरकंव्रजेत् इहापिस्यात्सहीनायुःसुखसौभाग्यवर्जितः
स्वियंनदद्यात्तुबलिंदत्वानरकमाप्नुयात् स्वगात्ररुधिरंदत्वाब्राह्मण्यादेवहीयते कालिकापुराणएवनिषेधात् ब्रा
ह्मणेनतु माषभक्तादिनाबलिदानंकार्यं तदुक्तं कालिकापुराणे माषकल्माषमासाद्यैर्देयोदिक्षुबलिर्निशि कूष्मां
डमिक्षुदंडश्चमद्यमासवमेवच एतेबलिसमाःप्रोक्तास्तृप्तौछागसमाःस्मृताः एतेष्वपिब्राह्मणस्यमद्यमांसव्यतिरि
क्तमेवभवति राजसीबलिदानाद्यैर्नैवेद्यैःसामिषैस्तथेति मांसबलिदानादेः राजसत्वाभिधानात् रुद्रयामलेऽपि
छागाभावेऽपिकूष्मांडंश्रीफलंवामनोहरं वस्त्रसंवेष्टितंकृत्वाछेदयेच्छुरिकादिना तथा ब्राह्मणेनसदादेयंकूष्मां
डंबलिकर्मणि श्रीफलंवासुराधीशच्छेदंनैवतुकारयेत् ब्राह्मणस्यच्छेदननिषेधाच्छेदस्यब्राह्मणातिरिक्तकर्तृकता

कृत्वाघृतमयंव्याघ्रंनरंसिंहंतथैवच अथवापूपविकृतंयवक्षोदमयंचवा घातयेच्चंद्रहासेनमंत्रेणसंस्कृतंनरः
कालिकापुराणे मायान्नेनबलिर्देयोब्राह्मणेनविजानता भुवनेशीपारिजातेऽपि अन्नव्यंजनपुष्पांबुबलिद्रव्य
मुदाहृतमिति अथबलिदानविधानं तत्रादौदेवीप्रीत्यर्थं बलिदानमहंकरिष्येइतिसंकल्पयेत् कालिकापुराणे उ
त्तराभिमुखोभूत्वाबलिंपूर्वमुखंतथा निरीक्ष्यसाधकःपश्चादिमंमंत्रमुदीरयेत् पशोत्वंबलिरूपेणममभाग्याद्दुपस्थि
तः प्रणमामिततःसर्वरूपिणंबलिरूपिणं मंत्ररत्नप्रकाशे पशुंस्नापयित्वासिंदूरतिलकंदत्त्वाऽस्त्रेणावलोकयेत्
मूलेनप्रोक्ष्यतीर्थमंत्रैःप्रोक्षयेत् तीर्थमंत्रावैदिकास्तांत्रिकाश्च अग्निःपशुरासीत्तेनायजंतसएतल्लोकमजयद्यस्मि
न्नग्निःसतेलोकोभविष्यतितंजेष्यसिपिबैताअपः १ वायुःपशुरासीत्तेनायजंतसएवतंलोकमजयद्यस्मिन्वायुः
सतेलोकोभविष्यतितंजेष्यसिपिबैताअपः २ सूर्यःपशुरासीत्तेनायजंतसएतल्लोकमजयद्यस्मिन्सूर्यः सतेलो
कोभविष्यतितंजेष्यसिपिबैताअपः ३ वाचंतेशुंधामिप्राणंतेशुंधामिचक्षुस्तेशुंधामिश्रोत्रंतेशुंधामिनाभिंतेशुंधा
मिमेढ्रंतेशुंधामिपायुंतेशुंधामिचरित्रांस्तेशुंधामि मनस्त आप्यायतां चक्षुस्तआप्यायतां देव्यैत्वाजुष्टमुपाकरोमि
वाराहीयमुनागंगाकरतोयासरस्वती कावेरीचंद्रभागाचासिंधुभैरवसागराः अजस्नानेसमायांतुयेचान्येनदसं
ज्ञकाःपशुपाशविनाशायहेमकूटस्थितायच परायपरमेष्ठिनेहुंकारायचमूर्त्तये एभिर्मंत्रैश्चसंप्रोक्ष्यवामेमंडलमालि
खेत् चंडेश्वरींयजेत्तत्रकुमारींपूजयेत्ततः तद्बलिंतत्रसंस्थाप्यप्रोक्षयेत्साधकोत्तमः हूंहूंपशून्हनहनहूं १ फट्इत्यभ्यु
क्षेत् रज्जुमादायमस्तकेपशुंबंधयेत् मेषाकारस्तंभमध्येपशुंबंधय २ सशृंगेसर्वावयवंपशुंबंधय २ ब्रह्मांडखंड
मध्येपशुंबंधय २ ओंहूंफट्इतिबद्ध्वापूजयेत् परमपशुरूपिणेनमःशिखायां रुधिरबंधनायनमःशिरसि चंडिकायैनमः
ललाटे सरस्वत्यैनमःमुखे चंद्रादित्याभ्यांनासिकायां अश्वनासिकायैकर्णयोः वैष्णव्यैजिह्वायां पद्मनाभायैउदरे

भैरव्येनाभो रुधिरोन्मत्तायैपादेषु ततःकर्णेजपेत् हिलि २ बहुरूपधरायैचंडदुर्गायैइमंपशुंस्वर्गेनियोजय २ मु
क्तिप्रदर्शय ५ ऱ्हींचंद्रमंडलाधिष्ठितविग्रहायैपशुरूपचंडिकायैपशुंप्रोक्षयामिस्वाहा कुशाक्षतजलान्यादायोत्सृ
जेत् कृतांजलिःपठेत् यज्ञार्थंपशवःसृष्टाःस्वयमेवस्वयंभुवा अतस्त्वांघातयिष्यामितस्माद्यज्ञेवधोऽवधः पशुरु
त्पादितोदेवैर्यज्ञार्थंचविधानतः इदानींत्वंमहोत्साहाच्छेत्तव्योसिमयापुनः अजोसित्वंपशुत्वेनयज्ञार्थंनिर्मितःपुरा
अतःसर्वेनिदानेनत्वांश्रीपूजांकरोम्यहं पशुमेमंमयादत्तमपशुत्वंप्रदेहिमे देवताबलिदानेनमांसेनरुधिरेणच दातु
रापद्विनाशायछागलायनमोनमः लोकानामुपकारार्थंपशुःसृष्टोमयाधुना प्रोक्षितोभवतीप्रीत्यैमामात्मानंचतारय
अथखड्गपूजा कृष्णंपिनाकपाणिंचकालरात्रिस्वरूपिणं उग्रंरक्तास्यनयनंसर्वासुरभयंकरं रक्तांबरधरंचैवपाशह
स्तंकुटुंबिनं पिबमानंचरुधिरंभुंजानंक्रव्यसंहतिं रसनात्वंचंडिकायाःसुरलोकप्रसादक इतिध्यात्वा पूजयेत्
ओंस्फ्रें १ फट्वज्रेश्वरिखड्गरूपिणातीक्ष्णधारेणपशुंसंहर १ ओंऱ्हींकालिकालिवज्रेश्वरिलोहदंडायैनम इतिसं
पूज्य असिर्विशसनःखड्गस्तीक्ष्णधारोदुरासदः श्रीगर्भोविजयश्चैवधर्मपालनमोस्तुते इत्यष्टौतवनामानिस्वय
मुक्तानिवेधसा नक्षत्रंकृत्तिकातेतुगुरुर्देवोमहेश्वरः हिरण्यंचशरीरंतेदैवतंचजनार्दनः पितापितामहोदेवस्त्वंमांपाल
यसर्वदा नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रःकृशोदरः भावशुद्धोऽमर्पणश्च अतितेजास्तथैवच इयंयेनधृताक्षोणीहतश्च
महिषासुरः तीक्ष्णधारायशुद्धायतस्मैखड्गायतेनम इतिस्तुत्वा रक्षार्थंबंधनस्थोसिमुक्तयेमोचितोमया देव्याः
प्रीतिसमुत्पाद्यस्वर्गंगच्छपशूत्तम इतिबंधान्मोचयित्वा मूलमंत्रंपठेत् अथापरेणमंत्रेणच्छेदयेत् ओंऱ्हींश्रींचौंचंडि
कायैलोहदंडायैऱ्हींऱ्हींइमंपशुंमहातृप्तिमहानंदंकुरुकुरुमुर २ स्वेष्टंदेविगृहृण २ स्वाहा कालिकालिस्फ्रें १ का
लिवज्रेश्वरिखड्गपाणिनितीक्ष्णधारेणहमिस्वाहा अयंबलिर्मयादत्तः पशूनांचपशूत्तमःगृहृण २ महादेविरक्षमां

दुरितार्णवात् रुधिरंमस्तकंस्कंधंततोदेव्यैनिवेदयेत् घोरदंष्ट्राकरालास्येसुरामांसप्रियेसदा बलिंगृह्णमहादे
विपशुरक्तंसमांसकं ॐचंडिकेचंडिकायैकाकोलूकगृध्रपरिस्तृतायैन्हीं १ इदंपिशितंरक्तंगृह्ण १
स्वाहा आहारेरुधिराकांक्षिबलिंगृह्णजयंकुरु ममशत्रुसंहारिणिनवदुर्गेसुरार्चिते इमंपिशितं
रक्ताक्तं स्वाहा ततोदेवीं स्तुत्वा नत्वा स्वदयुद्रास्य विहरेत् इतिमंत्ररत्नदीपिकोक्तबलिदानविधिः
अथसंक्षिप्तबलिदानविधिः उत्तराभिमुखोभूत्वा बलिं पूर्वमुखंतथा निरीक्ष्यसाधकः पश्चादिमंमंत्र
मुदीरयेत् पशुस्त्वंबलिरूपेणममभाग्यादुपस्थितः प्रणमामिततःसर्वरूपिणंबलिरूपिणं चंडि
काप्रीतिदानेनदातुरापद्विनाशन चामुंडाबलिरूपायबलेतुभ्यंनमोऽस्तुते यज्ञार्थेपशवःसृष्टाःस्वयमेवस्वयंभुवा
अतस्त्वांघातयाम्यद्यतस्माद्यज्ञेवधोऽवधः ऐंह्रींश्रीमितिमंत्रेणतंबलिंमंत्ररूपिणम् चिंतयित्वान्यसेत्पुष्पंमूर्ध्नितस्य
तुभैरव ततोदेवींसमुद्दिश्यकाममुद्दिश्यचात्मनः अभिषिच्यबलिंपश्चात्करवालंचपूजयेत् अथमंत्रक्रमःबलिमभि
पिच्यचंदनादिभिःसंपूज्याद्येत्यादिदशवर्षावच्छिन्नदुर्गाप्रीतिकामइमंछागबलिंवह्निदैवतंभगवत्यैदुर्गादेव्यैतुभ्यम
हंघातयिष्यइतिसंकल्प्यखड्गंपूजयेदिति कृष्णंपिनाकपाणिंचकालरात्रिस्वरूपिणं उग्रंरक्तास्यनयनंरक्तमा
ल्यानुलेपनं रक्तांबरधरंचैवपाशहस्तंकुटुंबिनं पिबमानंचरुधिरंभुंजानंक्रव्यसंचयं रसनात्वंचंडिकायाः सुरलो
कप्रसादक इतिध्यात्वा ऐंह्रींखड्गायनमः इतिचंदनपुष्पधूपदीपनैवेद्यतांबूलानिदद्यात् विधितस्त्वेतु ऐंह्रींश्रीं
खड्गंपूजयेत् ततःकृतांजलिःपठेत् असिर्विशसनःखड्गस्तीक्ष्णधारोदुरासदः श्रीगर्भोविजयश्चैवधर्माधारनमो
स्तुते इत्यष्टौतवनामानिस्वयमुक्तानिवेधसेत्यादि पूजयित्वाततःखड्गंआंहुंफडितिमंत्रकैः गृहीत्वाविमलंखड्गं
छेदयेद्बलिमुत्तमं पंचाष्टलक्षणोपेतंगंधपुष्पसमन्वितं विधिवत्कालिकाकालीतिजप्त्वाखड्गेनघातयेत् ॐकालिकालि

यज्ञेश्वरिलोहदंडायैनमइतिमंत्रः तदुत्थंरुधिरंमासंगृहीत्वापूतनादिषु आदिशब्दाच्चरकीविदारीपापराक्षस्यःनैर्ऋ
तेभ्यःप्रदातव्योमहाकौशिकमंत्रतः ॐऐंह्रींकौशिकीरुधिरेणाप्यायतामिति [तस्याग्रतोनृपःस्नायात्कृत्वाशत्रुंतुपै
ष्टिकं खड्गेनघातयित्वातुदद्यात्स्कंदविशाखयोः स्थानेनियोजयेद्रक्तंशिरश्चसप्रदीपकं एवंदत्त्वाबलिंपूर्णफलं
प्राप्नोतिसाधकःबलिदानेतुदुर्गायाःसर्वत्रायंविधिःस्मृतइति अथ महिषबलिदानमंत्रः यथावाहंभवान्द्वेष्टियथावाह
सिचंडिकां तथाममरिपून्हिंसशुभवाहलुलायक यमस्यवाहनस्त्वंतुपशुरूपधराव्यय आयुर्वित्तंयशोदेहिकास
रायनमोऽस्तुते विस्तरस्तु तिथितत्त्वेद्रष्टव्यः इतिसंक्षिप्तबलिदानं अत्रचतिथिद्वयनिमित्तं पूजादिमहालयश्राद्ध
वदेकदिनआवृत्त्याकार्यं दृष्टोतद्वदेवावृत्तिरितिनिर्णयसिंधौ एककालकर्तव्यत्वेनोपवासवत्पूजापितंत्रेणकार्येति
कालतत्त्वविवेचने स्वस्याशक्तावन्येनपूजादिकारयेत् स्वयंवाप्यन्यतोवापिपूजयेत्पूजयीतवोक्तत्वात् इदंचदे
वीपूजनंशुक्रास्तादावपिकार्यं तदुक्तंधर्मप्रदीपे नष्टेशुक्रेतथाजीवेसिंहस्थेचबृहस्पतौ कार्याचैवस्वदेव्यर्चाप्रत्य
हंबलिकर्मतइति मलमासेतुवचनाभावान्नभवति अत्रदुर्गायात्रोक्ताशिवरहस्ये तत्रैवदुर्गाविमलातिष्ठत्यमललो
चना सर्वदुर्गहरानित्यंस्वभक्ताभयदायिनी तत्राश्विनेशुक्लपक्षेप्रतिपद्यवधिक्रमात् नवमीदिनपर्यंतंपूजाकार्याप्र
यत्नतः सासर्वार्तिहरानित्यंदेवीकाशिनिवासिनां पूजिताभक्तवरदाभवत्येवनसंशयइति इतिप्रतिपत्पूजनं प्र
तिपदादिषुविशेषोदुर्गाभक्तितरंगिरण्यां भविष्ये केशसंस्कारद्रव्याणिप्रदद्यात्प्रतिपद्दिने पट्टडोरंद्वितीयायांके
शसंचयहेतवे दर्पणंचतृतीयायां सिंदूरालक्तकंतथा मधुपर्कंचतुर्थ्यांतुतिलकंनेत्रमंडनं पंचम्यामंगरागंचशक्त्या
लंकरणानिच षष्ठ्यांबिल्वतरोर्बोधंसायंसंध्यासुकारयेत् सप्तम्यांप्रातरानीयगृहमध्येप्रपूजयेत् उपोषणमथाष्ट
म्यामुग्रचंडाबलिंतथा कुमारीपूजनीयाचभूषणीयाचभूषणैः संपूज्यप्रेषणंकुर्याद्दशम्यांशावरोत्सवैः अनेनवि

स्कंदवत्पालयेद्देवीतंपुत्रधनकीर्त्तिभिः कृत्यतत्त्वार्णवेलैंगे कन्यायांकृष्णपक्षेतुपू
धिनायस्तुदेवींप्रीणयतेनरः स्कंदवत्पालयेद्देवीतंपुत्रधनकीर्त्तिभिः शुक्लपक्षेचतुर्थ्यांतुदेवीकेशविमोक्षणे प्रातरेवतुपंचम्यां
जयित्वार्द्रभेपिवा नवम्यांवोधयेद्देवींमहाविभवविस्तरैः शुक्लपक्षेचतुर्थ्यांतुदेवीकेशविमोक्षणे प्रातरेवतुपंचम्यां
स्नापयेत्सुशुभैर्जलैः षष्ठ्यांसायंप्रकुर्वीतबिल्ववृक्षेऽधिवासनं सप्तम्यांपत्रिकापूजाअष्टम्यांचाप्युपोषणं पूजाच
जागरश्चैवनवम्यांविधिवद्बलिः विसर्जनंदशम्यांतुक्रीडाकौतुकमंगलैः प्रत्यहंसाधारणंदानांतरमप्युक्तं देवीपु
राणे नारिकेलिफलादीनिनवकंनवकंप्रिये तथामृण्मयपात्राणिसपयांसितथैवच वंशपात्राणिवस्त्राणिभक्ष्यभोज्या
न्वितानिच यदिवातिलपात्राणिमृत्पात्राण्यथवापुनः अथवाचान्यपात्राणिपंचामृतभृतानिच सौभाग्यपात्रा
ण्यथवाकुंकुमादिभृतानिच दुर्गादेवीप्रीयतामइत्युक्त्वाविधिवद्ददेत् दुर्गादेवीप्रसन्नास्यादिति अत्रस्त्रीव्रते
विशेषः परिभाषायां ज्ञेयः अथाशौचेविशेषोनिर्णयामृते विश्वरूपनिबंधे आश्विनस्यसितपक्षेप्रारब्धेनवरात्र
के शावाशौचेसमुत्पन्नेक्रियाः कार्याः कथंबुधैरिति प्रश्ने सूतकंवर्त्तमानेचसमुत्पन्नंयदाभवेत् देवीपूजाप्रकर्त्त
व्यापशुपक्षिविधानतः अत्र नवरात्रे वर्त्तमाने सूतकंयदोत्पन्नंभवेदित्यन्वयः तथा सूतकेपूजनंदेव्या दानंचैववि
शेषतः देवीमुद्दिश्यकर्त्तव्यंतत्रदोषोनविद्यतइति गौडनिबंधे तिथितत्त्वेप्युक्तं आश्विनकृष्णनवम्यादिशुक्लप्र
तिपदादिषष्ठ्यादिसप्तम्यादिचैकंकर्म अतश्चमध्यअशौचपातेऽपिनदोषः संकल्पोव्रतसत्रयोरितिविष्णूक्तेः आ
रब्धंस्वयमेवकार्यं अनारब्धंत्वन्येनकारयेदितिदिवोदासीये रजस्वलात्वन्येनकारयेत् सूतकादिवाद्विशेषव
चनाभावात् अत्रनिर्णयामृतादौ यदाशौचेपिनवरात्रपूजादिकंस्वयमेवकर्तव्यमित्युक्तंतन्मृग्यंशिवार्चनचंद्रिकाग्रंथ
लिखितनारदादिपंचरात्रग्रंथविरोधात् तथाच तत्त्वसागरसंहितायां आतुरीसौतिकीचैवत्रासीदौर्वाधिकीतथा
साधनाभाविनीचेतिपंचधाभिद्यतेपुनः यदिलंघनपर्यंतोव्याधिरात्मनिदृश्यते तदापूजानकर्त्तव्यास्थंडिलेप्रतिमा

सुत्र नरुनानंदंतकार्थ्वाकुर्याद्धोममथापिवा रविमंडलमालोक्यप्रतिमामथवापुनः मूलमंत्रंसकृज्जप्त्वापुष्पंसाक्षत मुत्क्षिपेत् श्रांतोव्याधिभिरस्युग्रैःक्षांतश्चैवोपवासकैः निजसामयिकैर्वापिस्वकर्त्तव्यंसमापयेत् स्नात्वादेवमथाग्नीं श्चगुरून्विप्रान्प्रपूज्यच एतावत्कालविच्छिन्नापूजायुस्मत्प्रसादतः नदोषोस्त्वितिसंप्रार्थ्यपुनःपूर्ववदाचरेत् यस्तु रोगवशान्मोहवशाद्वापडपागतःजप्नेनक्षालनीयःस्याद्दानेनहवनेनचेत्यादि अथसूतकिनःपूजांवक्ष्याम्यागमबोधितां स्नात्वानित्यंचनिर्वर्त्यमानस्याक्रिययातुवै बाह्यपूजाक्रमेणैवस्थानयोगेनपूजयेत् यदिकामीनचेत्कामीनित्यंपूर्व वदाचरेत् त्रासिकीवक्ष्यतेपूजायथैवागमबोधिता लब्धंवायदिवाऽलब्धमित्यादि सर्वालाभेतु पूजोदकेनकर्त्तव्या नचेत्तोयंचविद्यते तदासंपूजयेद्देवंभावनाकुसुमादिभिः दैवोधिकींप्रवक्ष्यामिपूजामागमबोधितां मूर्खस्त्रीबालवृद्धा द्यादुर्वोधाइतिभाषिताः मूलमूर्त्तिषडंगानितेषांपूजाविधीयते अन्येषामपिसर्वेषांप्रोक्तासंक्षेपकर्मणीति यानितुवि ष्णुयादिवचनानि यज्ञव्रतविवाहेषुश्राद्धेहोमार्चनेजपे आरब्धेसूतकंनस्यादनारब्धेतुसूतकंप्रारंभोवरणंयज्ञेसंकल्पो व्रतसत्रयोःनांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेतिजपोदेवार्चनाविधिःकार्योदीक्षान्वितैर्नरैः नास्तिपापंयतस्तेषां सूतकंवायतात्मनामिति देवीयामलवचनम् सूतकेमृतकेचैवधूमोद्गारादिकेतथा जप्यंचाच्र्यंतथाकुर्यान्मंत्रन्यासपुर स्सरमितिमृडानीतंत्रवचनं अर्घ्यग्रहणांपूजोपलक्षणं शिवविष्ण्वर्चनेदीक्षायस्यचाग्निपरिग्रहः ब्रह्मचारिणीनां चशरीरेनास्तिसूतकमितिविष्णुयामलवचनं सूतकेमृतकेचैवनित्यंविष्णुयमस्यच सानुष्ठानस्यविप्रेंद्रसद्यःशु द्धिःप्रजायतइति नारदपंचरात्रवचनम् उपासनेतुविप्राणामंगशुद्धिःप्रजायतइति पाराशरवचनम् सूतकेमृत केवापिनित्याज्र्यंशिवपूजनमिति लिंगपुराणवचनमेतानिसर्वाणि ब्राह्मणपराण्येव विप्राणानित्युक्तेः ब्राह्मणस्यैव पूज्योहंशुचेरप्यशुचेरपि पूजांगृह्णामिशूद्रस्यपुनःस्वाचारवर्तिनइतिशिववचनाच्च अत्रशूद्रस्येत्युपलक्षणं

यज्ञादौतु न अग्निहोत्रादि कर्म
क्षत्रियवैश्ययोरपि विप्राणामपि तांत्रिकनित्यपूजायामेवाधिकारः तात्कालिकी यावता
र्थं शुद्धिस्तात्कालिकीमतेति वचनेनाऽग्निहोत्रादावेव शुद्ध्यभिधानात् वर्त्तमानेतु
कर्म सिध्यति नैमित्तिक काम्यतांत्रिक पूजायांतु तेषामप्यनधिकारः सूतकेमृतकेचापि शतत्रयमका
नारद कामतः पूजितेमंत्रे शांतिकादौचकुत्रचित् जपेत्पंचशतंमंत्री सिद्धमंत्रस्यभक्तितः
माद्यप्रायश्चित्तविधौजपेदिति नारदपंचरात्रवचनात् कृत्यरत्नावल्यामपि मात्स्ये अंतरातुरजोयोगेपूजाम
न्येनकारयेत् एवमाशौचेऽपि सूतकात्प्राक्समारब्धमनेकाहंतुयद्व्रतं कायिकंतत्तुकुर्वीतनतुदानं.चनंजपं सूतका
हेतुयत्किंचिद्दानाद्यंतरितंभवेत् सूतकानंतरेत्वन्हितत्कर्त्तव्यमतंद्रितैरिति तस्मात्सूतकिभिःपूजनंनकार्यंप्रतिनिधि
द्वारातुकार्यमेव दीक्षितैरप्येवमेव अतएवसूतकेशिष्टैः पूजनं न क्रियतइत्याचारोऽपीत्यलंविस्तरेण इतिनवरात्र
सूतकादिनिर्णयः ॥ आश्विनशुक्लद्वितीयायांदानस्यानंतफलं वचनंतुद्वितीयाप्रकरणेवक्ष्यते आश्विनशुक्लपंचम्यां
मुपांगललिताव्रतंदाक्षिणात्येषुप्रसिद्धं तदुक्तंस्कांदे शुक्लपक्षस्यपंचम्यामिषेमासिचरेद्व्रतमित्यादि अत्रपंचमी
रात्रिव्यापिनीग्राह्येतिकेचित् मध्यान्हव्यापिनीग्राह्येत्यपरे वचनानितुपंचमीप्रकरणेवक्ष्यंतेकथापूजनादिकमपि
तस्मिन्नेवप्रकरणेबोध्यं इतिपंचमीकृत्यम् आश्विनशुक्लपक्षेमूलनक्षत्रेसरस्वतीस्थापनांकार्यम् यथोक्तंनिर्णयामृ
तेदेवीपुराणे मूलेषुस्थापनंदेव्याःपूर्वाषाढासुपूजनं उत्तरासुबलिंदद्याच्छ्रवणेनविसर्जयेत् रुद्रयामलेऽपि मूल
र्क्षेचसुराधीशपूजनीयासरस्वती पूजयेत्प्रत्यहंदेवयावद्वैष्णवमृक्षकं नाध्यापयेन्नैवलिखेन्नाधीयीतकदाचन पु
स्तकेस्थापितांदेवींविद्याकामोद्विजोत्तमः मूलस्याद्यपादेआवाहनमितिशिष्टाः श्रवणाद्यपादेचविसर्जनं आ
दिभागोनिशायांतुश्रवणस्ययदाभवेत् संप्रेषणंतदादेव्यादशम्यांचमहोत्सवइतिचिंतामणौब्रह्मांडपुराणात्अथ

षष्ठीकृत्यंनिर्णयामृते आश्विनशुक्लपंचम्यांस्थापितायादेव्याः सप्तम्यां पूजार्थंषष्ठ्यांनक्षत्रयुक्तायामसंभवे केवलाया
मपिबिल्ववृक्षनिमंत्रणंकार्यं कालिकापुराणे बोधयेद्बिल्वशाखायांषष्ठ्यांदेवींफलेषुचेत्यादि अत्रसर्वत्रतिथिनक्षत्रयो
गादरोमुख्यःकल्पः तदभावेतु तिथिरेवग्राह्या तिथिःशरीरंदेवस्यातिथौनक्षत्रमाश्रितं तस्मात्तिथिंप्रशंसंतिनक्ष
त्रंनतिथिंविनेतिविद्यापतिलिखितवचनात् देवलः तिथिनक्षत्रयोर्योगेद्वयोरेवानुपालनं योगाभावेतिथिर्ग्राह्या
देव्याःपूजनकर्मणीति अत्रचषष्ठीसायंकालव्यापिनीग्राह्या षष्ठ्यांबिल्वतरौबोधंसायंसंध्यासुकारयेदितिभविष्य
वचनात् पत्रीप्रवेशात्पूर्वेद्युःसायंकालेषष्ठ्यभावेतत्पूर्वदिनेऽधिवासनंकार्यंकालात्ययतास्त्वेवाधिवासनलोपः षष्ठ्यां
सायंप्रकुर्वीतबिल्ववृक्षेऽधिवासनमितिवचनादितिकल्पतरुः सायंश्रुतिःफलातिशयमात्रार्थानतुकर्मलोपइत्याचार्य
चूडामणिकृत्यरत्नावल्यांकालतत्त्वविवेचनेचैवमेवआमंत्रणंतुपत्रीप्रवेशाव्यवहितपूर्वदिनेकार्यं पत्रीप्रवेशनंरात्रौन
कार्यं पत्रीविसर्जनं रात्रौ न कार्यं पत्रीविसर्जनंरात्रौप्रवेशंचकरोतियः तस्यराज्यविनाशःस्याद्राजाचविक
लोभवेत् ऋक्षयोगानुरोधेनरात्रौपत्रीप्रवेशनात् विसर्गंवाचरेद्यस्तुसराष्ट्रंसविनश्यतीतिनिषेधात् तेनचपत्री
प्रवेशात्तस्याष्टमीविद्धायांसप्तम्यांप्रातःकर्तव्यत्वात्तदव्यवहितपूर्वदिनएवसायान्हेषष्ठ्यभावेप्यामंत्रणंकार्यं पत्री
प्रवेशात्पूर्वेद्युः सायान्हेबिल्ववासिनीं चंडीमामंत्रयेद्विद्वान्नात्रषष्ठीपुरस्क्रियेतिब्रह्मांडपुराणवचनात् मत्स्यसूक्तेऽपि
गाप्यथवाषष्ठीसायंकालेनचेद्भवेत् सायमेवतथापिस्यात्बिल्वशाखाभिमंत्रणं पूर्वांषष्ठींसनक्षत्रांसायंप्राप्ता
जेत् यदातुपत्रिकापूजानपरेद्युर्भविष्यति संनिकृष्टंतुयत्पूर्वंपत्रिकादिवसस्यतु तद्दिनेवरणंकृत्वापरेशाखां
शयेदिति तत्रपूजनक्रमः बिल्वाभ्याशंगत्वाबिल्ववृक्षायनमइतिबिल्वतरुंसंपूज्य बिल्ववृक्षे जयंतीमंत्रेण
च्छेहतिष्ठेतिदुर्गामावाह्य षोडशभिः पंचभिर्वोपचारैस्तां तत्रैवसंपूज्य गीतवाद्यघोषपुरःसरंतत्रैवदेवीं

वोधयेत्तत्र मंत्रः रावणस्यवधार्थायरामस्यानुग्रहायच अकालेब्रह्मणावोधोदेव्यास्त्वयिकृतःपुरा अहंमप्याश्विने
पष्ठ्यांसायाह्नेवोधयाम्यतः ततोविल्वतरुमामंत्रयेत् मेरुमंदरकैलासहिमवच्छिखरेगिरौ जातःश्रीफलवृक्ष
स्त्वमंविकायाःसदाप्रियः श्रीशैलशिखरेजातश्रीफलश्रीनिकेतन नेतव्योऽसिमयावृक्षपूज्योदुर्गास्वरूपतइति
एवंदेवीमाधिवास्यस्वगृहमागच्छेदितिषष्ठीकृत्यं ततः परदिने सप्तम्यांमूलयुक्तायांवा पूर्वदिनामंत्रितविल्वतरुस
मीपंगत्वापुनस्तंसंपूज्यगृहंप्रवेशयेत् तदुक्तंहेमाद्रौलैंगे मूलाभावेतुसप्तम्यांकेवलायांप्रवेशयेत् युग्माभ्यांनव
विल्वस्यफलाभ्यांशाखिकांतथा तथैवप्रतिमांदेव्याः स्नात्वाभ्युक्ष्यप्रवेशयेत् अत्रचोपवासपूजादावौदयिकीसप्त
मीग्राह्या नतुयुग्मवाक्यात्पूर्वा युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया रवेरुदयमीक्षंतेनतत्रातिथियुग्मतेति कृत्य
तत्त्वार्णवोदाहृतवचनात् भगवत्याःप्रवेशादिविसर्गांताश्चयाःक्रियाः तिथावुदयगामिन्यांसर्वास्ताःकारयेद्बुध
इति तिथितत्त्वेनंदिकेश्वरपुराणाच्च दुर्गाभक्तितरंगिण्यामप्येवम् तत्रापिघटिकातोन्यूनत्वेपरानकार्या व्रतोपवास
नियमेघटिकैकापियाभवेदितिदेवलोक्तेरितिगौडाः दाक्षिणात्यास्तुयुग्मार्थंकुर्वंति पत्रिकापूजाचपूर्वाह्णएवकार्या
नतुमूलानुरोधान्मध्याह्नादावितिकृत्यतत्त्वार्णवेउक्तः ज्योतिषेऽपि पूर्वाह्णेनचपत्रिकाशुभकरीसंग्रामधारावहासा
याह्नेवधवंधनादिकलहंसर्वक्षतंसर्वदा सप्तम्यामस्तगायांयदिविशतिगृहंपत्रिकाश्रीफलाद्या राज्ञःसप्तांगराज्यं
जनसुखमखिलंहंतिमूलानुरोधात् तस्मात्सूर्योदयस्थांनरपतिशुभदांसप्तमींप्राप्यदेवीं भूपालोवेशयेत्तांसक
लजनहितांराक्षसर्क्षांविहायेति अथसप्तम्यादिदिनत्रयाविहितंपत्रिकापूजनंतत्कृत्यंचोच्यते नित्यविधिंनिर्वर्त्यपूर्व
निमंत्रितविल्वसमीपंगत्वासंपूज्यागच्छवरदेदेवीतिपूर्वोक्तमंत्रंपठित्वाप्रार्थयेत् विल्ववृक्षमहाभागसर्वदाशंकरप्रि
य गृहीत्वातवशाखांतुदुर्गापूजांकरोम्यहं शाखाच्छेदोद्भवंदुःखंनचकार्यंत्वयाप्रभोइति ततःफलद्वययुक्तांशोभना

मपराजितादिग्गतामेकांशाखां छेदयेद्वानस्पत्येनमंत्रेण मंत्रस्तु वनस्पतेशतवल्शोविरोहःसहस्रवल्शावि वयंरुहेम यंत्वामयंस्वधितिस्तेतजमानःप्राणिनायमहतेसौभगायेति क्वचित्तुछिंधिफट् ॐन्हुंफट्स्वाहेतिमंत्रः तत स्तांशाखामानीयगृहांगणेपीठेसंस्थाप्यविल्वशाखायैनमइत्यादिभिः पूजयित्वा विल्वशाखायांमृण्मयप्रतिमायांच देवीमावाहनपुरस्सरंतथैवपूजयित्वा माषभक्तादिबलिंचदत्वादोलादिनाशाखांप्रतिमांचपूजागृहद्वारदेशमानीयत त्रैवस्थापयित्वापूजागृहस्थितानिभूतेभ्योनमइति गंधादिभिःसंपूज्य भूताःप्रेताःपिशाचाश्चयेवसंत्यत्रभूतले तेगृ ह्णंतुमयादत्तोबलिरेषप्रसाधितः पूजितागंधपुष्पाद्यैर्बलिभिस्तर्पितास्तथा.देशादस्माद्विनिःसृत्यपूजांपश्यंतुमत्कृ तांभूतेभ्यएषमाषभक्तबलिर्नमइतिसपुष्पजलोत्सर्गेणबलिंतेभ्योदत्वा अपसर्पंतुतेभूतायेभूताभूमिपालकाः भूताना मविरोधेनपूजाकर्मकरोम्यहमितिपठित्वा फडितितान्यपसारयेत् सर्षपादींश्चविकिरेत् तथाच कालिकापुराणे स्थितेपुतत्रभूतेपुनैवेद्यंमंडलंतथा विलुंपंतिमहालुब्धानचगृह्णंतिदेवताः तस्माद्यत्नेनकर्तव्यंभूतानामपसारण मिति शारदातिलके विकिरान्विकिरेत्तत्रसप्तसप्तानुशराणुना लाजाचंदनसिद्धार्थफलपुष्पकुशाक्षताः विकि राइतिसंप्रोक्ताःसर्वविघ्नविनाशनाइति शराणुःफडित्यस्त्रमंत्रः सचाभिमंत्रणेविकिरणेच ततःपुनःशाखायांप्रति मायांदेवींसंपूज्यश्रीशैलेत्यादिनेतव्योसिमयागच्छपूज्योदुर्गास्वरूपत इतिदुर्गास्वरूपतयाशाखांध्यात्वागीतवाद्या दिघोषेणप्रतिमासहितांतांपूजागृहंप्रवेश्यआरोपितासिदुर्गेत्वंमृण्मयेश्रीफलेऽपिच स्थिरानितांतंभूत्वामेगृहेत्वंका मदाभवेतिपूजास्थानेशोभनपीठोपरिस्थिरीकृत्य पूर्वोक्तप्रकारेणप्राणप्रतिष्ठांकृत्वा प्राणप्रतिष्ठामंत्रेणप्रतिष्ठाप्यसपु ष्पाक्षतानादाय आवाहयाम्यहंदेवींमृण्मयेश्रीफलेतथा कैलासशिखराद्देविविंध्याद्रेर्हिमपर्वतात् आगत्यविल्व शाखायांचंडिकेकुरुसन्निधिं भगवतिदुर्गेइहागच्छेत्युमामावाह्य स्थापितासिमयादेविश्रीफलेमृण्मयेपिच आयु

शरोग्यमैश्वर्यंदेहिदेविनमोऽस्तुते भगवतिदुर्गेइहतिष्ठेतिस्थापयित्वाकृतांजलिः दुर्गेदुर्गेस्वरूपासिसुरतेजोमहाब
लेसदानंदकरेदेविप्रसीदममसिद्धये एह्येहिभगवत्यंबशत्रुक्षयजयप्रदे भक्तितःपूजयामित्वांदुर्गेदेविसुरार्चिते प
ल्लवैश्चफलोपेतैः पुष्पैश्चसुमनोहरैः पल्लवेसंस्थितेदेविपूजयेत्वांप्रसीदमे दुर्गेदेविइहागच्छसान्निध्यमिहकल्पय
यज्ञभागान्गृहाणत्वंयोगिनीकोटिभिः सहेतिपठेत् ततोजयंतीत्यादिमंत्रेणानुलेपनांतंपूजयित्वा पुष्पांजलित्रयं
दद्यादोंदुर्गायैनमइत्यादिवृत्तेन ततःअमृतोद्भवंश्रीवृक्षशंकरस्यसदाप्रियं बिल्वपत्रंप्रयच्छामिपवित्रंतेसुरेश्वरि
इतिबिल्वपत्रं ब्रह्माविष्णुशिवादीनांद्रोणपुष्पसदाप्रियं तत्तेदुर्गेप्रयच्छामिसर्वकामार्थसिद्धयेइतिद्रोणपुष्पं च निवेद्य
जयंतीत्यादिइमानिपुष्पाणिदुर्गायैनमइति जातीचंपकादिसुगंधिपुष्पाण्यर्पिदत्वा तथैवधूपदीपनानानैवेद्यपुनरा
चमनीयतांबूलानिदत्वापूजासाद्गुण्यार्थंकिंचिद्दक्षिणांचदत्वास्तुतिभिःस्तुत्वाप्रणम्यबद्धांजलिः प्रार्थयेत् महिषघ्नि
महामायेचामुंडेमुंडमालिनि द्रव्यमारोग्यमैश्वर्यंदेहिदेविनमोऽस्तुते कुंकुमेनसमालब्धेचंदनेनविलेपिते बिल्वपत्रकृ
तापीडेदुर्गेऽहंशरणगतः सर्वमंगलेतिरूपंदेहीतिचश्लोकद्वयंपठेत् ततःकदल्यादिपत्रिकासुपूजा तास्तु रंभाकच्वीह
रिद्राचजयंतीबिल्वदाडिमौ अशोकोमानवृक्षश्चधान्यादिनवपत्रिकाइति कृत्यतत्त्वार्णवेउक्ताः तत्रकदल्यांब्रह्मा
णींदाडिमेरक्तदंतिकां धान्येलक्ष्मीं हरिद्रायांदुर्गां मानेचामुंडां कच्वांकालिकां बिल्वे शिवां अशोकेशोकरहितांजयं
त्यांकीर्तिंचावाह्यपूजयेत् कौस्तुभेतु बिल्वाभिपत्रिकांतरेऽपिबोधनंकार्यं दुर्गाभक्तितरंगिण्यांरंभादीनामपितत्स
मत्वेनाभिधानादितितिथितत्त्वेततोबलिंदद्याद्दुर्गांशिवामित्यादिच पठेत् कालतत्त्वविवेचने पत्रिकापूजाप्रतिपत्प्रतिष्ठा
पितदेवीप्रतिमासमीपएवयदाप्रतिमापूजायामपिसप्तम्यादिपक्षस्तदापत्रिकयैवसहैव प्रतिमायाअपिदेव्यर्थकृतगृह
प्रवेशादिविसर्जनांतंकर्तव्यमितिदुर्गाभक्तितरंगिण्यामिति एवमेवाष्टमीनवमीदशमीदिनेष्वपिपूजाबोध्याइतिसप्त

मीपूजाविधिः अथाष्टमी साचपूर्णाचेत्सैवखंडाचेन्नवमीविद्धाग्राह्या सप्तमीविद्धायानिषिद्धत्वात्सर्वथानवमी
विद्धैव ग्राह्यवचनानितुअष्टमीप्रकरणेवक्ष्यंते अत्रकृत्यमुक्तंनिर्णयामृते भविष्योत्तरे तत्राष्टम्यांभद्रकाली दक्षयज्ञ
विनाशिनी प्रादुर्भूतामहाघोरायोगिनीकोटिभिःसह अतोऽर्थंपूजनीयासातस्मिन्नहनिमानवैः उपोषितैर्वस्त्र
माल्यधूपरत्नानुलेपनैः आमिषैर्विविधैःशाकैर्होमैर्ब्राह्मणतर्पणैः बिल्वपत्रैःश्रीफलैश्चचंदनेनघृतेनवा पशुभिःपान
कैर्हृद्यैरात्रौजागरणेनवेति अयंचकेवलाष्टम्युपवासः पुत्रवतोनिषिद्धः उपवासंमहाष्टम्यांपुत्रवान्नसमाचरेत् यथा
तथावापूतात्मावतीदेवींप्रपूजयेदितिकालिकापुराणोक्तेः अहनीतिश्रवणाद्दिनपूजाप्रतीयते निशायांपूजितादेवीत्यने
नप्रागुक्तवचनेनकन्यासंस्थेरवावित्यादिनाचाष्टम्यांरात्रावपिपूजनंकर्तव्यमित्युक्तं विशेषतोऽपिपूजनंतत्रकर्तव्यमि
तितत्र पुनः पूजांतथाष्टम्यांविशेषेणसमाचरेत् जागरंचस्वयंकुर्याद्बलिदानंमहानिशीति कालतत्त्वविवेचने
देवीपुराणे पशुघातःप्रकर्तव्योगवयाजवधस्तथा देवींतुपूजयित्वायेअर्धरात्रेऽष्टमीषुच घातयंतिपशून्भक्त्याते
भवंतिमहाबलाः बलिंचयेप्रयच्छंतिसर्वभूतविनाशनं तेषांतुतुष्यतेदेवीयावत्कल्पंतुशांकरमित्यादि भविष्योत्त
रे तस्यांसदापूजनीयाचामुंडामुंडमालिनी तस्यांयेह्युपयुज्यंतेप्राणिनोमहिषादयः सर्वेतेस्वर्गतिंयांतिघ्नतांपापं
नविद्यते यावन्नचालयेद्गात्रंपशुस्तावन्नहन्यते नतथाबलिदानेनपुष्पधूपविलेपनैः यथासंतुष्यतेमेषैर्माहिषैर्वि
ध्यवासिनी बलिदानंचमांसेनमद्येनसहितौदनं सप्तम्यांपत्रिकापूजाअष्टम्यांचाप्युपोषणं पूजाचजागरश्चैवन
वम्यांविधिवद्बलिरिति अत्रनवरात्रेषु स्वातिनक्षत्रेसाश्वस्याश्वपूजनमुक्तंदेवीपुराणे अश्वयुक्शुक्लप्रतिपत्स्वातियु
केशुभेदिने पूर्वमुच्चैःश्रवानामप्रथमाश्रियमाहरत् तस्मात्साश्ववनरैः सोत्रपूज्योऽसौश्रद्धयान्वितैः पूजनीयाश्चतुरगा
नवमींयावदेवहिशांतिःस्वस्त्ययनंकार्यंतदातेषांदिनेदिने धान्यंभल्लातकंकुष्ठंवचासिद्धार्थकास्तथा पंचवर्णेनसूत्रेण

वैरेणवैः वैश्वदेवैस्तथाग्नेयैर्होमः कार्योदिनेदिने अत्रत्राय
ग्रथितेषांतुवंधयेत् वायव्यैर्वारुणैः सौरैःशाक्रैर्मंत्रैःसवैष्णवैः
व्यैरित्यादिबहुवचनेभ्यः प्रत्येकंकपिंजलाधिकरणन्यायेन मंत्रेषुत्रित्वंलभ्यते तुरंगारक्षणीयास्तुपुरुषैः शस्त्र
पाणिभिः नचताड्याः क्वचित्तत्रनचवाह्याः कथंचनेति एतदुत्तरकृत्यं भविष्योत्तरे जयाभिलाषीनृपतिःप्रति
पत्प्रभृतिक्रमात् लोहाभिसारिकंकर्मकारयेद्यावदष्टमीमिति लोहाभिसारिकविधानं तत्रैवोक्तं प्रागुदक्प्रवणेदेशेप
ताकाभिरलंकृतं मंडपंकारयेद्दिव्यंनवसप्तकरंवरं षोडशहस्तप्रमाणमित्यर्थः आग्नेय्यांकारयेत्कुंडंहस्तमात्रंसु
शोभनं मेखलात्रयसंयुक्तंयोन्याश्वत्थदलाभया राजचिन्हानिसर्वाणिशस्त्राण्यन्यानियानिच आनीयमंडपेतानि
सर्वाण्यत्राधिवासयेत् ततस्तुब्राह्मणःस्नातःशुक्लांवरधरःशुचिः ओंकारपूर्वकैर्मंत्रैस्तल्लिंगैर्जुहुयाद्घृतं लोहनामाभ
वत्पूर्वंदानवः सुमहाबलःसदेवैः समरेक्रूरोबहुधाशकलीकृतः तदंगसंभवंसर्वलोहंसंदृश्यतेक्षितौ शस्त्रास्त्रमंत्रै
र्होतव्यंपायसंघृतसंयुतं हुतशेषंतुरंगाणांराजातमुपहारयेत् लोहाभिसारिकंकर्मतेनैतदृषिभिःस्मृतं घृतपल्यय
णानश्वान्गजांश्चसमलंकृतान् भ्रामयेन्नगरेनित्यंवेदघोषपुरस्कृतान् प्रत्यहंनृपतिः स्नात्वासंपूज्यपितृदेवताः
पूजयेद्राजचिन्हानिफलमाल्यविलेपनैः हुतशेषंप्रदातव्यमौपनायनिकेगजे तस्याभिसारणाद्राज्ञोविजयः सम्
दाहृतः पूजामंत्रान्प्रवक्ष्यामिपुराणोक्तानहंतव यैः पूजिताः प्रयच्छंतिकीर्तिमायुर्यशोवलमिति शालिहोत्रे
नीराजितैश्चतुरगैः कृतेचलोहाभिसारिकेऽश्वयुजे अभिषिक्तेराजाश्वेततोनृपाणांभवेद्यात्रा अश्वयुक्शुक्लतिथौद्वि
तीयादिकेसप्तरात्रंतु वडवारूपेणैकास्वातिः सूर्यस्यवहतिरथं साभारेणाक्रांताक्रुद्धाश्वपान्निरीक्षतेऽभीक्ष्णं तेषां
तेजः सत्वंवलंचगृह्णातिसावडवा तस्मात्स्वात्युत्पाताद्वाजिनांपीडाचभवति एवंचसप्तरात्रंस्वातेः संपातएषनि
र्दिष्टः तत्रदिवाकरकिरणैरस्पृष्टावाजिनोरक्ष्याः अथप्रयोगः षोडशहस्तंप्रमाणंमंडपंपताकोपशोभितमैशान

अत्रणदेशेविधायतदाग्नेय्यांहस्तमात्रमेखलमश्वत्थदलोपमयोनियुक्तं मनोहरकुंडंविधायमंडपैशानदेशेराजाचिन्हा
निशस्त्राणिस्थापयेत् अश्वशालांचगोमयलिप्तांसर्वतोवेष्टनेनजनसंचारवर्जितांनानापुष्पफलाद्यलंकृतांधूपितांकृ
त्वा तस्यामुदयात्प्रागेव स्नापितानलंकृतान्निर्जलपुष्पमालाभिरलंकृतास्तुरगान्सूर्यकरस्पर्शवर्जं शस्त्रपाणयःपु
रुषाः सप्ताहंरक्षेयुः तेषांकंठदेशेषु गुग्गुलामलकीधान्यभल्लातककुष्ठवचापामार्गबीजलोहश्वेतसर्षपाणांपंचवर्ण
सूत्रेणवस्त्रेपोटलिकांकृत्वाबध्नीयात् प्रतिपदः स्वातियोगाभावे यस्यांतिथौ स्वातियोगः प्रातर्भवति तामा
रभ्य नवमीपर्यंतमश्वपूजाकार्या अश्वयुक्शुक्लपक्षेतुस्वातियोगेशुभेदिने इतिप्रकृत्य ब्राह्मे वाजिनीराजन
विधिरितिसंप्रदायविदः अन्येतु सत्यानसत्यामपिस्वात्यांप्रतिपदि चित्रावैधृतियोगेद्वितीयायां पंचम्यांवा
श्वपूजारंभः वाजिनीराजनंपश्चाद्दित्वाचित्रांचवैधृतिमित्यश्वशास्त्रोक्तेरित्याहुः द्वितीयाविधिश्च व्यवहारो
च्चये आश्वयुजेशुक्लपक्षेतिथौद्वितीयादिसप्तरात्रंतु तत्रदिवाकरकिरणैरस्पृष्टावाजिनोरक्ष्याः गुग्गुलंहिंगलं
चैववचापामार्गतंडुलान् लोहंसिद्धार्थकंचैवबध्नीयाद्वाजिकंठके ग्रहहोमश्चकर्तव्योग्रहणामर्चनंतथेति तृतीयापंच
म्योरपिविधिर्दृष्टोगोविंदार्णवे स्वात्यादित्येतृतीयादौसप्ताहंचाश्विनेसिते रक्षांकृत्वाहयानांतुशांत्यानीराजयेत्त
तइति भूपालवल्लभे कार्त्तिकेमासिपूर्णायामष्टम्यांद्वादशीदिने आश्विनेशुक्लपंचम्यांहयनीराजनंस्मृतमिति अ
त्रपंचम्यंतोक्तकालेषुदैवात्तदनारंभेगौणकालत्वेनाष्टमीद्वादशीपूर्णमास्योविहिताइतिबोध्यं सौगंधिकपुष्पंचसूर्यव
ल्लींचवर्जयेदितिहयशास्त्रवचनात् सौगंधिकंतुकल्हारमित्यमरः सूर्यवल्लीदुरदुरेतिप्रसिद्धा ततोयजमानोदेश
कालौसंकीर्त्यसकलशत्रुजयसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंलोहाभिसारिकंयज्ञं वाजिनीराजनसहितंकरिष्यइति
संकल्प्यगणेशपूजादिआचार्यवरणांतंकुर्यात् तत आचार्यः प्रत्यक्षाश्वपूजनात्पूर्वं प्रतिमादौउच्चैःश्रवः पूजांविधाय

रेवंतपूजनंकुर्यात् रेवंतस्वरूपंमार्कंडेयपुराणे रेतसोऽश्वस्यरेवंतःखड्गीधन्वीतनुत्रवान् अश्वारूढःसमुत्पन्नोवाण
तूणसमन्वितः तत्रमंत्रःशालिहोत्रे नमोदेवाधिदेवायतुरंगवलचारिणे सूर्यपुत्रायदेवायतुरंगासहितायच तुरंगप
रिपद्यस्यनृगजोपरिधावति अश्वारूढंमहातेजः सप्तिहस्तंमहाबलं अश्वारिष्टहरंदेवंदेवंतंहयवल्लभं सूर्यपुत्रन
मस्तेऽस्तुनमस्तेपंचवक्त्रक नमोगंधर्वदेवायरेवंतायनमोनमः सूर्यपुत्रंहयारूढंपंचवक्त्रंदशांवकं रक्तवर्णैकशाख
ड्गंरेवंतंद्विभुजंस्मरेत् साश्वमश्वाधिपंरक्षशरणंत्वांव्रजाम्यहमिति सूर्यपुत्रमहावाहोछायाहृदयनंदन शांतिं
कुरुतुरंगाणांरेवंतायनमोऽस्तुतेइतिवा सारसिंधौ कुंकुमागुरुकर्पूरचंदनाद्यनुलेपनैः पशुपुष्पार्घ्यधूपैश्चदधिमोदक
पायसैः येपूजयंतिरेवंतंतेषांश्रीरनपायिनीति ततः प्रत्यक्षाश्वपूजनांते नीराजनंप्रकृत्वा सिंहासनांतांपूजांकुर्यात्
वक्ष्यमाणमंत्रैः कदाचिदेतासुपूजासुस्त्रीकर्तृकत्वप्रसक्तावपिरेवंतपूजांस्त्रीनकुर्यात् अभूद्वैपूर्वंभूपस्यपत्न्यारेवंतपू
जने सूनुनाशस्ततोनारीनानियोज्यातदर्चनइतिगोविंदार्णवे सारसिंधुवचनात् सर्वपूजांते कुंडे गृह्योक्तविधिनाग्नि
स्थापनादिकृत्वा ततोग्रहाणामावाहनंततोगृह्योक्तविधिना वायव्यादिलिंगैर्मंत्रैरेकाविंशतिमाज्याहुतीर्जुहुयात
ओंकारपूर्वकैर्मंत्रैस्तल्लिंगैर्जुहुयाद्घृतमितिभविष्ये वायवायाहीतितिसृणांमधुच्छंदाविश्वामित्रोवायुर्गायत्रीवाजि
नीराजनप्रधानहोमेविनियोगः ओंवायवायाहिदर्शनेमसोमाअरंकृता तेषांपाहिश्रुधीहवंस्वाहा वायवइदं ओंवाय
उक्थेभिर्जरंतेत्वामच्छाज्जरितारः सुतसोमाअहर्विदः स्वाहा वायवइदं ओंवायोतवप्रपृंचतीधेनाजिगाति
दाशुषे उरूचेसोमपीतयेस्वाहा वायवइदं नहितेइतितिसृणामाजीगर्तोवरुणस्त्रिष्टुप् वाजिनीराजनप्रधानहोमे
विनियोगः ओंनहितेक्षत्रंसहोनमन्युंचवयश्चनामीपतयंत आपः नेमाआपोअनिमिषंचरंतीर्नये वातस्यप्रमिनं
त्यभ्वं स्वाहा वरुणायेदं ओंअवुध्नेराजावरुणोवनस्योर्ध्वंस्तूपंददतेपूतदक्षः नीचीनास्थपरिबुध्नएषामस्मे

अंतर्निहिताःकेतवःस्युःस्वाहा वरुणायेदं ओंउरुंहिराजावरुणश्चकारसूर्यायपंथामन्वेतुवाहु अपदेयपादाप्रति
धानवेकरुतापवक्ताहृदयाविधश्चित्स्वाहा वरुणायेदं उदुत्यमितितिसृणांप्रस्कण्वः सूर्योगायत्री वाजिनीरा
जनप्रधानहोमेविनियोगः ओंउदुत्यंजातवेदसंदेवंवहंतिकेतवः दृशेविश्वायसूर्यंस्वाहा सूर्यायेदं ओंपत्येताय
वोयथा नक्षत्रायंत्यक्तुभिःसूरायविश्वचक्षसेस्वाहा सूर्यायेदं उक्थमिंद्रायेशस्यवर्धनंपुरुनिषधे शक्रोयथासु
तेपुणोरारणत्सरव्येषुच तस्मिन्सखित्वइमहेंतरायेनंसुवीर्यैसशक्रनुतनः शकादिंद्रोवसुदयमानः स्वाहा इंद्रायेदं
ज्येष्ठेनसोतरिंद्रायसोमंवीरायशक्राय भरापिबमर्पायस्वाहा इंद्रायेदं अतोदेवेतितिसृणांमेधातिथिर्विष्णु
र्गायत्रीवाजिनीराजनप्रधानहोमेविनियोगः ओंअतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे पृथिव्याःसप्तधामभिः
स्वाहा विष्णवइदं ओंइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्यपांसुरेस्वाहा विष्णवइदं ओंत्रीणिपदा
विचक्रमेविष्णुर्गोपाअदाभ्यः अतोधर्माणिधारयन्स्वाहा विष्णवइदं ओमासइतितिसृणांमधुच्छंदाविश्वेदेवा
गायत्री वाजिनीराजनप्रधानहोमे- ओंओमासश्चर्षणीधृतोविश्वेदेवासआगत दाश्वांसोदाशुषः सुजतंस्वाह
विश्वेभ्योदेवेभ्यइदं ओंविश्वेदेवासोअप्तुरःसुतमागतत्तूर्णयः उस्राइवस्वसराणिस्वाहा विश्वेभ्योदेवेभ्यइदं
ओंविश्वेदेवासोअस्रिधएहिमायासोअद्रुहः मेधंजुषंतवन्हयेस्वाहा विश्वेभ्योदेवेभ्यइदं अग्निमीळइति
तिसृणांमधुच्छंदाअग्निर्गायत्री वाजिनीराजनप्रधानहोमे- ओंअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं होतारंरत्न
धातमंस्वाहा अग्नयइदं ओंअग्निःपूर्वेभिर्ऋषिभिरीड्योनूतनैरुत सदेवांएहवक्ष्यतिस्वाहा अग्नयइदं ओंअग्नि
नारयिमश्नवत्पोषमेवदिवेदिवेयशसंवीरवत्तमंस्वाहा अग्नयइदं इतिऋक्शाखिनां अथयजुःशाखिनंयजमाना
पेक्षितास्तच्छाखीयमंत्रालिख्यंते पीवोपीनोअन्नारयीत्यस्यरायेनुयमिति आनोनियुद्भिरितितिसृणांवसिष्ठऋषिः

ॐपीवोअ
वायुर्देवता त्रिष्टुप्छंदः वाजिनीराजनप्रधानहोमेविनियोगः एवमग्रेऽपिविनियोगोज्ञातव्यः
न्नांरयिवृधःसमेधाःश्वेनःसिशक्तिनियुतामभिः श्रीतेवायवेसुमनसोवितस्थुर्विश्वेनरः स्वपत्यानिचक्रुःस्वाहा
रायेनुयंजज्ञतूरोदसीमेरायेदेवीधिषणाधातिदेवं अधवायुर्नियतःसश्चतस्वाउतश्वेतंवसुधितिंनिरेकेस्वाहा आ
नोनियुद्भिःशतिनीभिरध्वरंसहस्त्रिणीभिरुपयाहियज्ञं वायोअस्मिन्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानःस्वा
हा इदंवायवेनममइतितिस्दणांत्यागः उरुंहिराजाइमंमेतत्वायामीतितिस्दणामृचां शुनःशेफोवरुणःआद्यं
तयोस्त्रिष्टुप् मध्यमायागायत्री उरुंहिराजावरुणश्चकारसूर्यायपंथामन्वेतवाउ अपदेपपादाप्रतिधातवेकरु
तापवक्ताहृदयाविधश्चित्स्वाहा इमंमेवरुणःशुधीहवमयाचमृडय त्वामवस्युराचकेस्वाहा तत्वायामिब्रह्मणा
वंदमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीःस्वाहा ३ इदंवरुणा
य उद्वयंतमुदुत्यमितिद्वयोःप्रस्कण्वःसूर्यःक्रमेणानुष्टुप्गायत्री चित्रमिति कुत्सआंगिरसःसूर्यस्त्रिष्टुप् उद्वयंत
मसस्परिस्वःपश्यंतउत्तरंदेवंदेवत्राःसूर्यमगन्मज्योतिरुत्तमं उदुत्यंजातवेदसंदेवंवहंतिकेतवः दृशेविश्वायसूर्यं२
चित्रंदेवानामुदगादनीकं चक्षुर्मित्रस्यवरुणस्याग्नेः आप्रायावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्चस्वा
हा इदंसूर्याय त्रातारमित्यस्यगर्गःइंद्रः सुत्रामानस्यवयइत्यनयोः प्रजापत्यशिवसरितऋषयइंद्रोदेवतात्रिष्टु
प् त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं क्वयामिशक्रपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रःस्वाहा
इंद्रःसुत्रामास्ववाङअवोभिः सुमृडीकोभवतुविश्ववेदाः बाधतांद्वेषोअभयंकृणोतु सुवीर्यस्यपतयःस्यामस्वा
हा तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ससुत्रामास्ववांइंद्रोऽअस्मेआराच्चिद्द्वेषःसनुतर्युयोतुस्वा
हा ३ इदमिंद्राय इदंविष्णुरित्यस्यमेधातिथिऋषिर्विष्णुर्गायत्री इरावतीत्यस्यवसिष्ठोविष्णुःत्रिष्टुप् उरुविष्णो

इत्यस्यप्रजापतिर्विष्णुःअनुष्टुप् इदंविष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरेस्वाहा इरावतिधेनुमतिहिभूतं
सूयवसि नीमनवेदशस्ये व्यस्तभ्नाद्रोदसीविष्णुरेतेदधारपृथिवीमभितोमयूखैः उरुविष्णोविक्रमस्वोरुक्षयायनस्कृ
धि घृतघृतयोनेपिबयज्ञपतिंप्रतिरस्वाहा ३ इदंविष्णवेनमः ओंमासइतिमधुच्छंदाविश्वेदेवासइत्यस्यगृत्समदः वि
श्वेदेवादेवता गायत्र्यौविश्वेदेवासइत्यस्याः सुहोत्रादयोविश्वेदेवाः त्रिष्टुप् ओंमासश्चर्षणीधृतोविश्वेदेवासआगतदा
श्वांसोदाशुषः सुतस्वाहा विश्वेदेवासोअप्तुरः सुतमागंततूर्णय उस्राइवस्वसराणिस्वाहा विश्वेदेवाःशृणुतेम
ंहवंमेये अंतरिक्षे य उपद्यविष्ठ येअग्निजिह्वाउतवायजत्रा आसाद्यास्मिन्बर्हिषिमादयध्वंस्वाहा इदंवि
श्वेभ्योदेवेभ्योनमम अग्नेनयेत्यस्यअगस्त्यऋषिः अयन्नइतिप्रजापतिऋषिः अग्निर्देवतात्रिष्टुभौ यमग्नइ
तिमधुच्छंदाअग्निर्गायत्री अग्नेनयसुपथाराये अस्मान्विश्वानि देववयुनानिविद्वान् युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेन
मउक्तिंविधेमस्वाहा अयन्नोअग्निर्वरिवस्कृणोत्वयंमृधःपुरएतुप्रभिंदन् अयवाजंजयतुवाजसातावयंशत्रून्जय
तुजर्हृषाणःस्वाहा यमग्नेपृत्सुमर्त्यमवावाजेषुयंजुनाः सयंताशश्वतीरिषः स्वाहा इदमग्नये नमम शस्त्रास्त्र
मंत्रैः प्रतिमंत्रमष्टोत्तरंशतमष्टाविंशतिर्वाऽष्टौवाघृतपायसाज्याहुतीर्हुत्वा हुतशेषंतुरंगगजेभ्योदद्यादिति इतिप्र
योगः अथसमलंकृतान्सपल्ययणानश्वान्गजांश्च वाद्यघोषपुरस्सरंसंगरेऽत्यहंभ्रामयेत् ततोराजाकृतमंगल
स्नानःपितृदेवताःसपूज्यविजयारोग्यादिवृद्ध्यर्थं छत्रादिपूजनमहंकरिष्यइतिसंकल्प्य छत्रायनमइत्यादिमंत्रेण
गधादिभिःसपूज्यइतिपठेत् यथांबुदःछादयतिशिवायेमावसुंधरां तथाच्छादयराजानंविजयारोग्यवृद्धये अथ
चामरमंत्रः शशांककरसंकाशक्षीरडिंडीरपांडुर प्रोत्सारयाशुदुरितंचामरामरदुर्लभ अथखड्गमंत्रः असिर्वि
शसनःखड्गस्तीक्ष्णधारोदुरासदः श्रीगर्भोविजयश्चैवधर्माधारस्तथैवच इत्यष्टौतवनामानिस्वयमुक्तानिवेधसा

पितापितामहोदेवस्त्वंमांपालयसर्वदा
नक्षत्रंकृत्तिकातेतुगुरुर्देवोमहेश्वरः हिरण्यंचशरीरंतेधातादेवोजनार्दनः पितापितामहोदेवस्त्वंमांपालयसर्वदा
नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रः कृशोदरः भावशुद्धोऽमर्षणश्चअतितेजास्तथैवच इयंयेनधृताक्षोणिहतश्च
महिषासुरःतीक्ष्णधारायशुद्धायतस्मैखड्गायतेनमइति अत्रकेचिन्मंत्रामहानिबंधेष्वदृष्टाअपिपद्धतिदृष्टालिख्यंते
अथकटारमंत्रः रक्षेमानिगजान्रक्षरक्षवाजिधनानिच ममदेहंसदारक्षकटारकनमोऽस्तुते अथछुरिकामंत्रः सर्वायुधा
नांप्रथमंनिर्मिताऽसिपिनाकिना शूलायुधाद्विनिष्कृष्यकृत्वामुष्टिग्रहंशुभं चंडिकायाःप्रदत्ताऽसिसर्वदुष्टनिबर्हि
णी तयाविस्तारिताचासिदेवानांप्रतिपादिता सर्वसत्त्वांगभूतासिसर्वाशुभनिबर्हिणी छुरिकेरक्षमांनित्यंशांतियच्छ
नमोऽस्तुते अथचर्ममंत्रः चंडिकायाः प्रदत्तंत्वंसर्वदुष्टनिबर्हणं त्वयानिस्तारितादेवाः सुप्रतिष्ठिता
महैः अतस्त्वयिबलंसर्वैर्विन्यस्तदेवसत्तमैः तस्मादायोधनेरक्षशत्रून्नाशयसर्वदा अथचापमंत्रः सर्वायुधम
हामात्रसर्वदेवारिसूदन चापमांसमरेरक्षसाकंशरवरैरिह धृतः कृष्णेनरक्षार्थंसहारायहरेणच त्रयीमूर्तिगतं
देवंधनुस्त्वांनमाम्यहम् अथशक्तिपूजा शक्तिस्त्वंसर्वदेवानांग्रहस्यचविशेषतः शक्तिरूपेणदेवित्वंरक्षांकु
रुनमोऽस्तुते अथकुंतमंत्रः प्रासपातयशत्रूंस्त्वमनयानाकमायया गृहाणजीवितंतेषांममसैन्यंचरक्षय
अथाग्नियंत्रमंत्रः अग्निशस्त्रनमस्तेऽस्तुदूरतःशत्रुनाशन शत्रून्दहहिशीघ्रंत्वंशिवंमेकुरुसर्वदा अथपाशमंत्रः
पाशत्वंनागरूपोऽसिविषपूर्णोविषोद्भवः शत्रवोहित्वयाबध्यानागपाशनमोऽस्तुते अथपरशुमंत्रः परशोत्वमहा
तीक्ष्णसर्वदेवारिसूदन देव्याहस्तास्थितोनित्यंशत्रून्क्षयनमोऽस्तुते अथध्वजमंत्रः शक्रकेतोमहावीर्यसुपर्णस्त्व
मुपाश्रितः पक्षिराजनमस्तेऽस्तुतथानारायणध्वज काश्यपेयारुणभ्रातर्नागारेविष्णुवाहन अप्रमेयदुराध
र्षरणेदेवारिसूदन गरुत्मान्मारुतगतिस्त्वयिसन्निहितोयतः साश्वचर्मायुधान्योधान्रक्षत्वंचरिपून्दह

अथपताकामंत्रः हुतभुग्वसवोरुद्रावायुः सोमोमहर्षयः नागकिंनरगंधर्वयक्षभूतगणग्रहाः प्रमथास्तुस
दादित्यैर्भूतेशोमातृभिःसह शक्रःसेनापतिःस्कंदोवरुणश्चाश्रितस्त्वयि प्रदहंतुरिपून्सर्वान्राजाविजयमृच्छ
तु यानिप्रयुक्तान्यरिभिरायुधानिसमंततः पतंतूपरिशत्रूणांहतानितवतेजसा हिरण्यकशिपोर्युद्धेयुद्धेदेवासुरे
तथा कालनेमिवधेयुद्धेयुद्धेत्रिपुरघातने शोभिताऽसितथैवाद्यशोभयास्मांश्चसंस्मर नीलांश्वेतामिमांदृष्ट्वा
नश्यंत्वाशुनृपारयः व्याधिभिर्विविधैर्घोरैः शस्त्रैश्चयुधिनिर्जिताः सद्यःस्वस्थाभवंत्वस्मात्वद्वातेनापमार्जिताः
पूतनारेवतीनाम्नाकालरात्रिश्चयास्मृता दहस्वाशुरिपून्सर्वान्पताकेत्वंमयार्चिता अथकनकदंडमंत्र. प्रोत्सा
रणायदुष्टानांसाधुसंरक्षणायच ब्रह्मणानिर्मितश्चासिव्यवहारप्रसिद्धये यशोदेहिसुखदेहिजयदोभवभूपतेः
ताडयस्वरिपून्सर्वान्हेमदंडनमोऽस्तुते अथदुंदुभिमंत्रः दुंदुभेत्वंसपत्नानांघोरोहृदयकंपनः तथाऽस्तुतवशब्दे
नहर्षोस्माकंमुदावह भवभूमिपसैन्यानांतथाविजयवर्द्धनः यथाजीमूतघोषेणप्रहृष्यंतिचबर्हिणः तथाऽस्तुतवश
ब्देनहर्षोस्माकंमुदावहः यथाजीमूतशब्देनस्त्रीणांत्रासोऽभिजायते तथैवतवशब्देनत्रस्यंत्वस्मद्द्विषोरणे अथ
शंखमंत्रः पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलं विष्णुनाविधृतोनित्यमतःशांतिप्रदोभव अथसिंहासनमंत्रः
विजयोजयदोजतारिपुहंताशुभंकरः दुःखहादुर्मदःशांतः सर्वारिष्टविनाशनः एतेवैसन्निधौयस्मात्तत्रसिंहामहाबला.
तेनसिंहासनेतित्वंवेदैर्मंत्रैश्चगीयसे त्वयिस्थितः शिवः शांतस्त्वयिशक्रः सुरेश्वरः त्वयिस्थितोहरिर्देवस्त्वदर्थेनप्य
तेतपःनमस्तेसर्वतोभद्रभद्रदोभवभूपतेः त्रैलोक्यजयसर्वस्वसिंहासननमोस्तुते अथाश्वंसंपूज्यतद्दक्षिणकर्णेजपेत्
कुलाभिजनजात्याचलक्षणैर्व्यंजनोत्तमैः भर्तारमभिरक्षत्वंशिवंतवभवेदिति कशाघातमधिष्ठानक्षमस्वतुरगो
त्तम ततोऽश्वायभक्ष्यंदत्वा अश्वराजपुरोधास्तुविष्णुस्तेपुरतः स्थितः वरुणः पाशहस्तस्त्वांपृष्ठतः परिरक्षतु

हविःशे
वैवस्वतकुबेरौचपार्श्वयोरभिरक्षतां चंद्रादित्यौपृष्ठवंशउदरंपृथिवीधरः रक्षंतुवक्कंगंधर्वाबलामिंद्रोददातुते हविःशे
पमितिप्राश्यंविजयार्थंमहीपतेः ततश्चाचमनीयंदत्वास्तुतिंपठेत् गंधर्वकुलजातस्त्वंमाभूयाः कुलदूषकः ब्रह्म
णः सत्यवाक्येनसोमस्यवरुणस्यच प्रभावाच्चहुताशस्यवर्द्धयत्वंतुरंगमान् तेजसाचैवसूर्यस्यमुनीनांतपसातथा
रुद्रस्यब्रह्मचर्येणपवनस्यबलेनच स्मरत्वंराजपुत्रंचकौस्तुभंचमणिंस्मर सुरासुरैर्मथ्यमानक्षीरोदादमृतादिभिः
जातउच्चैःश्रवाः पूर्वंतेनजातोसितत्स्मर यांगतिंब्रह्महागच्छेन्मातृहापितृहातथा भूमिहाऽनृतवादीचक्षत्रियश्च
पराङ्मुखः सूर्याचंद्रमसौवायुर्यावत्पश्यंतिदुष्कृतं व्रजाश्वतांगतिंक्षिप्रंतच्चपापंभवेत्तव विकृतिंयदिगच्छेथा
युद्धाध्वनितुरंगम रिपुंविजित्यसमरेसहभर्त्रासुखीभव २० ततः सुखमानासिध्यर्थंशिविकांपूजयेत् तत्रमंत्रः
महेंद्रनिर्मितेदिव्येदेवराजादिसेविते शिविकेरक्षमांनित्यंसदामेसन्निधौभव निर्मितासिकुबेरेणबाल्येनिद्रासुखा
र्थिना शिविकेपाहिमांनित्यंशांतिंदेहिनमोऽस्तुते रिपुक्षयकामोरथंपूजयेत् तत्रमंत्रः शस्त्रास्त्रधारणार्थायनिर्मि
तोविश्वकर्मणा रथनेमिस्वनैर्घोरैरिपोर्हृदयकंपनः २१ युद्धेजयप्राप्त्यर्थंगजंपूजयेत् कुमुदैरावणौपद्मः पुष्प
दंतोथवामनः सुप्रतीकोंजनोनीलएतेऽष्टौदेवयोनयः तेषांपुत्राश्चपौत्राश्चवनान्यष्टौसमाश्रिताः मंद्रोभद्रोमृगश्चै
वगजस्संकीर्णएवच वनेवनेप्रसूतास्तेस्मरयोनिंमहागज पांतुत्वांवसवोरुद्राआदित्याःसमरुद्गणाः भर्तारंरक्षनागें
द्रस्वामीचप्रतिपाल्यतां अवाप्नुहिजयंयुद्धेगमनेस्वस्तितांव्रज श्रीस्तेसोमाद्बलंविष्णोस्तेजः सूर्याज्जवोऽनिलात्
स्थैर्यंमेरोर्जयंरुद्राद्यशोदेवात्पुरंदरात् युद्धेरक्षंतुनागास्त्वांदिशश्चसहदैवतैः अश्विनौसहगंधर्वैःपांतुत्वांसर्वतःसदा
चिन्हपूजनं तथैवकर्मचिन्हानिपूज्यानिस्वानिशिल्पिभिः लोहाभिसारिकंकर्मकृत्वैवंमंत्रपूर्वकं एवंकृत्वातथाष्टम्यां
पूर्वाह्णेस्नानमाचरेत् दारुणैर्विचित्रतोरणविन्यस्तेशोभनेस्थाने पुरतोविन्यस्तमृगांविचित्रगृहमध्यगांस्नातां

कुंकुमचंपकचंदनचतुस्समैःशैलपिष्टैश्च चर्चितगात्रांचंडींकुसुमैरभ्यर्च्यबहुभिः कुमुदैःसपत्रकुसुमैः सदीपधूपैः
सनैवेद्यैः मांसैर्बल्युपहारैर्मंगलशब्दैः समुच्चरितैः विहितच्छत्रैर्यानैः स्यंदनशितशस्त्रधारिजनलोकैः तुष्टैर्वरवस्त्रा
दितुनिवेद्यसर्वमेवभगवत्यै जयंतीत्यादिपूजामंत्रः बिल्वपत्रमंत्रस्तु अमृतोद्भवंक्षीरवृक्षामित्यादि दुर्गासापूज
नीयातुतद्दिनेद्रोणपुष्पकैरित्युक्तत्वादत्रापिद्रोणपुष्पंसमर्पयेत्तत्रमंत्रोब्रह्मविष्णुशिवानामित्यादिसप्तमीप्रकरणेद्रष्ट
व्यः ततःपुष्पांजलिंदद्यादिति इत्यष्टम्यामहःकृत्यं अत्रराजाविजयकामोऽर्धरात्रे विशेषपूजापूर्वकं बलिं
दद्यात् तदर्धयामिनीशेषेविजयार्थंनृपोत्तमः पंचाब्दलक्षणोपेतंगंधधूपस्रगार्चितं विधिवत्कालिकालीतिज
प्त्वाखड्गेनघातयेदितिदेवीपुराणात् अत्रनैमित्तिकपूजोत्तरंरात्रौचतुःषष्टियोगिनीपूजाकार्या तन्नामानितु विज
यायैनमः १ मंगलायैनमः २ ॐभद्रायैनमः ३ ॐधृत्यैनमः ४ ॐशान्त्यैनमः ५ ॐक्षमायैनमः ६ ॐशिवा
यैनमः ७ ॐसिद्ध्यैनमः ८ ॐउमायैनमः ९ ॐश्रियैनमः १० ॐरत्यैनमः ११ ॐदीप्तायैनमः १२ ॐकां
त्यैनमः १३ ॐयशस्विन्यैनमः १४ ॐलक्ष्म्यैनमः १५ ॐईश्वर्यैनमः १६ ॐवृद्ध्यैनमः १७ ॐसाध्व्यै
नमः १८ ॐजयायैनमः १९ ॐब्राह्म्यैनमः २० ॐजयंत्यैनमः २१ ॐअपराजितायैनमः २२ ॐजि
तायैनमः २३ ॐमानस्यैनमः २४ ॐश्वेतायैनमः २५ ॐदित्यैनमः २६ ॐमायायैनमः २७ ॐमहा
मायायैनमः २८ ॐमोहिन्यैनमः २९ ॐरतिलालसायैनमः ३० ॐतारायैनमः ३१ ॐविमलायैनमः ३२
ॐगौर्यैनमः ३३ ॐशरण्यायैनमः ३४ ॐकौशिक्यैनमः ३५ ॐमत्यैनमः ३६ ॐदुर्गायैनमः ३७ ॐक्रियायै
नमः ३८ ॐअरुंधत्यैनमः ३९ ॐघंटायैनमः ४० ॐकर्णायैनमः ४१ ॐकपालिन्यैनमः ४२ ॐरौद्र्यैनमः ४३
ॐकाल्यैनमः ४४ ॐमायूर्यैनमः ४५ ॐत्रिनेत्रायैनमः ४६ ॐसमरूपायैनमः ४७ ॐबहुरूपायैनमः ४८

ॐरिपुहायैनमः ४९ ॐअंविकायैनमः ५० ॐचर्चिकायैनमः ५१ ॐसुरपूजितायैनमः ५२ ॐवैवस्वत्यैनमः ५३
ॐकौमार्यैनमः ५४ ॐमहालक्ष्म्यैनमः ५५ महासरस्वत्यैनमः ५६ ॐकार्त्तिक्यैनमः ५७ ॐशिवदूत्यैन
मः ५८ ॐचामुंडायैनमः ५९ ॐब्रह्माण्यैनमः ६० ॐमाहेश्वर्यैनमः ६१ ॐवैष्णव्यैनमः ६२ ॐवाराह्यै
नमः ६३ ॐइंद्राण्यैनमः ६४ ततःखड्गंनमस्कृत्यशत्रूणांवधसिद्धये इच्छेच्चविजयंराज्यंसुभिक्षंचात्मनोनृपः
ततःपुनःप्रणम्याथसंस्मरन्हृदयेशिवां ततोजयजयालापैः स्तवंकुर्यादिमंततः सर्वमंगलमांगल्येशिवेसर्वार्थ
साधिके शरण्येत्र्यंबिकेगौरिनारायणिनमोऽस्तुते कुंकुमेनसमालब्धेचंदनेनविलेपिते बिल्वपत्रकृतापीडेदुर्गेऽहंश
रणगतः सर्वंकृत्वेतिकौरव्यअष्टम्यांजागरंनिशि नटनर्त्तकगीतैश्चकारयेच्चमहोत्सवं एवंहृष्टोनिशांनीत्वाप्र
भातेचारुणोदये घातयेन्महिषान्मेषान्रटतोनतकंधरान् शतमर्द्धंशतंचापितदर्द्धंवायथेच्छया सुरासवभृतैः
कुंभैस्तर्पयेत्परमेश्वरीं कापालिकेभ्यस्तद्देयंदीनानाथेभ्यएवच दासीदासजनेदेयंतद्भक्तेभ्यस्तथैवच सर्वंवि
भज्यकौंतेयसुहृत्संबंधिबंधुषु ततोपराह्णसमयेनवम्यांवैरथेस्थितां भवानींभ्रामयेद्राष्ट्रेस्वयंराजास्वसैन्यवान्
आदिष्टैःपुरुषैर्वापिरथयुक्तैःसुशिक्षितैः शनैःशनैरनुनयेज्ज्वलद्भिर्दीपवृक्षकैः आकृष्टखड्गैर्योधैश्चधानुष्कैश्चप्र
गल्भितैः नदद्भिःशंखपटहैर्नृत्यद्भिर्वहुचारणैः कश्चिच्चोपोषितोवीरोविधृतोऽन्येनखड्गवान् भूतेभ्यश्चबलिंदद्या
न्मंत्रेणानेनसामिषं सरक्तंसजलंचान्नंगंधपुष्पाक्षतैर्युतं त्रींस्त्रीन्वारान्सशूलेनदिग्विदिक्षुकिरेद्बलिं मंत्राश्च
वलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा मरुतश्चाश्विनौरुद्राः सुपर्णाःपन्नगाग्रहाः असुरायातुधानाश्चपिशा
चोरगराक्षसाः डाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः जंभकाःसिद्धगंधर्वामालाविद्याधरानगाः दिक्पा
लालोकपालाश्चयेचविघ्नविनायकाः जगतांशांतिकर्त्तारोब्रह्माद्याश्चमहर्षयः माविघ्नंमाचमेपापंमासंतुपरिपंथि

नः सौम्याभवंतुत्वत्ताश्चभूतप्रेताःसुखावहाइति महिषघ्निमहामायेत्यादिदुर्गांशिवांशांतिकरीमित्यादिचपठेत् अष्ट
म्यांचचतुर्दश्यांनवम्यांचैकचेतसइतिमार्कंडेयपुराणवचनात्. चंडीपाठोऽपिविशेषतःकार्यः अत्र गौरीतृतीयाव
त्कर्मकालव्यापिशास्त्रंबाधित्वानवमीयुतायामेवरात्रावसत्यामष्टम्यांनवमीपूजयासहतंत्रेणाष्टमीपूजोपवासा उचि
तावितिकालतत्त्वविवेचने कौस्तुभेतु नवमीविद्धायांतु तस्यांपूजात्रयस्याप्येककालप्रसक्तावष्टमीपूजां नवमी
पूजांतत्संधिपूजांचतंत्रेणकरिष्यइतिसंकल्पः अष्टमीनवमीपूजयोःपूर्वोत्तरदिनगतयोः प्रातःकालस्थयोः पृ
थक्संभवेसंधिकालस्यचततःपृथक्लाभेसंधिपूजापिदिवारात्रौवापृथगेवकार्या अष्टमीनवमीसंधौतृतीयाखलुक
थ्यते तत्रपूज्यात्वहंपुत्रयोगिनीगणसंयुतेतिकालिकापुराणे देवीवाक्ये तृतीयसंधिपूजाविधानात् अस्याश्चका
लविशेषेणफलतारतम्यंमत्स्यसूक्ते अष्टमीनवमीयोगेरात्रियोगोविशिष्यते अर्धरात्रेदशगुणंसंध्यायांत्रिगुणं
भवेदिति संधिश्चतिथ्योरंत्याद्यदंडात्मकः अष्टम्याःशेषदंडश्चनवम्याःपूर्वएवच तत्रयाक्रियतेपूजाविज्ञेया
सामहाफलेतिकामरूपीयनिबंधोक्तेः यदापूर्वनिबंधस्थितपष्टिदंडाष्टम्यां नवमीदिनशेषेभवति तदाऽष्टमीपूजापूर्वे
द्युरेव संधिपूजाचनवमीपूजयासहपरत्रकार्येत्युक्तं इत्यष्टमीकृत्यम् अथनवमीकृत्यम् इयंचनवमीदुर्गापूजाया
मष्टमीविद्धाग्राह्यासायंत्रिमुहूर्तयोगेपूर्वानवमी श्रावणीदुर्गनवमीतिवचनात् दशमीविद्धानिषेधाच्च मुहूर्तयोगा
भावेतुनिषिद्धापिपरैवकार्येतिनिर्णयसिंधौ मदनरत्नेतु बल्यादौपराकार्या अश्वयुक्शुक्लनवमीमुहूर्तंवाकलायदि
सातिथिः सकलाज्ञेयालक्ष्मीविद्याजयार्थिभिरितिसौरपुराणात् सूर्योदयेपररिक्तापूर्णास्यादपरायदि,बलिदानंप्रक
र्तव्यंतत्रदेयंशुभावहं बलिदानेकृतेऽष्टम्यांपुत्रभंगोभवेन्नृपेतिदेवीपुराणाच्च उपवासेपूर्वेति निर्णयदीपेऽपि महान
वमीपरदिनेऽपराह्णव्यापित्वेपरा अन्यथापूर्ववचनानितु नवमीप्रकरणेवक्ष्यंते कालतत्त्वविवेचने यदातुनवम्य

ष्टमीविद्धाभूत्वाद्वितीयदिनेपिक्रियतीभवतितदानवमीप्रयुक्तस्यपूजादेः पूर्वदिनेऽनुष्ठानेऽपिमहाबलिदानमात्रंद्वितीय
दिनेकर्त्तव्यं प्रभूतबलिदानंतुदीयतेतत्रमानवैः तद्राष्ट्रंनाशमायातिमारकोपद्रवैः किलेतिभविष्यत्वचनात् नव
मीप्रयुक्तंबलिदानंसर्वथानवमीमध्यएवकार्यं नतुदशम्यां अत्रकेचित् पूर्वाषाढायुताष्टम्यांपूजाहोमाद्युपोषण
मितिकालिकापुराणवचनादष्टम्यांहोममाहुः कौस्तुभेतु शुंभासुरवधार्थायरक्तबीजोमहासुरः अष्टम्यांनिहतो
देव्याराचैवारुणोदये ततःप्रभृतिविंध्याद्रौस्थितापूजाप्रवर्त्तिका शस्त्रास्त्रमंत्रैर्होतव्यंपायसंघृतसंयुतं मांसा
नितत्रहोमार्थमेपाद्यानिचसर्वशः अजस्त्वेकोहिहोतव्योरक्तवर्णोविशेषतः कृष्णवर्णस्तुहोतव्योगौरस्तित्तिरएववा
रोहितंमत्स्यमांसंचहोतव्यंजयमिच्छतेतिधौम्यवचनाद्धोमस्याष्टमीकृत्यत्वेनैवप्रतीतेस्तत्रैवहोमः कार्यइत्युक्तंअन्येतु
नवम्यांबलिदानंतुकर्त्तव्यंवैयथाविधि जपहोमंचविधिवत्कुर्यात्तत्रविभूतयइत्यादिवचनैर्नवम्यामेवारभ्यं नवम्यां
होमंसमापयेदित्याहुः अपरेतु अष्टम्यामारभ्यनवम्यांसमापयंति तत्र मूलं शिष्टाचारएव वस्तुतस्तु अष्टमी
होमवचनानिलोहाभिसारकर्मपराणि लोहाभिसारिकंकर्मकारयेद्यावदष्टमीमितिभविष्योत्तरपुराणेऽष्टमीपर्यंत
मेवतस्योक्तत्वात् नवमीहोमवचनं नवरात्रव्रतविषयमितिनकाप्यनुपपत्तिः अथवाष्टमीनवमीहोमवचनान्यष्टरात्र
नवरात्रपक्षयोर्व्यवस्थया होमविधायकानि यत्तु निर्णयसिंधौ समुच्चयपक्षएवयुक्तइति तदेतेनप
रास्तं यदपिरुद्रयामलेविकल्पउक्तस्तन्निर्मूलमितिप्रौढिवादमात्रं यामलस्यैवमूलत्वात् अथतस्यैवनिर्मूलत्वमि
त्यभिप्रायस्तत्रतंत्राणामपि वेदमूलकतयानारदपंचरात्रादिपूक्तत्वात् दुर्गाभक्तितरंगिण्यादिगौडग्रंथेष्वपि नव
म्यांहोमउक्तः. अत्रडामरतंत्रेविशेषः पायसंसर्पिषायुक्तंतिलैः शुक्लैर्विमिश्रितं होमयेद्विधिवद्भक्त्यादशांशेनन्न
पोत्तमः रुद्राध्यायेयथाहोमोमंत्रेणैकेनसाध्यते तथास्तोत्रंजपेद्धोमंश्लोकेनैकेनसाधयेत् यद्वासप्तशतीजप्येहोमेमं

त्रोनवाक्षरः ऐंह्रींक्लींचामुंडायैइतिपूर्वोक्तः कृत्यरत्नावल्यांदेवीपुराणे पूजयेत्तिलहोमैश्चदधिक्षीरघृतादिभिरिति
मंत्रश्च जयंतीत्यादिः अनेनैवतुमंत्रेणजपहोमादिकारयेत् देवीपुराणात् दुर्गाभक्तितरंगिण्यामप्येवं केचित्तुमा
र्कंडेयपुराणगतसप्तशतीस्तवेनप्रतिश्लोकंस्वाहांतेनतिलमिश्रपायसेनहोमंकुर्वंति प्रतिश्लोकंचजुहुयात्पायसंतिल
सर्पिषेतिरहस्यग्रंथवाचनात् पुरश्चरणकार्येतुबिल्वपत्रयुतैस्तिलैरितिवचनाद्बिल्वपत्रयुक्ततिलैर्होमइतिस्मार्ताः यत्तु
निर्णयसिंधौमानाभावादितिस्मार्तमतेदूषणमभिहितंतत्तुच्छंपूर्वोक्तवचनस्यमानत्वात् यदिचैतद्वचनस्यनवरात्रसंबं
धिहोमांगत्वेनबिल्वपत्रयुततिलविधायकत्वे मानाभावइत्यभिप्रायस्तर्हिभावानवबोधःनवरात्रसंबंधिकाम्यपुरश्चर
णांगहोमाभिप्रायेणतथाभिधानात् तिथितत्त्वेनवरात्रप्रकरणेकालिकापुराणेऽपिपुरश्चरणकार्येषुबिल्वपत्रयुतैस्तिलैः
साक्षतैः सघृतैर्वापिशिवामुद्दिश्ययत्नतः जुहुयादनलंवृद्धंसंस्कृतंकार्यवृद्धये रुद्रयामलेऽपि प्रधानद्रव्यमुद्दिष्टंपा
यसान्नंतिलास्तथा रक्तचंदनखंडाश्चगुग्गुलाश्चमनोहराःप्रतिश्लोकंचजुहुयात्सर्वद्रव्याणिचक्रमादितिनवाक्षरेणवाहु
त्वानमोदेव्याइतीतिवेति,एवंनवम्यांहोमकुमारीपूजनब्राह्मणभोजनादिकृत्वादक्षिणाद्याचार्यायनिवेदयेत्नवम्यांपूर्व
वत्पूजाकर्तव्याभूतिमिच्छता दक्षिणांवस्त्रयुग्मंचआचार्यायनिवेदयेत् पूर्ववत्प्रतिपदादीतिकालतत्त्वविवेचने तत्रैव
भविष्योत्तरे कृताभिषेकावरदाशुक्लेचाश्वयुजस्यच तस्मात्सातत्रसंपूज्यानवम्यांचंडिकाबुधैरिति इतिनवमीकृत्यम्
विसर्जनंतुदशम्यामेवकार्यं संपूज्यप्रेषणंकुर्याद्दशम्यांशाबरोत्सवैरितिभविष्यपुराणात् रुद्रयामले दशम्याम
भिषेकंचकृत्वामूर्तिंविसर्जयेदिति तत्रदशम्याः पूर्णातिथित्वे प्रातस्तत्कृत्वा तदुत्तरंपारणोत्तरमपराजितापूजनमि
तिक्रमोनिःसंदिग्धएव यत्रतुनवम्युत्तरमपराह्णेदशमीप्रवृत्ताउत्तरदिनेश्रवणाभावश्च तत्रविसर्जनव्रतपारणाप
राजितापूजनक्रमेभवतिसंदेहः पारणोत्तरकर्तव्यस्यतत्रैवापराह्णेशिष्टैः क्रियमाणस्यापराजितापूजनस्य विसर्जनं

नवमीदशमीपारणायाविधायकवचनद्वैविध्येनपारणायानियतकर्त्तव्यत्वेऽपि संप्रेपणंतु
विनानुपत्तेः अत्रोच्यते नवमीदशमीपारणायाविधायकवचनद्वैविध्येनपारणाया... दशम्यां प्रातःकर्त्तव्य
कर्त्तव्यदशम्यांशारदोत्सवैः प्रातरावाहयेद्देवींप्रातरेवविसर्जयेदित्यादिवचनैर्विसर्जनस्य दशम्यां प्रातःकर्त्तव्य
त्वेननिर्णीतत्वात्पूर्वेद्युर्नवम्यांदशम्यांवायथाचारंपारणांकृत्वापराह्णेपराजितापूजनंविधायप्रातर्दशम्यां विसर्जन
कर्त्तव्यमिति तथाचरुद्रयामले अष्टम्यांजागरंकुर्यान्नवम्यांपारणंतथा दशम्यांचविसर्गःस्यादिति धवलनिबंधेतुवि
शेपः अंत्यपादोदिवाभागेश्रवणस्ययदाभवेत् संप्रेपणंतदादेव्यादशम्यांतुपुनर्दिवेति दिनद्वयेदशमीसत्त्वेपूर्वे
दशम्यांश्रवणांत्यभागयोगेतत्रैवविसर्जनं तत्रतद्योगाभावेतुपरत्रदशम्यामेवतत् पूर्वदिनेनक्षत्रयोगानुरोधेनाक्रि
यामाणविसर्जनेनपूर्वाह्णादुरइत्याशयेनोक्तंराजमार्त्तंडे निर्माल्यत्यागेन देवीविसर्जनमुपलक्ष्यते कृत्यतत्त्वाऽर्णवे
पि नक्षत्रंश्रवणंतिथिंचदशमींसंप्राप्यसंप्रेपयेदिति रूपनारायणीयेतुदशम्यांप्रातः संप्रेषयेदितिवचनात्प्रातः काल
स्यैवप्राशस्त्यमित्युक्तंकौस्तुभेअथनवरात्रपारणानिर्णयः तत्र द्विविधानिवचनानि कानिचिन्नवमीपारणविधायका
निदशमीनिषेधकानिच कानिचिद्दशमीपारणविधायकानिनवमीनिषेधकानिच तत्रयथाकुलाचारंव्यवस्थावचना
निदशमीप्रकरणेवक्ष्यंते नवरात्रव्रतेपारणाहेसत्यपि सूतकेपारणंकार्यं तदुक्तंरुद्रयामले सूतकेपारणंकुर्यान्नवम्यां
होमपूर्वकं तदंतेभोजयेद्विप्रान्दानंदद्याच्चशक्तितइति तदंतेसूतकांते माधवीये कौर्मेऽपि काम्योपवासेप्रक्रांते
त्वतराम्मृतसूतके तत्रकाम्यव्रतंकुर्याद्दानार्चनविवर्जितमिति व्रतयज्ञविवाहेषुश्राद्धेहोमेऽर्चनेजपे आरब्धेसूतकं
नस्यादनारब्धेतुसूतकमितिविष्णुवचनमपि अशौचमध्येतत्कर्त्तव्यतामवगमयति प्रारंभस्तुतत्रैवोक्तः प्रारंभोवर
णंयज्ञेसंकल्पोव्रतसत्रयोः नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेतिस्त्रियातुरजोदर्शनमध्येऽपिपारणाकार्या तदा
हसत्यव्रतः प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् नतत्रापिव्रतस्यस्याद्दुपरोधः कदाचनेति निर्णयसिंधौ नियम

स्थायदानारीप्रपश्येदंतरारजः उपोष्यैवतुताराञीःस्नात्वाशेषंचरेद्व्रतमित्यंगिरोवचनं यच्च हारीतवचनं नियमस्थायदानारीरजः पश्येत्कथंचन त्रिरात्रंतुक्षिपेदूर्ध्वंव्रतशेषंसमापयेदिति तद्विधवोपवासविषयं तासांतत्रभोजननिषेधादितिकेचित् वयंतु प्रागुक्तसत्यव्रतवचने दीर्घतपसामितिविशेषोपादानाद्द्वादशीव्यतिरिक्तसकलैकाहोपवासविषयोऽयंनिषेधः त्रिरात्रनवरात्रादिदीर्घव्रतेषुतु रजोमध्यएवपारणेतिब्रूमइति अशौचमध्येतु सर्वापिपारणाभवति प्रागुक्तकौर्मवचनादितिस्थितं पारणायांविधिनिषेधयोः सत्वादाचारतोव्यवस्थेतिकेचित् मयूखेतु सत्यव्रतवचस्तुनसधवापरंकिंतुविधवापरंविधवायास्तुतत्रत्रिरात्रमध्येभोजननिषेधादित्यन्ये तत्र निषेधस्य रागप्राप्तभोजनगोचरत्वेन वैधपारणाविषयत्वायोगात् वस्तुतस्तु रजस्वलायाविधवायास्त्रिरात्रमध्येभोजननिषेधएव खपुष्पायमाणइति कृत्यरत्नावल्यांतु अत्रनवरात्रहोमस्य पूजारूपत्वेन प्रधानत्वात्तस्यचानन्यसाध्यत्वेनाशौचेऽसंभवान्नतुदानार्चनजपमितिनिषेधात्तत्समाप्तिंविनाचनियमरूपोपवाससमाप्त्यसंभवादाशौचांते होमादिपूर्वकपारणं कर्तव्यं प्राचीनशिष्टाचारोप्येवमेव येस्तुहोमोनक्रियतेतेषांपारणंभवत्येवेतिस्थितं इतिनवरात्रमध्येअशौचरजोदर्शनप्रांतेपारणानिर्णयः दुर्गाभक्तितरंगिण्यांदेवीपुराणे ततःप्रातःपूजयित्वादशम्यांविधिपूर्वकं संप्रेषणंतुकर्तव्यं गीतवादित्रनिःस्वनैरित्यादितत्रक्रमः प्रातःपूजांबलिदानरहितांविधायनीराजनांतंकृत्वादुर्गेशिवामितिरूपंदेहीति माहिषघ्नीत्यादिचपठित्वापुष्पांजलिंदत्वा कर्तव्यंसमापयेत् विधिहीनंक्रियाहीनंभक्तिहीनं यदर्चितं पूर्णंभवतु तत्सर्वंत्वत्प्रसादान्महेश्वरीतिप्रसाद्य क्षमस्वेत्युक्त्वैकंपुष्पंउँदुर्गायैनमइत्यैशान्यांनिःक्षिपन्विसृजेत् महिषाघ्निमहामायेशुभांपूजांप्रगृह्यच कुरुष्वममकल्याणमष्टाभिः शक्तिभिः सह कुत्रचित्तु उत्तिष्ठदेविचंडेशीतिपाठः उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे उपप्रयंतुमरुतसुदानवइंद्रप्राशुर्भवासुचा अभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु अथतस्य

विसर्जनं यातुदेवगणाः सर्वेपूजामितिपठित्वा गच्छगच्छपरंस्थानंस्वस्थानंदेविचंडिके व्रजस्रोतोजलंवृद्धौ तिष्ठगेहेचभूतय इत्युत्थापयेत् ततोगीतवाद्यघोषपुरःसरंस्रोतोजलसमीपंनीत्वा दुर्गेदेविजगन्मातःस्वस्था नंगच्छपूजिते षण्मासेषुव्यतीतेषुपुनरागमनायवै इमांपूजांमयादेवियथाशक्त्योपपादितां रक्षार्थंत्वंसमादायव्र जस्वस्थानमुत्तममिति जलेप्रवाहयेत् ततोगृहमागत्य शांतिकलशोदकेन ब्राह्मणैरभिषिक्तोदुर्गापूजाप्रतिष्ठासि द्ध्यर्थंब्राह्मणेभ्योदक्षिणांदत्वा ब्राह्मणान्भोजयित्वा बंधुभिःसहभुंजीतेति देवीपूजनोपकल्पितद्रव्यादिकंब्राह्म णायदेयं तदुक्तंमत्स्यसूक्ते देवेदत्वातुदानानिदेवेदद्याच्चदक्षिणां तत्सर्वंब्राह्मणेदद्यादन्यथाविफलंभवेदिति इति दशमीकृत्यं इयमेव विजयदशमीत्युच्यते साच श्रवणयोगवतीग्राह्या पूर्वदिवसेचेत्पूर्वा द्वितीये श्रवण योगे एकादशीयुक्तापि ग्राह्या उभयदिने श्रवणयोगाभावेऽपराह्णयोगवती दशमी ग्राह्या दिन द्वयेपराह्णयोगवतीपूर्वा दिनद्वयेऽपराह्णयोगाभावे नक्षत्रयोगिनीग्राह्या वचनानितु दशमीप्रकरणे वक्ष्यंते तस्यामेवदशम्यांगोपथब्राह्मणोक्तःप्रस्थानविधिःकर्तव्यः मूलवचनानि दशमीप्रकरणे वक्ष्यंते तत्र राजास्वलंकृ तोवीणादिमंगलशब्दान्शृण्वन् होमसंभारानुपकल्प्य मैत्रेमुहूर्तेऽग्निप्रतिष्ठापनंकुर्यात् मैत्रमुहूर्तस्तु प्रातःकाले तृतीयमुहूर्तः ततः शांतिंप्रीतिपुरस्सरंकारयित्वावोढारंतेनाभिषिंचेरन् ऋत्विजइतिशेषः यजमानंवस्त्रादिभिरलं कृत्यसमीपउपवेश्याचार्योऽभयैरपराजितैःपुष्पैःस्वस्त्ययनैःशर्मवर्मभिर्जनवेदनैश्चहुत्वापार्थिवस्येतिमाप्रगामेतिच हुत्वा आगच्छतागतस्येतींद्रंस्थालीपाकेनेष्ट्वा आतिष्ठजिष्णुरन्क्षराऋजवइतिपंथानमास्थायजपेदिमौपादौय तइंद्रंत्रातारमिंद्रंमानोविदन्नभयंसोमाबृहस्पतिर्नः परिपातुपश्चादितित्रीन्विष्णुक्रमान्क्रांत्वेत्यादि मंत्रास्तु आ थर्वणेराज्याभिषेकप्रकरणेद्रष्टव्याः अथापराजितादशम्यां पूर्वोक्तविजयमुहूर्तेउक्तं प्रास्थानिकमित्युपक्रम्य त

त्राप्येतेश्लोकाः श्रलंकृतोभूषितभृत्यवर्गःपरिष्कृतोत्तुंगतुरंगनागः वादित्रनादप्रतिनादिताशःसुमंगलाचारपरं पराशीः राजानिर्गत्यभवनात्पुरोहितपुरोगमः आस्थानिकविधिंकृत्वाप्रतिष्ठेत्पूर्वतोदिशि गत्वानगरसीमांतंवा स्तुपूजांसमारभेत् संपूज्यचाथदिक्पालान्पूजयेत्पथिदेवताः मंत्रैर्वैदिकपौराणै.पूजयेच्चशमीतरुं अमंगलानांश मनींदुष्कृतस्यचनाशिकां दुःखस्यशमनींधन्यांप्रपद्येऽहंशमींशुभां ततःकृताशीःपूर्वस्यांदिशिविष्णुक्रमान्क्रमेत् रिपोःप्रतिकृतिंकृत्वाकृत्वाचमनसाचतं शरेणस्वर्णपुंखेनविध्येद्धृदयमर्मणि दिशांविजयमंत्राश्चपठितव्याःपुरोध सा एवमेवविधिंकुर्याद्दक्षिणादिदिशास्वपि पूज्यान्निजांश्चसंपूज्यसांवत्सरपुरोहितौ गजवाजिपदातीनांप्रेक्षाकौतु कमाचरेत् जयमंगलशब्देनततः स्वभवनंविशेत् नीराज्यमानःपुण्याभिर्गणिकाभिःसुमंगलं एवंयःकुरुतेराजा वर्षेवर्षेसुमंगलं आयुरारोग्यमैश्वर्यंविजयंचाधिगच्छति नाधयोव्याधयस्तस्यभवंतिनपराजयः श्रियंपुण्य मवाप्नोतिविजयश्चसदाभुवीत्यादिपुराणसमुच्चये ज्योतिर्निबंधे आश्विनस्यसितेपक्षेदशम्यांतारकोदये स कालोविजयोज्ञेयःसर्वकार्यार्थसिद्धये रत्नकोशे ईषत्संध्यामतिक्रांतःकिंचिदुद्भिन्नतारकः विजयोनामकालो यंसर्वकार्यार्थसाधकः इषस्यदशमींशुक्लांपूर्वविद्धांनकारयेत् श्रवणेनापिसंयुक्तांराज्ञांपट्टाभिषेचने नारदः सू र्योदयेयदाराजन्दृश्यतेनवमीतिथिः आश्विनेमासिशुक्लांतुविजयांताविदुर्बुधाः अथविजयदशम्यांपूर्वभाजि प्रयत्नात्क्षितिपतिरपराह्णेपूजयेदीशकोणे निखिलभुवनवंद्यांचंडिकामिष्टसिद्ध्यै श्रवणभसहिताचेत्साक्परावाप्र शस्ता तथाचस्कांदे मार्तंडस्योदयेपुण्यावर्ततेदशमीतिथिः आश्विनेशुक्लपक्षेतुसाभवेज्जयदानृणां निषिद्ध मपिकर्तव्यंतैलाभ्यंजनमादरात् अश्वानामपिकर्तव्यंतैलस्नानंनदीजले तूर्यघोषसमायुक्तान्पुरंप्रवेशयेद्धया न् पुष्पमालापरीतांस्तान्हयांश्चंदनभूषितान् संपूज्यविधिवद्राजानमस्कुर्यात्प्रयत्नतः भक्ष्यंभोज्यस्वहस्तेन

तथैववारणान्राजापूजयेच्चक्रमेलकान् नाना
भोजयेदनुगान्नृपः वाहाधिकारिणःसर्वान्दानमानैस्तुतोषयेत् ततश्चपूजयेद्देवान्गंधपुष्पादिकैर
मंत्रेणविधिवच्चतुर्थ्यंतेनमंत्रवित् कृताभ्यंगोमहाघोषैस्तूर्याणांशुभलब्धये वंदिभिःस्तूयमानस्तुस
लं आहूयब्राह्मणान्सर्वान्वाचयेत्स्वस्तिमंगलं ततस्तुरगमारुह्यतूर्यघोषसमन्वितः अव
न्मनाःशकुनैर्व्रजेत् ज्योतिःशास्त्रोदितांकाष्ठांसुहृद्भिःपरिपूरितः संप्राप्तस्तुशमीवृक्षमश्मंतकमथापिवा कुश
तीर्थेअथवाहाद्देगात्सहपुरोधसा सन्निषण्णःशमीमूलेविदध्यात्स्वस्तिवाचनं कार्यदेशानुजनैःसाकंत्रयोगकुश
लैर्वेदन् ततःप्रोक्ष्यशमीमूलभूमिंभूमिपतिर्ध्रुवं उत्कृत्यमृत्तिकांतत्रप्रक्षिपेत्तंडुलान्शुभान् सपूगंहेमशक्त्यातुअ
भावेतारमुत्तमं ततःप्रदक्षिणांकुर्यात्तस्यवृक्षस्यभूपतिः तत्रमंत्रः शमीशमयतइत्यादि अश्मंतकमंत्रः अश्मंत
कमहावृक्षमहादोषनिवारण इष्टानांदर्शनंदेहिशत्रूणांचविनाशनं ततोऽश्मंतकशम्योःपत्राणिगृहीत्वा त
स्यांमृदंतंडुलपुष्पादिप्रक्षिप्यगोलकंबद्ध्वासर्वकार्यसिद्ध्यर्थंगृह्णाति तंतुवृक्षंनमस्कृत्यदिग्लिंगैर्मंत्रैः प्राच्यादि
विजयंगृहीतखड्गःकरोति एवंत्रिचतुःपादक्रमेणतु सर्वदिग्विजयंकृत्वाशत्रवोजिताइतिब्रूयात् इंद्रादीन्देवान्वि
प्रांश्च नमस्कृत्य स्वपुरंविशेत् ततःप्रविष्टःसमहाद्वारसमीपे पुण्यस्त्रीभिर्नीराजितोद्वारिन्यस्तेषु तूलिकोपरितं
डुलैःकृतमूर्तिपुशत्रुषु पादंकृत्वालब्धविप्रानुज्ञोनिषण्णोभूत्वाद्रव्यवस्त्रतांबूलानिदद्यात् एवंकृत्वाविसर्ज्याशु
सर्वान्पौरान्निजालयात् प्रतिवर्षंकृतंचैवसर्वकार्यपरोभवेत् एवंसर्वेषुघोरेषुविधिरेषःसनातनः निष्पादितोय
थाधर्मंविदधातिश्रियंसुखं एवंकृतेविधानेतुतुष्टिदेपुष्टिदेनृणां सर्वैःपौरजनैःसार्द्धंविजयंप्राप्नुयान्नृपइति अस्या
मेवापराजितापूजोक्ता निर्णयामृते दशम्यांपूजयित्वातुमृण्मयींचापराजितां कलशीतोयसंपूर्णांजयंतीपल्लवा
ननां चतुर्वर्णैस्तदायात्रांसाधयेत्साधनेनच दशम्यांचबलंराजापूजयित्वाऽपराजितां दशदिक्षुमनोयोगान् ध्या

राद्रूराध्येन्नृपः   नीराजनंस्वस्तिकृत्वाततोनीराजयेद्बलमिति   अथपूजनक्रमः   आश्विनशुक्लदशम्यांक्षेम
सिद्ध्यर्थं वास्तु दिक्पाल मार्गदेवताऽपराजिता विष्णु शमीपूजनानि करिष्ये इति संकल्प्य पू
गीफलादिपुचंदनादिलिखिताष्टदलमध्येमृण्मयप्रतिमायांवा ॐअपराजितायैनमइत्यपराजितां तद्दक्षिणतः ॐ
क्रियाशक्त्यैनमइतिजयां तद्वामतः ॐउमायैनमइतिविजयांप्रतिष्ठाप्याऽऽवाहनाद्युपचारैः संपूज्य प्रणम्यप्रार्थ
येत् चारुणामुखपद्मेनविचित्रकनकोज्ज्वला जयादेवीभवेद्भक्त्यासर्वकामान्ददातुमे काञ्चनेनविचित्रेणकेयूरे
णविभूषिता जयप्रदामहामायाशिवभावितमानसा विजयाचमहाभागाददातुविजयंमम हारेणसुविचित्रेण
भास्वत्कनकमेखला अपराजितारुद्ररताकरोतुविजयंममेति एवंसंप्रार्थ्य हरिद्रारक्तवस्त्रेदूर्वायुक्तसिद्धार्थकान्
प्रदक्षिणंवलयाकारेणाबध्य सदापराजितेयस्मात्त्वंलतासूत्तमास्मृता सर्वकामार्थसिद्ध्यर्थंतस्मात्त्वांधारयाम्य
हं भवापराजितेदेविममसर्वसमृद्धये पूजितायांत्वयिश्रेयोममास्तुदुरितंहतमिति तद्वलयमभिमंत्र्य जयदेव
रदेदेविदशम्यामपराजिते धारयामिभुजेदक्षेजयलाभाभिवृद्धये बलमाधेहिवलयमयिशत्रोपराजयं त्वद्दा
रणाद्भवेयुर्मेधनधान्यसमृद्धयइतिमन्त्रेण बाहौधारयित्वा इमांपूजांमयादेवियथाशक्तिनिवेदितां रक्षार्थंतुसमादा
यव्रजस्वस्थानमुत्तममितिविसर्जयेदिति सर्वेचजनास्तस्यांग्रामसीमानमुल्लंघ्यापराजितां पूजयेयुः तथाचपुरा
णसमुच्चये दशम्यांचजनैःसम्यक्पूजनीयापराजिता ऐशानींदिशमाश्रित्यचापराह्णेप्रयत्नतइति भविष्ये
पि शमीमुलक्षणोपेतामीशानाशाप्रतिष्ठितां संप्रार्थ्यतांचसंपूज्यवत्सरंससुखीभवेत् शमीमंत्रस्तुहेमाद्रौ गो
पथब्राह्मणे अमंगलानांशमनींशमनींदुष्कृतस्यच दुःस्वप्ननाशिनींधन्यांप्रपद्येऽहंशमींशुभां तथाभविष्ये श
मीशमयतेपापंशमीलोहितकंटका धारिण्यर्जुनबाणानांरामस्यप्रियवादिनी करिष्यमाणयायात्रायांयथाकालं

सुखंमम तत्रनिर्विघ्नकर्त्रीत्वंभवश्रीरामपूजिते । इति । ततोरिपोःप्रतिकृतिंकृत्वेत्यादिकर्त्तव्यं पूर्वमेवोक्तं ततः शमीमूलमृदंगृह्णीयात् तदुक्तं गृहीत्वासाक्षतामार्द्रांशमीमूलगतांमृदं । गीतवादित्रनिर्घोषैरानयेत्स्वगृहंप्रति ततो भूषणवस्त्रादिधारयेत्स्वजनैःसहेति अत्रबलनीराजनमुक्तंतत्रमंत्रः चतुरंगबलंमह्यंनिररिष्टंव्रजत्विहसर्वत्रविजयोमे स्तुत्वत्प्रसादान्महेश्वरीतिज्योतिषेकृत्वानीराजनंराजाबलवृद्ध्यैयथाक्रमंशोभनंखंजनंपश्येज्जलगोगोष्ठसन्निधाविति तत्रमंत्रस्तिथितत्त्वेनीलग्रीवशुभग्रीवसर्वकामफलप्रदपृथिव्यामवतीर्णोसिखंजरीटनमोस्तुते । वसंतर. जेत्वंयोगयु क्तोमुनिपुत्रकस्त्वमदृश्यतामेपिशिखोद्गमेनसंदृश्यसेप्रावृषिनिर्गतायांत्वंखंजनाश्चर्यमयोनमस्तेदर्शनफलंतिथितत्त्वे अब्जेपुगजवाजिमहोरगेपुराज्यप्रदःकुशलदःशुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषुदृष्टोदुःखंददातिबहुशः खलुखंजरीटःतत्रैव वित्तंब्रह्मणिकार्यसिद्धिरतुलाशक्रेहुताशेभयं । याम्यामग्निभयंसुराद्विपिकालिर्लाभः समुद्रालये वायव्यांवरवस्त्रगंधसलिलंदिव्यांगनाचोत्तरेऐशान्यांमरणंध्रुवंनिगदितंदिग्लक्षणंखंजने इदंतुसर्वत्रनवरात्रप्रसंगा दत्रलिखितं रामार्चनचंद्रिकायांतु आश्विनस्यासितपक्षेदशम्यांश्रवणर्क्षगे कर्त्तव्यःस्वजनैःसार्द्धंसर्वत्रविजयार्थिभिः हनुमद्वाक्यमाकर्ण्यहृष्टातिजनकात्मजा आनंदपूर्णैःकपिभिर्विज्ञापितमुपस्थितं रथमारोप्यदेवेशंसर्वालंकारभूषित सासितूणधनुर्बाणपाणिनक्तचरांतकं स्वलीलयाजगत्त्रातुमाविर्भूतमजंविभुं रथैरश्वैर्गजैःपाद्भिःससौमित्रि हरीश्वरैः युतंरामंहृदिध्यायन्शमीवृक्षेप्रपूजयेत् विष्णुधर्मोक्तमार्गेणयात्रानिर्विघ्नसिद्धये शमीबिल्वार्चनंकुर्व न्निनितिसंकल्प्यपूजयेत् सीताकांतंसमुद्युक्तंभक्तानामभयंकरं अर्चयित्वाशमीवृक्षमर्चयेत्तुततःपुनः शमीशमयते पापंशमीलोहितकंटका धारिण्यर्जुनबाणानांरामस्यप्रियवादिनी करिष्यमाणयात्रायांयथाकालंसुखंमया तत्र निर्विघ्नकर्त्रीत्वं भवश्रीरामपूजिते गृहीत्वासाक्षतांसार्द्रांशमीमूलगतांमृदं गीतवादित्रनिर्घोषैर्युतोदेवंगृहंनयेत्

केश्चिद्दक्षैस्तत्रभाव्यंकोसलेंद्रस्यतुष्टये निर्जिताराक्षसादैत्यावैरिणोजगतीतले रामराज्यंरामराज्यंरामराज्यमिति ब्रुवन् आनीयस्थापयेत्स्वस्थं दिव्यसिंहासनेविभुं ततोनीराज्यदेवेशंप्रणमेद्दंडवद्भुवि देवोपभुक्तवस्त्रादिधारयेत्स्वजनैःसह ॥ इतिविष्णुधर्मोत्तरोक्तोविजयप्रस्थानोत्सवः ॥ अथदुर्गाशतनामस्तोत्रं ईश्वरउवाच शतनामप्रवक्ष्यामिशृणुष्वकमलानने यस्यप्रसादमात्रेणदुर्गाप्रीताभवेत्सती ॐसतीसाध्वीभवप्रीताभवानी भवमोचनी आर्यादुर्गाजयाद्याचात्रिनेत्राशूलधारिणी पिनाकधारिणीचित्राचंडघंटामहातपाः मनोबुद्धिरहंकाराचित्तरूपाचिताचितिः सर्वमंत्रमयीनित्यासत्यानंदस्वरूपिणी अनंतभाविनीभव्याभाव्याभव्यासदागतिः शाकंभरीवेदमाताचिंतारत्नप्रियासदा सर्वविद्यादक्षकन्यादक्षयज्ञविनाशिनी अपर्णानेकपर्णातुपाटलापाटलावती पट्टांवरपरीधानाकलमंजीररंजिनी अमेयाविक्रमाक्रूरासुंदरीपुरसुंदरी वनदुर्गाचमातंगीमातंगस्नानपूजिता ब्राह्मीमाहेश्वरीरौद्रीकौमारीवैष्णवीतथा चामुंडाचैववाराहीलक्ष्मीःश्रीःपुरुषाकृतिः विलोमाकर्षिणीज्ञानाक्रिया सत्याचवन्हिका बहुलाबहुलप्रेमासर्ववाहनवाहना निशुंभाशुंभहननीमहिषासुरमर्दिनी मधुकैटभहंत्रीच चंडमुंडविनाशिनी सर्वासुरविनाशीचसर्वदानवघातिनी सर्वशास्त्रमयीसत्यासर्वास्त्रधारिणीतथा अनेकशस्त्रहस्ताचअनेकास्त्रादिधारिणी कुमारीचैवकन्याचकिशोरीयुवतीयतिः अप्रौढाचैवप्रौढाचवृद्धमाताबलप्रदा यइदंपठतेनित्यंदुर्गानामशताष्टकं नासाध्यंविद्यतेकिंचित्त्रिषुलोकेषुपार्वति धनंधान्यंसुताजायाहस्तीहस्तिन्यएवच चतुर्वर्गंतथाचांते लभेन्मुक्तिंचशाश्वतीं कुमारींपूजयित्वाचध्यात्वादेवींसुरेश्वरीं पूजयेत्परयाभक्त्यापठन्नामशताष्टकं तस्यसिद्धिर्भवेद्देविसर्वैश्वरवरैरपि राजानोदासतांयांतिराज्यश्रियमवाप्नुयात् गोरोचनालक्तककुंकुमेनसिंदूरकर्पूरमधुत्रयेण विलिख्यमंत्रंविधिवद्विधिज्ञोभवेत्समाराधनतोमुरारिः भौमावास्यानिशाभागेचंद्रेशतभिषागते विलिख्यप्रलपन्

स्तोत्रंसभवेत्संपदांपदम् ॥ इतिविश्वसारोक्तं दुर्गानामशताष्टकस्तोत्रं समाप्तम् ॥
अथनवरात्रव्रतोद्यापनविचारः नवरात्रव्रतंप्रतिवर्षंसदाकर्त्तव्यतयानित्यं तत्रवचनानिनवरात्रनिर्णयेऽकरणेप्र
त्यवायपराण्यपिवचनानिचतत्रैवोक्तान्यतोनित्यमुद्यापनानिरपेक्षमिति अथचफलनिर्देशात्काम्यमप्यतइदंनित्यं
काम्यंचेति काम्यत्वादुद्यापनसापेक्षमतएवास्योद्यापनं महानवम्यांविधेयमेव तत्रानुक्रमणिका आदौमंडपंवेदि
कांवाध्वजपताकावितानतोरणद्वारपूर्वकंविधाय तत्र संभृतसंभारोव्रती गोमयोपलिप्तायां वेदिकायां सर्वतोभ
द्रंलिंगतोभद्रंवापंचवर्णैर्धान्यैर्वापरिकल्प्यतस्मिन्यथाशक्त्याकलशं यथाविधि आचार्यवरणगणेशादिपूजादिपूर्व
कंप्रतिष्ठाप्य ताम्रादिपात्रे घंटार्गलयंत्रंकुंकुमादिना विलिख्य ब्रह्मादिऋत्विग्वरणंचयथाविधिकृत्वा तत्रैवापर
मंडले ग्रहान्लोकपालादिभिःसंस्थाप्यसंपूजयेत् घंटार्गलयंत्रेसावरणांदेवींप्रतिष्ठाप्यसर्वोपचारैःसंपूज्य चतुष्षष्टि
कोष्ठमंडलेचतुष्षष्टियोगिन्यः प्रतिष्ठाप्यपूज्याः तथैवनवसंख्याककुंभेषुनवदुर्गायानवमूर्तीः प्रतिष्ठाप्य पूजयेत्
यथाशक्तिदेवीमाहात्म्यपाठादिस्तवनंविधाय रात्रौजागरणंकृत्वाप्रातश्चकृतनित्यक्रियः सन्देवीपूजादिकंविधाय
अग्निंस्वगृह्योक्तविधिनाप्रतिष्ठाप्यहोमंकुर्यात् अन्वाधानांतमाग्निकार्यंविधाय ततः प्रधानंश्रीदुर्गां सावरणां दे
वीसूक्तदेवीमाहात्म्यनवदुर्गाचतुष्षष्टियोगिनीमंत्रैराज्यात्कपायसतिलैर्बिल्वपत्रादिसामिद्भिर्हुत्वा ब्रह्मादिमंडल
देवतानवग्रहान्दिक्पालांश्चार्कादिसमिच्चर्वादिभिः शेषेणप्रायश्चित्तं स्विष्टकृद्धोमंविधाय होमांते देवतापूजांते
बलिदानंपूर्णाहुतिमभिषेकंसंपाद्य देव्याः प्रार्थनांविधायाचार्यंसंपूज्यप्रधानप्रतिमांसदक्षिणामाचार्याय नवविप्रे
भ्योनवसदक्षिणाः प्रतिमाःप्रतिपादयेत् सुवर्णदानप्रतिष्ठांदत्त्वा प्रतिमादानमंत्रेणाचार्यं प्रार्थयित्वा कन्य
कापूजनंसुवासिनीपूजनंचकुर्यात् ततःपंचाशद्ब्राह्मणान् मधुसर्पिष्पायसादिनासंतोष्य तेभ्योदक्षिणांदद्यात्

ततश्चऋत्विग्भ्योदक्षिणांदत्त्वा भूयसींदापयेत् ततःसघृतं तिलपात्रंच दद्यात् शय्याश्वरथादिदानानिदद्यात्
शय्यादिदानाशक्तौसुवर्णसदक्षिणमन्नदानंचदद्यात् ततोब्राह्मणेभ्यः सतिलकमभिषेकं कारयित्वाऽऽशिषोगृही
त्वा क्षेत्रेशंपूजयित्वाव्रतस्याच्छिद्रावधारणंकृत्वा व्रतपारणंकुर्यात् इतिनवरात्रव्रतोद्यापनं ॥ इतिश्रीमन्महा
राजाधिराजश्रीरणवीरसिंहकारिते कृत्यरत्नाकरे नवरात्रप्रकरणम्

अथात्रमहालक्ष्मीपूजाविधानमुक्तं तच्चाथर्वणे लक्ष्मीहृदये

यश्चाश्विनेमासिचशुक्लपक्षेरमोत्सवेसन्निहितैकभक्त्या पठेनचैकोत्तरवारवृद्ध्यालभेतसौवर्णमयींसवृष्टिमिति
अस्यश्रीआद्यादिश्रीमहालक्ष्मीहृदयस्तोत्रमंत्रस्य भार्गवऋषि र्नानाविधानि छंदांसि आद्यादिश्रीमहालक्ष्मीर्दे
वता श्रींवीजं ह्रींशक्तिः ऐंकीलकं आद्यादिश्रीमहालक्ष्मीप्रसादसिद्ध्यर्थंजपेविनियोगः इतिव्यापकंकुर्यात् श्रीं
विज्ञानायनमः १ ह्रींऐश्वर्यायनमः २ ऐंशक्त्येवषट् ३ श्रींवलायहुं ४ ह्रींतेजसेवौषट् ५ ऐंवीर्यायफट् ६ इतिक
रडंगन्यासः ॐभूर्भुवःस्वरोमितिदिग्वंधः ॐह्रीं ॐसौं ॐक्लींलक्ष्मिकमलपत्रधारिणि सिंहवाहिनि स्वाहा
ॐश्रींमहालक्ष्म्यैनमः ॐश्रींह्रींऐंध्यानं वंदेलक्ष्मींपरशिवमयींशुद्धजांवूनदाभां तेजोरूपांकनकवसनांसर्वभूषो
ज्ज्वलांगीं वीजापूरंकनककलशंहेमपद्मंदधाना माद्यांशक्तिंसकलजननींविष्णुवामांकसंस्थाम् ॐश्रींश्रीमत्सौ
भाग्यजननींस्तौमिलक्ष्मींसनातनीं सर्वकामफलावाप्तिसाधनैकसुखावहाम्१ स्मरामिनित्यंदेवेशित्वयाप्रेरितमान
सः त्वदाज्ञांशिरसाधृत्वाभजामिपरमेश्वरीम् २ समस्तसंपत्सुखदांमहाश्रियंसमस्तकल्याणकरींमहाश्रियं सम
स्तसौभाग्यकरींमहाश्रियंभजाम्यहंज्ञानकरींमहाश्रियम् ३ विज्ञानसंपत्सुखदांसनातनींविचित्रवाङ्मूर्त्तिकरीं
मनोहरां अनंतसंमोदसुखप्रदायिनींनमाम्यहंभूतिकरींहरिप्रियाम् ४ समस्तभूतांतरसंस्थितात्वंसमस्तभोक्त्री

तन्नास्तियत्त्वद्व्यतिरिक्तवस्तुत्वत्पादपद्मंप्रणमाम्यहंश्रीः ५ दारिद्र्यदुःखौघतमोपहंत्रित्वत्पादप
श्वरिविश्वरूपे तन्नास्तियत्त्वद्व्यतिरिक्तवस्तुत्वत्पादपद्मंप्रणमाम्यहंश्रीः ६ अंबप्रसीदकरुणासुधयार्द्रदृष्ट्या
ममयिसन्निधत्स्व दीनार्त्तिविच्छेदनहेतुभूतैःकृपाकटाक्षैरभिषिंचमांश्रीः ७ ॐश्रीं
मांत्वत्कृपाद्रविणगेहमिमंकुरुष्व आलोकयप्रणतहृद्गतशोकहंत्रित्वत्पादयुग्मंप्रणमाम्यहंश्रीः
ह्रीं शांत्यैनमोऽस्तुशरणागतरक्षणायैकांत्यैनमोऽस्तुकमनीयगुणाश्रयायै क्षांत्यैनमोऽस्तुदुरितक्षयकारणायैधा
त्र्यैनमोऽस्तुधनधान्यसमृद्धिदायै ८ शक्त्यैनमोऽस्तुशशिशेखरसंस्तुतायैरत्यैनमोऽस्तुरजनीकरवल्लभायै भुक्त्यै
नमोऽस्तुभवसागरतारणायैमत्यैनमोऽस्तुमधुसूदनवल्लभायै ९ लक्ष्म्यैनमोऽस्तुशुभलक्षणलक्षितायैसिद्ध्यैनमोऽस्तु
शिवसिद्धसुपूजितायै धृत्यैनमोऽस्त्वमितदुर्गतिनाशनायैगत्यैनमोऽस्तुवरसद्गतिदायिकायै १० देव्यैनमोऽस्तु
दिविदेवगणार्चितायैभूत्यैनमोऽस्तुभवनार्त्तिविनाशनायै धात्र्यैनमोऽस्तुधरणीधरवल्लभायैपुष्ट्यैनमोऽस्तुपुरुषोत्तमव
ल्लभायै ११ ॐह्रींऐं सुतीव्रदारिद्र्यविदुःखहंत्र्यैनमोऽस्तुतेसंचितपापहंत्र्यै श्रीविष्णुवक्षःस्थलसंश्रितायैनमोनमः
सर्वविभूतिदायै १२ ॐऐंश्रीं जयतुजयतुलक्ष्मीलक्षणालंकृतांगीजयतुजयतुपद्मापद्मसद्माभिवंद्या जयतु
जयतुविद्याविष्णुवामांकसंस्थाजयतुजयतुसम्यक्सर्वसंपत्करीश्रीः १३ जयतुजयतुदेवीदेवसंघाभिवंद्याजयतु
जयतुभद्राभार्गवीभाग्यरूपा जयतुजयतुनित्यानिर्मलज्ञानवेद्याजयतुजयतुसत्यासर्वभूतांतरस्था १४ पदवी
जं ॐआंईंयंरंलंलंह जयतुजयतुरम्यारत्नगर्भांतरस्थाजयतुजयतुशुद्धाशुद्धजांबूनदाभा जयतुजयतुकांता
कांतिसद्भासितांगीजयतुजयतुशांताशीघ्रमागच्छसौम्ये १५ ॐह्रांह्रींऐंश्रांव्यांपांनांस ॐश्रींक्लीं यस्याः
कलायाःकमलोद्भवाद्यारुद्राश्चशक्रप्रमुखाश्चदेवाः जीवंतिसर्वाअपिशक्तयस्तेप्रभुत्वमात्मापरमायुषस्ते १६ लि
लेखपटलेविधिर्ममलिपिंविसृज्यांतरे त्वयाविलिखितव्यमेतदितितत्फलप्राप्तये तदंतरफलेस्फुटंकमलवासि

नौंश्रीमिमां समर्पयस्वमुद्रिकांसकलसौख्यसंसूचिकां १७ तदिदंलिखितंभालेस्फुटांकमलवासिनीं श्रियंसमु
द्रजांदेहिसर्वभाग्यस्यसूचिकां १८ कलयातेययादेविजीवंतिसचराचराः तथासंपत्करीलक्ष्मीःसर्वदासंप्रसीद
मे १९ यथाविष्णुर्ध्रुवांनित्यांस्वकलासंन्यवेशयत् तथैवस्वकलांलक्ष्मिमयिसम्यक्समर्पय २० सर्वसौख्यप्र
देदेविभक्तानामभयप्रदे अचलांकुरुयत्नेनकलामात्मनिवेशितां २१ मुदास्तांमद्भालेपरमपदलक्ष्मीःस्फुटकला
सदावैकुंठश्रीर्निवसतुकलामेनयनयोः नयनवीजं ऊँघ्रांघ्रींघ्रूंघ्रैंघ्रौंघ्रः वसेन्सत्येलोकेममवचसिलक्ष्मीर्वरकला
श्रियःश्वेतद्वीपेनिवसतिकलामेऽस्तुकरयोः २२ सर्वमंगलसंपूर्णासर्वैश्वर्यसमान्विता आद्याहिश्रीमहालक्ष्मिस्त्व
त्कलामयितिष्ठतु २३ अज्ञानतिमिरंहंतुशुद्धज्ञानंप्रकाशय सर्वैश्वर्यप्रदामेऽस्तुत्वत्कलामयिसंस्थिता २४ अलक्ष्मीं
हरतुक्षिप्रं तमःसूर्यप्रभायथा वितनोतुममश्रेयस्त्वत्कलामयिसंस्थिता २५ ऐश्वर्यमंगलोत्पत्तिस्त्वत्कलायां
निधीयते अहंतस्मात्कृतार्थोऽस्मिपात्रमस्मिस्थिराभव २६ भवदावेशभाग्यार्होभाग्यवानस्मिभार्गवि त्वत्प्रसा
दात्पवित्रोऽहंलोकमातर्नमोऽस्तुते २७ निधिबीजं ह्रांह्रींह्रूंह्रैंह्रौंह्रः पुनातुमांत्वत्कलयैवयस्मादतः समा
गच्छममाग्रतस्त्वं परंपदंश्रीर्भवसुप्रसन्नामव्यच्युतेनप्रविशाद्यलक्ष्मि २८ ऊँश्रींह्रीं श्रीवैकुंठस्थितेलक्ष्मि
समागच्छममाग्रतः नारायणेनसहमांकृपादृष्ट्यावलोकय २९ सत्यलोकस्थितेलक्ष्मिस्त्वंसमागच्छसन्निधिं वासुदेवे
नसहिताप्रसीदवरदाभव ३० श्वेतद्वीपस्थितेलक्ष्मिशीघ्रमागच्छसुव्रते विष्णुनासहितेदेविजगन्मातःप्रसीदमे ३१
क्षीरांबुधिस्थितेलक्ष्मिशीघ्रमागच्छसुव्रते विष्णुनासहितेदेविजगन्मातःप्रसीदमे ३२ क्षारांबुधिस्थितेलक्ष्मिस
मागच्छसमाधवे त्वंकृपादृष्टिसुधयासततंमावलोकय ३३ रत्नगर्भस्थितेलक्ष्मिपरिपूर्णहिरण्मये समागच्छसमा
च्छस्थित्वाशुपुरतोमम ३४ स्थिराभवमहालक्ष्मिनिश्चलाभवनिर्मले प्रसन्नकमलेदेविप्रसीदवरदाभव ३५

श्रीधरेश्रीमहाभूमेत्वदंतःस्थंमहानिधिं शीघ्रमुद्धृत्यपुरतःप्रदर्शयसमर्पय ३६ वसुधरेश्रीवसुधेवसुदोग्ध्रि
कृपामये त्वत्कुक्षिगतसर्वस्वंशीघ्रंमेसंप्रदर्शय ३७ विष्णुप्रियेरत्नगर्भेसमस्तफलदेशिवे त्वद्गर्भगतहेमादीन्सं
प्रदर्शयदर्शय ३८ आविर्भवमनोवेगे शीघ्रमागच्छमेपुरः मावत्सभैरिहेत्युक्त्वाकामगौरिवरक्षमां ३९
देविशीघ्रंसमागच्छधरणीगर्भसंस्थिते मातस्त्वद्भृत्यभृत्योऽहंमृगयेत्वांकुतूहलात् ४० उत्तिष्ठजाग्रहित्वंमे
समुत्तिष्ठस्वजागृहि अक्षयान्हेमकलशान्सुवर्णेनसुपूरितान् ४१ निक्षेपान्मेसमाकृष्यसमुद्धृत्यममाग्रतः स
मुन्नताननाभूत्वासम्यग्देहिधरांतरात् मत्सन्निधिंसमागच्छमदाहितकृपावशात् प्रसीदश्रेयसांदोग्ध्रिलक्ष्मिमे
नयनाग्रतः ४२ अत्रोपविश्यलक्ष्मीस्त्वंस्थिराभवहिरण्मये सुस्थिराभवसुप्रीताप्रसन्नावरदाभव ४३ समानीतां
स्त्वयादेविनिधीन्मेसंप्रदर्शय अद्यक्षणेनसहसादत्त्वासंरक्षमांसदा ४४ मयितिष्ठतथानित्यंयथेंद्रादिषुतिष्ठसि अ
भयंकुरुमेलक्ष्मिमहालक्ष्मिनमोऽस्तुते ४५ समागच्छमहालक्ष्मिशुद्धजांबूनदस्थिते प्रसीदपुरतःस्थित्वाप्रणतं
मांविलोकय ४६ लक्ष्मिभुव्यंगमाभासियत्रयत्राहिरण्मयी तत्रस्थितात्वंमेदेविस्वरूपंसंप्रदर्शय ४७ क्रीडंति
बहुधाभूमौपरिपूर्णकृपामये मममूर्धनितेहस्तमविलंबितमर्पय ४८ फलभाग्योदयेलक्ष्मिसमस्तपुरवासिनि
प्रसीदमेमहालक्ष्मिपरिपूर्णमनोरथे ४९ अयोध्यादिषुसर्वेषुनगरेषुसमास्थिते वैभवैर्विविधैर्युक्तासमागच्छमु
दान्विता ५० समागच्छसमागच्छममाग्रेभवसुस्थिरा करुणारसनिष्पंदनेत्रद्वयविलासिनि ५१ सन्निधत्स्व
महालक्ष्मित्वत्पाणिंममसस्तके करुणासुधयामांत्वमभिषिंचस्थिरंकुरु ५२ सर्वराजगृहालक्ष्मिसमागच्छबला
न्विते स्थित्वाशुपुरतोमेऽद्यप्रसादेनाभयंकुरु ५३ सादरंमस्तकेहस्तंममत्वंकृपयार्पय सर्वराजगृहालक्ष्मित्व
त्कलामयितिष्ठतु ५४ आद्यादिश्रीमहालक्ष्मिविष्णुवामांकसंस्थिते प्रत्यक्षंकुरुमेरूपंरक्षमांशरणागतम् ५५ प्र

सीदमेमहालक्ष्मिसुप्रसीदमहाशिवे अचलाभवसुप्रीत्यासुस्थिराभवमद्गृहे. ५६ यावत्तिष्ठंतिवेदाश्चयावन्न
मतिष्ठति यावद्विष्णुश्चयावत्त्वंतावत्कुरुकृपांमयि ५७ चांद्रीकलायथाशुक्लेवर्धतेसादिनेदिने तथातवदयाति
त्यंवर्द्धतांमयिवर्द्धताम् ५८ यथावैकुंठनगरेयथावैक्षीरसागरे तथामद्भवनेतिष्ठस्थिराश्रीविष्णुनासह ५९ योगि
नांहृदयेनित्यंयथातिष्ठसिविष्णुना तथामद्भवनेतिष्ठस्थिराश्रीविष्णुनासह ६० नारायणस्यहृदयेभवतीयथा
स्तेनारायणोपितवहृत्कमलेयथास्ते नारायणस्त्वमपिनित्यमसौतथातौसंतिष्ठतांहृदिममापिदयावतिश्रीः ६१
ॐश्रींऐंक्लीं विज्ञानवृद्धिंहृदयेकुरुश्रीःसौभाग्यवृद्धिंकुरुमेगृहेश्रीः दयासुवृद्धिंकुरुतांमयिश्रीः सुवर्णवृद्धिंकुरु
मेकरेश्रीः ६२ नमांत्यजेथाःश्रितकल्पवल्लिसद्भक्तचिंतामणिकामधेनो विश्वस्यमातर्भवसुप्रसन्नागृहेकलत्रेऽपि
चपुत्रवर्गे ६३ कुक्षिबीजं ॐआंईंऊंऐंश्रींअः आद्यादिमायेत्वमजांडबीजंत्वमेवसाकारनिराकृतिस्त्वं त्वयाधृता
श्चाजभवांडसंघाश्चित्रंचरित्रंतवदेविविष्णोः ६४ ब्रह्मरुद्रादयोदेवावेदाश्चापिनशक्नुयुः महिमानंतवस्तोतुंमंदोऽहं
शक्नुयांकथम् ६५ अंबत्वद्वत्सवाक्यानिसूक्तासूक्तानियानिच तानिस्वीकुरुसर्वज्ञेदयालुत्वेनसर्वशः ६६ भवतींश
रणंगत्वाकृतार्थाश्चपुरातनाः इतिसंचिंत्यसंचिंत्यत्वामहंशरणंव्रजे ६७ अनंतानित्यसुखिनस्त्वद्भक्तास्त्वत्परायणाः
इतिवदेप्रसादार्थंदेवित्वांशरणंभजे ६८ तवप्रतिज्ञामद्भक्तानननश्यंतीत्यपिक्वचित् इतिसंचिंत्यमनसाप्राणान्संधा
रयाम्यहम् त्वदधीनस्त्वहंमातस्त्वत्कृपामयिविद्यते यावत्संपूर्णकामस्स्यांतावद्देहिदयानिधे ६९ क्षणमात्रंनश
क्नोमिजीवितुंत्वत्कृपांविना नजीवंतीहजलजाजलंत्यक्त्वाजलग्रहाः ७० पिताहिपुत्रवात्सल्याज्जननीप्रस्नुतस्त
नीत्स्संत्वरितमागत्यसंप्रीणयतिवत्सला ७१ यदिस्यांतवपुत्रोऽहंमातात्वंयदिमामिकी दयापयोधरस्तन्यसुधाभि
रभिषिंचमाम् ७२ मय्योनगुणलेशोपिमयिदोषैकमंदिरे पांसूनांवृष्टिबिंदूनांदोषाणांचनमेमितिः ७३ पापिनामह

मेवाग्न्योदयालूनांत्वमग्रणीः दयनीयोमदन्योऽस्तितवकोऽत्रजगत्त्रये ७४ विधिनाऽहंनसृष्टश्चेन्नस्यात्तवदयालुता
आमयोवानसृष्टश्चेदौषधस्यवृथोदयः ७५ कृपामदग्रजाकिंतेअहंकिंवातदग्रजः विचार्य्यदेहिमेवित्तंतव
देविदयाधनम् ७६ मातापितात्वंगुरुसद्गतिःश्रीस्त्वमेवसंजीवनहेतुभूता अनन्यमन्येजगदेकनाथस्त्वमेवसर्वंमम
देविसत्यम् ७७ हृदयबीजं ॐआंअंहः फट्कुरुस्वाहा आद्यादिलक्ष्मीर्भवसुप्रसन्नाविशुद्धविज्ञानसुखैकदोग्ध्री अज्ञा
नहंत्रीत्रिगुणातिरिक्ताप्रबोलनेत्रेभवसुप्रसन्ना. ७८ अशेषवाग्जाड्यमलापहारिणीनवंनवंस्पष्टसुवाक्यदायिनी
ममेहजिह्वाग्रसुरंगनर्त्तकीभवप्रसन्नावदनेचमेश्रीः ७९ समस्तसंपत्सुविराजमानासमस्ततेजःसुविभासमाना
विष्णुप्रियेत्वंभवदीप्यमानावाग्देवतेमेभवसुप्रसन्ना ८० सर्वप्रदेत्वंसकलार्थदेत्वंप्रभासुठावण्यफलासुदोग्ध्री
सुवर्णदेत्वंसुमुखीभवश्रीर्हिरण्मयीमेनयनेप्रसन्ना ८१ समस्तविघ्नौघविनाशकारिणीसमस्तभक्तोद्धरणेविचक्षणे
अनंतसौभाग्यसुखप्रदायिनीहिरण्मयीमेनयनेप्रसन्ना ८२ देविप्रसीददयनीयतमायमह्यंदेवाधिनाथभवदेवगणा
भिवंद्ये मातस्तथैवभवसन्निहितादृशोर्मेपत्यासमंममसुखेभवसुप्रसन्ना ८३ मावत्सभैरभयदानकरोऽर्पि
तस्तेमौलौममेतिमयिदीनदयानुकंपे मातःसमर्पयमुदाकरुणाकटाक्षंमांगल्यबीजमहिमानमजस्यमातः ८४
ॐआंश्रींश्रूंश्रैंश्रौंश्रः कटाक्षइहकामधुक्त्वमतस्तुचिंतामणिः करः सुरतरुः सदानवनिधिस्त्वमेवेंदिरे भवेत्तव
दयारसोरसरसायनंचान्वहं मुखंतवकलानिधिर्विविधवांछितार्थप्रदम् ८५ यथारसस्पर्शनतोयसंगात्सुवर्णता
स्यात्कमलेतथाते कटाक्षसंस्पर्शनतोजनानाममंगलानामपिमंगलत्वम् ८६ देहीतिनास्तीतिवचः प्रवेशाद्भीतोर
मेत्वांशरणंप्रपद्ये अहंतुदासोऽस्म्यभयप्रदात्वंसहैवपत्यामयिसन्निधेहि ८७ कल्पद्रुमेणमणिनासहितासुरभ्या
श्रीस्तेकलामयिरसेनरसायनेन आस्तांयतोममचहत्करपाणिपादाःस्पृष्टाःसुवर्णवपुषः स्थिरजंगमाःस्युः ८८

आद्यादिविष्णोः स्थिरधर्मपत्नीत्वमेवपत्नामयिसन्निधत्स्व आद्यादिलक्ष्मीस्त्वदनुग्रहेणपदेपदेमेनिधिदर्शनंस्यात
८९ आद्यादिलक्ष्मीहृदयंपठेद्यः सराज्यलक्ष्मीमचलांतनोति महादरिद्रोऽपिभवेद्धनाढ्यस्तदन्वयेश्रीः स्थिरतां
प्रयाति ९० यस्यस्मरणमात्रेणतुष्टास्याद्विष्णुवल्लभा तस्याभीष्टंददात्याशुतंपालयतिपुत्रवत् ९१ इदंरहस्यहृद
यंसर्वकामफलप्रदं जपेत्पंचसहस्त्रंतुपुरश्चरणमुच्यते ९२ त्रिकालमेककालंवानरोभक्तिसमन्वितः यःपठेच्छृणु
याद्वापिसयातिपरमांश्रियम् ९३महालक्ष्मींसमुद्दिश्यनिशिभार्गववासरे इदंश्रीहृदयंजप्त्वापंचवारंधनीभवेत् ९४
अनेनहृदयेनान्नंगर्भिण्याअभिमंत्रितं ददातितत्कुलेपुत्रोजायतेश्रीपतिःस्वयं ९५ नरेणाथनार्यावालक्ष्मी
हृदयमंत्रिते जलेचपीतेतद्वंशेमंदभाग्योनजायते ९६ यआश्विनेमासिचशुक्लपक्षेरमोत्सवेसन्निहितैकभक्त्या
पठेत्तथैकोत्तरवारवृद्ध्यालभेतसौवर्णमयींसवृष्टिम् ९७यएकभक्तोऽन्वहमेकवर्षंपठेनभक्त्यायतचित्तवृत्तिः समंदभा
ग्योऽपिरमाकटाक्षाद्भवेत्सहस्त्राक्षशताधिकश्रीः ९८ श्रीशांघ्रिभक्तिंहरिदासदास्यंप्रपन्नमंत्रार्थइहैकनिष्ठं गुरोः
स्मृतिंनिर्मलबोधवृद्धिंप्रदेहिमेत्वंपरमंपदंश्रीः ९९ पृथ्वीपतित्वंपुरुषोत्तमत्वंविभूतिवासंविविधार्थसिद्धिं वयःस्थि
रत्वंललनासुभोग्यंपुत्रादिलब्धिंसकलार्थसिद्धिम् १०० सुवर्णवृद्धिंकुरुमेगृहेश्रीः सुधान्यवृद्धिंकुरुमेगृहेश्रीः कल्या
णवृद्धिंकुरुमेगृहेश्रीर्विभूतिवृद्धिंकुरुमेगृहेश्रीः १०१ ध्यायेल्लक्ष्मींप्रहसितमुखींकोटिवालार्कभासां विद्युद्वर्णांवरवर
धरांभूषणाढ्यांसुशोभां बीजापूरंसरसिजयुगंबिभ्रतींस्वर्णपात्रं भर्त्रायुक्तांमुहुरभयदांमह्यमप्यच्युतश्रीः १०२

इत्यथर्वणरहस्योक्तंलक्ष्मीहृदयंसंपूर्णम्

ॐनमोनारायणाय ॐश्रीमन्नारायणोज्योतिरात्मानारायणःपरः नारायणः परंब्रह्मनारायणनमोऽस्तुते १
नारायणःपरोध्याताध्याननंनारायणःपरं नारायणःपरोधर्मोनारायणनमोऽस्तुते २ नारायणःपरोज्ञाताज्ञानं

नारायणःपरं नारायणःपरंधामनारायणनमोऽस्तुते ६ नारायणःपरोवेदोविद्यानारायणःपरा विश्वनारायणः
साक्षान्नारायणनमोऽस्तुते ४ नारायणाद्विधिर्जातोजातोनारायणाच्छिवः जातोनारायणादिंद्रोनारायणनमोऽस्तुते
५ जातंनारायणात्तेजश्चंद्रोनारायणोमहान् वन्हिर्नारायणःसाक्षान्नारायणनमोऽस्तुते ६ नारायणोह्युपास्यः
स्याद्गुरुर्नारायणःपरः नारायणः परोबोधोनारायणनमोऽस्तुते ७ नारायणःफलंमुख्यंसिद्धिर्नारायण सुखं
सर्वंनारायणःशुद्धोनारायणनमोऽस्तुते ८ इतिश्लोकाष्टकंचाथप्रार्थनादशकंशृणु नारायणत्वमेवासिदहराख्यंहृदि
स्थितः प्रेरकःप्रार्थमानानांत्वयाप्रेरितवानहम् ९ त्वदाज्ञांशिरसाधृत्वाभजामिजनपावनम् नानोपासनमार्गेणत्वं
वैहृदयबोधकः १० भावार्थकृद्भावहितोभवसौख्यप्रदोमम त्वन्मायामोहितंविश्वंत्वयैवपरिकल्पितम् ११ त्वदधि
ष्ठानमात्रेणमायासर्वार्थकारिणी त्वमेवतांपुरस्कृत्यममकामान्समर्पय १२ नमेत्वदन्यस्त्राताऽस्तित्वदन्यंनहिदै
वतं त्वदन्यंनहिजानामिपालकंपुण्यवर्धनम् १३ तावत्सांसारिकोभावोमानसेभावनात्मके यावत्सिद्धिर्भवेन्नैवसर्व
धासर्वदाप्रभो १४ पापिनामहमेकोग्र्योदयालूनांत्वमग्रणीः दयनीयोमदन्योऽस्तितवकोऽत्रजगत्त्रये १५ त्वया
प्यहनसृष्टश्चेन्नस्यात्तवदयालुता ममोपरिस्वसृष्टस्यदयातोकिंनजायते १६ पापेनसंपरिक्रांतःपापात्मापापरूपधृक
त्वदन्यःकोऽत्रपापेभ्यस्त्रातामेजगतीतले १७ त्वमेवमाताचपिताल्वमेवत्वमेवबंधुश्चसखा त्वमेव त्वमेवविद्याद्रविणं
त्वमेवत्वमेवसर्वंममदेवदेव १८ प्रार्थनादशकंचैवमूलाष्टकमिदंद्वयं यःपठेच्छृणुयान्नित्यंतस्यलक्ष्मीःस्थिराभवेत्
नारायणस्यहृदयंसर्वाभीष्टफलप्रदं लक्ष्मीहृदयसंवासंविष्णुसायुज्यदंनृणाम् १९

इतिश्रीनारायणहृदयंसमाप्तम्

अथलक्ष्मीसूक्तपूजाविधानंविद्यार्णवे तत्राष्टदिनंयावत्प्रत्यहंत्रिसप्तत्यावृत्तिःसूक्तस्यकार्याऽनंतरंदिनत्रयेहि

सप्तत्यावृत्तिः प्रत्यहंकार्या तेनद्वादशसाहस्रमृचामावृत्तिर्भवतीति श्रीसमिद्भिर्बिल्वसमिद्भिर्होमःकार्यः तथा
कुंदमंदारकुमुदमालतीपद्मकेसरं नंद्यावर्तांकयंजातीकल्हारंचंपकंतथा रक्तोत्पलादिपुष्पाणिलक्ष्म्याश्चातिप्रि
याणिवै स्नानकालेऽर्चनेसूक्तैरभिषिंचेत्रिभिःसुधीः यावज्जपेद्रविमुखस्तर्पयेत्तावदेवहि पूर्वोक्तविधिनासम्यक्पू
जयेत्परमेश्वरीं त्रिवारंप्रत्यहंमंत्रीजुहुयाच्चयथाविधि षण्मासंयःकरोत्येवंसाक्षाल्लक्ष्मीपतिःस्वयं विकच
स्यात्रएवार्केनवनीतंप्रविन्यसेत् मध्येसकेसरेपद्मेसम्यक्पत्रांतरालके सुसमिद्धेऽनलेतच्चसमुद्धृत्यहु
नेत्सुधीः अभ्यर्च्याष्टोत्तरशतंजपश्चभृगुवासरे चत्वारिंशद्भिरस्यस्यान्महालक्ष्मीरचंचला तुरीयर्चांचजुहुयादेते
नैकादशाहुतीः एवंकुर्वतएवास्यषण्मासान्महादिदिश प्रधानतर्पणांतेचसंतर्प्याः शक्तयस्त्विमाः प्रणवाद्याहृदंता
श्चश्रीलक्ष्मीवरदायिकाः विष्णुपत्नीचवसुधारूपास्यापिहिरण्यतः स्वर्णमालिन्यपिपरानूतनारजतस्रजा सुव
र्णाढ्यगृहास्वर्णप्राकारापद्मवासिनी पद्महस्ताप्रियामुक्तालंकारासूर्यकापरा चंद्राविश्वाप्रियेश्वर्यामुक्तिश्चापितुभु
क्तियुक् विभुर्ऋद्धिःसमृद्धिश्चतुष्टिःपुष्टिर्धनार्थदा भुवनेशीचशुद्धास्याद्योगिनीभोगदामता धात्रीविधात्रीद्वात्रिं
शत्शक्तयःसमुदीरिताः द्वात्रिंशद्भिश्चपूजांतेमंत्रीमंत्रैर्वलिंहरेत् मंत्रैर्नाममंत्रैर्यथाश्रीरेपतेवलिंनमइत्यादि श्री
मंत्रजापिनांकेचिदुच्यंतेनियमाइह तैलाभ्यक्तश्चनाश्नीयान्नग्नस्तोयेनसंविशेत् अशुचिर्नस्वपेत्कापिद्वाभ्यांस्या
दशुचिर्भवेत् लवणंतिलसंभूतंनाश्नीयात्केवलंसुधीः लिंपेद्वारिद्रांनोवक्त्रेनानृतंप्रवदेत्कचित् कदाचिन्मलिनोनस्या
द्भुवंनैवालिखेद्वृथा श्रीफलांबुजसद्रोणान्नमूर्द्धानिचधारयेत् तथाचनिर्मलाचारःशुक्लःशुद्धमनाभवेत् शुद्धमाल्यानु
लेपश्चशुद्धाभरणभूषितः श्वेतवस्त्रपरीधानःशुद्धदेहःस्वलंकृतः उत्कृष्टगंधानुलेपःशुद्धदंतश्चसन्नखः विष्णुभक्तश्च
नलोनभ्यसूयोभवेत्सुधीः निंदितान्वयसंभूतांदुष्टांचकलहप्रियाम् दुष्टयोनिमनिष्टांचरोगग्रहनिवेशितां

अन्यांपुरुषलोलांचकाकार्शी
अन्यासक्तामशुद्धांचकृशांगींसुदृढतनुं अतिन्हस्वातिदीर्घांचविरसांभोगलोलुपां दयार्द्रचित्तआचा
राजयोपितं रजस्वलामेकवारंयोपितंनस्पृशेदपि शांतास्मितःशुचिर्वाग्मीमधुरालापवान्भवेत् व
र्यदेवतिथ्यर्चनारतः गुर्वग्निपूजानिरतःपुण्यशीलोदृढव्रतः नित्यस्नायीपश्चिमाशामुखाशीशीलवान्भवेत्
र्णाश्रमरतःस्वीयदारतुष्टोऽल्पभाषणः एतादृशैश्चनियमैर्युक्तोलक्ष्मींलभेतसः नारायणीये नाजिघ्रन्नाक्रमेद्वा
न्यंतद्वीजंनचभक्षयेत् नस्यान्मलिष्ठोनोछिंद्याद्बिल्वंभूमौशयीतन लवणामलकेवर्ज्यंनागादित्यतिथौक्रमात् ना
गादित्यतिथीपंचमीसप्तम्यौ पंचम्यामुत्तरेस्त्रीचवर्ज्याप्रत्यङ्मुखोऽशने बिल्वेनमार्जयेद्दंतांस्त्रिसंध्यंप्रणमेच्चतान्
प्रातर्भक्ष्यास्तिलास्तेचधार्यालक्ष्मीश्चभक्षयेत् धारयेन्मूर्ध्निनोपुष्पमुत्तरेमधुरान्नभुक् पायसंबिल्वबीजंचभक्षये
च्छुक्लपर्वणि शुक्लपर्वणिपूर्णिमायां शारदातिलके शयीतशुद्धशय्यायांतरुण्यासहनान्यथा मलिनोनभवेज्जातु
त्सितान्नंनभक्षयेत् द्रोणपंकजबिल्वानिपद्मांजातुनलंघयेत् सहदेवीमित्रवल्लीश्रीदेवीविष्णुवल्लभां कन्यांजंबूत्र
वालंचधारयेन्मूर्ध्निसर्वदा श्रीदेवीश्रीललिता विष्णुवल्लभाअपराजिता कन्याकुमारी प्रयोगसारे धान्य
गोगुरुहुताशनराणांनस्वपेदुपरिनाप्यनुवंशं नोत्तरापरशिरानचनग्नोनार्द्रपाणिचरणः श्रियमिच्छन् अथयं
त्रोद्धारः यंत्रसारे श्रीबीजंसाध्यसंयुक्तंकर्णिकायांसमालिखेत् वस्वादित्यद्व्यष्टसंख्यापत्रेष्वपियथाक्रमं श्री
सूक्तस्याप्यर्द्धमर्द्धमृचामालिख्यतद्बहिः यःशुचिःप्रयतोभूत्वेत्यृचामात्रकयापिच संवेष्ट्यचधराबिंबंकोणपुश्री
यमालिखेत् श्रीसूक्तयंत्रमेततुधारयेद्योयथाविधिः पुत्रारोग्यधराधान्यधनगोसख्यशालिनीं लब्ध्वातिबहु
लांलक्ष्मींजीवेच्चशरदांशतं इदमेवताम्रपट्टेविलिख्यजप्त्वाचसिक्तसंपातं संस्थाप्यांगणभूमौलक्ष्मीमावाह्य
साधुसंपूज्य भूयःपरिवारयुतांबलिंहरेद्भूतबलिंसमाकृत्य यस्मिन्नेवन्हियतेवर्द्धतेतस्यसंपद्धि पुत्रैर्दारैरिष्टैर्वि

भवेभृत्यैश्चधान्यैश्च नागैरथैस्तुरंगैर्द्विपभैर्गोभिश्चसंख्ययाहीनैः रमयंतीगेहेऽस्मिन्विहरत्याभूतसंप्लवंलक्ष्मीः
अस्यार्थः अष्टदलकमलंकृत्वातत्कर्णिकायांश्रीबीजं साध्यसहितंविलिख्याष्टदले हिरण्यवर्णामित्यादिनारभ्य
तामिहोपह्वयेश्रियमित्यंतमृचामर्द्धमालिख्य तद्बहिर्द्वादशदलकमलं कृत्वा तद्दलेषु स्वाद्यादिप्रादक्षिण्येन
चंद्रांप्रभासामित्यारभ्यमयिश्रीःश्रयतांयशइत्यंतमृचामर्द्धमालिख्य तद्बहिःषोडशदलान्वितेषु कर्दमेनप्रजाभूते
त्यादिऋक्त्रयस्यार्द्धमर्द्धं गौरीमिमाय ११ द्विपदी १२ अष्टापदी १३ सहस्राक्षरा १४ प्रणोदेवी १५
धीनामवित्र्यवतु १६ तद्बहिर्वृत्तत्रयंकृत्वातत्राभ्यंतरवीथ्यां यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं श्रियःपंच
दशर्चंचश्रीकामःसततंजपेत् इतिऋचा संवेष्ट्य वहिर्वीथ्यांमातृकयासंवेष्ट्य तद्बहिश्चतुरस्रंविलिख्य तत्कोणेषु
श्रीबीजमालिखेत् एतद्यंत्रमुक्तफलदंभवति अथाश्विननवरात्रे वेदोक्तप्रकारेणमहालक्ष्मीपूजनमुच्यते तत्र
ब्राह्मेमुहूर्त्तउत्थाय स्वगुरुस्मरणकुंडलिनीस्मरणादिप्रातःकृत्यादिकंकृत्वा दंतधावनस्नानसंध्यानित्यतर्पणादिच
कृत्वा पूजास्थानमागत्यदिग्बंधनादिपूर्वकभूतशुद्धिप्राणप्रतिष्ठादियोगपीठांतंकृत्वा मूलेनप्राणायामंकृत्वा गण
पतिकुलदेवतादिस्मरणांतं ब्राह्मणादीन्नमस्कृत्य ॐसुमुखश्चैकदंतश्च शुक्लांबरधरंविष्णुं अभीप्सितार्थस
सिद्ध्यै यत्रयोगेश्वरःकृष्णो अनन्याश्चिंतयंतोमां स्मृतेःसकलकल्याणभाजनं सर्वेष्वारंभकार्येषुनास्तितेषा
पाममंगलं येषांहृदिहरिः तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव विद्याबलंदैवबलंतदेवलक्ष्मीपतेर्यंघ्रियु
गंस्मरामि इतिमंगलाचरणं अद्यास्मिन्मासि श्रीमहाकालीमहालक्ष्मीमहासरस्वतीप्रीतिपूर्वकदुरितनिवार
णक्षेमायुरारोग्यैश्वर्यादिवृद्धिकामः प्रतिपदमारभ्य नवमीपर्यंतमिष्टदेवतास्वरूपिण्याः श्रीमहालक्ष्म्याः
षोडशोपचारपूजां श्रीसूक्तचंडीपाठानां यथोक्तसंख्यायास्तद्दशांशहोमादिकृत्यंकरिष्येइतिसंकल्प्य तत्रनिर्विघ्न

तार्थंगणपतिपूजनंकरिष्ये ततोरक्ताक्षतादिभिर्भूमावष्टदलपीठे महागणपतये सिद्धिबुद्धिसहित सवाहन सायुध सपरिवारएह्येह्यागच्छागच्छ हेरंबत्वमभ्येहिअंबिकात्र्यंबकात्मज सिद्धिबुद्धिपतेत्र्यक्षलक्षलाभपितःपितः नागास्यनागहारत्वंगणराजचतुर्भुज भूषितःस्वायुधैर्दिव्यैःपाशांकुशपरश्वधैः आवाहयेत्वांपूजार्थंरक्षार्थंचमम प्रभो इहागत्यगृहाणत्वंपूजांकर्तुंचरक्षमे आवाह्यैवंगणेशानंपूजाद्रव्यैःप्रपूजयेत् गणानांत्वागणपतिꣳ प्रियाणांत्वा० निधीनांत्वा० वसोममआह० गणानांत्वागणपतिंत्वाहवामहे कविंकवीनाम्० आवाहनं स्वागतं पाद्यं अर्घ्यं आचमनीयं मधुपर्कंपुनराचमनीय स्नानवस्त्राभरणानि गंधपुष्प धूपदीपनैवेद्य तांबूल दक्षिणानमस्कारान् विधाय हस्तद्वयेन नारिकेलाद्यर्घ्यपात्रस्थजलंसपुष्पं गृहीत्वोत्थाय प्रार्थयेत् रक्षरक्षग णाध्यक्षत्र्यक्षत्रैलोक्यरक्षक भक्तानामभयंकृत्वात्राताभवभवार्णवात् द्वैमातुरकृपासिंधोषाण्मातुराग्रजप्रभो व रदत्वंवरंदेहिवांछितंवांछितार्थद अनेनफलदानेनफलदोऽस्तुभवान्मम इतिफलं दत्वा प्रार्थयेत् विघ्नेश्वराय वरदायसुरप्रियाय लंबोदरायसकलायजगद्धिताय नागाननायश्रुतियज्ञविभूषितायगौरीसुतायगणनाथनमो नमस्ते भक्तार्तिनाशनपरायगणेश्वरायसर्वेश्वरायशुभदायसुरेश्वराय विद्याधरायविकटायचवामनायभक्तप्र सन्नवदनायनमोनमस्ते नमस्तेब्रह्मरूपायविष्णुरूपायतेनमः विश्वरूपस्वरूपायनमस्तेब्रह्मचारिणे भक्ति प्रियायदेवायनमस्तुभ्यंविनायक इतिनमस्कृत्य त्वांशत्रुवर्गदलनेतिवंसुप्रदेतिभक्तप्रियेतिसुखदेतिबलप्रदेति विद्याप्रदेत्यघहरेतिचयेस्तुवंति तेभ्योगणेशवरदोभवनित्यमेव इतिस्तुत्वा प्रणमेत् ततऋत्विग्वरणादियथा शेषंच विधाय कलशस्थापनं महीद्यौ० भूमिस्पर्शः स्योनापृथिवि० भूमिप्रार्थना ओषधयः संव दंतेतियवान्प्रक्षिप्य कलशंनिधाय वरुणस्योत्तंभनमसीतिजलप्रक्षेपः ओषधयः संवदंते इतिसर्वौषधिप्र०

स्योनापृथिवीतिसप्तमृदः अश्वत्थेवोनिषदनमिति पंचपल्लवाः कांडात्कांडात्प्ररोहंतीति दूर्वा याःफलि
नीर्याअफलाइतिफलंक्षिप्त्वा परिवाजपतीतिपंचरत्नप्रक्षेपः हिरण्यगर्भः समवर्त्तताग्रेइतिदक्षिणाद्रव्यं युवासु
वासाइतिवस्त्रेणाच्छाद्य रक्तवस्त्रेणसूत्रेणचवेष्टनं तत्वायामिब्रह्मणाब्रह्म इतिवरुणावाहनं ब्रह्मांडोदरतीर्थानि
करैःस्पृष्टानितेरवे क्रोमित्यंकुशमुद्रया तीर्थान्यावाह्य गंगेचयमुनेचैव. सर्वेसमुद्राः सरितइत्यावाह्यचंदनादिभिःक
लशमलंकृत्य कलसस्यमुखेविष्णु- स्त्वत्प्रसादादिमं यज्ञं सान्निध्य. प्रसन्नोभवसर्वदा इतिकलशस्थापनं ततो
मूलेनप्राणायामत्रयंकृत्वा श्रीसूक्तन्यासंकुर्यात् अस्यश्रीसूक्तस्यानंदकर्दमचिक्लीतश्रीपुत्रेभ्यऋषिभ्योनमःशि
रसिमुखेअनुष्टुप्बृहतीत्रिष्टुप्प्रस्तारपंक्तिच्छंदोभ्योनमो हृदि श्रीविभावसुदेवताभ्यांनमः ममसकुटुंबस्या युरा
रोग्यैश्वर्याभिवृद्धयेविनियोगः इतिकृतांजलिरुक्त्वा हिरण्यायैनमः हृदयायनमः चंद्रायैनमःशिरसेस्वाहा र
जतस्रजायैशिखायैवषट् हिरण्यस्रजायैकवचायहुं हिरण्मयायैनमोनेत्रत्रयायवौषट् हिरण्यायैनमोऽस्त्रायफट्
एवंकरांगुलिन्यासोऽपि शिरसिहिरण्यवर्णां १ नेत्रयोःताम्मआवह २ कर्णयोःअश्वपूर्वां ३ नासिकायांकांसो
स्मितां ४ मुखेचंद्रांप्रभासां ५ गलेआदित्यवर्णां ६ बाह्वोःउपैतुमां ७ हृदिक्षुत्पिपासां ८ नाभौगंधद्वारां ९
गुह्येमनसःकामं १० गुदेकर्दमेन ११ ऊर्वोःआपस्रजतु १२ जान्वोःआर्द्रांसूर्यां १३ जंघयोःआर्द्रांचंद्रां १४
पादयोःताम्मआवह १५ श्रांश्रींश्रूंश्रैंश्रौंश्रः इत्येवंषडंगानिविन्यस्य प्रागुक्तरीत्योर्ध्वकमलेदेवींध्यायेत् अरुणक
मलसंस्थातद्रजःपुंजवर्णाकरकमलधृतेष्टाभीतियुग्मांबुजाच मणिमुकुटविचित्रालंकृतापद्मजालैर्भवतुभुवनमाता
सर्वदाश्रीःश्रियेनःइतिध्यात्वामानसोपचारैराराध्यार्घ्यादिस्थापनांते ॐह्रींश्रींहंसःसोहंस्वाहाइतिमंत्रेणात्मपू
जांविधायपीठपूजामारभेत ॐमंडूकायनमः कालाग्निरुद्रायनमः मूलप्रकृत्यैनमः आधारशक्त्यै-कूर्माय-अनंताय

नंदनोद्यानायकल्पवृक्षवनायस्वर्णप्राकाराय.करुणाम
वराहायपृथिव्यै. सुधासमुद्राय.श्वेतद्वीपाय.स्वर्णपर्वताय-नंदनोद्यानायकल्पवृक्षवनायस्वर्णप्राकाराय.करुणाम
यपरिखायै.स्वर्णमंडपाय.पूर्वद्वारश्रियै-इंद्राय ब्रह्मणे-सत्वाय ऋग्वेदाय.आत्मनेकालतत्त्वाय-अंबिकायैइंद्राण्यै
वेदमात्रे-शैलपुत्र्यै.ब्रह्मचारिण्यै.चंडघंटायै.कूष्मांडायै- कात्यायन्यै-कालरात्र्यै. महागौर्यै १ ततोदक्षिणद्वारे द्वार
श्रियैनमः क्षमाय शांत्यै सिद्धायै क्षमायै विष्णवे यजुर्वेदाय रजसे विद्यातत्त्वाय जगन्मात्रे मायायै शिवायै
शांत्यै ऱ्हींकारायै क्लींकारायै मायाशक्त्यै वीरायै अवीरायै अनंतरात्मने दंडधराय २ ततःपश्चिमद्वारे द्वारश्रियै
वरुणाय रुद्राय सामवेदाय आदित्याय वारुण्यै शंखायुधायै हंसवाहिन्यै जगज्जीवायै जगद्बीजायै शोडशकलायै
पूर्णकलशाय चित्रिण्यै चित्रमालायै चित्रायै चामुंडायै ३ ततउत्तरद्वारे द्वारश्रियै कपालहारिण्यै भक्तवत्सलायै हुं
कारायै क्षांकारायै विमलरूपायै ईशानाय पार्वत्यै ब्रह्मणे अथर्वणवेदाय धात्रे ज्योत्स्नायै कल्याण्यै शर्वाण्यै च
द्रकलायै चंद्रवदनायै विभूत्यै परविभूत्यै भस्मधारिण्यै पावनायै गंगायै भागीरथ्यै गोदावर्यै प्रवरायै प्रण
तायै क्लींकारायै क्रींकारायै क्रौंकारायै सर्वबीजात्मने बीजप्रवाहिन्यै ४ मध्येरत्नवेदिकायै रत्नसिंहासनाय ध
र्माय. ज्ञानाय- वैराग्याय. ऐश्वर्याय- अधर्मायअज्ञानाय- अवैराग्याय. अनैश्वर्याय- श्वेतच्छत्राय.
चिच्छक्त्यै. मायाशक्त्यै- आनंदपाराय. संवित्तालाय. प्रकृतिमयपत्रेभ्यो-विकृतिमयकेसरेभ्यो. पंचाशद्वर्ण
बीजायै. सर्वतत्त्वरूपायै. कर्णिकायै- अंअर्कमंडलाय. वंवन्हिमंडलाय- संसोममंडलाय. संसत्वाय. रंरजसे-
तंतमसे. आंआत्मने- अंअंतरात्मने. पंपरमात्मने- ऱ्हींज्ञानात्मने. आत्मतत्त्वाय. मायातत्त्वाय विद्या
तत्त्वाय कलातत्त्वाय परतत्त्वाय इतिसंपूज्य केसरेषु पूर्वाद्यष्टदिक्षुमध्येच ॐभूत्यै, उन्नत्यै. कांत्यै- धृत्यै
कीर्त्यै- सन्नत्यैव्यापृत्यै- उत्कृष्टै. मत्यै. ऋद्धैनमः इतिसंपूज्य ॐश्रीसर्वशक्तिकमलासनायनमइतिसमस्त

पीठंसंपूज्य मूलमुच्चार्य्य श्रीलक्ष्मीमूर्त्तिंपरिकल्पयामिनमइतिकलशोपरिमूर्त्तिंपरिकल्प्य घंटाब्जमकरांलक्ष्मीं
दुर्गांदेवींव्यवस्थितां स्थापयामिमहादेवींसर्वसौभाग्यदायिनीमितिसंस्थाप्य स्वहृत्कमले प्राग्वद्देवीं ध्यात्वा
देव्यास्तेजोदीपाद्दीपांतरमिववहन्नासापुटाध्वनापुष्पांजलावानीय एह्येहिदेवदेवेशिपरिवारसमन्विते यावत्त्वांपूज
यिष्यामितावत्त्वंचइहावह महापद्मवनांतस्थेकरुणानंदविग्रहे सर्वभूमिहितेमातरेह्येहिपरमेश्वरिइत्यावाहना
दिदशमुद्राः प्रदर्श्य ध्यायेत् लक्ष्मींक्षीरसमुद्रराजतनयांश्रीरंगधामेश्वरीं दासीभूतसमस्तदेवनिकरांलोकैकदी
पांकुरां श्रीमन्मंदकटाक्षविभ्रमलसद्ब्रह्मेंद्रगंगाधरां त्वांत्रैलोक्यकुटुंबिनींसरसिजांवंदेमुकुंदप्रियामितिध्यात्वा
मूलमंत्रेणदीपिन्यामालिंग्यार्घ्योदकेनच त्रिवारंप्रोक्षयित्वा प्राणप्रतिष्ठांविधाय पुष्पांजलिंगृहीत्वा उंदुर्गेकात्या
यनीदेविशांभविशंकरप्रिये भक्त्यामयाकृतांपूजांगृहाणत्वंसुरेश्वरि हिरण्यवर्णां- जातवेदसे- नमोदेव्यैमहालक्ष्म्यै
आवाहनंपरिकल्पयामिइतिदद्यात् तप्तकांचनवर्णाभंमुक्तामणिविराजितं अमलंकमलंदिव्यमासनंपरिगृह्यतां
ताम्मआवह जातवेदसे. नमोदेव्यै- महासरस्वत्यै- श्रीरेतत्तेस्वासनंनमः उंस्वागतंकुशलंपृच्छेमहादेविमहे
श्वरि सुस्वागतंत्वयाभद्रेकृपयाभक्तवत्सले ताम्मआवह- जातवेदसे. नमोदेव्यै- महासरस्वत्यै. श्रीरेतत्तेस्वा
गतंनमः गंगादितीर्थसंभूतंगंधपुष्पाक्षतैर्युतं पाद्यंददाम्यहंतुभ्यंनमस्तेकमलालये. अश्वपूर्वां जातवेदसे.
नमोदेव्यै. श्रीरेतत्तेपाद्यंनमः अष्टगंधसमायुक्तंस्वर्णपात्रेप्रपूजितं अर्घ्यंददाम्यहंतुभ्यंप्रसीदत्वंसुरेश्वरि
तांसोस्मितां जातवेदसे. नमोदेव्यै. लोकमात्रे. श्रीरेतत्तेऽर्घ्यंस्वाहा सर्वलोकस्ययामातायामातालोकपावनी
स्याचमनंतस्यैमहालक्ष्म्यैप्रयत्नतः चंद्रांप्रभासां- जातवेदसे. नमोदेव्यै- भक्तप्रियायैश्रीरेतत्ते- आचमनीं
स्वधा कपिलादधिकुंदेंदुधवलंमधुसंयुतं स्वर्णपात्रस्थितंदेविमधुपर्कंगृहाणमे आदित्यवर्णे. जातवेदसे.

स्नानवारिगृहीत्वातु
नमोदेव्यै. भक्तप्रियायै- श्रीरेततेस्नानीयंनमः एहिपादुकयादेविस्नानार्थंस्नानमंडपं
स्नानासनसमागता सुगंधितैलं गंधादि पंचामृतजलादिकं सुगंधिश्लक्ष्णचूर्णंचतथोद्वर्त्तनकादिकम् नाना
तीर्थोद्भवंतोयंस्नानीयंचगृहाणमे आदित्यवर्णे. जातवेदसे. नमोदेव्यै- भक्तप्रियायै श्रीरेतत्तेस्नानीयंनमः
आपोहिष्ठेतिमलापकर्षणस्नानं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतंमयानीतंगृहाणपरमेश्वरि आदित्यवर्णे
जातवेदसे. नमोदेव्यैभद्रायैनमः श्रीरेतत्तेपंचामृतस्नानं पुरुषसूक्तेनशुद्धोदकेनस्नानं जातवेदसे. पुनरा
चमनं दिव्यांबरंनवश्वेतंक्षौमंचातिमनोहरं त्रैलोक्यजननीदेविदीयमानंगृहाणमे. उपैतुमां. जातवेदसे.
नमोदेव्यै श्रीलक्ष्म्यैनमः श्रीरेतत्तेवासोयुग्मंनमः एहिदेविविभूषार्थंनैपथ्यागारमुत्तमं विभूषासनमास्थायतथा
दर्शविलोक्यच केशप्रसाधनंकृत्वाभूषणान्यंगसात्कुरु रत्नकंकणवैदूर्यमुक्ताहारादिकानिच सुप्रसन्नेसदा
लक्ष्मिभूषणानिगृहाणमे- क्षुत्पिपासा. नमोदेव्यै- जातवेदसे. हिरण्यायै- श्रीरेतानि विभूषणानि नमः
एहिदेविनिजस्थानंसिंहासनमनुत्तमं पूजाचक्रंसमास्थायगंधंदिव्यंगृहाणमे चंदनागुरुकर्पूरकुंकुमाद्यैः समन्वितं
कस्तूरीरोचनयुतंगंधंदेविगृहाणमे गंधद्वारां- जातवेदसे. नमोदेव्यै. महादेव्यै- श्रीरेषतेगंधोनमः
शुद्धमुक्ताफलैरेतैरक्षतैः शालिसंभवैः सर्वाधिपेमहालक्ष्मिद्योतयामिसुभक्तितः जातवेदसे.
नमोदेव्यै- श्रीरेतारेतेअक्षताः हारिद्रांचमयानीतांदेविकल्याणदायिनि सौभाग्यंवर्द्धतांनित्यंगृ
हाणहरिवल्लभे जातवेदसे॰ नमोदेव्यै॰ हरिप्रियायैनमः श्रीरेतत्तेहारिद्रं कुंकुमंशोभनंदिव्यं सर्वदामंगलप्रदं
मयानीतमहादेवितुभ्यंदास्यामिसुंदरि जातवेदसे॰नमोदेव्यै॰मंगलायैनमःश्रीरेतत्तेकुंकुमंनमः सिंदूरंशुभदंनि
त्यंमहाशक्तिप्रियसदा प्रयच्छामिमहादेविसर्वसौभाग्यदायिनि जातवेदसे॰ नमोदेव्यै॰ महादेव्यै॰ श्रीरेतत्ते

सिंदूरंनमः मालतीमल्लिकादीनिनवानिकुसुमानिच एकनाथेप्रयच्छामिपुष्पाणिप्रतिगृह्यतां मनसःकामे १०
जातवेदसे० नमोदेव्यै० एकनाथायैश्रीरेतानिपुष्पाणिवौपट् रक्तैःश्वेतांबुजैःपुष्पैर्मल्लिकादिविचित्रितैः नानापुष्पैः
कृतांमालांगृहाणहरिवल्लभे श्रीरेतांमालांसमर्पयामि पुष्पमालानमः सुगंधंशीतलंशुभ्रंनानागंधसमान्वितं
प्रीत्यर्थंतवदेवेशिसुचूर्णंप्रतिगृह्यतां जातवेदसे०नमोदेव्यै सुभगायैनमः श्रीरेतत्तेपरिमलद्रव्यंनमः अथांगपूजा
चंचलायैनमः पादौपूजयामि० एवं० चपलायै० गुल्फौपूजया० कांत्यै० जानुनीपूजया० मंगलायैजंघेपू० भद्र
काल्यैहुरूपू कमलिन्यैकटिंपू शिवायैनाभिंपू क्षमायैउदरंपू गौर्य्यै सिंहवाहिन्यैस्तनद्वयंपू स्कंदमा
त्रे काममात्रेभुजद्वयं कंबुकंठायै कंठंपूजयामि सरस्वत्यैमुखंपू सुवासिन्यैनासिकांपू स्वर्णकुंडलायै कर्ण
द्वयंपू चंडिकायैनेत्रद्वयंपू शिवायैललाटंपू कुमार्य्यै शिरःपू सर्वरूपायैनमः सर्वांगं पूजयामि इतिसंपूज्य
ततोऽष्टोत्तरशतनामभिःपूजयेत् ॥ ॐअस्यश्रीमहालक्ष्म्यष्टोत्तरशतनाममालामंत्रस्य ब्रह्मार्ऋषिरनुष्टुप्छंदः
श्रीमहालक्ष्मीप्रीत्यर्थं श्रीमहालक्ष्मीमष्टोत्तरशतनामभिः पूजयिष्ये इतिविनियोगः ततः श्रीबीजषट्केन
षडंगन्यासंकृत्वा लक्ष्मीं समुद्रराजतनयामित्यादिध्यात्वा पुष्पैरक्षतैर्वापूजयेत् तद्यथा ॐमहालक्ष्म्यैनमः म
हाकाल्यै महासरस्वत्यै महाकन्यायै महागौर्य्यै महादेव्यै भक्तानुग्रहकारिण्यै स्वप्रकाशात्मरूपायै
महामायायै माहेश्वर्य्यै वागीश्वर्य्यै जगद्धात्र्यै कालरात्र्यै त्रिलोचनायै भद्रकाल्यै कपालिन्यै महागौर्य्यै
त्रिलोकात्मिकायै सिद्धलक्ष्म्यै क्रियालक्ष्म्यै लोकमंत्रप्रदायिन्यै अरूपायै स्वरूपायै विश्वरूपिण्यै
पंचभूतात्मिकायै देवमात्रे सुरेश्वर्य्यै दारिद्र्यध्वंसिन्यै वीणापुस्तकधारिण्यै सर्वशक्त्यै ब्रह्मात्मिकायै
अष्टांगरूपिण्यै० नवदुर्गात्मिकायै० अष्टभैरव्यै० गंगायै० शारदायै० वेण्यै० सर्वशास्त्रधारिण्यै० समुद्रवसनायै

ब्रह्मांडमणिमेखलायै॰ अवस्थात्रयनिर्मुक्तायै॰, गुणत्रयविवर्जितायै॰ योगध्यानैकसंन्यासिन्यै॰ योगध्या
नैकपरायणायै॰ देवत्रयविशोकायै॰ वेदांतज्ञानरूपिण्यै॰ पद्मावत्यै॰ विज्ञानलक्ष्म्यै॰ नागयज्ञोपवीतिन्यै॰
सूर्यचंद्रार्द्धमासायै॰ ग्रहनक्षत्ररूपिण्यै॰ वेदिकायै॰ वेदरूपिण्यै॰ गिरिसंभवायै॰कैवल्यदायै॰ विशृंखलायै॰
सूर्यमंडलसंस्थितायै॰ सोममंडलमध्यस्थायै॰ वायुमंडलसंस्थितायै॰ वन्हिमंडलसंस्थितायै॰ चक्रिकायै॰
चक्रमध्यस्थितायै॰ चक्रमार्गप्रदायिन्यै॰ सिद्धांतमार्गदायिन्यै॰ षड्वर्गवर्जितायै॰ प्रत्यक्षादिप्रमावृतायै॰ वि
द्यामूर्त्तायै॰ त्रैलोक्यमोहिन्यै॰ विद्यायै॰ वर्मदायै॰ रक्षायै॰ ब्रह्मस्थापितरूपायै॰ कैवल्यज्ञानगोचरायै॰ करु
णायै॰ मधुकैटभमर्दिन्यै॰ अचिंत्यलक्षणायै॰ गोप्त्र्यै॰सदाभक्ताघनाशिन्यै॰ महारमायै॰ परमेश्वर्य्यै॰ सुसि
द्धलक्ष्म्यै॰ महाकालिन्यै॰ सद्योजातायै॰ वामदेवायै॰ अघोरायै॰ तत्पुरुषायै॰ ईशानरूपिण्यै॰ एकाक्षर
देव्यै॰ योगिन्यै॰ योगध्यानपराक्रमायै॰ श्रीसिद्धलक्ष्म्यै॰ श्रियै॰ कमलायै॰ कमलालयायै॰ पद्मायै॰ नालि
नयुग्मकरांबुजायै॰ शैलपुत्र्यै॰ ब्रह्मचारिण्यै॰ चंडघंटायै॰ कूष्मांडायै॰ स्कंदमात्रे॰कात्यायन्यै॰ कालरात्र्यै॰
महागौर्य्यै॰सिद्धिदायै॰बुद्धिदायै॰सर्वात्मिकायैनमः इतिसंपूज्य कर्णिकायां॰ श्रांहृदयायनमः श्रींशिरसेस्वाहा
श्रूंशिखायैवषट् श्रैंकवचायहुं श्रौंनेत्रत्रयायवौषट् श्रःअस्त्रायफट् ततोऽष्टदलेषुपूर्वादिक्रमतः पद्मासनायैनमः
पद्मवर्णायै- पद्मसंस्थायै- आर्द्रायै. तर्पयंत्यै. तृप्तायै. ज्वालिन्यै- स्वर्णप्राकारायै. ततोदलाग्रेषु. ब्राह्मयै. माहे
श्वर्य्यै. कौमार्य्यै- वैष्णव्यै- वाराह्यै-इंद्राण्यै- चामुंडायै महालक्ष्म्यै॰ ततोभूपुरे पूर्वादिक्रमेण॰ इंद्रायसायु
धायसपरिवारायस्वशक्तियुतायनमः एवमग्नये॰ यमाय॰निर्ऋतये॰वरुणाय॰ वायवे॰ कुवेराय॰ ईशानाय॰
ब्रह्मणे॰ अनंतायनम॰ तद्बहिः वज्रायनमः शक्तयेनमः दंडायनमः खड्गाय॰ पाशाय॰ अंकुशाय

गदायै शूलाय पद्माय चक्रायनमः इतिसंपूज्य पुष्पांजलिंदत्त्वा दशांगगुग्गुलंधूपंचंदनागुरुसंयुतं भक्त्या
दत्तंमयादेविप्रसीदत्वंसुरेश्वरि कर्दमेन० ११ जातवेदसे० नमोदेव्यै० भद्रकाल्यै० श्रीरेषतेधूपोनमः कर्पू
रवर्त्तिसंयुक्तंगोघृतेनसमन्वितं दीपंगृहाणदेवेशिमहालक्ष्मिनमोऽस्तुते आपःस्रृजंतु० १२ जातवेदसे नमोदे
व्यै श्रीमहालक्ष्म्यैनमः श्रीरेषतेदीपोनमः नैवेद्यंगृह्यतांदेविभक्ष्यभोज्यसमन्वितं षड्रसैरचितांदिव्यंघृते
नपरिपूरितं आर्द्रांपुष्करिणींसूर्यां० १३ जातवेदसे नमोदेव्यैपूर्णमालिन्यै श्रीरेतत्तेनैवेद्यंनमः मध्येपानीयं
उत्तरापोशानं पुनराचमनीयं कर्पूरचंदनोन्मिश्रंदिव्यगंधसमन्वितं करोद्वर्त्तनकंरम्यंगृहाणपरमेश्वरि जातवेदसेन
मोदेव्यै पिंगलायैनमः श्रीरेतत्तेकरोद्वर्त्तनकंनमः पूगीफलैः सकर्पूरैर्नागवल्लीदलैर्युतं कर्पूरचूर्णसहितंतांबूलंप्रति
गृह्यतां आर्द्रां चंद्रां १४ जातवेदसे नमोदेव्यै पिंगलायैनमः श्रीरेतत्ते तांबूलंनमः जातवेदसे नमोदेव्यै देव्यैनमः
श्रीरेतत्तेसुवर्णपुष्पंनमः इदंफलमयादेविस्थापितंपुरतस्तव तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि जातवेदसे न
मोदेव्यै सिद्धिदायैनमः श्रीरेतत्तेफलंनमः स्वंचंद्रसूर्यरत्नानिविद्युदग्निस्त्वमेवहि नीराजनंमयादत्तंगृहाणपरमे
श्वरि तान्मआवह० १५ जातवेदसे०नमोदेव्यै यमुनादिनिवासिन्यैनमः श्रीरेतत्ते नीराजनंनमः गौरीमिमाय
जातवेदसे नमोदेव्यै प्रणोदेवी समस्तंश्रीसूक्तं नमोदेव्यै महालक्ष्म्यै महाकाल्यै महालक्ष्म्यै महास
रस्वत्यै श्रीरेतत्ते मंत्रपुष्पंनमः सर्वस्वरूपे जातवेदसे नमोदेव्यै महाकाल्यैनमः श्रीरेतानि प्रदक्षिणा
निनमः सर्वतःपाणिपादंते यःशुचिःप्रयतइत्यादिसमस्तंनमस्तेऽस्तुमहादेव्यै नमस्तेऽस्तुहरिप्रिये नमस्ते
स्तुजगद्धात्रिनमस्तेशिववल्लभे जातवेदसे नमोदेव्यै महामायायैनमः श्रीरेतानि चंदनानि नमः पद्मप्रि
ये यासापद्मासन यामातामधुकैटभप्रमथिनी मांपातुविश्वेश्वरी जातवेदसे नमोदेव्यै श्रीरेतत्तेप्रार्थनानि

ततः श्रीसूक्तचंडीपाठलक्ष्मीहृदयादिकं पठित्वा गुह्यातिगुह्यगोप्त्रीत्वंइत्यादिना जपं समर्पयेत् इति श्रीलक्ष्मीपूजाविधानम् ॥ श्रीसूक्तमाहात्म्यंविष्णुधर्मोत्तरे रामउवाच एकंमंत्रंसमाचक्ष्वदेवलक्ष्मीविवर्द्धनं प्रतिवेदंजगन्नाथयादोगणनृपात्मज पुष्करउवाच श्रीसूक्तंप्रतिवेदंचज्ञेयंलक्ष्मीविवर्द्धनं अस्मिंल्लोके परेवापियथाकामंद्विजस्यतु रामउवाच प्रतिवेदंसमाचक्ष्वश्रीसूक्तंपुष्टिवर्द्धनं श्रीसूक्तस्यतथासर्वंफलंधर्मभृतांवर पुष्करउवाच हिरण्यवर्णांहरिणीमृचःपंचदशद्विज श्रीसूक्तंकथितंपुण्यमृग्वेदेपुष्टिवर्द्धनं रथेअक्षेषुवाजेतिचतस्रस्तुतथाऋचः श्रीसूक्तंतुयजुर्वेदेकथितंपुष्टिवर्द्धनं आतायंचतथासामसामवेदेप्रकीर्तितं श्रियंदातुर्मयिदेहिप्रोक्तमाथर्वणेतथा श्रीसूक्तंयोजपेद्भक्त्यातस्याऽलक्ष्मीर्विनश्यति जुहुयाच्चधर्मज्ञहविष्येणविशेषतः श्रीसूक्तेनतुपद्मानांघृताक्तानांभृगूत्तम अयुतंहोमयेद्यस्तुवहूनीभक्तियुतोनरः पद्महस्तद्वयालक्ष्मीर्नरंतमुपतिष्ठते दशायुतंतुपद्मानांजुहुयाद्यस्तथानले नापैतितत्कुलाल्लक्ष्मीर्विष्णोर्वक्षस्थलाद्यथा घृताक्तानांतुबिल्वानांहुत्वाऽसमायुतंतथा बहुवित्तमवाप्नोतिसयावन्मनसेच्छति बिल्वानांलक्षहोमेनकुलंलक्ष्मीमुपाश्नुते पद्मानामपिबिल्वानांकोटिहोमंसमाचरेत् श्रद्दधानः समाप्नोतिदेवेंद्रत्वमपिध्रुवं संपूज्यदेवींवरदांयथावत्पद्मैः सितैर्वाकुसुमैस्तथान्यैः क्षीरेणधूपैः परमान्नभक्ष्यैर्लक्ष्मीमवाप्नोतिविधानतश्च इतिविष्णुधर्मोत्तरे द्वितीयकांडेश्रीसूक्तविधानम् ॥ अथश्रीसूक्तं ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजां चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह १ तांम्मआवहजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहम् २ अश्वपूर्वांरथमध्यांहस्तिनादप्रमोदिनीं श्रियंदेवीमुपह्वये श्रीर्मादेवीजुषतां कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां तांपद्मनेमिंशरणमहंप्रपद्ये अलक्ष्मीर्मेनश्यतां त्वांवृ

णोमि ५ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोऽथाविल्वः तस्यफलानितपसानुदंतुमायाअंतरायाश्चवा
ह्याअलक्ष्मीः ६ उपैतुमांदेवसखः कीर्त्तिश्चमणिनासह प्रादुर्भूतोऽस्मिराष्ट्रेस्मिन्कीर्त्तिवृद्धिंददातुमे ७ क्षुत्पि
पासामलाज्येष्ठमलक्ष्मींनाशयाम्यहं अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ८ गंधद्वारांदुराधर्षांनित्यपुष्टांक
रीषिणीं ईश्वरींसर्वभूतानांतामिहोपव्हयेश्रियम् ९ मनसःकाममाकूतिंवाचःसत्यमशीमहि पशूनांरूपमन्विच्छ
मयिश्रीःश्रयतांयशः १० कर्दमेनप्रजाभूतामयिसंभ्रमकर्दम श्रियंवासयमेकुलेमातरंपद्ममालिनीं ११ आपः
सृजंतुस्निग्धानिचिक्लीतवसमेगृहे नित्यंदेवींमातरंश्रियंवासयमेकुले १२ आर्द्रांपुष्करिणींपुष्टिंसुवर्णांहेममालि
नीं सूर्य्यांहिरण्मयींलक्ष्मींजातवेदोममावह १३ आर्द्रांपुष्करिणींयष्टिंपिंगलांपद्ममालिनीं चंद्रांहिरण्मयींल
क्ष्मींजातवेदोममावह १४ ताम्मआवहजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंप्रभूतंगावोदास्योऽश्वान्विंदेयं
पुरुषानहम् १५ इतिश्रीसूक्तं गौरीमिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी अष्टापदीनवपदीबभू
वुषीसहस्राक्षरापरमेव्योमन् १६ प्रणोदेवीसरस्वतीवाजेभिर्वाजिनीवती धीनामवित्र्यवतु १७ यःशुचिःप्रय
तोभूत्वाजुहुयादाज्यमन्वहं श्रियःपंचदशर्चंस्यश्रीकामः सततंजपेत् १८ पद्माननेपद्मऊरूपद्माक्षिपद्मसंभवे
तन्मेभजस्वपद्माक्षियेनसौख्यंलभाम्यहम् १९ अश्वदायिचगोदायिधनदायिमहाधने धनंमेजुषतांदेवीसर्वका
मार्थसिद्धये २० पुत्रंपौत्रंधनंधान्यंहस्त्यश्वाजगवंरथं प्रजानांभवतीमाताआयुष्मंतंकरोतुमां २१ चंद्राभांलक्ष्मी
माशानांसूर्य्याभांश्रियमीश्वरीं चंद्रसूर्याग्निसर्वाभांमहालक्ष्मीमुपास्महे २२ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः
धनमिंद्रोबृहस्पतिर्वरुणोधनमश्नुते २३ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा सोमंधनस्यसोमिनोमह्यंददातुसोमि
नी २४ नक्रोधोनचमात्सर्य्यंनलोभोनाशुभामतिःभवंतिकृतपुण्यानांश्रीसूक्तंजपतांसदा २५ वर्षंतुतेविभावरिदिवो

अभ्रस्यविद्युतःरोहंतिसर्वबीजान्यिवब्रह्मद्विषोजहि २६ पद्मप्रियेपद्मिनिपद्महस्तेपद्मालयेपद्मदलायताक्षि विष्णु
प्रियेविश्वमनोऽनुकूलेत्वत्पादपद्मंमयिसन्निधत्स्व २७ यासापद्मासनस्थाविपुलकटितटीपद्मपत्रायताक्षी गंभीरा
वर्त्तनाभिःस्तनभरनमिताशुभ्रवस्त्रोत्तरीया लक्ष्मीर्दिव्यैर्गजेंद्रैर्मणिगणखचितैःस्नापिताहेमकुंभैर्नित्यंसापद्महस्ता
ममवसतुगृहेदिव्यमांगल्ययुक्ता २८ लक्ष्मींक्षीरसमुद्रराजतनयांश्रीरंगधामेश्वरीं दासीभूतसमस्तलोक
वनितांलोकैकदीपांकुराम् श्रीमन्मंदकटाक्षलब्धविभवब्रह्मेंद्रगंगाधरां तांत्रैलोक्यकुटुंबिनींसरसिजांवंदेमुकुंद
प्रियाम् २९ शुद्धलक्ष्मीर्मोक्षलक्ष्मीर्जयलक्ष्मीःसरस्वती श्रीलक्ष्मीर्वरलक्ष्मीश्चप्रसन्नावरदाभव ३० श्या
मांविचित्रांशुकरत्नभूषितांपद्मासनांतुंगपयोधरान्वितां इंदीवराक्षींसुखसारमंजरीं शुभांदधानांवसुधांभजा
महे ३१ श्रियेजातःश्रियआनिर्यायश्रियंवयोजरितृभ्योददाति श्रियंवसानाअमृतमायुर्भवंतिसत्यासमि
धावितद्रौश्रियएवैताच्छ्रियमादधाति संततमृजावषट्कृत्यंसंतत्यैसंधीयते प्रजयापशुभिर्यएवंवेद ३२
पुनर्गौरीमिमांय प्रणोदेवी ३३ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्यु
तम् ३४ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वरि यत्पूजितंमयादेविपरिपूर्णंतदस्तुमे ३५ ॥ इतिश्रीसूक्तपाठः ॥
सरसिजनयनेसरोजहस्तेधवलतरांशुकगंधमाल्यहस्ते भगवतिहरिवल्लभेप्रसीदत्रिभुवनभूतिकरिप्रसीदम
ह्यम् ३६ सौवर्णपद्मपद्मामलकमलकृतंयुग्मशःपाणियुग्मे बिभ्रंतीशोभयोदग्राहितजलधिजलोच्छन्नगात्रीविधात्री
बाहुद्वंद्ववराभयार्द्रहृदयाभक्तप्रियोल्लासिनी लक्ष्मीर्मेभवनेवसत्वनुदिनंचंद्राहिरण्मय्यपि ३७ ॥ अथावशिष्ट
माश्विनशुक्लपक्षकृत्यम् आश्विनशुक्लद्वितीयायांदानस्यानंतफलमुक्तंस्कांदे नारदीयेच आश्विनेमासिवैपुण्या
द्वितीयाशुक्लपक्षगा दानंप्रदत्तमेतस्यामनंतंफलमुच्यते आश्विनशुक्लतृतीयायामपिबृहद्गौरीव्रतमुक्तं नारदी

मे इषशुक्लतृतीयायांबृहद्गौरीव्रतंचरेत् पंचवर्षविधानेनपूर्वोक्तेनैवनारद आचार्य्यंपूजयेदंतेविप्रान्पंचधनादि
भिः सुवासिनीःपंचपूज्यावस्त्रालंकारचंदनैः कंचुकैश्चैवताटंकैःकंठसूत्रैर्हरप्रिया वंशपात्राणिपंचैवसूत्रैः संवे
ष्टितानिच सिंदूरंजीरकंचैवसौभाग्यद्रव्यसंयुतं गोधूमपिष्टजातंचनवापूपफलादिकं वायनानिचपंचैवताभ्योद
द्याच्चभोजयेत् अर्घ्यंदत्वावायनानिपश्चाद्भुंजीतवाग्यता तत्फलंधारयेत्कंठेसर्वकामसमृद्धये ततःप्रातःसमुत्था
यसालंकारासखीजनैः गीतवाद्ययुतानद्यांगौरींतांतुविसर्जयेत् आहूताऽसिमयाभद्रेपूजिताचयथाविधि ममसौभा
ग्यदानायगच्छगम्यतांत्वया एवंकृत्वाव्रतंभक्त्याद्विजदेवीप्रसादतः भुक्त्वाभोगांस्तुदेहांतेगौरीलोकमवाप्नुयात्
इदंव्रतमाश्विनशुक्लतृतीयायांप्रागुक्तदेशाचारव्यवस्थयाविधेयम् ॥ आश्विनशुक्लचतुर्थ्यांकपर्दिविनायकव्रतं ना
रदीये इषशुक्लचतुर्थ्यांतुकपर्दीशंविनायकं पौरुषेणचसूक्तेनपूजयेदुपचारकैः अकणान्मुष्टिगणितांस्तंडुला
न्सकपर्दिकान् विप्रायवटवेदद्याद्गंधपुष्पार्चितायच तंडुलाविष्णुदैवत्याहरदेवंसमाश्रिताः कपर्दीगणनाथो
सौप्रीयतांतैःसमर्पितैः अथव्रतविधिः तिथ्यादिस्मृत्वाममचतुर्विधपुरुषार्थसिद्ध्यर्थं कपर्दीश्वरगणेशव्रतमहं
करिष्ये मूलमंत्रेण करषडंगन्यासं कृत्वा पूजामारभेत् तत्रादौ पीठपूजा ॐनमोभगवतेसकलगुणात्मशक्ति
युतायानंताययोगपीठायनमः अष्टदलकेसरेषु तीव्रायैनमः ज्वालिन्यैनमः गदायैनमः ॐनंदिन्यैनमः का
मरूपिण्यैनमःउग्रायैनमः ॐतेजोवत्यैनमः ॐसत्यायैनमः ॐमध्येविघ्ननाशिन्यैनमः अथध्यानं एकदंतं
महाकायंलंबोदरगजाननं विघ्ननाशकरंदेवंहेरंबंप्रणमाम्यहं इमांपूजांगृहाणेशकपर्दिगणनायक आगच्छागच्छ
देवेश समागच्छामरार्चित विनायकनमस्तुभ्यमुमांगमलसंभव इमांमयाकृतांपूजांगृहाणसुरसत्तम सहस्रशीर्षे
त्यावाहनं अलंकारसमायुक्तंमुक्तामणिविभूषितं स्वर्णसिंहासनंचारुप्रीत्यर्थंप्रतिगृह्यतां पुरुषएवेदमासनं

गौरीसूनोनमस्तेऽस्तुशंकरप्रियकारक भक्त्यापाद्यंमयादत्तंगृहाणप्रणतप्रिय एतावानितिपाद्यं व्रतमुद्दिश्यविघ्नेश गंधपुष्पादिसंयुतं गृहाणार्घ्यंमयादत्तंसर्वसिद्धिप्रदायक त्रिपादूर्ध्वेत्यर्घ्यं गणाधिपनमस्तुभ्यंगौरीसुतगजानन गृहाणाचमनीयंत्वंसर्वसिद्धिप्रदायक तस्माद्विराडित्याचमनं अनाथनाथसर्वज्ञगीर्वाणपतिपूजित स्नानंपंचामृतं देवगृहाणगणनायक आप्यायस्व- दधिक्राव्णो. घृतवती- मधुवाता. स्वादुपवस्वेति- पंचामृतस्नानं गंगाजल समायुक्तमानीतंकृपयामम स्नानंस्वीकुरुदेवेशकपर्दिगणनायक यत्पुरुषेणेतिस्नानं. हरिद्रवस्त्रद्वयंदेवदेवांगवसनो पमं भक्त्यादत्तंगृहाणेशलंबोदरहरात्मज तंयज्ञमितिवस्त्रं- नानालंकारसंयुक्तंनानारत्नविभूषितं अनेक दिव्याभरणंप्रीत्यर्थंप्रतिगृह्यतां इत्याभरणं राजतंब्रह्मसूत्रंचकांचनचोत्तरीयकं भालचंद्रनमस्तुभ्यं गृहाणवरदोभव तस्माद्यज्ञादितियज्ञोपवीतं. गंधकर्पूरसंयुक्तंदिव्यचंदनमुत्तमं विलेपनंसुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यतां तस्माद्यज्ञात्सर्वेतिगंधं- अक्षतान्धवलान्देव सिद्धगंधर्वपूजित भक्त्यादत्तान्गृहाणेमा न्सर्वसिद्धिप्रदोभव इत्यक्षताः सुगंधीनिचपुष्पाणिवरसिद्धिप्रदायक कपर्दिगणनाथायश्वेतपुष्पंददाम्यहं तस्मादश्वेतिपुष्पं- अथांगपूजा कपर्दिगणनाथायनमः पादौपूजयामि गणेशायनमः जानुनी पूजयामि गणनाथायनमः ऊरूपूजयामि गणक्रीडायनमः कटिंपूजयामि वक्रतुंडायनमः हृदयंपूजयामि लंबोदरायनमः कंठंपूजयामि गजाननायनमः स्कंधौपूजयामि हेरंबायनमः हस्तौपूजयामि विकटायनमः मुखं पूजयामि विघ्नराजायनमः नेत्रेपूजयामि धूम्रवर्णायनमः शिरःपूजयामि कपर्दिनेनमः सर्वांगंपूजयामि तत आवरण पूजामारभेत् गांहृदयानमः गींशिरसेस्वाहा गूंशिखायैवषट् गैंकवचायहुं गौंनेत्रत्रयायवौषट् गः अस्त्राय फट् इतिप्रथमावरण १ ब्राह्म्यैनमः माहेश्वर्यैनमः कौमार्यैनमः वैष्णव्यैनमः वाराह्यै- इंद्राण्यै चामुंडायै-

महालक्ष्म्यैनमः इतिद्वितीयावरणं २ इंद्रायनमः अग्नयेनमः यमाय. निर्ऋतये. वरुणाय. वायवे- कुबेराय. ईशा
नाय. अनंताय- ब्रह्मणेनमः इतितृतीयावरणं ३ वज्रायनमः शक्तये. खड्गाय. पाशाय.अंकुशाय- गदायै- त्रि
शूलाय- चक्राय. पद्मायनमः इतिचतुर्थावरणं ४ दशांगंगुग्गुलंधूपंचंदनागुरुसंयुतं उमासुतनमस्तुभ्यंगृहाण
वरदोभव यत्पुरुषंव्यदधुरितिधूपं- गृहाणमंगलंदेवघृतवर्त्तिसमन्वितं दीपंज्ञानप्रदंचारुरुद्रप्रियनमोऽस्तुते ब्राह्म
णोस्येतिदीपं.अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितंभक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां चंद्रमामनसइतिनैवेद्यं
इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसुफलावाप्तिर्भवेजन्मनिजन्मनि इतिफलं पूगीफलसमायुक्तंनागवल्ली
दलैर्युतं चूर्णकर्पूरसंयुक्तंगृहाणगणनायक नाभ्याआसीदितितांबूलं- हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंत
पुण्यफलदमतःशांतिंप्रयच्छमे सप्तास्यासन्नितिदक्षिणा. गणाधिपनमस्तेऽस्तुनमस्तेस्तुगजानन लंबोदरनमस्ते
स्तुनमस्तेस्त्वीप्सितप्रदयज्ञेनयज्ञेतिमंत्रपुष्पांजलिः प्रदक्षिणंतुदेवेशसर्वकार्येषुसर्वदा कपर्दिगणनाथस्त्वमीप्सि
तार्थप्रदायकइति प्रदक्षिणा नमस्करोमिदेवेशसर्वविघ्नहरोभव शीघ्रंममवरंदेहिपरत्रचपरांगतिं इतिनमस्कारःअथ
ब्रह्मचारिपूजा अकणान्मुष्टिगणितांस्तंडुलान्सवराटिकान् विप्रायवटवेदद्याद्गंधपुष्पार्चितायच तंडुलावैश्वदेवस्याः
पाकेनानेनशोभनाःकपर्दिगणनाथोऽसौप्रीयतांतंडुलैःसदा ततःकथांश्रुत्वाविसर्जयेत् अथकथा कदाचिदुपविष्टश्च
पार्वत्यासहशंकरः इतिप्राहप्रियांतांकिंद्यूतेच्छारतिरस्तितेपणःप्रकल्पनीयोऽसौपश्चाद्द्यूतंप्रवर्त्ततां दुरोदरमिषाज्जे
तुंवांछितंप्रत्युवाचसा ममापितस्मिन्सास्त्येवपरत्वयादीयतेपणः एतच्छ्रुत्वाशिवायास्तुमहादेवउवाचतां तवाकिंकि
ममाभीष्टंतुदास्यामिपरमेश्वरि लोकत्रयंचयाचस्वकिमन्यैर्वचनैस्तथा उमोवाचपृच्छामिपश्चादेतन्मेदातव्यमितिनोच्य
तेयदिज्ञात्वातदानींतुविश्वासोनास्तिमेत्वयि वाक्यमेवंविधंश्रुत्वाशर्वःप्रोवाचतामुमां नविश्वासयितुंकेनशक्यसे

किंपुनर्मया सोल्लुंठनेनकिंदेविंद्यूतेच्छास्तितवैवचेत् पणःप्रकल्प्यक्रियतांपणेतिष्ठाम्यहंसदा भावंसंचिंत्यपार्व त्याःपणमाकल्प्ययत्नतः त्रिशूलंत्रिदशान्सर्वान्साक्ष्यार्थंचदुरोदरे तस्मिन्कर्मणितंजित्वापणमभ्यग्रहीच्छिवा एवंडमरुकादीनितान्यथाप्यजयत्पृथक् दीनोभूत्वामहादेवोभवानीमब्रवीदिति शार्दूलंचर्मतन्मध्येप्रयच्छगिरिजे मम उमोवाच नचैवंवक्तुमुचितंकिंदेवःप्रीतिमानिह दास्यामिसतिकिंपृष्टेसर्वंस्मरसिकिंनहि अवेर्चित्यब्रवीपित्वंज गदीशकृपानिधे इतिकृत्वाकृतपणोदेवकोऽन्योयथामया आद्वादशदिनंदेवनकरिष्यामिभाषणं तथेत्युक्त्वामहादेव स्तत्क्षणाद्यतिरोदधे रक्षरक्षक्कगच्छामिकिंजीवनमतःपरं इतिसंचिंत्यसान्वेष्टुमुद्यानंप्रत्यपद्यत गिरिजातत्रव नितार्द्धंदृष्ट्वाऽब्रवीदिदं किमर्थमागताःसर्वाःकिमेतत्क्रियतेऽधुना कपर्दिगणनाथस्यव्रतंकर्तुमिहागताः पूजैपा तस्यचेदानीमस्माभिःक्रियतेतथा किमर्थंतुव्रतंनार्य्योयुष्माभिःक्रियतेवने फलमस्त्यथवानास्तिपार्वतीप्राहताः प्रति प्रष्टव्यंकिंत्वयादेविनरैर्नारीभिरंबिके अभीष्टसिद्धिरस्मात्तुलभ्यतेभुवनत्रये उमोवाच मत्तःकुपि त्वागतवान्निष्कृपस्तुमहेश्वरः तस्यसंदर्शनायैवतत्करिष्येव्रतोत्तमं व्रतस्यैतस्यकिंदानंविधानंकीदृशंमम सर्वं विचिंत्यमनसाकथयध्वं सुरांगनाः कालोविधानंदानंचव्रतस्यास्यफलानिच तत्सर्वंसावधानेनवक्ष्यामःशृणु पार्वति स्त्रियऊचुः मौढ्यादिदोषरहितेचतुर्थ्यांभानुवासरे मासेकार्यंव्रतंसम्यग्गणेशार्पितमानसैः तैलतां बूलभोगादीन्वर्जयित्वाशिवप्रिये मंदवारेचभुंजीयादेकवारंमितंतथा प्रातःकालेशुचिर्भूत्वास्नानंकुर्य्याद्विधानतः नद्यांतडागेकूपेवाशुद्धैःशुक्लतिलैःसह संध्यादिकंयथान्यायंसर्वंनिर्वर्त्त्ययत्नतः अर्चनागारमासाद्यगोमयेनोप लिप्यच गोचर्ममात्रंतन्मध्येकुर्य्याद्गंधेनमंडलं तन्मध्येऽष्टदलंपद्मंतन्मध्येगणनायकं पूजयेत्स्वच्छकुसुमैर्हरि द्रामिश्रिताक्षतैः गांगींगूंगैंगौंगःगन्यासंकृत्वा ततःपरं मंत्रेणानेनकुसुमैर्देवमावाह्यनिःक्षिपेत् अथवा

गणनाथस्यप्रतिमामेवपूजयेत् ततस्तद्गतचित्तातुध्यानंकुर्य्याद्विधानतः एकदंतंमहाकायंलंबोदरगजाननं
विघ्ननाशकरंदेवंहेरंबंप्रणमाम्यहं इमांपूजांगृहाणेशकपर्दिगणनायक आगच्छेतित्रिरुच्चार्य्यकुर्य्यादावाहना
दिक ततस्त्रकाशकैर्मंत्रैर्गंधपुष्पाक्षताभिः इंद्रादिलोकपालांश्चपूजयेद्देवसन्निधौ लंबोदरनमस्तेऽस्तुनमस्तेचां
बिकासुत एकदंतनमस्तेऽस्तुनमस्तेऽस्त्वीप्सितप्रद कपर्दिगणनाथस्यसर्वसंपत्प्रदायिनः पूजाप्रकारःकथि
तस्तवैतावान्शुचिस्मिते अकणान्मुष्टिगणितान्हविष्यव्रीहितंडुलान् स्वच्छान्यत्नेनसंमृज्यचूर्णंकुर्य्या
न्महेश्वरि शिवतुचूर्णंप्रथमेभानुवारेऽर्धचंद्रवत् कुर्याद्द्वितीयेसंपूर्णचंद्रवत्पिष्टकाष्टकैः तृतीयेपायसान्नंचदद्याद
न्नंचतुर्थके आनीयाष्टांशकंसम्यग्देवसंपूज्यभक्तितः कल्पितान्नानिविधिवद्द्विधंतेयानियानिच तेषांतेषामष्ट
मांशंतस्मैसम्यक्समर्पयेत् ततःशुद्धायवटवेदद्यादेकांवराटिकां पुष्पान्वितांस्तंदुलांश्चभुंजीयाद्ग्राससप्तकं य
त्कामयंतेयेभक्त्यापूजांतेप्राप्नुवंतिहि इत्युचुस्ताभवानींतुस्त्रियोविगतकल्मषाः तासांतद्वचनंश्रुत्वातदामाप्यकराद्व्र
तं ततःक्षणाद्विश्वेशःप्रत्यक्षंसमजायत त्रिलोकनाथदेवेशकरुणाकरशंकर दीनामनन्यगतिकांभक्तवत्सल
पाहिमां तुष्टश्चशंकरःप्राहकिमेतद्वैत्वयाकृतं कपर्दिगणनाथस्यमाहात्म्यात्किंनसिध्यति उमोवाच व्रतस्यै
तस्यमाहात्म्यंज्ञातंचभवतास्वयं उद्दिश्यागमनंविष्णोरकरोत्तद्व्रतंशिवः तदाचगरुडारूढःसमागम्यैनमब्रवीत
मदागमनिमित्तंहिकिंकृतंशंकरत्वया ममापिज्ञापनीयंतदित्युक्तोऽज्ञापयच्छिवः अथैतदकरोद्विष्णुरुद्दिश्यागमनं
विधेः आगतश्चविधिःशीघ्रंममाज्ञापयमाधव प्रयोजनंनास्तिविधेत्वदागमनकारणे एकदंतव्रतंत्वेतद्भवत्ये
वनसंशयः इंद्रागमनमुद्दिश्यतदानींतेनतत्कृतं आगत्यसहसाप्राहममाज्ञापयविश्वसृक् हेरंबव्रतमाहात्म्यंद्र
ष्टुमेवंकृतंमया ममापिज्ञापनीयंतदित्युक्तोविधिनोदितं विक्रमादित्यमुद्दिश्यवज्रीतदकरोद्व्रतं आगत्याहमनुष्यस्त्व

मिंद्रोमत्तः किमीप्सितं कपर्दिहस्तिवदनव्रतमाहात्म्यमीदृशं इतिज्ञातंममाभीष्टमेतल्लब्धंतदाऽब्रवीत् विधानंतस्यमा
हात्म्यंज्ञापनीयंत्वयेतिमेपप्रच्छाविक्रमादित्यंप्राहतस्मैपुरंदरःपुरंदरमुखाद्ज्ञात्वातत्सर्वंस्वपुरींप्रतिप्रहृष्टःप्रययौरा
जापराक्रमपरायणः कपर्दीशव्रतंकृत्वामाहिष्याःपुरतोऽब्रवीत् जेष्यामिसकलान्शत्रून्प्राप्तमेवंमहाव्रतंतस्यव्रतस्य
किंदानमितिसाप्राहविक्रमंप्रत्युवाचप्रियामकोदद्यादेकंवराटकं एवंचेत्तन्नकर्तव्यंमद्गेहेयत्रकुत्रचित् इत्यादिदोप
णादाशुकुष्ठव्याधिमवापसानस्थातव्यंत्वयात्रेतिसर्वंराज्यंविनश्यति अर्कस्यवचनंश्रुत्वाकृष्ण्याश्रममवापसा परि
चर्यावशात्तुष्टास्तस्याःसर्वेमुनीश्वराः निश्चित्ययोगमार्गेणसर्वेतामब्रुवन्सतीं कपर्दीशव्रताभावादेवंप्राप्तंत्वयेत्युत कु
रुष्वैतद्व्रतंसम्यक्सर्वसिद्धिर्भविष्यति ऋषीणामाज्ञयाकृत्वाकपर्दीशव्रतंमहत् तदानींराजमहिषीदिव्यदेहमवाप
सा एतस्मिन्नंतरेकालेभवान्यासहशंकरः द्रष्टुंययौवृषारूढोभुवनानिचतुर्दश नष्टमार्गेद्विजेंद्रस्यरोदनंभयवर्द्धनं
श्रुत्वाब्राह्मणमारोदीःकिमर्थंतवरोदनं नाकिमप्यस्तिमेदेवदारिद्र्यादेवकेवलात् एवंयदिभवेद्विप्रकपर्दीशव्रतंकुरु ए
तत्कर्तुंव्रतंदेवसामर्थ्यंनास्तिमेऽधुना विक्रमार्कपुरेसर्वंवैश्योदास्यतितत्कुरु कपर्दीशव्रतेनैवमित्रत्वंप्राप्स्यसिध्रुवं
दारिद्र्यमोचनंसम्यग्भविष्यतिनसंशयः गृहंप्रतिसमागच्छगृहीत्वातंडुलान्द्विज वैश्याद्गृहीत्वातत्सर्वंतदानीमक
रोद्व्रतं तस्मिन्नर्कपुरेविप्रस्तन्मंत्रित्वमवाप्तवान् आज्ञापयत्कपर्दीशव्रतंवैश्यस्यतत्क्षणात् अकरोत्तत्सुताराजाविक्र
मःपतिरस्त्विति व्रतप्रभावादादित्यउपयेमेविशःसुतां अनेनैवविवाहेनपरांप्रीतिमवापसः एवमंतरितेकालेमृगया
र्थंप्रविश्यसः गहनंक्षुत्तृषार्तःसन्ययौमुनिवराश्रमं उपचारैःअमनीत्वातेषामर्कोमनोरमां रमणीमाश्रमेत
स्मिन्दर्शयामासविक्रमः इतिपृच्छन्नृपान्सर्वान्दातव्यैषाममांगना तवैषंमहिषीत्युक्त्वानयेत्येनांसमर्पयन्
सैमंमहिष्यास्वपुरींदिव्यनारीनरैर्युतां हृष्टःसन्विक्रमादित्यःपुरुषान्प्राहभूपतिः कपर्दिगणनाथस्यव्रतंकृत्वास्त्रि

यासहं अजयाद्विक्रमादित्यःसकलान्शत्रुमंडलान् गणनाथव्रतेनैवपुत्रपौत्रवृतश्चसः धनधान्यादिसंपन्नःसुखे नन्यवसद्भुवि एतद्व्रतंतुकुर्वीतयेकेचनाविधानतः चतुरःपुरुषार्थांश्चनियतंप्राप्नुवंतिहि हयमेधस्यविघ्नेतुसंजाते सगरःपुरा एतदेवव्रतंकृत्वापुनरश्वंसलब्धवान् इमांकथांपंचवारंप्रथमेभानुवासरे द्वितीयेचतृतीयेच श्रद्धयाशृणुयाद्व्रती एकार्द्धमेतदेकोनाशीतिश्लोकप्रकाशिनीं संक्षिप्तैरन्यथाकृत्वागतिंयातियथेप्सिताम्

॥ इतिस्कांदेकपर्दिविनायकचतुर्थीव्रतम् ॥

अथाश्विनशुक्लपंचम्यामुपांगललिताव्रतं नारदीये आश्विनेशुक्लपंचम्यामुपांगललिताव्रतं तस्यांस्वर्णमयींमूर्तिंशक्त्यानिर्मायनारद उपचारैःषोडशभिःपूजयेत्तांविधानतः पक्वान्नफलसंयुक्तंसघृतंदक्षिणान्वितं द्विजवर्यायदातव्यंव्रतसंपूर्तिहेतवे सवाहनाशक्तियुतावरदापूजितामया मातर्मामनुगृह्याथगम्यतांनिजमंदिरमिति अत्रदाक्षिणात्याशिष्टाचारएवमानं पूजैवप्रधानमिति तत्पूजयानिजगृहेपरामृद्धिमवाप्स्यसीतिकथायांपूजायाः फलसंबंधात् फलवत्सन्निधानफलंतदंगमितिन्यायेनजागरणवायनदानवटकादिभक्षणादेस्तदंगत्वात् तच्च पूजनं मध्याह्नव्यापिन्यांकार्यं पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरितिमाधवीयेहारीतोक्तेः द्विनद्वयेतद्व्याप्तावव्याप्तौवापूर्वायुग्मात्रियुगभूतानामितिवाक्यात् एतेनजागरणमंगमुक्त्वाजागरणंनक्तेचंद्रायार्घ्यंव्रतेतथा ताराव्रतेपुसर्वेपुरात्रियोगोविशिष्यते इतिहेमाद्रिलिखितवचनाद्रात्रिव्यापिनीग्राह्येति कस्याचिदुक्तिरुपेक्षणीया अंगानुरोधेन निर्णयस्यकाप्यदृष्टत्वात्वचनंतुजागरणप्रधानकेसावकाशमिति अथव्रतविधिः आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्यपुत्रपौत्रधनवृद्धिविद्यारोगनिवृत्तिसुखभोगविजयपुष्ट्यादिकामः स्त्रीत्वऽवैधव्यसौभाग्यादिकामा उपांगललिताप्रीत्यर्थंयथामिलितोपचारैरुपांगललिताव्रतेतत्पूजनमहंकरिष्ये इतिसंकल्प्यपूजांकुर्यात्अथपूजा

विधानेचकुर्य्यादेकाग्रमानसः सौवर्णींप्रतिमांकृत्वामंत्रैश्चतत्याप्रपूजयेत् ध्यानम् नीलकौशेयवसनांहेमाभां
कमलासनां भक्तानांवरदांनित्यंललितांचिंतयाम्यहं निजासनेस्वपुत्रैश्चसहितेभक्तवत्सले उपांगललितेमा
तरेहिमेव्रतकर्मणि हिरण्यवर्णामित्यावाहनं ॥ आगच्छललितेदेविनानामणिगणार्चिते अनेकशक्तिसंयुक्तेआ
सनंप्रतिगृह्यतां ताम्मआवहेत्यासनं गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृत तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रति
गृह्यतां अश्वपूर्वामितिपाद्यं निधानंसर्वरत्नानांत्वमनर्घ्यगुणाश्रया तथाविभक्त्यालालितेगृहाणार्घ्यंनमोऽस्तु
ते कांसोस्मितामित्यर्घ्यं पाटलोशीरकर्पूरसुरभिस्वादुशीतलं तोयमाचमनीयार्थंललितेप्रतिगृह्यतां चं
द्रांप्रभासामित्याचमनं पंचामृतमयानीतंपयोदधिघृतंमधु शर्करामधुसंयुक्तंस्नानार्थंदेविगृह्यतां पंचमंत्रैः पं
चामृतं मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानायतेमयाभक्त्यागांगंस्वीक्रियतांजलं आदित्यवर्णेति
स्नानं सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां मलयाचलसंभूतंनानाप
न्नगरक्षितं शीतलंवहुलामोदंचंदनंप्रतिगृह्यतां उपैतुमांदेवसखेतिगंधं अक्षतानरविंदाक्षिकुंकुमादिभिरंजि
तान् गृहाणललितेदेविप्रसीदपरमेश्वरि क्षुत्पिपासामित्यक्षताः मिलत्परिमलामोदमत्तालिकुलसंकुलं आ
नंदिनंदनोद्यानपुष्पंतेललितेनमः कर्दमेनप्रजेतिपुष्पं गंधसारसमुन्नद्धंपृथुवस्तुसमुद्भवं सुरासुरनरानंदि
धूपंदेविगृहाणमे आपःसृजंत्वितिधूपं मार्त्तंडमंडलाखंडचंद्रविंबाग्नितेजसां निधानंदेविदीपोयंनिर्मितस्तवभ
क्तितः आर्द्रांपुःपुष्टिइतिदीपः देवतालयपातालभूतलाधारधान्यजं - षोडशाकारसंभारंनैवेद्यंललितेनमः आर्द्रां
पुष्करिणीं चंद्रामितिनैवेद्यं स्नानादिकंविधायाथयतःशुद्धिरवाप्यते एतदाचमनीयंमेललितेदेवितेनमः इत्याच
मनं पातालतलसंभूतंवदनांभोजभूषणं नानागुणसमाकीर्णंतांबूलंदेवितेनमः इतितांबूलं - हिरण्यगर्भगर्भस्थ

मितिदक्षिणा ॥अत्रपुष्पांजल्यंतेऽष्टचत्वारिंशत्परिमितान्दूर्वांकुरान्हस्तेनादाय ॥ बहुप्ररोहपूर्वेयंसंततम
मृतालिका यथेयंललितेदूर्वातथामेस्युर्मनोरथाः इतिमंत्रेणसमर्पयेत् ॥ प्रदक्षिणनमस्कारान्शक्तितश्चसमाचरेत्
अथवायनमादायवटकोदुंबरादिभिः ॥ कइत्यादिकमंत्रेण कइदं कोदादित्यादि ॥ आचार्य्यायनिवेदयेत् प
क्वान्नफलसंयुक्तंसघृतंदक्षिणान्वितं ॥ द्विजवर्य्यायदास्यामिव्रतसंपूर्तिहेतवे ॥ उपांगललितादेव्याव्र
तसंपूर्तिकारकं ॥ वायनंद्विजवर्य्यायसहिरण्यंददाम्यहं इतिवायनमंत्रः ॥ ततःकथांसमाकर्ण्यवाचकान्पंचसंख्यया
स्वयमेवतदेवान्नंचाश्नतःसहबांधवैः रात्रौजागरणंकुर्य्याद्गीतवादित्रमंगलैः प्रभातेपूजयेद्देवींततः कुर्य्याद्विसर्ज
नं सवाहनाशक्तियुक्तावरदापूजितामया ॥ मातर्मामनुगृह्याथयथेष्टंगच्छमंदिरं इतिपूजा अथकथा कैलास
शिखरेरम्येसुखासीनंषडाननं कथयंतंकथांदिव्यामिदमूचुर्महर्षयः ऋषयऊचुः महासेनमहादेवनंदनानंतविक्रम
आख्यानानिसुपुण्यानिश्रुतानित्वत्प्रसादतः कथास्त्वद्वदनाद्विप्रसृताभूरिभूतयः नतृप्तिमाधिगच्छामःपायंपायंसु
धामिव शुश्रूषवोवयंदेव्याव्रतंतत्कथयस्वनः ॥ मनोभिलाषितार्थायासिद्धिर्यस्मिन्कृतेभवेत् स्कंद उवाच साधुपृष्टं
महादेव्यामाहात्म्यंमुनिपुंगवाः तस्मात्सर्वविधानेनतच्छृणुध्वंजगद्धितं ॥ भृगुक्षेत्रेकिलपुराविप्रोभूद्गौतमाभिधः
श्रुतिस्मृतिपुराणज्ञोधनीचबहुबांधवः ॥ अनपत्यस्यतस्याथजज्ञातेजरतःसुतौ श्रीपतिर्गोपतिश्चैवनामनीविदधे
तयोः अचिरेणैवकालेनसपंचत्वमगाद्द्विजः तौतुबालौधनंबंधून्हित्वासाधर्मचारिणी सतीविवेशदहनंस्वर्याता
पतिनासह ॥ अथतद्बांधवाःसर्वेहाकष्टमितिचुक्रुशुः रुदंतोदुःखिताश्चक्रुस्तत्क्रियांपारलौकिकीं ॥ पितृव्यस्तद्दिनेप्येव
सर्वंचहृतवान्धनं ॥ अथतस्यसपत्नोऽभूद्राजासतुगृहंधनं ॥ आक्रोशंतौचतौगेहान्निजमानीयसंपदः नास्तिचक्रे
धनंसर्वंताभ्यांकिंचिन्नवैददौ ॥ ततोमौंजीधरौबालौबंधुभिःकथितंवसु ॥ यथाचतुःपितृव्यंतद्देहिनोद्रविणंहितत्

निर्गच्छतममगृहादित्याहपरुषंवचः तौतद्वचोभिनिर्विण्णौबालौ
सतावूवेगतंद्रव्यंयुवांकेनप्रतारितौ यावोदेशांतरंयत्रस्वजनोनास्तिकश्चनं अन।
श्रीपतिर्गोपती बभाषतुर्मिथःकष्टंधिगहोपितृहीनता समतिक्रम्ययय‍तुर्विशालां
भाष्यैवसुहृदोजग्मतुर्दिशमुत्तरां भिक्षाचारौवहून्देशान्वनानिसरितोगिरीन् संध्याभ्रक
नामतत्पुरीं कासारमीक्षांचक्रातेततोऽस्यास्सन्निधौशुभं पुंडरीकवनाकीर्णंरक्तसंध्याविभूषितं
पिशंचारुयथातारकितंनभः श्रांतौपथिगतौबालौक्षणंविश्रम्यतत्तटे आचम्यशिशिरंतोयंसस्नतुश्चयथा
विधि गताध्वखेदौविश्रम्यपुरींप्राविशतांततः वीथीचतुष्पथयुतांचारुगोपुरमंडितां देवतागाररुचिरांसौधरा
जिविराजितां नानावीथीरतिक्रम्यविप्रावासमवापतुः कस्यचित्त्वथविप्रस्यक्षुत्पिपासार्दितौगृहं ईयतुर्वैश्वदे
वांतेउपविष्टौश्रमातुरौ स्वामीततोऽस्यगेहस्यविवेकइतिविश्रुतः आयातौवैश्वदेवांतेसददर्शातिथीहितौ अन।
पृच्छय तयोःशीलंतथाचकुलनामनी ऋषिवत्पूजयामासस्मरन्धर्मंसनातनं अतिथीभोजयामाससदन्नंसहचात्म
ना तौब्रह्मचारिणौविप्रौसपर्यांतांविलोक्यच देशबंधुपरित्यागखेदमुक्तौबभूवतुः अथापृच्छत्कृपालुस्तौको
युवांकुतआगतौ किमर्थमल्पवयसौनिर्गतौस्वगृहादिति तद्विवेकस्यवचनमाकर्ण्यश्रीपतिस्तदा आनुपूर्वेण
सकलंवृत्तांतंसमभाषत पितृहीनौचतौज्ञात्वात्यक्तौबंधुजनेनच आश्वास्यस्थापयामासस्वगृहेवहुवासरं प्रच
क्रमेऽथशिष्यैश्चसहाध्यापयितुंश्रुतिं बभूवतुश्चतौबालौगुरुशुश्रूषणेरतौ गुरोर्गेहेन्यवसतामागताविमलाशर
त् फुल्लपद्मविशालाक्षीप्रसन्नेंदुशुभानना तस्यांसशिष्यमाचार्यंचरंतंव्रतमुत्तमं पप्रच्छतुर्भोःकिमिदमावाभ्याम
पिकथ्यतां उपागललितादेव्याव्रतंदेवर्षिपूजितं सर्वकामकरंन्दृणामस्माभिःसमुपास्यते विद्याकामेनकर्त
व्यंतथैवधनकाम्यया सुतार्थिनाचकर्तव्यंव्रतमेतदनुत्तमं विद्याकामौचतौबालौव्रतमाचेरतुर्मुदा भक्तितोगुर्वनुज्ञा

तौयथाशक्तियथाविधि तौतत्प्रसादात्सकलंशास्त्रंवेदानवापतुः अन्यस्मिन्हायनेभक्त्याविवाहार्थंप्रचक्रतुः
श्रीपतिर्गोपतिश्चैवव्रतमेतत्तपोधनाः अचिरेणैवकालेनमाघेमासितयोर्गुरुः स्वांविवाहोचितांकन्यांनाम्नागुणव
तीमिति विनीतायव्रतवतेयूनेश्रीपतयेतदा विचार्य्यबांधवैःसाकंददौपुण्यर्क्षवासरे पारिबर्हंबहुमुदाप्रादा
द्दुहितृवत्सलः विवेकोऽपिमुदंलेभेसानुरागौविलोक्यतौ अन्याब्देपुनरेतत्तुव्रतंदेव्याःप्रचक्रतुः भ्रातरौतौनि
जंदेशंवांछंतौचधनादिकं अथान्येऽहनिकस्मिंश्चित्तावुपाध्यायमूचतुः स्वामिन्युष्मत्प्रसादेनलब्धाविद्यातथा
वसु अनुजानीहिगच्छावोनिजंदेशमितःपुनः इत्याकर्ण्यसमालोक्यशुभवासरमादृतः स्वयंप्रापयितुंतातो
विप्रौकन्यांचनिर्ययौ अथदेव्याःप्रसादेनपितृव्यस्यतयोःकिल अन्वेषणमतिर्जाताकुतः श्रीपतिगोपती नि
र्गतौक्कगतौदेशंवसतःकेत्यचिंतयत् कश्चित्सनगरंप्रापद्द्विजोबालौगवेषयन् तदेवनगरंप्राप्तोविवेकाख्योद्विजो
त्तमः सशिष्यःकन्ययासार्द्धंक्रमन्मार्गेशनैःशनैः तत्रतेषांसमजनिसंगमोमुनिपुंगवाः विद्यांचकारतौहृच्छ्रान्म
ध्यमेवयसिस्थितौ तौमूर्द्ध्न्याघ्रायपरमांमुदंलेभेसुतौतदा अशक्नुवन्मुदंवक्तुंप्रेमगद्गदयागिरा पादानतांगुणव
तींविवेकेनप्रणोदितां आशीर्वादैर्बहुविधैस्तांस्नुषांसमयोजयत् विवेकस्तुतदातत्रसंविभाष्यपरस्परं सुता
वेतौमयाविप्रपालितौपाठितौतथा यातास्मिसंप्रापयितुंभवतांग्राममुत्तमं इतिसंभाषमाणास्तेभृगुक्षेत्रेययुर्मुदा
ज्ञातिभिःसहसंगम्यशृण्वद्भिस्तद्विचेष्टितं स्वपितृव्यगृहेकांश्चिदुषित्वादिवसांस्तथा लब्ध्वापितृधनंगेहंसर्वंश्री
पतिगोपती ईयतुस्तदनुज्ञातोविवेकःस्वांपुरीययौ श्रीपतिर्गोपतेस्तत्रविवाहमकरोत्तदा तावेकचित्तावेकत्रच
क्रतुर्देवतर्पणं श्रीपतिःश्रद्धयायुक्तःकनीयानविशंकितःविचार्य्यभार्य्ययासाकंविभक्तःश्रीपतेरभूत् सभोगान्वि
विधान् भुंजन्प्रमादीबहुसंपदा नदेव्याराधनंचक्रेगोपतिः खलुलंपटः अथस्वल्पेनकालेनन्ष्टं

तस्यशनैर्धनं अकिंचनोगतश्चिंतांभार्ययाश्वासितस्तदा तवभ्रातृगृहेविप्राभुंजतेबहवःसदा गच्छावोऽनुदिनंकां
ततत्रभोक्तुमुभावपि एवंभोजनवेलायामागत्यागत्यतद्गृहं भुंजन्भुंजन्निजगृहंगतौतावनुवासरं कदाचिदाग
तोयावद्वोपतिर्भार्ययासह उपविष्टेषुविप्रेषुभोक्तुनाविंददासनं अथान्नराशेरभ्याशेभोजनायक्षुधातुरः उपवि
ष्टःश्रीपतेश्चभार्ययासनिवारितः अस्मादुत्तिष्ठवेतूर्णंत्वमुत्तिष्ठकरिष्यसि तिष्ठतिष्ठक्षणंचैवपश्चाद्भुंक्ष्वेतिसाब्रवीत्
गोपतिःकांतयादृष्टस्ततोविमनसावुभौ अभुक्त्वाचैवनिष्क्रांतौजग्मतुर्निजमंदिरं ततःस्वजायांप्रोवाचनिज
मार्गमचिंतयत् अत्रावयोःसमंवित्तंसंविभक्तमपिप्रिये दुर्गतोऽहंधनोन्मत्तःश्रूयतामत्रकारणं पुरावाभ्यांगुरुकु
लेव्रतमाचरितंशुभम् उपांगललितादेव्याविद्यादिसकलंततः प्राप्तंमयातत्सकलंपरित्यक्तंप्रमादतः ज्येष्ठआ
चरतेनित्यंतस्माच्छ्रीस्तस्यवर्त्तते तस्मादहंतदाभोक्ष्येयदाद्रक्ष्यामितांशिवां इत्युक्त्वानिर्गतस्तस्माद्गृहाद
कृतभोजन :तद्भार्याचिंतयाविष्टापितस्थावनाशिनी भुक्तवत्सुब्राह्मणेषुश्रीपतिःपर्य्यपृच्छत् क्वगतोगोपतिरि
तितच्छ्रुत्वासोऽपिदुःखितः पंचमेवासरेप्राप्तेक्षुत्पिपासार्दितोवने अलब्धदर्शनोदेव्यादुःखितोबहुशोऽभ्रमत् ए
च्छंश्चपथिकान्मार्गेनदेव्याःपद्मभ्यगात् तंकृच्छ्रगतमालोक्यभवानीभक्तवत्सला कृतापराधमपितमनुजग्राहवैत
दा गतमूर्च्छःसमुत्थायदिगंतान्प्रविलोकयन् ददर्शदूरतोगोपंचारयंतंगवांगणं तंदृष्ट्वाकिंचिदाश्वस्तोययौत
स्यांतिकंशनैः अपृच्छत्कभवान्जातःकुत्रत्यःकुतआगतः कोऽयंदेशःकभूपालःकिंपुरंनामतद्वद निशम्यवचनं
तस्यवक्तुंगोपःप्रचक्रमे गोपउवाच उपांगंनामनगरमुपांगोनामभूपतिः तत्रत्योऽहंसमायातःपुनस्तत्रव्रजाम्यहं
उपांगललितादेव्याविद्यतेतत्रमंदिरं इत्याकर्ण्यवचस्तस्यविप्रःसमुदितोऽभवत् सगोपसहितःसायंनगरंप्रविवेशह
दूराद्दर्शभवनंपुरमध्येतपोधनाः उपांगललितादेव्याःस्फाटिकंगगनंलिहं · सौवर्णेनविचित्रेणकलशेनोपशो

भितं यथोदयाचलः शैलोदधानोभानुमंडलं त्वरितोगोपमामंत्र्यप्रासादेसययौमुदा प्रणम्यदंडवद्भूमौ
बद्धांजलिपुटस्तदा उपांगललितादेविमथस्तोतुंप्रचक्रमे गोपतिरुवाच नमस्तुभ्यंजगद्धात्रिभक्तानांहितका
रिणि जगद्भीतिविनाशिन्यैसर्वमंगलमूर्तये हत्वानिशुंभमहिषप्रभृतीन्सुरारीनिंद्रादयोनिजपदेषुययाभिषि
क्ताः लोकत्रयावनगृहीतमहावतारेमातःप्रसीदसततंकुरुमेऽनुकंपां त्वांमुक्तयेमुनिजनाः कुटिलीकृतांगीं गौरीं
निजेवपुषिकुंडलिनींभजंति मुक्तयैचदेवमनुजाः कनकारविंदबद्धासनामविरतंकमलांस्तुवंति सापराधोऽस्मि
शरणंप्राप्तस्त्वांजगदंबिके इदानीमनुकंप्योऽहंयद्वांछामिकुरुष्वतत् इतिस्तुत्वाचशर्वाणींप्रणिपत्यमुहुर्मुहुः कृत
संध्याविधिस्तत्रशेतेस्माऽकृतभोजनः स्वप्नेमूर्त्तिमयीदेवीविप्रमेवंसमादिशत् गोपतेवत्सतुष्टाऽस्मिगच्छोपांगम
हीपतिं मत्पूजनकरंडस्यप्रार्थयस्वापिधानकं तत्पूजयन्निजगृहेपरामृद्धिमवाप्स्यसि स्वप्नइत्याप्तआदेशःप्रभाते
गोपतिस्तदा राजदर्शनवेलायांनृपद्वारंसमभ्यगात् सविप्रोऽपिनृपसभांप्रतिहारनिवेदितः र ज्ञासंमानितस्त
त्रनिपसादासनेशुभे पृष्टागमनहेतुश्चयथाचेनृपपुंगवं देव्यर्चनकरंडस्यापिधानंदेहिभूपते इत्यर्थितोऽसौविप्र
एज्ञातादेशोनृपोददौ पिधानकंनमस्कृत्यतस्मैचाभ्यर्चनादिकं आशीर्भिरभिनंद्याथतमामंत्र्यचभूपतिं उपांगल
लितादेव्याःप्रासादपुनरागतः प्रणिपत्यांविकांविप्रस्त्वरितोनिर्ययौपुरात् पूजयित्वापिधानंतद्विदधेपारणंततः
एवमाराध्यमानस्तुससमृद्धोऽभवत्पुनःसोऽपिमंत्रंसमारेभेद्विजाग्र्येवहुवासर अथैतस्याऽभवत्कन्यालालितानामसुं
दरी सापिधानकमादायविहर्तुयातिसर्वदा प्रसन्नत्वात्प्रियत्वाच्चपितृभ्यामनिवारिता कदाचित्स्ववयस्याभिःस्नातुं
गंगाजलेशुभे क्रीडतीददर्शतोयेलीयमानंकलेवरं पिधानहस्तासासिंचदत्यंतांजलिभिस्तदा ससर्पदष्टउत्तस्थौत
तोदेव्याःप्रसादतः साविश्रांतांद्विजंदृष्ट्वामनसाचिंतयत्पतिं जुहावाभ्यवहारायजनकस्यनिवेशनं मार्गेचपरि

पप्रच्छकुलंशीलंचतस्यसा सोऽपिसर्वंसमाचख्यौगुणराशीतिनामतः ललितामंत्रयामासगुणराशिमितिद्विजं परि
विष्टेपुचान्नेपुपितृवेश्मनिमेद्विज गृहीतापोशनोभूत्वाभार्यार्थंमांत्वमर्थय मयानुमोदितस्तातःसमांतुभ्यंप्रदास्यति
यथोक्तोगुणराशिस्तुतथासर्वंचकारह गोपतिर्भार्ययाधात्रासमालोच्यस्वबांधवैः परीक्षितायविप्रत्वेविद्यायांकुल
शीलयोः प्रतिजज्ञेततः कन्यांललितांगुणशालिने शुभेमुहूर्त्तेचतिथौविवाहंकृतवान्प्रभुः वरायब्राह्मणेभ्यश्चद
त्त्वंबहुधनंतदा विदधेचतयोर्गेहंनातिदूरेस्ववेश्मनः तत्रोषतुःसानुरागौमिथस्तौदंपतीचिरं पिधानकंतयानी
तंनिजंललितयागृहं शनैरथधनंसर्वंगोपतेरगमद्गृहात् गुणराशिर्धनीजातोमहादेव्याःप्रसादतः करंडस्य
पिधानंतज्जनन्याबहुवासरं याचिताऽपिनवैप्रादाल्ललितापूजितंगृहे अथसागोपतेर्जायातस्यैवानर्थनाद्धतं इत्थं
विचिंत्यचायाताजामातरमयाचत समिधार्थंवनंयातःस्वयंतद्गेहमाययौ शोचंतीकिलतांकन्यांसतुदेव्याः प्रसा
दतः उत्थायविपिनादेत्यभुक्त्वाशेतेसुखंगृहे पादसंवाहनंतस्यकुरुतेललितानच तंदृष्ट्वादुःखिताभूमौप्रणिपत्य
पुनःपुनः लज्जिताकृच्छ्रतःपृष्टानिजमाहसपातकं गुणराशिरदात्तस्याःप्रायश्चित्तंतदाबहु स्वात्मानंबहुकालेन
पूतंकृच्छ्रैश्चकारह श्रीपतेस्त्वचलांलक्ष्मींसमालोक्यतपोधनाः गोपतिस्तमथापृच्छद्भ्रातस्त्ववर्त्तसेकथं किमाचरसिक
ल्याणंतवश्रीरनपायिनी इतितस्यवचःश्रुत्वाश्रीपतिर्विस्मितःपुनः अस्माभिस्तद्व्रतंदेव्यायत्कृतंगुरुमंदिरे तेनैवमे
ऽचलालक्ष्मीस्त्वमप्येतद्व्रतंकुरु सोऽपिभक्त्यापुनश्चक्रेव्रतंधात्रोपदर्शितंलेभेसपरमामृद्धिंपुत्रांश्चमुदितोऽभवत् उपांग
ललितादेव्याः प्रसादेनाभवत्सुखी एवमेतत्पुरावृत्तंमाहात्म्यंकथितंमया कृतमन्यैश्चबहुभिस्तेऽपिलब्धमनो
रथाः विधानंतस्यवक्ष्यामितच्छृणुध्वंतपोधनाः शुक्लपक्षेतुपंचम्यामिषेमासिचरेद्व्रतं गर्जितंसंध्ययोस्त्यक्त्वा
ज्येदिनवृद्धिक्षयेतथा निर्वर्त्यावश्यकंकर्मशुचीरागविवर्जितः चत्वारिंशत्तथाष्टौचकल्पितानिविधानतः दंतका

ष्टान्युपादायतडागंवानदींव्रजेत् आयुर्बलंयशोवर्चःप्रज्ञापशुधनानिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते दं
तधावनपूर्वाणिमज्जनानिसमाचरेत् ततोयथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् उपचारैःषोडशभिरेभिर्मंत्रैः स
माहितः कुर्य्यात्पूजांप्रयत्नेनदूर्वाभिश्चविशेषतः शुचौदेशेमंडपचकृत्वातिमनोहरं सौवर्णीप्रतिमांशक्त्या
कल्पयेन्मंत्रपूर्वकं द्विजायवायनदद्याद्वंशत्यावटकादिभिः तत.कथांसमाकर्ण्यवायनान्नस्यसंख्यया स्वयमद्या
द्देवान्नंवाग्यतः सहबंधुभिः रात्रौजागरणंकुर्य्याद्गीतनृत्यादिमंगलैः प्रभातेपूजयेद्देवींतत.कुर्य्याद्विसर्जनं सवाह
नाशक्तियुतावरदापूजितामया मातर्मामनुगृह्याथगम्यतांनिजमंदिरं तामर्चांगुरवेदद्यान्निशिवास्याद्विसर्जनं व्रत
मेवंतुयःकुर्य्यात्पुत्रवान्धनवान्भवेत् विद्यवान्रोगनिर्मुक्तःसुखीगोमांश्चजायते अवैधव्यंचलभतेस्त्रीकन्यावर
मुत्तमं विजयःपुष्टिरारोग्यंयच्चान्यदपिवांछित इत्येतद्व्रतमाहात्म्यंसेतिहासंमहर्षयः शृण्वन्नपिनरोभक्त्या
सुखमाप्नोतिनिश्चितं इतिस्कांदेउपांगललितापंचमीव्रतं अथास्यप्रयोगोव्रतोद्यापनकौमुद्यां प्रातर्दंतधावनपूर्वकं
नद्यादौस्नात्वाशुक्लवासःपरिधाय मंडपादिकंविधायतिथ्यादिसंकीर्त्यात्मनः पुत्रपौत्रविद्यारोग्यसुखगोधनविजय
पुष्ट्यादिकामनया स्त्रीत्वेऽवैधव्यसौभाग्यादिकामनया उपांगललिताप्रीत्यर्थमष्टवर्षाचरितोपांगललितापंचमीव्रतो
द्यापनंकरिष्ये आचार्य्यंवृत्वा एकचित्तोभूत्वा कलशोपरिसौवर्णीललिताप्रतिमांपूजयेत् पौराणिकैर्मंत्रैः श्रीसूक्तेनच
ध्यानं नीलकौशेयवसनांहेमाभांकमलासनां भक्तानांवरदांनित्यंललितांचिंतयाम्यहं पूर्वोक्तपौराणिकश्रीसूक्तमंत्रैः
पुष्पपूजांतंविधाय अंगपूजांचविधाय धूपदीपादिकंकृत्वा पुष्पांजल्यंतेऽष्टचत्वारिंशत्परिमितान् दूर्वांकुरान्हस्तेना
दायानेनमंत्रेणसमर्पयेत् बहुप्ररोहासततममृताहारितालिका यथेयंललितेमातस्तथामेस्युर्मनोरथाः इतिदूर्वामंत्रः
बहुप्ररोहादूर्वेयंयथेयममृतालिका ललितेत्वत्प्रसादेनतथामेस्युर्मनोरथाः- इतिमंत्रेण समर्पयेत्- एवमेवाष्टचत्वा

कथाश्रवणादिनारात्रौजागरणंकृत्वा प्रातःस्नात्वा नित्यक
रिंशत्वारंतर्पयेत् ततःप्रदक्षिणानमस्कारान्कुर्यात् कथाश्रवणादिनारात्रौजागरणंकृत्वा प्रातःस्नात्वा नित्यक
मंनिर्वर्त्य देवींपुनः संपूज्यअष्टौवटकान्समर्प्य अग्निंप्रतिष्ठाप्य अन्वादध्यात् तत्रप्रधानं ललितागौरीमिमायेति
मंत्रेणअष्टोत्तरशतदूर्वात्रिकाहुतिभिः नमोदेव्याइतिमंत्रेणाष्टोत्तरशताहुतिभिस्तिलसर्पिःपंचखाद्ययुताज्याहुतिभिः
ब्रह्मादिदेवताश्चैकैकाहुत्यायक्ष्येसर्वहोमंसमाप्य अष्टौब्राह्मणान्वस्त्रादिभिःसंपूज्य तेभ्यःपक्वान्नपूरितान्दक्षिणा
सहितानष्टौकलशान्दत्वा ततआचार्यंवस्त्रालंकरणादिभिः संपूज्य विंशतिवटकसहितंवायनंदद्यात् तत्रमंत्रः
पक्वान्नफलसंयुक्तसघृतंदक्षिणान्वितं उपांगललिताप्रीत्यैब्राह्मणायददाम्यहं सवाहनाशक्तियुतावरदापूजिता
मया मातर्मामनुगृह्याद्यगम्यतांनिजमंदिर एवंविसृज्यसोपस्करंपीठगांचाचार्यायदत्वा ब्राह्मणान्मदन्नेनभोज
यित्वा आशिषोगृहीत्वा स्वयंविंशतिवटकान्भुंजीत ॥ इतिललितापंचमीव्रतोद्यापनम् ॥ अथास्यामेव शांति
पंचमीव्रतम् तत्रशचीसहितान्कुशमयान्नागान् घृतसहितैस्तिलैर्दुग्धेनचरुनापायित्वासंपूज्यचक्षीरसिक्तगोधूमान्न
नैवेद्यंदद्यात् तदुक्तंहेमाद्रौभविष्योत्तरे सुमंतुरुवाच तथाचाश्वयुजेमासिपंचम्यांकुरुनंदन कृत्वाकुशमयान्नागा
निंद्राण्यासहपूजयेत् अनंतवासुकिंशंखपद्मकंबलमेवच तथाकर्कोटकनागनागमश्वतरंतथा धृतराष्ट्रंशंखपालंकालि
यंतक्षकंतथा शचींद्विबाहुसतानमालाहस्तांगजस्थितां घृतोदकाभ्यांपयसास्नापयित्वाविशांपते गोधूमैःपयसा
सिक्तैर्भक्ष्यैश्चविविधैस्तथा ध्यात्वावैविधिवन्नागान्शुचिर्भूत्वासमाहितः पूजयेत्कुरुशार्दूल तस्यशेषादयोन्नर
नागाःप्रीताभवंतीहशांतिमाप्नोतिवैविभो सशांतिलोकमासाद्यमोदतेशाश्वतीःसमाः अत्रायंकथ्यतेमंत्रःसदाविश्व
निषेधकः ॐकुरुकुलेहुफट्स्वहा ॥ इतिशांति पंचमीव्रतं अथाश्विनशुक्लपक्षे मूलनक्षत्रे सरस्वतीस्थापना
कार्यानिर्णयामृतेदेवीपुराणे मूलेषुस्थापनंदेव्याःपूर्वाषाढासुपूजनम् उत्तरासुबलिंदद्याच्छ्रवणेनविसर्जयेदि

त्यादि नाध्यापयेन्नचलिखेन्नाधीयीतकदाचन पुस्तकेस्थापितांदेवींविद्याकामोद्विजोत्तमइति नवरात्रेषु प्रपंचितं आश्विनशुक्लषष्ठ्यांदेवीनिमंत्रणं नवरात्रप्रकरणे ज्ञेयं कात्यायनीपूजांतं नारदीये अथेषशुक्लषष्ठ्यांतुपूज्या कात्यायनीद्विज गंधाद्यैर्मंगलैर्द्रव्यैर्नैवेद्यैर्विविधैस्तथा ततःक्षमाप्यदेवेशींप्रणिपत्यविसर्जयेत् पूज्यात्रसै कातीमूर्तिर्यद्वाद्विजसतोमुदा वस्त्रालंकरणैर्भक्ष्यैःकात्यायन्याःप्रतुष्टये कन्यावरंप्राप्नुयाच्चवांछितंलभतेनरः कात्यायनीप्रसादाद्वैनाऽत्रकार्याविचारणा अत्रषष्ठ्यांबिल्वशाखायां देव्यावोधनमुक्तं नवरात्रप्रकरणे तत्रादौ बिल्ववृक्षनिमंत्रणादिकृत्यमपि नवरात्रेषु प्रपंचितं आश्विनशुक्लसप्तम्यांशुभसप्तमीव्रतं नारदीये आश्विने शुक्लपक्षेतुसप्तमीशुभसप्तमी तस्यांकृतस्नानपूजान्वाचयित्वाद्विजोत्तमान् आरभ्यकपिलांगांचसंपूज्य प्रार्थयेत्तत :त्वामहंवच्मिकल्याणिप्रीयतावर्द्धयस्वमां पालयत्वंजगत्कृत्स्नंयतोऽसिब्रह्मसंभवा इत्युक्त्वा वेदविज्ञायदत्त्वाचवरदक्षिणां नमस्कृत्यविसृज्यैतान्प्राशयेद्गव्यपंचकं व्रतंचेत्थंविधायात्रश्वोभूतेऽथद्विजो त्तमान् भोजयित्वायथाद्यन्नं यदन्नमवशेषितं कृत्वाह्येतद्व्रतंविप्र सुभाव्यंश्रद्धयान्वितैः · देवदेवप्रसादे नभुक्तिंमुक्तिमवाप्नुयात् अत्रविशेषोहेमाद्रौपाद्मे शुक्लायामाश्विनेमासिकृतस्नानजपःशुचिः वाचयित्वा ततो विप्रानारभेच्छुभसप्तमीं तत्र कपिलां गां गंधादिभिःसंपूज्यप्रार्थयेत् नमामिसूर्यसंभूतामशेषभुवनात्मिकां त्वामहंसर्वकल्याणशरीरांसर्वसिद्धयेइति ततस्ताम्रपात्रेवस्त्रवेष्टितंसौवर्णंवृषभं तिलप्रस्थोपरिसंस्थाप्यघृतपाय सादियुतं अर्घ्यमाप्रीयतामित्युक्त्वा ब्राह्मणायदद्यात्स्वयंपंचगव्यंप्राशयित्वा द्वितीयेऽन्हिब्राह्मणान्संभोज्यस्वय मपिभुंजीत एवंसप्तवर्षपर्यंतंव्रतंकृत्वा तदंतेइक्षुदंडान्वितशयनादिदद्यादित्युद्यापनेविशेषः शेषंसामान्योद्यापन वदितिशुभसप्तमीव्रतं अस्यामेवसप्तम्यांदेवीत्रिरात्रव्रतमुक्तं हेमाद्रौ प्रतिपदादितिथिषूपवासादिकरणासामर्थ्ये

सप्तम्यादिदिनत्रयेकुर्यात् तदाहधौम्यः आश्विनेमासिशुक्लेतुकर्त्तव्यंनवरात्रकं प्रतिपदादिक्रमेणैवयावच्चन
वमीभवेत् त्रिरात्रंवापिकर्त्तव्यंसप्तम्यादियथाक्रमामिति अथवानवरात्रंचसप्तपंचत्रिकंदिवा एकभक्तेननक्तेन
अयाचितेनउपोषणेनच यथाक्रमंकुर्यात् दिवेतिशब्देनैकरात्रमप्युक्तं तथाचगोविंदार्णवे देवीपुराणे नवरात्रव्रते
शक्तस्त्रिरात्रंचैकरात्रकं व्रतचरतियोभक्त्यातस्मैदास्यामिवांछितमिति तत्रापिसप्तम्या पूर्वोक्तोनिर्णयः अत्रयो
गपद्येतत्रेणोपवासः तिथिद्वयनिमित्त पूजादिकंतिथिभेदेनकर्तव्यं आश्विनशुक्लाष्टमी महाष्टमी अत्र कृत्य
नारदीये आश्विनेशुक्लपक्षेतुप्रोक्ताविप्रमहाष्टमी तत्रदुर्गार्चनंप्रोक्तंसर्वैरप्युपचारकैः उपवासंचैकभक्तंमहाष्टम्यां
विधायतु सर्वतोविभवंप्राप्यमोदतेदेववच्चिरं इयमेवमूलनक्षत्रेणनवमीयुतोचन्महानवमीप्रोच्यते अश्वयुक्शु
क्लपक्षेयाअष्टमीमूलसंयुता सामहानवमीप्रोक्तात्रैलोक्येऽपिसुदुर्लभा इयंचशुक्लपक्षस्थत्वादुपवासादौ परयुता
ग्राह्येत्युक्तं शुक्लपक्षेऽष्टमीचातिब्रह्मवैवर्त्तात् वसुरंध्रयोरितियुग्मवाक्याच्च षष्ठ्येकादश्यमावास्येतिपूर्वनिषे
धाच्च तथा नाष्टमीसप्तमीयुक्तासप्तमीनाष्टमीयुता नवम्यासहकार्यास्यादष्टमीसर्वदाबुधैः अष्टमीनवमी
युग्मेमहोत्साहेमहोत्सवइति दुर्गोत्सवे प्रतिपद्यहरत्खड्गंद्वितीयायाधृतधनुः तृतीयायाकरेशंखंचतुर्थ्यांच
मेनिर्मलं पंचम्यामाददच्छूलंपष्ठ्यांचपरशुंतथा गदांचविभ्रत्सप्तम्यामष्टम्याशक्तिमुत्तमां नवमीचसदादेव्या
मूर्तिर्दैत्यविनाशिनी अतएवहिपूज्यास्यादष्टमीनवमीयुतेति पद्मपुराणेऽपि अष्टमीनवमीविद्धानवमीचाष्टमीयुता
अर्धनारीश्वरप्रायाउमामाहेश्वरीतिथिरिति सप्तमीयुक्तातु सतिसंभवेसर्वथावर्जनीया तत्रमहादोषश्रवणात् पुत्रा
न्हंतिपशून्हंतिहंतिराष्ट्रंसराजकं हंतिजातानजातांश्चसप्तमीसंयुताष्टमी तस्मात्सर्वप्रयत्नेनसप्तमीवेधसंयुता
वर्जनीयाष्टमीचाथभुवोराज्यमभीप्सुभिरितिमदनरत्ने स्मृतिसमुच्चये शरन्महाष्टमीपूज्यानवमीसंयुतासदा

सप्तमीसंयुतानित्यंशोकसंतापकारिणी तथा जंभेनसप्तमीयुक्तापूजितातुमहाष्टमी इंद्रेणनिहतोजंभस्तदादान
वपुंगवः तस्मात्सर्वप्रयत्नेनसप्तमीमिश्रिताष्टमी वर्जनीयाहिसततंमनुजैः शुभकांक्षिभिः सप्तमीशल्यसंविद्धां
मोहादज्ञानतोऽपिवा महाष्टमींप्रकुर्वाणोनरकंप्रतिपद्यते सप्तमीकलयायत्रपरतश्चाष्टमीभवेत् तेनशल्यमिदंप्रो
क्तंपुत्रपौत्रधनक्षयइतिनिर्णयामृते भोजराजीयेभीमपराक्रमेऽपि नादिवानानिशापिचाविष्टिहतानचसप्तमिशल्यल
वोपहता यदिचाष्टमिशेषयुतानवमीविबुधैरपिपुण्यतमाकथितेति निर्णयसिंधावपि घटिकामात्राप्यौदयिकी
ग्राह्येत्युक्तं गौडाश्चाप्येवं व्रतोपवसानियमेघटिकैकापियाभवेदितिदेवलोक्तेः अष्टमीनवमीयुक्तानवमीचाष्टमीयुतेति
पाद्मवचनाच्च रूपनारायणधृतदेवीपुराणेऽपि सप्तमीवेधसंयुक्तायैःकृतातुमहाष्टमी पुत्रदारधनैर्हीनाभ्रमंतीहपि
शाचवत् अत्रवेधोनत्रिमूहूर्त्तात्मकः किंतुकलामात्रात्मकोऽपि तथा सप्तमीशल्यसंविद्धावर्जनीयासदाष्टमी स्तोका
पिसातिथिःपूर्णायस्यांसूर्योदयोभवेदिति इयमष्टमीनवम्याभौमवारेणचयुक्ताऽतिप्रशस्ता तदुक्तं अष्टम्यामुदि
तेसूर्येदिनांतेनवमीभवेत् कुजवारोभवेत्तत्रपूजनीयाप्रयत्नत इति इयंमूलनक्षत्रेण पूर्वाषाढानक्षत्रेणवा युक्ता
महानवमीत्युच्यते तदुक्तं अश्वयुक्शुक्लपक्षेतुयाऽष्टमीमूलसंयुता पूर्वयाषाढयावापिऋक्षद्वययुताऽथवा सामहा
नवमीनामत्रैलोक्येऽपिसुदुर्लभेति हेमाद्रौस्कांदाच्च निर्णयामृतेभविष्ये कन्यागतेसवितरिशुक्लपक्षेऽष्टमीतुया
मूलनक्षत्रसंयुक्तासामहानवमीस्मृता कालतत्त्वविवेचनेदेवीपुराणे प्राप्टकालेविशेषेणआश्विनेह्यष्टमीपुच
महाशब्दोनवम्यांचलोकेख्यातिंगमिष्यति मूलनक्षत्रयुक्ताऽपिसप्तमीलेशसहितादुष्टेव तदुक्तंदुर्गोत्सवे मूलेनापि
हिसंयुक्तासदात्याज्याऽष्टमीबुधैः लेशमात्रेणसप्तम्याश्चापिस्याद्यदिदूषितेति तथामूलापूर्वाषाढयोरेव पूजाप्रश
स्ताउत्तराषाढायांतुनिषिद्धा तदुक्तंनिर्णयामृते रूपनारायणीये मूलेनपूजयेद्देवींतथासलिलदैवते वैश्वदेवेतुनक्षत्रे

पूजितादुःखदाभवेत् उत्तराषाढानिषेधस्तुसतिसंभवे ज्ञेयः नसर्वथा तदुक्तंदुर्गोत्सवे मूलाभावेनुकर्त्तव्याअष्टमी
तिथिसंयुता विश्वयुक्ताऽपिकर्त्तव्याअष्टमीनवमीयुतेति अत्र पूर्वोक्तविशेषवचनैर्गौरीत्वनोयावद्रूर्नकालव्याप्तिशा
स्त्रंबाधित्वानवमीयुतायामेवरात्रावसत्यामष्टम्यांनवमीपूजयासहतंत्रेणाष्टमीपूजोचिता अतएवकामरूपीयादिनि
बंधेषुवचनं अष्टम्याःशेषदंडश्चनवम्याःपूर्वएवच तत्रयाक्रियतेपूजाविज्ञेयासामहाफलेति अष्टमीनवमीसंधौतु
तीयाखलुकथ्यते तत्रपूज्यात्वहंपुत्रयोगिनीगणसंयुतेति कालिकापुराणोक्ततृतीयासंधिपूजाप्यष्टमीनवमीपूजा
यांतंत्रेणैवसिद्ध्यति उपोषितोद्वितीयेह्निपूजयेत्पुनरेवतामित्यकृत्योपवासपरदिनविहितातुनवमीपूजाप्रातर्वर्त्तमा
नायांनवम्यांकर्त्तुंशक्यैव विसर्जनात्पूर्वमितितदनुरोधेनापिसप्तमीयुतायामष्टम्यामुपवासादिमदनरत्ने यत्तुमहाष्ट
म्याश्विनेमासिशुक्लाकल्याणकारिणी सप्तम्यापियुताकार्य्यामूलेनतुविशेषतः तथा अहंभद्राचभद्राहमावयोर्नांतरं
क्वचित् सर्वसिद्धिप्रदास्यामिभद्रायामर्चितात्वहं भद्रायांभद्रकाल्याश्चमध्येस्यादर्चनाक्रिया तस्माद्वैसप्तमी
विद्धाकार्य्यादुर्गाष्टमीबुधैरित्यादीनि पूर्वविद्धाविधायकानि परदिनेऽष्टम्यभावविषयाणि पूर्वोदाहृतवचनविरोधात्
यत्तुनिर्णयामृते महाष्टम्यांभगवतीभद्रायामपिपूजिता ददातिचापुरारोग्यंयतोभद्रास्वरूपिणीतिवचनं अ
त्रभद्राशब्दोनसप्तमीवचनः यानितु सप्तम्यामुदितेसूर्य्येपरतश्चाष्टमीभवेत् तत्रदुर्गोत्सवंकुर्य्यान्नकुर्य्याद
परेऽहनि तथा यदाष्टमीतुसंप्राप्यअस्तंयातिदिवाकरः तत्रदुर्गोत्सवंकुर्य्यादपरेऽहनिवर्जयेत् दुर्भिक्षंतत्रजा
नीयान्नवम्यांयत्रपूज्यते इत्यादीनि परदिनेऽष्टमीलाभेऽपि सप्तमीविद्धाविधायकानि तानि सूर्योदयकालेनवम्य
भावविषयाणि तदुक्तंस्मृतिसंग्रहे यदासूर्य्योदयेनस्यान्नवमीचापरेऽहनि तदाष्टमींप्रकुर्वीतसप्तम्यासहितांनृ
पेति दुर्गोत्सवेऽपि उत्तरास्तिथयोयत्रक्षयंयांतिनराधिप पूर्वाष्टमींतदाकुर्य्यादन्यथानशुभंभवेदिति निर्णया

स्मृतेहेमाद्रेस्तु सप्तम्यामुदितेसूर्ये इत्यादिवचनमाश्विनकृष्णाष्टमीविषयं कृष्णपक्षेऽष्टमीचेति पूर्वविद्धाया: कृष्णपक्षलवप्राशस्त्यात् कृष्णाष्टम्यांपूजनंच कृष्णपक्षनवम्यांक्रियनाणदेवीप्रबोधनांग कन्यायांकृष्णपक्षेच बोधयित्वाऽष्टमीदिने नवम्यांबोधयेद्देवींगीतवादित्रनि:स्वनैरितिदेवीपुराणात् महाष्टम्यापूर्वे तु:पूर्वाह्णरापित्वे पूर्वाऽन्यथापरैवेति निर्णयदीपमानामिति निर्णयसिंधौ अत्रकृत्यमुक्तं कन्यासंस्थेरवावीषशुक्लाष्टम्यांप्रपूजयेत् सोपवासोनिशार्द्धेतुमहाविभवविस्तरैः देवीपुराणे कन्यासंस्थेरवावीषशुक्लाष्टम्यांप्रपूजयेत् द्रोणपुष्पै श्चबिल्वैश्चजातिपुन्नागचंपकैरिति अत्रविशेषउक्तोमदनरत्ने विष्णुधर्मोत्तरे आश्विनेशुक्लपक्षस्यअष्टम्यां प्रयत:शुचिः तत्रैवायुधवर्माणंछत्रंवस्त्रंचपूजयेत् राजलिंगानिसर्वाणितथाशस्त्राणिपूजयेत् रात्रौजागरणंकु र्यात्तत्रैववसुधाधिपः उपोषितोद्वितीयेन्हिपूजयेत्पुनरेवतां आयुधाद्यंचसकलंपूजयेद्वसुधापतिः विस्तरेणाष्टमीकृ

त्यंनवरात्रप्रकरणएवोक्तमतोनेहप्रपंच्यते इत्याश्विनशुक्लाष्टमीनिर्णयः

आश्विनशुक्लनवम्याअपिमहानवमीविधानंनारदीये

आश्विनेशुक्लनवमीमहापूर्वाप्रकीर्तिता अपराह्णेशमीपूजाकार्यास्यांप्राग्दिशिद्विज ततोनिशायांप्राग्र्यमेखड्गं धनुरिषून्गदां शूलंशक्तिंचपरशुंछुरिकांचर्मखेटकं छत्रंध्वजंगजंचाश्वंगोष्ठपुस्तकतूलां दंडंपाशंचक्रंशंखंगं धाद्यैरुपचारकैः संपूज्यमहिषंतत्रभद्रकाल्यैसमालभेत् एवंबलिंविधायाथभुक्त्वापक्वान्नमेवच द्विजेभ्योदक्षिणां दत्वाव्रतंतत्रसमापयेत् एवंयःपूजयेद्दुर्गांनृणांदुर्गतिनाशिनीं इहभुक्त्वावरान्भोगानंतेस्वर्गतिमाप्नुयात् इय दुर्गा कृतपूजादौ पूर्वा ग्राह्या युग्मवाक्यात् भविष्योत्तरेऽपि अश्वयुक्शुक्लपक्षेतुअष्टमीमूलसंयुता सामहानवमी नामत्रैलोक्येऽपिसुदुर्लभेति कन्यागतेसवितरिशुक्लपक्षेऽष्टमीयुता मूलनक्षत्रसंयुक्तासामहानवमीस्मृतेति

अत्रमूलग्रहणंमूलादिनक्षत्रत्रयोपलक्षणं तदुक्तंलिंगपुराणे दुर्गापूजासुनवमीमूलाद्यृक्षत्रयान्विता महतीकीर्ति
तातस्यांदुर्गांमहिषवाहिनीं चंडिकामुपहारैस्तुपूजयेद्राज्यवृद्धयइति अस्यांपूजाहोमादि प्राग्वत्कृत्वा बलिदानं
कार्यं प्रभूतबलिदानंचनवम्यांविधिवच्चरेदितिकालिकापुराणात् यदातुनवम्यष्टमीविद्धाभूत्वाद्वितीयदिनेऽपि
किंचित्भवति तदा नवमीप्रयुक्तस्यपूजादेः पूर्वदिनेऽनुष्ठापितबलिदानमात्रं द्वितीयदिनेकर्त्तव्यं अष्टम्यामुदिते
सूर्येदिनांतेनवमीभवेत् प्रभातेबलिदानेतुकियन्मात्राऽपिलभ्यते नवम्यांतत्रसंपूज्यादुर्गांदुर्गतिनाशिनीतिवच
नात् मदनरत्नेऽपि बल्यादौपराकार्य्याउपवासेतुपूर्वैवेति प्रतापमार्त्तंडेऽपि द्वितीयदिनेनवम्यालाभेतुपूर्वेद्युरेव
नवमीमध्येकार्यं दशम्यांबलिदानंतुदीयतेयत्रमानवैः तद्राष्ट्रंनाशमायातिमारकोपद्रवैःस्फुटमिति भविष्ये नव
मीप्रयुक्तस्यबलिदानस्यदशम्यांकरणेदोषश्रवणात् नंदायांज्वलतेवह्निःपूर्णायांपशुघातनं भद्रायांगोकुलक्रीडात
राष्ट्रंविनश्यति नवम्यामपराह्णेतुबलिदानंप्रशस्यते दशमींवर्जयेत्तत्रनाऽत्रकार्य्याविचारणेति नंदायांदर्शने
रक्षाबलिदानंदशासुच भद्रायांगोकुलक्रीडादेशनाशायजायतेइतिमदनरत्ने यानितु नकार्य्यादशमीविद्धान
वमीतुसदाबुधैः नवमींदशमीविद्धांयेकुर्वंतिविमोहिताः वृथातेषांभवेत्सर्वंबलिपूजाविधानकमित्यादीनि
क्वचिद्वचनानि तानिशुद्धाधिकानिषेधपराणि अन्यथा पूर्वोदाहृतसूर्य्योदयेपरंरिक्तेति वाक्यविरोधप्रसंगइति
अत्र निर्णयसिंधुकारः वेधश्च त्रिमुहूर्त्तात्मकः यत्तु हेमाद्रिमते मुहूर्त्तद्वयात्मकोपिवेधोऽस्ति तथापि
सूर्येदयएवसः सायंतु त्रिमुहूर्त्तएव तदुक्तंदीपिकायां त्रिमुहूर्त्तगातुसकलासायमिति माधवोपि सायंभून
यातद्वन्न्यूनयातुनविध्यतइति तेन त्रिमुहूर्त्तयोगेपूर्वानवमीतिपूर्वोक्तवचनात् नकुर्यान्नवमींतातदशम्यांतुकदा
चनेतिस्कांदे परानिषेधाच्च त्रिमुहूर्त्तयोगाभावेतु परैव कार्य्येतिनिष्कर्षं इत्याहुः निर्णयदीपेतु महानवम्याः

परादिनेऽपराह्णव्यापित्वेपराअन्यथापूर्वेवेत्युक्तं आवर्त्तनात्पूर्वकालेनवमीस्यात्परेऽहनि दुर्गापूजाऽत्रपूर्वेद्युःपूर्वाह्णेत्वष्टमीयदेतिधौम्यवचनात् अस्यशारदनवमीविषयत्वेसमूलत्वेच प्रमाणाभावाद्विमृश्यमेतत् नवम्यामेव दुर्गापूजनहोमबलिदानाद्युपक्रम्यसमापनीयमितिराजमार्त्तंडः नवम्यांचजपंहोमंसमाप्यविधिवद्बलिमितिवचनात् ब्रह्मवैवर्त्तेऽपि अत्रापराह्णिकेकालेबलिदानंप्रशस्यते दशमींवर्जयेत्तत्रनात्रकार्याविचारणेतिदेवीपुराणेऽपिसूर्योदयेपररिक्तापूर्णास्यादपरायदि बलिदानंप्रकर्त्तव्यंतत्रदेव्याःशुभावहं बलिदानेकृतेऽष्टम्यांराष्ट्रभंगोभवेन्नृपेति नवम्यांचजपंहोमंसमाप्यश्रवणेऽपिचेतिसंग्रहोक्तेः व्रतंचजागरश्चैवनवम्यांविधिवद्बलिरितिदेवीपुराणाच्च इदंबलिदानंनवमीप्रयुक्तंअष्टमीप्रयुक्तस्याष्टम्यामेवकर्त्तव्यत्वात् इयंचनवम्युपवासादिष्वतिप्रशस्ता तदुक्तंभविष्योत्तरे तस्मादियंमहापुण्यानवमीपापनाशिनी उपोष्यासुप्रयत्नेनसततंसर्वपार्थिवैरिति हेमाद्रौदेवीपुराणेऽपि आश्विनेनवमीशुक्लातस्यांकोटिगुणंफलं तथा आश्विनस्यतुमासस्यनवमीशुक्लपक्षगा जायतेकोटिगुणितंदानंतस्यानराधिपेति इयं मन्वादिरपि इतिमहानवमीनिर्णयः ॥ अस्यामेवविष्णुधर्मोत्तरोक्तं भद्रकालीव्रतं राम उवाच विधिनापूजयेत्केनभद्रकालींनराधिप नवम्यामाश्विनेमासिशुक्लपक्षेनरोत्तम पुष्करउवाच पूर्वोत्तरेतुदिग्भागेशिववास्तुमनोहरे भद्रकालीगृहंकुर्य्याच्चित्रवस्त्रैरलंकृतं भद्रकालीपदंकृत्वातत्रसंपूजयेद्द्विज अत्रमंत्रआगमोक्तः यद्वा जयंतीमंगलाकालीभद्रकालीकपालिनी दुर्गाक्षमाशिवाधात्रीस्वाहास्वधानमोऽस्तुते इतिपौराणिकमंत्रोवा भद्रकालीस्वरूपंतुविष्णुधर्मोत्तरे अष्टादशभुजाकार्य्याभद्रकालीमनोहरा आलीढस्थानसंस्थानाचतुःसिंहरथेस्थिता अक्षमालांचशूलंचखड्गंचर्मचयादव बाणचापेचकर्त्तव्येपद्मशंखौतथैवच स्रुक्स्रुवौचतथाकार्य्यौतथावेदिकमंडलू दंडशक्तीचकर्त्तव्येतथाशक्तिहुताशनौ हस्तानांभद्रकाल्याश्चभवेच्छांतिकरःकरः एक

ध्येवमहाराजरक्तपात्रधरोभवेदिति आश्विनेशुक्लपक्षस्यअष्टम्यांप्रयतःशुचिः तत्रैवायुधवर्माद्यंछत्रंवस्त्रंचपूजयेत
राजलिंगानिसर्वाणितथाशस्त्राणिपूजयेत पुष्पैर्गंधैः फलैर्भक्ष्यैर्भोज्यैश्चसुमनोहरैः बलिभिश्चविचित्रैश्चप्रेक्षा
दानैस्तथैवच रात्रौजागरणंकुर्य्यात्तत्रैववसुधाधिपः उपोषितोद्वितीयेऽन्हिपूजयेत्पुनरेवतां आयुधाद्यंचसकलंपू
जयेद्वसुधाधिपः एवंसंपूजयेद्देवींवरदांभक्तवत्सलां कात्यायनींकामगमांबहुरूपांवरप्रदां पूजितासर्वकामैःसाधु
नाकिवसुधाधिपं एवंहिसंपूज्यजगत्प्रधानांयात्रातुदेयावसुधाधिपेन प्राप्नोतिसिद्धिंपरमांमहीशोजनस्तथान्यो
पिशुभंत्रिशक्त्या: इतिभद्रकालीव्रतं ॥ अथमहानवम्यामुत्सवविधानं भविष्योत्तरेऽपि श्रीकृष्णउवाच
पुण्यामहानवम्येपातिथीनामुत्तमातिथिः अनुष्ठेयानरैः सर्वैः प्रजापालैर्विशेषतः भवानीतुष्टयेपार्थसंवत्सर
सुखायच भूतप्रेतपिशाचानांप्रीत्यर्थमुत्सवायच युधिष्ठिरउवाच कस्मात्कालात्प्रवृत्तेयंनवमीमहशब्दिका कि
मादावपिकृष्णासीद्याभवान्याः प्रिया तिथिः यशोदागर्भसंभूताकुत्रसाऽत्रप्रवर्त्तिता उताहोपूर्वमेवासीत्कृतत्रेतायु
गादिषु येचान्येप्राणिनःसर्वेवध्यंतेघातयंतिच हतानांप्राणिनांतेषांकागतिः पारलौकिकी स्वयंघ्नतांघातयता
मनुमोदयतांतथा एतन्मेसंशयंसर्वंछेत्तुमर्हसिकेशव श्रीकृष्णउवाच पार्थयापरमाशक्तिरनंतालोकपूजिता आ
द्यासर्वगताशुद्धाभावगम्यामनोहरा अर्द्धाष्टमीकालकालीसुषुम्णासर्वमंगला मायाकात्यायनीदुर्गाचामुंडाशंकर
प्रिया ध्यायंतियांयोगरतास्सादेवीपरमेश्वरी रूपभेदैर्नामभेदैर्भवानीपूज्यतेशिवा अष्टम्यांतुनवम्यांतुदेवदानव
राक्षसैः गंधर्वैरुरगैर्यक्षैःपूज्यतेकिन्नरैर्नरैः अन्यैरपियुगादौतुसृष्टेःपूर्वंप्रपूजिता पूजितेयंपुरादेवैस्तेभ्यः
पूर्वंनरैःशुभैः अश्वयुक्शुक्लपक्षेतुअष्टमीमूलसंयुता सामहानवमीनामत्रैलोक्येऽपिसुदुर्लभा कन्यागतेसवितरि
शुक्लपक्षेतथाऽष्टमी मूलनक्षत्रसंयुक्तासामहानवमीस्मृता अष्टम्यांचनवम्यांचजन्ममोक्षप्रदांबिकां पूजयित्वा

भिनेमासिविशोकोजायतेनरः संतर्जयंतीहुंकारैर्विघ्नौघान्घातकान्परान् नवम्यांपूजितादेवीददात्यनुपमंफलं
सापुण्यासापवित्राचसाधर्मसुखदायिनी तस्यांसदापूजनीयाचामुंडामुंडमालिनी तस्यांयेह्युपयुज्यंतेप्राणिनोम
हिषादयःसर्वेतेस्वर्गतिंयांतिघ्नतांपापंनविद्यते नतथाबलिदानेनपुष्पधूपविलेपनैः यथासंतुष्यतेमेषैर्महिषैर्विंध्य
वासिनी उद्दिश्यदुर्गांहन्यंतेविविधायत्रजंतवः स्वर्गतिंयांतिकौंतेयघातयंतोयशस्विनः भवानीप्रांगणेप्राणायेषां
यांतियुधिष्ठिर तेषांस्वर्गेऽनुलोवासोवीरास्तेऽप्सरसांप्रियाः मन्वंतरेषुसर्वेषुकल्पेषुकुरुनंदन तेषुसर्वेषुपूज्यासौ
नवमीयंसुरार्चिता प्रसिद्धानादिनिधनावर्षेवर्षेयुधिष्ठिर भूयोभूयोवतारैश्चभवानीपूज्यतेसुरैः अवतीर्णावतीर्णाचभु
विदैत्यानिबर्हिणी स्वर्गपातालमर्त्येषुकुरुतेस्थितिपालने सैवकालीमहादेवीयशोदागर्भसंभवा कंसासुरस्योत्त
मांगेपदंदत्वागतावियत् ततःप्रभृतिदैत्यघ्नीयशोदानंदिनीमया विंध्याचलेस्थापयित्वापुनःपूजाप्रवर्तिता पूर्वंप्र
सिद्धापिपुनर्भगिन्यामहिमाकृतः भुविसत्त्वोपकारायसर्वोपद्रवशांतये एवचाविंध्यवासिन्यांनवरात्रोपवासतः
एकभक्तेननक्तेनस्वशक्त्यायाचितेनच पूजनीयाजनैर्देवीस्थानेस्थानेपुरेपुरे गृहेगृहेशक्तिपरैर्ग्रामेग्रामेवनेवने स्ना
तैःप्रमुदितैर्हृष्टैर्ब्राह्मणैःक्षत्रियैर्नृप वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैः स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदंशृ
णुएतदनंतरंजयाभिलाषीनृपतिरित्यादि भूताःसुखावहाइत्यंतोग्रंथोऽस्टनीकृत्येलोहाभिसारप्रकरणेज्ञेयःइत्येवंभ्रा
मयेद्देवींदुर्गांदेवींरथेस्थितां नरयानेनवापार्थततोविघ्नंसमापयेत् अथोत्पन्नेषुविघ्नेषुभूयःशांतिंसमाचरेत् येनविघ्ना
नजायंते यात्रासंपूर्णतांव्रजेत् एवंयेकुर्वतेयात्रांराजानोऽन्येऽपिमानवाः महानवम्यांनंदायाःपुत्रिकाहृष्टमानसाः
तेसर्वेपापनिर्मुक्तायांतिभागवतींपुरीं नतेषांशत्रवोनाग्निर्नचौरानविनायकाः विघ्नंकुर्वंतिराजेंद्रयेषांतुष्टामहेश्वरी
इत्येपतेसमाख्यातोदुर्गादेव्यामहोत्सवः पठतांशृण्वतांचैवंसर्वाशुभनिवर्हणः शूलाग्रभिन्नमाहिषासुरपृष्ठपीठ

मध्यस्थितांसुरुचिरांगदबाहुदंडां अभ्यर्च्यपंचवदनानुगतांनवम्यांदुर्गांतुदुर्गगहनानितरंतिमर्त्याः इतिमहानव
मीदुर्गोत्सवः आश्विनशुक्लनवम्यामेव भविष्यत्पुराणोक्तं रथनवमीव्रतम् सुमंतुरुवाच कृत्वैवाश्वयुजेमा
सिशुक्लपक्षेनराधिप नवम्यामुपवासंतुदुर्गांदेवींप्रपूजयेदित्युपक्रम्य वस्त्रादिशोभितंनवंरथंकृत्वा कृत्वास्वर्णम
यींदुर्गांमहिषासनशोभितां दुर्गास्वरूपं आलीढस्थानसंस्थानातथाराजंश्चतुर्भुजा असृक्पात्रकरादेवीशूलख
ड्गधरातथा चतुर्थश्चकरस्तस्यास्तथाकार्यस्तुसामिषइति रथमध्येतांविन्यस्य तंरथं राजमार्गेभ्रामयित्वादु
र्गालयेसंस्थाप्य प्रभातेपुनःपूजांकृत्वा ब्राह्मणान्संभोज्यस्वयंभुंजीतेत्युक्तं अत्रभगवतीप्रीत्यर्थंशय्यादानंशूलां
कितवृषदानमुभयतोमुखीदानंचकर्तव्य वदुक्तं रत्नोपकरणैर्युक्तांदंतदारुमयींशुभां शय्यांनिवेदयेद्यस्तुभगवत्यै
नराधिप संपूज्यगंधपुष्पाद्यैर्विधिवच्चंडिकांनृप दुकूलवस्त्रतूलानांपरिसंख्यातुयावती तावद्वर्षसहस्राणिदुर्गा
लोकेमहीयते वृषंशूलांकितयश्चभगवत्यैनिवेदयेत् आसप्तमंसतुकुलंमहादेवालयंव्रजेत् दत्वोभयमुखींगांच
भगवत्यैसुशोभनाम् सप्तद्वीपांधरांदत्वायत्फलंतदवाप्नुयात् पदद्वयंशिरोद्भिचयावद्वत्सस्यनिर्गतम् ताव
द्गौःपृथिवीज्ञेयातद्दानात्स्यान्महाप्रदः इतिरथनवमीव्रतम् अस्यामेवारभ्यब्रह्मपुराणोक्तंशौर्यव्रतं अगस्त्य
उवाच अतःपरंप्रवक्ष्यामिशौर्यव्रतमनुत्तमम् येनभीरोरपिमहच्छौर्यंभवतितत्क्षणात् मासिचाश्वयुजे
शुद्धेनवम्यांसमुपोषितः सतम्यांकृतसंकल्पःस्थित्वाष्टम्यांनिरोधतः नवम्यांप्राशयेत्पिष्टं प्रथमभाक्ति
तोनृप ब्राह्मणान्भोजयेच्छक्त्यादेवींचैवतुपूजयेत् दुर्गांदेवींमहाभागांमहामायांमहाप्रभाम् एवंसंवत्सरंयाव
दुपोष्यतुविधानतः व्रतांतेभोजयेद्धीमान्यथाशक्तिकुमारिकाइतिशौर्यव्रतम् ॥ अथास्यामेवाश्विनशुक्लनव
म्यामुल्कानवमीव्रत श्रीकृष्णउवाच उल्काख्यांनवमींराजन्कथयामिनिबोधतां याकश्यपेनकथितातारक

स्पार्त्तिनाशिनी अश्वयुक्शुक्लपक्षेयानवमीलोकविश्रुता तस्यास्नात्वासमभ्यर्च्यापल्हन्दवीस्समीयत। पश्चा
त्तंपूजयेद्देवींचामुंडांनैरवप्रियां पुष्पैर्धूपैःसनैवेद्यैर्मांसमत्स्यसुरासवैः पूजयित्वास्तवंकुर्य्यान्मंत्रेणानेनमानवः समा
रोप्यांजलिंमूर्ध्निजानुस्थामवनींगतः महिषघ्निमहामायेचामुंडेमुंडमालिनि द्रव्यमारोग्यविजयदेहिदेविनमोऽस्तुते
कुमारीर्भोजयेद्दत्त्वानवतानीलकंचुकैः परिधानैर्भूषणैश्चभूषयित्वाक्षमापयेत् सप्तपंचतथैकांवानिजवित्तानु
रतः श्रद्धयातुष्यतेदेवीइतिधीरानुशासनं अभ्युक्ष्यमंडलंकृत्वागोमयेनशुचिस्ततः तत्रासनेचोपविश्यपात्रं
चपुरतोन्यसेत् ततःससिद्धमन्नंयत्तत्सर्वंपरिवेषयेत् सघृतंवापसेभ्यश्चदत्त्वान्नंपात्रसन्निधौ तृणानांमुष्टिम
दायगृह्योपादप्रमात्रकं प्रज्वालयेत्ततोभोज्यंयावज्ज्वलतिपावकः प्रशांतेभोजनंत्यक्त्वासमाचम्यप्रसन्नधीः
चामुंडांहृदयेध्यात्वागृहकृत्यपरोभवेत् अनेनविधिनासर्वंमासिमासिसमाचरेत् ततःसंवत्सरस्यांतेभोजयित्वा
कुमारिकाः वस्त्रैराभरणैःपूज्यप्रणिपत्यक्षमापयेत् सुवर्णंशक्तितोदद्याद्गांचविप्रायशोभनां यएवंकुरुतेपार्थ
पुरुषोनवमीव्रतं नतस्यशत्रवोनाग्निर्नराजानोनतस्कराः भूताःप्रेताःपिशाचाश्चजनयंतिभयंगृहे समुद्यतेषु
शस्त्रेषुहंतातस्यनविद्यते रक्षतेतंसदायुक्तासर्वास्वापत्सुचंडिका नरोवायदिवानारीव्रतमेतत्समाचरेत् उल्का
वत्ससपत्नानांज्वलन्नास्तेसदाहृदि सुशुष्ककोटरमुखीसुकरालदंष्ट्रांकापालिनींसमवलंबितमुंडमालां उल्काव्रतेन
पुरुषोनवमीषुचंडीसंपूज्यकस्यहृदयंनचमत्करोति इतिभविष्योत्तरे उल्कानवमीव्रतम् आश्विनशुक्लदशमी
विजयादशमी नारदीये आश्विनेशुक्लदशमीविजयासाप्रकीर्तिता दशगोमयपिंडांस्तुप्रातर्न्यस्यगृहांगणे
चक्रवालस्वरूपेणतन्मध्येरामलक्ष्मणौ तथाभरतशत्रुघ्नौसंपूज्याश्चतुरोऽपिहि सापिधानासुपालीषुगोमयस्य
व्रतसूप छिन्नंधान्यंसरोप्यंतु धृत्वाशुक्लांबरावतः पितृमातृभ्रातृपुत्रजायाभृत्यसमन्वितः

संपूज्यगंधपुष्पाद्यै नैवेद्यैश्चविधानतः नमस्कृत्याथभुंजीतद्विजान्संभोज्यपूजितान् एवंकृत्वाविधानंतु
नरोवर्षसुखान्वितः धनधान्यसमृद्धश्चनिश्चितंजायतेद्विज अथापराह्णसमयेनवम्यांसुनिमंत्रितां पूर्वदिक्स्थां
शमीविप्रगत्वातन्मूलमृत्तिकां गृहीत्वास्वगृहंप्राप्यगीतवादित्रनिःस्वनैः संपूज्यतांविधानेनसज्जीकृत्यनिजंबलं
निर्गत्यपूर्वद्वारेणग्रामाद्बहिरनाकुलः ततः शत्रुप्रतिकृतिंनिर्मितांपत्रिकादिभिः मनसाकल्पितांवापिस्वर्णपुंखश
रेणवै विद्ध्येदतिशुशंप्रीतः प्राप्नुयात्स्वगृहंनिशि· एवंकृतेविधिर्वापिगच्छेद्वाशत्रुनिग्रहे एषैवंदशमीविप्रविधिना
चरितासदा धनंजयंसुतान्गाश्चगजाश्वंचाप्यजाविकं दद्यादिहशरीरांतेस्वर्गतिंचापिनारद ॥ इयंचतारकोद
यव्यापिनीग्राह्येतिसामान्यनिर्णयः तदुक्तंचिंतामणौ आश्विनस्यासितपक्षेदशम्यांतारकोदये सकालोविजयोना
मसर्वकार्य्यार्थसाधकः-रत्नकोशेऽपि ईषत्संध्यामतिक्रांतःकिंचिदुद्भिन्नतारकः विजयोनामकालोऽयंसर्वकार्य्या
र्थसाधकः दिनद्वयेतद्व्याप्तावव्याप्तौवाअपराजितापूजायांपूर्वैव तदुक्तं हेमाद्रौ स्कांदे दशम्यातुनरैः सम्यक्पूज
नीयाऽपराजिता ऐशानींदिशमाश्रित्यअपराह्णेप्रयत्नतः यापूर्णानवमीयुक्तातस्यांपूज्याऽपराजिता क्षेमार्थंविज
यार्थंचपूर्वोक्तविधिनानरैः नवमीशेषसंयुक्तदशम्यामपराजिता ददातिविजयंदेवीपूजिताजयवर्द्धिनी तथा
आश्विनेशुक्लपक्षेतुदशम्यांपूजयेन्नरः एकादश्यांनकुर्वीतपूजनंचापराजितामिति· अत्रयात्रात्वेकादशेमुहूर्त्तेकार्य्या
तथाचभृगुः आश्विनस्यासितपक्षेदशम्यांसर्वरात्रिषु सायंकालेशुभायात्रायदिवाविजयक्षणे एकादशोमुहूर्त्तोयं
विजयः- संप्रकीर्त्तितः तस्मिन्सर्वैर्विधातव्यायात्राविजयकांक्षिभिरिति· दिनद्वयेएकादशमुहूर्त्तव्याप्तौ श्रवणयु
ताग्राह्या तथाचहेमाद्रौमदनरत्नेकश्यपः उदयेदशमीकिंचित्संपूर्णैकादशीयदि श्रवणर्क्षंयदाकालेसातिथिर्विजया
भिधा श्रवणर्क्षेतुपूर्णायांकाकुत्स्थःप्रस्थितायतः-उल्लंघयेयुःसीमानंतद्दिनर्क्षेततोनराइति . कालेऽपराह्णयोगाभावेतु

सर्वपक्षेपुपूर्वैव मदनरत्नेऽप्येवं ज्योतिर्निबंधेरत्नकोशेचनारदः ईषत्संध्यामतिक्रांतःकिंचिदुद्भिन्नतारकः विजयोनामकालोऽयंसर्वकार्यार्थसाधकः इषस्यदशमींशुक्लांपूर्वविद्धांनकारयेत् श्रवणेनापिसंयुक्तांराज्ञांपट्टाभिषेचने सूर्योदये यदाराजन्दृश्यतेद्दशमीतिथिः आश्विनेमासिशुक्लेचविजयांतांविदुर्बुधाः अत्रायंनिर्गलितार्थःअपराह्णोमुख्यःकालः तत्रैवपूजाद्युक्त प्रदोषोगौणः तत्रदिनद्वयेप्यपराह्णव्यापित्वेचपूर्वा प्रदोषव्याप्तेराधिक्यात् दिनद्वयेप्रदोषव्यापित्वे परा अपराह्णव्याप्तेराधिक्यात् श्रवणस्तुरोहिणीवदप्रयोजकः दिनद्वयेऽपराह्णसत्त्वेच पूर्वा तत्राप्यपराह्णेश्रवणसत्त्वेपरैवेति अत्रापराजितापूजादिकं पूर्वविद्धाविधायकं नवरात्रप्रकरणेलिखितं शमीपूजादिकमपि तत्रैव नवरात्रपारणनिर्णयोऽपि तत्रैवाभिहितः अथात्रप्रस्थानादिविधानंतत्र दिशांविजयमंत्राश्च पठितव्याःपुरोधसेति आशादशमीपूजाव्रतवदत्रविधानं अस्यांगोपथब्राह्मणेविवाहमुद्दिश्योक्तंप्रस्थानविधिं कुर्यात् तद्यथा अथप्रस्थानंव्याख्यास्यामः जनेषुगच्छत्सु पार्थिवास्तत्रत्यादुंदुभीर्वीणावादयेरन्हृष्टालंकृताश्चारुवदना उदगयनेपुण्यनक्षत्रे केशश्मश्रुरोमनखानिवापयित्वा संभारानुपकल्प्य मैत्रेमुहूर्तमुपसमाधाय शांतिप्रतिसरंकारयित्वा कर्त्तान्वालभ्यजुहोत्यभयैरायुष्यैः स्वस्त्ययनैः शर्मवर्मभिर्जनवदनैश्चहुत्वा पार्थिवस्येतिमात्रगामेतिचहुत्वा आगच्छतागतस्वेतींद्रस्थालीपाकेनेष्ट्वा विष्णुन्क्षराऋजवइतिपथानमास्थायजपेदिमो पाशेयतइंद्रंतारमिंद्रंमानोविदन्नभयसेमोबृहस्पतिर्नरः परिपातुपश्चादितित्रीन् विष्णुक्रमान्क्रांत्वेत्यादि- अपराजितापूजनादिकं नवरात्रवशात्तत्रैवोक्तं दिशांविजयमंत्राश्चपठनीयाः पुरोधसेतिप्रागुक्तं तत्रमंत्रा आशादशमीव्रतोक्ताभविष्योत्तरे त्वयिसान्निहितःशक्रःसुरासुरनमस्कृतः पूर्वस्त्वंभुवनस्यास्यऐंद्रादिग्देवतेनमः परिगृह्यदिशेशत्वंत्वमाग्नेयीतिपठ्यसे तेजोरूपापराशक्तिराग्नेयीजयदाभव २ धर्मराजंममाश्रित्यलोकान्

यमयत्यसौ ॥ तेनसंयमनीचासि ॥ याम्येमत्कामदाभव ॥ ३ ॥ खड्गहस्तातिविकृतनिर्ऋतिस्थान
माश्रिता तेननैर्ऋतिनामासित्वमाशांपूरयस्वमे ४ त्वय्यास्तेभुवनाधारोवरुणोयादसांपतिः कामार्थंमम
धर्मार्थंवारुणिप्रवणाभव ५ अधिष्ठितासियस्मात्त्वंवायुनाजगदायुना वायव्येत्वमतःशांतिंनित्यंयच्छममा
नघे ६ धनदेनाधिष्ठितासिप्रख्यातात्वमिहोत्तरा निरुत्तराभवास्मासुदत्त्वासद्योमनोरथम् ७ ह्शाभिमतवे
षेणशंभुनात्वमलंकृता पूरयस्वाशुमेदेविवांछितानिनमोऽस्तुते ८ भुजगाष्टकुलेनत्वंसेविताऽसियतोह्यधः ना
गांगनाभिःसहिताहितायभवमेऽनघे ९ सर्वलोकोपरिगतासर्वदात्वाशिवायच सनकाद्यैःपरिवृतासर्वदा
पाहिमांभयात् १० नक्षत्राणिचयोगाश्चग्रहास्तारागणास्तथा नक्षत्रमातरोयाश्चभूतप्रेतविनायकाः सर्वेमेभी
ष्टसिद्ध्यैतुभवंतुप्रवणास्सदेति अथात्रखंजरीटपूजनंदर्शनमपिवदंति तस्यमंत्रोज्योतिःशास्त्रे तिथितत्त्वे कृत्वानी-
राजनविधिंविधिप्रोक्तंयथाक्रमं शोभनंखंजनपश्येज्जलगोष्ठादिसन्निधौ नीलग्रीवशुभग्रीवसर्वकामफलप्रद
पृथिव्यामवतीर्णोऽसिखंजरीटनमोऽस्तुते वसंतराजेऽपि स्वंयोगयुक्तोमुनिपुत्रकस्त्वमदृश्यतामेषिशिखोद्गमेन
त्वद्दर्शनेप्रावृषिनिर्गतायांत्वंखंजनाश्चर्यमयोनमस्ते अस्यपूजनं हस्तादित्येयमहालयप्रकरणेऽस्तीतिविजयाद-
शमीविधानं आश्विनशुक्लैकादशी पापांकुशा तदुक्तंनारदीये एकादशीमिषेशुक्लांविप्रपापांकुशाह्वयां उपोष्य
विधिवद्विष्णोर्दिनेविष्णुंसमर्चयेत् ततः संभोज्यविप्राग्र्यान्दत्त्वातेभ्यश्चदक्षिणां भक्त्याप्रणम्यविसृजेदश्नी
याच्चस्वयंततः एवंयःकुरुतेभक्त्यानरःपापांकुशाव्रत सभुक्त्वेहवरान्भोगान्यातिविष्णोःसलोकतां अथकथा वारा
हभविष्यपुराणयोः युधिष्ठिरउवाच कथ्यतांदेवदेवेशह्यनादिस्त्वंजगत्प्रभो धातात्वंचविधाताचकर्ताहर्तात्वमेवच
इषस्यशुक्लपक्षेतुकानाम्न्येकादशीभवेत् किंनामकोविधिस्तस्याएतद्विस्तरतोवद श्रीकृष्णउवाच शृणुष्वत्वंमहाराज

कथांपापप्रणाशिनीं इषस्यशुक्लपक्षेयातस्यानामवदामिते पापांकुशेतिविख्यातापापकुंजरभीतिहा आश्विनेमासि
देवेशंपद्मनाभमनामयं पूजयेच्चैवमांराजन्स्वर्गमोक्षप्रदायकं तुलसीमंजरीभिश्चपुष्पैस्तदृतुसंभवैः तपस्तप्त्वानर
स्तीव्रंसमवाप्नोतितत्फलं तत्फलंसमवाप्नोतिपूजयित्वाजनार्दनं कृत्वाचसुमहत्पापंयोनरोहरिमर्चयेत् नयातिनरकं
घोरंयतःपापहरोहरिः पृथिव्यांयानितीर्थानिपुण्यान्यायतनानिच तानिसर्वाणिचाप्नोतिविष्णोर्नामानुकीर्तनात् देवं
शार्ङ्गधरंविष्णुंयेप्रपन्नाजनार्दनं नतेयमपुरंयांतियांतिलोकंचशाश्वतं उपोष्यैकादशीमेतांप्रसंगेनापिमानवः नया
तियातनांयामीमितिवैवस्वताच्छ्रुतं हरिनिंदापराराजन्हरिपूजापराङ्मुखाः नयांतिवैष्णवंलोकंनरकंयांति
दारुणम् नदृश्यंपावनंकिंचित्त्रिपुलोकेषुविद्यते सर्वपापविनाशाययादृशोहरिवासरः तावत्पापानिदेहेऽस्मिन्वसंति
मनुजाधिप यावन्नोपोषितंमर्त्यैःपद्मनाभदिनंमहत् अश्वमेधसहस्राणिराजसूयशतानिच एकादश्युपवासस्य
कलानार्हंतिषोडशीं एकादशेंद्रियैःपापंयत्कृतंमानवैःसदा एकादश्युपवासेनतत्सर्वंशांतिमाव्रजेत् एका
दशीसमंकिंचित्पुण्यंलोकेनविद्यते व्याजेनापिकृतायैस्सानतेपश्यंतिभास्करिं स्वर्गमोक्षप्रदापुंसांशरीरारो
ग्यदायिनी सुकलत्रप्रदाचैवनकाशीनचपुष्करं यमुनाचंद्रभागाचनैवतुल्याकदाचन आयासवर्जंव्रतिनः
प्राप्नुवंतिहरेःपदं तर्पणंतुहरेःकुर्य्यात्पितॄनुद्दिश्यमानवः दशैवपितृपक्षेचमातृपक्षेतथादश भार्यायादशप
क्षेचपुरुषानुद्धरेद्व्रती तेद्वंद्वमोहनिर्मुक्ताःसर्वेगरुडवाहनाः स्रग्विणःपीतवस्त्राश्चप्रयांतिहरिमंदिरं किरी
टिनःकुंडलिनोघनश्यामाश्चतुर्भुजाः शंखचक्रगदापद्मधारिणोवनमालिनः बाल्येवायौवनेवापिवार्द्धकेचनृपोत्तम
उपोष्यैकादशींमर्त्यःसत्यंनाप्नोतिदुर्गतिं यथोक्तविधिनाराजन्कृत्वासत्तीर्थमज्जनं दत्त्वाहेमाश्वभाराणिमर्त्योयत्फल
मश्नुते तत्फलंसमवाप्नोतिकृतेचैकादशीव्रते संक्षेपेणनृपश्रेष्ठविधिमस्यावदामिते यथाशक्त्याचदानंतुकुर्य्यात्स्वाहिल

काम्यया उपानच्छत्रवस्त्रादिकंदमूलंफलंजलं नबंध्यंतुदिनंकार्य्यंप्राणिमात्रेणकेनचित् इहलोकेयशःप्राप्यमृतो
मोक्षमवाप्नुयात् कर्त्तारोनैवपश्यंतिदारुणंयमशासनं दीर्घायुषोधनाढ्याश्चभवंतीहपुनःपुनः किमत्रबहुनोक्तेननते
गच्छंतिदुर्गतिं आरोहंतिनराःसर्वेदिवंदेवैः सुपूजिताः इतितेकथितंराजन्नेकादश्याःकथानकं येपठंतिनराराज
न्येशृण्वंतितथैवच तेषांपापानिनश्यंतिमृतामोक्षंव्रजंतिते ॥ इतिवाराहपुराणेपाद्मेचपापांकुशाश्विनशुक्लैकादशी
व्रतकथानकम् ॥ अथाश्विनशुक्लैकादशीमारभ्यकार्त्तिकस्नानादिकृत्यारंभइतिदाक्षिणात्याः आश्विनस्यतुमासस्य
याशुक्लैकादशीभवेत् कार्त्तिकस्यव्रतानीहतस्यांवैप्रारभेत्सुधीरितिपाद्मोक्तेः भार्गवार्चने च आरभ्यैकादशीं शुक्ला
माश्विनस्यतुमानवः प्रातःस्नानंप्रकुर्वीतयावत्कार्त्तिकभास्करइतिविष्णुरहस्योक्तेः प्राच्यास्तु तुलार्कमारभ्यकुर्वंती
तितत्रैवप्रपंच्यते ॥ आश्विनशुक्लैकादशीमारभ्य त्रिंशद्दिनपर्य्यंतंमासोपवासव्रतं हेमाद्रौ विष्णुरहस्ये नारदउ
वाच भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतं विधिंमासोपवासस्यफलंचास्ययथोदितं यथाविधिनरैःकार्य्यांव्रतम
र्य्यायथाभवेत् आरभ्यतेयथापूर्वंसमाप्याहियथाविधि यावत्संख्यंहिकर्त्तव्यंतद्ब्रूहिप्रपितामह व्रतमेतत्सुरश्रेष्ठवि
स्तरेणममानघ ब्रह्मोवाच साधुनारदयच्चैतत्पृष्टंवरतपोधन याहङ्मतिमतांश्रेष्ठतच्छृणुष्वब्रवीमिते सुराणांहियथा
विष्णुस्तेजसांचयथारविः मेरुःशिखरिणांयद्वद्वैनतेयस्तुपक्षिणां तीर्थानांतुयथागंगाप्रजानांतुयथावणिक् श्रेष्ठंसर्व
व्रतानांतुतथामासोपवासकं सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयद्भवेत् सर्वदानोद्भवंवातल्लभेन्मासोपवासकृत् अग्निष्टोमा
दिभिर्यज्ञैर्विधिवद्भूरिदक्षिणैः नतत्पुण्यमवाप्नोतियन्मासपरिलंघनात् तेनदत्तंहुतंजप्तंतपस्तप्तंस्वधाकृतं यःकरोति
विधानेननरोमासचतुष्टयं प्रविश्यवैष्णवंयज्ञंतत्राभ्यर्च्यजनार्दनं गुरोराज्ञांततोलब्ध्वाकुर्य्यान्मासोपवासकं वैष्ण
वानियथोक्तानिकृत्वासर्वव्रतानिच द्वादश्यादीनिपुण्यानिततोमासमुपावसेत् अतिकृच्छ्रपराकंचकृच्छ्रचांद्रायणंत

था मासोपवासंकुर्वीतज्ञात्वादेहबलाबलं बानप्रस्थोयतिर्वापिनारीवाविधवामुने मासोपवासंकुर्वीतगुरुंविज्ञापये
ततः आश्विनस्यामलेपक्षेएकादश्यामुपोषितः व्रतमेतद्गृह्णीयाद्यावात्रिंशद्दिनावधि वासुदेवंसमुद्दिश्यकार्त्ति
कंसकलंनरः मासंचोपवसेद्यस्तुसमुक्तिफलभाग्भवेत् अच्युतस्यालयेभक्त्यात्रिकालंकुसुमैःशुभैः मालतींदीवरैः
पद्मैः कमलैस्तुसुगंधिभिः कुंकुमोशीरकर्पूरैर्विलिप्यवरचंदनैः नैवेद्यैर्धूपदीपाद्यैरर्चयेत्तुजनार्दनं मनसाकर्मणा
वाचापूजयेद्गरुडध्वजं कुर्य्यान्नरस्त्रिषवणंवृद्धक्तोजितेंद्रियः नाम्नामेवजपालापंविष्णोः कुर्य्यादहर्निशं भक्त्या
विष्णोःस्तुतिर्वाच्यामृषावादंविवर्जयेत् सर्वसत्त्वदयायुक्तःशांतवृत्तिरहिंसकः सुप्तोवाह्यासनस्थोवावासुदेवंप्रकी
र्तयेत् स्मृत्यालोकनगंधादिस्वादनंपरिकीर्त्तितं अन्नस्यवर्जयेत्सर्वंग्रासानांचाभिकांक्षितं गात्राभ्यंगंशिरोभ्यं
गंतांबूलंसविलेपनं व्रतस्थोवर्जयेत्सर्वंयच्चान्यत्रनिराकृतं व्रतस्थोनस्पृशेत्कंचिद्विकर्मस्थान्नचालपेत् देवतायतने
तिष्ठन्गृहस्थोव्रतंचरेत् कृत्वामासोपवासंतुयथोक्तविधिनानरः नारीवाविधवासाध्वीवासुदेवंसमर्चयेत् अन्यूना
धिकमेवंतुव्रतंत्रिंशद्दिनैरिदं कृत्वामासोपवासंतुसंयतात्माजितेंद्रियः ततोऽर्चयेन्महद्भक्त्याद्वादश्यांगरुडध्वजं पूज
येत्पुष्पमालाभिर्गंधधूपनिवेदनैः वस्त्रालंकारवाद्यैश्चतोषयेदच्युतंनरः स्नापयेत्तुहरिंभक्त्यातीर्थचंदनवारिभिः चं
दनेनानुलिप्तांगंपुष्पधूपैरलंकृतं वस्त्रदानादिभिश्चैवभोजयेत्तुद्विजोत्तमान् दद्याच्चदक्षिणांतेभ्यः प्रणिपत्यक्षमा
पयेत् क्षमापयित्वाविप्रांश्चविसृज्याभ्यर्च्यभोज्यच एवंवित्तानुसारेणभक्तियुक्तेनचेतसा एकंमासोपवासंतुकृ
त्वाऽभ्यर्च्यजनार्दनं भोजयित्वाद्विजांश्चैवविष्णुलोकेमहीयते एवंमासोपवासान्हिसम्यक्कृत्वात्रयोदश समा
पयेत्ततःशक्त्याविधिनायेनतच्छृणु कारयेद्वैष्णवंयज्ञमेकादश्यामुपोषितः पूजयित्वाचदेवज्ञमाचार्य्यानुज्ञ
याहरिं अर्चयित्वाततोभक्त्याअभिवाद्यगुरुंतथा भोजनीयान्यासनानिब्रह्मसूत्राणिचैवहि दत्त्वाचैवद्विजाग्र्येभ्यः

पूजयित्वाप्रणम्यच ततोऽनुकल्पयेच्छत्त्याशय्यायांकीर्तयंतिवै येप्रयच्छंतिविप्रायेततरंतिभवार्णवं आनंदार्णव
मग्नश्चदुःखसंसारबंधनैः नबाध्यतेनरोनित्यंवासुदेवमनुस्मरन् स्थावरेजंगमेसर्वेस्थूलेसूक्ष्मेशुभाशुभे विष्णुं
पश्यतिसर्वत्रयःसविष्णुःस्वयंनरः एवंविष्णुमयंज्ञात्वात्रैलोक्यंसचराचरं यस्यशांतामतिस्तेनपूजितोगरुडध्वजः
इतिकल्पानुकल्पानांव्रतानामुत्तमस्यच करणाच्चमहाराजतथाविष्ण्वर्चनान्नरः विष्णुलोकमवाप्नोतिप्रसादा
च्चक्रपाणिनः विधिर्मासोपवासस्ययथावत्परिकीर्तितः तवस्नेहान्मुनिश्रेष्ठसर्वलोकहितायच कृत्वाश्रुत्वातु
यंभक्त्यानरोविष्णुपुरींव्रजेत् नाभक्तायप्रदातव्यंनदेयंदुष्टचेतसे इतिविष्णुरहस्योक्तं मासोपवासव्रतम्
अथास्यप्रयोगः तिथ्यादिसंकीर्त्यात्मनोऽशेषपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीमहाविष्णुप्रीत्यर्थंमासो
पवासव्रतंकरिष्ये तत्रप्रत्यहंत्रिकालस्नानं विष्णुमंत्रजपः विष्णुपूजनं तुलसीदलसहितपुष्पादिसमर्पणं निषिद्धा
लापवर्जनं पुराणपठनं श्रवणंच ब्राह्मणपूजनं यथाशक्तिदानं एवमादिनियमैर्व्रतंयथाशक्तिसमाप्यांते शुक्लैकाद
श्यामुद्यापनंकुर्यात् उक्तप्रकारेणाचार्यंवृत्वासर्वतोभद्रकलशेहैमंलक्ष्मीनारायणं सहस्रशीर्षेत्यादिपुरुषसूक्तमंत्रै
र्द्वादशाक्षरमनुनावासंस्थाप्य पूजयित्वाकथाश्रवणादिनारात्रिमतिवाह्य प्रातःस्थंडिलेऽग्निंप्रतिष्ठाप्य अन्वा
दध्यात् तत्रप्रधानंलक्ष्मीनारायणं पायसद्रव्येणसहस्रसंख्याकाहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यापक्षे एवं
होमंसमाप्यपीठंगांचाचार्यायदत्त्वा वेदशास्त्रसंपन्नान्त्रिंशद्ब्राह्मणान्वस्त्रान्नदानभूषणादिभिःसंपूज्यत्रिंशद्गा
स्तन्मौल्यंवादक्षिणात्वेनदत्त्वा सोपस्करांशय्यां ज्ञानादिगुणवतेद्विजायदत्त्वा सदन्नेन ब्राह्मणान्संतोष्याशिषो
गृहीत्वा विष्णुलोकगमनार्थंद्विजान्प्रार्थयेत् भोद्विजाअनुमोदध्वंभवतांकृपयाऽधुना सर्वपापविनिर्मुक्तोविष्णुलोकं
व्रजाम्यहम् ततोद्विजानांप्रतिवचनं व्रजव्रजनरश्रेष्ठविष्णुलोकमनामयं विमानंवैष्णवंदिव्यंसपर्यापरिकल्पितं

तेनविष्णुपदंयाहिसच्चिदानंदरूपिणंततोदीनानाथादीन्भूरिदक्षिणयासंतोष्य स्वयंमौनीभुंजीत अत्राशक्तेनकंद मूलफलादिना मासोपवासव्रतशेषंविप्रानुमत्यासमापनीयं एवंकृत्वासर्वपापविमुक्तोभवति एवमेवचातुर्मास्य व्रतोद्यापनमपिविधेयम् ॥ इतिविष्णुरहस्योक्तंमासोपवासव्रतोद्यापनं अथाश्विनशुक्लद्वादशीकृत्यं नारदीये द्वादश्यामिषशुक्ले गांदत्त्वानत्वाविसर्जयेत् ॥ गंधाद्यैरुपचारैस्तांतदग्रेभोजयेद्द्विजान् मधुरान्नेनवस्त्राढ्यां सौवर्णांदक्षिणांददेत् व्रतेनानेनसंतुष्टःपद्मनाभोद्विजोत्तम श्वेतद्वीपंगतिंदद्यादिहभोगांश्चशाश्वतान् आश्विन शुक्लैकादश्यामुपवासजागरणादिकंकृत्वा द्वादश्यादिषु विष्णुपूजादिकं कुर्यात् तदुक्तंब्रह्मपुराणे सोपवासै श्चकर्त्तव्यएकादश्यांप्रजागरः द्वादश्यांवासुदेवश्चपूजनीयश्चसर्वदा यात्रोत्सवश्चकर्त्तव्यस्त्रयोदश्यांतुवैष्णवैः उप वासश्चतुर्दश्यांपौर्णमास्यांहरिंव्रजेत् अथपद्मनाभद्वादशीव्रतं हेमाद्रौ धरणीव्रतेषु वाराहे दुर्वासाउवाच तद्वदाश्वयुजेमासिद्वादशींसितपक्षिणीं संकल्प्याभ्यर्चयेद्देवंपद्मनाभंसनातनं पद्मनाभायवैपादौकटिंवैपद्मयो नये उदरंसर्वदेवायपुष्कराक्षायवैउरः अव्ययायतथाबाहूप्राग्वदस्त्राणिपूजयेत् प्रभवायाशिरः पूज्य प्राग्वदग्रेघटंन्यसेत् तमेवदेवंसंपूज्यगंधपुष्पादिभिःक्रमात् प्रभातायांतुशर्वर्य्यांब्राह्मणायनिवेदयेत् प्रीयतांपद्म नाभोमेपद्मनाभस्वरूपकइतिमंत्रः इतिपद्मनाभद्वादशीव्रतं अस्यांविष्ण्वालयेदीपदानं महापुण्यकरं अथकथा आसीत्कृतयुगेराजाभद्राश्वोनामवीर्यवान् तस्यनाम्नाऽभवद्वर्षंभद्राश्वंनामनामतः तस्यागस्त्यःकदाचित्तुगृहमाग त्यभूपतेः उवाचपंचरात्रंतुवसामिभवतोगृहे तंराजाशिरसानत्वास्थीयतामित्यभाषत तस्यकांतिमतीनाम्नाभार्या परमशोभना तामागतांतथादृष्ट्वारूपतेजोन्वितांशुभां सपत्न्यश्चभयात्तस्याःकुर्वंत्यःकर्मशोभनाः साधुसाधुजग न्नाथःस्त्रीशूद्राःसाधुसाध्विति ॥ एवमुक्त्वाननर्तोच्चैरगस्त्योराजसन्निधौ ॥ किंहर्षकारणंब्रह्मन्येनैवंनृत्य

तेजवान् ॥ अगस्त्यउवाच ॥ इयंराज्ञीत्वदीयाभूद्दासीवैश्यस्यवैदिशे नगरे हारिदत्तस्य त्वमस्याः
पतिरेवच तस्यैवकर्मकारोऽभूच्छूद्रोविंध्येतिनामतः सवैश्योऽश्वयुजेमासि द्वादश्यांनियतः शुचिः स्वयं
विष्ण्वालयंगत्वागंधपुष्पादिभिर्हरिं समभ्यर्च्यगृहंप्रायाद्भवंतौरक्षपालकौ स्वगृहेस्थाप्यदीपानांज्वालना
र्थंगृहांगणे गतेतस्मिन्भवंतौतद्दीपप्रज्वालनेस्थितौ यावत्प्रभातारजनीनिःशादयेननरोत्तम ततःकालेनमहताम्रुतौ
द्वावपिदंपती तेनपुण्येनतेजन्मप्रियव्रतगृहेऽभवत् इयंचपत्नीतेजातायावैश्यपरिचारिका पारक्यस्यापिदीपस्य
ज्वालितस्यहरेर्गृहे इयंव्युष्टिः पुराजाताभक्तियुक्तस्यतेनृप स्वेनयःपुनरर्थेनविष्णुमभ्यर्च्यदीपकं ज्वालयेत्तस्यय
त्पुण्यंसंख्यातुंनैवशक्यते इतिवाराहेधरणीव्रतेषुपद्मनाभद्वादशीव्रतेदीपदानमाहात्म्यं अस्यामेवभाविष्योत्तरोक्तं
पुत्रप्राप्तिव्रतं युधिष्ठिरउवाच ऋणैस्त्रिभिःपरिवृतःपुरुषोजायतेकिल ऋणत्रयात्प्रमुच्येतसपुनःपुत्रदर्शनात् पुन्ना
म्नोनरकाद्यस्मात्पितरंत्रायतेसुतः तस्मात्पुत्रइतिप्रोक्तःस्वयमेवस्वयंभुवा दिगंबरंगतव्रीडंजटिलंधूलिधूसरं
पुण्यहीनानपश्यंतिगंगाधरमिवात्मजं तस्मात्सुपुत्रलाभाययद्व्रतंतदुदीरय श्रीकृष्णउवाच एकादश्यांचाश्व
युजेस्नात्वोपोष्यार्चयेद्धरिं गांरात्रौपूजयेद्दद्यात्सवत्सांगांगवाह्निकं अपरेऽह्नितथाभ्यर्च्यनिशिभुंजीतवाग्यतः
अपराजितोऽजातशत्रुःपुरुहूतःपुरंदरः वर्द्धमानःसुरेशश्चमहाबाहुःप्रभुर्विभुः संभूतिःसुमनाश्चैवसुप्रचेताइति
रयेत् एवंद्वादशभिर्विप्रैर्मासैर्वापारयेद्व्रतं व्रतांतेजुहुयाद्देभिर्नामभिर्घृतपायसं ब्राह्मणान्भोजयेत्पश्चात्क्षीरान्नंमास
संख्यया मासेमासेयथाशक्तिदानंप्रार्थनमेवच यथाऽदितेर्भवान्पुत्रःशाश्वतश्चाक्षयोऽच्युतः तथाभवतुमेदेवपुत्रो
जन्मनिजन्मनि सुरभीवैष्णवीदेवीब्रह्मण्यादेवपूजिता गृहाणेमंमयादत्तंपिंडंसतृणमूलकं वस्त्राभरणगो
दानैर्ब्राह्मणान्प्रीणयेद्गुरुम् इतिभविष्योत्तरोक्तंपुत्रप्राप्तिव्रतं ॥ अथाश्विनशुक्लद्वादशीव्रतंभविष्ये पुण्यमाश्वयु

जेमासिविशोकद्वादशीव्रतं दशम्यांलघुभुग्विद्वानारभेन्नियमेनतु उदङ्मुखःप्राङ्मुखोवादंतधावनपूर्वकं एका
दश्यांनिराहारःसमभ्यर्च्यचकेशवं श्रीशंचाभ्यर्च्यविधिवद्भोक्ष्यामितुपरेऽहनि एवंनियमकृत्सुत्वाप्रातरुत्थायमान
वः स्नात्वासर्वौषधिप्रुतपंचगव्यजलेनतु शुक्लांबरधरस्तद्वत्पूजयेत्श्रीशमुत्पलैः विशोकायनमःपादौजंघेच
वरदायच श्रीशायजानुनीतद्वदूरूचजलशायिने कंदर्पायनमोगुह्यंमाधवायनमःकटिं दामोदरायेत्युदरंपार्श्वेच
विपुलायवै नाभिंतुपद्मनाभायहृदयंमन्मथायच श्रीधरायविभोर्वक्षःकरौमधुनिहेनमः चक्रिणेवामबाहुंचदक्षिणं
गादिनेनमः वैकुंठायनमःकंठमास्यंयज्ञमुखायच नासामशोकनिधयेविश्वामित्रायचक्षुषी ललाटवामनायेतिरामाये
तिपुनर्भ्रुवौ अलकान्माधवायेतिकिरीटंविश्वरूपिणे नमःसर्वात्मनेतद्वत्शिरइत्यभिपूजयेत् एवंसंपूज्यगोविंदंफल
माल्यानुलेपनैः ततस्तस्याग्रतोभव्यस्थंडिलंकारयेन्मृदा चतुरस्रंसमंताच्चारत्निमात्रमुदक्प्लवं नदीवालुकयातत्र
लक्ष्म्याःप्रतिकृतिंन्यसेत् स्थंडिलेसूर्पमारोप्यलक्ष्मीमित्यर्चयेन्नरः नमोदेव्यैनमःशांत्यैनमोलक्ष्म्यैनमःश्रियैनमः
पुष्टैयनमस्तुष्टैविशोकायैनमोनमः विशोकवस्तुसंपत्यैविशोकैश्वर्यसिद्धये ततःशुक्लांबरः सूर्पवेष्ट्यसंपूज्यसत्फ
लैः भक्ष्यैर्नानाविधैस्तद्वत्सुवर्णकमलेनच रजनीषुचसर्वासुपिबेद्दर्भोदकंबुधः सर्वासुरजनीष्वव्रताकादिवसानांरा
त्रिष्वित्यर्थः ततस्तुगीतनृत्यादिकारयेत्सकलांनिशां यामत्रयेततोयातेसुत्वाभ्युत्थायमानवः अभिगम्यच
विप्राणांमिथुनानितदार्चयेत् शक्तितस्त्रीणिचैकवावस्त्रमाल्यानुलेपनैः शयनस्थानिपूज्यानिनमोऽस्तुजलशायिने
ततस्तुगीतनृत्यांतेरात्रिजागरणेकृते प्रभातेविमलेस्नानंकृत्वादांपत्यमर्चयेत् भोजनंतुयथाशक्त्यावित्तशाठ्यवि
वर्जितः भुक्त्वाश्रुत्वापुराणतुतद्दिनंचातिवाहयेत् अनेनविधिनासर्वंमासिमासिसमाचरेत् व्रतांतेशयनंदद्या
द्गुडधेनुसमन्वितं सोपधानकशय्यांचस्वास्तरावरणान्वितां यथानलक्ष्मीर्देवेशत्वांपरित्यज्यगच्छति तथा

सुरूपतारोग्यमशोकस्त्वस्तुमेसदा यथादेवेनरहितानलक्ष्मीर्जायतेक्वचित् तथाविशोकतामेऽस्तुभक्तिरग्र्याच्च
केशवे मंत्रेणानेनशयनंगुडधेनुसमन्वितं सूर्पंचलक्ष्म्यासहितंदातव्यंभूतिमिच्छता उत्पलंकरवीरंचत्राणमम्लां
नपंकजं केसरंसिंधुवारंचमल्लिकाशोकपाटला ॥ कदंबंकुब्जकंजातीशस्तान्येतानिपूजने युधिष्ठिरउवाच गुड
धेनोर्विधानंचसमाचक्ष्वजगत्पते किंरूपंकेनमंत्रेणदातव्यमितिहोच्यतां श्रीकृष्णउवाच गुडधेनुविधानस्ययद्रूप
मिहयत्फलं तदिदानींप्रवक्ष्यामिसर्वपापप्रणाशनं कृष्णाजिनंचतुर्हस्तंप्राग्ग्रीवंविन्यसेद्भुवि गोमयेनतुलिप्तायां
कुशानास्तीर्य्यसर्वतः लघ्वेणकाजिनंतद्वद्वत्सस्येपरिकल्पयेत् प्राङ्मुखींकल्पयेद्धेनुमुदक्पादांसवत्सकां उत्तमागु
डधेनुः स्यात्सदाभारचतुष्टयं वत्संभारेणकुर्वीतभाराभ्यांमध्यमामता अर्द्धभारेणवत्सः स्यात्कनिष्ठाभारकेणतु
चतुर्थांशेनवत्सः स्याद्गृहवित्तानुसारतः धेनुवत्सौघृतास्यौतुसितसूक्ष्मांबरावृतौ शुक्तिकर्णाविक्षुपादौशुचिमुक्ता
फलेक्षणौ सितसूत्रसिरालौतुसितकंबलकंबलौ ताम्रगंडुकपृष्ठौतुसितचामररोमकौ विद्रुमभ्रूयुगोपेतौनवनीतस्त
नाविमौ क्षौमपुच्छौकांस्यदोहाविंद्रनीलकतारकौ इत्येवंरचयित्वातुधूपदीपैरथार्चयेत् यालक्ष्मीः सर्वभूतानांया
चदेवेष्ववस्थितः धेनुरूपेणसादेवीममपापंव्यपोहतु विष्णोर्वक्षसियालक्ष्मीः स्वाहायाचविभावसौ चंद्रार्कशक्रश
क्तिर्याधेनुरूपाऽस्तुसाश्रिये चतुर्मुखस्ययालक्ष्मीर्लक्ष्मीयाधनदस्यच यालक्ष्मीर्लोकपालानांसाधेनुर्वरदाऽस्तुमे स्व
धात्वंपितृमुख्यानांस्वाहायज्ञभुजांयतः सर्वपापहराधेनुस्तस्माच्छांतिंप्रयच्छमे एवमामंत्र्यतांधेनुंब्राह्मणायनिवेदये
त् विधानमेतद्धेनूनांसर्वासामिहपठ्यते यास्तुपापविनाशिन्यःश्रूयंतेदशधेनवः तासांस्वरूपंवक्ष्यामिनामानिचन
राधिप प्रथमागुडधेनुःस्याद्घृतधेनुस्तथाऽपरा तिलधेनुस्तृतीयास्याच्चतुर्थीजलसंज्ञिका क्षीरधेनुश्चविख्याताम
धुधेनुस्तथाऽपरा सप्तमीशर्कराधेनुर्दधिधेनुस्तथाऽष्टमी रसधेनुश्चनवमीदशमीस्यात्स्वरूपतः कुंभाःस्युर्द्रवधेनूना

नितरांसांतुराशयः सुवर्णधेनुमप्यत्रकेचिदिच्छंतिसूरयः नवनीतेनधान्यैश्चतथाप्यन्येमहर्षयः एतदेवविधानंस्या
त्तएवोपस्कुरामताः मंत्रावाहनसंयुक्ताःसदापर्वणिपर्वणि यथाश्रद्धंप्रदातव्याभुक्तिमुक्तिफलप्रदाः गुडधेनु
प्रसंगेनसर्वास्तनमयोदिताः अशेषयज्ञफलदाःसर्वाःपापहराःशुभाः व्रतानामुत्तमंयस्माद्विशोकद्वादशीव्रतम्
तदंगत्वेनचैवेषागुडधेनुःप्रशस्यते अयनेविषुवेचैवव्यतीपातेऽथवापुनः गुडधेन्वादयोदेयाउपरागादिपर्वसु विशो
कद्वादशीचैषासर्वपापहराशुभा यामुपोष्यनरोयातितद्विष्णोःपरमंपदं इहलोकेतुसौभाग्यमारोग्यायुष्यमे
व च वैष्णवंपदमाप्नोतिमरणेस्मरणंहरेः नृत्यगीतपरोनित्यंसोऽपितत्फलमाप्नुयात् इतिनरवरइत्थंयःशृणो
तीहमर्त्योमधुमुरनरकारेरर्चनंवाथपश्येत् मतिमपिचनराणांयोददातीहलोके वसतिसविबुधौघैःपूज्यमानःसदैव
॥ इतिविशोकद्वादशीव्रतम् ॥
अथाश्विनशुक्लत्रयोदश्यामशोकत्रिरात्रव्रतंनारदीये इषशुक्लत्रयोदश्यांत्रिरात्राशोककव्रतम् हैमंह्यशोकंनिर्माय
पूजयित्वायथाविधि उपवासपरानारीनित्यंकुर्यात्प्रदक्षिणं अष्टोत्तरशतंविप्रमंत्रेणानेनसादरं हरेणनिर्मितःपूर्वं
त्वमशोककृपालुना लोकोपकारकरणत्वत्प्रसादाच्छिवांप्रिये ततस्तृतीयेदिवसेवृक्षेतास्मिन्वृषध्वजं समभ्यर्च्यवि
धानेनद्विजान्संपूज्यदापयेत् एवंकृतव्रतानारीवैधव्यंनाप्नुयात्क्वचित् पुत्रपौत्रादिसहिताभर्तुःस्यादतिवल्लभा आ
श्विनशुक्लचतुर्दश्यां धर्मराजप्रतिमादानं नारदीये इषशुक्लचतुर्दश्यांधर्मराजंद्विजोत्तम गंधाद्यैःसम्यगभ्यर्च्यसौ
वर्णंभोज्यवाडवं दद्यात्तस्मै धर्मराजःप्रीयतामितिनारद एवंयःकुरुतेधर्मप्रतिमादानमुत्तमं सभुक्त्वेहवरान्भोगा
न्दिवंधर्मज्ञयाव्रजेत् ॥ आश्विनपौर्णमासीकृत्यान्युच्यंते तत्रादौससुवर्णघृतपूर्णकांस्यपात्रदानं मत्स्यपुराणेआ
श्विनेपंचदश्यांतुयोदद्याद्धेमसंयुतं परांसिद्धिमवाप्नोतिपुनरावृत्तिदुर्लभां हेमसंयुतंघृतपूर्णंकांस्यपात्रंदद्यादित्यर्थः

ससुवर्णंतथादत्वादीप्तांगस्त्वभिजायते अत्राश्विनीप-
तथाचविष्णुधर्मोत्तरेआश्वयुज्यांकांस्यपात्रंघृतपूर्णंद्विजातये ससुवर्णंतथादत्वा एतेषामेवदानानांफलंदशगुणंभवेत् महत्पूर्वासु
गोनविवक्षितः तथाचानंतरंपौर्णमासीपुसर्वासुमासर्क्षसहितासुच एतेषामेवदानानांफलंदशगुणंभवेत् दानोपवासादिचाक्षयंपरिकीर्त्तितमिति विष्णुव
चेतासुफलमक्षयमश्नुते महत्पूर्वासुदृश्येतेसहितौचेंदुगीष्पती तत्रदानोपवासादिचाक्षयंपरिकीर्त्तितमिति विष्णुव
चनेनलक्षितासहितामाससंज्ञानिमित्तर्क्षगौ एतच्चपौर्णमासीसाधारणमेववोध्यं अथैतस्मिन्शुक्लपक्षेदशम्यादिपौर्ण
मास्यंततिथिपुनवान्नेष्टिविधानंतत्राश्विनाधिकारे ब्रह्मपुराणे शुक्लपक्षेनवंधान्यंपक्वंज्ञात्वासुशोभनं सुतिथौचसुनक्ष
त्रेमुहूर्त्तेचशुभेसति गच्छेत्क्षेत्रेविधानेननृत्यवाद्यपुरःसरः तत्रैववन्हिंप्रज्वाल्यधान्यैः संतर्प्यशास्त्रवित् स्वगृह्यो
क्तविधानेनपूजांकुर्याद्विचक्षणः होमंकृत्वाततःपश्चान्नवेद्यान्यंविभूषितं पुष्पैर्वस्त्रैःफलैर्मूलैर्हेरुत्यश्वरथसंयुतः
तेनदेवान्पितॄन्वंपूर्वंतर्पयित्वायथाक्रमं विभज्याच्चयथाशक्त्यादेवताःसस्यरक्षिणः नववस्त्राद्यतःस्रग्वी
स्वनुलिप्तः स्वलंकृतः स्थितःपूर्वमुखस्तुष्टोब्रह्मघोषपुरःसरः शृण्वन्ब्रह्म स्वंहृष्टोमंगलालंभनादिमान्
प्राश्नीयाद्दधिसंयुक्तंनवंविप्राभिमंत्रितं ॥ पितॄनिति व्रीहिपाकसमये व्रीहिभिःश्राद्धं कुर्यादित्यर्थः हारी
तोप्याह गृहमेधीशरद्वसंतयोर्व्रीहियवाभ्यांयजेत् वनीवर्षासुश्यामाकैः गृहीगृहस्थः वनीवानप्रस्थः वर्षासु
श्रावणशुक्लपक्षे इदंचश्राद्धंपार्वणंनित्यं व्रीहियवपाकेचेतिविष्णुना नित्यप्रकरणे पठनात् इदंचनवैर्व्रीहि
भिस्तदभावेपुरातनैस्तदभावेचान्नांतरैरनिषिद्धैरवश्यंकार्यमिति गोभिलसूत्रटीकायां इदमाश्विनीकर्मोक्तमा
श्वलायनेन आश्वयुज्यामाश्वयुजेकर्मेति अत्रपूर्वाण्हव्यापिनीग्राह्या दैवकर्मत्वात् आग्रयणंतुपर्वणि
कार्यंशरद्याग्रयणंयत्तुपर्वणिस्यात्तदुच्यतेइतिशौनकोक्तेः तत्रापिशेषपर्वणिकार्यमितिप्रागुक्तं तच्चदर्शेष्ट्याःपौ
र्णमासेष्ट्याश्चप्राग्भवति दर्शेष्ट्याः पूर्वमुक्तमाग्रयणं प्राक्पौर्णमास्यांचतत् इतिदीपिकोक्तेः तत्राग्रयणंत्रेधा

व्रीह्याग्रयणं यवाग्रयणं श्यामाकाग्रयणंचेति एषांकालः श्रुतौगृहमेवव्रीहियवाभ्यांशरद्वसंतयोर्यजेत् श्याम
केर्नीवारैर्वपास्वापत्कालंविनानवान्नेनपुराणैर्वेति ॥ तत्राऽपि श्यामाकाग्रयणमनित्यमितरेतु अनाहिताग्नेर्नित्
यवाग्रयणंचकर्त्तव्यमितिस्मार्तानांश्रुतावुक्तत्वात् सूत्रेव्रीहियवदेवतासंबंधानामेव मंत्रेणाम्नाताच्च आहित
ग्नेस्तुयवाग्रयणस्याप्यतिनित्यत्वं अपिवाक्रियायवेष्वितिसूत्रात् यद्वा व्रीह्याग्रयणेनसमानतंत्रता॥ श्याम
केस्तुप्रस्तरंकुर्यात् यवाग्रयणं यदिवा तदपि समानतंत्रमित्यादिनाग्रयणस्मृतौ परिश्रमवतां सुलभमि
त्यलं इदंच पर्वाभावे देवनक्षत्रेकृत्तिकाविशाखांते कार्य्यमितिस्मृत्यर्थसारेउक्तं वौधायनीयकेशवस्वामि
नाप्येवमुक्तं यदाश्विनपौर्णमास्यांक्रियते तदेककालत्वादाश्वयुजेकर्मणोऽस्यचसमानतंत्रताभवति तदेतद्वृत्ति
कृताएकवर्हिरिध्माज्येतिसूत्रेस्पष्टमुक्तं एतदकरणे प्रायश्चित्तमुक्तं चंद्रिकायां कात्यायनः नित्ययाज्यात्यये
चैववैश्वदेवाक्षयस्यच अनिष्ट्वानवयज्ञेननवान्नप्राशनेतथा ॥ वैश्वानरायकर्त्तव्यश्चरुर्वैश्वानरोभवेत् ॥ कारि
कापि अकृत्वाग्रयणंचैव नवान्नंयदिवानरैः वैश्वानरायकर्त्तव्यश्चतुःपूर्णाहुतिस्तुवेति ॥ ऋग्विधानेतु समि
दारण्यमंत्रंचवर्षेवर्षेजपेच्छतं आग्रयणंयदाशून्यंतदासंपूर्णमेतिवादित्युक्तं एतच्चापदि मलमासेच कर्त्तव्यम
न्यथानेतिप्रागुक्तं अन्योप्याहिताग्न्यादिविशेषःशौनकादेर्ज्ञेयः ब्रह्मपुराणे आश्वयुज्यांवालुकायांनिकुंभोवालु
कार्णवात् आयातिसनयासार्द्धंकृत्वायुद्धंसुदारुणं तस्मात्तत्रनरैर्मार्गाःस्वगृहस्यसमीपगाः शोभितव्याःप्रय
त्नेनभूपितव्याश्चमंडलैः पुष्पार्घ्यफलधूपान्नसर्षपप्रकरैस्तथा वेश्मानिभूषितव्यानिनानारंगैश्चसर्वतः सुस्नातैर
नुलिप्तैश्चनरैर्भाव्यसबालकैः दिवातत्रनभोक्तव्यंमानुषैश्चविवेकिभिः स्त्रीवृद्धमूर्खबालैश्चभोक्तव्यंपूजितैःसुरैः पूज्या
श्चसफलैःपात्रैस्तथाद्वाराध्वंभित्तिभिः द्वारोपांतप्रदीपाश्चसंपूज्योहव्यवाहनः यवाक्षतघृतोपेतैस्तंदुलैश्चसुतर्पितः

रुद्रःसभार्यःस्कंदश्चतथानंदीश्वरोमुनिःगोमद्भिःसुरभिःपूज्याछागवद्भिर्हुता
संपूजितव्यःपूर्णेंदुःपयसापायसेनच रुद्रःसभार्यःस्कंदश्चतथानंदीश्वरोमुनिःगोमद्भिःसुरभिःपूज्याछागवद्भिर्हुता
शनःडौरश्ववद्भिर्वरुणोगजवद्भिर्विनायकः पूज्यःसाश्वैश्चरेवंतोमहाविभवविस्तरैः ततःपूज्योनिकुंभस्तुसमायैस्ति
लतंदुलैः सुगंधिभिर्घृतोपेतैःकृशरान्नैश्चभूरिभिः ब्राह्मणान्भोजयित्वातुभोक्तव्यंमांसवर्जितं ततःप्रभातसमयेऽनु
लिप्तैःस्वलंकृतैः मंगलालंभनंकार्यंवह्निसंपूजनंतथा भोक्तव्यंब्राह्मणैःसार्द्धंक्रीडितव्यंयथासुखं तस्यांरात्र्यांव्यती
तायांद्वितीयायामनंतरं प्रभातेकर्दमाक्तैस्तुक्रीडितव्यंपिशाचवत् निर्जलैश्चाथसर्वत्ररुद्रवत्सर्ववेश्मसु आनीयचा
थमित्राणिलेपनीयानिकर्दमैः कामाग्निजनकैर्नाट्यैः स्त्रीपुंल्लिंगानुवादिभिः वाचापैशाचमाचारंकीर्त्तयद्भिरितस्त
तः तस्मिन्नहनिपूर्वाह्णेनिकुंभस्यानुयायिनः क्रांतवेषाः पिशाचाश्चप्रविशंतिनरांश्चतान् अपराह्णेततःस्ना
तांस्त्यक्त्वागच्छंतिवंधुवत् दर्पाभिमानदोषेणतत्रयेनागतानराः नपूजयंतिमोहेनक्रीडनंनैवकुर्वते ता
न्निर्दहंतितेकोपात्पिशाचारौद्रदर्शनाः ततःस्नातैर्नरैःपूज्योदेवोदामोदरोहरिः संपूज्यविप्रान्भोक्तव्यमनुलि
प्तैःस्वलंकृतैः वंधुमित्रकलत्रैश्चसहभृत्यायथाक्रमं ततःप्रभृतिषण्मासान्स्वेषुवेश्मसुमानवैः अग्निःसन्निहि
तःकार्य्योरात्रौसिद्धालकस्तथा मासंसमग्रंदेयश्चदीपोनित्यंगृहाद्बहिरिति ॥ अस्यामेवपौर्णमास्यांकोजागर
व्रतं नारदीये आश्विनेमासिपूर्णायांव्रतंकोजागराभिधं तत्रस्नातोविधानेनसोपवासोजितेंद्रियः लक्ष्मीम
भ्यर्च्यसौवर्णेघटेस्थाप्याथताम्रजे मृण्मयेवासवस्त्रांतामुपचारैः पृथग्विधैः ततःसायंतनेकालेऽभ्युदिते
तारकाधिपे हैमान्रौप्यान्मृण्मयान्वाघृतदीपान्प्रदीपयेत् लक्षंतदर्धमयुतंसहस्रंशतमेववा घृतशर्करसंमिश्रंवि
पाच्यवहुपायसं वंशपात्रेषुसंस्थाप्यकौमुधांशीतदीधितेः याममात्रेगतेरात्र्यालक्ष्म्यैतद्विनिवेदयेत् ततःसं
भोजयेत्तेनविप्रान्भक्त्याशनैःशनैः सहैवजागरंकुर्य्यान्नृत्यगीतसुमंगलैः ततोऽरुणोदयेस्नात्वातांमूर्त्तिगुरवेऽपं

येत् अस्यारात्रौमहालक्ष्मीर्वराभयकराम्बुजा निशीथेचरतेनित्यंकोजागर्तिमहीतले यस्मैवित्तंप्रयच्छामिजाग्रते पूजकायवै वर्षेवर्षेकृतंचैतद्व्रतंलक्ष्मीप्रतोषणं समृद्धिमेहिकींदद्याद्देहांतेपारलौकिकीमिति तथाचमहार्णवेलैंगेऽपि आश्विनेपौर्णमास्यांतुचरेज्जागरणंनिशि कौमुदीसासमाख्याताकार्य्यालोकैर्विभूतये कौमुद्यांपूजयेल्लक्ष्मीमिंद्रमैरावणस्थितं सुगंधिभिर्भक्ष्यद्रव्यैरात्रौजागरणंचरेत् निशीथेवरदालक्ष्मीःकोजागर्तीतिवादिनी यस्मैवित्तंप्रयच्छामि अक्षैःक्रीडांकरोतियः नारिकेलैश्चपिटकैःपितृदेवान्समर्चयेत् बंधूंश्चप्रीणयेत्तेनस्वयंतदशनीभवेत् मदनरत्ने नारिकेलोदकंपीत्वाअक्षैर्जागरणंनिशि तस्मैवित्तंप्रयच्छामियोजागर्तिमहीतले इदंकोजागरव्रतं यद्दिनेपूर्णिमा प्रदोषेनिशीथेचोभयव्यापिनी तद्दिनेकार्य्यं यदातुपूर्वेद्युर्निशीथव्याप्तिस्तदापूर्वा नक्तादिव्रतवदहोरात्रयोगोविशिष्यतेइतिपरेद्युःनक्तादिव्रतयोगेतुरात्रियोगोविशिष्यतेइतिवचनात् लक्ष्मीपूजामंत्रस्तु नमस्तेसर्वभूतानांवरदाऽसिहरिप्रिये यागतिस्त्वत्प्रपन्नानांसामेभूयात्त्वदर्चनात् इंद्रपूजामंत्रस्तु विचित्रैरावतस्थायपौलोम्यालिंगिताय च भास्वत्कुलिशहस्तायसहस्राक्षायतेनमः यवाक्षतघृतोपेतैरित्यत्र यवानां पृथगुपादानात् अक्षतपदंतंडुलविशेषपरं एवमत्राप्यनुसंधेयं लक्ष्मीद्रव्यातिरिक्तार्थमित्यादिसुरपूजनं पूर्वाह्णेस्त्रीवृद्धबालकैस्तुभोक्तव्यंपूजितैःसुरैरित्यत्रपूर्वाह्णस्यपूर्वाह्णएवकुर्वीतइत्यादिवाक्यात् पूजाकर्त्तव्यव्रतेभोजनस्यतदुत्तरस्यच ततःशरीरस्रोतोभ्योमलविस्पंदविप्लवात् अन्नादीनांप्रवेशाच्चस्यादशुचिर्विशेषत इतिवाक्यादाचाराच्चप्राप्तेः दिवातत्रनभोक्तव्यमित्यादिनिषिद्धदिवाभोजनस्त्रीमूर्खादिगोचरतयादिवातनत्वमात्रविधौवाक्यैक्यलाघवंच अन्यथा दिवोर्ध्वामित्यादिपूजनेदिवातनपूजोत्तरकालीनभोजनंचविधेयमितिवाक्यभेदेविशिष्टविधौविधिगोचरत्वलक्षणायाःप्रसंगात् नचकालांतरदीपदनस्य रात्रिकर्त्तव्यत्वस्थैर्य्ये युगपत्तत्रकर्त्तव्याद्वादशैतेमहोत्सवाइत्यनेनैवयौगपद्यविधानात् अ

न्येपिरात्रौकर्त्तव्या एवेतिवाच्यं तत्रेतिपूर्वंप्रक्रांताश्वयुजेमात्रेपरामर्शस्यावश्यकत्वेतत्रेतिपदंतदुपस्थापकमेवलाघ
वात् एवमाकांक्षाविच्छेदं शंखवाद्यरवोन्मिश्रैर्नृत्यगीतैश्वशालिना वन्हिपार्श्वगतैर्नेयाइत्यस्यरात्रिसाहचर्यात् रा
त्रिकालीनत्वंतूक्तंयत्तुकृष्णचतुर्दश्यांरात्रौनिकुंभादिपूजादर्शनोद्भावनंतत्रानुपयुक्तमेवेति स्कांदेऽपि अस्तिकोजाग
रंनामव्रतानामुत्तमंव्रतं यत्कृत्वासमवाप्नोतिजंतुर्लोकाननुत्तमान् पूर्णिमाश्वयुजेमासिकौमुदीपरिकीर्त्तितातत्राराध्य
महालक्ष्मीमिंद्रंचैरावणास्थितं उपवासंप्रकुर्वीतदीपान्दद्याच्चभक्तितः लक्षंतदर्धमयुतंसहस्रंशतमेववा घृतेनदीपये
दीपांस्तिलतैलेनवाव्रती रात्रौजागरणंकुर्यान्नृत्यगीतपुरःसरं यथाविभवतोदेयाःपुरवीथिषुदीपिकाःदेवतायतनेचै
वआरामेषुगृहेषुच ततः प्रभातेसुस्नातः संपूज्यचशतक्रतुं ब्राह्मणान्भोजयेत्क्षीरघृतशर्करपायसैः वासोभिर्दक्षिणा
भिश्वसवस्त्रान्पूजयेद्द्विजान् यथाशक्तिचदातव्यादीपाःस्वर्णविनिर्मिताः एवंनिर्वर्त्यविधिवद्व्रतपारणमाचरेत् व्रत
स्यास्यप्रभावेण कल्पानेवाप्यसंख्यकान् अप्सरोभिःपरिवृतःस्वर्गलोकेमहीयते इहचायुष्यमारोग्यं पुत्रपौत्रा
दिसंपदः लभतेव्रतमाहात्म्यात्कुलश्रैष्ठ्यगुणोत्तरं निशीथेवरदालक्ष्मीः कोजागर्तीतिभाषिणी जगत्त्रभ्रमतेतस्यां
लोकचेष्टावलोकिनी नालिकेरोदकंपीत्वाअक्षक्रीडांसमाचरेत् तस्मैवित्तंप्रयच्छामिकोजागर्तिमहीतले

॥ इतिस्कांदे आश्विन्यांपूर्णिमायांकोजागरव्रतम् ॥

अस्योद्यापनं तिथ्यादिसंकीर्त्य आत्मनःस्वकुलस्यचाखंडितलक्ष्मीप्राप्तिपूर्वकसुखादिप्राप्तये श्रीमहालक्ष्मी
महेंद्रयोः प्रीत्यर्थमाचरितकोजागरव्रतोद्यापनंकरिष्ये तत्रादावाचार्यवरणादिविधानंकृत्वा गणेशपूजादिमंड
लपूजांतंविधाय ततोलक्ष्मीपूजनमिंद्रपूजनंचाविधाय परितोदीपान्घृतेनतिलतैलेनलक्षमयुतंसहस्रं तदर्धंशतंवा
दीपान्यथाशक्तिवीथिषुचतुष्पथेवाप्रज्वाल्य नारिकेलोदकंप्राश्यअक्षैर्दीव्येत् एवंरात्रिमुत्सवेननीत्वा प्रातरग्निंप्र

तिष्ठाप्याऽन्वादध्यात् प्रधानंलक्ष्मीमिंद्रंचप्रत्येकं सहस्रसंख्याहुतिभिर्ब्रह्मादिदेवताग्रहान् लोकपालांश्चैकैकयाहुत्यायथाशक्तिहुत्वा आचार्य्यंसंपूज्यसौवर्णंराजतंवादीपंसुवर्णवर्त्तिसहितंसदक्षिणंदत्वाप्रतिमामप्याचार्याय दत्त्वा घृतशर्करादिनाब्राह्मणान्संतर्प्य तेभ्योदक्षिणादत्त्वाशिषोगृहीत्वा शय्यादिकंयथाशक्तिदत्त्वा भूयसींदक्षिणांदत्त्वेष्टजनैःसहभुंजीत ॥ इतिकोजागरव्रतोद्यापनं ॥ अत्राश्वयुज्यांगजनीराजनं कार्य्यं तच्चवाजिनीराजनवदितिसंप्रदायात् ॥ अत्राश्विनपौर्णमास्यांनारदीयपुराणदानमुक्तं माहात्म्ये पंचविंशतिसाहस्रंनारदीयमथोच्यते तदीपपंचदश्यांतुदद्याद्धेनुसमन्वितं परमांसिद्धिमाप्नोतिपुनरावृत्तिदुर्लभाम् नारदीये यस्त्वेतदिषपूर्णायांधेनूनांसप्तकान्वितं प्रदद्याद्द्विजवर्य्यायसलभेन्मोक्षमेवचेति तुलासंक्रांतौवामनपुराणदानं नारदीये एवंपरंपराप्राप्तंपुराणंवामनंशुभं लिखित्वैतत्पुराणंतुयः शरद्विषुवेऽर्पयेत् विप्रायवेदविदुषेघृतधेनुसमन्वितं ससमुद्धृत्यनरकात्पितॄन्स्वर्गंनयेत्स्वकान् देहांतेभुक्तभोगोऽसौयातिविष्णोः परंपदम् ॥ इतिनारदीयवामनपुराणयोर्दानंमाहात्म्यम् ॥ स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीः १ रणवीरसिंहभूपेशकारिते कृत्यसागरे अभूदाश्विनकृत्यानांरम्योरत्नसमुच्चयः २ इतिश्रीमत्सूर्यवंशावतंसरघुवंशतिलकश्रीरणवीरसिंहमहाराजकारितेकृत्यरत्नाकरेआश्विनमासकृत्यरत्नसमुच्चयः ॥ ॥ छ ॥ ॥

॥ निधिपतिशोधिताश्विनमासस्समाप्तः ॥



॥ श्रीरघुनाथमुद्रायन्त्रालये ॥
लालाशिवरामस्याधिकारेणाश्विनमासेमुद्रितस्समाप्तिमगमत्
संवत् १९४१ मार्गशीर्ष प्र. २३

मध्याविषुवतावुक्ते
ॐअथ कार्त्तिकमासकृत्यनिर्णयः तत्रादौ तुलासंक्रमेप्रागपरादशघटिकाः पुण्यकालः मध्याविषुवतावुक्ते
तिसामन्यवचनात् रात्रौसंक्रमेतु पूर्वोक्तसंक्रमनिर्णयाद्ज्ञेयं कार्त्तिकमासस्य स्नानदानव्रतादावतिप्राश
स्त्यमुक्तं नारदीये, एकतःसर्वतीर्थानिसर्वेयज्ञाःसदक्षिणाः अन्यतःकार्त्तिकोमासःसर्वपुण्याधिकोमतः सुवर्ण
मेरुतुल्यानिसर्वदानानिचैकतः एकतःकार्त्तिकोमासःसदादामोदरप्रियः अव्रतेनाक्षिपेद्यस्तुमासंदामोदरप्रियं तिर्य
ग्योनिमवाप्नोतिसर्वधर्म्मवहिष्कृतः अत्रविष्णुव्रतप्रशंसा तत्रैव व्रतानामिहसर्वेषामेकजन्मानुगंफलं इहवि
ष्णुव्रतानांहिफलंजन्मशताधिकं यतिश्चविधवाचैवविशेषेणवनाश्रमी कार्त्तिकेनरकंयातिस्नानदानव्रतैर्विना तथा
जन्मप्रभृतियत्पुण्यंविधिवत्समुपार्जितं भस्मीभवतितत्सर्वमकृत्वाकार्त्तिकेव्रतं कार्त्तिकेनार्चितोविष्णुर्भक्तियोगेन
येनरैः नरकांस्तेगमिष्यंतियमदूतैःप्रपीडिताः अथकार्त्तिकस्नानं तुलामकरमेषेषुप्रातःस्नानंविधीयते हविष्यं
ब्रह्मचर्य्यंचमहापातकनाशनं अत्रसौरमासउक्तः प्राच्याश्चैतदेवाद्रियंते दाक्षिणात्यास्तु आश्विनस्यतुमासस्यया
शुक्लैकादशीभवेत् कार्त्तिकस्यव्रतानीहतस्यांवैप्रारभेत्सुधीरितिपाद्मोक्तेः भार्गवार्चने प्रारभ्यैकादशींशुक्लामा
श्विनस्यतुमानवः प्रातःस्नानंप्रकुर्वीतयावत्कार्त्तिकभास्करइतिविष्णुधर्म्मोक्तेः हेमाद्रावादित्यपुराणेच पूर्णेचाश्व
युजेमासिपौर्णमास्यांसमाहित इत्युक्ता मासंसमग्रंवृणुयाच्च समाप्यतेकार्त्तिकपौर्णमास्यामिति पौर्णमास्यांस
मापयेदित्याहुः मदनपारिजातेविष्णुः कार्त्तिकंसकलंमासंप्रातः स्नायीजितेंद्रियः जपन्हविष्यभुग्भूत्वासर्वपा
पैःप्रमुच्यते विष्णुः कार्त्तिकोऽग्निदैवत्योऽग्निर्देवानांमुखं तस्मात्कार्त्तिकेमासि वहिःस्नायीगायत्रीजपनिरतः
सकृदेवहविष्याशीसंवत्सरकृतात्पापात्पूतोभवति अत्र प्रातःकालोनोक्तइत्यतोमध्यान्हस्नानेऽपीदं फलं वहिर्ग्रामा
द्गृहाच्च कार्त्तिकंसकलंमासंनित्यस्नायीजितेंद्रियः जपन्हविष्यभुक्शांतः सर्वपापैःप्रमुच्यते नित्यस्नानंप्रा

तःस्नानमितिशंखोक्तेः आचाराच्च सकलमासमित्यनेनैवप्रत्याह्निकेप्राप्ते नित्यपदवैयर्थ्यापत्तिःअत्रस्नानंप्रधानं
हविष्यभोजनादिकमंगमितिसंप्रदायः अत्रदेशाविशेषः कार्त्तिकंप्रक्रम्य कुरुक्षेत्रेकोटिगुणोगंगायामपितत्समः
दुर्लभःकार्त्तिकोविप्रामथुरायांनृणामिह यत्रार्चितःस्वकंरूपंभक्तेभ्यःसंप्रयच्छतीति इदंचस्नानं काशीस्थपंच
नदेप्यतिशस्तं शतंसमास्तुयैस्तप्त्वानरैर्यत्प्राप्यतेफलं तत्कार्त्तिकेपंचनदेसकृत्स्नानेनलभ्यते कार्त्तिकेविंदुती
र्थेयोब्रह्मचर्यपरायणः स्नास्यत्यनुदितेभानौभानुजातस्यभीःकुतइति तथाचकाशीखंडे कार्त्तिकेमेविंदुयात्राकृतायै
र्भक्तितत्परैः विंदुतीर्थकृतस्नानैस्तेषांमुक्तिर्नदूरतः भानुजातोयमः स्नानमंत्रश्चतत्रैव कार्त्तिकेऽहंकरिष्यामिप्रा
तःस्नानंजनार्दन प्रीत्यर्थंतवदेवेशदामोदरमयामह मयासहाश्रियासहेत्यर्थः इमंमंत्रंसमुच्चार्य्यमौनीस्नाया
द्व्रतीनरइति अर्घ्यमंत्रोऽपितत्रैव व्रतिनः कार्त्तिकेमासिस्नातस्याविधिवन्मम "गृहाणार्घ्यंमयादत्तंदनुजेंद्रनिषूदन
नित्येनैमित्तिकेकृष्णकार्त्तिकेपापनाशने गृहाणार्घ्यंमयादत्तंराधयासहितोहरे इमौमंत्रौसमुच्चार्य्ययोनरोऽर्घ्यं
प्रयच्छति सुवर्णरत्नपुष्पांवुपूर्णशंखेनपुण्यवान् सुवर्णरत्नपृथिवीतेनदत्तानसंशयइति एवंसंपूर्णस्नानाशक्तौ
त्र्यहंस्नायात् वाराणस्यांपंचनदेत्र्यहंस्नातस्तुकार्त्तिके अमीहिपुण्यवपुषःपुण्यभाजोऽतिनिर्म्मलाःअथमालाधारणं
स्कांदे द्वारिकामाहात्म्ये निवेद्याविष्णवेमालांतुलसीकाष्ठसंभवां वहतेयोनरोभक्त्यातस्यनैवास्तिपातकं नज
ह्यात्तुलसीमालांधात्रीमालांविशेषतः महापातकसंहर्त्रीधर्म्मकामार्थदायिनीं विष्णुधर्म्मे स्पृशेत्तुयानिलोमानि
धात्रीमालाकलौनृणां तावद्वर्षसहस्राणिवैकुंठेवसतिर्भवेत् मालायुग्मंतुयोनित्यंधात्रीतुलसिसंभवं वहतेकंठ
देशेयःकल्पकोटिंदिवंवसेत् तुलसीकाष्ठमालामंत्रः ॥ "तुलसीकाष्ठसंभूतेमालेहरिजनप्रिये" विभर्म्मित्वामहं
कंठेकुरुमांकृष्णवल्लभं एवंसंप्रार्थ्यविधिवन्मालांकृष्णगलेऽर्पितां धारयेत्कार्त्तिकेमासिसवसेद्वैष्णवेपदइति अत्र

मूलंचिंत्यम् । अथपुष्पनिवेदनं । भार्गवार्चनदीपिकायां । नृसिंहपुराणे ॥ अगस्तिकुसुमैर्देवंयोर्चयेच्चजनार्द्दन
दर्शनात्तस्यदेवस्यनरकंनाश्नुतेनरः विहायसर्वपुष्पाणिमुनिपुष्पेणकेशवं कार्त्तिकेयोर्चयेद्भक्त्यावाजिपेयफलंल.
भेत् स्कांदेकार्त्तिकमाहात्म्ये ॥ मालतीमालयाविष्णुःकेतक्याचैवपूजितः समासहस्रंसुप्रीतोभवेद्वैमधुसूदनः
तथा । कार्त्तिकेकेशवीपूजायेषांनाम्नासुतैःकृता तेनिर्भत्स्यरवेःपुत्रंवसंतित्रिदिवेसदा तथाच । तुलसीदल
शतकेनकार्त्तिकेयोर्चयेद्धरिं पत्रेपत्रेमुनिश्रेष्ठलभतेमौक्तिकंफलं तथाचस्कांदे कार्तिकमाहात्म्ये धात्रीफल
विलिप्तांगोधात्रीफलविभूषणः धात्रीफलकृताहारोनरोनारायणोभवेत् तच्छायायान्तुयःकुर्य्यात्पिण्डदानंमहा
मुने मुक्तिंप्रयांतिपितरःप्रसादान्माधवस्यतु ॥ धात्रीछायांसमाश्रित्ययोर्च्चयेच्चक्रधारिणं पुष्पेपुष्पेऽश्वमेधस्य
फलंप्राप्नोतिमानवः तथास्कांदे कार्तिकेमासिविप्रेंद्रधात्रीवृक्षोपशोभिते वनेदामोदरंविष्णुंचित्रान्नैस्तोषयेद्विभुं
मूलेनपायसेनाथहोमंकुर्य्याद्विचक्षणः ब्राह्मणान्भोजयेद्भक्त्यास्वयंभुंजीतबंधुभिरिति पद्मपुराणे रसधेनुंचयोदद्या
त्कार्तिकेमासिपार्थिव सर्वान्कामानवाप्नोतिनित्यंसुगतिभाग्भवेत् अथकार्तिकेवर्ज्यान्याह ॥ पाद्मेकार्तिकमाहा
त्म्ये राजिकामादकंचैवनैवाद्यात्कार्तिकेव्रती द्विदलंतिलतैलंचतथान्नमतिदूषितं स्कांदेपि कार्तिकवर्जयेत्तद्वद्
द्विदलंबहुवीजकं माषमुद्गमसूराश्चचणकाश्चकुलत्थकाः निष्पावाराजमाषाश्चआढक्योद्विदलंस्मृतं नूतनान्य
पिजीर्णानिसर्वाण्येतानिवर्जयेत् अत्रउत्पत्तिसमयेदलद्वयंभवति तस्यतत्पूर्वगत्याद्विदलमुच्यतइत्याहुः उदाह
रंतिच बीजमेवसमुद्भूतंद्विदलंचांकुरंविना दृश्यतेयत्रसस्येषुद्विदलंतन्निगद्यतइति अन्येतु लक्षणायांमानाभ
वात्वचनं तस्यनिर्मूलत्वाद्द्विदलात्मकंयस्यस्वरूपं तदेववर्जयेदित्याहुः तथानारदीये ॥ कार्तिकेवर्जयेत्तैलंक
र्तिकेवर्जयेन्मधु कार्तिकेवर्जयेत्कांस्यंकार्तिकेशुक्तसंस्थितं कांस्यंकांस्यपात्रभोजनं शुक्तं पर्युषितलवणकश

काः तथाच ॥ निष्पावान्राजमाषांश्चसुतदेवेजनार्दने येभक्षयंतिराजेंद्रचांडालादधिकाहिते कार्तिकेतुविशे
षेणराजमाषांस्तुभक्षयेत् निष्पावान्राजशार्दूलयावदाभूतनारकी कदंबानिपटोलानिवृंताकंसहितानिच नत्यजे
त्कार्त्तिकेनासियावदाभूतनारकी एतानिभक्षयेद्यस्तुसुतेदेवेजनार्दने शतजन्मार्जितंपुण्यंदहतेनात्रसंशय इतिभ
विष्योत्तरादिपूक्तं तथा ॥ कार्त्तिकेकृष्णसेवीयःप्राजापत्यपरोथवा एकांतरोपवासीवात्रिरात्रोपोषितोपिवा
षड्वाद्वादशपक्षंवामासंवावरवर्णिनि एकभक्तेननक्तेनतथैवायाचितेनच उपवासेनभैक्षेणव्रजतेपरमंपदमिति अन्ये
पिनियमाःशक्तानुसारंभोक्तास्ते कार्त्तिकेयथाशक्तिरवश्यंसेव्याः अत्रग्राह्यमुक्तंस्कांदे ॥ व्रीहयोयवगो
धूमाःप्रियंगुतिलशालयः एतेहिसात्त्विकाःप्रोक्ताभोगमोक्षप्रदायकाः काशीखंडे ऊर्जेयवान्नमश्नीयादेकान्नम
थवापुनः वृंताकंसूरणंचैवशूकाशिंबिंचवर्जयेत् पृथ्वीचंद्रोदये अन्नतेनाक्षिपेद्यस्तुमासंदामोदरप्रियं तिर्यग्योनि
मवाप्नोतिनात्रकार्य्याविचारणा मांसवर्ज्जनंमहाभारते मासिमास्यश्वमेधेनयोयजेतशतंसमाः नस्वादयतियोमां
संसममेतद्युधिष्ठिर यस्तुवर्षशतंपूर्णंतपस्तप्येत्सुदारुणं तथैकंवर्ज्जयेत्मांसंसमंस्यात्तुयुधिष्ठिर कौमुदेतुविशे
षेणशुक्लपक्षेनराधिप वर्ज्जयेदत्रमांसानिधर्म्मोह्यत्राविधीयते नंदिपुराणे योनरःकार्त्तिकेमासेमांसंतुपरिवर्ज्जयेत्
वत्सरस्यलभतेफलंमांसविवर्ज्जनात् तथाच तथाजन्मसहस्रैस्तुमानुष्यंप्राप्यदुर्लभं कार्त्तिकेनार्चयेद्विष्णुंतस्य
यमयातना गवांकोटिप्रदानस्यस्वर्णकोटिषुयत्फलं तत्फलंकोटिगुणितमेकाहंकेशवार्चनात् ददातिवैष्णवान्
पुत्रान्भक्तिंचाव्यभिचारिणीं यःकरोतिनरोभक्त्याकार्त्तिकेपत्रभोजनं नदुर्गतिमवाप्नोतियावदिंद्राश्चतुर्दश भोजनं
त्रेपुमहापातकनाशनं कार्त्तिकेमुक्तिदंप्रोक्तंब्रह्मपत्रेपुभोजनं ब्रह्मपत्रंपलाशपत्रं वाराहपुराणे नगृहेकार्त्तिकंकु
र्यादेशेषेणतुकार्तिकीं तीर्थेतुकार्त्तिकंकुर्य्यात्सर्वयत्नेनभावितइति अत्रग्रहणमधिकृत्यदेवीपुराणे कार्त्तिकेग्रहणे

श्रेष्ठं गंगायामुनसंगमे. अथकार्तिकेदीपदानं भविष्यपुराणे-यः कुर्यात्कार्तिकेमासिशोभनांदीपमालिकां चंडिकायत
नेभक्त्यासोहिसूर्य्योपमोव्रजेत् चंडिकायतनमत्रोपलक्षणं। विष्णवादीनामप्यायतनेषुकार्तिकेदीपदानंकार्य्यं तथा॥
ददातिकार्तिकेयस्तुममायतनदीपकं॥ जातिस्मरत्वंप्रज्ञांचप्राकाम्यंसर्वजंतुषु-अव्याहतेंद्रियत्वंचसमाप्नोतिनसंशय
इति विष्णुधर्मोत्तरे कार्तिकेदीपदानेनसर्वत्रौज्ज्वल्यमाप्नुयात् ब्रह्मोवाच -दीपंप्रयच्छतिनरः सूर्य्यस्यायतनेतु
यः तेजसारविसंकाशः सर्वयज्ञफलंलभेत् -कार्तिकेतुविशेषेणकौमुदेमासिदीपकं -दत्त्वायत्फलमाप्नोतिनतदन्य
नलभ्यते। कार्तिकेतुविशेषेणकौमुदेमासिदीपकं -दत्त्वातुसूर्य्यायतनेनयातिनरकंनरः एष प्रभावोदीपस्यकार्ति
केमासिसुव्रत अर्कायतनदीपस्यएतद्रुद्रवचोयथा ॥ ससर्वकालंचक्षुष्मान्मेधावीदीपदोनरः -ज्ञायतेनरकंना
पितमस्संज्ञानंपश्यति। षष्ठींवासप्तमींवापिप्रतिपक्षंतुयोनरः दीपंददातिदत्त्वाचयत्फलंतन्निबोधत- कार्बुरंमणिमु
क्ताढयंमनोज्ञमतिशोभनं दीपमालाकुलंदिव्यंविमानमधिरोहति कार्बुरंकांचनमित्यर्थः। तस्मादायतनेभानो
दीपंदद्यात्सदाच्युतं । तत्रदत्तंनहिंसेतनकुर्य्यात्तैलवर्जितं -कुर्याच्चदीपहर्ताचमूकोऽधश्चजायते तस्माद्दद्यान्नच
हरेच्छ्रेयोर्थीदीपकंनरः तथाचगौडाः उच्चैः प्रदीपमाकाशेयोदद्याद्विष्णवेनरः- ससर्वंकुलमुद्धृत्यविष्णुलोकम
वाप्नुयात् । कार्तिकप्रकरणात् । यश्चकेशवमुद्दिश्यदीपंदद्याच्चकार्तिके आकाशस्थंज्वलंतंचशृणुतस्यापियत्फलम्
धनधान्यसमृद्धश्चपुत्रवानीश्वरोभवेत्- लोचनेचशुभेतस्यविद्वानपिप्रजायते तथा । तुलायांतिलतैलेनसायंसंध्या
समागमे- आकाशदीपंयोदद्यान्मासमेकंनिरंतरं- श्रीकामोयः श्रीपतयेसश्रियानावियुज्यते. महतींश्रियमाप्नो
तिरूपसौभाग्यसंपदमिति तद्विधिश्चादित्यपुराणे। दिवाकरेऽस्ताचलमौलिभूतेगृहांगणेतुपुरुषप्रमाणं-यूपाकृतिं
यज्ञियवृक्षजातामारोप्यभूमावथतस्यमध्ये- कृत्वाचतस्त्रोऽष्टदलाकृतीस्तुयाभिर्भवेदष्टदिशानुचारी :तत्कर्णिकायां

तुमंहाप्रकाशोदीपः प्रदेयोदलगास्तथाष्टौ निवेद्यधर्मायहरायभूम्यैदामोदरायाप्यथधम्मराज्ञ प्रजापतिभ्यस्त्व
थवापितृभ्यः प्रेतेभ्यएवाथचतुः स्थितेभ्यः । अपरार्केऽन्योमंत्रः । दामोदरायनभसितुलयालोलयासह प्रदीपंते
प्रयच्छामिनमोऽनंतायवेधसे अत्रैकभक्तव्रतं महाभारते। कार्त्तिकंतुनरोमासंयः कुर्यादेकभोजनं शूरश्चवहुभा
र्य्यश्चकीर्त्तिमांश्चैवजायते भविष्यपुराणे । एकभक्तेनयानारीकार्त्तिकंतुक्षिपेद्यदि क्षमाहिंसादिनियमैस्संयताव्रत
चारिणी गुडादिमिश्रशाल्यन्नंभास्करायनिवेदयेत् पक्षयोरुभयोःस्नात्वाश्रद्धयापरयान्विता पुष्पाणिकरवीरा
णिगुग्गुलुंसाज्यमादरात् सप्तम्यांवाथषष्ठ्यांवाउपवासरतिर्भवेत् इंद्रनीलप्रतीकाशैरालोकैः सर्वकालिकैः
नारीयुगशतैस्साग्रैः सूर्य्यलोकमहीयते तस्मादागत्यलोकेऽस्मिन्यथेष्टंविंदतेपतिम् इत्येवंसर्वधर्मज्ञावि
धिस्तुल्यः प्रकीर्त्तितः एकभक्तोपवासस्यफलंतुसदृशंभवेत् स्कंदपुराणे । योनरः कार्त्तिकंमासमेकभक्ते
नातिष्ठति सोऽश्वमेधफलंप्राप्यवन्हिलोकेमहीयते कार्त्तिकमासोऽग्निदैवत्यइति विष्णुनाकार्त्तिकस्याग्निदे
वत्वमुक्तं विष्णुधर्मोत्तरे द्विजवेश्मनियोदद्यात्कार्त्तिकेमासिदीपकं अग्निष्टोमफलंतस्यप्रवदंतिमनीषिणःभवि
ष्यपुराणे । यः कुर्यात्कार्त्तिकेमासिशोभनांदीपमालिकां सप्तम्यामथवाषष्ठ्याममावस्यामथापिवा भास्करा
युतसंकाशस्तेजसाभासयन्दिशः दिव्याभरणसंपन्न कुलमुद्द्योत्यसर्वशः दीपवृक्षसमुद्द्योत्यभास्करस्यालयेशु
भे सर्वलोकमयेवीरवीरलोकेमहीयते भविष्यपुराणे । घृतदीपप्रदानेनाशिवायशतयोजनं विमानंलभतेदिव्यं
सूर्य्यकोटिसमप्रभं यः कुर्य्यात्कार्त्तिकेमासिशोभनांदीपमालिकां घृतेनचचतुर्दश्याममावस्यांविशेषतः याव
द्दीपस्यसंख्यावैघृतेनापूर्य्यवोधिता तावद्युगसहस्राणिहरलोकेमहीयते इतिशिववाक्यं स्कंदपुराणे प्रदीपमालां
यःकुर्य्यात्कार्त्तिकेमासिवैमम अवसानेतुदीपानांब्राह्मणान्भोजयेच्छुचिः प्राजापत्यंचलभतेदीप्यतेसूर्य्यवद्यथा

यःकुर्य्यात्कार्त्तिकेमासिशोभनांदीपमालिकां चंडिकायतनेभक्त्यासूर्य्यायतनकेपुनः घृतेनकुरुशार्दूलअमावस्यांतुभ
क्तितः विशेषतोनवम्यांतुभक्तिश्रद्धासमन्वितः यावंतोदीपसंघास्तुतैलेनापूर्य्यबोधिताः तावद्वर्षसहस्राणिदुर्गालो
केमहीयते अथविष्णुपुराणोक्तं कार्त्तिककृत्यं ॥ मैत्रेयउवाच कार्त्तिकः खलुमासोऽयंसर्वदेवमयोमहान् यानि
कृच्छ्राणिचोक्तानिसर्वपापहराणिवै कृतानिमुनिभिस्तानिभनुजाधिपसर्वशः देवपितृमनुष्येभ्योदत्तंघृतमधुप्लुतं
तत्रान्नमक्षयंप्रोक्तंब्रह्मणालोककर्त्तृणा समभ्यर्च्यहरिंभक्त्यादीपंदद्याद्दिवानिशं सर्वपापविशुद्धात्मानरोयात्य
भवंनृप इतिविष्णुधर्मोक्तं कार्त्तिककृत्यं अथादित्यपुराणोक्तंदीपदानम् ॥ सनत्कुमारउवाच दामोदरस्य
वाक्यंतुश्रुत्वाप्रश्नंचकारसः केनोपायेनभगवन्नदृश्येतमहत्तमः नाकलोकसमंसौख्यंप्रेतलोकेभवेत्कथं भव
वान्देवकीपुत्रस्तद्वाक्यस्योत्तरंददौ रहस्यंपरमंगुह्यंमनोरथफलप्रदं भोःशृणुष्वमहाबुद्धेयत्प्रवक्ष्यामितेऽनघ पूर्ण
आश्वयुजेमासिपौर्णमास्यांसमाहितः प्रथमेचनिशारंभेमनोवाक्कायसंयुतं नमःपितृभ्यःप्रेतेभ्योनमोधर्म्माय
विष्णवे नमोयमायरौद्रायकांतारपतयेनमः दद्यादनेनमंत्रेणदीपंश्रद्धासमन्वित इत्यादि अनेनदीपेनमनोरथा
नांसंप्राप्तिरस्तीतिनसंशयोत्र एतानिचोक्ताकतिचिद्वचांसिदामोदरश्चांतरितोबभूवेत्यादित्यपुराणोक्तंप्रदीपव्रतम्
अथात्रजयावाप्तिव्रतं विष्णुधर्मोत्तरे ॥ वज्रउवाच भगवन्कर्म्मणाकेनसर्वत्रजयमाप्नुयात् व्यवहारेरणेद्यूतेवि
वादेचद्विजोत्तम जयावाप्तेःपरंनास्तिसौख्यंलोकेषुसत्तम जयावाप्तिपदंसौख्यंयदस्तिव्रतमुच्यतां मार्कंडेय
उवाच आश्वयुज्यामतीतायांप्रतिपत्प्रभृतिक्रमात् पूर्ववत्पूजयेद्देवंलोकनाथंत्रिविक्रमं त्रिरात्रांतेतुकार्त्तिक्यां
दद्यादुक्षाणमुत्तमं सर्वसस्यधरंकृत्वाशक्त्यारत्नैरलंकृतं कृत्वाव्रतंमासमिदंयथोक्तंप्राप्नोतिलोकंसुचिरंनृवीर
उपोष्यकालंसुचिरंनृवीरःप्राप्नोतिसर्वत्रजयंचलोके इतिविष्णधर्म्मोक्तं जयावाप्तिव्रतं रूपावाप्तिवदत्रपूज।

अथकृच्छ्रव्रतं ॥ सुपुण्येकार्त्तिकेमासिदेवापित्रृसेविते क्रियमाणेव्रतेन्दृणांस्वल्पेऽपिस्यान्महाफलं कृत्स्नःसंवत्स
र.पुण्यस्तस्माद्वर्पाःसुपूजिताः वर्पाभ्य.कार्त्तिकः पुण्य कार्त्तिकाद्भीष्मपंचकं नैवेद्यंपुष्पधूपंचअर्चितंसुविलेप
नं निवेद्यकार्त्तिकेविष्णो.फलंसांवत्सरंफलं अत.कार्त्तिकमासाद्यसदैवशुभकांक्षिभिः हरिमुद्दिश्यकर्त्तव्यंस्व
शक्त्यासुकरंव्रतं कार्त्तिकस्यासितेपक्षेवाचुभक्ष्यश्चतुर्दशी समुपोष्यनरोभक्त्यापूजयेद्गरुडध्वजं उपवासस्तुक
र्त्तव्योवारिमध्येस्थितेनच जलकृच्छ्रमिदंकृत्वाविष्णुलोकंव्रजेन्नरइत्यादि, यथोक्तेनविधानेनकृच्छ्राणिसमुमाचरे
त् व्रतोपवासनियमैर्युक्तास्तेमुक्तिभागिनः । इतिविष्णुधर्म्मोत्तरेकृच्छ्रव्रतानि अथत्रैवदेवीव्रतं ॥ ब्रह्मोवाच
क्षीराशीकार्त्तिकेयस्तुदेव्याभक्तिरतोनर. ॥ शाकयावकमेकाशीप्रात स्नायीशिवारतः पूजयेत्तिलहोमस्तुमधुक्षीर
घृतादिभिः कार्य्यस्तुदेवीमंत्रेणशृणुपुण्यफलंहरे महापातकसंयुक्तोयुक्तोवाह्युपपातकैः मुच्यतेनात्रसंदेहोयस्मा
त्सर्वगताशिवा इतिदेवीपुराणोक्तं कार्त्तिकेदेवीव्रतं वामनपुराणेऽपि रजतंकांचनंदीपान्मणिमुक्ताफला
दिकं दामोदरस्यप्रीत्यर्थंप्रदद्यात्कार्त्तिकेनरः अथमासोपवासव्रतंकार्य्यं तच्चाश्विनशुक्लैकादशीमारभ्यकर्त्तव्य
त्वात्तत्रैवलिखितं अथकार्त्तिकप्रतिपदायां कार्त्तिकमासव्रतनियमादीनामारंभः कार्य्यः । तिथीशत्वाद्वन्हिपूजा
द्यपिकर्त्तव्यंनान्यदत्रविशेषकृत्यं एवंद्वितीयायामपि तिथीशत्वाद्ब्रह्मण.पूजा अश्विनोर्यमस्यापिपूजादिकंकार्य्यं
तृतीयायांगौरीपूजाव्रतादिकंयथाविहितंकार्य्यमितिदिक् कार्त्तिककृष्णचतुर्थ्यांकृत्यविशेषः संवत्सरप्रदीपे ॥
आश्विनेकृष्णपक्षस्यचतुर्थ्यांरात्रियोगतः मृण्मयेऽवस्थितः पूज्योराजादशरथस्तथा दुर्गाचतत्रसंपूज्यासर्वसौख्य
विवृद्धये अथाश्विनोमुख्यचान्द्रेणेतितत्रैवोक्तं इयंप्रदोषव्यापिनीग्राह्या उभयत्रतथात्वेपरैवेतितत्रैवोक्तं अस्या
मेवकरकचतुर्थीव्रतं साचचंद्रोदयव्यापिनीग्राह्या उभयत्रतथात्वेसंकल्पकालसत्त्वात्परा अत्रस्त्रीणामेवाधिकारः

तासामेवफलश्रुतेः अथव्रतविधिः मासपक्षाद्युल्लिख्यात्मनःसौभाग्यसौख्यपुत्रदौहित्रादिसुरिथरश्रीप्राप्तयेकर
कचतुर्थीव्रतंकरिष्ये गोमयोपलिप्तभूमौवटंपिप्पलंवोल्लिख्य तदधस्ताच्छिवंगणेशंषण्मुखयुक्तं गौरींचालिख्यषो
डशोपचारैःपूजयेत् तत्रमंत्रः ॥ नमः शिवायैशर्वाण्यैसौभाग्यंसंततिंशुभां प्रयच्छ भक्तियुक्तानांनारीणांहरवल्ल
भे ततोनमोंतमंत्रेणशिवषण्मुखयोः पूजाकार्या ततः सपक्वान्नान्दशकरकान्ब्राह्मणेभ्योदद्यात् ततः पिष्टकनैवे
द्यंभोजनंसर्वंनिवेदयेत् ततश्चंद्रोदयोत्तरंचंद्रायार्घ्यंदद्यात् क्षीरसागरसंभूतचंद्रलक्ष्मीसहोदर गृहाणार्घ्यंश
शांकेशरोहिणीसहितप्रभो अथकथा । मांधातोवाच अर्जुनेतुगतेजेतुमिंद्रलोकगतिंप्रति विषण्णमानसासुभ्रूर्द्रौ
पदीसमचिंतयत् अहोकिरीटिनाकर्म्मसमारब्धंमहत्तरं विघ्नप्रवणमेतद्धिवहवः परिपंथिनः चिंतयित्वेतिसादेवीकृ
ष्णाकृष्णंजगद्गुरुं भर्त्तुःप्रियंचिकीर्षंतीसाऽपृच्छद्विघ्नवारणे द्रौपद्युवाच कथयस्वजगन्नाथव्रतमेकंसुदुर्लभं यत्कृ
त्वायांतिविघ्नानिविजयस्तेजसःश्रियः श्रीव्यासउवाच एतदेवमहाभागेशंभुःपृष्टःकिलोमया एतत्पृष्टंदेविपूर्वं
पार्वत्याशंकरंप्रति तस्यास्तद्वचनंश्रुत्वाप्राहदेवोमहेश्वरः शृणुदेविवरारोहेवक्ष्यामित्वांमहेश्वरि पतिविघ्नहरी
त्याहकरकाख्याचतुर्थिका पार्वत्युवाच भगवन्कीदृशीप्रोक्ताचतुर्थीकरकाभिधा विधानंकीदृशंप्रोक्तं केनेयंच
पुराकृता ईश्वरउवाच शक्रप्रस्थपुरेरम्येविद्वज्जनसमाकुले स्वर्णरौप्यसमाकीर्णेरत्नप्राकारशोभिते दिव्यनारी
जनालोकवशीकृतजगत्त्रये वेदध्वनिसमायुक्तेस्वर्गादपिमनोरमे वेदधर्म्माद्विजस्तत्रवसन्वेदविदांवरःपत्नीतस्यै
वविप्रस्यनाम्नालीलावतीशुभा सास्वयंजनयामासपुत्रान्सप्तामितौजसः कन्यांवीरवतींनाम्नासर्वलक्षणसंयुतां
नीलोत्पलाभनयनांपूर्णेंदुसदृशाननां ततःकालेशुभादिनेविधिवत्।द्विजोत्तमः ददौवैवेदविदुषेविप्रायविधिपूर्वकं अ
त्रांतरेतुसंप्राप्ताचतुर्थीकरकाभिधा वीरवत्यासमारब्धंव्रतंकामप्रदंशुभं कुड्यांवोधिद्रुमंचक्रेगौरींतस्मिन्नलीलिखत

शिवेनविघ्ननाथेनषण्मुखेनसमान्वितां गंधपुष्पाक्षतैर्गौरींपूजयामासमत्रतः नमःशिवायैशर्वाण्यैसौभाग्यंसंततिंशुभां प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे तस्याःपार्श्वेमहादेवंविघ्ननाशंषडाननं पुनःपुष्पाक्षतैर्धूपैरानर्चचपृथक्पृथक् पक्वान्नाक्षतसंपन्नान्सदीपान्करकान्दश तथापिष्टकनैवेद्यंभोज्यंसर्वंन्यवेदयत् प्रतीक्षंतीस्त्रियःसर्वाश्चंद्रायार्घ्यपरायणाः सावालाव्याकुलादीनाक्षुत्तृड्भ्यांपरिपीडिता निपपातमहीपृष्ठेरुरुदुर्बांधवास्तदा समाश्वास्यचतांतेवैमुखमभ्युक्ष्यवारिणा तद्भ्राताचविचिंत्यैवमारुरोहमहावटं हस्तेनोल्कांसमादायज्वलंतींस्नेहपीडितः भगिन्यैदर्शयामासचंद्रंव्याजोदितंतदा तद्दृष्ट्वाचार्तिमुत्सृज्यबुभुजेसुमनास्तदा चंद्रोदयंसमासाद्यअर्घ्यंदत्वाविधानतः तद्दोषेणमृतस्तस्याःपतिर्धर्म्मश्चदूषितः पतिंतथाविधंदृष्ट्वाशिवमभ्यर्च्यसापुनः व्रतंनिरशनंचक्रेयावत्संवत्सरोगतः चक्रुःसंवत्सरेऽतीतेव्रतंतद्भ्रातृयोषितः पूर्वोक्तेनविधानेनसाऽपिचक्रेशुभानना तदायाताशचीकन्यासखीभिःपरिवारिता एतदेवव्रतंकर्तुमागतास्वर्गलोकतः वीरवत्यंतदभ्याशमगमद्भाग्यतःस्वयं दृष्ट्वातांमानुषीदेवीपप्रच्छसकलंशची तयापृष्टावीरवतीप्रोवाचविनयान्विता अहंपितृगृहंप्राप्तामृतोऽयंमेपतिःप्रभुः नजानेकर्म्मणःकस्यफलंप्राप्तंमयाधुना ममभाग्यवशाद्देविआगतासिमहेश्वरि अनुगृह्णीष्वमांमातर्जीवयाशुपतिंमम इंद्राण्युवाच त्वयापितृगृहेपूर्वंकुर्वत्याकरकाव्रतं वृथैवार्घ्यस्त्वयादत्तोविनाचंद्रोदयंशुभे तेनैवव्रतदोषेणपतिर्लोकांतरंगतः इदानींकुरुयत्नेनकरकाव्रतमुत्तमं पतिंतेजीवयिष्यामिव्रतस्यास्यप्रभावतः कृष्णउवाच तस्यास्तद्वचनंश्रुत्वाव्रतंचक्रेविधानतः प्रसन्नासाऽभवद्देवीशक्रस्यप्राणवल्लभा तयाव्रतेकृतेदेवीजलेनाभ्युक्ष्यतत्पतिं जीवयामासचेंद्राणीदेववच्चबभूवसः ततश्चागाद्गृहंस्वीयंरेमेसापतिनासह धनंधान्यंसुपुत्रांश्चदीर्घमायुश्चलब्धवान् तस्मात्त्वयापियत्नेनव्रतमेतद्विधीयतां सूतउवाच द्वैपायनवचःश्रुत्वाचकार द्रौपदीव्रतं तद्व्रतस्यप्रभावेणजित्वातान्

कौरवान्रणे लभिरेराज्यमतुलंधनधान्यसमान्वितं अस्योद्यापनं आचम्य मासपक्षाद्युल्लिख्यात्मनः सौ
भाग्यपुत्रपौत्रादिसुस्थिरश्री।प्राप्तयेसपरिवारषण्मुखगणेशशिवसहितगौरीप्रीत्यर्थमाचरितकरकचतुर्थीव्रतोद्याप
नंकरिष्ये तत्रादावाचार्य्यंवृत्वा सर्वतोभद्रेलिंगतोभद्रेवाकलशस्थापनंविधाय तत्र ताम्रादिपात्रे हैमींगौरींशि
वषण्मुखगणेशसहितांवटवृक्षतलस्थितां संस्थाप्य षोडशोपचारैःपूजयेत् ॥ नमःशिवायैशर्वाण्यैसौभाग्यंसं
ततिंशुभां प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे ॐनमःशिवायैगणेशस्कंदहरसहितायैनमः एताभ्यामेव मं
त्राभ्यांसर्वोपचारपूजांकुर्य्यात् रात्रौगीतवाद्यादिभिर्जागरणंकुर्य्यात् प्रातःपुनःपूजांविधाय स्वगृह्योक्तविधिना
ग्निंप्रतिष्ठाप्यअन्वादध्यात् तत्र प्रधानंगौरींशिवंस्कंदंगणेशंच पायसाज्यतिलवटादिसमिद्भिः प्रत्येकमष्टो
त्तरसहस्राहुतिभिरष्टोत्तरशतसंख्याकाभिर्वाहुत्वा ब्रह्मादिदेवतानवग्रहदिक्पालादीनेकैकयाहुत्या चरुसमिद्भिर्हु
त्वा स्विष्टकृद्धोमांते आचार्य्यंसंपूज्य प्रतिमासहितंकलशंदत्वा ततः करकंक्षीरसंपूर्णंतोयपूर्णमथापिवा
ददामिरत्नसंयुक्तंचिरंजीवतुमेपतिरिति । सदक्षिणकरकान्दशसुवासिनीभ्योयथाशक्तिदद्यात् ततोव्रतसंपूर्त्यै
शय्यादिदानंयथाशक्तिदत्वा सदन्नेनब्राह्मणान्परितोष्याशिषोगृहीत्वा भूयसींदक्षिणांदद्यात् अशक्तौचैकमे
वकरकं दद्यात् घृतपूर्णंच करकंक्षीरपूर्णमथापिवा ददामिरत्नसंयुक्तंचिरंजीवतुमेपतिः इतिमंत्रेणक
रकान्प्रदद्याद्द्विजसत्तमे सुवासिनीभ्योदद्याच्चआदद्यात्ताभ्यएवच एवंव्रतंयाकुरुतेनारीसौभाग्यकाम्यया सौ
भाग्यंपुत्रपौत्रादीन्लभतेनात्रसंशयः ॥ इतिश्रीवामनपुराणे करकचतुर्थीव्रतं सोद्यापनं कार्तिककृष्णपंचम्यां
तिथिपत्वेनशेषादयोनागाःपूज्याःतथाचोक्तंपक्षद्वयगतासुसर्वासुपंचमीषु तिथिपत्वेन नागाःशेषादयःपूज्याःपंचम्यां
पूजनंभवेदिति अत्रषष्ठ्यांस्कंदपूजा तथाचपक्षद्वयगतासुसर्वासुषष्ठीषु तिथिपत्वेनस्कंदंसंपूजयेत् तदुक्तम् षष्ठ्यां

पूजागुहस्यचेति कार्तिककृष्णसप्तमीवैकुंठकल्पादिः अत्रादिकल्पादिकल्पोक्तंकृत्यं तिथिपत्वेनादित्यपूजा तथाचोक्तंसप्तमीनिर्णये पक्षद्वयगतासुसप्तमीपुतिथिपत्वेनादित्यः पूज्यः सप्तम्यांभास्करस्येत्युक्तेः अस्या मेवाष्टम्यां दांपत्याष्टमीव्रतं हेमाद्रौभविष्योत्तरे ॥ कार्तिकेमासिविप्रेंद्रपुत्रकामोनरोमुने अष्टम्यांकृष्णप क्षस्यपूजयेद्विधिवन्नरः उमयासहितंदेवंकृत्वादर्भमयंविभुं 'अस्यामेवमथुरावासिभीराधाकुंडेस्नानमरुणोदये सूर्योदयेकार्य्यमितिमथुरासेतौज्ञेयम् कार्तिककृष्णाष्टमीकरकाभिधा सामहाराष्ट्रेषुप्रसिद्धा सापिचंद्रोदयव्या पिनीग्राह्या अस्याविधानंकरकचतुर्थीवदिति अस्यामेव कार्तिककृष्णाष्टम्यां अहोयदेिवव्रितं पद्मपुरा णेकार्तिकमाहात्म्ये ॥ पृथुरुवाच देवर्षेवदतांश्रेष्ठसर्ववेदार्थपारग तंत्वाहंप्रष्टुमिच्छामित्वरः संदेहच्छेदक तादृशंव्रतमाख्याहियत्पुत्रधनवर्द्धनम् नारदउवाच ॥ महाविद्यामहामायामहामेधास्मृतिः महामोहाभगव तीमहादेवीमहेश्वरी अहोयीचेतिविख्यातासैवसर्वेश्वरेश्वरी तस्याव्रतंमहापुण्यंसर्वलोकाहितप्रदं पृथुरुवा च ॥ अहोयीनामसादेवीकथंजाताचनारद तथाव्रतंतिथौकस्यांकोविधिश्चवदस्फुटं नारदउवाच ॥ आसीत्पु राकृतयुगेऽकालमृत्युर्नराधिप ततोनराश्चवहवः पक्षिणश्चक्षयंगताः तदाजनपदाःसर्वेक्षयंयाताश्चभूरिशः वी जमात्राणिभूतानितदाऽभूवन्नृपाधिप तदासर्वेसमागम्यब्राह्मणान्वेदपारगान् पप्रच्छुर्विनयोपेताः किंकार्य्यं वदतद्विजाः ब्राह्मणावेदविद्वांसोविचार्य्यचमुहुर्मुहुः शास्त्राण्यालोक्यतत्त्वज्ञाःकालमृत्योःशमायच अहोय्याश्च महादेव्याआराधनमकुर्वत कार्तिककृष्णपक्षस्यसप्तम्यांध्यानतत्पराः ततःप्रदोषसमयेभूवन्सर्वेपिदुःखिताःअथा गच्छत्तदातत्रकाचिद्दीवरयोपिता सोवाचब्राह्मणान्सर्वान्किमर्थंव्रतमासत तऊचुस्तांनरश्रेष्ठकालमृत्युक्षयायच प्रोक्ताचसत्यमित्येवंसापितत्रसमासदत् ततःसर्वाःप्रजाविप्राःसापिधीवरयोपिता अहोय्याश्चमहादेव्याभूय

आराधनंदधुःएतस्मिन्नेवकालेतुदेवीसाक्षाददृश्यत चामुंडामुंडहस्ताचकरालाकृष्णवर्णिका कालिकेतिसमाख्याता
अहोयीतत्रविश्रुता एकान्हैवप्रसन्नत्वादहोयीनामतेऽब्रुवन् सापितत्रसमासीनान् ब्राह्मणानभ्यभाषत अहंरुद्रग
णैःसार्द्धंकालमृत्युसमन्विता विहारार्थंसमायाताविश्वपापमवेक्ष्यच अद्यविप्रावेदहीनादांभिकानिरपत्रपाः अरक्ष
काःक्षत्रियाश्चवैश्यादुष्टाश्चपादजाःस्त्रियःपतिप्रतीपाश्चस्वेच्छाचारसमान्विताःएतांसमीक्ष्यपापस्यगतिंघोरांभयाव
हां निधर्म्मकांश्चनिर्यज्ञान्निर्होमान्निर्जपांस्तथा आगताःस्वगणैःसार्द्धंविश्वाभावायकेवलं अथैवकार्तिकेमासिव्रता
दिफलकोटिभिः सप्तम्यांचविशेषेणपूजितायांद्विजोत्तमाः प्रसादमागताविप्रावरंवृणुतमाचिरं ततःसकललोका
श्चप्रार्थयंतिस्मतांनृप दुर्भिक्षंनभवेद्देविनातंकश्चभवेत्क्वचित् नाकालमृत्युर्नव्याधिर्नचापुत्रत्वमेवच नारदउवा
च ततोब्रवीन्महादेवीशृणुध्वंहेद्विजोत्तमाः कार्तिकेकृष्णपक्षेतुअष्टम्यांचविशेषतः तारानक्तंचैकभक्तमथवाद्य
प्रभृत्यकैः कर्त्तव्यंचविशेषेणसप्तम्यांचव्रतंमम चंद्रनक्तंचसप्तम्यामष्टम्यांचैवनक्तकं अवश्यंहिव्रतंकार्य्यंनरैर्ना
रीभिरेवच दिवाचात्रनभोक्तव्यंबालवृद्धातुरंविना सायंप्रपूजयेन्नाम्नाऽहोयीत्येवचमांसुधीः कर्त्तव्याहिप्रयत्नेन
मदीयाप्रतिमानरैः तत्रकुड्यांचस्तंभेवामंडपेमेसमाचरेत् चतुर्वर्णैश्चसवर्णैःश्यावपीतासितासितैः मूलकाभिस्त
थास्कंधैरिक्षुदंडादिभिस्तथा एवंकृत्वानरैःसर्वैःसर्वसुखमवाप्यते तत्रमांपूजयेद्भक्त्याचंद्रिकामंडवर्बरैः संया
वशष्पपुष्पैश्चधूपदीपैस्तथैवच यतोऽनयापूजयास्यांतृप्तामृत्युगणैःसमं तथेत्युक्तास्ततःसर्वेजगृहुर्व्रतमुत्तमं तत
स्तुप्रांजलिर्भूत्वासाहधीवरयोषिता महादेवींचदेवेशिपाह्यस्मान्नोचयोनिजान् ततोऽब्रवीन्महादेवीअहोयीवि
श्रुताचया एहित्वंममभक्तासिप्रसन्नातेनसंशयः त्वयाप्यहंसदापूज्यापूर्वोक्तेनविधानतः पूजावसानेभवतीसाहि
तांपूजयेत्तुयः तस्यपूजाहिसफलाविपरीतमतोऽन्यथा तथापूज्याःकुमार्य्यश्चमालिनीचतदेवहि नारदउवाच

एवंप्रोच्यततःपश्चात्तत्रैवांतरधीयत ततःसर्वैर्गृहीत्वातुव्रतमेतन्नसंशयः अधुनातेमयाप्रोक्तंतवस्नेहस्यकारणा
त् गृहस्थवासिभिर्जीवैरावश्यकमिदंव्रतं कुर्वंतिव्रतमेतद्येतेषांसौख्यंभवेद्ध्रुवं नाकालमृत्युर्नव्याधिर्नभयंनृपश
त्रुतः सप्तमीचाष्टमीवापितिथिरस्यव्रतस्याहि सप्तमीचंद्रनक्तेचतारानक्तेतुचाष्टमी उभेएवसमानेहिव्रतेतिथ्यु
भयेनृप नारदउवाच एतत्तेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि अहोय्याश्चव्रतंजन्मप्रसादश्चविधिस्तिथिः
फलंचैवमहाराजकिंभूयः श्रोतुमिच्छसि कार्त्तिकस्यैवमाहात्म्यंयदेकान्हाप्रसाधिता जनैरहोयीदेव्याप्तिर्न
कार्त्तिकसमंशुभं एकान्हास्मरणादेवाकालमृत्योर्व्यमोचयत् अहोयीतन्मतादेवीतत्कार्तिकप्रभावतः कार्ति
केनसमोमासोनभूतोनभविष्यति इतिपाद्मेकार्तिकमाहात्म्ये कार्तिककृष्णाष्टम्यामहोयीव्रतम् ॥ कार्तिककृष्ण
नवम्यां सर्वास्वपि नवमीषु सरस्वतीदुर्गापूजाकार्य्या सरस्वत्यानवम्यांवेत्युक्तंनवमीनिर्णये दशम्यांचध
र्म्मराजपूजा दशम्यामंतकस्येतिदशमीनिर्णयोक्तवचनात् कार्तिककृष्णैकादशीरमा अस्याःकथा ब्रह्मवै
वर्ते पद्मपुराणेच ॥ युधिष्ठिरउवाच कथयस्वप्रसादेनममस्नेहस्यकारणात् कार्तिककृष्णपक्षेतुकानामै
कादशीभवेत् किंनामकोविधिस्तस्याएतन्मेवदविस्तरात् यस्मिन्मासेहरिर्देवीनिद्रांत्यजतिमाधवः श्रीकृ
ष्णउवाच शृणुत्वंराजशार्दूलकथांपापप्रणाशिनीं कार्तिकस्यासितेपक्षेरमानामेतिविश्रुता तस्याउपोषणा
द्राजन्वैकुंठंलभतेनरः पुरात्रेतायुगेराजन्नयोध्यानगरेनृपः मुचुकुंदइतिख्यातोन्यवसद्धर्मतत्परः इंद्रेणसहयस्यैव
सख्यंश्रेष्ठंप्रवर्तते हरिवासरसंधारीहरिभक्तिपरायणः तस्मिंश्चनृपतिश्रेष्ठेभूतधात्रींप्रशासति दुहिताचंद्रभागा
ख्याजातातस्यगृहेनृप जामातातस्यचैवासीत्शोभनोनामनामतः चंद्रसेनस्यराज्ञस्तुपुत्रोधर्म्मपरायणः श्वशु
रस्यगृहेसोथसमायातोनृपात्मजः कियंतोदिवसाश्चैवचंद्रभागाव्यचिंतयत् किंभविष्यातितत्राथममभर्त्तांति

दुर्वलः समागतंव्रतंचैवदेवानामपिदुर्ल्लभं एकादशीदिनंपुण्यंसमायातंनृपोत्तम क्षुधयापीडितोभर्त्तापितृशा सनमुत्तमं नभोक्तव्यंनभोक्तव्यंसंप्राप्तेहरिवासरे इतिशुश्रावसततंपटहंदारुणंकिल व्रतस्यमहिमानंवैज्ञा त्वाचैवप्रयत्नतः चिंतयामासतत्रैवशोभनश्चप्रतापवान् किंकरोमिमहाप्राज्ञेक्षुधयापीडितोस्म्यहं पप्रच्छ वल्लभांस्वांसकिंकरिष्यामिशोभने चंद्रभागोवाच पितुर्वेश्मनिमेकांतभोक्तव्यंनैवकेनचित् चातुर्वर्ण्यादिकैश्चै वह्यष्टवर्षाधिकैस्तथा गजैरुष्ट्रैस्तथैवाश्वैः पशुभिः पक्षिभिस्तथा तृणमन्नंतथानीरंभुज्यतेनैवशोभन मा नवैश्चतथाभर्त्तभुज्यतेनैववासरे यदिचेद्भुज्यतेकांततर्हितंगर्हयत्यसौ इतिसंचिंत्यभोःकांतसुदृढंमानसंकुरु न ह्यन्यत्रहिगंतव्यंभोजनार्थंनृपात्मज शोभनउवाच सत्यंचेत्तत्प्रियेनाहंकरिष्यामिव्रतंशुभं दैवेनविहितंचैवतत्तथैव भविष्यति इत्येवंसंमतिंकृत्वातद्व्रतेहदुःखपीडितःपुनःस्मृत्वापुनःस्मृत्वातथाचविवशोभवत् अन्नेनधार्यतेप्राणश्चान्ने सर्वंप्रतिष्ठितं अन्नमेवपरित्यज्यकथंप्राणावलंवनं शोभनश्चिंतयामासकागतिर्मेभविष्यति इतिचिंतयतस्तस्य रविरस्तमयंगतः वैष्णवानांजनानांतुसानिशापुण्यवर्द्धिनी श्रीकृष्णपूजनेनैवतथाजागरणेनच शोभनस्यतुत स्यैवसानिशादुः खदायिनी अन्नहीनस्यतस्यैवतथैवक्षुधितस्यच अतीवदुःखतप्तस्यरविश्चैवादयंगतः तस्मिन्कालेतुराजेंद्रपंचत्वंशोभनोगतः दाहयामासराजातंराजयोग्यैश्चदारुभिः चंद्रभागानात्मदेहंददाहप तिनासह कृत्वौर्ध्वदेहिकंतस्यतस्थौजनकसद्मनि शोभनेनन्नृपश्रेष्ठरमाव्रतप्रभावतः प्राप्तंदेवपुरंरम्यंमंदराचलमूर्ध नि औेर्ध्वदेह्यकृतंतस्यक्रियाश्चविधिवत्कृताःचिंतयासासससातत्रचंद्रभागायशस्विनी किंकरोमिक्वगच्छामिसाहंदुः खेनपीडितापातिव्रत्यंकरिष्येहंकाष्ठभक्षणमेवच इतिसंचिंत्यसापश्चादनुबंधंचकारसा एकादशीव्रतेनैवजीर्यतेजी र्यतेस्वयम् इतिवुद्धिंसमास्थायसतीनांधुरिकीर्तिता कश्चिद्विप्रोवसन्तत्रनगरेनागरस्तदा सोमशर्म्मेतिविख्या

तोधनहीनोदरिद्रकः साधुकार्य्यंतयाविप्रःकुरुतेप्राणरक्षणं भ्रमतेतत्रसर्वत्रसोन्नार्थीद्विजसत्तमः एवंभ्रमन्
सदेशांश्चकुटुंबंपरिपालयन् एकस्मिन्दिवसेमार्गेसूर्योस्तंचतदागतः आरुरोहद्विजोवृक्षंसिंहव्याघ्रभयाकुलः
चिंतयानस्यतस्याधः समीयुस्तंमृगादयः श्वापदाः शूकरास्तत्रपुरतस्तुसमागताः पुरंतत्राभवद्देवदेवेनावि
हितंपुरा अनूपममतिहृद्यंपुण्यवद्भिर्निषेवितं द्वितीयमिंद्रलोकंवैअप्सरोगणसेवितं ललितंगानसंयुक्तैर्गंध
र्वैरुपशोभितं, नारायणादिदेवानांप्रासादैरुपशोभितं धनधान्यसमाकीर्णंचातुर्वर्ण्यविराजितं विद्वद्भिः से
वितंभक्त्याकमनीयंकलायुतं किमत्रबहुनोक्तेनगुणैःसर्वैःसमन्वितं तुलसीविटपाकीर्णं भूपपैरतिभूषितं ई
दृशंनगरंदृष्ट्वाविप्रोविस्मयमागतः सवृक्षेणांबरात्तूर्णंप्रविवेशपुरंतदा दृष्ट्वासमस्तंनगरंराजवेश्मनिवैगतः रा
जवेश्ममनोहारिस्वर्णस्तंभविराजितं स्फाटिकोपलसंमिश्रंनानारत्नैरलंकृतं सुमनोवत्सुललितंतद्गृहंवर्त्ततेस
दा सविप्रस्तद्गृहंदृष्ट्वाराजानंचददर्शह सिंहासनसमारूढंछत्रचामरशोभितं केयूरैः कुंडलैश्चैवकिरीटेनविरा
जितं इंद्रतुल्यंसदस्येश्चतत्रतत्रोपशोभितं राजानंचतदादृष्ट्वाविप्रोसौशोभनंतदा नृपजामातरंज्ञात्वातत्स
मीपंजगामसः शोभनोऽपितदाज्ञात्वासोमशर्माणमागतं आसनादुत्थितस्तूर्णंनमश्चक्रेद्विजोत्तमं चकारकुश
लप्रश्नंश्वशुरस्यतुपश्यतां कांतायाश्चंद्रभागायास्तथैवनगरस्यतु सोमशर्मोवाच कुशलंवर्त्ततेराजन्श्वशु
रस्यगृहेतव चंद्रभागाकुशालिनीसर्वतः कुशलंपुरे परंतुकथ्यतांराजन्नेतदाश्चर्यंकृतथा प्राप्तंत्वयापुरंरम्यं
किंत्वतस्यप्रभावतः पुरंविचित्रंराजेंद्रनदृष्टंकेनचित्क्वचित् एतदाचक्ष्वमेसर्वंकस्मात्प्राप्तंपुरंतव शोभनउवाच
कार्त्तिकस्यासितेपक्षेरमानामेतिविश्रुता तामुपोष्यमयाप्राप्तंद्विजेंद्रपुरमध्रुवं ध्रुवंभवतियेनैतत्तत्कुरुष्वद्विजोत्तम
सोमशर्म्मोवाच कथयाध्रुवमेतद्धिकथंभवतितद्ध्रुवं तत्त्वंकथयराजेंद्रतत्करिष्यामिनान्यथा शोभनउवाच

मथैताद्विहितांविप्रश्रद्धाहीनांद्विजोत्तम तेनाहमध्रुवंमन्येध्रुवंभवतितच्छृणु मुचुकुंदस्यदुहिताचंद्रभागासुशोभ
ना तस्यैकथयवृत्तांतंध्रुवमेतद्भविष्यति इतिश्रुत्वावचस्तस्यागतोविप्रः स्ववेश्मनि कथयामासवृत्तांतंराजक
न्याग्रतोद्विजः श्रुत्वाथसाद्विजवचोविस्मयोत्फुल्ललोचना प्रत्यक्षमथवास्वप्नस्त्वयैतत्कथ्यतेद्विज सोमशर्मोवाच
प्रत्यक्षंदयितःकांतस्तवदृष्टोमयाशुभे देवतुल्यमनाधृष्यंदृष्टंतस्यपुरंमया अध्रुवंतेनतत्प्रोक्तंध्रुवंभवतितत्कुरु
चंद्रभागोवाच नयमांतत्रविप्रेंद्रपतिदर्शनलालसां आत्मनोव्रतपुण्येनकरिष्यामिध्रुवंपुरं आवयोर्द्विजसंयोगोय
थाभवतितत्कुरु प्राप्नुहित्वमहापुण्यंकृत्वायोगंवियुक्तयोः इतिश्रुत्वावचस्तस्याःसोमशर्माजगामह आश्रमंवामदेवस्य
मंदराचलसान्निधौ वामदेवोऽशृणोत्सर्ववृत्तांतंकथितंतयोः अभ्यापिंचच्चंद्रभागांवेदमंत्रैरथोर्जितैः ऋषिमंत्रप्रभावे
णविष्णुवासरसेवनात् दिव्यदेहाबभूवासौदिव्यांगतिमवापच पत्युः समीपमगमत्प्रहर्षोत्फुल्ललोचना
जहर्षशोभनोऽतीवदृष्ट्वाकांतांसमागतां समागम्यस्वकेवामपार्श्वेतांसन्यवेशयत् अथोवाचप्रियाहर्षाच्चंद्रभागा
शुभंवचः शृणुकांतहितंवाक्यंयत्पुण्यंविद्यतेमयि अष्टवर्षाधिकाजातायदाहंपितृवेश्मनि ततःप्रभृत्येवमया
कृतमेकादशीव्रतं यथोक्तविधिनायुक्तंश्रद्धापूतेनचेतसा तस्याःपुण्यप्रभावेणपुरंभवतुमेध्रुवं सर्वकामसमृद्धंचया
वदाभूतसंप्लवम् किमत्रबहुनोक्तेनदत्तंपुण्यंमयाखिलम् श्रीकृष्णउवाच एवंचनृपशार्दूलसारेमेपतिनासह दि
व्यभोगादिव्यरूपादिव्याभरणभूषिता शोभनोऽपितयासार्द्धंरमतेदिव्यविग्रहः रमाव्रतप्रभावेणमंदराचलमूर्द्धनि
चिंतामणिसमाह्येपाकामधेनुसमाथवा रमाभिधानानृपतेतवाग्रेकथितामया एकादशीव्रतानांचपक्षयोरुभयो
रपि यथाशुक्लातथाकृष्णाविभेदंनैवकारयेत् सेवितैकादशीनृणांभुक्तिमुक्तिप्रदायिनी धेनुःशुक्लातथाकृष्णा
तूभयोःसदृशंपयः तथैवतुल्यफलदंस्मृतमेकादशीद्वयं एकादशीव्रतानांचमाहात्म्यंशृणुतेनरः सर्वपापविनि

मुक्तोविष्णुलोकेमहीयते ॥ इतिब्रह्मवैवर्तपद्मपुराणेचकार्त्तिककृष्णारमैकादशीव्रतकथा कार्त्तिककृष्णद्वाद
शीगोवत्ससंज्ञा साप्रदोषव्यापिनीग्राह्या दिनद्वयेतथासत्त्वेपूर्वेतियुग्मवाक्यात् तथाच वत्सपूजाविधिश्चैव
कर्त्तव्याप्रथमेहनीतिनिर्णयामृतेऽभिधानात् हेमाद्रौ आग्नेये ॥ कार्त्तिकःखलुमासोवैसर्वदेवमयोमहान् कृष्ण
पक्षेविशेषेणनवम्यादिदिनानितु पुण्यानितेपुयद्दत्तमक्षय्यंसर्वकामिकमिति नारदउवाच आश्विनेकृष्णपक्षे
तुद्वादश्यादिपुपंचसु तिथिपूक्तःपूर्वरात्रेनृणांनीराजनाविधिः नीराजयेयुर्देवांश्चविप्रांश्चैवतुरंगमान् ज्येष्ठा
न्श्रेष्ठान्जघन्यांश्चमातृमुख्याश्चयोपितःअत्राश्विनग्रहणंमुख्यचांद्राभिप्रायेण अत्रविशेषोमदनरत्ने भविष्ये स
वत्सांवाऽसवत्सांचशीलिनींगांपयस्विनीं चंदनादिभिरालिप्यपुष्पमालाभिरर्चयेत् अर्घंताम्रमयेपात्रेकृत्वापुष्पाक्ष
तैस्तिलैःपादमूलेतुदद्याद्वैमंत्रेणानेनपांडव क्षीरोदार्णवसंभूतेसुरासुरनमस्कृते सर्वदेवमयेमातर्गृहाणार्घंनमोस्तुते.
तद्दिनेतैलपक्वंचस्थालीपक्वंयुधिष्ठिर गोक्षीरंगोघृतंचैवदधितक्रंचवर्जयेत् अथान्योपिप्रकारःनरोवायदिवानारीनक्तं
संकल्प्यचेतसोत्युपक्रम्य मापान्नंकामतोश्नीयाद्रात्रौविगतमत्सरः प्रतीक्षेतागमंभक्त्यागवांगोस्थानतत्परः इति
गोष्ठागतासुसंध्यायां गोपूजाविधानाच्च वत्सस्यपूजाशिवरात्रिरेपापरावितिघ्नंतिनृपंसराष्ट्रमिति मातारुद्राणां
दुहितावसूनां स्वसादित्यानाममृतस्यनाभिःप्रणुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट स्त्रीशूद्राणांमहा
वाहोमंत्रःपौराणिकोयथा क्षीरोदार्णवसंभूतइत्यादि ॥ ततोमापादिसंसिद्धान्वटकांश्चनिवेदयेत् पंचसप्तद
शैकंवायथाविभवमात्मनः तत्रमंत्रः सुरभिस्त्वंजगन्मातर्नित्यंविष्णुपदेस्थिता सर्वदेवमयेग्रासंमयादत्तमि
मंग्रस तत:प्रार्थना सर्वदेवमयेदेविसर्वरत्नैरलंकृते मातर्ममाभिलषितंसफलंकुरुनंदिनि इतिगोवत्सद्वाद
शीव्रतम् ॥ अथकथा युधिष्ठिरउवाच अक्षौहिण्योदशाष्टौचममह्यर्थेक्षयंगताः तेनपापेनचित्तेमेजुगुप्सातीव

जायते तत्रब्राह्मणराजन्यवैश्यशूद्रादयोहताः भीष्मद्रोणकलिंगादिकर्णशल्यमुखाहताः तेषांवधेन यत्पापंतन्मेमर्माणिकृंतति पापप्रक्षालनंकिंचिद्व्रतंब्रूहिजनार्दन श्रीकृष्णउवाच महापुण्यव्रतंस्त्रीणांगोवत्स द्वादशीव्रतं अस्त्यत्रभुवनेपार्थमहापातकनाशनं गोरूपिणीपुरादेवीपूजिताब्रह्मवादिभिः सवत्साकार्तिकेमासि कृष्णपक्षेयुधिष्ठिर द्वादश्यांभक्तियुक्तैस्तैर्नंदिनीनामनामतः ततःप्रभृतिराजेंद्रप्रथितापृथिवीतले उत्तानपादेनत दाव्रतंचीर्णंमहाफलं उत्तानपादनामासीत्क्षत्रियःक्षितिभूषणं तस्यभार्याद्वयंचासीत् सुरुचीरुचिराख्यकम् सु रुच्यातुध्रुवःपुत्रोबालःपादचरोयदा रुच्यैसमर्पितःस्त्रुच्याबालोयंरक्ष्यतामिति अहंकरिष्येशुश्रूषांशुचिस्तद्व्रतमान सा रुचिःसौभाग्यमासाद्यसुखमास्तेगृहेसदा करोतिभर्तुःशुश्रूषांसातुनित्यंपतिव्रता कदाचित्क्रोधमासाद्य सापत्न्यंजनितंतया स्वयंरुच्यानिहत्यासौपार्थखंडदलीकृतः पक्त्वासुसंस्कृतःस्थाल्यामाहारार्थंनृशंसया त तोभोजनवेलायांदत्तोऽसौनृपतेःस्वयं तस्याथभोक्तुकामस्यध्रुवोजीवनमाप्तवान् ततःपलाय्यसोराजन्मातुरुत्सं गगोभवत् तद्दृष्ट्वामहदाश्चर्यंस्त्रुचिपप्रच्छविस्मिता किमेतद्ब्रूहिवृत्तांतयस्येयंव्युष्टिरुत्तमा किंत्वयाचरितंभ द्रेव्रतंदानंतपस्तथा सत्यंकथयमेत्वद्ययेनतेजीवितःसुतः मयायंसप्तवारांस्तुनिहत्यशकलीकृतः पक्वःसुसंस्कृ तःस्थाल्यांभोजनेव्यंजनैःसह पात्रेदत्तःपुनश्चैवजीवत्येवहितेसुतः किंतेसिद्धामहाविद्यामृतसंजीवनीतुवा म णिमंत्रमहायंत्रमथवांजनमौषधं कथयस्वमहाभागेवेपथुर्हृदयेमम श्रीकृष्णउवाच एवमुक्तातुरुच्यासाताम‍ु वाचयशस्विनी भद्रेनदत्तंनहुतंतपस्तप्तंमयातथा सिद्धानकाचिद्विद्यास्तिममंत्रौषधवेदिनी किंतुचीर्णंमया भद्रेगोवत्सद्वादशीव्रतं व्रतस्यास्यप्रभावेणपुनर्जीवतिमेसुतः वत्सोमेववत्सवेलायामतोर्थंक्रियतेसदा समा गमश्चभवतिपुत्रपौत्रशतैरपि यथावत्तेसमाख्यातंत्वमप्येतत्समाचर तवचाप्यचिरात्पुत्रोभविष्यतियथामम ए

वमुक्तेव्रतंचीर्णंरुच्यापुत्रधनेच्छया अवापसोत्तमंपुत्रंमनुवंशविवर्धनम् युधिष्ठिरउवाच कथंगोद्वादशीनामविधानं
तत्रकीदृशं कथमेपासमुत्पन्नाकस्मिन्कालेजनार्दन एतत्सर्वंवृतंब्रूहित्राहिमांनरकार्णवात् श्रीकृष्णउवाच पु
राकृयुगेपार्थमुनिकोटिःसमागता तपश्चकारविपुलंनानाव्रतधरागिरौ हर्षेणमहताविष्टादेवदर्शनकांक्षया जंबू
मार्गेमहापुण्येनानातीर्थविभूपिते पारियात्रेसिद्धपात्रेरम्येतुंडलिकाश्रमे पंचागिरीतिविख्याताउत्तमेशिखरेनृप
तापसारण्यमतुलंदिव्यकाननभूपितं वसिष्ठशुक्रांगिरसक्रतुदक्षादिभिर्वृतं वल्कलाजिनसंवीतैर्मृगैराश्रममंड
लं नानामृगगणैर्युक्तंशाखामृगगणैर्युतं प्रशांतासिंहहरिणावक्रसर्पगणाकुलं गहनंनिर्जरैरम्यंलतासंतानसंकुलं
सिंहव्याघ्रगजाश्वैर्हरिणैःशंवरैःशशैःवाराहैरुरुभिश्चित्रैःसमंतादुपशोभितं तपस्यतांतत्रतेपांमुनीनांदर्शनार्थिनां
व्याजंचक्रेमहीनाथद्वादशार्द्धविलोचनः बभूवब्राह्मणोवृद्धोजटापांडुरमूर्धजःश्लथच्चर्मतनुःकुब्जोयष्टिपाणिःसवेपथुः उ
मापिचक्रेगोरूपंशृणुतत्पार्थकीदृशं क्षीरोदतोयसंभूतायाःपुरामृतमंथने पंचगावःशुभाःपार्थसर्वलोकस्यमातरः नं
दासुभद्रासुरभीसुशीलावहुलाऽपि एतालोकोपकारायलोकानांतर्पणायच जमदग्निभरद्वाजवसिष्ठात्रिसगौत
माः जगृहुःकामदाःपंचगावोदत्ताःसुरैस्तदा गोमयंरोचनामूत्रंक्षीरंदधिघृतंगवां षडंगानिपवित्राणियासांसि
द्धिकराणिच गोमयादुत्थितःश्रीमान्विल्ववृक्षः शिवप्रियः तत्रास्तेपद्महस्ताश्रीःश्रीवृक्षस्तेनसस्मृतः वी
जान्युत्पलपद्मानांपुनर्जातानिगोमयात् गोरोचनाचमांगल्यापवित्रासर्वसात्त्विका गोमूत्राद्गुग्गुलुर्जातःसुगंधिः
प्रियदर्शनःआघ्रेयःसर्वदेवानांशिवस्यचविशेपतःयद्बीजंजगतःकिंचित्तद्ज्ञेयंक्षीरसंभवं दध्नःसर्वाणिजातानिमंगला
न्यर्थसिद्धये घृतादमृतमुद्भूतंदेवानांतृप्तिकारकं ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं एकत्रमंत्रास्तिष्ठंतिहवि
रेकत्रतिष्ठति गोपुयज्ञाःप्रवर्तंतेगोपुदेवाःप्रतिष्ठिताः गोभिर्वेदाःसमुद्गीर्णाःसपडंगपदक्रमाः शृंगमूलेगवांनित्यं

ब्रह्माविष्णुश्चसंस्थितौ शृंगाग्रेसर्वतीर्थानिस्थावराणिचराणिच शिरोमध्येमहादेवःसर्वकारणकारणं लला
टेसंस्थितागौरीनासाग्रेचषडाननःकंबलाश्वतरौनागौनासापुटमुपाश्रितौ कर्णयोरश्विनौदेवौचक्षुर्भ्याशशिभास्क
रौ दंतेषुवायवःसर्वेजिव्हायांवरुणःस्थितः सरस्वतीचहुंकारेयमःकुक्षौचगंडयोः संध्याद्वयंतथैवोष्ठेग्रीवायांचपुरः
सरं ऋक्षाणिककुदिद्यौश्चपार्ष्णिषुसंव्यवस्थिताः चतुष्पात्सकलोधर्मोनित्यंसंध्यासुतिष्ठति खुरमध्येतुगंधर्वाः
खुराग्रेपुचपन्नगाः खुराणांपश्चिमेभागेराक्षसाःसंप्रतिष्ठिताः रुद्राएकादशपृष्ठेवसवः सर्वसंधिषु श्रोणीतटस्थाः
पितरोरोमकूपेषुमातरः श्रीरपानेगवांनित्यंस्वाहालांगूलमास्थिता आदित्यरश्मयोवालाः पिंडीभूयव्यवस्थिताः
साक्षाद्गंगाचगोमूत्रेगोमयेयमुनास्थिता उदरेपृथिवीसर्वासशैलवनकानना चत्वारःसागराःप्रोक्तागवांयेतुपयोधराः
पर्जन्यःक्षीरधारासुमेघाविंदुष्ववस्थिताःजठरेगार्हपत्योग्निर्दक्षिणाग्निर्हृदिशोःस्थितःमुखआहवनीयोग्निस्त्रेताग्निस्तालु
संस्थितः अस्थिष्वेवस्थिताःशैलामज्जायांशुक्रसंस्थितिः ऋग्वेदोथर्ववेदश्चसामवेदोयजुस्तथा सितरक्तपीत
कृष्णागवांवर्णेषुसंस्थिताः तासांरूपाण्यनुस्मृत्वासुरभीणांयुधिष्ठिर संस्मृत्यतत्क्षणाद्गौरीनंदिन्यासदृशींतनुं
आत्मनोविदधेदेवीधर्मराजशृणुष्वतां षडुन्नतांपंचास्निग्धांमंडूकाक्षींसवालधीं ताम्रस्तनींरक्तकंठींसुखुरांसु
मुखींसितां सुगतिंचसुशीलांचस्नेहक्षीरपयोधरां गोरूपिणीमुमांदृष्ट्वातांचधेनुंसवत्सकां पर्य्यायप्र
चुरांदृष्ट्वामहादेवःस्वचेतसि शनैःशनैर्ययौपार्थविप्ररूपीतमाश्रमं गत्वाकुलपतेःपार्श्वेभृगोःस्वांगान्यवेदयत् त
पः स्यतांचसर्वेषांमुनिकोटिषुपांडव न्यासरूपांददौधेनुंरक्षध्वंनंदिनींमम यावत्स्नात्वाइतस्तीर्थाजंबूमार्गात्
प्रयास्यहम् रक्षिष्यामःप्रतीक्षामोवयंतुसुरभीमिमां अंतर्हितोमहादेवःपुनर्व्याघ्रोवभूवह वक्रक्रूरनखोदंष्ट्रोज्वल
पिं।३३।चे१ : दंष्ट्राकरालवदनोजिह्वालांगूलदारुणः प्रायादाश्रमपदंतांचधेनुंसवत्सकां त्रासयामासना

देनसर्वेनादेनकंपिताः ऋषयोऽपिसमाहूताआर्त्तनादंप्रचक्रिरे हाहेत्युच्चैःकेचिदूचुर्हुंकारांश्चतथापरे तालस्फो
टान्दधुःकेचिद्व्याघ्रंदृष्ट्वातिभैरवं सापिहंभारवंचक्रेगौरुत्प्लुत्यसवत्सका तस्याव्याघ्रभयार्तायाःकपिलायायुधिष्ठिर प
लायंत्याःशिलामध्येक्षुण्णंखुरचतुष्टयं व्याघ्रवत्सकयोस्तत्रवंदितंसुरकिन्नरैः दृश्यतेतीवसुव्यक्तंतदद्यापिचतुष्पदं
सजलंशिवलिंगंचशंभोस्तीर्थंतदुत्तमं यस्तंस्पृशतिराजेंद्रसगोहत्यांव्यपोहति तत्रस्नात्वामहातीर्थेजंबूमा
र्गेनराधिप ब्रह्महत्यादिभिःपापैर्मुच्यतेनात्रसंशयः ततस्तेमुनयःक्रुद्धाब्रह्मदत्तांमहास्वनां जघ्नुर्घंटांसुरैर्दत्तांगिरि
कंदरपूरिणीं घंटाशब्देनव्याघ्रोपिमुक्तातांगांसवत्सकां विप्रैस्तैस्तुकृतंनामघंटागिरिरितिश्रुतं तत्रपश्यंति
येपार्थरुद्रास्तेनात्रसंशयः अथप्रत्यक्षतांयातस्तेषांदेवोमहेश्वरः शूलपाणिस्त्रिपुरहाकामघ्नोवृषभेस्थितः उमा
सहायोवरदःसस्वामीसविनायकः सनंदीसमहाकालःसभृंगीसगणोहरः सवीरभद्रचामुंडोघंटाकर्णादिभिर्वृतः
मातृभिर्गौः सवत्साचपूजिताब्रह्मचारिभिः कार्त्तिककृष्णपक्षेतुद्वादश्यांनंदिनीव्रतं ततःप्रभृतिराजेंद्रह्यवती
र्णामहीतले उत्तानपादेनतथाव्रतंचीर्णमिदंशृणु यावंतिगात्रेरोमाणिगवांकौरवनंदन. तावद्वर्षसहस्राणि
गोलोकेवसतेनरः मेरोपुर्यष्टकंरम्यमिंद्राग्नियमरक्षसां . वरुणानिलयक्षाणांरुद्रस्यचयुधिष्ठिर तासामु
परिगोलोकस्तत्रयातिसगोव्रती ऊर्जेऽसितेद्विदशमेहानिगास्सवत्सासंपूजयंतिकुसुमैर्वटकैश्चहृद्यैः ताःसर्वकामसु
खभोगसमृद्धिभाजोभक्त्यावसंतिसुचिरंभुविजीववत्साः ॥ इतिश्रीभविष्योत्तरे कार्तिककृष्णगोवत्सद्वादशीव्रतं
अस्यामेवकार्तिकद्वादश्यांनीराजनद्वादशीव्रतंज्योतिर्निबंधे ॥ नारदउवाच- आश्विनेकृष्णपक्षेतुद्वादश्यादिषुपंच
सु तिथिषूक्तःपूर्वरात्रेनृणांनीराजनाविधिः नीराजयेयुर्देवांश्चविप्रान्गाश्चतुरंगमान् ज्येष्ठान्श्रेष्ठान्जघन्यां
श्चमातृमुख्याश्चयोषितइति ॥ अत्राश्विनोमासश्चांद्रमासाभिप्रायेणाऽमांतोग्राह्यः अथकार्त्तिककृष्णत्रयोदशी

कृत्यंनिर्णयामृते ॥ कार्त्तिकस्यासितेपक्षेत्रयोदश्यांनिशामुखे यमदीपंबहिर्दद्यादपमृत्युर्विनश्यति । अत्रयमदे
वतत्वाद्दक्षिणमुखेनदीपदानंकार्य्यं आचाराद्दीपपूजनमपि अत्र त्रयोदशीप्रदोषव्यापिनी ग्राह्या निशामुखइ
तिवाक्यात् मंत्रश्च ॥ मृत्युनापाशदंडाभ्यांतुलयालोलयासह त्रयोदश्यांदीपदानात्सूर्यजःप्रीयतामिति अथ
गोत्रिरात्रव्रतकथा । स्कंदउवाच देवदेवमहादेवपरंब्रह्ममहेश्वर आयुर्यशोर्थपुत्राश्वधर्मसत्कुलकारकं व्रतंब्रू
हिमहेशानसर्वशोकप्रणाशनं जाताःपुत्राःप्रजायंतेअरोगाःसुखिनस्तथा तेषांपुत्राश्चवध्वश्चदृश्यंतेयेचशोभनाः
सौभाग्यंचातुलंप्राप्यसपत्नीनैवजायते येनसर्वसुखंभुक्त्वावैकुंठभवनंव्रजेत् ईश्वरउवाच व्रतानामुत्तमंस्कंदत
ववक्ष्येसनातनं येनैवचीर्णमात्रेणसर्वयज्ञफलंलभेत् यत्कृत्वासर्वदानस्यफलमाप्नोतिमानवः गोत्रिरात्रमिति
ख्यातंसर्वपापप्रणाशनं नारीवाथनरोवापित्रिरात्रंव्रतमाचरेत् प्रातःस्नात्वात्रयोदश्यांकृत्वावैदंतधावनं त्रिरा
त्रंनियमंकुर्य्याद्गोविंदेभक्तिभावतः गोविंदजगतोनाथगोवर्धनधरानघ गोत्रिरात्रंकरिष्यामिशरणंमेभवाच्युत
नियममंत्रः गोष्ठेवागोपथेवाथकृत्वाभूमिगृहंशुभं अष्टहस्तंचतुर्हस्तंचतुरस्रंसुशोभनं वितानंपुष्पमालाभिःफलै
र्नानाविधैरपि मध्येवेदींततःकृत्वामंडलंतत्रकारयेत् सर्वतोभद्रमथवानवनाभमथापिवा तन्मध्येविन्यसेद्देवंगो
वर्द्धनधरंहरिं रुक्मिणींमित्रविंदांचसत्यांजांबवतींतथा वामभागेतुदेवस्यपूज्यावैभक्तिभावतः सत्यभामांलक्ष्म
णांचशैब्यांनाग्नजितींतथा दक्षिणेचैवपूज्यास्तुनंदंचपुरतोयजेत् बलभद्रंयशोदांचपृष्ठतःपूजयेच्छुभाः सुरभीच
सुनंदाचसुभद्राकामधेनुका एताश्चतस्रोदेव्यश्चकृष्णस्यपुरतोन्यसेत् सुवर्णमाषकैःकार्य्याःषोडशप्रतिमाःशुभाः
गोवर्द्धनश्चकर्त्तव्योराजतःपलसम्मितः छत्राकारोमहावृक्षैःशोभितःपक्षिभिर्वृतः गोपीगोपसमाकीर्णोमहाद्

समन्वितः एवसंस्थाप्ययत्नेनततः पूजांसमाचरेत् आगच्छभगवन्कृष्णगोपीगोपसमान्वित रुक्मिण्यादि-
भिरासीनममपूजांगृहाणच । इत्यावाहनमंत्रः । नम-कृष्णायपादौचहरयेजानुनीनमः उदरेवलदेवायमुकुंदाय
नम-कटिचक्रिणेचभुजौपूज्यौकंठंश्रीवत्सधारिणे मुखंपद्ममुखायेतिगोविंदायनमःशिरः प्रणवादिनमोंतैश्चअष्टांगं
पूजयेद्धरेः । रुक्मिण्यैनम-मित्रविंदायैनम-शैव्यायैनम जांववत्यैनमःसत्यभामायैनमः सुदेवायैनमः सत्यायैनमः
नाग्नजित्यैनमः यशोदायैनमः वलभद्रायनमः नंदायैनम- सुरभ्यैनमः सुनंदायैनमः सुभद्रायैनमः काम
धेनवेनमः गोवर्द्धनधराधारगोकुलत्राणकारक कृष्णवाहुकृतोद्धारपूजयामिनमोनमः एवंसंपूज्यविधिवत्पश्चाद
र्घ्यंप्रदापयेत् गवामाधारगोविंदरुक्मिणीवल्लभप्रभो गोपीगोपसमोपेतअर्घ्यंगृह्णनमोस्तुते एवंपूजांसमाप्यै
वभक्तिभावपुरस्सरं गवामर्घ्यःप्रदातव्यस्सायाह्नेतुदिनत्रयं मंत्रेणानेनविधिवद्विंशतीनांस्वशक्तितः रुद्राणांचै
वयामातावसूनांदुहिताचया आदित्यानांचभगिनीसानःशांतिंप्रयच्छतु इत्यर्घ्यमंत्रः । नमोगोभ्यःश्रीमतीभ्यःसौ
रभेयीभ्यएवच नमोधर्मसुताभ्यश्चपवित्राभ्योनमोनमः । सुरभीवैष्णवीमातानित्यंविष्णुपदेस्थिता प्रतिगृह्णा
तुमेग्रासंसुरभीमेप्रसीदतु गोग्रासमंत्रः । गावोमेअग्रत-संतुगावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसा
म्यहम् नावियोगोस्तुमेपुत्रैर्भृत्यैश्चसहवांधवैः त्वत्प्रसादनमेभक्तिर्निश्चलास्यात्सदात्वयि प्रार्थनामंत्रः एवंसंपू
ज्यगाश्चैवगोविंदंचाविशेषतः पुष्पैर्गंधैश्चधूपैश्चदीपैश्चाविविधैस्तथा नैवेद्यघृतपक्वैश्चफलैर्नानाविधैरपि सप्त
धान्यैर्विरूढैश्चवंशपात्रस्थितैःशुभैः सुवासिन्यस्तथापूज्यानित्यंतांबूलकुंकुमैः कंठसूत्रैस्तथापुष्पैस्तथावाद्या
नकादिभिःएवंसंपूज्यविधिवद्गोविंदंतांदिनत्रयं उपवासत्रयंचैवचतुर्थेदिवसेपुनः प्रातःशुचिःसमुत्थायकृत्वास्ना
नंप्रयत्नतः प्रणम्यमुख्याचार्य्येणहोमंतत्रैवकारयेत् तिलैरष्टोत्तरशतंगायत्र्याहोममाचरेत् ततोविसृज्यदेवेशं

गुरवेप्रतिपाद्यच गवांःपुच्छंसमालंव्यपुरस्कृत्यद्विजर्षभान् हठेनमनसास्कंदगृहमागत्यसत्कृतः मिथुनानि
द्वादशाष्टौभूषणाच्छादनादिभिः संपूज्यभोजनंदत्वागोदानानिचदापयेत् गुरोर्दीपत्यमर्चित्वावासोभूषणसंयुतं
भक्त्यागोवर्द्धनंकृष्णंगोपगोपीसमन्वितं गृहोपकरणैर्युक्तंयथाशक्त्याचभक्तितः गुरौसंपादयेद्देवंदक्षिणासहि
तंहरिं क्षमाप्यचगुरुंतत्रभुंजीतशुचिसंस्कृतं इष्टैःशिष्टैःसहासीनोवाग्यतोविष्णुतत्परः दीपोत्सवव्रतमिदं
शुचिमानसेनकृत्वानरःसकलसंततिवृद्धिकारि भुक्तासभोगनिचयंसुखसंप्रयुक्तश्रंतेप्रयातिभुवनंमनुजोमुरारेः ॥
इतिस्कंदपुराणोक्तंकार्तिककृष्णत्रयोदश्यांगोत्रिरात्रव्रतम् अत्रत्रयोदशीऔदयिकीग्राह्या दिनद्वयेतूदयव्यापि
नीकृष्णपक्षस्थत्वेनपराकार्या पष्ठ्यष्टमीह्यमावस्याकृष्णपक्षेत्रयोदशी एताःपरयुताःकार्याः पराःपूर्वयुतास्त
थेत्यादिबहुवाक्यसत्वात् अथकार्तिककृष्णचतुर्दश्यां चंद्रोदयेअभ्यंगस्नानंकार्य्यं तदुक्तंहेमाद्रौ भविष्ये ॥ का
र्तिकेकृष्णपक्षेतुचतुर्दश्यामिनोदये तिलतैलेनकर्त्तव्यंस्नानंनरकभीरुभिरिति मदनरत्नेकालादर्शेच विधूदय
इतिपाठःनिर्णयामृतेदिनोदयइतिपाठः मयूखेतुइनोदयइति इनःसूर्यस्तस्योदयइतिव्याख्यातं अत्रच यथा
चारंव्यवस्थेतिकेचित् ॥ इनःसूर्येप्रभौराज्ञिमृगांकेऽपिप्रकीर्तित इत्यभिधानात् ब्रह्मपुराणेपि तैलेलक्ष्मी
र्जलेगंगादीपावल्याश्चतुर्दशीं प्राप्यैतिशेपः प्रातःस्नानंतुयःकुर्य्याद्यमलोकंनपश्यतीति अपामार्गमथोतुंबीप्रप
न्नाटुमथापरं भ्रामयेत्स्नानमध्येतुनरकस्यक्षयायवै प्रपन्नाटुश्चक्रमर्दकः तथा अपामार्गस्यपत्राणिभ्राम
येन्मस्तकोपरि ततश्चतर्पणंकार्य्यंधर्मराजस्यनामाभिः नारदसंहितायामपि ॥ इषासितचतुर्दश्यामिंदुक्षय
तिथावपि नागाख्येस्वातिसंयुक्तेतदादीपावलीभवेत् तैलेलक्ष्मीर्जलेगंगादीपावलितिथौवसेत् अलक्ष्मीप
रिहारार्थमभ्यंगस्नानमाचरेत् कुर्य्यात्संलग्नमेतच्चदीपोत्सवदिनत्रयमिति ॥ इंदुक्षयेपिसंक्रांतावारेपातेदिनंत

ये तत्राभ्यंगोनदोषायप्रातः पापापनुत्तय इति । अत्रइषः अमांतमासेनग्राह्यः येतु अरुणोद यतोन्यत्ररिक्तायांस्नातियोनरः तस्याब्दिकभवोधर्मोनश्यत्येवनसंशय इति दिवोदासीये भविष्यवचनं तन्मुख्यकालेचतुर्दश्यभावेपि तत्रैवस्नातव्यमित्येवपरं यद्यपि कार्तिकव्रतिनां तैलाभ्यगवर्जनमपि नियमे घूक्तं । तैलाभ्यंगंतथाशय्यांपरान्नंकांस्यभाजनं कार्तिकेवर्जयेद्यस्तुपरिपूर्णव्रतीभवेदितिपाद्मे तथापि अत्रतैलाभ्यंगः स्नातैरपिकार्य्यो नरकस्यचतुर्दश्यांतैलाभ्यंगंचकारयेत् अन्यत्रकार्तिकस्नायीतैलाभ्यंगं विवर्जयेत् इति तत्रैवप्रतिप्रसवश्रुतेः इयंचतुर्दशी प्रातःकालव्यापिनी ग्राह्या विधूदय इति पूर्वोक्तत्वात् कृत्यरत्नावल्यांतु दिनोदयप्रातःशब्दयोः समानार्थत्वात् प्रातःकालव्यापिनीग्राह्येत्युक्तं दिनद्वयेचंद्रो दयव्याप्तौचपूर्वाग्राह्या ॥ पूर्वविद्धचतुर्दश्यांकार्तिकस्यासितेतरे पक्षेप्रत्यूपसमयेस्नानंकुर्यात्प्रयतूनत इति निर्णयामृतोक्तवचनात् दीक्षितीयेतु दिनद्वयेचंद्रोदयेचतुर्दश्यभावे अभावेचचतुर्दश्याराात्रितुर्य्ययामेस्नान मितिनिर्णयसिंधावपि चतुर्थयामगामिनीग्राह्येत्युक्तं अतएव सर्वज्ञनारायणः तथाकृष्णचतुर्दश्यामाश्विनेर्कोद यात्पुरा यामिन्याः पश्चिमेभागेतैलाभ्यंगोविशिष्यतइति कालादर्शेपि । मृगांकोदयवेलायांत्रयोदश्यांच । भवेत् दर्शेवामंगलस्नानंदुःखशोकभयप्रदमिति त्रयोदशीनिषेधः मयूखेतु दिनद्वयेचंद्रोदयव्याप्त्यभावेपू र्वेतिगौणकालेसत्त्वात् अत्रचंद्रोदयोमुख्यः सूर्योदयोगौणः उत्तरभावित्वात् स्वकालादुत्तरोगौणः कालः सर्वस्यकर्मणइतिवचनात् अतएवपूर्वोक्तोद्विविधोपिपाठः. संगच्छते तिथ्यादौतुभवेद्यावाग्रासेद्वाद्विः परेऽहनी तिवाक्येनत्रयोदश्यंतेचतुर्दशीग्रासप्रक्षेपेण चंद्रोदये पारिभाषिकचतुर्दशीसद्भावात् अतएवचंद्रप्रकाशे त्रयोदशी यदाप्रातःक्षयंयातिचतुर्दशी रात्रिशेषेत्वमावास्यातदाभ्यंगेत्रयोदशीति एवं दिवोदासीयेऽपि अत्र विभूतिकामैः

सुगंधितैलेनस्नानंकार्य्यम् तदुक्तंस्मृतिदर्पणे। चतुर्दशीयाश्वयुजस्यकृष्ण।स्वात्यृक्षयुक्ताचभवेत्प्रभाते स्नानंसमभ्य
र्च्यनरैश्चकार्य्यंसुगंधितैलेनविभूतिकामैरिति इदंचस्नानंचतुर्दशीमारभ्यादिनचतुष्ठयंप्रत्यहंकार्य्यं तदुक्तंपृथ्वीचंद्रो
दयेब्राह्मे इषेभूतेचतुर्दशेकार्तिकेदशमेदिने यदास्वातीतदाभ्यंगस्नानंकुर्य्यादिनोदये ऊर्जेशुक्लद्वितीया.
यातिथौयस्तुशुभेदिने मानवोमंगलस्नायीनैवलक्ष्म्यावियुज्यते दीपैर्नीराजनादत्रसैषादीपावलीस्मृतेति । अ
थस्नानविधिः तत्रादौदंतधावनादिकृत्वा ऊेमद्ययमलोकदर्शनाभावकामोभ्यंगस्नानंकरिष्ये इतिसंकाल्प्य
तैलेनाभ्यंगंकृत्वोदकेनस्नायात् ततः स्नानमध्ये सीतालोष्टसहितानि अपामार्गपत्राणि सतुंबकानि प्रपुन्ना
डंचमस्तकोपरिवक्ष्यमाणमंत्रेणभ्रामयेत् अत्रमंत्रः । सीतालोष्टसमायुक्तसकंटकदलान्वित हरपापमपामार्ग
भ्राम्यमाणःपुनःपुनरिति ततोयमतर्पणं तत्प्रकारस्तुमदनरत्ने स्कंदपुराणे दक्षिणाभिमुखोभूत्वातिलैःस
व्यंसमाहितः दैवतीर्थेनदेवत्वात्वक्ष्यमाणैश्चनामभिः यमायधर्म्मराजायमृत्यवेचांतकायच वैवस्वतायका
लयसर्वभूतक्षयायच ऊैदुंवरायदध्नायनीलायपरमेष्ठिने वृकोदरायचित्रायचित्रगुप्तायवैनमइति यज्ञो
पवीतिनाकार्य्यंप्राचीनावीतिनाथवा देवत्वंचपितृत्वंचयमस्यास्तिद्विरूपतेति अत्रचहेतूक्तिबलाच्छुक्लकृष्णति
लैः सकृत्त्रिरावृत्तादिरूपदैवपित्र्यधर्मविकल्पोद्रष्टव्यः इदंचयमुनायामतिप्रशस्तं तदुक्तं कृत्यतत्त्वार्णवे यां
कांचित्सरितंप्राप्यकृष्णपक्षेचतुर्दशीं यमुनायांविशेषेणनियतस्तर्पयेद्यममिति इदंचतर्पणंजीवत्पितृकेणापिका
र्य्यं जीवत्पितापिकुर्वीततर्पणंयमभीष्मयोरितिपाद्मोक्तेः अस्यामेवप्रदोषेदीपदानंकार्य्य तदुक्तं दिवोदासी
येब्राह्मे । अमावस्याचतुर्दश्योःप्रदोषेदीपदानतःयममार्गांधकारेभ्योमुच्यतेकार्तिकेनर इति तथा । ततःप्रदोपसम
येदीपान्दद्यान्मनोरमान् ब्रह्मविष्णुशिवादीनांभुवनेषुमठेषुच प्राकारोद्यानवीथीषुप्रतोलीनिष्कुटेषुच मंदु

रासुविविक्तासुहास्तिशालासुचैवहीति लैंगे । ततःप्रेतचतुर्दश्यांभोजयित्वातपोधनान् विप्रान्शैवांस्तथ
परान्शिवलोकेमहीयते दानंदत्त्वातुतेभ्यस्तुयमलोकंनपश्यति माषपत्रस्यशाकेनभुक्त्वातत्रादिनेनरः प्रेता
चतुर्दशीकालेसर्वपापैः प्रमुच्यते अत्रनरकोद्देशेनचतुर्वर्तियुक्तदीपदानंकार्य्यं तत्रपूर्वाभिमुखोभूत्वा दीपंसंपू
ज्यदीपदानंकुर्य्यात् तत्रमंत्रः । दत्तोदीपश्चतुर्दश्यांनरकप्रीतयेमया चतुर्वर्तिसमायुक्तः सर्वपापापनुत्तयइ
ति पश्चादन्यानपि दीपान्दद्यात् ज्योतिर्ग्रंथे । तुलासंस्थेसहस्रांशौप्रभातेभूतदर्शयोः उज्ज्वलज्योतिषादेहंदहेयं
व्योमवर्त्मनेति तद्दानेमंत्रः अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम उज्ज्वलज्ज्योतिषादग्धास्तेयांतुपरमांग
तिम् तद्विसर्जनेमंत्रः यमलोकंपरित्यज्यआगतायेमहालये उज्ज्वलज्ज्योतिषावर्त्मप्रपश्यंतोव्रजंतुतेइति
अस्यामेवनक्तभोजनमुक्तं लैंगे ॥ नक्तंप्रेतचतुर्दश्यांयःकुर्य्याच्छिवतुष्टये नतत्क्रतुशतेनापिप्राप्यतेपुण्यमीद
शमिति ॥ पूर्वदिनेप्रदोषेचतुर्दशी स्नानयोगेचोत्तरदिनेचेत्तदा पूर्वदिने प्रदोषेदीपदानादिकृत्वापरेद्युः स्नानंका
र्यं क्रमानुरोधेनकालबाधस्यान्याय्यत्वात् कृत्यतत्त्वार्णवेभविष्ये ॥ कार्तिकेभौमवारेतुचित्रायुक्ताचतुर्दशी
अस्यामाराधितःस्थाणुर्नयेच्छिवपुरंध्रुवं अतोभौमवारचित्रानक्षत्रयोगेचेयं महाफलेति तत्रैवव्याख्यातं निर्णया
मृतेतु इयंभौमवारयुक्ताचित्रास्या इत्युक्तापुष्करपुराणेत्विदमेव वचनं किंचित्पाठांतरेणलिखितं तस्यपूर्वार्द्धंतु
पूर्ववत् उत्तरार्द्धंतु ॥ तस्यांभूतेशमभ्यर्च्यगच्छेच्छिवपुरंनरइति अस्यांकार्तिककृष्णचतुर्दश्यां हनुमज्जन्मोद
नं तदुक्तं आश्विनस्यासितेपक्षेभूतायांचमहानिशि भौमवारेंजनीपुत्रंहनुमंतमजीजनत् इतिकार्तिककृष्ण
चतुर्दशीकृत्यानि अथकार्तिकस्यामावास्यादीपावलीतिप्रसिद्धा तत्र प्रातरभ्यंगस्नानंकुर्यात् तदुक्तं कालाद
र्शे । प्रत्यूषेआश्वयुग्दर्शेकृताभ्यंगादिमंगलः भक्त्याप्रपूजयेद्देवीमलक्ष्मीविनिवृत्तये अत्रादिपदेन पंचत्वगुदक

स्नानादेरुपसंग्रहः तदुक्तंपुष्करपुराणे । स्वातिस्थितेरवाविंदुर्यदिस्वातिगतोभवेत् पंचत्वगुदकस्नायाकृता
भ्यंगविधिर्नरः नीराजितोमहालक्ष्मीमर्चयन्श्रियमश्नुते भविष्योत्तरेऽपि एवंप्रभातसमयेत्वमावास्यांनरा
धिप स्नात्वादेवान्पितॄन्सम्यक्संपूज्याथप्रणम्यचेति नारदेनापि तिथित्रयेदीपावलित्वेनाभिधानात् तत्रतै
लेलक्ष्मीरित्यादिमंत्रेणाभ्यंगस्नानमुक्तं पूर्वत्राश्वयुग्दर्शशब्दःप्रत्यूषे स्वातियुक्तपरः तदुक्तंब्राह्मे । ऊर्जेशुक्लद्वि
तीयायांतिथिषुस्वातिऋक्षगे मानवोमंगलस्नायीनैवलक्ष्म्यावियुज्यते इषेदर्शेचभूतेचकार्तिकेप्रथमेदिने य
दिस्वातीतदाभ्यंगस्नानंकुर्यादिनोदये कश्यपसंहितायामपि दीपावलिंप्रथम्योक्तं इंदुक्षयेपिसंक्रांतौरवौपाते
दिनक्षये तदाभ्यंगोनदोषायप्रातः पापापनुत्तये । अतोत्रस्वातियोगंविनाप्यभ्यंगस्नानमुक्तं मात्स्येपीयंदी
पावल्युक्ता दीपैर्नीराजनादत्रसैपादीपावलीस्मृतेति अथादित्यपुराणोक्तं दीपावल्यमाकृत्यं सनत्कुमारउवाच
अमावस्यातुदेवेशात्कार्तिकेमासिकेशवात् अभयंप्राप्यसंसुप्तासुखंक्षीरोदसानुषु लक्ष्मीर्दैत्यभयान्मुक्तासुखं
सुप्तांबुजोदरे अतोर्थविधिवत्कार्य्यामनुष्यैः सुखसुप्तिका दिवातत्रनभोक्तव्यमृतेबालातुराज्जनात् प्रदोषस
मयेलक्ष्मींपूजयित्वायथाक्रमंदीपवृक्षास्तथाकार्य्याःशक्त्यादेवगृहेषुच चतुष्पथेश्मशानेचनदीपर्वतसानुषु वृक्षमू
लेषुगोष्ठेषुचत्वरेषुगृहेषुच वस्त्रैः पुष्पैर्भूषितव्याः क्रयविक्रयभूमिकाः दीपमालापरिक्षिप्तेप्रदोषेतदनंत
रं ब्राह्मणान्भोजयित्वातुसंभोज्यचबुभुक्षितान् अलंकृतेनभोक्तव्यंनववस्त्रोपशोभिना स्निग्धैर्मुग्धैर्विदग्धैश्च
बांधवैर्निर्वृतैः सहेति ॥ भविष्योत्तरेतु चतुर्दशीकृत्यमभिधायामावास्याकृत्यमुक्तं ॥ एवंप्रभातसमयेह्यमावा
स्यांनराधिप स्नात्वादेवान्पितॄन्भक्त्यासंपूज्याथप्रणम्यच कृत्वातुपार्वणंश्राद्धंदधिक्षीरघृतादिभिः भक्ष्यैर्नानावि
धैःसम्यग्भोजयित्वाक्षमापयेत् ततोपराह्णसमयेघोषयेन्नगरेनृपः अद्यराज्यंबलेर्लोकोयथेष्टंचेष्टतामिति लोकश्चापि

पुरेहृष्टःसुधाधवलिताजिरे वृक्षचंदनमालाभिरलंकृतगृहेपुरे तथापानरजोद्रिक्तनरनारीमनोहरे नृत्यवादित्रसंघुष्टे प्रज्वालितप्रदीपके अन्योन्यप्रीतिसंहृष्टेदत्ततालकरेजने तांबूलहृष्टवदनेकुंकुमक्षोदचर्चिते दुकूलपटनैपथ्यस्व र्णमाणिक्यभूपिते अद्भुतोत्कटशृंगारप्रदर्शितकुतूहले युवतीजनसंकीर्णवस्त्रोज्ज्वलविहारिणि दीपमालाकुलेरम्ये विध्वस्तध्वांतबंधने प्रदोपेदोपरहितेशस्तवादिजनैर्युने यात्राविहारसंचारजयजीवेतिवादिभिःक्षुद्रोपसर्गरहितेराज चौरभयोज्झिते मित्रस्वजनसंबंधिसुहृत्प्रेमाभिरंभिते ततोर्द्धरात्रसमयेस्वयंराजाव्रजेत्पुरं अवलोकयितुंरम्यंपद्भ्यामे वशनैःशनैःमहतातूर्य्यघोपेणज्वलद्भिर्हस्तदीपकैःसुदृशोयांतुसंपश्यन्कृतरक्षः स्वकैर्नरैःतंदृष्ट्वामहदाश्चर्य्यमृद्धिंचैवा त्मनःशुभां वलिराज्यप्रमोदंचततःस्वगृहमाव्रजेत् एवंगतेनिशीथेतुजनेनिद्रांधलोचने तावन्नगरनारीभिःशूर्पडिंडि मवादनैः निःक्राम्यतेप्रहृष्टाभिरलक्ष्मीःस्वगृहांगणादिति । कृत्यरत्नावल्यांतु सूर्पडिंडिमैरितिपाठः अस्यामेवरा त्रौकौमुदीमहोत्सवइतिनिर्णयामृते हेमाद्रौतु चतुर्दशीमारभ्यप्रतिपदंतंकौमुदीव्रतमुक्तं कौमुदीशब्दव्युत्पत्तिर पीत्थंकृता ॥ कौमोदतिजनोयस्यांनानाभावैःपरस्परं हृष्टास्तुष्टाःसुखापन्नास्तेनेयंकौमुदी स्मृतेति । अत्रैव वन्हिपुराणे पंचदिनसाध्यमपिकौमुदीव्रतमुक्तं ॥ मैत्रेयउवाच कार्तिकःखलुमासोवैसर्वदेवमयोमहान् कृष्ण पक्षविशेषेणतत्रपंचदिनानितु पुण्यानितेपुयद्दत्तमक्षयंसर्वकामदं एकादश्यांनरैर्दत्तंदीपंप्रज्वाल्यमूपिका मा नुष्यंदुर्लभंप्राप्यपरांगतिमवापसा लुब्धकोपिचतुर्दश्यांपूजयित्वाजनार्दनं निर्भक्तिःपरसंगत्याविष्णुलोकंज गामसः श्वपाक्यपित्रयोदश्यांदीपान्दत्वापरैःकृतान् वेश्यालीलावतीभूत्वाजगामपदमक्षयम् गोपःकश्चिद मावास्यांपूजांदृष्ट्वाचशार्ङ्गिणः मुहुर्जातःप्रजापालोराजराजेश्वरोभवत् तस्माद्दीपाःप्रदातव्याराात्रावस्तमितरवौ गृहेपुसर्वगोष्ठेपुचैत्येष्वायतनेपुच देवानांचैवरथ्यासुश्मशानेपुसरस्सुच नाकेशिनाशुभार्थायकार्येपंचदिनानितु

पापिनःपितरोयेचलुप्तपिंडोदकाक्रियाः चतुर्दश्याममावास्यांपितरःप्राप्नुवंतिते दिवामितिशेषः ॥ तत्रश्रीःपूज नीयातुमनुष्यैश्चप्रयत्नतः श्रीकामैस्तत्रतैःसर्वैःक्रीडितव्यंप्रयत्नतःबंधुभिःसहितैर्यत्नाद्गीतनृत्यप्रजागरैः योहिहर्षं प्रयातीहतस्यसंवत्सरंजयः द्यूतेतुक्रीडितेहानिर्विजयःस्याज्जयेध्रुवं सुखंप्रीतिःसुलाभःस्यात्तस्माद्यूतंप्रवर्त्तयेत् गौर्य्याजितःपुराशंभुस्तथाद्यूतेपिताजितःतेनासौशंकरोदुःखीसर्वदोमासुखान्विता श्रियासार्द्धंजगद्योनिःशेतेविष्णुः सुखान्वितः तस्यांरात्रौजनानांतुअतोर्थंसुखसुप्तिका । इतिसुखसुप्तिकाव्रतं तत्रदीपदानं अमावास्या प्रदोषव्यापिनीग्राह्यातस्याःकर्म्मकालेत्युक्तेः दिनद्वयेप्रदोषव्याप्तौपरैव दंडैकरजनीयोगोदर्शस्यस्यात्कदा चन तदाविहायपूर्वेद्युःपरेद्युःसुखसुप्तिकेति तिथितत्त्वेज्योतिर्निबंधवचनात् उभयदिनेप्रदोषव्याप्त्यभावेअर्द्धरात्र व्यापिनीग्राह्या, तस्यांलक्ष्म्यागमनकाललाभात् दिवोदासीयेप्रदोषस्यकर्मकालत्वात् ॥ अर्द्धरात्रेभ्रमत्येवल क्ष्मीराश्रयितुंगृहान् अतःस्वलंकृतालिप्तादीपैर्जाग्रज्जनोत्सवाःसुधाधवलिताःपुष्पमालाज्वालोपशोभिताइति ब्रा ह्मोक्तेच प्रदोषार्द्धव्यापिनीमुख्याएककालव्याप्तौपरैव प्रदोषस्यमुख्यत्वादर्धरात्रानुष्ठेयाभावाच्चेतिपूर्वेद्युरेवप्रदोष व्यापिन्यमावास्याश्राद्धयोग्यापरादिनेनयदितदापूर्वेद्युरेवप्रदोषे लक्ष्मींसंपूज्यदीपदानंकर्त्तव्यं श्राद्धंतुपरदि नेऽपराह्णेकार्य्यं ॥ यत्तु अप्यशक्तैःप्रकर्त्तव्यंश्राद्धंपितृपरायणैः प्रदोषसमयेराजन्कर्त्तव्यादीपमालिकेतिक्रमःसं पूर्णतिथ्यभिप्रायेणानुवादोनविधिः तत्कर्मकालव्याप्तेर्बलत्वात्संपूर्णतिथौप्राप्ताखंडतिथावव्याप्त्याविध्यनुवादानु वादविरोधाच्च अत्रचामामात्रेरात्रिभोजननिषेधेपि रात्रिभोजनंकार्य्यं निषेधस्यरागप्राप्तभोजनविषयत्वात् विधिस्पृष्टेनिषेधानवकाशाच्च अथात्रकृत्यं तत्रसंध्यासमयेलक्ष्मीपूजनमुक्तं लक्ष्म्यैनमइतिनाममंत्रेणकार्य्यं महालक्ष्म्यांतुतुलसींपिंडिकांकांचनंतथावर्जयेदिति पूजनानंतरंलक्ष्मीसूक्तंपठित्वा लक्ष्मींप्रार्थयेत्। नमस्तेस

वंदेवानांवरदासिहरिप्रिये यागतिस्त्वत्प्रपन्नानांसामेभूयात्त्वदर्चनात् । तथाचात्रेंद्रकुवेरयोरपिपूजाविधेया तयोःपू
जामंत्रौ । ऐरावतसमारूढोवज्रहस्तोमहाबलः शतयज्ञाधिपोदेवस्तस्माइंद्रायतेनमइति कुवेरस्यपूजायांतु । ध
नदायनमस्तुभ्यंनिधिपद्माधिपायच भवंतुत्वत्प्रसादेनधनधान्यादिसंपदइति अथलक्ष्मीपूजाप्रयोगः देशकालौ
संकीर्त्याऽस्यांदीपावल्याममावास्यायांममाऽलक्ष्मीनिवृत्तिपूर्वकास्थिरलक्ष्मीसर्वसौख्य सौभाग्यावाप्तयेसर्वांग
संपन्नलक्ष्मीपूजनंकरिष्ये इतिसंकल्पंविधाय स्वस्त्ययनपूर्वकंगणपतिपूजांविधाय लक्ष्मींपूजयेत् ॥ याश्रीःप
द्मासनस्थाविपुलकटितटीपद्मपत्रायताक्षी गंभीरावर्तनाभिस्तनभरनमिताशुभ्रवस्त्रोत्तरीयालक्ष्मीर्दिव्यैर्गजेंद्रैर्म
णिगणखचितैःस्नापिताहेमकुंभैः नित्यंसापद्महस्तामनवसतुगृहेदिव्यमांगल्ययुक्ता इतिध्यात्वा ॐभूर्भुवः
स्वर्लक्ष्मीइहागच्छ इहतिष्ठ महालक्ष्मिसमागच्छपद्मनाभगृहादिह नानोपचारपूजेयंत्वदर्थंपरिकल्पिता इत्या
वाहनं ॥ एह्येहिविश्वजननिकमलेकमलालये कमलेस्मिन्स्थितिंदेविसदात्वंकृपयाकुरु इत्यासनं गंगादिसलि
लाधारंनाममंत्राभिमंत्रितं दूरयात्राश्रमहरंपाद्यंमेप्रतिगृह्यतां इतिपाद्यं रत्नाकरसमुद्भूतेरत्नभूषाभिभूषिते
निधीनामधिपेत्वंहिगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यं शीतलंजलमानीतंकर्पूरैलासुगंधितं एतदाचमनीयार्थंसलिलं
प्रतिगृह्यतां इत्याचमनं स्नानंतवमहालक्ष्मिकर्पूरागुरुवासितं सुतीर्थेभ्यःसमानीतंस्नानंतत्प्रतिगृह्यतां इ
तिस्नानं । तंतुसंतानसंनद्धंकलाकौशल्यनिर्मितं सर्वांगाभरणंश्रेष्ठंवसनंपरिगृह्यतां इतिवस्त्रं । मलयाच
लसंभूतनानापन्नगसेवितं शीतलंबहुलामोदंचंदनंपरिगृह्यतां इतिगंधं अक्षतानरविंदाक्षिनक्षत्रेशसहोदरे
माणिक्यपद्मान्पद्माक्षिगृहाणत्वंमयार्पितान् इत्यक्षताः मिलत्परिमलामोदमत्तालिकुलसंकुलं नंदनोद्यानसं
भूतंपद्मायैकुसुमंनमः इतिपुष्पं गंधसंभारसंनद्धंपृथुवस्तुसमुद्भवं सुरासुरनरानंदिधूपंदेविगृहाणमे इतिधूपं

मार्तंडमंडलाकारंचंद्रबिंबाग्नितेजसं निधानंदेविदीपोयंनिर्मितस्तवभक्तितः इतिदीपं देवतालयपाताग्रूलत लाधारसंभवम् षोडशाकारसंभारंनैवेद्यंतोश्रियैनमः इतिनैवेद्यं स्नानादिकंविधायापियतःसिद्धिरवाप्यते ए तदाचमनंदत्तं महालक्ष्मिप्रगृह्यतां इतिपुनराचमनं पातालतलसंभूतंवदनांभोजभूषणं नानागुणसम कीर्णंतांबूलंदेवितेनमः इतितांबूलं नारिकेलंसनारंगंकदलीमातुलुंगकं देशकालोद्भवंपद्मेगृहाणफलमुत्तम इतिफलं स्वर्णप्रदपदांभोजेसमर्पितमिदंवसु यथाशक्त्यागृहाणत्वमनंतफलशुद्धये इतिदक्षिणाद्रव्यम् अ थांगपूजा अचलायैनमःपादौपूजयामि चंचलायैनमःजानुनीपूजयामि कमलायैनमःकटिंपूजयामि हरिवल्ल भायैनमः उदरंपूजयामि ललितायैनमः भुजौपूजयामि कमलायैनमः हृदयंपूजयामि उत्कंठिन्यैनमः कं ठंपूजयामि अमलायैनमः मुखंपूजयामि श्रियैनमः शिरः पूजयामि ॥ ततः कुबेरपूजा ओंभूर्भुवः स्वः कुबेरइहागच्छ इतिकुबेरमावाह्य कुबेरायनम इतिमंत्रेण पाद्यादिभिर्दक्षिणांतंसंपूज्य प्रार्थना । कुबेरा यननमस्तुभ्यंनिधिपद्माधिपायच भवंतुत्वत्प्रसादेनधनधान्यादिसंपदः ततोऽगस्त्यपूजा । ओंभूर्भुवः स्वः अग स्त्यइहागच्छ अगस्त्यायनमइतिपाद्यादिभिर्दक्षिणांतंसंपूज्य प्रार्थना । काशपुष्पप्रतीकाशवन्हिमारुतसंभव मि त्रावरुणयोः पुत्रकुंभयोनेनमोस्तुते अथेंद्रपूजनं । ओंभूर्भुवः स्वरिंद्रइहागच्छ इत्यावाह्य । ओंइंद्रायनमइतिपा द्यादिभिः संपूज्य प्रार्थनांकुर्यात् । विचित्रैरावणस्थायपौलोम्यालिंगितायच भास्वत्कुलिशहस्तायसहस्राक्षा यतेनमः इतिसंपूज्य । श्रीसूक्तपाठंकुर्यात् । ओंहिरण्यवर्णांहरिणींसुवर्णरजतस्रजं चंद्रांहिरण्मयींलक्ष्मींजातवे दोममावह १ ताम्मआवहजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहं २ अश्वपूर्वां रथमध्यांहस्तिनादप्रमोदिनीं श्रियंदेवीमुपह्वयेश्रीर्मादेविजुषतां ३ कांसोस्मितांहिरण्यप्रकारामार्द्रांज्वलं

तींतृप्तान्तर्पयंतीं पद्मेस्थितांपद्मवर्णांतामिहोपव्हयेश्रियं ४ चंद्रप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टा
मुदारां तांपद्मनेमिंशरणंप्रपद्येअलक्ष्मीर्मेनश्यतांत्वांवृणोमि ५ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृ
क्षोथबिल्वः तस्यफलानितपसानुदंतुमयाअंतराथावाह्याअलक्ष्मी उपैतुमांदेवसखः कीर्त्तिश्चमणिनासह ६ ।
दुर्भूतासिराष्ट्रेस्मिन्कीर्त्तिवृद्धिंददातुमां ७ क्षुत्पिपासामलाज्येष्ठाअलक्ष्मींनाशयाम्यहं अभूतिमसमृद्धिंचसर्वा
श्चनुदमेगृहात् ८ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपव्हयेश्रियं ९ मनसःका
ममाकूतिंवाचःसत्यमशीमहि पशूनांरूपमन्नस्य मयिश्रीःश्रयतांयशः १० कर्दमेनप्रजाभूतामयिसंभ्रमक
र्दमाः श्रियंवासयमेकुलेमातरंपद्ममालिनीं ११ आपःस्रजंतुस्निग्धानिचिक्लीतवसमेगृहान् निजांदेवींमात
रंचाश्रियंवासयमेकुले १२ आर्द्रांपुष्करिणींपुष्टिंसुवर्णांहेममालिनीं सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह १३ आ
र्द्रांपुष्करिणींपुष्टिंपिंगलांपद्ममालिनीं चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह १४ तान्मआवहजातवेदोलक्ष्मीमनप
गामिनीं यस्यांहिरण्यंप्रभूतंगावोदास्यश्वान्विंदेयंपुरुषानहं १५ इतिसूक्तंपठित्वा पुष्पांजलिंसमर्पयेत् ततो
नीराजनं । सुरासुरशिरोरत्नप्रभातारकितक्रमे तवसौभाग्यसंसिद्ध्यैकुर्वेनीराजनंरमे इतिनीराजनम् दक्षिणे
दक्षिणकरेस्वभक्तानांवरप्रदे करोमितेसदाभक्त्याविष्णुक्रांतप्रदक्षिणं इतिप्रदक्षिणांकृत्वा प्राणायामंकुर्यात् ततः
सर्वत्रदीपान्प्रज्वल्य ॥ दीपवृक्षास्तथादेयाःशक्त्यादेवगृहेषुच गोपुरोद्यानचैत्येषुनदीपर्वतवेश्मसु वृक्षमूलेषुगो
ष्ठेषुचत्वरेषुगृहेषुच मंदुराकरिशालायांक्रयविक्रयभूमिषु वस्त्रैःपुष्पैर्भूषितव्याःक्रयविक्रयभूमिकाः सर्वत्रदीपदाने
मंत्रः अग्निर्ज्योतीरविर्ज्योतिश्चंद्रोज्योतिस्तथैवच उत्तमोज्योतिषांज्योतिर्दीपज्योतिर्नमोस्तुते एवंदीपदानंकृत्वा
महालक्ष्मींप्रार्थयेत् नमस्तेसर्वलोकानांवरदासिहरिप्रिये यागतिस्त्वत्प्रपन्नानांसामेभूयात्त्वदर्चनात् । यालक्ष्मी

दिवसेपुण्येदीपावल्यांचभूतले गवांगोष्ठेपुकार्तिक्यांसालक्ष्मीर्वरदाममम इतिवारत्रयंपठित्वा । यासापद्मास
नस्थाविपुलकटितटीपद्मपत्रायताक्षी गंभीरावर्तनाभिःस्तनभरनमिताशुभ्रवस्त्रोत्तरीया लक्ष्मीर्दिव्यैर्गजेंद्रैर्म
णिगणखचितैःस्नापिताहेमकुंभैः नित्यंसापद्महस्ताममवसतुगृहेदिव्यमांगल्ययुक्ता सर्वमंगलमांगल्येशिवेस
र्वार्थसाधिके शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते अथविज्ञप्तिः । रूपंदेहियशोदेहिभाग्यंभवतिदेहिमे
पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे इतिलक्ष्मीपूजनंकृत्वा ततोदीपश्राद्धंकुर्य्यात् । तद्यथा ॐमंधरसुक्ष्म
र्योस्मत्पितृपितामहप्रपितामहानाममुकशर्म्मणांतथामातृपितामहीप्रपितामहीनांतथाचमातामहप्रमातामहवृद्ध
प्रमातामहानांसपत्नीकानांविश्वेदेवपूर्वकंदीपश्राद्धंकरिष्ये इतिसंकल्प्य । ततश्चास्मत्पित्रादित्रयमातामहा
दित्रयाणांसपत्नीकानांदीपश्राद्धसंबंधिनोविश्वेदेवाएतद्दीपादोनमः ॐमद्यास्मत्पितृपितामहप्रपितामहामातृ
पितामहीप्रपितामह्योमातामहप्रमातामह वृद्धप्रमातामहाः सपत्नीकाएतद्दीपावोनमइति देवतीर्थेनैव दद्या
दिति ततोदानप्रतिष्ठांदत्वा । भूयसींदक्षिणांदद्यात् एवंदीपदानादि कृत्वा ततोनंतरकृत्यंकुर्यात् । ब्राह्मणा
न्भोजयेद्भक्त्यासंभोज्यचबुभुक्षितान् अलंकृतेनभोक्तव्यंनववस्त्रोपशोभिना स्निग्धैर्मुग्धैर्विदग्धैश्चनिवृतंबंधुभि
सहेत्यादित्यपुराणात् स्वयमलंकृतोनववस्त्रावृतोबंधुसुहृद्युतोमिष्टप्रधानमन्नं भुंजीत अत्रान्यदपिकृत्यं भवि
ष्योत्तरे ततोपराह्नसमयेघोषयेन्नगरेनृपः अद्यराज्यंबलेर्लोकायथेष्टंचेष्टतामित्यादिकथां प्रक्रम्य एवंगते
निशीथेतुजनेनिद्रार्द्धलोचने तावन्नगरनारीभिस्सूर्प्पडिंडिमनिस्वनैः निष्कास्यतेप्रहृष्टाभिरलक्ष्मीःस्वगृहांग
णादिति अतोनंतरमन्यदपिकृत्यंतत्रैव सुखरात्रेरुपःकालप्रदीपोज्ज्वालितालये सर्वान्स्वधूनबंधूंश्चवाचाकुशलया
र्चयेत् प्रदीपवंदनंकार्य्यंलक्ष्मीमंगलहेतवे गोरोचनाक्षतैश्चदद्यादंगेपुसर्वतः तत्रमंत्रः । विश्वरूपस्यभार्य्यासि

पद्मेपद्मालयेशुभे महालक्ष्मिनमस्तुभ्यंसुखरात्रिंकुरुष्वमे पर्वकालेमहाघोरेयन्मयादुष्कृतंकृतं सुखरात्रिप्र
भावेणतंनोलक्ष्मीर्व्यपोहतु यारात्रिःसर्वभूतानांयाचदेवेष्ववस्थिता संवत्सरप्रियायाचसाममास्तुसुमंगला मा
तात्वंसर्वदेवानांदेवानामृद्धिसंभवा आख्याताभूतलेदेविसुखरात्रिनमोस्तुते इतिदीपावलिकृत्यं अस्यांभानु
भौमार्किवारस्वातिनक्षत्रायुष्मद्योगसहितायांस्वातिसंपातयोगउक्तोज्योतिःशास्त्रे ॥ भानुभौमार्किवारेपुकार्त्तिके
दुक्षयोभवेत् आयुष्मान्स्वातिसंयुक्तोनृपनाशःपशुक्षयः अस्योपपत्तिःशालिहोत्रे अश्वयुक्शुक्लपक्षेतिथौ द्वितीया
दिकेसप्तरात्रे वडवारूपेणैकास्वातितारावडवारूपेणसूर्य्यस्यवहतिरथं साभारेणाक्रांताक्रुद्धाऽश्वान्निरीक्षतेभी
क्ष्णं तेषांतेजःसत्त्ववलंचगृह्णातितस्मात्स्वात्युत्पातोत्थासाऽधिपानामश्वानां महतीपीडाभवति एवंचसप्त
रात्रंस्वातेः संपातएपनिर्दिष्टः तत्रदिवाकरकिरणैरस्पृष्टावाजिनोरक्ष्याः ॥ पूर्वोक्तारिष्टशंकापहतयेनवरा
त्रप्रकरणोक्तोवाजिनीराजनाविधिर्गृहमखेनसहितःकार्य्यः विष्णुधर्मोत्तरोक्तंस्वातिस्नानमपि कार्य्यं कृष्णचतु
र्दश्यादिशुक्लद्वितीयांतदिनचतुष्टयेपंचभंगस्नानमभ्यंगपूर्वकं महालक्ष्मीनीराजनसहितंविधेयमेवंकृते पूर्वोक्तारि
ष्टशंकानिवृत्ताभवतीति अस्यामेवकार्त्तिकामायांपद्मपुराणेपातालखंडोक्तं केदारगौरीव्रतं दाक्षिणात्याःस
माचरंति तत्रायंविधिः ॐमद्येदृगुणविशेषविशिष्टायामस्यांतिथौमनोवांछिताविच्छिन्नसंपत्प्राप्त्यर्थंदारिद्र्यदुःस्वप्ना
स्वप्नादिप्रशमनार्थं पुत्रपौत्राभिवृद्ध्यर्थं आयुरारोग्याभिवृद्ध्यर्थं श्रीकेदारगौरीप्रीत्यर्थं यथाशास्त्रज्ञानेनयथामि
लितोपचारैः पुरुषसूक्तसहितपुराणोक्तमंत्रैः श्रीकेदारगौरीव्रतांगभूतं तत्पूजनंकरिष्ये तत्रादौप्रथमाव्रते
विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिपुण्याहवाचनंचकरिष्ये इंद्रंवोमंत्रस्यमधुच्छंदऋषिरिंद्रोदेवता गायत्रीछंदः
इंद्रावाहनेविनियोगः ॐइंद्रोविश्वतस्परिहवामहेजनेभ्यः जनेभ्यअस्माकमस्तु केवलः इंद्रइहागच्छेत्यावाह्य

पूजयेत् । अग्निंदूतमिति काण्वोत्रमेधातिथिर्ऋषिरग्निर्देवता गायत्रीछंदः अग्न्यावाहनेविनियोगः अग्निं
दूतंवृणीमहेहोतारंविश्ववेदसंअस्ययज्ञस्यसुक्रतुम्अग्निः अग्नेइहागच्छ. यमायसोममित्यस्ययमऋषिर्यमोदेवता
त्रिष्टुप्छंदःयमावाहनेविनियोगः यमायसोमंसुनुतयमायजुहुताहविः यमंहयज्ञोगच्छत्यग्निदूतोअरंकृत. यमइहा
गच्छ- मोषुणइत्यस्यगौरकण्वोऋषि निर्ऋतिर्देवता गायत्रीछंदः निर्ऋत्यावाहनेविनियोगः मोषुणपरा
परानिर्ऋतिर्दुर्हणावधीत्पदीष्टतृष्णयासह निर्ऋतेइहागच्छ. तत्त्वायामीत्यस्यशुनःशेपऋषिःवरुणोदेवतात्रिष्टुप्छंदः
वरुणावाहनेविनियोगःतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिःअहेडमानोवरुणेहबोध्युरुशंसमा
नआयुःप्रमोषीः वरुणइहागच्छ. तववायोमंत्रस्यविश्वपांगिरसऋषिर्वायुर्देवता गायत्रीछंदः वायोरावा
हनेविनियोगः ॥ तववायोऋतस्पतेत्वष्टुर्जामातरद्भुत अवांस्यावृणीमहे वायोइहागच्छ.आप्यायस्वेति
गौत्तमऋषिःसोमोदेवता गायत्रीछंदःसोमावाहनेविनियोगः आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यंभवावा
जस्यसंगथे सोमइहागच्छ. तमीशानमितिगौत्तमऋषि ईशानोदेवता जगतीछंदःईशानावाहनेविनियो
गः तमीशानंजगतस्तस्थुषस्पति धियंजिन्वमवसेहूमहेवयं पूषानोयथावेदसामसद्वृधे रक्षितापायुरदब्धः
स्वस्तये भोईशानइहागच्छममपूजांगृहाण एवंसमस्तलोकपालानामासनादिपूजांकुर्यात् ततोनंदिकेशगण
शपूजनंचपंचोपचारैः कुर्य्यादितिप्रथमवर्षे द्वितीयादौतु तिथ्यादिसंकीर्त्यममसकलाभीष्टसिद्ध्यर्थं केदार
गौरीव्रतेतत्पूजनमहंकरिष्ये ततोध्यानपठेत् । त्रिलोचनंचतुर्बाहुंचंद्रार्धकृतशेखरं गौर्य्यालिंगितवामांगंव्रुप
भोपरिसंस्थितम् १ गौरीसहितायकेदारायनमोध्यानयुक्तंपुष्पंसमर्पयामिनमः ॥ सहस्रशीर्षापुरुष. आगच्छ
देवदेवेशउमयासहितप्रभो केदारनामकस्वामिन्सर्वकामफलप्रद आवाहनं । पुरुषएवेदमिति सिंहासनमिदंदिव्यं

तप्तकांचनसन्निभं ददामितेभवानीशसंसारार्णवतारक गौरीसहितायकेदारायनमः आसनं । एतावानस्येति
गांगंजलंसमानीतंसुवर्णकलशेधृतं पाद्यंगृहाणदेवेशसर्वदेवनमस्कृत इतिपाद्यं । त्रिपादूर्ध्वं. मंदाकिन्याःस
मानीतंसुशीतलमिदंजलं मयोपपादितंदेवगृहाणाचमनीयकं इत्याचमनं । ततोविराडजायत अर्घ्यंगृहा
णदेवेशगंधपुष्पाक्षतैर्युतं मुक्तारत्नादिसंयुक्तंकृपयाजगदीश्वर इत्यर्घ्यं । यत्पुरुषेण. स्नानंपंचामृतैःसम्य
ग्विधायसुसमन्वितं मयादत्तंगृहाणेशसर्वकामफलप्रद इतिपंचामृतस्नानं । आप्यायस्वेत्यादि वेदोक्तमंत्रैः
पंचब्रह्मादिभिर्मंत्रैरर्चितंजान्हवीजलं ममोपरिकृपांकृत्वागृहाणपरमेश्वर इतिशुद्धोदकस्नानं । तंयज्ञमिति मृदुसू
क्ष्माणिवस्त्राणिदुकूलानिमयाप्रभो आनीतानित्वदर्थंतुगृहाणसुरसत्तम इतिवस्त्रं ।तस्माद्यज्ञात्-संभृतं कर्पासकृत
तंतूनांसंयुक्तंविधिनाततः भक्त्यात्वदर्थमानीतंगृहाणसुरसत्तम इतियज्ञोपवीतं । अनर्घ्यंहेमसंयुक्तंमुक्तामणि
विभूषितं । अनर्घ्याभरणंदिव्यंगृहाणपरमेश्वर इत्याभरणं । तस्माद्यज्ञात्सर्वहुतऋच सामानिः श्रीगंधागुरुक
र्पूरकुंकुमेनसमन्वितं कस्तूरीचंदनाढ्यंचगंधंतेर्पितमीश्वर इतिचंदनं । तस्मादश्वा- अक्षतान्धवलान्देवशा
लितंडुलसंभवान् गृहाणपार्वतीनाथकृपयापरमेश्वर इत्यक्षतं । तंयज्ञमिति कमलंसेवतीपुष्पंबिल्वपत्राणि
शंकर मयार्पितानितेनाथगृहाणसुरसत्तम इतिपुष्पं ।अथांगपूजा- शंभवेनमः पादौपूजयामि शिवायनमः
गुल्फौ-पूजयामि रुद्रायनमः जानुनीपूजयामि भीमायनमः जंघेपूजयामि अभीष्टदायिनेनमः ऊरूपू
जयामि सर्वज्ञायनमः कटिपूजयामि पशुपतयेनमः नाभिपूजयामि उमापतयेनमः हृदयंपूजयामि नीलकंठायनमः
कंठंपूजयामि सर्वास्त्रधारिणेनमः मूर्द्धानंपूजयामि सदाशिवायनमः सर्वांगंपूजयामि तत्पुरुषंव्यदधुः द
शांगंगुग्गुलंधूपंकालागुरुसमान्वितं धूपंगृहाणदेवेशमनःशोकविनाशन धूपं ब्राह्मणोस्य- गोघृतेनसमायुक्तं

कार्पासकृतवर्त्तिकं दीपार्थंतेमयादत्तंवह्निनायोजितंप्रभो इतिदीपं चंद्रमामनसः शर्कराघृतसंयुक्तंकर्पूरे मन्वितं मयानिवेदितंदेवनैवेद्यंप्रतिगृह्यतां इतिनैवेद्यं नाभ्याआसीत् इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि इतिफलं सप्तास्यासन्. दक्षिणार्थंतुयत्नेनसुवर्णंरजतंत्रजं मयानि वेदितंतुभ्यंव्रतसाद्गुण्यहेतवे इतिदक्षिणा नानारत्नसमायुक्तंनानाचित्रोपशोभितं मयानिवेदितंभक्त्यात्र्यार्त्ति क्यंप्रतिगृह्यतां इतिनीराजनं प्रदक्षिणा नमःकेदारदेवायनमस्तेशूलपाणये नमःसर्वात्मनेतुभ्यंभक्तानांवांछित प्रद इतिनमस्कारः । अज्ञानाज्ज्ञानतोवापियद्व्रतंतुमयाकृतं न्यूनातिरिक्तंतत्सर्वंसंपूर्णंकुरुशंकर इतिप्रार्थ ना । नंदीश्वरायययवान्दत्त्वाचंडीश्वरायतंडुलान्दद्यात् । व्रतंकरोमिदेवेशत्वद्भक्तस्त्वत्परायणःगौरीकेदारभवतुस मासंत्वत्प्रसादतः डोरकबंधनं आचार्यपूजनं उद्यापनदानमंत्रश्च ॥ शतपूरिकयोपेतान्फलतांबूलमिश्रितान् उद्यापनंगृहाणत्वंकेदारवरदोभव नमस्तेदेवदेवेशनमस्तेजगतांपते गौरीपतेनमस्तुभ्यंत्राहिमांपरमेश्वर इतिक्ष मापनं । इतिगौरीकेदारव्रतपूजनं अथकथा । पुराऋषयःसर्वे नैमिषारण्यवासिनः शौनकाद्यामहात्मानः स र्वशास्त्रविशारदाः तीर्थयात्राप्रसंगेनगंगाद्वारमुपागमन् तत्रस्नाताः कृतजपा विधिवद्दक्षिणाददुः ॥ यावत्सुखोप विष्टास्तेहर्षनिर्भरमानसाः अदूरेददृशुस्तत्रसूतंशास्त्रार्थकोविदं ददर्शसोपितांस्तत्रऋषीन्विगतकल्मषान् न नामदंडवद्भक्त्यातैश्चापिपरिपूजितः तेचचक्रुस्तथातिथ्यंकुशलप्रश्नमेवच सुखोपविष्टंतंसूतंपप्रच्छुरिदमादरात् ऋषयऊचुः सूतसूतमहाप्राज्ञचिरंदृष्टोऽसिसुव्रत कस्मिंस्तीर्थेथवादेशेकालोयंविहितस्त्वया त्वद्दर्शनेनातिसौख्यं प्राप्तंहिपरमंमहत् किंचिद्विज्ञप्तुमिच्छामस्तच्छृणुष्वमहामते त्वयोक्ताविविधाधर्मास्तथानानाविधाः कथाः व्रता निचविचित्राणिमनोरथकराणिच इदानींवदनःसूत व्रतंपरमपावनं यत्कृत्वासर्वसिद्धिः स्यान्नराणांवांछितप्रदा

सूतउवाच साधुपृष्टंमुनिवराव्रतंदेव्यामहाद्भुतं ममापिकथितुंहर्षोजायतेनात्रसंशयः अस्तिकेदारगौरीतिव्रतं
परमकामदं विष्णुनाकथितंलक्ष्म्यैलक्ष्म्याश्चैतथैवच ऋषयऊचुः केनप्रकाशितंमर्त्येविधानंतस्यकीदृशं देवता
काचपूज्यास्यात्सर्वंविस्तरतोवद सूतउवाच आंध्रदेशेपुराकश्चिद्विप्रोभूच्छास्त्रकोविद नाम्नाभास्करशर्मेतिस्व
कर्मपरिनिष्ठितः अकिंचनोपिसद्वृत्तः कुटुंबंपरिपालयन् सत्यव्रतीतितस्यासीद्भार्यापरमशोभना कन्याद्वयंसु
तद्वयंकश्चंद्रशर्मेतिविश्रुतः कमलाविमलाचेतिनामनीतितयोः पृथक् तेकदाचिद्वनंयातेइंधनार्थंतपोधनाः भ्रमंत्यौ
चवनेतस्मिन्क्रीडंत्यौचपरस्परं । तावत्सौगंधिकोवायुस्तयोरंतिकमागमत् । कुतोयंवायुरायातिचिंतयंत्यौपुनःपुनः
प्रयातेतेनमार्गेणयत्रोत्पन्नस्सचानिलः ददृशातेगणेशंवैपुरतोद्वारपालकं गणेशोपितदाप्राहवचनंद्विजकन्यके व
नमेनं[illegible] देवासुरमानवैः विशतोमहेशेनदेव्याचापिसुरक्षितं अतःपरंनगंतव्यमीश्वराज्ञाबलीयसी
[illegible]यमाद्गम्यतेमया देव्यैदेवायचमयायुवाभ्यामागतंत्विति गणेशोपितदागत्वामात्रेसर्वंन्यवे
[illegible]वाक्यंगणेशस्यदेवीप्राहगिरेःसुता गच्छानयद्विजसुतेपश्यतांममपूजनं इतिश्रुत्वागणेशनाग
[illegible]नभारेणकंदमूलफलादिना शरीराच्छादनंचैवतयोःकिंचिन्नदृश्यते कौपीनमात्रमेव
[illegible]थैवतेगृहीत्वाज्ञांमातुरंतिकमागमन् देव्यापिदृष्टंतद्युग्ममतिदीनंक्षुधातुरं एतस्मिन्न
[illegible]लक्षणे चक्रातेदंडवद्भूमौप्रणामंचोचतुस्तथा कन्येऊचतुः मातःकमलपत्राक्षिकिमिदंक्रियते
[illegible]सर्वज्ञासिनसंशयः अद्यनौसफलंजन्मजीवितंचसुजीवितं देवित्वद्दर्शनादेवधन्यौतौपित
[illegible]किमस्तिकाचिज्जगन्मये पार्वत्युवाच व्रतंकेदारगौर्याख्यंक्रियतेऽद्यमयाशुभं य
[illegible]लभ्यंतेसर्वसिद्धयः इदंसाक्षान्महेशेनकथितंकृपयामम यस्मिन्कृतेसर्वसिद्धिस्तादिदंक्रियतेमया

कन्येऊचतु वदमात कथंकार्यंव्रतंपरमपावनं कस्मिन्दिनेथवामासेदेवतांकांप्रपूजयेत् देव्युवाच आश्वि
नस्यासितपक्षेन्नमावास्यायदाभवेत् तस्यांव्रतमिदंकार्य्यंयथोक्तंशंभुनापुरा प्रथमेब्देयदाकार्य्यंतद्वदामितपो
धने कृत्वाकार्पाससूत्राणिदशैवचप्रयत्नतः कृतानिचकुमार्याथप्रक्षाल्यविमलोदकैः तत्संख्ययाथपत्राणिक्रमु
करुयफलानिच तत्संख्यायाह्यपूजाश्चकर्त्तव्यावैप्रयत्नतःनानाविधानिपुष्पाणिऋतुकालोद्भवानिच सूर्पंवंशम
यंचैकसौभाग्यद्रव्यसंयुतं श्लक्ष्णमेकंनारिकेलंनैवेद्यंकालसंभवं एवंसंभृत्यसंभारान्तत पूजांसमाचरेत् सौ
वर्णींप्रतिमाकार्य्याशिवस्यांबिकयासह तस्याग्रेसूत्रदशकंविन्यसेच्चसुशोभनं पूजनंविधिवत्कार्य्यंधूपदीपादि
भि क्रमात् दक्षिणांचयथाशक्त्यादद्याद्देवस्यतुष्टये विप्र पुरुषसूक्तेनपूजयेत्स्त्रीपुराणजैः एवंसंपूज्यविधिवद्भो
जयेद्द्विजदंपती सापूजानैवकस्यापिदद्याद्विप्रायदक्षिणांनैवेद्यंस्वयमश्नीयात्तांबूलंचविशेषत. वर्षमध्येकार्य
सिद्धिर्भवत्येवनसंशय वर्षेद्वितीयेतत्सर्वंद्विजायप्रतिपादयेत् एकाविंशतिसूत्राणिसपर्णानिफलानिच अपूपा
श्चैवकर्त्तव्याएकविंशतिसंख्यया विधिनानेनकर्त्तव्यंव्रतंपरमपावनं सूतउवाच इतिश्रुत्वावचोदेव्यास्तेक
न्येशुभलक्षणे ययाचतुर्व्रतंदेव्याभक्त्यापरमयामुदा तथेत्युक्तातदादेवीकारुण्यहृतमानसा ददौतयोर्विधाने
नयथोक्तंशूलपाणिनं न्यग्रोधसूक्ष्ममूलानिफलानिचदलानिच आनीयसत्वरंतत्रप्रत्येकंदशसंख्यया अपूपा
श्चफलान्यत्रमृण्मयाःशुभलक्षणाः माल्याभावेव्रहत्याश्चकुसुमैःपूजनंकृतं कुसुमानांकेसराणितपांचैवाक्षतास्तथा
एवंसपूज्यविधिवद्गौरीपुनरुवाचते वध्यतांस्वकरेसूत्रंनैवत्याज्यंकदाचन इमामिधनभारंचकंदमूलफलानिच गृ
हीत्वागम्यतांसर्वंपश्चान्नैवविलोकयेत् तथेत्युक्ताचतेकन्येप्रयातेस्वगृहंप्रति तत्सर्वंव्रतसामर्थ्याद्दिव्यंसमभव
त्तदा अपूपाश्चैवसंजाताविव्याःपड्रससंयुताः तानिसर्वाणिवासांसिक्षणात्कौशेयतांययु. सएवेंधनभारस्तुस्वर्ण

कन्येऊचतु वदमात·कथंकार्यंव्रतंपरमपावनं कस्मिन्दिनेथवामासेदेवतांकांप्रपूजयेत् देव्युवाच आश्वि
नस्यासितपक्षेत्रमावास्यायदाभवेत् तस्यांव्रतमिदंकार्य्यंयथोक्तंशंभुनापुरा प्रथमेब्देयदाकार्य्यंतद्ददामितपो
धने कृत्वाकार्पाससूत्राणिदशैवचप्रयत्नतः कृतानिचकुमार्याथप्रक्षाल्यविमलोदकैः तत्संख्ययाथपत्राणिक्रमु
कस्यफलानिच तत्संख्यायाह्यपूजाश्चकर्त्तव्यावैप्रयत्नतःनानाविधानिपुष्पाणिऋतुकालोद्भवानिच सूर्पंवंशम
यंचैकंसौभाग्यद्रव्यसंयुतं श्लक्ष्णमेकंनारिकेलंनैवेद्यंकालसंभवं एवंसंभृत्यसंभारान्तत·पूजांसमाचरेत् सौ
वर्णीप्रतिमाकार्य्याशिवस्यांविकयासह तस्याग्रेसूत्रदशकंविन्यसेच्चसुशोभनं पूजनंविधिवत्कार्य्यंधूपदीपादि
भि·क्रमात् दक्षिणांचयथाशक्त्यादद्याद्देवस्यतुष्टये विप्र पुरुषसूक्तेनपूजयेत्स्त्रीपुराणजैः एवंसंपूज्यविधिवद्भो
जयेद्द्विजदंपती सापूजानैवकस्यापिदद्याद्विप्रायदक्षिणांनैवेद्यंस्वयमश्नीयात्तांबूलंचविशेषतः वर्षमध्येकार्य
सिद्धिर्भवत्येवनसंशय वर्षेद्वितीयेतत्सर्वंद्विजायप्रतिपादयेत् एकाविंशतिसूत्राणिसपर्णानिफलानिच अपूपा
श्चैवकर्त्तव्याएकविंशतिसंख्यया विधिनानेनकर्त्तव्यंव्रतंपरमपावनं सूतउवाच इतिश्रुत्वाचदेव्यास्तेक
न्येशुभलक्षणे ययाचतुर्व्रतंदेव्याभक्त्यापरमयामुदा तथेत्युक्तातदादेवीकारुण्यहृतमानसा ददौतयोर्विधाने
नयोक्तंशूलपाणिनं न्यग्रोधसूक्ष्ममूलानिफलानिचदलानिच आनीयसत्वरंतत्रप्रत्येकंदशसंख्यया अपूपा
श्चफलान्यत्रमृण्मयाःशुभलक्षणाः माल्याभावेद्दहत्योश्चकुसुमैःपूजनंकृतं कुसुमानांकेसराणितेषांचैवाक्षतास्तथा
एवंसंपूज्यविधिवद्गौरीपुनरुवाचते वध्यतांस्वकरेसूत्रंनैवत्याज्यंकदाचन इमामिधनभारंचकंदमूलफलानिच गृ
हीत्वागम्यतांसर्वंपश्चान्नैवविलोकयेत् तथेत्युक्त्वाचतेकन्येप्रयातेस्वगृहंप्रति तत्सर्वंव्रतसामर्थ्याद्दिव्यंसमभव
तदा अपूपाश्चैवसंजातादिव्याःपड्रससंयुताः तानिसर्वाणिवासांसिक्षणात्कौशेयतांययुः सएवेंधनभारस्तुस्वर्ण

सूतउवाच साधुपृष्टंमुनिवराव्रतंदेव्यामहाद्भुतं ममापिकथितुंहर्षोजायतेनात्रसंशयः अस्तिकेदारगौरीतिव्रतं
परमकामदं विष्णुनाकथितंलक्ष्म्यैलक्ष्म्याशच्यैतथैवच ऋषयऊचु केनत्रकाशितंमर्त्येविधानंतस्यकीदृशं देवता
काचपूज्यास्यात्सर्वंविस्तरतोवद सूतउवाच आंध्रदेशेपुराकश्चिद्विप्रोभूच्छास्त्रकोविद नाम्नाभास्करशर्मेतिस्व
कर्मपरिनिष्ठितः अकिंचनोपिसद्वृत्त कुटुंबंपरिपालयन् सत्यव्रतीतितस्यासीद्भार्यापरमशोभना कन्याद्वयंसु
तश्चैकश्चंद्रशर्मेतिविश्रुतः कमलाविमलाचेतिनामनीतितयोः पृथक् तेकदाचिद्वनेयातेइंधनार्थंतपोधनाः भ्रमंत्यौ
चवनेतस्मिन्क्रीडंत्यौचपरस्परं । तावत्सौगंधिकोवायुस्तयोरंतिकमागमत् । कुतोयंवायुरायातिचिंतयंत्यौपुनःपुनः
प्रयातेतेनमार्गेणयत्रोत्पन्नस्सचानिलः ददृशातेगणेशंवैपुरतोद्वारपालकं गणेशोपितदाप्राहवचनंद्विजकन्यके व
नमेतद्दुर्विलंघ्यंसदेवासुरमानवै विशेषतोमहेशेनदेव्याचापिसुरक्षितं अतःपरंनगंतव्यमीश्वराज्ञाबलीयसी
स्थीयतांतावदत्रैवानियमाद्गम्यतेमया देव्यैदेवायचमयायुवाभ्यामागतंत्विति गणेशोपितदागत्वाम्रसर्वंन्यवे
दयत् श्रुत्वावाक्यंगणेशस्यदेवीप्राहगिरेःसुता गच्छानयद्विजसुतेपश्येतांममपूजनं इतिश्रुत्वागणेशेनाग
च्छतंद्विजकन्यके सहैवेंधनभारेणकंदमूलफलादिना शरीराच्छादनंचैवतयोःकिंचिन्नदृश्यते कौपीनमात्रमेवा
सीत्केवलंगुह्यगुप्तये तथैवतेगृहीत्वाज्ञांमातुरंतिकमागमन् देव्यापिदृष्टंतद्युग्ममातिदीनंक्षुधातुरं एतस्मिन्नं
तरेचैवतेकन्येशुभलक्षणे चक्रातेदंडवद्भूमौप्रणामंचोचतुस्तथा कन्येऊचतुः मातःकमलपत्राक्षिकिमिदंक्रियते
त्वया कृपयावददेवेशिसर्वज्ञासिनसंशयः अद्यनौसफलंजन्मजीवितंचसुजीवितं देवित्वद्दर्शनादेवधन्यौतौपित
रौचनौ नस्त्रातुंशक्तिरस्माकमस्तिकाचिज्जगन्मये पार्वत्युवाच व्रतंकेदारगौर्याख्यंक्रियतेऽद्यमयाशुभं य
स्यानुष्ठानमात्रेणलभ्यंतेसर्वसिद्धयः इदंसाक्षान्महेशेनकथितंकृपयामम यस्मिन्कृतेसर्वसिद्धिस्तादिदंक्रियतेमया

कन्येऊचतुः वदमातःकथंकार्यंव्रतंपरमपावनं कस्मिन्दिनेथवामासेदेवतांकांप्रपूजयेत् देव्युवाच आश्वि
नस्यासिते पक्षेअमावास्यायदाभवेत् तस्यांव्रतमिदंकार्य्यंयथोक्तंशंभुनापुरा प्रथमेब्देयदाकार्य्यंतद्ददामितपो
धने कृत्वाकार्पाससूत्राणिदशैवचप्रयत्नतः कृतानिचकुमार्याथप्रक्षाल्यविमलोदकैः तत्संख्ययाथपत्राणिक्रमु
कस्यफलानिच तत्संख्यायाह्यपूजाश्चकर्त्तव्यावैप्रयत्नतःनानाविधानिपुष्पाणिऋतुकालोद्भवानिच सूर्पंवंशम
यंचैकंसौभाग्यद्रव्यसंयुतं श्लक्ष्णमेकंनारिकेलंनैवेद्यंकालसंभवं एवंसंभृत्यसंभारान्ततःपूजांसमाचरेत् सौ
वर्णीप्रतिमाकार्य्याशिवस्यांबिकयासह तस्याग्रेसूत्रदशकंविन्यसेच्चसुशोभनं पूजनंविधिवत्कार्य्यंधूपदीपादि
भिःक्रमात् दक्षिणांचयथाशक्त्यादद्याद्देवस्यतुष्टये विप्रःपुरुषसूक्तेनपूजयेत्स्त्रीपुराणजैः एवंसंपूज्यविधिवद्भो
जयेद्द्विजदंपती सापूजानैवकस्यापिदद्याद्विप्रायदक्षिणांनैवेद्यंस्वयमश्नीयात्तांबूलंचविशेषतः वर्षमध्येकार्य
सिद्धिर्भवत्येवनसंशयः वर्षेद्वितीयेतत्सर्वंद्विजायप्रतिपादयेत् एकाविंशतिसूत्राणिसपर्णानिफलानिच अपूपा
श्चैवकर्त्तव्याएकविंशतिसंख्यया विधिनानेनकर्त्तव्यंव्रतंपरमपावनं सूतउवाच इतिश्रुत्वावचोदेव्यास्तेक
[illegible]शुभलक्षणे यथाचतुर्व्रतंदेव्याभक्त्यापरमयामुदा तथेत्युक्तातदादेवीकारुण्यहृतमानसा ददौतयोर्विधाने
[illegible]शूलपाणिनं न्यग्रोधसूक्ष्ममूलानिफलानिचदलानिच आनीयसत्वरंतत्रप्रत्येकंदशसंख्यया अपूपा
[illegible]शुभलक्षणाः माल्याभावेबृहत्याश्चकुसुमैःपूजनंकृतं कुसुमानांकेसराणितेषांचैवाक्षतास्तथा
[illegible]गौरीपुन[illegible]ते वध्यतांस्वकरेसूत्रंनैवत्याज्यंकदाचन इमामिंधनभारंचकंदमूलफलानिच गृ
[illegible]नयेत् तथेत्युक्त्वाचतेकन्येप्रयातेस्वगृहंप्रति तत्सर्वंव्रतसामर्थ्याद्दिव्यंसमभव
[illegible]संयुताः तानिसर्वाणिवासांसिक्षणात्कौशेयतांययुः सएवेंधनभारस्तुस्वर्ण

भारस्तदाभवत् मात्रादृष्टंतुतत्सर्वंहर्षिताविस्मिताभवत् माताप्रोवाचतेकन्येकामदभात्यपूर्ववत् किंकृतांकिंहुतंजप्तं युवाभ्यांकिंतपःकृतं इतिमातुर्वचःश्रुत्वा तेकन्येप्रोचतुस्तदा कन्येऊचतुः नंजप्तंनहुतंकिंचिन्नैवकिंचित्तपःकृतं भवानीशंकरौविघ्नोनान्यंदेवंकदाचन ताभ्यांदत्तंव्रतमिदंप्रसन्नाभ्यांमनोरमं तेनाभूत्सर्वसंपत्तिरियंमातर्नसंशयः त्वमप्येवंव्रतमिदंकुरुष्वयतमानसा सूतउवाच तदासत्यव्रताचक्रेव्रतंकन्योपदर्शितं तथैवतत्कुलंजातंधनधान्यसमाकुलं अथतेकन्यकेजातेविवाहार्थेयथोचिते राजानौद्वौसमायातौपद्माकरसुधाकरौ दक्षिणापतिरेकश्चउत्तरेशस्तथापरः द्वाभ्यांकन्याद्वयंदत्तंव्रतस्यास्यप्रभावतः पद्माकरेणकमलानीतास्वसदनंप्रति सुधाकरेणविमलाप्राप्तातीवसुसंभ्रमात् ताभ्यांतत्क्रियतेनित्यंव्रतंपरमभक्तितः एकदातूपविष्टासास्वगृहेस्त्रीगणैर्युता स्त्रीभिस्ताभिस्तत्रदृष्टंतद्धस्तेतत्सुडोरकं ताऊचुःकिमिदंभद्रे डोरकस्यविभूषणं किंतनसंतिरौक्माणिभूषणानिशुचिस्मिते नानाविधानिरत्नानित्वद्गेहेकिलसुंदरि आकर्ण्यसत्यव्रतयास्त्रीभिरीरितमाशुतत् निष्कास्यसूत्रंतद्दैवाद्भाविनोर्थस्यगौरवात् नैवचास्यफलंपुण्यंकदाचिद्दृश्यतेपुरा सत्यव्रतायास्तद्भाग्यंक्षणात्क्षीणतांययौ यथापूर्वमभूत्सर्वंभाग्येविलयतांगते शाकवल्लीफलैर्नित्यंक्रियतेभोजनादिकं अथभोक्तुंयदानैवकिंचित्सासुतमब्रवीत् भगिन्यौतेचंद्रशर्मन्वर्त्तेतेनृपतेर्गृहे तयोःसमीपंगत्वाचकिंचिद्भक्ष्यार्थमानय मातुर्वचनमाकर्ण्यचंद्रशर्माद्विजोत्तमः पद्माकरस्यनृपतेर्नगरंप्रथमंययौ भगिनीकमलायत्रवर्त्ततेपतिदेवता सतन्नगरमासाद्यनदीतीरेवहिःस्थितः दास्यस्तुतस्यानीरार्थमागताःशतशस्तदा तंचदासीगणंदृष्ट्वाप्रत्युवाचद्विजर्षभः युष्माकंस्वामिनीयास्तिममसाभगिनीशुभा भ्रातहंचंद्रशर्मेतिस्तस्याश्चैवनिवेद्यतां तास्तुतस्योपहासंतुचक्रुर्नानाविधंतदा भ्रातृत्वेनैवयोग्योसिपश्यवैभवमात्मनः तन्मध्येचाभवत्स्येकाशुभाचारासुलक्षणा द्विजवर्यमहाभागतवादेशंब्रवीम्यहं सासमागम्यतत्सर्वं

कमलायैन्यवेदयत् तत्समाकर्ण्यकमलातंसमानीयसत्वरं अकिंचनाकृतिंदृष्ट्वाभ्रातरंभृशदुर्बलं तस्याश्चवैभवंदृष्ट्वा सोपिलज्जानताननःनीलातंगृहमध्येतुवहुसन्मानपूर्वकं दिवसान्यथसप्ताष्टौसमास्थायप्रयत्नतःततःपंचदशाहेचकृत्वापाथेयमुत्तमं हिरण्येनसमायुक्तंदत्वातस्मैव्यसर्जयत् पाथेयंतद्गृहीत्वासव्रतस्थोद्विजपुंगवःगच्छन्शनैस्तुमार्गेण तृषयापरिपीडितःतावद्ददर्शविमलांद्विजःपुष्करिणींशुभां तटेविन्यस्यपाथेयंस्वयंजलमथाग्रहीत् तावत्तुजलवीचीभिर्हृतंभक्ष्यंक्षणेनहि पुनःआयाच्चंद्रशर्माभगिनीसदनंप्रति निवेदयामासतदायवृत्तंपथिकौतुकं श्रुत्वासापुनरेवान्यद्धिरण्यंप्रददौतथा पादत्राणेहिरण्यंसधृत्वासप्रययौद्विज पादत्राणंचमार्गेतत्पंकेमग्नंक्षणेनहि पुनरेवसमायातोभगिनींप्रतिसद्विजः तद्वृत्तंसर्वमाचष्टभगिन्यैब्राह्मणर्षभः तन्निशम्याथविमलापुनरेवधनंददौ निक्षिप्ययष्टिमध्येतद्धृत्वायष्टिंप्रतास्थिवान् यावन्मार्गेसमागच्छद्यष्टिमादायसत्वरः तावत्कश्चित्समायातःपुनर्यष्टिमुपाहरत् पुनःप्रयातोभगिनींचंद्रशर्मामहामतिः उवाचपथियद्वृत्तंनिशम्याथसुविस्मिता मात्रानक्रियतेभ्रातर्व्रतंपरमपावनं नेतिसोप्याहवचनंचंद्रशर्मापुनःपुनः कमलोवाच तावदत्रैवतिष्ठत्वं भ्रातःपंचदिनावधि पश्चाद्धआश्विनस्याथअमावास्याभविष्यति व्रतंकेदारगौर्याख्यंतस्यांकृत्वायथाविधिः ततोगच्छस्वभवनंकृतकृत्योभविष्यसि तथेत्युक्त्वास्थितस्तत्रव्रतंचक्रेयथाविधि तांसमामंत्र्यभगिनींप्रययौस्वगृहंप्रति आगतस्तेनामार्गेणयत्रपुष्करिणीह्यभूत् पुनरेवतृषाक्रांतस्तज्जलंजगृहेततः जलांतर्गतपाथेयंद्विजहस्तेतदाऽभवत् ततोजगामपुरतःपादत्राणंचलब्धवान् यष्टिंचपुरुषःआदात्पूर्वंयापहृतावलात् एवंसर्वंपुनर्लब्धंव्रतस्यास्यप्रभावतः गृहंसमागम्यततोमात्रेसर्वंन्यवेदयत् श्रुतंपुत्रमुखात्सर्वंविस्तृतंव्रतमादरात् तदेवसूत्रंसंगृह्ययत्त्यक्तंपूर्वमेवच यथोक्तेनविधानेनचकारातीवभक्तितः पुनरेवयथापूर्वंधनधान्ययुताऽभवत् [illegible]

मिलापितर्धान्नांस्वयःप्रत्ययकारकं सूतउवाच इदंकेनापिनज्ञातंविनाशंभुंमुनीश्वराः शंभुनाविष्णवेदत्तंरमा
यैविष्णुनार्पितं लक्ष्म्याचदत्तमिंद्राण्यैइंद्राण्यादहुलीकृतं तदारभ्यव्रतमिदंक्रियतेमानवैर्भुवि यस्याराधनमात्रे
णप्राप्यंतेसर्वसिद्धयः भूमौव्रतानिचान्यानिसंतिनानाविधानिच परमेतस्यसर्वाणिकलांनार्हंतिषोडशीं इति
पूर्वंमयादृष्टंपुराणेमुनिपुंगवाः तदाद्यकथितंविप्राः किमन्यच्छ्रोतुमिच्छथ ॥ इतिपाद्मेकेदारगौरीव्रतम् अन्य
दप्युक्तंभविष्योत्तरे ॥ योयादृशेनभावेनतिष्ठत्यस्यांयुधिष्ठिर हर्षदैन्यादिरूपेणतस्यवर्षंप्रयातिहि रुदितेरोद
नंवर्षंहृष्टेवर्षंप्रहृष्यति भुक्तेभोगेभवेद्वर्षंस्वस्थेस्वस्थंभविष्यति तस्मात्प्रहृष्टैस्तुष्टैश्चकर्तव्याकौमुदीनरैः वैष्ण
वीदानवीचेयंतिथिःप्रोक्तायुधिष्ठिर अन्यच्चतत्रैव । प्रभातसमयेराज्ञातोषणीयाःसुहृज्जनाः सुवासिनीभ्योदेया
निवस्त्राण्याभरणानिच सद्भावेनैवसंतोष्याभोजनेनद्विजोत्तमाः भोजयेत्पूजयेद्रत्नैरंतःपुरविलासिनीः स्वजा
तिवनितास्तोष्यादानेनचतथाद्विजाः वस्त्रैस्तांबूलदानैश्चनैवेद्यैःकुसुमैःशुभैः स्वनामांकैःस्वयंराजा तोषयेत्स्व
जनान्पृथक् तथागणाधिपत्यांश्चतथामल्लान्भटान्नरान् वृषभान्महिषांश्चैवयुध्यमानान्नरैःसह गजानश्वांश्चयो
धांश्चपदातीन्समलंकृतान् मंचारूढःस्वयंपश्येन्नटनर्तकचारणान् क्रुद्धापयेत्त्रासयेच्चगोमहिष्यादिकंतथा वृषा
न्पर्यापयेद्गोभिरुक्तिप्रत्युक्तिवादिभिरिति । अस्यांसंक्षेपकृत्यं नारदीये ॥ ऊर्जामायांदीपदानंदेवागारगृहेषुच नद्या
रामतडागेषुचैत्यगोष्ठापणेषुच समर्चनंतथालक्ष्म्याःस्वर्णरौप्यकृताकृतेः द्यूतंचवर्षफलदंजयेवापिपराजये गवांपूजा
त्रविहिताशृंगाद्यंगानुरंजनैःपायसाद्यन्नदानैश्चनमस्कारप्रदक्षिणैः अथदीपावलीकथाभविष्योत्तरे श्रीकृष्णउवाच
पुरावामनरूपेणयाचयित्वात्विमांधराम् बलेर्यज्ञेहरिः सर्वंक्रांतवान्विक्रमैस्त्रिभिः इंद्रायदत्तवान्राज्यंबलिपाताल
वासितां कृत्वादैत्यपतेर्बधमहोरात्रंपुनर्नृप एकएवहिभोगार्थंबलीराज्येभिषेचितः रहस्यंहितदेतत्तेकथयामि

नरोत्तम कार्त्तिककृष्णपक्षस्यपंचदश्यांनिशागमे यथेष्टचेष्टादैत्यानांराज्यंतेषांमहीतले युधिष्ठिरउवाच ॥
विशेषेणहृषीकेशकौमुदींवदमेप्रभो किमर्थंदीयतेदानंतस्यांकादेवताभवेत् किंचतेषांभवेद्देयंकेभ्योदेयंजनार्दन
प्रहर्षःकोत्रनिर्दिष्टःक्रीडाकात्रप्रकीर्त्तिता श्रीकृष्णउवाच ॥ कार्त्तिककृष्णपक्षेतुचतुर्दश्यांविनोदये अवश्य
मेवकर्त्तव्यं स्नानंनरकभीरुभिः अपामार्गस्यपत्राणिभ्रामयेन्मस्तकोपरि ततश्चतर्पणकार्य्यंधर्मराजस्यना
मभिः यमायधर्मराजायमृत्यवेचांतकायच नरकायप्रदातव्योदीपःसंपूज्यदेवताः ततःप्रदोषसमयेदीपान्दद्या
न्मनोरमान् । ब्रह्मविष्णुशिवादीनांभवनेषुविशेषतः कूटागारेषुचैत्येषुसभासुचनदीषुच तडागोद्यानवापीषु
प्रतोलीनिष्कुटेषुच सिद्धार्थबुद्धाचामुंडाभैरवायतनेषुच मंदुरासुविविक्तासुहस्तिशालासुचैवाहि एवंप्रभातस
मयेह्यमावास्यांनराधिप स्नात्वादेवान्पितॄन्भक्त्यासंपूज्याथप्रणम्यच कृत्वातुपार्वणंश्राद्धंदधिक्षीरघृतादिभिः
भोज्यैर्नानाविधैर्विप्रान्भोजयित्वाक्षमाप्यच ततोपराह्णसमयेघोषयेन्नगरेनृपः अद्यराज्यंबलेर्लोकायथेष्टंचेष्टता
मिति लोकश्चापिपुरेहृद्येसुधाधवलिताजिरे वृक्षचंदनमालाद्यैश्चार्चितचगृहेगृहे द्यूतपानरतोद्रिक्तनरनारी
मनोहरे नृत्यवादित्रसंघुष्टसंप्रज्वलितदीपके अन्योन्यप्रीतिसहृष्टदत्ततालकरेजने तांबूलहृष्टवदनेकुंकुमक्षो
दचर्चिते दुकूलपटनेपथ्यस्वर्णमाणिक्यभूषिते युवतीजनसंकीर्णे दीपोज्ज्वलविहारिणि अद्भुतोद्भासितांगै
श्चसंदर्शितकुतूहले दीपमालाकुलेरम्येविध्वस्तध्वांतसंचये प्रदोषेदोषरहितेध्वस्तदोषागमेशुभे आशीःपूर्णमु
खाभिश्च कन्याभिःक्षिप्ततंडुले नीराजनंप्रकर्त्तव्यंवृक्षशाखास्थदीपकैः भ्राम्यमानाततोमूर्द्ध्निमनुजानांनराधि
प योजनानामरक्षस्त्रीहर्षात्प्रचरतेजनं वृक्षशाखांतदीपानांनिश्चयोदर्शनाद्भवेत् नीराजनंतुतमसःप्रोच्यतेविजय
प्रदे तस्माज्जनेनकर्त्तव्यंरक्षोदोषभयावहं यात्राविहारसंचारेजयजीवेतिवादिभिः क्षुद्रोपसर्गरहितेराजकोपभयो

ज्झिते मित्रस्वजनसंबंधिसुहृत्प्रेमानुरंजिते ततोर्धरात्रसमयेस्वयंराजाव्रजेत्पुरं अवलोकयितुंरम्यंपद्भ्यामेवशनैः
शनैः महतातूर्यघोषेणज्वलद्भिर्हस्तदीपकैः हृष्टशोभायुतंपश्यन् कृतरक्षःस्वकैर्जनैः तद्दृष्ट्वामहदाश्चर्यंमूर्द्धनिचैवा
त्मनः प्रभां बलिराज्यप्रसादंच ततःस्वगृहमाव्रजेत् एवंगतेनिशीथेतुजने निद्रार्द्धलोचने तावन्नगरनारीभिर्मंडु
डिडिमवादनैः निष्कास्यतेप्रहृष्टाभिरलक्ष्मीः स्वगृहांगणात् ततःप्रबुद्धसकलेजनेजातमहोत्सवे माल्यदीपक
हस्तेचस्नेहनिर्भरवत्सले वेश्याविलासिनीसार्थस्वस्तिमंगलकारिणि गृहात्गृहंव्रजतितुपादष्टंभप्रदायिनी पि
ष्टकोद्वर्तनपरेगुरुशुश्रूषणाकुले द्विजाभिवादनपरेमुखरागादिवादिति सुवासिनीभिश्चधनंदीयमानेयदृच्छया
तथाप्रभातसमयेयथार्हंमानयेज्जनात् सद्भावेनवसंतोष्यदेवान्स्वपुरुषद्विजान् इतरानन्नपानैर्वावाक्यदानेनपंडितान्
वित्ततांबूलदानैश्चधनैःसामंतपार्थिवान् पदातिजनसंलग्नान्ग्रैवेयकटकादिभिः स्वनामांकैः स्वयंराजातोषयेत्स्व
जनान्पृथक् यथार्हंतोषयित्वातुततोमल्लभटान्नरान् वृषभान्माहिषांश्चैवयुध्यमानान्परैःसह गजानश्वांश्चयोधांश्चप
दातीन्समलंकृतान् मंचारूढःस्वयंपश्येन्नटनर्त्तकचारणान् उद्दीपयेत्त्रासयेच्चगोमाहिष्यादिकंततः वृषान्धर्षापये
द्राभिर्युक्तिमत्युक्तिकावदेत् ततोपराह्णसमयेपूर्वस्यांदिशिभारत मार्गपालींप्रबध्नीयात्तुंगस्तंभथपादपे कुशकाशमयीं
दिव्यांलंबकैर्बहुभिर्वृतां वीक्षयित्वावाजिगजान्सार्द्धंयामत्रयेगते गावोवृषाश्चमाहिष्योमंडिताघटितोत्कटाः कृ
तेहोमेद्विजेंद्रैश्चगृह्णीयात्मार्गपालिकां राष्ट्रमंत्रेणवाराजन्सहस्रेणशतेनच स्वशक्त्यपेक्षयावापिगृह्णीयाद्ग्राम्यभोज
नैः मातुःकुलंपितृकुलमात्मानंसहबंधुभिः संतारयेच्चसततंमार्गपालींददातियः नीराजनंचतत्रैवकार्यंराज्ञोजय
प्रदं मार्गपालींततोलंघ्ययांतुगावोगजावृषाः राजानोराजपुत्राश्च ब्राह्मणाः शूद्रजातयः मार्गपालींसमुल्लंघ्यनी
रुजःस्यात्सुखीतदा कृत्वैवंसर्वमेवतुरात्रौदैत्यपतेर्बलेः पूजांकुर्यान्नृपःसाक्षाद्भूमौमंडलकेकृते बलिमालिख्य

दैत्येंद्रं वर्णकैः पंचरंगकैः ॥ सर्वाभरणसंपन्नं विंध्यावल्यासहासितं ॥ कूष्मांडवाणजंभाख्यमुरदानवसंयुतम् ॥ संपू
र्णहृष्टवदनं किरीटोत्कटकुंडलं ॥ द्विभुजं दैत्यराजानं कारयित्वा नृपः स्वयं ॥ गृहस्य मध्ये शालायां दत्वार्घ्यादि ततो र्चये
त् भ्रातृमंत्रिजनैः ॥ सार्धं संतुष्टो वंदिभिस्ततः ॥ कमलैः कुमुदैः पुष्पैः कल्हारै रक्तकोमलैः गंधधूपान्ननैवेद्यैरक्षतैर्गुडपू
पकैः ॥ मद्यमांससुरालेह्यदीपमाल्योपहारकैः ॥ मंत्रेणानेन राजेंद्र समंत्री सपुरोहितः ॥ बलिराज नमस्तुभ्यं विरोचन
सुत प्रभो ॥ भविष्येंद्र सुराराते पूजेयं प्रतिगृह्यतां ॥ एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः ॥ कारयेत्प्रेक्षणीयादि
नटनृत्यकथानकैः ॥ लोकश्चापि गृहस्यांते शय्यायां शुक्लतंडुलैः ॥ संस्थाप्य बलिराजानं फलैः पुष्पैः प्रपूजयेत् ॥
बलिमुद्दिश्य दीयंते दानानि कुरुनंदन ॥ यानि तान्यक्षयाण्याहुर्मयैवं संप्रदर्शितं ॥ यदस्यां दीयते दानं ॥ स्वल्पं
वा यदि वा बहु ॥ तदक्षयं भवेत्सर्वं विष्णोः प्रीतिकरं परं ॥ विष्णुना वसुधा लब्धा तुष्टेन बलये पुनः ॥ उपकारकरं दत्तमसुरा
णां महोत्सवं ॥ ततः प्रभृति राजेंद्र प्रवृत्ता कौमुदी शुभा ॥ सर्वोपद्रवविद्रावा सर्वविघ्नविनाशिनी ॥ लोकशोकहरी काम्या
धनपुष्टिसुखावहा ॥ कुशब्देन मही ज्ञेया मुदा हर्षं ततो ह्ययं ॥ धातुज्ञैर्निगमज्ञैश्च तेनैषा कौमुदी स्मृता ॥ एकमेवं महा
रात्रं वर्षे वर्षे विशांपते ॥ दत्तं दानवराजस्य चादर्शमिव भूतले ॥ यः करोति नृपो राष्ट्रे तस्य व्याधिभयं कुतः ॥ कुतो वैरिभ
यं तत्र नास्ति मृत्युकृतं भयं ॥ सुभिक्षं क्षेममारोग्यं संपदां पदमुत्तमं ॥ नीरुजश्च जनाः सर्वे सर्वोपद्रववर्जिताः ॥ कौमुदी
करणाद्राजन्भवंतीह महीतले ॥ यो यादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर ॥ हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि ॥ रु
दितेरोदनं वर्षं हृष्टे वर्षं प्रहृष्यति ॥ भोगे भोक्ता भवेद्वर्षं स्वस्थः ॥ स्वस्थो भवेदिति ॥ तस्मात्प्रहृष्टैस्तुष्टैश्च कर्तव्या कौमु
दी नरैः ॥ वैष्णवी दानवी चेयं तिथिः प्रोक्ता युधिष्ठिर ॥ उपशमितमेघनादं ॥ प्रोद्दलितदशाननं रामं ॥ रामायणमिव
सुभगं दीपदिनं हरतु वो दुरितं ॥ कूष्मांडबाणरम्यकुवलयखण्डैश्च धेनुपाभद्र ॥ शरदि प्रहरिगतनिद्रं दीपदिनं हरतु वो

रितम् दीपोत्सवेजनितसर्वजनप्रसादंकुर्वंतियेसुमतयोबलिराजपूजां दानोपभोगसुखबुद्धिशतानितेषांहर्षेण
द्धिमिवपार्थिवयातितेषां नशुक्रदोषोनसुरेज्यदोषस्ताराबलंचंद्रबलनशुद्धं विवाहितायानवकन्यकायादीपोत्सवे
सेद्धिकरःप्रवेशः ॥ इतिश्रीभविष्येकर्त्तव्यं तथाहेमाद्रौ आदित्यपुराणे ॥ शंकरस्तुपुराद्यूतंससर्जसुम
ोहरं कार्त्तिकेशुक्लपक्षेतुप्रथमेहानिसत्यवान् जितश्चशंकरस्तत्रजयंलेभेचपार्वती अतोर्थंशंकरोदुःखीउमा
नेत्यंसुखान्विता तस्माद्यूतंप्रकर्त्तव्यंप्रभातेतत्रमानवैः तस्मिन्द्यूतेजयोयस्यतस्यसंवत्सरजयः पराजयेवि
द्धंतुलब्धनाशस्ततोभवेत् श्रोतव्यंगीतवाद्यादिस्वनुलिप्तैःस्वलंकृतैः दीपमालापरिक्षिप्तंतथाधूपेनधूपितं द
मेताभिश्चसहितैर्नेयासाचभवेन्निशा नववस्त्रैश्चसंयोज्याद्विजसंबंधिबांधवाइति अत्रान्यदपिकृत्यं तत्रैव ततः
बुद्धेसकलेजनेप्राप्तमहोत्सवे माल्यदीपकहस्तेचस्नेहनिर्भरवत्सले वेश्याविलासिनीसार्धंस्वस्तिमंगलचारिणि
हाद्गृहंव्रजतिचपादाभ्यंगप्रदायिनि पिष्टकोद्वर्त्तनपरेगुरुशुश्रूषणाकुले द्विजातिवंदनपरेसुखराव्यादिवादिनि
भातसमयेराज्ञातोषणीयास्ततोजनाः सुवासिनीभ्योदेयानिवस्त्राण्याभरणानिच सद्भावेनैवसंतोष्यादानेनचत
जाः वस्त्रैस्तांबूलदानैश्चपुष्पकर्पूरकुंकुमैः भोजयेत्पूजयेद्वस्त्रैरंतःपुरविलासिनीः ददातिजनसंघातान्ग्रैवेयैः
णःशुभैः स्वनामांकैःस्वयंराजातोषयेत्स्वजनान्पृथक् तथागणाधिपत्यांश्चतथामल्लान्भटान्नरान् वृषभान्म
नान्परैःसह गजानश्वांश्चयोधांश्चपदातीन्समलंकृतान् मंचारूढःस्वयंपश्येन्नटनर्त्तकचारणान्
न्गोमहिष्यादिकांस्ततःवृषान्धर्षापयेद्गोभिरुक्तिप्रत्युक्तिवादिभिः । ततोपराह्णसमयेपूर्वस्यांदिशिभा
मार्गपा""प्रवध्नीयात्तुंगस्तंभेथपादपे कुशकाशमयींदिव्यांलंबकैर्बहुभिर्वृतां दीक्षयित्वागजानश्वान्सार्ध
वोवृषाःसमहिषासंडिताघंटिकोत्कटाः कृतेहोमेद्विजेंद्रैस्तुवध्नीयान्मार्गपालिकां दुर्गामंत्रेण

होमस्तुघृतेनाष्टोत्तरशतं, नमस्कारंतत कुर्य्यान्मंत्रेणानेनसुव्रत मार्गपालिनमस्तुभ्यंसर्वलोकनमोस्तुते विधे
यैःपुत्रदाराद्यैः पुनरेहिव्रजस्वभो नीराजनंचकर्त्तव्यंतत्रैवराष्ट्रवर्द्धनं मार्गपालीतलेनैवतेगावोगजावृपाः रा
जानोराजपुत्राश्चब्राह्मणाःशूद्रजातयःमार्गपालिंसमुल्लंघ्यनीरुज स्यु सुखान्विता.योयादृशेनभावेनतिष्ठत्यस्यांयुधि
ष्ठिर हर्षदैन्यादिरूपेणतस्यवर्षंप्रयातिहि रुदितेरोदितेवर्षंहृष्टेवर्षंप्रहृष्यति. भुक्तौभोक्ताभवेद्वर्षंस्वस्थ स्वस्थेभ
विष्यति, तस्मात्प्रहृष्टैस्तुष्टैस्तुकर्त्तव्याकौमुदीनरैः वैष्णवीदानवीचेयंतिथिःपैत्रीयुधिष्ठिरेति ॥ इतिकार्त्तिकशु
क्लप्रतिपदायांकौमुदीमहोत्सवः. कौमुदीमहोत्सव शक्तेनदिनद्वयेकार्य्यं अशक्तेनैकदिनेएव अथास्यानिर्णय.इ
यंचबलिपूजनेगोपूजनादौचपूर्वविद्धाग्राह्या तथाचब्रह्मवैवर्त ॥ श्रावणीदुर्गनवमीदूर्वाचैवहुताशनी पूर्वविद्धै
वकर्त्तव्याशिवरात्रिर्बलेर्दिनमिति । तथाच प्रतिपद्दर्शसंयोगेपूजनंतुगवांमतं. परविद्धेतुय.कुर्यात्पुत्रदारधनक्षयः
याकुहू प्रतिपन्मिश्रातत्रगा पूजयेन्नृपः पूजनेत्रीणिवर्द्धन्तिप्रजागावोमहीपतिरितिदेवलवचनाच्च माधवोपि व
ल्यर्चनंचपूर्वेद्युरुपवासवदाचरेदिति । दिनद्वयेसायान्हव्याप्तौतुपरैवग्राह्या , तदुक्तंनिर्णयामृतपुराणसमुच्चये व
र्द्धमानतिथौनंदासार्द्धयामत्रिकायदा द्वितीयावृद्धिगामित्वादुत्तरेतत्रचोच्यते तत्रगोपूजनादौ स्मृत्यंतरेपि ॥
त्रियामगादर्शतिथिर्भवेच्चेत्सार्द्धत्रियामाप्रतिपद्विवृद्धौ दीपोत्सवेतेमुनिभिःप्रदिष्टह्यतोन्यथापूर्वयुताविधेय-। इति
त्रियामगेत्यनेनचंद्रदर्शनाभावउक्त द्वितीयाया पंचधाविभक्तदिनचतुर्थांशरूपापरान्हदीप्त्याभावेचंद्रदर्शनासं-
भवात् अत्रदीपोत्सवपदेनगोपूजनादिकमेवगृह्यते कालानुरोधात् ननुबलिपूजादिकालप्रसंगात् चंद्रद
र्शनाभावप्रयोजकसार्द्धयामोक्तिसामर्थ्याच्चपूजायां दीपदानत्वेनदीपोत्सवपदस्यउभयत्रसंभवाच्चअमावास्या
यामपिश्रिय क्रीडंत्यमाग्रांचगावोनंदासुकार्त्तिके इतिवचनोक्तेःश्रीक्रीडनंप्रीप्रसंबंधात्तत्रापिदीपोत्सवपदस्यस

वंधात् यानितु भद्रायांगोकुलक्रीडासदेशो वैविनश्यति भद्रायां द्वितीयायां तथाप्रतिपद्याधिकरणं द्विती
यायांतुगोर्चनं पत्रच्छेदंचकुरुतेवित्तनाशंकुलक्षयमित्यादीनि निषेधवाक्यानिपूर्वदिनेप्रतिपदःसायाह्नव्यापित्वे
द्वितीयादिनेचंद्रदर्शनसंभवेज्ञेयानि यद्यपि पूर्वान्हेक्रीडनंगवां । चंद्रोदयेतुतत्रैवपूजयेत्सुरभीस्तथेत्यादिवै
चनाच्च प्रातःकालव्यापिन्युत्तरैवगोक्रीडनादौप्रतिभाति तथापि गवांक्रीडादिनेयत्ररात्रौदृश्येतचंद्रमाःसोमो
राजापशून्हंतिसुरभेःपूजकांस्तथेति देवलेनप्रतिषिद्धत्वात्सानतत्रग्राह्या नीराजनमंगलपालिकेतूत्तरस्यामेवका
र्ये तथाचमदनरत्ने ब्रह्मपुराणे ॥ कार्त्तिकेशुक्लपक्षेतुविधानद्वितयंभवेत् नारीनीराजनंप्रातःसायंमंगलपा-
लिका अथचेत्प्रतिपत्स्वल्पानारीनीराजनंभवेत् द्वितीया यांतदाकुर्य्यात्सायंमंगलपालिकामिति लभ्यते
यदिवाप्रातःप्रतिपद्घटिकाद्वयं तस्यांनीराजनंकार्य्यंसायंमंगलपालिकेति भविष्यपुराणाच्च देविपुराणेपि ॥ प्रा
तर्वायदिलभ्येतप्रतिपद्घटिकाद्वयं द्वितीयायांतदाकार्यासायंमंगलपालिका आश्विनांतेयदादर्शेनारीनीराजनं
भवेत् नारीणांतत्रवैधव्यंदेशेदुर्भिक्षमेवच कार्तिकेशुक्लपक्षादौअमावास्याघटीद्वयं देशभंगभयान्नैवकुर्यान्मं
गलपालिकामिति इयंप्रतिपत्तैलाभ्यंगेतुपूर्वविद्धैवग्राह्या बलिराज्येतस्योक्तेः बल्युत्सवंचपूर्वेद्युरितिवचने व
ल्युत्सवेपूर्वविद्धायाएवपूर्वंग्राह्योक्तिः यत्तुतिथ्यर्केनदायामुदयेभ्यंगंकृत्वानीराजनंततः सुवेषःसत्कथागानैर्दानैश्च
दिवसंनयेदितिज्योतिर्निबंधधृतवचनादभ्यंगेउत्तरविद्धाग्राह्येत्युक्तं तन्न एतद्वचनस्य हेमाद्र्यादिसकलनिबंधकारैर
लिखनान्निर्मूलं ॥ अत्रतैलाभ्यंगोनित्यः । वत्सरादौवसंतादौबलिराज्येतथैवच तैलाभ्यंगमकुर्वाणोनरकंप्रति
पद्यत इतिवृद्धवसिष्ठवचनात् । अत्रस्नानादिनित्यकर्मानंतरंगोवर्द्धनपूजादिकार्य्यं तदुक्तंभविष्योत्तरेहेमाद्रौ
॥ प्रातर्गोवर्द्धनःपूज्योद्यूतंचापिसमाचरेत् भूषणीयास्तथागावःपूज्याश्चावाहदोहनाइति गोवर्द्धनपूजामंत्रः

॥ गोवर्द्धनधराधारगोकुलत्राणकारक विष्णुबाहुकृतोच्छ्रायगवांकोटिप्रदोभव गोवर्द्धनःप्रकर्त्तव्योराजतःप
लसम्मितः छत्राकारोमहावृक्षैःशोभितःपक्षिभिर्वृतःगोपगोपीसमाकीर्णोमहावृक्षसमन्वितइत्यादि ॥ कार्त्तिकक्ृ
ष्णत्रयोदश्यांगोत्रिरात्रिव्रतोक्तंसविस्तरंगोवर्द्धनपूजादिकंसर्वंविधेयं अथगोपूजनमंत्रः ॥ लक्ष्मीर्यालोकपा
लानांधेनुरूपेणसंस्थिता घृतंवहतियज्ञार्थेममपापंव्यपोहतु अग्रतःसंतुमेगावोगावोमेसंतुपृष्ठतः गावोमेहृद
येसंतुगवांमध्येवसाम्यहमिति ततोऽपराह्णेमार्गपाल्युल्लंघनादिकार्य्यं तद्विधिःपूर्वमुक्तःसचेत्थं ततोपराह्ण
समये पूर्वस्यांदिशिभारत मार्गपालींप्रबध्नीयात्तुंगस्तंभेथपा दपे कुशकाशमयींदिव्यांलंबकैर्बहुभिर्वृतां
वीक्षयित्वा गजानश्वान्सायंतस्यास्तलेनयेत् गावोवृषाःसमाहिषः मंडिताघंटिकोत्कटाः कृतेहोमेद्वि
जेंद्रस्तुबध्नीयान्मार्गपालिकां दुर्गामंत्रेणहोमस्तुघृतेनाष्टोत्तरंशतं दुर्गामंत्रोत्रजात वेदसइत्यादिर्वैदिकाः
ओंदुर्गेरक्षिणीत्याद्यागमोक्तोवा ॥ नमस्कारंततःकुर्य्यान्मंत्रेणानेनसुव्रतः मार्गपालिनमस्तेस्तुसर्वलो
कसुखप्रदे विधेयैःपुत्रदाराद्यैःपुनरेहिव्रजस्वमे नीराजनंचतत्रैवकर्त्तव्यंराष्ट्रवृद्धिदं मार्गपालीतलेचेत्थंया
तिगावोगजावृषाः राजानोराजपुत्राश्चब्राह्मणाःशूद्रजातयः मार्गपालींसमुल्लंघ्यनीरुजःस्युःसुखान्विताः अत्र
शेषमादित्यपुराणे । कुशकाशमयींकुर्याद्यष्टिकांसुदृढांनवां तामेकतोराजपुत्राहीनवर्णास्तथान्यतःगृहीत्वाक
र्षयेयुस्तांयथासारंमुहुर्मुहुः जयोत्रहीनवर्णानांजयोराज्ञोनवत्सरं जयचिन्हमिदंराजाविदधीतप्रयत्नतः । त
तोबलिपूजाविधानं । कृत्वैतत्सर्वमेवेहरात्रौदैत्यपतेर्बलेः पूजांकृत्वानृपःसाक्षाद्भूमौमंडलकेशुभे बलिमालिख्य
दैत्येंद्रवर्णकैःपंचरंगकैः सर्वाभरणसंपूर्णंविंध्यावल्यासहोषितं कूष्मांडबाणजंभोरुमुरुदानवसंवृतं संपूर्णहृष्टव
दनंकिरीटोत्कटकुंडलं द्विभुजंदैत्यराजानंकारयित्वानृपःस्वयंगृहस्यमध्यशालायांविशालायांततोर्चयेत् भ्रात

मातृजनैःसार्द्धसतुष्टोबंधुभिस्ततःकमलैःकुमुदैः पुष्पैः कल्हारैःकुमुदोत्पलैः गंधपुष्पान्ननैवेद्यैरक्षतैर्गुडपूपकैःमद्यमांमसुरालेह्यदीपबल्युपहारकैःमंत्रेणानेनराजेंद्रसमंत्रीसपुरोहितः बलिपूजामंत्रः । बलिराजनमस्तुभ्यंविरोचनसुतप्रभो भविष्येंद्रसुराराते पूजेयंप्रतिगृह्यतां एवंपूजांनृप कृत्वारात्रौजागरणंततः कारयेत्प्रेक्षणीयादिनटनर्त्तकनाटकैः लोकश्चापिगृहस्यांतः शय्यायांशुक्लतंडुलैः संस्थाप्यबलिराजानंफलैःपुष्पैश्चपूजयेत् बलिमुद्दिश्यदीयतेदानानिकुरुनंदन यानितान्यक्षयाण्याहुर्मयैतत्संप्रदर्शितं अत्रबल्युद्देशेनदीपदानमप्युक्तंवामनपुराणे वामनधृतंनरदानव्याजेन ॥ वीरप्रतिपदप्राप्यतवभावीमहोत्सव तत्रत्वांनरशार्दूलहृष्टस्तुष्टास्वलंकृताः अर्घ्यदीपप्रदानेनअर्चयिष्यंतिमानवाः ॥ इतिब्रह्मपुराणे एवंपूजांनृपकृत्वारात्रौजागरणंततइति इतिकार्त्तिकशुक्लप्रतिपदांतकौमोदकीमहोत्सव कार्त्तिकशुक्लद्वितीयायमद्वितीयासाचपराह्णव्यापिनीग्राह्येत्युक्तं निर्णयामृतादौ मध्याह्नव्यापिनीपूर्वविद्धाचेतिहेमाद्रिः इयथाकर्म्मकालव्यापिनीसैवग्राह्या दिनद्वयेकर्म्मकालव्याप्तावव्याप्तौवाद्वितीयासामान्यनिर्णयेद्रष्टव्येतिमदन । अष्टधाविभक्तदिनपंचमभागव्यापिनीग्राह्येतिस्मार्त्तः अपराह्णशब्देनात्रेधाविभक्तदिनोत्तरविभागोग्राह्य इतितु युक्तमिति कृत्यरत्नावल्यां अत्रकृत्यमुक्तंस्कांदे ऊर्ज्जशुक्लद्वितीयायामपराह्णेर्चयेद्यमं स्नानंकृत्वाभानुजायांयमलोकनपश्यति ऊर्ज्जशुक्लद्वितीयायांपूजितस्तर्पितोयमः महिषासनमारूढोदंडमुद्गरधारिभिःवेष्टित किंकरैर्हृष्टैस्तस्मैयच्छतिवांछितं यमुनायांस्नानंकृत्वायमंसंतर्पयेच्च अस्यांभगिनीभिर्भ्रातृपूजनंकार्य्यं तथाचलिंगपुराणे कार्त्तिकेतुद्वितीयायांशुक्लायांभ्रातृपूजनं यानकुर्य्याद्विनश्यंतिभ्रातरःसप्तजन्मसु तस्याइतिशेषः भविष्योत्तरेपि कार्त्तिकेशुक्लपक्षेतुद्वितीयायांयुधिष्ठिरयमोयमुनयापूर्वंभोजितःस्वगृहेस्वयं अतोयमद्वितीयासाप्रोक्तालोकेनराधिप अस्यांनिजगृहेपार्थनभोक्तव्य

मतोवुधैः यत्नेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्द्धनं दानानिचप्रदेयानिभगिनीभ्योविशेपतः स्वर्णालंकारवस्त्रादि पूजासत्कारभोजनैःसर्वाभागिन्यःसंपूज्याअभावेप्रतिपन्नकाः ॥ प्रतिपन्नकाः प्रतिपन्नाभगिनीत्वेनव्यवहृताइत्यर्थः पितृव्यभगिन्यइतिहेमाद्रिः मित्रभगिन्यइत्यपिहेमाद्रिः ब्रह्मांडेतु ॥ यातुभोजयतेनारीभ्रातरंयुग्मकेतिथौअर्चये द्वापितांबूलैर्नसावैधव्यमाप्नुयात् भ्रातुरायुःक्षयोराजन्नभवेत्तत्रकर्हिचित् चित्रगुप्तस्यपूजांतुकुर्याद्ज्ञानविवृद्धये म सीपात्रंलेखनींचसंपूज्यचप्रयत्नतः सर्वान्कामानवाप्नोतियमलोकंनपश्यति गौडग्रंथेतु यमंचचित्रगुप्तंचय मदूतांश्चपूजयेत् अर्घ्यश्चात्रप्रदातव्योयमायसहजद्वये भ्रातृभगिनीभिरित्यर्थः अत्रार्घ्यदानमंत्रः ॥ एह्ये हिमार्त्तंडजपाशहस्तयमांतकालोकधरामरेश भ्रातृद्वितीयाकृतदेवपूजांगृहाणसर्वांभगवन्नमस्ते पूजानंतरं प्र णामसंत्रः धर्म्मराजनमस्तेस्तुनमस्तेयमुनाग्रज पाहिमांकिंकरैःसार्द्धंसूर्यपुत्रनमोऽस्तुते यमुनापूजामंत्रः ॥ य मस्वसर्नमस्तेस्तुयमुनेलोकपूजिते वरदाभवमेनित्यंसूर्य्यपुत्रिनमोस्तुते क्वचिद्भ्रातृभोजनदानेऽपिमंत्रः ॥ भ्रा तस्तवानुजाताहंभुंक्ष्वभक्तमिमंशुभं प्रीतयेयमराजस्ययमुनायाविशेपतः । ज्येष्ठाभगिनीचेत्सातवाग्रजाताहमि तिपठेत् इतिहेमाद्र्यादिपुप्रोक्तं यमद्वितीयाकृत्यं अथभविष्योत्तरोक्तं यमद्वितीयाकृत्यं ॥ श्रीकृष्णउवाच सं त्येतास्तिथयःपार्थद्वितीयाद्याश्चविश्रुताः मासैश्चतुर्भिश्चतस्रःप्रावृट्कालेमलापहाः गोपितास्ताःसदापार्थनप्रो क्ताश्चमयाक्वचित् प्रकाशयामिताःसम्यक्शृणुसर्वाःसमाहितः प्रथमाश्रावणेमासितथाभाद्रपदेपरा तृतीया श्वयुजेमासिचतुर्थीकार्त्तिकेभवेत् श्रावणेकलुपानामतथाभाद्रेतुगीर्मला आश्विनेप्रेतसंचाराकार्तिकेयाम्यकामता युधिष्ठिरउवाच कस्मात्साकलुपानामकस्मात्सागीर्मलामता कस्मात्साप्रेतसंचाराकस्माद्याम्याप्रकीर्त्तिता श्री कृष्णउवाच पुरावृत्रवधेवृत्तेप्राप्तराज्येपुरंदरे ब्रह्महत्यापनोदार्थमश्वमेधेप्रकीर्त्तिते क्रोधादिंद्रेणवैब्रह्महत्यासा

विनिषूदिता षड्विधासाक्षितौक्षिप्तावृक्षेतोयेमहीतले नार्य्यांवन्हौब्रह्महणिसंविभज्ययथाक्रमं तत्पापंश्रावणेव्यूढंद्वि
तीयायांदिनोदये नारीवृक्षनदीभूमिवान्हिब्रह्महणंतथा निर्मलीकरणाज्जातायतःसाकलुषामता मधुकैटभयोरक्तेपुरा
मग्नातुमेदिनी अष्टांगुलापवित्रास्यान्नारीणांतुरजोमलं नद्योजलमलाःसर्वावन्हे धूमशिखामलं कलुषाविचरंत्यस्यांते
नसाकलुषामता कृतप्रायश्चित्तान्परित्यज्यअकृतप्रायश्चित्तान्गृहीतुंविचरंति अतएवतस्यांप्रातिवर्षप्रायश्चित्तंक
र्तव्यमित्यर्थः ॥ गीर्गिराभारतीवाणीगीतामेधासरस्वती गीर्मलंवाहतेयस्माद्द्वितीयागीर्मलामता देवर्षिपितृध
र्म्माणामिदंकानास्तिका.खलाःतेषांसावाड्मलंव्यूहाद्वितीयागीर्मलामता अनध्यायेषुशास्त्राणिपाठयंतिपठंतिचशा
ब्दिकास्तार्किकाःश्रौतास्तेषांयेशब्दजाःस्मृताः मलाव्यूहाद्वितीयायांततोर्थगीर्मलामता अतस्तेषांसरस्वती
पूजाकार्येत्यर्थः ॥ प्रेतास्तुपितरःप्रोक्तास्तेषांतस्यांतुसंचरः द्वितीयायामतोलोकेतनसाप्रेतसंचरा अग्निष्वा
त्तावर्हिषदआज्यपाःसोमपास्तथा पितामहादयःसर्वेयेचान्येप्रेतसंचराः पुत्रैःपौत्रैश्चदौहित्रैःस्वधामंत्रैश्चपूजि
ताः श्राद्धदानमखैस्तृप्तायांत्यत.प्रेतसंचरा अतस्तस्यांपथिश्राद्धकार्य्यमित्यर्थः ॥ कार्त्तिकेशुक्लपक्षस्यद्विती
यायांयुधिष्ठिर यमोयमुनयापूर्वंभोजित.स्वगृहेतदा द्वितीयायांमहोत्सर्गेनारकीयाश्चतर्पिता.पापेभ्योपिविनिर्मु
क्तास्तेमुक्ताःसर्वबंधनात् भ्रंशिताश्चापिसंतुष्टाःस्थिताःसर्वेयदृच्छया तेषांमहोत्सवोवृत्तोयमराष्ट्रसुखावहः अ
तोयमद्वितीयासाप्रोक्तालोकेयुधिष्ठिर अस्यांनिजगृहेपार्थनभोक्तव्यमतोवुधैः स्नेहेनभगिनीहस्ताद्भोक्तव्यंपुष्टि
वर्द्धनं दानानिचप्रदेयानिभगिनीभ्योविधानतः स्वर्णालंकारवस्त्राणिपूजासत्कारभोजनैः सर्वाभगिन्यःसंपू
ज्याअभावेप्रतिपन्नकाःपितृव्यभगिनीहस्तात्प्रथमायांयुधिष्ठिर पितृव्यभगिनीपितृव्यसुतेत्यर्थः मातुलस्यसु
ताहस्ताद्द्वितीयायातथानृप पितुर्मातुःस्वसुःकन्येतृतीयायांतयोःकरात् भोक्तव्यंसहजायाश्चभगिन्याहस्ततः

परं सर्वासुभगिनीहस्ताद्भोक्तव्यंबलवर्द्धनं सर्वासुसर्वाद्वितीयास्वित्यर्थः धन्यंयशस्यमायुष्यंधर्म्मकामार्थसा
धकं आख्यातंसकलंपार्थसरहस्यंमयातव यस्यांतिथौयमुनयायमराजदेवःसंभोजितश्चभवतिस्वसृसौहृदेन त
स्यांस्वसुःकरतलादिहयोभुनक्तिप्राप्नोतिवित्तमथभोगचयंतदैव ॥ श्रावणशुक्लद्वितीयायां भाद्रशुक्लद्वितीयायामाश्वि
नशुक्लाद्वितियायांकार्त्तिकशुक्लद्वितीयायांचेदंयमद्वितीयाकृत्यंयथासंभवमनुष्ठेयम् इतिभविष्योत्तरोक्तंकार्त्तिकशुक्ल
यमद्वितीयाव्रतंसमाप्तंशुभम् कार्त्तिकशुक्लतृतीयायांविष्णुगौरीव्रतं नारदीये ऊर्ज्जशुक्लतृतीयायांविष्णुगौरीव्रतंचरे
त् पूजयेत्तांजगद्वंद्यामुपचारैःपृथग्विधैः सुवासिनीर्भोजयित्वामंगलद्रव्यपूजिताः विसर्जयेत्प्रणम्यैताविष्णुगौरीप्र
तुष्टये कार्त्तिकशुक्लचतुर्थ्यां नागव्रतं स्कांदे कार्त्तिकशुक्लपक्षमाधिकृत्य ॥ तिथौयुगाव्हयायांतुसमुपोष्ययथा
विधि शंखपालादिनागानांशेषस्यचमहात्मनः पूजाकार्य्यापुष्पगंधक्षीराप्यायनपूर्वकेतिमदनरत्ने कूर्मपुरा
णे नारदीये ॥ ऊर्जशुक्लचतुर्थ्यांतुनागव्रतमुदाहृत प्रातःकृत्वातुसंकल्प्यधेनुशृंगजलंशुचिः पीत्वास्नात्वाचम
ध्याह्ने शंखपालादिपन्नगान् शेषंचाव्हानपूर्वंस्तुपूजयेदुपचारकैः क्षीरेणाप्यायनंकुर्य्यादेतन्नागव्रतंस्मृतं एवंकृ
तेतुविप्रेंद्रकृद्धिर्नागव्रतेशुभा विषाणिनश्यंत्यचिरान्नचदंशंतिपन्नगा इति०
एतच्चमध्यान्हव्यापिन्यांकर्त्तव्यं तथाचस्कंदपुराणे ॥ युगेमध्यंदिनेयत्रतत्रोपोष्यफणीश्वरान् विषाणितस्य
नश्यंतिनाहिहिंसंतिपन्नगाः इतिनागव्रतं कार्त्तिकशुक्लपंचम्यां जयापंचमीव्रतं नारदीये ॥ कार्त्तिकेशुक्ल
पंचम्यांजयाव्रतमनुत्तमं कर्त्तव्यंपापनाशायश्रद्धयाद्विजसत्तम पूजयित्वाजयांविप्रयथाविधिसमाहितः उपचा
रैःषोडशाभिस्ततःशुचिरलंकृतः विप्रैकंभोजयित्वापितस्मैदद्याच्चदक्षिणां विसर्जयेत्ततःपश्चात्सायंभुंजीतवाग्यतः
यस्तुवैभक्तिसंयुक्तःस्नानकुर्याज्जयादिने नश्यंतितस्यपापानिसिंहाक्रांतामृगायथा यदश्वमेधावभृथेफलंस्नानेन

कीर्त्तितं तत्फलंप्राप्यतेविप्रवंध्यागर्भंचविंदति रोगीरोगात्प्रमुच्येतबद्धोमुच्येतबंधनात् इतिनारदीयपुराणे चतुर्थपादेकार्तिकशुक्लाजयापंचमी अथकार्त्तिकशुक्लपंचम्यांजयापंचमीव्रतं भविष्योत्तरे ॥ श्रीकृष्णउवाच माहात्म्यमपिवक्ष्यामिपंचम्यास्तवभारत जयेतियाचविख्याताव्रतिनांपापनाशिनी परिपूर्णंकृतंयस्यांसाज्ञेयाजयपंचमी जयाचविजयाचैवजयंतीपापनाशिनी जयाकार्त्तिकशुक्लायापंचमी ॥ केशवोभगवान्शंभुर्गंगाद्याःसरितस्तथा प्रभासाद्यानितीर्थानिजंबूद्वीपसरांसिच प्रयागंपुष्करंचैवकुरुक्षेत्रंगयातथा एतान्यन्यानितीर्थानिव्रतिनःस्नापयेत्पुत तस्मात्सर्वप्रयत्नेनस्नानंकुर्याज्जयादिने स्नेहेनोद्वर्तनेनैवद्विजान्संस्नापयेद्बहून् तीर्थंप्रस्त्रवणंगत्वास्थापयेत्सजयंहरिं जयासहितंसजयमित्यर्थः । शंखचक्रगदापाणिंवामभागेजयास्थितां वरदाभयहस्तांचश्वेतांहंसोपरिस्थितां पूजयेद्विविधैः पुष्पैर्धूपनैवेद्यजातिभिः एभिर्मंत्रैस्तुतंदेवंजयांचप्रतिपूजयेत् पादौवैपद्मनाभायजानुभ्यामाधवायच ऊरूवैनारसिंहायमेढ्रंवैमन्मथायच दामोदरायोदरंचवक्षः श्रीवत्सधारिणे श्रीवत्सायेतिकंठंचबाहूमर्वास्त्रधारिणे मुखंपद्ममुखायेतिशिरः सर्वात्मनेनमः अनेनविधिनाचैवपूजयेद्गरुडध्वजं अनंतरंतुतांदेवींवंशपात्रोपरिस्थितां जातीलताधोभागस्थांतांदेवींप्रतिपूजयेत् नमः पुष्ट्यैपादयुग्मेजानुभ्यांतुश्रियेनमः नंदायैकटिदेशेचविजयायैचवक्षसि शिरःसर्वार्थदायिन्यैसर्वांगेविजयांतथा विधिनानेनसंपूज्यपूजयेद्विजयाहरी जयायजयरूपायजयगोविंदरूपिणे जयदामोदरायेतिजयसर्वनमोस्तुते अर्घ्यमंत्रः । वेणुपात्राणिसर्वाणिसप्तधान्ययुतानिच रक्तसूत्रेणसंसूत्र्यसफलानिनिवेदयेत् संसूत्र्यसंवेष्ट्य यथावेणुदलंदत्त्वाप्रीयतेमधुसूदनः तथामेऽस्तुशुभंसर्वंवेणुपात्रप्रदानतः वेणुपात्रदानमंत्रः । अनेनविधिनाचैवदद्यात्पात्राणिगोसुरे ब्रह्मांडपुराणे । रक्षाबंधंततःकुर्यात्सुहृत्स्वजनबांधवैः अक्षताःसर्षपादूर्वारक्षामध्येचरोचनाः येनबद्धोवलीराजा

दानवेंद्रोमहाबलः तेनत्वामनुबध्नामिरक्षेमाचलमाचल इतिरक्षामंत्रः । रक्षाबंधंनरोयस्तुकुर्याद्भक्तिसमान्वितः
नतस्यग्रहपीडास्यान्नचमृत्युभयंतथा भूतवेतालयक्षाद्यैःपिशाचैर्नाभिभूयते रक्षायाबंधनंकृत्वासंग्रामंप्रविशेन्नरः
जयेतसरिपून्सर्वान् जीयतेनचकेनचित् तस्मात्सर्वप्रयत्नेनरक्षाबंधंतुकारयेत् यस्तुवैभक्तिभावेनस्नानंकुर्या
ज्जयादिने कुतस्तस्यैवपापानिमाघमासप्लवेयथा यथाश्वमेधावभृथंतादृशंकारयेद्बुधः जलांजलिस्तुविधिना
क्षिप्यतेयत्रमूर्द्धनि ब्रह्महत्यादिपापेभ्योमुच्यतेनात्रसंशयः अपुत्रोलभतेपुत्रान्वंध्यागर्भंचविंदति रोगीरोगैर्वि
मुच्येतप्रयातिहरिमंदिरं ॥ इतिभविष्योत्तरोक्तंकार्तिकशुक्लपंचम्यांजयापंचमीव्रतम् कार्त्तिकशुक्लषष्ठ्यांभौमवार
युतायांवह्निंसंपूज्यमहोत्सवंकुर्यात् तदुक्तंनारदीये ॥ कार्त्तिकेशुक्लषष्ठ्यांतुषण्मुखेनमहात्मनादेवसेनामहाभाग
लब्धासर्वसुरार्चितः अतस्तस्यांसुरश्रेष्ठान्देवसेनांचषण्मुखं संपूज्यनिखिलैरेवउपचारैर्मनोहरैः प्राप्नुयादतुलां
सिद्धिंमनोभीष्टांद्विजोत्तम अत्रैववह्निपूजोक्तातांचसम्यक्समाचरेत् विविधैर्द्रव्यहोमैश्चवन्हिपूजापुरस्सरं म
त्स्यपुराणे । वृश्चिकार्केशुक्लषष्ठीभौमवारउपस्थिता महाषष्ठीतुसाप्रोक्तासर्वपापहरातिथिः तस्यांस्वपितिवैव
न्हिःपूर्वत्रोपोष्यवैदिने षष्ठ्यांवान्हिंसमभ्यर्च्यकृत्वावान्हिमहोत्सवं ०। वृश्चिकार्केकार्त्तिकेमासेतिकालादर्शे सर्वासु
षष्ठीषुविशेषात्कार्त्तिकेकृत्यविशेषोभविष्योत्तरेपि ॥ षष्ठ्यांफलाशनोराजन्विशेषात्कार्त्तिकेनृप राज्यच्युतोविशेषेण
स्वंराज्यंलभतेचिरात् दत्त्वार्घ्यंकार्त्तिकेमासिस्थित्वावैदक्षिणामुखः दध्नाघृतोदकैःपुष्पैर्मंत्रेणानेनसुव्रत सप्तर्षि
दारजस्कंदसेनाधिपमहाबल रुद्रोमाग्निजषड्वक्त्रगंगागर्भनमोस्तुते प्रीयतांदेवसेनानीःसंपादयतुहृद्गतं दत्त्वा
विप्रायचामान्नंयच्चान्यदपिवर्त्तते पश्चाद्भुक्त्वासौरात्रौभूमिंकृत्वातुभाजनमिति ॥ एवमब्दपर्यंतषष्ठीषुराजतंस्कं
दंसंपूज्यविप्रायदद्यादितिदिवोदासः ॥ इतिकार्त्तिकशुक्लषष्ठीकृत्यं कार्त्तिकशुक्लसप्तम्यांशाकसप्तमीव्रतं ॥

नारदीये अथकार्त्तिकशुक्लायांशाकाख्यासप्तमीव्रतं तस्यांतुसप्तशाकानिसुवर्णकमलानिच प्रदद्यात्सप्तवि
प्रेभ्यःशाकाहारस्ततःपरं द्वितीयेह्निद्विजान्भोज्यदद्यात्तेभ्योथदक्षिणां विसृज्यबंधुभिः सार्द्धस्वयंभुंजीतवाग्य
तइति कार्त्तिकशुक्लाष्टमीगोपाष्टमी तत्रगोपूजाकार्य्या तदुक्तंनिर्णयामृते कूर्मपुराणे ॥ शुक्लाष्टमीकार्त्तिकेतु
स्मृतागोपाष्टमीबुधैः तत्रकुर्य्याद्गवांपूजांगोग्रासंगोप्रदक्षिणां गवानुगमनंकार्य्यंसर्वान्कामानवाप्नुयात् नार
दीयेपि । गोपाष्टमीतुसाप्रोक्ताकार्त्तिकेधवलेदले तत्रकुर्य्याद्गवांपूजांगोग्रासंगोप्रदक्षिणां गवानुगमनंदानंवा
ञ्छन्सर्वाश्चसंपदः भविष्योत्तरेपि । गोपाष्टम्यांगवांपूजागोग्रासंगोप्रदक्षिणं गवानुगमनंदानंसर्वपापप्रणा
शनमिति । अत्रगोपूजादिकं गोदानविधिना कार्य्यम् इयंचकंदर्पकल्पादिः कल्पादिप्रकरणोक्तंश्राद्धादिकम
पिकार्य्यम् कार्त्तिकशुक्लनवमी कृतयुगादिः तदुक्तं वैशाखमासस्यतुयातृतीयानवम्यसौकार्त्तिकशुक्लपक्षइत्या
दियुगादिनिर्णये ॥ इयंच पूर्वाह्णव्यापिनीग्राह्याशुक्लपक्षस्थत्वात् निर्णयस्तुपूर्वमेवोक्तः तदुक्तंहेमाद्रौ दे
वीपुराणे । शुक्लपक्षेनवम्यांयःकार्त्तिकस्यसमाहितः स्नायान्नद्यांनमस्कुर्य्यादक्षयंलभतेफलमिति अत्रश्राद्धंक
र्त्तव्यं तथाचकृत्यतत्त्वार्णवे ॥ कार्त्तिकेनवमीशुक्लापितृणांतृप्तिदासदा तस्यांस्नानंतथादत्तमनंतफलसाधकमिति
ब्रह्मांडपुराणे । आषाढ्यामथकार्त्तिक्यांमाघ्यांमन्वंतरादिषु युगादिषुचदुःस्वप्नेजन्मर्क्षेग्रहपीडिते प्रौष्ठपद्य
सितेपक्षेश्राद्धंकुर्वीतयत्नतः । अस्यांगोदानादिकमुक्तं विष्णुपुराणे । अस्मिंश्चगोभूमिहिरण्यवस्त्रदानेनसर्वंप्र
विहायपापं शुरत्वमिंद्रस्यसुहृत्त्वमेतिमर्त्याधिपत्यंलभतेमनुष्यइति अस्यामेवकूष्मांडदानाचारः तथाच स
नत्कुमारसंहितायांकार्त्तिकमाहात्म्ये ॥ वालखिल्याऊचुः कार्त्तिकेशुक्लनवमीतत्राभूद्द्वापरंयुगं पूर्वापराह्णगाग्रा
ह्याक्रमाद्दानोपवासयोः अत्रकूष्मांडकोनामहतोदैत्यस्तुविष्णुना तद्रोमभिःसमुद्भूतावल्ल्यः कूष्मांडसंभवाः

तस्मात्कूष्मांडदानेनफलमाप्नोतिनिश्चितं अत्रकूष्मांडदानविधिःतत्रकर्ताशुचिर्भूत्वाप्राङ्मुखउपविश्याचम्यकूष्मांडंसुवर्णगर्भितं वस्त्रेणावेष्ट्य देयब्राह्मणंसंपूज्य ॐमद्यकार्त्तिकशुक्लनवम्यांयुगादितिथौब्रह्महत्यादिसकलपापक्षयपूर्वकसर्वारिष्टशांतिकामइदंकूष्मांडफलंससुवर्णवस्त्रसंवेष्टितं विष्णुदैवतं यथानामगोत्रायब्राह्मणायदातुमहमुत्सृजे सुवर्णदानदक्षिणांदत्वा मंत्रंपठेत् ॥ ब्रह्महत्यादिपापानांब्रह्मणानिर्म्मितंपुरा कूष्मांडंबहुबीजाढ्यमतःशांतिंप्रयच्छमे पापानामित्यनंतरंक्षयार्थमितिशेषः अत्रैवमथुरासेतुप्रोक्ता मथुरादिनगरप्रदक्षिणा तथाचोक्तं पाद्मे ॥ नारदउवाच प्रदक्षिणोद्भवंपुण्यंनभूतंनभविष्यति कार्त्तिकेशुक्लपक्षेतुनवमीयामहेश्वर तस्यांप्रदक्षिणीकृत्यसर्वपापात्प्रमुच्यते तथासत्ययुगादिश्चनवमीकार्त्तिकेसिता अत्रद्वापरकृतयुगयोर्युगादिदिनत्वंकल्पभेदेनज्ञेयं । तस्यांस्नानंहुतंदत्तमनंतफलदंभवेत् कुमुदस्यतुमासस्यमथुरायांनृपोत्तम प्रदक्षिणैर्नवम्यांतु पूतोभवतिपातकात् । क्रमतःपादविन्यासायावंतःसर्वतोदिशं तावंतःकुलसंभूतालोकेतिष्ठंतिशाश्वते मथुरादूरसंस्थावेत्तदन्यांतुमहापुरीं अभावेयत्रसंस्थश्चकुर्य्यात्तस्याःप्रदक्षिणाः तदशक्तौविप्रहरिगोगृहाणांप्रदक्षिणा गुह्याद्गुह्यतरंचान्यद्वक्ष्यामितवप्रीतितः सालिग्रामस्यदेवस्यतुलस्याश्चप्रदक्षिणा तत्समाभूपतिश्रेष्ठनभूतानभविष्यति सप्तद्वीपवतीभूमिःसवनौषधिसागरा तस्याःप्रदक्षिणापुण्यंसालिग्रामप्रदक्षिणात् कृताप्रदक्षिणायेनसालिग्रामस्यशार्ङ्गिणः तेनकृताःपंचक्रोश्याःशतशश्चप्रदक्षिणाः गोकोटिदानेग्रहणेप्रयागेवासउत्तम अश्वमेधायुतंपुण्यं सालिग्रामप्रदक्षिणात् गवांचब्राह्मणानांचतथासंन्यासिनामपि देवालयानांसर्वेषांसालिग्रामसमामता सालिग्रामाधिकानैवकस्यापिचप्रदक्षिणा तस्मान्नवम्यामूर्जेतुकर्त्तव्यातत्प्रदक्षिणा यतोनेकाद्विजागावोदेवालयमठादयः तुलसीवनान्यनेकानिसालिग्रामास्त्वनेकशः देशांतरागताःपुण्यायोगिनःसाधवस्तथा वैरागिणश्चमुक्ताश्चगृह

स्थाः पुण्यशालिनः पुराणानिचवेदाश्चउपवेदागृहेषुच देवतानांचप्रतिमाः संतिग्रामपुरादिषु अतःप्रदक्षिणा कार्यातेषांसर्वोत्तमोत्तमा तत्रकल्यंसमुत्थायशुचिस्तद्गतमानसःस्नानंकृत्वानोपानत्कः कमंडलुधरःपुरा वहिर्गत्वा जपन्स्तोत्रंमंत्रंनामानिवाहरेः प्रदक्षिणंचरेद्विद्वान्सर्वपापापनुत्तये अष्टाक्षरंजपन्मंत्रमथवाद्वादशाक्षरं षडक्षरंजप न्मंत्रंकुर्याद्विद्वान्प्रदक्षिणं यावच्छ्लोकाःस्थिताश्चांतर्गावोवैमंदिरेषुच तावत्पुरस्यग्रामस्यपुण्याःप्रोक्ताःप्रदक्षिणाः एकातिस्रश्चतस्रोवापुरग्रामप्रदक्षिणाः यावत्सूर्योदयोनैवयावन्नास्तंगतः पुनः तावत्प्रदक्षिणाकार्यापुरग्रामाद्ब हिर्नरैः एकातिस्रश्चतस्रोवाअतःशीघ्रंहिजागृयात् सूर्योदयानंतरतःपुरग्रामप्रदक्षिणा तत्रदेवालयेवाथस्वगृहे तुलसीवनं सालिग्राममहापुण्यंकुर्याद्विद्वान्प्रदक्षिणां अथद्विजांस्तुसंपूज्यभोजयित्वाचपायसैः प्रदक्षिणंप्रकु र्वीतदत्वातेभ्यश्चदक्षिणां इतिप्रदक्षिणाध्यायंयेपठंतिद्विजोत्तमाः शृण्वंतिचैवयेभक्त्यातेपियांतिपरांगतिम् सुध न्वोवाच अहमासंपुराशक्रगृध्रःपापविशेषतः व्याधेनघातितोवाणैः प्रातर्विष्णुगृहांगणे मयिकंठगतप्राणेभप कोमांसलोलुपः जग्राहमांसवक्त्रेणश्वभिरन्यैरनुद्रुतः वहन्मांस्वमुखेनैवभीतोन्यैर्भषकैस्तथा गतःप्रदक्षिणाकारं विष्णोस्तन्मंदिरंप्रभोः तेनैवतुष्टिमापन्नअंतरात्माजगन्मयः ममचापिशुनांचैवदत्तवान्परमंपदं प्रदक्षिणाकार तयागतस्यापीदृशंफलं ममायंविवुधश्रेष्ठाकिंपुनःसम्यगर्चनादितिकार्तिकशुक्लनवम्यां प्रदक्षिणामाहात्म्यं अ स्यामेवाश्वत्थतर्पणादिकमुक्तं नारदीये कार्तिकशुक्लनवमीयाक्षयासाप्रकीर्तिता तस्यामश्वत्थमूलेतुतर्पणंसम्यगा चरेत् देवानाचऋषीणांचपितृणामपिनारद स्वशाखोक्तैस्तथामंत्रैःसूर्यायार्घ्यंततोर्पयेत् ततोद्विजान्भोजयि त्वामिष्टान्नेनमुनीश्वर स्वयंभुक्त्वाचविहरेद्द्विजेभ्योदत्तदक्षिणः एवंयःकुरुतेभक्त्याजपंदानंद्विजार्चनं होमंचस र्वमक्षय्यंभवेदितिविधेर्वचः भाविष्योत्तरेतु कार्त्तिकामलपक्षस्यनवमीभूतिवृद्धये प्रवुद्धांतुजगद्धात्रींपूजयेद्दीपमालया

मासैश्चतुर्भिर्यत्पुण्यंविधिनापूज्यचंडिकां तत्फलंप्राप्यतेवीरनवम्यांकार्त्तिकस्यच ॥ अत्रैवतुलसीविवाहउक्तः पद्मपुराणे कार्त्तिकेशुक्लनवमीमवाप्यविजितेंद्रियः हरिंविधायसौवर्णंतुलस्यासहितंविभुं पूजयेद्विधिवत्तत्रव्रतीभक्त्यादिनत्रयं एवंयथोक्तविधिनाकुर्य्याद्वैवाहिकांविधीमिति अथतुलसीविवाहविधिः विष्णुयामले आदावारोप्यतुलसींवनेवास्वगृहेपिवा मासत्रयेणसंवर्ध्यततःपूजांसमारभेत् सौम्यायनेप्रकर्तव्यंगुरुशुक्रोदयेतथा अथवाकार्तिकेमासिभीष्मपंचादिनेपिवा वैवाहिकेषुऋक्षेषुपूर्णिमायांविशेषतः मंडपंकारयेत्तत्रकुंडंवेदींविवाहवत् ब्राह्मणांश्चशुचीन्दांतान्वेदवेदांगपारगात् ब्राह्मणंदैशिकंचैवचत्वारश्चतथर्त्विजः ग्रहयज्ञंपुरस्कृत्यमातृणांपूजनंतथा कृत्वानांदीमुखंश्राद्धंसौवर्णंस्थापयेद्धरिं कृत्वाचरौप्यतुलसींलग्नेत्वस्तामितेरवौ ज्योतिःशास्त्रप्रसिद्धे गोधूलिकलग्नइत्यर्थः । संपूज्यालंकृतांतांचप्रदद्याद्विधिनाहरेः अत्रषष्ठीचतुर्थ्यर्थे वासःश्रुतेनमंत्रेणवस्त्रयुग्मेनवेष्टयेत् यथाबध्नंतिमंत्रेणकंकणंपाणिपल्लवे कोदादित्यादिमंत्रेणकरग्राहोविधीयते आचार्योवेदिकाकुंडेजुहुयाच्चनवाहुतीः । चतस्रोव्याहृतयः ओंभूःस्वाहा ओंभुवःस्वाहा ओंस्वःस्वाहा ओंभूर्भुवःस्वःस्वाहा पंचाहुतयः त्वन्नोअग्नेइत्यादिकाःपंच कर्तव्यश्चततोहोमोविशेषाद्विधिपूर्वकं ओंनमोभगवतेवासुदेवायनमःस्वाहा ओंनारायणायस्वाहा माधवायस्वाहा गोविंदायस्वाहा ओंविष्णवेस्वाहा ओंमधुसूदनायस्वाहा ओंत्रिविक्रमायस्वाहा ओंवामनायस्वाहा ओंश्रीधरायस्वाहा ओंहृषीकेशायस्वाहा ओंपद्मनाभायस्वाहा ओंदामोदरायस्वाहा ओंवासुदेवायस्वाहा ओंअनिरुद्धायस्वाहा ओंअच्युतायस्वाहा ओंअनंतायस्वाहा ओंगदिनेस्वाहा ओंचक्रिणेस्वाहा ओंविष्वक्सेनायस्वाहा ओंवैकुंठायस्वाहा ओंजनार्दनायस्वाहा ओंमुकुंदायस्वाहा ओंअधोक्षजायस्वाहा ॥ यजमानःसपत्नीकः सहामात्यैश्चगोत्रजैः प्रद-

क्षिणाः प्रकुर्वीतचतस्रोविष्णुनासह तुलस्याइत्यर्थः । पठेयुःशांतिकाध्यायंतथावैमित्रसंहितां गायंतिमंगलंना
द्यैर्भेरीतूर्य्यादिनिस्वनैः गांपदंचतथाशय्यामाचार्य्यायप्रदापयेत् ऋत्विग्भ्योदापयेद्वस्त्राण्यन्येषांचैवदक्षिणाः
ब्राह्मणान्भोजयेत्पश्चात्सूपैःक्षीरैःसशर्करैः एवंप्रतिष्ठितांदेवींविष्णवेचसमर्पयेत् आजन्मोपार्जितंपापंदर्शना
देवनश्यति ॥ इतिविष्णुयामलोक्तस्तुलसीविवाहः अथतुलसीविवाहकथा सनत्कुमारसंहियां कार्तिकेशु-
क्लनवमीतत्राभूद्द्वापरंयुगम् पूर्वापराह्णग.ग्राह्याक्रमाद्दानोपवासयोः अत्रकूष्मांडकोनामहतोदैत्यस्तुविष्णुना
तद्रोमभिःसमुद्भूतावल्ल्यःकूष्मांडसंभवाः तस्मात्कूष्मांडदानेनफलमाप्नोतिनिश्चितम् अस्यामेवनवम्यांतुकुर्या.
त्कृष्णेनयोनरःस्वशाखोक्तेनविधिनातुलस्याःकरपीडनं कन्यादानफलंतस्यजायतेनात्रसंशयः कार्तिकेशुक्लनव
मीमवाप्याविजितेंद्रियः हरिंविधायसौवर्णंतुलस्यासहितंशुभं पूजयेद्विधिवद्भक्त्याव्रतीतत्रादिनत्रयम् एवंयथो
क्तविधिनाकुर्य्याद्वैवाहिकंविधिम् ग्राह्यंत्रिरात्रमत्रैवनवम्याअनुरोधतः मध्याह्नव्यापिनीग्राह्यानवमीपूर्ववेदिता
धात्र्यश्वत्थौचएकत्रलापयित्वासमुद्वहेत् ननश्यतेतस्यपुण्यंकल्पकोटिशतैरपि अत्रैवोदाहरंतीममितिहासंपु-
रातनम् वभूवविष्णुकांच्यांतुक्षत्रियःकनकाभिधः धनाढ्योवैश्यवृत्तिश्चवैष्णवोराजपूजितः वहुकालोगतस्त
स्याविनापत्यंमुनीश्वराः ततोनानाव्रतैर्जाताकन्याकमललोचना सुरूपालक्षणोपेतानानागुणसमन्विता पिता
तस्यानामचक्रेकिशोरीतिचाविश्रुतम् एकदातद्गृहेयातोजन्मपत्रीनिरीक्षकः दर्शयित्वाजन्मपत्रींकथंकन्याभवे
दियं ततस्तेनक्षणंध्यात्वाकनकश्रृणुमेवचः यदिब्रवीमिसत्यंचेत्तवदुःखंभविष्यति यद्यसत्यमहंब्रूयांमिथ्यात्वं
ममजायते तस्मात्सत्यंवदिष्यामियद्भावितितथाकुरु योस्याःकरग्रहंकुर्य्यादसौवज्रान्मरिष्यति इतितद्वचनंश्रुत्वा
कनकोदुःखितोभवत् नचाकारिविवाहोस्याःसाचब्राह्मणपूजने नियुक्तात्वगमत्सैपानानेयामन्मुखाग्रतःदृष्ट्वेमांरूप

संपन्नांदुःखमेवाधयिष्यति स्थितायास्मिन्गृहेसातुद्विजातिथ्यमचीकरत् कदाचिद्दैवयोगेनतत्रागाद्द्विजपुंगवः यात्रार्थंविष्णुकांच्यांसवैशाखेमासिशंकरः हेमकोविप्रशुश्रूषींज्ञात्वात्रैवसमागत आगत्यांगनमध्येतूपविष्टोद्विजोत्तमः किशोर्यागत्यचातिथ्यंशंकरस्यकृतंतदा दृष्ट्वातांतरुणींनाम्नासुवेषांविनयान्विताम् अजातकरपीडचसखींदृष्ट्वाभ्युवाचसः शंकरउवाच चंदनेवदशीघ्रंत्वंकिशोरीनविवाहिता किमत्रकारणंजातातरुणीकामरूपिणी इतितद्वचनंश्रुत्वाचंदनासर्वमब्रवीत् तदाकृपालुनानेनतात्पित्रग्रेनिवेदितं अस्यैमंत्रंप्रयच्छामिश्रीविष्णोर्द्वादशाक्षरम् करोतुवर्षत्रितयंजपंतस्यसुलोचना प्रातःस्नानवतीनित्यंतुलसीवनपालिका कार्तिकस्यासितेपक्षेनवम्यांविष्णुनासह सौवर्णेनतुलस्याश्चविवाहंकारयत्वियम् तेनव्रतप्रभावेणविधवानभविष्यति तत्पित्रापितथेत्युक्तंप्रायश्चित्तंसदत्तवान् किशोर्यैवैष्णवंधर्म्मंसमग्रंचादिदेशसः तेनव्रतेनयत्प्रोक्तंकिशोर्य्यापितथाकरोत् वर्षत्रयंयथाशास्त्रंकिशोर्यातद्व्रतंकृतं चतुर्थेकार्तिकेमासिकिशोरीस्नपनायच प्रातःकालेगतावालादृष्टामार्गेविलेपिना क्षात्रियेणयदादृष्टाप्रापमोहंजडात्मकः पृष्ठेतस्यास्तुसंलग्नोभावयंस्तामनिंदिताम् केचित्तांददृशुर्दूरात्केचित्पश्यंतिगुप्ततः स्त्रियोपितांप्रपश्यंतिपुरुषाणांतुकाकथा यथाद्वितीयाचंद्रस्यदर्शनेचोत्सुकाजनाः तथारात्रौप्रतीक्षंतेतद्द्वारेसकलाजनाः निमेषमात्रमप्येकंदृष्ट्वास्थित्वातुनालिकां अधिकंकिंवर्णनीयंतत्सौंदर्य्यंमुनीश्वराः केचिद्वदंतिदेवीयंनागकन्येतिचापरे रुद्रसंमोहनार्थायजातासामोहिनीतिच सानपश्यतिलोकांश्चनमार्गेनंसखीगणान् ध्यायंतीहृदयेविष्णुंतुलसींदेवरूपिणीम् तांगृहीतुंमनश्चक्रेविलेपीद्रव्यवान्वली नानाभेदाःकृतास्तेननलेभेचांतरंक्वचित् मालाकार्यागृहंगत्वातस्यैद्रव्यंप्रयच्छता येनकेप्रकारेणकिशोर्यासहसंगमः यथास्यात्क्रियतांभद्रेदेयमस्माच्चतुर्गुणम् तथाचबहवोपायाः कृतास्तद्ग्रहणायच नददर्शयदोपायमवदत्साविलेपिनम् न

दृश्यतेमयोपायस्त्वयायत्प्रोच्यतेधुना मयातदेवकर्त्तव्यंद्रव्यग्रहणसिद्धये विलेप्युवाच तवकन्यातुभूत्वाहंन यामिकुसुमानिच अग्रेयद्भाविभवतुगृहाणाह्निशतंशतम् तयापिचतथेत्युक्तंसप्तम्यांनिश्चयःकृतः अष्टम्यांसा गतातत्रकिशोरीतामुवाचह मालाकृतेश्वोनवमीतुलस्याःपाणिपीडनम् , तिष्ठात्रैवत्वयानेयामुकुटाःपुष्पसं भवाः मालिन्युवाच मत्पुत्रीचागताग्रामान्नानाकौतुककारिणी यद्यत्प्रोक्तंत्वयावालेसासमानयतिध्रुवम् तथा सापितथेत्युक्तामालिनीस्वगृहंययौ कथितःसर्ववृत्तांतोविलेप्यग्रेततोभवत् प्राप्तामभेद्रपदवीत्येतंसुखमवापस मालिन्यारचितारात्रौमुकुटाविविधास्तदा विष्णुकांच्यांतदाराजाजयसेनोबभूवह तस्यपुत्रोमुकुंदोभूत्सूर्यभक्ति परायणः किशोर्यास्तुश्रुतातेनवार्त्तेयमतिसुंदरी तदातेनमुकुंदेनसंकल्पः कृतएवहि किशोरीयदिभार्यामे भविष्यतिदिवाकर तदान्नमहमश्नामिह्यन्यथामेमृतिर्भवेत् कृत्वेत्थंसतुसंकल्पमुपवासान्प्रचक्रमे सप्तमेहः निसूर्योसौस्वप्नेवचनमब्रवीत् किशोर्याविधवायोगोवर्त्ततेतेकथंभवेत् राजपुत्रप्रदास्यामितेन्यांपद्मायतेक्षणात् मुकुंदउवाच यदिदेवप्रसन्नोसिविश्वंत्वंसृजसिप्रभो वालवैधव्ययोगंचहंतुंकिंनक्षमोह्यसि इतितस्यवचःश्रुत्वा सांत्वनावहुलाकृता नमन्यतेमुकुंदोसौतथेत्युक्त्वागतोरविः तुलसीव्रतमाहात्म्याद्विधवात्वंगमिष्यति रात्रौस्व प्नःकिशोर्यास्तुतस्यामेवाभ्यजायत आगताकन्यकाकाचिद्धत्रींसहशुचिस्मिता भर्तारंवदातिस्वप्नेममाताकिशोरि का तद्धात्रींपितथेत्युक्तप्रदास्येवालिमुत्तमं एतद्धस्तेनपश्चात्तुविवाहोस्याभविष्यति श्रुत्वावालिप्रदानंसास्वप्नेचिं तातुराऽभवत् कद्वादशाक्षरीविद्याकेदंविष्णुसमर्च्चनं नरकद्वारमूलंहिमद्धस्तात्पशुमारणम् एवंसातुसमुत्थाय स्वप्नोयमितिनिश्चितम् भावयित्वासमाहूयचन्दनांवाक्यमब्रवीत् निवेद्यदृष्टंस्वप्नंतुकीदृशंस्यात्फलंवद चंद नोवाच फलंतुसम्यक्कल्याणितवानिष्टंविनश्यति विवाहोभविताशीघ्रंतुलसीव्रतकारणात् इत्थंस्वप्नफलंश्रुत्वा

तावत्कुक्कुटनिस्वनं श्रुत्वासासहसोत्थायस्नानोद्योगमचीकरत् यावदायातिसास्नानंकृत्वागेहेकिशोरिका ताव
द्विलेपीमालिन्याःपुत्रीभूत्वासमाययौ कृत्वाकेशांश्चगोपुच्छैःश्मश्रुचोत्पाटितंबलात् अंतरेशाटिकांगृह्यनिम्बू
भ्यांचस्तनौकृतो सर्वालंकारशोभाढ्याकटाक्षयतिचापरान् नज्ञातोसौतुकेनापिपुमान्स्त्रीरूपधारकःध्यानंकृत्वात
याहस्तौप्रसार्यैतेयदातदा दत्तेविलेपीपुष्पाणिचित्तेचिंतयतिस्थितःकथमस्याममस्पर्शोभविष्यतीविचिंतयत् एवंदि
नत्रयात्त्रस्यप्रभातेतुमुनीश्वराःतस्मिन्नहनिसंजातःकनकःशोकपीडितः किंकार्य्यमधुनास्माभीराजपुत्रीमरिष्यति
एवंचिंतयतस्तस्यप्रातःकालोबभूवहराजलोकाःसमायातागृहीत्वावस्त्रवाहनम्अभ्यंतरेसनागत्यमंत्रीवचनमब्रवीत
गृहेस्तितवकन्यैकामुकुंदार्थंप्रदीयतां माविचारोस्तुभवनेनृपाज्ञापरिपाल्यताम् कनकेनतथेत्युक्तममभाग्यमुप
स्थितम् महाराजकुमारस्य वधूः कन्याभविष्यति ततःप्रोवाचमंत्रीतं द्वादश्यांलग्नमुत्तमं रात्रौतिष्ठतियुग्मा
ख्येरविःषष्ठेविधुश्चखे भवेभौमोगुरुर्धर्मेपंचमेबुधभार्गवौ शनिस्तृतीयेष्ठेराहुर्विवाहसमयःसतु उभौसंभृतसं
भारावुभावपिधनान्वितौ द्वादश्यामाययौसायंराजपुत्रःससैनिकः अब्रवीत्तत्रकनकंतेकीराजपुरोहितः तेक्यु
वाच अथोनिरोधःक्रियतांकिशोर्याश्चनृपाज्ञया भविष्यतिमहादेवीनोदृश्यापुरुषैःक्वचित् इतितद्वचनंश्रुत्वापु
रुपास्तुनिराकृताः नारीरूपेविलेपीतुदैवात्तत्रैवसंस्थितःततोर्द्धरात्रवेलायांमुकुंदोभ्यंतरंययौ तुलस्यग्रेस्थितावाला
किशोरीसंस्मरन्हरिम् ततश्चटचटाशब्दस्तुमुलःसमपद्यतमहावायुर्ववौतत्रप्रशांताः सर्वदीपिकाःविद्युल्लतासता
मिस्त्रान्धीभूतोखिलोजनः मिथ्यानभास्करवचोमुकुंदोचिंतयत्हृदि अन्यैःप्रतर्कितंलोकैर्वैधव्यस्यतुकारणम्
भीतोमुकुंदोहृदयेयाध्यायतिभास्करम् तस्यांसंधौधृतंतस्याःकरपद्मंविलेपिनातस्याः करस्यसंसर्गात्स्वर्गाद्विमानपपा
तह नीतस्तेनविलेपीतुतत्कालंयममंदिरं वाह्यआसीत्कलकलोमुकुंदोयंमृतास्त्विति क्षणादेवततोज्ञातंमालाकारसुतं

भृता ततस्तयोर्विवाहोभूद्राज्यंप्रापकिशोरिकाकिशोर्य्यास्तुसमुत्पन्नाभ्रातरस्तुलसीव्रतात् आदौशास्त्रसत्यमासीरा
तोदेवोदिवाकरःतुलसीव्रतमाहात्म्यात्कथंनस्युर्मनोरथा सौभाग्यार्थंचविद्यार्थंधनार्थंरुङ्निवृत्तये संतत्यर्थंप्रकर्त्तव्यं
तुलस्याः पाणिपीडनम् ॥ इतिश्रीसनत्कुमारसंहितायांकार्तिकमाहात्म्येतुलसीविवाहोनामैकोननवतितमोध्यायः
॥ इतिकार्तिकीशुक्लनवमीकृत्यं ॥ अथकार्तिकशुक्लदशम्यांसार्वभौमव्रतं वाराहपुराणे सार्वभौमव्रतंचान्यत्कथ
यामिसमासतः येनसम्यक्कृतेनाशुसार्वभौमोभवेन्नृपः कार्तिकस्यतुमासस्यदशमीशुक्लपक्षगा तस्यांनक्ताशनो
नित्यंदिक्षुशुद्धबलिंहरेत् शुद्धबलिः पवित्रद्रव्यैः पूजोपहारइत्यर्थः ॥ विचित्रैः कुसुमैर्भक्ष्यैःपूजयेच्चद्विजांस्तथा
सर्वाभवत्यःसिद्ध्यंतुममजन्मनिजन्मनिभवत्योदशादिशइत्यर्थःएवमुक्त्वाबलिंतासुदत्त्वाशुद्धेनचेतसा ततोर्द्धरात्रेभुंजी
तदध्यन्नंचसुसंस्कृतं पूर्वंपश्चाद्यथेष्टंचएवंसवत्सरंनृपःयःकरोतिनरोनित्यंतस्यादिग्विजयोभवेत् इदमेवव्रतंनारदीये
दशम्यांकार्तिकेशुक्लेसार्वभौमव्रतंचरेत् कृतोपवासश्चैकाशीनिशीथेपूपकादिभिः दशदिक्षुबलिंदद्याद्गृहाद्वापिपुरा
द्बहिः मंडलेनदलेकृत्वागोविट्लिप्तधरातले मंत्रैरेभिर्द्विजश्रेष्ठगणेशादिकृतार्चनः योमेपूर्वगतःपाप्मा पापकेनेह
कर्मणा तमिंद्रोदेवराजोयंनाशयत्वाखिलेष्टदः१ योमेवह्निगतः पाप्मापापकेनेहकर्म्मणा तेजोराजोथवन्हिस्तंनाशय
त्वखिलेष्टदः२योमेदक्षगतः पाप्मापापकेनेहकर्म्मणा तंयमः प्रेतराजोमेनाश यत्वखिलेष्टदः ३ योमेनैर्ऋत्यगः
पाप्मापापाकेनेहकर्म्मणा तंराक्षसेंद्रोनिर्ऋतिर्नाशयत्वाखिलेष्टदः ४ योमेपश्चिमगःपाप्मापापकेनेहकर्म्मणा
यादःपतिस्तंवरुणोनाशयत्वखिलेष्टदः ५ योमेवायुगतःपाप्मापापकेनेहकर्म्मणा वायुस्तंमरुतांराजानाशयत्व
खिलेष्टदः ६ योमेसौम्यगतःपाप्मापापकेनेहकर्म्मणा सोमस्तम्क्षयक्षेशोनाशयत्वाखिलेष्टदः ७ योमईशानगः
पाप्मापापकेनेहकर्म्मणा ईशानोभूतनाथस्तंनाशयत्वाखिलेष्टदः८ योमऊर्ध्वगतः पाप्मापापकेनेहकर्म्मणा ब्रह्मा

प्रजापतीशस्तंनाशयत्वाखिलेष्टदः ९ योमेचाधोगतःपाप्मापापकेनेहकर्म्मणा अनंतोनागराजस्तंनाशयत्वखिले
ष्टदः १०इत्येवंदिक्षुदशसुबलिंदत्त्वासमाहितः क्षेत्रपालायतद्बाह्येक्षिपेद्बलिमतंद्रितः एवंकृतविधिःशेषांनिशांतांनि
नयेत्सुधीः गीतैःसुमंगलैर्नृत्यैः स्तवपाठादिभिर्जपैः प्रातः स्नात्वासमभ्यर्च्य लोकपालान्द्विजोत्तमान् द्वादशा
भ्यर्च्यसंभोज्यशक्तितोदक्षिणांददेत् इत्थंकृत्वाव्रतंविप्र भोगान्भुक्त्वैहिकान्शुभान् युगंस्वर्गसुखंभुक्त्वासार्वभौमोन्नृ
पोभवेत् ॥ अथकार्तिकमासमारभ्यशुक्लदशम्यांविधेयं राज्यावाप्तिव्रतं ॥ मार्कंडेयउवाच क्रतुर्दक्षोवसुः स
त्यः कालः कामोमुनिस्तथा कुरुवान्मनुजोविप्रोरामस्मारश्चतेदश ।.कुरुवान्मनुजएकः । विश्वेदेवाः समाख्या
तादशात्माकेशवोविभुःतस्यसंपूजनंकार्य्यंसितपक्षेनराधिपआरभ्यकार्तिकान्मासाद्दशम्यांमुनिपुंगव मंडलेष्वथपु
ष्पेषुयदिवार्चासुयादव गंधमाल्यनमस्कारधूपदीपान्नसंपदा। अर्चाप्रतिमा। व्रतांतेकनकंदद्याद्यथाशक्तिद्विजातये
कृत्वाव्रतंकेवलमेतदिष्टंप्राप्नोतितेषांसुविधंतुलोकान् तत्रोष्यकालेपुरुषत्वमेत्यराजाभवेद्ब्राह्मणपुंगवोवा इतिविष्णु
धर्मोत्तरोक्तं राज्यावाप्तिव्रतं ॥ अथवाशुक्लदशमीमात्रसाध्यंब्रह्मावाप्तिव्रतम् ॥
तत्रैव ॥ मार्कंडेयउवाच आत्मास्वायुर्मनुर्दक्षो मदः प्राणस्तथैवच हविष्मांश्चगविष्ठश्च दत्तः सत्य
श्चतेदश देवाआंगिरसोनामदशम्यांपूजयेन्नरः सोपवासःपूर्वपक्षे पूर्वोक्तविधिनानरः पूर्वपक्षेशुक्लपक्षे
पूर्वोक्तविधिनानिरंतरोक्तविधिना कृत्वाव्रतंकेवलमेतदिष्टंप्राप्नोतितेषांसविधंतुलोकानित्यादि ॥ इतिब्रह्मावा
प्तिव्रतं॥ अथकार्त्तिकशुक्लैकादशीहरिबोधिनीनारदीये ॥ ऊर्जस्यशुक्लैकादश्यांसमुपोष्यप्रबोधिनीं केश
वंबोधयेद्रात्रौसुप्तंगीतादिमंगलैः ऋग्यजुःसाममंत्रैश्च वाद्यैर्नानाविधैरपि द्राक्षेक्षुदाडिमैश्चान्यैरंभाशृंगाटका
दिभिः समर्पणैस्ततोरात्र्यांव्यतीतायांपरेहनि स्नात्वानित्याक्रियांकृत्वाराधादामोदरंयजेत् उपचारैः षोडशभिः

सूक्तैःपौरुषवैष्णवैः संभोज्यविप्रान्विसृजेद्दक्षिणाभिर्व्रतोपितान् ततस्तांप्रतिमांहैमीं सधेनुंगुर वेर्पयेत् एवंयः कुरुतेभक्त्यावोधिनीव्रतमादृतः सभुक्त्वेहवरान्भोगान्वैष्णवंलभतेपदम् ॥ अथेमांप्रक्रम्य भविष्योत्तरेऽस्याःकथा ॥ युधिष्ठिरउवाच ॥ कृष्णकृष्णमहाप्राज्ञसर्वलोकहितावह कथयस्वप्रसादेनशुक्लांकार्तिकसंभवां किंनाम कोविधिस्तस्याएतद्विस्तरतोवद त्वद्दासदासदासोऽहंनात्रकार्याविचारणा ॥ श्रीकृष्णउवाच कार्तिकस्यसिते-पक्षेनाम्नाचैवप्रवोधिनी शृणुतस्याश्चमाहात्म्यंपापघ्नंपुण्यवर्द्धनं अश्वमेधाधिकंपुण्यंसमवाप्नोतिमानवः ता-वद्गर्जतिराजेंद्रगंगाभागीरथीक्षितौ यावन्नायातिपापघ्नीकार्तिकेहरिवोधिनी अश्वमेधसहस्राणिराजसूयशता निच एकेनैवोपवासेनपापंदहतिवोधिनी दशम्यांनियमैःस्थित्वाक्रोधमानविवर्जितः एकादशीदिनेप्रातस्तत्पू-र्वंनियमोभवेत् स्नात्वाविष्णोर्जपंकृत्वापूजयित्वारमापतिं मंत्रेणानेनराजेंद्रदेवमुत्थापयेद्धरिं उत्तिष्ठोत्ति-ष्ठगोविंदत्यजनिद्रांजगत्पते त्वयिसुप्तेजगत्सुप्तमुत्थितेह्युत्थितंभवेत् यामादूर्ध्वंततोरात्रौभ्रामयेत्स्यंदना-परि उत्थितंदेवदेवेशंनगरेपार्थिवःस्वयं दीपोद्योतकरेमार्गे नृत्यगीतसमाकुले देवंदामोदरंपश्येदु-त्थितंधरणीधरं स्वयंचप्रणमेद्भक्तोरात्रौमुक्तत्रपःशुचिः स्वदेशेराजराजेंद्र सर्वैर्मोक्षायकल्प्यते रात्रौ जागरणंकार्य्य मेकादश्यांसुरालये प्रभातेविमलेस्नात्वा द्वादश्यांविष्णुमर्चयेत् होमयेद्धव्यवाहंचहविर्द्र-व्यैर्घृतादिभिः ततोविप्राञ्छुचिःस्नात्वाभोजयेदन्नविस्तरैः दधिक्षीरघृतक्षौद्रकर्पूरागुरुमोदकैः अर्चयेच्चंदनैः पूगैःपुष्पगंधैर्द्विजोत्तमान् शास्त्रोक्तविधिनाराजन्भोजयेद्भगवद्रतान् विप्रेभ्यश्चततोदद्यात्स्ववाचायाचतेप्सितम् गावोहिरण्यंवासांसिमध्वन्नंचचतुर्विधं फलंमूलंतथाकंदंपत्रंपुष्पंफलादिकं चतुरोवार्षिकान्मासानेवंकृत्वाक्षिपे-त्तुयः सनरःपापनिर्मुक्तोमोक्षंतुफलमाप्नुयात् अवश्यमेवराजेंद्रवासुदेवपुरंव्रजेत् एवंयःकुरुतेराजन्प्रवोधिन्याः

गतंशुभं विष्णुतुल्यःसविज्ञेयोनात्रकार्य्याविचारणा श्रृणोतिध्यायतिस्तौतिजुहोत्याश्रयतेप्रभो हरिभक्तिक-
रःपार्थ सगच्छेद्वैष्णवंपदं धर्म्मार्थकाममोक्षाणांसर्वेषांसंगतिर्व्रतात् दुग्धाब्धिभोगशयनोभगवाननंतोय
स्मिन्दिनेस्वपितिचाप्यवबुध्यतेच तस्मिन्ननन्यमनसामुपवासभाजांपुंसांददातिसुगतिंगरुडांगसंगी ॥ इति-
भविष्योत्तरेप्रबोधिन्यांमाहात्म्यं ॥ पाद्मेकार्तिकमाहात्म्ये ब्रह्मनारदसंवादे ॥ ब्रह्मोवाच अश्वमेधसहस्रा-
णिवाजपेयशतानिच एकेनैवोपवासेनप्रबोधिन्याभवंतिहि पूर्वजन्मसहस्रेषुयत्पापंसमुपार्जितं जागरेणप्र-
बोधिन्यादह्यतेतूलराशिवत् प्रबोधिन्याश्चमाहात्म्यंपापघ्नंपुष्टिवर्धनं मुक्तिदंतत्वबुद्धीनांश्रृणुष्वमुनिसत्तम यत्फ-
लंसर्वतीर्थेषुसर्वदानेषुयत्फलं तत्फलंकोटिगुणितंप्रबोधिन्याःप्रजागरे नतथातुष्यतेयज्ञैर्दानैस्तीर्थनिषेवणैः
यथाशास्त्रकलालापैःकार्तिकेमधुसूदनः जागरेवासुदेवस्यकर्पूरेणतुदीपकं प्रज्वालयतिकोटीनांकपिलानांलभे
फलं आरार्त्तिकंहरेर्यस्तुसकर्पूरंतुजागरे कुरुतेमोक्षमाप्नोतिकुलायुतसमन्वितः जागरेतुहरेर्धूपंसकर्पूरंस
केसरं युक्तंमृगमदेनापिसगच्छेद्वैष्णवंपदं स्नानंकारयतेविष्णोर्दधिक्षीरघृतांबुभिः रात्रौजागरणेविप्रमुक्ति
भागीभवेन्नरः दिव्यांबराणियोदद्याज्जागरेसमुपस्थिते मन्वंतराणिवसंते मानवस्तंतुसंख्यया दद्यादाभ
रणंविष्णोरपूर्वरत्नसंभवं सदाकल्याणवसातिसोत्यर्थंविष्णुवेश्मनि शंखस्थितेनतोयेनयःस्नापयतिकेशवं क-
पिलाशतदानस्यफलंप्राप्नोतिमानवः हृदिरूपंमुखेनामनैवेद्यमुदरेहरेः पादोदकंचनिर्माल्यंमस्तकेयस्यसोच्यु
तः एकादश्यांचशुक्लायांकार्तिकेमासिकेशवं प्रसुप्तंबोधयेद्विप्रःश्रद्धाभक्तिसमन्वितः नृत्यैर्गीतैस्तथावाद्यैरृ
ग्यजुःसाममंगलैः वीणापणवशब्दैश्चपुराणश्रवणेनच वासुदेवकथाभिश्चस्तोत्रैरन्यैश्चवैष्णवैः पुष्पैर्धूपैःस.
नैवेद्यैर्दीपवृक्षैःसुशोभनैः ब्रह्मेंद्ररुद्राग्निकुवेरसूर्य्यसोमादिभिर्वंदितपादपद्म बुध्यस्वदेवेशजगन्निवासमंत्रप्रभा

वेणसुखेनबुद्धः उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते त्वयिसुप्तेजगत्सुप्तमुत्थितेतूत्थितंजगत् गतामेघावि
यच्चैवनिर्मलंनिर्मलादिशः शारदानिचपुष्पाणिगृहाणकेशवप्रभो समुत्थितेततोविष्णौक्रियासर्वाप्रवर्तते नि
शिस्वापोदिवोत्थानंसंध्यायांपरिवर्तनं विष्णुभक्तःशुचिर्दांतःकुर्यादेकादशीदिने एकादश्यांव्यतीतायांद्वादश्याम
रुणोदये आदावुद्वर्तनंविष्णोःस्नानंपंचामृतेनच गोरोचनेनतिलकंस्वनुलिप्तंस्वलंकृतं सुवाससंपूजयेच्चसुम
नोभिःसुकुंकुमैःधूपदीपैःसनैवेद्यैर्होमेनपायसस्यच एवंसंपूज्यगोविंदंब्राह्मणान्भोजयेत्ततः वासोभिर्भूषणैरत्नैः
पायसेनचभूरिणा कुंकुमैश्चफलैःपुष्पैर्गोभिरश्वैःसदक्षिणैः चातुर्मासिकमासेषुनियमोयेनयःकृतः कथयित्वाद्वि
जेभ्यश्चदद्याद्भक्त्यासुदक्षिणां दत्वाविसर्जयेद्विप्रान्ततोभुंजीतचस्वयम् ॥ इतिपद्मपुराणेप्रबोधिनीकथा ॥
॥ अथकार्तिकशुक्लैकादशीकथा ॥ ब्रह्मोवाच ॥ बोधिन्याश्चैवमाहात्म्यंपापघ्नंपुण्यवर्द्धनं मुक्तिप्रदंसुबुद्धि
नांशृणुष्वमुनिसत्तम १ तावद्गर्जंतितीर्थानिआसमुद्रसरांसिच यावत्प्रबोधिनीविष्णोस्तिथिर्नायातिकार्तिके २
तावद्गर्जंतिविप्रेंद्रगंगाभागीरथीक्षितौ यावन्नायातिपापघ्नीकार्तिकेहरिबोधिनी अश्वमेधसहस्राणिराजसूयश
तानिच एकेनैवोपवासेनबोधिन्यांकुरुतेनरः ४ यद्दुर्लभंचदुःप्राप्यंत्रैलोक्यस्यनगोचरं यद्यप्यप्रार्थितंपुत्रद
दातिहरिबोधिनी ५ मेरुमंदरमात्राणिपापान्युग्राणियानितु एकेनैवोपवासेनदहतेपापहारिणी ३ पूर्वज
न्मसहस्रेषुयत्तुदुःकर्मसंचितं जागरेणप्रबोधिन्यांदहतेतूलराशिवत् ७ यथोक्तंकुरुतेयस्तुविधिवत्सुकृतंनरः
स्वल्पंमुनिवरश्रेष्ठमेरुतुल्यंभवेत्फलं ८ उपवासंप्रबोधिन्यांयःकरोतिस्वभावतः विधिवन्मुनिशार्दूलयथोक्तं
लभ्यतेफलं ९ विधिहीनंतुयः कुर्यात्सुकृतंमेरुमात्रकं अणुमात्रंनचाप्नोतिफलंधर्मस्यनारद १० योध्या
यतिमनोवृत्त्याकरिष्यामिप्रबोधिनी वसंतिपितरोहृष्टाविष्णुलोकेमहीयते ११ विमुक्तानारकैर्दुःखैर्यांतिविष्णोः

परंपदं कृत्वातुपातकंघोरंब्रह्महत्यादिकंनरः १२ कृत्वातुजागरंविष्णोर्वीतपापोभवेन्नरः दुःप्राप्यंयत्फलंदि
व्यमश्वमेधादिभिर्मखैः १३ प्राप्यतेतत्सुखेनैवप्रबोधिन्यांतुजागरे आप्लुत्यसर्वतीर्थेषुदत्वागांकांचनंमही १४
नरस्तत्फलमाप्नोतियत्कृत्वाजागरंहरे जातःसएवसुकृतीकुलतेनैवपावितं १५ कार्त्तिकेमुनिशार्दूलकृतायेन
प्रबोधिनी यथाध्रुवन्नृणांमृत्युर्द्धननाशस्तथाध्रुव १६ इतिज्ञात्वामुनिश्रेष्ठकर्त्तव्यंवैष्णवदिनं यानिकानि
चतीर्थानित्रैलोक्येसंभवंतिच १७ तानितस्यगृहेसम्यग्यःकरोतिप्रबोधिनी सर्वकृत्यंपरित्यज्यतुष्ट्यर्थंचक्र
पाणिनः १८ उपोष्यैकादशीसम्यक्कार्त्तिकेहरिबोधिनी कितस्यबहुभिःपुण्यैःकृतायेनप्रबोधिनी १९ प्र
लोकप्रदाह्येषाकार्त्तिकेहरिबोधिनी सज्ञानीसचयोगीचसतपस्वीजितेंद्रिय २० भोगमोक्षश्चतस्यास्तिउ
पास्तेहरिबोधिनी विष्णोःप्रियतराह्येषाधर्मसारसहायिनी २१ यःकरोतिनरोभक्त्यामुक्तिभाक्सभवेन्नर
प्रबोधिनीमुपोष्यित्वागर्भेनविशतेनरः २२ सर्वधर्मान्परित्यज्यतस्मात्कुर्वीतनारद कर्म्मणामनसावाचापापं
यत्समुपार्जितं २३ तत्क्षालयतिगोविंदःप्रबोधिन्यास्तुजागरे स्नानदानंजपोहोमःसमुद्दिश्यजनार्दनं २४
नरैर्यत्क्रियतेवत्सप्रबोधिन्यांतदक्षयं यत्कर्म्मक्रियतेवत्सप्रबोधिन्यांतदक्षयं २५ येचयंतिनरास्तस्यांभक्त्या
देवंचमाधवं समुपोष्यप्रमुच्यंतेपापैस्तेशतजन्मजैः महाव्रतमिदंपुत्रमहापापौघनाशनं २६ प्रबोधवासरं
विष्णोर्विधिवत्समुपोषयेत् व्रतेनानेनदेवेशंपरितोष्यजनार्दनंविराजयन्दिशःसर्वाःप्रयातिहरिमंदिरं कर्त्तव्यं
प्रयत्नेननरैःकीर्तिधनार्थिभिः २८ बाल्येयन्नार्जितंवत्सयौवनेवार्द्धकेतथा शतजन्मकृतपापंस्वल्पंवायदि
वाबहुः २९ तत्क्षालयतिगोविंदस्तस्यामभ्यार्चित खलु धनधान्यवहापुण्यासर्वपापहराशुभा ३० तामु
पोष्यहरेर्भक्त्यादुर्लभंनभवेत्कचित् चंद्रसूर्योपरागेचयत्फलंपरिकीर्तितं ३१ तत्सहस्रगुणंप्रोक्तंप्रबोधिन्य

प्रजागरे स्नानंदानंजपोहोमःस्वध्यायोभ्यर्चनंहरेः ३२ तत्सर्वंकोटिगुणितंप्रबोधिन्यांतुयत्कृतं जन्मप्रभृ
तियःपुण्यमर्जितकृतिभिर्भवेत् ३३ वृथाभवतितन्सर्वमकृत्वाकार्त्तिकव्रतं अकृत्वानियमंविष्णोःकार्त्तिकंय
क्षिपेन्नरःजन्मार्जितस्यधर्म्मस्यफलंनाप्नोतिनारद परान्नंवर्ज्जयेद्यस्तुकार्त्तिकेविष्णुतत्परः ३५ परान्नवर्ज्जना
द्भत्सचांद्रायणफलंलभेत् नतथातुष्यतेयज्ञैर्नदानैर्वानपादिभिः ३६ यथाशास्त्रकथालापैःकार्त्तिकेमधुसूद
नःकुर्वंतियेकथांविष्णोर्येशृण्वंतिसभाविताः ३७ श्लोकार्द्धंश्लोकपादंवाकार्त्तिकेगोशतफलं सर्वधर्मान्परित्य
ज्यकार्त्तिकेकेशवाग्रतः ३८ शास्त्रावधारणंकार्य्यंश्रोतव्यंचमहामुने श्रेयसालोभवुद्ध्यावायःकरोतिहरेःक
थां ३९ कार्त्तिकेमुनिशार्दूलजनानांतारयेच्छतं नियमेननरोयस्तुशृणुतेवैष्णवींकथाम् ४०
कार्त्तिकेतुविशेषेणगोसहस्रफलंलभेत् प्रबोधवासरेविष्णोः शृणुतेयोहरेः कथाम् ४१ सप्तद्वीपावतीदानफ
लंलभतेमुने कृत्वाभुविकथांविष्णोर्येचयंतिकथाविदम् ४२ स्वशक्त्यामुनिशार्दूलतेषांलोकोक्षयः स्मृतः गीत
वाद्यविनोदेनकार्तिकेयोत्तयेन्नरः ४३ नतस्यपुनरावृत्तिर्मयादृष्टाकलिप्रिय एकादशीसुनिपुणावेश्यादेवांगनोप
मा ४४ गीतेनमोहितालोकास्तयास्युस्तोविचेतसः नेक्षेतविषयाधानंनृत्याच्चक्षुर्हृतंतया ४५ यदातस्याभवेद्द्वा
रोनृत्यस्यहरिसन्निधौ विशेषतः समायांति जना.शून्यंभवेत्पुरम् ४६ धनंप्रलोभ्यसर्वेषांहृतंकिमितिवर्ण्यते. यत्र
माणंमुहुस्तस्यांदधारधरणीधरः ४७ कदाचित्कार्तिकेमासिप्रबोधिन्याः प्रजागरे ननर्तसाविशेषेणपश्यंतीप्र
तिमांहरेः ४८ तत्रकृष्णस्यसान्निध्येरूपश्रृंगारमोहिता कृष्णेभवत्प्रीतिमतीचित्तेनैताद्विचिंतयत् ४९ श्रयंना
रायणः साक्षादत्यंताद्भुतभोगवान् मयासहैवनृत्येतकथांसंभाविताविदम् ५० रम्यरागांगहारश्च कीदृशः सं
विभाव्यते रूपेणैवाहियस्याहं मुग्धचित्तास्मिरागिणी ५१ वह्वीष्वन्यासुनारीषुमय्येवाधिकप्रीतिमान् नृत्येतासौ

मयासार्द्धंकंठाश्लेषादिभावकृत् ५२ इत्थंमनोरथंबालाकुर्वतीनृत्यमुत्सुका हरिप्रीत्याचसर्वातांरात्रिमेवात्यवा
हयत् ५३ ततः प्रातश्चतत्पुण्यंजागरस्यन्ययोजयत् तस्मिन्मनोरथेकाम्येयच्चकारातिनृत्यके ५४ ततःसा
कतिभिर्वर्षैस्तत्रत्यक्त्वाकलेवरं वित्तंहित्वाखिलंस्वर्गेगत्वादेवांगनाभवत् ५५ तत्रापिगीतानिपुणानृत्याभिनयको
विदा रेमेरम्येविमानाग्रेरूपयौवनशालिनी ५६ कदाचित्स्फाटिकेकुड्येस्वंरूपंदद्दर्शेंगना चिंतयामासमेरूपं
पुंसोयोग्यंनकस्यचित् ५७ इत्युदीरितमात्रेणपूर्वजन्ममनोरथं सस्मारसतिचावेगीकृष्णेनसहवर्त्तनं ५८ नपतिं
कामयत्कांचिद्ब्रह्मचर्येस्थितासदा तामेवमूर्तिंध्यायंतीचंद्रकांतिर्वरानना ५९ श्रीकृष्णगाथांगायंतीरोमांचोद्भेद
लक्षणा अस्मिन्मन्वंतरेप्रीत्याश्रीकृष्णप्रियवार्त्तया ६० एतदंतरवासौभूमिर्भारप्रपीडिता तदर्थंवासुदेवश्चाव
तितीर्षुरभूदिह ६१ कृष्णक्रीडार्थमादिष्टाब्रह्मणासुरयोषितः वासुदेवावतारेस्यह्येकंभार्याव्रतंमहत् ६२ आ
सीत्तथाचतत्रैत्यसंभवंतुसुरस्त्रियः कैशोरीगोपकन्यास्तायौवनेराजकन्यकाः ६३ भूत्वादेवांगनाः सर्वाः ज
नयंतुहरेर्मुदं इत्याज्ञप्तासुतास्वेवपाचंद्रकांतिरुवाचतं ६४ पूर्वजन्मोद्भवोनूनंममह्येकोमनोरथ. भूमौगतायाःपू
र्यतांत्वत्प्रसादात्पितामह सतीष्वन्यासुनारीषुजगन्मोहनरूपधृक् मय्येवातिप्रीतिमांश्चनृत्यताभगवान्मया इमं
मनोरथंतस्याअनुमोदापितामहः देवांशानवतारायस्वधामभ्यस्तथादिशत् वृषभानुरितिख्यातोगोपोनंदव्रजेव
सत् तस्यकन्यावरारोहासुधात्राप्रभवत्पुरा ६८ याचंद्रकांतिरित्यासीदित्येतत्कथितंमया प्रबोधिनीजागरपु
ण्यवैभवात्प्रसन्नईशोविधिवाक्यसत्यकृत् चकाररासोत्सवनर्त्तनंसदावृंदावनेन्याभिरपीहराधया ६९ सानृत्य
मानाद्भुतगोपरूपिणाकृष्णेनजन्मांतरवांछितेन राधामहाप्रेमजवाकुलेंद्रियानिन्येन्यलोकंकथयाकृतार्थतां ७० त
स्मात्सुबोधिनींकृत्वारात्रौकृत्वातुजागरं सुप्तोत्थितंहरिंदृष्ट्वाकामात्संसारजाद्द्विजाः ७१ मथुरायांतुसंवासेजागरेह

रिसन्निधौ कार्त्तिकबोधिनींप्राप्यततः श्रयः परंनहि ७२ गीतंनृत्यंचवाद्यंचनाटयंविष्णुकथांमुने यः करोति
चपुण्यात्मात्रैलोक्योपरिसंस्थितः ७३ वहुपुष्पैर्वहुफलैः कर्पूरागुरुकुंकुमैः हरेः पूजाविधातव्याकार्तिकेवु
धवासरे ७४ वित्तशाठ्यंनकर्त्तव्यंसंप्राप्तेहरिवासरे यस्मात्पुण्यतमंख्यातंप्राप्यतेमुनिसत्तम ७५ पुष्पै
र्नानाविधैर्दिव्यैः प्रबोधिन्यांतुजागरे शंखतोयंसमादायअर्घ्योदेयोजनार्दने ७६ यत्फलंसर्वतीर्थेषुसर्वदानेषु
यत्फलं तत्फलंकोटिगुणितंदत्वार्घ्यंवुधवासरे ७७ गुरुपूजाततः कार्याभोजनाच्छादनादिभिः दक्षिणाभिश्च
देवर्षेतुष्ट्यर्थंचक्रपाणिनः ७८ भगवंतमभिध्यायन् पुराणंप्रपठेन्नरः प्रत्यक्षंचभवेत्तस्यकपिलादानजंफलं ७९
कार्त्तिकेमुनिशार्दूलमद्भक्तोवैष्णवंव्रतं यः करोतियथोक्तंतुमुक्तिस्तस्यसुनिश्चयात् ८० केतक्याएकपत्रेणपूजि
तोगरुडध्वजः समाः सहस्रंसंप्रीतोजायतेमधुसुदनः ८१ अगस्त्यकुसुमैर्देवंपूजयेद्योजनार्दनं दर्शनात्तस्यदे
वर्षेनरकाग्निः प्रनश्यति ८२ मुनिपुष्पार्चितोविष्णुः कार्तिकेपुरुषोत्तमः ददात्यभिमुखान्कामान्शशिसूर्य
स्थितीयथा ८३ विहायसर्वपुष्पाणिमुनिपुष्पेणकेशवं कार्त्तिकेयोर्चयेद्भक्त्याचाजिमेधफलंलभेत् ८४ तु
लसीदलपुष्पाणियोयच्छतिजनार्दने कार्तिकंसकलंवत्सपापंजन्मायुतंहरेत् ८५ दृष्टास्पृष्टाथवाध्याताकीर्तिता
नमितास्तुता रोपितासिंचितानित्यंपूजितातुलसीशुभा ८६ नवधातुलसीभक्तिंयेकुर्वन्तिदिनेदिने युगकोटिस
हस्राणितन्वंतिसुकृतंमुने यावत्शाखप्रशाखाभिर्वीजपुष्पफलैर्मुने रोपितातुलसीपुंभिर्वर्द्धतेवसुधातले तेषांवं
शेतुयेजातायेभविष्यंतियेगताःआकल्पयुगसाहस्रंतेषांवासोहरेर्गृहे यत्फलंसर्वतीर्थेषुसर्वदानेषुनारद तुलसीदले
नचैकेनकार्तिकेप्राप्यतेतुतत् संप्राप्तंकार्तिकंदृष्ट्वानियमेनजनार्दनः पूजनीयोमहाविष्णुः कोमलैस्तुलसीदलैः इष्ट्वा
क्रतुशतैरेवदत्वारत्नान्यनेकशः तुलसीदलैस्तुतैरेवप्राप्यतेकेशवार्चनात् इतिश्रीस्कंदपुराणेकार्तिकशुक्लपक्षीय

बोधनीमाहात्म्यसंपूर्णम् ॥ ॥ अथवराहपुराणेकंकार्तिकशुक्लैकादशीव्रतं ॥ अगस्त्यउवाच शृणुष्वभक्तितो
राजन्कार्तिकैकादशींतथा उपोष्यविधिनातेनसर्वासांप्राप्नुयात्फलं १ प्राग्विधानेनसंकल्प्यतद्वत्स्नानंसमाचरेत्
विलोमेनार्चयेद्देवंनारायणमकल्मषं २ नमः सहस्रशिरसेशिरः संपूज्यवैहरेः पुरुषायेतिचभुजौकंठंवैविश्वरू
पिणे ३ ज्ञानात्मानेतिचास्त्राणिश्रीवत्सायतथाउरः जठरंप्रभाविष्णवेचोदरंदिव्यमूर्तये ४ कटिंसहस्रपादाय
पादौदेवस्यपूजयेत् अनुलोमेनदेवेशंपूजयित्वाविचक्षणः ५ नमोदामोदरायेतिसर्वांगंपूजयेद्धरेः एवंसंपूज्यवि
धिनातस्याग्रेचतुरोघटान् ६ स्थापयेद्रत्नगर्भांस्तुसितचंदनचर्चितान् स्रग्दामबद्धग्रीवांस्तुसितवस्त्रावगुंठितान्
७ स्थगितास्ताम्रपात्रैस्तुतिलपूर्णैः सकांचनैः चत्वारः सागराश्चैतेकल्पिताद्विजसत्तम ८ तन्मध्येप्राग्विधा
नेनसौवर्णंस्थापयेद्धरिं षोडशारेरथांगेतुरजोभिर्बहुभिकृतं ९ रथांगेचक्रेयोगेश्वरयोगनिद्राशायिनेपीतवाससे तु
मप्येवंतुसम्पूज्यजागरंतत्रकारयेत् १० कुर्यात्तुवैष्णवंयोगमंतेयोगेश्वरंहरिं एवंकृत्वाप्रभातेतुब्राह्मणान्पंचभोज
येत् ११ चत्वारःकलशादेयाश्चतुर्णांपंचमस्यतु योगेश्वरंतुसौवर्णंप्रदद्यात्प्रयतःशुचिः१२ प्रीयतांदामोदरोयोगी
श्वररूपीतिमंत्रतः वेदाध्येत्रेसमंदत्तंतद्विदेद्विगुणंतथा आचार्येपंचरात्राणांसहस्रगुणितंभवेत् यस्त्विमंसरहस्यं
चसमंत्रंचोपपादयेत् विधानंतस्यभक्त्यावैदत्तंकोटिगुणोत्तरं योग्येतिष्ठतियस्त्वन्यमासन्नंपूजयेत्कुधीः सदुर्गति
मवाप्नोतिदत्तंतस्यचनिष्फलं एवंदत्वाविधानेनतत्वतोविष्णुमच्युतं विप्राणांभोजनंदद्याद्यथाशक्त्यासदक्षिणं
धरणीव्रतमेतद्धिपुराचीर्त्वाप्रजापतिः प्रजांलेभेतथामुक्तिंब्राह्मण्यमविचालितं युवनाश्वश्चराजार्षिरेतेनविधिना
पुरा मांधातारंसुतंलेभेपरंब्रह्मचशाश्वतं तथाहैहयदायादः कृतवीर्योनराधिपः १९ कार्त्तवीर्यंसुतंलेभेपरं
ब्रह्मचशाश्वतं शकुंतलाप्येवमेवव्रतंचीर्त्वामहामुने २० लेभेशाकुंतलंपुत्रंदुर्जयंचक्रवर्त्तिनं अनेनविधिनाप्रा

संचक्रवर्तित्वमुत्तमं २१ धरण्याअपिपातालेमग्नयातुकृतंपुरा व्रतमेतत्ततोनाम्नाधरणीव्रतमुच्यते २२ समा
प्तेऽस्मिन्धरादेवीहरिणाक्रोडरूपिणा उद्धृताद्यापितुष्टेनधारितानौरिवाम्भसि २३ यइदंशृणुयाद्भक्त्यायश्चकु
र्यान्नरोत्तम सर्वपापविनिर्मुक्तोविष्णुसालोक्यतांव्रजेत् २४ आपत्तिंहरतेचैकाराज्यमेकंवयच्छति किंपु
नर्द्वादशैतास्तुयेनेष्टानददुःपरं २५ इतिवाराहपुराणोक्तंयोगीश्वरद्वादशीव्रतंसमाप्तम् ॥ अथप्रबोधैका
दशीकृत्यं तदुक्तंमदनरत्ने ॥ ब्रह्मउवाच एकादश्यांचशुक्लायांकार्तिकेमासिकेशवं प्रसुप्तंबोधयेद्रात्रौश्र
द्धाभक्तिसमन्वितइति नृत्यैर्गीतैस्तथावाद्यैरृग्यजुस्साममंगलैः वीणापणवशब्दैश्चपुराणश्रवणेनच २ वा
सुदेवकथाभिश्चस्तोत्रैरन्यैश्चवैष्णवैः सुभाषितैरिंद्रजालैर्भूरिशोभाभिरेवच पुष्पैर्धूपैश्चनैवेद्यैर्दीपवृक्षैःसुशोभनैः
होमैर्भक्ष्यैःपूपैश्चफलैःशार्करपायसैः ४ इक्षोर्विकारैर्मधुरैर्द्राक्षाक्षोटैःसदाडिमैः कुवेरकस्यमंजर्यामालत्याकमलेनच
५ कुवेरकःपर्णाशःकृष्णतुलसीतिकेचित् हृद्याभ्यांश्वेतरक्ताभ्यांचंदनाभ्यांचसर्वदा ६ कुंकुमालक्तकाभ्यांचरक्तसू
त्रैःसकंकणैः नव्यैर्नानाविधैःपुष्पैर्द्रव्यैर्वीरक्रयाहृतैः ७ वीरक्रयोविक्रयंवाप्रथमतोभिहितमूल्यंदत्वाक्रियमाणक्रयः
तस्यांरात्रौव्यतीतायांद्वादश्यामरुणोदये आदौघृतेनैक्षवेणमधुनास्नापयेत्ततः ८ दध्नाक्षीरेणचततःपंचगव्ये-
नशास्त्रवित् उद्वर्तनंमाषचूर्णमसूरामलकानिच ९ सर्षपाश्चप्रियंगुश्चमातुलिंगरसैस्तथा सर्वौषध्यःसर्वगंधः
सर्वबीजानिकांचनं १० मंगलानियथाकामंरत्नानिचकुशोदकं एवंसंशोध्यदेवेशंदद्याद्रोरोचनांशुभां ११
ततस्तुकलशादेयायथाप्राप्ताःस्वलंकृताः जातीपल्लवसंयुक्ताःसफलाश्चसकांचनाः पुन्याहेवेदशब्देनवीणावेणुर-
वेणच एवंसंस्नाप्यगोविंदमनुलिप्तं स्वलंकृतंसुवाससंतुसंपूज्यसुमनोभिःसुकुंकुमैः दीपैर्धूपैर्मनोज्ञैश्चपायसे
नचभूरिणा पात्रैभ्यश्चान्नदानैश्चहोमैःपुष्पैःसदक्षिणैः वासोभिर्भूषणैरम्यैर्गोभिरश्वैर्मनोजवैः ब्राह्मणाःपूजनीयाश्च

विष्णोरीडयाश्चमूर्त्तयः यत्तुशिष्टंमृतंपश्चाद्ब्रोक्तव्यंब्राह्मणैःसहेति १६ अथरामार्चनचंद्रिकोक्तप्रकारेणबो
धिनीविधिः ॥ शयन्युक्तप्रकारेणरथमारोप्यमाधवं विधायमहतींपूजांविष्णोरभ्यर्च्यवैष्णवान् वाद्यघोषेण
महतादेवंनीत्वाजलाशय धौतांघ्रिपाणिःकुर्वीतसंकल्पंवैष्णवैःसह एवंगुणविशिष्टायांबोधिन्यामिंदिरापतेः कु
र्वेप्रबोधनांविष्णोर्वराहोक्तमनूपटेत् भविष्योत्तरेपि । कार्तिकेशुक्लपक्षेतुएकादश्यांपृथासुत मंत्रेणानेनराजेंद्र
देवमुत्थापयेद्द्विजः ॥ मंत्राः ब्रह्मेंद्ररुद्राग्निकुवेर सूर्यकीनाशसोमादित्यवंदनीय बुध्यस्वदेवेशजगन्निवासमं
त्रप्रभावेणसुखेनदेव १ इयंतुद्वादशीदेवप्रबोधायविनिर्मिता त्वयैवसर्वलोकानांहितार्थंशेषशायिना २ त्वयिसु
प्तेजगन्नाथजगत्सुप्तंभवेदिदं उत्थितेचेष्टतेसर्वमुत्तिष्ठस्वमाधव ३ इदंविष्णुरनेनैवतस्मादुत्थापयेत्प्रभुं हिर
ण्यगर्भइतिचप्राजापत्यंपठेत्तथा गायत्रंवैष्णवंसूक्तमतोदेवाअवंत्विति । श्रीसूक्तद्वयन्तु हिरण्यगर्भऋषिः प्रा
जापत्योदेवता त्रिष्टुप्छंदः जपेविनियोगः ओंहिरण्यगर्भःसमवर्तताग्रेभूतस्यजातः पतिरेकआसीत् सदाधारपृ
थिवींद्यामुतेमांकस्मैदेवायहविषाविधेम १ यआत्मदाबलदायस्यविश्वउपासतेप्रशिषंयस्यदेवाः यस्यच्छायामृ
तंयस्यमृत्युः कस्मैदेवायहविषाविधेम २ यःप्राणतोनिमिषतोमहित्वैकइद्राजाजगतोबभूव यईशेअस्यद्विप
दश्चतुष्पदःकस्मैदेवायहविषाविधेम ३ यस्येमेहिमवंतोमहित्वायस्यसमुद्रंरसयासहाहुः यस्येमाःप्रदिशोयस्य
बाहू कस्मैदेवायहविषाविधेम ४ येनद्यौरुग्रापृथिवीचदृढायेनस्वस्तभितंयेननाकः योअन्तरिक्षेरजसोविमा
नः कस्मैदेवायहविषाविधेम ५ यंक्रंदसीअवसातस्तभानेअभ्यैक्षेतांमनसारेजमाने यत्राधिसूरउदितोविभाति
कस्मैदेवायहविषाविधेम ६ आपोहयद्बृहतीर्विश्वमायन्गर्भंदधानाजनयंतीरग्निं ततोदेवानांसमवर्ततासु
रेकः कस्मैदेवायहविषाविधेम ७ यश्चिदापोमहिनापर्यपश्यद्दक्षंदधानाजनयंतीर्यज्ञम् योदेवेष्वधिदेवएकआ

सत्किस्मैदेवायहविषाविधेम ८ मानोहिंसीज्जनितायोःपृथिव्यायोवादिवंसधर्म्माजजान पश्चाञ्चाश्चन्द्रहतीर्जजा
न कस्मैदेवायहविषाविधेम ९ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव यत्कामास्तेजुहुमस्तन्नोऽअस्तु
वयंस्यामपतयोरयीणां १० उत्तिष्ठोत्तिष्ठदेवेशयोगनिद्रांविहायच अनेनमनुनोत्थाप्यघंटावादित्रनिःस्वनैः तीरे
समुपवेश्येशमहानुग्रहमर्थयेत् सोसावदभ्रकरुणोभगवान्प्रवृद्धप्रेमास्मितेननयनांबुरुहंविजृम्भन् उत्थायविश्व
विजयायचनोविषादमाध्व्यागिरशपनयतात्पुरुषःपुराणः इतिपुष्पांजलिंदत्त्वासूक्तमाथर्वणंजपेत् तच्चोक्तंऋग्वेदस
र्वानुक्रमण्यां याओषधीस्त्र्यधिकाथर्वणोभिषगोषधिस्तुतिरानुष्टुभं याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा मनै
नुबभ्रूणामहंशतंधामानिसप्तच शतंवोअंबधामानिसहस्रमुतवोरुहः अधाशतक्रत्वोयूयमिमंमेअगदंकृत ओ
षधीः प्रतिमोदध्वंपुष्पवतीः प्रसूवरीः अश्वाइवसजित्वरीर्वीरुधः पारयिष्णवः ओषधीरितिमातरस्तद्वोदेवीरु
पब्रुवे सनेयमश्वंगांवासआत्मानंतवपूरुष अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता गोभाजइत्किलासथयत्सन
वथपूरुषं ॥ १ ॥ यत्रौषधीःसमग्मतराजानःसमिताविव विप्रःसउच्यतेभिषग्रक्षोहामीवचातनः अश्वा
वतींसोमवतींमूर्जयंतीमुदोजसं आवित्सिसर्वाओषधीरस्माअरिष्टतातये उच्छुष्माओषधीनांगावोगोष्ठादिवे
रते धनंसनिष्यंतीनामात्मानंतवपूरुषः इष्कृतिर्नामवोमाताथोयूयंस्थनिष्कृतीः सीराःपतत्रिणीःस्थनयदा
मयतिनिष्कृथ अतिविश्वाःपरिष्ठास्तेनइवव्रजमक्रमुः ओषधीःप्राचुच्यवुर्यत्किंचतन्वोरपः २ यदिमावाजय
न्नहमोषधीर्हस्तआदधे आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा यस्यौषधीःप्रसर्पथांगमंगंपरुष्परुः ततोय
क्ष्मंविबाधध्वउग्रोमध्यमशीरिव साकंयक्ष्मप्रपतचाषेणकिकिदीविना साकंवातस्यध्राज्यासाकंनश्यनिहाकया
अन्यावोअन्यामवत्वन्यान्यस्याउपावत तासांसर्वाःसंविदानाइदंमेप्रावतावचः याःफलिनीर्याअफलाअपुष्पा

याश्चपुष्पिणीः वृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः ३ मुंचतुमाशपथ्यादथोवरुण्यादुत ॥ अथोयमस्यवडिशात्स
वेस्मादेवकिल्विपात् अवपततीरवदान्दिवओपधयस्परि यंजीवमश्नवामहैनसपरिष्यातिपूरुषः याओपधीः
सोमराज्ञीर्वह्वीःशतविचक्षणाः तासामासित्वमुत्तमारंकामायसंहृदे याओषधीःसोमराज्ञाविष्ठिताःपृथिवीमनु वृह
स्पतिप्रसूताअस्यैसंदत्तवीर्यं ओपधयःसमदवतसोमेनसहराज्ञायस्मैकृणोतिब्राह्मणस्तंराजन्यारयामासि त्वमुत्त
मास्योपधेतववृक्षाउपस्तयः उपास्तिरस्तुसोस्माकंयोअस्मांअभिधासति एवमाथर्वणसूक्तंजपित्वापुनःपुष्पांज
लिंदद्यात् गतामेघावियच्चैवनिर्मलंनिर्मलादिशः शारदानिचपुष्पाणिगृहाणममकेशवेति समुत्थितेततोविष्णौ
क्रियाः सर्वाःप्रवर्तयेत् स्नापयेद्राघवंपंचामृतैःपुरुषसूक्ततः नीराज्यमंत्रविन्यस्यवस्त्रालंकारचंदनैः स्रग्धूपदी
पदिव्यान्नैस्तांबूलैस्तोषयेत्प्रभुं एवंकृत्वामहापूजांगृहीत्वासाक्षतंजलं प्रतिमासंव्रतान्युक्त्वाराघवायनिवेदयेत् व्रत
समापनमंत्रस्तुसनत्कुमारेणोक्तः इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दनेति
अनुष्ठितैर्मयानानाचातुर्मास्यव्रतैःप्रभुः प्रभूतपातकस्यांतेराघवःप्रीयतांमम व्रतारम्भस्तत्समाप्तिश्चतुर्धा तदुक्तं
वाराहे चतुर्द्धा एकादशीद्वादशीपूर्णिमाकर्कसंक्रांतिष्वारब्धव्यामित्यर्थः तद्योग्यद्रव्यदानानितु शयनीप्रकरणेद्र
ष्टव्यानि एवंव्रतान्यर्पयित्वास्तुवीतपरमादृतः श्रुतिस्तुत्यावेदवादैःस्तोष्यमाणंरमापतिं स्तुतिस्तु यद्भ्रोपविभ्रमवि
वृत्तकटाक्षपातसंक्रांतनक्रमकरोभयगीर्णघोषः सिंधुःशिरस्यर्हणंपरिगृह्यरूपीपादारविंदमुपगम्यबभाषएतत् न
त्वांवयंजडधियोनुविदामभूमन्कूटस्थमादिपुरुषंजगतामधीशं यत्सत्त्वतःसुरगणारजसःप्रजेशाअन्येचभूतपत
यःसभवान्गुणेशः २ कामंप्रयाहिजहिविश्रवसोऽवमेहंत्रैलोक्यरावणमवाप्नुहिवीरपत्नीं बध्नीहिसेतुमिहतये
शसोवितत्यैगायंतिदिग्विजयिनोयमुपेत्यभूपाः ३ स्वस्त्यस्तुविश्वस्यखलःप्रसीदतांध्यायंतुभूतानिशिवंमिथोधि

या मनश्चभद्रंभजतादधोक्षजेआवेश्यतान्नोमतिरप्यहैतुकी ४ इत्याशिषःसमभ्यर्च्यगीतवाद्यजय.स्वनैः देवंर
थोपरिस्थाप्यजयशब्दपुरस्सरं महातूर्यरवैरात्रौभ्रामयेत्स्यंदनस्थितं उत्थितंदेवदेवेशंनगरेपार्थिवःस्वयं युक्तः
शैब्यादिवाहैर्मरकतसुरणत्किंकिणीजालमाला रत्नाद्यैर्मौक्तिकानामविरलमणिभिःसंभृतैश्चैवहारैः हैमैःकुंभैःप-
ताकाशिवतररुचिभिर्भूषितःकेतुमुख्यैश्चित्रैर्ब्रह्मेशवंद्योदुरितहरहरेःपातुजैत्रोरथोवः १ वक्रंनीलोत्पलरुचिल
सत्कुंडलाभ्यासुमृष्टं चंद्राकारंरचिततिलकंचंदनेनाक्षतैश्च गत्यालीलांजनसुखकरींप्रेक्षणेनामृतौघं पद्मावासं
सततमुरसाधारयन्पातुविष्णुः २ मोदंतांस्वजनास्त्वनिंदितधियस्त्यक्ताखिलोपद्रवाः स्वस्थाःसुस्थिरवुद्धयःप्र.
तिहतामित्रारमंतांसुखं रेदैत्यागिरिगह्वराणिगहनान्याशुव्रजध्वंभया दैत्यारिर्भगवानयंनरहरिर्यानंसमारोहति
३ पलायध्वंपलायध्वंरेरेदनुजदानवाः संरक्षणायलोकानांरथारूढोनृकेसरी ॥ इत्यादिविष्णुधर्मोक्तमंत्रैःसंतोष्य
सादरं प्रसादमालान्हरेर्गृह्णीयाद्भक्तिभावतः जयदेवमहादेवदेवदेवाखिलेश्वर वरदेशाखिलंविश्वंरक्षरक्षर
मापते नृत्यैर्वाद्यैर्भागवतैर्घंटावाद्यजयस्वनैः भ्रामयन्स्यंदनंविष्णोःपुरमध्येसमंततः ६ रथस्याकर्षणंपूर्वं-
कुरुतेदैत्यनायकः ततःसुराःसिद्धसंघामुनिगंधर्वमानवाः ७ यावत्पदानिकृष्णस्यरथस्याकर्षणंनरः करोति-
क्रतुभिस्तानितुल्यानिनरनायक ८ रथेनसहगच्छंतिपुरुषाःपृष्ठतोऽग्रतःमहाविष्णुसमाह्येतेभवंत्यग्रिभवाअपि ९
श्रीकृष्णरथशोभायैप्रकुर्वंतिवदंतिच जपंतिचपुनर्यैवैतेषांलोकाःसनातनाः १०रथस्थितोनरैर्यैस्तुपूजितोमधुसूदनः
ददातिवांछितंतेषामंतेचपरमागतिम् ११ दोलायमानंगोविंदंमंचस्थंमधुसूदनं रथस्थंवामनंदृष्ट्वापुनर्जन्मनविद्य
ते १२ रथस्थंयेनगच्छंतिभ्रममाणंजनार्दनं विप्रावेदविदस्तेऽपिविज्ञेयाःश्वपचाधमाः १३ येषांगृहागतोयां
तिरथस्थःश्रीनृकेसरी पूजातैस्तैःप्रकर्त्तव्याविंत्तशाठ्यविवर्जितैः १४ अनर्चितोयदायातिप्रमादात्स्वगृहाद्धरिः

पितरस्तस्याविमुखायावत्संवत्सरंनृप ॥ १५ ॥ स्त्रियोपिमुक्तिमायांतिरथयात्रापरायणाः सशैलवनसस्या
ढ्यातेनदत्तावसुंधरा १६ इतिपौरजनैःसार्द्धंभ्रामयित्वारथंगृहं गत्वानीराज्यदेवेशंशयीतवैष्णवंस्मरन् १७
वैष्णवंमंत्रंनामेत्यर्थः इतिरथोत्सवमाहात्म्यम् । शयीतेतिद्वादश्यभिप्रायेण एकादश्यांतुरात्रौजागरणंकुर्यात्
एकादश्यांसुरालयइतिवचनात् रात्रिजागरणमत्यावश्यकं इयमेकादशीसोमवारोत्तराभाद्रपदयोगेमहापुण्येत्यु
क्तं मदनरत्ने वराहपुराणे शुक्लपक्षंप्रक्रम्य ॥ एकादशीसोमयुक्ताकार्तिकेमासिभामिनि उत्तराभाद्रयोगेचअनंता
साप्रकीर्तिता तस्यांयत्क्रियतेभद्रेसर्वमानंत्यमश्नुते अनंतपुण्यफलदातेनाऽनंतास्मृताप्रियइति ।अथवराहपुराणे
बोधिन्येकादशीविधिः एकादश्यांरात्रौकुंभेघृतपात्रोपरिहैममाषमितंमत्स्यं पंचामृतेनसंस्नाप्य कुंकुमपीतवस्त्र
युगपद्माद्यैः सम्पूज्य मत्स्यरूपोजगद्योनिः प्रीयतांमेजनार्दनइतिदत्त्वा दक्षिणांचदत्त्वाब्राह्मणान्भोजयेदिति
इतिकार्तिकशुक्लैकादशीकृत्यंसमाप्तम् अथप्रबोधकालनिर्णयः निशिस्वापोदिवोत्थानंसंध्यायांपरिवर्तनमितिब्र
ह्मपुराणवचनेरात्रौसुप्तमित्याचार्य्यचूडामणिः वराहपुराणेतु द्वादश्यांप्रबोधोत्सवउक्तः इयंचरेवत्यंतादियुक्ता
प्रबोधिनीप्रशस्ता आभाकासितपक्षेषुमैत्रश्रवणरेवती आदिमध्यावसानेषुप्रस्वापावर्तनोत्सवाःनारदीयेऽपि मै
त्राद्यपादेस्वपितीहविष्णुः श्रुतेश्चमध्येपरिवर्त्तमेति पौष्णावसानेचसुरारिहंता प्रबुध्यतेयामचतुष्टयेनेति यदातु
द्वादशीषु तत्तन्नक्षत्रभागोनास्ति तदाद्वादशीनक्षत्रयोगोपिरात्र्यादिगतोग्राह्यः पादयोगोयदानस्याद्दक्षेणापितदा
भवेदिति वराहपुराणात् विष्णुर्दिवानस्वपितिनचरात्रौप्रबुध्यते द्वादश्यामृक्षसंयोगेपादयोगोनकारणमिति विष्णु
धर्मोत्तराच्च यदातुद्वादशीषुतानिनक्षत्राणिनसंत्येव किंत्वेकादशीषुवा तदातत्रापि तत्तद्दक्षभागएवनिशादिवेला
नादरेणप्रस्वापादिकार्यं अप्राप्तेद्वादशीमृक्षेउत्थानंशयनंहरेः पादयोगेनकर्तव्यंअहोरात्रंविचिंतयेदितिजीमूतवा

हनवचनात् पादयोगादन्यातिथाद्वादश्यामृक्षसंगमादितिवचनाच्च द्वादश्यांनक्षत्रसंयोगस्यरात्र्यादावभावेपितत्रै-
बकार्य्यमित्यर्थः अतएववराहोपि द्वादश्यांसंधिसमयेनक्षत्राणामसंभवे आभाकासितपक्षेपुशयनावर्तनादिकं-
मिति संधिसमयश्चसायंसंध्यैवंप्रबोधोपितत्रैवकार्य्यः तदुक्तंरेवत्यंतेयदारात्रौद्वादश्याचसमागमः तदाविबुध्यते
विष्णुर्दिवावैप्राप्यरेवतीमिति जीमूतवाहनधृतवचनात् विष्णुधर्मोत्तरेतु एकादश्यादिपुपंचस्वपि प्रस्वापप्रबो-
धोत्सवावुक्तौ क्वचित्पूर्णमास्यामेव रामार्चनचंद्रिकायांतु । पारणाहेपूर्वरात्रेघंटादीन्वादयेन्मुहुरिति । अत्रच
बहुवचनेषु चतुर्थभागवाचिपादग्रहणात् चतुर्धाविभक्तयोरनुराधारेवतीन्यायेनत्रेधाविभागएव अतएव मध्य-
भागग्रहणेनाविशेषश्रवणादश्रुतत्वादितिन्यायेनत्रेधाविभागएव अतएवमध्यग्रहणमप्युपपद्यतइतिवाच्यं वच-
नांतरेपुपादग्रहणेनाविशेषश्रवणादिश्रुतित्वादितिहेतोरसिद्धेः श्रवणस्यतुत्रेधाविभक्तस्यमध्यभागएवग्राह्यः । अ-
थप्रबोधमंत्रो वाराहे । ब्रह्मेंद्ररुद्रादिकुबेरसूर्येत्यादिकथासूक्तःइयंतुद्वादशीदेवप्रबोधार्थेतुनिर्मिता त्वयैवसर्वलो-
कानांहितार्थेशेषशायिना त्वयिसुप्तेजगन्नाथेजगत्सुप्तंभवेदिह उत्थितेचेष्टतेसर्वमुत्तिष्ठोत्तिष्ठमाधव उत्तिष्ठोत्तिष्ठगो-
विंदत्यजनिद्रांजगत्पतेइत्यादि मेघागताः शारदपूर्णचंद्रशारद्यपुष्पाणिमनोहराणि अहंददानीतिचपुण्यहेतो
जागृष्वजागृष्वचलोकनाथ एवंप्रबोध्यपुष्पांजलिदानं इदंविष्णुरितिप्रोक्तोमंत्रउत्थापनेहरेरिति तत्रमंत्रः
गतामेघाइत्यादिपूर्वोक्तः वाराहे एवंकर्माणिकुर्वंतिद्वादश्यांयेयशस्विनि मद्भक्ताहिनरश्रेष्ठास्तेयांतिपरमांगतिम्
एववैशारदंकर्म्मनिखिलंकथितंमया मोदतेदेविसंसारेममभक्तः सुखावहइति । इतिहरिप्रबोधोत्सवविधानम्
अथात्रैकादश्यादिपूर्णिमांतं पंचदिनात्मकभीष्मपंचकव्रतविधानं दीपदानंच ॥ पाद्मकार्तिकमाहात्म्येब्रह्म
नारदसंवादे अतः परंप्रवक्ष्यामिमुनेऽहंभीष्मपंचकं मयावर्षसहस्रेपुसमभ्यर्च्यजनार्दनं पुराप्राप्तंव्रतंह्येतत्सर्वं

यज्ञफलप्रदं –मयाचभृगवेप्रोक्तंभृगुणोशनसेतथा ततस्त्वन्यैर्गृहीतंतत्पारंपर्य्यसमागतं एकादश्यांतुगृह्णी
याद्व्रतंपंचदिनात्मकं व्रतीस्नायाद्विधानेनदेवादीनांचतर्पणं –धौतवस्त्रश्चमौनीचहरिमर्चेज्जितेंद्रियःभूमिशायीत
थाखंडंदीपंपंचस्वहस्सुच उोंनमोवासुदेवायजपेदष्टोत्तरंशतं पूजांतेचार्घ्यमावेद्यजुहुयात्तिलसंयुतान् यवा
न्व्रीहीन्पायसंचमंत्रणाष्टाक्षरेणच पूजाविधिविशेषेणदिनेष्वेवहिपंचसु प्रथमेदिवसेपद्मैर्हरेःपादौप्रपूजयेत् द्वि
तीयेबिल्वपत्रैश्चजानुनीसंप्रपूजयेत् तृतीयेपूजयेन्नाभिंतुलस्याथचतुर्थके जातीपुष्पादिभिःस्कंधौमालत्यापंचमे
शिरः एकादश्यामथाभ्यर्च्यमंत्रवद्गोमयंपिबेत् द्वादश्यांचगवांमूत्रंत्रयोदश्यांचगोपयः चतुर्दश्यांगोघृतंचपूर्णि
मायांतथादधि पंचस्वपिदिनेष्वेवंविधिवत्स्नानपूजने नंदायांकांचनंदद्याद्द्वादश्यांवस्त्रमुत्तम गोदानंचत्र
योदश्यांरिक्तायांघृतपायसं सितासिततिलैस्स्नानंपूर्णिमायांविशेषतः भीष्मपंचदिनेष्वेपुदद्याद्भीष्मायचांज-
लिं संवत्सरकृतंपापंतत्क्षणादेवनश्यति सत्यव्रतायशुचयेगांगेयायमहात्मने भीष्मायवेददाम्यर्घ्यमाबाल्य
ब्रह्मचारिणे वसूनामवतारायशंतनोरात्मजायच अर्घ्यंददामिभीष्मायसोमवंशोद्भवायच वैयाघ्रपदगोत्रा
यसांकृत्यप्रवरायच अनपत्यायभीष्मायतस्मैदद्याज्जलांजलिं सव्येनानेनमंत्रेणतर्पणंसार्ववर्णिकं प्रतिपद्दि,
वसेविप्रान्भोजयेत्पायसेनच पूर्णायामेवअथवाब्राह्मणान्भोजयेद्व्रती विप्रशेषान्नभोक्तायोमुक्तिस्तस्यकरेस्थिता
इतिपाद्मेकार्तिकमाहात्म्येभीष्मपंचकव्रतविधानं ॥ अथभविष्योत्तरोक्तं भीष्मपंचकव्रतं ॥ श्रीकृष्णउवाच
कार्तिकेशुक्लपक्षस्यशृणुधर्मंपुरातनं एकादश्यांसमारभ्यविज्ञेयंभीष्मपंचकं दुस्तरंभीष्ममित्याहुरशक्यंतदि
होच्यते दारुणंभीषणंभीष्ममित्यभिधानात् । यस्तंकरोतिराजेंद्रतेनसर्वंकृतंभवेत् वासिष्ठभृगुगर्गाद्यैश्चीर्णंकृ
तयुगादिषु सीरभद्रादिभिर्वैश्यैःशूद्रैरन्यैःकलौयुगे दिनानिपंचपुण्यानिचीर्णमेतन्महाव्रतं ब्राह्मपौत्रै

ह्मचर्य्येणजपहोमाक्रियादिभिः क्षत्रियैश्चतथावैश्यैःसत्यशौचपरायणैः पापाद्भैःपरिहर्तव्याब्रह्मचर्येणनिष्ठया ःम
द्यमांसंपरित्याज्यंमैथुनंपापभाषणं शाकाहारेणकर्तव्यंकृष्णार्चनपरैर्नरैः स्त्रीभिर्वाभर्तृवाक्येनकर्त्तव्यंसुखवर्धनं
विधवाभिश्चकर्त्तव्यंपुत्रपौत्राभिवृद्धये सर्वकामसमृद्ध्यर्थंमोक्षार्थमपिपांडव नित्यंस्नानेनदानेनकार्त्तिकीयावदे
वतु वैश्वदेवश्चकर्त्तव्योविष्णुध्यानपरायणैः पापस्यप्रतिमाकार्य्यारौद्रवक्त्रातिभीषणा खड्गहस्ताचविकृतासर्वलो
हमयीनृप तिलप्रस्थोपरिस्थाप्याकृष्णवस्त्राभिवेष्टिता करीरकुसुमापीडाचलत्कांचनकुंडला संपूज्यपरया
भक्त्याधर्म्मराजस्यनामभिः इममुच्चारयन्मंत्रंगृहीतकुसुमांजलिः यदन्यजन्मनिकृतमिहजन्मनिवापुनः प्राप्यं
प्रशममायातुतत्सर्वंतवपूजनात् ब्राह्मणायततोदेयंकृष्णोमेप्रीयतामिति अन्येषामपिदातव्यंस्वशक्त्यावांछितं
वसु कृतकृत्यःस्थिरोभूत्वाविरक्तःसंगतोभवेत् शांतचित्तोनिराबाधःपरमंपदमाप्नुयात् नीलोत्पलदलश्यामश्च
तुर्वक्त्रश्चतुर्भुजः अष्टपार्श्वैकनयनःशंकुकर्णोमहाशनःजटीद्विहस्तस्ताम्रास्योमृगराजतनुच्छदः चिंतनीयोमहादे
वोयस्यरूपंनविद्यते इदंभीष्मेणकथितंशरतल्पगतेनच तदेतत्तेसमाख्यातंदुष्करंभीष्मपंचकं धन्यंपुण्यंप्राप्नुहं
त्युधिष्ठिरमहाव्रतं यच्चीर्त्वाब्रह्महागोघ्नःसर्वपापैःप्रमुच्यते यद्भीष्मपंचकमितिप्रथितंपृथिव्यामेकादशीप्रभृ
तिपंचदशीनिरुद्धं उत्पन्नभोजनपरस्यनरस्यतस्मिन्निष्टंफलंदिशतिपांडवशार्ङ्गधन्वा इतिभविष्योत्तरेभीष्मपंचक
व्रतं अथभीष्मपंचकव्रतमाहात्म्यं पाद्मेकार्तिकमाहात्म्ये पृथुरुवाच व्रतंयज्जगतिख्यातंदेवर्षेविष्णुतोषणं भीष्मपं
चकमित्येवंकुतःख्यातंतदाख्यया नारदउवाच राजन्परंपराप्राप्तंकालेनेहतिरोहितं द्वापरेपुनरेवेदंश्रीकृष्णेनप्रका
शितम् भीष्मायकथितंयस्मात्तेनादौकृतमित्युत अतस्तदाख्ययालोकेकथितंभीष्मपंचकं पृथुरुवाच कदासासंगति
स्तस्यगांगेयस्यमहात्मनः कृष्णेनसहदेवर्षेकदापृष्टश्चकेशवः नारदउवाच यदागतोदौत्यविधौकुरूंश्चकृष्णःपृथा

सूनुभिःप्रेरितश्च   गृहंगतोविदुरस्यातिथेयंचकारगोप्यात्मनिसुप्रमोदं । मन्येनजातिर्नचपांडितत्वंनचाधतित्वंन-
चशूरताच ॥ सर्वेगुणास्तस्यनतोपकारणंभक्त्यैवकारुण्यनिधिःप्रतुष्यते उपविष्टंकृतातिथ्यंश्रुत्वाभीष्मोमहामना।
जगामकृष्णसान्निध्यंदर्शनानंदनिर्वृतः भीष्ममागतमाज्ञायश्रीत्यासौयदुनंदनः समुत्थायाभिवाद्याथबाहुभ्यां-
परिरभ्यच ॥ उपविश्यासनेस्वेस्वेकृष्णभीष्मौपरस्परं पप्रच्छतुःशिवंप्रीतौभीष्मःपुनरपृच्छत भीष्मउवाच ब्रह्म
विलासचलदुक्षसतित्रिधियंसर्गंसृजत्यवतिहंतिगुणैश्चमाया ब्रह्मादयोयमिहवेदितुमीश्वरानोसोयंपृथातनयद्
तविधिंकरोति इदंविचित्रंभगवन्चिलेमेपरिवर्तते साम्येनवर्तमानोपिजीवानांत्वंसुहृत्सखा । अथान्यान्सेवमानां
श्चत्यक्त्वावैपांडवेष्वथ वंधुत्वंचसुहृत्त्वंचगुरुत्वंसुकराश्रयं पितृत्वंकार्यकारित्वंपांडवैर्यदुनंदन किमेतेषांतथाक
र्मतवाराधनमीश्वर ॥ अथतेषुचकाशक्तिर्वशीकरणमद्भुतं यथात्वमीश्वरोमायीबलान्नीतश्चवश्यतां कारणंकथ्य
तांविष्णोसतस्त्वंवश्यतांगतः श्रीकृष्णउवाच गंगात्मजमहाभागनप्रष्टव्यमिदंत्वया गोपनीयमिदंमेद्यभक्ति
योगस्तुवश्यकृत् । मत्तःप्रचरितंलोकेयद्व्रतंजनतानयत् । भक्तियोगेनमेलोकःसर्वोमुक्तोभविष्यति । भीष्मउवाच ॥
त्वदाराधनधर्माश्चमुनिभिर्बहुबोधिताः । ईशवश्यकरंधर्मंत्वमेवाख्यातुमर्हसि श्रीनारदउवाच ॥ तेनैवमभ्या
गतोप्युदाहरिःपृष्टस्तुलोकस्यहितायनूनं संसारिणांजन्मभृदादिदुःखंचिद्वान्दयासिंधुरुवाचभीष्मम् ॥ श्रीकृष्ण
उवाच ॥ अवंतिसंभवाःपंचपूर्वकल्पेद्विजोत्तमाः कविःशुचिर्दृढोदांतोहंसोनामतएवते संगीतकंपाठयंतःकंठैःकिन्न
रवत्स्वराः । तेऽनेकपरिपत्सुपरिभ्रमंतोदेशांतरेषुविविधंददृशुश्चरित्रं । वित्तंतदाप्यबहुवस्त्रविभूषणादिसाडंबरंव्यय
मकार्षुरवुद्धतत्त्वाः तेकदाचित्सुवीरस्यराज्ञोमधुपुरींययुः श्रुत्वासंगीतव्यसनंसंभातस्यादिदृक्षवः अहोअभाग्यं
लोकस्यतपतियंमुनाजलं ॥ गोविंदोगोपिकासंगीयत्रक्रीडतिकंसहा यथास्पर्शमणिस्पर्शाल्लोहंयातिसुवर्णतां

तथाकृष्णाजलस्पर्शात्पातकंयातिपुण्यतां ॥ स्नात्वातीर्थेतदोपोष्यस्थित्वादिनचतुष्टयं ॥ पप्रच्छूराजचरितमवरोधविदं
जनं ॥ विचार्य्यमनसाप्राहसजनोतिविचक्षणः ॥ राज्ञएकाभोगपत्नीताक्षाकादंविनीवरा ॥ संगीतविद्यानिपुणारा
गेकंठेचकिन्नरी ॥ स्त्रियएवहितांवालांतत्रसंयंतिनृपाग्रतः ॥ द्रष्टुंनशक्यतेतस्यान्नत्यसत्येनकेनचित ॥ एतच्छ्रुत्वावि
चार्य्याथनिश्चयंचागमन्निदं ॥ सत्रतच्छ्रूपतेवाद्यंनृत्यतालादिकध्वनिः ॥ तत्स्थलेप्राप्यतरुधुस्तेराज्ञोदर्शनकांक्षि
णः ॥ शुश्रावासन्यराध्वाविविप्राःपप्रच्छुरुपजीविनः ॥ विप्राऊचुः ॥ अहोवतात्रसान्निध्येराज्ञोनास्तिचकोविदः ॥ संगी
तज्ञोयतोवाद्येनृत्येचापिनशुद्धतातंत्रीहयंतुशिथिलंकिन्नरेवाद्यतेपरं ॥ तालंचापरिस्थतंदत्तमित्यवदंसभासदां ॥ तच्छ्रु
त्वाराजसान्निध्येगत्वाराज्ञेन्यवेदयन ॥ तच्छ्रुत्वावचनंराजाप्रतीहारंसमादिशत ॥ गच्छानयेहतान्विप्रान्गुणदो
षविचक्षणान ॥ इतिराज्ञोवचःश्रुत्वाससद्यस्तान्समाह्वयत ॥ प्राविशंस्तत्रयत्रासौराजाकादंविनीवरा ॥ राज्ञेआशि
षमावेद्यविविशुस्तेतदासने ॥ तेषांचसाज्ञायविशेषविज्ञतांविशेषतश्चारभताथनर्तनं ॥ यद्गीतलास्याभिनयैर्मनोह
रैःकृतातदैकाग्रमनाःसभाखिला ॥ साचक्रेणयदातालंदत्तातैर्निवारिता ॥ त्यक्त्वाचक्रेपुनर्ग्राह्यंतालोनाभूत्सखंडितः
इत्येवमालोक्यतदीयमद्भुतंरूपंगुणांस्तेगुणिनोपिमोहिताः ॥ साचामितप्रागुणविज्ञतांपरांरूपंमनोहारिचजातहृ
च्छया ॥ उत्थितेराज्ञितचापिकृच्छ्राद्राज्ञोगृहाद्वहिः ॥ गता ॥ सापिचलज्जंतीवीक्षंतीविरहातुरा ॥ राजभीत्यागृहांतःस्थाव
भूवविमनाभृशं ॥ ततःसख्यादिवचनैराहतात्मनसःप्रियान ॥ एकैकोमेरहोविप्राद्दष्टादर्शयतुस्वकां ॥ नगरस्योत्तरे
कोणेयमुनायास्तटेमहत ॥ अनंततीर्थंविख्यातंयत्रदेवालयोहरेः ॥ नगराद्दूरतोरम्यंनिर्जनंवनवेष्टितं ॥ तत्रागच्छेद्भव
त्स्वेकोयास्येहंछलवेषधृक ॥ वीणारागस्यनृत्यस्यदर्शयिष्यामिकौतुकं ॥ भवंतोपिक्रमेणाथदर्शयंतुस्वकंगुणं ॥ साग
तातत्रचाज्ञातराज्ञोगेहाद्दिहैकलौ ॥ भवतांकोपिगच्छेतेत्युक्तंद्रष्टुंतदीप्सितं ॥ श्रीकृष्णउवाच ॥ मथुरामाश्रितवने

काश्चित्तिष्ठत्यहर्निशं नैष्ठिकोब्रह्मचारीसमदाराधनतत्परः भिक्षार्थमपिनायातिपुरेदुःसंगशंकितः भीष्मपंचदिनेप्रा
पुतस्मिन्देवालयेशुभे ममपूजांप्रकुर्वाणोव्रतमेतच्चकारह तेषुपंचसुविप्रेषुकवितोमजगामह एकादश्यांरहस्त
स्यारूपरागादिदृक्षया आदौगतोमुनेःपार्श्वेकविर्दृष्ट्वाविधिंततः पूजयामासतेनैवविधिनापिसमाहितः ततःक्षणा
त्समायातारामाकादंबिनीशुभा मुनिंनत्वाथपूजादिदृष्ट्वावीणांसमग्रहीत सत्प्रीतियुक्ताचित्तेनसविशेषंजगौचसा
क्रतुधाम्नश्चमेगाथांमधुरस्वरभूषितां शृण्वतोनाभवत्क्षोभःस्त्रीसंगाद्विजितात्मनः मुनेःसंगतिमासाद्यमहतोऽपित
योस्तदा मतःशुद्धमभूत्कामोमद्भक्त्यापर्यपूजयत रात्रौजागरणंतत्रचक्रेकादंबिनीकविः वीण्याचगायतीमेष
एकचित्तौजहर्षतुः गोमयाचमनंतेनदृष्ट्वातुमुनिनाकृतं कविनापिकृतंपश्चात्प्रातःसायान्नृपालयं कविरागत्यन
गरंस्वधनंभूषणानिच द्वादश्यामददात्सर्वंविरक्तोभक्तिवृद्धये द्वितीयेदिवसेप्रागाच्छुचिस्तस्यादिदृक्षया द्वाद
श्यांप्रातरेवासावासीनंददृशेमुनिं तेनापिपूजितोहंवैशुचिनामुनिसंगतः तत्क्षणादागतांतत्रददृशेतांमनोरमां सा
तस्यदर्शनेनृत्यंगीतंपश्चात्स्वयंतथा चक्रेस्वकीयंलावण्यंतत्सर्वंशुचयेऽर्पयत् तथैवगीततत्[illegible]भक्तिरस्याप्यजा
यत मुनिस्संप्राश्यगोमूत्रंरात्रौभक्तिपरायणः पूजनान्मेव्रतस्यापिमुनिसंगात्ततःशुचिः विरक्तइंद्रियार्थेभ्यःसर्वं
स्वमददात्ततः इदंप्रोवाचवचनंमद्भक्त्यासजितेंद्रियः अहोमोहस्यमाहात्म्यंविषयासक्तचेतसां यत्तेनवयामहा
नंदरसमग्नाविदंतिन संसारंदुःखदंवचनोपेक्षंतेथजंसुखं तंहारिहृदयस्थंचत्यक्त्वान्यांमृगतृष्णिकां धावतोहि
ततःकिंतुमहादुःखकरंपरं तथापितादृशीबालानृत्यगीतमनोहरा दृष्ट्वापिनाभवत्क्षोभोमहानंदभुजोमुनेः तस्मा
त्संत्यज्यसंसक्तिंसर्वतोजगदीश्वरे कुर्य्यात्प्रेमपरांभक्तिमेकएवाचरेत्क्षितिं इत्युक्त्वातानदृष्ट्वैवगतस्तीर्थांतरंप्रति
एवमेवत्रयोदश्यांदृष्टोगात्तांदिदृक्षया मुनिनासहसंगम्यतथैवापूजयच्चमां गोपयःप्राशितंतेनदृष्ट्वाप्राशत्ससन्नधीः

तस्यानृत्यंचगीतंचदृष्ट्वारागविवर्जितः दृढस्तद्वचनंप्रोच्यगतस्तीर्थांतरंप्रति दत्त्वासर्वस्वदानंचमसभक्तिपरायणः
चतुर्दश्यांगतोदांतोमुनिसंगतितस्ततः नृत्यगीतोत्सवंकृत्वामत्पूजांचविशेषतः मुनिशेषंघृतंप्राश्यशुद्धसत्त्वोभ
वत्क्षणात् तस्यागुणांश्चरूपंचदृष्ट्वासम्याग्विरक्तिमान् तथैवोक्तातथादत्त्वादानंसर्वस्वमात्मनः निष्किंचनो
भक्तियुक्तोगतस्तीर्थांतरंप्रति पौर्णमास्यांगतोहंसोदृष्ट्वासीनंमहामुनिं नत्वास्नात्वातटेनद्याधात्रीछायांसमाश्रि
तः सस्मारपूर्णिमांपुण्यांपितॄणांश्राद्धमाचरत् धात्रीछायांसमाश्रित्यस्नानंदानंचकार्तिके मत्पूजनंभोजनंच
कोटियज्ञसमंस्मृतं कार्तिकेपावनीधात्रीस्पर्शनेभक्षणेतथा तेभ्यस्तदधिकंजातंसंयोगान्मुनिसन्निधौ तथैवमुनि
संगत्यामत्पूजागीतनर्तनं सचक्रेतांददर्शाथनतयामोहितोह्यभूत् दधिप्राश्याथमुनिनासहैवाभूद्विरक्तिमान् द
त्त्वासर्वस्वमत्रैवगतस्तीर्थांतरंप्रति कादंबिन्याश्रुतंराज्ञागमनंविष्णुमंदिरे निगृहीतापुनर्नैयंगतादेवालयेबलात्
क्रमेणपंचभिर्विप्रैर्व्रतमेकंकृतंमम मथुरायांचगांगेयतैरेवमुनिसंगतः अथातएषामतिवल्लभासीत् कादंबि
नीसागुणरूपमूर्तिः व्रतेनपूजाविधिनाचगीतनृत्यादिनाराज्यमवाप्तमेभिः प्रीतिर्ममात्यंतपरापगेयजातातथै
पांवरारोप्यभूत् धात्रीछायाकृतंश्राद्धंकार्त्तिकेतेनकर्मणा तन्मध्येसार्वभौमोऽयंजातोहंसोयुधिष्ठिरः एकादश्यां
विशेषाद्वजागरेसौमदर्शकः नरोभूदर्जुनोमित्रंमत्सहायोतिवल्लभः सहदेवःशुचिर्दांतोनकुलोभून्महाभुजः दृढ
एषमहावीर्योभीमसेनोव्यजायत एवमेतैःपुराचीर्णंव्रतंपरमतोषणं तेनास्मिवशगोह्येषांदास्यामिपदमव्ययं
त्वयाकृतंव्रतं पश्चादास्याते भीष्मपंचकं येत्वत्रकर्मभूमौमे करिष्यंतिमहाव्रतं मथुरायांतुगांगेयतेषां
मुक्तिः ॥१८॥ करेस्थिता ॥१९॥ सार्वभौमंचस्वर्लोकंब्रह्मलोकंसनातनं योगासिद्धीश्च मुक्तिंच प्रीतोयच्छामि सर्वथा

कार्तिकेमथुरायांचव्रतेनानेनलभ्यते ॥ नारदउवाच ॥ श्रुत्वे
दृढ्भोभक्तियोगोमेममवश्यविधायकः प्रत्यब्दंचचकारेदततःख्याततदाख्यया व्रतस्यास्यैवमाहात्म्यात्प्र
वव्रतमाहात्म्यं भीष्मःपरमविस्मतः यावद्देहंजहौभीष्म स्तावदास्तेस्वयंहरिः यदीच्छे
तितःशरपंजरे भीष्मस्तदग्रतातिष्ठच्छ्रीकृष्णोपिचतुर्भुजः पूर्वोक्तविधिनाकुर्यात्कार्तिकेभीष्मपंचकं असक्तश्चेन्नरोराजन्कर्तुमेवंविधं
त्कृष्णसायुज्यंतद्भक्तिंचतथांजसा त्रिष्वप्यत्रफलाहारमखंडदीपमादिशेत् पंचभीष्मव्रताभावे
व्रतम् उपवासंतदाकुर्यात्तद्दिनेब्रह्मकूर्चकं एकादश्यांहरिंपूज्यरात्रौकुर्यात्प्रजागरं सर्वा
कुर्याद्विष्णुप्रबोधनीं ब्रह्मकूर्चव्रतंचापिसोपितत्पुण्यमाप्नुयात् नृत्यैर्गीतैश्चसंवाद्यैर्वैष्णवानां
न्कामानवाप्नोतिब्रह्महत्यादिकंदहेत् विष्णुप्रीतिकरैःस्तोत्रैःकथायाःश्रवणेनच ब्रह्मकूर्चव्रतंधृत्वा
समागमैः प्रबोधंचप्रकुर्वीतसर्वस्यांनिशिपार्थिव तस्यपुण्यस्यसंख्यांचब्रह्माकर्तुंनशक्नुयात् इक्षुदानंप्रकुर्वीत
श्वत्थसंपूजनंमहत् तुलसीपूजनंचैवषोडशैरुपचारकैः धात्रींसंपूजयेच्चैवदधिभक्तंचदापयेत् पौर्णमास्यां
मूलकादानमेवच सूत्रेणवेष्टयेद्धात्रीमश्वत्थंचप्रयत्नतः महत्पुण्यमवाप्नोतियस्यसंख्यानविद्यते भीष्म
चरेच्छाद्ददद्यात्स्वर्णंचमौक्तिकं रजततंडुलान्वापिदीपानांदर्शनंचरेत् तेषामग्रेन्यसेत्पूजांयथाविभवविस्तरं इदंव्रततिथि
दीपोज्वालनेत्रपूजनंलोकरीतितः ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्ये भीष्मपंचकव्रतोपाख्यानं पाद्मेकार्त्तिकमाहात्म्ये
पंचकसाध्यंस्याद्वौहरावृत्तिक्षयेतुतिथिद्वयेकृत्यमेकत्र ॥ अथकार्तिकद्वादश्यांध्वजारोपणव्रतं ब्राह्मणक्षत्रियविशांशूद्रा
॥ अन्यद्व्रतंप्रवक्ष्यामिध्वजारोपणसंज्ञकं सर्वपापहरंपुण्यंविष्णुप्रीणनकारकं तत्फलंतुप्रमात्व
णांचाद्विजोत्तमाः संपूज्यतेविरिंच्याद्यैःकिमन्यैर्बहुभाषितैः हेमभारसहस्रंतुयोददातिकुटुंबिने कार्त्तिकस्य
स्याद्ध्वजारोपणकर्माणि ध्वजारोपणतुल्यंस्याद्गंगास्नानमनुत्तमं अथात्रतुलसीसेवाशिवलिंगप्रपूजनं

सितपक्षेद्वादश्यांप्रयतोनरःस्नानंकुर्यात्प्रयत्नेनदंतधावनपूर्वकं नित्यकर्माणिनिर्वर्त्यपश्चाद्विष्णुंप्रपूजयेत् धा
तारंचविधातारंपूजयेत्स्तंभकेद्वये हरिद्राक्षतगंधाद्यैःशुक्लमाल्यैर्विशेषतः विंशतिर्हस्तमात्रंवैस्थंडिलंचोपालि
प्यच आधायाग्निंस्वगृह्योक्तंचाज्यभागादिकंक्रमात् जुहुयात्पायसंचैवघृतमष्टोत्तरंशतं ततोमंगलवा
द्यैश्चसूक्तपाठैश्चशोभनैः नृत्यैश्चतत्रपठनैर्नयेद्विल्वालयंध्वजं देवेशद्वारदेशेवाशिखरेवामनोरमे भक्ष्यभोज्या
दिभिर्युक्तैर्नैवेद्यैश्चहरिंयजेत् नमस्तेपुंडरीकाक्षनमस्तेविश्वभावन नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज येनेद
मखिलंजातंसर्वंयत्रप्रतिष्ठितं लयमेष्यतियत्रैवतंप्रपन्नोस्मिमाधवं यन्मुखाद्ब्राह्मणाजाताबाहुभ्यांसमभवन्नृपाः वै
श्यायस्योरुतोजाताःपद्भ्यांशूद्राश्चजज्ञिरे मायासंगममात्रेणवदंतिपुरुषंतुयं स्वभावनिर्मलंशुद्धंनिर्विकल्पंनिरं
जनं सद्भक्तवत्सलंदेवंभक्तिगम्यंजनार्दनं निर्गुणंपरमंसूक्ष्मंप्रपन्नोस्मिपुनःपुनः इतिस्तुत्वानमेद्विष्णुंब्राह्म
णान्भोजयेत्ततः आचार्यंपूजयेत्पश्चाद्दक्षिणाच्छादनादिभिः पुत्रमित्रकलत्राद्यैर्बंधुभिःसहवाग्यतः कुर्वीतपा
रणंविप्रविष्णुव्रतपरायणः यस्त्वेतत्कर्मकुर्वीतध्वजारोपणमुत्तमं तस्यपुण्यफलंवक्ष्येशृणुध्वंमुनिपुंगवाः प
टोध्वजस्यविप्रेंद्रयावच्चलतिवायुना तावद्वैपापजालानिनश्यंतेवनसंशयः महापातकयुक्तोपियुक्तोवाह्युपपातकैः
ध्वजंविष्णुगृहेकृत्वासर्वपापैःप्रमुच्यते सर्वपापविनिर्मुक्तोविष्णुसायुज्यमाप्नुयात् यावद्दिनानिवसंतिध्वजोविष्णु
गृहस्थितः तावद्युगसहस्राणिविष्णुसारूप्यमश्नुते आरोपितध्वजंदृष्ट्वायेभिनंदंतिधार्मिकाः तेपिसर्वेप्रमुच्यं
तेमहापातककोटिभिः ॥ अथैतस्यविधिः । कार्तिकशुक्लपक्षस्यदशम्यांनियमान्वितः एकादश्यांयथाविध्यु
पोषितः विष्णुगाथाश्रवणादितत्परः द्वादश्यांयथाविधिस्नात्वानित्यकर्मनिर्वर्त्य संकल्पंकुर्यात् तिथ्यादि
संकीर्त्य ममाशेषपापक्षयोत्तरसकलाभीष्टसिद्धिपूर्वकविष्णुसारूप्यकामः विष्णुद्वारेध्वजारोपणंकरिष्ये इति

संकल्प्य ॥ पुण्याहवाचनस्वस्तिवाचनादिकृत्वा आचार्य्यमृत्विजंश्चकृत्वातैः सहदेवालये
विष्णुंपौरुषसूक्तेनसंपूज्य ततअत्युच्चध्वजस्तंभौगायत्र्याप्रोक्ष्य ध्वजयुक्तौतौकृत्वा तत्रसूर्यंवैनतेयं
हिमांशुंधातारंच नाममंत्रैः संपूज्य ध्वजौहरिद्राक्षतगंधपुष्पादिभिः संपूज्य शुद्धभूमौस्थंडिलेग्निंप्रतिष्ठाप्य
अन्वादध्यात् अत्रप्रधानंविष्णुमष्टोत्तरंपायसघृतादिभिः सूर्यंवैनतेयं हिमांशुंधातारंच विधातारमष्टाष्टसंख्य
यापायसाहुतिभिः शेषेणस्विष्टकृतमित्यादि होममंत्राः षोडशर्चंपौरुषसूक्तं विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थि
वानिविममेरजांसि योअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवित्वा इरावतीधेनुमतीभूतं
सूयवसिनीमनवेदशस्याव्यस्कभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैः स्वाहा इत्यादिभिः इतिद्रव्यं
अष्टादशभिर्मंत्रैः षडावृत्त्याहोमःउदुत्यंतजातवेदसमितिसूर्यस्य सामध्वनिशरीरस्त्वमितिगरुडस्य सोमोधे
नुंसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति सादन्यंविदथ्यंसभेयंपितृश्रवणंयोददाशदस्मै तिहि
मांशोःधातुर्धाताददातुनोगायमीशानोजगतस्पतिः सनपुण्येनचरवनविधातुर्योनः ततोअभ्यासज्जतातइति ततः
सौरमंत्रान् शांतिसूक्तानिचपठित्वाजागरणादिनारात्रिंनिनयेत् ततोदेवंसंपूज्य ततोसूक्तपाठैः स्तोत्रपठितैः
नृत्यमंगलवाद्यघोषैः सहद्रवंप्रदक्षिणीकृत्य देवालयंध्वजंचानीयदेवस्यद्वारदेशेशिखरेवासुस्थिरौकृत्वा ध्रुवसू
क्तपठित्वा तौसंपूज्य पुनर्देवंविशेषेणसंपूज्य नमस्तेपुंडरीकाक्षनमस्तेविश्वभावन नमस्तेस्तुहृषीकेशमहापुरु
षपूर्वज यत्रेदमखिलंजातंयत्रसर्वंप्रतिष्ठितंलयमेष्यातियत्रैवतंप्रपन्नोस्मिकेशवंनजानंतिपरंभावंयस्यब्रह्मादयःसुराः
योगिनोयंनपश्यंतितंवंदेईशरूपिणं यन्मुखाद्ब्राह्मणोजातायद्बाहूरभवन्नृपाः वैश्यायस्योरुतोजाताःपद्भ्यांशूद्राश्चज
ज्ञिरेमायासंगममात्रेणवदंतिपुरुषंतुयं स्वभावनिर्मलंशुद्धंनिर्विकारंनिरंजनं एकोविष्णुर्महद्भूतपृथग्भूतानिसर्वशः

त्रींल्लोकान्व्याप्यविश्वात्माभुंक्तेविश्वभुगव्ययः योदेवःसर्वभूतानामंतरात्माजगन्मयः निर्गुणः परमानंदः स
मेविष्णुःप्रसीदतु यश्चतुर्भिश्चतुर्भिश्चद्वाभ्यांपंचभिरेवच हूयतेचपुनर्द्वाभ्यांतस्मैयज्ञात्मनेनमः यःपरेशःपरा
नंदःपरात्परतरःप्रभुः चिद्रूपश्चित्परिज्ञेयःसमेविष्णुःप्रसीदतु ज्ञानिनांकामिनांचैवतथाशक्तिमतांनृणां ग
तिदाताचगम्यश्चसमेविष्णुःप्रसीदतु यइदंकीर्तयेन्नित्यंस्तोत्राणामुत्तमोत्तमं सर्वपापविनिर्मुक्तःपरंसायुज्यमा
प्नुयादिति ततोद्वादशब्राह्मणान्सदन्नेनभोजयित्वा दक्षिणादिनापरितोष्याशिषोगृहीत्वाभुंजीत एवमेवशि
वादिदेवतानांदेवालयेषुध्वजारोपणंकार्यं तत्रगरुडस्थानेवृषभंसंपूजयेत् अन्यत्समानंसर्वत्र होमेतुपौरुषसूक्तं
त्र्यंबकं कद्रुद्रायेत्यादिमंत्राः यथासंभवंज्ञेयाः इतिध्वजारोपणव्रतम् अथभीष्मपंचकव्रतविधिः तत्रादौपूजा
र्थंदीपस्थापनार्थंचशुचिनिर्वातस्थानेरक्षार्थंमृण्मयंदरंविधाय ततोव्रतकर्ताशुचिराचम्य ओमद्येत्यादि देशकालौ
संकीर्त्यममसमस्तपापक्षयपूर्वकश्रीराधादामोदरप्रीत्यर्थंभीष्मपंचकव्रतंकरिष्ये तस्यपूर्वांगत्वेनस्वस्तिवाच
नाचार्यादिवरणसहितंपंचभीष्मपूजनसहितं श्रीराधादामोदरपूजनंदीपदानंचकरिष्ये अथआवाहनं आ
गच्छागच्छदेवेशशंखचक्रगदाधरव्रतपूजाविधानार्थंराधिकासहितप्रभो ओंभूर्भुवःस्वराधादामोदरइहागच्छ १
शंतनोःसुतगांगेयरणविद्याविशारद वैयाघ्रपदगोत्रत्वंमूर्तावत्रास्थिरोभव ओंभूर्भुवःस्वर्भीष्मइहागच्छ २
अर्वांतिसंभवाःपंचपूर्वकल्पेद्विजोत्तमाः कविःशुचिर्दृढोदाताहंसोनारीमनोहरा ओंभूर्भुवःस्वःपंचपांडवाद्रौपदीस
हिताइहागच्छत ३ अहमावाहयिष्यामिधर्मराजयुधिष्ठिरं अजातशत्रोएह्येहिसर्वधर्मभृतांवर १ अहमावहाजि
ष्यामिभीमसेनंमहाबलं भीमसेनत्वमभ्येहिसर्वशत्रुनिवर्हण २ अहमावाहयिष्यामीपार्थंरिपुनिसूदनं अ
र्जुनाभ्येहिमेशीघ्रंलक्ष्मांकितवसुंधर ३ आवाहयिष्येनकुलरूपेणाप्रतिमंभुवि नकुलत्वामिहागच्छखड्गचर्म

धराच्युत ४ अहमावाहयिष्यामिसहदेवंरणप्रियं सहदेवत्वमभ्येहिरूपद्रविणसंयुत ५ अहमावाह
यिष्यामियाज्ञसेनींयशस्विनीं द्रौपदित्वमिहागच्छप्रतिमायांसुशोभने ६ अहमावाहयिष्यामि जी
वंसर्वगतंविभुं पंचधावस्थितंदेहेपरमात्मानमव्ययं इत्यावाह्यजीवादानं कृत्वा ओंनमोऽस्त्वनंतायस
हस्त्रमूर्तयइतिमंत्रेण श्रीराधादामोदरायनम इतिषोडशोपचारैः संपूज्य ओंभीष्मायनमः ओंयुधिष्ठिरायनमः
ओंभीमसेनायनमः ओंअर्जुनायनमः ओंनकुलायनमः ओंसहदेवायनमः ओंयाज्ञसेन्यैनम इति
नाममंत्रैः सर्वेषां पूजा कार्या ततो भीष्मतर्पणं वैयाघ्रपदगोत्रायसांकृत्यप्रवरायच वसूनामवतारा
यशंतनोरात्मजायच आत्मनिष्ठायमुनयेआवाल्यब्रह्मचारिणे अनपत्यायभीष्मायतस्मायेदंतिलोदकम्
इतिभीष्माय तिलोदकंदत्वा ततोदीपंप्रज्वाल्य दीपायनम इति संपूज्य यस्मिन्लोकेनिरालोकेनसू
र्योनैवचंद्रमाः तंदेशंतर्तुमिच्छामिदीपंदत्वाजनार्दन यत्रास्तिमातानपितानबंधुर्भ्रातापिनोयत्रसुहृज्जनश्च नज्ञाय
तेयत्रदिनंनरात्रिस्तत्रापिदीपंशरणंप्रपद्ये इतिदीपप्रार्थनंकृत्वा पूजाफलसाद्गुण्यार्थमाचार्य्यायदक्षिणांदत्वैकाद
श्यादिपूर्णिमांतंव्रतमेवंचरेदिति इक्षुदंडकूष्मांडादिकंयथाचारमत्रभीष्मपंचकव्रतेविधिनाविधेयं पूजांतेउद्यापनं
तत्रस्थंडिलेअग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानंविष्णुः इदंविष्णु अतोदेवेतिमंत्राभ्यां प्रत्येकमष्टोत्तरशता
ज्याहुतिभिर्भीष्मपंचपांडवान्द्रौपदीसहितान्प्रत्येकंनाममंत्रैरष्टाष्टाहुतिभिः प्रायश्चित्ताहुतिभिः शेषेणस्विष्टकृ
दाहुत्याहंयक्ष्ये एवंहोमंसमाप्य ततोभीष्मादिमूर्तिकलशानांदानं शय्यागोदानादिकं कृत्वा पूर्णाहुतिमभिषेकं
विधाय छिद्रावतारणं इत्युद्यापनंकार्तिक्यांवाकुर्य्यात् अथकार्तिकशुक्लद्वादश्यांविशेषकृत्यं नारदीये द्वा
दश्यामूर्जशुक्लायांदेवंदामोदरंविभुं समभ्यर्च्योपचारैस्तुगंधाद्यैःसुसमाहितः वदन्भोजयेद्विप्रान्पक्वान्नेनार्कसं

स्यया ततःकुंभानपः पूर्णान्वस्त्राच्छन्नान्समार्चितान् सपूगमोदकैः पूर्णान्प्रीत्यातेभ्यः समर्पयेत् एवंकृतेप्रियो विष्णोर्जायतेऽखिलभोगभाक् देहांतेविष्णुसायुज्यंलभतेनात्रसंशय नीराजनव्रतंचात्रगादितंतन्निबोधमे सुप्तो त्थितंजगन्नाथमलंकृत्यनिशागमे अलंकृतोभवेद्वान्हिमुन्पाधाभ्यर्च्ययत्नतः हुत्वातत्रसमुद्दीप्तेरौप्यदीपिकयामुने गंधपुष्पाद्यर्चितंतंजनैर्नीराजयेद्वरि तत्रैवानुगतांलक्ष्मींब्रह्माणंचंडिकांतथा आदित्यंशंकरंगौरींयक्षंगणपतिंतथा मातृपितृजनान्मान्यान्सर्वान्नीराजयेत्क्रमात् नीराजनंगजाश्वादेर्महिष्यादेश्चमंडनं नमोजयेतिशब्दैश्चघंटाशं खादिनिस्वनैः सिंदूरालिप्तशृंगाणांचित्रांगानांचवर्णकैः गवांकोलाहलेवृत्तेनीराजनमहोत्सवे तुरगान्लक्षणो पेतान्गजांश्चमदाविह्वलान् राजचिह्नानिसर्वाणिछत्राादीनिचनारद राजापुरोधसासार्द्धंमंत्रिभृत्यपुरःसरं पूजयि त्वायथान्यायंनीराज्यस्वयमादरात् शंखतूर्यादिघोषैश्चनानारत्नविनिर्मिते सिंहासनेनवेक्लृप्तेतिष्ठेत्सम्यग लंकृतः ततःसुमंगलैर्युक्तावेश्यावाथकुलांगना शीर्षोपरिजनेंद्रस्यतथानीराजयेच्छनैः एवमेषामहाशांतिःकृ तव्याप्रतिवत्सरं राज्ञावित्तवतानेनस्वानामारोग्यमिच्छता एषाराष्ट्रेपुरेग्रामेक्रियतेशांतिरुत्तमा नीराजना भिधाविप्रकुरोगायांतिसंक्षयम् भविष्योत्तरे ॥ श्रीकृष्णउवाच ॥ पुराबभूवराजर्षिरजापालइतिश्रुतः प्रा र्थितःसप्रजाभिश्चसर्वदुःखापनुत्तये दुःखापनोदंहिकुरुव्याधितानानरेश्वर एवमुक्तश्चिरंध्यात्वाकृत्वाव्याधिनिवार णं व्याधिनिवारणंनीराजनविधिनेतिशेषः पालयामाससंहृष्टोह्यजापालस्ततोऽभवत् तेनैषानिर्मिताशांतिर्नी म्नानीराजनाजने तस्यास्तुपांडवश्रेष्ठलक्षणंवच्मितच्छृणु राज्ञापुरोधसासार्द्धमनुष्ठेयाविधानतः तस्मिन्का लेबभूवाथरावणोराक्षसेश्वरः लंकास्थितःसुरगणान्नियुयोजस्वकर्मसु अखंडमंडलंचंद्रमातपत्रमकारह इंद्रं सेनापतिंचक्रेवायुंपांसुप्रमार्जकं वरुणंदांतिकर्मस्थंधनदंधनरक्षकं यमंसंयमनेऽरीणांयुयुजेमंत्रणेमनुं मेघाः

सिंचंतिलिंपंतिसलिलेनाखिलाद्रुमाः पुष्पाणिचिक्षिपुःसर्वेमुनयःशांतिपाठकाः ऋग्यजुःसाममंत्रैश्चब्रह्मणासह
संस्थिताः नागाद्यास्तस्यकक्षायागंधर्वागीततत्पराः प्रेक्षणीयेप्सरोवृंदंवाद्येविद्याधरावृताः गंगाद्याःसरितः
पानेगार्हपत्येहुताशनः विश्वकर्मातुसंस्कारेयमःशल्यप्रयोजने तिष्ठंतिपार्थिवाःसर्वेपुरसेवाविधायिनः दृश्यंतेभा
स्करारत्नैः प्रस्खलंतोविभूषणैः तान्दृष्ट्वारावणःप्राहप्रहस्तप्रतिहारकं सेवांकर्तुंममस्थानेब्रूहिकोत्रसमागतः उ
वाचसप्रणम्याग्रेदंडपाणिर्निशाचरः एषराजासमांधाताधुंधुमारोनलोर्जुनः ययातिर्नहुषोभीमोराघवोयंविदूरथः
एतेचान्येचबहवोराजानइहशासने सेवाकरास्तवस्थानेनाऽजापालइहागतः रावणः कुपितः प्राहशीघ्रंदू
तंविसर्जयन् धूम्राक्षगच्छब्रूहित्वमजापालंममाज्ञया सेवांकुरुसमागच्छकरंवायच्छपार्थिव अन्यथाचं
द्रहासेनत्वांकरिष्येविकंधरं रावणेनैवमुक्तस्तुधूम्राक्षोगरुडोयथा संप्राप्तस्तांपुरींरम्यांतच्चराजकुलंगतः
ददर्शायांतमेकांतमजापालमजावृतं मुक्तकेशंमुक्तकक्षंमुक्तपृष्ठकरद्वयं यष्टिस्कंधेरेणुभूतंव्याधिभिः परि
वारितं निहतामित्रशार्दूलसर्वोपद्रवनाशनं महामालिख्यनामानि निघ्नंतंविद्विषांगणं स्नांतंभुक्तं
शुभेस्थानेकृतकृत्यंमनुंयथा दृष्ट्वाहृष्टमनाः प्राहधूम्राक्षोरावणोदितं साक्षेपमजपालोपिप्रत्युक्त्वाकारणोत्तरं
प्रेषयामासधूम्राक्षंततः कृत्यंसमादधे ज्वरमाकारयित्वातंप्रोवाचेदंमहीपतिः गच्छलंकाधिपस्थानमाचरस्वयथो
दितं नियुक्तस्त्वजपालेनज्वरोराजन्जगामह गत्वासकंपयामासरावणंराक्षसेश्वरम् रावणस्तंविदित्वातुज्वरंपर
मदारुणं प्रोवाचातिष्ठतुवसतवमेनप्रयोजनं ततः सविज्वरोराजन्बभूवधनदानुजः तेनैषानिर्मिताशांतिः सर्वो
पद्रवनाशिनी कार्तिकेशुक्लपक्षेतुद्वादश्यांरजनीमुखे सुप्तोत्थितेविनिद्रेतुदेवेदामोदरेतदा वेद्यांतोरणमालाभिर्यु
क्तायामनुलिप्तके ज्वालयित्वानवंवन्हिंहुत्वामंत्रैर्यथोदितैः वर्द्धमानतरूत्थाभिःसमिद्भिःसघृतैस्तिलैः ततःकृत्वा

हरेः पूजांहरिंनीराजयेच्छनैः पुष्पैरभ्यर्च्यदेवेशंसमालभ्यचचंदनैः वदरैःकदरैश्चैवन्नपुषैरिक्षुभिस्तथा गंधधूपैरलंकारैर्वस्त्रैरत्नैश्चभूपितं तस्यैवानुगतांलक्ष्मींब्रह्माणंचंडिकांतथा आदित्यंशंकरंगौरींयक्षंगणप तिंग्रहान्मातृपितॄंस्तथानागान्सर्वान्नीराजयेत्ततः गवांनीराजनंकुर्य्यान्माहिष्यादेश्चमंडनम् भ्रामयेत्त्रास येच्छब्दैर्घंटावादनभाजनैः गावोवत्सावृतायांतिसापीडस्तवकांगदाः सिंदूरकृतशृंगाग्रा रंभारावाः सवत्सकाः अनुयांतिसगोपालाः काल्यंतोललितानिते स्वेदानुलिप्तसर्वांगारक्तपीतासितांबराः एवंकोलाहलेवृत्तेगवांनीराजनोत्सवे तुरगान्लक्षणैर्युक्तान्द्विरदांश्चसुपूजितान् राजचिन्हानिसर्वाणिउद्धृत्यस्व गृहांगणे राजापुरोधसासार्द्धंमंत्रिभृत्यपुरस्सरः सिंहासनोपविष्टश्चशंखतूर्यादिनिःस्वनैः पूजयेद्गंधकुसुमैर्व स्त्रदीपैर्विलेपनैः ततःस्त्रीलक्षणैर्युक्तावेश्यावाथकुलांगना शीर्षोपरिनरेंद्रस्यभ्रामयेद्दीपवार्तिकं शांतिंसमुच्चर द्भिश्चाद्विजैर्वंदिजनैःसह ततोनीराजयेत्सैन्यंहस्त्यश्वरथसंकुलम् एवमेपामहाशांतिःख्यातानीराजनाजने येषां राष्ट्रपुरग्रामेक्रियतेपाण्डुनंदन तेपांरोगाःक्षयंयांतिसुभिक्षंवर्त्ततेसदा शांतिर्नीराजनालोकेसर्वान्रोगान्व्यपोह ति लोकानांवर्द्धयत्यायुरजापालवचोयथा एवंरोगादिपीडासुलोकानांहितमिच्छता वर्षेवर्षेप्रयोक्तव्याशां तिर्नीराजनाभिधा नीराजयंतिनवमेघनिभंहरिंयेगोब्राह्मणानथगजांश्चनरेंद्रचिन्हैः तेसर्वरोगरहिताअजि तानरेंद्रैरिंद्रप्रभाभुविभवंत्यजपालवाक्यात् ॥ इतिश्रीभविष्योत्तरेकार्तिकशुक्लद्वादश्यांनीराजनाख्यमहा शांतिविधिः ॥ इयंशांतिःकार्तिककृष्णद्वादश्यामपिसूचिता स्वात्यादित्येसातियथासंभवंकार्य्या भानुभौमार्कवा रेपुदर्शयोगेऽपीयंकार्य्या अत्रचातुर्मास्ये समानांमासानांसमाहिशांतिरप्युक्ता तदुक्तंमहाभारते ॥ चतुर्थाग्र ह्यवर्षीणंचातुर्मास्यव्रतंनरैः कार्तिकेशुक्लपक्षेतुद्वादश्यांतत्समापयेत् लघुनारदीयेऽपि चातुर्मास्यव्रतानांतुसमाप्तिः

कार्तिकेस्मृता मंत्रश्चनिर्णयामृते इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दन भविष्योत्तरेऽपि चातुर्मास्येहियत्त्यक्तंभक्ष्यभोज्यादिकंनरैः चतुरोवार्षिकान्मासान्नियमोयेनयःकृतः कथयित्वा द्विजेभ्यस्तंदद्याद्भक्त्याचदक्षिणां नत्वाविसर्जयेद्विप्रांस्ततोभुंजीतचस्वयं अत्र वराहोक्तबोधिनीविधिरप्युक्तः एकादश्या रात्रौ घृतपूर्णपात्रोपरिहेममाषनिर्मितं मत्स्यंसंस्थाप्य कुंकुमपीतवस्त्रैः पद्माद्यैः संपूज्य मत्स्या दिदशावतारान्संपूज्य जागरणंचकृत्वा प्रातर्देवमाचार्यंच वस्त्राद्यैः संपूज्यप्रार्थयेत् जगदात्माजगद्रूपोजगदादि-रनादिमान् जगदादिर्जगद्योनिःप्रीयतांमेजनार्दनः इतिदक्षिणांदत्वा ब्राह्मणान्भोजयेदिति तथाचपाद्मे शंख तूर्यरवैरात्रौभ्रामयेत्स्यंदनेस्थितं उत्थितंदेवदेवेशंनगरेपार्थिवःस्वयं चतुरोवार्षिकान्मासान्नियमंयत्कृतंतरद्द्यात् इदंशुक्लास्तादावपिसदाकार्य्यम् अशौचादौपूजामन्येनकारयेदितिसंक्षिप्तप्रकारः अस्यांद्वादश्यां रेवत्यंतपाद योगेपारणंनकार्य्यं सुप्तिप्रबोधपरिवर्त्तनमेववर्ज्यमितिप्राग्लिखितत्वात् सनत्कुमारसंहितायामपि रेवतीतुर्य्य चरणेद्वादशीसंयुतेनरः नकुर्यात्पारणंकुर्वन्व्रतंनिष्फलतांव्रजेदिति इयंचद्वादशीमन्वादितिथिः कार्त्तिकशुक्ल त्रयोदश्यां शिवपूजनव्रतमुक्तं नारदीये ऊर्जशुक्लत्रयोदश्यामेकभोजीद्विजोत्तमः पुनःस्नात्वाप्रदोषेतुवाग्य तः सुसमाहितः प्रदीपानांसहस्रेणशतेनाप्यथवाद्विज प्रदीपयेच्छिवंवापिद्वात्रिंशद्दीपमालिकां घृतेनदीप येद्दीपान्गंधाद्यैः पूजयेच्छिवं फलैर्नानाविधैश्चैवनैवेद्यैरपिनारद ततःस्तुवीतदेवेशंशिवनाम्नांशतेनचयानि नामानिकीर्त्यंतेसर्वाभीष्टप्रदानिवै ॐनमोरुद्रायभीमायनीलकंठायवेधसे कपर्दिनेसुरेशायव्योमकेशायते नमः दिगम्बरायभर्गायउमाकांतायवर्मिणे तपोमयायव्याप्तायशिपिविष्टायतेनमः व्यालप्रियायव्याल पव्यालानांपतयेनमः महीधरायव्याघ्रायपशूनांपतयेनमः त्रिपुरांतायसिंहायशार्दूलर्षभचर्मिणे मितायमित

नाथायसिद्धायपरमेष्ठिने वेदगीतायगुप्तायवेदगुह्यायतेनमः दीर्घायदीर्घरूपायदीर्घार्थायमहायच नमोज गत्प्रतिष्ठायव्योमरूपायवैनमः कल्याणायविशिष्टायशिष्टायपरमात्मने गजकृत्तिधरायाथअंधकासुरभेदिने नीललोहितशुक्लायचण्डमुण्डप्रियायच भक्तिप्रियायदेवाययज्ञांतायाव्ययायच महेशायनमस्तुभ्यंमहादेववरायच त्रिनेत्रायत्रिवेदायवेदांगायनमोनमः अर्थायार्थस्वरूपायपरमार्थायवैनमः विश्वरूपायविश्वायविश्वनाथायते. नमः शंकरायत्रिकालायकालावयवरूपिणे अरूपायविरूपायसूक्ष्मसूक्ष्मायवैनमः श्मशानवासिनेतुभ्यंनम स्तेकृत्तिवाससे शशांकशेखरायाथरुद्रभूमिश्रितायच दुर्गायदुर्गपारायदुर्गावयवसाक्षिणे लिंगाय लिंगरूपायलिंगिनांपतयेनमः नमः प्रभावरूपायप्रभावार्थायवैनमः हरायबहुरूपायप्रसन्नायनमोनमः योगाययोगगम्याययोगिनांपतयेनमः नमस्तेनिष्कलंकायनिश्चयायामितात्मने ज्ञानायज्ञानगम्यायपर ज्योतिःस्वरूपिणे नमोनमःकारणकारणायमृत्युंजयायात्मभवस्वरूपिणे त्रियंबकायशितिकंठभर्गगौ रीयुजेमंगलहेतवेनमः नाम्नांशतमिदंविप्रपिनाकिगुणकीर्तनम् पठेत्प्रदक्षिणीकृत्यप्रयातिशिवकेतनम् एवंकृत्वाव्रतंविप्रमहादेवप्रसादतः भुक्त्वेहभोगानखिलानंतेशिवपदंलभेत् कार्तिकशुक्लचतुर्दशीवैकुंठचतु र्दशी साच निशीथव्यापिनीग्राह्या दिनद्वयेऽव्याप्तौ निशीथप्रदोषोभयव्यापिनीग्राह्या तदुक्तं हेमाद्रौ भविष्ये ॥ कार्तिकस्यचतुर्दश्यांशुक्लपक्षेनराधिप सोपवासस्तुसंपूज्यहरिंरात्रौजितेंद्रियः तथाचना रदीये ब्रह्मकूर्चव्रतंचात्रकर्तव्यंशुद्धिमिच्छता सोपवासःपंचगव्यंपिबेद्रात्रौजितेंद्रियः कपिलायास्तुगोमू त्रंकृष्णायागोमयस्तथा श्वेतायाःक्षीरमुद्दिष्टंशुक्लायाश्चतथादधि गृहीत्वाकर्बुरायाश्चघृतमेकत्रमेलयेत् कुशांबु चततःप्रातःस्नात्वासंतर्प्यदेवताः ब्राह्मणान्भोजयित्वातुभुंजीयाद्वाग्यतःस्वयं ब्रह्मकूर्चव्रतंह्येतत्सर्वपातकनाशनम्

यच्चवाल्येकृतंपापंयौवनंवार्द्धकेऽपिवा ब्रह्मकूर्चोमवासेनतत्क्षणादेवनश्यतीति ॥ अत्रसनत्कुमारसंहितायां
काशीविश्वेश्वरपूजाविधानमुक्तं ॥ वर्षेवैहेमलंबाख्येमासेश्रीमतिकार्तिके शुक्लपक्षेचतुर्दश्यामरुणाभ्युदयंप्रति
महादेवतिथौब्राह्ममुहूर्तेमणिकर्णिके स्नात्वाविश्वेश्वरोदेव्याविश्वेश्वरमपूजयत् देव्यासहविश्वेश्वरःस्वयंविश्वेश्वर
लिंगमपूजयदित्यर्थः ॥ संक्षेपंज्योतिपस्तस्यप्रातिष्ठाख्यंतदाकरोत् स्वयमेवस्वमात्मानंचरन्पशुपतंव्रतं भस्मो
द्धूलितसर्वांगोनानाव्रतमहाव्रतः जपन्वैशतरुद्रीयंपूजयंस्तमहानिशं अत्र पूजा कृतोपवासैः कार्य्या ततः
प्रभातेविमलेकृत्वापूजांमहाद्भुतां दंडपाणेर्महाधाम्निव्रतेऽस्मिन्कृतपारण इतितत्रैवोक्तेः अत्र परकातिरूपेण
र्थवादेनकृतोपवासेन स्नात्वाविश्वेश्वरंपूज्यइतिकल्प्यते इयंचतुर्दशी खंडत्वे यदिपूर्वदिनेऽपराह्णेवर्त्तते तदोपवासे
पूर्वाग्राह्या पूजाव्रतेपुसर्वेपुकर्त्तव्यासंमुखीतिथिरितिवचनात् पूजादावरुणोदयव्यापिनीग्राह्या कर्मणोयस्ययःका
लइतिवचनात् केश्चित्तुखंडतिथौ वाऽखंडातिथौवा पूर्वदिने कृतोपवासाः परदिनेऽरुणोदये पूजादिकं कुर्वंति
अत्रकाश्यांविश्वेश्वरयात्रोक्ताकाशीखंडे कार्तिकस्यचतुर्दश्यांविश्वेशंयोविलोकयेत् स्नात्वाचोत्तरवाहिन्यांनतस्य
पुनरागतिरिति शिवरहस्येऽपि । पुरात्रकार्तिकेमासिचतुर्दश्यांसुराः शिवे सायंकालेसमागत्यपूजांकृत्वा
स्थितामुदेत्युक्ता ततःपरेऽपिगणाः सर्वेऽपिमदनुग्रहात् संपूज्यनिशियत्नेनचक्रुजागरणंशिवे कार्ति
कस्यचतुर्दश्यांविल्वैश्चकनकाह्वयैः द्रोणपुष्पैश्चपूजांचचक्रुर्म्मयिमहेश्वरे रात्रिंनीत्वाप्रयत्नेनमत्कथाश्रवणादि
भिःततोऽरुणोदयेजातेस्नात्वास्नात्वाचभस्मना त्रिपुण्ड्रधारणंकृत्वाकृत्वारुद्राक्षधारणं संध्यांसमाप्यविश्वेशंसमभ्य
र्च्ययथाविधि मद्भक्तान्भोजयामासुर्ऋषयोवुभुजुस्तथा ऊर्जेशुक्लचतुर्दश्यामुपोष्यप्रयतः शिवे मामर्चयति
विश्वेशंसमुक्तोभवतिध्रुवं मल्लिंगपूजनंपुण्यंसर्वदासर्वकामदम् ऊर्जशुक्लचतुर्दश्यांकाश्यांविश्वेश्वरंप्रभुम् स

नर्चयितुमिंद्राद्यैर्गम्यतेऽस्माभिरादरात् ॥ अस्यामेवरात्राविष्णुपूजाकार्य्या तदुक्तं हेमाद्रौ भविष्ये ॥ कार्तिकस्यासितपक्षेचतुर्दश्यांनराधिप सोपवासस्तुसंपूज्यहरिंरात्रौजितेंद्रियइति अत्र चतुर्दशी रात्रिव्यापिनी ग्राह्या रात्रौपूजाविधानात् दिनद्वयेतद्व्याप्तौनिशीथप्रदोषोभयव्यापित्वात्पूर्वैव इयंपूजोपवासादिभिर्विष्णुप्रीतिकरणाद्वैकुंठलोकप्रदा अतएवेयं वैकुंठचतुर्दशीतिप्रसिद्धा इतिवैकुंठचतुर्दशीनिर्णयः अस्यामेव पाषाणचतुर्दशीव्रतं तदुक्तंनिर्णयामृते ॥ देवीपुराणे ॥ कार्त्तिकेशुक्लपक्षेतुयापाषाणचतुर्दशी तस्यामाराधयेद्गौरींनक्तंपाषाणभक्षकः ऐश्वर्यसौख्यसौभाग्यरूपाणिप्राप्नुयान्नरइति हेमाद्रौतु पाषाणभक्षणैरितिपाठः पाषाणाकारपिष्टपक्वान्नैरितिव्याख्यातं नारदीयेऽपि पाषाणव्रतमप्यत्रप्रोक्तंतच्छृणुनारद सोपवासोदिवानक्तंपाषाणाकारपिष्टकं प्राश्येद्गंधादिभिर्गौरींघृतपक्वमुपाहरेत् व्रतमेतच्चरित्वातुयथोक्तंद्विजसत्तमइतिपाषाणचतुर्दशीव्रतं अथकार्त्तिकेपौर्णमासीकृत्यनिर्णयः नारदीये कार्त्तिक्यांपौर्णमास्यांतुकुर्यात्कार्त्तिकदर्शनं विप्रत्वलब्धयेभूयःसर्वशत्रुजयायच अत्रैवदीपदानेनविधेयस्त्रिपुरोत्सवः निशामुखेद्विजश्रेष्ठसर्वजीवसुखावहः कीटाःपतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः दृष्ट्वाप्रदीपान्नहितेनजन्मिनःपुनश्चमुक्तिंहिलभंतएव अत्रचंद्रोदयेविप्राःसंपूज्याःकृत्तिकाश्चषट् कार्त्तिकेयस्तथाखड्गीवरुणश्चहुताशनः गंधैःपुष्पैस्तथाधूपदीपनैवेद्यविस्तरैः परमान्नैःफलैःशाकैर्वन्हिब्राह्मणतर्पणैः एवंदेवान्समभ्यर्च्यदीपोदेयोगृहाद्बहिः दीपोपांतेतथागर्तश्चतुरस्रोमनोहरः चतुर्दशांगुलःकार्य्यःसिच्यश्चंदनवारिणा गव्यांपूरेणसंपूर्य्यहेमतत्रविनिःक्षिपेत् मुक्तानेत्रसमायुक्तंमत्स्यंसर्वांगशोभनम् महामत्स्यायचनमइतिमंत्रंसमुच्चरन् गंधाद्यैस्तत्रसंपूज्याद्विजायप्रतिपादयेत् क्षीरसागरदानंतेमयोक्तंद्विजसत्तम दानस्यास्यप्रभावेणमोदतेहरिसन्निधौ अत्रकुलाद्यपोत्सर्गंव्रतंनक्तंचनारद रुद्रलोकमवाप्नोतिनात्रकार्य्याविचारणेति अस्यांचकल्प

भेदनमत्स्यावतारउक्तः पाद्मे कार्त्तिकमाहात्म्ये ॥ वरान्दत्त्वायतोविष्णुर्मत्स्यरूपोभवत्ततः तस्यांदत्तंहुतंजप्तंत
दक्षयफलंस्मृतमिति अथास्यामाचारप्राप्ततुलसीपूजनं पद्मपुराणे नारदउवाच रोप्यतेयेनविधिनातुलसीपू
ज्यतेसदा तमाचक्ष्वमहादेवमदनुग्रहकारणात् महादेवउवाच ॥ शुभेपक्षेशुभेवारेशुभेऋक्षेशुभोदये केशवाग्रे
शुभांशेचरोपयेत्तुलसींमुने गृहस्यांगनमध्येवागृहस्योपवनेऽपिवा शुभेदेशेचतुलसीमर्चयेद्भक्तितत्परः मूलेचवेदिकां
कुर्य्यादालवालसमन्विताम् प्रातःसंध्याविधिंकृत्वास्नानपूर्वंदिनेदिने गायत्र्यष्टशतंजप्त्वातुलसींपूजयेन्नरः
प्राङ्मुखोदङ्मुखोवापिस्थित्वाप्रयतमानसः ध्यायेच्चतुलसींदेवींश्यामांकमललोचनां प्रसन्नांपद्मकह्लारवरा
भयचतुर्भुजां किरीटहारकेयूरकुंडलादिविभूषितां धवलांशुकसंयुक्तांपद्मासननिषेदुषीं इतिध्यानम् द
वित्रैलोक्यजननीसर्वलोकैकपावनि आगच्छभगवत्यत्रप्रसीदतुलसिप्रिये इत्यावाहनम् सर्वदेवमयेदे
विसर्वदाविष्णुवल्लभे देविस्वर्णमयंदिव्यंगृहाणासनमुत्तमम् इत्यासनम् सर्वदेवमयाकारेसर्वदेवनमस्कृते
इदंपाद्यंगृहाणात्रतुलसित्वंप्रसीदमे इतिपाद्यम् सर्वतीर्थमयाकारेसर्वागमनिषेविते इदमर्घ्यंगृहाणत्वंदे-
विदैत्यांतकप्रिये इत्यर्घ्यं सर्वलोकस्यरक्षार्थंसदासान्निधिकारिणि गृहाणतुलसिप्रीत्यादत्तमाचमनीयकम्
इत्याचमनीयम् गंगादिभ्योनदीभ्यश्चसमानीतमिदंजलं स्नानार्थंतुलसिस्वच्छंप्रीत्याततप्रतिगृह्यतां इति
स्नानम् क्षीरोदमथनोद्भूतेचंद्रलक्ष्मीसहोदरे गृह्यतांपरिधानार्थमिदंक्षौमांबरंशुभं इतिवस्त्रम् श्रीखंडकुंकुमं
दिव्यंकर्पूरागुरुमिश्रितं कल्पितंतेमहादेविप्रीत्यर्थंप्रतिगृह्यतां इतिगंधम् नीलोत्पलसकह्लारमालत्यादी.
निशोभने गंधवंतीचपद्मानिपुष्पाणिप्रतिगृह्यताम् इतिपुष्पम् धूपंगृहाणदेवेशिमनोहारिसगुग्गुलं
आज्यमिश्रंतुतुलसिभक्ताभीष्टप्रदायिनि इतिधूपम अज्ञानतिमिरांधस्यज्ञानदीपप्रदायिनि लयैततुलसी

मर्चयितुमिंद्राद्यैर्गम्यतेऽस्माभिरादरात् ॥ अस्यामेवरात्राविष्णपूजाकार्य्या तदुक्तं हेमाद्रौ भविष्ये ॥ कार्तिक
स्यासितपक्षेचतुर्दश्यांनराधिप सोपवासस्तुसंपूज्यहरिंरात्रौजितेंद्रियइति अत्र चतुर्दशी रात्रिव्यापिनी ग्राह्या
रात्रौपूजाविधानात् दिनद्वयेतद्व्याप्तौनिशीथप्रदोषोभयव्यापित्वात्पूर्वैव इयंपूजोपवासादिभिर्विष्णुप्रीतिकरणाद्वै
कुंठलोकप्रदा अतएवेयं वैकुंठचतुर्दशीतिप्रसिद्धा इतिवैकुंठचतुर्दशीनिर्णयः अस्यामेव पाषाणचतुर्दशीव्रतं त
दुक्तंनिर्णयामृते ॥ देवीपुराणे ॥ कार्त्तिकेशुक्लपक्षेतुयापाषाणचतुर्दशी तस्यामाराधयेद्गौरींनक्तंपाषाणभक्ष
कः ऐश्वर्यसौख्यसौभाग्यरूपाणिप्राप्नुयान्नरइति हेमाद्रौतु पाषाणभक्षणैरितिपाठः पाषाणाकारपिष्टपक्वान्नैरि
तिव्याख्यातं नारदीयेऽपि पाषाणव्रतमप्यत्रप्रोक्तंतच्छृणुनारद सोपवासोदिवानक्तंपाषाणाकारपिष्टकं प्राच्यंगंधा
दिभिर्गौरींघृतपक्वमुपाहरेत् व्रतमेतच्चरित्वातुयथोक्तंद्विजसत्तमइतिपाषाणचतुर्दशीव्रतं अथकार्त्तिकेपौर्णमासीकृत्य
निर्णयः नारदीये कार्त्तिक्यांपौर्णमास्यांतुकुर्यात्कार्त्तिकदर्शनं विप्रत्वंलब्धयेभूयःसर्वशत्रुजयायच अत्रैवदीपदानेन
विधेयस्त्रिपुरोत्सवः निशामुखेद्विजश्रेष्ठसर्वजीवसुखावहः कीटाःपतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः
दृष्ट्वाप्रदीपान्नहितेनजन्मिनःपुनश्चमुक्तिंहिलभंतएव अत्रचंद्रोदयेविप्राःसंपूज्याःकृत्तिकाश्चषट् कार्त्तिकेयस्तथा
खड्गीवरुणश्चहुताशनः गंधैःपुष्पैस्तथाधूपैर्दीपैर्नैवेद्यविस्तरैः परमान्नैःफलैःशाकैर्वन्हिब्राह्मणतर्पणैः एवंदेवा
न्समभ्यर्च्यदीपोदेयोगृहाद्बहिः दीपोपांतेतथागर्तश्चतुरस्रोमनोहरः चतुर्दशांगुलःकार्य्यःसिच्यश्चंदनवारिणा
गवांपूरेणसंपूर्य्यहेमतत्रविनिःक्षिपेत् मुक्तानेत्रसमायुक्तंमत्स्यंसर्वांगशोभनम् महामत्स्यायत्रनमइतिमंत्रंसमु
च्चरन् गंधाद्यैस्तत्रसंपूज्याद्विजायप्रतिपादयेत् क्षीरसागरदानंतेमयोक्तंद्विजसत्तम दानस्यास्यप्रभावेणमोद
तेहरिसन्निधौ अत्रवृषोत्सर्गंव्रतंनक्तंचनारद रुद्रलोकमवाप्नोतिनात्रकार्य्याविचारणेति अस्यांचकल्प

भेदेनमत्स्यावतारउक्तः पाद्मे कार्त्तिकमाहात्म्ये ॥ वरान्दत्त्वायतोविष्णुर्मत्स्यरूपोभवत्ततः तस्यांदत्तंहुतंजप्तंत
दक्षयफलंस्मृतमिति अथास्यामाचारप्राप्ततुलसीपूजनं पद्मपुराणे नारदउवाच रोप्यतेयेनविधिनातुलसीपू
ज्यतेसदा तमाचक्ष्वमहादेवमदनुग्रहकारणात् महादेवउवाच ॥ शुभेपक्षेशुभेवारेशुभेऋक्षेशुभोदये केशवाग्रे
शुभांशेचरोपयेत्तुलसींमुने गृहस्यांगनमध्येवागृहस्योपवनेऽपिवा शुभेदेशेचतुलसीमर्चयेद्भक्तितत्पर मूलेचवेदिकां
कुर्य्यादालवालसमान्विताम् प्रातःसंध्याविधिंकृत्वास्नानपूर्वंदिनेदिने गायत्र्यष्टशतंजप्त्वातुलसींपूजयेन्नरः
प्राङ्मुखोदङ्मुखोवापिस्थित्वाप्रयतमानसः ध्यायेच्चतुलसींदेवींश्यामांकमललोचनां प्रसन्नांपद्मकह्लारवरा
भयचतुर्भुजां किरीटहारकेयूरकुंडलादिविभूषितां धवलांशुकसंयुक्तांपद्मासनानिषेदुषीं इतिध्यानम् दे
वित्रैलोक्यजननीसर्वलोकैकपावनि आगच्छभगवत्यत्रप्रसीदतुलसिप्रिये इत्यावाहनम् सर्वदेवमयेदे
विसर्वदाविष्णुवल्लभे देविस्वर्णमयदिव्यंगृहाणासनमुत्तमम् इत्यासनम् सर्वदेवमयाकारेसर्वदेवनमस्कृते
इदंपाद्यंगृहाणात्वतुलसिस्त्वंप्रसीदमे इतिपाद्यम् सर्वतीर्थमयाकारेसर्वागमानिषेविते इदमर्घ्यंगृहाणत्वंदे-
विदैत्यांतकप्रिये इत्यर्घ्यं सर्वलोकस्यरक्षार्थंसदासन्निधिकारिणि गृहाणतुलसिप्रीत्यादत्तमाचमनीयकम्
इत्याचमनीयम् गंगादिभ्योनदीभ्यश्चसमानीतमिदंजलं स्नानार्थंतुलसिस्वच्छंप्रीत्यातत्प्रतिगृह्यतां इति
स्नानम् क्षीरोदमथनोद्भूतेचंद्रलक्ष्मीसहोदरे गृह्यतांपरिधानार्थमिदंक्षौमांबरशुभं इतिवस्त्रम् श्रीखंडकुंकुमं
दिव्यंकर्पूरागुरुमिश्रितं कल्पितंतेमहादेविप्रीत्यर्थंप्रतिगृह्यतां इतिगंधम् नीलोत्पलसकह्लारमालत्यादी.
निशोभने गंधवंतीचपद्मानिपुष्पाणिप्रतिगृह्यताम् इतिपुष्पम् धूपंगृहाणदेवेशिमनोहारिसगुग्गुलं
आज्यमिश्रंतुलसिभक्ताभीष्टप्रदायिनि इतिधूपम् अज्ञानतिमिरांधस्यज्ञानदीपप्रदायिनि त्वयैततुलसी

प्रीत्यादीपोऽयंप्रतिगृह्यतां इतिदीपम् नमस्तेजगतांनाथेप्राणिनांप्रियदर्शने यथाभक्त्यामयादत्तंनैवेद्यंप्रतिगृह्यतां इतिपानीयम् अमृतेऽमृतसंभूतेतुलस्यमृतरूपिणि कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यतां इतितांबूलम् दक्षिणेदक्षिणकरेत्वद्भक्तानांप्रियंकरे करोमितेसदाभक्त्याविष्णुक्रांतेप्रदक्षिणं इतिप्रदक्षिणम् हिरण्यगर्भेतिदक्षिणाद्रव्यं नमोनमोजगद्धात्र्यैजयदायैनमोनमः नमोनमोजगद्धात्र्यैनमस्तेपरमेश्वरि इतिनमस्कारः प्रसीदममदेवेशिकृपयापरयासदा अभीष्टफलसिद्धिंचकुरुमेमाधवप्रिये इतिप्रार्थना इत्येवमर्चयेन्नित्यंप्रातरेवशुचिर्नरः मध्यान्हेवाथसायान्हेपूजयेत्प्रयतोनरः सर्वोपचारैरथवाचातुर्मास्येविशेषतः पूजयेत्तुलसींदेवीमपूपफलपायसैः एकादशीयदास्वल्पातदोपोष्यव्रतीनरः तद्रात्रावेवकुर्वीततुलसीपूजनंसदा इदंतुतुलसीपूजामाहात्म्यंशृणुयान्नरः सकृद्वापिपठेन्नित्यंसगच्छेद्वैष्णवंपदं इतितुलसीपूजाविधिः अथतुलसीविवाहप्रयोगः तत्रादौतिथ्यादिसंकीर्त्य ममाखिलविधपातकशमनपूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थंतुलसीविवाहंकरिष्ये इतिसंकल्पः तदंगत्वेनस्वस्तिवाचनपूर्वकंग्रहयज्ञंकृत्वा आचार्यऋत्विगादिवरणंकृत्वा तुलस्याआलवालात्परितोमंडपंचकृत्वा विवाहवत्तत्रतुलस्याःपुरतोवेदींकृत्वा तुलस्याहरिद्रारोपणादिमंगलंकृत्वा वेद्यांसर्वतोभद्रे हैमंविष्णुमिदंविष्णुरितिमंत्रेण रौप्यमयींतुलसीं तुलसीश्रीसखिशुभेपापहारिणिपुण्यदे नमस्तेनारदनुतेनारायणमनःप्रिये इतिमंत्रेणसंस्थाप्य संपूज्य वस्त्रविभूषणादिभिर्भूषयित्वा गोधूलीलग्ने मध्ये अंतःपटं धृत्वा विवाहवत्सर्वमंगलमंगल्ये इतिमंगलानिपठित्वा अतःपरंनिस्सार्य ओमद्येत्युक्त्वा संकल्पपूर्वकंसालंकारांविवाहवत् वस्त्रयुग्मेनवेष्टयित्वा हरयेतुलसींप्रतिपाद्य यदाबध्नंतिमंत्रेणउभयोःकंकणंबद्ध्वा ओजंददादितिमंत्रेण करग्रहंचकृत्वा आचार्योवेदिकायां ग्रहयज्ञविधानेन अग्निप्रतिष्ठा

इतिसंकल्पः अत्रप्रधानं विष्णुद्वादशाक्षरेणवामनु.
प्य तुलसीविवाहहोमे देवतापरिग्रहार्थमन्वाधानंकरिष्ये इतिसंकल्पः अत्रप्रधानं विष्णुद्वादशाक्षरेणवामनु.
नावाज्याहुतिंयक्ष्येशेषेणास्विष्टकृदिति ततोयजमानश्चतस्रःप्रदक्षिणाःकृत्वा शांतिपाठादिकृत्वा तूर्यघोष
पूर्वकं यथाविभवंतुलसींच संपूज्य पीठंगांचाचार्यायदत्त्वा ब्राह्मणान्भोजयेदिति अथात्रसंक्षेपा पूजाप्रका
रः संकल्पंविधाय ध्यायेच्चतुलसींदेवीमितिध्यात्वा भगवत्यैतुलस्यैनमःआवाहनम् विष्णुवल्लभायैआसनं
सर्वदेवमयायैपाद्यं सर्वतीर्थमयायैअर्घ्यं दैत्यांतकप्रियायै आचमनम् सर्वलोकहितायैस्नानं लक्ष्मीसहोदरा
यैवस्त्रं महादेव्यैगंधं रमावासायैपुष्पं अभीष्टप्रदायैधूपं पापहारिण्यैदीपं भगवत्यैनैवेद्यं अमृतसंभूतायैतांबूलं
अमृतरूपिण्यैदक्षिणा जगद्धात्र्यैनीराजनं सुदक्षिणायैप्रदक्षिणा परमेश्वर्यैनमस्कारः अभीष्टदायैनमः प्र
र्थना ततस्तुतुलसीमंत्रमष्टोत्तरशतंजपेत् अस्यश्रीतुलसीमंत्रस्य नारदऋषिरनुष्टुप् छंदः श्रीतुलसीभगवती
देवता अभीष्टसिद्ध्यर्थेपाठेविनियोगः तुलसिश्रीसखिशुभेपापहारिणिपुण्यदे नमस्तेनारदनुतेनारायणमनःप्रिये
इतिकरषडंगन्यासः ध्यायामितुलसींदेवीमित्यादिध्यानं ततःस्कांदोक्तंतुलसीकवचंपठेत् ॐअस्यश्रीतु
लसीकवचस्तोत्रस्य विष्णुऋषिः अनुष्टुप्छंदः श्रीतुलसीभगवतीदेवता अभीष्टसिद्ध्यर्थेपाठेविनियोगः ॐतुल
सीमेशिरःपातुभालंपंकजधारिणी दृशौमेपद्मनयनाश्रीसखीश्रवणौमम घ्राणंसुगंधामेपातुमुखंचसुमुखीमम
जिह्वांमेपातुसुभगाकंठंविष्णुप्रियामम स्कंधौकह्लारिणीपातुभुजौमेपापहारिणी करौपद्मकरापातुहृदयंविष्णुव
ल्लभा पुण्यदामध्यमंपातुनाभिंसौभाग्यदायिनी कटिंकुंडलिनीपातुऊरूनारदवंदिता ज्वालिनीजानुनीपातुजं-
घेसकलवंदिता नारायणप्रियापादौसर्वांगंसर्वरक्षका संकटेविषमेदुर्गेभयेवादेमहाहवे नित्यन्हिसंध्ययोःपा
तुतुलसीसर्वतःसदा इतीदंपरमंदिव्यंतुलस्याःकवचामृतं तुलसीकाननेतिष्ठन्नासीनोवाजपेदिदम् सर्वान्कामा

त्वाप्नोतिविष्णुसायुज्यमृच्छति ॥ इतिपद्मपुराणेतुलसीमाहात्म्येतुलसीकवचम् अथविष्णुधर्मोत्तरोक्तंधात्री
पूजाव्रतं ॥ तच्चाश्विनपौर्णमामारभ्य कार्त्तिकपौर्णिमापर्य्यंतंकर्त्तव्यं तत्राशक्तौ कार्त्तिकांतिमदिनत्रयंकर्त्तव्यं
तत्राप्यशक्तौकार्त्तिक्यामेवकार्य्यं, तत्रादौतिथ्यादिसंकीर्त्य ममाखिलपातकक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वा-
रा श्रीपरमेश्वरप्रीत्यर्थं धात्रीमूले धात्रीपूजान्वितंश्रीविष्णुपूजनंकरिष्ये, इतिसंकल्पः धात्रीमूलेआलवालंकृ
त्वा तन्मूलेपंचरंगोपेतांवेदिकांकृत्वा तत्राष्टदलपद्मोपरिश्रीविष्णुमूर्त्तिंसंस्थाप्य शांताकारंभुजगशयनमिति-
ध्यात्वा पुरुषसूक्तेनषोडशोपचारैःश्रीदामोदरंपूजयेत् पुष्पपूजांते अंगपूजांकुर्य्यात् ॐदामोदरायनमः पा
दौपूजयामि, सहस्राक्षायनमोमध्यंपूजयामि सर्वेश्वरायनमोमुखंपूजयामि विष्णवेनमःशिरःपूजयामि त्रि-
विक्रमायनमःसर्वांगंपूजयामि नमस्कारांते विप्रायार्घ्यंश्रीफलयुतंदद्यात् तत्रमंत्रः नमःसहस्रशीर्षायसह
स्राक्षायतेनमः सहस्रपादहस्तायपुरुषायनमोऽस्तुते सहस्रनाम्नेदेवेशप्रसीदत्वंममाच्युत अर्घ्यंगृहाणभगव,
न्सर्वकामप्रदोभव ततःप्रार्थना भगवन्देवदेवेशलोकनाथनमोऽस्तुते अक्षयासंततिर्मेऽस्तुदामोदरनमोऽस्तुते त.
तोधात्र्यैनम इतिनाममंत्रेण तुलसीपूजोक्तषोडशोपचारमंत्रैर्धात्रींसंपूज्य अथवा षोडशनामभिः षोडशो.
पचारपूजांकुर्यात् शांत्यैनमः कांत्यैनमः मेधायैनमः धृत्यैकृत्यैनमः विष्णुवत्यैनमः महालक्ष्म्यैनमः रमायैनमः
कमलायैनमः इंदिरायैनमः कल्याण्यैनमः कमनीयायैनमः सावित्र्यैनमः गायत्र्यैनमः भूत्यैनमः अव्यक्तायै
नमः पुष्पपूजांते अंगपूजा विश्वरूपायैनमः कटिंपूजयामि अब्धिसंभवायैनमोहृदयंपूजयामि लोकधात्र्यै
मोमुखंपूजयामि धात्र्यैनमःशिरःपूजयामि इतिसंपूज्य ततोऽष्टदिक्षु दीपावलींदत्वा धात्र्यैनमइतिमंत्रेण
एकत्वःसूत्रेणवेष्टयित्वा अष्टकृत्वःप्रदक्षिणा नमस्कारांश्चकृत्वा प्रार्थयेत् धात्रिदेविनमस्तुभ्यंसर्वपापक्षयंकरि

वर्चस्कंकुरुमानित्यंनवतंतुंतथाकुरु पुत्रान्पौत्रान्वलंप्रज्ञांदेहिमेजगदीश्वरि संवत्सरकृतंपापंदूरीकुरुममाक्ष ये ततोधात्रीमूले सव्येनैवपितृतर्पणंकुर्य्यात् पितापितामहश्चैवतथैवप्रपितामहः मातापितामहीचैवतथैवप्र पितामही मातामहस्तत्पिताचतथैवप्रपितामहः तेपिवंतुमयादत्तंधात्रीमूलेऽक्षयंपयः मातृवंशेपितृवंशेऽन्ना प्तायेचगोत्रिणः तेपिवंतुमयादत्तंधात्रीमूलेऽक्षयंपयः पितामाताचभार्य्याचभगिनीदुहितुःपतिः पितृष्वसा मातृष्वसासप्तगोत्राणितर्पयेत् चतुर्विंशच्चविंशच्चषोडशद्वादशैवहि रुद्राश्चवसवश्चैवकुलमेकोत्तरंशतं तेपि वंतुमयादत्तंधात्रीमूलेऽक्षयंपयः तेसर्वेतृप्तिमायांतुधात्रीमूलेनिषेचनात् एवंप्रत्यहंमासपर्यंतंकृत्वा अंते तदुद्या पनंकुर्य्यात् सर्वतोभद्रमंडले सौवर्णीं धात्रीं तन्मूले हैमंविष्णुं पूर्वोक्तमंत्राभ्यां संपूज्य मंडलपूजांते अग्निंप्रतिष्ठाप्य वैष्णवमंत्रेण धात्रीनाममंत्रैश्च मंडलदेवतामंत्रैश्चाष्टोत्तरशताज्याहुतीर्हुत्वा आचार्या यपीठं व्रतपूर्त्त्यैगांचदत्त्वा सर्वसंपूर्णतासिद्धये सुवर्णयुक्तं घृतपूरितंकांस्यपात्रंदद्यात् तत्रमंत्रःकांस्यंब्रह्ममयं प्रोक्तमाज्यंभोज्यंदिवौकसां सुवर्णंचाग्निदैवत्यमतःशांतिंप्रयच्छमे ततोऽन्यांश्चद्विजान्सदन्नेनसंभोज्य तेभ्योद क्षिणांदत्त्वा आशिषोगृहीत्वास्वयंभुंजीत इतिधात्रीपूजोद्यापनम् ॥ अथपद्मपुराणीयसृष्टिखंडोक्तं धात्रीवृक्षमाहा त्म्यं ॐनमःश्रीपरदेवतायै स्कंदउवाच अपरस्यापिवृक्षस्यफलसंपूजनात्तरोः सर्वलोकहितार्थायवदनोभवनाशनं ईश्वरउवाच पावनंवासुदेवस्यफलंप्रीतिकरंशुभं यस्यभक्षणमात्रेणमुच्यतेसर्वकल्मषात् भक्षणेचभवेदायुः पानेवैधर्मसंचयः अलक्ष्मीनाशनंस्नानेसर्वैश्वर्यमवाप्नुयात् यस्मिन्गृहेमहासेनधात्रीतिष्ठतिसर्वदा तस्मि न्गृहेनतिष्ठंतिप्रेतादैत्याश्चराक्षसाः नगंगानगयाचैवनकाशीनचपुष्करं एकैवपावनीधात्रीसंप्राप्तेहरिवासरे एकादश्यांशुभेपक्षेधात्रीस्नानंकरोतियः सर्वेपापाःक्षयंयांतिविष्णुलोकेमहीयते धात्रीफलैर्महासेनभक्षणंस्ना

येवैपापिष्ठजंतवः सर्वेतेऽत्रपलायंतेग्रहाद्रुन्पौत्रान्वलंप्रज्ञांदेहिमेजगदीश्वरि संवत्सरकृतंपापंदूरीकुरुममाक्ष
त्वात्तृषयापरिपीडितः क्षुधयामलकीवृक्षंपर. पितापितामहश्चैवतथैवप्रपितामह. मातापितामहीचैवतथैवप्र
वृक्षाग्रात्पपातधरणीतले वेदनामनुसंवद्धःपंचत्वम. तेपिवंतुमयादत्तंधात्रीमूलेऽक्षयंपय. मातृवंशेपितृवंशेऽत्रा
येवैशमनसेवकाः नशक्नुवंतिचंडालंमृतंद्रष्टुंमहावलाः पितामाताचभार्याचभगिनीदुहितुःपतिः पितृष्वसा.
शक्तास्तेपररूपरं ततस्तेतुसमालोक्यगतामुनिगणाऽशुद्धादशैवहि रुद्राश्चवसवश्चैवकुलमेकोत्तरंशतं तेपि
शक्तानचापियमसेवकाः म्रियंतेघातितायेचास्थिरायुद्धात्पलायिताःसाहसघातताभीतावृक्षींकृत्वा श्रंते तदुद्या
व्याघ्रहतामत्स्योव्याघ्रैर्वाजलजंतुभिः जलप्लवेमृता.प्रेतावृक्षपर्वतपातत: पशुपक्षिहतायेचकारागार मंडलपूजांते
घातमृतायेचश्राद्धादिकर्मवर्जिताः गूढकर्मरताधूर्तागुरुविप्रनृपद्विषः पाषंडाःकौलिका. क्रूरागरदा कूआचार्या
अशौचान्नस्यभोक्तार.प्रेतभोग्यानसंशय. ममायमितिभाषतोनेतुंतंचनशक्नुम. आदित्यइवदुःप्रेक्ष्यःकिंवाफ्स्य.
प्रभावतः मुनयऊचु. अनेनभक्षितंप्रेताः पक्वमामलकीफलं तत्संगाद्यांतितस्यैवफलानिप्रचुराणिच तेनैवका
रणेनाऽयंदुःप्रेक्ष्योभवतामयं वृक्षाग्रात्पतितश्चायंप्राणान्खेदात्तदाऽत्यजत नैवोच्चारणमंत्रस्यनचान्येनापिकर्मणा
धात्रीभक्षणमात्रेणपापात्पूतोऽव्रजाद्दिवं व पृच्छाम सविज्ञानान्नवयंनिदकाश्चवः विष्णुलोकाद्विमानंतुयावन्नवा
त्रगच्छति प्रेताऊचु. उच्यतांमुनिशार्दूलावोढुंतंमनसिस्थिरं यावद्द्विजानघोषंतिवेदमंत्रादिकल्पितं घोष्यं
तेयत्रवेदाश्चमंत्राणिविविधानिच पुराणस्मृतयोयत्रक्षणंस्थातुंनशक्नुमः यज्ञहोमजपस्थानंदेवतार्चनकर्मणां पु
रतोनैवतिष्ठामस्तद्वार्तांचसमुच्चितां किंवाकृत्वाप्रेतयोनिंलभंतेहिनराद्विजाः श्रोतुमिच्छामहेसम्यक्कथ्यमानमि
दंवचः द्विजाऊचु. शीतवाततपक्लेशैःक्षुत्पिपासाविशेषकै. अन्यैरपिचदुःखैर्येपीडिताः कूटसाक्षिण. वधवं

धम्रमीतायेप्रेतास्तेनिरयंगताः छिद्रान्वेषपरायेचद्विजानांकर्मघातिनः तथैवचगुरूणांचतेप्रेताश्चापुनर्भवाः दी
यमानंद्विजाग्रेतुदातारंप्रतिपिध्यति चिरंप्रेतत्वमाश्रित्यरनरकान्निवसंतिते परगामात्मगांचैवकृत्वापिंडनद्दी
यते नपालयंतियेमूढास्तेप्रेताःकर्मजाभुवि हीनप्रतिज्ञाःसंन्यस्तास्तथाभग्नव्रतानरः नलिनीदलभोक्तारस्ते
प्रेताःकर्मजाभुवि विक्रीणंतिश्रुतिंशुद्धांस्त्रियंसाध्वीमकंटकां पितृव्यमातुलादींश्चप्रेतास्तेकर्मजाभुवि त्यजं
तीतिशपः एतेचान्येचवहवःप्रेतास्तेकर्मजाभुवि प्रेताऊचुः नभवंतिकथंप्रेताःकर्मणाकेनवाद्विजाः हिताय
वदतांतूर्णंसर्वलोकहितंपरम् द्विजाऊचुः येनचैवकृतंस्नानंजलतीर्थस्यधीमता नमस्कृतंपरंलिंगंनप्रेतोजायते
नरः एकादश्यामुपोष्यैवद्वादश्यांतुविशेषतः पूजयित्वाहरिंमर्त्याःप्रेतत्वंनव्रजंतिते वेदाक्षरप्रसूतैश्चस्तोत्रमं
त्रादिभिस्तथा देवानांपूजनेरक्तानवैप्रेताभवंतिते श्रुत्वापौराणिकंवाक्यंदिव्यांचधर्मसंहितां पाठयित्वापठि
त्वाचपिशाचत्वंनगच्छति व्रतैश्चविविधैःपूतारुद्राक्षाभरणैस्तथा तथारुद्राक्षमालायांप्रेतत्वंनैवगच्छति
धात्रीफलद्रवैःस्नातानित्यंतद्भक्षणेरताः तथाविष्णुंसुसंपूज्यनगच्छंतिपिशाचताम् प्रेताऊचुः सतांसंदर्शनात्पु
ण्यमितिपौराणिकाविदुः तस्माद्वोदर्शनंजातंहितंकर्तुमिहार्हथ प्रेतभावाद्यथामुक्तिःसर्वेषांनोभविष्यति व्रतो
पदेशकंधी[illegible] रणंगताः ततोदयालवःसर्वेतानूचुर्द्विजसत्तमाः धात्रीणांभक्षणंशीघ्रंक्रियतांमुक्तिहेतवे प्रे
[illegible]गावयंस्थातुंनशक्नुमः कथंतेषांफलानांचशक्तावैभक्षणेऽधुना द्विजाऊचुः अस्माकं
अथतैस्तुवरंलब्ध्वाधात्रीवृक्षपिशाचकैः समारुह्यफलंप्राप्यभक्षितंलीलयातदा
भिनं आगतंतेसमारुह्यसचंडालपिशाचकाः गतास्तेत्रिदिवंपुत्रव्रतैर्यज्ञैःसुदुर्लभं
ाःस्वर्गंतगच्छंतिनरादयः ईश्वरउवाच ॥

पूर्वैयेधनलोभाच्चनजानंतिहिताहितं उच्छिष्टंश्वभिरुच्छुष्टंश्लेष्ममूत्रकृतंतुवा मत्याचमोहितैश्चेष्टंप्रेतादंतिसदैवहि
सकृच्छौचजलंवातंवलिमूषकमर्कटैः सूतकेमृतकेजप्यंनत्यक्तंयेनकेनचित् तस्यान्नंचजलंभुक्त्वाप्रेतास्तेवैसदैवहि
दुर्दांताग्राहिणीयस्याशुचि संयमवर्जिता गुरुनिःसारितादुष्टा संतिप्रेताश्चतत्रवै अपुंगवाःकुलेजातावलोत्साह
विवर्जिताः बधिरांधकृशादीनाःपिशाचा कर्मजातयः क्षणंचमंगलंनास्तिदु खहेतुयुता भृशं तेनैवविकृताकारा
सर्वभोगविवर्जिता.. नास्तिकारोगसंततामृतारूक्षामलीमसा एतेचान्येचदुःखार्त्ताःसदैवप्रेतजातयः तेनकर्म
विपाकेनजायंतेकर्मणेदृशाः पितृमातृगुरूणांचदेवनिंदापराश्चये पाषंडा कौलिका पापास्तेप्रेताःकर्मजाभुवि ग
लपाशैर्जलैःशस्त्रैर्गरलैरात्मघातकाः इहलोकेचप्रेताश्चचंडालादिपुसंभवाः अंत्यजा पतिताश्चैवपापरोगमृता
श्चये अंत्यजैर्घातितायुद्धेतेप्रतानिश्चिताभुवि महापातकसंयुक्ताविवादैश्चवहिष्कृताः चौराःसाहसिकायेच
पितृणांद्रोहचिंतका दानाध्ययनहीनाश्चव्रतैर्देवार्चनादिभिः अमंत्राः स्नानहीनाश्चगुरुस्त्रीगमनेरताः
तथैवचांत्यजस्त्रीपुदुर्गतासुचसंगताः महाक्रूरोपवासेनम्लेच्छदेशेस्थितामृताः म्लेच्छभाषायुताऽशुद्धास्तथा
म्लेच्छोपजीविनः अनुवर्तंतियेम्लेच्छान्स्त्रीधनैरुपजीविनः स्त्रियश्चैवनरक्षंतितेप्रेतानात्रसंशयः क्षुधास
तप्तदेहंतुश्रांतंविप्रंगृहागतं गुणपुण्यातिथिंत्यक्त्वापिशाचत्वंव्रजंतिते विक्रीणंतिचयेगाश्चम्लेच्छादिपुग
वाशिषु प्रेतलोकेचिरंस्थित्वातेचयांत्यपुनर्भवं अशौचाभ्यंतरेयेचजाताश्चपशवोमृताः चिरंप्रेताःपिशाचाश्चमृता
जाता पुनःपुन. जातकर्ममुखैश्चैवसंस्कारैर्येविवर्जिताः एकैकस्याप्यसंस्कारेप्रेतत्वंपरिधीयते स्नानसंध्यासुरार्चा
भिर्वेदयज्ञव्रताक्षरैः आजन्मवर्जिता पापास्तेप्रेताश्चापुनर्भवाः भोजनोच्छिष्टपात्राणियानिदेहमलानिच येषां
तयंतिसत्तीर्थंतेप्रेतानात्रसंशयः दानमानार्चनैर्विप्रानैवयैर्नैवतर्पिता पितरोगुरवश्चैवप्रेतास्तेकर्मजाभुवि-प-

तीनृत्यक्त्वाचयानार्योनिवसंतीतरेजने प्रेतलोकेचिरंस्थित्वाजायंतेचांत्ययोनिषु पतींश्चवंचयित्वायाविषयेंद्रिय.
मोहिताः मिष्टंखादंतियाःपापास्तास्तुप्रेताश्चिरंभुवि विण्मूत्रभक्षकायेचब्रह्मस्वहरणेरताः अभक्ष्यभक्षकाश्चा
तेतेप्रेताश्चापुनर्भवाः बलाद्येपरवस्तूनिगृह्णंतिचदहंत्यपि अतिथीनवमन्यंतेप्रेतानिरयमास्थिताः तैर्नरैःक.
र्मजंभुक्तंसुखंवादुःखमेववा तस्मादामलकींभुक्त्वास्नात्वातस्यद्रवेणतु सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते
तस्मात्सर्वप्रयत्नेनसेवयामलकींशिवां यइदंशृणुयात्स्कंदपुण्याख्यानमिदंशुभम् श्रावयेत्सततंलोकेवैष्णवेपु-
विशेषतः सयातिविष्णुभवनमितिपौराणिकाविदुः इतिपद्मपुराणेसृष्टिखंडेधात्रीफलमाहात्म्यंपष्टितमोध्यायः अ
थकार्त्तिकीकृत्यं इयंमन्वादिः सापूर्वाह्णव्यापिनीग्राह्याशुक्लपक्षस्थत्वात् अत्रविशेषोहेमाद्रौब्राह्मे ॥ पुण्याम-
हाक सीस्याज्जीवेंद्वोःकृत्तिकास्थयोः पाद्मे विशाखासुयदाभानुः कृत्तिकासुचचंद्रमाः सयोगःपद्मकोनाम.
तेदुर्लभः पद्मकेपुष्करेऽमायांकपिलांयःप्रयच्छति सहित्वासर्वपापानिवैष्णवंलभतेपदं यमःकार्त्ति
रेस्नातःसर्वपापैःप्रमु पि आग्नेयंतुयदाऋक्षंकार्त्तिक्यांभवतिक्वचित् महतीसातिथिर्ज्ञेयास्ना
स्यांतिथौक्वचित् तिथिःसापिमहापुण्यामुनिभिःपरिकीर्त्तिता प्रा
साम नकीप्रोक्तादेवानामपिदुर्लभेति अस्यामेवसायंकालेमत्स्या-
न्दत्त्वायतोविष्णुर्मत्स्यरूपोभवत्ततः तस्यांदत्तंहुतंजप्तंतदक्ष
य्ये पौर्णमास्यांतुसंध्यायांकर्तव्यस्त्रिपुरोत्सवः दद्यादनेनमंत्रे
मशकाश्चवृक्षेजलेस्थलेयेविचरंतिजीवाः दृष्ट्वाप्रदीपंनहिजन्मभागिनस्ते
लव्यापिनीग्राह्या पूर्वोक्तभविष्यवाक्ये संध्यायामित्युक्तेः

अत्रकार्त्तिकेयदर्शनंकार्यं तदुक्तं काशीखंडे कार्त्तिक्यांकृत्तिकायोगेयःकुर्यात्स्वामिदर्शनं सप्तजन्मभवेद्विप्रो धनाढ्योवेदपारगइति अस्यांक्षीरसागरदानमुक्तं निर्णयामृते ब्रह्मपुराणे पौर्णमास्यांतुसंपूज्योभक्त्यादामोदरः सदा ततश्चंद्रोदयेपूज्यास्तापस्यःकृत्तिकास्तुषट् शिवासंभूतिनामाचप्रीतिःसंततिरेवच अनसूयाक्षमा चैवषडेताःकृत्तिकामताइति कार्त्तिकेयस्तथाखड्गीवरुणश्चहुताशनः धान्यैःसशूकैर्द्वारोर्ध्वंभूपितस्सानिशागमे माल्यैर्धूपैस्तथादीपैर्भक्ष्यैरुच्चावचैस्तथा परमान्नैःफलैःशाकैर्वन्हिब्राह्मणतर्पणैः एवंदेवांस्तुसंपूज्यदीपोदेयोगृहाद्बहिः दीपोपांतेतथागर्तश्चतुरस्रोमनोहरः चतुर्विंशांगुलःकार्यःसिक्तश्चंदनवारिणा गवांक्षीरेणसंपूर्णःसर्वतः परिरक्षितः तत्रहेममयोमत्स्योमुक्तानेत्रमनोहरः प्रक्षेप्तव्योविधानेननमोस्तुहरयेपठन् ब्राह्मणायाथयोग्याय दद्यात्तंक्षीरसागरमिति अत्रविधानेनेत्यस्यदद्यादित्यनेनान्वयः अस्यांदामोदरंपूज्यनक्तंकार्यं तदुक्तं कृत्यतत्त्वार्णवे ब्रह्मपुराणे पौर्णमास्यांतुसंपूज्यभक्त्यादामोदरंसदा तस्मिन्नहनियत्नेनकर्त्तव्यंनक्तभोजनम् तथाकार्त्तिकेपौर्णमास्यांतुसोपवासोऽर्चयेद्धरिम् अग्निष्टोमफलंप्राप्यसूर्यलोकंचविंदति अस्यामेववृषभदानंकार्यं तदुक्तं मदनरत्ने विष्णुधर्मोत्तरे कार्त्तिक्यांचंद्रवर्णाभमन्यवर्णमथापिवा रत्नैर्गंधैस्तथाधान्यैर्बीजैर्वस्त्रैस्तथैवच एतैर्युक्तामितिशेषः कृत्वाचोक्तमथोक्षाणंदत्त्वादीपंसमंततः चंद्रोदयेनरोदत्त्वासर्वपापैःप्रमुच्यते कांतारेयममार्गेतुतेनासौव्रजतेसुखं प्राप्नोतिपुत्रपौत्रांश्चसूर्यलोकंचगच्छतीति अत्रैवकाम्यवृषोत्सर्गःकार्यः तदुक्तं निर्णयामृते भविष्योत्तरे कार्त्तिक्यांतुवृषोत्सर्गोविवाहःपुण्यलक्षणः कार्यःकुरुकुलश्रेष्ठहरेर्नीराजनंतथा गजाश्वरथदानंचधनधेन्वादयस्तथा प्रदेयाःपुण्यकृद्भिस्तुतस्यांसंकल्प्यदेवतां इति मात्स्येऽपि कार्त्तिक्यांतुवृषोत्सर्गंकृत्वानक्तंसमाचरेत् शैवंपदमवाप्नोतिशैवव्रतमिदंस्मृतमिति अत्रैवब्रह्मपुराणे नीलवृषदानमुक्तं नीलंचवृषभंदद्याच्चतुर्व

तीन्त्यक्त्वाचयानार्योनिवसंतीतरेजने प्रेतलोकेचिरंस्थित्वाजायंतेचांत्ययोनिषु पतींश्चवंचयित्वायाविषयेंद्रिय-
मोहिताः मिष्टंखादंतियाःपापास्तास्तुप्रेताश्चिरंभुवि विण्मूत्रभक्षकायेचब्रह्मस्वहरणेरताः अभक्ष्यभक्षकाश्चापि
तेतेप्रेताश्चापुनर्भवाः बलाद्येपरवस्तूनिगृह्णंतिचदहंत्यपि अतिथीनवमन्यंतेप्रेतानिरयमास्थिताः तैर्नरैःक-
र्मजंभुक्तंसुखंवादुःखमेववा तस्मादामलकींभुक्त्वास्नात्वातस्यद्रवेणतु सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते
तस्मात्सर्वप्रयत्नेनसेवयामलकींशिवां यइदंशृणुयात्स्कंदपुण्याख्यानमिदंशुभम् श्रावयेत्सततंलोकेवैष्णवेषु-
विशेषतः सयातिविष्णुभवनमितिपौराणिकाविदुः इतिपद्मपुराणेसृष्टिखंडेधात्रीफलमाहात्म्यंषष्ठितमोध्यायः अ
थकार्त्तिकीकृत्यं इयंमन्वादिः सापूर्वाह्णव्यापिनीग्राह्याशुक्लपक्षस्थत्वात् अत्रविशेषोहेमाद्रौब्राह्मे ॥ पुण्याम-
हाकार्तिकीस्याज्जीवेंद्वोःकृत्तिकास्थयोः पाद्मे विशाखासुयदाभानुः कृत्तिकासुचचंद्रमाः सयोगःपद्मकोनाम,
पुष्करेत्वतिदुर्लभः पद्मकेपुष्करेऽमायांकपिलांयःप्रयच्छति साहित्वासर्वपापानिवैष्णवंलभतेपदं यमःकार्त्ति
क्यांपुष्करेस्नातःसर्वपापैःप्रमुच्यते अन्यत्रापि आग्नेयंतुयदाऋक्षंकार्त्तिक्यांभवतिक्वचित् महतीसातिथिर्ज्ञेयास्ना
नदानेषुचोत्तमा यदायाम्यंतुभवतिऋक्षंतस्यांतिथौक्वचित् तिथिःसापिमहापुण्यामुनिभिःपरिकीर्त्तिता प्रा
जापत्यंयदाऋक्षंतिथौतस्यांनराधिप सामहाकार्त्तिकीप्रोक्तादेवानामपिदुर्लभेति अस्यामेवसायंकालेमत्स्या-
वतारोजातइत्युक्तं पाद्मे कार्त्तिकमाहात्म्ये वरान्दत्वायतोविष्णुर्मत्स्यरूपोभवत्ततः तस्यांदत्तंहुतंजप्तंतदक्ष
यफलंस्मृतमिति अत्रैवत्रिपुरोत्सवउक्तोभविष्ये पौर्णमास्यांतुसंध्यायांकर्तव्यस्त्रिपुरोत्सवः दद्यादनेनमंत्रे
णसुदीपांश्चसुरालये कीटाःपतंगामशकाश्चवृक्षेजलेस्थलेयेविचरंतिजीवाः दृष्ट्वाप्रदीपंनहिजन्मभागिनस्ते
मुक्तरूपाहिभवंतितत्रेति अत्रपौर्णमासीसंध्याकालव्यापिनीग्राह्या पूर्वोक्तभविष्यवाक्ये संध्यायामित्युक्तेः

सप्तजन्मभवेद्विप्रो
अत्रकार्त्तिकेयदर्शनंकार्यं तदुक्तं "काशीखंडे कार्त्तिक्यांकृत्तिकायोगेयःकुर्यात्स्वामिदर्शनं
धनाढ्योवेदपारगइति अस्यांक्षीरसागरदानमुक्तं निर्णयामृते ब्रह्मपुराणे पौर्णमास्यांतुसंपूज्योभक्त्यादामोदरः
सदा ततश्चंद्रोदयेःपूज्यास्तापस्यःकृत्तिकास्तुषट् शिवासंभूतिनामाचप्रीतिःसंततिरेवच अनसूयाक्षमा
त्रैवषडेताःकृत्तिकामताइति कार्त्तिकेयस्तथाखड्गीवरुणश्चहुताशनः धान्यैःसशूकैर्द्वारोर्ध्वंभूषितस्सानेशागमे
माल्यैर्धूपैस्तथादीपैर्भक्ष्यैरुच्चावचैस्तथा परमान्नैःफलैःशाकैर्वन्हिब्राह्मणतर्पणैः एवंदेवांस्तुसंपूज्यदीपोदेयोगृ
हाद्बहिः दीपोपांतेतथागर्तश्चतुरस्रोमनोहरः चतुर्विंशांगुलःकार्यःसिक्तश्चंदनवारिणा गवांक्षीरेणसंपूर्णःसर्वतः
परिरक्षितः तत्रहेममयोमत्स्योमुक्तानेत्रमनोहरः प्रक्षेप्तव्योविधानेननमोस्तुहरयेपठन् ब्राह्मणायाथयोग्या
यदद्यात्तंक्षीरसागरमिति अत्रविधानेनेत्यस्यदद्यादित्यनेनान्वयः अस्यांदामोदरंपूज्यनक्तंकार्यं तदुक्तं कृत्यतत्त्वा
र्णवे ब्रह्मपुराणे पौर्णमास्यांतुसंपूज्यभक्त्यादामोदरंसदा तस्मिन्नहनियत्नेनकर्त्तव्यंनक्तभोजनम् तथाकार्त्तिकेपौर्ण
मास्यांतुसोपवासोऽर्चयेद्धरिम् अग्निष्टोमफलंप्राप्यसूर्यलोकंचविंदति अस्यामेववृषभदानंकार्यं तदुक्तं मदनर
त्ने विष्णुधर्मोत्तरे कार्त्तिक्यांचंद्रवर्णाभमन्यवर्णमथापिवा रत्नैर्गंधैस्तथाधान्यैर्बीजैर्वस्त्रैस्तथैवच एतैर्युक्तामि
तिशेषः कृत्वाचोक्तमथोक्षाणंदत्त्वादीपंसमंततः चंद्रोदयेनरोदत्त्वासर्वपापैःप्रमुच्यते कांतारेयममार्गेतुतेना
सौव्रजतेसुखं प्राप्नोतिपुत्रपौत्रांश्चसूर्यलोकंचगच्छतीति अत्रैवकाम्यवृषोत्सर्गःकार्यः तदुक्तं निर्णयामृते भवि
ष्योत्तरे कार्त्तिक्यांतुवृषोत्सर्गोविवाहःपुण्यलक्षणः कार्यःकुरुकुलश्रेष्ठहरेर्नीराजनंतथा गजाश्वरथदानंचधन
धेन्वादयस्तथा प्रदेयाःपुण्यकृद्भिस्तुतस्यांसंकल्प्यदेवतां इति मात्स्येऽपि कार्त्तिक्यांतुवृषोत्सर्गंकृत्वानक्तंसमाच
रेत् शैवंपदमवाप्नोतिशैवव्रतमिदंस्मृतमिति अत्रैवंब्रह्मपुराणे "नीलवृषदानमुक्तं नीलंचवृषभंदद्याच्चतुर्व-

त्सतरीयुतं सर्वसस्यवरंरम्यंसर्वगंधसमन्वितं सुवाससंब्राह्मणायमहाकांतारतारणं यावंतितस्यरोमाणिशरी
रेसंतिसंख्यया तावद्युगसहस्राणिस्वर्गेवसतितत्प्रदः पूजयित्वाततोविष्णुंरक्तमाल्यानुलेपनैः भोक्तव्यंगोर
सप्रायंसुप्तव्यंस्थंडिलेततइति नीलवृषलक्षणंत्वाह हरिहरः लोहितोयस्तुवर्णेनमुखेपुच्छेचपांडुरः श्वेतःखुर-
विषाणाभ्यांसवृषोनीलउच्यते तथान्यत्र चरणाश्चमुखपुच्छंयस्यश्वेतानिगोपतेः लाक्षारससवर्णश्चतंनील
मितिनिर्दिशेत् भूमौकर्षतिलांगूलंप्रलंबस्थलवालधिः पुरस्तदुन्नतोनीलोवृषभस्सप्रशस्यते अन्यत्रापि श्वे
तोदरःकृष्णपृष्ठोब्राह्मणस्यप्रशस्यते स्निग्धवर्णेनरक्तेनक्षत्रियस्यप्रशस्यते कांचनाभेनवैश्यस्यकृष्णःशूद्रस्य
शस्यते यस्यप्रागायतेश्रृंगेभ्रूमुखाभिमुखेसदा सर्वेषामेववर्णानांसचसर्वार्थसाधकइति अस्यामेवभविष्योत्त-
रोक्तं संतानव्रतंकार्यं तदुक्तं हेमाद्रौ ॥ श्रीकृष्णउवाच कार्त्तिक्यामुपवासंयः कन्यांदद्यात्स्वलंकृतां स्वकी
यांपरकीयांवानदीसंगमकेशुभे एतत्संतानकंनामव्रतंसुगतिदायकमिति अस्यामेवराशिव्रतं तदुक्तं हेमाद्रौ
भविष्योत्तरे । श्रीकृष्णउवाच ॥ कार्त्तिक्यांनक्तभुग्दद्यान्मेषंहेमविनिर्मितं मार्गशीर्षेवृषंपुष्येमिथुनेतद्वदेवाहि
एवंक्रमेणयोदद्याद्राशीन्वस्त्रविभूषितान् पौर्णमास्यांतुकौंतेयसुवस्त्रान्बहुदक्षिणान् एतद्राशिव्रतंनामग्रहोपद्र
वनाशनं सर्वाशापूरकंतद्वत्सोमलोकप्रदायकमिति ॥ अस्यामेवकृत्तिकाव्रतंकार्यं तदुक्तं हेमाद्रौ भविष्ये ॥
श्रीकृष्णउवाच ॥ अथातःशृणुभूपालकृत्तिकाव्रतमुत्तमं राज्ञीचभद्रलिंगस्यापुरायस्यप्रभावतः अतीवमहतीं
लब्ध्वाश्रियंजातिस्मराऽभवत् योगेनाततनुंत्यक्त्वापरेब्रह्मण्यलीयत युधिष्ठिरउवाच ॥ कीदृशंतद्व्रतंकृष्णमंत्र
एवतुकीदृशः विधानंकृत्तिकानांचतंचकालंवदस्वमे श्रीकृष्णउवाच ॥ कार्त्तिक्यांपौर्णमास्यांतुगृह्णीयात्कृत्तिका
व्रतं षण्मासांस्तद्व्रतंयावदिदंसंचिंत्यचेतसीत्यादि सौवर्णारौप्यानवनीतासिद्धाः षट्कृत्तिकाश्चणकापिष्टमयाश्च

कृत्वा पात्रेनिधायकुसुमाक्षतधूपदीपैः संपूज्यजन्मगहनंनविशंतिमर्त्याइति इतिकृत्तिकाव्रतं अत्रवमनोरथ
पूर्णिमाव्रतमारंभणीयं तदुक्तंहेमाद्रौ भविष्योत्तरे ॥ कार्त्तिकींतुसमारभ्यसंपूर्णंशशलक्षणं पूजयेदुदयेराजन्स
दानक्ताशनोभवेदित्यादि जनाभिरामश्चशशांकवत्स्याद्धनाधिपालश्चतथैवलक्ष्म्या शक्रेणतुल्यश्चतथैवश
त्त्यामानुष्यमासाद्यभवेत्सराजेत्यंतेन । इतिमनोरथपूर्णिमाव्रतं अत्रैवसौभाग्यव्रतंकार्यं तदुक्तंहेमाद्रौ विष्णु
धर्मे कार्त्तिकेपौर्णमास्यांतुपूर्णंशिशिरदीधितिं पद्मेषोडशपत्रेतुकृत्तिकायांतुपूजयेदित्यादि सौभाग्यदंरूपवि
वर्द्धनंचलावण्यदंस्त्रीरतिभोगदंच कार्यंप्रयत्नेननरेंद्रपुंसांधार्यंतथास्त्रीभिरदीनसत्त्वेत्यंतेन । इतिविष्णुधर्मोक्तं
सौभाग्यव्रतम् अस्यामेवाऽनुष्ठेय कार्तिकव्रतोद्यापनप्रसंगात् कार्तिकस्नानविधिर्लिख्यते तत्र पृथ्वीचंद्रो
दये विष्णुस्मृतिपाद्मयोः ॥ तुलामकरमेषेषुप्रातःस्नानंविधीयते हविष्यंब्रह्मचर्यंचमहापातकनाशनमितिसौरमा
सउक्तः प्राच्याश्चैतदेवाद्रियंते दाक्षिणात्यास्तु आश्विनस्यतुमासस्ययाशुक्लैकादशीभवेत् कार्त्तिकस्यव्र
तानिहतस्यांवैप्रारभेत्सुधीरितिपाद्मोक्तेःभार्गवार्चनेच आरभ्यैकादशींशुक्लामाश्विनस्यतुमानवः प्रातःस्नानंप्रकुर्वी
तयावत्कार्त्तिकभास्करइतिविष्णुरहस्योक्तेः हेमाद्रौच आदित्यपुराणे ॥ पूर्णेआश्वयुजेमासिपौर्णमास्यांसमाहित
इत्युक्त्वा मासंसमग्रंपरयाचभक्त्या समाप्यतेकार्त्तिकपौर्णमास्यामित्यं तेनाऽभिधानाच्चाऽऽश्विनशु
क्लैकादश्यांपौर्णमास्यांवासमापयेदित्याहुः मदनपारिजाते-विष्णुः कार्त्तिकंसकलंमासंनित्यस्नायीजितेंद्रियः ॥
जपन्हविष्यभुक्शांतःसर्वपापैःप्रमुच्यते । अत्रदेशविशेषः पाद्मे कार्त्तिकंप्रक्रम्य कुरुक्षेत्रेकोटिगुणो
गंगायामपितत्समः ततोधिकः पुष्करेस्याद्द्वारावत्यांचभार्गव पुण्याः पुर्यश्चसप्तैवमुनयोमथुराधिकाः दु
र्लभः कार्त्तिकोविप्रमथुरायांनृणामिह यत्रार्चितःस्वकंरूपंभक्तेभ्यः संप्रयच्छतीति इदंचस्नानं काशीस्थपंच

नदेप्यतिप्रशस्तं ॥ शतंसमास्तपस्तप्त्वाकृतेयल्लभ्यतेफलं तत्कार्त्तिकेपंचनदेसकृत्स्नानेनलभ्यते कार्त्तिकेविंदुती
र्थेयोब्रह्मचर्यपरायणःस्नास्यतेनुदितेभानौभानुजातस्यभीःकुतइत्यादिकाशीखंडोक्तेः संपूर्णस्नानाऽशक्तौ ब्रह्मपुराणे
कार्तिकमधिकृत्य ॥ एकादश्यादिपुतथातत्रपंचसुरात्रिषुचः दिनेदिनेचस्नातव्यंशीतलासुनदीषुच वर्जितव्यातथा
हिंसामांसभक्षणमेवचेति काशीखंडे वाराणस्यांपंचनदेत्र्यहंस्नातास्तुकार्त्तिके अमीतेपुण्यवपुषः पुण्यभाजो
तिनिर्मला इति कार्त्तिकेमासिवैयात्राथैःकृताभक्तितत्परैः विंदुतीर्थेकृतस्नानैस्तेषांमुक्तिर्नदूरतइति ॥ मुहूर्तावं
शेषितायांरात्रौतीर्थादौगत्वाप्रत्यहंस्नानंकार्यं नाडीद्वयावशिष्टायांरात्रौगच्छेज्जलाशयमित्यादिपाद्मवचनात् अ
त्रैवप्रसंगात्संक्षेपेणनित्यनैमित्तिकस्नानविधिरुच्यते अंगिराः विनादर्भैश्चयत्स्नानंयच्चदानंविनोदकं असंख्या
तंचयज्जप्तंतत्सर्वंनिष्फलंभवेत् अन्यत्रापि कुशहीनंतुयत्स्नानंमंत्रहीनाचयाक्रिया दानंचदक्षिणाहीनंत्रयंतन्निष्फ
लंभवेत् योगियाज्ञवल्क्यः अरुग्दिवाचरेत्स्नानंमध्यान्हात्प्राग्विशेषतः प्रयतोमृदमादायदूर्वामार्द्रंचगोमयं अरु
गनातुरःविशेषतइतिवचनात् अपराह्णेऽप्यभ्यनुज्ञायते ॥ स्थापयित्वातथादर्भांस्ततःस्नानंसमाचरेत् प्रक्षाल्य
हस्तौपादौचशिखावंधंसमाचरेत् अत्रकुशदूर्वादिकंस्वयमेवानयेत् नतुनद्यादौकंचित्प्रार्थयेत तदुक्तंस्मृतिसागरे ।
जलांतेतिलदर्भांस्तुयोनुष्ठानाययाचते नानुष्ठानफलंतस्यदातुरेवाहितत्फलं मनुःस्नानोपकरणंसर्वंन्यस्यदक्षिणभा
गतःएवंयःकुरुतेस्नानंश्रेयोमहदवाप्नुयात् संग्रहे जलेदेवगृहेचैवशयनेचाद्विजालये निर्णिक्तपादःप्रविशेन्नानिर्णि
क्तःकथंचनेति । अतःस्नाने मललेपसम्भवे शारीरमलक्षालनस्य जलमध्येनिषेधादुद्धृतोदकेनवहिरंगंप्रक्षाल्यन
द्यादौप्रविशेत् शिखावंधनप्रकारमाहव्यासः स्मृत्वौंकारचगायत्रींनिवध्नीयाच्छिखांततः पुनराचम्यहृदयंवाहू
स्कंधौचसंस्पृशेत् कात्यायनसूत्रेच ॥ अथातोनित्यस्नानामित्युपक्रम्य प्रक्षाल्यपाणिपादंकुशोपग्रहोवद्धशिखी

यज्ञोपवीती चजपेदित्युक्तं कुशयुक्तउपग्रहोस्यंउपगृह्यतेऽनेनेत्युपग्रहोहस्तः अत्र सदोपवीतिनाभाव्यंसदाबद्धशिखेः
नचेत्येवंनित्यतयाशिखादिधारणेसिद्धेपि पुनर्विधानंकर्मांगत्वसंपत्त्यर्थंनित्यंहितद्धारणंपुरुषार्थं सदापदात्तत्रैवा
ह्निनष्टेऽपियज्ञोपवीतेतदुत्पाद्यस्नानमितिसिध्यतीतिश्रीदत्तचंडेश्वरादयः तच्चिंत्यं विशिखोप्युपवीतश्चयत्करोतिन
तत्कृतमित्युत्तरार्द्धेनकर्मांगतायाअपिबोधनात् केवलपुरुषार्थत्वेहि शिखोपवीतयोः कर्मार्थितया नित्यप्राप्तत्वात्तत
दर्थविधानमुपपद्यते यदपिपुरुषार्थविधिप्राप्तेयज्ञोपवीतीतिद्वितीयवस्त्रधारणार्थमितिकात्यायनभाष्यं तदपिचिंत्यं
परिसंख्याप्रसंगात् तस्माद्दैवादुत्तरीयासंपत्तौ तदर्थमाधिकमेकंयज्ञोपवीतंविधीयते अतएवोक्तंद्वितीयमुत्तरीयार्थं
वस्त्राभावेतदिष्यतइति एवमनियतकेशवेषाइति स्नानेकेशमोक्षश्रवणाच्छिखामोक्षोपिशंक्यतेतितद्धारणार्थंपुनः
शिखाबंधवचनं यद्यपिमुक्तशिखावर्जमिति तत्रास्ति तथापिप्रमादनिवृत्त्यर्थंदोषभूयस्त्वार्थंवचनमितिकथंचिद्व्या
ख्येयं वामनपुराणे॥निषिच्यतीरेकुशांपजुलानिपूर्वोत्तराग्राणिस्दंन्यसेच्च प्रक्षाल्यपादौचसदेवकंठेयज्ञोपवीतंचजलं
पिबेत्त्रिः कंठेकृत्वानिवीतंकृत्वाप्रक्षालयेदित्यर्थः यमः कराभ्यांधारयेद्दर्भाञ्छिखाबंधंविधायच प्राणायामांस्तथाकु
र्यात्कालज्ञानंयथाविधिकालज्ञानंतात्कालिकतिथिनक्षत्रादिस्मरणंविधायेत्यर्थः मनुः प्रक्षाल्यपादौहस्तौचशुचिरास्न
स्यवाग्यतःतिथिवारादिकंज्ञात्वासुसंकल्पेयथाविधि अत्रादिपदेनवारयोगसंक्रांत्यादेरपिसंग्रहः तत्रतत्रपृथक्श्रव
णात् तत्रतिथिनक्षत्रादीनितात्कालिकान्येवस्मर्तव्यानि तदुक्तमाचारसारे जन्माज्ञाभ्यंगपातादिस्नानदंतक्रियासु
च तिथिस्तात्कालिकीज्ञेयापारणेलेखनेतथेति वारेषुतुदेशांतरवियोगाभ्यांक्वचित्उदयात्प्रागूर्ध्वंवारप्रवृत्तिः तदु
क्तं रत्नमालायां वारप्रवृत्तिंमुनयोवदंतिसूर्योदयाद्रावणराजधान्यां ऊर्ध्वंतथाधोप्यपरत्रतस्माच्चरार्द्धदेशांतरना
डिकाभिः लंकायांसूर्योदयादूर्ध्वमेववारप्रवृत्तिःअन्यदेशेदेशांतरचरवशेनतस्मात्सूर्योदयादूर्ध्वमधोवावारप्रवृत्तिः

इदमेवस्फुटीकृत्याह चरार्द्धदेशांतरयोर्वियोगयोगात्समानीयपलैश्चसम्यक् सूर्योदयादूर्ध्वमृणेधनेऽधोवारप्रवृ
त्तिंमुनयोवदंति अयमर्थः स्फुटगणितद्वारा स्फुटचरधनमानीयदेशांतरमथानयेत् तदोभयोरंकयोर्द्धनत्वे ऋणत्वेच
योगःकार्यः वैजात्येचाधिकेऋणेप्रपात्यं शेषेऋणांकेसतितावद्घटिकाभिर्वारप्रवृत्तिः धनांकेतु प्रागिति एवंस्थिते
उपासिस्नानविधानाद्रविवारस्नानविधानाद्रविवारादेरुदयोत्तरंप्रवृत्तौ तन्निमित्तकस्नानादौचार्वाक् शनिवासरःकीर्त्त
नीयःरविवारस्नानंतुसोमवासरेप्रागुदयात्कार्यमेवमुत्तरमप्यपकर्ष्यइतिप्राप्तेनचैतन्न्याय्यं आचारविरोधात् अत्रा
हुःएतद्देशांतरवियोगयोगाभ्यांवारप्रवृत्त्यभिधानं तत्प्रयुक्तकार्येषु गुणदोषप्राबल्याप्राबल्यबोधनपरं पातंगिवारस्य
दिनाधिपत्यमित्याधिपत्याभिधानवत् अतएवैकस्मिन्नपिवासरेऽनेकवारप्रवृत्त्यभिधानं यात्रादौ गुणदोषाभाव
प्रतिपादकमेव एवंच नित्यावारप्रवृत्तिरर्द्धबिंबदर्शनादेव सामान्यशास्त्रसिद्धत्वात् एवंचनित्यस्नानादौ यद्यप्युष
कालेउपरितनोवारोनास्ति तथापि तस्यतिथिवशात्तात्कालिकत्वस्मरणाद्भाविनोपिकीर्त्तनं किंच अस्नातस्याक्रि
याःसर्वाभवंतिह्यफलायतः प्रातःसमाचरेत्स्नानंतच्चनित्यमितिस्मृतमितिमार्कण्डेयवचनेन प्रातःस्नातस्या
हःकर्त्तव्यकर्मांगतायाबोधितत्वात्तदहः कर्त्तव्यकर्मोद्देशके स्नाने तदहस्तिथिवारादिचकीर्त्तयितुमुचितम् तिथौतु
वचनाद्बाधः नत्वेतद्वारेऽस्ति अतएवसंध्ययोर्भेदेनोपादानमित्यन्यत्रविस्तरः एवंच तदहर्वर्त्तितरणिकिरणाव
च्छिन्नेपिकाले सएववारउत्कीर्त्तनीयइतिसिद्धं यत्पुनर्वारयोगसापेक्षनैमित्तिकभद्रोदयादिस्नानं तत्तदानींनभवति
अर्कवारादेर्वस्तुतस्तदभावात् अहःकर्म्मांगत्वाच्च नतदनुरोधेनतदुन्नयनमपीति एवंमलापकर्षणस्नानेऽपिनत
दार्कवारादिप्रयुक्तोनिषेधः महाजनाचारोप्येवमेव अतएवकाम्यमपि सूर्यार्द्धबिंबदर्शनादूर्ध्वमेवभवति का
म्येमुख्यकालस्यैवांगत्वात् यदितुकाम्येपापार्कस्नानादावनुदितकोविधिरपितत्रवचनादेवभाविनोप्यर्कवारादेः

कीर्त्तनंकार्यमिति वस्तुतस्तु रविवासरनिमित्तिकस्नानं शनिवासरान्वितायामस्यां तिथौ करिष्य इत्येव संकल्प यितुमुचितम् कालविशेषस्यवासरस्य सप्तम्यधिकरणेनोत्कीर्त्तितस्य विद्यमानस्यैवाधिकरणत्वसंभवेनाविद्यमानस्याधिकरणत्वेनोत्कीर्त्तनासंभवात् एवंव्यतीपातादियोगादेरपिविद्यमानस्यैवसंकल्पादावुत्कीर्त्तनंवोध्यम् न चतिथौतात्कालिकत्ववचनादविद्यमानस्यापि वारादेः संकल्पादावुत्कीर्त्तनासंभवइतिवाच्यम् तिथौतात्कालिकत्ववचनस्य त्रिदोषपरिसंख्याविधिवत्प्रसंगेन यांतिथिमित्यादिसाकल्यवोधकवचनप्रसक्तसाकल्यत्वेन वारादौतात्कालिकव्यवच्छेदकत्वासम्भवात् यद्यपि निमित्तस्यत्वास्मिन्स्वत्ववशानुष्ठायकस्यविद्यमानस्यैवोल्लेखोयुक्तस्तथापिग्रंथादौमंगलाचरणेनिमित्तत्वस्यदृष्टत्वेनाविद्यमानस्यापि रविवासरादेररुणोदयकालेविधायकवचनवशादरुणोदयकालेऽनुष्ठीयमानंरविवासरसंबंधिक्रियांगं प्रातःस्नानं प्रतिनिमित्तत्वं युक्तं नचाचारविरोधः प्राप्ताचारानुरोधेन शास्त्रार्थस्य व्यवस्थापयितुमशक्यत्वादितिकृतबुद्धयोविदांकुर्वंत्वित्यलम् इदंचप्रातःस्नानंसंध्यांकृत्वाकार्यं तेनविनेतरकर्मानाधिकारादितिवर्द्धमानः यद्यपि प्रातःस्नानोत्तरंप्रातःसंध्यायाः ॥ पूर्वमेवकार्त्तिकादिस्नानंविधातुमुचित प्रातःसंध्यायाः सूर्योदयोत्तरं समाप्यत्वेनानुदिते भानौ विहितस्यस्नानस्य प्रातःपश्चादनुष्ठेयत्वंच तत्रैव कार्त्तिकेऽहंकरिष्यामिप्रातःस्नानंजनार्दन प्रीत्यर्थंतवदेवेशदामोदरमयासह ध्यात्वाहंत्वांचदेवेशजलेऽस्मिन्स्नातुमुद्यतः तवप्रसादात्पापंमेदामोदरविनश्यतु इमौमंत्रौसमुच्चार्यमौनीस्नायाद्व्रतीनरइति अर्घ्यमंत्रावपि तत्रैव व्रतिनःकार्त्तिकेमासिस्नातस्यविधिवन्मम गृहाणार्घ्यंमयादत्तंदनुजेंद्रनिषूदन नित्येनैमित्तिकेकृष्णकार्त्तिकेपापनाशनं गृहाणार्घ्यंमयादत्तंराधयासहितोहरे इमौमंत्रौसमुच्चार्य योर्घ्यंमह्यंप्रयच्छति सुवर्णरत्नपुष्पांबुपूर्णशंखेनपुण्यवान् सुवर्णपूर्णापृथिवीतेनदत्तानसंशयइति अन्योपि

स्नानगतोविशेषः पाद्मे स्मृत्वाभागीरथींविष्णुंशिवंसूर्यंजलेविशेत् नाभिमात्रेजलेतिष्ठन्व्रतीस्नायाद्यथा विधि तिलामलकचूर्णेनगृहीस्नानंसमाचरेत् वनस्थानांयतीनांचतुलसीमूलामिश्रितामिति स्नानसाधन मितिशेषः सप्तमीदर्शनवमीद्वितीयादशमीषुच त्रयोदश्यांचनस्नायाद्धात्रीफलतिलैः सहेति पाद्मे कार्त्तिकेना र्चितोयैस्तुकमलैःकमलेक्षणः जन्मकोटिषुविप्रेंद्रनतेषांकमलागृहे नारसिंहे विहायसर्वपुष्पाणिमुनिपुष्पेणके शवं कार्त्तिकेयोऽर्चयेद्भक्त्यावाजिमेधफलंलभेत् ॥ कार्त्तिकेतुलसीमाहात्म्यं पाद्मे तुलसीकाननंराजन्गृहेयस्या वतिष्ठते तद्गृहंतीर्थरूपंतुनायांतियमकिंकराः रोपणात्पालनात्स्पर्शान्नृणांपापहरातथा तुलसीहरतेपापंवाङ्म नःकायसंभवं तुलसीमंजरीभिर्यःकुर्याद्धरिहरार्चनं नसगर्भगृहयातिमुक्तिभागीनसंशयइति तुलसीविपिनच्छा यामत्रयत्रभवेन्नृप तत्रश्राद्धंप्रकुर्वीतपितॄणांदत्तमक्षयमिति तुलसीदललक्षेणकार्त्तिकेयोऽर्चयेद्धरिं पत्रेपत्रेमुनिश्रे ष्ठलभतेमौक्तिकफलं स्कांदे कार्त्तिकमाहात्म्ये ॥ मालतीमालयाविष्णुःकेतक्याचैवपूजितः समासहस्रंसंप्री तोभवतेमधुसूदनः तथा कार्त्तिकेकेशवीपूजायेषांनाम्नासुतैःकृता तेनिर्भर्त्स्यरवेःपुत्रंवसंतिदिविवैसदा तथा स्कांदेद्वारिकामाहात्म्ये ॥ निवेद्यकेशवेमालांतुलसीकाष्ठसंभवां वहतेयोनरोभक्त्यातस्यनास्तीहपातकं नजह्यात्तुलसीमालांकार्त्तिकेचविशेषतः महापातकसंहर्त्रींधर्मकामार्थदायिनीं स्पृशंतुयानिलोमानिधात्री मालाकलौनृणां तावद्वर्षसहस्राणिवैकुंठेवसतिर्भवेत् मालांनित्यंनरोभक्त्याधात्रीतुलसिसंभवां वहते कंठदेशेतुकल्पकोटींदिवंवसेत् तुलसीकाष्ठसंभूतेमालेकृष्णप्रियंकरि विभर्मित्वामहंकंठेकुरुमांकृष्णवल्लभं एवं संप्रार्थ्यविधिवन्मालांकृष्णगलेर्पितां धारयेत्कार्त्तिकेयोवैसगच्छेद्वैष्णवंपदमिति स्कांदे कार्त्तिक माहात्म्ये ॥ धात्रीमूलेतुयःकुर्यात्पिंडदानंमहामते मुक्तिंप्रयांतिपितरःप्रसादान्माधवस्यतु धात्रीफल

विलिप्तांगोधात्रीफलविभूषितः धात्रीफलकृताहारोनरोनारायणोभवेत् ॥ धात्रीछायांसमाश्रित्ययोर्चयेच्चक्रपा
णिनं पुष्पेपुष्पेऽश्वमेधस्यफलंप्राप्नोतिमानवः तीर्थानिमुनयोदेवायज्ञाःसर्वेऽपिकार्त्तिके नित्यंधात्रींसमाश्रित्य
तिष्ठन्त्यर्केतुलास्थितइति अत्रैव धात्रीपूजनं कृत्वाप्रार्थयेत धात्रिदेविनमस्तुभ्यंसर्वपापक्षयंकरि पुत्रान्देहि
महापुण्येयशोदेहिबलंचमइति ॥ तथास्कांदे ॥ कार्त्तिकेमासिविप्रेंद्रधात्रीवृक्षोपशोभिते वनेदामोदरंविष्णुं
चित्रान्नैस्तोषयेद्विभुं मूलेनपायसेनाथहोमंकुर्याद्विचक्षणः ब्राह्मणान्भोजयेच्छक्त्यास्वयंभुंजीतबंधुभिरिति अ
थजागरणविधिः पाद्मे जागरंकार्त्तिकेमासियःकुर्यादरुणोदये दामोदराग्रेसेनाग्र्यगोसहस्रफलंलभेदित्यादि
कार्त्तिके द्विदलव्रतंप्रागुक्तं कार्त्तिकेद्विदलंत्यजेदिति पाद्मे कार्त्तिकमाहात्म्ये ॥ राजिकांमादकंचैववनैवाधात्का
र्त्तिकेव्रती द्विदलंतिलतैलंचतथान्यत्सुविदूषितं स्कांदेपि कार्त्तिकेवर्जयेत्तद्वद्द्विदलंबहुवीजकं माषमुद्गम
सूराश्चचणकाश्चकुलत्थकाः निष्पावाराजमापाश्चआढक्योद्विदलंस्मृतं नूतनान्यपिजीर्णानिसर्वाण्येतानिव
र्जयेत् अत्रकेचिदुत्पत्तिसमयेदलद्वयंयस्यभवतितद्व्रतपूर्वगत्याद्विदलमुच्यतइत्याहुः उदाहरंतिच वीजमेव
समुद्भूतंद्विदलंचांकुरंविना दृश्यतेयत्रसस्येपुद्विदलंतन्निगद्यते अन्येतु लक्षणायांमानाभावाद्वचनस्यच निर्मूल
त्वाद्द्विदलात्मकंयस्यस्वरूपंतदेववर्जयेदित्याहुःअन्यान्यपिवर्ज्यान्युक्तानि पाद्मे पलांडुंलशुनंहिंगुंछत्राकंगृंजनं
तथात्तालिकांमूलकंशिग्रुंवर्जयेत्कार्त्तिकेव्रती अलाबुंचापिंटंताकंकूष्मांडंवृहतीफलं कालिंगंचकपित्थंचवर्जयेद्वैष्णवो
व्रती कार्त्तिकेतुविशेषेणराजमाषान्नभक्षयेत् निष्पावान्मुनिशार्दूलयावदाभूतन्नारकीति पटोलान्यपिनभक्षयेदि
त्यादि लघुनारदीये ॥ कार्त्तिकेवर्जयेत्तैलंकार्त्तिकेवर्जयेन्मधु कार्त्तिकेवर्जयेत्कांस्यं कार्त्तिकेशुक्तसंधितं कां
स्येतत्पात्रभोजनं । कार्त्तिके यत्यादिर्मासोपवासंकुर्यान्नतुगृहस्थः ॥ वानप्रस्थोयतिर्वापिनारीवाविधवामुने सा

सोपवासंकुर्वीतगुरोर्विप्राज्ञयायतः आश्विनस्यामलेपक्षेएकादश्यामुपोषितः व्रतमेतत्तुगृह्णीयाद्यावत्त्रिंशद्दिना
निवृत्तिति प्रकृत्य नगृहस्थश्चरेद्व्रतमिति पाद्मोक्तेः । साधितंलवणशाक·यत्स्वयमम्लंकेवलकालपरिवासेन द्र
व्यांतरसंसर्गकालपरिवासाभ्यांवाअम्लीभवति तत् शुक्तमितिमिताक्षरायाम् तथा कार्त्तिकेकृष्णसेवीयः प्राजा
पत्यपरोथवा । एकांतरोपवासीवात्रिरात्रोपोषितोऽपिवा यद्वाद्वादशपक्षंवामासंवावरवर्णिनि एकभक्तेननक्ते
नतथैवायाचितेनच उपवासेनभैक्षेणव्रतमेतत्परंपदं तथा कार्तिकेआकाशदीपउक्तोनिर्णयामृते पुष्करपुराणे ॥
तुलायांतिलतैलेनसायंकालेसमागते आकाशदीपंयोदद्यान्मासमेकंहरिंप्रति महतींश्रियमाप्नोतिरूपसौभाग्य
संपदमिति तद्विधिश्च हेमाद्रौ आदित्यपुराणे ॥ दिवाकरेऽस्ताचलमौलिभूतेगृहाददूरेपुरुषप्रमाणं यूपाकृतिं
यज्ञियवृक्षदारुमारोप्यभूमावथतस्यमूर्ध्नि पंचांगुलच्छिद्रयुतास्तुमध्येद्विहस्तदीर्घाअथपट्टिकारतु कृत्वाचतस्रो
ष्टदलाकृतीस्तुयाभिर्भवेदष्टदिशानुसारी तत्कर्णिकायांतुमहाप्रकाशोदीपः प्रदेयोदलगास्तथाष्टौ निवेद्य
धर्मायहरायभूम्यैदामोदरायाप्यथधर्मराज्ञे प्रजापतिभ्यस्त्वथचसपितृभ्यः प्रेतेभ्यएवाथनभःस्थितेभ्य इत्या
दिविस्तरस्तत्रैववोध्यः ॥ अपरार्के भविष्योत्तरेतु ॥ विष्णोरायतनेयस्तुसहस्रंयाददीपकान्
प्रज्वालयत्यनुदिनंदिवारात्रमतंद्रितः ॥ तमिस्त्रमश्वयुक्पक्षंशुक्लपक्षंतु कार्त्तिकं सयातिभवनंविष्णो
स्तेजोमयवपुःपुमान् दीपदानेमंत्रउक्तः यथा दामोदरायनभसितुलायांदोलयासह प्रदीपंतेप्रयच्छामि
नमोनंतायवेधसइति अन्यदपि स्कांदे व्रीहयोयवगोधूमाः प्रियंगुतिलशालयः एतेऽतिसात्त्विकाः
प्रोक्ताः स्वर्गमोक्षफलप्रदाः काशीखंडे ऊर्जेयवान्नमश्नीयादेकान्नमथवापुनः वृंताकंसूरणंचैवशूकशिंबीं
श्चवर्जयेत् पृथ्वीचंद्रोदये पाद्मे नोर्जोवध्योविधातव्योव्रतिनाकेनचित्कचित् अव्रतेनक्षिपेद्यस्तुमासंदामोदर

श्रियं तिर्यग्योनिमवाप्नोति नाऽत्रकार्याविचारणा अन्यान्यपितांबूलतैलकेशकर्त्तनादिवर्ज्जसंकल्परूपाणि
प्रागुक्तानि अत्रैव प्रसंगात् भीष्मपंचकव्रतं लिख्यते नारदीयपुराणे- नारदउवाच यदेतदचलंपुण्य
व्रतानांपरमंव्रतम् कर्त्तव्यंकार्त्तिकेमासिप्रयत्नाद्भीष्मपचक विधानंतस्यविस्पष्टंफलंचसुरसत्तम -कथय
स्वप्रसादान्मेजनानांहितकाम्यया ब्रह्मोवाच प्रवक्ष्यामिमहापुण्यंव्रतंव्रतवतांवर भीष्मेणैतद्यतःप्राप्तंव्र
तंपंचदिनात्मकं सकाशाद्वासुदेवस्यतेनोक्तंभीष्मपंचकं व्रतस्यास्यगुणान्वक्तुंकःशक्त.केशवादृते व्रतंचैत
न्महापुण्यंमहापातकनाशनं अतोनरैःप्रयत्नेनकर्त्तव्यंभीष्मपंचकं कार्त्तिकस्यामलेपक्षेस्नात्वासम्यक्यतव्रतः
एकादश्यांतुगृह्णीयात् व्रतंपंचदिनात्मकं प्रातःस्नात्वाविधानेनमध्यान्हेचतथाव्रती नद्यांनिर्जरगर्त्तेवासमा
लभ्यचगोमयं यवव्रीहितिलैसम्यक्पित्व्हन्सतर्पयेत्क्रमात् स्नात्वामौनंतत कृत्वाधौतवासादृढव्रतः ततःसंपूजये
द्देवंसर्वपापहरंपरं स्नापयेच्चाच्युतंभक्त्यामधुक्षीरघृतेनच तथैवपंचगव्येनगंधचंदनवारिणा. चंदनेनसुगंधे
नकुंकुमेनाथकेशवं कर्पूरोशीरमिश्रेणलेपयेद्गरुडध्वजं- अर्चयेदुचितैःपुष्पैर्गंधधूपसमन्वितैः गुग्गुलघृतसंयु
क्तंदहेदक्षयभक्तिमान् दीपकंतुदिवारात्रौदद्यात्पंचदिनानितु नैवेद्यंदेवदेवस्यपरमान्ननिवेदयेत् एवमभ्युच्यं
देवेशंस्तुत्वाचैवप्रणम्यच ओंनमोभगवतेवासुदेवेतिजपेदष्टोत्तरंशतं जहुयाच्चघृताभ्यक्ततिलव्रीहियवंव्रती - ॥
षडक्षरेणमंत्रेणस्वाहाकारान्वितेनच ओंनमोविष्णवेइतिषडक्षरः उपास्यपश्चिमांसंध्यांप्रणम्यगरुडध्वजं जपि
त्वापूर्ववन्मंत्रंक्षितिशायीभवेन्नरः सर्वमेतद्विधानंतुकार्यंपचदिनेष्वपि - विशेषोक्तंव्रतेचास्मिन्यदन्यूनंशृणुष्व
तत् · विशेषोक्तंदिनाविशेषपुरस्कारेणोक्तं ॥ प्रथमेऽह्निहरेःपादौपूजयेत्कमलैर्नरः-द्वितीयेविल्वपत्रेणजानुदेशंस
मर्चयेत् पूजयेच्चतृतीयेह्निनाभिंभृंगारकेणतु वाणाविल्वजपाभिश्चततःस्कंधौसमर्चयेत् ततोऽनुपूजयेच्छी-

पंमालत्याचक्रपाणिनः कार्त्तिक्यांदेवदेवस्यभक्त्यातद्गतमानसः पूजयेज्जपमंत्रेणगंधधूपंनिवेदयेत् अर्चयित्वाहृ
षीकेशमेकादश्यांसमाहितःत्रिःप्राश्यगोमयंसम्यगेकादश्यामुपावसेत् गोमूत्रमंत्रवद्भूयोद्वादश्यांप्राशयेद्व्रतीक्षी रं
चैवत्रयोदश्यांचतुर्दश्यांतथादधि संप्राश्यंकायशुद्ध्यर्थंलंघनीयंचतुर्थकं प्राशनंहोममंत्रेणकर्त्तव्यंभूतिमिच्छता-
पंचमेतुदिनेस्नात्वाविधिवत्पूज्यकेशवं भोजयेद्ब्राह्मणान्भक्त्यातेभ्योदद्याच्चदक्षिणां ततोनक्तंसमश्नीयात्पंचगव्य
पुरस्सरं एवंसम्यक्समाप्यंस्याद्यथोक्तंव्रतमुत्तमं । जन्मप्रभृतियन्मांसंत्यक्त्वापुण्यमवाप्नुयात् तत्फलंसमवाप्नो
तित्यक्त्वासौभीष्मपंचके मद्यपोयस्तुजन्माद्यजन्मतोमरणांतिक तद्भीष्मपंचकेत्यक्त्वासंप्राप्नोत्याधिकंफलं भवि-
ष्योत्तरे । श्रीकृष्णउवाच कार्त्तिकेशुक्लपक्षस्यशृणुधर्मंपुरातनं एकादश्यांसमारभ्यविज्ञेयंभीष्मपंचकं दुष्क.
रंसत्वहीनानामशक्यवालचेतसां परार्द्धःपरिहर्तव्याब्रह्मचर्येणनिष्ठया मद्यमांसमसत्यंचवर्जयेत्पापभाषणं
शाकाहारेणमुत्यन्नै.कृष्णार्चनपरैर्नरैः स्त्रीभिर्वाक्येनकर्त्तव्यंस्वपतेःपुण्यवर्द्धनं विधवाभिस्तुकर्त्तव्यंपुत्राणां
शुभवृद्धये सर्वकामसमृद्ध्यर्थंमोक्षार्थंचैवपांडव नित्यंस्नानेनदानेनकार्त्तिकंयावदेवतु वैश्वदेवस्तुकर्त्तव्यो
विष्णुध्यानपरायणैः वैश्वदेव.सर्वदेवताहोमः ततश्चविभूतित्वेनभावनायाः यमस्यप्रतिमाकार्यारौद्रवक्त्रा-
तिभीषणा हस्वह'स्ता तिविकृतालौहीदंष्ट्राकरालिनी तिलप्रस्थोपरिस्थाप्याकृष्णवस्त्रेणवेष्टिता रक्तपु
ष्पकृतापीडाज्वलत्कांचनकुंडला संपूज्यपरयाभक्त्याधर्मराजस्यनामभिः इममुच्चारयेन्मंत्रंगृहीतकुसुमांजलिः
यदन्यजन्मनिकृतमिहजन्मनिवापुनः पापंमेशममायातुतवपादप्रसादतः एवंसंपूज्यविधिवत्प्रति
मांचसकांचनां सकांचनासुवर्णदक्षिणायुक्ता ॥ वाचकायप्रदातव्याधर्मोमेप्रीयतामिति तद्वच्चदेवदेवस्य
कृष्णस्याक्लिष्टकारिणः तद्वदितियमप्रतिमावदेवकृत्वापूजांयथाशक्त्याविप्राणांवेदवेदिनां दद्याद्धिरण्यंगांचै

वकृष्णोमेप्रीयतामिति ॥ कृतकृत्यःस्थिरोभूत्वाविरक्तः संयतोभवेत् शांतचेतानिराबाधः परंपदमवाप्नुयात्
नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुज· अष्टपादेकनयनः शंकुकर्णोमहास्वनः जटीद्विजिव्हस्ताम्रास्योमृग
राजतनुच्छदःचिंतनीयोमहादेवोयस्यरूपंनस्याद्विद्यते ॥ व्रतदेवतायामहाविष्णोरिदंरूपंचिंत्यं पूज्यंच मृगरा
जतनुच्छदः प्रावृतसिहवल्कलः ॥ पाद्मेतु ॥ स्नात्वामौनंनरःकृत्वाधौतवासादृढव्रतः भीष्मायोदकदानंचअर्घ्यंचै
वप्रयत्नतः दद्यादितिशेषः पूजाभीष्मस्यकर्त्तव्यादानंदद्यात्प्रयत्नत· पंचरत्नंविशेषेणदद्याद्विप्रायसत्नतः अर्घ्यो
दकदानमंत्रौभीष्माष्टमीप्रकरणेद्रष्टव्यौ इदंभीष्मेणकथितंशरतल्पगतेनमे तदेतत्तेमयाख्यातंदुष्करंभीष्मपंचकं
धन्यंपुण्यंपापहरयुधिष्ठिरमहाव्रतं यच्चीर्त्वाब्रह्महागोघ्नःसर्वपापैःप्रमुच्यते यद्भीष्मपंचकमितिप्रथितंपृथिव्यामे
कादशीप्रभृतिपंचदशीनिरुद्धं मुन्यन्नभोजनपरस्यनरस्यतस्मिन्निष्टंफलंदिशतिपांडवशार्ङ्गधन्वा इतिभीष्मपंच
कव्रतम् ® अथकार्तिकोद्यापनविधिः॥ अथोर्जव्रतिन·सम्यगुद्यापनविधिंनृप त्वंशृणुष्वमयाख्यातंसविधानंविशेष
तःऊर्जशुक्लचतुर्दश्यांकुर्यादुद्यापनंव्रती व्रतसंपूर्णतार्थायविष्णुप्रीत्यर्थमेवच तुलस्याउपरिष्टात्तुकुर्यान्मंडपिकांशुभां
द्वारेषुद्वारपालांश्चपूजयेन्मृण्मयान्पृथक् पुण्यशीलंसुशीलंचजयंविजयमेवच तुलसीमूलदेशेतुसर्वतोभद्रमेवच पंच
भिर्वर्णकैःसम्यक्शोभाढ्यंसमलंकृतंसप्तधान्यंचोपरिष्टात्पंचरत्नसमन्वितंमहाफलेनसंयुक्तंकुंभंतत्रनिधायचपूजये
त्तत्रदेवेशंशंखचक्रगदाधरं कौशेयपीतवसनंयुक्तंजलधिकन्ययाइंद्रादिलोकपालांश्चमंडलेपूजयेद्व्रती द्वादश्यांप्रति
बुद्धोसौत्रयोदश्यांयतःसुरैः दृष्टोर्चितश्चतुर्दश्यांतस्मात्पूज्यस्तथात्विह तस्यामुपवसेद्भक्त्याशांतःप्रयतमानसः
पूजयेद्देवदेवेशंसौवर्णंगुर्वनुज्ञया उपचारैःषोडशभिर्नानाभक्ष्यसमान्वितैः रात्रौजागरणंकुर्याद्गीतवाद्यादिमंगलैः
ततस्तुपौर्णमास्यांचसपत्नीकान्द्विजोत्तमान् त्रिशन्मितांस्तथैकंस्वशक्त्यावानिमंत्रयेत् अतोदेवाइतिद्वाभ्यां

जुहुयात्तिलपायसं प्रीत्यर्थंदेवदेवस्यदेवानांचपृथक्पृथक् दक्षिणांचयथाशक्तिप्रदद्यात्प्रणमेत्ततान् गुरुंव्रतोपदे
ष्टारंवस्त्रालंकरणादिभिः सपत्नीकंसमभ्यर्च्यतांश्चविप्रान्क्षमापयेत् युष्मत्प्रसादाद्देवेशःप्रसन्नोममकेशवः पा
पंप्रणाशमायातुस्थिरामेचास्तुसंततिः मनोरथाश्चसफलाःसंतुनित्यंतवार्चनात् देहांतेवैष्णवंस्थानं प्राप्नु
यामतिदुर्लभं इतिक्षमाप्यतान्विप्रान्प्रसाद्यचविसर्जयेत् तामर्चांगुरवेदद्याद्वस्त्रयुक्तांतदाव्रती ततोगांकपि
लांदद्याच्छय्यांसोपस्करांततः सुहृद्गुरुयुतःसायंस्वयंभुंजीतभक्तिमान् कार्त्तिकेवाथतपसिविधिरेवंविधोमतइ
ति कपिलाधेनुदानं मदनरत्ने व्यासः । रुक्मशृंगींरौप्यखुरांसवस्त्रांकांस्यदोहनां सवत्सांकपिलांदत्वावं
शान्सप्तसमुद्धरेत् यावंतिचास्यारोमाणिसवत्सायाभवंतिहि सुरभीलोकमासाद्यरमते तावतीःसमाः अस्या
दानमंत्रोमत्स्यपुराणे । कपिलेसर्वभूतानांपूजनीयासिरोहिणी-तीर्थदेवमयीयस्मादतःशांतिंप्रयच्छमे॥यमः॥ रुक्म
शृंगींरौप्यखुरांमुक्तालांगूलभूषितां कांस्योपदोहनांधेनुंवस्त्रच्छन्नामलंकृतां दत्वाद्विजेंद्रायनरः स्वर्गलोकेमहीयते
दशधेनुप्रदानेनतुल्यैकाकपिलातथा॥आदित्यपुराणे ॥ सहस्रंयोगवांदद्यात्कपिलांवापिसुव्रत सममेवपुराप्राहब्र
ह्माब्रह्मविदांवर कूर्मपुराणे दशसौवर्णिकेशृंगेखुरा पंचपलान्विताः पंचाशत्पलिकंताम्रंकांस्यंवैतावदेवच वस्त्रं
तुद्विगुणंधेन्वादक्षिणाचचतुर्गुणा एतैरलंकृतांधेनुंघंटाभरणभूषितां कपिलांविप्रमुख्यायदत्वामोक्षमवाप्नुयात् द्वि
गुणोपस्करोपेतामहतीपरिकीर्तिता दत्तासाविप्रमुख्यायस्वर्गमोक्षफलप्रदा सप्तजन्मकृतात्पापान्मुच्यतेदशसं
युतः॥ दशभिःपुत्रादिभिःपुरुषैःसंयुतः॥ यान्यान्प्रार्थयतेकामांस्तांस्तान्प्राप्नोतिमानवः अंतेस्वर्गापवर्गौचफल
मप्नोत्यसंशयं वस्त्रदक्षिणयोस्त्रैगुण्यादिकगोदानसामान्योपकल्पवस्त्राद्यपेक्षयेतिज्ञातव्यं विधिस्तुगोदानप्र
करणेवक्ष्यते इयमेववर्णभेदेनदशधोक्ता वराहपुराणे ॥ सवर्णाकपिलापूर्वाद्वितीयागौरपिंगला तृतीयाचैव

रक्ताक्षीचतुर्थागुडपिंगला नवमीपाटलाज्ञेयादशमीपुच्छपिंगला एतादशसमाख्याताःकपिलास्तावरानने स
र्वाह्येतामहाभागास्तारयंतिनसंशयः सर्वाएवप्रशस्ताश्चसर्वपापप्रणाशनाः अतिदाननिरूपणं भविष्य
त्पुराणे त्रीण्याहुरतिदानानिगावःपृथ्वीसरस्वती नरकादुद्धरंत्येताजपवापनदोहनैः तत्रगोदाननिरूपणंमहा
भारते दानानामिहसर्वेषांगवांदानंविशिष्यते गावःश्रेष्ठाःपवित्राश्चपावनाजगदुत्तमाः ऋतेदधिघृताभ्यां
चनेहयज्ञःप्रवर्त्तते तेनयज्ञावशेषंचगोमूलंसंप्रचक्षते लिंगपुराणे । यान्यागाराणिविप्राणांदेवतनायतानिच
पूयंतेशक्तायासांकिंदेयमधिकंततः ॥ हारीतः ॥ बहुक्षीरांचयोगांवैब्राह्मणायोपपादयेत् उत्तारयेत्सआत्मानंसदा
समकुलानिच देवलः सुशीलांलक्षणवतींयुवतींवत्ससंयुतां वराश्चाप्सरसोयत्रतत्रगच्छंतिगोप्रदाः तथा या
वंतिरोमाणिभवंतिधेन्वास्तावंतिवर्षाणिमहीयतेरिव स्वर्गाच्च्युतस्यापिततोत्रलोकेकुलेसमुत्पत्स्यतिगोमतांसः
जावालिः होमार्थमग्निहोत्रस्ययोगांदद्यादयाचितां सुवित्तपूर्णपृथिवीतेनदत्तानसंशयः आत्रेयः अकुलीनाय
मूर्खायलुब्धायपिशुनायच हव्यकव्यव्यपेतायगौर्नदेयाकथंचन ब्रह्मपुराणे पीतोदकांरोगवतींदुग्धदोषां
निरिंद्रियं उन्मत्तामंगहीनांचमृतवत्सामहाशनां केशवेलपुरीपास्थिक्रव्यादांसंधिनींखलां पुटधेनुंस्खलद्
गर्भांनित्यंप्रश्रवणस्तनीं नदद्याद्ब्राह्मणेभ्यश्चसदोषंवृषभंतथा पीतोदकांजग्धतृणामितिवृद्धोपलक्षणम् दुग्ध
दोषांस्वकीयस्तनपायिनीं पुटधेनुर्बालवत्सैवयागर्भिणी व्यासः नकृशांपापवत्सांवावंध्यांरोगान्वितांतथा
नव्यंगांनपरिश्रांतांदद्याद्गांब्राह्मणायच विश्वामित्रः नैकशृंगांचलच्छृंगांस्फुटिताक्षींचलत्खुरां नदद्यात्रिस्तनींचै
वगांशुभामेवदापयेत् महाभारते अंतर्जातासक्रयाज्ञानलब्धाः प्राणक्रीतानिर्जिताः स्वौकजाश्च कृच्छ्रो
त्सृष्टाःपोषणाभ्यागताश्चद्वारैरेतैर्गोविशेषाःप्रशस्ताः अंतर्जातगर्भिण्यःज्ञानंविद्या प्राणक्रीतायुद्धादिना स्वौ

कजागृहजाताः कृच्छ्रोत्सृष्टाइत्यादिव्याध्याक्रांतास्संत्यः स्थानात्त्यक्ताःस्वयंपोषणंकृत्वालब्धाः तत्रैव एकां
गादशगुर्दद्यादशदद्याच्चगोशती शतंसहस्रगुर्दद्यात्सर्वास्तुल्यफलान्विताः नंदिपुराणे विधिनातुयदादत्ता-
मोत्रधेनुःसदक्षिणा तदातारयतेजंतून्कल्पानामयुतैःशतैः अथगोदानविधिः विश्वामित्रः । प्राङ्मुखींगां
सवस्थाप्यसवत्सांतांसुपूजितां पुच्छदेशेतुदातावैस्नातोवद्धशिखोभवेत् उदङ्मुखस्तुविप्रःस्यात्पात्रलक्षणलक्षितः
आज्यपात्रंकरेकृत्वाकनकेनसमन्वितं निक्षिप्यपुच्छंतस्मिंस्तुघृतादिग्धंप्रसह्यच सतिलंविप्रपाणितुप्रागग्रंतुनि-
धापयेत् सतिलंसकुशंचापिगृहीत्वादानमाचरेत् अनेनैवतुमंत्रेणपात्रहस्तेजलंक्षिपेत् यज्ञसाधनभूतायावि
श्वस्याघप्रणाशिनी विश्वरूपधरादेवःप्रीयतामनयागवा अनुव्रज्यचतांधेनुंब्राह्मणेनसमन्वितां गोमतीतुत-
तोविद्यांजपेतप्रयतःशुचिः उद्दिश्यवासुदेवचप्रीयतामितिवाचनं पात्रंमनासिसंचिंत्यतोयमप्सुविनिःक्षिपेत्
जलशायीब्रह्मपितापद्मनाभःसनातनः अनंतभोगशयनःप्रीयतांपरमःपिता गोमतीविद्यामहाभारतेदर्शिता ॥
गावोमामुपतिष्ठंतुहेमशृंग्यःपयोमुचः सुरभ्यःसौरभेय्यश्चसरितःसागरंयथा गावैपश्याम्यहंनित्यंगावःपश्यं-
तुसर्वदा गावोस्माकंवयंतासांयतोगावस्ततोवयं तथायमेनापि गावःसुरभयोनित्यंगावोगुग्गुलुगंधिकाः
गावःप्रतिष्ठाभूतानांगावःस्वस्त्ययनंमहत् अन्नमेवपरंगावोदेवानांहविरुत्तमम् जीवनंसर्वभूतानांक्षरंतिचवहं
तिच हविषामंत्रपूतेनतर्पयंत्यमरान्दिवि ऋषीणामपिहोतॄणांगावोहोमेप्रतिष्ठिताःसर्वेषामेवभूतानांगावोमंग
लमुत्तमं गावःसर्वस्यलोकस्यगावोधन्याःसुवाहनाः नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच नमोब्रह्मसु
ताभ्यश्चपवित्राभ्योनमोनमः ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं एकत्रमंत्रास्तिष्ठंतिहविरन्यत्रतिष्ठतीति
अत्रदक्षिणामाहवासिष्ठः सुवर्णंदक्षिणापरा सुवर्णपावनंप्राहुःपरिमाणंपरंतथा अत्रपरिमाणंपरंतथेत्यत्रापि

तच्चशक्तविषयं अ
सुवर्णशब्दसंबंधात्परिमाणविशेषावगतेरैच्छिक्यपरिमाणसुवर्णदक्षिणादानंव्यावर्त्त्यते
वाऽशक्तस्यतु यजमानस्ततोदद्याद्यथाशक्त्यातुदक्षिणामिति ब्रह्मवैवर्त्तवाक्येन ततोप्यल्पायाअपिदक्षिणा
याअभ्यनुज्ञानात् गोदानमात्रप्रार्थनामंत्रमाह वासिष्ठः घृतक्षीरप्रदागावोघृतयोन्योघृतोद्भवाः घृतनद्यो-
घृतावर्त्तास्तामेसंतुसदागृहे घृतंमेहृदयेनित्यंघृतंताभ्यांप्रतिष्ठितं घृतंमेसर्वतश्चैवगवांमध्येवसाम्यह मितिगो
दानविधिः । अथकार्त्तिकोद्यापनविधिः । एवंचातुर्मास्यव्रतोद्यापनमपिकार्यं अथात्रैवभीष्मपंचकोद्यापनम्
तच्चैकादश्यांकृतस्थापनपूजनांतेअग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानंविष्णुं इदंविष्णु अतोदेवाइतिमं
त्राभ्यामष्टाक्षरविद्याभ्यांप्रत्येकमष्टोत्तरशताहुतिभिश्चभीष्मपंचपांडवद्रौपदीनांनाममंत्रै ब्रह्मादिमंडलदेवताग्रहा
दींश्चपायसचर्वाज्यैः प्रत्येकमेकैकयाहुत्याप्रायश्चित्तांतेस्विष्टकृद्धोमेनाहंयक्ष्ये ततोभीष्मादिमूर्त्तिशय्यागो
दानादिकृत्वा पूर्णाहुतिमभिषेकंचकृत्वा अच्छिद्रावधारणम् अच्छिद्रावधारणमंत्रः व्रतच्छिद्रंतपच्छिद्रंयच्छिद्रंयज्ञ
कर्म्मणि एकमासंद्विमासंवात्रिमासंवाचतुष्टयम् दिनानिदशपंचादीदिनमेकंदिनद्वयं यत्किंचिन्नियमंचापि
शाकपत्रादिभोजनम् मूलिकामत्स्यमांसादिवृंताकादिफलानिवा तत्सर्वंपूर्णतांयातुनिवृत्तेभीष्मपंचके सर्वंभ-
वतुचाच्छिद्रंब्राह्मणानांप्रसादतः ब्राह्मणायानिभाषंतेतानिमन्यंतिदेवताः उपवासोव्रतंतीर्थंस्नानदानफलंचयत्
विप्रैसंपादितंयस्यसंपूर्णंतस्यतद्भवेत् ब्राह्मणाजंगमंतीर्थंनिर्म्मलंसर्वकामिकम् एषांवाक्योदकेनैवशुद्ध्यंतिम
लिनाजनाः यद्ब्राह्मणास्तुष्टुतमावदन्ति तद्देवताः कर्म्मभिराचरन्ति तुष्टेषुतुष्टान्मुनयोवदंतिप्रत्यक्षदेवेषुपरोक्ष
देवान् व्यासवाल्मीकिवचनात्पराशरवसिष्ठयोः नारदस्यभृगोरुक्त्यासफलंकृतमस्तुते मंत्रार्थाःसफलाः
संतुसफलासंतुवोमखाः शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयोस्तुवः इत्यच्छिद्रावधारणंसर्वव्रतांतेज्ञेयं तत

स्त्रिंशच्चनामानिपूजयेच्चयथाविधिः विष्णुंजिष्णुंमहाविष्णुंहरिंकृष्णमधोक्षजं केशवंमाधवंरामंचाच्युतंपुरुषोत्तमं गोविंदंवामनंश्रीशंश्रीकंठंविश्वसाक्षिणं नारायणंमधुरिपुमनिरुद्धंत्रिविक्रमं वासुदेवंजगद्योनिं शेषतल्पगमंतथा संकर्षणंचप्रद्युम्नंदैत्यारिंविश्वतोमुखं जनार्दनंधराधारंश्रीधरंचसमर्चयेत् इतित्रिंशन्नामानिमासोपवासचातुर्मास्यादिव्रतेषुविष्णुपूजनेविप्रपूजनेचयथासंभवमूह्यानि अथकार्त्तिक्यां मार्कंडेयपुराणदानमुक्तं नारदीये मार्कंडेयाभिधंवत्सलभेत्सपरमांगतिं यस्त्वन्याकुरुतेचैतच्छैवंसलभतेपदं तत्रयच्छेल्लिखित्वायःसौवर्णकरिसंयुतं कार्त्तिक्यांद्विजवर्यायसलभेद्ब्रह्मणःपदमिति मार्कंडेयपुराणदानं ॥ स्वस्ति श्रीरणवीरसिंहधरणीपालोवदान्याग्रणी र्नानाशास्त्रविचारसाररसवित्सद्वृंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेःपदांबुजार्चारतो जीयात्पुत्रकलत्रमित्रसहितः संपालयन्क्ष्मांसदा १ रणवीरसिंहभूपेशकारितेकृत्यसागरे अभूत्कार्त्तिककृत्यानांरम्योरत्नसमुच्चयः ॥ इतिश्रीकृत्यरत्नाकरेकार्त्तिकमासकृत्यरत्नसमुच्चयः ॥



॥ श्रीरघुनाथमुद्रायंत्रालये ॥
लालाशिवरामस्याधिकारेकार्त्तिकमासोमुद्रितस्समाप्तिमगमत्
संवत् १९४१ पौष शु. १९

॥ ॐ अथमार्गशीर्षमासकृत्यम् ॥ ❁ ॥ वृश्चिकसंक्रमणेपूर्वाःषोडशघटिकाःपुण्यकालः देवीपुराणे
मार्गेरसोत्तमंदद्याद्घृतंपौषेमहाफलं तिलान्माघेमुनिश्रेष्ठसप्तधान्यानिफाल्गुने विचित्राणिचवस्त्राणिचैत्रेदद्याद्
द्विजोत्तमे वैशाखेयवगोधूमान्ज्येष्ठेतोयभृतंघटं आषाढेचंदनंदेयंसकर्पूरंमहाफलं नवनीतंनभोमासिछत्रंप्रो
ष्ठपदेस्मृतं गुडशर्करस्वर्णाढ्यान्लड्डुकानाश्विनेमुने दीपदानंमहापुण्यंकार्त्तिकेयःप्रयच्छति सर्वान्कामान
वाप्नोतिक्रमेणैतदुदाहृतं व्रतांतेगांशुभांदद्यात्सवत्सांकांस्यदोहनां स्वभावशुद्धेविधिवत्पूजयित्वाद्विजोत्तमे दा
तव्यावीतरागेचकामक्रोधविवर्जिते अयाचकेसदाचारेविनीतेविनयान्विते गोदानाल्लभतेकामान्गोलोकेसुमनो
हरान् इतिमार्गमासमारभ्यवर्षमात्रसाध्यं एकवत्सरनिर्वाह्यंप्रतिवर्षमेकैकमासक्रमेण द्वादशवर्षसाध्यमपि
क्रमेणेदमुदाहृतमितिव्यर्थत्वप्रसंगात् द्वादशवर्षेसमाप्तिरिति इतिमार्गादिव्रतं अस्मिन्मासेविष्णुपूजाव्रतं
वाराहे येयजंतिवरारोहेमार्गेमासितुवैद्विजाः तान्सर्वाननुगृह्णामिहव्यकव्यपथिस्थितान् यजंतिमामितिशेषः
अत्रदानविशेषोदानसागरे खराश्वाश्वतरीनागान्सकलान्युज्यजाविकान् केशवप्रीणनार्थायमासिमार्गशि
रेनरैः युजीयुगयुक्तोरथइतिदानसागरः अजःछागःअविर्मेषःएतान्मार्गशिरेदेयानाहुः अथलवणदानं मार्गे
रसोत्तमंदद्यात् रसोत्तमंलवणं विष्णुधर्मोत्तरे लवणंमार्गशीर्षेतुदत्वासौभाग्यमश्नुते अत्रव्रतानि महाभार
ते मार्गशीर्षंतुयोमासमेकभक्तेनसंक्षिपेत् भोजयेद्ब्राह्मणान्भक्त्यामुच्यतेसोथकिल्बिषैरिति स्कांदे एकभक्ते
नयोमर्त्योमार्गमासंतुसंक्षिपेत् सतेनकर्मणायुक्तःसुभगोभवतिसदा अथतीर्थविशेषः ग्रहणमुपक्रम्य देवीपु
राणे मार्गशीर्षेतुदेविकेति पद्मपुराणे षष्टितीर्थसहस्राणितिस्रःकोट्योर्धकोटिका आयांतिदेविकातीर्थेमार्ग
शीर्षेनसंशयः क्षालयित्वाघनिचयंप्रयांतिनिजलेखया मार्गकृष्णप्रतिपदायांयोगविशेषउक्तोभविष्योत्तरे रोहि

करुणंदेवं वसिष्ठः स्मितकारणं ईश्वरउवाच- अहोव्रतस्यमाहात्म्यंश्रूयतामृपिसत्तमाः पुराजन्मनिशूद्रस्यदास्य॰
कर्मकरीसदा उच्छिष्टभोजनानित्यमुच्छिष्टशयनासदा कुरूपादुर्भगादीना रूक्ष-गद्गदभाषिणी व्राम्नासेथ॰
वतोख्यातादुर्दर्शवदनाशुभा एकदापेषणार्थंसागताब्राह्मणसन्निधौ श्रुतंव्रतचनारीणांवाच्यमानंद्विजन्मना
सौभाग्यसुंदरीनामतृतीयासर्वकामदा ज्ञानचौरागमेशास्त्रेप्रार्थितेनोमयातथा चीर्णंतासांप्रसंगेनमघवत्या
पितद्व्रतं कुत्सितंचैवनैवेद्यंदत्तंदानंनाकिंचन हविष्यंचतथोच्छिष्टंविहितंपारणेतथा केवलंचव्रतंचीर्णंश्रद्धापूते॰
नचेतसा श्रद्धयाधार्यतेधर्मोवहुभिर्नार्थराशिभिः ऋपयश्चाक्रिरेधर्मंश्रद्धापूतेनचेतसा तेनकर्मविपाकेनानृप॰
धाधिपतेःसुता सुरूपाचसुशीलाचसर्वलक्षणसंयुता संपूर्णावयवाशांतातस्यादेव्याःप्रभावतः उच्छिष्टभोज॰
नाज्जातानिपदानांचयोनिपु अदत्तदानात्संजातातापसीभोगवर्जिता व्रतप्रभावाज्जायंतेसुरूपाश्चपतिव्रताःम॰
हासौभाग्यसंयुक्तासाक्षाल्लक्ष्मीरिवापरा सर्वकामप्रदादेवीनंदिनीवसतेगृहे तद्व्रतचास्यदेवर्पेसर्वकामफलप्रदं
नारदउ॰ व्रतस्यास्यविधिंब्रूहिकोविधिःकिंचपूजनं कस्मिन्मासेप्रकर्तव्यंदेवताकाप्रकीर्तिता किंपुण्यंकिंच
नैवेद्यंध्यानकस्यचपूजनं ब्रह्मोवाच व्रतस्यारंभणंकार्यंमार्गशीर्षेथमाघके द्वितीयावेधरहितातृतीयायासिता॰
भवेत् चतुर्थीयोगिनीकिंचिच्छुद्धावापियदाभवेत् उपवासंप्रकुर्वीतदंतधावनपूर्वक अपामार्गेणकुर्वीतदंतशुद्धिं॰
तदाव्रती उमेदेविनमस्तुभ्यंशंकरस्यार्द्धहारिणि प्रसीदश्रीमहेशानिकरिष्येव्रतमुत्तमं सान्निध्यंकुरुमेदेविव्र॰
तेस्मिन्हरवल्लभे इतिनियममंत्र. सौभाग्यसुंदरीनामवशिनीसाप्रकीर्तिता सर्वकामप्रदादेवीसर्वसत्ववशं॰
करी तस्यादर्शनमात्रेणसदासंजायतेजगत् द्रोणपुष्पैश्चसंपूज्यादाडिमैश्चार्घ्यहेतवे नैवेद्यंमोदकान्दद्यात्क॰
पूरं प्राशयेत्ततः वत्सपौषासितपक्षेतृतीयायांव्रतंभवेत् मल्लिकादंवकाष्ठंचमत्तकेनचपूजयेत् राज्यसौभाग्यदं॰

णीप्रतिपद्युक्तामार्गेमासिसितेतरा कृष्णाप्रतिपदित्यर्थः गंगायांयदिलभ्येतसूर्यग्रहशतैःसमा मार्गकृष्णद्वि
तीयायांकृत्यविशेषाभावात् तिथिपत्वेनब्रह्मणोर्चनादिव्रतं द्वितीयामासान्यनिर्णयेभिहितं मार्गतृतीया
यांरम्भ्यसौभाग्यसुंदरीव्रतं कर्णाटेषुप्रसिद्धंतच्चतुर्थीविद्धायांकार्यं नद्वितीयाविद्धायां द्वितीयावेधरहितातृती
या... ताभवेत् चतुर्थीयोगिनीकिंचिच्छुद्धावापियदाभवेदितिकथायामुक्तेः व्रतार्के नारदउवाच भगवंस्त्वे
प्रजाःसृष्टानानावर्णास्तथागुणाः स्वेदजाश्चांडजाश्चैवउद्भिजाश्चजरायुजाः देवासुराःसगंधर्वाःसयक्षोरगराक्षसाः
एकेसुरूपाः सुभगा बलिनश्चापरेतथा तथान्येदुःखसंयुक्ताः काणामूकाश्चपंगवः दुःशीलादुर्भगादीनाः
परकर्मकराः परः एतन्मेहृदिसंतापसंशयंछेत्तुमर्हसि ब्रह्मोवाच शृणुवत्सप्रवक्ष्यामित्वंभक्तोसिप्रियोसिमे क
र्मबीजप्ररूढंहि शरीरंपाचभौतिकं येदत्तदानाजायंते सुरूपाःसुखिनोनराः तपः प्रभावाज्जायंते बलिनः सु
भगास्तथा अदत्तदानाजायंते परकर्मपराः सदा परापवादवक्तारः परद्रव्यापहारिणः हंतारःप्राणिनांचैव
अभक्ष्याणांचभक्षकाः क्रमशोनरकान्भुक्त्वाजायंतेकुत्सितानराः दरिद्राः पंगवोमूकाः काणाद्यादुर्भगाः कृशाः
नारदैवंस्वकर्मोक्तैर्नरानार्यश्चदुःखिताः नारदउवाच उपायंब्रूहिभगवन्येनकर्मक्षयोभवेत् तपोदानंव्रतंती
र्थं शरीरस्यचशोषणं दुःखसंतापतप्तानां जीवानांतातमेवद ब्रह्मोवाच शृणुनारदयद्गुह्यंव्रतानामुत्तमंव्रतं स
र्वदुःखप्रशमनं व्याधिदारिद्र्यनाशनं सुखसौभाग्यजननंपुत्रपौत्रप्रदायकं सुरूपदंचसौभाग्यकारणंकामदंतथा
नारीणांचविशेषेणसुखसौभाग्यदायकंवसिष्ठायपुराप्रोक्तमृषीणांचसमागमे कैलासशिखरेरम्येशंकरेणमहात्मना
नारदउवाच कस्मात्प्रोवाचभगवान्कृपाकस्मादजायत एतन्मेब्रूहिभगवन्शंकरोलोकशंकरः ब्रह्मोवाच दृष्ट्वाद्भुतंच
सौभाग्यमरुंधत्याजगत्प्रभुःतथारूपंचशीलंचसौभाग्यमतुलंतथा कृत्वाशिरःप्रकंपंच जहासमृदुशंकरःपृष्टवान्

करुणंदेवं वसिष्ठः स्मितकारणं ईश्वरउवाच अहोव्रतस्यमाहात्म्यंश्रूयतामृपिसत्तमाः पुराजन्मनिशूद्रस्यदास्य
कर्मकरीसदा उच्छिष्टभोजनानित्यमुच्छिष्टशयनासदा कुरूपादुर्भगादीना रूक्ष-गद्गदभाषिणी नाम्नासेथ
वतीख्यातादुर्दर्शवदनाशुभा एकदापेपणार्थंसागताब्राह्मणसन्निधौ श्रुतंव्रतचनारीणांवाच्यमानंद्विजन्मना
सौभाग्यसुंदरीनामतृतीयासर्वकामदा ज्ञानचौरागमेशास्त्रेप्रार्थितेनोमयातथा चीर्णंतासांप्रसंगेनमेघवत्या
पितद्व्रतं कुत्सितंचैवनैवेद्यंदत्तंदानंनाकिंचन हविष्यंचतथोच्छिष्टंविहितंपारणेतथा केवलंचव्रतंचीर्णंश्रद्धापूते
नचेतसा श्रद्धयाधार्यतेधर्मोवहुभिर्नार्थराशिभिः ऋपयश्चाक्रिरेधर्मंश्रद्धापूतेनचेतसा तेनकर्मविपाकेनानिप्र
धाधिपतेःसुता सुरूपाचसुशीलाचसर्वलक्षणसंयुता संपूर्णावयवाशांतातस्यादेव्याःप्रभावतः उच्छिष्टभोज
नाज्जातानिपदानांचयोनिषु अदत्तदानात्संजातातापसीभोगवर्जिता व्रतप्रभावाज्जायंतेसुरूपाश्चपतिव्रताःम
हासौभाग्यसंयुक्तासाक्षाल्लक्ष्मीरिवापरा सर्वकामप्रदादेवीनंदिनीवसतेगृहे तद्व्रतचास्यदेवर्षेसर्वकामफलप्रदं
नारदउवाच व्रतस्यास्यविधिंब्रूहिकोविधिःकिंचपूजनं कस्मिन्मासिप्रकर्तव्यंदेवताकाप्रकीर्तिता किंपुण्यंकिंच
नैवेद्यंध्यानकस्यचपूजनं ब्रह्मोवाच व्रतस्यारंभणंकार्यंमार्गशीर्षेथमाघके द्वितीयावेधरहितातृतीयायासिता
भवेत् चतुर्थीयोगिनीकिंचिच्छुद्धावापियदाभवेत् उपवासंप्रकुर्वीतदंतधावनपूर्वकं अपामार्गेणकुर्वीतदंतशुद्धिं
तदाव्रती उमेदेविनमस्तुभ्यंशंकरस्यार्द्धहारिणि प्रसीदश्रीमहेशानिकरिष्येव्रतमुत्तमं सान्निध्यंकुरुमेदेविव्र
तेस्मिन्हरवल्लभे इतिनियममंत्र. सौभाग्यसुंदरीनामवशिनीसाप्रकीर्तिता सर्वकामप्रदादेवीसर्वसत्ववशं
करी तस्यादर्शनमात्रेणसदासंजायतेजगत् द्रोणपुष्पैश्चसपूज्यादाडिमैश्चास्यहेतवे नैवेद्यंमोदकान्दद्यात्क
पूरं प्राशयेत्ततः वत्सपौषासितेपक्षेतृतीयायांव्रतंभवेत् माक्षिकादंतकाष्ठंचमत्तकेनचपूजयेत् राज्यसौभाग्यदं

ंसुदरींपूजयेत्ततः धात्रीफलंददेदर्घ्यंकंकोलंप्राशयेन्निशि नैवेद्यंवटकान्दद्याद्घृतशर्करयान्वितान् कंकों
ुतदाप्राश्यंराज्यसौभाग्यहेतवे घृतेनबोधयेद्दीपंरात्रौजागरणंसदा सर्वकामप्रदादेवीसर्वदुःखहरापरा सर्वै
र्यप्रदादेवीसर्वपापहरापरा एकापिवहुधात्मानंनामरूपविभेदतः माघमासेतुसंप्राप्तेवदर्यादंतधावनम्
ः कुर्वीतानियमंरूपसौभाग्यहेतवे अपराह्णेततः स्नाता सर्वाभरणभूषिता चूतपुष्पैश्चसंपूज्यारूप-
ाग्यसुंदरी नारिकेलार्घ्यदानंचनैवेद्यंशष्कुलीस्मृतं प्राशनंचैवकस्तूरीरूपसौभाग्यसंयुता पूजये
सासर्वकामसौभाग्यसुंदरीं फाल्गुनस्यासितपक्षेप्रातर्नियमसंयुता सौभाग्यसुंदरींविल्वंदंतकाष्ठंतुकारये
स्नानंकृत्वातथानारीकांचनारैश्चपूजयेत् नैवेद्यंसक्तवस्तत्रघृतशर्करयान्विताः यक्षकर्दमजोलेपो
श्चागुरुसंभवः सर्वासुचतृतीयासुविधिरेषउदाहृतः वीजपूरार्घ्यदानंचप्राशनंचंदनोदकम् प्राशनस्यप्रभा
न्कामानवाप्नुयात् पारणंचप्रकर्त्तव्यंसहसर्वैश्चवांधवैः चैत्रेमासिप्रकर्त्तव्यातृतीयापापनाशिनी
कर्तव्यासुखसौभाग्यसुंदरी दंतकाष्ठंप्रकुर्वीत जंवूवृक्षसमुद्भवम् पूजादमनकैश्चैवह्यर्घ्यैविल्वफलंस्मृ
प्रोक्ताः शर्कराघृतसंयुताः सुखसौभाग्यसिद्ध्यर्थंप्राशनंवज्रधारिणः वैशाखस्यासितेपक्षेतु
मालतीदंतकाष्ठंचनियमग्रहणंततः पतिसौभाग्यदांदेवींसुंदरींपूजयेत्ततः पद्मैः सितैः सुर
भश्चपूजनम् दधिभक्तंसकर्पूरंशर्कराघृतसंयुतम् नैवेद्यंकल्पयेद्देव्याअर्घ्यंचाम्रफलम्भवेत् हेम्नोद
ग्यमाप्नुयात् ज्येष्ठमासितृतीयायामुपवासपराभवेत् यूथिकादन्तकाष्ठंचलावण्यशुभगाशि
पूज्या यक्षकर्दमचर्चितैः लावण्यसुभगांदेवींसुंदरींपूजयेत्ततः कदलीफलार्घ्यदानंचनैवेद्यंघृत
ंवुततःपीत्वा लावण्यशुभगोभवेत् आषाढेचततोमासिपक्षसौभाग्यसुंदरीम् दन्तकाष्ठंप्रकुर्वीत

प्रातश्चाशोकवृक्षजं नियमंचप्रगृह्णीयात्तृतीयायांप्रयत्नतः विल्वपत्रैःकोमलैश्चपतिसौभाग्येसुंदरीं जंवूफलार्घ्यं
दानंचनैवेद्यंपायसंस्मृतं सपत्नीनांमुखंनैवसापश्यतिकदाचन श्रावणेमासिसंप्राप्ते तृतीयायामु
पोषयेत् विभीतदंतकाष्ठंचजातीपुष्पैश्चपूजनं सर्वैश्वर्य्यंचसौभाग्यसुंदरींपूजयेत्ततः नैवेद्यंशुभ्रकासारं
धूपदीपादिकंतथा कदलीफलार्घ्यदानंचप्राशनेराजतंपयः गजाश्वरथदासीनांहेमरत्नादिवाससां
ईश्वरींसर्वलोकानां भगवत्याःप्रसादतः मासिभाद्रपदेप्राप्तेपूज्यासौभाग्यसुंदरी दंतकाष्ठंतुकर्त्तव्यंमातुलिं
गसमुद्भवं उत्पलैःपूजयेद्देवीमर्घ्यंकर्कटकीफलं नैवेद्यंशोकवर्त्तिस्त्वंपिवेन्माणिक्यजंपयः कर्पूरागुरुकस्तूरी
मुखदेशेसुगंधिता आश्वयुज्यासितेपक्षेतृतीयायांव्रतचरेत् दंतकाष्ठंप्रकर्त्तव्यंप्लक्षवृक्षसमुद्भवं पूजये
त्परयाभक्त्यापूज्यासौभाग्यसुंदरी उत्पलैःशतपत्रैश्चपूजाकार्य्याप्रयत्नतः नारंगमर्घ्यदानंच कूष्मांडंवा
पिकल्पयेत् नैवेद्यंचणकांच्छुभ्रान्घृतशर्करयान्वितान् औदुंबरपयःप्राश्यसुंदरीप्रीयतांमम पुत्रपौत्रसमा
युक्तासुखसौभाग्यसुंदरी कार्त्तिकेमासिसंप्राप्तेतृतीयामुपवासतः औदुंबरंदंतकाष्ठंकृत्वाव्रतमुपाचरेत् केतकी
भिश्चसौभाग्यनाम्नासंयोगसुंदरी निवेदयेदपूपांश्चसुगंधांछालिसंभवान् आक्षोटंचार्घ्यदानेचलवंगंप्राशये
त्तुतां सावियोगंनचाप्नोतिपितृमातृसुतादिभिः एवंचीर्णेंव्रतेकुर्य्यादुद्यापनविधिंततः सर्वशास्त्रमधीयानंसर्वा
गमविशारदं आचार्य्यंप्रार्थयेत्प्रातर्मार्गशीर्षेयथाविधिः चीर्णंव्रतोमहाचार्य्यउद्यापनविधिंमम व्रतवैकल्य
नाशायथाशास्त्रसमाहितः सुंदरीमंडलंकार्य्यंगौरीतिलकमेवच उमामहेश्वरंदेवंसौवर्णेनतुकारयेत् व्रतारं
भेयथाशक्त्याराजतंवापिकारयेत् वित्तशाठ्यंनकुर्वीतसतिद्रव्येफलार्थिनी वर्षेप्रपूज्यतांमूर्त्तिमामेवंमंडलेर्चये
त् सर्वोपहारैर्गंधैश्चपुष्पैर्नानाविधैरपि - एकैवसाजगन्मातावहुरूपैर्व्यवस्थिता रूपैर्द्वादशभिश्चैवपूज्यासौ

भाग्यसुंदरी ततःपद्मनिभांदेवींरक्तवस्त्रोपशोभितां रक्ताभरणशोभाढ्यांरक्तकुंकुमचर्चितां ध्यात्वांह्येवंवि-
धांदेवींपूजयेदेकमानसा मदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांबरायैचदिगंबराय
नमःशिवायैचनमःशिवाय । इतिसर्वोपचारपूजामंत्रः ततःसर्वाणिपुष्पाणिनैवेद्यानिफलानिच अर्घ्यार्थं
परिकल्प्यानिसर्वकामार्थसिद्धये उमेदेविनमस्तुभ्यंशंकरस्यार्द्धहारिणि प्रसीदश्रीमहेशानिगृहाणार्घ्यं
नमोस्तुते रात्रौजागरणंकार्य्यंगीतवादित्रनिस्वनैः ततःप्रभातेविमलेस्नात्वाकृत्वाविधानतः कुसुं
भकुसुमैर्होमंकिंशुकैर्वापिकारयेत् अष्टोत्तरशतंपूर्णमध्वाज्ययवसैर्युतं तदभावेतुकर्तव्यं शतपत्रै
र्विधानतः आसुरेणचमंत्रेणपौर्णमुख्यंसमाचरेत् भोजयेच्चप्रयत्नेनचत्वार्य्यष्टौप्रयत्नतः मिष्टान्नेनसप-
त्नीकान्भुक्तावैपरिधापयेत् वस्त्रालंकरणैश्चैवयथाशक्त्याप्रपूजयेत् सौभाग्यवस्त्रंचैकैकंनारीणांचैवदापयेत् त-
तोहस्तेप्रदातव्यंकुंकुमंलवणंगुडं नारिकेलंजपावल्लीदूर्वासिंदूरकज्जलं मंगलाष्टकमेतद्वैदत्त्वासौभाग्यमाप्नुया-
त् आचार्य्यंचसपत्नीकंवस्त्रालंकरणैः शुभैः परिधाप्ययथाशक्त्यामंडलंतत्समर्पयेत् प्रार्थयेच्चततोदेवींसर्वसौभा-
ग्यसुंदरीं पूजितासिमयादेविसर्वसौभाग्यसुंदरि दत्त्वामत्प्रार्थितान्कामान्गच्छदेवियथासुखं । मूर्तिदानांतेआ-
चार्यंप्रार्थयेत् मूर्तीचमंडलंदेव्याउपहारांश्चसर्वशः गुरोगृहाणसर्वंत्वंसुंदरीप्रीयतामिति त्वत्प्रसादात्मयाचीर्णं-
व्रतमेतत्सुदुर्ल्लभं क्षमस्वविप्रशार्दूलप्रसादसुमुखोभव एवंचीर्णव्रतानारीकृतकृत्याभवेत्सदा येनेदंचकृतंव-
त्ससंप्राप्तंजन्मनःफलं नातःपरतरंकिंचिद्व्रतंसौभाग्यकारकं देहांतेशिवलोकेतुभोगान्भुक्त्वायथेप्सितान् ॥
इतिव्रतार्केमार्गकृष्णासौभाग्यसुंदरीतृतीयाव्रतं. मार्गकृष्णचतुर्थ्यांविशेषव्रतानुक्तेः तिथित्वेनगणेशपूजाव्रतं
संकष्टचतुर्थीविधिनाकार्य्यम् एवं मार्गशीर्षपंचम्यामपिविशेषकृत्याभावे पक्षद्वयगतासुसर्वासुपंचमीषुतिथित्वेन

शेषाद्योनागाः पूज्याःउक्तंच शेषादीनांफणीनांचपंचम्यांपूजनंभवेदिति पंचमीसामान्यनिर्णयोक्तं॥अथमार्गकृष्ण
षष्ठ्यादिसर्वासु षष्ठीषुसूर्यषष्ठीव्रतं भविष्योत्तरे ॥ कृष्णषष्ठ्यांप्रयत्नेन कृत्वानक्तंयथाविधिः मासिमार्गे
शिरस्यादावंशुमानितिपूजयेत् विधिवत्प्राश्यगोमूत्रमनाहारोनिशिस्वपेत् अतिरात्रस्ययज्ञस्यफलंप्राप्नोतिमान
वः पौषेप्येवंसहस्रांशुभानुमंतमुशंतिच वाजपेयफलंतस्यघृतंप्राश्यलभेन्नरः उशंतिवदंतीत्यर्थः माघेदिवाक
रंनामकृष्णषष्ठ्यांनियोजयेत् निशिपीत्वातुगोमूत्रंगोमेधफलमश्नुते मार्तंडंफाल्गुणेमासिपूजयेद्भक्षयेत्तिलान्
राजसूयस्ययज्ञस्यफलंपुण्यमवाप्नुयात् चैत्रेतुहंसनामानंकृष्णषष्ठ्यांप्रपूजयेत् शुद्धंपुष्पंनरःप्राश्यहयमेध
फलंलभेत् वैशाखेकृष्णनामानंकृष्णषष्ठ्यांप्रपूजयेत् पीत्वाकुशोदकंपुण्यंजितक्रोधोजितेंद्रियः प्राह्याश्वमेध
यज्ञस्यवैनतेयफलंलभेत् ज्येष्ठेदिवस्पतिंपूज्यगवांशृंगोदकंपिबेत् गवांकोटिप्रदानस्यनिखिलंफलमाप्नुयात्
आषाढेत्वर्कनामानमिष्ट्वाप्राश्यचगोमयं प्रयात्यर्कसलोकत्वंवर्षाणांचशतंविभो श्रावणेयमनामानंपूजयित्वा
पयःपिबेत् वर्षाणामयुतंसाग्रंमोदतेभास्करालये मासिभाद्रपदेषष्ठ्यांभास्करंनामपूजयेत् प्राशनंपंचगव्यस्य
सर्वयज्ञफलंलभेत् मासिचाश्वयुजेषष्ठ्यांभगाख्यंनामपूजयेत् दूर्वांकुरसकृत्प्राश्यराजसूयफलंलभेत् कार्त्ति
केमासिषष्ठ्यांतुभगाख्यंनामपूजयेत् गोमूत्रमथप्राश्णीयादश्वमेधफलंलभेत् वर्षांतेभोजयेद्विप्रान्सूर्यभक्तिसम
न्वितान् पायसंमधुसंयुक्तमाज्येनसुपरिप्लुतं शक्त्याहिरण्यवासांसिभक्त्यातेभ्योनिवेदयेत् सूर्यायगांच
कृष्णांचसंप्रदद्यात्पयस्विनीं वर्षमेकंचरेदेवंनैरंतर्येणयोनरः कृष्णषष्ठ्यांव्रतंभक्त्यातस्यपुण्यफलंशृणु सर्व
पापविनिर्मुक्तः सर्वकामसमन्वितः मोदतेसूर्यलोकेतुसनरः शाश्वतीःसमाः ॥
इतिश्रीभविष्योत्तरेमार्गादिकृष्णषष्ठीव्रतं मार्गकृष्णसप्तम्यामप्येवं व्रतंकार्य्यंसप्तम्याःसूर्यदैवतत्वादिति

सप्तमीकृत्यं मार्गकृष्णाष्टम्यांकालभैरवोत्पत्तिः तस्यामुपवासादिकार्य्यं तदुक्तंकाशीखंडे ॥ मार्गशीर्षे सिताष्टम्यांकालभैरवसान्निधौ उपोष्यजागरंकुर्वन्सर्वपापैःप्रमुच्यते त्रिस्थलीसेतौ कृत्वाचाविविधांपूजां महासमारविस्तरैः नरोमार्गासिताष्टम्यांवार्षिकंविघ्नमुत्सृजेत् आविरासीत्तदालोकान्भीषयन्नखिलानपीतितत्रैवोक्तेः नारदीयेपि यत्किंचिदशुभंकर्मकृतंमानुष्यजन्मनि तत्सर्वंविलययातिकालभैरवदर्शनादिति अत्रपूजोपवासजागरणानिप्रधानानि एतेनोपोषणस्यांगभूतमर्घ्यमिहस्मृतं तथाजागरणंरात्रौपूजायामचतुष्टयमितिवचनादुपोषणस्यैवप्राधान्यमितिप्रत्युक्तंवाक्यांतराविरोधेनोपोषणस्यांगभूतामितितस्योत्तरार्द्धेऽनुषंगात् इयंपूर्वविद्धाग्राह्याकृष्णपक्षगतत्वाद्रुद्रव्रतत्वात्कालव्याप्तिलाभाच्च यत्तुकैश्चिन्मध्याह्नस्याविर्भावकालत्वान्मध्याह्नव्यापिनीग्राह्येत्युक्तं तदुक्त आविर्भावकालव्यापिन्याःकर्त्तव्यत्वेनानभिधानात् वस्तुतस्तु आविर्भावोपिनमध्याह्नएव मध्येवहुकृत्याभिधानात् अतःसूर्यश्चास्तमुपागमदित्यभिधानात् अस्यामेवाष्टम्यामनघाष्टमीव्रतं हेमाद्रौभविष्ये कृष्णाष्टम्यांमार्गशीर्षेदांपत्यंदर्भनिर्मितं अनघंचानवद्यंचवहुपुत्रैःसमान्वितं स्थापयित्वाशुभेदेशेगोमयेनानुलेपिते पूजयेदितिशेषः इदंव्रतंवर्षमात्रंकर्तव्यं इत्यनघाष्टमीव्रतं इयंमार्गकृष्णाष्टमी लक्ष्मीकल्पादिः कल्पादिकृत्यश्राद्धदानाद्यक्षयफलंभवतीत्युक्तेः अस्यामेवाष्टम्यांशैवव्रतारंभोभविष्यपुराणे कृष्णाष्टम्यांप्रयत्नेनकृत्वानक्तंप्रयत्नतः मासिमार्गशिरेवीरशंकरंदेवमर्चयेत् पीत्वाशक्त्याचगोमूत्रमनाहारंनिशिस्वपेत् अतिरात्रस्ययज्ञस्यफलमष्टगुणंभवेत् एवंपौषेतुसंपूज्यशंभुमीशानमीश्वरं कृष्णाष्टम्यांघृतंप्राश्यवाजपेयफलंलभेत् माघे महेश्वरंदेवं कृष्णाष्टम्यांप्रपूजयेत् निशिपीत्वाचगोमूत्रंगोमेधफलमश्नुते फाल्गुनेचमहादेवं संपूज्यप्राशयेत्तिलान् राजसूयस्ययज्ञस्यफलमष्टगुणंभवेत् चैत्रेचस्थाणुनामानंकृष्णाष्टम्यांप्रपूजयेत् यवांश्चभर्जितान्प्राश्यसोश्वमेधफ

लंलभेत् वैशाखेशिवनामानंपूजयित्वाप्रयत्नत रात्रौकुशोदकंपीत्वासर्वमेधफलंलभेत् ज्येष्ठेपशुपतिंपूज्य गवांशृंगोदकंपिबेत् गवांकोटिप्रदानस्ययत्फलंतदवाप्नुयात् आषाढेचोग्रनामानमिष्ट्वाप्राश्यचगोमयं वर्षा णांचशतंसाग्रंशिवलोकेमहीयते श्रावणेमासिपूजार्कंप्राशयेन्निशिगोरसं गोसवस्यतुयज्ञस्यफलंप्राप्नोतिमा नवः त्रियंबकंभाद्रपदेकृष्णाष्टम्यांप्रपूजयेत् संप्राश्यबिल्वपत्रंचवाजपेयफलंलभेत् मासिचाश्वयुजेप्रोक्तंप्रा शनंतंडुलोदक नाम्नोमेशयजेद्देवंपुंडरीकफलंलभेत् मासेतुकार्त्तिकेष्टम्यामीशानाख्यंप्रपूजयेत् पंचगव्यंसकृ त्पीत्वापंचयज्ञफलंलभेत् वर्षांतेभोजयेद्विप्रान्शिवभक्तिपरायणान् पायसंमधुसंयुक्तंघृतेनसुपरिप्लुतं निवेदये त्तुरुद्रायकृष्णांगांसुपयस्विनी वर्षमेकंतथाकुर्य्यान्नैरंतर्येणयोनरः कृष्णाष्टमीव्रतंभक्त्यातस्यपुण्यफलंशृणु सर्व पापविनिर्मुक्तः सर्वैश्वर्यसमान्वितः वसेच्छिवपुरेनित्यंनचेहायातिनाकतः ॥ तदेतयोःषष्ठ्यष्टमीसूर्यव्रतयोःकृत्वान क्तमिति नक्तंव्रतंसंकल्प्येत्यर्थः नतुनक्तभोजनानंतरंरात्रावेवपूजेतिबोद्धव्यं एवंपौषेपीतिप्राशनं तदनंतर मनाहारत्वंचातिदिश्यते एवंमासांतरेष्वपिविहितद्रव्यविशेषंनिशिप्राश्यानाहार स्वपेत् यत्रापिविशिष्यति थिर्निशाचनश्रुतात्तत्रापि मासेकृष्णाष्टम्यांनिश्यर्चेतिबोध्यंपूर्वापरपरामर्शात् तदेतयोर्व्रतयोःप्रतिमासंप्राशनं फलंगुणरीत्या संवत्सरफलंचाधिकारविशेषणमितिसमंजसमितिकेचित् अन्येतुतत्प्रयोगमध्येसमानात्तल्लघु तात्पर्य्यकतयाप्रकरणप्रयुक्ताद्ययोपजीवन्त्येतत्तथास्तु अत्रतुफलश्रुतेरविशेषादधिकारसंबंधप्रयोगापेक्षत्वेतौल्या परप्रयुक्त्युपजीवितामिति नगुणफलरीतिः किंतुप्रतिमाससंवत्सरयोःफलश्रुतेरविशेषान्नियोगभेदः इच्छाभे दाच्चानुष्ठानव्यवस्थेति ॥ इतिभविष्योत्तरोक्तंमार्गादिशैवाष्टमीव्रतं मार्गकृष्णनवम्यां कृत्यविशेषाभावात्सामान्यनिर्णयोक्तंविधेयमिति मार्गकृष्णैकादशीउत्पन्नाख्या महाभारते ॥ अर्जुन

उवाच एकादश्युपवासस्यनक्तभक्तस्यैवतथा एकभक्तव्रतस्यापिफलंब्रूहिजनार्दन श्रीकृष्णउवाच हेमंतेचैव
संप्राप्तेमासेमार्गशिरेतथा कृष्णपक्षेतथापार्थएकादश्यामुपोषणात् नक्तंचैवतथाज्ञायदशम्यांनियतःसदा प्रदि
वसस्याष्टमेभागेमंदीभूतेदिवाकरे दशम्यांचैकभक्तंचशुचिःशांतोदृढव्रतः ततःप्रभातेसंजातेनियमंतुव्रतस्यच
मध्याह्नेचततःपार्थस्नानंशुचिसमाहितः स्वगृहेष्वधमंस्नानंवापीकूपेपुमध्यमं उत्तरंपुष्करिण्यांतुनद्यांचमुत्त
मोत्तमं नदीनांब्राह्मणंतोयंतडागेक्षत्रियोदकम् वैश्यंकूपयतंतोयं गृहपात्रेषुशूद्रकं क्रोधंलोभंपरि
त्यज्यमिथ्यावादंतथैवच अधर्मनिंदांकुर्वीततपासंगंपरित्यजेत् वर्जयेत्तद्दिनेपार्थनिद्राहंकारमैथुनं धर्मशा
स्त्रविनोदेनतद्दिनंगमयेत्सदा केशवंपूजयित्वातुनैवेद्यंभक्तिपूर्वकम् गंधमाल्यंतथाधूपंदीपंचैवप्रदापयेत् रा
त्रौजागरणंकार्यंकथांश्रुत्वाहरेःप्रियां विप्रेभ्योदक्षिणांदत्वाप्रणिपत्यक्षमापयेत् यथाशुक्लातथाकृष्णाभेदंनै
वकारयेत् विकल्पंयदिकुर्वीतविष्ठायांजायतेकृमिः एवंयःकुरुतेपार्थशृणुतस्यापियत्फलम् वाराणस्यां
स्थितःपार्थषष्टिवर्षसहस्रकैः एकादश्युपवासस्यकलांनार्हतिषोडशीं वैधृत्यामपिदानस्यलक्षमेकंतुयत्फलम्
संक्रांतौयदिदानानिलक्षसंख्यानिपांडव एकादश्युपवासस्यकलांनार्हतिषोडशीं प्रभासेचैवयत्पुण्यं
सोमपर्वसहस्रके एकादश्युपवासस्यकलांनार्हतिषोडशीं कुरुक्षेत्रेचयत्पुण्यंरविलक्षग्रहेस्मृतं एकाद
श्युपवासस्यकलांनार्हतिषोडशीं वैशाखीकार्तिकीमाघीस्नानेदानेकृतेयदि एकादश्युपवासस्यकलांनार्ह
ति षोडशीं यदिलक्षंगृहेयस्यभुनक्तिचदिनेदिने एकादश्युपवासस्यकलांनार्हतिषोडशीं गंगासरस्व
तीतनयास्नानदानकं एकादश्युपवासस्यकलांनार्हतिषोडशीं तद्योगशतदानानिनपूजानचभावना एत
मेपुण्यंनभूतंनभविष्यति गोसहस्रेणयत्पुण्यंवेदवेदांगपारगे तस्माद्दशगुणंपुण्यंब्रह्मचारिणिपांडव त्र

अन्नारंसहस्रस्यदानेलक्षशताधिकं तस्मादपिसहस्रस्यंभूमिदानंमहाफलंभूमेर्दशगुणाकन्यासर्वस्वोपशोभिता
कन्यादशगुणाविद्यालभतेनात्रसंशयः विद्यादशगुणंचान्नंयोददातिबुभुक्षिते अन्नदानात्परंदानंनभूतंनभविष्यति
भूमिदानेनतृप्यंतिस्वर्गस्थाःपितृदेवताः अन्नाच्छतगुणंपुण्यंगोमेधेचमखेकृते गोमेधात्तद्दशगुणमश्वमेधेकृते
सति अश्वमेधसहस्रेणनरमेधेनतत्फलम् नरमेधसहस्राणिकेदारोदकपानतः केदारमुदकंपीत्वामंत्रपूताश्चसं
नराः तेषांदेहेत्रयोदेवाब्रह्माविष्णुमहेश्वराः केदारमुदकंपीत्वापुनर्जन्मनाविद्यते तथैवैकादशीपुण्यागर्भवा
सक्षयकरी एवंतवमयाख्यातंयत्सुरैरपिदुर्लभम् पुण्यसंख्यांनजानामि यत्त्वंपृच्छसिपाण्डव एतस्याश्चार्धं
पुण्यंस्यात् नक्तभोजनतोनघ नक्तस्यचार्धंपुण्यंस्यादेकभक्तेतथैवच तेनराःपुण्यकर्माणोयेतांभक्त्याप्रकुर्वते
अर्जुनउवाच उत्पन्नासाकथंदेवकथंपुण्याधिकाशुभा कथंदेवपवित्राचकथंदेवतवप्रिया श्रीकृष्णउवाच॥
एकादशीयदापार्थभानुवारेप्रजायते अश्वमेधसमंपुण्यंकोटिहत्याविनश्यति पुरासत्ययुगस्यादौमुरोनामासदा
नवः महाघोरोमहारौद्रःसर्वदेवभयंकरः बलादुत्थापितस्तेननिजस्थानात्पुरंदरः आदित्याद्याग्रहाःसर्वेवा
युराग्निस्तथैवच नैवप्रातिष्ठितस्तत्रदेवानांकश्चिदर्जुन देवतानिर्जिताःसर्वास्तेनोग्रेणदुरात्मना देवतास्त्रा
गताःसर्वायत्रदेवोमहेश्वरः उपायंब्रूहिनोदेवस्वर्गाणामद्यकागतिः ईश्वरउवाच गच्छंतुदेवताःसर्वेयत्रदेवो
जनार्दनः शरणागतदीनार्तपरित्राणपरायणः ईशस्यवचनंश्रुत्वागताःसर्वेसवासवाः त्रिदशास्तत्रसंतस्थु
र्यत्रदेवोजनार्दनः तत्रैवसजगन्नाथःप्रसुप्तोजलमध्यगः जलमध्यमहायोगीदेवदेवोजगत्पतिः इंद्रउवाच॥
नमस्तेदेवदेवेशमहासुरविमर्दन दैत्यारेपुंडरीकाक्षत्राहिनोमधुसूदन त्रिदशाआगताःसर्वेभयार्ताःपुरुषोत्तम
रक्षनोदेवदेवेशत्वंगतिःसर्वदेहिनाम् देवाःसर्वेजगन्नाथभयार्तास्त्वांसमागताः शरणंभवदेवेशदेवानांसुभवात्र

गतिः त्वंमातासर्वलोकानांत्वमेवजगतःपिता त्वंसृष्टिस्त्वंस्थितिश्चैवत्वंचसंहारकारकः त्वंस्वाहात्वंस्वधादे
ववषट्कारस्त्वमेवच ओंकारोदेवदेवेशत्वमेवगरुडध्वज त्वंशिवस्त्वंतथाब्रह्मात्वंसूर्यस्त्वंचचंद्रमाःत्वमग्निर्देवदेवेश
वायुराकाशमेवच नत्वयारहितंकिंचित्त्रैलोक्येसचराचरं स्थावरंजंगमंचैवत्वयिसर्वंप्रतिष्ठितं दानवैर्निर्जितादेवाः
स्वर्गस्थानान्निराकृताःरक्षमांदेवदेवेशशरणागतवत्सल इंद्रस्यवचनंश्रुत्वा हरिर्वचनमब्रवीत् श्रीभगवानुवाच ॥
कीदृशोदानवःशक्रनामाकिंकीदृशंबलं किंस्थानंतस्यदैत्यस्यसर्वंब्रूहिममाग्रत ॥इंद्रउवाच॥ सर्वंजानासियोगीशब्र
ह्मवंशसमुद्भवःतालजंघस्तुनामासीदुग्रोवैमहासुरःमहाबलोमहावीर्योब्रह्मवीर्येणगर्वितःतस्यपुत्रोतिविख्यातो
मुरोनाममहाबलःपुरीचंपावतीनामतस्यामेववसत्यसौपुरंदरमुखादेवाःस्वर्गात्तेननिराकृताःरक्षास्मान्देवदेवेशत्रप
भान्गरुडध्वज अन्यइंद्रःकृतस्तेनचान्यस्तेनहुताशनःसचंद्रग्रहनक्षत्रराश्यादिसहितंचयत् सर्वमन्यत्कृतंतेनसं
त्यंसत्यंगदाधर इतिश्रुत्वावचस्तेषांप्रोवाचगरुडध्वजः हन्मितंदानवंदुष्टंसर्वदेवभयंकरं त्रिदशैःसहितोदेवोग.
तश्चंपावतींपुरीं दृष्ट्वादेवान्समायातान्गर्जमानोमहासुरः असंख्याताःसहस्राणिदिव्यप्रहरणायुधाः असुरास्ता
डयामासुःपुनर्देवान्बलाधिकाः हन्यमानास्तुतेदेवादुद्रुवुः सर्वतोदिशः ततस्तेनिर्गताःसर्वेभयभीतादिशोद
श, हरिस्तमसुरंतत्रातिष्ठतिष्ठेत्युवाचह चक्रंनिरीक्षयामासक्रोधादरुणलोचनः हेदानवदुराचारममबाहूनिरीक्षय
तद्दुन्मुखंसर्वंपतितादानवर्षभाः एकोयंदानवोतिष्ठत्सयुयोधसहारिणा युद्धंकृत्वादानवेननिर्जितोमधुसूदनः
तोदेवदेवेशोबाहुयुद्धमयाचत बाहुयुद्धंकृतंतेनदिव्यंवर्षसहस्रकं बाहुयुद्धमभूत्पार्थसर्वलोकभयंकरं विष्णुः
सेततस्तेनयुद्धभूमेर्विनिर्गतः दानवःपृष्ठतश्चापिगतोवदरिकाश्रमे गुहासिंहावतीनामतत्रसुप्तोजनार्दनः
द्वादशमध्येएकद्वारेधनंजय तत्रप्रसुप्तोदेवेशोभयभीतोजनार्दनः दानवःपृष्ठतोलग्नःप्रविष्टस्तांमहागुहां

प्रसुप्तं सहरिं दृष्ट्वा दानवेंद्रः प्रहर्षितः ॥ सुप्तो मया हरिर्दृष्टः प्रविष्टः संकटे कथं ॥ मारयामि न संदेहो दानवानां भयंकरं ॥ नि-
र्गता कन्यका तस्य शरीरान्माधवस्य च ॥ तेजस्विनी च शोभाढ्या दिव्यप्रहरणायुधा ॥ विष्णोस्तेजःसमुद्भूता महाबल-
पराक्रमा ॥ तया संमोहितो दैत्यो मुरो नाम ते पांडव ॥ युद्धं कृतं तया तेन दानवेंद्रेण कांक्षितं ॥ साकन्या युध्यत तदा कोपा
दारुणलोचना ॥ तस्याः कोपेन कौंतेय भस्मीभूतः स दानवः ॥ बहवो दानवास्तत्र सबंधुसपरिग्रहाः ॥ निहते दानवे तत्र रणे देवः
प्रबोधितः ॥ पतितं दानवं दृष्ट्वा हरिर्विस्मयमागतः ॥ केनायं निहतो दैत्य अत्युग्रो मम वैरकृत ॥ अत्यद्भुतं कृतं कर्म मम कौतूह
लं परं ॥ न देवो न च गंधर्वो योजघान तु दानवं ॥ सविस्मयो हरिर्जातो वागुवाचाशरीरिणी ॥ अयं विनिहतो दैत्यः सर्व
देवभयंकरः ॥ देवाश्च भयभीताश्च येन स्वर्गान्निराकृताः ॥ हरिं प्रसुप्तं दृष्ट्वा तु दैत्यान्दृष्ट्वा मदोद्धतान् ॥ गताश्च शरणं
सर्वे दृष्ट्वा दैत्यं निपातितं ॥ तस्यास्तद्वचनं श्रुत्वा हरिर्वचनमब्रवीत् ॥ निहतो दानवो दुष्टः सर्वदेवभयंकरः ॥ अहं च निर्जि
तस्तेन कथं सोपि निपातितः ॥ विष्णोस्तद्वचनं श्रुत्वा वाचा वचनमब्रवीत ॥ एकादशी ह्यहं देव सर्वपापभयंकरी ॥ क्षीयमा
णं हरिं दृष्ट्वा प्रहृष्टं दानवेश्वरं ॥ त्रिलोकेषु भयं कुर्यात् दृष्टुग्रश्चैष दानवः ॥ मया कुपितया देव किमाश्चर्यं तव प्रभो ॥ मम को
पेन देवेश त्रैलोक्यं विलयं व्रजेत् ॥ श्रीभगवानुवाच ॥ तुष्टोहं तव देवेशि वांछितं च ददामि ते ॥ अत्यद्भुतं कृतं भद्रे उपकार
स्त्वयानघे ॥ निहतं दानवं दृष्ट्वा संतुष्टाः सर्वदेवताः ॥ प्रब्रूहि त्वं वरं भद्रे यत्ते मनसि वर्त्तते ॥ ददाम्यहं न संदेहो यद्देवैरपि दु
र्लभम् ॥ एकादश्युवाच ॥ जगत्त्रयेषु देवेश संचरामि हसुव्रत ॥ अहं तवप्रिया शक्तिस्तादृशीं कुरु मां प्रभो ॥ अहं तिथि
प्रधानास्यां सर्वविघ्नविनाशिनी ॥ सर्वपापक्षयकरी ह्यायुर्बलविवर्द्धिनी ॥ उपोष्य मां च ये भक्तास्तव भक्तिपरायणाः
सर्वसिद्धिर्भवेत्तेषां यदि तुष्टोसि मे प्रभो ॥ उपवासेन यत्पुण्यं तस्यार्द्धं नक्तभोजने ॥ नक्तं ह्यर्धेन पुण्येन एकभक्तं विशि-
ष्यते ॥ दिवसस्याष्टमे भागे मंदीभूते दिवाकरे ॥ इति तं नक्तमित्याहुर्न नक्तं निशि भोजनं ॥ ददामि वैष्णवं स्थानं कल्प-

कोटिशतान्यपि ॥ गर्भवासोनभवतितादृशंमेफलंप्रभो ॥ श्रीभगवानुवाच ॥ यत्त्वंवदसिकल्याणितत्सर्वंभवि-
ष्यति ॥ धर्मार्थकाममोक्षाणांसिद्धिंप्राप्स्यंतिमानवाः ॥ ममभक्ताश्चयेलोकास्तवभक्तास्तथापिच ॥ चतुर्युगेपविख्या
तास्त्रिपुलोकेषुवैपरं ॥ तन्मभक्तुमहन्त्येएकादश्यांव्रतेस्थितं ॥ ममपूजांकरिष्यंतिएकादश्यांनसंशयः ॥ सर्वतिथ्यु
त्तमात्वंमत्प्रसादाद्भविष्यसि ॥ एवमुक्त्वाततःसातुतत्रैवांतरधीयत ॥ पुराकैटभक्तेदेशेकर्णिकानगरोत्तमे ॥ कर्णसेतु
र्हिराजर्षिन्यवसत्स्वर्क्षिसत्तजः ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैः शूद्रैश्चैवानुमोदितः ॥ नदुर्भिक्षंनदारिद्र्यंराज्ञितास्मिन्स्थि
तेप्रभौ ॥ राष्ट्रस्यकश्चनापुत्रीविधवाचनविद्यते ॥ पुत्रदुःखंपिताक्वापिनपश्यतिकुत्रचित् ॥ एतादृशेमहाराजेप्र
जाःशासतिप्रभौ ॥ धनहीनोद्विजःकोपिक्षुत्क्षामोविपदांगतः कुटुंबभरणेशक्तः कृच्छ्रंतदनुवर्तते ॥ सुदामानामविप्र
र्षिभार्यासाध्वीचतत्समा भर्तुः ॥ शुश्रूषणेसक्तासदाचारेगृहस्यत्र रहःपृच्छतिभर्तारं म्लायतीवदनेनसा ॥ स्वा
मिन्पापेकृतेपूर्वंधनहीनस्तुजायते ॥ धर्महीनेधनंनास्तिधनहीनेक्रियानहि ॥ तस्मात्केनाप्युपायेनधर्मस्यजननंकुरु ॥
एतस्मिन्नंतरेपार्थ ॥ देवर्षिःसमुपागतः ॥ दंपतीउत्थितौतत्रमधुपर्कायत्नादरात् ॥ आसनेतिष्ठभोस्वामिंस्तंद्विजातिर
भाषत ॥ अद्यमेसफलंजन्मअद्यमेसफलाःक्रियाः ॥ अद्यमेसफलंसर्वंभवतांदर्शनेनच ॥ अस्मिन्पुरेतुहेस्वामिन्सर्वे
वैसुखिनोजनाः ॥ अहंतुधनहीनस्तु महादुःखेनपीडितः ॥ कथयस्वप्रसादेनधनाढ्योभवितास्मिच ॥ धनहीनस्य
लोकेस्मिन् ॥ वृथासर्वमनोरथाः ॥ एतच्छ्रुत्वातुवचनंद्विजंतंनारदोब्रवीत् ॥ ॥ नारदउवाच ॥ मार्गशीर्षेसितेप-
क्षेउत्पन्नानामनामतः ॥ तदुपोषणमात्रेणधनाढ्योजायतेध्रुवं ॥ तथापापानिनश्यंतिएतत्सत्यंवचोमम ॥ सर्वसौ
ख्यकरोन्नृणांहरिवासरउत्तमः ॥ गतेतुनारदेपश्चात्कृतंकलाप्रयत्नतः ॥ स्वयमेवाश्रियातास्मिन्नवात्सीद्द्विजमंदिरे ॥ भोगा-
न्सविपुलान्भुक्त्वागतोवैहरिसन्निधौ ॥ एतस्मात्कारणात्पार्थकर्तव्योहरिवासरः ॥ अतस्त्वैवकर्तव्यंसमस्तव्रतकारिभिः ॥

तिथिरेकाभवेत्सर्वा पक्षयोरुभयोः समा ॥ अतऊर्ध्वंपद्मपंचकमंकितवैष्णवदुष्टैः क्षिप्तं विष्णुधर्मोक्तिस्पृष्टशास्त्र
स्याविरोधादतोनुमीयते ॥ एकादश्युदयेस्वल्पान्नंतेचैवत्रयोदशी ॥ मध्येचद्वादशीपूर्णात्रिस्पृष्टासाहरिप्रिया ॥ एकामु
पोष्यलभतेसहस्रैकादशीफलं ॥ सहस्रगुणितंदानादेकादश्यास्तुपारणे ॥ अष्टम्येकादशीषष्ठीतृतीयाचचतुर्दशी ॥ पूर्व
विद्धानकर्तव्याकर्तव्यापरसंयुता ॥ एकांतूपोषयेत्तांतुद्वादशींविष्णुवल्लभां ॥ दशमीवेधसंयुक्ताहंतिपुण्यंपुराकृतं ॥ एका
दशीह्यहोरात्रंप्रभातेघटिकाभवेत् ॥ संपूर्णापरिकर्तव्याद्युपोष्याद्वादशीयुता ॥ एवंविधासयाप्रोक्तापक्षयोरुभयोरपि ॥
एकादश्यांप्रकुर्वंति उपवासंनसंशयः ॥ तेयांतिपरमंस्थानंयत्रास्तेगरुडध्वजः ॥ धन्यास्तेमानवालोकेविष्णुभक्ति
परायणाः ॥ एकादश्यास्तुमाहात्म्यंव्रतकालेतुयःपठेत् ॥ गोसहस्रफलंतस्यपुण्यंभवतिभारत ॥ दिवावायदि
वारात्रौ यःशृणोतीहभक्तितः ॥ कुलकोटिसमायुक्तोविष्णुलोकेवसेद्ध्रुवं ॥ एकादश्याश्चमाहात्म्यंपठ्यमानंशृ
णोतियः ॥ ब्रह्महत्यादिपापानिनश्यंतेनात्रसंशयः ॥ विष्णुनामसमंनास्तिगीतायाश्चधनंजय ॥ एकादशीसमं
नास्तिसर्वपापप्रणाशनम् ॥

॥ इतिश्रीभविष्योत्तरेमार्गकृष्णोत्पन्नैकादशीव्रतमाहात्म्यम् ॥

अस्यामेवमार्गकृष्णैकादश्यांवैतरणीव्रतम् ॥ हेमाद्रौभविष्ये ॥ शरतल्पगतंभीष्मंपर्यपृच्छद्युधिष्ठिरः ॥ व्रतेनयेन
पुण्येनयमलोकोतदुस्तरे ॥ नारीवापुरुषोवापियमंनैवप्रपश्यति ॥ तत्समाचक्ष्वधर्मज्ञपितामहकृपांकुरु ॥ भीष्मउवाच ॥
एकादशीवैतरणींतांकृत्वातुसुखीभवेत् ॥ यमलोकंनपश्येच्चशोकंचैवनपश्यति ॥ युधिष्ठिरउवाच ॥ केनतातविधाने
नकर्तव्यासामहाफला ॥ पितामहसमाख्याहितत्रदानंममप्रभो ॥ भीष्मउवाच ॥ एकादशीतिथिःकृष्णामार्गशीर्षे

गताभवेत ॥ तामासाचनरः सम्यग्गृहीत्वानियमंशुचिः ॥ एकादशीसुर्गकृष्णानाम्नावैतरणीशुभा ॥ साव्रतेनसदा
कार्य्योवर्षनक्तोपवासिना ॥ मम्यक्हेतुनरःस्नात्वानित्यानिर्वर्त्यसत्क्रियाः ॥ रात्रौसुरभिमादायकृष्णांसर्वांगुयथावि-
धि ॥ पूर्वास्यासाविधातव्याकृष्णागौर्भूतलेशुभे ॥ अग्रपादौसमारभ्यपश्चात्पादद्वयावधि गोपुच्छंतुसमासाद्यकुर्य्या
दापिस्ततर्पणं ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातापितामहीचैवतथैवप्रपितामही ॥ मातामहस्तत्पिता
चप्रमातामहकादयः तेसर्वेमेप्रगृह्णंतुगोपुच्छोदकतर्पणं पितामाताचभार्य्याचभगिनीदुहितापतिः पितृष्वसा
मातृष्वसासप्तगोत्राणितर्पयेतु ॥ ततःपूजाप्रकर्तव्याशास्त्रदृष्टाविधानतः ॥ गांचैवश्रद्धयायुक्तश्चंदनेनानुलेपयेत्
गंधतोयेनचचरणौशृंगेप्रक्षाल्यभक्तितः ततोनुपूजयेद्वस्त्रैःपुष्पगंधानुलेपनैः मंत्रैःपुराणसंप्रोक्तैर्यथास्थानं
यथाविधि ॥ अथगोपूजा ॥ ॐ गोभ्यमादाभ्यांनमः ॥ इत्यादिपूजाक्रमोगोदानप्रयोगेज्ञेयः ॥ स्थालेष्वते
पुपायादीन्प्रक्षिपेच्छुद्धमानसः ॥ पश्चात्प्रदापयेद्धूपं ॥ गोधूपःप्रतिगृह्यतां ॥ आसिपत्रादिकंघोरंनदींवै
तरणींतथा ॥ प्रसादात्तेतरिष्यामिगोमातस्तेनमोनमः ॥ सुखेनतीर्यतेयस्मात् नदीवैतरणीध्रुवं ॥ यस्मादे
कादशीकृतातस्माद्वैतरणीस्मृता ॥ आनंदकृत्सुलोकेदेवानांचसदाप्रिया ॥ गौस्त्वंप्राहिजगन्नाथेदीपोयंप्रतिगृह्यतां
आच्छादनंग्रवेदद्यात्सम्यक्शुद्धंसुनिर्मलं सुरभीवस्त्रदानेनप्रीयतांपरमेश्वरः मार्गशीर्षादिकेभक्त्यायावन्मासचतुष्ट
अन्यमासचतुष्कंहियावकाशनमेवच ॥ नैवेद्यंहिमयादत्तंसुरभिप्रतिगृह्यतां ॥ द्वितीयंगुरवेदद्यात्तृतीयंस्वयमेवच
मासंप्रकुर्वीतिमासद्वादशकंव्रतं ॥ उद्यापनंततःकुर्य्यात् पूर्णेसंवत्सरेतथा शय्यांसतूलिकांकृत्वादंपत्याःपरिधा
नवस्त्राकृष्णवर्णातु धेनुःकार्य्याप्रयत्स्विनी ॥ सौवर्णांसुरभिंकृत्वास्थापयेत्तूलकोपरि ॥ ततस्तांपूजयेन्मंत्रैःपु
ष्किसंयुतः ततस्तांगुरवेदद्यात्सर्वेदत्वाक्षमापयेत ॥ यमद्वारेमहाघोरेघोरावैतरणीनदी ॥ तांतर्तुंकामोद

स्यामितुभ्यंवैतरिणींतुगां नारीवापुरुषोवापिव्रतस्यास्यप्रभावतः राज्यंबहुविधंभुक्त्वास्वर्गलोकेमहीयते भारोलो
हस्यदातव्यः कार्पासोद्रोणसंयुतः वैतरिण्याःसमाप्त्यर्थं ब्राह्मणायकुटुंबिने ॥
इतिभविष्योत्तरेमार्गकृष्णैकादश्यावैतरिणीव्रतम् ॥
मार्गकृष्णद्वादश्यांकृत्याविशेषाभावाद्धरिदेवत्वादुभयोर्दैवतंहरिरित्युक्तेरेकादशीकृत्यमेवात्रकार्य्यम् ॥
मार्गकृष्णत्रयोदश्यांतूभयपक्षगतत्रयोदशीप्रदोषव्रतवत् प्रदोषव्रतंकार्य्यं मार्गकृष्णचतुर्दश्यांदेवि
कातीर्थावतारउक्तः पाद्मेदेविकामाहात्म्ये मार्गशीर्षकृष्णपक्षेचतुर्दश्यांदिनोदये अष्टादशेद्वापरांतेप्रा
दुर्भूतामहानदीति ॥ अतोस्यांचतुर्दश्यांदेविकायात्राकार्या शुद्धिक्षेत्रेहरिद्वारेपुष्करेचेंद्रतीर्थयोः
इंद्रघाटसमारभ्या मरतीर्थमहाफलं प्रभासेसंगमेतिचस्नात्वासंपूज्यशंकरं दत्त्वादानान्यनेकानियत्फलंल
भतेनरः तत्फलंकोटिगुणितंपूजनाद्देविकातटे अत्रदत्तानिदानानिफल्गुमात्राण्यपिक्वचित् सर्वाण्यक्षयतांया
तिकल्पकोटिशतेष्वपि अन्यपर्वसुयद्दत्तं तदनंतफलंस्मृतं कदाचित्तस्यचांतस्यादेविकातीरवासिनं विप्र
वर्य्यायदत्तंतस्यांतोनैवाविद्यते सुवर्णवसनंशय्यांगावोन्नंरजतंमहीं पुस्तकंमंदिरंगेहंदासीदासांश्चभूषणं दे
विकायाःकथांचापि दत्त्वाक्षय्यंफलंलभे दित्यादिप्रतिपुराणेपुसविशेषमुक्तमत्रविस्तरभयात्सूचितमेव मार्गामायां
पितृपूजोक्तानारदीये मार्गामायांपितृपूजाश्राद्धैर्ब्राह्मणभोजनैः ब्रह्मचर्य्यादिनियमैर्जपहोमार्चनादिभिरिति अ
स्यामेवमार्गामायां गौरीतपोव्रतं सूतसंहितायां-तथाचहेमाद्रौकालिकापुराणे महातपापरंनामधेयंगौरीतपोव्रतं
सूतउवाच इंद्राणीप्रांजलिर्भूत्वास्वपतिंवाक्यमब्रवीत् एकंव्रतंसमाचक्ष्वपुत्रपौत्रसुखप्रदं इतिवाक्यंतदाश्रुत्वा
ह्युवाचवचनंवृषः शृणुचार्वंगिसकलंयन्मयासुकृतंकृतं बृहस्पतेस्तुजनकः पृष्टःप्राहांगिराःसुधीः तद्व्रतंकथयास्य

धसयः सुखकरं परं पतिपुत्रसुखावाप्तिर्जायते जगति स्थिता गौरीप्रीत्यर्थमेवादौ स्त्रीभिर्यत्क्रियते तपः गौरीतप
इति ख्यातं तस्मात्तद्व्रतमुत्तमं तस्मात्स्त्रीभिस्तपोभिश्च तोषणीया शिवप्रिया आदौ मार्गशिरे मासि ह्यमावास्यांशु
भे दिने गृह्णीयान्नियमं तत्र दंतधावनपूर्वकं उपवासस्य नक्तस्य गौरी शर्प्रीतये मुदा ईशार्द्धांगहरे देवि करिष्ये हं व्रतं
तव पतिपुत्रसुखावाप्तिं देहि देवि नमोस्तु ते इति नियममंत्रः ततो मध्याह्नसमये स्नात्वा तद्यादि कृत्वा ती सूर्यायार्घ्यं
ततो दद्याद्दत्वा गौरीं महेश्वरं अहं देव व्रतमिदं कर्तुमिच्छामि शाश्वतं तवाज्ञया महादेव तत्र निर्वहणं कुरु उक्त्वैवं नियमं
गृह्य त्वर्घ्याण्येवं तु षोडश गृहमागत्य पूजार्थमुपहारान्प्रकल्पयेत् शिवालयं ततो गत्वा शिवं संपूज्य सुधीः गौरीमभ्यर्च
येत्पश्चाद्विधिनानेन तच्छृणु पार्वतीतु ततः पादौ जान्वोर्हैमवतीति च जंघयो रविकल्येवं गुह्ये शिवशिवल्लभे नाभिं गं
भीरनाभीति चापर्णेत्युदरं पुनः महादेवीति हृदयं कंठं श्रीकंठकामिनी मुखं षण्मुखमातेति ललाटे लोकमोहिनी मौलि
का कुक्षिरत्नेति शिरस्यभ्यर्चयेत्ततः दक्षिणे गणपः पूज्यो वामे स्कंदस्तु वाहनः धूपदीपादिनैवेद्यं नत्वा कृत्वा प्रदक्षिण
फलेनार्घ्यं ततो दद्याद्ध्यात्वा देवीं महेश्वरीं कृत्वा ताम्रमयं पात्रं मृण्मयं च सुभाजनं अष्टतंतुमयीं वर्त्तिं तस्मिन्पात्र
निवेशयेत् घृतेनापूर्य गव्येन तत्पात्रं विमलेन च दीपं प्रज्वालयेत्पश्चाद्यावत्सूर्योंतरे स्थितः एवं संक्षिप्य
तां रात्रिं जागरेण समन्विता ब्राह्मे मुहूर्ते चोत्थाय पूजयेद्द्विजदंपती कुर्याद्दीभोग्यदलित्तींसमंका चिद्यासिनीं तदा
एकांते न गुडान्नाद्यैः पूर्णा पूर्णफलप्रदा ऋतूद्भवैः फलैश्चैव पूपिकाफललड्डुकैः सौभाग्याष्टकसंयुक्तं पात्रं कुर्याच्च
धातुजं तस्योपरि गतं दीपं ग्रामयेन्निशितामाभिः सुवासिनी वचो ग्राह्यं दीपं सूर्याय दर्शयेत् यावत्कलकलाश
ब्दं कुर्वंत्येवं ककाः ककाः तावत्पुरस्तात्कर्तव्यमिदमेवादरात्प्रभो उत्तिष्ठते च दिनगा विहंगाश्चारुलोचने तदाकर्ण
नमात्रेण सौभाग्यं व्रजाति स्त्रियः अत एतद्व्रतं नारी पश्चादुत्थापयेच्च तान् तिथिमेकां समाप्यैवं दंपती भोज्य शक्तितः

परिधाप्याप्यलंकृत्य वासोभिर्भूषणांजनैः मात्यैः सुगंधैर्विविधैः फलैः सिंदूरकुंकुमैः संतोष्य समनुज्ञा
प्य स्वयं भुंजीत तु बंधुभिः एवं द्वितीयवर्षे च प्रतिपत्प्रभृति श्वरेत् वर्षे वर्षे क्रमादेवं द्वितीयादिषु चाचरेत् एवं षोड
शवर्षाणि कृत्वा चैवं तु वत्सरं पश्चादुद्यापनं कुर्याद्व्रतसंपूर्तिहेतवे मार्गशीर्षे प्यसंप्राप्ते मासे गौरीश्वरप्रिये पौ
र्णमास्यां दिने रम्ये निमंत्र्य द्वादशदंपतीन् मध्यान्हे ष्टदले पद्मे गौरीं तारीं समर्चयेत् यथोक्तेन विधानेन पुष्पधूप
दिभिस्तथा सौहालिकाभिः कासारैः पूपापूपैश्च भामिनि पायसेन घृतेनापि शर्करामोदकैस्तथा पूरयि
त्वा ष्टसंख्याकान् धातुमृण्मयसंयुतान् दंपतीभोजयित्वा तु तेभ्यो दद्याद्यथाविधि अलंकृत्य यथाशक्त्या गौरीं मेत्रीय
तां सिति गुरवे दक्षिणोपेतां गौरीं कनकनिर्मितां दद्याद्धेनुं सवत्सां सवस्त्रां सदक्षिणां अन्यान्य
पि यथाशक्ति दद्याद्दानानि भामिनी यथादिष्टतमं लोके तद्दद्याद्द्विजन्मने चापल्यमायुषो ज्ञात्वा संपत्स्व
पि सुंदरी षोडशाब्दं व्रतमिदं कुर्याद्धर्षेण भक्तितः गौरीतपोव्रतमिदं या करोतीह भामिनी बाल्ये यौ
वने काले वा वार्द्धके वा हरप्रिया अक्षय्यं सौभाग्यमतुलं धनधान्यसुतान्वितं अक्षय्यात्रपराधा इति शोभ
भवेदन्यां हते श्वर्य्ये भर्तृसौख्यं न संशयः दुर्लभं मानुषं जन्म तत्रापि द्विजजन्म तासदाचारपरत्वं च तत्रापि चाविशिष्यते
एवं वारत्रये या स्त्री कुरुते व्रतमुत्तमं मातापित्रोः प्रियं चापि प्राप्नुयाच्छुद्धवंशतां निर्मलं जन्मनो वापि मनसश्चा
पि संपदं लभते शुभतेजश्च पतिपुत्रसमन्विता इह भोगान्यथाकामं भुक्त्वा स्वर्गमवाप्नुयात् इत्यं गिरीशवचनं
सांद्य पुराणप्रोक्तं गौरीतपोव्रतमिदं विदधे यथेच्छं तस्य प्रभाववशतः सुलभं हि राज्यं सौख्यं च सर्वमतुलं पतिपुत्रयुक्तं
इति सूतसंहितायां गौरीतपोव्रतं इदमेव महाव्रतापरनामधेयं कालिकापुराणे ॥
तिलाद उवाच ॥ महाव्रतमथो वक्ष्ये येनारोहति तत्पदं सुरासुरमुनीनां तु दुर्लभं तद्विधिं शृणु पूर्वेण्याश्वयुजस्य

तेपायसंचघृताप्लुतं नक्तंभुंजीतशुद्धात्माओदनंचैक्षवान्वितं आश्वयुज्यश्चांद्रोमासः सकार्तिकस्तस्यांतेचं
द्र कार्तिकमासस्यांतेमार्गमायामित्यर्थः ऐक्षवमिक्षुरसः शवर्य्यैतेशुचिर्भूत्वाविल्वजंदंतधावनं ॥ भुक्त्वाचैतन्म
हादेवंनत्वाभक्तियुतोव्रती अहंदेवव्रतमिदंकर्तुमिच्छामिशाश्वतं तवाज्ञयामहादेवतत्रनिर्वहणंकुरु उक्त्वैवंनियमं
गृह्णन्वर्षाण्येवतुषोडश तिथिःप्रतिपदाद्यास्तुपारयिष्याम्यनुत्तमाः ततोमार्गशिरेमासिप्रतिपद्यपरेहनिउपावसेद्गुरुं
एक्षामहादेवंस्मरन्मुहुः महादेवंस्मरन्विप्रान्नमस्योच्छिन्नविग्रहान् षोडशाष्टौतदर्द्धंवादांपत्यांश्चनिमंत्रयेत् आमंत्र्य
चगृहंगत्वामहादेवंस्मरन्क्षितौ शुचिवस्त्रास्तृतांतस्तुनिराहारोनिशिस्वपेत् अथोदयेसहस्रांशोःस्नात्वाचादायदी
पकान् नैवेद्यस्नापनाद्यंचादायगच्छेच्छिवालयं स्नापयेत्पंचगव्येनघृतेनतदनंतरं मधुनाथतथादध्नाभूयश्चपयसात
थारसेनचाथखंडेनफलैश्चस्नपयेत्पुनः तिलांबुनातथास्नाप्यपश्चादुष्णेनवारिणा लेपयेदथतंपश्चात्कर्पूरागुरुचंदनैः
एवंसंपूज्यतंभक्त्याहैमंन्यस्यव्रजेद्गृहं हैमंसुवर्णपुष्पं नानाफलैश्चसंपूज्यदद्यान्नैवेद्यमेवहि गृहेपत्न्यायथा
न्यासंहिरण्यरेतसंविभुं जातवेदसमादायतर्पयेत्तिलसार्पिषा व्रतिनश्चतथाचार्यान्मिथुनानिचभोजयेत् हेमं
वस्त्रादिदानानियथाशक्त्यातुदापयेत् आरभ्यैवंनिधिकुर्य्याद्दरिद्रोवाथवेश्वरः वित्तसामर्थ्यतश्चैवप्रतिमासं
तुकारयेत् एवंविसृज्यतान्सर्वान्सार्द्धंबंधुजनैःस्वयं पीत्वाद्दौपंचगव्यंतुहृष्टोभुंजीतवाग्यतः यत्किंचिदेतदुद्दिष्टंम
हादेवमुदीरयेत् द्वितीयेब्देद्वितीयांतूपवसेत्कार्त्तिकावधि आददीततिथिंचैकांमार्गमासेततःपरं पूर्ववत्संत्य
जेत्पौषेप्रत्यब्दंचैवमाचरेत् दर्शेनक्तंप्रतिपद्युपवासइतिप्रथमवर्षे प्रतिपदिनक्तंद्वितीयायामुपवासइतिद्वितीयेब्दे
तृतीयेब्देतुद्वितीयायांनक्तं तृतीयामुपवासः एवंशेषेषुवर्षेषु कृत्वैवंषोडशेपूर्णेपूर्णमास्यांसमापयेत् कार्त्ति
क्यामुदयइत्यर्थः पूर्ववद्देवमभ्यर्च्यकुशरान्नंसमर्पयेत् महादेवायगांदद्याद्दीक्षितायद्विजायच हेमशृंगींकांस्य

दोहासघंटाकांस्यदोहना — शिवव्रतंधरान्विप्रान्सहाचार्य्यांश्चषोडश — संभोज्यहेमवस्त्राद्यैर्यथाशक्त्यातुदक्षिणां
छत्रोपानहकुंभांश्चदद्यात्तेभ्यःपृथक्पृथक् — भोजयित्वाविसृज्यैवंमिथुनानितुषोडश ब्राह्मणांश्चयथाशक्त्याभोज
येद्देमारगान् — एवंमहाव्रतंचैतद्ब्रह्मघ्नोप्यघमर्षणं — धन्यमायुःप्रदंनित्यंरूपसौभाग्यदंपरं — स्त्रीपुंसोश्चैवनिर्दिष्ट
व्रतमेतत्पुरातनं — विधिनैतच्चकर्तव्यंभवेच्चसधवायदि — उपोष्यप्रतिमासंतुभुंजीतबंधुभिःसह — एकद्वित्रिचतुष्पा
दिसर्वेष्वब्देषुशक्तितः — अंतेचांतेत्रवर्षाणांप्रारंभाविधिमाचरेत् — अथारब्धेव्रतेकश्चिदसमाप्तेमृतोभवेत् — सोपित
त्फलमाप्नोतिव्रतारंभप्रभावतः — वाचकाःश्रावकाश्चैवश्रोतारश्चव्रतस्यये — भवंतिपुण्यसंयुक्तास्तत्पदाभिमुखा
श्चये — इतिकालिकापुराणे — महाव्रतापरनामधेयंगौरीतपोव्रतम् हेमाद्रौप्रोक्तम् ॥
अथमार्गशुक्लप्रतिपदायांधनव्रतं — नारदीये — अथमार्गसितायांयांधनव्रतमनुत्तमं — नक्तंविष्णवर्चनंहोमः
सौवर्णहुतभुक्तनु — रक्तवस्त्रयुगंछन्नाद्विजायप्रतिपादयेत् — एवंकृत्वाधनैर्धान्यैःसमृद्धोजायतेभुवि — वह्निताद्ग्ध
पापस्तुविष्णुलोकेमहीयतइति — मार्गशुक्लद्वितीयायांश्राद्धंपितृपूजनंच — नारदीये — आरोग्यंलभतेचापिपुत्रपौ
त्रसमन्वितः — मार्गशुक्लतृतीयायांश्राद्धेनापितृपूजनमिति — मार्गशुक्लतृतीयायांहरगौरीव्रतंशुभं — कृत्वापूर्ववि
धानेनपूजयेज्जगदंबिकां — एतद्व्रतप्रभावेनभुक्त्वाभोगान्मनोरमान् — देवलोकंसमासाद्यमोदतेचतयासहेति
अथहरगौरीव्रतकथा — भविष्योत्तरपुराणे — युधिष्ठिरउवाच — कर्मणाकेननारीणांव्रतेननियमेनच — सौभाग्यंज
यतेतीवपुत्राश्चबहवःशुभाः — धनंधान्यंसुवर्णंच वस्त्राणिविविधानिच — अवियोगंचसततं — लभंतेपतिपुत्रयोः
श्रीकृष्णउवाच — शृणुपार्थप्रवक्ष्यामिव्रतानामुत्तमंव्रतं — यत्कृत्वासुभगानारीवंशपत्याप्रजायते — धनंधान्यंहिर
ण्यंचदासीदासांस्तथैवच — उत्पद्यतेगृहीतेनतद्व्रतंकथयाम्यहं — उमामाहेश्वरंनाम — चाप्सरोभिःपुराकृतं वि

द्याधरैःकिन्नरैश्चऋषिकन्याभिरेवच — रुक्मिण्यारंभयाचैवसीतयाचाप्यहल्यया – रोहिण्यादमयंत्याचतारयाचान्
सूयया — एताभिश्चरितपूर्वंव्रतंसर्वव्रतोत्तमं – सौभाग्यारोग्यफलदंदारिद्र्यव्याधिनाशनं – मर्त्यलोकेस्त्रियोयाश्चदुर्भ
गारूपवर्जिताः अपुत्रानिर्धनाश्चैवसर्वसौभाग्यवर्जिताः तासांहितार्थंपार्वत्याउमामाहेश्वरंव्रतं अवतारितंतयापार्थ
तयासत्यधर्माःस्त्रियःपूर्वंमार्गशिरेमासि – नारीधर्मपरायणाशुक्लपक्षेतृतीयायांसोपवासाजितेंद्रियास्नात्वासंपूज्यल
लितांहरकायार्द्धवासिनीं पुनःप्रभातसमयेस्नानंचाकृत्रिमेजले – ततोदेवांस्तर्पयित्वाइदंवाक्यमुदीरयेत् — नमस्तेदे
वदेवेशउमादेहार्द्धहारक महादेविनमस्तेस्तुहरकायार्द्धहारिणि – इतिकृत्वाशिवंदेवंपंचाप्यगृहंगतःपूजयेद्देवमी
शानं पुष्पैःकालोद्भवैस्ततः – वामपार्श्वेउमांदेवींदक्षिणेनमहेश्वरं — धूपंचगुग्गुलंचापिदद्याद्दीपंघृतान्वितं – नैवेद्यं
चयथाशक्त्याघृतपक्वंनिवेदयेत् — कारयेद्वैश्वदेवंतुतिलाज्येनतुसंस्कृतं – पंचगव्यंततःप्राश्यआत्मकायविशोधनं
एवंद्वादशमासेतुपूजयित्वामहेश्वरी उद्यापनंततः कुर्यात्प्रहृष्टेनांतरात्मना — शिवंरौप्यमयंकृत्वाउमांहेममयींतथा
पश्चेरौप्येसर्वालंकारभूषितौ — चंदनैः शिवमभ्यर्च्य कुंकुमेनचपार्वतीं — अर्चयेत्कुसुमैः पश्चात्सुगंधैश्च
ढयेच्छुक्लवस्त्रेणशिवंरक्तेनपार्वतीं – पश्चाद्धूपंददेन्नारीभक्तिभावेनभाविता – भोजयेच्छिवभक्तांश्च-
भुक्तेभ्योदक्षिणांदद्याभक्त्याशाठ्यविवर्जिता — ततःप्रदक्षिणीकृत्यइदमुच्चारयेद्वचः उमा
पितामहो — व्रतेनानेनसुप्रीतौभवेतांममसर्वदा — एवमुक्त्वाजितक्रोधेब्राह्मणेवेदपारगे — व्रतंनि-
शालिनि — तारकेव्रतोपदेष्टृत्वादातिविशेषणे – इदंकृत्वाव्रतंनारीमहेशार्पितमानसा – अथमा-
हेश्वरः — शिवलोकेवसेत्तावद्यावदिंद्राश्चतुर्दश – अप्सरोभिःपरिवृताकिन्नरीभिस्तथैवच
यतेविमलेकुले – रूपयौवनसंपन्नाबहुपुत्रपतिव्रता – धनधान्यसमायुक्तेसुवर्णमणिघांदिते

यावज्जीवंगृहेरम्येतिष्ठत्यव्याहतेंद्रिया॥ वियोगंनैवसापश्येद्भर्तृमित्रसुतादिकैः॥ मृताशिवपुरंयातांशिवगौरीप्र
सादतः॥ हेमोमुमांप्रतिकृतिरजतंमहेश्वरोप्येसुशुद्धवृषभेशुभमाल्यवंतौ॥ संपूज्यरक्तसितवस्त्रयुगंवगूढौनारीभ
वत्यविधवासुतसौख्ययुक्ता॥ ॥
॥ इतिश्रीभविष्योत्तरेशिवगौरीव्रतं॥ अथास्यामेवभविष्योत्तरपुराणोक्तमवियोगव्रतम्॥
युधिष्ठिरउवाच॥ इहावियोगमासाद्यभुक्तेवंधुजनैःसह॥ वदनारीनरश्रेष्ठयजेद्येनशिवालयं॥ विधवाचपरेलोकेन
भूयोपिवियुज्यते॥ सुखसंदोहसौभाग्य॥ युक्ताभवतिभामिनीत्यादि॥ एवंकालीपुराणेपीदंमतम्॥ अथा
स्यप्रयोगः॥ मार्गेशुक्लद्वितीयायां चंद्रदर्शनंकृत्वा चांद्रायार्घ्यदानंविधाय॥ नक्तंविधाय॥ शिवालयंगत्वा
आचम्य॥ देवदेवमहादेवपार्वत्यासहितप्रभो॥ नमस्तेस्तुव्रतेदेवसांनिध्यंकुरुमेसदेतिनमस्कृत्वागृहमागता॥ उत्त
रांशागतमष्टांगुलमौदुंबरंविल्वंकाष्ठंवादंतधावनंप्राङ्मुखीभूत्वाभक्षयेत्॥ द्वितीयायांरात्रौभूमौस्वपेत्॥ ततोब्रा
ह्मेमुहूर्तेउत्थाय॥ पंचगव्यसर्वौषधिजलैःस्नात्वा॥ अहतेशुक्लवाससीपरिधाय॥ शालिपिष्टमयेस्त्रीपुंसोः
प्रतिमेविधाय॥ वेणुमयेपात्रेसंस्थाप्य॥ षोडशोपचारपूजांकुर्यात्॥ तत्रादौदेशकालौसंकीर्त्य॥ ॐमयाहंसप्त
सप्तपक्षयपूर्वकभर्तृवियोगावैधव्यपुत्रपौत्रादिसुखसिद्धिद्वाराश्रीउमामहेश्वरप्रीत्यर्थमवियोगतृतीयाव्रतंकरिष्ये
पूजासंभारंदिवापरिकल्प्यसोपवासापाखंडालापवर्जितातिष्ठेत्। ततोदिनांतेस्नात्वाशुक्लांबरा॥ तत्पिष्टपुत्तिकाद्वयं
पूजयेत्॥ ॐमंदारमालाकुलितालकायैकपालमालांकितशेखराय॥ दिव्यांवरायैचदिगंवराय॥ नमःशिवायैचनमः
शिवायेतिमंत्रेणषोडशोपचारपूजांगौरीव्रतविधिनापूजयेत्॥ ततःसपत्नीकमाचार्यंसंपूज्यरात्रौकथागीतवादित्रा
दिभिर्जागरणंकुर्यात्॥ प्रभातेस्नात्वा॥ गौरीमहेश्वरपूजांविधाय॥ यथाशक्तिद्विजमिथुनानिगौरीशप्रीतयेसंपू

न्यभोजयेत् ॥ आचार्यस्तु गौरीश्वरं प्रतिमे ॥ कृतस्वस्त्ययनो गाधे जले क्षिपेत् ॥ ततो व्रतफलं भूयस्त्वायान्यानपि शिव
भक्तान्द्विजान्दक्षिणान्नदानादिभिः ॥ परितोष्य स्वयं मिष्टान्नादि भुंजीत ॥ तत्र प्रतिमासं नाम पूजाप्रकारो यथा ॥ मार्गशी
र्षे शंकराय नमः ॥ गौर्य्यै नमः ॥ पौषे गौरीशाय नमः ॥ पार्वत्यै नमः ॥ माघे भवाय नमः ॥ भवान्यै नमः ॥ फाल्गुने ॥ महा
देवाय नमः ॥ उमायै नमः ॥ चैत्रे त्रिलोचनाय नमः ॥ ललितायै नमः । वैशाखे स्थाणवे नमः ॥ लोलनेत्रायै नमः ॥ ज्येष्ठे
रुद्राय नमः ॥ रुद्राण्यै नमः ॥ आषाढे पशुनाथाय नमः ॥ सत्यायै नमः ॥ श्रावणे श्रीकंठाय नमः ॥ सुभगायै नमः ॥ भाद्र
पदे भीमाय नमः ॥ कालरात्र्यै नमः ॥ आश्विने शिवाय नमः ॥ गंगायै नमः ॥ कार्त्तिके ईशानाय नमः ॥ शिवायै नमः ॥
इति प्रतिमासं पूजानामानि ॥ अथ पुष्पाणि ॥ नीलोत्पलं ॥ रक्तोत्पलं ॥ करवीरं ॥ विल्वपत्रं ॥ किंशुकं ॥ कुब्ज
मल्लिकां ॥ पाटलां ॥ कुंदं ॥ चंपकं ॥ तगरं ॥ द्रोणं ॥ मालतीं ॥ क्रमेणार्पयेत् ॥ वर्षांते उद्यापनं ॥ तत्र व्रतादि
ने ॥ पंचगव्यप्राशनं ॥ सर्वतोभद्रं लिंगतोभद्रं वा विधाय ॥ आचार्यादिवरणं ॥ सर्वतोभद्रमंडलादि पूजा ॥ अग्नि
स्थापनं अन्वाधानं कृत्वा होमं कुर्य्यात् राजतं मुद्राढ्यं हैमी गौरीशप्रतिमे संपूज्य सौवर्णे पंकजं निवेद्य वितानध्व
जचामरं निवेद्य ॥ दीपवस्त्रयुग्मं च निवेदयेत् ॥ नीराजनं कृत्वा ॥ रात्रौ जागरणं विधाय ॥ चतुरस्रं त्रिकोणं च भूषणद्वयं
चतुष्पार्श्वे मौक्तिकप्रवालान्वितं गौरीशप्रीत्यर्थं सपुष्परागाणि दद्यात् ॥ अशक्त्या तन्मौल्यं देयं ॥ एतत्सर्वमाचा
र्याय दत्वा ॥ व्रतिनां विप्राणां मिथुनानि संपूज्य ॥ हिरण्यशय्यां गोदानादि दत्वा ॥ चत्वारिंशत्कुंभान्सोपानह
छत्रयुतान्दद्यादिति ॥ एवमेव कालीपुराणोक्तमप्यवियोगव्रतम् ॥ तृणविंदुरुवाच येनावियोगमासाद्य
व्रतेनानियमेन च सदा नारीसुतैश्चैव व्रजेद्येन पदं च तत् - विधवा परलोके तु भर्त्रा तु न वियुज्यते ॥ सुखेनापि सदा ब्रह्मन्वद
स्व धनेन तम ॥ तिलाद उवाच ॥ उमया चरितं पूर्वं भवान्या ललिताव्रतं ॥ बाल्ये हिमवतो जन्या दक्षकोपाद्विमुक्तया

महासौभाग्यसंदोहंदृष्टादेव्यामहात्मना अरुंधत्यावासिष्ठेनकथिंतंतद्व्रतंशृणु वासिष्ठउवाच अरुंधतिशृणुष्वेदं
सुखसौभाग्यवर्द्धनं अवैधव्यप्रदंस्त्रीणामावियोगव्रतंशृणु मार्गशीर्षेसितेपक्षेस्नाताशुक्लांवराप्रिया दृष्ट्वाचंद्रद्वि
तीयायांनक्तंभुंजीतवाग्यता आचम्यचशुचिर्भूत्वादंडवत्शंकरंनमेत् मुदान्वितानमस्कृत्याविज्ञाप्यपरमेश्वरं
उदुंबरमयंकाष्ठंग्राह्यमष्टांगुलंशुभं उत्तराशागतंसाग्रंसत्वचंनिर्व्रणंदृढं वाग्यताप्राङ्मुखीभूत्वा भक्षयेद्दंतधा
वनं द्वितीयायांततःस्वप्याद्भूमौतद्गतमानसा तृतीयायांसमुत्थायमुहूर्तेब्रह्मणःशुभे कृतकार्याचसुस्नाताशु
क्लमाल्यांवराततः शालिपिष्टमयेकृत्वास्त्रीपुंसोःप्रतिमेशुभे वेणुपात्रेतुसंस्थाप्यपूजयेद्भक्तितत्परा उपवासंचकुर्वी
तसर्वभोगाविवर्जितं पाखंडादिभिरालापंकृतस्नानाविवर्जतेत् ततोनिशायांसुश्रोणिकृतपूजाकृतोत्सवा कृत्वावा
दित्रनिर्घोषंजागरंतत्रकारयेत् विधिवत्पूजयित्वातुपैष्टंतत्पुत्रिकाद्विकंसुप्रभातेद्विजाग्र्यायांश्चपूजयित्वाप्रदापयेत्
यथाशक्त्यामहाभागोवित्तशाठ्यंविवर्जयेत् उमामाहेश्वरंह्येतत्कल्पयित्वास्वचेतसि ब्राह्मणोपिजलेगाधेपैष्टं
तन्मिथुनंक्षिपेत् एवंकृतस्वस्त्ययनामिथुनानितुभोजयेत् शिवभक्त्याद्विजान्भोज्यामिष्टान्नेनस्वशक्तितः प्रतिमा
संप्रकुर्वीताविधानेनसुसंयुतं मार्गशीर्षेपुनर्मासिकार्तिकांतेसमुद्यपेत् नामानितेप्रवक्ष्यामिप्रतिमासंक्रमेणतु
पूजाजपनिमित्तंचसिद्ध्यर्थंचिंतितस्यच शंकरंमार्गशीर्षेतुनामगौर्यासमान्वितं गौरीशंपार्वतींचैवपुष्यमा
सेतुपूजयेत् भवंचैवभवानीशंमाघमासेप्रपूजयेत् फाल्गुणेतुमहादेवमुमयासाहितंयजेत् ॥ चैत्रेत्रिलो
चनंदेवंललितांचप्रपूजयेत् स्थाणुंवैशाखमासेतुलोलनेत्रासमान्वितं रुद्राण्यासहितंरुद्रंज्येष्ठेमासियजे
तवै आषाढेपशुनाथंचसत्यासार्द्धंशुचिस्मिते श्रीकंठंश्रावणेदेवंसुभगांपरमेश्वरीं भीमंभाद्रपदेतद्वत्काल
सख्यासमन्वितं शिवंमाश्वयुजेमासिगंगयासहितंयजेत् ईशानंकार्त्तिकेमासिशिवादेवीयुतंविभुं प्रति

स्यभोजयेत्- आचार्यस्तुगौरीश्वरप्रतिमे॥ कृतस्वस्त्ययनोराधेजलेक्षिपेत्॥ ततोव्रतफलभूयस्त्वायान्यानपिशिव
भक्तान्दक्षिणान्नदानादिभिः॥ परितोष्यस्वयंमिष्टान्नादिभुंजीत॥ तत्रप्रतिमासंनामपूजाप्रकारोयथा॥ मार्गशी
र्षेशंकरायनमः—गौर्य्यैनमः॥ पौषेगौरीशायनमः॥ पार्वत्यैनमः॥ माघेभवायनमः॥ भवान्यैनमः॥ फाल्गुने॥ महा
देवायनमः॥ उमायैनमः॥ चैत्रेत्रिलोचनायनमः॥ ललितायैनमः। वैशाखेस्थाणवेनमः॥ लोलनेत्रायैनमः॥ ज्येष्ठे
रुद्रायनमः—रुद्राण्यैनमः॥ आषाढेपशुनाथायनमः॥ सत्यायैनमः॥ श्रावणेश्रीकंठायनमः॥ सुभगायैनमः॥ भाद्र
पदेभीमायनमः कालरात्र्यैनमः॥ आश्विनेशिवायनमः॥ गंगायैनमः॥ कार्तिकेईशानायनमः॥ शिवायैनमः॥
इतिप्रतिमासंपूजानामानि—अथपुष्पाणि॥ नीलोत्पलं॥ रक्तोत्पलं॥ करवीरं॥ विल्वपत्रं॥ किंशुकं॥ कुब्ज
मल्लिकां॥ पाटलां॥ कुंदं॥ चंपकं तगरं॥ द्रोणं॥ मालतीं॥ क्रमेणार्पयेत्॥ वर्षांते उद्यापनं॥ तत्रव्रतदि
ने॥ पंचगव्यप्राशनं॥ सर्वतोभद्रलिंगतोभद्रंवाविधाय॥ आचार्य्यादिवरणं॥ सर्वतोभद्रमंडलादिपूजा॥ अग्नि
स्थापनंअन्वाधानंकृत्वा होमंकुर्य्यात् राजतंमुद्राद्वयं हैमी॥ गौरीशप्रतिमेसंपूज्य॥ सौवर्णं पंकजं निवेद्यवितानध्व
जंचनिवेद्य—दीपवस्त्रयुग्मंचनिवेदयेत्॥ नीराजनंकृत्वा॥ रात्रौजागरणंविधाय॥ चतुरस्रंत्रिकोणंचभूषणद्वयं
चतुःषष्टिमौक्तिकप्रवालान्वितंगौरीशप्रीत्यर्थं—सपुष्परागाणिदद्यात्॥ अशक्त्यातन्मौल्यंदेयं॥ एतत्सर्वमाचा
र्य्यायदत्वा॥ व्रतितांविप्राणांमिथुनानिसंपूज्य—हिरण्यशय्यागोदानादिदत्वा॥ चत्वार्य्येष्टौवाकुंभान्सोपानह
च्छत्रयुतान्दद्यादिति—॥ एवमेवकालीपुराणोक्तमप्यवियोगव्रतम्॥ तृणविंदुरुवाच येनावियोगमासाद्य
व्रतेनानियमेनच॥ सदानारीसुतैश्चैवव्रजेद्येनपदंततः॥ विधवापरलोकेतुभर्त्रातुनवियुज्यते॥ सुखेनापिसदाब्रह्मन्वद
...रुवाच उमयाचरितंयच्चभवान्याललितांव्रतं॥ बाल्येहिमवतोजन्यादक्षकोपाद्विमुक्तया

सावित्रीवटपैतृकी कृष्णाष्टमीचभूताचकर्त्तव्यासंमुखीतिथीतिस्कांदात् रंभातृतीयांवक्ष्यामिसर्वपापप्रणाशि
नीम् सुखसौभाग्यफलदांसर्वामयनिवारणीम् सर्वदुःखहरांपुण्यांपुत्रपौत्रप्रदांतथा सपत्नीदर्पदलनींरूपैश्वर्यक
रींशुभां शंकरेणपुराख्यातांपार्वत्यैप्रियकाम्यया तामिमांशृणुभूपालभूतानांपरमंहितम् मार्गशीर्षेशुभेमासितृती
यायानराधिप शुक्लायांप्रातरुत्थायदंतधावनपूर्वकं उपवासस्यनियमंगृह्णीयाद्भक्तिभाविता देविसंवत्सरंयावतृतीया
यामुपोषिताप्रतिमासंकरिष्यामिपारणंचापरेहनि तदविघ्नेनमेयातुसमाप्तिंव्रतमुत्तमम् शरणंत्वांप्रपन्नास्मिदौ
र्भाग्याद्धुद्धरस्वमाम् एवंसंकल्प्यविधिवत्कौंतेयकृतनिश्चया भक्त्यानारीध्यानपरास्नानंकृत्वाजितेंद्रिया नद्यां
तडागेवाप्यांवागृहेवानियतेंद्रिया पूजयेत्पार्वतींनाम्नारात्रौप्राश्यकुशोदकम् प्रभातेभोजयेद्विप्रांश्छिवभक्तान्वि
शेषतःसहिरण्यंचलवणंदद्यात्तेषांचदक्षिणाम् गौरिणीश्चयथाशक्त्याभोजयेत्प्रयताःसतीः अनेनविधिनाराजन्या
कुर्यात्पार्वतीव्रतम् साकुलानांशतंसाग्रंतारयेन्नात्रसंशयः इहलोकेसुखंभुक्त्वाशिवलोकेमहीयते पौषेमासितृ
तीयायांगिरिजांनामपूजयेत् गोमूत्रंप्राशयेद्रात्रौप्रभातेभोजयेद्द्विजान् हिरण्यंजीरकंचैवस्वशक्त्यादापयेत्ततः
शक्रलोकेवसेत्कल्पंततःशिवपुरंव्रजेत् माघमासेतृतीयायांसुदेवींनामपूजयेत् गोमयंप्राशयेद्रात्रौस्वपेद्रात्रौ
यतव्रता सहिरण्यंकुसुंभंतुदिवादद्याद्द्विजातये विष्णुलोकेचिरंस्थित्वाप्राप्नोतिशिवमंदिरं गौरीतिफाल्गुणे
नामगोक्षीरंप्राशयेन्निशि प्रभातेभोजयेद्विप्रान्यथाशक्त्यासुवासिनीः कुस्तुम्बुरून्सकनकांस्तेभ्योदत्वाविसर्जयेत्
वाजपेयातिरात्राणांफलंप्राप्यादिवंव्रजेत् चैत्रमासेविशालाक्षींपूजयेद्भक्तितत्परा दधिप्राश्यस्वपेत्प्रातर्दद्याद्धेमसकुं
कुमं शुभसौभाग्यसंपन्नामृताशिवपुरंव्रजेत् वैशाखस्यतृतीयायांश्रीमुखींनामपूजयेत् घृतंचप्राशयेद्रात्रौपुनर्दद्याद्
द्विजातये कनकंशर्करांचैवपूजयित्वाक्षमापयेत् सर्वान्कामानवाप्नोतिमृताशिवपुरंव्रजेत् ज्येष्ठेनारायणींनामपूज

मासंविनानाम्नाव्रतासिद्धिर्नविद्यते प्रतिमासंतुपुष्पाणियानिपूजासुयोजयेत् ॥ तानितेसंप्रवक्ष्यामिसद्यःप्रीति
कराणिवै आदौनीलोत्पलंयोज्यंतदभावेपराण्यपि पवित्राणिसुगंधीनियोजयेद्भक्तितोर्चने ॥ करवीरंबिल्वपत्रं
किंशुकंकुब्जमल्लिका पाटलाकुंदचंपकतगरद्रोणमालतीः भक्त्यायोज्यानिरंभोरुदेवस्यप्रियकाम्यया तथाचपंचगव्य
स्यप्राशनंप्रतिमासकं नचान्यत्पावनंकिंचित्पंचगव्यात्परंस्मृतं एवंव्रतंकृतंभद्रेशिवभक्तिसमन्विता ॥ वत्सरांतेवि
तानंचध्वजंकिंकिणिमालिनं दीपंचवस्त्रयुग्मंचसिवेभक्त्यानिवेदयेत् स्नापयित्वाविलिप्यवाचसौवर्णमूर्तिपंकजंयथा
विभवतोदेयंदेवदेवस्यतुष्टये रौप्यंचरूपपुंगलंदेवस्यपुरतोन्यसेत् बहुप्रकारंनैवेद्यंगीतवाद्यसमन्वितं कुर्यान्नीराज
नंशंभोस्ततोगच्छेत्स्वकंगृहं चतुरस्रंमहादेवंयुग्मांचैवत्रिकोणकांध्यात्वाचार्यायतद्युग्मंमौक्तिकादियुतंददेत् कार्षि
केकप्रमाणंचशातकुंभमयंशुभं उमामहेश्वरंचैवकारयित्वासुशोभनं मौक्तिकानिचतुःषष्टिस्तावंतोपिप्रवालकाःताव
तिपुष्परागाणितान्यपात्रोपरिन्यसेत् वस्त्रेणवेष्टयित्वातुगंधपुष्पैःसमर्चयेत् एवत्सर्वंसारयुक्तमाचार्यायनिवेदये
त् व्रतिनांब्राह्मणानांतुमिथुनानामथापिवा अशक्त्यानिष्क्रयंदद्याद्वित्तशाठ्यविवर्जिता दत्वाहिरण्यवासांसिप्राणि
पत्यक्षमापयेत् चत्वारिंशत्तथाष्टौचकुंभान्छत्रमुपानहौ सहिरण्याक्षतान्सर्वान्दद्यात्पुष्पोदकान्वितान् दी
नांधबधिरादीनांतद्दिनेचानिवारितं कल्पयेदन्नपानंचसुमिष्टंरुच्यमात्मनः न्यूनाधिकंनकर्तव्यंस्ववसुवित्तानुसारतः
संपूजयेत्कल्पनयायदिवित्तंनविद्यते अवियोगकरंचैतद्रूपसौभाग्यवित्तदं आयुःपुत्रप्रदंकाम्यशिवलोकप्रदायकं
इतिकालिकापुराणोक्तमवियोगव्रतम् ॥ मार्गशुक्लतृतीयायामारभ्यभविष्योत्तरोक्तंरंभाव्रतम् ॥ मार्गशीर्षेशुभेमा
सितृतीयायांनराधिप शुक्लायांप्रातरुत्थायदंतधावनपूर्वकं उपवासस्यनियमंगृह्णीयाद्भक्तिभावितः सौभाग्या
र्थंपुराचीर्णंरंभयाराजसत्तम तेनरंभातृतीयेयंपरंसौभाग्यवर्द्धिनीति इयंपूर्वाग्राह्या वृहत्तपास्तथारंभा

सावित्रीवटपैतृकी कृष्णाष्टमीचभूताचकर्त्तव्यासंमुखीतिथीतिस्कांदात् रंभातृतीयांवक्ष्यामिसर्वपापप्रणाशि
नीम् सुखसौभाग्यफलदांसर्वामयनिवारणीम् सर्वदुःखहरांपुण्यांपुत्रपौत्रप्रदांतथा सपत्नीदर्पदलनींरूपैश्वर्यक
रींशुभां शंकरेणपुराख्यातांपार्वत्यैप्रियकाम्यया तामिमांशृणुभूपालभूतानांपरमंहितम् मार्गशीर्षेशुभेमासितृती
यायांनराधिप शुक्लायांप्रातरुत्थायदंतधावनपूर्वकं उपवासस्यनियमंगृह्णीयाद्भक्तिभाविता देविसंवत्सरंयावत्तृतीया
यामुपोषिता प्रतिमासंकरिष्यामिपारणंचापरेहनि तदविघ्नेनमेयातुसमाप्तिंव्रतमुत्तमम् शरणंत्वांप्रपन्नास्मिदौ
र्भाग्यादुद्धरस्वमाम् एवंसंकल्प्यविधिवत्कौंतेयकृतनिश्चया भक्त्यानारीध्यानपरास्नानंकृत्वाजितेंद्रिया नद्यां
तडागेवाप्यांवागृहेवानियतेंद्रिया पूजयेत्पार्वतींनाम्नारात्रौप्राश्यकुशोदकम् प्रभातेभोजयेद्विप्रांश्छिवभक्तान्वि
शेषतः सहिरण्यंचलवणंदद्यात्तेषांचदक्षिणाम् गौरिणीश्चयथाशक्त्याभोजयेत्प्रयताःसतीः अनेनविधिनाराजन्या
कुर्यात्पार्वतीव्रतम् साकुलानांशतंसाग्रंतारयेन्नात्रसंशयः इहलोकेसुखंभुक्त्वाशिवलोकेमहीयते पौषेमासितृ
तीयायांगिरिजांनामपूजयेत् गोमूत्रंप्राशयेद्रात्रौप्रभातेभोजयेद्द्विजान् हिरण्यंजीरकंचैवस्वशक्त्यादापयेत्ततः
शक्रलोकेवसेत्कल्पंततःशिवपुरंव्रजेत् माघमासेतृतीयायांसुदेवींनामपूजयेत् गोमयंप्राशयेद्रात्रौस्वपेद्रात्रौ
यतव्रता सहिरण्यंकुसुंभंतुदिवादद्याद्द्विजातये विष्णुलोकेचिरंस्थित्वाप्राप्नोतिशिवमंदिरं गौरीतिफाल्गुणे
नामगोक्षीरंप्राशयेन्निशि प्रभातेभोजयेद्विप्रान्यथाशक्त्यासुवासिनीः कुस्तुम्बुरून्सकनकांस्तेभ्योदत्वाविसर्जयेत्
वाजपेयातिरात्राणांफलंप्राप्यदिवंव्रजेत् चैत्रमासेविशालाक्षींपूजयेद्भक्तितत्परा दधिप्राश्यस्वपेत्प्रातर्दद्याद्धेमसकुं
कुमं शुभसौभाग्यसंपन्नामृताशिवपुरंव्रजेत् वैशाखस्यतृतीयायांश्रीमुखींनामपूजयेत् घृतंचप्राशयेद्रात्रौपुनर्दद्याद्
द्विजातये कनकंशर्करांचैवपूजयित्वाक्षमापयेत् सर्वान्कामानवाप्नोतिमृताशिवपुरंव्रजेत् ज्येष्ठेनारायणींनामपूज

येत्कुसुमैःशुभैः प्राशयेल्लवणंरात्रौततश्चैकानिशिस्वपेत् शिवभक्तान्द्विजान्प्रातर्भोजयित्वायथेप्सितं सुवासिनीर्य
थाशक्त्याभक्ष्यभोज्यैश्चभोजयेत् तांबूलंकनकंदद्यात् प्रणिपत्यक्षमापयेत् अंतकालेसुखंयातियत्रदेवोमहेश्वरः आ
षाढेमाधवींनामप्राशयीततिलोदकम् प्रभातेभोजयेद्विप्रान्हेमपुष्पंगुडंददेत् सर्वसंपत्सुखंभुक्त्वादेवाश्चानुचरीभवेत्
श्रावणेतुश्रियंपूज्यपिबेद्वाश्रृंगजंजलम् प्रभातेब्राह्मणान्भोज्यदद्याद्धेमतिलैःसह भोगान्भुक्त्वामहीपृष्ठेगोलोकमधि
गच्छति अथभाद्रपदेमासिसुभद्रांनामपूजयेत् बिल्वपत्रंचसंप्राश्यस्वपेतब्रह्मचारिणी प्रभातेविप्रमुख्यायदद्याद्धेम
फलैःसह सर्वलोकेश्वरीभूत्वाभुक्त्वाभोगाननेकधा प्राप्नोतिब्रह्मसदनंव्रतस्यास्यप्रभावतः आश्विनस्यतृतीयायांपूज
यित्वाशिवप्रियाम् प्राशयेत्तंडुलंप्रातस्तथाविप्रांश्चभोजयेत् दक्षिणाचात्रदेयातुचंदनंचसकांचनम् सर्वयज्ञफलं
प्राप्यगौरीलोकेमहीयते पद्मोद्भवाकार्तिकेचपंचगव्यंपिबेन्निशि वादित्रैर्जागरंकृत्वाप्रभातेभोजयेत्तदा उमाम
हेश्वरंहैमंसमाप्तेकारयेच्छुभम् ॥ उमामहेश्वरस्वरूपंविष्णुधर्मोत्तरेभिहितं ॥ वामार्धेपार्वतीकार्याशिवःकार्यश्चतुर्भु
जः अक्षमालांत्रिशूलंचडमरुंचावरंदधत् एकवक्त्रस्त्रिनेत्रश्चवामेचदयितातनुः यथाविभवसारेणवितानंपंच
वर्णकम् शय्याचात्रचनिर्दिष्टासर्वोपस्करसंयुता सवत्सांशीलसंपन्नांगांचदद्यात्पयस्विनीम् आसनंमृदुलंदद्यात्
श्वेतछत्रकमंडलुम् पादुकोपानहौदिव्येवस्त्रयुग्मंचपांडुरम् पीतंयज्ञोपवीतंचपट्टसूत्रसमुद्भवम् शंखशुक्ति
समोपेतंदर्पणंचसमुज्ज्वलम् रक्तंचकटकंदेयंस्त्रियाश्चपरिधानकं उमामहेश्वरःस्थाप्यत्रासनेतान्यजेन्नृप पूजां
विरचयेद्भक्त्याध्यायमानामहेश्वरम् नानाविधैःसुगंधैश्चपत्रैःपुष्पैःफलैस्तथा घृतपक्वैश्चनैवेद्यैर्दीपमालाविभू
षितैः कूष्मांडैर्नारिकेलैश्चदाडिमैर्बीजपूरकैः जीरकैर्लवणैश्चैवकुसुंभैःकुसुमैस्तथा रसपात्रैःसुमिष्टैश्चगीतवा
द्यैरनेकधा पूजयेद्देवदेवेशंसपत्नीकंक्षमापयेत् ततोद्विजंसमाहूयवेदवेदांगपारगम् वेदध्वनिसमायुक्तमुपवेश्य

शुभासने। सपत्नीकंनृपश्रेष्ठदिव्यंचंदनचर्चितम् परिधाप्यस्वलंकृत्यसर्वंतस्मैनिवेदयेत् एवंकृतेफलं यत्स्यात्तच्छक्यंमयेरितुम् सर्वोक्तफलसंयुक्तासर्वदेवैः सुपूजिता जाताजातामहाकल्पेसर्वान्कामानवाप्नु यात् तदंतेशिवसायुज्यंनारीप्राप्नोत्यसंशयम् पुरुषोवानृपश्रेष्ठशिवभक्तश्चसुव्रतः सोपितत्फलमाप्नो तिनान्यथाशिवभाषितम् सौभाग्यार्थंपुराचीर्णंरंभयाराजसत्तम तेनरंभातृतीयेयंपरंसौभाग्यदायिनी सोहं सएवभूतेशोगौरीसेवीनसंशयः इतिमत्वामहाभागशरणंव्रजपार्वतीम् एषाहिमाद्रिदुहितुर्दयितातृतीयारं भाभिधानमभवद्भुवितत्कृतेति संप्राशनैरुचिरनामयुतामुपोष्यप्राप्नोतिवांछितफलान्यवलाबहूनि॥

इतिरंभातृतीयाव्रतम् मार्गशुक्लचतुर्थ्यांहरिगणपतिव्रतं वर्षचतुष्टयसाध्यमिदमुक्तम्॥

नारदीये मार्गशुक्लचतुर्थ्यांतुवर्षंयावन्मुनीश्वर क्षपयेदेकभक्तेननक्तेनाथद्वितीयकं अयाचितोपवासाभ्यांतृ तीयकचतुर्थके एवंक्रमेणविधिवच्चत्वार्यब्दानिमानवः समाप्यचततश्चांतेकृतस्नानोमहाव्रती कारयेत्स्वर्णघ टितभूभागेमौपकंरथं अशक्तोवर्णकैरेवरथंशुभ्रंसपुत्रकं तस्योपरिघटंस्थाप्यताम्रपात्रेणसंयुतं पूरयेत्तंडुलैःशु भ्रैस्तस्योपरिगणेश्वरं श्रीमूपकरथारूढंगणेशंस्थापयेदिह न्यसेद्वस्त्रयुगाच्छन्नं गंधाद्यैःपूजयेद्व्रतं नैवेद्यंमो दकैःकल्प्यं गणेशः प्रीयतामिति जागरंगीतनृत्याद्यैः पुराणाख्यानकैश्चरेत् प्रभातेविमलेस्नात्वाहोमंकृत्वा विधानतः तिलव्रीहियवश्वेतसर्षपाज्यैःसखंडकैः गणोगणाधिपश्चैवकूष्मांडस्त्रिपुरांतकः लंबोदरैकदंतौचरु क्मदंडश्चविघ्नपः ब्रह्मायमोथवरुणः सोमसूर्यहुताशनः गंधमालीपरमेष्ठीत्येवंषोडशनामभिः प्रणवाद्यैर्न मोंतैश्चप्रत्येकंदहनेहुनेत् वक्रतुंडेतिडेंतेनचमंतेनाष्टयुक्शतं ततोव्याहृतिभिःशक्त्याहुत्वापूर्णाहुतिंचरेत् दि

जयवर्धनं ॥ एकदंतंद्विदंतंच चतुर्दंतंचतुर्भुजं ॥ त्र्यक्षंत्रिशूलहस्तंचरक्तनेत्रंवरप्रदं ॥ आंविकेयंशंकुकर्णंप्रचंडंदंडना
यकं ॥ आरक्तंदंडिनंचैववह्निवक्त्रंहुताप्रियं ॥ अनर्चितोविघ्नकरः सर्वकार्येषुयोनृणां ॥ तंनमामिगणाध्यक्षंभीममुग्रमुमा
सुतं मदमत्तंविरूपाक्षंभववक्त्रसमुद्भवं सूर्यकोटिप्रतीकाशंभिन्नांजनसमप्रभं वुधंसुनिश्चलंशांतंनमस्यामिविनायकं
नमोस्तुब्रह्मरूपायविष्णुरूपायतेनमः नमोस्तुगजरूपायगणानांपतयेनमः ॥ मत्तमंदररूपायनमः कैलासवासिने
नमोविघ्नविनाशायनमस्तेब्रह्मचारिणे ॥ भक्तस्तुतायदेवायनमस्तुभ्यंविनायक ॥ त्वयापुरावैसर्वेषांदेवानांकार्यसिद्धये
राजरूपंसमास्थाय ॥ त्रासिताःसर्वदानवाः ॥ ऋषीणांदेवतानांच ॥ कृताःसर्वेमनोरथाः ॥ ततस्त्वंतुसुरैः
सर्वैःपूज्यसेत्वंभवात्मज ॥ त्वामाराध्यगणाध्यक्षंसर्वज्ञंकामरूपिणं ॥ कामार्थंरक्तकुसुमैरक्तचंदनवारिभिः
रक्तांवरधरोभूत्वाचतुर्थ्यामर्चयेज्जपेत् ॥ त्रिकालमेककालंवानियतोनियताशनः ॥ राजानंराजपुत्रंचराजमंत्रि
णमेवच राज्यंवासर्वविघ्नेशवशीकुर्यात्सराष्ट्रकं ॥ अविघ्नंतपसामह्यंकुरुविघ्नविनाशक ॥ मयात्वंसंस्तुतोभक्त्यापू
जितश्चविशेषतः ॥ यत्फलंसर्वतीर्थेषुसर्वयज्ञेषुयत्फलं ॥ तत्फलंसर्वमाप्नोतिस्तुत्वादेवंविनायकं ॥ विषमंनभवेत्तस्य
नसगच्छेत्पराभवं नचविघ्नोभवेत्तस्यजातोजातिस्मरोभवेत् यइदंपठतिस्तोत्रंषड्भिर्मासैर्वरंलभेत् ॥ संवत्सरेण
सिद्धिंचलभतेनात्रसंशयः ॥

इतिनृसिंहपुराणेगणेशस्तोत्रं ॥ ॥ अस्यामेवमार्गशुक्लचतुर्थ्यां कृष्णचतुर्थीव्रतम् ॥
स्कंदउवाच ॥ केनभोगानवाप्नोतिनिर्विघ्नंपुरसूदन ॥ पुत्रपौत्रांस्तथारोग्यंव्रतेनाप्नोतिशंकर ॥ ईश्वरउवाच ॥ पुरादेवा
सुरेयुद्धेअसुरैर्निर्जितारणे ॥ शक्राद्यादेवताःसर्वाः त्रिपुरवासिभिर्जिताः ॥ तदाविवर्णवदनास्तेसर्वेमामुपागताः ॥ त्रा
हित्राहिवदंतस्तेमयाप्याश्वासितास्तदा ॥ विघ्नैरुपहतानांचतदादिष्टंव्रतंमया ॥ तत्कृतंतैस्तदास्कंदतेप्रांतुष्टोगणा

कपालान्पूजयित्वाथब्राह्मणान्भोजयेत्ततः चतुर्विंशतिसंख्याकान्मोदकैः पायसेनच सवत्सांगांततोदद्यादाचा र्यायसदक्षिणां अन्येभ्योपियथाशक्तिभूयसींचततोददेत् प्रणम्यदक्षिणीकृत्यविसृज्यचद्विजोत्तमान् बंधुभिः सहभुंजीतस्वयंचप्रीतमानसः एतद्व्रतंनरःकृत्वाभुक्त्वाभोगानिहोत्तमान् सायुज्यंलभतेविष्णोर्गणेशस्यप्रसाद तःकेचिद्धरिव्रतंनामप्राहुरेतन्मुनारद विधानमेतदेवापिफलंचापीहतत्समम् ॥

इतिनारदीयेपूर्वभागेतुर्यपादेहरिगणपतिव्रतं अथभविष्यपुराणोक्तंगणेशचतुर्थीव्रतम्

ब्रह्मोवाच गणेशःपूजितःकुर्य्याच्चतुर्थ्यांसर्वकर्मसु अविघ्नंसुरलोकेचगतिमिष्टांप्रयच्छति कर्म्मस्वविदुषोविघ्नं कुर्य्याच्चैवनसंशयः अविदुषांकर्मकालेस्मरणमकुर्वतांतैरप्यवश्यंस्मर्तव्यःपूज्यश्च पूजामंत्राःस्वसंज्ञाभिरंगमंत्रा श्चकीर्तिताः अभ्यर्च्याभिलिखेत्पद्मंकुंकुमेनाष्टपत्रकं कुंकुमस्याप्यभावेतुरक्तचंदनमिष्यते अथतत्पद्ममध्य स्थःकर्तव्यःसतिथीश्वरः तिथीश्वरोत्रगणेशः गंधपुष्पोपहारैश्चयथाशक्तिप्रपूजयेत् चत्वारःकारकाःकार्य्या भक्ष्यभोज्यसमन्विताः तंडुलैस्तुपशालीयैःपद्मरागैश्चसंयुताः चतुष्कोणेपुतान्कृत्वाफलानिविविधानिच गंध माल्यादिकंसर्वंतथैवाविनिवेदयेत् पूजायावित्तसाठ्येनकृतापिनफलप्रदा आज्यधारासमिद्भिश्चदधिक्षीराज्ञमा त्रिकैः पूर्वोक्तफलदोहोमःकृतःशांतेनचेतसा ॥ नृसिंहपुराणेपि ॥ सूतउवाच चतुर्थ्यांतुनभुंजीतस्नात्वानद्यांनृपो त्तम रक्तांबरधरोभूत्वारक्तगंधानुलेपनः एकवस्त्रोगणाधीशंविनायकमथार्चयेत् रक्तचंदनलेप्येनस्नानपूर्वंवि धानतः विलिप्यरक्तगंधेनरक्तपुष्पैरथार्चयेत् ततोस्मैचागुरुंधूपमाज्ययुक्तंसचंदनं नैवेद्यंचैवहारिद्रंगुडखंड समन्वितं एवंसंवत्सरंपूज्यविनायकमथोस्तुवन् नमस्कृत्वामहादेवंस्तोष्येहंतंविनायकं महागणपतिंशूरमजितं

जयवर्धनं ॥ एकदंतं द्विदंतं च चतुर्दंतं चतुर्भुजं ॥ त्र्यक्षं त्रिशूलहस्तं च रक्तनेत्रं वरप्रदं ॥ आंबिकेयं शंकुकर्णं प्रचंडं दंडना
यकं ॥ आरक्तं दंडिनं चैव वह्निवक्त्रं हुतप्रियं ॥ अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणां ॥ तं नमामि गणाध्यक्षं भीममुग्रमुमा
सुतं ॥ मदमत्तं विरूपाक्षं भववक्त्रसमुद्भवं ॥ सूर्यकोटिप्रतीकाशं भिन्नांजनसमप्रभं ॥ बुधं सुनिश्चलं शांतं नमस्यामि विनायकं
नमोस्तु ब्रह्मरूपाय विष्णुरूपाय ते नमः नमोस्तु गजरूपाय गणानां पतये नमः ॥ मत्तमंदररूपाय नमः कैलासवासिने
नमो विघ्नविनाशाय नमस्ते ब्रह्मचारिणे ॥ भक्तस्तुताय देवाय नमस्तुभ्यं विनायक त्वया पुरा वै सर्वेषां देवानां कार्यसिद्धये
गजरूपं समास्थाय ॥ त्रासिताः सर्वदानवाः ॥ ऋषीणां देवतानां च ॥ कृताः सर्वे मनोरथाः ॥ ततस्त्वं तु सुरैः
सर्वैः पूज्यसे त्वं भवात्मज ॥ त्वामाराध्य गणाध्यक्षं सर्वज्ञं कामरूपिणं ॥ कामार्थं रक्तकुसुमै रक्तचंदनवारिभिः
रक्तांबरधरो भूत्वा चतुर्थ्यामर्चयेज्जपेत् ॥ त्रिकालमेककालं वा नियतो नियताशनः ॥ राजानं राजपुत्रं च राजमंत्रि
णमेव च राज्यं वा सर्वविघ्नेश वशीकुर्यात्सराष्ट्रकं ॥ अविघ्नं तपसां मह्यं कुरु विघ्नविनाशक मया त्वं संस्तुतो भक्त्या पू
जितश्च विशेषतः ॥ यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलं ॥ तत्फलं सर्वमाप्नोति स्तुत्वा देवं विनायकं ॥ विषमं न भवेत्तस्य
न स गच्छेत्पराभवं नच विघ्नो भवेत्तस्य जातो जातिस्मरो भवेत् य इदं पठति स्तोत्रं षड्भिर्मासैर्वरं लभेत् ॥ संवत्सरेण
सिद्धिं च लभते नात्र संशयः ॥
इति नृसिंहपुराणे गणेशस्तोत्रं ॥ ॥ अस्यामेव मार्गशुक्लचतुर्थ्यां कृष्णचतुर्थीव्रतम् ॥
स्कंद उवाच ॥ केन भोगानवाप्नोति निर्विघ्नं पुरसूदन ॥ पुत्रपौत्रांस्तथारोग्यं व्रतेनाप्नोति शंकर ईश्वर उवाच ॥ पुरा देवा
सुरे युद्धे असुरैर्निर्जिता रणे ॥ शक्राद्या देवताः सर्वास्त्रिपुरावासिभिर्जिताः ॥ तदा विवर्णवदनास्ते सर्वे मामुपागताः ॥ त्रा
हि त्राहि वदंतस्ते मया आश्वासितास्तदा ॥ विघ्नैरुपहतानां च तदादिष्टं व्रतं मया ॥ तत्कृतं तैस्तदा स्कंद ते प्रांतु प्रोगणा

थिपःगणेशेनतुपुष्टेनविघ्नानांसंक्षयःकृतः स्कंदउवाच विधिनाकेनदेवेशव्रतमेतन्महाफलं कृतंभवतिदेवेशतन्मेब्रू
हिवृषध्वज ईश्वरउवाच मार्गशीर्षेशुभेमासिशुक्लपक्षेतुषण्मुख चतुर्थ्यांनियमंगृह्यविघ्नेशंपूजयेत्ततःपुष्पैर्गं
धैश्चनैवेद्यैर्लड्डुकैश्चसुसंस्कृतैः पललोडेरकैश्चैवतथासौहालिकैःशुभैः पललंतिलपिष्टंस्यादुंडेरकाःपि
ष्टादिमयावर्तुलाकाराः पूजयित्वाविधानेनप्रार्थयेत्तंचमानवः त्वत्प्रसादात्तुदेवेशव्रतंवर्षचतुष्टयं निर्विघ्नेनतुमे
यातुप्रमाणंमूषकध्वज ॥ प्रमाणंसमाप्तिं प्रमाणंहेतुमर्यादाशास्त्रेयत्ताप्रमातृष्वित्यभिधानकोशात् संसारार्ण
वदुस्तारंसर्वविघ्नसमाकुलं तस्माद्दीनंजगन्नाथत्राहिमांगणनायक एवंप्रार्थ्यगणाध्यक्षंभुंजीयाद्वाग्यतस्त
तः एवंक्रमेणसंपूज्यएकभक्तोनरोत्तमः गणेशंमनसाध्यायंस्ततोरात्रौस्वपेद्बुधः एवंसंवत्सरंयावच्चतुर्थीप्रति
षण्मुख ततोमार्गशिरेमासिविधिनानेनपूजनं नक्ताशीचभवेत्तद्वद्यावत्संवत्सरंपुनः मार्गशीर्षेपुनः
प्राप्तेतथैवायाचितोभवेत् अयाचितेनाब्दमेकंततोमार्गशिरेपुनः आरभ्योपवसेदब्दमेकंतद्वच्चपूजनं एवं
क्रमेणविधिवच्चत्वार्यब्दानिमानवः समाप्यचततोह्यंतेजलस्नातोमहाव्रती कारयेद्धेमघटितंस्वशक्त्याखुरथं
शुभं आखुरथंगणेशं कारयेद्वर्णकैःशुभ्रैररविंदंसुपत्रकं ॥ तस्योपरिघटंस्थाप्यताम्रपात्रेणसंयुतम् पूजये
च्छुभ्रशालेयैस्तंडुलैरेवषण्मुख तस्योपरिन्यसेद्देवंवासोभिर्वेष्ट्यसुव्रतः पूजयेत्पुष्पधूपाद्यैर्नैवेद्यैर्विविधैस्तथा
मोदकैश्चततःशुभ्रैःपक्वान्नैर्घृतपाचितैः नैवेद्यंकल्पयेत्तत्रगणेशःप्रीयतामिति जागरंकारयेद्विद्वान्गीतवादित्र
निस्वनैः पुराणाख्यानकैश्चैवतांरात्रिंक्षपयेद्बुधः प्रभातेविमलेस्नातोहोमकर्माणिकारयेत् तिलव्रीहियवैश्चै
वतथासिद्धार्थकैःशुभैः होमश्चैतैर्मंत्रैःकार्य्यः ॐगणायस्वाहा गणाधिपतयेस्वाहा मेघवर्णायस्वाहा कूष्मांडाय
स्वाहा त्रिपुरांतकायस्वाहा एकदंतायस्वाहा रुक्मदंष्ट्रायस्वाहा विघ्नेश्वरायस्वाहा ब्रह्मणेस्वाहा इंद्राय

स्वाहा यमायस्वाहा सोमायस्वाहा सूर्यायस्वाहा गणेशायस्वाहा अष्टोत्तरशतंहुत्वा ततोऽव्याहृतिभिर्हुनेत्प्राव
च्छित्त्यामहाव्याहोततोहोमःसमाप्यते ततस्तुपूजयेद्विद्वानाचार्य्यंभक्तिभावतः वस्त्रैराभरणैर्दिव्यैःपूजयित्वाक्षमाप्र
येत् तत्पत्नींपुरुषोभक्त्यावस्त्रैराभरणैरपि शय्यांदद्यात्ततस्तस्मैसोपधानांसगंडुकां गांसवत्सांततोदद्यात्सवाल
कारंभूषितां प्रीयतांगणनाथोत्रइतिमंत्रमुदीरयेत् ब्राह्मणान्भोजयेद्भक्त्याचतुरोवैकमेववा तेभ्यस्तुकरकान्दद्यात्ति
लपात्रसमन्वितान् अनेनविधिनायस्तुकरोतिव्रतमुत्तमं नविघ्नैरभिभूयेतगणनाथप्रसादतः यंकरोतिसमारंभांनि
र्विघ्नंतत्फलप्रदं पूर्वंतथाकृतंसर्वैरिंद्राद्यैस्त्रिदशैर्विभो रुद्रेणब्रह्मणाचैवविष्णुनाचकृतंपुरा अन्यैश्चैवउमापुत्रराजभिः
र्बहुभिःकृतं एतदेवव्रतंचीर्णंमानुषैर्भूतलेसुत अनेनक्रियमाणेननविघ्नैरभिभूयते स्वर्गलोकात्परिभ्रष्टस्ततोयातिप्र
रांगतिम् इतिस्कंदपुराणोक्तंसोद्यापनंकृच्छ्रचतुर्थीव्रतम् अस्यामेववर्षचतुष्टयसाध्यं सर्वार्थसाधकं
वरचतुर्थीव्रतम् स्कंदपुराणे चतुर्थ्यांमार्गशीर्षेतुशुक्लपक्षेनरोत्तमैः प्रारभ्यंप्रतिमासंचचतुर्थ्यांगणनायकं सं
पूज्यविधिनाकुर्य्यादेकभक्तंसमाहितः अक्षारलवणंत्वेवंपूर्णेसंवत्सरेततः द्वितीयेवत्सरेनक्तंप्रतिमासचतुर्थि
के कुर्याद्गणेशमभ्यर्च्यंतृतीयेयाचितंतथा एवमेवप्रकुर्वीतचतुर्थेस्यादुपोषणं ततश्चतुर्थेसंपूर्णेतदुद्यापनमा
चरेत् इदंवरचतुर्थ्याख्यंव्रतंसर्वार्थसाधकमिति ॥ इदंस्कंदपुराणोक्तंवरचतुर्थीव्रतं अत्रप्रथमवर्षेएकभक्तंत
त्स्वरूपं तुहिनार्द्धसमयइत्यादिनापूर्वमेवोक्तंयत्तुकेनचिदुक्तं भोजनंतुविधिप्राप्तंद्वात्रिंशद्ग्रासाइतिफलितोर्थ
इतितुतुच्छभिक्षुकस्यैकभक्तेकदाचित्स्वल्पभिक्षाप्राप्तावेतन्नियमस्यासंभवाद्वचनाभावाच्चस्वल्पभिक्षावतएकोनत्रिं
शद्ग्रासासादनासंभवाच्च नन्वष्टौग्रासामुनेर्भक्ष्याःषोडशारण्यवासिनः द्वात्रिंशतंगृहस्थानामामितंब्रह्मचारिणः
इतिवचनमस्तीतिचेत्सत्यं एतद्वचनस्यपरिगृहीतनियतसायंप्रातरनुष्ठेयप्राणाग्निहोत्रविषयत्वात् एतद्वच

नस्यतद्विपयत्वंचबौधायनसूत्रेस्पष्टम् ग्रासलक्षणम् कुक्कुटांडसमाग्रासोयथावामुखमाविशेदितियावदेवग्र
सितुंशक्यामिति याज्ञवल्क्यधर्मप्रतिश्रयैरुक्तंतस्मान्न्यूनग्रासत्रयेणत्वितिसग्रासत्रयेशब्दोन्यूनत्वोपलक्षणार्थे

इतिमार्गशुक्लचतुर्थीव्रतानि ॥ अथमार्गशुक्लपंचम्यांनागपूजोक्ता स्कांदे ॥

शुक्लमार्गशिरेपुण्याश्रावणेयाचपंचमीस्नानेदानेबहुफलानागलोकप्रदायिनी इयंचोत्तराग्राह्या पंचमीनागपू
जायांकार्यांषष्ठीसमन्विता तस्यांतुतुपिनागाः पूजनीयागृहांगणे नारदीये मार्गशुक्लेतुपंचम्यांनागानिष्ट्वा
विधानतः नागेभ्यस्त्वभयंलब्ध्वामोदतेसहबांधवैः इयंश्रीपंचमी अत्रश्रीपंचमीव्रतंकार्यं श्रीपंचमीव्रतकथा
युधिष्ठिरउवाच कथंसाप्राप्यतेलक्ष्मीर्दुर्लभायानरैरपि दानेनतपसावापिव्रतेनापिवदस्वतत् जपहोमनमस्का
रैःसंस्कारैर्वापृथग्विधैः एतद्वदयदुश्रेष्ठसर्वविघ्नंमतोमम श्रीकृष्णउवाच भृगोःख्यात्यांसमुत्पन्नापूर्वंश्रीःश्रूयतेशुभा
वासुदेवायदत्तांचमुनिनासासमृद्धये वासुदेवोपितांप्राप्यपीनोन्नतपयोधरां पद्मपत्रविशालाक्षींपूर्णचंद्रनिभाननां
आभासितदिगंतांतांसाक्षाद्भानोःप्रभामिव नितंबाडंबरवतींमत्तमातंगगामिनीम् रेमेसहतयाराजन्विश्वसोद्भ्रांत
विक्रयां साचविष्णुंजगज्जिष्णुपतिंश्रीजगतांपतिं प्राप्ताकृतार्थंसात्मानंमेनेभानयशोधरा नष्टकष्टंजगत्सर्वंभ
गवद्धारितंमया लक्ष्म्याचपालितंसर्वंसद्भुष्येवमहीतलं सुभिक्षंक्षेममारोग्यंक्रमानंदमनामयं हूयतेब्राह्मणैर्वह्नौ
भुज्यतेत्रिदशैर्दिवि चातुर्वर्ण्यसमाकीर्णंपाल्यतेपार्थिवैरपि विरोचनादिभिःसर्वैर्दृष्टैर्दैवलवत्तरैः तपस्ततमथार
ब्धंमर्थमाश्रित्यसंयतैः सोमसंस्थाहविःसंस्थापाकसंस्थादिभिर्मखैः सदाचारैःससारब्धंयष्टमाक्लिष्टकारिभिः
एवंधर्मप्रधानैस्तुदेवैर्दाररतात्मभिः जगदासीत्समाक्रांतविक्रमेणबलेनच लक्ष्मीविलासप्रभवादेवीनांचमहामदः

जगामदानवकुलं
शीलसत्यंचशौचंचसद्योलीनमभूद्गृहे सत्यशौचविहीनांस्तान्देवान्संत्यज्यचंचला वयंदेवाव
कुलदेवानुरागतः लक्ष्मीप्रभावसंदत्तःपुनरुद्धतमानसैः व्यवहर्तुंसमारब्धमन्यायेनमदोद्धतैः
यंयज्ञावयंविप्रावयंजगत् ब्रह्मविष्ण्वीशशक्राद्यावयंसर्वेदिवौकसः अहंकारविमूढांस्तान्ज्ञात्वादानवसत्तमान्
सागरेसाविवेशाथभ्रांतचित्ताभृगोःसुता क्षीराब्धिमध्यगंतयालक्ष्म्याक्षीणार्थसंचयं निरानंदंगतश्रीकमभवद्भुवनत्र
य गतश्रीकमथात्मानंमत्वाथबलसूदनः पप्रच्छांगिरसंविप्रब्रूहिकिंचिद्धितंमम येनसंप्राप्यतेलक्ष्मीलब्धान
चलतेपुनः निश्चलापिसुहृन्मित्रभार्याभवतिसामुने नसाश्रीरपिमंतव्यायाकन्यापाल्यतेगृहे परार्थेयासु
न्निवभृत्यैनैवोपभुज्यते सुहृद्बंधुजनाःसर्वेयांभुंजंतिसदाशुभाः शक्रस्यैतद्वचःश्रुत्वा बृहस्पतिरुदारधीः कथ
यामाससंचिंत्यशुभंश्रीपंचमीव्रतं यत्पुराकस्यचिन्नोक्तंव्रतानामुत्तमंव्रतं तदिदंकथयामाससरहस्यमशेषतः त
च्छ्रुत्वाकर्तुमारब्धंशुभंतदमरैःसह देवदानवगंधर्वैर्यक्षैरक्षीणकल्मषैः सिद्धैःप्रसिद्धचरितैर्विष्णुनाप्रभुविष्णुना
ब्राह्मणैर्ब्रह्मतत्त्वज्ञैः समर्थैःपार्थिवैःसहकैश्चित्सात्विकभावेनराजसेनापरैरपि तामसेनतथाकैश्चित्कृतंव्रतमिदं
तथा व्रतेसमाप्तभूयिष्ठेनिष्ठयापरयाशुभो देवानांदानवानांचबुद्धिरासीदथोद्यता निर्मथ्यभुजवीर्येणसागरंस
रितांपतिंसमाहरामोह्यमृतंहितायत्रिदिवौकसां इत्थंतेसमयंकृत्वाममंथुर्वरुणालयं मंथानंमंदरंकृत्वानेत्रंकृत्वातु
वासुकिं मथ्यमानजलाज्जातश्चंद्रःशीतांशुरुज्ज्वलः अनंतरंसमुत्पन्नालक्ष्मीःक्षीराब्धिमध्यगा तयाच लोकि
ताःसर्वेदैत्यदानवसत्तमाः आलोक्यतान्जगामाशुविष्णोर्वक्षःस्थलंशुभं विधिनाविष्णुनाचीर्णंव्रतंतेनाब्धिसंकया
शरीरस्थाबभूवास्याविभ्रमोद्भ्रांतलोचना किंचराजसभावेनशक्रेणैतत्कृतंयतः ततस्त्रिभुवनैश्वर्यंप्राप्तंतेनमहर्द्धिमत्
तमसाधृताचित्तैस्तुसंचीर्णंदैत्यदानवैः तेननतेषामथैश्वर्यंदृष्टनष्टमभूत्किल एवंसश्रीकमभवत्सदेवासुरमानुषंजगच्च ज

गतांश्रेष्ठव्रतस्यास्यप्रभावतः युधिष्ठिरउवाच कथमेतद्व्रतंकृष्णक्रियतेमनुजैःकदा प्रारभ्यतेप्राप्यतेचसर्वमेवजनार्दन
श्रीकृष्णउवाच यदिंद्रेणपुराचीर्णं श्रीवियुक्तेनपार्थिव श्रीसमृद्धिकरंतद्वैशृणुश्रीपंचमीव्रतं मार्गशीर्षेसितेपक्षे
पंचम्यापन्नगोत्सवे उपवासस्यनियमंकुर्यात्पद्मादिस्मरन् स्वर्णरौप्यांयथाशक्त्याताम्रांमृत्काष्ठजामथ चित्रपट्ट
गतादेवींलक्ष्मींक्ष्मापालकारयेत् पद्मासनांपद्महस्तांलक्ष्मीपद्मदलेक्षणां दिग्गजेंद्रैःस्नाप्यमानां कांचनैःकलशो
त्तमैः ततोयामत्रयेजातेनिम्नगायांगृहेथवा स्नानंकुर्यादसंभ्रांतःशक्तवच्चोपचारतः देवान्पितॄंश्चसंतर्प्यततोदेवगृ
हंव्रजेत् तत्रस्थांपूजयेद्देवींपुष्पैस्तत्कालसंभवैः चपलायैपुनःपादौ चंचलायैचजानुनी कटिकमलवासिन्यै नाभिं
ख्यात्यैनमोनमः स्तनौमन्मथवासिन्यैललितायैभुजद्वयं उत्कंठितायैकंठंचमाधव्यैमुखपंकजं नमःश्रियैशिरः
पूज्यदद्यान्नैवेद्यमादरात् फलानिचयथालाभंविरूढधान्यसंचयं ततःसुवासिनीःपूज्याःकुसुमैःकुंकुमेनच भो
जयेन्मधुरान्नेनप्रणिपत्यविसर्जयेत् ततस्तुतंडुलप्रस्थंघृतपात्रेणसंयुतं ब्राह्मणायप्रदातव्यंसाश्रीर्मेप्रीयता
मिति एनविष्णुनासहवर्ततेइतिसाविष्णुसहिताश्रीरित्यर्थः निवर्त्यैतदशेषेणततोभुंजीतवाग्यतः मासानु
मासंकर्तव्यंविधिनानेनभारत श्रीर्लक्ष्मीःकमलासंपत्पद्मानारायणीप्रिया तथाधृतिःस्मृतिस्तुष्टिःपुष्टिःसिद्धिः
रमाक्रमात् मासानुमासंराजेंद्रप्रीयतामितिकीर्तयेत् ततोद्वादशकेमासिसंप्राप्तेपंचमीदिने वस्त्रमंडपि
पगंधादिवासितां शय्यायांस्थापयेल्लक्ष्मींसर्वोपस्करसंयुतां सौभाग्याष्टकसंयुक्तांश्वेतपट्टावृतस्तनीं
समोपेतांरसधान्यसमन्वितां पादुकोपानहच्छत्रभाजनासनसत्कृतां देवींसंपूज्यविधिवद्ब्राह्मणायकुटुं
यवेदविदुषेयस्मैवारोचतेस्वयं व्यासायव्यासप्रणीतपुराणशास्त्रज्ञाय॥ सोपस्करांसवस्त्रांचधेनुंदत्वा
क्षीराब्धिमथनोद्भूतविष्णोर्वक्षस्थलालये सर्वकामप्रदेदेविऋद्धिंयच्छनमोस्तुते ततःसुवा

सिनीः पूज्यवस्त्रैराभरणैः शुभैः ॥ भोजयित्वास्वयंपश्चाद्भुंजीतसहबंधुभिः ॥ यएवंकुरुतेपार्थभक्त्याश्रीपंचमी
व्रतं तस्यश्रीर्भवनेभातिकुलानामेकविंशति ॥ नारीयाकुरुतेयातुप्राप्यानुज्ञांस्वभर्तृतः ॥ सुभगादर्शनी
याचबहुपुत्राचजायते यःपंचमीव्रतमिदंदयितंमुरारेर्भक्त्यासमाचरतिपूज्यभृगोस्तनूजां ॥ राज्यंश्रियंसभुवि
भव्यजनोपभोग्यांभुक्त्वाप्रयातिभुवनंमधुसूदनस्य ॥

इतिभविष्योत्तरोक्तंश्रीपंचमीव्रतम् मार्गशुक्लषष्ठ्यांमल्लारिपूजोक्ता
साचोत्तरविद्धायांकार्य्याषण्मुन्योरितियुग्मवाक्यात् तदुक्तंब्रह्मांडपुराणे मल्लारिमाहात्म्ये मार्गशीर्षेविशेषेणप्र
तिपत्षष्ठिकांतरे पूजार्चनंकृतंभक्त्यातदक्षय्यमसंशयं धनधान्याश्वधेन्वादिदासीदासगृहादिकं मल्लारिप्रीतयेदेयं
विशेषात्मार्गशीर्षके चंपाषष्ठ्यास्कंदषष्ठ्यांतथासर्वेषुपर्वसु चैत्रश्रावणपौषेषुप्रीतोमल्लारिरर्चितः अत्रचंपाषष्ठी
योगः मासिमार्गशिरेशुक्लेषष्ठीचध्रुवसंयुता रविवारेणसंयुक्तासचंपेतिप्रकीर्तिता इयमेवस्कंदषष्ठी तदुक्तं नार
दीये मार्गशीर्षेशुक्लषष्ठ्यांनिहतस्तारकोसुर स्कंदेनसत्कृतिःप्राप्ता ब्रह्माद्यैःपरिकल्पिता ततोस्यांपूजयेत्स्कंदं
गंधपुष्पाक्षतैःफलैः वस्त्रैराभरणैर्वापिनैवेद्यैर्विविधैस्तथा रविवारेणसंयुक्तातथाशतभिषान्विता यदिस्यात्सासमु
द्दिष्टाचपाद्मामुनिसत्तम तस्यांविश्वेश्वरोदेवो द्रष्टव्यः पापनाशनः पूजनीयोवंदनीयःस्मर्तव्यःसौख्यमिच्छता स्नान
दानादिकंचात्रसर्वमक्षय्यमुच्यतइति ॥ इमांषष्ठीमारभ्यवर्षपर्यंतंराजतंस्कंदंविधायसंपूज्यचविप्रायदद्यात् तत्रमं
त्रः सेनाविनायकस्कंदमहासेनमहाबल हरोमाग्निजषड्वक्त्रगंगागर्भनमोस्तुते भविष्योत्तरे॥श्रीकृष्णउवाच येयंमा
र्गशिरेमासिशुक्लापष्ठीचभारत पुण्यापापहराधन्याशिवाशांतागुहप्रिया॥ स्नानदानादिकंकर्मतस्यामक्षय्यमुच्यते
येस्यांपश्यंतिगांगेयंदक्षिणापथमास्थितं गांगेयंस्कंदं ब्रह्महत्यादिपापैस्तेमुच्यंतेनात्रसंशयः तस्मात्दस्यांसोपवा

सः। कुमारस्त्वर्णसंभवं ॥ राजतं वा महाराज मृण्मयं वापि कारयेत् ॥ अपराह्णे ततः स्नात्वा समाचम्य यतव्रती ॥ पद्मासन
स्थो गांगेयं ध्यायंस्तिष्ठेत्समाहितः ॥ ब्राह्मणस्तु ततो विद्वान् गृहीत्वा करकं नवं पातयेत्तस्य शिरसि धारां वै दक्षिणामुखः
चंद्रमंडलसंभूतां भवभूतिपवित्रतां ॥ गंगा कुमारधारेयं पातिता तव मस्तके ॥ एवं स्नात्वा समभ्यर्च्य भास्करं भुवनाधिपं ॥ पु
ष्पपूजार्पणः पश्चात्पूजयेत्कृत्तिकासुतं ॥ देवसेनापते स्कंद कार्त्तिकेय भवोद्भव ॥ अपारगुण गांगेय शक्तिहस्त नमोस्तु ते
एभिर्नामपदैः स्तुत्वा तैवेद्यं तु निवेदयेत् ॥ फलानि दक्षिणात्यानि चंदनं मलयोद्भवं पार्श्वस्थौ पूजयेच्छागकुक्कुटौ स्वामिवल्ल
भौ सकलापं मयूरं च प्रत्यक्षं हेमजं तथा ॥ चंद्रकाराजितं पार्श्वे संपूज्य स्कंदवल्लभं ॥ ब्रीहिभिः सघृतैर्होमः कार्यः साक्षे
स्तिलैस्ततः ॥ एवं निर्वर्त्य विधिवत्फलमेकं युधिष्ठिर ॥ अक्षयित्वा स्वपेद्भूमौ स्त्वा तृणं दर्भसंस्तरे ॥ नारिकेलं मातु-
लिंगं नारंगं पनसं तथा ॥ जंबीरं दाडिमं द्राक्षां ह्याम्रपत्रफलानि च ॥ श्रीफलामलकं तद्वत्त्रपुसं कदलं फलं क्रमादेतानि-
मासेषु भक्षयेन्नियतो व्रती ॥ अभावे खलु कालोत्थं फलमद्यादतंद्रितः ॥ प्रत्यक्षो हेमघटितच्छागो वा कुक्कुटोथवा ॥ प्रात-
र्दद्याद्द्विजायोच्चैः सेनानीः प्रीयतामिति ॥ सेनानीः शरसंभूतः क्रौंचारिः षण्मुखो गुहः ॥ गांगेयः कार्त्तिकेयश्च स्वामी-
बालग्रहाग्रणीः ॥ छागप्रियः शक्तिधरः कुमारो द्वादश स्मृताः ॥ प्रीयतामिति सर्वेषु मासेषु परिकीर्त्तयेत् ॥ ब्राह्मणा
न्भोजयित्वादौ पश्चाद्भुंजीत वाग्यतः ॥ एवं संवत्सरस्यांते कार्त्तिके मासि शोभने ॥ कार्त्तिकेयं समभ्यर्च्य वासोभिर्भूषणै
स्तथा ॥ प्रतिमासं समाश्रित्य सर्वं देवे समाचरेत् ॥ संवत्सरविधिं कृत्वा पूजाहोमपुरःसरम् दद्याद्विप्राय राजेंद्र वाच
कायविशेषतः ॥ विद्या विप्राः स्मृता दिव्या भौमाश्चान्ये द्विजातयः ॥ पारिते स्मिन्व्रते पार्थ तीर्णः स्याद्भवसागरः
एवं य कुरुते भक्त्या नरो योपि द्विजापि वा ॥ संप्राप्येह शुभान्कामान् गच्छतींद्रसलोकतां ॥ सदैव पूजनीयस्तु कार्त्ति
केयो महीपते ॥ कार्त्तिकेयादृते नान्यो राज्ञां पूज्यः प्रचक्षते ॥ संग्रामं गच्छमानो यः पूजयेत्कृत्तिकासुतं स सर्वं जयति

वीरोयथेंद्रोदानवान्रणे॥ तस्मात्सर्वप्रयत्नेनपूजयेच्छंकरात्मजं॥ पूजयानस्तुतंभक्त्यासर्वान्कामानवाप्नुयात्॥ यस्तु
षष्ठ्यांनरःपूजांकुर्यात्कृत्तसप्तमिं॥ सर्वपापविनिर्मुक्तोगांगेयस्यपदंव्रजेत्॥ त्रिःकृत्वादक्षिणांवासोदत्त्वाश्रद्धासमन्वि
तः प्रणमेद्देवदेवंयःसगच्छेच्छिवमंदिरं॥ यःपूजयेच्छरवनोद्भवमादिदेवंशंभोःसुतंसदयितंगिरिजात्मजंच॥ स्वर्गेनि
रर्गलसुखान्यनुभूयभूयःसेनापतिर्भवतिपांडुधुरंधरोसौ॥ [illegible] ॥ [illegible]
[illegible] ॥ [illegible] ॥ [illegible]
[illegible] इतिभविष्योत्तरेमार्गशुक्लेकार्त्तिकेयषष्ठीव्रतं॥ स्कंदपुराणेचपाषष्ठीव्रतम्॥ [illegible]
स्कंदउवाच॥ प्राप्तराज्यंतुराजानंधर्मपुत्रंयुधिष्ठिरं॥ कदाचिदागतोद्रष्टुंदुर्वासामुनिसत्तमः॥ तंपप्रच्छमहातेजाधर्मसूनुः
कृतांजलिःतद्व्रतंश्रोतुमिच्छामिकर्तुंचमुनिसत्तमः॥ दुर्वासाउवाच॥ शृणुराजन्महाभागव्रतानामुत्तमंव्रतं॥ अस्तीहयद्व्रतंपुण्यं
प्राप्तंसर्वकामांस्तुपूरयेत्॥ भविष्योत्तरे॥ श्रीकृष्णउवाच॥ शृणुपांडवयत्नेनफलषष्ठींशुभांतथा॥ यामुपोष्यनरःप्रा
प्राप्तिमुक्तः स्वर्गभाग्भवेत् मार्गशीर्षेशुभेमासिपंचम्यांनियतव्रतः॥ षष्ठीमुपोष्यकमलंकारयित्वासकांचनं॥ शर्करा
संयुतंदद्याद्ब्राह्मणायकुटुंबिने रूपंचकांचनंकृत्वाफलस्यैकस्यधर्मवित्॥ दद्यात्प्रातःकृतस्नातो॥ भानुर्मेप्रीयतामिति
भक्त्यातुविप्रान्संपूज्यसप्तम्यांक्षीरभोजनं॥ कृत्वाकुर्यात्फलत्यागंयदास्यात्कृष्णसप्तमी॥ एतामुपोष्यविधिवदनेन
क्रमेणतु तद्वद्धेमफलंदत्त्वासुवर्णकमलंतथा रक्तचंदनपुष्पैश्चरक्तवस्त्रसमन्वितं॥ भानुरर्कोरविर्ब्रह्मा सूर्यः श
क्रोहरिः॥ शिवः॥ श्रीमान्विभावसुस्त्वष्टा वरुणःप्रीयतामिति व्रतांतेविप्रमिथुनंपूजयेत्स्रग्विभूषणैः शर्कराकल
शंदद्याद्धेमपद्मफलान्वितं॥ यथाविसफलाःकामास्त्वद्भक्तानांसदारवे॥ तथानंतफलावाप्तिरस्तुजन्मनिजन्मनि॥ इ
मामनंतफलदांफलषष्ठींकरोतियः॥ सर्वपापविनिर्मुक्तः॥ सूर्यलोकेमहीयते॥ सुरापानादिकंकिंचिद्यदत्रामुत्रवाकृतं॥ त

त्सर्वनाशमायातिसूर्यलोकंसगच्छति। भूतान्भव्यांश्चपुरुषांस्तारयेदेकविंशतिं॥ शृणुयाद्वापठेद्वापिसोपिकल्याण भागभवेत। हैमंफलंसकमलंससितंसितायांपष्ठीमुपोष्यविधिवद्द्विजपुंगवाय। दत्वासुरासुरशिरोमणिघृष्टपादंभानुं प्रणम्यफलसिद्धिमुपैतिमर्त्यः॥
॥इतिभविष्योत्तरेफलषष्ठीव्रतम् ॥ मार्गशुक्लसप्तम्यांमित्रसप्तमीव्रतम ॥
नारदीये॥ मार्गस्यासितसप्तम्यांमित्रव्रतमुदाहृतं ॥यद्विष्णोर्दक्षिणंनेत्रंतदेवाकृतिमानिह॥ आदित्यांकश्यपा ज्जातोमित्रोनामदिवाकरः॥ अतोस्यांपूजनंतस्ययथोक्तविधिनाद्विज॥ कृत्वाद्विजान्भोजयित्वासक्षौद्रमधुरा दिना॥ सुवर्णदक्षिणांदत्वाविसृज्याश्नीतवैस्वयं ॥ उपोष्यभानुंत्रिसंध्यंसमभ्यर्च्यधराशयः ॥ क्षीरासिक्तान्नसंयुक्तं मोदकंप्रस्थसम्मितं ॥द्विजायदत्वाभोज्यानिसप्ताश्वत्थप्रदक्षिणाः॥ पृथग्गावःसुवर्णंवाविसृज्याश्नीतवैस्वयं॥ अभ यारव्यंव्रतंचैतत्सर्वस्याभयदंस्मृतं॥ मार्तंडाख्यंव्रतंनाम कथयंतिद्विजाः परे ॥ एकमेवेतिचप्रोक्तमेकदैवंतथाबुधैः॥॥ इयंपूर्वाकल्यां एताःपूर्वयुताग्राह्या॥ इतिवचनात् कृत्यतत्वार्णवेपि ॥ आदितेःकश्यपाज्जातोमित्रोनामदिवाकरः मार्गशीर्षस्यमासस्यशुक्लपक्षेशुभेतिथौ ॥ सप्तम्यांतेनसाख्यातालोकेस्मिन्मित्रसप्तमी। तत्रोपवासःकर्त्तव्योभ- क्ष्याण्यथफलानिचेति ॥ अस्यविधिर्निर्णयामृते ॥ तत्रपूर्वदिनेउपोष्यकृतवपनः स्नात्वा रविं सर्वोपचारैःसंपू ज्यब्राह्मणान्भोजयेत्ततः ॥ स्वयंमधुप्लुतंमिष्टान्नंभुंजीत ॥ तदुक्तंब्रह्मपुराणे ॥ यद्विष्णोर्दक्षिणंनेत्रंतदेवाकृतिमत्पु नः आदित्यांकश्यपाज्जातोमित्रोनामदिवाकरः ॥ सप्तम्यांतेनसाख्यातालोकेस्मिन्मित्रसप्तमी ॥ षष्ठ्यांतुस्नपनं कार्यंतस्मैमित्रायभानवे॥ तत्रोपवासःकर्तव्योभक्ष्याण्यथफलानिच रात्रौजागरणंकार्यंगीतनृत्यपुरस्कृतं॥ सप्त- म्यांवपनंकार्यंस्नात्वासंपूजयेद्रविं॥ नानाकुसुमसंभारैर्भक्ष्यैःपिष्टमयैःशुभैः मधुनासंप्रभूतेनहोमोजाप्यंसमाधिना।

ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्चमानवान् अष्टम्यांसंविभुज्याथतथाचनटवर्त्तकान् दिनद्वयेचभोक्तव्यंमिष्टान्नं-
मधुनाप्लुतं॥ दिनद्वयेनसप्तम्यामष्टम्यांच ॥ अत्रमित्ररविरूपंवीरमित्रोदये शूलंवामकरेतस्यदक्षिणेसोमएवच
मित्रनामाविनयन कुशेशयविभूषितः विष्णुधर्मोत्तरेविशेषः मार्गशीर्षस्यमासस्यशुक्लपक्षेनराधिप सोपवा-
सस्तुसप्तम्यामित्यादि ततः कमलैरविं रक्तचंदनपुष्पैश्चसंपूज्य वटकैः पूरणेनपूजयेदितिप्रकारांत
रेण मित्रसप्तमीव्रतं अस्यामेवकाश्यांलोलार्कयात्रोक्ताकाशीखंडे ॥ मार्गशीर्षस्यसप्तम्यांषष्ठ्यांवारविवासरे
विधायवार्षिकींयात्रां नरःपापाद्विमुच्यतइति ॥ इयमार्गशुक्लसप्तमीत्रितयसप्तमी सत्कुलजन्मारोग्यधनप्रद
त्वात् तत्रकृत्यहेमाद्रौ योमार्गशीर्षसितसप्तमीदिने हस्तर्क्षयोगेजगतःप्रसूतिं संपूज्य भानुंविधिनोपवासी
स्रग्गंधधूपान्नफलोपहारैरिति एवंसवत्सरंसंपूज्यतदंते घृतसुवर्णादिकंदद्यादितित्रितयसप्तमी इयमेवनंदास
प्तमी भविष्यत्पुराणे यातुमार्गशिरेमासिशुक्लपक्षेचसप्तमी नंदासाकथितावीरसर्वानंदकरीशुभेति अत्रा
पिसूर्यपूजादि पूर्ववत्कार्य्यमितिमार्गशुक्लसप्तमीव्रतानि अत्रकालभैरवयात्रोक्ता नारदीये मार्गशीर्षासि-
ताष्टम्यांकालभैरवसन्निधौ उपोष्यजागरंकृत्वासर्वपापैःप्रमुच्यते यत्किंचिदशुभंकर्मकृतंमानुषजन्मनि तत्स
र्वंविलयंयातिकालभैरवदर्शनादिति ॥ कृष्णाष्टम्यांकालभैरवजयंतीव्रतं ॥ शिवरहस्ये कालाष्टमीतिविज्ञेयाका
र्त्तिकस्यासिताष्टमी दर्शांतमासाभिप्रायेणेयं कार्त्तिककृष्णाष्टमी तस्यामुपोषणंकार्यंतथाजागरणंनिशि भैरव
स्यतुकर्त्तव्यापूजायामचतुष्टये कार्यंशिवकथालापैर्निशिजागरणंसदा जागरंचोपवासंचकृत्वाकालाष्टमीदिने
प्रयतःपापनिर्मुक्तःशैवोभवतिशोभनइति रात्रौयामचतुष्टयेजागरणंशिवपूजादि काशीवासिनांनित्यं ॥ योदेवि
भैरवाष्टम्यामुपवासंप्रयत्नतः नकरिष्यतिमोहेनयांस्यत्यवाहियातनामिति शिवरहस्यवचनात् काशीखंडेपि

मार्गशीर्षासिताष्टम्यांकालभैरवसन्निधौ ॥ उपोष्यजागरंकुर्वन्महापापैःप्रमुच्यते ॥ यत्किंचिदशुभंकर्मकृतंमानुषज
न्मनि तत्सर्वंविलयंयातिकालभैरवदर्शनात् ॥ अनेकजन्मनियुतैर्यत्कृतंजंतुभिस्त्वघं सर्वंविलयमायातिकालभैरव
जागरात् तच्चदर्शनंस्नात्वाकर्त्तव्यमित्युक्तंतत्रैव ॥ तीर्थंकालोदकेस्नात्वाकृत्वाचपितृतर्पणम् ॥ विलोक्यकालरा
जानंनिरयादुद्धरेत्पितॄन् ॥ कृत्वाचविविधांपूजांमहासंभारविस्तरैः ॥ नरोमार्गासिताष्टम्यांवार्षिकंविघ्नमुत्सृजेदि
ति उपोष्यजागरंकुर्वन्सर्वपापैःप्रमुच्यतइतिच ॥ उपोषणांगत्वेनार्घ्यदानंकार्यमित्युक्तं ॥ शिवरहस्ये ॥ उपो
षणान्यासभूतमर्घ्यदानमिदंस्मृतं ॥ अर्घ्यमंत्रश्चापितत्रैव ॥ भैरवार्घ्यंगृहाणेदंभीमरूपाव्ययानघ ॥ अनेनार्घ्य
प्रदानेनतुष्टोभवशिवप्रिय ॥ सहस्राक्षिशिरोबाहोसहस्रचरणाजर ॥ गृहाणार्घ्यंभैरवेदंसपुष्पंपरमेश्वर ॥ पुष्पां
जलिंगृहाणेशवरदोभवभैरव ॥ पुनरर्घ्यंगृहाणेशसपुष्पंयातनापह ॥ अत्रपूजोपवासजागरणानिप्रधानानिफल
संबंधात् अस्मिन्व्रतेउपवासजागरणयोःप्रधानयोरहोरात्रसाध्यत्वेनाहोरात्रयुताऽष्टमीग्राह्या ॥ अहोरात्रव्रतंयच्च
तिस्मृतेः यदातुपूर्वदिनेसायान्हेतदुत्तरस्मिन्नपिप्रदोषेतुल्यातदापिपूर्वैव ॥ कृष्णपक्षगतत्वात्तत्कालस्यापिला
भाच्च रुद्रव्रतेषुसर्वेषुकर्त्तव्यासंमुखीतिथिरितिब्रह्मवैवर्त्ताच्च ॥ दिनद्वयेशतोरात्रिव्याप्तावुत्तरैवतत्रैवभैरवोत्पत्तेः
प्रदोषकालीनत्वादितिकेचित्तत्रशिवरहस्ये मध्यान्हेभैरवोत्पत्तिश्रवणात् तथाच तत्रैवनित्ययात्रादिकंकृत्वा
ध्यान्हेसंस्थितेरवावित्युपक्रम्य ब्रह्मणोरुद्रेजातेउक्तं तदोग्ररूपादनघान्मत्तः श्रीकालभैरवःआविरासीत्तदा
न्भीषयन्नखिलानपीति ॥ तस्मान्मध्यान्हव्यापिनीग्राह्येत्यपरे ॥ अन्येत्वेतदपिनाद्रियंते ॥ आविर्भावका
न्याः कर्त्तव्यत्वेनानभिधानात् आविर्भावोपिमध्यान्हएव शिवरहस्येमध्यान्होत्तरं कृत्तिवासोश्वरंप्रापुर्देवा
२ साधना इत्यादिनामध्येवहुकृत्याभिधानात् ॥ अंतेसूर्योप्यस्तमुपागमदित्यभिधानाच्च ॥ तिथ्यर्केचसिं

धुकारुण्ये॑ष्ठेरुक्तं — भैरवसन्निधावित्युक्तेर्जागरणोपवासादिकंकाश्यामेवकर्त्तव्यमितितत्प्रमाणाभावादुपेक्ष्यमिति
तदोपादेयं मार्गशीर्षासिताष्टम्यामित्युत्पत्तिवाक्येकालभैरवसंन्निधावित्यस्योपात्तत्वेनाविवक्षितत्वेप्रमाणाभावात्
यत्तुनिर्णयासिधौ मार्गकृष्णाष्टमी कालाष्टमीत्युक्तं तद्भ्रमसात् — कालाष्टमीभाद्रकृष्णाष्टमीति हेमाद्र्युक्तेः
तल्लक्षणमपितत्रैवभाद्रकृष्णाष्टमीनिर्णयेद्रष्टव्य इतिकालभैरवाष्टमीव्रतनिर्णयः॥ मार्गशुक्लनवमीनंदिनीनवमी
नारदीयेपि मार्गेतुशुक्लनवमीनंदिनीपरिकीर्तिता तस्यामुपोषितोविष्णुंजगदंबांप्रपूजयेत् गंधाद्यैःसोश्वमे
धस्यफलभाङ्नात्रसंशयः मदनरत्नेभविष्ये मासिमार्गशिरेवीरशुक्लपक्षेतुयाभवेत् सानंदिनीमहापुण्यानवमी
परिकीर्तिता यस्तस्यांपूजयेद्देवीं त्रिरात्रोपोषितोनरः सोश्वमेधमवाप्येह विष्णुलोकेमहीयते॥
इतिमार्गशुक्लनवमी — अथमार्गशुक्लदशम्यांव्रतविशेषाभावादत्रदशमीमात्रे
सर्वदानुष्ठेयमारोग्यदशमीव्रतं गरुडपुराणे सनत्कुमारउवाच अथत्वंशृणुदेवर्षेदशमीव्रतमुत्तमंसर्वरोगार्तिशम
नंसर्वपुष्टिप्रदंशुभं व्रतमेतन्महाबुद्धेकार्य्यमारोग्यमिच्छता सर्वदाकार्य्यमेतद्धिलिप्सताचिरजीवितं उपवास
श्चकर्तव्योनवम्यामपिसुव्रत दशम्यांचकृतस्नानोमंगलायतनंहरिं देवमिंदिरयासार्द्धंन्यायेश्चजगतांपतिं वैनतेय
भुजासक्तंवनमालाविभूषितं शंखचक्रगदापद्मशार्ङ्गासिधरमच्युत फलैश्चमधुरैः पुष्पैः पायसेनसमर्चयेत् अ
ग्रतःस्थापयेत्कुंभं तीर्थतोयेनपूरितं तस्मिन्नावाहयेत्पंचचक्रादीन्यायुधानिच — चक्रगदामुशलधनु खड्गानीति
हेमाद्रिः — पूजयेद्रक्तपुष्पैस्तुगुडान्नेनसमाहितः द्रोणमात्रतिलैरक्तंकारयेदजिनोपरि तस्मिन्नष्टदलंपद्मंसौवर्णंहि
निधायच मतःपष्ठाणींद्रियाणिप्राणबुद्धिदलेष्वथ कर्णिकायांतथाकालंक्रमेणैवसमर्चयेत् — मनःश्रोत्रंचलक्ष
क्षुर्जिह्वाघ्राणप्राणबुद्धिरितिक्रमात् — अनामयानितिष्ठंतुप्राणश्चचिरसंस्थितःअनाकुलाचमेबुद्धिःसर्वेस्युर्निरुपद्रवाः

मनसाकर्मणावाचामयाजन्मनिजन्मनि संचितंक्षपयत्वेनः कालात्माभगवान्हरिः एवंसंप्राथ्यगुरवेसदक्षिणं मु
नस्करं दत्वाविप्रान्भोजयित्वा आचार्यःकुंभवारिणा साधकंस्नापयेच्छिष्योगुर्वनुज्ञापुरःस्सरं बांधवैः सह
भुक्त्वातुनियमानुत्सृजेत्पुनः एवंकृतेक्षिप्रमारोग्यंभवति ॥ इतिगरुडपुराणोक्तमारोग्यदशमीव्रतं ॥ नारदीये
मार्गशुक्लदशम्यांतुचरेदारोग्यकंव्रतम् गंधाद्यैरर्चयेद्विप्रान्पण्णन्तच्चरणोदकं पीत्वाचदक्षिणांदत्वाविसृजे
देकभोजनः एतत्कृत्वाव्रतंविप्रश्रस्यामेवपदार्थदशमीव्रतारंभोविष्णोधर्मोत्तरे ॥ मार्गशीर्षादथारभ्ययावत्संवत्स
रंभवेत् गंधमाल्यनमस्कारैर्धूपदीपान्नसंपदा दिगीशपूजनंकार्यंतथैवेंद्रादयोदश वत्सरांतेद्विजेंद्रायगांप्रदद्यात्प
यस्विनीं पदार्थसिद्धिमाप्नोतियात्राकालेवणिग्जनः वाणिज्यकामस्यनरस्यशस्तं राज्ञस्तथोर्वीविजिगीषतश्च
विद्यार्थिनोवारिपुनाशनार्थंहितंपदार्थव्रतमेतदुक्तम् ॥
इतिपदार्थदशमीव्रतम् ॥ मार्गशुक्लैकादशीमोक्षदा ॥ नारदीये
मार्गशुक्लैकादशींवैमोक्षदांसमुपोष्यवै द्वादश्यांप्रातरभ्यर्च्यदनंतंविश्वरूपिणं सर्वैरेवोपचारैस्तुविप्रान्संभोज्य
वंव्रती विसृज्यदक्षिणांदत्वास्वयंभुंजीतबांधवैः एवंकृत्वाव्रतंविप्रभुक्त्वाभोगानिहेप्सितान् दशपूर्वान्दशाप
मुद्धृत्यहारिंव्रजेत ॥ अथब्रह्मांडपुराणोक्तमार्गशीर्षशुक्लैकादशीव्रतं युधिष्ठिरउवाच वंदेविष्णुंप्रभुं
लोकत्रयसुखप्रदं विश्वेशंविश्वकर्त्तारंपुराणपुरुषोत्तमम् १ वंदमेदेवदेवेशसंशयोस्तिमहान्मम लोका
नांपापानांक्षयकारणम् २ मार्गशीर्षेसितपक्षेद्वादशीचैवकाभवेत् किंनामकोविधिस्तस्याकोदेवस्त
एतदाचक्ष्वमेस्वामिन्विस्तरेणयथातथं श्रीकृष्णउवाच साधुस्त्वंचैवभोराजन्साधुतेविमलंयशः
नेंद्रहरिवासरमुत्तमं उत्पन्नावासितपक्षेद्वादशीममवल्लभा ५ मार्गशीर्षसमुत्पत्तिर्ममदेहसमुद्भवा

मुरस्यचवधार्थायउत्पन्नाराजवल्लभा कथिताचमयासावैत्वदग्रेराजसत्तम ॥ पूर्वमेकादशीराजन्त्रैलोक्येस
चराचरे ॥ ७ मार्गशीर्षासितपक्षेउत्पत्तिरितिनामतः अतःपरंप्रवक्ष्यामिमार्गशीर्षसितेतुया ॥ ८ ॥ यस्याः
श्रवणमात्रेणवाजपेयफलंलभेत् प्रसिद्धामोक्षनाम्नीतिसर्वपापहरापरा ॥ ९ ॥ देवंदामोदरंचैवपूजयेच्चप्र
यत्नतः तुलस्यामंजरीभिश्चधूपैर्दीपैःप्रयत्नतः ॥ १० ॥ तत्रापिपूजनंचैवगीतैर्नृत्यैस्तथापरैः शृणुराजें
द्रवक्ष्यामिकथांपौराणिकींशुभां ॥ ११ ॥ अधोयोनिगतासर्वेपितृमातृसुतास्तथा अस्याःपुण्यप्रभावेणस्वर्गं
यांतिनसंशयः १२ एतस्याकरणादस्यामहिमानंशृणुष्वतत् पुरातुनगरेरम्येकोशलेप्यवसन्नृपः १३ वैखा
नसोतिराजर्षिःपुत्रवत्पालयन्प्रजाः द्विजाश्चन्यवसंस्तत्रचतुर्वेदपरायणाः १४ ऋद्धिमतस्तुवैतस्यवैखानसस्य
महात्मनः एवंसराज्यंकुर्वाणोरात्रौस्वप्नमपश्यत १५ ददर्शपितरंस्वंतुअधोयोनिगतंनृपः हठाद्दृष्ट्वातुतत्रवि
स्मयोत्फुल्ललोचनः १६ कथयामासवृत्तांतंद्विजाग्रेस्वप्नसंभवं राजोवाच मयातुस्वपिताहष्टोनरकेथगतोद्वि
जाः १७ तारयस्वेतिमांतातअधोयोनिगतंत्वितः इतिब्रुवाणः सतदामयादृष्टःपितास्वयं तदाप्रभृतिभोवि
प्रानांगशर्मलभामहे एतद्राज्यसुखमह्यमसुखायमततथा १९ अश्वागजारथासर्वेसामेतेरोचयंतिनं कोशो
पिनसुखायमेतिनाकिंचित्सुखदंमम २० नदारानसुतामह्यंरोचयंतिद्विजोत्तमाः किंकरोमिक्वगच्छामिशरीरंमेतु
दह्यते दानंव्रतंतपोयोगंयेनवैममपूर्वजाः मोक्षंयांतिचयेनैवतदेवकथयंतुमे किंतस्यजीवितंलोकेसुपुत्रस्यव
लीयसः पितातुयस्यनरकेतस्यजन्मनिरर्थकम् २३ ब्राह्मणाऊचुः पर्वतस्यमुनेरत्रआश्रमोनिकटेनृप गम्य
तांराजशार्दूलभूतभव्यविजानतः २४ तेषांश्रुत्वाततोवाक्यंवैखानोराजसत्तम जगामतत्रयत्रासावाश्रमेपर्व

तोमुनिः २५ ब्राह्मणैर्वेष्टितस्तत्रपूजाभिश्चसमंततः आश्रमोविपुलस्तस्यमुनिभिःसन्निषेवितः २६ ऋग्वेदै
श्चयजुर्वेदैःसामाथर्वणकोविदैः वेष्टितोमुनिभिस्तत्रद्वितीयइवपद्मजः २७ दृष्ट्वातुमुनिशार्दूलंराजावैखानसस्तदा
जगामचावनींमूर्द्धादण्डवत्प्रणिपत्यच २८ पप्रच्छकुशलंतत्रसप्तस्वंगेष्वसौमुनिःराज्येनिष्कंटकत्वंचराजसौख्य
समन्वितं २९ राजोवाच तवप्रसादाद्ब्रह्मविप्रकुशलंत्वंगसप्तके भुवनेष्वनुकूलत्वंकोशलेष्वप्यविघ्नता ३० म
यास्वप्नेष्वद्यदृष्टोजनकोदुर्गतिंगतः कृतापिव्रतदानेनमोक्षोभवतितस्यवै ३१ एवंमेसंशयोब्रह्मन्हृद्दोलासमुपा
गतः एतच्छ्रुत्वानृपवचः पर्वतोमुनिसत्तमः ३२ ध्यानास्तिमितनेत्रोसौभूतंभव्यंविचिंतयत् मुहूर्त्तमेकंध्यात्वा
चप्रत्युवाचनृपोत्तमं ३३ मुनिरुवाच जानेहंतस्यराजेंद्रपितुस्तेपूर्वकर्मणः तवाद्यजन्मनिपिताक्षात्रियस्सुसमा
हितः ३४ कामासक्तेनकस्याश्चिदृतुभंगःकृतःस्त्रियः त्रायस्वमेतिजल्पंत्याऋतुदानान्नराधिप ३५ तेनैवतव
पित्रावैभग्नंतदृतुदानकं कर्मणातेनसततंनरकेपातितस्त्वयं ३६ राजोवाच केनैवव्रतदानेनमोक्षस्तस्यमहामु
ने निरयात्पापसंस्थानात्तन्ममाचक्ष्वपृच्छतः ३७ मुनिरुवाच मार्गशीर्षसितेपक्षेमोक्षानामेतिनामतःसर्वै
स्तुतद्व्रतंकृत्वापित्रेपुण्यंप्रदीयतां ३८ तस्याःपुण्यप्रभावेणमोक्षस्तस्यभविष्यति मुनेर्वाक्यंततःश्रुत्वानृप स्वगृह
मागतः ३९ आग्रहायणिकःकृच्छ्रात्प्राप्तोभरतसत्तम अंतःपुरचरैःसर्वैःपुत्रदारैस्तथानृपः ४० व्रतंकृत्वावि
धानेनपुण्यंदत्तंनृपायतत् तस्मिन्दत्तेतदातत्रपुष्पवृष्टिरभूद्दिवः ४१ वैखानसपितातत्रगतःस्वर्गैस्तुतोगणैः रा
जानमंतरिक्षाच्चविमलोप्यभ्यभाषत ४२ स्वस्तिस्वस्तीतिपुत्रत्वामित्युक्त्वासंदिवंगतः एवंयःकुरुतेराजन्मोक्षा
मेकादशीमिमां ४३ तस्यपापंक्षयंयातिमृतोमोक्षमवाप्नुयात् नातःपरतराकाचिन्मोक्षदाविमलाशुभा ४४ पुण्य
संख्यांतुराजेंद्रनजानेहंपरंतप पठनाच्छ्रवणात्तस्यावाजपेयफलंलभेत् चिंतामणिसमाह्येषास्वर्गमोक्षप्रदायिनी ४५

इतिब्रह्मांडपुराणेमार्गशीर्षशुक्लपक्षेमोक्षैकादशीमाहात्म्यंसमाप्तम् ॥
अस्यामेवैकादश्यांवाह्निपुराणोक्तंसुनामद्वादशीव्रतं हेमाद्रौ अंबरीषउवाच कथंसुनामभिर्देवोद्वादश्यांमुनि
सत्तम पूजितःकेशवोमर्त्यैर्मुक्तिकामफलार्थिभिः वसिष्ठउवाच शृणुष्वैकमनाभूपसुनामद्वादशींशुभांसर्वपापहरां
स्वर्ग्यांभुक्तिमुक्तिप्रदायिकां मनसापिचिकीर्षंतिद्वादशींयेनरोत्तमाः तेपिघोरंनपश्यंतिपुनःसंसारसागरं आद्यं
सर्वव्रतानांतुवैष्णवानांनृपोत्तम नरैःस्त्रीभिश्चकर्तव्यंविष्णोस्तुष्टिकरंपरं मार्गशीर्षेशुभेमासिशुक्लपक्षेधृत-
व्रतः प्रथमंचैवगृह्णीयाद्द्वादशींविधिनानरः मनोवाक्कायचेष्टाभिः सुविशुद्धोजितेंद्रियः दशम्यांनियतःस्नात्वा
प्रणिपत्यजनार्दनं हविष्यान्नकृताहारः शुचिर्भूत्वाभवेद्व्रती उपलिप्तेशुचौदेशेभक्षयेदंतधावनं उपोष्यै-
कादशींसम्यक्पूजयित्वाजनार्दनं सुनामद्वादशींदेवअहंभोक्ष्येपरेहनि एवंसंकल्प्यनियमंप्रणम्यगरुडध्वजं
दशम्यामेकभक्ताशीसंयतःसंवसेन्निशि एकादश्यांततःप्रातरेकचित्तःसमाहितः पूर्वंसंपूजयेत्सूर्यंततोदेवंप्रपू-
जयेत् देवंविष्णुं नमस्तेदेवदेवेशनमस्तेभक्तवत्सल भास्करायनमस्तुभ्यंरवयेर्कायभानवे नमःसूर्याय-
देवायनमस्तेसप्तसप्तये एकस्मैहिनमस्तुभ्यंएकचक्ररथायच ज्योतिषांपतयेनित्यंसर्वतेजोहरायच दिवा-
करनमस्तेस्तुप्रभाकरनमोस्तुते एवंसंपूज्यविधिवत्पुष्पधूपानुलेपनैः दीपैर्वस्त्रैःसुनैवेद्यैस्ततोविष्णुगृहंव्रजेत्
नैवेद्यंहरयेदद्यात्फलमोदकफाणितैः गीतवाद्यैर्हरिंहृष्टः प्रणम्यचमुहुर्मुहुः एवंपूजांहरेःकृत्वाद्विजंज्ञानप्रदायकं
पूजयेदंतरंनास्तिविप्रकेशवयोरपि ततोव्रणंसमालभ्यचंदनेननवंघटं स्त्रग्विणंतोयपूर्णंचन्यसेद्देवस्यसन्निधौ
सुनीलंमौक्तिकाख्यंचवज्ररत्नंसुवर्णकं न्यस्यगर्भेसुवस्त्रंतुपूजयेत्तत्रकेशवं यस्यरोम्णिस्थितासेघाः सर्वेसवि-
षपन्नगाः सागराःकुक्षिदेशस्थाःस्तोत्रायातुजगत्पतिः वनस्पतिरसोदिव्यःसर्वगंधेषुचोत्तमः घृतेनदेवसं-

मिश्रोधूपोयंप्रतिगृह्यतां॥ केशव केशिहादुष्टकंसदैत्यनिषूदनः सर्वकामप्रदोदेवःसमेपापंव्यपोहतु एवमभ्य-
र्च्यदेवेशंप्रणिपत्यक्षमापयेत् । द्वादश्यांगंधतोयेनस्नापयित्वेहमाधवं सर्वपापविनिर्मुक्तोवैष्णवींलभतेतनूं कृता-
भिषेकः॥ पुण्यात्मासम्यगभ्यर्च्यकेशवं ॥ नवसूतांतथाधेनुंब्राह्मणायोपपादयेत्॥ केशवः॥ प्रीयतांदेवः के
शिहंतामहाद्युतिः॥ सतुमेभगवान्प्रीतइष्टान्कामान्प्रयच्छतु एवंप्रदक्षिणंकृत्वाशृणुतस्यापियत्फलं त्रिंशद्वर्षकृ
तंपापंहित्वासत्रिविधंनरः ॥ षष्टिवर्षसहस्राणिस्वर्गेमोदतिदेववत् यदाकालादिहायातिसधर्मव्रतवान्भवेत् अ
भावादथधेनूनांतन्मात्रांकल्पयेत्ततः॥ तत्फलंहिविनिर्दिष्टंयथाशक्त्यातुदक्षिणा । भक्त्यैवफलमाप्नोतिभक्तिरेवा
त्रकारणं॥ पौषेचैवतुमासेचकुर्याद्देवंनरोत्तमः समाहितमनाभूत्वारसधेनुप्रदायकः॥ आपोनाराइतिप्रोक्ताआ
पोवैनरसूनवः॥ अयनंतस्यतत्प्रोक्तंतेननारायणःस्मृतः नारायणःप्रीयतांमेदेवदेवोनरःसदा इष्टकामप्रदोनित्यं
समेपापंव्यपोहतु । ततःप्रदक्षिणंकृत्वाब्राह्मणान्भोजयेत्ततः एवंहिक्रियमाणस्यतस्यपुण्यफलंशृणु षष्टिवर्षकृ
तंपापंस्वल्पंवायदिवाबहु हित्वास्वर्गंसमाप्नोतिवर्षाणामयुतंशुभं माघस्यैवतुमासस्य द्वादशींशुक्लपक्षतः यः
क्षिपेद्द्विशुचिर्भूत्वाएकचित्तःसमाहितः॥ स्नापयेत्पूजयेन्नित्यंब्राह्मणानांचतर्पणं प्रदानेनृपशार्दूलइमंमंत्रमुदीरयेत्
मालक्ष्मीश्चपुरात्रेयीभगिनीशशिनोनुजा धनस्त्वमसितस्यास्तुसर्वकामदमाधव ॥ प्रीयतांदेवदेवोमेमधुकैटभ-
सूदनः॥ कंसहाकेशिहंताचममपापंव्यपोहतु एवंयःकुरुतेनित्यंतस्यपुण्यफलंशृणु यावज्जन्मकृतंपापंहित्वा-
वैसशेषतः॥ दिव्यवर्षसहस्राणिस्वर्गेवसतिषोडश गुडधेनुप्रदोमाघेइहायातःसदासुखी भवेद्राजानिरातंकःस
श्वर्यसमन्वितः॥ तत्रविष्णुपरोभूत्वाक्रमान्मोक्षमवाप्नुयात् फाल्गुनामलपक्षस्यद्वादश्यांनियतःशुचिः पूजयित्वा
धानेनगंधपुष्पादिनाहरिं तिलधेनुंततोदद्यात्कृपंवापिसुभक्तितः मंत्रेणानेनराजेंद्रगोविंदःप्रीयतामिति गवांभक्तो

सिगोस्वामीगोवासोगोकृतालयः सर्वकामप्रदोनित्यंसमेपापंव्यपोहतु ततःप्रदक्षिणीकृत्यशृणुपुण्यंयथातथा बली
वर्दसहस्राणांदशानांधुरवाहिनां दत्तैस्तत्फलमाप्नोतिद्वादश्यांयद्भवेन्नृप ॥ दिव्यवर्षसहस्राणिस्वर्गेतिष्ठतिदेववत्
चैत्रस्यद्वादशींशुक्लांसमुपोष्यनृपोत्तम ॥ स्नात्वासंपूजयेद्विष्णुंजगतोंतरचारिणं ॥ पूर्वोक्तविधिनास्नात्वागो
मूत्रेगोमयेनवा ॥ स्नापयित्वामृतश्चैवपंचभिर्गंधसंयुतैः ॥ जलैःपश्चात्प्रपूज्यैवंगंधधूपविलेपनैः ॥ पुष्पवासोभि
रेवंहि मंत्रेणानेनबुद्धिमान् ॥ व्यापकस्त्वंहिभगवान्साधूनांरक्षणायच ॥ दुर्वृत्तांश्चविनिर्जेतुमसिविष्णोरतोह
रिः ॥ विष्णुर्भवतुमेप्रीतोजिष्णुर्देवःसनातनः सर्वपापविनाशायविष्णुर्मेप्रीयतामिति ॥ मधुधेनोरभावाच्च्छ
क्तितःपात्रमेवच ॥ दत्त्वायत्फलमाप्नोतितदिहैकमनाःशृणु ॥ पात्रंमधुयुतंपूर्वमिहजन्मनिसांप्रतं ॥ वर्ततेसक
लंहित्वास्वर्गलोकेमहीयते ॥ वैशाखस्यतुमासस्यपूजयेन्मधुसूदनं ॥ मासस्यद्वादश्यांप्रकरणात् ॥ पूर्वोक्तवि
धिनाराजन्सौवर्णंमधुसूदनं जलकुंभेतुसंस्थाप्यमंत्रेणानेनपूजयेत् ॥ एकार्णवेजलेधातुर्हृतावेदाःपुराहरे मधुना
निहतःसोपितेनासिमधुसूदनः ॥ घृतधेनुमथोदत्त्वाब्राह्मणान्भोजयेत्ततः ॥ ततःप्रदक्षिणाःकुर्याद्विप्रंदत्त्वातथैवगां
एवंतुक्रियमाणस्यतस्यपुण्यफलंशृणु ॥ कपिलायाःसहस्रस्यसम्यग्दत्तस्यपुष्करे ॥ यत्फलंतदवाप्नोतिभक्तियुक्तो
नसंशयः ॥ यावदिंद्रोवसेत्स्वर्गेतावद्वसतिष्ठति ॥ ज्येष्ठस्यैवतुमासस्यशुक्लपक्षेतुद्वादशीं ॥ पूजयेद्विधिवद्भक्त्यास
मुपोष्यत्रिविक्रमं जलधेनुमथोदत्त्वाविप्रायनियतःशुचिः यज्ञभागभुजोदैत्यान्संनिहत्यक्रमैस्त्रिभिः त्रैलोक्यमाहृ
तंतस्मात्त्वमसित्वंत्रिविक्रमंत्रिविक्रमात्रिलोकेशंप्रीणयामित्रिविक्रमं ततःप्रदक्षिणंकृत्वाब्राह्मणेभ्यश्चदक्षिणां दत्त्वा
संभोजयेत्तांस्तुशृणुतस्यापियत्फलं ॥ वाजपेयस्ययज्ञस्यसम्यगिष्टस्यपार्थिव ॥ तत्फलंलभतेमर्त्यःपरत्रचसुखीभवेत् ॥
वामनंतुतथाषाढे समुपोष्यप्रयत्नतः ॥ उद्दिश्येतिशेषः ॥ द्वादश्यांनियताहारोवामनंतत्रपूजयेत् हितायसर्वदेवानां

मादित्यःकामदोयथा ॥ तथात्वंभवमेदेववामनोवालिवंधनः ॥ तिलधेनुंततोदद्यात्ब्राह्मणःप्रीयतामिति ॥ तदभावेतथा
पात्रंयथाशक्त्यासदक्षिणां ॥ पात्रंतिलपात्रं ॥ पूर्वजन्मकृतंपापमिहजन्मकृतंचयत् ॥ तत्सर्वंविनिहत्याशुपरत्रैवशुभ
निच ॥ श्रावणस्यतुमासस्यद्वादश्यांशुक्लपक्षतः ॥ यःक्षिपेन्नियतोभूत्वासमुपोष्यजनार्दनं ॥ ४ ॥ समर्चयेद्यथाशक्तिपूर्वो
क्तविधिनाततः ॥ धेनुंसर्वगुणोपेतांब्राह्मणायनिवेदयेत् ॥ मंत्रेणानेनराजेंद्रमुराणविहितेनच ॥ समासाद्ययतोलक्ष्मीं
लोकेभ्यःक्षीरसागरे ॥ स्वपितिश्रावणेमासिश्रीधरोसिजगत्पते ॥ ॥ श्रावणेश्रीधरोदेवःश्रीवत्सःश्रीनिकेतनः ॥ प्रीय
तांहिश्रियःकांतो ॥ गतिमिष्टांददातुमे ॥ गवांदशसहस्रेणपात्रदत्तेनयत्फलं ॥ सकलंलभतेमर्त्योभक्तियुक्तोनसंशयः
स्वर्गेसुविपुलान्भोगान्भुनक्तिसुरराडिव ॥ तेनैवविधिनाराजन्मासेभाद्रपदेतथा ॥ समुपोष्यनरोभक्त्याहृषीकेशंप्रपूज
येत् ॥ मुक्ताधेनुंततोदद्याद्यथाविभवविस्तरात् ॥ हृषीकाणींद्रियाण्याहुस्तेषामीशोजगत्पतिः ॥ करोतिकर्तृभूतोसौहृ
षीकेशोभवास्ततः ॥ देवदेवहृषीकेशभूतेशप्रभवाप्ययं ॥ प्रीणयामिसुसंप्रीतोममपापंव्यपोहतु ॥ एवंप्रदक्षिणंकृत्वा
शृणुतस्यापियत्फलं ॥ इहजन्मकृतंपापंपूर्वजन्मकृतंचयत् ॥ सर्वंतद्भस्मसात्कृत्वाविष्णुलोकेमहीयते ॥ द्वादश्यां
समुपोष्यैवंपद्मनाभंतथाश्विने ॥ पूजयेद्विधिवद्भक्त्यागंधधूपविलेपनैः ॥ गंधधेनुंततोदद्यात्कर्पूरागुरुचंदनैःकुंकुमेन
हिराजेंद्रवित्तशाठ्यंविवर्जयेत् ॥ एकार्णवेगतेतोयेस्वपतोयस्यवेधसः ॥ निवासायाभवन्नाभ्यांपद्मनाभोसिहेच्युत
प्रीयतांपद्मनाभोमेदुष्कृतंचोपशाम्यतु ॥ इत्युक्त्वातंसमभ्यर्च्यदद्याद्धेनुंद्विजातये ॥ इत्येवंक्रियमाणस्यतस्यपुण्यम
तःशृणु ॥ सप्तजन्मकृतंपापंस्वल्पंवायदिवाबहु ॥ दग्ध्वातत्सकलंभूपविष्णुलोकंसगच्छति ॥ कार्त्तिकस्यतुमासस्यए
कादश्यामुपोषितः ॥ प्रसुप्तंबोधयेद्रात्रौश्रद्धाभक्तिसमन्वितः ॥ नृत्यैर्गीतैस्तथावाद्यैर्ऋग्यजुःसाममंगलैः ॥ वीणाप
णवशब्दैश्चपुराणश्रवणेनच ॥ वासुदेवकथाभिश्चस्तोत्रैरन्यैश्चवैष्णवैः ॥ ५५ ॥ सुभापितैरिंद्रजालैर्भूमिशोभाभिरेवच

पुष्पैर्धूपैश्च नैवेद्यैर्दीपवृक्षैश्च शोभनैः ॥ होमैर्भक्ष्यैरपूपैश्च फलैः शाकैश्च पायसैः ॥ इक्षोर्विकारैर्मधुना द्राक्षाक्षो-
टैः सदाडिमैः ॥ अक्षोटं मदनफलाकारं स्निग्धं मधुरफलं ॥ अखोट इति प्रसिद्धं ॥ कुठेरकरुयसंजयमालत्यालव-
णेन च ॥ कुठेरकार्जकः ॥ ह्याभ्यां श्वेतरक्ताभ्यां चंदनाभ्यां च सर्वदा ॥ कुंकुमालक्तकाभ्यां रक्तसूत्रैः सकं-
कणैः ॥ तथा नानाविधैः पुष्पैर्द्रव्यैर्वा विक्रयाहृतैः ॥ तस्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये ॥ स्नात्वा नदी-
जलैः पुण्यैः ॥ प्रतिमां स्नापयेत्ततः ॥ उत्थितां च पुरा रम्यां तामारोप्यां सुवर्णजां वैष्णवी प्रतिमा यत्र चेद्धवेच्चि-
त्रलेखिता ॥ तत्र स्नानादि पूजा च वैद्यां कार्या च वैष्णवे ॥ आदौ घृतेन तैलेन मधुना तदनंतरं ॥ दध्ना क्षीरेण च
तथा पंचगव्येन शास्त्रवित् ॥ उद्वर्तनं माषचूर्णं मसूरदलकानि च लोध्रं कालीयकं चैव तगरं वर्णकं तथा ॥ काली-
यकं पीतचंदनवर्णं कुंकुमं ॥ सर्षपाश्च प्रियंगुश्च मातुलुंगरसस्तथा ॥ सर्वौषध्यः सर्वगंधाः सर्वबीजानि कांचनं ॥ मंगला-
नि यथालाभं रत्नानि बहु शोदकं ॥ हस्तिदंतोद्धृता मृच्च वृषशृंगोद्धृता तथा ॥ नदीतीराहृता स्थाता वल्मीकात्संगमाच्च
दात् ॥ इंद्रस्थानाच्च सरसस्तद्वा पर्वतमस्तकात् ॥ इंद्रस्थानं यत्रेंद्रयष्टिरारोपिता ॥ एताभिः स्नाप्य देवेशं द-
ध्याद्गोरोचनां शुभां ॥ तथा च कलशा देया यथा प्राग्वत्स्वलंकृताः ॥ जातीपल्लवसंयुक्ताः सफलाश्च सकांचनाः ॥ पुण्याहवे-
दशब्देन वीणावेणुरवेण च ॥ शब्देन मधुरेणैव सूतमागधवंदितां ॥ एवं संस्नाप्य गोविंदं स्वनुलिप्तं स्वलंकृतम् ॥ सुवा-
ससं पूजयेत्तं सुमनोभिश्च कुंकुमैः ॥ दीपैर्धूपैर्मनोज्ञैश्च पायसेन तु भूरिणा ॥ मात्रारत्नप्रदानैश्च होमैः पुष्पैः सदक्षिणैः ॥
वासोभिर्भूषणैर्हैमैर्गोभिरश्वैर्गजैरपि ॥ ब्राह्मणाः पूजनीयाश्च विष्णो राधा समुत्तये ॥ विष्णो रात्रौ प्रसुप्तस्य दामो-
दरगतं यतः ॥ ब्रह्मांडस्य तु तत्रासिदामोदर इति स्मृतः ॥ दामोदर इमां धेनुं गृह्णातु स्वयमेव हि ॥ द्विजरूपेण ते विष्णो
प्रकृत्येष सनातनी ॥ विभाक्तिलेपश्चार्थः ॥ इत्येवं पृथिवीदानफलं प्राप्नोति मानवः ॥ सुवर्णस्य सहाधेनुं दत्त्वा न्टपवरोत्तम

हत्वापापान्यशेषाणिशतजन्मांतराणिवै वैष्णवंलोकमाप्नोतिमानवःक्षीणपातकः सुवर्णस्यमहाधेनुंदत्वान्नृपव-
रोत्तम हत्वापापान्यशेषाणिशतजन्मांतराणिवै वैष्णवंलोकमाप्नोतियावदिंद्राश्चतुर्दश सम्यगत्रव्रतेचीर्णेसप्तज-
न्मानुगंफलं ददातिभगवान्विष्णुःक्रमान्मोक्षंनरेश्वर ब्राह्मणान्भोजयेद्भक्त्याभक्ष्यैरुच्चावचैरपि उच्चावचमनेकवि-
धं ततःप्रदक्षिणांकृत्वायथाशक्त्याचदक्षिणां कलशान्वैद्वादशभ्योब्राह्मणेभ्यःप्रदापयेत् वस्त्रेणवेष्टितग्रीवा
न्हेमगर्भोपशोभितान् दधिक्षीरयुतांश्चैवसगुडान्नपभूरिशः भक्तिर्यथातथादद्याद्भक्तिरेवात्रकारणं प्रसंगेनापियो
राजन्सुनामद्वादशींनरः करोतिपुण्यभागीसयथादैत्योभवद्बलिः एवंयःकुरुतेराजन्सुनामद्वादशींनरः राज-
सूयस्ययज्ञस्यफलंसमधिकंभवेत् सर्वदानेषुयत्पुण्यंयच्चपुण्यंतपोवने सर्वतीर्थेषुयत्पुण्यंतत्सर्वंसमवाप्नुयात्
गावोद्वादशदातव्यावस्त्रयुग्मानिकांचनं अलाभेचैवगामेकांपात्रंवास्वर्णसंयुतं समासेनतथाप्येवंचव्रतंव्रतं
यतः वहुविघ्नानिधर्मस्यकर्तुश्छिद्रंप्रजायते एतद्ज्ञात्वातुमेधावीव्रतेयुज्येतयत्नतः नतस्यवित्तलोभोस्तिभ-
क्तिग्राह्योस्तिकेशवः अनेनविधिनायस्तुद्वादशींप्रतिवत्सरं कृत्वानरःप्रयाति विष्णुलोकमनामयं सुनाम
द्वादशीचैषाव्रतानामुत्तमानृप आद्यानरैस्तुकर्तव्यातोषयद्भिर्जनार्दनं यश्चैनांकीर्तयेत्पुण्यंशृणुयाद्द्वादशींनरः
तावुभौगच्छतःस्वर्गं कर्ताविष्णुपुरंव्रजेत्
इतिवह्निपुराणोक्तंसुनामद्वादशीव्रतं अथैकादशीव्रतोद्यापनं तदुक्तं हेमाद्रौभविष्योत्तरे ॥ नारदउवाच ॥
भगवन्देवदेवेशपुराणपुरुषोत्तम किंचित्पृच्छामिसंदेहंकारुण्यात्कथयप्रभो अखंडद्वादशीयासौपुराणेकथिता
त्वया सासर्वव्रतखंडानांपूरणायकिमुच्यते ययासर्वव्रतानांतुवैकल्यंपूर्यतेप्रभो तस्याउद्यापनविधिर्नसम्य-
क्कथितस्त्वया नतक्ततस्यवक्तास्तिश्रोताचापिसुदुर्लभः विष्णुरुवाच मार्गशीर्षेशुभेमासिशुक्लपक्षेशुचिव्रती

दशम्यांकेशवंपूज्यहविष्यान्नकृताशनः निर्वर्त्यपश्चिमांसंध्यांगृह्णीयाद्दंतधावनं उपस्पृश्ययथान्यायंमंत्र-
मेतदुदीरयेत् कृष्णविष्णोहृषीकेशकेशवक्लेशनाशन करिष्येहंव्रतारंभंभवेद्यावद्दिनत्रयं इतिसंप्रार्थ्यगोविंदंमंत्रेण
दांततःस्वपेत् व्रतग्रहणमंत्रः ततःप्रभातेचोत्थाययथोक्तंव्रतमाचरेत् चतुर्भिःपारणंयामैःकथितंयद्द्विजोत्तम-
तत्पात्रदानविधिनाभिधतेनाहिपारणं एवंद्वादशनिर्वर्त्यद्वादशीःपद्मजोद्भव उद्यापनंततःकुर्य्याद्विधिमंत्रपुरस्कृतं
एकादश्यांशुचिःस्नातः शुद्धांबरधरोव्रती सर्वतीर्थेषुयत्पुण्यंसर्ववेदेषुयत्फलं त्वत्पादपद्मतोयेनसर्वंमेभवतुप्रभो-
इतिस्नानमंत्रः स्नानंकृत्वाततोदेवंपूजयेद्गरुडध्वजं एकत्रमूर्तिसंपन्नंलक्ष्मीनारायणंप्रभुं यथाशक्त्याथकुर्वीतसौव
र्णंरत्नभूषितं सहस्रशीर्षामंत्रेणस्नापयेद्गंधवारिणा मधुवातादिभिर्मंत्रैर्मधुनास्नापयेद्धरिं आप्यायस्वेतिमंत्रेण-
पयसास्नापयेत्ततः दधिक्राव्णेतिमंत्रेणदध्नातुस्नापयेत्ततः तेजोसीतिचमंत्रेणस्नापयेत्सर्पिषाप्रभुं मधुवाते-
तिमंत्रेणमधुनास्नापयेत्पुनः स्वादुपवस्वमनुनाततःशर्करयापिच एकीकृत्यततः सर्वंशर्कराखंडसंयुतैः स्नापये-
त्परयाभक्त्याजयशब्दादिमंगलैः माषकर्णादिभिश्चूर्णैर्निघृष्टांप्रतिमांततःचंदनोशीरकर्पूरकुंकुमादिभिरर्चयेत् तैर्वि-
लिप्यहरिंभक्त्याततोमंत्रमुदीरयेत् यथाशक्त्यामयादेवस्नापितश्चविलेपितःन्यूनातिरिक्तंतत्सर्वंलक्ष्मीनारायणःक्ष
मेत् अनुलेपनमंत्रः ततोवस्त्रयुगंश्रेष्ठमानीयपरिधापयेत् पीतंवालोहितंवापिश्वेतंनानाविचित्रितं परिधानंयथाश
क्त्यातवदेवमयार्पितंन्यूनातिरिक्तंतत्सर्वंलक्ष्मीनारायणःक्षमेत्।परिधानमंत्रः परिधाप्यततोदेवंपुष्पैर्नानाविधैःशु-
भैःसंछाद्यपुष्पमालाभिर्मंत्रमेतदुदीरयेत् पुष्पैरपियथाशक्त्यापूजितोसिजनार्दन न्यूनातिरिक्तंतत्सर्वंलक्ष्मीनारा-
यणःक्षमेत् पुष्पमंत्रः एवंकृत्वाविधानेनशय्यांचविनिवेदयेत् तूलीपर्यंकयुक्तांतुश्वेतप्रच्छदगंडकैःप्रतिपादसमानां
वैचतुष्पादप्रतिष्ठितैः निवेश्यतत्रदेवेशंलक्ष्मीनारायणप्रभुं नैवेद्यानिनिवेद्यानिनानाभक्ष्ययुतानिच लेह्यान्यप्यव-
हार्याणिचोष्याणिचर्वणानिच पानकानिचवैयत्नाद्यास्मिन्देशेयथातथा तानिसर्वाण्युपादायदेवायविनिवेदयेत् फ

लानिचसुगंधीनिपक्वानिचनिवेदयेत् एवानिवेद्यतत्सर्वंभक्त्यामंत्रमुदीरयेत् यथावित्तोपसंयुक्तंमयातवानिवेदितं लक्ष्मीनारायणविभोभक्त्यातत्प्रतिगृह्यतां इतिनैवेद्यमंत्रः देवस्यतुशिर पूर्वंपादौपश्चात्प्रकल्पयेत् शिरःस्था-नेततःकुंभवारिपूर्णमनोहरम् स्थापयेत्कर्करीयुग्मंसरत्नंवस्त्रभूषितं कर्करीगलंतिका स्थापयित्वातुतत्कुंभंततो-मंत्रमुदीरयेत् यावत्पूजासमारब्धाचांचल्यंवर्जयेत्सदा भुक्त्वापीत्वातथाचम्यतोयेनानेनकेशव मद्भक्त्यापू-जितोदेवस्वपस्वंसुसुखीस्वयं इतिस्वापनमंत्र शय्योपचारयत्किंचित्सर्वंवैविनिवेदयेत् शय्योपचारंस्त्रग्गंधा-दिं यावत्पूजासमारब्धास्नानादिशयनांतत सघृतंगुग्गुलुंतावद्दहेद्देवाग्रतोनिशि ततोविप्रंसमानीयभा-र्ययासहितंशुभं सर्वदुर्लक्षणैर्हीनं सांगोपांगसमन्वित वेदविद्याव्रतस्नातं पूजितंस्वकुलोद्भवैः दे-वस्याग्रेततोविप्रंभार्ययासहितंन्यसेत् प्राङ्मुखंविमलंशुद्धंभक्त्यातंपूजयेत्ततः वहुनाकिंप्रलापेनकथितेनेहनारद देव'संपूजितोयद्वत्तद्वद्विप्रंप्रपूजयेत् विष्णुब्राह्मणयोर्भेदंनकदाचिद्विकल्पयेत् इतियेषांहृदिसदातेपूज्याश्चयती-श्वराः द्वादशान्यान्नवान्कुंभान्पूर्णान्शुद्धेनवारिणा स्थापयेद्देवपर्य्यंकेपरितःशुद्धचेतसा द्वादशैवतथागावः सवत्सा'कांस्यदोहनाः क्षीरवत्य'सुशीलाश्चस्थापयेद्देवसन्निधौ अथवावित्तवैकल्येकुर्य्याद्गोत्रितयंनरः दद्यात्तु सम्यग्भुक्तायतत्राशक्तिमतोमता एकाप्यनुत्तमगुणातस्यस्याद्द्वादशाधिका स्ववित्तशक्त्यायत्किंचिद्दातुमुत्सह-तिनरः तत्सर्वंद्विजदेवाभ्यांसान्निधौसंप्रकल्पयेत् उपस्कराणिदिव्यानिछत्रोपानत्सपादुकाः गोसंख्यादिकं तंसर्वंदानंत्वस्मिन्प्रकल्पयेत् यदादानेतुगौरेकाकल्प्याशक्तिप्रपूर्वकं सासंपूर्णातुकर्त्तव्यावत्सेनसहपूजिता सुव-र्णशृंगीरौप्यखुराघंटाभरणभूषिता तद्वर्णवस्त्रसंवीतावत्सेनसहपूजयेत् एवंनिर्वर्त्यविधिनादानपूजादिनासमं देवब्राह्मणयोर्भक्त्या ततोविप्रंक्षमापयेत् एतद्गृहाणमेविप्र भार्ययासहितःप्रभो एतेनावाह्यतांविप्रं

तस्मिन्सर्वंनिवेदयेत् प्रतिगृह्णीतिदाताचव्रतीविष्णुर्यथातथा मयादत्तमिदंसर्वंगृहाणत्वंद्विजोत्तम दाताचवि-
ष्णुर्भगवाननंतः प्रतिगृहीताचसएवविष्णुः तस्मात्त्वयादत्तमिदंचसर्वंप्रतिगृहीतंचमयाशुभाय ब्राह्मणप्रतिग्र-
हमंत्रः अन्येभ्योपियथाशक्त्यातस्मिन्कालेप्रदीयते दीनांधकृपणादिभ्यस्तदक्षयफलंभवेत् वित्तशाठ्यंनकु-
र्वीतसमग्रंफलमाप्नुयात् इत्यखंडव्रतस्यैषउद्यापनविधिःस्मृतः कथितस्तेमयावत्सतस्यपुण्यफलंशृणु यावन्
जगज्जलधिशैलचरादिमत्स्या तावज्जनोभवतिपुण्यफलोपभोक्ता तावच्चविष्णुभवनात्परिवर्ततेसावंतेह्ययंसपर-
मात्मनियातिविष्णौ ॥

इतिभविष्योत्तरोक्तअखंडद्वादश्यांव्रतोद्यापनविधिः अथभविष्योत्तरोक्तधरणीव्रतम् ॥

युधिष्ठिरउवाच एतत्परमंगुह्यंसर्ववेदेषुपठ्यते सदेवः पुंडरीकाक्षः स्वयंनारायणोहरिः सयज्ञैर्विविधैरिष्टैर्दा-
नैर्दत्तैश्चसत्तम प्राप्यतेपरमोदेवो वासुदेवः सनातनः बहुवित्तेनभगवानृत्विग्भिर्वेदपारगैः प्राप्यतेतुसहा-
येश्चकचिद्यज्ञाःसुदुष्कराः वित्तेनचमहादानंदातुंकृष्णनशक्यते विद्यमानेपिनमतिःकुटुंबासक्तचेतसः तस्यमो-
क्षःकथंकृष्णसर्वथादुर्लभोहरे अल्पायासेनलभ्येतयेनदेवःसनातनः तन्मेसामान्यतोब्रूहिसर्ववर्णेषुयद्भवेत् श्री-
कृष्णउवाच कथयामिपरंगुह्यंरहस्यंदेवनिर्मितम् धरण्यापिकृतंपूर्वमज्ञात्वावसुधातले पृथिव्यांपार्थिवोभावः
सलिलेनातिवाहिता तस्मिन्सलिलसंलग्नेमहीप्रायाद्रसातलं साभूतधात्रीधरणीरसातलगताशुभा आराध-
यामासविभुंदेवंनारायणंपरम् उपवासव्रतैर्देवीनियमैश्चपृथग्विधैः कालेनमहतातस्याःप्रसन्नोगरुडध्वजःउज्जहार
स्थितौचैमांस्थापयामाससोच्युतः युधिष्ठिरउवाच कोसौधरण्यासंचीर्णउपवासोयदुत्तम कानिव्रतानिचतथातन्मेत्वं

वक्तुमर्हसि श्रीकृष्णउवाच मासेमार्गशिरेराजन्दशम्यांनियतात्मवान् स्नात्वादेवार्चनंकृत्वाअग्निकार्य्यंयथाविधि शुचिवासाप्रसन्नात्माहव्यमन्नंसुसंस्कृतं भुक्त्वापचपदंगत्वापुनःशौचंचपादयोः कृत्वाष्टांगुलिमात्रंतुक्षीरवृक्ष-समुद्भवं भक्षयेद्दंतकाष्ठंतुततश्चाचम्ययत्नत स्पृष्ट्वास्वांगानिसर्वाणिचिरंध्यात्वाजनार्दनं स्मृत्वार्घ्यंपाद-योस्तस्यकरतोयेनमानवः एवमुच्चारयेद्वाचंतास्मिन्कालेमहामते एकादश्यांनिराहार स्थित्वाहमपरेहनिभो क्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत एवमुक्त्वाततःपश्चात्प्रभातेविमलेतथा स्नानार्थंसंगमेगत्वानदींप्राप्यसमुद्रगां इतरावातडागंवागृहेवापियतात्मवान् आनीयमृत्तिकांशुद्धांमंत्रेणानेनमानवः धारणंपोपणंत्वत्तोभूतानांदेविसर्वदा तेनसत्येनमांपापंप्रापान्मोचयसुव्रते ॥ इतिमृत्तिकामंत्रः ॥ ब्रह्मांडोदरतीर्थानिकरैःस्पृष्टानितेरवे भवतिभूतानि सतांमृत्तिकामालभाम्यत. ॥ इतिसूर्यप्रार्थनामंत्रः ॥ त्वयिसर्वेरसानित्यंस्थित्वावरुणसर्वदा तेनमांमृत्तिकांप्ला व्यपवित्रंकुरुसर्वदा एवंरविमृदंतोयंप्रसाद्यात्मानमालिपेत् निष्कृष्यशेषमृदयाकुंडमालिस्यवैजले ततः स्नात्वानर सम्यक्संध्यामावर्त्यवाग्यत. आचम्यावश्यकंकृत्वापुनर्देवगृहंव्रजेत् ततोराध्यमहायोगंदेवंनारा यणंप्रभुं केशवायनमःपादौकटिंदामोदरायच ऊरूयुग्मंनृसिंहायउर.श्रीवत्सधारिणे कंठंकौस्तुभनाथायव क्षः श्रीपतयेतथा त्रैलोक्यविजयाये तिवाहूसर्वात्मनेशिरः रथांगधारिणेचक्रंशंकरायेतिवारिजं गंभीरायेति चगदामभयंशांतिमूर्तये एवमभ्यर्च्यदेवेशंदेवनारायणंप्रभुं ततस्तस्याग्रत.कुंभांश्चतुरःस्नापयेद्बुधः जलपूर्णा न्समाल्यांश्चासितचंदनचर्चितान् चतुर्भिर्जलपात्रैश्चस्थगितान्रत्नसंयुतान् चत्वारस्तेसमुद्राश्चकलशाःपरिकी र्तिताः तेपांमध्येसप्तपीठंस्थापयेद्वस्त्रसंयुतं तस्मिन्सुवर्णरौप्यवाताम्रंवादारवंतथा पात्रंतोयभृतंकृत्वातस्यम ध्येततोन्यसेत् सौवर्णंमत्स्यरूपेण कृत्वादेवंजनार्दनं वेदवेदांगसंयुक्तं श्रुतिस्मृतिविभूषितं भक्तैर्बहुविधै

राजन्फलैः पुष्पोपशोभितैः गंधैःपुष्पैर्मंत्रवरैरर्चयित्वायथाविधि रसातलगतावेदायथादेवत्वयाहृताः मत्स्यरूपेणतद्वन्मांभवादुद्धरकेशव एवमुच्चार्य्यतस्याग्रेजागरंतत्रकारयेत् यथाविभवसारेणप्रभातेविमलेपुनः चतुर्णांब्राह्मणानांचचतुरोदापयेद्घटान् पूर्वंतुगुरवेदद्याच्छंदोगेदक्षिणंतथा यजुःशाखान्वितेदद्यात्पश्चिमंघटमुत्तमं उत्तरंकामतोदद्यादेषएवविधिक्रमः ऋग्वेदःप्रीयतांपूर्वः सामवेदस्तुदक्षिणः यजुष.पश्चिमोनाम्ना अथर्वाणोत्तरंतथा ताम्रपात्रैस्तुसलिलैः स्थापितान्कारयेद्घटान् ततस्तंजलपात्रस्थंब्राह्मणायकुटुंबिने तंसौवर्णंमत्स्यंदद्यादित्यर्थः दद्यादेवंमहाभाग तत.पश्चाच्चभोजयेत् ब्राह्मणान्पायसेनाग्र्यान्ततः पश्चात्स्वयंनर. भुंजीतभृत्यसहितोवाग्यतःसंयतेंद्रियः अनेनविधिनायस्तुद्वादशींक्षपयेन्नरः तस्यपुण्यफलंचाद्यशृणुसत्यव्रतांवर यदिवक्त्रसहस्राण्यांसहस्राणिभवंतिहि आयुश्चब्रह्मणस्तुल्यंभवेद्यदिमहाव्रतं तदातस्यफलंसंख्यातुंशक्यंनवाभवेत् य.सकृद्द्वादशीमेनामनेनविधिनानृप सब्रह्मलोकमाप्नोतितत्कालंचैवतिष्ठति द्वादशद्वादशीशब्दोव्रतेष्वेकादशीपरः तत्कालब्रह्मायुःकालमित्यर्थः ततस्तल्लयकालेतुअलयस्तिष्ठतेचिरं अलयःब्रह्मणासह श्रीविष्णोलयेकालेतिष्ठतीत्यर्थः पुनःसृष्टौभवेद्देवोवैराजंनामतःस्मृतः करोतिब्रह्मणोलोकंसमाप्नोतिनसंशयः ब्रह्महत्यादिपापानिजन्मांतरकृतानिच अकामतः कामतोवा तानिनश्यंतितत्क्षणात् इहलोकेदरिद्रोवाराज्यभ्रष्टोथवापुनः उपोष्यतुविधानेनमेश्वरोराज्यभाग्भवेत् मेश्वरोलक्ष्मीश्वरः वंध्यानारीभवेद्यातुअनेनविधिनाशुभा उपोषतिभवेत्तस्याःपुत्र.परमधार्मिकः अगम्यागमनयेनजानताजानताकृतं सइमांविधिमास्थायतस्मात्पापात्प्रमुच्यते ब्रह्मक्रियायालोपेनवहुवर्षकृतेनवा उपोष्येमांसकृद्भक्त्यावेदसंस्कारमाप्नुयात् किंचात्रबहुनोक्तेननतदस्तिजगत्त्रये अप्राप्यंव्रतराजेनसत्यंसत्यंनसंशयः इहजन्मनिचारोग्यंधनंधान्यंवरास्त्रियः भवंतिविविधायस्तुउपोषतिविधानतः ॥

इतिश्रीभविष्योत्तरेधरणीव्रतेषुमत्स्यद्वादशीव्रतम् ॥

नारदीये द्वादश्यांमार्गशुक्लायांसाध्यव्रतमनुत्तमं भानुभौमस्तथाप्राणोनरोयामश्चवीर्यवान् निमिर्हंयोनयश्चैवहंसो नारायणस्तथा विभुश्चापिप्रभुश्चापिसाध्याद्वादशकीर्तिताः पूजयेद्गंधपुष्पाद्यैरेतांस्तंडुलकल्पितान् ततोद्विजाग्र्यान्संभोज्यद्वादशान्नसदक्षिणान् दद्याद्धेनूश्चविसृजेत्प्रीयान्नारायणस्त्विति एतस्यामेवनिर्दिष्टंद्वादशादित्यसंज्ञितं व्रततत्रार्चयेद्धीमानादित्यान्द्वादशापिच धातामित्रोर्यमापूषाशक्रोंशोवरुणोभगः त्वष्टाविवस्वान्सविताविष्णुर्द्वादशईरिताः प्रतिमासंतुशुक्लायांद्वादश्यामर्चयेत्ततः वर्षंनयेद्व्रतांतेतुप्रतिमाद्वादशापिच हैमीःसंपूज्यविधिवद्भोजयित्वाद्विजोत्तमान् मधुरान्नैस्तुसंपूज्यप्रत्येकंप्रार्चयेद्व्रती एवंव्रतंनरःकृत्वाद्वादशादित्यसंज्ञकं सूर्यलोकंसमासाद्यभुक्त्वाभोगांश्चिरंनरः जायतेभुविधर्मात्मामानुषोरोगवर्जितः ततोव्रतस्यचीर्णस्यपुनरेतद्व्रतंलभेत् तत्पुण्येनरवेर्भित्वामंडलंचाद्विजोत्तम मूर्त्तिंनिधायसौवर्णींजनार्दनसमाख्यां अभ्यर्च्यगंधपुष्पाद्यैस्तदग्रेभोजयेद्द्विजान् द्वादशप्रतिमासंतुनक्ताशीस्याज्जितेंद्रिय ततःसमाप्तेतांमूर्तिंसमभ्यर्च्यविधानतः गुरवेधेनुसहितांदत्त्वासंप्रार्थयेत्ततः सप्तजन्मसुयत्किंचिन्मयाखंडंव्रतंकृत भगवंस्त्वत्प्रसादेनतदखंडमिहास्तुमे ततःसंभोज्यविप्राग्र्यान्सखंडाज्यैस्तुपायसैः सौवर्णेनविमानेनयातिविष्णोःपरंपदम्

इतिनारदीयेमार्गशुक्लद्वादश्यांसाध्यव्रतंद्वादशादित्यव्रतमखंडद्वादशीव्रतंच

अथास्यामेवतारकद्वादशीव्रतं भविष्योत्तरे युधिष्ठिरउवाच अहमागस्करःपापः पृथिवीक्षयकारकःपरिपृच्छामि

गोविंदत्वांनमस्कृत्यपादयोः गुह्याद्गुह्यतरंब्रूहिव्रतंकिंचिदनुत्तमं तरामियेनपापौघंभीष्मद्रोणवधार्णवं श्री-
कृष्णउवाच आसीत्पुरानृपोनाम्नाविदर्भायांकुशध्वजः सोतःपुरसुतोपेतश्चक्रेराज्यमतंद्रितः जघांनतापसंसो
थप्रमादात्मृगयांगतः मृगहत्यांमहारण्येब्राह्मणंदैवमोहितः तेनकर्मविपाकेनदेहांतेरौरवंगतः तत्रासौयात
नाघोराअनुभूयातिपीडितः तस्मादिहांगतोमर्त्येरौद्रोविषधरोभवत् अदशत्सोपिराजेंद्रब्राह्मणंचरणेरुषा ल
गुडाहतःसपंचत्वंजगामद्विजसूनुतः विपन्नश्चनतःसिंहोद्वितीयेभूत्सुदारुण विदारितमुखोहिंस्रोनानासत्वभय
करः जघानासौपुनःश्रेष्ठराजन्यंमृगयांगतं ततोसौवहुभिःशस्त्रैराजलोकैर्निपातितः पुनर्व्याघ्रोबभूवासौतृ
तीयेपिभवांतरे तीक्ष्णपादनखाघातैर्व्यापादितमृगान्वयः तेनापिवैश्योनिधनं नीतःकश्चिद्वनांतरे सनीतः
कृमिराशित्वंलोकैःखातानिपातनात् संजातस्ताचतुर्थेक्षोनखराहतजंतुभुक् जघानवालंचंडालादसौमृत्युमवाप्त
वान् पंचमेमकरोजातःसमुद्रेतिभयंकरः स्त्रियंजघानतरुणींभर्तृकामामथागतां प्रभासेशंकरस्याग्रेशशांकग्र
हणेनिशि तत्रापिवाडिशंदत्वाजालमैःप्राणैर्वियोजितः पुनःषष्ठेभवेजातःपिशाचःपिशिताशनः क्रूरश्छिद्रमतिः
क्षुद्रोनृणांप्राणवियोजकः सोवतीर्णोनरस्यांगंशंकयामासकस्यचित् मंत्रेणरूपसिद्धेन चांतिकेनव्यसुःकृतः स
प्तमेतुभवेजातोदुर्निरीक्ष्यवपुर्भृशं तीक्ष्णदंष्ट्रःकरालाक्षोमांसशोणितभोजनः दिग्वासामरभूमीषुपापिष्ठोब्रह्मरा
क्षसः सराष्ट्रंगोर्जरंशून्यसर्वंचक्रेवधादिषु आक्रम्यभीमसेनेनराज्ञाराक्षसशत्रुणा समारोप्यधनुःसंख्येब्राह्मा
स्त्रेणनिपातितः भूयोभवद्व्याघ्रसमःश्वजन्मन्यष्टमेतुसः वनेचरोहिक्षुण्णांगोव्रणात्तोनिधनंगतः नवमेजंबुके
जातः सचवीभत्समांसभुक् लौल्यात्सनिधनंप्राप्तःश्मशानेचितिवह्निना दशमेप्यभवद्गृध्रस्तीक्ष्णतुंडोंड
जोमहान् पूतिमांसवसाहारोदुष्टदृष्टिःसदारुणः सितरक्तासितवपुःकर्बुरोलोकनिंदितः सहतस्तीक्ष्णभल्ले

नमातंगेनधनुष्मता एकादशेतुचांडालोयवमध्योतिभीषणः ऊर्द्ध्वकेशोतिरक्ताक्षो जातः कृष्णतनुर्दृढः पापोधर्म
ध्वजोभक्ष्योदेवतामाल्यभुक्तत· सदंडपाशकेनोच्चैर्वृक्षाग्रेष्ववलंबितः द्वादशेतुपुनर्जातःपुष्कसःक्लेशभोजनः
पुष्कसोवाग्विलग्नतोव्याधिनाविनिपातितः तेनचासीत्कृतंपूर्वंतारकद्वादशीव्रतं तस्यप्रभावाज्जातोसौदुष्ट
योनौपुन·पुनः अवापशीघ्रंपंचत्वंसंसारभवसागरे पुनरेवाभवद्राजाविदर्भायांसधार्मिकः भूयश्चोपोषितान
नतारकद्वादशीशुभा पश्यतावतमाहात्म्यंजातोजातोपुन पुनः तस्याव्रतप्रभावेनभुक्त्वाराज्यमकंटकं अ
पविष्णुपुरेस्थानंयावदाभूतसंप्लवं ॥ युधिष्ठिरउवाच ॥ कथमेतद्व्रतंकृष्णकर्त्तव्यंपुरुषोत्तमैः स्त्रीभिर्वाभर्त्तृ
वाक्येनस्नानदानजपादिकम् ॥ श्रीकृष्णउवाच ॥ मार्गशीर्षसितेपक्षेगृहीत्वाद्वादशीव्रतं अकृत्रिमजलेस्ना
नमपराह्णेसमाचरेत् प्रणम्यभास्करायादौकृत्वादेवार्चनंयथा होमंचतावत्स्थातव्यंयावदस्तमितोरविः ततो
मुक्ताफलैःपुष्पैर्गंधधूपविलेपनैः सजलंशीतलंकृत्वासहिरण्यंशुभे फलैः रम्येताम्रमयेपात्रेजानुभ्यांधरणींग,
तः पूर्वमखःप्रदोषाग्रेमूर्ध्निकृत्वार्घ्यभाजनं भूमौमंडलकंकृत्वागोमयेनसतारकं चंदनेनसमालिख्यध्रुवंहिगग
नोन्मुखः सहस्रशीर्षामंत्रेणभूमौभक्त्याशनै·शनैःतारकाणांकुरुश्रेष्ठदद्यादर्घ्यमतंद्रित· पर्युक्ष्यधूपमुत्क्षिप्यदद्या
द्विप्रायदक्षिणां क्रमेणसर्वंनिर्वर्त्यभोज्यंभोज्यंनिशागमे मार्गशीर्षेखंडखाद्यैःपौषेसौहालिकैः शुभैःमाघेतिला
न्नकृसरैःफाल्गुनेतिलपूपकैः वसंतेमोदकैर्दिव्यैर्वैशाखेखंडवेष्ठकै· ज्येष्ठेसक्तुभृतैःपात्रैराषाढेगुडपूपकैः श्रावणे
मधुशीर्षैश्चनभस्येपायसेनच घृतपूर्णैराश्वयुजेकासारैःकार्त्तिकेपुमान् एभिर्द्वादशभिर्भक्ष्यैर्भोजयित्वाद्विजातये
भुंजीतभक्त्याराजेंद्रपश्चाद्देवंक्षमापयेत् समाप्तेतुव्रतेकुर्य्याद्राजततारकागणं पैष्टंचापूर्वविधिनापूजयित्वाक्षमापये
त् कुंभाद्वादशदातव्याः सोदकामोदकान्विताःब्राह्मण्याःपरिधानंचपद्मरागंसकुंकुमं ब्राह्मणस्यतुगांदद्याच्छय्यां-

पुष्पोपशोभितां चोलकंचोपवीतचपुष्पंदत्त्वाक्षमापयेत् एवंचविधिनाराजन्यः करोतिव्रतंनरः नारीवाभरतश्रेष्ठ-भक्तिभावपुरःसरं नक्षत्रलोकंव्रजतिविमानेनार्कवर्चसा अप्सरोगणगंधर्वयक्षविद्याधरादिभिः सदाभर्त्री-स्वर्गलोकेपूज्यमानादिवौकसः वसेत्कल्पायुतंयावत्पुनर्विष्णुपुरंव्रजेत् एतद्व्रतंपुराचीर्णंशच्याराज्याश्रियो-मया सरस्वत्यापुन स्वर्गेउर्वश्यादेवदत्तया अन्याभिरपिनारीभिः पुरुषैश्चपृथग्विधैः चीर्णमेतद्व्रतंपार्थ-सर्वपापभयापहं ॥ जन्मांतरेष्वपिकृतानिदहत्यघानि यासंदधात्यहरहस्ससुतोपयोगात् साद्वादशीजगति-तारकनामधेयातन्नास्तियन्नविदधातिकृतामनुष्यै

॥ इतिभविष्योत्तरेतारकद्वादशीव्रत अस्यामेवमल्लद्वादशीव्रतम् ॥

युधिष्ठिरउवाच शंखचक्रगदापाणेश्रीवत्सगरुडध्वज ब्रूहिमेमल्लद्वादश्याविधानंदेवकीसुत ॥ श्रीकृष्णउवाच ॥ यदाभांडीरन्यग्रोधेरमामियमुनातटे गोपालमध्येगोवत्सैरष्टवर्षोस्मिलीलया कंसासुरवधार्थायमथुरोपवनेतथा अबालोबालरूपेणगोपमल्लैर्बलोत्कटैः तएवमल्लगोपाश्चबलेनसहकानने आस्फोटयंतिनृत्यंतित्रिदिवेत्रिदशाइव सुभद्रेमंडलेभद्ररंगवर्द्धनगोभटाः यक्षेंद्रमल्लइत्यादितेषांनामानिगोकुले गोपीनामपिनामानिप्रधानानिनिबोधमे गोपालीपालिकाधन्याविशाखीचधनाष्ठिका राधानुराधासोमाभातारकादशमीतथा इत्येवमादिभिरहमुपविश्यव रासने पूजितोस्मिशुभैर्गंधैर्दधिदुग्धाक्षतैस्तथा शतानित्रीणिषष्टीनिमल्लानांपूजयंतिमां मालित्यश्चसुरामासैरंग-जागरनर्तकैः मल्लयुद्धैर्बहुविधैर्वाद्यैर्मल्लभटैःशुभैः भक्ष्यैर्भोज्यैस्तथापानैर्दधिदुग्धघृताशनैःगोदानैर्वृक्षदानैश्चस्य-

द्येयाविप्रपूजनैः गोष्टीप्रवंधैर्वधूनांस्नेहसंभापणैर्मिथः एवंद्वादशद्वादश्योगृहीतव्यायथेच्छया संचरंतिक्र-
मेणैवमल्लानांताःपृथक्पृथक् पूजयंतिक्रमेणैवमासेमासेतनुंमम मार्गशीर्षात्कार्तिकांतंभक्त्याद्वादशनामभिः
मिष्टान्नंपारणेदद्यान्माल्लिकानिद्विजातये ॥ केशव १ नारायण २ माधव ३ गोविंद ४ विष्णु ५ मधुसूदन ६
त्रिविक्रम ७वामन ८ श्रीधर ९ हृषीकेश १०पद्मनाभ ११ दामोदरनमोनमः १२इति गंधैःपुष्पैस्तथाधू
पैर्दीपैर्जागरणैर्निशि गीतवाद्यैर्नटैर्नृत्यैर्मल्लक्ष्वेडांगयुद्धकैः घृतदानैःक्षीरदानैःकृष्णोनःप्रीयतामितिएवमेवविधिः
प्रोक्तःशैशवेयोमयाकृतः द्वादशीयंमयाद्यापिमनसःप्रीतिवर्द्धिनी मल्लैःप्रवर्तिता यस्मादतोयंमल्लद्वादशी तेषाम
परमल्लानांमद्भक्तानांयुधिष्ठिर गोष्ठचभूवस्त्रशय्यागोमहिष्याद्यजाविकं अरण्यस्थैर्यथाभोज्यंनर्त्तकैस्तुपरस्परं-
क्रमेणध्राम्यतेयस्मात्तेनैपाक्रमद्वादशी मत्प्रसादाद्धनंपुत्रान्वलंकीर्तिंयशोधनं एवमन्येपिपुरुपाश्चवलामल्लद्वा
दशीं करिष्यंतिव्रतंभक्त्यातेपांदास्यामिहद्व्रतं आरोग्यंवलमैश्वर्यंविष्णुलोकंचशाश्वतं ॥ भांडीरपादपतलेमि
लितैर्महद्भिर्मल्लैरनावलित्तवाहुवलाद्विशिष्टैःसंपूजितःसपदियत्रविधूतपापासाद्वादशीभुविमतावतमल्लसंज्ञा

इतिभविष्योत्तरेमार्गशुक्लायांमल्लद्वादशीव्रतं अथास्यामेवारण्यद्वाशीव्रतम

भविष्योत्तरे युधिष्ठिरउवाच भगवन्ब्रूहिमेसम्यगरण्यद्वादशीव्रतं सोपवासंसमुत्सर्गंसरहस्यंसमंत्रकं श्री
कृष्णउवाच कौंतेययत्पुराचीर्णंसीतयावनसंस्थया व्रतंराघववाक्येनअगस्त्येनप्रदर्शितंलोपामुद्रालयेसा
ध्व्योमुनिपत्न्योवद्धप्रजाः भोजितास्तर्पिताः सर्वाश्चाहारैः सर्वकामिकैःपद्मिनीपत्रविस्तीर्णैःसोपदंशैर्यथानवैः

भक्ष्यैर्भोज्यैस्तथालेह्यैश्चोष्यैश्चापियदृच्छया तामिहैकमनाःपार्थशृणुष्वारण्यद्वादशीं मार्गशीर्षेसितेपक्षेएका-
दश्यांदिनोदये स्नात्वानरःसोपवासः कृत्वापूजांजनार्दनेगंधपुष्पान्नधूपैश्चदीपजागरणैर्निशि नीत्वाप्रभा
तेगत्वाचवेदवेदांगपारगं भोजयित्वाफलप्रायंस्वयंभुंजीतवाग्यतः पंचगव्यंप्राशयित्वापूर्णमेवाथतद्दिने वर्ष
मेकंसुसंपूर्णंपारयित्वायुधिष्ठिर श्रावणेकार्तिकेमाघेचैत्रेवासमुपोषयेत् अन्नंपश्चाच्चसुस्निग्धंखंडखाद्यकसंयुतं
कटुतिक्तमधुरैर्लवणैः सुरसीकृतं अशोकवर्तिलावण्यंघृतपूर्णकरंबकैः सोपदंशैःपत्रशाकैस्तिलशष्कुलिका
दिभिः सूपापूपैःखंडवटैश्चारितैःसहकेसरैः धूलीमुखैरल्लपल्लैःस्वादुकोकरसैःशुभैः शीतलैस्तर्पयेद्विप्रान्सर्वै
पुष्पैःसमालकैः दधिक्षीराज्यफलकैश्चांतर्जीवकसंस्कृतैः कर्पूरनखविद्धैश्चमधुरैःपानकोत्तमैः वहुवृक्षंवनं
गत्वासुस्वादुसलिलंशिवं सुखासनेषूपविष्टान्प्रागुदग्रमुखान्मुनीन् भोजयेद्दशवांद्वौचमुनीनारण्यवासिनः एक
दंडीत्रिदंडीचगृहस्थानपिसुव्रतान् ब्राह्मण्योऽविधवाःसप्तएकपत्न्यःपतिव्रताः चार्वंग्यश्चार्चिताःस्नाताःसर्वा
वयवसुंदराः सवस्त्राःकुंकुमाक्रांताःस्रग्गंधकुसुमार्चिताः सग्रैवेयाभोजनीयास्तास्ताश्चोद्दिश्यदेवताः वासुदेव
जनार्दनदामोदरमधुसूदन पद्मनाभविष्णोगोवर्धन त्रिविक्रम श्रीधर हृषीकेश पुंडरीकाक्षआदिवराह एभि
र्द्वादशभिर्मंत्रैर्नमस्कारांतयोजितैः गंधैश्चंदनस्रग्वस्त्रधूपंदत्त्वापृथक्पृथक् भोजयित्वाशुभान्नानिस्वाचांतांस्ता
न्संदक्षिणान् प्रणम्यप्रेषयेद्भक्त्याविष्णुर्मेप्रीयतामिति ततोभुंजीतसहितोभृत्यैःपोष्यजनेनतु अमात्यानुगतै
र्लोकैः सुहृत्संबंधिभिस्तथाएवंकौंतेयकुरुतेयोरण्यद्वादशींनरः सदेहांतेविमानस्थोदिव्यकन्याशतावृतः याति
ज्ञातिसमायुक्तःश्वेतद्वीपेहरेःपदं यत्रलोकाःपीतवस्त्राःश्यामदेहाश्चतुर्भुजाः शंखचक्रगदापद्मव्यग्रहस्ताःसकौ
स्तुभाः गरुडासनाःसाभरणामुकुटोज्ज्वलकुंतला- नीलोत्पलदलोद्दामपद्ममालांकितोरसः लक्ष्मीधवा

मेघवर्णाः केयूरांगदभूषणाःतिष्ठंतिविष्णुसामान्यायावदाभूतसंप्लवं तस्माद्विष्णुपुरादेत्यपृथिव्यांनृपपूजिताः मर्त्यलोकेकीर्तिकराःसंभवंतिनरोत्तमाः ततोयांतिपरंस्थानंमोक्षमार्गंपरंशिवं यत्रगत्वानशोचंतिसंसारेभवनिर्भरे ॥ येद्वादशीमुपवसंतिसितामरण्यनाम्नींवनेद्विजवरानपिभोजयंति साध्व्यःस्त्रियःसुचरिताभरणाश्चतेषां-विष्णुःप्रसादमुपलभ्यददातिमोक्षम्

॥ इतिभविष्योत्तरोक्तमरण्यद्वादशीव्रतम् ॥

मार्गशुक्लत्रयोदश्यामनंगत्रयोदशीव्रतम् नारदीये मार्गशुक्लत्रयोदश्यामनंगंविधिनार्चयेत् त्रिकालमेकका-लंवाशिवासंगमसंभवं गंधाद्यैःसोपचारैस्तुपूजयित्वाविधानतः घटेसमर्चयेद्देवान्भोजयेद्द्विजदंपती ततस्तु-दक्षिणांदत्वास्वयमेकाशनंचरेत् एवंकृतेचविधिवद्व्रतेसौभाग्यभाग्जनः जायतेभुविविप्रेंद्रमहादेवप्रसादतः ॥ भविष्योत्तरेप्येवं ॥ श्रीकृष्णउवाच ॥ शृणुपार्थव्रतंश्रेष्ठंनाम्नानंगत्रयोदशीं याशिवायैपुराप्रोक्ताप्रसन्नेनें-दुमौलिना ॥ गौर्युवाच ॥ पुत्रसौभाग्यकरणीख्यातानंगत्रयोदशी तस्याव्रतंमहादेवममापिकथयप्रभो कस्मि-न्मासेप्रकर्तव्यंसपूर्णंचकथंभवेत् पूज्यानिकानिनामानिविधिनाकेनवैमृड दुर्भगानांचनारीणांसौभाग्यकरणं-शुभं वंध्यानापुत्रजननंधनधान्यविवर्द्धनं एतद्व्रतंमहादेवप्रसादाद्वक्तुमर्हसि ॥ ईश्वरउवाच ॥ कथयामिनसं-देहोमहापुण्यंमहाफलं चीर्णेनयेनदेवेशिसर्वंसंपद्यतेसुखं नारीणांचनृणांचैवविधातव्यंप्रयत्नतः हेमंतेहि-ऋतौप्राप्तेमासिमार्गशिरेशुभे शुक्लपक्षेत्रयोदश्यामुपवासंसमाचरेत् मल्लिकादंतकाष्ठंचपूजाचप्रणतेणतु नारं-गेणार्घ्यदानंतुनैवेद्यंफाणिकातथा गंधैःपुष्पैस्तथाधूपैरर्चयेच्चयथाविधि अक्षतैश्चफलैश्चैवएकाग्रहृदयःस्थितः

सम्यग्जितेंद्रियोभूत्वाअनंगंहृदिकल्पयेत् पश्चात्प्रदक्षिणीकृत्यअर्घ्यंचैवनिवेदयेत् नमस्कुर्यादनंगंच-
मंत्रेणानेनभामिनि नमोस्त्वनंगदेवायशर्वसंगनिवासिने हृदयस्थायनित्यायसूक्ष्मायपरमेष्ठिने स्वर्गेचै-
वतुपातालेमर्त्यलोकेतथैवच सर्वव्यापित्वनंगत्वंगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यमंत्रः ॥ पूजयेत्स्वस्थ-
चित्तस्तुमधुंचप्राशयेन्निशि रंभातुल्याभवेन्नारी सौभाग्यमतुलंभवेत् नश्यंतिसर्वपापानिसप्तजन्म-
कृतानिच लावण्यमतुलंचैवरूपैश्वर्यसमन्वितं अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः पौपस्यैवतु-
मासस्यौदंवरंदंतधावनं जातीपुष्पैःपूजनंचदाडिमेनार्घ्यदानकम् अशोकवर्त्तिकास्निग्धानैवेद्यंचप्रकल्पयेत्
ओंनमोनाट्येश्वरायईश्वरायनमोनमः ॥ नमस्तेभुवनेशायगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यं ॥ व्रतस्थः स्वस्थ-
चित्तस्तुचंदनंप्राशयेन्निशि सर्वपापविशुद्धात्मासौभाग्यमतुलंलभेत् माघस्यैवतुमासस्यविष्णुकांतारदादनं र-
दार्दनंदंतकाष्ठं कुंदपुष्पैःसमभ्यर्चेदर्घ्यंवैबीजपूरकैः नैवेद्यंशर्करादेयादेवोयोगेश्वरस्तथा ओंनमोयोगेश्वराय
योगजंतुनिवासिनेगृहाणार्घ्यंमयादत्तयोगेश्वरनमोस्तुते इत्यर्घ्यं मौक्तिकंप्राशयेद्रात्रौवाजपेयफलंलभेत् फा
ल्गुनस्यतुमासस्यवदरीदंतधावनं कंकोलेनचदेवेशंवीरेशंनामपूजयेत् सर्वाभिलापसिद्ध्यर्थंवीरेशंनामपूजयेत्
ओंवीरशूरवीरभद्रउमाकांतसुरेश्वर हिममध्यनिवासीत्वंगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यं सीतातुल्यभवेन्नारीकं
कोलंप्राशयेन्निशि चैत्रस्यैवतुमासस्यनवमल्लीरदार्दनं दमनेनार्चयेद्देवंपाद्यार्घ्यंचप्रकल्पयेत् नैवेद्यंखर्जुका-
न्दद्याद्विश्वरूपंतुपूजयेत् नमस्तेविश्वरूपायस्वरूपायमहात्मने गृहाणार्घ्यंमयादत्तंविश्वरूपनमोस्तुते इत्यर्घ्यं
उमातुल्याभवेन्नारीकर्पूरंप्राशयेन्निशि वैशाखस्यतुमासस्यापामार्गंदंतधावनं पूजाचमल्लिकापुष्पैराम्रस्यार्घ्यं
तुदापयेत् नैवेद्यंवटकान्दद्यान्महारूपंतुपूजयेत् नमस्तेमहारूपायसर्वविज्ञानरूपिणे गृहाणार्घ्यंमयादत्तंमहा

रूपनमोस्तुते ततःशुद्धमनाभूत्वानक्तंजातीफलाशनं अश्वमेधस्ययज्ञस्यफलमष्टगुणंभवेत् ज्येष्ठस्यैवतु मासस्यसहदेवीरदार्दनं पूजावकुलपुष्पैस्तुश्रीफलेनार्घ्यकल्पना नैवेद्यंमंडकान्दद्याल्लवंगंप्राशयेन्निशि प्रद्युम्नंपूजयेद्देवंसर्वपापप्रणाशनं नमस्तेपशुपतयेप्रद्युम्नभुवनेश्वर गृहाणार्घ्यंमयादत्तंप्रद्युम्नपरमेश्वर इत्यर्घ्यं सुवर्णशतदानस्यफलमष्टगुणंभवेत् आषाढस्यतुमासस्यनारंगीदंतधावनं कदंबैःपूजयेद्देवंनारिकेलार्घ्यकल्पना नैवेद्यंदधितक्रंचोमापतिंपरिपूजयेत् प्राशयेत्तिलबीजानिनिशिस्वस्थेनचेतसाउमापतेमहाबाहो-कामस्तेकामदाहक गृहाणार्घ्यंचंद्रमौलेउमाकांतनमोस्तुते वाजपेयस्ययज्ञस्यफलमाप्नोतिमानवः श्रावणस्यतु मासस्यजातीभिर्दंतधावनं पूजयेत्पद्मपुष्पैश्चजंबूभिरर्घ्यकल्पना नैवेद्येक्षुरसंदद्याच्छूलपाणिंतुपूजयेत् प्राशयेद्दधितोयंतुरात्रौचैवसमाहितः ॐनमःशक्तिधरायचभक्तिभावेनशूलिने गृहाणार्घ्यंमयादत्तंशूलपाणेनमोस्तुते सौत्रामण्यास्ययज्ञस्यफलमष्टगुणंलभेत् भाद्रपदस्यमासस्यअंकोलंदंतधावनं अर्चयेच्चंपकैःपुष्पैर्नैवेद्यंघृतपूरिका अर्घ्यंपूगीफलंदद्यात् सद्योजातंतुपूजयेत् ततःस्वस्थमनाभूत्वाअगुरुंप्राशयेन्निशि त्रिदशेश्वरदेवाय सद्योजातायतेनमः गृहाणार्घ्यंमयादत्तंसद्योजातनमोनमः दशानामश्वमेधानांफलंप्राप्नोतिमानवः आश्विनस्यतुमासस्यकंकनीदंतधावनं अर्चयेत्करवीरैस्तुअर्घ्यंकर्कोटिकाफलं पूज्यश्चात्रिदशाधीशोनैवेद्यंशुभमंडिकाप्राशयेत्कनकंतोयंनिशिदेवप्रपूज्यच ॐत्रिदशाधिपदेवेशउमाकांतमहेश्वर त्रिधारूपमयस्त्वंहिअर्घ्योमेप्रतिगृह्यताम् चातुर्मासस्ययज्ञस्यफलंदशगुणंभवेत् कार्त्तिकस्यतुमासस्यकादंबंदंतधावनं रक्तोत्पलैःपूजनंचकूष्मांडार्घ्यंप्रदापयेत् नैवेद्यंपूरिकादद्यात्पूजयेज्जगदीश्वरं प्राशयेन्नंदनफलंनिशिचैवंसमाहितः नमस्तेजगदीशायव्यापिनेशूलपाणये गृहाणार्घ्यंमहेशानजगदीशनमोस्तुते अर्घ्यं पूजांतेजागरंकुर्याद्गीतवाद्यमहोत्सवैः अर्द्धनारी

श्वरंकुर्य्यात्सौवर्णंरौप्यमेवच वस्त्रयुग्मेनसंवेष्ट्यशय्यायांविनिवेशयेत् एवंकृत्वातुदेवेशंतत्रशोभांतुकारयेत् श्वेतपुष्पैस्तुसंपूज्यश्वेतचंदनचर्चितं धूपंसुगंधिसंक्षिप्यसवत्सांगांप्रदापयेत् श्वेतवस्त्रपरीधानांघंटाभरणभूषितां सु सूक्ष्मवस्त्रयुगलमाचार्यायनिवेदयेत् तथैवदक्षिणांदद्यादासनंपादुकेतथा छत्रंचमुद्रिकांचैवकर्णयोश्चैवभूषणंखट्वादि र्वयाप्रदेयाचतूल्याछादनसंयुता गृहोपस्करसंयुक्ताभक्तिसंयुक्तचेतसा तत्रोपवेश्यचाचार्य्यमुपवासव्रतीततः पादौ मूर्द्ध्निसमारोप्यप्रणिपत्यवचोवदेत् भगवन्त्वत्प्रसादेनव्रतंसंपूर्य्यतांमम एवमस्त्विितिसंब्रूयात्तवतुष्टोस्तुशंकरः ईश्वरउवाच एवंकृत्वाप्रयत्नेनदंपतीचैवपूजयेत् तयोश्चभोजनंदद्याद्दंपत्योःपरितोषकं अनेनविधिनातुष्याम्य हंयुक्तस्त्वयानघे तेभ्योदत्तंचयत्किंचिदक्षयंनात्रसंशयः आचार्य्यमग्रतःकृत्वातस्यादेशंतुकारयेत् नह्याचार्य्य समंतीर्थंनह्याचार्य्यसमंतपः तस्याहंकायमास्थायधर्मसिद्धिंनयेद्ध्रुवं तेनैवाचार्य्यमानेनसर्वंभवतिचाक्षयं एतद्व्र तोत्तमंश्रेष्ठंगुह्याद्गुह्यतरंपरंराज्यमर्थान्सुतान्सिद्धिमवैधव्यंचयच्छति रूपंधनंधान्यमायुरारोग्यंचप्रदापयेत् इष्ट लाभंचसौभाग्यंवर्द्धयेच्चवरानने त्रयोदशीव्रतान्नास्तिसौभाग्यकरणंपरम् ॥

इतिभविष्योत्तरेअनंगत्रयोदशीव्रतम्

अथापरमनंगत्रयोदशीव्रतंभविष्योत्तरएव युधिष्ठिरउवाच भगवन्भूतभव्येशसंसारार्णवतारक यत्त्वंकथयकिं चिन्मेरूपसौभाग्यदायकं अनंगःप्रीयतेयेनप्रीतोयच्छतिकेशव आत्मवद्रूपसौभाग्यंतन्मेविस्तरतोवद श्रीकृ ष्णउवाच अनंगःश्रूयतेदेवः शूलपाणिःपिनाकधृत् तस्मिन्संपूजितेपार्थकिंनाप्नोतिनरोभुवि तेनतेकथयिष्या मिशूलपाणिव्रतंत्विदं यन्नकस्यचिदाख्यातंव्रतानामुत्तमंव्रतं चीर्त्वाभक्त्यानरोमर्त्योयद्यादिच्छतिपांडव तत्तदा

रूपनमोस्तुते ततःशुद्धमनाभूत्वानक्रंजातीफलाशनं अश्वमेधस्ययज्ञस्यफलमष्टगुणंभवेत् ज्येष्ठस्यैवतु मासस्यसहदेवीरदार्दनं पूजावकुलपुष्पैस्तुश्रीफलेनार्घ्यकल्पना नैवेद्यंमंडकान्दद्याल्लवंगंप्राशयेन्निशि प्रद्युम्नंपूजयेद्देवंसर्वपापप्रणाशनं नमस्तेपशुपतयेप्रद्युम्नभुवनेश्वर गृहाणार्घ्यंमयादत्तंप्रद्युम्नपरमेश्वर इत्यर्घ्यं सुवर्णशतदानस्यफलमष्टगुणंभवेत् आषाढस्यतुमासस्यनारंगीदंतधावनं कदंबैःपूजयेद्देवंनारिकेलार्घ्यकल्पना नैवेद्यंदधितक्रंचोमापतिंपरिपूजयेत् प्राशयेत्तिलबीजानिनिशिस्वस्थेनचेतसा उमापतेमहाबाहोकामस्तेकामदाहक गृहाणार्घ्यंचंद्रमौलेउमाकांतनमोस्तुते वाजपेयस्ययज्ञस्यफलमाप्नोतिमानवः श्रावणस्यतु मासस्यजातीभिर्दंतधावनं पूजयेत्पद्मपुष्पैश्चजंबूभिरर्घ्यकल्पना नैवेद्येक्षुरसंदद्याच्छूलपाणिंतुपूजयेत् प्राशयेद्गंधतोयंतुरात्रौचैवसमाहितः ॐनमःशक्तिधरायचभक्तिभावेनशूलिने गृहाणार्घ्यंमयादत्तंशूलपाणेनमोस्तुते सौत्रामण्याख्ययज्ञस्यफलमष्टगुणंलभेत् भाद्रपदस्यमासस्यअंकोलंदंतधावनं अर्चयेच्चंपकैः पुष्पैर्नैवेद्यंघृतपूरिका अर्घ्यंपूगीफलंदद्यात् सद्योजातंतुपूजयेत् तत.स्वस्थमनाभूत्वाअगुरुंप्राशयेन्निशि त्रिदशेश्वरदेवाय सद्योजातायतेनमः गृहाणार्घ्यंमयादत्तंसद्योजातनमोनमः दशानामश्वमेधानांफलंप्राप्नोतिमानवः आश्विनस्यतुमासस्यकंकनीदंतधावनं अर्चयेत्करवीरैस्तुअर्घ्यंकर्कोटिकाफलं पूज्यश्चात्रिदशाधीशोनैवेद्यंशुभमंडिकाप्राशयेत्कनकंतोयंनिशिदेवंप्रपूज्यच. ॐत्रिदशाधिपदेवेशउमाकांतमहेश्वर त्रिधारूपमयस्त्वंहिअर्घ्योमेप्रतिगृह्यतां चातुर्मासस्ययज्ञस्यफलंदशगुणंभवेत् कार्त्तिकस्यतुमासस्यकादंबंदंतधावनं रक्तोत्पलैः पूजनंचकूष्मांडार्घ्यंप्रदापयेत् नैवेद्यंपूरिकादद्यात्पूजयेज्जगदीश्वरं प्राशयेन्नंदनफलंनिशिचैवंसमाहितः नमस्तेजगदीशायव्यापिनेशूलपाणये गृहाणार्घ्यंमहेशानजगदीशनमोस्तुते अर्घ्यं पूजांतेजागरंकुर्याद्गीतवाद्यमहोत्सवैः अर्द्धनारी

श्वरंकुर्य्यात्सौवर्णंरौप्यमेवच वस्त्रयुग्मेनसंवेष्टशय्यायांविनिवेशयेत् एवंकृत्वातुदेवेशंतत्रशोभांतुकारयेत् श्वेतपुष्पैस्तुसंपूज्यश्वेतचंदनचर्चितं धूपंसुगंधिसंक्षिप्यसवत्सांगांप्रदापयेत् श्वेतवस्त्रपरीधानांघंटाभरणभूषितां सुसूक्ष्मवस्त्रयुगलमाचार्यायनिवेदयेत् तथैवदक्षिणांदद्यादासनंपादुकेतथा छत्रंचमुद्रिकांचैवकर्णयोश्चैवभूषणंखट्वादिव्याप्रदेयाचतूल्याछादनसंयुता गृहोपस्करसंयुक्ताभक्तिसंयुक्तचेतसा तत्रोपवेश्यचाचार्य्यमुपवासव्रतीततः पादौमूर्द्ध्निसमारोप्यप्रणिपत्यवचोवदेत् भगवन्त्वत्प्रसादेनव्रतंसंपूर्य्यतांमम एवमस्त्वितिसंब्रूयात्तवतुष्टोस्तुशंकरः ईश्वरउवाच एवंकृत्वाप्रयत्नेनदंपतीचैवपूजयेत् तयोश्चभोजनंदद्याद्दंपत्योःपरितोषकं अनेनविधिनातुष्यास्म्यहंयुक्तस्त्वयानघे तेभ्योदत्तंचयत्किंचिदक्षयंनात्रसंशयः आचार्य्यमग्रतःकृत्वातस्यादेशंतुकारयेत् नह्याचार्य्यसमंतीर्थंनह्याचार्य्यसमंतपः तस्याहंकायमास्थायधर्मसिद्धिंनयेद्ध्रुवं तेनैवाचार्य्यमानेनसर्वंभवतिचाक्षयं एतद्व्रतोत्तमंश्रेष्ठंगुह्याद्गुह्यतरंपरंराज्यमर्थान्सुतान्सिद्धिमवैधव्यंचयच्छति रूपंधनंधान्यमायुरारोग्यंचप्रदापयेत् इष्टलाभंचसौभाग्यंवर्द्धयेच्चवरानने त्रयोदशीव्रतान्नास्तिसौभाग्यकरणंपरम् ॥

इतिभविष्योत्तरेअनंगत्रयोदशीव्रतम्

अथापरमनंगत्रयोदशीव्रतंभविष्योत्तरएव युधिष्ठिरउवाच भगवन्भूतभव्येशसंसारार्णवतारक यत्त्वंकथयकिंचिन्मेरूपसौभाग्यदायकं अनंगःप्रीयतेयेनप्रीतोयच्छतिकेशव आत्मवद्रूपसौभाग्यंतन्मेविस्तरतोवद श्रीकृष्णउवाच अनंगःश्रूयतेदेवः शूलपाणिःपिनाकधृत् तस्मिन्संपूजितेपार्थकिन्नप्राप्नोतिनरोभुवि तेनतेकथयिष्यामिशूलपाणिव्रतंत्विद यन्नकस्यचिदाख्यातंव्रतानामुत्तमंव्रतं चीर्त्वाभक्त्यानरोमर्त्योयद्यदिच्छतिपांडव तत्तदा

रूपनमोस्तुते ततःशुद्धमनाभूत्वानक्तंजातीफलाशन अश्वमेधस्ययज्ञस्यफलमष्टगुणंभवेत् ज्येष्ठस्यतु
मासस्यसहदेवीरदार्दनं पूजावकुलपुष्पैस्तुश्रीफलेनार्घ्यकल्पना नैवेद्यंमंडकान्दद्याल्लवंगंप्राशयेन्निशि प्र
द्युम्नंपूजयेद्देवंसर्वपापप्रणाशनं नमस्तेपशुपतयेप्रद्युम्नभुवनेश्वर गृहाणार्घ्यंमयादत्तंप्रद्युम्नपरमेश्वर इत्य
र्घ्यं सुवर्णशतदानस्यफलमष्टगुणंभवेत् आषाढस्यतुमासस्यनारंगीदंतधावनं कदंबैःपूजयेद्देवंनारिकेला
र्घ्यकल्पना नैवेद्यंदधितक्रंचोमापतिंपरिपूजयेत् प्राशयेत्तिलबीजानिनिशिस्वस्थेनचेतसाउमापतेमहाबाहो-
कामस्तेकामदाहक गृहाणार्घ्यंचंद्रमौलेउमाकांतनमोस्तुते वाजपेयस्ययज्ञस्यफलमाप्नोतिमानवः श्रावणस्यतु
मासस्यजातीभिर्दंतधावनं पूजयेत्पद्मपुष्पैश्चजंबूभिरर्घ्यकल्पना नैवेद्येक्षुरसंदद्याच्छूलपाणिंतुपूजयेत् प्राश
येद्गंधतोयंतुरात्रौचैवसमाहितः ओंनमःशक्तिधरायचभक्तिभावेनशूलिने गृहाणार्घ्यंमयादत्तंशूलपाणेनमोस्तुते
सौत्रामण्याख्ययज्ञस्यफलमष्टगुणंलभेत् भाद्रपदस्यमासस्यअंकोलंदंतधावनं अर्चयेच्चंपकैःपुष्पैर्नैवेद्यंघृतपू
रिका अर्घ्यंपूगीफलंदद्यात् सद्योजातंतुपूजयेत् ततःस्वस्थमनाभूत्वाअगुरुंप्राशयेन्निशि त्रिदशेश्वरदेवाय
सद्योजातायतेनमः गृहाणार्घ्यंमयादत्तंसद्योजातनमोनमः दशानामश्वमेधानांफलंप्राप्नोतिमानवः आश्विन
स्यतुमासस्यकंकनीदंतधावनं अर्चयेत्करवीरैस्तुअर्घ्यंकर्कटिकाफलं पूज्यश्चत्रिदशाधीशोनैवेद्यंशुभमंडिकाप्रा
शयेत्कनकंतोयंनिशिदेवंप्रपूज्यच ओंत्रिदशाधिपदेवेशउमाकांतमहेश्वर त्रिधारूपमयस्त्वंहिअर्घ्योमेप्रतिगृह्यता
चातुर्मास्यस्ययज्ञस्यफलंदशगुणंभवेत् कार्त्तिकस्यतुमासस्यकादंबंदंतधावनं रक्तोत्पलैः पूजनंचकूष्मांडार्घ्यंप्र
दापयेत् नैवेद्यंपूरिकादद्यात्पूजयेज्जगदीश्वरं प्राशयेन्नंदनफलंनिशिचैवंसमाहितः नमस्तेजगदीशायव्यापि
नेशूलपाणये गृहाणार्घ्यंमहेशानजगदीशनमोस्तुते अर्घ्यं पूजांतेजागरंकुर्याद्गीतवाद्यमहोत्सवैः अर्द्धनारी

निशिपूजयेत् वीरनामजपेद्रात्रौकंकोलंप्राशयेन्निशितेनास्यसुरभिर्गंधोजायतेकायवक्त्रयोः तथागुणगणावासो-
द्रुतकांचनसन्निभःगोमेधस्यफलंप्राप्यशक्रलोकेमहीयते चैत्रेकरंजमदनद्राक्षावटकशीतलैःशीतलःकर्पूरः देवंस्व
रूपनामानंयजेत्सुभगयासह पूर्वोक्तविधिनापार्थकर्पूरंप्राशयेन्निशि कर्पूरवत्प्रियोलोकेगंधगौरवसंयुतःचंद्रव
त्सर्वलोकानांलोचनाह्लादकारकःजायतेसनरःपार्थयःकरोतीहभक्तितः नरमेधफलावाप्तिर्जायतेनात्रसंशयःवैशा
खेसहकाराकंपुष्पाम्रफलसक्तुभिः जातीफलैर्महारूपामिंद्राण्यासहितंयजेत् प्राशयेद्रात्रिसमयेजातीफलमनुत्तमम्
अस्यप्राशनयोगाच्चजातिंप्राप्नोत्यनुत्तमां सफलास्तस्यसर्वाशाभवंतिभुविभारत गोसहस्रफलंप्राप्यरुद्रलोके
महीयते ज्येष्ठेजंबूविल्वपत्रैःश्रीफलैःपूपकैस्तथा लवंगेनाथसंपूज्यप्रद्युम्नललितान्वितं लवंगंप्राशयेद्रात्रौला
वण्यंतेनचाप्नुयात् वाजपेयफलंलब्ध्वामोदतेदिविभारत आषाढेपामार्गनीपनालीयककदंबकैः नीपकदंबौवृक्षाविशे
षौ तिलैरुमापतिंरात्रौपूजयेच्चतिलोत्तमं उमापतिंयजेत्प्राज्ञःप्राशयेच्चतिलोदकं तिलोनेमवभवतिरूपसंपदनुत्तमा
प्राप्नोतिपुंडरीकस्यफलंकुरुकुलोद्वह श्रावणेसुमनांभोजकदलीफलमंडितैः सुमनामालती गंधतोयैःशूलपाणिंशु
भवासोन्वितंयजेत् गंधोदकंप्राश्यस्वपेद्रात्रौविगतमत्सरःसुगंधसर्वसौख्याढ्यश्चिरायुश्चोपजायते अग्निष्टोम
स्ययज्ञस्यप्राप्नुयात्फलमुत्तमं भाद्रेपलाशचंपेयकर्कव्याज्यपुरैस्तथा आज्यपुरोघृतपुरः यजेतागुरुणासद्योजा-
तंगौर्यासमन्वितं अगुरुंप्राशयित्वातुगुरुर्भवतिभूतले. तुलापुरुषदानस्यहैमस्यफलमाप्नुयात् आश्विनेकुंद-
बाणापामार्गकर्कंधुमंडकैः स्वर्णांभोभिःसुवर्णंचत्रिदशाधिपतिंयजेत् हेमोदकंचसंप्राश्यहेमवर्णःप्रजायते वाज-
पेयस्ययज्ञस्यसकलंफलमश्नुते ऊर्जेकदंबकद्रोणकूष्मांडलवणैस्तु फलैश्चविद्याधिपतिंयजेन्मदनयायुतं फलैः
मृतफलाख्यैर्लवणमंत्रज्ञेयं लवणंप्राशयेत्तत्रशुद्धयापरयान्वितः रूपलावण्यसंयुक्तः प्राशनादस्यजायते वाजपेयस्य

प्नात्यंसंदिग्धंमनगाख्यत्रयोदशीं किंव्रतंवहुभिपार्थउक्तमात्रफलप्रदैः त्रयोदशीत्वियंपुण्यासर्वव्रतफलप्रदा
तस्मात्कार्य्याप्रयत्नेनवहुपुण्यमभीप्सता त्रयोदशीह्यनंगाख्यासर्वाघौघविनाशिनी सर्वदुष्टोपशमनीसर्वमंग
लवर्द्धिनी अतुल्यसुखसौभाग्यरूपलावण्यदायिनी पुरादग्धेनकामेनत्रिनेत्रनयनाग्निना भस्मीभूतेनलोके-
स्मिन् संकल्पस्थेनपांडव अनंगेनकृताह्येषातेनानंगत्रयोदशी प्रसिद्धिंसमनुप्राप्तानित्यंसर्वफलप्रदा मा-
र्गशीर्षेसितेपक्षेत्रयोदश्यांसमाहितः स्नात्वानद्यांतडागेवाग्रहेवाकूपतोयतः कृत्वाभ्यर्च्यमहादेवंविधानाच्छि-
वतोपणं लिंगस्वयंचसंभूतमभावेयत्प्रतिष्ठितं तदनंगमितिप्रोक्तंपूजयेद्भक्तितोव्रती पयोदधिघृतक्षौद्रैर्मंत्र-
पूतैर्जलान्वितैःशर्कराद्यमृतैःपश्चात्स्नापयेद्गंधवारिणा धूपदीपादिनैवेद्यैः पुष्पैस्तत्कालसंभवैः फलैर्नाना-
विधैर्भक्ष्यैर्गीतवादित्रनिःस्वनैः पूजयेदितिशेषः शंभुनामान्यथोच्चार्य्यहोमः कार्य्यस्तिलाक्षतैः अक्षतायवाःअश्व
त्थजातीनारंगपायसैर्मधुनापिच अश्वत्थादीनिक्रमाद्व्रतकाष्ठफलनैवेद्यप्राशनानिच एवमुत्तरमासेष्वपि अनंगंपू
जयेदादौमधुमत्यासमन्वितं आदौआदिमासेमार्गशीर्षमासे अनंगनाम्नासंपूज्यमधुप्राश्यस्वपेन्निशि मधुप्रा
शनयोगेनजायतेमधुरध्वनिः अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिभक्तिमान् पौषेचौदुंवरकरवीरदाडिममोदकैः चं
दनेनतथयोगीशंहैमवत्यायुतंयजेत् स्नाप्यक्षीरादिभिःपार्थपूजयित्वाविधानतः योगेश्वरेतिसंस्मृत्यचंदनंप्रा
शयन्निशि सौम्यः शीतः सुगंधश्चचंदनप्राशनाद्भवेत् राजसूयस्ययज्ञस्यमद्भक्तःफलमाप्नुयात् माघेन्यग्रो
धसत्कुंदमातुलुंगसुहालिकैः मुक्ताभोभिश्चनाठ्येशंसुंदर्य्यासहितंयजेत् नाठ्येश्वरेतिसंस्मृत्यप्राशयेन्मौक्ति
कोदकं प्राशनस्यप्रभावेननिर्मलाधीःप्रजायते रूपाढ्यंचवपुःस्त्रीणांमनोनयननंदनं मुक्तावर्णोपमेनेत्रेपद्मपत्रा
यतेशुभे वहुस्वर्णप्रदानस्यप्राप्नोत्यविकलंफलं फाल्गुनेवदरीकांचनारजंवीरगोरसैः कंकोलेनचदेवेशंससांतं

निशिपूजयेत् वीरनामजपेद्रात्रौकंकोलंप्राशयेन्निशितेनास्यसुरभिर्गंधोजायतेकायवक्त्रयोः तथागुणगणावासो-
द्धुतकांचनसन्निभःगोमेधस्यफलंप्राप्यशक्रलोकेमहीयते चैत्रेकरंजमदनद्राक्षावटकशीतलैःशीतलःकर्पूरः देवंरुव
रूपनामानंयजेत्सुभगयासह पूर्वोक्तविधिनापार्थकर्पूरंप्राशयेन्निशि कर्पूरवत्प्रियोलोकेगंधगौरवसंयुतःचंद्रव
त्सर्वलोकानांलोचनाह्लादकारकःजायतेसनरःपार्थयःकरोतीहभक्तितः नरमेधफलावाप्तिर्जायतेनात्रसंशयःवैशा
खेसहकारार्कपुष्पाम्रफलसक्तुभिः जातीफलैर्महारूपामिंद्राण्यासहितंयजेत् प्राशयेद्रात्रिसमयेजातीफलमनुत्तमम्
अस्यप्राशनयोगाच्चजातिंप्राप्नोत्यनुत्तमां सफलास्तस्यसर्वाशाभवंतिभुविभारत गोसहस्रफलंप्राप्यरुद्रलोके
महीयते ज्येष्ठेजंबूबिल्वपत्रैःश्रीफलैःपूपकैस्तथा लवंगेनाथसंपूज्यप्रद्युम्नंललितान्वितं लवंगंप्राशयेद्रात्रौला
वण्यंतेनचाप्नुयात् वाजपेयफलंलब्ध्वामोदतेदिविभारत आषाढेपामार्गनीपनालीयककदंबकैःनीपकदंबौवृक्षाविशे
षौ तिलैरुमापतिंरात्रौपूजयेच्चतिलोत्तमं उमापतिंयजेत्प्राज्ञःप्राशयेच्चतिलोदकं तिलान्नमेवभवतिरूपसंपदनुत्तमा
प्राप्नोतिपुंडरीकस्यफलंकुरुकुलोद्वह श्रावणेसुमनांभोजकदलीफलमंडितैः सुमनामालती गंधतोयैःशूलपाणिंशु
भवासोन्वितंयजेत् गंधोदकंप्राश्यस्वपेद्रात्रौविगतमत्सरःसुगंधसर्वसौख्याढ्यश्चिरायुश्चोपजायते अग्निष्टोम
स्ययज्ञस्यप्राप्नुयात्फलमुत्तमं भाद्रेपलाशयपियककर्कट्याज्यपुरैस्तथा आज्यपुरोघृतपुरः यजेतागुरुणासद्योजा-
तंगौर्य्यासमन्वितं अगुरुंप्राशयित्वातुगुरुर्भवतिभूतले तुलापुरुषदानस्यहैमस्यफलमाप्नुयात् आश्विनेकुंद-
बाणापामार्गकर्कंधुमंडकैः स्वर्णांभोभिःसुवर्णंचत्रिदशाधिपतिंयजेत् हेमोदकंचसंप्राश्यहेमवर्ष्मोप्रजायते वाज-
पेयस्ययज्ञस्यसकलंफलमश्नुते ऊर्जेकदंबकद्रोणकूष्मांडलवणेनतु फलैश्चविद्याधिपतिंयजेन्मदनयायुतं फलेर-
मृतफलाख्यैर्लवणमंतेज्ञेयं लवणंप्राशयेत्तत्रशुद्धयापरयान्वितः रूपलावण्यसंयुक्तः प्राशनादस्यजायते वाजपेयस्य

यज्ञस्यफलंप्राप्नोतिनिश्चितं आद्यमाद्यंदंतकाष्ठंकुसुमंतत्परंफलं नैवेद्यंप्राशनंनामक्रमान्मासेषुकीर्तितं अला
भेदंतकाष्ठानांखादिरंस्याच्छिवप्रदं पुष्पाणामप्यलाभेतुतत्पत्रैर्वाथकोमलैः अलाभेतत्फलानांचबीजपूरंप्रशस्यते
नैवेद्यानामप्यलाभेहविष्यान्नंप्रकल्पयेत् इहप्रतिश्लोकंदंतधावनकुसुमनैवेद्यप्राशनानांयथाक्रमंविहितानांत
स्यतस्याभावेअथमनुकल्पउक्तः सर्वेषुपारणेष्वत्रभोजयेत्वाद्विजोत्तमान् सदक्षिणंततोश्नीयाद्बंधुभिःसहितोवशी
व्रतेविघ्नंयदाचस्यात्सूतकेमृतकेथवा उपोष्यचैवोपविशेत्तदह्निअपरेपुनःतदह्निउपोष्यअपरेऽग्निसमासांतर्गततद्दिने
पूर्वंमत्प्रोक्तंभवति एवंसंवत्सरस्यांतेशक्त्यारत्नाथलंकृतंउमामाहेश्वरंहैममधिवास्यततोनिशि पुष्पैर्धूपैस्तथागं-
धैर्नैवेद्यैःक्रमुकैःफलैःततःप्रभातसमयेकृतहोमबलिक्रियः वक्ष्यमाणमिदंसर्वंप्रदद्यात्तुद्विजातये लिंगाकारमनंगंच
सौवर्णंकारयेच्छिवं ताम्रपात्रोपरिस्थाप्यकलशोपरिविन्यसेत् शुक्लवस्त्रेणसंछाद्यनैवेद्यपुष्पपूजितं ब्राह्मणाय
प्रदातव्यंशिवभक्तायसुव्रत द्वादशात्रप्रकर्तव्यास्रक्चंदनविभूषिताः सितपक्वान्नसंपन्नाब्राह्मणेभ्योनिवेदयेत् देव
स्यैवप्रदातव्याः कुंभाद्वादशलड्डुकाः वितानंपंचवर्णंचव्यंजनंकिंकिणीनादितं घंटांचमुखरांभद्रांवध्नीयाच्छिवमं
दिरे तस्मिन्नेवदिनेपार्थध्यात्वात्मानंसमर्चयेत् आत्मानंपरमात्मानं देवदेवंत्रिविद्येशंपुष्पनैवेद्यदीपकैः गीत-
वादित्रनृत्यादिप्रेक्षणैर्विविधैरपि दानान्यत्रप्रदेयानिस्ववित्तस्यानुसारतः सूर्योपरागसदृशोयतः सदिवसोमतः
भोजनंचयथाशक्त्यापड्रसंमधुरोत्तरं प्रदद्याच्छिवभक्तानांवस्त्राणिचविशेषतः अर्थितोनावमन्येतनाक्षिप्येन्नरुषा
वदेत् यथाशक्त्याप्रदद्याच्चबहुधामधुरंवदेत् एवंतदुत्सवंकृत्वाशिवयज्ञमनुत्तमं द्विजेभ्योभोजनंदद्याच्छर्कराज्य
परिप्लुतं पश्चात्स्वयंतुभुंजीयाद्भृत्यवर्गसमन्वितः शांतवागेकनिष्ठस्तुहृदिदेवंनिवेश्यच पूजांनिर्वर्त्यविधिवद्ब्राह्म
णान्परितोषयेत् एवंकृत्वानरःसम्यग् भक्तिभावनभावितः मुच्यतेसर्वपापौघैर्ब्रह्महत्यादिकैरपि

इहसौख्यमवाप्योच्चै मृतःस्वर्गेमहीयते पुण्यशेषादिहागत्यसार्वभौमोनृपोभवेत् व्रतस्यास्यप्रभावेनमूर्तिमान्मदनोभवेत् सौभाग्यधनसौख्याढ्यःशांतचित्तोजितेंद्रियः पुत्रपौत्रैःसुसंपूर्णोजीवेच्चशरदांशतम् शिवभक्तिपरोभूत्वाशिवैकगतमानसः अंतकालेशिवंस्मृत्वाशिवसायुज्यतांव्रजेत् कामेनयाकिलपुरासमुपोषितासीच्छुद्धातिथिस्त्रिदशदेहपराप्तिहेतोः तंप्राशनैरुदितनाम्युतेरुपोप्यदिव्यंप्रयातिपरमंपदमिंदुमौलेः ॥

॥ इतिभविष्योत्तरोक्तमपरमनंगत्रयोदशीव्रतम् ॥

अथप्रदोषव्रतानि तत्रादौप्रदोषमाहिमास्कांदे ब्रह्मोत्तरखंडे सत्यंब्रवीमिपरलोकहितंब्रवीमिसारंब्रवीम्युपनिषद्धृदयंब्रवीमि संसारमुल्बणमसारमवाप्यजंतोः सारोयमीश्वरपदाब्जयुगस्यसेवा येनार्चयंतिगिरिशंमहितंप्रदोषेधन्याश्चतेशिवपदंप्रणमंतिनान्ये केतत्कथाश्रुतिपुटैर्नपिबंतिमूढास्तेजन्मजन्मनिभवंतिनरादरिद्राः येवैप्रदोषसमयेपरमेश्वरस्यकुर्वंत्यनन्यमनसोंघ्रिसरोजसेवां नित्यंप्रवृद्धधनधान्यकलत्रपुत्रसौभाग्यसंपदधिकास्तइहैवलोकाः कैलासशैलभुवनेत्रिजगज्जनित्रींगौरींनिवेश्यकनकांचितरत्नपीठे नृत्यंविधातुमभिवांछतिशूलपाणौ देवाःप्रदोषसमयेनुभजंतिसर्वे वाग्देवीधृतवल्लकीशतमखोवेणुरणत्पद्मजस्तालोन्निद्रकरारमाभगवतीगेयप्रयोगान्विता विष्णुःसांद्रमृदंगवादनपटुर्देवाःसमंतात्स्थिताः सेवंतेतमनुप्रदोषसमयेदेवंमृडानीपतिं गंधर्वयक्षपतगोरगसिद्धसाध्या विद्याधराःसुरनराप्सरसांगणाश्च येन्येत्रिलोकनिलयाःसहभूतवर्गाः प्राप्तेप्रदोषसमयेहरपार्श्वसंस्थाः तस्मात्प्रदोषसमयेशिवएकएवपूज्योथनान्येहरिपद्मजाद्याः तस्मिन्महेशेविधिनेज्यमानेसर्वेप्रसीदंतिसुराधिनाथाः ॥ इतिप्रदोषमहिमा ॥ अथास्यनिर्णयः हेमाद्रौविश्वादर्शे प्रदोषोस्तमयादूर्ध्वंघटिकात्रयमुच्यतइति गौडग्रंथेषु दंडद्वयात्मकएवप्रदोषउक्तः प्रदोषोस्तमयादूर्ध्वंघटिकाद्वय-

मिव्यइतिवत्सोक्तेः यत्तुत्रिमुहूर्त्तःप्रदोषःस्याद्रवावस्तंगतेसतीतिस्कंदपुराणवचनं तद्गौणप्रदोषकालपरं वि
श्वादर्शवाक्योपात्तघटिकात्रयात्मकमुख्यकालाधिककालबोधकत्वात् अतएवमाधवाचार्योऽपिनक्तप्रकरणे भोज
नेघटिकात्रयमुत्तमः कालः घटीषट्कंमध्यमः कालः एतदेवाभिप्रेत्यस्मर्यते ॥ प्रदोषोस्तमयादूर्ध्वमितित्रिमुहूर्त्तं
प्रदोषस्यादितिच निशीथपर्यंतोजघन्यःकालःनक्तंकुर्वीतरात्रावितिसामान्येनाभिधानादिति अत्रशिवपूजानक्तभोज
नात्मकंप्रदोषव्रतं तत्रप्रदोषव्यापिनीत्रयोदशीग्राह्या ॥ तथाचस्कंदपुराणे एवंवत्सरपर्यंतंप्रक्षिपेद्यस्त्रयोदशीं
प्रदोषेशिवमभ्यर्च्यनक्तंभोक्ष्यामिशंकरेति पूजारंभकालोपितत्रैव ततस्तुलोहितेभानौस्नात्वासनियमोव्रती
पूजास्थानंततोगत्वाप्रदोषेशिवमर्चयेदिति ब्रह्मोत्तरखंडेतु घटीकात्रयमस्तमयात्पूर्वमुपक्रमकालउक्तः पक्षद्वये
त्रयोदश्यांनिराहारोभवेद्दिवा घटीत्रयादस्तमयात्पूर्वंस्नानंसमाचरेदितिमुख्यतरः पूजाकालस्तुसूर्यास्तादि
नक्षत्रोदयांतः प्रदोषोरजनीमुखमितिकोशबलात् केचित्तुत्रिमुहूर्तात्मकएवमुख्यःकालःप्रदोषकालःकृतः तेषां
माधवोक्तउत्तममध्यमविभागोनुपपन्नः द्वयोरपिमुख्यकालत्वस्वीकारात् तत्रान्यतरदिनेप्रदोषव्याप्तौतस्य
शैवासैवग्राह्यादिनद्वयेसाम्येप्रदोषव्याप्तौतदेकदेशस्पर्शेवाउत्तरा प्रातःसंकल्पयेद्विद्वानुपवासव्रतादिकमिति
संकल्पकालमारभ्यसत्वात् दिनद्वयेप्रदोषव्याप्त्यभावेतु पूजोपक्रमकालव्यापिनीग्राह्या कर्मोपक्रमकाल
गातुकृतिभिर्ग्राह्यानयुग्मादरइतिवचनात् यत्तुकैश्चिदुक्तं दिनद्वयेप्रदोषव्याप्तौपूर्वैवग्राह्या त्रयोदशीतुकर्त्त
व्याद्वादशीसहितामुने इतिमुमंतुवचनादितितत्तुच्छं अस्यसामान्यवचनत्वेनाहोरात्रसाध्योपवासादिपुसावका
शत्वेनकालविशेषसाध्यप्रदोषव्रतेनिर्णायकत्वात् अधिकंचनक्तप्रकरणेद्रष्टव्यं अथपक्षप्रदोषविधिःब्रह्मोत्तरखंडे
शांडिल्यउवाच पक्षद्वयेत्रयोदश्यांनिराहारोभवेद्दिवा घटीत्रयादस्तमयात्पूर्वंस्नानंसमाचरेत् शुक्लांबरध

रोभूत्वावाग्यसोनियमान्वितः कृतसंध्याविधिरतः शिवपूजांसमाचरेत् देवस्यपुरतःसम्यगुपलिप्यनवांभसा
विधायमंडपंरम्यंधौतवस्त्रादिभिर्बुधः वितानाद्यैरलंकृत्यफलपुष्पनवांकुरैः विचित्रंपद्ममुद्धृत्यवर्णपंचकरंजितं
तत्रोपविष्टःसुसमे सूपविष्टःस्थिरासने सम्यक्संपादिताशेषपूजोपकरणःशुचिः आगमोक्तेनमंत्रेणनैगमेन-
चमंत्रवित् ततःकृत्वात्मशुद्धिंचभूतशुद्धिमनुक्रमात् प्राणायामत्रयंकुर्याद्बीजमंत्रैःसमंत्रकैः मातृकान्यासवि-
धिवद्ध्यात्वातोदेवतांपरां समाप्यमातृकांभूयोध्यात्वादेवंपरंशिवं वामभागेगुरुंनत्वादक्षिणेगणपंयजेत् अंस-
योर्युगधर्मांश्चन्यसेन्नाभौचपार्श्वयोः अधर्मादीननंतादीन्हृदिपीठमनुंन्यसेत् आधारशक्तिमारभ्यक्षानात्मांत-
मनुक्रमात् उक्तक्रमेणविन्यस्यहृदयेसाधुभाविते नवशक्तिमयेरम्येध्यायेद्देवमुमापतिं चंद्रकोटिप्रतीकाशं-
त्रिनेत्रंचंद्रभूषणं आपिंगलजटाजूटंरत्नमौलिविराजितं नीलग्रीवमुदारांगंनागहारोपशोभितं वरदाभयहस्तं-
चहरिणंचपरश्वधं दधानंनागवलयंकेयूरांगदमुद्रिकां व्याघ्रचर्मपरीधानंरत्नसिंहासनेस्थितं ध्यात्वातद्वाम-
भागेचचिंतयेद्गिरिकन्यकां भास्वज्जपाप्रसूनाभामुदयर्कसमप्रभां विद्युत्पुंजनिभांतन्वींमनोनयननंदिनीं बालें-
दुशेखरांस्निग्धनीलकुंचितकुंतलां भृंगसंघातरुचिरनीलालकविराजितां मणिकुंडलविद्योतन्नखमंडलविभ्रमां
नवकुंकुमपंकाक्तकपोलतलदर्पणां मधुरस्मिताविभ्राजदरुणाधरपल्लवां कुंबुकंठींशिवामुद्यन्कुचपंकजकुंडलां
पाशांकुशाभयवरैर्विलसंतींचतुर्भुजां अनेकरत्नविलसत्कंकणांगदमुद्रिकां मध्यात्रिवलयांहृद्यांहेमकांचीगुणा
न्वितां दिव्यमाल्यांवरधरांदिव्यचंदनचर्चितां दिक्पालवनितामौलिसन्नतांघ्रिसरोरुहां रत्नसिंहासनारूढां
सर्पराजपरिच्छंदां एवंध्यात्वामहादेवंदेवींचगिरिकन्यकां न्यासक्रमेणसंपूज्यदेहेगंधादिभिःक्रमात् पंचभि
र्ब्रह्मभिःकुर्यात्प्रोक्तस्थानेषुवाहृदि पृथक्पुष्पांजलिंदद्यान्मूलेनचहृदित्रिधा पुनःस्वयंशिवोभूत्वामूलमंत्रेण

सायकः ततःसंपूजयेद्देवंवाह्यपीठेपुनःक्रमात् संकल्प्यपूजयेत्तत्रपूजारंभेसमाहितः कृतांजलिपुटोभूत्वाचिंत
येद्धृदिशंकरम् ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये अशेषाघविनाशायप्रसीदममशंकर दुःखशोकाग्नि
संतप्तंसंसारभयपीडितं वहुरोगाकुलंदीनंपाहिमांवृषवाहन आगच्छदेवदेवेशमहादेवाभयंकर गृहाणस
हपार्वत्यातवपूजांमयाकृतां इतिसंकल्प्यविधिवद्वाह्यपूजांसमारभेत् गुरुंगणपतिंचैवयजेत्सव्यापसव्ययो:
क्षेत्रेशमीशकोणेचवन्हौकात्यायनींयजेत् धर्मज्ञानंचवैराग्यमैश्वर्यंचनमोंतकैः स्वैरग्न्यादिकोणेपुपीठपादा
ननुक्रमात् दिक्षुविंदुविसर्गाभ्यामधर्मादीन्सुपूजयेत् मंत्ररूपांश्चतुर्दिक्षुमध्येनंतंसतारकं सत्वादींस्त्रिगुणां
स्तत्रपूजापीठेप्रविन्यसेत् अतऊर्ध्वच्छदेमायाविद्यांलक्ष्मींशिवेनच तदतेचांवुजंभूयःसकलंमंडलत्रयं पत्रके
सरकिंजल्कव्याप्तंतारक्षरैःक्रमात् आत्मत्रयंसमभ्यर्च्यमध्येमंडलमादरात् ज्येष्ठांलक्ष्मींचरौद्रींचसुभगाद्यैर्दिक्षु.
पूजयेत् वामाद्यानवशक्तीश्चनवस्वरयुतायजेत् हृद्वीजत्रयाढ्येनपीठमंत्रेणचार्चयेत् आद्यैःप्रथमांगैस्तु
पंचभिर्मूर्तिशक्तिभिः त्रिशक्तिमूर्त्तिभिश्चान्यानिधिद्वयसमन्वितैः अनंताद्यैःपरस्त्वन्यामातृभिश्चवृषादिभिः
सिद्धिभिश्चाणिमाद्याभिरिंद्राद्यैश्चतदायुधैः वृषभक्षेत्रचंडीशौदुर्गाचस्कंदनंदिनौ गणेशः सैन्यपश्चैवस्वस्वल
क्षणलक्षितः अणिमामहिमाचैवगरिमालघिमातथा ईशित्वंचवशित्वंचप्राप्तिःप्राकाम्यमेवच अष्टैश्वर्याणि
प्रोक्तानितेजोरूपाणिकेवलं पंचाभिर्वहुभिःपूर्वंहृल्लेखाद्याभिरप्यनु अंगैरुपायैरिंद्राद्यैःपूर्वोक्तामुनिभिस्तुतै-
उमामहेश्वरौपश्चात्पूजयेदुत्तरादितः यथामाणवकैर्युक्ततेजोरूपंसदाशिवं उमयासहितंदेवमुपचारैःप्रपूजयेत्
सुप्रतिष्ठितशंखस्यतीर्थैःपंचामृतैरपि अभिषिंचेन्महादेवंरुद्रसूक्तैः समाहितः कल्पयेद्विविधैर्मंत्रैरासनाद्युपचा-
रकान् तैरेवाचमनंदद्यान्मधुपर्कंमधूत्तरं पुनराचमनंदद्यात्स्नानमंत्रैः प्रकल्पयेत् आसनंकल्पयेद्वैमंस्वागतं

विहितांजलिः अर्घ्यमष्टगुणोपेतंपाद्यंशुद्धोदकेनतु उपवीतंतथावासोभूषणानिनिवेदयेत् गंधमष्टांगसंयु-
क्तंसफलंविनिवेदयेत् ततश्चंविल्वमंदारकह्लारसरसीरुहं धत्तूरंकर्णिकारंचद्रोणपुष्पंचमाल्लिकां कुशापामा
र्गंतुलसीमाधवीवकुलान्वितां वृहतीकरवीराणियथालब्धानिसाधकः निवेदयेत्सुगंधीनिमाल्यानिविविधानिच धू
पकालागुरुयुतंदीपंचविविधंशुभं अथपायसनैवेद्यंसघृतंसोपदंशकं मोदकापूपसंयुक्तंशर्करागुडसंयुतं मधुना
क्तंदाधियुतंजलपानसमान्वितं तेनैवहविषावह्नौजुहुयान्मंत्रभावितः आगमोक्तेनाविधिनागुरुवाक्यानियंत्रितः
नैवेद्यंशंभवेभूयाद्दत्वातांवूलमुत्तमं धूपंनीराजनंरम्यंछत्रंदर्पणमुत्तमं समर्पयित्वाविधिवन्मंत्रैर्वैदिकतांत्रिकैः
यद्यशक्तस्त्वयंनिःस्वोयथाविधिसमर्चयेत् भक्त्यादत्तेनगौरीशः पुष्पमात्रेणतुष्यति अथांगभूतान्सकलान्ग.
णशादीन्प्रपूजयेत् सर्वैर्नानागुणैःस्तुत्वासाष्टांगंप्रणमेद्बुधः ततःप्रदक्षिणीकृत्यवृषचंडेश्वरादिकान् पूजांसमाप्य-
विधिवत्प्रार्थयेद्गिरिजापतिं ॥ अथैतदनुसारिपद्धतिक्रमः ॰ तत्रादौ स्नानंकृत्वाभूतशुद्धिप्राणप्रतिष्ठामातृका-
न्यासादिकान्कृत्वा हृदयकमलेशिवंध्यात्वामानसोपचारैःसंपूज्य यथाशक्तिमंत्रंजप्त्वाजपंदेवायसमर्प्यमूलेन
स्वदेहपुष्पांजलिंदत्वा स्वात्मानंशिवरूपंध्यात्वा कृतांजलिपुटोभूत्वा ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये
अशेषाघविनाशायप्रसीदममशंकर दुःखशोकाग्निसंतप्तंसंसारभयपीडितं वहुरोगाकुलंदीनंपाहिमांवृषवाहन
आगच्छदेवदेवेशमहादेवाभयंकर गृहाणसहपार्वत्यातवपूजांमयाकृतां इतिसंकल्प्यविधिवद्बाह्यपूजांसमाच
रेत् शंखादिस्थापनंकृत्वायोगपीठादिपद्मासनांतंसंपूज्य सर्वशक्तिमयेरम्येइत्यादिपूर्वोक्तप्रकारेणमहादेवं
देवींचध्यात्वा न्यासक्रमेणसंपूज्यदेहेगंधादिभिःक्रमात् ततोवहन्नासापुटेनकरस्थपुष्पेपुस्वाभीष्टांदेवतामागतां-
विभाव्य पुरस्थितलिंगेमूर्त्तौवाप्रक्षिपेत् ततःदेवेशभक्तिसुलभसर्वाभरणसंयुत . यावत्त्वांपूजयिष्यामितावत्त्वंसु

स्थिरोभवेत्यादिप्राणप्रतिष्ठांकृत्वा भवानीशंकराभ्यांनमः इतिमंत्रेण अक्षतचंदनपुष्पादिभिः संपूज्य आवरणपूजांकुर्यात् तच्चअंगैः प्रथमं १ पंचमूर्त्तिशक्तिभिर्द्वितीयं २ त्रिशक्तिमूर्त्तिभिर्हरिविधिभ्यांचतृतीयं ३ अनंताद्यैश्चतुर्थं ४ मातृभिः पंचमं ५ कृष्णादिभिः षष्ठं ६ अणिमादिभिः सप्तमं ७ वज्राद्यैरष्टमं ९ ततोनीराजनांतानुपचारान्कृत्वा प्रदक्षिणीकृत्य पूजांसमाप्यविधिवत्प्रार्थयेद्गिरिजापतिं जयदेवजयाजयजयशंकरशाश्वत जयसर्वसुराध्यक्षजयसर्वसुरार्चित जयसर्वगुणातीतजयसर्ववरप्रद जयनित्यनिराधारजयाविश्वंभराठ्यय जयाविश्वैकवंद्येशजयनागेंद्रभूषण जयगौरीपतेशंभोजयचंद्रार्द्धशेखर जयकर्पूरसंकाशजयानंतगुणाकर जयरुद्रविरूपाक्षजयाचिंत्यनिरंजन जयनाथकृपासिंधोजयभक्तार्तिभंजन जयदुस्तरसंसारसागरोत्तारणप्रभो प्रसीदमेमहादेवसंसारार्तस्यखिद्यतः सर्वपापक्षयंकृत्वारक्षमांपरमेश्वर महादारिद्र्यमग्नस्यमहापापहतौजसःसह्राशोकनिविष्टस्यमहारोगातुरस्यच ऋणभारपरीतस्यदह्यमानस्यकर्मभिः ग्रहैःप्रपीड्यमानस्यप्रसीदममशंकर दरिद्रःप्रार्थयेद्देवं पूजांतेगिरिजापतिं अर्थाढ्योवापिराजावाप्रार्थयेद्देवमीश्वरं दीर्घमायुःसदारोग्यं कोशवृद्धिर्वलोन्नतिः ममास्तुनित्यमानंदः प्रसादात्तवशंकर शत्रव.संक्षयंयांतु क्षयंयांतुसदेतयः सर्वसस्यसमृद्धिश्चभूयात्सुखमयादिशः एवमाराधयेद्देवंप्रदोषेगिरिजापतिं १३ ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्चतोषयेत् सर्वपापक्षयकरी सर्वदारिद्र्यनाशिनी शिवपूजेयमाख्याता सर्वाभीष्टफलप्रदेति

इतिस्कांदेब्रह्मोत्तरखंडेप्रदोषव्रतम् ॥

अथकेदारखंडोक्तशनिप्रदोषव्रतम् देवाऊचुः गुरोकेनविधानेनकीदृशेनव्रतेनच आराधनीयोगौरीशोह्यस्माभिः

जयकामुकैः तद्वदस्वसुराचार्य त्वंहिनःपरमागतिः ॥ वृहस्पतिरुवाच ॥ कार्त्तिकेशुक्लपक्षेतुमंदवारे
त्रयोदशी कार्त्तिकेचांद्रमासेवामार्गेवा समग्रायदिलभ्येतशर्वप्राप्त्यैनसंशयः तस्यांप्रदोपसमयेतिलामलक
संयुतं शिवस्यचार्चनंकुर्य्याद्गंधपुष्पफलादिभिः पश्चात्प्रदोपवेलायांस्थावरंलिंगमर्चयेत् स्वयंभुंस्थापितं
वापिपौरुषयेमपौरुषं जनेवाविजनेवापिअरण्येवातपोवने तल्लिंगमर्चयेद्भक्त्याविधिदृष्टेनकर्मणा ग्रा
ममध्येतुयल्लिंगंस्वयंभुमपिवानघ तल्लिंगंपूजयेद्भक्त्याप्रदोपेतुविशेषतः ग्रामाद्वहिःस्थितंलिंगंग्रामाच्छतगु
णंफलं वाह्याच्छतगुणंपुण्यंलिंगमारण्यमुत्तमं वन्याच्छतगुणंपुण्यंलिंगंपार्वतमुच्यते पार्वताच्चैवलिंगाच्च फलंचा
युतसंज्ञितं तपोवनाश्रितंलिंगंपूजितंवामहाफलं काश्यादिसंस्थितंलिंगंपूजितंस्यादनंतकं तस्मादेतद्विभागे
नशिवपूजार्चनंवुधैः कर्तव्यंनिपुणत्वेनतीर्थस्नानादिकंतथा पंचपिंडाननुद्धृत्यवाप्यांस्नानंसमाचरेत् नस्नाया
त्परवारिणीत्यपिपाठः कूपस्नानंप्रकुर्वीतउद्धृतेनविशेषतः तडागेदशपिंडानामुद्धृत्यस्नानमाचरेत् ततःप्रदोपेस
मलस्नानंमौनीसमाचरेत् प्रदीपानांसहस्रेणदीपनीयः सदाशिवः तथादीपशतेनापिद्वात्रिंशद्दीपमालया घृते
नदीपयेद्दीपान्शिवस्यपरितुष्टये तथाफलैश्चदीपैश्चनैवेद्यैर्गंधधूपकैः पूज्यःप्रदोपवेलायां त्वभिःसर्वार्थसिद्धये-
प्रदक्षिणंप्रकुर्वीतशतमष्टोत्तरंतथा नमस्कारान्प्रकुर्वीततावत्संख्यान्प्रयत्नतः प्रदक्षिणनमस्कारैः पूजनीयः
सदाशिवः नाम्नांशतेनरुद्रोसौस्तवनीयोयथाविधि ॐनमोरुद्रायभीमायनीलकंठायवेधसे कपर्दिनेसुरेशा.
यव्योमकेशायवैनमः वृषध्वजायसोमायसोमनाथायवैनमः दिगंवरायभर्गायउमाकांतकपर्दिने तपोमया
यव्यासायाशिपिविष्टायवैनमःव्यालप्रियायव्यालायव्यालानांपतयेनमःमहीधरायव्याघ्रायपशूनांपतयेनमःत्रिपु
रांतकायसिंहायशार्दूलर्पभचर्मणे सितायासितनाथायसिद्धायपरमेष्ठिने कामांतकायवुद्धायवुद्धीनांपतयेनमः

कारणायाविशिष्टायाशिष्टायपरमात्मने वेदायवेदवीजायवेदगुह्यायवैनमः दीर्घायदीर्घरूपायदीर्घार्थायमहौ
जसे नमोजगत्प्रतिष्ठायव्योमरूपायवैनमः गर्भकृत्सुमहादैत्यअंधकासुरभेदिने नीललोहितशुक्लायचंडमुंड
प्रियायच भक्तिप्रियायदेवायज्ञातज्ञानाव्ययायच महेशायनमस्तुभ्यंमहादेवहरायच त्रिनेत्रायत्रिवेदाय
वेदांगायनमोनमः अर्थायअर्थरूपायचपरमार्थायवैनमः विश्वरूपायविश्वायविश्वनाथायवैनमः शंकरायचकाला
यकालावयवरूपिणे अरूपायचसूक्ष्मायसूक्ष्मसूक्ष्मायवैनमः श्मशानवासिनेतुभ्यंनमस्तेकृत्तिवाससे शशां
कशेखरायैवरुद्रभूमिशयायच दुर्गायदुर्गसारायदुर्गावयवसाक्षिणे लिंगरूपायलिंगायलिंगानांपतयेनमः
नमःप्रणवरूपायप्रणवार्थायवैनमः नमोनमःकारणकारणायमृत्युंजयायात्मभवस्वरूपिणे त्रिपंचकायशित
कंठभर्गगौरीपतेमंगलहेतवेनमः वृहस्पतिरुवाच नाम्नांशतंमहेशस्यउच्चार्यव्रतिनातदा प्रदक्षिणनमस्कारैरे
तत्संख्यैःप्रयत्नतः कार्य्याप्रदोषसमयेपूजेयंशंकरस्यच एवंव्रतंसमुद्दिष्टंतवशक्रमहामते शीघ्रंकुरुमहाभा
गपश्चाच्छुद्धिंकुरुप्रभो शंभोःप्रसादात्सर्वंतेभविष्यतिजयादिकं शक्रउवाच वृत्रःपुरामहेशानंसमाराधयदा
दरात् कथंप्रापवरंब्रह्मन्पुराकश्चाभवद्द्विज वृहस्पतिरुवाच वृत्रःस्वयंमहातेजाउग्रेणतपसापुरा शिवंप्रसा
दयामासपर्वतेगंधमादने नाम्नाचित्ररथोराजावनेचित्ररथस्यतत् एतज्जानीहिभोशक्रतवपुर्य्याःसमीपतः यस्मि
न्वनेमहाभागनसंतिमहद्द्रुमयः तस्माच्चैत्ररथंनामवनंपरममंगलं तस्यराज्ञःशिवेनैवयानंचपरमाद्भुतं कामगं
किंकिणीयुक्तंसिद्धचारणसेवितं गंधर्वैरप्सरोयक्षैःकिन्नरैरुपशोभितं ततोतेनैवयानेनपृथिवींपर्य्यटन्पुरातथा
गिरीशमुख्यांश्चद्वीपांश्चविविधांस्तथा एकदापर्य्यटन्राजानाम्नाचित्ररथोमहान् कैलासमागतस्तत्रसददर्श-
पराद्भुतं तथासभांमहेशस्यगणैश्चैवविराजितां अर्द्धांगलग्नयादेव्याशोभितंचमहेश्वरं निरीक्ष्यदेव्यासहितं

सदाशिवंन्यायान्वितंवाक्यमिदंवभाषे वयंचशंभोविषयान्विताश्चमर्त्यादयःस्त्रीविजितास्तथान्ये तेलोक-
मध्येवयमेवचाज्ञाःस्त्रीसेवनंलज्जयानैवकुर्म्मः एतद्वाक्यंनिशम्याहमहेशःप्रहसन्निव उवाचन्यायसंयुक्तंसर्वेषा
मपिशृण्वतां भयंलोकापवादाच्चसर्वेषामपिनान्यथा अशितंकालकूटंच सर्वेषामपिदुर्जरं लोकातीतंचमेवृत्तं-
तथाप्युपहसत्यसौ ततश्चित्ररथंदेवीगिरिजावाक्यमब्रवीत् उमोवाच रेदुरात्मन्कथंत्वद्यशंकरश्चोपहासितः
मयासहैवमंदात्मन्नीक्ष्यसेकर्मणःफलं साधूनाशमकामानामुपहासंकरोतियः देवोवाप्यथवामर्त्यःसविज्ञेयोधमाध
मः एतेमुनींद्राश्चमहानुभावास्तथाह्यमीयेखलुवेदगर्भाः तथैवसर्वेसनकादयोह्यमीतज्ज्ञाश्चसर्वेशिवमर्चयंति रे
मूढसर्वेषुजनेष्वतिज्ञस्त्वमेकएवाद्यनचापरेजनाः तस्मादभिज्ञंहिकरोमिदैत्यंदेवैर्द्विजैश्चापिवहिष्कृतंत्वां एवंश
प्तस्तयादेव्याभवान्याराजसत्तमः राजाचित्ररथःसद्यः पपातसहसादिवः आसुरींयोनिमासाद्यवृत्रोनामाभव
त्तदा तपसापरमेणैवत्वष्टासंयोजितःक्रमात् तपसातेनमहताअजेयोवृत्रउच्यते तस्माच्छंभुसमभ्यर्च्यप्रदो
षेविधिनामुना गुरोस्तद्वचनंश्रुत्वाउवाचाथशतक्रतुः सोद्यापनविधिंब्रूहिप्रदोषस्यचमेधुना कार्त्तिकेमासिसं
प्राप्तेमंदवारेत्रयोदशी संपूर्णायाभवेत्साहिसंपूर्णाव्रतसिद्धये वृषभोराजतःकार्य्यःपृष्टेतस्यतुपीठकं तस्यो
परिन्यसेद्देवमुमाकांतंत्रिलोचनं पंचवक्त्रंदशभुजंवामांगेगिरिजांसतीं सौवर्णीप्रतिमांकृत्वा ताम्रकुंभे
जलावृते पंचरत्नफलोपेतेपंचपल्लवचर्चिते चंदनेनसुगंधेनामिश्रितेशोभितेतथा रूप्यपात्रंततः कृत्वा
कुंभस्योपरिविन्यसेत् अशक्तौमृण्मयेकुंभेवंशपात्रमथापिवा पर्णैशरावंचास्थायसौवर्णीप्रतिमांतथा शक्त्याकृतां
परिस्थाप्यवस्त्रमाल्यविभूषितां पूजयित्वाविधानेनरात्रौजागरणंचरेत् पुष्पमंडपिकामादौकृत्वाश्रद्धासमन्वितः
एह्येहित्वमुमाकांतसुखस्पर्शेसुनिर्मले उपविश्यमृडेदानींसर्वशांतिप्रदोभव आसनं पाद्यंचतेमयादत्तंपुष्पगंध

समान्वितं गृहाणदेवदेवशप्रसीदवरदोभव पाद्यं ताम्रपात्रस्थितंतोयंफलगंधादिसंयुतंअर्घ्यंगृहाणदेवेशम
यादत्तंहिभक्तितः अर्घ्यं शीतलंनिर्मलंतोयंकर्पूरेणसुवासितं आचम्यतांमहादेव गिरिजासहितप्रभो आचमनं प
चामृतेनस्नपनं कार्य्यमादौप्रयत्नतः गोक्षीरेणचदेवेशगृहाणपरमेश्वर दध्नाचैवमहोदेवस्नपनंक्रियतेतव गृहा
णाशुमयादत्तंसुप्रसन्नोभवाव्यय सर्पिषाचमयादेवस्नपनंक्रियतेधुना गृहाणत्वसुरश्रेष्ठममचायुप्रदोभव इ
दंमधुमयादत्तंतवप्रीत्यर्थमेवच गृहाणत्वंसुरश्रेष्ठ ममचायुःप्रदोभव इदंमधुमयादत्तंतवप्रीत्यर्थमेवच गृहा
णत्वंमहादेवममशांतिप्रदोभव सितयादेवदेवेशस्नपनंक्रियतेधुना गृहाणश्रद्धयादत्तंसुप्रसन्नोभवप्रभो एवं
पंचामृतेनैवस्नापनीयोवृषध्वजः कावेरीनर्मदावेणीतुंगभद्रासरस्वती गंगाचयमुनाचैव ताभ्यःस्नानार्थमाहृतं
गृहाणत्वमुमाकांतस्नानायश्रद्धयाजलं स्नानं एतद्वासोमयादत्तंसोत्तरीयंसुशोभनं पूजार्हंश्रद्धयादत्तंतवप्री
त्यर्थमेवच यज्ञोपवीतंसौवर्णंमुक्तामणिसमन्वितं तवप्रीत्यामयादत्तंब्रह्मकर्मप्रसादनं यज्ञोपवीतं सुगंधि
चंदनंदिव्यंकुंकुमादिसमन्वितं गंधंगृहाणदेवेशसुगंधिपुष्टिवर्द्धनं गंधं अक्षताश्चसदादिव्याःकुंकुमादिभिरंजि
ताः मयादत्तामहादेवतवप्रीत्यैसुभक्तितः अक्षताः मालतीचंपकादीनिकुमुदान्युत्पलानिच विल्वपत्राणिपूजा
र्थंस्वीकुरुत्वमुमापते पुष्पाणि धूपंविशिष्टंपरमंसर्वौषधिविजृंभितं गृहाणपरमेशानममशांत्यर्थमेवच धूपं
दीपावलिंमयादत्तांगृहाणपरमेश्वर आरार्त्तिकप्रदानेनममतेजोविवर्द्धय आरार्त्तिकं शाल्योदनंघृतंपूपंपाय-
सादिसमन्वितं नैवेद्यंविधिवद्दत्तंभक्त्यामेप्रतिगृह्यतां नैवेद्यं कर्पूरैलालवंगादिपूगीफलसमन्वितं तांवूलं
कल्पितंभक्त्यागृहाणगिरिजाप्रिय तांवूलं इदंफलमितिफलं हिरण्यगर्भेतिदक्षिणा निपत्यदंडवद्भूमौप्रण
म्यचपुनःपुनः पश्चाज्जागरणंकार्यंगृहेवादेवतालये वितानंमंडपंकृत्वानानावर्णैःसमान्वित गीतवादित्रनृत्येन

अर्चनीयःसदाशिवः। प्रभातायांतुशर्वर्य्यामुदितेरविमंडले स्नात्वापुनःसमभ्यर्च्यजुहुयात्पायसेनच अथा चार्यंसपत्नीकंवस्त्रालंकारचंदनैः तोषयित्वासुविद्वांसंगांप्रदद्यात्पयस्विनीं ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणा भिःप्रतोषयेत् दीनानाथांश्चसंतर्प्यअछिद्रंवाचयेत्ततः लब्धानुज्ञांब्राह्मणेभ्यो बंधुभिःसहितःशुचिः हृदिस्मरन् शिवंभक्त्याभुंजीतनियतोव्रती अनेनैवविधानेनप्रदोषोद्यापनाविधिः कार्य्योविधिवताशक्रसर्वकार्यार्थसिद्धये गुरुणाकथितंसर्वंसचकारशतक्रतुः तेनैवचसहायेनमहेंद्रोयुद्धतत्परः वृत्रंप्रतिसुरैःसार्द्धं युयुधेसशतक्रतुः

इति केदारखंडोक्तशनिप्रदोषव्रतम्

अथनिर्णयामृतस्कंदपुराणोक्तशन्यादिवारयुक्तंप्रदोषव्रतं देव्युवाच देवकेनविधानेनप्रदोषव्रतमुत्तमंविधातव्यंन रैस्त्रीभिःसंतानफलसिद्धये ईश्वरउवाच यदात्रयोदशीशुक्लामंदवारेत्रयोदशी आरब्धव्यंव्रतंतत्रसंतानफल सिद्धये ऋणनिर्मोचनार्थंतुभौमवारेणसंयुता आयुरारोग्यसिद्ध्यर्थंभानुवारेणसंयुतेति अथास्यांप्रातः स्नात्वापुत्रा दिकामदंप्रदोषव्रतंकरिष्ये इतिसंकल्प्य गुरूपदिष्टविधिनागममंत्रैर्वेदमंत्रैर्वाषोडशोपचारैर्यथाविभवंपूजां कुर्य्यात् ततश्च भवायभवनाथायमहादेवायधीमते रुद्रायनीलकंठायशर्वायशशिमौलये उग्रायोग्रौघना शायभीमायभयहारिणे ईशानायनमस्तुभ्यंपशूनांपतयेनम इतिमंत्रेणसंपूज्य प्रार्थयेत् यथाभवान्सम स्तानांपशूनांपाशमोचकः तथाव्रतेनसंतुष्टःपुत्रंदेहिसुलक्षणं सयावकंचनैवेद्यंसाज्यंसफलशर्करं दत्त्वाथो मुखवासंचतांबूलंक्रमुकादिकं समर्थोष्टसुदिक्ष्वष्टदीपानाज्यपरिप्लुतान् भवाद्यैर्नामभिर्दद्यात्तैरेवाष्टप्रदक्षिणाः नमस्काराष्टकंकृत्वाजपंपूजांसमर्प्यच वृषराजंसमभ्यर्च्यवृषमंत्रेणमंत्रवित् मंत्रश्च धर्मस्त्वंवृषरूपेणजगदा

नंदकारक अष्टमूर्तेरधिष्टानमतः पाहिसनातनेति वृषायदूर्वांचपकंपानीयंचानिवेद्यच वृषस्यवृषणंस्पृष्ट्वाशृं
गयोर्मध्यतःशिवं विलोक्यसहितंदेव्याः पूजितंप्रार्थयेच्छिवं प्रार्थनामंत्रश्च ऋणरोगादिदारिद्र्यपापादिक्ष
यमृत्यवः भयशोकमनस्तापानश्यंतुममसर्वदेति पृथिव्यांयानितीर्थानिसागरांतानियानिच ऋडमाश्रित्यतिष्ठंति
प्रदोषेवृषभस्यतु स्पृष्ट्वातुवृषणौतस्यशृंगमध्येविलोक्यच पुच्छंचककुदंचैवसर्वपापैःप्रमुच्यतइति निवेद्यव्रत
राजंतुदद्याद्वित्तानुसारतः दक्षिणाब्राह्मणेभ्यश्चततोमौनंविसर्जयेत् एवंसंवत्सरंकुर्यात्त्रयोदश्यामिदंव्रतं अथ
वामंदवारेणयुक्तामेवत्रयोदशीं चतुर्विंशतिकुर्वीतसोभीष्टफलमाप्नुयादिति स्कंदपुराणोक्तंशनिप्रदोषव्रतम्
ब्रह्मोत्तरखंडेतु सोमवारेणयुक्तायामपियस्यांकस्यांचित्त्रयोदश्यांप्रदोषादौशिवपूजोक्ता सोमवारेविशेषेणप्र
दोषादिगुणैर्युतं केवलंवापियेकुर्युः सोमवारेशिवार्चनमिति अथनृसिंहपुराणोक्तंनृसिंहत्रयोदशीव्रतं हेमाद्रौ
गुरुवारेत्रयोदश्यामपराह्णेजलाप्लुतः तर्पयित्वादेवापितॄन्ऋषींश्चतिलतंडुलैः नरसिंहंसमभ्यर्च्य यःकरोत्युपवासकं
सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ॥ इतिनृसिंहपुराणोक्तंनृसिंहत्रयोदशीव्रतम्

अथकूर्मपुराणोक्तंत्रिलोचनत्रयोदशीव्रतम् हेमाद्रौ

त्रयोदश्यांतथारात्रौसोपवासस्त्रिलोचनं दृष्ट्वातुप्रथमेयामेमुच्यतेसर्वपातकैरिति ॥ अथकामत्रयोदशीव्रतं हेमा
द्रौ ब्रह्मोवाच कामंपूज्यत्रयोदश्यांसुरूपोजायतेनरः इष्टांरूपवतींभार्यांलभेन्कामांश्चपुष्कलान् मूलमंत्राः
स्वसंज्ञाभिरंगमंत्राश्चकीर्तिताः पूर्ववत्पद्मपत्रस्थः कर्तव्यश्चतिथीश्वरः गंधपुष्पोपहारैश्च यथाशक्तिविधीयते
पूजातुवित्तशाठ्येनकृतापिनफलप्रदा आज्यधारासमिद्भिश्चदधिक्षीरान्नमाक्षिकैः पूर्वोक्तफलदोहोमः कृतः

शांतेनचेतसा इतिभविष्योत्तरेकामत्रयोदशीव्रतं अथवाराहपुराणोक्तमहाबुधसंज्ञत्रयोदशीव्रतम् ॥ सनत्कुमारउवाच अथस्वस्त्ययनंपुंसांशृण्वतामघनाशनं व्रतमेतत्त्रयोदश्यांप्रदोषेस्यान्महाबुधे नवनीतंपंचगव्यंरजतांशसमप्रभं कपित्थफलमात्रंतत्समादाय ताम्रादिपात्रेप्राङ्मुखोनिक्षिप्य अष्टदलपद्मकर्णिकायां लक्ष्मीनारायणंदलेष्वष्टशक्तीः दिक्ष्विंद्रादीन्संपूज्यदेवाग्रेतन्नवनीतंद्विधाविभज्य प्रत्येकमभिमंत्रयेत् तत्रमंत्रः पुरुषःपूर्णकामश्च हरिर्भद्रंकरोतुनः योपिद्द्वारासदालक्ष्मीर्मंगलंदिशतुस्वयमितिवारद्वयं पत्न्यैप्राशयतीमाभिमंत्रयेत् यस्त्वंतरात्माभूतानामनादिनिधनोच्युतः सपरःपरयाशक्त्याकुक्षिंरक्षतुमेसदा सर्वपुष्टिप्रजननीसर्वार्त्तिशमनीतव लक्ष्मीःकुक्षिगतंगर्भंरक्षतादच्युतप्रिया सर्वार्त्तिक्षयदक्षादिदिव्यशक्तियुतान्यपि त्वांरक्षंतुसदाविष्णोः सर्वग्रहहरणान्यपि तथादिक्पतयः सर्वेरक्षंतुग्रहदेवताः पांतुसंसारसंयुक्ताः सर्वेरक्षंतुसर्वदेति पत्नीमभिमंत्र्य ब्राह्मणान्भोजयित्वा बध्वासहतांरात्रिमतिवाह्य चतुर्दश्यांपुनर्द्विजान् भोजयित्वा स्वयंभुंजीतेतितत्फलं मंगल्यपरमप्राप्त्यैदीर्घमायुर्ध्यविंदतीत्यंतेनतत्रैवोक्तम् ॥ इतिवाराहपुराणोक्तंपुत्रप्राप्तित्रयोदशीव्रतं अथसौरपुराणोक्तंशिवत्रयोदशीव्रतं व्यासउवाच मंदवारयुतापुण्याशुक्लपक्षेत्रयोदशी तस्यामुपोष्यविधिनासंपूज्यगिरिजापतिम् ब्रह्महत्यादिभिःपापैर्मुक्तोभवतिमानवइति ॥ इतिशुक्लत्रयोदश्यांशनित्रयोदशीव्रतम् ॥ अथमार्गशीर्षादिमासत्रयोदश्यांवर्षसाध्यं यमादर्शनव्रतं यमउवाच पूर्वाह्णेमार्गशीर्षादौवर्षमेकंनिरंतरं त्रयोदश्यांसौम्यदिनेआर्क्यंगारवर्जिते समनास्माद्द्विजानष्टौपंचचैवसमाह्वयेत् पुराणवेदतत्त्वज्ञान्स्वाचारांस्तत्त्वदर्शिनः सर्वैकशरणान्साधून्सर्वभूतहितेरतान् शुचौदेशेशुभेपट्टेप्राङ्मुखानुपवेशयेत् अंतर्वासोयुतान्भक्त्यायत्नेनाभ्यंजयेच्चतान् अंतर्वासोयुतान्सर्वानधोवस्त्रमात्रयुतान् आरभ्यउत्तमां

नंदकारक अष्टमूर्त्तेरधिष्ठानमतः पाहिसनातनेति वृषायदूर्वाचपकंपानीयंचानिवेद्यच वृषस्यवृषणंस्पृष्ट्वाश्रृं गयोर्मध्यतःशिवं विलोक्यसहितंदेव्याः पूजितंप्रार्थयेच्छिवं प्रार्थनामंत्रश्च ऋणरोगादिदारिद्र्यपापादिक्ष पमृत्यवः भयशोकमनस्तापानश्यंतुममसर्वदेति पृथिव्यांयानितीर्थानिसागरांतानियानिच श्रेडमाश्रित्यतिष्ठंति प्रदोषेवृषभस्यतु स्पृष्ट्वानुवृषणौतस्यश्रृंगमध्येविलोक्यच पुच्छंचककुदंचैवसर्वपापैःप्रमुच्यतइति निवेद्यव्रत राजंतुदद्याद्वित्तानुसारतः दक्षिणाब्राह्मणेभ्यश्चततोमौनंविसर्जयेत् एवंसंवत्सरंकुर्यात्त्रयोदश्यामिदंव्रतं अथ वामंदवारेणयुक्तामेवत्रयोदशीं चतुर्विंशतिकुर्वीतसोभीष्टफलमाप्नुयादिति स्कंदपुराणोक्तंशनिप्रदोषव्रतम् ब्रह्मोत्तरखंडेतु सोमवारेणयुक्तायामपियस्यांकस्यांचित्त्रयोदश्यांप्रदोषादौशिवपूजोक्ता सोमवारेविशेषेणप्र दोषादिगुणैर्युतं केवलंवापियेकुर्युः सोमवारेशिवार्चनमिति अथनृसिंहपुराणोक्तंनृसिंहत्रयोदशीव्रतं हेमाद्रौ गुरुवारेत्रयोदश्यामपराह्णेजलाप्लुतः तर्पयित्वादेवपितॄन्पितृंश्चतिलतंडुलैः नरसिंहंसमभ्यर्च्य यःकरोत्युपवासकं सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ॥ इतिनृसिंहपुराणोक्तंनृसिंहत्रयोदशीव्रतम्

## अथकूर्मपुराणोक्तंत्रिलोचनत्रयोदशीव्रतम् हेमाद्रौ

त्रयोदश्यांतथारात्रौसोपवासस्त्रिलोचनं दृष्ट्वातुप्रथमेयामेमुच्यतेसर्वपातकैरिति ॥ अथकामत्रयोदशीव्रतं हेमा द्रौ ब्रह्मोवाच कामंपूज्यत्रयोदश्यांसुरूपोजायतेनरः इष्टांरूपवतींभार्यांलभेन्कामांश्चपुष्कलान् मूलमंत्राः स्वसंज्ञाभिरंगमंत्राश्चकीर्तिताः पूर्ववत्पद्मपत्रस्थः कर्त्तव्यश्चातिथीश्वरः गंधपुष्पोपहारैश्च यथाशक्तिविधीयते पूजातुवित्तशाठ्येनकृतापिनफलप्रदा आज्यधारासमिद्भिश्चदधिक्षीरान्नमाक्षिकैः पूर्वोक्तफलदोहोमः कृत.

शांतेनचेतसा इतिभविष्योत्तरेकामत्रयोदशीव्रतं अथवाराहपुराणोक्तमहाबुधसंज्ञत्रयोदशीव्रतम् ॥ सन
त्कुमारउवाच अथस्वस्त्ययनंपुंसांशृण्वतामघनाशनं व्रतमेतत्त्रयोदश्यांप्रदोषेस्यान्महाबुधे नवनीतंपं
चगव्यंरजतांशसमप्रभं कपित्थफलमात्रंतत्समादाय ताम्रादिपात्रेप्राङ्मुखोनिक्षिप्य अष्टदलपद्मकर्णिकायां
लक्ष्मीनारायणंदलेष्वष्टशक्तीः दिक्ष्विंद्रादीन्संपूज्यदेवाग्रेतन्नवनीतंद्विधाविभज्य प्रत्येकमभिमंत्रयेत् तत्रमंत्रः
पुरुषःपूर्णकामश्च हरिर्भद्रंकरोतुनः योपिद्वारासदालक्ष्मीर्मंगलंदिशतुस्वयामितिवारद्वयं पत्न्यैप्राशयतीमाभिमं
त्रयेत् यस्त्वंतरात्माभूतानामनादिनिधनोच्युतः सपरःपरयाशक्त्याकुक्षिंरक्षतुमेसदा सर्वपुष्टिप्रजननीसर्वा
र्त्तिशमनीतव लक्ष्मीःकुक्षिगतंगर्भंरक्षतादच्युतप्रिया सर्वार्त्तिक्षयदक्षादिदिव्यशक्तियुतान्यपि त्वांरक्षंतुसदा
विष्णोः सर्वग्रहरणान्यपि तथादिक्पतयः सर्वेरक्षंतुग्रहदेवताः पांतुसंसारसंयुक्ताः सर्वेरक्षंतुसर्वदेति पत्नी
मभिमंत्र्य ब्राह्मणान्भोजयित्वा वध्वासहतांरात्रिमतिवाह्य चतुर्दश्यांपुनर्द्विजान् भोजयित्वा स्वयंभुंजीते
तितत्फलं मंगल्यपरमप्राप्त्यैदीर्घमायुर्ष्यंविंदतीत्यंतेनतत्रैवोक्तम् ॥ इतिवाराहपुराणोक्तपुत्रप्राप्तित्र
योदशीव्रतं अथसौरपुराणोक्तशिवत्रयोदशीव्रतं व्यासउवाच मंदवारयुतापुण्याशुक्लपक्षेत्रयोदशी तस्या
मुपोष्यविधिनासंपूज्यगिरिजापतिम् ब्रह्महत्यादिभिःपापैर्मुक्तोभवतिमानवइति ॥ इतिशुक्लत्रयोदश्यां
शनित्रयोदशीव्रतम् ॥ अथमार्गशीर्षादिमासत्रयोदश्यांवर्षसाध्यं यमादर्शनव्रतं यमउवाच पूर्वाह्णेमार्ग
शीर्षादौवर्षमेकंनिरंतरं त्रयोदश्यांसौम्यदिनेआर्क्यंगारवर्जिते ममनाम्नाद्विजानष्टौपंचचैवसमाह्वयेत्
पुराणवेदतत्त्वज्ञान्स्वाचारांस्तत्त्वदर्शिनः सर्वैकशरणान्साधून्सर्वभूतहितेरतान् शुचौदेशेशुभेपट्टेप्राङ्मुखानुपवे
शयेत् अंतर्वासोयुतान्भक्त्यायत्नेनाभ्यंजयेच्चतान् अंतर्वासोयुतान्सर्वानधोवस्त्रमात्रयुतान् आरभ्यउत्तमां

गनुतिलतैलेनमर्दयेत् . स्नापयेद्गंधकाषायैः सुखोष्णेनचवारिणा पृथक्पृथक्स्नापयित्वासर्वानेवाद्विजोत्तमा न् . सुखस्नातांस्तथाचांतान्व्रतीभक्तिपरायणः सपुत्रभृत्यःशुश्रूषांतेषांकुर्य्यात्समाहितः प्राङ्मुखानुपविष्टांश्चत्रयोदशपृथक्पृथक् संस्थापयेच्चाभिमुखान्गुडापूपांसुयाचितान् सव्यंजनंसपक्वान्नंभूयोभूयोनिवेदयेत् यथा सुखंयथातृप्तियथाकाममयार्चितं दैव्यंभावंसमालक्ष्यइच्छद्भिःश्रेयआत्मनः शुचिर्भूत्वातथाचांतानर्चयेत्तिलतंडलैःप्रस्थमात्रैस्थैकैकंताम्रपात्रसमन्वितंसदक्षिणैःसछत्रैश्चजलकुंभैः पवित्रकैःचर्मप्रावरणैःश्रेष्ठैर्वस्त्रयुग्मैश्चदूतकाः मंत्रेणानेनविप्रेंद्रानर्चयेमान्पृथक्पृथक् ब्राह्मणान्समभ्यर्च्यस्तान्पंक्तिभेदंनकारयेत् यमः शनैश्चरोमृत्युर्दंडहस्तोघनायकः अभावःप्रलयःशांतिर्दुःखप्रशमनोंतकः लोकपालोश्विनीपुत्रस्तथाक्रूराननःशिवः ममप्रसादसुमुखोददात्वभयदक्षिणां इत्युक्तासंप्रयच्छेतदेयंदत्वाव्रतीपुनः द्विजांश्चानुव्रजेत्प्राप्रान्स्वगृहंविधिनार्चितान् एवंयः पुरुषःकश्चित्सकृद्व्रतमिदंचरेत् समृतोनेक्षतेदूतान्नयातियममंदिरं अदृष्टोसौसमायातिविमानेनार्कमंडलम् . तस्माद्यातिपुरींविष्णोस्ततःशिवपुरंव्रजेत्

इतिभविष्योत्तरोक्तंयमादर्शनत्रयोदशीव्रतम् ॥

अथमार्गशीर्षशुक्लचतुर्दश्यामारभ्य मत्स्यपुराणोक्तशिवचतुर्दशीव्रतं नंदिकेश्वरउवाच शृणुष्वावहितो ब्रह्मन्वक्ष्येमाहेश्वरंव्रतम् त्रिषुलोकेषुविख्यातंनाम्नाशिवचतुर्दशी मार्गशीर्षेत्रयोदश्यांसितायामेकभोजनम् प्रार्थयेद्देवदेवेशत्वामहंशरणंगतः मार्गशीर्षश्चात्रप्रतिपदादिरमावास्यांतश्चांद्रोमासः चतुर्दश्यांनिराहारःसमभ्यर्च्यतुशंकरम् सुवर्णवृषभंदत्वाभोक्ष्येहंचापरेहनि एवंनियमकृत्सुप्त्वाप्रातरुत्थायमानवः कृतस्नानजपः

पश्चादुमयासहशंकरम् पूजयेत्कमलैःशुक्लैर्गंधधूपानुलेपनैः पादौनमःशिवायेतिशिवःसर्वात्मनेनमः ललाटंतुत्रिने त्रायनेत्राणिहरयेनमः मुखमिंदुमुखायेतिश्रीकंठायेतिकंधराम् सद्योजातायकर्णौतुवामदेवायवैभुजौ अघो रंहृदयायेतिहृदयंचापिपूजयेत् स्तनौतत्पुरुषायेतिईशानायतथोदरम् पार्श्वेचानंतधर्म्मायज्ञानभूतायवैकटिम् ऊरू चामुत्रवैराग्यासिंहायेतिप्रपूजयेत् अनंतैश्वर्यनाथायजानुनीचार्चयेद्बुधः प्रधानायनमोजंघेगुल्फौव्योमात्मनेनमः व्युप्तकेशात्मरूपायपृष्ठमभ्यर्चयेन्नरः नमःपुष्ट्यैनमस्तुष्ट्यैपार्वतींचापिपूजयेत् ततस्तुवृषभंहैममुदकुंभसमन्वितं शुक्ल माल्यांबरधरंपंचरत्नसमन्वितं भक्ष्यैर्नानाविधैर्युक्तंब्राह्मणायनिवेदयेत् प्रीयतांदेवदेवोत्रसद्योजातःपिनाकधृक् ततस्तुविप्रानन्नेनतर्पयेच्छक्तितःशुभान् पृषदाज्यंतुसंप्राश्यस्वपेद्भूमावुदङ्मुखः पंचदश्यांततःपूज्यविप्रान्भुं जीतवाग्यतः तद्वत्कृष्णचतुर्दश्यामेतत्सर्वंसमाचरेत् चतुर्दशीषुसर्वासुकुर्यात्पूर्ववदर्चनं येतुमासविशेषाःस्यु स्तान्निबोधक्रमादिह मार्गशीर्षादिमासेषुक्रमादेतदुदीरयेत् शंकरायनमस्तुभ्यंनमस्तेकरवीरक त्र्यंबकायनम स्तेस्तुमहेश्वरततः परं नमस्तेस्तुमहादेवस्थाणवेचततः परं नमःपशुपतेनाथनमस्तेशंभवेपुनः नमस्तेपर मानंदनमःसोमार्धधारिणे नमोभीमायइत्येवंत्वामहंशरणंगतः गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकं पंचग व्यंबिल्वपत्रंयवागोशृंगवारिच तिलाश्चकृष्णाविधिवत्प्राशनंक्रमशःस्मृतं प्रतिमासंचतुर्दश्योरेकैकंप्राशनंस्मृतं मन्दारैर्मालतीभिश्चतथाधत्तूरकैरपि सिंदुवारैरशोकैश्च मल्लिकाभिःसपाटलैः अर्कपुष्पैःकदंबैश्चशतपत्रैस्तथो त्पलैः एकैकेनचतुर्दश्योरर्चयेत्पार्वतीपतिं मार्गशीर्षादिमासेष्वित्यतद्गुणसंविज्ञानोबहुव्रीहिःतेनमार्गशीर्षेसद्योजा तःप्रीयतामितिसद्योजातस्योदीरणात्पौषादिष्वेकादशसुशंकरादीनुदीरयेत् पृषदाज्यस्यमार्गशीर्षेप्राशनाद्गोमूत्रा दयःपौषादिषुप्राशनीया मार्गशीर्षेश्वेतकमलैः पूजाविधानान्मंदाराद्यैः पौषादिषुपूजाकार्येत्यर्थः पुनश्चकार्ति-

केन.मिमंत्रतेतर्पयेद्द्विजान् अन्नैर्नानाविधैर्भक्ष्यैर्वस्त्रमाल्यविभूषणैः कृत्वानीलवृषोत्सर्गंश्रुत्युक्ताविधिनानरः
उमामहेश्वरंहैमंवृषभंचगवासह मुक्ताफलाष्टकयुतंसितनेत्रपटान्वितं नेत्रपटःतेनइतिप्रसिद्धः ताम्रपात्रोप
रिपुनःशालितंडुलसंयुतं प्राप्यविप्रायशांतायदेवव्रतपरायवे ज्येष्ठसामविदेदेयनचकुव्रतिनेकाचित् गुणज्ञे-
श्रोत्रियेदद्यादाचार्येतत्त्ववेदिनि अव्यंगांगायसौम्यायसदाकल्याणकारिणे सपत्नीकायसंपूज्यमाल्यवस्त्रवि
भूषणैः गुरोर्भातिगुरोर्देयंतदभावेद्विजातये नवित्तशाठ्यंकुर्वीतकुर्वन्दोपान्यतत्परः सर्वोपस्करसंयुक्तांशय्यां
दद्यात्सकुंभिकां अनेनविधिनायस्तुकुर्याच्छिवचतुर्दशीं सोश्वमेधसहस्रस्यफलमाप्नोतिमानवः ब्रह्महत्या-
दिकंकिंचिद्यदत्रामुत्रवाकृत पितृभिर्भ्रातृभिर्वापितत्सर्वंनाशमाप्नुयात् ॥ दीर्घायुरारोग्यकुलाभिवृद्धिरत्रासुयामु
त्रचतुर्भुजत्वं गणाधिपत्यंदिविकल्पकोटि शतंवसित्वापदमेतिशंभोः॥ नबृहस्पतिरप्यनंतमस्याः फलमिंद्रोनपि-
तामहोपिवक्तुं नचसिद्धगणोप्यलंनचाहंयदिजिह्वायुतकोटयोपिवक्त्रे ॥ भवत्यमरवल्लभः पठतियःस्मरेद्वायदा-
शृणोत्यपिविमत्सरःसकलपापनिर्मोचनीं इमांशिवचतुर्दशीममरकामिनीकोटयःस्तुवंतिममनिंदिताकिमुसमाचरे-
द्यःसदा ॥ यावाथनारीकुरुतेचभक्त्याभर्तारमापृच्छ्यगुरुंसुतंवा- सापिप्रसादात्परमेश्वरस्यपरंपदंयातिपिनाक-
पाणेः ॥ इतिशिवचतुर्दशीव्रतं ॥ ० ॥ नारदीये मार्गशुक्लचतुर्दश्यामेकभक्तंपुरोदितं निराहारोवृषंस्वर्णंप्राच्यद-
द्याद्द्विजातये परेह्निप्रातरुत्थायस्नात्वासोमंमहेश्वरं पूजयेत्कमलैःशुक्लैर्गंधमाल्यानुलेपनैः द्विजान्संभोज्यमिष्टा-
न्नैस्तोषयेद्दक्षिणादिभिः एतच्छिवव्रतंविप्रभुक्तिमुक्तिप्रदायकं कल्दणामुपदेष्टृणांसार्थानामनुमोदिनां अस्यांमा-
र्गशुक्लचतुर्दश्यांपिशाचमोचनतीर्थेश्राद्धमुक्तं त्रिस्थलीसेतौ साचापराह्णव्यापिनीग्राह्या अज्ञातानामपि-
पिशाचादुद्देशत्वादेकोदिष्टत्वाच्चमध्याह्नव्यापिनीतियाकुलधर्मं व्रतादावुक्तंरेवेतिकाशीखंडेपि मार्गशुक्लचतुर्दश्यां

कपर्दीश्वरसन्निधौ स्नात्वान्यत्रापिमरणान्नैशाच्यमवाप्नुयुः इमांसांवत्सरींयात्रां येकरिष्यंतिमानवाः
तीर्थप्रतिग्रहात्पापान्निस्तरिष्यंतितेनराइति अथमार्गपौर्णमास्यांलवणाटकदानमुक्तं नारदीये. मार्गशीर्ष्यां
पौर्णमास्यांस्वर्णाढ्यलवणाढकं देयाविप्रायशांतायसर्वकामसमृद्धयइति अस्यांचंद्रपूजोक्ता निर्णयामृते ॥ ब्रह्म
पुराणे मार्गशीर्षेतिथिप्रक्रमे वामनेत्रहिर्यद्विष्णोस्तदेवभुवनत्रये अनसूयायतश्चंद्रममृतेनाभ्यषेचयत् पौर्णमा
स्यांचतस्यांतंपूजयेत्तत्रसर्वदा शुक्लैपुष्पैश्चपयसा स्नापयेत्परयामुदा रत्नदीपैश्चबलिभिर्होमैर्ब्राह्मणतर्पणैः
गोभ्यश्चलवणंदेयंतस्मिन्नहनिसर्वदा यतश्चलवणंचंद्राद्दक्षशापाद्विनिस्सृतं मातास्वसाचदुहितापूज्याश्चस्व
कुलांगनाःकांतिर्लक्ष्मीश्चकल्याणंपूर्णेंदोःपूजनाद्भवेदिति अस्यामेवमृगशिरोनक्षत्रयुक्तायांससुवर्णलवणंदेयं-तदु
क्तंविष्णुना मार्गशीर्षेशुक्लपंचदश्यांमृगशिरोयुक्तायांलवणस्यसुवर्णनाभंप्रस्थमेकचंद्रोदये ब्राह्मणायप्रतिपादयेत्
अनेनकर्मणासौभाग्यभागभिजायते अस्यांदत्तात्रेयोत्पत्तिः स्कांदे सह्यखंडे मार्गशीर्षेतथामासिदशमेह्निसुनिर्मले
मृगशीर्षेयुतेपौर्णमास्यांज्ञस्यचवासरे।ज्ञस्यवासरेबुधवासरे। जनयामासदेदीप्यमानंपुत्रंसतीशुभं तंविष्णुमागतं
ज्ञात्वात्रिर्नामाकरोत्स्वयं दत्तवान्स्वस्यपुत्रत्वाद्दत्तात्रेयमितीश्वरमिति दशमेमासीत्यन्वयः इयंपूर्वविद्धाग्राह्येति
वदंतिप्रदोषव्यापिनीतिनिर्णयसिंधौ अस्यामेवचंद्रव्रतारंभःकार्यः तदुक्तंहेमाद्रौविष्णुधर्मोत्तरे मार्गशीर्षाद्यथा
रभ्यचंद्रमंडलकेनरः सोपवासःपौर्णमास्यांपूज्ययज्ञफलंलभेत् नक्ताशनस्तुसंपूज्यचाग्निष्टोमफलंलभेत् कृत्वात्र
तंवत्सरमेतदिष्टंप्राप्नोतिलोकांश्चनिशाकरस्य तत्रोष्यलोकेसुचिरंसकालंसायुज्यमायातिततस्तुशंभोरिति अ
स्यांप्रत्यवरोहणंकार्यं तदुक्तमाश्वलायनेन मार्गशीर्ष्यांप्रत्यवरोहणं चतुर्दश्यांपौर्णमास्यांवेति अत्रश्राद्ध
मुक्तमिति यत्तुविष्णुः मार्गशीर्षेचपौषेचमाघेप्रोष्ठेचफाल्गुने कृष्णपक्षेषुसर्वेषुचात्वष्टक्यस्तथाष्टकेति पौषमासा

दिपुत्रिण्विति तच्चतुर्थी अनावश्यकत्वार्थंचाप्यन्याचतुर्थीस्यात्तांचकुर्य्यात्प्रयत्नतइति वायुब्रह्मांडपुराणात् श्रा द्धमेतत्त्वकुर्वाणोनरकंप्रतिपद्यत इतिप्रत्यवायश्रवणात् अथास्यांमार्गपौर्णिमास्यामाग्नेयपुराणदानमुक्तंनारदीये एतदाग्नेयकंनामपुराणंपरिकीर्तितं तल्लिखित्वाचयोदद्यात्सुवर्णकमलान्वितं तिलधेनुयुतंवापिमार्गशीर्ष्यांवि धानतः पुराणार्थविदेसोथस्वर्गलोकेमहीयते इतितिलधेनुसहिताग्नेयपुराणदानविधिः ॥ अथव्रतिशीपौर्णिमो च्यते साच मार्गशीर्षसितपक्षेपौर्णिमास्यांशुचिव्रता प्रातःशुक्लतिलैःस्नात्वापरिधायांबरंसती पूजासंभारमासा द्यपिष्टदीपंविधायच पुत्रसौभाग्यप्राप्त्यर्थंमध्याह्नेपूजयेच्छिवं साचमार्गशीर्षपौर्णिमामध्याह्नव्यापिनीग्राह्याति थ्यादिसंकीर्त्यममेहजन्मनिजन्मांतरेच अखंडसौभाग्यपुत्रपौत्रप्राप्त्यर्थंव्रतिशीपौर्णिमाव्रतंकरिष्ये तत्रनिर्विघ्नता सिद्ध्यर्थंगणपतिपूजनंकलशाराधनंचकरिष्ये पंचवक्त्रंत्रिनेत्रंचजटाखंडेंदुमंडितं व्यालयज्ञोपवीतंचभक्तानांवरदाशि व आगच्छभगवन्शंभोसर्वालंकारभूषित यावद्व्रतंसमाप्येततावत्त्वंसन्निधौभव आवाहनं सिंहासनंस्वर्णपीठंनाना रत्नोपशोभितं अनेकशक्तिसंयुक्तमासनंप्रतिगृह्यतां आसनं ॥ त्रिपुरांतकदेवेशसृष्टिसंहारकारक पाद्यंगृहाणदेवे शमयादत्तंहिभक्तितः। पाद्यं। चंदनाक्षतसंयुक्तंनानापुष्पसमन्वितं गृहाणार्घ्यंमयादत्तमीश्वरप्रतिगृह्यतां ॥ अर्घ्यं। तोयमेतत्सुखस्पर्शंकर्पूरेणसमन्वितं शंभोशंकरसर्वेशगृहाणाचमनीयकं। आचमनं। पयोदधिघृतंचैवमधुशर्करया युतं पंचामृतेनस्नपनंकरिष्येभक्तवत्सल ॥ पंचामृतस्नानं ॥ मयानीतानितोयानिगंगादीनांचहैमजैः स्नानंतैः कुरु देवेशममशांतिर्विधीयतां। स्नानं। श्वेतांबर युगंदेवसर्वकामार्थसिद्धये अंबिकाकांतदेवेशमयादत्तंप्रगृह्यतां वस्त्रं कुंकुमाक्तंसुरश्रेष्ठक्षौमसूत्रविनिर्मितं उपवीतंमयादेवभक्त्यादत्तंप्रगृह्यतां ॥ उपवीतं ॥ काश्मीरजेनसंयुक्तंकर्पूरागुरु मिश्रितं कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यतां ॥ चंदनं ॥ प्रक्षालिताश्चधौताश्चतंडुलाश्चशिवप्रियाः मयानिवे·

दिताभक्त्यागृहाणजगदीश्वर अक्षताः कमलैर्मालतीपुष्पैश्चंपकैर्जातिसंभवैः विल्वपत्रैर्महादेवकरिष्येतवपू
जनं पुष्पाणि दशांगोगुग्गुलूद्भूतःसुगंधिश्चमनोहरः आघ्रेयतामयंधूपोदेवदेवदयानिधे धूपं कार्पासवर्तिभि
र्युक्तंघृताक्तंतिमिरापहं भक्त्यासमाहृतंदीपंमयादत्तंप्रगृह्यतां दीपं नैवेद्यंगृह्यतांदेवभाक्तिंमेह्यचलांकुरु ईप्सि
तंचवरंदेहिपरत्रचपरांगतिं नैवेद्यं नैवेद्यमध्येयानिपंचवक्त्रध्यानानितानिपठनीयानि उत्तरापोशानं हस्त
प्रक्षालनं पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं इदंफलंमयादेव
फलं वक्ष्यमाणपोडशनामभिः पूजयेत् शंकरायात्रिनेत्रायकालरूपायशंभवे महादेवायरुद्रायशर्वायचमृडायच
ईश्वरायशिवायेतिभूतेशायकपर्दिने मृत्युंजयायचोग्रायाशितिकंठायशूलिने दूर्वा तेजोयंयंसलक्ष्मीकंदेवान्
मपिदुर्लभं हिरण्यंपार्वतीनाथमयादत्तंप्रगृह्यतां दक्षिणा. प्रसीददेवदेवेशचराचरजगद्गुरो वृषध्वजमहादेव
त्रिनेत्रायनमोनमः नीराजनं यानिकानिचपापानीतिप्रदक्षिणाः इमानिविल्वपत्राणिपुष्पाणिविविधानिच
मयादत्तानिविश्वेशगृहाणवरदोभव पुष्पांजलिः नमोस्त्वनंतायसहस्रमूर्तयइतिनमस्काराः भवायभवनाशा
यमहादेवायधीमते रुद्रायनीलकंठायशर्वायचनमोनमः ईशानायनमस्तुभ्यंपशूनांपतयेनमः गुणत्रयात्मनेतु
भ्यंगुणातीतायतेनमः नमःप्रसीददेवेशसर्वकामांश्चदेहिमे त्वमेवशरणंनाथक्षमस्वमयिशंकर प्रार्थना
उपायनमिदंतुभ्यंव्रतसंपूर्णहेतवे वाणकद्विजवर्यायसहिरण्यंददाम्यहं वायनं अस्यव्रतस्यासिध्यर्थंहि
रण्यंपापनाशनं ददामितुभ्यंविप्रेंद्रप्रणतोस्मिप्रगृह्यतां दक्षिणां महात्मन्गच्छकैलासंवृषारूढोगणैर्युत आ
हूतस्तत्क्षमस्वत्वंप्रसादसुमुखोभव विसर्जनं इतिपूजाविधिः अथकथा यशोदोवाच कृष्णत्वंसर्वदेवा
नांस्थितिसंहारकारकः अवैधव्यकरंस्त्रीणांयथार्थंवदतद्व्रतं श्रीकृष्णउवाच यशोदेसाधुपृष्टोहंसौभाग्यप्र

सर्वेस्त्रियः वतिशीनामविख्यातंपौर्णमास्यांव्रतंभवेत् तद्व्रतस्यप्रभावेनस्त्रीणांसौभाग्यदंभवेत् अवैधव्यकरं
नामशिवप्रीतिकरंमहत् यशोदोवाच केनचीर्णंव्रतमिदम्मृत्युलोकेकदावद विधानंकीदृशंदेवयेनशंभुःप्रसीद
ति श्रीकृष्णउवाच कांतिकानामनगरीप्रसिद्धाभुविमंडले अनेकरत्नसंपूर्णाचंद्रहासेनपालिता तत्रैवासीद्द्विजः
कश्चिद्धनेश्वरेतिनामतः तस्यभार्याशुभाचारानाम्नारूपवतीसती अनपत्यौमहाभागावुभौतौदुःखितौसदा तन्न
गर्यांद्विजःकश्चियोगारूढोद्विजोजटी भिक्षांचकारसर्वज्ञस्तद्गृहंचाप्यवर्जयत् तद्गृहेनैवभिक्षांसरूपवत्यासम
र्पितां ययौतडागतीरंसाभिक्षांप्रक्षालयत्पुनः धनेश्वरेणतद्दृष्टंयोगिनायत्कृतंशुभं भिक्षांगृह्णासिसर्वेषांगृह
स्थानांद्विजोत्तम कदापिमद्गृहेविप्रानायासिवदकारणं योग्युवाच अपुत्रस्यगृहस्थस्ययदन्नमुपभुज्यते पतितान्न
समंतत्तुनभोक्तव्यंकदाचन धनेश्वरेणश्रुत्वैतदात्मानंगर्हयन्बहु धनधान्यसमृद्धिश्चपुत्रहीनस्त्वहंप्रभो इत्युक्तोसौ
जटीप्राहगच्छाराधयचंडिकां तस्यतद्वचनंश्रुत्वागेहेभार्यांनिवेद्यच तपसेनिर्जगामासौचंडयाराधनमाचरत् उपवा
सैःषोडशभिःस्वप्नेचैवाहचंडिका भोधनेश्वरगच्छत्वंतवपुत्रोभविष्यति स्वसामर्थ्यवशाद्दयादीपावैपिष्टसंभवाएकै
कवृद्ध्यादातव्याःषोडशद्वयपूर्णिमाः इदंव्रतंस्वपत्न्यैत्वंकथयस्वयथास्थितं आरुरोहाशुचाम्रत्वंफलमादायसत्वर
स्वगृहंगच्छभार्यायैदेहिगर्भोभविष्यति ततःप्रभातसमयेसहकारमपश्यत आरोढुंनैवशक्तःसाचिंताव्याकु
लमानसःस्तुतिंचक्रेगणेशस्यकृपांकुरुदयानिधे मनोरथोममैवास्तुत्वत्प्रसादाद्दयानिधे इत्युक्त्वाचततःशी
घ्रंफलमादायवेगतः त्रिवारमावृतिंकृत्वाफलमेकंददर्शसः वराल्लब्धंतदेवासीन्नान्यत्स्यादर्थनिश्चयः आग
त्यकथितंतच्चभार्यायैदत्तवान्फलं यदातदारूपवत्याभक्षितगर्भमादधे तदादेव्याःप्रसादेन रूपौदार्यगुणा
न्वितः तस्यास्तदाभवत्पुत्रो देविदासेतिनामतः व्रतबंधंततश्चक्रे विवाहंनकरोतिसः मात्राचाग्रहतः

पृष्ठरसोवदत्सर्वंचेष्टितं ततस्तुदैवयोगेनकाश्यांनेयोमयाशिशुः इतिबुद्धिस्तदाजातापितुस्तस्यमहात्मनःतंप्रेपय
त्सहाश्वेनमातुलेनसहैवच कियंतिसमतीतानिदिनानिपथिगच्छतोः गच्छन्काशीपुरींप्राप्तोभागिनेयेनसंवृतः
कस्याचित्त्वथविप्रस्यमंडलेप्राप्तवान्निशि तस्मिन्दिनेगृहस्वामीकन्यामुद्वाहयन्कृती तैलादिरोपणंचक्रेकृत्वावरनिवे,
शनंलग्नस्यसमयेप्राप्तेधनुर्वातयुतोनरः धनुर्वाताख्यवातव्याधिमानित्यर्थः वरपित्रादिभिस्सर्वैर्विचार्यचपुनःपुनः
असौकार्पटिकोबालः सुंदरोयंसुरोयथा सार्द्धंत्वनेनलग्नंवैकरिष्यामः क्रमेणतु इतिनिर्धार्यमनसाप्रार्थयामा-
समातुलं घटिकाद्वयपर्यंतदेहित्वंभागिनीसुतं मातुलउवाच मधुपर्केतथाकन्यादानेयद्यत्प्रदीयते तदस्माकंयदि
भवेत्तर्ह्यसौभवतांवरः तथाभवतुतेनोक्ताविधिर्वैवाहिकोभवत् पाणिंग्राहयामासवरेणचयथाविधि वद्वासार्द्धं
तथाभोक्तुंसचनोत्सहताशिशुः उत्तिष्ठामीतिसांचिंत्यकस्यभार्याभवेदियं ततस्त्वकांतसमयेनिश्वासान्मुमुचेबहून्
साब्रवीत्कथमेतस्मादन्यथाब्रह्मसूत्रता त्वंमेपतिरहंपत्नीदेवाग्निद्विजसन्निधौ सोब्रवीन्माकुरुष्वेदंममायुः स्वल्पमे
वच तथातेपिगतिर्भूयात्सेयंमह्यभवेदिति उत्तिष्ठभोनमोनाथक्षुधितोसिनसंशयः प्रीत्याप्रीतितयासार्द्धंभुक्तवा
न्सद्विजस्तथा अंगुलीयंददौतस्याः स्पष्टरत्नगतंनवं अंशुकंचददौतस्याः स्थानत्रयविभूषितं नवरत्नमयीं
मुद्रांगृहीत्वाप्यंशुकंचसा इतिसंकेतकंकृत्वामद्यच कुरुमेप्रिये मसंजीवनार्थायकुरुजात्यादिवाटिकां मनो
रमःपुष्पजातिसुगंधिनवमल्लिकाः सिंचसिंचप्रतिदिनक्रीडांकुरुयथासुखं यास्मिन्दिनेतुमत्प्राणवियोगः सम
जायते तदासपुष्पवल्लीनांप्राणत्यागोभविष्यति पुन संजीवितास्ताश्चेत्तर्ह्यहंजीवितोदृढं ततोब्राह्ममुहूर्तेतुनिर्ज
गामवरःपथिअथप्रभातसमयेवाधनादोविभूवह आकारिताचसाकन्याब्रूतेनायंपतिर्मम यदिचायंपतिस्तातब्रूयादे
वमयार्पितं मधुपर्केतथाकन्यादानेयद्भूषणादिकंकथयिष्यतिचेद्यच्चमद्गातंरात्रिभाषितं इतिकन्यावचःश्रुत्वाउवाच

सवरस्तदा नैवजानामितद्वक्तुंव्रीडितोनिर्जगामह कृष्णउवाच ततस्तुवालकःकाशींप्राप्तोप्यध्ययनेरतः दिनानिक
तिचिज्जग्मुःकालस्यवशमागतः तत कृष्णोमहानागोरात्रौभक्षितुमागतः परितःशयनात्तस्यदीपज्वालाभिरावृतः
नैवशक्तस्तमत्तुंवैव्रतराजप्रभावत. तन्मात्रावतिशीनामपूर्णिमायांव्रतंकृतं ततोमध्यान्हसमयेकालएवागमत्स्वयम्
ततस्तुकालसंविद्धस्त्वधोंदकनियोजित. शंकरोप्यगमत्तत्रभवान्यासहएवच भवानीप्रार्थयामासदृष्ट्वावस्थांतुत
स्यतां अस्यमात्राकृतंपूर्ववतिशीव्रतमुत्तमं तस्यप्रभावत सोयंवालोयंजीवतात्प्रभो तथैवकृतवांस्तवभवानीप्रेम
वत्सल. तद्व्रतस्यप्रभावेनमृत्युनापिनिराकृत तांपुष्पवाटिकांपश्यत्पत्रपुष्पविवर्जितां अतिदुःखातुराशोचत्य
तिस्नेहेनकातरापुन संजीवितांदृष्ट्वापितरंकन्यकाब्रवीत् अत्रसत्रकुरुष्वत्वंजामातुस्तुगवेषणे पत्यर्थंकुरुभोतावत्का
शीतोनिरगात्तुस. पुनस्तत्रैवसंप्राप्तोयत्रोद्वाहोभवत्पुरा ज्ञात्वाचपरमंप्रीत्यादेवदत्तोनयद्गृह ततोजनपदा सर्वे
इतिब्रूयु। परस्परं प्रीत्याह्यूचुस्तत सर्वसाधुसाधुसमन्वितं उत्साहोह्यभवत्तत्रनिर्जगामाथतःपुरात् श्वशुरेणतथा
वध्वामातुलेनसमन्वितं सपितु प्रेषयामासभवत्पुत्र समागत तावूचतु कुतोस्माकंदुर्भगानांतुपुत्रकः। कथितोन्यै
रपिजनैस्तत संहृष्टमानस सुहृद्भिर्बांधवैःसर्वैरानयामासवालकं ततोमहोत्सवंकृत्वादत्त्वाचवहुदक्षिणां एवंसपुत्र
वान्जातोवतिशीव्रतसेवया य कुर्वंतिव्रतमिदंविधवानभवंतिताः जन्मजन्मनिसौभाग्यंप्राप्स्यंतिचवचोमम एत
त्तेकथितंसर्वंपुत्रपौत्रविवर्द्धनं यंयंचितयतेकामंतंतप्राप्नोतिनिश्चितं यशोदोवाच उद्यापनाविधिंब्रूहिपूर्णिमायाः
सुरेश्वर भक्तित श्रोतुमिच्छामिव्रतसंपूर्णहेतवे कृष्णउवाच पौर्णिमामार्गशीर्षस्यमाघवैशाखयोस्तथा व्रतंप्रारंभये
त्तस्यांपौषभाद्रंतुवर्जयेत् उमयासहितोदेवःपूजनीयोवृषध्वजः — उपचारैःषोडशभिरागमोक्तविधानतः एकैकंदी
पकंकृत्वामासिमासिचदापयेत् एवंसार्द्धद्वयंवर्षंद्विमासावधिमाचरेत् ज्येष्ठस्यपूर्णिमायांचकुर्यादुद्यापनंततः अथवा

शुभमासस्यपूर्णिमायांसमाचरेत् चतुर्दश्यामुपवसेद्रात्रौपूजनमाचरेत् अष्टहस्तप्रमाणेनमंडपंकारयेत्ततः तन्म
ध्येस्थापयेत्कुंभमव्रणंमृण्मयंनव तस्योपरिन्यसेत्पात्रंवैणवंचसुवेष्ठित मापमात्रसुवर्णेनप्रतिमांकारयेत्सुधीः
तदर्धार्धेनवाकुर्याद्वित्तशाठ्यविवर्जितः कृत्वारूपंप्रयत्नेनपार्वत्याश्च हरस्यच तत्पात्रेप्रतिमेस्थाप्यवृष
भेणसमन्विते पूर्वोक्तेनविधानेनसुपुष्पैश्चैवपूजयेत् धूपैर्दीपैश्चनैवेद्यैः फलैश्चाविविधैः शुभैः एवं
पूजाप्रकर्त्तव्यारात्रौजागरणंचरेत् गीतनृत्यादिसंयुक्तंकथापुस्तकसंयुतं ततः प्रभातसमयेकृत्वादानादि
काः क्रियाः पूर्ववदर्चयेद्देवंपश्चाद्धोमंप्रकल्पयेत् स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंबुध प्रारभेच्चततोहो
मंपंचाक्षरमनुःस्मृतः तिलैर्यवैस्तथाज्येनपृथगष्टोत्तरंशतं नमःशिवायमंत्रेण उमयाइतिनामतःएवंसमा
प्यहोमंतुआचार्यादीन्प्रपूजयेत् द्वात्रिंशद्वंधनैर्युक्तंवंशपात्रमनोरमं द्वात्रिंशच्चमहादीपैर्द्वात्रिंशच्चमहाफलैः
मातुलिंगंनारिकेलंजंबीरंखर्जरीफलं अक्षोटंदाडिमंनिबंनारंगादिशुभानिच कर्कट्यादिशुभैःसर्वै ऋतुकालोद्भवैः
शुभैः द्वात्रिंशद्भिःफलैर्युक्तं सदीपंवस्त्रवेष्टितं व्रीहीणामुपरिस्थाप्यआचार्यायनिवेदयेत् वाणकतवतुष्ट्यर्थंददा
मिगिरिजापते तत्रमंत्रः महेशःप्रतिगृह्णाति महेशोवैददातिच महेशस्तारकोभाभ्यांमहेशायनमोनमः
द्वात्रिंशद्ब्राह्मणांश्चैवद्वात्रिंशद्यापितस्तथा अन्येभ्योब्राह्मणेभ्यश्चभोजनंषड्रसैः सह पुमान्वत्सयुतांधेनुमाचा
र्यायनिवेदयेत् पश्चात्पूर्णाहुतिंकृत्वाहोमशेषंसमापयेत् पश्चाद्भुंजीततच्छेषंयदेवब्राह्मणार्पितान् इत्येवंपूर्णि
मायास्तुउद्यापनविधिः स्मृतः इत्येतत्कथितंसर्वंव्रतस्योद्यापनंमया याः कुर्वंतिव्रतमिदंविधवानभवंतिताः इह
भुक्त्वातुविपुलान्कामान्सर्वान्मनोगतान् स्वर्गंमतेगमिष्यंतिकुलकोटिशतैरपि ॥
इतिभविष्यत्पुराणेकृष्णयशोदासंवादेवातिशीपूर्णिमाव्रतकथासंपूर्णा ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥

ास्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंदसरक्षकः धर्माधर्मविभागक
ुपते॰पादांवुजार्चारतोजीयात्पुत्रकलत्रमित्रसहितःसपालयन्क्ष्मांचिरम् ॥ १ ॥ रणवीरसिंहभूपेनकारितेकृत्य

सागरे अभूच्चमार्गकृत्यानां रम्योयंरत्नसंग्रहः ॥ १ ॥

तेश्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारितेकृत्यरत्नाकरेमार्गमासकृत्यरत्नसमुच्चयः ॥



॥ श्रीरघुनाथमुद्रायंत्रालये ॥
लालाशिब्बामल्लाधिकारेमार्गशीर्षमासोमुद्रितस्समाप्तिमगमत्
संवत् १९४१ माघ प्र. १५

॥ ओंस्वस्तिश्रीगणेशायनमः ॥ अथपौषमासकृत्यनिर्णयः॥ धनुःसंक्रमेपराः
षोडशघटिकाः पुण्यकालः अत्रान्योविचारः संक्रांतिनिर्णयेद्रष्टव्यः अथपौषव्रतानि अत्रैकभक्तमुक्तं महाभा-
रते पौषेमासेतुकौंतेयएकभक्तंसमाचरेत् सुभगोदर्शनीयश्चयशोभागीचजायते प्रासादभूषणादीनिगृहप्रावरणा-
निच नारायणस्यतुष्ट्यर्थंपौषेदेयानियत्नतइति वामनपुराणे विष्णुधर्मोत्तरे पुष्यमासंतदालभ्यएकभक्तेन-
यःक्षिपेत् शुश्रूषणपरः शूरो नरोगीजायतेनर अथात्रशीलावाप्तिव्रतम् विष्णुधर्मोत्तरे वज्रउवाच भग-
वन्कर्मणाकेनशीलवान्पुरुषोभवेत् मार्कंडेयउवाच आग्रहायण्यतीतायांसंप्राप्तेप्रथमेदिने पूर्ववत्पूजयेद्देवंघृते-
नजुहुयाद्धविः घृतंद्विजेभ्योदद्याच्चघृतमेवनिवेदयेत् त्रिरात्रोपोषितः पौष्यांघृतमात्रेणवैद्विजः पूजयेच्चसुव-
र्णेन यथाशक्तिनराधिप कृत्वाव्रतंमासमिदंयथोक्तमासाद्यनाकंसुचिरंमनुष्यः मनुष्यमासाद्यचशीलवान्स्यात्
प्राप्नोतिपुष्टिंचिरजीवितत्वम् इतिविष्णुधर्मोत्तरोक्तं पौषकृष्णप्रतिपदमारभ्यपौष्यंतंशीलावाप्तिव्रतम् अत्रदा-
नविशेषोविष्णुधर्मोत्तरे पौषेकनकदानेनपरांपुष्टितथैवच पुष्पाणांचसितदानंलक्ष्मीप्राप्तिकरंस्मृतम् फलानांचत
थादानं कृष्णपक्षेमहाफलमिति देविपुराणोक्तंनक्तव्रतम् पौषेमासेतुसंप्राप्ते यःकुर्य्यान्नक्तभोजनं
जितेंद्रियःसत्यवादीकामक्रोधविवर्जितइति पौषमुपक्रम्यतीर्थविशेषो देवीपुराणे पौषेतुनर्मदापुण्यास्ना-
नदानादिकर्मणीति पौषकृष्णद्वितीयायां वृहस्पतिवारयोगेद्वितीयासामान्योक्तं विधिपूजनमुक्तं ब्रह्मपुराणे
वृहस्पतौद्वितीयायां विधिवद्विधिपूजनं कृत्वानक्तंसमश्नीयाल्लभतेभूमिमुत्तमां विधिर्ब्रह्मातस्यपूजनं गायत्र्या-
पौराणमंत्रेणवेति तृतीयायांतिथिसामान्योक्तंगौरीपूजाव्रतम् देवीपुराणे तृतीयायांयजेद्देवींशंकरेणसमन्वितां
कुंकुमागुरुकर्पूरमणिवस्त्रसुगंधकैःस्रग्गंधधूपदीपैश्चेत्यादि सौवर्णींतुउमाकार्य्याराजतःशंकरस्तथा चतुर्भुजस्तु-

देवेशोद्विभुजातुउमासतीति चतुर्थ्यांसंकष्टनाशनव्रतत्वेनमासचतुर्थीव्रतम् स्कांदे चतुर्थ्यांदेवदेवोसौपूज
नीयःप्रयत्नतःकृष्णपक्षेविशेषेणनक्तंकुर्य्याच्चतात्रियामिति चतुर्थ्यांगणपस्यचेतितिथिसामान्योक्तेश्च पंचम्यांतिथि
पत्वेननागपूजोक्ता नागानांस्वरूपंमात्स्ये नागाश्चैवतुकर्तव्याः खड्गखेटकधारिणः अधःसर्वाकृतिस्त
पांनाभेरूर्द्ध्वतुमानुषी फणाश्चमूर्ध्निकर्तव्याद्विजिह्वाबाहवोसमाः असमाविषमाः अत्रषष्ठ्यांस्कंदपूजाव्रतम् ष
ष्ठ्यांपूजागुहस्यचेति तिथिसामान्योक्तेः सप्तम्यांभास्करंचेत्युभयसप्तमीव्रतम् पौषकृष्णाष्टम्यामष्टकाश्राद्धं
नारदीये अथपौषासिताष्टम्यामष्टकाश्राद्धमिष्यते पितृणांतुसिदंवर्धकुलसंततिवर्द्धनमिति ब्रह्मपुराणेविशेषः
पौषकृष्णाष्टकायांतु शाकैःश्राद्धंसुशोभनं वायुपुराणेपि पित्र्यानंदायमूलेस्युरष्टकास्तिस्र एवहि कृष्णपक्षेवरिष्ठा
हिपूर्वाचैंद्रीविभावरी प्राजापत्याद्वितीयास्यात्तृतीयावैश्वदैविकी आद्यापूपैः सदाकार्य्या मांसैरन्यायथातथा शा
कैः कार्य्यातृतीयातु देयद्रव्ययुतोविधिःअन्वष्टक * पितृणांतुनित्यमेवविधीयते पद्मपुराणेच तस्यामेवशाकवि
धानात् तदनयोर्विरोधेव्यवस्थाशाखाभेदेनहेमंतशिशिरयोश्चतुर्णामपरपक्षाणामन्वष्टकाइत्याश्वलायनात् तत्र
पूर्वेद्युरष्टकाश्राद्धं उत्तरदिनेपुचान्वष्टक्यं पूर्वेद्युः पितृभ्योदद्यादपरेद्युरन्वष्टक्यमित्याश्वलायनात् कौर्मेपि अ
मावास्यष्टकास्तिस्रः पौषमासादिपुत्रिष्विति अत्राष्टमी अपराह्णव्यापिनीग्राह्यापूर्वेद्युः श्राद्धस्यान्वष्टक्यस्य
चाष्टम्यनुरोधेननिर्णयः पूर्वेद्युः पितृभ्योदद्यादपरेद्युरन्वष्टक्यमितिसूत्रात् अत्रश्राद्धाशक्तौतत्रैव अ करणेप्राय
श्चित्तमुक्तमृग्विधाने एभिर्द्युभिर्जपेन्मंत्रशतवारंतुतद्दिने अन्वष्टक्यंयदाशन्यंपूर्णतांयातिसर्वथेति अशक्तौत्वा-
श्वलायनः अथाश्वोभूतेऽष्टकापशुनास्थालीपाकेनवा अनडुहोयवसमाहरेदाग्निनावाकक्षमुपोषदेषामेष्टकेतिभक्ते-
नष्टकःस्यादितिमार्गशीर्षादिषुमलमासे तत्राष्टकानकार्य्याचतुर्णामितिग्रहणादित्युक्तंनारायणवृत्तौ तथाकाठकगृ-

ह्येपि महालयाष्टकाश्राद्धोपाकर्माद्यपियद्भवेत् स्यष्टमासविशेषाख्यंविहितंवर्जयेन्मलइतिविष्णुपुराणे अन्नेनवाय
थाशक्तिकालेस्मिन्भक्तिनम्रधीः भोजयिष्यतिविप्राग्र्यानित्यादि अत्राशक्तौतत्रैव असमर्थोन्नदानस्यधान्यमाना-
त्यशक्तितः प्रदास्यतिद्विजाग्रेभ्यःस्वल्पामपिचदक्षिणां अत्राप्यसामर्थ्ययुतःकराग्रावस्थितांस्तिलान् भक्तिनम्रः
समुद्दिश्यभुव्यस्मात्प्रदास्यति यतःकुतश्चित्संप्राप्यगोभ्योवापिगवाह्निक अभावेप्रीणयत्रस्माद्भक्तियुक्तःप्रदा-
स्यतीति एतासुश्राद्धाकरणेदोषोभिहितोवायुपुराणे यस्यैतेप्रतिगच्छेयुरष्टकाभिरपूजिताः मोघस्तस्यभवे-
ल्लोकोलब्धंचास्यविनश्यति देवांस्तुदायिनोयांतितिर्यग्गच्छंत्यदायिनइति अत्रश्राद्धाकरणे विहितंवर्जये-
न्मले अस्यांरुक्मिण्यष्टमीव्रतम् तत्रकृष्णंरुक्मिणींप्रद्युम्नंचपूजयेदित्युक्तम् इतिरुक्मिण्यष्टमीव्रतम् इतिपौ-
षकृष्णाष्टमीकृत्यम् ✕ अथपौषस्योभयपक्षनवमीकृत्यम् देवीपुराणे पौषेमासेतुसंप्राप्ते य कुर्यान्नक्तभोजनं
जितेंद्रियःसत्यवादीकामक्रोधविवर्जितः पक्षयोर्नवमींयत्नाद्भगवत्यैघृतादिभिः कृत्वाध्यानंमहापूजांचंडिकायै-
प्रकल्पयेत् नैवेद्यंतंडुलप्रस्थंक्षीरयुक्तंनराधिप कुमारीर्भोजयेच्चाष्टौविप्रान्भागवतांस्तथा कृत्वापिमृण्मयीं-
देवींनाम्नाचार्यांतिपूजयेत् चतुर्भुजांशूलधरांकुंदपुष्पैःसगुग्गुलैः स्नानंकृत्वातिलैर्विप्रस्तिलानांप्राशनं तथा
एवंसंपूजयेदार्य्यांतस्यपुण्यफलंशृणु सूर्यकोटिप्रतीकाशांविमानवरमास्थितः दोधूयमानश्चमरैःस्तूयमान,
सुरासुरैः गच्छेद्दुर्गापुरंरम्यंयत्रास्तेचंडिकास्वयम् क्रीडतेदेवगंधर्वैर्यावदाभूतसंप्लवम् त्रिःसप्तकुलजैः
सार्द्धंभोगान्भुक्त्वायथेप्सितान् पुनरेत्यभुवंवीरोराजाभवतिभूतले यःपूजयेत्सदापूज्यंभानुंसर्वार्थसि-
द्धिदंघृताभिषेकंयःकुर्यादहोरात्रंचभास्करे कुंभैर्नानाविधैर्द्रव्यैःपौषमासेसमुद्यतः नृत्यगीतोपहारेण-
शंखवादित्रनिःस्वनैः कुर्य्याज्जागरणंदेविप्रदीपाद्यैः सुशोभनैः . वसेत्सूर्यपुरेश्रीमान्सूर्य्यतुल्यपराक्रम,

ग्रहणेविपुवेचैवपुण्येपुदिवसेषुच घृताभिषेकंयःकुर्यादहोरात्रंशिवस्यतु सूक्ष्मधारेणभांडेनपुण्यमासेद्वि
जोत्तम गीतनृत्योपहारेणशंखवादित्रनिःस्वनैः कुर्य्याज्जागरणंवापिप्रदीपाद्युपशोभितम् समस्तपापनिर्मुक्तःस
महाकुलवर्द्धनःयुक्तःशिवपुरेश्रीमान्मोदतेशिववत्सुखी इतिपौषमासस्योभयनवम्योर्विशेषविधिः * अत्रदशम्य
दशम्यामंतकस्येतिसामान्यनिर्णये धर्मराजपूजनंकार्य्यम् अथपौषकृष्णैकादशीसफलाव्रतम् नारदीये पौष
स्यकृष्णेकादश्यांसफलांसमुपोष्यवै द्वादश्यामच्युतंप्राच्यवरैरेवोपचारकैः संभोज्यविप्रान्मधुरैर्विसृजेल्लब्ध
दक्षिणान् एवंकृत्वाव्रतंविप्रसफलायाविधानतः भुक्त्वेहभोगानखिलानंतेविष्णुपदंव्रजेत् अथास्याःकथोच्यते
युधिष्ठिरउवाच पौषस्यकृष्णपक्षस्यैकादशीकाभवेत्प्रभो किंनामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते एतदा
चक्ष्वमेस्वामिन्विस्तरेणजनार्दन श्रीकृष्णउवाच कथयिष्यामिराजेंद्रभवतःस्नेहकारणात् तथातुष्टिर्नमेराज
न्क्रतुभिश्चाप्तदक्षिणैः यथामांतुष्टिरायातिएकादश्यांव्रतेनवै तस्मात्सर्वप्रयत्नेनकर्तव्यंहरिवासरं पौषस्य
कृष्णपक्षेतुद्वादशीयाभवेन्नृप तस्याश्चैवातिमाहात्म्यंशृणुष्वैकाग्रमानसः आद्दिकाश्चैवभोराजन्नेकादश्यांभ
वंतिहि तासामेवतुसर्वासांविकल्पंनैवकारयेत् एकादश्यास्तथाप्यस्याःशृणुराजन्कथानकं अतः परं
प्रवक्ष्यामिपौषेयाकृष्णद्वादशी लोकानांतेहितार्थायकथयामिविधिंतथा पौषस्यकृष्णपक्षेवैसफलानामनामतः
नारायणोहंदेवोस्याः पूजनीयःप्रयत्नतः पूर्वेणविधिनाराजन्कर्तव्यैकादशीजनैः नागानांचयथाशेषःपक्षि
णांगरुडोयथा देवानांचयथाविष्णुर्द्विपदांब्राह्मणोयथा यथाश्वमेधो यज्ञानांतीर्थानांजाह्नवीयथा व्रतानां
चतथाराजन्नेकादशीविशेषतः तेजनाभरतश्रेष्ठममपूज्याश्चसर्वशः हरिवासरसंसक्तावर्त्ततेयजनाभृशम्
सफलानामनानेति तस्याःपुण्यंशृणुष्वयत् फलैर्मांपूजयेत्तत्रकालदेशोद्भवैःशुभैः - नारिकेलफलैः शुद्धै

स्तथावैवीजपूरकैः जंवीरैर्दाडिमैश्चैवतथापूगफलैरपि लवंगैर्विविधैश्चान्यैस्तथैवाम्रादिभिःफलैः पूजयेद्दे
वदेवेशंधूपदीपैर्यथाक्रमं फलैश्चदीपदानंचाविशेषेणप्रकल्पयेत् रात्रौजागरणंतत्रप्रकर्तव्यंप्रयत्नतः
यावदुन्मीलयेन्नेत्रेतावज्जागर्तियोनिशि एकाग्रमानसोभूत्वातस्यपुण्यफलंशृणु तत्समोनास्तिवैयज्ञस्तीर्थं
तत्सदृशंनहि तत्समंनव्रतं किंचिदिहलोकेनराधिप पंचवर्षसहस्राणितपस्तप्तेनयत्फलं तत्फलंसमवाप्नो
तिसफलायाव्रतेनहि श्रूयतांराजशार्दूलसफलायाः कथानकं चंपावतीतिविख्यातापुरीमाहिष्मतीतिच-
माहिष्मतस्यराजर्षेश्चत्वारश्चाभवन्सुताः तेषांमध्येतुयोज्येष्ठ समहापातकैर्युतः परदारानुगामीचवैश्यासंगरतः
सदा पितुर्द्रव्यंसपापिष्ठोनाशयंश्चमुहुर्मुहुः असद्वृत्तरतोनित्यंदेवताद्विजानिंदकः वैष्णवानांचदेवानांनित्यंनिं
दारतोत्रवै ईदृग्विधंतदादृष्ट्वापुत्रंमाहिष्मतोनृपः लुंपकोनामनाम्नेतिकृतवानप्यमर्षितः राज्यान्निष्कासितस्तेन
पित्रा चैवापिवंधुभिः तस्यैवपरिवारैस्तुत्यक्तोराज्ञोभयादिति लुंपकोपितदात्यक्तश्चिंतयामासएकलः किंकरो
मिक्वगच्छामित्यक्तः पित्राचवंधुभिः इतिचिंतापरोभूत्वामतिंपापेचकारह त्यक्तोहंवांधवैःपित्रा राज्यान्निष्का-
सितस्तथा मयागंतव्यमेवाद्यह्यरण्येगहनेवने तस्माच्चैवंपुरंसर्वंलुंठयिष्याम्यहंपितुः इत्येवंसमतिंकृत्वालुंठको
दैवयोगतः निर्जगामपुरात्तस्माद्गतोसौगहनेवने जीवघातकरोनित्यंस्तेयद्यूतकलानिधिःसर्वंचनगरंतेनमुषितंपाप
कर्मणा स्तेयकृन्नगरेतत्रगृहीतःपुरपालकैः तानुवाचसुतोहंवैराज्ञोमाहिष्मतस्यच गृहीतोपिसतैर्मुक्तोराज्ञोमाहि-
ष्मतोभयात् आमिषाहारकृन्नित्यंफलाहाररतस्तथा आश्रमस्तस्यदुष्टस्यवामदेवस्यसन्निधौ अश्वत्थोविद्य
तेतत्रजीर्णःसबहुवार्षिकः सचासीत्सर्ववृक्षाणांराजानारायणालयः तस्यमूलेवसत्तत्रलुंपकःपापकृत्परःगतेव
हुतिथेकालेपूर्वपुण्यप्रभावतः पौषस्यकृष्णपक्षेतुदशम्यांदिवसेतथा फलानिभुक्त्वावृक्षाणांरात्रौशीतेनयाचतः

लुंपकोनामपापिष्टोवस्त्रहीनस्तुदुःखितः॥ पीड्यमानस्तुशीतेनहारिवृक्षसमीपतः॥ ननिद्रानसुखंतस्यमृतप्रायइ
वाभवत् ताडितोदंशकैस्तीव्रैर्वनीतानिशाखिला॥ प्रातःसूर्योदयेजातेनलेभेचेतनांतदा॥ लुंपकोगतसंज्ञस्तुसफ
लायांदिनेतिथौरवौमध्यगतेचैवसंज्ञांलेभेनलुंपकः॥ इतस्ततोविलोक्याथचोत्थितःकष्टतःश्वसन्स्खलत्पद्भ्यांप्रच
लितःसयावत्संचरन्छनैः॥ वनमध्येगतस्तत्रक्षुत्तृषापीडितोभवत् नशक्तिर्जीवघातेस्याल्लुंपकस्यदुरात्मनः॥ फला
दिभूमिपतितान्याजहारसलुंपकः॥ यावत्सआगतस्तत्रतावदस्तमगाद्रविः किंभविष्यत्युवाचेतिविललापातिदुः
खितः॥ फलान्नितानिसर्वाणिवृक्षमूलेन्यवेदयत्॥ इत्युवाचफलैरेभिःप्रीयतांभगवान्हरिः॥ उपविष्टोलुंपकश्च
ननिद्रांलभतेनिशि॥ रात्रौजागरणंमेनेभगवान्मधुसूदनः॥ फलानांपूजनंमेनेसफलायांतिथौव्रतं॥ इतिकृत्वा
लुंपकस्तुतदकस्मात्कृतोत्तमं तेनव्रतप्रभावेनप्राप्तंराज्यमकंटकंपुण्येनसफलायास्तुयथाप्राप्तंतथाशृणु॥ रवेरुदयवे
लायांदिव्योवाजीजगामह॥ दिव्यवस्तुपरीवारोलुंपकस्यसमीपतः॥ तस्थौसतुरगोराजन्वागुवाचाशरीरि
णी॥ प्राप्नुहित्वंनृपसुतराज्यंनिहतकंटकं॥ वासुदेवप्रसादेनसफलायाःप्रसादतः॥ पितुःसमीपंगच्छत्वंकुरुरा
ज्यमकंटकं॥ तथेत्युक्त्वासौतत्रदिव्यरूपधरोभवत् कृष्णेमतिश्चतस्यासीत्परमावैष्णवीतथा॥ दिव्याभरण
भूषोसौतातंनत्वास्थितोगृहे॥ वैष्णवायतदादत्तंपित्राराज्यमकंटकं॥ कृत्वाराज्यंतुतत्रैववर्षाणिसुबहून्यपि॥ रति
वांसरसंलीनोविष्णुभक्तिरतःसदामनोज्ञास्तस्यपुत्रास्तुदाराःकृष्णप्रसादतः॥ पश्चाद्राज्यमसौत्यक्त्वापुत्रेराज्यंस
मर्पयत्॥ वनंगतःसंयतात्मासाविष्णुभक्तिपरायणः॥ साधयित्वातथात्मानंविष्णुलोकंजगामह॥ गतःकृष्णस्यसान्नि
ध्येयंगत्वानशोचते॥ एवंवैयेप्रकुर्वंतिसफलैकादशीव्रतं॥ इहलोकेयशःप्राप्यत्रतेमोक्षमवाप्नुयुः॥ धन्यास्तेमान
वालोकेसफलायांउपोषकाः॥ तेषांचजन्मसफलमेवसेवनसंशयः॥ पठनाच्छ्रवणाद्वापिकरणाच्चविशांपते॥ राजसू

चफलंयस्मात्सदाप्राप्नोतिमानवः इतिपद्मपुराणेपौषकृष्णसफलैकादशीव्रतम् ॥ अथपौषकृष्णद्वादश्यांसंप्रा
प्तिद्वादशीव्रतम् श्रीकृष्णउवाच कृष्णपक्षेतुपौषस्यसंप्राप्तांद्वादशींशृणु यामुपोष्यसमाप्नोतिसर्वांस्तेन्मनोर•
थान् पापंडादिभिरालापमकुर्वन्विष्णुतत्परः पूजयेत्प्रयतोदेवमेकाग्रमतिरच्युतं पौषादिपारणामासैःषड्भिस्त्रि
ष्टांतकंस्मृतं प्रथमेपुंडरीकाक्षंनामकृष्णस्यगीयते द्वितीयेमाधवाख्यंचविष्णुरूपंतुफाल्गुने पुरुषोत्तमाख्यंचततःपंच
मेप्यच्युतेतिच षष्ठेजयेतिद्विद स्यगुह्यनामप्रकीर्तितं पूर्वेषुषट्सुमासेषुस्नानप्राशनयोस्तिलाः आषाढादिषुमासेषुपं
चगव्यंप्रकीर्तितं स्नानंचप्राशनंचैवपंचगव्यंतुदिष्यते पूजयेत्पुंडरीकाक्षंपुनस्तैरेवनामभिः प्रतिमासंप्रदेवस्य
कृत्वापूजांयथाविधि विप्रायदक्षिणांदद्याच्छ्रद्धयास्वशक्तितः पारणेचैवदेवस्यप्रणम्यभक्तिपूर्वकं एवंसप्र
त्सरस्यांतेयदभिप्रेतमात्मनः धेनुंवस्त्रंहिरण्यंचधान्यंभाजनमासनं शक्त्यावाब्राह्मणेदद्यात्केशवः प्रीयतामिति
एतामुपोष्यविधिवद्विष्णुप्रीणनतत्परः सर्वान्कामानवाप्नोतिसर्वपापैःप्रमुच्यते यत्सर्वमवाप्नोतियद्यदिच्छति
चेतसा ततोलोकेषुसंप्राप्तिं द्वादशीकीर्तितेतिच कृताभिलषितादृष्टाप्रारब्धाधर्मतत्परैः प्राप्यत्याखिलान्का
मान्संस्मृतापिदिनेदिने ॥ संप्राप्तिकामुपवसंतिविचार्यसम्यक्येमानवामनुजपुंगवविष्णुभक्ताः तेषांसमीहित
फलानिभवंतिसम्यक्वासःसुरेशभवनेभगवत्प्रसादात् ॥ इतिभविष्योत्तरेपौषकृष्णासंप्राप्तिद्वादशीव्रतं ॥ ॥
अस्यामेवपौषद्वादश्यांस्वरूपद्वादशीव्रतम् ॥ नारदीये पौषस्यकृष्णद्वादश्यांस्वरूपंव्रतमुत्तमम् दशान्यांवि
धिवत्स्नात्वागृह्णीयाद्गोमयंव्रती श्वेतायाश्चैकवर्णायाअंतरिक्षगतंद्विजं अष्टोत्तरशतंततःपिंडिकाःकल्पयन्नारद
शोषयेदातपेधृत्वापात्रेताश्चिथमृण्मये एकादश्यांसोपवासःसमभ्यर्च्यत्रिधाच्युतः सौवर्णींप्रतिमांविष्णोर्नि•
शायांजागरंचरेत् सुमंगलैर्गीतवाद्यैः स्तोत्रपाठैर्जपादिभिः ततःप्रभातेद्वादश्यां तिलपात्रोपरिस्थितां

त्रंबुपूर्णघटेन्यस्य- पूजयेदुपचारकैः ततोग्निनवमुत्पाद्य काष्टसंघर्षणादिभिः होमयेत्सतिलाज्यंच द्वाद-
शाक्षरविद्यया वैष्णव्याथर्वपूर्णांचशतमष्टोत्तरंतथा भोजयेत्पायसैर्विप्रान्दत्वानत्वाविसर्जयेत्-नरोवायदिवानारी
व्रतंकश्चैवमादरात् लभतेरूपसौभाग्यंनात्रकार्याविचारणेति अथगुर्जराचारप्राप्तंस्वरूपद्वादशीव्रतम् श्रीई
श्वरउवाच- पौषमासेतुसंप्राप्तेपुष्यर्क्षेतुयदाभवेत् - तस्यांरात्रौसंप्रवक्ष्यामिध्यात्वाविष्णुसनातनं श्वेतागौरैकवर्णा
यातस्याग्राह्यंतुगोमयं अंतरिक्षात्तुपतितंशुचिर्भौजेव्यवस्थितः तस्यकृत्वाहुतीस्तुशतमष्टोत्तरंतिलैः प्रतीक्ष्यद्वाद
शींकृष्णामुपवासपरायणः स्नात्वानद्यांतडागेवाविष्णुमेवाथचिंतयेत्— सौवर्णंतुहरिंकृत्वारौप्यंवाभक्तिशक्तितः
तिलपात्रोपरिस्थाप्यततोविष्णुंप्रपूजयेत् इतिसंपूज्यविहितैः पुष्पैर्धूपैस्तुदीपकैः नैवेद्यैस्तिलमिश्रैस्तुफलानित्रि-
विधानिच नमःपरमशांतायविरूपाक्षनमोस्तुते सर्वसंकष्टनाशायगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यमंत्रः एवंसंपू
ज्यदेवेशंहोमंकुर्यात्समाहितः आवाह्यदेवंलक्ष्मीशंहोमयेद्धोमयाहुतीः शतमष्टाधिकंचैवतिलाज्यव्रीहिसंयु
तान् सहस्रशीर्षामंत्रेणहृदिध्यात्वाजनार्दनं लक्ष्मीयुतंचमेघाभंशंखचक्रगदाधरं— होमांतेकारयेच्छ्राद्धंवैष्णव
द्विजसत्तम दत्वाचभोजनंतेभ्योघृतकुंभंचदक्षिणां धर्मश्रवणसंयुक्तजागर्यात्ततोनिशां कृत्वातुवैष्णवीं
मूर्तिंविप्रायप्रतिपादयेत् मंत्रहीनं क्रियाहीनं विधिहीनंचयत्कृतं क्षमस्वदेवदेवेश सर्वमेवसमापय
उमोवाच भगवन्श्रोतुमिच्छामिप्रसादंकुरुमेप्रभो कथितव्यंप्रसादेनयद्यस्तिमयिसौहृदं— व्रतेनकेनचीर्णेनविरू
पत्वंप्रणश्यति सौभाग्यंचैवमतुलंप्राप्यतेकस्यपूजनात्- तन्मेकथयदेवेशपरमाभीष्टदायकं ईश्वरउवाच- श्रूय
तांपरमगुह्यंव्रतंपापहरंशुभम् सुरूपाद्वादशीनाममहापातकनाशिनी विरूपनाशिनीचैवसुरूपत्वप्रदायिनी-
कुलवृद्धिकरीचैवसर्वसौख्यप्रदायिनी- तच्छृणुष्वप्रयत्नेनकथ्यमानंमयानघे— पुरावैद्वापरस्यांतेविष्णुर्दैत्यनि

पूदनः॥ अवतीर्णोमर्त्यलोकेवसुदेवकुलेकिल॥ तेनोढारुक्मिणीनामभीष्मकस्यसुतापुरा॥ अत्यंतरूपसुभगाप्र
तिव्रतपरायणा॥ नहितस्याविनाकृष्णःस्तोकमुद्वहतेसुखं॥ श्वश्रूश्वशुरयोःपादौववंदेसापुनःपुनः॥ केनापिकर्मसं
दोषेणकुपिताविष्णुमातरः॥ नप्रसादयतिक्षिप्रमितिज्ञात्वातुदेवकी॥ कृष्णंप्रोवाचकुपितायदितेजननीह्यहं तत
स्त्वयाहिवैवाह्याकुलरूपगुणाधिका॥ मद्वाक्यमन्यथाकर्तुनार्हसित्वंकुलोद्वह॥ श्रीकृष्णउवाच॥ मायातुरुक्मि
णीत्यक्ताउद्वहेहंकथंशुभे॥ यःपरित्यजतेभार्यामविकृतशरीरिणीं॥ संप्राप्नोतिहिमंदत्वंदौर्भाग्यंसप्तपौरुषं॥ विरू
पत्वमवाप्नोतिनसुखंविंदतेक्वचित्॥ व्याधिर्वाजायतेलोकेनिंदनीयःसदेहिनां॥ इत्यहंदेविजानामिकथंकुर्यांवचं
स्तव देवक्युवाच॥ सर्वेषामेवदेवानांतीर्थादीनामपिध्रुवं॥ मातागुरुतरापुत्रकस्तस्यावचनंत्यजेत्॥ ममवाक्यस्य
करणात्कथंपापिष्टताभवेत्॥ जननीपूज्यतेतेनभार्याचयदुनंदन॥ श्रीकृष्णउवाच॥ परित्यजामिनोभीरुप्रिया
प्राणधनेश्वरी॥ इतितूष्णींपराभूतामातरंप्रेक्ष्यकेशवः॥ चिंतयामासपरमंकथंसौख्यंभवेदिति॥ एतस्मिन्नेवकाले
तुनारदोभगवानृषिः॥ अभ्युज्जगामसहसाविष्णुंसंप्रेक्ष्यविस्मितं पूजितःपरयाभक्त्याअर्घ्यंजग्राहनारदः॥ उपविष्टो
यथान्यायंपर्यपृच्छदनामयम्-नारदउवाच किंत्वंखेदंकरोषीत्थंकथमुद्वेगकारणं॥ किंनासिद्ध्यतितेभीष्टंत्यजोद्वेगंयदू
त्तम श्रीकृष्णउवाच-मात्रानियुक्तोदेवर्षेपरिणेतुंद्विजोत्तम॥ कन्यामुद्वहयिष्यामिसुरूपांकस्यचित्प्रभो नारदउवाच
श्रूयतामभिधास्यामिपूर्ववृत्तांतमादरात्॥ लक्ष्मीयुक्तःपुरानाथः॥ क्रीडमानोहिनंदने॥ तत्रागमत्सभगवान्॥ दुर्वासा॥
ऋषिसत्तमः॥ अभ्युत्थानादिविधिनासत्कृतज्ञानमूर्तिना॥ प्रेक्ष्यवीभत्सरूपंतदेव्याहास्यंकृतंतदा॥ सकोपेनमहा
तेजावैश्वानरसमप्रभः॥ शशापलक्ष्मींदुर्वासामुनिःक्रोधेनसंयुतः॥ हसितोहंत्वयामुग्धेआत्मनोरूपमीक्ष्यच॥ विरू
पाभवदुर्वृत्तेकिंनज्ञातोह्यहंत्वया॥ इत्युक्तयातयादेव्यायथाशक्त्याप्रसादितः॥ प्रसन्नोजगदेवाक्यंमुच्छापोनान्यथा॥

भवेत् जन्मांतरेणास्यफलं भविष्यतिविरूपिता सेयंमर्त्येवतीर्णाहि गोपकस्यगृहेशुभा सत्यभामाविरूपा-
क्षाविरूपदर्शनातथा कर्णनासातिविकृतासंजातातत्रभावतः पाणिपादकटिग्रीवंसर्वंवैरूप्यलक्षणं। तत्रग-
च्छमहाप्राज्ञसतेकन्यांप्रदास्यति श्रीकृष्णउवाच विरूपवदनांब्रह्मन्कथंद्रक्ष्यामिनित्यशः कांशांतिवैगमिष्या-
मिताविवाह्यकुरूपिणीम् नारदउवाच रुक्मिण्यास्तुप्रसादेनशापान्मुच्येततत्क्षणात् उत्तमप्राप्स्यतेरूपंसौ-
भाग्यपरमंसुखम् देवक्याश्चप्रसादेनधर्मकामार्थसिद्धये एवंभविष्यतितवसंबंधोविहितःसुरैः त्वयाचना-
न्यथाकार्य्यंगुरूणांवचनंमहत् मातागुरुतराभूमेःसितिवेदेपुगीयते ईश्वरउवाच एवमुक्त्वामहादेविनारदस्त्रिदि-
वंगतः कृष्णोपिमातरंप्राहवैवाह्योहिविधीयते विवाहिताचसानेनवेदोक्तविधिनाततः आनीयस्वगृहंसातुद-
र्शयामासतांवधूं पश्यात्वंचनभामापरिणीताशुचिव्रता निर्वृत्तिपरमांगच्छप्रसादप्रसमाभव इत्युक्त्वावीक्ष्यतां
कृष्णः प्रणिपत्यतुमातरं जगामाकृतकार्य्याणांकरणायमहाबल तांदृष्ट्वादेवकीमाताबभौदुःखाधिकातुरा इयं
विरूपाविकृताकथंभर्त्रास्तिगोपिता चिंतामवापमहतींमंतरुद्विग्नमानसा कस्यापिनाचचक्षेथाविरूपंतच्छरीरजं
अथकास्मिंस्तुकालेतुरुक्मिणीतुसमागता नमस्कृत्यततः पश्चात्संस्पृष्ट्वांघ्रियुगंतथा उवाचप्रसृतंवाक्यंभक्तियु-
क्तंशुभावहं अथाहंद्रष्टुमिच्छामिसपत्नींकृष्णवल्लभाम् शीघ्रंतांदर्शयाश्वप्रसादंसुविधीयताम् देवक्युवाच ॥
शुश्रद्यहतेसुभगेममापिवचनंकुरु पूर्वमाचरितंसुभ्रुसुरूपाद्वादशीव्रतं संप्रयच्छसिचेत्तस्यैदर्शनंतेभविष्यति रुक्मि
ण्युवाच कष्टेनक्रियतेधर्मोव्रतंचापिसुदुष्करं कथंतस्यैप्रयच्छामिफलंदेवैःसुदुर्लभं देवक्युवाच अर्द्धंप्रदीयतां
मस्यैतदर्द्धमथवापुनः पंचमांशमथोप्रष्टंषोडशांशमथापिवा रुक्मिण्युवाच सुरूपाद्वादशीपुण्यंतिलार्द्धमपिनोत्स-
हे किंपुनःषोडशांशंतुसपत्न्यांदुष्टचेतसि एवमुक्त्वाजगामाथमंदिरंस्वंशुभेक्षणा पुनःपप्रच्छकृष्णंसाप्रणिपातेन

वैरूपा देवपृच्छामिचैवोक्तंनतुशोषिममप्रभो कथंपश्यामितांसांतर्नवोढांकृष्णवल्लभाम् श्रीकृष्णउवाच ऋवाज्ञया
पश्यसुभ्रु विरूपांतांसमध्यमां विरूपश्रवणाक्षीतांकुरूपांविकृताननां अदृष्टवैचित्र्यकृतंरूपमस्यानसंशयः ततः
सादेवकीतांतुसत्यभामांब्रवीद्वचः सपत्नींगच्छसुश्रोणिस्वरूपंदर्शयस्वच यथातेसुप्रसन्नास्यात्तथाकुरुममप्रिये श्रु
त्वैवसत्यभामासागतारुक्मिणिमंदिरं प्रणम्यसुकुमारांगीमस्तौषीत्प्रणयेनसा नादर्शयन्मुखंतस्यैगूढास्याविकृता
नना प्रार्थयामासतांसुभ्रूःसुरूपाद्वादशीव्रतं तिलाहुतिंपाचयष्ठांशदेहिमेसेवकास्म्यहं इत्युक्त्वाबहुशःसापि
सपत्न्यानददौफलं तदापलायितागच्छद्गृहंदत्वाकपाटकं रुदंतीरोदनगृहेनिगूढावस्थिताभवत् ससागतारु
क्मिणीसातन्मुखालोकनेच्छया नोद्घाटयतिसाद्वारांतिरस्कारेणशोचति रुक्मिणीसातुसत्यभामाशुचिस्मितां
एकामप्याहुतिंदेविदेहिभीष्मकनंदिनि अर्द्धाहुतिमथोदेहितदास्यंदर्शयाम्यहं सपत्नीत्वंनजानामितवाहसे
विकास्म्यहं व्रतात्तिलफलंदेहियद्यस्तिमहिसौहृदं रुक्मिण्युवाच कोयंमतिभ्रमस्तेयंसुरूपाद्वादशीव्रति ति
लाहुतिंप्रयच्छामिउद्घाटयकपाटकं इत्युक्त्वात्वरितंस्नात्वादत्वाह्येकांतिलाहुतिं तस्यामेवप्रदत्तायांरूपेणास्या
धिकाभवत् तांदृष्ट्वाविस्मयपरापप्रच्छदयिताहरेः ॥ रुक्मिण्युवाच ॥ कथ्यतांममकाहित्वंकिमर्थं
मिहचागता ॥ सत्यभामोवाच ॥ तवाहंभगिनीभद्रेकृष्णेनोढास्मिधार्मिके सत्यभामेतिमेनामनमामि
चरणौतव इतिश्रुत्वातुवचनंविस्मयोत्फुल्ललोचना नोवाचाकिलचार्वंगीचिंतामापमहत्तमां अपश्यद्दूयमाने
वसुरूपाद्विस्मिताभवत् एतस्मिन्नेवकालेतुवागुवाचाशरीरिणी व्रतदानप्रभावेनसत्यव्रतपरायणा सु
रूपाद्वादशीपुण्यादेवानामपिदुर्लभा पार्वत्युवाच कर्मणाकेनकर्तव्याकिमाचारवदस्वमे नियमहोमदानंच
प्रसादेनविधीयताम् श्रीईश्वरउवाच पौषमासेतुसंप्राप्तेपुष्यऋक्षंयदाभवेत् तस्यांरात्रौसंयतात्मध्यात्वाविष्णुं

सनातनं ॥ श्वेतागौरिकवर्णायां तस्यांग्राह्यंतुगोमयं ॥ अंतरिक्षात्तुपतितंशुचिर्मौनमवस्थितः ॥ तस्यकृत्वाहुती
नांतुशतमष्टोत्तरंतिलैः ॥ प्रतीक्षेद्द्वादशींकृष्णामुपवासपरायणः ॥ स्नात्वानद्यांतडागेवाविष्णुमेवाथचिन्तयेत् इति
संपूज्यविहितैः पुष्पधूपैःसदीपकैः नैवेद्यंतिलमिश्रंतुफलानिविविधानिच ॥ नमःपरमशांतायविरूपाक्षनमोस्तु
ते ॥ सर्वसंकष्टनाशायगृहाणार्घ्यंनमोस्तुते ॥ एवंसंपूज्यदेवेशंकुर्याद्धोमंससाहितः ॥ आवाह्यदेवंलक्ष्मीशंहोमये
द्धोमयाहुतीः ॥ शतमष्टाधिकंचैवतिलाज्याहुतिसंयुतान् ॥ सहस्रशीर्षामंत्रेणद्वादश्यांवाजनार्दनं ॥ लक्ष्मीयुक्तं
शंखचक्रगदापद्मधरं ॥ होमांतेकारयेच्छ्राद्धंवैष्णवंद्विजसत्तमैः ॥ दत्वाचभोजनंतेभ्योनत्वाद्द्याच्चदक्षिणां ॥ ध
र्मश्रवणसंयुक्तंजागरयित्वाततोनिशां ॥ तत्सर्वंवैष्णवींमूर्तिंविप्रायप्रतिपादयेत् ॥ मंत्रहीनंभक्तिहीनंसर्वंतत्रक्षमा
पयेत् ॥ श्रीईश्वरउवाच ॥ एवंयःकुरुतेदेविसुरूपाद्वादशीव्रतं ॥ नरोवायदिवानारीतस्यपुण्यंशृणुष्वमे ॥ दौर्भा
ग्यंनश्यतेतस्यअपिजन्मांतरार्जितं ॥ अपिपापसुसंपन्नोजायतेकारणांतरात् ॥ तस्यापिनश्यतेदुःखंवैरूप्यंतस्यज
न्मानि बंधुभिर्नचवैलोकेनेष्टैःसहवियोगिता जायतेगोत्रवृद्धिश्चकीर्तिमान्जायतेभुवि जातिस्मरणमाप्नोतिपदंनि
र्वाणमाप्नुयात् पठ्यमानमिदंभक्त्यायःशृणोतिसमाहितः पुण्यंप्राप्नोतिसततंस्वर्गलोकेमहीयते ॥

इतिश्रीव्रतार्केस्कंदपुराणोक्तंसुरूपाद्वादशीव्रतम्

इदंचपौषमासेपुष्यनक्षत्रादारभ्यकृष्णद्वादशीपर्यंतंविधेयम् पौषकृष्णत्रयोदश्यांपक्षत्रयोदशीव्रतंकार्यम् पौषकृ
ष्णचतुर्दश्यांमासशिवरात्रिव्रतम् नान्यदत्रविशेषकृत्यम् पौषामायामर्द्धोदययोगसंभवः सच महाभारते एवमुक्तः
अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः ॥ अर्द्धोदयःसविज्ञेयः कोटिसूर्यग्रहैःसमइति ॥ सचार्द्धोदयः प्रायशो

माघामायामेवभवति पौषमाघयोः पौर्णमास्योर्मध्यवर्तिन्याममायांसंभवति नतुपौषामायामित्यर्थः इतिय
त्कैश्चिदाधुनिकैरुक्तंतदसत् उदपत्यनभिज्ञत्वाद्ग्रंथकृतां सर्वत्रपुराणवाक्याभ्यामेवविरोधात् श्रवणस्यापिसं
भवोभतिथीनांह्रासवृद्ध्या यच्चोच्यते पातसंभवोनभवतिपूर्वपत्रिकास्वदृष्टत्वात् तदप्यसत् तिथिनक्षत्रयोगानांह्रा
सवृद्धिभ्यांतत्संभवविचारः केनरुध्यते शताब्धिपत्रिकाणांस्थित्यासहस्राब्धिपत्रिकासुक्वचिज्जाततदज्ञातपुरुष
स्याभावात्संभवोंगीकार्यएव पुराणवाक्यप्रामाण्यात् अन्यथानास्तिकत्वापत्तेश्चेतिसंभवसामंजस्यामिति नारदी
येप्यत्रामाकृत्यमुक्तम् पौषेमाघेचविप्रेंद्रपितृश्राद्धंफलाधिकं अमायांकर्णपातार्कयुक्तायांतुशताधिकमिति अथ
पौषशुक्लप्रतिपत्कृत्यम् नारदीये पौषशुक्लप्रतिपदिभानुमभ्यर्च्यभक्तितः एकभक्तव्रतोमर्त्योभानुलोकमवाप्नुयात्
पौषशुक्लद्वितीयापितत्रैवोक्ता पौषशुक्लद्वितीयायांगोशृंगोदकमार्जनं सर्वकामप्रदंदृष्टंनमस्तेवालेंदुदर्शनम्
योर्घ्यदानेनबालेंदुंहविष्याशीजितेंद्रियः पूजयेत्साध्यमुदितंधर्मकामार्थसिद्धिदं अत्रारोग्यव्रतं विष्णुधर्मोत्तरे
पौषशुक्लद्वितीयायांगवांशृंगोदकेनतु स्नात्वाशुक्लांबरोभूत्वासूर्येत्वस्तमुपागते बालेंदोःपूजनंकार्यं गंधमाल्या
नुलेपनैः आहारंगोरसंप्राय्यमधःशायीनिशांनयेत् एवंप्रतिमासशुक्लद्वितीयासुबालेंदुपूजनम् वर्षांतेमार्गशी
र्षेबालेंदुपूजनंकृत्वोपपेत् वासांसिरसकुंभंचकांचनंतुद्विजातये दत्वातुपूर्ववद्भुक्त्वाव्रतपारंगतोभवेत् व्रतेनानेनतुध
र्मज्ञारोगमेवंव्यपोहति सौभाग्यमाप्नोतितथापुष्टिंचमनुजोत्तम कामंसचाप्नोत्यथचैकनिष्ठयशास्त्रधर्मंप्रचुरंचधर्म
अभ्यासवंस्तस्यसमस्तकामावरस्तथाप्नोत्यथवाचनारी इतिविष्णुधर्मोत्तरोक्तं पौषशुक्लद्वितीयायामारोग्यव्रतम्
पौषशुक्लतृतीयायांब्रह्मगौरीव्रतम् नारदीये पौषशुक्लतृतीयायांब्रह्मगौरीव्रतंचरेत् पूर्वोक्तेनविधानेनपूजयित्वाद्वि
जोत्तम ब्रह्मगौरीप्रसादेनमोदतेब्रह्मसंगतेति गौरीपूजनं ब्रह्मपूजासहितमित्यत्रविशेषकृत्यं पौषशुक्लचतुर्थ्यां

विघ्नेशपूजोक्ता तत्रैव पौषमासचतुर्थ्यांतुविघ्नेशंप्राच्यभक्तितः विप्रैकंभोजयेद्भक्त्यामोदकैर्दक्षिणांददेत् एवं
कृतेमनेभूयाद्रतीसंपत्तिभाजनः पौषशुक्लपंचम्यांमधुसूदनपूजोक्ता नारदीये पौषेपिशुक्लपंचम्यांसंपूज्यमधु
सूदनं लभतेवांछितान्कामान्नात्रकार्य्याविचारणा पंचम्यांप्रतिमासंतुशुक्लेकृष्णेचनारद पित्दणांपूजनंशस्तं
नागानामपिसर्वथा पौषषष्ठ्यांविष्णुरूपिदिनेशपूजोक्तातत्रैव पौषमासेशुक्लषष्ठ्यांदिवादिनपतिर्द्विजः विष्णु
रूपीजगद्धाता प्रादुर्भूतःसनातनः सतस्मात्पूजनीयोस्यांपुष्पैर्गंधपुरस्कृतैः नैवेद्यैर्वस्त्रभूषाद्यैः सर्वसौख्यमभी
प्सुभिरिति पौषशुक्लसप्तम्यादितोवर्षसाध्यमुभयसप्तमीव्रतम् जयसिंहकल्पद्रुमे सप्तम्यामुपोषणम् त्रि
संध्यंसूर्य्यपूजां रात्रावधःशयनंचकृत्वा पूर्णमासिसप्तम्यांघृतादिभिर्भानुंसंपूज्य मोदकप्रस्थंनिवेद्यद्वि
जान्भोजयित्वाकपिलांदद्यात् एवंकृतेसर्वकामाप्तिर्भवतीत्युभयसप्तमीव्रतम् ॥ अत्रैवमार्त्तंडसप्तमीव्रतं
प्रतिमासंमार्त्तंडंपूजयित्वागवान्हिकंदद्यादितिमार्त्तंडसप्तमीव्रतम् ॥ पौषशुक्लाष्टम्यांशिवपूजा नारदीये
शुक्लाष्टम्यांतुपौषस्यशिवंसंपूज्यभक्तितः ॥ भुक्तिंमुक्तिमवाप्नोतिभक्तमेकंसमाचरेत् भक्तंभोजनमित्यर्थः ॥
अत्रविशेषोभविष्योत्तरेकल्पतरौ ॥ श्रीमहादेवउवाच ॥ पौषेमासिमहादेविशुक्लाष्टम्यांबुधोभवेत् ॥
तदासातुमहापुण्यामहाभद्रेतिकथ्यते तस्यांस्नानंमहापुण्यंजपोहोमस्तुतर्पणम् विप्रभोज्यंभमाप्रीत्यैशत
साहस्रिकंभवेत् तस्मात्तस्यांमहादेवपूज्योहंविविधैर्बुधैः गंधपुष्पोपहारैश्च ब्राह्मणानांचभोजनैरिति
इयमेवभरणीयुताजयंतीप्रोक्ता पौषेमासिमहादेविअष्टम्यांशुक्लपक्षके नक्षत्रजायतेपुण्यंब्रह्मोकैरौद्रमु
च्यते तदातुसामहापुण्याजयंतीह्यष्टमीशुभा तस्यांस्नानंतथादानंजपोहोमश्चतर्पणं सर्वंकोटिगुणंदेवि
कृतंभवतिकृत्स्नशइतिपौषशुक्लाष्टमीव्रतम् ॥ पौषशुक्लनवम्यांदेवीपूजाव्रत नारदीये पौषेशुक्लनव

पं कालरात्रीदानवानांमारीवनिपपातसा ॥ जीविताानचजग्राहदैत्यानांदेवनंदना ॥ अथरक्तासुरंकंठेगृहीत्वापा तभूतले देवीजघानतीक्ष्णेनत्रिशूलेनभृशंहृदि सभिन्नहृदयोमायाश्चक्रेदैत्यःसुदारुणः ॥ तथापिदेव्यासहतः पपातसमरेसुरः देवीतानसुरान्जित्वातत्रवज्रपुरेद्रुतम् ददृशुस्तोरणप्रांतेलंबमानान्महाध्वजान् ॥ यात्रांचक्रुः सुराहृष्टानवम्यांध्वजचिह्नितां अतोद्यापीहभूपालैर्जयलब्धैःश्रियान्वितैः उपोष्यतेनरैर्भक्त्यानारीभिरपिपांडव युधिष्ठिरउवाच कीदृग्विधानंतस्यास्तिनवम्याब्रूहिमेप्रभो सरहस्यसमंत्रंचतुष्यतेयेनचंडिका ॥ श्रीकृष्णउवाच ॥ पौषस्यशुक्लपक्षेवानवमीपारिसश्रुता ॥ तस्यांस्नात्वाशुभैःपुष्पैरर्चनीयाहरेःस्वसा ॥ साकुमारीभगवतीसिंहस्थानंद दायिनी ॥ ध्वजान्नानाविधान्कृत्वापुरतस्तांश्चपूजयेत् मालतीकुसुमैर्दीपैर्गंधधूपविलेपनैः ॥ बलिभिःपशुभिर्मेध्यैः सुरामांसस्त्रगंवरैः दधिचंदनचूर्णैश्चभक्ष्यैश्चानाग्निपाचितैः मंत्रेणानेनकौंतेयब्राह्मणांश्चैवपार्थिवः ॥ इंद्राभगव तींकृष्णांविश्वस्यजगतोहितां सर्वदुःखसंयमनींग्रहनक्षत्रमालिनीं ॥ प्रपन्नोहंशिवांरात्रिंभद्रेपारमसीमहि ॥ सर्व भूतपिशाचेभ्यःसर्वसत्वसरीसृपैः देवेभ्योमानवेभ्यश्चभयेभ्योरक्षमांततः ॥ ततश्चारोपयेद्राजन्देवीनांभवनेध्व जान् ॥ भोजयीतकुमारीश्चप्रणिपत्यक्षमापयेत् उपवासेनकुर्वीतएकभक्तेनवापुनः भक्त्याभूपालयेचास्यभक्तिस्ते पांगरीयसी एवंयेपूजयिष्यंतिध्वजैर्भगवतींनराःतेषांदुर्गादुर्गमार्गेचौरव्यालाग्निसंकटेरणेराजकुलेगेहेबुद्धमध्ये स्थलेजले ॥ रक्षांकरोतिसततंभवानीसर्वमंगला अस्यांबभूवविजयोनवम्यांपांडुनंदन भगवत्यास्तुतेनैषानवमी सततंप्रिया ॥ धन्यापुण्यापापहरासर्वोपद्रवनाशिनी अनुष्ठेयाप्रयत्नेनसर्वान्कामानभीप्सितान् ॥ ॥ देव्यर्चनाहि तमतिमनुजोनवम्यांदुर्गागृहेध्वजवरानवरोपयेद्यः कामानवाप्यमनसोऽभिमतान्प्रकामंदेहंविहायसमुपैतिच वीरलोकम् ॥ इतिभविष्योत्तरेपौषशुक्लाध्वजारोपदुर्गानवमीव्रतम् ॥

## ॥ पौपशुक्लदशम्याविश्वेदेवपूजाव्रतम् ॥ नारदीये ॥

पौपेदशम्यांशुक्लायांविश्वेदेवान्समर्चयेत् - क्रतुर्दक्षोवसु सत्य कालकाममुनीनज --स्थापयित्वादर्भमयानासने
पुचसंस्थितान् गधैर्धूपैस्तथादीपैर्नैवेद्यैश्चापिनारद --प्रत्येकदक्षिणांदत्त्वाप्रणिपत्यविसर्जयेत् -दक्षिणांतां
द्विजाग्रेभ्योगुरवेवासमर्पयेत् - एवंकृतविधिश्चैकभक्तभोजीव्रतीभवेत् लोकत्रयस्यविप्रर्पैनात्रकार्य्याविचारणा
इयंपौपशुक्लदशमीईशानकल्पादि अस्यांश्राद्धदानादिसर्वमक्षयफलंभवतीतिकल्पादिनिर्णयेभिधानात् --पौप
शुक्लैकादशीपुत्रदैकादशी नारदीये पौपस्यशुक्लैकादशीपुत्रदांसमुपोष्यवैद्वादश्यांचक्रिणप्रार्च्यगंधाद्यैरुपचा
रकैः ततःसंभोज्यविप्राग्र्यान्दत्त्वातेभ्यश्चदक्षिणां विसृज्यस्वयमश्नीयाच्छेषान्नंबांधवैःसह- एवंकृतव्रतोवि
प्रभुक्त्वाभोगानिहेप्सितान् विमानवरमारुह्ययात्यंतेहरिमंदिरम् - अथकथा पद्मपुराणे-- युधिष्ठिरउवाच
कथ्यतांचैवभोकृष्णकृपांकृत्वाममोपरि पौपस्यशुक्लपक्षेयातिथिरेकादशीभवेत् - किंनामकोविधिस्तस्याः -को
देवस्तत्रपूज्यते कस्यतुष्टोहृषीकेशवदमेपुरुषोत्तम श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिशुक्लापौपस्ययाभवे
त् कथयामिमहाराजलोकानांहितकाम्यया पूर्वोक्तविधिनाराजन्कर्त्तव्याचप्रयत्नतः पुत्रदानामविख्यातास
र्वपापक्षयकरी- नारायणोहिदेवोस्याःसर्वकामफलप्रद. नातःपरतराकाचित्त्रैलोक्येसचराचरे -विद्यावंतंयश
स्वंतंकरोतिमनुजंहरिः शृणुराजन्प्रवक्ष्यामि पुत्रदायाःकथांशुभां पुरीभद्रावतीनामराजातत्रसुकेतुमान् राज्ञ
स्तस्यतुपत्न्यावैपैचवासन्सुलोचना. पुत्रहीनेनराज्ञावैकालोतीतोमनोरथैः पुत्रंनलेभेराजावैशोभनंवंशवर्द्धनंनरा
ष्ट्रेनपुरेसौख्यंराजालेभेसुकेतुमान् -सौराज्यंशोभनंराजानभेनेपुत्रवर्जितः --राजाराज्ञीतथाजातावन्योन्यमतिद्रुः

खितौ पितरौ तस्य पानीयं कवोष्णमुपभुंजते राज्ञः पुत्रो न वै जातो यो स्मान्संतर्पयिष्यति इत्थं संचिंतयानास्तु न लेभेयुः सुखं तदा नऋणान्मुच्यते पुत्रो देवऋणांतथा पितुः तस्मात्सर्वप्रयत्नेन पुत्र उत्पाद्यते नरैः इह लोके यशस्तेषां परलोके शुभा गतिः येषां नरोत्तमानां हि पुत्रजन्मा भवेद्ध्रुवं आयुरारोग्यसंपत्तिस्तेषां लोके प्रवर्द्धते पुत्रहीनं तथा राज्यं चंद्रहीना यथा निशा इत्थं संचिंत्य मनसा शमं लेभे न पार्थिवः एकदा च्छंसराजेंद्रः प्राणान्हंतुं हि केतुमान् दृष्ट्वा पतितमात्मानं पुत्रहीनं सुदुःखितं अश्वारूढस्तदा राजा जगाम गहनं वनं जानंति स्म प्रजा नैव सेवकामंत्रिणस्तथा संप्राप्तो घोरं विपिनं विचरंश्च ततस्ततः अपश्यच्च वटाश्वत्थवृक्षान्बहुविधान्वने चंपकान्सप्तपर्णांश्च तिंदुकांस्तिलकांस्तथा शालांश्चैव तमालांश्च खदिरांश्च विशेषतः कदलीरिंगुदीश्चापि वदरीश्च मनोरमाः व्याघ्रांश्चैव वराहांश्च वानरान्पितत्रसः गवयांश्च मृगांश्चैव शृगालान् शशकानपि वनमार्जारकांश्चैव भल्लूकांश्च सरीसृपान् दृष्ट्वा तान् चिंतयामास स्वात्मनः प्राणनाशनम् वने विचरतस्तस्य रविर्मध्यगतो भवेत् क्षुत्तृषापीडितो राजा वने वभ्राम सर्वतः मुखेन शुष्यता त्वर्थं चिंतयामास पार्थिवः पातकं किं कृतं देव यत्प्राप्तं दुःखमीदृशं मया तु तोषिता देवा यज्ञपूजाभिरादरात् भक्त्या भूमिसुराश्चैव योषिताः श्रेष्ठभोजनैः प्रजाश्च पालिताः सर्वाः पुत्रवत्सर्वदा मया कस्माद्दुःखं मया प्राप्तमीदृशं दारुणं महत् इति चिंतातुरो राजा जगाम पुरतो वने स्वपूर्वजानां च सरः पुण्यं प्राप्तं महीभुजा मानसं स्पर्द्धते यद्वै पद्मिनीखंडमंडितं हंसकारंडवाकीर्णं चक्रवाकोपशोभितं मकरैर्मत्स्यसंघैश्च पक्षिभिश्च समन्वितं समीपे तस्य सरसो मुनीनामाश्रमान् शुभान् ददर्श राजा वाल्मीकिशिष्याणां सतपस्विनां प्रास्फुरद्दक्षिणं नेत्रं प्रास्फुरद्दक्षिणो भुजः सद्यस्तस्य महीपस्य शशंस शुभलक्षणं तस्य तीरे च मुनयस्तपश्चक्रुः सुदारुणं हर्षादुत्फुल्लनयनो मुनीन्दृष्ट्वा बभूव सः अवतीर्य हयात्तस्मान्मुनीनामग्रतः स्थितः पृथक्पृथग्ववंदे सौ

मुनीनाश्रमसंस्थितान् प्रत्यूचुस्तेचमुनयः प्रसन्नाःस्मोवयंतव राजोवाच कुतस्त्याश्चभवंतोवैयैर्भृशंतप्यतेतपः किमर्थमागताश्चेहकथयंतुममाग्रतः । मुनयऊचुः । विश्वेदेवावयंराजन्सरसिस्नातुमागताः अद्यचैकादशीराजन्शुक्लापौषेहिपुत्रदा पुत्रंददातिवैकुंठस्तत्रतस्माद्व्रतंचरेत् तस्मादेकादशीमेतांपुत्रदेतिप्रचक्षते इत्थंमुनिवचःश्रुत्वामुनयोवाक्यमब्रुवन् अद्यास्मिन्दिवसेराजन्पुत्रदानामवर्त्तते एकादशीमहापुण्याक्रियतांव्रतमुत्तमं अस्मत्प्रसादतश्चैवकृष्णस्यानुग्रहात्तथा व्रतस्यास्यप्रभावाच्चावश्यंतेभवितासुतः सराजावचनात्तेषांचकारैकादशीव्रतं तत्रैवविपनेस्थित्वा मुनिभिःसहितस्तदा रात्रौजागरणंकृत्वानृत्यगीतैस्तवैर्हरेः द्वादश्यांपारणंचक्रे मुनिभिःसहितस्तदा आजगामगृहंराजाहर्षोत्फुल्लमुखांबुजः पुत्रदायाःप्रभावेनराज्ञीगर्भंततोदधे पुत्रोजातस्ततस्तस्यास्तेजस्वीरूपवान्गुणी तस्तेनसहायेनराज्ञासपालिताःप्रजाः एतस्मात्कारणाद्राजन्कर्तव्यंपुत्रकांक्षिभिः मोक्षार्थिभिश्चभक्त्यावैपुत्रदैकादशीव्रतं एकचित्तेनयोराजन्करोत्येकादशीव्रतं गुणिनोलभतेपुत्रानिहामुत्रचसद्गतिं अस्यामाहात्म्यश्रवणाद्दीर्घायुर्धनधान्यवान् पुण्यवांश्चभवेन्मर्त्योनात्रकार्याविचारणा

॥ इतिब्रह्मपुराणेब्रह्मांडोक्तापुत्रदैकादशीव्रतकथा ॥

पौषशुक्लैकादशीमन्वादिरितिमन्वादिनिर्णयोक्तान्येवकुर्य्यात् ॥ अस्यामेवमाघस्नानप्रारंभंकेचिदाहुः तदुक्तंब्रह्मपुराणे एकादश्यांशुक्लपक्षेपौषेमासिसमारभेत् द्वादश्यांपौर्णमास्यांवाशुक्लपक्षेसमापयेत् माघस्नानमितिशेषःपक्षांतरमाहविष्णुः दर्शेवापौर्णमास्यांवाप्रारभ्यस्नानमाचरेत् पण्यान्यहानित्रिंशत्तमकरस्थेदिवाकरइति पद्मपुराण

हतुलामकरमेषेपुप्रातःस्नायीसदाभवेत् हविष्यंब्रह्मचर्य्यंचमहापातकनाशनमिति स्नानकालउक्तो ब्रह्मपुराणे
एकादश्यांशुक्लपक्षेपौषेमास्यरुणोदये संप्राप्तेमाघमासस्यस्नानकालेविचक्षणः माधवांघ्रियुगंध्यात्वायुः स्ना-
तिसुरपूजितइति अरुणोदयमारभ्यप्रातःस्नानावधिप्रभो माघस्नानंभवेत्पुण्यंनात्रकार्य्याविचारणा उत्तमंतुसन्न
क्षत्रंलुप्ततारंतुमध्यमं सवितर्युदितेभूपततोहीनंप्रकीर्त्तितं एवंसति संप्राप्तेमाघमासेतुतपस्विजनवल्लभे क्रो
शंतिसर्ववारीणिसमुद्गच्छतिभास्करे यानितु माघमासेरटंत्यापः-किंचिदभ्युदितेरवौ ब्रह्मघ्नंवासुरापंवाकंपतं
तंपुनीमहि इत्यादिनारदीये वचनान्यशक्तविषयाणि तत्रैव तडागेष्वथवास्नायात्कूपेभांडाश्रितेतथा माघ
मासेवरारोहे प्रशस्तंनिम्नगाजलं भांडाश्रितेतुविशेषः सरित्तोयंमहावेगंनवकुंभस्थितंतथा वायुनाताडितं
रात्रौगंगास्नानसमंस्मृतं स्नातोवह्निंनसेवेतह्यस्नातोवाकथंचन सेवेतापिचहोमार्थंनशीतार्थंकथंचन स्नानवि-
धिमाहविष्णुः तत्रचोत्थायनियमंगृह्णीयाद्विधिपूर्वकं माघमासमिमंस्नास्येहंदेवमाधव तीर्थस्यास्यजले-
नित्यमितिसंकल्प्यचेतसि ततःस्नात्वाशुभेतीर्थेदत्वाचशिरसिमृदं वेदोक्तविधिनाराजन्सूर्य्यायार्घ्यंनिवेदयेत्
पितृणांतर्पयित्वातुअवतीर्य्यजलात्ततः शंखचक्रधरंदेवंमाधवंनामतर्पयेत् वह्नौहुत्वाविधानेनततस्त्वेकाशनो-
भवेत् भूशय्याब्रह्मचर्य्येणशक्तः स्नानंसमाचरेत् अशक्तस्यधनाढ्यस्यबहुदानंप्रकुर्वतः अवश्यमेवकर्त्तव्यंमा
घस्नानमितिश्रुतिः तिलस्नायीतिलोद्वर्त्तीतिलहोमीतिलोदकीतिलदस्तिलभोक्ताचषट्तिलीनावसीदति तैलमाम
लकाश्चैवतीर्थेदेयास्तुनित्यशः तथाप्रज्वालयेदग्निंसेवनार्थेद्विजन्मनां एवंस्नानावसानेतुभोज्यंदेवमवारितं भोज
येद्द्विजदांपत्यंभूषयेद्वस्त्रभूषणैः कंबलाजिनरत्नानिवासांसिविविधानिच चौलकान्यपिदेयानिप्रच्छादनपटा-
स्तथा उपानहौतथागुप्तमोचकौपापमोचकौ अनेनविधिनादद्यान्माधवः प्रीयतामिति सवित्रेप्रसवित्रेचपरं-

धामयुतेनमः त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधा दिवाकरजगन्नाथप्रभाकरनमोस्तुते परिपूर्णंकरिष्येहंमाघस्ना
नतवाज्ञया इतिमाघस्नानसमापनमंत्रः अहन्यहनिदातव्यास्तिलाःशर्करयान्विताः माघावसानेसुभगेपङ्
सभोजनंतथा सूर्य्योमेप्रीयतांदेवोविष्णुमूर्त्तिर्निरंजनं दंपत्योर्वाससीसूक्ष्मेसप्तधान्यसमान्विते त्रिंशत्तुमोदका
देयाशर्करातिलसंयुताः भागत्रयंतिलानांतुचतुर्थं.शर्करांशकः अनाभ्यंगोवरारोहेसर्वंमासंनयेद्व्रती इतिमा-
घस्नानविधिः ॥ पौषशुक्लद्वादश्यांसुजन्मद्वादशीव्रतम् नारदीये पौषस्यशुक्लद्वादश्यांसुजन्मद्वादशीव्रतं तत्र-
स्नानविधानेनगृह्णीयाद्वार्षिकंव्रतं पीत्वागोश्रृंगवार्य्यादौतांचकृत्वाप्रदक्षिणं प्रतिमासंततःशुक्लद्वादश्यांव्रतमाच
रेत् घृतप्रस्थचतुष्कंचक्रमाद्व्रीहियवस्यच द्विरक्तकंहेमतिलाःप्रस्थार्द्धपायसंघटं रौप्यस्यमाषमेकस्यत्रस्तिकृत्पि
ष्टपक्वकं छत्रमाषार्द्धहेम्नश्च प्रस्थंफाणितमुत्तमं चदनंपलिकंवस्त्रंपंचहस्तोन्मितंतुतत् एवंतुमासिकंदानंनि-
त्यंदेयंयथाक्रमं गोमूत्रंजलमाज्यंचत्रापःशाकंचदूर्विका दधिभक्तंयवान्नंचातिलान्पावकतापितान् दर्भावली-
रनुदिनंप्राशनंप्रतिमासकं एवंकृतव्रतोवर्षेसौवर्णींप्रतिमांरवेः कलशेताम्रपात्रेचन्यस्याभ्यर्च्येद्विधानतः गुर
वेधेनुसहितांसमर्प्यप्रणमेत्ततः विप्रान्द्वादशसंभोज्यतेभ्योदद्याच्चदक्षिणां एवंकृतव्रतोवर्षेजन्माप्नोत्युत्तमेकुले
नीरोगोधनधान्याढ्योभवेच्चाविकलेंद्रियः अथविष्णुधर्मोत्तरोक्तसुजन्मद्वादशीव्रतं हेमाद्रौवीरमित्रोदये पुलस्त्य
उवाच पौषेमासेसितेपक्षेद्वादश्यांशक्रदैवते नक्षत्रयोगगेविष्णुंप्रथमंतुततोर्चयेत् ततःप्रभृतिविप्रेंद्रमासिमा
सिजनार्दनं उपोषितःपूजयेत यावत्संवत्सरंगतं मासेचमासेविधिनोदितेनतस्यांतिथौदानमितिब्रवीमि प्रा
श्यंयथावद्विधिवत्क्रमेणतदुच्यमानंनिखिलंनिबोध घृतयथाव्रीहियवंहिरण्यंयवान्नमंभःकनकान्नपानं छत्रंपयो
न्नंगुडपुष्पताम्रंसुचंदनंवस्त्रमनुक्रमेण । एकैकपदोक्तमेकैकदानमेकैकस्मिन्मासेक्रमेणदेयं गोमूत्रमंभोघृतमाम

शाकंदूर्वादधिव्रीहियवास्तिलाश्च सूर्यांशुतप्तंजलमंबुदाभःक्षीरंचमासक्रमशःप्रदिष्टं आमशाकंअपक्वशाकं सूर्यांशुतप्तमिति जलविशेषणं दाभ्रमंबु कुलेप्रधानेधनधान्यपूर्णेविवेकवत्यस्तसमस्तदुःखेप्राप्नोतिजन्मा विकलेंद्रियश्चभवत्यरोगोमतिमान्सुखीच इविष्णुधर्मोत्तरोक्तसुजन्मद्वादशीव्रतम्

अथास्यासेवभविष्योत्तरोक्तं गोविंदद्वादशीव्रतम्

श्रीकृष्णउवाच अथान्यदपितवच्मिगोविंदद्वादशींशृणु यस्याःसम्यगनुष्ठानात्प्राप्नोत्याभिमतंफलं पौषमासे सितेपक्षेद्वादश्यांसमुपोषितः सम्यक्संपूज्यगोविंदंदेवदेवमधोक्षजं धूपपुष्पोपहारैश्चनैवेद्यैश्चसमाहितः गोविंदेतिजपन्नामपुरस्तद्गतमानसः विप्रायदक्षिणांदद्याद्यथाशक्त्यासमाहितः स्वपन्विबुध्यन्स्खलितोगोविंदेति चकीर्तयेत् पाखंडिभिर्विकर्मस्थैरालापंचविवर्जयेत् गोमूत्रंगोमयंचापिदधिक्षीरमथापिवा गोदेहतःसमुद्भूतं समश्नीयाद्विशुद्धये द्वितीयेह्नितत:स्नात स्तथैवाभ्यर्च्यकेशवं तेनैवनाम्नासंपूज्य दद्यात्तेभ्यश्चदक्षिणां ततोभुंजीतगोदेहसंभूतेनसमन्वितः एवमेवाखिलान् मासा नुपोष्यप्रयतःशुचिः दद्याद्गवाखिलान्मासानुपोष्यप्रयतःशुचिः दद्याद्गवाह्निकंविद्वान्प्रतिमासंस्वशक्तितः पारितेचपुनर्वर्षेगोविंदपद्मयासह कारयित्वास्वर्णमयंपुष्पैर्धूपैःस्रग्वरैः गोविंदोगोपतिर्गोप्ताश्रीकांतःश्रीधरोहरिः सर्वकामफलावाप्तिंकरोतुममकेशवः इत्युच्चार्ध्यंततोदद्यात्तस्मिन्नह्निगवाह्निकं भक्त्यापरमयाराजन्शृणुयत्फलमाप्नुयात् स्वर्णशृंगींरौप्यखुरांसघंटांसदृपांनरः प्रतिमासंद्विजातिभ्योदत्त्वायत्फलमश्नुते तदाप्नोत्यखिलंसम्यग्व्रतमेतदुपोषितः तंचलोकमवाप्नोतिगोविंदोयत्रतिष्ठति गोविंदद्वादशीमेतामुपोष्यादितितारकाः विद्योतमानादृश्यंते लोकेऽद्यापिशशांकवत् गोविंदमर्चयतिगोर

समोजनश्चगावोविनोदयातिदत्तगवाह्निकश्च गोद्वादशीयुक्तव्रतोपवासःप्राप्नोत्यसौसुरभिलोकमपेतशोकः

इतिभविष्योत्तरोक्तंगोविंदद्वादशीव्रतम् ।

पौषशुक्लत्रयोदश्यामच्युतपूजाव्रतं पौषशुक्लत्रयोदश्यांसमभ्यर्च्याच्युतंहरिं घृतपात्रंद्विजेंद्रायदद्यात्सवार्थसिद्धये इतिनारदीयोक्तमच्युतत्रयोदशीव्रतम् ॥ कृत्यतत्त्वार्णवेप्येवमेव पौषमासित्रयोदश्यांघृतविप्रायपार्थिव समभ्यर्च्यस्वयदद्यात्सर्वान्कामानवाप्नुयात् इतिपौषशुक्लत्रयोदशीकृत्यम् ॥

पौषशुक्लचतुर्दश्यांविरूपाक्षव्रत नारदीये पौषशुक्लचतुर्दश्यांविरूपाक्षव्रतंस्मृतं कपर्दीश्वरसान्निध्यंप्राप्यविप्रविचित्यच स्नात्वागाधजलेतत्र विरूपाक्षंशिवंयजेत् गंधमाल्यनमस्कार धूपदीपान्नसंपदा भोज्यंद्विजातयेदद्यान्मोदतेदिविदेववत् हेमाद्रौ विष्णुधर्मोत्तरेप्येतदुक्तम् मार्कंडेयउवाच पौषशुक्लचतुर्दश्यांविरूपाक्षंतुपूजयेत् पौषमासादथारभ्ययावत्संवत्सरंभवेत् गंधमाल्यनमस्कारधूपदीपान्नसंपदा तत्स्थद्विजातयेदद्याद्व्रतांतेतुपरंतप तत्स्थतदुपकरणंमहोक्षादिपूजादानादि कृत्वाव्रतंवत्सरमेतदिष्टभयंनचाप्नोतिसराक्षसेभ्यः कामानवाप्नोतिभवत्यरोगोभयचराजन्नचतस्यकिंचित् इतिविष्णुधर्मोत्तरोक्तंविरूपाक्षव्रतम् ॥

पौषपौर्णमास्यांलक्ष्मीपूजाव्रतम् नारदीये इदंजगत्पुरालक्ष्म्यात्यक्तमासीत्ततोहरिः पुरंदरश्चसोमश्चतथातिष्यबृहस्पतीपंचैतेपुष्ययुक्तायांपौर्णमास्यांजगद्बलात् अहंकृतंपुनश्चक्रुः सर्वसौभाग्यवृद्धये गौरसर्षपकल्केनसमालभ्यस्वकांतनुं स्नायात्सर्वौषधिजलैर्धारयेच्चनवांशुकं दृष्ट्वाचमंगलद्रव्यंस्पृष्ट्वानत्वाततोर्चयेत् हरिद्राकुंदपुष्पैश्चगंधाद्यैरुपचारकैः विधायहोमंविप्रांश्चभोजयेत्पायसंशनैः एवंकृत्वाव्रतंविप्रमाप्नो

तिविवर्द्धनं अलक्ष्मीनाशनंचैवमोदेतत्रपरत्रच कृत्यतत्त्वार्णवे ब्रह्मलोकेतपरस्तप्त्वापितरोलेभिरेवरं
पौषेतुपुष्यनक्षत्रेपिष्टकैर्विविधैः पिष्टैन् अभ्यर्चयातियोदेवान्निजमात्मानमेवच गौरसर्षपकल्केनसमालभ्यस्व
कांतनुं कृतस्नानैस्तथाकार्य्यमलक्ष्मीनाशनंपरं उद्वर्त्यदेवंचतथासर्वौषधियुतैर्जलैः स्नापयित्वानवंवस्त्रंगृही
त्वाकांचनंतथा द्रष्टव्यंमंगलंशांतधूपस्त्रङ्माल्यशोभितं ततोनारायणंशुक्रचंद्रशक्रबृहस्पतीन् संपूज्यपुष्पै
र्धूपैश्चनैवेद्यैश्चपृथक्पृथक् प्रशस्तैर्वैदिकैर्मंत्रैः कृत्वाग्निहवनंशुभं दानैर्विप्रांश्चसतर्प्यनवैर्वस्त्रैश्चशोभि
तान् ततः पुष्टिकरंहृद्यं भोक्तव्यंघृतपायसं पुष्ययोगेतुकर्त्तव्यराज्ञास्नानंतुसर्वदा विष्णुरपि पौषीचेत्पुष्ययुक्ता
स्यात्तस्यांगौरसर्षपकल्केनोत्सादितशरीररोगः गव्यघृतपूर्णकुंभेनाभिषिक्तः सर्वगंधैः सर्वबीजैश्च स्नातोघृतेन
भगवंतंवासुदेवंस्नापयित्वापुष्पधूपदीपगंधनैवेद्यादिभिश्चाभ्यर्च्य वैष्णवैःसूक्तैर्बार्हस्पत्यैर्मंत्रैश्चानलंहुत्वा सस्रुव
र्णेनघृतेनब्राह्मणंस्वस्तिवाचयेत् ततोवासोयुगंचकर्त्रेदत्त्वा अनेनकर्मणामुच्यते सर्वौषध्यउक्तश्छांदोगपरिशिष्टे
कुष्ठमांसीहरिद्रेद्वेमुराशैलेयचंदनं वचाचपकमुस्ताचसर्वौषधिगण स्मृतः ॥ अस्यामेवपौष्यां ईशानव्रतमुक्तं
हेमाद्रौ कालिकापुराणे पिप्पलादवाच अथोपोष्यचतुर्दश्यांपौर्णमास्यांगुरोर्दिने पूजयेद्विधिनायेनशार्वलिंगं
निबोधतत् ब्रह्माणंपश्चिमेभागेवामेलिंगस्यवैहरिं खखोल्कंदक्षिणेरुद्रमीश्वरंप्राग्दिशास्थितं खखोल्कसूर्य्यस् गु
ग्गुलंचाज्यसंयुक्तमगुरुवासितंशुभं दद्यान्नीराजनंकुर्य्याद्दत्त्वागोयुग्मपंचकं नैवेद्याद्यंबलिंचैवपूर्ववत्स्वगृहंव्रजेत्
पंचगव्यं ततःप्राश्य आचार्य्यब्राह्मणांस्तथा व्रतिनोमिथुनान्यवभोजयेच्चस्वशक्तितः हेमवस्त्रादिकंचैवयत्नात्कृ
त्वाथपूजयेत् इष्टदेवाःप्रपूज्यावै वेद्याद्यंचप्रपूजयेत् नत्वाग्निंपूजयित्वातुपंचवक्त्रंशिवंस्मरेत् प्राप्तेब्देपंचवैगावःपं
चपंचनियोजयेत् तेषामुद्दिश्यतेष्वेवंन्यूनंवापिततोधिकं पंचपंचेतिवचनात् द्वितीयेब्दे तृतीयेतिस्रः चतुर्थेचतस्रः

वृषभस्तुप्रथमाब्दवदेकएव तेषांब्रह्मादीनांपंचानांचक्रेदेवानांपंचवर्गानुद्दिश्य व्रतेयन्न्यूनाधिकतत्तेष्वेवनियोजयेत् निखिलंप्राग्विशेषंपंचकर्त्तव्यंतत्पदेप्सुभिः सुखंकीर्त्तिश्रियोर्थंचइहैवाविभवायच रहस्यमेतद्गदितंनदेयंयस्यकस्य चित् इतिनिर्णयामृते ब्रह्मपुराणोक्तपौष्यामीशानव्रतम् ॥ अथास्यांभविष्योत्तरेपुराणदानमुक्तम् नारदीये चतुर्दशसहस्रंतुपुराणंपरिकीर्त्तितं भविष्यंसर्वदेवानांसाम्यंयत्रप्रकीर्त्तितं गुणानांतारतम्येनसमब्रह्मेतिहिश्रुतिः तल्लिखित्वातुयोदद्यात्पौष्यांविद्वान्विमत्सरः गुडधेनुयुतंहेमवस्त्रमाल्यविभूषणैः वाचकंपुस्तकंचापिपूजयित्वावि धानतः गंधाद्यैर्भक्ष्यभोज्यैश्चकृत्वानीराजनादिकं योवैजितेंद्रियोभूत्वासोपवाससमाहितः अथवैकहवि ष्याशीकीर्त्तयेच्छृणुयादपि समुक्तःपातकैर्घोरैः प्रयातिब्रह्मणः पदम् ॥ अथपौष्यांपुष्यनक्षत्रस्थेचंद्रेतृती यायांवापुष्यस्नानविधानमुक्तंकालिकापुराणे और्वउवाच शृणुराजन्प्रवक्ष्यामिपुष्यस्नानविधाक्रमम् येनवि ज्ञानमात्रेणविघ्नानश्यंतिसंततं पौषेपुष्यर्क्षगेचंद्रेपुष्यस्नानंनृपश्चरेत् सौभाग्यकल्याणकरंदुर्भिक्षमरकापहं विष्ट्यादिदुष्टकरणेव्यतीपातेचवैधृते वज्रेशूलेहर्षणादौयोगेतुयदिलभ्यते तृतीयापुष्ययुक्तार्क्षैरविशौरिकुजाह्नि तदासमस्तदोषाणांस्नानंहरणकंपरं ग्रहदोषाश्चजायंतेयदिराज्येपुचेतयः तदापुष्यर्क्षमात्रेतुकुर्य्यान्मासांतरे पिच इयंतुब्रह्मणाशांतिरुद्दिष्टागुरवेपुरा शक्रार्थंसर्वदेवानांशांत्यर्थंचजगत्पते तुषकेशास्थिवल्मीककी टदोषादिवर्जिते सुस्थानेचंपकाशोकवकुलादिविभूषिते हंससकारंडवाकीर्णैसरस्तीरेथवाशुचौ पुष्यस्नाना यन्नृपतिर्गृह्णीयात्स्थानमुत्तमं ततः पुरोहितोराजा नानावादित्रनिःस्वनै प्रदोषसमयेगच्छेत्तत्स्थानंपूर्ववासरे तस्यस्थानस्यकौवेर्य्यां दिशिस्थित्वापुरोहितः स्रग्गंधचंदनैः पानैः कर्पूराद्यधिवासितैः गोरोचनादिसिद्धा र्थैरक्षतैश्चफलादिभिः गत्वावेदादिभिर्मंत्रैः सर्वसाध्याधिवासितैः अधिवास्यतुतत्स्थानं पूजयेत्तत्रदेवताः

गणेशंकेशवंशक्रंब्रह्माणंचापिशंकरं उमयासहितंदेवं सर्वाश्चगणदेवताः मातृश्चपूजयेत्तत्रनृपतिः सपुरोहितः
मंगलान्कलशान्कृत्वानानानैवेद्यसंचयं प्रदद्यात्पायसंस्वादुफलंमोदकयावकौ अधिवास्यतुतत्स्थानंदूर्वासिद्धा
र्थकाक्षतैः तस्मात्स्थानात्भूतानिसारयेन्मंत्रमीरयन् अपसर्पंतुतेभूताःयेभूताःस्थानपालकाःभूतानामविरोधेनपू
जाकर्मकरोम्यहं ततःकरौपुटीकृत्य मंत्रेणानेनपार्थिवः आवाहयेदिमान्देवान्पूज्यान्पुष्पांजलीकरः आगच्छं
तुसुराःसर्वेयेत्रपूजाभिलाषिणः दिशोहियानगाःसर्वेयेचान्येप्यंशभागिनः ततःपुष्पांजलिंकृत्वापुनर्मंत्रंपठे
दिदं अत्रातिष्ठंतुविबुधाःस्थानमासाद्यमामकं स्वपूजांप्राप्यंयातारोदत्वाशांतिमहीभुजे ततस्तान्नृपतिर्विप्र
येत्तुसपुरोहितः कृत्वापूजांतुदेवानांरात्रौतत्रनृप स्वपेत् शुभाशुभंफलंविप्रज्ञेयंदैवज्ञसंमतैः दुःस्वप्नदर्शन
चेत्स्यात्तदापुष्पाभिषेचने होमंचतुर्गुणंकुर्य्याद्दद्याद्विप्रेगवांशतं गोवाजिकुंजराणांतुप्रासादस्यगिरेस्तरोः
आरोहणंशुभकरंराज्यश्रीवृद्धिदायकं दधिदेवसुवर्णानांभुजंगस्यचदर्शनं वीणादूर्वाक्षतफलपुष्पंछत्रविले
पनं शीतांशुछत्रशंखानांप्रश्नस्यसुहृदांतथा लाभःक्षयकरःशत्रोरलंकारस्यभूभृतः दर्शनंचोपरागस्यनिगडे
नचबंधनं मांसस्यभोजनंचैवपर्वतस्याविवर्तनं नाभिमध्येतरूत्पत्तिर्मृतंप्रत्यंतरोदनम् अगम्यागमनं
कूपपंकगर्त्तावतीर्य्यता पर्वतस्यतथानद्याःप्रोचारःशत्रुकर्षनं स्वपुत्रमारणंचैवपानंरुधिरमद्ययोः भोजनं
पायसस्यापिमनुष्यारोहणंतथा कल्याणसुखंभोग्यायराज्ञःशत्रुक्षयस्तथा एतेस्वप्नाश्चकुर्वीतिनृपस्यन्नृपसत्तम
खरोष्ट्रमहिषाणांतुआरोहोराज्यनाशकः नृत्यंगीतंतथाहास्यंपाठश्चाप्यशुभप्रदः रक्तवस्त्रपरीधानंरक्तमा
ल्यांगसंजनं रक्तांकृष्णांस्त्रियंचैवकामयन्मृत्युमाप्नुयात् कूपांतरेप्रवेशःस्याद्दक्षिणाशागतिस्तथा पंकेनिमज्ज
नंस्नानंभार्य्यापुत्रविनाशनं नाभौयस्यतरूत्पत्तिर्भवेत्स्वप्नेनृपस्यतु आदायगर्भनार्डींतुशकुनोयातिखद्धंतंसतुरा

ण्यांतरंप्राप्यमहाकल्याणमाप्नुयात् दीर्घंविंशतिहस्तंतुहस्तषोडशसम्मितं कुर्यात्तुलक्षणोपेतंयज्ञमंडपमुत्तमं त
तोपरेन्हिपूर्वाह्णेब्राह्मणांपूजनंचरेत् कुडयलग्नांवसोर्धारांवृद्धिश्राद्धंतथैवच चंदनागुरुकस्तूरीधूपकर्पूरचूर्णकैः सं
मृज्यमंडलस्थानंतस्मिन्होमंसमाचरेत् अस्त्रायहुंफडित्येवंलिखेन्मंत्रद्वयंबुधः मंत्रविन्मंडलंयज्ञ सूत्रैः कंबलसंभ-
वैः कौशेयैर्वास्वस्तिकाख्यंप्रथमंमंडलंलिखेत् चतुर्हस्तप्रमाणंतुमंडलंविलिखेत्ततः हस्तप्रमाणंपद्मंतुमंडलस्य-
प्रकीर्तितं द्वाराणिसार्द्धहस्तानिकर्णिकाकेसरोज्वलं सितंरक्तंचपीतंचकृष्णंहारितमेवच शालिचूर्णैश्चकौसुंभैर्हारि-
द्रैर्हरिद्रुद्भवैः कुर्यात्तथांजनैश्चूर्णैरजोमंडलवृद्धये पश्चात्तुतत्समारभ्यतात्रपश्चिमगामिनीं पश्चिमद्वारमारभ्यशतह
स्तांविनिर्दिशेत् प्रत्येकंवारमध्येतुपद्मंचैवाष्टपत्रकं कुर्यान्मंडलभागज्ञश्चूर्णैरेवपृथक्पृथक् चूर्णैस्तुमंडलंकृत्वासूत्रा
नुत्सारयेत्ततः भवनायनमइतिततोहस्तंवियोजयेत् सव्यावलंबहस्तंतु रजः पातंसमाचरेत् मध्यमानामिकांगु
ष्ठैरुपरिष्टाद्यथेच्छया अधोमुखांगुलिंकृत्वापातयेच्चविचक्षणः समरेखातुकर्तव्याः विच्छिन्नाः पुंजवर्जिताः संसक्तं
विषमंस्थूलंविषमाकृष्टमावृतं पर्यंतसार्पितंह्रस्वमालिखेन्नकदाचन संसक्तेकलहंविद्याद्दूरेरेखोरुविग्रहं अतिस्थूले-
भवेद्व्याधिर्नित्यंपीडाविमिश्रिते विंदुभिर्भयमाप्नोतिशत्रुपक्षान्नसंशयः कृशायांचार्थहानिःस्याच्छिन्नायांमरणं-
भवेत् वियोगोवाभवेत्तस्यइष्टद्रव्यसुतस्यवा अविदित्वालिखेद्यस्तुमंडलंतुयथेच्छया सर्वदोषानवाप्नोतिये
दोषाःपूर्वभाषिताः सितसर्षपदूर्वाद्यारेखाकार्य्याप्रमाणतः विमलंविजयंभद्रंविशालंशुभदंशिवं वर्द्धमानंचदेवं
चशतांक्षंकामदायकं रुचकंस्वस्तिकाख्यंचद्वादशैतेतुमंडलाः यथास्थानंयथायज्ञंयोजनीयाविचक्षणैः सागरेमथ्य
मानेतुपीयूषार्थंसुरासुरैः पीयूषधारणार्थायनिर्मिताविश्वकर्मणा कलाकलास्तुदेवानामार्पत्वातेपृथक्पृथक् यतः
कृतास्तेकलशास्ततस्तेपरिकीर्त्तिताःनचैवकलशाःप्रोक्तानामतस्तान्निबोधतगाह्योपगाह्योमरुतोमयखश्चतथापरः

मनोहावलभद्रश्चविजयस्तनुमोपकइंद्रियघ्नोथविजयोनवमः परिकीर्त्तित तेषामेवक्रमाद्रूपनवनामानियानितुश्रृणु-
तान्यपराण्येवशांतिदानिसदैवहिक्षितींद्रःप्रथम-प्रोक्तोद्वितीयोजलसंभव.पावनाग्नीततोह्यौतुयजमानस्ततःपरं को-
पसंभवनामातुपष्ठःसपरिकीर्त्तितः सोमस्तुसप्तमःप्रोक्त आदित्यश्चाष्टमःस्मृतः विजयोनामकलशोयोसौ
नवमउच्यते सतुपचमुखप्रोक्तोमहादेवस्वरूपधृक् घटस्यपंचवक्त्रेषुपचवक्त्रःस्वयतथा यथाकाष्ठास्थितःसम्यग्वा
मदेवादिनामतः मंडलस्यतुपद्मांतःपंचवक्त्रंघटंन्यसेत् क्षितींद्रंपूर्वतोन्यस्यपश्चिमेजलसंभवं वायव्येवायवंन्यस्यऐ
शान्यांकोपसंवभं सौम्यमुत्तरतोयोज्यंसौरंदक्षिणतोन्यसेत् न्यस्यैवंकलशांश्चैवतेषुचैतान्विचिंतयेत् कलशानांमु
खेब्रह्माग्निवायांशंकरःस्थित मूलेतुसंस्थितोविष्णुर्मध्येमातृगणाःस्थिताः दिक्पालदेवताःसर्वावेष्टयंतिदिशोदश-
कुक्षौतुसागराःसप्तसप्तद्वीपाश्चसंस्थिताः गंगाद्याःसरितासर्वावेदाश्चत्वारएवच कलशेषुस्थिताःसर्वास्तेषुतानि-
विचिंतयेत् रत्नानिसर्ववीजानिपुष्पाणिचफलानिच वज्रमौक्तिकवैडूर्यमहापद्मेंद्रस्फाटिकैः सर्वधाममयंवि
ल्वंनागरोडुंवरंतथा वीजपूरकजंवीरआम्राम्रातकदाडिमान् वचांशालिंचनीवारंगोधूमंसितसर्षपं कुकुमा
गुरुकर्पूरमदनंलोचनंतथा चंदनंचतथामांसीवालांकुष्ठंतथैवच कर्पूरपत्रचंडश्चजलानियासकांवुदं शैलेयंवद
रंजातीपत्रपुष्पंतथैवच पलाशानांतथायूकांदेवीपणकमेवच वचाधात्रीसमंजिष्ठांतुरुष्कंमंगलाष्टकं दूर्वामोहनिकां
भद्रांशतमूलीशतावरी .पर्णानांपूरणांक्षुद्रांसहदेवीगजांक्षमां पूर्णकोपांसितांपाठांगुंजाशिरासिकाननौव्यामकंगज
दंतंतु शतपुष्पांपुनर्नवां . ब्राह्मींदेवींशिवांरुद्रांसर्वसंध्यानिकांस्तथा समाहृत्यशुभानेतान्कलशेषुनिधापयेत्
कलशस्ययथादेशं विधिंशंभुंगदाधरं यथाक्रमंपूजयित्वा शंभुंमुस्थ्यंतथायजेत् प्रासादेनतुमंत्रेणशंभुमंत्रेण
शंकरं प्रथमंपूजयेन्मध्येनानानैवेद्यचदनैः दिक्पालानांघटेष्वेवदिक्पालानपिपूजयेत् पूर्ववहिःस्थापितेषुग्रहाणां

स्थेचमखंडचतुष्टयं नानापट्यकपाठस्ये चमखंडचतुष्टये नानालंकारभूषाढ्यंनृपतिरत्नमालिनं स्नापयेद्ब्राह्म
णैःसार्द्धराजानंमुखसंगतं सर्वातकंबलंकृष्णरत्नवस्त्रादिशोभितं कलशैर्वालिपुष्पाद्यैःसार्पिश्चूर्णैश्चस्नापयेत् अ
ष्टौषोडशविंशाष्टशतमष्टाधिकंचवा कलशानांसमाख्याताश्चाधिकस्योत्तरोत्तरं जयकल्याणदैर्मंत्रैर्मंगलार्थैश्च
शोभवैः वैष्णवैरथदिक्पालैर्ग्रहमंत्रैश्चतांत्रिकैः आज्यंतेजःसमुद्दिष्टंमाज्यंपापहरंपरं आज्यंसुराणा
माहारश्चाज्येलोकाःप्रतिष्ठिताः भौमांतरिक्षादिव्यंवा यत्तेकल्मषमागतं सर्वंतदाज्यसंस्पर्शात्प्रणाशमुपगच्छतु
ततोपनीयगात्रात्तंकंबलंवस्त्रमेवच कलशैःस्नापयेद्रूपपुष्पस्नानांबुपूरितैः एभिर्मंत्रैर्नरश्रेष्ठतत्त्वतत्त्वार्थसाधकैः
सुरास्त्वामभिषिंचंतुयेचसिद्धाःपुरातनाः ब्रह्माविष्णुश्चरुद्रश्चसाध्याश्चमरुतांगणाः आदित्यावसवोरुद्राश्चाश्वि
नयाभिषग्वरौ आदितिर्देवमाताचस्वाहालक्ष्मीःसरस्वती कीर्तिर्लक्ष्मीर्धृतिःश्रीश्चसिनीवालीकुहूस्तथा दि
तिश्चसुरमाचैवविनताकद्रुरेवच ऋक्षाणिचमुहूर्त्तानि पक्षाहोरात्रसंधयः देवपत्न्यश्चयाःप्रोक्तादेवमातरएवच
सर्वास्त्वामभिषिंचंतु शुभाश्चाप्सरसांगणाःसंवत्सरानिमेषाश्च कालस्यावयवास्तथा वैमानिकाःसुरगणामनवः
सागरैःसह सरितश्चमहानागाःनागाःकिंपुरुषास्तथा वैखानसामहाभागाद्विजावैहायनाश्चये सप्तर्षयःसदा
राश्चध्रुवस्थानानिवैसदा मरीचिरत्रिःपुलहःपुलस्त्यःक्रतुरंगिराः भृगुःसनत्कुमारश्चजैगीषव्योभिनंदनः एक
तश्चद्वितश्चैवात्रितोजाबालिकाश्यपौ दुर्वासादुर्विनीतश्चकत्यःकात्यायनस्तथा मार्कंडेयोदीर्घतपाःशुनःशेफो
विदूरथः श्रौर्वःसंवर्त्तकश्चैवच्यवनोत्रिःपराशरः द्वैपायनोयवक्रीतो देवरातःसहानुजः एतेचान्येचवहवोवेद.

व्रतपरायणाः सशिष्याअभिषिंचंतुसदाराश्चतपोधनाः पर्वतास्तरवोवल्ल्यः पुण्यान्यायतनानिच प्रजापतिः
क्षितिश्चैवगावोविश्वस्यमातरः वाहनानिचदिव्यानिसर्वेलोकाश्चराचराः अग्नयःपितरस्ताराजीमूतंखंदिशोदि-
शः तोयैस्त्वामभिषिंचंतुसर्वोत्पातनिवर्हणैःइत्येवंशुभदैरेतैर्मंत्रैर्दैवतथापरैः आपोहिष्ठाहिरण्येतिशंभवेतिसुरेतिच
मानस्तोकेतिमंत्रेणत्वामुद्धारेत्यनेनच सर्वमंगलमांगल्येश्रीश्चतेग्रहयोगिभिः इत्येवंस्नानमावर्त्य कंबलैःसर्वमंग
लमंत्रेणवस्त्रकार्पासिकंधियात आचम्यचततोदेवान्गुरून्विप्रांश्चपूजयेत् ध्वजछत्रंचामरंचघंटाश्चाश्वान्गजां
स्तथा मंत्रजप्तान्धारयेत्तुततोगच्छेद्धुताशन तत्रगत्वावह्निमध्ये वह्निंतंवीक्ष्यपार्थिवः स्वनिमित्तानिवह्ने
श्च लक्षयेत्तत्रवेदिभिः दैवज्ञकंचुकामात्यवदिपौरजनैर्वृतः वादित्रघोषैस्तुमुलैस्तथातौर्य्यत्रिकैःशुभैः कृत्वाशेषं
पुनःशांतिमाशीर्वाच्यचवैद्विजान् पूर्णांविधायविधिवद्दक्षिणाकनकैर्युतः धान्यानिचोपवासांसिहत्वाकृत्वाविसर्जनं
ततःशेषजलैःसर्वानमात्यादीन्पुरोहितः सचयेच्चतुरंगंच अंगंचापिसराष्ट्रकं एवंकृत्वानृपःपश्चात्त्रिरात्रंसंयतो
भवेत् मांसमैथुनहीनश्चकुर्य्यान्मंगलसेवनं पुष्यनक्षत्रयुक्तातुतृतीयायदिलभ्यते तस्यांपूज्यासदादेवीचं
डिकाशंकरेणहि पांचालिकाविवाहाद्यैः शिशूनांकौतुकैस्तथा वैवाहिकेनविधिनामोदयेच्चंडिकांशिवां चतुष्पथे
षुसर्वेषुदेवदेवगृहेषुच पताकाभिरलंकारंकुर्य्याद्देवीगृहेतथा एवंकृत्वामहाशांतिं यागपुष्पाभिषेचनं चतुर्वर्गैःसमं
राजाभार्य्याभिस्तनयैःसह राज्यमंडलसंयुक्तः परत्रेहनसीदति नातःपरतराशांतिर्नातःपरतरःस्तवः नातःपर 11
तरोयज्ञो नातःपरतरंशिवं अनेनैवविधानेन नृपतेरभिषेचनं युवराज्याभिषेकंचकुर्य्याद्राजपुरोहितः नृपाभिषे

॥ श्रीरघुनाथोजयति ॥

ओंश्रीगणेशायनमः ॥ अथमाघमासकृत्यनिर्णयः ॥ मकरसंक्रमेतु

हेमाद्रिमतेनसंक्रांतिकालात् चत्वारिंशत्घटिकाः पुण्यकालः त्रिंशत्कर्कटकेनाड्योमकरेतुदशाधिका इतिब्रह्मवैवर्तवचनात् माधवमतेतुविंशतिः त्रिंशत्कर्कटकेपूर्वामकरेविंशतिःपराः अतीतानागतेपुण्येद्वेतूदग्दक्षिणायने इतिवासिष्ठोक्तेः रात्रौमकरसंक्रमेतुपरदिनेसूर्योदयोत्तरंपूर्वमहर्दलंपुण्यं त्रिंशत्कर्कटकेनाड्योमकरेतुदशाधिका इतिचत्वारिंशत्घटिकापुण्यकालत्वात् भविष्योत्तरेपि कार्मुकंतुपरित्यज्यझषंसंक्रमतेरविः प्रदोषेचार्धरात्रेवास्नानंदानंपरेहनीति वृद्धगार्ग्योपि यदास्तमनवेलायांमकरंयातिभास्करः प्रदोषेवार्धरात्रेवास्नानंदानंपरेहनीत्युक्तेपि पूर्वार्धएवपरेहनीति रात्रौस्नानंनकुर्वीतविनावैराहुदर्शनादितिवचनसामर्थ्याच्च दिवासंक्रमेतु तद्दिनएव आसन्नसंक्रमपुण्यंदिनार्धंस्नानदानयोरितियज्ञपार्श्वदेवलवचनादितिदिक् अत्रकृत्यंशिवरहस्ये तस्यांकृष्णतिलैःस्नानंकार्यंचोद्वर्तनंतिलैः तिलाश्चदेयाविप्रेभ्यःसर्वदैवोत्तरायणे तिलतैलेनदीपाश्चदेयाः शिवगृहेशुभाः मकरेदानविशेषोहेमाद्रौ धेनुंतिलमयींराजन्प्रदद्याद्यस्तूत्तरायणे सर्वान्कामानवाप्नोतिविंदतेपरमंसुखमिति विष्णुधर्मोत्तरे उत्तरेत्वयनेविप्रवसुदानंमहाफलं तिलपूर्णमनड्वाहंदत्वारोगैर्विमुच्यते इतिकल्पतरौ कालिकापुराणे होमंतिलैःप्रकुर्वीतसर्वदैवोत्तरायणे योवैदेवायविप्रायहाटकेनसमंददेत् उत्तरायणमासाद्यनरःकस्मात्सशोचतीति अत्रमूलकभक्षणनिषेधउक्तः तिथितत्त्वेस्कांदे पितॄणांदेवतानांचमूलकंनैवदापयेत् ददन्नरकमाप्नोतिभुंजीतब्राह्मणोयदि ब्राह्मणोमूलकंभुक्त्वाचरेच्चांद्रायणंव्रतं अन्यथानरकंयातिक्षत्त्रोविट्शूद्रएवच वरंभुक्तमभक्ष्यंतुपिवे

द्वागर्हितंचयत् वर्जनीयंप्रयत्नेनमूलकंमदिरासममिति माघस्नानमुपक्रम्य देवीपुराणे मकरस्थेरवौमाघे नस्नात्यनुदिनेरवौ कथंपापैःप्रमुच्येतकथंवात्रिदिवंव्रजेत् मकरस्थेरवौमाघेगोविंदाच्युतमाधव स्नानेनानेन पंकेशयथोक्तफलदोभव इमंमंत्रंसमुच्चार्य्यस्नायान्मौनसमन्वितः वासुदेवंहरिंकृष्णंमाधवंव्याहरन्पुनः तिल दानंमहाभारतेपि माघमासितिलान्यस्तुब्राह्मणेभ्यःप्रयच्छति सर्वसत्वसमाकीर्णंनरकंनसपश्यति विष्णुध र्मोत्तरे तिलप्रदानान्माघेतुयाम्यलोकंनगच्छति वामनपुराणे माघमासितिलादेयास्तिलधेनुश्चमानद इन्धे नादयश्चान्येमाधवप्रीणनायतु इध्महोमोपयोगीदारुइंधनमग्निदीपनोचितं संवर्त्तः इंधनानिचयोमाघेविप्रेभ्यः संप्रयच्छति ससुखोदीप्तकायाग्निःसुभगश्चैवजायते शिशिरोपक्रमेदानाद्यारंभस्तस्यमासद्वयव्यापित्वात् विष्णु धर्मोत्तरे वहिःस्नानंनरः कृत्वा सूर्य्यस्योदयनंप्रति शिशिरेसततंवन्हिंतर्पयित्वातथातिलैः कुल्माषंसघृतंदत्वाय थाशक्तिद्विजातये कायाग्निदीप्तिप्राकाश्यंशत्रुनाशंचविंदति शिशिरर्तूपक्रमादिनेउदितमात्रसूर्येउदितमात्रेग्रा माद्वहिर्जलाशयेस्नात्वा अग्नौप्रजापतयेस्वाहेतितिलान्हुत्वा शूद्रोब्राह्मणद्वाराहोमंकारयित्वा सतंडुलान्घृ तसहितान्स्विन्नान्मापान्दद्यात् भविष्यपुराणे शीतकालेधनंदद्यान्नराणांशीतनाशनं भानोरायतनेदेविसोश्वमेध फलंलभेत् नरसिंहपुराणे शीतकालेसदावन्हिंप्रज्वालयतियोनरः सर्वसत्वहितार्थायस्वर्गेसोप्सरसंलभेत् एतज्ज्वालनमात्रे विष्णुधर्मोत्तरे शिशिरेसकलंकालंग्रासंपरगवेतथा दत्वास्वर्गमवाप्नोतिसंवत्सरशतानि च यमः प्रातःस्नायीतुद्वौमासौमानवोमाघफाल्गुणौ देवान्पितॄन्समभ्यर्च्यसर्वपापैःप्रमुच्यते विष्णुरपि प्रातःस्नायीभवेन्नित्यंद्वौमासौमाघफाल्गुणौ यदीच्छेद्विपुलान्भोगान्चंद्रसूर्यग्रहोपमान् यमवाक्यानुसारेण देवपितृतर्पणसहितंस्नानं कृतसंकल्पेनाशौचेपिकार्य्यं विष्णुवाक्यंतु अशौचेस्नानमात्रपरं अत्रप्रयागम

हिमा मत्स्यपुराणे । षष्टितीर्थसहस्राणिषष्टितीर्थशतानिच ॥ माघेमासिगमिष्यंतिगंगायमुनसंगमे ॥ गवांश
तसहस्रस्यसम्यग्दत्तस्ययत्फलं ॥ तत्फलंमाघमासेतुत्र्यहं स्नानस्यतद्भवेत् ॥ सितासितेतुयत्स्नानंमाघेमासि
युधिष्टिर ॥ नतेषांपुनरावृत्तिःकल्पकोटिशतैरपि ॥ माघेमास्युषसिस्नात्वादंपत्यमर्चयेत् ॥ भोजयित्वायथा
शक्तिवस्त्रमाल्यविभूषणैः ॥ सूर्यलोकेवसेत्कल्पंसूर्यतुल्यवपुःपुमान् ॥ अथव्रतानि ॥ माघेमासितुसंप्राप्तेयःकुर्या
न्नक्तभोजनं ॥ पिण्याकंसघृतंमिष्टंभुंजानःसंयतेंद्रियः ॥ उपवासंचसप्तम्यांपक्षयोरुभयोरपि ॥ घृताभिषेकंसप्त
म्यांकुर्याद्भानोर्नराधिप ॥ गांचदत्वादिनेशायतरुणींनीलसन्निभां ॥ गत्वादित्यपुरंरम्यंभोगान्भुक्तेयथेप्सितान् ॥
अत्रनक्तभोजनं मासव्यापिपिण्याकंतिलकल्कः ॥ नीलसन्निभामिंद्रनीलश्यामां ॥ तथाच माघेमासेचसंप्राप्तेयः
कुर्यान्नक्तभोजनम् ॥ कृशरंघृतसंयुक्तंभुंजानःसंयतेंद्रियः ॥ उपवासपरोष्टम्यांपक्षयोरुभयोरपि ॥ पूजयेत्र्यंबकं
भक्त्याकृत्वागोधूमचूर्णतः ॥ दुर्गामष्टभुजांवीरत्र्यंबकामितिनामतः ॥ गंधपुष्पोपहारैस्तुपूर्वोक्तैरनुपूजयेत् ॥ धूपं
कृष्णागुरुदद्यान्मासंदद्याच्चमाहिषं ॥ धान्यसिद्धार्थका स्नानेप्राशनेचयवाःस्मृताः ॥ एवंमाघमासेतुपूजयेत्र्यंब
कंनृप ॥ दिव्यंविमानमारूढः स्वर्गलोकेमहीयते ॥ माघकृष्णप्रतिपदायां ॥ तिथिपत्वेनवह्निपूजनं ॥ प्रतिपद्य
ग्निपूजास्यादितिसामान्यनिर्णयोक्तेः ॥ माघकृत्यनामारंभोपिविधेयइति ॥ माघकृष्णद्वितीयायांतुविशेषकृत्याभावा
त्तिथिपत्वेन ॥ विधिपूजनमुक्तं ॥ वृहस्पतौद्वितीयायांविधिवद्विधिपूजनं कृत्वानक्तंसमश्नीयाल्लभतेभूतिमुत्तमामिति
ब्रह्मपूजनंचात्रगायत्र्यापौराणमंत्रैर्वाकार्यं ॥ माघकृष्णतृतीयायांसौभाग्यसुंदरीव्रतांगत्वेन ॥ श्रीनाम्नागौरीपूज
नव्रतं ॥ लवणप्राशनमौक्तिकोदकप्राशनमिति ॥ माघकृष्णचतुर्थ्यांसंकष्टनाशनव्रतं ॥ नारदीये ॥ माघकृष्णचतुर्थ्यांतु
संकष्टव्रतमुच्यते ॥ तत्रोपवासंसंकल्प्यप्रातर्नियमपूर्वकं ॥ चंद्रोदयमभिव्याप्यातिष्ठेत्प्रयतमानसः ॥ ततश्चंद्रोदयेप्रा

त्वेमृणमयंगणनायकं विधायस्थापयेत्पीठसायुधंचसवाहनं उपचारैःषोडशभिःसमभ्यर्च्यविधानतः मोदकं
चापिनैवेद्यंसगुडतिलकंदुकं ततोर्घ्यंताम्रजेपात्रेरक्तचंदनमिश्रितं सकुशंचसदूर्वंचपुष्पाक्षतसमन्वितं सतं
डुलंचसदधिकृत्वाचंद्रायदापयेत् गगनार्णवमाणिक्यचंद्रदाक्षायणीपते गृहाणार्घ्यंमयादत्तंगणेशप्रतिरूपक
एवंदत्वागणेशायदत्वार्घ्यंपापनाशनं शक्त्यासंभोज्यविप्राग्र्यान्स्वयंभुंजीतवाग्यतः एवंकृत्वाव्रतंसम्यक्सं
कष्टाख्यंशुभावहं समृद्धोधनधान्यैःस्यान्नचसंकष्टमाप्नुयात् ॥ ॥ अथकथा शिवंशांतंनमस्कृत्यप्रसादेवींसरस्व
तींगणाधिपंनमस्कृत्यसर्वदेवजगद्गुरुं ॥ वैशंपायनउवाच ॥ उद्यतेभारतेयुद्धेकृतशोकोयुधिष्ठिरः उवाचवाक्यं
धर्मात्माकृष्णंदेवकिनंदनं ॥ युधिष्ठिरउवाच ॥ किंकरोमिह्यहंयुद्धेयुद्धंभवतिमाधव भीष्मकर्णौमहायो
धौकथंममजयोभवेत् ॥ श्रीकृष्णउवाच ॥ विनायकोमहानीशोगणेशःशिवनंदनः तस्यपूजांविधिंकृत्वा
जयोभवतिनिश्चितं ॥ युधिष्ठिरउवाच ॥ शिवःशंभुर्महायोगीउमादेवीपतिव्रता कथंतयोःपुत्रजन्मसंश
योमेजनार्दन ॥ श्रीकृष्णउवाच ॥ साधुपार्थमहाबाहोयत्त्वयापरिशंकितं तत्कथांकथयिष्यामिलोकानां
हितकारिणीं प्रातःस्नानादिकंकुर्याद्गंगातीरेदिनेदिने स्वयंगच्छतिगौरीशःस्नातुंगौर्यपिचैकदा उत्थायो
द्वर्तनंचक्रेस्वतनौमलशुद्धये शरीरमलपिंडंतुसागृहीत्वाकरांबुजे नराकारमसौचक्रेदिव्यरूपमनुत्तमं सउ
त्थायाब्रवीद्देवींबद्धांजलिपुटस्तदा किंकरोमिकगच्छामिमातराज्ञांप्रदेहिमे तदाकर्ण्यवचस्तस्यप्रहस्यप्रसरद्धं
मं तमुवाचतदादेवीप्रतिहारंप्रकल्प्यच ॥ पार्वत्युवाच ॥ शृणुवाक्यंपुत्रममयथाज्ञांप्रकरोमिते तैलाभ्यंग
मलोद्भूतपुत्रोसिममदेहजः पुरुषोनैवमेकश्चिदागच्छेत्सदनंमम अथस्नात्वाजगामाथमहादेवोगृहंनिजं
भुजंगमुंडमालीसः सेवितोगणकिंकरैः मत्पितेतिनजानातिसनरोबालभावतः तिरस्कृत्यसगौरीशमातुराज्ञाव-

लेनतं श्रुत्वावाक्यंतदातस्यचुकोपातिगिरीश्वरः शूलेनतच्छिरच्छित्वाजगामागिरिजांतिके शिरोगतंशंभुलोकेक
वंधेभुविदइयंत गृहागंतंशिवंवीक्ष्यदेवीवचनमब्रवीत् देव्युवाच द्वास्थेनममपुत्रेणकथंदेवन्नवारितः तस्यावाक्य
शिवः श्रुत्वा प्रोवाचप्रहसन्निदं शिवउवाच ब्रूहिदेविकथंपुत्रस्त्वयाद्यप्रकटीकृतः मन्निदेशांविनापुत्रइदंविस्मय
कारण देव्युवाच तैलाभ्यंगंप्रकुर्वत्यालीलयानिजविग्रहात् मलपिंडसमुद्भूतः पुत्रोदेवमयाकृतः शिवउवाच
तवपुत्रंनजानामितेनाहंवारितोयदा शूलेनतच्छिरश्छिन्नंकालोहिदुरतिक्रमः कालदेवाक्षिनश्यंतिसर्वेकालवशानु
गाः कालः सुप्तेपुजागर्ति सर्वंकालवशंजगत् ततोहाहाकृतंदेव्यापुत्रदुःखेनदुःखिता विललापभृशंदेवीक
गतोममपुत्रकः शिवोगत्वागृहद्वारंह्यसंभ्रमनास्तदा ददर्शसमहानागंशूलेनाछिद्यताच्छिरः संयोज्यतत्क
वंधेनजीवयामासतंतदा तंचकारगणाध्यक्षंगृहीत्वोवाचपार्वतीं तवपुत्रोह्ययंदेविगणानामधिपोमम देव्युवाच
ममपुत्रःकथंदेव कोवायंनरकुंजरः ममपुत्रस्ययद्रूपं दिव्यमद्भुतदर्शनं शिवउवाच अयंगजाननोदेवितवपुत्रो
मयाकृतः सर्वसिद्धिप्रदातायंनामान्यस्यशृणुष्वमे द्वादशैवतुनामानिकृतान्यस्यशुभानिच यः पठेत्प्रातरुत्था
यमुच्यतेसर्वपातकैः प्रथमः सुमुखोनाम एकदंतोद्वितीयकः तृतीयः कपिलोनाम चतुर्थोगजकर्णकः लंबोद
रः पंचमश्च षष्ठोविकटउच्यते सप्तमोविघ्ननाशोयमष्टमश्चविनायकः नवमोधूम्रकेतुश्चदशमश्चगणाधिपः एकाद
शोभालचंद्रोद्वादशश्चगजाननः द्वादशैतानिनामानि शृणुतेयःपठेन्नरः सर्वसिद्धिर्भवेत्तस्यसंकटंनैवजायते युधिष्ठिरउ
वाच जनार्दनविधिंब्रूहिव्रतस्यास्यप्रसादतः कस्मिन्मासितथाकस्यांव्रतंपूजांकथंचरे श्रीकृष्णउवाच माघेमासिव्र
तंकुर्य्यात्सर्वदुःखनिवारणं मासानांमकरेमासेविशेषेणफलंभवेत् कृष्णपक्षेतिथिः पुण्याचतुर्थीसिद्धिदायिनी
स्वर्णमूर्त्तिंगणाध्यक्षंपूजायत्वाचयथाविधि धूपंदीपंचनैवेद्यंमोदकंचैवभोजनं तिलपिंडप्रदातव्यंवासांसिविधिद

क्षणा. उपवासव्रतकुर्य्यादघ्यदद्यान्नशाकरे ॥ अर्घ्यंचंद्रोदयेदत्वाफलंसलंचभक्षयेत् ॥ द्वितीयेदिवसेप्राप्तेब्राह्म
णंभोजयेत्तदा ॥ ब्राह्मणोममरूपश्चतस्मिन्तुष्टेहमेवहि ॥ ब्राह्मणेभोजनंदत्वापश्चाद्भुंजीतवैस्वयं ॥ एकादशीसहस्रा
स्यंकन्याकोटिशतद्वयं ॥ गवांकोटिसहस्राणिव्रतेपुण्याधिकंकृते ॥ हरिद्वारेप्रयागेचनैमिषेचैवयत्फलम् ॥ स्नात्वाती
र्थेषुयत्पुण्यंव्रतंकृत्वाफलंभवेत् ॥ इतिभविष्योत्तरे ॥ माघकृष्णासंकष्टचतुर्थीव्रतं ॥ माघकृष्णपंचम्यांतिथिपत्वेन
नागानांपूजेतिपंचमीमासान्यनिर्णयोक्तेः ॥ माघकृष्णषष्ठीविशोकषष्ठीभविष्योत्तरे ॥ युधिष्ठिरउवाच ॥ षष्ठीवि
धानंमधुनाकथयस्वजनार्दन ॥ सर्वव्याधिप्रशमनंसर्वकामफलप्रद ॥ श्रुतंययापूज्यमानोभानुःसर्वप्रयच्छति ॥ दि
वाकराराधनमेतस्मात्कथयकेशव ॥ श्रीकृष्णउवाच ॥ विशोकषष्ठीमतुलांवक्ष्यामिमनुजोत्तम ॥ यामुपोष्यनरःशो
कंनकदाचिदिहस्पृशेत् ॥ माघेकृष्णातिलैःस्नातः पंचम्यांकृष्णपक्षतः ॥ कृताहारःकृशरयादंतधावनपूर्वकं ॥ उप
वासंव्रतकृत्वाब्रह्मचारीभवेन्निशि ॥ ततःप्रभातेचोत्थायकृतस्नानजपःशुचिः ॥ कृत्वातुकांचनंरूपंपद्मोणभतिसुंदरं ॥ क
रवीरेणरक्तेनरक्तवस्त्रयुगेनवा ॥ यथानवैशोकभवरतथैवादित्यसर्वदा ॥ तथाविशोकतामेस्यात्त्वद्भक्तिर्जन्मजन्मनि
एवंसंपूज्यषष्ठ्यांतुशक्त्यासंपूजयेद्द्विजान् ततःसंप्राश्यगोमूत्रमुत्थायकृतनित्यकः ॥ संपूज्यविप्रमन्नेनगुडपात्रस
मन्वितंसुश्लक्ष्णंवस्त्रयुगलंब्राह्मणायनिवेदयेत् ॥ अतैललवणंभुक्तासम्यग्मौनेनसंयुतः ॥ ततः पुराणश्रवणंकर्त
व्यंभूतिमिच्छता ॥ अनेनविधिनासर्वंपक्षयोरुभयोरपि ॥ कुर्य्याद्यावत्पुनर्माघशुक्लपक्षस्यसप्तमी व्रतांतेकलशंदद्या
त्सुवर्णकमलान्वितं ॥ शय्यांसोपस्करांतद्वत्कपिलांचयशस्विनीं ॥ अनेनविधिनायस्तुवित्तशाठ्यविवर्जितः विशोक
षष्ठींकुरुतेसयातिपरमांगतिं ॥ यावज्जन्मसहस्राणिसाग्रंकोटिशतंभवेत् ॥ तावन्नशोकमभ्येतिरोगदौर्गत्यवर्जितः

यंयंप्रार्थयतेकामंतंतंप्राप्नोतिपुष्कलं निष्कामंकुरुतेयस्तुसपरंब्रह्मगच्छति यःपठेच्छृणुयाद्वापिषष्ठींशोकवि
नाशिनीं सोपींद्रलोकमाप्नोतिनदुःखीजायतेक्वचित् येभास्करंदिनकरंकरवीरपुष्पैःसंपूजयंत्यभिनतानतिकृतो
पवासाःतेदुःखशोकरहिताःसहिताःसुहृद्भिर्भूमौविहृत्यरविलोकमवाप्नुवंति इतिभविष्योत्तरे माघकृष्णाविशोक
षष्ठीव्रतं माघकृष्णसप्तम्यांसर्वाप्तिसप्तमीव्रतं हेमाद्रौभविष्ये कृष्णपक्षेतुमाघस्यसर्वाप्तिसप्तमींशृणु यामु
पोष्यसमाप्नोतिसर्वान्कामान्पुमानिह अत्रोपवासःकर्तव्यःसूर्यपूजायथाविधि व्रतांतेऽर्कसमिदाज्यादिभिः
सूर्यमंत्रेणहोमंकृत्वाभास्करंप्रतिमासहितंपीठशय्यादिधेनुसहितं आचार्यायसंपूज्यप्रतिपादयेत् ब्राह्मणान्य
थाशक्तिसदक्षिणंसदन्नेनभोजयित्वाशिष्योगृह्णीयादितिसर्वाप्तिसप्तमीव्रतम् माघकृष्णाष्टम्यांमांसेनश्राद्धमुक्तं
ब्रह्मपुराणे कृष्णाष्टम्यांतुमाघस्यमांसैःश्राद्धंमहाफलं पितृभिःप्रार्थितंपूर्वं तस्मात्तत्रकारयेत् अत्रवह्नि
पुराणोक्तं कृष्णाष्टमीव्रतंतत्रगौरीशयोःपूजा प्रतिमासंचतेपूजांयेकरिष्यंतिमानवाः ममचैवाखिलान्कामा
नाप्नुवंतिनसंशयइति माघकृष्णनवम्यामन्वष्टकाश्राद्धं तच्चमाघसप्तम्यष्टमीनवमीषुपूर्वेद्युः कार्यमितिपृष्णवृ
तिश्राद्धगणेभिधानात् माघकृष्णदशमीउद्योतकल्पादि तत्रश्राद्धादिकल्पादितिथिगणोक्तमक्षयफलदंभवति
माघकृष्णैकादशीषट्तिला तदुक्तंनारदीये माघस्यकृष्णैकादशींषट्तिलांसमुपोष्यवै स्नात्वादत्त्वातर्पयि
त्वाहुत्वाभुक्त्वासमर्प्यच तिलैरेवद्विजश्रेष्ठद्वादश्यांप्रातरेवहि वैकुंठंसम्यगभ्यर्च्यसर्वैरेवोपचारकैः विप्रान्सं
भोज्यविसृजेद्दत्त्वातेभ्यश्चदक्षिणां एवंकृत्वाव्रतंविप्रविधिनासुसमाहितः भुक्त्वेहवांछितान्भोगानंतेविष्णुपुरंव्र
जेत् अस्याः कथा भविष्योत्तरे युधिष्ठिरउवाच साधुकृष्णजगन्नाथश्रीआदिदेवजगत्पते स्वेदजाश्चांडजाश्चैवउ
द्भिजाश्चजरायुजाः तेषांकर्तात्वमेवैकःपालकः क्षयकृत्तथा माघस्यकृष्णपक्षेतुकावाह्येकादशीभवेत् किंनामास्याविं

धिःकोवा चेतद्विस्तरतोवद ॥ श्रीकृष्णउवाच शृणुष्वराजशार्दूलकृष्णमाघस्ययाभवेत् ॥ षट्तिलानामसाख्या
तासर्वपापप्रणाशिनी षट्तिलायाः कथांपुण्यां शृणुपापहरांपरां ॥ यांपुलस्त्योमुनिश्रेष्ठोदाल्भ्यायैमुवाचह ॥ दा
ल्भ्यउवाच मर्त्यलोकमिमंप्राप्य पापं कुर्वंतिजंतवः ॥ ब्रह्महत्यादिकंस्तेयंतथाजीववधादिकं ॥ परद्रव्यापहार
वाऽज्ञानेनमहतावृताः ॥ अल्पायासेनभगवन्दानेनव्रतेनच ॥ नृणांपापानिनश्यंतियेनतद्वक्तुमर्हसि ॥ पुलस्त्य
उवाच साधुपृष्टंत्वयाब्रह्मन्जनानांहितकाम्यया यन्नकस्यचिदाख्यातंब्रह्मरुद्रादिदैवतैः तदहंसंप्रवक्ष्यामि
सावधानमनाःशृणु ॥ देवदेवंचसंस्मृत्यपादौप्रक्षाल्यवारिणा ॥ भूमावपतितंगृह्यगोमयंतत्रसुव्रतः ॥ तिलान्प्रक्षा
ल्यतस्यात्रपिंडिकांचैवकारयेत् ॥ संयातिवैष्णवंलोकंनात्रकार्याविचारणा ॥ तपोमासेचसंप्राप्तेआषाढांभवेद्यदि
मूलंवाकृष्णपक्षस्यचैकादश्यांतथानघ नियमंचप्रगृह्णीयाचैकादश्यांविधिंशृणुदेवदेवंसमभ्यर्च्यसुस्नातःप्रयतःशु
चिः कृष्णनामानिसंकीर्त्यभक्तियुक्तोभवेन्नरः रात्रौजागरणंकुर्याद्रात्रौहोमंचकारयेत् ॥ अर्चयेद्देवदेवंशंखचक्रगदा
धरं चंदनागुरुकर्पूरनैवेद्यैःशर्करादिभिः कूष्मांडैर्नारिकेलैश्चह्यथवाबीजपूरकैः ॥ एतेषामप्यलाभेतुक्रतुमूलफलादि
भिःअर्घ्यंदद्याद्विधानेनपूजयित्वाजनार्दनं कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव ॥ संसारार्णवमग्नानांप्रसीदपुरुषो
त्तम ॥ जितंतेपुंडरीकाक्षनमस्तेविश्वभावन सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज ॥ गृहाणार्घ्यंमयादत्तंलक्ष्म्यासहज
गत्पते ॥ ततस्तुपूजयेद्विप्रानुदकुंभांश्चदापयेत ॥ छत्रोपानत्समायुक्तान्कृष्णोमेप्रीयतामिति ॥ कृष्णाधेनुःप्रदातव्या
यथाशक्तिद्विजन्मने ॥ तिलपात्रंद्विजश्रेष्ठदद्यात्कुर्यात्प्रदक्षिणां ॥ स्नानप्राशनयोस्ताततथाकृष्णातिलांस्तिथौ ॥ तिलाः
प्ररोहाजायंतेयावत्संख्यास्तिलाद्विज ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ तिलस्नायीतिलोद्वर्तीतिलहोमीति
लोदकी ॥ तिलदाताच भोक्ताचषट्तिलाः पापनाशनाः ॥ दाल्भ्यउवाच ॥ एतद्व्रतस्यभगवन्कीदृशंफलमीरितं

सोपाख्यानंममब्रूहियादितुष्टोसिमेनघ ॥ पुलस्त्यउवाच ॥ शृणुब्रह्मन्यथावृत्तमाख्यानंकथयामिते मर्त्यलो
केपुरात्वासीन्नारदीनामब्राह्मणी ब्रह्मचर्यरतानित्यंदेवपूजारतासदा मासोपवासनिरताकृष्णभक्तिपरायणा
तयाम्नंशोपितोदेहउपवासैर्द्विजोत्तम देवानांब्राह्मणानांचकुमारीणांविशेषतः - गृहाणिसाप्रयच्छंतीसर्वकालं
महासती अतिकृच्छ्ररतासाहिसर्वकालंनुवैद्विज नदत्ताभिक्षवेभिक्षाब्राह्मणानचतोषिताः ततःकालेनमहताम
यावैचिंतितंद्विज शुद्धमस्याःशरीरंहिव्रतकृच्छ्रैर्नसंशयः आर्जितोवैष्णवोलोकःकामशोषेनचानघा नदत्तम
न्नदानंहियेनतृप्तिपराभवेत् एवंज्ञात्वातदाकृष्णोमर्त्यलोकमुपागतः कापिलंरूपमास्थायतस्याभिक्षामयाचत
अवोचद्ब्राह्मणीसातुसादरंमधुरंवचः कस्मात्त्वमागतोब्रह्मन्वक्तुमर्हसिशोभन पुनरेवचतेनोक्तंदेहिभिक्षांमहा
सति ततःकोपेनमहताम्रत्पिंडस्ताम्रभाजने क्षिप्तोवाडवयाब्रह्मन्पुनःस्वर्गगतोहरिः - ततःकालेनमहतातप
सीसामहाव्रता स्वदेहात्स्वर्गमायाताब्रह्मचर्यप्रभावतःमृत्पिंडिकाप्रदानेनगृहंप्राप्तंमनोरमं संजातंचैवविप्रर्षे
धान्यराशीविवर्जितं गृहंयावन्निरीक्षेद्वैनापश्यत्तत्रकिंचन तावद्गृहाद्विनिःक्रांताकश्चित्तत्रागतोद्विजः क्रोधेन
महताविष्टावचनंचेदमब्रवीत् मयाव्रतैश्चकृष्णश्चउपवासैरनेकधा पूजयाराधितोदेवः सर्वलोकस्यभावनः नै
वात्रदृश्यतेकिंचिद्गृहेममजनार्दन ततश्चोक्तंरमेशेनगृहंगच्छपतिव्रते आगमिष्यंतिसुतरांकौतूहलसमन्विताः
देवपत्न्योथत्वांद्रष्टुंविस्मयाभिसमन्विताः द्वारनोद्घाटनीयंहितासांभद्रेतपस्विनि षट्तिलाव्रतजंपुण्यंयाचनी
यंत्वयानघे एवमुक्ताचहरिणागतासामनुषीतदा अथांतरेसमायातादेवपत्न्यस्तपोनिधे - ताभिश्चकथितंतत्र
त्वांद्रष्टुंहिसमागताः द्वारमुद्घाटनीयंत्वानैवपश्यामशोभने ॥ मानुष्युवाच ॥ - यदिद्रष्टुंमयाकार्यंसत्यंवच्मि
विशेषतः षट्तिलाव्रतजंपुण्यंद्वारमुद्घाटकारण - एलाप्रितत्रब्रह्मपैनददातिमहाव्रतं - अन्ययाकथितंतत्रद्रष्ट

ष्यामानुषीमया दत्तंपुण्यंमयैतस्यैषट्तिलाव्रतसंभवं ततोद्वारंसमुद्घाट्यतुष्टाताभिश्चमानुषी नदेवीनचग
धर्वीनासुरीनचपन्नगी दृष्टपूर्वाहिसानारीयादृशीसाद्विजोत्तम रूपकांतिसमायुक्ताक्षणेनप्रत्यपद्यत धनंधान्यं
चवस्त्रादिरूपंलावण्यमेवच सर्वंगृहंतुसंपूर्णंषट्तिलायाःप्रसादतःअतितृष्णानकर्तव्याविंत्तशाठ्यंविवर्जयेत् आत्म
वित्तानुसारेणतिलान्वस्त्राणिदापयेत् लभतेचैवमारोग्यंनरोजन्मनिजन्मनि दारिद्र्यंनचसंक्लेशंनचदौर्भाग्यमेवच
नभवेद्वैद्विजश्रेष्ठषट्तिलायाउपोषणात् अनेनविधिनाविप्रतिलदानान्नसंशयः मुच्यतेसर्वपापेभ्योह्यनायासे
नमानवः दानंचविधिनादत्तंसर्वपातकनाशनं नार्थव्ययोनचायासःशरीरेमुनिसत्तम ईदृशंतुव्रतंराजन्येकुर्वंतिनराः
सदा नतेषांपुनरावृत्तिःकल्पकोटिशतैरपि माहात्म्यश्रवणादस्याःसर्वपापक्षयोभवेत् इतिभविष्योत्तरेमाघकृ
ष्णैकादशीषट्तिलाव्रतकथा ✕ माघकृष्णद्वादश्यांतिलद्वादशीव्रतं नारदीये माघेतुकृष्णद्वादश्यांयमोहिभगवा
न्पुरा तिलानुत्पादयामासतपःकृत्वासुदारुणं तस्यामुपोषितःस्नानंतिलैस्तस्यांयजेद्धरिं भविष्योत्तरे तिलतैलेनदी
पाश्चदेयादेवगृहेष्वपि निवेदयेत्तिलानेवहोतव्याश्चतिलास्तथा तिलान्दत्त्वाचविप्रेभ्योभक्षयेच्चतिलानपि तत्रैव
युधिष्ठिरउवाच अल्पायासेनभगवन्दानेनानेनमाधव पापंप्रशममायातियेनतद्वक्तुमर्हसि श्रीकृष्णउवाच शृणुपा
र्थपरापुण्यांद्वादशींपापनाशिनीं यामुपोष्यपरंपुण्यमाप्नुयाच्छ्रद्धयान्वितः माघमासेतुसंप्राप्तेआषाढर्क्षंभवेद्यदिमूलं
वाकृष्णपक्षस्यद्वादश्यांनियमंततः गृह्णीयात्पुण्यफलदंविधानंतस्यमेशृणु देवदेवंसमभ्यर्च्यस्नातःसंप्रयतः
शुचिः कृष्णनाम्नातुसंस्तूयएकादश्यांमहामते उपोषितोद्वितीयेह्निपुनःसंपूज्यकेशवं संस्तूयनाम्नातेनैवकृष्णा
नसमाहितःदद्यात्तिलांश्चविप्रायकृष्णोमेप्रीयतामिति स्नानप्राशनयोःशस्तास्तथाकृष्णातिलान्नृपविष्णुप्री
नमन्त्रोक्तंसमाप्तिव्रतपारणं कृष्णकुंभांस्तिलैःसार्द्धंपक्वान्नेनचसंयुतान् छत्रोपानद्युगैर्वस्त्रैःसर्वैतैरत्नगर्भिणैः

ब्राह्मणानांप्रदेयास्ते यथावन्माससंख्यया तिलप्रहारोजायंतेयावत्संख्यास्तिलान्नृप तावद्वर्षसहस्राणि
दातास्वर्गेमहीयते आरोग्यंजायतेनित्यंराजन्जन्मनिजन्मनि नांधोनवधिरश्चैवनकुष्ठीनचकुत्सितः भवत्येता-
मुपोषित्वातिलाख्यांद्वादशींनरः अनेनविधिनाराजंस्तिलदानान्नसंशयः मुच्यतेपातकैःसर्वैरनायासेनभारत-
दानविधिस्तथाश्रद्धासर्वपातकनाशनम् नार्थःप्रभूतोनायासःशरीरंनृपसत्तम ॥ सर्वोपभोगनिरतोह्निपरेदशम्याः
स्नातःपरोतैलनिवेदनकृत्यशीलः दत्वातिलान्द्विजवरायविराजकेतुसंपूज्यपूज्यपदवींसमुपैतिमर्त्यः ॥ * ॥

॥ इतिभविष्योत्तरेमाघकृष्णातिलद्वादशीव्रतं माघकृष्णत्रयोदश्यांपक्षत्रयोदशीव्रतम् ॥

तत्रनक्तभोजनव्रतं प्रदोषेशिवपूजनंप्रागुक्तमिति माघकृष्णचतुर्दश्यामपियमतर्पणं यमोद्देशेनतिलदानं
तदुक्तंहेमाद्रौ अनर्काभ्युदितेकालेमाघकृष्णचतुर्दशीं स्नातःसंतर्प्यचयमंसर्वपापैःप्रमुच्यते यमायधर्मराजाय
मृत्यवेचांतकायच वैवस्वतायकालायसर्वभूतहरायच इतिसप्तनामभिर्यमपूजाहोमादिसं
हितंपितृभ्यो ब्राह्मणेभ्यश्चदत्वा कृशरान्नमपिदत्वास्वयमपिकृशरान्नंभुंजीततदुक्तं * ब्रह्मपुराणे ॥
माघकृष्णचतुर्दश्यांविष्णोर्देहान्मरीचयः कृशराइतिसंजाताः सर्वपापक्षयावहाइति ततोविसृज्यबंधुभ्यः
कृशरंभोजयेत्स्वयमित्यंतं अत्रतारारात्रिव्रतमितिकैश्चिदुक्तं तच्चशिवरात्रिव्रतवदितिमूलमत्रान्वेष्टव्यं
माघामायामर्द्धोदययोगविशेषोमदनरत्नेभारतेउक्तः अमार्कपातश्रवणैर्युक्ताचेत्पुष्यमाघयोः अर्द्धोदयः
सविज्ञेयःकोटिसूर्यग्रहैःसमइति निर्णयामृतेतु दिवैवयोगःशस्तोयंनतुरात्रौकदाचनेत्यर्द्धश्लोकमधिकंपठंति
अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः अर्द्धोदयःसविज्ञेयःकोटिसूर्यग्रहैःसमः निश्यर्द्धोदयसंज्ञस्तुमहानर्द्धो

दयोदिवा पुष्यमाघयोरितिवीरमित्रोदयेपाठः पुष्यमाघयोरितिपुष्यमघानक्षत्राभ्यां युक्तयोःपौर्णमास्योर्मध्यवर्त्तिन्याममावास्यायामर्द्धोदययोग इतिपोपेनिर्णीतत्वान्नासिद्धांतः किंचिन्न्यूनोमहोदयइत्यपिकेचित्पठंति क्वचित्तुसोमवारेसतिमहोदयोनान्यवारेष्वितिपठति अथात्रकृत्यमुक्तंस्कंदपुराणे अर्द्धोदयेतुसंप्राप्तेसर्वंगंगासमंजलं शुद्धात्मानोद्विजाःसर्वेभवेयुर्ब्रह्मसन्निभाः यत्किंचित्क्रियतेदानंसर्वंमेरुसमंभवेदिति अत्रपायसपूरितसुवर्णकांस्यादिपात्रदानमुक्तं तत्रैव चतुःषष्टिपलंमुख्यममत्रंतत्रकारयेत् चत्वारिंशत्पलंवापिपंचविंशतिरेववा अमत्रंपात्रं अत्राममत्रंचभाजनमित्याभिधानात् तच्चसुवर्णादिधातुघटितंयथाविभवंबोध्यमितिवीरमित्रोदये निधायसिंधौकृत्यरत्नावल्यांतुकांस्यमयमित्युक्तं तथा एवंसुघटितंकार्यंकांस्यभाजनमुत्तममितिशास्त्रांतरसंवादात् पंचविंशतिरितिपंचविंशतिपलं निधायपायसंतत्रपद्ममष्टदलंलिखेत् तत्रपात्रे पद्मस्यकर्णिकायांतुकर्षमात्रं सुवर्णकं तदभावेतदर्द्धंवातदर्द्धंवातुकारयेत् भूमौतुतंडुलैःशुद्धैःपद्ममष्टदलंशुभं अमत्रस्थापयेत्तत्रब्रह्मविष्णुशिवात्मकं तत्रपात्रे तेषांपूजातुकर्त्तव्या श्वेतमाल्यैःसुशोभनैः वस्त्रादिभिरलंकृत्यब्राह्मणायानिवेदयेत् तत्रमंत्रः सुवर्णपायसामत्रंयस्मात्तत्त्रयीमयं आवयोस्तारकयस्मात्तद्गृहाणद्विजोत्तम समुद्रमेखलांपृथ्वींसम्यग्दत्वातुयत्फलं तत्फलंलभतेमर्त्यःकृत्वादानममत्रकं अमत्रकंपात्रदानंआवयोस्तारकमितिप्रतिग्रहदोषाभावउक्तः महोदयंचाह ब्रह्माण्डपुराणे पातस्यांतःपूर्वभागस्त्वमायाःश्रोणामध्येभास्करस्योदयेच भानोर्वारेपुण्यमर्द्धोदयःस्याच्चांद्रेवारेतन्महापूर्वमाहुः महापूर्वंमहोदयंप्राहुः अन्यदपिस्कंदपुराणेअर्द्धोदयव्रतं ॥ अगस्त्यउवाच ॥ भगवंस्त्वत्प्रसादेनश्रुतोयंव्रतविस्तरः अर्द्धोदयंतुमेब्रूहिदुर्लभंसचराचरे जीवितप्राणिनांपुण्यंयदिचेद्वदसिप्रभो कथंकार्यंकृतेकिंस्यात्फलंकथयषण्मुख ॥ स्कंदउवाच ॥ श्रूयतांपुण्ययोगोयं

दुर्लभोर्द्धोदयाह्वयः देवतिर्यङ्मनुष्याणांदुःप्रापःसर्वकामदः माघांमायांव्यतीपातेआदित्येविष्णुदैवते अ
र्द्धोदयंतमित्याहुःसहस्रार्कग्रहैःसमं पुराकृतंवसिष्ठेनजामदग्न्येनसुव्रत सनकाद्यैर्मनुष्यैश्चदृष्टंभवतिकुंभज दा
नानांयज्ञतीर्थानां फलयेनकृतंभवेत् ससागराधरातेन सप्तद्वीपसमन्विता दत्तास्यात्सर्वभावेनयेनचार्द्धोदय
कृतः गंगागयाप्रयागेपुपुष्करात्रितयेतथा मानसादिपुतीर्थेषुयत्पुण्यंस्नानदानतः तत्समंवानवाविप्रव्रतेनानेन
कुंभज अश्वमेधायुतंचेष्टमिष्टापूर्त्तंचतैःकृतं अर्द्धोदयंकृतंयैस्तुविधिदृष्टेनकर्मणा वाचिसत्यंगृहेलक्ष्मीःसंतति
श्चानपायिनी आयुर्यशोहिविपुलंव्रतकर्त्ताफलंलभेत् इंद्राग्नियमलोकेपुनिर्ऋतेरप्यपांपतेः वायोःकुबेरस्येशस्य
लोकेपुसुकृतीप्रभो वसेच्चंद्रार्कलोकेपुलोकपालैश्चसेवितः गोकोटिदानाद्यत्पुण्यंक्षेत्रतीर्थनिवासिनां अर्द्धोदय
स्यपुण्यस्यकलांनार्हतिपोडशीं भूलोकाधिपतिश्चैवभुवोलोकाधिपस्तुसः स्वर्लोकेशोजनानांचतपोलोकस्यचे
श्वरः महर्लोकेवसेन्नित्यंयावदिन्द्राश्चतुर्दश नतोहिरण्यगर्भस्यपुरुषोव्रतकारकः अर्द्धोदयप्रभावेनब्रह्मलोकेवसे
न्नरः तथामानेनतस्याथरुद्रमूर्त्तिधरोभवेत् शिवलोकेगणैःपूज्योदेवराजसमन्वितः वसेच्छक्रेणमानेनव्रतस्या
स्यप्रभावतः ततोविष्णुस्वरूपेणत्रैलोक्याधिपतिर्भवेत् शंखचक्रगदाधारीवनमालीहरिःस्वयं व्रतप्रभावाल्ल
क्ष्मीशोदेवोनारायणोभवेत् अगस्त्यउवाच स्कंदकेनविधानेनकर्तव्यंव्रतमुत्तमं अर्द्धोदयेमनुष्याणांजीवितुदुर्ल
भंभुवि स्कंदउवाच कृतेकृतंवसिष्ठेनत्रेतायांरघुणाकृतं द्वापरेधर्मराजेनकलौपूर्णोदरेणतु अन्यैर्देवमनुष्यैश्च
दैत्यैश्चद्विजसत्तम कृतमर्द्धोदयंसम्यक्सर्वकामफलप्रद माघमासेकृष्णपक्षेपंचदश्यांरवेर्दिने वैष्णवेनतुऋक्षेण
व्यतीपातेनदुर्लभं पूर्वाह्णेसंगमेस्नात्वाशुचिर्भूत्वासमाहितः सर्वपापविशुद्ध्यर्थंनियमस्थोभवेन्नरः तत्रमन्त्रः त्रि
देवरव्रतंदेवाःकरिष्येभुक्तिमुक्तिदं भवंतुसान्निधौमेद्यत्रयोदेवास्त्रयोग्नयः ब्रह्मविष्णुमहेशानांसौवर्णपलसंख्यया

कर्त्तव्यार्चास्तदर्द्धेनतदर्द्धार्द्धेनवाद्विज। अर्चाःप्रतिमासार्द्धशतत्रयंशंभोर्द्रोणानांतिलपर्वतः॥ कर्त्तव्योविष्णुरुद्राभ्यांगिरिपूर्वोक्तसंख्यया शंभुरत्रब्रह्मा शय्यात्रयंततःकुर्य्यादुपस्करसमन्वितं॥ देवानांत्रयमुद्दिश्यकर्त्तव्यंभक्तितस्तदा ब्रह्मविष्णुशिवप्रीत्यैकर्त्तव्यंतुगवांत्रयं। हिरण्यंभूमिधान्यादिदानंविभवसारतः॥ दातव्यंश्रद्धयोपेतंब्राह्मणेभ्यःप्रयत्नतः मध्याह्नेतुनरःस्नात्वाशुचिर्भूत्वासमाहितः तिलपर्वतमध्यस्थंपूजयेद्देवतात्रयं॥ तत्रादौपूजामंत्राः नमोविश्वसृजेतुभ्यंसत्यायपरमेष्ठिने देवायदेवपतयेज्ञानानांपतयेनमः इतिब्रह्मपूजा॥ अथास्यांगपूजा॥ ॐब्रह्मणेनमःपादयोः। परमेष्ठिनेनमोजंघयोःधात्रेनमोजान्वोः। हिरण्यगर्भायनमऊर्वोः वेधसेनमोगुह्ये पद्मोद्भवायनमोहस्तयोःहंसवाहनायनमः कटिदेशे शतानंदायनमोवक्षसि। सावित्रीपतयेनमोबाह्वोः ऋग्वेदायनमःपूर्वमुखेः यजुर्वेदायनमोदक्षिणमुखे सामवेदायनमःपश्चिमास्ये अथर्ववेदायनमउत्तरास्ये चतुर्वक्त्रायनमःशिरसि लोकपालायनमः सर्वांगेषु। ततः इंद्रायनमइत्यादिलोकपालपूजापूर्वादिदिक्षुविदिक्षुच॥ अथप्रार्थनामंत्रः॥ हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपवान्। प्रसादसुमुखोभूत्वापूजांगृह्णनमोस्तुते॥ इतिब्रह्मपूजा॥ नारायणजगन्नाथनमस्तेगरुडध्वज पीतांबरनमस्तुभ्यंजनार्दननमोस्तुते॥ अथांगपूजा॥ अनंतायनमः॥ पादौपूजयामि। गोविंदायनमोजंघयोः॥ मुकुंदायनमोजान्वोः॥ विश्वरूपायनमऊर्वोःप्रद्युम्नायनमोगुह्ये पद्मनाभायनमोनाभौ भुवनोदरायनमउदरे॥ कौस्तुभवक्षसेनमोवक्षसि। चतुर्भुजायनमोबाहुषु विश्वतोमुखायनमोवदने। सहस्रशिरसेनमःशिरसि॥ ततःप्रार्थना आदित्यचंद्रनयनदिग्बाहोदैत्यसूदन। पूजांदत्तांमयाभक्त्यागृहाणकरुणाकर॥ इतिविष्णुपूजा॥ महेश्वरमहेशाननमस्तेत्रिपुरांतक नमोजीमूतकेशायनमस्तेवृषभध्वज। ततोंगपूजा॥ ईशानायनमःपादयोः॥ चंद्रशेखरायनमोजंघयोःपशुप

तयेनमऊर्वोः उमाकांतायनमोगुह्ये नीललोहितायनमोनाभौ कृत्तिवाससेनमउदरे नागोपवीतिनेनमोव
क्षसि योगिरूपायनमोवाह्वोः नीलकंठायनमःकंठे पंचवक्त्रायनमोमुखेषु कपर्दिनेनमोमौलौ ततःप्रार्थनाअंधका
रेश्नमेयात्मन्नमोलोकांतकायच पूजांदत्तांमयाभक्त्यागृहाणवृषभध्वज इति शिवपूजाक्रमःप्रोक्तो मंत्रैरेतैःप्र
यत्नतः आचार्य्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः हस्तमात्राकर्णमात्रापीठंछत्रंकमंडलुं श्वेतवस्त्रयुगंदेयंब्रह्म
णेसर्वमूर्त्तये पीतवस्त्रयुगंविष्णोर्लोहितंशंकरस्यच पंचामृतेनस्नपनंपूजनंकुसुमैःस्वकैः कमलैस्तुलसीपत्रैर्वि
ष्णुपत्रैरखंडितैः तत्कालसंभवैर्दिव्यैःपूज्यादेवायथाक्रमं यथाशक्तिःप्रकर्त्तव्यंव्रतमेतत्सुदुर्लभं जीवितंप्राणि
नामेतदनित्यंनिश्चितंयतः अथव्रतांगहोमस्यविधानंशृणुतत्त्वतः देवतात्रयमुद्दिश्यशास्त्रदृष्टेनकर्मणा प्रजा
पतयेविश्वरूपायरुद्रायनमः इत्यंतेनैवमंत्रेणवह्निंसंस्थाप्यभक्तितः ततोहोमंप्रकुर्वीतयथाविभवसंभवं अग्न-
येप्रजापतयेस्वाहा अग्नयेविष्णवेस्वाहा अग्नयेरुद्रायस्वाहा एवंविधश्चरुहोमःप्रजापतयेनत्वेदतान्यन्योविश्वा
रूपाणिजातानियदितावभूवयत्कामाजुहुमतन्नोअस्तुद्विपदेचतुष्पदेवयंस्यामपतयोरयीणांस्वाहा- ओंइदंविष्णुर्वि
चक्रमेत्रेधानिदधेपदम् समूढमस्यपांसुरेस्वाहा ॥ २ ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्द्धनं उर्वारुकमिवबंधनान्मृ-
त्योर्मुक्षीयमामृतात् ॥ ३ प्रजापतयेस्वाहा ॥ १ ॥ विष्णवेस्वाहा ॥ २ ॥ रुद्रायस्वाहा ॥ ३ ॥ ब्रह्मणे
विष्णवेमहादेवायस्वाहा ॥ ४ ॥ इतिपूर्णाहुत्यासर्वान्कामानवाप्नोतीतिव्रतांगोहोमः अथहोमावसानेतुगां
चदद्यात्पयस्विनीं स्वर्णशृंगींरौप्यखुरांघंटाभरणभूषितां ताम्रपृष्ठांकांस्यदोहांसर्वोपस्करसंयुतां सद्दक्षिणां
सुशीलांतामाचार्य्यायनिवेदयेत् तेनदत्तंहुतंजप्तमिष्टंयज्ञैःसहस्रधा कृतकृत्योभवेद्विप्रव्रतस्यास्यप्रभावतः एत
त्सर्वंसमाख्यातंदुर्लभंव्रतमुत्तमं अर्द्धोदयंयथादृष्टंकिमन्यच्छ्रोतुमिच्छसि इतिस्कंदपुराणोक्तमर्द्धोदयव्रतं अथा-

स्यसक्षिप्तप्रयोगः व्रतोद्यापनकौमुद्यां तिथ्यादिसंकीर्त्यआत्मनअखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विध पुरुषार्थसिद्धिद्वाराब्रह्मविष्णुशिवप्रीत्यर्थमर्कोदयव्रतोद्यापनकरिष्ये आचार्यादीन्वृत्वाभूमौदर्भास्तृतायांसार्द्ध शतत्रयद्रोणपरिमिततिलानांपर्वतंब्रह्मणे तावत्प्रमाणमेवतिलपर्वतंविष्णवे तथाविधमेवतिलपर्वतंरुद्राय अ शक्तौपर्वतमेकमेवकुर्य्यात् तत्रब्रह्मविष्णुरुद्राणांसुवर्णप्रतिमात्रयंयथासंभवंविधाय ब्रह्मयज्ञानमितिब्रह्माणं इदं विष्णुरितिविष्णुं त्र्यंबकमितिशिवंसंपूज्य परितइंद्रादीन्लोकपालान्नाममंत्रैर्वेदमंत्रैश्चसंपूज्य ततोब्रह्मवि- ष्णुशिवानांमूर्तिष्वंगपूजांकुर्य्यात् ब्रह्मणेनम पादौपूजयामि हिरण्यगर्भायऊरू०परमेष्ठिनेजंघे० वेधसेगुह्यं- हंसवाहनायकटिं०शतानंदायवक्षसि० सावित्रीपतयेबाहून्० पूर्वादिचतुर्मुखेषु ऋग्वेदायनमः यजुर्वेदायनमः सामवेदायनम. अथर्ववेदायनम चतुर्वक्त्रायनमोनेत्रेषु कपिलायललाटे हंसायशिर पूजयामि ॥ १ ॥ अथविष्णो. अनंतायनमःपादौ०विष्णुरूपायनम ऊरू०मुकुंदायनमोजानुनी०गोविंदायनमोजंघे०प्रद्युम्नायनम. गुह्यं पद्मनाभायनमः नाभिम कौस्तुभवक्षसेनमः वक्षसि चतुर्भुजायनमः बाहून् विश्वतोमुखायनमोमुखं स हस्रशिरसेनमइतिशिरःपूजयामि २ अथशिवस्य ईशानायनम पादौपूज०चंद्रशेखरायनमोजंघे०पशुपतये- नमोजानुनीपू० शंकरायनमः ऊरूपू०उमाकांतायनमोगुह्यं०नीललोहितायनम नाभिंपू०कृत्तिवाससेनमःबाहून्० नीलकंठायनम. कंठं०पंचवक्त्रायनमःमुखंपू० कपर्दिनेनमःशिर पू० ततःक्रमेणप्रार्थयेत् नमोविश्वसृजेतुभ्यं सत्यायपरमात्मने देवायदेवपतयेयज्ञानापतयेनम. १ नारायणजगन्नाथनमस्तेगरुडध्वज पीतांबरनमस्ते स्तुजनार्दननमोस्तुते महेश्वरमहेशाननमस्तेत्रिपुरांतक नमोजीमूतकेशायनमस्तेवृषभध्वज ३ ब्रह्मविष्णु महेशानां कर्मणांफलहेतव. भक्त्यामयाकृतांपूजागृह्णीध्वंजगदीश्वरा. ४ इतिसंप्रार्थ्य ततः सपत्नीकंब्राह्मणं

वेदशास्त्रविदमेकंब्राह्मणत्रयंवाकृत्वावस्त्रालंकारादिभिः संपूज्य पुनरपिब्रह्माविष्णुमहेशान्पंचामृतपुरः सरतुल
सीविल्वादिकैः पूजयेत् ततआचार्यब्रह्मादिवरणंवेदिकायां अग्निंप्रतिष्ठाप्य सर्वतोभद्रादिसमस्तमंड
लदेवतापूजांते अग्निपूजनंकृत्वा अन्वादध्यात् ब्रह्मविष्णुमहेशान्घृताक्ततिलद्रव्येणप्रतिदैवतंसहस्रसंख्याकाहु
तिभिर्लोकपालान्मंडलदेवताश्चैकैकयाहुत्यायक्षे एवंहोमंसमाप्य ततस्तिलपर्वतसहितंप्रतिमात्रयसयुतंदद्यात्
ॐतत्सदित्यादिदेशकालौसंकीर्त्यकोटिसूर्यग्रहसमे अर्द्धोदयपर्वणिसशैलवनसप्तसमुद्रादिसंयुतधरादानपुण्यज
न्यसमग्रफलप्राप्तिद्वारासूर्यचंद्रोपेंद्रादिसमस्तलोकप्राप्त्युत्तरपरमेश्वरपदप्राप्तये अर्द्धोदयपूर्वोक्तसमस्तफलप्रा
प्त्यर्थंतिलपर्वतमध्यस्थदेवतात्रयमूर्त्तीः सोपस्कराः अत्रभूततापवेदविदेब्राह्मणायदातुमहमुत्सृजे ततः प्रा
र्थना ॥ तिलपर्वतमध्यस्थाब्रह्मविष्णुमहेश्वराः दहंतुपातकंसर्वंयच्छतुममसंततिमित्युक्त्वादद्यात् ततोदानस्य
सांगतार्थं रक्तकृष्णश्वेतवर्णसुरभित्रयं शय्यादिकं आचार्यायदद्यात् अत्रहोमद्रव्याणिपलाशसमित् च
रुतैलान्यानि ब्रह्मणः अश्वत्थसमित्तिलपायसानिविष्णोः चर्वाज्यव्रीहयः शंकरस्य ततोभूमौ श्वेततंडुलैः
कल्पिताष्टदलोपरिपायसपूरितकांस्यपात्रंससुवर्णं ब्राह्मणायसंपूज्यदद्यात् तत्रमंत्रः सुवर्णपायसामत्रंयस्मा
देतत्त्रयीमयं आवयोस्तारकंह्येतद्गृहाणद्विजसत्तम एवंपात्रदानंविधाय भूशय्यादिदानंकृत्वा ब्राह्मणाशि
षोगृहीत्वा भूयसींदक्षिणांदद्यात् इतिभविष्योत्तरोक्तमर्द्धोदयदानव्रत अस्यामेवमाघमायां सावित्रीसहि
तं ब्रह्माणंपूजयित्वानवनीतधेनुंदद्यात् तदुक्तंहेमाद्रौभविष्योत्तरे अमायांमाघमासस्यपूजयित्वापितामहं
गायत्र्यासहितंदेववेदवेदांगभूषितं नवनीतमयींधेनुंफलैर्नानाविधैर्युतां सहिरण्यांसवस्त्रांचब्राह्मणायनिवेदये
त् कीर्तयेत्प्रीयतामत्र पद्मयोनिः सनातनः स्थानंस्वर्गेथपातालेयन्मर्त्येकिंचिदुत्तमं तदवाप्नोत्यसंदिग्धं

यद्वरैर्नैः प्रसादतः यानिचान्यानिदानानिदीयंतेसुवहून्यपि युगादिषुमहाराजक्षयाणिभवंतिहि वित्त
हीनःस्वशक्त्यायो ददातिस्वल्पकंवहु तदप्यक्षयतांयातिनात्रकार्याविचारणा वित्तानुसारंस्वंदद्याद्भक्तीवा
निर्दनोध्रुवं भूहिरण्यंगृहंवासःशयनान्यासनानिच छत्रोपानहयानानिदेयानिशुभमिच्छता एवंदत्त्वायथाशक्त्या-
भोजयित्वाद्विजोत्तमान् पश्चाद्भुंजीतसुमना वाग्यतोवंधुभिःसह यत्किंचिद्वाचिकंपापंमानसंकायिकंतथा तत्स
र्वंनाशमायातियुगादितिथिपूजनात् गीयमानोथगंधर्वैः स्तूयमानःसुरासुरैः रुद्रस्यानुचरोभूत्वा रुद्रलोकेव-
सेन्नरः यद्दीयतेकिमपिकोटिगुणंतदाहुः स्नानंतपोनियममक्षयमेवचात्र स्यादक्षयंसुयुगपूर्वतिथीषुराजन्व्यासा
दयोमुनिवराइहनान्यथैव इतिभविष्योत्तरोक्तं माघामायांयुगादितिथिकृत्यम् ॥ अथमाघशुक्लप्रतिपदा
कृत्यं नारदीये माघशुक्लप्रतिपदिवह्निंसाक्षान्महेश्वरं समभ्यर्च्यविधानेनसमृद्धोजायतेभुवि द्वितीयाकृत्यम
पितत्रैव माघशुक्लद्वितीयायां भानुरूपंप्रजापतिं समभ्यर्च्ययथान्यायंपूजयेद्गंधपुष्पकैः रक्तैर्गंधैस्तथास्वर्णम
तंविप्रायशक्तितः ततः पूर्णताम्रपात्रंगोधूमैर्वापितंडुलैःसमर्प्यदेवंभक्त्यैवसमूर्तिंप्रददेद्द्विजे एवंकृतेव्रतेविप्रसा
गात्सूर्यइवोदितः दुरासदोदुराधर्षोजायतेभुविमानवः इहकामान्वरान्भुक्त्वायात्यंतेब्रह्मणःपदं सर्वदेवस्तुतो
भीक्ष्णं विमानवरमास्थितः माघशुक्लतृतीयायां ललितासौभाग्यसुंदरीव्रतं नारदीये माघशुक्लतृतीया
यांपूज्यासौभाग्यसुंदरी पूर्वोक्तेनविधानेननारिकेलार्घ्यदानतःप्रसन्नादिशतिस्वीयंलोकंतुसमुपोषिता अस्याविः
धानकथाभविष्योत्तरेयुधिष्ठिरउवाच अथपृच्छामिभगवन्व्रतंद्वादशमासिकं ललिताराधनंनामसमासमासक्रमेणच
श्रीकृष्णउवाच शृणुपाण्डवयत्नेनयथावृत्तंपुरातनं कैलासशिखरेरम्येवहुपुष्पलतावृते शंकरस्यमहादेव्यासं
वादकुरुसत्तम सचूतपल्लवयुतेचंपकाशोकभूषिते कदंववकुलामोदवशीकृतमधुव्रते मयूररवसंघुष्टेराजहंसो

पशोभिते मृगर्क्षगजसिंहैश्चशाखामृगगणावृते गंधर्वयक्षदेवर्षिसिद्धकिन्नरपन्नगैः तपस्विभिर्महाभागैः से
व्यमानंसमंततः सुखासीनंमहादेवं भूतसंघैःसमावृत अप्सरोभिःपरिवृतमुमानत्वेदमब्रवीत् ॥ उमोवाच ॥
भगवन्देवदेवेशशूलपाणेवृषध्वज कथयस्वमहेशान तृतीयाव्रतमुत्तमं सौभाग्यंलभतेयेन धनपुत्रान्पशून्सुखं
नारीरूपंशुभंस्वर्गमारोग्यंश्रियमुत्तमां एवमुक्तोदयितयाभार्ययाप्रीतिपूर्वकं विहस्यशंकरःप्राहकिंव्रतेनतवप्रिये
येकामास्त्रिषुलोकेषुदिव्यभौमांतरिक्षजाः सर्वेपितेतवायत्तायस्यास्तेहंपतिर्यतः उमोवाच सत्यमेतत्सुरेशान
त्वयितुष्टेनदुर्लभं किंचित्तुभुवनाभोगभूषणेशशिभूषण भक्त्यास्त्रियोहिमांदेवप्रयुंजंतिशुभाभुवि सुरूपाःसुभगा
काश्चिदपुत्रावहुपुत्रिकाः सुशीलास्तपसाकाश्चिच्छ्वश्रूभिःपीडिताभृशं शौचाचारसमायुक्ता नरोचंतेथकस्य
चित् एवंवहुविधैर्दुःखैः पीडयमानाश्चदारुणैः शरणंमांप्रपन्नास्ताः कृपाविष्टाततोस्म्यहं येनताः सुख
संभोगरूपलावण्यसंपदा पुत्रैः सौभाग्यवित्तौघै र्युक्ताः स्युः सुरसत्तम तन्मेकथययत्नेनव्रतानामुत्तमंव्रतं
ईश्वरउवाच माघेमासेसितपक्षेतृतीयायांचतस्वतःमुखंप्रक्षाल्यहस्तौचपादौचैवसमाहितःउपवासस्यनियमंदंतधा
वनपूर्वकं मध्याह्नेतुततःस्नानंतिलैरामलकैस्तथास्नात्वोत्तीर्य्यजलाच्छुद्धेवाससीपरिधायच सुगंधैःसुमनोभिश्चप्रभू
तैःकुंकुमादिभिःअर्चयंतुसदादेवींभक्त्यात्वांभक्तवत्सलां कर्पूराद्यैस्तथाधूपैर्नैवेद्यैःशर्करादिभिः यदृच्छालाभसंपन्नै
र्धूपदीपार्घ्यसादिभिः ततः सायंगृहीत्वातु प्रतीछेद्घटिकांतथा पात्रेताम्रमयेशुद्धेजलाक्षतादिभिश्चिते सहिर
ण्यंद्विजंकृत्वामंत्रपूर्वंसमाधिना शिरसिप्रक्षिपेत्तोयंध्यायंतीमनसेप्सितं ब्रह्मावर्त्तः समाख्यातोब्रह्मयोनिवि.
निर्गतः भद्रेचराततोदेवी ललिताशंकरप्रिया गंगाद्वारेहरंप्राप्तागंगाजलपवित्रता सौभाग्यारोग्यपुत्रार्थम
र्चयेद्हरवल्लभे आयाताघटिताभद्रेप्रतीछस्वनमोनमः दत्वाहिरण्यंतत्पश्चात्प्राशयेतकुशोदकं आचम्यप्रयता

भूत्वाभूमिस्थाक्षपयेत्क्षणं ध्यायमानामुदादेवींहारितेभवविस्तरे द्वितीयेह्निपुनः स्नात्वा तथैवाभ्यर्च्यपार्वतीं यथा
शक्त्याद्विजान्पूज्यततोभुंजीतवाग्यता एवंतुप्रथमेमासिपूजनीयातुकालिका द्वितीयेपार्वतीनामतृतीयेशंकरप्रिया
चतुर्थेगिरिजादेवीपंचमेहरवल्लभा दक्षस्यदुहितापष्ठेमेनाकीसप्तमेस्मृता मृडानीचाष्टमेमासिगौरीतुनवमेस्मृता
दशमेमासिविख्यातादेवीसौभाग्यदायिनी उमात्वेकादशेमासिगौरीतुद्वादशीपरा कुशोदकंपयःसर्पिर्गोमूत्रंगोम
यंफलं निंबपत्रंकंटकारीवचाशृंगोदकंदधि पंचगव्यंतथाशोकंप्राशनानिक्रमादमी मासिमासिस्थिताह्येवमुपवास
परायणा ददातिश्रद्धयैतानियाचकेब्राह्मणोनमे हारिद्राकुंकुमलवणंजीरकंगुडमेवच देयैरेभिःश्रद्धयात्वं सूर्यस्थैस्तु
प्यासिप्रिये मासिमासिभवेन्मंत्रःसोंकारोद्वादशाक्षरः ओंकारपूर्विकैर्देविनमस्कारांतदीपितैः एभिस्त्वंपूजितामंत्रैः
स्तुप्यसित्वंहरप्रिये तुष्टात्वमीप्सितान्कामान्ददासिप्रीतिपूर्वकं समाप्तेतुव्रतेतास्मिन्ब्राह्मणंवेदपारगं साहि
तंभार्ययाभ्यर्च्यगंधपुष्पादिभिःशुभैः द्विजंमहेश्वरंकृत्वाउमांभार्यांतथैवच अन्नंसदक्षिणंदद्यात्तथाशुभ्रेचवाससी
रक्तवासोयुगंदद्यात्त्वामुद्दिश्यहरप्रिये ब्राह्मणेश्रद्धयायुक्तातस्याःफलमिदंशृणु दशवर्षसहस्राणिलोकान्प्रा
प्यपरात्परान् मोदतेभर्तृसहितायथेंद्रेणशचीतथा मानुषत्वंपुनःप्राप्यनवैधव्यमवाप्नुयात् पुत्रान्भोगांस्तथारू
पंसौभाग्यंश्रियमेवच एकपत्न्यंतथाभर्तुःप्राणेभ्योप्यधिकाभवेत् शृणुयाद्वाच्यमानंतुभक्त्यायाललिताव्रतं
मयास्नेहेनकथितंसापितत्फलभागिनी संपूज्यपूज्यांललितांगयष्टींगंधोदकैर्म्मृतघटींशिरसिक्षिपेद्या सास्व
र्गमर्त्यललनासुलभामभूताभूत्वाधिपंपतिमवाप्यभुवंभुनक्ति

इतिश्रीभविष्योत्तरेमाघशुक्लाललितातृतीयाव्रतं ॥

# अवैवरसकल्याणिनीव्रतम्

भविष्योत्तरे श्रीकृष्णउवाच अथान्यामपिवक्ष्यामितृतीयांपापनाशिनीं रसकल्याणिनीमेतांपुराकल्पवि
दोविदुः माघमासेतुसंप्राप्यतृतीयांशुक्लपक्षतः प्रातर्गव्येनपयसातिलैःस्नानंसमाचरेत् स्नापयेन्मधुनादे
वीतथैवेक्षुरसेनच पुनःपूजाप्रकर्तव्याजात्यावैकुंकुमेनच दक्षिणांगानिसंपूज्यवामांगानिचपूजयेत् ललितायै
नमःपादौगुल्फौतद्वदथार्चयेत् जंघेजानूतथाशांत्येतथैवोरूश्रियैनमः मदनालसायैकटिंमदनायैतथोदरं स्तनं
मदनवासिन्यैकुमुदायैचकंधरं भुजंभुजाग्रंमाधव्यैकमलायैमुखस्मितं भ्रुवौललाटरुद्राण्यैशंकरायैतथालकान्
मुकुटंविश्वव्यापिन्यैपुनःकांत्यैतथालकान् मदनायैललाटंतुमोहनायैपुनर्भ्रुवं नेत्रेतथाधिदारिण्यैपुष्ट्यैचवदनंपुनः
उत्कंठिन्यैतथाकंठममृतायैचकंधरां रंभायैवामवाहुंचविशोकायैचदक्षिणं हृदयंमन्मथारिण्यैवामदेव्यैजग-
च्छ्रिये आनंदनायैनंदायैसुभद्रायैनमोनमः एवंसंपूज्यविधिवद्द्विजदांपत्यमर्चयेत् भोजयित्वान्नपानेनमधुरेण
विमत्सरः सलड्डुकंवारिकुंभंशुक्लांबरयुगान्वितं दत्वासुवर्णकमलंगंधमाल्यैरथार्चयेत् प्रीयतामत्रकुमदाग्र-
हीयाल्लवणव्रतं अनेनविधिनादेवीं मासिमासिसमर्चयेत् लवणंवर्जयेन्माघेफाल्गुनेचगुडंपुनः तुवराजंतथा
चैत्रेवर्ज्यंचमधुमाधवे यावकंज्येष्ठमासेतुह्याषाढेजीरकंतथा श्रावणेवर्जयेत्क्षीरंदधिभाद्रपदेतथा घृतमाश्वयुजे
तद्वदूर्जेवर्ज्याचमाजिका धान्यकंमार्गशीर्षेतुपौषेवर्ज्याचशर्करा व्रतांतेकरकान्पूर्णान्नेपांवेमासिमासिच दद्याद्
द्विकालवेलायांभक्ष्यपात्रेणसंयुतान् लड्डुकान्वडकांश्चैवसंयावमथपूरिकान् घातिकाघृतपूरांश्चगुडपूर्णांश्चमं
डकान् क्षीरंशाकंचदध्यन्नामंडयोशाकनां[illegible]काः माघादौक्रमशोदद्यादेतानिकरकोपरि कुमुदामाधवीगौरी

रंभाभद्राजयाशिवा उमासतीशचीतद्वन्मंगलारतिलालसा क्रमान्माघादिसर्वत्रप्रीयतामितिकीर्तयेत् सर्व
त्रपंचगव्यंचप्राशनेसमुदाहृतं उपवासीभवेन्नित्यमशक्तोनक्तमिष्यते पुनर्माघेचसंप्राप्तेसाक्षसूत्रकमंडलुं तद्व
द्गोमिथुनंशुक्लंसुवर्णास्यांसितांवरं सवस्त्रभाजनंदद्याद्भवानीप्रीयतामिति अनेनविधिनायस्तुरसकल्याणिनी
व्रतं कुर्यात्ससर्वपापेभ्यस्तत्क्षणादेवमुच्यते भवार्बुदसहस्रंतुनदुःखीजायतेक्वचित् अग्निष्टोमसहस्रेणय
त्फलंतदवाप्नुयात् नारीचकुरुतेयातुकुमारीवायुधिष्ठिर विधवावावराकीवासापितत्फलभागिनी सौभाग्या
रोग्यसंपन्नागौरीलोकेमहीयते ॥ इतिपठतिचनित्यंयःशृणोतिप्रसंगात्सकलकलुषमुक्तः पार्वतीलोकमेति माणिम
पिचनराणांयोददातिप्रियार्थं विपुलमभिजनानांनायकःस्यादमेयः ॥ इतिभविष्योत्तरेरसकल्याणिनीमाघशुक्ल
तृतीयाव्रतम् ॥ अस्यामेवगौरीतृतीयाव्रतमाचरंतिशिष्टा माघशुक्लतृतीयायांकन्यासम्यग्वरार्थिनी प्रातः
स्नात्वार्चयेद्गौरींपुष्पनैवेद्यचंदनैः मत्स्यपुराणे माघमासेतुचैत्रेवागुडधेनुप्रदोभवेत् गुडव्रतंतृतीयायांगौरी
लोकेमहीयते गुडव्रतो गुडमात्रदानपरः भविष्यपुराणे माघमासितृतीयायांगुडस्यलवणस्यच दानंश्रेयस्क
रंराजन्स्त्रीणांचपुरुषस्यच गुडेनतुष्यतेदेवीलवणेनमहेश्वरः इत्युमामहेश्वरप्रीतिकरंगुडलवणदानव्रतं अथ
माघशुक्लचतुर्थीकृत्यानि माघशुक्लचतुर्थीवरदाख्याकुंदचतुर्थीतिच हेमाद्रौनिर्णयामृतेचोक्तं कुंभार्केतिप्रशस्ता-
साप्रदोषव्यापिनीग्राह्या अत्रकुंदपुष्पैः शिवमभ्यर्च्यनरोनक्तभोजीश्रियमाप्नोति तदुक्तंकूर्मपुराणे कुंभशुक्ल
चतुर्थ्यांतुकुंदपुष्पैःसदाशिवं सपूज्य योहिनक्ताशीसप्राप्नोतिनरः श्रियमिति अस्यामेवब्रह्मपुराणोक्तंगौ
रीचतुर्थीव्रतं उमाचतुर्थ्यांमाघेतुशुक्लायांयोगिनीगणैः प्राहक्षयित्वासृष्टाचभूयः स्वांगात्स्वकैर्गुणैः ससृ
जुःसहितायस्मात्तस्मात्प्रोक्तासतीपुरा तस्मात्सातत्रसंपूज्यानरैःस्त्रीभिर्विशेषतः कुंदपुष्पैःप्रयत्नेनस

म्यग्भक्त्यासमाहितैः कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकुंडकैः अर्घ्यैःपुष्पैस्तथाधूपैर्दीपैर्बलिभिरेवच गुडार्द्र काभ्यांपयसालवणेनाथपालकैः पूज्यास्त्रियश्चाविधवास्तथाविप्रास्सुलोचनाः सौभाग्यवृद्धयेपश्चाद्भोक्तव्यं वंधुभिःसहेतिकुंडकैर्मृद्भांडविशेषैरित्यर्थः अविधवाइत्यनेनसधवाःकुमार्य्यश्चसंगृहीता इतिगौरीचतुर्थीव्रतं देवीपुराणेत्वियंकुंडचतुर्थीत्युक्तं माघमासेतुसंप्राप्तेचतुर्थीकुंडसंज्ञिता उपोष्यसासुरश्रेष्ठततोराज्यंभविष्यति सर्वोपहारसंयुक्तंसर्वोपस्करमाहरेत् पुष्पपत्रफलंनालंकंदमूलानियानिच वन्यानिचैवधान्यानितद्द्येयानिविशेषतः त्वक्टारचारुबीजानिनवानिपल्लवानिच वलभद्रवल्लभंशाकंलवणंगुडशर्करा खंडजीरककुस्तुंबुधान्यानिविविधा निचदातव्यानिसुरश्रेष्ठकन्यकानांतुभक्तितः अर्घ्यपात्रंतथाभांडंमृण्मयानिविशेषतःउद्दिश्यदापयेद्देवींप्रीयतांमेस. दाइति अनेनविधिनाशक्रसौभाग्यंपुत्रसंततिः वर्द्धतेनात्रसंदेहोनान्यथाममभाषितं इतिदेवीपुराणोक्तंकुंडच तुर्थीव्रतं माघशुक्लचतुर्थ्यांःवुद्धिपूजोक्ताकाशीखंडे इयमेवतिलचतुर्थीत्युच्यते माघशुक्लचतुर्थ्यांतुनक्तंव्रतपरायणाः येत्वांवुद्धिमर्चयंतितेषर्च्याःस्युरसुरद्रुहां विधायवार्षिकींयात्रांचतुर्थींप्राप्यतापसीं तपोमाघस्तस्येयंतापसीचतुर्थी त्यर्थः शुक्लांशुक्लतिलैर्वध्वाप्राश्नीयाल्लड्डुकान्व्रती तांयात्रांनात्रयःकुर्य्यान्नैवेद्यंतिललड्डुकैः उपसर्गसहस्रैस्तु सहंतव्योममाज्ञया होमंतिलाज्यद्रव्येणयःकरिष्यतिभक्तितः तस्यांचतुर्थ्यांमंत्रज्ञस्तस्यमंत्रःप्रसेप्स्यतीति तथाच माघेमासेचतुर्थ्यांतुतस्मिन्कालेउपोषितः अर्चयित्वातुयोदेवींजागरंतत्रकारयेदिति त्रिस्थलीसेतौलैंगेपि तिथि तत्त्वेभविष्योत्तरे माघशुक्लमधिकृत्योक्तं चतुर्थीवरदानामतस्यांगौरीसुपूजिता सौभाग्यमज्ञलंकुर्य्याच्चतुर्थ्यां श्रीरपिश्रियमिति माघशुक्लचतुर्थ्यांशांतिचतुर्थीव्रतंभविष्योत्तरे सुमंतुरुवाच माघेमासितथाशुक्लायाचतुर्थी महीपते सासर्वशांतिदानित्यंशांतिंकुर्य्यात्सदैवहि स्नानंदानंबलिंकर्मसर्वमस्यांकृतंविभो भवेत्सहस्रगुणि

:त्प्रसादाद्दंतिन.सदा दंतिनोगणेशस्य कृत्वोपवासंयस्तस्यांपूजयेद्विघ्ननायक - तस्यहोमादिकंकर्मभवेत्साह
स्रिकन्नृप - लवणगुडपूपांश्चघृताक्तांस्त्वथभारत दत्त्वाभक्त्यैवविघ्नेशेफलंसाहस्त्रिकंलभेत् - विशेषतस्तथारा
ज्ञ्पूजयेत्स्वगुरुंनृप -गुडलवणघृतैर्वारसदास्यांकुरुनंदन - इतिभविष्योत्तरोक्तंशांतिचतुर्थीव्रतं -नारदीयेपि इद
गौरीव्रतंविप्रसौभाग्यारोग्यवर्द्धनं प्रतिवर्षंप्रकर्तव्यंनारीभिश्चनरैस्तथा - ढुंढिव्रतंपरैःप्रोक्तंकश्चित्कुंडव्रतंस्मृतं
ललिताव्रतामित्यन्ये.शांतिव्रतमथापरैः स्नानंदानंजपोहोमः सर्वमस्यांकृतंनरैः - भवेत्सहस्त्रगुणितंप्रसादाद्दं-
तिन.सदेति ॥ ५ ॥ माघशुक्लपंचमीश्रीपंचमी साचवसंतेइयंपूर्वाग्राह्या हेमाद्रिमतेपरा तत्रमदनसंपूज्यवसं.
तोत्सवारंभःकार्यइतिनिर्णयामृते अतएवेयंवसंतपचमीतिभट्टोजिदीक्षिता अत्रादौरतिकामपूजनश्रीपूजापू
र्वंकृत्वाततोवसंतोत्सवारंभ.कार्यः पुराणसमुच्चये - माघेमासिसुरश्रेष्ठशुक्लायांपंचमीतिथौ रति
कामौतुसंपूज्यकर्तव्यःसुमहोत्सवः दानानिचप्रदेयानिकर्त्तव्यः सुमहोत्सवः तथाश्रीपूजनंकार्य्यंते
नतुष्यतिमाधवइति - तिथितत्त्वेभविष्योत्तरे माघशुक्लमधिकृत्य चतुर्थीवरदानामतस्यांगौरीसुपूजिता
सौभाग्यमतुलंकुर्य्यात्पंचम्यांश्रीरपिश्रियं - हेमाद्रौभविष्ये माघेशुक्लचतुर्थ्यांतुवरमाराध्यचश्रियः पंचम्यां
कुंदकुसुमैःपूजांकुर्य्यात्सन्नद्धये अथरतिकामयोर्ध्यानं हेमाद्रौ शुभारति.प्रकर्तव्यावसंतोज्ज्वलभूषणा नृत्य
मानाशुभादेविसमस्ताभरणैर्युता वीणावादनशीलाचमदकर्पूरचर्चिता कामदेवस्तुकर्त्तव्योरूपेणाप्रतिमोभुविभ्र
ष्टबाहुःसकर्तव्य.शंखपद्मविभूषणः चापबाणकरश्चैवमदाद्रांचितलोचनः रतिःप्रीतिस्तथाशक्तिर्मदशक्तिस्तथो
ज्ज्वलाचतस्त्रस्तस्यकर्त्तव्याःपत्न्योरूपमनोहराः चत्वारस्तुकरास्तस्यकार्य्याभार्यास्तथोपगाः केतुश्चमकरःका
र्य्य.पंचबाणमुखोमहानिति -अत्रश्रीपूजनंमार्गशुक्लपचम्योक्तमनुसंधेयं ॥ इतिमाघशुक्लाश्रीपंचमीवसंतपंचमी

कृत्यं माघशुक्लषष्ठीअरुणाख्योक्तानारदीये माघेमासेसितापष्ठीसारुणाख्यास्मृताशुभा तस्यामरुणमभ्य
र्च्यविष्णुरूपंसनातनं रक्तैर्गंधांशुकैः पुष्पै नैवेद्यैःपुष्पधूपकैः सम्यगभ्यर्च्यविधिव द्यदत्रविलिखेन्नरः
ततस्त्रायत्मतोभूयात्मोदतेतत्प्रसादतः इयंमंदारषष्ठी भविष्योत्तरे ॥ * ॥ श्रीकृष्णउवाच ॥
शृणुपार्थप्रवक्ष्यामिसर्वपापप्रणाशिनीं सर्वकामप्रदांषष्ठींनाम्नामंदारसंज्ञितां माघस्यमलपक्षेतुपंचम्यांल-
घुभुङ्नरः दंतकाष्ठंततःकृत्वास्वपेद्भूमौजितेंद्रियः सर्वभोगविहीनस्तुषष्ठीमुपवसेन्नरः प्राप्यानुज्ञां
द्विजश्रेष्ठान्मंदारंप्राशयेन्निशि मंदारोराजार्कवृक्षः ततःप्रातःसमुत्थाय कृतस्नानःपुनर्द्विजान् संपूज्य
संहतंकृत्वामंदारकुसुमाष्टकं सौवर्णपूपणंतद्वत्पद्महस्तंसुशोभनं पद्मकृष्णातिलैःकृत्वाताम्रपात्रेदलाष्टकं पू
ज्यमंदारकुसुमैर्भास्करायेतिपूर्वतः नमस्कारेणतद्वच्चसूर्य्यायेत्यनलेदले दक्षिणेतद्वदर्काययज्ञेशायचनैर्ऋते
पश्चिमेवसुधाम्नेतिवायव्येयंचभांडवे कृष्णायोत्तरतःपूज्यश्चानंदायेशानकेदले कर्णिकायांचपुरुषंपूज्यसर्वात्म
नाहरिं शुक्लवस्त्रैसमावेष्ट्यभक्ष्यमाल्यफलादिभिः एवमभ्यर्च्यतत्सर्वमुपाध्यायेनिवेदयेत् भुंजीतातैललवणं
वाग्यतःप्राङ्मुखोनिशि अनेनविधिनासर्वसप्तम्यांमासिमासिच कुर्य्यात्संवत्सरंयावद्वित्तशाठ्यविवर्जितः
एतदेवव्रतांतेतुविधायकलशोपरि रवियुक्तंद्विजेंद्रायदातव्यंभूतिमिच्छता रवियुक्तंसौवर्णरवियुक्तामित्यर्थःनमो
मंदारनाथायमंदारभवनायच त्वंरवेतारयस्वास्मान्नतास्मात्संसारसागरात् विधिनानेनयःषष्ठींमंदारभवसंज्ञितां
विपाप्मासुमुखीमर्त्यो मृतःस्वर्गेमहीयते इमामघौघपटलध्वांतोद्वासनदीपिकां प्रगृह्यगच्छन्संसारगर्तायां
नस्खलेन्नरः मंदारषष्ठींविख्यातांवांछितार्थफलप्रदां यःपठेच्छृणुयाद्वापिसोपिपापैःप्रमुच्यते षष्ठीमुपोष्य
तिलपंकजकर्णिकायांसंपूज्यभास्करमहासुरवृक्षपुष्पैः यत्प्राप्नुवंतिपुरुषानहितत्कदाचिद्राभूहिरण्यतिलदाःफ

लमानुवंति इतिभविष्योत्तरेमाघशुक्लामंदारषष्ठीव्रतम् ॥ अथमाघशुक्लसप्तमीकृत्यानि नारदीये माघस्यशु
क्लसप्तम्यामचलाख्यंव्रतंस्मृतं त्रिलोचनाजयंतीयंसर्वपापहरास्मृता रथाख्यासप्तमीचेयंचक्रवर्तित्वदायिनी
अस्यांसमर्च्यसवितुःप्रतिमांतुहैम्नींहेमाम्बराश्वरथगांतुददेत्सहेमां योभावभक्तिसहितःसगतोहिलोकंशंभोःप्र
सादतइहापिचभुक्तभोगः भास्करीसप्तमीचेयंकोटिभास्वद्ग्रहोपमा अरुणोदयवेलायामस्यांस्नानंविधीयते अ
र्कस्यबदर्याश्चसप्तसप्तदलानिच विधायशिरसिस्नायात्सप्तजन्माघनाशनं पुत्रप्रदंव्रतंचात्रप्राहादित्यःस्वयं
प्रभुः योमाघसितसप्तम्यांपूजयेन्मांविधानतः तस्याहंपुत्रतांयास्येस्वांशेनभृशतोषितः तस्यांजितेंद्रियोभूत्वा
समुपोष्यादिवानिशं पूजयेदपरेचाह्निहोमंकृत्वाद्विजांस्तथा दध्योदनेनपयसापायसेनचभोजयेत् अनेनविधि
नायस्तुकुरुतेपुत्रसप्तमीं लभतेसतुसत्पुत्रंचिरायुषमनामयं इयमचलासप्तमीत्रिलोचनाजयंतीत्युक्तंभविष्यो
त्तरे माघस्यशुक्लपक्षेतुसप्तमीसात्रिलोचना जयंतीनामसाप्रोक्तासर्वपापहरातिथिरिति मत्स्यपुराणे यस्यां
मन्वंतरस्यादौ रथमापदिवाकरः जयंतीनामसाप्रोक्ताशुक्लामाघस्यसप्तमीति सास्नानादावरुणोदयव्यापिनी
ग्राह्या सूर्यग्रहणतुल्यातुशुक्लामाघस्यसप्तमी अरुणोदयवेलायांतस्यांस्नानंमहाफलमितिविष्णूक्तेः दिनद्वये
ऽरुणोदयेचेत्पूर्वैवषण्मुन्योरितियुग्मवाक्यादितिभट्टोजिदीक्षिताः अयंचस्नानकालोरुणोदयेयेमाघस्नानंकुर्वंतिते
षामेव अन्यान्प्रतितुसूर्योदयएव माघमासस्यसप्तम्यामुदयत्येवभास्करे विधिवत्तत्रचस्नानंमहापातकनाश
नमित्यपरार्कविष्णूक्तेरित्युक्तंतन्मृग्यं मदनरत्नादिसर्वप्राचीननवीनग्रंथेष्वतद्वचनस्यानुपलंभात् तद्ग्रंथविरो
धाच्चमाघस्नानकालस्तुसूर्योदयएव खमुद्गच्छतिभास्करइति माघमासेरटंत्यापःकिंचिदभ्युदितेरवाविति यो-
माघमास्युषसिसूर्यकराभितप्तेस्नानंसमाचरतीत्यादि नारदीयभविष्योत्तरप्रभृतिवचनडिंडिमस्यजागरूकत्वात्

तस्मान्माघस्नानंसूर्य्योदयेकर्त्तव्यं अचलासप्तमीस्नानंत्वरुणोदयएवेतिसिद्धांतः यत्तुदिवोदासीये अचलासप्त मीदुर्गाशिवरात्रिर्महान्नरः द्वादशीवत्सपूजायांसुखदाप्राग्युतासदेतिपष्ठीयुक्तमुक्तं तद्यदिपूर्वाह्णेषष्ठीघटिकाद्वयं सप्तमीचपरेद्युःक्षयवशादरुणोदयात्पूर्वंसमाप्यतेतत्परंज्ञेयं तत्रषष्ठ्यांसप्तमीक्षयंप्रविश्यारुणोदयेस्नानंकर्त्तव्यं इ यंचप्रयागेप्रशस्ता अरुणोदयवेलायांशुक्लामाघस्यसप्तमी प्रयागेयदिलभ्येतकोटिसूर्य्यग्रहैःसमेतिवचनात्तथा माघेमासिसितेपक्षेसप्तमीकोटिभास्करा कुर्य्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदइतिइदंचस्नानतिथ्यादि संकीर्त्यसप्तार्कपत्राणिसप्तवदरीपत्राणिचसुवर्णादिपात्रस्थतिलतैलकुसुंभवर्त्तिप्रज्वालितंदीपंचशिरसिकृत्वाइक्षु दंडेनजलंचालयित्वाभास्करंहृदयेध्यात्वा नमस्तेरुद्ररूपायरसानांपतयेनमः वरुणायनमस्तेस्तुहरिवासनमोस्तुते इतिश्लोकंपठित्वा दीपंप्रवाहेविसृज्यशुक्लतिलैरंगोद्वर्त्तनंकृत्वास्नानंकर्तव्यं दिवोदासीयेमदनरत्नेतुइक्षुदंडेनजलंचा लयित्वा सप्तार्कपत्राणिसप्तवदरीपत्राणिचशिरसिकृत्वा वक्ष्यमाणमंत्रैःस्नात्वातिलपिष्ठमयापूपैर्हैमंसूर्य्यंसं पूज्य विप्रायदद्यादित्युक्तं स्नानमंत्राश्चकाशीखंडे यद्यज्जन्मकृतंपापमयासप्तसुजन्मसु तन्मेरोगंचशोकंच माकरीहंतुसप्तमी एतज्जन्मकृतंपापंयच्चजन्मांतरार्जितं मनोवाक्कायजंयच्चज्ञाताज्ञातंचयत्पुनः इतिसप्तवि धंपापंस्नानान्मेसप्तसप्तिके सप्तव्याधिसमाकीर्णंहरमाकरिसप्तमीति एतन्मंत्रजपंजप्त्वास्नात्वापादोदकं नरःकेशवादित्यमालोक्यनरोनिष्कलुषोभवेत् ततोअर्घ्यंदद्यात् सचसौरागमेप्रोक्तःअर्कपत्रैस्सवदरैर्दूर्वाक्षतसचं दनैः अष्टांगविधिनाचार्घ्यंदद्यादादित्यतुष्टये अर्घ्यदानमंत्रोमदनरत्ने सप्तसप्तिवहप्रीतसप्तलोकप्रदीपन सप्तम्यासहितोदेवगृहाणार्घ्यंदिवाकरेति ततःसप्तमीप्रार्थना जननीसर्वलोकानां सप्तमीसप्तसप्तिके सप्त व्याहृतिकेदेविनमस्तेसूर्यमंडल इति अत्रसप्तमीध्यानं ताम्रवर्णाज्यपात्रासाहयस्थासप्तमीमतेति नीलकुंत

लकंठासाजटाखंडेंदुभूपिता इभस्थासप्तमीगौरीद्विभुजावज्रपात्रिणीति ॥ उभयसप्तमीध्यानं ततोनित्यविधिं
निर्वर्त्य चंदनेनाष्टपत्रकमलंविलिख्यतत्कर्णिकायांप्रणवसहितंसपत्नीकंशिवंसंपूज्यपूर्वादिदलेषु रविं भानुंविव
स्वंतंभास्करंसवितारं अर्कं सहस्रकिरणंसर्वात्मानं क्रमेण प्रणवादिनमोंतनामभिर्वस्त्रादिभिः संपूज्यस्वस्था
नंगम्यतामितिविसृजेत् ततस्ताम्रादिपात्रेकांचनंकर्णाभरणं घृतगुडतिलपिष्टसहितं अशक्तश्चेत्तिलपिष्टजंसं
स्थाप्यरक्तवस्त्रेणाच्छाद्यपुष्पादिभिःसंपूज्य ब्राह्मणैःस्वस्तिवाचनंकारयित्वाब्राह्मणायदद्यात् तत्रमंत्रः आदित्य
स्यप्रसादेनप्रातःस्नानफलेनच दुष्टदौर्भाग्यदुःखघ्नंमयादत्तंतुतालकमिति ततोगुरुंसंपूज्य सूर्यध्यायन्विप्रान्सं
भोज्यस्वयंभुंजीतइतितालकदानं ततःससारथिरथंवर्णकैर्विलिख्य तथायथाशक्तिस्वर्णादिघटितंभानुंसं
पूज्यदद्यात् इतिरथदानविधिः अत्रान्योपिविशेषः कथायांद्रष्टव्यःइयंमन्वादिः शुक्लपक्षस्थत्वात् पौर्वाह्णिकी
ग्राह्यामाघस्यमलमासत्वेमन्वादिकश्राद्धमुभयत्रापिकार्य्यं मन्वादिकमितिपूर्वोक्तवचनात् अस्यांकाशीखंडेविशे
षउक्तः लोलार्करथसप्तम्यांस्नात्वागंगादिसंगमे सप्तजन्मकृतैःपापैर्मुक्तोभवतितत्क्षणादिति पद्मयोगोप्यत्रस
तिसंभवेज्ञेयःसचनिर्णयामृतेप्रोक्तः षष्ठीचसप्तमीचैववारश्चेदंशुमालिनः योगोयंपद्मकोनामसूर्यकोटिग्रहैःसमइति
अथभविष्योत्तरोक्ताऽचलासप्तमीव्रतकथा युधिष्ठिरउवाच अध्रुवेणशरीरेणसुपुष्टेनापिकिंफलं माघस्नानंविना
देवत्वयोक्तंयदुनंदन प्रातःस्नानासमर्थंतु शरीरंयस्यदेहिनः किंतेनवदकर्तव्यंमाघेसंसारभीरुणा सौकुमार्या
च्छरीरस्यअबलत्वात्तथैवच कथंस्त्रियःसुरूपास्युः सुभगाःसुप्रजास्तथा पुण्यस्यमहतश्चैवसर्वमेतत्फलंयतः
अल्पायासेनसुमहद्येनपुण्यमवाप्यते स्त्रीभिर्माघेममब्रूहिस्नानमेकंजगद्गुरो श्रीकृष्णउवाच श्रूयतांभरतश्रेष्ठर
हस्यंमुनिभाषितं यन्मयाकस्यचिन्नोक्तमचलासप्तमीव्रतं वेश्याचेंदुमतीनामरूपौदार्यगुणान्विता आसीत्कुरु

कुलश्रेष्ठसागरस्यविलासिनी सावसिष्ठाश्रमंपुण्यंजगामगजगामिनी वसिष्ठमुनिमासीनंप्रणम्यानतकंधरा
कृतांजलिपुटाभूत्वाप्राहेदंजगलोहितं मयानदत्तंनहुतंनोपवासव्रतंकृतं भक्त्यासपूजितःशंभुः स्वामिन् शार्ङ्गध
रोनच सांप्रतंतप्यमानायाव्रतंकिंचिद्दिशस्वमे येनदु खांवुपंकौघादुत्तरामिभवार्णवं एतत्तस्याश्चवहुश श्रु
त्वातिकरुणंवचः कारुण्यात्कथयामासवसिष्ठोमुनिसत्तमः वासिष्ठउवाच माघस्यसितसप्तम्यांसर्वकामफल
प्रदं रूपसौभाग्यजननंस्नानंकुरुवरानने कृत्वापष्ठ्यामेकभक्तंसप्तम्यांनिश्चलंजलं रात्र्यंतेचालयेथास्त्वंद
त्वाशिरसिदीपकं माघस्यासितसप्तम्या मचलाचालितंचयत् .जलंमलानांसर्वेषांस्मृतंप्रक्षालनंततः वसिष्ठव
चनश्रुत्वातस्मिन्नहनिभारत चकारेंदुमतीस्नानंदानंसम्यग्यथाविधि स्नानस्यास्यप्रभावेनभुक्त्वाभोगान्यथे
प्सितान् इंद्रलोकेप्सरामध्येनायकात्वमुपागता अचलासप्तमीस्नानकथितंतेविशांपते सर्वपापप्रशमनंसु
खसौभाग्यवर्द्धनं ॥ युधिष्ठिरउवाच ॥ सप्तमीस्नानमाहात्म्यंश्रुतंकृष्णविशेषतः सांप्रतंश्रोतुमिच्छामिविधिं
मंत्रसमन्वितं श्रीकृष्णउवाच एकभक्तेनसंतिष्ठेत्पष्ठ्यांसपूज्यभास्करं सप्तम्यांतुप्रतिप्रातः सुगंभीरंजलाशयं
सरित्सरस्तडागंवा देवखातमथापिवा सुखावगाहमन्वेष्टंदुष्टसत्वैरदूषितं व्यालांवुपक्षिभिश्चैवजलगैर्मत्स्यक
च्छपैःनकेनचाल्यतेयावत्तावत्स्नानंसमाचरेत् सौवर्णेराजतेपात्रेभक्त्यालांवुमयेतथा तैलवर्तिस्तुदातव्यामहारज
नरंजिता महारंजनकौसुंभं समाहितमनाभूत्वादत्त्वाशिरसिदीपकं भास्करहृदयेध्यात्वाइमंमंत्रमुदीरयेत् नम
स्तेरुद्ररूपायरसानांपतयेनमः वरुणायनमस्तेस्तुहरिवासनमोस्तुते जलोपरितरेद्दीपंस्नात्वासंतर्प्यदेवताः चं
दनेनालिखेत्पद्ममष्टपत्रंसकर्णिकं मध्येशिवंसपत्नीकंप्रणवेनसमन्वितं शाक्रेदलेरविः पूज्यो भानुश्चैवानलेतथा
याम्येविवस्वान्नैरृत्येभास्करंपूजयेद्बुधः पश्चिमेसवितापूज्योतथार्कश्चानिलेदले सौम्येसहस्रकिरणःशैवेसर्वात्मने

नमःपूज्याःप्रणवपूर्वास्तु नमस्कारयुतास्ततःपुष्पैःसुगंधधूपैश्च पृथक्केनयुधिष्ठिर विसर्गवस्त्रसंवीतंस्वस्थानंगम्यता
मितिविसर्ज्यतेसहस्रांशौसमागम्यस्वमालयं ताम्रपात्रेयथाशक्त्यामृण्मयेवाथभक्तिमान् स्थापयेत्तिलपिष्टंचसघृतं
सगुडंतथाकांचनंतालकंकृत्वाअशक्तास्तिलपिष्टकंसंछाद्यरक्तवस्त्रेणपुष्पैर्धूपैरथार्चयेत् ततस्तंचालयेद्विप्रेदद्यान्मं
त्रेणतालकं आदित्यस्यप्रसादेन प्रातःस्नानफलेनच दुष्टदौर्भाग्यदमनंमयादत्तंतुतालकं पूजयित्वोपदेष्टारं
विप्रानन्यांश्चपूजयेत् ततोद्विजैसमर्थेचभास्करध्यानतत्परः ताएवतुकथाः शृण्वन्नन्याधर्मसहिताः प्राखं
डिभिसलापदर्शनस्पर्शनादिकं वर्जयेत्क्षपयेत्प्राज्ञस्ततोवंधुजनैः सह एतत्तेकथितंपार्थरूपसौभाग्यकारकं
अचलासप्तमीस्नानंसर्वकामफलप्रद इतिपठतियइत्थंयःशृणोतिप्रसंगा त्कलिकलुषविनाशासप्तमीस्नान
मेतत् इदमपिचजनानांयोददातिप्रयत्नात्सुरसदनगतोसौमोदतेचाप्सरोभिः इतिभविष्योत्तरोक्तमचलासप्त
मीव्रतम् ॥ अथोद्यापनकौमुदीप्रोक्तंसंक्षेपेणाचलासप्तमीविधानं तत्रमाघशुक्लसप्तम्यां प्रातःस्नात्वा देशका
लौसंकीर्त्यममाखिलपापक्षयपूर्वकरूपसौभाग्यसर्वकामफलप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थं मचलासप्तमीव्रतंक
रिष्यइतिसंकल्प्य भास्करंसंपूज्यस्वयमेकभक्तंकुर्यात् ततः सप्तम्यांसुगंभीरंजलाशयंतडागंदेवखातंन
दींवागत्वा नकेनापिचालितं जलमिक्षुदंडेन चालयित्वा सौवर्णेराजतेताम्रमयेपात्रेअशक्तावलावु
मये कौसुंभरंजितवर्त्तितिलतैलप्रज्वालितंदीपंसंस्थाप्य सप्तार्कपत्राणिसप्तवदरीपत्राणिचसिरसिधृत्वाभास्करं
ध्यायन् इमंमंत्रमुदीरयेत् नमस्तेरुद्ररूपायरसानांपतयेनमः वरुणायनमस्तुभ्यंहरिवासनमोस्तुते इत्यु
क्त्वाजलेदीपंन्यसेत् ततः स्नात्वा देवताःसंतर्प्य तत्तीरेचंदनेनाष्टदलंविलिख्य तत्रपूर्वादिक्रमेण रविं १
भानुं २ विवस्वंतं ३ भास्करं ४ सवितारं ५ अर्कं ६ प्रभाकरं ७ सहस्रकिरणं मध्यउमासहितंशिवं

मंत्रेणानेनमंत्रैः संपूज्यविसृज्यचस्वगृहमागत्य तत्रताम्रपात्रेथवामृण्मयेघृतगुडयुततिलपिष्टमुत्तंसौवर्णं ।ता
म्रपत्रंकर्णाभरणमिति भविष्योत्तरे रक्तवस्त्रेणाच्छाद्यसंपूज्य ब्राह्मणान्भोजयेत् ततोब्राह्मणंसंपूज्य तत्सर्वंनिवे
दयेत् तत्रमंत्रः आदित्यस्यप्रसादेन प्रातःस्नानफलेनच दुष्टदौर्भाग्यदुःखघ्नंमयादत्तंहिताळकं इतिपठित्वा
निवेदयेत् ततःसमग्रंदिनहृदिभास्करंध्यायन् क्षपयित्वा बंधुजनैः सहभुंजीत इत्यचलासप्तमीव्रतविधिः अ
थरथसप्तमीव्रतं भविष्योत्तरे कथंसाक्रियतेकृष्णमनुष्यैरथसप्तमी चक्रवर्तित्वफलदायाविख्याताव्रुया
मम श्रीकृष्णउवाच आसीत्कांबोजविषयेयशोवर्मीनराधिपः वृद्धेवयसितस्यासीत्सर्वव्याधियुतःसुतः तस्कु
मेयाकंसोपृच्छद्विनीतोद्विजपुंगवं सचाहराजन्वैश्योयंक्षपणःपूर्वजन्मनि ददर्शरथसप्तम्यांक्रियमाणंव्रतंनृप व्रतद
र्शनमाहात्म्यादुत्पन्नोजठरेतव अदातात्रिभवेत्तस्मात्तेनायंव्याधितोभवत् ततसराजापप्रच्छकिमेतस्यविधीयतांद्वि
जउवाच यस्यसंदर्शनाज्जातःपुत्रोयंतवसद्मनि तदेवक्रियतांराजन्रथसप्तमिसंज्ञितं व्रतंपापहरंयेनचक्रवर्तित्व
माप्यते राजोवाच ब्रूहिविप्रव्रतंकृत्स्नंसविधानंसमंत्रकं ईश्वराणांदरिद्राणांसर्वसंपत्प्रदायकं द्विजउवाच शुक्ल
पक्षेतुमाघस्यपष्ठ्यामामंत्रयेद्गृही स्नानशुक्लतिलैःकार्यं नचभावेतुकुत्रचित् विमलेसलिलेराजन्विधितद्वर्णधर्मतः
देवादीन्पूजयित्वातुगत्वासूर्यालयंततः सूर्यंसम्यङ्नमस्कृत्य पुष्पधूपाक्षतैःशुभैः आगत्यभवनपश्चात्पचय
ज्ञांश्चनिर्वपेत् संतोष्यातिथिभृत्यांश्चबालवृद्धाश्रितान्स्वयं विद्यमानेदिनेश्नीयाद्धारयतः तैलवर्जितं रात्रौ
विप्रंसमाहूयविधिज्ञवेदपारगं संपूज्यनियमंकुर्यात्सूर्यमाधायचेतसि सप्तम्यांतुनिराहारोभूत्वाभोगविवर्जितः भो
क्ष्येहम्प्यांजगन्नाथनिर्विघ्नंतत्रमेकुरु इत्युच्चार्य्यनृपश्रेष्ठतोयंतोयेपुनःक्षिपेत् ततोविसृज्यतंविप्रंस्वपेद्भूमौजितेंद्रियः
ततःप्रातःसमुत्थायकृतावश्यःशुचिर्नरः कारयित्वारथंदिव्यंकिंकिणीजालमालिनं सर्वोपस्करसंयुक्तंरत्नैः सर्वांग

चित्रितं कांचनंराजतंवाथहयसारथिसंयुतं ततोमध्याह्नसमयेकृतस्नातादिकोव्रती अतिर्यग्वीक्षमाणस्तुपाखंडाल्ला
प्रवर्जितः सौरसूक्तंजपन्प्राज्ञः समागच्छेत्स्वमालयं निवृत्तानन्यकार्य्यस्तुकृत्वाब्राह्मणवाचनं वस्त्रमंडपिकामध्ये
स्थापयित्वारथोत्तमं कुंकुमेनसुगंधेनचर्चयित्वासमंततः मालाभिःपुष्पदीपानांसमंतात्परिवेष्टयेत् धूपेनागुरुभि
श्रेणधूपयित्वातथोपरि रथेसंस्थापयेद्भानुंसर्वलक्षणलक्षित वित्तानुरूपंहेमंचावित्तशाठ्यविवर्जितः शाठ्याद्व्रज
तिवैकल्यंवैकल्प्याह्निकलंफलं ततोदेवंसमभ्यर्च्यसरथसहसारथिं पुष्पैर्धूपस्तथागंधैर्वस्त्रालंकारभूषणैः फलै
र्नानाविधैर्भक्ष्यैर्नैवेद्यैर्घृतपायसैः पूजयेद्भास्करंभक्त्यामंत्रैरेभिस्त्रिभि क्रमात् भानोदिवाकरादित्यमार्त्तंडजगतां
पते अपांनिधेजगद्रक्षभूतभावनभास्कर प्रणतार्त्तिहराचिंत्याविश्वाचिंतामणेप्रभो विष्णोहंसादिदेवेशआदि
मध्यांतकारक भक्तिहीनंक्रियाहीनंमंत्रहीनंजगत्पते प्रसादात्तवसंपूर्णमर्चनंतादिहास्तुमे एवंसंपूज्यदेवेशं
प्रार्थयेत्स्वमनोगतं ददातिप्रार्थितोभानुर्भक्त्यासंतोषितोनरैः वित्तहीनोपिविधिनासर्वमेतत्प्रकल्पयेत् रथंस
सारथिसाश्ववर्णकैर्भित्तिलिखितं सौवर्णंचतथाभानुंयथाशक्त्याप्रकल्पितं प्रागुक्तेनविधानेनपूजयित्वासुविस्तरं
जागरंकारयेद्रात्रौगीतवादित्रनिःस्वनैः प्रेक्षणीयैर्विचित्रैश्चपुण्याख्यानकथादिभिः रथयात्रांप्रपश्येतभानो
रायतनंश्रितः अनिमीलितनेत्रस्तुनयेत्तांरजनींबुधः प्रभातेविमलेस्नानःकृतकृत्यस्ततोद्विजान् अर्चयेद्वि
विधैःकामैर्दानैर्वासोविभूषणैः अश्वमेधेनतुल्यस्यादिदंब्रह्मविदोविदुः अतोदेयानिदानानियथाशक्त्याविचक्षणैः
रथंचगुरवेदद्यात्सर्वोपस्करसंयुतं रक्तंचवस्त्रयुगलंरक्तधेनुसमन्वितं एवंचीर्णेव्रतेराजन्किंनाप्नोतिजगत्त्रये तस्मा
त्सर्वप्रयत्नेनकुरुत्वरथसप्तमीं येनारोगोभवेत्पुत्रस्त्वदीयोनृपसत्तम व्रतस्यास्यप्रभावेनप्रसादाद्भास्करस्यच
भविष्यतिमहातेजामहाबलपराक्रमः भुक्त्वाभोगान्सुविपुलान्कृत्वाराज्यमकंटकं दत्त्वासौरथसप्तम्यांमृते

त्वयिमहाभुजः उत्पाद्यपुत्रान्पौत्रांश्चसूर्यलोकंप्रयास्यति तत्रस्थित्वाकल्पमेकंचक्रवर्त्तीभविष्यति श्रीकृष्णउवाच
इतिसर्वंसमाख्यायक्षितिपायद्विजोत्तमः यथागतंजगामासौनृपःसर्वंचकारह यदादिष्टंद्विजेंद्रेणतत्सर्वंसंबभू
वह एवंसचक्रवर्त्तित्वंप्राप्तवान्नृपनंदन श्रूयतेयस्तुमांधातापुराणेषुपरंतप यइदंशृणुयाद्भक्त्यायश्चापिपरिकी
र्त्तयेत् तस्मैप्रतुष्यतेभानुर्यच्छतेवाभयंसदा एवंविधंरथवरंरथवाजियुक्तंहेमंचहेमशतदीधितिनासमेतं तथाच
माघसितसप्तमिवासरेयः सोभग्नचक्रगतिरेवमहींभुनक्ति इतिभविष्योत्तरेरथसप्तमीव्रतकथा यदासप्तमीः
हस्तर्क्षयुतास्यात्तदामहापूर्वारथसप्तमीभवति ॥ तदुक्तंहेमाद्रौमत्स्यपुराणे इत्येषाकथितावीररथाख्यासप्तमी
परा महतीचसमाख्यातामहापातकनाशिनी तथाच शुक्लपक्षेतु सप्तम्यां यदार्क्षंतुकरोभवेत् तस्मात्सासुम-
हापुण्या सप्तमीपापनाशिनी तस्यांसपूज्यदेवेशं चित्रभानुंदिवाकरं सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः
यश्चोपवासंकुरुतेतस्यांनियतमानसः सर्वपापविशुद्धात्मासूर्यलोकेमहीयते इतिमाघशुक्लायांसप्तम्यांरथस-
प्तमीव्रतं अस्यअनुष्ठानविधिरुद्यापनकौमुद्यां तत्रषष्ठ्यांप्रातः शुक्लतिलैर्नद्यादौस्नात्वा देवादीन्पूजयित्वास-
र्य्यालयंगत्वासूर्यंनत्वा पुष्पधूपाक्षतैः संपूज्य गृहमागत्यअतिथिपूजादिकांविधाय विद्यमानेदिने अतैलभोज
नंस्वयमश्नीयात् रात्रौविप्रंसमाहूय नियमंकुर्य्यात् सप्तम्यांचनिराहारोभूत्वाभोगविवर्जितः भोक्ष्येष्टम्यां
जगन्नाथनिर्विघ्नंकुरुमेव्रतं इत्युच्चार्य्यसंकल्प्यजलंजलेक्षिपेत् विप्रंसंपूज्य भूमौस्वपेत्ततः सप्तम्यांप्रातःअरु-
णोदयवेलायां हरिद्रामलकचूर्णमृत्तिकाभिः सहस्नात्वा कृतावश्यकःसौरसूक्तंचजप्त्वा गोमयोपलितायांभूमौ
नदीतीरेगृहांगणेऽश्वत्थमूलेतुलसीवनेवावस्त्रादिभिर्मंडपंकृत्वा तन्मध्येवेदिकातदुपरिधातूनांरजोभिः कुंकुमेन-
वाऽष्टदलंविधाय तदुपरि आरक्तवस्त्रंप्रसार्य्योपरिएकचक्रंतुरंगान्वितंसौवर्णंसोपस्करंरथं अशक्तौ राजतंसंस्था

प्यतदुपरिसूर्यमावाह्य तत्रध्यानं द्विभुजंशखचक्राढ्यपद्मासनसमन्वितं मुहूर्त्तसमयेसम्यग्ध्येयंनारायणंशुभं
रक्तगधाक्षतपुष्पगुग्गुलागुरुधूपं पायसान्नं नैवेद्यं एवषोडशोपचारैः सपूज्य तदग्रेधातूनांरजनीचूर्णेनवा-
ष्टदलपद्मविरच्यपूर्वादिक्रमेण रविं आदित्यं सवितारं मित्रं खगपतिं सूर्यं भास्करं मित्रं मध्येनारा-
यणंपूजयित्वा भक्तिहीनंक्रियाहीनंमन्त्रहीनंजगत्पते प्रसादात्तदसपूर्णंव्रततत्वादिहास्तुमे इतिसंप्रार्थ्य स्ववाहु-
मूलेरवीप्राप्तेसतिरवेष्टप्रयोजनं रविसंप्रार्थ्य दक्षिणाशिरस्कधौतवस्त्रेणाच्छाद्यसुखस्वपेत् यावदुल्लंघ्यभास्करो
गच्छेत्तावत्स्वप्नेयत्पूर्वमनोभिलषितंकथयेत् ततउत्थायवालमुक्तासहितंगर्भंधातुरत्नपूर्णंदुकूलवेष्टितंसदक्षिणंस्म
तांवूलकूष्मांडदद्यात् तदभावेमातुलिंगंकदलंवा अकिंचनेनससारथिरथंपंचवर्णकेनानिर्माय सौवर्णंप्रतिमांपूर्व-
वदर्चयेत् ततोरात्रौजागरणंकृत्वाप्रातस्तत्सर्वंगुरवेदत्वागांचदद्यात् ततइष्टजनैः सहभुंजीतएवंव्रतकर्त्ताइह
पुत्रपौत्राननुत्पाद्यांतेसूर्यलोकंयास्यतीतिकथार्थः अत्रापिस्नानविधिरचलासप्तमीविधिनाज्ञेयः इतिरथसप्तमी
व्रतविधानं अस्यामेवभविष्योत्तरोक्तरथांकसप्तमीव्रतं हेमाद्रौ माघमासीत्यादिसप्तम्यामुपोष्यभानुंपूजयि
त्वावर्णितस्वर्णरथेसूर्यंसपूज्यब्राह्मणायदद्यादितिरथांकसप्तमीव्रतं इयमेवमहासप्तमी अस्यांपूषाभिधान
सूर्यपूजाव्रतं शुक्लायांमाघसप्तम्यांपूषानाममहारविः आदित्यांकश्यपाज्जज्ञेसहस्रकिरणोमहान् तस्मात्तं
पूजयेत्तत्र सोपवासोजितेंद्रियः अर्घ्यैः पुष्पैस्तथाधूपैर्दीपैर्भक्ष्यैर्मनोरमैः गीतैर्नृत्यैस्तथावाद्यैर्होमैर्ब्राह्मणतर्पणैः
अष्टम्यांचपुनर्भक्ष्यैर्भूयोमधुघृतादिभिः भक्ष्याणितानिदेयानिभक्षणीयानियानिवै इतिमाघशुक्लसप्तम्यांसूर्य

पूजाव्रतम्

अस्यामेववाराहोक्तमारोग्यसप्तमीव्रतं वराहउवाच कथयामिमहापुण्यंसर्वपापप्रणाशनं तथैवमाघसप्त

म्यांसितायासमुपोषितः पूजयेद्भास्करंदेवंविश्वरूपंसनातनं आदित्यभास्कररवेभानोसूर्यदिवाकर प्रभाक
रेतिसंपूज्योदेवःसर्वेश्वरोरविः षष्ठ्यांचैवकृताहारःसप्तम्यामुपवासकृत् अष्टम्यांचैवभुंजीतएषएवविधिःस्मृतः
अनेनवत्सरंपूर्णंपूजयेद्विधिनारविं तस्यारोग्यंधनंधान्यमिहजन्मनिजायते अथास्यामेवरथसप्तमीव्रतं मदन
रत्नेआदित्यपुराणे आदित्यउवाच माघमासेतुसप्तम्यांशुक्लायांसमुपोषितः यःपूजयेत्तुमांभक्त्यातस्याहं
पुत्रतांव्रजे एवंचोभयसप्तम्यांमासिमासिसुरोत्तम यस्तुमांपूजयेद्भक्त्यासमैकमेकमादरात् समैकंवर्षमेकं प्रय
च्छामिसुतंतस्यह्यात्मनोंशसमुद्भवं वित्तंयशस्तथापुत्रमारोग्यंपरमंपदं माघमासेतुयोब्रह्मन् शुक्लपक्षेजितेंद्रियः
पाखंडान्पतितानन्यानजल्पन्विजितेंद्रियः उपोष्यविधिवत्षष्ठ्यांश्वेतमाल्यविलेपनैः पूजयित्वातुमांब्रह्मन्वीर
होमंसमाचरेत् प्रीणयित्वाहरिंभक्त्याहविर्भिःपद्मलोचनं वीरहोममग्निहोत्रंहारिरत्रादित्यः दध्योदनंपयः
सापायसेनद्विजांस्तथा अनेनादेशेपः तस्यैवकृष्णपक्षस्यषष्ठ्यांसम्यगुपोषितः तस्यैवतिमाघमासस्य रक्तोत्पलैः
सुगंधाढ्यैरक्तपुष्पैश्चपूजयेत् एवंयःपूजयेद्भक्त्यानरोमांविधिवत्सदा उभयोरपिदेवेंद्रसपुत्रंलभतेवरमिति पुत्र
सप्तमीव्रतं इयंमाघशुक्लसप्तमीमन्वादिः तत्रमन्वादिगणोक्तंश्राद्धादिविधेयम् अथमाघशुक्लसप्तम्या
रभ्य संवत्सरसाध्यविशोकसप्तमीव्रतं हेमाद्रौ तत्रसूर्यंसंपूज्य अतैललवणंभुंजीत अस्यामेवारोग्यसप्तमी
व्रतं तत्रसप्तम्यांउपवासादिकंकृत्वा अष्टम्यांपारणंकुर्यादिति अथभविष्योत्तरोक्तं द्वादशसप्तमीव्रतंभविष्ये
श्रीकृष्णउवाच अथान्यत्तेप्रवक्ष्यामिसप्तमीकल्पमुत्तमं माघमासात्समारभ्यशुक्लपक्षेयुधिष्ठिर सप्तम्यांकृतसं
कल्पोवर्षमेकव्रतीभवेत् वरुणंमाघमासेतुभानुंसंपूज्यकारयेत् ब्रह्मकूर्चविधानंचयथाशक्त्यान्नृपोत्तम अष्टम्यां
भोजयेद्विप्रांस्तिलपिष्टगुडोदनैः अग्निष्टोमस्ययज्ञस्यफलंकृत्स्नमवाप्यते ॥ १ ॥ तद्वच्चफाल्गुनेमा

सिसूर्यायेतिप्रपूजयेत् वाजपेयस्ययज्ञस्य यथोक्तंलभतेफलं सप्तम्यांचैत्रमासेतु वेदांशुरितिपूजयेत्
उक्थ्याध्वरसमंपुण्यंनर·प्राप्नोत्यसंशयः वैशाखस्यतुसप्तम्यांधातारमभिपूजयेत् पशुवंध्याध्वरंपुण्यंनर·प्राप्नो
त्यसंशयम् ॥ ४ ॥ सप्तम्यांज्येष्ठमासेतुइंद्रमित्यभिपूजयेत् अश्वमेधफलावाप्तिर्जायतेनात्रसंशयः ॥ ५ ॥
तथापाढस्यसप्तम्यांपूजयित्वादिवाकरं वहुस्वर्णस्ययज्ञस्यफलंप्राप्नोतिपुष्कलम् ॥ ६ ॥ आतपीतिश्रावणेचना
म्नादेवंप्रपूजयेत् सौत्रामणिफलंपार्थनर·प्राप्नोतिभारत ॥ ७ ॥ रविभाद्रपदेमासिसप्तम्यामर्चयेच्छुचिः तु-
लापुरुषस्यसूक्तेनगुडेनफलमाप्नुयात् ॥ ८ ॥ अश्वयुक्शुक्लसप्तम्यांसवितारंप्रपूजयेत् गोसहस्त्रप्रदानस्यफलं-
प्राप्नोतिमानवः ॥ ९ ॥ कार्त्तिकेशुक्लसप्तम्यांसप्ताश्वंनामपूजयेत् योभ्यर्चयतिपुण्यात्मापुडकस्यफलंभवेत्
॥ १० ॥ मार्गशीर्षेतथाभानुंपूजयित्वाविधानतः चतुर्णामपिवेदानांस्वाध्यायस्यफलंलभेत् भास्करंपौ
पमासेतुपूजयित्वाविधानतः राजसूयमखस्यापिफलभागीभवेन्नर तथैवकृष्णसप्तम्यांनामपूजादिकंचयः
सोपवास·प्रयत्नेन वर्षमेकं समाचरेत् पारितेनियमेपार्थयागंतत्रसमाचरेत् शुद्धभूमौशुभेदेशेरक्तचंदनलेपिते
एकहस्तंद्विहस्तंवाचतुर्हस्तमथापिवा सिंदूरेणातिरागेणसूर्यमंडलमालिखेत् रक्तपुष्पै·पायसैश्चधूपैःकुंदुरु
कादिभिः संपूज्यदद्यान्नैवेद्यंविचित्रघृतपाचितं पुरत·स्थापयेत्कुंभान्जलपूर्णान्सदक्षिणान् द्वादशात्रनृप
श्रेष्ठरक्तवस्त्रान्सुचर्चितान् अग्निकार्यंततःकार्य्यंसम्यगर्च्यहुताशनं आकृष्णेनेतिमंत्रेणसामिद्भिश्चार्कसंभवैः
तिलैराज्यगुडोपेतैर्दद्यादष्टशताहुती· दक्षिणाचततोदेयाब्राह्मणेभ्यः पृथक् पृथक् देयानिरक्तवासांसिद्वाद
शानांद्विजन्मनां द्वादशान्नप्रशंसंतिगावावस्त्रादिभूपिताः छत्रोपानद्युतंचैवमेकैकस्मैप्रदापयेत् वित्तहीनो-
नशक्नोति दातुंद्वादशधेन्वः एकाह्यपिसुशीलाच रक्तवर्णापयस्विनी उपदेष्ट्रेप्रदातव्याविशाठ्यमकुर्वता

ततोविसृज्यतान्विप्रान्स्वयंभुंजीतवाग्यत.यएवंकुरुतेपार्थसप्तमीव्रतमादरात्नीरुजोरूपवान्वाग्मीशीलवान्जाय
तेनरः विशेषाद्दीर्घरोगेणग्रस्त कुष्टादिभिस्तुय. । तेनकार्य्यंप्रयत्नेनव्रतमेतद्रुजापहं नह्यस्तिभास्करादन्यदोष
धरोगहानिदं भास्करैकगतिर्यस्तुसर्वभूतहितेरतः तस्यसंदर्शनात्स्पर्शाद्रोगहानि.प्रजायते कुतस्तुसूर्यभक्तानां
रोगदोर्गत्यसंभवः जायतेभरतश्रेष्ठप्रत्यक्षेपरमेष्ठिनि सप्तम्याप्रतिमासंतुजन्मव्रतधरोहियः.उपवासीरवेर्भक्तः
सर्वभूतहितेरतः अष्टम्यांविप्रसहितोहविष्यंभोजयेन्नर. एकादशीसमायस्मान्नित्यरूपातिसप्तमी सूर्यस्यमंडलं
भित्वायातिब्रह्मसनातनं येसप्तमीमुपवसंतिसितासितांवानानाक्षरैरहिमदीधितिमर्चयंति तेसर्वरोगरहिता.सुखि
न.सदेवभूत्वारवेरनुचरा.सपुरेवसंति इदमुद्यापनयुक्तद्वादशसप्तमीव्रतंज्ञेयं अथभविष्यपुराणोक्तं सिद्धार्थकादि
सप्तमीव्रतं तदुक्तंहेमाद्रौ माघेवामार्गशीर्षेवाकार्य्याशुक्लार्थसप्तमीत्यादि तत्रजलेसिद्धार्थकंकृत्वाप्राशयेदिति ।सि
द्धार्थसप्तमीव्रत अथात्रैवसूर्य्यारुणसंवादोक्त..सप्तमीभेदा. अर्कसंपुटकैरकाद्वितीयामरिचैस्तथा तृतीयानिंबप
त्रैश्चचतुर्थीफलसप्तमी ' सप्तमीकामिकाज्ञेयाविधितासांनिबोधमे शुक्लपक्षेरविदिनेप्रवृत्तेचोत्तरायणे पुन्नामध्येये
नक्षत्रेपूजयेद्वैदिवाकरं उत्तरायणेमाघमासे पुन्नामनक्षत्राणिज्योति.शास्त्रे हस्तोमैत्रस्तथापुष्योमृगशीर्षपु
नर्वसुः पुन्नामध्येयनक्षत्राण्येतान्याहुर्मनीषिणइति आसांफलानि अर्कसंपुटकैर्वित्तमलंसात्पौरुषं मरि
चै संगम स्यापिप्रियपुत्रादिभि.सदा सर्वेरोगाःप्रणश्यंतिनिंबपत्रैर्नसंशयः फलैश्चपुत्रपौत्राश्चदौहित्राश्चा
पिपुष्कलाः अन्नोदकंघृतंधान्यंसुवर्णंरजतंतथा तथायशोहिरण्यंचआरोग्यसंततिर्नृप उपोष्यविजयांश
त्रूनूराजाजयतिनिश्चितं - साधयेत्सर्वकामानिविधिवद्युपासिता - पुत्रादीन्सर्वानित्यर्थ अथविजयासप्तमी
व्रतंहेमाद्रौ भविष्योत्तरे माघमासेसितपक्षेसप्तम्यांकुरुनंदन - निराहारोरविभक्त्यापूजयेद्विधिनानृप. पूर्वोक्त

नजपेज्जप्यंदेवस्यपुरतःस्थितः वायोवालिपुभद्रेतसुभद्रेतस्तुवंसदौ ममापकुरुभंद्रवश्राशनाच्छत्रुहाभव । अनेनमंत्रे
णपीतपवनोरात्रिमतिवाह्याह्वितीयेह्निपारणंकुर्य्यात् इतिविजयासप्तमीव्रतं । अथनानासप्तमीव्रतानि हेमाद्रौ
सुमंतुरुवाच यःक्षिपेदेकभक्तेनशुक्लाद्वादशसप्तमी राजेंद्रयाचकाहार शीर्णपर्णाशनोपिवा क्षीराशीचैकभक्तो
वाभिक्षाहारोथवापुनः जलाहारोथवाभूत्वापूजयित्वादिवाकरं एवभक्त्याविवस्वतंप्रतिमासंसमाहित पूजये
द्विधिवद्भक्त्यानामानिपरिकीर्त्तयेत् तत्रनामानिचैत्रादिक्रमेण मधौविष्णुः माधवे अर्य्यमा शुक्रेविवस्वान्शुचौ
दिवाकरः श्रावणेपर्जन्यः नभस्येवरुण अश्वयुजेमित्रः कार्त्तिकेमार्त्तंड मार्गशीर्षेअंडजः पौषेपूषा माघेभ-
ग फाल्गुनेत्वष्टेति इतिभविष्योत्तरोक्तगोमयादिसप्तमीव्रतं अथोदकसप्तमीव्रत उदकप्रसृतिपीत्वाक्रियते
याचसप्तमी सेवोदकसप्तमीस्यात्सर्वदासर्वकामदेत्युदकसप्तमी वराटकासप्तमी हेमाद्रौ वराटत्रय
मूल्येनयावदन्नादिलभ्यते तदेवभक्ष्यंकल्पयित्वा उपोषणंकुर्य्यादितिभविष्योत्तरे वराटकासप्तमीव्रत अथस
प्तमीमात्रेआदित्यमंडकव्रतं तत्ररक्तचंदनजेमंडलेसूर्यंसंपूज्य सहिरण्यंसवस्त्रंमंडकदद्यात् तत्रमंत्रः आदित्यते
जसोत्पन्नंराज्ञीकरविनिर्मितंश्रेयसेमद्भाविमलप्रतीच्छापूपमुत्तमं प्रतिग्रहमंत्रः कामदंधनदंधर्म्यंपुत्रदंसुखदंतथा
आदित्यप्रीतयेदत्तंप्रतिगृह्णामिमंडक एवंप्रतिसंवत्सरकर्त्तव्यमिति । इत्यादित्यमंडकव्रतं । माघशुक्लाष्टम्यां
भीष्माष्टमीव्रतं नारदीये माघेमासिसिताष्टम्यांभीष्मंसंतर्प्पयेद्द्विज संततिंचाप्यविच्छिन्नामिच्छंश्चैवापरा
जयं पाद्मेपि माघमासिसिताष्टम्यांसतिलंभीष्मतर्पणं श्राद्धंचैवतुयेकुर्य्युस्तेस्युःसंततिभागिनइति अत्र
श्राद्धकाम्यं तर्पणतुकाम्यंनित्यमपि ब्राह्मणाद्याश्चयेवर्णादद्युर्भीष्मायनोजलं संवत्सरकृततेपांपुण्यंनश्यति
सत्तमेति इतिमदनरत्नवचनात् इदंचजीवत्पितृकेनापिकार्य्यं जीवत्पितापिकुर्वीततर्पणंयमभीष्मयोः

रितिपाद्मवचनात् यत्तुसपितुःपितृकार्य्येपुनाधिकारःकथंचनेतिनिषेधः सत्वेतद्व्यतिरिक्तपितृकार्य्यपरः॥ एत
च्चापसव्येनतेनापिकार्य्यमितिनिर्णयसिंधौ दिवोदासीये मन्त्राश्चमहाभारते भीष्मःशांतनवोवीरःसत्यवादी
जितेंद्रियः आभिरद्भिरवाप्नोतुपुत्रपौत्रोच्चितांगतिं वैयाघ्रपदगोत्रायसांकृतिप्रवरायच अपुत्रायददाम्येत
त्सलिलंभीष्मवर्मणे वसूनामवतारायशंतनोरात्मजायच अर्घ्यंददामिभीष्मायआबालब्रह्मचारिणे ॥ माघशु
क्लनवमीमहानंदाप्रोक्ता नारदीये माघमासेतुयाशुक्लानवमीलोकपूजिता महानंदेतिसाख्यातामहानंदकरी
नृणां तस्यांस्नानंतथादानंजपोहोमउपोषणं सर्वमक्षयतांयातिनात्रकार्य्याविचारणेति ॥ माघशुक्लदशम्या
मांगिरसदेवानांपूजोक्ता नारदीये माघशुक्लदशम्यांतुसोपवासोजितेंद्रियः देवानांगिरसोनामदशसम्यक्प्रपू
जयेत् कृत्वास्वर्णमयान्विप्र गंधाद्यैरुपचारकैः आत्माह्यायुर्मनुर्दक्षो मदःप्राणस्तथैवच हविष्मांश्चगवि
ष्ठश्चदत्तःसत्यश्चतेदश दशविप्रान्भोजयित्वामधुरान्नेननारद मूर्तीस्तेभ्यःप्रदद्यात्तास्वर्गलोकातयेक्रमात्
इत्यांगिरसदशमीव्रतं ॥ अथारोग्यदशमीव्रतं सनत्कुमारउवाच अथत्वंशृणुदेवर्षेदशमीव्रतमुत्तमं सर्वरोगापि
शमनंसर्वपुष्टिप्रदंशुभ व्रतमेतन्महावुद्धकार्य्यमारोग्यमिच्छता सर्वदाकार्य्यमेतद्धिलिप्सताचिरजीवितं उप
वासश्चकर्त्तव्योनवम्यामपिमानद दशम्यांचकृतस्नानोमंगलायतनंहरिं देवमिंदिरयासार्द्धंध्यात्वाचजगतांपतिं
वैनतेयभुजाशक्तंवनमालाविभूषितं शंखचक्रगदापद्मशार्ङ्गासिधरमच्युतं फलैश्चमधुरैःपुष्पैःपायसेनसम
र्चयेत् अग्रतःस्थापयेत्कुंभंतीर्थतोयनपूरितं तस्मिन्नावाहयेत्पंचचक्रादीन्यायुधानिच चक्रगदामुशलधनुः
शार्ङ्गाणीतिहेमाद्रिः पूजयेद्रक्तकुसुमैर्गुडान्नेनसमाहितःद्रोणमात्रतिलैरब्जकारयेदजिनोपरि तस्मिन्नष्ट
दलंपद्मंसौवर्णंहिनिधायचमनः षष्ठानींद्रियाणिप्राणवुद्धिदलेष्वथकर्णिकायांतथाकालं क्रमेणैवंसमर्चयेत्

मनःश्रोत्रंचत्वक्चक्षुर्जिह्वाघ्राणप्राणोबुद्धिरितिक्रमात् पूर्वादिदलेषु अनामयानितिष्ठंतुप्राणाश्चाचिरसंस्थिताः
श्चनाकुलाचमेबुद्धिः सर्वेस्युर्निरुपद्रवः मनसाकर्मणावाचामयाजन्मनिजन्मनि संचितंक्षपयत्वेनःकाला
त्माभगवान्हरिः इतिसंप्रार्थ्य गुरवेसदक्षिणमुपस्करं दत्त्वा ब्राह्मणान्पायसादिसदन्नेनभोजयित्वा
श्चाचार्य्येणमंत्रपारायणपुरःसरंस्नापितोअवशिष्टेनान्नेन गुर्वनुज्ञापुरःसरंबांधवैःसहभुक्त्वानियमानुत्सृजेत
एवंकृतेक्षिप्रमारोग्यंभवतीति गरुडपुराणोक्तमारोग्यदशमीव्रतम् अत्रशुक्ल
दशमीध्यानंवीरमित्रोदये हेमाद्रौ सिंहासनस्थिताशुभ्रादशमीपीतकुंडला ज्ञानमुद्राभयाचेयंपीतवस्त्रास्रज
मालिनी १ कृष्णवर्णालुलायस्थादशमीदंडपात्रिणी अथविष्णुधर्मोत्तरोक्तं धर्मव्रतत्रय शुक्लपक्षेदशम्यां
कार्य्यं मार्कंडेयउवाच शुक्लपक्षेदशम्यांचसोपवासस्तुमानवः धर्मंसंपूजयेद्देवंसर्वलोकसुखावहं मार्गशी
र्षादथारभ्यनित्यमेतदरिंदम ततोगंधनमस्कारधूपदीपान्नसंपदा संपूज्यसर्पिषावह्नौहुत्वाविप्रान्प्रपूजयेत् व्र
तांतेपयस्विनींगांदत्त्वाश्वमेधफलंप्राप्नोति कृष्णपक्षेतथाप्येतत्कृत्वासंवत्सरंव्रतं राजसूयमवाप्नोतिकुलमुद्धरते
स्वयं कृत्वापक्षद्वयेप्येतद्व्रतंमनुजसत्तम राजसूयाश्वमेधाभ्यांफलंप्राप्नोत्यसंशयं इदंव्रतंशुक्लायां कृष्णा
यां द्वयोर्वेतित्रीणिव्रतानिच स्वर्गलोकमवाप्नोति कुलमुद्धरतिस्वकं धर्मेमतिर्भवेत्तस्यधर्मप्राप्नोतिमानवः यत्रय
त्राभिजायेततत्रधर्मपरोभवेत् आरोग्यमायुष्यकरंयशस्यंज्ञानप्रदंपापविनाशकारि कर्त्तव्यमेतत्पुरुषैर्यथाव
त्पूज्योहिविष्णुर्भगवान्सधर्मः इतिविष्णुधर्मोत्तरोक्तधर्मव्रतत्रयं अथभविष्योत्तरेयमव्रतं दशम्यांयमउद्दिष्टः
सर्वव्याधिहरोध्रुवं मूलमंत्राःस्वसंज्ञाभिरंगमंत्राश्चकीर्तिताः मूलमंत्राः प्रधानमंत्राः अंगमंत्राःपरिवारदेवता
मंत्राः पद्मपत्रेषुपरिवारसहितंकर्णिकास्थंतिथीशंकृत्वा गंधादिभि संपूज्य समित्क्षीरान्नदधिमाक्षिकादिकैः

होमंकुर्य्यात् अत्रादौपूजा ततोघृताक्तधान्यहोमस्ततआज्यधारादिहोमः इतिभविष्योत्तरोक्तंयमव्रतं * अथविश्व
व्रतम् पुलस्त्यउवाच दशम्यामेकभक्ताशीसमांतेदशधेनवः दिशश्चकांचनीर्दद्यान्नारीरूपामहीपते तिल
द्रोणोपरिगताः सार्वभौमोभवेन्नृपः एतद्विश्वव्रतंनाममहापातकनाशनं इतिपद्मपुराणोक्तंविश्वव्रतम् अथद
शादित्यव्रतम् कश्यपउवाच भानुवारेसितेपक्षेदशम्यांचैवनारद प्रातःकालेथमध्यान्हेस्नानंकुर्य्याद्यथाविधि
स्नात्वानद्यांदेवखातेतीर्थेप्रस्रवणेतथा विधायनित्यकर्माणि तर्पयेत्पितृदेवताः ततआगत्यस्वगेहेस्थंडिलं
कारयेच्छुभम् तस्योपरिन्यसेत्पद्मंद्वादशारंप्रकीर्त्तितम् ततः पूजाप्रकर्त्तव्यागभस्त्वस्यक्रमेणच सूर्यपूजनं
सौरमंत्रैरावाहनादिषोडशोपचारैःकार्य्यं तद्यथा नमः सवित्रे आवाहनम् आसनं पाद्यं अर्घ्यं आच
मनं स्नानं वस्त्रं यज्ञोपवीतं गंधाक्षतपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणाश्चविसर्जनम् ततोदुर्मुखादिपूजनम्
कृष्णवर्णादशपुत्रिकाःकुर्य्यात् दुर्मुखायैनमः दीनवदनायैनमः मलिन्यैनमः सुबुद्धिनाशिन्यैनमः हिं
स्रायैनमः दुष्टायैनम मित्रविरोधिन्यैनमः उच्चाटकारिण्यैनमः बहुचिंताप्रदायैनम एभिर्नाममंत्रैः प्र
तिष्ठांपूजांचकृत्वा गोमयेनलेपयेत् ततः प्रार्थना नित्यपापकरेपापेदेवद्विजविरोधिनि गच्छत्वंदुर्दशेदेवि
नित्यंशास्त्रविरोधिनि इतिविसर्जनम् दशग्रंथिसमायुक्तंदशसूत्रोपशोभितं डोरकंतुप्रतिष्ठाप्यकरेबध्वाप्र
पूजयेत् सौरमंत्रेणषोडशोपचारैर्डोरकपूजनम् ततः क्षमापयेद्देवंभास्करंचदिशाकरं दुर्दशानाशनदेवार्चित
येद्विश्वरूपिणम् अनेननमस्कारः अथवायनमंत्रः॥ फलानांदशकंदद्याच्छ्रोत्रियायकुटुंबिने दक्षिणासहितंते
नप्रीतोभवदिवाकर भास्वरीवुद्धिदाताचद्रव्यस्थोभास्करः स्वयं भास्करस्तारकोभाभ्यांभास्करायनमोस्तुते
अनेनवायनदानम् अथदशापूजनम् कुड्यस्थानेचंदनेनकारयेद्दशपुत्रिकाः सुबुद्धिदायिन्यैनमः सुखका

रिण्यैनमः सर्वसंपत्तिदायैनमः इष्टभोगप्रदायैनमः लक्ष्म्यैनमः कांतिदायैनम. दु.खनाशिन्यैनमः पुत्र
दायैननः विजयायैनमः धर्मदायिन्यैनमः एभिर्नाममंत्रैः षोडशोपचारपूजांकृत्वा अथप्रार्थना विशुद्धव
सनांदेवींसर्वाभरणभूषितां ध्यायेद्दशादिशंदेवींवरदामभयप्रदाम् इतिध्यानम् इत्येवंपूजनंकुर्यात् अथकथा
सूतउवाच मेरुपार्श्वेभद्रपीठेसुखासीनंजगद्गुरुं कश्यपंसृष्टिकर्तारंतापसशुद्धमानसं नारदोवैष्णवश्रेष्ठस्त्रैलो
क्यभ्रमणप्रियः कदाचिद्दुर्दशांप्राप्तःकश्यपंशरणगतः नारदउवाच देवदानवगंधर्वाऋषिपन्नगमानवाः स्र
ष्टासिसर्वभूतानांधर्मोधर्मवतांवर दुष्टग्रहाभिभूतानांदुर्दशाहतचेतसां स्तुत्वाविज्ञापयामीहकश्यपंधर्म
वत्सलम् कश्यपउवाच देवानांदुर्दशाचैवजायतेब्रह्मवादिनां प्रसन्नोहमुनिश्रेष्ठलोकानांहितकाम्यया ना
रदउवाच देवदानवगंधर्वामानघाश्चविशेषतः प्राप्तास्तुदुर्दशांकेनकेनमुक्ताभवंत्युत कश्यपउवाच साधुपृष्टंमहा
भागजगदानंदकारकं वक्ष्येसौरव्रतंपुण्यंदुर्दशानाशनपरं दशाकरांहिभूतानांमनोरथफलप्रदं भानुवारेसिते
पक्षेदशम्यांचैवनारद प्रातः कालेथमध्याह्नेस्नानंकुर्याद्यथाविधि भानुंध्यायेत्त्रिमूर्तिंचसर्वदैन्यविनाशनं सू
र्यपूजाप्रकर्तव्यातथागंधानुलेपनैः उपचारैःषोडशभिर्नैवेद्यैस्तुफलादिभिः बहिर्देशेलिखेत्कृष्णादुर्दशादशपुत्रि
काः पूजयेत्ताःप्रयत्नेन गंधपुष्पादिभिर्बहिः पूजयेद्दुर्दशास्तत्रलिखित्वादशपुत्रिकाः दुर्मुखादीनवदनाम
लिनीसत्वनाशिनी सुबुद्धिनाशिनीहिंस्रादुष्टामित्रविरोधिनी उच्चाटनकरीनामबहुचिंताप्रवर्धिनी एताः पु
ज्या.कृष्णवर्णा भक्तियुक्तेनचेतसा आदौपूज्याःप्रयत्नेन गोमयेनानुलेपयेत् नित्यपापकरेपापेदेवद्विजवि
रोधिनि गच्छत्वंदुर्दशेदेविनित्यंशास्त्रविरोधिनि अनेनप्रार्थ्यमानाश्चविसर्ज्याश्चप्रयत्नत. ततःपूजाप्रक
र्तव्याडोररूपधरस्यच दशग्रंथिसमायुक्तंदशसूत्रोपशोभितं डोरकंतुप्रतिष्ठाप्यकरेबध्वाप्रपूजयेत् आवाह

नांदिदानांतंपूजनंकारयेत्ततः भक्तिभावेचंदनेनलेखयेद्दशपुत्रिकाः सुबुद्धिदासुखकरीसर्वसंपत्प्रदायिनी इष्ट
भोगप्रदालक्ष्मीः कीर्त्तिदादुःखनाशिनी पुत्रप्रदाचाविजया दशमीधर्मदायिनी एताभिर्नाममंत्रैश्चपूजयेच्चप्ट
थक्पृथक् प्रतिष्ठापूजनंकुर्य्यान्नैवेद्यंचयथाविधि ततःप्रार्थ्यक्षमाप्यैव भक्तानुग्रहकारिणीं विशुद्धवसनांदे
वींसर्वाभरणभूषितां ध्यायेद्दशदशां देवींवरदांचाभयप्रदां इतिध्यानंप्रकुर्वीतदशायास्तुप्रयत्नतः फलकै
र्दशसंख्याकैर्भुंजीततैलपाचितैः एवंव्रतंप्रकर्त्तव्यंदशाकारकमुत्तमम् नारदउवाच कथयस्वप्रसादेनव्रतमेतत्त
पोधन दशाव्रतंकृतंकेनकस्यतुष्टोहिभास्करः कश्यपउवाच पुराभून्नलभूपालश्चक्रवर्तीसधार्मिकः राज्यभ्र
ष्टोदशाहीनोह्येतेनैवहिनारद तेनापिपूजितः सूर्य्योव्रतंकृत्वाप्रयत्नतः दुर्दशांनाशयित्वातुप्राप्तराज्योश्रयास
ततश्चद्वापरेविप्रपांडवोदुर्दशान्वितः भ्रममाणंवनेघोरे प्राप्तंसत्यवतीसुतं अभिवाद्यमुनिश्रेष्ठंसर्वज्ञंकरुणा
न्वितं धर्मराजउवाच राज्यभ्रष्टोदशाहीनो जातोहंकेनकर्मणा प्रत्युपायंहितंब्रूहिराज्यप्राप्तिकरंमुने क्ष
णंध्यात्वामुनिश्रेष्ठोदृष्ट्वासूर्य्यंदशाकरं दशाव्रतंप्रकर्त्तव्यंप्रयत्नेननराधिप एतद्व्रतस्यसामर्थ्यात्प्राप्स्यसेवसुधामि
माम् व्यासस्यवचनंश्रुत्वाधर्मराजोयुधिष्ठिरः व्रतंकृत्वाप्रयत्नेनचतुर्भिर्भ्रातृभिःसह व्रतस्यतस्यसामर्थ्या
त्प्राप्तराज्योबभूवह श्रुत्वैवंनारदोवाक्यं पुनःपप्रच्छसारवित् नारदउवाच केनकर्मविपाकेनदुर्दशाप्राप्य
तेनरैः जायतेमुनिशार्दूलतत्त्वतस्तद्वदस्वमे कश्यपउवाच तुषभस्मास्थिमुशलंकदाचिल्लंघयेन्नरः कुमारीं
रजकींवृद्धांपशुयोनिंव्रजेद्यदा अयोनौगुदगामीचब्राह्मणीगमनेनच संध्यासुपर्वसमयेरमतेचरजस्वलां
पितृमातृपरित्यागीस्वामिनंसंकटेत्यजेत् त्यजेद्वाधर्मपत्नींचदुर्दशाप्राप्यतेनरैः तस्मात्सर्वप्रयत्नेनन्यायमा
रतोभवेत् आयुर्दशाततोराज्यंन्यायमार्गेणवर्तते इतिस्कंदपुराणेकश्यपनारदसंवादेदशादित्यव्रतम् ॥

पक्षद्वयगतासुसर्वास्वपिदशमीषुतिथिपत्वेनांतकःसदापूज्यः इतिदशमीव्रतम् माघशुक्लाजयैकादशीव्रतं नारदीये माघशुक्लैकादशींतुजयाख्यांसमुपोष्यवै प्रातर्हरिदिनेभ्यर्च्यतु्श्रीपतिपुरुषोत्तम भोजयेद्दक्षिणांद- त्वाविप्रान्विसृज्यचस्वय ततोभुंजीततच्छेषप्रयतोनिजवांधवैः यएवंकुरुतेविप्रव्रतंकेशवतोषणं सभुक्त्वेहवरान्भो गानंतेविष्णुपदंव्रजेत् अथास्याःकथा ॥ युधिष्ठिरउवाच ॥ साधुकृष्णपरब्रह्मन्नादिदेवजगत्प्रभो स्वेदजाश्चां डजाश्चैवउद्भिजाश्चजरायुजाः तेषांकर्त्ताविकर्त्तात्वंपालकः क्षयकारकः माघस्यकृष्णपक्षेतुषट्तिलाकथितात्व- या शुक्लाचैकादशीयाचकथयस्वप्रसादतः किंनामकोविधिस्तस्याः कोदेवस्तत्रपूज्यते ॥ श्रीकृष्णउवाच ॥ कथयिष्यामिराजेंद्रशुक्लामाघस्ययाभवेत् जयानामेतिविख्यातासर्वपापहरापरा पवित्रापापहत्रींचकाम दामोक्षदानृणां ब्रह्महत्यापहंत्रीचपिशाचत्वविनाशिनी नैवतस्याव्रतेचीर्णेप्रेतत्वंजायतेनृणां नातःपरतराका चित्पापघ्नीमोक्षदायिनी एतस्मात्कारणाद्राजन्कर्त्तव्येयंप्रयत्नतः श्रूयतांराजशार्दूलकथांपौराणिकींशुभां- पंकजाख्येपुराणेचमहिमाकथितामया एकदानाकलोकेवाइंद्रोराज्यंचकारह देवास्तत्रसुखेनैवानिवसंतिमनो- रमे पीयूषपाननिरताश्चाप्सरोगणसेविताः नंदनाख्यंवनंतत्रपारिजातोपशोभितं रेमुस्तत्रसमताच्चाप्सरोभि र्दिवौकसः एकदारममाणासौदेवेंद्रःस्वेच्छयानृप वर्त्तयामासहर्षात्तुपचाशत्कोटिनायकः गंधर्वास्तत्रगायंति- तन्मध्येपुष्पदंतकः चित्रसेनस्तुनाम्नावैतत्रास्तेतत्सुतस्तथा मालिनीतिचनाम्नातुचित्रसेनस्ययोषिता मालि न्यांतुसमुत्पन्नाकन्यापुष्पवतीशुभा पुष्पदंतस्यपुत्रोवैमाल्यवान्नामनामतः पुष्पवतीचतेनैवमाल्यवतातुमोहिता कामवाणैःसुतीक्ष्णैश्चविद्धांगीसावभूवह तयाहावैःकटाक्षैश्चमाल्यवांश्चवशीकृतः लावण्यरूपसंपन्नातस्या- रूपंनृपशृणु बाहूतस्यास्तुकामेनकंठपाशीकृताविव चंद्रवद्वदनंतस्यानेत्रेकर्णायतेतथा कर्णौसंशोभितौतस्याः

कुंडलाभ्यांनृपोत्तम कंबुग्रीवायुतासैवदिव्याभरणभूषिता पीनोन्नतौकुचौतस्यामुष्टिग्राह्यंतुमध्यमं नितंबो-
विपुलस्तस्याविस्तीर्णजघनस्थलं चरणौशोभमानौचरक्तोत्पलसमद्युती गायमानौचतौतत्रअप्सरोगणसंगतौ-
मदनातिपरीतांगौपरस्परवशानुगौ परस्परानुरागेणमोहितौमदविह्वलौ मघवंतंनजानीतःकाममार्गेणमोहितौ
नरागशुद्धिमायातौकामस्यवशवर्तिनौ कुपितोमघवानाहमाल्यवंतंसुरागिणं धिक्कांपापंदुराचारंयस्यपापेरता-
मतिः अशपच्चातिकोपात्मामाल्यवंतंपुरंदरः पिशाचत्वंगच्छमूढमाल्यवत्यासहानया एवंशप्तौतुशक्रेणपेततु.
धरणीतले मर्त्यलोकमनुप्राप्तौभुंजानौकर्मणःफलं एवंमघवताशप्तौचातिदुःखितमानसौ हिमवंतंगिरिंप्रा-
प्ताविंद्रशापविमोहितौ उभौपिशाचतांप्राप्तौदारुणंदुःखमेवच संतप्तमानसौतत्रमहादुःखगतावुभौ गंधर्व-
त्वंचाप्सरात्वंनजानीतौहिमोहितौ पीड्यमानौनिदाघेनतुपारपवनेनच दंतघर्षंप्रकुर्वाणौरोमांचितवपुर्धरौ सपि-
शाचस्तदाप्राहस्वांतुपत्नींपिशाचिकां किमावाभ्यांकृतंपूर्वंपापंवैलोमहर्षणं येनप्राप्तंपिशाचत्वंदुःखंदुःकृतक-
र्मणा नराणामधमंमत्वापिशाचत्वाच्चदुःखितौ तस्मात्सर्वंप्रयत्नेनपापंनैवसमाचरेत् इतिचिंतापरौतत्रसं
जातौदुःखकंपितौ दैवयोगात्तयोः प्राप्तामाघस्यैकादशीसिताजयानामेतिविख्यातातिथीनामुत्तमातिथिः
तस्मिन्दिनेतुतौपार्थसर्वाहारविवर्जितौ चिंतयानौचनृपतेजलपानदिवर्जितौ नकृताजीवघाताेहिनपत्रफलभक्षणं
अश्वत्थस्यसमीपेतुपतितौदुःखसंयुतौ रविरस्तंगतोराजंस्तथैवास्थितयोस्तयोः संप्राप्ताचानिशाघोरादारु
णाशीतकारिणी वेपमानौतुराजंस्तौसुखार्थंमिथुनीकृतौ परस्परेणसंलग्नगात्रयोर्भुजयोरपि ननिद्रानरतिस्त
त्रनतौसौख्यमविंदतां एवंतौराजशार्दूलशापेनेंद्रस्यपीडितौ एवंतयोर्दुःखितयोर्निजगामतदानिशा मार्त्तंडस्यो
दयोजातोद्वादशीदिवसागमे मयातुराजशार्दूलतयोर्भक्तिर्द्दताहृदि जयायास्तद्व्रतेचीर्णेरात्रौजागरणेकृते न

स्माद्व्रतप्रभावाच्चयथाह्यासीत्तथाशृणु द्वादशीदिवसेप्रातः प्राकीर्णेतुप्रजायते विष्णोः प्रभावान्नृपते पि
शाचत्वंतयोर्गतं पुष्पवतीमाल्यवांश्चपूर्वरूपौबभूवतुः पुनस्ततः स्नेहयुतौपूर्वालंकारधारिणौ विमानंसमधिरू
ढौताश्चप्सरोगणसेवितौ स्तूयमानौतुगंधर्वैस्तुंबुरुप्रमुखैस्तथा हावभावसमायुक्तौगतौनाकेमनोरमे देवेंद्र
स्याग्रतोराजन्प्रणामंचक्रतुर्मुदा तथाविधौतुतौदृष्ट्वामघवाविस्मितोब्रवीत् वदतंकेनपुण्येनपिशाचत्वंविनिर्गतं
ममशापवशंप्राप्तौकेनदेवेनमोचितौ माल्यवानुवाच वासुदेवप्रसादेनजयायास्तुव्रतेनच पिशाचत्वंगतंस्वा
मिस्तवभक्तिप्रभावतः प्रतिश्रुत्यवचस्तस्यप्रत्युवाचसुरेश्वरः पवित्रपावनौजातौवंदनीयौममापिच हरिवासरक
र्तारौविष्णुभक्तिपरायणौ हरिवासरकर्तारोविष्णुभक्तिपराश्चये अस्माकमपितेमर्त्याः पूज्यावंद्यान
संशयः विचचारयथासौस्वंपुष्पवत्यासुरालये एतस्मात्कारणाद्राजन्कर्तव्योहरिवासरः जयाव्रतंतुरा
जेंद्रब्रह्महत्यापहारकं सर्वदानानिदत्तानियज्ञास्तेनकृतान्नृप सर्वतीर्थेषुसुस्नातःकृतयेनजयाव्रतं यःक
रोतिनरोभक्त्याश्रद्धायुक्तोजयाव्रतं कल्पकोटिशतंयावद्वैकुंठेमोदतेध्रुवम् पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं
लभेत् * इतिभविष्योत्तरेपद्मपुराणेचमाघशुक्लाजयैकादशीव्रतकथा इयंकल्पांतरेभीमसेनोपोषिताभीमसेनेति
चलोकेविख्याताऽस्याःकथापुराणांतरेज्ञेया अथात्रैव वाराहद्वादशीव्रतं वाराहपुराणे दुर्वासाउवाच एवं
माघेसितपक्षेद्वादशींधरणीभृतः वाराहस्यशृणुष्वास्यां पुण्यपरमपावनं प्रागुक्तेनविधानेनसंकल्पस्नानमेवच
कृत्वादेवंसमभ्यर्च्यएकादश्यांविचक्षणः पुष्पैर्नैवेद्यगंधैस्तमर्चयित्वाच्युतंनरः पश्चात्तस्याग्रतःकुंभंजलपूर्णंतुवि
न्यसेत् वाराहायेतिपादौचमाधवायेतिवैकटिं क्षेत्रज्ञायेतिजठरंविश्वरूपेत्युरोहरेः सर्वज्ञायेतिवैकंठंप्रजा
नांपतयेशिरः प्रद्युम्नायेतिचभुजौदिव्यास्त्रायसुदर्शनं अमृतोद्भवायशंखंचएषएवार्चनेविधिः एवमभ्यर्च्यमे

धावातास्मन्कुंभंतुवन्यसत सौवर्णंराप्यताम्रवाशक्त्यापात्रंचभक्तितः सर्वबीजैस्तुसंपूर्णंस्थापयित्वाविचक्ष्
णः-तत्रशक्त्यातुसौवर्णंवाराहंस्थापयेद्बुधः दंष्ट्राग्रेणोद्धृतापृथ्वीसपर्वतवनद्रुमा माधवमधुहंतारंवाराहंरूप-
शालिनं सितवस्त्रयुगछन्नताम्राभावेतुवैणवे स्थाप्यार्चयेद्गंधपुष्पैर्नैवेद्यैर्विविधैःफलैः पुष्पमंडपिकांकृत्वाजां
गरंतत्रकारयेत् प्रादुर्भावान्हरेस्तत्रकारयेद्गोपयेद्बुधः एवंसस्तूयमानस्यप्रभातेभ्युदितेरवौ शुचिःस्नातोहारिं
पूज्यब्राह्मणायनिवेदयेत् एवंविधानतोदत्वाहारिंवाराहरूपिणं वेदवेदांगविदुषेसाधुवृत्तायधीमते वि
ष्णुभक्तायविप्रायविशेषेणतुदापयेत् ब्राह्मणायभवेद्यच्चफलतस्यानिशामय इहजन्मनिसौभाग्यंश्रीकांतिस्तुष्टि
रेवच ज्ञानवान्पुत्रवान्भोगीअपुत्र पुत्रवान्भवेत् इतिवाराहपुराणे धरणीव्रतेषु वाराहद्वादशीव्रतम्
माघशुक्लद्वादश्यांतिलद्वादशीव्रतम् तस्यांतिलैःस्नात्वातिलैर्विष्णुमभ्यर्च्य तिलतैलेनदीपंदत्वा-तिलनैवेद्यम्
तिलदानंचकृत्वा तिलान्भुंजीत तदुक्तंब्रह्मपुराणे माघेतुशुक्लद्वादश्यांयमोहिभगवान्पुरा तिलानुत्पादया
मासतप कृत्वासुदारुणं राजादशरथोभूमौतस्यांतानवतारयत् तिलानामाधिपत्येतुविष्णुस्तत्रकृतः-सुरैः
तस्यामुपोषितःस्नातस्तिलैस्तत्रयजेद्धरिं तिलतैलेनदीपाश्चदेयादेवगृहेष्वथ निवेदयेत्तिलानेवहोतव्यां
श्चतथातिलातिलान्दत्वाचविप्रेभ्योभक्षयेच्चतिलानिह इतिब्रह्मपुराणोक्तातिलद्वादशीव्रत इयंचपद्मपुराणे
भीमद्वादश्युक्ता यथोक्तं त्वयाकृतामिदंवीरतवनाम्नाभविष्यति- साभीमद्वादशीनामसर्वपापहराशुभेति
हेमाद्रौ इयंपूर्वयुताग्राह्या एकादश्यांनिराहारः समभ्यर्च्यचकेशवमितिसंकल्पेमंत्रलिंगात् भीमद्वादशीकथाभ
विष्योत्तरे श्रीकृष्णउवाच विदर्भाधिपतिःश्रीमानासीत्पूज्य सुधार्मिकः धर्मविद्धर्मकर्ताचशास्त्रदृष्टेनवर्त्मना
दमयंत्याःपितापूर्वंनलस्यश्वशुरोभुवि सत्यवाग्दानशीलश्चप्रजापालनतत्परः आजगाममहाभागःपुलस्त्यो

ब्रह्मणः सुतः सर्वज्ञानविधिः श्रीमांस्तीर्थयात्राप्रसंगतः तमागतमथोदृष्ट्वाब्रह्मयोनिमकल्मषं उत्थायप्रद
दौराजास्वमासनमभीप्सितं अर्घ्यंपाद्यंचयत्किंचित्तस्मैतत्प्रददौप्रभुः राज्यंचैवात्मनासार्धंनिवेद्यसुकृतांजलिः
तेनचैवाभ्यनुज्ञातोनिपसादवरासने पप्रच्छकुशलप्रश्नंतपस्यध्ययनेतथा तथेतिचोक्त्वासमुनिस्तंराजानमभाषत
पुलस्त्यउवाच कच्चित्तेकुशलंराजन्देशेजनपदेतथाधर्मेमतिस्तेरमतेकच्चित्पार्थिववर्त्तते राजोवाच सर्वत्रकुश
लंब्रह्मन्येपांकुशलमिच्छसि तवागमनजेनाहह्लावितोमृतवारिणा एवंतौसंविदंकृत्वासंभाष्याथपरस्परं रेमाते
पूर्ववृत्ताभिः कथाभिरितरेतरं ततःकथांतरेराजापुलस्त्यंजातविस्मयः पप्रच्छसर्वलोकस्यहितायजगतःपतिः
राजोवाच भगवन्प्राणिनःसर्वेसंसारार्णवमध्यगाः दृश्यंतेविविधैर्दुःखैःपीड्यमानादिवानिशंनरकेगर्भवासेच
व्याधिभिर्जरयातथा तथैवेष्टवियोगादिदुःखदौर्गत्यसंभवैः लालप्यमानाबहवःपरपिंडोपजीविनः एवंविधा
न्यनेकानिदुःखानिमुनिपुंगव दृष्ट्वाहिनानितान्येवभृशंमेव्यथितंमनः तेषांदुःखाभिभूतानांप्राणिनांभुविमानदं
उपकारकरंब्रूहिममानुग्रहकाम्यया उपवासंव्रतंचापिदानंवामुनिसत्तम स्वल्पायासेनयेनेहजायतेचमहत्फ
लम् ॥ पुलस्त्यउवाच ॥ शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमंव्रतं यामुपोष्यनदुःखानांभाजनंजायते
क्वचित् माघमासेसितेपक्षेद्वादशीयाचसास्मृता तस्यांजलार्द्रवसनउपोष्यसुखभाग्भवेत् शृणुराजन्नवाहितो
व्रतंपापप्रणाशनं तवशुश्रूषणाद्वाच्यंमयाप्येतन्नसंशयः अदीक्षितायनोदेयंनाशिष्यायकदाचन विष्णुभ-
क्तायदांतायधर्मनिष्ठायचैवहि वाच्यमेतन्महाराजभुविनान्यस्यकस्यचित् ब्रह्महागुरुघातीचगोघ्नःस्त्रीघात-
कस्तथा कृतघ्नोमित्रध्रुक्क्रूरोनम्रोभग्नव्रतस्तथा मुच्यतेपातकैःसर्वैःव्रतेनानेनभूपते शुद्धेतिथौमुहूर्तेचमंडपंकारयेद्
बुधःदशहस्तप्रमाणेनदेशेपूर्वोत्तरेतथा तन्मध्येह्येकहस्तांतुवेदिकांपरिकल्पयेत् : श्लक्ष्णांसुकुट्टिमांभूमिंवेद्यांकृत्वा

प्रयत्नतःविलिखेन्मंडलंतत्रपंचवर्णैर्विधानतः ब्राह्मणोवेदसंपन्नोविष्णुभक्तोजितेंद्रियःपंचविंशतितत्वज्ञःस्वाचार
निरतस्तथा कुंडानिकल्पयेत्तत्र अष्टौचत्वारिवापुनःब्राह्मणांस्तेषुयुंजीतचातुश्चरणिकान्शुभान्मध्येचमंडलस्याथ
कर्णिकायांजनार्दनं प्रत्यङ्मुखंन्यसेद्देवंचतुर्बाहुमरिंदम पूजयित्वाविधानेनशास्त्रोक्तेनविचक्षणः गंधैःपुष्पैस्तथा
धूपैर्नैवेद्यैर्विविधैरपि एवंसंपूज्यदेवेशंब्राह्मणैःसहदैशिकैःन्यसेत्स्तंभद्वयंपश्चात्तिर्यक्काष्टसमन्वितं देवस्याभिमुखं
तत्र आपीठंपरिकल्पयेत् षट्त्रिंशदंगुलंशुभ्रंचतुरस्रंसमंततः तत्रशिक्यंसमालंब्यसुवृत्तंसुदृढंनवं आरोपयेद्घ
टंतत्रयादृशंतच्छृणुष्वमे कलधौतंतथारौप्यंताम्रंवाप्यथमृण्मयं सर्वलक्षणसंपन्नंदृढंव्यंगविवर्जितं तंसहस्रास्र
वंकुर्य्यात्सलिलंवस्त्रगालितं होमार्थंकल्पयित्वापिपालाशीःसमिधस्तथा तिलान्घृतंतथाक्षीरंशमीपत्राणिचैवहि
वेद्याःपूर्वोत्तरेभागेग्रहपीठंप्रकल्पयेत् तत्रपूज्याग्रहाःसर्वेग्रहयज्ञविधानतःपूर्वस्यांदिशिशक्रस्यपूजांकुर्वीतयत्नतः
दक्षिणस्यांयमस्याथप्रतीच्यांवरुणस्यच कुबेरस्यतथोदीच्यांबलिपुष्पफलाक्षतैःएवंसभृतसंभारंशुक्लांबरधरंतदा
समालब्धशुभैर्गंधैर्दर्भपाणिमतंद्रितं पीठमारोपयेद्युक्तंयजमानंद्विजोत्तमःयजमानोपिदेवस्यसन्मुखःप्रयतःशुचिः
उपविश्यपठेन्मंत्रंपुरुषोक्तमिदंशृणु नमस्तेदेवदेवेशनमस्तेभुवनेश्वर व्रतेनानेनमांत्राहिपरमात्मन्नमोस्तुते तत्रो
दकस्यधारास्ताःप्रत्यङ्मध्याःसमीपतः शिरसाधारयेत्तूष्णींतद्गतेनांतरात्मना होमंकुर्य्युस्ततोविप्रादिक्षुसर्वासुत
त्पराः पठेयुःशांतिकान्पाठान्विष्णुसूक्तानियानिच वादित्रैस्ताड्यमानैस्तुशंखभेरीस्वनैस्तथा पुण्याहजशब्दै
श्चवेदध्वनिविमिश्रितैः मंगल्यैस्तुतिसंयुक्तैःकारयीतमहोत्सवं प्रणम्यदेवदेवस्यवैकुंठस्यमहात्मनः हरिवंशा
दिकंसर्वंश्रावयेद्ब्राह्मणोपरः सौपर्णंकमथाख्यानमहाभारतमेवच व्याख्यानकुशलाः केचिच्छ्रावयेयुरतंद्रिताः
अनेनविधिनासर्वांतांरात्रिंपुण्यवर्धिनीं यजमानोनयेद्धीमान्यावत्सूर्य्योदयोभवेत् ब्रह्मणाश्चापितांरात्रिंजुह्वतो

जातवेदसं मंत्रैस्तुवैष्णवैर्द्रव्यैःक्षिपयेयुर्महीपते वासुदेवस्यशिरसिवसोर्धारांप्रपातयेत् क्षीरेणपयसाराजन्स
र्पिसाद्रिप्रजापिनी ततःप्रभातसमयेयजमानोद्विजैःसह स्नानंकुर्य्यात्कुरुश्रेष्ठनद्यांसरसिवापुनः गृहेवाशक्तिहीं
नस्तुयजमानोष्णवारिणा ततःशुक्लानिवस्त्राणिपरिधाययतव्रतः अर्घ्यंदद्याद्भास्करस्यसविधानंप्रसन्नधीः पुष्पैर्धू
पैःसनैवेद्यैःपूजयेत्पुरुषोत्तम हुत्वाहुताशनंभक्त्यादत्वापूर्णाहुतिंततःपूजयेद्ब्राह्मणान्सर्वान्होतारोयेत्रकल्पिताः श
य्याभोजनगोदानैर्वस्त्राभरणैस्तथा आचार्य्यःपूजनीयोत्रसर्वस्वेनापिभारत येनवातुष्टिमायातिदेवतुल्योगुरुर्यतः
वित्तशाठ्यविहीनस्तुभक्तिशक्तिसमन्वितः दीनानाथविशिष्टाश्चयेचदिनश्चसमागताः तेषांगावोहिरण्यंचदद्याच्छु
द्धेनचेतसा एवंसंपूज्यविप्रादीन्भोजयित्वायथेप्सितान् यथाविभवसारेणपश्चाद्भुंजीतवाग्यतः हविष्यमन्नयत्नेनस
भृत्यःसातिथिस्तथा मयैवंकथितंराजन्वैष्णवास्तेप्रकीर्तिताः यत्कृत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः वाजपेयाति
रात्राभ्यांयेयजंतिशतंसमाःसर्वेतेविष्णुयोगेभ्यःकलांनार्हंतिषोडशीं सप्तजन्मनिसौभाग्यमायुरारोग्यमेवच प्राप्नो
तिद्वादशीमेतामुपोष्यविधिवन्नरः मृतोविष्णुपुरंयातिविष्णुनासहमोदते चतुर्युगानिद्वात्रिंशद्विष्णुरूपधरःसदा
रुद्रलोकंतथाराजन्युगानिद्वादशैवतु ब्रह्मलोकेतथात्रीणिसूर्यलोकेयुगेतथा पुण्यक्षयादिहागत्यराजाभवति
धार्मिकः पृथिव्यधिपतिःश्रीमान्विजितारिःप्रतापवान् व्रतमेतत्पुराचीर्णंसगरेणमहात्मना नलेनधुंधुमा
रेणदिलीपेनययातिना एतैश्चपृथिवीपालैःपालिताशेषभूतलैः स्त्रीभिर्वैश्यैस्तथाशूद्रैःधार्मिकैस्तुसदानृप
भृग्वाद्यैर्मुनिसंघातैर्ब्राह्मणैर्वेदपारगैः त्वयापृष्टेनचमयाकथितंयन्नराधिप अद्यप्रभृतिचैवेयंख्यातिंयास्यति
भूतले भीमाख्याद्वादशीचेतिकृताभीमेनवैयतः एषापुलस्त्यमुनिनाकथिताकुरुनंदन यश्चैनांशृणुयात्कुर्य्या
द्यत्नाद्भक्तिस्वभावतः सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते सद्द्रव्येणापिवापार्थवित्तशाठ्यविवर्जितः विष्णु

भक्तेनकर्त्तव्यंसंसारभयभीरुणा ॥ भीमेनयत्किलपुरासमुपोषिताभूद्रात्रौगलच्छिशिरेशीतलवारिधारा ॥ तांद्वादशींदशमुखारिमुखंस्मरन्यःसम्यक्समाचरतिपार्थिवविष्णुलोकं इतिभाविष्योत्तरेमाघशुक्लाभीमद्वादशीव्रतम् ॥ नारदीयेपि माघस्यशुक्लद्वादश्यांशालिग्रामशिलांद्विज अभ्यर्च्यविधिवद्भक्त्यासुवर्णंतन्मुखेन्यसेत् तांस्थाप्य रौप्यपात्रेवासितवस्त्रयुतांवृतां प्रदद्याद्वेदविदुषेतंचसंभोजयेत्ततः पायसान्नेनखंडाज्यसहितेनहितेनच एवंकृते कभक्तस्सन्विष्णुचिंतनतत्परः वैष्णवंलभतेधामभुक्त्वाभोगानिहेप्सितान् माघशुक्लत्रयोदश्यांमाघत्रिरात्रस्नानम् नारदीये माघशुक्लत्रयोदश्यांसमारभ्यदिनत्रयं माघस्नानव्रतंविप्रकार्यंमासफलावहं प्रयागेमाघमासेतुत्र्यहंस्नानस्ययत्फलं नाश्वमेधसहस्रेणतत्फलंलभतेभुवि तत्रस्नानजपोहोमोदानंचानंतमश्नुते महामाघींपुरस्कृत्यस्नायात्तत्रदिनत्रयमिति पाद्मेपि माघशुक्लचतुर्दश्यांयमतर्पणमुक्तंनारदीये माघशुक्लचतुर्दश्यांयमतर्पणमीरितं अनर्काभ्युदितेकालेस्नात्वासतर्पयेद्यमं द्विसप्तनामभिःप्रोक्तैःसर्वाघविनिवृत्तये तिलदर्भाम्बुभिःकार्यंतर्पणंद्विजभोजनं कृशरान्नंस्वयंचापितदेवाश्नीतवाग्यतः माघपौर्णमास्यांतिलकार्पासकंबलदानं नारदीये पूर्णमास्यांततोमाघ्यांतिलकर्पासकंबलं रत्नानिकंचुकोष्णीषपादत्राणनिबंधनं दत्वाप्रमोदतेस्वर्गेदानंवित्तानुसारतः यस्तत्रशंकरंदेवंपूजयेद्विधिपूर्वकं सोश्वमेधफलंप्राप्यविष्णुलोकेमहीयते अस्यांस्नानदानादिप्राशस्त्यं भविष्योत्तरे वैशाखीकार्त्तिकीमाघीतिथयोतीवपुण्यदाः स्नानदानविहीनास्तानेयाःपांडुनंदनेति तथाचतत्रैव माघ्यांस्नानंतथासम्यक्संतर्प्यपितृदेवताः तिलपात्राणिदेयानिकंचुकाःकंबलास्तथा कर्पासदानमत्रैवधेनुदानंप्रशस्यते भगिनीभागिनेयानांमातुलानींपितृष्वसा दरिद्राणांचबंधूनांदानंकोटिगुणोत्तरं अत्रतिलपात्रदानं ब्रह्मपुराणे ताम्रपात्रंतिलैः पूर्णंप्रस्थमात्रंद्विजायतु । सहिरण्यंचयोदद्याच्छ्रद्धावित्तानुसा-

रतः सर्वपापविशुद्धात्मालभतेतुपरांगतिं अत्रविशेषः ॥ ताम्रपात्रेतिलान्कृत्वापलषोडशकल्पिते । सहिरण्यंस्व शक्त्यावाकल्पितेविधिपूर्वकं विप्रायदत्तंहरतिपापंजन्मशतोद्भवमितिकूर्मपुराणात् तत्रैव तिलपूर्णंताम्रपात्रंसहि रण्यंद्विजातये प्रातर्दत्वातुविधिवद्दुःस्वप्नंप्रतिहंतिसः तिलपात्रंत्रिधाप्रोक्तंकनिष्ठोत्तममध्यमं ताम्रपात्रंदशपलंजघ न्यपरिकीर्तितं द्विगुणंमध्यमंप्रोक्तंत्रिगुणंचोत्तमोत्तमं स्वर्णमेकंजघन्यंतुद्विगुणंमध्यमंचयत् । त्रिगुणंचोत्तमंतद्वत्सु वर्णपरिकीर्तितं सुवर्णदक्षिणांदत्वासर्वपापक्षयोभवेत् अथतिलपात्रदानमंत्रः तिलाःस्वर्णयुतास्तुभ्यंप्रद त्ताह्यघनाशनाः विष्णुप्रीतिकरानित्यमतःशांतिंप्रयच्छत गोदानमंत्रः गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच और्णवस्त्रदानमंत्रः और्णपट्टमनुष्येयंस्वर्णवीजंतवप्रभो दत्तंगृहाण देवेशपापंमेहरसत्वरं मदनरत्नेतु जीर्णमेषसमुत्पन्नाशीतदुःखभयापहा यस्मात्तुभारहारीस्यादतःशांतिंप्रय च्छतु वस्त्रदानमंत्रः शरणंसर्वलोकानांलज्जासंरक्षणंपरं सुवेशधारितंयस्माद्वासःशांतिंप्रयच्छमे रक्तवस्त्रयुगंय स्माद्वादित्यस्यप्रियंसदा प्रदानादस्यमेसूर्य्यअतः शांतिंप्रयच्छतु उपानद्दानमंत्रः उपानहौप्रदास्यामिकंट- कादिनिवारणे सर्वस्थानेषुसुखदेअतःशांतिंप्रयच्छतं रत्नदानमंत्रः यथासर्वेषुरत्नेषुसर्वेदेवाव्यवस्थिताः शांतिंप्रयच्छंतुरत्नदानेनमेसुराः तथाचान्यात्किंचिन्मात्रंदीयते तस्यमंत्रः तन्माघस्नानेनदेवविप्राणांभू च्छता स्वल्पदानेपिदातव्यंमाधवःप्रीयतामिति इयंमाघपूर्णिमामघानक्षत्रयुतामाघीप्रोक्ता योगविशे- महामाघीति तथाचगार्ग्यः मेषराशौयदाशौरिःसिंहेचैवबृहस्पतिः भास्करःश्रवणर्क्षेचमहामाघीतिसास्मृ ता महामाघीप्रयागेतुनैमिषेफाल्गुणेतथा शालिग्रामेमहाचैत्रीकृत्वापुण्यंमहाफलामितिगार्ग्यवचनात् अत्र विशेषमाहविष्णुः माघीमघायुक्ताचेत्तस्यांतिलैःश्राद्धंकृत्वापूतोभवतीति ब्रह्मपुराणे पौर्णमास्यांमघायोगे-

वायसा·पंचजज्ञिरे इद्राद्वावरुणाद्वायोर्यमादथचनैर्ऋतेः श्राद्धंपितृभ्यःकर्त्तव्य तिलैः पूज्यास्तथाकिलेति ऐंद्रवारुणवायव्यायाम्यानैर्ऋतिकाश्चये वायसा प्रतिगृह्णंतुभूमौदत्तंमयान्नकं दद्यादनेनमंत्रेणतेभ्योभोज्यं- मधुप्लुत ब्राह्मणान्भोजयित्वातुभुंजीतबांधवैः सहेति माघ्यांकृलातिलैःस्नानंसर्वपापैः प्रमुच्यते अन्यत्रच माघ्यां पूजातुकर्त्तव्यादेवीवैमंगलांयजेत् देवीपुराणे धेनुंगुडमयींकृत्वामाघ्यांयश्चोत्तरायणे सर्वकाममवाप्नोतिज्येष्ठ्यां जलमयींतथा इयमन्वष्टका तत्कृत्यंश्राद्धादि अथमाघस्नानविधिरुच्यते तत्रकालमाहविष्णुः तुलामकरमेषेषु प्रातःस्नायीसदाभवेत् हविष्यंब्रह्मचर्यंचमाघस्नानेमहाफलमिति अत्रतुलामकरमेषेष्वित्यनेन सौरमासउक्तः ब्राह्मे एकादश्यांशुक्लपक्षेपौषमासेसमारभेत् द्वादश्यांपौर्णमास्यांवाशुक्लपक्षेसमापनमिति पाद्मेपि पौषस्यैकादशीशुक्लामारभ्यस्थंडिलेशयः मासमात्रंनिराहारस्त्रिकालंस्नानमाचरेत् त्रिकालमर्चयेद्विष्णुंत्यक्त भोगोजितेंद्रियः माघस्यैकादशीशुक्लायावद्विद्याधरोत्तमेति अत्रत्रिकालस्नानं मासोपवासविषयंनिराहारइत्युक्तेः पृथ्वीचंद्रोदयेपक्षांतरमाह विष्णुः दर्शवापौर्णमासींवाप्रारभ्यस्नानमाचरेत् पुण्यान्यहानित्रिंशत्तुमकरस्थेदिवाकरइति अत्रदर्शमिति शुक्लादिमुख्यचांद्रायणाभिप्रायेणेति बालवृद्धयुवानश्चनरनारीनपुंसकाः स्नात्वामाघेशुभेतीर्थेप्राप्नुवंतीप्सितंफलमिति पाद्मे सर्वेधिकारिणोह्यत्रविष्णुभक्तौयथानृप ब्राह्मे उष्णोदकेनवास्नानमशक्येसतिकुर्वते वृद्धेषुसर्वगात्रेपुनोष्णोदकविशेषता वैष्णवामृतेगौडनिबंधे स्कांदे पौष्यां- तुसमतीतायांयावद्भवतिपूर्णिमा माघमासस्यतावद्धिविष्णुपूजाविधीयते पितॄणांदेवतानांचमूलकंनैवदापयेत् ब्राह्मणोमूलकंभुक्काचरेच्चांद्रायणव्रतं अन्यच्चयातिनरकंक्षत्रविट्शूद्रएवच वर्जनीयंप्रयत्नेनमूलकंमदिरोपमम् यदामाघेमलमासोभवातितदाकाम्यानांतत्रसमाप्तिनिषेधान्मासद्वयंप्रातःस्नानंतन्नियमाश्चकर्त्त

व्याः मासोपवासचांद्रायणादिमलमासएवसमापयेत् तदुक्तंदीपिकायाम् नियतत्रिंशद्दिनत्वाच्छुभेमासि
स्यारभ्यसमापयेत् मलिनेमासोपवासव्रतमिति स्नानारंभेचमंत्रोविष्णुनोक्तः तत्रचोत्थायनियमंगृह्णीयाद्वि
धिपूर्वकं माघमासमिमंपुण्यंस्नास्येहंदेवमाधव तीर्थस्यास्यजलेनित्यमितिसंकल्प्यचेतसीति ततःस्नात्वा
शुभेतीर्थेदत्त्वाशिरसिवैमृदं वेदोक्तविधिनाराजन् सूर्यायार्घ्यंनिवेदयेत् पितॄणांतर्पणंकृत्वातुउत्तीर्यततो
जलात् प्रत्यहंस्नानमंत्रश्च पाद्मे दुःखदारिद्र्यनाशायश्रीविष्णोस्तोषणायच प्रातःस्नानंकरोम्यद्यमाघे
पापविनाशनं मकरस्थेरवौमाघेगोविंदाच्युतमाधव स्नानेनानेनमेदेवयथोक्तफलदोभव इमंमंत्रंसमुच्चार्य
स्नायान्मौनसमन्वितइतिसेतौ ब्रह्मक्षत्रविशांचैवमंत्रवत्स्नानमिष्यते तूष्णीमेवतुशूद्राणांतथैवकुरुनंदन नम
स्कारोथवाकार्यःसर्वपापौघहानिद इति प्रत्यहंसूर्यायार्घ्यदानमंत्रश्चपृथ्वीचंद्रोदयेपाद्मे सवित्रेप्रसवित्रेचपर
रंधामजलेमम त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधेति स्नानकालश्चसूर्योदयउक्तः त्रिस्थलीसेतौ संप्रा
प्तेमाघमासेतुतपस्विजनवल्लभे क्रोशंतिसर्ववारीणिसमुद्गच्छतिभास्करे हनामःसर्वपापानित्रिविधानिनसंशयइति
नारदोक्तेः मकरस्थेरवौयोहिनस्नात्यभ्युदितेरवौ इति माघमासेरटंत्यापःकिंचिदभ्युदितेरवौ इतिपाद्मवचनात्
योमाघमास्युपासिसूर्यकराभितप्ते स्नानंसमाचरतिचारुनदीप्रवाहे उद्धृत्यसप्तपुरुषान्पितृमातृवश्यान्स्वर्गं
प्रयात्यमरदेहधरोनरोसौ इतिभविष्योत्तरवचनाच्च ब्राह्मेतु अरुणोदयउक्तः अरुणोदयेतुसंप्राप्तेस्नानका
लेविचक्षणः माधवांघ्रियुगंध्यायन्यःस्नातिसुरपूजितइति तथा अरुणोदयमारभ्यप्रातःकालावधिःप्रभो माघ
स्नानभवंपुण्यंक्रमात्तत्रावधारणा उत्तमंतुसनक्षत्रमध्यमंलुप्ततारकं सवितर्युदितेभूपततोहीनंप्रकीर्तितमिति
तेनात्रशक्ताशक्तापेक्षयाव्यवस्थेति इदंचस्नानंप्रयागेऽतिप्रशस्तं काश्यांशतगुणंप्रोक्तंगंगायमुनसंगमे सहस्र

गुणितासापिभवेत्पश्चिमवाहिनी पश्चिमाभिमुखीगंगाकालिंद्यासंगतायदा हंतिकल्पकृतंपापंसामाघेन्नृप-
दुर्लभेत्यादिपाद्मादिवचनेभ्यः प्रयागासंभवेकाश्यांदशाश्वमेधोत्तरस्थप्रयागतीर्थेस्नानमुक्तंकाशीखंडे काश्यु
द्भवेप्रयागेयेतपसिस्नांतिमानवाः दशाश्वमेधजानितंफलंतेपांभवेद्ध्रुवमिति ब्राह्मे तडागेपुतुवास्नायात्कूपभांडा
श्रितेतथा माघेमासेवरारोहेशस्तंवैनिम्नगाजलं भांडाश्रितेत्वयंविशेषः सरित्तोयमहावेगंनवकुंभस्थितंतथा
वायुनाताडितंरात्रौगंगास्नानसममतं यत्रकुत्रापिवामाघेप्रयागस्मरणान्वितः करोतिमज्जनंतीर्थेसलभेद्गांगमज्ज
नं इदंचस्नानंनैरंतर्येणकार्यं तदुक्तंपृथ्वीचंद्रोदयेप्रभासखंडे माघेमासिचयःस्नायान्नैरंतर्येणभावतः
पौंडरीकफलंतस्यादिवसेदिवसेभवेत् माघस्नानंकाम्यमेवेतिकेचित् विष्ण्वादिवाक्येनसदावश्यशब्दान्नित्यताव
गतेर्नित्यंकाम्यमितियुक्तं मासपर्यंतस्नानासंभवेतुत्र्यहमेकाहंवास्नायात् महामाघींपुरस्कृत्यस्नायात्त्रीदिनत्रय
मितिलिंगात् अस्मिन्प्रयागेत्वशक्तोपिस्नायादपिचादिनत्रयं प्रयागेमाघमासेतुत्र्यहंस्नातस्ययत्फलं नाश्वमेधसह
स्रेणतत्फलंलभतेभुवीत्यादिवचनात् अत्रमकरसंक्रमस्थसप्तमीमाघीतित्र्यहमित्येके माघशुक्लदशम्यादीत्यन्ये
मकरादित्र्यहइत्यन्येमाघस्याद्यत्र्यहइतिकेचित् त्रयोदश्यादीतिवहवःयत्किंचिद्दिनत्रयमितिभट्टाः अत्रत्रयोदश्या
दिपक्षएवज्यायान् अन्येतुवचनाभावान्निर्मूलाः माघस्नानेनियमास्तुनारदीये नवह्निंसेवयेत्स्नातोह्यस्नातोपि
वरानने होमार्थंसेवयेद्वन्हिंनशीतार्थंकदाचन अहन्यहंनिदातव्यास्तिलाःशर्करयान्विताः त्रिभागस्तुति
लानांच चतुर्थःशर्करान्वितः अनभ्यंगीवरारोहेसर्वंमासंनयेद्व्रती असंवृत्तशरीरस्तु यःकथंस्नानमाचरेत्
पदेपदेश्वमेधस्यफलंप्राप्नोतिमानवः तथा शंखचक्रधरंदेवंमाधवंनामपूजयेत् वन्हिंहुत्वाविधानेनततस्त्वेका
शनोभवेत् भूशय्याब्रह्मचर्येण शक्तःस्नानंसमाचरेत् अशक्तोब्रह्मचर्यादौस्वेच्छासर्वत्रकथ्यते अशक्तस्त्वधना

द्यस्येतिपाठः कृत्यरत्नावल्यां 'बहुधनदानंकुर्वतइति तिलस्नायीतिलोद्वर्त्तीतिलहोमीतिलोदकी' । तिलभुक्
तिलदाताच षट्तिलाःपापनाशना इति स्नानोत्तरंकृत्यमाह । मदनपारिजाते विष्णुः काष्टमौनंपुरस्कृत्य
पूजयेत्पुरुषोत्तमं अवश्यमेवकर्त्तव्यंमाघस्नानमितिश्रुतिः' भविष्ये तैलमामलकाश्चैवतीर्थेदेयास्तुनित्यशः त
तः प्रज्वालयेद्वन्हिं सेवनार्थंद्विजन्मनां एवंस्नात्वावसानेतुभोज्यंदेयमवारितम् भोजयेद्द्विजदांपत्यंभूषयेद्वस्त्रभू
षणैः कंबलाजिनरत्नानिवासांसिविविधानिच चोलकानिचदेयानिप्रच्छादनपटास्तथा उपानहौतथागुह्यमो
चकौपापमोचकौ अनेनविधिनादद्यान्माधवः प्रीयतामिति भूमौशयीतहोतव्यमाज्यंतिलसमन्वितं तथा
अन्नंचैवयथाशक्त्यादेयंमाघेनराधिप सुवर्णरक्तिकामात्रंदद्याद्वेदविदेतथा माघांतेविशेषोनारदीये माघावसा
नेसुभगंषड्रसंभोजनंस्मृतं सूर्योमेप्रीयतांनित्यंविष्णुमूर्त्तिर्निरंजनः दंपत्योर्वाससीसूक्ष्मेसप्तधान्यसमन्विते त्रिं
शत्तुमोदकादेयाःशर्करातिलसंयुताः इति अत्रोद्यापनं एकादशीविधानेनव्रतस्योद्यापनंतथेतिवचनात्
पूर्वेह्निउपवासपूजनादि परेन्हितिलाज्यैरष्टोत्तरशतंहोमंकृत्वा सवित्रेप्रसवित्रेतिपूर्वोक्तमंत्रमुक्त्वा दिवाकर
जगन्नाथप्रभाकरनमोस्तुते परिपूर्णंकुरुष्वेह माघस्नानमुपस्यते इतिक्षमापयेदितिसंक्षेपः इतिनिर्णय
सिंधावुक्तं कार्त्तिकेवाथतपसिविधिरेवंविधोत्तम इतिकार्त्तिकोद्यापनेविशेषवचनात् कार्त्तिकोद्यापनविधिरेवात्र
विधिरिति अथात्रैवघृतकंबलविधिःकार्य्यो तदुक्तंहेमाद्रौ भविष्यपुराणे माघशुक्लचतुर्दश्यामुपोष्यानिय
मस्थितः शिवायपौर्णमास्यांतुकर्त्तव्यंघृतकंबलं कृष्णगोमिथुनंपश्चात्स्वरूपंविनिवेदयेत् दिव्यंवर्षशतंसा
ग्रंशिवलोकेमहीयते आलिंगंवेदिपर्य्यंतंयोदद्याद्घृतकंबलं तस्यानंतंभवेत्पुण्यंमाघपौर्णिमपर्वणि जागरं
गीतनृत्याद्यैः सकृत्कृत्वातुपर्वणि मन्वंतरशतंसाग्रंरुद्रलोकेमहीयते - इतिमाघ्यांघृतकंबलविधिः माघ्यांब्रह्म

वैवर्त्तपुराणदानमुक्तं मत्स्यपुराणे रथंतरस्यकल्पस्यवृत्तांतमधिकृत्यच सावर्णिनानारदायकृष्णमाहात्म्यसंयुतं यत्रब्रह्मवराहस्यचरितंवर्ण्यतेपुनः तदष्टादशसाहस्रंब्रह्मवैवर्त्तमुच्यते पुराणंब्रह्मवैवर्त्तंयोदद्यान्माघमासिच पौर्णमास्यांधेनुयुतंब्रह्मलोकेमहीयते इतिब्रह्मवैवर्त्तपुराणदानम् अत्रैवस्कंदपुराणमपिदेयम् स्कांदेसर्वो त्तमकथेशिवमाहात्म्यवर्णनम् लिखित्वैतत्तुयोदद्याद्धेमशूलसमन्वितं माघ्यांसत्कृत्याविप्रायसशैवेमोदतेपदे इतिस्कंदपुराणदानम् ॥ स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणी ० १ रणवीरसिंहभूपेशकारितेकृत्यसा गरे अभवन्माघकृत्यानांरम्योरत्नसमुच्चयः इतिश्रीमत्सूर्यवंशावतंस रघुकुलतिलकरणवीरसिंहमहाराजकारिते कृत्यरत्नाकरे माघमासकृत्यरत्नसमुच्चयःसमाप्तिमगमत् ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ



॥ श्रीरघुनाथमुद्रायन्त्रालये ॥
लालाशिब्बामल्लाधिकारेमाघमासोमुद्रितस्समाप्तिमगमत्
संवत् १९४२ वैशाख प्र. २०

# उोंश्रीरघुनाथोजयति ॥



उोंश्रीगणेशायनमः ॥ उोंअथफाल्गुनमासकृत्यनिर्णयः तत्रादौ कुंभार्कपूर्वाः-षोडश नारदीये याम्यायनेस्थिरेत्वाद्याःपराःसौम्येद्विमूर्त्तिभे मध्याविषुवतिप्रोक्ताःपुण्याःषोडशनाडिका ॥ इतिशेषसंक्रांतिनिर्णयेज्ञेयं अत्रकृत्यं भविष्यपुराणे देवार्चांफाल्गुनेमासिकृत्वापिष्टमयींतुवै गंधमाल्यैरलंकृत्यस्थापयेद्भास्करालये विमानैःसूर्यसंकाशैर्गीतवाद्यसमाकुलैः समैकादशसाहस्रंसूर्यलोकेमहीयते समागत्यइमंलोकंयथेच्छंविंदतेसुखमिति व्रतमधिकृत्य स्कंदपुराणे एकभक्तंतुकुर्वाणः फाल्गुनेमासिनित्यशः स्त्रीपुंसौभाग्यमाप्नोतिस्त्रियश्चपरमप्रियः ॥ विष्णुधर्मोत्तरे प्रियंगुफाल्गुनेदत्वाप्रियोभवतिभूतले प्रियंगुःकंगुइतिप्रसिद्धः फाल्गुनेमासिराजेंद्रयःकुर्यान्नक्तभोजनं श्यामाकक्षीरनीवारैर्जितक्रोधोजितेंद्रियः षष्ठ्यांवाचाथसप्तम्यामुपवासपरोभवेत् अष्टम्यांतुमहास्नानंपंचगव्यघृतादिभिः त्वग्भिश्चक्षीरवृक्षाणांस्नापयित्वाप्रपूजयेत् सौरभेयींततोदद्याद्रक्तांगांरश्मिमालिने गत्वादित्यपुरंरम्यंमोदतेशाश्वतीःसमा इति वामनपुराणे भगदेवंतुयोमासमेकभक्तेनसंक्षिपेत् ऐश्वर्यमतुलंश्रेष्टपुमान्स्त्रीवाप्रपद्यते स्त्रीपुवल्लभतांयातितस्याश्चैवभवंतिते विष्णुधर्मे क्षपयेदेकभक्तेनशुश्रूपुश्चैवफाल्गुणे सौभाग्यंस्वजनानांचसर्वेपांचेतसोन्नतिं विष्णुशुश्रूपुः वामनपुराणे फाल्गुणे व्रीहयोगावोवस्त्रंकृष्णाजिनान्वितं गोविंदप्रीणनार्थायदातव्यंपुरुषर्षभ ॥ तथा प्रातःस्नायीभवेन्नित्यंद्वौमासौमाघफाल्गुनाविति वाराहे फाल्गुनस्यतुमासस्यपुष्पाणिसुरभीनिच कर्माण्यानिशुभानीहगृहीत्वाभक्ति

मान्नरः जानुभ्यांधरणींगत्वाकराभ्यामंगुलैःपुटं ॐनमोनारायणाय नमस्तेदेवदेवेशचक्रानिसैंधनप्रभो नम
स्तेलोकनाथायसुप्रदीरनमोस्तुते आदिमध्यावसानंतुनजानातीहकश्चन वसंतागमपुष्पाणिगृहाण
पुरुषोत्तम यएतेनविधानेनकुर्य्यान्मासेतुफाल्गुने नचागच्छतिसंसारंपरलोकंसगच्छति ॥
इतिफाल्गुणविधिः ॥ फाल्गुनकृष्णप्रतिपदायां तिथिपत्वेनवन्हिपूजा द्वितीयायांब्रह्मणःपूजा तृतीया
यांगौरीव्रतम् फाल्गुनकृष्णचतुर्थ्यांविघ्नविनायकगणेशव्रतम् भविष्योत्तरे ॥ श्रीकृष्णउवाच ॥ अथा
विघ्नंविघ्नराजं कथयामिव्रतंतव येनसम्यक्कृतेनेहनाविघ्नमुपजायते चतुर्थ्यांफाल्गुनेमासिगृह्णीयात्तुव्रतं
शुभं नक्ताहारेणराजेंद्रतिलपारणकंस्मृतं तदेववन्हौहोतव्यंब्राह्मणायचदापयेत् ॥ तत्रमंत्रः ॥ शूराय
वीरायगजाननायलंबोदरायैकरदान्विताय एवंचसंपूज्यपुनश्चहोमंकुर्य्यादितौविघ्नविनाशहेतौ चातुर्मास्यंव्रतं
चैवकृत्वाथपंचमेतथा सौवर्णंगजवक्त्रंतुकृत्वाविप्रायदापयेत् हेरंबराजंतद्वद्विधानेनप्रदापयेत् रुद्रस्यच
पुरंयातिवराहवचनंयथा विघ्नानितस्यनभवंतिगृहेकदाचिद्धर्मार्थकामसुखसिद्धिकराणिचैव यस्तंविनायकव्रतं
कुरुतेमनुष्योविघ्नेशमर्चयतिकृष्णतिलैश्चतुर्थ्यां इतिभविष्योत्तरे श्रीविघ्नविनायकव्रतं ॥ फाल्गुनकृष्णपंच
म्यांतिथीशत्वेननागानांपूजाव्रतं फाल्गुनकृष्णषष्ठ्यांतिथिपत्वेनस्कंदपूजेतितिथिसामान्यनिर्णयात् फाल्गुन
कृष्णसप्तम्यामष्टम्योरष्टकाअन्वष्टकाकार्य्या फाल्गुनकृष्णाष्टम्यांसोमादेवीपूजानास्दीये फाल्गुनेत्वसिता
ष्टम्यांसोमादेवींप्रपूजयेत् नक्तव्रतधरोविप्रःसर्वकामसमृद्धये ब्रह्मपुराणे कृष्णाष्टम्यांफाल्गुनेतुद्वादश्यांश्रवणे
नतु चकारभगवान्विष्णुःपिंडनिर्वपणंमहत् पितापितामहेभ्योपितिलैश्चकृतवान्पुरा सोपवासोहरिंतस्मात्त
त्रसंपूजयेत्तिलैःतिलैरभ्यर्चयेद्देवांस्तिलांश्चजुहुयात्तथा तिलतैलेनदीपाश्चदातव्यादेवसद्मनि तिलान्दद्यात्तुदे

वेभ्यःपितृभ्यश्चातिलोदकं तिलांश्चभक्षयेत्तत्रधर्मवृद्ध्यर्थमात्मनः फाल्गुनकृष्णनवम्यां तिथिदेवतात्वाद्दुर्गा
पूजाव्रतं फाल्गुनकृष्णदशम्यां दशम्यामंतकस्यचेति धर्मराजपूजाव्रतमितिदशमीतिथिसामान्यनिर्णये ॥
फाल्गुनकृष्णैकादशीविजया नारदीये तपस्येकृष्णैकादशींवैविजयांसमुपोष्यच द्वादश्यांप्रातरभ्यर्च्ययोगीशं
गंधपूर्वकैः ततःसंपूज्यभूदेवान् दक्षिणाभिः प्रतोष्यतान् विसृज्यवांधवैःसार्द्धंस्वयंभुंजीतवाग्यतः देहांतेवैष्ण
वंलोकंयातिदेवैःसुसंस्कृतः अस्याःकथास्कंदपुराणे ॥ सूतउवाच पप्रच्छदेवदेवेशंब्रह्माणंजगतांपतिं नार
दःसर्वतत्वज्ञःसर्वर्षिगणसंवृतः ॥ नारदउवाच कथंव्रतमिदंब्रह्मन्पुरारामेणवैकृतं प्रब्रूहिमेविस्तरतःकथां
रामस्यपावनीम् ॥ ब्रह्मोवाच शृणुवत्सप्रवक्ष्यामिराघवेणयथाकृतं रामोवसद्वनेतत्रवर्षाणिनवपंचच न्यव
सत्पंचवट्यांचससीतः सहलक्ष्मणः तत्रैववसतस्तस्यराघवस्यमहात्मनः रावणेनहृताभार्यासीतानामतपस्वि
नी तेनदुःखेनरामोपिमोहमभ्याजगामह भ्रमन्जटायुषमथोददर्शविगतायुषं कवंधोनिहतःपश्चाद्भ्रमतारण्य
मध्यगः रक्षसोमरणंचैववालिनोवैवधस्तथा सुग्रीवेणसहैवादौमित्रत्वंसमजायत . वानराणामधिष्ठातावानरैः
सहसंगतः ततोहनुमताद्दष्टालंकोद्यानेतुजानकी रामसंज्ञापनंतस्यैदत्तकर्ममहत्कृतं समेत्यतत्ररामेणसर्वमस्मै
निवेदितं अथश्रुत्वारामचंद्रोवाक्यंचैवहनूमतःसुग्रीवानुमतेचैवप्रापद्यताहिसत्वरं सगत्वावानरैःसार्द्धंयत्रैषोस्ति
ह्यपांनिधिः दृष्ट्वाब्धिंदुस्तरंरामोविस्मितोभूत्कलिप्रिय आरक्तलोचनोभूत्वालक्ष्मणंचेदमब्रवीत् - सौमित्रेकेन
चीर्णेनतीर्य्येतेवरुणालयः अगाधसलिलैःपूर्णोनक्रैर्मत्स्यैःसमाकुलः उपायंनैवपश्यामियेनायंसुतरोभवेत् ॥ ल
क्ष्मणउवाच आदिदेवस्त्वमेवासिपुराणपुरुषोत्तमः वकदाल्भ्योमुनिश्चात्रवर्त्ततेद्वीपमध्यगः - अस्मात्स्था
नाद्योजनार्द्धेमाश्रमस्तस्यराघव अनेनदृष्टावहवोब्राह्मणोरघुनंदन - तंपृच्छगत्वाराजेंद्रपुराणमृषिपुंगवं- इति

इतिस्कंदपुराणोक्तंफाल्गुनकृष्णाविजयैकादशीव्रतमाहात्म्यम् ॥

फाल्गुनकृष्णद्वादश्यांविशेषकृत्याभावात्तिथिदेवतात्वेनद्वादश्यांहरिपूजनमित्युक्तत्वाद्धरिपूजैवकार्य्या फाल्गुनकृष्णत्रयोदश्यांपक्षप्रदोपंकार्य्यं तच्चसविस्तरंमार्गमासकृत्येप्रपंचितम् ॥ फाल्गुनचतुर्दश्यांशिवरात्रिव्रतम् ॐनमोभगवतेरुद्राय ॥ अथामांतमासेनमाघकृष्णचतुर्दश्यांशिवरात्रिव्रतमुक्तम् ॥ अस्याःस्वरूपंशिवरहस्येमदनरत्ने ॥ तत्प्रभृत्यथदेवर्षेमाघकृष्णचतुर्दशीशिवरात्रिःसमाख्यातासाप्रियात्रिपुरद्विषइति स्कांदेपि माघफाल्गुनयोर्मध्येअसितायाचतुर्दशीशिवरात्रिस्तुसाख्यातासर्वयज्ञोत्तमोत्तमेति ॥ तथाहि ॥ तत्रशिवरात्रिरितितत्पुरुषसमासेनयोगेनप्रवर्त्तमानःशब्दोरूढ्यामाघकृष्णचतुर्दशीरूपेकालीविशेषेनियम्यते शिवरात्रिर्यस्मिन्व्रते इतिवहुव्रीहिसमासेनयोगेप्रवृत्तः शब्दोरूढ्याव्रतविशेषेनियम्यते इति कालतत्त्वविवेचने तुरात्रिशब्दस्यातिथिपरत्वाद्योगेनाशिवव्रतेयोग्यतिथि लाभाद्रूढ्याच ताद्दशेपलाभात् अत्रयोगरूपायंरात्रिशब्दः यस्तुक्वचिद्व्रतेकेवलशिवरात्रिशब्दप्रयोगः सलक्षणयानवरात्रादिशब्दवत् नचमुखेसंभवति लक्षणाश्रयणाश्रवणमनुचितमितिवाच्यं लक्षणाया अभावेव्रतविषयत्वप्रसंगाभावात् अतएवप्राचुर्य्येणशिवरात्रिव्रतशब्दएवव्रतेप्रयुज्यते तिथिविशेपसंज्ञाकरणप्रयोजनंचतेनशब्देनतांनिर्दिश्यतत्रोपवासपूजादिविधानमिति तत्राशिवरात्रिव्रतमेकादशीजयंतीव्रतवत्संयोगपृथक्न्यायेननित्यंकाम्यंचेत्युभयविधं तत्राकरणे प्रत्यवायः स्कंदपुराणेपठ्यते परापरतरंमासिशिवरात्रिः परात्परं नपूजयंतिमुक्तीशंरुद्रंत्रिभुवनेश्वरं जंतुर्जन्मसहस्रेणभ्रमतेनात्रसंशयइति वीप्सापितत्रैवपठिता वर्षेवर्षेमहादेविनरोनारीपतिव्रता शिवरात्रौमहादेवंकामंभक्त्याप्रपूजयेदिति

मान्नरः वचःश्रुत्वालक्ष्मणस्यातिशोभनं जगामराघवोद्रष्टुंकुतोरामतवागमः ॥ रामउवाच ॥ त्वत्प्रसा
दादहंविप्रव ... समीपतः आगतोस्मिससैन्योत्रलंकांजेतुंसराक्षसां भवतश्चानुकूलंत्वात्तीर्यतेऽब्धिर्यथामया
तदुपायंवद मुने प्रसादंकुरुसत्तम एतस्मात्कारणादेवप्रष्टुंत्वामहमागतः ॥ मुनिरुवाच ॥ कथयि
ष्याम्यहंरामव्रतानामुत्तमंव्रतं कृतेनयेनसहसाविजयस्तेभविष्यति लंकांजित्वारिपुंहत्वाव्रतंतत्तुनिशामय
फाल्गुनस्यासितेपक्षेविजयैकादशीभवेत् तस्याव्रतेकृतेरामविजयस्तेभविष्यति निःसंशयंसमुद्रंत्वंतारि
ष्यसिसवानरः विधिस्तुश्रूयतांरामव्रतस्यास्यफलप्रदः दशम्यादिवसेप्राप्तेकुंभमेकंतुकारयेत् हैमंवाराजतं
वापिताम्रंवाप्यथमृण्मयं स्थापयेच्छोभितंकुंभंजलपूर्णंसपल्लवं तस्योपरिन्यसेद्देवंहैमंनारायणंविभुं एका
दशीदिनेप्राप्तेप्रातःस्नानंसमाचरेत् निश्चलंस्थापयेत्कुंभंकंठमाल्यानुशोभितं दाडिमैर्नारिकेलैश्चपूजयेच्च
विशेषतः सप्तधान्यमधस्तस्ययवानुपरिविन्यसेत् गंधैर्धूपैस्तथादीपैर्नैवेद्यैर्विविधैरपि कुंभाग्रेतद्दिनं
रामनीयतेभक्तिभावतः रात्रौजागरणंचैवतस्याग्रेकारयेद्बुधः द्वादश्यादिवसेप्राप्तेमार्तंडस्योदयेतुतं नीत्वा
कुंभंजलेशुभ्रंनद्यांप्रस्रवणेतथातडागेस्थापयित्वावापूजयित्वायथाविधि दद्यात्सदैवतंकुंभं ब्राह्मणेवेदपारगे
कुंभेनसहराजेंद्रमहादानानिदापयेत् अनेनविधिनारामयूथपैःसहसंगतः कुरुव्रतंप्रयत्नेनविजयस्तेभवि
ष्यति इतिश्रुत्वाततोरामोयथोक्तमकरोत्ततः कृतेव्रतेसविजयीबभूवरघुनंदनः प्राप्तासीतातुलंकायांपौ
लस्त्योनिहतोरणे अनेनविधिनापुत्रयेकुर्वंतिनराव्रतं इहलोकेजयस्तेषांपरलोकस्तथाक्षयः एतस्मात्कार
णात्पुत्रकर्तव्यंविजयाव्रतंपठनाच्छ्रवणाच्चैववाजपेयफलंलभेत्

इतिस्कंदपुराणोक्तंफाल्गुनकृष्णाविजयैकादशीव्रतमाहात्म्यम् ॥

फाल्गुनकृष्णद्वादश्यांविशेषकृत्याभावात्तिथिदेवतात्वेनद्वादश्यांहरिपूजनमित्युक्तत्वाद्धरिपूजैवकार्य्या फाल्गुनकृष्णत्रयोदश्यांपक्षप्रदोषंकार्य्यं तच्चसविस्तरंमार्गमासकृत्येप्रपंचितम् ॥ फाल्गुनचतुर्दश्यांशिवरात्रिव्रतम् ॐनमोभगवतेरुद्राय ॥ अथामांतमासेनमाघकृष्णचतुर्दश्यांशिवरात्रिव्रतमुक्तम् ॥ अस्याःस्वरूपंशिवरहस्येमदनरत्ने ॥ तत्प्रभृत्यथदेवर्षेमाघकृष्णचतुर्दशीशिवरात्रिःसमाख्यातासाप्रियात्रिपुरद्विषइति स्कांदेपि माघफाल्गुनयोर्मध्येअसितायाचतुर्दशीशिवरात्रिस्तुसाख्यातासर्वयज्ञोत्तमोत्तमेति ॥ तथाहि ॥ तत्रशिवरात्रिरितितत्पुरुषसमासेनयोगेनप्रवर्त्तमानःशब्दोरूढ्यामाघकृष्णचतुर्दशीरूपेकालीविशेषेनियम्यते शिवरात्रिर्यस्मिन्व्रते इतिबहुव्रीहिसमासेनयोगेप्रवृत्तः शब्दोरूढ्याव्रतविशेषेनियम्यते इति कालतत्त्वविवेचने तुरात्रिशब्दस्यातिथिपरत्वाद्योगेनाशिवव्रतेयोग्यातिथि लाभाद्रूढ्याच तद्विशेषलाभात् अत्रयोगरूपायंरात्रिशब्दः यस्तुक्वचिद्व्रतेकेवलशिवरात्रिशब्दप्रयोगः सलक्षणयानवरात्रादिशब्दवत् नचमुखेसंभवति लक्षणाश्रयणाश्रवणमनुचितमितिवाच्यं लक्षणाया अभावेव्रतविषयत्वप्रसंगाभावात् अतएवप्राचुर्य्येणशिवरात्रिव्रतशब्दएवव्रतेप्रयुज्यते तिथिविशेषसंज्ञाकरणप्रयोजनंचतेनशब्देनतांनिर्दिश्यतत्रोपवासपूजादिविधानमिति तत्रशिवरात्रिव्रतमेकादशीजयंतीव्रतवत्संयोगपृथक्न्यायेननित्यंकाम्यंचेत्युभयविधं तत्राकरणे प्रत्यवायः स्कंदपुराणेपठ्यते परापरतरंमासिशिवरात्रिः परात्परं नपूजयंतिमुक्तीशंरुद्रंत्रिभुवनेश्वरं : जंतुर्जन्मसहस्रेणभ्रमतेनात्रसंशयइति वीप्सापितत्रैवपठिता वर्षेवर्षेमहादेविनरोनारीपतिव्रता शिवरात्रौमहादेवंकामंभक्त्याप्रपूजयेदिति

नित्यनिश्चलशब्दौचतत्रैव माघकृष्णचतुर्दश्यां यःशिवंसंशितव्रतः मुमुक्षुःपूजयेन्नित्यंः सलभेदीप्सितंपद
मिति सागरोयदिवाशुष्येत्क्षीयतेहिमवानपि मेरुमंदरशैलाश्चश्रीशैलोविंध्यएवच चलंत्येतेकदाचिद्वैनिश्चलंहि
शिवव्रतमिति काम्यत्वंचफलश्रवणादवगंतव्यं तथाहस्कंदपुराणे शिवंचपूजयित्वायोजागर्त्तिचचतुर्दशीं मातुःप
योधररसंनापिवेत्सकदाचन यदीच्छेद्वांछितान्भोगान्दिविदेवमनोरमान् आगमोक्तविधिंकृत्वाप्राप्नोतिपरमंपदं
ममभक्तस्तुयोदेविशिवरात्रिमुपोष्यच गणपत्वमयंदिव्यमक्षयंशिवशासनमिति सर्वान्भोगान्सभुक्त्वातुमृतोभू
योनजायतइति काम्यव्रतस्येशासनसंहितायांवर्षसंख्यापठ्यते एवमेतद्व्रतंकुर्य्यात्प्रतिसंवत्सरंव्रती द्वाद
शाब्दिकमेतत्स्याच्चतुर्दशाब्दिकंतथा सर्वान्कामानवाप्नोतिप्रेत्यचेहचमानवइति अत्रोपवासशिवपूजा जागर
णानित्रीण्यपिसमुदितानि प्रधानकर्माणि अधिकारबोधकेषुनागरखंडादिवाक्येषुत्रयाणामपिफलसंबंधश्रवणा
त् तथाचनागरखंडे उपवासप्रभावेनबलादपिचजागरात् शिवरात्रेस्तथामर्त्योसतस्याचप्रपूजया अक्षयां
ल्लभतेभोगान्शिवसायुज्यमाप्नुयादिति संग्रहेपि स्वयंचलिंगमभ्यर्च्यसोपवासः सजागरः अजानन्नपिनि
ष्पापोनिपादोगणतांगतइति तस्मादुपवासादित्रयाणांसमुदायस्यैवव्रतरूपत्वं अस्यैवोद्वलकालिंगमाभिधीय
ते लुब्धकस्यभद्राश्वजन्मप्राप्तवतोदुर्वाससाहससंवादेपठ्यते कृष्णपक्षेचतुर्दश्यांनकंचन्मृगमाप्तवान् अत्रोपिप्रा
णरक्षार्थंक्षुधासंपीडितोवसदिति उपक्रम्यधनुःकोट्या विल्वपत्राणिमानव पतितानिमहाराजशंभोः शिरसि
भूतले तत्रैवतस्थौराजेंद्रसर्वरात्रमतंद्रितःरात्रिशेषेस्ततोव्याधस्तव्धदृष्टिरनामिषः प्रभातेविमलेजातेकंदमूलैश्च
पारितइति ननुक्वचिदुपवासादित्रयंविधायपुनः पक्षांतररूपेणोपवासव्यतिरक्तंद्वयंपठ्यते अथवाशिवरात्रिंच
प्रजागरैर्नयेदिति नायंदोषः अथवेत्यनुकल्पोयंक्रमेणाशक्तविषयत्वोपपत्तेः यान्यपि अखंडितप्रभावोहि

शिवरात्रिमुपोषयेत् सर्वान्कामानवाप्नोतिशिवेनसहमोदते तथा कश्चित्पुण्यविशेषेणव्रतहीनोपिमानवःजागरंकुरुते तत्रसरुद्रसमतामियात् तथा यःपूजयतिभक्त्येशमनेकफलतांव्रजे दित्यादीनिकेवलोपवासजागरणपूजाविधायकानितान्युपकल्पत्वादशक्तविषयाणि हेमाद्रिमाधवीयमदनरत्नादावप्येवम् ॥ नित्यकाम्यरूपस्यास्यव्रतस्यसर्वाधिकारत्वमीशानसंहितायामुक्तं शिवरात्रिव्रतंनामसर्वपापप्रणाशनं आचांडालमनुष्याणां भुक्तिमुक्तिप्रदायकमिति नृसिंहपरिचर्यायांवैष्णवैरप्येतद्व्रतंकार्यमित्युक्तंसौरोवावैष्णवोवान्योदेवतांतरपूजकः नपूजाफलमाप्नोतिशिवरात्रिबहिर्मुखइतियमवचनात् नतेतत्रगमिष्यंतियेद्विषंतिमहेश्वरमिति शिववि‌द्वेषिणो वैष्णवपदप्राप्तिनिषेधाच्च ॥ अधिकारिनियमाः स्कंदपुराणेदर्शिताः ॥ माघमासेतुकृष्णायाफाल्गुनादौचतुर्दशी साचपुण्यातिथिर्ज्ञेयासर्वपातकनाशिनीति अहिंसासत्यमक्रोधोब्रह्मचर्यंदयाक्षमा शांतात्माक्रोधहीनश्चतपस्विष्वनसूयकः तस्मैदेयमिदंदेविगुरुपादानुगोयदि अन्यथायोददातीदंसतदानरकंव्रजेदिति ॥ इतिव्रतस्वरूपतदुपयोगिनिर्णयः ॥

अथतिथिर्निर्णीयते साचद्विधाशुद्धाविद्धाच तत्रसूर्योदयमारभ्यपुनःसूर्योदयपर्यंताशुद्धा तदन्याविद्धा तत्रशुद्धायांनास्तिसंदेहः विद्धातुप्रदोषनिशीथोभयव्यापिनीग्राह्या प्रदोषवेधोवायुपुराणेदर्शितः॥ त्रयोदश्यस्तगेसूर्येचतसृष्वेवरात्रिषु भूतविद्धातुयातत्रशिवरात्रिव्रतंचरेदिति स्मृत्यंतरेपि ॥ प्रदोषव्यापिनी ग्राह्याशिवरात्रिचतुर्दशी रात्रौजागरणंयस्मात्तस्मात्तांसमुपोषयेदिति ॥ त्रयोदशीदिनास्तांतेप्रदोषेचचतुर्दशी त्रिवर्गप्राप्तयेकार्य्या गृहस्थैःशिवतोषणी माघेचतुर्दशीकृष्णायाभवेद्रजनीमुखे तद्दिनेह्युपवासः स्यात्तिथ्यंतेपारणंभवेत् त्रयोदशीयुताकार्य्याशिवरात्रिचतुर्दशी पारणाहिचतुर्दश्यांप्रशस्तयातिमोक्षविः शिवरात्रिः पराकार्य्या

यदिरात्रौत्रयोदशी-अन्यथातुभवेत्पूर्वापरेमाचेंद्धुजिक्षमा इतिनिशीथेवेदस्तु ॥ ईशानसंहितायां माघकृष्णचतुर्द
श्यामादिदेवोमहेश्वरःशिवलिंगतयोद्भूतः कोटिसूर्यसमप्रभःतत्कालव्यापिनीग्राह्याशिवरात्रिव्रतेतिथि अर्द्धरात्रा
दधश्चोर्द्ध्वंयुक्तायत्रचतुर्दशी तत्तिथावेवकुर्वीतशिवरात्रिव्रतव्रती अर्द्धरात्रादधश्चोर्द्ध्वमुक्तायत्रचतुर्दशी नैवतत्रव्रतंकु
र्य्यादायुरैश्वर्यहानिदइति व्याप्यार्द्धरात्रंयस्यांतुजायतेयाचतुर्दशी तस्यामेवव्रतंकार्य्यंमत्प्रसादार्थिभिर्नरैः
पूर्वेद्युरपरेद्युर्वामहतीस्याच्चतुर्दशी व्याप्तासादृश्यतेयस्यांतस्यांकुर्य्याद्व्रतंनरः लिंगाविर्भावकालेतुव्याप्ताग्राह्याच
तुर्दशी तदूर्द्ध्वाधोन्विताभूतासाकार्याव्रतिभिःसदा ममप्रियकरीह्येषामाघकृष्णचतुर्दशी महानिशान्वितायातुत-
त्रकुर्य्यादिमंव्रतमिति ॥ अतएतस्यव्रतस्यरात्रिप्राधान्यमुक्तंस्कंदपुराणे निशिभ्रमंतिभूतानिशक्तयःशूलभृ
द्यतः अतस्तस्यांचतुर्दश्यांसत्यांतत्पूजनंभवेत् एतस्यार्थः निशिभ्रमंतिचरंतिभूतानिपिशाचादयःशक्तयोदेव्यःशू
लभृत्शंकरः यतोतस्तस्यांचतुर्दश्यांतेपांभूतशक्तिशिवानांपूजनंकार्य्यं नागरखंडे माघमासस्यकृष्णायांचतु
र्दश्यांसुरेश्वर अहयास्यामिभूपृष्ठेरात्रावस्तेदिवाकरे लिंगेषुचसमस्तेषुस्थावरेषुचरेषुच संक्रमिष्यामिसंद
ग्धंवर्षपापविशुद्धये तस्माद्रात्रौहिमेपूजांयःकरिष्यतिमानवाः मंत्रैरेतैःसुरश्रेष्ठविपाप्मासभविष्यति एवंसतीति
पूर्वेद्युरेवपरेद्युरेववायत्रप्रदोषनिशीथो भयव्याप्तिस्तत्रव्रतमाचरणीयं पूर्वेद्युरेवोभयव्याप्तौस्कंदपुराणेपठ्यते त्र
योदशीयदादेविदिनभुक्तिप्रमाणतः जागरेशिवरात्रिःस्यान्निशिपूर्णाचतुर्दशी दिनभुक्तिरत्रास्तसमयः परेद्युरे
वोभयव्याप्तौकामिकेपिपठ्यते निशाद्वयेचतुर्दश्यांपूर्वात्याज्यापराशुभेति तथातत्रैव आदित्यास्तमयेका
लेअस्तिचेद्याचतुर्दशी तद्रात्रिःशिवरात्रिःस्यात्साभवेदुत्तमोत्तमेति दिनद्वयेप्युभयव्याप्तिरनुभयव्याप्तिश्चनसं
भाव्यते यामद्वयवृद्धेः यामद्वयक्षयस्यचाभावात् यदापूर्वेद्युर्निशीथव्याप्तिःपरेद्युःप्रदोषव्याप्तिस्तदापूर्वेद्युरेवो

पवासःकार्यः कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी एताःपूर्वयुताःकार्य्यास्तिथ्यंतेपारणंभवेत् जन्माष्टमीरोहणीचशिवरात्रिस्तथैवच पूर्वविद्धैवकर्त्तव्यातिथ्यंतेपारणंशुभा श्रावणीदुर्गनवमीतथादूर्वाष्टमीचया पूर्वविद्धैवकर्त्तव्यातिथ्यंतेपारणंच्छुना जयंतीशिवरात्रिश्चकार्येभद्राजयान्विते इत्यादिस्कंदपुराणादिवचनैर्जया योगस्याद्दतत्त्वेनतस्यप्राशस्त्यावगतेः माघफाल्गुनयोर्मध्येयास्याच्छिवचतुर्दशी अनंगेनसमायुक्ताकर्त्तव्यासातिथिःसदेतिनागरखंडवचनाच्च महतामपिपापानांदृष्टावैनिष्कृतिःपुरा नदृष्टाकुर्वतांपुंसांकुहूयुक्तांतथाशिवामिति तत्रैवदर्शयुक्तायानिंदाश्रवणात् यदातुपूर्वेद्युर्निशीथादूर्ध्वंप्रवृत्ताचतुर्दशीपरेद्युः क्षयवशान्निशीथादर्वागेव समाप्तापरेद्युरेवोपवासः प्रदोषव्याप्तेरेकस्याःसद्भावात् एतदभिप्रेत्यमाधवीयेस्मर्यते माघासितेभूतदिनंकदाचिदुपैतियोगंयदिपंचदश्या जयाप्रयुक्तांनतुजातुकुर्य्याच्छिवस्यरात्रिंप्रियकृच्छिवस्येति ॥ अत्रत्रयोदश्याप्रकर्षेणयुतामित्युक्तत्वात्पूर्वेद्युस्त्रयोदश्यांबहुरात्रिव्याप्तिप्रतीतिः एतन्माधवमतानुसारेणोक्तं हेमाद्रिमदनरत्नादौतुनिशीथव्याप्त्यानिर्णयः कार्यइत्युक्तं निर्णयामृतेतुप्रदोषव्यापिनीग्राह्येत्युक्तं मयूखे यदाचतुर्दशीपूर्वेद्युर्निशीथेपरेद्युश्चप्रदोषे तदापूर्वेद्युरेव अर्द्धरात्रात्परस्ताच्चेज्जयायोगोयदाभवेत् पूर्वविद्धैवकर्तव्याशिवरात्रिःशिवप्रियेतिमयूखेभिहितं यत्तुएतस्मादेववचनाद्दिनद्वयेपिनिशीथव्याप्तौपूर्वेतिहेमाद्रिमदनौ ॥ इत्यत्र एतस्यवचसउत्तरदिनेनिशीथव्याप्त्यभावेप्युपपत्तेः उत्तरदिनेगतप्रदोषानिशीथव्याप्तौदिवारात्रिव्रतमितिपूर्वोक्तवचसः संकल्पकालस्यचबाधायोगादितितच्चिंत्यं तत्रैतादृशग्रंथानुपलंभात् उत्तरदिनेप्रदोषनिशीथेभयव्याप्तिसत्वोपग्राह्यातिथिनिर्णायकजयायोगसंग्राहकामपीडानिषेधसत्वेनपूर्वविद्धाया एवग्रहीतुंयुक्तत्वाच्च दिवारात्रिव्रतमित्यस्यव्रतांतरचरितार्थत्वेन विशेषवचनप्रकृतव्रतानिर्णायकत्वाच्चसंकल्पस्यचांगत्वेनतत्कालव्या

प्तरुद्भावनार्हत्वाच्च वैष्णवानांत्रयोदशीनिषिद्धा ॥ पाद्मेहरिभक्तिविलासे शिवरात्रिव्रतेभूतंकामविद्धंविवर्ज
येदित्युक्तं तत्रैवपराशरः ॥ माघासितंभूतादिनंहिराजन्नुपैतियोगंयदिपंचदश्या जयाप्रयुक्तंनतुजातुकुर्य्याच्छि
वस्यरात्रिप्रियकृच्छिवस्य ॥ योगउक्तोलैंगाक्षिणा ॥ द्विमुहूर्त्तोभवेद्योगोयोगोमौहूर्त्तिकःस्मृतः अस्यटीका
प्रमाणमाह ॥ माघासितेत्यादि एवंचमाघफाल्गुनयोर्मध्येयास्याच्छिवचतुर्दशी अनंगेनसमायुक्ताकर्तव्यास
र्वदातिथिरितिवचः शिवरात्रिव्यतिरिक्तशिवचतुर्दशीव्रतविषयकं अथवापरदिनेअमायोगाभावविषयंसका
मावैष्णवविषयकंवाज्ञेयं इत्थंच यदाचतुर्दशीक्षयःस्यात्तर्हिवैष्णवानामपिविद्धोपवासः प्रसज्जेतैव अन्यथा
अमावास्यासंयोगव्यवस्थायाअत्रलोपप्रसंगात् अतःसाव्यवस्थावैष्णवजनसंमतास्यादित्युपेक्षा अतएवन्न
सिंहपरिचर्यायांतुदर्शविद्धैवोपोष्येत्युक्तं इयंत्रिस्पृशाचेदतिप्रशस्तातदुक्तं माधवीयपुराणे त्रयोदशीकला
प्येकामध्येचैवचतुर्दशी अंतेचैवसिनीवालीत्रिस्पृश्यांशिवमर्चयेदिति ॥ यथात्रिस्पृशाप्रशस्ता तथावार
विशेषेणयोगविशेषेणापिप्रशस्ताभवति तथाचस्कंदपुराणेपठ्यते माघकृष्णचतुर्दश्यांरविवारोयदाभवेत् सो-
मोवाथभवेद्देविकर्त्तव्यंव्रतमुत्तमं शिवयोगस्ययोगेवैतद्भवेदुत्तमोत्तमं शिवरात्रिव्रतंत्वेतत्तद्भवेदुत्तमोत्तमामिति ॥
इतिग्राह्याशिवरात्रिव्रततिथिनिर्णयः ॥ अथपारणानिर्णयः ॥ यदोत्तरदिनेपूर्वमेवचतुर्दशीसमाप्यते
तथातिथ्यंतेकार्य्यं तथाचस्कंदपुराणे कृष्णाष्टमीत्यक्त्वा एताःपूर्वयुताः कार्य्यातिथ्यंतेपारणंभवेदिति पठितं
यदातुदिवानसमाप्यते तदाचतुर्दशीमध्येपूर्वाह्णेकार्य्यं तदप्युक्तंतत्रैव उपोषणंचतुर्दश्यांचतुर्दश्यांतुपारणम्
कृतैः सुकृतलक्षैश्चलभ्यतेवाथवानवा ब्रह्मास्वयंचतुर्वक्त्रःपंचवक्त्रस्तथाप्यहं वक्ष्येयदिफलंतस्यशक्तोवक्तुंनपा
र्वति ब्रह्मांडोदरमध्येतुयानितीर्थानिसंतिवै संस्नातानिभवंतीहभूतायांपारणेकृते तिथीनामेवसर्वासामुपवास

व्रतादिषु तिथ्यंतेपारणंकुर्य्याद्विनाशिवचतुर्दशीमितिमदनरत्ने कालादर्शेपि सात्वस्तमयपर्यंतव्यापिनीचेत्परेह्नि दिवैवपारणंकुर्य्यात्पारणानैवदोषभागिति केचित्तुशक्तिस्तिथ्यंतेअशक्तिस्तिथिमध्यइत्यूचुः मयूखेतु मध्यकालोमुख्यस्तदंतकालोगौणइत्युक्तं यत्तु निर्णयसिंधौ यामत्रयादर्वाक्चतुर्दशीसमाप्तौतुतदंतेतदूर्ध्वगामिन्यांतुप्रातःस्तिथिमध्यएवेति हेमाद्रिमाधवादयोव्यवस्थामाहुस्तत्र तिथिभांतेचपारणमत्रयोदितयामत्रयोर्ध्वगामिन्यांप्रातरेवहिपारणेत्यादि तच्चिंत्यं तिथिमध्येपारणाविधायकवचनानामेकमूलकल्पनालाघवानुरोधेनएतद्वचनासिद्धार्थानुवादकत्वस्यैवयुक्तत्वात् यदप्युक्तं वयंतुतिथ्यंतेपारणंभवेदितिकृष्णाष्टम्यादिविषयकमितिब्रूमइति तदपिचिंत्यं तिथ्यंतेपारणंभवेदित्यत्रतिथिशब्देनप्रक्रांतसर्वतिथिपरामर्शस्या सिद्धत्वेनसंकोचस्यान्याय्यत्वात् यदपिसाह्यस्तमयपर्यंतव्यापिनीचेत्परेहनीतिमदनरत्नकालादर्शधृतवचनंशिवरात्रिव्रतभिन्नव्रतपरमिति तदपिनप्रकरणबाधापत्तेः तच्छब्दस्यप्रक्रांतशिवरात्रिपरामर्शकत्वेनतद्भिन्नव्रतपरामर्शकत्वानुपपत्तेश्चेति ॥ इतिपारणनिर्णयः शिवरात्रौअवश्यंकर्तव्याशिवपूजातदुपयोगित्वेनप्रासंगिकंकिंचिन्निरूप्यते तत्रादौशिवलिंगमहिमानंदिभविष्यपुराणयोः आयुष्मान्बलवान्श्रीमान्धनवान्पुत्रवान्सुखी वरमिष्टंलभेल्लिंगंपार्थिवंयःसमर्चयेत् मृद्भस्मगोशकृत्पिंडताम्रकांस्यमयंतथा कृत्वालिंगंसकृत्पूज्यवसेत्कल्पायुतंदिवि कामनाविशेषेणलिंगभेदाः देवीपुराणे वार्क्षंवित्तप्रदंलिंगंस्फाटिकंसर्वकामदं नर्मदागिरजंश्रेष्ठमन्यत्रापिहिलिंगवत् कृत्वापूजयाविप्रेंद्रलभ्यस्यसेवोप्सितंफलं अथफलविशेषोहेमाद्रौलक्षणसमुच्चये आयुष्यंहीरजंज्ञेयंरोगहन्मौक्तिकोद्भवं सुखकृत्पुष्परागोत्थंवैडूर्यंशत्रुदर्पहृत् पद्मरागंचलक्ष्मीदमैंद्रनीलंयशःप्रदं

लिंगमारकतंपुष्ट्यैस्फाटिकंसर्वकामदमिति ॥ शिवनारदसंवादे पितृणांमुक्तये पूज्यंलिंगंरजतसंभवं-
कीर्तिकामोर्चयेन्नित्यंलिंगंकांस्यसमुद्भवं पूजयेत्ताम्रजंलिंगंपुष्टिकामोहिमानवः तुष्टिकामस्तुसततंलिंगंपित्त
लसंभवं शत्रुमारणकामस्तुलिंगंलोहमयंसदा तथासीसमयंलिंगमायुःकामोर्चयेत्सदा तथा ब्रह्मस्वपरि
हारार्थंसौवर्णंलिंगमर्चयेत् स्थिरलक्ष्मीप्रदंहैमंराजतंचैवराज्यकृत् प्रजावृद्धिकरंरागंताम्रमायुःप्रवर्द्धनमिति
लिंगे ॥ श्रीप्रदंशार्वलंलिंगंशिलाजंसर्वसिद्धिदमिति कालोत्तरे ॥ गंधपुष्पमयंलिंगंतथान्नादिविनि
र्मितं सर्वकामप्रदंपुंसांलिंगतात्कालिकंस्मृतमिति लक्षणसमुच्चये गांधंसौभाग्यदंपौष्पंभुक्तिमुक्तिप्रदाय
कं प्रभुमानप्रदंशार्ङ्गंसैन्यदंनागदंतजं शालिपिष्टोद्भवंपुष्ट्यैपैष्टिकंधनवर्द्धनं गोधूमंवातरोगघ्नंयमजंबलपु
ष्टिदं रिपुभेदकरंमौद्गंस्त्रीदंस्यान्मापपिष्टजं आन्नमायुःप्रदंज्ञेयंगौडंप्रीतिविवर्द्धनं नानाफलोद्भवंलिंगंनाना
कामप्रदायकं तैलपिष्टकरोत्याग्निसैद्धार्थंभयनाशनं तैलमिश्रितपिष्टोद्भवंलिंगंक्षुधांकरोतीत्यर्थः सुखकृत्वा
वनेयचगोमयंरोगनाशनं गुणदंसैकतंभूरिसौभाग्यायचलावणं उच्चाटनेतुपांशव्यंमौलशत्रुक्षयावहं वंशां
कुरसमुद्भूतंवंशवृद्धिप्रदंभवेत् पुरक्षोभकरंमौरंरामठंचाग्निकारकं मौरंगौग्गुलरामठंहिंगुमयं पूज्यंगंधमयं
लिंगंत्रिकालंमुमुखादहं चक्रेणचदनेनाथकुंकुमेनसुगंधिना चतुःसमेनवाकार्यंलघुनाकेवलेनवा चंद्रःकर्पूरः
लघुरगुरुःचतुस्समलक्षणं गारुडे कस्तूरिकायाद्वौभागौचत्वारश्चंदनस्यच कुंकुमस्यत्रयश्चैवशशिनश्चचतुःस
मइति शिवनारदसंवादे तत्रापिपार्थिवंश्रेष्ठंक्षिप्रसिद्धिप्रदंभवेत् पार्थिवेनतुलिंगेनबहवःसिद्धिमागताः कृते
रत्नमयंलिंगंत्रेतायांहेमसंभवं द्वापरेपारदंश्रेष्ठंपार्थिवंतुकलौयुगे ॥ श्रेष्ठमित्यनुषंगः ततश्चकलावपिनालिंगां
तरनिषेधःअथपार्थिवलिंगेतुसंख्याभेदेनफलविशेषः ॥ नारदउवाच ॥ देवकेनप्रकारेणकर्तव्यंसार्वकामिकं यस्य

पूजनमात्रेणकृतकृत्योभवेन्नरः ॥ शिवउवाच ऋषेसर्वप्रयत्नेनपार्थिवंलिंगमुत्तमं ॥ कर्त्तव्यंहिनृभिर्नित्यंकाम
मुद्दिश्ययत्नतः मल्लिंगंपार्थिवंलक्षंभुक्तिमुक्तिफलप्रदं देशकालवलंज्ञात्वाकुर्य्याल्लिंगंफलप्रदं विद्यार्थीलिंग
साहस्त्रंधनार्थीचतदर्धकं पुत्रार्थीसार्धसाहस्त्रंकन्यार्थीचशतत्रयं वंद्योलिंगायुतंकुर्य्यात्सर्वपापहरंपरं राज्यार्थी
शतसाहस्त्रंकांतार्थीशतपंचकं मोक्षार्थीकोटिगुणितंभूकामश्चसहस्त्रकं रूपार्थीत्रिसहस्त्रंतुतीर्थार्थीद्विसहस्त्रकं सु
हृत्कामः सहस्त्रंतुवस्त्रार्थीशतपंचकं उच्चाटनपरश्चैवसहस्त्रंचयथोक्तवत् स्तंभनेचसहस्त्रंचमारणेचतदर्द्धकं निग
डान्मुक्तिकामस्यसहस्त्रंसार्द्धमीरितं महाराजभयेपंचशतंघोराध्वसंकटे शतद्वयंचडाकिन्यादिभयेपंचशतंपरं दारि
द्र्येपंचसाहस्त्रंतस्यार्धंसर्वकामिकमितिपूर्वोक्तमहासंख्यापूर्वंप्रत्यहंकियल्लिंगसंख्याविधेयेत्यपेक्षायामाह एकं
पापहरंप्रोक्तंद्विलिंगंचार्थसिद्धिदं त्रिलिंगंसर्वकामानांकारणंपरमीरितं मारणेतुचतुर्लिंगंपुत्रकाम्येचपंचकं उत्त
रोत्तरमेवंस्यात्पूर्वोक्तगणनावधीति ॥ अन्यत्रापि ॥ लिंगानामयुतंकृत्वामहाराजभयंहरेत् सहस्त्रमेकंलिंगा
नांव्याधीनांतुभयंहरेत् सहस्त्राणितथापंचानिगडान्मुक्तयेनृणाम् कारागृहविमुक्तार्थमयुतंकारयेद्बुधः डाकिन्या
दिभयेसप्तसहस्त्रंकारयेत्तथा सहस्त्राणांतुपंचाशदपुत्रोपिहिकारयेत् लिंगानामयुतेनैवकन्याकामस्तुकारयेत्
एकलिंगार्चनेनैवअतुलांश्रियमाप्नुयात् लक्षमेकंतुलिंगानां यःकरोतिनरोभुवि शिवएवभवेत्सोपिनात्रकार्या
विचारणेति क्रियासारे ॥ लिंगस्यशिवनाभेस्तुनहिपीठप्रकल्पनं तदाधारशिलैवस्यात्तस्यपीठमितिस्मृतं उत्त
मंमध्यमंहीनमितिलिंगंत्रिधास्मृतं एकैकंत्रिविधातद्वदुत्तमंगुलिमानतः नवाष्टसप्तांगुलिकंलिंगंश्रेष्ठंतथास्मृतं
षट्पंचकंचतुर्मानंमध्यमंत्रिविधंस्मृतं त्रिद्व्येकांगुलिकंलिंगंत्रिविधंतुकनीयकं उत्तमंवुद्बुदाकारंमध्यमंकुक्कुटां
डवत् अधमंगोककुव्वद्यइतिलिंगंत्रिधास्मृतं अक्षादल्पपरीमाणंतल्लिंगंकुत्रचिन्नरः कुर्वीतांगुष्ठतोह्रस्वंनकदाचि

त्समाचरेत् अक्षोशीतिगुंजः गुंजःपचाज्यमापकःतेशोडशाक्षःकर्षौत्रीत्यमरकोशात् तस्मादशीतिगुंजपरिमाण
यास्मृदापार्थिवलिंगंकर्त्तव्यं रुद्राक्षंशिवलिंगंचस्थूलंस्थूलंप्रशस्यते॥ इतिवचनाच्च ॥ सिद्धांतशेखरे अंगुष्ठादिवि
तस्त्यंतंलिंगंगेहेप्रपूजयेत् प्रासादेतुतदूर्द्धंस्यात्पूजनीयंप्रयत्नतइति पाद्मे शालिग्रामशिलालिंगेयःकरोतिममार्च
नं तेनार्चितःकार्त्तिकेयः युगानामेकसप्तति प्रागादिदिगभिमुखानियमःसारसमुच्चये प्रागाननोथतद्दिग्वदनोथ
वेति अन्यत्रापि रात्रावुदङ्मुख कुर्य्याद्देवकार्य्यंसदैवहि शिवार्चनंसदाप्येवंशुचिःकुर्य्यादुदङ्मुखइति वाचस्प
तिमिश्रास्तु प्राक्पश्चिमोदगास्यस्तुप्रातःसायंनिशासुचेतिवचनात्कालभेदेनव्यवस्थामाहुः पारिजातेगृह्यप
रिशिष्टे प्रतिमाःप्राङ्मुखीरुदङ्मुखोयजेत एतच्चास्थिरप्रतिमाविषय अन्यत्रप्राङ्मुखः अन्यत्रचलादावि
तिनिर्णयसिंधौ ॥ अन्यत्रतु चरेलिंगेर्चयेद्देवंपूर्वाभिवदनंबुधः स्थिरलिंगेयथाक्लृप्तासतमेवप्रपूजयेदिति गो
भूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ज्ञेयोनमः शिवायेति मंत्रः सर्वार्थसाधकः सर्वत्राप्यधिकश्चायमोंकाराद्यः
षडक्षरः ॥ नंदिपुराणात्पंचाक्षरेणवापूजनंकार्य्यं लिंगेर्चास्थंडिलेवापिशंकरंविधिपूर्वकं पूजयेतिशेषः ॥
युगदोषंविनिर्जित्यरुद्रलोकेप्रसीदते ॥ पार्थिवंलिंगमधिकृत्यब्राह्मे॥हरोमहेश्वरश्चैवशूलपाणिःपिनाकधृक् पशुप
तिःशिवश्चेतिमहादेवेतिपूजयेत् मृत्तिकाग्रहणेचैवघटनेचप्रतिष्ठितौ आवाहनेचस्नपनेपूजनेचविसर्जनइति॥

अथमंत्रमहोदधिस्थंपार्थिवपूजनाविधानम् ॥

अथपार्थिवलिंगस्यविधानमभिधीयते स्नातोनित्यंविधायादौगत्वाशुद्धांभुवंसुधीः उपरिस्थामथाकृत्यषडर्णेना
भिमंत्रयेत् ॥ आकाशः पृथिवीशेषास्थितोबिंदुसमन्वितः पृथ्वीचचतुर्थ्यंतानमोंतः स्यात्षडक्षरः ततोमृदमु
पादायकृत्वानिःशर्करांततः पात्रेनिदध्यात्संशुद्धप्रत्यहपूजनायतां सहिदेसद्गुरोमंत्रौगणेश्वरकुमारयोः हराद्यां

अमनून्सप्तगृह्णीयाद्योगसिद्धये अथार्चनंशुभेघस्त्रेआरभेतप्रसिद्धये कृत्वानित्यक्रियाःशुद्धोदद्यादर्घ्यंविवस्वते
मृदमादायतोयेनसुधयामंत्रतेनच आसिच्यपिंडयेत्तत्रेष्टमामपात्रेनिधापयेत् तदाकालमनुस्मृत्यकामनामपिहृद्ग
तां लिंगानिपार्थिवानीहपूजयेमुकसंख्यया संकल्पैवंमृदापिंडादादायाल्पांमृदंसुधीः एकादशार्णमनुनाकुर्य्या
द्बालगणेश्वरं मायागणेशभूर्बीजैर्जातोगणपतेःपुटः एकादशोर्णमंत्रोयंस्मृतोबालगणेशितुः वराभयलसत्पाणि
पद्मंबालगणेश्वरं निर्मायस्थापयेत्पीठेलिंगानिरचयेत्ततः हरमंत्रेणगृह्णीयादक्षमानाधिकांमृदं ॥
महेश्वरस्यमंत्रेणलिंगंकुर्यात्तथाशुभं अंगुष्ठमानादधिकंवितस्त्यवधिसुंदरं पार्थिवंरचयेल्लिंगंनन्यूनंनाधिकंततः
शूलपाणेस्तुमंत्रेणलिंगपीठेनिधापयेत् एवमन्यानिकुर्वीतयथासंकल्पमादरात् अवशिष्टमृदाकुर्य्यात्कुमारं
तस्यमन्त्रतः स्थापयेल्लिंगपंक्त्यंतेस्वमंत्रेणार्चयेच्चतं वाग्वर्मकर्णविद्याढ्यश्चरमोमीनकेतनः कुमारा
यनमोंतोयगुहमंत्रोदशाक्षरः मंत्रेणावाहयेद्देवंप्रतिमंत्रापिनाकिनं ततोलिंगस्थितंध्यायेत्सप्रसन्नंमहेश्वरं
दक्षांकस्थगजपतिमुखंप्रामृशन्दक्षदोष्णा वामोरुस्थानगपतितनयांकेगुहंचापरेण इष्टाभीतिवरकरयु
गेधारयत्पिंडकांतिरव्यादस्मान्त्रिभुवनमतोनीलकंठस्त्रिनेत्रः एवंध्यात्वापशुपतेर्मंत्रेणस्थापयेच्छिवं
शिवमंत्रेणगंधादीनर्पयेद्धाहिरेतसे प्रागादिवामावर्तेनादिक्ष्वष्टौपरिपूजयेत् शर्वंभवंरुद्रमुग्रंभीमंपशुपतिं
तथा महादेवमथेशानंक्रमात्क्षित्यादिमूर्तिकान् क्षित्यग्नीजोनिलाकाशयजमानेंदुभास्कराः क्षित्याद
यः स्युः शर्वाद्यास्ततइंद्रादिकान्यजेत् धूपदीपनिवेद्यादिनमस्कारप्रदक्षिणाः जयचकृत्वाविसृजेन्महादेव
स्यमंत्रतः तारान्नंतादिकांडे ताहराद्यामन्त्वोद्रष्टव्यः ॥ प्रतिलिंगेयजेद्देवमखिलानिसहैववा पूजितौनिजमंत्रेण
विसृजेद्गणभूद्गुहौ धनपुत्रादिकामैस्तु शिवोऽर्घ्यःप्रोक्तलक्षणः विद्याकामैश्चितनीयः परशुंहरिणंवरं

ज्ञानमुद्रांदधद्दक्षस्तवटमूलमुपाश्रितः पुंसोर्विरुद्धयोः संधौ कुर्य्याल्लिंगानिसाधकः नदीतीरद्वयानीतमृदाला
निचपूजयेत् तत्रध्येयोहरिहरः शंखपद्मादिशूलभृत् इंद्रनीलशरच्चंद्रभूतिभूषणपुंजवान् दंपत्योरविरोधार्थमर्ध
नारीश्वरः स्मृतः पीयूषपूर्णकलशंदधत्पाशांकुशावपि उच्चाटमारणोद्वेषे ध्यातव्यः पुनरीदृशः कालीहस्तां
बुजालंबः शूलभ्रांतद्विपच्चयः मुंडमालाक्षरुक्कठोरावाविनाहिताखिलः इत्थंतुकामनाभेदाद्ध्यानभेदाःप्रकीर्तिताः
पूजयेत्कार्य्यसिद्ध्यर्थंलक्षावधिसहस्रतः लक्षंपार्थिवलिंगानांपूजनाद्भुक्तिमुक्तिभाक् लक्षंतुमुंडलिंगानांपूजनात्पा
र्थिवोभवेत् यानारीशिवलिंगानिसंपूज्येष्टमवाप्नुयात् भस्मनोगोमयस्यापि वालुकायास्तथाफलं क्रीडतःशि
शुकाभूमौलिंगंकृत्वारजोमयं पूजयंतिविनोदेन तेपि स्युःक्षितिनायकाः प्रातर्गोमयलिंगानिनित्यंयस्त्रीणि
पूजयेत् बृहतीबिल्वयोःपत्रै नैवेद्येगुडमर्पयेत् एवंमासत्रयंकुर्वन्ननल्पंलभतेधनं एकादशैवलिंगानिगोमयो
त्थानिमर्चयेत् प्रातर्मध्याह्नयोः सायंनिशीथेप्रतिवासरं ससर्वाः संपदोयायात्षण्मासानेवमादरात् एकाद
शयजेन्नित्यंशालिपिष्टकृतानियः लिंगानिमासमात्रेणसकल्मषचयंदहेत् स्फाटिकंपूजितंलिंगमेनोनिकरनाश
नं सर्वकामप्रदंपुंसामुदुंबरसमुद्भवं रेवाश्मजंसर्वसिद्धिप्रदंदुःखविनाशनं यथाकथंचिल्लिंगस्यपूजानित्यंकृतेष्ट
दा योर्चयेतिपचुमदोत्थैः पत्रैर्गोमयजंशिवं क्रुद्धमहेश्वरंध्यायन्सपराजयतेरिपून् लिंगंसंपूज्ययन्नित्यंशिवभ
क्तिपरायणः मेरुतुल्योपितस्याशुपापराशिर्लयंव्रजेत् चतुर्दश्यांतथाष्टम्यांपौर्णमास्यांविधुक्षये पयसास्नापि
तोशंभोधरादानफलंलभेत् दोग्ध्रीणांतुगवांलक्षंयोदद्याद्वेदपाठिने पार्थिवंयोर्चयेल्लिंगंतयोर्लिंगार्चकोवरः लिं
गपूजांविधायाग्रेस्तोत्रंवाशतरुद्रियं पूजयेत्तन्मनाभूत्वाशिवेस्वंविनिवेदयेत् यत्संख्याकंयजेल्लिंगंतन्मितंहो
ममाचरेत् आज्यान्वितैस्तिलैरन्नैस्तैर्वापायसेनवा शिवमंत्रेणतस्यांतेब्राह्मणान्भोजयेच्छतं एवंकृतेसमस्ते
ष्टसिद्धिर्भवतिनिश्चितमिति ॥

## इतिमंत्रमहोदधिस्थपार्थिवविधानम्

अथपंचसूत्रीविधानं लिंगवृत्तसममध्यमूर्द्धविस्तीर्णमेवच तदर्द्धंगोमुखंप्राहुःपंचसूत्रामिदंमतं -कालोत्तरे ॥ लिंगमस्तकविस्तारोलिंगोच्छ्रायसमोभवेत् त्रिगुणःपरिणाहःस्यात्ततःपिंडीप्रतिष्ठिता लिंगतुल्यंप्रणालंस्यात्पंचसूत्रस्यलक्षणं पंचसूत्रसमायुक्तंशिवलिंगंसमर्चयेत् भुक्तिदंमुक्तिदंदेविधनारोग्यसुखप्रदं गौतमीतंत्रे लिंगमस्तकविस्तारोलिंगोच्छ्रायसमोमतः परिधिस्तत्त्रिगुणितस्तद्वत्पीठंव्यवस्थितं प्रणालिकातथैवस्यात्पंचसूत्रविनिर्णयः लिंगमस्तकविस्तारंपूजाभागसमंभवेत् नाहंतत्त्रिगुणंकुर्य्यान्नाहवत्पीठविस्मृतिः पूजांशाद्द्विगुणंकुर्य्यादुन्नतंपीठमुत्तमं वृत्तंवाचतुरस्त्रंवामध्येकंठसमन्वितं द्विगुणंलिंगनाहाच्चकंठनाहंसमाचरेत् त्रिमेखलमधश्चोर्द्ध्वंसमंवाथद्विमेखलं लिंगमस्तकविस्तारंषड्भागंविभजेत्ततः मेखलामेकभागेन कुर्य्यात् वातंचतत्समं लिंगदैर्घ्यसमंकुर्य्यात्प्रणालंपीठवाह्यतः विस्तारंतत्सममूलतदर्द्धंचतदग्रतःजलमार्गःप्रकर्त्तव्य स्तस्यमध्येत्रिभागतः कुर्य्यात्पीठार्द्धदैर्घ्यंवाप्रणालंचतथोदितं सर्वेषांतत्रलिंगानांसपीठानांविशेषता लोहादीनांचलिंगानामेवंलक्षणमाचरेत् लिंगनाहसमपीठविस्तृतंविस्तृतस्यसमभागतुंगकं तुंगकार्द्धसमगोमुखांतकंगोमुखांतसमकंठनाहकं शिल्पिशास्त्रेपि लिंगमस्तकविस्तारंलिंगोच्यवत्समंकृत्वा ॥ तत्त्रिगुणवेष्टनाहंलिंगस्थौल्यंकृत्वा तत्समंवृत्तंचतुरस्त्रंवापीठविस्तारं : अथउर्द्धंचकुर्य्यात् ॥ पीठोचतातुलिंगोच्यमतोद्विगुणा पीठमध्यंलिंगाद्द्विगुणंस्थूलं -पीठोच्चतातृतीयांशेनकंठंकृत्वा तस्योर्द्धमधश्चसमंवप्रत्रयंवाकृत्वा लिंगविस्तारषष्ठांशेनपीठोपरिवाह्यमेखलांकृत्वातदंतः संलग्नंतत्समंखातंकृत्वा पीठाद्वहिर्लिंगसमदीर्घ्यंपीठार्द्धदीर्घावामूलदैर्घ्यंसमविस्तारामग्रेतदर्द्धविस्तारांतृतीयांशेतमध्येखातांपीठवत्समेखलांप्रणालिकांकुर्य्यादिति

इतिपंचसूत्रविधानम्

इदंपंचसूत्रीविधानंपार्थिवेनविधानंकुर्य्यात् तदुक्तंपार्थिवेश्वरचिंतामणौ पंचसूत्रविधानंचपार्थिवेनचकारयेत् यथाकथंचिद्विधिनारमणीयंप्रकल्पयेत्-रत्नादिलिंगेप्येवं ॥ तदुक्तंहयशीर्षपंचरात्रे -नकुर्य्याल्लक्षणोद्धारंरत्नजानां चलात्मनां स्वप्रभालक्षणंतेषांस्वर्णजातामपिध्रुव तस्मान्नलक्षणोद्धारंकुर्य्यात्पाषाणलिंगवत् 'अचलानांतैजसानांकाश्चिदिष्येतलक्षण लक्षणंकल्पनीयंतुस्थाप्यालिंगेयथाविधि ' चलालिंगेकुशाग्रेणलक्षणकल्पयेद्गुरुः -मनसाचिंतयेद्वापिलक्षणंलिंगसंस्थितं सोमशंभावपि रत्नजेलक्षणोद्धारोनलोहेनसरिद्भवे लिंगेषुचललोहेपुनदृष्टं क्वचिदागमे स्वरूपलक्षणंतेषांप्रभारत्नेषुनिर्मलेति अन्यत्रसंख्याविशेषेणनिषेधः गृहेलिंगद्वयंनार्घ्यंशालिग्रामद्वयंतथा द्वेचक्रेद्वारिकायाश्चगणेशत्रयमेवच ॥

अथशिवपूजामधिकृत्यकालिकापुराणे कपिलापंचगव्येनकुशवारियुतेनच स्नापयेत्मंत्रपूतेनब्राह्मंस्नानंतदुच्यते ॥ एकाहमपियोलिंगेब्राह्मंस्नानसमाचरेत् विधूयसर्वपापानिरुद्रलोकेमहीयते कपिलापंचगव्येनदधिक्षीरयुतेनच स्नानेशतगुणंपुण्यमितरेभ्योनसंशयः वर्षकोटिसहस्रेणयत्पापंसमुपार्जितं घृतस्नानेनतत्सर्वंदहत्याग्निरिवेंधन कृष्णाष्टम्यांघृतस्नानं कृत्वालिंगेसकृन्नरः कुलैकविंशमुतार्य्यशिवलोकेमहीयते स्नाप्यदग्धासकृल्लिंगंशिवलोकेमहीयते ॥ ब्रह्मपुराणे देवानांप्रतिमायत्रघृताभ्यंगक्षमाभवेत् पलानितस्यैदेयानिश्रद्धयापंचविंशतिः अष्टोत्तरंपलशतंस्नानदंपंचसर्वदा द्वेसहस्रेपलानांतुमहास्नानेतुसंख्यया दातव्यंयेनसर्वासुदिक्षुनिर्य्यातितद्घृतं पंचविंशपलालिंगेअभ्यंगंकारयेदथ - शिवस्यसर्पिषास्नानंप्रोक्तंपलशतेनच तावतैवचक्षीरेणगव्येनैवभवेत्ततः भूयःसार्द्धसहस्रेणपलानामैक्षयेद्वचः रसेनकारयेत्स्नानभक्त्याचोष्णांबुनाततः

शीतांवुनापिद्रवाचवस्त्रपूतेनमंत्रवित् स्नापयेद्भक्तितोभूयोगंधपात्रास्थितेनतु महास्नपनोतरंकौस्तुभेविशेषः॥महा
दीपद्वयदेयंशतमष्टोत्तरंपुनरिति पूजारंभप्रभृतिसततएकोदीप.परोभूयःपूजानंतरंशतमष्टोत्तरंदीपादेयाइतिबोध्य
म्॥ विल्वादौतुस्कांदे ॥ क्षीराद्दशगुणंदध्नाघृतेनैवक्रशोत्तरं - घृताद्दशगुणंक्षौद्रंक्षौद्राच्चैवेक्षुजंतथा वस्त्रयामले
पीतकौशेयवसनंविष्णुप्रीत्यैप्रकीर्त्तितं रक्तंशक्त्यर्कविघ्नानांशिवस्यचसितंप्रियं मलहीनतथाछिद्रंक्षौमंकार्पासमेव
चांते अथचंदनं चंदनागुरुकर्पूरैःश्लक्ष्णपिष्टैःसकुंकुमैः शिवस्यार्चांसमालिप्यकल्पकोटिवसेद्दिवि हेमाद्रौतु
विशेषः विधिनास्नाप्यचानेनततोरोचनयालिपेत् कृष्णागुरुसकर्पूरचंदनागुरुयुक्तया लेपयित्वाततोलिंगस
पीठजघनंशुभं अनुलेपनपरिमाणलैंगे अनुलिंगेचतत्सर्वंपंचविंशफलेनचेति अथपुष्पाणि धत्तूरकैस्तुयोलिं
गं कृष्णैः संपूजयेन्नरःसगोलक्षफलंप्राप्याशिवलोकेमहीयते नीलोत्पलसहस्रस्यमालांवध्वाप्रपूजयेत् अलाभे
तुसहस्राणामर्द्धार्द्धेनैवपूजयेत् उत्पलानामलाभेतुपत्रैश्चश्रीतरोर्यजेत् श्रीतरोर्विल्वस्य विल्वपत्रैरखंडैश्चयोलि
गंपूजयेत्सकृत् सर्वपापविनिर्मुक्तःशिवलोकेमहीयते सर्वकामप्रदंविल्वंदारिद्रस्यविनाशनं विल्वादन्यत्परं
नास्तियेनतुष्यतिशंकरः शुष्काण्यपिचपत्राणिश्रीवृक्षस्यसदैवहीति ॥ पारिजातेक्रियासारे ॥ मध्यमा
नामिकामध्येपुष्पंसंगृह्यपूजयेत् अंगुष्ठतर्जन्यग्राभ्यांनिर्माल्यमपनोदयेत् अपनीतंचनिर्माल्यंचंडेशायनिवेदयेत्
अशून्यमस्तकंलिंगंसदाकुर्वीतपूजकः॥ अथशिवेवर्ज्यपुष्पाणिभविष्यपुराणे ॥ केतकीजातिमुक्तचकुंदोयूथीमदंति
का शिरीषंसर्जवंधूकंकुसुमानिविवर्जयेत् निर्गंधीन्युग्रगंधीनिकुसुमानिविवर्जयेत् गंधहीनमपिग्राह्यंपवित्र-
यत्कुशादिकं प्रासाददीपिकायां -जपावंधूकासिंदूरं तथात्रैसंधिकीशुभे मदंतीकेतकीपुष्पंमालतीपुरजातिचघुसृणं
चाश्वमारंचप्रमादेनापिनार्पयेत् ॥ अथधूपःशिवपुराणे ॥ गुग्गुलंघृतसंयुक्तंशिवेयश्चनिवेदयेत् रुद्रलोकमवाप्नोति

गाणपत्यंचविंदति अथदीपः भविष्यपुराणे घृतदीपप्रदानेनशिवायशतयोजनं विमानंलभतेदिव्यंसूर्यको टिसमप्रभं अथनैवेद्यं तत्परिमाणंहेमाद्रौ दशद्रोणैस्तुनैवेद्यैरष्टद्रोणैरथापिवा शतद्रोणसमंपुण्यमाढ केनविधीयते वित्तहीनस्यमर्त्यस्यतत्रांकाऽर्थ्याविचारणेति गुडखंडघृताक्तानांभक्ष्याणांचनिवेदनैः घृतेनपाचितानांचतेषांशतगुणंफलं अथफलं मातुलिंगफलाद्यानिसुपक्कानिनिवेदयेत् शिवायसत्फलंतस्यतद्भक्ष्याणांनिवेदने अथप्रदक्षिणाः तत्रविशेषउक्तोगृह्यपरिशिष्टे एकांविनायकंकुर्य्याद्द्वेसूर्य्येत्रिणीशंकरे चत्वारिकेशवे दद्यात्सप्ताश्वत्थेप्रदक्षिणाः आदित्यपुराणे प्रदक्षिणत्रयंकुर्य्यात् शिवस्यायतनेनरः अश्वमेधसहस्रस्यफलंप्राप्नोतिमानवः बृहन्नारदीयेतु एकांचंड्यांरवौसप्ततिस्रोदद्याद्विनायके चतस्रःकेशवेदद्याच्छिवेत्वर्द्धप्रदक्षिणं तत्रैव पदांतरैःपदंतस्य करौचलनवर्जितौ स्तुतिर्वाचिहृदिध्यानं चतुरंगंप्रदक्षिणं शिवलिंगेविशेषो लिंगपुराणे सव्यंव्रजेत्ततोऽसव्यं प्रणालंनैवलंघयेत् बृहन्नारदीये शिवप्रदक्षिणीमर्त्यःप्रणालंनैवलंघयेत् वृषंचंडंवृषंचैवसोमसूत्रंपुनर्वृषं चंडंचसोमसूत्रंचपुनश्चंडंपुनर्वृषं ॥ हेमाद्रौप्रतिष्ठाकांडे ॥ प्राच्यां नंदिमहाकालौयाम्येभृंगिविनायकौ वारुणेवृषभस्कंधोदेवीचंडौतथोत्तरे त्रिविक्रम्यांतुऐशान्येचंडस्थापनमुक्तं तथा अपसव्यंयतिः कुर्य्यात्सव्यंतुब्रह्मचारिणः सव्यापसव्यंगृहिणो नित्यशंभोः प्रदक्षिणं तृणैःकाष्ठैस्तथा पर्णैर्दृषद्भिर्वेष्टकादिभिः अंतर्द्धानंपुरःकृत्वासोमसूत्रंनलंघयेत् सोमसूत्रप्रमाणमपि तत्रैव प्रासादविस्तारमात्रं तुभवेदुदीच्यांसूत्राद्बहिर्लंघनतोनदोषः स्यादोषआभ्यंतरलंघनेन सोमस्यादिशिमंडपादुदीच्यांदिशिप्रासाद विस्तारसमानंसोमसूत्रंपरित्यज्यबहिःप्रदक्षिणेनदोषइत्यर्थः ॥ विशेषांतरमुक्तं तत्रैव सोमसूत्रद्वयंयत्रयत्रवाविष्णुमंदिरम् अपसव्यंनकुर्वीतकुर्वीतैवप्रदक्षिणमिति ॥ अथनमस्कारः ॥ जानुभ्यांचैवपाणिभ्यांशिरसाच

विचक्षणः कृत्वाप्रणामंसर्वेशेसर्वान्कामानवाप्नुयात् अश्वमेधादिसर्वक्रतुफलंभवतीति भविष्योत्तरे । अथशिवागारेनिषिद्धवाद्यंयोनितंत्रे शिवागारेचझल्लकंसूर्यागारेचशंखकं दुर्गागारेवंशवाद्यंमधुरींचनवादयेत् ॥ अथनिर्माल्यलंघने निषेधान्नृसिंहपुराणे शांतरथंप्रतिनारदः ॥ अद्यप्रभृतिनिर्माल्यंलंघयंतिमहामते नरसिंहस्यदेवस्यतथान्येषांदिवौकसां पच्यंतेनरकेघोरेयावदाभूतसंप्लवम् ॥ भविष्यपुराणेपि ॥ निर्माल्यलंघनकरस्तामिस्रंनरकंव्रजेदिति ॥ अथनिर्माल्यप्रतिपत्तिः ॥ रुद्रांगलग्नमग्नौतुदहेत्सर्वंचतत्क्षणात् वैष्णवंस्नानकेभ्यश्चभस्मांगेभ्यश्चशांभवमिति यानितुस्कांदे शिवनिर्माल्यभोक्तारः शिवनिर्माल्यलंघकाः शिवनिर्माल्यदातारःस्पर्शस्तेषामपुण्यकृत् स्पृष्ट्वारुद्रस्यनिर्माल्यंसवासाआप्लुतः शुचिरिति नैवेद्यंमेनरोभुक्त्वाशुद्ध्यैचांद्रायणंचरेदिति॥कालिकापुराणे॥अग्राह्यंशिवनैवेद्यंपत्रंपुष्पंफलंजलं शालिग्रामशिलास्पर्शात्सर्वंयातिपवित्रतामितिपरिशिष्टे दत्त्वानैवेद्यवस्त्रादिनाददीतकदाचनत्यक्तंयच्छिवमुद्दिश्यतदादानेनतत्फलमिति भविष्येचशिवनिर्माल्यधारणनिषेधवचनानि निर्माल्यंयोहिमद्भक्त्याशिरसाधारयिष्यति अशुचिर्भिन्नमर्यादोनरःपापसमन्वितःनरकेपच्यतेघोरेतिर्यग्योनौचसंवसेत् ब्रह्महापिशुचिर्भूत्वानिर्माल्यंयस्तुधारयेत् तस्यपापंमहच्छीघ्रंनाशयिष्येमहाव्रत ॥ इतिस्कंदपुराणाशुचिनानतद्ग्राह्यंकिंतुशुचिनास्नानादिनाशुचिनेत्येवंपराणीतिस्मार्ताः अपनीतंतन्नग्राह्यमितिश्रीदत्तः शिवदीक्षारहितैर्ज्योतिर्लिंगातिरिक्तेवानग्राह्यमिति शैवाः स्कांदे ॥ अनर्हंममनैवेद्यंपत्रंपुष्पंफलंजलं शालिग्रामशिलासंगात्सर्वंयातिपवित्रतामित्युक्तत्वात् पंचायतनपूजायांसालिग्रामस्थापितत्रसत्यान्नैवेद्यादावदोषइतिसूचितम् तथा नैवेद्यंमेनरोभुक्त्वाशुद्ध्यैचांद्रायणंचरेदिति एतदपवादःशिवनारदसंवादे ॥ बाणलिंगेस्वयंभूतेचंद्रकांतेहृदिस्थिते चांद्रायणसमंज्ञेयंशंभोर्नैवेद्यभक्षणमिति ॥ तथाचकाशीखंडे ॥

जलस्यधारणमूर्द्धनिविश्वेशस्नानजन्मनः ॥ इत्युपक्रम्य ॥ स्नापयित्वाविधानेनयोलिंगस्नपनोदिक त्रिःपि
वेत्त्रिविधंपापतस्येहाशुविनश्यति ॥ लिंगस्नपनवाग्भिर्य कुर्यान्मूर्द्ध्न्यभिषेचन गंगास्नानफलतस्यजायतेत्र
विपाप्मनइति अन्नभक्षणप्रतिप्रसवःशिवदीक्षाविषय ज्योतिर्लिंगाविनालिंगयःपूजयतिसत्तमः तस्यनैवेद्य
निर्माल्यभक्षणात्तप्तकृच्छ्रकं सालिग्रामोद्भवेलिंगेवाणलिंगेस्वयंभुवि रसलिंगेतथापैंचसुरसिद्धप्रतिष्टते हृद
येचंद्रकांतेचस्वर्णरूप्यादिनिर्मिते शिवदीक्षावताभक्तेनेदंभक्ष्यमितीर्यते ॥

॥ इतिभविष्योत्तरेज्योतिर्लिंगेनैवेद्यादिस्वीकारस्तुदीक्षारहितैरपिकार्य्य ज्योतिर्लिंगंविनेत्युक्तवचनात् तथा
पादोदकचनिर्माल्यंभक्तैर्धार्य्यंप्रयत्नतः ॥ इत्यग्निपुराणात् ॥ आदित्यपुराणेच ॥ निर्माल्यधारयेद्भक्त्या
शिरसापार्वतीपतेः राजसूयस्ययज्ञस्यफलंप्राप्नोतिनिश्चित लोभादिनातुनधार्य्यं लोभान्नधारय च्छभोर्नि
र्माल्यंनचभक्षयेत् नस्पृशेदपिपादेनलघयेन्नापिनारद लिंगांतरेषुतीर्थोदकवंदनमात्रंच श्रद्धावच्छिवभक्त
मात्राधिकारिकाः श्रद्धावतांस्वभक्तानामुपसर्गेमहत्यपि नोपायांतरमस्त्येवविनेशचरणोदकं येव्याध
योहिदुःसाध्यावहिरंतःशरीरिणा श्रद्धयैवोदकस्पर्शात्तेनश्यंत्येवनान्यथेतिरत्नेश्वरोपाख्यानेस्कांदवचनात् स
र्वैरपिचंडेशंदत्त्वैवधार्य्यमिति क्वचित्तु वाणरावणचंडीशनंदिभृंगिरिटादयः सदाशिवप्रसादोयंसर्वेगृह्णंतुशांभवा
इति क्वचिच्चंडाभावोऽप्युक्तोऽग्निपुराणे वाणलिंगेचलेलोहेसिद्धलिंगेस्वयंभुवि प्रतिमासुचसर्वासुनचंडोधि
कृतोभवेत् ॥ आदित्यपुराणे ॥ लिंगेस्वायंभवेवाणेरत्नतेजससिनिर्मिते सिद्धप्रतिष्ठितलिंगेनचंडोधिकृतो
भवेत् ॥ येषुचंडाधिकारोनास्ति तन्निर्माल्यधारणेनदोषइत्याहुः ॥ अथरुद्राक्षधारणंतन्माहिमाच ॥ शि
खायांहस्तयोःकंठेकर्णयोश्चापियोनरः रुद्राक्षंधारयेद्भक्त्यासशैवलोकमाप्नुयात् एकवक्त्रंतुरुद्राक्षंधारयेद्यामवा

हुना चतुर्दशमुखंचैवशिखायांधारयेद्बुधः ॥ तत्रविशेषः ॥ एकवक्त्रःशिवःसाक्षाद्ब्रह्महत्यांव्यपोहति अव
ध्यत्वंप्रतिस्त्रोतोवन्हिस्तंभंकरोतिच द्विवक्त्रोहरगौरीस्याद्गोवधाघविनाशकृत् त्रिवक्त्रोह्यग्निजन्माचपापराशिं
प्रणाशयेत् चतुर्वक्त्रःस्वयंब्रह्माब्रह्महत्यांव्यपोहति पंचवक्त्रस्तुकालाग्निरगम्यागम्यपापनुत् पड्वक्त्रस्तुगु
होज्ञेयोभ्रूणहत्यांविनाशयेत् सप्तवक्त्रस्त्वनंतःस्यात्स्वर्णस्तेयादिपापहृत् विनायकोऽष्टवक्त्रःस्यात्सर्वानृताविना
शकृत् भैरवोनववक्त्रस्तुशिवसायुज्यकारकः दशवक्त्रःस्मृतोविष्णुर्भूतप्रेतभयापहः एकादशमुखोरुद्रो
नानायज्ञफलप्रदः द्वादशास्यस्तथादित्यःसर्वरोगनिवर्हणः त्रयोदशमुखःकामःसर्वकामफलप्रदः चतुर्दशा
स्यःश्रीकंठोवंशोद्धारकरःपर इति ॥ निश्छिद्राश्चसुपक्वाश्चरुद्राक्षाधारणेस्मृताः पंचामृतंपंचगव्यंस्नानका
लेप्रयोजयेत् रुद्राक्षस्यप्रतिष्ठायांमंत्रंपंचाक्षरंतथा त्र्यंवकादिमंत्रस्तुयथातत्रनियोजयेत् त्र्यंवकंयजामहे०
मामृतात् इति ॥ यद्वा अघोरमंत्रेण अघोरेणापिमंत्रेणरुद्राक्षस्यद्विजोत्तम प्रतिष्ठांविधिवत्कुर्य्यात्ततो
धिकफलंलभेत् ततोयथास्वमंत्रेणधारयेद्भक्तिसंयुतः एकवक्त्रादीनांक्रमेणमंत्राः ओंओंभूंशंनमः ॥ १ ॥
ओंओंनमः ॥ २ ॥ ओंह्रींनमः ॥ ३ ॥ ओंहुंनमः ॥ ४ ॥ ओंहूंनमः ॥ ५ ॥ ओंओंहूंहूंनमः ६ ओंसःहूंनमः ७
ओंहूंनमः ॥ ८ ॥ ओंह्रींनमः ॥ ९ ॥ ओंश्रींनमः ॥ १० ॥ ओंहूंह्रींनमः ॥ ११ ॥ ॥ ओंश्रींनमः ॥ १२ ॥ ओंक्षींक्षौं
नमः ॥ १३ ॥ ओंनमोनमः ॥ १४ रुद्राक्षेदेहसंस्थेतुकुक्कुटोम्रियतेयदि सोपिरुद्रपदंयातिकिंपुनर्मानवोगुरुः क्व
चिन्मालायांविशेषउक्तः ॥ अष्टोत्तरशतैः कार्य्या चतुः पंचाशताथवा सप्तविंशतिमानावाततोहीनाधमामता ॥
तथाचप्रजापतिः ॥ मोक्षार्थीपंचविंशत्याधनार्थीत्रिंशताजपेत् पुष्ट्यर्थीपंचविंशत्यापंचदश्याभिचारिके सप्तविंश
तिरुद्राक्षमालयादेहसंस्थया यत्करोतिनरः पुण्यंसर्वंकोटिगुणंभवेत् योद्दगतिद्विजातिभ्योरुद्राक्षंभुणुषण्मुख

तस्यप्रीतोभवेद्रुद्रःस्वपदंचप्रयच्छति पदार्थादर्शेवोपदेवःरुद्राक्षान्कंठदेशेदशनपरिमितान्मस्तकेविंशतीद्वे षड्षड्
कर्णप्रदेशेकरयुगलकृतेद्वादशद्वादशैव वाह्वोरिंद्रैःकलाभिर्नयनयुगकृतेएकमेकंशिखायां वक्षस्यष्टाधिकंयत्कलय
तिशतकंसःस्वयंनीलकंठ इतिरुद्राक्षधारणम् ॥ अथाशिवरात्रिकृत्यमुच्यते ॥ तत्रप्रातःसंध्यादिकृत्वाधृतत्रिपुंड्र
रुद्राक्षस्ताम्रपात्रंगृहीत्वातिथ्याद्युल्लिख्य ॐमद्याशिवप्रीत्यर्थंशिवरात्रिव्रतंकरिष्ये॥व्रतधारणमंत्रः॥शिवरात्रिव्र
तंह्येतत्करिष्येहंमहाफलं निर्विघ्नमस्तुमेचात्रत्वत्प्रसादाज्जगत्पते चतुर्दश्यांनिराहारोभूत्वाशंभोपरेहनि भोक्ष्येहंभु
क्तिमुक्त्यर्थं शरणंमेभवेश्वर इमौमंत्रौपठित्वाजलमुत्सृजेत् ततोनित्यकृत्यंविधायशिवनामस्मरणेनदिनमतिवाह्य स
ध्याकालात्पूर्वंसंध्यासमयोत्तरंवास्नानंकृत्वा सायंसंध्यांनिर्वर्त्यविभूतिरुद्राक्षमालाधारणंकुर्य्यात् इदंचशिवपूजायां
नित्यं विनाभस्मत्रिपुंड्रेणाविनारुद्राक्षमालया पूजितोपिमहादेवोनस्यात्तस्यफलप्रदः तस्मान्मृदापिकर्त्तव्यंललाटे
तुत्रिपुंड्रकमितिलिंगपुराणवचनात् ततोरात्रौप्रथमप्रहरेशिवायतनंगत्वा शुचिराचांत आसनेप्राङ्मुखउपविश्य
शिवसन्निधौपूजासंकल्पंकुर्य्यात् तद्यथा एवंगुणविशेषणविशिष्टायांपुण्यतिथौ एतद्रूपंकृतसमस्तपातको
पपातक प्रकीर्णकादिकायिकवाचिकमानसज्ञाताज्ञातप्रकाशरहस्यपापस्यक्षयार्थं पुत्रधनदीर्घायुः प्रभृति
सकलकामावाप्त्यर्थं शिवरात्र्यांशिवपूजनंकरिष्यइतिसंकल्प्य अपसर्पंत्वितिसर्षपान्विकीर्य्य सोमादिसा
क्षिदेवतामंत्रंपठित्वासामान्यार्घ्यंसंस्थाप्यभूतशुद्धिंकृत्वाप्राणप्रतिष्ठोत्तरंमातृकान्यासंचकृत्वा श्रीकंठादिमातृ
कान्यासंकुर्यात् ॥ तद्यथा अस्यश्रीकंठादिमातृकान्यासस्यदक्षिणामूर्त्तिऋषिर्गायत्रीछंदः अर्द्धनारीश्वरो
देवता हलोबीजानिस्वराशक्तयः ज्ञातविज्ञानार्थेविनियोगः अंकखगघङ आंह्रांअंगुष्ठाभ्यांनमः ॥
इंचंछंजंझंञं ईंह्रींतर्जनीभ्यांस्वाहा उंटंठंडंढंणंऊंह्रूंमध्यमाभ्यांवषट् एंतंथंदंधंनं ऐंह्रैंअनामिकाभ्यांहुं ओंपंफंबंभंमं

ॐह्रौंकनिष्ठिकाभ्यांवौषट् अंयंरंलंवं शंपंसंहंक्षंह्रः करतलकरपृष्ठाभ्यांवौषट् एवमेवहृदयादिषडंगन्यासंकुर्य्यात्
॥ ततोध्यानम् ॥ वंधूककांचननिभंरुचिराक्षमालांपाशांकुशौवरदांनिजवाहुदंडैः विभ्राणमिंदुशकलाभरणं
त्रिनेत्रमर्द्धांविकेशमनिशंवपुराश्रयामि ॥ २ ॥ दक्षाधःकरमारभ्यवामधःकरपर्यंतमायुधध्यानंकृत्वा ततोन्यासं
कुर्य्यात् ॐह्रौंअंश्रीकंठपूर्णोदरीभ्यांनमः इतिमस्तके ॥१ ॥ ॐह्रौंआंअनंतेशविरजाभ्यांनमइतिआननवृत्ते
॥ १ ॥ ॐइंसूक्ष्मेशशाल्मलीभ्यांनमइतिदक्षिणनेत्रे ॥ ३ ॥ ॐह्रौंईंत्रिमूर्तिलोलाक्षीभ्यांनमइतिवामनेत्रे ॥ ४ ॥
ॐह्रौंउंअमरेशवर्तुलाक्षीभ्यांनमइतिदक्षकर्णे ॥ ५ ॥ ॐह्रौंऊंअर्धीशघोणाभ्यांनम इतिवामकर्णे ॥ ६ ॥ ॐह्रौंऋं
भारभूतीशदीर्घमुखीभ्यांनम इतिदक्षनासापुटे ॥ ७ ॥ ॐह्रौंॠंअतिथीशसुमुखीभ्यांनमइतिवामनासापुटे ॥८ ॥
ॐह्रौंऌंस्थाण्वीशदीर्घजिव्हाभ्यांनम इतिदक्षगंडे ॥ ९ ॥ ॐह्रौंॡंहरेशकुंडोदरीभ्यांनमइतिवामगंडे॥१०॥ ॐह्रौं
एंझिंटीशोर्द्धकेशीभ्यांनमइतिऊर्ध्वोष्ठे ॥११॥ ॐह्रौंऐंमौक्तिकेशविकृतमुखीभ्यांनम इतिअधरोष्ठे ॥१२॥ॐह्रौंओं
सद्योजातज्वालामुखीभ्यांनमइतिऊर्धदंतपंक्तौ ॥१३॥ॐह्रौंऔंअनुग्रहेशोल्कामुखीभ्यांनमइतिअधोदंतपंक्तौ ॥१४
ॐह्रौंअंअक्रूरेशश्रीमुखीभ्यांनम इतिशिरसि॥१५॥ॐह्रौंअः महासैन्येशविद्यामुखीभ्यांनमइतिमुखमध्ये ॥ १६
ॐह्रौंकंक्रोधीशमहाकालीभ्यांनमइतिदक्षस्कंधे ॥१७॥ ॐह्रौंखंचंडीशसरस्वतीभ्यांनमइतिदक्षकूर्परे॥१८॥ॐह्रौं
गंपंचांतकेशगौरीभ्यांनमंइतिदक्षमणिवंधे ॥ १९ ॥ ॐह्रौंघंशिवोत्तमेशत्रैलोक्यविजयाभ्यांनमइतिदक्षकरांगुलि
मूले ॥२०॥ ॐह्रौंङं-एकरुद्रेशमंत्रशक्तिभ्यांनमइतिदक्षकरांगुल्यग्रेषु ॥२१॥ ॐह्रौंचंकूर्मेशात्मशक्तिभ्यांनम इति
वामस्कंधे ॥२२॥ ॐह्रौंछंएकनेत्रेशभूतमैत्रिकाभ्यांनमइतिवामकूर्परे ॥२३॥ ॐह्रौंजंचतुराननेशलंवोदरीभ्यांनम
इतिवाममणिवंधे ॥२४॥ ॐह्रौंझंअजेशविद्रावणीभ्यांनम इतिवामकरांगुल्यग्रे ॥२५॥ ॐह्रौंटंसोमेशखेचरीभ्यां

नमइतिदक्षोरुमूले ॥२६॥ ॐह्रौंठंलांगलीशमंजरीभ्यांनमइतिदक्षजानुनि॥२७॥ ॐह्रौंडंवाहुमूलेषु ॥३०॥ॐह्रौं
ढंउमाकांतेशवृक्षोदरीभ्यांनमइतिदक्षपादांगुल्यग्रेषु ॥ ३१॥ ॐह्रौंतंआषाढीशपूतनाभ्यांनमोवामोरुमूले ॥३२
ॐह्रौंथंचंडीशभद्रकालीभ्यांनमइतिवामजानुनि॥३३॥ॐह्रौंदंअत्रीशयोगिनीभ्यांनमइतिवामगुल्फे॥३४॥ॐह्रौंधं
मीनेशशंखिनीभ्यांनमोवामपादांगुलिमूलेषु ॥ ३५ ॥ ॐह्रौंनंमायेशतर्जनीभ्यांनमइतिवामपादांगुल्यग्रेषु
॥ ३६ ॥ ॐह्रौंपंलोहितेशकालरात्रिभ्यांनमइतिदक्षकुक्षौ ॥ ३७ ॥ ॐह्रौंफंशिखीशकुंडलिनीभ्यांनमइ
तिवामकुक्षौ ॥ ३८ ॥ ॐह्रौंवंछागलांडेशकपर्दिनीभ्यांनमइतिपृष्ठे ॥ ३९ ॥ ॐह्रौंभंद्विरंडेशवज्राभ्यांनमइति
नाभौ४०ॐह्रौंमंमहाकालीशसुभुजाभ्यांनमोजठरे॥४१॥ॐह्रौंयंत्वगात्मनेवाणीशसुमुखीभ्यांनमइतिहृदये४२॥
ॐह्रौंरंअसृगात्मनेभुजंगेशरेवतीभ्यांनमइतिदक्षांसे ॥ ४३ ॥ ॐह्रौंलंमांसात्मनेपिनाकीशमाधवीभ्यांनमइति
ककुदि ॥४४॥ ॐह्रौंवंमेदआत्मनेखड्गीशवारुणीभ्यांनमइतिवामांसे ॥४५॥ ॐह्रौंशंअस्थ्यात्मनेविकेशवायवी
भ्यांनम इतिहृदयादिदक्षकराग्रांतं ॥४६॥ ॐह्रौंषंमज्जात्मनेश्वेतशरक्षोविदारणीभ्यांनमइतिदक्षपादाग्रांतं ४७॥
ॐह्रौंसंशुक्रात्मनेभृग्वीशसहजाभ्यांनमइतिवामकराग्रांत ॥ ४८ ॥ ॐह्रौंहंप्राणात्मनेनकुलीशमहालक्ष्मी
भ्यांनमइतिहृदयादिवामपादाग्रांतं ॥ ४९ ॥ ॐह्रौंळंशक्त्यात्मनेशिवेशव्यापिनीभ्यांनमइतिहृदया
यंतं ॥ ५० ॥ ॐह्रौंक्षंपरमात्मनेसंवर्तकेशमायाभ्यांनमइतिहृदयादीशिरोंतं ॥ ५१ ॥ इत्येवं
स्थानेषुन्यसेत् अत्ररुद्राःस्मृतारक्ताधृतशूलकपालकाः शक्तयोरुद्रपीठस्थाःसिंदूरारुणविग्रहाः
कपालाभ्यामलंकृतकरांबुजाः ॥ इतिमूर्तिशक्तीनांध्यानम् ॥ इतिश्रीकंठादिन्यासः ततः
कृत्वा स्वदेहमंडूकादिपरतत्वांतदेवताभ्योनमइत्युच्चार्य ॥ वामादिशक्तिपूजनंकृत्वाशिवपडक्षरादि

मंत्रन्यासंकुर्य्यात् अस्यश्रीशिवपंचाक्षरमंत्रस्यवामदेवऋपिः पंक्तिछंदःसदाशिवोदेवता ऊँवीजं नमःशक्ति
शिवायेतिकीलकं चतुर्विधपुरुपार्थसिद्ध्यर्थेन्यासेविनियोगः शिरसिवामदेवऋषयेनमः मुखे पंक्तिछंदसेनमः हृदि
सदाशिवदेवतायैनमः ऊँवीजायनमोगुह्ये नमःशक्तये नमःपादयोः शिवायकीलकायनमोनाभौ न्यासेविनि
योगः इतिसर्वांगेव्यापकंकुर्य्यात् ऊँहृदयायनमःनंशिरसेस्वाहा मंशिखायैवषट् शिंकवचायहुं वांनेत्रत्र
यायवौपट् यंअस्त्रायफट् एवंकरन्यासमपिकुर्य्यात् ॥ ऊँतत्पुरुपायनमः तर्जन्योः ऊँमंअघोरायनमः मध्य
मयोः शिंसद्योजातायनमःकनिष्ठिकयोः ऊँवांवामदेवायनमः अनामिकयोः ऊँयंईशानायनमः अंगुष्ठयोः
ऊँनंतत्पुरुपायनमः मुखे ऊँमंअघोरायनमः हृदये ऊँशिंसद्योजातायनमःपादयोः ऊँवांवामदेवायनमोगुह्ये
ऊँयंईशानायनमोमूर्द्धनि ऊँनंतत्पुरुषायप्राग्वक्त्रायनमः ऊँमंअघोरायदक्षिणवक्त्रायनमःदक्षिणकर्णे ऊँशिंसद्यो
जातायपश्चिमवक्त्रायचूडाधः ऊँवांवामदेवायोत्तरवक्त्रायनमः वामकर्णे ऊँयंईशानायोर्द्ध्ववक्त्रायनमः ऊर्ध्वभागे
ऊँसर्वज्ञशक्तिधाम्नेहृदयायनमः नंनित्यतृप्तिशक्तिधाम्नेशिरसेस्वाहा मंअनादिवोधशक्तिधाम्ने शिखायैवषट्
शिंस्वतंत्रधाम्ने कवचायहुं वांनित्यमलुप्तशक्तिधाम्नेनेत्रत्रयायवौषट् यंअनंतशक्तिधाम्ने अस्त्रायफट् ततो
मूलमंत्रेण नमोस्तुस्थाणुभूतायज्योतिर्लिंगामृतात्मने चतुर्मूर्त्तिवपुस्थायभासितांगायशंभवे इत्यनेनव्यापकंकु
र्य्यात् लिंगादिमुद्रादर्शनपूर्वकं ॥ स्वेष्टदेवंस्वाभेदेनध्यात्वा शिरसिमूलमंत्रेणपुष्पांजलिंदत्त्वा पुनर्हृदयक
मलेध्यात्वामानंसपूजांकरिष्ये ॥ इतिसंप्रार्थ्य कृतांजलिपुटोभूत्वाचिंतयेद्धृदिशंकरं ऋणपातकदौर्भाग्यदा
रिद्रविनिवृत्तये अशेषाघविनाशायप्रसीदममशंकर दुःखशोकाग्निसंतप्तसंसारभयपीडनं वहुरोगाकुलंदी
नंपाहिसांवृषवाहन आगच्छदेवदेवेशमहादेवाभयंकरगृहाणसहपार्वत्यातवपूजांमयांकृतां स्वागतंदेवदे

वेशसन्निधौतवशंकर गृहाणसहपार्वत्यायथार्थपरिभाषितामित्युक्त्वा मानसैरुपचारैर्नैवेद्यांतंसंपूज्य यथाशक्तिजपित्वातत्समर्पणंकृत्वा वाह्यपूजार्थमनुज्ञाप्यविशेषार्घ्यस्थापनंकुर्यात् तद्यथा स्ववामाग्रेचतुरवृत्तत्रिकोणात्मकंमंडलंविलिख्य ॐह्रींआधारशक्तयेनमइतिसंपूज्य तत्रत्रिपादिकांसंस्थाप्य मंदशकलात्मनेवह्निमंडलायइतिसंपूज्य वृत्ताकारेणवह्निदशकलाःपूजयेत् यंधूम्रार्चिषेनमः ॥ वंऊष्मायैनमः ॥ लंज्वालिनीकलायैनमः ॥ शंविस्फुलिंगिन्यैनमः ॥ पंसुश्रियैनमः ॥ संस्वरूपायैनमः ॥ हंकपिलायैनमः ॥ लंहव्यवाहनायैनमः ॥ क्षंकव्यवाहनायैनमः ॥ इतितदुपरिअस्त्रमंत्रप्रक्षालितंपात्रंनिधाय अंद्वादशकलात्मनेसूर्यमंडलायनमः ॥ इतिसंपूज्य ॥ वृत्ताकारेणतत्रसूर्यस्यद्वादशकलाःपूजयेत् ॥ कंभंतापिन्यैनमः ॥ खंबंतापिन्यैनमः ॥ गंफंधूम्रायैनमः ॥ घंपंमरीच्यैनमः ॥ ङंभंज्वालिन्यैनमः ॥ चंधंरुचिन्यैनमः ॥ छंदंसुपुम्णायैनमः ॥ जंथंभोगदायैनमः ॥ झंतंविश्वान्यैनमः ॥ ञंणंवोधिन्यैनमः ॥ ठंडंक्षमायैनमः ॥ क्षंलंहंसंषंशंवंरंयंमंभंवंफंपंनंधंदंथंतंणंढंडंठंटंञंझंजंछंचंङंघंगंखंकंअः अंऔंओंऐंएंॡंऌंॠंऋंऊंउंईंइंआंअं । इतिविलोममातृकां जपन् ॥ मूलेनसुधावुध्याजलेनापूर्य्यजलमध्येडषोडशकलात्मनेचद्रमंडलायनमः इतिसंपूज्य वृत्ताकारेणचद्रस्यषोडशकलाःपूजयेत् ॥ अंअमृतकलायैनमः ॥ आंमानदायैनमः ॥ इंपूषायैनमः ॥ ईंतुष्ट्यैनमः ॥ उंपुष्ट्यैनमः ॥ ऊंमत्यैनमः ॥ ऋंधृत्यैनमः ॥ ॠंशशिन्यैनमः ॥ ऌंचांद्रिकायैनमः ॥ ॡंकान्त्यैनमः ॥ एंज्योत्स्नायैनमः ॥ ऐंश्रियेनमः ॥ ओंप्रीत्यैनमः ॥ औंअंगदायैनमः ॥ अंपूर्णायैनमः ॥ अंःपूर्णामृतायैनमः ॥ अत्रअमृतादिकलानांप्राणप्रतिष्ठांविधाय सूर्यमंडलात्तीर्थमावाह्यमूलमंत्रेणार्घ्यजलेसंयोज्यतीर्थंसंपूज्य मूलमंत्रेणलिंगमुद्रां प्रदर्श्य वमिति धेनुमुद्रयाअमृतीकृत्य तत्रदेवंध्यात्वादेवस्यदेहेषडंगंविधायकवचेनावगुंठ्य नेत्रमंत्रेणसंवीक्ष्य

शंखमुद्रयातत्पात्रमवष्टभ्ययोनिमुद्रयातज्जलंस्पृष्ट्वा मूलेनगंधादिभिःसंपूज्य प्राग्वत्षडंगानिसंपूज्य मूलमं-
त्रेणाष्टवारंजलमभिमंत्र्यमत्स्यमुद्रयाछादयेत् तत्पात्रस्योत्तरेपंक्त्यात्रिकोणमंडलत्रयंकृत्वा तेषुमंडलद्वयेसाधारं
संजलंपात्रद्वयं तृतीयमंडले घृतमधुदधियुक्तकांस्यपात्रंचेतिपात्रत्रयंसंस्थाप्य मूलमंत्रेणपृथक्पृथक्गंधादि-
भिःसंपूज्य तेषुपात्रांतरेणार्घ्यजलंकिंचित्कृत्वामूलमंत्रेणपृथक्पृथग ष्टवारमभिमंत्र्यमत्स्यमुद्रयाच्छादयेत्
ततोर्घ्यपात्रेश्यामाकदूर्वाब्जविष्णुक्रांतादीनिःक्षिप्याचमनपात्रेजातीफललवंगकंकोलचूर्णानिक्षिपेत् अत्रार्घ्या
दिपात्रालाभेप्रक्षालितान् तंडुलान् पुष्पाणिदत्वा ततःपूजाक्रमस्यदक्षिणेत्रिकोणमंडले साधारंसजलंपुनरा
चमनपात्रंनिधाय तत्रार्घ्यपात्रजलंकिंचित्पात्रांतरेणोद्धृत्यदत्वामूलमंत्रेणाभिमंत्र्यसंप्रोक्ष्यस्वदेहंगंधपुष्पैरलंकृ
त्य स्वेष्टदेवतारूपंसंचिंत्यपीठमंडूकादिपरतत्वांत संपूज्य ॐनमोभगवतेसकलगुणात्मशक्तियुताय अनंता
ययोगपीठाय कमलासनायनमः ततस्तत्केसरेपुस्वाग्रादिप्रादक्षिण्येन वामदेव्यैनमः ज्येष्ठायैनमः रौद्र्यैनमः
काल्यैनमः कालविकरण्यैनमः बलायैनमः बलविकरण्यैनमः बलप्रमथिन्यैनमः सर्वभूतमन्यैनमः मध्य
मनोन्मन्यैनमः ॐनमोभगवतेसकलगुणात्मशक्तियुताय अनंताययोगधर्मपीठायनमः ॥ इतिपीठपूजा ॥ अथ
पार्थिवविधिः सर्वाधारधरारूपेत्वद्रूपांमृत्तिकामिमां ग्रहिष्यामिप्रसन्नात्वंलिंगार्थंभवसुव्रते इतिभूमिंसंप्रार्थ्य
उपरितनांमृदमपाकृत्य ततःल्हांपृथिव्यैनमः इतिपृथिवींनमस्कृत्य ततोनिःशर्करामक्षाधिकाम् अशीतिगु
जादिमानंमृदमित्यर्थःहरायनमइतिमंत्रेणसंगृह्य सद्योजातमितिमंत्रंपठित्वा वामदेवायेतिमंत्रेणजलंप्रक्षिप्य
महेश्वरायेतिसंघटनंकुर्यात् अघोरेणइतिलिंगकरणं तत्पुरुषायेतिवाणंकृत्वा ईशानइतिवेदिकायांवाणंसंयोज्य॥
मूलेनशूलपाणयेनमइतिवेधांशिवंसंस्थाप्यहस्तेपुष्पादिगृहीत्वा मूलाधारात्कुंडलिनीमुत्थाप्यमदचक्रादिक्र

मेणहृदयकमलात्स्वेष्टदेवतां तेजोरूपांब्रह्मरंध्रनीत्वा परमामृतांबुधौपरमाशिवशक्त्यात्मकतरोजः प्रवहन्ना
सापुटाध्वनिकरस्थपुष्पांजलौनिः सार्घ्यं पुरः स्थितमूर्तिशिरसिपुष्पांजलिनिःक्षिपेत् आत्मसंस्थमजशुद्धत्वा
महंपरमेश्वर अरण्यामिवहव्याशमूर्तामावाहयाम्यहं आयाहिभगवन्शंभोशर्वत्वंगिरिजापते प्रसन्नोभवदे
वेशनमस्तुभ्यंहिशंकर ततोमूलमुच्चार्यपिनाकधृषेनमः आवाहनमतेवेयंमहिमामूर्तिस्तस्यांसर्वगतांशिव भ
क्तिस्नेहसमाकृष्टंदीपवत् स्थापयाम्यहम् देवेशभक्तिसुलभसर्वाभरणसंयुत यावत्त्वांपूजयिष्यामितावत्त्वंसु
स्थिरोभव ततोमूलंपठित्वाशिवत्वइहतिष्ठतिष्ठ इतिसंस्थाप्य सन्निधापनकुर्यात् अनन्यातवदेवेशमूर्तिश
क्तिरियंप्रभो सान्निध्यकुरुतस्यांतभक्तानुग्रहतत्पर ततोमूलमुच्चार्य्यशिवइहसन्निधोभव ॥ इतिसन्निधानकृत्वा
सन्निरोधनंकुर्यात् । आज्ञयातवदेवेशकृपांभोधेसुखांबुधे आत्मानंदैकतृप्तंत्वांनिरुणध्मिपितुर्गुरो मूलातेशि
वइहसन्निरुध्यस्व ततःसमुखीकरण अज्ञानादुर्मनस्त्वाद्वावैकल्पात्साधनस्यच यदपूर्णंभवेत्कृत्यंतदप्यभि
मुखोभव ततअवगुठनं अभक्तवाङ्मनश्चक्षुश्रोत्रदूरांचितद्युते स्वतेजः पंजरेणाशु वेष्टितोभवसर्वतः मू
लांतेशिवअवगुंठितोभव ततः षडंगेनसकलीकरण मूलेनमहामुद्रयापरमीकरण ततोमूलमंत्रमुच्चार्य
ऐंवदवदवाग्वादिनि ऐंक्लींछिन्नेक्लेदयमहाक्षोभंकुरुक्लींसौंमोक्षंकुरु २ सौं ह्सौमिति दीपिनीमकारादिक्षकारां
तांमातृकामुच्चार्य्य अर्घ्योदकेनदेवंत्रिःप्रोक्ष्य देवस्यहृदयंस्पृशन् प्राणप्रतिष्ठांकुर्य्यात् सायथा ऊँआंह्रीं
क्रौंहंसः शिवस्यजीवइहास्थितिः पुनःआंह्रींक्रौंहंस शिवस्यवाङ्मनश्चक्षुः श्रोत्रघ्राणरसनप्राणाइहागत्यसु
खचिरंतिष्ठंतुस्वाहा इतिप्राणप्रतिष्ठा विश्वेश्वरमहाराजाप्रियेश्वरप्रजापते आसनंदिव्यमीशानदास्येहपरमे
श्वर मूलेनासनं महानंदमहेशानमहदानंददायक पाद्यंगृहाणदेवेशपार्वतीपरमेश्वर मूलेनपाद्यं त्रियंबक

सदाधारवियदादिविधायक अर्घ्यंगृहाणदेवेशशंभोसर्वार्थसाधक मूलेनार्घ्यंदत्त्वा त्रिपुरांतकदीनार्तिनाशिन् श्रीकंठशूलधृक् गृहाणाचमनंचालंपवित्रोदककल्पितं मूलेनाचमनं घृतमध्वाज्यसंयुक्तपारिपूर्णसुखात्मनेमधुपर्कमिदंदेवकल्पयामिप्रसीदमे मूलेनमधुपर्कंदत्त्वा मूलेनपुनराचमनं पंचामृतंसमानीतंपयोदधिघृतंमधु शर्कराजलसंमिश्रंगृहाणपरमेश्वर मूलेनपंचामृतस्नानं त्रिकालकाशिकालश्रीः स्थितिसंहारकारक स्नातंतीर्थैस्तोयैर्गृहाणपरमेश्वर मूलेनस्नानंदत्त्वापुनर्मूलेनाचमनंदद्यात् कालाग्निरुद्रदेवेशवरदाभयदायक वस्त्रंगृहाणसर्वेशदिव्यंगंधोदवासितं ॥ मूलेनश्वेतवस्त्रम् ॥ पशुपतयेनमः ॥ पुनराचमनम् ॥ यज्ञोपवीतंपरमंपवित्रंविधिनिर्मितं नीलकंठोपवीतंवमयादत्तंगृहाणभो मूलपशुपतयेनमः ॥ यज्ञोपवीतं ततोभूषणानि स्वभावसुंदरांगाय नानाशक्त्याश्रयात्मने भूषणानिविचित्राणिकल्पयामिसुरार्चित पशुपतयेनमः भूषणानिसमर्पयामिनमः ततः कनिष्ठांगुष्ठयोगेनगंधमुद्रयागंधंदद्यात् चंदनागुरुकर्पूरतमालजलकुंकुमं उशीरकुष्ठसंयुक्तंशैवंगंधाष्टकंविभो गृहाणदेवदेवेशसमस्तसुरपूजित पशुपतयेनमः गंधसमर्पयामि सदाशिवसदानंदअक्षतान्परमेश्वर गृहाणत्वमुमाकांतदयांकृत्वाममोपरि मूलेनपशुपतयेअक्षतान्समर्पयामि पुष्पाणिचविचित्राणिमालत्यादीनिवैप्रभो हृद्यानिचसुगंधीनिबिल्वपत्रंगृहाणमे मूलपशुपतयेनमः पुष्पाणिसमर्पयामि अमृतोद्भवंश्रीवृक्षंशंकरस्य सदाप्रियं बिल्वपत्रंगृहाणेशभक्तानांसर्वकामद ॥ मूलंपशुपतयेनमः ॥ बिल्वपत्रंसमर्पयामि तर्जन्यंगुष्ठयोगेन पुष्पमुद्रयामूलेनपशुपतयेवौषडित्यनेनपंचपुष्पांजलीन्दत्त्वा सदाशिवमहेशानजगद्वंद्यमहाप्रभो अनुज्ञांदेहिभगवन्परिवारार्चनायमां एवंपूजार्थमनुज्ञाप्यअथमेष्टदलेदिग्दलेषु पूर्वदलमारभ्य ॐनंतत्पुरुषायनमःॐमंअघोरायनमः ॐशिंसद्योजातायनमः ॐवांवामदेवायनमः ॐयंईशानायनमः मध्ये इतिदेवाग्नेदांग्नेयादि

प्रादक्षिण्यन ॐनिवृत्यैनमः ॐप्रतिष्ठायैनमः ॐविद्यायैनमः ॐशांत्यैनमः ॐमध्येशांत्यतीयैनमः ॥
अभीष्टसिद्धिंमेदेहिशरणागतवत्सल भक्त्यासमर्चयेत्तुभ्यंप्रथमावरणार्चनं इतिप्रार्थयेत् ॥ एवमग्रेपिद्वितीया
ष्टदलांतकेसरेपुदेवस्यदक्षाग्रे ॥ ॐहृदयायनमः वामाग्रे नंशिरसेनमः पृष्ठदक्षिणे मंशिखायैनमः वामे
शिंकवचायनमः अग्रे वांनेत्रत्रयायनमः अग्न्यादिक्षुअस्त्रायनमः इति अभीष्टसिद्धिद्वितीयावरणार्चनं द्वितीये
अष्टदलेदेवाग्रदलमारभ्य प्रादक्षिण्येन ॐअनंतायनमः सूक्ष्मायनमः शिवोत्तमायनमः एकनेत्रायनमः
त्रिमूर्त्तायनमः श्रीकंठायनमः शिखंडिनेनम इतिसपूज्यअभीष्टसिद्धिं० तृतीयाष्टदलेदेवस्यवामदलमारभ्यप्रा
दक्षिण्येन ॥ उमायैनमः चंडेश्वरायैनमः नंदिनेनमः महाकालायनमः गणेश्वरायनमः वृषभायनमः भृं
गिणेनमः स्कंदायनम अभीष्टसिद्धिं चतुर्थावरण चतुरस्त्ररेखात्रयांतरालगतवीथ्यां यथास्थितपूर्वदिशमार
भ्य ॥ लंइंद्रायनम अग्नयेनमः यमायनमः निर्ऋतयेनमः वरुणायनमः वायवेनमः सोमायनमः ईशाना
यनमः ईशानेंद्रमध्ये ब्रह्मणे निर्ऋतिवरुणमध्येह्रींअनंतायनमः इतिसपूज्य अभीष्टेति पंचमावरणं द्विती
यवीथ्यां अवज्रायनमः शक्तयेनमः दंडायनमः खड्गायनमः पाशायनमः अंकुशायनमः गदायैनमः
त्रिशूलायनमः पद्मायनमः चक्रायनमः इतिलोकपालायुधानितत्समीपस्थानेषुसपूज्य अभीष्टेतिप्रार्थयेत्
षष्ठावरणं ततःमूलमुच्चार्य सांगायसपरिवारायसवाहनायसशक्तिकायसायुधायपुष्पांजलिंसमर्प्यधूपादिनापू
जयेत् महादेवमृडाधीशजगदीशनिरंजन धूपंगृहाणदेवेशसाज्यंगुग्गुलकल्पित वनस्पतिरसोइतिपठित्वामूले
नधूपमुद्रयाधूपंदद्यात् तर्जन्यंगुष्ठयोगेनधूपमुद्रा हिरण्यवाहोसेनानीईशानीशायतेप्रभो दीपंगृहाणकर्पूरकापिला
ज्यात्रिवार्त्तिकं आज्यंत्रिवर्त्तिसंयुक्तमितिदीपं मध्यमांगुष्ठयोगेनदीपमुद्रया अज्ञानामापिसर्वेषांपतेदीनार्त्तिनाशक

षड्रसैश्चसमायुक्तंगृहाणान्नंनिवेदितं नैवेद्यंगृह्यतांदेवेतिपठित्वाऽमृतोपस्तरणमसि प्राणाय स्वाहेत्याद्युक्ता ॥ नमस्तेदेवदेवेश सर्वतृप्तिकरंवरं अन्ननिवेदितंशुद्धं प्रकातिस्थंसुशीतलं परमानंदसंपूर्णं गृहाणजलमुत्तम मित्यनेनमध्येपानीयंदत्त्वा ब्रह्मेंद्राद्यैरितिचपठित्वा ब्रह्मेंद्राद्यैः सदसमाभितःसोपाविष्टैःसमंता द्गौर्य्यासिंजद्व लयकरयासादरंवीज्यमानःनर्मक्रीडाप्रहसनपरेहासयन्पंक्तिभोक्तृन्भुंक्तेपात्रेकनकघटितेषड्रसान्श्रीमहेशःयथा शक्ति जपित्वोत्तरापोशानंचदत्त्वानैवेद्यशेषंनिर्माल्यभोजिनेचंडेश्वरायसमर्प्यसुगंधिचंदनेन करोद्वर्तनंकारयित्वामू लेनाचमनंचदत्त्वा राजाधिराजदेवेशनिराकारानिरास्पद फलंगृहाणदेवेशनारिकेलादिकंशुचेत्यनेनफलंदद्यात् इदंफलमितिमूलेनच शाश्वतश्रीमयानंदमदनांतकधूर्जटे गृहाणपूगतांबूलचूर्णंचैवसखादिरं पूगीफलमितिमूलेनतां बूलंदद्यात् तांबूलमुखवासावितिकौस्तुभे तल्लक्षणंहेमाद्रौरत्नकोशे महापिप्पलपत्राणिक्रमुकस्यफलानिच ना रिकेलफलोपेतंमातुलुंगसमायुतं एलाकर्पूरकंकोलैर्मुखवासंप्रचक्षते एतेषामप्यलाभेतुतद्द्रव्यंस्मरेद्बुध इति हिरण्यगर्भस्थमितिदक्षिणांदद्यात् ततःपुष्पांजलिंदद्यात् हरविश्वाखिलाधारनिराधारनिराश्रय पुष्पांज लिंशिवंशंभोगृहाणवरदायकेति पुष्पांजलिंदत्त्वानीराजनंकुर्य्यात् तत्र विशेषोहेमाद्रौ चंद्रादित्यौचधरणी विद्युदग्निस्तथैवच सर्वेषांज्योतिषांज्योतिरार्त्तिक्यंप्रतिगृह्यतां शालिपिष्टोद्भवैःशुद्धैर्घृतपूर्णैः समुज्वलैःततो नीराजनंदीपैःषड्विंशत्यानुकारयेत् सर्षपैर्दधिसंयुक्तैर्दूर्वागोरोचनादिभिः शांतिकुंभततःपद्ममष्टपत्रंसक र्णिकं ध्यात्वानिवेदयेन्मूर्ध्निर्लिंगस्यकुसुमैःसह ततोवस्त्रयुग्मचामरदर्पणादीन्यर्पयेत् ततःप्रदक्षिणंकृत्वा साष्टांगंप्रणमेत् मृडानीनाथमेसर्वानपराधाननेकधा क्षमस्वाभिप्रणामंतेकरोम्यष्टांगसंभवमितिनमस्कारं कृत्वा ईश्वरवेद्याश्चाष्टदिक्ष्वाग्नेय्यांतमष्टमूर्त्तिपूजनंकुर्य्यात् तथाचभविष्ये मूर्त्तयोष्टौशिवस्यैतापूर्वादिक्रम

येगताःआग्नेयांताःप्रपूज्यास्तुवेधांलिंगेशिवयजेदिति अष्टमूर्त्तिपूजनतुप्राचीमग्रतःशंभोरितिरुद्रयामले देवा
ग्रेस्वस्ववाप्यग्रेप्राचीप्रोक्तागुरूत्तमैरित्यागमिकांप्राचीमारभ्य प्राच्येशान्यादिक्रमेणाग्नेयी वामावर्त्तेनकुर्यो
तच्चेत्थं नम शिवायेतिमंत्रेणपूर्वेलिंगेशिवसंपूज्य ततोवामावर्त्तेन अष्टौमूर्त्तीःपूजयेदिति कालतत्त्ववि
वेचनप्रभृतयः ॥ ॥ वस्तुतस्तुरुद्रयामलीयपदार्थादर्शादिमहानिबंधेष्वदर्शनान्निर्मूलमेव मत्रमहो
दधौतुमुखेपुष्पांजलिदानोत्तरंआवरणपूजनादर्वागष्टमूर्त्तिपूजनतद्यथा ॐशर्वायक्षितिमूर्त्तयेनम ॐभवायजलमूर्त्त
येनमः रुद्रायअग्निमूर्त्तयेनमः उग्रायवायुमूर्त्तयेनमः भीमायआकाशमूर्त्तयेनमः पशुपतयेयजमानमूर्त्तयेनमः
महादेवायसोममूर्त्तयेनमः ईशानायसूर्यमूर्त्तयेनमः मध्येशिवायनमः॥ ॥ चंदनादिपंचोपचारैःसंपूज्य
यथाशक्तिजप्त्वास्तोत्रैः स्तुत्वानमस्कृत्य ॥ प्रथमप्रहरार्घ्यंदद्यात् ॥ शिवरात्रिव्रतंदेवतवपूजापरायण करो
मिविधिवद्दत्तंगृहाणार्घ्यंमहेश्वर ॥ अथप्रार्थना नमोयज्ञजगन्नाथनमस्त्रिभुवनेश्वर पूजांगृहाणमद्दत्तांमहेशप्रथमे
पदइति ॥ ततःपुष्पांजलिदत्त्वातन्मंत्रजपेनतत्कथाश्रवणादिनाजागरणंकुर्यात् ततोद्वितीयप्रहरे पूर्ववत्पूज
नंकृत्वाद्वितीयप्रहरार्घ्यंदद्यात् ॥ नम शिवायशांतायसर्वपापहरायच शिवरात्रौददाम्यर्घ्यंप्रसीदउमयासह
ततःप्रार्थना ॥ नमोऽव्यक्तायसूक्ष्मायनमस्तेत्रिपुरांतक पूजांगृहाणदेवेशयथाशक्त्योपपादितामिति ततस्तृ
तीयप्रहरपूजनं यथावत्कृत्वातृतीयप्रहरार्घ्यंदद्यात् दु स्वदारिद्रशोकेनदग्धोहंपार्वतीपते शिवरात्रौददाम्य
र्घ्यमुमाकांतगृहाणमे ततःप्रार्थना बद्धोहंविविधैःपाशैः संसारभयबंधनैः पतितंमोहजालेमांत्वंसमुद्धरशंकर
ततश्चतुर्थप्रहरपूजनं यथाविधिकृत्वाचतुर्थप्रहरार्घ्यंदद्यात् ॥ मयाकृतान्यनेकानिपापानिहरशंकर शिवरात्रौ
ददाम्यर्घ्यमुमाकांतगृहाणमे ॥ तत प्रार्थना किनजानासिमांबद्धंतावद्भक्तिप्रयच्छमे स्वपादाग्रतलेदेवदास्यं

देहजगत्पते ॥ इतिचतुर्थप्रहरपूजांसमर्प्य ॥ पुनः प्रार्थयेत् अविघ्नेनव्रतंदेवत्वत्प्रसादात्समर्पितं क्षम
स्वजगतांनाथत्रैलोक्याधिपतेहर यन्मयाद्यकृतंपुण्यंतद्रुद्रस्यसमर्पितं । त्वत्प्रसादान्महादेवव्रतमद्यसमर्पित
प्रसन्नोभवमेश्रीमन्सद्गतिंप्रतियातुसत् तदालोकनमात्रेणपवित्रोस्मिनसंशयइतिप्रसादपुष्पपत्रादिगृहीत्वात्र
तसाद्गुण्यार्थंगोदानंकृत्वापरदिनेयथाशक्तिब्राह्मणान्भोजयित्वा संसारेंधनदग्धस्यव्रतेनानेनशंकर प्रसादसुमु
खोभूत्वाज्ञानदृष्टिप्रदोभवेतिसंप्रार्थ्य बंधुभिःसहपारणंकुर्यादिति कालतत्त्वविवेचनेतु ओंहौंईशानायनम
इतिप्रथमप्रहरे ॥ दुग्धेनस्नपनंपूजनंच ॥ अर्घ्यादिकचपूर्ववदेव द्वितीयप्रहरे ओंहौंअघोरायनम इतिद
ध्नास्नपनं तृतीये ओंवामदेवायनमः इतिघृतेनस्नपनं चतुर्थे ओंहौंसद्योजातायनम इतिमधुनास्नपनमित्यु
क्तं नृसिंहपरिचर्यायांतु शतरुद्रियंपचार्य्यावा पयसासर्पिषामधुनारसेनेक्षुरसेनोदकेनवासंततधारयाशिवं
संस्नाप्यप्राणायामं ॥ शिवायनमः ॥ इतिगंधपुष्पतिलतंडुलमाषगोधूमादिभिर्महापूजांकृत्वापंचब्रह्ममंत्रैःओंस
द्योजातायनमः पश्चिमे उत्तरेवामदेवायनमः पूर्वेतत्पुरुषायनमः दक्षिणेअघोरायनमः ऊर्द्ध्वमुखे ईशाना
येतिपंचवक्त्राणिपुष्पादिभिः संपूज्यतांबूलादिकंनिवेद्यअर्घ्यंदद्यात् तत्रमंत्रः गौरीवल्लभदेवेशशर्वाद्यशशिशे
खर वर्षपापविशुद्ध्यर्थमर्घ्योमेप्रतिगृह्यतां इत्यर्घ्यंदत्वाजागरणंकुर्य्यात् द्वितीयप्रहरे शंकरायनमः ॥ तृतीयेमहे
श्वरायनमः चतुर्थेरुद्रायनमःएवंसंपूज्य प्रभातेनित्यंकृत्वा शिवमभ्यर्च्य शिवभक्त्याद्विजान्भोज्यपारणंकुर्यादि
तिवार्षिकशिवरात्रिपूजनम् अथवार्षिकशिवयोगयुक्ताशिवरात्रिकथा॥श्रीशिवउवाच आसीद्राजाविदेहायांप्रजा
पालनतत्परः सुधर्मानामविख्यातःसदापरमधार्मिकःपृथिव्यासर्वराजानोवर्त्तंते वशवर्त्तिनःतस्यराज्येनवैकाश्चि
द्व्याधितोदुःखितोभवत् एवंगुणविशिष्टस्यतस्यराज्ञः प्रियाशुभा भार्य्यातिलोत्तमानाम्नासर्वैःसमुदितागुणैःरूपला

वण्यसंयुक्तास्थिरयौवनसंस्थिताहंसकोकिलसंभाष्यामत्तमातंगगामिनी यथारूपातथाशीलातस्यभार्य्यामहीप
तेःभर्त्तुःप्रियहितेयुक्ताभर्त्तुश्चैवहिवल्लभा याश्चतस्यापराभार्य्याःशतसाहस्रसम्मिताः सर्वास्तागुणसंयुक्तादास्य
एवव्यवस्थिताः एवंगच्छतिकालेतुकस्मिंश्चित्सुरसुंदरि अंतःपुरंसधर्मात्माजगामरिपुमर्दनः प्रीतितिलोत्तमा
देवीसर्वैःसमुदितागुणैः आगच्छंततोदृष्ट्वाराजानंरिपुमर्दनं ततश्चस्वयमुत्थायददौराज्ञासनंतदा वदंत्येव
तदाराज्ञीप्रियेतिचपुनःपुनः उपविष्टातदाराज्ञःसमीपेवरवर्णिनी सचराजातदाराज्ञाशिवेतिस्वमुदीरितं
श्रुत्वेतिशेषंसंस्मारप्राक्तनंकर्मयत्कृतं तत्याजासौतदास्मृत्वातांबूलंकरसंस्थितं चकारमनसाराजासंकल्पं
शिवपूजने पप्रच्छसातदादेवीकिमिदंत्यागकारणं यदिवक्षासिनोतत्त्वंमरिष्यामितवाग्रतः सोपिराजातदा
देवीमरणेकृतनिश्चयां विज्ञायकथयामासपूर्वजन्मविचेष्टितं श्रूयतामभिधास्यामिसावधानाभवप्रिये अह
मासंपुरावैश्यःस्वधर्मनिरतःशुचिः कालेनगच्छतादेविपूर्वकर्मवशेनच स्वकर्मनिरतस्यापिचौर्येभक्तिरजा
यत निशिनिष्क्रमणंकृत्वाचौर्य्यकर्तुमहंगतः ममवैभ्रममाणस्यअर्द्धरात्रमभूत्तदा मयाहिभ्रमतादृष्टःसमवा
योजनस्यच ॥ जागरणंतुप्रकुर्वाणः शिवस्यायतनेशुभे अंतरंतुसमासाद्यउपविष्टस्ततःक्षणं कस्याश्चि
द्गृहमेधिन्याःकर्णसंस्थंचकुंडलं हृत्वापलायमाणस्तुदृष्टोहंतत्रपालकैः ततस्तुसहिताःसर्वैःखड्गहस्ताधनुर्धराः
तद्भयाद्धिमयातत्रमुखेक्षिप्तंतुकुंडलं ततःक्रुद्धेनचैकेनशिरश्छिन्नंमहासिना ततश्चकर्मणातेनरात्रौजागरणेन
च व्रतेनचकृतेनापि राजा हंसवभूवह ततश्चजातिस्मरणंजातंममातिलोत्तमे चतुर्दशीतिथिज्ञात्वातांबूलंतन्म
योज्झितं एतच्छ्रुत्वाचसादेवीविस्मयंपरमंमहत् उवाचैनंपुनाराज्ञी विस्मयेनसमन्विता यदिमेप्रत्ययं
किंचिदुत्पादयसिभूमिप तदाजीवामिभूपालनान्यथासंप्रतारणां एतच्छ्रुत्वातदाराजाउवाच सुरसुंदरि

एतदेवशिरोमेद्यपश्यैतत्कूपसंस्थितं कालेनकूपःपूर्णोयंमृत्काष्टैस्तृणसंचयैः उत्थायचगतौतत्रदंपतीविस्मयान्वितौ
खातयित्वाततोदेव्यैदर्शयामासतच्छिरःकुंडलंचमुखेदृष्ट्वाविस्मयंपरमंगतौ ततस्तौदंपतीतत्रचक्रतुर्नियमंपरं उप
वासस्यानियमं तथाजागरणस्यच कालेनगच्छतातौतुपुत्रपौत्रसमन्वितौ संपूर्णेचतयोःकालेमरणंसमुपागतौ
शिवरात्रिप्रभावेनदंपतीशिवसन्निधौ शिवरात्रिमिमंदेवियःकरोतिनरोभुवि निर्मुक्तःसर्वपापेभ्योशिवलोकेमहीयते
यइमांशृणुयान्नित्यंशिवरात्रिकथांनरः कृतातेनमहादेविशिवरात्रिर्नसंशयः॥ इतिशिवयोगयुक्तशिवरात्रिव्रतमाहा
त्म्यम् ॥ अथाशक्तविषयेप्युक्तमन्यत्र कुर्वंतिसांवत्सरिकींशिवस्यपूजांसुशक्त्यातुयथाकथंचित् कृत्वाप्रयां
त्येवशिवस्यलोकंव्याधोपियातोह्यघकृत्परंतादिति ॥ ॐनमोभगवतेरुद्राय ॥ अथशिवरात्रिव्रतकथा . हेमाद्रौ
स्कंदपुराणेनागरखंडे अश्वसेनउवाच कलिकालकृतेकिंचिद्व्रतंमेवदषण्मुख स्वल्पायासंमहापुण्यंसर्वपापप्र
णाशनं लक्षायुषःसदामर्त्याब्रह्मन्कृतयुगेपुरा त्रेतायांद्वापरेचापिनतुप्राप्तेकलौयुगे तस्माद्वर्षव्रतंत्यक्त्वाकिंचिदे
काहिकंवदश्वःकार्य्यमद्यकुर्वीतपूर्वाह्णेचापराह्णिकं नहिमृत्युःप्रतीक्षेतकृतंवानचवाकृतं तस्यतद्वचनंश्रुत्वाभ
तृयज्ञउदारधीःअब्रवीत्सुचिरंध्यात्वाज्ञात्वादिव्येनचक्षुषा अस्तिराजन्व्रतंपुण्यंशिवरात्रीतिसंज्ञितं एकाहिकं
महाराजन् सर्वपापप्रणाशनं तस्यांचदीयतेदानंहुतंजप्तंतथैवच सर्वमक्षयतांयातिरात्रिजागरणेकृते अपुत्रोलभते
पुत्रान्निर्द्धनोधनमाप्नुयात् स्वल्पायुर्दीर्घमायुश्चशत्रूणांचैवसंक्षयं यंयंकाममभिध्यायन्व्रतमेतत्समाचरेत् तंतंसमाप्नु
यान्मर्त्योनिष्कामोमोक्षमाप्नुयात् तथावर्षकृतात्पापान्मुच्यतेनात्रसंशयः कपटेनापिचित्तेनयदिकुर्य्यात्प्रजागरं
यानिकान्यत्रलिंगानिस्थावराणिचराणिच तत्रसंक्रमतेदेवस्तुष्टस्तस्यांयतोहरः शिवरात्रिस्ततःख्यातास्तेन
साहरवल्लभा प्रार्थितासासुरैःसर्वैर्लोकानुग्रहकाम्ययाभगवन्कलिकालेस्मिन्सर्वपापसमाश्रिते वर्षपापवि

शुद्ध्यर्थैदिनमेकंक्षितौव्रज । येनत्वांपूजयापूज्यंमर्त्याःशुद्धिमवाप्नुयुः । ततोदत्तंद्रुतंचैषामस्माकमुपतिष्ठतु । तैरु
च्छिष्टैश्चयद्दत्तंतत्तस्यांयतोखिलं कालेकालेनचास्माकंकिंचिन्नैवोपतिष्ठति ॥ श्रद्धयामानवैर्दत्तंप्रभूतमपिशंकर
शिवउवाच माघमासस्यकृष्णायांचतुर्दश्यांसुरेश्वराः अहंयास्यामिभूपृष्ठंरात्रौचैवदिवाकलौ लिंगेषुच
समस्तेषुस्थावरेषुचरेषुच । संवसिष्यामिसंदिग्धं सर्वपापविशुद्धये तस्यांरात्रौहिमेपूजां यःकरिष्यतिमानवः
मंत्रैरेतैःसुरश्रेष्ठ विपाप्मासभविष्यति ॥ मंत्राश्च ॥ ह्रांसद्योजातायनमः ह्रींवामदेवाय ह्रूं अघोराय
ह्रैंतत्पुरुषाय ह्रौंईशानायनमः पंचवक्त्राणिसंपूज्य गंधपुष्पानुलेपनैः वस्त्रैर्दीपैश्चनैवेद्यैस्ततोर्घ्यंसंप्रदापये
त् मंत्रेणानेनमद्भक्तो मांध्यात्वामनसिस्थितं गौरीवल्लभदेवेश शर्वाख्यशशिशेखर वर्षपापविशुद्ध्यर्थ
मर्घ्योमेप्रतिगृह्यतां ततःसंपूजयेद्विप्रभोजनाच्छादनादिभिः दत्त्वाचदक्षिणांतस्मैवित्तशाठ्यविवर्जितः ततोजागरणं
कुर्य्याद्गीतवादित्रनिःस्वनैः धर्माख्यानगताभ्यश्चसलास्यैस्तांडवादिभिः तांडवैरुदितैर्नृत्यैः तांडवोस्त्रीनृ
णांतरे भवेदुद्धतनृत्येचेतिमेदिनीकोशात् एवंकरिष्यतेयोत्रव्रतमेतत्सुरेश्वराः सर्वपापविशुद्ध्यर्थंप्रायश्चित्तंभवि
ष्यति तस्येतिशेषः तच्छ्रुत्वात्रिदशाः सर्वेप्रणम्यशशिशेखरं संप्रहृष्टान्नृपश्रेष्ठस्वानिस्थानानिभेजिरे प्रेष
यामाससद्योध्यंनारदंमुनिसत्तमं प्रबोधनायलोकानांशिवरात्रिकृतेतदा सोपिगत्वाधरापृष्ठेबोधयामाससर्वतः
शिवरात्रेस्तुमाहात्म्यंयदुक्तंशूलपाणिना ततःप्रभृतिसंजाता शिवरात्रिर्धरातले तत्रतेकथयिष्यामिपुरावृत्तंकथां
तरं यद्वृत्तंनैमिपारण्येलुब्धकस्यापिकुत्रचित् तत्रासील्लुब्धकः कश्चिज्जातिमात्रानुकर्मतः व्यसनेनाभिभूतात्मा
परवित्तापहारकः नकदाचित्कृतंतेननदत्तंनजपः कृतः केवलंतुहृतंवित्तंलोकानांछलसंश्रयात् कस्यचित्त्वथकाल
स्यशिवरात्रिः समागता । माघमासेसितपक्षे सर्वपातकनाशिनी तत्रास्त्यायतनंपुण्यंदेवदेवस्यशूलिनः तत्र

जागरणंरात्रौप्रारब्धंवहुभिर्जनैः नारीभिर्नरशार्दूल भूषिताभिः सुभूषणैः अथासौचिंतयामासचौर्य्यचित्तोव्रजा गरः गच्छामियदिकाचित्स्त्रीभूषणैः परिभूषिता निष्क्रांतावाह्यतश्चास्माद्वासादन्यत्रयास्यति ततोगत्वासमादाय भूषणानिव्रजाम्यहं इतिनिश्चित्यमनसागतस्तस्यसमीपतः कार्णकारंसमारुह्यस्थितोगुप्तस्ततोहिंसः वीक्ष्यमा णोदिशः सर्वा नारीनिष्क्रमणोद्भवाः चौर्य्यकर्मप्रवृत्तस्य शीतार्त्तस्याविशेषतः स्वल्पापिनिद्रानोजाताकापिनारी विनिर्गता ॥ तस्याधस्तात्ततोलिंगमनुद्भूतमवस्थितं एतस्मिन्नेवकालेतुप्रोद्गतस्तीक्ष्णदीधितिः असतांचैवचौरा णांकामिनामसुखावहः ततोनराश्चनार्यश्चजग्मुःस्वंस्वंनिवेशनंउपवासपराःशांताःप्रणिपत्यमहेश्वरं सोपि चौरोनिराशश्चक्षुत्क्षामःशीतविह्वलः अवतीर्य्यद्रुमात्तस्माद्धर्म्यार्थंकचिदाश्रितः कालेनमहतासोपिपंचत्वंसमप द्यत जातोजातिस्मरोभूत्वादशार्णाधिपतेःसुतः उपवासप्रभावेनजागरस्यफलादपि शिवरात्रौतथातस्यालिंगस्या पिप्रपूजनात् ततोराज्यंसमासाद्यापितृपैतामहंमहत् कारयामासलिंगस्यप्रासादंतस्यशोभनं वर्षेवर्षेसमाग त्यशिवरात्र्यांप्रजागरात् उपवासपरोभूत्वागीतवादित्रनिःस्वनैः धर्माख्यानकथाभिश्च सामस्तुतिभिरेवच पूर्वोक्तमंत्रैःसंपूज्यअर्घ्यंदत्त्वाविधानतः समर्प्यब्राह्मणान्कामैर्जगामविषयंनिजं कस्यचित्त्वथकालस्याशिवरात्रिः समागता प्रासादेतत्रमुनयःप्राप्ताःशांडिल्यपूर्वकाः शांडिल्योथभरद्वाजोयवक्रीतश्चगालवः पुलस्त्यःपुलहोगा र्ग्य स्तस्यलिंगस्यचाग्रतः पूजयित्वाततोदेवंप्रणिपत्यऋषींश्चतान् उपविष्टस्तुतस्याग्रेअनुज्ञातोद्विजातिभिः ते तुतस्याग्रतश्चक्रुःकथावहुविधान्नृप राजर्षीणामतीतानांब्रह्मर्षीणांविशेषतः अथतस्मिन्कथांतेवैतैःपृष्टोब्रह्मवा दिभिः कौतुकाविष्टचित्तैश्चविस्मयोत्फुल्ललोचनैः राजन्पृच्छामहेसर्वेवयंकौतूहलान्विताः यदिब्रवीपिनःसत्यंदेवता यतनेस्थितः ॥ राजोवाच ॥ यदिज्ञास्यामिविप्रेंद्राः कथयिष्याम्यसंशयं देवस्याग्रेतुसंपूज्यसत्येनात्मानमालभे

॥ ऋषयऊचुः ॥ सुलभानिपरित्यज्यकस्माद्दानान्यनेकशः जागरंकर्तुकामोत्रस्वदेशादुपतिष्ठसि वर्षेवर्षेसदा
प्राप्तेनूनंत्ववेत्सिकारणं रहस्यंयदितेनस्यात्तद्ब्रूहित्वंनराधिप सविलक्ष्यस्थितक्षणंततः प्राहसुदुर्मनाः रहस्यं
परमंह्येतदवाच्यंहिद्विजोत्तमाःतथापिकथयिष्यामिममदेवोयतोग्रतःततःसकथयामासपूर्वदेहसमुद्भवं मलिम्लुचक
रोनूनंवृत्तांतंहिनराधिपः चौर्यभावेनदेवस्यपूजनंजागरस्तथा उपवासंविनान्नेनाशिवरात्रौपुराभवत् जातिस्म
रणसंयुक्तं तेषांसर्वयथातथं कथयामासभूपालोवृत्तांतंपूर्वजन्मनःततस्तेमुनयः सर्वे साधुवादान्पृथग्विधान् व्य
यान्तमस्यराजर्षे सदाशीर्भिः समन्वितः रात्रौजागरणंकृत्वाप्रजग्मुः स्वांस्तदापुमान् सोपिराजासमभ्यर्च्यतं
देवतान्द्विजोत्तमान् जगामस्वपुरंपश्चात्कृत्वारात्रिप्रजागरम्॥सूतउवाच॥शिवरात्रिःसमुत्पन्नाएवंभूमितलेनृप एवं
विधंचमाहात्म्यंतथाग्रेपरिजल्पितं तस्मात्सर्वप्रयत्नेनकार्यासानृपसत्तम कलिकालेविशेषेणयदीच्छेद्गतिमात्मनः
यश्चैनांशृणुयाद्वापिपठेद्वाशिवसन्निधौ तनुजात्पातकात्सोपिमुच्यते नात्रसंशयःनास्तिगंगासमंतीर्थंनास्तिदेवोह
रात्परः शिवरात्रिसमंनास्तिव्रतंसत्यंमयोदितं सर्वरत्नमयोमेरुःसर्वाश्चर्यमयंनभः सर्वधर्ममयाराजन्शिवरात्रिःप्र
कीर्तिता गरुडःपक्षिणांयद्वन्नदीनांसागरोयथा प्रधानंसर्वधर्माणांशिवरात्रिस्तथोत्तमा॥इतिस्कंदपुराणेनागरखंडे
शिवरात्रिव्रतमाहात्म्यंसमाप्तम् ॥ अथवार्षिकशिवरात्रिव्रतोद्यापनम् ॥ स्कंदउवाच ॥ व्रतस्योद्यापनंकर्मकर्तव्यं
किंचमानवैःकोविधिःकानिद्रव्याणिकथंकार्यंवदप्रभो ॥ ईश्वरउवाच ॥ शृणुषण्मुखतत्त्वेनलोकानांहितकाम्यया
चतुर्दशाब्दंकर्तव्यंशिवरात्रिव्रतंशुभं एकभक्तंचतुर्दश्यांचतुर्दश्यामुपोषणं संपाद्यसर्वसंभारान्मंडपंतत्रकारयेत् व
स्त्रैःपुष्पैःसमाछन्नंपट्टकूलैश्च शोभितं तन्मध्येलेखयेद्दिव्यंलिंगतोभद्रमंडलं अथवासर्वतोभद्रंमंडपांतःप्रकल्प
येत् शोभाप्रशोभासंयुक्तंदीपैःसर्वत्रचोज्ज्वलं आचार्यंवरयेत्तत्रऋत्विग्भिःसहितंशुभं शिवरूपाश्चतेज्ञेयाः

आह्निकप्रकरणस्थाशिवपूजायामुक्तआवरणगणःपूज्यः पंचामृतादिगतविशेषाः शिवरात्रिप्रकरणस्थायथासंभवं द्रष्टव्याः ततोजागरणं प्रातर्नित्यक्रियांते आचार्य्योहोमंसंकल्प्यांतेयदत्रसंस्थितमित्यादिसर्षपादिविकरणं पंचगव्यप्रोक्षणादिनाभुवंसंशोध्याग्निंप्रतिष्ठाप्यतद्ध्यानांते तदैशान्यांलोकपालांतदेवता सहितग्रहपूजांविधाय तदैशान्यांविधिनास्थापितकलशेवरुणंसंपूज्य कलशस्यमुखेदेवदानवसंवादे इत्यादिसंप्रार्थ्य ॥ अग्नेःपश्चा दुपविश्यचादध्यात् चक्षुषीआज्यमित्यंतम् आदित्यादीनुद्दिश्यार्कादिसमिच्चर्वाज्याहुतिषु अंगदेवतोद्देशकत दाहुतिचाष्टोत्तरशतादिचिकीर्षितसंख्यासंकीर्त्तनंकार्य्यं प्रधानदेवतांरुद्रंअष्टोत्तरशतसंख्याकाभिर्बिल्वसमिदाहुति भिस्तावतीभिः पायसाहुतिभिस्तावतीभिराज्याहुतिभिरुमांनंदिनं अजैकपादमहिर्बुध्न्यंभवंशिवंउमापतिंरुद्रंप शुपतिंशंभुंवरदंशिवंईश्वरं महादेवंहरंभीमंएताःषोडशदेवता एकैकयाज्याहुत्याशेषेणास्विष्टकृतमित्यादिततः स्थालीपाकविधिनापायसंश्रपयित्वागुरुंसिद्ध मादायाज्यभागांतेयथान्वाधानंयजमानेत्यागेकृतेयथात्यागं ग्रहतदंगोद्देश्यकंऋत्विजः कुर्य्युः प्रधानदेवताहोममाचार्य्यःकुर्य्यात् कद्रुद्रायेतित्रिभिस्त्रिभिरेकैकमष्टोत्तरश तंकुर्य्यात् एकैकंवाषट्त्रिंशदाहुतयइत्येवमष्टोत्तरशतसमिद्भिः उमायै नंदिनेऽजैकपदेइत्यादिषोडशदेवता भ्यएकैकयापायसाहुत्या स्विष्टकृदादिप्रायश्चित्तहोमांतेबलिदानपूर्णाहुतिः ततःप्रणीतानियमनससर्यापरि स्तरणविसर्जनान्यग्न्यर्चनानि ततोवरुणकलशोदकेनयजमानाभिषेकः आचार्य्यायधेनुदानं ततोजैकपादा दिसहितस्योमायुतश्रीरुद्रस्यग्रहाणांचोत्तरपूजांतेश्रीरुद्रप्रतिमामाचार्य्यहस्तेप्रतिपाद्यसोपस्कराश्चतुर्दशप्रतिमा अजैकपादादिनाममंत्रैः पूर्ववृतेभ्यश्चतुर्दशविप्रेभ्यःप्रतिपाद्य व्रतमेतत्कृतंयन्मेपूर्णंवाऽपूर्णमेववा सर्वंसंपूर्ण तांयातुप्रसादाद्भवतांममेतितान्संप्रार्थ्यपूर्ववृतांश्चतुर्दशविप्रान्यज्ञोपवीतकुंडलादिभिः संपूज्यसाचार्य्यांस्तान्सं

युतं कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यतां इतितांबूलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफल
दमतःशांतिंप्रयच्छमे इतिदक्षिणा सोमंचसगणंचैवपूजयित्वामहेश्वरं ततोरात्रौप्रतियाममर्घ्यंदद्याद्यथाविधि
ततःपारायणस्तोत्रैरात्रिशेषंनयेद्बुधः ततःप्रभातसमयेकृत्वासंध्यादिकाःक्रियाः पुनःपूजांप्रकुर्वीतततोहोमंस
माचरेत् तिलव्रीहियवैश्चैवपायसेनचभक्तितः त्र्यंबकंचेतिमंत्रेणततोनमःशंभवेतिच गौरीमिमेतिमंत्रेणशत
मष्टोत्तरद्वयं होमंचकुर्य्यान्मतिमान्बिल्वपत्रैस्तुनामभिः पूर्णाहुतिंततोदद्याद्धोमशेषंसमापयेत् ब्राह्मणान्भो
जयेद्भक्त्यापूजयेच्चचतुर्दशीं आचार्य्यंचसपत्नीकंवस्त्रालंकारभूषणैः यज्ञोपवीतवस्त्रादिदद्यात्तेभ्यःपृथक्पृथक्
गांसवत्सांसवसनांनानालंकारभूषितां दद्यादाचार्य्यवर्य्यायशिवोमेप्रीयतामिति ततःसकुंभांतांमूर्त्तिंसवस्त्रांवृ-
षभस्थितां सर्वालंकारसहितामाचार्य्यायनिवेदयेत् शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो तवदेवप्रदानेनमम-
संतुमनोरथाः व्रतमेतत्कृतंयन्मेपूर्णंवापूर्णमेवच सर्वंसंपूर्णतांयातुप्रसादाद्भवतोमम इतिसंप्रार्थ्यताविप्रा-
न्प्रणम्यचपुनःपुनः अजैकपादादिदेवेभ्योदद्यात्कुंभान्पृथक्पृथक् अजैकपादहिर्बुध्न्यो भवः शर्वउमापतिः
रुद्रःपशुपतिःशंभुर्वरदःशिवईश्वरः महादेवोहरोभीमोनामान्येवंचतुर्दश ॥ अथप्रयोगः ॥ संकल्पपूर्वकंनां-
दीश्राद्धांतंकृत्वाआचार्यस्यचतुर्दशऋत्विजांचवरणंकुर्य्यात् ततोमंडपमध्येलिंगतोभद्रेचएकः पूर्वादिदिक्षुप्रत्ये-
कंत्रींस्त्रीन्मध्यकलशदक्षिणोत्तरयोर्द्वावित्येवंचतुर्दशकलशान् महीद्यौरित्यादिकलशस्थापनविधिमारभ्यवरुण-
पूजनंकुर्य्यात् ततोमध्यकलशेनांदिनंतस्मिन्नुमामहेश्वरौचसंस्थाप्यचतुर्दशकलशेषुलिंगानिस्थापयेत् मध्यकल
शस्थप्रतिमायामुक्तैः पौराणमंत्रैर्वैदिकमंत्रसहितैर्यथासंभवषोडशोपचारैः पूजांकुर्य्यात् इतरकलशेषुप्रा-
दक्षिण्येनाजपदेनमः अहिर्बुध्न्यायनमइत्यादिनाममंत्रैःपूजांकुर्य्यात् पात्रासंभवेआवृत्तिः पुष्पानिवेदनांते

आह्निकप्रकरणस्थाशिवपूजायामुक्तआवरणगणःपूज्यः पंचामृतादिगतविशेषाः शिवरात्रिप्रकरणस्थायथासंभवं
द्रष्टव्याः ततोजागरणं प्रातर्नित्यक्रियांते आचार्योहोमंसंकल्प्यांतेयदत्रसंस्थितमित्यादिसर्षपादिविकरणं
पंचगव्यप्रोक्षणादिनाभुवंसंशोध्याग्निंप्रतिष्ठाप्यतद्ध्यानांते तदैशान्यांलोकपालांतदेवता सहितग्रहपूजांविधाय
तदैशान्यांविधिनास्थापितकलशेवरुणंसंपूज्य कलशस्यमुखेदेवदानवसंवादे- इत्यादिसंप्रार्थ्य ॥- अग्नेःपश्चा
दुपविश्यचादध्यात् चक्षुषीआज्यमित्यंतम् आदित्यादीनुद्दिश्यार्कादिसमिच्चर्वाज्याहुतिषु-- अंगदेवतोद्देशकत
दाहुतिचाष्टोत्तरशतादिचिकीर्षितसंख्यासंकीर्तनंकार्यं 'प्रधानदेवतांरुद्रंअष्टोत्तरशतसंख्याकाभिर्बिल्वसमिदाहुति
भिस्तावतीभिः- पायसाहुतिभिस्तावतीभिराज्याहुतिभिरुमांनंदिनं अजैकपादमहिर्बुध्न्यंभवंशिवंउमापतिंरुद्रंप
शुपतिंशंभुंवरदंशिवंईश्वरं- महादेवंहरंभीमंएताःषोडशदेवता- एकैकयाज्याहुत्याशेषेणस्विष्टकृतमित्यादिततः
स्थालीपाकविधिनापायसंश्रपयित्वागुरुंसिद्ध मादायाज्यभागांतेयथान्वाधानंयजमानेत्यागेकृतेयथात्यागं
ग्रहतदंगोद्देश्यकंऋत्विजः कुर्युः--प्रधानदेवताहोमंसाचार्यःकुर्यात् कद्रुद्रायेतित्रिभिस्त्रिभिरेकैकमष्टोत्तरश
तंकुर्यात्- एकैकंवाषट्त्रिंशदाहुतयइत्येवमष्टोत्तरशतसमिद्भिः उमायै नंदिनेऽअजैकपदेइत्यादिषोडशदेवता
भ्यएकैकयापायसाहुत्या- स्विष्टकृदादिप्रायश्चित्तहोमांतेबलिदानपूर्णाहुतिः ततःप्रणीतानियमनससर्यापरि
स्तरणविसर्जनान्यग्न्यर्चनानि- -ततोवरुणकलशोदकेनयजमानाभिषेकः आचार्यायधेनुदानं- ततोजैकपादा
दिसहितस्योमायुतश्रीरुद्रस्यग्रहाणांचोत्तरपूजांतेश्रीरुद्रप्रतिमामाचार्यहस्तेप्रतिपाद्यसोपस्कराश्चतुर्दशप्रतिमा
अजैकपादादिनाममंत्रैः पूर्ववृतेभ्यश्चतुर्दशविप्रेभ्यःप्रतिपाद्य व्रतमेतत्कृतंयन्मेपूर्णंवापूर्णमेववा सर्वंसंपूर्ण
तांयांतुप्रसादाद्भवतांममेतितान्संप्रार्थ्यपूर्ववृतांश्चतुर्दशविप्रान्वस्त्रोपवीतकुंडलादिभिः संपूज्यसाचार्यांस्तान्सं

भोजयित्वाचतुर्दशभ्योयथाशक्तिदक्षिणांदत्त्वेश्वरार्प्पणंकुर्य्यात् ॥ इतिशिवरात्रिव्रतोद्यापनविधिः अथ मासशिवरात्रिनिर्णयः तदारंभस्तुमार्गशीर्षकार्त्तिकमाघचतुर्दशीपुवा न्यतमचतुर्दश्यांकार्य्यः तदुक्तंमदनरत्नेस्कंदपुराणे आदौमार्गशिरेमासिदीपोत्सवदिनेपिवा गृह्णीयान्माघमासेवाद्वादशैवमुपोषयेत् तथा दीपोत्सवमथासाद्यकृष्णायाचंचतुर्दशी द्वादशस्वपिमासेपुप्रकुर्य्यादिहजागरं तथाकृष्णपक्षेशिवरात्रिमुपक्रम्य-यतः प्रतिचतुर्दश्यांपूजायत्नेनमेकृता तथाजागरणरात्रौसंनिधौमेकृतंतथेति अस्यव्रतस्यवर्षसंख्योक्तातत्रैव एवंद्वादशवर्षांतेद्वादशैवतपोधनानिति हेमाद्रौकालांतरखंडेषु चतुर्दश्याव्दंकर्त्तव्यंशिवरात्रिव्रतंशुभमित्युक्तं अत्रचतुर्दशीवहुरात्रिव्यापिनीग्राह्या तस्यांरात्रौप्रतियामंपूजायाः जागरस्यचएकैकंवाषट्त्रिंशदाहुतयइत्येवमष्टोत्तरशतसामिद्भिः उमायै नंदिनेऽजैकपदेइत्यादिषोडशदेवताएकैकयापायसाहुत्या स्विष्टकृदादिप्रायश्चितहोमांतेवलिदानपूर्णाहुतिः ततःप्रणीतानियमनसपर्यापरिस्तरणविसर्जनान्यग्न्यर्चनानि ततो वरुणकलशोदकेनयजमानाभिषेकः आचार्य्यायधेनुदानं ततोजैकपादादिसहितस्योमायुतश्रीरुद्रस्यग्रहाणांचोत्तरपूजांतेश्रीरुद्रप्रतिमामाचार्य्यहस्ते प्रतिपाद्यसोपस्कराश्चतुर्दशप्रतिमाअजैकपादादिनाममंत्रैः पूर्ववृत्तेभ्यश्चतुर्दशविप्रेभ्यः प्रतिपाद्य व्रतमेतत्कृतयन्मेपूर्णंवापूर्णमेववा सर्वंसंपूर्णतांयातुप्रसादाद्भवतांममेति तान्संप्रार्थ्यपूर्ववृत्तांश्चतुर्दशविप्रान्वस्त्रोपवीतकुंडलादिभिः संपूज्यसाचार्य्यांस्तान्संभोजयित्वाचतुर्दशभ्योयथाशक्तिदक्षिणांदत्त्वेश्वरार्प्पणंकुर्य्यात्

इतिशिवरात्रिव्रतोद्यापनविधिः    अथमासशिवरात्रिनिर्णयः

तदारम्भस्तुमार्गशीर्षकार्तिकमाघचतुर्दशीपुवान्यतमचतुर्दश्यांकार्य्यः तदुक्तंमदनरत्नेस्कंदपुराणे आदौमार्गशि
रेमासिदीपोत्सवदिनेपिवा गृह्णीयान्माघमासेवाद्वादशैवमुपोषयेत् तथा दीपोत्सवमथासाद्यकृष्णायाचचतुर्द
शी द्वादशस्वपिमासेषुप्रकुर्य्यादिहजागरं तथाकृष्णपक्षेशिवरात्रिमुपक्रम्य यतःप्रतिचतुर्दश्यांपूजायत्नेनमे
कृता तथाजागरणंरात्रौसन्निधौमेकृतंतथेति अथव्रतस्यवर्षसंख्योक्तातत्रैव एवंद्वादशवर्षाणिद्वादशैवत
पोधनानिति हेमाद्रौकालोत्तरखंडेषु चतुर्दशाब्दकर्तव्यंशिवरात्रिव्रतशुभमित्युक्तं अत्रचतुर्दशीबहुरात्रि
व्यापिनीग्राह्या तस्यांरात्रौप्रतियामपूजायाः जागरस्यचविधानात् तयो सकलरात्रिसाध्यत्वात् दिनद्व
येरात्रौसत्यधिकरात्रिव्यापिनीग्राह्या तुल्यैकदेशव्याप्तौपूर्वा रुद्रव्रतेषुसर्वेषुकर्त्तव्यासमुखीतिथिरितिब्रह्म
वैवर्त्तात् जयायोगप्रशस्त्याच्चकृत्यरत्नावली कालतत्त्वविवेचनेदीक्षितीयादावप्येवंमदनरत्नेनिर्णयसिंधुमयू
खादौतुवार्षिकशिवरात्रिनिर्णयइत्युक्तं यत्तुप्रदोषव्यापिनीग्राह्येति तत्सत्यस्त्वविषयमितिदीक्षिताः मोक्ष
मार्गरतानांचमुनीनामूर्ध्वरेतसां तेषामेवतुसाप्रोक्तासामावास्याचतुर्दशीति विश्वरूपनिबंधे अथान्यापिवार्षिक
शिवरात्रिकथा सूतउवाच कैलासशिखरासीनोदेवदेवोजगद्गुरुः पंचवक्त्रोदशभुजस्त्रिनेत्रः शूलपाशधृक्
भस्मांगव्यालभोगाढ्यःशशांककृतशेखरः नीलजीमूतसंकाश सूर्यकोटिसम प्रभ क्रीडतेभगवांस्तत्रगणै
सपरिवारितः विसृज्यदेवता सर्वास्तिष्ठतेउमयासह दृष्ट्वातंदेवदेवेशंप्रहस्योत्फुल्ललोचना एकाकिनंसुरश्रे
ष्ठमपृच्छत्तत्रपार्वती पार्वत्युवाच कथयस्वमहादेवयद्व्राप्यव्रतमुत्तम श्वेताश्वदेवदेवेशव्रतानांविषया शु

भाः दानधर्माण्यनेकानितपस्तीर्थान्यनेकशः नास्तितेनिश्चयोदेवश्रामिताहंत्वयापुनः व्रतानामुत्तमंदेव
भुक्तिमुक्तिप्रदायकं तदहंश्रोतुमिच्छामिप्रसीदकथयस्वमे ईश्वरउवाच शृणुदेविपरंगुह्यंव्रतानामुत्तमंव्रतं य
न्नकस्यचिदाख्यातंरहस्यंमुक्तिदायकं येनवैकथ्यमानेनयजोपिविलयंव्रजेत् कथयामिव्रतंगोप्यंशृणुष्वैकम
नाःप्रिये माघफाल्गुनयोर्मध्येअसितायाचतुर्दशी शिवरात्रीतिसाज्ञेयासर्वयज्ञोत्तमोत्तमा दानध
र्मैस्तपोयज्ञैः किंवातीर्थशतैरपि शिवरात्रिसमंनास्तिकृत्वास्नानसहस्रकं कृष्णायाकालिहंत्रीचयममार्ग
विनाशिनीत्तेयमपुरंयांतिकृतायैः साचतुर्दशी ॥ देव्युवाच ॥ कथंयमपुरंत्यक्त्वानरः शिवपुरं
व्रजेत् एतन्मेकौतुकंदेवकथयस्वममप्रभो ॥ शिवउवाच ॥ शृणुदेविशयावृत्ताकथापाराणिकीशुभा
यमशासनहंत्रीच शिवस्थानप्रदायिनी कश्चिदासीत्पुराकालेनिषादस्त्वामिषप्रियः प्रत्यंतदेशवासीचत्र
चिकित्स्योतिनिर्घृणः मृगयाव्यसनीतत्रकुटुंबपरिपालकः तत्त्वापीनोधनुर्धारीश्यामांगःकृष्णकंचुकः वद्धगो-
धांगुलित्राणोवामबाहौसचर्मकः धनुर्गृहीत्वावामेतुदक्षिणेशरमुत्तमं निर्गतोसौवनंदुर्गंनिषादश्चामिषप्रियः
जीवघातेनतेनैवकुटुंबपरिपालकः वनंगत्वानिरीक्ष्यैवदिक्षुमार्गमितस्ततः पदंचपदमार्गंच आश्रमेमृग
सूकरात् इतश्चेतश्चधावत्सआमिषेलुब्धमानसः वनंचपर्वतंचैवभ्रमत्प्राणोनिशांगतः नप्राप्तंतेननोकिंचि
न्मृगसूकरतित्तिरं निराशोलुब्धकोभूत्वातदाह्यस्तंगतोरविः चिंतयत्जलमासाद्यतडागेजीवघातकः जा
लमध्येमहालिंगंतिष्ठेतानादिसंभवं विल्ववृक्षोमहादिव्योजालमध्येहिसंस्थितं गृहीत्वातस्यपत्राणि
मार्गशुद्ध्यर्थमाक्षिपत् लिप्तानितानिपत्राणिवायुनाभ्याहतानिच दक्षिणाशास्थितान्येवपल्लवैर्जालकैःसह लू
तानिदैवादनिलाल्लिंगमूर्ध्निचाक्षिपत् लुब्धकेनकृतंपापमपानीतंचतत्क्षयं तद्दिवाभोजनंतस्यह्यामिषेलुब्धचेतसः

ततश्चिंतयमानस्यननिद्रासमजायत तस्यगंधंसमाघ्रायलुब्धकस्यवरानने नतिष्ठंतिमृगाःसर्वेशरपातभया
र्दिताः निषादमपितेदृष्ट्वारात्र्यंतेसमुपस्थिते नानीतमामिषंतेननिराशाःशिशवोगताः रुदंतिकरुणैःप्राहुर्भो
जनंदीयतांचनः ततस्तूष्णींपिताभूत्वाह्यधोवदनदुःखितः भोजनंचकृतंतेनयथादत्तंतुभार्ययाधर्हमीनोनिषा
दोसौधर्मवार्तापराङ्मुखः अकामंजागरंरात्रौशिवरात्र्यांवरानने कृत्वासौकालपर्यंतेगृहीतोयमकिंकरैः यमे
नहंतुमारब्धःशूलपट्टिशधारिभिः शिवेनप्रेषितास्तावद्विमानगणकोटयः शीघ्रमानीयतांगत्वाशिवरात्रिउपोषकः
य.पूर्वंलुब्धकोभूत्वाकरोतिप्राणिनांवधं इतिश्रुत्वावचोदिव्यंगणास्तेनेतुमुद्यताः स्तूयमानाःपरंदेवशिवंशांतानि
रामयं यावद्गच्छंतितेसर्वेतावत्पश्यंतिलुब्धकं हन्यमानंलोहदंडैर्बहुभिर्मुष्टिभिस्तथा सर्वेकोलाहलंचक्रुरस्मा
कमितितेगणाः परस्परंयुध्यमानानूचुस्तेयमकिंकराः किंकराऊचुः मुंचामोनत्विमंदुष्टंपापिष्ठजीवघातकं यमं
यावन्नपश्येतशुद्धिश्चनभवेत्ततः गणाऊचुः लुब्धकोयंपूर्वमासीत्पापिष्ठोयमकिंकराः अनेनशिवरात्रिस्तुकृता
कामेनकानने तस्माच्छिवाज्ञयासर्वेविमानैर्द्रुतमागताः यावच्छिवंनपश्यामोनमुंचामोवयंह्यमुं ततोहंतुंस
मारब्धखड्गमुद्गरपट्टिशैः प्रवृत्तंतन्महद्युद्धमन्योन्यजयकांक्षिणां भग्नांगसंधयः केचित्केचिन्मूर्च्छांसमाश्रिताः
जर्जरीकृतदेहास्तु क्रंदमानाः सुदारुणं त्राहित्राहीतितेराजन् गतास्तेयममंदिरं निषादोपिगणैर्नीतोय
त्रदेवोमहेश्वरः दृष्टमात्रस्तुदेवेननिषादोगणतांगतः स्थितोसौदेवदेवस्यकुंडलाभरणोज्ज्वलः तस्यदत्तंमहे
शेनविमानंसार्वकामिकं रुद्रकन्याशताकीर्णंपुष्पमालाकुलांवरं नानातूर्यसमायुक्तंसर्वरत्नोपशोभितं क्रीड
तेसचिरंकालंयावदाभूतसंप्लवं एवंसलुब्धकोभूत्वाक्रीडतेशिवशासने अथदूतावदंतस्तेधर्मराजानमग्रतः रुधि
रारुणवर्ष्माभाभिन्नगात्राःसमंततः पृष्टास्तेधर्मराजेनकोसौकालेनयोजितः दूताऊचुः शृणुराजन्यदस्माकं युद्धंशि

भाः दानधर्माण्यनेकानितपस्तीर्थान्यनेकशः नास्तितेनिश्चयोदेवश्रामिताहंत्वयापुनः व्रतानामुत्तमंदेव
भुक्तिमुक्तिप्रदायकं तदहंश्रोतुमिच्छामिप्रसीदकथयस्वमे ईश्वरउवाच शृणुदेविपरंगुह्यंव्रतानामुत्तमंव्रतं य
न्नकस्यचिदाख्यातंरहस्यंमुक्तिदायकं येनवैकथ्यमानेनयशोपिविलयंव्रजेत् कथयामिव्रतंगोप्यंशृणुष्वेकम
नाःप्रिये माघफाल्गुनयोर्मध्येऽसिताचाचतुर्दशी शिवरात्रीतिसाज्ञेयासर्वयज्ञोत्तमोत्तमा दानध
र्मैस्तपोयज्ञैः किंवातीर्थशतैरपि शिवरात्रिसमंनास्तिकृत्वास्नानसहस्रकं कृष्णायाकालिहंत्रीचयममार्ग
विनाशिनीनतेयमपुरंयांतिकृतायैः साचतुर्दशी ॥ देव्युवाच ॥ कथंयमपुरंत्यक्त्वानरः शिवपुरं
व्रजेत् एतन्मेकौतुकंदेवकथयस्वममप्रभो ॥ शिवउवाच ॥ शृणुदेविशियावृत्ताकथापौराणिकीशुभा
यमशासनहंत्रीच शिवस्थानप्रदायिनी कश्चिदासीत्पुराकालेनिषादस्त्वामिषप्रियः अत्यंतदेशवासीचत्र
चिकित्स्योतिनिर्घृणः मृगयाव्यसनीतत्रकुटुंबपरिपालकः तत्वापीनोधनुर्धारीश्यामांगःकृष्णकंचुकः बद्धगो-
धांगुलित्राणोवामबाहौसचर्मकः धनुर्गृहीत्वावामेतुदक्षिणेशरमुत्तमं निर्गतोसौवनंदुर्गंनिषादश्चामिषप्रियः
जीवघातनतेनैवकुटुंबपरिपालकः वनंगत्वानिरीक्ष्यैवादिक्षुमार्गमितस्ततः पदंचपदमार्गेच आश्रमेमृग
सूकरात् इतश्चेतश्चधावत्सआमिषेलुब्धमानसः वनंचपर्वतंचैवभ्रमन्प्राणोनिशांगतः नप्राप्तंतेननोकिंचि
न्मृगसूकरतित्तिरं निराशोलुब्धकोभूत्वातदाह्यस्तंगतोरविः चिंतयत्जलमासाद्यतडागेजीवघातकः जा
लमध्येमहालिंगंतिष्ठेतानादिसंभवं विल्ववृक्षोमहादिव्योजालमध्येहिसंस्थितं गृहीत्वातस्यपत्राणि
मार्गशुद्ध्यर्थमाक्षिपत् क्षिप्तानितानिपत्राणिवायुनाभ्याहतानिच दक्षिणाशास्थितान्येवपल्लवैर्जालकैःसह लू
तानिदैवादनिलाल्लिंगमूर्ध्निचाक्षिपत् लुब्धकेनकृतंपापमपानीतंचतत्क्षयं तद्दिवाभोजनंतस्यह्यामिषेलुब्धचेतसः

ततश्चितयमानस्यननिद्रासमजायत तस्यगंधंसमाघ्रायलुब्धकस्यवरानने नातिष्ठंतिमृगा.सर्वेशरपातभया
र्दिताः निषादमपितद्दृष्ट्वारात्र्यंतेसमुपस्थिते नानीतमामिषतेननिराशा शिशवोगताः रुदतिकरणै.प्राहुर्भो
जनदीयतांचनः ततस्तूष्णींपिताभूत्वाह्यधोवदनदुःखितः भोजनंचकृतंतेनयथादत्तंतुभार्ययाधर्हीनोनिषा
दोसौधर्मवार्तापराङ्मुखः अकामजागरंरात्रौशिवरात्र्यांवरानने कृत्वासौकालपर्यंतेगृहीतोयमकिंकरैः यमे
नहंतुमारब्धःशूलपट्टिशधारिभिः शिवेनप्रेपितास्तावद्विमानगणकोटयः शीघ्रमानीयतांगत्वाशिवरात्रेउपोषकः
य पूर्वंलुब्धकोभूत्वाकरोतिप्राणिनांवध इतिश्रुत्वावचोदिव्यंगणास्तनेतुमुद्यताः स्तूयमाना.परदेवशिवंशांतनि
रामयं याद्गच्छंतितेसर्वेतावत्पश्यंतिलुब्धकं हन्यमानंलोहदडैर्बहुभिर्मुष्टिभिस्तथा-- सर्वेकोलाहलंचक्रुरस्मा
कमितितेगणाः परस्परयुध्यमानानूचुस्तेयमकिंकराः किंकराऊचुः मुंचामोनत्विमंदुष्टपापिष्ठजीवघातकं यमं
यावन्नपश्यतशुद्धिश्चनभवेरातः गणाऊचुः लुब्धकोयंपूर्वमासीत्पापिष्ठोयमकिंकराः-- अनेनशिवरात्रिस्तुकृता
कामेनकानने तस्माच्छिवाज्ञयासर्वेविमानैर्द्रुतमागताः यावच्छिवंनपश्यामोनमुचामोवयंह्यमु ततोहंतुंस
मारब्धखड्गमुद्गरपट्टिशैः प्रवृत्तंतन्महद्युद्धमन्योन्यजयकांक्षिणां भग्नांगसंधय. केचित्केचिन्मूर्च्छांसमाश्रिताः
जर्जरीकृतदेहास्तु क्रंदमानाः सुदारुणं त्राहित्राहीतितेराजन् गतास्तेयममंदिर निषादोपिगणैर्नीतोय
त्रदेवोमहेश्वरः -दृष्टमात्रस्तुदेवेननिषादोगणतागत. स्थितोसौदेवदेवस्यकुंडलाभरणोज्ज्वलः तस्यदत्तंमहे
शेनविमानंसार्वकामिकं रुद्रकन्याशताकीर्णंपुष्पमालाकुलांवर नानातूर्यसमायुक्तंसर्वरत्नोपशोभित क्रीड
तेसचिरंकालंयावदाभूतसंप्लवं एवंसलुब्धकोभूत्वाक्रीडतेशिवशासने अथदूतावदंतस्तेधर्मराजानमग्रतः रुधि
रारुणवर्ष्माभाभिन्नगात्राःसमततः दृष्टास्तेधर्मराजेनकोसौकालेनयोजितः दूताऊचुः शृणुराजन्यदस्माकं युद्धंशि

वगणैः सह नीतोसौपापकर्मापिनिपादोजीवघातकः अस्माभिर्गृह्यमाणस्तुगणैःशैवैर्वयंहताःधर्मात्माक्रुद्धरूपस्तु चित्रगुप्तमयाब्रवीत् आमिपाशीसपापिष्टोलुब्धकोजीवघातकःकथंशिवपुरंयातश्चित्रगुप्तविचारय निरीक्ष्यपुस्तकं तेननाकिंचित्सुकृतंकृतं धर्मबुद्धिर्नैतस्यास्तिधर्माधर्मंनाविंदति एतन्मेलिखितंज्ञातंसत्यंदेववदाम्यहं इतिश्रुत्वानि पादस्यचित्रगुप्ताच्छुभाशुभं नाहंचिंतांकरोमीहजंतूनांपापकर्मणां गत्वानिवेदयिष्यामिनियोगंतुशिवाग्रतः एवमु क्तागतःशीघ्रंयत्रास्तेशंकरःस्वयं दृष्ट्वातंदेवदेवेशंस्तोत्रमेतदुदाहरत् नमस्त्रैलोक्यनाथायसृष्टिसंहारकारक कालकूटविनाशायकामनिर्दहतेनमःअशुद्धोदेवदेवासौ निपादः पापकर्मकृत् मेरुमंदरतुल्यानिदुष्कृतानिबहून्य पि ईश्वरउवाच केनापराधितोधर्मःकेनमानस्तुमर्दितः किमर्थंदंडमुद्रांत्वंत्यक्त्वाब्रूहिममाग्रतः धर्मउवाच त्वद्गणैर्देवदेवेशत्वपापस्यचकारणात् मदीयाकिंकरादेवघातिताः शक्तिमुद्गरैः जीवघातीनिषादोसौसर्वधर्मव हिःकृतः कर्मणोपार्जितंयेनानिश्चितंममशासनं अयोग्यस्त्वद्गणैर्देवगणेषुविनियोजितः तेनाहमागतोदेवत्य क्त्वामुद्रांवदाम्यहं शंकरउवाच निपादःपापककर्माचजीवन्प्राणिवधेरतः कदाचित्सवनंगत्वानाकिंचिदाप्तवां स्तथा सचबिल्वस्यपत्राणिगृहीत्वामार्गतोक्षिपत् कथंचिद्दैवसंयोगाद्वायुनाशिवमूर्द्धनि निक्षिप्तानिप्रेतराज कोमलान्यस्यकामतः शिवरात्रिः कृतातेनजाग्रतामार्गहेतुना शिवरात्रिप्रभावेनसगतोममशासनंगृह्णगृह्णमहा धर्ममुद्रांदंडंयथेच्छया पालनायस्वधर्मस्यसत्यंसत्यंमहायम स्वगृहंगम्यतांशीघ्रंग्राह्यमेतत्सदंडकं ताडय न्पापकर्माणंपालयन्वैसुधर्मिणं एवमुक्तोधर्मराजोगतोसौस्वगृहंशुभं एवंदेविमयाख्यातंशिवरात्रिमहाव्रतं देव्युवाच अकामाल्लुब्धकोदेवकृत्वाह्यमरतांगतः आश्चर्यमेतद्देवेशममाद्भुततमंमहत् कामतः शास्त्रदृ ष्टेनयत्कर्त्तव्यंशिवव्रतं तदहंश्रोतुमिच्छामिप्रसादाद्वक्तुमर्हसि शिवउवाच शृणुदेविमहाभागेसर्वंतत्रारुभा

यिणी शिवरात्रिप्रभावश्चनकथ्यःपापकर्मणां माघमासेत्वयाकृष्णाफाल्गुनादौचतुर्दशी सातुपुण्यातितिज्ञेया
सर्वपापप्रणाशिनी शांतात्माक्रोधहीनस्तुतपस्वीह्यनसूयकः तस्मैदेयमिदंदेविगुरुपादानुगेसदा अन्यथायो
ददातीदंसदातानरकंव्रजेत् वर्षेवर्षेमहादेविनरोनारीपातिव्रता वक्ष्यामिजगत्सर्वेकोमांभक्त्याप्रपूजयेत् शिवमं
त्रैर्जपंकृत्वाहोममर्चनपूर्वकं जागरंशिवरात्र्यांतुशिवंपश्येत्समाहितः ममभक्तोजनोदेविशिवरात्र्यामुपोषकः गण
त्वमक्षयंदिव्यमक्षयंशिवशासनं,सर्वंकृत्वातुबुभुजेभोगानमृतसंभवान् एवंद्वादशवर्षाणिशिवरात्र्यामुपोषकःयोमां
जागरतेरात्रिमनुजः स्वर्गमारुहेत् अकृत्वामांनजानातिव्रतमेतदुदाहृतं शिवंचपूजयित्वायोजागर्त्तिचचतुर्दशीं
मातुः पयोधररसं नपिवेत्सकदाचन यदीच्छन्नाक्षयान्भोगान्दिविदेवसमोपमान् आगमोक्तविधिंकृत्वाप्राप्नोति
सकलंफलं आदौमार्गशिरेमासिदीपोत्सवदिनेपिवा गृह्णीयान्माघमासेवाद्वादशैवमुपोषयेत् निशिजागरणंकृ
त्वादीपोद्योतितादिङ्मुखः गीतवाद्यविनोदेनपूजाजाप्येसदारतः एवंद्वादशवर्षांतेद्वादशैवतपोधनात् आचा
र्यांशिवशास्त्रज्ञान्ब्राह्मणांश्चविशेषतः आमंत्र्यपरयाभक्त्यागृहंगत्वातपोधनात् आचार्यभक्तियुक्तश्चगृहीत्वाचर
णद्वयं आगच्छमेगृहंतातकृतकृत्यंगृहंकुरु आमंत्र्यानिशितानेवंप्रभातेविमलेपुनः गृहीतोभयलिंगंतुस्थावरंजंग
मंपुनः घृतेनाभ्यज्ययत्नेनसुगंधैर्मल्लिकादिभिः पंचामृतेनदिव्येनस्नाप्यचोद्वर्त्तनादिभिः स्नापयेद्वारिकुंभानांस
हस्रेणशतेनच पंचाशतातदर्धेनस्नापयेच्छीतलेनतु चंदनेनाविलिप्याथस्थावरंजंगमंतथा शतपत्रैर्जातिपुष्पैर
र्चयेद्बिल्वपत्रकैः दीपान् दिक्षुचसर्वासुप्रज्वाल्यसघनांस्तथा सघनान्सकर्पूरान् नैवेद्यमपिभक्ष्यांश्चक्षीरखंडसमं
डकान् गुडाढ्यान्लड्डुकांश्चैवतथान्नंरुचिरंबहु निवेदयेदथैतानिगुरुदेवतपस्विनाम् देवाग्रेतुगुरुंपूज्यकृत्वामंडल
कंशुभं सुसूक्ष्माणिचवस्त्राणिशय्यांसोपस्करामपि द्वादशैवतुगादद्यात्परिधानादिकंतथा अथवादक्षिणामेवप्रद

याज्जुहुयात्तिलान्' दत्त्वातुभोजयेत्सर्वान्गुरूंश्चैवतपस्विनः- पश्चात्क्षमापयेद्देवंप्रीयतांमेमहेश्वरः सर्वैचैवतथाचा
र्य्योशिवव्रतपरायणेदद्यादितिशेषः गंधादिविविधैः सर्वानन्यांस्तत्रसमागतान् दक्षिणाभिश्चकुंभैश्चनवान्नै
श्चप्रपूजयेत् तस्मान्नच्यवतेस्थानात्कल्पकोटिशतैरपि अथातः कालपर्य्याये द्रष्टुयातिस्वयंभुवं सहितोलोक
पालैश्चविमानैः सार्वकामिकैः तत पश्येन्महादेवं नानागणसमन्वित तंदृष्ट्वारतौतिदेवेशंशिवंत्रिभुवनेश्वरं न
मस्तुभ्यंजगन्नाथचंद्रार्धकृतशेखर नमस्तेउमयायुक्तभुक्तिमुक्तिप्रदायक नमस्तेकालकालोग्रकलातीतोसिशंकर
शिवउवाच तुष्टोहंतवभक्तस्यशिवरात्रिउपोषक वरंददाम्यहंतुभ्यंदेवदानवदुर्लभ एताः कन्यामहादिव्यास्त्रि
नेत्राश्चचतुर्भुजाः रूपयौवनसंपन्नाः पीनोन्नतपयोधराः हेमगौर्य्योमहातेजाः संयुक्ताः सूर्यसन्निभाः देवां
गवस्त्रसंछन्नाश्चंदनागुरुचर्चिताः सर्वलक्षणसंयुक्ताः कुंडलैर्द्योतिताननाः एवंविधामयादत्तामनोज्ञान्यः सुमध्य
माः विमानकोटिसंयुक्ता सर्वाभरणभूषिताः क्रीडांकुरुमहाभागगणस्त्वंममपुत्रकः सर्वगामीभवाद्यहलोक
लोकंचरार तुष्टोहंतवभक्तस्यशिवव्रतपरस्यच रुद्रलोकेपुयाः कन्यास्त्रिनेत्राश्चचतुर्भुजाः अतीवभक्त्याभक्तैश्च
यथाहमुमयासह ताभिःसार्द्धमहाभागभुंक्ष्वभोगान्यथेप्सितान् कल्पकोटिसहस्राणिकल्पकोटिशतानिच त
दंतेप्रतभावेनाशिवसायुज्यतांव्रज सर्वव्यापीभवत्वंचलीयसेपरमेपदे- परात्परतरंनास्तिशिवरात्रिव्रतात्परम् न
पूजयतिभूतेशंरुद्रंत्रिभुवनेश्वरं जंतुर्जन्मसहस्रेषुभ्रमतेनात्रसंशयः यदातद्भावसंयुक्तःसरुद्रगणतांव्रजेत् सू
र्यग्रहेकुरुक्षेत्रेहिमवत्कुरुजांगले - शिवरात्र्यांतथाभक्त्यादत्तमक्षयतांव्रजेत् अखंडितव्रतोयोहिशिवरात्रिमुपो
षयेत् ससर्वकाममाप्नोतिरुद्रेणसहमोदते अर्णवायदिशुष्यतिक्षीयतेहिमवानपि मेरुमंदरलंकाश्चश्रीशैलो
विंध्यएवच चलंतेवैकदासर्वेनिश्चलंहिशिवव्रतं अतस्तस्यांत्रयोदश्यांकृष्णायामेकभुङ्नरःमंत्रेणानेनगृह्णीया

न्नियमंभक्तिमान्नरःशिवरात्रिव्रतंह्येतत्करिष्येहंमहाफलं निर्विघ्नमस्तुमेचात्रत्वत्प्रसादाज्जगत्पते रात्रिंप्रपद्येजन नींजगत्यांवैसमाहितः ऋग्वेदेप्रसिद्धावेतौमंत्रौ गृह्णीयाद्ब्राह्मणाच्चैवनियमंवेदविद्विभोः शिवमिष्ट्वागुरुंदृष्ट्वास्वा चांतःशुचिरात्मवान् संकल्पैवव्रतंकुर्य्यात्पूर्वेद्युः प्रातरेवच ततोह्नश्चरमेभागेस्वगायत्र्याह्यतंद्रितः स्नानं कृष्णतिलैःकुर्य्याद्गृहेचाथजलाशये रम्यंनिशामुखेगच्छेच्छिवस्यायतनंप्रती दिनांतेस्नपनंकुर्य्याच्छिवनाम्ना प्रपूजयेत् धूपैर्नैवेद्यगंधैश्चनृत्यगीतैःसदीपकैः शंखतूर्य्यनिनादैश्चकुर्य्यात्पुस्तकवाचनं द्वितीयप्रहरेचैवना म्नाशंकरमर्चयेत् पूर्वोक्तेनविधानेनपूजयेत्परमेश्वरं तृतीयेप्रहरेदेवंनाम्नामाहेश्वरंतथा यामेचतुर्थेसंप्राप्तेरुद्रं नाम्नातुपूजयेत् यएवंभक्तिसंयुक्तोजागरंकारयेन्निशि सकलंफलमाप्नोतिसत्यमेतद्वरानने उषःस्नानंजपोहोमो भोजयेच्छिववत्सलान् श्वेतान्कुंभान्प्रदद्याच्चयथाशक्त्यासदक्षिणान् पूजयेद्ब्राह्मणान्भक्त्याव्रतेमाहेश्वरेस्थितान् वाचयेच्छिवशास्त्रंचसगच्छेच्छिवमंदिरं उभौतौपुण्यकर्माणौ नियतस्वर्गगामिनौ शिवव्रतेतदाख्यानं-यःपठे च्छिवसान्निधौ शिवलोकमवाप्नोतिशिवेनसहमोदते ॥ इतिस्कंदपुराणे इत्यन्याशिवरात्रिव्रतकथा अथ फाल्गुनामावास्याकृत्यं साचयुगादिरमावास्याचमाघस्येतिमात्स्यात् दर्शेतुमाघमासस्येतिस्कंदाच्च अत्रमाघो मांतमासेनग्राह्यः अस्यांयुगादित्वादपिंडश्राद्धंकार्य्यं प्रकृतिपार्वणेनसहतंत्रेणप्रयोगेपिशतभिषानक्षत्रयुक्तायांतु श्राद्धादिकंपितॄणामहातृप्तिदंभवति तदुक्तं हेमाद्रौविष्णुपुराणे माघासितेपंचदशीकदाचिदुपैतियोगंसहवारुणेन ऋक्षेणकालःसपरःपितॄणांनह्यल्पपुण्यैरुपलभ्यतेसावितिअस्यामेपूर्वाभाद्रपदायुक्तायांपितॄणांश्राद्धेसहस्रयुगतृ प्तिरिति तत्रैवोक्तं तत्रैवचेद्भाद्रपदातुपूर्वाकालेतदायत्क्रियतेपितृभ्यःश्राद्धेपरांतृप्तिमवाप्नुवंतियुगान्सहस्रंपितरश्च तेनेति यदिचेयंधनिष्ठायुक्तातदावर्षायुतंतृप्तिरित्युक्तंमहाभारते युगादिमाघामावास्याप्रकरणे कालेधनिष्ठाय

दिनामतोस्मिन्भवतिभूपालतदापितृभ्यः दत्तंजलान्नंप्रददातितृप्तिंवर्षायुतंतत्कुलजैर्मनुष्यैरिति. पूर्वाभाद्रपदा
योगेपाठांतरविशेषः अत्रैवचेद्भाद्रपदातुपूर्वाकालेतदायाक्रियतेमनुष्यैः श्राद्धंतदातृप्तिमवाप्यतेतद्युगंसहस्त्रंपित
रस्त्वदंतीति अत्रमाघ्यनंतरपक्षस्यैवशुक्लादिरीत्यामाघासितत्वमुक्तं इदंचकुंभादित्यज्ञेयमितिहेमाद्रिः इदंमन्वादि
रपिअस्यामेवामायांरुद्रादिपूजोक्तालिंगेफाल्गुनप्रक्रमे अमावास्यांपूजनीयारुद्राग्निब्राह्मणास्तथा मांसोदनैःपोलि
काभिःपूज्याश्चात्मास्ववांधवैरिति फाल्गुनामावास्याकृत्यं फाल्गुनशुक्लप्रतिपत्कृत्यं नारदीये अथफाल्गुनशुक्लादौ
देवदेवंगिरिप्रियं धूलिधूसरसर्वांगंजलैरुक्षेत्समाहितः कर्मणालौकिकेनापितस्यतुष्टोमहेश्वरः स्वसायुज्यंप्र
दिशतिभक्त्यासम्यक्समर्चितःइमांमेव फाल्गुनशुक्लप्रतिपदमारभ्यद्वादशादिनपर्यंतपयोव्रतमुक्तं श्रीभागवते
ऽष्टमस्कंधे तच्चतत्रैवान्वेष्टव्यम् फाल्गुनशुक्लद्वितीयायांप्रारभ्यंवन्हिपूजाव्रतं तच्चशुक्लासुकृष्णासुचसर्वास्वे
वद्वितीयासुप्रोक्तं नारदीये अथफाल्गुलशुक्लायांद्वितीयायांद्विजोत्तम पुष्पैःशिवंसमभ्यर्च्यसुश्वेतैरष्टगांधिभिःपुष्पै
र्वितानकंकृत्वापुष्पालंकरणैःशुभैः नैवेद्यैर्विविधैर्धूपैर्दीपैर्नीराजनादिभिः प्रसाद्यप्रणमेच्चैवसाष्टांगंपतितोभुवि
एवमभ्यर्च्यदेवेशंमर्त्योव्याधिविवर्जितः धनधान्यसमायुक्तोजीवेद्वर्षशतंभुवि यद्विधानंद्वितीयासुशुक्लपक्षगता-
सुच प्रोक्तंतदेवकृष्णासुकर्तव्यंविधिकोविदैः वन्हिरेवपृथक्तासुनानारूपवपुर्धरः पूज्यतेहिद्वितीयासुब्रह्म
चर्य्यादिपूर्ववत् इतिद्वादशमासगतोभयपक्षद्वितीयाकृत्यं अथफाल्गुनशुक्लाद्वितीयादिदिनद्वयगताद्वितीयाकृत्यं
नारदीये फाल्गुनस्यसितपक्षेतृतीयाकुलसौख्यदा पूजितागंधपुष्पाद्यैःसर्वमांगल्यदाभवेत् सर्वासुचतृती
यासुविधिःसाधारणोमुने देवीपूजाविप्रपूजादानंहोमोविसर्जनं इत्येवंकथितानीहतृतीयाव्रतानिते भक्त्या
कृतानिचेष्टांस्तुदद्युःकामान्मनोगतानिति अस्यामेवभूपिकातृतीयाव्रतम् भविष्योत्तरे कश्यपउवाच फाल्गु

नस्यसितपक्षेतृतीयायामुपोषिता प्रातःस्थित्वाब्रह्मचर्यंततोन्यस्मिन्दिनेपुनः व्रतिनीभुवनेगौरींपूजयेत्तद्र
तातुसा मंत्रेणानेनध्यायेत्तांपार्वतीप्रतिमांशुभां मृगाजिनावृतकुचांजटामुकटशोभितां गोधारथगतांदेवींरुद्र
ध्यानपरायणां– पूजयेद्गंधकुसुमैर्दीपालक्तकचंदनैः केसरैर्मधुरैर्द्रव्यैःस्वर्णमाणिक्यपूज्यया भूषिकारूपिकादे
वीभूषिकाललितांउमा· तपोवनरतागौरीसौभाग्यंमेप्रयच्छतु कालिकाश्रीशुभादेवीरुद्राणीपार्वतीशिवा स्तुता
मयाष्टांगभक्त्यापतिपुत्रान्प्रयच्छतु दौर्भाग्यंप्रशमंयातुसुप्रसन्नमना.सदा अवैधव्यंकुलेजन्मददात्वपरजन्मनि
अंगेचांगेतथोपांगेपर्वेपर्वेस्थितामृत सुखदृष्टिस्पर्शरसंगौरीसौभाग्यमृच्छतु एवमुच्चार्यमंत्रांश्चनारीज्ञानवती
सती पूजयेद्ब्राह्मणीकैस्तुमंत्रैमुख्या सुवासिनीः जीरकं कुटुहुंडश्चलवणंगुडसर्पिषा हवैराद्रैःफलैःस्वर्णैर्मनो
ज्ञैःपुष्पबंधनैः कुसुमैःकुंकुमैर्गंधै कालेयागुरुचंदनैः सिंदूरेणातिरक्तेनवस्त्रैर्नानाविधैःशुभैः अन्नैरनेकदेशोत्थैः
पूपकैस्तिलतंडुलैः इत्येवमादिनैवेद्यैःपूजयित्वाम्महाद्रुमं प्रदक्षिणंततःकृत्वाविप्रायचप्रदक्षिणां महाद्रुममश्व
त्थवटादिपुण्यवृक्षं एतत्करोतितेपुत्रिदुहिताव्रतमुत्तमं तत.प्राप्स्यसिदु.प्रापंत्रैलोक्येश्रीधरंपतिं एतद्व्रतमया
ख्यातंयास्यतिशाश्वतीःसमाः व्याख्यातंकश्यपेनादौरुक्मिण्यैव्रतमुत्तम याश्चारिष्यंतिता.सर्वाभविष्यंतिनि-
रामयाः– अंगप्रत्यंगसुभगालोकेदृष्टिमनोहराः स्थित्वावर्षशतंमन्येततोरुद्रपरंशुभं यास्यंतिहंसयानस्था
किंकिणीशब्दनादिताः तत्रगत्वारमिष्यंतिस्वभर्त्रावत्सरान्बहून् दिव्यभोगभुजोदृष्टाःसिद्ध्यष्टकसमन्विताः
अर्घ्यंमहार्घ्यमणिकुंकुमकेसराढ्यस्रग्गंधमुग्धमुखरालिकुलोपगीतं दत्त्वाफलाक्षतयुतमधुपादपस्यगौरीविलोकप-
हिताभवतीहनारी ॥ इतिभविष्योत्तरे भूपितव्यानक्तेनशुचिनासत्यभाषिणा सश्रीकंहरिमभ्यर्च्यरुद्रंवाह्युमया
सहेति अथफाल्गुनचतुर्थ्यांढुंढिराजव्रतंनारदीये –चतुर्थ्यांफाल्गुनेमासिढुंढिराजव्रतंशुभं तिलपिष्टैर्द्विजान्भो

ज्यस्वयंचाश्नीतवाग्यतः गणेशाराधनपरोदानहोमपरायणः तिलैरेवकृतेसिद्धिंप्राप्नुयात्तत्प्रसादतः सौ
वर्णंगजवक्त्रंचकृत्वासंपूज्ययत्नतः द्विजायपश्चाद्दद्यात्तंसर्वसौभाग्यवृद्धये यस्मिन्कस्मिंस्तुवामासेचतुर्थीरवि
वारयुक् सांगारकावाविप्रेंद्रसाविशेषफलप्रदा सर्वासुचचतुर्थीषुशुक्लाकृष्णासुनारद विघ्नेशएवसंपूज्योदेवे
शोभक्तितत्परैः अथांगारकचतुर्थीविशेषकृत्यं अंगारकचतुर्थ्यांतुस्नात्वोरवहांभसि अभ्यर्च्यांगारकेशानं
नमस्यंतिनरोनमाः नतेषांग्रहपीडास्यात्कदाचिदपिकुत्रचिदिति अंगारचतुर्थ्यामंगारकपीडानिवृत्तिर्भवती-
ति अथमत्स्यपुराणोक्तमंगारकचतुर्थीव्रतम् शुक्रउवाच चतुर्थ्यां गारकादिनेयदाभवतिदानव मृदास्नानंतदा
कुर्यात्पद्मरागविभूषणैः अग्निर्मूर्धादिवोमंत्रंजपंतिष्ठेदुदङ्मुखः शूद्रस्तूष्णींस्मरन्भौममास्तेभोगविवर्जितः
अथास्तमितआदित्येगोमयेनोपालिप्यच प्रांगणंपुष्पमालाभिरक्षताभिःसमंततः अभ्यर्च्याभिलिखेत्पद्मंकुंकु
मेनाष्टपत्रकं कुंकुमस्याप्यभावेतुरक्तचंदनमिष्यते चत्वारःकरकाःकार्याभक्ष्यभोज्यसमन्विताः तंडुलैरक्तशा
लीयैःपद्मरागैश्चसंयुताः चतुःकोणेषुतान्कृत्वाफलानिविविधानिच गंधमाल्यादिकंसर्वंतथैवाविनिवेदयेत् सुव
र्णशृंगींकपिलामथार्च्यरौप्यैःखुरैःकांस्यदुहांसवत्सां धुरंधरंरक्तमतीवसौम्यंधान्यानिसप्तांवरसंयुतानि यव
गोधूमधान्यांतिलकंगुश्यामाकमुद्गानि अंगुष्ठमात्रंपुरुषंतथैवसौवर्णमत्यायतबाहुदंडं चतुर्भुजंहैममयंनिविष्टंपात्रे
गुडस्यामलसर्पिषायुते सामस्वरज्ञायजितेंद्रियायपात्रायसामध्वनिसंयुताय दातव्यमेतत्सकलंकुटुंबिनेद्विजा
यवैनैवचदंभयुक्ते अत्रभौममंत्रः भूमिपुत्रमहातेज स्वेदोद्भवपिनाकिनः रूपार्थीत्वांप्रसन्नोहंगृहाणार्घ्यंन
मोस्तुते मंत्रेणानेनदत्वार्घ्यंरक्तचंदनवारिणा ततोर्चयेद्द्विजवरंरक्तमाल्यांबरादिभिः दद्यान्मंत्रेणतेनैवभौ
मंगोमिथुनान्वितं भौमंपूर्वोक्तसुवर्णप्रतिमामयं गोमिथुनंपूर्वोक्तमेव पूर्वोक्तगुणसंपन्नायब्राह्मणायदद्यादिति

शय्यांचशक्तितोदद्यात्सर्वोपस्करसंयुतां दद्यादिष्टतमंलोकेयच्चान्यदपिस्वगृहे तत्तद्वरापतेर्देयंतदेवाक्षयमि
च्छतेति अन्यत्रापि अंगारकदिनेप्राप्तेचतुर्थीवाचतुर्दशी षष्टिवर्षसहस्राणितत्कर्ताविंदतेफलमित्यनेनांगार
कचतुर्थीव्रतमप्येतत्फलकं इत्यंगारकचतुर्थीव्रतंच चतुर्थीभूमिपुत्रेणेत्यादि सामान्यव्रतप्रकरणोपेद्रष्टव्यं अथा
त्रोपयुक्तोभौमपूजाविधिर्लिख्यते आंह्रांहंसः खइत्यनेनप्राणायामत्रयंकृत्वा अस्यभौममंत्रस्य विरूपाक्षऋ
षिर्गायत्रीछंदो भौमोदेवता ओंबीजं ह्रांशक्तिः खःकीलकं भौमप्रीत्यर्थेविनियोगः
ऋष्यादीन् शिरःप्रभृतिषु विन्यस्य षड्बीजैः षडंगन्यासंविधाय जपाभंशिवस्वेदजहस्तपद्मैर्ग
दाशूलशक्तीर्वरंधारयंतं अवंतीसमुत्थंसुमेषासनस्थंधरानंदनंरक्तवस्त्रंसमीडे इतिध्यात्वामानसोपचारैः सपू
ज्यावाह्यचपूजांचकृत्वा षड्भिर्बीजैःषडंगानिसपूज्यैकविंशतिकोणकोष्टेषुमंगलादीन्पूजयेत् मंगलायनमः १
भूमिपुत्रायनमः ॥ २ ॥ ऋणहर्त्रेनमः ॥ ३ ॥ धनप्रदायनमः ॥ ४ ॥ स्थिरासनायनमः ॥ ५ ॥
महाकायायनमः ॥ ६ ॥ सर्वकर्मविरोधकायनमः ॥ ७ ॥ लोहितायनमः ॥ ८ ॥ लोहिताक्षायन
म. ॥ ९ ॥ सामगानांकृपाकरायनमः ॥ १० ॥ धरात्मजायनमः ॥ ११ ॥ कुजायनमः ॥ १२ ॥ भौमायनमः
॥ १३ ॥ भूमिदायनमः ॥ १४ ॥ भूमिनंदनायनमः ॥ १५ ॥ अंगारकायनमः ॥ १६ ॥ यमायनमः ॥ १७ ॥ सर्वरो
गापहारकायनमः ॥ १८ ॥ वृष्टिकर्त्रेनमः ॥ १९ ॥ वृष्टिहर्त्रेनमः ॥ २० ॥ सर्वकामफलप्रदायनमः ॥२१॥ इतित
द्बाह्ये इंद्रादीन् वज्रादींश्चपूजयेत् ततोधूपादिविशेषपूजांसमाप्य विशेषार्घ्यंदद्यात् प्रदक्षिणांततःकृत्वाविसृ
ज्यद्विजपुंगवं नक्तामक्षारलवणमश्नीयाद्घृतसंयुतं यस्तुव्रतंपुमान्कुर्य्यादेवमंगारकाष्टक चतुरोवाथवातस्यत
त्पुण्यंप्रवदामिते रूपसौभाग्यसंपन्नःपुनर्जन्मनिजन्मनि वैष्णवोवाशिवाभक्तः सप्तद्वीपाधिपोभवेत् सप्तकल्प

सहस्राणिरुद्रलोकेमहीयते इत्यंगारकचतुर्थीव्रतपूजा अंगारकशुक्लचतुर्थ्यांसुखचतुर्थीव्रतकथा भविष्योत्तरे सु
मंतुरुवाच ॥ सुखावहांशृणुसुखांसौभाग्यकरणींपरां चतुर्थींकुरुशार्दूलरूपसौभाग्यदांशुभां सुखव्रतंमहापुण्यं
रूपारोग्यप्रदायकं सुसूक्ष्मंसुंदरंधन्य मिदंपुण्यंसुखावहं परत्रफलदंवीर दिव्यरूपप्रदायकम् ॥ वि-
लासांचित्रमाक्षेपहासितंचेष्टितंशुभं सुखव्रतेनसर्वस्याच्छुभंकुरुकुलोद्वह कृतेव्रतेतुदेवेशाविघ्नेशाशिवयोःसुते
यदाशुक्लचतुर्थ्यांतुवारोभौमस्यवाभवेत् तदासासुखदाज्ञेयाचतुर्थीवैसुखेतिच पुरामैथुनमाश्रित्यस्थिताभ्यां
तुहिमाचले भौमोमाभ्यांमहारौद्रंरक्तबिंदुश्च्युतःक्षितौ मेदिन्यासप्रयत्नेनसुखेनतुधृतोयतः जातस्तस्यांमहा
वीरोरक्तोरक्तसमुद्भवः उमायांअंगारेवोत्पन्नस्तस्मादंगारकोह्ययं अंगदोंगारकांतिश्चअंगानांसुखदायकःसौभा
ग्यादिकरोयस्मात्तस्मादंगारकोमतः भक्त्याचतुर्थ्यांनक्तेनयोवैश्रद्धासमन्वितः उपोष्यतिनरोराजन्नारीवातन्य
मानसा पूजयेच्चकुजंभक्त्यारक्तपुष्पविलेपनैः गणेशंप्रथमंभक्त्यासंपूज्यश्रद्धयान्वितः सतुष्टःप्रयच्छेतसौभा
ग्यंरूपसंपदम् पूर्वंतुकृतसंकल्पः स्नानंकृत्वायथाविधि गृहीत्वामृत्तिकांविद्वन्मंत्रेणानेनभारत देवैस्त्वंउ
दितापूर्वंकृष्णेनोद्धारिताकिल तस्मान्मेदहपाप्मानंयन्मयापूर्वसंचितं इदंमंत्रंपठन्वीरआदित्यायप्रदर्शयेत्
आदित्यरश्मिभिः पूतांगंगाजलकणोक्षिता दत्वामृदंशिरसितांसर्वांगेषुनियोजयेत् ॥ ततःस्नानंप्रकुर्वीतमंत्र
पूर्वंजलेशुभे यूयमापःस्थसर्वेषांदेवदानवसेविताः स्वेदांडजोद्भिजानांचजंतूनांसुखयोनयः स्नातोहं
सर्वतीर्थेषुसर्वप्रस्रवणेषुच तथाकाश्यादिक्षेत्रेषुमानसादिसरस्सुच नदीषुदेवखातेषुस्नातोहंतेषुवैध्याय
न्पठन्निमंमंत्रं ततःस्नानंसमाचरेत् ततःस्नातः शुचिर्भूतो गृहमागत्यचस्पृशेत् दूर्वाश्वत्थशमींस्पृष्ट्वागां
तुमंत्रेणमंत्रवित् दूर्वांनमस्येमंत्रेणअश्वत्थंशमयस्तथा गांदृष्ट्वातुततोदेव्यैदद्याद्वीरप्रदक्षिणां समालभ्य

केनविभोश्वतस्र कुजसंयुता: सर्वास्वंगारकचतुर्थीषुसमान्यविधिनोपोष्यमानासुतिसृभिस्तिसृभिरंतरस्तासुच
तुर्थीविशिषविधिंशृण्वित्यर्थः दशसौवर्णिकमुख्यंदद्याद्द्वाद्धमथापिवा सौवर्णपात्रेरौप्येवाशक्त्यातास्रयेपिवा
विंशत्पलानिपात्राणिविंशत्यर्द्धमयान्विता विंशत्कर्षाणिवावीरअतोहीनंनकारयेत् शक्त्याविप्तस्यभक्त्यातुपा
त्रेताम्रमयेपिवा प्रतिष्ठाप्यकुजंपात्रेरक्तवस्त्रेणवेष्टितं पुष्पमंडपिकांकृत्वादिव्यैर्धूपैश्चभूषितां तत्रस्थंपूजये
द्देवंपूर्वमंत्रैः क्रमेणतु भक्ष्यभोज्यैरनेकैश्चफलैरत्नैश्चसंयुतैः वस्त्रैःप्रावरणैर्यानैःशय्योपानद्वरासनैः छत्रैःपुष्पैर्गं
धवरैः शक्त्याविप्तानुसारतः ब्राह्मणायचतद्दद्याद्दक्षिणासहितंनृप वाचकायमहाबाहोगुणिनेश्रेयसेनघ अंगार
केणसंयुक्तांधेनुंशीलसमान्वितां अनेनविधिनादत्वायथोक्तफलभाग्भवेत् इतितेकथितापुण्यातिथीनामुत्तमा
तिथिः यामुपोष्यनरोरूपंदिव्यमाप्नोतिभारत कांत्याचेयसमंवीरतेजसारविसुप्रभं प्रतापेहरितुल्यंतुसर्वतो
बलसम्मितं ईदृग्रूपवरंप्राप्ययातिभौमसदोनृप प्रसादाद्विघ्ननाथस्यगणेशस्यगुणायते पठतांश्रृण्वतांराज
न्कुर्वतांचविशेषतः ब्रह्महत्यादिपापानिक्षीयंतेनात्रसंशयः ॥ इतिभविष्यपुराणेसुखांगारकचतुर्थीव्रतं एवमे
वगणपतिचतुर्थी भविष्यत्पुराणे हेमाद्रौ चतुर्थ्यांतुसदाराजन्निराहारोव्रतान्वितः चतुर्थ्यांचसदाराजन्नारखारेव्र
तान्वितइतिनिर्णयामृतेपाठः दत्वातिलान्नंविप्रायस्वयंभुक्तेतिलोदनं दिवानिराहारोरात्रौभुक्तं इतिविरोध
परिहारः वर्षद्वयेसमाप्तिर्हिव्रतस्यतुयदाभवेत् विनायकस्तस्यतुष्टोददातिफलमीहितं इतिभविष्यपुराणेगणपति
चतुर्थीव्रतं अथकूर्मपुराणोक्तंयमचतुर्थीव्रतं भरण्यांतुचतुर्थ्यांतुशनैश्चरदिनेयमं पूजयेत्सप्तजन्मोत्थैर्मुच्यतेपात
कैर्नरः इतियमचतुर्थीव्रतं अथफाल्गुनादिचातुर्मास्यचतुर्थीव्रतं वाराहपुराणे अगस्त्यउवाच अथविघ्नहरंराजन्क
थयामितवानघ येनसम्यक्कृतेनैवनविघ्नउपजायते चतुर्थ्यांफाल्गुनेमासिगृहीतव्यंव्रतंत्विदं नक्ताहारेणराजेंद्र

तिलानांपारणंस्मृतं तदेवाग्नौचहोतव्यंतद्देयंब्राह्मणेषुच तत्रमंत्रः दिव्यायशूरायगजाननायदंष्ट्राकरालायनमः
शिवाय नगात्मजादेहमलोद्भवायकुठारहस्तायनमोवराय ताम्रपात्रैः पायसाढ्यै श्चतुर्भिः सहितंनृप पंचमेनति
लैः सार्द्धं गण शांतिकरेणच निर्णयामृतेतु आयसैः पंचभिः पात्रै रुपेतंनवभिस्तथेतिपाठः मृण्मयानिदरि
द्रस्तुविधिनानेनकारयेत् चातुर्मास्यव्रतंचैवकृत्वैवंपंचमेतथा अनेनमन्त्रेणपूजांकृत्वा स्वाहांतेनतिलान्हुत्वातिला
न्नब्राह्मणेभ्योदत्वास्वयमपितदेवाश्नीयात् सौवर्णंगजवक्त्रंतुकृत्वाविप्रायदापयेत् इत्थंव्रतमिदंकृत्वासर्वविघ्नात्प्रमु
च्यते निर्णयामृतेतु एवंमासचतुष्टयेव्रतंकृत्वा आषाढशुक्लचतुर्थ्यांसौवर्णविनायकदानमात्रंकुर्यादिति हयमेध
स्यविघ्नेतुसंजातेसगरः पुरा एतदेवचरित्वातुहयमेधंसमाप्तवान् एतदेवहरश्चक्रेत्रिपुरोयेनघातितः मयासमु
द्रमथनेत्वेतदेवव्रतंकृतं अन्यैरपिमहीपालैरेतदेवपुराकृतं ततोनिर्विघ्नसिद्ध्यर्थंविघ्नोपशमनंपरं अनेनकृतमात्रे
णसर्वविघ्नैः प्रमुच्यते ततोरुद्रपुरींयातिवाराहवचनंयथा विघ्नानितस्यनभवंतिगृहेकदाचिद्ध र्थकामसुखसिद्धि
विघातकानि यःसप्तसिन्धुशकलाकृतिकंतदंतंविघ्नेशमर्चयातिनक्तकृतीचतुर्थ्यां इतिवाराहपुराणोक्तमविघ्नविनाय
कव्रतं निर्णयामृते वैनायकचतुर्थीव्रतम् मत्स्यपुराणे चतुर्थीनक्तभुग्दत्वाअब्दांतेहेमवारणं व्रतंवैनायकनाम
शिवलोकफलप्रदं इदंव्रतंविशेषानभिधानाद्द्वादशस्वपिपुशुक्लकृष्णोभयचतुर्थीमात्रेविधेयमितिगम्यते एवमनो
रथचतुर्थ्यादिविनायकव्रता निकुदचतुर्थ्यादिगौरिव्रतानिच तृतीयायुक्तचतुर्थ्यामेवकार्य्याणि अन्यानि
नागचतुर्थ्यादिव्रतानिपंचमीयुक्तायांचतुर्थ्यांकार्य्याणीतिसिद्धांतः पक्षद्वयगतास्वपिचतुर्थीषुतिथिपत्वेनगणेशः
पूज्यः चतुर्थ्यांगणनाथस्येत्युक्तत्वात् सर्वासुचतुर्थीषु ढुंढिराजगणपति यात्रोक्ता काशीखंडे कुर्य्यां
त्प्रतिचतुर्थीहयात्रांविघ्नशितुःसदा ब्राह्मणेभ्यस्तुनस्यावै देवास्यमोदकामुदेति अथभविष्यपुराणोक्तंगणे

तुहस्तेनततोमंत्रमुदीरयेत् सर्वदेवमयीदेविनिर्ऋतिस्त्वप्रपूजिता तस्मात्स्थशामिवंदेत्वांवंदितापापहाभव
ततोमौनेनवागत्यवंदित्वागृहदेवताः प्रक्षाल्यचमृदापादावाचांतोग्निगृहंविशेत् होमंतत्रप्रकुर्वीतएतैर्मंत्रपदैःशुभैः
शर्वायशर्वपुत्राय पार्वतीशसुतायच कुजायलोहितांगाय ग्रहेशांगारकायच ॐकारपूर्वकैर्मंत्रैः स्वाहा
कारसमन्वितैः अष्टोत्तरशतंवीर चार्द्धमर्द्धार्द्धमेववा एतैर्मंत्रपदैर्भक्त्याकामतोऽकामतोपिवा खादि
रीभिः समिद्भिश्चआज्यमिश्रैर्यवैस्तिलैः भक्ष्यैर्नानाविधैश्चान्यैः शक्त्यभक्तिसमन्वितः कृत्वाहोमंततोवीरदेवं
संस्थापयेत्क्षितौ सौवर्णराजतंताम्रभद्रदारुमयंतथा भद्रदारुः सरलः गांगेयपात्रेरौप्येवा अर्घ्यः कुंकुमकेस
रैः अन्यैर्वालोहितैर्भव्यैःपत्रैःपुष्पैः फलैरपि रक्तैश्चविविधैर्वीरअथवाभक्तितोर्चयेत् यावद्भिसूच्यतेवित्तंपुष्पं
वावीरभक्तितः तावद्विवर्द्धतेपुण्यंदातुःशतसहस्रकं यद्वाताम्रमयेपात्रेवंशजेमृण्मयेथवा पूजयेत्तुनरोभक्त्याशक्त्याकुं
कुमकेसरैः ॐअंगारकायनमःपादयोः कुजायनमोवदने भौमायनमःस्कंदयोः मंगलायनमोबाह्वोः वक्राय
नमऊर्वोः वक्रायनमोजंघयोः लोहितायनमःशिखायां पुरुषाकृतिंकुजपात्रेएभिर्मंत्रपदैर्यजेत् भूमिपुत्रोमहातेजाः
स्वेदोद्भवपिनाकिनः रूपार्थीत्वांप्रपन्नोस्मिगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यमंत्रः महादेवांगसंभूतमेदिनीगर्भसंभ
व अंगारकमहाराजलोहितांगनमोस्तुते सुगंधपुष्पधूपाद्यैर्ब्राह्मणायःप्रपूजयेत् गुडोदनघृतक्षीरगोधूमान्
शालितंडुलान् अवेक्ष्यशक्तिंदद्याद्वै ब्राह्मणेभ्योजितेंद्रियः वित्तशाठ्यंतुकुर्वाणो नामुत्रफलभाग्भवेत्
शतानीकउवाच अंगारकेणसयुक्ताश्चतुर्थ्यानक्तभोजनैः उपोष्याःकतिसंख्यास्तु उताहोसकृदेवहि सुमं
तुरुवाच चतुर्थीतुचतुर्थीतुयदांगारकसंयुता चतुर्थ्यांतुचतुर्थ्यांतुविधानंशृणुयादृश एकश्चतुर्थीशब्दस्तिथिपरः द्विती
यस्तत्संख्यापरइत्यर्थः उपोष्यातत्रतत्रैवप्रदेयोविधिवत्कुजः यायाशुक्लाअंगारकचतुर्थीसासोपोष्या उपोष्यन

तिलानांपारणंस्मृतं तदेवाग्नौचहोतव्यंतद्देयंब्राह्मणेषुच तत्रमंत्रः दिव्यायशूरायगजाननायदंष्ट्राकरालायनमः
शिवाय नगात्मजादेहमलोद्भवायकुठारहस्तायनमोवराय ताम्रपात्रैः पायसाद्यै श्चतुर्भिः सहितंनृप पंचमेनति
लैः सार्द्धं गण शांतिकरेणच निर्णयामृतेतु आयसैः पंचभिः पात्रै रुपेतंनवभिस्तथेतिपाठः मृण्मयानिदारि
द्रस्तुविधिनानेनकारयेत् चातुर्मास्यव्रतंचैवकृत्वैवंपंचमेतथा अनेनमंत्रेणपूजांकृत्वा स्वाहांतेनतिलान्हुत्वातिला
न्ब्राह्मणेभ्योदत्वास्वयमपितदेवाश्नीयात् सौवर्णंगजवक्रंतुकृत्वाविप्रायदापयेत् इत्थंव्रतमिदंकृत्वासर्वविघ्नात्प्रमु
च्यते निर्णयामृतेतु एवंमासचतुष्टयेव्रतंकृत्वा आषाढशुक्लचतुर्थ्यांसौवर्णविनायकदानमात्रंकुर्यादिति हयमेध
स्याविघ्नेतुसंजातेसगरः पुरा एतदेवचरित्वातुहयमेधंसमाप्तवान् एतदेवहरश्चक्रेत्रिपुरोयेनघातितः मयासमु
द्रमथनेत्वेतदेवव्रतंकृतं अन्यैरपिमहीपालैरेतदेवपुराकृतं ततोनिर्विघ्नासिद्ध्यर्थंविघ्नोपशमनंपरं अनेनकृतमात्रे
णसर्वविघ्नैः प्रमुच्यते ततोरुद्रपुरींयातिवाराहवचनंयथा विघ्नानितस्यनभवंतिगृहेकदाचिद्व र्थकामसुखसिद्धि
विघातकानि यःसप्तसिन्धुशकलाकृतिकंतदंतंविघ्नेशमर्चयतिनक्तकृतीचतुर्थ्यां इतिवाराहपुराणोक्तमविघ्नविनाय
कव्रत निर्णयामृते वैनायकचतुर्थीव्रतम् मत्स्यपुराणे चतुर्थ्यांनक्तभुग्दत्वाअब्दांतेहेमवारणं व्रतंवैनायकनाम
शिवलोकफलप्रदं इदंव्रतंविशेषानभिधानाद्द्वादशस्वपिपुशद्रकृष्णोभयचतुर्थीमात्रविधेयमितिगम्यते एवमनो
रथचतुर्थ्यादिविनायकव्रता निकुंदचतुर्थ्यादिगौरीव्रतानिच तृतीयायुक्तचतुर्थ्यामेवकार्याणि अन्यानि
नागचतुर्थ्यादिव्रतानिंपंचमीयुक्तायांचतुर्थ्यांकार्याणीतिसिद्धांतः पक्षद्वयगतास्वपिचतुर्थीषुतिथिपत्वेनगणेशः
पूज्यः चतुर्थ्यांगणनाथस्येत्युक्तत्वात् सर्वासुचतुर्थीषु ढुंडीराजगणपति यात्रोक्ता काशीखंडे कुर्यात्
स्नातिचेतु गीहयात्रांविघ्नेशितुःसदा ब्राह्मणेभ्यस्तुतस्यैवे देवाःसूर्मोदकामुदेति अथभविष्यपुराणोक्तंगणे

शचतुर्थीव्रतं ॥ ब्रह्मोवाच ॥ गणेशःपूजितःकुर्य्यां च्चतुर्थ्यांसर्वकर्मसु अविघ्नंसुरलोकेपुगतिमिष्टांप्रयच्छति
कर्मस्वविदुषांविघ्नंकुर्य्याच्चैवनसंशयः अतोभवतिविघ्नमविदुषांस्मरणमकुर्वतां : तेनकर्मकालेऽवश्यं
स्मर्तव्यःपूज्यश्च मूलमंत्राःस्वसंज्ञाभिरंगमंत्राश्चकीर्त्तिताः पूर्ववत्पद्ममध्यस्थःकर्त्तव्यश्चातिथीश्वरः अत्रति
थीश्वरोगणेशः अस्यमंत्रः गणेशायनमः एभिरेवमंत्राक्षरैःषडंगादिन्यासः गंधपुष्पोपहारैश्चयथाशक्तिविधी
यते पूजास्यवित्तशाठ्येनकृतापिनफलप्रदा आज्यधारासमिद्भिश्च दधिक्षीरान्नमाक्षिकैः पूर्वोक्तफलदोहोमः
कृतःशांतेनचेतसा इतिभविष्योत्तरोक्तंसदागणेशचतुर्थीव्रतं अथवर्षसाध्यंगणपतिव्रतं सूतउवाच चतुर्थ्यांन
तुभुंजीतस्नात्वानद्यांनृपोत्तम रक्तांवरधरोभूत्वारक्तगंधानुलेपनः रक्तवीतोगणाधीशंविनायकमथार्चयेत् रक्तचं
दनतोयेनस्नाप्यपूर्वंविधानतः विलिप्यरक्तगंधेनरक्तपुष्पैरथार्चयेत् ततःसौगंधिकंधूपमाज्ययुक्तंसचंदनं नैवे
द्यंचैवहारिद्रंगुडखंडघृतप्लुतं एवंसंवत्सरंपूज्यविनायकमथास्तुवत् इक्ष्वाकुरुवाच नमस्कृत्वामहादेवंस्तोष्ये
हंतंविनायकं महागणपतिंशूरमूर्जितंजयवर्द्धनं एकदंतंद्विदंतंचचतुर्दंतंचतुर्भुजं त्र्यक्षंत्रिशूलहस्तंचरक्तनेत्रंवर
प्रदं आंबिकेयंशंकुकर्णंप्रचंडंदंडनायकं आरक्तदंडिनंचैववह्निवक्त्रंहुतप्रियं अनार्चितोविघ्नकरःसर्वकार्येषुयो
नृणां तंनमामिगणाध्यक्षंभीममुग्रमुमासुतं मदमत्तंविरूपाक्षंभववक्त्रसमुद्भवं सूर्य्यकोटिप्रतीकाशंभिन्नां
जनचयप्रभं बुधंसुनिश्चलंशांतंनमस्यामिविनायकं नमोस्तुब्रह्मरूपायविष्णुरूपायतेनमः नमोस्तुगजरूपायग
जानांपतयेनमः मेरुमंदररूपाय नमः कैलासवासि ने नमोविघ्नविनाशायनमस्तेब्रह्मचारिणे जगत्स्तुतायदेवा
यनमस्तुभ्यंविनायक त्वयापुरातुपूर्वंपादेवानांकार्यसिद्धये गजरूपंसमास्थायत्रासिताःसर्वदानवाः ऋषीणांदेव
तानांचकृताःसर्वमनोरथाःयतस्ततःसुरैःसर्वैःपूज्यसेत्वंभवात्मज त्वामाराध्यगणाध्यक्षंसर्वज्ञंकामरूपिणं कामार्थं

रक्तकुसुमैरक्तचंदनवारिभिः रक्तांबरधरोभूत्वाचतुर्थ्यामर्चयेज्जपेत् त्रिकालमेककालंवानियतोनियताशनःराजा
नंराजपुत्रंचराजमंत्रिणमेवच राज्यंवासर्वाविघ्नेशंवशीकुर्य्यात्सराष्ट्रकं अविघ्नंतपसामह्यं कुरुविघ्नविनायक म
यात्वंसंस्तुतोभक्त्यापूजितश्चविशेषतःयत्फलंसर्वतीर्थेषुसर्वयज्ञेषुयत्फलं तत्फलंसर्वमाप्नोतिस्तुत्वादेवंविनायकं वि
षमंनभवेत्तस्यनसगच्छेत्पराभवंनचाविघ्नोभवेत्तस्यजातोजातिस्मरोभवेत् यइदंपठतिस्तोत्रंषड्भिर्मासैर्वरंलभेत् सं
वत्सरेणसिद्धिंचलभतेनात्रसंशयः॥इतिश्रीनरसिंहपुराणोक्तंगणेशचतुर्थीव्रतं तदुपयोगिगणेशस्तोत्रंगणेशचतुर्थी
व्रतमात्रेवश्यंपठनीयं अथभविष्योत्तरोक्तं स्नपनचतुर्थीव्रतं युधिष्ठिरउवाच॥ यत्नासिद्ध्यंतिकार्य्याणिप्रारब्धानि
नरोत्तमैः तत्केनकारणेनैवएतन्मेब्रूहिमाधवः श्रीकृष्णउवाच विनायकश्चसिद्ध्यर्थंलोकस्यविनियोजितःगणानामा
धिपत्येचरुद्रेणब्रह्मणातथा तेनोपसृष्टोयस्तस्यलक्षणानिनिबोधमे स्वप्नेवगाहतेत्यर्थंतैलंमुंडंचपश्यति कषाय
वाससश्चापिक्रव्यादांश्चाधिरोहति अंत्यजैर्गर्दभैरुष्ट्रैः सहैवायातिनिंदति व्रजमानंतथात्मानंमन्यतेनुगतं
परैः विमानाविफलारंभोऽनष्टेसीदत्कचित्ततः पताकाविहितछायां प्रयातिहतलक्षणः करभारूढमात्मा
नंमहिषंखरगंतथा यातुधानान्वितंयांतंप्रासादोपरिधावनं पश्यतेकुरुशार्दूलस्वप्नांतेयस्तुमानवः शृंखलालान
संयुक्तंकरवीरविभूषितं तेनोपयुक्तस्तुनरोनराज्यंलभेततथा कुमारीनचभर्तारमपत्यंगुर्विणीतथा आचार्यत्वं
श्रोत्रियश्चनाशिष्योध्ययनंतथा वणिग्लाभंनचाप्नोतिकृषिंचापिकृषीवलः स्नपनंतस्यकर्त्तव्यंपूर्वोक्तविधिपूर्वकं
गौरसर्षपकल्केनवस्त्रेणाच्छादितस्यतु सर्वौषधैःसर्वगंधैर्विलिप्तशिरसस्तथा शुक्लपक्षेचतुर्थ्यांतुवारेधिषणस्यतु
तिथौचवीरनक्षत्रेतस्यैववपुषस्यच भद्रासनोपविष्टस्यस्वस्तिवाच्यंद्विजोत्तमैः चत्वारऋग्यजुःसामाथर्वाणश्रवणा
स्तथा व्योमकेशंतुसंपूज्यपार्वतींभूमिजंतथा धिषणंछेदपुत्रंवाकांतलक्ष्यंचभारत विधुंतुदंवाहुलेयंनरकस्यच

दारुणं कृष्णस्यपितरंतातश्चवतारंसितंतथा अश्वस्थानाद्गजस्थानाद्वल्मीकाद्धूदसंगमात् मृत्तिकासेवनंरक्तंगुग्गु लंचाप्सुनिक्षिपेत् पटाहृतेपुकोणेषुचतुरान्कलशोद्भवान् चर्मण्यानडुहेरक्तेस्थाप्यभद्रासनंतथा सहस्राक्षं शतधारमृपिभिःपावनंकृतं तेनत्वामभिषिंचामिपावमान्यःपुनंतुते भगंमिंद्रश्चवायुश्चभगंसप्तर्षयोविदुः यन्मके शेपुदौर्भाग्यंसीमंतेयश्चमूर्द्धनि ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा स्नातस्यसार्षपं तैलं श्रावयेदुंबरेणतु जुहुयान्मूर्द्धनिकुशान्सव्येनप्रतिगृह्यच सितस्त्वमासितश्चैवतथाशालकटंकटः सकूष्मांडःसपुत्रोवाचेतिहास समन्वितैः नामभिर्बलिमंत्रैश्च नमस्कारसमन्वितैः दद्यात्सतोष्यसंतर्प्यकुशानास्तीर्य्यसर्वतः कृताकृतां स्तंडुलांश्चपललोदनमेवच मत्स्यान्पक्वांस्तथामापान्मांसेमतावेदवत पुष्पान्वितचगंधचसुरांश्चत्रिविधामपि मू लकंपूरिकापूपास्तथैवेंदुरिकास्तथा दध्यन्नंपायसंचैवगुडपिष्टसमोदकं विनायकस्यजननीमुपतिष्ठेत्ततोंबिका दूर्वासर्षपपुष्पाणांदत्त्वार्घ्यंपूर्णमंजलिं रूपंदेहियशोदेहिमह्यंदेह्यभयाशिवे ॥वलंकुरुमेवित्तंवलंचज्ञातिसंभवं तत शुक्लांवरधर शुक्लमाल्यानुलेपनः भोजनंब्राह्मणान्दद्याद्वस्त्रयुग्मंपुराण्यपि एवंविनायकंपूज्यग्रहांश्चैवविधानतः कर्मणांफलमाप्नोतिश्रियमाप्नोत्यनुत्तमां आदित्यस्ययदासत्यात्रिलोकस्वामिनस्तथा महागणपतेश्चैवकुर्वन्सिद्धिमवाप्नुयात् विनायकंसत्यवतांनराणांस्नानंप्रशस्तंमहाविघ्नविनाशकारि कुर्वंतियेविधिवदत्रसदैवतेषांकार्य्याण्यभीष्टफलदानिनसंशयोत्र ॥ इतिभविष्योत्तरेविनायकस्नपनचतुर्थीव्रतम् ॥ इदमेवाविनायकशांतिविधानम् फाल्गुणशुक्लपंचम्यां पितृपूजनं नागपूजनंच नारदीये पंचम्यांप्रतिमासंतुशुक्लेकृष्णेपिनारद पितॄणांपूजनंशस्तंनागानांचतदैवहि फाल्गुनशुक्लषष्ठ्यां पशुपतिपूजाव्रतं नारदीये फाल्गुणशुक्लषष्ठ्यांतुदेवंपशुपतिंद्विज मृण्मयंविधिनाकृत्वापूजयेदुपचारकैः [illegible]ण पृथक्पंचामृतैर्जलैः गंधै-

रालिप्यसुश्वेतैरक्षतैःश्वेतपुष्पकैः विल्वपत्रैश्चधत्तूरकुसुमैश्चफलैस्तथा संपूज्यनानानैवेद्यैर्नीराज्यंविधिवत्ततः
समाप्यप्रणिपत्यैनं कैलाशायविसर्जयेत् एवंकृताशिवार्चास्तुनरोनार्य्यथवामुने इहभुक्त्वावरान्भोगानं
तेशिवगतिंलभेत् ॥ अथदारिद्र्यहरषष्ठीव्रतं स्कंदपुराणे षष्ठीनामतिथिःपूज्यासामान्यादेवतैरपि
एकभक्तेननक्तेनतथैवायाचितेनवा उपवासेनदानेनतैलक्षारविवर्जिता: अयंहिभास्करोदेवोभगवान्भा
स्करद्युतिः येनशैघ्र्येणदृश्येततद्गुह्यंकथयाम्यहं गोपनीयंव्रतंदिव्यमिहलोकफलप्रदं अस्मिन्कृतेव्रतेचैवदारि
द्र्यंनभवेत्कुले षष्ठीतिथिंसमुद्दिश्यब्राह्मणस्याहिभोजनं शाल्योदनंचपयसिकृत्वाशर्करयायुतं वर्त्तुलंघृतसंयु
क्तंवर्षमेकंप्रदापयेत् कुलेतस्यैवयेजातायेभविष्यंतिमानवाः अक्षयास्तेमहात्मानोव्रतेनपुण्यपावना इहतस्यै-
वयेसांतितद्दारिद्र्यंनगच्छति ॥ इतिदारिद्र्यहरषष्ठीव्रतं पक्षद्वयगतासुसर्वासु षष्ठीषुतिथिपर्वेनस्कंदंपूज-
येत् तदुक्तंषष्ठ्यांपूजागुहस्यचेति फाल्गुनशुक्लसप्तम्यामर्कपुटव्रतं नारदीये तपस्यशुक्लसप्तम्यांव्रतमर्कपुटं
भवेत् अर्कपत्रैर्यजेदर्कमर्कपात्राणिचाश्नुयात् अर्कपत्राण्यपिपाठःपात्रपाठेतु अर्कवत्सुवर्णपात्राणीत्यर्थःपत्रपाठेतु
पत्रवाहनपत्रयोरित्यभिधानात् अर्कवाहनाप्तिरश्वप्राप्तिरितिफलं अर्कनामजपेत्पश्चादित्येवार्कपुटव्रतं धन
दंपुत्रदंचैतत्सर्वपापप्रणाशनं त्रिवर्गदमितिप्राहुःकेचिदेतद्व्रतंद्विज यज्ञव्रतंतथाह्यन्येविधिवद्धोमकर्मणा सर्वासु
सर्वमासेषुसप्तमीषुद्विजोत्तम भास्कराराधनंप्रोक्तंसार्वकामिकमित्यलं अत्रविधिः खखोल्कायनम इत्यनेनसूर्य्यं
संपूज्य अष्टम्यामर्कपत्रंप्राश्य भुंजीतेति इत्यर्कपुटसप्तमीव्रत अस्यामेवभविष्योत्तरोक्तं त्रिवर्गप्रदासप्तमीव्रतं
तदुक्तंहेमाद्रौ सप्तम्यांशुक्लपक्षेतुफाल्गुनस्येहयोनरः जपेद्वलीतिदेवस्यनाम्नात्रिपर्वणेचनं त्रिवर्गेष्टफलंदद्यादि
त्यादितेनैवपूजनादिकंकर्तव्यमिति अस्यामेवभविष्यपुराणोक्तंकामदासप्तमीव्रतं पितामहउवाच फाल्गुनेम

लपक्षस्यसप्तम्यांक्ष्माधराधर उपोषितोनरोनारीसमभ्यर्च्यतमोपहं सूर्य्यनामंजपन्भक्त्याभावयुक्तोजितेंद्रियः
उत्तिष्ठन्प्रस्वपंश्चैवसूर्यमेवानुकीर्त्तयेत् ततोन्यदिवसेप्राप्ते अष्टम्यांनियतोरविं स्नात्वासम्यक्समभ्यर्च्यदद्या
द्विप्रायदक्षिणां रतिमुद्दिश्यचैवाग्नौकृतहोमकृतक्रियः प्रणिपत्यजगन्नाथमितिवाक्यमुदीरयेत् यमाराध्यपुरादे
वीसावित्रीकाममापवै. समेददातुदेवेशःसर्वान्कामान्विभावसुः समभ्यर्च्यादितिःप्रापता स्तान्कामान्यथेप्सितान्
संददात्वखिलान्कामान्प्रसन्नोमेदिवस्पतिः भ्रष्टराज्योभवेद्भूपःसमभ्यर्च्यदिवाकरं कामार्थमाप्तवान्राज्यंस
मेकामान्प्रयच्छतु एवमभ्यर्च्यपूजांतुनिष्पाद्यहविशेषतः भुंजीतप्रयतःसम्यग्हविष्यंपतगध्वज फाल्गुनेचैत्रवैशा
खेज्येष्ठेमासितथापरं चतुर्भिःपारणमासैरेभिर्निष्पादितंभवेत् करवीरैश्चचतुरोमासान्संपूजयेद्रविं कृष्णागुरु
दहेद्धूपंप्राश्यगोशृंगजंजलं नैवेद्यंखंडवेष्टांश्चदद्याद्विप्रेभ्यएवच ततश्चश्रूयतामन्यात्वाषाढादिपुयाक्रिया जाती
पुष्पाणिशस्तानिधूपोगुग्गुलरेवच कृतपोदकमश्नीयान्नैवेद्यंपायसंमतं स्वयंतदेवचाश्नीयाच्छेषंपूर्ववदाचरेत्
कृतपोदकंकुशोदकं कार्त्तिकादिपुमासेपुगोमूत्रंकायशोधनं महंगाधूपःसंदिष्टःपूजारक्तोत्पलैस्तथा महांगधूपो
भविष्योत्तरेउक्तः कर्पूरकुंकुमपुष्पमगुरुचंदनंतथा शर्कराकुष्ठमुद्दिष्टंमहांगासिह्लकंतथा महांगोयंस्मृतोधूपःप्रि
योदेवस्यदिक्पतेः पलासपुष्पमितिवीरामित्रोदयेस्वरसः महांगमांसी कासारंचैवनैवेद्यंविशाठ्यंविवर्जयेत्
सद्भावेनैवसप्ताश्वःपूजितःप्रीयतेततः पारणांतेयथाशक्त्यास्थापितःपूजितोरविः प्रीणितश्चेप्सितान्कामान्द
दादन्याहतान्रविः एषापुण्यापापहरासप्तमीसर्वकामदा यथाभिलषितान्कामान्ददातिगरुडध्वज अपुत्रःपु
त्रमाप्नोतिअधनोधनमाप्नुयात् रोगाभिभूतश्चारोग्यंकन्याविंदतिसत्पतिं समागमंप्रवासीभिरुपोष्यैतदमाप्नुयात्
सर्वान्कामानवाप्नोतिरोगतश्चापिमुच्यते रोगतश्चापिमोदतेइतिपाठःसाधुःरोगतःस्वर्गतः पुनरेत्यमहीकृष्ण

धनंदेनसमोनरःक्ष्मातलेस्यान्नसंदेहः प्रसादाद्वीपतेर्नरः इतिकामदासप्तमीव्रतं रविवारयुतासप्तमीकल्याणसप्त
मी विजयाचभवति तस्यांश्रीसूर्यसंपूज्य सोदकुंभसकनकघृतपात्रंचदत्त्वा गुडक्षीरघृतादिभिःपायसेनद्वितीय
दिवसेविप्रान्संभोज्यस्वयंपायसभोजनं कुर्य्यादिति कल्याणविजयासप्तमीव्रतं अथयस्यांकस्यांचित् शुक्लस
प्तम्यां मत्स्यपुराणोक्तं सप्तमीस्नपनं सप्तमीस्नपननामव्याधिपीडाविनाशनं बालानांमरणंयत्रक्षीरपाणांतु
दृश्यते जातस्यमलवत्सायाः सप्तमीमासिनारद अथवाशुक्लसप्तम्यामेतत्सर्वंप्रशस्यते गोमयेनोपलिप्तायां
भूमावेकाग्निवत्तदा तंडुलैरक्तशालीयैश्चरुंगोक्षीरसंयुतं निर्वपेत्सूर्यरुद्राभ्यांमातृभ्यश्चविशेषतः कीर्तयन्सूर्यदेव
त्यंसप्तचैवघृताहुतीः जुहुयाद्रुद्रसूक्तेनकद्रुद्रायेतिनारद होतव्याःसमिधश्चात्रतथैवार्कपलाशयोः यवकृष्णतिलैर्हो
मःकर्तव्योष्टशतंपुनः व्याहृतीभिरथाज्येनतथैवाष्टशतंद्विज हुत्वास्नानंप्रकर्तव्यंमंत्रैस्तैरेवधीमता विप्रेणवेदावि
दुषाविधिवद्दर्भपाणिना स्थापयित्वातुचतुरःकुंभान्कोणेषुशोभनान् पंचमंचपुनर्मध्येदध्यक्षतविभूषितं स्थापये
देवंएकुंभसप्तर्चेणाभिमंत्रितं मंत्रोयथा सप्तऋषयः प्रतिहिताःशरीरेसप्तरक्षंतिसदमप्रमादं सप्तापःसप्तंतो
लोकमीयुस्तत्र जाग्रतो अस्वप्नजौसत्रसदौचदेवौ सौरेणतीर्थतोयेनपूर्णरत्नसमन्वितं सर्वान्सर्वौषधियुतान्पं
चभंगजलान्वितान् पंचरत्नफलैर्युक्तान्वासोभिःपरिवेष्टितान् सप्तधान्यसमायुक्तान्ससमृद्धिर्जलैस्तथा चतु
र्ष्वपिचकुंभेषुतोयगर्भेषुमध्यमं गृहीत्वाब्राह्मणस्तत्रसौरमंत्रानुदीरयेत् नारीभिःसप्तसंख्याभिरव्यंगांगीभिरत्र
च पूजिताभिर्यथाशक्त्यामाल्यवस्त्रादिभूषणैः साविप्राभिश्चकर्तव्यंमृतवत्साभिषेचनं दीर्घायुरस्त्वयंबालो
जीवपुत्रात्वियंतथा आदित्यश्चंद्रमाः सार्द्धं ग्रहनक्षत्रमंडलैः शक्रःसलोकपालोवैब्रह्माविष्णुमहेश्व
राः एतेन्येचदेवाद्याःसदापांतुकुमारकं माशनिर्माचराहुश्चमात्रबालग्रहाःकेचित् पीडांकुर्वंतुबालस्यमा

मातुर्जनकस्यच ततःशुक्लांबरधराकुमारपतिसंयुता सप्तकंपूजयेत्स्त्रीणामाचार्य्यंभार्ययासह कांचनींच
ततःकृत्वाताम्रपात्रोपरिस्थितां प्रातर्मांधर्मराजस्यगुरवेविनिवेदयेत् वस्त्रैःकांचनरत्नाद्यैर्भक्ष्यैःसघृतपायसैः
पूजयेद्ब्राह्मणांस्तत्रवित्तशाठ्यविवर्जिता भुक्त्वाचगुरुणाचेदमुच्चार्य्यंपुत्रसंतति दीर्घायुरस्तुबालोयंयावद्वर्षश
तंसुखी यत्किंचिदस्यदुरितंतत्क्षिप्तंवडवामुखे ब्रह्मारुद्रोहरिःस्कंदोविष्णुःशक्रोहुताशनः रक्षंतुसर्वदुष्टे
भ्योवरदाःसंतुसर्वदा एवमाद्यानिचान्यानिवदंतंपूजयेद्गुरुं शक्तितःकपिलांदद्यात्प्रणिपत्यविसर्जयेत् गुरुं
चपुत्रसहिताप्रणम्यरविशंकरौ हुतशेषंतदश्नीयादादित्यायनमोस्तुते इतिमत्स्यपुराणोक्तं सप्तमीस्नपनं
अथसौरव्रतंपद्मपुराणे पक्षोपवासीसप्तम्यांसमानेहैमपंकजं गावश्चशक्तितोदद्याद्धोमांतेघटसंयुताः एतत्सौ
रव्रतंप्रोक्तंसूर्य्यलोकप्रदायकं इतिसौरव्रतं अथान्यान्यपिसूर्य्यप्रियाणिव्रतानि शाल्योदनंतथामुद्गान्सु
गंधंघृतमेवच अपूपानाहपूर्णांश्चपयोदधितथागुडं एतैस्तुतृप्ततांयातिभास्करोन्नेनसप्ततीः वर्षाणिभरत
श्रेष्ठनात्रकार्य्याविचारणा कुलत्थकान्मसूरांश्चवल्लांश्चाटकएवच शिंबिकुंदंतथात्यम्लंराजमाषांस्तथैवच एता
न्नभास्करेदद्याद्यइच्छेच्छ्रियमात्मनः सप्तम्यांनस्पृशेत्तैलंनीलवस्त्रंनधारयेत् नजाप्यामलकैःस्नायादित्यादिनि
षेधास्तुहेमाद्रौस्पष्टाः पक्षद्वयगतासुसर्वासुसप्तमीषुतिथिपत्वेनादित्यःपूज्यः उक्तंच सप्तम्यांभास्करस्येति
अथफाल्गुनशुक्लाष्टम्यां शिवयोः पूजाव्रतंनारदीये शुक्लाष्टम्यांफाल्गुनस्यशिवंचापिशिवांद्विज गंधाद्यैः स
म्यगभ्यर्च्यसर्वसिद्धीश्वरोभवेत् अस्यामेवाष्टम्यांशीतलाव्रतमप्युक्तंतत्रैव फाल्गुनापरपक्षेतुशीतलामष्टमीदि
ने पूजयेत्सर्वपक्वान्नैःसप्तम्यांविधिवासितैः शीतलेत्वंजगन्माताशीतलेत्वंजगत्पिता शीतलेत्वंजगद्धात्रीशीत
लायैनमोनमः ॥ १ ॥ वंदेहंशीतलांदेवींरासभस्थांदिगंबरां मार्जनीकलशोपेतांविस्फोटकविनाशिनीं २

शीतलेशीतलेचेतियेजपंतिजलेस्थिताः तेपांतुशीतलादेवीस्याद्विस्फोटकशांतिदा ॥ ३ ॥ इत्येवंशीतलांमंत्रैर्यःसमर्चयतेद्विज तस्यैवपैभवेच्छांतिःशीतलायाःप्रसादतः सर्वमासेष्ववेपक्षेविधिवच्चाष्टमीदिने शिवचापिशिवांप्राच्यंलभतेवांछितंफलम् ॥ इतिशीतलाष्टमीव्रतम् ॥ अथात्रत्रिरात्रोत्सवविधानं फाल्गुनशुक्लपक्षमुपक्रम्योक्तं ब्रह्मपुराणे स्वल्पान्नभुग्भिरष्टम्यांसुस्नातैश्चस्वलंकृतैः लक्ष्मींसीतांचसंपूज्यगंधमाल्यादिभिर्दिवा ततःप्रदोषसमयेदीपाःशतसहस्रशः नरैर्गृहेगृहेदेयाःसर्वदेवेभ्यएवच देवेभ्यश्चापितृभ्यश्चततोवाह्यस्ववेश्मनः दत्तमिष्टंततोभोज्यंभक्षितव्यंस्वबंधुभिः तृतीयेहनिमध्यान्हेशोभनेर्धान्यराशिभिः गृहाणिभूपणीयानितथादेवगृहाण्यपि सीतांरामंचसंपूज्यगीतनृत्यसमाकुलं पक्वान्ननित्यंदानंचतत्रदेयंचयाचते नान्यत्किंचित्प्रार्थितव्यंलब्धग्राह्यंप्रयत्नतः इयंप्रदोषव्यापिनीग्राह्या तत्रैवदीपदानादेरुक्तत्वात् दिनद्वयेतद्व्याप्तावव्याप्तौवापरैवशुक्लपक्षेतिनिर्णयवाक्यात् अथफाल्गुनशुक्लपक्षेपुण्यनक्षत्रेसतिहरिपूजनं तत्र गौडाः फाल्गुनेसितपक्षस्थेपुण्यर्क्षेपूजयेद्धरिं पद्ममष्टदलंकृत्वानवम्यांवार्चयेद्धरिं दशम्यांवापिकर्तव्यंबलिकर्मतथात्मनःमंगलालंभनंकार्यमुत्सवश्चविशेषतः ब्राह्मणेभ्योधनंदेयंभृत्येभ्यश्चयथाक्रमं धान्यमन्नंसुवर्णंचवस्त्रमाभरणंतथा गोभूमिरत्नवेश्मानिदेयानिप्रयतात्मना संप्राप्तान्ग्राहयेत्सम्यङ्नतत्रग्लपयेन्मनः शय्यासनेचकर्तव्येगंधपुष्पाधिवासिते स्त्रिय पूज्या स्रजःकार्याः प्रहृष्टाश्चसुरक्षिताः निशायांक्रीडमानावैनृत्यैपुकृतभोजनाः अथ वुधाष्टमीव्रतं यदाष्टम्यांपूर्णायांवुधवारोभवति तदाकल्पोक्तविधिनैकभक्तव्रतंकार्यं तदुक्तंनिर्णयामृतेभविष्योत्तरे यदायदासिताष्टम्यांवुधवारोभवेत्किल तदातदाहिसंग्राह्यासैकभक्ताशनैर्नृप वुधाष्टमीतुसंपूर्णायथोक्तफलदायिनी संध्याकालेतथाचैवप्रसुप्तेचजनार्दने वुधाष्टमीनकर्तव्याहंतिपुण्यंपुराकृतं अस्याः कथाविधा

नचभविष्ये श्रीकृष्णउवाच वुधाष्टमीव्रतंपार्थशृणुष्वैकाग्रमानसः आसीद्राजाविदेहानांमिथिर्नामसवैरिभिः संग्रामेनिहतोवीर स्तस्य भार्यादरिद्रिणी, ऊर्मिलानामवभ्राममहींवालकसंयुता परेषांकर्मकुर्वाणाताद्रेधू मानचूंचरत् उपयेमेकुलीनत्वात्तत्कन्यांश्यामलांयमः ससप्तवासरान्हित्वाविहरस्वेतितांपतिः उवाचसाचताने वनिपिद्धापितं्यलोकयत् ददर्शमातरंतेपुपच्यमानांमहाभटैः तांविपण्णांयमःप्राहचौर्य्यंपापफलंत्विदं मातात वानुभवंतीत्यत्रोपायस्त्वयापुरा वुधाष्टमीव्रतंचीर्णंतच्छ्रेयोस्यैसमर्पय्तथाकृतेश्यामलया नि.ष्पापास्वर्गतोर्मिला सातुभर्तुस्समीपेचंदृश्यतेद्यापिभारत वुधस्यपार्श्वेनभासिमिथिराजसमीपगा विस्फुरंतीमहाराजवुधाष्टम्याः प्रभावतश्र्अथातः संप्रवक्ष्यामिवुधाष्टम्याविधिंनृप यदायदासिताष्टम्यांवुधवारोभवेत्क्वचित् तदातदाहिसंग्रा ह्याएकभक्ताशनैर्नृभिः स्नात्वानद्यांतुमध्याह्नेग्रहीत्वाकरकंनव जलपूर्णं सहेमानं कृत्वाखाद्यैः समन्वितं दद्या द्विप्रायतंगत्वागृहंचैवक्रमेणतु अष्टम्योष्टविधातव्याविचित्रान्नैःपृथक्पृथक् प्रथमामोदकैर्भक्ष्यैर्द्वितीयागुणकै स्तथा तृतीयाघृतपूरैश्चचतुर्थीवटकैर्नृप पंचमीशुभ्रकासारैःपष्ठीसौहालकैःशुभैः अशोकवर्त्तिभिःशुभ्रैः सप्तमीचातिवाहयेत् अष्टमीफणितापूर्णैः खंडवेष्टैर्युधिष्ठिर एवंक्रमेणकर्तव्याः सुहृत्स्वजनबांधवैः सहै कत्रास्थितैर्भोज्यभोक्तव्यंप्रीतिपूर्वकं उपाख्यानामिदंपार्थकीर्तयद्भिः शनैः शनैः आख्यानोपरमेपार्थभोजनंसहसात्यजेत् ततोभुक्त्वावुधस्याग्रेआचम्यचसमाहितः विप्रायवेदविदुषेवाचकाय प्रदापयेत् साक्षतंसहिरण्यंचजातरूपमयंशुभं शोभितंचार्चितंगंधैःपुष्पैर्धूपैःसुगंधिभिः पीतवस्त्रैःसमाछन्न वुधंसोमात्मजाकृतिम् मापकेनसुवर्णस्यतदर्द्धार्द्धेनवाकृतां वुधरूपंतुमत्स्यपुराणेउक्तं पीतमाल्यांवरधरःकर्णि कारसमद्युतिः खड्गचर्मगदापाणिःसिंहस्थोवरदोवुधः भक्तियुक्तस्तुकौंतेयदद्यादेवंसमुच्चरन् ओंविवुधासनम

ॐसोमात्मजायनमः ॐदुर्बुद्धिनाशायनमः ॐसुबुद्धिप्रदायनमः ॐतारात्मजायनमः ॐसौम्यग्रहायनमः
ॐसर्वसौख्यप्रदायनमः इमेपूजामंत्राः ॐबुधोयंप्रतिगृह्णातिद्रव्यदस्तुबुधःस्वयं दीयतेबुधरूपेणतुष्यतांसबुधो
मम दानमंत्रः दुर्बुद्धिबोधदुरितंनाशयित्वावियोबुधः सौख्यंसौमनसंनित्यंकरोतुशशिनंदन इत्युच्चार्य्यगृही
त्वातुदत्वामंत्रपुरस्कृतं सप्तजन्मानिराजेंद्रभवेज्जातिस्मरोभुवि धनधान्यसमायुक्तः पुत्रपौत्रसमृद्धिमान् दी
र्घायुर्विपुलान्भोगान्बहून्भुक्त्वामहीतले सत्तीर्थेपुरणेचैवध्यात्वानारायणंलभेत् मृतोसौस्वर्गमाप्नोतिपुरंदरपुरींनृ
प यत्रास्तेयावदासृष्टेर्यावदाभूतसंप्लवं एवमेषासमाख्यातागुह्यापार्थबुधाष्टमी यांश्रुत्वाब्रह्महागोघ्नःसर्वपापैः
प्रमुच्यते योवाष्टमींप्राप्यबुधेनयुक्तांभक्त्यार्चयेच्छशिसुतंकरकोपरिस्थं पक्वान्नपानैःसहिरण्यवस्त्रैःपश्यत्य
सौयमपुरंनकदाचिदेव ॥ इतिभविष्योत्तरेबुधाष्टमीव्रतं ॥ अथसोमाष्टमीव्रतं हेमाद्रौभ
विष्योत्तरेवारेसोमस्यचाष्टम्यां पक्षयोरुभयोरपि विधिवच्चंद्रचूडात्तं सोमंसंपूजयेन्निशि सोममुमासहि
ताशिवंपूजयेदितिशेषः इतिसोमाष्टमीव्रतं अथार्काष्टमीव्रतं भविष्ये हेमाद्रौ यदाष्टम्यांशुक्लपक्षेरविवारो
भिजायते उपोष्यासांप्रयत्नेननक्तेनविधिवन्नृप अर्चयेद्देवदेवेशंसहदेव्यामहेश्वरं विशेषएषएवात्राशिवस्यनयने
स्थितं भानुंसंपूजयेद्भक्त्या गंधपुष्पाक्षतैः शुभैः शिवंवासितपुष्पैस्तुरक्तपुष्पैस्तथांबिकां पूजयेदितिशेषः इत्य
र्काष्टमीव्रतं अथशुक्रवारेश्रवणयोगेमहाव्रतं हेमाद्रौ शुक्रश्रवणयोगस्तुयदाष्टम्यांप्रजायते चतुर्दश्यामथोवत्स
तदाव्रतमिदंचरेत् उपोषितस्तुविधिनामहास्नानंसमाचरेत् तत्रशिवपूजनंकृत्वारात्रौजागरणंकृत्वापरेद्युः पारणंकु
र्य्यात् इतिकालांतरोक्तं शुक्राष्टमीव्रतं अथरेवतीशनियोगेविश्वरूपाष्टमीव्रतं हेमाद्रौ रेवतीशनियोग
स्तुसिताष्टम्यांयदाभवेत् भूतायांवामहासेनाविश्वरूपव्रतंशृणु अत्रशिवपूजनंकृत्वा कुशोदकंतुप्राश्नीयाद्रा

त्रौजागरणंतथेति इतिविश्वरूपाष्टमीव्रतं एवंविश्वरूपचतुर्दशीव्रतमपिज्ञेयं अथाशोकाष्टमीव्रतं भानुरुवाच
अष्टमीषुचसर्वासुपूजनीयाप्यशोकिका अशोकलतिकापूज्येत्यर्थः गंधमाल्यनमस्कारदीपधूपान्नसंपदा त
स्मिन्नहनियाभुक्तेनक्तमिंदुविवर्जिते कृष्णपक्षेइत्यर्थः भवत्यथावशोकासायत्रयत्राभिजायते अष्टमीषुचसर्वासुतच्चे
च्छक्नोतिवैमुने श्रेष्ठपक्षामतीतायायास्यात्कृष्णाष्टमीद्विज तस्यामवश्यंकर्त्तव्यंव्रतपूजायथाविधि इत्यादि
त्यपुराणोक्तं इत्यशोकाष्टमीव्रतं अथसुगतिव्रतं अष्टम्यांचनवम्यांचपक्षयोरुभयोरपि योब्दमेकंतभुंजीतचं
डिकाराधनेरतः संयातिपरमंस्थानंयत्रसाचंडिकास्थितेतिभविष्योत्तरे चंडिकाष्टमीव्रतं अथोद्यापनविधिः तत्र
कर्त्ताअष्टम्यां प्रातःस्नानादिनित्यनैमित्तिकेविधायमंडपादिशोभांकृत्वा पुनःसंध्यासमयेसायंसंध्यादिनिर्वर्त्य
उद्यापनसंकल्पंविधाय गणपतिपूजनादिकलशस्थापनांतंकृत्वा तदुपरिताम्रपात्रेरक्तवस्त्रोपरिमंडूकादिपरत
स्वांतंसंपूज्यसौवर्णीमिष्टदेवतांसांगांनीराजनांतोपचारैः संपूज्यरात्रौजागरणंकृत्वा नवम्यांपुनः पूजयित्वा वैदि
केनमूलमंत्रेणवाष्टोत्तरशतसंख्ययाहोमंविधायगांसुवर्णादियुतांदत्वा आचार्यायमूर्त्तिंसमर्प्यदंपती कुमारीश्चसं
पूज्य स्वयमपिभोजनंकुर्यात् इत्यष्टमीव्रतोद्यापनविधिः फाल्गुनशुक्लनवम्यामानंदानवमीव्रतं नारदीये फाल्गु
नामलपक्षस्यनवमीयाद्विजोत्तम आनंदासामहापुण्यासर्वपापहरास्मृता सोपवासोर्चयेत्तत्रयस्त्वानंदांद्वि जोत्तम
सलभेद्वांछितान्कामान्सत्यंसत्यंमयोदितं एवमेवंब्रह्मपुराणेपि आनंदानवमीव्रतेफाल्गुनामलपक्षेतुनवमीयामही
पते आनंदासामहापुण्यासर्वपापहरास्मृता इत्यानंदानवमीव्रतं भविष्यपुराणेपि आनंदानं दिनीनंदा महा
नंदामहीपते तथाचनवमीपुण्या पंचमीमहतीस्मृता फाल्गुनामलपक्षस्यनवमीयामहीपते आनं
दासामहापुण्यासर्वपापहरास्मृता कृत्वैकभक्तंपंचम्यांषष्ठ्यांनक्तंतथानृप अयाचितंचसप्तम्यामुपवासःपरेहनि

नवम्यामर्चनेदानं पारणंचसमाचरेत् यएवंपूजयेद्भक्त्यानवम्यांविधिवन्नृप सलभेद्वांछितान्कामान्नात्रकार्या
विचारणा इतिफाल्गुनशुक्लानंदानवमीव्रतम् ॥ फाल्गुनशुक्लदशम्यां यमपूजनव्रतमुक्तं नारदीये श्रे
त्यशुक्लदशम्यांतुचतुर्दशयमान्यजेत् यमश्चधर्मराजश्चमृत्युश्चांतकएवच वैवस्वतश्चकालश्चसर्वभूतक्षयस्तथा
औदुंबरश्चदध्नश्चनीलपरमेष्ठिनौ वृकोदरश्चचित्रश्चचित्रगुप्तश्चतुर्दश गंधाद्यैरुपचारैस्तुसमभ्यर्च्याथतर्पये
त् तिलांबुमिश्रांजलिभिर्दर्भांप्रत्येकशस्त्रिभिः ततश्चदद्यात्सूर्यायार्घ्यंताम्रपात्रेणनारद रक्तचंदनसंमिश्रांतिलाक्षतय
वांबुभिः मंत्रश्च एहिसूर्यसहस्रांशोतेजोराशेजगत्पते गृहाणार्घ्यंमयादत्तंभक्त्यामामनुकंपय इतिमंत्रेणदत्त्वार्घ्यं
विप्रान्भोज्यचतुर्दश रौप्यंतुदक्षिणांदत्त्वाविसृज्याश्नीतचस्वयं एवंकृतविधिर्विप्रधर्मराजप्रसादतः भुक्ताभो
गांश्चपुत्राद्यैरैहिकान्देवदुर्लभान् विमानवरमास्थायदेहांतेविष्णुलोकभाक् इतिनारदीयोक्तंयमदशमीव्रतं अथ
यस्यांकस्यांचिद्दशम्यामारभ्य भविष्योत्तरोक्तमाशादशमीव्रतं युधिष्ठिरउवाच राज्याशयाराजपुत्रः कृष्य
र्थीचकृषीवलः वाणिज्यार्थीवणिक्पुत्रःपुत्रार्थंगर्भिणीतथा धर्मकामार्थसंसिद्ध्यैलोकः कन्यावरार्थिनी यष्टुका
मोद्विजवरोरोगीश्रेयोर्थमेवच चिरप्रवासितेप्रेष्ठेबालेदंतनिपीडिते कथयस्वप्रसादेनसर्वकामप्रदंव्रतं श्री
कृष्णउवाच शृणुष्वैतन्महाराज व्रतानामुत्तमंव्रतं एतेष्वन्येषुकर्तव्यमाशाव्रतमिदंतथा यस्माद्यस्यभवेदा
र्तिःकार्यंतेनतदाव्रतं शुक्लपक्षेदशम्यांतुस्नात्वासंपूज्यदेवताः नक्तमाशास्तुपूज्यावैपुष्पालक्तकचंदनैः गृहांग
णेलेखयित्वायवैःपिष्टातकेनवा स्त्रीरूपआधिदैवस्यशस्त्रवाहनचिह्निताः अधिदैवस्यतत्तद्दिक्पालस्यैंद्रादे
स्तत्तच्छस्त्रैर्वाहनैश्चचिह्निताःलेखयित्वेत्यर्थः दत्त्वाघृतान्नंनैवेद्यंपृथग्दीपांश्चदापयेत् फलानिकालजातानिततः
कार्यंनिवेदयेत् आशाःस्वाशाःसदासंतुसिद्ध्यंतांमेमनोरथाः भवतीनांप्रसादेनसदाकल्याणमस्त्विति ए

वंसंपूज्यविधिवद्दत्वाविप्रायदक्षिणां अनेनक्रमयोगेनमासिमासिसमाचरेत् वर्षमेकंकुरुश्रेष्ठ ततः पश्चात्स
मुद्यपेत् अर्वाक्संवत्सरस्यापि रौप्याः पिष्टातकेनवा ज्ञातिवंधुजनैःसार्द्धं स्नातः सम्यगलंकृतः पूज्याः
प्राक्क्रमयोगेनमंत्रैरभिर्गृहांगणे त्वयिसान्निहितःशक्रःसुरासुरनमस्कृतः पूर्वात्वेभुवनस्यास्यऐंद्रिदिग्देवते
नमः अग्नेःपरिग्रहादाशेत्वमाग्नेयीतिपठ्यसे तेजोरूपापराशक्तिराग्नेयीवरदाभव धर्मराजंसमाश्रित्यलो
कान्संयमयत्यसौ तेनसंयमनीचासियाम्येमत्कामदाभव खड्गहस्तोतिविकृतोनिरृतिस्त्वांसमाश्रितःतेनत्वं
नैरृतिनामासित्वमाशांपूरयस्वमे लब्ध्वास्तेभुवनाधारोवरुणोयादसांपतिः कामार्थमथधर्मार्थंवारुणिप्रवणाभव अ
धिष्ठितासियस्मात्वंवायुनाजगदायुना वायव्येत्वमतःशांतिं नित्यंयच्छममालये धनदेनाधिष्ठितावैप्रख्या
तात्वमिहोत्तरा निरुत्तराभवास्मासुदत्वासद्योमनोरथम् ऐशानिजगदेशानिशंभुनात्वमलंकृता पूरय
स्वाशुमेदेविवांछितानिनमोनमः भुजंगाष्टकुलेनत्वंसेवितासियतोह्यधः नागांगनाभिः सहिताहिताभवम
मायवै सर्वलोकोपरिगतासर्वदात्वंशिवायच सनकाद्यैःपरिवृता ब्राह्मिमांपाहिसर्वदा नक्षत्राणिचसर्वा
णिग्रहास्तारागणास्तथा नक्षत्रमातरोयाश्चभूतप्रेतपिशाचकाः सर्वेममेष्टसिद्ध्यर्थंभवंतुप्रवणाःसदा एभिर्मं
त्रैः समभ्यर्च्यपुष्पधूपादिनातथा वासोभिरभिसंछाद्यफलानिविनिवेदयेत् ततोवादिननिनादेनगीतवादित्रमंगलैः
नृत्यंतीभिर्वरस्त्रीभिर्जागरेणनिशांनयेत् कुंकुमाक्षततांबूलदानमानादिभिःसुखं प्रभातेवेदविदुषेब्राह्मणायनि
वेदयेत् अनेनविधिनासर्वंक्षमाप्यप्रणिपत्यच भुंजीतमित्रसहितःसुहृद्बंधुजनेनच यएवंकुरुतेपार्थदशसीव्र
तमादरात् सर्वान्कामानवाप्नोति मनसोभिमता न्नरः स्त्रीभिर्विशेषतःकार्य्यंव्रतमेतद्युधिष्ठिर प्राणिवर्गेयतो
नार्यःश्रद्धाकामपरायणाः धन्यंयशस्यमायुष्यंसर्वकामफलप्रदं कथितंतेमहाराजमयाव्रतमनुत्तमं येमान

वामनुजपुंगवकामकामाः सपूजयातदशमापुंसदादशाश तेषामवशपानहिताहृदयेभिकामानाशाःफलंत्यल
मलंबहुनोदितेन ॥ इतिभविष्योत्तरोक्तमाशादशमीव्रतं अस्याश्वाश्विनशुक्लदशम्यांपूजामात्रमेवोक्तम्
फाल्गुनशुक्लाआमर्दक्येकादशीनारदीये फाल्गुनस्यासितेपक्षेएकादश्यांद्विजोत्तम उपोष्यमर्दकीभक्त्याद्वाद
श्यांप्रातरर्चयेत् पुंडरीकाक्षमतुलैरुपचारैस्ततोद्विजान् भोजयित्वावरान्नेनदद्यात्तेभ्यश्चदक्षिणां एवंकृत्वा
विधानेनामलक्याःपूजनादिकं एकादश्यामंत्यासितेव्रजेद्विष्णोःपरंपदमिति अस्याःकथा ब्रह्मांडपुराणे
मांधातोवाच आमर्दकीव्रतंब्रूहिमहापातकनाशनं सरहस्यंमुनिश्रेष्ठगोसहस्रफलप्रदं ॥ वसिष्ठउवाच ॥
अत्रवोदाहरतीमामितिहासंपुरातनं यथा मुक्तिमनुप्राप्तो व्याधोहिंसापरायणः वैदिशंनामनगरंहृष्टपुष्टजनान्वितं
ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चसमधिष्ठितं रुचिरंराजशार्दूलब्रह्मघोषेणनादितं ननास्तिकोनदुर्वृत्तःकश्चित्तस्मि
न्पुरेजनः तत्रसोमान्वयोराजाविख्यातश्चयथाशशी नाम्नाचैत्ररथोनामधर्मात्मासत्यसंगरः नागायुतब
लःश्रीमान्सर्वशास्त्रार्थपारगः सुभिक्षंक्षेममारोग्यंतस्मिन्पुरवरेभवत् साधुसेवारताःसर्वेतस्मिन्राज्यंप्रशास्य
ति विष्णुभक्तानराराजन्राजाचैवविशेषतः ततःकालेनसंप्राप्तैकादशीपुण्यवर्द्धनी फाल्गुनस्यासितेपक्षे
नाम्नाह्यामर्दकीशुभा शुक्लामेकादशींराजन्शुक्लांनचजहुर्जनाः सर्वधर्मान्परित्यज्यहरिभक्तिपरायणाः तामवा
प्यजनाः सर्वे सबालस्थविरान्नृप नियमंचोपवासंचभक्त्याचक्रुर्मुदान्विताः महाफलंव्रतंज्ञात्वास्नानंचक्रुर्वाहि
जले ययौदेवालयंराजापौराश्चास्यमुदान्विताः पूर्णकुंभमवस्थाप्यछत्रोपानहमेवच पंचरत्नसमायुक्तंदि
व्यगंधाधिवासितं दीपमालासमायुक्तमग्निहोत्रसमन्वितं तत्रजागरणंचक्रुर्जनाः सर्वस्वशक्तितः एत
स्मिन्नेवकालेतुव्याधस्तत्रसमागतः क्षुधाश्रमपरिक्षीणो भयार्तोनिः श्वसन्मुहुः संप्राप्तोमलसंप्टक्तो

महाभारेणपीडितः ॥ कुटुंबार्थेजीवघातीसर्वधर्मबहिष्कृतः जागरंतत्रसोपश्यदामर्दक्याःक्षुधान्वितः ॥ दीपमा
लाकुलंदृष्ट्वातत्रैवसन्निवेशितः ॥ किमेतदितिसंचिंत्यप्राप्तोविस्मयमात्रतां ॥ ददर्शकुंभतत्रैवदेवंदामोदरंतथा
ददर्शामलकीवृक्षंतदधस्थांचदीपकां ॥ वैष्णवींचकथांरम्यांपठतांशृण्वतांनृणां ॥ एकादश्याश्चमाहात्म्यंशुश्राववुभु
क्षितोपिसन् ॥ जाग्रतस्तस्यसारात्रिर्गतासर्वापितत्रवै ॥ ततःप्रभातसमयेविविशुर्नगरंजनाः ॥ व्याधोपिगृहमागत्य
बुभुजेप्रीतमानसः ॥ ततःकालेनमहताव्याधःपंचत्वमागतः एकादश्याःप्रभावेनरात्रिजागरणस्यच राज्यंप्रपेदे
सुमहच्चतुरंगबलान्वितं ॥ जयंतीनामनगरीतस्याराजाविदूरथः तस्यचैवसुतोजज्ञेनाम्नासत्यरथोबली ॥ तेजसा
दित्यसंकाशःकांत्याचंद्रसमःसतुचतुरंगबलोपेतोधनधान्यसमन्वितः ॥ सहस्राणिदशप्रोक्तमयुतंगणकोत्तमैः ॥ त
स्यराज्येवभूवार्थइतिभीतिविवर्जितं ॥ पराक्रमेशक्रसमःक्षमयापृथिवीसमः ॥ धर्मात्मासत्यवादीसविष्णुभक्तिप
रायणः ॥ एकदासगयांयातोदैवान्मार्गपरिच्युतः नदिनंनैवचदिशोविवेदसमहीपतिः अथोपश्यत्परिश्रांतोन्य
ग्रोधंशाखिनांवरं तस्यछायांसमाश्रित्यसुष्वापसमहीपतिः उपधानीकृतभुजःसोत्रैकाकीजनेवने अत्रांतरेम्ले
च्छगणःपर्वतांतरवासकृत् आययौतत्रयत्रासीद्राजापरबलार्दनःधृतवैरास्तुतेसर्वेम्लेच्छादैवोपपादिताःपरिवार्य
नृपंतस्थुःसमंताद्धृतहेतयः ॥ हन्यतांहन्यतामेषराजास्माकंविरोधकृत्अनेनानिहिताःपूर्वंपितरोभ्रातरःसुताःपौत्रानो
भागिनेयाश्चमातुलाश्चनिपातिताः निष्कासिताश्चस्वस्थानात्प्रापिताश्चदिशोदश ॥ एवमुक्त्वातुतेसर्वेराजानंहं
तुमुद्यताः पाशैश्चपट्टिशैःखड्गैर्बाणैर्धनुषिसाधितैः मुक्तानितैःशस्त्रशतानिभूरिनचैवशरीरेप्रविशंतितस्य ॥ तेचापिसर्वे
हतसत्त्वसंघा म्लेच्छावभूवुर्धृतदारुसंघाःयदापिचलितुंतवनशक्तास्तेदुराशयाः ॥ शस्त्राणिकुंठतांजग्मुस्तीक्ष्णान्य
पिभृशंतदा दीनावभूवुस्तेसर्वेयेतंहंतुंसमुद्यताः ॥ एतस्मिन्नेवकालेतुतस्यराज्ञःशरीरतः निर्गताकृत्यकातत्रसर्वा

भरणभूषिताः दिव्यगंधसमायुक्ताविमलांबरधारिणी दिव्यमाल्यधराचारुभृकुटीकुटिलानना सविस्फुलिंगनेत्रा
भ्यांवमंतीपावकंमुहुः चक्रवेत्रधराचैवकालरात्रिरिवापरा अभ्यधावतसंक्रुद्धाम्लेच्छानत्यंतदुःसहा निहताश्च
तयाम्लेच्छास्तेविकर्मपरायणाः ततोराजाविबुद्धःसन्दृष्ट्वातन्महदद्भुतं हताम्लेच्छगणान्दृष्ट्वासराजासमचिंतयत्
इहकेनहताम्लेच्छाअत्यंतवैरिणोमम केनेदंचकृतंकर्ममहदस्मद्धितार्थिना एतस्मिन्नेवकालेतुवागुवाचाशरीरि
णी शरणंकेशवादन्योनास्तिकोपिमहीयते वनेरणेशत्रुजलाग्निमध्येमहार्णवेपर्वतमस्तकेवा सुप्तंप्रमत्तंवि
षमास्थितंवासपातिभक्तंखलुशार्ङ्गधन्वा इतिश्रुत्वासकुशलीवनादेत्यनिजंपुरं राज्यंचकारराजेंद्रः सभाया-
मुदितोवसन् वसिष्ठउवाच आमर्दकीव्रतंराजन्येकुर्वंतिनरोत्तमाः तेयांतिवैष्णवंलोकंनात्रकार्याविचारणा.
माहात्म्यश्रवणादस्याःसर्वपापैःप्रमुच्यते चक्रंपूजयेद्भक्त्यावसुद्रविणभूषणैः ॥ इतिब्रह्मांडपुराणोक्ताफाल्गु
नशुक्लामर्दक्येकादशीव्रतकथा अथास्यामेवगोविंदद्वादशीव्रतंभविष्योत्तरे श्रीकृष्णउवाच फाल्गुनामलपक्षस्यए
कादश्यामुपोषितः नरोवायदिवानारीसमभ्यर्च्यजगत्पतिं हरेर्नामजपेद्भक्त्याभावयुक्तोयुधिष्ठिरः संतिष्ठ
न्प्रचलंश्चैवहरिनामानुकीर्तयेत् ततोन्यदिवसेप्राप्तेद्वादश्यांनियतोहरिं स्नात्वासम्यक्समभ्यर्च्यदत्त्वाविप्रायद
क्षिणां हरिमुद्दिश्यचैवाग्नौघृतहोमकृतक्रियः प्रणिपत्यजगन्नाथमितिवाणीमुदीरयेत् पातालसंस्थावसुधायं.
प्रसाद्यमनोरथान् यमभ्यर्च्यादितिः प्राप्ता सकलान्स्वमनोरथान् सवासुदेवःसकलान्प्रददातुमनोरथान्.
एवमभ्यर्च्यपूजांचनिष्पाद्यचहरेःस्वयं भुंजीतप्रयतःसम्यग्भविष्यंपाडुनंदन फाल्गुनंचैत्रवैशाखौज्येष्ठमासंच
सत्तम चतुर्भिःपारणंमासैरेभिर्निष्पादितंभवेत् रक्तपुष्पैस्तुचतुरोमासान्कुर्वीतचार्चनं प्रदद्याज्जलंप्राश्यगोशृंग
क्षालनंजलं हविष्यान्नंचनैवेद्यमात्मनश्चापिभोजनं ततश्चश्रूयतांपार्थआषाढादिषुयाक्रिया जातीपुष्पाणिधूप

श्चशक्रसर्जरसोद्भवः आश्यंदर्भोदकंचैवशाल्यन्नंयनिवेदयेत् स्वयंतदेवचाश्नीयात्शेषंपूर्ववदाचरेत् कार्त्तिकादिपुमासेपुगोमूत्रंकायशोधनं सुगंधंचेच्छयाधूपंपूजाभृंगारकेणच कासारंचैत्रनैवेद्यंतदेवाश्नीतचस्वयं प्रति. मासंचविप्रायदातव्यादक्षिणातथा प्रीणनंचेच्छयाविष्णोःपारणेपारणंगते यथाशक्त्यायथाप्रीत्यावित्तशाठ्यं. विवर्जयेत् सद्भावेनैवगोविंदः पूजितः प्रीयतेयतः पारणांतेयथाशक्त्य स्नापितः पूजितोहरिः प्रीणितश्चेप्सितान्कामन्दद्यादव्याहतान्नृप दर्पातेप्रतिमांविष्णोः कारयित्वासुशोभनां स्वर्णेकेनयथाशक्त्याशंखशार्ङ्गविभूषितां पुष्पवस्त्रयुगच्छन्नांब्राह्मणायनिवेदयेत् द्वादशात्रप्रदातव्याःकुंभाःसान्नजलान्विताः द्वादशब्राह्मणांस्तत्रभोजयित्वाक्षमापयेत् छत्रोपानद्युगैःसार्द्धंदक्षिणाभिश्चभारत एषापापहराप्रोक्ताद्वादशीफलमिच्छतां यथाभिलषितान्कामान्ददातिनृपसत्तम पूरयित्वाखिलान्कामान्यतश्चैवमनोरथान् मनोरथद्वादशीयंततोलोकेपुविश्रुता उपोष्यैतांत्रिभुवनंलब्धमिंद्रेणवैपुरा आदित्यश्चैशितान्पुत्रान्धनमौशनसातथा धौम्येनाध्ययनंश्रेष्ठमन्यैश्चाभिमतंफल राजर्षिभिस्तथाविप्रैःस्त्रीविट्शूद्रैश्चभूतले यंयंकाममभिध्यायव्रतमेतदुपोषितं तत्तदाप्नोतिसंदिग्धंविष्णोराराधनाद्यतिः अपुत्रोलभतेपुत्रमधनोलभतेधनं रोगाभिभूतश्चारोग्यं कन्याप्राप्नोति स त्पतिं समागमंप्रवसितैरुपोष्यैतामवाप्यते सर्वान्कामानवाप्नोति मनस्त्वग्र्यंचमोदते नापुत्रोनाधनोनेष्टवियोगीनचनिर्गुणः उपोष्यैतद्व्रतंमर्त्यःस्त्रीशूद्रोवापिजायते सूर्यलोकेसहस्राणिवर्षाणामयुतानिच भोगानभिमतान्भुक्त्वासचतत्रयथेच्छया इहपुण्यवतांन्दृणांधनिनांसाधुशीलिनां गृहेप्रजापतेराजन्सर्वबाधाविवर्जितः न द्वादशीमुपवसंतिमनोरथाख्यांनैवार्चयंतिपुरुषोत्तममादिदेवं गोब्राह्मणान्ननमयंतिनपूजयंतियेतमनोभिलषितं कथमाप्नुवंति ॥ इतिभविष्योत्तरोक्तमनोरथद्वादशीव्रतं अत्रैवगोविंदद्वादशीव्रतं नारदीये अतेसितायां

द्वादश्यांसौवर्णींप्रतिमांहरेः अभ्यर्च्यगंधपुष्पाद्यैर्दद्याद्वेदविदेतथा द्विषट्कसंख्यान्विप्रांश्चभोजयित्वासदक्षिणां
दत्वाविसर्जयेत्पश्चात्स्वयंभुंजीतवाग्यतः फाल्गुनेद्वादशीशुक्लायापुष्यार्क्षेणसंयुता गोविंदद्वादशीनामसास्या
द्गोविंदभक्तिदा तस्यामुपोष्यविधिनाभगवंतंप्रपूजयेत् लिखितःपापनाशिन्याविधिर्योपिहिसस्मृतः तन्माहा
त्म्यंब्रह्मपुराणे फाल्गुनामलपक्षेतुपुष्यर्क्षेद्वादशीयदि गोविंदद्वादशीनाममहापातकनाशिनी तस्यामुपोष्यवि
धिवन्नरःसर्क्षीणकल्मषः प्राप्नोत्यनुत्तमांसिद्धिंपुनरावृत्तिदुर्लभामितिटीकायांद्वादशीचेतिद्वादश्येदकादश्योरभे
दाभिप्रायेण किंवाद्वादश्यापुष्यनक्षत्रेसातितस्यामेवोपवासापेक्षयेति अथैकादश्यांकर्त्तव्यंभविष्ये फाल्गुनेमा
सिशुक्लायामेकादश्यांजनार्दनःवसत्यामलकीवृक्षेलक्ष्म्यासहजगत्पतिः तत्रसंपूज्यदेवेशंशक्त्याकुर्य्यात्प्रदक्षिणं-
उपोष्यविधिवत्कल्पंविष्णुलोकेमहीयते इतिगोविंदद्वादशीव्रतंहरिभक्तिविलासे फाल्गुनेद्वादशीशुक्लाया
पुष्यर्क्षेणसंयुता गोविंदद्वादशीनामसास्याद्गोविंदभक्तिदा तस्यामुपोष्याविधिनाभगवंतंप्रपूजयेत् लिखितः
पापनाशिन्याविधिर्योपिहिस्मृतः ॥ अथनृसिंहपरिचर्य्योक्तमा मर्दकीकृत्यमियमेवपापनाशिनीद्वादशी
तत्रव्रतग्रहणमंत्रः द्वादश्यांतुनिराहारःस्थित्वाहमपरेहनि भोक्ष्यामिजामदग्न्येशशरणंमेभवाच्युत ततआम
लकीमूलेसामान्यकलशस्थापनं पूर्वोक्तप्रकारेणस्थापिते कलशेताम्रेवैणवेवालाजान्वितेपात्रेषोडशमाष-त
दर्धतदर्धनिर्मितंसौवर्णंपरशुरामं क्षत्रांतकरणंघोरमुद्वहन्परशुंकरे जामदग्न्यः- प्रकर्तव्योरामोरोषारुणेक्षण
इतिध्यात्वा षोडशोपचारपूजाक्रमेण पंचामृतस्नापितमुपवेश्यवस्त्रयुगंछत्रोपानद्युगंसमर्प्य श्वेतचंदनेना
नुलिप्यतुलसीपुष्पैरभ्यर्च्यावयवपूजांकुर्य्यात् पादयोर्विशोकायनमःजान्वोःसर्वरूपिणेनमः ऊर्वोर्हयग्रीवा
यनमः बाह्वोर्हेमांगदायनमः उरसिवैकुंठायनमः चक्षुषोर्ज्योतिरूपिणे नासिकायांशोकनाशनाय- लला

देवामनायनमः भृगोरामाय. शिरसि सर्वात्मनेनमः स्वनाम्ना आयुधानिसंपूज्य धूपदीपादिदत्वार्घ्यं दद्यात् अथार्घ्यमंत्रः नमस्तेदेवदेवेशजामदग्न्यनमोस्तुते गृहाणार्घ्यमयादत्तमामलक्यासहितप्रभो ॥ १ ॥ ततःपरशुरामंप्रार्थयेत् जामदग्न्यनमस्तेस्तुक्षत्रियांतकरायच सर्वाणियानिपापानिसप्तजन्मकृतान्यपि क्षयं यांतुममैवाशुत्वत्प्रसादाच्चभार्गव वाचिकंमानसंपापंज्ञानतोज्ञानतोपिवा आयुर्यशस्तथारोग्यंधनंधान्यंच संपदाः सौभाग्यंतवभक्तस्यसंतानंविपुलंभवेत् सर्वान्कामानवाप्नोतुदिविसौख्यंनिरंतरं अंतेचास्तु-ममेशानभक्तिस्त्वच्चरणांबुजेजनार्दनकृपांकेशलक्ष्मीनाथसुरार्चित राममहाबाहोकार्तवीर्यविनाशन एतत्स र्वमयादत्तंज्ञानज्ञेयतवाच्युत मामुद्धरजगन्नाथकृपांकृत्वाममोपरि अथधात्रीमभिषिंचेत् तत्रमंत्रः ॥ पितापिता महश्चान्येअपुत्रायेचगोत्रिणः वृक्षयोनिंगतायेचयेचकीटत्वमागताः रौरवेनरकेयेचमहारौरवसंज्ञके वियोनिं चगतायेचयेचब्रह्मांडमध्यगाः पिशाचत्वंगतायेचयेचप्रेतत्वमागताः तेपिवंतुमयादत्तंधात्रीमूलेसदापयः सर्वेतेतृ प्तिमायांतुधात्रीमूलाभिषेचनादिति ततोऽष्टोत्तरशतकृत्वोवाष्टाविंशतिकृत्वो वामलकींप्रदक्षिणीकृत्य हरिंनी राज्यजागरणंकृत्वा नित्यकर्मनिर्वर्त्य गुरवेदेवंसपरिकरं निवेद्य ब्राह्मणान्संभोज्यस्वयंबंधुभिः सममश्नी यात् ॥ इतिब्रह्मपुराणे आमर्दकीपापनाशिनीद्वादशीव्रतम् ॥ अथास्यामेवफाल्गुनशुक्लद्वादश्यां नृसिं हद्वादशीव्रतं वाराहे ॥ दुर्वासाउवाच ॥ तद्वच्चफाल्गुनेमासिशुक्लपक्षेतुद्वादशी उपोष्याप्रोक्तविधिनाहरि माराधयेद्बुधः नरसिंहायपादौतुगोविंदायोदरंतथा कटिविश्वभुजेपूज्यअनिरुद्धेत्युरस्तथा कंठंचशितिकंठाय पिनाकेशायवैशिरः असुरध्वंसनायेतिचक्रंतोयात्मनेतथा शंखमित्येवसंपूज्यगंधपुष्पफलैस्तथा तदग्रेस्थाप्य तुघटंसितवस्त्रयुगान्वितं तस्योपरिनृसिंहतुसौवर्णंताम्रभाजने सौवर्णंशक्तितः कृत्वादारुवंशमयेपिवा रत्नगर्भे

घटंरूपाण्येतत्संपूज्यविधानतः द्वादश्यांवेदविदुषेब्राह्मणायनिवेदयेत् गोविंदन्नरसिंहरूपीतिमंत्रः एवंकृतेफलंप्रा
प्तंयत्पुरापार्थिवेनतु वत्सनाम्नातुतत्तेहंप्रवक्ष्यामिमहामुने तस्यव्रतांतेभगवान्नरसिंहस्तुतोपच चक्रंप्रादाच्छत्र
णांविध्वंसनकरंमृधे तेनास्त्रेणस्वकंराज्यंजितवान्नृपसत्तम राज्येस्थित्वाश्वमेधानांसहस्रमकरोद्विभुः अंतेवब्र
ह्मलोकाख्यंपदमगाद्द्विजसत्तम एषाधन्यापापहराद्वादशीभवतोमुने कथितेयंप्रयत्नेनश्रुत्वाकुरुयथेच्छसि
इतिवाराहेधरणीव्रतेफाल्गुनशुक्लैकादश्यांनरसिंहद्वादशीव्रतं अथफाल्गुनशुक्लासुकृतद्वादशीव्रतं भविष्योत्तरे
युधिष्ठिरउवाच यन्नतायायवैपुंसांभवत्यामुष्मिकंकृततापायययञ्चभवतितदाचक्ष्वयदूत्तम उपवासप्रभावंकृष्णा
राधनकांक्षिणं कथयेहमहावाहोनचतृप्यामिजल्पिते श्रीकृष्णउवाच श्रूयतांपार्थयत्पृष्टं कौतुकाद्भवतायथा
आमुष्मिकंनतापाययन्नतापायजायते उपोषितप्रभावेणकृष्णाराधनकांक्षिणाम् कथयामियथापृष्टं पूर्वमेवन
रोत्तमः वैदिशंनामनगरंप्रख्यातंनृपसत्तम तत्रवैश्योभवत्पूर्वंशूरभद्रइतिश्रुत भार्यामातृदुहितृपुत्रपौत्रसम
न्वितः प्रभूतभृत्यवर्गश्चवहुव्यापारकारकः पुत्रपौत्रादिभरणव्यासक्तमतिरेवच परलोकंप्रतिमतिस्तस्यनासी
त्कथंचन चकारानुदिनंसोथन्याय्यान्याय्यंधनार्जनं सर्वथान्यत्रनि स्नेहपरस्वेष्वतितर्षितः नजुहोत्युदितेका
लेनददात्यतितृष्णया वभूवचोद्यमस्तस्यपुत्रादिभरणेपर नित्यनैमित्तिकानांचहानिचक्रेसकर्मणां तृष्णाभिभूतो
राजेंद्रस्ववर्गभरणादृत कालेनगच्छतासोथमृतोवेत्रवतीतटे यातनादेहभृत्प्रेतोग्रीष्मकालेभवन्नृप तंददर्शमहाभा
गोदिव्यज्ञानसमन्वितः वेदवेदांगविद्विद्वान्विपीतोनामवैद्विजः भास्करस्यांशुभिर्दीप्तैर्दह्यंतमतिदारुणैः प्रत
प्तवालुकामध्येतृष्यांतीनपीडितः क्षुधार्त्तंशुष्ककंठास्यमूर्द्धान्मीलितलोचनं विक्रांताजिनमंगेषुविस्फोटैः सर्व
तोवृत निश्वासायासखेदेनवमंतंचासमोदरं निजेनकर्मणावद्धमसमर्थंसमथनंततादृशमथोदृष्ट्वाजर्द्धभेयोमहामुनिः

विपीतः प्राहराजेंद्र कारुण्यार्थमिदंवचः जानन्नपियथाप्राप्तंतदनुष्ठानजफलं जंतोस्तस्योपकारायसर्वतोऽभ्राव यन्निव विपीतउवाच अधः सूर्यांशुभिस्तप्तै वंहुभिः पथिपांशुभिः उपर्य्यर्ककरैस्तीव्रैस्तृषाचांतानिपीडितं अ न्यस्तथाविधेघोरे रविपद्यैः सुदारुणैः कथयेहयथातन्वाएकाकीदह्यसेकथं तस्यैतद्वचनंश्रुत्वाविपीतस्यसवेदनं वेदनार्तउवाचेद कृत्वादुःखस्यमंदकं शीरभद्रउवाच अशाश्वतेशाश्वतधीस्तेनदह्यामिदुर्मतिः धनापणगृह क्षेत्रपुत्रदाराहितेरतः नात्मनोहंहितारंभीतेनदह्यामिदुर्मतिः १ इदंकरिष्याम्यपरंत्विदंकृत्वात्विदंपुनः इतीच्छा शतमारुह्यतेनद. २ शीतोष्णवर्षादिभवंलोभात्सोढुंमयाशुभ तदेवाहिनधर्मार्थंतेनद- ३ जुहोमियादितन्नास्तिददा मियादिसीदति कुटुंबमातिमूढोहंतेनद. ४ पितृदेवमनुष्याणामदत्वापोसिताहिमे तेनापिकेपिवर्त्ततेदह्यामेकोत्रदु र्मतिः ५ पुत्रक्षेत्रकलत्रेषुममत्वाहतचेतसा वहुसाधुकृतकर्मतेनद. ॥ ६ ॥ मृतमपिधर्मस्तस्मिन्नन्यायोपार्जि तमयानूनमन्येपिवर्त्ततेदह्याम्येकोत्रदुर्मतिः ॥ ७ ॥ नमयापूजितागेहान्निर्गत्वाद्विजसत्तमाः स्ववर्गाहितकामेनते नदह्यामिदुर्मतिः यन्मेनपूजितादेवाः कुटुंबपोषितपरं एकाकीतेनदह्यामियेपुष्टास्तेन्यतोगताः ॥ ८ ॥ नित्यं नैमित्तिकंकर्मकृतंयेषांनमेकृतं एकाकीतेनदह्यामितैर्मर्त्यैः कापिरम्यत यन्मेपरिजनस्यार्थंकृतंकर्मफलंशुभं एकाकीतेनदह्यामिगतास्तेफलभागिनः दारापुत्राश्चभृत्याश्चपापवुद्यामयाभृताः एकाकीतेनदह्यामिगतास्ते- फलभागिनः पुत्रदारादिभृत्यर्थंमयायापापार्थसंचयाः कृतास्तेनात्रदह्यामिगतास्तेफलभागिनः कृतपापंमया मुक्तमन्यैः सत्कर्मसंचितं दह्यामेकोहमत्यंतंगतास्तेफलभागिनः यन्ममत्वाभिभूतेनमयापापमपार्जितं नद तपस्यकस्यापितेनतप्येहमाकुलः अंतर्दुःखेनदग्धोहंवाहिर्दह्यामिभानुना नांतर्दुःखंनभानुर्मेपापपंकाद्विधाच्छि- न्नत् कुतस्तस्मात्समुद्धारंपश्याम्यसुखसागरात् तत्तयापादावितुमामाप्नुयान्मुनिसत्तमः विपीतउवाच अल्प-

कालिकमुद्धारंतवपश्याम्यसंशयं प्रक्षीणंपापमेतत्तेसुकृतंचास्तितेपरं अतीतेदशमेजन्मअच्युताराधनेच्छया
सुकृताद्विपदांभद्रद्वादशीत्वमुपोषितः सर्वंतस्याःप्रभावेनपापमत्यंतदुर्जयं अल्पैरहोभिःसंक्षीणमामपात्रेयथा-
जलम् गतंपापमयंतस्याःप्रभावोत्यंतदुर्लभः नराःपापस्यकुरुतेजयंसुकृतकर्मणा सत्कर्मजयदाह्येषाततोवै
द्वादशीस्मृता याचेतद्वेदनार्तेनभवतापरिवेदितम् तत्तथानात्रसंदेहोममतापापहेतुकी पापमत्रकृतंभद्रप्रेत्यता-
पंजायते आह्लादयेत्तथापुण्यमिहपुण्यकृतांनृणां सीरभद्रंसमाश्वास्ययथावितिमहामुनिः सोप्यल्पेन-
पिकालेनततोमोक्षमवाप्तवान् उपवासप्रभावश्चकथितस्तेनरोत्तम येनाल्पैरेवदिवसैर्भूरिपापंगतंक्षयं तस्मा
न्नरेणपुण्यांपयतितव्यंनपातके उपवासश्चकर्तव्यःसदैवात्महितैषिणा ॥ युधिष्ठिरउवाच ॥ अहो
तिकृतपापानांविपाकोनरकास्थितैः पुरुषैर्भुज्यतेशश्वत्तन्मोक्षंवदसत्तम श्रीकृष्णउवाच जयेयतेतपुरुषः सदा
सुकृतकर्मणः जयायद्वादशीशस्तासदासुकृतकर्मणां फाल्गुनामलपक्षस्यएकादश्यामुपोषित द्वादश्यांतुनृप-
श्रेष्ठपूजयेन्मधुसूदनं एकादश्यांसमुत्तिष्ठन्विष्णोर्नामानुकीर्तनात् पूजायांवासुदेवस्यभुंजीतसुसमाहितःकामंक्रोधं
चलोभंचदंभमोहंचवर्जयेत् मानद्रोहादिदोषांश्चसर्वानात्ममदोद्भवान् भावयेद्विष्णुभक्तश्चसंसारासारतांतथा
एवंभाविताचिरेनप्राणिनांहितमिच्छता नमोनारायणायेतिवाच्यंतुस्वपतानिशि तथैवकुर्याद्द्वादश्यांनाम्नश्चो
च्चारणंहरेः सौवर्णताम्रपात्राणिमृण्मयान्यपिपांडव यवपात्राणिपूर्वंतुदद्यान्मासचतुष्टयं आषाढादिद्वितीयांतुपारण
...नीयते तत्रापिघृतपात्राणिदद्याच्छ्रद्धासमन्वितः कार्त्तिकादिषुमासेषुमघातिषुतथातिलान् दद्याद्विप्रा-
...मासमुपोषितः तामत्रयमशेषेणमासिमासिदिनद्वयं तथैवोच्चारयेद्दद्यान्मासिमासियवादिकं
...पूजःप्रसादयेत् विष्णोनमस्तेजगतःप्रसूतेश्रीवासुदेवायनमोनमस्ते नारायणत्वांप्रणतो.

स्म्यार्चित्यजयोस्तुतेशाश्वतपुण्यराशेः प्रसीदपुण्यंजयमस्तुविष्णोजोवासुदेवार्द्दमुपैतिपुण्यं ॥ नारायणाद्भूमि-
मुपैतुपुण्यंप्रयातुचाशेषकुबुद्धिनाश विष्णोपुण्योद्भवोमेस्तुवासुदेवास्तुमेशुभं नारायणास्तुमेधर्मोजहिपापमशेष-
तः अनेकजन्मजनितंवाल्ययौवनवार्द्धकेः पुण्यत्ववृद्धिमायातुयातुपापचयःक्षयं ॥ श्रोकाशादिषुशब्दादौ
श्रोवादौमहदादिषु प्रकृतौपुरुषेचैवब्रह्मण्यपिचसप्रभुः यथैकएवधर्मात्मावासुदेवोव्यवस्थितः तेनसत्य
नमेपापंनरकार्त्तिप्रदंक्षयं प्रयातुसुकृतस्यास्तुममानुदिवसंजयः पापस्यहानिःपुण्यस्यवृद्धिमेभ्योवनुत्तमं
एवमुच्चार्य्यविप्रायप्रदद्यात्कथिततंव भुंजीतकृतकृत्यस्तुपारणेपारणेकृते पारणांतेतुदेवस्यप्रीणनंशक्तितोन्टप
कुर्वीताखिलपाखंडेरालापंचविवर्जयेत् एवंसंवत्सरस्यांतेकांचनींप्रतिमांहरेः पूजयित्वावस्त्रपुष्पैर्घृतपात्रेणसंयुतां
तांगांसवत्सांविप्रायदद्याच्छ्रद्धासमन्वितः विष्णवेतंचयत्पूर्वंदेवान्पात्रंभवेद्यदि तस्मिन्नहनिदातव्यंभोजनंचा
निवारितं इत्येषाकथितापुण्यासुकृतस्यजयावहा द्वादशीनरकंपार्थयामुपोष्यनपश्यति नाश्रयेन्नचशस्त्राणित
चलोहमुखाः खगाः भवत्यपापश्चपुनर्नरकेगमनंकुतः नमोनारायणायेतिवासुदेवेतिकीर्त्तयेत् नयातिनरकंम
र्त्यः संक्षीणाशेषपातकः तस्मात्पापंडिसंसर्गमकुर्वन्द्वादशीमिमां उपोष्यद्वादशीमेतांनरकंयातिनकचित्प्रापं
क्षिणोतिसुकृतस्यकरोतिवृद्धिंप्रज्ञानयच्छतिनियच्छतिसर्वदोषान् याद्वादशीहसुकृतानिकृतानिधत्तेकस्मान्नतामुप
वसंतिविमूढचित्ताः ॥ इतिभविष्योत्तरेसुकृतद्वादशीव्रतं फाल्गुनशुक्लत्रयोदश्यांधनदव्रतारंभः ॥ नारदीये ॥ फा
ल्गुनेतुसितेपक्षेत्रयोदश्यामुपोषितः नमस्कृत्यजगन्नाथंप्रारभेद्धनदव्रतं महाराजंयक्षपतिंगंधाद्यैरुपचारकैः ॥ लि
खितंवर्णकैः पटेपूजयेद्भक्तिभावतः नरारूढंगदाहस्तंशिविकासंस्थितंतुवा एवंशुक्लत्रयोदश्यांप्रतिमासंद्विजोत्तमः
संपूजयेत्सोपवासश्चैकभक्तोथवानरः ततोव्रतांतेसौवर्णंसंपूज्यधननायकं निधायनिधिभिःसार्द्धंसौवर्णाभि

द्विजोत्तम उपचारैःषोडशभिःस्नानैःपंचामृतादिकैः नैवेद्यैर्विविधैर्भक्त्यापूजयेत्सुसमाहितःततोधेनुमलंकृत्यव
स्त्रस्रग्गंधभूषणैः सवत्सांदापयेद्विप्रसम्यग्वेदविदेशुभां संभोज्यविप्रान्मिष्टान्नैर्द्वादशाथत्रयोदश गुरुंतमर्च्य
वस्त्राद्यैः प्रतिमांतांनिवेदयेत् द्विजेभ्योदक्षिणांशक्त्यादत्त्वानत्वाविसृज्यच स्वयंभुंजीतमतिमानिष्टैःसहसमा
हितः एवंकृतेव्रतेविप्रनिधिनेतुःप्रसादतः मोदतेभुविविख्यातोराजराजइवापर इतिविष्णुधर्मोक्तंधनदव्र
तं मार्कंडेयउवाच शुक्लपक्षेमहाराजत्रयोदश्यामुपोषितः फाल्गुनात्तुसमारभ्यनित्यसंपूजयेन्नरः यक्षराजं
महाराजंधनदंनिधिनायकं गंधमाल्यनमस्कारधूपदीपान्नसंपदा सुवर्णंब्राह्मणेंद्रायव्रतांतेप्रतिपादयेत् कृत्वाव्रतं
वत्सरमेतदिष्टंयक्षेषुराजन्सुचिरंयथोष्य मानुष्यमासाद्यधनान्वितःस्यात्सौभाग्यमाप्नोतितथाविरोगइतिफाल्गुन
शुक्लत्रयोदश्यादिधनदव्रतम् सर्वासुत्रयोदशीषुप्रदोषव्रतम् तन्मार्गशीर्षकृत्यनिर्णयेद्रष्टव्यं मार्गशुक्लचतुर्दश्यां
दुर्गापूजाव्रतं नारदीये अस्यशुक्लचतुर्दश्यांदुर्गांसंपूज्यभक्तितःगंधाद्यैरुपचारैस्तुविप्रान्संभोज्यभक्तितःएवंकृत्वा
व्रतंविप्रदुर्गायाश्चैकभोजनः लभतेवांछितान्कामानिहामुत्रचनारद ॥ अस्यामेवविष्णुधर्मोत्तरोक्तंमाहेश्वरव्रतं
मार्कंडेयउवाच शुक्लपक्षादथारभ्यफाल्गुनस्यनराधिप पूजयेत्तुचतुर्दश्यांसोपवासोमहेश्वरं गंधमाल्यनमस्कारधूप
दीपान्नसंपदा व्रतांतेचतथादद्यादग्निष्टोमफलंलभेत् एतदेवव्रतंकृत्वाशुक्लपक्षेतुवत्सरं पौंडरीकमवाप्नोतिकुल
मुद्धरतिस्वकं चतुर्दशीद्वयेचैतत्कृत्वासंवत्सरंनरः मासिमासितथासर्वान्कामानाप्नोतिनिश्चितं आसाद्यकामान्स
महेश्वरात्तुतत्राप्यकालंसुचिरंचराजन् सायुज्यमाप्नोतिमहेश्वरस्यपरात्परस्यप्रतिमस्यतस्येति अत्रैववृषभवाह
नमुक्तंवीरमित्रोदये अग्निपुराणे यश्चरेदब्दमेकंतुनक्ताशीशिवपरोनरः पूजयेच्चचतुर्दश्यांफाल्गुनस्याशिवंयतःसं
पूज्यविधिवद्दत्त्यावृषंसर्वगुणान्वितं दद्याद्विप्रायराजेंद्रशिवोमेप्रीयतामिति एतच्छिवव्रतंनाममहापातकना

शनं शिवरूपधरोनित्यंशिवलोकेमहीयते इतिफाल्गुनशुक्लचतुर्दश्यांशिवव्रतं फाल्गुनपूर्णिमायां सूर्यसोमपू
जाव्रतं कृत्यतत्त्वार्णवे फाल्गुन्यामर्यमाजातश्रादित्यांकश्यपादपि अत्रैवचानसूयायां जातः पूर्णकरः शशी
तोतत्रापिविधिनापूज्योप्राप्तेचंद्रोदयेसति नृत्यैर्गीतैस्तथावाद्यैः कार्यस्तत्रप्रजागरइति अत्रोपवाह्यव्रताभावान्न
कार्य्य इयंमन्वादिः अत्रापिगोविंदपूजांकृत्वादोलोत्सवः कार्य्यः तदुक्तंकृत्यचिंतामणौब्राह्मे नरोदोलागतंदृ
ष्ट्वागोविंदंपुरुषोत्तमं फाल्गुन्यांसंयतोभूत्वागोविंदस्यपुरंव्रजेदिति अत्रदानविशेषमाहविष्णुः फाल्गुनीफाल्गु
नीयुक्ताचेत्तस्यांब्राह्मणायसुसंस्कृतं शयनंनिवेद्यभार्य्यांमनोज्ञांपुत्रवतींद्रविणवतींचाप्नोति नार्य्यपिएकपत्नी
व्रतंसुरूपंद्रविणशीलयुतंभर्तारमिति अत्रशयनंदेयं मंत्रपाठोयथा यस्मादशून्यशयनंकेशवस्यशिवस्यच श
य्याममाप्यशून्यास्तुतस्माज्जन्मनिजन्मनि अशून्यंशयनंनित्यमशून्याश्रियमुन्नतिं सौभाग्यंदेहिमेनित्यंशय्या
दानेनकेशव मत्स्यपुराणेभुवनदानमुक्तं त्रिरात्रोपोषितोदद्यात्फाल्गुन्यांभुवनंशुभं आदित्यलोकमाप्नोतिधाम
व्रतमिदंस्मृतं अस्यांविष्णुधर्मोत्तरोक्तं अशोकव्रतं मार्कंडेयउवाच अशोकपूर्णिमामेतांशृणुष्वगदतोमम
उपोष्यतुनराशोकंप्राप्नोतिस्त्रीतथापिवा फाल्गुनस्यामलेपक्षेपौर्णमास्यांनृपोत्तम मृज्जलेननरास्नात्वादत्त्वाशिर
सिवैमृदं वृत्त्राशनंततः कृत्वा कृत्वाचस्थंडिलंमृदा पुष्पैर्गंधैः समभ्यर्च्य भूधरंनामनामतः देवंचैवतथादेवी
मशोकेतिचकीर्तयेत् यथाविशोकांधरणींकृतवांस्त्वंजनार्दनइत्यादि व्रतमेतत्ससाश्रित्यपारणंचयथाविधि स
र्वव्याधिविनिर्मुक्तोदशजन्मांतराण्यसौ विशोकः सर्वकल्याण भाजनंस्यान्नसंशयः यथात्वमेववसुधेसंप्राप्ता
निर्वृतेः पदं तथासपरमंलोकेसुखंप्राप्स्यतिमानवः एवमेतन्महापुण्यंसर्वशांतिप्रदायकं विशोकाख्यव्रतंपुण्यत
त्कुरुष्वमहाव्रतं इतिविशोकाख्यंमहाव्रतं अथास्यामेवलक्ष्मीनारायणव्रतमुक्तं हेमाद्रौविष्णुधर्मोत्तरे पुलस्त्य

उवाच पंचदश्यांशुक्लपक्षेफाल्गुनस्यनराधिप पाखडपतितांश्चैवतथैवांत्यावसायिनः नास्तिकान्भिन्नवृत्तींश्चपा
पिनश्चापीमालयेत् नारायणेगतमनाः पुरुषोविजितेंद्रियः तिष्ठन्व्रजन्स्खलन्नश्नन्क्षतेचापिजनार्दनं कीर्तये
त्सत्क्रियाकाले सप्तकृत्वापुनः पुनः लक्ष्म्यासमन्वितंदेवमर्चयेतजनार्दनं संध्याव्युपरमेचेंदुस्वरूपंहरिमीश्वर
रांविलक्ष्मींचसंचिंत्यसम्यगर्घ्येणपूजयेत् श्रीनिशाचंद्ररूपस्त्वंवसुदेवजगत्पते मनोभिलषितंदेवपूरयस्वनमोनमः
मंत्रेणानेनदत्वार्घ्यंदेवदेवस्यशक्तितः नक्तंभुंजीतमौनेनतैलक्षारविवर्जितं तथैवचैत्रवैशाखेज्येष्ठेचमुनिसत्तम
अर्चयेतयथाप्रोक्तमासिमासिचतद्दिने निष्पादितंभवेदेवंपारणंदाल्भ्यभक्तितः द्वितीयंतत्रवक्ष्यामिपारणंत
न्निबोधमे आषाढेश्रावणेमासिप्राप्तेभाद्रपदेतथा तथैवाश्वयुजेभ्यर्च्यश्रीधरंचश्रियासह सम्यक्क्रमसेद
त्वाभुंजीतार्घ्यंयथाविधि द्वितीयमिदमाख्यातंतृतीयमपिपारणं प्रतिपूज्यततोदद्याद्ब्राह्मणेभ्यश्चदक्षिणां प्रति
मासंप्रवक्ष्यामिप्राशनंकायशुद्धये चतुर प्रथमंमासान्पंचगव्यमुदाहृतं कुशोदकंतथैवान्यदुक्तंमासचतुष्टयं सू
र्यांशुतप्तंतद्वज्जलंमासचतुष्टयं गीतवाद्यादिकंरात्रौतथाकृष्णकथाःशुभा कारयेद्देवदेवस्यपारणेपारणेगते
जनार्दनंसलक्ष्मीकमर्चयेत्प्रथमंततः सश्रीकश्रीधरंतद्वत्तृतीयंभूतिकेशवं एवंसपूज्यविधिवत्सपत्नीकंजनार्दनं
नाप्नोतीष्टवियोगार्तिंपुमान्योषिद्यथापिवा यावंतिजन्मान्यसुखंनाप्नोतीष्टवियोगतां देवस्यचप्रभावेनमरणेप्रा
प्तुतेस्मृतः कुलेसतांस्फीतधनेभोगान्भुक्तेयथेप्सितान् ॥ इतिविष्णुधर्मोत्तरोक्तंफाल्गुन्यांलक्ष्मीनारायण
व्रतं अथास्यांफाल्गुनपूर्णिमायां होलिकापूजन नारदीये फाल्गुनेपूर्णिमायांतुहोलिकापूजनंस्मृतं संचयं
सर्वकाष्ठानांपलालानांचकारयेत् तत्राग्निंविधिवद्हुत्वारक्षोघ्नैर्मंत्रविस्तरैःअसृक्कूटाभयत्रस्तैःकृतात्वंहोलिबालिशैः
अतस्त्वांपूजयिष्यामिभूतिभूतिप्रदायिनीं इतिमंत्रेणसंदीप्यकाष्ठादिक्षेपणैस्ततः परिक्रम्योत्सवःकार्योगी

तत्रादिवानिःस्वनैःहोलिकाराक्षसीचेयंप्रह्लादभयदायिनी अतस्तांप्रदहत्येवकाष्ठाद्यैर्गीतमंगलैः संवत्सर
स्यदाहोयंकामदोहोमतांगतः इतिजानीहिविप्रेंद्रलोकेस्थितिरनेकधा भविष्योत्तरेपि अयंपंचदशीशुक्ला
फाल्गुनस्यनराधिप जल्पंत्वशंकितालोकानृत्यंतुचहसंतुच दारुजानिचखड्गानिगृहीत्वासमरोत्सुकाः योद्धा
रद्रवमेयांतुशिशवःसंप्रहर्षिताःसंचयंशुष्ककाष्ठानांपलालानांचकारयेत् तत्राग्निंविधिवद्हुत्वारक्षोघ्नैर्मंत्रविस्तरैः
ततःकिलकिलाशब्दैस्तालीशब्दैर्मनोरमैःतमग्निंत्रि परिक्रम्यगायंतुचहसंतुच जल्पंतुस्वेच्छयालोकानिःशंकाय
स्ययन्मनः भगंवहुविधैः शब्दैःकीर्त्तयेद्देशभाषया विस्तारयंश्चगायंश्चतस्यनामसहस्रकं सर्वदुष्टापहोहोमः
सर्वरोगोपशांतिकृत् क्रियतेस्यांद्विजैः पार्थ तेनसाहोलिकामता अस्यांनिशागमेपार्थसंरक्ष्याःशिशवोगृहे
गोमयेनोपलिप्तेचसचतुष्केगृहांगणे आकारयेच्छिशून्प्राज्ञान्वहुव्यग्रकराननरान्तकाष्टखड्गैरसंस्पृश्यगीतैर्हा
स्यकरैःशिशून् भक्ष्यंचतेपांदातव्यंगुडपक्वान्नमेवच होलिकापूजनेमंत्रःप्रागुक्तःहोलिकाप्रदीपनंप्रदोषकार्य्यंतथा
चपृथ्वीचंद्रोदये दुर्वाससोवचनं निशागमेतुसंपूज्याहोलिकासर्वतोमुखैरिति तच्चभद्रायांसत्यांनकार्य्यंतथा
च भद्रायांदीपिताहोलीराष्ट्रभंगंकरोतिवै नगरस्यनचेष्टास्यात्तस्मात्तांपरिवर्जयेदितिपुराणसमुच्चयवचनात् तथा
चभद्रायांद्वेतुकर्तव्येश्रावणीफाल्गुनीतथा श्रावणीनृपतिंहतिग्रामंदहतिफाल्गुनी दिनार्द्धात्परतोपिस्यात्फाल्गु
नीपूर्णिमायदि रात्रौभद्रावसानेतुहोलिकादीपिकातदेति यदातुपूर्वदिनेचतुर्दशीप्रदोषव्यापिनी परदिनेचक्ष
यवशात्सायान्हेप्रागेवसमाप्यतेतदापूर्वदिनेसंपूर्णरात्रौभद्रसत्वात् तत्रैवतन्निषेधात् परेहनिप्रातिपद्येवकुर्या
त् सार्धयामत्रयंवास्याद्द्वितीयदिवसेयदा प्रतिपद्वर्द्धमानातुतदासाहोलिकास्मृतेतिनिर्णयामृते भविष्यवच
नात् मदनरत्नेतु एवंयत्तुवन्हौवान्हिपरित्यजेदिति भविष्योक्तं वन्हौहोलिकायांवान्हिप्रातिपदंवर्जयेदित्यर्थः

तदेतद्भिन्नविषयमिति तत्रैवोक्तं अन्येतुतस्यांभद्रामुखंत्यक्तेति प्रदोषव्यापिनीनस्याद्यदापूर्वदिनेतदा—भद्रा
मुखंवर्जयित्वाहोलिकायाःप्रदीपनमितिनारदवचनात् निशागमेप्रपूज्येहंहोलिकासर्वदाबुधैः तद्दिवापूजय
द्भद्रांपूजितादुःखदाभवेदितिदिवोदासीयवचनात् यामत्रयोर्द्धयुक्ताचेत्प्रतिपत्तुभवेत्तिथिः भद्रामुखंपरित्यज्य
कार्य्याहोलीमनीषिभिरिति विद्याविनोदेभिधानाच्च भद्रामुखंविहायपूर्वदिनएवकार्य्येत्याहुः नाड्यस्तुपं
चपंदमितिरत्नमालायां अन्यच्च राकायायामपूर्वार्द्धचतुर्दश्यांभवेद्यदि होलीभद्रावसानेतुनिशांतेपिप्रदीप
येदितिभविष्योत्तरवचनात् यदातुपूर्वदिनेभद्रारहितः कालोनलभ्येत तदाउत्तरदिनेचसूर्य्यास्तात्पूर्वमेवपूर्णि
मासमाप्तातदाभद्रापुच्छेकार्य्यं पृथिव्यांयानिकार्याणिशुभानित्वशुभानितु तानिसर्वाणिसिद्ध्यंतिविष्टिपुच्छेनसंश
यइतिलल्लवचनात् विष्टिपुच्छंतुज्योतिषे इष्वंकेनखनारीभ्योभद्रापुच्छघटीत्रयं क्रमेणधवलेवक्षेव्युत्क्रमेणासिते
तरइति इषु ५ अंक ७ नख २० अस्मिन्नेवपक्षेयदोत्तरापूर्णमासीसार्द्धयामत्रयपरिमिता अधिकायाप्रति
पदोत्तरदिनेवृद्धिगामिनी तदापौर्णमास्युत्तरत्रप्रतिपत्प्रदोषएवकर्त्तव्यम् नतुपूर्वरात्रौ विष्टिपुच्छइतिभविष्योत्तरे
पूर्वोदाहृतवचनम् एवंसतियाउत्तरदिनेपिकृत्स्नप्रदोषेतदेकदेशेवावर्त्तते सासुतरामुत्तरा पूर्वोक्तंतु पूर्वाविद्धा
ग्राह्यत्वमुत्तरत्रप्रदोषास्पर्शेवृद्ध्यभावेचज्ञेयं नतुयदापूर्वरात्रिः सर्वाभद्राव्याप्ता उत्तरदिनेप्रदोषश्चपूर्णमासीशे
षयुक्तोपिचंद्रग्रहणाक्रांतोग्रस्तोदयोवा तदा सर्वेषामेववर्णानांसूतकंराहुदर्शनेइति शुचित्वाभिधानात्तत्रकथंहोलि
कादीपनंस्यादितिचेत् उच्यते स्नात्वाकर्माणिकुर्वीतशृतमन्नंचवर्जयेदिति स्नातोत्तरंनित्यनैमित्तिककृत्याधिका
रात् काम्यानितु ग्रहणात्पूर्वंग्रहणोत्तरं नभवंत्येव तथाचज्योतिर्ग्रंथे त्रयोदश्यादितोवर्ज्यंदिनानांनवकं
बुधैः मांगल्येषुसमस्तेषुग्रहणेचंद्रसूर्ययोः द्वादश्यादितृतीयांतोवेधइंदुक्षयेस्मृतः एकादश्यादिकःसौरेच

तुर्थांतः प्रकीर्तितः खंडग्रहतयोःप्रोक्तउभयत्रादिनत्रयमिति अस्यापवादस्तत्रैव नित्यनैमित्तिकेजप्येहोमय
ज्ञक्रियासुच उपाकर्मणिचोत्सर्गेग्रहवेधोनविद्यतइति होलिकानिर्णयः अथास्याःपूजाविधानं ओमद्यहो
लिकापूर्णिमायांममसपरिवारस्यअसुपादिभयनिवृत्ति पूर्वकानायासेनाकांक्षितसर्वमनोसिद्धिसकलनिवृत्तिनैमित्ति
कंचडांडाहुंडालिकादीनांसापत्यानांप्रीतिसहितस्वसंतानरक्षार्थंहोलिकापूजनंकरिष्ये इतिसंकल्प्य तत्राग्निंवि
धिवत्प्रतिष्ठाप्य ततोग्निंसंक्षेपविधिनाचंदनादिभिः संपूज्यहोमंकुर्य्यात् तत्ररक्षोघ्नमंत्रैः सघृतलाजाहुतीनां
मष्टोत्तरशतंजहुयात् रक्षोघ्नमंत्राश्च ॐरक्षोहणोवोवलगहनंवैष्णवीमिदमहंतंवलगमुत्किरामियम्मेनिष्ट्योयम
मात्योनिचखानेदमहंतंवलगमुत्किरामिस्वाहा ॥ १ ॥ यम्मेसबंधुर्यमसबंधुर्निचखानेदमहंतंवलगमुत्किरामिय
न्मेसजातोनिचखातोत्कृत्यांकिरामिस्वाहा २ स्वराडसिसपत्नराडस्समभिमातिहाजनराडसि रक्षोहासर्वरा
डसिमित्रहास्वाहा ३ रक्षोहणोवोवलगहनोवनयामिवैष्णवान्स्वाहा ४ रक्षोहणोवोवलगहनोवस्तृणामि
वैष्णवान् ५ रक्षोहणोवोवलगहनोउपदधामिवैष्णवान्स्वाहा ६ रक्षोहणोवोवलगहनोवनयामिवैष्णवविष्ण
वमसिवैष्णवरथस्वाहा ७ यानःशंसोअररुषोधूर्तिः प्रणङ्मर्त्यस्यरक्षाणोब्रह्मणस्पतेप्रत्युष्टंरक्षःप्रतिष्टाः
स्वाहा ८ अरातयोनिष्टप्तंरक्षोनिष्टप्ता अरातयउर्वंतरिक्षमन्वेमि ९ रक्षोहाविश्वचर्षणीरभियोनिमयो
हते श्रोणेसधस्थमासदत्स्वाहा १० एभिर्मंत्रैर्दशावृत्त्यालाजाहोमः अथवाष्टोत्तरशतीः प्रथममंत्रेणस
र्वैरेववा शतमष्टोत्तरपूर्वमष्टाविंशतिरेववा ततोविधिवदग्निंसंपूज्यप्रार्थना असृपाभयसंत्रस्तैःकृतात्वंहोलि
बालकैः अतोमांपाहिभीतिभ्योमातेवापत्यमात्मनः १ आयुर्देहियशोदेहिशिशूनांकुरुरक्षणं शत्रूणांचक्षयंदे
हिहोलिकेपूजितासदा इतिपूजांतेप्रार्थनामंत्रः ततोग्निंत्रिःपरिक्रम्यजलपंतुचहसंतुचजलपंतुस्वेच्छयाचैवयस्यथं

स्यचैयन्मंत्रः॥ होलिकेचनमस्तुभ्यंढुंढातेजोविमर्दिनि ॥ सर्वोपद्रवशांत्यर्थंगृहाणार्घ्यंनमोस्तुते॥ इत्यर्घ्यंदत्वा
अग्निंप्रार्थयेत्॥ यन्मयाशीतभीतेननिषिद्धाचरणंकृतं॥ तत्सर्वंक्षम्यतांवह्नेयतःसर्वसहोभवान्॥ अनेनमत्कृतेनाग्नि
पूजितेनअसुपांअंडोडाढुंढाहोलिकादयः॥ सर्वाःप्रीताभवंतु तथाचविधिकृतेनहोमेनभगवान्सर्वोपद्रवनाशकोवह्निः
प्रीयतां॥ ततोदक्षिणासंकल्पकृत्वा॥ तिलकधारणंविधायहुतशेषधानादिसर्वैःप्राशनीयं तस्यांरात्रौगानक्रीडाहा
स्यालापादिकर्त्तव्यंविधेयं॥ अद्यास्यकृतस्यहोलिकापूजादिकर्मणोन्यूनातिरिक्तदोषपरिहारार्थमिदंदक्षिणाद्रव्य
यथानामगोत्रायदातुमहमुत्सृजे॥ ततोविभूतिधारणमंत्रः॥ वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच॥ अतस्त्वंपाहिमांदेवि
विभूतिर्भूतिदाभव॥ इतिहोलिकापूजा॥ एवंहोलिकापूजनंविधाय दोलागतंगोविंदंनिरीक्ष्यपुमान् सर्वदोषविमुक्तो
भवतीत्याचारः॥ नरोदोलागतंदृष्ट्वागोविंदंपुरुषोत्तमं॥ फाल्गुन्यांसंयतोभूत्वागोविंदस्यपुरंव्रजेदिति॥ कृत्वाचाव
श्यकर्माणिसंतर्प्यपितृदेवताः॥ वंदयेद्धोलिकाभूतिंसर्वदोषोपशांतये॥ अथहोलिकाकथा भविष्योत्तरे॥ युधिष्ठिर
उवाच॥ किमर्थंफाल्गुनस्यांतेपौर्णमास्यांजनार्दन॥ उत्सवोजायतेलोकेदेशग्रामेतथापुरे॥ कोह्यस्यांपूज्यतेदेवोनित्य
मंकिंव्रतादिकं॥ किमस्यांपूज्यतेकृष्णएतद्विस्तरतोवद॥ श्रीकृष्णउवाच॥ आसीत्कृतयुगेपार्थरघुर्नामनराधिपः॥ शू
रःसर्वगुणोपेतःप्रियवादीबहुश्रुतः॥ ससर्वांपृथिवींजित्वावशीकृत्यनराधिपान्॥ नदुर्भिक्षंनचव्याधिर्नाकालमरणं
तथा॥ नाधर्मंचरतेलोकस्तस्मिन्राज्यंप्रशासति॥ पौराःसर्वेसमागत्यत्राहित्राहितिचाब्रुवन्॥ अस्माकंचगृहेराजन्
ढुंढानामेतिराक्षसी॥ दिवारात्रौसमागत्यबालान्सपीडयतेबलात्॥ रक्षायांधूपदीपैश्चभैषज्यैर्वानराधिप॥ मंत्रैश्चमा
र्जनाद्यैस्सानियंतुंनैवशक्यते॥ पौराणांतद्वचःश्रुत्वारघुर्विस्मयमागतः॥ विश्रमाविष्टहृदयोवसिष्ठंवाक्यमब्रवीत्॥
रघुरुवाच॥ ढुंढेतिराक्षसीकेयंकिंप्रभावाद्विजोत्तम॥ कथमेषानिहंतव्यामयादुष्टांतकारिणी॥ रक्षणात्प्रोच्यतेराजाप्र

थिवीपालनात्पतिः अरक्ष्यमाणः पृथिवीं राजा भवति किल्विषी वसिष्ठ उवाच श्रृणु राजन्परं गुह्यं नाख्यातं कस्य
चिन्मया ढुंढा नामेति विख्याता राक्षसी मालिनः सुता तपसाराधयामास महादेवं वरप्रदं प्रीतस्तामाह भ-
गवान्वरं वरय सुव्रते यत्तेभिलषितं तत्तत्प्रदास्येत्वविचारतः ढुंढा प्राह महादेवं यादि तुष्टः स्वयं मम तदावध्यां सु-
रादीनां मनुजानां महेश्वर मां कुरुष्व त्रिलोकेश शस्त्रघातैस्तथैव च शीतोष्णवातवर्षासु दिवारात्रौ गृहांतरे अभयं स
र्वदा मे स्यात्त्वत्प्रसादात्सुरेश्वर एवमस्त्विति प्रोक्ता तां पुनः प्रोवाच शूलभृत् उन्मत्तेभ्यः शिशुभ्यश्च भयं ते संभविष्य
ति ऋतुसंधौ महाभागे मा व्यथां हृदये कृथाः एवं दत्त्वा वरं तस्याः प्रेक्षंत्या भगवान्भवः स्वप्नेलब्धो यथा ह्यर्थस्तथैवांत
र्धीयत एवं लब्ध्वा वरं तस्माद्राक्षसी कामचारिणी नित्यं पीडयते बालान्संस्मृत्य हरभाषितं अडाडयानि गृह्णा
ति सिद्धमंत्रकुटुंबिनां गृहे पुत्रेन सा लोके अडाडेत्याभिधीयते एवं ते सर्वमाख्यातं ढुंढायाश्चरितं मया सांप्रतं कथ-
यिष्यामि येनोपायेन हन्यते इयं पंचदशी शुक्ला फाल्गुनस्य नराधिप शीतकालांतसंप्राप्तौ प्रातर्मधुर्भविष्यति अ
भयं सर्वलोकानां दीयतां पुरुषोत्तम यथाह्यशंकिता लोका रमंति च हसंति च दारुजानि तु खड्गानि गृहीत्वा समरो
त्सुकाः युध्यंतु बंधुभिः सार्द्धं शिशवः संप्रहर्षिताः नानारंगमयैर्वस्त्रैश्चंदनागुरुमिश्रितैः अबीरं च गुलालं च मुखे
तांबूलभक्षणं वंशो रथं जलयंत्रं च चर्मयंत्रं करे धृतं गालिदानं तथा हास्यं ललनानर्तनं स्फुटं वेषसंन्यासिनां कार्यं
नटानां योगिनां ध्रुवं वेश्यानां योगिनीनां च मोहिनीनां च कारयेत् तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मंत्रविस्तरैः ततः
किलकिलाशब्दैर्मृदंगैश्च विशेषतः तमग्निं त्रिः परिक्रम्य गायंतु च हसंतु च जल्पंतु स्वेच्छया सर्वे निःशंका यस्य
जन्मनि तेन शब्देन सा पापा होमेन च निराकृता अदृष्टघातैर्डिंभानां राक्षसी क्षयमेष्यति श्रीकृष्ण उवाच तस्य
तद्वचनं श्रुत्वा स नृपः पांडुनंदन सर्वं चकार विधिवद्यदुक्तं तेन धीमता गता सा राक्षसी नाशं तेनोग्रेण च कर्मणा ततः

प्रभृतिलोकेस्मिन्साढुंढाविमुखाभवत् सर्वदुष्टापहोहोमःसर्वरोगप्रशांतिदः क्रियतेस्यांद्विजैःपार्थतेनसाहो-
लिकामता शिशिरस्यांतिमाह्येपापौर्णमासीयुधिष्ठिर सदास्यात्फाल्गुनस्यांतिपरमानंददायिनी अस्यांनि-
शागमेपार्थसंरक्ष्याःशिशवोगृहे गोमयेनोपलिप्तेचसचतुष्केगृहांगणे आकारयेत्शिशून्प्राज्ञान्खड्गव्यग्रक
रान्नरान् कृत्वासकाष्ठखड्गैश्चसंहृष्टयगीतपरान्शिशून् तथाचैतपादातव्यंगुडपक्वान्नमेवच एवंढुंढादिसंजा-
तंसर्वदोषंप्रशाम्यति बालानांरक्षणंकार्य्यंतस्मिन्प्रदोषेनिशागमे युधिष्ठिरउवाच प्रभातेकिंजनैःकार्य्यं-
सदासुखमभीप्सुभिः प्रवृत्तेमाधवेमासिप्रतिपद्भास्करोदये श्रीकृष्णउवाच कृत्वाचावश्यककर्मसंतर्प्यपि-
तृदेवताः वंदयेद्धोलिकाधूलिंसर्वदुष्टोपशांतये मंडितेचर्चितेरम्येउपलिप्तेगृहांगणे चतुष्ककारयेच्छ्रेष्ठंवर्णकै
श्चाक्षतैःशुभैः तन्मध्येस्थापयेत्पीठंशुक्लवर्णांवरच्छदं अव्रणंपूर्णकलशंस्थापयेत्पंचपल्लवैः साक्षतंसहिरण्यं
चसितचंदनचर्चितं आसनेचोपविष्टस्यब्रह्मघोषेणभारत अर्चयेच्चंदनैर्नारीअव्यंगाशुभलक्षणा पद्मरागोत्तरप
ट्टाश्रेष्ठांशुकविभूषणा वस्त्रधार्य्यंशिरोत्तंसंदधिदूर्वाक्षतान्वितं वर्द्धापयित्वाश्रीखण्डमायुरारोग्यवृद्धये
वस्त्रधार्य्यमितिपादादारभ्यमूर्द्धानंचंदनेनचर्चयेत् तच्चंदनंवर्द्धापयित्वाकिंचिदवशेष्यतु पश्चाच्चप्राशयेद्विद्वान्
चूतपुष्पसचंदनं मनोभवस्यसापूजाऋषिभिःसंप्रदर्शिता तात्पिबंतिवसंतादौचूतपुष्पसचंदनं प्राशनमं
त्रश्च वंदितमरपूर्वंवसंतस्यमाकंदकुसुमंतव सचंदनंपिबाम्यद्यसर्वकामसमृद्धये अनंतरंद्विजेंद्राणांसूतमाग-
धवंदिनां दद्याद्दानंयथाशक्त्याकामोमेप्रीयतामिति ततोभोजनवेलायांश्रृतंपाकेनतेनहि प्राशयेत्प्रथमंपत्रं
ततोभुंजीतकामतः एवंयःकुरुतेपार्थशास्त्रोक्तंफाल्गुणोत्सवं अनायासेनसिध्यंतितस्यसर्वेमनोरथाः आधयश्चैव
पापानिप्रांतिनाशंनसंशयः पुत्रपौत्रसमायुक्ताःसुखिनोनित्यमानवाः पुण्यापवित्रामापुण्यासर्वविघ्नविनाशिनी

एषातेकथितापार्थफाल्गुनीपूजितातिथिः वृत्तेतुषारसमयेपिचपंचदश्यां प्रातर्वसंतसमयेसमुपस्थितेच प्राश्ये तुचूतकुसुमंसहचंदनेनसत्यंहिपार्थपुरुषःससुखीसदास्यात् ॥ इतिभविष्योत्तरेफाल्गुनीपूर्णिमांतवसंतमहोत्सवः अथप्रसंगात्सकलपौर्णमासीनांसाधारणव्रतान्युच्यंते अथायुर्व्रतंहेमाद्रौगारुडे चतुर्दश्यांशुचिःस्नात्वादंतधाव नपूर्वकं चरितब्रह्मचर्यश्चयतवाक्कायमानसः पौर्णमास्यांतथाकृत्वादेवपूजांसमारभेदित्यादि पौर्णमास्याम पिस्नात्वादेवार्चनादिकृत्वापोषितश्च रात्रौचंद्रोदये अर्घ्यदानंकृत्वा ब्राह्मणंसंपूज्यहविष्यान्नंदत्वास्वयंतदेव भुंजीतइतिगारुडोक्तमायुर्व्रतं अथदेवीव्रतं पद्मे व्रतंपंचदश्यामन्वांतेगोयुगप्रदः लक्ष्मीलोकमवाप्नोतिदेवी व्रतमुदाहृतं इतिपद्मपुराणेदेवीव्रतं उपोषितश्चतुर्दश्यांपौर्णमास्यांनराधिप पंचगव्यंपिबेत्पश्चाद्धविष्याशी तथाभवेत् शुक्लव्रतादिकृत्वामासपापात्प्रमुच्यते तस्मात्सर्वप्रयत्नेनमासिमासिसमाचरेत् संवत्सरान्त्राप्य सुरेंद्रपूज्यस्ततोप्यराजासुचिरंमनुष्यः मनुष्यमासाद्यसुरेंद्रपूज्योराजाभवेद्वाद्विजपुंगवोवा इतिविष्णुधर्मो- क्तंकूर्मव्रतं अथैतासांद्वादशमासोपपौर्णमासीनांप्रत्येकस्थानविशेषेणपुण्यतमत्वमुक्तंगार्ग्येण महामाघीप्रया गेतु १ नैमिषेफाल्गुनीतथा २ शालग्रामेमहाचैत्रीकृताःस्युःपुण्यहेतुकाः ३ गंगाद्वारेतुवैशाखी ४ ज्येष्ठी चपुरुषोत्तमे ५ आषाढीवैकनखले ६ केदारेश्रावणीतथा ७ बदर्यांचप्रौष्ठपदी ८ कुब्जाम्रेतुमहाश्विनी ९ पुष्करेकार्त्तिकी १० कन्याकुब्जेमार्गशिरातथा ११ अयोध्यायांमहापौषीकृताःस्युस्तामहाफलाइति ॥ महामार्गादिविकायामपिस्यात्सामहाफलेति शालिग्रामादिव्यतिरिक्तस्थानेष्वपिमहाचैत्र्यादिकमनंतफलंभवति तदाहगार्ग्यः आसुयत्क्रियतेश्राद्धंयच्चदानंयथाविधि उपवासादिकंयच्चतदनंतफलंस्मृतमिति मासनक्षत्रयुक्ता- स्तुमहाचैत्र्यादिकामताः एतासांलक्षणंगार्ग्येणाप्युक्तं माससंज्ञेयदाऋक्षे चंद्रः संपूर्णमंडलः गुरुणायातिसं-

योगंसातिथिर्महतीस्मृतेति शंकरगीतायामपि एकराशिगतौवालेयदागुरुनिशाकरौ सापौर्णमासीमहतीस-
र्वपापहरास्मृता तथाच पौर्णमासीषुसर्वासुमासर्क्षसहितासुच दत्तानामिहदानानांफलंदशगुणंभवेदिति
अथास्यांफाल्गुनपौर्णमास्यांलिंगपुराणदानमुक्तंमत्स्यपुराणे तत्राग्निलिंगमध्यस्थःप्राहदेवीमहेश्वरः धर्मार्थका
ममोक्षार्थमाग्नेयमधिकृत्यच कृतंतल्लैंगमित्युक्तंपुराणंब्रह्मणास्वयं तदेकादशसाहस्रंफाल्गुन्यांयःप्रयच्छति
तिलधेनुसमायुक्तंसयातिशिवसाम्यतां इतिलिंगपुराणदानं ॥ स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणी
र्नानाशास्त्रविचारसाररसवित्सद्वृंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेः पादांबुजार्चारतोजीयात्पुत्रकलत्रमित्र-
सहितः संपालयन्क्ष्मांचिरम् १ रणवीरसिंहभूपेशकारितेकृत्यसागरेअभूत्फाल्गुनकृत्यानांरम्योरत्नसमुच्चयः २
॥ इतिश्रीमत्सूर्यवंशावतंसरघुकुलतिलक श्रीरणवीरसिंहमहाराजकारितेकृत्यरत्नाकरेफाल्गुनमासकृत्यरत्न
समुच्चयः ॥ छ छ छ छ छ छ छ छ छ

॥ श्रीरघुनाथमुद्रायंत्रालये ॥
लालाशिव्रामल्लाधिकारेफाल्गुणमासोमुद्रितस्समाप्तिमगमत्
संवत् १९४२ ज्यैष्ठ प्र. २६

॥ श्रीरघुनाथोजयति ॥



## ?थमलमासमुख्यप्रकीर्णव्रतानि भविष्योत्तरे श्रीरुवाच

देवदेवजगन्नाथभुक्तिमुक्तिप्रदायक कथयस्वप्रसादेनलोकानांहितकाम्यया मुनीश्वरावदंतीहकृष्णद्वैपायनादयः अदत्तंनैवलभ्येतदत्तंचैवोपतिष्ठति यथावंध्यागृहस्थस्यपतिवशविनाशिनी तथादानविहीनस्यजन्मसर्वंनिरर्थकं मलिम्लुचेतुसंप्राप्तेक्रियाःकर्याः कथंप्रभो श्रीभगवानुवाच क्षौरंमौंजीविवाहादिव्रतंकाम्योपवासकं मलिम्लुचेसदात्याज्यंगृहस्थेनविशेपतः श्रीरुवाच अधिमासेचसंप्राप्तेकिंकार्यंब्रूहिमेप्रभो कस्योद्देशेनदातव्यंवदकिंचप्रदेयकं श्रृणुदेविमहाभागेसर्वलोकस्यहेतवेस्वयंदातास्वयंभोक्तायोददातिद्विजातये नान्योदातानभोक्ताच इहलोकेपरत्रच. येचमासाः ससंक्रांतास्तेषांस्वामीरविःस्मृतः असंक्रांतास्तुयेमासास्तेषांस्वामीजनार्दनः असक्रांतेतुसंप्राप्तेमामुद्दिश्यव्रतंचरेत् अधिमासस्याधिपत्येअहंवैपुरुषोत्तमः स्नानंदानंजपोहोमः स्वाध्यायः पितृतर्पणंदेवार्चनमथान्यच्चयेचकुर्वंतिमानवाः अक्षयंतद्भवेत्सर्वंममोद्देशेनयत्कृतं मलमासोगतः शून्यो यदिदेविप्रमादतः दारिद्र्यपुत्रशोकंचपातकंचाविगर्हितं मर्त्यलोकेभवेजन्मतेपांदेविभवेत्सदा यदामलिम्लुचोमासः प्राप्यतेमानवैःप्रिये महोत्सवस्तदाकार्यआत्मनोहितमिच्छता कृष्णपक्षेचतुर्दश्यांनवम्यांवासुरेश्वरि. अष्टम्यांवाप्यकर्तव्यंव्रतंशोकविनाशनं यथालब्धोपहारेणमासेचास्मिन्मालिम्लुचे पुण्येह्निप्रातरुत्था

यकृत्वापौर्वाह्निकींक्रियां गृहीयाद्नियमंपश्चाद्वासुदेवंहृदिस्मरन् उपवासस्यनक्तस्यएकभक्तस्यभामिनि एकस्यनि
श्चयंकृत्वाततोविप्रान्निमंत्रयेत् सपत्नीकान्सदाचारान्सुवृत्तांञ्छुभवेपकान् श्रुताध्ययनसंपन्नात्कुलीनान्जाति
संभवान् ततोमध्याह्नसमयेलक्ष्मीयुक्तंजनार्दनम् स्थापयेदव्रणंकुंभंवेदमंत्रैर्द्विजोत्तमैः पूरयेत्परयाभक्त्यागोत्रिभिः
सपितासहं सपितामहंब्रह्मणोध्यानमंत्रसहितं गंधतोयेनसंस्थाप्यपंचामृतयुतेनच चंदनेनतुगंधेनपुष्पै
र्नानाविधैःप्रिये मिष्टान्नैश्चवनैवेद्यैर्धूपादिभिः तांद्रितः आच्छादनंतुवस्त्रैश्चपीतवस्त्रैर्विशेषतः घंटामृदंगनिर्घोषैः
शंखभेरीसमन्वितैः आरात्तिकंव्रतीकृत्वाकर्पूरागुरुचंदनैः अलभियेनकेनापिफलस्यानंत्यहेतवे ताम्रपा
त्रस्थितैस्तोयैश्चंदनाक्षतपुष्पकैः अर्घ्यंदद्यात्सपत्नीकःप्रहृष्टेनांतरात्मना मंत्रेणानेनदेवोशिवाब्राह्मणैःसहमांस्म
रन् नारंगैर्नारिकेलैश्चफलैर्नानाविधैःशुभैः पंचरत्नसमायुक्तैर्जानुनीकृत्यभूतले आरोप्यभालेहस्ताभ्यांश्र
द्धाभक्तिसमन्वितः अर्घ्यदानमंत्रोयथा देवदेवमहाभागप्रलयोत्पत्तिकारक कृष्णसर्वेशभूतेशजगदानंदका
रक गृहाणार्घ्यमिमंदेवकृपांकृत्वाममोपरि प्रार्थनामंत्रः स्वयंभुवेनमस्तुभ्यंब्रह्मणेमिततेजसे नमोस्तुते
श्रियानंददयांकुरुममोपरि एवंसंप्रार्थ्यगोविंदंपूजयेद्ब्राह्मणैःसह सपत्नीकाञ्छुचीन्स्नातान्लक्ष्मीनारायणौस्म
रन् पुजयित्वाविधानेनसपत्नीकंस्मरन्विभुं स्मर्त्तव्योद्विजरूपेणपत्नींश्रियमनुस्मरन् परिधाप्ययथाशक्त्या
वस्त्रालंकारकुंकुमैः द्राक्षाद्यैश्चकपित्थैश्चपनसैःकदलीफलैः नारिकेलैश्चनारंगैःकूष्मांडैर्दाडिमैःप्रिये घृतप
क्वान्नगोधूमैःशुभ्रैःसौहालिकैर्वटैः सक्षीरैर्घृतपूरैश्चफाणितैःखंडमंडितैः वृंताककर्कटीशाकैःशृंगवेरैःसमूलकैः अ
न्यैश्चाविविधैःशाकैरन्यपाकैःपृथक्पृथक् भक्ष्यभोज्यैश्चलेह्यादिखंडकानिविशेषतः गोरसानिविचित्राणिवा
सितानिघृतादिभिः अथान्यान्यपिदेयानिदानानिविविधानिच वित्तशाठ्यंनकर्त्तव्यमात्मनः श्रेयमिच्छता

यथावसरसंप्राप्तमुपाविश्यमृदुब्रुवन् ॥ इदंस्वादुइदंभोज्यंभवदर्थंप्रकल्पितं ॥ याच्यतांरोचतेयच्चयन्मयापाचितं
प्रभो ॥ ५० ॥ धन्योस्म्यनुगृहीतोस्मिकृतंसार्थंच्चमंदिरं ॥ ५१ ॥ विसर्जयेत्ततोविप्रान्दत्त्वातांबूलदक्षिणां ॥ पत्राणिपूगखंडानि
चूर्णंचखदिरंशुभं ॥ ५२ ॥ चतुर्भिर्मिलितंदेवितांबूलंममवल्लभं ॥ एलालवंगकर्पूरजातीफलतुजत्वचः ॥ मृगनाभि
मरीचानिसुरगांसनखांस्तथा ॥ ५३ ॥ योददातिद्विजाग्र्येभ्यः सभवेत्सुभगोत्तरः ॥ सुभगाचशुभाचाराश्चंद्राभे
भवत्तेशुभे ॥ ५४ ॥ पुत्रसौभाग्यसंयुक्तातांबूलाज्जायतेवला ॥ पत्रैस्तुकेशवःप्रीत पूगैरीशःसहांबया ॥ चूर्णेनशुत्त्या
ह्यमलाखदिरेणचमन्मथः ॥ चतुर्भिर्विश्वरूपोसौयःपुष्णातिजगत्त्रयं ॥ परितोष्यसपत्नीकांहस्तेदद्याच्चदक्षि
णांआसीमांतमनुव्रज्यभुंजीतबंधुभिःसह अंसंक्रांतव्रतेनारीयाकरोतिजगत्त्रये दारिद्र्यंपुत्रशोकंचवैधव्यंनभवेत्क्व
चित ॥ ५८ ॥ नरोप्येवंविधोदेवियदिकुर्यान्मलिम्लुचे ॥ मलिम्लुचंप्राप्यनपूजितोयैःश्रीनाथदेवःपरयैवभक्त्या ॥ कथं
भवेत्तेषुसुखंचसंपत्पुत्राःसुहृत्सेवकवच्चभार्या इतिभाविष्योत्तरेमलमासव्रतकथा ॥ ॥ अन्यदपिकथानकंदेवीपुराणे
श्रीईश्वरउवाच ॥ शृणुष्वदेविमाहात्म्यंमलमासस्यपार्वति ॥ येचमासाःससंक्रांतास्तेषांस्वामीरविस्तथा ॥ असं
क्रांतास्तुयेमासास्तेषांस्वामीजनार्दनः ॥ २ ॥ तमुद्दिश्यचयत्किंचित्स्वल्पंवायदिवाबहु ॥ ३ ॥ अक्षयंतद्भवेत्कर्तुर्ज-
न्मनामसुतंध्रुवंमलिम्लुचेतुसंप्राप्तेयोनकुर्यात्स्वशक्तितःदानंवाथव्रतंवापिविप्रभोजनमेवच मलिम्लुचेनृदेहेपुसया
तिनिरयंनरः एकभक्तेननक्तेनतथैवायाचितेनच उपवासेनकुर्वंतिमलमालसंश्रयत्नतःदानेवाथव्रतेचापीयस्यशक्ति
र्नविद्यते ॥ शरीरपोषणंतेनकर्त्तव्यंतीर्थसेवनं ॥ शुश्रूषाद्विजमुख्यानांसर्वव्रतफलंलभेत् ॥ सर्वव्यापीयथाविष्णुःसा
र्वभूतक्रियापरः ॥ मलिम्लुचेतथादानंलोकद्वयसुखावहं श्रीदेव्युवाच भाग्यहीनस्तुयेमर्त्याःपापवाद्विचरंतिते ॥ विवे
कोनास्तिवैयेषांकिंकार्यंवैमलिम्लुचे ॥ निर्धनाश्चदुराचाराःपरभाग्योपजीविनःश्रीईश्वरउवाच दानेव्रते तथाभुक्ते

आयासेकायशोषणे सर्वस्यनास्तिसामर्थ्यंकर्त्तव्यंविप्रसेवनं साधूनांसेवनंदेविसर्वतीर्थफलप्रदं कृष्णेनल-
भ्यतेतीर्थंसद्योवैसाधुसेवनात् साधूनांदर्शनंचैवकीर्त्तनंश्रवणंतथा मलमासेसदादेविकर्त्तव्यंश्रेयइच्छता पुण्यव्य
येनसंप्राप्ताःसंपदोविविधागृहे ताभिः पुनः प्रकर्त्तव्यःसंचयःपुण्यकर्मणां अन्यायेनयथादेवियःप्राप्तोधनसं.
क्षयः यथाकर्मक्षयात्वेहप्राप्यतेपुण्यसंचयः तस्मात्पाणिसंप्राप्तेद्रव्यपात्रेषुकल्पयेत् यथावीजांकुरन्यायो
विद्वद्भिर्धर्मतत्परैः विचार्यानिश्चयः प्राप्तो धर्मादर्थोनसंशयः धर्मोबीजंफलंवार्थोफलंवीजेसुरक्षितं कर्त्त
व्यंतत्प्रयत्नेनप्ररोहार्थंभवेभवे बीजांकुरंततोभक्षेद्योनदद्याद्धनंद्विजे लक्ष्मीनारायणंपूज्यभोजयेद्वाद्विजो
त्तमान् सकथंचान्ययोनीषुभुंज्यादर्थादिजंसुखं इतिदेवीपुराणेमलमासव्रतम् ॥ अथमलमासव्रतवि
धानम् ॥ हेमाद्रौ पाद्मे देवंशंकरंदेवंसर्वदेवनमस्कृतं षडाननोमहातेजाःप्रणम्यपर्य्यपृच्छति स्कं-
दउवाच देवदेवमहादेवसर्वधर्मप्रवर्तक व्रतानिबहुपुण्यानिश्रुतानित्वत्प्रसादतः नतृप्तिमाधिगच्छामिधर्मतत्त्वेसुरश्रे
ष्ठ व्रतांतरंमहापुण्यंकथयस्वमहाप्रभो श्रीईश्वरउवाच शृणुवत्सप्रवक्ष्यामिव्रतंपापहरंशुभं यस्यानुष्ठानमात्रे
णतुष्टोभवतिभास्करः दुःखंहरतियत्क्षिप्रंप्रदद्यात्सौख्यमुत्तमं स्कंदउवाच किंव्रतंकस्यवैदानंकस्यदेवस्यपू
जनं केनचादौपुराचीर्णंतत्सर्वंकथस्वनः श्रीईश्वरउवाच मलमासव्रतंस्कंदसर्वपापहरंनृणां सकांस्यमन्नदानंतु
तुष्ट्यैभास्करस्यच यस्यानुष्ठानमात्रेणपुत्रदौहित्रवान्नरः धनधान्यसमायुक्तः सर्वपापैः प्रमुच्यते आसीत्पुरा
महाराजानहुषः पृथिवीतले धर्मप्रियस्तपोनिष्ठोदेवपूजनतत्परः प्रजानांपालकोनित्यमतिथीनांचपूजकः ग
तुंशक्रपदंसोथब्राह्मणान्नरवाहने योकुकामारयद्देवाद्दगस्त्यंमुनिपुंगवंयुक्तासमारुहत्सोथतदानीमिंद्रमायया मो
हितो नतुतेनैव युक्तोब्रह्मविदांवरः सर्पसर्पेतिमूढेनताडितश्चमुनिस्तदा क्रुद्धेनमुनिनातेनशापितःकुंभयोनिना

सर्पोभवेतिहेपापमहासर्पस्तदाभवत् राजाशप्तस्तदास्कंदसर्पत्वमतिदारुणं महारण्येमहाप्राज्ञसर्वसंतापवर्जितः
देहभावेनतेनापिकृतास्तुपापराशयः एकदातुमहारण्येकृष्णद्वैपायनोमुनिः आजगाममहाभागस्तस्यभा
ग्येनचोदितः तयोस्तुसंगतमभूदरण्येतरुसंकुलेतद्दर्शनात्ससस्मारपूर्वजन्मविचेष्टितं ततश्चविव्हलीभूतःप्र
णम्यशिरसामुनिं प्रणम्यदंडवत्सर्पइदंवचनमब्रवीत् दयातवमहीपृष्ठेपापिदंडक्षमप्रभो मादृशानांतुपापानां
त्वमेवशरणंसदा अस्माद्दुःखात्प्रमुंचेहंकृपांकुरुमयिप्रभो इतिश्रुत्वावचस्तस्यसमुनि करुणान्वितः उवाचवच
नंसर्पशृणुष्वमनसेप्सितं पूर्वकर्मविपाकेनत्वयादुःखमुपार्जितं सर्पउवाच तातकेनविमुंचेहमनंताद्दुःखसागरात् मु
क्तिर्भवेद्विभोस्माकंकस्येदंकर्मणः फलं व्यासउवाच पूर्वजन्मनिराजेंद्रमलमासेसमागते नार्चितोभास्करोवि.
ष्णुर्विधिनानकृतंव्रतं तत्कर्मपरिपाकेनवृद्धिस्तेविप्रयोजनेशिविकायांसमभवच्छक्रमायासहायतः तस्मात्सर्वप्र
यत्नेननृपव्रतमाचर यस्यानुष्ठानमात्रेणस्वपदंप्राप्स्यसेध्रुवं केनतावद्विधानेनकर्त्तव्यव्रतमीदृशं किंदेयंहिव्रतेचे
हतत्सर्वंकथयस्वनः व्यासउवाच विष्णुरूपंसहस्रांशुमलमासेप्रपूजयेत् पूजितेचसहस्रांशौविष्णुर्भवतिपूजितः
मलमासस्तुमासानांमलिनःपापसंभवः तस्यपापविशुद्ध्यर्थंमलमासव्रतंचरेत् दिनेदिनेप्रदेयानित्रिविधान्नानि
भक्तितः दक्षिणाघृतपक्वानिकांस्यपात्रमयानिच मंत्रः विष्णुरूपीसहस्रांशुःसर्वपापप्रणाशनः अपूपान्नप्रदा
नेनममपापंव्यपोहतु अधिमासेतुसंप्राप्ते गुडसर्पियुतानिच दद्यादनेनमंत्रेण त्रयस्त्रिंशदपूपकान् त्रय
स्त्रिंशदपूपानि दातव्यानिदिनेदिने साज्यानिगुडमिश्राणि अधिमासेनृपोत्तम यावंतितत्रछिद्राणि अपू
पस्थानिपार्थिव तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते चंद्रांशुनिर्मलापूपाःशालितंडुलमिश्रिताःआहारःसर्व
देवानांतेप्रकुर्वंतिमंगलं सहिरण्यान्घृताभ्यक्तांस्त्रयस्त्रिंशदपूपकान् अधिमासेतुसंपूज्यत्रयस्त्रिंशत्तुदेवताउद्दि

श्यापूपदानेनपृथ्वीदानंफलंलभेत् मासाधिकेतुसंप्राप्तेयावत्संख्यानपूपकान् तावद्वर्षमवाप्नोतिविष्णुलोकंसनातनं
त्रयस्त्रिंशदपूपान्वैकांस्यपात्रेनिधायच सघृतंसहिरण्यंचब्राह्मणायनिवेदयेत् नारायणजगद्बीजभास्करप्रतिरूपक
व्रतेनानेनपुत्रांश्चसंपदंचाभिवर्धय इतिप्रार्थना अत्राशक्तविषयेविशेषः अधिमासेयदाराजन्द्वादशीवाथ
पूर्णिमा व्यतीपातदिनेवापिदद्याद्व्रंस्वशक्तितः साज्यपात्रान्हिसगुडांस्त्रयस्त्रिंशदपूपकान् कांस्यपात्रेवि
निःक्षिप्यसंहिरण्यान्सवस्त्रकान् उपानच्छत्रसंयुक्तान्विप्रायाविनिवेदयेत् इदंचसर्वाधिमासव्रताशक्तपरं
तत्रमंत्रःयस्यहस्तेगदाचक्रंगरुडोयस्यवाहनं शंखःकरतलेयस्यसमेविष्णुःप्रसीदतु ॥१॥ कलाकाष्ठादिरूपेणनि
मेषघटिकादिना योवंचयतिभूतात्मातस्मैकालात्मनेनमः ॥ २ ॥ कुरुक्षेत्रमयंदेशःकालःसर्वद्विजोहरिः पृथ्वी
सममिमंदानंगृहाणपुरुषोत्तम ॥ ३ ॥ मलानांचविशुद्ध्यर्थंपापप्रशमनायच पुत्रपौत्राभिवृद्ध्यर्थंतवदास्या
मिभास्कर ॥ ४ ॥ मंत्रेणानेनवैदद्यात्त्रयस्त्रिंशदपूपकान् अन्नदानात्परंदानंमलमासेनविद्यते गृहेतस्य
स्थिरालक्ष्मीर्योदद्यात्सूर्यसान्निधौ दारिद्र्यंनभवेत्तस्यरोगशोकविवर्जितः व्याधिभ्योमुच्यतेरोगीमूकोवाचस्प
तिर्भवेत् एवंतुविधिनाराजन्मलमासव्रतंचरेत् पुत्रपौत्रैःसमायुक्तोमोदतेपालयन्महीं ईश्वरउवाच इत्युक्त्वासमु
निःस्कंदतत्रैवांतरधीयत नहुषोमानसंसर्वंव्रतमेतच्चकारह व्रतस्यास्यप्रभावेनसद्योमानुषतांगतः पुनर्व्रतंचका
रेदंमुनिवर्यादितंयथा विमानवरमारुह्यजगामेंद्रस्यमंदिरं तस्मात्स्कंदनरैःकार्यंव्रतमेतदनुत्तमं व्रतेनतोषितोदे
वोभास्करोभक्तवत्सलः ददातिविपुलांलक्ष्मींपुत्रपौत्रादिसंपदः इतिपाद्मोक्तमलमासव्रतं अथाधिमासेजपनी
यमंत्रोब्रह्मांडपुराणेपुरुषोत्तमोपाख्याने मंत्रराजमिदंविप्रशृणुमेवाग्मिदुर्लभं सुराणामपियच्छ्रुत्वामुच्यतेब्रह्म
हत्यया वर्गाद्योनकुलारूढःशक्तिबिंदुविभूषितः ङेंतःकृष्णोनमश्चांतेनकुलीवरदासनः सर्वदेवेश्वरोबिंदुयुतोग

रुडगामिने वन्हिप्रियांतोमंत्रोयंकोटिदुष्कृतनाशकृत् सतारःषोडशार्णोयमनुर्ब्रह्मांडदीपकः लक्षमेकंजपेदेनम् सेस्मिन्ममदुर्लभे सितामधुतिलाद्यैश्चजहुयान्निर्जरानने देवतामुखेअग्नावित्यर्थः तर्पणंब्रह्मभोज्यंचमार्जनादिद शांशतःनारदोऋषिरत्रास्तिछंदोनुष्टुप्प्रकीर्तितम् देवकीनंदनःकृष्णोदेवोबीजंशिवोदितः नमःशक्तिःसर्व सिद्ध्यैविनियोगःप्रकीर्त्तितः षड्दीर्घभाजाकामेनषडंगेषुन्यसेत्सुधीः जपन्नविरतंमंत्रमनसाभवमोचनंचतु वर्गलभेद्वोरोह्यनायासेनसर्वदा क्लांक्लींक्लूंक्लैंक्लौंक्लः इतिषडंगन्यासः सदाध्यायन्निमंरूपंश्यामवर्णचतुर्भुजं शं खचक्रगदापद्महस्तंभुवनभूषणंमंत्रोयथा ॐक्लींकृष्णायनमः ह्रांगरुडगामिनेस्वाहा इमंमंत्रंलक्षंजपेत् सितामधुतिलाज्यैःपालाशार्ककपित्थादिसमिद्भिर्दशांशहोमंकुर्य्यात् तर्पणमार्जनब्राह्मणभोजनादीनांदशांश कल्पनांकार्य्या अथव्रतविधिःमलमासस्यशुक्लप्रतिपदि अथवाकृष्णपक्षेव्रतारंभंकुर्यात् अथवाकृष्णपक्षे चतुर्दश्यांत्रयोदश्यां अष्टम्यांनवम्यांवाऽन्यतमातिथौकार्यं तिथ्यादिसंकीर्त्त्य आत्मनःदारिद्र्यपापदुःखनाशपू र्वकसत्पुत्रप्राप्ति अतुलसौभाग्यभोगासिद्धिद्वारासावित्ररूपजनार्दन प्रीत्यर्थंमलमासव्रतंकरिष्ये इतिसंकल्प्य- आचार्य्यंदत्वा मध्याह्नेसर्वतोभद्रस्यकलशोपरिहैमंलक्ष्मीयुतंजनार्दनं पुरुषसूक्तमंत्रैः षोडशोप चारपूजां सामान्यपद्धतिक्रमेणकुर्य्यात् तत्रपुष्पपूजांतेविशेषपूजां मत्स्यादिनाममंत्रैःकुर्यात् ॐमत्स्याय- नमः सहस्रशीर्ष्णेनमः देवायनमः सहस्राक्षपादायनमः हरयेनमः लक्ष्मीकांतायनमः मुनीश्वरायनमः स्वयं- भुवेनमः अमिततेजसेनमः ब्रह्मप्रियायनमः देवायनमः ब्रह्मगोप्त्रेनमः ततोलक्ष्मींनाममंत्रैःपूजयेत् लक्ष्म्यै नमः कमलायैनमः श्रियैनमः पद्मवासायैनमः हरिवल्लभायैनमः क्षीराब्धितनयायैनमः इतिगंधाक्षतफलैः संपूज्य ततोधूपंदीपम् नैवेद्यांतंसंपूज्य अर्घ्यंदद्यात् तत्रमंत्रः पुराणपुरुषेशानसर्वशोकानिकृंतन अधिमास

व्रतेप्रीत्यागृहाणार्घ्यंश्रियासह पुराणपुरुषेशानजगद्धातःसनातन सपत्नीकोददाम्यर्घ्यंसृष्टिस्थित्यंतकारिणे-
देवदेवमहाभागप्रलयोत्पत्तिकारक गृहाणार्घ्यमिमंदेवदयांकृत्वाममोपरि इतिविशेषपुजा ततःसपत्नीकं
ब्राह्मणंवस्त्रादिनासंपूज्य त्रयस्त्रिंशदपूपान्कांस्यपात्रेनिधायसवृतं सहिरण्यंवायनं ब्राह्मणायनिवेदयेत्
तत्रमंत्रः मलमासस्तुमासानांमलिनःपापसंभवः तस्यपापविशुद्ध्यर्थमपूपान्नंददाम्यहं ॥ १ ॥ विष्णुरू
पीसहस्रांशुःसर्वपापप्रणाशनः अपूपान्नप्रदानेनममपापंव्यपोहतु ॥ २ ॥ अधिमासेतुसंप्राप्तेत्रयस्त्रिंशदपूपकाः
चंद्रांशुनिर्मलापूपाःशालितंडुलमिश्रिताः ॥ ३ ॥ आहारःसर्वदेवानांतेमेकुर्वंतुमंगलं अधिमासेतुसंप्राप्तेत्रयस्त्रिं
शत्तुदेवताः ॥ ४ ॥ उद्दिश्यापूपदानेनपृथ्वीदानफलंलभेत् ॥ ४ ॥ नारायणजगद्बीजभास्करप्रतिरूपक व्रतेना
नेनपुत्रांश्चसंपदंचाभिवर्धय ॥ ५ ॥ अत्राशक्तस्यविशेषः अधिमासेयदाराजन्द्वादशीवापिपूर्णिमा व्यतीपातदि
नेवापिदद्याद्दानंहिभक्तितः साज्यपात्रंचसगुडंत्रयस्त्रिंशदपूपकान् कांस्यपात्रेविनिःक्षिप्यहिरण्येनसमन्वितान्
उपानच्छत्रसंयुक्तान्विप्रायविनिवेदयेत् तत्रमंत्रः यस्यहस्तेगदाचक्रंगरुडोयस्यवाहनं शंखःकरतलेयस्यसमेवि
ष्णुः प्रसीदतु कलाकाष्ठादिरूपेणनिमेषघटिकादिना योवंचयतिभूतानितस्मैकालात्मनेनमः कुरुक्षेत्रमयोदेशः
कालःसर्वद्विजोपरि पृथ्वीसममिमंदानंगृहाणपुरुषोत्तम मलानांचविशुद्ध्यर्थंपापप्रशमनायच पुत्रपौत्रादिवृ
द्ध्यर्थंतवदास्यामिभास्कर अत्रत्रयस्त्रिंशद्देवताःश्रुत्युक्ताः अष्टौवसव ८ एकादशरुद्राः ११ द्वादशादित्याः १२
प्रजापतिर्वषट्कारश्च ततोऽग्निंप्रतिष्ठाप्यअन्वादध्यात् अत्रप्रधानम् इदंविष्णुःआकृष्णेन १० षोडशाक्षरोमं
त्रः एतान्सितामधुतिलघृतपायसैर्हुत्वा ततस्त्रयस्त्रिंशद्देवतानाममंत्रैर्होमंकुर्यात् आपायनमः अध्वरायनमः
सोमायनमः ध्रुवायनमः अनिलाय० अनलायनमः प्रत्यूषायनमः प्रभासायनमः ८ इतिवसवः वीरभद्रायनमः

शंभवेनमः गिरीशायनमः अजैकपदेनमः अहिर्बुध्न्यायनमः पिनाकिनेनमः भुवनाधीशायनमः कपा
लिनेनम विशांपतयेनमःस्थाणवेनमः भर्गायनमः११इत्येकादशरुद्राःइंद्रायनमःविष्णवेनम भगायनमःत्वष्ट्रेनम
वरुणायनमः अंशायनमः अर्यम्णेनमः रवयेनमः पूष्णेनमः मित्रायनमः यमायनमः पर्जन्यायनमः
इतिद्वादशादित्याः १२ प्रजापतयेनमः वषट्कारायनमः इतित्रयस्त्रिंशतिदेवताः ३३ अपूपदानेगधादिभिःपू
जनीयाः सघृतसहिरण्यचब्राह्मणायददाम्यहं अपूपस्यप्रदानेनविष्णुर्मेप्रीयतामितिएवंहोमंसमाप्य छत्रोपा
नहभूषणाछादनयुतां शय्यापीठगांचआचार्य्य.यदत्वा अन्यान्यपियथाशक्तिदानान्ददद्यात् इतिसोद्यापनं
मलमासव्रतम् अथमलमासेतिथिविशेषकृत्याभावात्तिथिसमान्यकृत्यमुच्यते तत्रादौशुक्लकृष्णभेदेनतिथिध्या
नानिहेमाद्रौ तिथयोह्यधुनोच्यंतेप्रतिपद्द्विभुजारुणा मेषगाशक्तिपात्रासासितपक्षादिमामता वह्निदैवत्वादि
यमेषवाहना शु॰ प्र॰ धूसराकृष्णपक्षाद्याभाससंस्थाचतुर्मुखा अक्षसूत्रंस्रुवंसूक्तवान्नंधरोचतुर्भुजेति कृ॰ प्र॰ इ
यमप्यग्निदैवत्याअक्षसूत्रादिधरा १ अथद्वितीयाध्यानम् द्वितीयामासगाशुभ्रापात्रपुस्तकधारिणी द्वितीया
कुमुदाभासाहंसस्थासाक्षकुंडिकेति इयंब्रह्मदैवत्याहंसवाहनादिरूपा २ अथतृतीयाध्यान तृतीयावृषगागौरी
शूलपात्रधरासिता तृतीयातार्क्षगानीलाशंखपात्रधराद्विदो. द्विदोःद्विभुजा इयगौरीदैवत्या ३ अथचतु
र्थीध्यानं नीलोत्पलदलश्यामाचतुर्थीमूषकास्थिता परशुंविभ्रतीपात्रंपीतवस्त्रादिसंयुता शु॰ च॰ चतुर्थीवकुला
भासामहिषस्थाचतुर्भुजा धत्तेक्षमालिकांदंडचतुर्थीयाचदंष्ट्रिणी अस्यांगणपतिदैवत्वान्मूषकवाहनादिमत्वं
कृष्ण च.अथपंचमीध्यानम् ग्राहस्थाचंद्रगौरास्यापंचमीसाक्षकुंडिकेति शु.प.पंकजस्थाप्रवालाभाफणामस्तकभू
षणा कृ.पं. इयंनागदैवत्या ५ अथषष्ठीध्यानं मयूरगारुणाषष्ठीपात्रकुक्कुटधारणी शु.प.कृष्णपक्षे त्र्यक्षामयूर

गारक्ताशक्तिकुक्कुटधारिणी एकास्याद्विभुजाषष्ठीरक्तवस्त्रसुभूषणा नीलकुंतलकंठासाजटासार्धेन्दुभूषणा इयंस्कंद स्वामिदेवत्या ६ अथसप्तमीध्यानं ताम्रवर्णासाज्यपात्रासप्तमीहयगामता शु. स. नीलकुंतलकंठासाजटासं इंदुभूषणा इभस्थासप्तमीगौरीद्विभुजावज्रपात्रिणी कृ. स. इयंसूर्यदेवत्या अथाष्टमीध्यानं घंटापात्रधरागो स्थागोक्षीरधवलाष्टमीशु.अ.प्रेतगाचाष्टमीरक्ताकृष्णग्रीवासितांशुका अक्षखड्गंतथाखेटपात्रंधत्तेचतुर्भुजेतिकृ.अः इयंशिवदेवत्या ८ अथनवमीध्यानम् नवमीसिंहगाशुभ्रापाशपात्रपरंशुभा शु.न. अक्षखड्गंतथाखेटपा त्रंधत्तेचतुर्भुजा सर्पगानवमीनीलादृष्टिणीपात्रतर्जिनी कृ.न- इयंदुर्गादेवत्या ९ अथदशमीध्यानंसिंहास नेस्थिताशुभ्रादशमीपीतकुंडला ज्ञानमुद्राभयाचेयंपीतवस्त्राक्षमालिनी शु-द- कृष्णवर्णालुलायस्थादशमीदंड पात्रिणी इयंधर्मराजदेवत्या १० अथैकदशीध्यानम् एकादशीवृषस्थातुनीलशुभ्रात्रिशूलिनी ताम्रवर्णार थारूढापात्रखेटासिपंकजा शु-ए- एकादशीमृगाजस्थातुलाकर्त्तरिकायुता सिंहाननारुणगलातुंदिनीलासि नेपिरेति कृष्ण.ए.इयंरुद्रदेवत्या ११ अथद्वादशीध्यानम् द्वादशीगरुडारूढामेघवर्णाब्जपात्रिणी आरंचक्रं शु-द्वा- द्वादशीशुभ्रवस्त्रयेनीलकुंतलभूषिता कृ.द्वा- इयंहरिदेवत्या १२ अथत्रयोदशीध्यानम् चापबाणधरा गौरीमयूरस्थात्रयोदशी अशोककालिकाबाणचापपात्रात्रयोदशी शु.त्र. मेचकाब्जासनाश्यामाहरिद्वस्त्रामदाल सा गदापात्रधरागौरीनिधिस्थाचत्रयोदशी कृ.त्र. इयांशिवकामदेवत्या १३ अथचतुर्दशीध्यानम् उक्षस्था पाटलभासाफलपात्रसुगम्ता नीलकंठेंद्रगोपाभलोचनेयचतुर्दशी शु.च. द्विभुजातुरगारूढाकृष्णवर्णाचतुर्द शी खड्गभल्लधरानीलकुंडलाशुभ्रभूषणा कृ.च. इयांशिवदेवत्या १४ अथपौर्णमासीध्यानम् शशिगापूर्णि माशुभ्रामौक्तिकाभरणान्विता सुधापूर्णाषडाधारवामदक्षिणबाहुका इयंचंद्रदेवत्या १५ अथामावास्याध्यानं

संन्नभल्लधरंनीलैंकुंतलांशुकभूषणां ' अमावास्याविधातव्याद्विदोर्मरकतप्रभा दर्भासनास्थिताचेयंदर्भापिंडधराकृ
र्मेति ' इयंपितृदेवत्या ३० इतिप्रतिपदादिसमस्तध्यानानि संकलातिथिव्रतेषुयथासंभवंयोज्यानि अथाधिमा
सांतर्गतशुक्लैकादशीव्रतकथा भविष्योत्तरे युधिष्ठिरउवाच भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतम् शुक्लप
क्षेधिकेमासेपुरुपोत्तमपूजनम् पुरुपोत्तममासस्यकथांब्रूहिजनार्दन कोविधिः किंफलंतस्याः कोदेवस्तत्रपूज्यते
अधिमासेतुसंप्राप्तेशुक्लाह्येकादशीव्रतम् कस्यदानस्यकिंपुण्यंकिंकर्तव्यंनृभिः प्रभो कथंस्नानंचकिंपुण्यंकिंदानंक
स्यपूजनं किंचभोज्यमभोज्यंवामासेत्रपुरुपोत्तमे श्रीकृष्णउवाच कथयिष्यामिराजेंद्रतवस्नेहस्यकारणात् अधि
मासेशुक्लपक्षेकामदैकादशीभवेत् तस्याव्रतस्यकरणात्कमलासन्मुखीभवेत् ब्राह्मेमुहूर्तेचोत्थायस्मृत्वाचपुरुषो
त्तमं स्नात्वाचैवविधानेननियमान्कारयेद्व्रती गृहेत्वेकगुणंजप्यंनद्यांतुद्विगुणंस्मृतं गवांगोष्ठेदशगुणमग्न्यागा
रेदशाधिक पुण्यक्षेत्रेषुतीर्थेषुदेवानांचैवसान्निधौसहस्रशतकोटीचफलंस्याद्द्विजसन्निधौ पक्षेपक्षेमहाराजयेनरा
विष्णुपूजकाः तेषांपापहरंपुण्यंव्रतमेकादशीस्मृतं दशम्यामेकभक्तंचएकादश्यामुपोपणं द्वादश्यांपारणंकृत्वा
मुक्तिभागीभवेन्नरः श्रद्धावान्कुरुतेयस्तुमलमासेतुकामदा वांछितंलभतेमोक्षंनात्रकार्याविचारणा पुरु
पोत्तमोधिकेमासि पूजनीयः प्रयत्नतः पोडशैरुपचारैश्चपूजयेत्पुरुषोत्तमं कांस्यंमांसंमसूरान्नंचणकंकोद्रवा
न्मधु शाकंचैवपरान्नंचपुनर्भोजनमैथुनं वैष्णवोव्रतकर्ताचदशम्यांदशवर्जयेत् द्यूतंक्रीडांतथानिंदांतांबूलंदंतधावनं
परापवादंपैशून्यंहिंसांस्तेयंतथारतिं व्यायामंचप्रवासंचपुनर्भोजनमैथुनं घृष्टंपिष्टंपरान्नंचद्वादश्यांशयनंदिवा अ
नेनविधिनाराजन्कामदायेनवैकृता रात्रौजागरणंकृत्वा पूजितः पुरुषोत्तमः सर्वपापविनिर्मुक्तः संयाति
परमांगतिं पठनाच्छ्रवणाद्वापिगोसहस्रफलंलभेत् इतिश्रीभविष्योत्तरेऽधिकमासेशुक्लाकामदैकादशीव्रतकथा

अथाधिमासस्यकृष्णपक्षेकमलैकादशीव्रतम् युधिष्ठिरउवाच श्रुतानिवहुधर्माणिव्रतानिचजगत्प्रभो एकादशीव्रतं किंचिन्नश्रुतंवैजनार्दन परंत्वेकादशींब्रूहिमलमासेऽसितांममयांकृत्वामानवोलोकेप्राप्नुयात्परमंपदम् ॥ श्रीकृष्णउवाच ॥ शुक्लावायदिवाकृष्णानत्याज्यैकादशीवुधैः कर्त्तव्यासाप्रयत्नेनमलमासेपिमोक्षदा एकादशीकलौराजन्भववंधविमोचिनी कामदासर्वलोकानांभुक्तिमुक्तिविधायिनी रविवारेचमांगल्येसंक्रांतौचतथैवच एकादशीसदोपोष्यापुत्रपौत्रविवर्द्धनी मोक्षदंधनदंराजन्नित्यमेकादशीव्रतं यथोक्तविधिनाकृत्वा नराःस्युर्विष्णुमूर्तयः जीवन्मुक्तानराराजन्जायंतेनात्रसंशयः युधिष्ठिरउवाच जीवन्मुक्ताः कथंकृष्ण विष्णुरूपाः कथंहरे पापरूपाश्वकथ्यंतेपरंकौतूहलंमम श्रीकृष्णउवाच एकादशीप्रकुर्वीतिस्वशक्त्यायेनरोत्तमाः सहस्त्रशतकोटीनांयज्ञानांफलभागिनः अवंत्यामभवत्कश्चित् शिवधर्माद्विजोत्तमः तस्यपुत्राश्चपचाशत्कनिष्ठः पापमूर्त्तिमान् पित्राथवांधवैःसर्वैःपरित्यक्तःस्ववंधुभिः वनंगतस्ततोदैवात्तीर्थराजेततःस्वयं क्षुत्क्षामःपूर्वपुण्येनात्रिवेण्यांस्नानमाचरेत् ऋषीणामाश्रमांस्तत्रविचचारक्षुधार्दितः हरिमित्रमुनेस्तत्रचाश्रमंसददर्शह उपोपिताचकमला पूजितः पुरुषोत्तमःकथाश्रुताश्चविविधाभुक्तिमुक्तिविधायिनी व्रतंकृतंचतैःसार्धंस्थित्वाशून्यालयेतदा निशीथेसमनुप्राप्तेकमलास्वयमागता वरंगृहाणभोविप्रकामदाया प्रभावतः विप्रउवाच कात्वंकस्यासिरंभोरुप्रसन्नाचकथंमम इंद्रस्यशंकरस्यापिचंद्रेसूर्येप्रभातथा गांधर्वीकिन्नरीवापित्वत्समानास्तिभूतले लक्ष्मीरुवाच प्रसन्नाहंस्वयंजातावैकुंठादिहमागता प्रेषिताहरिणाशीघ्रंकमलाव्रतकारणात् पुरुषोत्तममासस्यशुक्लपक्षेतुयास्मृता तस्याव्रतंत्वयाचीर्णंप्रयागेमुनिसान्निधौ व्रतस्यास्यप्रभावेणवशगाहंनसंशयः तववंशेभविष्यंतिहरिवासरसेवकाः हरिपूजारतामर्त्याःपुराणश्रवणेरताः

विप्रउवाच ॥ प्रसन्नायदिमेदेविव्रतंविस्तरतोवद यत्कथासुप्रवर्त्ततेसज्जनाःपंडिताजनाः ॥ लक्ष्मीरुवाच ॥
श्रोतॄणांपरमंश्लाघ्यंपवित्राणामनुत्तमं दुःस्वप्ननाशनंपुण्यंग्रहपापहरंशुभं योनरःश्रद्धयायुक्तोश्लोकंश्लोकार्धं
मेवच पाठेनश्रवणेनैवकुलकोटिंसमुद्धरेत् । मार्गशीर्षोहिमासानांपक्षिणांगरुडोयथा नदीनांचयथागंगाति
थिष्वेकादशीतथा ॥ अद्यापिनिर्जराःसर्वेभारतेजन्मलिप्सवः समर्चयंतिविबुधानारायणपरायणाः हरिनाम
पराःपंचपूजाभक्तिपरायणाः ॥ तेकृतार्थाःकलियुगेसत्यंसत्यंवदाम्यहं शुक्लावायदिवाकृष्णायदात्वेकादशीभवेत्
गृहस्थानांतुपूर्वास्याद्यतीनामुत्तरासदा ॥ एकादशीद्वादशीचरात्रिशेषत्रयोदशी तत्रक्रतुशतंपुण्यंत्रयोदश्यांतुपा
रणे ॥ अद्यस्थित्वानिराहारःसर्वभोगविवर्जितः श्वोभोक्ष्येपुंडरीकाक्षशरणंमेभवाच्युत व्रतंकृत्वाप्रयत्नेनमाध
वायनिवेदयेत् ॥ गीतवाद्यैःपुराणैश्चस्तुतिभिर्जागरंचरेत् पंचामृतेनसंस्नाप्यहरिंपापैःप्रमुच्यते ततःप्रातःसमु
त्थायस्नात्वाविष्णुंसमर्चयेत् ॥ अज्ञानतिमिरांधस्यव्रतेनानेनकेशव प्रसादसुमुखोभूत्वाज्ञानदृष्टिप्रदोभव एवंविज्ञा
प्यदेवेशंदेवदेवंचचक्रिणं ॥ ब्राह्मणान्भोजयेद्भक्त्यादद्यात्तेभ्यश्चदक्षिणां कृत्वापंचमहायज्ञान्भोक्तव्यंबंधुभिःसह
एवंयःप्रयतःकुर्यात्पुण्यमेकादशीव्रतं ॥ सयातिविष्णुभवनंपुनरावृत्तिदुर्लभं इत्युक्ताकमलातस्मैवरंदत्वादिव
ययौ ॥ धनधान्यसमायुक्तोविप्रोसानभवत्तदा ॥ एवंयःकुरुतेराजन्कमलैकादशीव्रतं श्रुत्वापठित्वामर्त्योहिवि
ष्णुसायुज्यमाप्नुयात् ॥ इतिब्रह्मांडपुराणे ॥ अधिकमासेकमलैकादशीव्रतकथा ॥ नारदीया
दिसकलपुराणसंदर्भोक्तएकादशीकल्पोविधीयते ॥ तत्रादौविष्णुभवनद्वारेध्वजारोपणव्रतम् ॥ नारदीये ॥
सनकउवाच ॥ अन्यद्व्रतंप्रवक्ष्यामिध्वजारोपणमुत्तमं सर्वपापहरंपुण्यंविष्णुप्रीणनकारणं यःकुर्याद्वि
ष्णुभवनेध्वजारोपणमुत्तमं ॥ संपूज्यतेविरंच्याद्यैःकिमन्यैर्बहुभाषितैः ॥ हेमभारसहस्रंतुयोददातिकुटुंबिने

तत्फलंतल्पमात्रंस्याध्वजारोपणकर्मणः ध्वजारोपणतुल्यंस्याद्गंगास्नानमनुत्तमम् ॥ अथवातुलसीसे
वाशून्यालिंगप्रपूजनं अहोपूर्वमहोपूर्वमहोपूर्वमिदंद्विज सर्वपापहरंकर्मध्वजारोपणसंज्ञितं यानिकार्य्या
णिसर्वाणिध्वजारोपणकर्माणि तानिसर्वाणिवक्ष्यामिशृणुष्वगदतोमम कार्त्तिकस्यसितेपक्षेदशम्यांसंयतो
नरः स्नानंकुर्यात्प्रयत्नेनदंतधावनपूर्वकं एकादश्यांब्रह्मचारीस्वयंनारायणंस्मरन् धौतांबरधरः शुद्धो
विप्रनारायणाग्रतः ततःप्रातःसमुत्थायस्नात्वाचम्ययथाविधि नित्यकर्माणिनिर्वर्त्यपश्चाद्विष्णुंसमर्चयेत्
चतुर्भिर्ब्राह्मणैःकृत्वाकृत्वाचस्वस्तिवाचनं नांदीश्राद्धंप्रकुर्वीतध्वजारोपणकर्मणि ध्वजस्तंभौचगायत्र्याप्रोक्षयेद्वस्त्र-
संयुतौ सूर्यंचवैनतेयंचहिमांशुंतत्पटेर्चयेत् धातारंचविधातारंपूजयेद्ध्वजदंडके हरिद्राक्षतगंधाद्यैःशुक्लपुष्पैः
र्विशेषतः ततोगोचर्ममात्रंतुस्थंडिलंचोपलिप्यवै आधायाग्निंस्वगृह्योक्तमाज्यभागादिकंक्रमात् जुहुयात्पा-
यसंचैवसाज्यमष्टोत्तरशतं प्रथमंपौरुषंसूक्तंविष्णोर्नुकमिरावती ततश्चवैनतेयायस्वाहेत्यष्टाहुतीस्तथा सोमो-
धेनुमुदुत्यंचजुहुयाच्चततोद्विज सौरमंत्रान्जपेत्तत्रशांतिसूक्तानिशक्तितः रात्रौजागरणंकुर्य्यादुपकंठेहरेःशुचिः
ततःप्रातःसमुत्थायानित्यकर्मसमाप्यच गंधपुष्पादिभिर्देवमर्चयेत्पूर्ववत्क्रमात् ततोमंगलवाद्यैश्चसूक्तपाठैःसु-
शोभनैः नृत्यैश्चस्तोत्रपाठैश्चगीतवाद्यैर्नयेद्ध्वजं पादपेद्वारदेशेवाशिखरेवामुदान्वितः सुस्थिरंस्थापयेद्विप्र.
ध्वजंसुस्तंभसंयुतं गंधपुष्पाक्षतैर्देवंगंधदीपैर्मनोहरैः भक्ष्यभोज्यादिसंयुक्तैर्नैवेद्यैश्चहरिंयजेत् एवंदेवाल
येस्थाप्यशोभनंध्वजमुत्तमं प्रदक्षिणमनुव्रज्यस्तोत्रमेतदुदीरयेत् नमस्तेपुंडरीकाक्षनमस्तेविश्वभावन
नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज येनेदमखिलंजातंयत्रसर्वंप्रतिष्ठितं लयमेष्यतियत्रैवतंप्रपन्नोस्मिकेशवं
नजानंतिपरंभावंयस्यब्रह्मादयःसुराःयोगिनोयंनपश्यंतितंवंदेब्रह्मरूपिणं यन्मुखाद्ब्राह्मणाजातायद्बाहोरभवन्नृपाः

वैश्यायस्योरुजातावै पद्भ्यांशूद्राश्चजज्ञिरे मायासंगममात्रेण वदंतिपुरुषजनाः स्वभावविमलंशुद्धं
निर्विकारंनिरंजनं क्षीराब्धिशायिनंदेवमनंतमपराजितं सद्भक्तवत्सलविष्णुभक्तिगम्यंनमाम्यहं पृथिव्या
दीनिभूतानितन्मात्राणींद्रियानिच सूक्ष्मसूक्ष्मानियेनासंस्तवदेसर्वतोमुखं यद्ब्रह्मपरमंधामसर्वलोकोत्तमो-
त्तम निर्गुणपरमंसूक्ष्मंप्रणतोस्मिपुनःपुनः अविकारमजंशुद्धंसर्वतोव्याप्तमीश्वरं यमामनंतियोगीशंसर्वका
रणकारणं योदेवःसर्वभूतानामतरात्माजगन्मयः निर्गुण सच्चिदानंदःसमेविष्णुःप्रसीदतु जगाद्धितार्थयेद
हाध्रियतेलीलयाहरेः तानर्चयंतिविबुधाःसमेविष्णु प्रसीदतु ज्ञानिनांकर्मिणांचैवतथाभक्तिमतांनृणां फलंद.
दातिविश्वेशःसमेविष्णु प्रसीदतु यइदंकीर्त्तयेन्नित्यंस्तोत्राणामुत्तमोत्तमं सर्वपापविनिर्मुक्तोविष्णुलोकंसगच्छति
इतिस्तुत्वानमेद्विष्णुंब्राह्मणांश्चप्रपूजयेत् आचार्यंपूजयेत्पश्चाद्दक्षिणावसनादिभिः ब्राह्मणान्भोजयेत्पश्चाद्भ
त्त्यावित्तानुसारतः पुत्रमित्रकलत्राद्यैः स्वयंचसहवंधुभिः कुर्वीतपारणंविप्रनारायणपरायणः यस्त्वेतत्क
र्मकुर्वीतध्वजारोपणमुत्तमं तस्यपुण्यफलंवक्ष्येश्रृणुष्वसुसमाहितः पटोध्वजस्यविप्रेंद्रयावच्चलतिवायुना ताव
तिपापजालानिनश्यंत्येवनसंशय महापातकयुक्तोवायुक्तोवासर्वपातकैः ध्वजविष्णुगृहेकृत्वामुच्यतेसर्वपातकैः
यावद्विभातितिष्ठेतध्वजोविष्णुगृहेद्विज तावद्युगसहस्राणिहरिसामीप्यभाग्भवेत् आरोपितंध्वजदृष्ट्वायेभि
नंदातिधार्मिकाः तेपिसर्वेविमुच्यंतेह्यतिपातकसंचयैः आरोपितंध्वजाविष्णुगृहेधुन्वन्परंस्वकं कर्त्तुसर्वाणि,
पापानिधुन्वतिनिमिषार्धतः यस्त्वारोप्यध्वजाविष्णोर्गृहेनित्यमुपाचरेत् सदैवयानेनदिवंयातिवैसुमतिर्यथा
इतिनारदीयेपूर्वभागेध्वजारोपणव्रतम् अथकथा नारदउवाच भगवन्सर्वधर्मज्ञसर्वशास्त्रार्थपारग सर्वक
र्मवरिष्टंचत्वयोक्तंध्वजधारणम् यस्तुवैसुमतिर्नामध्वजारोपकरोमुने त्वयोक्तस्तस्यचरितंविस्तरेण

राजन्यदुक्तंभवतातत्सर्वंत्वत्कुलोचितं विनयावनतःसर्वोबहुश्रेयोलभेदिह धर्मश्चार्थश्चकामश्चमोक्षश्चनृप
सत्तम विनयाल्लभ्यतेमर्त्यैर्दुर्लभंकिंमहात्मनां प्रीतोस्मितवभूपालसन्मार्गपरिवर्त्तिनः स्वस्तितेसततं
भूयाद्यत्पृच्छामितदुच्यतां पूजावहुविधाःसंतिहरितुष्टिविधायिकाः तासुनित्यंध्वजारोपेवर्त्तसेत्वंसदोद्यतः
भार्यापितवसाध्वीयंनित्यंनृत्यपरायणा किमर्थमेतद्वृत्तांतंयथावद्वक्तुमर्हसि राजोवाच शृणुष्वभगवन्सर्वंय-
त्पृच्छामिवदामितत् आश्चर्यभूतंलोकानामावयोश्चरितंत्विह अहमासंपुराशूद्रोमालिनिर्नामसत्तम कुमा
र्गनिरतोनित्यंसर्वलोकाहितेरतः पिशुनोधर्मविद्वेषीदेवद्रव्यापहारकः गोघ्नश्चब्रह्महाचौरःसर्वप्राणिवधेरतः
नित्यंनिष्ठुरवक्ताचपापीवेश्यापरायणः एवंस्थितःकियत्कालमनादृत्यमहद्वचः सर्वबंधुपरित्यक्तोदुःखीवनमु
पागतः मृगमांसाशनोनित्यंतथापांथविलुंपकः एकाकीदुःखबहुलोनिदाघार्त्तःपिपासितः जीर्णदेवालयंवि
ष्णोरपश्यंविजनेवने हंसकारंडवाकीर्णंतत्समीपेमहत्सरः पर्यंतवनपुष्पौघछादितंतन्मुनीश्वर अपिबंतत्रपानीयं
तत्तीरेविगतश्रमः फलानिजग्ध्वाजीर्णानिस्वयंक्षुद्विनिवारिता तस्मिन्जीर्णालयेविष्णोर्निवासंकृतवानहंजीर्णे
स्फुटितसंधानंतस्यनित्यमकारिषं पर्णैस्तृणैश्चकाष्ठैश्चगृहंसम्यक्प्रकल्पितं स्वसुखार्थंतुतद्भूमिर्मयालिप्तामुनी
श्वर तत्राहंव्याधवृत्तिस्थोहत्वावहुविधान्मृगान् आजीवंवर्त्तयन्नित्यंवर्षाणांविंशतिस्थितः अथेयमागतासा-
ध्वीविंध्यदेशसमुद्भवा निषादकुलजाविप्रनाम्नाख्याताचकोकिला बंधुवर्गपरित्यक्तादुःखिताजीवविग्रहा क्षु
त्तृड्घर्मपरिश्रांताशोचंतीस्वकृतंत्वघं दैवयोगात्समायाताभ्रमंतीविजनेवने ग्रीष्मतापार्दिताबाह्येस्वांतेचा
धिप्रपीडिता इमांदुःखार्दितांदृष्ट्वाजातामेविपुलादया दत्तंमयाजलंचास्यैवन्यमूलफलानिच गतश्रमात्वियं
ब्रह्मन्मयापृष्टायथातथं अवेदयत्स्ववृत्तांतंतच्छृणुष्वमहामुने अहंकोकिलनीनाम्नानिषादकुलसंभवा दारुक

समादिश सनकउवाच शृणुष्वेकमनाःपुण्यमितिहासंपुरातनं ॥ ब्राह्मणाकथितंमह्यंसर्वपापप्रणाशनं ॥ आ
सीद्गौराकृतयुगेसुमतिर्नामभूपतिः सोमवंशोद्भवःश्रीमान्सप्तद्वीपैकनायकः धर्मात्मासत्यसंपन्नःशुचिर्वैश्योति
थिप्रियः सर्वलक्षणसंयुक्तःसर्वसंपद्विभूषितः सदाहरिकथासेवीहरिपूजापरायणः हरिभक्तिपराणांचशु
श्रूषुर्निरहंकृतिः पूज्यपूजापरोनित्यंसमदर्शिगुणान्वितः सर्वभूतहितःशांतोधर्मज्ञःकीर्तिवर्धनः तस्यभा
र्याम्महाभागासर्वलक्षणसंयुता पतिव्रतापतिप्राणानाम्नासत्यवतीमुने तावुभौदंपतीनित्यंहरिपूजापरायणौ
जातिस्मरौमहाभागौसत्यज्ञौसत्परायणौ अन्नदानरतौनित्यंजलदानपरायणौ तडागारामवप्रादीनसंख्या
तान्वितेनतुः ॥ सातुसत्यवतीनित्यंशुचिर्विष्णुगृहेसती नृत्यतीपरिसंतुष्टामनोज्ञामंजुवादिनी सोपिराजामहाभा
गोद्वादशीद्वादशीदिने ध्वजमारोपयत्येवमनोज्ञंबहुविस्तरं एवंहरिपरंनित्यंराजानधर्मकोविदं प्रियांसत्य
वतीचास्यदेवाअपिसदास्तुवन् त्रिलोकेविश्रुतौज्ञात्वादंपतीधर्मकोविदौ आययौबहुभिःशिष्यैर्द्रष्टुकामोविभां
डकः तमायांतंमुनिंश्रुत्वासतुराजाविभांडकं प्रत्युद्ययौसपत्नीकःपूजाभिर्बहुविस्तरं कृतातिथ्यक्रियंशांतंकृ
तासनपरिग्रहं नीचासनस्थितोभूपःप्रांजलिर्वाक्यमब्रवीत् राजोवाच भगवन्कृतकृत्योस्मित्वदभ्यागमनेनवै
सतामागमनंसंतःप्रशंसंतिसुखावहं यत्रस्यान्महतांप्रेमतत्रस्युःसर्वसंपदः तेजःकीर्तिर्धनंपुत्राइतिप्राहुर्विपश्चितः
तत्रवृद्धिमुपायांतिश्रेयांस्यनुदिनंमुने यत्रसंतःप्रकुर्वंतिमहतींकरुणांप्रभो योमूर्ध्निधारयेद्ब्रह्मन्महत्पादजलंरजः
सस्नातः सर्वतीर्थेषु पुण्यात्मानात्रसंशयः ॥ ममपुत्राश्चदाराश्चसंपच्चत्वयिसमर्पिता ममाज्ञापयविप्रेंद्रकिंप्रि
यंकरवाणिते ॥ विनयावनतंभूपंसानिरीक्ष्यनरेश्वरः स्पृष्ट्वाकरेणतंप्रीत्याप्रत्युवाचातिहर्षितः विभांडकउवाच ॥

राजन्यदुक्तंभवतातत्सर्वंत्वत्कुलोचितं विनयावनतःसर्वोबहुश्रेयोलभेदिह धर्मश्चार्थश्चकामश्चमोक्षश्चनृप
सत्तम विनयाल्लभ्यतेमर्त्यैर्दुर्लभंकिंमहात्मनां प्रीतोस्मितवभूपालसन्मार्गपरिवर्त्तिनः स्वस्तितेसततं
भूयाद्यत्पृच्छामितदुच्यतां पूजाबहुविधाःसंतिहरितुष्टिविधायिकाः तासुनित्यंध्वजारोपेवर्त्तसेत्वंसदोद्यतः
भार्यापितवसाध्वीयंनित्यंनृत्यपरायणा किमर्थमेतद्वृत्तांतंयथावद्वक्तुमर्हसि राजोवाच शृणुष्वभगवन्सर्वंय-
त्पृच्छामिवदामितत् आश्चर्यभूतंलोकानामावयोश्चरितंत्विह अहमासंपुराशूद्रोमालिनिर्नामसत्तम कुमा
र्गनिरतोनित्यंसर्वलोकाहितेरतः पिशुनोधर्मविद्वेषीदेवद्रव्यापहारकः गोघ्नश्चब्रह्महाचौरःसर्वप्राणिवधेरतः
नित्यंनिष्ठुरवक्ताचपापीवेश्यापरायणः एवंस्थितःकियत्कालमनादृत्यमहद्वचः सर्वबंधुपरित्यक्तोदुःखीवनमु
पागतः मृगमांसाशनोनित्यंतथापांथविलुंपकः एकाकीदुःखबहुलोनिदाघार्त्तःपिपासितः जीर्णदेवालयंवि
ष्णोरपश्यंविजनेवने हंसकारंडवाकीर्णंतत्समीपेमहत्सरः पर्यंतवनपुष्पौघछादितंतन्मुनीश्वर अपिवंतत्रपानीयं
तत्तीरेविगतश्रमः फलानिजग्ध्वाजीर्णानिस्वयंक्षुद्विनिवारिता तस्मिन्जीर्णालयेविष्णोर्निवासंकृतवानहंजीर्ण
स्फुटितसंधानंतस्यनित्यमकारिषं पर्णैस्तृणैश्चकाष्ठैश्चगेहंसम्यक्प्रकल्पितं स्वसुखार्थंतुतद्भूमिर्मयालिप्तामुनी
श्वर तत्राहंव्याधवृत्तिस्थोहत्वाबहुविधान्मृगान् आजीवंवर्त्तयन्नित्यंवर्षाणांविंशतिस्थितः अथेयमागतासा-
ध्वीविंध्यदेशसमुद्भवा निषादकुलजाविप्रनाम्नाख्यातावकोकिला वंधुवर्गपरित्यक्तादुःखिताजीर्णविग्रहा क्षु
त्तृड्घर्मपरिश्रांताशोचंतीस्वकृतंत्वघं दैवयोगात्समायाताभ्रमंतीविजनेवने ग्रीष्मतापार्दितावाह्येस्वांतेचा
धिप्रपीडिता इमांदुःखार्दितांदृष्ट्वाजातामेविपुलादया दत्तंमयाजलंचास्यैवन्यमूलफलानिच गतश्रमात्वियं
ब्रह्मन्मयापृष्टायथातथं अवेदयत्स्ववृत्तांतंतच्छृणुष्वमहामुने अहंकोकिलनीनाम्नानिषादकुलसंभवा दारुकं

स्वसुताचाहांविध्यपर्वतवासिनी परस्वहारिणीनित्यमदारिशून्यनादिनी पुंश्चलीत्येवमुक्तातुबंधुवर्गैःसमुज्झिता
कियत्कालंततःपत्याप्रताहंलोकनिंदिता दैवात्सोऽपिगतोलोकमयस्यात्रविहायमां कांतारेविजनेचैकाभ्रमंतीदुः
खपीडिता दैवात्त्वत्सन्निधिप्राप्ताजीविताहंत्वयाधुना त्वेदंस्वकृतंकर्ममह्यंसर्वंनिवेदितं ततोदेवालयेतस्मिन्दं
पतीभावमाश्रितौ स्थितौवर्षाणिदशचआवांमांसफलाशिनौ एकदामद्यपानेनप्रमत्तौनिर्भरंमुने तत्रदेवाल
येरात्रौमदिरामांसभोजनात् वस्त्रावस्त्रापरिज्ञानौनृत्यंचाक्रिवयोहितौ प्रारब्धकर्मभोगांतमावांयुगपदागतौ यम
दूतास्तदायातापाशहस्ताभयंकराः नेतुमावामहदंतःसुघोरांयमयातनां ततःप्रसन्नोभगवान्कर्मणाममनानंद
देवावसथसंस्कारसंचितेनाकृतात्मनः सदूतान्प्रेषयामासस्वभक्तावनतत्परः तेदूतादेवदेवस्यशंखचक्रगदाधराः
सहस्रसूर्यसंकाशाःसर्वेचारुचतुर्भुजाः किरीटकुंडलधराहारिणोवनमालिनः दिशोवितिमिराविप्र कुर्वंतः स्वे
नतेजसा भयंकरान्पाशहस्तान्दंष्ट्रिणोयमकिंकरान् आवयोर्ग्रहणेप्राप्तानूचुःकृष्णपरायणाः विष्णुदूताऊचुः
भोभोक्रूरादुराचाराविवेकपरिवर्जिताः मुंचध्वमेतौनिष्पापौदंपतीहरिवल्लभौ विवेकस्त्रिषुलोकेषुसंपदामादिका
रणं अपापेपापवीर्यस्तुतविद्यादपुरुषाधमं यमदूताऊचुः युष्माभिःसत्यमेवोक्तंकिंत्वेतौपापिसत्तमौ यमेन
पापिनोदंड्यास्तन्नेष्यामोयमांतिकं श्रुतिप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययः धर्माधर्मविवेकोयंतन्नेष्यामोयमांति
कं एतच्छ्रुत्वातुकुपिताविष्णुदूतामहौजसः प्रत्यूचुस्तान्यमवरानधर्मेधर्ममानिनः विष्णुदूताऊचुः अहोकष्टं
धर्मदृशामधर्मःस्पृशतेसभां सम्यग्विवेकशून्यानांनिदानंह्यापदांमहत् तर्केणस्वविकृष्टेणनरकाध्यक्षतांगताः
यूयंकिमर्थमद्यापिकर्त्तुंपापानिसोद्यमाः स्वकर्मक्षयपर्यंतमहापातकिनोपिच तिष्ठंतिनरकेघोरेयावच्चंद्रार्कतार
कं पूर्वसंचितपापानामदृष्टानिष्कृतिंवथा किमर्थंपापकर्माणिकरिष्यथपुनःपुनः श्रुतिप्रणिहितोधर्मःसत्यंस

त्यनसंशयः किंवाभ्यांचरितान्धर्मान्प्रवक्षामोयथातथं एतौपापविनिर्मुक्तौहरिशुश्रूषणेरतौ हरिणाभ्य
र्च्यमानौचमुचध्यमाविलोवितं एणाचनतनचक्रेतथैषोध्वजरोपणं अंतकालेविष्णुगृहेतेननिष्पापतांगतौ अं
तकालेतुयन्नामश्रुत्वांक्कापिचवैसकृत् लभतेपरमंस्थानंकिमुशुश्रूषणेरतः महापातकयुक्तोवायुक्तोवाह्युपपातकैः
कृष्णसेवीनरोतोपिलभतेपरमांगतिं यतीनांविष्णुभक्तानांपरिचर्य्यापरायणाः तेदूताःसहसायांतिपापिनोपि
परांगतिं मुहूर्तंवामुहूर्तार्धंयस्तिष्ठेद्धरिमंदिरे सोपियातिपरंस्थानंकिमहोमासवत्सरान् उपलेपनकर्त्तारौसं
मार्जनपरायणौ एतौपरिगृहेनित्यंजीर्णशीर्णाधिरोपकौ जलसेचनकर्त्तारौदीपदौहरिमंदिरे कथमेतौमहाभा
गौयातनाभोगमर्हतः इत्युक्त्वाविष्णुदूतास्तेछित्वापाशांस्तदैवहि आरोप्यावांविमानाग्र्यं ययुर्विष्णोः परंपदं
तत्रसामीप्यमापन्नौदेवदेवस्यचक्रिणः दिव्यान्भोगान्भुक्तवंतौतावत्कालंमुनीश्वर दिव्यान्भोगान्विष्णुलोकेभु
क्त्वायातौमहीमिमां अत्रापिसंपदंतुलांहरिसेवाप्रभावतः अनिच्छयाकृतेनापिसेवनेनहरेर्मुने प्राप्तमीदृक्फ
लंविप्रदेवानामपिदुर्लभं इच्छयाराध्यविश्वेशंभक्तिभावेनमाधवं प्राप्स्यावःपरमंश्रेयइतिहेतुर्निरूपितः अवशे
नापियत्कर्मकृतंस्यात्सुमहत्फलं जायतेभूमिदेवेंद्रकिंपुनःश्रद्धयाकृतं एतदुक्तंनिशम्याथसमुनींद्रोविभांडकः
प्रणम्यदंपतीतौतुप्रययौसतपोवनं तस्माज्जानीहिदेवर्षेदेवदेवस्यचक्रिणः परिचर्य्यातुसर्वेषांकामधेनूपमास्मृताह
रिपूजारतानांतुहरिर्वसनातनः ददातिपरमंश्रेयःसर्वकामफलप्रदः यइदंपुण्यमाख्यानंसर्वपापप्रणाशनं
पठेच्छृणुयाद्वापिसोपियातिपरांगतिम् इतिश्रीनारदीयेपूर्वभागेध्वजारोपणव्रतकथा ॥

## अथ वर्षसाध्यं पचाहैकादशीव्रतं नारदीये

सनातनउवाच अन्यद्व्रतंप्रवक्ष्यामिशृणुनारदतत्त्वत दुर्लभंसर्वलोकेषुविख्यातंहरिपंचकम् नारीणांचनराणांच सर्वदुःखनिवारणं धर्मकामार्थमोक्षाणांप्रापकंमुनिसत्तम सर्वाभीष्टप्रदंचैवसर्वव्रतफलप्रद मार्गशीर्षसितेपक्षे दशम्यांविजितेंद्रियः कुर्यात्स्नानादिकंकर्मदंतधावनपर्वकंकृत्वादेवार्चनंसम्यक्तथापंचमहाध्वरान् एकादशीभ वेत्तस्मिन्दिनेनियममास्थित तत.प्रात.समुत्थायएकादश्यांमुनीश्वर स्नानंकृत्वायथाचारंहरिमेवार्चयेद्गृहे स्ना पयेद्देवदेवेशपंचामृतविधानतः अर्चयेत्परयाभक्त्यागंधपुष्पादिभिःक्रमात् धूपैर्दीपैश्चनैवेद्यैस्तांबूलैश्चप्रदक्षि णैः संपूज्यदेवदेवेशमिमंमंत्रमुदीरयेत् नमस्तेज्ञानरूपायज्ञनदायनमोस्तुते नमस्तेसर्वरूपायसर्वसिद्धि प्रदायिने एवंप्रणम्यदेवेशंवासुदेवजगत्पतिं वक्ष्यमाणेनमंत्रेणउवासंसमर्पयेत् पंचरात्रंनिराहारोह्यद्यप्रभृ- तिकेशव त्वदाज्ञयाजगत्स्वामिन्ममाभीष्टप्रदोभव एवंसमर्च्यदेवेशमुपवासंजितेंद्रियःपौर्णमास्यांप्रकर्तव्यमे वंविष्णवर्चनंमुने एकादश्यांपौर्णमास्यांकर्तव्यंजागरंतथा पंचामृतादिपूजातुसामान्यादिनपंचके क्षीरेणस्ना पयेद्विष्णुंपौर्णमास्यांचशक्तितः तिलहोमस्तुकर्तव्यस्तिलदानंतथैवच तत.षष्ठेदिनेप्राप्तेनिर्वर्त्यस्वाश्रमक्रियां संप्राश्यपंचगव्यंचपूजयेद्विधिवद्धरिं ब्राह्मणान्भोजयेत्पश्चाद्विभवेसत्यवारितं ततोस्यबंधुवर्गेणस्वयंभुंजीत वाग्यतः एवंपौषादिमासेषुकार्त्तिकांतेषुनारद शुक्लपक्षेव्रतंकुर्यात्पूर्वोक्तविधिनानरः एवंसंवत्सरंकार्यंव्रतं पापप्रणाशनं पुनः प्राप्तेम र्गशीर्षे कुर्यादुद्यापनंव्रती एकादश्यांनिराहारोभवेत्पूर्वमिवद्विज द्वादश्यांपं चगव्यंचप्राशयेत्सुसमाहितः गंधपुष्पादिभिः सम्यग्देवदेवंजनार्दनं अभ्यर्च्योपायनंदद्याद्ब्राह्मणाय जितेंद्रियः पायसंतिलसंमिश्रंघृतयुक्तंफलान्वितं सुगंधजलसंयुक्तंपूर्णकुंभसदाक्षिणं वस्त्रेणाछादितंकुंभं

पंचरत्नसमन्वितं दद्यादध्यात्मविदुषेब्राह्मणायमुनिश्वर सर्वात्मन्सर्वभूतेशसर्वव्यापिन्सनातन परमा
न्नप्रदानेनसुप्रीतोभवमाधव अनेनोपायनंदत्त्वाब्राह्मणान्भोजयेत्ततःशक्तितोबंधुभिस्सार्द्धंस्वयंभुंजीतवाग्यतः व्र
तमेतत्तुयःकुर्यात्तुहरिपंचकसंज्ञितं नतस्यपुनरावृत्तिर्ब्रह्मलोकात्कदाचन व्रतमेतत्प्रकर्तव्यमिच्छद्भिर्मोक्षमुत्तमं
समस्तपापकांतारदावानलसमप्रभं गवांकोटिसहस्रेतुदत्तेयत्फलमाप्यते तत्फलंलभ्यतेपुंभिरेतस्मादुपवा
सतः यस्त्वेतच्छृणुयाद्भक्त्यानारायणपरायणःसमुच्यतेमहाघोरैः पातकानांचकोटिभिः इतिनारदीयपुराणो
क्तहरिपंचकव्रतम् अथध्वजारोपणप्रयोगविधिः तत्रकार्तिकशुक्लदशम्यांनियमान्वितःएकादश्यामुपोषित.
विष्णुकीर्तनश्रवणादिपरोभवेत् द्वादश्यांयथाविधिस्नात्वा नित्यकर्मनिर्वर्त्यसंकल्पंकुर्यात् तिथ्यादिसंकीर्त्य
अखिलपापक्षयसकलाभीष्टसिद्धिपूर्वकविष्णुसायुज्यकामोविष्णुद्वारेध्वजारोपंकरिष्ये ततःपुण्याहवाचनादिकृ
त्वा आचार्यंऋत्विजश्चवृत्वा· तैःसहदेवालयेविष्णुंषोडशोपचारैःपुरुषसूक्तेनसंपूज्य ततस्तुध्वजस्तंभौगाय
त्र्याप्रोक्ष्य ध्वजयुक्तौकृत्वा तत्रवैनतेयंधातारंविधातारंचनाममंत्रैरावाह्यसंपूज्य ध्वजंचहरिद्राक्षतगंधपुष्पादि
भिःपूजयित्वा शुद्धभूमौस्थंडिलेग्निंप्रतिष्ठाप्यअन्वादध्यात् अत्रप्रधानंविष्णुंअष्टोत्तरशतंपायसाहुतिभिःसूर्यं
वैनतेयंहिमांशुंधातारंविधातारंचअष्टाष्टसंख्ययापायसाज्याहुतिभिःशेषेणस्विष्टकृतमित्यादिहोममंत्राः षोडश
पुरुषसूक्तेनविष्णोर्नुकं इरावतीत्येतैरष्टादशमंत्रैःषडावृत्त्याष्टोत्तरशतंहोमः उदुत्यंजातवेदसंसूर्यस्वसामध्वनिशरी
रस्कमितिसूर्यस्य सोमोधेनुरितिसोमस्य धातुंधातादधातुनो गायनीशानोजगतस्पतिः सनपुण्येनखनविधा
तु योनःपिताजनितायोविधातायोनः ततोअभ्यासजनातइति ततःसौरमंत्रान् शांतिसूक्तानिचपठित्वा जा
गरणादिनारात्रिंनिनयेत् ततोदेवंस्वमंत्रैःसंपूज्यसूक्तपाठैःस्तोत्रपठनैर्नृत्यमंगलवाद्यघोषैः सहदेवंप्रदक्षिणीकृत्य

देवालयेध्वजौसमानीय देवस्यद्वारदेशेशिखरंवास्थिरीकृत्वा ध्रुवसूक्तंपठित्वा तौसंपूज्य पुनर्देवालयेदेवंसंपू
ज्यप्रार्थयेत् देवेशसर्वलोकेशमहापुरुषपूर्वज यत्रैवसकलंजातयत्रसर्वंप्रतिष्ठितं लयमेष्यतियत्रैवतंप्र
पन्नोस्मिकेशवं १ नजानामिपरंभाव यत्रब्रह्मादयः सुराः योगिनोयंनपश्यंतितवंदेब्रह्मरूपिणम् २ यन्मुखा
द्ब्राह्मणाजातायद्बाहोरभवन्नृपाः वैश्यायस्योरुतोजाता पद्भ्यांशूद्रोव्यजायत ३ मायासंगममात्रेणवदंतिपु
रुषंत्वयं स्वभावविमलंशुद्धंनिर्विकारंनिरंजनं एकोविष्णुर्महद्भूतपृथग्भूतान्यनेकशः त्रैलोक्यंव्याप्यस
र्वात्मा समेविष्णुः प्रसीदतु योदेवः सर्वभूताना मंतरात्माजगन्मयः निर्गुणः परमानंदः समेविष्णुः
प्रसीदतु चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच हूयतेचपुनर्द्वाभ्यांतस्मैयज्ञात्मनेनमः ८ परेशः परमानंदः
परात्परतरः प्रभुः चिद्रूपश्चित्परिज्ञेयः समेविष्णुः प्रसीदतु ८ ज्ञानिनांकर्मिणांचैवतथाभक्तिमतांनृ
णां गतिंददातिविश्वात्मा समे विष्णुः प्रसीदतु ९ यइदंकीर्त्तयेन्नित्यंस्तोत्राणामुत्तमोत्तमं सर्वपापविनिर्मु
क्तः परंसायुज्यमाप्नुयात् इतिपठित्वा ततोद्वादशब्राह्मणान्सदन्नेनसंभोज्यदक्षिणादिनाप्रतोष्य शिषोगृही
त्वाभुंजीत इतिध्वजारोपणव्रतम् एवमेवशिवादीनामपि तत्रगरुडस्थानेवृषादिवाहनपूजा त्र्यंबकं क
द्रुद्रायेत्यादिसूक्तपाठः इतिनारदीयोक्तध्वजारोपणव्रतविधानम् अथहरिपंचकव्रतम् विष्णुधर्मोत्तरे तत्र
व्रतग्रहणविधिः शुक्लद्वादश्यांकृष्णद्वादश्यांवा मार्गादिमासेवाश्रवणर्क्षंभवति तद्दिनमारभ्यकार्यमेकस्मि
न्मासेपंचउपोषणानि श्रवणयुतेकादशीद्वयंप्रारभ्य अमायांपूर्णिमायांवाविष्णुंसंपूज्यउपवसेत् एवंसंव
त्सरंकुर्यात् अंतेउद्यापनंकुर्य्यात् तद्यथा तिथ्यादिसंकीर्त्यात्मनः पंचमहापातकोपपातक क्षयपूर्वक
विष्णुलोकप्राप्तिद्वाराश्रीविष्णुप्रीत्यर्थंआचरितस्यवर्षपर्यंतंविष्णुपंचकव्रतस्यपूर्णतासिद्ध्यर्थंतदुद्यापनंकरिष्ये इतिसं

कल्प्य आचार्यादिवरणांतेसर्वतोभद्रे तदुपरिसौवर्णाविष्णोः पचप्रतिमाः मंत्रपंचकेनप्रतिष्ठापयेत् तत्रक्रमेणमंत्राः त्रीणिपदानिश्रवणर्क्षकलशे १ तद्विष्णोरितिशुक्लैकादश्याः कलशे २ तद्विप्राः सो विपण्यवोपूर्णिमायांकलशे ३ अतोदेवेतिकृष्णैकादश्यांकलशे ४ इदंविष्णुरितिअमायांकलशे ५ ततः क्रमेण कलशपचके द्वादशतत्रदेवताः परितआवहयेत् गोवर्धनाय १ अनंताय २ पुंडरीकाक्षाय ३ निस्याय ४ वेदगर्भाय ५ यज्ञाय ६ पुरुषाय ७ सुब्रह्मण्याय ८ जयाय ९ शौरये १० वैकुंठाय ११ गरुडध्वजाय १२ इतिश्रवणर्क्षदेवताः १२ केशवाय १ नारायणाय २ माधवाय ३ गोविंदाय ४ विष्णवे ५ मधुसूदनाय ६ त्रिविक्रमाय ७ वामनाय ८ श्रीधराय ९ हृषीकेशाय १० पद्मनाभाय ११ दामोदराय १२ इतिशुक्लैकादश्यांदेवता १२ विष्णवे १ शशिने २ शशांकाय ३ चंद्राय ४ सोमाय ५ उडुपाय ६ मनोरमाय ७ अमृताय ८ पावनाय ९ हिमकृते १० निशाकराय ११ आप्यायनाय १२ इतिपूर्णमायांदेवता १२ सकर्षणाय १ वासुदेवाय २ प्रद्युम्नाय ३ अनिरुद्धाय ४ पुरुषोत्तमाय ५ अधोक्षजाय ६ नारासिंहाय ७ अच्युताय ८ जनार्दनाय ९ उपेंद्राय १० हरये ११ कृष्णाय १२ इतिकृष्णैकादश्यांदेवताः १२ महीधराय १ जगन्नाथाय २ वेदेंद्राय ३ देवकीसुताय ४ चतुर्भुजाय ५ गदापाणये ६ सुरेशाय ७ सुलोचनाय ८ चार्वंगाय चक्रपाणये सुरमित्राय ११ असुरांतकाय १२ इतिअमायांद्वादशदेवता १२ एवंपंचकलशेषुषोडशोपचारैः पूर्वोक्तमंत्रैः सपूज्य षष्ठिनामभिः षष्ठिनमस्कारान् कृत्वा रात्रिंनिनयेत् जागरणंकृत्वा प्रात अग्निप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानंविष्णुघृताक्तपायसतिलद्रव्यैः प्रत्येकमष्टोत्तरशतसख्याकाहुतिभिः १ श्रवणदेवताघृताक्तपायसद्रव्यैः २ पूर्णिमादेवताघृतपा

यसांभ्यां ३ कृष्णैकादशीदेवताः पंचामृततिलोदनैः ४ अमादेवताश्चतिलयुक्तगुडोदनैः प्रत्येकंएकै
ज्याहुत्याब्रह्ममदेदेवताश्चैकैकयाज्याहुत्यायक्षे ततआचार्यसंपूज्य व्रतपूर्त्तयेगांचदद्यात् विभवेसतिसस्यवं
भूमिंचदत्त्वा अन्यच्च पंचब्राह्मणेभ्योगोमेदंपुष्परागंवैडूर्य्यंनीलं माणिक्यंचेतिपंचरत्नयुताः पंचांगुलीयभूष
णानिदक्षिणापुरःसरं सहिरत्नानीतिमंत्रेणदत्त्वा षष्टिब्राह्मणान्परमान्नेनसंतर्प्यआशिषोगृहीत्वाभुंजीत एव
कृतेपंचमहापातकादिभ्योमुक्तोभवति इतिविष्णुपंचकव्रतोद्यापनम् अथमासोपवासव्रतम् अन्यद्व्रतंपरंवक्ष्ये
तच्छृणुष्वसमाहितः सर्वपापहरंपुण्यंसर्वलोकोपकारकं आषाढेश्रावणेवापितथाभाद्रपदेपिच तथाचाश्विन
केमासिकुर्य्याद्देवव्रतंद्विजएतेष्वन्यतमेमासिशुक्लपक्षेजितेंद्रियः प्रातर्दशम्यांस्नायीतदंतधावनपूर्वकं नित्यंदेवा
र्चनंकुर्य्याद्विधिवत्सुसमाहितः एकादश्यांब्रह्मचारीभूमिशायीजितेंद्रियः प्राशयेत्पंचगव्यंचस्वपेद्विष्णुसमीप
तः ततःप्रातः समुत्थायनित्यकर्मसमाप्यच श्रद्धयापूजयेद्विष्णुंवशीक्रोधविवर्जितः विद्वद्भिःसहितोविष्णुमर्च
यित्वायथोचितं संकल्पंतुततःकुर्य्यात्स्वस्तिवाचनपूर्वकं मासमेकंनिराहारोह्यद्यप्रभृतिकेशव मासांतेपा
रणंकुर्य्यांदेवदेवतवाज्ञया तपोरतनमस्तुभ्यंतपसांफलदायक ममाभीष्टपदंदेहिसर्वविघ्नान्निवारय एवंसम
र्प्यदेवस्यविष्णोर्मासव्रतंशुभं ततःप्रभृतिमासांतंनिवसेद्धरिमंदिरे प्रत्यहंस्नापयेद्देवंपंचामृतविधानतः दीपंनिरं
तरंकुर्य्यात्तस्मिन्मासेहरेर्गृहे प्रत्यहंखादयेत्काष्ठमपामार्गसमुद्भवं अपामार्गदंतधावनम् क्षुत्तृट्निवृत्त्यर्थंकुर्यात्
ततःस्नायीतविधिवन्नारायणपरायणः ततस्तंस्नापयेद्विष्णुपूर्ववत्प्रयतोर्चयेत् ब्राह्मणान्भोजयेच्छक्त्याभक्तियुक्तः
सदक्षिणं स्वयंचबंधुभिःसार्धंभुंजीतप्रयतेंद्रियः एवंमासोपवासांश्चव्रतीकुर्य्यात्त्रयोदश वर्षांतेवेदविदुषेमांप्र
दद्यात्सदक्षिणां भोजयेद्ब्राह्मणांस्तत्रद्वादशैवविधानतः शक्त्याचदक्षिणांदद्याद्वस्त्राण्याभरणानिच मासो

पवासव्रतंयःकुर्यात्संयतेंद्रियः ।। भक्त्यासोमस्ययज्ञस्याद्विगुणंफलमश्नुते ।। चतुःकृत्वःकृतंयेनमासकंमुनिसत्तम
सलभेत्परमंपुण्यमग्निष्टोमसंभवं ।। पंचकृत्वोव्रतमिदंकृतंयेनमहात्मना ।। अत्यग्निष्टोमजंपुण्यंद्विगुणंप्राप्नुयान्नरः
मासोपवासषट्कंयःकरोतिसमाहितः ज्योतिष्टोमस्ययज्ञस्यफलंसोष्टगुणंलभेत ।। मासोपवासान्यःकुर्य्यादष्ट
कृत्वोमुनीश्वर ।। नरमेधास्ययज्ञस्यफलंपंचगुणंलभेत् ।। यस्तुमासोपवासांश्चनवकृत्वःसमाचरेत् ।। गोमेधमख
जंपुण्यंलभतेत्रिगुणंनरः दशकृत्वस्तुयःकुर्य्यात्पराकंमुनिसत्तम ।। सब्रह्ममेधयज्ञस्यत्रिगुणंफलमश्नुते ।। एकाद
शपराकांश्चयःकुर्यात्संयतेंद्रियः ।। सयातिहरिसारूप्यंसर्वभोगसमन्वितः ।। एवंद्वादशकृत्वापिसायुज्यंलभतेनरः
त्रयोदशपराकांस्तुयःकुर्यात्प्रयतोनरः ।। सयातिपरमानंदंयत्रगत्वानशोचते मासोपवासनिरतागंगास्नानप
रायणाः धर्ममार्गप्रवक्तारोमुक्ताएवनसंशयः ।। अवीराभिश्चनारीभिर्यतिभिर्ब्रह्मचारिभिः ।। मासोपवासःकर्त्त
व्योवनस्थैश्चविशेषतः ।। नारीभिःपुरुषैर्वापिव्रतमेतत्सुदुर्लभं कृत्वामोक्षमवाप्नोतियोगिनामपिदुर्लभं गृहस्थोवा
नप्रस्थोवाव्रतीवाभिक्षुरेवच मूर्खोवापंडितोवापिश्रुत्वैतन्मोक्षभाग्भवेत् ।। इदंपुण्यव्रतंस्यानंनारायणपरायणः शृणु
याद्वाचयेद्वापिसर्वपापैःप्रमुच्यते इतिनारदीयपुराणेमासोपवासव्रतविधानम् ।। अथैकादशीव्रतमाहात्म्यं ।। सन
कउवाच इदमन्यत्प्रवक्ष्यामिव्रतंत्रैलोक्यविश्रुतं ।। सर्वपापप्रशमनंसर्वकामफलप्रदं ।। ब्राह्मणक्षत्रियविशांशूद्रा
णांचैवयोषितां मोक्षार्थंकुर्वतांभक्त्याविष्णोःप्रियकरंद्विज एकादशीव्रतंनामसर्वाभीष्टप्रदंनृणांकर्त्तव्यंसर्वथाविप्रवि
ष्णुप्रीतिकरंयतः एकादश्यांनभुंजीतपक्षयोरुभयोरपि योभुंक्तेलोकपापीसःपरत्रनरकंव्रजेत् उपवासफलंप्रेप्सुर्जह्या
द्भुक्तिचतुष्टयं पूर्वापरदिनेरात्रावहोरात्रंतुमध्यमे एकादशीदिनेयस्तुभोक्तुमिच्छतिमानवः ।। सभोक्तुंसर्वपापानिस्पृ
हयालुर्नसंशयः भवेद्दशम्यामेकाशीद्वादश्यांचमुनीश्वर ।। एकादश्यांनिराहारोयदिमुक्तिमभीप्सति ।। यानिकानि

चपापानिब्रह्महत्यादिकानिच अन्नमाश्रित्यातिष्ठंतितानिविप्रहरेर्दिने ब्रह्महत्यादिपापानांकथंचिन्निष्कृतिर्भवेत्
एकादश्यांतुयोभुंक्तेतस्यनैवास्तिनिष्कृतिः महापातकयुक्तोवायुक्तोवासर्वपातकैः एकादश्यांनिराहारःस्थित्वा
यातिपरांगतिं एकादशीमहापुण्याविष्णोःप्रियतरातिथिः संसेव्यासर्वथाविप्रैःसंसारच्छेदलिप्सुभिः दश
म्यांप्रातरुत्थायदंतधावनपूर्वकं स्नापयेद्विधिवद्विष्णुंपूजयेत्प्रयतेंद्रियः एकादश्यांनिराहारोनिगृहीतेंद्रियोभवेत्
शयीतसन्निधौविष्णोर्नारायणपरायणः एकादश्यांतथास्नात्वासंपूज्यचजनार्दनं गंधपुष्पादिभिःसम्यक्ततस्त्वे
वमुदीरयेत् एकादश्यांनिराहारःस्थित्वाद्याहंपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत इमंमंत्रंसमु
च्चार्यदेवदेवस्यचक्रिणः भक्तिभावेनतुष्टात्माउपवासंसमर्पयेत् देवस्यपुरतःकृत्वाजागरंनियतोव्रती गीतवा
द्यैश्चनृत्यैश्चपुराणश्रवणादिभिः ततःप्रातःसमुत्थायद्वादश्यांदिवसेव्रती स्नात्वाचविधिवद्विष्णुंपूजयेत्प्रयतेंद्रियः
पंचामृतेनसंस्नाप्यएकादश्यांजनार्दनं द्वादश्यांपयसाविप्रहरिसारूप्यमश्नुते अज्ञानतिमिरांधस्यव्रतेनानेन
केशव प्रसादसुमुखोभूत्वाज्ञानदृष्टिप्रदोभव एवंविज्ञाप्यविप्रेंद्रमाधवंसुसमाहितः ब्राह्मणान्भोजयेच्छक्त्या
दद्याद्वैदक्षिणांतथा ततःस्वबंधुभिःसार्धंनारायणपरायणः कृतपंचमहायज्ञःस्वयंभुंजीतवाग्यतः एवंयःप्र
यतःकुर्यात्पुण्यमेकादशीव्रतं सयातिविष्णुभवनंपुनरावृत्तिदुर्लभं उपवासंव्रतपरोधर्मकार्यपरायणः चंडा
लान्पतितांश्चैवनेक्षेदपिकदाचन नास्तिकान्भिन्नमर्यादान्वृषलीपतिमेवच अयाज्ययाजकंचैवनालपेत्सदाव्रती
कुंडाशिनंगायकंचतथादेवलकाशिनं भिषजंकाव्यकर्तारंदेवद्विजविरोधिनं परान्नलोलुपंचैवपरस्त्रीनिरतंतथा
व्रतोपवासनिरतोवाङ्मात्रेणापिनार्चयेत् इत्येवमादिभिःशुद्धोवशीसर्वहितेरतः उपवासपरोभूत्वापरांसिद्धि
मवाप्नुयात् नास्तिगंगासमंतीर्थंनास्तिमातृसमोगुरुः नास्तिविष्णुसमोदेवस्तपोनानशनात्परं नास्तिक्षमा

समामातानास्तिकीर्तिसमंधनं॥ नास्तिज्ञानसमोलाभोनचधर्मसमःपिता नविवेकसमोबंधुर्नैकादश्याःपरंव्रतं॥ अ
त्राप्युदाहरंतीममितिहासंपुरातनं॥ संवादंभद्रशीलस्यतात्पितुर्गालवस्यच॥ पुराहिगालवोनाममुनिःसत्यपरा
यणः॥ उवासनर्मदातीरेशांतोदांतस्तपोनिधिः वहुवृक्षसमाकीर्णेगजवल्लीनिषेविते॥ सिद्धचारणगंधर्वयक्षवि
द्याधरान्विते॥ कंदमूलफलैःपूर्णेमुनिवृंदनिषेविते गालवोनामविप्रेंद्रोनिवासमकरोच्चिरं॥ तस्याभवद्भद्रशील
इतिख्यातःसुतोवशी॥ जातिस्मरोमहाभागोनारायणपरायणः बालक्रीडनकालेपिभद्रशीलोमहामतिः॥ मृदा
चविष्णुप्रतिमांकृत्वापूजयतेक्षणं॥ वयस्थान्बोधयच्चापिविष्णुःपूज्योनरैःसदा एकादशीव्रतंचैवकर्त्तव्यमपिपंडितैः
एवंतेबोधितास्तेनशिशवोपिमुनीश्वरः॥ हरिंमृदैवनिर्मायपृथक्संभूयवामुदा॥ अर्चयंतिमहाभागाविष्णुभक्तिपरा
यणा॥ नमस्कुर्वन्भद्रमतिर्विष्णवेसर्वजिष्णवे सर्वेषांजगतांस्वस्तिभवेदित्थंब्रवीतिच॥ क्रीडाकालेमुहूर्तंवामुहूर्त्ता
र्धमथापिवा॥ एकादशीतिसंकल्प्यव्रतंयच्छतिकेशवे॥ एवंसुचरितंदृष्ट्वातनयंगालवोमुनिः॥ अपृच्छद्विस्मयाविष्टःस
मालिंग्यतपोनिधिः॥ गालवउवाच॥ भद्रशीलमहाभागभद्रशीलोसिसुव्रत॥ चारितंमंगलंयत्तेयोगिनामपि
दुर्लभं हरिपूजापरोनित्यंसर्वभूतहितेरतः॥ एकादशीव्रतपरोनिषिद्धाचारवर्जितः॥ निर्द्वंद्वोनिर्ममःशांतोहरिध्या
नपरायणः॥ एवमेतादृशीबुद्धिःकथंजाताभकस्यते॥ विनापिमहतांसेवांहरिभक्तिर्हिदुर्लभा॥ स्वभावतोज
नस्यास्यअविद्याकामकर्मसु॥ प्रवर्ततेमतिर्वत्सकथंतेलौकिकीकृतिः॥ सत्संगेपिमनुष्याणांपूर्वपुण्यातिरेकतः
जायतेभगवद्भक्तिस्तदहंविस्मयंगतः॥ पृच्छामिप्रीतिमापन्नस्तद्भवान्वक्तुमर्हति॥ सनकउवाच॥ भद्रशी
लोमुनिश्रेष्ठःपित्रैवंसुविकल्पितः॥ जातिस्मरःसुचित्तात्माहृष्टःप्रहसिताननः॥ स्वानुभूतंयथावृत्तंसर्वंपित्रेन्यवेद
यत्॥ भद्रशीलउवाच॥ शृणुतातमुनेश्रेष्ठह्यनुभूतंमयापुरा॥ जातिस्मरत्वाज्जानामियमेनपरिभाषितं॥ एतच्छ्रु

त्वामहाभागोगालवोविस्मयान्वितः। उवाचप्रीतिमापन्नोभद्रशीलंमहामतिं॥ गालवउवाच॥ कस्त्वंपूर्वंमहाभाग
किमुक्तंचयमेनते॥ कस्यवाकेनवाहेतोस्तत्सर्ववक्तुमर्हसि॥ भद्रशीलउवाच॥ अहमासंपुरातातराजासोमकुलो
द्भवः॥ धर्मकीर्तिरितिख्यातोदत्तात्रेयेणशासितः॥ नववर्षसहस्राणिमहींकृत्स्नामपालयम्॥ अधर्माश्चतथाधर्मा
मयातुवहवःकृताः॥ ततःश्रियाप्रमत्तोहंबहुधर्ममकारिषम्॥ पाखंडजनसंसर्गात्पाखंडचरितोभवं॥ पुरार्जितानि
पुण्यानिमयातुसुबहून्यपि॥ पाखंडैर्बाधितोहंतुवेदमार्गंसमुज्झितं॥ मखाश्चसर्वेविध्वस्ताःकूटयुक्तिविदामया॥ अध
र्मनिरतंमांतुदृष्ट्वातद्देशजाःप्रजाः॥ विरक्तादुःखिताभूत्वामामवमन्यंतसर्वशः॥ मृगयाभिरतोभूत्वाह्येकदाप्रावि
शंवनं॥ ससैन्योहंवनेतत्रहत्वाबहुविधान्मृगान्॥ क्षुत्तृट्परिवृतःश्रांतोरेवातीरमुपागमं॥ रवेस्तीक्ष्णातपक्रांतो
रेवायांस्नानमाचरं॥ अदृष्टसैन्यएकाकीपीड्यमानःक्षुधाभृशं॥ समेतास्तत्रयेकेचिज्जनास्तत्तीरवासिनः॥ एकाद
शीव्रतपरामयादृष्टानिशामुखे॥ निराहारश्चतत्राहमेकाकीतज्जनैःसह॥ जागरंकृतवांश्चापिसेनयासहितोनिशि
अध्वश्रमपरिश्रांतःक्षुत्पिपासाप्रपीडितः॥ तत्रैवजागरांतेहंतावत्पंचत्वमागतः॥ ततोयमभटैर्बद्धोमहादंष्ट्राभयं
करैः॥ अनेकक्लेशमापन्नः॥ प्रापितोहंयमांतिकं॥ दंष्ट्राकरालवदनमपश्यंयममूर्जितं॥ अथकालश्चित्रगु
प्तमाहूयेदमभाषत॥ अस्याशिक्षाविधानंचयथावद्वदपंडित॥ एवमुक्तश्चित्रगुप्तोधर्मराजेनसत्तम॥ चिरंवि
चारयामाससपुनश्चेदमभाषत॥ असौपापरतःसत्यं तथापिशृणुधर्मप॥ एकादश्यां निराहारः॥ सर्वपापैः
प्रमुच्यते॥ एपरेवातटेरम्येनिराहारोरेवादिने॥ जागरंचोपवासंचकृत्वाविष्पापतांगतः॥ यानिकानिचपा
पानिकृतानिसुबहून्यपि॥ तानिसर्वाणिनष्टानिह्युपवासप्रभावतः॥ एवमुक्तोधर्मराजश्चित्रगुप्तेनधीमतानानामदं।
डवद्भूमौममाग्रेतातकंपितः॥ पूजयामासमांतत्रभक्तिभावेनधर्मराट्॥ ततश्चस्वभटान्सर्वान्समाहूयेदमब्रवीत्॥

धर्मराजउवाच शृणुध्वमद्वचोदूताहितंवक्ष्याम्यनुत्तमम् धर्ममार्गरतान्मर्त्यानानयध्वममातिकं येविष्णुभ
क्तिनिरताःमनुजाः कृतज्ञा एकादशीव्रतपराविनितेंद्रियाश्च नारायणाच्युतहरेशरणंभवेति नाम्नावदंतिसत
तंकिलतांस्त्यजध्वं नारायणाच्युतजनार्दनकृष्णाविष्णोपद्मेशपद्मजापितःशिवशंकरेति नित्यंवदंत्यखिललोक
हिताःप्रशांतादूराद्भटास्त्यजततान्ममैपशिक्षाः नारायणार्चनकृतान्हरिभक्तिभाजः स्वाचारमार्गनिरतान्गुरुसे
वकांश्च नित्यान्नदाननिरतांश्चसुदीपपालान्दूतास्त्यजध्वमनिशंहरिनामसक्तान् पाषंडसंगरहितान्द्विजभ
क्तिनिष्ठान्सत्संगलोलुपनरांश्चतथातिथेयान् शंभोहरौचसमबुद्धिमतस्तथैवदूतास्त्यजध्वमुपकारपरांजनानां
येवर्जिताहरिकथामृतसेचनेननारायणस्मृतिपरायणमानसैश्च विप्रेंद्रपादजलसेवनतोपकृष्टास्तान्पापिनोमम
भटागृहमानयध्वम् येमातृतातपरितर्जनशीलिनश्चकर्मद्विषोहितजनाहितकर्मणश्च देवस्वलोभनिरतान्
जननाशकर्तृंस्तानानयध्वमपरांश्चमनाथदूताः एकादशीव्रतपराङ्मुखमुग्रशीलंलोकापवादनिरतंपरनिंदकंच
ग्रामस्यनाशनपरंपरवैरयुक्तंदूताःसमानयतविप्रधनेषुलुब्धं येविष्णुभक्तिविमुखाःप्रणमंतिनैवनारायणंहिशरणा
गतपालकंच विष्वालयंचनाहियांतिनराःसुमूर्खास्तानानयध्वमतिपापपरान्प्रसह्य एवंश्रुतंमयातत्रयमेनपरि
भाषितंमयानुतापदग्धेनस्मृतंतत्कर्मनिंदित असत्कर्मानुतापेनसद्धर्मश्रवणेनच तत्रैवसर्वपापानिनिःशेषानिगता
निमे पापशेषाद्विनिर्मुक्तंहरिसारूप्यतांगतं सहस्रसूर्यसंकाशंप्रणनामयमश्चमां एवंदृष्ट्वाविस्मितास्तेयमदूताभयो
त्कटाः विश्वासंपरमंचक्रुर्यमेनपरिभाषिते ततःसंपूज्यमांकालोविमानशतसंकुलं सद्यःसंप्रेषयामासताद्विष्णोः
परमंपदं विमानकोटिभिःसार्धंसर्वभोगसमन्वितैः कर्मणातेनविप्रर्षेविष्णुलोकंमयोषितं कल्पकोटिसहस्राणि
कल्पकोटिशतानिच स्थित्वाविष्णुपदेपश्चादिंद्रलोकमुपागतः तत्रापिसर्वभोगाढ्यःसर्वदेवनमस्कृतः तावत्कालं

दिविस्थित्वाततोभूमिमुपागतः अत्रापिविष्णुभक्तानांजातोहंभवताकुले जातिस्मरत्वांजानामिसर्वमेतन्मनी
श्वर तस्माद्भवद्वचनोद्योगंकरोमिसहबालकैः एकादशीव्रतमिदमितितन्ज्ञातवान्पुरा जातिस्मृतिप्रभावेनत
द्ज्ञातंसांप्रतंमया अवशेनापियत्कर्मकृतंतस्यफलंत्विदं एकादशीव्रतंभक्त्याकुर्वतांमुतप्रभो तस्माच्चरिष्ये
विप्रेंद्रशुभमेकादशीव्रतं विष्णुपूजांचाहरहःपरमस्थानकांक्षया एकादशीव्रतंयेतुकुर्वंतिश्रद्धयानराः तेयांति
विष्णुभुवनंपरमानंददायकं एवंपुत्रवचःश्रुत्वासंतुष्टोगालवोमुनिः अवापपरमांतुष्टिंमनसाचातिहर्षितः मज्जन्म
सफलंजातंमद्वंशःपावनीकृतः यतस्त्वमद्गृहेजातोविष्णुभक्तिपरायणः इतिसंतुष्टचित्तस्तुतस्यपुत्रस्यकर्मणा
हरिपूजाविधानंचयथावत्समबोधयत् इत्येतत्तेमुनिश्रेष्ठयथावत्कथितंमया संकोचविस्तराभ्यांचाकिमन्यच्छ्रो
तुमिच्छसि ॥ इतिनारदीयपुराणेएकादशीव्रतमाहात्म्यम् ॥ अथत्रिस्पृशैकादशीमाहात्म्यम् पद्मपु
राणे नारदउवाच त्रिस्पृशाख्यंव्रतंब्रूहिसर्वेश्वरविशेषतः यच्छ्रुत्वामुच्यतेलोकेकर्मबंधनतःक्षणात् श्रीम
हादेवउवाच सर्वपापौघशमनंमहादुःखविनाशनं शृणुकृष्णावतारत्वंत्रिस्पृशाख्यंमहाव्रतं कामदंसस्पृहानांतु
निस्पृहानांतुमोक्षदं त्रिस्पृशाख्यंव्रतंविप्रशृणुष्वगदतोमम प्रत्यक्षंमाधवस्तेनकालेकालेचकेशवःत्रिस्पृशांकीर्त्ति
तांनित्यंयःकरोतिमहामुने नपुनश्चरणैश्चीर्णैःसर्वपापक्षयोभवेत् त्रिस्पृशानाममात्रेणक्षीयतेपापसंचयः ना
गमैर्नपुराणाद्यैर्नमखैस्तीर्थकोटिभिः बहुभिर्व्रतसंघैस्तुपूजितैस्त्रिदशैरपि मोक्षोभवतिविप्रेंद्रत्रिस्पृशानकृता
यदि मोक्षार्थंदेवदेवेनसृष्टावैवैष्णवीतिथिः द्विजानांदुःखदंसांख्यंकलिकालेविशेषतः अनिग्रहाच्चेंद्रियाणां
स्थिरत्वंमानसेनहि विपर्यैर्विप्रयुक्तानांप्राणधारणवर्त्तिनां कामभोगप्रसक्तानांत्रिस्पृशामोक्षदायिनी मया
चैवपुराप्रोक्ताचतुर्वक्त्रस्यसागरे क्षीरोदेप्रणतानांतुकथ्यमानातुचक्रिणा त्रिस्पृशांयेप्रकुर्वंतिविषयैरपिनिर्जिताः

तेषामपिमयादत्तंमोक्षंसांख्यविवर्जितम् कुरुष्वंत्वंमुनिश्रेष्ठात्रिस्पृशांमोक्षदायिनीं ॥ वहुभिर्मुनिसंघैश्चकृतेयं
चमहामुने कार्त्तिकेशुक्लपक्षेतुत्रिस्पृशाजायतेयदि सोमेनसोमजेनापिहत्याकोटिविनाशिनी ॥ यस्याउपोपणं
कृत्वाहत्यायुक्तोमहेश्वरः हस्ताद्ब्रह्मकपालंतुतत्क्षणात्पातितंभुवि कलिकल्मषपापौघैर्मुक्तादेवीत्रिमार्गगा ॥ उप
देशान्माधवस्यत्रिस्पृशासमुपोषणात् विलयंयातिविप्रेंद्रपापेष्वन्येषुकाकथा जीवोपदेशाच्छक्रस्यहत्यात्समु
चिसंभवा विनष्टामुनिमुख्येंद्रत्रिस्पृशासमुपोषणात् नप्रयागेनकाश्यांतुगोमत्यांकृष्णसन्निधौ मोक्षोभवति
विप्रेंद्रत्रिस्पृशायदिनकृता मरणाच्चप्रयागेतुमुक्तिःकाश्यांतथैवतु स्नानमात्रेणगोमत्यांमुक्तिर्भवतिशाश्वती
गृहेपिजायतेमुक्तिस्त्रिस्पृशासमुपोषणात् विषयैर्वर्त्तमानस्यकामभोगान्वितस्यच निवृत्तविषयस्यापिमुक्तिःसांख्ये
नदुर्लभा तस्मात्कुरुष्वविप्रेंद्रत्रिस्पृशांमोक्षदायिनीम् ॥ नारदउवाच ॥ कीदृशंतन्मुनिश्रेष्ठात्रिस्पृशाख्यंमहा
व्रतं मुक्तिदंयद्द्विजातीनांत्वयाप्रोक्तंममाधुना ॥ महादेवउवाच ॥ जाह्नव्यग्रेपुराविप्रात्रिस्पृशामाधवेनतु प्राची
सरस्वतीतीरेकथितात्वनुकंपया ॥ जाह्नव्युवाच ॥ कलिकल्मषपंकौघैर्ब्रह्महत्यायुतैरपि कलिकालेहृषीकेशस्ना
नंकुर्वीतिमज्जले तेषांपापशतैर्घोरैर्मद्देहंकलुषीकृतं कथंयास्यतिमेदेवपालकंगरुडध्वज प्राचीमाधवउवाच क
थयामिनसंदेहोमापुत्रिरोदनंकुरु श्रीमत्स्थलंचमेस्थानंप्राचीदेवीममाग्रतः वहतेब्रह्मतनयादृष्ट्वाग्रेचसुरेश्वरि
स्नानंकुरुष्वनित्यंत्वंतत्रपूताभविष्यसि यत्रब्रह्मसुताप्राचीतत्राहंनात्रसंशयः तीर्थकोटिशतैर्युक्तःसुरैःसहव
साम्यहं पवित्रंमत्प्रियंस्थानंहत्याकोटिविनाशनं संतुष्टेनमयादत्तंयस्मात्प्राणाधिकासिमे ॥ तत्रनश्यंतिपापा
नियत्रप्राचीसरस्वती विशेषतोममाग्रेतुकलिकालेतुजान्हवि तीर्थकोटिसहस्राणिनित्यंतिष्ठंतिजान्हवि प्राची
सरस्वतीतोयेसर्वदेवममाज्ञया ब्रह्मवधात्सुरापानात्गोवधाद्वृषलीवधात् ब्रह्मदेवस्वहरणान्मातापित्रोरपूज्ञ

नात् चक्रेयावद्गुरुद्रोहादभक्षस्यचभक्षणात् सर्वपापस्यकरणात्प्राचीब्रह्मसुतामुने व्यपोहयतिपापानिसकृत्स्ना नेममाश्रतं कुरुस्नानंसुरश्रेष्ठेविपापात्वंभविष्यसि जान्हव्युवाच नाहशक्नोमिदेवेशंआगंतुंनित्यमेवहि कथंन श्यंतिपापानिकथयस्वेहमाधव प्राचीमाधवउवाच नशक्नोषियदागंतुंतत्वंनित्यमेवहि तदान्यत्संप्रवक्ष्यामि यस्मान्मत्पादसंभवा सरस्वत्यधिकायाचतीर्थकोटिशताधिका मखकोट्यधिकाचापित्रिस्पृशाक्रियतांशुभे जपहोमाधिकायावच्चतुर्वर्गफलप्रदा सांख्ययोगापिसायाचात्रिस्पृशाक्रियतांशुभे यस्मिन्मासेसमायातिसि तावायदिवासिता कर्तव्यासासरिच्छ्रेष्ठेकृतेपापात्प्रमुच्यते जान्हव्युवाच कीदृशीत्रिस्पृशादेवममाख्याहिसु माधव ईदृशीमाहिमायस्यत्वयाप्रोक्तामममाधुना दशम्येकादशीभद्रादिनैकस्मिन्यदाभवेत् त्रिस्पृशांभावये हेवअन्यथावदसिप्रभो प्राचीमाधवउवाच आसुरीत्रिस्पृशादेवियात्वयापरिकीर्तिता वर्जनीयाप्रयत्नेनयथा नारीरजस्वला यथारजस्वलासंगोदूषितोज्ञानवर्तिनां तथैवदशमीयुक्तंमद्दिनंदूषितनृणां हत्यायुतशतं हंतित्रिस्पृशासमुपोषिता एकादशीद्वादशीचरात्रिशेषेत्रयोदशी त्रिस्पृशासातुविज्ञयादशमीसयुतानहि कृत्वापापप्रमुच्येतप्रायश्चित्तैः कृतैर्नरः दशमीविधजंदोषनलभामिसुरापगे ॥

भुक्तंहालाहलतेनस्वाविष्ठाभक्षणकृत दशमीमिश्रितंयेनकृतमेकादशीव्रतं इतिमत्वानकर्तव्यंमद्दिनंदशमीयुतं जन्मकोटिकृतंपुण्यंसंतानंयातिसंक्षयं पातयेत्स्वकुलान्स्वर्गात्प्रापयेद्रौरवादिषुषडहंशोधयित्वातुकर्तव्योमम- वासरः वृषोत्याज्योविनावीवान्श्रवणादिषुसयुतः जन्मपुण्यक्षयंयातिएकादश्युपवासिनां सवृद्धौतुविशेषे- णसंदेहेसमुपस्थिते ममाज्ञयाचकर्तव्याद्वादशीवल्लभामम जान्हव्युवाच करिष्येहंजगन्नाथात्रिस्पृशांवचना तव सर्वपापविनिर्मुक्ताभविष्यामितवाज्ञया– श्रीभगवानुवाच स्वस्थानंगच्छभद्रंतेमाभीःकार्याकदाचन तव

देविसरिच्छ्रेष्टेनपापंसंक्रामिष्यति स्नात्वासरस्वतीतोयेअर्चयित्वातुमाधवं प्रणमंतिजगन्नाथंप्रयांतिपरमांगतिं
जान्हव्युवाच विधानंमेब्रूहिब्रह्मन्सर्वयेनकरोम्यहं प्रसादयामिदेवेशंपरमानंददायिनं श्रीभगवानुवाच दा
मोदरोहेममयःकार्य्योवित्तानुसारतः पात्रंताम्रमयंकार्य्यंतिलैस्तुपरिपूरितं सजलंतुघटंशुभ्रंपंचरत्नसमन्वितं
वेष्टितंपुष्पमालाभिःकर्पूरागुरुवासितं न्यसेद्दामोदरंपश्चात्स्नापयित्वाविलेप्यच परिधानंततःकार्य्यंपुराणंसमु-
दीरितं पुष्पैःकालोद्भवैःशुभ्रैस्तुलसीपत्रकोमलैः छत्रंतुविष्णवेदद्यात्पादुकेनवसंयुते नैवेद्यानिमनोज्ञानिफ-
लानिसुबहून्यपि उपवीतंतुदातव्यंसोत्तरीयंदृढंनवं वैणवंदापयेद्दंडंस्वरूपंसोन्नतंशुभं दामोदरायवैपादौ
जानुनीमाधवायच गुह्यंकामप्रदायेतिकटिंवामनमूर्तये हृदयेज्ञानगम्यायकंठंवैकुंठगामिने सहस्त्रबाहवेबा
हूचक्षुषीयोगरूपिणे संपूज्यविधिवद्भक्त्यादद्यादर्घ्यंविधानतः शुभ्रेणनारिकेलेनशंखोपरिस्थितेनच सूत्रेण
वेष्टितेनैवहस्तयोरुभयोरपि स्मृतोहरसिपापानियदिनित्यंजनार्दन दुःस्वप्नदुर्निमित्तानिमनसादुर्विचिंतनं न
रकंतुभयंदेवभयंदुर्गतिसंभवं भयमस्मान्महादेवऐहिकंपारलौकिकं तेनदेवेशमांरक्षगृहाणार्घ्यंनमोस्तुते स
दाभक्तिर्ममैवास्तुदामोदरतवोपरि धूपंदीपंचनैवेद्यंकुर्य्यान्नीराजनंततः शिरोपरिमुनिश्रेष्ठभ्रामयेद्वारिजंहरेः
कृत्वाविधानमेतद्धिपूजयेत्स्वगुरुंततः दद्याद्वस्त्राणिशुभ्राणिसोष्णीषंचैवकंचुकं उपानहौचछत्रंचमुद्रिकांचकम
डलुं भाजनंचैवधान्यंचसप्तधान्यंसदक्षिणं ततःसंपूज्यदेवेशंकुर्य्याज्जागरणंहरेः गीतनृत्यसमायुक्तमुपचारं
समन्वितं निशांतेदेवदेवेशदत्त्वाचार्घ्यंविधानतः भूमिस्नानादिकंकुर्य्याद्भुंजीयाद्ब्राह्मणैःसह अनेनविधिनाब्रह्म
न्त्रिस्पृशासंभवंव्रतं यःकरोतिनरोभक्त्याशृणुवक्ष्यामितत्फलं गंगावगाहनेब्रह्मन्वाराणस्यांचयत्फलं मन्वं
तरसहस्त्रैस्तुत्रिस्पृशाकरणेहितत् प्राचीयामुनस्नानेनवर्षकोटिषुयत्फलं तत्फलंसमवाप्नोतित्रिस्पृशाव्रतकृन्नरः

यत्फलंतुकुरुक्षेत्रेसूर्यग्रहणकोटिभिः हेमभारशतैर्दत्तैस्त्रिस्पृशाकरणेनतत् पापकोटिसहस्राणिहत्याकोटिश-
तानिच एकेनैवोपवासेनप्रदहेत्त्रिस्पृशाकृता त्रिस्पृशायाव्रतंयत्तुश्रगतीनांगतिप्रदं विनिर्गच्छतिविप्रर्षेमहा
पापशतानिच स्वयंकृष्णेनकथितंपाराशर्यममाग्रतः प्रकाशयव्रतंचेदंलोकेखल्वावैष्णवंद्विजे पापौघंग्रथितं
स्यापितस्यमुक्तिर्भविष्यति पुण्यैरवाप्यतेविद्वन्संवत्सरशतैरपि त्रिस्पृशादुर्लभालोकेप्राप्यतेनैवमानवैः कः
लौचेत्त्रिस्पृशांलब्ध्वानकुर्वंतिनराधमाः तेषांवैनिष्फलंजन्मजीवितंनिष्फलंभवेत् प्रेतत्वंतैःसमुत्तीर्णंविनाश्राद्धं
विनासुतैः कृतायैस्त्रिस्पृशाविद्वन्सकृत्प्राप्यकलौयुगे इतिपाद्मेउत्तरखंडेउमापतिनारदसंवादेत्रिस्पृशैकादशीव्रं
तम् ॥ अथनित्यैकादशीव्रतंभविष्योत्तरे युधिष्ठिरउवाच एकादशीव्रतंदेवनित्यंवैकाम्यमेववा कथंवाक्रि
यतेदेवनियमाश्चात्रकीदृशाः कृत्वावाकिंफलंजंतुःप्राप्नोतिपुरुषोत्तम अकृत्वावाकिमाप्नोतिपापंवैमधुसूदन ए-
तत्सर्वंसमासेनप्रसादाद्वक्तुमर्हसि श्रीकृष्णउवाच अहंतेकथयिष्यामिशृणुपांडुकुलोद्वह नित्यमेतद्व्रतंनामकं
र्तव्यंसार्ववर्णिकं सर्वाश्रमाणांसामान्यंसर्वधर्मेष्वनुत्तमं एकादशीव्रतपरंनास्तिपुण्यतमंभुवि अपिपापसह
स्राणिकुर्वन्नापिसदानरः एकादशींतिथिंसम्यगुपोष्यससुखीभवेत् रटंतीहपुराणानिश्रुतयःस्मृतिभिः सह
नभोक्तव्यंनभोक्तव्यंसंप्राप्तेहरिवासरे भीतानांयमदूतेभ्यःत्रिधाभिर्धीतिजल्पनात् नभोक्तव्यंनभोक्तव्यंसं
प्राप्तेहरिवासरे बाल्याद्यकृतपापौघंदग्धुंसंयतचेतसा नभोक्तव्यंनभोक्तव्यंसंप्राप्तेहरिवासरे दुर्गमार्गेहि
येस्वर्गंजिगीषंतेहितैर्नरैः नभोक्तव्यंनभोक्तव्यंसंप्राप्तेहरिवासरे एकादश्यांनभोक्तव्यंपक्षयोरुभयोरपि भुं
क्तेगोमांसभक्षस्यपापमाप्नोतिमानवः शुक्लांवायदिवाकृष्णांसमुपोष्यसुखीभवेत् भुंजेत्सुरापानसमंपापमाप्नो
तिमानवः यथाशुक्लातथाकृष्णायथाकृष्णातथेतरा विभेदमनयोःकुर्वन्विष्ठायांजायतेकृमिः यथागोतिलवि

प्राणांकृष्णलंनैवदूषणं तथैवैकादशीराजन्नुपोष्यापक्षयोर्द्वयोः उभयोःपक्षयोराजन्नेकादश्यांद्विजन्मवान् यो
भुंक्तरुजन्मासौप्रेत्यचंडालतांव्रजेत् ब्रह्मचारीगृहस्थोवावानप्रस्थोथवायतिः एकादश्यांतुभुंजानोभुंक्तेगोमां
समेवहि ब्रह्मघ्नस्यसुरापस्यस्तेयिनोगुरुतल्पिनः सर्वेषांनिष्कृतिःप्रोक्तानैकादश्यन्नभोजिनः विष्णुरहस्ये
पि यदीच्छेद्विष्णुसायुज्यंश्रियंसंपदमात्मनः एकादश्यांनभुंजीतपक्षयोरुभयोरपि यानिकानिचपापानि
ब्रह्महत्यासमानिच अन्नमाश्रित्यतिष्ठंतिसंप्राप्तेहरिवासरे तानिसर्वाण्युपाश्नातिभुंजानोहरिवासरे नेदृशं
पावनंलोकेनराणामिहविद्यते यादृशंपद्मनाभस्यदिनंपातकहानिदं । अश्वमेधसहस्राणिवाजिपेयशतानिच
एकादश्युपवासस्यनार्हंतिषोडशींकलां एकादशेंद्रियैःपापंयत्कृतंभवतिकिंचित् एकादश्युपवासेनतत्सर्वंविलं
यंव्रजेत् एकादशीसमंकिंचित्पापत्राणंनविद्यते स्वर्गमोक्षप्रदाह्येषाराज्यपुत्रप्रदायिनी सुकलत्रप्रदाह्ये
षाशरीरारोग्यदायिनी नगंगायमुनाभूपनकाशीनचपुष्करं नचापिकौरवंक्षेत्रंनरेवानचदेविका यमुनाच
प्रभागाचतुल्याहरिदिनेनतु अनायासेनराजेंद्रप्राप्यतेवैष्णवंपदं चिंतामणिसमाह्येषाह्यक्षयस्यनिधेःसमा
कल्पपादपतुल्याथवेदवादोपमातथा नारदीयेमांधातारंप्रतिवशिष्ठोक्तम् एकादशीसमुत्थेनवह्निनापातकेंधनं
भस्मतांयातिराजेंद्रप्राप्यतेवैष्णवंपदं तत्रैवब्रह्माणंप्रतियमोक्तम् एकादश्युपवासींयःसमांत्यक्त्वाहरिंव्रजेत्
कुलत्रयंसमुधृत्यआत्मनासहपद्मज तत्रैवमोहिनींप्रतियमोक्तम् एकयाह्यपिवामोरुएकादश्यासुचीर्णया ह
त्यायुतंविनश्यतसर्वयज्ञफलंलभेत् अत्रायंशास्त्रार्थः एकादश्यांनभुंजीतपक्षयोरुभयोरपीति भोजनानिषेध
रूपविधिश्रवणात् तथाचैकादशीमुपवसेदित्युपवासविधिश्रवणाच्च एकादश्यामुपवासोविधीयतेसचाहोरात्र
व्यापिभोजनाभावोदोषाभावविशिष्टः सचोपावृत्तस्तुदोषेभ्यइत्यादिपरिभाषितः तस्यचाकरणेनिदाश्रवं

णात् करणाज्जीवितपुत्रफलकामाद्यधिकारिकः तत्रच संक्रान्त्यामुपवासंचकृष्णैकादशिवासरे चंद्रसू र्य्यग्रहेचैवनकुर्य्यात्पुत्रवान्गृही इंदुक्षयेर्कसंक्रांतादेकादश्यांसितेतरे उपवासंनकुर्वीतयदीच्छेत्संततिंध्रुवं संक्रान्त्यामुपवासेनपारणेनयुधिष्ठिर एकादश्यांतुकृष्णायांज्येष्ठपुत्रोविनश्यति इत्यादिस्मृत्यापुत्रवतांगृह स्थानांकृष्णैकादश्युपवासोनिषिध्यते तथाच शयनीबोधिनीमध्येयाकृष्णैकादशीभवेत् सैवोपोष्यागृह स्थेननान्याकृष्णाकदाचनेत्यादि भविष्योत्तरवचने नान्यासामष्टकृष्णैकादशीनांगृहस्थमात्रप्रतिनिषेधेसिद्धे हरिशयनालिंगितादिविष्णुवचनेनापुत्रगृहस्थानांनतत्फलकामनोदये चतसृषुहरिशयनालिंगितासुकृष्णासु अधिकारइतिनिर्गलितं अतएव एकादश्यांनभुंजीतपक्षयोरुभयोरपि वनस्थयतिधर्मोयंशुक्लामेवसदागृहीतिवि ष्णुधर्मवाक्यात् शुक्लैवगृहस्थानांनित्यातत्रैच यानिकानिचपापानीत्यादयोऽर्थवादाःशतशःसंत्येव अथकाम्यान्ये कादशीव्रतानि तत्रनरसिंहपुराणे एकादश्यांनरश्रेष्ठउपवासोविधीयते नरसिंहंसमभ्यर्च्य सर्वपापैःप्रमुच्यते सर्वपापैःप्रमुच्यतेइत्यर्थवादान्मुक्तिरभिधीयते श्रीभगवद्वाक्यं मच्छयनेमदुत्थानेमत्पार्श्वपरिवर्त्तने पयोमूलफ लाहारीहादिशल्यममार्पति तस्मादवश्यमत्रोपोषणंविधातव्यमितिवाक्यार्थः ब्रह्मपुराणे एकादश्यामुभेपक्षे निराहारः समाहितः स्नात्वासम्यग्विधानेनधौतवासाजितेंद्रियः स्तोत्रैर्नानाविधैर्दिव्यैर्गीतैर्वाद्यैर्मनोह रैः दंडप्रणिपातैश्चजयशब्दैस्तथोत्तमैः एवंसंपूज्यविधिवद्रात्रौकृत्वाप्रजागरं कथयागीतकान्विष्णोर्गायतोवि ष्णुतत्पराः नारदीयेमांधातारंप्रतिवसिष्ठः एकादशीसमुत्थेनवन्हिनापातकेंधनं भस्मतांयातिराजेंद्रअ प्यतेहारिमादरं रात्रौजागरणंकृत्वासमुपोष्यहरेर्दिनं दशवंमातृकेपक्षेदशवैपितृपक्षके प्रियायाद शपक्षेचपुरुषान्नुद्धरेन्नरः आत्मनासहराजेंद्रनयतेवैष्णवंपदं तद्वद्वाहवोनित्यानित्यनागारिवाहनाः स्रग्विनः

पीतवासाश्चप्रयातिहरिमंदिरं वाराहपुराणे एकादश्यांनिराहारोयेभुक्तेद्वादशीदिने शुक्लावायदिवाकृ
ष्णातद्व्रतंवैष्णवंमहत् एताद्विद्वन्सुघोराणिहंतिपापानिपार्थिव अत्रद्वादशीभोजनश्रवणात् द्वादशीपारणपर्यंत
मिदंव्रतं तत्रैवभविष्यपुराणे पारणंतुत्रयोदश्यां यःकरोतिनराधमः द्वादशद्वादशीर्हंतिनात्रकार्याावि
चारणा स्कंदपुराणे यद्वाभवेदतीवाधाद्वादशीपारणादिने प्रातस्वलदाकुर्यात्कर्ममाध्याह्निकंचयत् देव
लोपि संकटेनियमानांतुपारणंतुभवेत्कथं आदिस्तुपारणंकुर्यात्पुनर्भोक्तुनदोषभाक् पारणायोग्यद्वादश्यलाभे
वायुपुराणे कलाप्येकादशीयत्रपरतोद्वादशीनचेत् पुण्यक्रतुशतस्योक्तंत्रयोदश्यांतुपारणं अत्रकानिचि
न्नियमानि ब्रह्मपुराणे कांस्यमांससुराक्षौद्रलोभावितथभाषणं व्यायामंचप्रवासंचदिवास्वप्नमथांजनं शि
लापिष्ठमसूरंचद्वादशैतानिवैष्णवः द्वादश्यांवर्जयेन्नित्यं सर्वपापैःप्रमुच्यते पुनर्भोजनमध्वानंभारमा
यामंमैथुनं उपवासफलंहन्यादिवानिद्राचपंचमी बृहस्पतिरपि दिवानिद्रांपरान्नंचपुनर्भोजनमैथुने क्षौद्रं
कांस्यामिषंतैलंद्वादश्यामष्टवर्जयेत् एकादश्यांश्राद्धेसतिश्राद्धशेषभोजनप्रतिपत्तिरंगं तद्यथा श्राद्धंकृत्वा
तुयोमोहान्नभुंक्तेथकदाचन अकृतंतद्भवेच्छ्राद्धंपितृहाचोपजायते तन्मतेपितृदाहारंविनैवश्राद्धसिद्धेरनन्यगतिकत्वा
त्तदाजिघ्रेदितिसंप्रदायविदः उपवासोयदानित्यः श्राद्धंनैमित्तिकंभवेत् उपवासंतदाकुर्यादाजिघ्रेत्पितृसे
वितामिति वाराहपुराणवचनात् उपवासाशक्तौ एकभक्तेननक्तेनतथैवायाचितेनच उपवासेनभैक्ष्येणनैवद्वादशिकोभ
भवेदिति व्रतस्यनित्यतापादनं अत्राप्यशक्तौप्रतिनिधयः असामर्थ्येशरीरस्यव्रतेचसमुपस्थिते कारयेद्धर्म
पत्नींवापुत्रंवाविनयान्वितं भ्रातरंभगिनींशिष्यंब्राह्मणदक्षिणादिभिः उपवासोव्रतंतीर्थंजपहोमादिकंचयत् वि
प्रैः संपादितंयस्य संपन्नंतस्यतत्फलमिति काम्यव्रतविधिमाहविष्णुः मार्गशुक्लैकादश्यांसमुपोषितो द्वा

दश्यांभगवंतंवासुदेवमभ्यर्चयेत् पुष्पधूपानुलेपनदीपनैवेद्यैर्ब्राह्मणतर्पणैर्व्रतमेतत्संवत्सरं कृत्वा पापेभ्यः पू
तो भवति यावज्जीवंकृत्वाश्वेतद्वीपमवाप्नोति उभयपक्षे द्वादशीष्वेवसंवत्सरंकृत्वास्वर्गलोकं यावज्जीवंकृत्वावि
ष्णुलोकं अत्रयद्यपिएकादश्यामुपोषितइत्युक्तं तथापिद्वादशीपूजायाः प्राधान्यात्तस्यानुरोधात् यत्रद्वादशीत्रुटिता
तत्रपूर्वदिनेएकादशीव्यतिरिक्तेनोपवासः कर्त्तव्यः पूजाहोमादितुवासुदेवपदेनैवश्रुतिबलात् इदंतुप्रतिशुक्लद्वा
दशीवत्सरांतमेकंयावज्जीवमपरं प्रत्युभयद्वादशीवत्सरांतमेकंयावज्जीवमपरमितिचतुष्टयंकाम्यंचेदंफलश्रवणात्
श्वेतद्वीपश्चवैष्णवोपभोग्यः सारान्धितारस्वरूपः सचभारतीयनारायणोपाख्याने प्रपंचितः अत्रपूजाच
ॐनमोभगवतेवासुदेवायेत्यनेननमोतेनस्वाहांतेनचहोमः कार्यः होमेवंहाहुतयः ब्राह्मणाश्चबहवो
भोज्याः उभयत्रबहुत्वानुरोधात् मत्स्यपुराणे द्वादशद्वादशीर्यस्तुसमाप्तोपोषणेपुनः गोवस्त्रकांचनैर्विप्रा
न्भोजयद्भक्तितान्नृप रम्यपदमवाप्नोतिविष्णव्रतमिदंस्मृतं अत्रद्वादशद्वादशीशुक्ला समाप्येत्यर्थः विष्णु
पितृमातृपतिभ्रातृस्वसृगुर्वादिभर्तृजा अदृष्टार्थमुपोष्यापिस्वयंचफलभाग्भवेत् अत्रानुकल्पउक्तोवायुपुराणे
उपवासानपेक्षिचिद्द्रव्यंप्रकल्पयेत् नदुष्येत्युपवासंतुउपवासफलंलभेत् तथाप्रोक्तं नक्तंहविष्यान्नमो
दनं वाहाविस्तिलाक्षीरमथाबुचाज्यं यत्पंचगव्यंयदिवापिवायुः प्रशस्तमत्रोत्तरमुत्तरंच एतेषांस
मलत्वापिअधिकारिश्रुतेयंत्रैवव्रतविशेषस्तादृग्विषयत्वं तथैवद्वादशीव्रतस्यविष्णवादौदर्शनात् देवीपुराणे केशव
१ नारायण २ माधव ३ गोविंद ४ विष्णु ५ मधुसूदन ६ त्रिविक्रम ७ वामन ८ हृषीकेश ९
पद्मनाभ १० वासुदेव ११ दामोदरान्पूजयेत् युधिष्ठिरउवाच परम्लुचस्यमासस्यकावाएकादशीभवेत् किं
नामकोविधिस्तस्याः कथयस्वजनार्दन श्रीकृष्णउवाच मलमासस्ययापुण्याप्रोक्तानाम्नाचपद्मिनी सोपोषिता

प्रयत्नेनपद्मनाभपुरंनयेत् ॥ मलमासेमहापुण्याकीर्तिताकल्मषापहा ॥ तस्याःफलंकथयितुंनशक्तश्चतुराननः ॥ ना
रदायपुराप्रोक्तविधिनाव्रतमुत्तमम् ॥ पद्मिन्यांपापराशिघ्नंभुक्तिमुक्तिफलप्रदं ॥ श्रुत्वावाक्यंमुरारेस्तुप्रोवाचातिमु
दान्वितः ॥ युधिष्ठिरोजगन्नाथंविधिंपप्रच्छधर्मवित् ॥ श्रुत्वाराज्ञस्तुवचनंप्रोत्फुल्लांबुजेक्षणः ॥ शृणुराजन्प्रवक्ष्या
मिमुनीनामप्यगोचरं ॥ दशमीदिवसेप्राप्तेव्रतारंभोविधीयते ॥ कांस्यंमांसंमसूरांश्चचणकान्कोद्रवांस्तथा ॥ शाकं
मधुपरान्नंचदशम्यांदशवर्जयेत् ॥ हविष्यान्नंचभुंजीतअक्षारलवणंतथा ॥ भूमिशायीब्रह्मचारीभवेच्चदशमीदिने ॥ ए
कादशीदिनेप्राप्ते प्रातरुत्थायसादरं ॥ विधायचमलोत्सर्गंकुर्याद्दंतधावनं ॥ गंडूषान्द्वादशान्कृत्वाशुचिर्भूत्वा
समाहितः ॥ सूर्योदयेशुभेतीर्थेस्नानार्थंप्रव्रजेत्सुधीः ॥ गोमयंमृत्तिकांगृह्यतिलान्दर्भान्शुचिस्थलात् ॥ चूर्णैरामल
कानांतुविधिनास्नानमाचरेत् ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता ॥ त्वं
मेकुरुपवित्रांगंलग्नानेत्रशिरोरुहे ॥ हरिपूजनयोग्यंमांमृत्तिकेकुरुतेनमः ॥ सर्वौषधिसमुत्पन्नंगवोदरमधिष्ठितंपावि
त्रकरणंभूमेर्मांपावयतुगोमयं ॥ ब्रह्मष्ठीवनसंभूताधात्रीभुवनपावनी ॥ संस्पृष्टापावयांगंमेनिर्मलंकुरुतेनमः ॥ देव
देवजगन्नाथशंखचक्रगदाधर ॥ देहिविष्णोममानुज्ञांतवतीर्थावगाहने ॥ वारुणांश्चजपेन्मंत्रान्स्नानंकुर्याद्विधान
तः ॥ गंगादितीर्थंसंस्मृत्ययत्रकुत्रजलाशये ॥ पश्चात्संमार्जयेद्गात्रंविधिनान्नृपसत्तम ॥ मुखंपृष्ठंचहृदयंबाहूशिरसि
चाप्यधः ॥ परिधायसुखंवासोशुक्लंशुचिह्यखंडितं ॥ ततःकुर्याद्धरेःपूजांमहापापंविनश्यति ॥ संध्यामुपास्यविधिना
तर्पयित्वापितॄन्सुरान् ॥ हरेर्मंदिरमागम्यपूजयेत्कमलापतिं ॥ स्वर्णमाषकृतंदेवंराधिकासहितंहरिं ॥ पार्वत्यास
हितंदेवंपूजयेद्विधिपूर्वकं ॥ कुंभोपरिन्यसेद्देवतांश्चपात्रंमृण्मयं ॥ दिव्यवस्त्रसमायुक्तंदिव्यगंधानुवासितं ॥ तस्यो
परिन्यसेत्पात्रंताम्ररौप्यहिरण्मयं ॥ तस्मिन्संस्थाप्यदेवंविधिनापूजयेत्ततः ॥ संस्नाप्यसलिलैःश्रेष्ठैर्गंधधूपादिवा

सितैः चंदनागुरुकर्पूरैः पूजयेद्देवमीश्वरं नानाकुसुमकस्तूरीकुंकुमेनासितांवुजैः तत्कालजातैः कुसुमैः पूजयेत्पर
मेश्वरं नैवेद्यैर्विविधैः शक्त्या तथा नीराजनादिभिः धूपैर्दीपैः सकर्पूरैः पूजयेत्केशवं शिवं नृत्यं गीतं तदग्रे तु कुर्याद्भक्तिपुरः
सरं नालपेत्पतितान्पापान्तास्मिन्नहनि न स्पृशेत् नानृतं हि वदेद्वाक्यं सत्यपूतं वचो वदेत् रजस्वलां न पश्येत नास्तिकं
ब्राह्मणं गुरुं पुराणं पुरतो विष्णोः शृणुयात्सह वैष्णवैः निर्जलः सोऽप्रकर्तव्यो याचशुक्ले मलिम्लुचे जलपानेन वा कुर्या
द्दुग्धाहारेण नान्यथा रात्रौ जागरणं कुर्याद्गीतवादित्रसंयुतं प्रथमे प्रहरे पूजा नारिकेलार्चमुत्तमं द्वितीये श्रीफले
नैव तृतीये बीजपूरकैः चतुर्थे पूजयेत्पूगैर्नारंगैश्च विशेषतः प्रथमे प्रहरे पुण्यमग्निष्टोमस्य जायते द्वितीये वाजपेयस्य तृ
तीये हयमेधजं चतुर्थे राजसूयस्य जायते जायते फलं नातः परतरं पुण्यं नातः परतरो मखः नातः परतरा विद्या नातः
परतरं तपः पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च तत्स्नातानि च दृष्टानि येनाकारि हरेर्व्रतम् एवं जागर
णं कुर्याद्यावत्सूर्योदयो भवेत् सूर्योदये शुभे तीर्थे गत्वा स्नानं समाचरेत् स्नात्वैवागत्य भवने पूजयेद्देवमीश्वरं पूर्वो
दितेन विधिना भोजयेद्ब्राह्मणान्शुभान् कुंभादिकं च यत्सर्वं प्रतिमां केशवस्य च पूजयित्वा विधानेन ब्राह्मणाय स
मर्पयेत् एवंविधं व्रतं यो वै कुरुते भुवि मानवः सफलं जायते तस्य व्रतं भुक्तिफलप्रदं एतत्ते सर्वमाख्यातं यत्पृष्टोहं
त्वया नृप मलिम्लुचेस्य मासस्य शुक्लायां विधिमुत्तमम् पद्मिन्याः प्रीतियुक्तो यः कुरुते व्रतमुत्तमम् व्रतान्यन्यानि ता
णि सर्वाणि नृपनंदन कृष्णायां मलमासस्य विधिस्तस्यापि तादृशः परमा सा तु विज्ञेया सर्वपापक्षयंकरी अ
त्रैते कथयिष्यामि कथामेकां मनोरमां नारदाय पुलस्त्येन या विस्तरेण निवेदिताम् कार्तवीर्येण कारायां निक्षिप्तं वी
रावणं विमोचितः पुलस्त्येन याचयित्वा महीपतिं तदाश्चर्यं तदा श्रुत्वा नारदो दिव्यदर्शनः पप्रच्छ च यथा भे
त्यां पुलस्त्यं मुनिपुंगवं दशाननेन विजिताः सर्वे देवाः सवासवाः कार्तवीर्येण विजितः कथं रणविशारदः नारदस्य

वचःश्रुत्वापुलस्त्योमुनिरब्रवीत् शृणुवत्सप्रवक्ष्यामिकार्त्तवीर्यसमुद्भवम् पुरात्रेतायुगेराजन्माहिष्मत्यांम
हत्तरः हैहयानांकुलेजातःकृतवीर्यामहीपतिः सहस्रंप्रमदास्तस्यनृपस्यप्राणवल्लभाः नतासांतनयंकिंचिल्ले
भेराज्यधुरंधरं यजन्देवान्पितॄन्सिद्धान्प्राचिकित्सामहत्तरान् तेषांवाक्याद्व्रतंकुर्वन्नलब्धस्तनयस्तदा सुतंवि
नातदाराज्यंनसुखायमहीपते क्षुधितस्ययथाभोगानभवंतिसुखप्रदाः विचार्यचित्तेनृपतिस्तपस्तप्तुंमनोदधे
तपसैवसदासिद्धिर्जायतेमनसेप्सिता इत्युक्त्वासौसभार्यश्चचीरवासाजटाधरः तपस्तप्तुंगतःसद्योगृहेन्यस्यसु
मंत्रिणं निर्गतंनृपतिंवीक्ष्यपद्मिनीप्रमदोत्तमा हरिश्चंद्रस्यतनयाइक्ष्वाकुकुलसंभवा पतिव्रताप्रियंदृष्ट्वास्त
पस्तप्तुंकृतोद्यमं भूषणानिपरित्यज्यचीरमेकंसमाश्रयत जगामपतिनासार्धंपर्वतेगंधमादने गत्वातत्रतप
स्तेपेवर्षाणामयुतंनृप नलेभेतनयंराजाध्यायन्देवंगदाधरं अस्थिस्नायुमयंकांतंदृष्ट्वासाप्रमदोत्तमा अनुस
यांमहासाध्वींपप्रच्छविनयान्विता भर्तुःप्रतपतःसाध्विवर्षाणामयुतंगतं तथापिनप्रसन्नोभूत्केशवःक्लेशनाशनः
व्रतंममंमहाभागेकथयस्वयथातथं येनप्रसन्नोभगवान्ममभक्त्याप्रजायते येनमेजायतेपुत्रश्चक्रवर्तीमहत्तरः
श्रुत्वातस्यास्तुवचनंपतिव्रतपरायणा यंप्रव्रजंतंनृपतिंस्वयंप्रव्राजदीक्षितं तदाप्रोवाचसंतुष्टापद्मिनींपद्मलोचना
स्नात्वामलिम्लुचेसुभ्रुमासद्वादशसंमिते द्वात्रिंशद्दिनैश्चभवतिमासःपूर्णःशुभानने तन्मध्येद्वादशीयुग्मंपद्मिनी
परमातथा उपोष्यातत्प्रकर्तव्यंविधिनाजागरैःसमम् शीघ्रंप्रसन्नोभगवान्भविष्यतिसुतप्रदः इत्युक्त्वाक
थयत्सर्वंमयापूर्वोदितंनृप विधिंव्रतस्यविधिवत्प्रसन्नाकर्दमांगजा श्रुत्वाव्रतविधिंसर्वंयथोक्तमनुसूयया चक्रे
राज्ञीचतत्सर्वंपुत्रप्राप्तिमभीप्सती एकादश्यांनिराहारासदाजाताचनिर्मला जागरेणयुतारात्रौगीतनृत्यसमन्विता
पूर्णेव्रतेचवैशीघ्रंप्रसन्नःकेशवःस्वयं वभाषेगरुडारूढोवरंवरयशोभने श्रुत्वावाक्यंजगद्धातुःस्तुत्वाप्रीत्याशु

चिस्मिता यथैवंचवरंब्रूहिममभर्तुर्महत्तरं पद्मिन्यास्तद्वचःश्रुत्वाकृष्णःप्रीतःप्रियंवदां त्वयाहंतोषितोभद्रे
प्रत्युवाचजनार्दनः मलिम्लुचश्चमासोसौनान्योमेप्रीतिदायकः तन्मध्येकादशीरम्याममप्रीतिविवर्धना सात्व
योपोषितासुभ्रुयथोक्तविधिनाशुभे तेनत्वयाप्रसन्नोहंकृतोस्मिसुभगानने तवभर्तुःप्रदास्यामिवरंयन्मनसेप्सितं
इत्युक्त्वानृपतिंप्राहविष्णुर्विश्वार्तिनाशनः वरंवरयराजेंद्रयत्तेमनसिकांक्षितं संतोषिताहंप्रिययातवसिद्धिर्वि
कोपया श्रुत्वातद्वचनंविष्णोःप्रसन्नोनृपसत्तमः वव्रेसुतंमहाबाहुंसर्वलोकनमस्कृतम् नदेवैर्मानुषैर्नागैर्दैत्यदा
नवराक्षसैः जेतुंशक्योजगन्नाथविनात्वांमधुसूदन इत्युक्तोबाढमित्युक्त्वातत्रैवांतरधीयत नृपोपिसुप्र
सन्नात्माहृष्टःपुष्टःप्रियायुतः समायात्स्वपुरंरम्यंनरनारीमनोरमं सपद्मिन्यांसुतंलेभेकार्त्तवीर्यंमहाबलं नतेनस
दृशःकश्चित्त्रिषुलोकेषुमानवः तस्मात्पराजितःसंख्येरावणोदशकंधरः नतंजेतुंसमर्थोस्तित्रिषुलोकेषुकश्चन
विनानारायणंदेवंचक्रपाणिंगदाधरं नत्वयाविस्मयःकार्योरावणस्यपराजये मलिम्लुचप्रसादेनपद्मिन्याश्चा
प्युपोषणात् दत्तोदेवाधिदेवेनकार्त्तवीर्योमहाबलः इत्युक्त्वाप्रययौविप्रःप्रसन्नेनांतरात्मना श्रीकृष्णउवाच ॥
एतत्तेसर्वमाख्यातंयत्पृष्टोहंत्वयानघ मलिम्लुचस्यमासस्य शुक्लायाः संभवोमहान् येकरिष्यंतिमनुजास्ते
यास्यंतिहरेःपदं त्वमेवंकुरुराजेंद्रयदिचेष्टमभीप्ससिकेशवस्यवचःश्रुत्वाधर्मराजोतिहर्षितः चक्रेव्रतंविधाने
नबंधुभिःपरिवारितः ॥ सूतउवाच ॥ एतत्तेसर्वमाख्यातंयत्पृष्टोहंपुराद्विज पुण्यंपवित्रंपरमंकिंभूयः
श्रोतुमिच्छसि एवंविधंयेपिव्रतंमनुष्याभक्त्याकरिष्यंतिमलिम्लुचस्य उपोषितायैस्तुसुखप्रदात्रीयाशुक्लपक्षे
भुवितेपिधन्या श्रोष्यंतियेतस्यविधिंसमग्रंतिष्यंशभाजोमनुजाःप्रशस्ताः येवैपठिष्यंतिकथांसमग्रांतेवैग
मिष्यंतिहरेर्निवासं ॥ इतिश्रीअधिकशुक्लाएकादशीसमाप्ता ॥ अथअधिककृष्णाएकादशीकथा ॥ युधिष्ठिर

उवाच ॥ मलिम्लुचस्यमासस्यकृष्णाकाकथ्यतेविभो किंनामकोविधिस्तस्याःकथयस्वजगत्पते ॥ श्रीकृष्ण
उवाच ॥ परमेतिसमाख्यातापवित्रापापहारका भुक्तिमुक्तिप्रदान्हणांस्त्रीणांचापियुधिष्ठिर पूर्वोक्तविधिना
कार्यायाकृष्णैकादशीजनैः पूजयेत्परयाभक्त्यानाम्नादेवनरोत्तम अत्रतेकथयिष्यामिकथामेतांमनोरमां कां
पिल्यनगरेजातांमुनीनामग्रतःश्रुतां आसीद्विजवरःकश्चित्सुमेधानामधार्मिकः तस्यपत्नीपवित्राख्यापातिव्र
त्यपरायणा कर्मणाकेनचिद्विप्रोधनधान्यविवर्जितः नक्कापिलभतेभिक्षांयाचन्नपिपरान्बहून् नभोज्यंलभ
तेतादृड्नवस्त्रंनैवमंडनं रूपयौवनमाधुर्यैर्नारीशुश्रूषतेपतिं अतिथिंपूजयेत्क्वापितदासाक्षुधितागृहे इष्टत्वे
वविशालाक्षीचाम्लानमुखपंकजा विलोक्यभार्यांसुदतींकर्षतींस्वकलेवरं नभर्त्तारंक्कचिच्चैवनास्त्यन्नमितिभाषते
विचार्यब्राह्मणश्चिरंभार्यायाःप्रेमबंधनं निंदन्भाग्यंस्वकंविप्रःप्रोचेवाक्यंप्रियंवदां कांतेकरोमिकिंकार्यंनमया
लभ्यतेधनं यांचयामिनरान्भव्यान्नयच्छंतिचमेधनं किंकरोमिक्कगच्छामित्वंमेकथयशोभने विनाधनेनसुश्रो
णिगृहकार्यंनसिध्यति देह्याज्ञांपरदेशायगच्छामिधनलब्धये यस्मिन्देशेचयत्प्राप्यंभाग्यंतत्रैवलभ्यते उद्य
मेनविनासिद्धिःकर्मणांनोपलभ्यते तस्माद्बुधःप्रशंसंतिसर्वथैवशुभोद्यमं श्रुत्वाकांतस्यवचनंसाश्रुनेत्राविचक्षणा
प्रोवाचप्रांजलिर्भूत्वाविनयानतकंधरा त्वत्तोनास्तिसविज्ञातात्वयाज्ञाताब्रवीम्यहं हितैषिणोनराब्रूयुःशश्वत्सा
ध्व्यसाध्व्यपि पूर्वदत्तंहिलभ्येतयत्रकुत्रमहीतले विनादानंनलभ्येतमेरौकनकपर्वते पूर्वदत्ताहियाविद्यापूर्व
दत्तंहियद्धनं पूर्वदत्ताहियाभूमिरिहजन्मानिलभ्यते यद्धात्रालिखितंभालेतत्तत्रैवाहिलभ्यते विनादत्तेनकिंक्वा
पिलभतेनैवकिंचन पूर्वजन्मनिविप्रेंद्रनमयानत्वयाक्कचित् सत्पात्राणांकरेदत्तंस्वल्पमप्यपिसद्धन इहदेशेप
रेवापिदत्तंसर्वत्रलभ्यते अन्नमात्रंतुविश्वेशोविनादत्तेनयच्छति तस्मादत्रैवविप्राग्र्यस्थातव्यंभवतामया भव

द्विनानतिष्ठामिक्षणमात्रंमहामुने॥ नमातानपिताभ्रातानश्वश्रूःश्वशुरोजनः॥ नसत्कुर्वंतितांकोपिस्वजनाश्चापरे
कुतः॥ भर्तृहीनांविनिंदंतिदुर्भगेतिवदंतितां॥ तस्मादत्रस्थिरोभूत्वाविहरस्वयथासुखं॥ भवतोभाग्ययोगेनप्राप्ति
श्चात्रभविष्यति॥ श्रुत्वातस्यास्तुवचनंस्थितस्तत्रविचक्षणः॥ तावत्तत्रसमायातःकौंडिन्योमुनिसत्तमः॥ दृष्ट्वासमा
गतंहृष्टःसमेधाद्विजसत्तमः॥ सभार्यःसहसोत्थायननामाशिरसासकृत्॥ धन्योस्म्यनुगृहीतोस्मिसफलंजीवितं
मम॥ यदृष्टोसिमहद्भाग्यादित्युवाचमुनीश्वरं॥ दत्वासुविष्टरंतस्मैपूजयामासतंद्विजं॥ भोजयित्वाविधानेनपप्र
च्छप्रमदोत्तमा॥ विद्वन्केनप्रकारेणदारिद्र्यस्यक्षयोभवेत्॥ विनाद्रव्यंकथंलभ्येद्धनंविद्यांकुटुंबिनी॥ मामिभर्ता
परित्यज्यगंतुकामोद्यवर्तते॥ अन्यदेशेपरान्लोकान्याचितुंपरपत्तने॥ रक्षितोस्तिमयाविद्वन्हेतुवाक्यैर्महत्तरैः॥
नादत्तंलभतेकिंचिदित्युक्त्वासनिवारितः॥ ममभाग्यान्मुनींद्राद्यत्वमत्रैवसमागतः॥ त्वत्प्रसादाद्दरिद्रंमेशी
घ्रंनश्यत्यसंशयं॥ केनोपायेनविप्रेंद्रदारिद्र्यंनश्यातिध्रुवं॥ कथयस्वकृपासिंधोव्रततीर्थजपादिकं॥ श्रुत्वातस्याः
सुशीलायाभाषितंमुनिपुंगवः॥ प्रोवाचप्रवरंचित्तेविचार्यव्रतमुत्तमं॥ मलिम्लुचेमहाभागेव्रतानामुत्तमंव्रतं॥ सर्व
पापोघशमनंदुःखदारिद्र्यनाशनं॥ परमानामविख्याताविष्णोस्तिथिरनुत्तमा॥ मलिम्लुचेतुयाकृष्णाभुक्तिमुक्ति
फलप्रदा॥ तस्यामुपोषणंकृत्वाधनधान्ययुतोभवेत्॥ विधिनाजागरैःसाकंगीतवादित्रसंयुतं॥ धनदेनपुराचीर्णं
व्रतमेतत्सुशोभनं॥ तदाहृष्टेनरुद्रेणधनानामधिपःकृतः॥ हरिश्चंद्रेणचकृतंपुराक्रीतंसुतेनवै॥ पुनःप्राप्ताप्रियातेन
राज्यंनिहतकंटकं॥ तस्मात्कुरुविशालाक्षिव्रतमेतत्सुशोभनं॥ विधिनाविधियुक्तेनसमंजागरणेनच॥ इत्यु
क्त्वातद्विधिंसर्वंकथयामासवाडवः॥ प्रीत्यापरमसंतुष्टस्ततोभक्त्याप्रसादितः॥ पुनःप्रोवाचतंविप्रंपंचरात्रव्रतंशुभं॥
यस्यानुष्ठानमात्रेणभुक्तिर्मुक्तिश्चप्राप्यते॥ परमादिवसेप्रातःकृत्वापूर्वाह्णिकंविधिं॥ कुर्यात्सुनियमान्शक्त्यापंच

रात्रव्रतादरात् प्रातःकृत्वानिराहारोयास्तिष्ठेद्दिनपंचकं सगच्छेद्वैष्णवस्थानंपितृमातृप्रियायुतः एकाशनस्तु-
योभूयाद्दिनानांपंचकंनरः भोजितंतेनविधिनासदेवासुरमानुषं पूर्णकुंभंतुतोयेनयोददातिद्विजातये दत्तंतेनैवस-
कलंब्रह्मांडंसचराचरं तिलपात्रंतुयोदद्याद्ब्राह्मणायविपश्चिते तिलसंख्यावसेत्स्वर्गेसनरोनाकमंडले घृतपात्रंतुयो
दद्यात्स्नात्वापंचदिनेनरः सभुक्त्वाविपुलान्भोगान्सूर्यलोकेमहीयते ब्रह्मचर्येणयस्तिष्ठेद्दिनानांपंचकंनरःसस्वर्गेभु-
जतेभोगान्स्वर्वेश्याभिःसमंमुदा एवंविधव्रतंसाध्विकुरुत्वंपतिनाशुभे धनधान्ययुताभूत्वास्वर्गंयास्यतिसुव्रते
इत्युक्त्वासाव्रतंचक्रेकौंडिन्येनयथोदितं भर्तृत्रासमभावयुतास्नात्वामासिमलिम्लुचे पंचरात्रव्रतेपूर्णेपरायां
प्रियसंयुतासापश्यद्राजभवनादायांतंनृपनंदनं दत्त्वानवीनंभुवनंदिव्यवस्तुसमन्वितम् वासयामासविधिनावि
धिनाप्रेरितास्वयं दत्त्वाग्रामंवृत्तिकरंब्राह्मणायसुमेधसे प्रसन्नस्तपसाराजासंस्तुत्वास्वगृहंययौ मलिम्लुचस्यमा
सस्यपरायाःपरमादरात् कृष्णाह्युपोषणात्सद्यःपंचरात्रव्रतेनच सर्वपापविनिर्मुक्त सर्वसौख्यसमन्वितः
भुक्त्वाभोगान्प्रियासार्धंअंतेविष्णुपुरंययौ येकरिष्यंतिमनुजाःपरायाव्रतमुत्तमं पंचरात्रभवंपुण्यंमयावक्तुंनश
क्यते पुष्कराद्यानितीर्थानिगंगाद्याःसरितस्तथा धेनुमुख्यानिदानानितेनचीर्णानिसर्वथा गयाश्राद्धंकृतंते
नपितरःपरितोषिताः व्रतानितेनचीर्णानिव्रतखंडोदितानिवै द्विपदांब्राह्मणःश्रेष्ठोगौर्वरिष्ठाचतुष्पदां देवा
नांवासवःश्रेष्ठस्तथामासोमलिम्लुचः मलिम्लुचेपंचरात्रंमहापापहरंस्मृतं पंचरात्रेचपरमापद्मिनीपापशो
षिणी साप्यशक्तैःप्रकर्तव्यायथाशक्त्याविचक्षणैः मानुषंजनुरासाद्यनस्नातायैर्मलिम्लुचः तेजन्मघातिनोनू
ननोपोष्यातिहरेर्दिनं चतुराशीतिलक्षाणिकामतयोनिसंकटे प्राप्यतेमानुषंजन्मदुर्लभंपुण्यसंचयैः तस्मा
त्कार्यंप्रयत्नेनपरमायांव्रतंशुभम् ॥ श्रीकृष्णउवाच ॥ एतत्तेसर्वमाख्यातंयत्पृष्टोहंत्वयानघमलिम्लुचस्य

वाह्यन्वेषणेयत्नमकुर्वन्नाग्निदर्शने क्रमिकीटपतगाश्चपप्रच्छुस्त्रिदिवौकसः हंहोभेकाभेकांवाह्निर्युष्माभिर्लक्षि-
तःकचित् हेगजाःसालिकाव्रतयदिवोविदितोनलः गजाःप्रोचुरितोवन्हिःशीघ्रंशरवनंगतः शशापाग्निर्गजा-
न्जिह्वाविगुणावोभविष्यति शप्त्वाविनिर्गताश्चाग्निर्वनात्तस्माद्द्रुतंगतः देवाश्चानुग्रहंचक्रुस्तेपांसानुग्रहास्थिताः
सञ्ज्ञयाचेष्टयाप्रोक्तंविदितवोभविष्यति अनुग्राह्यचतान्देवाअपृच्छच्छुकशारिकाः ताऊचुर्वंशमध्येग्निर्गत्वापश्यत
नैपुणनष्टःशशापतानग्निर्विपरीताभविष्यथ सदैवाजिह्वायुष्माकंवदतांचास्फुटाक्षरं देवैरनुगृहीतास्तेहृष्यमाणा
भविष्यति दृष्ट्वाचविबुधाःसर्वेपक्षिणंपक्षिणांवरं जीवंजीवकनामानंभोभोसत्यंवदस्वनः क्वचिद्दृष्टस्त्वया
वन्हिर्वनेस्मिन्चरतासदा नभद्रंवाप्यभद्रंवाकिमिदंचवचोब्रवीत् भूयोभूयोपिपृष्टश्चनान्यांसोच्चारयद्गिरं तु
ष्टस्तदाब्रवीद्ब्रह्माचिरंजीवददामिते यस्मान्नकिंचिदुक्तंतेतस्माच्चित्रतनूरुहः जीवंजीवपुनर्जीवयावदिच्छात
वायुषः द्वितीयेतेवरंदाद्मिजीवजीवकशोभनं व्यक्तातमानुषीवाचास्फुटार्थाचभविष्यति कश्चिद्यदितवाघस्ता
द्वद्वःस्नानंकरिष्यति सप्तधाषोडशाब्दाभिःक्षणात्स्नातोभविष्यति मांसंयश्चत्वदीयंवैभक्षयिष्यत्यनिंदितं अ
जरश्चामरश्चैवसर्वकालंभविष्यति एवंदत्त्वावरांस्तस्यवन्हिंवंशमथाविशत् विबुधाःप्राप्यतत्रैवमपश्यन्वंशम
ध्यगं ऊष्मणाज्ञातकल्माषंज्ञात्वासंहृष्टमानसाः तुष्टावंशमथोचुस्तेदेवास्त्रिभुवनेश्वराः ऊष्मणाकलुषोभू
त्वाश्वाग्निगर्भंधरिष्यसि यांगृहीवैष्णवोयाष्टिब्रह्मचारीचनैष्ठिकः पंचाग्निपालनेपुण्यंयद्घृष्ठवेदवादिभिः
वहन्कल्मषयष्टिंतप्राप्नोतिहद्विजोत्तम वंशस्यानुग्रहंकृत्वादेवावन्हिमथाब्रुवन् दह्यमानस्तुतेनाग्नि
र्गंगायाः प्राक्षिपज्जले दह्यमानोज्झितवतीगंगाशरवनेचतत् तत्रजातोकुमारोसौगंगाग्निहरसंभवः
शक्त्याजघानतदुष्टतारकंदैत्यसत्तमं एतत्तेसर्वमाख्यातमग्नेर्नाशस्यकारणम् ॥ युधिष्ठिरउवाच ॥

ततःकाचित् हेगजासात्विकाब्रूतयादेवावादितानलः गजा प्राचुरितावान्हःशाघ्रशरवनंगतः शशापाग्निर्गजा-
न्जिह्वाविगुणावोभविष्यति शप्त्वाविनिर्गताश्चाग्निर्वनात्तस्माद्द्रुतगत देवाश्चानुग्रहंचक्रुस्तेषांसानुग्रहास्थिताः
संज्ञयाचेष्टयाप्रोक्तंविदितवोभविष्यति अनुग्राह्यचतान्देवाअपृच्छच्छुकशारिका ताऊचुर्वंशमध्येग्निर्गत्वापश्यत
नैपुण्यंनष्टःशशापतानग्निर्विपरीताभविष्यथ सदैवजिव्हायुष्माकंवदतांचास्फुटाक्षरं देवैरनुगृहीतास्तेह्रियमाणा
भविष्यति दृष्ट्वाचविबुधाःसर्वेपक्षिणंपक्षिणांवरं जीवजीवकनामानंभोभोसत्यंवदस्वनः कचिद्दृष्टस्त्वया
वन्हिर्वनेरिमनचरतासदा नभद्रंवाप्यभद्रंवाकिमिदंचवचोब्रवीत् भूयोभूयोपिपृष्टश्चनान्यांसोच्चारयाद्गिरं तु
ष्टस्तदाब्रवीद्वह्निश्चिरजीवददामिते यस्मान्नकिंचिदुक्ततेतस्माच्चित्रतनूरुहः जीवंजीवपुनर्जीवयावदिच्छात
वायुषः द्वितीयंतेवरंदाग्निजीवजीवकशोभनं व्यक्तातेमानुषीवाचास्फुटार्थाचभविष्यति कश्चिद्यदितवाधस्ता
द्वद्वःस्नानंकरिष्यति सप्तधाषोडशाब्दांभःक्षणात्स्नातोभविष्यति मांसंयश्चत्वदीयंवैभक्षयिष्यस्यनिंदितं अ
जरश्चामरश्चैवसर्वकालंभविष्यति एवंदत्वावरांस्तस्यवान्हिर्वंशमथाविशत् विबुधाःप्राप्यतत्रैवमपश्यन्वंशम
ध्यग ऊष्मणाज्ञातकल्मषंज्ञात्वासंहृष्टमानसाः तुष्टावंशमथोचुस्तेदेवास्त्रिभुवनेश्वराः ऊष्मणाकलुषोभू
त्वाश्चाग्निर्गर्भंधरिष्यसि यांगृहीवैष्णवोयाष्टब्रह्मचारीचनैष्ठिकः पंचाग्निपालनेपुण्ययद्घृष्ठवेदवादिभिः
वहन्कल्मषयष्टिंप्राप्नोतीहद्विजोत्तमः वंशस्यानुग्रहंकृत्वादेवावन्हिमथाब्रुवन् दह्यमानस्तुतेनाग्नि
र्गंगायाः प्राक्षिपज्जले दह्यमानोज्झितवतीगंगाशरवनेचतत् तत्रजातोकुमारोसौगंगाग्निहरसंभवः
शक्त्याजघानतंदुष्टंतारकंदैत्यसत्तमं एतत्तेसर्वमाख्यातमग्नेर्नाशस्यकारणम् ॥ युधिष्ठिरउवाच ॥

देवा आंगिरसंप्राहुस्तेजोराशिमकल्मषं — संप्रणम्योचुरग्नित्वंकुरुतावन्महीतले — पूर्वंयथाग्निःकृतवान्त
थात्वमपिसत्तम — यावदग्निंप्रपश्यामःक्वासौनष्ट कतिष्ठति — एवमुक्तःसदेवैस्तुअग्नित्वंकृतवांस्तदा — देवैर्दृष्टोय
दाह्यग्निस्तैस्तःसर्वंनिवेदितं — देवकार्येकृतेतस्मिन्देवावह्निंतथाब्रुवन् — अग्रेअग्नित्वंकुरुष्वत्वमंगिरास्तुयथापुराएव
मुक्तःसुरैर्वह्निश्चिंतयामासदुःखितः — केनमेपहृतंतेजःकेनाग्नित्वंकृतंत्विह — अथाग्रेगिरसंदृष्ट्वातेजोराशिमकल्मषंमुं
चाग्नःमुंचमेस्थानंवचस्तोषकरंशृणु अहंतेतनयःश्रेष्ठो भविष्येप्रथमोमुने बृहस्पतीतिनाम्नावैतथान्येवहवःसुताः
एवमुक्तोमुनिस्तुष्टोवहूनजनयत्सुतान् — वन्हीन्सोजनयामासपुत्रान्पौत्रांस्तथांगिराः — अवापपुनरग्नित्वमग्निरव
स्यांतिथौनृप — सर्वमेवचतुर्दश्यांसंजातंहव्यवाहने हव्यवाहनंदेवानांभूतानांगुह्यचारिणा — तेनेष्टयंतिथिस्तस्मै
रुद्रेणप्रतिपादिता — पूजितेयंतिथिर्देवैर्दैवस्थैश्चनृपैरपि — वलिमांधातृमन्वाद्यैरन्यैश्चनहुषादिभिः — प्रियाशस्त्रहं
तानांचसंग्रामेयत्रकुत्रचित् अज्ञाततिथयोयेचव्यालैर्यचापिहिंसिताः — नदीप्रवाहेपतिताःसमुद्रेपर्वतेध्वनि- येचवै
पतितानांचतोयाग्निदहनेमृताःउद्बंधघातिनोयेचयेवचात्महनोजनाः तेषांशस्तचतुर्दश्यांश्राद्धंसर्वसुखप्रदम् श्राद्धा
न्निचैवदत्तानिदानानिसुवहून्यपि — प्रभूतफलभोज्यानिउपतिष्ठंतितान्नरान् एवंतिथिरियंराजन्नाग्नेयीपठ्यतेद्विजैः
अस्यामनोरथंयंयसमुद्दिश्यह्युपोषति — ददातितस्यतद्वह्निः साग्रेसंवत्सरेगते चतुर्दश्यांनिराहारः — समभ्यर्च्य
त्रिलोचनं पुष्पधूपादिनैवेद्यैरात्रौजागरणेनच — पंचगव्यंनिशिप्राश्यस्वपेद्भूमौविमत्सरः — श्यामाकान्यवाभुक्त्वा
तैलक्षारविवर्जितं — होमंकृष्णतिलैःकार्यः — शतमष्टोत्तरंनृप — अग्नयेहव्यवाहायसोमायांगिरसेनमः — ततः
प्रभातेविमलेस्नाप्यपंचामृतैः — शिवं — पूजयित्वाविधानेन — होमंकृत्वातथैवच — उदीरयेन्मंत्रमेनंकृत्वांशि
रसिचांजलिं — नमस्त्रिमूर्तयेतुभ्यंनमःसूर्याग्निरूपिणे — पुत्रान्यच्छसुखंयच्छमोक्षंयच्छनमोस्तुते — नीराजनंततः

यदाग्निन दृष्टवानकिंनाग्निस्त्वंतदाकृतं भूयोपिकेनकालेनग्राग्निरग्निस्त्वमीश्वरान् ॥ श्रीकृष्णउवाच ॥ ॥
उतथ्यांगिरसाविरमासीद्यातिकरोमहान् अहंविद्यातपोभ्यांवैतथाध्यायश्रुतेनच उतत्थ्येनैवमुक्तस्तुअंगिरा:
प्राहतंमुनिं गच्छावोब्रह्मसदनंनिश्चयस्तत्रनौभवेत् तौगत्वाब्रह्मसदनंमरीचिप्रमुखैर्द्विजैः उपेतंचान्यमुनि
भिर्ब्रह्माराजर्षिसत्तमैः उतत्थ्यःप्राहसब्रह्मकान्नृपांस्ततमानसः ज्यायान्वैकोधर्मोस्माकमिति नौकथ्यतांस्फुटं
अथोवाचमुनौब्रह्मातावुभौक्रुद्धमानसौ आनयध्वंद्रुतंगत्वाविबुधान्भुवनेश्वरान् ततोविवादंपश्यामिभवतांतैः
समेत्यच ततस्तौसहितौगत्यऋषीन्देवान्समानयत् लोकपालान्महेंद्रादीन्सयमान्वरुणानिलौ स्वाध्यान्म
रुद्गणान्विश्वान्नृपीन्भृग्वत्रिनारदान् गंधर्वान्किन्नरान्यक्षान्राक्षसान्दैत्यदानवान् नायातस्तत्रतिग्मांशु:
सर्वचान्यसमागताः दृष्ट्वाचविबुधान्सर्वान्ब्रह्माप्रोवाचतानृषीन् आनयध्वमितः सूर्य सान्नावान्यनवापुनः
एवमुक्तोगतस्तावदुतथ्यः सूर्यमंडलं सगत्वाप्राहमार्त्तंडशीघ्रमेह्यर्कसंसदं सउतत्थ्यमथोवाचकथंब्रह्मन्व्र
जाम्यहं तापिष्यातिचकोह्यत्रभुवनमयिनिर्गते एवमुक्तेमुनिः प्रायाद्यत्रदेवसमागमः आचचक्षेचयत्प्रो
क्तभास्वतातपनप्रति उवाचांगिरसंब्रह्मात्वमेनंशीघ्रमानय सतथोक्तोगतस्तत्रयत्रासौतपतेरविः एह्येहि
भगवन्सूर्यतापिष्येभुवनंत्वहं एवमुक्तोगतःसूर्यो यत्रदेवसमागमः स्थित्वामुहूर्त्तंप्रोवाचकिंवाकार्यमुपस्थि
त पृष्टतमेवमार्त्तंडब्रह्माप्रोवाचसादरं गच्छशीघ्रंनदहातिभुवनंयावदांगिराः दग्धप्रायस्तुगोलोकोवर्त्ततेक
पणापिंगलः पाटलोहरितः शोणः श्वेतोवर्णः प्रतापतः शाकद्वीपं कुरुद्वीपंक्रौंचद्वीपंससपत्तनं द
ग्धमांगिरसासर्वभूयोपिप्रदहिष्यति यावन्नसर्वंदहातिभुवनंतद्वदांगिराः गच्छतावदितःशीघ्रंस्वस्थानंतिष्ठभास्कर
एवमुक्तोथतपनःस्वस्थानमाधिरूढवान् विसृष्टवानांगिरसंसकाशममृताशिनां गत्वांगिराउवाचेदंब्रूतांकिंकरवाण्यहं

देवाआंगिरसंप्राहुस्तेजोराशिमकल्मषं संप्रणम्योचुरग्निस्त्वंकुरुतावन्महीतले पूर्वयथाग्निःकृतवान्त
थात्वमपिसत्तम यावदाग्निंप्रपश्यामःकासौनष्टःकतिष्ठति एवमुक्तःसदेवैस्तुअग्नित्वंकृतवांस्तदा देवैर्दृष्टोय
दाह्यग्निस्तैस्तत्सर्वंनिवेदितं देवकार्यंकृतेतस्मिन्देवावह्निंतथाब्रुवन् अग्नेग्नित्वंकुरुष्वत्वमंगिरास्तुयथापुराएव
मुक्तःसुरैर्वह्निश्चिंतयामासदुःखितः केनमेपहृतंतेजःकेनाग्नित्वंकृतंत्विह अथाग्नेंगिरसंदृष्ट्वातेजोराशिमकल्मषं मं
चाद्यःमुंचमेस्थानंवचस्तोषकरंशृणु अहंतेतनयःश्रेष्ठो भविष्येप्रथमोमुने बृहस्पतीतिनाम्नावैतथान्येवहवःसुताः
एवमुक्तोमुनिस्तुष्टोवहूनजनयत्सुतान् वन्हीन्सोजनयामासपुत्रान्पौत्रांस्तथांगिराः अवापपुनरग्नित्वमग्निर
स्यांतिथौनृप सर्वमेवचतुर्दश्यांसंजातंहव्यवाहने हव्यवाहनदेवानांभूतानांगुह्यचारिणा तेनेष्टयंतिथिस्तस्मै
रुद्रेणप्रतिपादिता पूजितेयंतिथिर्देवैर्दैविस्थैश्चनृपैरपि बलिमाधातुमन्वाद्यैरन्यैश्चनहुषादिभिः प्रियाशस्त्रह
तानांचसंग्रामेयत्रकुत्रचित् अज्ञाततिथयोयेचव्यालैर्येचापिहिंसिताः नदीप्रवाहेपतिताःसमुद्रेपर्वतेध्वनि येचैवं
पतितानांचतोयाग्निदहनेमृताःउद्वंधघातिनोयेचयेवचात्महनोजनाः तेषांशस्तंचतुर्दश्यांश्राद्धंसर्वसुखप्रदम् श्राद्धा
निचैवदत्तानिदानानिसुवहून्यपि प्रभूतफलभोज्यानिउपतिष्ठंतितान्नरान् एवंतिथिरियंराजन्नाग्नेयीपठ्यतेद्विजैः
अस्यामनोरथंयंयसमुद्दिश्यहुपोषति ददातितस्यतद्वन्हिः साग्रेसंवत्सरेगते चतुर्दश्यांनिराहारः समभ्यर्च्य
त्रिलोचनं पुष्पधूपादिनैवेद्यैरात्रौजागरणेनच पंचगव्यनिशिप्राश्यस्वपेद्भूमौविमत्सरः श्यामाकान्नंथवाभुक्त्वा
तलक्षारविवर्जितं होमःकृष्णतिलैःकार्यः शतमष्टोत्तरंनृप अग्नयेहव्यवाहायसोमायांगिरसेनमः ततः
प्रभातेविमलेस्नाप्यपंचामृतैः शिवं पूजयित्वाविधानेन होमंकृत्वातथैवच उदीरयेन्मंत्रमेनंकृत्वाशि
रसिचांजलिं नमस्त्रिमूर्त्त्येतुभ्यंनमःसूर्याग्निरूपिणे पुत्रान्यच्छसुखंयच्छमोक्षंयच्छनमोस्तुते नीराजनंततः

यदाग्निनष्टादेवानांकेनाग्निस्त्वंतदाकृतं भूयोपिकेनकालेनअग्निरग्नित्वमाप्तवान् ॥ श्रीकृष्णउवाच ॥ ॥
उतथ्यांगिरसावेरमासीद्यातिकरोमहान् अहंविद्यातपोभ्यांवैतथाध्यायश्रुतेनच उतथ्येनैवमुक्तस्तुअंगिरा
प्राहतंमुनिं गच्छावोब्रह्मसदननिश्चयस्तत्रनौभवेत् तौगत्वाब्रह्मसदनंमरीचिप्रमुखैर्द्विजैः उपेतंचान्यमुनि
भिर्ब्रह्माराजर्षिसत्तमैः उतथ्यःप्राहसंब्रह्मकान्तृषींस्तत्समानसः ज्यायान्वैकोधर्मोस्माक मिति नौकथ्यतांस्फुट
अथोवाचमुनीब्रह्मातावुभौक्रुद्धमानसौ आनयध्वंद्रुतंगत्वाविबुधान्भुवनेश्वरान् ततोविवादंपश्यामिभवतांतैः
समेत्यच ततस्तांसहितौगत्यऋषीन्देवान्समानयत् लोकपालान्महेंद्रादीन्सयमान्वरुणानिलौ स्वाध्यान्म
रुद्गणान्विश्वान्ऋषीन्भृग्वात्रिनारदान् गंधर्वान्किन्नरान्यक्षान्राक्षसान्दैत्यदानवान् नायातस्तत्रतिग्मांशुः
सर्वचान्यसमागताः दृष्ट्वाचविबुधान्सर्वान्ब्रह्माप्रोवाचतानृषीन् आनयध्वमितः सूर्यं सान्त्वावान्यनवापुनः
एवमुक्तोगतस्तावदुतथ्यः सूर्यमंडलं सगत्वाप्राहमार्त्तंडशीघ्रमेह्यर्कसंसदं सउतथ्यमथोवाचकथंब्रह्मन्व्र
जाम्यहं तपिष्यतिचकोह्यत्रभुवनंमयिनिर्गते एवमुक्तेमुनिः प्रायायत्रदेवसमागमः आचचक्षेचयत्प्रो
क्तंभास्वतातपनंप्रति उवाचांगिरसंब्रह्मात्वमेनंशीघ्रमानय सतथोक्तोगतस्तत्रयत्रासौतपतेरविः एह्येहि
भगवन्सूर्यतापिष्येभुवनंत्वहं एवमुक्तोगतःसूर्यो यत्रदेवसमागमः स्थित्वामुहूर्त्तंप्रोवाचकिंवाकार्यमुपस्थि
तं पृष्टतमेवमार्त्तंडंब्रह्माप्रोवाचसादरं गच्छशीघ्रंनदहतिभुवनंयावदंगिराः दग्धप्रायस्तुगोलोकोवर्त्ततेक
पर्णापिंगलः पाटलोहरितः शोणः श्वेतोवर्णः प्रतापतः शाकद्वीपं कुरुद्वीपंक्रौंचद्वीपंसपत्तनं द
ग्धमांगिरसासर्वंभूयोपिप्रदहिष्यति यावन्नसर्वंदहतिभुवनंतद्ददंगिराः गच्छतावदितःशीघ्रंस्वस्थानेतिष्ठभास्कर
एवमुक्तोथतपनःस्वस्थानमधिरूढवान् विसृष्टवानंगिरसंसकाशममृताशिनां गत्वांगिराउवाचेदंब्रूतकिंकरवाण्यहं

संप्रणम्योचुरग्निस्त्वंकुरुतावन्महीतले पूर्वयथाग्निःकृतवानंत
देवाआंगिरसंप्राहुस्तेजोराशिमकल्मषं एवमुक्तःसदेवैस्तुअग्नित्वंकृतवांस्तदा देवैर्दृष्टोय
थात्वमपिसत्तम यावदाग्निंप्रपश्यामःकासौनष्टःकतिष्ठति एवमुक्तःसदेवैस्तुअग्नित्वंकृतवांस्तदा अग्रेग्नित्वंकुरुष्वंत्वमंगिरास्तुयथापुराएव
दाह्यग्निस्तैस्तत्सर्वंनिवेदितं देवकार्य्येकृतेतस्मिन्देवावह्निंनथाब्रुवन् अथाग्नेंगिरंसंदृष्ट्वातेजोराशिमकल्मषं मं
मुक्तःसुरैर्वह्निश्चिंतयामासदुःखितः केनमेपहृतंतेजःकेनाग्नित्वंकृतंत्विह अथाग्रेगिरंसंदृष्ट्वातेजोराशिमकल्मषं
चाद्यःमुंचमेस्थानंवचस्तोषकरंशृणु अहंतेतनयःश्रेष्ठो भविष्येप्रथमोमुने वृहस्पतीतिनाम्नावैतथान्येवहवःसुताः
एवमुक्तोमुनिस्तुष्टोवहूनजनयत्सुतान् वन्हीन्सोजनयामासपुत्रान्पौत्रांस्तथांगिराः अवापपुनरग्नित्वमग्निर
स्यातिथौनृप सर्वमेवचतुर्दश्यांसंजातंहव्यवाहनं हव्यवाहनदेवानांभूतानांगुह्यचारिणां तेनेष्टयंतिथिस्तस्मै
रुद्रेणप्रतिपादिता पूजितेयतिथिर्देवोदिविस्थैश्चनृपैरपि वलिमांधातृमन्वाद्यैरन्यैश्चनहुषादिभिः प्रियाशस्त्रह
तानांचसंग्रामेयत्रकुत्रचित् अज्ञाततिथयोयेचव्यालैर्यश्चापिहिंसिताः नदीप्रवाहेपतिताःसमुद्रेपर्वतेध्वनि येचैवै
पतितानांचतोयाग्निदहनेमृताःउद्बंधघातिनोयेचयेवचात्महनोजनाः तेषांशस्तंचतुर्दश्यांश्राद्धंसर्वसुखप्रदम् श्राद्धा
निचैवदत्तानिदानानिसुवहून्यपि प्रभूतफलभोज्यानिउपतिष्ठंतितान्नरान् एवंतिथिरियंराजन्नाग्नेयीपठ्यतेद्विजैः
अस्यामनोरथंयंयंसमुद्दिश्यह्युपोषति ददातितस्यतद्वह्निः साग्रसंवत्सरेगते चतुर्दश्यांनिराहारः समभ्यर्च्य
त्रिलोचनं पुष्पधूपादिनैवेद्यैरात्रौजागरणेनच पंचगव्यंनिशिप्राश्यस्वपेद्भूमौविमत्सरः श्यामाकान्नंयवाभुक्त्वा
तैलक्षारविवर्जितं होमःकृष्णतिलैःकार्य्यः शतमष्टोत्तरंनृप अग्नयेहव्यवाहायसोमायांगिरसेनमः ततः
प्रभातेविमलेस्नात्वापंचामृतैः शिवं पूजयित्वाविधानेन होमंकृत्वातथैवच उदीरयेन्मंत्रमेनंकृत्वांशि
रसिचांजलिं नमस्त्रिमूर्त्तयेतुभ्यंनमःसूर्याग्निरूपिणे पुत्रान्यच्छसुखंयच्छमोक्षंयच्छनमोस्तुते नीराजनंततः

कृत्वा भोजयित्वाद्विजोत्तमान् शक्तितोदक्षिणांदत्त्वा पश्चाद्भुंजीतवाग्यतः एवंसंवत्सरस्यांते कृत्वास
वंयथोदितं सौवर्णंकारयेद्देवंत्रिनेत्रंशूलपाणिनं वृषस्कंधगतंसोमासितवस्त्रयुगान्वितं चंदनेनानुलिप्तांगं सि
तमाल्योपशोभितं स्थापयित्वाताम्रपात्रेब्राह्मणायानिवेदयेत् सर्वकालिकमेतत्तेकथितंव्रतमुत्तमं संवत्सरस
माप्तिंहिव्रतस्यतुयदाभवेत् चीर्णेव्रतेस्मिन्यत्पुण्यंतन्निबोधजनाधिप कालेगतेवहुतिथेतीर्थेचमरणंभवेत् मृतश्च
दिव्यदेहस्थोदिव्यालंकारभूषितः दिव्यनारीगणवृतोविमानवरमास्थितः दिविदेवैःपरिवृतःक्रीडतेग्निपुरेचिरं
इहागत्यचकालेतिजातोजातोनृपोभवेत् दातायज्वाकृतीदक्षोब्रह्मण्योब्राह्मणप्रियः श्रीमानग्निसमोधीमान्पुत्रपौत्र
समन्वितः पत्नीगणसमायुक्तश्चिरंभद्राणिपश्यति यद्दुर्लभाभुविसुरोरगजंगमानांकामाअनामयगुणेनयु
ताः सदैव तानाप्नुवंतिशिवभूतातिथौसुरेशंसपूज्यसोमतिलकंविधिवन्मनुष्यः इतिभाविष्योत्तरेशिवाग्नि
प्रियचतुर्दशीव्रतम् अथपूर्णिमाव्रतंनारदीये सनकउवाच अन्यद्व्रतवरंवक्ष्येशृणुष्वमुनिसत्तम सर्वपा
पहरंपुण्यं सर्वदुःखनिवर्हणं ब्राह्मणक्षत्रियविशांशूद्राणांयोषितांतथा समस्तकामफलदंसर्वव्रतफलप्रदं दुः
स्वप्ननाशनंधन्यंदुष्टग्रहनिवारणं सर्वलोकेषुविख्यातंपूर्णिमाव्रतमुत्तमं येनचीर्णेनपापानांराशिकोटिः प्रण
श्यति मार्गशीर्षेसितपक्षे पूर्णायांनियतः शुचिः स्नानंकुर्याद्यथाचारंदंतधावनपूर्वकं शुक्लांबरधरः शुद्धो
गृहमागत्यवाग्यतः प्रक्षाल्यपादावाचम्यस्मरन्नारायणंशुभं नित्यंदेवार्चनंकृत्वापश्चात्संकल्पपूर्वकं लक्ष्मी
नारायणंदेवमर्चयेद्भक्तिभावतः आवाहनासनाद्यैश्चगंधपुष्पादिभिर्व्रती ॐनमोनारायणायेतिपूजयेद्भक्तितत्प
रः गीतैर्वाद्यैश्चनृत्यैश्चपुराणपठनादिभिः स्तोत्रैराराधयेद्देवंव्रतकृत्सुसमाहितः देवस्यपुरतः कृत्वा स्थंडि
लंचतुरस्रकं अरत्निमात्रंतत्राग्निंस्थापयेद्गृह्यमार्गतः आज्यभागांतपर्यंतंकृत्वापुरुषसूक्ततः वरुणायतिलैश्चापि

घृतेनजुहुयात्तथा ॥ एकवारंद्विवारंवा त्रिवारंवापिशक्तितः होमंकुर्यात्प्रयत्नेनसर्वपापनिवृत्तये ॥ प्रायश्चित्तादि
कंसर्वंस्वगृह्योक्तविधानतः होमंसमाप्यविधिवत्शांतिसूक्तंजपेद्बुधः ॥ पश्चाद्देवंसमागम्य पुनः पूजांप्रकल्पये
त् तथोपवासंदेवायह्यर्पयेद्भक्तिसंयुतः पौर्णमास्यांनिराहारः स्थित्वादेवतवाज्ञया । मोक्षामिपुंडरीका
क्षपरेन्हिशरणंभव ॥ इतिविज्ञाप्यदेवायअर्घ्यदद्यात्तथेंदवे जानुभ्यामवनींगत्वाशुक्लपुष्पाक्षतान्वितं ॥ क्षीरोदा
र्णवसंभूतआत्रिगोत्रसमुद्भव गृहाणार्घ्यंमयादत्तंरोहिण्यासहितप्रभो ॥ एवमर्घ्यंप्रदायेंदोः प्रार्थयेत्प्रांजलि
स्थितः ॥ तिष्ठन्पूर्वमुखोभूत्वापश्यन्निंदुंचनारद नमः शुक्लांशवेतुभ्य द्विजराजायतेनमः ॥ रोहिणीपतयेतुभ्यं
लक्ष्मीभ्रात्रेनमोस्तुते ततश्चजागरंकुर्यात्पुराणश्रवणादिभिः जितेंद्रियश्चसंशुद्धः पाखंडालोकवर्जितः त
तः ॥ प्रातः प्रकुर्वीत स्वाचारंचयथाविधि पुनः संपूजयेद्देवं यथाविभवविस्तरं ब्राह्मणान्भोजयेद्भक्त्या
ततश्चप्रयतोनरः बंधुभृत्यादिभिःसार्धं स्वयंभुंजीतवाग्यतः एवंपौषादिमासेषुपूर्णमास्यामुपोषितः अ
र्चयेद्भक्तिसंयुक्तोनारायणमनामयं एवंसंवत्सरंकृत्वाकार्तिक्यांपूर्णिमादिने मंडपंकारयेद्दिव्यंचतुरस्रंसुमंगलं
शोभितंपुष्पमालाभिः पताकाध्वजराजितं बहुदीपसमाकीर्णं किंकिणीजालशोभितं दर्पणैश्चामरैश्चैव
कलशैश्चसमावृतं तन्मध्येसर्वतोभद्रंपंचवर्णविराजितं जलपूर्णंततः कुंभं न्यसेत्तस्योपरिद्विज ॥ पिधाय
कुंभंवस्त्रेणसुसूक्ष्मेणविशोभितं हेम्नावारजतेनापि तथाताम्रेणवाद्विज लक्ष्मीनारायणंदेवंकृत्वातस्योप
रिन्यसेत् ॥ पंचामृतेनसंस्नाप्या भ्यर्च्यगंधादिभिः क्रमात् भक्ष्यभोज्यादिनैवेद्यं भक्तितः संयतेंद्रियः जा
गरंचतथाकुर्यात्सम्यक्श्रद्धासमन्वितः ॥ परेन्हिप्रातर्विधिवत्पूर्ववद्विष्णुमर्चयेत् आचार्यायप्रदातव्याप्रतिमा
दक्षिणान्विता ॥ ब्राह्मणान्भोजयेच्छक्त्याविभवेसत्यवारितं ॥ तिलदानंप्रकुर्वीतयथाशक्त्यासमाहितः कुर्याद

शौचविधिंवांतिलहोमेविचक्षणः एवंकृत्वानरःसम्यक् लक्ष्मीनारायणव्रतं इहभुक्त्वामहाभोगान्पुत्रपौत्रसमन्वितः
सर्वपापविनिर्मुक्तः कुलायुतसमन्वितः प्रयातिविष्णुभवनंयोगिनामपिदुर्लभं ॥ इतिनारदीयपुराणेपूर्णिमाव्रतम्
अथप्रतिपदादितिथिषुकृत्यविशेषोभविष्योत्तरे ॥ श्रीकृष्णउवाच ॥ तिथिकृत्यमिदानींतेकथयामियुधिष्ठिर
सर्वपापप्रशमनंसर्वविघ्नविनाशनं मानसंवाचिकंवापिकर्मजयदघंभवेत् सर्वंप्रशममायातिदानेनानेनपांडव
श्रावणेकार्तिकेचैववैशाखेफाल्गुनेतथा सितपक्षात्प्रभृतितद्दातव्यंपुण्यवर्धनम् वित्तंश्रद्धासहायस्तुपात्रप्राप्ति
स्तथैवच दानकालःसदैवेहकथितस्तत्त्वदर्शिभिः तीर्थेवायतनेगोष्ठेगृहीत्वानियतात्मवान् योददातिनरश्रेष्ठत
दानंत्वायकल्प्यते अग्निमिष्ट्वाचहुत्वाचप्रतिपद्यामितंघृतं हविष्यंसर्वधान्यानिप्राप्नुयादमितंधनं प्रतिपत्सुद्धि
जान्पूज्यपूजयित्वाप्रजापतिं सौवर्णमरविंदंचकारयित्वाष्टपत्रकं कृत्वाचौदुंबरेपात्रेसुगंधघृतपूर्वकं पुष्पैर्धूपैः
पूजयित्वाविप्रायप्रतिपादयेत् अनेनविधिनादत्त्वाकमलंकमलालयाम् ईप्सितांल्लभतेकामान्निष्कामोब्रह्मचा
प्नुयात् ब्रह्माणंचद्वितीयायांसंपूज्यब्रह्मचारिणं भोजयित्वाचविद्यानांसर्वासांपारगोभवेत् वह्निंपूज्याद्विती
यायांभूर्भुवःस्वरितिक्रमात् तिलाज्येनशतंहुत्वादत्त्वापूर्णाहुतिंततः वैश्वानरंतुसौवर्णंस्थापयेताम्रभाजने गुडाज्य
पूरितेराजंस्तोयपूर्णघटोपरि पूजयित्वावस्त्रमाल्यैर्भक्ष्यभोज्यैरनेकधा ततस्तद्ब्राह्मणेदद्याद्वह्निर्मेप्रीयतामिति या
वज्जन्मकृतात्पापान्मुच्यतेनात्रसंशयः मृतोवह्निपुरंयातिप्राहेदंनारदोमुनिः तृतीयायांचविप्रेशंधनाढ्योजाय
तेभृशं ॥ क्रयादिव्यवहारेणलाभोबहुगुणोभवेत् तृतीयायांमहाराजगौरींस्वर्णमयींशुभां स्थापयित्वाताम्र
पात्रेलवणोपरिविन्यसेत् वस्त्रैःपुष्पैःपूजयित्वानैवेद्यंविनिवेद्यच ततस्तुब्राह्मणेदद्याद्गुडंपार्श्वेनिवेदयेत् रक्तवस्त्र
युगच्छन्नंकुंकुमेनाविभूषितं पुष्पैर्धूपैःसनैवेद्यैःपूजयित्वाद्विजातये दत्त्वायत्फलमाप्नोतिपार्थतत्केनगण्यते प्रासाद

यत्रसौवर्णा नद्य पायसकर्दमाः गधर्वाप्सरसोन्यत्रतत्रतेयांतिमानवा स्वर्गादिहैत्यसंसारेसुरूप सुभगोभवेत्
दाताभोक्तावहुधन पुत्रपौत्रसमन्वित नारीवातद्गुणैर्युक्ताभवतीहनसशय गणेश पूजित कुर्याच्चतुर्थ्यांसर्वक
र्मसु -अविघ्नविद्रुपेविघ्नंकायेंचास्यनकर्हिचित् चतुर्थ्यांवारणंहैमंपलादूर्ध्वंसुशोभनं कारयित्वांकुशयुतंतिलद्रोणो
परिस्थितं । वस्त्रैःपुष्पैःपूजयित्वानैवेद्यविनिवेद्यच ततस्तुब्राह्मणेदत्त्वागणेश प्रीयतामिति कार्य्यारंभेपुसर्वेषु
तस्यविघ्नंनजायते । वारणा सप्तजन्मानिभवंतिमदविह्वलाः वरुणेंद्रसमोलोकेत्रैलोक्यविजयीभवेत् ४ ना
गानिष्ठ्वाचपचम्यांनाविषैरभिभूयते । स्त्रियवालभेतपुत्रंश्रियचपरमांलभेत ५ पचम्यांपन्नगंस्वर्णंस्वर्णेनकनका
रयेत् क्षीराज्यपात्रमध्यस्थंपूज्याविप्रायदापयेत् द्विजंसपूज्यवसुभि प्रणिपत्यक्षमापयेत् इहलोकेपरेचैवदा
नमेतत्सुखावह नागोपद्रवशांत्यर्थंसर्वदुष्टनिवर्हणं प्रायश्चित्तमपिप्रोक्तनागदष्टस्यशंभुना सपूज्यकार्त्तिके
यंचाद्विज षष्ठ्यांप्रजापते मेधावीरूपसपन्नोदीर्घायु कीर्तिवर्धनः षष्ठ्यांशक्तिसनोपेतंकुमारंशिखिवाहन कार
यित्वायथाशक्तिहेममालाविभूषितं तंडुलद्रोणशिखरेवासोभि पूज्यशक्तितः नमस्कृत्यततोदद्याद्ब्राह्मणायकुटुं
विने शूद्रोब्राह्मणतामेतिब्राह्मणश्चेष्टलोकभाक् ६ सप्तम्यांपूज्यऋक्षेशचित्रभानुंदिवाकरं सूर्यलोकमवाप्नोति
सूर्येणसहमोदते गंधर्वास्तुष्टिमायांतिदानेनानेनपांडव ७ अष्टम्यापूजितोदेवोगोभूतावरणोहरः ज्ञानद
दातिविपुलंकामान्सयच्छतेगुणान् मृत्युहाज्ञानदश्चैवपापहाचप्रपूजित ८ अष्टम्यांवृपभस्यैवपृष्ठेगंगाध
रंधुरं सितवस्त्रयुगच्छन्नंघंटाभरणभूषितं दद्यात्प्रणम्याविप्रायप्रीयतांवृषभध्वजः प्रदक्षिणांतत कृत्वाऽग्र
तस्तमनुव्रजेत् दानेनानेनजृंपतेशिवलोकंसुदुर्लभं वृपस्कंधेप्रतिष्ठंतिभुवनानिचतुर्दश तस्माद्वृपप्रदानेनदत्ता
भवतिभूरियं ८ दुर्गासंपूज्यदुर्गाणिनवम्यांतरतीच्छता सग्रामेव्यवहारेचसदाविजयमादिशेत् नवम्यांकां

चनंसिहंकारयित्वास्वशक्तितःमुक्ताफलाष्टकयुतंनीलवस्त्रावगुंठितं द्विजातिप्रवरायेत्थंसर्वान्कामानवाप्नुयात् कांता
रावनदुर्गेषुचौरव्यालाकुलेपथि हिंसकातंनहिंसंतिदानस्यास्यप्रभावतः मर्त्यौदिविपुरंयातिपूज्यमानःसुरासुरैःपुण्य
क्षयादिहागत्यराजाभवतिधार्मिकः९दशम्यांधर्मराजश्चसर्वव्याधिहरोध्रुवं नरकादपमृत्योश्चसमुद्धरतिमानवम्
१० दशम्यांनृपशार्दूलदशैषाःस्वर्णनिर्मिताः लवनेनगुडक्षीरनिष्पावांवुतिलैस्तथा गव्यत्रयंतंडुलैश्चमाषान्नेनस
मन्विताः संपूज्यवस्त्रपुष्पाद्यैर्द्विजायप्रतिपादयेत् अनेनाविधिनायस्तुपुमांस्त्रीवाथवापुनः निर्वापयतिराजेंद्र
तस्यपुण्यफलंश्रृण इहकामानवाप्नोतिप्रीत्यास्वर्गेमहीयते सफलास्तस्यसर्वाशायाःकाचिन्मनसाकृता ततः
स्वर्गादिहागत्यकुलेमहतिजायते एकादश्यांयथोद्दिष्टाविश्वेदेवाःप्रपूजिताः प्रजांपशून्धनंधान्यंप्रयच्छंतिमहीं
तथा ११ एकादश्यांहरिंमर्त्यःकारयित्वाहिरण्मयं यथाशक्त्याताम्रपात्रघृतेनपरिपूरितं पंचाग्निनिरतंविप्रं
पुराणज्ञंविशेषतः दत्त्वाकिंवहुनोक्तेनविष्णुलोकेमहीयते १२ द्वादश्यांविष्णुमिष्ट्वाचसर्वदाविजयीभवेत् पूज्य
श्चसर्वदेवानांयथागोपतिगोहरः गोष्टपंमाहेपंहेमसप्तधान्यानियानिच पुष्पाणिचपवित्राणिगंधांश्चोच्चावचां
स्तथा यथाशक्त्याप्यलंकृत्यवस्त्रेणाछाद्यतन्नरः द्वादश्यांद्वादशैतानिब्राह्मणेभ्योनिवेदयेत् एकस्यत्वांमहा
राजतत्फलंत्वंनिशामय इहकीर्त्तिपरांप्राप्यभुक्त्वाभोगान्यथेप्सितान् अंतेविष्णुपुरींयातिपूज्यमानोप्सरो
गणैः कर्मक्षयादिहागत्यराजाभवतिधार्मिकः यज्ञयाजीदानपतिर्जीवेच्चशरदांशतं कामदेवंत्रयोदश्यांसर्वै
श्वर्यसमन्वितः वहुपुत्रोवहुधनस्तथास्यान्नात्रसंशयः १३ स्नापयित्वाब्राह्मणांस्तुत्रयोदश्यांत्रयोदश तान्प्र
छाद्यनवैर्वस्त्रैर्गंधपुष्पैस्तथार्पयेत् भोजयित्वातुमिष्टान्नदक्षिणांविनिवेदयेत् प्रेतनाथयरौद्रायतथावैवस्वता
यच यमायचनमस्तेस्तुनमस्तेकर्मसाक्षिणे उच्चार्यश्रद्धयायुक्तःप्रणिपत्यविसर्जयेत् यःकरोतिमहाराजपूजा

मेतामतोरमां यस्मायससुखंमर्त्यःस्थित्वाव्याधिविवर्जितः यममार्गेनतापंचदुःखमाप्नोत्यसौपुमान् नपश्यतिप्रेत
मुखंपितृलोकंसगच्छति कर्मक्षयादिहागत्यसुखीचपुत्रवान्भवेत् दृष्ट्वेश्वरंचतुर्दश्यांसर्वैश्वर्यसमान्वितः बहुपुत्रोबहु
धनोनरःस्यान्नात्रसंशयः १४ माहेयंचशुभंकुंभचतुर्दश्यांपयोभृतं सुवर्णेनचसंयुक्तंनववस्त्रावभूषितं घंटा
भरणशोभाढ्यंवृषभेनसमन्वितं योदद्याच्छिवभक्तायब्राह्मणायकुटुंबिने एतद्दत्वानरश्रेष्ठशिवलोकेमहीयते तत्र
स्थित्वाचिरंकालंक्रमादेत्यमहीतले आरोग्यधनसंयुक्तोकुलेमहतिजायते सर्वकामसमृद्धार्थोयावज्जन्मशतत्रयं
१४ पौर्णमास्यांचयःसोमंपूजयेद्भक्तिमान्नरः सर्वैश्वर्यसमायुक्तःकांतिमानभिजायते १५ पौर्णमास्यांवृषोत्स
र्गंकारयित्वाविधानतः चंद्रराजतनिष्पन्नंपलेनैकेनशोभनं पूजयेद्गंधकुसुमैर्नैवेद्यंविनिवेद्यच दद्याद्विप्रायस
त्कृत्यवासोलंकारभूषणैः मंत्रेणानेनराजेंद्रतन्निबोधनृपोत्तम क्षीरोदार्णवसंभूतत्रैलोक्यगणदीपक उमापते
शिरोरत्नशिवंयच्छनमोनमः दानेनानेननृपतेभ्राजतेचंद्रवद्दिवि अप्सरोभिःपरिवृतोयावदाभूतसंप्लवं १५
पितरःस्वदिनेपिंडैरिष्टाःकुर्वंतिसर्वदा प्रजावृद्धिधनंरक्षांमानुष्यंफलमेवच ३० अत्रापितृव्रतंहेमाद्रौवाराहे-स
र्गादौब्राह्मणासृष्टास्तमूचुःपितरस्तदा वृत्तिंनाब्रूहिभगवन्कंवर्तामहेवयं ब्रह्मोवाच अमावस्यादिनंवोस्तु
तस्यांकुशतिलोदकैः तर्पितामानुषैस्तृप्तिपरांगच्छतनान्यथा तिलादेयास्तथैतस्यामुपोष्यपितृभक्तितः चिरस्य
तस्यसंतुष्टावरंयच्छतमाचिरं तस्मादस्यांतिथौविद्वान्दानमेतत्समाचरेत् उपवासंविनाप्येतेभवंत्युक्तफलप्रदाः
पूजयाजपहोमैश्चतोषिताःशक्तितःसदाइति दानान्यमूनिविधिवत्क्रमशोनरेंद्रयच्छंतियेद्विजवरायविशुद्धसत्वाः
तेब्रह्मविष्णुभुवनेषुसुखंविहृत्ययांत्यैकतांसहशिवेननसंशयोमे इतिश्रीभविष्योत्तरोक्तंसकलतिथिकृत्यानि अथ
प्रतिपदादितिथीनांदेवतापूजादिमंत्राः त्वन्नोअग्नेइत्यस्यहिरण्यस्तूपऋषिस्त्रिष्टुप्छंदः त्वन्नोअग्नेवरुणस्यवि

द्वान्देवस्यहेडोअवयासिसीष्ठाःयजिष्ठोवन्हितमःशोशुचानोविश्वेद्वेषांᳪसिप्रमुमुग्ध्यस्मत् अग्निस्तुस्वर्णवर्णाभः
संप्तर्चिःसप्तहस्तकःस्वाहासखोमेषवाह शक्त्यन्नस्त्रुक्स्त्रुवादिधृक् अग्नयेनमः१ द्वितीयायांब्रह्मा ब्रह्मयज्ञानमित्यस्य
गौत्तमोवामदेवश्चऋषिस्त्रिष्टुप्छंदः ब्रह्मादेवता ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआव सुबुध्न्यउप
माअस्यविष्ठाःसतश्चयोनिमसतश्चविव - - ब्रह्मणेनमः पद्मासनस्थोजटिलोब्रह्माध्येयश्चतुर्मुखः अक्षमालांस्त्रुवं
विभ्रत्पुस्तकंचकमंडलुं वासःकृष्णाजिनंतस्यपार्श्वेहंसस्तथैवच २ तृतीयायागौरी गौरीमिमायेतिदीर्घतमऋ-
षिः त्रिष्टुप्छंदः गौरीदेवता गौरीमिमायसलिलानि तक्षत्येकपदीद्विपदीचतुष्पदी अष्टापदीनवपदीवभूवुषी
सहस्राक्षपरमेव्योमन् गौरींशंखेंदुवर्णाभांशर्वरीशनिषेवितां कृष्णपद्मासनासीनांसाक्षसूत्रकमंडलुं वरदां-
ज्ञानरूपांतांसर्वमाल्याप्रियांसदा गौर्य्यैनमः ३ चतुर्थ्यांगणपतिः गणानांत्वेत्यस्यगृत्समदऋषिर्जगतीछंदः
गणपतिर्देवता- गणानांत्वागणपतिᳪहवामहे प्रियाणांत्वाप्रियपतिᳪहवामहे निधीनांत्वानिधिपतिᳪहवामहे
वसोममआहमजानिगर्भधमात्वमजासिगर्भधं पाशांकुशकल्पलताविषाणंदधच्चतुंडाहितबीजपूरः रक्तस्त्रिनेत्र
स्तरुणेंदुमौलिर्हारोज्वलोहस्तिमुखोवताद्वः गणपतयेनमः ४ पंचम्यांनागाः नमोस्तुसर्पेभ्यइत्यस्यप्रजापति
ऋषिः अनुष्टुप्छंदः सर्पादेवताः नमोस्तुसर्पेभ्योयेकेचपृथिवीमनुयेअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः सर्पा
रक्तास्त्रिनेत्राश्चद्विभुजाःपीतवस्त्रकाः फलकासिधराःश्लक्ष्णाभास्वत्फणविभूषिताः सर्पेभ्योनमः षष्ठ्यांस्कंदः
यदस्कंदइतिमेधातिथिऋषिर्गायत्रीछंदः स्कंदोदेवता यदस्कंद पृथिवीजायमानउद्यत्समुद्रादुतवापुरीषात् श्ये
नस्यपक्षाहरिणस्यबाहुउपस्तुत्यंमहीजाततेअर्वन् वराभयकरःसाक्षाद्द्विभुजःशिखिवाहनः किरीटीकुंडली
देवोदिव्याभरणभूषितः कुमारःषण्मुखोध्येयः शिखंडकविभूषणः पताकांवैजयंत्याचशक्तिश्चैवतुवामयोः

कुमारायनमः ॥ ६ ॥ सप्तम्यांरविः आकृष्णेतिहिरण्यस्तूपऋषिर्गायत्रीछंदः सूर्योदेवता आकृष्णेनर जसावर्त्तमानोनिवेशयन्नमृतंमर्त्यंचहिरण्ययेनसवितारथे नादेवोयातिभुवनानिपश्यन् पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः सप्ताश्वरथसंस्थश्चद्विभुजःस्यात्सदारविः सूर्य्यायनमः ॥ ७ ॥ अष्टम्यांशिवः त्र्यंबकमितिवशिष्ठऋषिर्गायत्रीछंदः रुद्रोदेवता त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं उर्वारुकमिवबंधनान्मृत्यो र्मुक्षीयमामृतात् पंचवक्त्रोवृषारूढःप्रतिवक्त्रंत्रिलोचनः कपालहस्तःखट्वांगीचंद्रमौलिःसदाशिवः शिवाय नमः ॥ ८ ॥ नवम्यांदुर्गा अंबेअंबालिकेइत्यस्यप्रजापतिऋषिः अनुष्टुप्छंदः दुर्गादेवता अं बेअंबिकेअंबालिकेनमानयातकश्चनससस्त्यश्वकः सुभद्रिकांकांपील्लवासिनीं कालाभ्राभाकटाक्षैररि कुलभयदामौलिबद्धेंदुरेखा शंखंचक्रंकृपाणंत्रिशिखमपिकरैरुद्वहंतींत्रिनेत्रां सिंहस्कंधाधिरूढांत्रिभुवनमखि लंतेजसापूरयंतीं ध्यायेद्दुर्गांजयाख्यांत्रिदशपरिवृतांसेवितांसिद्धिकामैः दुर्गायैनमः ॥ ९ ॥ दशम्यांयमः यमायेतिविवस्वानृषिः त्रिष्टुप्छंदः यमोदेवता यमायत्वामखायत्वासूर्य्यस्यत्वातपसे देवस्त्वासविता मध्वानक्तुपृथिव्याःसंस्पृशस्पाहिअर्चिरसिशोचिरसि ॥ १० ॥ एकादश्यांविश्वेदेवाः ओमासश्चर्षणी तिमधुच्छंदाः ऋषिर्गायत्रीछंदः विश्वेदेवादेवता ओमासश्चर्षणीधृतोविश्वेदेवासआगत दाश्वांसोदाशुषः सुतं विश्वेदेवाश्चसर्वेपिदक्षिणेवाणपाणयः ध्यातव्यावामपाणौतुशरासनयुताःसदा विश्वेभ्योदेवेभ्यो नमः ॥ ११ ॥ द्वादश्यांविष्णुः इदंविष्णुरित्यस्य मेधातिथिऋषिर्गायत्रीछंदः विष्णुर्देवता इदं विष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरे विष्णुःकौमोदकीखड्गपद्मशंखकरःक्रमात् प्रदक्षिणंदक्षि णाधःकरादारभ्यनित्यशः विष्णवेनमः त्रयोदश्यांकामः ओंकामगायत्र्याःसंमोहनऋषिर्गायत्रीछंदः

कामोदेवताकामार्चनेविनियोगः पुष्पबाणायविद्महेकामदेवायधीमहितन्नोनंगःप्रचोदयात् नमोस्तुपुष्प
बाणायजगदाह्लादकारिणे मन्मथायजगन्नेत्ररतिप्रीतिप्रदायिने आप्यायस्वेतिचंद्रमंत्रेणचंद्रपूजावा ॥ १३
चतुर्दश्यांशिवः त्र्यंबकमितिमंत्रस्यवसिष्ठऋषिर्गायत्रीछंदः शिवोदेवताशिवार्चनेविनियोगः त्र्यंबकंयजाम
हे० पंचवक्त्रोवृषारूढःप्रतिवक्त्रंत्रिलोचनः कपालहस्तःखट्वांगीचंद्रमौलिःसदाशिवः १४ अमायांपितरःउदीरिते
तिमंत्रस्यशंखऋषिः स्वधादेवता त्रिष्टुप्छंदःपितृगणार्चनेविनियोगःउदीरितांउत्परासउन्मध्यमाःसोम्याः
सन्नसुयइयुरवृकाऋतज्ञास्तेनोवतुपितरोहवेषु ३० पूर्णिमायांशशी आप्यायस्वेतिमंत्रःश्वेतःश्वेतांबरधरोद
शाश्वःश्वेतभूषणः गदापाणिर्द्विबाहुश्चकर्तव्योवरदःशशी अथमलमासव्रतानि युधिष्ठिरउवाच कथंवाचरितं
ब्रह्मन्मलमासेव्रतादिकं तत्सर्वंब्रूहिमेविप्रसर्वलोकहितायच मार्कंडेयउवाच विस्तरेणार्चनफलंकाविभिन्नैर्वश
क्यते वक्तुंजनार्दनस्यैदाकिंपुनःप्राकृतैर्जनैः प्रतिपत्तिथिमारभ्यमासमेकंजनार्दनं अर्चयेद्गंधपुष्पाद्यैःपायसे
नससर्पिषा विप्रांस्तुभोजयेत्पश्चाद्दक्षिणाभिश्चतोषयेत् एवंव्रतंमासमेकंकुर्याद्दानैर्विचित्रकैः अंतेभूतदिनेप्रा
प्तेउपोष्यसुसमाहितः पुण्येह्निप्रातरुत्थायकुर्यात्पूर्वाह्णिकींक्रियां गृहीत्वानियमंपश्चाद्वासुदेवंहृदिस्मरन्
त्रिंशद्धर्मनिरतान्ततोविप्रान्निमंत्रयेत् सपत्नीकान्सदाचारान्सुरूपांश्चसुविद्यकान् वेदाध्ययनसंपन्नान्
कुलीनज्ञातिसंभवान् ततोमध्याह्नवेलायांकृत्वामाध्याह्निकींक्रियां पुष्पमंडपिकांकृत्वाविचित्रैस्तोरणादि
भिः तस्मिन्सुशोभितेसर्वेमंडलेतूर्यनादिते सुलक्षणंलिखेत्तत्रसर्वतोभद्रमंडलं स्थापयेदव्रणंकुंभंपंचरत्नसम
न्वितं तस्योपरिन्यसेत्पात्रंदेवंतत्रप्रपूजयेत् आदौस्वस्त्ययनंकृत्वापूजांतत्रसमारभेत् प्राणानायम्यविधिवन्म
नःसंकल्पपूर्वकं उपचारैःषोडशभिःपूजयेच्चजनार्दनं गंधतोयेनसंस्नाप्यशुभैः पंचामृतैस्तथा स्थापयेद

व्रणंकुंभंवस्त्रयुग्मेनवेष्टितं ततस्त्रिंशन्नामानिपूजयेच्चयथाविधि जिष्णुंविष्णुंमहाविष्णुंहरिंकृष्णमधोक्षजं
केशवं माधवं राममच्युतं पुरुषोत्तमं गोविंदं वामनं श्रीशं श्रीकंठं विश्वसाक्षिणं नारायणं मधु-
रिपुमनिरुद्धं त्रिविक्रमं वासुदेवं जगद्योनिं शेषतल्पगतंतथा संकर्षणंचप्रद्युम्नंदैत्यारिंविश्वतोमुखं जना
र्दनं धराधारं श्रीधरंचसमर्पयेत् कुंभस्थितेकांस्यपात्रे पूजयेच्चजनार्दनं आच्छाद्यवस्त्रयुग्मेनपीते
नचयथाविधि विष्णवेचततोदद्यादुपवीतेचशोभने चंदनेनसुगंधेनपुष्पैर्नानाविधैर्नृप धूपैर्नानाविधै
र्दीपैःपूजयेच्चयथाविधि मिष्टान्नैःश्वेतनैवेद्यैर्नागवल्लिदलान्वितैः घंटामृदंगनिर्घोषैःशंखध्वनिसमन्वितैः आ
रार्तिकंप्रकुर्वीतकर्पूरागुरुचंदनैः प्रदक्षिणनमस्कारान्मंत्रपुष्पंयथाविधि ताम्रपात्रस्थिततोयंचंदनाक्षतपुष्पकैः
अर्घ्यंदद्यात्सपत्नीकःप्रहृष्टेनांतरात्मना नारंगैर्नालिकेलैश्चफलैर्नानाविधैःशुभैः पंचरत्नसमायुक्तंजानुनीस्था
प्यभूतले आरोप्यजालेहस्तौचश्रद्धाभक्तिसमन्वितः अधिमासेतुसंप्राप्तेशुभेसूर्याधिदैवते देवदेवमहादे
वप्रलयोत्पत्तिकारक गृहाणार्घ्यंमयादत्तंकृपांकृत्वाममोपरि स्वयंभुवेनमस्तुभ्यंब्रह्मणेमिततेजसे नमोस्तुते
श्रियानंतब्राह्मणानांदयांकुरु एवंस्तुत्वाजगन्नाथंगंधपुष्पोपहारकैः पूजयित्वाजगन्नाथंचतुर्षुप्रहरेषुच तथा
जागरणंकुर्यात्कीर्तनश्रवणादिभिः ततःप्रभातसमयेअमावास्यादिनेनृप विष्णुंचपूजयेद्भक्त्यापश्चाद्धोमंसमा
चरेत् समित्तिलाज्यचरुणापायसेनहुनेन्नृप अतोदेवेतिषट्केनअयुतंवासहस्रकं पूर्णाहुतिंततःकृत्वाहोमशेषंसमाप
येत् गुरोःपूजांततःकुर्याद्वसुधान्यादिसप्तकैः प्रदद्याद्वेनुनासार्द्धंप्रतिमांचतथानृप त्रयस्त्रिंशदपूपांश्चकांस्य
पात्रसमन्वितान् प्रदद्याद्द्विजवरेराजन्घृतशर्करयासह अधिमासेतुसंप्राप्तेपापमुक्त्यैजनार्दनं उद्दिश्यापूपदा
नेनघृतेनसहरुक्मकं विष्णुप्रीत्यैप्रदद्याच्चपृथ्वीदानफलंलभेत् त्रयस्त्रिंशदपूपांश्चदानार्हांश्चादिनोदिते

सुवर्णगुडसंयुक्तान्कांस्यपात्रेनिधायच अधिमासेतुसंप्राप्तेपापमुक्त्यैजनार्दन उद्दिश्यापूपदानेनघृते
नसहरुक्मकंविष्णुप्रीत्यैप्रदद्याच्चपृथ्वीदानफलंलभेत् अधिमासेतुसंप्राप्तेशुभेसूर्याधिदैवते नरकोत्तारणा-
यैवमयादत्तंप्रदीयते त्रयस्त्रिंशदपूपांश्चघृतशर्करयासह सदक्षिणामयातुभ्यंकांस्यपात्रेणदापिता
दातादिवाकरोदेवोगृहीताचदिवाकरः दानेनानेनविप्रेंद्रसूर्योमेप्रीयतामिति प्रीयतांदेवदेवेशाब्रह्मेश
भुजनार्दनाः तेषांप्रसादात्सकलाममसंतुमनोरथाः गृहाणपरमान्नेनकांस्यपात्रंप्रपूरितं सघृतगुडसं
युक्तंप्रीतोभवदिवाकर त्वयादत्तमिदंप्राप्तपरमान्नेनपूरितं सघृतंप्रतिगृह्णामिप्रीयतांमेदिवाकरः ब्राह्म
णान्पूजयेत्पश्चाद्वस्त्रालंकारचंदनैः अपूपदानंदद्याच्चकांस्यपात्रसमन्वितं धेनुंमवत्सांदद्याच्चवस्त्रालंकारभूषि
तां कांस्यदोग्धींरौप्यखुरींदक्षिणासहितांनृप नत्वानुवाचयेद्विप्रान्सफलंचास्तुमेव्रतं ऋत्विग्भ्योवासंसोद
द्यात्त्रयस्त्रिंशच्चकुंभकान् कांस्यपात्रसमायुक्तानपूपान्घृतसंयुतान् वटकैःसहराजेंद्रयथाशक्त्याचदक्षिणा
ब्राह्मणान्भोजयेत्पश्चाच्छर्करघृतपायसैः द्वादश्यांमलमासस्यक्षयेयातिशुभेन्हिवा दुर्बलेनापिकर्तव्यंत्रयस्त्रिंश
दपूपकं मलमासेतुसंप्राप्तेएकास्मिश्चशुभेदिने निष्किंचनेनदातव्यंघृतशर्करयासह मासोनाम्नामलमासोयम
लिनःपापसंभवः तस्यपापस्यशांत्यर्थमन्नदानंकरोतियः यावंतिचैवछिद्राणिअपूपादिषुपांडव तावद्वर्षस
हस्त्राणिस्वर्गलोकेमहीयते मलमासव्रतंनारीयाकरोतीहभारत दारिद्र्यपुत्रशोकंतुनवैधव्यंलभेतसा यइदंध
र्मसर्वस्वंकुर्याल्लोकेःपुराकृतं ब्रह्महत्यादिपापघ्नंप्राप्नुयाद्वैष्णवंपदम् एवंप्रार्थ्यचगोविंदंपूजयेद्ब्राह्मणान्नव सप
त्नीकान्शुचिस्नात्वालक्ष्मीनारायणौस्मरन् पूजयित्वाविधानेनभोजयेद्घृतपायसैः भोजयित्वाविधानेनसपत्नीकंस्म
रन्विभुं स्मर्तव्योद्विजरूपेणपत्नीरूपेणवाद्विज परिधाप्ययथाशक्त्यावस्त्रालंकारकुंकुमैः द्राक्षाभिश्चकपित्थ

श्चपनसैःकदलीफलैःनारिकेलैश्चनारंगैःकूष्मांडैर्दाडिमीफलैः उर्वारुकैःकर्कटैश्चशृंगवेरैःसमूलकैः अन्यैश्चविविधैः
शाकैर्यच्चपृथक्पृथक्घृतपक्वान्नगोधूमैःशुभैःसौहालिकैर्वटैः शर्करघृतपूरैश्चफाणितैःखंडमंडितैः भक्ष्यभोज्यै
श्चलेह्यादिकंदुकानिविशेषतः गोरसानिविचित्राणिवासितानिइलादिभिः अन्यान्यपिचदानानिदेयानिविविधा
नि च वित्तशाठ्यंनकर्तव्यमात्मनःश्रेयइच्छता यथावत्सरसंप्राप्यपरिवेश्यमृदुब्रुवन् इदंस्वादुइदंभोज्यभवद
र्थंविचिंतये याचयतांरोचतेयच्चयन्मयापाचितंप्रभो धन्योस्म्यनुगृहीतोस्मिपावितममंदिरं विसर्जयेत्ततोवि
प्रान्दत्वातांबूलदक्षिणे आसीमांतमनुव्रज्यभुंजीतवंधुभिःसह असंक्रांतव्रतंनारीयाकरोतिहरिप्रियं दारिद्र्यं
पुत्रशोकंचवैधव्यंनभवेत्कदा एवंविधोपिपुरुषोयदिकुर्यान्मलिम्लुचे मलिम्लुचंप्राप्यनपूजितोयैःश्रीनाथदेवः
परयैवभक्त्या कथंभवेच्छ्रेयसुखंचसंपत्पुत्रः सुहृत्स्वजनाश्चापिभार्या कदाचिन्नकृतंपापैर्मलमासव्रतंनरैः तेषां
पापिष्ठतानित्यंब्रह्महत्यापदेपदे मार्कंडेयउवाच एतत्तेकथितंपार्थगुह्याद्गुह्यतरंपरं वाजपेयक्रतुफलंश्रोतावक्ता
लभेद्ध्रुवम्॥इतिश्रीभविष्योत्तरपुराणेमलमासव्रतोद्यापनम॥स्वस्तिश्रीरणवीरसिंहधरणीपालेवदान्याग्रणी॰
१ रणवीरसिंहभूपेनकारितेकृत्यसागरे मलमासादिसंकीर्णकृत्यरत्नसमुच्चयः २ अथसंक्रांतिव्रतानि तत्रा
दौधान्यसंक्रांतिव्रतम् स्कंदपुराणे नंदिकेश्वरउवाच अथातःसंप्रवक्ष्यामिधान्यव्रतमनुत्तमं यत्कृत्वाहिन
रोराजन्सर्वान्कामानवाप्नुयात् अयनेविषुवेचैवस्नानंकृत्वाविचक्षणः उपचारैःपूजयेद्ध्यात्वादेवंदिवाकरं करि
ष्यामिव्रतंदेवत्वद्भक्त्यात्वत्परायणः तदविघ्नेनमेयातुत्वत्प्रसादाद्दिनेश्वर इत्यभ्यर्च्यालिखेत्पद्मंकुंकुमेनाष्टपत्रकं
भास्करंपूर्वपत्रेतुआग्नेय्यांतुरविंतथा विवस्वंतंतथायाम्येनैरृत्येपूषणंतथा आदित्यंवारुणेपत्रेवायव्येतपनं
तथा मार्तंडमितिकौवेरैशान्येभानुमर्चयेत् एवंचक्रमशोभ्यर्च्यविश्वात्मासर्वदेशजैः कृतांजलिपुटोभूत्वात्व

र्घ्येदद्यात्समंत्रकं ॐकालात्मासर्वभूतात्मावेदात्मासर्वतोमुखः व्याधिशोकजरामृत्युसंसारभयनाशनः इत्य
र्घ्यमंत्रः पुष्पैर्धूपैःसमभ्यर्च्यशिरसाप्रणिपत्यच रविंध्यात्वाततोदद्यात्धान्यप्रस्थंद्विजातये एवंसंवत्सरे
पूर्णेकुर्यादुद्यापनक्रियां अर्घ्यपात्रंहसौवर्णंकारयेत्पटलेशुभे द्विभुजपूजयेद्रक्तानुरक्तवस्त्रयुगान्वित
धान्यद्रोणेनसहितंतदर्धेनस्वशक्तितः स्वर्णशृंगीरौप्यखुरांकांस्यदोहांपयस्विनीं रविरूपंद्विजंध्यात्वातस्मै
वेदविदेतथा विद्यापात्रायविप्रायतत्सर्वंविनिवेदयेत् अग्निष्टोमसहस्राणांफलंप्राप्नोतिमानवः सप्तजन्म
सहस्राणिधनधान्यसमन्वितः निर्व्याधिर्नीरुजोधीमान्रूपवानापिजायते इदंव्रतंवर्षात्मकं तत्रव्रतविधिः
संक्रांतिदिनेप्रातःशुक्लतिलैः स्नात्वागोमयेनोपलिप्तशुद्धदेशे कुंकुमादिनाष्टदलंपद्मंविरच्य पूजासमग्रसिंपा
द्यसंकल्पंकुर्यात् तिथ्यादिसंकीर्त्यममाग्निष्टोमादिफलप्राप्तिपूर्वकसप्तजन्मसु धनधान्यपुत्रपौत्रादिसमन्वित
निर्व्याधिनीरुजत्वादिसिद्धिद्वाराश्रीसवितृरूपपरमेश्वरप्रीत्यर्थंधान्यसंक्रांतिव्रतंकरिष्ये इतिसंकल्प्य गणेशसं
पूज्य पूर्वनिर्मितपद्मकर्णिकायां विश्वात्मनेनमइतिनाममंत्रेणावाह्यपूजयेत् अष्टपत्रेषुपूर्वादिक्रमेणदेवताआ
वाहयेत् भास्कर १ रवि २ विवस्वंतं ३ आदित्यं ४ तपनं ५ मार्त्तंडं ६ भानु ७ पूषण ८ मध्येविश्वात्मानं
आवाह्यसंपूज्यचांते अर्घ्यदानमंत्रः कालात्मन्सर्वदेवात्मन्विश्वात्मन्विश्वतोमुख व्याधिमृत्युजराशोकसंसारभय
नाशन ततःप्रस्थमितधान्यसदक्षिणं ब्राह्मणायदत्त्वा मौनेनस्वयंभुंजीत पुत्रवतोगृहिणउपवासनिषेधात्
संवत्सरांतेउद्यापनंकुर्यात् उक्तमंडलेपूर्ववद्देवंना आवाह्य सुवर्णादिपात्रेणार्घ्यंदत्त्वासंपूज्य द्रोणपरिमित
धान्यंतदर्धार्धंवा आचार्यायदत्त्वा पीठसहितांगांचदत्त्वा ब्राह्मणान्संभोज्यस्वयंभुंजीत अत्रहोमादिसामान्य
विधिनाकार्यं इतिधान्यसंक्रांतिव्रतं अथरूपसंक्रांतिव्रतम् स्कांदे अथान्यदपितेवच्मिरूपसंक्रांतिमुत्तम

संक्रांतिवासरेतैलस्नानंकृत्वाविचक्षणः हेमपात्रेघृतंकृत्वाहिरण्येनसमन्वितं स्वरूपंवीक्ष्यतत्पात्रंब्राह्मणा
यनिवेदयेत् एकभक्तंततःकृत्वाभक्त्याचैवसमन्वितं व्रतांतेकांचनंदद्याद्घृतधेनुसमन्वितं अश्वमेधसहस्रा
णांफलमाप्नोतिमानवः रूपयौवनसंपत्तआयुरारोग्यसंपदा लक्ष्मींचविपुलान्भोगान्भुनक्तीहनसंशयः सर्व
पापविनिर्मुक्तःस्वर्गलोकंसगच्छति अस्यविधिः तिथ्यादिसंकीर्त्य आत्मनःकमनीयरूपप्राप्तिपूर्वकश्रीपर
मेश्वरप्रीत्यर्थंरूपसंक्रांतिव्रतंकरिष्ये इतिसंकल्प्य पूर्ववत्लिखितपद्मेभानुंसंपूज्य कांस्यपात्रेसघृतेस्वरूपं
वीक्ष्यपात्रंब्राह्मणायदद्यात् एवंप्रतिसंक्रांतौकुर्यात् वत्सरांतेउक्तमंडलेसौवर्णंभानुंसंपूज्य कांस्यपात्रस्थघृ
तंहिरण्यसहितमाचार्यायदत्त्वागांचदद्यात् फलभूयस्त्वकामोघृतधेनुमपिदत्त्वा ब्राह्मणान्भोजयित्वास्वयमपि
भुंजीत इतिस्कंदोक्तरूपसंक्रांतिव्रतं २ अथभोगसंक्रांतिव्रतम् तत्रैव संक्रांतिदिवसंप्राप्यधीपितस्तुसमा
हयेत् कुंकुमंकमलंचैवसिंदूरंकुसुमानिच सुगंधानिचद्रव्याणितांबूलंशालितंडुलान् तंडुलान्फलसंयुक्तांस्त्व
भ्योदद्याद्विचक्षणः दद्यात्प्रहृष्टमनसामिथुनेभ्यःप्रयत्नतः भोजयित्वायथाशक्तिवस्त्रयुग्मंप्रदापयेत् एवंसं
वत्सरस्यांतेरविंसंपूज्यपूर्ववत् धेनुंसदक्षिणांदद्यात्सपत्नीकद्विजातये स्यात्सुखीसर्वमर्त्येषुभोगीजन्मनिजन्मनि
अस्यविधिः तिथ्यादिसंकीर्त्य आत्मनोऽनेकविधभोगप्राप्तिपूर्वकश्रीपरमेश्वरप्रीत्यर्थंभोगसंक्रांतिव्रतंकरिष्ये इ
तिसंकल्प्य पूर्ववत्भानुंपद्मेसंपूज्यत्रिभ्योअधिकानिमिथुनानिसंपूज्य वायनानि कुंकुमकज्जलसिंदूरसुगंधि
पुष्पतांबूलशालितंडुलदक्षिणायुतानिदत्त्वाभुंजीत वत्सरांतेपूर्वोक्तमंडलेसौवर्णंभानुंसंपूज्य द्वादशमि
थुनेभ्यःपूर्वोक्तवस्त्रयुग्मसहितानिसौभाग्यद्रव्याणिदत्त्वाब्राह्मणायगांचदत्त्वाभोजयेत् इतिस्कंदोक्तभोगसंक्रां
तिव्रतं अथलवणसंक्रांतिव्रतं तत्रैव अथातःसंप्रवक्ष्यामिलवणसंक्रांतिमुत्तमं संक्रांतिवासरंप्राप्यस्नात्

कृत्वाशुभैर्जलैः वस्त्रालंकारसंभूतभक्तिभावसमन्वितः कुंकुमेनलिखेत्पद्ममष्टपत्रंसकर्णिकं भास्करंपूजये
द्भक्त्याधान्यप्रस्थसमन्वितः तदग्रेलवणपात्रंसगुडंस्थापयेद्बुधः पूजितस्त्वंयथाशक्त्याप्रसीदममभास्कर
लवणंसगुडंशय्यांब्राह्मणायनिवेदयेत् एवंसंवत्सरेपूर्णेभानुंकुर्याद्धिरण्मयं रक्तवस्त्रयुगच्छन्नंरक्तचंदनचर्चितं
कमलंलवणपात्रं धेन्वासार्धंद्विजातये प्रदद्याद्भानुमुद्दिश्यविश्वात्माप्रीयतामिति एवंकृत्वातुयत्पुण्यंप्राप्य
तेभुविमानवैः तत्केनगदितुंशक्यंवर्षकोटिशतैरपि लवणाचलदानस्यफलंप्राप्नोतिमानवः सर्वकाम
समृद्धात्माविमानवरमास्थितः सूर्यलोकेवसेत्कल्पं पूज्यमानः सुरासुरैः अथास्यविधिः तिथ्यादिसं
कीर्त्यानेकविधसुखप्राप्तिपूर्वकसूर्यलोकप्राप्तिश्रीपरमेश्वरप्रीत्यर्थंलवणसंक्रांतिव्रतंकरिष्ये पूर्ववत्पद्मेभास्करंसं
पूज्य तदग्रेसगुडंलवणपात्रंनिधायदेवंप्रार्थयेत् पूजितस्त्वंमयाभक्त्याप्रसीदममभास्कर व्रतंसंपूर्णतांयातुत्व
त्प्रसादाद्दिवाकर ततः सगुडंलवणयुतंपात्रंदत्त्वा ब्राह्मणान्भोजयेत् वत्सरांतेपूर्ववदुद्यापनंकुर्यात् इति
...तिव्रतम् ४ अथतेजःसंक्रांतिव्रतम् शालितंडुलसंयुक्तंकरकंकारयेच्छुभं तन्मध्येदीपकंस्थाप्यप्र
जसा तन्मध्येमोदकंस्थाप्यब्राह्मणायनिवेदयेत् अर्घ्यंपूर्वोक्तवत्कुर्यादेकभक्तंचपूर्ववत् संवत्सरे
र्य्यादुद्यापनंबुधः शोभनंदीपकंकार्य्यंसुवर्णेनतुनारद ताम्रेणकरकंकार्य्यंतन्मध्येदीपकंन्यसेत् कपि
तुल्याकरकेणद्विजातये अत्रविधिः आत्मनोअतितेजस्त्वप्राप्तिपूर्वकंसवितादेवताप्रीत्यर्थंतेजःसंक्रां
इतिसंकल्प्यपूर्ववत्कमलेसवितारंसंपूज्य पुरतःशालितंडुलसंपूर्णकरकंनिधाय तन्मध्येमोदकं
वलितंकृत्वा ब्रह्माणंसंपूज्यदद्यात्संवत्सरांते सौवर्णंभानुमंडलेसंपूज्य पुरतःशालितंडुलपू
र्णनिर्मितदीपकंकृत्वा ब्राह्मणायदत्त्वाकपिलांगांचदत्त्वाद्विजान्भोजयेत् इतितेजःसंक्रांतिव्रतम् ५

अथसौभाग्यसंक्रांतिव्रतम् । पूर्ववद्भानुमभ्यर्च्यतथाचैवसुवासिनीः पूर्ववत्भोगसंक्रांतिसुवासिनीश्चसंपूज्या· सौभाग्याष्टकसंयुक्तंवस्त्रयुग्मंतुयोषिते विप्रायवेदविदुषेभक्त्यातत्प्रतिपादयेत् एवंसंवत्सरेपूर्णेकृत्वाब्राह्म णवाचनं पर्वतंलवणंकृत्वायथाविभवसारतः लवणपर्वतंशक्त्योत्तममध्यमकानिष्ठकत्वेत्यर्थः कांचनंकमलं कृत्वाभास्करंचैवकारयेत् गंधपुष्पादिनापूज्यविप्रायप्रतिपादयेत् सौभाग्याष्टकंतु इक्षवोराजिकातद्वन्नि ष्पावाश्चसुशोभनाः धान्यकंजीरकंचैवकौसुंभंकुंकुमंतथा लवणचाष्टमंप्रोक्तंसौभाग्याष्टकमुच्यते ॥ अस्यवि धिः ओमद्यात्मनोअतुलसौभाग्यप्राप्तिपूर्वक भानुदेवप्रीत्यर्थंसौभाग्यसंक्रांतिव्रतंकरिष्ये । इतिसंकल्प्य पूर्व वत्पद्मेभानुंसंपूज्य गांचसंपूज्य सपत्नीकायाद्विजाय सौभाग्याष्टकयुक्तंवस्त्रयुग्मसहितंवायनंदत्वा अल वणंमौनीभुंजीत वत्सरांतेसौवर्णंभानुंमंडलेसंपूज्य तत्पुरतः यथाशक्तिलवणाचलंकृत्वाकांचनकमलंकृत्वासंपूज्य सुरभिसहितंविप्रायप्रतिपादयेत् इतिसौभाग्यसंक्रांतिव्रतम् ६ अथतांबूलसंक्रांतिव्रतम् अथान्यत्संप्रव क्ष्यामितांबूलव्रतमुत्तमं तांबूलंचंदनाढ्यंचप्रगृह्याज्ञांद्विजोत्तमात् एवंसंवत्सरेपूर्णेरात्रौरात्रौततःपरं तांबूलं भक्षयेद्विप्रैः कारयेद्वेवतांतरं वत्सरांतेचकमठंकृत्वाचैवतुकांचनं पर्णकोशंचकुर्वीततथानंतफलाप्तये चूर्ण भांडंचकुर्वीतपूगप्रस्फोटनंतथा मुखवासादिपूर्णानांभांडानिचाद्विजर्षभ द्विजदांपत्यमावाह्यसर्वोपस्करसंयुतं दत्वैतत्पूजयेद्भक्त्यापड्रसैर्भोजयेद्द्विजान् उपकल्पितंचयत्किंचिद्ब्राह्मणायानिवेदयेत् । एवंक्रमेणयानारीतांबूला ख्यव्रतोत्तम धनपुत्रैश्चपौत्रैश्चमोदतेस्वगृहेसदा अत्रविधिः -तिथ्यादिसंकीर्त्यात्मनोभर्त्रासहअतुलसुख प्राप्तिपूर्वकसावित्रप्रीत्यर्थंतांबूलसंक्रांतिव्रतंकरिष्ये -इतिसंकल्प्य पूर्ववत्पद्मेभानुंसंपूज्य ततोद्विजदंपतीचंदना दिनासंपूज्य तस्मैएलालवंगजातीपत्रकंकोलखादिरप्रत्येकभांडेनिधाय रौप्य मयंचूर्णपात्रपूगप्रस्फोटनंचपूगी

फलानिनागवल्लीदलानिच ॥ सतिमामर्थ्यस्वर्णनिर्मितानिकानिचित् ॥ नागवल्लीदलानिचरौप्यादिपात्रे निधायसंकल्पपूर्वकंदद्यात् ॥ दानमंत्रः- तांबूलंश्रीकरंभद्रंब्रह्माविष्णुशिवात्मकं । प्रदानाद्देवदेवेशपूर्णाःसंतुमनोरथाः ॥ इतिदत्वागांचदत्वाब्राह्मणान्भोजयेत् ॥ अथप्रकारांतरेणतांबूलव्रतंभविष्ये ॥ तत्रग्रहणविधिः- आषाढशुद्धदशम्यांचातुर्मास्यव्रतं । तत्रातिथ्यादिसंकीर्त्यतांबूलव्रतस्यपूर्वोक्तफलावाप्तयेचातुर्मास्येतांबूलव्रतंकरिष्ये इति संकल्प्यपीठेफणान्वितशेषनागकन्यायुतंहरिंपुरुषसूक्तेनसंपूज्य ॥ तदग्रेद्विजंसपत्नीकंचसंपूज्य ॥ सोपस्करंतांबलवीटिद्वयंदेवायद्विजायचदत्वाप्रणमेत् एवंप्रतिदिनं अंतेकार्तिकशुक्लैकादश्यांपौर्णिमायांवाउद्यापनंकुर्यात् तद्यथा । अद्येत्यादितिथ्यादिसंकीर्त्यास्मनः अनेकदानफलप्राप्तिसकलभोगयुतनारायणप्रीत्यर्थं आचरितचातुर्मास्येतांबूलव्रतोद्यापनंकरिष्ये इतिसंकल्प्यगणेशपूजनादिविधायआचार्यंवृणुयात् अथाचार्यःपूर्ववत्मंडलब्रह्मादिदेवताः संस्थाप्यतदुपरिकलशेरौप्यमयशेषेहाटकनिर्मितं नारायणंनागकन्यायुतं सहस्रशीर्षेतिमंत्रेणसंस्थाप्य -ततःपूर्वादिदिक्षु ब्रह्माणंईशदुर्गां क्षेत्रपालंचतत्तन्मंत्रैरावाह्य पुरुषसूक्तेनपंचामृताभिषेकपुरःसरंपूजयेत् नानाविधभक्ष्यभोज्ययुतपायसोपहारान्निवेदयेत् देवाग्रेशक्त्यासंख्यापूगानियथाशक्तिवानागफणायुतंचसंस्थाप्यदेवंस्तोत्रैःस्तुवीत ततोदशनवीनताम्रपात्राणिक्रमुकपूगयुक्तानिरौप्यमयानिवातावंतिचूर्णपात्राणि रौप्यमयानिचतत्तद्द्रव्यपूरितानि पक्षेशूर्पनवकेनिधाय वस्त्रद्वयेनसंवेष्ट्यसप्तधान्योपरिदेवाग्रेनिधाय । तत्रदेवंनागरूपंध्यात्वाप्रार्थयेत् नवनागमहाराजपत्न्यास्तवप्रपूजनात् - ईप्सितंदेहिमेकामंसर्वसौख्यप्रदोभव ततोगीतवाद्यपुराणपठनादिभिर्जागरणेनरात्रिंनीत्वा प्रातर्देवंसंपूज्य - अग्निंप्रतिष्ठाप्यअन्वादध्यात् - तत्रप्रधानंनारायणं । अतोदेवेतिमंत्रेणखंडमिश्रितमाज्यपायसचरुद्रव्येणाष्टोत्तरशतसंख्याकाहुतिभिर्ब्रह्मादिदेवताश्चैकै

कयाहुत्यायक्षे एवंहोमंसमाप्य दंपतीनवकंवस्त्रादिनासंपूज्यपूर्ववत्स्थापितंशूर्पनवकंनवब्राह्मणेभ्योदद्यात्
तत्रमंत्रः तांबूलंश्रीकरंभद्रंब्रह्मविष्णुशिवात्मकं अस्यप्रदानाद्देवेशसफलंमेस्तुवांछितं ततस्तेभ्योनवगोदा
नानि तदभावेमौल्यंवादक्षिणात्वेनदद्यादेवंप्रार्थयेत् तांबूलदानमाहात्म्यात्प्रीतोभवजनार्दन संपूर्णंकुरुमे
देववांछितंपुरुषोत्तम ततः पीठमाचार्यायचदत्त्वाकपिलांगांचदत्त्वा ब्राह्मणभोजनपुरःसरंस्वयंभुंजीत इति
तांबूलव्रतम् ७ अथमनोरथसंक्रांतिव्रतम् गुडेनपूर्णकुंभंचसवस्त्रंचस्वशक्तितः संक्रांतिगसरेदद्या
ब्राह्मणायकुटुंबिने एवंसंवत्सरेपूर्णेस्वशक्त्योद्यापनंचरेत् गुडेनपर्वतंकृत्वावस्त्ररत्नैश्चभूषितं अयनेचोत्तरे
दद्याद्विनशाठ्यंनकारयेत् यंयंकामयतेकामंतंतंप्राप्नोतिपुष्कलं अथविशोकसंक्रांतिव्रतविधिः तिथ्यादिसं
कीर्त्यात्मनोविशोकत्वसमन्वितः पुत्रपौत्रादिवृद्धिद्वाराश्रीसवितृदेवताप्रीत्यर्थंविशोकसंक्रांतिव्रतंकरिष्ये इतिसं
कल्प्य पद्मपूर्ववत् भास्करंताम्रपात्रेसंस्थाप्यसंपूज्यचरक्तवस्त्राभ्यांपरिवेष्ट्य पूर्ववत्अर्घ्यंदत्त्वा ब्राह्मणा
यगुडपूर्णकुंभंसदक्षिणंदद्यात वत्सरांतेमंडलेहैमंभास्करंताम्रपात्रेसंपूज्य गुडपूर्णकुंभसदक्षिणंदद्यात् गु
डपर्वतेनसहपीठंकपिलासहितंदद्यात् अथातः संप्रवक्ष्यामि विशोकसंक्रांतिमुत्तमां अयनेविषुवेचैवव्यती
पातोभवेद्यदि एकभक्तंतदाकुर्य्याज्जलदानंपूर्वकं कांचनंभास्करंकृत्वायथाविभवशक्तितः स्नापयेत्पंचगव्ये
नगंधपुष्पैस्तुपूजयेत् संछाद्यरक्तवस्त्राभ्यांताम्रपात्रेनिधायच भास्करायनमः पादौजंघेतुरवयेनमः
आदित्यायनमोजानूउर्वौदिनकरायच अर्यम्णेचकटिंपूज्य मानवेचोदरेतथा नमःपूष्णेचबाहुभ्यामर्य
म्णेवैपुनस्तनौ विवस्वतेनमःकंठंमुखंपूज्यसहस्रांशवे प्रभाकरायवैचाक्ष्णोस्तेजोराशेनमः शिरः वरु-
णायनमः केशान्पादादौपूजयेद्धरिं अर्घ्यंचपूर्ववत्कार्यंब्राह्मणायनिवेदयेत् एवंसंवत्सरेपूर्णेकांचनेनादि

वाकरं॥ सपद्महस्तंसंपूज्ययथाविभवशक्तितः कारयेत्पूजयेद्भक्तोरक्तवस्त्रेणवेष्टयेत् ततोहोमंप्रकुर्वीतसूर्यमंत्रेणनारद द्वादशकपिलादद्याद्वस्त्रालंकारसंयुता अशक्तःकपिलामेकांवित्तशाठ्यविवर्जितः आयुरारोग्यमैश्वर्यं भार्य्यापुत्रसमन्वितः इतिविशोकसंक्रांतिव्रतम् ॥ ९ ॥ अथायुःसक्रांतिव्रत अथान्यांसंप्रवक्ष्यामि आयुःसंक्रांतिमुत्तमां संक्रांतिदिवसेपूर्ववत्समर्च्यादिवाकरं कांस्येक्षीरंघृतदद्यात्सहिरण्यंस्वशक्तितः पृथक्पृथक्प्रदानेनपूजामेवप्रकीर्तिता सक्षीरंसुरभीजातंपीयूषसमसर्पियुक् आयुरारोग्यमैश्वर्यमतोदेहिदिवाकर इति मंत्रः अनेनविधिनावर्षंसर्वंदद्याद्व्रितः उद्यापनादिकंसर्वंधान्यसंक्रांतिवद्भवेत् निर्व्याधिश्चवदीर्घायुस्तेजस्वीकीर्तिमांस्तथा अपमृत्युभयंनास्तिजीवेच्चशरदांशत अथधनसंक्रांतिव्रतम् हेमाद्रौस्कांदे संक्रांतिदिवसेपूज्यभास्करंतुविधानतः कलशंनिर्व्रणंग्राह्यंवारिपूर्णंनिधापयेत् सुवर्णपुरुषंकृत्वाप्रतिमासंतुदापयेत् विधिनानेनवर्षांतेप्रीयतांमेदिवाकरः पूजाविधानंसर्वंतुधान्यसंक्रांतिवद्भवत् सौवर्णंकलशंकृत्वासूर्य्यंचोपरिविन्यसेत् हस्तेसुवर्णघटितंपंकजंवैनिवेशयेत् गोदानंतत्रदातव्यमेवंसंपूर्णतांव्रजेत् यतात्मा शतसाहस्रधनयुक्तोभवेन्नरः आयुरारोग्यसंपन्नःसूर्यलोकेमहीयते इतिधनसंक्रांतिव्रतम् ॐमद्यात्मनोविपुलधनप्राप्तिपूर्वक आयुरारोग्यपुत्रपौत्रादिकामनयाधनसंक्रांतिव्रतंकरिष्ये पद्मेवारिपूर्णंकलशंनिधायसुवर्णपात्रेभानुंसंपूज्य सुवर्णधेनुसहितंपीठंद्विजाय दत्त्वासदन्नेनद्विजान्भोजयेत् शेषधान्यसंक्रांतिवत् ॥ ११ ॥ अथस्कंदपुराणोक्तमाज्ञासंक्रांतिव्रतम् ब्रह्मोवाच आज्ञासंक्रांतिमाहात्म्यंशृणुस्कंदविधानतः यांकृत्वासर्वलोकेषुआज्ञावान्जायतेनरः संक्रांतिदिवसेपुण्येप्रारभेन्नियमंव्रती पद्ममष्टदलंकृत्वाकुंकुमेनसुशोभन पूजयेन्मंत्रमुच्चार्य्यविधिवद्गुरुसान्निधौ आज्ञांतेजस्करींपुष्टप्रभादीप्तियशस्करीं आज्ञांसर्वत्रगांदेवममदेहिनमोस्तुते सपूज्यैवंकुंकुमेनदद्याद्विप्रायभोजनं उद्यापने

तुचंडांशुसौवर्णंसरथंतथा एकचक्रंचसप्ताश्वमरुणेनसमन्वितं य.कुर्य्याद्विधिनानेनआज्ञासंक्रांतिमुत्तमं आ
ज्ञास्यास्खलितालोकेसूर्यभक्तश्चजायते इतिस्कांदेआज्ञासंक्रांतिव्रतम् ॥ १२ ॥ अथापापसंक्रांतिव्रतम्
नंदीकेश्वरउवाच ॥ वक्ष्याम्यपापसंक्रांतिंशृणुस्कंदविधानतः संक्रांत्यांनियतोभूत्वातिलैःश्वेतैःसमन्वितैः क
रकंवर्धमानंचप्रतिमासंनिवेदयेत् वर्द्धमानंशरावम् मंत्रेणानेनतुस्नायाद्भक्तिभावसमन्वितः भक्तिरंतःकरण
स्यतदाकारवृत्तिःभावोविश्वासः तिलोमपातुपापेभ्यस्त्वदेवप्रसादतः त्वंचमांरक्षदेवेशवाङ्मनःकायकल्म
षात् उद्यापनेचदेवस्यसौवर्णीमाषकेनतु द्विभुजाप्रतिमाकार्य्यारजतेनाथकारयेत् देवस्यसूर्य्यस्यस्वर्णमाष
केणसमितेतिशेषः अथवा अयंचशक्ताशक्तविषयत्वेनव्यवस्थितोविकल्पः तिलधेनुःप्रदातव्याव्रतेस्मिन्ना
त्रसंशयः सर्वपापप्रणाशायआयुरारोग्यहेतवे एतत्सर्वंपुराप्रोक्तंब्रह्मणाविष्णवेतथा विष्णुरिंद्रायजगदे
तथोमाशंभवेव्रतं शंभुश्चैवममाचष्टेमयाप्रोक्तंतवप्रभो सर्वसंक्रांतिदिवसेप्रारभेद्व्रतमुत्तमं दक्षिणोत्तरसं
क्रांतौसर्वास्वितिचकेशव अध्रुवत्वाच्छरीरस्ययौगपद्यंप्रशस्यते नचात्रविधिलोपःस्यात्सर्वत्रैकंतुदैवतं नानादेवव्र
तानांतुएककालंप्रशस्यते इतिस्कंदपुराणोक्तमपापसंक्रांतिव्रतम् १३ अथकीर्तिसंक्रांतिव्रतम् नंदिकेश्वरउवाच
कीर्तिसंक्रांतिमाहात्म्यंशृणुस्कंदविधानतः संक्रांतिवासरंप्राप्यरविबिंबंलिखेद्भुवि तस्यमध्येस्थितंदेवंपूजयेत्सू
र्यमंत्रतः यथाविभवसारेणततोविप्रायदक्षिणां प्रतिमासंतुवैश्वेतंवस्त्रयुग्मंप्रदापयेत् उद्यापनेतुरौप्यंचसूर्य
मत्रप्रदापयेत् श्वेतवस्त्रयुगच्छन्नंब्राह्मणायनिवेदयेत् एवंकृतेपराकीर्तिर्जायतेचापिवह्निवत् फलंनशक्यते
वक्तुंगोष्पतेरपिजिव्हया विमलाकीर्तिराज्यंचजायतेनात्रसंशयः आयुरारोग्यसंपन्नोजीवेद्वर्षशतंनरः इति
स्कंदपुराणोक्तंकीर्तिव्रतम् ॥ १४ ॥ अथोत्तरायणदक्षिणायनसंक्रांतिमारभ्यकर्तव्यंशीलव्रतम् पुलस्त्यउ

वाचः अयनादयनंयावद्वर्जयेत्पुष्पसर्पिषी तदंतेकांचनंपुष्पंघृतधेनुसमन्वितं दद्याच्छिवपुरंयातिविप्रायघृत
पायसं एतच्छीलव्रतंनामशीलारोग्यसुखप्रदं इतिपद्मपुराणोक्तंशीलव्रतम् १५ अथराज्यव्रतम् कृष्णउवा
च उत्तरेत्वयनेप्राप्तेघृतप्रस्थेनयोहरिं स्नापयित्वाब्राह्मणायवडवांसंप्रयच्छति सर्वपापविनिर्मुक्तः सूर्य
लोकेवसेच्चिरं ततोभवतिभूपालःप्रजानंदविवर्धनः राज्यव्रतमिदंप्रोक्तंपरंतुष्टिकरंहरेः इतिभविष्योत्तरोक्तं
राज्यव्रतम् अथोत्तरायणेघृतस्नपनव्रतम् पुलस्त्यउवाच अयनेचोत्तरेप्राप्तेयःस्नापयतिकेशवम् घृतप्रस्थे
नपापंसःसकलंव्यपोहति कपिलांविप्रमुख्यायददात्यनुदिनंचयः स्नानंदेवस्ययच्छतियेघृतेनोत्तरायणे ते
यांतिविष्णुसायुज्यंसर्वपापविवर्जिताः इतिविष्णुधर्मोत्तरोक्तंघृतस्नपनव्रतम् १७ अथवृंताकत्यागव्रतम् भवि
ष्योत्तरे वृंताकस्यविधिंवक्ष्येशृणुपार्थसमाहितः संवत्सरंवाषण्मासान्त्रीन्मासान्वासमाहितः अस्योद्याप
ने वृंताकमप्रतिहतंवरंहेमसिंहंदद्याद्द्विजायघृतवस्त्रसमन्वितंयः कृत्वातुवर्षमपिमासमथैकमेवयात्यंनपश्य
तिपुरंपुरुषःकदाचित् अथैतस्यविधिः अस्यभरण्यांमघायांवाएकरात्रोपवासंकृत्वास्थंडिलेदेवानाहूय गंधः
पुष्पधूपदीपनैवेद्यादिभिर्भरण्यांमघायांवापूजयेदितिसंबंधः आवाहनप्रकारमाह दर्भपाणिर्गंधोदकेनावा
हयेत् यमराजमावाहयामि कालमावाहयामि नीलमावाहयामि चित्रगुप्तमा- वैवस्वतमावाह- मृ
त्युमा- परमेष्ठिनमावाहयामि ततोऽग्निमुपसमाधाय तिलाज्यंजुहुयात् यमराजायस्वाहा कालाय
स्वाहा नीलायस्वाहा चित्रगुप्ताय- वैवस्वतायस्वाहा मृत्यवेस्वाहा परमेष्ठिनेस्वाहा अग्निमूर्धेत्या
हुतीरष्टोत्तरशतंजुहुयात् प्रायश्चित्तंहुत्वा ब्राह्मणःस्वयमितरेषामाचार्यः अथस्वशक्त्या सौवर्णवृंताकंवि
प्रायदद्यात् कृष्णांगांवृषभंचतथैवकर्णवेष्टांगुलीयकेछत्रोपानहौकृष्णवस्त्रयुगं कृष्णकंबलंचदद्यात् ब्राह्मणा

र्संभोज्याशिषोवाचयेत् अनेनविधिनायस्तुवृंताकंसंप्रयच्छति त्रीन्मासान्वाषण्मासंवावर्षमेकंवानभक्षयेत्
अथचैतंविधिंकृत्वाजन्मावधित्यागंयःकरोतिसविष्णुलोकंप्रयाति पुंडरीकाश्वमेधफलमाप्नोति सप्तजन्मसह
स्राणिनाकपृष्ठेमहीयते सप्तजन्मांतरंयावद्यमलोकंनपश्यतीति जन्मावधिवृंताकत्यागपक्षेपि होमादिकंप
वैश्वदेव इतिवृंताकत्यागविधिः १८ अथशत्रुनाशनव्रतम् विष्णुधर्मोत्तरे रामंप्रतिपुष्करउवाच कृतोपि
वासोयाम्यर्क्षेकृत्तिकासुसदैवहि पूजयेद्वासुदेवंतुकुंकुमेनसुगंधिना श्वेतैश्चकुसुमैर्दद्याद्धूपंदद्याच्चगुग्गुलुं घृते
नदीपंदद्याच्चरक्तवस्त्रंतथैवच निवेदनीयंदेवायतथासर्वंनिवेदयेत् होतव्याश्चसमिद्भिर्श्चतथैवासुरसर्षपाः आसुरस
र्षपोराजिका आयुधानिचदेयानिब्राह्मणेभ्यश्चदक्षिणा ॥ कर्मैतदुक्तंरिपुनाशकारिकार्य्यंसदाशत्रुगणप्रमाथी
कृत्वैतदग्र्यं रिपुनाशमाशुप्राप्नोतिमर्त्योनहिसंशयोत्र इतिशत्रुनाशनव्रतम् १९ अथमौनव्रतंशिवधर्मे नंदिकेश्व
रउवाच शृणुवत्सप्रवक्ष्यामिमौनंसर्वार्थसाधकं मौनव्रतंमहापुण्यंहुंहुंतत्रविवर्जयेत् पुंसांभोजनकालेतुहुंका
रोयदिनिर्गतः सर्वमेवसुरामांसंतस्मान्मौनंविवर्जयेत् कर्मणामनसावाचापरहिंसांविवर्जयेत् मौनस्यास्य
प्रभावेणऋषयस्त्रिदिवंगताः अब्दमेकंचरेन्मौनंयःषण्मासमथापिवा मासत्रयंसमायुक्तोमासमेकंतथैवच मासा
र्द्धंतुपुनःकुर्य्याद्दिवसान्द्वादशाथवा षट्पंचवाथत्रीण्येकंमौनंभुंजीतयत्नतः समाप्तेतुव्रतेतस्मिन्मौनव्रतसमा
हितः लिंगंचंदनजंकृत्वाषडंगेनतुप्रोक्षयेत् षडंगंयथा गोमूत्रंगोमयंसर्पिःक्षीरंदधिचरोचना षडंगमेतत्परमं
मंगलंसर्वदागवामितिपरिभाषितं गोरोचनांसमालभ्यलब्धगंधैस्तुपूजयेत् धूपंचागुरुकंदद्यान्नमस्कारांस्ततः
पुनः करपादशिरोभिस्तुप्रणिपत्यविसर्जयेत् आत्मवित्तानुसारेणहेमघंटांप्रदापयेत् शिवाग्रतोनिबध्नीया
च्छिवस्यातीववल्लभां कांस्यलोहमयींवापिएकांवाशक्तितस्तथा शिवस्यपुरतोवेद्यांशिवभक्तांश्चभोजयेत् पाय

समधुसंमिश्रंमधुमांसपरिप्लुतं अनेकभक्ष्यभोज्यान्नैर्लेह्यपेयसपिच्छिलैः सार्जिकाघृतसंमिश्रैर्मंडकैःसुसमाहि
तैः भोजयित्वाप्रव्राजितान्निरुद्वेगःसमाशयेत् शक्त्याचदक्षिणांदद्याद्वित्तशाठ्यांविवर्जयेत् क्रमेणचीर्यतेविप्रयस्य
यस्यतुपद्भवेत् शिवभक्तान्व्रतोनित्यंशांतिवाक्यंपुनःपुनः शक्त्याहिदक्षिणांदद्याच्छिवभक्त्यान्नमेततः ताम्रपा
त्रेतुतल्लिंगंस्थापपुष्पैरलंकृतं शिरसाधार्यतत्पात्रंस्वयंमौनीसमाहितः संगच्छेन्नृपमार्गेणयावत्तुशिवगोचरं प्र
दक्षिणीकृत्यशिवंत्रीन्वारांश्चसमंततः नमस्कारैस्ततःकुर्यात्प्रणम्याशिरसाभुवि मौनस्यैषविधिःप्रोक्तोमया
तवमहामते अस्यमौनस्यमाहात्म्याद्देवताःशिवतांगताःएतन्मौनव्रतंप्रोक्तंसर्वकामार्थसाधकं भुविसर्वासमर्था
नांसुकरंप्रकटीकृतम् इतिशिवधर्मेमौनव्रतमाहात्म्यम् अथसंक्रांत्युद्यापनेफलं यदक्षयंपरलोकेपुराणकव
योविदुः विषुवेअयनेवापिसंक्रांतिव्रतमाचरेत् पूर्वेद्युरेकभक्तेनदंतधावनपूर्वकं संक्रांतिवासरेप्राप्तेतिलैःस्नानं
विधीयते अभिसंक्रमणेभूमौचंदनेनाष्टपत्रकं पद्मंसकर्णिकंकुर्यात्तस्मिन्नावाहयेद्रविं कर्णिकायांन्यसेत्सूर्यमा
दित्यपूर्वतस्ततः॥ सराचिंपमथाग्नेय्यांयाम्येऋङ्मंडलायत नमःसावित्रेनैरृत्यांवारुणेवरुणंयजेत् सप्तसप्ति
चवायव्येयजेत्प्रयतमानसः मार्तंडमुत्तरेविष्णुमीशानेविन्यसेत्ततः गंधमाल्यफलैर्भक्ष्यैःस्थंडिलेपूजयेत्ततः च
दनोदकपुष्पैस्तुदेवायार्घ्यंन्यसेद्भुवि अथार्घ्यमंत्रः नमोनमस्तेसूर्यायविश्वधाम्नेस्वयंभुवे नमोनमस्तेवरद
ऋक्सामयजुषांपते अनेनविधिनादत्वादेवायार्घ्यंनरोत्तम द्विजायसोदकंकुंभंतिलपात्रंहिरण्मयं कमंडलुंय
थाशक्त्याकारयित्वानिवेदयेत् विधिनानेनकर्तव्यंमासिमासिनरोत्तम एकभक्ताशनैःपुंभिःसर्वमेतद्यथाविधि
एकस्मिन्नान्हिकर्तव्यंवत्सरांतेथवापुनः अत्रव्रतेत्रयःपक्षाःमासिमासिकर्तव्यमित्येकः संवत्सरमध्येएकस्मिन्कर्त
व्यमितिद्वितीयः संवत्सरांतेकर्तव्यमितितृतीयः एतेचशक्ताशक्तत्वेनव्यवस्थिताः संवत्सरांतेघृतपायसेन-

संतर्प्येवह्निंहिद्विजपुंगवांश्च कुंभान्पुनर्द्वादशधेनुयुक्तान्सरत्नहैरण्मयपद्मगर्भान् पयस्विनीःशीलवतीश्चरौप्यखु
राःसवस्त्राःखलुहैमशृंगीः गावोवृषाःसप्तसकांस्यदोहामाल्यांबरावाचतुरोप्यशक्तः द्वेधान्ययुक्तेकपिलामथै
कांनिवेदयेद्ब्राह्मणपुंगवाय हैमींचदद्यात्पृथिवींसशेषामाकर्षरौप्यामथवापितांमां सशेषांशेषनागसहितांपैष्टीम
शक्तोवसुधांविधायसुवर्णरौप्येणसमंप्रदद्यात् पैष्टींपिष्ठनिर्मितां नवित्तसाठ्यंपुरुषोत्रकुर्यात्कुर्वन्नधोयातिनसंश
योत्र यावन्महेंद्रप्रमुखाःसुरेंद्राःपृथ्वीचसप्ताब्धियुतेहतिष्ठेत् तावत्सगंधर्वगणैरशेषैःसंपूज्यतेनारदनाकपृष्ठे त
तश्चकर्मक्षममाप्यसप्तद्वीपाधिपःस्यात्कुलशीलयुक्तः नाकस्यपृष्ठेससखःसभार्य्यःप्रभूतपुत्रान्वयवंदितांघ्रि इति
पठतिशृणोतियोतिभक्त्याविधिमखिलंरविसंक्रमेणपुण्यं मतिमपिचददातिसोपिदेवैरमरपतिप्रमुखैर्वृतस्तुसः
स्यात् इतिमत्स्यपुराणोक्तसंक्रांतिव्रतोद्यापनम् अथवारव्रतानि नंदिकेश्वरउवाच येत्वादित्यदिनेब्रह्मन्पूज
यंतिदिवाकरं स्नानदानादिनातेषांकिंफलस्याद्ब्रवीहिमे ब्रह्मोवाच येत्वादित्यदिनेप्राप्तेश्राद्धंकुर्वंतिमानवाः सप्त
जन्मानिप्राज्ञाःसभवंतिविरोगिणः नक्तंकुर्वंतियेतत्रमानवास्तंसमाश्रिताः जपमाना.परंजप्यमादित्यहृदयं
परं आरोग्यमिहसंप्राप्यसूर्यलोकंव्रजंतिते उपवासंतुकुर्वंतियेत्वादित्यदिनेसदा जपंतियेमहाश्वेतांतेलभंति
यथेप्सितं अहोरात्रेणनक्तेनात्रिरात्रनियमेनच जपमानोमहाश्वेतामीप्सितंलभतेफलं विशेषेणादित्यदिनेज
पमानोगणाधिप षडक्षरंमहाश्वेतांगच्छेद्वैरोचनंपदं तत्समाश्रिताआदित्यमाश्रिताइत्यर्थ. ॥ श्रीकृष्णउवाच ॥
रविसंक्रमणेचैत्याद्ब्रविवारेनराधिप सज्ञेयोहृदयोनामआदित्यहृदयप्रियः तत्रभक्तंसमाश्रित्यदेवसंपूज्यय
त्नतः गत्वाचायतनेपुण्येरादित्यायतनेस्थितः जपेदादित्यहृदयंसख्ययाष्टशतंबुधः योत्रसंपूजयेद्भानुंभक्त्या
श्रद्धासमन्वितः सकामांल्लभतेसर्वान्...दित्याद्धृदयेस्थितान् आदित्यहृदयमंत्रः घृणिसूर्यआदित्योमहाश्वेतांह्रांह्रींस

समधुसंमिश्रमधुमांसपरिप्लुतं अनेकभक्ष्यभोज्यान्नैर्लेह्यपेयसपिच्छिलैः सांजिकाघृतसंमिश्रैर्मंडकैःसुसमाहि
तैः भोजयित्वाप्रव्राजितान्निरुद्वेगःसमाशयेत् शक्त्याचदक्षिणांदद्याद्वित्तशाठ्यंविवर्जयेत् क्रमेणचीर्यतेविप्रयस्य
यस्यतुयद्भवेत् शिवभक्तान्व्रतोनित्यंशांतिवाक्यंपुनःपुनः शक्त्याहिदक्षिणांदद्याच्छिवभक्त्यान्नमेततः ताम्रपा
त्रेतुतल्लिंगंस्थापपुष्पैरलंकृतं शिरसाधार्यतत्पात्रंस्वयंमौनीसमाहितः संगच्छेन्नृपमार्गेणयावत्तुशिवगोचरं प्र
दक्षिणीकृत्यशिवंत्रीन्वारांश्चसमंततः नमस्कारैस्ततःकुर्यात्प्रणम्यशिरसाभुवि मौनस्यैषविधिःप्रोक्तोमया
तवमहामते अस्यमौनस्यमाहात्म्याद्देवताःशिवतांगताःएतन्मौनव्रतंप्रोक्तंसर्वकामार्थसाधकं भुविसर्वासमर्था
नांसुकरंप्रकटीकृतम् इतिशिवधर्मेमौनव्रतमाहात्म्यम् अथसंक्रांत्युद्यापनेफलं यदक्षयंपरलोकेपुराणकव
योविदुः विषुवेश्चयनेवापिसंक्रांतिव्रतमाचरेत् पूर्वेद्युरेकभक्तेनदंतधावनपूर्वकं संक्रांतिवासरेप्राप्तेतिलैःस्नानं
विधीयते अभिसंक्रमणेभूमौचंदनेनाष्टपत्रकं पद्मंसकर्णिकंकुर्यात्तस्मिन्नावाहयेद्रविं कर्णिकायांन्यसेत्सूर्यमा
दित्यपूर्वंततस्ततः सशाचिषमथाग्नेय्यांयाम्येऋड्मंडलायच नमःसावित्रेनैर्ऋत्यांवारुणेवरुणंयजेत् सप्तसप्ति
चवायव्येयजेत्प्रयतमानसः मार्तंडमुत्तरेविष्णुमीशानेविन्यसेत्ततः गंधमाल्यफलैर्भक्ष्यैःस्थंडिलेपूजयेत्ततःच
...पुष्पैस्तुदेवायार्घ्यंन्यसेद्भुवि अथार्घ्यमंत्रः नमोनमस्तेसूर्यायविश्वधाम्नेस्वयंभुवे नमोनमस्तेवरद
...नेनाविधिनादत्त्वादेवायार्घ्यंनरोत्तम द्विजायसोदकंकुंभंतिलपात्रंहिरण्मयं कमंडलुंय
...र्तव्यंमासिमासिनरोत्तम एकभक्ताशनैःपुंभिःसर्वमेतद्यथाविधि
...म्मिमासिकर्तव्यमित्येकः संवत्सरमध्येएकस्मिन्कर्त
...स्थिताः संवत्सरांतेघृतपायसेन-

पुष्पाणि ११ दशांगगुग्गुलधूपंकालागुरुसमन्वितं आघ्रेयसर्वदेवानामिमंधूपग्रहाणमे धूप १२ कार्पा
सवर्त्तिकायुक्तंगोघृतेनसमन्वितं दीपग्रहाणदेवेशत्रैलोक्यतिमिरापहं दीपं १३ पायसघृतसंयुक्तंनानापक्वा
न्नसंभवं नैवेद्य गृह्यतांदेव शांतिंकुरुजगत्पतेनैवेद्य १४ कर्पूरवासिततोयंमदाकिन्या.समाहृत आचम्यतांजगन्ना
थप्रसीदपरमेश्वर आचमनं १५ इदंफलमयादत्तंस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि
फलं ॥ १६ ॥ एलालवंगकर्पूरखादिरादिसमन्वित तांबूलंगृह्यतांदेवमुखाभरणमुत्तम तांबूल ॥ १७ ॥ यानि
कानिचपापानिजन्मांतरकृतानिच विलयंयांतुतानीहप्रदक्षिणपदेपदे प्रदक्षिणा ॥ १८ ॥ ताम्रपात्रेस्थित
तोयंफलपुष्पसमन्वितं गृहाणार्घ्यंमयादत्तंसर्वकामप्रदोभव अर्घ्यं ॥ १९ ॥ नमःपंकजहस्तायनमःपंक
जमालिने नम.पंकजनेत्रायभास्करायनमोनम नमस्कारः ॥ २० ॥ हिरण्यगर्भगर्भस्थंहेमबीजविभावसोः
अनंतपुण्यफलदमतःशांतिंप्रयच्छमे दक्षिणा ॥ २१ ॥ वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममेवच पुष्परागेण
संयुक्तंहेमपुष्पगृहाणमे सौवर्णपुष्पम् ॥ २२ ॥ पंचवर्त्तिसमायुक्तंसर्वमंगलदायकं नीराजनंगृहीत्वातुमि
त्रोमेसंप्रसीदतु नीराजन ॥ २३ ॥ तंडुलैपूरितंपात्रंहिरण्येनसमन्वितं रक्तवस्त्रयुगोपेतंब्राह्मणायनिवेदयेत्
वायनदान ॥ २४ ॥ यस्योदयेस्याज्जगतःप्रबोधोय.कर्मसाक्षीभुवनस्यगोप्ता कुष्टादिव्याध्यौघविनाशकोय
सभास्करोमेदुरितंनिहन्यात् इतिप्रार्थना इतिपूजा ॥ अथकथा ॥ मांधातोवाच ॥ भगवन्ज्ञानिनांश्रे
ष्ठकथयस्वप्रसादत· त्वद्वक्त्राच्छ्रोतुमिच्छामिव्रतपापप्रणाशनं सर्वकामप्रदंचैवसर्वामयविनाशनं पूजार्घ्य
दानसहितंनैवेद्यप्राशनान्वित एतत्कथयसर्वंत्वंप्रसन्नोयादिमेप्रभो वसिष्ठउवाच शृणुराजन्प्रवक्ष्यामियद्गुह्यं
व्रतमुत्तमं सर्वकामप्रदंपुंसांकुष्ठादिव्याधिनाशनं भानोस्तुष्टिकरंराजन्भुक्तिमुक्तिप्रदायकं.यस्योदयेसुरगणा

इतिमंत्रः खखोल्कायनमः इतिषडक्षरमंत्र ह्रांह्रांस सूर्य्यायइतिकेचित् योवैसूर्यदिनेभक्त्याभानुंसंपूज्यश्रद्धया
नक्तंकरोतिपुरुषःसयात्यमरलोकतां इदंव्रतमेकादिनसमाप्यमितिरत्नाकरःतथाच आदित्यउवाच योव्दमेकप्रकु
र्वीतनक्तममादिनेरतः ब्रह्मचारीजितक्रोधोममार्चनपरःखग संवत्सरांतेचमृगान्भक्ताश्चैववैद्विजान् भोज
यित्वाततोब्रूयात्त्रायतांमेदिवाकरः मृगान्दिव्यब्राह्मणान् एवंभक्तिसमायुक्तोममलोकसगच्छति नचमानुष्य
कंलोकमध्रुवंप्राप्नुयान्नरः इत्यादित्यवारेनक्तादिव्रतानि अथादित्यवारव्रतविधिः सौरधर्मे तत्रादौमासपक्षाद्यु
ल्लिख्य ममसमस्तरोगनिरासार्थमायुष्यादिसकलमनोभिलषितकामनासिद्ध्यर्थं श्रीसूर्यनारायणप्रीत्यर्थंयथाशक्ति
सूर्यनारायणपूजनसहितमादित्यव्रतमहंकरिष्ये ताम्रपात्रेरक्तचंदनेनाष्टदलंकृत्वातत्रदेवंपूजयेत् ध्यानम् तेजो
रूपंसहस्रांशुंसप्ताश्वरथगंरविं द्विभुजंवरदंपद्मलांछनसर्वकामदं ध्यायामीतिशेषः आगच्छभगवन्सूर्यमंडले
स्मिन्स्थिरोभव यावत्पूजासमाप्येततावत्त्वंसन्निधौभव आवाहनम् हेमासनंमहादिव्यंनानारत्नविभूषितं आ
सनंगृह्यतांदेवदिवाकरनमोस्तुते आसनं गंगाजलसमानीतंपरमंपावनंमहत् पाद्यंगृहाणदेवेशधामरूपन
मोस्तुते पाद्यं ३ सोमसूर्याग्निरूपायब्रह्मविष्णुस्वरूपिणे अर्घ्यमंजलिनादत्तंगृहाणपरमेश्वर अर्घ्यं ४
गंगादितीर्थजंतोयजातिपुष्पैश्चवासितं ताम्रपात्रस्थितंदिव्यंगृहाणाचमनीयकं आचमनं ५ जान्हवी
जलमत्यंतपवित्रकरणंपरं स्नानार्थंचमयानीतंस्नानंकुरुजगत्पते स्नानं ६ स्नानांतेआचमनंपूर्वोक्तमंत्रेण ७
शुद्धवस्त्रयुगंदेवरक्तवर्णंदुकूलकं तवभक्त्यामयादत्तंगृहाणकमलाकर वस्त्रं ८ नमःकमलहस्तायविश्वरूपा
यतेनमः उपवीतंमयादत्तंगृहाणत्वंदिवाकर यज्ञोपवीतम् ९ कुंकुमागुरुकस्तूरीसुगंधैश्चंदनादिभिः रक्तचं
दनयुक्तंतुगंधंगृह्णप्रभाकर गंधम् १० जपाकदंबकुसुमरक्तोत्पलमनुत्तमं पुष्पाणिगृह्यतांदेवसर्वकामप्रदोभव

पुष्पाणि ११ दशांगंगुग्गुलुधूपंकालागुरुसमन्वितं आघ्रेयंसर्वदेवानामिमंधूपंगृहाणमे धूपं १२ कार्पा
संवर्त्तिकायुक्तंगोघृतेनसमन्वितं दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहं दीपं १३ पायसघृतसंयुक्तंनानापक्वा
न्नसंभवं नैवेद्यं गृह्यतांदेव शांतिंकुरुजगत्पतेनैवेद्य १४ कर्पूरवासिततोयंमदाकिन्याःसमाहृत आचम्यतांजगन्ना
थप्रसीदपरमेश्वर आचमनं १५ इदंफलमयादत्तंस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि
फलं ॥ १६ ॥ एलालवंगकर्पूरखादिरादिसमन्वितं तांबूलंगृह्यतांदेवमुखाभरणमुत्तम तांबूल ॥ १७ ॥ यानि
कानिचपापानिजन्मांतरकृतानिच विलयंयांतुतानीहप्रदक्षिणपदेपदे प्रदक्षिणा ॥ १८ ॥ ताम्रपात्रेस्थित
तोयंफलपुष्पसमन्वितं गृहाणार्घ्यंमयादत्तंसर्वकामप्रदोभव अर्घ्यं ॥ १९ ॥ नमःपंकजहस्तायनमःपंक
जमालिने नम.पंकजनेत्रायभास्करायनमोनम नमस्कारः ॥ २० ॥ हिरण्यगर्भगर्भस्थंहेमवीजंविभावसोः
अनंतपुण्यफलदमतःशांतिप्रयच्छमे दक्षिणा ॥ २१ ॥ वज्रमाणिक्यवैडूर्य्यमुक्ताविद्रुममेवच पुष्परागेण
संयुक्तंहेमपुष्पगृहाणमे सौवर्णपुष्पम् ॥ २२ ॥ पंचवर्त्तिसमायुक्तंसर्वमंगलदायकं नीराजनंगृहाणत्वातुमि
त्रोमेसंप्रसीदतु नोराजनं ॥ २३ ॥ तंडुलैपूरितंपात्रंहिरण्येनसमान्वितं रक्तवस्त्रयुगोपेतंब्राह्मणायानिवेदयेत्.
वायनदानं ॥ २४ ॥ यस्योदयेस्याजगतःप्रबोधोयःकर्मसाक्षीभुवनस्यगोप्ता कुष्ठादिव्याध्योघविनाशकोय
सभास्करोमेदुरितंनिहन्यात् इतिप्रार्थना इतिपूजा ॥ अथकथा ॥ मांधातोवाच ॥ भगवन्ज्ञानिनांश्रे
ष्ठकथयस्वप्रसादतः त्वद्वक्त्राच्छ्रोतुमिच्छामिव्रतपापप्रणाशनं सर्वकामप्रदंचैवसर्वामयविनाशनं पूजार्घ्य
दानसहितंनैवेद्यप्राशनान्वित एतत्कथयसर्वंत्वंप्रसन्नोयदिमेप्रभो वसिष्ठउवाच. शृणुराजन्प्रवक्ष्यामियद्गुह्यं
व्रतमुत्तमं सर्वकामप्रदंपुंसांकुष्ठादिव्याधिनाशनं भानोस्तुष्टिकरंराजन्भुक्तिमुक्तिप्रदायकं यस्योदयेसुरगणा

मुनिसंघाः संचारणाः दानवामानवगणाःकुर्वंतिसतताचॅनं यस्योदयेतुसर्वेषांप्रबोधोन्टपसत्तम तस्यदे
वस्यवक्ष्यामिव्रतंराजन्सविस्तरं पूजार्घ्यप्राशनंदानंनैवेद्यंश्रृणुतत्त्वतः सर्वतीर्थेषुयत्पुण्यंसर्वयज्ञेषुयत्फलं सर्व
दानेनतपसायत्पुण्यंसमवाप्यते प्रातःस्नानेनयत्पुण्यंतत्पुण्यंरविवासरे मार्गशीर्षादिमासेषुद्वादशस्वपिभू
पते सूर्य्यव्रतंकरिष्यामियावद्वर्षंदिवाकर व्रतंसंपूर्णतांयातुत्वत्प्रसादाद्दिवाकर ॥ इतिव्रतग्रहणम् ततःप्रातः
समुत्थायनद्यादौविमलेजले स्नात्वासंतर्पयेद्देवान्पितॄंश्चवसुधाधिप उपलिप्यशुचौदेशेसूर्यंतत्रसमापयेत्
विलिख्यतत्रपद्मंतुद्वादशारंसकर्णिकं ताम्रपात्रेतथापद्मरक्तचंदनवारिणा ततःसंपूजयेद्देवंदिननाथंसुरेश्वर
मासेमासेचयेराजन्विशेषांस्तान्शृणुष्ववै मार्गशीर्षेयजेन्मित्रंनारिकेलार्घ्यमुत्तमं नैवेद्यंतंडुलादेया.साज्याश्च
संगुडाःस्मृताः पत्रत्रयंतुलस्यास्तुप्राश्यतिष्ठेज्जितेंद्रियः दद्याद्विप्रायभोज्यंतुदक्षिणासहितंन्टप पौषेविष्णुं
समभ्यर्च्यनैवेद्यंकृशरंतथा वीजपूरेणचैवार्घ्यंप्राश्यंचूतदलत्रयं दद्याद्घृतंतुविप्रायभोजनेनसमन्वितं माघे
वरुणनामानं संपूज्याज्यंतिलान्गुडं भोजनंदक्षिणांदद्यान्नैवेद्यंजातिकाफलं अर्घ्यंतेनैवदत्वातुप्राश्यमुष्टित्रयं
तिलान् फाल्गुनेसूर्यमभ्यर्च्यजंबीरार्घ्यंनिवेदयेत् पलत्रयंदधिप्राश्यनैवेद्यंसघृतंदधि दधितंडुलदानंचभो
जनेसमुदाहृतं चैत्रेभानुंतुसंपूज्यनैवेद्यंघृतपूरिकाः फलंतुदाडिमंप्रोक्तंप्राश्यंदधिपलत्रयं विप्रायभोजनंदद्या
न्मिष्टान्नंतुसदक्षिणम् वैशाखेतपनंपूज्यमाषाद्यंसघृतंतथा अर्घ्यंदद्यात्तुद्राक्षाभिःप्राशनेगोमयंस्मृतं कुर्य्या
न्माषान्नदानंचसघृतंवैसदक्षिणां ज्येष्ठेइंद्रंयजेद्धीमान्नैवेद्यंचकरंभजं अर्घ्यंचसहकारेणप्राश्यंतोयांजलित्रयं
दध्योदनसमायुक्तंभोजनंब्राह्मणायतु आषाढेरविमभ्यर्च्यदद्याच्चिभिरकंतथा चिभिरकंवालुकमितिभाषयाप्र
सिद्धं विप्रायभोजनंदद्यात्प्राशनेमरिचत्रयं गभस्तिश्रावणेमासित्रपुसीफलमेवच मुष्टित्रयंचसक्तूनांप्राशने

समुदाहृतं ॥ विप्रायभोजनं दद्या द्दक्षिणासहितंनृप ॥ यमंभाद्रपदेपूज्यकूष्मांडतंडुलाज्यकं ॥ गोमूत्रंप्राश नेप्रोक्तं ॥ तथाब्राह्मणभोजनं ॥ हिरण्यरेतसाभिषेनैवेद्यंशर्करास्मृतं ॥ दाडिमेलाघ्यंदानंतुप्राश्यंखंडपलत्रयं विप्रायपरयाभक्त्याभोजनेशालिशर्करा ॥ दिवाकरः कार्त्तिकेच रंभायाःफलमेवच ॥ पायसंचैवनैवेद्यंपा यसंप्राशयेच्छनैः ॥ एवंव्रतंसमाप्यैतत्तदुद्यापनमाचरेत् ॥ ततोगुरुगृहेगत्वागृहीयाद्वरणावुभौ ॥ उद्यापनं कारिष्येहंमागच्छममवेश्मनि ॥ मापकेनसुवर्णस्यप्रतिमांकारयेद्रवेः ॥ रथोरौप्यमयः कार्य्यः सर्वोपस्क रसंयुत ॥ कृत्वाद्वादशपत्रंतुकमलंरक्ततंडुलैः ॥ स्थापयेदव्रणंकुंभंपंचरत्नसमन्वितं ॥ तस्योपरिन्यसेत्पात्रं ताम्रंतंडुलपूरितं रक्तवस्त्रसमाछन्नंपुष्पमालाविभूषितं ॥ पंचामृतेनस्नपनमभ्युशारणपूर्वकं प्रतिष्ठांचततःकृत्वा पूजांदेवस्यकारयेत् चंदनैःकुसुमैरन्यैर्विविधैःकालसंभवैः अखंडपट्टवस्त्रंचकमंडलुमुपानहौ वर्द्धनीत्रितयंतत्रस्था पयेद्रविसन्निधौ ॥ वर्द्धनीघटिः घटीतुवर्द्धनीतिमेदिनीकोशात् ॥ सज्ञायावस्त्रयुग्मंचकौसुंभंचमहीपते ॥ प्रतिपात्रे पुंसंपूज्याःसूर्य्याद्वादशनामभिः मित्रोविष्णुःसवरुणः सूर्योभानुस्तथैवच ॥ तपनेंद्रोरविःपूज्योगभस्तिःशमन स्तथा ॥ हिरण्यरेतादिनकृत्पूज्याएतेयथाक्रमं ॥ मध्येसहस्रकिरणःसंपूज्यःसंज्ञयासहपूगीफलैर्धूपदीपैर्वस्त्रैर्नैवे द्यसंयुतैः ॥ नारिकेलेनचैवार्घ्यंदद्याद्देवस्यभक्तितः ॥ मंत्रेणानेनराजेंद्रव्रतस्यपरिपूर्त्तये ॥ नमःसहस्रकिरणसर्वव्या धिविनाशन ॥ गृहाणार्घ्यंमयादत्तंसंज्ञयासहितोरवे ॥ इत्यर्घ्यमंत्रः ततआरात्तिकंकृत्वापूजासांकल्प्यमेवच ॥ सां कल्प्यंचततः श्राद्धं कार्य्यंवैसूर्य्यदैवतं ॥ ब्राह्मणान्भोजयेत्भक्त्यामिष्टान्नैर्द्वादशप्रभो ॥ दंपत्योर्भोजनंदेयंपरमान्न समन्वितं ॥ ततस्तुदक्षिणांदेयासमभ्यर्च्यस्त्रगादिभिः ॥ उपहारादितत्सर्वंगुरवेप्रतिपादयेत् ॥ गुरुंतत्रैवसंतोष्य ब्राह्मणांश्चविसर्जयेत् ॥ मंत्रहीनंक्रियाहीनंविधिहीनंतुयत्कृतम् ॥ तत्सर्वंपूर्णतांयातुभूमिदेवप्रसादतः ॥ अनुव्रज्यगु

संविप्रान्भोजनंतुसम्पयेत् । वृद्धैश्चवधुभिःसार्द्धंनत्वादेवंदिवाकरं ॥ एवंयःकुरुतेमर्त्योवित्तशाठ्यविवर्जितः ॥ स
यैद्बलंमहाराजतस्यपुण्यफलंशृणु ॥ ब्राह्मणोलभतेविद्यांक्षत्रियोराज्यमाप्नुयात् ॥ वैश्योधनसमृद्धिंचशूद्रःसुख
मवाप्नुयात् ॥ अपुत्रोलभतेपुत्रंकुमारीलभतेपतिं ॥ रोगार्तोमुच्यतेरोगाद्बद्धोमुच्येतबंधनात् ॥ यंयंचिंतयतेकामंस
तस्यभवतिध्रुवं ॥ यइदंशृणुयाद्भक्त्याप्येकचित्तोनराधिप ॥ सर्वान्कामानवाप्नोतिप्रभावाद्भास्वतोनृप ॥ इतिसौ
रधर्मोक्तंसूर्यव्रतम् ॥ अथास्यप्रयोगः ॥ ॐमद्येतितिथ्यादिसंकीर्त्यात्मनोऽखिलपापक्षयपूर्वकरोगक्षयपुत्रलाभा
दिपूर्वकाभीष्टकामसिद्ध्यर्थंवर्षात्मकंसूर्यव्रतंकरिष्ये ॥ इतिसंकल्प्य गोमयेनोपलिप्तभूमौपंचरंगैर्द्वादशारंपद्मंवि
लिख्य ॥ तत्रताम्रपात्रंनिधायतन्मध्येरक्तचंदनादिनापद्मंविलिख्य तत्रवक्ष्यमाणरीत्यासूर्यंपूजयेत् ॥ मार्ग
शीर्षादिमासेषुक्रमेणदेवतानामर्घ्यनैवेद्यंभक्षणंदानंचज्ञेयं ॥ तत्रादौमार्गशीर्षे मित्रायनमः ॥ नारिकेलार्घ्यं ॥ सा
ज्यगुडतंडुलनैवेद्यं ॥ तुलसीपत्रत्रयभक्षणं ॥ साज्यगुडभक्तदानं ॥ १ पौषे विष्णवेनमः वीजपूरार्घ्यं ॥ पलत्र
यघृतस्पनैवेद्यं प्राश्यंचूतदलत्रयं ॥ २ ॥ माघे वरुणायनमः पूगीफलार्घ्यं ॥ तिलगुडनैवेद्यं ॥ मुष्टित्रयतिलप्रा
शनं ॥ सगुडतिलकुडवदानं ॥ ३ ॥ फाल्गुने सूर्यायनमः जंबीरार्घ्यं ॥ सघृतदधिनैवेद्यं ॥ पलत्रयंदधिप्राशनं ॥ दधितं
डुलदानं ॥ ४ ॥ चैत्रे भानवेनमः दाडिमार्घ्यं ॥ घृतपूरिकानैवेद्यं ॥ पलत्रयदुग्धप्राशनम् मिष्टान्नदानं ॥ ५ वैशाखे तप
नायनमः ॥ द्राक्षार्घ्यं ॥ घृतमन्ननैवेद्यं गोमयप्राशनं ॥ माषान्नदानं ॥ ६ ॥ ज्येष्ठे इंद्रायन.सहकारार्घ्यदानं करंभकं
अंजलित्रयप्राशनं ॥ दध्योदनदानं ॥ ७ ॥ आषाढे रवयेनम जातीफलार्घ्यं ॥ पृथुकनैवेद्यं ॥ दानंच ॥ ८ ॥ श्रावणे गभ
स्तयेनमः त्रपुसीफलार्घ्यं ॥ यवसक्तुनैवेद्यं तदेवपलत्रयप्राशनं अथवायथेष्टभोजनंदानंच ॥ ९ ॥ भाद्रपदे यमायनमः
कूष्मांडार्घ्यदानं ॥ तंडुलाज्यनैवेद्यं ॥ पलद्वयगोमूत्रप्राशनं ॥ तंडुलाज्यदानं ॥ १० ॥ आश्विने हिरण्यरेतसेनमः ॥ डाडिमार्घ्यं

शर्कराभक्तनैवेद्यं शर्करापलत्रयप्राशनं शर्कराभक्तदानं ११ कार्त्तिके दिवाकरायनमः रंभाफलार्घ्यदानं पायसंनैवेद्य
मं सदेवप्राश्नीयात् दद्याच्च १२ एवंवर्षमात्रंव्रतंचरित्वा अतेमार्गशीर्षेपररविवारे उद्यापनंकुर्य्यात् तत्
यथा आचार्य्यंवरणंविधाय सर्वतोभद्रेकलशंप्रतिष्ठाप्य तदुपरिरक्ताक्षतयुतं ताम्रमयपूर्णपात्रंनिधाय
तत्रद्वादशारकमलविरच्य तन्मध्येरौप्यमयंरथंप्रतिष्ठाप्य तदुपरिहैमंसंज्ञासहितंसहस्रकिरणं आकृष्णे
नेतिमंत्रेणप्रतिष्ठाप्यपरितोद्वादशकमलेषुद्वादशमासाधिपान् क्रमेणपूजयेत् तद्यथा ओंमित्रं १ वि
ष्णुं २ वरुणं ३ सूर्यं ४ भानुं ५ तपनं ६ इंद्रं ७ रविं ८ गभस्तिं ९ यमं १० हिरण्यं ११ दि
वाकरं १२ आवाह्य रक्ताक्षतपुष्पादिभिः संपूज्य परमान्ननैवेद्यंदत्वा विशेषार्घ्यंनारिकेलयुतंदद्यात् मंत्रः
ओंनमः सहस्रकिरणसर्वव्याधिविनाशन गृहाणार्घ्यंमयादत्तंसंज्ञयासहितोरवे एवंपूजांसमाप्य ततः
सूर्य्यवेदंतत्रावह्नत्वा तत्रमासाधिपनामभिः पिंडदानंपूजासहितंकुर्य्यात् सूर्य्यायनमः १ धात्रेनमः २
वरुणायनमः ३ माधवायनमः ४ हरयेनमः ५ रवयेनमः ६ रुद्रायनमः ७ भर्गायनमः ८ स्वर्ण
रेतसेनमः ९ अर्य्यम्णेनमः १० भानवेनमः ११ भास्करायनमः १२ एषपिंडोनमः पूजांते आग्ने
य्यां अग्निंप्रतिष्ठाप्य अन्वादध्यात् सज्ञासहितंभास्करंपायसद्रव्येण अष्टोत्तरशतसंख्याकाहुतिभिः परिवार
देवताब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्षे इतिहोमंसमाप्य ततोद्वादशब्राह्मणान्पूर्वोक्तद्वादशनामभिः वस्त्रद
क्षिणादिभिः संपूज्य आचार्य्यायपीठंगांचदत्वा परमान्नेन ब्राह्मणान्संतर्पयेत् इतिसौरपुराणोक्तंसोद्यापनमा
दित्यव्रतम् अथाश्विनादिरविवारेषुआशादित्यव्रतम् स्कांदे स्कंदउवाच शृणुदिव्यंपरंपुण्यमादित्याराधनं
परं यत्कृत्वासर्वकामानांसकलंफलमाप्नुयात् समुद्रतीरेविप्रेशपुरीद्वारावतीशुभा वासुदेवोयदुवरोयत्रराज्यं

प्रशासति दुर्वासः शंकरस्यांशआजगामावलोकितुं कृष्णेनपूजितस्तत्रअर्घ्यपाद्यासनादिभिः भोजनंतस्यत
द्दत्तंपथाभिलपितंमुने संपूजितः सकृष्णेनयावद्गच्छत्यसौमुनिः सांबेनहसितस्तस्यसुतेनसहसाकिल क्रुद्धो
पिमुनिशार्दूलःकोपसंहृतवान्स्वयं पूजितेनमयेदानीमपकर्त्तुकथंक्षणः सगत्वानारदंप्राहसांबेनहसितोस्मिभो
प्रभासेचरतस्तस्यकार्य्यंशिक्षापनंत्वया इत्युक्तोनारदःप्रायाद्द्वारिकांकृष्णसन्निधौ स्वकंसैन्यंदर्शयस्वममदेवाकि
नंदन देवयात्रामिपंकृत्वाहस्त्यश्वरथसंकुलं नारदेनैवमुक्तस्तुतथैवकृतवान्प्रभु दर्शनेतुबलस्याहनात्रसांबःप्र
दृश्यते मुयेवानीयतेशीघ्रंद्वारवत्यास्तवांतिकं गत्वैवमुक्तोमुनिनादृष्टोजांबवतीसुतः सशृंगारस्तथानीतोमकर
ध्वजदर्शनः गत्वालिंग्यचुचुंबुस्तंगोप्यःकृष्णपरिग्रहाः नारदःप्राहभगवन्दुश्चरित्रंतवानघ क्रुद्धेनशौरिणा
शप्तःकुष्टीभवनराधिप एवमुक्तस्तथापुत्रःकुष्टरोगातुरोभवत् सांबःप्रणम्याहपितः किमर्थंशपितस्त्वया स्व
शत्त्याज्ञानदृष्ट्यातुविचारयविनिश्चितं ध्यानाद्दुर्वाससोज्ञात्वाविक्रियामत्रकारणं अनुग्रहोमयापुत्रकार्यस्ते
स्वजनेशुभे आदित्यस्यव्रतंचैवकुरुकुष्ठविनाशनं सांबउवाच कथंतातमयाकार्य्यंव्रतंसर्वफलप्रदं किंविधानं
केमंत्राःकिंदानंकिंचपूजनं श्रीकृष्णउवाच मासमाश्वयुजंप्राप्ययदारविदिनंभवेत् तदाव्रतमिदंग्राह्यंनरैः
स्त्रीभिर्विशेषतः यावत्संवत्सरंतावद्विधिनानेनपुत्रक गोमयेनक्षितौकुर्य्यान्मंडलंवर्त्तुलंपुनः रक्तपुष्पैरक्षताभिर
र्घ्यंतत्रप्रदापयेत् मंत्रेणानेनभोस्वंतमाचार्य्यःप्रतिवासरं यथाशाविमलाःसर्वाःसूर्यभास्वरभानुभिः तथाशाः
सकलामह्यंकुरुनित्यमनाशुताः इत्यर्घ्यमंत्रः एवंतमर्चयेत्तावद्यावद्वर्षंसमाप्यते समाप्तेतुव्रतेवत्सकुर्य्यादुद्याप
नेविधिं गोमयेनानुलिप्तायांभूमौमडलमालिखेत् रक्तचंदनरेखाभिःकुंकुमेनविशेषतः तन्मध्येद्वादशदलंप
द्मसंस्कारयेद्बुधः सिंधूरपूरितदलंजपाकुसुमपूजितं तन्मध्येस्थापयेत्कुंभप्रवालांकुरसन्निभं शालितंडुलसंपूर्णं

शर्कराचंदनान्वितं । तस्योपरिन्यसेत्पात्रंताम्रशक्त्याविनिर्मितं सौवर्णंभास्करंकृत्वापद्महस्तंस्वशक्तितः रक्त
वस्त्रयुगोपेतपात्रोपरिनिवेशयेत् अथपचामृतेनादौजपाकुसुमलेपनैः । रक्तपुष्पैस्तुनैवेद्यैः फलैः कालोद्भवैस्तथा
पूजयेज्जगतामीशंधूपदीपैस्तथोत्तमैः ॐसूर्य्यायनमः १ वरुणाय- २ माधवाय- ३ धात्रे- ४ हरये- ५दुर्गाय- ६
सुवर्णरेतसे- ७ अर्यम्णे. ८ दिवाकराय. ९ भानवे- १० तपनाय- ११ हंसायनमः १२ इतिद्वादश
नामभिः पूजा कार्य्यावैव्रतिभिःसदा नमोनमः पापविनाशनाय विश्वात्मनेसप्ततुरंगमाय सामर्ग्य
जुर्धामनिधेविधात्रे भवाब्धिपोतायनमःसावित्रे इत्यर्घ्यम् एवंसंपूज्यभानुंतुनक्तभुंजीतवाग्यत आचार्यं
पूजयित्वातुवस्त्रैराभरणैः शुभैः तस्मैतांप्रतिमांकुंभ साहिरण्यप्रदापयेत् प्रीयतांभगवन्देवोममसंसारता
रकः ब्राह्मणान्भोजयेत्पश्चाद्द्वादशान्नादिविस्तरैः तेभ्यस्तुकलशान्दद्याद्यथाशक्त्यातुदक्षिणां एवंच कुरु
तेसम्यग्व्रतमेतदनुत्तमं । आशादित्येतिविख्याततस्यपुण्यफलमहत् निर्व्याधिरतितेजस्वीपुत्रपौत्रसमन्वि
तः भुक्त्वाचविपुलान्भोगानमरैश्चापिदुर्लभान् देहांतेरविसायुज्यंप्राप्नुयादुत्तमोत्तमं प्राप्स्यसेपरमांसिद्धिं
विमुक्तः कुष्ठरोगतः आशाभंगोनतस्यास्तिकदाचिदपिजन्मनि एतस्मात्कारणाद्वत्सकुरुष्वव्रतमुत्तमं । एत
च्छ्रुत्वाचच सांबः पित्राकृष्णेनभाषितं व्रतंचरित्वासंप्राप्तः सर्वसिद्धिंसुदुर्लभां इदंयः शृणुयाद्भक्त्या
श्रावयेद्वापिमानवः तावुभौपुण्यकर्माणौरविलोकमवाप्नुतः । इतिस्कंदपुराणोक्तमाशादित्यव्रतम् अथप्रयो
गः आश्विनाद्यरविवारमारभ्यप्रतिवारवर्षपर्यंतकुर्यात् तत्रादौ तिथ्यादिसंकीर्त्यामनः सकलरोगनि
वारणपूर्वकपुत्रपौत्रधनधान्यसकलाभीष्टसिद्धिकरश्रीसवितृप्रीत्यर्थंआशादित्यव्रतंकरिष्ये इतिसंकल्प्य गोम
येनोपलिप्तभूमौरक्तचंदनादिना वर्तुलमंडलंविरच्य तत्रमाशाधिपंदेवमावाह्य षोडशोपचारैः संपूज्य रक्त

पुष्पाक्षतादियुक्तंसजलताम्रपात्रेणअर्घ्यंभूमौजानुनीनिपात्यदद्यात् तत्रमंत्रः यथाशाविमला. सर्वा स्तवभा स्करभानुभिः तथाशाविमलामह्यंकुरुनित्यममार्घ्यतः ततोनमस्कारः नमोस्तुतेपापविनाशनाय विश्वा त्मनेसप्ततुरंगमाय सामर्ग्यजुर्धामनिधेविधात्रेभवाब्धिपोतायनमः सवित्रे अनेनमंत्रेणा शाधिपनाममंत्रे एवापूजाकार्य्या · एवंप्रतिभानुवारंवर्षपर्यंतंचरित्वा अंतेआश्विनाद्यरविवारेउद्यापनंकुर्य्यात् तत्रपूर्वोक्त संकल्पांते आचार्यंवृत्वा सर्वतोभद्रेरक्तवस्त्रवेष्टितताम्रकलशंप्रतिष्ठाप्य तत्रताम्रमयंपूर्णपात्रंनिधाय तत्ररक्ताक्षतैर्द्वादशारंकमलंविरच्य तन्मध्येरौप्यरथस्थंहैमंसवितारं आकृष्णेनेतिमंत्रेणसंस्थाप्यपरितः पू र्वोक्तान्द्वादशमासाधिपान्संस्थाप्य उक्तप्रकारेणपूजयित्वा ततः अग्निंप्रतिष्ठाप्यहोमंकुर्यात् तत्रप्रधा नम् सवितारंपायसद्रव्येण अष्टोत्तरशतसंख्याकाहुतिभिः मासाधिपद्वादशदेवताः ब्रह्मादिदेवताश्चै कैकयाज्याहुत्यःपक्ष्ये होमंसमाप्य पूर्वोक्तद्वादशमासाधिपनामभिर्द्वादशब्राह्मणान्संपूज्य तेभ्यःशालितंडुल संभवपक्वान्नैर्वापूरितान्रक्तकलशान् रक्तवस्त्रवेष्टितान्सदक्षिणान्दत्त्वा आचार्य्यायपीठव्रतपूर्तयेगांचदत्त्वा सदन्नेनब्राह्मणान्तर्पयित्वा आशिषोगृहीत्वास्वयभुंजीत अत्रपायसपूरितताम्रपात्रदानमुक्तहोमोप्युक्त एवंकृते सर्वव्याधिमुक्तोभवति इतिस्कंदपुराणोक्तंसोद्यापनमाशादित्यव्रतोद्यापनविधिः अथभविष्योत्तरादादित्यपी डाशांतिव्रतम् अतःपरंप्रवक्ष्यामिरहस्यंह्येतदुत्तमं येनलक्ष्मीर्धृतिस्तुष्टिःपुष्टिःकांतिश्चजायते . आदित्यवारं हस्तेनपूर्वंगृह्यविचक्षणः मंत्रोक्तविधिनासर्वंकुर्य्यात्पूजादिकंरवेः प्रत्यर्कंसप्तनक्तानिकृत्वाभक्तिपरोनरः तत स्त्वष्टमेप्राप्तेकुर्य्याद्ब्राह्मणवाचनं भास्करंशुद्धसौवर्णंकृत्वायत्नेनमानवः ताम्रपात्रेस्नापयित्वारक्तपुष्पैःप्रपू जयेत् घृतेनस्नापयित्वाचलड्डुकान्विनिवेद्यच होमेघृततिलैश्चैवसमिधश्चार्कवृक्षजाः मंत्रेणानेनविदुषेब्राह्म

णायनिवेदयेत् आदिदेवनमस्तुभ्यसप्तसप्तेदिवाकर त्वंरवेतारयस्वास्मानस्मात्संसारसागरात् अनेनानेन राजेंद्र भवेदारोग्यमुत्तमं द्रव्यसंपत्सुखप्राप्ति रितिपौराणिकाविदुः अविसंपादिर्नीचेय शांतिःपुष्टिः सदानृणाम् सूर्यपीडासुघोरासुकृताशांति शुभप्रदा इत्यादित्यशांतिव्रतम् अथादित्यहृदयस्तोत्रवा- ल्मीकीयेरामायणेयुद्धकांडे ततोयुद्धपरिश्रांतंसमरेचिंतयास्थित रावणंचाग्रतोदृष्ट्वायुद्धायसमुपस्थितं दैवतै श्वसमागम्यद्रष्टुमभ्यागतोरविः उपगम्याब्रवीद्राममगस्त्योभगवांस्तदा अगस्त्यउवाच रामरामसहाबा होश्रृणुगुह्यंसनातनं येनसर्वानरीन्वत्ससमरेविजयिष्यसि आदित्यहृदयंपुण्यसर्वशत्रुविनाशनं जयावहंजप न्नित्यमक्षयंपरमंपदं सर्वमंगलमांगल्यंसर्वपापप्रणाशनम् चिंताशोकप्रशमनंचायुर्वर्द्धनमुत्तमं ओंअस्यश्री आदित्यहृदयस्तोत्रस्यअगस्त्यऋषिरनुष्टुप्छंदः परब्रह्मरूपीभगवानादित्योदेवता निर्विघ्नतया ब्रह्मविद्या जपादिसिद्ध्यैविनियोगः अथकरषडंगन्यासः रश्मिमंतं १ समुद्यंत २ देवासुरनमस्कृतं ३ विवस्वंतं ४ भा स्करं ५ भुवनाधिपं ६ अथध्यानम् ध्येयःसदासवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः केयूरवान्मकरकुंडलवान्किरीटी हारीहि रण्मयवपुर्धृतशंखचक्रः १ पद्मासनःपद्मकरोद्विबाहुःपद्मद्युतिःसप्ततु रंगवाहः दिवाकरोलोकगुरु करीटीमयिप्रसादंविदधातुदेवः २ इतिध्यानम् रश्मिमंतंसमुद्यंतंदेवासुर नमस्कृतं पूजयस्वविवस्वंतंभास्करंभुवनेश्वर सर्वदेवात्मकोह्येषस्तेजस्वीरश्मिभावनः एषदेवासुरगणा न्लोकान्पातिगभस्तिभिः एषब्रह्माचविष्णुश्चशिवःस्कंदःप्रजापतिः महेंद्रोधनद कालोयमःसोमोह्यपांपतिः पितरोवसवःसाध्याअश्विनौमरुतोमनुः वायुर्वह्निःप्रजाःप्राण ऋतुःकर्ताप्रभाकरः आदित्यासवितासूर्यःखगः पूषागभस्तिमान् सुवर्णसदृशोभानुर्हेमरेतादिवाकरः हरिदश्व सहस्रार्चिःसप्तसप्तिर्मरीचिमान् तिमिरोना

धन·शंभुस्त्वष्टामार्तंडकोंशुमान्   हिरण्यगर्भःशिशिरस्तपनोहस्करोरविः ।अग्निगर्भोदिते पुत्रःशखःशिशिरना
शनः व्योमनाथस्तमोभेदीऋग्यजुःसामपारगः   घनवृष्टिरपांमित्रोविंध्यवीथिप्लवंगमः   आतपीमंडलीमृत्युः
पिंगलःसर्वतापनःकविर्विष्णोमहातेजारक्त·सर्वभवोद्भव   नक्षत्रग्रहताराणामधिपोविश्वभावनः ।। तेजसामपि
तेजस्वीद्वादशात्मन्नमोस्तुते   नमःपूर्वायगिरयेपश्चिमायाद्रयेनम   ज्योतिर्गणानांपतयेदिनाधिपतयेनमः जया
यजयभद्रायहर्यश्वायनमोनमः नमोनम सहस्रांशोआदित्यायनमोनमः   नमउग्रायवीरायसारंगायनमोनमः
नम·पद्मप्रबोधायप्रचंडायनमोस्तुते ब्रह्मेशान च्युतेशायशूरायादित्यवर्चसे   भास्वतेसर्वभक्षायरौद्रायपुरुषेनमः
तमोघ्नायहिमघ्नायशत्रुघ्नायामितात्मने कृतघ्नायापदेशायज्योतिपापतयेनम   सप्तचामीकराभायहरयेविश्वकर्मणे
नमस्तुमोभिनिघ्नायरुचयेलोकसाक्षिणे नाशयत्येपवैभूतंतमेवसृजतिप्रभो पालयन्नेपतपतिवर्षत्येषगभस्तिभिः ए
पसुप्तेषुजागर्तिभूतेपुपरिनिष्ठितः   एपचैवाग्निहोत्रंचफलंचैवाग्निहोत्रिणां   देवाश्चक्रतवश्चैवक्रतूनांफलमेवच
यानिकृत्यानिसर्वेपुपरात्मापरम·प्रभुः १२५ इतिसूर्यनामानि   एनमापत्सुकृच्छ्रेपुकांतारेषुभयेषुच कीर्त्तय
न्पुरुषःकश्चिन्नावसीदतिराघव   पूजयस्वैनमव्यग्रोदेवदेवंजत्पतिं   एतत्त्रिगुणितजप्त्वायुद्धेषुविजयिष्यसि
अस्मिन्क्षणेमहावाहोरावणनिहनिष्यसि   एवमुक्त्वाततोगस्त्योजगामसयथागत, एतच्छ्रुत्वामहातेजानष्टशो
कोभवत्तदा धारयामासकठाग्रराघवःप्रयतात्मवान्   आदित्यप्रेक्ष्यजप्त्वेदंपरंहर्षमवाप्तवान्   त्रिराचम्यशु
चिर्भूत्वाधनुरादायवीर्यवान्   रावणंप्रेक्ष्यहृष्टात्माजपार्थसमुपागमत्   सर्वयत्नेनमहतावृतस्तस्यवधेभवत् अथ
रविरवदन्निरीक्ष्यरामंमुदितमना·परमप्रहृष्यमाणः निशिचरपतिसक्षयंविदित्वासुरगणमध्यगतोवचस्त्वरेति इ
त्यार्षेरामायणेयुद्धकांडेपडुत्तरशततमः सर्गः १०६ अथापरसूर्यस्तोत्रं   महाभारतेवनपर्वणि धौम्यउवाच

सूर्योर्य्यमाभगस्त्वष्टापूषार्कःसवितारविः भगास्तिमानजःकालोमृत्युर्धाताप्रभाकरः पृथिव्यापस्तथातेजःखंवा
युश्चपरायणं सोमोवृहस्पतिःशुक्रोबुधोंगारकएवच इंद्रोविवस्वान्दीप्तांशुःशुचि.शौरिःशनैश्चरः ब्रह्माविष्णु
श्चरुद्रश्चस्कंदोवैश्रवणोयमः वैद्युतोजाठरश्चाग्निरैंधनस्तेजसांपतिः धर्मध्वजोवेदकर्त्तावेदांगोवेदवाहनः कृतं
त्रेताद्वापरश्चकालिःसर्वामराश्रयः कलाकाष्ठामुहूर्त्ताश्चपक्षोमासऋतुश्चयः संवत्सरकरोऽश्वत्थःकालचक्रंविभावसुः
पुरुषःशाश्वतोयोगीव्यक्तोऽव्यक्तःसनातनः लोकाध्यक्षःसुराध्यक्षोविश्वकर्मातमोनुदः वरुणःसागरांशश्च
जीमूतोजीवनोरिहा भूताशयोभूतपतिःसर्वभूतनिषेवितः त्वष्टासंवर्त्तकोवन्हिःसर्वस्यादिकरोऽव्ययः अनंतःक
पिलोभानुःकामदःसर्वतोमुखः जयोविशाखोवरदःसर्वधातुनिषेवितःमनःसुपर्णोभूतादिःशीघ्रगःप्राणधारणःध
न्वंतरिर्धूमकेतुरादिदेवोदितेःसुतः द्वादशात्मारविंदश्चापितामातापितामहः स्वर्गद्वारंप्रजाद्वारंमोक्षद्वारंत्रिवि
ष्टपं वेदकर्त्ताप्रशांतात्माविश्वात्मासर्वतोमुखः चराचरात्माभूतात्मामैत्रेणवपुषान्वितः १०८ एतद्वैकीर्त्तनीय
श्चसूर्यस्यामिततेजसः नाम्नामष्टशतंप्रोक्तंशक्रेणसुमहात्मना शक्राच्चनारदःप्राप्यधौम्येनतदनंतरं धौम्यात्
युधिष्ठिरःप्राप्यसर्वान्कामानवाप्तवान् सुरपितृगणयक्षसेवितंअसुरनिशाचरसिद्धवंदितं वरकनकहुताशनप्रभं
त्वमपिनमस्वाहितायभास्करं सूर्योदयेयःपठतेसमाहितःसपुत्रलाभंधनरत्नसंचयं लभेतजातिस्मरतांसदा
नरःस्मृतिंचमेधामपिविंदतेपुमान् इमंस्तवंदेववरस्ययोनरःप्रकीर्त्तयेच्छुद्धमना समाहितः समुच्यतेपातक
राशिसागरात् लभेतकामान्मनसायथेप्सितान् इत्यारण्यपर्वणिसूर्यस्तवः इत्यादित्यवारव्रतविधिः अथा
दित्यनक्तव्रतम् भविष्योत्तरे युधिष्ठिरउवाच यदारोग्यकरंपुंसांयदनंतफलप्रदं तद्व्रतंब्रूहिगोविंदसर्वपापप्र
णाशनं श्रीकृष्णउवाच यत्तद्विश्वात्मकंधामपरंब्रह्मसनातनं सूर्याग्निचंद्ररूपेणतत्त्रिधाजगतिस्थितं तमा

राध्यपुमान्किंनप्राप्नोतिकुरुनंदन तस्मादादित्यवारेणसदानक्ताशनोभवेत् उत्पद्यतेयदाभक्तिर्भानोरुपरिशा
श्वती तदारभ्यसदाकार्य्यंनक्तमादित्यवासरे पूर्वोक्तविधिनाराजन्पूजयित्वाद्विजोत्तमान् आशादित्यव्रतोक्त
विधिनेत्यर्थः ततोस्तसमयेभानोरक्तचंदनपंकजं विलिख्यद्वादशदलंपूजयेदर्कनामभिः सूर्येतिप्रथमंपूज्यपू
र्वतश्चप्रभाकरं दिवाकरंतथाग्नेय्यांविवस्वंतमतःपरं भगंतुनैर्ऋतेदेवंवरुणंपश्चिमेदले माहेंद्रंमारुतदलेत
थादित्यमथोत्तरे शांतमीशानभागेतुनमस्कारेणविन्यसेत् कर्णिकायांपूर्वदलेसूर्य्यस्यतुरगान्यजेत् दक्षिणेयजमा
नंतुमार्तंडपश्चिमेदले उत्तरेणरविंदेवंकर्णिकायांचभास्करं अर्घ्यंदद्यात्तदापार्थसतिलारुणचंदनं फलाक्षतयु
तत्वदिमंमंत्रमुदीरयेत् कालात्मासर्वभूतात्मावेदात्मासर्वतोमुख यस्मादग्नींदुरूपस्त्वमतःपाहिप्रभाकर अग्निमीले
नमस्तुभ्यमिषेत्वोर्जेचभास्कर अग्नआयाहिवीतित्वशन्नोदेवीनमोस्तुते अर्घ्यंदद्याद्विसृज्याथनिशितैलविवर्जितः
भुंजीतभावितमनाभास्करंसंस्मरन्मुहुः प्रागेतस्मिन्शनौचान्हितैलाभ्यंगंविवर्जयेत् वत्सरांतेकारयित्वाकां
चनंकमलोत्तमं संकल्पयित्वापुरुषंसपद्मंदद्यादनेनविधिनाव्रतनायकाय अव्यंगरूपायजितेंद्रियायकुटुंबि
नेनित्यमनुव्रताय नमोस्तुऋक्सामयजुर्विधात्रेजगत्प्रबोधायजगत्सवित्रे त्रयीमयायत्रिगुणात्मनेचत्रैलोक्य
नाथायनमोनमस्ते इत्यनेनविधानेनवर्षमेकंतुयोनरः नक्तमादित्यवारेणकुर्यात्सोनिरुजोभवेत् धनधान्यसमा
युक्तःपुत्रपौत्रसमन्वितः मर्त्येस्थित्वाचिरंकालंसूर्यलोकमवाप्नुयात् कर्मसंक्षयमवाप्यपार्थिवःशोकदुःखभय
रोगवर्जितः स्यादमित्रकुलकालसन्निभोधर्ममूर्तिरपितेजसायुतः याचभर्तृगुरुदेवतत्परावेदमूर्तिदिननक्तमा
चरेत् सापिलोकममरेशपूजितायातिकौरवरवर्नसंशयः यःपठेदथशृणोतिवानरःपश्यतीदमथवानुमोदयेत्
सोपि शक्रभुवनेदिवौकसैःकल्पकोटिशतमेकमोदयते इतिभविष्योत्तरेआदित्यनक्तविधिः ॥

## अथसोमवारव्रतानि तत्रादौचंद्रपीडाशांतिकरंसोमवारनक्तव्रतंभविष्ये

तद्वाच्चिन्नासुसंगृह्यसोमवारविचक्षणः तद्वतहस्तार्कवत् आगमोक्तविधिनाकुर्य्यात्पूजादिकविधौ सप्तमेतुततः
प्राप्तेकुर्य्याद्ब्राह्मणभोजनं सप्तमेनक्तेप्राप्तेइत्यर्थः कांस्यपात्रेतुसंस्थाप्यसोमंरजतसंभवं श्वेतवस्त्रयुगच्छन्नंश्वे
तगंधैःसुपूजितं पादुकोपानहच्छत्रंभोजनासनसंयुतं होमंघृतातिलैःकुर्य्यात्सोमनाम्नाचमंत्रवित् समिधोष्टोत्तर
शतमष्टाविंशतिरेववा होतव्यामधुसर्पिभ्यांदध्नाचैवघृतेनच दध्नाघृतेनचभिन्नोहोमः समिधःपालाश्यः राज
तेशशिनंकृत्वाब्राह्मणायनिवेदयेत् तत्रमंत्रःमहोदयोजातिमल्लीपुष्पगोक्षीरपांडुर सोमसौम्योभवास्माकंसर्वदा
तेनमोनमः एवंकृतेमहासौम्यः सोमस्तुष्टिकरोभवेत् संतुष्टेत्रिसुतेतस्मिन्सर्वेसानुग्रहाग्रहाः इतिचंद्रशांति
करसोमवारव्रतम् अथचंद्रस्तोत्रं तत्रादौध्यानम् श्वेतांबरःश्वेतविभूषणश्चश्वेतद्युतिर्दंडधरोद्विबाहुः चंद्रा
मृतात्मावरदःकिरीटीमयिप्रसादंविदधातुदेवः १ हिमगोक्षीरवर्णायशंखकुंदनिभायचबालचंद्रायचंद्रायपूर्णचं
द्रेनमोनमः नमश्चंद्रायसोमायनमःकुमुदबांधवे विरोहितायशुक्लायशुक्लांबरधरायच त्वमेवसर्वलोकस्य
चाप्यायनकरःसदा क्षीरोद्भवायदेवायनमःशंकरशेखरयुगानांयुगकर्त्तात्वंनिशानांचनिशापतिः संवत्सराणां
मासानामृतूनांचतथैवच ग्रहाणांचत्वमेकोहिरोहिणीपतयेनमः इदंतुपठतेस्तोत्रंप्रातरुत्थाययोनरः नभयं
विपतेतस्यकार्यसिद्धिर्भविष्यति दिवावायादवारात्रौदुःखचसातियोनरः अहोरात्रकृतंपापंतत्क्षणादेवनश्यति ॥
इतिचंद्रस्तोत्रम् ॥ अथशिवप्रीतिकरंसोमवारव्रतं स्कंदपुराणे ॥ नारदउवाच ॥ अथान्यदपिमेब्रूहियेन
नाहंप्राप्नुयांपदं अविच्छिन्नाशिवेभक्तिः पुत्रसौभाग्यसंपदः ॥ नंदिकेश्वरउवाच ॥ सोमवारव्रतंपुण्यंक

ध्यमानंनिबोधमे श्रावणेचैत्रवैशाखेज्येष्ठेवामार्गशीर्षके प्रथमेसोमवारेचगृह्णीयाद्व्रतमुत्तमं यदाश्रद्धा-
भवेत्कर्तुंसोमवारव्रतंप्रति तदावापिपुरस्कृत्यश्रद्धाभक्तिसमन्वितः सुस्नातश्चशुचिर्भूत्वाशुक्लांबरधरःशुचिः
कामक्रोधाद्यहंकारद्वेषपैशुन्यवर्जितः आहरेत्श्वेतपुष्पाणिमालतीमल्लिकादिकं श्वेतपद्मानिदिव्यानि
चंपकानितथैवच कुमुदोत्पलजैःपुष्पैःपद्मैश्चशतपत्रकैः आचार्य्येणोमयासार्धंशंकरंलोकशंकरं मायोद्भवेन
धूपेनपूजयेत्पार्वतीपतिं अन्यानियान्यभीष्टानितानिसर्वाणिदापयेत् नागपुष्पैश्चधूपैश्चपूजयेत्पार्वतीपतिं का
मिकेनतुमंत्रेणव्यापकेनमहेश्वरं पूजयेन्मूलमंत्रेणत्र्यंबकेनततःपरं भवायभवनाथायमहादेवायधीमहि उग्रा
यचोग्रनाथायशर्वायशशिमौलये रुद्रायनीलकंठायशिवायभवहारिणे शंकरायनमोजंघेशिवायेतिचजानुनी
शूलपाणिनमोगुह्येकट्यांशंभुंप्रपूजयेत् गुह्येस्वयंभुनामानंपूजयेत्पार्वतीपतिं महादेवायइतिचपूजयेन्नाभिमं
डलं उदरेविश्वकर्त्रेतिपार्श्वयोः सर्वतोमुखं स्थाणुंतनौचसंपूज्यनीलकंठायकंठतः मुखेसंपूजयेद्देवंश्रीकंठा
यशिवायचात्रिनेत्रायनमोनेत्रेमुकुटेशशिभूषणं नमोदेवाधिदेवायसर्वांगेपूजयेद्विभुं एवंसंपूज्यदेवेशमुपहारै
र्मनोरमैः यथाविभवसारेणतस्यपुण्यफलंशृणु सोमवारेयजंतेयेपार्वत्यासहशंकरं तेलभंत्यक्षयांल्लोकान्पुन
रावृत्तिदुर्लभान् एकभक्तस्ययत्पुण्यंकथयामिसमासतः सप्तजन्मार्जितंपापमभेद्यंदेवदानवैः नश्यतेचैक
भक्तेननात्रकार्य्याविचारणा मासैकस्यतुयत्पुण्यंशृणुयत्नेननारद अभाग्योजातभाग्यःस्याद्दुर्भगःसुभगोभ
वेत् पुत्रार्थीलभतेपुत्रान्धनार्थीलभतेधनं कन्यार्थीलभतेकन्यांरूपलावण्यशालिनीं यंयंचिंतयतेकामंतंतं-
प्राप्नोतिमानवः इहलोकेचिरंस्थित्वाभुक्त्वाभोगान्मनोरमान् विमानवरमारुह्यलोकेशैवमहीयते यथात्म
नंतथादेवंयथादेवंतथागुरुं तोषयेच्चपरंभक्त्यातेनपूर्णंभवेद्व्रतं उपवासेनयोदेवंसमाचरतिमानवः यदाचित्तं

चवित्तंचजायतेपुरुषस्यवै -- तदेवोद्यापनंकुर्य्याद्व्रतसंपूर्त्तिहेतवे चलंचित्तंचलंवित्तंचलंजीवितमेवचएवंज्ञात्वाप्रय
त्नेनव्रतस्योद्यापनंचरेत् -उमामहेश्वरौहेमौवृषभेनसमन्वितौ यथाशक्त्याप्रकर्त्तव्यौवित्तशाठ्यंनकारयेत् मं
डलंकारयेद्दिव्यंलिंगोद्भवसमुद्भवंकलशंपयसापूर्णंश्वेतवस्त्रयुगान्वितं ताम्रपात्रंवेणुपात्रंकुम्भयोरुपरिन्यसेत् स्था-
पयेन्मंडलेदिव्यंकलशंकनकोज्वलं तस्योपरिन्यसेद्देवमुमयासहितंशिवं पूर्वोक्तैरेवमंत्रैस्तुपूजयेत्पार्वतीपतिं ना
नापुष्पैःफलैर्दिव्यैर्नानारत्नैःसमर्चयेत् -श्वेतवस्त्रयुगेनैवनाममंत्रैर्महेश्वरं उपवीतंसोत्तरीयंभक्ष्याणिविविधानिच
अन्यानियान्यभीष्टानितानिचान्यानिकल्पयेत् रात्रौजागरणंकुर्य्याद्गीतवादित्रनिःस्वनैः - स्वगृह्योक्तविधानेन
कृत्वाग्निस्थापनंततः -ततोहोमंचशर्वस्यमंत्रैःकार्य्योष्टाभिःसदा -पलाशशमीसमिद्भिर्जुहुयाद्वाधिकंशतं -आप्यायस्वे
तिमंत्रेणपृषदाज्ययुतस्तदा -यवव्रीहितिलाज्येनपूर्णंपूर्णंपृथक्पृथक् पूर्णाहुतिंततोदद्यात्कृत्वास्विष्टकृदादिकं
होमांतेचगुरुंपूज्यसपत्नीकंसमाहितः -वस्त्रैराभरणैःश्रेष्ठैर्गृहोपकरणादिभिः - श्वेतागौःकपिलावापिसुशीलाच
पयस्विनी -सवत्सारत्नपुच्छाचघंटावस्त्रविभूषिता दक्षिणासहितादेयाशिवोमेप्रीयतामिति -धेनुर्वैजगतांमाता-
नित्यंविष्णुपदेस्थिता -सवत्साचमयादत्ताशिवोमेप्रीयतामिति - ब्राह्मणान्भोजयेद्विद्वांस्त्रयोदशसुशोभनान् व-
स्त्रालंकारछत्रादिसदक्षिणास्त्रयोदश -घटादेयास्त्रंशपात्रैर्भक्ष्यभोज्यसमन्विताः सफलावस्त्रसंयुक्तायज्ञसूत्रसम
न्विताः पूजितंतुततोदेवंदेवोपकरणानिच - आचार्य्यायततोदद्यात्प्रणिपत्य -पुनः पुनः इमंदेवंगृहाणत्वंसर्वो
पस्करसंयुतं -परिपूर्णंव्रतंमेस्यात्शिवोमेप्रीयतामिति -तत्रग्रहणमंत्रः -- गृह्णामिदेवदेवेशत्रयाणांजगतांगुरुंशां
तिरस्तुशिवंचास्तुव्रतस्याविकलंफलं -- यद्भक्त्यादेवदेवेशमयाव्रतमिदंकृतं - दानंवाथक्रियाहानिःपरिपूर्णंतद
स्तुमे -इतिसंप्रार्थ्यतंदेवंद्विजंचैवपुनःपुनः -- भुंजीयात्सहधर्मात्माशिष्टैरिष्टैश्चबंधुभिः -- अनेनैवविधानेनयइदं-

व्रतमाचरेत् यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः दातासुखीचतेजस्वीत्रिपुलोकेपुजायते विमानवरमारु-
ह्यसोमलोकेमहीयते मन्वंतरशतयावत्तावदत्रैवमोदते शिवलोकंततोगत्वाशिवेनसहमोदते क्रीडतेशंभुरू
पेणपुनरावृत्तिदुर्लभ कृष्णेनाचरितपूर्वंसोमवारव्रतंशुभ नृपैरन्यैस्समाचीर्णमास्तिकैर्धर्मतत्परैः इति
पठतिरहस्यच शृणोतीहनित्य स्त्वनुवदतियइत्थंश्रद्धयान्यस्यलोकेसकलकलुषहीनोवंद्यमानोगणाद्यैः शिव
विमलविमानैर्यातिशैवंपुरसः इतिस्कंदपुराणेसोद्यापनसोमवारव्रतम् अथान्यद्रूपसाध्यंसोमवारव्रतम्
स्कंदपुराणे ईश्वरउवाच अथव्रतविधानंहिकथयामिसमासतः यथाभवतिमनुजाःसिद्धिसर्वार्थकामदां व्यु
त्क्रांतेकार्तिकेमासिशुक्लमार्गेदिनेभवेत् प्रथमसोमवारस्तुतनक्तेनप्रपुजयेत् यदाश्रद्धाभवेत्कर्तुंस्सोमवारव्रत
प्रतितदासर्वकारयित्वाब्राह्मणाद्यैःसमाचरेत् मार्गेमाघेतथाचैत्रेगृह्णीयात्सोमवारकं यस्मिन्मासेप्रारभेततस्मि
न्नुद्यापयेद्व्रतं सुस्नातोथशुचिर्भूत्वाशुक्लांबरधरोनरःकामक्रोधाद्यहंकारद्वेषपैशून्यवर्जितः आहरेच्छ्वेतपुष्पाणिमल्लि
कांमालतींतथा श्वेतपद्मानिदिव्यानिचंपकाबिल्वपाटलाः कुंदमंदरजैःपुष्पैःपुन्नागशतपत्रकैः अर्चयेच्चंदनेनाथदि
व्यधूपेनधूपयेत् अन्यानियान्यभीष्टानितानिसर्वाणिदापयेत् पूजयेद्भक्तिभावेनसोमनाथंजगत्पतिं कामिकेनतु
मंत्रेणप्रापकेनमहेश्वर निवेदयेत्सर्वमेवशृणुमंत्रवरशुभं ॐनमोदशभुजायात्रिनेत्रायचात्रिशूलिने श्वेतवृ-
षभारूढायसर्वाभरणभूषिताय उमादेहार्धसंस्थायनमस्तेसर्वमूर्तये अनेनैवतुमंत्रेणपूजांहोमंतुकारयेत्
सिद्ध्यति सर्वकार्याणिमनसाचिंतितानिच पूजयेन्नक्तवेलायामृक्षाणांदर्शनेनतु प्रदायभोजनंपूर्वं-
ब्राह्मणायसुभक्तितः एतद्विधिसमायुक्तोरागद्वेषविवर्जितः एकभक्तस्ययत्पुण्यंकथयामिसमासतः श-
तजन्मार्जितंपापमभेद्यंदेवदानवैः नश्यतेह्येकभक्तेननात्रकार्याविचारणा मासस्यैकस्ययत्पुण्यंशृणुतत्त्वेनसं-

हरि आरोग्यजायतेभाग्यंदुर्भगासुभगाभवेत् पुत्रार्थीलभतेपुत्रान्दरिद्रोधनवान्भवेत् गृहेतस्यवरारोहेसौ
ख्यानिविविधानिच तदंशोधनभागीस्याद्विघ्नहीन क्षितिंचरेत् अश्वमेधसहस्रस्यफलंप्राप्नोतिमानवः स्वर्गे
भुक्त्वावरान्भोगान्जायतेमानवोत्तमः नक्तानिसोमवारेतुपौषेमासेमहेश्वरि तेषांपुण्यफलंवक्ष्येसंक्षेपेणतवा
ग्रतः अग्निष्टोमस्ययज्ञस्यफलंशतगुणंभवेत् तत्फलंलभतेदेविभक्तिभावसमन्वितः माघस्यैवतुमासस्यसो
मवारेणपूजयेत् स्नापयेन्मधुदुग्धाभ्यांतथैवेक्षुरसेनतु द्विजहत्यादिपापानि तानिसर्वाणिनाशयेत् विशुद्ध
तेजसायुक्तोजायतेस्यंतानिर्मलः बहुस्वर्णस्ययत्पुण्यंदुर्लभंयत्सुरैरपि लभतेनात्रसंदेहोममभक्तिप्रचोदितः फा
ल्गुनेकथयिष्यामिसोमवारफलंशुभं कृतेनक्तेतुकल्याणिगुणांस्तेविस्तरेणतु गवांलक्षस्यदत्तस्यचंद्रसूर्यग्रहे
प्रिये फलमस्याधिकंतत्रलभतेनात्रसंशयः चैत्रेपिशृणुकल्याणिममेदंवदतोवचः सोमवारेणनक्तेनकृतेनसु
रसुंदरि यत्फलंलभतेनारीलक्षैकेनतुपार्वति गंगोदकस्यनीतस्यसोमनाथस्यसन्निधौ घृतस्यमधुनोवापि
शतधाहिकृतंफलं गुग्गुलोश्चतथापंचसहस्रपरमेश्वरि तत्पुण्यंचभवेत्तस्यमानवस्यनसंशयः वैशाखेकारयेन्न
क्तंसोमवारेनसंशयः वैशाखेकारयेन्नक्तंसोमवारेनसंशयः पूजयेच्छ्वेतपुष्पैश्चतथालब्धे सुरेश्वरि अपूपाहि
प्रदातव्याः कदलीफलसंचयाः एकचित्तेनभावेननिर्मलेनयशस्विनि कन्यानांवरयोग्यानांसहस्रेणवरानने
दत्तानांविधिवद्देविनराणांरूपशालिनां एतद्दानेनयत्पुण्यंलभतेमानवोभुवि तत्फलंलभतेतत्रसोमवारव्रतेनतु
ज्येष्ठेमासिमहादेविसोमवारव्रतस्यतु चीर्णस्ययद्भवेत्पुण्यंतत्सर्वंकथयामिते गवांसुवर्णशृंगीणांपुष्करेविधिव
त्प्रिये दत्वाद्दशसहस्राणांफलंप्राप्नोतिमानवः पदंचलभतेपुण्यंदुर्लभंदेवदानवैः ईशस्यकल्पमतुलंक्रीडतेतत्र
सुंदरि आषाढेसोमवारस्यभावितात्माचरेद्व्रतं विधिपूर्णंतुकल्याणिमत्त शृणुवदामिते नरमेधशतैकेनाविधियुक्ते

नेयत्फलं तद्भवेन्मानवेदेवि पुण्यंसर्वशुभान्वितं साधितुंनैवशक्यंतदेविनक्तमिदंततः तस्माद्व्रतमिदंसारंयतः
कष्टेनसिध्यति श्रावणेतुमहादेवंसोमवारेणपूजयेत् रात्रौतुभोजनंकुर्य्यान्मदकौटिल्यवर्जितः भवेद्राजवरः
प्राणीजीवमानोमहेश्वर इहलेतादृशीचेष्टापरंवंकथयामिते अश्वमेधशतस्यायंपुण्यंप्राप्नोतिमानवः ममलो
केसवसतियावच्चंद्रार्कतारकाः भाद्रेचभावसंयुक्तः पूजयेत्परमेश्वरि पुण्यंचानुत्तमंतस्यशृणुदेविविशेषतः ग-
वांकोटिप्रदानस्यसवत्सानांसुशीलिने यत्फलंतत्समाप्नोतिमानवोनात्रसंशयः आश्विनेकथयिष्यामिश्राश्वि-
ष्टोमफलंशतं रसधेनुसहस्रस्यगुडधेनुशतस्यच सूर्यग्रहेकुरुक्षेत्रेब्राह्मणेवेदपारगे दत्तस्यफलमाप्नोतिमान
वोनात्रसंशयः कार्तिकेवरदंदेविकामिकंमोक्षदायकं स्मरणात्पापसंघानांभेदकंपरमेश्वरि सोमवारव्रतधरा-
विधिवत्पूजयेच्छिवं नक्ताशीश्रद्धयायुक्तोदयासत्यसमन्वितः दत्तस्यवेदपारज्ञेरथानांचशतस्यचवाजिभिःशु-
क्लिसैश्चप्रयुक्तैश्चमहात्माभिः चतुर्वेदेषुविप्रेषुप्रदत्तस्यचयत्फलम् तत्फलंलभतेदेविमानवोभक्तिसंयुतः व्रतां
तेप्रतिमांकुर्य्याद्रौप्यंसोमंचतुर्भुजं त्रयोदशघटाश्वेतवस्त्रयुग्मसमन्वितान् सपूर्णानिसुभक्ष्यैश्चवंशपात्राणिप
र्वति तेषामुपरियत्नेनस्थापयेन्त्रिदशेश्वरि सघृतेनसुगंधेनसुस्निग्धेनोज्वलेनच भक्तेनघृतपक्कैश्चमुद्गशाकयुतैस्त
था ब्राह्मणानथसंभोज्यभक्तियुक्तेनचेतसा त्रयोदशघटान्दद्याद्गाश्चश्वेतामनोरमाः यथोक्तेनविधानेनविप्रावस्त्रावि
भूषिताः उपानहयुताःकार्य्याश्चित्तवित्तानुसारतः दद्यात्स्वाचरसंपन्नस्त्वाचार्य्यमुपवेशयेत् नगुरोःसदृशी
मातानगुरोःसदृशःपिता संसारादुद्धरेद्घोराद्व्रतदानोपदेशतः गोस्वामीपूजितोयस्मात्पार्वत्यासहितप्र
भुः तस्मात्संपूजयेद्भक्त्यागुरुंभार्य्यासमन्वितं आचार्य्यंप्रथमेतत्रपूजयापादसेवया दद्याद्वस्त्राणिदिव्या
निसुवर्णाभरणानिच अमूल्यानिचरत्नानिग्रामक्षेत्रपुराणिच नगसाण्डिइदिव्यंयच्चान्यदपिसुंदरि वाहनानि

विचित्राणिगजवाजिरथादिकं अन्यानियान्यभीष्ठानितानिसर्वाणिदापयेत् गौर्गुरो संप्रदातव्यासवस्त्रातुस्व
रूपिणी स्वर्णशृंगीरौप्यखुराकांस्यपात्रोपदोहिनी ताम्रपृष्ठीसुशीलाचवस्त्रप्रावृतदेहका अभ्यर्च्यविधिव
द्दद्या द्व्रतं संपूर्णमेतिच सप्तधान्यंयथाशक्त्यादापयेत्प्रयतोव्रती दीपदानंप्रकर्तव्यंगुरवेज्ञानदायिने एव
गुरुंप्रणम्याथशक्त्यादद्याच्चदक्षिणां शक्त्यादद्याच्चतत्सर्वंपुरायदुपककल्पितं ततस्तपस्विनादेविममदर्शनहेतु
ना सुगंधघृतसंमिश्र धूपैःकृशर पायसैः धारिकाशोकवर्त्तीभिः पूरिकामडकैस्तथा दधिदुग्धसमोपेतं
भोजनंदापयेत्सुधीःतपस्विनोब्राह्मणाश्चलिंगमूर्त्तिश्चतुर्विधं ममरूपमिदंयस्मात्तस्मात्पूज्यंचतुष्टय शिवांकितैश्च
शास्त्रज्ञैर्देशिकैर्धर्मचिंतकैः जटामुद्रादिसंयुक्तैर्भस्मोद्धूलितविग्रहैः ब्रह्मचर्यरतैः शांतैर्लोभमत्सरवर्जितैः ईदृशैः
शिवपात्रैश्चभुक्ते फलमनुत्तमं भोजनंतेषुदातव्यं तांबूलमुख वासक श्वेतचंदन कर्पूरं दत्त्वातांश्चविसर्जये
त् शक्त्यातुभोजनंदत्त्वायथावित्तानुसारतः कृपणानाथदीनानांसुहृदांयावतामपि एवंविधिसमायुक्तोगच्छेतप
रंमपदं भोगान्भुक्त्वेसर्वलोकेपुनः कोटिगुणांस्तरेत् कन्याभिर्वेष्टितोदेविस्वेच्छयारमतेप्रिये ममलोकेवसेत्ताव
द्यावदाभूतसंप्लवं ममवीर्यबलोपेतस्त्रिनेत्रःशूलपाणिकः माहात्म्यात्सोमवारस्यअंतेमुक्तिमवाप्नुयात् पूर्वकृष्णे
नसंचीर्णंतथाविप्रयोनिना देवदानवगंधर्वपिशाचोरगराक्षसैःऋषिभिःक्षितिपैस्तद्वत्स्वायंभुवमुखैःप्रिये अन्यै
श्चमानवैःशुद्धैरास्तिकैर्धर्मतत्परैः नदेयदुष्टचित्तायबुद्धिहीनायकर्हिचित् शास्त्रधर्मद्विषेचैवविडंबकजनायतु
आचार्यदेवप्राणायतीनांव्रतशालिनां वन्हेर्वेदसुतीर्थानांनिंदकायनवैक्वचित् आर्त्तेनापिनतत्याज्यं व्रतं
परमदुर्लभं व्रतत्यागान्महादोषाइतिज्ञात्वासमाचरेत् गुरो समीपेकुर्वीतव्रतमेतन्नसंशयः अन्य-
थागुरुहानिःस्यान्निष्फलंजायतेव्रतं संदेहःसर्वकार्येषुगुरुहीनस्यवैभवेत् तस्मात्सर्वप्रयत्नेनगुरुमेवस-

मार्श्रयेत् अथसंक्षेपतोवक्ष्येव्रतमाहात्म्यमुत्तमं येचरंतिनरादेविस्त्रियःस्वामिसुभाविताः तेषांजन्मस-
हस्रेपिनैशोकोजायतेक्वचित् नदारिद्र्यंनरोगोश्चसंततिच्छेदएवच कुलकोटिसमुद्धृत्यस्थापयेदिंद्रसद्मनि इत्थंशृ-
णोतिमाहात्म्यंपठ्यमानंव्रतस्यतु भावयेद्भक्तियुक्तस्तुरुद्रस्यानुचरोभवेत् क्रियमाणंतुयःपश्येद्व्रतमेतन्ममप्रियं
भक्तियुक्तोनरःश्रुत्वायश्चैवानुप्रमोदते मतिंददातियश्चापिसयातिपरमंपदम् इतिस्कंदपुराणेसोमवारव्रतं अथ
सोमवारनक्तेसामान्यपूजाक्रमोलिख्यते तत्रादौदेशकालौसंकीर्त्य आत्मनोऽशेषपापक्षयपूर्वकसत्पुत्रप्राप्तिध-
नधान्यैश्वर्यादिगुणराज्यप्राप्तिद्वारा अमुककामनयासोमवारव्रतंकरिष्ये इतिसंकल्प्य ध्यायेन्नित्यंमहेश-
मितिध्यानंपठित्वा अथवा पंचवक्त्रंदशबाहुंत्रिनेत्रंचत्रिलोचनं कुंडलालंकृतंचेन्दुशेखराभरणान्वितं २ महादेव
समागच्छसहगौर्याजगत्पते इमांमयाकृतांपूजांगृहाणसुरसत्तम शिवरूपेनमस्तुभ्यंशिवायैसततंनमः न ।
स्तेब्रह्मरूपिण्येजगद्धात्र्यैनमोस्तुते इत्यावाहनम् ॐनमःपञ्चवक्त्रायदशबाहुत्रिनेत्रिणे श्वेतवृषभमारूढश्वेताभर ।
भूषित उमादेहार्धसंयुक्तसर्वमूर्त्तेनमोनमः इतिपूजामंत्रःकार्तस्वरमयंदिव्यंनानामणिगणान्वितं आसनंदेवदेवेश
गृहाणानंतशक्तिक इत्यासनं गंगादिसर्वतीर्थेभ्य.समानीतमिदंमया तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां इति
पाद्यं वरेण्ययज्ञपुरुषप्रजापालनतत्पर नमःसदात्मदेवायगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यम् पाटलोशीरकर्पूरवासि
तंस्वादुशीतलं तोयमाचमनीयार्थंनिर्मलंप्रतिगृह्यतां इत्याचमनीयम् मधुपर्कमिदंपुण्यंमधुरत्रयसंयुतं दधिद्यु
कंशंभेदेवप्राश्यतांकृपयाप्रभो इतिमधुपर्कम् मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानार्थंतेमयानीतं
शुभंस्वीक्रियतांप्रभो इतिस्नानं स्नानंपंचामृतंचापिपयोदधिघृतंमधु शर्करासलिलोपेतंगृहाणपरमेश्वर
इतिपंचामृतस्नानं पूर्वोक्तमंत्रेणशुद्धस्नानम् पुरुषसूक्तेनकार्य्यं शुभंकर्पूरसंयुक्तंजनकल्याणकारकं पुनराचम्य

तांदेवगंगाजलानिदंप्रभो इतिपुनराचमनं राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं यज्ञोपवीतंपरमंनमस्तेप्रति
गृह्यतां शुभ्रवस्त्रयुगंयस्माद्देवानामतिवल्लभं पार्वत्यासहितोदेवप्रीयतांवस्त्रदानतः इतिवस्त्रं मलयाचलसं
भूतंघनसारसमन्वितं हृदयानंदनंचारुचंदनंप्रतिगृह्यतां इतिचंदनं रंजितान्कुंकुमाद्येनाखंडितान्गणितान्नवान्
गृहाणपूजांकृपयास्वक्षतान्वृषभध्वज इत्यक्षताः पुष्पाणिसुरभीण्यत्रमालत्यादीनिवैप्रभो मयाहृतानिचित्रा
णिपूजार्थंप्रतिगृह्यतां इतिपुष्पाणि अमृतोद्भवंश्रीवृक्षंशंकरस्यातिवल्लभं विल्वपत्रंप्रयच्छामिप्रीतोभवमहेश्वर
त्रिदलंत्रिगुणाकारंत्रिनेत्रंत्रिविधायुधं त्रिजन्मपापसंहारंविल्वपत्रंशिवार्पणं इतिविल्वपत्रं तुलस्यमृतनामा
सिसदात्वंकेशवप्रिये करोमिशिवपूजार्थंवरदाभवमेसदा इतितुलसीपत्राणि दूर्वासिशतपर्वासिशतमूलाश
तांकुरा शतंहरतिपापानिशतायुष्यप्रवृद्धये इतिदूर्वा दशांगोगुग्गुलुर्धूपःसुगंधःसुमनोहरः आघ्रेयःसर्वद
वानांधूपोयंप्रतिगृह्यतां इतिधूपं आज्यंसद्वर्त्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहं
इतिदीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं नैवेद्यंलेह्यचोष्यंचदेवेशप्रतिगृह्यतां इतिनैवेद्यं कर्पूरवा-
सितंतोयंमंदाकिन्याःसमाहृतं आचम्यतांमहादेवशुभंपानीयकंकुरु इतिपुनराचमनं पुगीफलंसकर्पूरंनागवल्ली
दलैर्युतंखादिराचूर्णसहिततांबूलंप्रतिगृह्यतां इतितांबूलं हिरण्यगर्भगर्भस्थंहेमवीजंविभावसोः अनंतपुण्यफ
लदमतःशांतिप्रयच्छमे इतिदक्षिणा इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि
इतिनारिकेलंदत्वादक्षिणादानंकुर्य्यात् ततआवरणपूजांकुर्य्यात् प्रागादिक्रमेण ओंब्रह्मणेनमः विष्णवेनमः
स्कंदायनमः महाकालायनमः शूलिनेनमः उमायैनमः महेश्वरायनमः नंदिकेश्वरायनमः ८ ओंशर्वा
यक्षितिमूर्तयेनमः भवायजलमूर्तयेनमः रुद्रायाग्निमूर्तयेनमः उग्रायवायुमूर्त्तयेनमः भीमायआकाशमूर्त्तयेनमः

पशुपतयेयजमानमूर्त्तयेनमः महादेवायसोममूर्त्तयेनमः ईशानायसूर्यमूर्त्तयेनमः इत्येतादेवताआवाहनाद्युप चारैःसंपूज्याःततआप्यायस्वसमेतुते इतिमंत्रेणैशान्यांचंद्रमावाह्य पंचोपचारैः सोमायनमः इतिसंपूज्य ततः प्रार्थनांकुर्यात् ॐनमःपंचवक्त्रायदशबाहुत्रिनेत्रिणे श्वेतवृषभमारूढश्वेताभरणभूषित उमादेहार्धसंयुक्त सर्वमूर्त्तनमोनमः त्राहिमांकृपयादेवशरणागतपालक ततःपुष्पाणिगृहीत्वाअंगपूजाकार्य्या तत्प्रकारोयथा देवाधिदेवायनमःपादयोःपूजयामि शंकरायनमःजंघयोःशिवायनमःजान्वोः शूलपाणयेनमःगुल्फयोःशंभवेनमः कट्यां स्वयंभुवेनमः गुह्ये महादेवायनमः नाभौ विश्वकर्त्रेनमः उदरे सर्वतोमुखायनमः पार्श्वयोः स्थाणवेनमः स्तनयोः नीलकंठायनमः कंठे देवायनमः मुखे त्रिनेत्रायनमः नेत्रेषु शर्वायनमः ललाटे शशिभूषणायनमः शिरसि देवाधिदेवायनमः सर्वांगे ततः उभाभ्यांकराभ्यांजलिमादाय लोकात्मन्सर्वभूतात्मन्कलाकाष्टा दिसंभव जन्ममृत्युजराव्याधिसंसारभयनाशन नमस्तेदेवदेवेशनमस्तेसुरसत्तम नमस्तेसर्वलोकेशनमस्ते त्राहिमांसदा मंत्रहीनंक्रियाहीनंभक्तिहीनंचशंकर भगवंस्त्वत्प्रसादेनसंपूर्णंचास्तुमेव्रतं क्षमस्वदेवदेवेशशिव शंकरशाश्वत वरदेहिसुरश्रेष्टदासोहंसर्वदातव इतिनमस्कारसहितांपुष्पांजलिंदद्यात् ततउमामहेश्वररू पौद्विजदंपतीसंपूज्य ब्रह्मोत्तरखंडोक्तांचंद्रांगदसीमंतिन्यादिरूपांसोमवारकथांश्रुत्वागीतवाद्यादिमहोत्सवे जागरणेनरात्रिंनयेत् इतिसोमवारनक्तव्रतपूजाविधिः इदंव्रतंच श्रावणेचैत्रेवैशाखेज्येष्टेचमार्गशीर्षके एषामन्यतमेमासेशुक्लपक्षेविशेषतः इंदुवारयुताष्टम्यांवाग्राह्यं अथवाचैत्रादिमासेषुप्रतिमासंप्रथमेसोमवारेयावज्जीवमिदंकार्य्यं अथवाष्टवर्षपर्यंतंकार्य्यंतदंतेउद्यापनंकुर्यात् तद्यथा ॐतत्सदद्येतितिथ्यादिसंकीर्त्यआत्मनोशेषपापक्षयपूर्वकसत्पुत्रपौत्रप्राप्तिधनधान्यासंपत्यारोग्यराज्यवृद्ध्याभिलषितासिद्धिद्वारा श्रीसोमेश्वरमहादेवप्रीत्यर्थं

यथाविधिसमाचरितसोमवारव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये इतिसंकल्प्य आचार्यादिवरणंविधाय चतुर्द्वारोपशोभितमंडपांतरेष्टादशांगुलोत्सेधांवितस्तिद्वयविस्तृतां समचतुरस्त्रांमृदावेदिकांविधाय तत्रशुक्लतंडुलैःषोडशारंकमलंविरच्य अथवापंचरंगशोभितं यथाशक्तिलिंगतोभद्रंविरच्य तत्रमंडलोक्ताब्रह्मादिदेवताआवाह्यतदुपरिअक्षतपुंजेश्वेतवस्त्रयुगोपेतंकलशंप्रतिष्ठाप्य तदुपरिसाक्षतंपूर्णपात्रंनिधाय तत्रहैमंशिवंत्र्यंबकमितिमंत्रेण हैमींगौरींचगौरीमिमाय इतिमंत्रेणपुरतराजतवृषभं इमारुद्रायइतिमंत्रेणप्रतिष्ठाप्य परितः पूर्वादिक्रमेण अनंत १ शिवं २ उग्रं ३ त्रिमूर्त्तिं ४ रुद्रं ५ श्रीकंठ ६ शिखंडिनं पुनराग्नेयादिषु दिक्षु गणेशं मातृकाः दुर्गां क्षेत्रपालं लोकेशांश्च तत्तन्नाममंत्रैर्वैदिकैर्वाप्रतिष्ठाप्य पूर्वोक्तांसावरणांसर्वोपचारपूजांकृत्वा रात्रिंजागरणादिनानीत्वा प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् तत्रप्रधानसोमंशिवंत्र्यंबकमितिमंत्रेण पलाशसमिद्भिःआप्यायस्वेतिमंत्रेणघृतपदाज्येनत्वंसोमामितिमंत्रेण यवव्रीहिपायसतिलाज्यद्रव्यैः प्रत्येकंअष्टोत्तरशतसंख्याकाहुतिभिःपरिवारदेवताब्रह्मादिदेवता एकैकयाज्याहुत्यायक्ष्येकेचनगौरीहोमंपृथक् नेच्छंति एवंहोमंसमाप्य ततःषोडशत्रयोदशब्राह्मणान्वक्ष्यमाणनामभिःसंपूज्य तावतःफलपक्वान्नैःपूरितान्घटान् अभावेतंडुलैरेवपूरितान्दक्षिणायुतान्दद्यात् तत्रषोडशनामानि सोमेश्वर १ स्तथेशानो २ शंकरो ३ गिरिजाधिपः ४ महेशः ५ सर्वभूतेशः ६ स्मरारि ७ स्त्रिपुरांतकः ८ शिवः ९ पशुपतिः १० शंभुः ११ त्र्यंबकः १२ चंद्रशेखरः १३ गंगाधरो १४ महादेवो १५ वामदेवश्च १६ षोडश त्रयोदशपक्षेतु भवः शर्वः रुद्रः पशुपतिः उग्रः महान् भीमः ईशानः सद्योजातः वामदेवः अघोरः तत्पुरुषः ईशानः पुनरावृत्त्याइति १३ त्रयोदश एवंसंपूज्य ततःपीठंगांचतत्पूर्त्तयेधवलां यथाविधिआ

चार्प्ययित्वा सतिसंभवेसोपकरणांशय्यामपिदत्वा आशिषोगृहीत्वा ॥ सदन्नेनान्यानपिब्राह्मणान् ॥ यथाशक्तिभोजयित्वा स्वयंबंधुयुतोभुंजीत ॥ इतिसोमवारनक्तव्रतोद्यापनविधिः ॥ अथप्रभासखंडोक्तंसोद्यापनंसोमवारव्रतम् तव्रव्रतकर्तायजमानोयस्मिन्वापूर्वोक्तेमासिशुक्लपक्षेअष्टम्यांसोमवारे प्रातःपालाशार्द्रकाष्ठेनदंतधावनंविधाय शरीरशुद्धिंनिर्वर्त्य स्नात्वासंध्यादिनित्यंसमाप्य सुसमेभूतलेसकल सामग्रींसंपाद्य कदलीस्तंभवितानध्वजचामर शोभितेसम्यक्संमार्जितेशुद्धेसाधारणेभूमौ कलशंचंदनदध्यादिभिर्बहिश्चर्चितं धातुमयंमृण्मयंवानिधाय शुद्धजलेनापूर्य आम्रादिपंचपल्लवान्निक्षिप्य फलरत्नवस्त्रयुतंविधाय तदुपरिराजतवृषभस्थंउमयासहितंसोमनाथंशिवंसौवर्णंनिधाय श्वेतवस्त्रयुगान्वितंसर्वाभरणभूषितंविधाय अष्टौविद्याअष्टाविश्वरान् अष्टदिक्षुनिधाय नानाफलपुष्पपक्वान्नशोभितंरचयित्वा ॥ ॐनमस्तेपंचवक्त्रायदशबाहुत्रिनेत्रिणे श्वेतवृषभमारूढश्वेताभरणभूषित उमादेहार्धसंयुक्तसर्वमूर्त्यैनमोनमः इत्यनेनमंत्रेण आवाहनासन पाद्य अर्घ्य मधुपर्क आचमनीय स्नान वस्त्र यज्ञोपवीत गंध अक्षत पुष्प विल्वपत्र तुलसी दूर्वादल धूप दीप नैवेद्य पुनराचमनीय फलं तांबूल नीराजन चामर प्रदक्षिणदक्षिणापूगफलंदत्वा वीजपूरयुतार्घ्यदानांतंविधाय अनुक्तेऽष्टोत्तरशतंजप्त्वा विल्वपत्रतिलाज्यैरष्टोत्तरशतंहुत्वा पूजांसमाप्य अनुक्तेकाले प्रदोषेविसृज्य रात्रौदर्भशय्यायांचंदनंप्राश्य सोमनाथंहृदिध्यायन्स्वपेत् पुनःप्रभातेदेवपूजादिकंनिर्वर्त्य ब्राह्मणान्संभोज्यतैरनुज्ञातःस्वयंभुंजीत एवंकृतेऽष्टादशकुष्ठानांनिवृत्तिर्भवेत् ॥ १ ॥ पुनर्द्वितीयसोमवारेकारंजदंतधावनंविधाय स्नात्वानित्यकर्मनिर्वर्त्यरौप्यवृषभस्थंज्येष्ठासहितंसोमनाथं ज्येष्ठायनमः ॐनमःपंचवक्त्रायेतिमंत्रेणसौवर्णंपूर्ववत्सर्वोपचारैःशतपत्रपुष्पैः पक्वान्नादिभिःसं-

पूज्य नारंगफलयुतार्घ्यंदत्त्वाविसृज्यमधुप्राश्यस्वपेत् पुनःप्रभातेनित्यकर्मसमाप्यदेवंसंपूज्यभुंजीत एवंकृ
तेद्वितीयेतुगोलक्षफलंभवति ॥ २ ॥ पुनस्तृतीयेअपामार्गदंतकाष्ठंविधायनित्यकर्मसमाप्य वृषभस्थंसि
द्धिसहितमेकंवक्रंसौवर्णंनिधाय पूर्ववज्जातिपुष्पैःसंपूज्यदाडिमफलेनार्घ्यंदत्त्वा अगुरुंप्राशयस्वपेत् पुनःप्रभा
तेनित्यंनिर्वर्त्यभुंजीत एवंकृतेपूर्वोक्तफलंलभेत् ॥ ३ ॥ पुनश्चतुर्थेसोमवारेखादिरंदंतधावनंविधाय नित्यं
निर्वर्त्यवृषभस्थंसूक्ष्मयुतंगौरीशंदमनपुष्पैःसंपूज्य नारिकेलार्घ्यंदात्वा देवंविसृज्यशर्करांप्राश्यस्वपेत्
पुनःप्रभातेनित्यंनिर्वर्त्यभुंजीत पूर्वोक्तफलंलभेत् ॥ ४ ॥ पुनःपंचमेसोमवारेपैप्पलंदंतधावनंविधायनित्यंनि
र्वर्त्य वृषभस्थंभूतियुक्तंगणाधिपंसौवर्णंविधाय पूर्ववत्कुंदपुष्पैःपूजयेत् द्राक्षयार्घ्यंफलंदत्त्वारात्रौमौक्तिकोद
कंप्राशयस्वपेत् प्रातर्नित्यंनिर्वर्त्यभुंजीत अश्वमेधफलंलभेत् ॥ ५ ॥ पुनःषष्ठेसोमवारेवैजयंत्यादंतकाष्ठं
विधाय अलाभेयाज्ञियंकाष्ठेननित्यंसमाप्य वृषभस्थंद्राक्षायुतसुरूपंसौवर्णंनिधाय पूर्ववत्संपूज्य जाति
फलार्घ्यं अलाभेनारिकेलार्घ्यंफलंचदत्त्वा रात्रौकर्पूरंप्राशयस्वपेत् प्रातर्नित्यंसमाप्यभुंजीतपूर्वोक्तफलंलभे
त् ॥ ६ ॥ पुनःसप्तमेसोमवारेमल्लिकादंतकाष्ठंविधायनित्यंसमाप्य दीप्त्यायुतंसवाहनं सर्वज्ञंसौवर्णंनि
धायपूर्ववन्मालतीपुष्पैःसंपूज्य जंबीरफलार्घ्यंफलंचदत्त्वारात्रौलवंगंप्राशयस्वपेत् प्रातर्नित्यंसमाप्यभुंजीत
यथोक्तफलंलभेत् ॥ ७ ॥ पुनरष्टमेसोमवारेयाज्ञियंकाष्ठेनदंतकाष्ठंविधायनित्यंसमाप्य अमोघायुतमी
श्वरंसौवर्णंनिधाय पूर्ववन्मरुवकपुष्पैःसंपूज्य कदलीफलार्घ्यंदत्त्वा रात्रौदुग्धंपीत्वास्वपेत् प्रातर्नित्यंस
माप्यभुंजीत अग्निष्टोमफलंलभेत् ॥ ८ ॥ गंगास्नानेकृतेसम्यक्कोटिधायत्फलंस्मृतं दशहेमसहस्रा
णांकुरुक्षेत्रेरवेर्ग्रहे ब्राह्मणेवेदविदुषेयद्दत्त्वाफलमश्नुते तत्फलंकोटिगुणितमस्मिन्नाचरितेव्रते गजानांतुशते

दत्ते लक्षे रथवाजिनां यत्फलंकोटिगुणितंसोमवारेव्रतेकृते गुग्गुलैर्धूपनंकृत्वाकोटिशोयत्फलंलभेत् तत्पु
ण्यंतुभवेत्तस्यसोमवारव्रतेकृते सर्वैश्वर्य्यसमायुक्तःशिवतुल्यपराक्रमः रुद्रलोकेवसेत्तावद्ब्राह्मणःप्रलयावधि त
तोव्रतकर्त्तानवमेसोमवारेउद्यापनेच्छु मंडपस्थंडिलवाहोमार्थंप्रागुदीच्यांविधाय चतुर्दिक्षुपताकाध्वजशोभि
तंतोरणयुतंचविधाय मध्येलिंगतोभद्रं तन्मध्यस्थाष्टपत्रेषुअष्टौकलशान्वस्त्रवेष्ठितग्रीवान्सपल्लवपंचरत्नफल
सहितान्विधाय तदुपरिपूर्वेवामाशक्तियुतायवामायनमः ॥ १ ॥ आग्नेय्येज्येष्ठाशक्तियुतायज्येष्ठायनमः २
दक्षिणेरौद्रीशक्तियुतायरुद्रायनमः ॥ ३ ॥ नैर्ऋत्येकालीशक्तियुतायकालायनमः ॥ ४ ॥ पश्चिमेकलवि
करिणीशक्तियुतायकलविकरणायनमः ॥ ५ ॥ वायव्येबलविकरणीशक्तियुतायबलविकरणायनमः ॥ ६ ॥
उत्तरेबलप्रथमनीशक्तियुतायबलप्रमथनायनमः ॥ ७ ॥ ईशानेसर्वभूतदमनीशक्तियुतायसर्वभूतदमनायनमः ८
इत्यष्टपत्रेषुसंस्थाप्य मध्येकर्णिकायांमधुपरितेसुवर्णपात्रंनिधाय-तदुपरिसुवर्णशय्यामास्तीर्य्य उपरिवितानमा
वध्य तत्पार्श्वेपर्यंकंसतूलकंछत्रवंशपात्रचामरदर्पण-दीपमालाधूपादिसहितंसंस्थाप्य ततःपूर्वेउमाशक्तियु
तायसोमनाथायनमः ॥ १ ॥ आग्नेय्येज्येष्ठाशक्तियुतायसूक्ष्मनाथायनमः ॥ २ ॥ दक्षिणेसिद्धिशक्तियुता
यएकनाथायनमः ॥ ३ ॥ नैर्ऋत्येसूक्ष्माशक्तियुतायगौरीसनाथायनमः ॥ ४ ॥ पश्चिमेविभूतिशक्तियुताय
गणाधिपायनमः ॥ ५ ॥ वायव्येभद्राशक्तियुतायसुरूपनाथायनमः ॥ ६ ॥ उत्तरेदीप्तिशक्तियुतायसर्वज्ञ
नाथायनमः ॥ ७ ॥ ईशानेअमोघाशक्तियुतायईश्वरायनमः ॥ ८ ॥ इतिप्रतिसोमवारकृतपूजनप्रतिमाधांक
लशोपरिपूजयेत् कर्णिकास्थस्वर्णशय्यास्थप्रतिमायां-ॐमनोन्मनीशक्तियुतायश्रीसोमेशायमहाप्रभावाय
सदाशिवायनमः इतिमध्येपूजनं तत्रक्रम पूर्वप्रतिष्ठा ततोध्यानम् ध्यायेन्नित्यंमहेशमित्यादि ततोदशो

पचारैःसर्वेषांपूजा पाद्य १ अर्घ्यं २ आचमनं ३ स्नानं ४ वस्त्रं ५ गंधः ६ अक्षताः ७ पुष्पं ८ विल्वपत्रं ९ धूपः १० दीपः ११ नैवेद्यं १२ इत्यादिसर्वोपचारपूजां क्रमेणध्यानपूर्वकंकुर्य्यात् मध्येस्व र्णशय्यास्थंदेवंप्रतिष्ठाप्य शक्तौचतुःषष्टिअशक्तौवात्रिंशत्षोडशोपचारैःपूजयेत् देवंआसनादिनैवेद्यप्रत्यापो शानांतंकृत्वा आचार्यायाक्षितिमूर्त्तयेनमइत्याद्यष्टमूर्त्तिपूजांविधाय पर्य्यंकेसमुपवेश्य वस्त्रालंकारछत्रचामर- तांबूलदक्षिणादर्पणपुष्पमालासमर्पणांतंकृत्वा ॐनमःपंचवक्त्रायदशवाहुत्रिनेत्रिणे श्वेतवृषभमारूढश्वेताभरण- भूषित उमादेहार्धसंयुक्तसर्वमूर्त्तेनमोनमः इतिमंत्रेण अष्टोत्तरशतंहुत्वा उद्यापनांगंचहुत्वा ॐअनंतायनमः१ सूक्ष्म- शायनमः २ शिवेशायनमः ३ एकपादेशायनमः ४ एकरुद्रेशायनम. ५ त्रिमूर्त्तीशायनमः ६ श्रीकंठेशायनमः ७ वामदेवायनमः ८ मध्येसदाशिवायनमः ९ इतिपंचोपचारैःसंपूज्य नीराजनंकृत्वा जपंसमाप्यसघृतंपायसं- माषान्नंतिलान्नंषट्पंचाशदधिकंशतद्वयपलेनपूर्णपात्रंविधाय पृथक्संस्थाप्यश्रीसदाशिवायसावरणायबलिंस मर्पयेत् इतिजलंदत्वा पुष्पांजलिंचदत्त्वा रात्रौपंचगव्यंप्राश्य सोमेश्वरंहृदिध्यायन् गीतवादित्रैःकथा- श्रवणस्तोत्रसहस्रनाम्नांपाठादिभिर्जागरणंचरेत् पुनःप्रभातेस्नात्वानित्यकर्मसमाप्य कांडानुसमयेनपदार्थानुश- येनवासंपूज्यसंप्रार्थ्यविसर्ज्यंच अज्ञानाद्यदिवाज्ञानाज्जपपूजादिकंमया कृतंतदस्तुसफलंकृपयातवशंकर स्व स्वशक्त्यानुसारेण व्रतमेत त्कृतंशिव कृतंतदस्तुसफलंप्रसादात्तवशंकर इतिदेवंविसर्ज्य ततोयथाशक्तिभ क्त्याब्राह्मणान्संपूज्य क्षीरखंडादिनिर्मितभक्ष्यभोज्यैरनेकविधैःसंतर्प्य प्रत्येकवस्त्रयुग्मदक्षिणायुतानवप्रति माःसोपकरणाआचार्य्यायपौराणिकादिनवभ्योदद्यात् गाश्चअन्येभ्योदीनानाथेभ्योपि तदतेवंधुयुतोभुंजीत ए वंचीर्णेव्रतेसम्यक्कुलभतेपुण्यमक्षयं धनधान्यसमायुक्तःपुत्रदारसमन्वितः नकुलेजायतेतस्यदारिद्र्योदुःखितो

रिवौ अपुत्रोलभतेपुत्रान्वंध्यापुत्रवतीभवेत् काकवंध्यातथानारीमृतवत्साचदुर्भगा कन्याप्रसूतयाकार्यंरोगि भिस्तुविशेषतः एवंकृतेविधानेतुदेहपातेशिवंव्रजेत् कल्पकोटिसहस्राणिकल्पकोटिशतानिच भुंक्तेसौविपु लान्भोगान्यावदाभूतसंप्लवं इतिस्कांदेप्रभासखंडेसोद्यापनंसोमवारव्रतं अथश्रावणेमासिसोमवारेकेदार नाथपूजनमुक्तम् शिवरहस्ये तस्यकेदारनाथस्यश्रावणेसोमवासरे पूजाकार्य्याविशेषेणसाधनैर्विविधैःशुभैः सोमवारेव्रतंकार्य्यंप्रयत्नेनयथाविधि शक्तेनोपोषणंकार्य्यमथवानिशिभोजनमिति अथाभिनवचंद्रार्घ्यदान विधिर्भविष्ये ॥ श्रीकृष्णउवाच ॥ पार्थपार्थिवधूतश्रीमुखपंकजसद्रवेः शृणुष्वाभिनवस्येंदोरुदयेर्घ्य विधिंपुरं रवेर्हादशभिर्मासैर्वारुण्यांदृश्यतेशशी प्रदोषसमयेराजन्नर्घ्यंदद्यात्तदाविधोः द्वितीयायांसि तेपक्षेसंध्याकालेह्युपस्थिते संस्थाप्याभिनवचंद्रंभूमौगोमयमंडले रोहिणीसहितंचंद्रं चंदनेनसुशोभनं राजतेवाथकांस्येवाभाजनेश्वेततंडुलैः पुष्पचंदनधूपैश्च दीपाक्षतजलैःशुभैः दूर्वांकुरैरत्नवरैर्दध्नावस्त्रैः श्वपांडुरैः मंत्रेणानेनराजेंद्र क्षत्रियः सपुरोहितः नवोनवोमासिमासि जायमानः पुनः पुनः आप्याय स्वसमेतुतेसोमराजन्नमोस्तुते अनेनविधिनाचार्घ्यंसर्वकामफलप्रदं यःप्रयच्छतिकौंतेयमासिमासिसमाहितः सकीर्त्यायशसाकांत्याधृत्याचभुविमानवः पुत्रपौत्रैःपरिवृतोगोधान्यधनसंकुलःस्थित्वावर्षशतंमर्त्येततः सोमपुरंव्र जेत् तत्रास्तेदिव्यवपुषाभुंजन्भोगान्मनोरमान् वरस्त्रीभिःसदात्यर्थंयावदाभूतसंप्लवं धर्म्यांसमृद्धिमतुलांयदि वांछसित्वंमासानुमासमिहमद्वचनंकुरुष्व सोमस्यसोमकुलनंदनपुष्पधूपैरर्घ्यंप्रयच्छविधिनाभिनवोदितस्य इतिभविष्योत्तरेभिनवचंद्रार्घ्यदानविधिः अथभौमवारव्रतानि तत्रादौभौमपीडाशांतिकरं भौमवारव्रतंभवि ष्ये अथातःसंप्रवक्ष्यामिरहस्यंह्यतिदुर्लभं येनलक्ष्मीधृतिस्तुष्टिःपुष्टिःकांतिश्चजायते स्वात्यामंगारकंगृ

ह्यक्षमायांनक्तभोजनः क्षमायांभूमावित्यर्थः क्षपयेन्नक्तभोजनेनयावत् वीरमित्रोदये सप्तमेत्वथसंप्राप्तेहे
मताम्रेनिवश्यत रक्तवस्त्रयुगाछन्नंकुंकुमेनानुलेपितं नैवेद्यंशुद्धकासारंधूपपुष्पाक्षतादिभिः होमंघृततिलैःकुर्या
त्कुजनाम्नाचमंत्रवित् समिधोत्तरशतमष्टाविंशतिरेवच होमयेन्मधुसर्पिभ्यांदध्नाचैवघृतेनच खादिर्य्यःसमिध
स्त्वत्रहोतव्याविधिवत्तथा मंत्रेणानेनतद्द्याद्ब्राह्मणायकुटुंबिने कुजकुजप्रबोपित्वं मंगलः परिपठ्से अमंग
लंनिहत्याशुसर्वदायच्छमंगलं एवंकृतेव्रतेभौमे दोषः शांतिमवाप्नुयात् कर्त्तव्यंभौमपीडासुतस्मात्प्रयतमा
नसैः पद्मपुराणे भौमायमीश्वरादत्रप्रार्थितंजानितोमहान् रूपेणवसदारम्योवरदानाद्दिवौकसां अस्यैवदि
वसेन्नास्तेताम्रपात्रंसुशोभनं परिपूर्णगुडेनैवब्रवर्षमेकप्रदापयेत् व्रतांतेदापयेद्धेनुंयथोक्तविधिसंयुतां ब्राह्मणायसुरू
पायअव्यंगायाजितात्मने अथव्रतविधिः भौमवारेअरुणोदयवेलायांअपामार्गेणदंतधावनंविधाय आमलकतिलाम
लकचूर्णेनस्नानादौगृहेवास्नात्वारक्तवस्त्रंपरिधाय रक्तोत्तरीयंचपरिदध्यात् ततस्ताम्रपात्रेरक्ताक्षतपुष्परक्तचंद
नानिनिक्षिप्य अग्निर्मूर्धेतिमंत्रेणार्घ्यमष्टोत्तरशतवारंदद्यात् ततोगृहमागत्यरक्तगोवृषगोमयेनोपलिप्तेशुद्धभूप्र
देशेपुत्रधनार्थीऋणमोक्षकामोवापूजामारभेत् तत्रविधिः ॐमद्येत्यादिमासपक्षाद्युल्लिख्यऋणव्याधिनाशधनपु
त्राद्यवाप्तयेभौमव्रतंकरिष्ये व्रतांगत्वेनभौमपूजनंचकरिष्ये ॐमद्यकुजतेभक्त्याकरिष्येव्रतमुत्तमं ऋणव्या-
धिविनाशायधनसंतानहेतवे पात्रोपरिस्थितंभौमंपूजयेत् तत्रादौभौमपूजार्थं यंत्रकल्पनप्रकारमाह त्रि
कोणंपूर्वमुद्धृत्यपंचधाविभजेत्ततः तृतीयरेखाचिह्नाभ्यांलांछयेत्समभागत आद्यरेखाग्रयुगलेतृतीयाचिन्हयो
र्न्यसेत् द्वितीयाग्रसमाकृष्यतृतीयाचिन्हयोर्न्यसेत् पुण्यरेखांतृतीयांतुसमभक्तासमांशतः तुर्य्याचिन्हद्वये-
नाथत्रिभिश्चिन्हैस्तुपंचमी तृतीयाग्रंप्रकुर्वीतपंचस्यामध्यचिन्हिते तुर्य्याग्रेयोजयेत्सम्यक्पंचम्याचिन्हयोर्द्व-

पो:चिन्हैस्तुपंचमींदद्यात्सूत्रयुग्मंविचक्षणः एवमेकाधिकासम्यक्कोणानांविंशतिर्भवेत् तृतीयातुर्ययोर्मध्या-
त्स्थितिचिन्हेगृहेचयेत् देवंतदग्रतोमंत्रीत्रिकोणेदक्षिणाक्रमात् मंगलाद्यान्तारपूर्वान्नमोंतानेकविंशतिः एक-
विंशतिकोष्टेपुनाममंत्रान्समालिखेत् नाममंत्रायथा मंगलो १ भूमिमिपुत्रश्च २ ऋणहर्त्ता३धनप्रदः ४ स्थिरा
सनो ५ महाकायः ६ सर्वकर्मावरोधकः ७ लोहितो ८ लोहिताक्षश्च ९ सामगानांकृपाकरः १० धरात्मजः ११ कुजो
१२ भौमो १३ भूमिदो १४ भूमिनंदनः १५ अंगारको १६ यमश्चैव १७ सर्वरोगापहारक. १८ वृष्टिकर्त्ता पहर्त्ताच २०
सर्वकामफलप्रदः २१ ततःपूजाप्रकर्तव्यापुत्रसंतानहेतवे पूजाप्रकारमाह एहिमेभगवन्भौमअंगारकमहाप्रभा
त्वयिसर्वंसमायातंत्रैलोक्यंसचराचरं भौममावाहयिष्यामितेजोमूर्तिंदुरासदं रुद्ररूपमनिर्देश्यंवक्रंच
रुधिरप्रियं अग्निर्मूर्धेतिमंत्रेणगायत्र्यामंगलस्यवा अस्यगायत्रीयथा अंगारकायविद्महेशक्तिहस्तायधीम
हि तन्नोभौमः प्रचोदयात् अथपूजाविधिः मंत्रमहोदधौ मार्गशीर्षेवैशाखेवाशुक्लपक्षे भौमवारअरुणो
दयकाले अपामार्गकाष्टेनदंतधावनंविधाय नद्यादौस्नात्वारक्तवस्त्रंपरिधाय मासपक्षाद्युल्लिख्य ऋणछेदा
यपुत्रावाप्तयेच भौमव्रतंकरिष्ये इतिसंकल्प्यप्रार्थयेत् अथदेवेशतेभक्तयाकरिष्येव्रतमुत्तमं ऋणव्याधि
विनाशायधनसंतानहेतवे तत. कर्त्तास्वदेहेन्यासंकुर्य्यात् पादौमंगलायनमः जानुनी भूमिपुत्रायनमः ऊर्वो
ऋणहर्त्रेनमः कटिदेशेधनप्रदायनमः गुह्येस्थिरासनायनमः उरसिमहाकायायनमः वामबाहौसर्वकर्म्मावरो
धकायनमः दक्षिणबाहौलोहितायनमः गलेलोहिताक्षाय- मुखेसामगानांकृपाकराय- नासिकयोः धरात्म
जाय. नेत्रयोःकुजाय. ललाटेभौमाय- भ्रुवोर्मध्येभूमिदाय. मस्तकेभूमिनंदनाय- शिखायामंगारकाय- स
र्वांगेयमाय-कवचेसर्वरोगापहारकाय- मस्तकादिपादांतंवृष्टिकर्त्रे.पादादिमस्तकांतंवृष्ट्यपहर्त्रे- सर्वदिक्षुसर्वकाम

फलप्रदायनमः नाभौआरायनमः वक्ष्यसिवक्रायनमः मूर्द्धनिभूमिजायनमः अथकरषडंगन्यासः ऊँअंगुष्ठा भ्यांनमः ह्रौंतर्जनीभ्यांस्वाहा हमध्यमाभ्यांवषट् सःअनामिकाभ्यांहुं खंकनिष्ठिकाभ्यांवौषट् खःकरतलक रपृष्ठाभ्यांफट् एवहृदयादिषडंगन्यासोपि अथास्यभौममंत्रस्यविरूपाक्षऋषिर्गायत्रीछंदः भौमोदेवता इति वैदिकमंत्रेपि अथध्यानम् रक्तमाल्यांबरधरः शक्तिशूलगदाधरः चतुर्भुजोमेषगमोवरदस्स्याद्धरासुतः रुद्ररूपमनिर्देश्यंवक्रेणरुधिरप्रियं उज्जयिन्यांसमुत्पन्नंभौममावाहयाम्यहं अग्निर्मूर्द्धेतिमंत्रेण भौमगायत्र्याच अंगारकायविद्महे शक्तिहस्तायधीमहि तन्नोभौमः प्रचोदयात् इतिआसनादिपुष्पांतपूजांकृत्वा यंत्रस्थै कविंशतिकोष्ठेष्वेकविंशतिनाममंत्रैरेकविंशत्यंगानिपूजयेत् तद्यथा मंगलायनमःपादौपूजयामि भूमिपुत्रा यजानुनी- ऋणहर्त्रेऊरू- धनप्रदाकटिदेशं स्थिरासनायगुह्यं- महाकायायउदरः सर्वकर्मविरोधकायवामबाहुं लोहितायदक्षिणबाहुं सामगानांकृपाकरायमुखं- धरात्मजायनासिकां कुजायनेत्रे- भौमायललाटं- भू मिदायभ्रूमध्यं- भूमिनंदनायमस्तकं- अंगारकायशिखांपू- यमायसर्वांगं- सर्वरोगापहारकायकवचं- वृष्टि कर्त्रेमस्तकादिपादांतंपू- वृष्टपहर्त्रेपादादिमस्तकांतं- सर्वकामफलप्रदाय- सर्वदिक्षुसर्वांगंपूजयामि मंग लोभूमिपुत्रश्चेत्याद्येकविंशतिनामपारायणंकृत्वा कवचंपठेत् शिखायांमंगलःपातुभूमिपुत्रश्चमूर्द्धनिललाटेऋ णहर्त्ताचचक्षुषोश्चधनप्रदः स्थिरासनःश्रोत्रयोश्चमहाकायश्चनासिके आस्यदंतोष्ठजिह्वासुसर्वकर्मविरोधकः हनूनेलोहितःपातुलोहिताक्षश्चकंठके स्कंधयोरुभयोरक्षेत्सामगानांकृपाकरः धरात्मजोभुजौरक्षेत्कुजोरक्षे त्करद्वयं भौमोमेहृदयंरक्षेद्भूमिदस्तुतथोदरे भूमिनंदनकोनाभौगुह्येत्वंगारकोवतु ऊरूममयमोरक्षेज्जान्वोरो गापहारकः जंघयोर्वृष्टिकर्त्ताचअपहर्त्ताचगुल्फयोः पादांगुष्ठौचपादौचसर्वकामफलप्रदः शक्तिर्मेपूर्वतो

रक्षेच्छूलंरक्षेच्चदक्षिणे पश्चिमेतुधनुःपातुउत्तरेचशरस्तथा ऊर्ध्वेपडाननःपातुचाधस्तात्पृथिवीमम एवंन्यस्तशरीरोपिपूजयेद्भूमिनंदनं अरुटजमरुणवर्णंरक्तमाल्यांगरागमरुणकमलमालामालिनंविश्ववंद्यं अतिललितकराभ्यांशक्तिशूलेवहंतंभजतधरणिसूनुंमंगलमंगलानां इतिध्यात्वा अग्निमूर्द्धादिवः ककुदित्यष्टोत्तरशतंजपेत् अंगारकायविद्महेशक्तिहस्तायधीमहितन्नोभौमः प्रचोदयात् इतिगायत्रीजपांतेस्तोत्रंपठेत् मंगलोभूमिपुत्रश्चऋणहर्त्ताधनप्रदः स्थिरासनोमहाकायः सर्वकर्मावरोधकः लोहितोलोहिताक्षश्चसामगानांकृपाकरः धरात्मजःकुजोभौमोभूमिदोभूमिनंदनः अंगारकोयमश्चैवसर्वरोगापहारकः वृष्टिकर्त्तापहर्त्ताचसर्वकामफलप्रदः एतानिकुजनामानिनित्यंयःप्रयतःपठेत् ऋणंनजायतेतस्यसंतानंवर्धतेसदा एकविंशतिनामानिपठित्वानुदिनांतिके रूपवान्धनवांश्चैवजायतेनात्रसंशयः एककालंद्विकालंवायःपठेत्सुसमाहितः एवंकृतेनसंदेहोऋणहर्त्ताधनीभवेत् इतिस्तोत्रम् धरणीगर्भसंभूतं विद्युत्कांतिसमप्रभं कुमारंशक्तिहस्तंचमंगलंप्रणमाम्यहम् ॥ इतिनमस्कारः ॥ ततःखदिरांगारेणरेखात्रयंकृत्वा अंगारकमहीपुत्रभगवन्भक्तवत्सल त्वांनमस्यामिनिःशेषंऋणमाशुविनाशय ऋणरोगादिदारिद्र्यपापक्षुत्तापमृत्यवः भयक्लेशमनस्तापानश्यंतुममसर्वदा ऋणदुःखविनाशायपुत्रसंतानहेतवे मार्जयाम्यसितारेखास्तिस्रोजन्मत्रयोद्भवाः दुःखदौर्भाग्यनाशायसुखसंतानहेतवे कृतरेखात्रयंवामपादेनमार्जयाम्यहं ततःप्रार्थनांकुर्य्यात् ऋणहर्त्रेनमस्तुभ्यंदुःखदारिद्र्यनाशक सुखसौभाग्यधनदोभवमेधरणीसुत तप्तकांचनसंकाशतरुणार्कसमप्रभ सुखसौभाग्यधनदऋणदारिद्र्यनाशक ग्रहराजनमस्तेस्तुसर्वकल्याणकारक प्रसादात्तवदेवेशसदाकल्याणभाजन देवदानवगंधर्वयक्षराक्षसपन्नगाः प्राप्नुवंतिशिवंसर्वेसदापूर्णमनोरथाः प्रसादं

कुरुमेभौमसौभाग्यमंगलप्रद वालःकुमारकोयस्तुसभौमःप्रार्थितोमया उज्जयिन्यांसमुत्पन्नोभौमोभौमश्च
तुर्भुजः भरद्वाजकुलेजात शूलशक्तिगदाधरः वरदोमेषमारूढःस्कंदप्रायस्तडित्प्रभः स्योनापृथिवीमंत्रेणद
लेयाम्येप्रतिष्ठितः भूमिपुत्रोमहातेजा कुमारोरक्तवस्त्रकः ज्वलदंगारसदृशोभौमःशांतिंप्रयच्छतु इतिपूजामं
त्राः प्रसीदममदेवेशविघ्नहर्त्तधनप्रद गृहाणार्घ्यंमयादत्तंममशांतिंप्रयच्छवै भूमिपुत्रमहातेजःस्वेदोद्भवपि
नाकिनः सुतार्थीनीप्रपन्नात्वांगृहाणार्घ्यंनमोस्तुते रक्तप्रवालसदृशंजपाकुसुमसन्निभं महीसुतमहाबाहोगृ
हाणार्घ्यंनमोस्तुते एवमेकविंशतिवारमेकविंशतिनामभिरर्घ्यंशक्त्यादद्यात् प्रदक्षिणाविधातव्यास्तावत्योध
रणीसुते इत्यर्घ्यदानांतेतावंतएवनमस्काराश्चापिकार्य्याः पुनःस्तोत्रंपठित्वावायनदानंदद्यात् तिलगुडसहिता
नेकविंशतितंडुलान् गोधूमान्नफलदक्षिणासहितानेकविंशतिविप्रेभ्योवाएकस्मैवेदविदुषेदद्यात् तत्रदानमंत्रः
मंगलायनमस्तुभ्यंसर्वमंगलकारक वायनेनचसंतुष्टोमगलःप्रीयतामितिवायनंदद्यात् ततःपुष्पांजलिकरस्तु
वीतधरणीसुतं ध्यात्वा तच्चरणांभोजं पूजासांगत्वसिद्धये धरणीगर्भसंभूतंविद्युदग्निसमप्रभ कुमारंशक्तिह
स्तंतंमंगलंप्रणमाम्यहं ऋणहर्त्रेनमस्तुभ्यंदुःखदारिद्र्यनाशिने नभसिद्योतमानायसर्वकल्याणकारिणे देव
दानवगंधर्वयक्षराक्षसपन्नगाः सुखंयांतियतस्तस्मैनमोधरणिसूनवे योवक्रगतिमापन्नोनृणांदुःखंप्रयच्छति
पूजितःसुखसौभाग्यंतस्मैक्ष्मासूनवेनमः प्रसादंकुरुमेनाथमंगलप्रदमंगल मेषवाहनरुद्रात्मन्पुत्रान्देहि धनं
यशः एवंसंस्तूयसंपूज्यगृह्णीयाद्ब्राह्मणाशिषः गुरवेदक्षिणांदत्त्वाभुंजीतान्नंनिवेदितं प्रतिभौमदिनंकुर्य्यादेवं
संवत्सरावधि तिलैर्विधापयेद्धोमंशतार्द्धंभोजयेद्द्विजान् माहेयमूर्त्तिसौवर्णांसुरभिमाचार्य्यायनिवेदयेत् मंडल
स्थेपरेभ्यर्च्यसुतसौभाग्यसिद्धये एवंव्रतपरानारीप्राप्नुयात्सुभगान्सुतान् धनाप्त्यैऋणनाशायव्रतंकुर्य्यात्पुमा

नपि अग्निर्मूर्द्धेतिमंत्रंतुवैदिकंब्राह्मणोजपेत् तथांगारकगायत्रींसर्वाभीष्टप्रसिद्धये अंगारकायशब्दांतेविद्म-
हेपदमुच्चरेत् शक्तिहस्तायचपदंधीमहीतिततोवदेत् तन्नोभौमःप्रचोवर्णौदयादितिप्रकीर्त्तयेत् इतिमंत्रमहोदधिप्र
णीतंभौमवारव्रतम् अथकथा भविष्योत्तरे श्रीकृष्णउवाच यदुक्तंकथयिष्यामिसर्वकामार्थसिद्धये ग्रहाणामधिप-
भौमंपूजयेद्भौमवासरे मंगलोभूमिपुत्रश्चऋणहर्त्ताधनप्रदः स्थिरासनोमहाकायःसर्वकर्मावरोधकः लोहितोलो
हिताक्षश्चसामगानांकृपाकरः धरात्मजःकुजोभौमोभूमिदोभूमिनंदनःअंगारकोयमश्चैवसर्वरोगापहारकः वृष्टिक
र्तापहर्त्ताचसर्वकामफलप्रदःएतानिकुजनामानिनित्यंयःप्रयतःपठेत् ऋणंनजायतेतस्यधनंप्राप्नोत्यसंशयं त्रिकोणं
तुसदाकुर्य्यान्मध्येबिंबंप्रकल्पयेत् कुंकुमेनसदालेख्यंरक्तचंदनकेनवा कोणेकोणानि संपाद्यत्रीणि नामानिभूमिप
आरंचकंभूमिजंतुरक्तगंधैःप्रपूजयेत् स्थापयेदव्रणंकुंभंजलपूर्णंसचक्रके रक्तधान्यैस्तुनैवेद्यैःरक्तैः रक्तोत्पलैस्तथा
रक्तपुष्पैश्चगंधैश्चधूपदीपादिभिस्तथा मंगलंपूजयेद्भक्त्यामंगलेहनिसर्वदा ऋणरेखाःप्रकर्तव्याअंगारेणतदग्र
तः तास्तुप्रमार्जयेत्पश्चाद्वामपादेनसंस्पृशन् एकविंशतिनामानिपठित्वातुतदंतिके रूपवान्धनवांश्चैवजा
यतेनात्रसंशयः एककालंद्विकालंवायःपठेत्सुसमाहितः एवंकृतेनसंदेहोऋणंहित्वासुखीभवेत् पूजितोदेव
देवेशोमंगलोमंगलप्रदः उज्जयिन्यांसमुत्पन्नोभौमोभौमश्चतुर्भुजः भारद्वाजकुलेजातः शक्तिशूलगदाधरः
वरदोमेषमारूढःस्कंदप्रायस्तडितत्प्रभः स्योनापृथिवीतिमंत्रेणदलेयाम्येप्रतिष्ठितः भूमिपुत्रोमहातेजाःकु
मारोरक्तवस्त्रकः ज्वलदंगारसदृशोभौमःशांतिंप्रयच्छतु पूजामंत्राः प्रसीददेवदेवेशविघ्नहर्तुर्धनप्रद गृहा
णार्घ्यंमयादत्तंममशांतिंप्रयच्छवै पूजितोदेवदेवेश्चमंगलोमंगलप्रदः गौतमेनपुरापृष्टोलोहितांगोमहाग्र
हः गौतमउवाच कथयस्वमहाभागग्रहपूजनमुत्तमं मंत्रमाराधनंदानं सर्वपापप्रणाशनं रूपंसुवर्ण-

संकाशंवाहनायुधसंयुतं येनपूजनमात्रेणजायतेसुखमुत्तमं धर्मार्थकाममोक्षाणांकालेनैवफलप्रदं सर्वपापप्रशमनं सर्वव्याधिविनाशनं सर्वसौभाग्यदंब्रह्महत्यापातकनाशनं सर्वयज्ञफलंपुण्यसर्वकामफलप्रदं तपसांजपदाना नांफलंयेनतुलभ्यते तद्व्रतंब्रूहिमेदेवलोहितांगमहाग्रह यस्मिन्नाराधितेमर्त्यःसर्वसौभाग्यवान्भवेत् मंगलउवाच शृणुविप्र महाभाग सर्वज्ञऋषिगौत्तम व्रतंचपूजनंदानंयद्व्रतंभुवनत्रये आसीत्पूर्वंहिसर्वज्ञो ब्राह्मणोवेदपारगः तस्यभार्य्यासुनंदाचनाम्नाख्यातासुलोचना तस्यापत्यंनसंजातंवृद्धत्वेवृद्धभावतः तेनान्यस्यसुतापुण्यागृहीत्वापोषि ताभृशंब्राह्मणस्यकुलेजातासुरूपारूपसंयुता सर्वलक्षणसंपन्नाप्रयत्नेनैवगौत्तम जन्मांतरेतयाचाहं कभावेनपू जितःतांपुत्रींस्वगृहेनीत्वाब्राह्मणीपर्यपालयत् नित्यंनिष्ठीवतेस्वर्णमष्टांगैःकनकाकृतिःस्वर्णेनतेनविप्रोसौधनाढ्यो बलगर्वितः कोटिकोटीश्वरोजातोराजतेभूमिमंडले वर्षैःकतिपयैर्विप्रसाकन्यारूढयौवना दृष्ट्वानंदकविप्रेण दशवर्षातपस्विनी विवाहार्थंचविप्रेणदत्तासोमेश्वरस्यच वेदोक्तविधिनानेनविवाहमकरोत्तदा वर्षैःकतिपयै स्तांतुकन्यांसुप्रौढयौवनां आदायश्वशुरगृहान्निर्गतःशुभवासरे ततःस्वदेशमार्गेणव्रजन्विप्रोप्यहर्निशं निशां तेचाध्वनिघोरेरण्येपर्वतमस्तके सुनंदीचवनेतस्मिन्नतिलोभेनभावितः मार्गेचलतिविप्रोसौघातितुंविट्पतिंस्वकं विट्पतिर्जामाता तेनासौघातितोविप्रश्चौररूपेणसाहसात् पतिंमृतंचसंदृष्ट्वासानारीभयपीडिता पतिनासह विप्रेणमरणेकृतनिश्चया यावत्प्रक्षिप्यकाष्टानांमध्येचैवहुताशनं पतिदेहमुपादायचिक्षेपचितिमध्यतः प्रतिंब्र ह्मयंदेवंध्यायंतीसापदेपदे पतिंप्रदक्षिणीकृत्यचितायाश्चसमीपतः स्थितायावत्प्रविशातितदाहमवदंचतां तस्मि न्कालेचतुष्टोहंयाचस्ववरमुत्तमं ब्राह्मण्युवाच यदितुष्टोसिमेदेवतदाजीवतुमेपतिः मंगलउवाच अजरोप्य मरोवापिभर्त्तातवभविष्यति अन्यंब्रूहिमहासाध्विवरंत्रिभुवनोत्तमं ब्राह्मण्युवाच यदितुष्टोसिमेदेवग्रहाणाम

कर्त्तव्ययथोक्तनविधानत.पद्मनध्यकोणकायांममूर्त्तिमतांद्रितं पूजयेद्यजमानस्तुशेषनामानिमध्यतः मंगलाययजे
त्पादौभूमिपुत्रायजानुनी ऊर्वोश्चऋणहर्त्रेचकटिदेशेधनप्रद स्थिरासनंगुह्यदेशेमहाकायायचोरसिसर्वकामप्रदा
त्रतुवामबाहुंप्रपूजयेत् लोहितदक्षिणबाहौलोहिताख्यायकंठके आस्येसंपूजयेन्मांचसामगानांकृपाकरं धरा
त्मजनासिकायांकुजचनयनद्वये भौमललाटपट्टेचभूमिजायनमोभ्रुवौ भूमिनंदननाम्नाचमूर्द्धानिमांपूजयेत्ततः अ
गारकंशिखायांतुयमंकवचदेशतः सर्वरोगापहर्त्तारमत्रेमांपूजयेत्सदा आकाशेवृष्टिकर्त्तारंतद्धर्त्तारमधस्तथा
सर्वांगपुत्रपूज्योस्मिसर्वकामफल ।दःएवंपंचोपचारेणपूजातेव्रतपारणात् अछिद्रंयाचनीयंतुभक्तियुक्तेनचेतसाअ
वाच्यांऋत्विजोब्रूयुर्व्रतंसंपूर्णं.स्त्विति व्रतांतेपूजयेद्विप्रगुरुपत्नीसमन्वितं रक्तवस्त्रंपरीधाप्यंपदंदद्याद्यथो
चितं पदंभोजनभाजनादि शय्यांसोपस्करांचैवभोजनंविविधंतथा भक्त्यादद्यादनड्वाहंव्रतांतेममतुष्टये
ऋत्विजोपितदापूज्या प्रीत्यर्थंचास्यशक्तित· भोजनाच्छादनाद्यैश्चसत्कारैर्विविधैर्गिरा इत्थमुद्यापनंयेतुकुर्वंति
व्रतकारका तेषांपीडाकदाप्यस्यग्रहस्यनभविष्यति भूतवेतालशाकिन्य प्रभवंतिनहिंसकाः नऋणंचभवेत्त
नदु खंचभवेद्ध्रुव येषांसतानवांछास्यात्तेलभंतेवहून्सुतान् इत्युक्त्वागौतमस्याग्रेदिवप्राप्तोमहाग्रहः व्रतचरंति
येलोकाःपीडिताविपदांगणैः आपदोविलयंयांतिसर्वास्तेपांतुतत्क्षणात् सदानियममारूढ.प्रत्यूषेसुसमाहितः
यावज्जीवंव्रतंपुण्यंकरोतिभुवन य सुसमृद्धोभवेद्विप्रःपुत्रपौत्रैःप्रवर्धते अतेयातिपरंस्थानंयत्रसूर्यादयोग्रहाः
कृतस्यसततंसम्यक्व्रतस्यास्यप्रभावत यावज्जा क्रोति कर्तुंनरोयदि उद्यापनविधायैवभोक्तव्यंव्रतिभि
र्नरैः उद्यापनंतुशास्त्रोक्तकर्त्तव्यंसुसमाहितैः अशक्तोब्राह्मणानुज्ञांगृहीत्वातुविसर्जयेत् अन्यथाकुरुतेयस्तुकु
ष्ठीचांधःप्रजायते तस्मात्सर्वप्रयत्नेनब्राह्मणानुज्ञयाव्रत कर्त्तव्यंतुसुसंपूर्णमुद्यापनसमन्वितं धरामराणांवच

धिपप्रभो येत्वा गेहसमालिख्यरक्तचंदनचर्चितं रक्तपुष्पैश्चसंपूज्यप्रत्यूषेभौमवासरे वैधव्यंव्याधिशोकंचराज
चौरभयतथा सर्पाग्निग्रहसंबाधवियोगंस्वजनैःसह माकुरुष्वमहापुत्रयादितुष्टोसिमेप्रभो मंगलउवाच एकविं
शतिर्भौमांश्चचरेद्व्रतंत्याजितेंद्रियः एकाहारेणचान्नेनचतुर्द्वीपान्वितेगृहे अर्घ्यंतुसफलंमंत्रैर्वेदपौराणिकैरपि स्व
शक्त्याभोजनंविप्रेदातव्यंसहिरण्यकं युवानंरक्तवृषभंसर्वोपस्करसंयुतं दद्यादितिशेषः तेषांपीडाग्रह
भवानभवेत्तुकदाचन भूतवेतालशाकिन्यःप्रभवंतिनहिंसकाः एकविंशतिर्भौमाश्चकर्त्तव्याएकभावतः
आपदोविलयंयांति सुखंचैवप्रवर्धते यःशृणोतिव्रतंविप्र मानवः संयतेंद्रियः तस्यमासकृतंपापंविलयं
यातितत्क्षणात् सदानियमसंयुक्तः प्रत्यूषेभौममास्थितः यावज्जीवंव्रतंपुण्यंकरोतिभुवनत्रये सुसमृद्धोभवे
द्विप्रः पुत्रपौत्रैस्तुवर्द्धितः अंतेचापिपरंस्थानंयत्रसूर्यादयोग्रहाः एवमुक्त्वातदातत्रमंगलोपिदिवंगतः इदं
व्रतंतवाख्यातंसर्वसौख्यप्रदायकं इदंव्रतंकरिष्यंतितेषांपीडानजायते स्त्रीभिर्व्रतंप्रकर्त्तव्यंपुरुषैश्चविशेषतः
तेषांमुक्तिर्नसंदेहः स्वर्गवासोनसंशयः इतिभौमवारव्रतकथा अथोद्यापनविधिंवक्ष्ये ॥ गौतमउवाच ॥
उद्यापनविधिंसम्यङ् ममब्रूहिप्रसादतः येनज्ञातेनजगतउपकारोमहान्भवेत् ॥ मंगलउवाच ॥ विज्ञेयो
मंडपस्तस्मिन्नष्टहस्तप्रमाणतः स्थंडिलंमध्यतःकार्य्यमेकहस्तप्रमाणतः स्थंडिलंतुप्रकर्त्तव्यमारक्तरक्तशालिना
पूर्वोक्तानिचनामानिमंडलेपूजयेत्ततः तन्मंडलंतुकर्त्तव्यंपत्रैर्विंशतिभिर्द्विज द्वारोपद्वारसहितंवीथिकाकरकैर्युतं
पूजातत्रप्रकर्त्तव्यारक्तचंदनपूर्विका जपापुष्पंप्रदातव्यंव्रतोद्यापनसिद्धये कुंभेमेप्रतिमांस्थाप्यासौवर्णींसास्व
शक्तितः रक्तवस्त्रेणसंछाद्यपूज्यापूर्वोक्तमंत्रतः अष्टोत्तरशतंहोमंपूजांतेकारयेद्बुधः जपायाः कुसुमानांतुघृत
स्यतुयथाविधितिलाक्षतानामाचार्य्यऋत्विग्भिर्वेदपारगैः अग्निर्मूर्द्धेतिमंत्रेणरक्तशालेयकैस्तथा शांतिकंतुप्र

कर्त्तव्यंपूर्ववत्प्रोक्तविधानतःपश्चान्नव्यकोणेकार्याभौममूर्त्तिमतंद्रितं पूजयेद्यजमानस्तुशेषनामानिमध्यतः मंगलाययुजे त्पादौभूमिपुत्रायजानुनी ऊर्वोश्चऋणहर्त्रेचकटिदेशेधनप्रदं स्थिरासनंगुह्यदेशेमहाकायायचोरसिसर्वकामप्रदा त्रेतुवामबाहुंप्रपूजयेत् लोहितंदक्षिणबाहौलोहिताख्यायकंठके आस्येसंपूजयेन्मांचसामगानांकृपाकरं धरा त्मजंनासिकायांकुजंचनयनद्वये भौमंललाटपट्टेचभूमिजायनमोभ्रुवौ भूमिनंदननाम्नाचमूर्द्धनिमांपूजयेत्ततः अं गारकंशिखायांतुयमंकवचदेशतः सर्वरोगापहर्त्तारमस्त्रेमांपूजयेत्सदा आकाशवृष्टिकर्त्तारंतद्धर्त्तारमधस्तथा सर्वांगेषुचपूज्योस्मिसर्वकामफल .दःएवंपंचोपचारेणपूजातेव्रतपारणात् अच्छिद्रंयाचनीयंतुभक्तियुक्तेनचेतसाआ चार्याऋत्विजोब्रूयुर्व्रतसंपूर्णं.स्त्विति व्रतांतेपूजयेद्विप्रंगुरुंपत्नीसमन्वितं रक्तवस्त्रंपरीधाप्यपदंदद्याद्यथो चितं पदंभोजनभाजनादि शय्यांसोपस्करांचैवभोजनंविविधंतथा भक्त्यादद्यादनड्वाहंव्रतांतेममतुष्टये ऋत्विजोपितदापूज्या प्रीत्यर्थंचास्यशक्तितः भोजनाछादनाद्यैश्चसत्कारैर्विविधैर्गिरा इत्थमुद्यापनंयेतुकुर्वंति व्रतकारका तेषांपीडाकदाप्यस्यग्रहस्यनभविष्यति भूतवेतालशाकिन्यःप्रभवंतिनहिंसकाः ऋणंचभवेत्त नदुःखंचभवेद्ध्रुवं येषांसंतानवांछास्यात्तेलभंतेबहून्सुतान् इत्युक्त्वागौतमस्याग्रेदिवंप्राप्तोमहाग्रहःव्रतंचरंति येलोकाःपीडिताविपदांगणैः आपदोविलयंयांतिसर्वास्तेषांतुतत्क्षणात् सदानियमगारूढःप्रत्यूषेसुसमाहितः यावज्जीवंव्रतंपुण्यंकरोतिभुवन यं सुसमृद्धोभवेद्विप्रःपुत्रपौत्रैःप्रवर्धते अंतेयातिपरंस्थानंयत्रसूर्यादयोग्रहाः कृतस्यसततंसम्यक्व्रतस्यास्यप्रभावतः यावज्जीं कर्त्तुं नरोयदि उद्यापनंविधायैवभोक्तव्यंव्रतिभि र्नरैः उद्यापनंतुशास्त्रोक्तंकर्त्तव्यंसुसमाहितैः अशक्तोब्राह्मणानुज्ञांगृहीत्वातुविसर्जयेत् अन्यथाकुरुतेयस्तुकु ष्ठीचांधःप्रजायते तस्मात्सर्वप्रयत्नेनब्राह्मणानुज्ञयाव्रतं कर्त्तव्यंतुसुसंपूर्णमुद्यापनसमन्वितं धरामराणांवच

नेरवस्थितादिवौकसस्तीर्थव्रतैःसमेताः नलंघयेच्चापिवचांसितेषांश्रेयोभिकामीपुरुषोविजानन् इतिश्रीभविष्यो तरोक्तंसोद्यापनंभौमवारव्रतम् अथप्रकारांतरेणसोद्यापनंभौमव्रतपूजनम् तत्रप्रातरपामार्गंदंतधावनं तिला मलकचूर्णेनांगोद्वर्त्तनं नद्यादौ स्नानंसंध्यामुपास्यरक्तचंदनपुष्पाक्षतैस्ताम्रपात्रेणैकविंशति नामभिरर्घ्यदानम् भौममंत्रेणतद्गायत्र्यावाष्टोत्तरशतवारंजपः गृहमागत्यरक्तसुरभिगोमयेनभूमिलेपनं तत्ररक्तचंदनेनत्रिकोणमं डलंकृत्वा तत्रगोधूमप्रस्थोपरिताम्रकलशोपरि तत्रताम्रमयंभूर्जपत्रमयंचैकविंशतिकोष्ठात्मकंपत्रंपूर्वोक्तयं त्रोद्धारोक्तंयंत्रंनिधाय आचम्यसंकल्पंकुर्य्यात् ॐतत्सत्अद्यआत्मनऋणापहृतिपूर्वकधनधान्यपुत्र पौत्रा द्यभीष्टसिद्धिद्वारामंगलप्रीत्यर्थंमंगलव्रतंकरिष्ये इतिसंकल्प्य गणेशपूजापूर्वकंपुण्याहवा चनादिविधा यपूजामारभेत् तत्रादौप्रार्थना अथदेवेशतेभक्त्याकरिष्येव्रतमुत्तमं ऋणदुःखादिनाशाय धनसंता नहेतवे अभीष्टान्कुरुदेवेशमामपूर्णान्मनोरथान् ततोभूतशुद्ध्यादिकृत्वान्यासान्कुर्य्यात् मंगलायनमः शि खायां भूमिपुत्रायमूर्द्धनि- २ ऋणहर्त्रेललाटे ३ धनप्रदायनेत्रयोः ४ स्थिरासनायकर्णयोः ५ महा कायायनासिकयोः ६ सर्वकर्माविरोधकायमुखे ७ लोहितायस्तनयोः ८ लोहिताक्षायकंठे ९ सामगानां कृपाकरायस्कंधयोः १० धरात्मजायबाह्वोः ११ कुजायहस्तयोः १२ भौमायहृदये १३ भूमिदायउदरे १४ भूमिनंदनायनाभौ १५ अंगारकायकट्यां १६ यमायऊर्वोः १७ सर्वरोगापहारकायजान्वोः १८ वृ ष्टिकर्त्रेजंघयोः १९ वृष्टापहर्त्रेगुल्फयोः २० सर्वकामफलप्रदायपादयोः २१ ततो मां मीं मूं मैं मौं मः इतिकरषडंगन्यासः स्ववामभागेकलशाराधनम् तत्पाश्चिमतः स्ववामे त्रिकोणषट्कोणवृत्तचतुरस्रमंडले साधारमर्घ्यपात्रे गंधपुष्पाक्षतयुतेनजलेनापूर्य्य मूलेनगायत्र्यावाष्टवारमभिमंत्र्य तद्दक्षिणेत्रिकोणे साधारंसजलं

पूर्णपात्रंसंस्थाप्य गंधपुष्पाक्षतांदत्त्वा मूलेन ७वारमभिमंत्र्य तद्दक्षिणेत्रिकोणेसाधारमर्घ्यपात्रस्थ जलंकिंचिन्निक्षिप्य- धेनुमुद्रांप्रदर्श्य प्रोक्षणीपात्रस्थजलेनात्मानंपूजाद्रव्यंचप्रोक्ष्य देवंध्यायेत् पिंगाक्षं रक्तवर्णंसुरतरुदलभंरक्तवस्त्रेणयुक्तं मेषारूढंग्रहेंद्रंह्यमलाकिसलयैः पूजितंसुप्रसन्नं ध्यायेदेतान्दधानं वरदकरयुतंशूलशक्तिंगदांतु भौमैंचश्वर्य्यासिंधुनिधिनिकरंविभुंमंगलंचिंतयामि ॥ १ ॥ एह्येहिभगवन्भौमस्थानेचात्रस्थिरोभवत्वयिसर्वमिदंप्रोतंत्रैलोक्यंसचराचरं उज्जयिन्यांसमुद्भूतशूलशक्तिगदाधर भारद्वाज कुलोत्पन्नस्कंदविद्युत्तडित्प्रभ यावत्पूजासमाप्येततावत्त्वंसुस्थिरोभव इमांमयाकृतांपूजांगृहाणवरदोभव ॐह्रांश्रींम्लूंमंगलायनमः अयंमूलमंत्रः अंगारकायविद्महेभूमिपुत्रायधीमहि इयंगायत्री अग्निर्मूर्धेतिवैदिकोमंत्रः मंगलायनमः मंगलंसांगंसपरिवारमावाहयामि इतिपंचवारंमंत्रत्रयंपठेत् ॥ १ ॥ भूमिपुत्रायआसनं २ ऋणहर्त्रेपाद्यं ३ धनप्रदायआचमनं स्थिरासनायअर्घ्यं मंगलायदधिमधुसर्पिर्युतंमधुपर्कंमहाकायायपुनराचमनं ५ ऋणहर्त्रेपंचामृतस्नानं ६ ततोगंधादिभिःसंपूज्य पुरुषसूक्तेनअभिषेकंकुर्य्यात् सर्वकर्मावरोधकायशुद्धोदकस्नानं ८ ततःपूर्वस्थापितकलशेप्रतिष्ठापयेत् परितःपूर्वादिक्रमेणपरिवारान्स्थापयेत् पूर्वे शक्तिं १ आग्नेयेशूलं २ दक्षिणेधनुः ३ नैर्ऋत्यांशरं ४ पश्चिमेगदां ५ वायव्येवरदं ६ उत्तरेषडाननं ७ ईशान्यांपृथिवीं ८ आवाह्यसहैवपूजयेत् लोहितायवस्त्रं लोहिताक्षायउपवीतं सामगानांकृपाकरायगंधं धरात्मजायपुष्पं अथएकविंशतिकोष्ठेषुअंगान्येकविंशतिनामभिःपूजयेत् मंगलायनमःपादौपूजयामि भूमिपुत्रायगुल्फौ- ऋणहर्त्रेजंघे - धनप्रदायजानुनी - स्थिरासनायऊरू- महाकायायकटिं सर्वकर्मावरोधकायनाभिं लोहितायउदरं- लोहिताक्षायहृदयं सामगानांकृपाकरायकरौ- धरात्मजायबाहू- कुजायस्कंधौ भौमायकंठं

भूनिदापहर्त्रे भूमिनंदनायमुखं अंगारकायनासिकां यमायकर्णौ सर्वरोगापहारकायचक्षुषी वृष्टिकर्त्रेललाटं
वृष्टिहर्त्रेमूर्द्धानं सर्वकामफलप्रदायशिखांपूजयामि ततोनानापरिमललेपार्पणं कुजायधूपं भौमायदीपं भक्तिदा
यगुडान्नंघृतान्ननैवेद्यं सोपस्करंचा भूमिनंदनायफलं अंगारकायतांबूलं यमायदक्षिणां सर्वरोगापहारकाय
नीराजनं वृष्टिकर्त्रेपुष्पांजलिः वृष्टिपहर्त्रेप्रदक्षिणा सर्वकामफलप्रदाय नमस्कारः भूमिपुत्रमहातेजःस्वे
दोद्भवपिनाकिनः धनार्थीत्वांप्रपन्नोस्मिगृहाणार्घ्यंनमोस्तुते अनेनमंत्रेणरक्तपुष्पाक्षतरक्तचंदनताम्रपात्रस्थ
जलेनएकविंशतिनामभिरर्घ्याणिदद्यात् ॐमंगलायनमइदमर्घ्यंसमर्पयामि एवंभूमिपुत्रायनमइत्याद्येकविं
शतिनाम्नामूहःकार्यःततोजपंकुर्यात् अस्यश्रीभौममंत्रस्यब्रह्माऋषिस्त्रिष्टुप्छंदः मंगलोदेवता महेश्वरइ
तिशक्तिः ममऋणमोचनार्थभौमप्रीत्यर्थंमेकशताधिकद्विसहस्रपरिमितजपमहंकरिष्ये ॐमांमींमूंमैंमौंमः अ
नेनमंत्रेणकरषडंगन्यासौविधाय पिंगाक्षरक्तदेहाइत्यादिध्यात्वा २१०० मूलमंत्रजपंकृत्वा अंतेपूर्ववत्करष
डंगन्यासंकृत्वाकवचंपठेत् शिखायांमंगलःपातुभूमिपुत्रस्तुमूर्द्धनि ललाटेऋणहर्त्ताचचक्षुषोस्तुधनप्रदः स्थि
रासनःश्रवणयोर्महाकायस्तुनासिके आस्यदंतोष्ठजिह्वासुसर्वकर्मावरोधकःहनौमांलोहितःपातुकंठेलोहितलोचनः
स्कंधयोरुभयोरक्षेत्सामगानांकृपाकरः धरात्मजोभुजौपातुकुजोरक्षेत्करद्वये भौमोमांहृदयेपातुभूमिजस्तुतथो-
दरे भूनंदनोपनाभौचकट्यामंगारकोवतु सक्थिनीमेयमोरक्षेज्जान्वोरोगापहारकः जंघयोर्वृष्टिकर्त्ताचअपह
र्त्ताचगुल्फके पादांगुष्ठौचपादौचसर्वकामफलप्रदः शक्तिर्मेपूर्वतोरक्षेच्छूलंरक्षतुदक्षिणे पश्चिमेमांधनूरक्षेदु
त्तरेचशरस्तथा ऊर्ध्वषडाननःपातुचाधस्तात्पृथिवीसदा यएवंकवचंजप्त्वापश्चाद्धोमंसमाचरेत् ॐमद्येत्यादि
संकल्प्यमंगलव्रतांगभूतकृतजपदशांशेनहवनंकरिष्ये इतिसंकल्प्य देवाग्रे शुद्धमृदा त्रिकोणं स्थंडिलंकृत्वा

स्वगृह्योक्तविधिनाऽग्निंप्रतिष्ठाप्य अन्वादिध्यात् अत्रखादिरादिसमिधोहोमद्रव्यं तत्रप्रधानंमंगलंगुडाज्य मिश्रित तिलद्रव्येणकृतजपदशांशेनयक्ष्येमूलमंत्रेणजहुयात् खर्जूरीफलेनपूर्णाहुतिंहुत्वा गायत्र्यावैदिक मंत्रेणापियथाशक्तिहुत्वाहोमशेषंसमापयेत् अत्रैकविंशतिनाममंत्रैरपिखर्जूरीफलैर्होमोविधीयते ततो गायत्रींपठित्वामंगलंतर्पयामीत्याद्येकविंशति नामभिस्तर्पणं कार्य्यं ॐअनृणाअस्मिन्ननृणापरस्मिस्तृ तीयेलोकेअनृणस्याम येदेवयानाउतपितृयानासर्वान्पथा अनृणाअक्षीयेम इतिमंत्रंपठित्वामार्जनं कुर्यात् ततोवायनदानं मंगलरूपिणेद्विजायइदंपाद्यमित्यादिसंपूज्य तांबूलदक्षिणासहितानेकविंश तिसंख्याकान् गुडमिश्रिततिललड्डुकान्दद्यात् तत्रमंत्रः ॥ मंगलायनमस्तुभ्यंसर्वमंगलकारक वाय नेनचसंतुष्टोममकामान्प्रपूरय अनेनवायनदानेनऋणहर्त्ताभौमःप्रीयतां ततःखदिरांगारकेणऋणत्रय संज्ञिकास्तिस्त्रोरेखाःकार्य्याः ताश्चवामपादेनमार्जयेत् तत्रमंत्रः ॥ दुःखदौर्भाग्यनाशायधनसंतानहे तवे मार्जयाम्यसितारेखास्तिस्त्रोजन्मत्रयोद्भवाः ततोमंगलोभूमिपुत्रश्चेत्यादिःसर्वकामफलः एतानि कुजनामानिनित्यंयःप्रयतःपठेत् ऋणंनजायतेतस्यधनंयच्छतिवांछितं ततउत्तिष्ठब्रह्मणस्पतेइतिमंत्रेणोत्था प्यविसर्जयेत् कथांश्रुत्वाब्राह्मणभोजनपुरःसरं सगुडगोधूमान्नंमौनेनंभुंजीत एवमुक्तप्रकारेणप्रतिभौमवासरं एकविंशतिकुर्य्यात् ततोद्वाविंशतितमेभौमवासरे उद्यापनंकुर्य्यात् तद्यथाॐतत्सत्अद्येत्यादितिथ्यादिपंचांगंस्मृ त्वा अभीष्टकामनासिद्ध्यर्थमाचरितंयत्भौमव्रतं तस्यसंपूर्णताफलावाप्तयेभौमव्रतोद्यापनंकरिष्ये ततोवृताचार्यः उक्तविधिना सर्वतोभद्रस्थकलशप्रतिष्ठांतंसामान्यविधिंकृत्वा ततोहैममंगलंपूर्वोक्तपूजाविधिनासंपूज्य सुव र्णपुष्पैःमंगलायनमइत्यादिविशेषपूजांकृत्वा पुराणपठनादिनाजागरंकुर्यात् प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात्

अत्रप्रधानंमंगलंगुडाज्यमिश्रिततिलद्रव्येणअष्टोत्तरशतसंख्याकाहुतिभिर्मूलमंत्रेणगायत्र्यावावैदिकेनापिएकविं
शतिमंत्रैः परिवारदेवताश्चतेनैवद्रव्येण अष्टाष्टसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकयाज्याहुत्यायक्ष्ये मं
गलोभूमिपुत्रश्चेत्याद्याएकविंशतिदेवतास्तासांनाममंत्रेणहोमः एवंहोमंसंपाद्य पूर्वोक्तैकविंशतिनामभिरेकविं
शतिद्विजान्संपूज्यैकविंशतिकलशान्दद्यात् तत्रमंत्रः मंगलःप्रतिगृह्णातुमंगलोवैददातिच मंगलस्तारकोभा
भ्यांमंगलायनमोनमइतिदत्त्वा आचार्य्यंरक्तवस्त्रादिनासंपूज्य तस्मैपीठंव्रतपूर्त्तयेरक्तांसुरभिंरक्तंवृषभंचदत्त्वा
विभवेसतिसोपस्करांशय्यांचदत्त्वा सदन्नेनभूदेवान्संतर्प्य दक्षिणाभिःप्रतोष्य आशीषोगृहीत्वा इष्टजनैः
सहभुंजीत इतिसोद्यापनंभौमवारव्रतम् अथमंगलागौरीव्रतम् तत्रादौकामाक्षीप्रकृत्यतत्रापिश्रावणेमासिप्रत्यहं
विधिवज्जनैःपूजाकार्य्याविशेषेणसर्वथाभौमवासरे इतिमंगलागौरीव्रतंभविष्ये ॐमद्यतिथ्यादिसंकीर्त्यआत्मनो
ऽशेषपापक्षय। वैधव्यपुत्रपौत्राद्यनेकनानाविधभोगप्राप्तिपूर्वकगौरीलोकप्राप्त्यर्थंपंचवर्षात्मकंमंगलागौरीव्रतं
श्रावणेमासिशुक्लपक्षेप्रथमेभौमवासरे मंगलागौरीव्रतांगत्वेनपूजनंकरिष्ये पंचवर्षात्मकाचरितमंगलागौरीव्रतफ
लसंपूर्णतावाप्तयेचतदुद्यापनंकरिष्ये ततोगौरीतिलकोक्तैकलिंगतोभद्रमंडलेकलशोपरिहैमींगौरींप्रीतमांगौरी-
मिमायेतिमंत्रेण सर्वमंगलमांगल्येइत्यादिपौराणिकमंत्रेणचप्रतिष्ठाप्य ताभ्यामेवमंत्राभ्यांश्रीसूक्तेनवापूजयेत्
परितःपिष्टजान्डमरुकाकारान् षोडशतंतुवर्त्तियुतान्षोडशदीपान्प्रज्वाल्य समान्साग्रान्षोडशपर्वयुतान्
दूर्वांकुरान्समर्प्य सौभाग्यवस्तुजातंसमर्प्य कथाश्रवणादिभिःरात्रिंनयेत् प्रातरग्निंप्रतिष्ठाप्यअन्वाद
ध्यात् अत्रप्रधानंगौरींफलाक्षताविल्वदलैःप्रतिद्रव्यं अष्टोत्तरशतसंख्याकाहुतिभिर्ब्रह्मादिदेवताश्चैकैकया
ज्याहुत्यायक्ष्ये इतिहोमंसंपाद्य ततःषोडशाष्टौचतुरोवादंपतीन् अभावेएकंवासंपूज्य सौभाग्यवस्त्रदक्षिणा

नांवूलफलादियुतंपक्वान्नपूरितंवंशपात्रं उद्यापनमिदंदेवइतिमंत्रं पठित्वा तेभ्योदत्त्वा ततआचार्य्यंसंपूज्य
रौप्यपात्रसौवर्णवर्त्तिसंयुतंप्रज्वालितंदीपंकृत्वा आचार्य्यायदत्त्वासोपस्करंपीठंव्रतपूर्त्तयेगांचदत्त्वा परमान्नेन
भूदेवान्संतर्प्याशिषोगृहीत्वा मौनीइष्टजनैस्सहभुंजीत इतिसोद्यापनंमंगलागौरीव्रतम् अथवुधव्रतंभ
विष्ये अथातःसंप्रवक्ष्यामिरहस्यंह्येतदुत्तमं येनलक्ष्मीर्धृतिस्तुष्टिःपुष्टिःकांतिश्चजायते विशाखासुवुधं
सप्तव्रतनक्तान्यथाचरेत् वुधंहेममंकृत्वास्थापितंकांस्यभाजने शुक्लवस्त्रयुगच्छन्नंशुक्लमाल्यानुलेपनं गुडोद
नोपहारंतुब्राह्मणायनिवेदयेत् तत्रमंत्रः वुधत्वंवुद्धिजननोधनदःसर्वदानृणां तत्त्वाववोधकरुषेसोमपुत्रनमो
स्तुते होमंघृततिलैःकुर्य्याद्वुधनाम्नाचमंत्रवित् समिधोष्टोत्तरशतमष्टाविंशतिरेववा होतव्यामधुसर्पिर्भ्यां
दध्नाचैवघृतेनच अत्रसमिधो अपामार्गस्यग्राह्या वुधशांतिरितिप्रोक्तावुधवैकृतनाशिनी वुधदोषेतुकर्त्तव्ये
वुधशांतिकपौष्टिके इतिभविष्योत्तरोक्तावुधशांतिः अथवुधस्तोत्रम् ॐनमोवुधायविज्ञायसोमपुत्रायतेनमः
रोहिणीगर्भसंभूतकुंकुमछविशोभन सोमप्रियसुतानेकशास्त्रपारगवित्तम रौहिणेयनमस्तेस्तुनिशाकामुकसू
नवे पीतवस्त्रपरीधानसुवर्णस्राग्विराजित सुवर्णमालाभरणस्वर्णदानवरप्रद नमोप्रतिमरूपायवुधानांप्रिय
कारिणे विष्णुभक्तिमतेतुभ्यमुडुराजप्रियंकर इत्येतत्स्तोत्रमुत्थायप्रभातेमानवस्तुयः वुधस्यपठतेनित्यंवुद्धि
भाक्सभवेन्नरः इतिवुधस्तोत्रम् अथगुरुवारव्रतं अथातःसंप्रवक्ष्यामिरहस्यंह्येतदुत्तमं येनलक्ष्मीर्धृतिस्तु
ष्टिःपुष्टिःकांतिश्चजायते गुरुंचैवानुराधायांपूजयेद्भक्तितोनरः पूर्वोक्तविधियोगेनसप्तनक्तान्यथाचरेत् हैमंहेमम
येपात्रेस्थापयित्वावृहस्पतिं पीतांवरयुगाच्छन्नंपीतयज्ञोपवीतिनं पादुकोपानहछत्रकमंडलुविभूषितं
भूषितंपीतकुसुमैःकुंकुमेनानुलेपितं धूपदीपादिनैवेद्यैःफलैश्चंदनखंडकैः खंडखाद्योपहारांश्चगुरोरग्रेनिवेदयेत्

प्रार्थनामंत्रः धर्मशास्त्रार्थतत्त्वज्ञज्ञानविज्ञानपारग विबुधार्त्तिहराचिंत्यदेवाचार्यनमोस्तुते होमंघृतातलैःकुर्या
द्गुरुनाम्नाचमंत्रवित् समिधोष्टोत्तरशतमष्टाविंशतिरेववा होतव्यामधुसर्पिर्भ्यां दध्नाचैवघृतेनच पिप्पल्यः
समिधोज्ञेयाःशास्त्रांतरनियोगतः एतद्व्रतंमहापुण्यंसर्वपापहरंशिवं तुष्टिपुष्टिकरंन्दृणांगुरुवैकृतनाशनं विष
मस्थेगुरौकार्य्याजीवशांतिरियंबुधैः इतिभविष्योत्तरोक्तगुरुवारव्रतम् अथगुरुस्तोत्रम् दंडाक्षसूत्रधारीचक
मंडलुधरःसदा हस्त्यारूढश्चतुर्बाहुःपातुमांवाक्पतिःसदा चराचरगुरुंस्तौमिगुरुंसर्वोपकारकं यस्यसंकीर्तनादे
वक्षणादिष्टंप्रजायते बृहस्पतिःसुराचार्य्योनीतिज्ञोनीतिनायकः गुरुर्जीवोथवागीशोवेदवेत्ताविदांवरः सौम्यमू
र्त्तिःसुधादृष्टिःपीतवासाःपितामहः अग्रवेत्तादीर्घश्मश्रुर्हेमांगःकुंकुमच्छविः सर्वज्ञःसर्वदःसर्वःसर्वपूज्योग्रहेश्वरः
सत्यधामाक्षमाशीलोग्रहपीडानिवारकः पंचविंशतिनामानिगुरुंस्मृत्वातुयःपठेत् आयुरारोग्यमैश्वर्य्यंधनधा
न्यसमन्वितं जीवेद्वर्षशतंसाग्रंसर्वव्याधिविवर्जितः कर्मणामनसावाचायत्पापंसमुपार्जितं तदेतत्पठनादेव
दहत्यग्निरिवेंधनं गुरोर्दिनेचयेधस्तुपीतवस्त्रानुलेपनैः धूपदीपोपहारैश्चविप्रभोजनपूर्वकं पीडाशांतिर्भवेत्तस्य
स्वयमाहबृहस्पतिः अथगुरुशांतिःस्कांदे पिप्पलादोवाच गुरुपूजांप्रवक्ष्यामियथोक्तांब्रह्मणापुरा लोकाना
गयसर्वोपद्रवशांतये कन्याविवाहकालेतुशुद्धिर्यस्यानविद्यते ब्राह्मणस्योपनयनेयस्यस्याद्दुःस्थितोगुरुरेभिः
...ाः कार्य्याविधिवद्भक्तिभावितैः मदंतीकामपुष्पाणिपत्रंपालाशसर्षपाः मदंतीयूथिकाकामोदमनंर्चविशेषतः
...बिल्वस्त्यपामार्गविडंगंशंखिनीवचा सहदेवीविष्णुक्रांतासर्वौषध्यःशतावरी कुंभस्योपरिभागेतुस्थापयि
...ा सौवर्णपात्रेसौवर्णीप्रतिमांतांयुधिष्ठिर कारयेत्तुयथाशक्त्यावित्तशाठ्यविवर्जितः पीतवस्त्रयुगा
ज्ञोपवीतिनां पूजयेद्गंध पुष्पाद्यैस्ततोहोमंसमाचरेत् समिधोश्वत्थवृक्षस्यहोतव्याष्टोत्तरंशतं तिल

व्रीहियर्वैर्मश्चहोतव्यंतुयथाक्रमं वृहस्पतेइतिमंत्रेणऋपिछंदसमन्वितं मंत्रेणानेनजुहुयाद्धान्यपूर्वंचयत्नतः ततो
होमावसानेतुपूजयित्वावृहस्पतिं पीतगंधैस्तथापुष्पैर्धूपदीपैश्चभक्तितः दध्योदनंचनैवेद्यफलतांबूलसंयुतं मंत्रे
णानेनकौंतेयसमभ्यर्च्ययुधिष्ठिर नमस्तेंगिरसांनाथवाक्पतेथवृहस्पते क्रूरग्रहैःपीडितानामभृतायनमोनमः
पूजयित्वासुराचार्य्यंपश्चादर्घ्यंनिवेदयेत् गंभीरदृढरूपांगदेवेज्यसुमनाःप्रभो नमस्तेवाक्पतेशांतगृहाणार्घ्यं
वृहस्पते इत्यर्घ्यमंत्रः अर्घ्यंदत्वासुरेशस्यजपंहोमंसमापयेत् भक्त्यायत्तसुराचार्य्यहोमपूजादियत्कृतं तत्त्वं
गृहाणशांत्यर्थंवृहस्पतेनमोनमः मंत्रेणानेनसंकल्प्यपश्चात्संप्रार्थयेन्नृप जीवोवृहस्पतिःसूरिराचार्य्योगुरुरंगिराः
वाचस्पतिर्देवमंत्रीशुभंकुर्य्यात्सदामम इतिप्रार्थना एवंसंप्रार्थयेद्देवमाचार्य्यंचप्रपूजयेत् सर्वोपस्करसंयुक्तां
प्रतिमांतांयुधिष्ठिर प्रणम्यचगवायुक्तामाचार्य्यांनिवेदयेत् अथाचार्य्यस्तुनियतोवेदवेदांगपारगः यजमा
नंसपत्नीकंशांतचित्तजितेंद्रियं कुंभोदकंगृहीत्वातुमंत्रैरेतैःप्रसिंचयेत् इदमापोथमंत्रेणसामश्रीतिऋचंतथा
याओपधीरश्वावतीःकूष्मांडैश्चाभिषेचयेत् पश्चात्सभोजयेद्विप्रान्यथाशक्त्यायुधिष्ठिर एवंकृत्वागुरोःपूजांसर्वा
न्कामानवाप्नुयात् संक्रांतावपिकौंतेयतथास्याभ्युदयेनवा कुर्वन्वृहस्पतेःपूजामभीष्टंफलमाप्नुयात् संक्रांतौगु
रोः राश्यंतरसंक्रमे इतिभविष्योत्तरोक्तंगुरुपूजाव्रतम् अथस्कंदपुराणे गुरुस्तोत्रम् वृहस्पतिःसुराचार्य्योदया
वान्शुभलक्षणःलोकत्रियोगुरुःश्रीमान्सर्वज्ञःसर्वदोविभुः सर्वेशःसर्वदातुष्टःसर्वगःसर्वपूजितःअक्रोधनोमुनिः
श्रेष्ठोनीतिकर्त्ताजगत्प्रियःविश्वात्माविश्वकर्त्ताचविश्वयोनिरयोनिजः भूर्भुवःस्वःपिताचैवभर्त्ताजीवोमहाबलः पंचविं
शतिनामानिपुण्यानिशुभदानिच प्रातरुत्थाययोनित्यंकीर्त्तयेत्सुसमाहितः विपद्गतोपिभगवान्प्रीतस्तस्यवृह
स्पतिः नंदगोपगृहेयच्चाविष्णुनापरिकीर्त्तितं पठेद्योगुरुस्तोत्रंचिरंजीवीनसंशयः गोसहस्रफलंपुण्यंविष्णुर्वच

नमब्रवीत् वृहस्पतिःसुराचार्य्यःसुरासुरसुपूजितः अभीष्टफलदाःश्रीमान्शुभग्रहनमोस्तुते इतिस्कंदपुराणो
क्तंगुरुस्तोत्रम् अथशुक्रवारव्रतम् अतःपरंप्रवक्ष्यामिरहस्यंह्येतदुत्तमं येनलक्ष्मीर्धृतिस्तुष्टिःपुष्टिःकांतिश्चजा
यते शुक्रंज्येष्ठासुसंप्राप्यपूजयेन्नक्तभोजनैः पूर्वोक्तक्रमयोगेनाद्विजानांतर्पणेनतु सप्तमेत्वथसंप्राप्तेसौवर्णंकारये
त्सितं रौप्येवाकांस्यपात्रेवास्थापयित्वाभृगोःसुतं संपूज्यपरयाभक्त्याश्वेतवस्त्रानुलेपनैः अग्रेतस्यप्रदातव्यं
पायसंघृतसंयुतं दद्यादनेनमंत्रेणब्राह्मणायाविचक्षणः भार्गवोभृगुशिष्यस्त्वंश्रुस्मृतिविशारदः हत्वाग्रह
कृतान्दोषानायुरारोग्यदोभव इतिभाविष्योत्तरोक्तंशुक्रवारव्रतं अथशुक्रस्तोत्रम् नमःशुक्रायदैत्यानामाचा
र्य्यायनमोनमः काव्यायोशनसेतुभ्यंभार्गवायनमोनमः वृषपर्वार्चितायाथदैत्यानुग्रहकारिणे कवयेदैत्यद
नुजासुरवंदितमूर्तये देवयानीकृतेदासीकृतासुरसुतायच दानवाधिपगोप्त्रेचतृणीकृतसुरायच मायाधिपत
येतुभ्यंनीतिशास्त्रप्रयोगिने भृगुगोत्रवरिष्ठायगीर्वाणैर्वंदितायच श्वेतवस्त्रायश्वेतायश्वेतपुष्पप्रियायच शशांक
तुल्यमहसेभृगूणांपतयेनमः इत्येवंशुक्रनामानिशुक्रवारेतुयःपठेत् ससर्वशास्त्रनिपुणःशुक्रस्यस्यात्प्रसादतः
इतिशुक्रस्तोत्रम् अथशुक्रशांतिः वृद्धवासिष्ठोक्ता शुक्रेचास्तंगतेयात्रागुरावस्तमुपागते तयोर्वाल्येवार्धकेच
सायात्राभयरोगदा प्रतिशुक्रंप्रतिवुधंप्रतिभौमंचगार्हिता तीर्थयात्राविधौतेषांप्रतिशुक्रोनविद्यते काश्यपेषु
वासिष्ठेषुभृगुष्वांगिरसेषुच भरद्वाजेषुवत्सेषुप्रतिशुक्रोनाविद्यते अन्येषांसन्मुखेदोषःप्रातिशुक्रस्यसर्वदा कृत्वाशां
तिंप्रयत्नेनपश्चात्सर्वंसमाचरेत् उपोष्यगुरुवारेचयावच्छुक्रोदयंव्रतं रजतेनचशुद्धेनकारयेत्प्रतिमांभृगोः उ
पचारान्निवेद्याथशुक्रंअन्यदिरृचा तन्मंत्रेणजपंकुर्य्यात्सम्यगष्टोत्तरंशतं क्षीरगंगाक्षतैःपुष्पैर्भक्त्याचार्घ्यं
निवेदयेत् दैत्यमंत्रीदिवादर्शीचोशनाभार्गवःकविः श्वेतोथमंडलीकाव्योवोधिज्ञोभगवन्नमः दत्त्वेत्यर्घ्यंप्रयत्नेन

प्रार्थयेच्चैवभक्तितः त्वत्पूजयानयाशुक्रसन्मुखत्वसमुद्भवं दोषंविनाशयाक्षिप्रंरक्षमांतेजसांनिधे दैवज्ञा
यततोदद्यात्प्रतिमांश्वेतगोयुतां एवंकृतेनदोषःस्यात्प्रतिशुक्रसमुद्भवः मात्स्येपिविशेषउक्तः अथातःशृणुभूपा
लप्रतिशुक्रप्रशांतये यात्रारंभेवसानेचतथाशुक्रोदयेसति शुक्रपूजाप्रकर्तव्यातांनिशामयभारत राजतेवा
यसौवर्णेकांस्यपात्रेथवापुनः शुक्लपुष्पांवरयुतेश्वेततंडुलपूरिते निधायराजतंशुक्रंशुचिमुक्ताफलान्वितं महा
श्वेतगवायुक्तंसामगायनिवेदयेत् सहतेनसवत्सांगांदत्वाविप्रायप्रार्थयेत् नमस्तेसर्वलोकेशनमस्तेभृगुनंदन
कवेसर्वार्थसिद्ध्यर्थंगृहाणार्घ्यंनमोस्तुते दत्त्वैवार्घ्यंतुकौंतेयप्रणिपत्यविसर्जयेत् यावच्छुक्रस्यनकृतापूजासौहालि
कैःशुभैः पोलिकाभिश्चगोधूमैस्तंडुलैश्चणकैरपि तावत्फलंकथंलभ्यंस्त्रीभिःकामार्थसिद्धये एवंशुक्रोदयेकु-
र्वन्यात्रादिषुचभारत अथवामौक्तिकान्येवसुवृत्तानिमहांतिच भार्गवांगिरसौचिंत्यतान्येवप्रतिपादयेत्
भक्त्यामौक्तिकदानेनयेज्ञनकुरुनंदन कुरूपंतादृशपुंसांनकदाचित्प्रजायते येभार्गवोदयमवाप्यसवस्त्रपुष्पंकु-
र्वंत्यनन्यमनसोंगिरसश्चपूजां तेषांनृणांप्रवसतांप्रतिशुक्रजातं विघ्नंनसंभवतिभारतपुण्यभाजां इति
शुक्रशांतिविधानम् अथशुक्रवारेवरलक्ष्मीव्रतम् तच्चकर्कटराशिस्थसूर्येश्रावणस्यांतिमशुक्रवारेकार्यमिति-
कथायामुक्तंतत्रपूजाविधिः ॐमद्येतितिथ्यादिसंकीर्त्यात्मनोमृषावादादिजनितकुष्ठादिरोगनिवृत्तिपूर्वकधनसं-
पत्पुत्रादिलाभार्थंश्रावणांतिम शुक्रवासरेवरलक्ष्मीप्रीत्यर्थं पूजनंकरिष्ये इति संकल्प्य पूजार्थंगृहं-
तोरणरंगमालादिभिरलंकृत्य तत्रगृहस्यपूर्वभागेऐशान्यांवाभूमौप्रस्थमितान्तंडुलान्निक्षिप्य तदुपरिकल-
शंसुवर्णपंचरत्नफलवस्त्रादियुतंसंस्थाप्य तत्रचतुर्भुजांहैमींप्रतिमांसंस्थाप्यपूजांकुर्यात् क्षीरसागरसंभूता-
क्षीरवर्णसमप्रभा क्षीरार्णवसमंवस्त्रंदधानाहरिवल्लभा ब्राह्मीहंससमारूढासुकमंडलुधारिणी विष्णुते-

जोधिकेदेविसमागच्छवरप्रदे इत्यावाहनम् १ मासेश्वरिमहादेविआसनंतेददाम्यहं महैश्वर्यसमायु-
क्ते ब्रह्माणिब्रह्मणः प्रिये इत्यासनम् २ तीर्थोदकैर्महादिव्यैः पापसंहारकारकैः अर्घ्यंगृहाणदेवे-
शिदेवानामुपकारिणि इत्यर्घ्यम् ३ कुमारशक्तिसंपन्नाकौमारीशिखिवाहनापाद्यंददाम्यहंदेविवरदेवरलक्षणे
इतिपाद्यम् ४ वैष्णवीविष्णुसंयुक्ताअसंख्यायुधधारिणि आचम्यतांदेवपूज्येवरदेसुरमार्दिनि इत्याचमनम्
५ स्नानंपंचामृतैः शुद्धैः स्नापयिष्येहरिप्रियेवरदेशक्तिसंभूते वरंदेहिहरिप्रिये इतिपंचामृतस्नानम्
६ गंगाजलंसमानीतंसुगंधिद्रव्यसंयुतं स्नानार्थंतेमयादत्तंगृहाणपरमेश्वरि इतिस्नानम् ७ रजताद्रिसमं
दिव्यंक्षीरसागरसन्निभं चंद्रप्रभासमंदिव्यंवसनंतेददाम्यहं इतिवस्त्रं ८ मांगल्यमणिसंयुक्तंमुक्ताफलसम
न्वितं दत्तंमंगलसूत्रंतेगृहाणसुरवल्लभे इतिमंगलसूत्रं ९ यज्ञोपवीतमिति यज्ञोपवीतंसौवर्णंदद्यात् सुवर्णभूषणं
दिव्यंनानारत्नसुशोभितं त्रैलोक्यभूषणेदेविगृहाणाभरणंशुभं इत्याभरणम् १० रक्तगंधंसुगंधाढ्यमष्टगंधसम-
न्वितंदास्यामिदेविवरदेलक्ष्मिदेविप्रसीदमे गंधं ११ महाव्रीहिसमुद्भूतानक्षतानपिषोडश मुक्ताविशेषजमुखान्
गृहाणपरमेश्वरि इत्यक्षताः १२ नानाविधानिपुष्पाणिनानावर्णयुतानिच पुष्पाणितेप्रयच्छामिभक्त्यादेविवरप्रदे
इतिपुष्पम् १३ अथांगपूजा वरलक्ष्म्यैनमः पादौपूजयामि कमलवासिन्यैनमः गुल्फौपू- पद्माल
यायैजंघेपू. श्रियैनमः जानुनीपू. इंदिरायैनमः ऊरूपू. हरिप्रियायैनमः नाभिंपूज. लोकमात्रे
नमः स्तनौपू. शंखनिधयेनमः हस्तौपू. विधात्र्यैनमः कंठंपू. धात्र्यैनमः नासांपू. पद्मनि-
धयेनमः नेत्रेपू. भार्गव्यैनमः कर्णौपू. क्षीरसागरजायैनमः ललाटंपू. श्रीवरलक्ष्म्यैनमः शिरःपू.
श्रीमहालक्ष्म्यैनमः सर्वांगंपू. धूपंदास्याम्यहंदेविगोघृतेनसमन्वितं प्रयच्छामिमहादेविभक्तानांवरदे

शुभेइतिधूपं १४ आज्यंसद्वर्त्तिसंयुक्तंवह्निनाप्रतियोजितं दीपंगृहाणवरदेत्रैलोक्यतिमिरापहे इतिदीपं १५
नैवेद्यंपरमान्नंतेदाप्टिप्रीतिकरंशुभं भक्ष्यभोज्यादिसंयुक्तसर्वतृप्तिकरंपरं इतिनैवेद्यम् १६ कर्पूरनागवल्लीच
क्रमुकंचूर्णसंयुतं वरलक्ष्मिगृहाणत्वंतांबूलंतेददाम्यहम् इतितांबूलं १७ सुवर्णंसर्वधातूनांश्रेष्टंदेविप्रकीर्त्ति
तं भक्त्याददामिवरदेस्वर्णंदृष्टिंप्रदेहिमे इतिसुवर्णदाक्षिणा १८ नीराजनंसमांगल्यंकर्पूरेणसमन्वितं चं
द्रार्कवन्हिसदृशंप्रभेदेविनमोस्तुते इतिनीराजनम् १९ सर्वमंगलमांगल्येसर्वपापप्रणाशिनि डोरकंतेप्रय
च्छामिसुप्रीताहरिवल्लभे इतिडोरकार्पणं २० करिष्यामिव्रतंदेविव्वद्भक्त्यात्वत्परायणः श्रियंदेहियशोदे
हिसौभाग्यंदेहिमेशिवे इतिडोरकवंधनम् २१ क्षीरार्णवसुतालक्ष्मीचंद्रस्यैवसहोदरि गृहाणार्घ्यंमहालक्ष्मी
देहितुभ्यंनमोस्तुते इतिपुनरर्घ्यं २२ श्रीवृक्षस्यदलंदेविमहादेवप्रियंसदा बिल्वपत्रंप्रयच्छामिपवित्रंतेसु
निर्मलं इतिविल्वपत्रं २३ इहजन्मनियत्पापंसप्तजन्मांतरेषुच निवारयमहादेविलक्ष्मीनारायणप्रिये इ-
तिप्रदक्षिणा २४ दामोदरिनमस्तुभ्यंनमस्त्रैलोक्यनायके हरिकांतेनमस्तुभ्यंत्राहिमांपरमेश्वरि इतिनमस्का
रः २५ क्षीरार्णवसमुद्भूतेकमलेकमलालये प्रयच्छसर्वकामांश्चविष्णुवक्षस्थलालये इतिव्रतसमर्पणं २६
छत्रचामरमांदोलव्यजनंदर्पणंतथा गीतवादित्रनृत्यैश्चविष्णुवक्षस्थलालये इतिछत्रादिसमर्पणं २७ शु
क्रवारेसमभ्यर्च्यक्षमय्यचमहेश्वरि वरलक्ष्मिमहादेविसर्वकार्य्यप्रदायिनि इतिक्षमापनं २८ प्रयच्छपुत्र
कामांश्चविष्णुवक्षस्थलेनघे पुत्रान्देहियशोदेहिसौख्यसौभाग्यमेवच त्रैलोक्यजननित्राहिवरदेभक्तवत्सले
इतिप्रार्थना एकविंशतिपक्वान्नघृतशर्करयायुतं इंदिरेप्रीयतांदेवि अतः शांतिंप्रयच्छमे इतिवायनं ३०
इंदिराप्रतिगृह्णातिइंदिरावैददातिच इंदिरातारकोभाभ्यामिंदिरायैनमोनमः इतिवायनग्रहणमंत्रः ३१ इ

तिवरलक्ष्मीपूजाविधिः अथकथा सूतउवाच कैलासशिखरेरम्येसर्वदेवनमस्कृतेगौर्यासहमहादेवोदिव्यैर क्षैर्विनोदितः जितोसिलंजितेत्याहपार्वतीपरमेश्वरं सोपित्वंचाजितेत्याहसुविवादस्तयोरभूत् चित्रनेमिस्त दाप्टष्टोमृषावादमभाषत तदाकोपसमाविष्टागौरीशापंददौतदा कुष्ठीभवमृषावादिन्चित्रसेनहतप्रिय नान्न तेनसमंपापंक्वापिदृष्टंश्रुतावपि चित्रनेमिर्विशेषज्ञः सत्यंवदतिनोमृषा प्रसादः क्रियतांदेवि देवीमाहवृषध्वजः प्रसादसुमुखीतस्मैविशापंचजगादसा यदासरोवरेरम्येकरिष्येतितपः शुचिःततः स्वर्गणिका. सर्वाः वक्ष्यंति त्वासमाहिताःतदाभवान्विशापांस्यादित्युक्तः सपपातह ततोदिनैश्चकतिभिश्चित्रनेमिः सरोवरे कुष्ठीभूत्वावसं स्तत्रददर्शस्वर्विलासिनीः देवतापूजनेयुक्ताः पप्रच्छप्रणिपत्यताः किमेतद्भोमहाभागाः किंपूजायांतुवां छितं किंचास्माभिरनुष्ठेयमिहामुत्रसुखाप्तये इतिव्रतांचित्रनेमिश्चक्रेप्येवंसुलोचनाः येनास्माद्गिरिजाशापा न्मोक्ष्यसेचिरदुःखितः ताऊचुः क्रियमाणंते व्रतमेतदनुत्तमं वरलक्ष्मीव्रतंदिव्यंसर्वकामसमृद्धिदं यदार वौकुलीरस्थेमासेचश्रावणोत्तमे गंगायमुनयोर्योगस्तुंगभद्रासमस्तदा तस्मिन्वैश्रावणेमासिशुक्लांतेतुभृगोर्दि ने प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्मभिः सुवर्णप्रतिमांकुर्याच्चतुर्भुजसमन्वितां पूर्वंगृहमलंकृत्यतोर- णैरंगवाल्लिभिः गृहस्यपूर्वादिग्भागेऐशान्यांचाविशेषतः तंडुलान्प्रस्थसंख्याकान्भूमौनिक्षिप्यपूजयेत् संस्था- प्यकलशंतत्रतीर्थतोयैःप्रपूरयेत् फलानिपरिनिःक्षिप्यसुवर्णंतत्रनिःक्षिपेत् पल्लवांश्चापिनिःक्षिप्यवस्त्रेणा- च्छादयत्नतः प्रतिमांस्थापयेत्तत्रपूजयेच्चयथाविधि अग्न्युत्तारणपूर्वंतुशुद्धस्नानंयथाक्रमं पंचामृतेनस्नपनंका- रयेन्मंत्रपूर्वकं शुद्धस्नानंपुनःकृत्वादेवीसूक्तेनवैततः अष्टगंधैःसमभ्यर्च्यपल्लवैश्चसमर्चयेत् अश्वत्थवटवि- ल्वादिचूतदाडिममालतीएतेषांपत्रमादायएकविंशतिसंख्यया नानाविधानिपुष्पाणिमालत्यादीनिवैततः धूप-

दीपैर्महालक्ष्मींपूजयेत्सर्वकामदां पायसंसर्वमन्नंचसर्वभक्ष्यैश्चसंयुतं एकविंशतिसंख्याकैरपूपैः पूजयेच्छ्रियं दे-
व्यैसर्वंसमर्प्याथवरंसद्गुणयाचतः एवंसंपूजयित्वातांतांबूलाद्यैश्चषोडश उपचारैर्बहुविधैर्नानासम्माननैस्तथा
नृत्यगीतादिसहितंदेवींसंप्रार्थयेच्छ्रियं उमासरस्वतीमाताशचीचप्रियवादिनी एताभिश्चकृतंसम्यग्व्रतंसर्व
समृद्धिदं पूजावसानपर्यंतंचित्रनेमिरभूत्ततः होमधूपंसमाघ्रायघृतदीपप्रभावतः गतकुष्ठस्स्वर्णतेजाःशु
चिस्तद्गतमानसः तस्मिन्नेवव्रतेसम्यङ्मनःसंधायसर्वदा पंचवायनकंदत्वाकथांशृण्वीतवाग्यतः तयामौन
गृहीत्वातुआरातिंपरिकल्पयेत् व्रतंप्रकुर्वतांहस्तादेकंपूगफलंतथा पर्णंकचूर्णसाहितवर्द्धनीयंप्रयत्नतः आरक्त-
मासिसंजातेकुर्याद्व्रतमनुत्तमं नोचेन्नक्तव्रतंकार्यंसर्वदाशुभमिच्छता अनेनैवक्रमेणैवसंगृह्णीयात्प्रयत्नतःश्र-
हंत्वस्यांकरिष्यामिव्रतंसर्वसमृद्धिदं इत्युक्त्वासर्वदेव्यस्ताःकारयामासुतत्क्षणात् सुवर्णनिर्मितांदेवींवस्त्रालंका
रसंयुतां पूर्वोक्तेनविधानेनपूजांकृत्वाप्रयत्नतः पंचवायनकंदत्वाकृत्वा तेभ्योयथाक्रमं विप्रायवटवेचैवदेव्यै
चव्रतचारिणे सुवासिन्यैततस्त्वेकमार्पिताचित्रनेमिना एवंसम्यक्क्रमेणैतान्दत्वावायनपंचकं ततोगृहंगतेतेनदे-
वीनत्वायथाक्रमं ततोह्यनुज्ञांसंप्राप्यभक्षयित्वाततोव्रती नागवल्लीदलंत्वेकंक्रमुकंचूर्णवर्जितं भक्षयि-
त्वातुचैकांतेप्रभातेतंनिरीक्ष्यच आरक्तेचततोजातेव्रतस्यास्यप्रभावतः अद्याहंगतपापोस्मिदेवीदर्शनमागतः
एवंसम्यग्व्रतंचीर्णंकृतंयन्मेयथाश्रुतं चित्रनेमिर्व्रतंकृत्वाकैलासंशंकरालयं गत्वाप्रणम्यदेवेशंदेवींसादरपूर्व
कम् पार्वतीचतदाप्राहचित्रनेमेस्त्वपुत्रवत् पालनीयोमयात्वंहिसत्यमित्यवधार्यतां चित्रनेमिस्तदाप्राहपा
र्वतींहरवल्लभां तवपादांबुजंदृष्टंवरलक्ष्मीप्रसादतः महादेवस्ततःप्राहचित्रनेमिंशुचिव्रतं अद्यप्रभृतिकैलासे
भुंक्ष्वभोगान्यथेप्सितान् पश्चाद्व्रतासिवैकुंठव्रतस्यास्यप्रभावतः पार्वत्यायत्कृतंपूर्वंपुत्रलाभार्थयातया दृष्टश्च

पएमुखस्तत्रततश्चसुमहाव्रतम् नंदिश्चविक्रमादित्ये.राज्यंप्राप्तंतदाज्ञया नंदिश्चकांतयाहीन।कांतालब्धाप्र
सादतः तयाचैतद्व्रतं कृत्स्नं कृतंवैपुत्रहेतुतः पुत्रंचसुषुवेसापित्रैलोक्यभरणक्षमं इहमानुषलोकेहिव्रतं-
चीर्णंसुविस्तरं तदाप्रभृतियेनेदंवरलक्ष्मीव्रतंशुभं व्रतंपुण्यंनरोवापिकुर्य्याच्चैवतथांगना भक्त्याकरोतिवि-
पुलान्भोगान्प्राप्यश्रियंव्रजेत् व्रतानामुत्तमंपुण्यंवरलक्ष्मीव्रतंशुभं तत्कृत्वाचनरोनारीतौवरौनात्रसंशयः य-
इदंशृणुयान्नित्यंश्रावयेद्वासमाहितः धनधान्यमवाप्नोतिवरलक्ष्मीप्रसादतः इतिभाविष्योत्तरेवरलक्ष्मी
व्रतम् इतिशुक्रवारव्रतानि अथशनिवारव्रतानिभाविष्योत्तरे ॥ श्रीकृष्णउवाच ॥ अथातःसंप्रवक्ष्यां
मिरहस्यंह्येतदुत्तमं येनलक्ष्मीर्धृतिस्तुष्टिःपुष्टिःकांतिश्चजायते मूलेनसूर्यतनयंगृहीत्वाभरतर्षभ तस्मिन्दिने
पूजनीयंग्रहत्रितयमादरात् शनैश्चरश्चराहुश्चकेतुश्चकेतुमात्रप होमंघृततिलैःकुर्य्यात्ग्रहनाम्नातुमंत्रवित्
प्रथमाष्टोत्तरशतमष्टाविंशतिरेववा होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच यथाक्रमंशमीदूर्वाकुशानांसमिधः
स्मृताः सप्तमेचैवसंप्राप्तेनक्तेसूर्यसुतस्यच ग्रहास्त्रयोपिकर्त्तव्याराजन्लोहमयाःशुभाः लोहपात्रेस्थि-
ताःसर्वेसौवर्णेवाकुरूद्वह व्रतांतेइतिशेषः कृष्णवस्त्रयुगच्छत्रान्दद्यादेकैकशःक्रमात् तत्रशनिरूपंतु
कृष्णवासास्तथाकृष्णः शनिःकार्य्यःशिरालतः दंडाक्षमालासंयुक्तःकरद्वितयभूषितः कार्ष्णायसरथेकार्य्य-
स्तथैवाष्टतुरंगमे राहुकेत्वोःस्वरूपंतुमत्स्यपुराणे करालवदनःखड्गचर्मशूलवरप्रदः नीलासिंहास-
नयुतोराहुरत्रप्रशस्यते धूम्राद्विबाहवःसर्वेगदिनोविकृताननाः गृध्रासनगतानित्यंकेतवःस्युर्वरप्रदाः
इति मृगनाभ्यासमानाभ्योधूपंकृष्णागुरुंतथा दत्त्वाकासारनैवेद्यंब्राह्मणायोपपादयेत् शनैश्चरनमस्तु-
भ्यंनमस्तेराहवेतथा केतवेथनमस्तुभ्यंसर्वशांतिप्रदोभव एवंकृतेभवेद्यत्तुतन्निबोधद्विजोत्तम यदिभौमोरवि-

सुतोभास्करोराहुणासह केतुश्चमूर्द्धनितिष्ठतिसर्वेपीडाकराग्रहाः अनेनकृतमात्रेणसर्वेशाम्यंत्युपग्रहाः यए
वंकुरुतेराजासदाभक्तिसमन्वित तस्यसानुग्रहाःदेवाशांतिंयच्छंतिभूपतेः सूर्यःशशीकुजबुधोगुरुशुक्रसौरीन् ह
स्तादिकृक्षसहितानुदितक्रमेण संपूज्यहेमघटितान्द्विजपुंगवायदत्त्वापुमान्ग्रहगणेननपीड्यतेत्र शशीति
द्वितीयार्थेप्रथमा शनैश्चरंराहुकेतूलोहपात्रेव्यवस्थितान् कृष्णागुरुःस्मृतोधूपोदक्षिणात्वात्मशक्तितःइतिभविष्यो
त्तरोक्तंशनिव्रतम् श्रीकृष्णउवाच कदाचिदाश्रमपदंपिप्पलादस्यनारदः जगामकामचारेणपर्य्यटन्नवनीतलं
तथातिथेयंश्रेयोर्थीपिप्पलादोथनारदं विहितायांसपर्य्यायांयोगज्ञतमथाब्रवीत् मुनेवनेचिरकालमालंब्यास्थितवा
नहं अथास्यवृक्षमक्षीणछायस्थानमनुत्तमं क्वगतौमांविहायैहमदीयौपितरौमुने तमाहनारदः पूर्वं सर्वलोकानलः
शनिः पीडयामासवसुधांसर्वेषामसुधारिणां रोगांश्चकारदेहेपुगृहेषुचधनक्षय तदापुराण्यरण्यानिपरिभ्रम्यफ
लादिकं आदायकायपोपायसायमायातितेपिता क्लीवभावंपुरस्कृत्यशनैश्चरसमीक्षितः त्वांविहायसचापरसुगत
इचेतस्ततःक्वचित् एवमुक्तःशिशुःक्रोधाज्ज्वलन्निवहुताशनः आलोक्यगगनाद्भूमौपातयामासवैशनिं पतमानोगि
रेःशृंगेलग्नःखंजोवभूवह धरण्यांपतितंदृष्ट्वाभास्करात्मजमातुरं ननर्त्ताभुजमुत्क्षिप्यनारदोहृष्टमानस हृष्टो
देवांस्तथाहूयदर्शयामासतशनिं अथदेवास्तदाप्राप्ताब्रह्मरुद्रेंद्रपावकाःतत्कृतेसांत्वयामासुःक्रोधमुग्धमुनिंचते
स्वस्तितेस्तुमहाभागपिप्पलादमहामुने अतस्त्वांपिप्पलादेतिलोकेख्यातिंगमिष्यसि अतस्त्वांपूजयिष्यंति
स्नात्वापुष्पाक्षतादिभिः गृहाश्रमपदेरम्येक्षितेपर्युभुविभाविताः सप्तजन्मानुगंसौख्यंपुत्रपौत्रानुगामिनी ते
षांलक्ष्मीर्नदूरस्थाभविष्यतिकदाचन स्मरिष्यंतिचयेपित्वांपिप्पलादेतिनामतः तेषांशनैश्चरकृतानपीडा-
पिभविष्यति क्षमस्वास्यमहाभागनिर्दोषोयंग्रहाग्रणीः वरवृक्षनमस्कारैःशांतोभवतिपूजितः अतोर्थमस्य

दिवसेस्नानमभ्यंगपूर्वकं कार्य्यंदेयंतुविप्रायतैलमभ्यंगहेतवे यस्तुसंवत्सरंयावत्प्राप्तेशनिदिनेनरः तैलं
ददातिविप्राणांस्वशक्त्यान्यजनस्यतु ततःसंवत्सरस्यांतेप्राप्तेतस्यादिनेनरः तैलंददातिविप्राणांस्वशक्त्या-
न्यजनस्यतु ततःसंवत्सरस्यांतेप्राप्तेतस्यदिनेपुनः लोहेनघटितंशौरिं तैलकुंभेविनिःक्षिपेत् लोहेवा
मृण्मयेवाथकृष्णवस्त्रयुगच्छदं कृष्णगोदक्षिणायुक्तं कृष्णकंवलशायिनं तिलतैलेनचस्नानंकृष्णपुष्पैस्तिलो
दनैः पूजयित्वासूर्यपुत्रंब्राह्मणायनिवेदयेत् कृष्णाय द्विजमुख्यायेतरस्मैतदभावतः मंत्रेणानेनब्रह्मर्षेशन्नो
देवीतिभक्तितः इतरेषांतुवर्णानांशृणुमंत्रंद्विजोत्तम क्रूरावलोकनवशाद्भुवनंनाशयातियोग्रहोदुष्टः तुष्टोधन
कनकसुखंददातिनःशनैश्चरःपातु यःपुराभ्रष्टराज्यायनलायप्रददौकिल स्वप्नेतस्यनिजंराज्यंसमेशौरिःप्रसीदतु
केशनीलांजनप्रख्यंमंदचेष्टाप्रसारिणं छायामार्तंडसंभूतंतंनमामिशनैश्चरं नमोर्कपुत्रायशनैश्चरायनीहार
वर्णांजनमेचकाय श्रुत्वारहस्यंभवकामदश्चफलप्रदोमेभवसूर्यपुत्र नमोस्तुप्रेतराजायकृष्णदेहायवैनमःशनैश्चरा
यवैतद्वच्छुद्धबुद्धिप्रदायिनेयएवंनामभिःस्तौतितस्यतुष्टोददात्यसौ तदीयंतुभयंतस्यस्वप्नेपिनभविष्यति एवमुक्त्वा
सुराःसर्वेप्रतिजग्मुर्यथागतं शनैश्चरोवेधसापिग्रहत्वेनप्रतिष्ठितःपिप्पलादोपिब्रह्मर्षिर्ब्रह्माज्ञांपरिपालयन् शनै
श्चरंतुसंपूज्यतुष्टावरचितांजलिःकौणस्थःपिंगलोवभ्रुःकृष्णोरौद्रांतकोयमः शौरिःशनैश्चरोमंदःप्रीयतांमेग्रहोत्तमः
शनैश्चरमितिश्रुत्वापिप्पलादोमहामुनिःज्वलन्खेवैविमानस्थोदृश्यतेद्यापिमानवैःइदंशनैश्चराख्यानंयेश्रोष्यंतिस
माहिताः तेषांकुरुवरश्रेष्टशनिपीडानजायते कृष्णायसेनघटितांग्रहराजमूर्त्तिंलोहेनिधायकलशेतिलतैलपूर्णेयोब्रा
ह्मणायरविजंप्रददातिभक्त्यापीडाशनैश्चरकृतानहिबाधतेतं इतिभविष्योत्तरेशनिव्रतं अथान्यदपि शनिव्रत
विधानम् मदनरत्नेस्कंदपुराणे श्रावणेमासिसंप्राप्तेशोभनेशनिवासरे लोहरूपंशनिंकृत्वास्नाप्यपंचामृतेनवै

पुष्पैरष्टविधैर्धूपैःफलैश्चैवविशेषतः नामभि पूजयेदेतैःक्रमेणग्रहसत्तमं कोणस्थःपिंगलोबभ्रु कृष्णोरौद्रोंतको
यमः सौरि शनैश्चरोमंद.पिप्पलादेनसंस्तुतः शन्नोदेवीतिमंत्रेणवैदिकेनचपूजयेत् पूजयित्वाचनैवेद्यतत.कु
र्यात्क्रमेणतुममासभक्तंप्रथमेद्वितीयेपायसंशुभं तृतीयेत्वंबलीकार्याचतुर्थेपरिकाशुभा प्रथमादिशब्दे शनि
वासराः शुक्लादिकृष्णांतश्रावणमासगताउच्यंते तक्षतंडुलपिष्टकृतायवागूरंबलीतिप्रोक्ता अथदशरथकृतशनि
स्तोत्रंस्कंदपुराणे श्रीपार्वत्युवाच द्वादशाष्टमजन्मस्थेशनौसर्वग्रहेश्वरे किंकर्तव्यंनरैःस्वामिन्विधानंक्लेशशां
तये शंकरउवाच रघुवंशेतिविख्यातोराजादशरथःपुरा चक्रवर्तीसविज्ञेयःसप्तद्वीपाधिपःस्मृत कृत्तिकांतेशनिं
ज्ञात्वादैवज्ञैर्ज्ञापितोहिसः रोहिणींभेदयित्वातु शनिर्यास्यतिसांप्रतं शाकटोनामभेदोयं सुरासुरभयंकर.
द्वादशाब्दंतुदुर्भिक्षंभविष्यतिसुदारुण एतच्छ्रुत्वाततोवाक्यं मंत्रिभि सहपार्थिव. चिंतयामासकिमिदं
भयंकरमुपस्थितं देशाः सनगरग्रामा भयभीता. समंततः पृ॰ व्याः सर्वतोलोकाः क्षयस्तेतपांस
मागत आकुलंतुजगत्सर्वंपौरजानपदादिकं पप्रच्छप्रयतोराजावसिष्ठप्रमुखान्द्विजान् दशरथउवाच स
माधानंकिमत्रास्तितद्ब्रूतमेऋषिसत्तमाः वसिष्ठउवाच प्रजारक्ष्याः प्रयत्नेन तस्मिन्भिन्नेकुतः प्रजा अ
साध्यः खलुयोगोय ब्रह्मविष्णुशिवैरपि इतिसंचिंत्यमनसासाहसंपरमंययौ समादायधनुर्दिव्यंदिव्यायुध
समन्वित रथमारुह्यवेगेनगतोनक्षत्रमंडलं सपादयोजनानांतुलक्षंसूर्योपरिस्थित रोहिणीपृष्ठमासाद्य
राजादशरथस्तदा रथेतुकांचनेदिव्येमणिरत्नविभूषिते हंसवर्णहयैर्युक्तेमहाकेतुसमन्विते दीप्यमानेम
हारत्नैः किरीटमुकुटोज्वल. व्यराजततदाकाशेद्वितीयइवभास्कर. आकर्णचापमाकृष्यसंहारास्त्रंप्रयोज
यत् कृत्तिकांतेशनिः स्थित्वा प्राविशत्किलरोहिणीं दृष्ट्वादशरथंचाग्रेतस्थौसभ्रुकुटीमुखः संहारास्त्रंश

निर्दष्टासुरासुरानेपूदनं हासित्वातद्भयात्सौरिरिदंवचनमब्रवीत् शनिरुवाच पौरुषंतवराजेंद्रदृष्टंचातिभ
यंकरं देवासुरमनुष्याश्चसिद्धविद्याधरोरगाः मयाविलोकिताः सर्वे भस्मतांचव्रजंतिते तुष्टोहतवरा
जेंद्रतपसापौरुषेणच वरंब्रूहिप्रदास्यामिमनसायदभीप्सितं दशरथउवाच रोहिणींभेदयित्वातुनगंतव्यं
त्वयाशने याचितंतुमयासौरेनान्यमिच्छामितेवर एवमस्त्विततंचोक्त्वा वरंदत्वाशनिः स्थितः प्राप्य
चापिवरंराजाकृतकृत्योभवत्तदा द्वादशाब्दंचदुर्भिक्षंनाभवच्चकदाचन एवंवरंतुसंप्राप्तोहृष्टरोमासपार्थिवः
रथोपरिधनुः स्थाप्य भूत्वाचैवकृतांजलिः ध्यात्वासरस्वतींदेवीं गणनाथंविनायकं राजादशरथः स्तोत्रंसौरेरि
दमथाकरोत् दशरथउवाच नमः कृष्णायनीलायशितिकंठनिभायच नमोनीलमयूखायनीलोत्पलनिभायचनमोनि
र्मांसदेहायदीर्घश्मश्रुजटायच नमोविशालनेत्रायस्थूलरोम्णेनमोनमः नमोदीर्घायशुष्कायकालदंष्ट्रनमोनमः
नमस्तेकोटराक्षायदुर्निरीक्षायवैनमः नमोघोराय रौद्रायभीषणायकरालिने नमस्तेसर्वभक्ष्यायवलीमुखनमोस्तुते
सूर्यपुत्रनमस्तेस्तुसर्वातकर्यनमोस्तुते नमःकालाग्निरुद्रायकृतांतायचवैनमः नमोमंदगतेतुभ्यंनिस्त्रिंशायनमो
नमः तपसादग्धदेहायनित्यंयोगरतायच ज्ञानचक्षुर्नमस्तेस्तुकश्यपात्मजसूदन तुष्टोददासिवैराज्यंरुष्टोवै
हरासिक्षणात् देवासुरमनुष्याश्चसिद्धविद्याधरोरगाः त्वयाविलोकिताःसर्वेदैन्यमाशुव्रजंतिते ब्रह्माशक्रोम
नुश्चैवऋषयस्सप्ततारकाः भ्रष्टराज्याःपतंत्येतेतवदृष्ट्याविलोकिताः देशाश्चनगरग्रामादिशश्चैवद्रुमास्तथा त्व
याविलोकिताःसर्वेनाशंयांतिसमूलताः प्रसादंकुरुमेसौरेवरार्थेतवसंस्थितः एवंस्तुतस्तदासौरिर्ग्रहराजोमहा
बलः अब्रवीच्चशनिर्वाक्यंहृष्टरोमासपार्थिवं शनिरुवाच तुष्टोहंतवराजेंद्रस्तवेनानेननमानद वरंब्रूहिप्रदास्या
मिस्वेच्छयारघुनंदन दशरथउवाच प्रसन्नस्त्वंयदासौरेवरंब्रूहिममेप्सितं अद्यप्रभृतिसौरेतेपीडाकार्य्यानक

स्यचित् देवासुरमनुष्याणांपशुपक्षिशरीरिणां शनिरुवाच ग्रहाणांसग्रहोज्ञेयोयस्तुपोडाकरःस्मृतः अदेयोहि
वरोयस्तुतुभ्यंचैवददामिते त्वयाप्रोक्तंचमेस्तोत्रंयेपठिष्यंतिमानवः एककालंद्विकालंवापीडांमुचामितस्यैव
देवासुरमनुष्याणांसिद्धविद्याधरक्षसां मृत्युस्थानगतोवापिजन्मस्थानगतोपिवा यःपुनःश्रद्धयायुक्तःशुचिस्नातः
समाहितः भक्त्योपचारैःसंपूज्यप्रतिमांलोहजांमम मद्दिनेतुविशेषेणस्तोत्रेणानेनपूजयेत् पूजयित्वाजपंस्तोत्रंभू
त्वाचैवकृतांजलिः मापोदनंतिलैर्मिश्रदद्याल्लोहंचदक्षिणां कृष्णांगांवृषभंवापिदद्याद्विप्रायधीमते तस्यपीडांनचैवाहं
करिष्यामिकदाचन गोचरेजन्मलग्नेवादशास्वंतर्दशासुच रक्षामिसततंतस्य पीडामन्यग्रहैः कृताम् अनेनै
वविधानेनपीडामुक्तंजगद्भवेत् वरद्वयंतुसंप्राप्यराजादशरथस्तदा स्वस्थानंचततोगत्वाप्राप्तकामोभवन्नृपः
इतिस्कंदपुराणेदशरथकृतंशनिस्तोत्रम् ॥ अथान्यदपिशनिः स्तोत्रम् शौरिः शनैश्चरोमंदो यमः खजो
महोरुहः छायासुतश्चरविजः पातंगिश्चांतकोनलः सुरारिर्ज्वरहंताचरक्ताक्षोदंडभृत्तथा कृतांतः सस्यघा
तीच क्षयःकालोनलप्रियः इतिविंशतिनामानि त्रिसंध्यंयः पठेत्सदा शनैश्चरभयंतस्यस्वप्नेपिनभविष्यति गर्ग
श्चकौशिकश्चैवपिप्पलादोमहामुनिः शनैश्चरकृतान्दोषान्नाशयंतिनसंशयः इतिविंशतिशनिनामात्मकंश
निस्तोत्रम् अन्यच्च कोणांतकोरुद्रयमोथबभ्रुः कृष्णःशनिः पिंगलमंदसौरिः नित्यंस्मृतोयोहरतेच
पीडां तस्मैनमः श्रीरविनंदनाय १ नरानरेंद्राः पशवोगजेंद्राः सरीसृपाः कीटपतंगभृंगाः पीड्यं
तिसर्वेविषमास्थितेच तस्मैनमः श्रीरविनंदनाय २ सुरासुराः किंपुरुषागजेंद्रगंधर्वविद्याधरपन्नगा
श्च पीडयंतिसर्वेविषमास्थितेच तस्मैनमः श्रीरविनंदनाय ३ देशाश्चदुर्गाणिवनानियेनग्रामाश्चदेशाः
पुरपत्तनानिपीडयंतिसर्वेविषमास्थितेचतस्मैनमः ४ स्रष्टास्वयंभूर्भुवनत्रयस्यत्राणेहरिः संहरणेमहेशः एक

निर्दंष्ट्रासुरासुरानेपूदनं हासित्वातद्भयात्सौरिरिदंवचनमब्रवीत् शनिरुवाच पौरुषंतवराजेंद्रदृष्टंचातिभ
यंकरं देवासुरमनुष्याश्चसिद्धविद्याधरोरगाः मयाविलोकिताः सर्वे भस्मतांचव्रजंतिते तुष्टोहंतवरा
जेंद्रतपसापौरुषेणच वरंब्रूहिप्रदास्यामिमनसायदभीप्सितं दशरथउवाच रोहिणींभेदयित्वातुनगंतव्यं
त्वयाशने याचितंतुमयासौरेनान्यमिच्छामितेवरं एवमस्त्वितितंचोक्त्वा वरंदत्वाशनिः स्थितः प्राप्य
चापिवरंराजाकृतकृत्योभवत्तदा द्वादशाब्दंचदुर्भिक्षंनाभवच्चकदाचन एवंवरंतुसंप्राप्तोहृष्टरोमासपार्थिवः
रथोपरिधनुः स्थाप्य भूत्वाचैवकृतांजलिः ध्यात्वासरस्वतींदेवीं गणनाथंविनायकं राजादशरथः स्तोत्रंसौरेरि
दमथाकरोत् दशरथउवाच नमः कृष्णायनीलायशितिकंठनिभायच नमोनीलमयूखायनीलोत्पलनिभायचनमोनि
र्मांसदेहायदीर्घश्मश्रुजटायच नमोविशालनेत्रायस्थूलरोम्णेनमोनमः नमोदीर्घायशुष्कायकालदंष्ट्रनमोनमः
नमस्तेकोटराक्षायदुर्निरीक्षायवैनमः नमोघोरायरौद्रायभीषणायकरालिने नमस्तेसर्वभक्ष्यायवलीमुखनमोस्तुते
सूर्यपुत्रनमस्तेस्तुसर्वातक्यनमोस्तुते नमःकालाग्निरुद्रायकृतांतायचवैनमः नमोमंदगतेतुभ्यंनिस्त्रिंशायनमो
नमः तपसादग्धदेहायनित्यंयोगरतायच ज्ञानचक्षुर्नमस्तेस्तुकश्यपात्मजसूदन तुष्टोददासिवैराज्यंरुष्टोवै
हरासिक्षणात् देवासुरमनुष्याश्चसिद्धविद्याधरोरगाः त्वयाविलोकिताःसर्वेदैन्यमाशुव्रजंतिते ब्रह्माशक्रोय
मश्चैववक्रपयस्सप्ततारकाः भ्रष्टराज्याःपतंत्येतेतवदृष्ट्याविलोकिताः देशाश्चनगरग्रामाद्वीपाश्चैवद्रुमास्तथा त्व
याविलोकिताःसर्वेनाशंयांतिसमूलतः प्रसादंकुरुमेसौरेवरार्थेंतवसंस्थितः एवंस्तुतस्तदासौरिर्ग्रहराजोमहा
बलः अब्रवीच्चशनिर्वाक्यंहृष्टरोमासपार्थिवं शनिरुवाच तुष्टोहंतवराजेंद्रस्तवेनानेनमानद वरंब्रूहिप्रदास्या
मिस्वेच्छयारघुनंदन दशरथउवाच प्रसन्नस्त्वंयदासौरेवरंब्रूहिममेप्सितं अद्यप्रभृतिसौरेतेपीडाकार्य्यानक

शनिवारेकार्य्यो तत्रविधिः प्रातःशमीकाष्टेनदंतधावनंकृत्वा तिलतैलाभ्यगंविधाय नद्यादौस्नात्वा
नित्यकर्मनिर्वर्त्य पूजासामग्रींसंपाद्य शमीमूलंतदभावेश्रश्वत्थमूलंगत्वा तत्रमृदावेदिकांविधाय तस्याध
नुराकारंमंडलंनिलिख्य कृष्णातिलैर्द्रोणमितैःपरिपूर्य्य तदुपरिकृष्णायसनिर्मितां महिषासनांद्वि-
भुजांदंडपाशधरां शनैश्वरमूर्त्तिंनिधायकृष्णवस्त्रवेष्टितांकृत्वा एवंपीठिकांसंपाद्य संकल्पंकुर्य्यात् ॥
तद्यथा ॐमद्येतितिथ्यादिसंकीर्त्य आत्मनोऽखिलदुःखदौर्भाग्यनिरसनपूर्वकइहजन्मनिजन्मांतरेच सुख-
सौभाग्यपुत्रपौत्रधनधान्याद्यभिवृद्धिद्वाराशनैश्वरप्रीत्यर्थंशनिवारव्रतंकरिष्ये इतिसंकल्प्य तत्रादौगणे
शपूजनादिविधाय शनिप्रतिमायांप्राणप्रतिष्ठांकृत्वाध्यायेत् शनैश्वरंदीर्घदेहंदंडपाशधरंतथा पिंग-
लंसूक्ष्मदेहंवाध्यायामिरविनंदनं इतिध्यात्वा शमग्निरितिमंत्रेणशन्नोदेवीतिऋचाशनैश्चरायनम इतिना
ममंत्रेणवापूजामारभेत् तिलतैलेनपुरुषसूक्तेनशनिसूक्तेनच अभिषेकंकुर्य्यात् कृष्णवस्त्रेणसप्ततंतुभिश्च
वेष्टयेत् एवंपूर्वोक्तमंत्रैरावाहनासन पाद्यार्घ्याचमनीयमधुपर्कंपुनराचमनीय स्नानंपंचामृतस्नानशुद्धस्नानेन
अथवाकेवलेनातिलतैलेनैवस्नानकारयित्वा वस्त्रयज्ञोपवीतगंधपुष्पांतपूजयित्वांगपूजांकुर्य्यात् ॐकोणस्था
यनमःपादौपूजयामि पिंगलायगुल्फौपूज. बभ्रवेजानुनीपूज. कृष्णायजंघेपू. रौद्रायऊरूपूज. अंतका-
यगुह्यंपू. यमायकटिंपू. शौरयेनाभिंपूजयामि शनैश्चरायहृदयंपू. मंदायकंठंपू. पिप्पलादसंस्तुताय
मुखं चर्पणगात्रायश्रोत्रंपू. स्थूलरोम्णेने. तपसादग्धदेहाय भ्रूमध्यंपूजयामि नित्ययोगरताय. ललाटंपू.ज्ञा
ननेत्रायशिरःपूज. काश्यपाय. शिखांपू. अर्कसूनवेनमः सर्वांगंपूजयामि ततोधूपं दीपं नैवेद्यं पुनराच
नीयं फलंतांबूलं दक्षिणांचदत्त्वा सप्तप्रदक्षिणा सप्तनमस्कारान्कृत्वास्तुवीत नमःकृष्णायनीलायशि

त्रिधात्मऋग्यजुसाममूर्त्तिं स्तस्मैनमः श्रीरविनंदनाय ५ प्रयागकूलेयमुनातटेचसरस्वतीपुण्यजलेगयायां यो
योगिभिर्ध्येयशरीरसूक्ष्म स्तस्मैनमः श्रीरविनंदनाय ६ अन्यप्रदेशात्स्वगृहंप्रविष्टायदीयवारेसुखिनोन
राः स्युः गृहागतायेनपुनः प्रयांति तस्मैनमः श्रीरविनंदनाय ७ तिलैर्यवैर्माषगुडान्नदानैर्लोहेन
नीलांबरदानतोवा प्रीणातिमंत्रैर्निजवासरेण तस्मैनमः श्रीरविनंदनाय ८ शन्यष्टकंयः पठति प्रभा
ते नित्यंसभृत्यैः पशुबांधवैश्च करोतिराज्यंभुविभूरिसौख्यंप्राप्नोतिनिर्वाणपदंतथांते ९ इतिशनिस्तो
त्रम् ॥ अन्यच्च स्कांदे ततःकृतांजलिःभूत्वास्तुतिंचक्रेसबालकः पिप्पलादोद्विजःश्रेष्ठः प्रणिप
त्यमुहुर्मुहुः नमोस्तुकोणसंस्थायपिंगलायनमोस्तुते नमस्तेबभ्रुरूपायकृष्णायचनमोनमः नमस्तेरौद्रदेहायनम
स्तेचांतकाच नमस्तेयमसंज्ञायनमस्तेसौरयेविभो नमस्तेमंदसंज्ञायशनैश्चरनमोस्तुते प्रसादंकुरुदेवशदीन
स्यप्रणतस्यच शनैश्चरउवाच परितुष्टोस्मितेवत्सस्तोत्रेणानेनसांप्रतं वरंवरयभोवत्सयेनयच्छामिवांछितं
पिप्पलादउवाच अद्यप्रभृतिवैपीडाबालानांरविनंदन त्वयाकार्य्यामहाभागनस्वकीयाकथंचन यावद्वर्षाष्टकं
जातंममवाक्येनसूर्यज स्तोत्रेणानेनयोन्यस्त्वांस्तुयात्प्रातरुपस्थितः तस्यपीडानकर्त्तव्यादेयोलाभोमहाग्रह अर्धा
ष्टसातिकेयोगेतावत्कंसंस्थितोनरः तववारेतुसंप्राप्तेयास्तिलांलोहसंयुतान् भक्त्याददातिनोतस्यपीडाकार्य्या
त्वयाविभो कृष्णांगांयस्तुविप्रायतवोद्देशेनयच्छति अर्धाष्टसाप्तिकीपीडातस्यकार्यात्वयानच शमीसमि
द्भिर्योहोमंतवोद्देशेनानिर्वपेत् तथाकृष्णतिलैश्चैवकृष्णपुष्पानुलेपनैः पूजांकरोतियस्तुभ्यंधूपैर्गुग्गुलदहेत् कृ
ष्णवस्त्रेणसंवेष्ट्यतस्यत्याज्यात्वयाव्यथा सूतउवाच एवमुक्तःशनिस्तेनबाढमित्येवजल्प्यच नारदंसमनुज्ञाप्य
जगामनिजसंश्रयं इतिशनिव्रतविधानं अथस्कंदपुराणोक्ताशनिपूजाविधिः श्रावणेमासिशुक्लपक्षस्यप्रथमे

शनिवारेकार्य्यो तत्रविधिः प्रातःशमीकाष्टेनदंतधावनंकृत्वा तिलतैलाभ्यंगंविधाय नद्यादौस्नात्वा नित्यकर्मनिर्वर्त्य पूजासामग्रींसंपाद्य शमीमूलंतदभावेअश्वत्थमूलंगत्वा तत्रमृदावेदिकांविधाय तस्याध नुशाकारमंडलंविलिख्य कृष्णातिलैर्द्रोणमितैःपरिपूर्य्य तदुपरिकृष्णायसानिर्मितां महिषासनांद्वि- भुजांदंडपाशधरां शनैश्चरमूर्तिंनिधायकृष्णवस्त्रवेष्टितांकृत्वा एवंपीठिकांसंपाद्य संकल्पंकुर्य्यात् ॥ तद्यथा ॐमद्येतितिथ्यादिसंकीर्त्य आत्मनोऽखिलदुःखदौर्भाग्यनिरसनपूर्वकइहजन्मनिजन्मांतरेच सुख. सौभाग्यपुत्रपौत्रधनधान्याद्यभिवृद्धिद्वाराशनैश्चरप्रीत्यर्थंशनिवारव्रतंकरिष्ये इतिसंकल्प्य तत्रादौगणे शपूजनादिविधाय शनिप्रतिमायांप्राणप्रतिष्ठांकृत्वाध्यायेत् शनैश्चरंदीर्घदेहंदंडपाशधरंतथा पिंग- लंसूक्ष्मदेहंवाध्यायामिरविनंदनं इतिध्यात्वा शमग्निरितिमंत्रेणशन्नोदेवीतिऋचाशनैश्चरायनम इतिना ममंत्रेणवापूजामारभेत् तिलतैलेनपुरुषसूक्तेनशनिसूक्तेनच अभिषेकंकुर्य्यात् कृष्णवस्त्रेणसप्ततंतुभिश्च वेष्टयेत् एवंपूर्वोक्तमंत्रैरावाहनासन पाद्यार्घ्याचमनीयमधुपर्कंपुनराचमनीय स्नानंपंचामृतस्नातशुद्धस्नानेन अथवाकेवलेनातिलतैलेनैवस्नानकारयित्वा वस्त्रयज्ञोपवीतगंधपुष्पांतपूजयित्वांगपूजांकुर्य्यात् ॐकोणस्था यनम.पादौपूजयामि पिंगलायगुल्फौपूज. बभ्रवेजानुनीपूज. कृष्णायजंघेपू. रौद्रायऊरूपूज. अंतका- यगुह्यंपू. यमायकटिंपू. शौरयेनाभिंपूजयामि शनैश्चरायहृदयंपू. मंदायकंठंपू. पिप्पलादसंस्तुताय मुखं चर्पणगात्रायश्रोत्रंपू. स्थूलरोम्णेने. तपसादग्धदेहाय भ्रूमध्यंपूजयामि नित्ययोगरताय. ललाटंपू.ज्ञा ननेत्रायशिरःपूज. काश्यपाय. शिखांपू. अर्कसूनवेनमः सर्वांगंपूजयामि ततोधूपं दीप नैवेद्यं पुनराच नीयं फलंतांबूलं दक्षिणांचदत्त्वा सप्तप्रदक्षिणा सप्तनमस्कारान्कृत्वास्तुवीत नम.कृष्णायनीलायशि

तिकंठानेभायच नमस्ते मंदसंज्ञायशनैश्चरनमोस्तुते ततोनारदप्रोक्तंस्तोत्रंपठेत् इतिस्तुत्वा विप्रंसंपूज्य
प्रस्थतिलान्नंवायनंसदक्षिणांदद्यात् कृष्णवर्णःकृशांगश्चनीलजीमूतसन्निभः शनैश्चरः सूर्यसुतःसशौरिः
प्रीयतांनम शनैश्चरे ददातीदंप्रतिगृह्णातिचांतकः सएवतारकोभाभ्यांशनिरूपायवैनमः ततस्तांविसृ
ज्यगृहमागत्यतिलमिश्रमिष्टान्नंब्राह्मणायदत्त्वा स्वयंचभुंजीत ॥ इतिशनिव्रतविधिः ॥ एवमुक्तप्रका
रेणत्रयस्त्रिंशच्छनिवारपर्यंतंकृत्वा असामर्थ्येतुश्रावणशनिवारेपुकृत्वा अंतेउद्यापनंकुर्य्यात् तत्रादौपूर्वो
क्तसंकल्पंपठित्वा पूर्वोक्तपीठे सौवर्णशमीपत्रेषु हैमंशनैश्चरंद्विभुजंप्रतिष्ठाप्यसततंतुनिर्मितरुक्मोत्तरीयं
वस्त्रसप्तकंचसमर्प्यपूजयेत् ततःस्थंडिलेग्निंप्रतिष्ठाप्य अन्वादध्यात् तत्रप्रधानंशनैश्चरंशमीसमिद्भि
स्तिलाज्यद्रव्यैःप्रत्येकं अष्टोत्तरसंख्याकाहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततःसप्तद्विजान्संपू
ज्यतेभ्योदक्षिणायुतानिसप्ततिलपात्राणिदत्त्वा आचार्य्यायपीठंगांचदत्त्वाप्रार्थयेत् नमस्तेकोणसंस्थायपिंग
लायनमोस्तुते नमस्तेवभ्रुरूपायकृष्णायचनमोस्तुते नमस्तेरौद्रदेहायनमस्तेचांतकायच नमस्तेयमसंज्ञाय
नमस्तेशौरयेविभो नमस्तेमंदसंज्ञायशनैश्चरनमोस्तुते नमस्तेघोररूपायपिप्पलादेनसंस्तुतनमश्चर्षणगा
त्रायस्थूलरोम्णेनमोनमः तपसादग्धदेहायनमस्तेयोगधारिणे नमस्तेज्ञाननेत्रायकाश्यपायार्कसूनवे प्र
सादंकुरुदेवेशदीनस्यप्रणतस्यच इतिस्तुत्वा तिलमिश्रितपक्वान्नेनभूदेवान्संतर्प्याशिषोगृहीत्वाप्रणमेत् नी
लांजनसमाभासंरविपुत्रंयमाग्रजं छायामार्त्तंडसंभूतंतंनमामिशनैश्चरं चतुर्भुजंमंदगतिंशूलिनंगृध्रवाहनं कि
रीटिनंधनुष्मंतंचिंतयामिशनैश्चरं इतिशनिवारेसोद्यापनंसौरिनक्तविधानम् अथसूर्यारुणसंवादोक्तंशनिपू
जाविधानम् श्रीसूर्यउवाच पादहीनस्तथाकृष्णःशनिःकार्य्यःशरीरतः दंडाक्षमालासंयुक्तः करद्वित

यभूपितः कांस्यासनेरथेलोहमयेचाष्टतुरगमे पूजयित्वाशनिंदेवंनित्यंगंधादिभिस्ततः प्रदद्याद्दिवि
दुषेसर्वदोषापनुत्तये अधोमुखंशनेरूपकृत्वास्वर्णमयशुभ वरयेद्ब्राह्मणान्विज्ञान्वस्त्राभरणकांचनैः संपूज्य-
गंधपुष्पाद्यैःषोडशैरुपचारकैः संस्थाप्यकलशेपूर्णेनीलचैलपरावृते कोटिलक्षायुतंजप्त्वाशनिमंत्रंप्रय-
त्नतः तदग्रेहोमयेद्यत्नात्स्वगृह्योक्तविधानतः माषैस्तिलैःसर्षपैश्चघृतेनापिशमीफलैः जपोपकल्पितां
दद्याद्दक्षिणांचाहिरण्मयीं पूर्णाहुतिंततःकुर्य्यात्कर्त्ताशुचिरलंकृतः वलालोध्रतिलैःकृष्णाशतपुष्पघनांजनैः
सलाजैःप्लवनंकुर्य्याल्लोहपात्रशतास्थितैः शनिदोषोपशांत्यर्थंयजमानःप्रयत्नतः कृष्णांगांविधिवद्दद्यात्क
पिलां वापयस्विनीं सालंकारांसुवर्णाढ्यांशनिप्रीतिकरांशुभां ब्राह्मणान्भोजयेत्पश्चाच्छक्त्यादद्याच्चद-
क्षिणां यएवंकुरुतेसूतशनेर्शांतिविधानतः नतस्यदुरितंकिंचिच्छनैश्चरसमुद्भवम् जन्माष्टद्वादशेतुर्येद्विती
येचयदास्थितः महाविघ्नकरःसौरोदुष्टांगस्थोपिभावत छत्रेसिंहासनेदुर्गेदेशकर्माश्रितेतथा राज्यभंगप्र
दोजन्मात्पंचमेपुत्रविघ्नकृत् सर्वमेतत्फलंदृष्टादृष्टाचापिचतुर्विधः नकिंचिद्भयमाप्नोतिशनियोगप्रभावत राज्य
भ्रष्टोलभेद्राज्यंशत्रोस्यात्सर्वतोभृश अथलोहमयसर्वमष्टांगुलमितं शुभं लिखित्वातुनराकारंपादहीनमधो
मुखं स्नापयित्वातुतैलेननीलचैलपरावृतं संस्थाप्यतैलपात्रेतुशनिमंत्रेणयत्नतः एवंसपूजयेन्नित्यंशनिवारेवि
शेषतः जप्त्वाहुत्वाप्रयोगांतेब्राह्मणायसमर्प्पयेत् अनेनविधिनायस्तुसूर्य्यपुत्रंप्रपूजयेत् तुष्टिंयातिनसदे
होपीडामुक्तःशनैश्चरः इतिसूर्य्यार्णवसंवादेशनिपूजाविधानम् तत्रैवराहुकेतुपूजाविधानमपिद्रष्टव्यम् एव
सूर्य्यादीनामपितत्रैवज्ञेयमितिदिक् अथराहुस्तोत्रम् ॐनमस्तेदैत्यरूपायदेवारिप्रणमाम्यहं नमस्तेभद्ररू
पायघोररूपायवैनमः त्वंब्रह्मावरुणाकाशोत्वाविष्णुस्त्वंहरिःशिवः मर्त्यलोकेभवान्प्रीतिससारजनतारकः

कूटपर्वतदुर्गाणिनगराणिपराणिच    यस्यक्रोधवशाद्भस्मोभवंतिक्षणमात्रतः    धूम्रवर्णोमहाभीमोरक्ताक्षः पिंगलोचनः    क्रूरग्रहस्तथाराहुर्यस्रूपोमहाबलः    यस्यस्थानेपंचमेस्तिषष्ठेचैवतृतीयके    दशमैकादशेचै वतस्यश्रेयःकरोतिच    गोदानंभूमिदानंचअन्नंवस्त्रंचदापयेत्    अस्यस्तोत्रस्यमाहात्म्याद्राहुपीडाप्रशाम्यति इतिराहुस्तोत्रम् ॥ अथकेतुस्तोत्रम् ॥ धूम्राद्विबाहवःसर्वेगदिनोविकृताननाः    गृध्रासनगतानित्यं केतवःस्युर्वरप्रदाः    नमोघोरस्वरूपायमहाघोरस्वरूपिणे नमआनंददेशायजगदानंददायिने    नमोभक्तजना नंददायिनेविश्वभाविने विश्वेशायमहेशायकेतुरूपायतेनमः    नमोरौद्रायसर्वार्थवरदायाचिदात्मने    अक्षाय विनिवासायनमःसंकटनाशिने    त्रिपुरेशायदेवायभैरवायमहात्मने    नमोचित्यायचित्यायनमश्चैतन्यरूपि णे नमःशर्वायसर्वायदर्शनीयायतेनमः    नमोचित्यस्वरूपायमहाभैरवरूपिणे    नमोनमोमहादेवव्यापिने परमात्मने नमोलांगूलरूपायचंद्रसूर्यग्रहायच ममआपद्विनाशायभूयोभूयोनमोनमः अग्निपुत्रोमहातेज.केतुःसर्व ग्रहांतकः क्षोभयेद्यःप्रजाःसर्वाःसकेतुःप्रीयतांमम इतिकेतुस्तोत्रम् अथतिथिनक्षत्रयोगेवारव्रतानि कालांतराग- मेनक्षत्रतिथियोगेनतिथीनांग्रहयोगतः पुनरेवप्रवक्ष्यामिव्रतानितुयथास्थितं रोहिण्यांचंद्रवारेणाष्टमीयोगोयदा- भवेत्    अथवासोमसंयोगेविशेषात्पूज्यतेशिवं    पायसंघृतसंयुक्तंशिवायविनिवेदयेत्    धूपदीपोपहारैश्चपूर्वव त्पूजयेच्छिवं घृतस्यप्राशनंकार्यंसर्वकामप्रदंव्रतं आदित्यरेवतीयोगश्चतुर्दश्यांयदाभवेत् तथाष्टम्यांमघायोगेशि वंसंपूज्यपूर्ववत्    तिलास्तुप्राशनेप्रोक्ताआदित्यव्रतमीरितं आरोग्यंजायतेतस्यपुत्रबंधुजनैःसह इत्यादित्यव्रतम् अश्विनीभौमसंयोगश्चतुर्दश्यांयदाभवेत्    अष्टमीभरणीयोगस्तदाभौमव्रतंभवेत् संपूज्यपरयाभक्त्याशिवंपंचो पचारतः रक्तोत्पलप्राशनात्तुसाम्राज्यंप्राप्नुयान्नरः    इतिभौमव्रतम् रोहिणीबुधसंयोग    श्चतुर्दश्यांयदाभवेत्

अष्टम्यांवामहासेनबुधव्रतसमागमः शिव.पूज्योविधानेनमहास्नानपुरःसरं महाव्रतीसमोपेतंप्राशयेत्पायसंघृतं
पुत्रार्थदारपशवोवर्धंतेतस्यनान्यथा इतिबुधव्रतम् रेवतीगुरुसंयोगश्चतुर्दश्यांयदाभवेत् अष्टम्यांतिष्यसंयो
गाद्गुरुव्रतमिदंभवेत् प्राशनंकपिलाज्यंतुब्राह्मीक्षीरसमाश्रितं वागीशत्वमवाप्नोतिव्रतस्यास्यप्रभावतः इति
गुरुव्रतम् श्रवणंभार्गवयुतंचतुर्दश्यांयदाभवेत् शुक्रव्रतंसदादेविपुनर्वस्वष्टमीयदा संपूज्यपरमेशानंयथावि
भवविस्तरैः प्राशनंमधुनश्चात्रकर्त्तव्यंसंयतात्मना महाफलमवाप्नोतिव्रतस्यास्यप्रभावतः इतिशुक्रव्रतम् ॥
भरणीशनियोगस्तुचतुर्दश्यांयदाभवेत् आर्द्रायोगेयदाष्टम्यांतदामंदव्रतंभवेत् शिवंसंपूज्यविधिवत्प्राशनंसस्य
मेवहि शनिरेकादशस्थोहिफलंयच्छातिशोभनं विरुद्धस्थोहिदुष्टश्चतथेदव्रतमाचरेत् हेमरूप्यंप्रवालंच
सुवर्णंमौक्तिकंतथा शंखंसतारलोहंचक्रमाद्यत्नेनधारयेत् यथासंवदतोवस्त्रमाचार्य्यायप्रयत्नतः इतिशनिव्रत
इतितिथिनक्षत्रयुक्तानिवारव्रतानि अथनक्षत्रव्रतानि अश्विन्यामश्विनाविष्ट्वादीर्घायुर्जायतेनरः व्याधिभिर्मुच्य
तेक्षिप्रमत्यर्थंव्याधिपीडितः १ भरण्यांयममभ्यर्च्यकुसुमैरसितैःशुभैः गंधादिभिस्तथाशुद्धैरपमृत्युर्विमुच्यते २
अनिलंकृत्तिकायांतुवह्निंसंपूजितःपरं रक्तमाल्यादिभिर्दद्याद्घृतहोमेनचध्रुवं इष्टःप्रजापतिःप्रीतइष्टान्दद्या
त्पशूंस्तथा रोहिण्यांदेवशार्दूलगोजाविहयकुंजरान् ४ मृगशीर्षेतथासोमंजयमारोग्यमेवच ५ आर्द्रायां
चशिवंपूज्यपशून्विजयमश्नुते सितैःपद्मादिभिर्दिव्यैर्दैवतंपाथसांशुभं शिवंदैवतमितिसंबंधः ६ पुत्रान्पुन
र्वसौदद्याच्चरुणापूजितादिति ७ तिष्येबृहस्पतिर्वृद्धिंददातिविपुलंधनं ८ भोगान्गंधादिभिर्नागाश्लेषायां
सुखावहाः तर्पिताश्चप्रयच्छंतिभक्षाद्यैर्मधुरैःशुभैः ९ रक्षाविषादिदोषेभ्यः प्रीताःकुर्य्युःसदैवहि मघा
सुपितरःसर्वे हव्यैःकव्यैश्चपूजिताः प्रयच्छंतिधनंधान्यं भृत्यान्पुत्रान्पशूंस्तथा १०. पूर्वायांविजयंदद्या

दुर्गादेवः सुपूजितः ११ भक्त्याप्रपूजितोदद्यादुत्तरायांतथार्यमा भर्तारमीप्सितंनार्य्यैपुंसश्चवरयोषितं
इहजन्मनिचायुष्यंरूपद्राविणसंपदः १२ पूजित सविताहस्तेविश्वतेजोनिधिः सदा वस्त्रैःपुष्पादिभि
श्चैवददातिविपुलधन १३ राज्यंतुष्टाचचित्रायांनि·सपत्नंप्रयच्छति १४ इष्टःसंपजितः स्वात्यां तथावायुर्वरंप
रं १५ इंद्राग्नीतुविशाखायांपतिरक्तैः प्रपूज्यतु धनराज्यंतुलब्ध्वेहतेजस्वीनिवसेत्सदा १६ रक्तैर्भिन्नमनूराधा
स्विहसंपूज्यभक्तितः प्रियोभवंतिसर्वेषां चिरंजीवित्वमाप्नुयात् १७ गुणैःसर्वैश्चसंपूर्णःकर्मणाचधनेनच ज्ये
ष्ठायामिंद्रमभ्यर्च्यमानव·संप्रजायते १८ मूलेनानिर्ऋतिर्मिष्ठवाभक्ष्यैश्चपललादिभिः पूर्ववत्फलमाप्नोतिस्व
स्थानेचध्रुवोभवेत् १९ अप्यदृष्टांबुजैःश्वेतैर्हुत्वापूर्वासुपूर्ववत् संतापान्मुच्यतेक्षिप्रं शारीरान्मानसात्तथा आ
षाढासुतथाविश्वानुत्तराषाढयोगतः विप्रान्संपूज्यपुष्पाद्यैःस्वर्गमाप्नोति मानवः २१ श्रवणेतुसितैर्विष्णुं पुष्पैर्धूपै
श्चशक्तितःसंपूज्यश्रियमाप्नोतिपरांविजयमेवच २२ धनिष्ठासुवसून्निष्ठानभयंजायतेक्वचित् महतोपितथाश्वेतैर्गं
धपुष्पादिभिः शुभैः२३ वरुणशतभिक्ष्वर्च्यव्याधिंमुंचतिवैनरःआतुरःपुष्टिमाप्नोतिस्वास्थमैश्वर्य्यमेवच २४ अज
भाद्रपदायांतुशुद्धस्फटिकसन्निभ सपूज्यमुक्तिमाप्नोतिनात्रकार्य्याविचारणा २५ उत्तरायामहिर्बुध्न्यंपरांशांतिम
वाप्नुयात् आहिर्बुध्न्यसंपूज्येत्यनुषगः २६ रेवत्यांपूजित·पूषाददातिविविधान्पशून् सितैःपुष्पैःस्थितिंचैवधृ
तिंविजयमेवच २७ एतेवैतसमाख्यातायज्ञाःसंक्षेपतोमया नक्षत्रदेवतानांचसाधकानांहितायवै भक्त्यावित्ता
नुसारेणभवंतिफलदास्मृताः गतुमिच्छेद्यदान्यत्रकार्य्यंप्रारभ्यमेवच नक्षत्रदेवतायज्ञकृत्वातत्सर्वमाचरेत् ए
वंकृतेहितत्सर्वयात्राफलमवाप्नुयात् क्रियाफलंचसंपूर्णमित्युक्तभानुनास्वयं यज्ञाभावेजपंकुर्य्यात्क्रियांकुर्वन्य
थेप्सितां तद्देवतामंत्रजपं इतिनक्षत्रदेवतापूजाव्रतानि अथनक्षत्रपुरुषव्रतम् भविष्योत्तरे युधिष्ठिरउवाच

सुरूपतामनुष्याणांस्त्रीणांचयदुसत्तम कर्मणाजायतेकेनतत्समाख्यातुमर्हसि सुरूपाणांसुगात्राणांसुवेषाणांत
थैवच न्यूनंतथाधिकंचापियथानांगंप्रजायते समस्तै शोभनैरंगैर्नराःकेचिद्यदूत्तम काणा कुब्जाश्चजायंतेत्रु
टितश्रवणास्तथा नराणायोपितांचैवसमस्तांगसुरूपता कर्मणायेनभवतितत्सर्वंकथयस्वमे लावण्यगतिर्वा
क्यानिसतिरूपेमहामते कुर्वंत्यभ्याधिकांशोभांसमस्त·परमोगुणः वाक्यलावण्यसंस्कारविलासललितागतिः
विडंबनाकुरूपाणांहास्यायैवप्रजायते रूपेहिकारणीभूतकर्मणाप्रयतोभवेत् तस्मात्तन्मेसमाचक्ष्व कर्मयद्व-
स्वरूपदम् ॥ श्रीकृष्णउवाच ॥ सम्यक्पृष्टंत्वयाहीदमुपवासाश्रितंनृप कथयामियथाप्रोक्तंवासिष्टे-
नमहात्मना वासिष्ठमृषिमासीनंसप्तर्षिप्रवरंद्विजं पप्रच्छारुंधतीचैवयथैवभवतामम तस्यास्तुपरिपृच्छं-
त्याजगादमुनिसत्तमः यत्तच्छृणुष्वकौंतेयममेदंवदतोखिलं ॥ वसिष्ठउवाच ॥ श्रूयतांयदहंपृष्टस्त्वये-
तद्वरवर्णिनि सुरूपतानृणांयेनयोपितांचैवजायते अनाराध्यतुगोविंदमनाराध्यचकेशवं रूपाधिका
गुणाःकेनप्राप्यतेन्येनकर्मणा तस्मादाराधनीयोग्रेविष्णुरेवयशस्विनि पारमप्राप्तकामेनरूपसंपत्समादिकं
यस्तुवांछतिधर्मज्ञोरूपंसर्वांगसुंदरं नक्षत्रपुरुषस्तेनसंपूज्य·पुरुषोत्तमः नक्षत्रांगयताहार·संपूजयतियोच्युतं
भक्त्यायोपिन्नरोवापिस्वरूपांगः प्रजायते योपिताहिपररूपंवांछत्याजगत·पतिः सएवाराधनीयोग्रेनक्षत्रां
गोजनार्दनः अरुंधत्युवाच नक्षत्ररूपीभगवान्पूज्यतेपुरुषोत्तमः मुनेयेनविधानेनतत्समाख्यातुमर्हसि वसि-
ष्ठउवाच चैत्रमासात्समारभ्याविष्णो पादानुपूजनं यथाकुर्वीतपूजांतुतन्निशामयसुव्रते नक्षत्रमेकमेकंवैस्नातःस
म्यगुपोषितः नक्षत्रपुरुषस्यांगंपूजयेतविचक्षणः मूलेपादौतथाजंघेरोहिण्यामर्चयेच्छनैः जानुनीचाश्विनीयो.
गेत्र्याषाढेचोरुसंज्ञिते फाल्गुनीद्वितयेगुह्यंकृत्तिकासुतथाकटिं पार्श्वेभाद्रपदायुग्मेकुक्षौवैरेवतीपुच अनुराधा

खुरःपृष्ठंघनिष्ठासुतथानखान् पुष्येमुखंतथास्वातौदंतान्नाभिंचपूजयत् आस्यंशताभिषायोगेमघायोगेतुनासि
के मृगोत्तमांगेनयनेपूजयेद्भक्तियोगतः चित्रायोगेललाटेचभरणीषुतथाशिरः संपूजनीयंविद्वद्भिरार्द्रायांचत
थाशिरः उपोषितोनरः कृत्वास्नानमभ्यंगपूर्वकं वर्जनीयंप्रयत्नेनरूपघ्नंतद्विनिर्दिशेत् पूजयेत्तच्चनक्षत्रंनक्ष
त्रस्यचदैवतं सोमंनक्षत्रराजानंस्वमंत्रैःपूजयेद्बुधः प्रतिनक्षत्रयोगेनरूपघ्नंतद्विनिर्दिशेत् पूजयेत्तच्चनक्षत्रंदा
नंदद्यात्स्वशक्तितः अंतरायेसमुत्पन्नेसूतकाशौचकारिते उपोष्येवोपविशेन्ननक्षत्रपुरुषंपुनः एवंमघावसानेतुव्रत
पारंसमाप्यतेसमाप्तेचव्रतेदद्याच्छय्यांसोपस्करांशुभां नक्षत्रपुरुषंहैमंपूजयेत्तत्रभक्तितः ब्राह्मणंब्राह्मणींचैव
वस्त्रालंकारभूषणैः शय्यायांतुसमासीनौपूज्यौमाल्यानुलेपनैः सप्तधान्यंयथालाभंगांसवत्सांपयस्विनीं छ
त्रोपानद्युगंचैवघृतपात्रंतथैवच मंत्रेणानेनविप्रायसुशीलायनिवेदयेत् यथानविष्णुभक्तानांवृजिनंजायते
क्वचित् यथास्वरूपतारोग्यंसुखसंपदिहास्तुते यथानलक्ष्म्याशयनंतवशून्यंजनार्दन शय्याममाप्यशून्या
स्तुतथाजन्मनिजन्मनि एवंनिवेद्यतत्सर्वंप्रणिपत्यक्षमापयेत् शक्तिहीनस्तुगांदद्याद्घृतपात्रसमन्वितां नक्ष
त्रपुरुषाख्योयंयथावत्कथितस्तव यावानार्च्यत्रकुरुतेसम्यक्संशृण्वतीसती अंगोपांगानिनैवास्याःपादादी
न्यखिलान्यपि सुरूपाण्यभिजायंतेसतजन्मांतराणिवै सर्वाणिचैवभद्राणिशरीरारोग्यमेवच संततिमनसः
प्रीतिंरूपंचातीविशोभनं वाञ्छाधुर्य्यंतथाकांतिंयच्चान्यदपिवांछति ददातिनक्षत्रपुमान्पूजितश्चजनार्दनः व
सिष्ठनयथाख्यातं सर्वंतत्ते निवेदितं नक्षत्रपुरुषंनामव्रतानामुत्तमोत्तमं येपादजानुजघनो. नितंबभारान्
रुक्मैःप्रकल्प्यसुतनुंपुरुषोत्तमस्य संपूजयंतिजितकोपमनोविकाराः कौंतेयतेननुभवंतिसुरूपदेहाः इतिभ
विष्योत्तरोक्तंनक्षत्रपुरुषांगपूजाव्रतम् अथमत्स्यपुराणोक्तंनक्षत्रपुरुषव्रतम् ॥ सूतउवाच ॥ कैलासशिखरासीन

मपृच्छन्नारदःपुरा त्रिशूलिनमनंगारिं मंगनार्धधरंहरं नारदउवाच श्रीमदारोग्यरूपायुर्भोगसौभा
ग्यसंपदा संयुक्तस्त्ववान्विष्णोःपुनान्भक्तःकथंभवेत् नारीचाविधवासर्वगुणसौभाग्यसंपदा क्रमान्मुक्तिप्र
दंदेवव्रतंकिंचिदिहोच्यतां ईश्वरउवाच सम्यक्पृष्टंत्वयाब्रह्मन्सर्वलोकहितावहं श्रुतसर्वेनयच्चान्यैस्तद्व्रतं
शृणुनारद नक्षत्रपुरुषंनामव्रतंनारायणार्चनं पादादिकुर्य्याद्विधिव द्विष्णोर्नामानुकीर्त्तनं प्रतिमांवासु
देवस्य मूलर्क्षाद्यभिपूजयेत् चैत्रमासंसमासाद्य कृत्वाब्राह्मणवाचनं मूलंनमोविश्वधरायचेति पा
दावनंतायचरोहिणीपु जंघेहिपूज्येवरदायचेतिद्विजानुनीचाश्विकुमारकर्क्षे पूर्वोत्तरापाढगतेतथोरूनमःशिवा
येत्यथपूजनीयौ पूर्वोत्तराफाल्गुनीपुहृद्वंमेढ्रंनमः पंचशरायपूज्यं कटिंनमःशार्ङ्गधरायदेवंसंपूजयेन्नारद-
कृत्तिकासु तथार्चयेद्भाद्रपदाद्वयेचपार्श्वेनगःकेशिनिसूदनाय कुक्षिद्वयंनारदरेवतीपुदामोदरायेत्यभि
पूजनीयंऋक्षेनुराधासुचमाधवायनमस्तथोरःस्थलमेवपूज्यं पृष्ठंघनिष्ठासुचपूजनीयमघौघविध्वंसकरायतद्वत्
श्रीशंखचक्रासिगदाधरायनमोविशाखासुभुजाभिपूज्या हस्तेग्रहस्तौमधुसूदनायनमोभिपूज्यद्वतकैटभारेः
पुनर्वसावंगुलिपूर्वभागाः सामामधीशायनमोभिपूज्यः भुजंगनक्षत्रदिने नखान्हिसंपूजयेन्मर्त्ये
शरीरधातुः कूर्मस्यपादौशरणंव्रजामि ज्येष्ठासुकर्णौहरिरर्चनीयः श्रोत्रेवराहायनमोभिपूज्य जनार्द
नस्यश्रवणेनसम्यक् पुष्येमुखंदानवसूदनाय नमोनृसिंहायचपूजनीयं नमोनमःकारणवामनायस्वा
तीपुदंताग्रमथार्चनीयं आस्यंहरेर्भार्गवनंदनायसंपूजनीयंद्विजवारुणेन नमोस्तुरामायमघासुनासासंपूजनी
यंरघुनंदनस्य मृगोत्तमांगेनयनेहिपूज्येनमोस्तुतेरामविघूर्णिताक्ष बुद्धायशांतायनमोललाटेचित्रासुसंपूज्यत
मोमुरारिः शिरोभिपूज्यंभरणीपुविष्णोर्नमोस्तुविश्वेश्वरकल्किरूप आर्द्रासुकेशाःपुरुषोत्तमस्यसंपूजनीयाहरये

नमस्ते उपोषितश्चर्क्षदिनेप्रशक्त्यासंपूजनीयाद्विजपुंगवास्तु पूर्णेव्रतेसर्वगुणान्वितायवाग्रूपशीलायचसामगाय
हैमीविशालायतबाहुदंडांमुक्ताफलेंद्रोपलवज्रयुक्तां गुडस्यपूर्णेकलशेनिविष्टामर्चांहरेर्वस्त्रगवासहैव शय्यांतथो
पस्करभाजनादियुक्तांप्रदद्याद्द्विजपुंगवाय यद्यात्प्रियंकिंचिदिहास्तिदेयंदद्याद्द्विजायात्महितायसर्वं मनो
रथान्नःसफलीकुरुष्वहिरण्यगर्भाच्युतरुद्ररूप सलक्ष्मीकंसभार्य्यंचकांचनंपुरुषोत्तमं शय्यांदद्यान्नमंत्रे
णग्रंथभेदविवर्जितं यथानविष्णुभक्तानांवृजिनंजायतेक्वचित् तथाशुपरमारोग्यंवमुदद्याच्चकेशवः यथान
लक्ष्म्याशयनंतवशून्यंजनार्दन शय्याममाप्यशून्यास्तुकृष्णजन्मानिजन्मनि एवंनिवेद्यतत्सर्वंवस्त्रमाल्यानु
लेपनं नक्षत्रपुरुषज्ञायविप्रायाथविसर्जयेत् भुंजीतातैललवणसर्वर्क्षेष्वप्युपोषितः इतिनक्षत्रपुरुषमुपोष्य
विधिवत्स्वयं सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते ब्रह्महत्यादिकांकिंचिदिहामुत्रचयत्कृतं आत्मनावा
थपितृभिस्तत्सर्वंनाशमाप्नुयात् इतिपठतिश्रृणोतिचातिभक्त्यापुरुषवरोव्रतमंगनाथकुर्य्यात् कलिकलुषनिवारणं
नराणांसकलभूतिफलप्रदंचविष्णोः इतिमत्स्यपुराणोक्तंनक्षत्रपुरुषव्रतम् अथशैवसौरनक्षत्रपुरुषव्रतम् मत्स्य
पुराणे नारदउवाच उपवासेष्वशक्तानांतदेवफलमिच्छतां अनभ्यासेनरोगित्वात्किमिष्टफलमुच्यतां ईश्वर
उवाच उपवासेष्वशक्तानांनक्तभोजनमिष्यते अस्मिन्व्रतेतदाप्यत्रश्रूयतांद्विजसत्तम आदित्याराधनंनामय
थावच्छंकरार्चनं येपुनक्षत्रयोगेषुपुराणज्ञाःप्रचक्षते यदाहस्तेनसप्तम्यामादित्यस्यदिनंभवेत् सूर्यस्यवाथसं
क्रांतिस्तिथिःसासार्वकामिकी उमामहेश्वरस्यार्चां पूजयेत् सूर्यनामभिः सूर्य्यार्चांशिवलिंगंचनाग्रहीपू
जयेदतःउमापतेरवेश्चापिनभेदःक्वचिदिष्यते यस्मात्तस्मान्मुनिश्रेष्ठगृहेशंकरमर्चयेत् हस्तौतुसूर्य्यायनमोस्तु
पादावर्कायचित्रासुचगुल्फदेशं स्वातीषुजंघेपुरुषोत्तमस्यधात्रेविशाखासुचजानुदेशं तथानुराधासुनमोभिपूज्य

मूरूद्वयंदेवसहस्रभानोः ज्येष्टास्वनंगायनमोस्तुगुह्य मिंद्रायसोमायकटिंचमूले पूर्वोत्तरापाढयुगेचना
भिंत्वष्ट्रेनमः सप्ततुरंगमाय तीक्ष्णांशवेचश्रवणे नकुक्षिंस्तनौधनिष्ठासुविकर्त्तनाय वक्षस्थलंध्वांतवि
नाशनायजलाधिपर्क्षेपरिपूजनीयम् पूर्वोत्तराभाद्रपदद्वयेचवाहूनमश्चंडकरायपूज्यौ साम्नामधीशायकरद्व
यंचसंपूजनीयंद्विजरेवतीच नखानिपूज्यानितथाश्विनीपु नमोस्तुसप्ताश्वधुरंधराय कठोरधाम्नेभरणी
पुपृष्ठंदिवाकरायेत्यभिपूजनीयं ग्रीवाग्निऋक्षेवदनेंशुमंतंसंपूजयेन्नारदरोहिणीपु मृगोत्तमांगेदशनाः पु
रारेःसंपूजनीयाहरयेनमस्ते नमः सवित्रेइति शंकरेतुनासाभिपूज्याचपुनर्वसौच ललाटमंभोरुहवल्ल
भायपुष्यर्क्षकेवेदशरीरधारिणे सार्पेणमौलिंविबुधप्रियाय मघासुकर्णावितिगोगणेश पूर्वासुगो
ब्राह्मणनंदनायनेत्राणिसंपूज्यतमानिशंभोः अथोत्तराफाल्गुनिभेभ्रुवौच विश्वेश्वरायेतिचपूजनीयंनमो
स्तुपाशांकुशपद्मशूलिन्कपालसर्पेन्दुधनुर्धराय गजासुरानंगपुरांधकादिविनाशशीलायनमःशिवाय इत्या
दिचत्वारितुपूजयित्वाविश्वेश्वरायेतिशिरोभिपूज्यं भोक्तव्यमन्नंचविनैलशाकंअमांसमक्षारमभुक्तशेषं इत्थं
वंद्विजनक्तानिकृत्वादद्यात्पुनर्वसौ शालेयतंडुलप्रस्थमौदुंवरमयेघृतं ससथाप्यपात्रेविप्रायसहिरण्यंप्रदा
पयेत् सप्तमेत्वथसंप्राप्तेपारणेत्वाधिकंभवेत् चतुर्दशेतुसंप्राप्तेपारणेनारदाब्दिके ब्राह्मणान्भोजयेद्भक्त्यागुड
क्षीरघृतादिभिः कृत्वाथकांचनंपद्ममष्टरंगदलांछित शय्यांसोपस्करांकृत्वाविरुद्धग्रंथिवर्जितां सोपधानांस
विश्वेशांसुवर्णैरचितांश्रिया । भाजनोपानहच्छत्रचामरासनदर्पणैः भूषणैरपियुक्तांतांफलवस्त्रानुलेपनैः तस्यांनि
धायतत्पद्ममलंकृत्यगुणान्वितं कपिलांवस्त्रसंयुक्तामतिशीलांपयस्विनीं हेमशृंगींरौप्यखुरांसवत्सांकांस्यदोहनीं
दद्यान्मंत्रेणपूर्वान्हेइतिवाचमुदीरयन् यथैवादित्यशयनमशून्यंतवसर्वदाकांत्याधृत्याश्रियाराज्ञातथामेसंतुसिद्धयः

यथानदेवाश्रेयांसंत्वदन्यपरमंविदुः तथामामुद्धराशेष दुःखसंसारसागरात् ततः प्रदक्षिणीकृत्य संप्र णम्यविसर्जयेत् शय्यासनादितत्सर्वंद्विजस्यसदनंनयेत् नैतद्दिशीलायनदांभिकायकुतर्कदुष्टायसमत्सराय प्रकाशनीयंव्रतमिंदुमौलेर्यश्चापिनिंदामधिकांकरोति भक्तायशांतायचगुह्यमेतदास्येयमानंदकरंशिवस्य इदं महापातकहृन्नराणामप्यक्षरंवेदविदोवदंति स्वबंधुपुत्रैश्चबलैश्चयुक्ताः पत्नीभिरानंदयितुः सुराणां ना भ्येतिरोगंनचशोकदुःखं याचापिनारीकुरुतेतिभक्त्या इदंवसिष्ठेनपुरार्जुनेनकृतंकुवेरेणपुरंदरेण संकीर्त्तना दप्यखिलानिनाशमायांतिपापानिनसंशयोस्ति इतिपठतिशृणोतिवायइत्थंरविशयनंपुरुहूतवल्लभः स्यात् अ पिनरकगतान्पितॄन् नशेषांनभिदिवमातयतीहयः करोति इतिमत्स्यपुराणोक्तमादित्यशयनंनक्षत्रपुरुषव्र तं अथयोगव्रतानिहेमाद्रौ भविष्योत्तरे विष्कुंभादिषुयोगेषुभवेदेकाशनोनरः योददातिक्रमात्पार्थघृतं १ तैलं २ फले ३ क्षवः ४ यव ५ गोधूम ६ चणक ७ निष्पावान् ८ शालितंडुलान् ९ लवंगं १० दधिदुग्धंच १२ वस्त्रं १३ कनकमेवच १४ कंबलं १५ गां १६ वृषं १७ छत्र १८ मुपानद्युग मेवच १९ कर्पूरं २० कुंकुमं २१ चैवचंदनं २२ कुसुमानिच २३ लोहं २४ ताम्रंच २५ कांस्यं च २६ रौप्यंचेति २२ युधिष्ठिर स्नातः स्वशक्त्याविधिवत्सर्वपापैः प्रमुच्यते नवियोगमवाप्नोतियो गव्रतमिदंस्मृतमिति विष्कुंभादियोगव्रते प्रातः स्नात्वाएकाशनव्रतंकुर्य्यात् घृतादिदानंदद्यात् अत्र पूजोद्यापनादिसाधारणपूजोद्यापनादिक्रमेणकार्य्यं विशेषस्तुव्यतीपातयोगव्रतेज्ञेयः अथव्यतीपातव्रतम् वाराहपुराणे धरण्युवाच यस्त्वयोक्तोव्यतीपातस्तस्यकर्मवदस्वयत् कस्यपुत्रःकथंपूज्यःपूजितेतत्रकिंफलं वाराह उवाच यदावृहस्पतेर्भार्यांतारांजग्राहशीतगुः मित्रत्वात्प्राहतंसूर्य्यस्त्यजभार्य्यांवृहस्पतेः चक्रेचंद्रोनतद्वाक्यंहित

शिक्षासमन्वितं यदारुष्टस्वदादित्योदीप्तदृष्ट्याभ्युदैक्षत तावत्सोमोपिरुष्टास्यततोन्योन्यमवेक्षतां उभयोर्दृष्टि
संपातेक्रुद्धयोसोमसूर्ययोःउद्यदास्योभवद्घोरःपुरुषःपिंगलेक्षणः दष्टोष्ठदीर्घदशनोभृकुटीकुटिलाननःकपिलःश्म
श्रुकेशांतोलंबभ्रूःसकृशोदरः शिखालोदीर्घजिह्वश्चसूर्याग्निसमसन्निभः सभोक्तुकामस्त्रैलोक्यंरवींदुभ्यांनिवारितः
क्रोधक्षुधेमांबाधेतेकत्रैतेपात्यतेमया रवींदूऊचतुः कोपदृष्टोनौविघातादतिपाताद्भवानभूत् व्यतीपातस्ततोभी
मभवान्भुविभविष्यति यस्मिन्कालेत्वदुत्पत्तिस्तदाकल्याणकारिणः व्यतीपातायभद्रंतेत्वयियःपापकारकःतदन्नं
क्षुधितोभुंक्ष्वतत्रकोपोनिपात्यतां व्यतीपातउवाच नमोवांपितरौमेस्तुक्रोधपातःसभोजनः दत्तोभवद्भ्यांमधु
नाप्रसादःक्रियतांमम रविचंद्रावूचतुःस्नानदानजपहोमपूजनंयस्त्वदीयसमयेसमाचरेत् तस्यपुण्यमिहतेप्रसादतो
नंतमस्तुसुततेस्त्वनुग्रहःत्वत्कालेतवांविदधातिपूजनंयस्तस्येष्टंभवतुभवेत्सभद्ररूप पुत्रायुर्धनसुखकीर्त्तिभोगरूप्य
रोग्याद्यंगुणिजनवल्लभेष्टपूर्वं वाराहउवाच एतस्मात्कारणाद्भूमौव्यतीपातोर्च्यतेनरैः अर्चितेचफलंयत्स्यात्तदुक्तंच
समासतःविस्तरेणार्चनफलंगदितुंकेनशक्यते यथार्च्यतेव्यतीपातःसविधिःश्रूयतामिह शुभेव्यतीपातदिनेविगा
ह्येत्सपंचगव्येनमहानदीजलं उपावसेद्धैपवमानजापकोजपेतशूद्रोव्यतिपातेतनमः छादितेताम्रपात्रेणशर्करापू
रितेघटे कांचनाब्जेप्रतिष्ठाप्यहैममष्टभुजंनरं अष्टभुजमष्टादशभुजं अस्योत्पत्तिवाक्ये ऽदशभुजत्वश्रवणात् उत्प
त्तिवाक्यानुसारित्वाच्चविनियोगवाक्यस्ययथाभगवद्गीतासुचत्वारोमनवस्तथेत्यत्रचत्वारश्चतुर्दशेत्यर्थःगंधपुष्पाक्ष
तैर्धूपदीपवस्त्रनिवेदनैःभक्ष्यैर्भोज्यैःफलैश्चत्रैर्मासिमार्गशिरेर्चयेत् नमस्तेस्तुव्यतीपातसोमसूर्यसुतप्रभो यद्दाना
दिकृतंकिंचित्तदनंतमिहास्तुते इत्युक्त्वापंचरत्नाढ्यंसपुष्पाक्षतमंजलिं प्रक्षिपेत्तत्क्षणादेवसर्वपापक्षयोभवेत् यदि
द्वितीयेचदिनेव्यतीपातोभवेन्नहि तदापूर्णोपवासस्तुस्यात्तत्सकलंगुरोः पारणंव्यतिपातांतेकुर्यात्संप्राश्यगोमयं

यथानदेवाश्रेयांसलदन्यपरमंविदुः तथामामुद्धराशेष दुःखसंसारसागरात् ततः प्रदक्षिणीकृत्य संप्र
णम्यविसर्जयेत् शय्यासनादितत्सर्वंद्विजस्यसदनंनयेत् नैतद्विशीलायनदांभिकायकुतर्कदुष्टायसमत्सराय
प्रकाशनीयंव्रतमिंदुमौलेर्यश्चापिनिंदामधिकांकरोति भक्तायशांतायचगुह्यमेतदाख्येयमानंदकरंशिवस्य इदं
महापातकहन्नराणामप्यक्षरंवेदविदोवदंति स्वबंधुपुत्रैश्चबलैश्चयुक्ताः पत्नीभिरानंदयितुः सुराणां ना
भ्येतिरोगंनचशोकदुःखं याचापिनारीकुरुतेतिभक्त्या इदंवसिष्ठेनपुरार्जुनेनकृतंकुवेरेणपुरंदरेण संकीर्तना
दप्यखिलानिनाशमायांतिपापानिनसंशयोस्ति इतिपठतिशृणोतिवायइत्थंरविशयनंपुरुहूतवल्लभः स्यात् अ
पिनरकगतान्पितॄन् नशेषांनभिदिवमातयतीहयः करोति इतिमत्स्यपुराणोक्तमादित्यशयनंनक्षत्रपुरुषव्र
तं अथयोगव्रतानिहेमाद्रौ भविष्योत्तरे विष्कुंभादिषुयोगेषुभवेदेकाशनोनरः योददातिक्रमात्पार्थघृत
१ तैल २ फले ३ क्षवः ४ यव ५ गोधूम ६ चणक ७ निष्पावान् ८ शालितंडलान् ९ लवंगं १०
दधिदुग्धंच १२ वस्त्रं १३ कनकमेवच १४ कंबलं १५ गां १६ वृषं १७ छत्र १८ मुपानद्युग
मेवच १९ कर्पूरं २० कुंकुमं २१ चैवचंदनं २२ कुसुमानिच २३ लोहं २४ ताम्रंच २५ कांस्यं
च २६ रौप्यंचेति २२ युधिष्ठिर स्नातः स्वशक्त्याविधिवत्सर्वपापैः प्रमुच्यते नवियोगमवाप्नोतियो
गव्रतमिदंस्मृतमिति विष्कुंभादियोगव्रते प्रातः स्नात्वाएकाशनव्रतंकुर्य्यात् घृतादिदानंदद्यात् अत्र
पूजोद्यापनादिसाधारणपूजोद्यापनादिक्रमेणकार्य्यं विशेषस्तुव्यतीपातयोगव्रतेज्ञेयः अथव्यतीपातव्रतम्
वाराहपुराणे धरण्युवाच यस्त्वयोक्तोव्यतीपातस्तस्यकर्मवदस्वयत् कस्यपुत्रःकथंपूज्यःपूजितेतत्रकिंफलं वाराह
उवाच यदाबृहस्पतेर्भार्यातारांजग्राहशीतगु मित्रत्वात्प्राहतंसूर्य्यस्त्यजभार्य्यांबृहस्पतेः चक्रेचंद्रोनतद्वाक्यंहित

शिक्षासमन्वितं यदारुष्टस्वदादित्योदीप्तदष्ट्याभ्युदैक्षत तावत्सोमोपिरुष्टास्यततोन्योन्यमवेक्षतां उभयोर्दृष्टि संपातेक्रुद्धयोसोमसूर्ययोः उद्यदास्योभवद्घोरःपुरुषःपिंगलेक्षणः दष्टोष्ठदीर्घदशनोभृकुटीकुटिलाननःकपिलःश्म श्रुकेशांतोलंबभ्रूःसक्रशोदरः शिखालोदीर्घजिह्वश्चसूर्याग्नियमसन्निभः सभोक्तुकामस्त्रैलोक्यंरवींदुभ्यांनिवारितः क्रोधक्षुधेमांबाधेतकत्रैतेपात्यतेमया रवींदूऊचतुः कोपदष्टोनौविघातादतिपाताद्भवानभूत् व्यतीपातस्ततोर्न्ना मभवान्भुविभविष्यति यस्मिन्कालेत्वदुत्पत्तिस्तदाकल्याणकारिणः व्यतीपातायभद्रंतेत्वयियःपापकारकःतदन्नं क्षुधितोभुंक्ष्वतत्रकोपोनिपात्यतां व्यतीपातउवाच नमोवांपितरौमेस्तुक्रोधपातःसभोजनः दत्तोभवद्भ्यामधुनाप्रसादःक्रियतांमम रविचंद्रावूचतुःस्नानदानजपहोमपूजनंयस्त्वदीयसमयेसमाचरेत् तस्यपुण्यमिहतेप्रसादतोनंतमस्तुसुततेस्त्वनुग्रहःत्वत्कालेतवविदधातिपूजनंयस्तस्येष्टंभवतुभवेत्सभद्ररूप पुत्रायुर्धनसुखकीर्तिभोगरूप्यरोग्याद्यंगुणिजनवल्लभेष्टपूर्वं वाराहउवाच एतस्मात्कारणाद्भूमौव्यतीपातोर्च्यतेनरैः अर्चितेचफलंयत्स्यात्तदुक्तंच समासतःविस्तरेणार्चनफलगदितुंकेनशक्यते यथार्च्यतेव्यतीपातःसविधिःश्रूयतामिह शुभेव्यतीपातदिनेविगाहयेत्सपंचगव्येनमहानदीजलं उपावसेद्धैपचमानजापकोजपेतशूद्रोव्यतिपातेतेनमः छादितताम्रपात्रेणशर्करापूरितेघटे कांचनाब्जेप्रतिष्ठाप्यहैममष्टभुजंनरं अष्टभुजमष्टादशभुजं अस्योत्पत्तिवाक्ये ष्टादशभुजत्वश्रवणात् उत्पत्तिवाक्यानुसारित्वाद्विनियोगवाक्यस्ययथाभगवद्गीतासुचत्वारोमनवस्तथेत्यत्रचत्वारश्चतुर्दशेत्यर्थःगंधपुष्पाक्षतैर्धूपदीपवस्त्रनिवेदनैःभक्ष्यैर्भोज्यैःफलैश्चित्रैर्मासिमार्गशिरेर्चयेत् नमस्तेस्तुव्यतीपातसोमसूर्यसुतप्रभो यद्दानादिकृतंकिंचित्तदनंतमिहास्तुते इत्युक्त्वापंचरत्नाढ्यंसपुष्पाक्षतमंजलिं प्रक्षिपेत्तत्क्षणादेवसर्वपापक्षयोभवेत् यदिद्वितीयेचदिनेव्यतीपातोभवेन्महि तदापूर्णोपवासस्तुदद्यात्सकलगुरोः पारणंव्यतिपातांतेकुर्य्यात्संप्राश्यगोमयं

अथैकस्मिन्दिनेधात्रेव्यतीपातोभवेद्यदि तत्रैवाहितदादत्त्वाउपवाससमाचरेत् कुर्य्यादेवंमासिमासिव्यतीपातास्त्र
योदश चतुर्दशेतुसंप्राप्तेकुर्य्यादुद्यापनंबुधः व्यतीपातायस्वाहेतिक्षीरवृक्षसमिच्चरुं आज्यक्षीरतिलानांचहोत
व्यंवैशतंशतं शर्करापूर्णकुंभंचसहसोपस्करंपरं शय्यामुपस्करैर्युक्तांप्रदद्याद्व्रतदेशिने वंदेव्यतीपातमहंम
हांतं रवींदुसूनुंसकलेष्टलभ्यै समस्तपापस्यममक्षयोस्तुपुण्यस्यचानंतफलंममास्तु इतिसमर्प्यगुरुः परि
पूज्यतेकटककुंडलकंठविभूषणैः सकलमेवसमर्प्ययथोदितयदुपलभ्यमिहशृणुतन्नहि धेनुंपयस्विनींदद्यात्सु
वर्णांवरदक्षिणां तस्मैशय्यांसमासाद्यसारदारुमयींदृढां दंतपत्राचितांरम्यांहेमपट्टैरलंकृतां हंसतूलीप्रति
च्छन्नांशुभगंडोपधानिकां प्रच्छादनपटीयुक्तांधूपगंधाधिवासितां तांबूलकुंकुमक्षोदकर्पूरागुरुचंदनैः दीपको
पानहच्छत्रंप्रदद्याच्चामरासनं देहांतेसूर्यलोकायविमानैरत्नसप्रभैः अप्सरोगणसंभोगैर्नृत्यगीतविलासिभिः
गत्वाकल्पार्बुदशतंमोदतेत्रिदशार्चितः तदंतेराजराजः स्याद्रूपसौभाग्यभाग्भवेत् कीर्त्याढ्योगुणपुत्रायुरारो
ग्यधनधान्यवान् प्रतापाज्ञामहैश्वर्ययुक्तोभोगीवहुश्रुतः जनसौभाग्यसंपन्नोयावज्जन्माष्टकायुतं दर्शेशतगुणंदानं
तच्छतघ्नंदिनत्रये शतघ्नंतच्चसंक्रांतौशतघ्नंविषुवेततः युगादौतच्छतगुणमयनेतच्छताहतं सोमग्रहेतच्छतघ्नंतच्छतघ्नं
रविग्रहे असंख्येयंव्यतीपातेदानंवेदविदोविदुः व्यतीपातवैधृतौचदानस्यांतोनाविद्यतेव्यतीपातोविशेषेणसाहिशक्तः
प्रकीर्त्तितः उत्पत्तौलक्षगुणंकोटिगुणंभ्रमणनाडिकायांतु अर्वुदगुणितंपतनेजपदानाद्यक्षयंपतिते जन्मद्वाविंशनाड्
योभ्रमणंत्वेकविंशतिः व्यतीपातस्यपतनंदशसप्तस्थितिंविदुः समर्पितंयद्व्यतिपातकालेपुनःपुनस्त्वद्द्विशीतरश्मी
प्रयच्छतः कल्पशतार्बुदानिविवर्द्धतेतन्नहिहीयतेक्वचित् तस्मान्महित्वंव्यतिपातपूजांकुरुष्वचेत्पुण्यमनंतमिष्टं यदि
स्थिरत्वंतववांछितंचेत्समस्तधारित्वमभीप्सितंते गणयित्वाव्यतीपाततत्कालंवेत्तियोनरः सर्वपापहरोतस्यभवते

रविशशिदिवमाप्यसोपिदैवैश्चरस
भानुभेश्वरो पठतिलिखतियःशृणोतिचैतत्कथयतिपश्यतिकारयत्यवश्यं रविशशिदिवमाप्यसोपिदैवैश्चरस युधिष्ठिर
मयंपरिपुज्यमानआस्ते इतिवाराहपुराणोक्तंव्यतीपातयोगव्रतं अथव्यतीपातव्रतांतरंभविष्ये युधिष्ठिर
उवाच येनव्रतेनचीर्णेननपश्येद्यमशासनं परिपृच्छाम्यहंब्रह्मन्पापघ्नंव्रतमुत्तमं तद्व्रतंब्रूहिविप्रर्षेकृत्वाजगति
वेकृपां मार्कंडेयउवाच शृणुराजन्व्रतमिदंहयश्वेनपुराकृतं तेनैवराज्ञातद्दत्तंसूकरायचदुःखिने एकदामृग
यासक्तोहयश्वोराजसत्तमः श्रांतश्चरन्वनेराजन्दृष्टवानेवसूकरं दग्धपादकटिंचैवदग्धग्रीवमुखोदरं दृष्ट्वात
थाविधतंनुकृपांचक्रेदयापरः केनकर्मविपाकेनअवस्थांप्राप्तवानयं अहोकष्टमहोकष्टंशूकरेणेहभुज्यते अव
स्यमनुसत्तव्यंकृतंकर्मशुभाशुभं इत्युक्तातंस्वरूपेणराजातंप्राहसूकर इयतीकिमवस्थातेतन्ममब्रूहिसूकर त
च्छ्रुत्वान्नृपतेर्वाक्यंनिश्वसन्सूकरोऽब्रवीत् स्मृत्वापुराकृतंकर्मप्रत्युवाचाथतंनृपं राजन्नासमहंपूर्वंवैश्योनिश्वस
स्वभवं आशाकृन्नदाताहमाश्रितेभ्यश्चकिंचन श्रुताश्चवहवोधर्माःपुराणश्रुतिचोदिताःतथापिपापबुद्ध्याहनकरो
न्यात्मनोहितं आशापाशमनुप्राताभग्नाशास्तेविनिर्गताःकृतंतुपापमेवाहनकिंचित्सुकृतंकृतं एकदातुद्विजःकश्चिद्य
तपातिगृहंमम आगतोयाचतेमांचनकिंचिद्दत्तवानहं ततश्चकुपितोविप्रोममशापमथाददात् आशाग्नि
दह्यतेयद्वन्ममांगानिपृथक्पृथक् तथैवतवचांगानिदावाग्निःपुरुषाधम अरण्येनिर्जलेदेशेनिर्जनेद्रुमवर्जिते तत्र
शूकरयोनौत्वंप्रसूतिंसमवाप्नुहि प्रसादितोमयाविप्रःपुनरप्युक्तवांस्तदा ज्ञानित्वंशूकरत्वेपिइत्युक्त्वायजगाम
सः तेनशापेनराजेंद्रशूकरत्वमवाप्तवान् अहंदुःखीतुसंजातोनिर्जनेनिर्जलेवने राजोवाच केनत्वंमुच्य
सेपापान्ममाचक्ष्वहशूकर केनशक्योसमाकर्तुंतवपापस्यसंक्षयः शूकरउवाच श्रूयतांममराजेंद्रमुक्तिःस्या
द्येनकर्मणा व्यतीपातव्रतंनामकृतंराजंस्त्वयापुरा यथामातासुतस्येहसर्वथाहितकारिणी तथाराजन्व्रतमिद

मिहलोकेपरत्रच यथैवभ्युदितःसूर्य्यसमग्रंचतमोदहेत् इदंव्रतं तथैवेह सर्वपापव्यपोहतिसकृत्स्मृतोयथावि
ष्णुर्नृणांपरमानिर्वृतिं ददात्येवनसंदेहस्तथाव्रतमिदंशुभ शतमिंदुक्षयेदानंसहस्रंतुदिनक्षये विषुवेशतसा
हस्रंव्यतीपातेत्वनंतकं व्यतीपातव्रतस्यास्यविधानंशृणुतत्त्वतः माघेवाफाल्गुनेवापिमासेप्यस्मिन्यथाथिवा
व्यतीपातदिनेयस्मिन्प्रारभेद्व्रतमुत्तमं तिलपूर्णशरावंचसगुडंगुरवेर्प्पयेत् एवंद्वितीयेदातव्यंतृतीयेतुसमापयेत्
सघृतंपायसंचैवदातव्यंचोत्तरत्रये एवंसंवत्सरस्यांतेदेवस्यार्चांतुकारयेत् शंखचक्रगदापाणिंपद्महस्तंहिरण्म
यं वस्त्रयुग्मेनसंवेष्ट्यपूजयेद्गरुडध्वजं गोक्षीरेणैवसंपूर्णंकांस्यभाजनमुत्तमं स्थापयेद्देवदेवस्यस्थानंतत्रैवक
ल्पयेत् शय्यांचसन्निधौतस्यस्थाप्यदेवमनुस्मरेत् अनंतशयनंदेवमनंतफलदंप्रभुं लक्ष्म्यासमन्वितंवि
ष्णुंभक्त्यासंपूजयेद्गुरुं वैदिकेनैवमंत्रेणजातीपुष्पैःसमर्चयेत् पायसेनैवनैवेद्यंदेवायप्रार्थयेद्व्रती व्यतीपातव्र
तंदेवत्वानंतसमर्पितं भवत्वनंतफलदममजन्मनिजन्मनि देवदेवंहृषीकेशंप्रार्थयित्वाततोव्रती तत्सर्वंगुरवे
दद्यात्श्रोत्रियायकुटुंबिने व्रतोपदेष्टेविदुषेब्राह्मणायविशेषतः भूमिंवाथसुवर्णंवादक्षिणातुविधीयते ब्राह्मणा
न्भोजयित्वातुव्रतमेतत्समापयेत् इदंव्रतंत्वयादेवगृहीतंपूर्वजन्मनि स्वर्गापवर्गदंन्हृणांचानंतफलदंशुभं मु
च्येयंकिल्विषात्तस्माच्छूकरत्वान्नसंशयः तेनैवमुक्तोहर्य्यश्वःशूकरंवाक्यमब्रवीत् मयाकृतमिदंपूर्वंतत्फलतेद
दाम्यहं एवमुक्त्वानृपश्रेष्ठःशूकरायफलंददौ तत्क्षणात्तेनपुण्येनशूकरोमुक्तकिल्विषः मुक्तःशूकरदेहात्ससर्वा
भरणभूषितः दिव्यंविमानमास्थायवाक्यंचेदमुवाचह हेजनाःकिंनजानीध्वंव्यतीपातव्रतोत्तमं इत्युक्त्वास्व
र्गगःसोथराज्ञोवैपश्यतस्तदा तंदृष्ट्वाविस्मितोभूत्वाराजापिश्रद्दधेव्रतं ततोराजापुरंगत्वाव्रतंचाकारयज्जनान्
सर्वेश्चकृतवांस्तत्रव्यतीपातव्रतंशुभं ततोराज्यंचिरंकृत्वादेवदेवस्यचाक्रिणः हर्यश्वप्राप्तवांस्तेनविष्णोस्तत्परमं

इदंय कुरुतेमर्त्यःश्रद्धाभावसम
पदं अतस्त्वंकुरुराजेंद्र व्यतीपातव्रतोत्तमं सर्वपापक्षयकरंनृणामिहसुखप्रदम् स्त्रीकामिनेहतद्वत्सलभे
न्वितः सर्वपापविनिर्मुक्तोविष्णुलोकमवाप्नुयात् ययातुपुत्रकामिन्याकृतंसालभतेसुतान् ज्ञानवान्धनवान्श्रीमानिहैवचसुखीभवेत्यइदंशृणुया
न्नारीमनुत्तमां व्यतीपातव्रतमिदंव्यतीपातदिनेपठेत् अथव्रतविधिः तत्रमार्गशीर्षादिशुभ
द्भक्त्याविष्णुलोकेमहीयते इतिनारदीयपुराणोक्तंव्यतीपातव्रतम् संकल्पंकुर्यात् तद्यथाओमद्येत्या
मासेयदाव्यतीपातयोगः तद्दिनेनद्यादौव्रतीस्नात्वा पावमानादिजप्त्वा संकल्पंकुर्यात् तद्यथाओमद्येत्या
दिसंकीर्त्यात्मनः निरतिशयैहिकसुखप्राप्तयेसकलपापक्षयपूर्वकदिव्यविमानारोहणगीतनृत्यविलासिअप्सरो
गणवीज्यमानसकलभोगयुतकल्पकोटिसूर्यलोकनिवासोत्तरंपुत्रपौत्रादिसकलसंपत्सहितमहदैश्वर्यादिगुणयुक्त
राजराजन्यकामोयथाभिलपित कामोव्यतीपातयोगव्रतंकरिष्ये इतिसंकल्प्य गणेशपूजादिसर्वांगनिर्वर्त्य
शुद्धभूमौपंचरंगोपेतकनलेकलशस्थापनप्रकारेणशर्करापूरितताम्रकलशंप्रतिष्ठाप्य तत्रताम्रमयेपूर्णपात्रेकांच
नेनाब्जेअष्टादशभुजंकांचनंव्तीपातस्वरूपंनाममंत्रेणप्रतिष्ठाप्यपूजयेत् षोडशोपचारपूजांपुरुषसूक्तमंत्रैः सा
मान्यपूजावत्कुर्यात् ततःपंचरत्नान्वितपुष्पांजलिं दद्यात् तत्रमंत्रः नमस्तेस्तुव्यतीपातसोमसूर्य्यसुतप्र
भो यद्दानादिकृतंकिंचित्तदनंतमिहास्तुते इतिदत्वा यथाशक्तिसुवर्णपुष्पादिसमर्प्य पुराणपठनादिनारात्रिं
नयेत् तद्दिनेउपवासमेवकुर्य्यात् प्रातः स्नात्वानित्यंनिर्वर्त्यदेवंसंपूज्य तत्पीठसुवर्णसहितंतस्मैदत्वा ब्रा
ह्मणपुरस्सरःस्वयंभुंजीत एवंमासिमासिव्यतीपातदिनेव्रतंत्रयोदशव्यतीपातपर्यंतंव्रतंकृत्वा चतुर्दशेव्यतीपाते
कुर्य्यादुद्यापनंनरः इतिकथायामुक्तम् तद्यथापूर्वोक्तसंकल्पांतेआचरितव्यतीपातव्रतस्यसांगता पूर्वकयथोक्तफ
लसिद्धयेव्यतीपातव्रतोद्यापनंकरिष्ये इतिसंकल्प्यआचार्य्यंकृत्वासर्वतोभद्रकलशेताम्रमयंपूर्णपात्रंशर्करासहि

तांनिधाय तत्राष्टादशभुजंसौवर्णव्यतीपातविग्रहंसंपूज्य अग्निंप्रतप्य अन्वादध्यात् तत्रप्रधानंव्यतीपातं पायससघृततिलपूगीफलद्रव्यचतुष्टयेनप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये एवंहोमंसंपाद्य ततःआचार्य्यंसंपूज्य तस्मैसोपस्करांशय्यांपीठंचदद्यात् तत्रमंत्रःवेदव्यतीपातमहं महांतंरविंदुसूनुंसकलेष्टसिद्ध्यै समस्तपापस्यममक्षयोस्तुपुण्यस्यवृद्धिर्ममसर्वदास्तु इतिदत्त्वा व्रतपूर्त्तयेगांच दत्त्वा ब्राह्मणान्भोजयेदिति अथप्रकारांतरेण नारदीयपुराणोक्तव्यतीपातव्रतविधान ॐमद्यात्मनःसक लपापक्षयपूर्वकाभीष्टसिद्ध्यनंतरविष्णुसायुज्यकामःव्यतीपातव्रतंकरिष्ये व्यतीपातदिनेप्रातः स्नानादिकृत्वा पंचरंगोपेतवेद्यांगोक्षीरपूरितकांस्यभाजनेचतुर्भुजचक्राद्यायुधोपेतसौवर्णपद्महस्तलक्ष्म्यान्वितंविष्णुं विष्णोररा टमसीतिमंत्रेणसंस्थाप्य जातीपुष्पादिनापुरुषसूक्तेनसंपूज्य शर्करोपेतंपायसोपहारंनिवेद्य देवंप्रार्थयेत् व्यतीपातदिनेदेवतवसर्वंसमर्पितं भवत्वनंतफलदंममजन्मनिजन्मनि ततोद्विजंसंपूज्य तिलपूर्णशरावंस गुडंससुवर्णंदत्त्वा सोपस्करांशय्यांपीठंगांचदत्त्वा ब्राह्मणान्भोजयित्वाभुंजीत इतिव्यतीपातपुरःसराणियो गव्रतानि व्यतीपातयोगेब्रह्मांडदानमुक्तंनारदीयेमत्स्यपुराणेच ब्रम्हाब्रह्मांडमाहात्म्यमधिकृत्याब्रवीत्पुनः तद्ब्रह्मांडपुराणंतुब्रह्मणासमुदाहृतं योहिदद्याद्व्यतीपातेऊर्णावस्त्रयुगान्वित राजसूयसहस्त्रस्यफलमाप्नोति मानवः इतिब्रह्मांडपुराणदानं अथववादिकरणव्रतानि शुक्लप्रतिपदायाःपरार्धमारभ्यववादिसप्तकरणा निप्रतिपत्तिथिभागद्वयेकरणद्वयंभवति तानिचववं वालव कौलव तैतिल गर वणिज विष्टिरितिसप्तचकर णानि एतानिचकृष्णपक्षचतुर्दशीपूर्वार्धंयावद्भवंति कृष्णचतुर्दशीपरदलादारभ्यशकुनिकरणंभवति अमा वास्यादलद्वयेचतुष्पदनागाख्येकरणेभवतः शुक्लप्रतिपदायाःपूर्वार्धेकिंस्तुघ्नकरणंभवति अथैषांव्रतविधान

तत्रकर्षमितसुवर्णप्रतिमा
हेमाद्रौ माघशुक्लपक्षेप्रतिपदोत्तरभागेनवकरणोपवासः कलशेताम्रपात्रंनिधाय तत्रकर्षमितसुवर्णप्रतिमा
यामच्युतंगंधादिभिःपूजयित्वा अष्टाक्षरमंत्रजपेत् एवंषड्वारंव्रतंकृत्वा सप्तमेउद्यापनंकुर्य्यात् सप्तब्राह्म
णान्भोजयित्वादक्षिणांदद्यात् एवंवालयादिविष्टिंतेषु सप्तकरणेषुव्रतंकुर्य्यात् एवंकृतेराजसूयाश्वमेधयोःफलं
भवतीति अथभविष्योत्तरोक्तंभद्राव्रतम् युधिष्ठिरउवाच भद्रानामेतिकाप्येषाकथंवापूज्यतेनरैः कथांवि
धानंकिंतस्याव्रतंस्यममकथ्यतां श्रीकृष्णउवाच सुतामार्तंडदेवस्यछायायांजनितापुरा शनैश्चरस्यभगिनी
सासीदत्यंभयंकरी साजातमात्राभुवनग्रस्तुंसमुपचक्रमे निर्य्यातियदिकार्य्येपिकाश्चित्तस्यपुरःस्थिता विघ्नंक
रोतिस्वपतोभुंजानस्यस्थितस्यच सर्वविघ्नकरीरौद्रासमाजोत्सवनाशिनी नित्योद्वेगकरीपार्थविनाशयातिय।
जगत् तांतुदुर्विनयासक्तांदृष्ट्वादेवोदिवाकरः चिंतयामासकस्यापियच्छाम्येनांसुमध्यमां कन्यादुर्विनयाद्देह
पितादोषेणगृह्यते तस्मात्सर्वप्रयत्नेनकन्यादेयाविजानता चिंत्यैवमशुभांभद्रांयस्ययच्छातितांरविः जनय
त्यपविलंयंसुरराक्षसाकिन्नरं मडपंमंडपारंभेविनाशयतितत्क्षणात् सविताचिंतयामासकस्येयं प्रतिपाद्यतां
विरूपादुष्टहृदयागद्दंभास्यात्रिपादिका ऊर्ध्वरोमामहादंष्ट्रास्वेच्छाचाराविहारिणी दत्ताप्येपातुसौख्या
यभवतिहिनाकिंचन एवंवितर्कयन्देवआस्तेयावाद्दिवस्पतिः तावत्तयाजगत्सर्वंदुष्टयासमभिद्रुतं अथाज
गामसवितुःपार्श्वेब्रह्मांडसंभवः उपालंभंददौचाथविष्टिदौष्ट्यमशेषतः भास्करस्तमुवाचेदंस्वयंभूर्भुवनेश्वरः भ
वान्कर्त्ताचहर्त्ताचकस्मादेवंप्रभाषते एवमुक्तस्तदाब्रह्माभास्करेणामितद्युतिः उवाचाविष्टिमानाय्यशृणुभद्रेमयोदितं
करणैःसहवर्त्तस्वववबालवकौलवैः सप्तमेद्धांदिनप्राप्तेयदभीष्टंकुरुष्वतत् यावाप्रवेशमांगल्यकृषिवाणिज्यकादिकं
नोद्विजनीयोहिजनोभवत्यादिवसत्रयं पूज्यासुरासुराणांवादिवसार्द्धेभ

लिप्यति उल्लंघयेन्नवर्तिभद्रांत्वांनिर्भयानराः तेषांविनाशायशुभंकार्याकार्येसुनिश्चितं एवमुक्तागतोब्रह्माभद्रा
पिभुवनत्रयं यश्रामेश्रांतरुद्रयाभीपयंतीसुरासुरान् एवमेषासमुत्पन्नाविष्टिरिष्टविनाशिनी निवेदितेयंकौंतेयत
स्मात्तांपरिवर्जयेत् सिंहग्रीवासप्तभुजात्रिपदापुच्छसंयुता खरोत्तमांगवदनाप्रेतारूढाकृशोदरी ज्वलच्चक्षुःसंदधती
हस्तैःपाशासिशक्तिकाःनरमुंडाश्चमालांश्चमुद्राःसप्तविधास्मृताःसजलजलदवर्णादीर्घनासोष्टदंष्ट्रा विपुलहनुकपो
लापिंडकोद्बद्धजंघा अनलशतसहस्रंचोद्गिरंतीसमंतात्पततिभुवनमध्येकार्यनाशायविष्टिः१ भानोःसुताकेतुशताग्र
जाताकृशांगयष्टिःसततंकुचेला दैवैर्नियुक्ताकरणांतसंस्थाविष्टिस्तुसर्वत्रविवर्जनीया २ मुखेस्याद्घटिकाःपं
चकंठेपदांस्थिते हृदिचैकादशप्रोक्ताश्चतस्रोनाभिमंडले पंचकट्यांतुविज्ञेयाःपुच्छेतिस्रोजयावहाःमुखेकार्य
विनाशायग्रीवायांधननाशिनी हृदिप्राणहराज्ञेयानाभ्यांतुकलहावहा कट्यामर्थपरिभ्रंशोविष्टिपुच्छेध्रुवंजयः
पृथिव्यांयानिकार्याणिअशुभानिशुभानिच तानिसर्वाणिसिद्ध्यंतिविष्टिपुच्छेनृपोत्तम यमानिलेंदुक्रूरे
शायाम्ययातेंद्रादिक्क्रमात् संस्थासमानप्रहरैर्विष्टदुष्टमुखंयतः करालीनंदिनीरौद्रासुमुखीदुर्मुखी
तथा त्रिशिराभैरवीहंसीत्वष्टापैतास्तुविष्टयः धन्यात्वधोमुखीभद्रामहामारीखरानना कालरात्रिर्महारा
विविष्टिश्चकुलपुत्रिका भैरवीचमहाकालीअसुराणांक्षयंकरी द्वादशैतानिनामानिप्रातरुत्थाययःपठेत् नच
व्याधिभयंतस्यरोगीरोगात्प्रमुच्यते ग्रहाःसर्वेनुकूलास्युर्नचविघ्नादिजायते रणेराजकुलेद्यूतेसर्वत्रविजयोभ
वेत् यश्चपूजयतेनित्यंशास्त्रोक्तविधिनानरः तस्यसर्वार्थसिद्धिस्तुजायतेनात्रसंशयः तस्मान्नरेणकौंतेयवर्ज
नीयाफलार्थिनायेनोपवासविधिनाव्रतेनचयुधिष्ठिर पूजितातोषमायातितद्वकथयामिते यस्मिन्दिनेभवेद्भ
द्रातस्मिन्नहनिभारत उपवासस्यनियमंकुर्य्यान्नारीनरोथवा यदिरात्रौभवेद्विष्टिरेकभक्तंदिनत्रयं कार्य्यस्ते

नोपवासःस्यादितिपौराणिकाविदुः प्रहरस्योपरियदादिवाविष्टिःप्रजायते उपवासस्तदाकार्य्यएकभक्तमतो
न्यथा सर्वौषधिजलैःशुद्धैःसुगंधामलकैस्तथा नद्यांतडागेथगृहेस्नानंसर्वत्रशस्यते देवान्पितृन्समभ्यर्च्यत
तोदर्भमयींशुभां विष्टिंकृत्वापुष्पधूपैर्नैवेद्यादिभिरर्चयेत् होमंनामभिर्विष्टेःशतमष्टोत्तरंनृप भुंजीतदत्वावि
.र्यतिलान्पायसमेवच सतैलंकृशरंभुक्तापश्चाद्भुंजीतकामतः छायासूर्यसुतेदेविविष्टिदृष्टार्थनाशिनी पूजि.
तासिमयाभक्त्याभद्रेभद्रप्रदाभव उपोष्याविधिनानेनदशसप्तयथाक्रमात् उद्यापनंततःकुर्य्यात्पूर्ववत्पूज्यभान
वीं स्थापयित्वायसेपीठेकृशरान्नंनिवेदयेत् परिधार्य्यकृष्णयुगंस्तुत्वामंत्रेणतांपुनः ब्राह्मणायपुनर्दद्याल्लोहंतै
लतिलांस्तथा कृष्णांसवत्सांगामेकांतथैवंकृष्णकंबलं दक्षिणांचयथाशक्त्यादत्वाभद्रांविसर्जयेत् यएवंकुरुते
पार्थसम्यग्भद्राव्रतंनरः विघ्नोनजायतेतस्यकार्य्यारंभेकदाचन राक्षसावापिशाचावापूतनाशाकिनीग्रहाः नपी
डयंतितंमर्त्यंयोभद्राव्रतमाचरेत् नचैवेष्टवियोगःस्यान्नहानिस्तस्यजायते देहांतेयातिसपदंभास्करस्यनसंशयः
सूर्य्यात्मजातिभयदाभगिनीशयनेर्यामर्त्यान्भ्रमत्यातिरपाकरणक्रमेण तांकृष्णभासुरमुखींसमुपोष्यविष्टिमिष्टार्थ
सिद्धिमबुधोपिनरोभ्युपैति ॥ इतिभविष्योत्तरोक्तंभद्राव्रतम् अथतत्रैवोक्तंभद्राव्रतांतरम् ॥ कृष्णउवाच ॥
अथान्यदपितेवच्मिविष्टिव्रतमनुत्तमं यत्कृत्वाविष्टितोनस्याद्भयंक्वापियुधिष्ठिर सुकरंसुगुणंचेष्टंसर्वकामार्थदंनृ
णां परंप्रीतिकरंभानोःसर्वविघ्नोपशांतिदं मार्गशीर्षेसलेपक्षेचतुर्थ्यामारभेद्बुधः संपूज्यब्राह्मणंश्रेष्ठविघ्नादौभ
रतर्षभ प्रागुक्तांपूज्यतांदेवींमंत्रमेतदुदीरयेत् भद्रेभद्रायतेभद्रंकरिष्येव्रतामित्यहं निर्विघ्नंकुरुमेदेविकार्य्य
सिद्धिंविभावय सुस्नातःपूज्यतामेवंब्राह्मणंचस्वशक्तितः ततोभुंजीतराजेंद्रयावद्भद्रानजायते अथचांते
पिभद्रायाकामतोकाम्यतःशुचिः नाकिंचिद्भक्षयेत्प्राज्ञोयाद्भद्राप्रवर्त्तते अनेनाविधिनापार्थप्रतिभद्रंसमाच

रेत् नरोवायदिवानारीसर्वकामार्थसिद्धये संवत्सरेनुसंपूर्णंप्रतिमांकारयेद्बुधः लौहींशिलामयींवापि दारुजांचस्वशक्तितः शक्त्याचोपापनंकृत्वास्थापयित्वायथाविधिपूजयेद्भक्तिमान्विप्रोमंत्रैरेभिरुदारधीः पूजि तासियथापूर्वंमिंद्रेणधनदेनच विष्णुनाशंकरेणाथतथात्वांपूजयाम्यहं निर्विघ्नेनार्थसंसिद्धिर्यथातेषांकृ तापुरा तथामपापिभक्तस्यभद्रेत्वंभद्रदाभव अज्ञानादथवादर्पात्त्वामुल्लंघ्यकृतांहियत् तत्क्षमस्वाशु भेमातर्दीनस्यशरणार्थिनः इतिकुर्य्याद्यथाशक्त्यावित्तशाठ्यविवर्जितः अशक्तःपरकीयांवापूजयित्वानरा धिप अभावेलेखजांकृत्वाविधिंनिष्पादयेद्बुधःएवंहिकुरुतेयस्तुभक्त्याभद्राव्रतंनरः भद्रायामपिकार्य्याणित स्यसिध्यंत्यसंशयं इहलोकेसुखंभुक्त्वादीर्घायुर्व्याधिवर्जितः ततोंतेस्वर्गतिंप्राप्यमोदतेसुरराडिव एतत्पुराम हेंद्रेणचीर्णंवृत्रजिघांसया विमानार्थंकुवेरेणनीतंयत्त्रिदशारिणा शंभुनात्रिपुरांतायपांचजन्यायविष्णुना भ द्रासुभद्रंभवतीहतेषांयेभक्तिपूर्वकमिदंव्रतमादरेण भद्राभिधानमभिधायमनोनुगंयेकुर्वंतितेवृजिनमेवनचाप्नुवंति इतिभविष्योत्तरोक्तंद्वितीयंभद्राव्रतम् स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसार रसवित्सद्वृंदसंरक्षकः धर्माधर्मविभागकृतद्रघुपतेःपादांबुजाचीरतोजीयात्पुत्रकलत्रमित्रसहितः संपालयन्क्ष्मां चिरम् १ रणवीरसिंहभूपेशकारितेकृत्यसागरेअभूत्संक्रांतिवारादिकृत्यरत्नसमुच्चयः इतिश्रीमत्सूर्यवंशावतं सरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारितेकृत्यरत्नाकरेसंक्रांतिवारादिकृत्यरत्नसमुच्चयः समाप्तः

रागप्रदानतः॥८॥ गारुत्मतैर्गरुत्मतानियतजयातिश्रिया वैडूर्य्यैः स्वर्गलोकच पद्मरागैररागता। प्रदानादिंद्रनी लैश्चनीलानांसतुभाजन सुखीशंखप्रदानेनशक्तिशुक्तिप्रदानतः इतिस्कंदेभिधानात् तत्रमुक्ताप्रदानमंत्रः ताम्रपर्ण्यर्णवोद्भूतावर्णाढ्याकल्पवर्णिताः मुक्ता. शुक्त्युद्भवाः सतुभुक्तिमुक्तिप्रदामम एवसर्वेषामेवरक्तधान्या दीनांमंत्राग्रंथांतरतोवसेयाः इतिप्रकारांतरेणलक्षपूजाविधिः अथाग्निपुराणोक्तंसोद्यापनम् लक्षपूजावि धानम् तत्रपूर्ववद्देवसपूज्य ततः सहस्रनामाभिः ॐनम. शिवायेतिमंत्रेणपुष्पादिभिरेकरूपतयासमाप्ति पर्यंतमभ्यर्च्य तदंतेशुभदिनेउद्यापनंकुर्य्यात् तत्रादौ तिथ्यादिकीर्त्तनांतेआत्मनोऽनेककजन्मार्जितसमस्तदुरितानि वृत्तिपूर्वकैहिकपुत्रपौत्रा दिविद्याविविधसुखप्राप्त्यनंतरंशिवलोकनिवासकामकृतंयदमुकद्रव्यसमर्पणलक्ष पूजनं तत्संपूर्णफलावाप्तयेतस्योद्यापनकारिष्ये इतिसंकल्पः कार्य्यः ततोगणेशपूजा आचार्यवरणादि पूर्वांगंविधाय वेदिकायांलिंगतोभद्रेकलशेधान्यपूरितपूर्णपात्रमध्येसौवर्णमहेश नमः शंभवायेतिमंत्रेणसौव र्णींगौरीं गौरीमिमायेतिमंत्रेणपुरतः राजतंवृषभतन्मंत्रेणसंस्थाप्य परिवारदेवताश्चसंस्थाप्य पूर्वादि दिक्षुधर्मज्ञानवैराग्यैश्वर्यानाग्नेयादिविदिक्षुच अधर्माज्ञानावैराग्यानैश्वर्यान्पीठसपूज्य मध्येमहेश्वरसपूज्य तद्बहिरैशान्यांईशानवक्त्रायनमः पूर्वेतत्पुरुषवक्त्रायनमः दक्षिणेअघोरवक्त्रायनम पश्चिमेसद्योजातवक्त्राय नम. उत्तरेवामदेववक्त्रायनमः पुनःपूर्वादित वामायैनमःज्येष्ठायै.श्रेष्ठायै.रौद्र्यै.काल्यै.कलविकारिण्यै-बलायै. बलविकरण्यै. मनोन्मन्यै. सर्वभूतदमन्यै. इतिदशादिक्षु ॥ १० ॥ पुन.पूर्वमारभ्यईशानपर्यंतं अजैकप- देनमः अहिर्बुध्न्याय. भवाय. शर्वाय. उमापतये. रुद्राय. पशुपतये. शंभवे. वरदाय. शिवाय. ईश्वरायनमः ॥ ११ ॥ पुनःपूर्वेनंदिकालौ. दक्षिणेभृंगिषंडौ. पश्चिमेवृषस्कंधौ. उत्तरेईशकालौ. ततइंद्रादिलोकेशान्सायु

धान्संस्थाप्यपूजयेत् अथशिवपूजाध्यानम् शुद्धस्फटिकसंकाशंत्रिनेत्रंचंद्रभूषणं भस्मोद्धूलितसर्वांगं
ह्यचिंत्यंभक्तवत्सलं ॐनमःशिवायइतिमंत्रेणपूजयेत् लक्षपूजायांदशएकंवासुवर्णपुष्पंसमर्प्य ॥ प्रार्थयेत् ॥
नमःशिवायशांतायसगणायससूनवे सनंदिनेसगंगायसवृषायनमोनमः इतिनमस्कारः पुराणपठनादिना
रात्रिंनीत्वा प्रातःस्वगृह्योक्तमग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानं सो महेशं नमः शंभवायचमयो
भवायचेतिमंत्रेणाज्यासिक्ततिलद्रव्येणायुतसंख्याकाहुतिभिः सहस्रपरिमिताभिर्वापरिवारदेवतामंडलदेवं
ताश्चैकयाज्याहुत्यायक्षे स्थापनमंत्रेणहोमः पुष्पसमर्पणंवा होमांतेसपत्नीकमाचार्यंसंपूज्यपीठंगोमिथुनं
चप्रतिपाद्य अधिकफलाप्तयेसोपस्करांशय्यांदत्वा षोडशद्विजान्विशेषाकारेणसंपूज्य दक्षिणांचदत्वा ॥
सदन्नेनसहस्रंशतंवायथाविभवंसदन्नेनद्विजांस्तर्पयेदिति इतिलक्षपूजोद्यापनविधिः अथविष्णुलक्षपूजाविधिः
अग्निपुराणे लक्षपूजाविधिंभूयःशृणुनान्यमनाःक्वचित् यांकृत्वामुच्यतेपापैर्नारीवाथनरोपिवा ब्रह्महागुरु
गामीचमद्यपोवाधनापहः सकृत्पूजनमात्रेणमुच्यतेकिमुतान्यतःनातःपरतरंकिंचित्त्रिषुलोकेषुविद्यते किंकुलेन
किमाचारैः किंशीलेनगुणेनच योहरिंपूजयेत्सम्यक्सकुलीनः सबुद्धिमान् जंबूद्वीपेमहापुण्यंजन्मयः प्राप्य
मानवः इमामकृत्वामूढात्माकोन्यस्तस्मादधोगतिः धर्महीनस्यमर्त्यस्यादिनान्यायांतियांतिच सलोहकारभ
स्त्रेवतस्यजन्मनिरर्थकं पूजयेत्पूजयेद्विष्णुंभूयोभूयोपिपूजयेत् माघेवाकार्त्तिकेचैत्रेआषाढेश्रावणेपिवा अन्ये
पुपुण्यमासेषुव्रतमेतत्समाचरेत् देवपूजागृहेवापिदेवालयमथापिवा गोमयेनानुलिप्याथधातुनामृण्मयेनवा चतु
भिर्ब्राह्मणैःसार्द्धंकृत्वाचस्वस्तिवाचनं नांदीश्राद्धंप्रकुर्वीतलक्षपूजाविधौद्विज प्राणायामत्रयंकृत्वादेशकालौपठेत्सु
धीः सुसंकल्प्ययथाशक्त्याप्रत्यहंपूजयाम्यहं एवंसंकल्प्यविधिवन्मंत्रमेतमुदीरयेत् गृहीतास्मिन्व्रतेदेवपंचत्वं

यदिमेभवेत् तदाभवतुसंपूर्णं त्वत्प्रसादाज्जगद्गुरो एवंसंप्रार्थ्यदेवेशांनियमं तुलसीदलैःपंचामृतैःस्नापयित्वाशालि
ग्रामशिलांशुभां गंधपुष्पाक्षतैर्भक्त्याप्रथमंपूजयेद्बुधः प्रत्यहंयावतीपूजातावत्प्रणतिभिर्व्रती पश्चान्यपिचतावंतिलि
खेत्पंचाभिधातुभिःमहाव्रतमिदंब्रह्मन्देवानामपिदुर्लभं तुलसीदलैर्नवैसस्यैरव्रणैरतिशोभनैःकूष्मांडवर्जितैर्देवंपूज
येत्तस्यनामभिःविष्णोर्नामसहस्रेणअथवाशतनामभिःसंख्यापूर्णफलासंख्यामंत्रहीनातुनिष्फलातच्चित्तोमौनवान्
भूत्वाविष्णुलोकपरायणः एवंसंपूज्यविधिवत्पूजांतेहोममाचरेत् सहस्रनामभिर्होमंस्वाहाकारसमन्वितं मधु
मिश्रैस्तिलैर्लाजा मिश्रितैः कृमिवर्जितैः होमसंख्याविधानेन लक्षसंख्यायदाभवेत् पूर्णाहुतिंततः कृत्वा प्र
णिपत्यक्षमापयेत् लक्ष्मीनाराणंदेवंशंखचक्रगदाधरं सुवर्णप्रतिमांकृत्वावित्तपूर्वंविचक्षणः ब्राह्मणायसुशांता
यस्वदारनिरतायचपत्नीपुत्रवतेदानमक्षयंफलमश्नुते जलशायीब्रह्मपितापद्मनाभः सनातनः अनंतभोगशय
नःप्रीयतांपरमःपिता इतिदानमंत्रः तुलस्यभावेपुष्पैर्वाबिल्वैर्वाव्रणवर्जितैः सुगंधैर्ऋतुसंभूतैरसस्यैःपादपप
ल्लवैः सहस्रंद्विसहस्रंवात्रिसहस्रंयथाविधि उपक्रमदिनेयावत्प्रत्यहंतावतीभवेत् उपक्रमदिनेवापिह्यवमा
नेपितावंती उद्यापनंप्रकुर्वीतपूर्वोक्तेनैवमार्गतः अन्यथादोषमाप्नोतिहीनांगोजायतेभुवि एवंयःकुरुतेमर्त्यो
नारीवागतभर्तृका देहांतेज्ञानवान्भूत्वाविष्णुलोकमवाप्नुयात् ब्राह्मणान्भोजयित्वातुस्वयंभुंजीतवाग्यतः तुल
सीदर्शनंस्पर्शोनमस्कारःप्रदक्षिणा दानंचहरिपूजायांधारणंतज्जलंपयत् भक्षणंदर्शनंचैवाविष्णुलोकप्रदायकं
महापातकसंयुक्तोयुक्तोवासर्वपातकैः विष्णुपूजाविधानेनजीवन्मुक्तोनसंशयः इत्याग्निपुराणोक्तंवि
ष्णोर्लक्षपूजोद्यापनम् ॥ भविष्योत्तरेतु लक्षतुलसीव्रतोद्यापनम् कार्तिकेमाघेवाप्रत्यहंतुलसीदलान्यर्प
येत् ततोवैशाखेमाघेवाउद्यापनंकर्त्तव्यम् तत्रादावाचार्यवरणपूर्वकंपूर्वेद्युः स्वस्तिवाचनंकृत्वाप्रभातेस्थंडि

लेकृत्वा अग्निमुखांतंस्वगृह्यविधिनासंपाद्य घृतपलाशसामिद्यरुसहितंपंचशाखाद्यजुहुयात् अष्टाक्षरंपडे
क्षरंद्वादशाक्षरंप्रणवेनवा यथासंख्यमंत्रविनियोगः दलार्पणसंख्यादशांशेनहोमः तत्तद्दशांशेनतर्पणमा
र्जनादि तदंतेआचार्यायगांदत्वास्विष्टकृतंकृत्वा होमशेषंसमाप्य तद्दशांशेनविप्रान्भोजयेत् विप्रायविष्णु
सहस्रनामदानमपिकुर्यात् ततःसुवर्णवृंदावनेतुलसींसमारोप्य विष्णुरूपायाचार्यायदद्यादिति तुलसीद
लोद्यापनम् अग्निपुराणीयसोद्यापनोलक्षपूजाप्रकारप्रयोग चातुर्मास्यसमाप्तौतुलक्षपूजांसमापयेत् माघो
दिपट्सुमासेपुलक्षपूजाहरेःस्मृता यद्यद्दत्तोभवेत्पुष्पंविष्णवेतत्तदर्प्यते अतसीतुलसीधात्रीपद्मंदूर्वांकुरास्त
था करवीरकर्णिकारंशतपत्रंचकेतकं चंपकंतगरंचैवसौवीरंकनकंतथा जातीपुष्पंपाटलकंपुन्नागंचकदंबकं
वदरंचामलंपूगंफलैरन्यैश्चपूजयेत् सुगंधैर्ऋतुसंभूतैःसर्वैःपादपपल्लवैइति यद्यत्समर्प्पयेद्द्रव्यंतस्यरूपंहिर
ण्मयं कारयेत्सततंचैकंसहस्रंवापिकारयेत् लक्षंवादापयेद्धीमान्यथावित्तानुसारतः विष्णोर्नामसहस्रेणगा
यत्र्यामूलमंत्रतः सहस्रंद्विसहस्रंवात्रिसहस्रंयथाविधि उपक्रमादिनेयावत्सत्यहंतावंतीभवेत् तत्रादौतिथ्यादि
कीर्त्तनांतेऽखिलनानाविधपातकनिरसनपूर्वकैहिकामुष्मिकानिरतिशयभोगानंदप्राप्तिद्वाराश्रीलक्ष्मीनारायणप्रीत्य
र्थंतुलस्यादिलक्षपूजांकरिष्ये इतिसंकल्प्यपीठपुरुषसूक्तेनदेवंसंपूज्य नाममंत्रैस्तुलस्यादिसमर्प्पयेत् लक्षादि
समाप्तावुद्यापनंकुर्यात् सर्वसंकल्पांतेअमुकलक्षपूजोद्यापनंकरिष्ये इतिसंकल्प्य आचार्यवरणांते दे
विकायांसर्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वककलशंप्रतिष्ठाप्य तत्रदेवंपूजयेत् तत्रायंक्रमः सर्वतोभद्रेब्रह्मा
दिदेवताःस्थाप्य तदुपरिप्रस्थंसप्तधान्यपुंजंतदुपरिप्रस्थगोधूमपुंजं तदुपरिप्रस्थपरिमितशुद्धतंडुलराशिंकृ
त्वा तत्रकुंकुमेनअष्टदलपद्मंविरच्य तन्मध्येताम्रमयेपात्रेपिसप्तधान्यसहितंताम्रकलशंप्रतिष्ठाप्यं तत्रसौ

वर्णचतुर्भुजलक्ष्म्यालिंगितवामांगंनारायणंसहस्रशीर्षेतिमंत्रेणसंस्थाप्य ॥ पुरतःसौवर्णराजतंगरुडंसामध्वनि-
शरीरस्तववाहनं परमोष्टिनःविपपापहरोनित्यमतःशांतिंप्रयच्छमे ततईशानादिशानादिदिक्षुशंखचक्रगदापद्मं ततःपरितःलोकेशान्संस्थाप्यपूजयेत् प्रातःअग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥ अत्रप्रधानंलक्ष्मीनारायणं
ॐनमोनारायणायेत्यष्टाक्षरमंत्रेणमधुलाजामिश्रितं तिलपायसघृतशर्कराधान्यतमचरुद्रव्यचतुष्टयेनप्रतिद्रव्यंमष्टोत्तरसहस्राहुतिभिर्वासहस्रनाममंत्रैर्यक्ष्ये इत्येवंहोमंसमाप्य ततआचार्यायपीठंअनेनमंत्रेणदद्यात् जल
शायीब्रह्मपितागर्भेयस्यचराचर अनंतभोगशयनःप्रीयतांमेजनार्दन इतिदत्त्वागांपयस्विनींचदत्त्वा अधिकफलाप्तयेसोपस्करांशय्यांदत्त्वा दशाधिकारान् द्विजान्सदन्नेनभोजयेत् एवमेवविधानेनगणेशांबिकयोर्नृप ॥ तत्तन्मंत्रे
णपूजांतुतत्तन्नामसहस्रकैः गणेशेलड्डुकैर्होमंपंचखाद्यैस्तथापिवा पायसेनतुदेव्याश्चतिलैर्वाकेवलैरपि ॥ एवं
कृत्वाविधानेनस्वर्गलोकेमहीयते इतिविष्णुलक्षपूजोद्यापनम् गणेशांबिकयोरपिलक्षपूजोद्यापन अथलक्षन
मस्कारव्रतम् भविष्योत्तरे अंबरीषउवाच इक्ष्वाकूणांकुलगुरोब्रह्मन्धर्मंसविस्तरं ब्रूहिपापक्षयकरव्रतंसर्वोत्तमंचमे ब्रह्मघ्नस्यसुरापस्यगुरुदाराभिमर्षिणः सुवर्णस्तेयिनश्चैवतेषांसंसर्गिणामपि ॥ संकीर्णपापिनांचैवस
कलीकरिणांतथा असमंपश्यतोभार्याद्वयंदुष्टेनचेतसा श्वश्रूणांजनयित्रीणांकामिनांकामतोपिवा ॥ गुरोर्विश्वा
सहीनस्यब्रह्मघ्नस्यचपापिनः संध्याकर्मविहीनस्यजगदुन्मादवर्त्तिनः दासीवेश्यासंगमिनश्चांडालीगामिनस्तथा
परस्वहारिणश्चैवदेवद्रव्यापहारिणः ब्राह्मणेभीष्टदस्यैववृत्तिच्छेदकरस्यवा परस्वलोलुपस्यापिरहस्यकृतपा
पिनः पंचयज्ञविहीनस्यदुःशास्त्रनिरतस्यवा गुरुनिंदादिसश्रोतुर्गुरुद्रव्यापहारिणः नारीणांचविशेषेणप्रायश्चित्तं
यदीप्सितं तदालक्षनमस्कारव्रतंकुरुमहीपते संकरीकरणानांचमलिनीकरणस्यच ॥ अपात्रीकरणानांच

प्रायश्चित्तंयदीच्छसि तदाल. ॥ ३ ॥ भ्रातृपत्नीसुतानांचगामिनः कामिनस्तथा स्वसृस्वमातृवंधूनामिच्छ
यागमनस्यच दासीवेश्यासंगमस्यसंक्षयंयदिवांछसि तदाल. ४ परस्वहरणस्यापिदेवस्वहरणस्यच रहस्य
भेदकस्यापिरहस्यकृतपापिनः त्यागस्यपंचयज्ञानामसच्छास्त्राधिपस्यच गुरुनिंदाश्रुतेश्चापिगुरुस्वहरण
स्यच लेह्यानांचैवचोष्याणांसंक्षयंयदिवांछसि तदाल. ॥ ५ ॥ कृतस्यजन्मसाहस्रैर्मेरुविंध्यसमस्यच
अत्युत्कटस्यपापस्य इहजन्मकृतस्यच सर्वस्यपापजातस्य संक्षयंयदिवांछसि तदालक्षनमस्कारव्रतं
कुरुमहीपते ॥ ६ ॥ शृणुभूपाविधिंवक्ष्येसंकल्पनियमादिकम् चातुर्मास्येसमायातेकेशवेशयनं
गते आषाढस्यसितेपक्षेएकादश्यांसमाहितः संकल्प्यदेवदेवस्यपुरतश्चक्रपाणिनः ममलक्षनमस्कारव्र
तस्यपुरुषोत्तम निर्विघ्नेनव्रतंसांगंकुरुत्वंकृपयाहरे पापपंकनिमग्नमांपापकोशस्यभाजनम् व्रतेनानेनसुप्री
तःसद्यएवजगत्पते इतिसंकल्प्यमनसाकार्त्तिक्यांतुसमापयेत् प्रातःस्नात्वाव्रतंकुर्य्यादामध्यान्हंसदा
मुनिः यद्वातद्वानभुंजीतभुंजीतलघुभोजनम् अनृतंनवदेत्क्वापिनापध्यायीतकञ्चन देवतानांजपंहोमंनत्य
जेतकथंचन अतिथिंपूजयेन्नित्यं यथाशक्त्यानुसारतः कार्त्तिकेमासिसंप्राप्तेपौर्णमास्यांततःपरम् संस्थाप्य
कलशंपूर्णंसवस्त्रंसापिधानकम् विष्णोश्चप्रतिमांतत्रपूजयेद्विष्णुनामभिः नामभिःकेशवाद्यैश्चअंगपूजाविधीय
ते नैवेद्यांतेसमभ्यर्च्यकुर्य्यात्पश्चाच्चतर्पणम् पौरुषेयेणसूक्तेनतिलगोधूमतंडुलैः देवदेवजगन्नाथसर्वव्रतफ
लप्रद व्रतेनानेनसुप्रीतोगृहाणार्घ्यंनमोस्तुते इतिचार्घ्यत्रयंदत्त्वा पश्चाद्धोमंसमाचरेत् पौरुषेनसूक्तेन
शतमष्टोत्तरंसदा होमशेषंसमाप्याथपूर्णाहुतिमतःपरम् आचार्य्यंपूजयेत्पश्चाद्दद्याद्गोमिथुनंगुरोः
ब्राह्मणान्भोजयेत्पश्चाच्छतंविंशतिपंचवा दक्षिणांचयथाशक्त्यावाचयेदाशिषस्ततः अनुज्ञातश्चतेभ्योवैस्वयं

भुंजीतबंधुभिः इदंव्रतंमहापुण्यंपापारण्यदवानलं पापपर्वतवज्रंचपापाब्धितरणोडुपम सर्वपापहरं
सद्यःसद्योविष्णुप्रसादनम् नानेनसदृशंकिंचित्त्रिषुलोकेषुविद्यते सर्वेषामाश्रमाणांचावेहितंश्रुतिचोदितम्
नारीणांसधवानांचविधवानांविशेषतः सर्वेषामेवपापानांप्रायश्चित्तमिदंभवेत् ॥

इतिश्रीभविष्योत्तरेवसिष्ठांबरीषसंवादेलक्षनमस्कारव्रतविधानम्

अथैतस्यप्रयोगः मार्गशीर्षेतथामाघेचैत्रवैशाखयोरपि अस्तादिदोषरहितेपौर्णमास्यांसमापयेत् तत्रविधानम्
तिथ्यादिसंकीर्त्तनांतेममानेकजन्मार्जितनानाविधपातकशमनपूर्वकअतुलभोगप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थं श्री
विष्णोरमुकदेवस्यवालक्षनमस्कारव्रतमहंकरिष्ये इतिसंकल्प्य ततोदेवालयेअश्वत्थमूलेगंगातीरे अन्यत्रा
प्रमस्थलेदेवालयेपितद्देवताप्रीतयेतद्व्रतम् तंदेवंपीठपुरुसूक्तेनसंपूज्य नमोस्त्वनंतायेतिस्तुत्वा तद्देवता
नामसहस्रेणतद्देवताप्रकाशकवैदिकमंत्रेण मूलमंत्रेणसाष्टांगंपंचांगंवाप्रत्यहंनियतसंख्यानस्कारान्विधाय
व्रतांतेतदुद्यापनंकुर्यात् पूर्वोक्तसंकल्पांतेअमुकदेवतायाः कृतलक्षनमस्कारव्रतस्यसांगतासिद्धयेतदुद्यापनंक
रिष्ये इतिसंकल्प्य आचार्यवरणांतेसर्वतोभद्रकलशोपरिहैमंदेवंतद्देवतामंत्रेणसंस्थाप्यपूजयित्वा विशे
षार्घ्यंदद्यात् देवदेवजगन्नाथसर्वक्रतुफलप्रदव्रतेनानेनसुप्रीतोगृहाणार्घ्यंमयार्पितम् ततअग्निंप्रतिष्ठाप्य
अन्वाधायात् अत्रप्रधानंदेवंविष्णुं अमुकदेवंवासप्ताहत्यापौरुषसूक्तेनद्वादशोत्तरैकशताहुतिभिश्चरुतिलव्री

हिपालाशसमित्सार्पश्द्रव्यैःप्रतिद्रव्यंयक्ष्ये ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये इतिहोमं ततःपीठंगांचा
चार्य्यायदत्त्वा अष्टोत्तरशताधिकान्द्विजान्यथाशक्तिभोजयेत् इतिलक्षपुष्पोद्यापनम् लक्षनमस्कारव्रतो
द्यापनमपि अथलक्षप्रदक्षिणाविधानम् अथलक्षप्रदक्षिणाविधानंसोद्यापनम् विष्णुधर्मोत्तरे श्रीकृष्ण
उवाच चातुर्मास्येचसंप्राप्तेपरिक्रम्यशुचिर्भवेत् स्वकृतंपापमुत्सार्य्यज्ञानंचसकलंभवेत् तत्रमंत्रः यानि
कानिचपापानिजन्मांतरकृतानिच तानिसर्वाणिनश्यंतुप्रदक्षिणपदेपदे संकल्प्यंकुर्य्यान्नियतः कार्त्तिक्यां
तुजितेंद्रियः लक्षसमाप्यपश्चात्तुकुर्य्यादुद्यापनंव्रती आचार्य्यंवरयेद्विद्वान्ब्राह्मणानृत्विजस्तथा स्वस्तिवाचन
पूर्वेणबालरूपजनार्दनम् वस्त्रेणपरिधानेनानिव्रणेकलशेर्चयेत् हुत्वातुविष्णुगायत्र्याशतमष्टोत्तरंचरुम् कपि
लांचततोदद्यादाचार्य्यायसदक्षिणाम् ब्राह्मणानृत्विजश्चैवयथान्यायंप्रपूजयेत् पायसंजुहुयात्त्रसहस्त्रंविजितेंद्रि
यः अहोमुखैश्चदेवनसूक्तेनप्रतृचंबुधः ब्राह्मणान्भोजयेत्पश्चाद्दद्यात्तेभ्यश्चदक्षिणाम् एवंकृत्वाव्रतमिदंपवित्रंपा
पनाशनम् पूर्वजन्मार्जितैःपापैरिहजन्मार्जितैरपि आगामिजन्मजैश्चैवमुच्यतेनात्रसंशयः इतिविष्णुधर्मो
त्तरोक्तंलक्षप्रदक्षिणाव्रतोद्यापनम् अथास्यविधानम् आषाढशुक्लैकादश्यांपूर्णिमायांवाप्रारंभः कार्त्तिक्यांस
मापनम् अथवायास्मिन्वाशुभेमासेप्रारंभः व्रतांतेसमापनम् अत्रप्रदक्षिणास्थानानि सुरालयेश्वत्थमूलेतुल
स्यागोत्रजेतथा कुर्य्यात्प्रदक्षिणांसर्वांपूजयित्वायथाविधि तत्रादौतिथ्यादिसंकीर्त्तनांतेआत्मनः सकलपापक्षय
रोगपीडानिरसनपूर्वकामुकाभीष्टसिद्धयेश्रीपरमेश्वरप्रीत्यर्थं श्रीविष्णोरमुकदेवस्यवालक्षप्रदक्षिणाव्रतंकरिष्ये
इतिसंकल्प्य गणेशादीन्पूजयित्वा पूजासामग्रींगृहीत्वा अश्वत्थादिसमीपंगत्वा पुरुषसूक्तेनसंपूज्य सह
स्त्रनामादिपठन्करचालनादिरहितः कृतांजलिरेकाग्रचित्तः प्रदक्षिणाएकरूपतयासमाप्तिपर्य्यंतंकुर्य्यात् व्र

ततउद्यापनंकुर्य्यात् तत्रादौदेशकालादिकीर्त्तनांतेअमुककामनयाकृतायालक्षप्रदक्षिणास्तत्सांगुण्यार्थंतदुद्याप
नंकरिष्ये ततआचार्य्यवरणंतिसर्वतोभद्रस्थकलशोपरिहेमप्रदक्षिणादेवतंतन्मंत्रेणसंपूज्य साष्टांगंप्रणम्य त
तअग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानंविष्ण्वादिदेवंतस्यगायत्र्याअष्टोत्तरशतंचर्वाहुतिभिः ब्रह्मादिदे
वताश्चैकैकयाज्याहुत्यायक्ष्ये ततोहोमांतेपीठंकपिलांचाचार्य्यायसंपूज्यदत्त्वा यथाशक्तिब्राह्मणान्भोजयेत्
अत्रयस्यदेवतस्यप्रदक्षिणाव्रतं तस्यैवमंत्रोहोमपूजादौग्राह्यः इतिलक्षप्रदक्षिणाव्रतोद्यापनम् अथप्रकारा
तरेणअश्वत्थप्रदक्षिणाविधिः भविष्ये संकल्पादिपूर्ववत् इयान्विशेषः आदौआराधयेद्विष्णुंध्यानावाह
नपूर्वकम् तथैवपिप्पलतरुंनारायणस्वरूपिणं सदापुरुषसूक्तेनउपचारैश्चपूजयेत् ततःप्रदक्षिणांकुर्य्यात्त
त्सर्वंसफलंभवेत् लक्षमेकंद्विलक्षंवात्रिचतुःपंचलक्षकम् कार्य्यस्यगौरवाद्वर्यद्वादशांतंसमाचरेत् ब्रह्मचारीह
विष्याशीत्वधःशायीजितेंद्रियः मौनीध्यानपरोभूत्वासघृतंपायसंहुनेत् तर्पणंतुदशांशेनभोजनंतद्दशांशतः हो
मादौविष्णुगायत्रीतथानामसहस्रकं तत्रद्रोणपरिमिततंडुलपुंजोपरिपलादाधिकरौप्यपीठोपरिसुवर्णादधिकंहे
मअश्वत्थतरुंसंस्थाप्य श्वेतवस्त्रेणसंछाद्यसंपूज्यद्विजायदद्यात् तत्रमंत्रः पिप्पलोवृक्षराजेंद्रह्यग्निगर्भस्त्व
मेवहि प्रभुर्वनस्पतीनांत्वंपूर्वजन्मनियत्कृतम् अघौघंनाशयाक्षिप्रंतवरूपप्रदानतः ततोद्विजंप्रार्थयेत् अमुं
तरुंगृहाणत्वंविष्णुरूपंद्विजोत्तम स्वीकृत्यदुष्कृतंक्षिप्त्वाविष्णुरूपंप्रयच्छमे ततोव्रतपूर्त्तयेशुक्लांगांदद्यात् अ
धिकफलप्राप्तयेसोपस्करांशय्यांचदद्यात् इत्यश्वत्थप्रदक्षिणोद्यापनम् अथलक्षवर्त्तिव्रतविधानम् कार्त्तिके
माघेवैशाखेवाचातुर्मास्येवालक्षवर्त्तिव्रतविधानंकार्य्यम् तत्रमासपक्षादिकीर्त्तनांते अमुकाभीष्टप्राप्तिकामो
लक्ष्मीसहितंविष्णुमुमासहितंशिवंयथामिलितोपचारैःपूजयिष्ये षोडशोपचारैःसंपूज्यलक्षवर्त्तिविधानंकुर्य्यात्

तत्रकथा सूतउवाच आर्यावर्त्तेपुराकाचिद्वेश्याभूल्लक्षणाभिधा तस्याभुजंगःशूद्रोभूद्दासोनाममहाबली तां लक्षणांतुसुस्नातांस्थितांगोदावरीतटे बालवैधव्यदोषेणरुदंतींकुररीमिव मृतंपतिंपुरास्थाप्यबंधुभिःपरिवारि ताम् आक्रंदंतींततोवीक्ष्यशनैस्तांप्रत्यपद्यत लुठंतींभुविकायेनमुहुर्घ्नतीमुरोबहुः जडानामपिकारुण्यंजायते तातुपश्यताम् ततःसालक्षणावाक्यंस्वभुजंगमुवाचह कुलजानांतुनारीणांदशेयमतिदारुणा अवस्थात्रयमेता सांतवेयंतुसुदारुणा कन्यात्वंजीवभर्तृत्वंविधवात्वमितित्रिधा पारवश्यंचनारीणांदुःखमामरणांतिकम् अना पत्यत्ववैधव्येतथैवापुत्रतास्त्रियः असह्यमेतत्त्रितयंवैधव्यंतत्रघोरम् शोचंतीनांचनारीणांकस्येदंकर्मणःफलं निर्वर्त्ततेथकेनेदंपृच्छंतीमितितामथ उवाचदासनामासौभुजंगःसूनृतंवचः शृणुभद्रेप्रवक्ष्यामित्वायापृष्टाद्विजातयः देवानांचैवलोकानांहितार्थंमंत्रकोविदाः शास्त्रज्ञानात्स्वभावाच्चजीवानांयत्पुराकृतम् जानंतिकर्मजफलंतेप्रष्टव्या धृतव्रताः भुजंगवचनंश्रुत्वातथैवोमितिसापुनः तत्रागतमहावृद्धंद्विजंपप्रच्छतंतदा प्रणम्यसादीनतराप्रश्र यातुरमानसा मुनेत्वहंदुराचारावेश्यास्मिलक्षणाह्वया तथापितेदयापात्रंपृच्छंतींमांप्रबोधय साधूनांसमचि त्तानांजनाःसर्वेसमाभुवि दुर्गंधोवासुगंधोवायथावायुःसुखोभवेत् मुनेदशेयंनारीणांतृतीयातीवदुःसहा कर्म णाजायतेकेनकेनवाविनिवर्त्तते एतद्विचार्य्यमेब्रह्मन्कृपयावदसुव्रत इतितस्यवचःश्रुत्वायाजकोवाक्यमब्रवीत् दैवेकर्मणिपित्र्येचनार्य्यःकेनव्यवस्थिताः अकस्माच्चरजोदुष्टाःस्पृष्ट्वाभांडाद्युपस्करान् अज्ञानाद्ज्ञानतोवापिका मलोभात्क्वचित्क्वचित् अबोधयित्वागच्छंतितेनदुष्यंतिसत्क्रियाः क्रियालोपगताह्येताःपापात्तस्मात्सुदु स्त्यजात् दशामिमांप्राप्नुतिसर्वाअपिनसंशयः बाल्येवायौवनेवापिवार्धकेवाकदाचन तत्रायातिदुराचारा परानेवाभिवांछति श्वश्रोश्वपतिवंघ्नामतिचारातसुदुःसहात् दशामिमांप्राप्नुवंतिसर्वाअपिनसंशयः सा

तत्कर्मसहायेनरजसादूपिताचसा मृतपत्यातथाभूत्वावैधव्ययौवनेव्रजेत् यानारीतुरजोदुष्टासर्वभांडानिसंक
रम् कुरुतेयदिसानारीवैधव्यवार्धकेव्रजेत् याचानुकूल्यरहितापतिधर्मेपुसर्वदा वालवैधव्यमापन्ना
गतिहीनाभवत्यलम् सर्वासामपिवैधव्येनिदानंपुष्पितानघ तस्यशांतिंप्रवक्ष्यामिकर्मणश्चापिलक्षणे कृतेतुमुनि
पपम्याव्रतेपापंनुयोषिताम् क्षयंगच्छातिनारीणामितिवेदविदोविदुः शूर्पसवायनंदत्वाकृतेलक्ष्मीव्रतादिके मू
लावशेषंव्रजतिरजोदोषोनसंशयः निर्मूलंतुव्रजत्याशुलक्ष वर्त्तिव्रतेकृते रजसोत्थमहापापनारीणांनात्रसंशयः
इतितद्वचनंश्रुत्वापुनः पप्रच्छलक्षणा मनसाशंकिताभूत्वासादरंमुनिसत्तमम् साधुसाधुमहाभागचित्तंमेभय
विह्वलम् लक्षवर्त्तिव्रतस्यास्यविधानंकीदृशंवद कस्मिन्मासेतुकर्त्तव्यंकस्यवातत्समर्पणम् उद्यापनंकथंकार्य्यंकिं
फलंतस्यवामुने तयापृष्टोयाजकोपिलोकानांहितकाम्यया फलंविधानंतत्सर्वमवदद्वदतांवरः॥ मुनिरुवाच॥
लोमशस्यमुनीनांचसंवादंकथयामिते कालोस्यकार्त्तिकोमासोवैशाखोमाघएवच सहस्रगुणितंधत्तेकार्त्तिकेविद्धि
तद्व्रतम् तस्मात्कोटिगुणंधत्तेमाघमासेव्रतोत्तमम् तस्मादनंतगुणितंफलंवैशाखमासके एतस्मिन्मासत्रितये
यस्मिन्मासेसमाप्यते तस्मान्मासद्वयात्पूर्वंप्रारब्धव्यमिदंव्रतम् अंतेमासिप्रकुर्वीततत्समाप्तिंविचक्षण· सह
स्रवर्त्तिभिः कुर्य्यादारार्त्रिंविष्णवेध्रुवम् गोघृतेनाथतैलेनसम्यक्शुभैर्मनोहरैः यस्मिन्मासेसमाप्तिः स्यात्पौ
र्णमास्यांसमाचरेत् उद्यापनविधानेनव्रतसंपूर्णकारकम् प्रातः स्नात्वाशुचिर्भूत्वापंचगव्यंतुप्राशयेत् पुण्याहवा
चनंकृत्वाआचार्य्यंवरयेत्ततः त्रयोदशार्त्विजोभद्रेसाग्निकान्वृणुयात्ततः सतिलैश्चयवैः कुर्य्याद्दशनयक्षचाद्वि
जाः वर्त्त्यादशांशतः कुर्य्यात्तर्पणंतुविचक्षण· तर्पणस्यदशांशेनहोमंकुर्य्याद्विचक्षण· तर्पणोक्तेनमंत्रेणपाय
संचघृतान्वितं पालाशसमिधश्चैवमंत्रेणानेनवैष्णवे· तंघ्रचविष्णुगायत्र्याहोमस्यायंविधिस्मृतः कलशेपुन

प्रस्थाप्यसपिधानंसवस्त्रकम् सुवर्णप्रतिमांकृत्वाअग्न्युत्तारणपूर्वकम् प्राणप्रतिष्ठया स्थाप्याः प्राणस्त
स्यांसमाहितः आवाहनादिपुष्पांतंपूजांकुर्य्याद्यथाविधि ततस्त्रयोरुक्ममयाः प्रतिमाः कारयेत्ततः श्रि
याचसहितंदेवंमध्यगंपूजयेद्धरिम् तद्दक्षिणेचतुर्वक्त्र सावित्र्यासहितंतथा उत्तरेचोमयाशंभुंपुरतोगरुडंतथा का
लोविष्णुस्तथावन्हीरविर्दीप्तोनिशाकरः रुद्रः शेषोजगद्व्यापीतेजोरूपीमहेश्वरः निरंजनः कलाध्यक्षोविश्व
रूपीजगत्प्रभुः स्वप्रकाशः स्वयंज्योतिश्चतुर्बाहुर्जलाशयः परंब्रह्मेतिदशभिर्नामभिः पूजयेद्धरिं शि
रोललाटकेनेत्रेकर्णेनासेमुखंतथा कंठस्कंधौतथाबाहूस्तनौवक्षस्तथोदरम् नाभौचकट्यांजघनेऊर्वोर्जानौचगुल्फ
के पादौतुक्रमशस्त्वेतान्यंगान्येवंतुपूजयेत् धूपंदीपंततोदत्वानैवेद्यंचनिवेदयेत् यद्द्रव्यंलक्षपूजायास्तद्द्रव्यंक
नकस्यच कृत्वानिवेदयेत्तस्मैपश्चात्पूजांसमाचरेत् भक्त्याचजगदात्मानमथदेवंक्षमापयेत् देवदेवजगन्नाथभक्ता
नांकार्य्यकारक त्वत्प्रसादादहंयाचेशीघ्रंकार्य्यप्रदोभव अनेनैवविधानेनलक्षपूजांकरोतियः पुत्रैः पौत्रैः प्र
पौत्रैश्चसुखंप्राप्नोतिनिश्चितम् आचार्य्यंपूजयेत्पश्चाद्ब्राह्मणानृत्विजस्तथा गौर्देयाचसवत्सावैसालंकारागुणान्वि
ता त्रिंशत्पलंकांस्यपात्रंघृतेनपरिपूरितम् सुवर्णवर्त्तिसंयुक्तमाचार्यायनिवेदयेत् अथवातद्दशपलंतथाघृतस
मन्वितम् अथवातद्यथाशक्तिदद्यादावश्यकंत्विदम् व्रताभावेतुवैदद्यात्कांस्यंवैघृतपूरितम् यावज्जीवंजीवप
तिर्भवत्येवनसंशयः रजोदोषविमुक्तिः स्यात्पौर्णमास्यांददातिया ब्राह्मणान्भोजयेत्पश्चाद्वित्तशाठ्यंनकार
येत् एवंकरोतियानारी तस्याः पुण्यफलंशृणु अथसर्वाणिपापानिरहस्यानिकृतानिवै नश्यंतितानिसर्वा
णिव्रतस्यास्यप्रभावतः चंडालगामिनीवापितथाशूद्राभिगामिनी कारूकरजकादीनांगामिनीदुष्टचारिणी ब्रह्म
क्षत्रियविट्शूद्रप्रतिलोमानुगामिनी मातुलेयपितृव्यादिभ्रातृपुत्राभिगामिनी बालघ्नीवापतिघ्नीमातापित्रोर्वधेरता

गोघ्नीवातस्करीवापिरजःसकरकारिणी एवमादिमहापापैर्वृतावापिकुलांगना कृत्वाचैतद्व्रतंसम्यक्मुच्यते
नात्रसंशयः ' व्रतानामुत्तमंचैतत्स्त्रीणामावश्यकंत्विदम् एवंवर्त्तिप्रदानेनविष्णोरमिततेजसः ' कोटयोब्रह्मह
त्यानामगम्यागमकोटयः तथैवात्युग्रपापानांकोटयोथसहस्रशः नश्यंतिनात्रसंदेहोनारीणांतुनरस्यवाकिं
लक्षवर्त्तिभिर्विष्णोःकृतेवारार्त्तिकार्प्पणे किमत्रबहुनोक्तेननानेनसदृशंव्रतम् पुरुषोपिव्रतंकृत्वापूर्वोक्तैःपाप
संचयैः मुच्यतेनात्रसंदेहःप्रसादान्मधुशासिनः एतद्व्रतसमाख्यातंपृच्छतस्तवमानदे व्रतंकुरुसुखातिष्ठयथाते
रोचतेमनः इतितद्वचनंश्रुत्वापुनःपप्रच्छलक्षणा 'अज्ञानाद्दुष्टभावाद्वानविचारोममेहवै प्रत्ययार्थंममब्रह्मन्
प्रत्यक्षंकुरुमेधुना इतितस्यावचःश्रुत्वायाजकोवाक्यमब्रवीत् कथंतत्प्रत्ययोभूयात्कथ्यतांकरुणानिधे सांप्रतु
वाचमुनिर्विप्रविस्मयोत्फुल्ललोचना नचवैधव्यमापन्नारोदित्येषाकुमारिका अस्याःपतिःकथंजीवेद्वैधव्यंचैव
गच्छति तथाकुरुमुनिश्रेष्ठदयाशमवतांधनम् इतितस्यावचःश्रुत्वाविस्मितोवाक्यमब्रवीत् अद्यवैमकरंप्रा
प्तोभास्करोलोकभास्कर. माघोयंचवरोमासोनेकक्रतुफलाधिकः अद्यगत्वाकुरुस्नानंगंगायामघहारिणीं स्ना
नंकृष्णार्चनंकृत्वादेहितस्मैमृतायवै तेनजीवेदयंनूनंब्रह्मघ्नोयसुरापिवः तस्मादयंराजयक्ष्मरोगेणतुमृतिंगतः
तथापिमाघमासस्यपुण्याद्वैजीवतेध्रुवम् दापयित्वातथावर्त्तिंकांस्यपात्रंविधानतः जीवपत्नीभवेदाशुयावदाम
रणांतकम् लक्षणातद्वचःश्रुत्वाजलंस्पृष्ट्वाचवाग्यत.स्नात्वाकृष्णार्पणंकृत्वाददौतस्यैफलंततःतत्पुण्यस्यप्रभावेनतल्लक्ष
णादेवचोत्थितम् स्वभुजंगं प्रेषयित्वा सघृतंकांस्यपात्रकम् कुमार्य्यादापयामासवैधव्यस्यापनुत्तये एतत्पुण्यप्रभा
वेणकुमारीसापिशोभना तदाभवज्जीवपत्नीबभूवबहुपुत्रका कुमारी शोभनानामतत्पतिःकणभोजक तद्बांधवस्तदास
वैनुष्टुवुस्तांसुलक्षणाम् याजकंचापिसंप्रीत्याजग्मुस्तेस्वंनिकेतनं लक्षणापिचदोषेणभुजंगेनचसंयुता माघस्नानंततः

कृत्वा व्रतमेतच्चकारसा ततस्तुमरणंप्राप्तेदासस्तस्याःसहायकृते गयोनामंमहाराजश्चक्रवर्तीबभूवहसालक्षणाच तत्पत्नीसर्वलक्षणसंयुता बभूवलोकावस्थ्याताजीवभर्त्तासुपुत्रिका तस्माद्योमाघमासस्यसाहाय्यंचकरिष्यतिध मैस्यतत्फलंप्राप्यमुच्यतेनात्रसंशयः नित्यस्नातुमशक्यश्चेत्कुर्य्यात्सतुदिनत्रयम् द्वादश्यांरथसप्तम्यांपौर्णमा स्यांतथैवचसोपिपूर्णफलंप्राप्यविष्णुलोकेमहीयते तदेवंकर्मजफलंमहापातकनाशनं योनस्नातिनरोमाघेमकरस्थे दिवाकरे ब्रह्महासतुविज्ञेयःसर्वकर्मसुगार्हितः नारीवापिनरोवापिनस्नायादरुणोदये रौरवंनरकंप्राप्ययावदा भूतसंप्लव रोगाद्यपहतोयस्तुपादौप्रक्षाल्यवाग्यतः धौतवस्त्रंपरीधायत्रिराचम्यचवारिणा गायत्र्याभि त्रितंचांभःप्रोक्षयेमूर्द्धनिसद्विजःसोपिस्नानफलंप्राप्यमोदतेविष्णुमंदिरे येचशृण्वंतिसततंयेपठंतिनरोत्तमाः ते सर्वपापनिर्मुक्तायास्यंतिपदमव्ययम् ॥ इतिवायुपुराणोक्ताविष्णुर्लक्षवर्तिकथा अथप्रयोगः ॥ श्रावणशुक्ल प्रतिपदमारभ्यकार्त्तिकपौर्णमासीपर्यंतं प्रत्यहमेकसहस्त्रवर्त्तिकादीपनंकार्य्यं व्रतांतेउद्यापनं अथवा माघ वैशाखपौर्णमास्योर्लक्षवर्तिकोद्यापनं एतेषामभावे अन्यदाशुभकालेकार्य्यंतिथ्यादिकीर्त्तनांते आत्मनः रजःसंप र्कादिविविधपातकसंपाद्यागम्यागमनकोटिनाशविविधैहिकपुत्रपौत्रादिसुखप्राप्तिपूर्वक विष्णुलोकप्राप्तिद्वारापर मेश्वरप्रीत्यर्थं आचरितंयल्लक्षवर्तिकाव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्यइतिसंकल्प्य आचार्य्यवरणांते सर्वतोभद्रेकलशंप्रतिष्ठाप्य तन्मध्येइदंविष्णुरितिमंत्रेणविष्णु तद्दक्षिणेसावित्रीसहितंब्रह्माणं ब्रह्मयज्ञा नमितिमंत्रेण तदुत्तरेगौरीसहितंशंभुं नमःशंभवायेतिमंत्रेणशंभुमिति क्रमेणदेवतात्रयंसंस्थाप्य पुरतो राजतंगरुडंसंस्थाप्य सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः विषापहरोनित्यमतःशांतिंप्रयच्छमे इतिमंत्रे णगरुडंपूजयेत् चंदनंपुष्पपूजांते अंगपूजा कालायनमः शिरःपूजयामि विष्णवेललाटंपू. वन्हयेनेत्रंपू.

रवयेकर्णौपू. तेजोरूपायस्तनौपू. महेश्वरायवक्षः पू- निरंजनायउदरं पू- फलाध्यक्षायनाभिं पू- विश्वरूपिणेकटिंपू-जगत्प्रभवेगुह्यंपू स्वप्रकाशायऊरूपू-स्वयंज्योतिषेजानुनीपू-चक्षुर्ग्रहायगुल्फौपू-जनाधिपायपादौपू-परब्रह्मणेसर्वांगंपू. ततोविशेषपूजोपहारादिसमर्प्यरात्रिंजागरणेनसमाप्य प्रात.सतिलैर्यवैः अन्नेनयसुपथेति वस्यांदशांशतोहोमतर्पणादिकुर्य्यात् तत्राग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानदेवंलक्ष्मीसाहितंविष्णुघृतान्वितपायसपलाशसमित्घृतद्रव्यैः सहस्रसंख्याकाहुतिभिस्तथाब्रह्माणंशंभुंचरुद्रंविष्णुब्रह्मयज्ञानेनमः शंभवायेतिमंत्रैः प्रत्येकमष्टोत्तरशतमष्टाविंशत्याहुतिभिर्गायत्र्याचघृतंहुनेत् ततःपीठस्थंदेवंसंपूज्यगोघृतलोडितसहस्रवर्त्तिकांकृत्वा तत्राचार्य्यंसंपूज्यपीठंत्रिंशत्पलघृतपूरितकांस्यपात्रचयथाशक्तिवा तथाच सुवर्णवर्त्तिसंयुक्तरौप्यंदीपकंकांस्यपात्रसहितंदद्यात् तत्रमंत्रः रौप्यपात्रस्थितंदीपंहेमवर्त्तिसमन्वितं कांस्यपात्रेणपिहितंददामिव्रतपूर्तये ततोधिकफलाप्तयेगांचदत्त्वा दशाधिकान्द्विजान्सदन्नेनभोजयेदिति एवमेवमाणिक्यलक्षवर्त्तिव्रतं पूर्वोक्तेनविधानेनकुर्य्यात्सर्वमतंद्रितइतिवामनपुराणोक्तंलक्षवर्त्तिव्रतं अत्रैवलक्षदीपदानमुक्तं भविष्यदीपानांलक्षकंयस्तुकुर्य्यात्परमधार्मिकः यावत्कालंप्रज्वलंतिदीपास्तोलिंगसन्निधौ ब्रह्मणोयुगसाहस्रंदातास्वर्गेमहीयते कौसुंभवर्त्तिसंयुक्तादीपादत्ताःशिवालये सुरलोकेचकैलासेतिष्ठतिशिवमूर्त्तयइति इदमुपलक्षणमिदंचसर्वदेवतानांदेवालयेष्वपिविधेयमिति अथवापुराणोक्तंतत्रलक्षवर्त्तिव्रतं ॥ नारदउवाच ॥ श्रुतानिदेवदेवशव्रतानिनियमास्तथा तीर्थानिचमहादेवयज्ञदानान्यनेकशः नास्तिमेनिश्चयोदेवभ्रामितोहंलयापुनः कथयस्वमहादेवयद्गोप्यंव्रतमुत्तमं ॥ शिवउवाच ॥ शृणुनारदयत्नेनयद्गोप्यंव्रतमुत्तमं लक्षवर्त्यामहापुण्यंसर्वोपद्रवनाशनं सुखसंपादिदचैवपुत्रराज्यसमृद्धिदं शंकरप्रीतिजननंशिवलोकप्रदंशिवं स्वभर्त्रासहसंवंधंमहा

स्नेहकरंपरं शृणुनारदयत्नेनगिरीशोयेनतुष्यति यत्कृत्वाकृतकृत्याःस्युर्देवासुरनरेश्वराः येवैज्ञात्वानकुर्वंति
तेज्ञेयादुःखभागिनः रुद्रवर्त्तिसमंनास्तिविपुलोकेषुचव्रतं अतएवसदाकार्य्यंव्रतमेतत्सुदुर्लभं मयाख्यातंव्रत
मिदंकिमन्यच्छ्रोतुमिच्छसि ॥ नारदउवाच ॥ पूजाविधिंचमेब्रूहिकिंविधानंवदस्वमे ॥ ईश्वरउवाच ॥
शृणुब्रह्मन्महाभागयत्त्वंश्रोतुमिहार्हसि कार्पासतंतुभिःकार्य्यादीपवर्त्तिःशिवप्रिया लक्षसंख्याचकर्त्तव्यागव्या
ज्येनपरिप्लुताः देयाशिवालयेनित्यंभक्तियुक्तेनचेतसा अस्याविधानं तिथ्यादिकीर्त्तनांते अखिलदुरितना
शाभीष्टसिद्धिपूर्वकशिवलोकप्राप्तिद्वारासांबशिवप्रीत्यर्थंयथाविध्याचरितरुद्रलक्षवर्त्ति व्रतस्यसांगफलाप्तये
तदुद्यापनंकरिष्ये इतिसंकल्प्य आचार्यवरणांते लिंगतोभद्रेताम्रकलशोपरिहैमंसांबरुद्रं कद्रुद्रायेतिमंत्रेण
प्रतिष्ठाप्यपुरतोराजतंवृषभंसंपूज्य पुराणश्रवणादिभिरात्रिमतिवाह्य प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् अ
त्रप्रधानंसांबरुद्रंरुद्रसूक्तेननमःशंभवायेतिमंत्रेणवा घृतपायसबिल्वद्रव्यैः सहस्राहुतिभिर्मंडलदेवताश्चैकैक
याज्याहुत्यायक्ष्येतत पीठंगांचदीपंचपूर्वोक्तविधिनाचार्यंसंपूज्यदत्त्वा एकादशाधिकान्विप्रान्सदन्नंभोजयेत्
अत्रचवर्त्तिदशांशःप्रातः होमंतद्दशांशदशांशतोद्विजभोजनंच होमदशांशतःसाधारणंतर्पणंकांस्यपात्रेदीपदानं
चपूर्ववत्कांस्यपात्रसहितंकार्य्यम् इतिरुद्रलक्षवर्त्तिव्रतोद्यापनं अथागमोक्तं विष्णुलक्षवर्त्तिव्रतोद्यापनं ति
थ्यादिकीर्तनांतेअखिलपापक्षयाशिवलोकप्राप्तिकामनया आचरितरुद्रलक्षवर्त्तिव्रतोद्यापनंकरिष्ये आचार्यंव
रणांतेपीठेसांबरुद्रं नमोभवायचेतिमंत्रेणसंस्थाप्यपूजयेत् प्रातःअग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधा
नेरुद्रं नमोभवायेतिमंत्रेणतिलाज्याहुतिभिः सहस्रंमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततः पीठंगांचदीपं
चदत्त्वा एकाधिकान्द्विजान्भोजयेत् होममंत्रश्चस्थापनोक्तएव ॥ इतिरुद्रलक्षवर्त्तिविधानम् ॥

अथदीपविधानं विष्णुधर्मोत्तरे पंचायतनदेवतानांस्वाराध्यदेवताग्रतः चातुर्मास्येथसंप्राप्तेशुभेमासिचभूमिप
प्रत्येकमेकदीपंचपीतंगव्यघृतेनच तिलतैलेनवाकुर्य्यात्कर्पूरेणसमन्वितं दीपप्रज्वाल्यविधिवत्सर्वकार्य्येसमं
भुवा एकसूत्र्याद्विसूत्र्यावाविलवर्ख्यामणिकान्विता एवंप्रकारेणलक्षदीपदानं देवाग्रेकृत्वा कार्त्तिक्यांउद्या
पनंकुर्य्यात् ॥ तद्यथा ॥ उँमद्यतिथ्यादिकीर्त्तनांते आत्मनोविविधपापक्षयपूर्वकाभीष्टसिद्धिद्वाराश्रीपरमेश्वर
प्रीत्यर्थंयथाविध्याचरितस्यदीपदानव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनं आचार्य्यवरणांते सर्वतोभद्रकलशेहैमं
पुज्यदेवंतत्तन्मंत्रेणसंस्थाप्ययथोपचारैःसंपूज्य रात्रौजागरणंविधायप्रातः अग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥
अत्रप्रधानं देवंघृताक्ततिलद्रव्येणसहस्राहुतिभिर्मंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततःपीठंस्वर्णवर्त्तिसंयुक्तरौ
प्यदीपंघृतपूरितकांस्यपात्रसहितंब्राह्मणायदत्वा गांचप्रतिपाद्यद्विजान्भोजयेदितिचातुर्मास्यादौविष्णुधर्मोक्तं
लक्षदीपव्रतोद्यापनं अथमार्गादिमासेचातुर्मास्यादौचफलत्यागव्रतोद्यापनं मत्स्यपुराणे नंदिकेश्वरउवाच फल
त्यागस्यमाहात्म्यंभवेत्तच्छृणुनारद यदक्षयंपरलोकेसर्वकामफलप्रदं मार्गशीर्षेशुभेमासितृतीयायांमुनिव्रतःद्वाद
श्यामथवाष्टम्यांचतुर्दश्यामथापिवा आरभेच्छुक्लपक्षस्यकृत्वाब्राह्मणवाचनं अन्येष्वपिचमासेषुपुण्येषुमुनिसत्तम
सदक्षिणंपायसेनशक्तितोभोजयेद्द्विजान् अष्टादशानांधान्यानामन्यत्रफलमूलकं वर्जयेदब्दमेकंतुविनैवौषध
कारणं सवृषंकांचनंरुद्रंधर्मराजंचकारयेत् कूष्मांडंमातुलुंगंचवार्ताकंपनसंतथा आम्रालातकपित्थानिकालिंगम
थवारुकं कर्दमंदाडिमंशक्त्याकलधौतानिषोडश मूलकामलकंजंबुतिंतिणीकरमंदकं कंकोलैलककुंडरिकरीर
कुटजंशमी उदुंबरंनारिकेलंद्राक्षाथबृहतीद्वयं रौप्यानिकारयेच्छक्त्याफलानीमानिषोडश ताम्रंतारफलंकुर्य्या
दगस्त्यंफलमेवच पिंडकंकाश्मर्यफलंतथासूरणकंदजं रक्तालुकाकलालंचचरकाश्मीरचार्वटं चित्रवल्लीफलं

तद्वत्कूटशालिपकाफलं ग्राम्यनिष्पावमधुकावटेंगुदपटोलकं ताम्राणिषोडशैतानिकारयेच्छक्तितोनरः उदकुं
भद्वयंकुर्य्याद्धान्योपरिसवाससं भक्ष्यपात्रद्वयोपेतंहेमरुद्रद्वयान्वितं धेन्वासहैवशांतायाविप्रायाथकुटुंबिने स
पत्नीकायसंपूज्यपुण्येन्हिविनिवेदयेत् यथाफलेषुसर्वेषुवसंत्यमरकोटकाः तथासर्वफलत्यागव्रताद्भक्तिः शिवे
स्तुमे यथाशिवश्चधर्मश्चसदानंदफलप्रदौ इत्युक्तफलदानेनममस्यातांवरप्रदौ यथाफलानांकामाःस्युःशिवभ
केषुसर्वदा तथानंतफलावाप्तिर्मेस्तुजन्मनिजन्मनि यथाभेदंनपश्यामिशिवविल्वर्कपद्मजान् तथाममास्तुवि
श्वात्माशंकरःशंकरःसदा इतिदत्वाचतत्सर्वमलंकृत्यचभूषणैः शक्तश्चेच्छयनंदद्यात्सर्वोपस्करसंयुतं अशक्त
श्चफलान्येवयथोक्तानिविधानतः तथोदकुंभसंयुक्तौशिवधर्मौचकांचनौ विप्रायदत्वाभुंजीतवाग्यतस्तैलवार्जितं
अन्यानपियथाशक्त्याभोजयेद्द्विजपुंगवान् एतद्भागवतानांतुसौरवैष्णवयोगिनां शंभोःसर्वफलत्यागोव्रतंवेद
विदोविदुः नारीभिश्चयथाशक्त्याकर्तव्यंव्रतमुत्तमं एतस्मान्नपरंकिंचिदिहलोकेपरत्रच व्रतमस्तिमुनिश्रेष्ठय
दनंतफलप्रदं सौवर्णरौप्यताम्रेषुयावंतःपरमाणवः भवंतिगण्यमानेषुमुनिसत्तमसर्वथा तावद्युगसहस्राणि
रुद्रलोकेमहीयते एतत्समस्तखलुपापहरंजनानामाजीवनायमनुजेषुचसर्वदास्यात् जन्मांतरेष्वपिनपुत्रवियो
गदुःखमाप्नोतिधामचपुरंदरदेवजुष्टं योवाशृणोतिपुरुषोल्पधनंपठेद्वादेवालयेषुभुवनेषुचधार्मिकामान् पापैर्वि
मुक्तवपुरेतिपुरंमुरारेरानंदकृत्पदमुपैतिमुनींद्रसोपि इतिमत्स्यपुराणोक्तंफलत्यागव्रतमाहात्म्यमष्टाविंशोध्यायः
अथपार्थिवलिंगोद्यापनं तत्रादौकामनाभेदेनपूजाप्रकारः सचफाल्गुनकृष्णचतुर्दश्यांशिवरात्रिव्रतंविधानेप्र
स्प्रपंचितस्तथापि सुबोधायात्रापिप्रपंच्यते सहस्रंचाथलक्षंवाकोटिंचाथविधानतः लिंगानांपूजयित्वाचस
र्वान्कामानवाप्नुयात् मृल्लिंगंपार्थिवंश्लक्ष्णंभुक्तिमुक्तिकरंवरं त्रिसंध्ययोर्चयेल्लिंगंकृत्वाबिल्वेनपार्थिवं एकादश

शतंचापिसर्वाभीष्टमवाप्नुयात् शुद्धदेशेसमीभूतांमृदमादाययत्नतः शुद्धेनवारिणाभ्युक्ष्यसंघटयापितथापुनः
लिंगानांसंख्ययाकुर्य्यात्पृथक्पिंडान्यथाक्रमं पलद्वयंचकर्त्तव्यंन्यूनंनैवसदैवहि अखंडंतुवरांलिंगांद्विखंडंस्था-
वरंस्मृतं लिंगमादौविधायाथपीठंवाकारयेत्ततः पङ्कजंवृक्षाकारंलिंगंकुर्य्यान्मनोहरं वर्त्तुलंचतुरस्रंवासम
पीठद्वयंशुभं दर्शनादेवलिंगस्यदेवगंधर्वकिन्नराः तत्क्षणंरचयित्वाशुमुंचंतिनात्रसंशयः साक्षतस्थापयेत्त
स्मान्निर्माणक्षणएवतत् ॥ अथपार्थिवलिंगस्यपूजाधारस्थानंस्कांदे पाषाणेदारुदेशेवादर्भास्तारितभूस्थले पु
ष्पप्राकारसंकीर्णेपाणौवावेदिकास्वपि सविल्वेताम्रपात्रेवास्थापयेत्पार्थिवंशिवं मृल्लिङ्गहस्तकोवापिसंक्षा
लितकरोयथा तत्रोपचाराः पंचाष्टषोडशप्रोक्ताद्वात्रिंशदुपकारकाः यस्तुपूजयतेभक्त्यालिंगंत्रिभुवनेश्वरं स
स्वर्गराज्यमोक्षाणांक्षिप्रभवतिभाजनं आदौगणेशंकृत्वातुलिंगंकुर्य्यात्ततःपरं पश्चाच्छक्तिंततःस्कंदंततोलिंगा
न्यथापिच पार्थिवपूजायांनाममंत्राः पार्थिवचिंतामणौ हरोमहेश्वरःशंभुःशूलपाणिःपिनाकधृक् शिवःपशुपति
श्चैवमहादेवइतिक्रमात् मृदानयनसंघट्टप्रतिष्ठाह्वानमेवच स्नापनंपूजनंचैवक्षमस्वातिविसर्जनं ॥ अस्याःकाम
नापरत्वेन एकादशप्रकारः पार्थिवचिंतामणौ ऋणमोचनकामश्चएकादशदिनपर्यंतंप्रत्यहमेकलिंगंकृत्वा
वृहतीपुष्पं घृताक्तंनैवेद्यं अनृणाअस्मिन्नितिऋचं १०८ अष्टोत्तरशतंजपेत् ऋणान्मुक्तोभवतीत्येकः प्र-
कारः १ पुत्रकामस्तुद्विशतदिनपर्यंतंप्रत्यहं लिंगद्वयंकृत्वा पंचामृताभिषेकः मल्लिकापुष्पं गुडोदनंनैवेद्यं
कांडात्कांडात्प्ररोहंति इत्यष्टोत्तरशतं १०८ ततऔपासनेनप्रतन्नोषि इत्यनेनचाष्टोत्तरशतदूर्वार्पणेनपुत्रोभ
वति इतिद्वितीयःप्रकारः २ कन्याकामस्तुत्रिंशद्दिनपर्यंतंप्रत्यहंलिंगत्रयंकृत्वा करवीरपुष्पशर्करानैवेद्य
याबीरवीकन्येतिमंत्रमष्टोत्तरशतं १०८ जपेत् पाशमेनेतिदूर्वार्पणेनकन्याभवति इतितृतीयप्रः ३ द्रव्यका

मस्तु चतुःशतादिनपर्यंतप्रत्यहंचत्वारिलिंगानिपूजयेत् किंशुकपुष्पं कदलीफलंनैवेद्यं श्रीसूक्तंप्रत्यहंशत वारंजपेत् द्रव्यागमोभवति इतिचतुर्थप्र० ४ विवाहकामस्तुपंचशतादिनानिप्रत्यहपंचलिंगानिकृत्वापूजयेत् चंपकपुष्पं पायसनैवेद्यं गौरीमिमायेतिऋचमष्टोत्तरशतं १०८ जपेत् विवाहोभवति इतिपंचमप्र० कलहनिवृत्तिकामस्तुत्रिंशत्दिनपर्यंतं षट्लिंगानिप्रत्यहंपूजयेत् वकुलपुष्पं मधुयुतंनैवेद्यं मुंचामीतिसूक्तंप्रत्यहंदशधाजपेत् कलहान्मुक्तोभवति इतिषष्ठःप्र० ६ तीर्थयात्राकामस्तु पंचशतादिनपर्यंतं सप्तलिंगानि कृत्वा शतपत्रपुष्पं दध्योदनंनैवेद्यंरुद्रैकादशनींजपेत् तीर्थयात्राभवति इतिसप्तमप्र० ७ विद्याकामस्तु विंशद्दिनपर्यंतंप्रत्यहमष्टालिंगानिकृत्वा दध्योदनंनैवेद्यं यछंदसामृषभोविश्वरूपंइत्यनुवाकंदशधाजपेत् विद्यावान्भवेत्.इत्यष्टमप्र. ८ अपमृत्युहरणकामस्तुएकशतदिनपर्यंतनवलिंगानिकृत्वा धत्तूरपुष्पं दध्योदननैवेद्यं त्र्यंबकमितिमंत्रमाद्यंतप्रणवसहितमष्टोत्तरसहस्रंजपेत् अपमृत्युनाशनंभवति ९ दूरगतसुहृदागमकामस्तुप्रत्यहंवर्षमेकं दशलिंगानिकृत्वा कांचनपुष्पं अपूपनैवेद्यं योरुद्रोअग्नाविति अष्टोत्तरशतंजपेत् दूरगतस्यागमनंभवति इतिदशम प्र १० सर्वदारिद्र्यनिवृत्तिकामस्तु षण्मासपर्यंतप्रत्यहमेकादशलिंगानिकृत्वा रक्तांजद्रोणपुष्पंसर्वान्ननैवेद्यंगोघृताक्तं नमोहिरण्यबाहवइतिमंत्रमष्टोत्तरशतंजपेत्दारिद्र्यान्मुक्तोभवति इत्येकादशप्रकारः ११ कारागृहमोचनेन्योप्यत्रविशेषः एकविंशतिदिनपर्यंतमेकोत्तरलिंगानिकृत्वा तावत्प्रत्यहंरुद्रैकादशन्याभिषेकः पलाशपुष्पं दधिमधुघृतमिश्रितमन्ननैवेद्यं अष्टसहस्रंरुद्रंजपेत् निगडान्मुक्तोभवति अथलिंगसंख्याफलभेदमाह एकंपापंहरंलिंगंद्विलिंगंश्रीकरं तथा त्रिलिंगंसर्वकामाप्तौकारणंपरमंमतमित्यादि विद्याकामेसहस्रंचस्त्रीकामेपंचशतं पुत्रकामेपंचदशायुतानि कन्याकामेअयुतत्रयं भूकामेसहस्रंसुरूपकामेत्रि

सहस्त्र राज्यकामेलक्षं मारणेसप्तसहस्त्रं उच्चाटेस्तंभनेत्रिसहस्त्रं जारणेद्विसहस्त्रं कारागृहमोचनेश्रयुतं निगड
मोचनेसार्द्धमयुतं डाकिन्यादिभयेपंचशतंराजभयेश्रयुतं दारिद्र्यमोचनेपंचसहस्त्रं सर्वकामेसप्तायुतानि मोक्ष
कामेलक्षं परमसायुज्यकामेकोटिलिंगानि श्रथकामनाभेदेनालिंगभेदानाह सौवर्णलिंगंसौभाग्यकरं राजतं
यशस्करं ताम्रमयंतुष्टिकरं पित्तलमयंपुष्टिकर कांस्यमयं कीर्तिकरं लोहमयंशत्रुमरणकरं सीसमयमायुष्करं
पाषाणमयंपुण्यकरं मुक्तामयश्रेयस्करं काश्मीरंश्रीकरं मारकतं शांतिकरं स्फटिकंबहुस्वामित्वप्रदं इंद्रनी
लमयंपोषणकरं पारदंसर्वसिद्धिकरं चंदनजंज्वरनाशकरं कर्पूरजंशांतिकरं कस्तूरीजसौगंध्यकरं गोरो
चनजंरूपकरं कर्पूरागुरुकस्तूरीकंकोलंयक्षकर्दमः यक्षकर्दमजंप्रीतिकरं गोमयजंसर्वरोगहरं भस्मोद्भवंमोक्षदं
हारिद्रंप्रीतिवर्द्धनं नवनीतजंकीर्त्तिकरं दधिजंलक्ष्मीकरं दुग्धजंसुखकरं शर्करोत्थंपुत्रकरं लवणोत्थंसर्वलोक
वशकरं कृष्णतिलोद्भवंलोकप्रदं उक्तह्येतेषुलिंगेषुपार्थिवंक्षिप्रसिद्धिदं कृतेमणिमयंलिंगंत्रेतायांहेमसंभवम्
द्वापरेपारदंश्रेष्ठंपार्थिवंतुकलौयुगे इतिलिंगपूजानिर्णयः ॥ श्रथपूजारंभकालः शैवागमे कार्त्तिक
मार्गशीर्षेवामाघेवैशाखसंज्ञके श्रावणेबहुलेपक्षेव्रतस्यारंभणंभवेत् स्थलविशेषमाह पुण्येपुण्यंनदीतीरेपर्वताग्रे
शिवालये श्रीवृक्षाश्वत्थतुलसीधात्रीष्वायतनेचवै गोष्ठगृहेवादेवाग्नि सूर्यगोविप्रसन्निधौ शिवपूजाविधातव्यापु
र्वपूर्वमहाफलं श्रथसमाप्तिकालःकार्त्तिकादिशुभमासिलिंगानांचसमापनं चतुर्दशीदर्शयुक्ताश्रष्टमीनवमीयुता
समाप्तिस्तत्रकर्त्तव्यारौद्रयुक्तेगुनर्वसौ अन्येष्वपिचकालेषुशुभेषुचसमापनम् ॥ श्रथपार्थिवलिंगोद्यापन रुद्र
यामले श्रथातः संप्रवक्ष्यामि प्रतिष्ठांलैंगिकस्यच प्रतिष्ठापदमुद्यापनपरं येनयस्यविधानेनव्रतंसंपूर्णता
मियात् सहस्त्रंवाथलक्षंवापूजयित्वायथाविधि कोटिंवाथविधानेन कामनावाप्रपूर्य्यते समासेतुव्रते

राजन्विनिर्मायमहेश्वरं स्थापयित्वातुकलशे संपूज्या र्घ्यादिभिः क्रमात् गंधैर्माल्यैस्तथाधूपैर्नैवेद्यै
र्विविधैस्तथा हिरण्यगावोवासांसिशिवायाविनिवेदयेत् दंडवत्प्रणतोभूत्वास्तुत्वाचैवाविशेषतः एकाग्रमा
नसोभूत्वाततोमंत्रमुदीरयेत् अंगहीनंमंत्रहीनंक्रियाहीनंमहेश्वर पूजितोसिमयादेवक्षमस्वपरमेश्वर यज्ञो
पर्योपहृतैः पुष्पै रशस्तैर्भावदूषितैः केशकीटापविद्धैश्चपूजितोसिमयाप्रभो मंत्रेणाक्षरहीनेनक्रियाहीने
नवाप्रभो मनोवाक्कायदुष्टेनपूजितोसित्रिलोचन यच्चपहृतपात्रेणकृतमर्घ्यादिकंमया तामसेनस्वभावेनत
त्क्षमस्वममप्रभो मंत्रेणाक्षरहीनेनपुष्पेणाविकलेनवा पूजितोसिमहादेवतत्सर्वंममक्षम्यतां व्रतंसंपूर्णतांयातु
फलंचाक्षयमस्तुमे एवंस्तुत्वानमस्कृत्यविसृज्यचमहेश्वरं नैवेद्यादिचतत्सर्वंभस्मांगायनिवेदयेत् ब्राह्म
णान्भोजयित्वातुदद्यात्तेभ्यश्चदक्षिणां यथाशक्त्याधेनुवस्त्रहिरण्यंव्रतदक्षिणां अथान्यप्रकारोभविष्ये नार
दउवाच ॥ कथमुद्यापनंचास्यकिंप्रकारंमहाफलं कथमाशुमहादेवलोकानामुपकारकम् ॥ ईश्वरउवाच ॥ यः
शिवंसमुपास्यैवलिंगप्राप्तेमनोरथः तत्प्रमाणंतुसौवर्णंयथाशक्त्याथवासुधीः रौप्यंताम्रमथापिस्यादष्टम्यांच
महाफलं चतुर्दश्यांचभद्रायांसोमेवाथप्रयोजयेत् उद्यापयेदित्ययंः मंडलेलिंगतोभद्रंकलशंतत्रविन्यसेत्
उपोष्यप्रथमेचाह्निसंपूज्यपरमेश्वरं जातवाद्यैर्नानीपैजागरंतत्रकारयेत् स्तोत्रैश्चविविधैः सूक्तैः पूज
येत्परमेश्वरं चतुर्दशीदशयुक्ताचाष्टमीनवमीयुता पारणंतत्रकर्त्तव्यंरौद्रयुक्तेपुनर्वसौ पंचकंदशकंद्वाभ्या
मधिकांविंशतिः परा चत्वारिंशच्चतुर्भिश्चब्राह्मणान्भोजयेत्ततः आचार्यंप्रथमंपूज्यब्राह्मणांश्चततः परं
गणेशंचगिरीशंचपूजयेच्चविधानतः वस्त्रेणदक्षिणाभिश्चपूजयेच्छिवतत्परान् मृत्युंजयेनमंत्रेणअग्नौहुत्वाथपायसं
हुत्वाथशक्तितइत्यपिक्वचित्पाठः अस्मिन्पाठेघृतमेवद्रव्यं रुद्रेणाप्यथवाहुत्वानमोमंत्रेणवापुनः नमो

मंत्रेण नमोभवायेतिमंत्रेण रुद्रेणयदाहोमस्तदाप्रतिमंत्रेण यदामृत्युंजयमंत्रस्तदाकृतलिंगपूजादशांशेनहो
मः तद्दशांशेनतर्पणं तद्दशांशेनमार्जनं लिंगंतत्पूजयायुक्तमाचार्य्यायनिवेदयेत् तत्रमंत्रः- शिवशक्त्या-
त्मकंयस्माज्जगदेतच्चराचरं तस्मादेतेनमेसर्वंकरोतुभगवान् शिवः कैलासवासीगौरीशोभगवान्भगने
त्रहा चराचरात्मकोलिंगरूपोदिशतुमेशिवं ततश्चदक्षिणांदत्वानमस्कुर्य्यात्पुनः पुनः सोद्यापनंव्रतंकृत्वाप्राप्नु
यात्परमपदं शिवलोकंसमासाद्यनिवसेत्तत्रवैध्रुवं इतिपार्थिवलिंगोद्यापनं अथोद्यापनविधानप्रयोगः त
त्रादौपुजाप्रयोगः उोमद्येत्यादितिथ्यादि॰तिंनांतेअमुककामनामुद्दिश्यकृतानांपार्थिवलिंगानांयथासंख्यपूजा
याः संपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये इतिसंकल्प्य पुण्याहवाचननांदीश्राद्धादिविधायआचार्यंवृत्वा ततं
आचार्य्यः यदत्रसंस्थितंभूतमित्यादिमंत्रपाठांतेभूतानुत्सार्य्य द्वारपुजांकुर्य्यात् चतुर्द्वारोपशोभितमंडपैशा
नभागेस्थितसदाशिवमंडपायनमः प्राग्द्वारपार्श्वयोः नंदिनेनमः महाकालायनमः चिच्छत्त्यैनमः वास्तुपु
रुषायनमः. दक्षिणद्वारपार्श्वयोः गणेशायनमः वृषभायनमः चिच्छत्त्यैनमःवास्तुपुरुषा- पश्चिमद्वारपार्श्वयोः
भृंगिरिटये.स्कंदाय- चिच्छत्त्यै. उत्तरद्वारपार्श्वयोः दंडिने चंडीश्वराय. चिच्छत्त्यै- द्वारश्रियै. वास्तुपु
रुपाय. ततः पश्चिमद्वारेप्रविश्य वेदीपश्चिमतउपविश्य - लिंगतोभद्रे ब्रह्मादिदेवतास्थापनपूर्वकं - कलशं
प्रतिष्ठाप्य तदुपरि देवंस्थापयित्वा तत्रादौन्यासान्कुर्य्यात् ललाटेशिवायनमःकंठेरुद्राय.नाभौईशानाय.
जान्वोःशंकराय.पादयोः सदाशिवायनमःअथयजुर्वेदोक्तान्महान्यासान्कुर्य्यात् यातेरुद्रशिवातनूरघोरापापका
शिनी तयानस्तन्वाशंतमयागिरिशंताभिचाकशीहि शिखायां अस्मिन्महत्यर्णवेअंतरिक्षेभवाअधितपांसुसहस्र
योजनेवधन्वानितन्मसि शिरसि २ सहस्राणिसहस्रशोवाह्वोस्तवहेतयः तासामीशानोभगवः पराचीना

अस्तुरुद्ररूपेभ्यः मध्यमयोः ३ तत्पुरुषायविद्महे महादेवायधीमहि तन्नोरुद्रः प्रचोदयात् अनामिकयोः
४ ईशानःसर्वविद्यानामीश्वरः सर्वभूतानाब्रह्माधिपतिर्ब्रह्मणोधिपतिः शिवोमेअस्तुसदाशिवओम् कनिष्ठिक
योः ५ नमोवःकिरिकेभ्योदेवानांहृदयेभ्योनमोविचिन्वतेभ्यो नमोविक्षन्वत्केभ्यो नमआनिर्हतेभ्यः हृदये १५
नमोगणेभ्योगणपतिभ्यश्चवोनमः नमोव्रातेभ्योव्रातपतिभ्यश्चवोनमः नमोगृत्सेभ्योगृत्सपतिभ्य
श्चवोनमः नमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमः ॥ १६ ॥ विकिरिद्रविलोहितनमस्तेअस्तुभगवः या
स्तेसहस्रंहेतयोन्निवपंनुताः उदरे ॥ १७ ॥ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमः नमोवृक्षेभ्योह
रिकेशेभ्यः पशूनांपतयेनमः नमः शष्पिंजरायत्विषीमतेपथीनांपतयेनमः नमोहरिकेशायोपवीतिनेवृक्षा
णांपतयेनमः पार्श्वयोः ॥ १८ ॥ नमःशंभवायचमयोभवायच नमःशंकरायचमयस्करायचनमः शिवा
यचशिवतरायच दक्षिणकुक्षौ ॥ १९ ॥ द्रापेअंधसस्पतेदरिद्रनीललोहितः आसांप्रजानामेषांपशूनांमा
भेर्मारोङ्मोचनःकिंचनाममत् वामकुक्षौ ॥ २० ॥ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत्
सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम नाभौ ॥ २१ ॥ मीढुष्टमशिवतमाशिवोनः सुमनाभव
परमेवृक्षआयुधंनिधायकृत्तिंवसान आचरपिनाकंबिभ्रदागहि कट्याम् ॥ २२ ॥ शिवोनामासिस्वधितिस्ते
पिता नमस्तेअस्तुमामाहिंसीःनिवर्त्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्य्याय लिंगे
॥ २३ ॥ यभूतानामधिपतयोविशिखासः कपर्दिनः तेषांसहस्रयोजनेवधन्वानितन्मसि गुह्ये ॥ २४ ॥
इमांरुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमती यथानःशमसद्द्विपदेचतुष्पदेविश्वपुष्टंग्रामेअस्मिन्ननातुरम्
पुनर्गुह्ये ॥ २५ ॥ इषेत्वोर्जेत्वावायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणः आप्यायध्वमघ्न्याइंद्राय

मुखाकांधे ललाटे ३ हंसः शुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसतनृषद्वरसदृतसद्व्योमसदब्जागो
जाऋतजाअद्रिजाऋतंवृहत् भ्रुवोमध्ये ४ त्र्यंवकंयजामहेसुगंधिंपुष्टिवर्द्धनं ऊर्वारुकमिववंधनान्मृत्योर्मुक्षीय
मामृतात् त्र्यंवकंयजामहेसुगंधिंपतिवेदनं ऊर्वारुकमिववंधनादितोमुक्षीयमामुतः इतिनेत्रयोः ५ अग्नि
र्ज्योतिर्ज्योतिरग्निःस्वाहा सूर्य्योज्योतिर्ज्योतिःसूर्य्यःस्वाहा अग्निर्वर्चोज्योतिर्वर्चःस्वाहा सूर्य्योवर्चोज्योतिर्वर्चःस्वा
हा ज्योतिःसूर्य्यःसूर्य्योज्योतिःस्वाहा तृतीयनेत्रे ६ नमःश्रुत्यायचपथ्यायच नमःकट्यायचनीप्यायच नमःकु
ल्यायचसरस्यायच नमोनादेयायचवैशंतायच कर्णयोः ७ मानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरि
षः मानोवीरान्रुद्रभामिनोवधीर्हविष्मंतःसदामित्त्वाहवामहे नासिकयोः ८ अवतत्यधनुष्ट्वꣳसहस्राक्षश
तेषुधे निशीर्य्यशल्यानांमुखाः शिवोनाःसुमनाभव मुखे ९ नमोवंचतेपरिवंचतेस्तायूनांपतयेनमः नमोनि
निषंगिणइषुधिमतेतस्कराणांपतयेनमः नमःसृकायिभ्योजिघाꣳसद्भ्योमुष्णतांपतये नमःनमःसिमद्भ्योनक्तंचरद्भ्यो
विकृंतानांपतयेनमः ग्रीवायां ॥ १० ॥ नीलग्रीवाःशितिकंठादिवꣳरुद्राउपाश्रिताः तेषाꣳसहस्रयोजनेवधन्वा
नितन्मसि कंठदेशे ॥ ११ ॥ नमस्तआयुधायानाततायधृष्णवे उभाभ्यामुततेनमोवाहुभ्यांतवधन्वने
वाव्होः १२ यातेहेतिर्मीढुष्टुमहस्तेवभूवतेधनुः तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुजउपवाव्होः १३ येतीर्थानि
प्रचरंतिसृकाहस्तानिषंगिणःतेषाꣳसहस्रयोजनेवधन्वानितन्मसि हस्तयोः १४ सद्योजातंप्रपद्यामिसद्योजाता
यवैनमः भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः अंगुष्ठयोः ॥ १ ॥ वामदेवायनमःज्येष्ठायनमः
श्रेष्ठायनमःरुद्रायनमः कालायनमः कलविकरणाय वलाय विलविकरणाय वलप्रमथनाय. म
नोन्मनाय. सर्वभूतदमनायनमःतर्जन्योः अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः सर्वेभ्यः सर्वसर्वेभ्योनमस्ते

अस्तुरुद्ररूपेभ्यः मध्यमयोः ३ तत्पुरुषायविद्महे महादेवायधीमहि तन्नोरुद्रः प्रचोदयात् अनामिकयोः
४ ईशानःसर्वविद्यानामीश्वरः सर्वभूतानाब्रह्माधिपतिर्ब्रह्मणोधिपतिः शिवोमेअस्तुसदाशिवओम् कनिष्ठिक
योः ५ नमोवःकिरिकेभ्योदेवानांहृदयेभ्योनमोविचिन्वत्केभ्यो नमोविक्षन्वत्केभ्यो नमआनिर्हतेभ्य. हृदये १५
नमोगणेभ्योगणपतिभ्यश्चवोनमः नमोव्रातेभ्योव्रातपतिभ्यश्चवोनम नमोगृत्सेभ्योगृत्सपतिभ्य
श्चवोनम. नमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमः ॥ १६ ॥ विकिरिद्रविलोहितनमस्तेअस्तुभगवः या
स्तेसहस्रंहेतयोन्नवपंनुताः उदरे ॥ १७ ॥ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमः नमोवृक्षेभ्योह
रिकेशेभ्यः पशूनांपतयेनमः नमः शष्पिंजरायत्विषीमतेपथीनांपतयेनमः नमोहरिकेशायोपवीतिनेपुष्टा
णांपतयेनमः पार्श्वयोः ॥ १८ ॥ नमःशंभवायचमयोभवायच नमःशंकरायचमयस्करायचनमः शिवा
यचशिवतरायच दक्षिणकुक्षौ ॥ १९ ॥ द्रापेअंधसस्पतेदरिद्रनीललोहितः आसांप्रजानामेषांपशूनांमा
भेर्मारोङ्मोचनाकिंचनाममत् वामकुक्षौ ॥ २० ॥ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत्
सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम नाभौ ॥ २१ ॥ मीढुष्टमशिवतमशिवोनः सुमनाभव
परमेवृक्षआयुधंनिधायकृत्तिंवसान आचरपिनाकंबिभ्रदागहि कट्याम् ॥ २२ ॥ शिवोनामासिस्वधितिस्ते
पिता नमस्तेअस्तुमामाहिंसीः निवर्त्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्याय लिंगे
॥ २३ ॥ यभूतानामधिपतयोविशिखासः कपर्दिनः तेषांसहस्रयोजनेवधन्वानितन्मसि गुह्ये ॥ २४ ॥
इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः यथानःशमसाद्द्विपदेचतुष्पदेविश्वपुष्टंग्रामेअस्मिन्ननातुरम्
पुनर्गुह्ये ॥ २५ ॥ इषेत्वोर्जेत्वावायवस्थदेवोवःसवितापार्पयतुश्रेष्ठतमायकर्मणे आप्यायध्वमघ्न्याइंद्राय

भागंप्रजावतीरनमीवा अयक्ष्मावस्तेनईशतमाघशंसोध्रुवाअस्मिन्गोपतौस्यातवह्वीर्यजमानस्यपशून्पाहि २६
येन्नपुविविध्यंतिपात्रेपुपिवतोजनान् तेषांसहस्रयोजनेवधन्वानितन्मसिइतिद्वयंवृषणयोः २७ जातवेतसेसुनवा
मसोममरातियतोनिदहातिवेदः सनः पर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः गुदं ॥ २८ ॥
मानोमहांतमुतमानो अर्भकंमानउक्षंतमुतमानउक्षितं मानोवधीःपितरं मोतमातरं मानःप्रियास्तन्वो
रुद्ररीरिषः ऊर्वोः ॥ २९ ॥ एषतेरुद्रभागःसहस्वस्त्रांविकया तंजुषस्वस्वाहेषतेरुद्रभागआखुस्तेपशुः जानुनोः
॥ ३० ॥ नमोज्येष्ठायचकनिष्ठायच नमःपूर्वजायचापरजायचनमोमध्यमायचापगल्भायच नमोजघन्यायचबु
ध्न्यायच जंघयोः ३१ नमोह्रस्वायचवामनायच नमोवृहतेचवर्षीयसेचनमोवृद्धायचसवृद्धतेच नमोग्र्यायचप्रथ
मायच गुल्फयोः ३२ येपथांपाथिरक्षयऐलवृदाआयुर्युधः तेषांसहस्रयोजनेवधन्वानितन्मसि पादयोः ३३ अ
ध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् अहींश्चसर्वान्जंभयत्सर्वाश्चयातुधान्योधराचीःपरासुव कवचं ३४ नमोवि
ल्मिनेचकवचिनेच नमोवर्मिणेचवरूथिनेच नमःश्रुतायचश्रुतसेनायच नमोदुंदुभ्यायचाहनन्यायच उपकवचं
॥ ३५ ॥ विज्यंधनुःकपर्दिनोविशल्योवाणवांउत अनेशन्नस्ययाइषवआभुरस्यनिषंगधिः धनुः ॥ ३६ ॥
यत्रवाणाःसपतंतिकुमाराविशिखाइव तन्नइंद्रोवृहस्पतिरदितिः शर्मयच्छतुविश्वाहाशर्मयच्छतु वाणः ॥ ३७
विकिरिद्रविलोहितनमस्तेअस्तुभगवः यास्तेसहस्रंहेतयोस्मिन्निवपंतुताः तासामीशानोभगवःपराचीनामुखा
कृधि खड्गः ॥ ३८ ॥ नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषे अथोयेअस्यसत्वानोहंतेभ्योकरंनमः नेत्रत्र
यायवौपट् ॥ ३९ ॥ प्रमुंचधन्वनस्त्वमुभयोरात्न्योर्ज्याम् याश्चतेहस्तइषवः पराताभगवोवप इत्यस्त्रं ॥ ४० ॥
यएतावंतश्चभूयांसश्चदिशोरुद्रावितस्थिरे तेषांसहस्रयोजनेवधन्वानितन्मसि दिग्वंधनं ॥ ४१ ॥ एवं

न्यासंविधंकृत्वाशिवंहामातभावयेत् ओंनमोभगवतेरुद्रायइतिदशाक्षरमूलमंत्रेणवर्णन्यासः ओंशिरसि नंल
लाटे मंनासिकायां भंमुखे गंकंठे वंहृदि तेदक्षहस्ते रुवामहस्ते द्रानाभौ य.जंघयोः सद्यो
जातायपादयोः वामदेवायऊर्वोः अघोरायहृदि तत्पुरुषायमुखे ईशानायशिरसि अथसंपुटीकरणं ॥
त्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳ शूरमिंद्रमाह्वयामिशक्रंपुरुहूतमिंद्रं इतिपूर्वे तन्नोअग्नेवरुणस्यविद्वान्
देवस्यहेडो अवयासिसीष्ठाः यजिष्ठोवन्हितमःशोशुचानो विश्वद्वेषाꣳसिप्रमुमुग्ध्यस्मत इत्याग्नेये यमा
यसोमꣳसुनतयमायजुहुताहविः यमंयमज्ञोगच्छत्यग्निदूतोअरंकृतः इतियाम्ये असुन्वंतमयजमानमिच्छ
स्तेनसेत्यांतस्करस्यान्वेहिअन्यमस्मदित्यसात् इतिनैर्ऋते तत्वायामिब्रह्मणावंदमानस्तदाशास्ते यजमा
नोहविर्भिः अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषि इतिपश्चिमे आनोनियुद्भिः शतनीभिर
ध्वरंसहस्रणीभिरुपयाहियज्ञं वायोअस्मिन्हविषिमादयस्व यूयं पातःस्वस्तिभिः सदानः इतिवायव्ये
वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावंतःसचेमहि इत्युत्तरे तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्मवसेहू
महेवयं पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये इतीशाने अस्मेरुद्राःपर्वतामेहनासोवृत्रहत्ये भरहू
तौसजोषायसꣳसतेस्तुवतेधाविपज्ञाइंद्रज्येष्ठाअस्माअवंतुदेवाः इत्यूर्ध्वे स्योनापृथिवीनोभवान्रक्षरानिवेशनी
यच्छानःशर्मसप्रथा इत्यधस्तात् इतिसर्वतः कृतांजलिः पठेत् संपुटीकरणन्यास इतिन्यासान्विधाय ध्या
येन्नित्यमित्यादिपठन्देवंध्यायेत् ततअस्मिन्नूर्जमित्यनुवाकेनपयोधारयावासुवर्णलिंगस्याग्न्युत्तारणंकुर्यात् अ
त्रलिंगप्रमाणंतुयावत्प्रत्यहांक्रियते तावन्मानमंद्ववातद्र्ध्वंवासौवर्णंराजतंवाकुर्यात् ततःप्राणप्रतिष्ठां कुर्यात्
ओंआंह्रींक्रौंयंरंलंवंशंषंसंहंसःसांबशिवस्यप्राणाइहप्राणास्संतिष्ठतुपुनः आंह्रींक्रौंमित्यादिसांबशिवस्यजीवइह

नमोबभ्लुशायव्याधिनेऽन्नानांपतयेनमः ॥ इतिनैवेद्यम् ॥ नम.पार्य्यायचावार्य्यायच ॥ इतितांबूलं ॥
नमोदुंदुभ्यायचाहनन्यायच ॥ इतिदक्षिणा ॥ नमोहिरण्यायचप्रपथ्यायच नमोमीढुष्टमायचेषुमतेच नमोह्र
स्वायचवामनायच नमोवृहतेचवर्षीयसेच इतिपुष्पांजल्यष्टकंदद्यात् एषतेरुद्रभागःसहस्वस्त्रांविकया तंजु
षस्वस्वाहैषतेरुद्रभागआखुस्तेपशुः इतिप्रदक्षिणा नमोरुद्रेभ्य इतिनमस्कारः तत.स्तोत्रपठेत् ओंनम ओं
काररूपायनमोक्षरवपुर्धृते नमोनादात्मनेतुभ्यंनमोविंदुकलात्मने आलिंगालिंगरूपायरूपातीतायतेनमः त्वमा
तासर्वलोकानांत्वमेवजगतःपिता त्वंभ्रातात्वंसुहृन्मित्रंत्वंपितात्वंपितामहः नमस्तेभगवान्रुद्रभास्करामिततेज
सेनमोभवायरुद्रायउमयासहितायच शर्वायक्षितिरूपायसदासुरभिणेनमः पशूनांपतयेचैवपावकामिततेजसे
सोमायव्योमरूपायशब्दरूपायतेनमः महादेवायसोमायअमृतायनमोनमः उग्रायजमानायनमस्तेकर्मयो
गिने पार्थिवानांचलिंगानांयन्मयापूजनंकृतं तेनमेभगवन्रुद्रोवांछितार्थंप्रच्छतु इतिस्तुत्वाअंगहीनक्रिया
हीनंविधिहीनंमहेश्वर पूजितोसिमहादेवक्षमस्वजगतःपते इतिक्षमाप्य पुराणपठनश्रवणगीतवाद्यादिभि
र्जागरणं प्रातर्नित्यविधिंक्षमाप्य देवंसपूज्य अग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानं सोमशिवं कृत
लिंगदशांशेन पायसमधुशर्कराघृततिलाक्षतविल्वपत्रशतपत्रद्रव्याष्टकेनकेवलपायसेनवा नमःशंभवायमयो
भवायचेतिमंत्रेणपंचाक्षरेणवायक्ष्ये तथागौरीगणेशंषण्मुखंचतैरेवद्रव्यैः प्रतिद्रव्यदशदशाहुतिभिः इष्टभलो
केशान् ब्रह्मादिदेवताश्चैकैकमेकादशाहुतिभिर्द्वारदेवताश्चैकैकयाज्याहुत्यायक्ष्ये शेषेणस्विष्टकृतमित्यादिहो
मंसमाप्य पूर्णाहुत्यादिकर्मशेषंसमापयेत् ततसत्कात्विक्होमदशांशेनतर्पणं तद्दशांशेनमार्जनंकृत्वा विशे
षाकारेणपीठस्थं शिवंसंपूज्य आचार्यंचसंपूज्य सर्वंपीठमाचार्यायदद्यात् तत्रमंत्रः पीठगृहाणभूदेवसर्वशस्या

पुनः आंह्रींक्रौमित्यादि सांबशिवस्यसर्वेंद्रियाणिवाक्पाणिपादपायूपस्थश्रोत्रत्वक्चक्षुर्जिव्हाघ्राणादीनिइहागत्य यथासुखंचिरंतिष्ठतु एवंप्राणप्रतिष्ठांविधाय पंचामृतेनाभिषेककृत्वा नमःशंभवायचमयोभवायच नमःशंकरायच मयस्करायच नमःशिवायचशिवतरायच पंचाक्षरेणवाकलशोपरिसंस्थाप्यतद्वामभागे गौरीमिमायसलिलानित क्षत्येकपदीद्विपदीसाचतुष्पदीअष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॐनमोभगवत्यैउमादेव्यैशिवाप्रियायैनमइत्यागममंत्रेणवाहैंमींगौरींतद्वामभागेप्रतिष्ठाप्यदक्षिणभागेतु तत्पुरुषायविद्महेमहासेनायधीमहि. तन्नःषण्मुखःप्रचोदयात् इतिमंत्रेणस्कंदंप्रतिष्ठाप्य पुरतःराजतंवृषभंऋषभमितिमंत्रेणसंस्थाप्यपरितइंद्रादीन् लोकेशान्संस्थाप्यपूजयेत् ॥ अथध्यानं ॥ मंगलायतनंदेवंभवकामंमनोहरं ध्यायेत्कल्पतरोर्मूलेसमासीनंसहो मया तत सहस्राणिसहस्रशोबाह्वोस्तवहेतयः तासामीशानोभगवःपराचीनामुखाकृधि ॥ इतिध्यात्वा--॥ ॐनमोभगवतेरुद्रायेति लिंगोपरिअक्षतान्क्षिपेत् अथपूजांकुर्य्यात् नमस्ताराय इत्यासनं नमःशंभवायचमयोभवायच इतिपाद्यं नमःशंकरायचमयस्करायच इत्यर्घ्यं नमःशिवायचशिवतरायच इत्याचमनीयं नमस्तीर्थ्यायचकुल्यायचेति समस्तेनरुद्रसूक्तेनचस्नानं भवंदेवतर्पयामि १ शर्वंदेवत. २ रुद्रंदेवत. ३ पशुपतिंदेवंत. ४ उग्रंदेवंत. ५ महांतंदेवत. ६ भीमंदेवंत. ७ ईशानंदेवत. ८ मानस्तोकेतनयेमान आयुषिमानोगोषुमानो अश्वेषुरीरिषःमानोवीरान्रुद्रभामिनोवधीर्हविष्मंतःसदामित्वाहवामहे ॥ इतिवस्त्रं ॥ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमः ॥ इतियज्ञोपवीतम् ॥ नमोवृद्धायचसवृद्धिनेच ॥ इतिभूषणं ॥ नमः श्वभ्यःश्वपतिभ्यश्चवोनमः ॥ इतिगंधम् ॥ नमःसेनाभ्यःसेनानीभ्यश्चवोनमः ॥ इत्यक्षताः ॥ नमः पार्य्यायचावार्य्यायच ॥ इतिपुष्पम् ॥ कपर्दिनेचव्युप्तकेशायच ॥ इतिधूपं ॥ नमःआशवेचाजिरायच ॥ इतिदीपं

नमोवभ्लुशायव्याधिनेऽन्नानांपतयेनमः ॥ इतिनैवेद्यम् ॥ नमःपार्य्यायचावार्य्यायच ॥ इतितांबूलं ॥
नमोदुंदुभ्यायचाहनन्यायच ॥ इतिदक्षिणा ॥ नमोहिरण्यायचप्रपथ्यायच नमोमीढुष्टमायचेषुमतेच नमोह्र
स्वायचवामनायच नमोबृहतेचवर्षीयसेच इतिपुष्पांजल्यष्टकंदद्यात् एषतेरुद्रभागःसहस्वस्राम्बिकया तंजु
षस्वस्वाहैषतेरुद्रभागआखुस्तेपशुः इतिप्रदक्षिणा नमोरुद्रेभ्य इतिनमस्कारः ततःस्तोत्रंपठेत् ओंनमः ओं
काररूपायनमोक्षरवपुर्धृते नमोनादात्मनेतुभ्यंनमोबिंदुकलात्मने आलिंगालिंगरूपायरूपातीतायतेनमः त्वमा
तासर्वलोकानांत्वमेवजगतःपिता त्वंभ्रातात्वंसुहृन्मित्रंत्वंपितात्वंपितामहः नमस्तेभगवान्रुद्रभास्करामिततेज
सेनमोभवायरुद्रायउमयासंहितायच शर्वायक्षितिरूपायसदासुरभिणेनमः पशूनांपतयेचैवपावकामिततेजसे
सोमायव्योमरूपायशब्दरूपायतेनमः महादेवायसोमायअमृतायनमोनमः उग्रायययजमानायनमस्तेकर्मयो
गिने पार्थिवानांचलिंगानांयन्मयापूजनंकृतं तेनमेभगवन्रुद्रोवांछितार्थंप्रच्छतु इतिस्तुत्वाअंगहीनंक्रिया
हीनंविधिहीनंमहेश्वर पूजितोसिमहादेवक्षमस्वजगतःपते इतिक्षमाप्य पुराणपठनश्रवणगीतवाद्यादिभि
र्जागरणं प्रातर्नित्यविधिंक्षमाप्य देवंसंपूज्य अग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानं सोमंशिवं कृत
लिंगदशांशेन पायसमधुशर्कराघृततिलाक्षतविल्वपत्रशतपत्रद्रव्याष्टकेनकेवलपायसेनवा नमःशंभवायमयो
भवायचेतिमंत्रेणपंचाक्षरेणवायक्ष्ये तथागौरीगणेशषण्मुखंचैतैरेवद्रव्यैः प्रतिद्रव्यंदशदशाहुतिभिः वृषभलो
केशान् ब्रह्मादिदेवताश्चैकैकमेकादशाहुतिभिर्द्वारदेवताश्चैकैकयाज्याहुत्यायक्ष्ये शेषेणस्विष्टकृतमित्यादिहो
मंसमाप्य पूर्णाहुत्यादिकर्मशेषंसमापयेत् ततःसत्कालिकहोमदशांशेनतर्पणं तद्दशांशेनमार्जनंकृत्वा विशे
षाकारेणपीठस्थं शिवंसंपूज्य आचार्यंचसंपूज्य सर्वंपीठमाचार्यायदद्यात् तत्रमंत्रः पीठंगृहाणभूदेवसर्वशक्त्या

पुनः आंह्रींक्रौंमित्यादि सांबशिवस्यसर्वेंद्रियाणिवाक्पाणिपादपायूपस्थश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणादीनिइहागत्य
पथासुखंचिरंतिष्ठतु एवंप्राणप्रतिष्ठांविधाय पंचामृतेनाभिषेककृत्वा नमःशंभवायचमयोभवायच नमःशंकरायच
मयस्करायच नमःशिवायचशिवतरायच पंचाक्षरेणवाकलशोपरिसंस्थाप्यतद्वामभागे गौरीमिमायसलिलानित
क्षत्येकपदीद्विपदीसाचतुष्पदीअष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॐनमोभगवत्यैउमादेव्यैशिवप्रि
यायैनमइत्यागममंत्रेणवाहैमींगौरींतद्वामभागेप्रतिष्ठाप्यदक्षिणभागेतु तत्पुरुषायविद्महेमहासेनायधीमहि तन्नः
षण्मुखःप्रचोदयात् इतिमंत्रेणस्कंदंप्रतिष्ठाप्य पुरतःराजतंवृषभंऋषभमितिमंत्रेणसंस्थाप्यपरितइंद्रादीन्
लोकेशान्संस्थाप्यपूजयेत् ॥ अथध्यानं ॥ मंगलायतनंदेवभवकामंमनोहरं ध्यायेत्कल्पतरोर्मूलेसमासीनंसहो
मया तत सहस्राणिसहस्रशोबाह्वोस्तवहेतयः तासामीशानोभगवःपराचीनामुखाकृधि ॥ इतिध्यात्वा--॥
ॐनमोभगवतेरुद्रायेति लिंगोपरिअक्षतान्क्षिपेत् अथपूजांकुर्यात् नमस्ताराय इत्यासनं नमःशंभवा
यचमयोभवायच इतिपाद्यं नमःशंकरायचमयस्करायच इत्यर्घ्यं नमःशिवायचशिवतरायच इत्याचमनी
यं नमस्तीर्थ्यायचकुल्यायचेति समस्तेनरुद्रसूक्तेनचस्नानं भवंदेवतर्पयामि १ शर्वंदेवत. २ रुद्रंदेवंत. ३
पशुपतिंदेवंत. ४ उग्रंदेवंत. ५ महांतंदेवत. ६ भीमंदेवंत. ७ ईशानंदेवत. ८ मानस्तोकेतनयेमान
आयुषिमानोगोषुमानो अश्वेषुरीरिषःमानोवीरान्रुद्रभामिनोवधीर्हविष्मंतःसदामित्वाहवामहे ॥ इतिवस्त्रं ॥
नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमः ॥ इतियज्ञोपवीतम् ॥ नमोवृद्धायचसवृद्धिनेच ॥ इतिभूषणं ॥ नमः
श्वभ्यःश्वपतिभ्यश्चवोनमः ॥ इतिगंधम् ॥ नमःसेनाभ्यःसेनानीभ्यश्चवोनमः ॥ इत्यक्षताः ॥ नमः पार्या
यचावार्यायच ॥ इतिपुष्पम् ॥ कपर्दिनेचव्युप्तकेशायच ॥ इतिधूपं ॥ नमःआशवेचाजिरायच ॥ इतिदीपं

नमोवभ्लुशायव्याधिनेऽन्नानांपतयेनमः ॥ इतिनैवेद्यम् ॥ नमःपार्यायचावार्यायच ॥ इतिताम्बूल ॥
नमोदुंदुभ्यायचाहनन्यायच ॥ इतिदक्षिणा ॥ नमोहिरण्यायचप्रपथ्यायच नमोमीढुष्टमायचेषुमतेच नमोह्र
स्वायचवामनायच नमोवृहतेचवर्षीयसेच इतिपुष्पांजल्यष्टकंदद्यात् एषतेरुद्रभागःसहस्वस्राम्बिकया. तंजु
षस्वस्वाहैषतेरुद्रभागआखुस्तेपशुः इतिप्रदक्षिणा नमोरुद्रेभ्य इतिनमस्कारः ततःस्तोत्रंपठेत् ॐनम ॐ
काररूपायनमोक्षरवपुर्धृते नमोनादात्मनेतुभ्यंनमोबिंदुकलात्मने अलिंगालिंगरूपायरूपातीतायतेनमः त्वमा
तासर्वलोकानांत्वमेवजगतःपिता त्वंभ्रातात्वंसुहृन्मित्रंत्वंपितात्वंपितामहः नमस्तेभगवान्रुद्रभास्करामिततेज
सेनमोभवायरुद्रायउमयासाहितायच शर्वायक्षितिरूपायसदासुरभिणेनमः पशूनांपतयेचैवपावकामिततेजसे
सोमायव्योमरूपायशब्दरूपायतेनमः महादेवायसोमायअमृतायनमोनमः उग्राययजमानायनमस्तेकर्मयो
गिने पार्थिवानांचलिंगानांयन्मयापूजनंकृतं तेनमेभगवन्रुद्रोवांछितार्थंप्रयच्छतु इतिस्तुत्वाअंगहीनंक्रिया
हीनंविधिहीनंमहेश्वर पूजितोसिमहादेवक्षमस्वजगतःपते इतिक्षमाप्य पुराणपठनश्रवणगीतवाद्यादिभि
र्जागरणं प्रातर्नित्यविधिंसमाप्य देवंसंपूज्य अग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानं सोमंशिवं कृत
लिंगदशांशेन पायसमधुशर्कराघृततिलाक्षतविल्वपत्रशतपत्रद्रव्याएकेनकेवलपायसेनवा नमःशंभवायमर्या
भवायचेतिमंत्रेणपंचाक्षरेणवायक्ष्ये तथागौरीगणेशंषण्मुखंचतैरेवद्रव्यैः प्रतिद्रव्यदशदशाहुतिभिः वृषभलो
केशान् ब्रह्मादिदेवताश्चैकैकमेकादशाहुतिभिर्द्वारदेवताश्चैकैकयाज्याहुत्यायक्ष्ये शेषेणस्विष्टकृतमित्यादिहो
मंसमाप्य पूर्णाहुत्यादिकर्मशेषंसमापयेत् ततसन्नक्षत्रिकहोमदशांशेनतर्पणं तद्दशांशेनमार्जनंकृत्वा विशे
षाकारेणपीठस्थं शिवंसंपूज्य आचार्यंचसंपूज्य [illegible]दद्यात् तत्रमंत्रः. पीठग्रहाणभूदेवसर्वशक्त्या

दिसंपुतं वांछितार्थप्रच्छाशुदेहिमेव्रतजंफलं ततोव्रतपूर्त्तयेगांचदत्त्वा मार्जनंदशांशेनयथाशक्तिवाब्राह्मणान्सद
न्नेनसंतर्प्य दक्षिणांदत्त्वाव्रतपूर्णतांचवाचयित्वा आशिषोगृहीत्वा इष्टजनैःसहभुंजीतअत्रपूजनेत्रैवर्णिकानामेवा
धिकारःस्त्रीशूद्राणांतुपूर्वोक्तोद्यापनजैःसिद्धिरिति ॥ इतिशैवागमोक्तंपार्श्वलिंगानांलक्षव्रतोद्यापनम् अथपा
र्थिवगणेशलक्षव्रतोद्यापनंरुद्रयामले श्रीमहादेवउवाच यथापार्थिवलिंगंतुसर्वसिद्धिविधायकं तथाविघ्नेश्वरोदेवः
पार्थिवःसर्वकामदःनिर्विघ्नंजायतेकार्यंसर्वसिद्धिंपुमान्लभेत् षट्कर्माणितथावक्ष्येशृणुष्वेकमनाभव रक्तोपचारैः
सिंदूरैरक्तमाल्यांबरैस्तथा करवीरैर्जपापुष्पैःकमलैःक्षीरपायसैः संपूज्यवश्यतांयातियंयंचिंतयतेनरः शुक्लमाल्यैः
शुक्लपुष्पैर्भोजनैर्दधिमिश्रितैःमालतीकुसुमैर्धूपैर्दशांगैःशांतिलब्धये कवितायाःपटुत्वंचजायतेनात्रसंशयः मोहने
मधुभिस्तर्प्यमधुपायसमर्पयेत् असितैःकुसुमैःपूज्योदमनेनासितागुरुं समारोप्यार्चयेद्भक्त्यात्रैलोक्यंवश्यमानयेत्
स्तंभनेनिशयायुक्तैरुपचारैःसमर्चयेत् मारणेमाहिषेचर्मण्यास्थायासितकंबलंधत्तूरैरर्चयेत्पुष्पैःसर्षपाक्षतामि
श्रितैः नैवेद्यंगुडसंमिश्रंमहिषीक्षीरसंयुतं भक्तंशाल्युद्भवंदद्यच्छागमांससमन्वितं अभिषेकस्तुतैलेनमहागण
पतेर्भवेत् धूपःश्मशानजद्रोणपुष्पैःसद्यःसमर्चयेत् एवंगणाधिपंकृत्वापूजयेत्पार्थिवंनरः यंयंकामम
भिध्यायेत्तंतंसर्वमवाप्नुयात् पात्रविशेषःसहस्रंदशसाहस्रंलक्षकोटिंतथैवच यःकरोतिगणेशानांपार्थिवानां
नरोत्तमसर्वसिद्धिमवाप्नोतिनात्रकार्य्याविचारणा अथकामनाभेदाः कारागृहमोचनकामः एकविंशति
दिनपर्यंतं एकोत्तरवृद्ध्यापार्थिवगणेशान्कृत्वा वक्ष्यमाणप्रकारेणसंपूज्य पुनःद्वाविंशद्दिनपर्यंतं
गणेशान्कृत्वा यावद्गणेशाभवंतितावत्यहंगणेशार्द्धक्षीराभिषेकः मूलमंत्रस्यापितावत्सहस्रजपः अभी
प्सितसिद्धिर्भवति एकविंशतिपुष्पाणि दाडिमीचजटामांसीशबरीनागचंदकः ॥ बृहतीचतथामी

वीभृंगराजस्तथैवच मालतीकुसुमैश्चैवतुलसीमाधवीतथा पारिजातंतथापुष्पंवकुलंचैकविंशाति पुष्पाभावेपत्रं
ग्राह्यं अपूपशर्करामिश्रंनैवेद्यंकदलीफलं नारिकेलंचासिंदूरंदूर्वागुग्गुलधूपकं इदप्रत्यहसाधारणं अथसर्वसा
धारणपूजोच्यते ॐमद्यतिथ्यादिकीर्त्तनानंतरंममा भीष्टसिद्ध्यर्थंपार्थिवगणेशपूजामहंकरिष्ये इतिसंकल्प्य
अश्वत्थमूलजांशुद्धस्थलजांवामृदमानीय पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता त्वंचधारयमांदेविपवित्रंकु
रुचासनं इत्यासनपूजांविधाय गंगणेशायनमः जलसेचनं ॐगूंहेरंभायनमः संघट्टनं गैंधरणीधरायनमः
प्रतिष्ठापनं गौंक्षिप्रप्रसादनायनमः चतुर्भुजामेकदंतांसुंदरांमूर्तिंकृत्वा गःसर्वसिद्धिप्रदायकायनमः गणेशो
परिरक्ताक्षतान्दत्त्वा हृदिस्थदेवंमानसोपचारैःसंपूज्यनासारंध्रेणदेवमंजलिस्थपुष्पाक्षतैःसंयोज्यपुनर्देवमस्तको
परिपुष्पादिनिधाय प्राणप्रतिष्ठांकुर्य्यात् अस्यश्रीगणपतिप्राणप्रतिष्ठामंत्रस्यब्रह्म विष्णुमहेश्वराऋषयःऋग्यं
जुःसामानिछंदांसि प्राणशक्तिर्देवता आंबीजं ह्रींशक्ति क्रौंकीलकं श्रीमहागणपतिप्राणप्रतिष्ठाकंविनियोगः
ॐआंह्रींक्रौंयंरंलंवंशंषंसंहंलंक्षंहंसः पार्थिवगणपतिःप्राणइहप्राणाः पुनःश्रीपार्थिवगणपतेः सर्वेंद्रियाणिइहाग
त्यसुखंचिरंतिष्ठंतु इतिप्राणप्रतिष्ठांकृत्वा ततोमूलमंत्रेणस्वदेहेन्यासान्कुर्य्यात् अस्यश्रीगणपतिमंत्रस्य गणक
ऋषि निचृत् गायत्रीछंदः गणपतिर्देवता गबीजं श्रींशक्तिः स्वाहाकीलकं गणपतिन्यासादौविनियोगः गां
अंगुष्ठाभ्यांनमः गींतर्जनीभ्यांनमः गूंमध्यमाभ्यांनमः गैंअनामिकाभ्यांनमः गौंकनिष्ठिकाभ्यांनमः गः करतल
करपृष्ठाभ्यांनमः अथध्यानं रक्तोरक्तांगरागांशुकसकलतनुस्तुंदिलश्चंद्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणोवी
जपुरात्तनामः हस्ताग्रैःकृप्तपाशांकुशरदवरदोनागवक्त्रोहिभूषोदेवः पद्मासनोसौवहुसुरनमितोभूतयेविघ्नराजःइ
तिध्यात्वा मूलमंत्रेणनाममंत्रेणपूजयेत् ॐनमोभगवतेहेरंवमदमोहितममसंकटान्निवारयनिवारयस्वाहा ॐग

णेशायनमः आवाहनं ॐगणपतये आसनं हेरंबाय पाद्यं धरणीधरायअर्घ्यं महागणपतये मधुपर्कं प्रज्ञेश्वराय आचमनीयं क्षिप्रप्रसादनायमलापकर्षं स्नानं अमोघसिद्धये पंचामृतस्नानं अमृताय शुद्धस्नानं रुद्रेणगाणपत्यसूक्तेनच अथर्वशिरसामहाभिषेकः तद्यथा अथगणेशोपनिषत् ॐदेवाहवैरुद्रमब्रुवन् कथमेतस्योपासनं सस्तानुवाच रुद्रोगणकानिचृत् गायत्रीश्रीगणपतेरेनंमंत्राराजमन्यान्वाभेदात् प्रणवरूपस्यास्यपरमात्मानोंगानिजानातिसोमृतत्वंगच्छतियोधितेसोधीतियोजपतिसजपतिसमृत्युंतरतिसपाप्मानंतरति ॥सब्रह्महत्यांतरति ससर्वहत्यांतरति ससर्वंतरति एनमंत्रराजं गणपतिःसर्वामिदंनित्यंजपतिसोग्निंस्तंभयति सवायुंस्तंभयति सआदित्यंस्तंभयति ससर्वंस्तंभयति सदेवांस्तंभयति इत्युपनिषत् १ एनंमंत्रराजनित्यमधीते विघ्नं सविघ्नानाकर्षयति देवान्यक्षान्नागान्मनुष्यान् सर्वानाकर्षयति सभूर्लोकंजयति सभुवर्लोकंजयति सस्वर्लोकंजयति समहर्लोकंजयति सजनलोकंजयति सतपोलोकंजयति ससत्यलोकंजयति सपुण्यान्यधीते संकल्पान्यधीते सगाथाअधीते सोग्निष्टोमेन सोक्थेन षोडशेन सवाजपेयेनसोतिरात्रेणससोमपीथेन सर्वैःक्रतुभिर्यजते १ यएतंमंत्रराजंवेदससर्ववद ससर्वसमः सदेवसमः समुनिसमः सनागसमः ससूर्यसमः सोग्निसमः इत्युपनीतसममनुपनीतैर्वाधिकशतं गृहस्थमसममुपनीतैकाधिकशतंवातस्तैः समंगृहस्थैकाधिकशतंयतीनांसवानप्रस्थैकाशतंरुद्रजापकसमंयतीनामेकाधिकशतमथर्वशिरासिशिक्षाध्यायंएकसमंरुद्रजापकैकाधिकशतमनो विद्यातत्कार्य्यहीनस्वात्मबंधराहितोवैतराहितो निरस्ताविद्यातमोमोहांधकारप्रधानमहमेवसर्वामितिसंभाव्यविघ्नराजंब्रह्मण्यजतेतत्तेजोमये परंज्योतिमये सदानंदमये स्वप्रकाशे सदोदितेनित्यशुद्धमुक्तेईश्वरेपरब्रह्मणिरमते ॥ ७ ॥ यएनंमुनिपदंवेद संसारंतरति घोरंतरति दुःखं

तरति विघ्नान्तरति । महोपसर्गैतरति । आनंदोभवति । सनित्योभवति । सशुद्धोभवति । समुक्तोभवति
ईश्वरोभवति सससुखीभवति । ध्यानावहनादिस्वयंभवति । योहमात्माब्रह्मसोहमात्माचतुष्पात्वहिःप्रज्ञस्व
स्थस्वच्छभुक्तेतेजसोयच्छन्नसुप्तो नकंच नकामयते नकंचनस्वप्नंपश्यातितत्सुप्तंतत्रैकीभूतः प्रज्ञानदघनएवानंद
भुक्चेतोमुख । प्रज्ञयैषः । सर्वेश्वरः सर्वतोमुखोंतर्यामीएषयोनिः । सर्वभूतानांवहिःप्रज्ञमंतः प्रज्ञनोभ
यप्रज्ञंप्रज्ञानघनमव्यय । अनिर्देश्यमव्यवहार्यमग्राह्यमलक्षणमचिंत्यमेकात्म्यमप्रत्ययंप्रपंचसारंप्रपंचोपश
ममवैतंशैवं चतुष्पादंध्यायेत् । सएवात्मात्मरतितरतिसआत्माविज्ञेयः । सदोह्यथर्वशिरः । शिखाध्यए
केकाधिकशतंगणेश तापनीयोपनिषदध्याय । एकसममेतद्धकाधिकशतंमंत्रराजजापकंरामंततोदः । परमधा
ममंत्रसुजपापकस्ययत्ररविसोमोनतपति यत्रवायुर्नक्षत्राणिनवांतिनभांतियत्राग्निमृत्यूनदहतिनप्रविशति । यत्र
मोहोनदुःखं सदानंदपरमानदॐशतॐशाश्वतंसदाशिवब्रह्मादिवंदितं । योगिध्येयपरमपदंचिन्मात्रंब्रह्मणएप
तिमेकाक्षरमेवतंपरमात्मानब्रह्म तेजोधामद्धादिसत्तमांतेस्यकिंचिजप्त्वाततोनजपोनमालानासनंभवति । सर्वै
श्वानरोभवतिसतैजसोभवति सप्राज्ञोभवति ससाक्षीभवति । ससर्वोभवति । सहर्षानमानजानायशत्रे
मार्शिभिपाद्यं इत्यभिषेकंकृत्वा मंत्रायवस्त्र । चिंतामणयेउपवीत । निधयेगंध सुमंगलाय । अक्षताः
वीजायपुष्पं वासनिधानायफल ढुंढीविनायकाय नीराजन सर्वसंकष्टनाशनाय । मंत्रपुष्पं कुमा
रगुरवे प्रदक्षिणा । अघनाशनाय - नमस्कारः एवंचतुर्विंशन्युपचारान्समर्प्य ततोगणेशादारभ्य । ढुं
ढिविनायकांतंविशेषार्घ्यंदत्वा । क्षमापयेत् । अगहीनाक्रियाहीनविधिहीनंगणेश्वर । पूजितोसियथादेवतत्क्षम
स्वजगत्पते इतिशैवागमोक्तापार्थिवगणेशपूजाविधिः एवमुक्तप्रकारेण । सहस्त्रं । अयुत लक्षं कोटिं

वा पार्थिवान्गणेशान्कृत्वा अतेमाघादिशुभेकाले: उद्यापनंकुर्यात्। तद्यथा ओमद्येतिथ्यादिसंकी-
र्त्यमम अमुकस्यवामुकफल कामनयाकृतानांनानापार्थिवगणेशानांसंपूर्णताफलावाप्तये तदुद्यापनंकरिष्ये इति
संकल्प्य आचार्यवरणंविधाय चतुर्द्वारोपशोभितमंडपवेदिकायांसर्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकंकलशंप्र-
तिष्टाप्य तत्रदेवस्थापनंकुर्य्यात् तत्रादौपूर्वोक्तान्न्यासान्कृत्वा अस्मिन्नूर्जमित्यनुवाकेनपयोधारयावा प्र-
तिमायाअग्न्युत्तारणंकुर्य्यात् प्रतिमाप्रमाणंतुयावन्मानंप्रत्यहं गणेशंमृदाक्रियते तावन्मानेनतदर्धार्धेन
वासौवर्णराजतंवादेवंकुर्य्यात् तत्रप्राणप्रतिष्ठांकृत्वा गणानांत्वेतिवैदिकेनमूलमंत्रेणवा प्रतिष्ठाप्ययथामि-
लितोपचारैः संपूज्य आवरणानिपूजयेत् पूर्वादिक्रमेण ओंवक्रतुंडायनमः एकदंतायनमः गजान-
नाय- महोदराय- विकटाय- विघ्नराजाय- धूम्रवर्णाय- हेरंबायनमः ८ तद्बाह्येपूर्वादिक्रमेणब्रा-
ह्म्यैनमः माहेश्वर्य्यै- वाराह्यै इंद्राण्यैनमः चामुंडायै वैनायक्यैनमः वैष्णव्यैनमः ८ तद्बा-
ह्ये इंद्रादिलोकेशान् ८ वज्रादिप्रहरणान् ८ संपूज्य अत्रपूर्वोक्तएवपूजाप्रकारः पुष्पोत्तरं अंगपूजा
गणनाथायनमः पादौपूजयामि गणेशायजानुनीपूजयामि गणप्रियायकटिंपूजयामि वक्रतुंडायहृदयंपूज-
यामि गजाननायस्कंधौपूजयामि हेरंबायहस्तौपूजयामि विकटायआस्यंपूजयामि विघ्नराजायनेत्रेपूज-
यामि धूम्रवर्णायशिरः पूजयामि सर्वसिद्धिप्रदायनमः सर्वांगंपूजयामि ततः स्तोत्रैः स्तुत्वा पु-
राणश्रवणादिनाजागरणंविधाय प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् तत्रप्रधानंदेवंमहागणपतिंपायसतिलाज्येन
रक्ताक्षतमोदकपंचखाद्यशमीदूर्वाद्रव्याष्टकतिलपायसेनवा कृतपार्थिवगणेशसंख्यादशांशेनसमांशेनवायक्ष्ये
होमांतेदेवंसंपूज्य दशांशतस्तर्पणं दशांशतोमार्जनंचकृत्वा आचार्यंसंपूज्यपीठंगांचतस्मैनिवेद्यएकविंशति

ब्राह्मणान्संपूज्य पक्वान्नपूरितकलशं वस्त्रयुग्मसहितंसदक्षिणंप्रत्येकंतेभ्यः पुष्पांजलिं चैकविंशतिनामभिर्द
त्वा मार्जनदशांशतोयथाशक्तिवाब्राह्मणभोजनंसंकल्प्यभूयसींदत्त्वासदन्नेनद्विजान्संतर्प्यव्रतसंपूर्णतांवाचयि
त्वा इष्टजनैःसहभुंजीतइतिरुद्रयामलोक्तंपार्थिवगणेशोद्यापनं अथशौनकोक्तमश्वत्थोद्यापनं शौनकउ
वाच शौनकोहंप्रवक्ष्यामिअश्वत्थस्योपनायनं स्थापनादष्टमेवर्षेद्वादशेकादशेपिवा मुक्तकालास्तथाप्रोक्ताः
कुर्युस्तस्योपनायनं तत्रोत्तरायणंश्रेष्ठंगुरुशुक्रप्रकाशिते माघफाल्गुनयोःकुर्याच्चैत्रवैशाखमासयोः क्षयमासाधि
मासेचवर्जयेन्मौंजिबंधनं नकुर्याच्छेदितेष्वन्येविद्युतावाग्निनाहते उद्यापनंप्रकुर्वीतस्कंधैःपर्णांकुरान्वितैःशुक्लपक्षे
शुभेर्क्षेचसुवारेतिथिलग्नके चंद्रानुकूलेकर्तुश्चदिवाकुर्यात्प्रयत्नतः दंतानांधावनंकुर्यात्कुर्यात्स्नानंसचैलकंकृ
त्वाचनित्यकर्माणिपूज्याचैवेष्टदेवता नांदीश्राद्धंप्रकुर्वीतगृहेपुण्याहवाचनं तस्मिन्नेवदिनेकुर्याद्वान्नहेमफलादि
भिःकृत्वाशीर्वचनंपूर्वंततोगच्छेत्प्रयत्नतः तूर्यघोषैश्चविविधैः पण्यस्त्रीभिः समन्वितः ब्राह्मणैर्वेदघोषैश्चगीतवा
दित्रनिःस्वनैः वस्त्रंयज्ञोपवीतंचमौंजीदंडाजिनादिकं पूजाद्रव्यंचहोमंचगृहीत्वाश्वत्थसन्निधौ ततःप्रक्षालितां
घ्रिश्चाचम्योपविशेद्भुवि अश्वत्थेशानदिग्भागेकृत्वापुण्याहवाचनं आचार्यंवरयेत्पश्चात्कुलीनंवेदपारगं त्रि
पंचदशहस्तेनगोमयेनोपलिप्यच धान्यपिष्टेनसंमार्ज्यगंधमाल्यादिशोभनैः वस्त्रोपवीतगंधाद्यैरंगुलीयककुंडलैः
कर्तासुपूजयेद्भक्त्यावित्तशाठ्यंनकारयेत् तेनैवकारयेद्विद्वानश्वत्थस्योपनायनं कुर्यात्पंचामृतस्नानंतत्तन्मंत्रैःपृथक्
पृथक् अश्वत्थपूर्वदिग्भागेहोमंकुर्यात्स्वशाखया उल्लेखनादिकंतत्रचरुंतत्रप्रकल्पयेत् वस्त्रयुग्मंततोदद्यु
र्वस्त्राणिमंत्रतः यज्ञोपवीतंदद्याच्च यज्ञोपवीतमित्यपि मेखलांचत्रिरावेष्ट्यप्रावेयामीतिमंत्रतः तूष्णींकृष्णा
जिनंदंडंप्रदद्यात्तुयथाक्रमंगंधपुष्पाक्षतैःशुक्लैरश्वत्थस्यचपश्चिमे अश्वत्थेवोनिषदनमित्यृचापूजयेत्सुधीः तिस्र

भिंजुहुयादाज्यंममआयुष्यनुक्रमात् पुरस्तादुपरिष्टाच्चहुत्वाव्याहृतीभिस्त्रिभिः याओषधियाः फलिनीरश्वत्थे
वइतित्वथ वनस्पतेशतवल्कोद्वासुपर्णेतिमंत्रतः समिद्भिश्चरुणाचैवपालाशीभिःपृथक्पृथक् हुत्वाषदशभिः
सम्यगेकाहुत्यासमाहितः अश्वत्थपश्चिमेभागेप्राङ्मुखश्चोपविश्यच दक्षिणेनैवहस्तेनस्पृष्ट्वाश्वत्थंद्विजोत्तमः
ॐभूर्भुवःपुर्वांतुसावित्रींविजपेदथ निरीक्षयेत्ततोश्वत्थंदेवस्यत्वेतिमंत्रतः आत्वेतिध्रुवसूक्तेनव्याहृतित्रितयेनच अ
श्वत्थनामउच्चार्य्यविभक्त्याचद्वितीयया शलाकयासुवर्णस्यस्थापयेतिपदंवदेत् हुत्वास्विष्टकृतंपश्चाद्धोमशेषं
समापयेत् गंधाक्षतैःस्वर्णपुष्पैर्धूपदीपोपहारकैः भक्ष्याद्यैःफलतांबूलैस्ततोश्वत्थंप्रपूजयेत् धेनुंसवत्सकां
दद्यादाचार्य्यायसदक्षिणां अश्वत्थछादितंवस्त्रमाचर्य्यायप्रदापयेत् अन्येषामपिविप्राणांस्वशक्त्यापूजयेत्ततः
ब्रह्मणेदाक्षिणांदद्याद्धेमवित्तानुसारतः ब्राह्मणान्भोजयित्वातुभुंजीतवंधुभिःसह यएवंकुरुतेतस्यवर्द्धतेश्रीरसंशयं
कुलकोटिंसमुद्धृत्यब्रह्मसायुज्यमाप्नुयात् इतिशौनकोक्तमश्वत्थोद्यापनं अथमंत्राणामृष्यादिकं युववस्त्राणीत्यस्य
दीर्घतमाऋषिः परमात्मादेवता त्रिष्टुप्छंदः यज्ञोपवीतधारणेविनियोगः माघयामइत्यस्य अक्षऋषिः सोमोदेवता
त्रिष्टुप्छंदः मौंजीधारणेविनियोगः माघयामव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजाऋषय अग्निवायु सूर्योदेवता
देवीगायत्रीदेव्युष्णिकदेवीबृहत्यःछंदांसि हवनेनिनियोगःअग्नआयूंपिपवसइतितिसृणांशतंवैषानसाऋषयः अ
ग्निमानोदेवता गायत्रीछंदः कर्त्तव्यार्थेविनियोगः अश्वत्थेवोअनुष्टुप्याओषधीरितिद्वयोस्त्रिष्टुप् वासुपर्णादी
र्घतमाविश्वेदेवास्त्रिष्टुप् आत्वाहार्षमितिपर्णाध्रुवइन्द्रोनुष्टुप् ततोभूरिदक्षिणाआशीर्वादः अथापवर्गचिंतामणौ
अश्वत्थोद्यापनं अरोपितस्यवृक्षस्यकुर्य्यादुद्यापनेविधिं नांदीश्राद्धादिकंसर्व्वंपिप्पलोद्यापनेविधौनवग्रहमखं
चादौ विदधीतयथावसु सहस्रपर्णसंपत्तौ सत्यांवोधितरौध्रुव जातकर्मादिकादीनि कुर्य्याद्गोदानकावधि

कार्य्यमुद्यापनंनूनं विवाह्यविधिवन्नरैः लक्षशाखांसमारोप्य समीपेपिप्पलस्यतु आलवालं
जलंक्षिप्त्वाशतकुंभमितंशुभं सशाखः सचवृक्षश्चवस्त्रयुग्मेनवेष्टितः सिंचेयदथदुग्धेनमाहिषेणघृतेनच तथा
शाखान्मयान्हस्तान्चतुरःपरियोजयेत् त्रिसूत्रेणत्रिवृतेनसव्यहस्तांप्रवेशयेत् ब्रह्मवर्णस्यवृक्षस्यविधिरेष
सनातनः क्षत्रियस्यतुवृक्षस्यशरोग्राह्य.परस्परं वैश्येप्रतोदमादद्यात्तुरीयेपल्लवग्रहः तथायाज्ञवल्कीये
धर्मशास्त्रे पाणिर्ग्राह्यःसवर्णासुगृन्हीयात्क्षत्रियाशरं वैश्याप्रतोदमादद्याद्वदनेत्वग्रजन्मनः संयोज्यविधिवत्तौ
तुप्लक्षाश्वत्थौनिवेशितौ कृत्वाग्निवदतंसम्यग्जुहुयात्तिलसर्पिषी प्रधानदेवताब्रह्मावृक्षस्यास्यनसंशयः तत्र
मंत्रोद्वासुपर्णाइति अष्टोत्तरसहस्रंतुजुहुयात्तिलसर्पिषा तथाव्याहृतिभिर्होमंविदध्याच्चयथारुचि चरुंसाज्यं
चजुहुयाद्विद्वान्स्विष्टकृतंसमं समंसमग्रमित्यर्थः अथप्रकारांतरेणाश्वत्थोद्यापनं अश्वत्थ सर्ववृक्षाणां
राजाब्राह्मणवर्णकः अश्वत्थःपूजितोयेनसर्वंसंपूजितंभवेत् अकृतेमौंजिबंधेतुविवाहेचतथाकृते नैवसे
वांप्रकुर्वीतनसमेचत्कदाचन अश्वत्थरोपणंकृत्वाविषमेवाथपंचमे उपवीतंप्रकुर्वीतमुहूर्तेज्योतिषां.विधौ
पुण्याहवाचनंकृत्वानांदीश्राद्धंसमाचरेत् प्राणसंस्थाविधिंकुर्यादभिषेकादिपूर्वकं प्राणेंद्रियैर्जीवकला
मनोभिःसहितोभव अयसजीवः एतस्य जीवकलाः प्राणापानव्यानोदानसमस्त- वाक्श्रोत्रत्वक्चक्षु
घ्राणपाणिपादोदरोपस्थगुह्येंद्रियाणिसर्वाणिआगत्यसुखंचिरंतिष्ठंतुस्वाहा सर्वप्राणैःप्रतिष्ठितोभवेत्यश्वत्थं
दक्षिणपाणिनास्पृष्ट्वाजपेत् अश्वत्थसर्ववृक्षोसिनारायणसमाश्रय नारायणस्वरूपेणपाहिमांसर्वतोशुभात्
महासंसारवृक्षोसिअश्वत्थब्रह्मनामक महासंसारमग्नंमामुद्धरस्वशुभंकुरु विष्णुर्ब्रह्माशिव शुक्रःसूर्यश्चंद्रोवृह
स्पतिः ऋषयोवेदमंत्राश्चसर्वेत्रस्यु.सदास्थिराः इतिप्राणप्रतिष्ठाप्यजातकर्मादिकारयेत् चैलांतनामतःकृत्वा

स्थापयेल्लौकिकानलं स्वगृह्योक्तविधानेनहरिद्रातैललेपनं वस्त्रयुग्मंचोपवीतंदंडंकृष्णाजिनंतथा दत्त्वासमि
द्भिश्चरुणातिलाज्यैश्चपृथक्पृथक् हुत्वाव्याहृतिभिःशक्त्याब्रह्मलोकेमहीयते इत्यश्वत्थोद्यापनं । अथग्रंथां
तरेणाश्वत्थसेवनाविधिः अद्भुतसारे अथर्वशाखोक्तअश्वत्थप्रदक्षिणाव्रतकल्पः तत्रादौ ॐमद्येत्यादिति
थ्यादिकीर्त्तनानंतरं अमुकाभीष्टप्राप्तिकामोविष्णुस्वरूपमश्वत्थतरुममुकसंख्याकाभिः प्रदक्षिणाभिःसेवयि
ष्ये इतिसंकल्प्य ततोऽश्वत्थतरुंपुरुषसूक्तेनषोडशोपचारैः संपूज्यलक्षादिसंख्ययाप्रदक्षिणाःकुर्य्यादितिसं
क्षेपः ॥ पिप्पलादउवाच ॥ भगवन्सर्वधर्मज्ञसर्वशास्त्रविशारद स्त्रीणांपुत्रविहीनानांनराणांसुखसंततेः उपा
यंचैवमेब्रूहिसुखसिद्धिःकथंभवेत् ॥ अथर्वणउवाच ॥ पुराब्रह्मादयोदेवा सर्वेविष्णुसमाश्रिताः अपृच्छन्देव
देवशराक्षसैःपीडितावयं कथंदुःखोपशमनमुपायंब्रूहिनःप्रभो ॥ विष्णुरुवाच अहमश्वत्थरूपेणसंभवामिम
हीतलेतस्मात्सर्वप्रयत्नेनकुरुध्वंतरुसेवनं तेनसर्वाणिकार्याणिभविष्यंतिनसंशयः विष्णुर्यदुक्तवांस्तेभ्यस्तद्ब्र
तंनैवदाम्यहं नदानैर्नतपोभिश्चनाध्वरैर्भूरिदक्षिणैः अश्वत्थसेवनादन्यत्कलौनास्तिपराक्रिया तद्विधानंनि
मित्तानिसंख्याकॢप्तिव्रतंतथा व्रताधिकारिणस्तत्रविधानंचविशेषतः एतत्सर्वंपिप्पलादवक्ष्यामितवसुव्रत
दारुणेविविधोत्पातेदिव्यभौमांतरिक्षके परचक्रभयेदेशविप्लवेशत्रुविग्रहे दुःस्वप्नेदुर्निमित्तेचसग्रामेद्भुतदर्शने
मारीभयेराजभयेतथाचौराग्निजेभये क्षयापस्मारकुष्ठादिप्रमेहेविनिधेज्वरे जलोदरेमूत्रकृच्छ्रेगृहस्थश्चतदेवहि
एतेषांसर्वनाशायकुर्य्यादश्वत्थसेवनं प्रातरुत्थायनद्यादौस्नात्वासम्यक्कृतक्रियः अश्वत्थदेशमाश्रित्यगोमये
नोपलेपयेत् तमश्वत्थमलंकृत्यशुद्धेणगैरिकादिना पूजाद्रव्याणिसंपाद्यपुण्याहंवाचयेत्ततः ऋत्विजावरणं
कृत्वाततःपूजांसमाचरेत् आदावाराधयेद्विष्णुध्यानावाहनपूर्वकं तथैवपैप्पलतरुंनारायणमयंद्विज श्वेतगं

धाक्षतैःपुष्पैर्धूपदीपानिवेदितैः अर्चापुरुषसूक्तेनतथैवध्यानपूर्वकं तेनैवहवनंकार्य्यंतर्पणंचनमस्कृतिःश्वेतवर्णं सलक्ष्मीकंचिंतयेत्पुरुषोत्तमं इतिध्यात्वावाहनाद्यैरुपचारैस्तुषोडश प्रणत्पात्र अदक्षिणैवयाह्या तत्राश्वत्थमिमं आरातइत्यस्यसूक्तस्य अग्निकांडांततःपातित्वादाग्निर्ऋषिर्वनस्पतिर्देवताऽनुष्टुप्छंद. वनस्पत्याभिमंत्रेणविनियोगः आरातेअग्निरस्त्वारात्परशुरस्तुतेवर्तित्वाभिवर्षतुस्वास्तितेस्तुवनस्पतेस्वस्तिमेस्तुवनस्पते आक्षिस्पंदंभुजस्पंदं दुःस्वप्नंदोषचिंतितंशत्रूणांचसमुत्पन्नमश्वत्थशमयस्वमे शत्रूणां संबंधित्वेनसमुत्पन्नंभयंचशमयस्वेत्यर्थः ततःप्रदक्षिणंकुर्य्यात्सर्वंसफलंभवेत् ब्रह्मचारीहविष्याशी ह्यधःशायीजितेंद्रियः मौनीध्यानपरोभूत्वा पिप्पलस्यस्तुतिंपठेत् विष्णोर्नामसहस्रंच पौरुषंवैष्णवंतथा वेदत्रयेणपुण्यानि सूक्तानिचपठेत्तथा तस्यलक्षदशांशेन सघृतंपायसंचतं जुहुयात्प्रत्यहंवन्हौस्वगृह्योक्तविधानतःतत्संख्यपातर्पणंच कुर्य्याद्देतैःनवापुनः ततःषोडशऋत्विग्भिःकुर्य्याद्धोमंयथाविधि हवनस्यदशांशेनमिष्टान्नंभोजयेद्द्विजान् ब्राह्मणानां स्वयंकुर्य्याद्यथोक्तंनियमंतथा असमर्थःस्वयंकर्त्तुंसर्वमन्येनकारयेत् उक्तप्रमाणादधिकंफलंदशगुणं भवेत् ततश्चतुर्गुणंपीठंराजतंचतुरस्रकं द्रोण्यामर्द्धंतदर्द्धंवातिलोपरिविनिक्षिपेत् श्वेतवस्त्रेणसंछाद्यपूर्ववत्पूजयेद्गुरुं दरिद्रायसुशीलायश्रोत्रियायकुटुंबिने उदङ्मुखायविप्रायस्वयंपूर्वमुखःस्थितः सौवर्णंत्वक्षराजंचमंत्रेणप्रतिपादयेत् इहजन्मनिवान्यस्मिन्बाल्ययौवनवार्द्धके मनोवाक्कायजेदोषेह्ययमेवस्मृतोविधिः आर्य्यस्त्रीणांनाधिकारोह्येवंविप्रेणकारयेत् इत्थंकृतस्यतस्यांतेव्रतस्यपारिपूर्त्तये हैमांश्वत्थंतरुंदद्यात्शुक्लांगावा पयस्विनीं स्वर्णशृंगींरौप्यखुरांवस्त्रादिभिरलंकृतां पलेनकंतदर्द्धंवातदर्द्धार्द्धेनवापुनः हैमरौप्यतरुंकुर्य्यात्स्कंधशाखासमन्वितं उत्तमःप्रथमःकल्पो द्वितीयोमध्यमः स्मृतः तृतीयकल्पश्चाप्युक्तः संप्रदानायपैप्पलः

अथैतस्यदानमंत्रः पिप्पलोदक्षराजेंद्रह्यग्निगर्भस्त्वमेवहि प्रभुर्वनस्पतीनांचपूर्वजन्मनियत्कृतं अघौघंनाशयाक्षिप्रंतवरूपप्रदानतः विप्रप्रार्थनामंत्रः अमुंवृक्षंगृहाणत्वंविष्णुरूपद्विजोत्तम स्वीकृत्यदुःकृतंघोरंक्षिप्रंशांतिंप्रयच्छमे एवंव्रतंयःकुरुतेतस्यपुण्यफलंशृणु पुत्रार्थीलभतेपुत्रंधनार्थीलभतेधनं राज्यार्थीलभतेराज्यंबद्धोमुच्येतवंधनात् क्षयापस्मारकुष्ठाद्यैःसर्वरोगैःप्रमुच्यते मानसींशत्रुपीडांचनचराजभयंतथा इहजन्मनिचान्यस्मिन्कृतैःपापैःप्रमुच्यते यंयंकामयतेकामंतंतंप्राप्नोत्यसंशयः इहैवभोगानाप्नोतिविष्णोःसायुज्यमाप्नुयात् ॥ इत्याथर्वकल्पोक्तमश्वत्थप्रदक्षिणोद्यापनं अथाश्वत्थारोपणोद्यापनप्रयोगः शौनकीये स्थापनादष्टमेवर्षेद्वादशेकादशेपिवा उत्तरायणेगुरुशुक्रोदये माघफाल्गुनेचैत्रेवैशाखेमासे शुक्लपक्षेशुभनक्षत्रेशुभवारेतिथिलग्नादिशुद्धौ स्कंदशाखापर्णान्विते विद्युद्दावाग्निनाऽनाभिहते अश्वत्थोद्यापनंकुर्यात् तत्रादौकनककुंडलेकनकसूत्रंकनकमौंजीहोमद्रव्याणि सर्वसंभारान्यथासंभवंसंभृत्य अश्वत्थस्यचतुरस्रांवेदिकांदृढां अश्वत्थमूलवर्तुलंचतुरस्रंवा आलवालंकृत्वा तत्रतुलसीं प्लक्षशाखां शमींचरोपयित्वा अश्वत्थवेदिकांविधाय चतुर्द्वारंचतुर्हस्तंअधिकंवामंडपमश्वत्थात् पूर्वपश्चिमेउत्तरेवाउक्तलक्षणं अन्यंवाकृत्वा सुग्रहेज्योतिर्विदादिष्टेप्रधानसंकल्पंकुर्यात् तद्यथा ॐतत्सत् अद्यतिथ्यादिकीर्तनांते आत्मनः अखिलपापक्षयाभीष्टसिद्धिपूर्वकं आत्मनासहएकविंशतिस्वकुलपुरुषोद्धरणकामः श्रीपरमेश्वरप्रीत्यर्थं अश्वत्थवृक्षोद्यापनंकरिष्ये तदंगविहितंगणेशपूजनं पुण्याहवाचनमातृकापूजनं नांदीश्राद्धं आचार्य्यादिवरणंचकरिष्ये इतिसंकल्प्य तानिचस्वगृह्यविधिनाकृत्वाआचार्य्यादीन्वृणुयात् ॐमद्यास्मिन्कर्मण्याचार्यत्वेनत्वामहंवृणेवृतोस्मीत्याचार्य्योवदेत् एवंब्रह्मत्वेनत्वामहंवृणे तथाउपद्रष्टारं तथैवऋत्विजोपिवृत्वा तानाचार्यादीन् मधुपर्कादिनासंपूज्यप्रार्थयेत् अस्य

यागस्यानिष्पत्त्येभवतोभ्यर्थितोमया सुप्रसन्नैश्चकर्त्तव्यमेतत्कर्मयथोदित कर्मेदंविधिपूर्वकमित्यपिपाठः ततः स्वगृहेएवगृहमखादिविधाय ततःसऋत्विजोयजमान फलपुष्पगंधाक्षतपूजितपूर्णकलशहस्तः भद्रंकर्णेभि रितिमंत्रेणमंगलतूर्यघोषेणसह अश्वत्थमंडपप्रादक्षिण्येन मंडपपश्चिमद्वारमागत्यतत्रओमद्यदेशकालकीर्त्तनां ते तत्रधरांसंपूज्यप्रविश्यकलशमश्वत्थसमीपेनिधाय निर्ऋतिवरुणमध्येस्वासने उपविश्य ततआचार्य्यः ओं तत्सदद्यतिथ्यादिकीर्त्तनांते आचार्य्यकर्माहंकरिष्ये इतिसंकल्प्य शरीरशुद्ध्यादिपौरुष सूक्तजपंचकृत्वा यद त्रसंस्थितंभूतंस्थानमावृत्यसर्वदा स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु इतिपठन्सर्षपलाजान्विकीर्य्यपचगव्ये नकुशैश्चप्रोक्षणंकुर्य्यात् आपोहिष्ठामयोभुवः उत्तरनारायणेन ततोदेवाआयांतुयातुधानाअपयांतुविष्णोदेव यजनंरक्षस्वेति स्वस्त्ययनंतार्क्ष्यमरिष्टनेमिरितिपठेत् ततोयथोक्तमंडपाकरणे साधारणक्रमेणमंडपपूजनं तत्रायंक्रमः प्राग्द्वारे अमंत्रकंचूतपल्लवतोरणं १ दक्षिणे प्लक्षपल्लवतोरणं २ पश्चिमेवटपल्लवतोरणं ३ उत्तरेअशोकपल्लवतोरणंबध्वा ४ तथैवप्रागादिद्वारचतुष्टये ऋग्वेदादिक्रमेणद्वौद्वौविप्रौएकमेकंवाजपा र्थंब्राह्मणान् ततआचार्य्यअश्वत्थस्यहरिद्रातैलारोपणादिलौकिकाचारकुर्य्यात् तत्रभद्रंकर्णेभिरित्यादिमंत्रपा ठः अश्वत्थवेदिकायां ईशानप्रदेशे सर्वतोभद्रंविलिख्य तत्रब्रह्मादिदेवतास्थापनंकरिष्ये इतिसंकल्पांते उक्तप्रकारेणनाममंत्रैः स्थापनंकुर्य्यात् मध्ये ओंब्रह्मणेनमः ब्रह्माणमावाहयामिएवमग्रेपिस्थापनप्रकारः पूर्वेइंद्रायनमः इंद्रमाः २ आग्नेय्यां अग्नये. अग्निमा. ३ दक्षिणेयमाय. यममा. ४ नैर्ऋते निर्ऋतये. निर्ऋतिमा. ५ पश्चिमे वरुणाय. वरुणमा. ६ वायव्ये वायवे. वायुमा. ७ उत्तरे सोमाय सोममा. ८ ईशाने ईशानाय. ईशानमा. ९ ईशानेंद्र. मध्ये वसुभ्यो. वसूना. १०

इंद्राग्निमध्ये रुद्रान् रुद्राना. ११ अग्नियममध्ये आदित्यान् आदित्याना. १२ यमनिर्ऋति
मध्येसाध्यान् १३ निर्ऋतिवरुणमध्ये विश्वान्देवान् १४ वरुणवायुमध्ये साध्यान् १५ वायुसोम
मध्ये अश्विनौ. १६ सोमेशानमध्येस्कंदमा. १७ ब्रह्मेशमध्ये विष्णुं १८ ब्रह्माग्निमध्येगणपतिं
१९ ब्रह्मयममध्येपितॄन् २० ब्रह्मनिर्ऋतिमध्येगंधर्वाप्सरसः २१ ब्रह्मवरुणमध्येसप्तमातॄः २२
ब्रह्मवायुमध्येसर्पान् २३ ब्रह्मसोममध्येदुर्गां २४ ब्रह्मेशानमध्येगंगादिनदीभ्योनमः २५ ततोमंडलांतः
ब्रह्मेशानदलादारभ्यवलयप्राष्ठकेषु ईशान्यांदक्षादीन्प्रजापतीन् २६ पूर्वेपुरुषायनमः २७ आग्नेय्यां
दुर्गायै. २८. दक्षिणस्यांस्वधायै. २९ नैर्ऋत्यांमृत्यवे. ३० पश्चिमेसर्पेभ्यो. ३१ वायव्यांसप्तसा
गरेभ्यो. ३२ उत्तरेमरुद्भ्यो. ३३ ब्रह्मणः पादमूले गणपतये. ३४ कर्णिकायां भूम्यै. ३५
तदुपरिमेरवे. ३६ परितःपूर्वादिक्रमेण ऋग्वेदाय. ३७ दक्षिणे यजुर्वेदाय. ३८ पश्चिमे सामवेदा
य. ३९ उत्तरे अथर्ववेदायनमः ४० मंडलाद्बाह्ये. पूर्वादिक्रमेण पूर्ववज्रायनमः ४१ शक्तये. ४२
दंडाय. ४३ खड्गाय. ४४ पाशाय. ४५ अंकुशाय. ४६ गदायै. ४७ त्रिशूलाय. ४८
पुनर्बाह्येऐरावताय. ४९ मेषाय. ५० महिषाय. ५१ प्रेताय. ५२ मत्स्याय. ५३ एणाय. ५४
नराय. ५५ वृषभाय. ५६ पुनःपूर्वादिक्रमेण गौतमाय. ५७ भरद्वाजाय. ५८ विश्वामित्राय. ५९
कश्यपाय. ६० जमदग्नये. ६१ अत्रये. ६२ वासिष्ठाय. ६३ अरुंधत्यै. ६४ तद्बाह्येपूर्वादिक्रमेण आ
दित्याय. ६५ चंद्रमसे. ६६ भौमाय. ६७ बुधाय. ६८ गुरवे. ६९ शुक्राय. ७० शनये. ७१ राहवे.
७२ केतवे. ७३ तद्बाह्ये पूर्वादिक्रमेण ऐंद्र्यै. ७४ कौमार्य्यै. ७५ ब्राह्म्यै. ७६ वाराह्यै. ७७ चामुंडायै. ७८

वैष्णव्यै. ७९ माहेश्वर्यै. ८० वैनायक्यैनमः वैनायकीमावाहयामि एवसर्वत्र चतुर्थ्यंतनामभिःप्रणम्य
द्वितीयांतैरावाह्य पुनश्चतुर्थ्यंतनामभिः प्रत्येकसंपूज्य तत सर्वतोभद्रोपरि अक्षतपुंजे अर्चाप्रदेशे अग्न्युत्तारण
पूर्वकं सौवर्णीप्रतिमायां इदंविष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरे इतिविष्णुंसंपूज्य तद्वामतः अध
स्थाजोपणेतिमंत्रेणरुक्मिणीं तद्दक्षिणत सत्यासत्येतिमंत्रेणसत्यभामां ततःक्षोदशाव्यायस्येतिमंत्रेणसरस्वतीं
गणानांत्वा आतूनइंद्रेतिवागणपतिं चावाह्यपौरुषेणसूक्तेनसंपूज्य तत अश्वत्थस्यपरित अष्टौकलशान् क
लशस्थापनप्रकारेण संस्थाप्य तत पूर्वकलशेशुद्धोदकं तत्रआपोहिष्ठेत्यादिनवर्चसूक्तं द्वितीयेगंधोदं
कं आनोभद्रेतिदशर्चसूक्तं तृतीयेक्षीरोदकं स्वस्तिनोमिमीतेतिपंचर्चसूक्तं चतुर्थेपंचगव्येनशन्नइंद्राग्नीतिप
चदशर्चं पंचमेहारिद्रोदकं आनोभद्रेतिऋचं षष्ठकलशे सर्वौषध्युदकं समुद्रज्येष्ठाइतिचतसृभि. सप्तमेकु
शोदकं यादिव्याइतिऋच अष्टमे गंधोदकं पशुपश्वायइतिनवर्चसूक्तंपठित्वा कलशस्थापनंपूर्वपात्रंनिधाय
नांतकं वा ततस्तेषुकलशेषु पूर्वादिक्रमेण इंद्रादीन् तत्तन्मंत्रैरावाह्यपूजयेत् ततश्चश्वत्थपुरुषसूक्तेन अ
श्चिरातइतिपूर्वोक्ताथर्वशिरसा वसशोध्य पंचामृताभिषेकंचकृत्वा कषायवस्त्रयुग्मेनावेष्ट्य ततःपूर्वादिक्षु च
त्वारिस्थंडिलानिविधाय तेषुहोमार्थंचतुरआचार्यान्वृत्वा स्वगृह्यविधिनाअग्निंस्थापयेत् अत्रकेचन ईशा
नपूर्वयोर्मध्येग्रहहोमादिकंतुपंचमस्थंडिलमिच्छंतिवहव.पूर्वग्रहप्रधानहोमादिकंकुर्वीत पूर्वमुक्तेग्रहयज्ञे ईशान्या
वेदिकायांस्वगृह्यप्रकारेणग्रहानावाह्यसंपूज्य अन्वादध्यात् तत्रपूर्वकुंडेआदित्यादिनवग्रहान् अमुकसंख्यय
अर्कादिसमिच्चर्वाज्यद्रव्यैः अधिदेवताः प्रत्यधिदेवताश्चामुकसंख्ययातैरेवद्रव्यैः ततआनोभद्रेतिमंत्रेणविश्वान्दे
वान्चरुद्रव्येण अष्टोत्तरशतसंख्यया तथा दामोदरादिपीठदेवता अश्वत्थसमिच्चर्वादिद्रव्यैरष्टोत्तरशतसंख्यया

ब्रह्मादिदेवतालोकपालांश्चैकैकयाज्याहुत्यायक्ष्ये पंचमकुंडपक्षे आदौतत्रअग्निप्रणयनं तस्मात् चतुर्थ्याग्नि प्रणयनंतत्रग्रहहोमः दामोदरादीनांहोमः ब्रह्मादीनांपूर्वकुंडेविश्वेदेवानांलोकपालानांचहोमः अश्व त्थदक्षिणकुंडेगणपतितिलाज्यद्रव्यैः अष्टोत्तरशतसंख्ययायक्ष्ये ततउत्तरकुंडेउत्तरनारायणं अष्टोत्तरशतसंख्य यासहस्रशीर्षेतिप्रत्यृचंआज्याहुतिभिर्यक्ष्ये एवंतन्मंत्रैर्होमंसंपाद्य स्विष्टकृदादिबलिदानांतंकृत्वा अधिवासयेत् पुराणश्रवणादिभिरात्रिंनयेत् केचित्तुकषायवस्त्रदानांतंकृत्वापरेद्युरेवहोमादिकामिच्छंति प्रातःपीठदेवतासंपूज्य अष्टकलशदेवताविसृज्य अष्टभिर्ब्राह्मणैस्तान्ग्राहयित्वा ततआचार्यः पवमानःसुवर्जनस्वानुवाकेनच अ श्वत्थंत्रिःपरिषिच्य किंचिदवशिष्टोदकान् पूर्वस्थानेपुस्थापयेत् ततोयजमानःआचार्योवा अश्वत्थपाश्चिम स्थंडिलेग्निसंस्कारहोमंकुर्यात् तद्यथा अश्वत्थस्यव्याहृतिद्वारा पुंसवनादिसमावर्त्तनांतान्संस्कारान्करि ष्ये इतिसंकल्पः अग्निपवमानंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानम् अग्निवायुसूर्यप्रजापतिंआज्य द्रव्येणप्रतिसंस्कारंचतुश्चतुःसंख्याकाहुतिभिर्यक्ष्ये प्रतिसंस्कारहोमांतेस्खलइतिमंत्रेण अश्वत्थंस्पृशेत् ए वमुपनयनपर्यंतंकृत्वा यजमानश्चस्वस्याश्वत्थस्यचांतरालेपटंधृत्वा सुमुहूर्तेमंडलपाठपुरःसरंदेवलग्नमितिप ठित्वा अतः पटंनिःसार्य्यध्रुवसूक्तंपठित्वा येयज्ञेनेतिवर्गपंचकशाखांतमंत्रांश्चपठित्वा कौपीनंयज्ञोप वितंकनकमयींमेखलांदंडंचतत्तन्मंत्रैर्दत्त्वा सप्रणवांसव्याहृतिकांसशिरस्कांगायत्रीमुपदिशेत् इत्युपनयनम् ततोमहानाम्न्यादिसमावर्त्तनांतंकृत्वा कनककुंडलअलंकारांश्चदत्त्वा आयुष्यंब्रह्मवर्चसमितिपठित्वामौंजीवि सर्जनांतंकृत्वा त्वमग्नेइतिसूक्तंपठेत् ततःस्विष्टकृदादिहोमशेषंसमापयेत् अथविवाहः अश्वत्थालवालेयवा स्तोशतकुंभमितंशुद्धजलंक्षिप्त्वा दुग्धमधुघृतकुंभैश्चक्षिप्त्वा वस्त्रयुग्मेनांतराश्वत्थस्यविवाहादिविधिंकरिष्ये

इतिसंकल्प्य पूर्वसंस्कारहोमस्थंडिलोत्तरप्रदेशेस्थंडिलंविधाय योजकनामाग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानंद्वौसुवर्णासयुजौसखायौसमानंवृक्षंतरिपस्वजातेतिमंत्रेण अष्टोत्तरशतसंख्ययातिलाज्यद्रव्येणतथाम हाव्याहृतिभिस्तिलाज्यद्रव्येणअष्टोत्तरशतसंख्ययायक्ष्ये महाव्याहृतिभिस्तुभूःअग्नयेपृथिव्यैमहतेचस्वाहा भुवो वायवेचांतरिक्षायचमहतेस्वाहा ॐस्वरादित्यायदिवेचमहतेस्वाहा ॐभूर्भुवःस्वश्चंद्रमसेचनक्षत्रेभ्यश्चमहद्भ्यः स्वाहा एवंहोमंसंपाद्यतुलस्यश्वत्थयोश्चतुर शाखामयान्हस्तान् गृभ्णामीतिमंत्रेणयोजयेत् ततःस्विष्टकृदादिहो मशेषंसमाप्य ततोऽश्वत्थंपुरुषसूक्तेनषोडशोपचारैःसंपूज्यअश्वत्थंतुलसींचप्रार्थयेत् अश्वत्थत्वंजगन्नाथपुरादेवै र्विनिर्मितःपापात्संत्राहिनोदेवपुण्यंदेहिमहाफलं इत्यश्वत्थप्रार्थनामंत्रः अथतुलसीप्रार्थना क्षीरोदधिसमुद्भूतेतुल सीहरिवल्लभे अश्वत्थोद्यापनपुण्यंमह्यंदेहिश्रियेनमः ततआचार्य्यःक्षेत्रपालवलिंदत्त्वा सर्वेऋत्विजआचा र्यश्चस्वस्वकुंडेपूर्णाहुतींदत्त्वा कर्मशेषसमापयेयु ततोयजमानःपीठपूजादिविविधकृतस्यअश्वत्थोद्यापनस्यसांग तासिद्ध्यर्थं आचार्य्यादिभ्योदक्षिणाप्रदानमहंकरिष्ये इतिसंकल्प्य पूजापूर्वकतेभ्योदक्षिणांदत्त्वाआचार्य्योथपूर्व स्थापितकलशोदकदूर्वापल्लवैःसपत्नीकंयजमानमभिषिंचेयुःतत्रमंत्राः आनोभद्राइति दशर्चंसूक्तं अस्यवामेतिद्वि पंचाशतृचांसूक्तं मुंचामीतिपचर्चंसूक्तं परोमत्रेतिचतुर्दशर्चंसूक्तं समुद्रज्येष्ठाइत्यादयः ततः पौराणिकाः सुरास्त्वामभिषिंचंत्वित्याद्याः एवमभिषिक्तोयजमान तिलकादिंधृत्वा अग्निपीठदेवतांचसंपूज्य उत्तिष्ठब्रह्मण स्पतेति उत्थाप्य सोपस्करंपीठमाचार्य्यायदत्त्वा कृतस्यकर्मणः संपूर्णतासिद्ध्येगांचदत्त्वा मदंच स ऋत्विक्सदस्यायाचार्य्यायचदत्त्वा भूयसींदक्षिणांदत्त्वा परमेश्वरार्पणंसंपाद्य सप्ताधिकान् ब्राह्मणान्संभोज्य आशिषोगृहीत्वाअश्वत्थोद्यापनसंपूर्णतांवाचयित्वा इष्टजनैः सहभुंजीत यएवंकुरुतेतस्यवर्धतेश्रीयशः सुखं

कुलकोटिसमुद्धृद्वीर्विष्णुलोकेमहीयते. इतिशौनकीयेअश्वत्थोद्यापनम् अथवटोद्यापनम् भविष्यस्कांदयोः तच्चोदगयनेसुमुहूर्त्तेस्थिरलग्नेचंद्रानुकूल्यदिनेरम्यप्रदेशे नाभिमात्रगर्त्तेगृहादौप्रतिष्ठामंत्रेणवटपादपारोपणंका र्य्यं तद्वदेवसर्वपादपारोपणम् अष्टमेवर्षेद्वादशेवावर्षेशाखापत्रांकुरितेवटवृक्षेउदगयनादिशुभकालेवटोद्या पनंकुर्यात् वटस्यपरितः चतुर्हस्तांदृढांवेदिकांविधाय वटमूलेचतुरस्रंवर्त्तुलंवाआलवालंकृत्वा तत्रकांडा त्कांडादितिमंत्रेणदूर्वाआरोपयेत् वटपरितः चतुर्हस्तपंचहस्तंवासुदृढं चतुर्द्वारंमंडपंकुर्य्यात् सामर्थ्येसति वटस्यपार्श्वेमंडप उत्तरेवा यथोक्तप्रकारेणहोमार्थं नवपंचकुंडाद्युपेतंमंडपंकुर्य्यात् असामर्थ्ये वटवेदिकायामे व तत्रप्रागादिद्वारचतुष्टये आम्रोदुंबरप्लक्षाशोकपल्लवकृतानिचत्वारितोरणानि तथाद्वारचतुष्टयेश्वेतकृष्ण हरितपीतवर्णाश्चत्वारोध्वजाः पताकाश्चवटशिरसि सर्ववर्णध्वजः कार्यः एवंसंभृतसंभारोयजमानः ज्योतिर्विदादिष्टेसुमुहूर्त्तेप्रधानसंकल्पंकुर्यात् तद्यथा ॐमद्य.तिथ्यादिकीर्त्तनांतेआत्मनः सकलपापक्षय कुलकोटिसमुद्धरणऐहिकामुष्मिकसुखप्राप्तिपूर्वकब्रह्मपदप्राप्तिकामोवटोद्यापनंकरिष्ये तथाच अभीष्टदातृत्व सिद्ध्यर्थंसर्वप्राणिसुखनिवासार्थंचवटसंस्कारमहंकरिष्ये स्वगृह्योक्तविधिनातानिचकृत्वा आचार्य्यादीन्वृणु यात् अस्मिन्कर्मणिआचार्य्यंत्वामहंवृणे तदंगविहितंगणेशपूजनपुण्याहवाचन नांदीश्राद्धआचार्य्यादिव रणंकरिष्ये वृतोस्मीतितेनोक्ते एवंब्रह्माणं सदस्यंउपद्रष्टारंच ऋत्विजश्चसतिसंभवेमधुपर्कादिनासंपू ज्य प्रार्थयेत् अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया सुप्रसन्नैश्चकर्त्तव्यंकर्मेतद्विधिपूर्वकं ततः सस्त्री कयजमानः पूर्णकलशहस्तः मंगलादितूर्यघोषेणसहशाकुंतसूक्तंपठेत् वटमंडपप्रादक्षिण्येनपाश्चिमद्वा रमागत्य तत्रमहीद्यौरितिमंत्रेणधरांसंपूज्य सुवर्णादिनिर्मितांवा आचार्य्यायदत्वाप्रविश्यच वटसमीपे

कलशंनिधाय वरुणनिर्ऋतिमध्येउपविशेत् ततआचार्य्यआचार्यकर्माहंकरिष्ये इतिसंकल्प्य भूतशुद्ध्या
दिविधाय मंडपांतः गौरसर्षपलाजान् यदत्रसंस्थितंभूतमित्यादिमंत्रेणविकीर्य साधितपंचगव्येनकुशैः आ
पोहिष्ठेत्यादिमंत्रैः सर्वत्रप्रोक्षणंकृत्वा देवाआयांतुयातुधानाअपयातु विष्णोदेवयजनंरक्षस्व ततः स्व
स्त्ययनंतार्क्ष्यमरिष्टनेमिमितिमंत्रंपठेत् यथोक्तमंडपेतु उक्तप्रकारेणमंडपपूजांकुर्य्यात् साधारणमंडपेतु
तोरणपताकाध्वजशा तिसूक्तजपार्थं वेदक्रमेणद्वौद्वौएकमेकंवाब्राह्मणं प्रागादिक्रमेणवृत्वायथास्थानंनिवेशयेत्
ततोब्रह्मादिदेवतासर्वतोभद्रेआवाह्य तदुपरिअक्षतपुंजेकलशत्रयंप्रतिष्ठाप्य ततोमध्यकुंभेब्रह्मयज्ञानमिति
ब्रह्माणं तदक्षिणेइदंविष्णुरितिविष्णुं तदुत्तरे त्र्यंबकयजामहे इतिरुद्रं आग्नेयादिकोणेषुगणानांत्वेतिग
णपतिं जातवेदसेइतिदुर्गां यज्ञानामितिमारुतं क्षेत्रस्यपतिनाइतिक्षेत्रपालं ततः परितः लोकेशान् त
त्तन्मंत्रैरावाह्यसंपूज्य वेदिपरितः अष्टौकलशान्स्थापनक्रमेणसंस्थाप्य तत्रपूर्वादिकलशेषु पंचगव्यं
सप्तमृदः चंदनं पंचरत्नानि क्षीरं सर्वौषधी गंगोदकंच क्षिप्त्वा शुद्धोदकेनापूर्य पूर्णपात्रंप्रत्ये
कंनिधाय तेषुइंद्रादीनावाह्य संपूजयेत् हरिद्रातैलरोपणादिवटस्यकृत्वावस्त्रेणवेष्टयेत् इत्यधिवासनम् अपरेद्युः
प्रातर्नित्यकर्मसमाप्य पीठदेवताः संपूज्य प्रागादिद्वारचतुष्टयेषुचतुरश्चतुरश्चकुंभान्संस्थाप्यतेषुउदकपंचरत्नपं
चपल्लवादिनिधायतेषुइंद्रयमवरुणसोमान् तत्तन्मंत्रैरावाह्यसंपूज्य चतुर्वेदविदोद्विजाः शांतिसूक्तानिपठेयुः ईशान्यां
कुंडेस्थंडिलेवा अग्निंप्रतिष्ठाप्य तदुत्तरवेदिकायांउक्तप्रकारेणग्रहानावाह्यसंपूज्य ईशान्यांकलशंसंस्थाप्यप्रति
ष्ठाप्य अथाचार्यब्रह्माणंचवृणुयात् ततोद्वारस्थाआचार्य्याश्चत्वारःस्वस्वकुंडेस्वस्वगृह्यविधानेन आचार्यकुंडात्
श्रोत्रियागाराद्वाअग्निंप्रणीयस्थापयेयुः कुंडचतुष्टयेप्रत्येकंब्रह्माविष्णुरुद्रान् घृताक्तंदूर्वात्र्यक्षेणअष्टोत्तरशतस

म्मिताहुतीभिःयक्ष्ये पूर्वेइंद्राद्यष्टौलोकपालान् समित्चर्वाज्यद्रव्यै रष्टाविंशतिसंख्ययायक्ष्ये दक्षिणेगणपतिंदु
र्गांसप्तमातॄः क्षेत्रपालंघृताक्तद्रव्येणअष्टाविंशतिसंख्याहुतिभिर्यक्ष्ये पश्चिमकुंडेसाधिप्रत्यधिदेवतानादि
त्यादिग्रहानर्कादिसमिच्चर्वाज्यतिलव्रीहिद्रव्यैरष्टाविंशतिसंख्याकाहुतिभिर्यक्ष्ये उत्तरकुंडेसोमंधेनुमितिमंत्रेणघृ
ताक्तचरुप्लक्षसमिद्द्रव्यैः अष्टोत्तरशताहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये एवंतत्तन्मंत्रैर्होमंसं
पाद्य ततआचार्यःवटस्यहरिद्रातैलादिदत्त्वा पंचोपचारैःसंपूज्य स्थापिताष्टकलशान् ब्राह्मणान्ग्राहयित्वा
आपोहिष्ठामयोभुवःसमुद्रज्येष्ठाः इमाआपः यतोन्विद्रमिति प्रत्येकंयजमानो वटस्याभिषेकंकुर्य्यात् ततआ
चार्यःप्रतीच्यांवटस्यसंस्कारहोमार्थं स्थंडिलंनिर्मायसंकल्पंकुर्य्यात् ओमद्यास्यवटस्यपुंसवनादिविवाहांतान्सं
स्कारान्व्याहृतिहोमद्वाराकरिष्ये इतिसंकल्प्य अग्निप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानं अग्निंवायुंसूर्यं
प्रजापतिंआज्यद्रव्येण प्रतिसंस्कारंचतुश्चतुःसंख्याहुतिभिर्यक्ष्ये ओंभूरग्नयेपृथिव्यैमहतेस्वाहा ओंभुवोवा
यवेंतरिक्षायमहतेस्वाहा ओंस्वरादित्यायदिवेमहतेस्वाहा ओंभूर्भुवःस्वश्चंद्रमसेचनक्षत्रेभ्यश्चमहतेस्वाहा
एवंहोमंकृत्वा प्रतिसंस्कारहोमांते वनस्पतेसातेवल्वशाइतिमंत्रेणवटंस्पृशेत् एवमुपनयनपर्यंतंकुर्यात् ततोयजमा
नःवटांतरालेपटंधृत्वा मुहूर्त्ततदेवलग्नमितिपठिते अंतर्पटंनिःसार्य्यध्रुवसूक्तंयेयज्ञेनेतिपठित्वाकौपीनंयज्ञोपवीतं
मेखलांदंडंचतत्तन्मंत्रैर्दत्त्वा ब्रह्मोपदेशवत्गायत्रींचदत्त्वाप्रणमेत् इत्युपनयनंततोमहानाम्न्यादिसम वर्तनांतंकर्मकृ
त्वा अलंकारान्दत्त्वा आयुष्यंब्रह्मवर्चसमितिमौंजींविसर्जयेत् ततोवटंदूर्वांचदुग्धादिनासिंच्य वटंदूर्वांचवस्त्रयुग्मे
नसंवेष्ट्यवस्त्रकंचुक्यादिआभरणानिचदत्त्वा पूर्ववत्हुत्वागृभ्णामितेहस्तमितिमंत्रेणवटदूर्वयोःपल्लवमयान्हस्तान्
योजयेत् आदित्योब्रह्मरूपायमध्यतोविष्णुरूपिणे अग्रतःशिवरूपायवटवृक्षायतेनमः अकारमूलरूपायउकारः

स्कंदरूपिणे मकारफलपुष्पायवटवृक्षायतेनमः इतिवटंनमस्कृत्य दूर्वासिशतपर्वासिशतमूलाशतांकुरा
शतंहरसिपापानांशतमायुःप्रवर्धते इतिवटवृक्षंदूर्वांचसंप्रार्थ्य ततश्राचार्यःक्षेत्रपालबलिंदत्त्वा सर्वेआचार्य्याःस्व
स्वकुंडेषुपूर्णाहुतीर्दत्त्वा ततोयजमान.वटोद्यापनसंपूर्णतासिद्धये आचार्य्यादिभ्योदक्षिणांदास्ये इतिसंकल्प्य
क्रमेणसर्वेभ्योदक्षिणांदत्त्वा ततःसर्वेऋत्विजःस्वस्वकलशोदकैर्यजमानं समुद्रज्येष्ठाइत्यादिमंत्रेणाभिषिंच्य
कर्मशेषंसमापयेयुः ततोयजमानःपीठदेवतांसंपूज्य उत्तिष्ठब्रह्मणस्पतेइत्युत्थाप्ययांतुदेवगणाःसर्वेइतिविसृ
ज्य पीठंसोपस्करमाचार्य्यायसंकल्प्यदद्यात् संभारानृत्विगाचार्य्यादिभ्योविभज्यदत्त्वाशताधिकान्ब्राह्मणा
न्भोजयिष्ये इतिभूयसीदक्षिणादानपूर्वकंकुर्य्यात् सदन्नेनदक्षिणादिनासंतोष्य वटोद्यापनसंपूर्णतांवाच
यित्वा इष्टजनैःसहभुंजीत इतिवटोद्यापनविधिः अथवृक्षसामान्योद्यापनविधिर्हेमाद्रौमात्स्ये ऋषयऊचुः
पादपानांविधिंसूतयथावद्वदविस्तरात् विधिनाकेनकर्त्तव्यंपादपोद्यापनंबुधैः येचलोकाःस्मृतास्तेषांतानिदा
नींवदस्वनः सूतउवाच पादपानांप्रतिष्ठांचतथैवोद्यानभूमिषु तडागविधिवत्सर्वमासाद्यजगतीश्वरः ऋत्वि
क्मंडपसंभारमाचार्य्यश्चापितादृशः पूजयेद्ब्राह्मणांस्तद्वद्धेमवस्त्रानुलेपनैः सर्वौषध्यादिसंसिक्तान्पिष्टातक
विभूषितान् वृक्षान्माल्यैरलंकृत्यवासोभिरभिवेष्टयेत् सूच्यासौवर्णयाकार्य्यंसर्वेषांकर्णवेधनं अंजनंचापिदातव्यं
तद्वद्धेमशलाकया फलानिसप्तवाष्टौवाकालधौतानिकारयेत्कालधौतानिरौप्यानिसौवर्णानिचकार्याणि प्रत्येकंसर्व
वृक्षाणांवेद्यांतान्यधिवासयेत् धूपोत्रगुग्गुलुःश्रेष्ठस्ताम्रपात्रैराधिष्ठितान् सर्वधान्यकृतान्कृत्वावस्त्रगंधानुलेपनैः
कुंभान्सर्वेषुवृक्षेषुसुस्थापयित्वानरेश्वरः साहिरण्यानशेषांस्तान्कृत्वाबलिंनिवेदनं तथाचलोकपालानामिंद्रादीनां
विधानतः वनस्पतेश्चविद्वद्भिर्होमःकार्योद्विजातिभिः ततःशुक्लांबरधरोसौवर्णकृतभूषणो कांस्यदोहांतुसौवर्णशृं

गान्यामतिशालिनी पयस्विनींवृक्षमध्यादुत्सृजेद्गामुदङ्मुखीं ततोभिषेकमंत्रेणवाद्यगीतकमंगलैः ऋग्यजुः
साममंत्रैश्चवारुणैरभितस्तदा तैरेवकुंभैस्नपनंकुर्य्युर्ब्राह्मणपुंगवाः स्नात्वाशुक्लांबरधरोयजमानोपिपूजयेत् गो-
भिर्विभवतःसर्वान्नृत्विजःसुसमाहितः हेमसूत्रैःसकटकैरंगुलीयपवित्रकैः वासोभिःशयनीयैश्चतथोपस्करपादु
कैः क्षीराभिषेचनंदद्युर्य्यावद्दिनचतुष्टयं होमश्चसर्षपाकार्योयवकृष्णतिलैस्तथा पालाश्यःसमिधःशस्ताश्चतु
र्थेन्हितथोत्सवः दक्षिणाश्चपुनस्तद्वद्देयातत्रापिशक्तितः यद्यदिष्टतमंकिंचित्तत्तद्द्यादमत्सरः आचार्य्येद्विगु
णंदत्वाप्रणिपत्यविसर्जयेत् अनेनविधिनायस्तुकुर्य्याद्वृक्षोत्सवंबुधः सर्वान्कामानवाप्नोतिपदंचानंत्यमश्नुते यश्चै
कमपिराजेंद्रवृक्षंसंस्थापयेन्नरः सोपिस्वर्गेवसेद्राजन्यावदिंद्रायुतत्रयम् भूतान्भव्यान्मनुष्यांश्चतारयेन्निरयस्थि-
तान् परमांसिद्धिमाप्नोतिपुनरावृत्तिदुर्लभां इतिसामान्यवृक्षोद्यापनविधिः ॥ स्वस्तिश्रीरणवीरसिंहधरणीपा
लोवदान्याग्रणीः ॥ १ ॥ रणवीरसिंहभूपेशकारितेकृत्यवारिधौ लक्षपूजावृक्षपूजाकृत्यरत्नसमुच्चयः ॥ ३२ ॥
अथप्रसंगाद्व्रतरुपुत्रकविधिः मत्स्यपुराणे दशकूपसमावापीदशवापीसमोह्रदः दशह्रदसमःपुत्रोदशपुत्र
समोद्रुमः नंदिपुराणे ततःपुत्रंतुयःकुर्य्याद्विधिवद्वन्हिसन्निधौ सनहापातकैर्युक्तःसमुद्धृत्यकुलद्वयं नरकेभ्योन्नरोपा
तिप्रजापातिपुरंप्रभो स्कंदपुराणे इत्येवंरुद्रमहीधीभूमिरुहसुतस्तवंस्तुत्वापातिंत्रिलोकेशमिदमाहपतिव्रता देव्युवा
च भगवन्केनविधिनाविधीनांसारसागरःपुत्रप्रतिकृतिर्वृक्षःक्रियतेचंद्रभूषण सलीलमितिसर्वज्ञःपृच्छंतींविधिमुत्त
मं महादेवोमहादेवीमिदंवचनमब्रवीत् ॥ ईश्वरउवाच ॥ देविनागेंद्रनासोरुनागेंद्रमदगामिनी शृणुष्वयेनवि
धिनागृह्यतेवनिजःसुतः अवनिजोवृक्षः स्वपुत्रार्थंभूमिरुहंगृह्णीष्यानीतिपार्वति सोपवासाभवेन्नारीशुचि
वस्त्राशुचिव्रता ततश्चैवसहस्रांशावस्तशृंगगतेनिशि उदितेविमलेचापितथेंदाविंदुसन्निभे विप्रानामंत्रयेद्राज्ञो

पार्वणान्वेदपारगान् विप्रानामंत्रयित्वातुशुचिवस्त्राशुचिव्रता शचीतसनमस्कारासदर्भाभूमिमाश्रिता
गमयित्वातुतांरात्रिसवितर्युदितेसतिभक्ष्यभोज्यैसमादचव्रजेयत्रभवत्तरुः ततस्तंस्नापयित्वातुसातपत्रंसभूषणं
तंतरुंतरुणीकृत्य तच्छायामनुगामिनः यथोपपन्नमन्नंतद्भोजयित्वाद्विजांस्ततः पुण्येन्हिस्नापयित्वातुऋत्वि
जश्चतुराननः तृप्तानांब्राह्मणानांवैतत्त्वेनाकृत्यमात्मनः निवेद्यकृतमुद्दिश्यसद्भावेनपरेणहि अपुत्राभगवंतोहं
पुत्रप्रीतिकृतंतरुं ग्रहीष्यामिमतानुज्ञांकर्तुमर्हथसत्तमाः ततस्तैरभ्यनुज्ञातंतंतरुंतरुणाकृतिं भूमिदेवसमक्षंवै
गृह्णीयाच्चात्रसुव्रते भूमिदेवसमक्षंतुविधेयंब्राह्मणाग्रतः अनेनविधिनायस्तुगृहीतस्तरुपुत्रकः पितृणांनर
कस्थानामर्घधारांसवर्षति गृहीतोविधिनानेनशुभभूमिरुहांगजः सतुसुरायभवतिविपरीतेनदुःखदः सपुत्रा
णांशतंचापिपीनश्रोणिपयोधरे एकोभूमिरुहःश्रेष्ठःपुत्रस्त्वेकःलिपतस्ततः इत्येवंतन्मयादिष्टमिष्टदुष्टेनवारिणा
यथाभूमिरुहः पुत्रोविशिष्टोप्येककःशने ततःशोकापहादेवीतमशोकंविभावरी अलंकृत्यसहर्षात्माह्युपकं
कारैःपृथग्विधैः आतपत्रंततस्तस्यमुक्ताचंचलभास्वरं उत्थापयत्सासाशिरोमयरागरुहैनवैः नानावर्णेन
चाप्यस्यवदनेनसुगंधिना आमूलंप्रददौदेवीकरपद्मानितस्ततः जांबूनदमयैश्चापि पट्टैरत्नविराजितैः
सर्वतोभूषयामासतमशोकरुहंसुतं तस्यशाखाप्रशाखासुमुक्तादामानिपार्वती आबबंधसतैर्भातिनक्षत्रै
रिवभास्करः तथावासोयुगेनापितमशोकंगुहारणी वासयामासलेकानांजननीपुत्रलालसा ततो
न्वगुरुणाचारुगुग्गुलंघृतमेवच समवाययुतंधूपंचारयधूपनार्चिता: ततःशंखनिनादेनदेवतूर्यरवेणच नंद
नाद्यसमानीताब्राह्मणाब्रह्मणासमाः वाचयित्वाथपुण्याहंदत्त्वागाःस्वर्णमेवच ततःपुण्याहघोषेतेदत्त्वाचाशीर्द्वि
योरपि अनुमन्यपतिंदेवीऋषीश्चाप्रीणयत्तदा ब्रह्मवैवर्तेश्रीभगवानुवाच अतःपरंप्रवक्ष्यामिवृक्षस्योद्यापने

विधि सर्वपापप्रशमनंसर्वाशुभनिवर्हणं अपुत्रयापुरापार्थपार्वत्यामंदराचले अशोकंशोकशमनःपुत्रत्वेप
रिकल्पितः जातकर्मादिकास्तस्य याःक्रियाः बद्धमान्किल अत्रिर्मुनिःपुराणोक्ताःशृणुष्वैवयुधिष्ठिर
धनुर्बलोधनवलोतथैवमृदुपल्लवः शीतवातातपसहःसंस्कार्य्यस्तरुपत्रकः स्त्रीनामांकंटकीकुब्जःकीटखातःस
कोटरः नोद्याप्यःपादपःसर्वाशिष्टानांयातसंमतः आलवालसुविहितशुभेचार्धचतुष्पथे शोधयित्वातमुद्देशं
प्रशस्तंकारयेत्ततः ततश्चोद्यापनंपार्थपादपानांप्रदिश्यते शुभेह्निविप्रकथितग्रहनक्षत्रसंयुते पताकालंकृतंवृ
क्षंपूर्वघुराधिवासयेत् पुष्पैस्त्रापितस्त्वर्णसर्वौषध्याचपादपं स्थापयेत्सर्वतःकुंभांश्चतुर्दिक्षुविचक्षणः पताका
लंकृताःसर्वकार्य्यास्तत्सन्निभा द्रुमाः मूलविन्यस्यकलशारत्नसूत्रावगुंफिताः रक्तपीतासितश्वेतचर्चिताः
सुमनोहराः कलधौतमयान्यत्रफलानिदशपंचवा ताम्रपात्रेसबीजानिसरत्नान्यधिवासयेत् तूर्यमंगलघो
षेणचतुर्दिक्षुक्षिपेद्बलीः इंद्रादिलोकपालानांतन्मंत्रैर्मंत्रविद्गुरुः ततःप्रभातेविमलेकुंडंकृत्वासमेखलं ग्रहयज्ञ
विधानतःशांतिकर्मसमारभेत् सुवर्णालंकृतान्कृत्वासर्वान्ब्राह्मणपुंगवान् चतुरोष्टौयथाशक्त्यावासोभिरभिपू
जयेत् तिलाज्येनतुहोमःस्यात्तुष्टिपुष्टिकरःसदा मातरःस्थापयित्वातुपूजयेत्कुसुमाक्षतैः स्नापयित्वातरुं
सम्यक्पयसाथपरिप्लुतं होमयेज्जातकर्मादिगोदानंयावदेवहि पादपंस्नापयेत्तत्रसमंत्रैस्तीर्थवारिभिः जात
कंनामकरणमन्नप्राशनमेवच सुवर्णसूच्याकुर्वीतकर्णवेधंविधानतः जातरूपक्षुरेणाथचूडाकर्मयथाक्रमं वध्नी
यान्मेखलांमौंजींवासश्चपरिधापयेत् कुर्य्यादेतदशेषेणकृत्वागोदानमंगलं विवाहंकेचिदिच्छंतिमालतीलतया
तरोः मालत्यासहामलक्यांजंबूवाशाल्मलींविदुः संस्कृत्यैवंतुसंस्कारैःपादपंचयथाथवत् एषप्रतिष्ठानामे
तिमंत्रणाशीःप्रयोजयेत् यजमानस्ततस्नात्वाशुक्लांबरधरःशुचिः पुष्पांजलिसमादायमंत्रमेनमुदीरयेत् मं

त्रेयथा ये शाखिनः शिखरिणां शिरसां विभूषा ये नंदनादिषु वनेषु कृतप्रतिष्ठाः ये कामदाः सुरनरोरगकिन्नराणां ते
मेततस्य दुरितार्त्तिहराभवंतु एते द्विजाविधिवदत्रहुतोहुताशाः पस्यत्यथोशिशिरदीधितिरंबरस्थः त्वंवृक्षपुत्रप
रिकल्पनयाद्यतोसिकार्य्यंसदेवभवताममपुत्रकार्य्यं इत्येवमुक्तातंवृक्षंपुत्रत्वेपरिकल्प्यच वृतपात्रेस्ववदनं
दृष्ट्वाशीःसंप्रयोजयेत् अंगादंगात्संभवसिहृदयादभिजायसे आत्मावैपुत्रनामासित्वंजीवशरदांशतं ब्राह्मणानां तथा
देयादक्षिणाहृष्टमानसैः स्थापकायशुभांधेनुंदद्यात्कुर्य्यान्महोत्सवं दीनानाथजनानांचभोजनंचानिवारितं इत
रेषांतुदातव्यंसंतुष्ठेनसुरासवं ज्ञातिबंधुजनैःसार्धंस्वयंभुंजीतकामतः तथाकर्मकराःसर्वेभोजनीयाःस्वशक्तितः
एवंयाकुरुतेपार्थवृक्षाणांसुमहोत्सवं सर्वान्कामानवाप्नोतिइहलोकेपरत्रच पद्मपुराणे अपुत्रस्यहिपुत्रत्वंपा
दपाइहकुर्वते यच्छंतिरोपकेभ्यस्तेसतीर्थेतर्पणादिकं सत्तीर्थेषुपुत्रकृततर्पणादिजन्यतृप्त्यादिफलंरोपकस्यप्र
यच्छंतीत्यर्थः यत्नेनापिचराजेंद्रपिप्पलारोपणंकुरु सतुपुत्रसहस्राणामेकएवकरिष्यति तर्पणादिकृत्यमिति
शेषः पुत्रैर्विनाशुभगतिर्नभवेन्नराणांदुःपुत्रकैरपितथोभयलोकनाशः एतद्विचार्य्यसुधियापरिपाल्यवृक्षाः पुत्रा
पुराणविधिनापरिकल्पनीयाः इतितरु

अथशिष्टपरिगृहीतंसत्यनारायणकथाविधानम् तत्रादौकृतनित्यक्रियोयजमानादिः सायंकालेब्राह्मणैरमात्यादि
भिःसह ॐतत्सदद्येत्याद्युच्चार्य्ययथावर्त्तमानदेशकालेअमुकशर्मावर्मानामनोवांछितफलावाप्तिकामोदुःखदौर्गत्या
द्यखिलसंकटनिवृत्तयेगणेशादिपूजापूर्वकं सत्यनारायणपूजासहितंकथाश्रवणमहंकरिष्ये ततोभूशुद्धिप्राणा
यामादिकृत्वा सामान्यार्घ्यस्थापनंग्रहस्थापनंशंखस्थापनंचविधाय त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे
नमितःसर्वदेवैश्चपांचजन्यनमोस्तुते १ आगमार्थंतुदेवानांगमनार्थंतुराक्षसां कुर्वेघंटारवंतस्माद्देवताह्वानलक्षणं
इतिशंखघंटांचसंपूज्य शंखोदकेनस्वात्मानंपूजोपकरणादिकंचाभ्युक्ष्य गणेशंग्रहांश्चयथाविधिसंपूज्य ततःस
त्यनारायणंध्यानं नारायणंसांद्रघनावदातंचतुर्भुजंपीतमहार्हवाससं प्रसन्नवक्त्रांवुचलोचनंतंसनंदनाद्यैरुपसे
वितंभजे १ शांताकारंभुजगशयनं २ शुक्लांबरधरंविष्णुं ३ इतिध्यात्वामानसैरुपचारैःसंपूज्य पुनर्ध्यात्वा
शालिग्रामशिलांपीठोपरिसंस्थाप्य अथवासुवर्णादिप्रतिमांसर्वतोभद्रस्थकलशोपरिसंस्थाप्य पुरुषसूक्तेनपं
चामृताभिषेकसहितषोडशोपचारैर्यथाशक्तिभक्ष्यभोज्यनैवेद्यवस्त्रभूषण फलदक्षिणादिभिर्भक्तिपुरःसरंमहोत्स
वंकृत्वा ॐनमोभगवतेसत्यनारायणायनमः इत्यनेनसर्वोपचारान्समर्पयेत् तत्रसपादकसेटकमात्रशर्करावृत
पाचितगोधूमचूर्णमयंनैवेद्यंप्रथमंदत्वा महानैवेद्ययथाशक्तिमहोत्सवार्थंयथारुचिदद्यात् नैवेद्यांतेतांबूलादि
समर्पणं वाचकंश्रोतृजनांश्चतिलकपुष्पमालादिरभ्यर्च्यालंकुर्य्यात् यथाशक्तिमूलमंत्रमष्टोत्तरशतादिकसंख्य
याजप्त्वा कथांशृणुयात् सूतउवाच नारायणंनमस्कृत्यनरंचैवनरोत्तमं देवींसरस्वतींव्यासंततोजयमुदीर
येत् नवांभोजनेत्रंरमाप्रेमपात्रंचतुर्बाहुचामीकरंचारुगात्रं जगत्त्राणहेतुंरिपुध्वांतवन्हिंसदानारायणंदेवमीडे श्री
रामंलक्ष्मणंसकरुणंसीतापतिंसात्विकं वैदेहीमुखपद्मलंघमधुपंपौलस्त्यसहारिणं वंदेवंद्यपदांबुजंसुरवरंभक्ता

नुकंपापरं॥२॥ शत्रुघ्ननहनूमताचभरतेनासेवितंराघवं॥ कलिकलुषविनाशंवांछितार्थप्रकाशं॥सुरनरसुखदासंभूसुरे

शप्रकाशं॥३॥ विबुधबुधविलासंशास्त्रचर्याविशेषं॥नृपतिवरचरित्रंभोःशृणुष्वेतिहासं॥ कृतत्रेताद्वापरेषुपूज्यतेनेक

रूपतः॥ कलौप्रत्यक्षफलदः॥ सत्यनारायणोहरिः॥ कृपयाब्राह्मणद्वारेप्रकटीकृतविग्रहः॥५॥ इतिहासमिमंवक्ष्ये

संवादंहरिविप्रयोः॥ काशीपुरमितिख्यातंतत्रासीद्ब्राह्मणोत्तमः॥ दांतोगृहाश्रमीनित्यंभिक्षुः॥ कुलकलत्रवान्

शतानंदइतिख्यातोविष्णुव्रतपरायणः॥ एकदापथिभिक्षार्थंचरतस्तस्यश्रीपतिः॥ पीडितस्यातिशांतस्यसंबभूवाक्षि

गोचरः॥ वृद्धब्राह्मणरूपेणपप्रच्छतंद्विजंहरिः॥ कथास्यसिद्विजश्रेष्ठवृत्तिकामेनकथ्यतां॥ ब्राह्मणउवाच॥ भि

क्षावृत्तिरहंसौम्यकलत्रापत्यहेतवे॥ याचितुंधनिनांद्वारेव्रजामिधनमास्तिनो॥ सत्यनारायणःभिक्षाविप्रैःसदाग्राह्याविं

शेषेणकलौद्विज॥ ममोपदेशतोविप्रसत्यनारायणंभज॥ दारिद्र्यशोकत्रिविधसंतापहरणंहरिं॥ कुशलाःशरणंयांतिनेतरे

विषयेषिणः॥ शरण्यंशरणंयाहिमोक्षदंमलमोचनं॥ एवंसंबोधितोविप्रोहरिणाकरुणात्मना॥ पुनःपप्रच्छविप्रोसौकोसत्य

नारायणोविभुः॥ सत्यनारायणउवाच॥ बहुरूपः॥ सत्यसंधः॥ सर्वव्यापीनिरंजनः॥ इदानींविप्ररूपेणतवप्रत्य

क्षतांगतः॥ दुःखोदधिनिमग्नानां तरणंचरणंहरेः॥ आहत्यपूजासंभारं॥ हितायजगतोद्विज॥ अर्चांस्तव

कथाध्यायांस्त्वमेवप्रकटीकुरु॥ इतिब्रुवंतंविप्रोसौददर्शपुरुषोत्तमं॥ जलदश्यामलंचारुचतुर्बाहुंगदादिभिः॥ पी

तांबरंनवांभोजलोचनंस्मितसुंदरं॥ वनमालामधुव्रातचुंबितांघ्रिसरोरुहं॥ निशम्यपुलकांगोसौप्रेम्णापूर्णाश्रुलो

चनः॥ स्तुवन्गद्गदयावाचादंडवत्पतितोभुवि॥ शतानंदउवाच॥ प्रणमामिजगन्नाथंजगत्कारणकारणं॥ अना

थनाथंशिवदंतापत्रितयमोचनं॥ नमः॥ सत्यनारायणायास्यकर्त्रे नमः॥ शुद्धसत्वायविश्वस्यभर्त्रे॥ करालायकाला

सकायास्यहर्त्रेनमस्तेजगन्मंगलायात्तमूर्ते॥ धन्योस्म्यद्यकृतार्थोस्मिभवोद्यसफलोमम॥ वाङ्मनोगोचरोयस्त्वंममप्र

त्यक्षमागतः॥ दिष्ट्याकिंवर्णयाम्यद्यजन्मनोनेकस्यमेफलम्॥ क्रियाहीनस्यमंदस्यममप्रत्यक्षमागतः॥ किंकृतोहंभग
वन्कृतार्थतेरमापते॥ विधिनाकेनरूपय तदाज्ञापयमांविभो॥ हरिस्तमाहमधुरसस्मितंविश्वमोचनंपूजयाममविप्रें
द्रलप्स्यसेत्वंधनंबहु॥ अनायासेनलब्धेनश्रद्धामात्रेणमांभज॥ गतोग्राहोजालिकोवाअन्नभून्मुक्तबंधनः॥ विधानंशृणु
विप्रेंद्रमनसाकामजंफलं॥ पूजांसंभृतसंभारःकुर्याद्भक्त्यायथाविधि॥ गोधूमचूर्णपादांशसेटकादिप्रमाणतः॥ दु
ग्धेनतावतायुक्तामिश्रितंशर्करादिभिः॥ गंधपुष्पादिनैवेद्यैर्भोज्याद्यैश्चमनोरमैः॥ धूपैश्चदीपावलिभिरन्नैश्चविवि
धोत्तमैः॥ अन्नमिष्टान्नतांबूलैः॥ पूजयेद्भक्तितत्परः॥ ब्राह्मणैः॥ स्वजनैश्चैववेष्टितः श्रद्धयान्वितः॥ मयासार्धं
ममकथांशृणुयात्परमादरात्॥ इतिहासंतथाराज्ञोवणिजोखिलतःपरं॥ कथांतेप्रणमेद्भक्त्याप्रसादंविभजेत्तथा॥
ग्धंप्रसादंभुंजीतमानंनैवविचारयेत्॥ द्रव्यादिभिर्नमेप्रीतिर्भक्त्याकेवलयातथा॥ विधिनानेनमांनित्यंपूजयिष्यति
येनराः॥ पुत्रपौत्रधनैर्युक्ताभुक्त्वाभोगान्यथेप्सितान्॥ अंतेसान्निध्यमासाद्यमोदंतेतेमयासह॥ यंयंकामंकामयं
तेप्राप्नुयुस्तेममार्चनात्॥ इत्युक्त्वांतर्दधेविष्णुर्विप्रोपिहृष्टमानसः॥ प्रणम्यागाद्यथादिष्टंमनसाकौतुकाकुलः॥ अद्य
भैक्ष्येणलब्धेनपूज्योनारायणोमया॥ इतिनिश्चित्यमनसिभिक्षार्थीनगरंगतः॥ विनादेहीतिवचनंलब्धवान्विपुलं
धनं॥ कौतुकाविष्टमनसाजगामनिजमंदिरं॥ कौतुकात्सर्वमाख्यातंब्राह्मण्यासान्वमोदत॥ सादरंद्रव्यसंभार
माहरद्भर्तुराज्ञया॥ आहूयबंधुमित्राणितथासान्निध्यवासिनः॥ सत्यनारायणंदेवंयजामिस्वगुणावृतः॥ भक्त्या
तुतोषभगवान्सत्यनारायणःस्वयं॥ कामदित्सुःप्रादुरासीत्कथांतेभक्तवत्सलः॥ वव्रेविप्रोभिलषितामिहामुत्रफलप्रदं
भक्तिंपरांभगवतितथातत्संगसंगिनां॥ रथंकुंजरमंदिरंमंजुलंचहयचारुचामीकरालंकृतंच॥ धनंदासदासीगणंगां
महींचलुलायंसदुग्धंहरेदेहिदास्य॥ तथास्त्वितिहरिःप्राहस्वयमंतर्दधेततः॥ विप्रोपिकृतकृत्योभूत्सर्वेलोकाविस्मि

स्मिरे ॥ प्रणम्यभुविकायेनप्रसादंचापुरादरात् ः स्वंस्वंधाममथाजग्मुर्धन्यधन्येतिवादिनः ॥ प्रचचारततोलो
केसत्यनारायणार्चनं कामसिद्धिप्रदंभुक्तिमुक्तिदंकलुषापहम् ॥ इतिश्रीमदितिहाससमुच्चयेसूतशौनकसंवादे
सत्यनारायणार्चनेप्रथमोध्यायः ॥ १ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥
सूतउवाच ॥ अथेतिहासंशृण्वानःसतुविप्रःकृतार्थितः ॥ विचरंतोवनेकामंनिषादाः काष्ठवाहकाः ॥ वनात्काष्ठानि
विक्रेतुंपुरींतांप्रययुःक्वचित् एकस्तेषांकुलेजातोविष्णुदासाश्रमंययौ ददर्शविपुलैस्तत्रसेवितंतद्द्विजोरितं ज
ल्पीत्वाविस्मितोभूद्भिक्षुकस्यकुतोधनम् ॥ प्राग्दृष्टोकिंचनोविप्रोदृश्यतेद्यमहाधनः ॥ इतिपप्रच्छभूदेवंप्रणम्यप्रां
जलिर्मुदा ऐश्वर्यंतेकुतोब्रह्मन्दुर्गतिस्तेकुतोगता ॥ आज्ञापयमहाभागश्रोतुमिच्छामितत्त्वतः शतानंदउवाच
सत्यनारायणस्यांगसेवयाकिंनलभ्यते नाकिंचित्सुखमाप्नोतिविनातस्यानुकंपया ॥ निषादउवाच ॥ सत्यनाराय
णस्यांगसेवासायुज्यदायिनी ॥ अहोकिमितिमाहात्म्यंसत्यनारायणार्चने ॥ विधानंसोपचारंत्वमुपदेष्टुंममार्हसि
॥ साधूनांसमचित्तानामुपकारव्रतांसतां ॥ इतिपृष्टोविधिंवक्तुमितिहासमथाब्रवीत् ॥ शतानंदउवाच ॥ राजा
सोद्यामिकःकश्चित्केदारमणिपूरके ॥ चंद्रचूडइतिख्यातःप्रजापालनतत्परः ॥ शांतोमधुरवाग्धीरोनारायणपरायणः
ममाश्रमंसमायातः ॥ सत्यनारायणार्चने ॥ विधानंश्रोतुकामोसौमामाहसादरंवचः मयापिकथितंतस्मैतन्निबोध
निषादज ॥ संकल्प्यमनसाकामं ॥ नि कामोवाजनःक्वचित् ॥ पूजासंभारमाहृत्यकृतनित्यार्चनाक्रियः ॥ देवाल
येस्थंडिलेवामध्येपूजांसमारभेत् ॥ सायंकालेशिलांस्थाप्य ॥ पूर्णकुंभसमन्वितां ॥ आचार्यंस्वांगनेचैवससमाहूयसु
हृज्जनान् ॥ गोधूमचूर्णपादार्धसेटकादिप्रमाणतः ॥ दुग्धेनतावतायुक्तंशर्कराज्यसमन्वितं ॥ पायसापूपसंयाव

दधिक्षीरमथाहरेत् ॥ इतिनिश्चित्यमनसानिषादाः काष्ठविक्रयात् ॥ चतुर्गुणंधनंलब्ध्वास्वंस्वंभुवनमाययुः ॥ उच्चावचैः फलैःपुष्पैर्धूपदीपैर्मनोरमैः संपूज्यदेवंभक्त्या ॥ द्धिविभवेसतिविस्तरैः ॥ नतुष्येद्द्रव्यसंस्कारैर्भक्त्याकेवलयायथा ॥ भगवान्सर्वतःपूर्णो ॥ नधनंवृणतेक्वचित् ॥ दुर्योधनकृतांत्यक्त्वाराज्यपूजांजनार्दनः ॥ विदुरस्याश्रमेवासमातिथ्यमकरोद्विभुः ॥ सुदाम्नस्तंडुलकणान्जग्ध्वामन्येसुदुर्लभाः ॥ संपदादाद्धरिःप्रीत्या भक्तिमात्रमयेनतं ॥ गोप्योगृध्रोवणिग्व्याधोहनुमांश्चविभीषणः ॥ एतच्छ्रुत्वाद्विजमुखात्सत्यनारायणार्चनं ॥ कृतकृत्योनिषादोभूत्प्रणम्यद्विजपुंगवं ॥ सगत्वास्वगणान्प्राहमाहात्म्यंहरिसेवनं ॥ तेहृष्टमानसासावैसमयंचक्रुरादृताः ॥ सत्यनारायणः पूज्यः काष्ठलाभेनपावतो ॥ मृदास्त्रीभ्यः समाचख्युर्वृत्तांतंसर्वमादितः ॥ ताःश्रुत्वाहृष्टमनसापूजासंभारमादरात् ॥ अर्द्धणाम ॥ ज्ञयाचक्रुर्यथाश्रुतविधानतः ॥ ततोमिलित्वास्वगणैः ॥ पूजांचक्रुर्यथोदितां ॥ कथावसानेतेभक्त्याप्रणेमुर्गतपातकाः ॥ स्वजातिभ्यः परेभ्यश्च ॥ प्रसादंबुभुजुस्ततः ॥ पूजाप्रभावतोभिल्लाः पुत्रदारादियुता ॥ भुक्त्वाभोगानन्ते तेवैष्णवंधामलेभिरे ॥ इतिश्रीमदितिहाससमुच्चयेसत्यनारायणार्चनेनिषादगणकथानकंनामद्वितीयोध्यायः ॥ २ ॥

॥ सूतउवाच ॥ अत्रतेवर्णयिष्यामिगाथांसाधूपचारितां ॥ साधुसार्थः ॥ कृतार्थोभून्नृपोपदेशतोवणिक् ॥ सणिपूरपतीराजाचंद्रचूडोमहायशाः सहप्रजाभिरानर्चसत्यनारायणंप्रभुं ददर्शवहुलंलोकंनानादेशसमागतं मणिमुक्ताविरचितैः वितानैः ॥ समलंकृतं ॥ वेदवादांश्चशुश्रावगीतवादित्रसंयुतान् ॥ रम्यंस्थानंसमालोक्यकर्णधारंसमादिशत् ॥ विश्राममत्रतरणीमिदंपश्यामिकौतुकं ॥ आज्ञांदृष्ट्वातथाचक्रे ॥ कर्णधारः ॥ सपत्तने ॥ तरणीभ्यः समुत्तीर्यमंदलीलाविलासिनः ॥ कर्णधारानुगाः सर्वे ॥ युयूरासलीलया ॥ सुखमुत्तीर्यसामात्योलोकान्पप्रच्छ

वक्तुमर्हसे ॥ श्रीकृष्णउवाच ॥ साधुसाधुमहाभागेपृष्टोऽहंकुंतिनंदन ॥ ३३ ॥ देविकातीर्थमाहात्म्यंपुण्यं
पापहरंशुभं एतदेवपुरापृष्टःशौनकप्राहसूतजः ॥ ३४ ॥ ततोऽहंकीर्तयिष्यामिपुण्यंकीर्तिविवर्धनं ब्रह्माद्योऽपि
चमानंतगुणप्रवाहंसंपूजयंतिसततंविविधस्तुवंति पूर्णविशुद्धमजरंपरमंपरेभ्यस्तस्मैनमोऽस्तुभवजायगजाननाय
य ॥ ३५ ॥ लोमहर्षणजःसूतःकदाचित्पर्यटन्महीं संप्राप्यनैमिषारण्यंयज्ञायतनमुत्तमम् ॥ ३६ ॥ शौनका
द्यैर्मुदायुक्तैस्तपस्विभिरलंकृतं वेदाध्ययनसंपन्नैःनियमव्रतकर्षितैः ॥ ३७ ॥ चरितब्रह्मचर्यैश्चकृतकृत्यैरलोलु
पैःनानाजनपदाकीर्णंगीतवादित्रनिस्वनम् ॥ ३८ ॥ महामंगलभूयिष्ठमर्थ्यमर्थिसमाकुलं सिद्धचारणसंघातैर्गंध
र्वध्वनिमंडितं ॥ ३९ ॥ सुगंधिहोमधूपेनपवित्रितजगत्त्रयं विवेशसूतोहर्षेणब्रह्मलोकमिवापरम् ॥ ४० ॥
सप्रणम्यऋषीन्सर्वानुपविष्टान्कुशासने आत्मानंश्रावयामासशिरसावनतोभुवि ॥ ४१ ॥ ततमूचुर्महात्मानोवि
कसन्नयनाद्विजाः तदीयवदनोद्भूतकथामृतरसोत्सुकाः ४२ स्वागतंतेद्विजश्रेष्ठचिराद्दृष्टोऽसिसुव्रत उत्तिष्ठोत्तिष्ठभद्रं
तेपूतंकौशासनंभज ४३ एवंनिशम्यवाक्यानिमुनीनांभावितात्मनां प्रीतस्तदासनंभेजेप्रह्वीभूतःकृतांजलिः ४४
तंप्राहशौनकःप्रीतस्तपस्विजनसेवितः शौनकउवाच केषुकेषुचतीर्थेषुस्नातंपर्यटतामहीं ४५ उषितंकुत्रभवतात्र
तेनचसमाधिना भवान्हिपरमंतीर्थंमतोमेमुनिपुंगव ४६ मुखाद्यस्यपुराणानिसेतिहासानिसर्वतः पुनंतिपापिनोलो
कान्श्रुतानिनियमायथा ४७ गंगातुसर्वशास्त्रेपुत्रिषुलोकेषुविश्रुता काऽन्यागंगासमापुण्यानदीतेज्ञानगोचरा ४८
अस्तिवानास्तिवालोकेतत्सर्वंवक्तुमर्हसि सूतउवाच प्रणम्यशितिकंठायशंकरायमहात्मने ४९ अरूपबहु
रूपायव्यापिनेचित्स्वरूपिणे परावरायशांतायसर्वज्ञायाशिवायच ५० सृष्टिस्थितिलयानांचकारणायाखिला
त्मने देविकातीर्थमाहात्म्यंवक्ष्यामिजगतोहितम् ५१ यस्यश्रवणमात्रेणसर्वपापक्षयोनृणां जायतेमुनिशार्दूल

सत्यंसत्यंवदाम्यहम् ५२ नद्योजलावगाहेनपावयतीतरांजनान् देविकादर्शनस्पर्शनामसंकीर्तनेनच ५३
पानीयंदाविकंदृष्ट्वास्पृष्ट्वापीत्वावगाह्यच पापजह्यान्नरःशीघ्रंजीर्णांत्वचमिवोरग ५४ आप्लुतोदेविकातीर्थे
पापैनश्यंतितत्क्षणात् तपुनातिमुनिश्रेष्ठतृणाग्निरिवकांचनम् ५५ तावद्गर्जंतिदानानिवाजिमेधादयोमखाः स्ना
तंनयावद्विमलेदेविकासलिलेनरैः ५६ चंद्रसूर्यग्रहेचैवमार्गशीर्षेमहामुने आसमुद्रात्समायातिस्नानायदेविका
द्विज ५७ तेपुदुष्कृतिभि पुंभिःकृतंयदवगाहन तत्क्षणादेवशुध्यंतिशुद्धायातिशिवालय ५८ सर्वतीर्थेपुयत्पु
ण्यमोमसमुद्रसरस्सुच तत्फलंदेविकातीर्थेस्नात्वामेपगतेरवौ ५९ विनादानेनतपसाविनातीर्थैर्विनामखैः शिव
लोकमवाप्नोतिदेविकातीर्थमज्जनात् ६० शुभाशुभानांकार्याणांयदन्यत्रफलंस्मृतं तल्लक्षगुणतांयातिदेविका
तीर्थसंगमात् ६१ यं कुर्याद्देविकातीर्थेशुभंवायदिवाशुभ ननतस्यपुनरावृत्तिःस्वर्गाद्वानिरयाद्धवा यथादेवेषु
गोविंदोयथातेजस्सुभास्कर वेगवत्सुयथावायुर्यथाब्धि सलिलाशये ६३ तिलोत्तमात्वप्सरस्सुराजन्येपुशचीप
ति वेदेपुचयथासामगार्हपत्ययथाग्निपु ६४ क्षमावत्सुयथापृथ्वीवरदेपुयथाशिव तथैवसर्वतीर्थेपुदेविकैवाविरा
जते ६५ य स्नातोदेविकातीर्थेनित्यंनियतमानस विमानवरमारूढोगणकोटिसमन्वितः ६६ अप्सरोनृ
त्यगीतेनाशिवलोकेमहीयते यावतोरोमकूपाश्चमज्जतांदेविकेनृणां ६७ जलेप्लुतास्तावंतिदिव्यवर्षायुतानिच
शिवलोकेभवेद्वासोनाऽत्रकार्याविचारणा तपसापूजित शंभु कश्यपेनपुरामुने मद्राणामुपकारायचाचितस्तीर्थमु
त्तमम् ६९ सर्वपापप्रशमनंसर्वतीर्थवरोत्तमम् तच्छ्रुत्वागिरिशोगौरीमुवाचपरिसांत्वयन् ७० त्वमंशे
ननदीभूत्वापुनीहिनिखिलांभुवम् सप्तद्वीपवतीरम्यांसप्तसागरमेखलाम् ७१ मानसोत्तरमार्गेणमेरुमंदरवर्त्म
ना कैलासमेत्यलोलाक्षिस्वतनुंविशशाश्वतीम् ७२ तयेनिवरमादायभर्तुराज्ञांशुचिस्मिता प्रोवाचाविनयप्रव्हा

देवीदेवेंद्रवंदिता ७३ श्रीपार्वत्युवाच एवंकरिष्येदेवेशवचनंतवसर्वदा किंचिद्विज्ञप्तुमिच्छामितवेशाविरहो
मम ७४ भक्तस्त्वमंशभागेनमत्तीरेवसशंकर कर्तव्याभजमानानांकल्पपादपमंजरी ७५ भवानखण्डब्र
ह्मांडपतिःसन्सततोद्यतः उमापतिरितिख्यातोभवमत्कीर्तिवर्द्धनः ७६ तथापुरेश्वरश्चेतिख्यातिमेहिजगत्त्रये
त्रिपुरघ्नत्रिलोकेशत्रिलोचनात्रिमूर्तिप ७७ तथेत्युक्ताशिवेनापिस्वीयांशेनसरिद्वरा कैलासाद्भुवमाविश्यपाव
यंतीवसुन्धराम् ७८ सप्तसागरपर्यंतांपुनःस्वांतनुमाविशत् एषावैदेविकादेवीनदीरूपास्थिताभुवि ॥ ७९
पुनातिसकलांल्लोकान्सर्वतीर्थवरामुने श्रीकृष्णउवाच श्रुत्वैवंशौनकःसूतमुखात्तीर्थवराश्रयं ८० महिमानं
शंकरस्यभक्त्यानिर्भरमानसः प्रणम्याशिरसाशंभुंमनोवाक्कायकर्मभिः ८१ पुनःप्रोवाचहृष्टात्मासर्वज्ञंसूतनदन
म् शौनकउवाच साधुसाधुमहाभागपितृवन्मधुराक्षरं भाषसेस्फुटमत्यर्थंपुण्यंभुवनमंगलं त्वत्तोऽहंश्रोतुमिच्छामि
परमंरोमहर्षण ८२ यथादेवीशरीरात्साप्रादुर्भूतामहानदी यथाचशंभुस्तत्तीरेसान्निध्यमकरोद्विभुः ८३ फल
चशंभुपूजायास्तत्रदानादिकंचयत् क्षेत्रस्यपरिमाणंचमाहात्म्यमपिचानघ ८४ कुत्रतत्स्थानममलंकथंप्रादुर
भूच्छिवा कस्मिन्दिनविशेषेतुकृतौमासेतिथौक्षणे ८५ केनरूपेणदेवेशःप्रादुर्भूतःसुरारिहा पार्वतीहितक
च्छंभुर्लोकोद्धारणहेतवे ॥ ८६ ॥ एवमुक्तःशौनकेनसूतोवचनमब्रवीत् प्रणम्यदेवदेवेशंशूलपाणिंवृषध्वजं ॥ ८७
सूतउवाच शतद्रुसिंधुनद्योश्चह्यंतरंयत्सुविस्तर मद्रदेशइतिख्यातोम्लेच्छदेशादनंतरः ॥ ८८ ॥ चतुर्वर्णव्य
वस्थांचवक्ष्यामितवशौनक विप्रामधुघृतक्षीरलाक्षालवणविक्रयैः ८९ जीवंतितत्रप्रेष्याश्चनिर्वेदानिरपत्रपाः
प्रतिग्रहसमर्थाश्चद्यूतेचौर्येचलंपटाः ॥ ९० ॥ अविचार्यैवसर्वस्माद्गृह्णंतिमदगर्विताः संध्याव्रतविहीनाश्चस्वधा
कारविवर्जिताः ॥ ९१ ॥ स्नानार्चनविहीनाश्चभुंजतेचसदामिषं केचिद्वाणिज्यधर्मेणकेचिल्लुब्धकचेष्टया द्यूतेनसे

कन्यायावर्धविंशत्याविवाहंनैवकुर्वते वृषाचान्येजीवंतिद्विजपुंगवाःकन्याशुल्करताश्चान्येशूद्रवृत्तिरतास्तथा ९३
वर्णावसंतिसत सदामिथ्याप्रवक्तारोब्रह्मस्वहरणेरताः ॥ ९४ ॥
क्षत्रियाश्चौर्यधर्मेणप्रजारक्षाविवर्जिताः नागराजेनसंप्राप्तस्तंदेशंस्वेच्छ
तंवृत्तिसंकरमाश्रिताः ॥ ९५ ॥ कदाचिज्जाह्नवीतीरान्नालेनसहकश्यपः
॥ ९७ ॥ याचरन् ॥ ९६ ॥ सदृष्ट्वातत्रलोकस्यधर्मविप्लवमुल्बणं चचारकृपयाविष्टस्तपःपरमदुष्करम्
कृपयादर्शनेतस्यौसूर्य संपूजयन्महादेवंदेवदेवंवृषध्वजं तुतोषतपसातस्यपिनाकीभगवाञ्छिवः ॥ ९८ ॥
तच्छरु वरंवृणीष्वभद्रंतेयत्तेमनसिवर्तते कोटिसमद्युतिः उवाचपरमप्रीतःकश्यपपरिसांत्वयन् ॥ ९९ ॥
तुष्टावगिरिशंदेवं ननामदेवंगौरीशंमनोवाक्कायकर्मभिः दृष्ट्वासहसोत्थायकश्यपोभक्तिविह्वलः ॥ १०० ॥
कश्य त्रिपुरघ्नंविलोचनं ॥ १ ॥ सहस्रनामभिर्दिव्यैर्ब्रह्मप्रोक्तैःसनातनैःप्रार्थयामासदेवेशांशंकरवरदसत्तमात् ॥ २ ॥
परापराणांप पउवाच ॥ देवदेवजगन्नाथसुरासुरनमस्कृत स्वच्छंदचरिताशेषलोकनाथमहेश्वर ॥ ३ ॥
प्रसीददेवदेवेशलोकानुग्रहकारक दुरा रमत्रिपुरासुरमर्दन शरणंत्वांप्रपन्नोस्मिशरण्यंभक्तवत्सल ॥ ४ ॥
चतुर्वर्गविरक्तानां कामक्रोधवशात्मनां स्वाहास्वधावषट्कारस्वा चारप्रसक्तानांनद्यभूमिनिवासिनाम् ॥ ५ ॥
ध्यायविरतात्मनाम् ॥ ६ ॥ रौरवादिमहादुःखान्मोक्षंचितयशंकर परोपकारायमयाप्रार्थितोसिमहेश्वर ॥ ७ ॥
एवमुक्तःकश्यपेनशिरोविन्यस्यभूतले ईश्वरःकृपयाविष्टइदंवचनमब्रवीत् ॥ ८ ॥ ईश्वरउवाच उत्तिष्ठत्वंमुनिश्रेष्ठप
रोपकृतिनांवर वरंदद्मिसुप्रीतस्तपसाश्रद्धयाचते ॥ ९ ॥ याशक्तिर्मच्छरीरस्थादेवीदेहार्धमाश्रितामदाज्ञांपर
मासाद्यनदीभूत्वानिजांशतः ॥ १० ॥ पुनातुमद्राष्ट्पृथिवींससप्तसागरमेखलाम् परिवृत्यनिजेदेहेपुनर्विश्रांतिमे
ष्यति ॥ ११ ॥ दृष्ट्वामुक्तोभवेत्सद्योजनःपुण्योदकांक्षणात् किंपुनःस्पर्शनस्नानजलपानादिनामुने ॥ १२ ॥

तस्यास्तीरेभविष्यंतिमदीयायतनानिच' प्रादुर्भूतःशूलपाणिस्त्रिपुरारिःसदाशिवः ॥ १३ ॥ शुद्धिर्नाममहा
क्षेत्रंमहापातकनाशनं 'यत्रदेवीमहागौरीप्रादुर्भूतासहस्रधा ॥ १४ ॥ इंद्रमार्गःसोमतीर्थंपुण्यमंबुनिजतथा
सुवर्णबिंबचतथाममैवायतनंतथा ॥ १५ ॥ स्कंदस्यायतनंनाममर्वपापनिसूदनं तस्माद्गिरिवरंमुक्तास्थानान्निर्याति
देविका ॥१६॥ तद्गंगाद्वारसदृशंक्षेत्रंपुण्यतमंभवेत् उमापतिरितिख्यातंतथायतनमुत्तमम् ॥१७॥स्याद्द्वियोजनेवि
प्रहारिमंदिरकंशुभम् तस्यदर्शनमात्रेण पूतोभवतिमानवः ॥१८॥ उमापतीतियत्प्रोक्तंतदेवपुरनायकंस्वर्गद्वारंचतत्रै
वरुद्रतीर्थंतथैवच ॥ १९ ॥ पुष्पाम्रकंचतीर्थंवैतच्चमुक्तिप्रदंनृणां ' प्रभासेकोटितीर्थंचकामाख्यंकमलापुरे ॥ २० ॥
पुष्पन्यासमृपिक्षेत्रेऋषिरूपंचमानद' मणिपूरपुरेस्थानंपुण्यंहंसपदंतथा ॥ २१ ॥ तीर्थंएवंतेषुदेविक्याःक्षेत्रंक्रो
शचतुष्टयं ' तत्रकूपतडागादिसर्वंतीर्थमशेषत ' ॥ २२ ॥ मामकेस्वेषुस्थानेषुयःकुर्यादभिषेचनं देविकासलिलैः
शुद्धैर्मल्लोकेनोदतेचिरम् ॥२३॥ पुष्पपत्रफलतोयंमद्भक्त्यायःप्रयच्छति 'ममलिंगेमुनिश्रेष्ठयात्यसौमत्सलोकताम्
॥ २४ ॥ पुरुषोयदिवानारीमद्भक्तिपरमामुने ' उपास्तेमांचतत्रस्थालिंगरूपधरंशिवं ॥ २५ ॥ शिवलोकमवाप्नो
तिपुनरावृत्तिदुर्लभः हरिद्वारेमहाक्षेत्रेयत्फलंस्नानदानयोः ॥ २६ ॥ तत्फलंदेविकाद्वारेस्यादुमापतिसान्निधौ
यत्फलंमज्जनेसम्यक्प्रयागेमकरेरवौ ॥ २७ ॥ काश्यांयन्मरणेपुण्यंमुक्तयेशिवयोगत ' तदेवदेविकाद्वारेस्यादु
मापतिसान्निधौ ॥ २८ ॥ यद्दानेनकुरुक्षेत्रेग्रहणेपुण्यमद्भुत तदेवदेविकाद्वारेस्यादुमापतिसान्निधौ ॥ २९ ॥ मा
र्कंडेयेपृथूदेचपुष्करेचार्बुदेतथा यत्पितॄणांगतिःप्रोक्तातदुमापतिसान्निधौ ॥ ३० ॥ ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवा
वरवर्णजःयःस्नातिदेविकातीर्थेसयातिपरमांगतिम् ॥ ३१ ॥ नदानेननयोगेनानियमैर्विविधैर्मखैः नतत्फलमवाप्नो
तिपत्स्नात्वादेविकाजले ॥ ३२॥ यद्दानंतुकुरुक्षेत्रेग्रहणेभास्करेतथा तदेवदेविकाद्वारेस्यादुमापतिसान्निधौ ॥ ३३ ॥

एवंसंदिशतस्तस्याशिवस्यपरमाद्भुतम् निश्चक्राममहत्तेजःशरीराद्भृगुनंदन ॥ ३४ ॥ चंद्रकोटिप्रतीकाशंवि
मलंभासयन्दिशः क्षणाद्बभूवनारीसागवयासनसंस्थिता ॥ ३५ ॥ चतुर्भुजाशंखचक्रखड्गखेटकधारिणी दि
व्यांबरधरादेवीदिव्यगंधानुलेपना ॥ ३६ ॥ विकसच्चंद्रवदनादिव्याभरणभूषिता दिवौकसस्तुतांदृष्ट्वापारिजा
ततरुद्भवैः ॥ ३७ ॥ हरिचंदनमंदारैस्तथासंतानकस्यच कुसुमैरर्चनंचक्रुर्जयशब्दपुरस्सरं ॥ ३८ ॥ जगुर्गं
धर्वपतयोननृतुश्चाप्सरोगणाः ववुःपुण्यास्तथावाताजघ्नुर्भेर्यश्चह्यानकाः ॥ ३९ ॥ ऋषयस्तुष्टुवुःस्तुत्वावेदमंत्रै
रनेकशः तांदृष्ट्वामहदाश्चर्यंकश्यपोमुनिसत्तमः ॥ ४० ॥ तुतोपदेवींप्रणतोभूतलेन्यस्तमस्तकः ॥ कश्यपउवाच ॥
जयदेविमहामायेजयशंकरवल्लभे जयदेवासुरगणैर्वंदितांघ्रिसरोरुहे ॥ ४२ ॥ जयचंद्रार्कनयनेजयाद्येजयसर्व
गे त्रिजगत्सृष्टिसंहारकारणेजयमोहिनि ॥ ४३ ॥ त्वंश्रीस्त्वमीश्वरीलज्जात्वंविद्यात्वंधृतिःक्षमा
त्वमग्निस्त्वंरविश्चंद्रस्त्वंपृथ्वीत्वंसरस्वती ॥ ४४ ॥ त्वमापस्त्वंनभोवायुस्त्वमेवपरमेश्वरी ॥ त्वंनि
द्रात्वंपिपासाचत्वंक्षुधात्वंनतिर्मतिः ॥ ४६ ॥ आदिप्रकृतिरेवत्वंजगत्त्रयकृतास्थितिः विश्वरूपाविश्ववंद्या
विश्वेशीचजगत्प्रसूः ॥ ४७ ॥ विश्वानुग्रहकर्त्रीचविश्वसंहारकारिणी प्रसीददेवदेवेशिमयिदासेयतात्मनि ॥ ४८
लोकस्यदुष्कृतंभूमौदहदर्शनवन्हिना नाशयस्वमहामायेकृपयाजगदंबिके ॥ ४९ ॥ सूतउवाच ॥ एवंस्तुता
तोदेवीकश्यपेनमहात्मना रुद्रंप्रदक्षिणीकृत्यतत्रैवांतरधीयत ॥ ५० ॥ क्षणात्सुस्रावसलिलाविमलंशीतलंविभो
पतितंदेवचरणेजयशब्दपुरस्सरं ॥ ५१ ॥ मार्गशीर्षेसितेपक्षेचतुर्दश्यांदिनोदये अष्टादशेद्वापरांतेप्रादुर्भूतासहा
नदी ॥ ५२ ॥ देवदुंदुभयोनेदुर्निपेतुःपुष्पवृष्टयः ववौवायुस्तदाशीतःपुण्यगंधवहःशुचिः ॥ ५२ ॥ अभवंश्च
द्विजातीनांशांतास्तत्रसमेधयः ननृतुश्चाप्सरोव्राताःगंधर्वाललिनजगुः ॥ ५४ ॥ तत्कालेशंकरश्चापिलिंगरूप

धरोमुने पातालादुत्थितोनागैःशेषादिभिरुपासितः ॥ ५५ ॥ फाल्गुणेकृष्णपक्षस्यचतुर्दश्यांदिनोदये अष्टाद
शेद्वापरांतेप्रादुर्भूतामहानदी ॥ ५६ ॥ तद्दिवोपोषणंकृत्वाजागरंशिवसन्निधौ संसारमोहस्वप्नांतेसदाजगति
जाग्रति ॥ ५७ ॥ वर्षमध्येद्विजश्रेष्ठासांगान्वेदान्समभ्यसेत् लक्षंगावै प्रसूतास्तुयस्तुदद्याद्दिनेदिने ॥ ५८ ॥
तत्फलंदेविकातीर्थेमृगेमेषे तुलेरवौ संक्रांतिगुतिसृष्वत्रभूतेच शिवरात्रितः ६९ स्नायाद्योदेविकातीर्थेनपुनर्जन्म
भाग्भवेत् तस्मात्स्नायात्प्रयत्नेनवर्षेवर्षेमुनीश्वराः ॥ सूर्यग्रहेचंद्रग्रहेसहोमासेविशेषतः षष्टितीर्थसहस्राणिति
स्रःकोट्योर्धकोटिका ॥ ६१ ॥ आयांतिदेविकातीर्थेमार्गशीर्षेनसंशयः यत्पुण्यंसर्वतीर्थेषुस्नानदानक्रियादिजं
॥ ६२ ॥ तत्फलंदेविकातीर्थेस्यादुमापतिसन्निधौ दृष्ट्वातेजोमयंलिंगंशांकरनागराड्विभुः शेषोननामशीर्षैस्तैः
सहस्रपरिसम्मितैः तुष्टावचमहादेवंविस्मयोनिकृतांजलिः ॥ ६४ ॥ अष्टधाष्टसुस्थानेषुप्रादुर्भूतंयथारवि शे
षउवाच नमामीश्वरंशंकरंचंद्रमौलिंत्रिनेत्रंत्रिलोकेश्वरंशास्त्रमानम महादेवमेकंशरण्यंवरेण्यं त्रिभंविश्वहेतुं
चिदानंदरूपम् ॥ ६५ ॥ लसत्सर्पहारंवृषाधीशवाहंच जान्हवीवीचिशुभ्रंकपर्दं दधानंनिदानंजयस्याप्रधानां
प्रधानंत्रिशूलंपिनाकंचवामे ॥ ६६ ॥ धरांपादपद्मंतवोपस्थमब्धिंवियच्चोदरंतारकारोमकूपान् रवी
दूपरलोचनेवेदवाचस्तवैकस्यरूपंविदुर्विश्वमूर्ते ॥ ६७ ॥ भवत्पादवासोमयादेवदेवाद्भवन्मूर्त्तिभेदाद्भुत
श्चक्रपाणेःतदेवास्तुमेनाथगौरीशशंभोनमस्तेनमस्तेप्रसीदप्रसीद ॥ ६८ ॥ सूतउवाच ॥ एवंस्तु
तोभूधरेणसहनागैर्महाबलैः तथेत्युक्ताविभोलिंगमाविर्भूतंमहीतले ॥ ६९ सूर्यकोटिप्रतीकाशंचंद्रकोटिसम
प्रभं अष्टधाष्टसुस्थानेषुकश्यपेनमहात्मना ॥ ७० ॥ दृष्टेषुदिव्यलिंगेषुक्षणाच्छंभुस्तिरोदधे प्रादुर्भूतेषुलिं
गेषुतीरमाश्रित्यदैविकं ॥ ७१ ॥ आत्मानंकश्यपोमेनेकृतकृत्यंमुदान्वितःभक्त्यातुतोषदेवेशंभगवंतमुमापतिं ७२॥

शिरोनिधायमेदिन्यांबहुभक्तिपुरस्सरं कश्यपोबहुभक्त्याचपूजयित्वामहेश्वरम् ॥ ७३ ॥ संपूज्यगंध
पुष्पाद्यैर्धूपदीपैर्मनोरमैः सद्वारपाललोकेशप्रणिपत्यह्युमापतिं ॥ ७४ ॥ शंकरंपरमेष्वासंसायुधंसविना
यकं सकुमारंसप्रमथंस्तुतिंचक्रेमरीचिजः ॥ ७५ ॥ कश्यपउवाच सुरासुरशिरोल्लसन्मुकटकोटिजुष्टांघ्रि
पकंजद्वयमुरोल्लसद्भुजगराजहारंहर जटामुकुटमंडलांतरगवीचिदेवापगं भजेशिवममापतिंशशिकलाधरंशंक
रम् ॥ ७६ ॥ गणाधिपतिसंस्तुतंरतिसहायगहोज्ज्वलद्विलोचनधरंचकर्तुमविलोललोकत्रयं नगाधिपतिनंदि
नीचकितलोचनालोकितं भजेशिव० ॥ ७७ ॥ सुगंधितादिगंतरेरुचिरपारिजातद्रुम प्रसूननिचयांचितेस्फटिकशै
लसानुस्थले विलोलनयनांचलैःसुरवधूगणैःसेवित भजेशिव० ॥ ७८ ॥ सुधर्वविलोडनावसरजातहाला
हल प्रकालनमहामुदाकुलविकासिगंडस्थलंविरिंचिहरिवासवादिभिरुपासितंव्याकुलैर्भजेशिव० ॥ ७९ ॥ रमा
मरणपूजितंरुचिरपंकजैर्भक्तितः सहस्रपरिसम्मितैरनुदिनंवरप्राप्तये महासुरविदारणंभुवनमंडलीकारणंभजे
शिव० ॥ ८० ॥ सिताभ्ररुचिवाहनंसितजटापगाधारिणं सितांशुवरशेखरंसितविभूतिचर्चत्तनुं सिताभ्रह
सितंशिवंसितजटावितानोत्कटं भजेशिव० ॥ ८१ ॥ जगज्जननधारणंहरणलीलामानंदचित्स्वरूपमखिलार्थदं
सदसदाभासकंशाश्वतम् निरंजनपदंविदुर्यम-लमहापुरुषंभजेशिव० ॥ ८२ ॥ दिवाकरसुतानुजोद्भवभयेनसं
पीडितो महानिरयपातसंशयगदेनचोद्वेजितः भवानलपरिप्लुतःशिवपदासयेत्र्यंबकं भजेशिवमुमापतिंशशि
कलाधरंशंकरम् ॥ ८३ ॥ इत्यभिष्टूयभूमानंशिवंशाश्वतमव्ययं निरंजनंचिदानंदंनिष्कलंसकलंविभुं ॥ ८४
विश्वेश्वरंविश्वयोनिंस्थितिसंहारकारणं कश्यपःपरमप्रीतोधनदस्यगिरिंययौ ॥ ८५ ॥ शिष्यैरनुगतै
र्मुख्यैर्धौम्यादिभिरलोलुपैः तपश्चकारतत्रापिनिःशब्दंगिरिमाश्रितः ॥ ८६ ॥ चतुष्टयेतुकोशानामष्टौलिंगाः

प्रकीर्तिताः उमापतिपुरेनाम्निस्नानातेमुक्तिदायिनः ॥ ८७ ॥ आद्यामिंद्रेश्वरनामइंद्रघाटोतिविश्रुत
इंद्रलोकेवसेत्तत्रस्नानदानान्मुनीश्वराः ॥ ८८ ॥ उमापतिद्वितीयचमुख्यंसर्वेषुलिंगक स्नापितंपंचगंव्ये
नचक्रवर्तीभवेन्नरः ॥ ८९ ॥ वीरेश्वरंतृतीयंचसदाश्मशानगोचरं शूरश्चबहुवीर्यश्चदृष्टमात्रेणमानवः
दृपभंचततःपुज्यंद्वारपालंचपूजयेत् सन्नैवेद्यैर्भक्ष्यभोज्यैश्चंदनेनसुगंधितैः पूजितंसकलंतेनत्रैलोक्यंसचराचरं
खड्गेश्वरंचतुर्थंचालिंगंत्रैलोक्याविश्रुतं ॥ ९० ॥ पूजयेद्विधिवच्चैनंयमलोकंनपश्यति विल्वकेश्वरकंनाम
पुराद्दक्षिणदिक्स्थितं पंचामृतेनसंपूज्यकोटियज्ञफललभेत् षष्ठंभूतेश्वरंनाम्नादेविकातीरसास्थितं ॥ ९२ ॥
तत्रस्नातुर्नरस्यापिभूतेभ्योनभयंक्वचित् काशीशसैन्यवाहिन्यांदेविकातीरमाश्रितं काश्यांयादृक् फलं
तादृक्दृष्टेलिंगेतुसप्तमे गयेश्वरंह्यष्टमंचालिंगंत्रैलोक्यमोहनं ॥ ९४ ॥ तत्तीर्थेचगयानाम्निपिंडंदद्याद्यथा
क्रम स्नात्वात्रविधिवद्विप्रागयातोष्टगुणंफलं विख्यातंत्वमरतीर्थंयत्रशक्रोव्रतेस्थितः गंगायाःस्नानतःपुण्य
तत्पुण्यंस्नानतोत्रहि उत्तरेइंद्रघाटस्यदक्षिणेचामरांतिके उमापतिमहाक्षेत्रंक्रोशानांतच्चतुष्टयं ॥ ९७ ॥
धनुषांत्रिंशतिःपूर्वेपश्चिमेपिचतत्क्रमः अष्टस्वेतेषुलिंगेषुमुख्यंलिंगमुमापतिः ॥ ९८ ॥ यथाविश्वेश्वरःकाश्य
मुमापतिस्तथापुरे सर्वत्रदेविकातीर्थेक्षेत्रंक्रोशचतुष्टय ॥ ९९ ॥ कृमिकीटमृतायांतेशिवलोकेसनातनं किंपुनर्मान
वाःपापादुराचारादुराशयः ॥ १०० ॥ यत्रकूपतडागादिसर्वतीर्थविशेषतः वाह्लीकान्ववरांश्चैवखशान्कीरांश्चम्ले
च्छजान् ॥ १ ॥ शवरान्देविकादृष्ट्वामहापातकिनोभृशं क्रोधादंतर्हिताक्वापिक्वाप्याविर्भवतिस्वयं ॥ २ ॥
व्यक्ताकुत्रापिदययाप्रभासेयातिसागरं यांदृष्ट्वामनुजःपाप्मापूतसंजायतेक्षणात् ॥ ३ ॥ स्पर्शनस्नानपा
नैःकाभृगुनंदन सैवगंगासमापुण्याहरदेहसमुद्भवा ॥ ४ ॥ तत्फलंदेविकाद्वारसपूर्णंमुनिपुंगवाः गंगा

द्वारेचयःपुण्यंस्नानदानंजपादिभिः ॥ ५ ॥ दर्शनस्नानपानैश्चमनोवाक्कायकर्मभिः कृतंचहरतेपापंयथागंगा
नसंशयः ॥ ६ ॥ गंगायादेविकायाश्चह्यनरनैवविद्यते भेदंयोमन्यतेमूढोरौरवेवसतिध्रुवं ॥ ७ ॥ केशानांय
वतीसंख्याछिन्नानांजान्हवीतटे तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ ८ ॥ यावतिरोमकूपाणिमज्जतिदेवि
केजले तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ ९ ॥ यस्यास्थीनिचगंगायांक्षिप्यतेपुण्यकर्मणः समोदते
देवलोकेपुनरावृत्तिदुर्लभे ॥ १० ॥ तथैवदेविकायांच पुण्यान्येपिचतत्तथा जान्हवीचमहादेवदेहस्पर्शान्निपा
वनी ॥ ११ ॥ देविकाह्यधिकातस्या याशिवार्धशरीरिणी यथाकनखलेमुक्तिर्मुनिभिः परिकीर्तिता
तथैवदेविकायांचप्रोक्तातुहरिमंदिरे यावैमुक्तिर्हिकाश्यांचवरणामणिकर्णिके तथैवोत्तरवाहिन्यांदेविकायांमुनी
श्वराः फल्गुतीर्थेनरोयोवैश्राद्धंकुर्याद्विधानतः ॥ १४ ॥ मुच्यंतेपितरस्तस्यगच्छंतिपितृमंडलेतथैवदेवि
कायांचह्युदग्वाहेमुनीश्वराः काठ्यांयन्मरणेपुण्यंविश्वेश्वरसमाधिना तत्पुण्यंसमवाप्नोतिमृतःक्षेत्रउमापतेः
॥ १६ ॥ स्नात्वातुदेविकातीर्थेदृष्ट्वादेवमुमापतिं मृतानांदेविकातीर्थेसततचाघकारिणां पापानिविल-
यंयांतिहिमंरविकरैर्यथा मृतःशिवपुरंयांतिमहापातकिनोनराः ॥ १८ ॥ उत्पन्नापार्वतीरूपामानसोत्तरमा
गतः तत्रशुद्धेश्वरंनानदेविकातीरमाश्रित ॥ १९ ॥ महापातकिनःस्नात्वारमंतेचहरे पुरे शुद्धंपद्योज
नचैवलिंगंभद्रेश्वरंमहत् ॥ २० ॥ तत्रस्नात्वानरःकश्चिद्यमलोकंनपश्यति यइदंशृणुयान्मर्त्योयोवापिप
रिकीर्तयेत् ॥ २१ ॥ सभवंदेविकानद्याःप्रादुर्भावमुमापतेः अश्वमेधादियज्ञानांदानंचदृदतांतथा ॥ २२ ॥
तत्फलंसमवाप्नोतिनरःसर्वमशेषतः सर्वपापविशुद्धात्मारुद्रलोकंसगच्छति ॥ २३ ॥ श्रीकृष्णउवाच श्रुत्वे
तत्सूतगदितंमुनय शौनकादयः नमोनमःशिवायेतिप्रोक्तामिलितलोचनाः ॥ २४ ॥ विष्णुःशिवःपरंब्रह्माचिर

भक्तिरसाप्लुताः ततःकथंचिदुन्मील्यलोचनानिप्रसुस्रुवुः वाष्पंभक्तिभराक्रांतहृदयामुनिपुंगवाः विन्यस्यमस्तकंभूमौशिवमेवपरंजगुः ॥ २६ ॥ देवेशंशीघ्रसंतोषंभक्तकल्पमहीरुहं ततःसूतंसमानर्चुःसाधुवादपुरस्सरम् २७ ॥ इतिश्रीपद्मपुराणेपातालखंडे श्रीकृष्णयुधिष्ठिरसंवादेदेविकामाहात्म्यम् संपूर्णम् शुभम्

अथवामनपुराणे सप्तषष्टितमेऽध्याये प्रह्लादतीर्थयात्रायां धुधुयज्ञप्रस्तावेदेविकाक्षेत्रेत्रिविक्रमप्रादुर्भाववर्णनं यथा ॥ नारदउवाच ॥ कानितीर्थानिविप्रेंद्रप्रह्लादोथजगामह प्रह्लादतीर्थयात्रांमेसम्यग्व्याख्यातुमर्हसि पुलस्त्यउवाच ॥ शृणुष्वकथयिष्यामिप्राक्तनींतुकथांविभो प्रह्लादतीर्थयात्रांमेशुद्धांपुण्यप्रदायिनीं सत्यज्यमेरुंकनकाचलेंद्रं तीर्थंजगामामरसंघजुष्टं ख्यातंपृथिव्यांशुभदंहिमानसं यत्रस्थितोमत्स्यवपुःसुधांपिवन् यस्मिंस्तीर्थवरेस्नात्वासंतर्प्यपितृदेवताः संपूज्यचजगन्नाथमच्युतंश्रुतिभिर्युतं उपोष्यभूयःसंपूज्यदेवर्षिपितृमानवान् जगामकच्छपंद्रष्टुंकौशिक्यांपापनाशनं तस्यांस्नात्वामहागंगायांसंपूज्यचजगत्पतिं समुपोष्यशुचिर्भूत्वादत्वाविप्रेषुदक्षिणां नमस्कृत्यजगन्नाथं थोकूर्मवपुर्धरं ततोजगामकृष्णाख्यंद्रष्टुंवाजिमुखंप्रभुं तत्रदेवहृदेस्नात्वातर्पयित्वापितृन्सुरान् संपूज्यहयशीर्षंचजगामगजासाह्वयं तत्रदेवंजगन्नाथंगोविंदंचक्रपाणिनं स्नात्वासंपूज्यविधिवज्जगामयमुनानदीं तस्यांस्नात्वशुचिर्भूत्वासंतर्प्यर्षिसुरान्पितृन् ददर्शदेवदेवेशंलोकनाथंत्रिविक्रमं ॥ नारदउवाच ॥ सांप्रतंभगवान्विष्णुस्त्रैलोक्याक्रमणंवपुः करिष्यतिजगत्स्वामीवलेर्बंधनमीश्वरः तत्कथंपूर्वकालेपिविष्णुरासीत्त्रिविक्रमः कस्यवाबंधनंविष्णुःकृतवांस्तद्वदस्व ॥ पुलस्त्यउवाच ॥ श्रूयतांकथयिष्यामियथांप्रोक्तस्त्रिविक्रमः यस्मिन्कालेसंबभूवयंचवंचितवानसौ आसीद्धुधु

रितिख्यातःकश्यपस्यौरसःसुतः दनुगर्भसमुद्भूतोमहाबलपराक्रमः ससमाराध्यवरदंब्रह्माणंतपसासुरः अव
ध्यत्वंसुरैःसर्वैःप्रार्थयत्सतुनारद तद्वरंतस्यचप्रादात्तपसापंकजोद्भवः परितुष्टःसचबलीनिर्जिगायत्रिविष्टपं चतु
र्थस्यकलेरादौजित्वादेवान्सवासवान् धुंधुःशक्रत्वमकरोद्धिरण्यकशिपौसति तस्मिन्कालेसबलवान्हिरण्यकशिपु
स्ततः चचारमंदरागिरौदैत्यैर्धुंधुःसमाश्रितः ततोसुरायथाकामंविहरंतित्रिविष्टपे ब्रह्मलोकेचत्रिदशाःसंस्थिता
दुःखसंयुताः ततोमरान्ब्रह्मसदोनिवासिनः श्रुत्वाथधुंधुर्दितिजानुवाचह गच्छ.मदैत्यावयमग्रजस्यसदोविजेतुं-
त्रिदशान्सुवक्रान् तेधुंधुवाक्यंतुनिशम्यदैत्याः प्रोचुर्ननोविद्यतिदैत्यपाल गतिर्ययायामपि तामहाजिरंसुदुर्ग
मोयंपरमोहिमार्गः इतःसहस्रैर्बहुयोजनाख्यैर्लोकोमहर्नाममहार्षिजुष्टः येषांहिदृष्ट्याप्रणवोदितेनदह्यंतिदैत्याः
सहसोत्थितेन ततःपरोयोजनकोटिनावैलोकोजनोनामवसंतियत्र गोमातरोरु-ामुविनाशकारियासांरजोपी
हमहासुरेंद्र ततःपरोयोजनकोटिभिस्तुषड्भिस्तपोनामतपस्विजुष्टः सत्याभिधानोभगवान्निवासोवरप्रदो-
भुवत्वतोदिवोसौ यस्यवेदध्वनिंश्रुत्वाविकसंतिसदासुराः संकोचंचासुरायांतियेतुतेषांसधर्मिणः तस्मान्मात्वंमहा
बाहोमातिमेतांसमाचर वैराजभुवनंधुंधोदुरारोहंसदानृभिः तेषांवचनमाकर्ण्यधुंधुःप्रोवाचदानवान् गंतुकामो
स्मिसदनंब्रह्मणोजेतुमीश्वरं कथंतुकर्मणाकेनगम्यतेदानवर्षभाः कथंतत्रसहस्राक्षःसंप्राप्तःसहदैवतैः तेधुंधुना
दानवेंद्राःपृष्टाःप्रोचुर्वचोधिपं कर्मतन्नवयंविद्म शुक्रस्तद्वेत्यसंशयं दैत्यानांवचनंश्रुत्वाधुंधुर्दैत्यपुरोहितं पप्र
च्छशुक्रंकिंकर्मकृत्वास्रष्टुःसदोगतिः ततोऽस्मैकथयामासदैत्याचार्यःकलिप्रिय शक्रस्यचरितंश्रीमत्पुराहत्तरिपो
किल शक्रःशतंतुपुण्यानांक्रतूनामयजत्पुरा दैत्येंद्रवाजिमेधानांतेनब्रह्मसदोगतः तद्वाक्यंदानवपतिःश्रुत्वाशु
क्रस्यवीर्यवान् यष्टुंतुरंगमेधानांचकारमतिमुत्तमां आमंत्र्यचासुरगुरुंदानवांश्चाप्यनुत्तमान्प्रोवाचाहंयजेयज्ञैरश्व

मेधैःसदक्षिणैः तदागच्छध्वमवनींगच्छामोवसुधाधिपान् जित्वाकुर्मोश्वमेधान्वैकथाकामगुणान्वितान् आहूयं तांपनिधयश्चाज्ञाप्यंतांचगुह्यकाः आमंत्र्यतांद्विजाःसर्वेप्रयामोदेविकातटं साहिपुण्यासरिच्छ्रेष्ठासर्वसिद्धिकरी शिवा जलंप्राचीनमासाद्यवाजिमेधान्यजामहे इत्थंसुरारिवचनंनिशम्यासुरयाजकः बाढमित्यब्रवीद्दृष्टोनिधीनां संदिदेशसः ततोधुंधुर्देविकायाःप्राचीनेपापनाशने भार्गवेंद्रेणशुक्रेणवाजिमेधायदीक्षितः सदस्याऋत्विज आपितत्रासन्भार्गवाद्विजाः शुक्रस्यानुमतेब्रह्मन्शुक्रशिष्याश्चपंडिताः यज्ञभागभुजस्तत्रस्वर्भानुप्रमुखामुने कृताश्चासुरनाथेनशुक्रस्यानुमतेसुराः ततःप्रवृत्तोयज्ञस्तुसमुत्सृष्टस्तथाहयः हयस्यानुययौश्रीमानासिलोमाम हासुरः ततोग्निधूमेनमहीसशैलाव्याप्ताविशंखाविदिशश्चपूर्णाः तेनाग्रगंधेनदिवस्पृशेनमरुद्वभौब्रह्मलोकमहर्षे तंगंधमाघ्रायसुर विपण्णाजानंतिधुंधुंहयमेधदीक्षितं ततःशरण्यंशरणंजनार्दनंजग्मुःसशक्राजगतःपरायणं प्रणम्यवरदंदेवंपद्मनाभंजनार्दनं प्रोचुःसर्वेसुरगणाभयगद्गदयागिरा भगवन्देवदेवश चराचरपरायण विज्ञ प्तिःश्रूयतांविष्णोसुराणामार्त्तिनाशन धुंधुनामासुरपतिर्बलवान्वरबृंहितः सर्वान्सुरान्विनिर्जित्यत्रैलोक्यमहर द्बली ऋतेपिनाकिनोदेवत्राह्यस्मान्भयतोहरे अतोविवृद्धिमगमद्यथाव्याधिरुपेक्षितः सांप्रतंब्रह्मलोकस्था नपिजेतुंसमुद्यतः शुक्रस्यमतमास्थायसोश्वमेधायदीक्षितः शतंक्रतूनामिष्ट्वासौब्रह्मलोकंमहासुराः आरोढुमि च्छतिवशीविजेतुंत्रिदशानपि तस्मादकालहीनंतुचिंतयस्वजगद्गुरो उपायंमखविध्वंसेभवामोयेननिर्वृताःश्रुत्वासु राणांवचनंभगवान्मधुसूदनःदत्त्वाभयंमहाबाहुःप्रेषयामासशाश्वतःविसृज्यदेवताःसर्वाज्ञात्वाजेयंमहासुरंवंचनाय मतिंचक्रेसधुंधोरध्वरस्यवै ततःसकृत्वाभगवान्वामनंरूपमीश्वरः देहंकृत्वानिरालंबंकाष्ठवद्देविकाजले क्षणा न्मज्जंस्तथोन्मज्जन्मुक्तकेशोयदृच्छया दृष्टोथदैत्यपतिनादैत्यैश्चान्यैस्तथार्षिभिः ततःकर्मपरित्यज्ययाज्ञियंब्राह्मणो

तमाः समुत्तारयितुंविप्रंप्राद्रवतसमाकुलाः सदस्ययजमानश्चऋत्विजोथमहौजस. निमज्जमानमुज्जर्हुःसर्वे तेवामनद्विज समुत्तार्यप्रसन्नास्तेपप्रच्छुःसर्वएवहि किमर्थंपतितोसीहकेनक्षिप्तोसिनोवदतेषामाकर्ण्यवचनंकंपमा नोमुहुर्मुहुःप्राहधुंधुपुरोगांस्ताञ्च्छ्रूयतामत्रकारण ब्राह्मणोगुणवानासीत्प्रभासइतिविश्रुत सर्वशास्त्रार्थवित्प्राज्ञो गोत्रतश्चापिवारुणिः तस्यपुत्रद्वयंजातमदप्रज्ञंसुदुःखितं तत्रज्येष्ठोममभ्राताकनीयानपरस्त्वहं नेत्रभासइति ख्यातोज्येष्ठोभ्राताममासुर ममनामपिताचक्रेगतिभासतुकौतुकात् रम्यश्चावसथोधुधोशुभश्चासीत्पितुर्मम त्रिवि ष्टपगुणैर्युक्तश्चारुरूपोमहासुर ततःकालेनमहताचावयोस्सापितामृतः तस्यौर्ध्वदैहिकंकृत्वागृहमावांसमागतौ ततो मयोक्त सभ्राताविभजामगृहंवयं तेनोक्तोनैवभवतोविद्यतेभागइत्यहं कुब्जवामनखंजानांश्रेष्ठानांश्वित्रिणामपि उन्मत्तानांतथांधानांधनभागोनविद्यते शय्यासनस्थानमात्र स्वेच्छयान्नभुजाक्रिया एत।वद्दीयतेचैता न्नार्थभागहरा हितेएवमुक्तेमयासोक्तःकिमर्थंपैतृकाद्गृहात् धनार्धभागमर्हामिनाहन्यायेनमेवद इत्युक्तवतिवाक्येसौभ्रातामेकोप संयुतः समुत्क्षिप्याक्षिपन्नद्यामस्यामामितिकारणात् ममास्यांनिम्नगायांतुमध्येचप्लवतोगत. काल.संवत्सरास्त्य स्तुयुष्माभिरिहचोद्धृत.केभवंतस्तुसंप्राप्ता. सस्नेहाबांधवोपमाः कोऽयचशक्रप्रतिमोदीक्षितोवैमहाभुजः तन्मेसर्वं समाख्यातयाथातथ्यतपोधना.महर्द्धिसंयुतायूयंसानुकंपाश्चमेभृश तेवामनवच.श्रुत्वाभार्गवाद्विजसत्तमाःप्रोचुर्वं यंद्विजाब्रह्मन्गोत्रतश्चापिभार्गवाः असावपिमहातेजाधुन्धुर्नामामहासुरः दाताभोक्ताविभक्ताचदीक्षितोयज्ञक र्मणि इत्येवमुक्त्वादेवेशंवामनंभार्गवास्तदा प्रोचुर्दैत्यपतिंसर्वेवामनार्थकरंवचः दीयतामस्यदैत्येंद्रसर्वोपस्करसं युतं श्रीमदावसथंदास्योरत्नानिविविधानिच इतिद्विजानांवचनंश्रुत्वादैत्यपतिर्वचः प्राहद्विजददामीतियावदि च्छासिवैधनं वासोगृहंहिरण्यंचवाजिनःस्यंदनान्गजान् प्रयच्छाम्यद्यभवतेब्रियतामीहितंविभो तद्वाक्यंदानवपतेः

श्रुत्वादेवोथवामनः प्राहासुरपतिंधुंधुंस्वार्थसिद्धिकरंवचः सोदरेणापिमेभ्रात्राहृियंतेयस्यसंपदः तस्याक्षमस्य
यद्दत्तंकिमन्योनहारिष्यति दासीदासमलंकारंगृहंरत्नपरिच्छदं समर्थेषुद्विजेंद्रेषुप्रयच्छस्वमहाभुज ममप्रमाणमा
त्रेलोक्यमामकंचपदत्रयं संप्रयच्छस्वदैत्येंद्रनाधिकंरक्षितुंक्षमः इत्येवमुक्तेवचनेमहात्मनाविहस्यदैत्याधिपतिःसऋ
त्विजः प्रादाद्द्विजेंद्रायपदत्रयंतदायदासनान्यंप्रगृहाणकिंचित् क्रमत्रयंसोपिचवीक्ष्यदत्तंमहासुरेंद्रेणविभुर्यश
स्वी चक्रेततोलंघयितुंत्रिलोकींत्रैविक्रमंरूपमनंतशक्तिः कृत्वानुरूपंदितिजांश्चहत्वा प्रणम्यचर्षीन्प्रथमक्र
मेण महींमहीध्रैःसहितांमहार्णवांचकाररत्नाकरपत्तनैर्युतां भुवंसनाकंत्रिदशाधिवासमृक्षार्कसोमैरभिमंडितंनभः
दिवंद्वितीयेनजहारवेगात्क्रमेणदेवप्रियमीप्सुरीश्वरः क्रमंतृतीयंनयदास्यपूरितंतदातिकोपादनुपुंगवस्य पपा
तपृष्ठेभगवांस्त्रिविक्रमो मेरुप्रमाणेनतुविग्रहेण पततावासुदेवेन दानवोपरिनारद त्रिंशद्योजनसाहस्रंभूमिगं
तंदृढीकृतं ततोदैत्यंसमुत्साद्यतास्मिन्प्रक्षिप्यवेगतः अवर्षत्सिकतावृष्ट्यातंचगर्त्तमपूरयत् ततःस्वर्गंसहस्रा
क्षोवासुदेवप्रसादतः सुराश्चसर्वेत्रैलोक्यमवापुर्निरुपद्रवाः भगवानपिदैत्येंद्रंप्रक्षिप्यासिकतार्णवे कालिंद्यांरू
पमाधायतत्रैवांतरधीयत एवंपुराविष्णुरभूद्धिवामनोधुंधुंविजेतुंचत्रिविक्रमोऽभूत् यस्मिन्सदैत्येंद्रसुतोजगाममहा
श्रमेपुण्ययुतेसुरर्षे इतिश्रीवामनपुराणेधुंधुपराजयेदेविकामाहात्म्यम् ॥ समाप्तम् ॥ शुभम्भूयात् ॥

——⊃∞○(✱)○∞⊂——

॥ श्रीरघुनाथमुद्रायंत्रालये ॥

लालाशिव्वामल्लाधिकारे श्रीरणवीरव्रतरत्नाकरग्रन्थस्समाप्तः

सम्वत् १९४२ आषाढ प्र. २९

| पृ० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| ९३ | १ | १३ | सौभाग्याष्टकं, पंचगव्यं, पंचामृतं, मांतंच, |
| ९३ | २ | ९ | सप्तधान्यं अष्टादशधान्यानि, सवर्णादि, |
| ९४ | १ | १ | सर्वधातुगणः अष्टांगार्घ्यं पंचरजांसि, |
| ९४ | १ | ७ | कंकणौषधयः सप्तमृदः सर्वौषध्यः सर्वबी. |
| ९४ | १ | १२ | यक्षकर्दमः सर्वगंधाः शक्तिगंधाष्टकं |
| | | १८ | विष्णुगंधाष्टकादीनि, |
| ९४ | १ | १९ | शैवगंधाष्टकं गणेशगंधाष्टकं |
| ९४ | २ | ३ | अमृताह्वयधूप, दशांगधूपः व्रतेसूतकाः |
| ९४ | २ | १४ | तत्रव्रतारंभसमाप्तितिथिः रजस्वलाव्रतवि- |
| ९५ | १ | १ | उपवासासमर्थप्रतिविचारः भार्यापुत्राः |
| ९५ | १ | १० | पित्राद्यर्थंव्रतकर्तुः शतगुणफलं |
| ९५ | २ | ५ | काम्यव्रतेनप्रतिविधिः व्रतरत्नसमुच्चयः |
| ९५ | २ | १३ | सर्वव्रतेषुसाधारणपूजायां उपचाराः |
| ९६ | १ | २ | अष्टत्रिंशत् ३८ षोडश १६ दशोपचारः |
| ९६ | १ | ४ | पंचोपचाराः विष्ण्वादिपूजा अक्षतादिनिर्णं |

| पृ० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| ९६ | १ | ९ | उद्वर्त्तनं आचमनं प्रतिमादौ नानित्यस्नानं |
| ९६ | २ | १ | महाभिषेकः आवाहनादिमुद्राः |
| ९६ | २ | १९ | सर्वव्रतेषुसामान्यपूजापद्धतिः पुरुषसूक्तं |
| ९७ | २ | ४ | पुरुषसूक्तेनदेवपूजा शिवव्रतपूजनाप |
| ९९ | १ | १३ | शिवव्रतेसाधारणपूजा शिवाष्टोत्तरशत |
| १०१ | २ | १ | व्रतभंगेपूर्णताविधिः नवग्रहसंग्रहः |
| १०२ | २ | ११ | सर्वव्रतेषुसामान्योद्यापनविधिः मंडपः |
| | | | निर्माणं |
| १०२ | २ | १२ | तत्रपताकाध्वजाश्चकुंडनिर्माणं तत्रदा |
| १०३ | १ | ८ | स्थंडिलनिर्माणं समिधाज्यानादि आहु |
| | | | तिमानं वतानां |
| १०३ | २ | ३ | होममुद्रात्रयं ग्रहाणांस्थापना आदिदे |
| १०३ | २ | ११ | ग्रहाणांगोत्रस्थानत्र्यधिदेवताप्रत्य |
| | | | धिदेवतास्थापनम् |
| १०४ | १ | ४ | अथग्रहाणामधिपः होमद्रव्यमानम् |

| पृ० | पं० | सूचिपत्रम् |
| --- | --- | --- |
| | | वैशाखमासः |
| १ | १ | अथवैशाखमासकृत्यनिर्णयः |
| १ | १ | मेषसंक्रमेपराःपूर्वाश्चदशघटिकाःपुण्याः |
| १ | ३ | वैशाखेधर्मघटादिदानंतीर्थेस्नानं |
| २ | ३ | तिलतर्पणमधुसूदनपूजनं एकभक्तम् |
| २ | ५ | पुष्पलवणवर्जनं नक्तभोजनं |
| २ | ६ | दध्योदनदानं गोष्ठशयनंब्रह्मचर्यं |
| २ | ९ | माधवपूजनंतिलहोमः नृसिंहपूजनं |
| ३ | ११ | सिद्धार्थकेहोमःवैशाख्यां त्रिरात्रव्रतम् |
| | ११ | ज्ञानावाप्तिकरव्रतं प्रातःस्नानं |
| ३ | १४ | अत्रसौरोमासः ग्राह्यःबहिःस्नानं |
| १ | ८ | तस्योद्यापनंवैशाख्यांपौर्णिमायां |
| | | वैशाखकृष्णप्रतिपदायास्तिथिः पल्वेनव |
| ५ | १ | ह्निपूजा |
| ५ | १० | वैशाखकृष्णद्वितीयासमानकल्पादिः |

| प० | पृ० | पं० | सूचिपत्रम् |
| --- | --- | --- | --- |
| ९९ | २ | ११ | अत्रतिथिपल्वनब्रह्मपूजाव्रतम् |
| | | ११ | वैशाखकृष्णतृतीयायांप्रीतिदेव्यापूजनं |
| ९३ | ३ | १ | कंकोलप्राशनम् |
| | | १२ | वैशाखकृष्णचतुर्थ्यांसंकष्टचतुर्थीव्रतंशतप |
| | | | त्राशनम् |
| ९६ | ५ | १३ | वैशाखकृष्णपंचम्यांनागपूजनं |
| ९६ | ५ | १३ | वैशाखकृष्णषष्ठ्यांस्कंदपूजाव्रतम् |
| | | १४ | वैशाखकृष्णसप्तम्यांसूर्यपूजाव्रतम् |
| ९७ | २ | १४ | वैशाखकृष्णाष्टम्यांशीतलाष्टमीव्रतंचंडीप |
| | | १५ | वैशाखकृष्णनवम्यांचंडीपूजाव्रतं |
| ९२ | २ | १ | वैशाखकृष्णदशम्यांमार्गदिनउभयद्वश |
| | | | मीव्रत |
| | | १ | दिशांपूजनंधर्मराजपूजनंच |
| ९१ | ३ | २ | वैशाखकृष्णैकादश्यांहरिपूजाव्रतम् |
| ९३ | २ | ५ | वैशाखकृष्णत्रयोदश्यांगौरीकल्पादियक्ष |
| प० | पृ० | पं० | दीपव्रतम् |

## सूचीपत्रम्

## सूचीपत्रम्



वैशाखकृत्यरत्नसमुच्चयः

## सूचीपत्रम्

### अथ ज्येष्ठमासः

| प० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| | | १० | ज्येष्ठशुक्लपंचम्यांपितृपूजनमुक्तं |
| | | ११ | ज्येष्ठशुक्लषष्ठ्यां दिननाथरविपूजनं स्कंदपु |
| | १ | १२ | ज्येष्ठशुक्लसप्तम्यांरविदेवइन्द्रपूजाव्रतं |
| | | १३ | ज्येष्ठशुक्लाष्टम्यांशुक्लादेवीपूजाव्रतं |
| | | १६ | ज्येष्ठशुक्लनवम्यांउमादेवीपूजाव्रतं |
| ६ | २ | ४ | ज्येष्ठशुक्लदशम्यांदशहरागंगापूजाव्रतं |
| | | ५ | दशहरायोगविशेषउक्तः |
| ७ | १ | ७ | दशविधपापानिकाशीखंडोक्तानि |
| ७ | १ | १३ | दशहरादशमीपूजाविधानं दशहरास्तोत्रं |
| ८ | २ | ६ | अस्यांसेतुबंधरामेश्वरप्रतिष्ठा |
| ८ | २ | ८ | ज्येष्ठशुक्लैकादशीनिर्जलाकथाभविष्योत्त- |
| ९ | २ | १३ | पुराणसंग्रहे ब्रह्मवैवर्तेच |
| ११ | १ | ७ | अथजलधेनुदानप्रयोगः |
| १२ | १ | १४ | घृतधेनुदानप्रयोगः (ना- |
| १३ | १ | २ | धरणीव्रतेपुराघवद्वादशीव्रतं अस्यांमु |

| प० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| १३ | २ | २ | ज्येष्ठशुक्लत्रयोदश्यांदौर्भाग्यशमनव्रतम् |
| १३ | २ | १५ | ज्येष्ठशुक्लचतुर्दश्यांपंचतपास्यंपंचाग्नित्र. |
| | | १६ | ज्येष्ठपौर्णमासीयोगविशेषेणमहाज्येष्ठी |
| १४ | १ | ३ | अत्रकुंभांबुदानंछत्रदानंतालवृंतचंदनच |
| | | ३ | त्रिविक्रमप्रीत्यैदेयं |
| | | ११ | अथास्यांवटसावित्रीव्रतविधानंतत्रपूजा. |
| १५ | १ | ३ | अस्याःकथास्कांदे |
| १९ | २ | ६ | वर्षसाध्यसावित्रीव्रतंसोद्यापनं |
| २१ | २ | ११ | अस्यांपुत्रकामव्रतं विल्वात्रिरात्रव्रतं अत्र |
| | | | दानविशेषःपद्मपुराणदानम् |
| | | | इतिज्येष्ठमासकृत्यरत्नसमुच्चयः |
| १ | १ | १ | आषाढमासकृत्यनिर्णयः |
| १ | १ | २ | मिथुनसंक्रमेपराः षोडशघटिकाःपुण्याः |
| | १ | ३ | आषाढमासेएकभक्तव्रतं |
| | १ | ४ | बहुधान्यव्रतंमासमात्रसाध्यं |
| | | ६ | रूपावाप्तिव्रतंभोगावाप्तिव्रतम् |

| पु० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| | १ | ३ | श्रा॰पौर्णिमास्यांदुर्गाशिवपूजाचसन्यासि |
| | | | नांकृत्यम् |
| | १ | १२ | व्यासपूजाप्रयोगः गजपूजा विष्णु |
| | | | पुराणदानं घृतधेनुदानम् |
| | | | इतिआषाढमासकृत्यरत्नसमुच्चयः |
| | | | श्रावणमासः |
| १ | १ | १ | श्रावणमासकृत्यनिर्णयःकर्कसंक्रांतिपुण्य |
| | | ७ | याम्यायनस्याविशेषतःपुण्यकालनिर्णयः |
| | | ११ | अत्रनदीनांरजोदोषनिर्णयःतत्रस्नानादि |
| | | | निषेधः |
| १ | २ | ६ | गंगादिमहानदीपुतदपवादःग्रामभोगेष्व |
| | | | पवादः |
| | | १३ | श्रावणमासादिचतुष्टये घृतधेन्वादिदान |
| | | | विशेषः |

| पु० | पृ० | पं० | सूचीपत्रम् |
|---|---|---|---|
| २ | १ | ३ | चातुर्मास्येप्रातःस्नानंशीलारोग्यव्रतं |
| | | ७ | श्रावणमासे एकभक्तव्रतं कृष्णप्रतिपदा |
| | | | दिप्रारंभः |
| | | ९ | श्रावणकृष्णद्वितीयायामशून्यशयनव्रतं. |
| ३ | १ | १६ | इदंचश्रावणादिमासचतुष्टयेकार्यं |
| ३ | २ | ४ | श्रावणकृष्णतृतीयायांकज्जलीव्रतं |
| | | ६ | अस्यामेवश्रावणर्क्षयुतायांविष्णुपूजाव्रतं |
| | | ७ | श्रावणकृष्णचतुर्थीसोमकल्यादि |
| | | ८ | अत्रसंकष्टचतुर्थीव्रतविधिः |
| ४ | २ | १० | पार्थिवगणेशपूजाविधिअत्रहेमहास्तिदा. |
| ५ | २ | ३ | अत्रदूर्वागणपतिपूजाविधिः |
| ६ | १ | १० | संकष्टचतुर्थीव्रतकथा चंद्रोदयेऽर्घ्यदानं |
| ७ | २ | ३ | श्रावणकृष्णपंचम्यां अन्नव्रतम् |
| | | ४ | अत्रसर्वस्नानानि सायंकालेजलेनाष्ठाव्य |
| | | | प्रातर्देयानि |

| प० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| १८ | १ | ५ | अत्रदीपश्राद्धप्रयोगः अत्रस्वातिसपात |
| | | | योगः |
| १८ | २ | ८ | तस्यशांतिनीराजनविधिनाकार्यः |
| | | ११ | अत्रकेदारगौरीव्रतं पूजाविधानं कथाच |
| २० | १ | १० | दीपावलीकथा मार्गपालीविधानं कौमु |
| | | | दीमहोत्सवः |
| २४ | २ | ३ | प्रातर्द्यूतक्रीडनादिकं तैलाभ्यंगोपि |
| २५ | २ | १५ | कार्तिकशुक्लप्रतिपदायांबलिपूजा गोव |
| | | | र्धनपूजाच |
| २६ | २ | ८ | का. शु. द्वितीयायमद्वितीयाकृत्यं |
| २८ | १ | ५ | का. शु. तृतीयायां विष्णुगौरीव्रतं |
| | | ९ | का. शु. च. नागव्रतं |
| | | १३ | का. शु. प. जयापंचमीव्रत |
| २९ | १ | ६ | का. शु. प. भौमवारेदेवसेनान्वितस्कंदपू |
| | | | जोत्सवः |

| प० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| २९ | १ | १६ | का. शु. स. शाकसप्तमीव्रतं |
| २९ | २ | ३ | का. शु. अ. गोपाष्टमी तत्रगोपूजा |
| | | ८ | का. शु. न. कृतयुगादि अत्रकूष्मांडदानं |
| ३० | १ | ५ | तुलसीकृत्यारंभः नगरप्रदक्षिणाकथा |
| ३१ | १ | २ | तुलसीविवाहप्रयोगःतुलसीविवाहकथा |
| ३३ | २ | ४ | का. शु. द. सार्वभौमव्रतं राज्यावाप्तिव्रतं |
| ३४ | १ | १० | ब्रह्मावाप्तिव्रतम् |
| ३४ | १ | १४ | का. शुक्लैकादशीहरिप्रबोधिनीकथापाद्मे |
| ३५ | २ | ८ | स्कंदपुराणोक्ताकथायोगीश्वरद्वादशीव्रतं |
| | | | प्रबोधैकादशीकृत्यम् |
| ३९ | १ | २ | रामार्चनचंद्रिकोक्तःप्रबोधिनीप्रकारः |
| ४१ | १ | ९ | प्रबोधकालनिर्णयः |
| ४१ | २ | १५ | अथैकादश्यादिपूर्णिमांतंभीष्मपंचकव्रतं |
| | | १५ | पाद्मेकार्त्तिकमाहात्म्यं भीष्मपंचकविधा- |
| ४२ | १ | १३ | भविष्योत्तरोक्तंभीष्मपंचकव्रतविधानं |

| प० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| १ | १ | १ | अथमलमासादि प्रकीर्णव्रतानामनुक्रमः |
| १ | १ | १ | मलमासव्रतंभविष्योत्तरे मलमासव्रतोद्यापनकथा |
| २ | २ | ९ | देवीपुराणोक्तं मलमासकथानकं |
| २ | २ | ७ | मलमासव्रतविधानं पद्मपुराणे |
| ३ | २ | १५ | मलमासमन्त्रजपविधानंपुरुषोत्तमोपाख्या |
| ४ | १ | ८ | व्रतविधिः मलमासे देवास्त्रयस्त्रिंशत् |
| ५ | १ | ७ | मलमासव्रतोद्यापनं अत्रातिथिध्यानानि |
| ६ | १ | ३ | अधिमासे शुक्लैकादशीकथा |
| ६ | २ | १ | अधिमासे कृष्णैकादशी कथा मलमासव्रतोद्यापनम् |
| ७ | १ | १४ | प्रकीर्णव्रतपुण्एकादशीकल्पः ध्वजारोपणं |
| १० | २ | १ | वर्षसाध्यपंचाहैकादशीव्रतं हरिपंचकव्रतं |
| ११ | १ | ६ | ध्वजारोपणप्रयोगः विष्णुपंचकव्रतपूजाविधि |
| १२ | २ | ५ | मासोपवासव्रतविधानम् |

| प० | पृ० | पं० | सूचिपत्रम् |
|---|---|---|---|
| १३ | १ | ११ | अथैकादशीव्रतमाहात्म्यम् |
| १५ | २ | ८ | त्रिस्पृशैकादशीमाहात्म्य |
| १७ | २ | ७ | निर्ध्येकादशीव्रतम् |
| २३ | २ | ५ | अग्निप्रियाचतुर्दशीव्रतम् |
| २५ | २ | ९ | साधारणपूर्णिमाव्रतम् |
| २६ | २ | ३१ | प्रतिपदादितिथिकृत्यविशेषः |
| २८ | १ | १६ | प्रतिपदादितिथिदेवतापूजामंत्र |
| ३१ | १ | ११ | इतिमलमासादिप्रकीर्णकृत्यरत्न |
| ३१ | १ | ११ | अथसंक्रांतिव्रतनुक्रमः |
| ३१ | १ | १२ | धान्यसंक्रांतिव्रतं १ रूपसंक्रांतिव्रतं २ |
| ३२ | १ | ८ | भोगसंक्रांतिव्रतं ३ लवणसंक्रांतिव्रतं |
| ३२ | २ | १० | तेजःसंक्रांतिव्रतं ५ सौभाग्यसंक्रांतिव्रत |
| ३३ | १ | ९ | तांबूलसंक्रांतिद्वयं ८ मनोरथसंक्रांतिव्र. |
| ३४ | १ | ११ | विशोकसंक्रांतिव्रतं १० आयुःसंक्रांतिव्रतं |
| ३४ | २ | ७ | धनसंक्रांतिव्रतं १२ आज्ञासंक्रांतिव्रतं १ः |